श्रीमते रामानुजाय नमः
श्रीमल्लोकगुरवे नमः
श्रीमद्वरवरमुनये नमः

# ॥ अथ तत्वत्रय सव्याख्या ॥

अनादि मायया सुप्त इत्युक्तप्रकारेणानाद्यचित्संबन्धनिबन्धनाज्ञानान्धकारेणाभिभूताः आत्मस्वरूपं प्रकृतेःपरं ज्ञानानन्दमयं भगवदनन्यार्हशेषमजानन्तो देवोऽहं मनुष्योऽस्मीति जडदेहेऽहं बुद्धिं कुर्वंतः, उत्पन्नेऽपि देहातिरिक्तात्मज्ञाने ईश्वरोऽहमहं भोगीति स्वतन्त्रमभिमन्यमानाः, सत्यपि शेषत्वज्ञाने प्राप्तविषयेषु तद्विनियोजयन्तः, एवं योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते, किं तेन न कृतं पापं चौरेणात्मापहारिणेत्युक्तप्रकारेणात्मस्वरूपेऽन्यथा प्रतिपत्तिरूपमखिल पापमूलमात्मापहारं कुर्वन्तः, अल्पास्थिरत्वादि दोषदुष्ट शब्दादि भोगैकतत्पराः "विचित्रा देहसम्पत्तिरीश्वराय निवेदितुं, पूर्वमेव कृता ब्रह्मन् हस्तपादादि संयुत" इत्युक्तप्रकारेण करण कलेबर विधुरा भोग मोक्ष शून्याः, अचिद् विशेषिता बद्धात्मानस्तिष्ठन्ति। तद्दशायां परम दयालुना सर्वेश्वरेण स्वचरण कमल समाश्रयणोपकरणतया दत्तं शरीरं प्राप्योज्जीवनोप—

यिकं तत्समाश्रयणमकृत्वा तदानी त्वदून्त शरीर मार्गे भ्रमामीत्युक्त-
प्रकारेण पारं गन्तुं दत्तं प्लवमारुह्य प्रवाहमार्गेण समुद्रं प्रावशन्त.
इव संसार निस्तरणोपयिकं संसरण हेतुं कृत्वानाद्यविद्या संचित
पुण्य पाप कर्मानुगुणमनेक योनिषु जनित्वा प्रति जन्म दुरन्त -
तापत्रय दवानल दह्यमाना: अनादि कालं संसरतोऽपि अतीतानागतान-
भिज्ञतया तत्र संसारे शोक रहिता गर्भ जन्म बाल्य यौवन वार्द्धक मरण.
नरक रूपावस्था सप्तकं भजन्तो दुःख परम्परामनुभूयानन्त क्लेश भाजने
संसार सागरे मग्ना व्याकुली भवन्ति, तेषां अनर्थ विशेषमनु संधाय
तदुज्जीवनाय कृषिं कुर्वतः सर्व भूत सुहृदः सर्वेश्वरस्य 'एवं संसृति
चक्रस्थे भ्राम्यमाणे स्वकर्मभिः, जीवे दुःखाकुले विष्णोः कृपा काप्यु-
पजायते " इत्युक्त प्रकारेण हृदय उत्पन्नेनापार कारुण्येन " जायमा-
नं हि पुरुषं यं पश्येन्मधुसूदन:' इत्युक्त प्रकारेण जायमाने कृतेन

विशेष कटाक्षेण निरस्त रजस्तमस्कस्य प्रवृद्ध सत्वस्य मुमुक्षोश्चे-
तनस्य तत्वज्ञानेन विना मोक्षासिद्धेः। तत्वज्ञानं च शास्त्रेणोप-
देशेन वा संपाद्यं, शास्त्रेण तस्य "शास्त्रज्ञानं बहु क्लेशं बुद्धेश्च-
लन कारणमित्युक्त प्रकारेण बहुक्लेश साध्यतया दुःसाध्यत्वात् कथं-
चित्साधनायोद्योग करणेऽपि "अनन्तपारं बहुवेदितव्यं, अल्प-
श्च कालो बहवश्च विघ्नाः" इत्युक्त प्रकारेण चेतनानां मन्द मतित्वा-
न्मन्दायुष्ट्वात् विघ्नानामनन्तत्वात्तवेषां ज्ञान सिद्धे दुर्लभत्वात् शास्त्रा-
भ्यासानधिकारीणां स्त्री शूद्रादीनां मुमुक्षुत्वस्य निष्प्रयोजनत्वाच्चोप-
देशेन तत्संपादने उक्त दोषेषु कस्यापि अभावात् अमुं विशेषमभि-
प्रेत्य सर्व शास्त्र निपुणः सकल लोकोज्जीवन कामः परम कारुणिकः
श्रीलोकाचार्यः श्रुति स्मृतीतिहास पुराणैः दुरवगाहनं विस्तरेण प्रतिपादि-
तान् चिदचिदीश्वर तत्वानां स्वरूप स्वभाव विशेषान् अखिल चेतनं-

सुग्रहं सुव्यक्तमेतत्प्रबन्धमुखेनाह । मध्यवीथि भट्ट कृष्ण पाद प्रभृति पूर्वाचा-
र्याणामपि प्रबन्ध निर्माणेऽयमेवाशयः । ननु निरहंकाराणां परसंमृद्धिप्रियाणां
ख्याति लाभ निरपेक्षाणामेतेषां प्रबन्ध निर्माणमनुचितं, एकेन कृतस्य प्रबन्धस्या-
न्येन परिपालनमेवौचितीमिति चेत्सत्यं दिव्यसूरिभिः एकैकण्ठ्येनाभिधानादर्थ-
स्याप्तता सिद्ध्यति, तथाचार्यैरैककण्ठ्येनोक्तावर्थस्याप्तता सिद्ध्यति, तथा च तत्र
मन्दमतीनां विश्वासो भवेदित्यभिप्रायेणैक विषयेऽनेकैराचार्यैः पृथक्
प्रबन्धो निर्मितः । किं चैकत्रा विशदा अर्थ विशेषा अन्यत्र विशदतया
प्रतिपाद्यन्ते । तत्र कारणं सूक्ति विशेषाः संकोच विस्तारौ च इदं चैक-
कर्तृक प्रबन्धेष्वपि तुल्यम् ॥ इति उपोद्घातः ॥

॥ अथ श्रीविष्णुमहापुराणं विष्णुचित्त्यात्मप्रकाशाख्यश्रीधरीय
व्याख्याद्वयोपेतं प्रारभ्यते ॥

# भूमिका।

अद्य किल निखिलनिगमाऽऽगमविचारचारुचमत्कृतिशालिशेमुषीक–निखिलब्रह्माण्डनायककिरीटकोटिटीकमानदिव्यमालावलिविगलदमन्दगन्धपरागरागगौरायमाणपादपद्मपद्मारमणचरणशरणानुसरणविशुद्धान्तःकरण–भगवद्गुणगणानुस्मरणैकतानमानसमहोदयानां पुरस्तादस्ताशङ्कमभिनवाऽऽनन्दप्रदोदन्तमभिनिवेदयितुमयमवसर ईश्वरानुग्रहादुपनत इति विचक्षणाः क्षणं दत्तक्षणाः समाकर्णयन्त्विति साञ्जलिप्रार्थना।

स चायम्–विदितमेव खलु निखिलवाणीचरणशरणाश्रितमानसान्तर्वाणिव्रजानाम्, यत्किल निखिलवाङ्मयमूलभूतो वेदो भगवत्स्वरूप एवेति। "तल्लोकपद्मं स उ एव विष्णुः प्रावीविशत्सर्वगुणावभासम्। तस्मिन्स्वयं वेदमयो विधाता स्वयंभुवं यं प्रवदन्ति सोऽभूत्" इति भूतिमैत्रेयवचनाद्विष्णुरूप एव स्वयंभूः,यत एव च "ऋग्यजुःसामाथर्वाख्यान्वेदादीन्मुखतोऽसृजत्। शस्त्रमिज्यां स्तुतिस्तोमं प्रायश्चित्तं व्यधात्क्रमात्। आयुर्वेदं धनुर्वेदं गान्धर्वं वेदमात्मनः। स्थापत्यं चासृजद्वेदं क्रमात्पूर्वादिभिर्मुखैः॥ इतिहासपुराणानि पञ्चमं वेदमीश्वरः। सर्वेभ्य एव वक्त्रेभ्यः ससृजे सर्वदर्शनः" इति श्रीमद्भागवततृतीयस्कन्धोक्तेर्वेदाविर्भावः। नित्यसिद्धानेवैतान्वेदान्भगवान् ब्रह्माणमुपदिदेशेति "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति श्रुत्या प्रतिपाद्यते। "अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा। आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः" इति स्मृत्याप्यनादिसिद्धानामेव वेदानां ब्रह्मणः प्रादुर्भावो न तु ब्रह्मकर्तृत्वमेतेषामिति सिद्ध्यति।:एतदेव श्रुत्यापि–"एवं वा अरेऽस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदः" इति। धर्मप्रतिपादकमपौरुषेयवाक्यं वेदः। स च "मन्त्रब्राह्मणयोर्वेदनामधेयम्" इत्युक्त्या मन्त्रब्राह्मणभेदाद्द्विधा। तत्रानुष्ठानसाधनद्रव्यदेवताभिधायका मन्त्राः। ऋग्यजुःसामभेदात्ते त्रिधा, अथर्वणस्य त्वत्रैवान्तर्भावः। प्रमाणं चैतेषामुक्तं भगवता पतञ्जलिना महाभाष्ये–"एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यम्, नवधाऽथर्वणो वेदः" इति। परमद्यत्वेऽस्माकं दुर्दैवान्न सर्वशाखोपलब्धिः। "इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राणि व्याख्यानान्यनुव्याख्यानान्यस्यैव निश्वसितानि" इति बृहदारण्यकश्रुत्या ब्राह्मणं त्वष्टविधम्।

ब्राह्मणान्तर्गतमेतत्पुराणं नाम विश्वस्य पूर्वावस्थाप्रतिपादकं वेदार्थनिरूपकं करुणाकूपारश्रीवेदव्यासमुनिप्रणीतं पञ्चलक्षणं शास्त्रम् 'पुराणं पञ्चलक्षणम्' इत्यमरोक्तेः। पुराणशब्दनिरुक्तिरपि ब्रह्माण्डपुराणे प्रक्रियापादे–"यस्मात्पुरा ह्यनक्तीदं पुराणं तेन तत्स्मृतम्" इति।

अथ च "ऋचः सामानि च्छन्दांसि पुराणं यजुषा सह। उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा दिविश्रिताः" इत्यथर्वणोक्त्या, "स होवाच ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं देवानां वेदमिति" इति च्छान्दोग्योक्त्या च पुराणानां वेदात्मकत्वे न कापि विचिकित्सा। "पुराणमेकमेवासीत्सर्वकल्पेषु मानद। चतुर्वर्गस्य बीजं तु शतकोटिप्रविस्तरम्॥ प्रवृत्तिः सर्वशास्त्राणां पुराणादभवत्ततः। कालेनाग्रहणं दृष्ट्वा पुराणस्य महामतिः॥ हरिर्व्यासस्वरूपेण जायते च युगेयुगे। चतुर्लक्षप्रमाणेन द्वापरे द्वापरे सदा॥ तदष्टादशधा कृत्वा भूलोके निर्दिशत्यपि। अद्यापि देवलोके तु शतकोटि

प्रविस्तरम् ॥ अस्त्येव तस्य सारस्तु चतुर्लक्षेण वर्ण्यते ।" इति बृहन्नारदीयोक्त्या पुरैकरूपेण स्थितस्य पुराणस्य व्यासरूपिणा भगवताऽष्टादशधा विभागो व्यधायीति बोध्यम् । पुराणलक्षणनामादि ब्रह्मवैवर्त्ते कृष्णजन्मखण्डे द्वात्रिंशदधिकशततमेऽध्याये—"सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । वंश्यानुचरितं विप्र पुराणं पञ्चलक्षणम् ॥ एतदुपपुराणानां लक्षणं च विदुर्बुधाः । महतां च पुराणानां लक्षणं कथयामि ते ॥ सृष्टिश्चापि विसृष्टिश्च स्थितिस्तेषां च पालनम् । कर्मणां वासना वार्त्ता मनूनां च क्रमेण च ॥ वर्णनं प्रलयानां च मोक्षस्य च निरूपणम् । उत्कीर्त्तनं हरेरेव देवानां च पृथक्पृथक् ॥ दशाधिकं लक्षणं च महतां परिकीर्त्तितम् । संख्यानं च पुराणानां निबोध कथयामि ते ॥ परं ब्रह्मपुराणं च सहस्राणां दशैव च । पञ्चोनषष्टिसाहस्रं पाद्ममेवं प्रकीर्त्तितम् ॥ त्रयोविंशतिसाहस्रं वैष्णवं च विदुर्बुधाः । चतुर्विंशतिसाहस्रं शैवमेव निरूपितम् ॥ ग्रन्थाऽष्टादशसाहस्रं श्रीमद्भागवतं विदुः । पञ्चविंशतिसाहस्रं नारदीयं प्रकीर्त्तितम् ॥ मार्कंडं नवसाहस्रं पुराणं पण्डिता विदुः । चतुःशताधिकं पञ्चदशसाहस्रमेव च ॥ परमग्निपुराणं च रुचिरं परिकीर्त्तितम् । चतुर्दशसहस्राणि परं पञ्चशताधिकम् ॥ पुराणप्रवरं चैव भविष्यं परिकीर्त्तितम् । अष्टादशसहस्रं च ब्रह्मवैवर्त्तमीरितम् ॥ सर्वेषां च पुराणानां सारमेव विदुर्बुधाः । एकादशसहस्रं च परं लिङ्गपुराणकम् ॥ चतुर्विंशतिसाहस्रं वाराहं परिकीर्तितम् । एकाशीतिसहस्रं च परमेव शताधिकम् ॥ वरं स्कान्दपुराणं च सद्भिरेवं निरूपितम् । वामनं दशसाहस्रं कौर्मं सप्तदशैव तु ॥ मात्स्यं चतुर्दशं प्रोक्तं पुराणं पंडितैस्तथा । ऊनविंशतिसाहस्रं गारुडं परिकीर्त्तितम् ॥ परं द्वादशसाहस्रं ब्रह्माण्डं परिकीर्त्तितम । एवं पुराणसंख्यानं चतुर्लक्षमुदाहृतम् ॥ अष्टादशपुराणानामेवमेव विदुर्बुधाः । एवं चोपपुराणानामष्टादशप्रकीर्त्तिताः ॥" उपपुराणानि च गारुडे( २२७ अध्याये ) "आद्यं सनत्कुमारोक्तं नारसिंहमथापरम् । तृतीयं स्कान्दमुद्दिष्टं कुमारेण तु भाषितम् ॥ चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम् । दुर्वाससोक्तमाश्चर्यं नारदोक्तमतः परम् ॥ कापिलं वामनं चैव तथैवोशनसेरितम् । ब्रह्माण्डं वारुणं चाथ कालिकाह्वयमेव च ॥ माहेश्वरं तथा साम्बं सौरं सर्वार्थसंचयम् । पराशरोक्तमपरं मारीचं भार्गवाह्वयम् ॥" इति । गणेशमौद्गलदेवीपुराणकल्किपुराणादिपुराणादीन्यष्टादशोपोपपुराणान्यपि सन्तीति सङ्कलनया चतुष्पञ्चाशत् । तत्र महापुराणेषु मात्स्य—कौर्म्य—लैङ्ग—शैव—स्कान्दाऽऽग्नेयानि षट् तामसानि । वैष्णव—नारदीय—भागवत—गारुड—पाद्म—वाराहणि षट् सात्त्विकानि । ब्रह्माण्ड—ब्रह्मवैवर्त्त—मार्कण्डेय—भविष्य—वामन—ब्रह्माणि षट् राजसानि । तान्येतानि महापुराणानि "अष्टादशपुराणानां नामधेयानि यः पठेत् । त्रिसन्ध्यं जपते यस्तु सोऽश्वमेधफलं लभेत् ॥" इति मार्कण्डेयोक्त्या "ये त्वेतानि समस्तानि पुराणानि च जानते । भारतं च महाबाहो ते सर्वज्ञा मता मम ॥" इति भविष्योक्त्या, "निस्ताराय च लोकानां स्वयं नारायणः प्रभुः । व्यासरूपेण कृतवान्पुराणानि महीतले" इति पाद्मोक्त्या च परमपवित्राणि मित्रवदुपदेशपराणि निखिलपुरुषपुरुषार्थसाधकानीति नानुक्तानम् ।

अयि विद्वन्महोदयाः ! चिराय मया राजमहाराजराजमान्यपण्डितजननानादेशस्थप्राचीनपुस्तकालयेभ्यो हस्तलिखितनिगमा—ऽऽगम—धर्मशास्त्र—पुराणे-तिहास—कर्मकाण्ड—व्याकरण—न्याय—ज्योतिष—च्छन्दः—काव्या—ऽलङ्कार—नाटक—चम्पू— पन्यास—कोष—वैद्यक—मन्त्र—तन्त्र—स्तोत्रग्रन्थाः हिन्दी—मार्वाड्यादिविविधभाषाग्रन्थाश्चातिवसुव्ययेन भूयसा श्रमेण संगृह्य शास्त्रिद्वाराऽऽदर्शपुस्तकैः पाठमेलनादिटिप्पण्यादिदानपुरस्सरं संशोध्य यथाप्राप्ति केचनैकद्वादिटीकाभिः संभूष्य केचन च भाषाटीकाभिः संभूष्य संमुद्र्य प्रकाश्यन्ते । तत्र पुराणेषु क्रमशो निखिलकल्याणसाधनानि ब्राह्मादिसप्तदशमहापुराणानि मुद्रयित्वा प्रकाशितानि । तेषां नामानि मूल्यानि चाग्रे पृथक्पत्रे द्रष्टव्यानि ।

सम्प्रति च "योऽन्ते शिष्यते शेषसंज्ञः" इत्युक्त्याशेषात्मनः शेषशायिनो भगवतो विष्णोरिदं वैष्णवं पुराणमपि मुद्रणे शेषतामातमासीत्तच्च त्रयोविंशतिसाहस्रं भागद्वयात्मकम् । तत्र पूर्वभागे षडंशाः । तदुक्तं नारदीया पुराणे पूर्वभागे चतुर्थपादे ९४ तमेऽध्याये—"शृणु वत्स प्रवक्ष्यामि पुराणं वैष्णवं महत् । त्रयोविंशतिसाहस्रं सर्वपातकनाशनम् ॥ यत्रादिभागे निर्दिष्टाः षडंशाः शक्तृजेन ह" इत्यादिना । एतत्पुराणमाहात्म्यमपि तत्रैव—"वाराहकल्पवृत्तान्तं व्यासेन कथितं त्विह । यो नरः पठते भक्त्या यः शृणोति च सादरम् । तावुभौ विष्णुलोकं हि व्रजेतां भुक्तभोगकौ । तल्लिखित्वा च यो दद्यादाषाढ्यां घृतधेनुना ॥ सहितं विष्णुभक्ताय पुराणार्थविदे द्विज । स याति वैष्णवं धाम विमानेनार्कवर्चसा ॥" इति । तदेतद्**विष्णुमहापुराणं** षडङ्गयुक्तवेदवत्षडंशैर्विराजमानं श्रीमद्भगवद्रामानुजयतीश्वरचरणसरोजचञ्चरीकविष्णुचित्त**श्रीविष्णुचित्ता**र्यप्रसादित**विष्णुचित्त्या**ख्यव्याख्यया तथा जगत्प्रसिद्ध—**श्रीधरस्वामि**विरचितया **आत्मप्रकाशा**ख्यव्याख्यया च सहितं मया स्वकीये "**श्रीवेंकटेश्वर**" ( स्टीम् ) मुद्रणयन्त्रालये पुष्टमसृण पत्रेषूत्तमसीसकाक्षरैर्मुद्रयित्वा प्रकाश्यते । उत्तरभागस्याप्याश्वेव मुद्रणं भविष्यतीति बोध्यम् । एवं प्रायः सम्पूर्णान्यष्टादशमहापुराणानि मुद्रितानि । तदेतद्ग्रहणपारायणादिना कृतार्थयन्तु मामनुग्राहका ग्राहका विद्वांस इति भृशमभ्यर्थयते—

**क्षेमराज-श्रीकृष्णदास "श्रीवेङ्कटेश्वर" यन्त्रालयाध्यक्षो-मुम्बयीस्थः ।**



# अथाष्टादशमहापुराणानि समूल्यानि ।

| पुराणनामानि. | मूल्यम्. |
|---|---|
| १ ब्रह्ममहापुराणम् | ९) |
| २ पद्ममहापुराणम् | १९) |
| ३ विष्णुमहापुराणं विष्णुचित्ती–श्रीधरी–टीकाद्वयोपेतम् | ४।।) |
| ४ शिवमहापुराणम् | ७) |
| ४ ,, भाषाटीकासहितम् | १६) |
| ५ श्रीमद्भागवतं श्रीधरीटीकासहितम् | १०) |
| ५ ,, श्रीधरी–वंशीधरी–टीकाद्वयोपेतम् | २१) |
| ५ ,, एकादशः स्कन्धः श्रीधरीवंशीधरीटीकोपेतः | २।।) |
| ५ ,, चूर्णिकासहितम्, पुष्टपत्रवत् | ७) |
| ५ ,, स्वदेशीयपत्रवत् | ६) |
| ६ नारदीयमहापुराणम् | ७) |
| ७ मार्कण्डेयमहापुराणम् सप्तशतीशान्तनवीटीकासहितम् | ४) |
| ७ ,, भाषाटीकासहितम् | ६) |
| ८ अग्निमहापुराणम् | ४) |

| पुराणनामानि. | मूल्यम्. |
|---|---|
| ९ भविष्यमहापुराणम् | ८) |
| १० ब्रह्मवैवर्त्तमहापुराणम् | ७) |
| १० ,, प्रकृतिखण्ड–गणेशखण्ड–ब्रह्मखण्डात्मकम् | ३।।) |
| १० ,, श्रीकृष्णजन्मखण्डमात्रम् | ३।।) |
| ११ लिङ्गमहापुराणं सटीकम् | ९) |
| १२ वाराहमहापुराणम् | ४) |
| १३ स्कान्दमहापुराणम् | ३०) |
| १४ वामनमहापुराणम् | ३) |
| १५ कूर्ममहापुराणम् | २।।) |
| १६ मात्स्यमहापुराणम | ९) |
| १७ गरुडमहापुराणम | ९) |
| १७ ,, सटीकं प्रेतकल्पमात्रम् | ।।।) |
| १७ ,, प्रे० क० भाषाटीकासहितम् | १) |
| १८ ब्रह्माण्डमहापुराणम् | ९) |

# अथ श्रीविष्णुमहापुराणविषयानुक्रमणिका ।

॥ इति श्रीविष्णुमहापुराणप्रथमांशानुक्रमणिका ॥ १ ॥

## अथ द्वितीयोंऽशः २.

॥ इति श्रीविष्णुमहापुराणद्वितीयांशानुक्रमणिका ॥ २ ॥

## अथ तृतीयोंऽशः ३.

॥ इति श्रीविष्णुमहापुराणतृतीयांशानुक्रमणिका ॥ ३ ॥

## अथ चतुर्थोंऽशः ४.

॥ इति श्रीविष्णुपुराणचतुर्थांशानुक्रमणिका ॥ ४ ॥

## अथ पञ्चमोंऽशः ५.

॥ इति श्रीविष्णुमहापुराणपञ्चमांशविषयानुक्रमणिका ॥ ५ ॥

॥ इति श्रीविष्णुमहापुराणषष्ठांशविषयानुक्रमणिका ॥ ६ ॥

**॥ इति श्रीविष्णुमहापुराणविषयानुक्रमणिका समाप्ता ॥**

त्वत्प्रसादान्मुनिश्रेष्ठ मामन्ये नाकृतश्रमम् ॥ वक्ष्यन्ति सर्वशास्त्रेषु प्रायशो येपि विद्विषः ॥३॥ सोहमिच्छामि धर्मज्ञ श्रोतुं त्वत्तो यथा जगत्॥
बभूव भूयश्च यथा महाभाग भविष्यति ॥ ४ ॥ यन्मयं च जगद्ब्रह्मन्यतश्चैतच्चराचरम् ॥ लीनमासीद्यथा यत्र लयमेष्यति यत्र च ॥ ५ ॥

पठेत् । कृष्णपक्षे तथाङ्गानि मासान्विप्रोर्द्धपञ्चमान् " इत्याद्युक्तक्रमानतिक्रमेण च ॥ २॥ त्वत्प्रसादादिति ॥ अन्ये जनाः ये विद्विषः तेपि सर्वशास्त्रेषु त्वत्प्रसादादकृतश्रमं मां न वक्ष्यन्ति, किन्तु त्वत्प्रसादादेव कृतसर्वशास्त्रपरिचयं मां समावर्त्तनानन्तरं वक्ष्यन्ति । अन्येनेति पदच्छेदे मां सर्वशास्त्रेषु त्वत्प्रसादादन्येनोपायेन अकृतश्रमं वक्ष्यंति किन्तु त्वत्प्रसादेनैव कृतश्रमं वक्ष्यंतीत्यर्थः ॥३ ॥ सोहमिति ॥ य एवं वेदादित्रयोदशविद्यास्थानाभिज्ञः सोहं जगज्जन्मादिपुराणार्थं श्रोतुमिच्छामीत्यर्थः । अनेन ब्रह्मयज्ञाद्यध्ययनार्थं वेदोपबृंहणार्थं च पुराणस्य श्रवणादौ तद्योग्यत्रैवर्णिकानामेवाधिकार उक्तो ज्ञेयः । पापक्षयाद्यर्थं तु पुराणश्रवणादौ स्त्रीशूद्रयोरप्यधिकारः । यथोक्तं भविष्यत्पुराणे "अध्येतव्यं न चान्येन ब्राह्मणक्षत्रियौ विना ॥ श्रोतव्यमेतच्छूद्रेण नाध्येतव्यं कदाचन ॥ तस्माच्छूद्रैर्विना विप्रान्न श्रोतव्यं कदाचन" इति विलोमजानां तु श्रवणादौ नाधिकारः सूतादेस्तु विलोमजस्यापि पुराणप्रवचनं-"धर्म एष तु सूतस्य सद्भिर्दृष्टः पुरातनः" इत्यादिवचनादविरुद्धम् । 'यथा जगद्बभूव' इत्युपक्रम्य 'आश्रमवासिनाम्' इत्यन्तेन प्रष्टव्यानर्थानाह-अत्र भगवता भाष्यकारेण ब्रह्मस्वरूपविशेषतद्विभूतिभेदप्रकाराः तदाराधनस्वरूपफलविशेषाश्च पृष्टा इति प्रष्टव्यार्थविशेषा उक्ताः । 'यथा जगत्' इत्यादि 'लयमेष्यति यत्र च' इत्यन्तं ब्रह्मस्वरूपविशेषप्रश्नः । 'यत्प्रमाणानि' इत्यादि 'चातुर्युगम्' इत्यन्तं विभूतिभेदप्रकारप्रश्नः । धर्मांश्चेत्यर्धेन तदाराधनस्वरूपफलविशेषप्रश्नौ पृष्टौ । ब्रह्मस्वरूपस्य "यतो वा इमानि" इत्यादिवाक्यसिद्धत्वात्तद्विशेष एवात्र प्रष्टव्य इति भाष्यकारेण ब्रह्मस्वरूपविशेषप्रश्न इत्युक्तम् । ननु नारायणानुवाकादिभिः स्वरूपस्य विशेषोपि निर्धारितः सत्यम्, अनेकानुवाकविप्रकीर्णयोः सामान्यविशेषयोरेकत्र समाहृत्य वचने हि व्यक्तिर्भवति । एतदेव हि पुराणादिकृत्यं वेदोपबृंहणं यथा बभूव यथा भविष्यतीति सर्वसृष्टिषु किमेकप्रकारा सृष्टिरुतानेकप्रकारा भिन्नक्रमा वेति प्रश्नः । अत्रोत्पत्तिलययोः पृष्टत्वात्स्थितिप्रश्नोप्यभिप्रेतः स्थितिसंयमकर्तेति प्रतिवचनदर्शनात् ॥ ४ ॥ यन्मयमिति ॥ यतश्चैतच्चराचरमिति निमित्तोपादानयोः पृष्टत्वात् यन्मयमित्यनेन सृष्ट्यादिकर्मभूतं जगत्किमात्मकमिति पृष्टम् । तस्य चोत्तरं जगच्च स इति, इदं तादात्म्यमन्तर्यामिरूपेणात्मतयाऽवस्थानकृतं न तु वस्त्वैक्यकृतम् । यन्मयमिति प्रश्नस्योत्तरत्वात् जगच्च स इति सामानाधिकरण्यस्य यन्मयमित्यत्र मयट् न विकारार्थः पृथक्प्रश्नवैयर्थ्यात् । नापि प्राणमयादिवत्स्वार्थिकः जगच्च स इत्युत्तरानुपपत्तेः । तदा हि विष्णुरेवेत्युत्तरमभविष्यत् ॥ २ ॥

यनमधीतं कृतमित्यर्थः । ओदनपाकं पचतीतिवत् ॥ २ ॥ त्वत्प्रसादादिति ॥ अन्ये विद्वांसो मां सर्वशास्त्रेष्वकृतश्रमं न वक्ष्यन्ति अपि तु विद्विषोपि कृताभ्यासं वक्ष्यन्तीत्यर्थः ॥ ३ ॥ सोहमिति ॥ पूर्वं यथा जगद्बभूव पुनश्च यथा भविष्यतीति जगतो जन्मप्रकारप्रश्नः ॥ ४ ॥ यन्मयमिति ॥ यन्मयमित्युपादानप्रश्नः यतश्चेति निमित्तप्रश्नः लीनमासीद्यत्रेति लयाधारप्रश्नः ॥ ५ ॥

## अथ षष्ठोंऽशः ६.



॥ इति श्रीविष्णुमहापुराणषष्ठांशविषयानुक्रमणिका ॥ ६ ॥

॥ इति श्रीविष्णुमहापुराणविषयानुक्रमणिका समाप्ता ॥

॥ अथ श्रीविष्णुपुराणं विष्णुचित्त्यात्मप्रकाशाख्यश्रीधरीय
व्याख्याद्वयोपेतं प्रारभ्यते ॥

श्रीमते रामानुजाय नमः ॥ ॥ नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ॥ देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ १ ॥

श्रीसूत उवाच ॥ ॥ ॐ पराशरं मुनिवरं कृतपौर्वाह्णिकक्रियम् ॥ मैत्रेयः परिपप्रच्छ प्रणिपत्याभिवाद्य च ॥ १ ॥

त्वत्तो हि वेदाध्ययनमधीतमखिलं गुरो ॥ धर्मशास्त्राणि सर्वाणि तथाङ्गानि यथाक्रमम् ॥ २ ॥

श्रीमते रामानुजाय नमः ॥ अथ विष्णुचित्तीव्याख्या ॥ यस्मादिदं जगदजायत यत्र तिष्ठत्यंते समस्तमिदमस्तमुपैति यत्र ॥ तस्मै नमस्सदसदादिविकल्पशून्यचैतन्यमात्रवपुषे पुरुषोत्तमाय ॥ १ ॥ विघेश्च विदुषामिष्टदायिने ताक्ष्र्ययायिने ॥ नमस्तुरंगतुंडाय स्वात्मने जगदात्मने ॥ २ ॥ अंशैष्षड्भिस्समाकीर्णमंगैर्वेदमिवापरम् ॥ पुराणं वैष्णवं चक्रे यस्तं वंदे पराशरम् ॥ ३ ॥ तत्त्वेन यश्चिदचिदीश्वरतत्स्वभावभोगापवर्गतदुपायगतीरुदारः ॥ संदर्शयन्निरमिमीत पुराणरत्नं तस्मै नमो मुनिवराय पराशराय ॥ ४ ॥ श्रीविष्णुचित्तपदपंकजसंगमाय चेतो मम स्पृहयते किमतः परेण ॥ नोचेन्ममापि यतिशेखरभारतीनां भावः कथं भवितुमर्हति वाग्विधेयः ॥ ५ ॥ ॐ ॥ अथ भगवान् पराशरः श्रीमैत्रेयाय लोकहितार्थं श्रीविष्णुपुराणं प्रणेष्यन् प्रणिपातादिभिरुपसन्नाय सच्छिष्याय सदाचारवता तत्पृष्टेन गुरुणा स्वधर्मानुष्ठानाविरुद्धे मनःप्रसादकरसमये पुराणं व्याख्येयमिति शास्त्रदर्शनात् पुराणप्रस्तावकं तत्प्रश्नं निबध्नाति—पराशरमिति श्लोकेन ॥ परान् बाह्यकुदृष्टीन् सम्यक्प्रमाणतर्कैराशृणाति इति पराशरः तं मुनिवरं सम्यग्ज्ञानवन्तं कृतपौर्वाह्णिकक्रियं भगवत्समाराधनादिना विशेषतो विमलमनसं पूर्वाह्णनिर्देशेन चित्तस्य सत्त्वोद्रेको दर्शितः । परिपप्रच्छ परितः पप्रच्छ, पुराणार्थमिति शेषः । कात्स्न्येन अर्थविशेषानभिनिवेशेन सामान्यतो यन्मयमित्यादिवक्ष्यमाणप्रकारेण, अतः प्रश्नानुरूपेण प्रतिवचनमपि न क्वचिदाग्रहेण कृतं तेनास्य पुराणस्य लैंगादिवन्न क्वचित्पक्षपातित्वम् ॥ १ ॥ अथ मैत्रेयश्चतुर्दशविद्याभूषितपुराणाधिगमे त्रयोदशविद्यास्थानाधिगमलक्षणस्यात्मनोऽधिकारस्य तत्प्रसादलब्धत्वानुवादेन गुरुं स्तुवन्पुराणप्रवचने प्रोत्साहयति—त्वत्तो हीतिद्वयेन ॥ खिलं प्रहतमनाम्नातं परिशिष्टाख्यं श्रीसूक्तादिकं तदखिलमाम्नातमेव यथास्यात्तथा वेदाध्ययनम् अधीतम् अधिगतं प्राप्तम् । खिलभागस्याप्यध्ययनं त्वत्त एव प्राप्तमित्यर्थः । यद्वा अखिलं कृत्स्नं यथाक्रमं स्वशाखाध्ययनपूर्वकमृगादिक्रमानतिक्रमेण "अतः पूर्वं तु छन्दांसि शुक्लेषु नियतः

अथात्मप्रकाशाख्यश्रीधरीयव्याख्या ॥ ॥ सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकारिणे ॥ नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे ॥ १ ॥ श्रीबिन्दुमाधवं वन्दे परमानन्दविग्रहम् ॥ तथा पुराणतत्त्वज्ञान्पराशरमुखान्मुनीन् ॥ २ ॥ श्रीविद्वत्सुखयोगिमुख्यरचितव्याख्यां निरीक्ष्य स्फुटं तन्मार्गेण सुबोधसंग्रहवतीमात्मप्रकाशाभिधाम् ॥ श्रीमद्विष्णुपुराणसारविवृतिं कर्ता यतिः श्रीधरस्वामी सद्गुरुपादपद्ममधुपस्साधुः स्वसंसिद्धये ॥ ३ ॥ श्रीमद्विष्णुपुराणस्य व्याख्याः स्वल्पातिविस्तराः ॥ प्राचामालोच्य तद्व्याख्या मध्यमेयं विरच्यते ॥ ४ ॥ ॥ ॐ—अथ भगवान्पराशरमुनीश्वरो मैत्रेयं निमित्तीकृत्य श्रीविष्णुतत्त्वप्रतिपादकं पुराणमारभते—पराशरमित्यादिना ॥ स्वस्मिन्नेव परोक्षनिर्देशो लोकोक्त्या देहाद्यनहङ्कारद्योतनार्थम्, प्रणिपत्य दण्डवत्प्रणम्य, पादग्रहणादिविधिना अभिवाद्य च ॥ १ ॥ बुभुत्सितमर्थं प्रष्टुं तत्कृतमनुग्रहमनुवदति त्वत्त इति द्वाभ्याम्—त्वत्त इति ॥ त्वत्तो वेदाध्य

त्वत्प्रसादान्मुनिश्रेष्ठ मामन्ये नाकृतश्रमम् ॥ वक्ष्यन्ति सर्वशास्त्रेषु प्रायशो येपि विद्विषः ॥३॥ सोहमिच्छामि धर्मज्ञ श्रोतुं त्वत्तो यथा जगत्॥ बभूव भूयश्च यथा महाभाग भविष्यति ॥ ४ ॥ यन्मयं च जगद्ब्रह्मन्यतश्चैतच्चराचरम् ॥ लीनमासीद्यथा यत्र लयमेष्यति यत्र च ॥ ५ ॥



पठेत् । कृष्णपक्षे तथाङ्गानि मासान्विप्रोर्द्धपञ्चमान् " इत्याद्युक्तक्रमानतिक्रमेण च ॥ २॥ त्वत्प्रसादादिति ॥ अन्ये जनाः ये विद्विषः तेपि सर्वशास्त्रेषु त्वत्प्रसादादकृतश्रमं मां न वक्ष्यन्ति, किन्तु त्वत्प्रसादादेव कृतसर्वशास्त्रपरिचयं मां समावर्त्तनानन्तरं वक्ष्यन्ति । अन्येनेति पदच्छेदे मां सर्वशास्त्रेषु त्वत्प्रसादादन्येनोपायेन अकृतश्रमं वक्ष्यंति किन्तु त्वत्प्रसादेनैव कृतश्रमं वक्ष्यंतीत्यर्थः ॥३ ॥ सोहमिति ॥ य एवं वेदादित्रयोदशविद्यास्थानाभिज्ञः सोहं जगज्जन्मादिपुराणार्थं श्रोतुमिच्छामीत्यर्थः । अनेन ब्रह्मयज्ञाद्यध्ययनार्थं वेदोपबृंहणार्थं च पुराणस्य श्रवणादौ तद्योग्यत्रैवर्णिकानामेवाधिकार उक्तो ज्ञेयः । पापक्षयाद्यर्थं तु पुराणश्रवणादौ स्त्रीशूद्रयोरप्यधिकारः । यथोक्तं भविष्यत्पुराणे "अध्येतव्यं न चान्येन ब्राह्मणक्षत्रियौ विना ॥ श्रोतव्यमेतच्छूद्रेण नाध्येतव्यं कदाचन ॥ तस्माच्छूद्रैर्विना विप्रान्न श्रोतव्यं कदाचन" इति विलोमजानां तु श्रवणादौ नाधिकारः सूतादेस्तु विलोमजस्यापि पुराणप्रवचनं—"धर्म एष तु सूतस्य सद्भिर्दृष्टः पुरातनः" इत्यादिवचनादविरुद्धम् । 'यथा जगद्बभूव' इत्युपक्रम्य 'आश्रमवासिनाम्' इत्यन्तेन प्रष्टव्यानर्थानाह—अत्र भगवता भाष्यकारेण ब्रह्मस्वरूपविशेषतद्विभूतिभेदप्रकाराः तदाराधनस्वरूपफलविशेषाश्च पृष्टा इति प्रष्टव्यार्थविशेषा उक्ताः । 'यथा जगत्' इत्यादि 'लयमेष्यति यत्र च' इत्यन्तं ब्रह्मस्वरूपविशेषप्रश्नः । 'यत्प्रमाणानि' इत्यादि 'चातुर्युगम्' इत्यन्तं विभूतिभेदप्रकारप्रश्नः । धर्मांश्चेत्यर्धेन तदाराधनस्वरूपफलविशेषप्रश्नौ पृष्टौ । ब्रह्मस्वरूपस्य "यतो वा इमानि" इत्यादिवाक्यसिद्धत्वात्तद्विशेष एवात्र प्रष्टव्य इति भाष्यकारेण ब्रह्मस्वरूपविशेषप्रश्न इत्युक्तम् । ननु नारायणानुवाकादिभिः स्वरूपस्य विशेषोपि निर्धारितः सत्यम्, अनेकानुवाकविप्रकीर्णयोः सामान्यविशेषयोरेकत्र समाहृत्य वचने हि व्यक्तिर्भवति । एतदेव हि पुराणादिकृत्यं वेदोपबृंहणं यथा बभूव यथा भविष्यतीति सर्वसृष्टिषु किमेकप्रकारा सृष्टिरुतानेकप्रकारा भिन्नक्रमा वेति प्रश्नः । अत्रोत्पत्तिलययोः पृष्टत्वात्स्थितिप्रश्नोप्यभिप्रेतः स्थितिसंयमकर्तेति प्रतिवचनदर्शनात् ॥ ४ ॥ यन्मयमिति ॥ यतश्चैतच्चराचरमिति निमित्तोपादानयोः पृष्टत्वात् यन्मयमित्यनेन सृष्ट्यादिकर्मभूतं जगत्किमात्मकमिति पृष्टम् । तस्य चोत्तरं जगच्च स इति, इदं तादात्म्यमन्तर्यामिरूपेणात्मतयाऽवस्थानकृतं न तु वस्त्वैक्यकृतम् । यन्मयमिति प्रश्नस्योत्तरत्वात् जगच्च स इति सामानाधिकरण्यस्य यन्मयमित्यत्र मयट् न विकारार्थः पृथक्प्रश्नवैयर्थ्यात् । नापि प्राणमयादिवत्स्वार्थिकः जगच्च स इत्युत्तरानुपपत्तेः । तदा हि विष्णुरेवेत्युत्तरमभविष्यत्



यन्मधीतं कृतमित्यर्थः । ओदनपाकं पचतीतिवत् ॥ २ ॥ त्वत्प्रसादादिति ॥ अन्ये विद्वांसो मां सर्वशास्त्रेष्वकृतश्रमं न वक्ष्यन्ति अपि तु विद्विषोपि कृताभ्यासं वक्ष्यन्तीत्यर्थः ॥ ३ ॥ सोहमिति ॥ पूर्वं यथा जगद्बभूव पुनश्च यथा भविष्यतीति जगतो जन्मप्रकारप्रश्नः ॥ ४ ॥ यन्मयमिति ॥ यन्मयमित्युपादानप्रश्नः यतश्चेति निमित्तप्रश्नः लीनमासीद्यत्रेति लयाधारप्रश्नः ॥ ५ ॥

यत्प्रमाणानि भूतानि देवादीनां च संभवम् ॥ समुद्रपर्वतानां च संस्थानं च यथा भुवः ॥ ६ ॥ सूर्यादीनां च संस्थानं प्रमाणं मुनिसत्तम ॥ देवादीनां तथा वंशान्मनून्मन्वन्तराणि च ॥७॥ कल्पान् कल्पविभागांश्च चातुर्युगविकल्पितान् ॥ कल्पांतस्य स्वरूपं च युगधर्मांश्च कृत्स्नशः ॥ ॥ ८ ॥ देवर्षिपार्थिवानां च चरितं यन्महामुने ॥ वेदशाखाप्रणयनं यथावद्व्यासकर्तृकम् ॥ ९ ॥ धर्मांश्च ब्राह्मणादीनां तथा चाश्रमवासिनाम् ॥ श्रोतुमिच्छाम्यहं सर्वं त्वत्तो वासिष्ठनन्दन ॥ १० ॥ ब्रह्मन्प्रसादप्रवणं कुरुष्व मयि मानसम् ॥ येनाहमेतज्जानीयां त्वत्प्रसादान्महामुने ॥ ११ ॥ श्रीपराशर उवाच ॥ साधु मैत्रेय धर्मज्ञ स्मारितोस्मि पुरातनम् ॥ पितुः पिता मे भगवान् वसिष्ठो यदुवाच ह ॥ १२ ॥

उत्तरमुक्तं भवेत्, अतः प्राचुर्यार्थ एव कृत्स्नं जगत्तदात्मकतया तत्प्रचुरमेव तस्माद्यन्मयमित्यस्य प्रतिवचनं जगच्च स इति सामानाधिकरण्यं शरीरात्मभावनिबन्धनम् । अन्यथा बाधायां सामानाधिकरण्याश्रयणेन निर्विशेषवस्तुप्रतिपादनपरत्वे शास्त्रस्याभ्युपगम्यमाने सर्वाण्येतानि प्रश्नप्रतिवचनानि न संगच्छेरन्, तद्विवरणरूपं च कृत्स्नं शास्त्रं तत्पक्षे हि प्रपञ्चभ्रमस्य किमधिष्ठानं निर्विशेषज्ञानमात्रमिति प्रश्नप्रतिवचने स्याताम् । जगच्च स इति जगद्ब्रह्मणोरेकद्रव्यत्वेन सामानाधिकरण्ये च ब्रह्मणः कल्याणगुणैकतानत्वं हेयप्रत्यनीकत्वं च बाध्येत सर्वाशुभास्पदं च ब्रह्म भवेत् तस्मादात्मशरीरभाव एवेदं सामानाधिकरण्यं मुख्यमिति वक्ष्यामः । न च यतश्चेत्यस्य कारणमात्रवाचित्वेपि यन्मयमित्यस्योपादानकारणविषयत्वाद्ब्राह्मणबलीवर्दन्यायेन यत इति निमित्तकारणपरमिति वाच्यम् । तस्यागतिविषयत्वात् अत्र मयटः प्राचुर्यार्थत्वेन गत्यन्तरोपपादनाच्च। स्वार्थिकत्वे यज्जगदिति प्रश्नस्य विष्णुर्जगदित्युत्तरे[१]कानुपपत्तिरिति चेत् तदा हि बाधायां सामानाधिकरण्यमभिहितं स्यात् । ततश्च स्थाणुरेव न पुरुष इतिवद्विष्णुरेव न जगदित्यर्थः । स्यात्तथा जगद्विष्णुरिति जगद्ब्रह्मणोरैक्योपदेशस्य न जगद्विष्णुरिति वैय्यधिकरण्यमर्थः स्यादिति श्रुतिविरुद्धाश्रुतबाधकल्पना स्यात् । अर्थवत्त्वे सिद्ध्यति मयटः स्वार्थिकत्वेन वैय्यर्थ्यं चायुक्तम् । लीनमासीद्यथा यत्र येन क्रमेण यत्र लीनं सकारणम् ॥५॥ यत्प्रमाणानीति । पृथिव्यादीनि यत्प्रमाणानीति महाभूतादीनामियत्ताप्रश्नः जगतः प्रमितिसाधनप्रश्नश्च ॥६॥ सूर्यादीनामिति ॥ मन्वन्तराणि मनूनां कालाः ॥७॥ कल्पानिति ॥ कल्पान् ब्रह्मायुर्मितान् महाकल्पान् चातुर्युगकल्पितान् चतुर्युगपरिवृत्तिकल्पितान् देवादीनां च सम्भवमित्यनुषङ्गः । चतुर्युगैरावर्त्तमानैर्विभक्तानित्यर्थः । कल्पविभागान् महाकल्पांशान् पद्मादीन् ब्रह्मदिवसान् कल्पान्तः प्रलयः । चातुर्युगं भावि वेदविभजनं चतुर्युगस्य परिमाणमिति वा ॥८॥९॥ धर्मानिति ॥ सर्वम् अन्ययोगादि च ॥ १० ॥ ११ ॥ वासिष्ठनन्दनेत्यामन्त्रणेन गुरुप्रसादादेव ज्ञानमि

यदिति ॥ प्रमाणमियत्ताप्रकाशकं वा यत्परिमाणानि भूतानि यत्प्रकाश्यानि वेत्यर्थः । देवादीनां च सम्भवमित्यनुसर्गप्रश्नः ॥ ६ ॥ ७ ॥ कल्पानिति ॥ कल्पान् ब्रह्मायुःपरिमितान्महाकल्पान् कल्पविकल्पान्ब्रह्माहःसंज्ञिकान् । विभागानिति पाठेपि स एवार्थः । चतुर्युगैरावर्त्तमानैर्विकल्पितान्विभक्तान् ॥ ८ ॥ ९ ॥ धर्मानिति ॥ वासिष्ठः शक्तिः तस्य नन्दनः सुतः तस्य सम्बुद्धिः ॥ १० ॥ ब्रह्मन्निति ॥ प्रसादप्रवणं प्रसादाभिमुखम् । येन प्रसादप्रवणेन चित्तेन जातात्त्वत्प्रसादादहमेतत्सर्वं जानीयाम् ॥ ११ ॥ १२ ॥

(१) उत्तरे कानुपपत्तिरिति च्छेदः ।

विश्वामित्रप्रयुक्तेन रक्षसा भक्षितः पुरा ॥ श्रुतस्तातस्ततः क्रोधो मैत्रेयाभून्ममातुलः ॥१३॥ ततोऽहं रक्षसां सत्रं विनाशाय समारभम् ॥ भस्मीभूताश्च शतशस्तस्मिन्सत्रे निशाचराः ॥ १४ ॥ ततः संक्षीयमाणेषु तेषु रक्षस्वशेषतः ॥ मामुवाच महाभागो वसिष्ठो मत्पितामहः ॥ १५ ॥ अलमत्यन्तकोपेन तात मन्युमिमं जहि ॥ राक्षसा नापराध्यन्ति पितुस्ते विहितं हि तत् ॥१६॥ मूढानामेव भवति क्रोधो ज्ञानवतां कुतः ॥ हन्यते तात कः केन यतः स्वकृतभुक्पुमान् ॥ १७ ॥ सञ्चितस्यापि महता वत्स क्लेशेन मानवैः ॥ यशसस्तपसश्चैव क्रोधो नाशकरः परः ॥ ॥ १८ ॥ स्वर्गापवर्गव्यासेधकारणं परमर्षयः ॥ वर्जयंति सदा क्रोधं तात मा तद्वशो भव ॥ १९ ॥ अलं निशाचरैर्दग्धैर्दीनैरनपकारिभिः ॥ सत्रं ते विरमत्वेतत्क्षमासारा हि साधवः ॥ २० ॥ एवं तातेन तेनाहमनुनीतो महात्मना ॥ उपसंहृतवान्सत्रं सद्यस्तद्वाक्यगौरवात् ॥ २१ ॥ ततः प्रीतः स भगवान्वसिष्ठो मुनिसत्तमः ॥ संप्राप्तश्च तदा तत्र पुलस्त्यो ब्रह्मणः सुतः ॥ २२ ॥ पितामहेन दत्तार्घ्यः कृतासनपरिग्रहः ॥ मामुवाच महाभागो मैत्रेय पुलहाग्रजः ॥ २३ ॥ पुलस्त्य उवाच ॥ वैरे महति यद्वाक्याद्गुरोरद्याश्रिता क्षमा ॥ त्वया तस्मात्समस्तानि भवाञ्शास्त्राणि वेत्स्यति ॥ २४ ॥ सन्ततेर्न ममोच्छेदः क्रुद्धेनापि यतः कृतः ॥ त्वया तस्मान्महाभाग ददाम्यन्यं महावरम् ॥ २५ ॥ पुराणसंहिताकर्त्ता भवान्वत्स भविष्यति ॥ देवतापारमार्थ्यं च यथावद्वेत्स्यते भवान् ॥ २६ ॥ प्रवृत्ते च निवृत्ते च कर्मण्यस्तमला मतिः ॥ मत्प्रसादादसंदिग्धा तव वत्स भविष्यति ॥ २७ ॥

त्युक्त्या च पुरातनं वसिष्ठवरदानवृत्तांतं संस्मारितो हृष्टः पराशरो वक्ष्यमाणस्यार्थस्य श्रद्धेयत्वसिद्धये तं वृत्तान्तमाख्याति साध्वित्यादिना ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ अलमिति ॥ मन्युं सत्रम् ॥ १६ ॥ १७ ॥ १८ ॥ यशस्तपसोर्नाशे स्वर्गापवर्गसाधनधर्मज्ञानप्रतिबन्धो जायते इत्याह स्वर्गेति ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ ॥ २५ ॥ पुराणेति ॥ संहितातुल्यत्वात्संहिता तस्याः कर्ता यथावद्वेत्स्यते विभूतिविग्रहगुणकर्मस्वभावादिभिर्देवतामसंशयविपर्यासं यथावज्ज्ञास्यति ॥ २६ ॥ प्रवृत्त

वसिष्ठस्तत्र कदा किमुवाचेत्यपेक्षायां तदुक्तेरुपोद्घातभूतां कथामाह–विश्वामित्रप्रयुक्तेत्यादिना ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ स्वर्गेति ॥ यशस्तपसोर्नाशकत्वादेव स्वर्गापवर्गयोः स्वर्गमोक्षयोः व्यासेधः प्रतिबन्धः, तस्य कारणं कोपः, हे तात तद्वशो मा भव ॥ १९ ॥ २० ॥ २१ ॥ गुर्वाज्ञाकारिणां शत्रुपक्षीया अप्यनुकूला भवन्तीति दर्शयन्नाह–तत इत्यादिना ॥ २२ ॥ ॥ २३ ॥ वैर इति ॥ यद्यस्मात्स्वगुरोर्वाक्यात्क्षमा आश्रिता ॥ २४ ॥ २५ ॥ २६ ॥ प्रवृत्त इति ॥ तस्मात्प्रवृत्ते निवृत्ते च कर्मणि अस्तमला ज्ञानविपर्ययशून्या मतिर्भविष्यति । ते च कर्मणी स्मृतिप्रसिद्धे–

ततश्च प्राह भगवान्वसिष्ठो मे पितामहः ॥ पुलस्त्येन यदुक्तं ते सर्वमेतद्भविष्यति ॥२८॥ इति पूर्वं वसिष्ठेन पुलस्त्येन च धीमता ॥ यदुक्तं तत्स्मृतिं याति त्वत्प्रश्नादखिलं मम ॥ २९ ॥ सोऽहं वदाम्यशेषं ते मैत्रेय परिपृच्छते ॥ पुराणसंहितां सम्यक् तां निबोध यथातथम् ॥३०॥ विष्णोः सकाशादुद्भूतं जगत्तत्रैव च स्थितम् ॥ स्थितिसंयमकर्ताऽसौ जगतोस्य जगच्च सः ॥ ३१ ॥ इति श्रीविष्णुपुराणे प्रथमेंशे प्रथमोऽध्यायः ॥१॥

इति ॥ प्रवृत्तं काम्यं कर्म निवृत्तं निष्कामं ज्ञानपूर्वकम् । अस्तमलाऽज्ञानविपर्यासरहिता ॥ २७ ॥२८ ॥ २९ ॥ ३० ॥ अथ भगवान्पराशरो य एवं गुरुप्रसादात्साक्षात्कृतशास्त्रार्थः सोऽहं वदामीति स्वस्य गुरुत्वाधिकारं सूचयन् प्रश्नेषु जगत्कारणवस्तुविशेषस्तेन च जगत्सम्बन्धप्रकारविशेषश्च प्रष्टुः प्राधान्येन जिज्ञासित इति जानन्प्रधानभूतप्रश्नप्रतिवचनत्वेन संक्षेपतः पुराणार्थमाह—विष्णोः सकाशादिति ॥ तथाहि मुमुक्षोः क्षेत्रज्ञस्य "यतो वा इमानि भूतानि जायन्ते, तत्कारणं सांख्ययोगाधिगम्यं कारणं तु ध्येयम्" इत्यादिश्रुतेर्जगत्कारणविशेषो जिज्ञास्यः तेन सह जगत्संबन्धप्रकारविशेषश्च तत्र हि शरीरशरीरिभावपर्याये नियाम्यनियामकत्वलक्षणे ज्ञाते जीवस्य परस्माद्भेदः "पृथगात्मानं प्रेरितारं च मत्वा; ज्ञाज्ञौ द्वावजावीशानीशौ नित्योनित्यानाम्" इत्यादिभ्यः श्रुतिभ्यः श्रूयमाणः स्वरूपत एवेति निश्चेतव्यम् । अन्यथा तस्यौपाधिकत्वेऽविद्यापरिकल्पितत्वे वा तयोर्नियाम्यनियामकभावो न स्यात् । न हि घटकाशो महाकाशेन नियम्यते नियमनं हि व्याप्यावस्थानं न हि घटाकाशे महाकाशस्तिष्ठति घटे घटाकाशो महाकाशश्चेत्याकाशद्वयोपलब्धिः स्यात् । अविद्यापरिकल्पितस्य न नियमनं सम्भवति । न स्थाणौ परिकल्पितश्चोरः केनापि नियम्यते किं च भेदस्यौपाधिकत्वे कल्पितत्वे वा ब्रह्मविद्यया तत्त्वमसीतिवाक्यार्थज्ञानेन वोपाध्यविद्ययोर्नाशात्तत्कृतभेदो जीवशब्दार्थो नश्येदिति मोक्षस्यापुरुषार्थत्वात्तत्साधने न कश्चित्प्रवर्त्तेत । जीवस्य नित्यत्वे श्रुतिविरोधश्च/जीवपरयोः सम्बन्धे नियाम्यनियन्तृत्वरूपे मोक्षस्य पुरुषार्थता सिद्ध्यति स हि संबन्धः शेषशेषित्वात्मा शेषभूतस्य

"इह चामुत्र काम्यं यत्प्रवृत्तमभिधीयते । वैराग्यज्ञानपूर्वं यन्निवृत्तमुपदिश्यते" इति । तथा, यथा श्रोतुस्सुखेन प्रतिपत्तये ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ संक्षेपतस्तावत्प्रश्नोत्तरतया पुराणार्थमाह—विष्णोरितिश्लोकेन विष्णोरिति ॥ सकाशात्काशः प्रकाशः ईक्षणमिति यावत्, तत्सहिताद्विष्णोर्जगदुद्भूतम् । "स ऐक्षत लोकान्नु सृजेय" इति "सोऽकामयत बहुस्यां प्रजायेय" इत्यादिश्रुतिसिद्धम् । चिच्छक्ति इच्छाशक्तिर्पर्यायं यदीक्षणम लोचनात्मकं तेन प्रकारेण जगदुद्भूतम् अनेन यथा बभूवेत्यस्य प्रश्नस्योत्तरम् । तत्रैव च स्थितं प्रलयकाल इति लयाधारप्रश्नस्योत्तरम् । चशब्दाज्जगतः स्थितिरपि तत्रैवेत्युक्तम् । अस्य जगतः स्थितिसंयमयोरसावेव कर्त्ता जन्मनोऽप्युपलक्षणम् । अनेन यतश्चैतच्चराचरात्मकं जगदित्यस्य निमित्तप्रश्नस्योत्तरम् । जगच्च स एवेत्युपादानप्रश्नस्योत्तरम् । उपादानकारणरूपत्वात्कार्य्यस्य अनेनैव विष्णोस्सर्वदा जगदुपादानकर्तृत्वादिकथनेन विष्णोरेवोद्भविष्यति । तत्रैव स्थास्यतीत्यादिसर्वप्रश्नस्योत्तरमर्थात्प्रष्टव्यम् । अत्र यथा जगद्बभूव तथा पुनर्भविष्यति, यन्मयं जगद्यतश्च यत्र पूर्वं लीनं पुनश्च यत्र लयमेष्यति, यत्प्रमाणानि भूतानि देवादीनां च सम्भवमित्यष्टप्रश्नोत्तरं प्रथमांशे । समुद्रपर्वतादीनां संस्थानं भुवः संस्थानं सूर्यादीनां च संस्थानं तेषां परिमाणं चेति चतुःप्रश्नोत्तरं द्वितीयांशे । "देवादीनां तथा वंशान्मनून्मन्वन्तराणि च । वेदशाखाप्रणयनं यथावद्व्यासकर्त्तृकम् । धर्मांश्च ब्राह्मणादीनां तथा चाश्रमवासिनाम्" इति षट्प्रश्नोत्तरं तृतीयांशे । "देवर्षिपार्थिवादीनां चरितम्" इति प्रश्नस्योत्तरम् । तद्वंशविस्तारोक्तिपूर्वकं चतुर्थांशे । तत्र च यदुवंशे भूभारहरणार्थमवतीर्णस्य

श्रीपराशर उवाच ॥ अविकाराय शुद्धाय नित्याय परमात्मने ॥ सदैकरूपरूपाय विष्णवे सर्वजिष्णवे ॥ १ ॥

जीवस्य शेषिणं परं प्रतिश्रूयमाणा समाहितैव हि स्वरूपानुरूपा कैङ्कर्यसम्पत्तिः, सैव खलु मोक्षस्य काष्ठा। अत्र जगत्कारणविशेषप्रश्नस्योत्तरं विष्णोः सकाशादिति। सकाशात् काशः प्रकाशो ज्ञानम्। "स ऐक्षत लोकान्नु सृजेया" इति "तदैक्षत बहुस्याम्" इत्याद्युक्तसङ्कल्परूपप्रकाशसहितादित्यर्थः। अथ वा सकाशशब्दः स्वरूपवचनः आचार्यस्य सकाशादित्यादिवत्। यथा बभूव यथा भविष्यतीत्यनयोरपीदमेवोत्तरम्। भगवतः पूर्वसर्गप्रकारक्रमस्मृतिरूपसङ्कल्पेन ह्युत्तरोत्तरसर्गप्रवाहः "धाता यथापूर्वमकल्पयत्" इति श्रुतेः। 'यथर्तुष्वृतुलिङ्गानि' इति स्मृतेश्च लीनमासीदित्यादेरुत्तरं तत्रैव च स्थितमिति उपादाने कार्यस्य संस्थितिर्हि लयः। स्थितिसंयमकर्तेति स्थितिरुभयविधा "येन जातानि जीवन्ति" इत्युक्ता प्राणनलक्षणान्तरात्मतया स्थितिरेका लोकपालसूर्यसोमादिरूपेण बहिः पोषकत्वादिरूपा स्थितिरपरा। अग्न्यन्तकादिरूपेण संहारः संयमः/तत्र बहिः स्थितिः ÷ स्थितिसंयमयोः कर्त्तेत्युक्ता/प्राणनलक्षणा स्थितिः 'जगच्च सः' इत्युक्ता। इदमेव यन्मयमित्यस्य जगद्ब्रह्मणोः संबन्धप्रकारविशेषप्रश्नस्याप्युत्तरम्। यद्वा श्रुतिस्मृत्यादिभिर्नियमनं संयमः तत्रैव च स्थितं स्थितिसंयमयोः कर्त्तेति प्रकारेण स्वरूपप्रश्नोत्तरमेव॥ ३१॥ श्रीरित्यादीति सर्वपुराणानामादिभूते ब्रह्माण्डाख्ये महापुराण उद्धृतायां पाराशर्यसंहितायामिति प्रथमोध्याय इत्यन्वयः॥ इति श्रीभगवद्रामानुजपदाब्जभृंगायमाणश्रीविष्णुचित्तार्यविरचिते विष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये प्रथमेंशे प्रथमोऽध्यायः॥ १ ॥ तदेवं संक्षेपत उक्तानां प्रतिवचनानां विवरणतयाऽवतार्यमाणस्य पुराणस्यारम्भमविकारायेत्यादिभिर्नवभिः श्लोकैः पुराणप्रतिपाद्यस्वाभिमतदेवतानमस्कारपूर्वकं प्रतिजानीते। तत्र कारणत्वाभिधानतः प्रसक्तं विकारित्वं निरस्यति—अविकारायेति॥ अनेनाचेतनाद्व्यावृत्तिः "न जायते म्रियते" इत्यादिश्रुतेः। क्षेत्रस्यापि समानमविकारित्वमिति तद्व्यावृत्तिमाह—शुद्धायेति। शुद्धिः क्लेशकर्मादिराहित्यम् अशुद्धास्ते समस्तास्त्विति हि वक्ष्यति। ईदृशी शुद्धिर्मुक्तस्याप्यस्तीति तद्व्यावृत्तिमाह—नित्यायेति। शुद्धत्वाकारेण नित्याय अविकारित्वशुद्धत्वनित्यशुद्धत्वादीनि नित्यसूरीणामपि साधारणानीत्यत आह—परमात्मन इति। परो यस्मान्नास्ति स परमः अपराधीननियंतृतया सर्वस्य व्यापनादात्मा नित्यसूरयस्तेन परवन्तः, अतः पदचतुष्टयेन प्रधानाद्यचेतनब्रह्मसनकादिभावनायुक्तक्षेत्रज्ञमुक्तनित्यसूरिभ्यो व्यावृत्तं परमस्वरूपं शोधितम्। अथ ज्ञानशक्त्यादिवदसाधारणं तद्वदेव सर्वविलक्षणं स्वानुरूपं ज्योतिर्मय

हरेश्चरितं विस्तरेण पञ्चमांशे। "कल्पान्कल्पविकल्पांश्च कल्पान्तस्य स्वरूपं च" इति प्रश्नत्रयस्य प्रथमांशे संक्षेपेण दत्तोत्तरस्य युगधर्मांश्च कृत्स्नशः इत्यस्य च तच्छ्लोकोक्तस्योत्तरं षष्ठांश इति विवेकः॥ ३१॥ इति श्रीधरस्वामिविरचितायामात्मप्रकाशाख्यायां श्रीविष्णुपुराणव्याख्यायां प्रथमांशे प्रथमोऽध्यायः॥ १॥ ॥ छ ॥ ॥ अथैतत्पुराणप्रतिपाद्यं विष्णोः स्वरूपं परावरपररूपेण प्रणमन्विस्तरेण पुराणार्थं वक्तुमाह—अविकारायेत्यादिनवभिः श्लोकैः। तत्र तावत्पूर्वाध्यायान्ते पुराणार्थसंक्षेपश्लोकेन जगदुपादानकर्तृत्वाद्युक्त्या प्राप्तं विकारादिप्रसंगं वारयन्प्रणमति अविकारायेति॥ लोके हि क्रियाश्रयत्वात्कर्त्ता विकारी दृष्टः

नमो हिरण्यगर्भाय हरये शंकराय च ॥ वासुदेवाय ताराय सर्गस्थित्यन्तकारिणे ॥ २ ॥ एकानेकस्वरूपाय स्थूलसूक्ष्मात्मने नमः ॥
अव्यक्तव्यक्तरूपाय विष्णवे मुक्तिहेतवे ॥ ३ ॥ सर्गस्थितिविनाशानां जगतो यो जगन्मयः ॥ मूलभूतो नमस्तस्मै विष्णवे परमात्मने ॥ ४ ॥

मादित्यवर्णं "हिरण्मयः पुरुषो दृश्यते विद्युतः पुरुषादधि" इति उपनिषत्सिद्धं स्वरूपमाह—सदैकरूपरूपायेति । प्रथमो रूपशब्दः स्वभाववाची । अथवा सदैकरूपं तुल्यप्रकारं हेयप्रत्यनीकतया कल्याणैकतानतया च स्वरूपतुल्यं, द्वितीयो रूपशब्दो विग्रहवाची । अथ सर्वव्याप्तिलक्षणमैश्वरं गुणं ख्यापयन्विशेष्यं निर्दिशति—विष्णव इति चिदचिद्व्याप्त्याप्रसक्तं दोषं परिहरति सर्वजिष्णव इति । जयो हि परस्य स्ववशे स्थापनं ताच्छील्यप्रत्ययेन व्याप्तिजयौ स्वाभाविकाविति दर्शयति ॥ १ ॥ ब्रह्मशिवयोस्तद्विभूतित्वमाह—नमो हिरण्यगर्भायेति ॥ चतुर्मुखस्वावताररुद्ररूपेण हि सृष्ट्यादिकर्तृत्वं ताराय संसारोत्तारकाय मोक्षप्रदाय वासुदेवरूपेण मोक्षप्रदत्वं हरिशब्दे सत्यपि वासुदेवशब्दो हरेरवतारत्वज्ञापनार्थः । "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" "मामेव ये प्रपद्यन्ते मायामेतां तरंति ते ॥ संसारपारं पदमीप्स्यमानैराराधनीयो हरिरेक एव । ब्रह्माणं शितिकंठं च याश्चान्या देवताः स्मृताः । प्रतिबुद्धा न सेवंते यस्मात्परिमितं फलम् । अन्तवत्तु फलं तेषाम्" इत्यादिभिर्भगवत एव मोक्षप्रदत्वमुक्तम् । अत्र हिरण्यगर्भादिवद्धरेर्न विभूतित्वं "न हि पालनसामर्थ्यमृते सर्वेश्वरं हरिम्" इति तस्य सर्वेश्वरत्वस्योक्तत्वात् ॥ २ ॥ व्यक्ताव्यक्तयोरपि तद्रूपत्वमाह—एकानेकेति ॥ कारणदशायामेकसूक्ष्माव्यक्तत्वादीनि कार्यदशायामनेकस्थूलव्यक्तत्वादीनि विष्णवे तद्व्यापिने उभयावस्थप्रकृतेः स्ववश वर्तित्वात्तन्मुक्तिहेतवे ॥ ३ ॥ अचिन्त्यसंगात्कालरूपत्वमाह—सर्गस्थितीति ॥ जगत्सर्गादिमूलभूतो हि कालः "न कालेन विना ब्रह्मा सृष्टिनिष्पादकोऽभवत्" इत्यादेः जगन्मयः उन्मेषनिमेषकलोन्मानसूर्यगमनादिना पदार्थावच्छेदस्वरूपपरमात्मने अकालवश्याय "कालः पचति भूतानि सर्वाण्येव सहात्मना । कालः पक्कोयमन्वेति

रागादिधर्मवांश्च साहङ्कारश्च तद्व्यावर्त्तयति अविकारायेति चतुर्भिः पदैः । उपादानकारणमपि मृत्स्वर्णादिकं घटकटकादिनानापरिणामैरनेकरूपं दृष्टं तद्व्यावर्त्तयति—एकेति । एकरूपमेव रूपं यस्य तस्मै, सदेत्यस्य सर्वत्रान्वयः । तत्र हेतुः—सर्वजिष्णवे अचिन्त्यैश्वर्येण सर्वाञ्जेतुं शीलं यस्य तस्मै, एवंभूताय विष्णवे नम इत्युत्तरेणान्वयः ॥ १ ॥ ब्रह्मादित्रिमूर्त्तिरूपेण प्रणमति—नम इति ॥ हिरण्यगर्भादिरूपाय तै रूपैस्सर्गस्थित्यन्त कारिणे वासुदेवाय नमः । तदेवं संसारप्रवर्त्तकत्वमुक्तं तन्निवर्त्तकत्वेन प्रणमति । ताराय भक्तानां ताराय ॥ २ ॥ किञ्च—एकेति ॥ एकमनेकं स्वरूपं यस्य स्थूलस्सूक्ष्मश्चात्मा स्वरूपं यस्य विरुद्धस्वरूपं द्वयं तस्य कथमित्यत्राह—अव्यक्तव्यक्तरूपाय अव्यक्तं कारणं व्यक्तं कार्यं तदुभयरूपाय अतोऽव्यक्तरूपत्वादेकरूपाय सूक्ष्मरूपाय व्यक्तरूपत्वाच्चानेकरूपाय स्थूलात्मने चेत्यर्थः । एवं सर्वात्मत्वेनोपासकानां मुक्तिहेतवे नमः ॥ ३ ॥ कार्यकारणत्वेनाभिनयन्प्रणमति—सर्गेति ॥ जगतः सर्गादीनां यो मूलभूतो जगन्मयश्च, अतो विष्णवे सर्वव्यापिने । अथापि परमात्मने कार्यकारणाभ्यां परम उत्कृष्ट आत्मा स्वरूपं यस्य तत्सङ्गरहितायेत्यर्थः ॥४॥

आधारभूतं विश्वस्याप्यणीयांसमणीयसाम् ॥ प्रणम्य सर्वभूतस्थमच्युतं पुरुषोत्तमम् ॥ ५ ॥ ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः ॥ तमेवार्थ स्वरूपेण भ्रान्तिदर्शनतः स्थितम् ॥ ६ ॥ विष्णुं ग्रसिष्णुं विश्वस्य स्थितौ सर्गे तथा प्रभुम् ॥ प्रणम्य जगतामीशमजमक्षयमव्ययम् ॥ ७ ॥ कथयामि यथापूर्वं दक्षाद्यैर्मुनिसत्तमैः ॥ पृष्टः प्रोवाच भगवानब्जयोनिः पितामहः ॥ ८ ॥ तैश्चोक्तं पुरुकुत्साय भूभुजे नर्मदातटे ॥ सारस्वताय तेनापि मह्यं सारस्वतेन च ॥ ९ ॥ परः पराणां परमः परमात्मात्मसंस्थितः ॥ रूपवर्णादिनिर्देशविशेषणविवर्जितः ॥ १० ॥

यस्तं वेद स वेदवित् । कलामुहूर्त्तादिमयश्चकालो न यद्विभूतेः परिणामहेतुः" इत्यादेः ॥ ४ ॥ समष्टिक्षेत्रज्ञरूपत्वमाह—आधारभूतमिति ॥ विश्वस्य प्रकृतिपरिणामस्य जीवकर्मनिमित्तत्वेन तच्छरीरतया तदाधारत्वं 'भूतमात्राः प्रज्ञामात्रास्वर्पिताः ययेदं धार्यते जगत्' इत्यादि।'अणीयांसमणीयसां' प्रकृतेरतिसूक्ष्मावस्थाविशेषाणामपि व्याप्त्या ततोपि सूक्ष्मतरम् 'अव्यक्तमक्षरे लीयते' इत्यादि। सर्वभूतस्थं सर्वभूतेष्वात्मतयावस्थितम् । अच्युतं तद्विकाररहितम् । एवं रूपसमष्टिपुरुषशरीरं पुरुषोत्तमं प्रणम्य कथयामीत्यन्वयः । यद्वा—सर्वभूतस्थं सर्वात्मसु स्थितम् अच्युतं जीवगतज्ञानसङ्कोचादिरहितम् ॥ ५ ॥ व्यष्टिरूपत्वमाह—ज्ञानस्वरूपमिति ॥ वस्तुवृत्त्या परिच्छिन्नानुकूलज्ञानैकस्वरूपम् ।अत्यन्तनिर्मलं सर्वथामलरूपं दुःखाज्ञानादिरहितम्, तमेव भ्रान्तिदर्शनतः अनात्मन्यात्मविज्ञानात् अर्थस्वरूपेण दृश्यस्वरूपेण स्थितम् । यद्वा देवमनुष्यादितत्तदाकारविशिष्टपिण्डमात्रतया प्रतिभासमानम् ॥६॥ उक्तमर्थमुपसंहरति—विष्णुमिति ॥ प्रभुं सृष्ट्यादिषु नैरपेक्ष्येण स्वच्छन्दम् अजमक्षयं कर्माधीनजन्मनाशरहितम् अव्ययं पूर्वोक्तमहाविभूतेरप्रच्युतम् ॥ ७ ॥ अथ श्रोतॄणामादरार्थं स्वस्याप्ततया गुरुपारंपर्यक्रममाह—कथयामीति द्वाभ्याम् ॥ भगवान् उत्पत्तिप्रलयादितत्त्वज्ञः "उत्पत्तिं च विनाशं च भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति" इति वचनात् । कुतः अब्जयोनिर्यतो भगवदौरसस्तच्छिष्यश्च "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति श्रुतेः॥८॥९॥अथ विस्तरेण पुराणं वक्तुमारभते—परः पराणामिति॥स्वरूपरूपगुणैश्वर्यादिभिरुत्कृष्टेभ्योप्युत्कृष्टः।

आधारेति ॥ आधारभूतमित्यादीनां प्रणम्य कथयामीति चतुर्थेनान्वयः । अणीयसामप्यणीयांसं सूक्ष्मतमम् । सर्वभूतस्थं सर्वभूतेषु नियन्तृत्वेन स्थितम् । सर्वभूतान्तस्थत्वेप्यच्युतं तैरपरिच्छिन्नम् ॥ ५ ॥ ज्ञानेति ॥ अर्थस्वरूपेण दृश्यरूपेण भ्रान्तिदर्शनतः द्रष्टृजीवभ्रान्तिज्ञानेन स्थितम् ॥ ६ ॥ विष्णुमिति ॥ विष्णुं ग्रसिष्णुमित्यनेन कालरूपेण प्रणामः । अतः सर्गस्थित्यन्तकारिण[1] इत्यनेनापौनरुक्त्यम् । अत एव नमस्य स्वरूपभेदद्योतनार्थं प्रणम्येत्यस्यावृत्तिः । अक्षरमचलम् ॥ ७ ॥ ८ ॥ पितामहेन दक्षादिभ्यः प्रोक्तं त्वया कथं कथ्यते तत्राह—तैश्चोक्तमिति ॥ ९ ॥ अव्यक्तादिचतूरूपस्य परमात्मनो जगत्सृष्ट्यादि वक्तुं ततः प्राचीनं तत्स्वरूपमाह, पर इत्यादिचतुर्भिः—परः पराणामिति ॥ "इन्द्रियेभ्यः परा ह्यर्था ह्यर्थेभ्यश्च परं मनः" इत्यादिश्रुतिभ्यः परत्वेन प्रतिपादितानामिन्द्रियादीनां परः प्राक्तनः अत एव परम उत्कृष्टः परमात्मा

१ सर्गस्थित्यंतकारणम्, इति पाठान्तरम् ।

अपक्षयविनाशाभ्यां परिणामर्धिजन्मभिः ॥ वर्जितः शक्यते वक्तुं यः सदास्तीति केवलम् ॥११॥ सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः ॥ ततः स वासुदेवेति विद्वद्भिः परिपठ्यते ॥१२॥ तद्ब्रह्म परमं नित्यमजमक्षयमव्ययम् ॥ एकस्वरूपं तु सदा हेयाभावाच्च निर्मलम् ॥१३॥ तदेव सर्वमेवैतद्व्यक्ताव्यक्तस्वरूपवत् ॥ तथा पुरुषरूपेण कालरूपेण च स्थितम् ॥ १४ ॥

परमः स्वस्मात्पररहितः । परमात्मा आप्नोतीत्यात्मा स्वयमात्मान्तररहितश्च आत्मसंस्थितः स्वाधारः रूपं संस्थानं देवादिजातिः वर्णः शुक्लादिः । आदिशब्देन क्रियाद्रव्ये गृह्येते । निर्देशः संज्ञा एतैर्जातिगुणक्रियाद्रव्यनामाख्यैः कल्पनाहेतुभिर्विशेषणैर्विवर्जितः । रूपवर्गेतिपाठे वर्गो जातिः ॥ १० ॥ षड्भिर्भावविकारैर्वर्जित इत्याह अपक्षयेत्यादिना—अपक्षय इति ॥ सदास्तीति वचनात् कादाचित्कास्तित्वविकारो निरस्तः एतत्सत्तयानभिव्याप्तस्य कालस्याभावात् अनेन कालानवच्छेद उक्तः ॥ ११ ॥ देशानवच्छेदं नाम विशेषनिर्वचनेन दर्शयति सर्वत्रेति ॥ "नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभत् । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" इत्यादेः समस्तमत्र वसति जातिगुणप्रभावादिवत्तदधीनधारणं भवति "भर्ता सन् भ्रियमाणो बिभर्त्ति" इति श्रुतेः । अग्निजलादिभिर्नभ इव सर्वगतोपि तद्गतदोषैरसंस्पृष्टो द्योतत इत्याह—देव इति ॥ १२ ॥ एष एव वेदान्तवेद्यं ब्रह्मेत्याह—तद्ब्रह्मेति ॥ अक्षयं अपक्षयरहितम् । अव्ययं परिणामविवृद्ध्याख्यावस्थान्तररहितम् । अत एकस्वरूपं हेयमविद्यास्मितादितत्फलं मलं यथोक्तं "कामः क्रोधश्च मोहश्च हर्षो मानो मदो मतिः । विषादश्चाष्टमः प्रोक्त इत्येते मानसा मलाः" इति । गुणाः सत्त्वादयः ॥१३॥ वस्तुतोनवच्छेदमाह—तदेवेति ॥ व्यक्ताव्यक्तस्वरूपवदेतत्सर्वं तदेव ब्रह्म तथा तदेव समष्टिव्यष्टिपुरुषरूपेण कालरूपेण च स्थितम् । चिदचित्प्रकारस्य

आत्मसंस्थितः । "य आत्मनि तिष्ठन्" इत्यादिना जीवान्तर्यामित्वेन स्थितः । अनन्याधारः रूपवर्णादिनिर्देशः तदेव विशेषणम्, तेन विवर्जितः । रूपं शुक्लादि, वर्णो ब्राह्मणत्वादि आदिशब्दाज्जातिक्रिये । शुक्लो ब्राह्मणो गौः पाचक इत्यादिनिर्देशेन विशेषयितुमशक्यः । यद्वा—रूपादिनिर्देशविवर्जितः रूपाद्यभावात् । अत एव विशेषणैरपि विवर्जित इत्यर्थः ॥ १० ॥ षड्भावविकारवर्जित इत्याह—अपक्षयेति ॥ ननु च "असन्नेव स भवति असद्ब्रह्मेति वेद चेत् । अस्तिब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः" इति । "अस्तीत्येवोपलब्धव्यम्" इत्यादिश्रुतेरस्तित्वं तावदङ्गीकर्त्तव्यम् । तथा च द्वितीयो भावविकारः प्राप्त इत्याशङ्क्याह—शक्यते वक्तुं यस्सदास्तीति । सर्वदास्तित्वं च न भावविकारः किन्तु जन्मानन्तरास्तित्वमेव कदाचित्कत्वात् अतो नायं दोष इत्यर्थः ॥ ११ ॥ परमात्मैव सात्वततन्त्रविद्भिर्वासुदेव इत्युच्यत इत्याह—सर्वत्रेति ॥ सर्वत्राऽसौ वसति समस्तं चास्मिन्वसति । वै प्रसिद्धम् । यतस्ततः स वासुदेव इति विद्वद्भिरुच्यत इत्यर्थः । वसनाद्वासनाच्च वासुः द्योतनाद्देवः वासुश्चाऽसौ देवश्चेति वासुदेवः । "वसनाद्द्योतनाच्चैव वासुदेवं ततो विदुः" इति मोक्षधर्मे निरुक्तेः ॥ १२ ॥ स एवौपनिषदैर्ब्रह्मेत्युच्यत इत्याह—तद्ब्रह्मेति ॥ यः परमात्मा रूपवर्णादिराहित्येन जन्मादिराहित्येन लक्षितः स एव वासुदेव इति ब्रह्मेति चोच्यते । न वस्त्वन्तरं लक्षणभेदाभावादित्याशयेन तदेव लक्षण मनुवदति । परमं नित्यमित्यादि । हेयमविद्या तत्कार्यं च तदभावान्निर्मलं, तदुक्तं भागवते "वदन्ति ते तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम् । ब्रह्मेति परमात्मेति भगवानिति शब्द्यते" इति ॥ १३ ॥ तदेवं शुद्धस्वरूपं निरूप्य तस्यैव स्वमायाऽऽविष्कृतव्यक्तादिचतूरूपस्य सर्वप्रपञ्चोपादानत्वं निमित्तत्वञ्चाह—तदेवेति ॥ तदेव ब्रह्म एतत्सर्वं प्रपञ्चजातं कथम्भूतं सत् व्यक्ताव्यक्तस्वरूपवत् । व्यक्तं महदादि अव्यक्तं प्रधानं तत्स्वरूपवत्त्वेन रूपेण स्थितं

परस्य ब्रह्मणो रूपं पुरुषः प्रथमं द्विज ॥ व्यक्ताव्यक्ते तथैवान्ये रूपे कालस्तथापरम् ॥ १५ ॥ प्रधानपुरुषव्यक्तकालानां परमं हि यत् ॥ पश्यन्ति सूरयः शुद्धं तद्विष्णोः परमं पदम् ॥ १६ ॥ प्रधानपुरुषव्यक्तकालास्तु प्रविभागशः ॥ रूपाणि स्थितिसर्गान्तव्यक्तिसद्भावहेतवः ॥ ॥ १७ ॥ व्यक्तं विष्णुस्तथाव्यक्तं पुरुषः काल एव च ॥ क्रीडतो बालकस्येव चेष्टां तस्य निशामय ॥ १८ ॥

ब्रह्मण एव वस्तुत्वाद्वस्त्वन्तरापरिच्छेदः ॥ १४ ॥ हेयप्रत्यनीककल्याणगुणाश्रयस्य ब्रह्मणो विकाराद्विपुरुषार्थादिदोषाश्रयसर्वतादात्म्ये तद्गता दोषाः प्रसज्येरन्नित्याशंक्य "यस्यात्मा शरीरम्" इत्यादिश्रुतिसिद्धशरीरात्मभावेन तादात्म्यं न तु स्वरूपेणेत्याह—परस्येति ॥ पुरुषस्य कर्तृत्वभोक्तृत्वचेतनत्वादिना प्रकृतिं प्रति प्राधान्यात्प्राथम्यम् ॥ १५ ॥ सर्वस्य ब्रह्मरूपत्ववचनेन चोद्यं कथं परिहृतं इत्यत आह—प्रधानेति ॥ पद्यत इति पदं परप्राप्यस्वरूपं यतः प्रधानादिरूपेभ्यः परमं विलक्षणं तस्मात्सूरयः शुद्धं रूपं भूतप्रधानादिगतविकाराज्ञानादिरहितं परमं ज्ञानानन्दादिभिः सर्वोत्कृष्टं च पश्यन्तीत्यर्थः ॥ १६ ॥ ननु प्रधानादीनां नानारूपत्वेन भेदाद्ब्रह्मणस्तद्गतविकारादिदोषो मा भूत् । जगदुपादानभूतस्य ब्रह्मणः कथं विकाराद्यप्राप्तिरित्यत आह—प्रधानेति ॥ प्रधानपुरुषव्यक्तकाला रूपाणि प्रविभागशः परस्परं विकारित्वभोक्तृत्वादिस्वभावासङ्करेण स्थित्यादीनां व्यक्तौ ज्ञप्तौ सद्भावे च हेतवः । व्यक्तिर्विशेषः हेतुशब्दो ब्रह्मणस्तेभ्यो नियंतृत्वशेषित्वादिना विशेषप्रदर्शनार्थः ॥ १७ ॥ ननु प्रधानादीनां सृष्ट्यादिहेतुत्वाद्विष्णोः कथं कारणत्वमत आह—व्यक्तमिति ॥ व्यक्तादीनां तदधीनस्वरूपस्थितिप्रवृत्तित्वेन तच्छरीरत्वात्तद्विशिष्टस्य विष्णोः कारणत्वं नानुपपन्नम् । व्यक्तं विष्णुरित्यादि व्यक्तादिशरीरको विष्णुरित्यर्थः । नन्ववाप्तसमस्तकामस्य प्रयोजनाभावात्सृष्ट्यादिर्नोपपद्यत इत्यत आह—क्रीडत इति । क्रीडैव प्रयो

सत् । तथा पुरुषरूपेण कालरूपेण च स्थितं सत् ॥ १४ ॥ चतूरूपोद्भवप्रकारमाह—परस्येति ॥ "स ऐक्षत, सोकामयत" इत्यादिश्रुत्युक्तवीक्षणादिकर्त्ता पुरुषः परस्य ब्रह्मणः प्रथमं रूपं तथा च पुराणान्ते वक्ष्यति । "तस्यैव योऽनुगुणभुग्बहुधैक एव शुद्धोप्यशुद्ध इव मूर्त्तिविभागभेदैः । ज्ञानान्वितः सकलतत्वविभूतिकर्त्ता तस्मै नमोस्तु पुरुषाय सदाव्ययाय" इति । तस्यैव शुद्धस्य ब्रह्मणो यो नु समनन्तरः पुरुष इति एतस्यार्थः । तथा च नारदीये तन्त्रे—"विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यतो विदुः । प्रथमं महतः स्रष्टृर्द्वितीयं त्वण्डसंस्थितम् ॥ तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यते" इति । भागवते च "काल वृत्त्या तु मायायां गुणमय्यामधोक्षजः । पुरुषेणात्मभूतेन वीर्यमादत्त वीर्यवान् ॥ ततोभवन्महत्तत्त्वम्" इत्यादि 'व्यक्ताव्यक्ते तथैवान्ये रूपे' पुरुषेक्षितमव्यक्तं ततो जातं व्यक्तं चेति द्वे अन्ये विलक्षणे रूपे । जडत्वात्कालस्तथा परं रूपं सर्वेषां क्षोभकत्वादन्ते निर्दिष्टः ॥ १५ ॥ परस्य ब्रह्मणो रूपाणीत्युक्त्या प्राप्तं तेषामुपादेयत्वं वारयन्नाह—प्रधानेति ॥ सूरयो यत्पश्यंति तदेव विष्णोः परमं रूपमित्यर्थः ॥ १६ ॥ तर्हि प्रधानादिरूपैः किं कार्यमित्यत आह—प्रधानेति ॥ प्रधानादिरूपाणि जगतः स्थितिसर्गनाशानां व्यक्तिसद्भावहेतवः । व्यक्तिरभिव्यक्तिः प्रकाशः सद्भावः उत्पत्तिः अत्र हेतवः कारणानि कथं प्रविभागशः "चतुर्विभागः संसृष्टौ चतुर्धा संस्थितः स्थितौ । प्रलयं च करोत्यन्ते चतुर्भेदो जनार्दनः । ब्रह्मा दक्षादयः कालस्तथैवाखिलजन्तवः । विष्णुर्मन्वादयः कालः" इत्यादिना वक्ष्यमाणविभागप्रकारेण ॥ १७ ॥ नन्वेवं भूत्वा विष्णुः सर्गादौ किमर्थं प्रवर्त्तते तत्राह—व्यक्तमिति ॥ विष्णुः

अव्यक्तं कारणं यत्तत्प्रधानमृषिसत्तमैः ॥ प्रोच्यते प्रकृतिः सूक्ष्मा नित्यं सदसदात्मकम् ॥ १९ ॥ अक्षय्यं नान्यदाधारममेयमजरं ध्रुवम् ॥ शब्दस्पर्शविहीनं तद्रूपादिभिरसंहितम् ॥ २० ॥ त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम् ॥ तेनाग्रे सर्वमेवासीद्व्याप्तं वै प्रलयादनु ॥ २१ ॥ वेदवादविदो विद्वन्नियता ब्रह्मवादिनः ॥ पठन्ति चैतमेवार्थं प्रधानप्रतिपादकम् ॥ २२ ॥ नाहो न रात्रिर्न नभो न भूमिर्नासीत्तमोज्योतिरभूच्च नान्यत् ॥ श्रोत्रादिबुद्ध्यानुपलभ्यमेकं प्राधानिकं ब्रह्म पुमांस्तदासीत् ॥ २३ ॥

जनमित्यर्थः ॥ १८ ॥ अथ सृष्टिं वक्तुं प्रलयावसानेवस्थितानां प्रधानपुरुषादीनां स्वरूपमाह—अव्यक्तमित्यादिपञ्चभिः । अव्यक्तमिति ॥ यत्तदिति भगवद्रूपतयोक्तं यदव्यक्तं तत्प्रकृतिः प्रधानमित्यादिशब्दैरुच्यते मन्वादिभिः । न सांख्याद्यभिमतं नित्यं सदसदात्मकं चेतनाचेतनात्मकत्वेन नित्यम् । दारुण्यग्निरिति वक्ष्यति ॥ ॥ १९ ॥ अक्षय्यमिति ॥ अक्षरम् अकृत्स्नपरिणामि । अक्षयमिति पाठे क्षयानर्हं नान्यदाधारम् अकार्यत्वादन्यत्रासमवेतम् । अत्रान्यशब्दस्य पुल्लिंगत्वेप्यदडादेशः समासे तदलोपश्चार्षौ । अमेयं देशकालादिना अजरं कालेन न जीर्यति । ध्रुवं स्पंदरहितम् । विशेषगुणराहित्यमाह—शब्देति ॥ २० ॥ त्रिगुणमिति ॥ त्रिगुणं गुणत्रयात्मकम् अनादिप्रभवाप्ययम् । आदिः कारणं प्रभवो जन्माप्ययो लयः तैर्विहीनम् । अग्रे सृष्टेः पूर्वकाले प्रलयादनुप्राकृतप्रलयकालान्ते व्याप्तं ग्रस्तम् अम्भसेव लवणम् ॥ २१ ॥ वेदेति ॥ वेदवादो वैदिकन्यायः तद्विदः ब्रह्मनियताः वेदार्थैकरुचयः ब्रह्मवादिनः ब्रह्मैककारणत्ववादिनः । एतमू उक्तमेवार्थं प्रति प्रधानप्रतिपादकं श्लोकद्वयं पठन्तीत्याह—पठन्तीति ॥ २२ ॥ तमेव श्लोकद्वयं दर्शयति—नाह इति ॥ श्रोत्रादिबुद्ध्यानुपलभ्यं शब्दादिराहित्याच्छ्रोत्रादिजन्यज्ञानेनागम्यं प्रधानमेव प्राधानिकं स्वार्थे ठक्प्रत्ययः । ब्रह्म च पुमान् समष्टिपुरुषश्च एकमासीत् "तम आसीत्तमसा गूढमग्रे, तमः परे देव एकीभवति" इत्यादिश्रुतेः । "नाहो न रात्रिः" इति स्थूल

व्यक्तादिरूपो भवतीति यत्तत्क्रीडतो बालकस्य चेष्टामिव जानीहि, तदुक्तम् "लोकवत्तु लीलाकैवल्यम्" इति ॥ १८ ॥ अथेदानीं तदेव रूपचतुष्टयं प्रपञ्चयिष्यन्प्रथमं प्रधानं प्रपञ्चयति, अव्यक्तमित्यादिपञ्चभिः । अव्यक्तमिति ॥ यदव्यक्तं तदपिसत्तमैः प्रकृतिरिति प्रधानमिति च प्रोच्यते । नित्यं सदैकरूपं बुद्ध्यादिहीनमित्यर्थः । सदसदात्मकं कारणशक्तियुक्तम् ॥ १९ ॥ अक्षयमिति ॥ अक्षयम् अविनाशि । अक्षय्यमिति पाठे क्षयानर्हं, नान्यदाधारम् अनन्याश्रयं मूलकारणत्वात् । नान्याधारमिति वक्तव्ये अन्यशब्दे दत्वविभक्त्यलोपावार्षौ । अमेयम् इयत्ताशून्यम् अजरम् अपक्षयशून्यं ध्रुवं निश्चलम् ॥ २० ॥ त्रिगुणमिति ॥ त्रिगुणं गुणत्रयसाम्यरूपम्, अनादि जन्मशून्यं प्रभवाप्ययं प्रभवन्ति हि प्रभवाः कार्याणि अपियन्ति लीयन्ते अस्मिन्निति अप्ययं प्रभावाणामप्ययं कार्याणां लयस्थानमित्यर्थः । अग्रे सृष्टेः पूर्वं प्रलयादनु अतीतप्रलयाच्चानन्तरं सर्वमेव कार्यभूतं तेन व्याप्तम् अन्तर्निहितमासीदित्यर्थः । "तम आसीत्तमसा गूढमग्रे प्रकेतम्" इति श्रुतेः ॥ २१ ॥ अत्रार्थे विद्वत्सम्मतिमाह—वेदवादविद इति ॥ वेदवादविदः वेदे ये वादाः सिद्धार्थपराणि वाक्यानि तद्विदः नियताः तदर्थपराः ब्रह्मवादिनः वेदप्रवचनशीलाः । एतमेवार्थमुद्दिश्य श्रुत्यर्थसूचनपरं प्रधानप्रतिपादकं नाहो न रात्रिरित्यादिश्लोकं पठन्ति ॥ २२ ॥ नाह इति ॥ तदा नाहो न रात्रिश्चासीत्सूर्याद्यभावान्न तमः अह्नोऽभावान्न

विष्णोः स्वरूपात्परतोदिते द्वे रूपे प्रधानं पुरुषश्च विप्र ॥ तस्यैव तेऽन्येन धृते वियुक्ते रूपांतरं तद्द्विज कालसंज्ञम् ॥ २४ ॥ प्रकृतौ संस्थितं व्यक्तमतीतप्रलये तु यत् ॥ तस्मात्प्राकृतसंज्ञोयमुच्यते प्रतिसंचरः ॥ २५ ॥ अनादिर्भगवान्कालो नान्तोस्य द्विज विद्यते ॥ अव्युच्छिन्ना स्ततस्त्वेते सर्गस्थित्यन्तसंयमाः ॥ २६ ॥ गुणसाम्ये ततस्तस्मिन्पृथक्पुंसि व्यवस्थिते ॥ कालस्वरूपं तद्विष्णोर्मैत्रेय परिवर्त्तते ॥ २७ ॥

कालोपाधिभूतज्योतिरादिनिषेधेपि तदासीदिति निर्देशात्सूक्ष्मः कालोस्तीति गम्यते ॥२३॥ विष्णोः स्वरूपादिति ॥ अत्र स्वरूपशब्दो रूपवचनः । उदिते उद्भूते आर्षः सन्धिः । दिते इति पदच्छेदे विभक्ते इत्यर्थः । "तस्मात्तमस्संजायते" इति श्रुतेः । ते रूपे वियुक्ते सृष्ट्यर्हसंयोगविरहिते यथा स्यातां तथा तस्यैव येनान्येन धृते स्तः तद्रूपान्तरं कालसंज्ञं तेऽन्येतेनेत्यार्षत्वात्साधुः सन्धिः ॥२४॥ प्रकृताविति ॥ प्रकृतौ संस्थितं लीनं प्रतिसंचरः प्रलयः ॥ २५ ॥ कालस्य प्रकृतिपुरुषसंयोजकत्वाद्व्यक्तो त्पत्त्यादिप्रवाहहेतुत्वाच्च व्यक्तवन्न प्रकृतौ लय इत्याह—अनादिरिति ॥ ततः कालात् कालस्यानाद्यन्तत्वात् सर्गकालनिरोधः संयमः जगन्नियमनानुप्रवेशो वा । प्रकृतिपुरुष रूपवत्कालरूपमपि परस्मिन्नन्तर्हितम् ॥ २६ ॥ प्रकृतेरविशदसततपारिणामगणितद्विपरार्द्धकालावसाने प्रथमं सृष्टिकालोन्मेषमाह—गुणसाम्य इति । गुणसाम्ये सत्त्वादि गुणसाम्यरूपे गुणसाम्यनिरूपणीये तस्मिन् प्रधाने पुंसि च पृथग्वियुक्ते स्थिते सति तत्कालस्वरूपं वर्तते परिवर्त्तते सृज्यजीवकर्मानुगुणसर्गानुकूलं भवतीत्यर्थः ॥ २७ ॥

ज्योतिः न चान्यत्किञ्चिदभूत् । शब्दाद्यभावाच्छ्रोत्रादिजन्यज्ञानेनानुपलभ्यं प्राधानिकं प्रधानमेव प्राधानिकं ब्रह्म च पुमांश्चेति त्रयमेव तदा प्रलये आसीत् । तथा च श्रुतिः "नासदासीन्नो सदासीत्तदानीम्" इत्यादि ॥२३॥ कालस्वरूपं विवृणोति विष्णोरित्यादिचतुर्भिः विष्णोरिति ॥ परत इत्यत्रार्षः सन्धिः । परतो निरुपाधेः विष्णोरस्वरूपात्ते प्रागुक्ते, प्रधानं पुरुषश्चेति द्वे रूपे उदिते उद्भूते । अन्ये विलक्षणे मायाकृते, तेऽन्येनेत्यार्षस्सन्धिः । तस्य विष्णोरेवान्येन रूपेण ते द्वे रूपे धृते सर्गकाले संयोजिते, वियुक्ते च प्रलयकाले यद्वा, वियुक्ते यथा तिष्ठतः तथा प्रलयकाले धृते स्थापिते तयोरवियोगे प्रलयाभावप्रसङ्गात्तदेतत्कालसंज्ञं रूपान्तरं कालस्वरूपेण ॥२४॥ प्रतिपुरुषवियोजनं प्रतिसञ्चरसमाख्ययोपपादयति—प्रकृताविति ॥ अतीतग्रहणं सर्वप्रलयोपलक्षणार्थम् अतीतप्रलये यद्यस्मात्प्रकृतौ संस्थितं लीनं विश्वमासीत् तस्माद्विश्वस्य प्रकृतौ सञ्चरणात्प्रवेशात्प्राकृतोयं महाप्रलय उच्यते। एतच्च प्रकृतपुरुषयोरवियोगे हि न घटत इति भावः ॥२५॥ कालश्च प्रलयेप्यस्तीति वक्तुं तस्यानादिनिधनत्वमाह—अनादिरिति ॥ तत्र कार्याऽन्यथाऽनुपपत्तिं प्रमाणयति । ततस्तु कारणात् एते सर्गस्थित्यन्तसंयमाः सर्गश्च स्थितिश्च तदन्ते संयमश्चाव्युच्छिन्नाः प्रवाहरूपेणाविरताः ॥२६॥ गुणसाम्य इति ॥ ततः कारणात्तस्मिन्प्रलये गुणसाम्ये प्रधाने पुरुषे च पृथक्तया व्यवस्थिते सति तदेव तयोर्धारणार्थं कालाख्यरूपं वर्त्तते । अन्यथा प्रलयानिर्वाहादिति भावः । नाहो नरात्रिरित्यत्र सूर्यादिगत्युपलक्षितः स्थूलः कालो नास्तीत्युक्तम् अत्र तु यावत्प्रलय प्रकृतिपुरुषवियोगकारको विष्णोः स्वरूपभूतः कालो वर्त्तत इत्युच्यत इत्यविरोधः । अनेनैव प्रलये

ततस्तु तत्परं ब्रह्म परमात्मा जगन्मयः ॥ सर्वगः सर्वभूतेशः सर्वात्मा परमेश्वरः ॥ २८ ॥ प्रधानपुरुषौ चापि प्रविश्यात्मेच्छया हरिः ॥ क्षोभयामास संप्राप्ते सर्गकाले व्ययाव्ययौ ॥ २९ ॥ यथा सन्निधिमात्रेण गन्धः क्षोभाय जायते ॥ मनसो नोपकर्तृत्वात्तथाऽसौ परमेश्वरः ॥ ॥ ३० ॥ स एव क्षोभको ब्रह्मन् क्षोभ्यश्च पुरुषोत्तमः ॥ स संकोचविकासाभ्यां प्रधानत्वेपि च स्थितः ॥ ३१ ॥ विकासाणुस्वरूपैश्च ब्रह्म रूपादिभिस्तथा ॥ व्यक्तस्वरूपश्च तथा विष्णुः सर्वेश्वरेश्वरः ॥३२॥ गुणसाम्यात्ततस्तस्मात्क्षेत्रज्ञाधिष्ठितान्मुने॥ गुणव्यंजनसंभूतिः सर्गकाले द्विजोत्तम ॥ ३३ ॥

अथ सृष्ट्यर्थं प्रधानपुंसोः क्षोभमाह—तत इति ॥ २८ ॥ प्रधानमिति ॥ आत्मेच्छया बहुस्यामिति संकल्पात्मिकया प्रविश्य विषयीकृत्य क्षोभयामास सर्गोन्मुखीचकार प्रधानस्य क्षोभो गुणवैषम्यं प्रवृत्त्युन्मुखत्वं च पुंसो ज्ञानविकासः संस्कारोद्बोधश्च । व्ययाव्ययौ व्येतीति व्ययः अव्ययो व्ययरहितः विकारकूटस्थावित्यर्थः ॥ २९ ॥ ईश्वरः प्रकृतिपुरुषयोः क्षोभणेपि स्वयमविकार इत्याह—यथेति ॥ यथा गन्धः किंचिद्विकाररहितोपि सन्निधिमात्रेण मनसः क्षोभाय सुखदुःखादिविकाराय भवति ॥ ॥ ३० ॥ गंधदृष्टान्तेन तस्य निमित्तत्वमेव किमित्याशंकायामुपादानमपि स एवेत्याह—स एवेति ॥ क्षोभकः सन्प्रधानपुरुषात्मकं स्वयमेव क्षोभयति । न हि स्वस्माद्बहिर्भूतं कुलालो मृत्पिण्डमिव "तदात्मानꣳस्वयमकुरुत आत्मकृतेः, 'सोभिध्याय शरीरात्स्वात्" इत्यादिभ्यः न केवलं जगदुपादानं कार्यभूतं जगदपि स एवेत्याह—ससंकोचेति । संकोचविकासाभ्यां युक्तः प्रधानत्वेपि स्थितः स एव ॥ ३१ ॥ विकासेति । तथा विकासाणुस्वरूपैर्व्यष्टिसमष्टिरूपैश्च तथा ब्रह्मादिरूपैर्युक्तः स एव व्यक्तस्वरूपः महदादिस्वरूपश्च ॥ ३२ ॥ सृष्टिमाह—गुणसाम्यादिति ॥ ततः क्षोभानन्तरम् । क्षेत्रज्ञकर्मप्रेरिताद्गुणसाम्याद्गुणशक्तिसाम्यरूपात्प्रधानात् व्यज्यन्तेऽनेन

प्रकृत्या वियुक्तस्तूष्णीं लीन इति सर्गकाले च प्रकृतिमधिष्ठाय सृष्ट्यादिकर्त्ता पुरुष इति । पुरुषस्वरूपमपि विवृतं द्रष्टव्यम् ॥ २७ ॥ इदानीं व्यक्तस्वरूपं प्रपञ्चयिष्यन्परमेश्वरात्प्रकृतिपुरुषक्षोभकारणमाह—तत इत्यादिपञ्चभिः ॥ ततः सर्गकाले सम्प्राप्ते परमेश्वरो हरिः स्वेच्छया प्रधानं पुरुषं च प्रविश्य क्षोभयामासेति द्वयोरन्वयः । कथम्भूतो हरिस्तत्राह, तद्ब्रह्मेत्यादि ॥ अव्यक्तादिचतूरूपलक्षणः ॥ २८ ॥ प्रधानमिति कथम्भूतौ प्रधानपुरुषौ व्ययाव्ययौ परिणाम्यपरिणामिनो उपादाननिमित्तभूताविति यावत् । प्रलयकाले वियुक्तावात्मनि तूष्णीं स्थितौ स्वांशभूतौ प्रधानपुरुषौ स्वकालशक्त्युद्बुद्धयेच्छाशक्त्या संयोज्य सृष्ट्युन्मुखौ चकारेत्यर्थः ॥ २९ ॥ प्रविश्य क्षोभयामासेत्युक्त्या प्राप्तं सक्रियत्वं वारयति—यथेति ॥ सन्निधिमात्रेण गन्धः मनसः क्षोभाय जायते न तूपकर्तृत्वात्तदनुकूलक्रियाकारित्वात् ॥ ३० ॥ ननु प्रधानादीनामपि स्वरूपाव्यतिरेकात्क्षोभ्यस्यान्यस्य तत्कार्यस्य चाभावे कथं क्षोभकत्वं तत्राह स एवेत्यादिद्वाभ्याम् । स एवेति ॥ सङ्कोचः साम्यं विकासो गुणक्षोभः ताभ्यामुपलक्षितः । प्रधानत्वेपि स एव स्थितः तदवस्थाद्वयोपेतं प्रधानमपि विष्णुरेवेत्यर्थः ॥ ३१ ॥ विकासेति ॥ विकासाणुस्वरूपैर्महाभूतमहदादिरूपैः ब्रह्मरूपादिभिर्जीवभेदैरप्युपलक्षितः । व्यक्तस्वरूपश्च समष्टिव्यष्टिदेहात्मकश्च विष्णुरेवेत्यर्थः ॥ ३२ ॥ इदानीं महदादिक्रमेण व्यक्त्याख्यप्रपञ्चसृष्टिमाह—गुणसाम्यादित्यादि ॥ बीजं बाह्यदलैरित्यन्तेन गुणसाम्या

प्रधानतत्त्वमुद्भूतं महान्तं तत्समावृणोत् ॥ सात्त्विको राजसश्चैव तामसश्च त्रिधा महान् ॥ ३४ ॥ प्रधानतत्त्वेन समं त्वचा बीजमिवावृतम् ॥ वैकारिकस्तैजसश्च भूतादिश्चैव तामसः ॥ ३५ ॥ त्रिविधोयमहंकारो महत्तत्त्वादजायत ॥ भूतेन्द्रियाणां हेतुस्स त्रिगुणत्वान्महामुने ॥ यथा प्रधानेन महान्महता स तथा वृतः ॥ ३६ ॥ भूतादिस्तु विकुर्वाणः शब्दतन्मात्रकं ततः ॥ ससर्ज शब्दतन्मात्रादाकाशं शब्दलक्षणम् ॥ ३७ ॥ शब्दमात्रं तथाकाशं भूतादिः स समावृणोत् ॥ आकाशस्तु विकुर्वाणः स्पर्शमात्रं ससर्ज ह ॥ ३८ ॥

गुणा इति गुणव्यंजनं महत्तत्त्वं तस्य संभूतिः ॥ ३३ ॥ प्रधानतत्त्वमिति ॥ उद्भूतं महान्तं तत्प्रधानं समावृणोत् यद्वोद्भूतमिति प्रधानविशेषणं सात्त्विकम् इत्यादि सात्त्विकत्वादिकं प्रदेशभेदेनोद्भूतं गुणत्रयम् ॥ ३४ ॥ प्रधानतत्त्वेनेति ॥ समं बहिस्समं वैकारिकः सात्त्विकः तैजसो राजसः भूतादिः तामसः वैकारिकपदेनाविकाररूपस्य परमसत्त्वस्य व्यावृत्तिः "कामं देवाश्च मुनयः सत्त्वस्था नृपसत्तम ॥ हीनाः सत्त्वेन सूक्ष्मेण ततो वैकारिकाः स्मृताः" इति मोक्षधर्मोक्तेः ॥ ३५ ॥ त्रिविध इति ॥ भूतेंद्रियाणां हेतुः स इत्यत्र तामसांशेन भूतानां हेतुः । सात्त्विकांशेनेन्द्रियाणाम्, राजसांशेनोभयोरनुग्राहकः ॥ ३६ ॥ भूतादिरित्यादि ॥ ततो भूतादिर्विकुर्वाणः क्षुभ्यन्ननभिव्यक्तविशेषशब्दगुणकं शब्दतन्मात्रं ससर्ज । शब्दतन्मात्राच्छब्दविशेषलक्षणं स्थूलाकाशमभूदित्यर्थः ॥ ३७ ॥ शब्दमात्रमिति ॥ शब्दमात्रं शब्दतन्मात्रं तथा आकाशं स्थूलाकाशं च स भूतादिरावृणोत् एतेन पूर्वपूर्वतन्मात्रमुत्तरोत्तरतन्मात्रं तद्विशेषं चावृणोतीति दर्शितम् । आकाशस्त्विति तन्मात्ररूपं स्थूलाकाशमिव

दिति। ततः क्षोभानन्तरं तस्माद्गुणसाम्यात्क्षेत्रज्ञेन पुरुषेणाधिष्ठितात् गुणानां व्यञ्जनं महत्तत्त्वम्, व्यज्यन्तेऽनेनेति व्यञ्जनं तस्य सम्भूतिरुद्भवः अभूत् ॥३३॥ तद्यथा मृदेव पिण्डाद्यवान्तरकार्यावस्थामापाद्यमाना घटादेरुपादानं पिण्डादिकं तु निमित्तमात्रं घटादावननुगमाद्विनाशित्वाच्च तथैवेश्वराधिष्ठितं प्रधानमेव महदाद्यवान्तकार्याण्युपादानतया व्याप्नुवच्चरमकार्यस्याप्युपादानमिति दर्शयितुं पूर्वकार्येणोत्तरकार्यस्य व्याप्तिमाह–प्रधानतत्त्वमित्यादिना–प्रधानतत्त्वमिति ॥ उद्भूतं महान्तं कर्मभूतं तदुपादानभूतं प्रधानतत्त्वं कर्तृभूतं समावृणोद्व्याप्नोत्, एतदेव विवृणोति । सात्त्विक इति ॥३४॥ प्रधानतत्त्वेनेति ॥ सममन्यूनातिरेकं यथा भवत्येवं त्वचा बीजं यथा आवृतं तथा सात्त्विकादिस्त्रिधोद्भूतो महान्समन्तादावृत इत्यर्थः । वैकारिकः सात्त्विकः तैजसो राजसः भूतादिस्तामस इति स्वयमेव व्याचष्टे॥३५॥ त्रिविध इति॥ स च भूतानामिन्द्रियाणाञ्च हेतुर्देवानामप्युपलक्षणम् ॥३६॥ तामसाहङ्कारकार्यं प्रपञ्चयति भूतादिरित्यादिनवभिः । भूतादिरिति ॥ विकुर्वाणः क्षुभ्यन्नित्यर्थः । शब्दतन्मात्रकं भूतसूक्ष्मरूपं सर्गमिति पाठे स एवार्थः । शब्दो लक्षणं व्यावर्तको गुणो यस्य तत् शब्दलक्षणं शब्दादितन्मात्रा

बलवानभवद्वायुस्तस्य स्पर्शो गुणो मतः ॥ आकाशं शब्दमात्रं तु स्पर्शमात्रं समावृणोत् ॥ ३९ ॥ ततो वायुर्विकुर्वाणो रूपमात्रं ससर्ज ह ॥ ज्योतिरुत्पद्यते वायोस्तद्रूपगुणमुच्यते॥४०॥ स्पर्शमात्रं तु वै वायू रूपमात्रं समावृणोत् ॥ ज्योतिश्चापि विकुर्वाणं रसमात्रं ससर्ज ह ॥४१॥ सम्भवन्ति ततोंभांसि रसाधाराणि तानि च ॥ रसमात्राणि चाम्भांसि रूपमात्रं समावृणोत् ॥४२॥ विकुर्वाणानि चाम्भांसि गन्धमात्रं ससर्जिरे ॥ संघातो जायते तस्मात्तस्य गंधो गुणो मतः ॥ ४३ ॥ तस्मिंस्तस्मिंस्तु तन्मात्रं तेन तन्मात्रता स्मृता ॥ ४४ ॥ तन्मात्राण्यविशेषाणि अविशेषास्ततो हि ते ॥ ४५ ॥ न शान्ता नापि घोरास्ते न मूढाश्चाविशेषिणः ॥ भूततन्मात्रसर्गोयमहंकारात्तु तामसात् ॥ ४६ ॥

स्पर्शतन्मात्रं च ससर्ज ॥ ३८ ॥ बलवानिति ॥ बलवानभवद्वायुः स्पर्शमात्रादितिशेषः । स्पर्शः स्पर्शविशेषः ॥ ३९ ॥ तत इति ॥ वायुः तन्मात्ररूपः रूपमात्रं ससर्ज ज्योतिरिति । वायो रूपतन्मात्रसहिताद्वायोः स्पर्शतन्मात्ररूपात्स्थूलं ज्योतिरुत्पद्यत इत्यर्थः । अतोऽत्रेदमनुसंधेयम् । पूर्वपूर्वतन्मात्रसहितादेवोत्तरोत्तरतन्मात्रस्य विशेषोत्पत्तिर्न केवलात् । तथा सति वाय्वादिभूतविशेषाणां तत्तद्गुणाधिक्ययोगात् कारणक्रमेण हि कार्ये गुणसंभव इति । अत्र पुराणान्तरवचनम् । "आकाशं शब्दतन्मात्रं स्पर्शमात्रं समाविशत् । रूपं तथैवाविशतः शब्दस्पर्शगुणावुभौ । शब्दः स्पर्शश्च रूपं च रसमात्रं समाविशत् । तस्माच्चतुर्गुणा ह्येते विशेषाश्चेन्द्रियग्रहाः" इत्यादि ॥ ४० ॥ स्पर्शमात्रमिति ॥ ज्योतिः रूपतन्मात्रम् ॥ ४१ ॥ संभवन्तीति ॥ ततोम्भांसि ततो रसतन्मात्रात्पूर्वतन्मात्रत्रयसहितात् ॥४२॥ विकुर्वाणानीति ॥ अम्भांसि रसतन्मात्राणि संघातो भूमिः संहतशब्दादिसर्वगुणकत्वात् ॥४३॥ तस्मिन्निति ॥ तस्माद्गन्धतन्मात्रात्पूर्वतन्मात्रचतुष्टयसहितात् तस्मिन्व्योमादौ विशेषरहितशब्दस्पर्शादिगुणमात्रं तेन तस्मिन् तत्त्वे तन्मात्रता ॥ ४४ ॥ तदेवाह तन्मात्राणीति ॥ अविशेषाणि विशेषरहितानि ततस्तेन ते शब्दादयोऽविशेषसंज्ञाः ॥ ४५ ॥ विशेषशब्दार्थं व्याकुर्वंस्तत्तद्भावविशेषमाह—न शान्ता इति ॥ शान्तघोरमूढाख्यत्रिगुणजन्यविशेषरहितत्वादविशेषिणः । उक्तं भूतसर्गं निगमयति भूततन्मात्रेति ॥ भूतानां तन्मात्राणां च सर्गः अहंकारात्तु तामसात् । अयमुक्तक्रमेण न त्वव्यवधानेन केचित् । "आत्मन आकाशः सम्भूतः, आकाशाद्वायुः" इत्यादिश्रुतिदर्शनादाकाशादिभूतविशेषाणां पूर्वपूर्वं प्रति प्रकृतित्वमाहुः । तदष्टौ प्रकृतयः षोडश विकृतय इति श्रुतिविरुद्धम् । तेषामपि प्रकृतित्वे प्रकृतीनामाधिक्यम् । विकृतीनां न्यूनत्वं च

ण्येवाकाशादि महाभूतेष्वनुस्यूतान्यभिव्यक्तानि सन्ति गुणत्वेन वर्त्तन्त इत्युच्यन्ते ॥ ३७ ॥ ३८ ॥ ३९ ॥ तत इति ॥ तज्ज्योतिः रूपगुणमुच्यते ॥ ४० ॥ ४१ ॥ सम्भवन्तीति ॥ तानि अम्भांसि रसाधाराणि ॥ ४२ ॥ विकुर्वाणानीति ॥ सर्वगुणसंहतिमत्वात्काठिन्याद्वा संघातः पृथ्वी ॥ ४३ ॥ सर्गादीनां तन्मात्रसंज्ञां निर्वक्ति तस्मिन्निति ॥ तस्मिंस्तस्मिन्नाकाशादौ तत्तच्छब्दादिकमात्रा सूक्ष्मरूपं तेन कारणेन शब्दादेस्तन्मात्रता स्मृता ॥ ४४ ॥ अविशेषसंज्ञामपि तेषां साङ्ख्यप्रसिद्धां निर्वक्ति—तन्मात्राणीति ॥ ४५ ॥ अविशेषत्वमाह—न शान्ता इति ॥ उपसंहरति भूततन्मात्रेति । भूतानां तन्मात्राणां सर्ग इत्यर्थः ॥ ४६ ॥

तेजसानीन्द्रियाण्याहुर्देवा वैकारिका दश ॥ एकादशं मनश्चात्र देवा वैकारिकाः स्मृताः ॥ ४७ ॥ त्वक् चक्षुर्नासिका जिह्वा श्रोत्रमत्र च पंचमम् ॥ शब्दादीनामवाप्त्यर्थं बुद्धियुक्तानि वै द्विज ॥ ४८ ॥ पायूपस्थौ करौ पादौ वाक् च मैत्रेय पञ्चमी ॥ विसर्गशिल्पगत्युक्ति कर्म तेषां च कथ्यते ॥ ४९ ॥ आकाशवायुतेजांसि सलिलं पृथिवी तथा ॥ शब्दादिभिर्गुणैर्ब्रह्मन्संयुक्तान्युत्तरोत्तरैः ॥ ५० ॥

स्यात् । तस्मादष्टौ प्रकृतय इत्यादिश्रुतिविरोधेन "आत्मन आकाशः" इत्यादिश्रुतेरिति तैस्तैरर्थो व्याख्येयः । व्याख्यातश्चाधस्तादस्माभिरेव पूर्वपूर्वतन्मात्रं स्वविशेषमुत्तरोत्तरतन्मात्रं चोत्पादयतीत्याचक्षाणैः 'पृथिव्या ओषधयः' इत्योषधिप्रकृतित्वेऽपि पृथिव्या न तत्त्वप्रकृतित्वमित्यविरोधः । तस्मादुक्तप्रकार एव सृष्टिक्रमः ॥ ४६ ॥ तैजसानीति ॥ राजसाहंकारकार्याणीन्द्रियाणीति केचिदाहुः । देवा मनःसहितानि दशेन्द्रियाणि वैकारिकाः सात्त्विकाहंकारकार्याणीत्यपरे । स्वपक्षमाह–अत्र देवा इति । इंद्रियाणां देवशब्दवाच्यत्वं तदधिष्ठातृदेवताभिप्रायेण । तैजसाहंकारस्तु वैकारिकतामसयोः स्वकार्यकरणे प्रवर्त्तकः सत्त्वतमसोः केवलं रजःप्रवर्त्तकं तत्रेति वायूक्तेः । अहंकारस्येन्द्रियाणि प्रतिनिमित्तत्वमेव भूतानामेवोपादानत्वम् "अन्नमयं हि सौम्य मनः आपोमयः प्राणः तेजोमयी वाक्" इत्यादिश्रुतेरिति केचिदाहुः तदयुक्तम् । अहंकारस्यैवोपादानत्वेऽपि भूतानामाप्यायकत्वेनापि तथानिर्देशोपपत्तेः । अयमत्रेन्द्रियस्य सृष्टिक्रमः ॥ ४७ ॥ त्वगिति ॥ वैकारिकाहंकारात्क्रमेण शब्दतन्मात्रादिपंचकसहायात्क्रमेण श्रोत्रादिज्ञानेन्द्रियपञ्चकस्य सृष्टिः तस्मादेव तत्सहायाद्वागादिकर्मेन्द्रियपंचकस्य सृष्टिः । असहायात्तु तस्मान्मनसः सृष्टिरिति । अवाप्त्यर्थं पुंसो विषयज्ञानार्थं बुद्धियुक्तानि त्वगादीनि विषयज्ञानार्थं भवन्तीति शेषः । अत्र बुद्धिशब्देनान्तःकरणस्य ग्रहणम् । अत्र श्लोके क्रमो न विवक्षितः ॥४८॥ पाय्विति ॥ पायोर्विड्विसर्गः उपस्थस्य मूत्ररेतोविसर्गः विसर्गशिल्पगत्युक्तीति द्वन्द्वैकवद्भावान्नपुंसकत्वम् ॥ ४९ ॥ अथाण्डसृष्ट्यर्थं भूतानां पञ्चीकरणमाह–आका

राजसं सात्त्विकं च सर्गमाह–तैजसानीति ॥ तेजसाहङ्कारकार्याणि बाह्येन्द्रियाणीह दश तदधिष्ठातारो देवास्तु "दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः" इति श्रीभागवतोक्ताः । वैकारिकाः सात्त्विकाऽहङ्कारजाः एकादशमिन्द्रियं मनोऽन्तःकरणं तदपि वैकारिकमिति सम्बन्धः । अत्र चान्तःकरणे चेतनाहङ्कारसंकल्पाध्यवसायाख्यः । चतुर्वृत्तिके तत्तद्वृत्त्यधिष्ठातारो ये देवाः क्षेत्रज्ञरुद्रचन्द्रब्रह्माणः तेऽपि वैकारिकास्स्मृता इत्यर्थः ॥ ४७ ॥ तेषु ज्ञानकर्मेन्द्रियविभागमाह–त्वगित्यादिद्वाभ्याम् ॥ त्वगादीनि पञ्च बुद्धियुक्तानि ज्ञानेन्द्रियाणि स्पर्शादीनामवाप्त्यर्थमिति वक्तव्ये क्रमाविवक्षया शब्दादीनामित्युक्तम् ॥ ४८ ॥ पायूपस्थाविति ॥ पायोः पुरीषोत्सर्गः उपस्थस्य मूत्रविसर्गः करयोः शिल्पं पादयोर्गतिः वाच उक्तिः । विसर्गशिल्पगत्युक्तीति द्वन्द्वैक्यम् । विसर्गादि पाय्वादीनां कर्म अतस्तानि कर्मेन्द्रियाणि । विसर्गानन्देत्यादिपाठस्सुगमः ॥ ४९ ॥ पुनस्तामसाहंकारकार्ये कञ्चिद्विशेषमाह–आकाशेत्यादिसार्द्धेन आकाशेति ॥ उत्तरोत्तरैः शब्दादीनाम्मध्ये उत्तरः परो गुणः कारणगुणादुत्तरोधिको येषां तैस्संयुक्तानि तथा हि आकाशस्य कारणगुणाभावात्स्वकीयश्शब्द एवैको गुणः । वायोस्तु स्वकीयस्स्पर्शः । आकाशानुगमाच्च शब्दस्स्पर्शश्चेति द्वौ गुणौ एवं तेजसो रूपम् । आकाशवाय्वनुगमाच्छब्दस्स्पर्शश्चेति त्रयः । एवं सलिलस्य रसः शब्दस्पर्शरूपाणि चेति चत्वारः । एवं पृथिव्या गन्धः ।

=ब्रह्मशरीरकस्य

शान्ता घोराश्च मूढाश्च विशेषास्तेन ते स्मृताः ॥ ५१ ॥ नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना ॥ नाशक्नुवन्प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ॥ ५२ ॥ समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः ॥ एकसंघातलक्ष्याश्च संप्राप्यैक्यमशेषतः ॥ ५३ ॥ पुरुषाधिष्ठितत्वाच्च प्रधानानुग्रहेण च ॥ महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते ॥ ५४ ॥ तत्क्रमेण विवृद्धं सज्जलबुद्बुदवत्समम् ॥ भूतेभ्योऽण्डं महाबुद्धे महत्तदुदकेशयम् ॥ प्राकृतं ब्रह्मरूपस्य विष्णोः स्थानमनुत्तमम् ॥ ५५ ॥

शेति । अत्राकाशादयः शब्दा भूतविशेषपराः उत्तरोत्तरैः उत्तरत्रोत्तरत्र उत्तरैरधिकैरित्यर्थः । एतदुक्तं भवति । आकाशादिमहाभूतानि उत्तरत्रोत्तरत्र वाय्वादावधिकैः शब्दादिभिर्गुणैर्विशिष्टानि परस्परं युक्तानि मिलितानि, तेनाकाश एकगुणो वायुर्द्विगुणस्तेजस्त्रिगुणमापश्चतुर्गुणाः पृथिवी पंचगुणेति ॥ ५० ॥ शान्ता इति ॥ एतेन परस्परं मेलनेन प्रत्येकं विशेषाः शान्ता घोरा मूढाः स्वतः शान्ते भूमिजले घोरौ तेजोऽनिलौ मूढ आकाशः मेलनात्सर्वे शान्तघोरमूढाः । अयमत्र पञ्चीकरणप्रकारः । आकाशस्यैकमर्द्धमाकाशत्वेन स्थितम् । अन्यस्मिन्नर्द्धे चतुर्धाकृते वाय्वादिचतुर्भेदभूतप्रवेशः एवं भूतांतरेपि । उक्तं हि--"एवं जातेषु भूतानि प्रत्येकं स्युर्द्विधा ततः । चतुर्द्धा भिन्नमेकैकमर्द्धमर्द्धं तथा स्थितम् ॥ व्योम्नोर्द्धभागाश्चत्वारो वायुतेजःपयोभुवाम् । अर्द्धानि यानि वायोस्तु व्योमतेजःपयोभुवाम्" इत्यादि ॥ ५१ ॥ अथाण्डोत्पत्त्यर्थं महदादीनां परस्परात्मकत्वमित्याह--नानावीर्या इति ॥ नानावीर्यत्वमतिद्रवातिकठिनत्वादिकम् । संहतिं मेलनं विनाऽत एवासमागम्य समित्येकीभावे एकत्वमप्राप्य प्रजाग्रहणमण्डस्याप्युपलक्षणार्थम् ॥ ५२ ॥ समेत्येति ॥ समेत्य परस्परसमाश्रयादन्योन्यसंयोगं संश्लेषं समेत्यानन्तरमशेषत ऐक्यं प्राप्य एकसंघातवीक्षाः चतुर्विधानन्तप्रजानिरन्तराण्डोत्पादनतत्पराः पाठान्तरे एकः संघातः अण्डं लक्ष्यं साध्यं येषान्ते एकसंघातलक्ष्याः । यद्वा एकसंघातलक्ष्या एकः संघातः इति दृश्याः ॥ ५३ ॥ पुरुषाधिष्ठितत्त्वादिति ॥ पुरुषाधिष्ठितत्वात्पुण्यपापपरिष्वक्तजीवानुप्रविष्टत्वात् । अव्यक्तानुग्रहेण अनुग्रहोऽनुप्रवेशः बीजस्य त्वगनुग्रहेणांकुरारम्भवदाप्यायकत्वं वा ॥ ५४ ॥ ॥ तदिति समं समत्वम्, अण्डस्य हि भित्त्याद्यवयवानां समकालत्वं जलबुद्बुदवत् अनेनाऽस्थैर्यं सूचितम् । भूतानामेव प्राधा

शब्दादयश्चत्वार इति पञ्च गुणाः ॥ ५० ॥ शान्ता इति ॥ अत एव गुणविशेषैश्शान्तास्सुखदाः घोरा दुःखदा मूढाः मोहकराश्च भवन्ति । तेनाकाशादयो विशेषसंज्ञास्स्मृताः ॥ ५१ ॥ एवं तावन्महदादिकारणानां सर्गमुक्त्वा इदानीं तैर्मिलितैर्ब्रह्माण्डसर्गमाह नानावीर्या इत्यादिभिर्दशभिः--नानावीर्या इति ॥ तत उत्पत्त्यनन्तरं संहतिं विना पृथग्भूतास्ते नानावीर्या अवकाशशोषणदहनादिभिन्नशक्तियुक्ताः अतः असमागम्यान्योन्यसाहाय्यमप्राप्य प्रजाविशिष्टभोगायतनानि शरीराणि स्रष्टुं नाशक्नुवन्नित्यन्वयः ॥ ५२ ॥ ततः समेत्येति ॥ कथम्भूताः एकस्संघातो लक्ष्यस्साध्यो येषां ते अतो गुणप्रधानभावेनैक्यं सम्प्राप्य ॥ ५३ ॥ ऐक्ये हेतुः पुरुषाधिष्ठितत्वादिति ॥ पुरुषेणेश्वरेणाधिष्ठितत्वात् । प्रधानस्यानुग्रहेण विशिष्टपरिणामोन्मुखत्वेन ॥ ५४ ॥ ब्रह्माण्डोत्पत्तेः प्रयोजनमाह--तदित्यादिसार्द्धेन--तदिति ॥ समं समवृत्तं ततो भूतेभ्यः

**तेजसानीन्द्रियाण्याहुर्देवा वैकारिका दश ॥ एकादशं मनश्चात्र देवा वैकारिकाः स्मृताः ॥ ४७ ॥ त्वक् चक्षुर्नासिका जिह्वा श्रोत्रमत्र च पंचमम् ॥ शब्दादीनामवाप्त्यर्थं बुद्धियुक्तानि वै द्विज ॥ ४८ ॥ पायूपस्थौ करौ पादौ वाक् च मैत्रेय पञ्चमी ॥ विसर्गशिल्पगत्युक्ति कर्म तेषां च कथ्यते ॥ ४९ ॥ आकाशवायुतेजांसि सलिलं पृथिवी तथा ॥ शब्दादिभिर्गुणैर्ब्रह्मन्संयुक्तान्युत्तरोत्तरैः ॥ ५० ॥**

स्यात् । तस्मादष्टौ प्रकृतय इत्यादिश्रुतिविरोधेन "आत्मन आकाशः" इत्यादिश्रुतेरिति तैस्तैरर्थो व्याख्येयः । व्याख्यातश्चाधस्तादस्माभिरेव पूर्वपूर्वतन्मात्रं स्वविशेषमुत्तरोत्तरतन्मात्रं चोत्पादयतीत्याचक्षाणैः 'पृथिव्या ओषधयः' इत्योषधिप्रकृतित्वेऽपि पृथिव्या न तत्त्वप्रकृतित्वमित्यविरोधः । तस्मादुक्तप्रकार एव सृष्टिक्रमः ॥ ४६ ॥ तैजसानीति ॥ राजसाहंकारकार्याणीन्द्रियाणीति केचिदाहुः । देवा मनःसहितानि दशेन्द्रियाणि वैकारिकाः सात्त्विकाहंकारकार्याणीत्यपरे । स्वपक्षमाह—अत्र देवा इति । इंद्रियाणां देवशब्दवाच्यत्वं तदधिष्ठातृदेवताभिप्रायेण । तैजसाहंकारस्तु वैकारिकतामसयोः स्वकार्यकरणे प्रवर्त्तकः सत्त्वतमसोः केवलं रजःप्रवर्त्तकं तत्रेति वायूक्तेः । अहंकारस्यैन्द्रियाणि प्रतिनिमित्तत्वमेव भूतानामेवोपादानत्वम् "अन्नमयं हि सौम्य मनः आपोमयः प्राणः तेजोमयी वाक्" इत्यादिश्रुतेरिति केचिदाहुः तदयुक्तम् । अहंकारस्यैवोपादानत्वेऽपि भूतानामाप्यायकत्वेनापि तथानिर्देशोपपत्तेः । अयमत्रेन्द्रियस्य सृष्टिक्रमः ॥ ४७ ॥ त्वगिति ॥ वैकारिकाहंकारात्क्रमेण शब्दतन्मात्रादिपंचकसहायात्क्रमेण श्रोत्रादिज्ञानेन्द्रियपञ्चकस्य सृष्टिः तस्मादेव तत्सहायाद्घ्राणादिकर्मेन्द्रियपंचकस्य सृष्टिः । असहायात्तु तस्मान्मनसः सृष्टिरिति । अवाप्त्यर्थं पुंसो विषयज्ञानार्थं बुद्धियुक्तानि त्वगादीनि विषयज्ञानार्थं भवन्तीति शेषः । अत्र बुद्धिशब्देनान्तःकरणस्य ग्रहणम् । अत्र श्लोके क्रमो न विवक्षितः ॥४८॥ पाय्विति ॥ पायोर्विड्विसर्गः उपस्थस्य मूत्ररेतोविसर्गः विसर्गशिल्पगत्युक्तीति द्वन्द्वैकवद्भावान्नपुंसकत्वम् ॥ ४९ ॥ अथाण्डसृष्ट्यर्थं भूतानां पञ्चीकरणमाह—आका

राजसं सात्त्विकं च सर्गमाह--तैजसानीति ॥ तैजसाहङ्कारकार्याणि बाह्येन्द्रियाणीह दश तदधिष्ठातारो देवास्तु "दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः" इति श्रीभागवतोक्ताः । वैकारिकाः सात्त्विकाऽहङ्कारजाः एकादशमिन्द्रियं मनोऽन्तःकरणं तदपि वैकारिकमिति सम्बन्धः । अत्र चान्तःकरणे चेतनाहङ्कारसंकल्पाध्यवसायाख्यः । चतुर्वृत्तिके तत्तद्वृत्त्यधिष्ठातारो ये देवाः क्षेत्रज्ञरुद्रचन्द्रब्रह्माणः तेऽपि वैकारिकास्स्मृता इत्यर्थः ॥ ४७ ॥ तेषु ज्ञानकर्मेन्द्रियविभागमाह--त्वगित्यादिद्वाभ्याम् ॥ त्वगादीनि पञ्च बुद्धियुक्तानि ज्ञानेन्द्रियाणि स्पर्शादीनामवाप्त्यर्थमिति वक्तव्ये क्रमाविवक्षया शब्दादीनामित्युक्तम् ॥ ४८ ॥ पायूपस्थाविति ॥ पायोः पुरीषोत्सर्गः उपस्थस्य मूत्रविसर्गः करयोः शिल्पं पादयोर्गतिः वाच उक्तिः । विसर्गशिल्पगत्युक्तीति द्वन्द्वैक्यम् । विसर्गादि पाय्वादीनां कर्म अतस्तानि कर्मेन्द्रियाणि । विसर्गानन्देत्यादिपाठस्सुगमः ॥ ४९ ॥ पुनस्तामसाहंकारकार्ये कञ्चिद्विशेषमाह--आकाशेत्यादिसार्द्धेन आकाशेति ॥ उत्तरोत्तरैः शब्दादीनाम्मध्ये उत्तरः परो गुणः कारणगुणादुत्तरोधिको येषां तैस्संयुक्तानि तथा हि आकाशस्य कारणगुणाभावात्स्वकीयश्शब्द एवैको गुणः । वायोस्तु स्वकीयस्स्पर्शः । आकाशानुगमाच्च शब्दस्स्पर्शश्चेति द्वौ गुणौ एवं तेजसो रूपम् । आकाशवाय्वनुगमाच्छब्दस्स्पर्शश्चेति त्रयः । एवं सलिलस्य रसः शब्दस्पर्शरूपाणि चेति चत्वारः । एवं पृथिव्या गन्धः ।

=ब्रह्मशरीरकस्य

शान्ता घोराश्च मूढाश्च विशेषास्तेन ते स्मृताः ॥ ५१ ॥ नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना ॥ नाशक्नुवन्प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ॥ ५२ ॥ समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः ॥ एकसंघातलक्ष्याश्च संप्राप्यैक्यमशेषतः ॥ ५३ ॥ पुरुषाधिष्ठितत्वाच्च प्रधानानुग्रहेण च ॥ महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते ॥ ५४ ॥ तत्क्रमेण विवृद्धं सज्जलबुद्बुदवत्समम् ॥ भूतेभ्योऽण्डं महाबुद्धे महत्तदुदकेशयम् ॥ प्राकृतं ब्रह्मरूपस्य विष्णोः स्थानमनुत्तमम् ॥ ५५ ॥

शेति । अत्राकाशादयः शब्दा भूतविशेषपराः उत्तरोत्तरैः उत्तरत्रोत्तरत्र उत्तरैरधिकैरित्यर्थः । एतदुक्तं भवति । आकाशादिमहाभूतानि उत्तरत्रोत्तरत्र वाय्वादावधिकैः शब्दादिभिर्गुणैर्विशिष्टानि परस्परं युक्तानि मिलितानि, तेनाकाश एकगुणो वायुर्द्विगुणस्तेजस्त्रिगुणमापश्चतुर्गुणाः पृथिवी पंचगुणेति ॥ ५० ॥ शान्ता इति ॥ एतेन परस्परं मेलनेन प्रत्येकं विशेषाः शान्ता घोरा मूढाः स्वतः शान्ते भूमिजले घोरौ तेजोऽनिलौ मूढ आकाशः मेलनात्सर्वे शान्तघोरमूढाः । अयमत्र पञ्चीकरणप्रकारः । आकाशस्यैकमर्द्धमाकाशत्वेन स्थितम् । अन्यस्मिन्नर्द्धे चतुर्धाकृते वाय्वादिचतुर्भेदभूतप्रवेशः एवं भूतांतरेपि । उक्तं हि--"एवं जातेषु भूतानि प्रत्येकं स्युर्द्विधा ततः । चतुर्द्धा भिन्नमेकैकमर्द्धमर्द्धं तथा स्थितम् ॥ व्योम्नोर्द्धभागाश्चत्वारो वायुतेजःपयोभुवाम् । अर्द्धानि यानि वायोस्तु व्योमतेजःपयोभुवाम्" इत्यादि ॥ ५१ ॥ अथाण्डोत्पत्त्यर्थं महदादीनां परस्परात्मकत्वमित्याह--नानावीर्या इति ॥ नानावीर्यत्वमतिद्रवातिकठिनत्वादिकम् । संहतिं मेलनं विनाऽत एवासमागम्य समित्येकीभावे एकत्वमप्राप्य प्रजाग्रहणमण्डस्याप्युपलक्षणार्थम् ॥ ५२ ॥ समेत्येति ॥ समेत्य परस्परसमाश्रयादन्योन्यसंयोगं संश्लेषं समेत्यानन्तरमशेषत ऐक्यं प्राप्य एकसंघातवीक्षाः चतुर्विधानन्तप्रजानिरन्तराण्डोत्पादनतत्पराः पाठान्तरे एकः संघातः अण्डं लक्ष्यं साध्यं येषान्ते एकसंघातलक्ष्याः । यद्वा एकसंघातलक्ष्या एकः संघातः इति दृश्याः ॥ ५३ ॥ पुरुषाधिष्ठितत्वादिति ॥ पुरुषाधिष्ठितत्वात्पुण्यपापपरिष्वक्तजीवानुप्रविष्टत्वात् । अव्यक्तानुग्रहेण अनुग्रहोऽनुप्रवेशः बीजस्य त्वगनुग्रहेणांकुरारम्भवदाप्यायकत्वं वा ॥ ५४ ॥ ॥ तदिति समं समत्वम्, अण्डस्य हि भित्त्याद्यवयवानां समकालत्वं जलबुद्बुदवत् अनेनाऽस्थैर्यं सूचितम् । भूतानामेव प्राधा

शब्दादयश्चत्वार इति पञ्च गुणाः ॥ ५० ॥ शान्ता इति ॥ अत एव गुणविशेषैश्शान्तास्सुखदाः घोरा दुःखदा मूढाः मोहकराश्च भवन्ति । तेनाकाशादयो विशेषसंज्ञास्स्मृताः ॥ ५१ ॥ एवं तावन्महदादिकारणानां सर्गमुक्त्वा इदानीं तैर्मिलितैर्ब्रह्माण्डसर्गमाह नानावीर्या इत्यादिभिर्दशभिः--नानावीर्या इति ॥ तत उत्पत्त्यनन्तरं संहतिं विना पृथग्भूतास्ते नानावीर्या अवकाशशोषणदहनादिभिन्नशक्तियुक्ताः अतः असमागम्यान्योन्यसाहाय्यमप्राप्य प्रजाविशिष्टभोगायतनानि शरीराणि स्रष्टुं नाशक्नुवन्नित्यन्वयः ॥ ५२ ॥ ततः समेत्येति ॥ कथम्भूताः एकस्संघातो लक्ष्यस्साध्यो येषां ते अतो गुणप्रधानभावेनैक्यं संप्राप्य ॥ ५३ ॥ ऐक्ये हेतुः पुरुषाधिष्ठितत्वादिति ॥ पुरुषेणेश्वरेणाधिष्ठितत्वात् । प्रधानस्यानुग्रहेण विशिष्टपरिणामोन्मुखत्वेन ॥ ५४ ॥ ब्रह्माण्डोत्पत्तेः प्रयोजनमाह--तदित्यादिसार्द्धेन--तदिति ॥ समं समवृत्तं ततो भूतेभ्यः

तत्राव्यक्तस्वरूपोऽसौ व्यक्तरूपो जगत्पतिः ॥ विष्णुर्ब्रह्मस्वरूपेण स्वयमेव व्यवस्थितः ॥ ५६ ॥ मेरुरुल्बमभूत्तस्य जरायुश्च महीधराः ॥ गर्भोदकं समुद्राश्च तस्यासन्सुमहात्मनः ॥ ५७ ॥ साद्रिद्वीपसमुद्राश्च सज्योतिर्लोकसंग्रहः ॥ तस्मिन्नण्डेऽभवद्विप्र सदेवासुरमानुषः ॥ ५८ ॥ वारिवह्न्यनिलाकाशैस्ततो भूतादिना बहिः ॥ वृतं दशगुणैरण्डं भूतादिर्महता तथा ॥ ५९॥ अव्यक्तेनावृतो ब्रह्मंस्तैः सर्वैः सहितो महान् ॥ एभिरावरणैरण्डं सप्तभिः प्राकृतैर्वृतम् ॥ नालिकेरफलस्यान्तर्बीजं बाह्यदलैरिव ॥ ६० ॥ जुषन् रजो गुणं तत्र स्वयं विश्वेश्वरो हरिः ॥ ब्रह्मा भूत्वास्य जगतो विसृष्टौ संप्रवर्त्तते ॥ ६१ ॥ सृष्टं च पात्यनुयुगं यावत्कल्पविकल्पना ॥ सत्त्वभृद्भगवान्विष्णुरप्रमेयपराक्रमः ॥ ६२ ॥

न्यमित्याह—भूतेभ्य इति । ब्रह्मरूपस्य प्राकृतमितिविशेषणाभ्यां स्वासाधारणं दिव्यरूपमप्राकृतं स्थानमस्तीति सूचितम् ॥ ५५ ॥ अण्डभोक्ता चतुर्मुख एव कथं विष्णोस्स्थानमित्युच्यते तत्राह—तत्रेति ॥ अव्यक्तं प्रधानं व्यक्तं महदादि असौ स्वयमेव प्रधानादिपुरुषापदेशेन स्थितः "एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ । तदा दर्शितपन्थानौ सृष्टिसंहारकारकौ ॥ निमित्तमात्रं तावत्र" इति भारतवचनात् ॥ ५६ ॥ मेरुरित्यादि ॥ तस्य ब्रह्मण उल्वं गर्भवेष्टनमांसं तद्वेष्टनं जरायुर्गर्भाशयः उत्तरं वा "उल्वाज्जरायुः" इति श्रुतेः । स्वदेहभूतब्रह्माण्डावयवभूतैर्मेर्वादिभिस्सहितो "हिरण्यगर्भः समवर्त्तताग्रे" इति श्रुतेरित्यर्थः ॥ ५७ ॥ यद्ब्रह्मणा सह सृष्टं यच्च ब्रह्मणा सृष्टं तत्सर्वं तस्मिन्नण्ड एवेत्याह—साद्रीति ॥ सज्योतिः ज्योतिश्चक्रसहितः लोकसंग्रहो लोकसमूहः ॥ ५८ ॥ वारीत्यादि ॥ दशगुणैः दशगुणोत्तरैः ॥ ५९ ॥ अव्यक्तेनेति ॥ प्राकृतैरित्यनेन प्रकृतेरपि लक्षणया ग्रहणम् । छत्रीति न्यायात् ॥ ६० ॥ क्षेत्रज्ञबुद्धिपूर्वकसर्गादौ क्षेत्रज्ञांशस्यैव गुणवश्यत्वं न तु विष्णोरित्याह—जुषन्निति ॥ ब्रह्मा भूत्वा रजोगुणं जुषन् तत्रापि स्वयं सर्वेश्वरो न गुणवश्यः अपि तु स्वसंकल्पेन क्षेत्रज्ञानेव गुणवश्यान् करोति ॥ ६१ ॥ सृष्टमिति ॥ कल्पविकल्पना ब्रह्माहर्व्यवहारः सत्त्वम् । प्राकृतं शुद्धसत्त्वगुणं बिभर्तीति सत्त्वभृत् 'गुणादिदोषांश्च मुने व्यतीत' इत्युक्तेः । किं च "स

तदण्डं क्रमेण विवृद्धं सत्प्राकृतं प्रकृतिकार्यात्मकं हिरण्यगर्भरूपस्य विष्णोरनुत्तमं श्रेष्ठं स्थानम् ॥ ५५ ॥ स्थानत्वमेवाह—तत्रेति ॥ अव्यक्तस्वरूपः प्रकृतेः परः माययाऽव्यक्तरूपः स्वयमेव स्वातन्त्र्येणैव तत्र व्यवस्थितः ॥ ५६ ॥ न जीववदस्वातन्त्र्यप्रवृत्तिरस्तीत्याह—मेरुरिति ॥ स तु जीववत्कर्मवशादुल्बं भस्त्राकारं गर्भवेष्टनं तद्बहिर्वेष्टनमार्गं जरायुः उत्तरं वा "उल्वाजरायुः" इति श्रुतेः ॥ ५७ ॥ साद्रिद्वीपेति ॥ ज्योतिस्सूर्यादि । लोकसंग्रहः लोकसमूहः, तस्मिन्नंडेऽभवत् । साद्रयो द्वीपास्समुद्राश्चाभवन्नित्यर्थः ॥ ५८ ॥ अंडस्यांतस्थितिमुक्त्वा तद्बाह्यस्थितिमाह—वारीति ॥ ततः कटाहरूपपृथिव्यावरणानंतरं तद्बहिः प्रत्येकं वारिवह्न्यादिभिः दशगुणमुत्तरैरधिकैरावृतं पृथिव्यावरणात्कोटियोजनप्रमाणाद्दशगुणं तोयावरणम् । ततो दशगुणं वह्न्यावरणम् । इत्येवं दशगुणोत्तराणि पृथिव्याद्यावरणानि सप्त, प्रकृत्यावरणं त्वष्टममपरिमितम्, "वह्न्यादिभिरावरणैरष्टभिर्बहिरावृतम्" इति शुकोक्तेः ॥ ५९ ॥ अव्यक्तेनेति ॥ ततः प्रकृतिं पृथक्कृत्य प्राकृतैस्सप्तभिरित्युक्तम् ॥ ६० ॥ तदेवं ब्रह्मांडं स्वयं सृष्ट्वा तस्मिँल्लीलया प्रविष्टस्य परमेश्वरस्य गुणावतारैरवांतरसृष्ट्यादिलीलामाह जुषन्नित्यादिना यावदध्यायसमाप्ति—जुषन्निति ॥ विसृष्टौ विविधचराचरादिसृष्टौ संप्रवर्त्तते ॥ ६१ ॥ सृष्टमिति ॥ यावत्कल्पविकल्पना ब्रह्मादीनामवसानं

तमोद्रेकी च कल्पान्ते रुद्ररूपी जनार्दनः ॥ मैत्रेयाखिलभूतानि भक्षयत्यतिदारुणः ॥ ६३ ॥ भक्षयित्वा च भूतानि जगत्येकार्णवीकृते ॥ नागपर्यङ्कशयने शेते च परमेश्वरः ॥६४॥ प्रबुद्धश्च पुनः सृष्टिं करोति ब्रह्मरूपधृक् ॥ ६५॥ सृष्टिस्थित्यन्तकरणीं ब्रह्मविष्णुशिवात्मिकाम् ॥ स संज्ञां याति भगवानेक एव जनार्दनः ॥ ६६ ॥ स्रष्टा सृजति चात्मानं विष्णुः पाल्यं च पाति च ॥ उपसंह्रियते चान्ते संहर्ता च स्वयं प्रभुः ॥ ६७ ॥ पृथिव्यापस्तथा तेजो वायुराकाश एव च ॥ सर्वेन्द्रियान्तःकरणं पुरुषाख्यं हि यज्जगत् ॥ ६८ ॥ स एव सर्वभूतात्मा विश्वरूपो यतोऽव्ययः ॥ सर्गादिकं तु तस्यैव भूतस्थमुपकारकम् ॥ ६९ ॥

त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः । न हि तस्य गुणाः सर्वे सर्वैर्मुनिगणैरपि ॥ वक्तुं शक्या वियुक्तस्य सत्त्वाद्यैरखिलैर्गुणैः" इत्यादिभ्यः ॥ ६२ ॥ ६३ ॥ ॥ ६४ ॥ ६५ ॥ ब्रह्मादीनपदिश्य तेषु स्थित्वा स्वयमेव सृष्ट्यादिकं करोतीत्याह—सृष्टीति ॥ सृष्टिस्थित्यन्तनिमित्तां ब्रह्मा विष्णुः शिव इत्येवं रूपां संज्ञां तत्तद्रूपो भगवानेव यातीत्यर्थः । सर्गस्थित्यन्तकरणामिति वक्तव्ये ङीपः प्रयोग आर्षत्वात्साधुः । यद्वा कर्मणि व्युत्पत्त्या संज्ञायमाना संज्ञात्ववस्थोच्यते । तथा च सर्गादिक्रियासाधनभूतां ब्रह्माद्यात्मिकामवस्थां यातीत्यर्थः । करणीमिति करोतेः करणे ल्युट् प्रत्ययः ॥ ६६ ॥ तद्वत्सृज्यपाल्यसंहार्यानन्तवस्त्वन्तरेषु संज्ञान्तराभिधेयतया वर्त्तत इत्याह—स्रष्टेति ॥ स्रष्टारं क्षेत्रज्ञबुद्धिपूर्वकसर्गादौ ब्रह्माणं सृज्यं च दक्षादिगणं संहर्तारं रुद्रं संहार्यं च त्रैलोक्यं युगपन्निर्दिश्य तद्रूपत्वविधानात्सृज्यसंहार्यभूताद्वस्तुनः स्रष्टृसंहर्त्रोर्न विशेष इति प्रदर्शनमस्मिन् श्लोकेऽभिप्रेतम् । तस्य क्षेत्रज्ञकर्मानुगुणं गुणनियंतृत्वमेव न भोक्तृत्वमित्याह—स्वयंप्रभुरिति ॥ ६७ ॥ उक्तस्य सर्वतादात्म्यस्य हेतुमध्यायादावुक्तं पुनरपि दर्शयति पृथिव्याप इति । एवंभूतं यज्जगत्तस एवेत्युत्तरत्रान्वयः॥६८॥तत्र हेतुः स एवेति॥सर्वभूतात्मा विश्वरूपो यत इति सर्वे

यावत् । सत्त्वभृत्सत्वगुणाधिष्ठाता ॥ ६२ ॥ तमोद्रेकीति ॥ तमोद्रेकीत्यार्षस्संधिः, तमः उद्रेकवानित्यर्थः ॥ ६३ ॥ भक्षयित्वेति ॥ परमेश्वरश्शेते ॥ ६४ ॥ ६५ ॥ ब्रह्माद्यवतारमूलस्वरूपेण ब्रह्मादिरूपाणि तद्व्यतिरिक्तानि न भवंतीत्याह—सृष्टिस्थित्यंतकरणामिति ॥ करणीमिति पाठे सृष्ट्यादिकरणं निमित्तं यस्यास्तां संज्ञां यातीत्यर्थः ॥ ६६ ॥ सृष्टेति ॥ स्रष्टृसृज्यादिभेदश्च न तात्त्विक इत्याह—विष्णुरेव सृष्टा "आत्मैवेदꣳसर्वम्" इति श्रुतेः ॥ ६७ ॥ ६८ ॥ ननु कथं स एव सर्गादिकर्तेत्युच्यते, पित्रादीनां सृष्टृपालकादीनां दृश्यमानत्वात्तत्राह—स एवेति ॥ यतस्स हरिरेव सर्वभूतानामीशः प्रवर्तको विश्वरूपश्च ततो हेतोर्भू

१ सौ इति पाठान्तरम् ।

स एव सृज्यः स च सर्गकर्ता स एव पात्यत्ति च पाल्यते च ॥ ब्रह्माद्यवस्थाभिरशेषमूर्तिर्विष्णुर्वरिष्ठो वरदो वरेण्यः ॥ ७० ॥ इति श्रीविष्णु पुराणे प्रथमेंशे द्वितीयोऽध्यायः ॥ २ ॥ ॥ छ ॥ ॥ मैत्रेय उवाच ॥ निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः ॥ कथं सर्गादिकर्तृत्वं ब्रह्मणोभ्युपगम्यते ॥ १ ॥ श्रीपराशर उवाच ॥ शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः ॥ यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ॥ भवंति तपतां श्रेष्ठ पावकस्य यथोष्णता ॥ २ ॥

भूतानामयमात्मा विश्वं चास्य शरीरमिति यतोतः सर्वं स एवेति । ततो ब्रह्मादिभूतस्थं सर्गादिकं लीलावताररूपिणोऽस्यैवोपकारकम् । यथा शरीरव्यापाराः शरीरिणो जीवस्यैव ॥६९॥ उक्तमर्थं निगमयति स एवेति ॥ सृष्ट्यादिकर्तुः स्वस्यैव सृज्यत्वाद्युपादानम् अशेषमूर्तिरिति ब्रह्मादीनां कुतः स्रष्टृत्वादिकं तत्राह–वरद इति । अय माश्रितेभ्यो ब्रह्मादिभ्यः स्रष्टृत्वादिवरप्रदः " तदादर्शितपंथानौ सृष्टिसंहारकारकौ । मयैवैते निहताः" इत्यादेः । अत्रायते चेत्यध्याहार्यम् । वरेण्यो वरणीयः ॥ ७० ॥ इति श्रीभगवद्भाष्यकारचरणनलिनांतरंगश्रीविष्णुचित्तविरचितो श्रीविष्णुपुराणाख्याने प्रथमांशे द्वितीयोध्यायः ॥ २ ॥ लोके रागद्वेषसत्त्वा दिगुणकस्य शरीरिणः परिच्छिन्नस्य कर्मवश्यस्य तत्सम्बन्धोऽर्हस्यैव कुलालादेः कर्तृत्वं दृष्टम् । ब्रह्मणस्तद्विलक्षणस्य कथं जगत्सर्गादिकर्तृत्वमिहोच्यते इति चोदयति निर्गुणस्येति ॥ १ ॥ परिहरति शक्तय इति सार्द्धश्लोकेन । शक्तय इति ॥ सर्वपदार्थानां वह्नेरौष्ण्यमिव स्वाभाविक्यः शक्तयः तर्कैरचिन्त्याः स्व साधकप्रमाणगोचराः सन्ति । अतो ब्रह्मणोपि "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इत्यादिश्रुतिप्रसिद्धा जगत्सर्गादिनिमित्तभूता भावशक्तयः स्वाभाविकसामर्थ्यानि सन्ति । अतो लौकिककर्तृवैलक्षण्येपि सर्गादिकर्तृत्वं युक्तम् । सर्गाद्या इति । सृज्यतेऽनयेति सर्गः "अकर्त्तरि च कारके" इति करणे घञ्

तस्थं पितृपुत्रादिषु स्थितं सर्गादिकमस्य हरेरेवोपकारकं तत्प्रयुक्ततद्विभूतेरेव विस्तरात् यथा ऋत्विग्भिः कृतं यजमानस्यैवोपकारकं तद्वदित्यर्थः ॥ ६९ ॥ उक्तं स्रष्टृसृज्याद्यैक्यमुपसंहरन्विवक्षितमाह–स एवेति ॥ अत्ति चेति चकारादद्यत इति च ब्रह्माद्यवस्थाभिस्सर्गादिकर्ता अशेषभूतिस्सृज्यादिरूपः अतो विष्णुरेव वरिष्ठः महत्तमः श्रेष्ठः परमार्थ इति यावत्, वरदश्च वरेण्यश्च वरणीयः परमानंदरूपत्वात् ॥ ७० ॥ इति श्रीविष्णु पुराणव्याख्यात्मप्रकाशिकायां प्रथमेंशे द्वितीयोऽध्यायः ॥ २ ॥ ॥ छ ॥ ॥ तदेवं ब्रह्मणः सृष्ट्यादिकर्तृत्वमुक्तं तत्र शंकते निर्गुणस्येत्यनेन मैत्रेयः–निर्गुणस्येति ॥ निर्गुणस्य सत्त्वादिगुणरहितस्य अप्रमेयस्य देश कालाद्यनवच्छिन्नस्य शुद्धस्यादेहस्य सहकारिशून्यस्येति वा अमलात्मनः पुण्यपापसंस्कारशून्यस्य रागादिशून्यस्येति वा एवं भूतस्य ब्रह्मणः कथं सर्गादिकर्तृत्वमिष्यते, एतद्विलक्षणस्यैव लोके घटादिकर्तृत्वदर्शनादि त्यर्थः ॥ १ ॥ परिहरति शक्तय इत्यादिसार्धेन ॥ सर्वेषां भावानां मणिमंत्रादीनां शक्तयः अचिंत्यज्ञानगोचराः अचिंत्यं तर्कानर्हं यज्ज्ञानं कार्यान्यथानुपपत्तिप्रमाणकं तस्य गोचरास्संति यद्वा–अचिन्त्याः भिन्नाभिन्नत्वा दिविकल्पैश्चिन्तयितुमशक्याः केवलमर्थापत्तिज्ञानगोचराः सन्ति । यत एवमतो ब्रह्मणोपि तास्तथाविविधास्सर्गाद्यास्सर्गादिहेतुभूता भावशक्तयस्स्वभावसिद्धाश्शक्तयस्संन्त्येव पावकस्य दाहकत्वशक्तिवत् । अतो गुणादि

तन्निबोध यथा सर्गे भगवान्संप्रवर्त्तते ॥ नारायणाख्यो भगवान्ब्रह्मा लोकपितामहः ॥ ३ ॥ उत्पन्नः प्रोच्यते विद्वन्नित्य एवोपचारतः ॥ ४ ॥ निजेन तस्य मानेन आयुर्वर्षशतं स्मृतम् ॥ तत्पराख्यं तदर्द्धं च परार्द्धमभिधीयते ॥ ५ ॥

प्रत्ययः । सृष्टयादिकरणभूता इत्यर्थः । तपतां श्रेष्ठ इति संबुद्धिः । अत्र ब्रह्मणोऽशरीरत्वमभ्युपगम्य शक्तिमत्वात्कर्तृत्वमुक्तम् । परमार्थतस्तु दिव्यमंगलविग्रहवत्त्वमस्त्येव । यद्वा लोके सत्त्वादिगुणकं परिच्छिन्नं च मृदाद्युपादानं दृष्टम् । देहादियुक्तो रागादिना मलिनश्च कुलालादिर्निमित्तं ब्रह्मणस्तु तद्वैलक्षण्यात् कथमुपादानत्वं निमित्तत्वं चेति बोध्यम्, उत्तरं तु लोके नायं नियमः । द्रव्यलक्षणे हि निर्गुणमेवाचिद्द्रव्यं गुणानामुपादानं दृष्टम् । अपरिच्छिन्न एवाकाशादिः शब्दादेः, अशरीर एवात्मा स्वशरीर प्रेरणे निमित्तं दृष्टः । रागादिरहित एव स्खलनादौ अयत्न एवायस्कान्तादिलोहभ्रमणादौ हेतुर्दृष्ट इत्येवं त्वदुक्तव्याप्तिभंग इत्यभिप्रायः । सर्वभावानां स्वकार्योत्पादनशक्तयः स्वप्रमाणसिद्धत्वादन्यानन्यत्वादिविकल्पैरविचारणीयाः सन्ति । यथाग्नेर्दाहकत्वशक्तिः । एवं ब्रह्मणो जगत्सर्गादिहेतवः स्वाभाविक्यः शक्तयः संतीति । यथाहुः—"न च पर्यनुयोगोस्ति वस्तुशक्तेः कथंचन । अग्निर्दहति नाकाशं कात्र पर्यनुयुज्यता । आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना । यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः" इत्यादि ॥ २ ॥ तन्निबोधेति ॥ नारायणाख्यः सृष्टौ नारायणो लोकपितामहो ब्रह्मा ब्रह्मरूपेण ॥ ३ ॥ उत्पन्न इति ॥ उत्पन्न इत्युपचारेणोच्यते । स तु नित्य एव अत्र नारायणत्वं हेतुः स्वेच्छयैव सर्वात्मकत्वरूपत्वात्तस्य कर्माधीनशरीरपरिग्रहो हि मुख्योत्पत्तिः । यद्वा रात्रौ नारायणे प्रवेशेन नारायणाख्यो ब्रह्मा प्रति कल्पमुत्पन्न इत्युपचारत उच्यते । द्विपरार्धकालस्थायित्वेन नित्यत्वात्तस्य स्वेच्छागृहीतशरीरस्यापि कादाचित्कत्वसाम्यादुत्पन्नोपचारः रात्रौ नारायणत्वं ब्रह्मणः कौर्मे उक्तम् । "ततोऽवतीर्य विश्वात्मा देहमाश्रित्य चक्रिणः । अवाप वैष्णवीं निद्रामेकीभूयाथ विष्णुना" इति ॥ ४ ॥ निजेनेति ॥ ब्राह्मेण मानेन कालपरिमाणेन

हीनस्याप्यचिंत्यशक्तिमत्वात् ब्रह्मणस्सर्गादिकर्तृत्वं घटत इत्यर्थः । तथा च श्रुतिः "न तस्य कार्यं करणं च विद्यते, न तत्समश्चाभ्यधिकश्च दृश्यते । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥ मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इत्यादि । यद्येवं योजना सर्वेषां भावानां पावकस्योष्णताशक्तिवदचिन्त्यज्ञानगोचराः शक्तयस्सन्त्येव ब्रह्मणः पुनस्ताः स्वभावभूताः स्वरूपादभिन्नाः शक्तयः "परास्य शक्तिर्विविधैव श्रूयते" इत्यादिश्रुतेः । अतो मणिमन्त्रादिभिरग्न्यौष्ण्यवन्न केनचिद्विहन्तुं शक्यते । अत एव तस्य निरङ्कुशमैश्वर्यं तथा च श्रुतिः "स वा अयमात्मा सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः" इत्यादि । तपतां श्रेष्ठेति सम्बोधयन् तवापि तपश्शक्तिस्स्वसंवेद्येति सूचयति, यत एवं ततो ब्रह्मणो हेतोः सर्गाद्या भवन्ति नात्र काचिदनुपपत्तिरित्यर्थः ॥ २ ॥ तदेवं ब्रह्मणः सर्गादिकर्तृत्वमुपपाद्य प्रस्तुतं ब्राह्मं सर्गमनुवर्णयितुमाह—तन्निबोधेति ॥ ३ ॥ ननु नारायणाख्य एव चेद्ब्रह्मा कथं तर्हि "हिरण्यगर्भस्समवर्त्तताग्रे" इत्यादिश्रुतिभिस्तस्योत्पत्तिरुच्यते तत्राह—उत्पन्न इति ॥ उपचारतः स्वेच्छया आविर्भावस्याप्युत्पत्तिसादृश्यादौपचारिकमेव ॥ ४ ॥ तस्यायु

कालस्वरूपं विष्णोश्च यन्मयोक्तं तवानघ ॥ तेन तस्य निबोध त्वं परिमाणोपपादनम् ॥ ६ ॥ अन्येषां चैव जन्तूनां चराणामचराश्च ये ॥
भूभूभृत्सागरादीनामशेषाणां च सत्तम ॥ ७ ॥ काष्ठा पञ्चदशाख्याता निमेषा मुनिसत्तम ॥ काष्ठास्त्रिंशत्कला त्रिंशत्कला मौहूर्त्तिको विधिः ॥
॥ ८ ॥ तावत्संख्यैरहोरात्रं मुहूर्तैर्मानुषं स्मृतम् ॥ अहोरात्राणि तावन्ति मासः पक्षद्वयात्मकः ॥९॥ तैः षड्भिरयनं वर्षं द्वेऽयने दक्षिणोत्तरे ॥
अयनं दक्षिणं रात्रिर्देवानामुत्तरं दिनम्॥१०॥दिव्यैर्वर्षसहस्रैस्तु कृतत्रेतादिसंज्ञितम् ॥ चतुर्युगं द्वादशभिस्तद्विभागं निबोध मे ॥११॥चत्वारि
त्रीणि द्वे चैकं कृतादिषु यथाक्रमम् ॥ दिव्याब्दानां सहस्राणि युगेष्वाहुः पुराविदः ॥ १२ ॥ तत्प्रमाणैः शतैः संध्या पूर्वा तत्राभिधीयते ॥
सन्ध्यांशश्चैव तत्तुल्यो युगस्यानंतरो हि सः॥१३॥सन्ध्यासंध्यांशयोरन्तर्यः कालो मुनिसत्तम ॥ युगाख्यः स तु विज्ञेयः कृतत्रेतादिसंज्ञितः॥१४॥

सर्वसंसार्यायुषोधिकत्वात्तस्यायुःपरमित्युच्यते ॥५॥ कालेत्यादि ॥ तेन कालेन तस्य ब्रह्मणः परिणामोपपादनं नाशरूपस्य परिणामस्योपपादनं निर्वर्त्तनं निबोध । परिमा
णोपपादनमिति पाठे ब्रह्मादीनां जीवने इयत्ताक्लृप्तिः ॥६॥ अन्येषामिति॥अन्येषां चैव परिणामोपपादनमिति शेषः॥७॥कालस्वरूपमाह—काष्ठेत्यादिना॥काष्ठेति मौहू
र्त्तिको विधिः मुहूर्त्तप्रकारः॥८॥ तावदिति ॥ यद्यपि त्रिंशन्मुहूर्तः सावनोऽहोरात्रः शुक्लकृष्णद्विपक्षश्चांद्रो मासः अयनद्वयात्मकः सौरोब्दः तथापि सौराब्दैरेव युगव्यवहारा
दिनमासयोरपि सौरत्वमेवात्रोपलक्ष्यम् ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥

मानमाह—निजेनेति ॥ निजेन स्वकीयेन वक्ष्यमाणेन वर्षशतं स्मृतं पराख्यं सर्वातिशायित्वात् ॥ ५ ॥ कालेति ॥ तेन कालेन तस्य ब्रह्मणः अन्येषां च परिमाणस्य जीवनकालस्योपपादनं सम्पादनं निबोध । पाठा
न्तरे परिणामस्यावसानस्योपपादनमित्यर्थः ॥ ६ ॥ अन्येषामिति ॥ अचराश्च ये तेषामपीति शेषः ॥ ७ ॥ तदेवं निमेषादिक्रमेण निरूपयति काष्ठेत्यादिना—अक्षिपक्ष्मनिक्षेपोपलक्षितः कालो निमेषः पञ्चदशनिमेषाः,
एका काष्ठोक्ता, त्रिंशत्काष्ठा एका कला, त्रिंशत्कला मौहूर्त्तिको विधिः मुहूर्त्तमानप्रकारः ॥ ८ ॥ तावदिति ॥ तावत्सङ्ख्यैस्त्रिंशत्संङ्ख्याकैर्मुहूर्त्तैः तावन्ति त्रिंशदहोरात्राणीति लौकिकस्सावनो मास उक्तः । पक्ष
द्वयात्मक इति चान्द्रो मास उक्तः "दर्शावधिं मासमुशन्ति चान्द्रम्" इति स्मृतेः ॥९॥ सौरैर्मासैरयनप्रकारमाह—तैरिति ॥ तच्छब्देन चान्द्रैरदूरविप्रकर्षात्सौरा मासा लक्ष्यन्ते । सूर्यस्य मेषाद्येकैकराशिभागः सौरो मासः
तैः षड्भिरयनं द्वेऽयने इत्यार्षस्सन्धिः । अतः परं दिव्यमानमाह—अयनमित्यादिना दक्षिणायनं देवानां रात्रिः उत्तरायणं दिनम्, एवं भूतैष्षष्ट्युत्तरत्रिशताऽहोरात्रैर्देवानां वर्षमिति द्रष्टव्यम् ॥ १० ॥ वर्षैश्चतुर्युग
माह—दिव्यैरिति ॥ दिव्यैर्द्वादशभिर्वर्षसहस्रैश्चतुर्युगमित्यन्वयः ॥११॥ चत्वारीति ॥ यथाक्रमं कृतयुगे चत्वारिसहस्राणि, त्रेतायां त्रीणि द्वापरे द्वे सहस्रे कलावेकं सहस्रमिति॥१२॥ तत्प्रमाणैरिति ॥ तत्प्रमाणैस्तेषां सहस्राणां
यत्प्रमाणं चत्वारि त्रीणि द्वे चैकमित्युक्तं तत्प्रमाणैस्तत्सङ्ख्यैश्शतैः परिमिता युगस्य पूर्वभाविनी सन्ध्योच्यते । तावानेव युगानन्तर्भाविसन्ध्यांशः । एतच्चतुर्युगव्यवस्थार्थमुक्तम् । तथा च शुकः—"सन्ध्यांशयोरन्तरेण यः
कालश्शतसङ्ख्ययोः । तदेवाहुर्युगं तज्ज्ञाः यत्र धर्मो विधीयते" इति । तदेवं युगानां दशसहस्राणि वर्षाणि तत्पूर्वोत्तरभाविनां सन्ध्यांशानां शतैर्द्वे सहस्रे एवं द्वादशभिर्वर्षसहस्रैश्चतुर्युगमिति सिद्धम् ॥ १३ ॥ १४ ॥

१ चत्वारि त्रीणि द्वे चैकं तत्संख्यैः शतैः । इ० पा० ।

कृतं त्रेता द्वापरश्च कलिश्चैव चतुर्युगम् ॥ प्रोच्यते तत्सहस्रं च ब्रह्मणो दिवसं मुने ॥ १५ ॥ ब्रह्मणो दिवसे ब्रह्मन्मनवस्तु चतुर्दश ॥ भवन्ति परिणामं च तेषां कालकृतं शृणु ॥ १६ ॥ सप्तर्षयः सुराः शक्रो मनुस्तत्सूनवो नृपाः ॥ एककाले हि सृज्यन्ते संह्रीयन्ते च पूर्ववत् ॥ १७ ॥ चतुर्युगाणां संख्याता साधिका ह्येकसप्ततिः ॥ मन्वन्तरं मनोः कालः सुरादीनां च सत्तम ॥ १८ ॥ अष्टौ शत सहस्राणि दिव्यया संख्यया स्मृतम् ॥ द्विपंचाशत्तथान्यानि सहस्राण्यधिकानि तु ॥ १९ ॥ त्रिंशत्कोट्यस्तु संपूर्णाः संख्याताः संख्यया द्विज ॥ सप्तषष्टिस्तथान्यानि नियुतानि महामुने ॥ २० ॥ विंशतिस्तु सहस्राणि कालोयमधिकं विना ॥ मन्वन्तरस्य संख्येयं मानुषैर्वत्सरैर्द्विज ॥ २१ ॥ चतुर्दशगुणो ह्येष कालो ब्राह्ममहः स्मृतम् ॥ ब्राह्मो नैमित्तिको नाम तस्यान्ते प्रतिसञ्चरः ॥ २२ ॥

॥ १५ ॥ १६ ॥ १७ ॥ चतुर्युगाणामिति ॥ साधिका किंचिदूनत्रिचत्वारिंशच्छताधिकं पञ्चसहस्रं दिव्याब्दानामधिकमवशिष्टचतुर्युगषट्कसहस्रस्य दिव्याब्दसहस्राणां चतुर्दशांशः प्रत्येकं चतुर्युगाणामेकसप्ततेरधिक इत्यर्थः । तेन सहिता साधिका सुरादीनां इन्द्रसप्तर्षिमनुतत्पुत्राणाम् ॥ १८ ॥ मन्वंतरे देवसंवत्सरसंख्यामाह—अष्टाविति अधिकं विनेति वक्ष्यति तदत्रापि सम्बध्यते ॥ १९ ॥ तस्मिन्मानुषसंवत्सरसंख्यामाह—त्रिंशदिति ॥ २० ॥ विंशतिरिति ॥ अधिकं विना मन्वन्तरस्य मानुषैर्वर्षैस्संख्येयं संख्येत्यन्वयः ॥ २१ ॥ चतुर्दशगुण इति ॥ ब्राह्म इति ब्रह्मणो ग्रसनाद्ब्राह्मः । निमित्तं

॥ १९ ॥ मन्वन्तरमानं वक्तुमाह—ब्रह्मण इति ॥ १६ ॥ सप्तर्षय इति ॥ तत्सूनव एव नृपाः एककाले हि सृज्यन्ते, अधिकारिणः क्रियन्ते, संह्रियन्ते अन्ते निरधिकाराः क्रियन्त इत्यर्थः ॥ १७ ॥ चतुर्युगाणामिति ॥ साधिकेत्यत्र श्लोकाः, "द्विचत्वारिंशता युक्ताः शतेनाभ्यधिकास्तथा । दिव्याब्दाः पञ्चसाहस्रमासा दश दिनाष्टकम् ॥ चतुर्यामा मुहूर्त्तौ द्वावष्टावपि कलास्ततः । काष्ठाः सप्तदश द्वौ च निमेषौ तदनन्तरम् ॥ दैवस्यैकनिमेषस्य सप्तमो भाग इष्यते । मानुषाब्दास्तु लक्षाणि सार्द्धाष्टादश तत्परम् ॥ सहस्रमष्टविंशत्या युता चाब्दचतुश्शती । पञ्चविंशत्यहोरात्रयुता. मासाश्च षट् तथा ॥ नाड्यो द्वादश तावत्यः कलाश्च तदनन्तरम् । एकविंशन्मुहूर्त्ताश्च कला द्वादश तत्परम् ॥ पञ्चविंशति काष्ठाश्च निमेषा दश साधिकाः" इति । चतुर्युगसहस्रप्रमाणस्य ब्रह्मदिनस्य चतुर्दशधा विभागे प्रतिभागमेकसप्ततिश्चतुर्युगाणि भवन्ति । अवशिष्यते चतुर्युगषट्कम् । तस्य चतुर्दशांशो यथावद्गणितः प्रतिमन्वन्तरमेकसप्ततेरधिक इत्यर्थः । सुरादीनाञ्च 'सप्तर्षयः सुराः शक्र' इत्यनेन पूर्वोक्तानां मन्वन्तराधिकारिणाम् ॥ १८ ॥ १९ ॥ तमेव मन्वन्तरकालं मानुषाब्दैर्गणयति त्रिंशत्कोट्य इत्यादिद्वाभ्याम् । त्रिंशत्कोट्य इति ॥ नियुतानि लक्षाणि ॥ २० ॥ विंशतिरिति ॥ पूर्वोक्तमधिकं कालं विना ॥ २१ ॥ चतुर्दशगुण इति ॥ ब्राह्मो नैमित्तिकः ब्रह्मनिद्रानिमित्तः

तदा हि दह्यते सर्वं त्रैलोक्यं भूर्भुवादिकम् ॥ जनं प्रयान्ति तापार्ता महर्लोकनिवासिनः ॥२३॥ एकार्णवे तु त्रैलोक्ये ब्रह्मा नारायणात्मकः ॥ भोगिशय्यां गतः शेते त्रैलोक्यग्रासबृंहितः ॥ २४ ॥ जनस्थैर्योगिभिर्देवश्चिन्त्यमानोब्जसम्भवः ॥ तत्प्रमाणां हि तां रात्रिं तदन्ते सृजते पुनः ॥ ॥ २५ ॥ एवं तु ब्रह्मणो वर्षमेवं वर्षशतं च यत् ॥ शतं हि तस्य वर्षाणां परमायुर्महात्मनः ॥ २६ ॥

तत्र यच्छेत इति नैमित्तिकत्वं वक्ष्यति ॥ २२ ॥ २३ ॥ एकार्णव इत्यादि । त्रैलोक्यग्राससमये भगवदनुप्रवेशातिशयाद्बृंहितः ज्ञानबृंहित इति पाठे तत्तज्जीवकर्मवासनाज्ञानबृंहितः । श्रीजन्मरहस्ये परशुरामादिवद्ब्रह्मणोऽवतारत्ववचनात् भगवच्चेष्टाया एवोद्भूतत्वाच्च तस्य भोगिशयनवचनमविरुद्धम् । अवतारत्वे हि योगिचिन्त्यत्वं युज्यते । बलभद्रादिवदत्रापि "विष्णुर्ब्रह्मस्वरूपेण स्वयमेव व्यवस्थितः" इत्युक्तम् । अथ वा "यथा सुष्वाप भगवानप्छय्यामेक एव हि" इत्यत्राप्छय्यावचनं भोगिशय्याव्यवधानसहं यथा च "क्षीरोदे वसति प्रभुः" इत्यत्र क्षीरोदः श्रीमदायतनदिव्यमण्डपयोगपीठादिव्यवधानसहः । एवं ब्रह्मा भोगिशय्यागत इत्यत्रापि नाभिसरोरुहव्यवधानसहं तथा च श्रीविष्णुधर्मे "एकार्णवे जगत्यस्मिन् ब्रह्मण्यमिततेजसि । कृष्णनाभिह्रदोद्भूतकमलोदरशायिनि । संहृत्य विश्वं जलशायिने च नमोनमः कैटभनाशनाय । स्वनाभिपद्मोदरशायिने च ब्रह्मस्वरूपोपगताय देव । स्वनाभिकमलोद्भूतकमलोदरशायिने" इति च भगवतो जलशायित्वं ब्रह्मणः पद्मोदरशायित्वं चोक्तम् । तथा च श्रीहरिवंशे 'पूर्णे युगसहस्रे' इत्यारभ्य कल्पक्षये ब्रह्मणा सह देवानां भगवदनुप्रवेशमुक्त्वा "सहस्रशीर्षा पुरुषो रुक्मवर्णस्त्वतीन्द्रियः । सुष्वाप सलिले तस्मिन्" इति भगवतः सलिलशयनमुक्त्वा "ब्रह्मा तु सलिले तस्मिन् ज्योतिर्भूत्वा चचारह । निशायामिव खद्योतः प्रावृट्काले ततस्तु सः" इति ब्रह्मणः सलिलोपलक्षिते पद्मे शयनमुक्तम् ॥ २४ ॥ जनस्थैरिति ॥ तां ब्राह्मीं रात्रिं नैरन्तर्येण शेते सृजते पुनः त्रैलोक्यमिति शेषः ॥ २५ ॥ उक्तमर्थं निगमयति एवमित्या



प्रतिसञ्चरः प्रलयः ॥ २२ ॥ तदेति ॥ भूर्भुवादिकमित्यार्षः सन्धिः ॥ २३ ॥ एकार्णव इति ॥ भोगी शेषस्स एव शयनं तद्गतस्सन् शेते । त्रैलोक्यग्रासेन बृंहितः संवृद्ध इव यथा हि कश्चित् बहुभोज्यं सम्पाद्य यावत्तृप्ति भुक्त्वा तत्सम्पादनरक्षणादिक्लेशं हित्वा सुखं शेते तद्वदित्यर्थः । ज्ञानबृंहित इति पाठे त्रैलोक्यस्थैर्ज्ञानमयैर्जीवैर्बृंहितः प्राज्ञावस्थायां समृद्धज्ञानानन्द इत्यर्थः ॥ २४ ॥ जनस्थैरिति ॥ जनस्थैश्चिन्त्यमानः महर्लोकस्थानामपि तदा तत्रैव गतत्वात् तत्प्रमाणां ब्रह्माहःपरिमितां तां रात्रिं नैरन्तर्येण शेत इति पूर्वेण सम्बन्धः ॥ २५ ॥ एवमिति ॥

एकमस्य व्यतीतं तु परार्द्धं ब्रह्मणोऽनघ ॥ तस्यान्तेभून्महाकल्पः पाद्म इत्यभिविश्रुतः ॥ २७ ॥ द्वितीयस्य परार्द्धस्य वर्तमानस्य वै द्विज ॥ वाराह इति कल्पोयं प्रथमः परिकीर्तितः ॥ २८ ॥ इति श्रीविष्णुपुराणे प्रथमेंशे तृतीयोऽध्यायः ॥ ३ ॥ ॥ छ ॥ ॥ श्रीमैत्रेय उवाच ॥ ब्रह्मा नारायणाख्योऽसौ कल्पादौ भगवान्यथा ॥ ससर्ज सर्वभूतानि तदाचक्ष्व महामुने ॥ १ ॥ श्रीपराशर उवाच ॥ प्रजाः ससर्ज भगवान्ब्रह्मा नारायणात्मकः ॥ प्रजापतिपतिर्देवो यथा तन्मे निशामय ॥ २ ॥ अतीतकल्पावसाने निशासुप्तोत्थितः प्रभुः ॥ सत्त्वोद्रिक्तस्तथा ब्रह्मा शून्यं लोकमवैक्षत ॥ ३ ॥ नारायणः परोऽचिन्त्यः परेषामपि स प्रभुः ॥ ब्रह्मस्वरूपी भगवाननादिः सर्वसम्भवः ॥ ४ ॥ इमं चोदाहरन्त्यत्र श्लोकं नारायणं प्रति ॥ ब्रह्मस्वरूपिणं देवं जगतः प्रभवाप्ययम् ॥ ५ ॥ आपो नारा इति प्रोक्ता आपो वै नरसूनवः ॥ अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः ॥ ६ ॥

दिना । एवमित्यनेन पूर्वोक्ता ब्रह्मदिनसंख्या विवक्षिता तस्य वर्षाणां शतं परमायुः तस्यायुषः परमितिसंज्ञेत्यर्थः ॥ २६ ॥ एकमिति ॥ परार्धं परस्यार्द्धमित्यर्थः ॥ २७ ॥ २८ ॥ इति श्रीभगवद्रामानुजपादारविंदभृंगायमाणविष्णुचित्तविरचिते विष्णुपुराणव्याख्याने विष्णुचित्तीये प्रथमेंशे तृतीयोध्यायः ॥ ३ ॥ ॥ १ ॥ २ ॥ अथ पाद्मकल्पकथाविषयाद्ब्रह्मप्रोक्तात्पाद्मपुराणादनन्तरं वाराहकल्पवृत्तान्तविषयमिदं वैष्णवं पुराणमिति दर्शयितुं प्राक् परार्द्धप्राप्तपाद्मकल्पमनूद्य वराहकल्पवृत्तान्तं प्रस्तौति—अतीतकल्पेति ॥ तथोक्तं मात्स्ये "एतदेव च वै ब्राह्मं पाद्मे कल्पे जगद्धितम् । सर्वभूतात्मकं यत्तत्पाद्ममित्युच्यते बुधैः । वाराहकल्पवृत्तान्तमधिकृत्य पराशरः । "यान्प्राह धर्मानखिलांस्तद्युक्तं वैष्णवं विदुः" इति सत्त्वोद्रिक्तः भगवदनुप्रवेशातिशयात् तस्यैव वराहाद्यवतारप्रसिद्धेः ॥ ३ ॥ ४ ॥ अत्र ब्रह्मनारायणयोः स्वरूपैक्यशंकायां मन्वादयस्तयोर्भेदपरं नारायणविषयं श्लोकमुदाहरंतीत्याह—इमं चेति ॥ ५ ॥ तमेव श्लोकं दर्शयति आप इति ॥ "प्रादुरा

एवम्भूतैरहोरात्रिपक्षमासादिकल्पनया वर्षम् ॥ २६ ॥ एकमिति ॥ महाकल्प इति अवान्तरकल्प एव पुष्करप्रादुर्भावादिगुणैर्महत्त्वान्महाकल्प इत्युच्यते ॥ २७ ॥ २८ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुपुराणव्याख्यायां प्रथमांशे तृतीयोऽध्यायः ॥ ३ ॥ ॥ पूर्वोपक्षिप्तमेव ब्राह्मं सर्गं प्रसक्तानुप्रसक्तान्तरितं श्रोतुकामो मैत्रेयः पृच्छति ब्रह्मेति ॥ १ ॥ २ ॥ प्रतिज्ञातं प्रजासर्गं निरूपयिष्यन् प्रथमं तदाधारभूताया भूमेरुद्धारं वक्तुमाह -अतीतकल्पेत्यादिना ॥ निशायां सुप्तिः प्रस्वापस्तस्मादुत्थितः सत्त्वोद्रिक्तः दृश्यते हि निद्रावसाने प्रबुद्धानां प्रसन्नकरणत्वलक्षणस्सत्त्वातिशयः ॥ ३ ॥ नारायण इति ॥ सर्वसम्भवः विश्वस्रष्टा ॥ ४ ॥ ब्रह्मणो नारायणसंज्ञां व्युत्पादयति इमं चेत्यादिना—इमं चेति ॥ ब्रह्मस्वरूपिणं नारायणं प्रति ॥ ५ ॥ आप इति ॥ ब्रह्मस्वरूपोऽस्मिन्नर्थे नरः पुरुषोत्तमः तस्माज्जाता आपो नाराः तदुक्तम् । "तास्ववात्सीत्स्वसृष्टासु

१ ततो इति पाठान्तरम् । २ नित्यः इति पाठान्तरम् ।

तोयान्तःस्थां महीं ज्ञात्वा जगत्येकार्णवीकृते ॥ अनुमानात्तदुद्धारं कर्तुकामः प्रजापतिः ॥ ७ ॥ अकरोत्स्वतनूमन्यां कल्पादिषु यथा पुरा॥ मत्स्यकूर्मादिकां तद्वद्वाराहं वपुरास्थितः ॥ ८ ॥ वेदयज्ञमयं रूपमशेषजगतः स्थितौ ॥ स्थितः स्थिरात्मा सर्वात्मा परमात्मा प्रजापतिः ॥ ॥ ९ ॥ जनलोकगतैस्सिद्धैस्सनकाद्यैरभिष्टुतः ॥ प्रविवेश तदा तोयमात्माधारो धराधरः ॥ १० ॥ निरीक्ष्य तं तदा देवी पातालतलमागतम् ॥ तुष्टाव प्रणता भूत्वा भक्तिनम्रा वसुन्धरा ॥ ११ ॥ श्रीपृथिव्युवाच ॥ नमस्ते पुण्डरीकाक्ष शंखचक्रगदाधर ॥ मामुद्धरास्मादद्य त्वं त्वत्तोऽहं पूर्वमुत्थिता ॥ १२ ॥ त्वयाहमुद्धृता पूर्वं त्वन्मयाहं जनार्दन ॥ तथान्यानि च भूतानि गगनादीन्यशेषतः ॥ १३ ॥ नमस्ते परमात्मात्मन्पुरुषात्मन्नमोस्तु ते ॥ प्रधानव्यक्तभूताय कालभूताय ते नमः ॥ १४॥

सीत्तमोनुदः'' इति प्रकृतेः परमकारणभूतो भगवानविनाशित्वेन नर इत्युच्यते तत्सृष्टा आपो नाराः अप्छब्दः सृज्यतत्त्वान्तरप्रदर्शनपरः ''नराज्जातानि तत्त्वानि नाराणीति ततो विदुः । तान्येव चायनं तस्य तेन नारायणः स्मृतः'' इत्यादि दर्शनात् अस्यायनमनुप्रविष्टस्य शरीरम् 'यदम्बु वैष्णवः कायः' इत्यपि वक्ष्यति । पूर्वं ब्रह्मसृष्टेः प्राक्कारणभूते भगवति नारायणशब्दनिर्वचनात्तस्य कार्यभूताद्ब्रह्मणो भेद इति भावः ॥६॥ तोयान्तामिति । तोयान्तां समहीमिति पाठान्तरम् । तोयेनान्तो नाशो यस्यास्ताम् अनुमानात् सोपश्यत्पुष्करपर्णमिति पुष्करपर्णलिंगदर्शनात् ज्ञात्वा नारायणमूर्तेरन्यां मत्स्यकूर्मादिकां स्वतनुं यथा पुराकरोत्तथा वाराहरूपमास्थितस्तोयं प्रविवेशेत्यन्वयः ॥ ७ ॥ ८ ॥ वेदेति ॥ वेदयज्ञमयं रूपं वेदयज्ञमयत्वेन निरूपणीयं वेदवैदिकधर्मैर्भूर्धार्यत इति भावः । स्थितौ स्थितः स्थितिनिमित्तमास्थितः स्थिरात्मा रक्षणे स्थिरचित्तः ॥ ९ ॥ जनलोकेति ॥ अभिष्टुतः सृष्ट्यर्थमुद्बोधितमहिमा स्तूयमाना हि देवता वीर्येण वर्द्धते इति न्यायात् ॥ १० ॥ ११ ॥ नम इति ॥ मामुद्धर अस्मात्प्रलयाब्धेः त्वत्त उत्थिता उत्पन्ना ॥ १२ ॥ त्वयेति ॥ त्वन्मया त्वन्मयी त्वदुपादाना ॥१३॥ नम इति ॥ परमात्मात्मन् पुरुषादिचतु[१]

सहस्रं परिवत्सरान् । तेन नारायणो नाम यथापः पुरुषोद्भवाः'' इति ॥ ६ ॥ ततः किमत आह तोयान्तेत्यादि ईषत्पादोनद्वाभ्याम्—तोयान्तस्स्थामिति ॥ तोयस्योपरि पुष्करपर्णं दृष्ट्वा तदधिष्ठानानुमानात्तोयस्यान्तर्महीं ज्ञात्वा तदुद्धारं कर्तुमिच्छन् नारायणोऽन्यां तनुं तदुद्धारयोग्यामकरोदित्यन्वयः । पुरा यथा मत्स्यकूर्मादिकां तनुं कल्पादिषु तत्कार्यार्थमकरोत्, तथा च श्रुतिः ''सोपश्यत्पुष्करपर्णं तिष्ठत् सोऽमन्यत अस्ति वै तत अस्मिन्निदमधितिष्ठतीति स वराहो रूपं कृत्वोपनिमज्जत् स पृथिवीमध आर्च्छत्'' इत्यादि । अथ वाराहं वपुरास्थितःसंस्तोयं प्रविवेशेत्युत्तरेणान्वयः ॥ ७ ॥ ८ ॥ वेदेति ॥ वेदयज्ञमयं रूपमास्थितः । यतः अशेषजगतः स्थितौ स्थितः वेदयज्ञाधीनत्वाज्जगत्स्थितेः ॥ ९ ॥ १० ॥ निरीक्ष्येति ॥ तदा वसुन्धरा तदधिष्ठात्री देवी तं तुष्टाव ॥ ११ ॥ नम इति ॥ अस्मात्पातालतलान्मामुद्धर त्वत्तो हेतोरहमुत्थिता उत्पन्ना उद्धृता ॥ १२ ॥ त्वयेति ॥ उपादानकारणमपि मम च गगनादीनाञ्च त्वमेवेत्याह—त्वन्मयेति ॥ त्वन्मया उपादाननिमित्तत्वादिकं साधयन्ति ॥ १३ ॥ परब्रह्मस्वरूपेण पूर्वोक्तपुरुषादिचतूरूपेण प्रणमति नमस्त इति ॥ १४ ॥

१ पृथिवीपते इ० पाठान्तरम् ।

(१) पुरुषादिचतूरूपाणि द्वितीयाध्याये १५ श्लोके द्रष्टव्यानि।

त्वं कर्ता सर्वभूतानां त्वं पाता त्वं विनाशकृत् ॥ सर्गादिषु प्रभो ब्रह्मविष्णुरुद्रात्मरूपधृक् ॥ १५ ॥ सम्भक्षयित्वा सकलं जगत्येकार्णवीकृते ॥ शेषे त्वमेव गोविंद चिन्त्यमानो मनीषिभिः ॥१६॥ भवतो यत्परं तत्त्वं तन्न जानाति कश्चन ॥ अवतारेषु यद्रूपं तदर्चन्ति दिवौकसः ॥१७॥ त्वामाराध्य परं ब्रह्म याता मुक्तिं मुमुक्षवः ॥ वासुदेवमनाराध्य को मोक्षं समवाप्स्यति ॥१८॥ यत्किंचिन्मनसा ग्राह्यं यद्ग्राह्यं चक्षुरादिभिः ॥ बुद्ध्या च यत्परिच्छेद्यं तद्रूपमखिलं तव ॥ १९ ॥ त्वन्मयाहं त्वदाधारा त्वत्सृष्टा त्वत्समाश्रया ॥ माधवीमिति लोकोयमभिधत्ते ततो हि माम् ॥ २० ॥ जयाखिलज्ञानमय जय स्थूलमयाव्यय ॥ जयाऽनन्त जयाव्यक्त जय व्यक्तमय प्रभो ॥ २१ ॥ परापरात्मन्विश्वात्मञ्जय यज्ञपतेऽनघ ॥ त्वं यज्ञस्त्वं वषट्कारस्त्वमोंकारस्त्वमग्नयः ॥ २२ ॥ त्वं वेदास्त्वं तदङ्गानि त्वं यज्ञपुरुषो हरे ॥ सूर्यादयो ग्रहास्तारा नक्षत्राण्यखिलं जगत् ॥ २३ ॥ मूर्तामूर्तमदृश्यं च दृश्यं च पुरुषोत्तम ॥ यच्चोक्तं यच्च नैवोक्तं मयात्र परमेश्वर ॥ तत्सर्वं त्वं नमस्तुभ्यं भूयोभूयो नमोनमः ॥ २४ ॥

रूपविलक्षणस्वरूप अप्यये अनिरुद्धादयः पुरुषाच्युतसत्यवासुदेवाख्याः॥१४॥त्वमिति ॥ ब्रह्मेत्यादि ब्रह्मविष्णुरुद्ररूपधर ॥१५॥ संभक्षयित्वेति ॥ शेषे स्वपिषि ॥ ॥१६॥१७॥१८॥यत्किञ्चिदिति॥मनसा ग्राह्यं सुखादि चक्षुरादिग्राह्यं रूपादि बुद्ध्या परिच्छेद्यं व्याप्तिसम्बन्धज्ञानादिना प्रमाणान्तरपरिच्छेद्यम्॥१९॥त्वन्मयेति॥ माधवी माधवस्येयमिति माधवी ॥२०॥ जयति ॥ अखिलज्ञानमय सर्वज्ञ स्थूलमय स्थूलं जगत्तन्मय व्यक्तं महदादि तन्मय ॥२१॥ परापरात्मन्निति॥ परापरात्मन् उत्कृष्टनिकृष्टयोरात्मभूतवषट्कारः अस्तु श्रौषडित्यादि मंत्रः॥२२॥त्वमिति॥यज्ञपुरुषः यज्ञाधिदेवता ताराः कृत्तिकाद्याः नक्षत्राणि देवगृहाः ॥२३॥ मूर्तामूर्तमिति ॥

त्वमिति ॥ ब्रह्मादिरूपेण सृष्ट्यादिकर्त्ता त्वमिति पाता पालकः ॥ १५ ॥ सम्भक्षयित्वेति ॥ शेषे शयनं करोषीति शेषः ॥ १६ ॥१७॥ दिवौकसामपि मुमुक्षूणामपि त्वमेव भजनीय इत्याह—त्वामिति ॥ एवं ब्रह्ममूर्त्तिं[1] त्वामेवाराध्य मुक्तिं प्राप्ताः ॥ १८ ॥ यत्किंचिदिति ॥ मनसा ग्राह्यं संकल्प्यं बुद्ध्या च यत्परिच्छेद्यम् अध्यवसाय्यम् ॥ १९ ॥ मम त्वदधीनत्वं लोके प्रसिद्धमेवेत्याह—त्वन्मयेति ॥ त्वत्समाश्रयात्त्वच्छरणेत्येतैर्हेतुभिः ततः आरभ्य मामयं लोको माधवीं त्वदीयामभिधत्ते ॥ २० ॥ परापरात्मन्निति ॥ परापरं कारणं कार्यञ्च उच्चनीचं वा तदात्मन् तद्रूपयज्ञफलदस्त्वं वषट्कारः वषडिति मन्त्रस्तद्वाच्यो वा ॥ २२ ॥ त्वमिति ॥ यज्ञपुरुषो यज्ञमूर्त्तिः यज्ञाराध्यो वा । ताराः अश्विन्याद्या अन्यानि नक्षत्राणि विपरीतं वा उभयथापि प्रयोगदर्शनात् ॥ २३ ॥ मूर्त्तामूर्त्तमिति ॥ मूर्त्तं सर्वगतं द्रव्यं कठिनं वा अदृश्यमप्रत्यक्षं ते नमोनमः । भूयोभूय इत्या

१ रूपमिति पाठान्तरम् ।

श्रीपराशर उवाच॥एवं संस्तूयमानस्तु पृथिव्या धरणीधरः ॥ सामस्वरध्वनिः श्रीमाञ् जगर्जे परिघर्घरम्॥२५॥ततः समुत्क्षिप्य धरां स्वदंष्ट्रया महावराहः स्फुटपद्मलोचनः ॥ रसातलादुत्पलपत्रसन्निभः समुत्थितो नील इवाचलो महान्॥२६॥उत्तिष्ठता तेन मुखानिलाहतं तत्संभवाम्भो जनलोकसंश्रयान् ॥ [1]प्रक्षालयामास हि तान्महाद्युतीन् सनन्दनादीनपकल्मषान् मुनीन् ॥२७॥ प्रयान्ति तोयानि खुराग्रविक्षतरसातलेऽधः कृतशब्दसन्तति ॥ श्वासानिलास्[2]ताः परितः प्रयांति सिद्धा जने ये नियता वसन्ति ॥ २८ ॥ उत्तिष्ठतस्तस्य जलार्द्रकुक्षेर्महावराहस्य महीं विगृह्य ॥ विधुन्वतो वेदमयं शरीरं रोमान्तरस्था मुनयः स्तुवन्ति ॥ २९ ॥ तं तुष्टुवुस्तोषपरीतचेतसो लोके जने ये निवसन्ति योगिनः ॥ सनन्दनाद्या ह्यतिनम्रकन्धरा धराधरं धीरतरोद्धतेक्षणम् ॥ ३० ॥

मूर्तं सर्वगतं द्रव्यं दृश्यं प्रत्यक्षम् ॥ २४ ॥ एवमिति ॥ परिघर्घरमिति वराहजातिध्वन्यनुकृतिः गर्जनं स्तोत्रानुमोदनप्रकारः ॥ २५ ॥ तत इति ॥ स्फुटं विकसितं नीलोत्पलपत्रवत्स्निग्धश्यामः ॥ २६ ॥ उत्तिष्ठतेति ॥ तत्संप्लवांभ इति पाठान्तरम् । तत्संप्लवाम्भः तदभिषेकजलं भगवन्मुखनिश्वासस्य वेदमयत्वात्तत्प्रेरितशीकरस्पर्शादतिपावनत्वम् "तस्य वा एतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदः" इत्यादिश्रुतेः । अम्भोविशेषणं वा पवित्रतापदमिति ॥ २७ ॥ प्रयान्तीत्यादि ॥ वराहस्य खुराग्रेण विक्षते विदीर्णे रसातले सत्यधोऽण्डकटाहे प्रयान्तिस्म कृतशब्दसन्ततीति क्रियाविशेषणं तथा च श्रीविष्णुधर्मोत्तरे गंगाव्याप्तौ पातालान्यधिकृत्योक्तम् "रौक्मभौमादधो याता रौद्रं तेजः सुदारुणम् । तत्राप्यविलयं याता वाराहं लोकमागता । वाराहलोके ब्रह्माण्डमधोर्द्धे भिन्नवान्हरिः । छिद्रेण तेन सा देवी स्वां योनिं पुनरागता" इति ॥ २८ ॥ उत्तिष्ठत इति ॥ 'रोमान्तरस्था मुनय' इति जनलोकं यावत्तावद्रोमसारणादिति भावः । स्तुवन्ति स्मेति शेषः ॥ २९ ॥ तमिति ॥ तोषपरीतचेतसः तोषेणानंदेन परीतानि व्याप्तानि चेतांसि मनांसि येषां ते अतिनम्रकंधराः प्रीतिभारेण धीरतरोद्धतेक्षणं निर्विशंकोदारेक्षणमित्यर्थः॥ ३०॥

दरार्थः ॥ २४ ॥ एवमिति ॥ सामस्वर एव ध्वनिर्यस्य स इदानीं वाराहरूपमनुकृत्य परिघर्घरं तद्ध्वन्यनुकृतं जगर्ज व्यनदत् ॥ २५ ॥ तत इति ॥ उत्क्षिप्य उद्धृत्य स्फुटे विकसिते पद्मे इव लोचने यस्य सः उत्पलपत्रसन्निभः उत्पलपत्रस्निग्धश्यामः ॥ २६ ॥ उत्तिष्ठतेति ॥ निष्कल्मषानपि तान्मुनीन्भूयोपि पवित्रतापदं चकार । प्रक्षालयामासेति पाठान्तरे प्रकर्षेण क्षालयामास अतिनिर्मलानकरोत् ॥ २७ ॥ प्रयान्तीति ॥ वराहस्य खुराग्रेण विक्षते विदीर्णे रसातले सति तेन द्वारेण अधस्तात्तोयानि प्रयान्ति कथं कृता शब्दसन्ततिः महाघोषो यथा भवति तथा सप्तम्यन्तपाठे कृता शब्दसन्ततिर्यस्मिन् रसातले तस्मिन्नधः प्रयान्तीत्यर्थः । श्वासानिलेन अस्ताः क्षिप्ताः जने जनलोके ॥ २८ ॥ उत्तिष्ठत इति ॥ विगृह्य विशेषेण गृहीत्वा रोमान्तरस्था मुनय इति जनलोकं यावत्तावद्रोमप्रसारणादिति भावः ॥ २९ ॥ तमिति ॥ तोषेण परीतं व्याप्तं चेतो येषां ते तार

१ सनन्दनादीनपकल्मषान्मुनीञ्चकार भूयोपि पवित्रतापदम् ॥ इत्यपि पाठान्तरम् । २ अनिलेनास्ताः क्षिप्ताः सिद्धाः ।

जयेश्वराणां परमेश केशव प्रभो गदाशंखधरासिचक्रधृक् ॥ प्रसूतिनाशस्थितिहेतुरीश्वरस्त्वमेव नान्यत्परमं च यत्पदम् ॥ ३१ ॥ पादेषु वेदास्तव यूपदंष्ट्र दन्तेषु यज्ञाश्चितयश्च वक्त्रे ॥ हुताशजिह्वोसि तनूरुहाणि दर्भाः प्रभो यज्ञपुमांस्त्वमेव ॥ ३२ ॥ विलोचने रात्र्यहनी महात्मन्सर्वाश्रयं ब्रह्मपरं शिरस्ते ॥ सूक्तान्यशेषाणि सटाकलापो घ्राणं समस्तानि हवींषि देव ॥ ३३ ॥ स्रुक्तुण्डसामस्वरधीरनादप्राग्वंशकायाखिलसत्रसन्धे ॥ पूर्तेष्टधर्मश्रवणोसि देव सनातनात्मन्भगवन्प्रसीद ॥ ३४ ॥ पदक्रमाक्रान्तभुवं भवन्तमादिस्थितं चाक्षरविश्वमूर्ते ॥ विश्वस्य विद्मः परमेश्वरोऽसि प्रसीद नाथोसि परावरस्य[1] ॥ ३५ ॥

जयेति ॥ ईश्वराणां ब्रह्मादीनाम् । केशवेति "क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम् ॥ आवां तवाङ्गे संभूतौ तस्मात्केशवनामवान्" इति महाभारते । प्रसूत्यादीनां त्वमेव हेतुः ईश्वरः नियन्ता परमं च यत्पदं मुक्तस्वरूपं तच्च त्वत्तो नान्यत् । तत्परमं पदं त्वमेवेत्यर्थः तस्य त्वदधीनत्वात् ॥ ३१ ॥ पादेष्विति ॥ यज्ञा अग्निष्टोमाद्याः चितयः कंकचितादीनि चयनानि उत्तरक्रतुषूत्तरवेदिस्थानीयानि ॥ ३२ ॥ विलोचन इति ॥ रात्र्यहनी चंद्रार्कोपलक्षितौ यज्ञीयकालौ सर्वास्पदमिति पाठे सर्ववर्णाश्रयत्वात् सर्वास्पदं ब्रह्म प्रणवः सटाः स्कन्धरोमाणि ॥ ३३ ॥ स्रुक्तुण्डेति ॥ प्राग्वंशः अग्निशालायाः प्राग्देशः सत्रम् आसन्नोपायचोदनाचोदितो यागः पूर्तं तटाकखातादि इष्टं यज्ञादि ॥ ३४ ॥ पदक्रमेति ॥ पदक्रमाभ्याम् आक्रान्तं व्याप्तम् । अनन्तमादौ च स्थितं शब्दब्रह्मेत्यर्थः । अक्षरः ककारादिवर्णात्मकः नाथः प्रार्थ्यः स्वामी वा ॥ ॥ ३५ ॥

तरोत्युच्चस्स चासावुद्धतेक्षणश्च सन्नतदृष्टिस्तं धीरतरोद्धतेक्षणमिति पाठे निर्विशंकोदारेक्षणमित्यर्थः ॥ ३० ॥ जयेति ॥ जयेश्वराणां परमेश्वरः परमिति पाठे ईश्वराणां ब्रह्मादीनां परमेश्वरः अतो जगतः प्रसूत्यादीनां त्वमेव हेतुरीश्वरश्च नियन्ता यच्च परमं पदं तदपि त्वत्तो नान्यत्त्वमेव प्रभो परमं ब्रह्मेत्यर्थः । पाठान्तरं सुगमम् ॥ ३१ ॥ परत्वेन स्तुत्वा प्रस्तुतावताररूपं यज्ञरूपकेण स्तुवन्ति पादेष्वित्यादित्रिभिः पादेष्विति ॥ यज्ञपुमांस्त्वमेवेति प्रतिज्ञा तत्सम्पादनं पादेष्वित्यादिभिः चतुस्सङ्ख्यात्वात् यज्ञाङ्गत्वाच्च वेदा यज्ञमयस्य तस्य पादत्वेन निरूप्यन्ते यूपवदुन्नता दंष्ट्रा यस्य सः तस्य सम्बुद्धिः हे यूपदंष्ट्र तव दन्तेषु यज्ञाः पुरोडाशा–भक्षणार्थत्वात् यज्ञादन्तत्वेन निरूप्यन्ते चितयः " श्येनचितं चिन्वीत कङ्कचितं चिन्वीत " इत्यादिश्रुत्युक्ताः । यज्ञस्थलानि ताश्चितयो वक्त्रस्थानीयाः हविर्निक्षेपस्थानीयत्वात् एवं सर्वत्र किञ्चित्साम्यमूहनीयं हुताशोग्निर्जिह्वा यस्य सः दर्भाः तव तनूरुहाणि ॥ ३२ ॥ विलोचन इति ॥ रात्र्यहनी प्रकाशधर्मके तव विलोचने निमेषोन्मेषाभ्यां तयोरपि तमःप्रकाशकधर्मकत्वात् । परं ब्रह्म तव शिरः उत्तमाङ्गं सूक्तानि वैष्णवादीनि सटाकलापः स्कन्धकेसरसन्दर्भः ऋक्सन्दर्भरूपत्वात् समस्तानि हवींषि घ्राणं घ्राणेन्द्रियः गन्धवहत्वसाम्यात् ॥ ३३ ॥ स्रुगिति ॥ स्रुक्तुण्डेत्यादिचत्वारि सम्बोधनानि स्रुक् जुहूः तुण्डं मुखं यस्य वराहमुखाकारत्वात् स्रुचः सामस्वर एव धीरो गम्भीरो नादो यस्य प्राग्वंशः अग्निशालायाः पूर्वभागः । "पूर्वभागोग्निशालायाः प्राग्वंशः परिकीर्तितः" इति वचनात् । प्राग्वंशः कायो मध्यभागो यस्य अखिलानि सत्राणि द्वादशाहादीनि सन्धयो यस्य तेषां त्रिवृत्पञ्चदशाद्यहस्सम्पत्तिरूपत्वात् पूर्तं स्मार्त्तो धर्मः । इष्टं श्रौतधर्मः तौ श्रवणे यस्य स त्वमपि सनातनात्मन्नित्यमूर्त्ते ॥ ३४ ॥ तदुपपादयति–पदक्रमेति ॥ पदक्रमेण पादविक्षेपेणआक्रान्ता

---

१ चराचरस्येति पा० ।

दंष्ट्राग्रविन्यस्तमशेषमेतद्भूमण्डलं नाथ विभाव्यते ते ॥ विगाहतः पद्मवनं विलग्नं सरोजिनीपत्रमिवोढपंकम् ॥३६॥ द्यावापृथिव्योरतुलप्रभाव यदन्तरं तद्वपुषा तवैव ॥ व्याप्तं जगद्व्याप्तिसमर्थदीप्ते हिताय विश्वस्य विभो भव त्वम् ॥ ३७ ॥ परमार्थस्त्वमेवैको नान्योस्ति जगतः पते ॥ तवैष महिमा येन व्याप्तमेतच्चराचरम् ॥ ३८ ॥ यदेतद्दृश्यते मूर्त्तमेतज्ज्ञानात्मनस्तव ॥ भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः ॥ ३९ ॥ ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः ॥ अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे ॥ ४० ॥

॥ ३६ ॥ ३७ ॥ परमार्थ इत्यादि ॥ परमार्थः सत्यः । त्वद्व्यतिरिक्तः परमार्थो नास्ति "बहुस्यां स ब्रह्मा स शिवः सेन्द्रः सोक्षरः परमः स्वराट् नेह नानास्ति तस्मिञ्जज्ञे स्वयं ब्रह्मा, सर्वगत्वादनन्तस्य तदनुप्रविश्य, सच्चत्यच्चाभवत, हरिरखिलाभिरुदीर्यते हरेर्न किंचिद्व्यतिरिक्तमस्तीति" इत्यादिभ्यः । अत्र हेतुः येनो पादानभूतेन त्वयैतच्चराचरं व्याप्तं तस्य तवैव चराचरात्मनो महिमा अतस्त्वदात्मकमेवेदं सर्वमिति त्वदन्यः कोपि परमार्थो नास्तीति भावः ॥ ३८ ॥ यदेतदिति ॥ यदेतज्जगद्दृश्यते ज्ञानात्मना त्वयात्मतया व्याप्तत्वादेतत्तव मूर्त्तं मूर्त्तिः तस्मादयोगिनः त्वदात्मकत्वानुभवसाधनयोगविरहिण एतत्केवलदेवमनुष्यादिरूपमिति भ्रांतिज्ञानेन पश्यन्तीत्याह—यदेतदिति ॥ ३९ ॥ वस्तुतस्त्वदात्मकस्य जगतः केवलदेवमनुष्यादिरूपत्वेन दर्शनमेव न भ्रमः ज्ञानाकाराणामात्मनां देवमनुष्याद्यर्थाकारत्वदर्शनमपि भ्रम इत्याह—ज्ञानस्वरूपमिति ॥ ज्ञानस्वरूपं ज्ञानात्मकमित्यर्थः । अत्र ज्ञानशब्देन ज्ञानगुणसारत्वात्प्रत्यगात्मोच्यते । नायं श्लोकः परविषयः युष्मच्छब्ददर्शनात् प्रकृतिपुरुष

व्याप्ता भूर्येन तथाभूतं, भवन्तं विश्वस्यादिस्थितिं जनकं पालकञ्च विद्म इत्यन्वयः । अतः परमेश्वरोसि नाथश्च त्वमेवासि नाथ्यते प्रार्थ्यत इति नाथः । अभिप्रेतमर्थं याचनीयश्चासीत्यर्थः । पदक्रमाक्रान्तमनन्तमा दिस्थितं त्वमेवेति पाठे भो अक्षर ! भो विश्वमूर्ते ! त्वया पदक्रमैराक्रान्तमनन्तं विश्वं तस्मात्त्वमेव विश्वस्यादिस्थितं कारणं परमेश्वरस्य नाथश्चासीति वयं विद्मः अतः प्रसीदेत्यन्वयः ॥ ३९ ॥ किञ्च—दंष्ट्राग्रेति ॥ ते तव दंष्ट्राग्रे विन्यस्तं स्थितमेव भूमण्डलम् ऊढपंकं धृतपङ्कं सरोजिनीपत्रं सरोजपत्रमिव विभाव्यते । कथम्भूतं सरोजपत्रमिव पद्मवनं विगाहतः प्रविश्य विहरतः अर्थाद्गजेन्द्रस्य तवैव दंष्ट्राग्रे विलग्नमित्यर्थः ॥ ३६ ॥ द्यावापृथिव्योरिति ॥ द्यावापृथिव्योर्यदन्तरम् अन्तरिक्षं तवैव वपुषा व्याप्तं जगद्व्याप्तौ समर्था दीप्तयो यस्य भो तथाभूत जगद्व्याप्तिसमस्तदीप्ते ! इति पाठान्तरं सुगमम् ॥३७॥ तव वपुषा व्याप्तमेवेत्युक्ति प्रतीतव्याप्त्या अपवादेन परमार्थमाहुः—परमार्थ इति ॥ अन्यश्चेन्नास्ति कथं तर्हि त्वया व्याप्तमित्युक्तं तत्राहुः—तवैष महिमा माया प्रभावः कोऽसौ येन महिम्ना व्याप्तमेतच्चराचरं जगत्स एव ॥ ३८ ॥ व्याप्त्या जगतस्तव वैलक्षण्यमाहुः— यदेतदिति ॥ तव यदेतन्मूर्त्तं भूतात्मकं जीवरूपं दृश्यते एतज्ज्ञानात्मनो ज्ञानघनस्य तव ज्ञानमयमेव रूपं ज्ञानात्मकं तवेति वा पाठः अयोगिनस्त्वज्ञाः भ्रान्तिज्ञानेन जगद्रूपं भूतमयं पश्यन्तीत्यर्थः ॥३९॥ इदं वराहरूपं

ये तु ज्ञानविदः शुद्धचेतसस्तेऽखिलं जगत् ॥ ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर ॥ ४१ ॥ प्रसीद सर्व सर्वात्मन्भवाय जगतामिमाम् ॥ उद्धरोर्वीममेयात्मञ्छन्नो देह्यब्जलोचन ॥ ४२ ॥ सत्त्वोद्रिक्तोऽसि भगवन् गोविंद पृथिवीमिमाम् ॥ समुद्धर भवायेश शन्नो देह्यब्जलोचन ॥ ॥ ४३ ॥ सर्गप्रवृत्तिर्भवतो जगतामुपकारिणी ॥ भवत्वेषा नमस्तेऽस्तु शन्नो देह्यब्जलोचन ॥ ४४ ॥ श्रीपराशर उवाच ॥ एवं संस्तूयमानस्तु परमात्मा महीधरः ॥ उज्जहार क्षितिं क्षिप्रं न्यस्तवांश्च महाम्भसि ॥ ४५ ॥ तस्योपरि जलौघस्य महती नौरिव स्थिता ॥ विततत्वात्तु देहस्य न मही याति संप्लवम् ॥ ४६ ॥ ततः क्षितिं समां कृत्वा पृथिव्यां सोचिनोद्गिरीन् ॥ यथाविभागं भगवाननादिः परमेश्वरः ॥ ४७ ॥ प्राक्सर्गदग्धानखिलान्पर्वतान्पृथिवीतले ॥ अमोघेन प्रभावेण ससर्जामोघवाञ्छितः ॥ ४८ ॥ भूविभागं ततः कृत्वा सप्तद्वीपान्यथातथम् ॥ भूराद्यांश्चतुरो लोकान्पूर्ववत्समकल्पयत् ॥ ४९ ॥

विवेक एव नास्ति कुतस्त्वद्दर्शनमिति भावः ॥४०॥ ये पुनर्बुद्धिमन्तो ज्ञानस्वरूपात्मविदः सर्वस्य हि भगवदात्मकत्वानुभवसाधनयोगयोग्यपरिशुद्धमनसश्च ते देवमनुष्यादि प्रकृतिपरिणामविशेषरूपमखिलं जगच्छरीरातिरिक्तज्ञानस्वरूपात्मकं त्वच्छरीरं च पश्यन्तीत्याह—येत्विति ॥ ४१ ॥ प्रसीदेति ॥ भावाय जगतामिति पाठे भावाय सद्भाव ॥४२॥सत्त्वोद्रिक्तोसीति ॥ सत्वोद्रिक्तोसि अतः परोपकारकोसि ॥४३॥४४॥४५॥ तस्येति ॥ विततत्वाद्विस्तृतमृत्पिण्डाकारसंस्थानत्वात् मृत्पिण्डाकारा ह्यप्सु मज्जन्ति न तु शरावाद्याकारः ॥४६॥४७॥ प्रागिति ॥ प्रभावेन संकल्पेन अमोघवांछितः सत्यकामः ॥४८॥ भूविभागमिति ॥ भूरितिपातालानामप्युपलक्षणम् ॥४९॥

त्वया लीलया कृतं ज्ञानात्मकमिति किं वक्तव्यं यतो वस्तुतः सद्रूपव्यतिरेकाज्जगदपि ज्ञानमित्याहुः—ज्ञानस्वरूपमिति ॥ मोहमयसम्प्लवे संसारसागरे ॥ ४० ॥ ज्ञानात्मकमेव सर्वमित्यत्र विद्वदनुभवं प्रमाणयति—येत्विति॥ ज्ञायतेऽनेनेति ज्ञानं वेदान्तपुराणादि तद्विदः॥४१॥प्रसीदेति श्रुतिश्च "सर्वं खल्विदं ब्रह्म, ऐतदात्म्यमिदं सर्वम्" इत्यादि। सर्वसर्वात्मन् जडाजडस्वरूप वसत्यस्मिन्निति वासः तदर्थम् उर्वीमुद्धर एवं कृत्वा शं सुखं नः अस्मभ्यं देहि अब्जलोचन अब्जवत्सुप्रसन्ने लोचने यस्य तस्य सम्बुद्धिः ॥ ४२ ॥ तव साम्प्रतमिदमेव युक्तमाहुः सत्वोद्रिक्तोसीत्यादिद्वाभ्याम्—सत्त्वोद्रिक्त इति ॥ भवाय उद्भवार्थम् अब्जवच्छ्रीनिलयभूते लोचने यस्य तत्स म्बुद्धिः॥४३॥सर्गप्रवृत्तिरिति जगदुपकाराय वा अस्मत्सुखं तदेवास्माभिः प्रार्थ्यत इति त्वमेव जानासीति पुनः सम्बोधयन्ति। देवाः सनन्दनाद्याः योगिनः अब्जलोचन! अब्जे हृत्पुण्डरीके लोचने दृष्टिर्यस्य भो हृदयसाक्षिन्नि त्यर्थः ॥४४॥४५॥ तस्येति॥ विवृतत्वात्सम्प्लवं निमज्जनम्॥४६॥४७॥प्रागिति॥अमोघवाञ्छितः सत्यसङ्कल्पः॥४८॥ भूविभागमिति ॥ यथातथं यथावत् भूराद्यांश्चतुरो लोकान्यथा पूर्वं समकल्पयत् संकल्पेनैव सृष्टवान् पाता

१ वासायेति पा०।

ब्रह्मरूपधरो देवस्ततोऽसौ रजसा वृतः ॥ चकार सृष्टिं भगवांश्चतुर्वक्त्रधरो हरिः ॥५०॥ निमित्तमात्रमेवाऽसौ सृज्यानां सर्गकर्मणि॥ प्रधानकारणीभूता यतो वै सृज्यशक्तयः ॥ ५१ ॥ निमित्तमात्रं मुक्त्वैवं नान्यत्किंचिदपेक्षते ॥ नीयते तपतां श्रेष्ठ स्वशक्त्या वस्तु वस्तुताम् ॥ ५२ ॥ इति श्रीविष्णुपुराणे प्रथमेंशे पृथिव्युद्धारश्चतुर्थोऽध्यायः ॥ ४ ॥ ॥ छ ॥ ॥ श्रीमैत्रेय उवाच ॥ यथा ससर्ज देवोऽसौ देवर्षिपितृदानवान् ॥ मनुष्यतिर्यग्वृक्षादीन्भूव्योमसलिलौकसः ॥ १ ॥ यद्गुणं यत्स्वभावं च यद्रूपं च जगद्द्विज ॥ सर्गादौ सृष्टवान्ब्रह्मा तन्ममाचक्ष्व कृत्स्नशः ॥ २ ॥ श्रीपराशर उवाच ॥ मैत्रेय कथयाम्येतच्छृणुष्व सुसमाहितः ॥ यथा ससर्ज देवोसौ देवादीनखिलान्विभुः ॥ ३ ॥ सृष्टिं चिंतयतस्तस्य कल्पादिषु[1] यथा पुरा ॥ अबुद्धिपूर्वकः सर्गः प्रादुर्भूतस्तमोमयः ॥ ४ ॥

ब्रह्मरूपेति॥चतुर्वक्त्रधर इति हरेः ब्रह्मरूपधरतया चतुर्वक्त्रत्वं सुवचम्॥५०॥निमित्तमात्रमिति॥सृज्यशक्तयः जीवानां प्राचीनकर्मवासनाः॥५१॥निमित्तमात्रमिति॥निमित्तमात्रमेनं परमपुरुषं मुक्त्वा नान्यत्किंचिद्विशेषकारणमपेक्षते । वस्तु देवादि स्वशक्त्या स्वकर्मभिः वस्तुतां तत्तद्रूपतां जीवकर्मायत्तत्वाद्विचित्रसृष्टेः तेषु प्रधानकारणत्वोक्तिरौपचारिकी॥५२॥ इति श्रीभगवद्रामानुजचरणनलिनचंचरीकश्रीविष्णुचित्तविरचिते श्रीविष्णुपुराणव्याख्याने विष्णुचित्तीये प्रथमेंशे चतुर्थोध्यायः ॥४॥ अथ वैकृतसर्गं विस्तरेण पृच्छति यथेति ॥ १ ॥ यद्गुणमिति ॥ गुणाः सत्त्वाद्याः स्वभावः शीलं रूपमाकारः ॥ २ ॥ ३ ॥ सृष्टिमिति ॥ यथापुरा यथापूर्वम् कल्पादिषु तथा

लेन सह भूरादीनां चतुष्टं यद्वा महर्लोकस्यापि सङ्कर्षणमुखानलोष्मणा शून्यतया नष्टप्रायांश्चतुरोलोकानित्युक्तं तथा च श्रुतिः "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्,दिवं च पृथ्वीं चान्तरिक्षमथो सुवः" इति॥दिवः पृथगुपादानात्सुवशब्देन महर्लोको गृह्यते॥४९॥ तदेवं भूम्युद्धारादिलोकरचनापर्यन्ता हरेर्लीलोक्ता तथा तेनैव ब्रह्मरूपेण कृतां देवादिसृष्टिमाह—ब्रह्मरूपेति ॥५०॥ असौ हरिः ब्रह्मरूपधरः रजसा वृतः सृष्टिं करोतीत्युक्तं तत्र रजोगुणस्य कर्मासक्तिदुःखादिहेतुत्वात् ब्रह्मणो नित्यं कर्म दुःखित्वादिप्राप्तिमाशंक्याह—निमित्तमात्रमिति ॥ असौ हरिः ब्रह्मरूपधरः अयमर्थः सृज्यानां सर्गे ब्रह्मा निमित्तमात्रं पर्जन्यवत् । सन्निधिमात्रेण साधारणकारणमेव न तु प्रतिसृज्यं स्वयं व्याप्रियते तथा सन्निधिमात्रेण गन्धः क्षोभाय जायत इत्यर्थः ॥ ५१ ॥ निमित्तमात्रमिति ॥ निमित्तं समवधाने सति कारणात्मना स्थितं सृज्यवस्तु स्वपरिणामशक्त्यैव वस्तुतां स्थूलरूपतां नीयते निमित्तादन्यत्स्थूलरूपपरिणामार्थं नापेक्षते तथा तृणादिबीजेषु सूक्ष्मात्मना स्थितमङ्कुरादि पर्जन्ये सति स्वपरिणामशक्त्यैव यथा तथा परिणमते तद्वत् अतो नोक्तदोषप्रसङ्ग इत्यर्थः ॥ ५२ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुपुराणव्याख्यायां प्रथमेंशे चतुर्थोध्यायः ॥४॥ ततः क्षितिं समां कृत्वा पृथिव्यां सोऽचिनोद्गिरीन् यथाविभागं यथास्थानं प्राक्सर्गदग्धानखिलान् पर्वतांश्च ब्रह्मरूपधरो देवः सृष्टिं चकारेत्युक्तं तत्प्रकारं जिज्ञासुः पृच्छति यथेत्यादिद्वाभ्यां मैत्रेयः । यथेति ॥ भूव्योमसलिलान्योकांसि स्थानानि येषां तान् ॥ १ ॥ यद्गुणमिति ॥ यद्गुणमित्यादि गुणः सत्त्वादिः स्वभावः शान्तघोरत्वादिः रूपं द्विपाच्चतुष्पादाद्याकारं यादृग्गुणशीलाकारमित्यर्थः ॥ २ ॥ ३ ॥ अविद्यां विना सृष्टेषु देहेषु जीवानां कर्तृत्वभोक्तृत्वाद्यसम्भवात् प्रथममविद्याविभागमाह— सृष्टिमिति ॥ अबुद्धिपूर्वकः अनवधानमूलः तमोमयः अविद्यावृत्तिरूपः ॥ ४ ॥

१ सर्गादिषु इति पा० ।

तमोमोहो महामोहस्तामिस्रो ह्यन्धसंज्ञितः ॥ अविद्या पंचपर्वैषा प्रादुर्भूता महात्मनः ॥ ५ ॥ पञ्चधाऽवस्थितः सर्गो ध्यायतो प्रतिबोधवान् ॥ बहिरन्तोऽप्रकाशश्च संवृतात्मा नगात्मकः ॥ ६ ॥ मुख्या नगा यतः प्रोक्ता मुख्यसर्गस्ततस्त्वयम् ॥ ७ ॥ तं दृष्ट्वाऽसाधकं सर्गममन्यदपरं पुनः ॥ ८ ॥ तस्याभिध्यायतः सर्गस्तिर्यक्स्रोतोभ्यवर्त्तत ॥ यस्मात्तिर्यक्प्रवृत्तिस्स तिर्यक्स्रोतास्ततः स्मृतः ॥ ९ ॥ पश्वादयस्ते विख्याता स्तमःप्राया ह्यवेदिनः ॥ उत्पथग्राहिणश्चैव तेऽज्ञाने ज्ञानमानिनः ॥ १० ॥

चिन्तयतः अबुद्धिपूर्वकः विशेषध्यानरहितः तमोमयः तमोगुणप्रचुरः सर्गो नगसर्गः ॥४॥ तमोमोह इति ॥ अविद्यापर्यायाः तमःप्रभृतयो महात्मनः प्रादुर्भूताः ॥५॥ एतत्स्वभावकतया वृक्षादिरूपेण च पञ्चधा नगसर्ग इत्याह पंचधेति ॥ ज्ञानाल्पत्वप्राचुर्येण वृक्षगुल्मलतावीरुत्तृणेषु तम आदिस्वभावव्यवस्था अप्रतिबोधनादिति नग सर्गस्य तामसत्त्वे हेतुः । अप्रतिबोधवानिति वा पाठः । बहिः शब्दादिषु अन्तः सुखादिषु च अप्रकाशः प्रकृष्टज्ञानरहितः । जलाद्यादानक्षतभग्नसंरोहणदोहनादिभिर्वृक्षादीनां किंचिज्ज्ञातृत्वसिद्धेः । "अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः" इत्यादेश्च संवृतात्मा तमसा संवृतचैतन्यः ॥६॥ मुख्या इति ॥ मुख्याः तिर्यगादिसर्गस्यादौ जाताः॥७॥तमिति॥असाधकं कर्मानधिकारात्संसाराद्यप्रवर्तकम्॥८॥ तस्येति ॥ तिर्यक् स्रोता वायुवत्तिर्यक्प्रवृत्तः । पार्श्वाभ्यामुत्पन्न इति वा॥९॥ पश्वादय इति॥

तदेवाह—तम इति॥ अन्धसंज्ञकः अन्धतामिस्रः पञ्चपर्वाणि वृत्तिविशेषा यस्याः सा तत्र तमो देहादावात्मन्यात्माभिमानः मोहस्तत्सम्बंधिषु पुत्रादिषु स्वाम्यहमस्मीत्यभिमानः । महामोहश्शब्दादिभोगस्पृहा, तामिस्रः तत्प्रतिघाते क्रोधः, अन्धतामिस्रो विनाशादिशङ्कया नित्यं तद्रक्षणाद्यभिनिवेशः एते पञ्चविपर्यया: पातञ्जले क्लेशशब्देनोक्ताः—"अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्चक्लेशाः" इति ॥ ५ ॥ तदेवमविद्यायामुद्भूतायां सत्यां प्रथममत्यन्तं मोहमयं स्थावरसर्गमाह—पञ्चधेत्यादिसार्द्धेन—पञ्चधेति ॥ तस्य सृष्टिं ध्यायतः नगात्मकः स्थावररूपः सर्गः पञ्चधावस्थितः " वृक्षगुल्मलतावीरुत्समस्तास्तृणजातयः " इति । पञ्चमांशे वक्ष्यमाणपञ्चप्रकारो जात इत्यर्थः । तस्य सामान्यलक्षणम् अप्रतिबोधवान् कोहमिति परामर्शशून्यः बहिः शब्दादिविषये अन्तः सुखादौ च अप्रकाशः ज्ञानशून्यः संवृतात्मा मूढस्वभावः ॥ ६ ॥ मुख्या इति ॥ मुखमिव प्रथमं ब्रह्मणः सर्गे भवन्तीति मुख्याः नगाः स्थावराः अत एव पर्वतानां स्थावरत्वेपि ब्रह्मसर्गात्प्रागेव वराहेण सृष्टत्वान्नात्रानुप्रवेश इति पञ्चेत्युक्तम् । यद्वा पर्वतानां पक्षच्छेदनिमित्तमागन्तुकम् अतः स्थावरत्वं न स्वाभाविकमिति नात्रानुप्रवेशः ॥ ७ ॥ मुख्यसर्गापरितोषेण सर्गान्तरं ध्यायतस्तस्मात्किञ्चिदुत्कृष्टस्तिर्यक्सर्गो जज्ञत इत्याह तं दृष्ट्वेत्यादिसार्द्धैस्त्रिभिः—तमिति ॥ असाधकं पुरुषार्थप्रवृत्तिशून्यं दृष्ट्वा अपरं सर्गम् अमन्यत दध्यावित्यर्थः । अमन्यत परं पुनरिति पाठः साधुः ॥ ८ ॥ तस्येति ॥ तिर्यक्स्रोताभ्यवर्ततेत्यत्र सन्धिरार्षः । यस्मात्तिर्यक्प्रवृत्तिस्तिर्यगाहारसञ्चारेण प्रवृत्तिः प्रकृष्टा वृत्तिः जीवनं यस्य सः ॥ ९ ॥ पश्वादय इति ॥ पश्वादय इत्यादिशब्देन पक्ष्यादयस्तेषां लक्षणं तमः प्रायास्तमोऽधिकाः अवेदिनः अनुसन्धानशून्याः । तथा च श्रुतिः—"अथेतरेषां पशूनामशनायापिपासे एवाभिज्ञानं न विज्ञातं वदन्ति न विज्ञातं पश्यन्ति न विदुः श्वस्तनं न

अहंकृता अहंमाना अष्टाविंशद्वधात्मकाः ॥ अंतःप्रकाशास्ते सर्वे आवृताश्च परस्परम् ॥ ११ ॥

अवेदिनः अविवेकिनः उत्पथग्राहिणः मातृगमनादिदुर्मार्गगताः अज्ञाने सम्यग्ज्ञानाभावेपि सम्यग्ज्ञानमानिनः ॥ १० ॥ अहंकृता इति ॥ अहं
कृता अवलिप्ताः अहंमानाः तद्धेतुशरीरात्स्वाभिमानिनः । अष्टाविंशद्वधात्मकाः अष्टविंशति शक्तिवधा वायूक्ताः "एकादशेन्द्रियवधा नवधांभादयस्तथा ॥ अष्टौ च
तारकाद्याश्च तेषां शक्तिवधा मताः " इति । इन्द्रियवैकल्यमेकादशविधम् । बाधिर्यं त्वग्दोषः आन्ध्यं वैरस्यं नासाध्वंसो मूकत्वं कुणित्वं पंगुत्वं वैक्लव्यं उदावर्तो जडत्वं
चेति । अम्भादिनवतुष्टीनां तारायष्टसिद्धिनां च वैकल्यम् । सप्तदशविधं बुद्धिवधाख्यं वैकल्यं तिरश्चां प्रायिकमित्यर्थः । तत्राष्टविधायां प्रकृत्यां चित्तलयान्मुक्तोस्मीति
तुष्टिरम्भाख्या, संन्यासवेषोपादानमात्रात्कृतार्थोस्मीति तुष्टिः सलिलाख्या,कालान्तरेण सेत्स्यतीति तुष्टिरापाख्या, भाग्यादेव सेत्स्यतीति तुष्टिर्वृष्ट्याख्या,एताः प्रकृत्युपादान
कालभाग्यलक्षणा आध्यात्मिकाश्चतस्रस्तुष्टयः । अर्थस्यार्जने रक्षणे क्षये भोगे भोगावैतृष्ण्ये च क्लेशादिदोषदर्शनादर्थार्जनादिविरक्तो मुक्तोस्मीति तुष्टयः । सुतारसुपारसुनेत्र
मारीचकोत्तमाम्भाख्याः पंच बाह्याः । आर्जनरक्षणक्षयेषु क्लेशो भोगे त्वतृप्तिर्दोषः भोगावैतृष्ण्ये पापादिर्दोषः अनुपदिष्टेर्थे बुध्यादिना ऊहस्ताराख्या सिद्धिः प्रासंगि

नवेदिनः ... लोको" इति । उत्पथग्राहिणः उन्मार्गवर्त्तिनः भक्ष्याभक्ष्यगम्यागम्यादिवेगरहिता इत्यर्थः । अज्ञाने विपर्ययज्ञाने सम्यग्ज्ञानाभिमानिनः ॥ १० ॥ अहंकृता इति ॥ अहंकृताः साहङ्कारमेव कृतं कर्म येषां ते
अहम्मानाः साहङ्कार एव मानः अवबोधो येषां ते अष्टाविंशद्वधात्मकाः अष्टाविंशतिवधस्वभावाः अन्तःसुखादावेव प्रकाशः प्रकृष्टं ज्ञानं येषां ते आवृताश्च परस्परम् अन्योन्याभिजात्यस्वभावाद्यनभिज्ञाः अष्टाविंशतिवधाः
साङ्ख्योक्ताः "एकादशेन्द्रियवधाः सहबुद्धिवधैरशक्तिरुद्दिष्टाः । सप्तदशधा तु बुद्धेर्विपर्ययात्तुष्टिसिद्धीनाम् ॥ आध्यात्मिकाश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः । बाह्या विषयोपरमात्पञ्च नव तुष्टयोभिहिताः ॥ ऊहः
शब्दोध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः । दानञ्च सिद्धयोष्टौ सिद्धेः पूर्वोङ्कुशस्त्रिविधः" अयमर्थः इन्द्रियवधा एकादश अन्धबधिरत्वादिरूपात् वैकल्यात्स्वार्थग्रहणाशक्तिरूपाः । तुष्टीनां नवानां सिद्धीनाञ्चाष्टानां
वैकल्यात्सप्तदशधा बुद्धेर्वधः तदेवमष्टाविंशतिवधात्मकाः पश्वादयः यद्यपि मनुष्यादीनामिन्द्रियाद्यशक्तयः सम्भवन्ति तथापि तिरश्चां तदाधिक्यादेवमुक्तं तत्र नव तुष्टीराह–आध्यात्मिकाः प्रकृत्युपादानकालभाग्याख्या
श्चतस्रस्तुष्टयः तत्राष्टविधप्रकृत्यां चित्तलयान्मुक्तोऽस्मीति प्रकृत्याख्या तुष्टिः, संन्यासवेषोपादानमात्रात् कृतार्थोस्मीति तुष्टिरुपादानाख्या, कालत एव सेत्स्यति ध्यानक्लेशेनेति तुष्टिः कालाख्या, भाग्योदयात्स्येत्स्य
तीति तुष्टिर्भाग्याख्या एताश्चात्मानमधिकृत्य भवन्तीत्याध्यात्मिकाः तुष्टयश्चतस्रः । अर्थानामर्जनरक्षणव्ययादिदोषदर्शनेन शब्दादिपञ्चविषयोपरमात्पञ्च तुष्टयो बाह्यविषयत्वात् बाह्याः एवं नव तुष्टयोऽभिहिताः ।
अष्टसिद्धीराह–ऊह इति । उपदेशानपेक्षमेवार्थोनयनमूहसिद्धिः । प्रासङ्गिकाच्छब्दश्रवणादर्थज्ञानं शब्दसिद्धिः । गुरूपदेशादेव ततोऽधिकार्थज्ञानमध्ययनसिद्धिः । दुःखत्रयविघातास्तिस्रः सिद्धयः । सुहृत्प्रार्थितार्थसिद्धिः
विद्वत्तपस्विशुश्रूषालभ्याऽर्थसिद्धिः इत्येता विवक्षासिद्धयः । अयञ्च इन्द्रियाशक्तितुष्टिसिद्धिरूपस्त्रिविधः ; सिद्धेर्मुक्तेः पूर्वोऽङ्कुशः प्रतिवात इति एवं श्लोकत्रयस्यार्थः । आसाञ्च तुष्टिसिद्धीनाम् अम्भाख्या सलिला चेत्यादि
पारिभाषिकं संज्ञान्तरं तत्तदवान्तरभेदश्च विस्तरभयान्न लिख्यते । अष्टाविंशद्विधात्मिका इति वा पाठः । तदा तु भागवतोक्ताः नव द्विशफाः षडेकशफाः त्रयोदश पञ्चनखाः इत्यष्टाविंशतिभेदा ग्राह्याः । तदुक्तम्
"गौरजो महिषः कृष्णः शूकरो गवयो रुरुः । द्विशफाः पशवश्चेमे अविरुष्ट्रश्च सत्तम ॥ खरोश्वोश्वतरो गौरः शरभश्चमरी तथा । एते चैकशफाः क्षत्तः शृणु पञ्चनखान्पशून् ॥ श्वा शृगालो वृको व्याघ्रो मार्जारः

तमप्यसाधकं मत्वा ध्यायतोन्यस्ततोऽभवत् ॥ ऊर्ध्वस्रोतास्तृतीयस्तु सात्त्विकोर्ध्वमवर्त्तत ॥ १२ ॥ ते सुखप्रीतिबहुला बहिरन्तश्च नावृताः ॥ प्रकाशा बहिरन्तश्च ऊर्ध्वस्रोतोद्भवाः स्मृताः ॥ १३ ॥ तुष्टात्मानस्तृतीयस्तु देवसर्गस्तु स स्मृतः ॥ तस्मिन्सर्गेभवत्प्रीतिर्निष्पन्ने ब्रह्मणस्त दा ॥ १४ ॥ ततोन्यं स तदा दध्यौ साधकं सर्गमुत्तमम् ॥ असाधकांस्तु ताञ्ज्ञात्वा मुख्यसर्गादिसम्भवान् ॥ १५ ॥ तथाभिध्यायतस्तस्य सत्याभिध्यायिनस्ततः ॥ प्रादुर्बभूव चाव्यक्तादर्वाक्स्रोतास्तु साधकः ॥ १६ ॥

काच्छब्दश्रवणाल्लोकयात्रादर्शनाद्वाऽर्थज्ञानं सुताराख्या । गुरूपदेशेनैव ततोधिकार्थज्ञानं तारायन्त्याख्या तापत्रयजयलाभास्तिस्रो मोदप्रमुदितमोदमानाख्याः । तत्राध्यात्मिकस्यायुर्वेदेन जयः । आधिभौतिकस्य लौकिकैरुपायैर्जयः । आधिदैविकस्य प्रश्रयाच्छादनप्रतिष्ठादानशय्याकौतुकमंगलाचरणादिना जयः । मित्रयोगवशादर्थसिद्धिरधिगम्याख्या । विद्वत्तपस्विशुश्रूषालभ्यार्थसिद्धिः सदा प्रमुदिताख्येत्यष्टौ सिद्धयः । नव तुष्टयः । इन्द्रियाशक्तयश्च मोक्षान्तरायाः । उक्तं च सांख्ये "एकादशेन्द्रियवधाः सह बुद्धिवधैरशक्तिरुद्दिष्टाः । सप्तदशधा तु बुद्धेर्विपर्ययास्तुष्टिसिद्धीनाम् ॥ आध्यात्मिकाश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः । बाह्याविषयोपरमात्पञ्च नव तुष्टयोऽभिहिताः ॥ ऊहः शब्दोध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः । दानं च सिद्धयोष्टौ सिद्धेः पूर्वोङ्कुशस्त्रिविधः" इति । त्रिविधः विपर्ययः शक्तिस्तुष्टिरिति + सिद्धेर्मोक्षस्यांकुशः अन्तरायः आवृताः परस्परं पितृपुत्रत्वादिसम्बन्धानभिज्ञाः॥ ११ ॥ तामिति ॥ ऊर्ध्वस्रोताः अस्पृष्टभूमिकः सात्त्विकोर्ध्वमित्यार्षः सन्धिः ऊर्ध्वमवर्त्तत द्युलोकेऽवर्त्तत ॥ १२ ॥ त इति ॥ सुखप्रीतिबहुलाः विषयानुभवदशा सुखं तज्जनिता निर्वृतिः प्रीतिः प्रकाशाः प्रकृष्टज्ञानाः ज्ञाननिरोधरहिताः॥ १३ ॥ १४ ॥ तत इति ॥ मुख्यसर्ग आदिर्येषां संभवानां सर्गाणां ते तथोक्ताः ॥ १५ ॥ तथेति ॥ सत्याभिध्यायिनः सदा सत्यसङ्कल्पस्य अव्यक्तादित्येतच्छरीरोपादानपृथिव्याद्याप्यायनद्वारा इदं च सर्वसर्गेष्वपि समम् । " अव्यक्ताज्जायते चास्य मनसा यद्यदिच्छति । वशीकृतत्वात्त्रैगुण्यात्साकांक्षत्वात्स्वभावतः " इति वायूक्तेः । साधकः "अग्नौ प्रास्ताहुतिः

शशशल्लकौ । सिंहः कपिर्गजः कूर्मो गोधा च मकरादयः" । इति ॥ ११ ॥ तिर्यक्सर्गापरितोषेण ध्यायतो देवसर्गोभूदित्याह—तमप्यसाधकमित्यादित्रिभिः—तमिति ॥ ऊर्ध्वमुपरि देहाद्बहिरेव स्रोत आहारग्रहणं यस्य सः अमृतदर्शनादेव तृप्तिः । तथा च श्रुतिः "स ह वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यंति" ॥ इति सात्त्विकोर्ध्व सात्त्विकं सुखप्रकाशादिकम् ऊर्ध्वमधिकं यथा भवत्येवमवर्त्तत ॥ १२ ॥ तदेवाह—त इति ॥ सुखं विषयेन्द्रिययोगजं प्रीतिः तन्निमित्तो हर्षः सत्त्वाधिक्यात् सुखप्रीतिबहुलो येषाम् ॥ १३ ॥ तुष्टात्मन इति ॥ अस्मिन्सर्गे सुन्दरत्वात्प्रीतिरभवत् ॥ १४ ॥ तत्राप्यपरितोषेण मनुष्यसर्गं कृतवानित्याह—ततोऽन्यमित्यादिचतुर्भिः ॥ १५ ॥ तथेति ॥ सत्याभिध्यायिनः सत्यसंकल्पस्य भगवद्ध्यानशीलस्येति वा अव्यक्तादिति । मुख्यादिसर्गेष्वपि समानं तेष्वपि तस्यानुस्यूतत्वात्तथा च वायुः—"अव्यक्ताज्जायते

यस्मादर्वाग्व्यवर्त्तन्त ततोर्वाक्स्रोतसस्तु ते ॥ ते च प्रकाशबहुलास्तमोद्रिक्ता रजोधिकाः ॥१७॥ तस्मात्ते दुःखबहुला भूयोभूयश्च कारिणः ॥ प्रकाशा बहिरन्तश्च मनुष्याः साधकास्तु ते ॥ १८॥ इत्येते कथिताः सर्गाः षडत्र मुनिसत्तम ॥ प्रथमो महतः सर्गो विज्ञेयो ब्रह्मणस्तु सः ॥ ॥ १९ ॥ तन्मात्राणां द्वितीयश्च भूतसर्गो हि स स्मृतः ॥ वैकारिकस्तृतीयस्तु सर्ग ऐन्द्रियकः स्मृतः ॥ २० ॥ इत्येष प्राकृतः सर्गः सम्भूतो बुद्धिपूर्वकः ॥ मुख्यसर्गश्चतुर्थस्तु मुख्या वै स्थावराः स्मृताः ॥ २१ ॥ तिर्यक्स्रोतास्तु यः प्रोक्तस्तैर्यग्योन्यः स उच्यते ॥ तदूर्ध्वस्रोतसां षष्ठो देवसर्गस्तु संस्मृतः ॥ २२ ॥

सम्यगादित्यम्'' इत्यादिप्रकारेण यज्ञादिना लोकसाधकः ॥ १६ ॥ यस्मादिति ॥ अर्वाक् भूमौ व्यवर्त्तन्त व्यवर्धन्तेति पाठान्तरम् ॥ १७ ॥ १८ ॥ इतीति ॥ षडत्रेति नगादयश्चत्वारः अविद्यावधतुष्टिसिद्धिरूपोऽवान्तरीयकोनुग्रहसर्ग एकः । अत्र वायुः ''अष्टमोऽनुग्रहः सर्गः स चतुर्धा व्यवस्थितः । विपर्ययेण चाशक्त्या सिद्ध्या तुष्ट्या तथैव च ॥ स्थावरेषु विपर्यस्तान्तिर्यग्योनिष्वशक्तितः । सिद्ध्यात्मना मनुष्येषु तुष्ट्या देवेषु कृत्स्नशः'' इति । तस्य तत्त्वं विपर्ययादितरेषामनुग्राहकत्वं देवसर्गान्त र्भूतः कुमारसर्ग इत्येके । सप्तात्रेतिपाठे नगादयश्चत्वारः महदादयस्त्रयः इति । अथानुग्रहकौमारकौ विवरीतुमुक्तान् सर्गाननुवदति प्रथम इत्यादि । ब्रह्मस्वरूपेणावस्थि तस्य परब्रह्मणः तुशब्देनैतत्सूचितम् । अहंकारस्य महत्यन्तर्भावः । भौतिकस्याण्डस्य भूतसर्गेन्तर्भावः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

चास्य मनसा यद्यदिच्छति । वशीकृतत्वाद्वैगुण्यात्सापेक्षत्वात्स्वभावतः'' ॥ १६ ॥ यस्मादिति ॥ यस्मादर्वागधः प्रविष्टेनाहारेण व्यवर्द्धन्त ॥ १७ ॥ तस्मादिति ॥ तस्मात्तमस उद्रेकाद्दुःखबहुलाः रजोधिकत्वाद्भूयो भूयश्च कर्मशीलाः प्रकाशबहुलत्वात् बहिरन्तश्च प्रकाशाः प्रकृष्टज्ञानाः साधकाः कर्मज्ञानाधिकारित्वात् ॥ १८ ॥ इतीति ॥ षडत्रेति । द्वितीयाध्यायोक्ताः सप्त षडेते सर्गाः तथाहि इन्द्रियदेवतासर्गस्य वाह्यदेवतासर्गस्य च देवतासर्गत्वेनैक्यम् इन्द्रियसर्गेण सहाभेदश्च विवक्ष्यते अहङ्काराविद्यासर्गयोरबुद्धिभेदत्वात् बुद्ध्यात्मकमहत्तत्त्वान्तर्भावः । भौतिकब्रह्माण्डसर्गस्य च भूतसर्गान्तर्भावः एवं च सति महत्तत्त्वभूतेन्द्रियसर्गास्त्रयः । मुख्यतिर्यङ्मनुष्यसर्गाश्च त्रयः इत्येवं षडेते सर्गाः कथिता इत्यर्थः । तानेव किंचिदवान्तरभेदविवक्षया नवधा विवृण्वन्नाह—प्रथमो महत इत्यादिना । विराट्समष्टिशरीराभिमानिनो ब्रह्मणः महत्तत्त्वं समष्टिशरीरभूतोऽसौ ब्रह्मसर्गो विज्ञेय इत्यर्थः । यद्वा ब्रह्म परमात्मा तत्कर्तृकसर्गो विज्ञेय इत्यर्थः ॥ १९ ॥ तन्मात्राणामिति ॥ देवतासर्गभेदविवक्षया इन्द्रियसर्ग एव वैकारिक इत्युच्यते ॥ २० ॥ इतीति ॥ इत्येष प्राकृतः प्रकृतीनां ब्रह्माण्डकारणानां सर्ग इत्यर्थः । अबुद्धिरविद्या प्रकृतितत्पूर्वकसम्भूतः । यद्वा बुद्धिर्महत्तत्त्वं तत्पूर्वकस्तदादिरित्यर्थः ॥ २१ ॥ पंचमश्चेति ॥ तिर्यगेव योनिर्यस्य स तिर्यग्योनिः स एव तैर्यग्योन्यः 'स्वार्थे ष्यञ्' स पञ्चमः

१ पञ्चमस्तु चेति पाठोऽस्येष्टः ।

ततोऽर्वाक्स्रोतसां सर्गः सप्तमः स तु मानुषः ॥२३॥ अष्टमोऽनुग्रहः सर्गः सात्त्विकस्तामसश्च सः ॥ पञ्चैते वैकृताः सर्गाः प्राकृतास्तु त्रयः स्मृताः ॥२४॥ प्राकृतो वैकृतश्चैव कौमारो नवमः स्मृतः ॥ इत्येते वै समाख्याता नव सर्गाः प्रजापतेः ॥२५॥ प्राकृता वैकृताश्चैव जगतो मूलहेतवः ॥ सृजतो जगदीशस्य किमन्यच्छ्रोतुमिच्छसि ॥ २६ ॥ श्रीमैत्रेय उवाच ॥ संक्षेपात्कथितः सर्गो देवादीनां मुने त्वया ॥ विस्तराच्छ्रोतुमिच्छामि त्वत्तो मुनिवरोत्तम ॥२७॥ श्रीपराशर उवाच ॥ कर्मभिर्भाविताः पूर्वैः कुशलाः कुशलैस्तुताः ॥ ख्यात्या तया ह्यनिर्मुक्ताः संहारे ह्युपसंहृताः ॥२८॥ स्थावरान्ताःसुराद्यास्तु प्रजा ब्रह्मंश्चतुर्विधाः ॥ ब्रह्मणः कुर्वतः सृष्टिं जज्ञिरे मानसास्तु ताः ॥२९॥ ततो देवासुरपितॄन्मनुष्यांश्च चतुष्टयम् ॥ सिसृक्षुरम्भांस्येतानि स्वमात्मानमयूयुजत् ॥ ३० ॥

॥२३॥अष्टम इति॥सात्त्विकस्तामसश्च स इति तत्र विपर्ययाशक्ती तामस्यौ।सिद्धितुष्टी सात्त्विक्यौ एते मुख्यादयः पञ्च वैकृताः विकृतिकृतत्वात् महदाद्यास्त्रयःप्राकृताः। प्रकृतिकृतत्वात् ॥२४॥ प्राकृत इति॥प्राकृतो वैकृतश्चेति कौमारो द्विविधः सनत्कुमारादिरूपो नीललोहितकुमाररूपश्च । तत्र प्रथमः प्राकृतप्रलयावसरसृष्टत्वात्प्राकृतः । द्वितीयः कल्पादौ ब्रह्मणा सृष्टत्वाद्वैकृतः । अतः कौमारः प्राकृतो वैकृतश्च एषु महदाद्यास्त्रयः प्रजापतेर्विष्णोः स्वरूपेणावस्थितस्य मुख्यादयः षट् चतुर्मुखेणावस्थितस्येति विभागः ॥ २५ ॥ २६ ॥ २७ ॥ कर्मभिरिति ॥ भाविताः वासिताः ब्रह्मरूपेण वासिताः ख्यात्या पूर्वज्ञानवासनया ॥ २८ ॥ स्थावरान्ता इति ॥ अतः कर्मभेदाच्चातुर्विध्यं प्रजानां पुण्यतारतम्येन ब्रह्मणो मनस्तनुस्त्रीलिङ्गेभ्यस्त्रिधा जन्म वक्ष्यन् प्रथमं मनसो जन्माह–ब्रह्मण इति । मानसास्तु ता इति पाठान्तरम् । ताः प्रजाः काश्चिदिति शेषः ॥२९॥ अथ शारीरंप्रजासर्गमाह–तत इति ॥ अम्भस्संज्ञं देवादिचतुष्टयं सिसृक्षुः स्वमात्मानम् अयूयुजत् योजितवान् शरीरान्तरेणेति शेषः॥३०॥

सर्ग उच्यते ततः सात्त्विकाद्देवसर्गः पूर्वमुक्तः ॥ २२ ॥ २३ ॥ इदानीं सात्त्विकतामसोभयस्वभावमपरं देवसर्गमाह–अष्टम इति ॥ स च वायुप्रोक्तिविवृतः "अष्टमोऽनुग्रहः सर्गः स चतुर्धा व्यवस्थितः । विपर्ययेण वा शक्त्या सिद्ध्या तुष्ट्या तथैव च ॥ स्थावरेषु विपर्यासात्तिर्यग्योनिष्वशक्तितः । सिद्ध्यात्मना मनुष्येषु तुष्ट्या देवेषु कृत्स्नशः" इति । विपर्यासाः पञ्च तमोमोह इत्यादयः । अशक्तिरेकादशेन्द्रियवैकल्यलक्षणा सिद्धिरष्टविधा तुष्टिश्च नवविधा प्रोक्ता प्रागेव प्रपञ्चिता स्थावरादिष्वत्यन्तविपर्यासादिस्वभावेषु सत्त्वभावानुग्राहको देवतासर्गोऽनुग्रहशब्देनोच्यते । स च स्थावरेषु तिर्यक्षु च तमःपोषकत्वात्तामसः।मनुष्येषु सिद्धिः तुष्ट्यनुरूपसत्त्वोपबृंहकत्वात् सात्त्विक इत्यर्थः । पञ्चैते मुख्यसर्गादयो वैकृताः विकृतीनां सर्गाः महदादयः प्राकृताः ॥ २४ ॥ देवतासर्गान्तरमाह–प्राकृत इति ॥ कौमारः नीललोहितरुद्रसनत्कुमारादीनां सर्गः । तत्र सनत्कुमारादिसर्गो वैकृतः विकृतिभूतेन ब्रह्मणा कृतत्वात्। रुद्रसर्गस्तु प्राकृतः प्रकृतितः स्वयमेव उद्भूतत्वादिति केचित्। तथा च वक्ष्यति "प्रादुरासीत्प्रभोरङ्के कुमारो नीललोहितः" इति । अन्ये त्वाहुः–रुद्रसर्गो विकृत्यन्तरजनकत्वात्प्राकृतः । सनत्कुमारादीनां नैष्ठिकानां सर्गोपि विकृत्यन्तरानुत्पादकत्वाद्वैकृत इति॥ २५ ॥ प्राकृता इति॥ जगत्सृजत ईश्वरस्य जगतो मूलहेतवः । एते नव सर्गाः समाख्याता इति पूर्वेणान्वयः ॥ २६ ॥ २७ ॥ ब्रह्मणः शरीरादिस्तरेण सृष्टिं वक्तुमादौ तावत्सनिमित्तां मानुषीं सुरादिसृष्टिं पूर्वोक्तामनुवदति कर्मभिरित्यादिद्वाभ्याम्–कर्मभिरिति ॥ पूर्वैः कर्मभिः भाविता अधिवासिता अतस्ताः कप्रजाः संहारे उपसंहृता अपि तया ख्यात्या तत्कर्मानुसारिण्या बुद्ध्या निर्मुक्ताः नितरामनिर्मुक्ताः संस्काररूपेण स्थिता एव जज्ञिर इत्युत्तरेणान्वयः ॥ २८ ॥ स्थावरान्ता इति ॥ सुराद्याः सुरनृतिर्यक्स्थावराः एवं चतुर्विधाः ॥ २९ ॥ इदानीं शरीरात्सृष्टिमाह–तत इत्या

युक्तात्मनस्तमोमात्रा ह्युद्रिक्ताऽभूत्प्रजापतेः ॥ सिसृक्षोर्जघनात्पूर्वमसुरा जज्ञिरे ततः ॥ ३१ ॥ उत्ससर्ज ततस्तां तु तमोमात्रात्मिकां तनुम् ॥ सा तु व्यक्ता तनुस्तेन मैत्रेयाभूद्विभावरी ॥ ३२ ॥ सिसृक्षुरन्यदेहस्थः प्रीतिमाप ततः सुराः ॥ सत्त्वोद्रिक्ताः समुद्भूता मुखतो ब्रह्मणो द्विज ॥ ३३ ॥ त्यक्ता सापि तनुस्तेन सत्त्वप्रायमभूद्दिनम् ॥ ततो हि बलिनो रात्रावसुरा देवता दिवा ॥३४॥ सत्त्वमात्रात्मिकामेव ततोन्यां जगृहे तनुम् ॥ पितृवन्मन्यमानस्य पितरस्तस्य जज्ञिरे ॥ ३५ ॥ उत्ससर्ज ततस्तां तु पितॄन्सृष्ट्वापि स प्रभुः ॥ सा चोत्सृष्टाभवत्संध्या दिन नक्तान्तरस्थिता ॥ ३६ ॥ रजोमात्रात्मिकामन्यां जगृहे स तनुं ततः ॥ रजोमात्रोत्कटा जाता मनुष्या द्विजसत्तम ॥ ३७ ॥ तामप्याशु स तत्याज तनुं सद्यः प्रजापतिः ॥ ज्योत्स्ना समभवत्सापि प्राक्सन्ध्या याऽभिधीयते ॥ ३८ ॥ ज्योत्स्नागमे तु बलिनो मनुष्याः पितरस्तथा ॥ मैत्रेय संध्यासमये तस्मादेते भवन्ति वै ॥ ३९ ॥

युक्तात्मन इति ॥ तमोमात्रा तमोगुणांशः ॥ ३१ ॥ ३२ ॥ सिसृक्षुरिति ॥ अन्यदेहस्थः सात्त्विकदेहस्थः ॥ ३३ ॥ ३४ ॥ सत्त्वमात्रात्मिकामिति ॥ पितृवन्मन्यमानस्य आत्मानमिति शेषः । पार्श्वाभ्यां पितृजन्म प्रजनान्मनुष्यजन्म " मुखादजनयद्देवान्स पितॄनथ पक्षतः ॥ जघनादसुरान् सर्वान् प्रजनादपि मानुषान्" इति मात्स्योक्तेः ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ज्योत्स्नागमे प्राक्सन्ध्योपलक्षिते पूर्वाह्णे सन्ध्यासमये चरमसंध्योपलक्षितेऽपराह्णे अतस्ते तदा

दिना यावदध्यायसमाप्ति—तत इति ॥ देवादींश्चतुष्टयं चतुस्सङ्ख्यान् अम्भांसि अम्भस्संज्ञान् सिसृक्षुः स्रष्टुमिच्छुः आत्मानं मनः अयूयुजत् समावर्त्तेत्यन्वयः । "तानिह वा एतानि चत्वार्यम्भांसि देवा मनुष्याः पितरो सुराः" इति श्रुतेः । देवादीनामम्भःसंज्ञा ॥ ३० ॥ युक्तात्मन इति ॥ तमोमात्रावेवसृष्टादृष्टवशादुद्रिक्ताभूत् ॥ ३१ ॥ उत्ससर्जेति ॥ तमोमात्रात्मिकां तनुमिति विशेषणात् तमोमयं भावमुत्ससर्जेत्यर्थः । एवमुत्तरत्रापि । विभावरी रात्रिः श्रुतिश्च—'सा तमिस्राऽभवत्' इति ॥ ३२ ॥ सिसृक्षुरिति ॥ अन्यदेहस्थाः सात्त्विके भावे स्थितः सन् सिसृक्षुः प्रीतिं सुखमवाप मुखतः "स मुखाद्देवानसृजत" इति श्रुतेः ॥ ३३ ॥ त्यक्तेति ॥ सत्त्वप्रायं सत्त्वप्रकाशात्मकं दिनमभूत् रात्रिरभूदित्यादि कथनस्य उपयोगमाह—ततो हीति ॥ यतस्तमोमय्या रात्रिभूतायास्तनोर्जाताः ततो ह्यसुरा रात्रौ बलिनः अतस्तत्पूजा रात्रौ कर्त्तव्येत्यर्थः । एवं देवादिष्वपि द्रष्टव्यम् ॥ ३४ ॥ सत्त्वमात्रात्मिकामिति ॥ अन्यां तनुं जगृहे गृहीत्वा चात्मानं जगत्पितृवन्मन्यमानस्य पार्श्वाभ्यां पितरो जाताः । यथाह वायुः "पितृवन्मन्यमानस्तु पुत्रान्प्रापयतः प्रभुः । स पितॄनुपपक्षाभ्यां रात्र्यहोन्तारितो जगत्" ॥ इति ॥ ३५ ॥ ३६ ॥ ३७ ॥ तामिति ॥ सद्य इत्यनेन तत्तद्बुद्धिवृत्तिमन्तरेण स्वतनुत्यागो नास्तीति दर्शितं ज्योत्स्ना प्रभातम् ॥ ३८ ॥ ज्योत्स्नेति ॥ सन्ध्यासमये सन्ध्ययोपलक्षिते अप

ज्योत्स्ना रात्र्यहनी संध्या चत्वार्येतानि वै प्रभोः ॥ ब्रह्मणस्तु शरीराणि त्रिगुणोपाश्रयाणि तु ॥ ४० ॥ रजोमात्रात्मिकामेव ततोन्यां जगृहे तनुम् ॥ ततः क्षुद्ब्रह्मणो जाता जज्ञे कामस्तया ततः ॥४१॥ क्षुत्क्षामानन्धकारेथ सोसृजद्भगवांस्ततः ॥ विरूपाः श्मश्रुला जातास्तेभ्यधावं स्ततः प्रभुम् ॥४२॥ मैवं भो रक्ष्यतामेष यैरुक्तं राक्षसास्तु ते ॥ ऊचुः खादाम इत्यन्ये ये ते यक्षास्तु जक्षणात् ॥४३॥ अप्रियेण तु तान्दृष्ट्वा केशाः शीर्यन्त वेधसः ॥ हीनाश्च शिरसो भूयः समारोहन्त तच्छिरः ॥ ४४ ॥ सर्पणात्तेऽभवन् सर्पा हीनत्वादहयः स्मृताः ॥ ततः क्रुद्धो जग त्स्रष्टा क्रोधात्मानो विनिर्ममे ॥ वर्णेन कपिशेनोग्रभूतास्ते पिशिताशनाः ॥ ४५ ॥ ध्यायतोंगात्समुत्पन्ना गन्धर्वास्तस्य तत्क्षणात् ॥ पिबन्तो जज्ञिरे वाचं गन्धर्वास्तेन ते द्विज ॥४६॥ एतानि सृष्ट्वा भगवान्ब्रह्मा तच्छक्तिचोदितः ॥ ततः स्वच्छन्दतोन्यानि वयांसि वयसोऽसृजत् ॥४७॥

पूज्याः "अपराह्णः पितॄणाम्" इति श्रुतेः ॥ ३९ ॥ ४० ॥ ४१ ॥ क्षुदिति ॥ अन्धकारे स्थित्वेति शेषः ॥ ४२ ॥ मैवमिति ॥ रक्ष्यतामेष इत्यत्रेतिशब्द स्यानुषङ्गः जक्षणात् जक्षणार्थोक्तेः यक्षणं जक्षणमपि भक्षणमतो यक्षाः ॥ ४३ ॥ अप्रियेणेति ॥ अस्य वेधसः शिरसः केशाः अप्रियेण हीना भूत्वा शीर्यन्त समारोहन्त व्यसर्पन् ॥ ४४ ॥ सर्पणादिति ॥ क्रोधात्मनः क्रोधात्मकान् कपिशेन वर्णेनोपलक्षिताः भूताः अभवन्निति शेषः ॥ ४५ ॥ ध्यायत इति ॥ ध्यायतो अङ्गादिति पिबतो जज्ञिरे वाचमिति पाठान्तरम् । ध्यायतेर्धकारेणाङ्गादिति गकारेण वाचमिति वकारेण गन्धर्वपदनिर्वचनम् ॥ ४६ ॥ एतानिति ॥ तच्छक्तिचो

राह्ण इत्यर्थः "अपराह्णः पितॄणामपि" इति श्रुतेः । तस्मात् ज्योत्स्नाधर्मात् सन्ध्यासमयाच्च ॥ ३९ ॥ ज्योत्स्ना रात्र्यहनीति । ब्रह्मणस्तु शरीराणीत्युपासकानामुपासनार्थमुक्तम् ॥ ४० ॥ रजोमात्रेति ॥ तया क्षुधया ततः व्याप्तस्सन् ॥ ४१ ॥ क्षुदिति ॥ अन्धकारे स्थित्वा असृजत् तं प्रभुमभ्यधावन् भक्षयितुमिति शेषः ॥ ४२ ॥ मैवमिति ॥ तेषामेव मध्ये येऽन्ये जक्षामः खादाम इत्यूचुः ते जक्षणाद्भक्षणाध्यवसायात् यक्षाः "जक्ष भक्षहसनयोः" जक्षा इति वक्तव्ये यकारः परोक्षार्थः "परोक्षप्रिया इव हि देवाः" इति श्रुतेः ॥ ४३ ॥ अप्रियेणेति ॥ शीर्यन्त आदीर्यन्त आहीयन्तेत्यर्थः । शिरसो हीनास्सन्तः पुनस्तच्छिरस्समारूढाः॥४४॥ सर्पणादिति ॥ सर्पणाच्छिरस्समारोहणात्क्रोधात्मानः क्रोधात्मकान् विभक्तिव्यत्यय आर्षः ॥ ४५ ॥ ध्यात इति ॥ गां वाचं धयतः पिबतः गायत इत्यर्थः । गां पिबन्तो गायन्तो जज्ञिरे तेन गन्धर्वाः ॥ ४६ ॥ एतानीति ॥ तच्छक्तिचोदितः तेषां सृज्यानां शक्तिभिः प्राक्कर्मरूपाभिः प्रयुक्तस्सन् तत्तद्बुद्धिवृत्तिभिः एतानि सृष्ट्वा स्वच्छन्दतः तत्तत्कर्मवशादेवोत्पन्नया स्वेच्छया वयसो देहावस्थाविशेषात् वयांसि पक्षिणः ॥ ४७ ॥

---

१ ऊचुर्जक्षाम इति पा० ।

अवयो वक्षसश्चक्रे मुखतोजाः स सृष्टवान् ॥ सृष्टवानुदराद्गाश्च पार्श्वाभ्यां च प्रजापतिः ॥४८॥ पद्भ्यां चाश्वान्समातङ्गान्रासभान्गवयान्मृगान् ॥ उष्ट्रानश्वतरांश्चैव न्यङ्कूनन्याश्च जातयः ॥ ४९ ॥ ओषध्यः फलमूलिन्यो रोमभ्यस्तस्य जज्ञिरे ॥ त्रेतायुगमुखे ब्रह्मा कल्पस्यादौ द्विजोत्तम ॥ सृष्ट्वापश्चौषधीः सम्यग्युयोज स तदाध्वरे ॥५०॥ गौरजः पुरुषो मेषश्चाश्वाश्वतरगर्दभाः ॥ एतान्ग्राम्यान्पशूनाहुरारण्यांश्च निबोध मे ॥५१॥ श्वापदा द्विखुरा हस्ती वानराः पक्षिपंचमाः ॥ औदकाः पशवः षष्ठाः सप्तमास्तु सरीसृपाः ॥५२॥ गायत्रं च ऋचश्चैव त्रिवृत्सोमं रथन्तरम् ॥ अग्निष्टोमं च यज्ञानां निर्ममे प्रथमान्मुखात् ॥ ५३ ॥ यजूंषि त्रैष्टुभं छन्दः स्तोमं पंचदशं तथा ॥ बृहत्साम तथोक्थं च दक्षिणादसृजन्मुखात् ॥५४॥ सामानि जगतीछन्दः स्तोमं सप्तदशं तथा ॥ वैरूपमतिरात्रं च पश्चिमादसृजन्मुखात् ॥ ५५ ॥ एकविंशमथर्वाणमाप्तोर्यामाणमेव च ॥ अनुष्टुभं च वैराजमुत्तरादसृजन्मुखात् ॥५६॥ उच्चावचानि भूतानि गात्रेभ्यस्तस्य जज्ञिरे ॥ देवासुरपितॄन् सृष्ट्वा मनुष्यांश्च प्रजापतिः ॥५७॥

दितः तेषां सृज्यानां कर्मचोदितः वयांसि पक्षिणः ॥ ४७ ॥ अवय इति ॥ अवयः अवीन् ॥ ४८ ॥ पद्भ्यामिति ॥ मृगान् हारिणान् अश्वगर्दभसङ्करो ह्यश्वतरः "न्यंकुस्तु शम्बराकारस्त्रिकोणविपुलोन्नतः" इति वैजयन्ती । जातयो मृगादिजातीः ॥ ४९ ॥ ओषध्य इति ॥ ओषध्यः फलपाकावसानाः व्रीह्यादयः फलमूलिन्यः निष्पावसूरणाद्याः त्रेतायुगमुखे 'यजन्यज्ञैस्त्रेतायाम्' इति वक्ष्यमाणत्वात् कल्पादौ त्रेतायुगमुखे यज्ञाङ्गपश्वादिसृष्टिः "तानि धर्माणि प्रथमान्यासन्" ध्यायन्कृत इत्यादिध्यानयोग एव कृतयुगे ॥ ५० ॥ ५१ ॥ श्वापदा द्विखुरा इति ॥ श्वापदा व्याघ्राद्याः द्विखुरा गवाद्याः औदका नक्राद्याः सरीसृपाः सर्पगोधाद्याः ॥ ५२ ॥ गायत्रमिति ॥ त्रिवृत्पंचदश सप्तदशैकविंशास्तोमाख्याः सामवृत्तिविशेषाः रथन्तरबृहद्वैरूपवैराजाः सामवृत्तिविशेषाः । अग्निष्टोमादयः सोमसंस्थाविशेषाः ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ उच्चावचानीति ॥ उच्चावचान्युत्कृष्टनिकृष्टान्यनेकविधानि जीवानां विषमसृष्टिं कर्मापेक्षितां वक्तुं तत्सर्गमनुवदति देवा

अवय इति ॥ अवयो मेषान् विभक्तिव्यत्यय आर्षः ॥ ४८ ॥ पद्भ्यामिति ॥ अश्वतरान् सृमरान्यंकून् रुरून् कृष्णसारादिवन्यमृगविशेषानन्यांश्च जातयः तिर्यग्जातीः ॥ ४९ ॥ ओषध्य इति ॥ तदेवं कल्पस्यादावेव पशूनोषधींश्च सृष्ट्वा अनन्तरं त्रेतायुगमुखे प्राप्ते सम्यग्ग्राम्यारण्यव्यवस्थया तथाऽध्वरे साधनतया युयोज कृतयुगे यज्ञानामप्रवृत्तेः ॥ ५० ॥ ग्राम्यारण्यभेदमेवाह–गौरित्यादिद्वाभ्याम् ॥ ५१ ॥ श्वापदा इति ॥ श्वापदाः व्याघ्रादयः द्विखुराः गवादयः औदकाः कूर्मादयः सरीसृपाः सर्पगोधादयः ॥ ५२ ॥ पूर्वादिमुखेभ्यः सृष्टिमाह चतुर्भिः–गायत्रमिति ॥ गायत्रं छन्दः ऋचो ऋग्वेदं त्रिवृत्स्तोमं स्तोत्रसाधनभूतानां ऋचां समुदायम् । रथन्तरं साम यज्ञानां मध्ये अग्निष्टोमं सोमयागसंस्थाविशेषम् ॥ ५३ ॥ यजूंषीति ॥ यजूंषि यजुर्वेदं उक्थ्यं नामसंस्थाम् ॥ ५४ ॥ सामानीति ॥ सामानि सामवेदं वैरूपं साम अतिरात्रं सोमयागसंस्थाविशेषम् ॥ ५५ ॥ एकविंशमिति ॥ एकविंशतिस्तोमं अथर्वाणम् अथर्ववेदम् अप्तोर्यामाणं सोमसंस्था अनुष्टुप्छन्दः वैराजं साम ॥ ५६ ॥ सृष्टानां सर्वेषां भूतानां कर्मस्वभावादि वक्तुं पूर्वोक्तामेव सृष्टिं सप्रपञ्चमनुवदति

ततः पुनः ससर्जादौ संकल्पस्य पितामहः ॥ यक्षान् पिशाचान्गन्धर्वान् तथैवाप्सरसां गणान् ॥ ५८ ॥ नरकिन्नररक्षांसि वयः पशुमृगोरगान् ॥ अव्ययं च व्ययं चैव यदिदं स्थाणुजंगमम् ॥ ५९ ॥ तत्ससर्ज तदा ब्रह्मा भगवानादिकृत्प्रभुः ॥ तेषां ये यानि कर्माणि प्राक्सृष्ट्यां प्रतिपेदिरे ॥ तान्येव ते प्रपद्यन्ते सृज्यमानाः पुनःपुनः ॥ ६० ॥ हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते ॥ तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते ॥ ६१ ॥ इन्द्रियार्थेषु भूतेषु शरीरेषु च स प्रभुः ॥ नानात्वं विनियोगं च धातैवं व्यसृजत्स्वयम् ॥ ६२ ॥ नाम रूपं च भूतानां कृत्यानां च प्रपंचनम् ॥ वेदशब्देभ्य एवादौ देवादीनां चकार सः ॥ ६३ ॥

सुरेति ॥ ५७ ॥ ५८ ॥ नरकिन्नररक्षांसीति ॥ विशेषेण अयति गच्छतीति व्ययं जंगमम् इतरत् स्थाणु ॥ ५९ ॥ तदिति ॥ एवं सृज्यमानानां प्राणिनां गुणाकारस्वभावास्तत्कर्मानुगुण्येन ब्रह्मणा सृज्यन्ते न तु स्वातंत्र्येणेत्याह—तेषामिति ॥ ६० ॥ हिंस्रेति ॥ तद्भाविताः तैर्हिंस्रादिभिः कर्मभिर्वासिताः हिंस्रकठिनावृतानि अहिंस्रमृदुसत्यानि च मनोवाक्कायकर्माणि प्रतिपद्यन्ते तज्जन्यधर्माधर्मौ च येन वासितौ यः यत्करोति तत्तस्मै रोचते ॥ ६१ ॥ इन्द्रियेति इन्द्रियेषु तदर्थेषु च नानात्वं श्रोत्रादित्वशब्दादित्वविभागं भूतेषु नानात्वं भूसमुद्रद्युलोकादिभोगदेशविभागं शरीरेषु नानात्वं द्विपाच्चतुष्पादादिभोगायतनविभागं तेषां विनियोगम् अस्य जीवस्यायं देहः अयं लोकोऽनेन इन्द्रियेणेदं भोग्यमित्येवं लक्षणं धातैव स्वातंत्र्येण व्यसृजत् तेभ्य आदिष्टवान् "नानात्वं विनियोगं च धातैव व्यदधात्स्वयम्" इति पाठान्तरम् ॥ ६२ ॥ नामेति देवादिस्थावरान्तानां भूतानां नाम सुरनरमृगखगवृक्षादिजात्यभिधानं रूपम् अनिमेषद्विपदचतुष्पदशाखित्वा

उच्चावचानीत्यादिसार्धैस्त्रिभिः उच्चावचानीति ॥ उच्चावचानि उत्कृष्टनिकृष्टानि देवासुरादीनि ॥ ५७ ॥ ५८ ॥ नरकिन्नररक्षांसीति ॥ नरकिन्नरभेदश्च "नरोऽश्वजघनेपि स्यात्किन्नरोऽश्वमुखे पुनः" इत्यभिधानोक्तेः । अव्ययं चिरकालावस्थायि प्रवाहनित्यं वा व्ययं तद्विपरीतम् ॥ ५९ ॥ तदिति ॥ तेषामेवं सृष्टानां भूतानां मध्ये ये ॥ ६० ॥ तान्येव कर्माण्याह—हिंस्रेति ॥ हिंस्रं मारकम् अहिंस्रं तद्विपरीतं शारीरं कर्म मृदु सदयं क्रूरं तद्विपरीतं मानसं कर्म ऋतं चानृतं च वाचिकं कर्म किञ्चिद्धिंस्रमपि धर्म एव यथाग्नीषोमीयादिपश्वालम्भनम् । अहिंस्रमपि परस्त्रीगमनादिकमधर्मः साधुकर्मापि किञ्चिदधर्मः यथा—राज्ञा चौरादिरक्षणं क्रूरमपि किञ्चिद्धर्मः यथा राज्ञा दुष्टशासनं सत्यमपि किञ्चिदधर्मः यथा ब्राह्मणादि वधप्राप्तौ तदनुकूलमनृतमपि ब्राह्मणादिरक्षणे धर्मः । अतो धर्माधर्मविपरीतयोः पृथग्ग्रहणं तद्भाविताः तैर्हिंस्रादिकर्मभिर्वासिताः तस्मादद्यापि यो यद्वासनावासितः तस्मै तदेव रोचते ॥ ६१ ॥ इन्द्रियार्थेष्विति ॥ एवं तद्वासनानुसारेणेन्द्रियार्थेषु नानात्वम् अमृतमन्नं फलं तृणमित्यादि भोगविषयविभागं भूतेषु नानात्वं जलस्थलचरादिविभागं शरीरेषु नानात्वं द्विपाच्चतुष्पादित्यादिविभागं विनियोगं चानेन जीवेनेदं कार्यमित्यादि । तत्तत्कर्मानुसारेण स्वयमेवासृजत् ॥ ६२ ॥ नामेति ॥ नाम इन्द्रोऽग्निर्यम इत्यादि रूपं च वज्रहस्तेत्यादिकृत्यानां वर्षदहनसंयमादीनां प्रपञ्चनं तत्तन्त

ऋषीणां नामधेयानि यथा वेदश्रुतानि वै ॥ तथा नियोगयोग्यानि ह्यन्येषामपि सोऽकरोत् ॥ ६४ ॥ यथर्तुष्वृतुलिंगानि नानारूपाणि पर्यये ॥ दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥ ६५ ॥ करोत्येवंविधां सृष्टिं कल्पादौ स पुनःपुनः ॥ सिसृक्षाशक्तियुक्तोसौ सृज्यशक्तिप्रचोदितः ॥ ६६ ॥ इति श्रीविष्णुपुराणे प्रथमेंशे पंचमोऽध्यायः ॥ ५ ॥ ॥ छ ॥ ॥ श्रीमैत्रेय उवाच ॥ अर्वाक्स्रोतास्तु कथितो भवता यस्तु मानुषः ॥ ब्रह्मन्विस्तरतो ब्रूहि ब्रह्मा तमसृजद्यथा ॥ १ ॥ यथा च वर्णानसृजद्यद्गुणांश्च प्रजापतिः ॥ यच्च तेषां स्मृतं कर्म विप्रादीनां तदुच्यताम् ॥२॥ श्रीपराशर उवाच ॥ सत्याभिध्यायिनः पूर्वं सिसृक्षोर्ब्रह्मणो जगत् ॥ अजायन्त द्विजश्रेष्ठ सत्त्वोद्रिक्ता मुखात्प्रजाः ॥३॥ वक्षसो रजसोद्रिक्तास्तथा वै ब्रह्मणोऽभवन्[1] ॥ रजसा तमसा चैव समुद्रिक्तास्तथोरुतः ॥ ४ ॥ पद्भ्यामन्याः प्रजा ब्रह्मा ससर्ज द्विजसत्तम ॥ तमःप्रधानास्ताः सर्वाश्चातुर्वर्ण्यमिदं ततः ॥ ५ ॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च द्विजसत्तम ॥ पादोरुवक्षस्थलतो मुखतश्च समुद्गताः ॥६॥

दिकृत्यं हविर्भागयज्ञाद्यनुष्ठानस्रुक्चमसाद्युपादानत्वादिकम् " ऐंद्रं दधि ब्राह्मणोऽग्नीनादधीत खादिरं यूपं ध्रुवं कुर्वीत " इत्यादि वेदशब्देभ्य एव ज्ञात्वा निर्ममे ॥ ॥ ६३ ॥ किञ्च ऋषीणामिति ॥ ऋषीणां वसिष्ठादीनाम् अन्येषाम् इन्द्रहरिश्चन्द्रादीनां च तत्तल्लोकयात्रानियुक्तानां तत्तत्क्रियोपाधिकं नाम अध्वर्युयजमानसम्राडादिकं च वेदकृतं वेदश्रुतमेव तत्रतत्र संकेतितवान् । वसिष्ठेन्द्रादिव्यक्तीनामनित्यत्वेपि तत्प्रवाहस्य नित्यत्वात्तत्तन्नाम्नां व्रीह्यादिपदानामिति श्रौतत्वनित्यत्वोपपत्तिः ॥६४॥ प्रवाहनित्यत्वं दृष्टान्तेन दृढयति यथेति ॥ ऋतुलिंगानि पुष्पफलादीनि पर्यये पुनरावृत्तौ तानितानि तत्तज्जातीयान्येव युगादिषु युगकल्पाद्यावृत्तिषु ॥ ६५ ॥ करोतीति ॥ सिसृक्षाशक्तियुक्तः सृष्टिशक्तिभ्यां युक्तः सृज्यशक्तिः कर्म ॥६६॥ इति श्रीभगवद्रामानुजपदान्तरंगश्रीविष्णुचित्तविरचते श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये प्रथमेंशे पंचमोऽध्यायः ॥ ५ ॥ ॥ अथ यज्ञादिसाधकानां मनुष्याणां वर्णाश्रमकर्मजीविकागतिसृष्टयुक्तीः पृच्छति—अर्वागिति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६॥

रभेदम् ॥ ६३ ॥ किञ्च—ऋषीणामिति ॥ ऋषीणां वसिष्ठादीनां नामानि "तस्माद्वासिष्ठो ब्रह्मा कार्यः" इत्यादि । नियोगयोग्यानि तत्तत्सूक्तमन्त्रादिदर्शनयोग्यानि च वेदे यथाश्रुतानि तथैव कृतवान् ॥ ६४ ॥ ननु देवादीनामनित्यानां कथं नित्यत्वेन देवेनाभिधानमित्याशंक्य प्रवाहनित्यत्वं दृष्टान्तेन दर्शयति यथेति ॥ यथा वसन्तादौ ऋतौ यानि ऋतुलिङ्गानि पुष्पफलादीनि पर्यये तस्यर्त्तोः पुनरावृत्तौ तानि तज्जातीयान्येव दृश्यन्ते तथैव युगमन्वन्तरकल्पादिषु भावा देवादयः ॥ ६५ ॥ उपसंहरति—करोतीति ॥ सिसृक्षा च शक्तिश्च सर्गविषया ताभ्यां युक्तः ॥ ६६ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यविष्णुपुराणव्याख्यायां प्रथमेंशे पञ्चमोध्यायः ॥ ५ ॥ विस्तरतो ब्रूहीति यदुक्तं तदेव विवृणोति—यथा चेति ॥१॥२॥३॥४॥ पद्भ्यामिति ॥ ताश्चतुर्विधाः मुखादिभ्यः सृष्टाः प्रजाः इदं प्रसिद्धं चातुर्वर्ण्यं चत्वारो वर्णाः ॥५ ॥ एतदेव विभागेन

१. तथान्या ब्रह्मणोऽभ्यवन् इत्यपि ।

यज्ञनिष्पत्तये सर्वमेतद्ब्रह्मा चकार वै ॥ चातुर्वर्ण्यं महाभाग यज्ञसाधनमुत्तमम् ॥ ७ ॥ यज्ञैराप्यायिता देवा वृष्ट्युत्सर्गेण वै प्रजाः ॥ आप्याययन्ते धर्मज्ञ यज्ञाः कल्याणहेतवः ॥ ८ ॥ निष्पाद्यन्ते नरैस्तैस्तु स्वधर्माभिरतैस्सदा ॥ विशुद्धाचरणोपेतैः सद्भिः सन्मार्गगामिभिः ॥९॥ स्वर्गापवर्गौ मानुष्यात्प्राप्नुवंति नरा मुने ॥ यच्चाभिरुचितं स्थानं तद्यान्ति मनुजा द्विज ॥ १० ॥ प्रजास्ता ब्रह्मणा सृष्टाश्चातुर्वर्ण्यव्यवस्थिताः ॥ सम्यक्छ्रद्धाः समाचारप्रवणा मुनिसत्तम ॥ ११ ॥ यथेच्छावासनिरताः सर्वबाधाविवर्जिताः ॥ शुद्धान्तःकरणाः शुद्धाः कर्मानुष्ठाननिर्मलाः ॥ १२ ॥ शुद्धे च तासां मनसि शुद्धेन्तःसंस्थिते हरौ ॥ शुद्धज्ञानं प्रपश्यन्ति बिल्वाख्यं येन तत्पदम् ॥ १३ ॥ ततः कालात्मको योऽसौ स चांशः कथितो हरेः ॥ स पातयत्यघं घोरमल्पमल्पाल्पसारवत् ॥ १४ ॥

यज्ञनिष्पत्तय इति ॥ शूद्रस्याध्ययनाग्न्याधानतत्साध्ययज्ञानधिकारेपि नमस्कारैकमन्त्रकपाकयज्ञदानद्विजशुश्रूषाद्यधिकारित्वाच्चातुर्वर्ण्यं यज्ञसाधनमित्युक्तम् ॥ ७ ॥ ॥ ८ ॥ निष्पाद्यंत इति ॥ प्रवचनरक्षणवाणिज्यपरिचर्याणां मुख्यायज्ञसाध्यत्वाद्विप्रादीनां तत्तदङ्गसाध्यक्रियोज्जीवित्वं स्वाध्यायः स्वगृह्योक्तं स्वकर्म । सन्मार्गः शिष्टाचारः ॥ ९ ॥ स्वर्गापवर्गाविति ॥ मानुष्यं मनुष्यकर्म । अभिरुचितं भौमस्वर्गपातालादि ॥ १० ॥ प्रजा इति ॥ व्यवस्थिताविति पाठे व्यवस्थितौ नियमे ॥ ॥ ११ ॥ यथेति ॥ यथेच्छ आवासः वासस्थानम् आश्रमो वा शुद्धांतःकरणाः अहंकारफलसङ्गहीनाः शुद्धाः स्नानादिना ॥ १२ ॥ शुद्धे चेति ॥ शुद्धे अनुष्ठानेन विरागे शुद्धज्ञानं शुद्धज्ञानस्वरूपम् ॥ १३ ॥ तत इति ॥ ततः त्रेतामुखानन्तरम् । अल्पमल्पाल्पसारवत् इति पाठे अल्पम् उद्भूतं जातम् अल्पाल्प

स्पष्टयति–ब्राह्मणा इति ॥ पादोरुवक्षस्थलतो मुखतश्चेति ब्राह्मणादिभिः प्रातिलोम्येन सम्बन्धः ॥ ६ ॥ तत्सृष्टेः प्रयोजनमाह–यज्ञनिष्पत्तय इति ॥ सर्वमेतद्यज्ञसाधनभूतम् उत्तमं चातुर्वर्ण्यं चकारेत्यन्वयः । यद्यप्यवेद्यत्वादभावः कर्मभिस्स्यादिति सूत्रयन् जैमिनिः शूद्रस्याध्ययनाद्यभावाद्यज्ञाधिकारं न मन्यते तथापि द्विजशुश्रूषाद्वारेण तत्साधनत्वात् "नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत्" इति स्मृतेः । पाकयज्ञादिषु साक्षादधिकाराच्च न विरोधः ॥ ७ ॥ यज्ञनिष्पादनस्योपयोगमाह–यज्ञैरिति ॥ आप्यायितास्तर्पिताः देवाः वृष्ट्युत्सर्गेण ताः यज्ञकर्तृः प्रजाः तर्पयन्ति–"अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" इति स्मृतेः । अतो यज्ञाः कल्याणहेतवः ॥ ८ ॥ तेषु श्रेष्ठान् अधिकारिणः दर्शयन्ति निष्पाद्यन्त इति ॥ स्वधर्मेषु श्रौतेष्वभिरतैः विशुद्धाचरणं स्मृत्यादिविहितं तदुपेतैः । पाठान्तरे विरुद्धाचरणादपेतैः निवृत्तैः साद्भिः विद्वद्भिः सन्मार्गगामिभिः पित्रादिसदाचारानुवर्तिभिः ॥ ९ ॥ अतो धर्माधिकारित्वान्मनुष्यान्स्तौति–स्वर्गापवर्गाविति ॥ यथाऽभिरुचितं स्थानं सत्यलोकादि ॥ १० ॥ प्रजा इति ॥ तदेवं चातुर्विध्यं व्यवस्थिताः प्रजाः सृष्टाः सम्यक् श्रद्धया यस्समाचारः तस्मिन्प्रवणाः ॥ ११ ॥ चातुर्वर्ण्यव्यवस्थया धर्मानुष्ठानफलमाह–यथेत्यादिद्वाभ्याम्–यथेति ॥ यथेच्छया वासः गिरिकन्दरादिस्थानं तस्मिन्निरताः यत्सर्वबाधाभिः शीतोष्णाशनपिपासादिबाधाभिर्विवर्जिताः शुद्धाः सत्कुलीनाः ॥ १२ ॥ शुद्धे चेति ॥ तासां शुद्धज्ञानं भवति येन ज्ञानेन तत्पदं प्रपश्यन्ति ॥ १३ ॥ तदेवं धर्मानुष्ठानफल

१ तस्यांश इत्यपि ।

अधर्मबीजमुद्भूतं तमोलोभसमुद्भवम् ॥ प्रजासु तासु मैत्रेय रागादिकमसाधकम् ॥ १५ ॥ ततः सा सहजा सिद्धिस्तासां नातीव जायते ॥ रसोल्लासादयश्चान्याः सिद्धयोष्टौ भवंति याः ॥ १६ ॥ तासु क्षीणास्वशेषासु वर्द्धमाने च पातके ॥ द्वंद्वाभिभवदुःखार्तास्ता भवंति ततः प्रजाः ॥ १७ ॥ ततो दुर्गाणि ताश्चक्रुर्धान्वं पार्वतमौदकम् ॥ कृत्रिमं च तथा दुर्गं पुरखर्वटकादिकम् ॥ १८ ॥

सारवत् अत्यल्पसुखं घोरं बहुदुःखम् ॥ १४ ॥ अधर्मेति ॥ अधर्मबीजम् अधर्मस्य कारणं तमोलोभसमुद्भवं क्रोधलोभयोर्हेतुम् असाधकम् अष्टसिद्धिविरोधि रागादिकम् । अयं कालः प्रजासु पातयति क्षिपतीति पूर्वेणान्वयः। अधर्मबीजमुद्भूतमिति च पाठः ॥ १५ ॥ तत इति ॥ सहजा सिद्धिः औत्पत्तिकं ज्ञानम् । "कृते तु मिथुनोत्पत्तिः सिद्धिश्चापि रसोल्लसा । सकृद्वृष्टिमयी चान्या गृहवृक्षात्मिकापरा । पश्चात्संकल्पसिद्धिश्च कल्पवृक्षात्मिका परा । प्रकामवृष्टिश्चाकृष्टपच्यसिद्धिस्तथाष्टमी " इत्यष्टसिद्धयः। रसोल्लासः योगाभ्यासबलात्स्वमूर्द्धन्यमृतांशुबिम्बस्रवदमृततृप्तता यथा स्कान्दे—"रसस्य स्वत एवान्तरुल्लासः स्यात्कृते युगे । रसोल्लासाख्या सा सिद्धिस्तया हन्ति क्षुधं नरः" इति स्त्रीनैरपेक्ष्येणानन्दो मिथुनोत्पत्तिः । यथा तत्रैव "स्त्रियादिनैरपेक्ष्येण सदा तृप्ताः प्रजास्तथा।द्वितीया सिद्धिरुद्दिष्टा" इति। कौर्मे च "कृते तु मिथुनोत्पत्तिस्तथा साक्षाद्रसोल्लसा । प्रजास्तृप्ताः सदा सर्वाः सर्वानन्दाश्च योगिनः" इति । सकृद्वृष्टिमयी सकृद्वृष्ट्या सस्यनिष्पत्तिः । गृहवृक्षात्मिका इच्छया गृहवृक्षोद्गमः संकल्पसिद्धिः संकल्पेनाभिमता सिद्धिः । कल्पवृक्षात्मिका भरद्वाजाश्रमवत् प्रकामवृष्टिः निकामेनिकामे वृष्टिः । अकृष्टपच्यसिद्धिः अकृष्टपच्यभूमित्वमिति पुराणेष्वष्टसिद्धयो बहुधोक्ताः ॥ १६ ॥ तास्विति ॥ द्वंद्वं शीतोष्णादि ॥ १७ ॥ तत इति ॥ धान्वं बहिर्निर्जलं मरुदुर्गम् । धान्वं पार्वतमिति पाठः । कृत्रिमं क्रियानिर्वृत्तं वनादि

मुक्तम् इदानीं कालवशेन तद्वैकल्यात्प्राणिनामनिष्टप्राप्तिमाह तत इत्यादिना—तत इति ॥ ततस्त्रेतायुगे किञ्चिदपक्रान्ते सति । स प्रसिद्धः कालात्मको योऽसौ हरेरंशः कथितः सः अघं पापं रागादिकं विषयाभिलाषद्वेषमात्सर्यादिकम् असाधकं पुरुषार्थप्रतिबन्धकं तासु प्रजासु पातयति प्रक्षिपतीति द्वयोरन्वयः । कथंभूतं घोरं बहुदुःखप्रदम् अल्पाल्पसारवत् अत्यल्पसुखदं यद्वा अत्यल्पबलम्, उत्पत्तिसमय एव धृतिमता पुंसा जेतुं शक्यम् ॥ १४ ॥ अनन्तरं तु—अधर्मेति ॥ अधर्मस्य बीजभूतं तमः अज्ञाननिवेशः लोभः तृष्णा तयोः समुद्भवो यस्मात् ॥ १५ ॥ ततः किमित्यत आह—तत इति ॥ सहजा स्वाभाविकी सिद्धिः सर्वबाधाविवर्जिता इत्यत्रोक्ता क्षुत्पिपासादिद्वन्द्वजयलक्षणा तासां न जायते रसोल्लासादयः सिद्धयः स्कान्दादिप्रोक्ताः " रसस्य स्वत एवान्तरुल्लासःस्यात्कृते युगे । रसोल्लासाख्यका सिद्धिस्तया हन्ति क्षुधं नरः ॥ स्त्र्यादीनां नैरपेक्ष्येण सदा तृप्ताः प्रजास्तथा । द्वितीया सिद्धिरुद्दिष्टा सा तृप्तिर्मुनिसत्तमैः ॥ धर्मोत्तमं च नास्त्यासां सा तृतीयाऽभिधीयते । चतुर्थी तुल्यता तासामायुषः सुखरूपयोः ॥ ऐकान्त्यबलबाहुल्यं विशोका नाम पञ्चमी । परमात्मपरत्वेन तपोध्यानादिनिष्ठिता ॥ षष्ठी च कामचारित्वं सप्तमी सिद्धिरुच्यते । अष्टमी च तथा प्रोक्ता यत्र क्वचन शायिता " इति ॥ १६ ॥ तास्विति ॥ शीतोष्णादिद्वन्द्वैरभिभवः तेन सम्भूतैः दुःखैरार्त्ताः पीडिताः ॥ १७ ॥ ततश्चोरादिभयपरिहारार्थं दुर्गादि शीतोष्णादिप्रतीकारार्थं गृहान् जीविकाद्यर्थं कृषिवाणिज्यादीनि चक्रुरित्याह ततो दुर्गाणीत्यादिना—तत इति ॥ कृत्रिमं परिखाद्यावृतं प्राकारादिपुरादीनां लक्षणं भृगुणोक्तम्—"नृपावासः पुरी प्रोक्ता विशां पुरमपीष्यते । एक तो यत्र तु ग्रामो नगरं चैकतः स्थितम् ॥ मिश्रं तु खर्वटं नाम नदीकूपसमाश्रयम् । विप्राश्च

गृहाणि च यथान्यायं तेषु चक्रुः पुरादिषु ॥ शीतातपादिबाधानां प्रशमाय महामते ॥ १९ ॥ प्रतीकारमिमं कृत्वा शीतादेस्ताः प्रजाः पुनः ॥ वार्तोपायं ततश्चक्रुर्हस्तसिद्धिं च कर्मजाम् ॥ २० ॥ व्रीहयश्च यवाश्चैव गोधूमाश्चाणवस्तिलाः ॥ प्रियंगवो ह्युदाराश्च कोरदूषाः सतीनकाः ॥ २१ ॥ माषा मुद्गा मसूराश्च निष्पावाः सकुलत्थकाः ॥ आढक्यश्चणकाश्चैव शणाः सप्तदश स्मृताः ॥ २२ ॥ इत्येता ओषधीनां तु ग्राम्यानां जातयो मुने ॥ ओषध्यो यज्ञियाश्चैव ग्राम्यारण्याश्चतुर्दश ॥ २३ ॥ व्रीहयस्सयवा माषा गोधूमाश्चाणवस्तिलाः ॥ प्रियंगुसप्तमा ह्येते अष्टमास्तु कुलत्थकाः ॥ २४ ॥ श्यामाकास्त्वथ नीवारा जर्तिलाः सगवेधुकाः ॥ तथा वेणुयवाः प्रोक्तास्तथा मर्कटका मुने ॥ २५ ॥

पुरादिलक्षणं भृगूक्तम् । "नृपावासः पुरी प्रोक्ता विशां पुरमितीष्यते । एकतो यत्र तु ग्रामो नगरं चैकतः स्थितम् ॥ मिश्रं तत्खर्वटं नाम नदीगिरिसमाश्रितम्" इति । आदिशब्दाच्छिबिरपत्तनादिः ॥ १८ ॥ गृहाणीति ॥ यथान्यायं वास्तुशास्त्रानतिक्रमेण ॥ १९ ॥ प्रतीकारमिति ॥ वार्ता कृष्यादिः । हस्तसिद्धिः शिल्पादिः ॥२०॥ तत्र वार्तायां कृषिफलं विवृणोति व्रीहयः इति ॥ व्रीहयः शाल्यादयः । यवो दीर्घशूकः । गोधूमो निष्कंचुको दीर्घशूकः । अणवः क्षुद्रधान्यम् । प्रियंगुः कंगुः । उदारो दीर्घनालः । कोद्रवः कोरदूषकः । सतीनकः कलायः ॥ २१ ॥ माषा इति ॥ मसूरो मङ्गल्यकः । निष्पावः वल्ली । कुलत्थकः पाषाणच्छेदिसारः । आढकी तुवरी । चणकः हरिमन्थकः । शणः गोण्युपादानत्वक् ॥ २२ ॥ २३ ॥२४॥ श्यामाका इति ॥ श्यामाकः तृणधान्यम् । नीवारः सशूको

विप्रभृत्याश्च यत्र चैव वसन्ति वै ॥ स तु ग्राम इति प्रोक्तः शूद्राणां वास एव तु । पण्यक्रियादिनिपुणैश्चातुर्वर्ण्यजनैर्युतम् ॥ अनेकजातिसम्बन्धं नैकशिल्पिसमाकुलम् । सर्वदैवतसम्बन्धं नगरं त्वभिधीयते" इति ॥ १८ ॥ गृहाणीति ॥ गृहाणि विश्वकर्मप्रोक्तानि "ध्रुवं धन्यं जयं कान्तं विजयं विपुलं तथा । सुपक्षं सुमुखं नन्दं धनदञ्च मनोरथम्" इत्यादीनि । यथान्यायमायनिमित्ताद्यनुसारेण यथा वास्तुशास्त्रम् ॥ १९ ॥ प्रतिकारमिति ॥ वार्त्तोपायं जीविकासाधनं कृष्यादि हस्ताभ्यां साध्यां सिद्धिं वृत्तिं तामेवाह कर्मजां तत्तत्कर्मनिमित्ताम् ॥ २० ॥ तत्र कृषिफलं प्रपञ्चयति व्रीहयश्चेत्यादिसार्द्धद्वाभ्याम्–व्रीहय इति ॥ अणवः क्षुद्राः शालयः प्रियङ्गुसहितं तृणं धान्यं वा प्रियङ्गवः वा ऊर्ध्वनालाः कोरदूषाः कोद्रवाः सतीनकाः कलायाः नीलपुष्पाः ॥ २१ ॥ माषा इति ॥ मसूराः मंगल्यकाः निष्पावाः वल्यः कुलत्थकाः मुद्गसमपत्राः पाषाणच्छेदसाराः आढक्यस्तुवर्यः चणकाः हरिमन्थकाः शणाः गोण्युपादानत्वचः ॥ २२ ॥ इतीति ॥ इत्येताः ग्राम्याणां कृषिसाध्यानां जातयः सप्तदश तासु ॥ २३ ॥ व्रीहय इति ॥ व्रीह्यादि श्यामाकान्ता ग्राम्या नव याज्ञिकाः यज्ञसाधनभूताः ॥ २४ ॥ श्यामाका इति ॥ आरण्याः नीवाराद्याः पञ्चयज्ञसाधनभूताः । यद्वा श्यामाका अप्यारण्याः तृणधान्यरूपत्वात् नीवारा आरण्याः व्रीहयः जर्तिलाः आरण्यास्तिलाः गवेधुकाः कुसुम्भाः वेणुयवः वंशबीजं मर्क

ग्राम्यारण्याः स्मृता ह्येता ओषध्यस्तु चतुर्दश ॥ यज्ञनिष्पत्तये यज्ञस्तथासां हेतुरुत्तमः ॥ २६ ॥ एताश्च सह यज्ञेन प्रजानां कारणं परम् ॥ परावरविदः प्राज्ञास्ततो यज्ञान्वितन्वते ॥ २७ ॥ अहन्यहन्यनुष्ठानं यज्ञानां मुनिसत्तम ॥ उपकारकरं पुंसां क्रियमाणाघशान्तिदम् ॥ २८ ॥ येषां तु कालसृष्टोऽसौ पापबिन्दुर्महामुने ॥ चेतःसु ववृधे चक्रुस्ते न यज्ञेषु मानसम् ॥ २९ ॥ वेदवादांस्तथा वेदान्यज्ञकर्मादिकं च यत् ॥ तत्सर्वं निन्दयामासुर्यज्ञव्यासेधकारिणः ॥ ३० ॥ प्रवृत्तिमार्गव्युच्छित्तिकारिणो वेदनिन्दकाः ॥ दुरात्मानो दुराचारा बभूवुः कुटिलाशयाः ॥ ३१ ॥ संसिद्धायां तु वार्तायां प्रजाः सृष्ट्वा प्रजापतिः ॥ मर्यादां स्थापयामास यथास्थानं यथागुणम् ॥ ३२ ॥ वर्णानामाश्रमाणां च धर्माधर्मभृतां वर ॥ लोकांश्च सर्ववर्णानां सम्यग्धर्मानुपालिनाम् ॥ ३३ ॥ प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं क्रियावताम् ॥ स्थानमैन्द्रं क्षत्रियाणां संग्रामेष्वनिवर्त्तताम्॥३४॥वैश्यानां मारुतं स्थानं स्वधर्ममनुवर्तिनाम्॥गान्धर्वं शूद्रजातीनां परिचर्यानुवर्त्तिनाम्॥३५॥

व्रीहिः । जर्तिला वनतिलाः । गवेधुकाः कुसुम्भसदृशबीजाः । वेणुयवाः वंशबीजानि । मर्कटकाः प्रियङ्गुभेदाः । नागबलाख्यद्रुमबीजानि वा ॥ २५ ॥ ग्राम्येति ॥ आसाम् ओषधीनां हेतुः वर्धकः ॥ २६ ॥ २७ ॥ अहन्यहनीति ॥ यज्ञानां पंचमहायज्ञानामनुष्ठानं नित्यं क्रियमाणाघं ' पंचसूना गृहस्थस्य ' इत्यादिनामनूक्तं अत्र तु पूर्वम् अल्पाल्पसारवदित्युक्तं तस्याघस्य शान्तिदं नाशकरमित्यर्थः । पापनिवर्त्तकम् ॥ २८ ॥ २९ ॥ ३० ॥ प्रवृत्तीति ॥ यज्ञप्रवृत्त्या प्रवृत्तिः सर्गः प्रजासर्ग इत्यर्थः ॥ ३१ ॥ संसिद्धायामिति । कृषिरूपायां वार्त्तायां संसिद्धायाम् ओषधिद्वारा प्रजाः सृष्ट्वा यथास्थानम् अस्मिन्देशेऽयं धर्म इति यथागुणं रागिणां काम्यं कर्म विरक्तानां तु निवर्त्तकमित्यादि व्यवस्थां स्थापयामास ॥ ३२ ॥ ३३ ॥ प्राजापत्यमिति ॥ प्राजापत्यं भृग्वादिलोकः । ब्राह्मणानां क्रियावतां नित्यनैमित्तिकक्रियावताम् ॥ ३४ ॥ ३५ ॥

टका आरण्याः प्रियङ्गवः ॥ २५ ॥ ग्राम्यारण्या इति ॥ एताश्चतुर्दशयज्ञनिष्पत्तये स्मृता इत्यन्वयः । यज्ञश्चासामोषधीनां हेतुः कारणं वृष्टिरूपेण ॥ २६ ॥ एता इति ॥ प्रजानां वृष्टिः कारणं वृद्धिहेतुत्वात् परावरविदः यज्ञाः कारणं प्रजास्तत्कारणमित्येवंविदः ॥ २७ ॥ अहन्यहनीति ॥ अहन्यहनि पञ्चमहायज्ञानामनुष्ठानं पुंसां गृहस्थानां प्रत्यहं क्रियमाणस्य पञ्चसूनालक्षणस्य पापस्य शान्तिदं नाशकरम् ॥ २८॥ तदेवं ब्रह्माण्डसृष्टानां यज्ञाङ्गभूतानामोषधीनां कृष्यादिप्रवृत्त्या प्रवाहनित्यत्वमुक्तं यज्ञानाञ्च दृष्टादृष्टलक्षणं महत्फलमुक्तं तथाप्येतेषां कैश्चिदनुष्ठाने पूर्वोपक्षितमेव रागादिकं कारणमाह येषां त्वित्यादित्रिभिः—येषां त्विति ॥ २९ ॥ वेदानिति ॥ यज्ञानां व्यासेधकारिणः प्रतिहर्त्तारः ॥ ३० ॥ अत एव प्रवृत्तीति ॥ प्रवृत्तिमार्गव्युच्छित्तिकारिणः प्रवृत्तिमार्गोच्छेदकारिणः यज्ञाननुष्ठाने देवैरवर्षणादन्नाभावेन प्रजावृद्धेरसिद्धिः ॥ ३१ ॥ संसिद्धायामिति ॥ तदेवं प्रजास्सृष्ट्वा तासां वार्त्तायाञ्च कृष्यादिना संसिद्धायां सत्यां यथागुणं सत्वोद्रेकानुसारेण ब्राह्मणादीनां वर्णानां गृहस्थाद्याश्रमाणाञ्च मर्यादां धर्मव्यवस्थां यथास्थानं तत्तत्स्वधर्मानुष्ठानानुसारेण लोकव्यवस्थाञ्च कृतवानित्यर्थः ॥ ३२ ॥ तदेवाह वर्णानामित्यादिना यावदध्यायसमाप्ति ॥ ३३ ॥ प्राजापत्यमिति ॥ क्रियावतां नित्यनैमित्तिकाग्निहोत्राद्यनुष्ठातॄणां प्राजापत्यं स्थानं पितृलोकः “कर्मणा पितृलोकः” इति श्रुतेः ॥ ३४ ॥ वैश्यानामिति ॥ मारुतं

अष्टाशीतिसहस्राणि मुनीनामूर्ध्वरेतसाम् ॥ स्मृतं तेषां तु यत्स्थानं तदेव गुरुवासिनाम् ॥ ३६ ॥ सप्तर्षीणां तु यत्स्थानं स्मृतं तद्वै वनौकसाम् ॥ प्राजापत्यं गृहस्थानां न्यासिनां ब्रह्मसंज्ञितम् ॥ ३७ ॥ योगिनाममृतं स्थानं स्वात्मसंतोषकारिणाम् ॥ ३८ ॥ एकान्तिनः सदा ब्रह्मध्यायिनो योगिनश्च ये ॥ तेषां तु परमं स्थानं यत्तत्पश्यन्ति सूरयः ॥ ३९ ॥ गत्वागत्वा निवर्त्तन्ते चंद्रसूर्यादयो ग्रहाः ॥ अद्यापि न निवर्त्तन्ते द्वादशाक्षरचिंतकाः ॥ ४० ॥ तामिस्रमन्धतामिस्रं महारौरवरौरवौ ॥ असिपत्रवनं घोरं कालसूत्रमवीचिकम् ॥ ४१ ॥ विनिन्दकानां वेदस्य यज्ञव्याघातकारिणाम् ॥ स्थानमेतत्समाख्यातं स्वधर्मत्यागिनश्च ये ॥ ४२ ॥ इति श्रीविष्णुपुराणे प्रथमेंशे षष्ठोऽध्यायः ॥ ६ ॥ ॥ छ ॥ ॥ छ ॥

अष्टाशीतीति ॥ गुरुवासिनां ब्रह्मचारिणाम् ॥ ३६ ॥ सप्तर्षीणामिति ॥ न्यासिनां संन्यासिनां देवयानमार्गस्थो ब्रह्मसंज्ञितः सत्यलोकः ॥ ३७ ॥ योगिनामिति ॥ आश्रमेष्वेव ये प्रतीकोपासका योगिनस्तेषाममृतं विष्णुपदाख्यं ध्रुवादुपरिस्थानं यतो गंगा प्रवहतीति । वक्ष्यमाणम् ॥ ३८ ॥ एकान्तिन इति ॥ परमं स्थानं परमव्योम ॥ ३९ ॥ भगवदुपासकानामेवापुनरावृत्तिरितरेषां तु निवृत्तिरेवेत्याह–गत्वेति ॥ चन्द्रसूर्यादिग्रहणं तेषां कालनेतृत्व विशेषात् एतद्विलक्षणानां ब्रह्मादीनामप्युपलक्षणम् । चंद्रसूर्यादयोपि स्वंस्वमधिकारं गत्वा प्राप्य अन्ते प्रलयकाले निवर्त्तन्ते ते स्वपदाद्भ्रश्यन्ति । द्वादशाक्षरादिना मन्त्रेण भगवदुपासका न निवर्त्तन्ते न च पुनरावर्तन्ते एतद्व्यतिरिक्तास्सर्वेऽपि निवर्तन्त एव । "अनावृत्तिः शब्दात्, आब्रह्मभुवनाल्लोकाः पुनरावृत्तिनोऽर्जुन" इति भगवदुक्तेः ॥ ४० ॥ तामिस्रादीनां स्वरूपं वक्ष्यते तामिस्रमिति ॥ ४१ ॥ ४२ ॥ इति श्रीभगवद्रामानुजपदान्तरंगश्रीविष्णुचित्तविरचिरते श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये प्रथमेंशे षष्ठोध्यायः ॥ ६ ॥

स्थानं देवलोकः ॥ ३५ ॥ अष्टाशीति सहस्राणीति ॥ गुरुवासिनां नैष्ठिकब्रह्मचारिणाम् ॥ ३६ ॥ सप्तर्षीणामिति ॥ वनौकसां वानप्रस्थानां न्यासिनां संन्यासिनां ब्राह्मणानां विशेषं वक्तुं पूर्वोक्तमेव स्थानमनुवदति प्राजापत्यमिति ॥ ब्रह्मसंज्ञितं सत्यलोकस्थानं 'संन्यासात् ब्रह्मणः स्थानम्' इति वचनात् ॥ ३७ ॥ योगिनामिति ॥ योगिनां ज्ञानिनाम् ॥ ३८ ॥ तदेव स्पष्टयति ॥ एकान्तिन इति ॥ ३९ ॥ भगवदुपासकानामपि क्रममुक्त्या तदेव स्थानमित्याशयेनाह–गत्वेति ॥ ४० ॥ ४१ ॥ विनिन्दकानामिति ॥ स्वधर्मत्यागिनश्च ये तेषामपीति ॥ ४२ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यविष्णुपुराणव्याख्यायां प्रथमांशे षष्ठोऽध्यायः॥ ६ ॥

श्रीपराशर उवाच ॥ ततोभिध्यायतस्तस्य जज्ञिरे मानसाः प्रजाः ॥ तच्छरीरसमुत्पन्नैः कार्यैस्तैः करणैः सह ॥ क्षेत्रज्ञाः समवर्त्तन्त गात्रेभ्यस्त स्य धीमतः ॥ १ ॥ ते सर्वे समवर्त्तन्त ये मया प्रागुदाहृताः ॥ देवाद्याः स्थावरान्ताश्च त्रैगुण्यविषये स्थिताः ॥ २ ॥ एवंभूतानि सृष्टानि चराणि स्थावराणि च ॥ ३ ॥ यदास्य ताः प्रजाः सर्वा न व्यवर्धन्त धीमतः ॥ अथान्यान्मानसान्पुत्रान्सदृशानात्मनोऽसृजत् ॥ ४ ॥ भृगुं पुलस्त्यं पुलहं क्रतुमङ्गिरसं तथा ॥ मरीचिं दक्षमत्रिं च वसिष्ठं चैव मानसान् ॥ ५ ॥ नव ब्रह्माण इत्येते पुराणे निश्चयं गताः ॥ ६ ॥ ख्यातिं भूतिं च संभूतिं क्षमां प्रीतिं तथैव च ॥ सन्नतिं च तथैवोर्जामनसूयां तथैव च ॥ ७ ॥ प्रसूतिं च ततः सृष्ट्वा ददौ तेषां महात्मनाम् ॥ पत्न्यो भवध्व मित्युक्त्वा तेषामेव तु दत्तवान् ॥ ८ ॥ सनन्दनादयो ये च पूर्वसृष्टास्तु वेधसा ॥ न ते लोकेष्वसज्जन्त निरपेक्षाः प्रजासु ते ॥ ९ ॥ सर्वे तेऽभ्या गतज्ञाना वीतरागा विमत्सराः ॥ तेष्वेवं निरपेक्षेषु लोकसृष्टौ महात्मनः ॥ १० ॥ ब्रह्मणोभून्महान् क्रोधस्त्रैलोक्यदहनक्षमः ॥ तस्य क्रोधात्स मुद्भूतज्वालामालातिदीपितम् ॥ ब्रह्मणोभूत्तदा सर्वं त्रैलोक्यमखिलं मुने ॥ ११ ॥ भ्रुकुटीकुटिलात्तस्यललाटात्क्रोधदीपितात् ॥ समुत्पन्न स्तदा रुद्रो मध्याह्नार्कसमप्रभः ॥ १२ ॥ अर्धनारीनरवपुः प्रचण्डोऽतिशरीरवान् ॥ विभजात्मानमित्युक्त्वा तं ब्रह्मान्तर्दधे ततः ॥ १३ ॥

अथ मानसशारीरसृष्टिमनूद्य मैथुनसृष्टिमाह—तत इत्यादिना । कार्यैर्देहैः करणैरिन्द्रियैः हिरण्यगर्भदेहभूतभूतोत्पन्नैर्देहेन्द्रियैः सह काश्चिन्मानस्यः प्रजा जज्ञिरे ॥ केचित् क्षेत्रज्ञास्तस्य गात्रेभ्योऽवयवेभ्यः कार्यकरणैः सह समवर्त्तन्त ॥ १ ॥ ते सर्वे इति ॥ ते देवाद्याः स्थावरान्ता जीवास्त्रैगुण्यवशीकृताः समवर्त्तन्त ॥ २ ॥ ३ ॥ ॥ ४ ॥ ५ ॥ नव ब्रह्माण इति ॥ पुराणे ब्रह्मांडादौ । पूर्वं सृष्टेः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

अथ यौनसृष्टिं वक्ष्यन् पूर्वोक्तायां मानससृष्टौ कञ्चिद्विशेषं वक्तुमाह तत इत्यादित्रिभिः—तत इति ॥ प्रागनुक्तिविशेषोक्तिस्तत इति । अनुपूर्वसृष्टिवत्प्रस्तावः तत्रैव शङ्कते, ननु मनसा सङ्कल्पमात्रेण भूतोपादानं विना भौतिकानां देहानां कथं जन्म कथं जडाच्छरीराच्चेतनानां जीवानां जन्मेति तत्राह तच्छरीरेति ॥ तस्य ब्रह्मणः शरीरात्समुत्पन्नैः कार्यैर्देहैः करणैरिन्द्रियैश्च सह मनसा निमित्तभूतेन मानसाः प्रजा जज्ञिरे ब्रह्म शरीरस्थभूतान्येव तद्देहानामुपादानकारणमित्यर्थः । तथा धीमतश्चेतनसमष्टिजीवस्य तस्य ब्रह्मणः जडेभ्योपि गात्रेभ्यः उत्पद्यमानैर्देवैस्सह तत्सङ्कल्पमात्रात् उद्बुद्धसंस्कारा व्यष्टिक्षेत्रज्ञाः समवर्त्तन्त आविर्भूता इत्यर्थः ॥ १ ॥ तानेवाह—ते सर्व इति ॥ २ ॥ ३ ॥ यौनसष्टेः प्रयोजनमाह—यदास्येति न व्यवर्द्धन्त पुत्रपौत्रादिरूपेण प्रवृद्धिं न प्राप्ताः तदान्यान् यौनसृष्टेः प्रवर्त्तकान्भृग्वादीन् सृष्टवान् ॥ ४ ॥ ५ ॥ आत्मनः सदृशानिति यदुक्तं तदेव ब्रह्मसमाख्यया दर्शयति नवब्रह्माण इति ॥ ६ ॥ ७ ॥ ८ ॥ क्रोधाद्रुद्रसृष्टिं तत्रैव मनुसृष्टिं च वक्तुं ब्रह्मणः क्रोधकारणं दर्शयन्नाह—सनन्दनादय इति ॥ ९ ॥ सर्व इति ॥ अभ्यागतज्ञानाः प्रकृष्टज्ञानाः सर्वे तेऽनागतज्ञानाः इति पाठान्तरे अनागतेऽर्थे ज्ञानं येषां ते एवं तेषु प्रजासृष्टौ निरपेक्षेषु सत्सु महात्मनः सृष्टिविस्तारे प्रवृत्तस्य ॥ १० ॥ ब्रह्मण इति ॥ ब्रह्मणः क्रोधोऽभूत् तस्य ब्रह्मणः क्रोधात्समुद्भूतानां ज्वालानां मालाभिरभितो दीपितं त्रैलोक्यमित्यन्वयः ॥ ११ ॥ १२ ॥ अर्धनारीनरवपुरिति ॥ अर्द्धाभ्यां नारी नरश्च वपुर्यस्य सः प्रचण्डः अतिक्रोधनः आत्मानं पुरुषाकारं देहं विभज पृथक्कुर्विति

(१) ख्यात्यादिसर्जनं दक्षद्वारा प्रसूतिसर्जनं मनुद्वारा ज्ञेयम्।

तथोक्तोसौ द्विधा स्त्रीत्वं पुरुषत्वं तथाऽकरोत् ॥ विभेदपुरुषत्वं च दशधा चैकधा पुनः ॥ १४ ॥ सौम्यासौम्यैस्तदाशान्ताऽशान्तैः स्त्रीत्वं च स प्रभुः ॥ विभेद बहुधा देवः स्वरूपैरसितैः सितैः ॥ १५ ॥ ततो ब्रह्मात्मसंभूतं पूर्वं स्वायंभुवं प्रभुः ॥ आत्मानमेव कृतवान्प्रजापाल्ये मनुं द्विज ॥ १६ ॥ शतरूपां च तां नारीं तपोनिर्धूतकल्मषाम् ॥ स्वायंभुवो मनुर्देवः पत्नीत्वे जगृहे प्रभुः ॥ १७ ॥ तस्मात्तु पुरुषाद्देवी शतरूपा व्यजायत ॥ प्रियव्रतोत्तानपादौ प्रसूत्याकूतिसंज्ञितम् ॥ १८ ॥ कन्याद्वयं च धर्मज्ञ रूपौदार्यगुणान्वितम् ॥ ददौ प्रसूतिं दक्षाय आकूतिं रुचये पुरा ॥ १९ ॥ प्रजापतिः स जग्राह तयोर्जज्ञे सदक्षिणः ॥ पुत्रो यज्ञो महाभाग दम्पत्योर्मिथुनं ततः ॥ २० ॥ यज्ञस्य दक्षिणायां तु पुत्रा द्वादश जज्ञिरे ॥ यामा इति समाख्याता देवाः स्वायंभुवे मनौ ॥२१॥ प्रसूत्यां च तथा दक्षश्चतस्रो विंशतिस्तथा ॥ ससर्ज कन्यास्तासां च सम्यङ्नामानि मे शृणु ॥ २२ ॥ श्रद्धा लक्ष्मीर्धृतिस्तुष्टिर्मेधा पुष्टिस्तथा क्रिया ॥ बुद्धिर्लज्जा वपुः शांतिः सिद्धिः कीर्तिस्त्रयोदशी ॥ २३ ॥ पत्न्यर्थं प्रतिजग्राह धर्मो दाक्षायणीः प्रभुः ॥ ताभ्यः शिष्टायवीयस्य एकादश सुलोचनाः ॥ २४ ॥ ख्यातिः सत्यथ संभूतिः स्मृतिः प्रीतिः क्षमा तथा ॥ सन्ततिश्चानसूया च ऊर्जा स्वाहा स्वधा तथा ॥ २५ ॥ भृगुर्भवो मरीचिश्च तथा चैवांगिरा मुनिः ॥ पुलस्त्यः पुलहश्चैव क्रतुश्चर्षिवरस्तथा ॥ २६ ॥ अत्रिर्वसिष्ठो वह्निश्च पितरश्च यथाक्रमम् ॥ ख्यात्याद्या जगृहुः कन्या मुनयो मुनिसत्तम ॥ २७ ॥ श्रद्धा कामं चला दर्पं नियमं धृतिरात्मजम् ॥ सन्तोषं च तथा तुष्टिर्लोभं पुष्टिरसूयत ॥ २८ ॥

तथोक्त इति ॥ स्त्रीत्वं पुरुषत्वं च द्विधाऽकरोत् पृथक् चकार । पुंस्त्वं चैकादशविधरूपभेदैः ॥ १४ ॥ १५ ॥ तत इति ॥ आत्मसंभूतम् । अत एव स्वायंभुवमात्मानं तमेव प्राजापत्ये निमित्ते पूर्वं मनुं कृतवान् ॥ १६ ॥ शतरूपामिति ॥ शतरूपाम् अर्द्धेन पुरुषोऽभवदर्द्धेन नारीत्युक्ताया ब्रह्मपत्न्याः शतरूपाया अंशभूतां ब्रह्मांशभूतो मनुर्जगृहे ॥ १७ ॥ १८ ॥ कन्याद्वयमिति ॥ प्रजापतिराकूतिं रुचये ददौ ॥ १९ ॥ प्रजापतिरिति ॥ स रुचिर्जग्राह तयोराकूतिरुच्योर्दम्पत्योः सदक्षिणो यज्ञः पुत्रो मिथुनं जज्ञे ॥ २० ॥ यज्ञस्येति ॥ स्वायंभुवे मनौ मन्वन्तरे ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ श्रद्धेति ॥ श्रद्धाकामं तथा दर्पमिति पाठे

तमुक्त्वा अन्तर्दधे अन्तर्धानं गतः ॥१३॥१४॥ सौम्यासौम्यैरिति ॥ सौम्यासौम्यैरित्यस्य विवर्णं शान्ताशान्तैरिति ॥ १५॥ तत इति ॥ तत एकादशधा विभागात्क्रोधांशे निर्गते सति सात्विकस्वभावं सुतं पूर्वमात्मदेहात्सम्भूतम् अत एव "आत्मा वै पुत्रनामासि" इति श्रुतेरात्मानमेव तं प्रजापालनार्थमकरोदित्यर्थः ॥ १६ ॥ शतरूपामिति ॥ तां स्वदेहार्धभूतां नारीं पत्न्यर्थं जगृहे तपसा निर्धूतकल्मषामिति च देव इति च विभुरिति च सापिण्ड्यदोषपरिहारार्थमुक्तम् ॥ १७ ॥ तस्मादिति ॥ व्यजायत प्रासूयत ॥ १८ ॥ १९ ॥ प्रजापतिरिति ॥ स रुचिस्तां जग्राह तयोर्दक्षिणासहितो यज्ञो नाम पुत्रो जज्ञे ॥ २० ॥ यज्ञस्येति ॥ स्वायंभुवे मनौ मन्वन्तरे यामा इति देवाः समाख्याताः ॥२१॥२२॥ आसां नामानि कथयन्नेव विवाहानाह श्रद्धेत्यादिपञ्चभिः ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥२७॥ धर्मपत्नीनां त्रयोदशानां पुत्रानाह

मेधा श्रुतं क्रिया दण्डं नयं विनयमेव च ॥२९॥ बोधं बुद्धिस्तथा लज्जा विनयं वपुरात्मजम् ॥ व्यवसायं प्रजज्ञे वै क्षेमं शान्तिरसूयत॥३०॥
सुखं सिद्धिर्यशः कीर्त्तिरित्येते धर्मसूनवः ॥ कामाद्रतिः सुतं हर्षं धर्मपौत्रमसूयत ॥ ३१ ॥ हिंसा भार्या त्वधर्मस्य ततो जज्ञे तथानृतम् ॥ कन्या
च निकृतिस्ताभ्यां माया जज्ञे च वेदना ॥३२॥ माया च वेदना चैव मिथुनं त्विदमेतयोः ॥ तयोर्जज्ञेथ वै माया मृत्युं भूतापहारिणम् ॥३३॥
वेदना स्वसुतं चापि दुःखं जज्ञेऽथ रौरवात् ॥ मृत्योर्व्याधिजराशोकतृष्णाक्रोधाश्च जज्ञिरे ॥३४॥ दुःखोत्तराः स्मृता ह्येते सर्वे चाधर्मलक्षणाः॥
नैषां पुत्रोस्ति वै भार्या ते सर्वे ह्यूर्ध्वरेतसः ॥३५॥ रौद्राण्येतानि रूपाणि विष्णोर्मुनिवरात्मज ॥ नित्यप्रलयहेतुत्वं जगतोस्य प्रयान्ति वै॥३६॥
दक्षो मरीचिरत्रिश्च भृग्वाद्याश्च प्रजेश्वराः ॥ जगत्यत्र महाभाग नित्यसर्गस्य हेतवः ॥ ३७ ॥ मनवो मनुपुत्राश्च भूपा वीर्यधराश्च ये ॥
सन्मार्गनिरताः शूरास्ते सर्वे स्थितिकारिणः ॥ ३८ ॥

तथेत्यनेन क्रमप्राप्ता लक्ष्मीर्लक्ष्या । यथा कौर्मे "श्रद्धायास्तु सुतः कामो दर्पो लक्ष्म्याः सुतः स्मृतः" इति ॥२८॥ मेधेति ॥ क्रियायां तामस्यां दण्डः राजस्यां नयः सात्त्विक्यां मनसोनौद्धत्यात्मा विनयः ॥ २९ ॥ बोधमिति ॥ लज्जायास्तु शारीरो विनयः ॥ ३० ॥ ३१ ॥ धर्मप्रसङ्गादधर्मस्य सर्गमाह–हिंसेति ॥ तयोः अधर्महिंसयोरनृतं निकृतिश्च जज्ञे ताभ्यां निकृत्यनृताभ्यां माया भयं वेदना नरकं च जज्ञे ॥३२॥ मायेति ॥ तस्मादेतयोर्मिथुनद्वयम् भयाज्जज्ञ इति॥ एतयोर्मिथुनयोर्मध्ये माया भयात्तु मृत्युं जज्ञे तयोर्जज्ञ इति पाठे माया मृत्युं सुषुवे भयादिति शेषः ॥३३॥ वेदनेति ॥ रौरवात् भयं नरकमेव चेत्युक्तान्नरकात् ॥३४॥दुःखोत्तरा इति ॥ अधर्मलक्षणा अधर्मो वंशमूलभूतो लक्षणं येषां ते तथोक्ताः ते व्याध्याद्या ऊर्ध्वरेतसः चरमकार्यस्य दुःखात्मकत्वात्कार्यान्तरानुत्पादकाः ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥

श्रद्धेत्यादित्रिभिः–श्रद्धेति ॥ चला लक्ष्मीः ॥ २८ ॥ मेधेति ॥ क्रिया त्रिगुणात्मिका अतस्तमोंशेन दण्डं रजोंशेन नयं सत्त्वांशेन विनयमनौद्धत्यरूपम् असूयत ॥ २९ ॥ बोधमिति ॥ लज्जा शारीरं विनयं वपुःसंज्ञं व्यवसायमात्मजं प्रजज्ञे वै ॥ ३० ॥ सुखमिति ॥ कीर्तिर्यशः संज्ञं पुत्रमसूयत रतिः कामस्य भार्या ॥ ३१ ॥ तदेवं धर्मभार्याणां वंश उक्तः अन्यासां तु दक्षकन्यानां पुत्रान् " देवौ धातृविधातारौ भृगोः ख्यातिरसूयत " इत्यादिना उत्तराध्यायत्रये वक्ष्यति । तत्र तावद्धर्मोक्त्या तत्प्रतियोगितया बुद्धिस्थस्याधर्मस्य वंशं प्रसक्तानुप्रसक्तेन च नित्यप्रलयमाह हिंसेत्यादिना–हिंसेति ॥ धर्मोऽधर्मश्च ब्रह्मणः पुत्रौ "धर्मस्तनाद्दक्षिणतो यत्र नारायणः स्वयम् । अधर्मः पृष्ठतो यस्मान्मृत्युर्लोकभयङ्करः " इति शुकोक्तेः । निकृतिर्वञ्चना ताभ्यामनृतं विकृतिभ्यां भयं नरकं भयनरकाख्यं पुत्रद्वयं जज्ञे ॥ ३२ ॥ मायेति ॥ एतयोस्तु भयनरकयोर्यथाक्रमं ' माया च वेदना च ' इति मिथुनं मिथुनत्वसम्पादकं मायाद्वयञ्च ताभ्यामेव जज्ञे इत्यर्थः । तयोः मायावेदनयोर्मध्ये माया मृत्युं जज्ञे जनयामास भयादित्यर्थसिद्धम् ॥ ३३ ॥ वेदनेति ॥ वेदना च दुःखं स्वसुतं स्वयोग्यं सुतं रौरवान्नरकाज्जनयामासेत्यर्थः ॥ ३४ ॥ दुःखोत्तरा इति ॥ दुःखोत्तराः दुःखोदर्काः यतः अधर्मलक्षणाः । पापरूपाः यद्वा प्राचीनाधर्मज्ञापकाः तद्बलत्वादेषां व्याधीनाम् ऊर्ध्वरेतसः कार्यान्तरानुत्पादकाः चरमकार्यदुःखभोगात्मकत्वात् ॥ ३५ ॥ रौद्राणीति ॥ रौद्राणि तामसानि अतो जगतो नित्यप्रलयहेतुत्वं प्रयान्ति ॥ ३६ ॥ नित्यप्रलयहेतुप्रसङ्गात् नित्यस्थितिनित्यसर्गहेतूनाह–दक्ष इत्यादिद्वाभ्याम् ॥ ३७ ॥ ३८ ॥

श्रीमैत्रेय उवाच ॥ येयं नित्या स्थितिर्ब्रह्मन्नित्यसर्गस्तथेरितः ॥ नित्याभावश्च तेषां वै स्वरूपं मम कथ्यताम् ॥ ३९ ॥ श्रीपराशर उवाच ॥ सर्गस्थितिविनाशांश्च भगवान्मधुसूदनः ॥ तैस्तैरूपैरचिंत्यात्मा करोत्यव्याहतो विभुः ॥ ४० ॥ नैमित्तिकः प्राकृतिकस्तथैवात्यन्तिको द्विज ॥ नित्यश्च सर्वभूतानां प्रलयोऽयं चतुर्विधः ॥ ४१ ॥ ब्राह्मो नैमित्तिकस्तत्र च्छेतेयं जगतीपतिः ॥ प्रयाति प्राकृतं चैव ब्रह्माण्डं प्रकृतौ लयम् ॥ ४२ ॥ ज्ञानादात्यन्तिकः प्रोक्तो योगिनः परमात्मनि ॥ नित्यः सदैव भूतानां यो विनाशो दिवानिशम् ॥ ४३ ॥ प्रसूतिः प्रकृतेर्या तु सा सृष्टिः प्राकृता स्मृता ॥ दैनंदिनी तथा प्रोक्ता नान्तरप्रलयादनु ॥ ४४ ॥ भूतान्यनुदिने यत्र जायन्ते मुनिसत्तम ॥ नित्यसर्गो हि स प्रोक्तः पुराणार्थविचक्षणैः ॥ ४५ ॥ एवं सर्वशरीरेषु भगवान्भूतभावनः ॥ संस्थितः कुरुते विष्णुरुत्पत्तिस्थितिसंयमान् ॥ ४६ ॥ सृष्टिस्थितिविनाशानां शक्तयः सर्वदेहिषु ॥ वैष्णव्यः परिवर्त्तन्ते मैत्रेयाहर्निशं समाः ॥ ४७ ॥

जीवानां सृज्यत्वादिना पारतंत्र्यान्नित्यसर्गादौ हेतुत्वमनुपपन्नमित्याशङ्क्य तत्परिहारबुभुत्सया तेषां स्वरूपं पृच्छति—येयमिति ॥ ३९ ॥ विष्णुरेव सत्त्वादिशक्त्याधानद्वारा तैस्तैर्मन्वादिरूपैः स्थित्यादि करोतीति परिहरति सर्गेति ॥ तैस्तैर्मन्वादिरूपैः मन्वादयः सत्त्वस्थाः । दक्षादयो राजसाः व्याध्यादयस्तामसाः ॥ ४० ॥ अथ नित्यप्रलयस्य स्वरूपं दर्शयन् तत्प्रसंगात्प्रलयस्य चातुर्विध्यमाह—नैमित्तिकइत्यादिना । नैमित्तिक इति ॥ आत्यन्तिकनैमित्तिकादिलयेषु सुषुप्त्युत्क्रान्त्योश्च जीवस्य परमात्मनि लयेपि कर्मक्षयाभावात्पुनर्भवोविद्यते । आत्यंतिके तु निश्शेषकर्माविद्याविनाशान्न पुनर्भव इति शेषः ॥ ४१ ॥ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ सृष्टीति ॥ वैष्णव्यः विष्णुसंकल्पानुवर्तिन्यः शक्तयः सत्त्वाद्याः सदा अविच्छेदेन सर्वोऽपि जनो विष्णुशक्तिप्रेरितः काल

ननु मन्वादीनां कादाचित्कानां कथं नित्यस्थित्यादि हेतुत्वमित्याशयेन पृच्छति मैत्रेयः-येति ॥ नित्याभावः नित्यप्रलयः ॥३९॥ सर्ग इति ॥ तैस्तैर्दक्षादिमन्वादिरूपैः भगवानेव सर्गादीन्करोति अतो नोक्तदोषप्रसङ्ग इत्यर्थः ॥ ४० ॥ ४१ ॥ ब्राह्म इति ॥ यद्यदा जगतीपतिः शेते तदा ब्राह्मो नैमित्तिकः प्रलयः । यदा ब्रह्माण्डं प्रकृतौ लयं याति तदा प्राकृतप्रलयः ॥ ४२ ॥ ज्ञानादिति ॥ ज्ञानात्परमात्मनि योगिनो लय आत्यन्तिकः सदैव दीपज्वालावत्सान्तत्येन जातानां दिवानिशं यो विनाशः स नित्यः ॥ ४३ ॥ त्रिविधां सृष्टिमाह—प्रसूतिरिति ॥ प्रकृतेः सकाशाद्या महदादिप्रसूतिः सा प्रकृतिसृष्टिः अन्तरप्रलयादनु अवान्तरप्रलयानन्तरं या चराचरसृष्टिः सा दैनंदिनी ॥ ४४ ॥ भूतानीति ॥ भूतानीत्यस्मदादिसृष्टिप्रवाहः नित्यसर्ग इत्यर्थः ॥ ४५ ॥ आत्यन्तिकप्रलयवदात्यन्तिकसृष्टेरभावात् सृष्टिस्त्रिविधैवेत्युपसंहरति—एवमिति ॥ ४६ ॥ तर्हि विष्णोः सर्वशरीरेषु

गुणत्रयमयं ह्येतद्ब्रह्मन् शक्तित्रयं महत् ॥ योऽतियाति स यात्येव परं नावर्त्तते पुनः ॥ ४८ ॥ इति श्रीविष्णुपुराणे प्रथमेंशे सप्तमोऽध्यायः ॥ ७ ॥ ॥ छ ॥ ॥ श्रीपराशर उवाच ॥ कथितस्तामसः सर्गो ब्रह्मणस्ते महामुने ॥ रुद्रसर्गं प्रवक्ष्यामि तन्मे निगदतः शृणु ॥ १ ॥ कल्पादावात्मनस्तुल्यं सुतं प्रध्यायतस्ततः ॥ प्रादुरासीत्प्रभोरंके कुमारो नीललोहितः ॥ २ ॥ रुरोद सुस्वरं सोथ प्राद्रवद्द्विजसत्तम ॥ किं त्वं रोदिषि तं ब्रह्मा रुदन्तं प्रत्युवाच ह ॥ ३ ॥ नाम देहीति तं सोऽथ प्रत्युवाच प्रजापतिः ॥ रुद्रस्त्वं देवनाम्नासि मारोदीर्धैर्यमावह ॥ एवमुक्तः पुनः सोऽथ सप्तकृत्वो रुरोद वै ॥ ४ ॥ ततोन्यानि ददौ तस्मै सप्त नामानि वै प्रभुः ॥ स्थानानि चैषामष्टानां पत्नीः पुत्रांश्च स प्रभुः ॥ ५ ॥ भवं शर्वमथेशानं तथा पशुपतिं द्विज ॥ भीममुग्रं महादेवमुवाच स पितामहः ॥ ६ ॥ चक्रे नामान्यथैतानि स्थानान्येषां चकार सः ॥ सूर्यो जलं मही वायुर्वह्निराकाशमेव च ॥ दीक्षितो ब्राह्मणः सोम इत्येतास्तनवः क्रमात् ॥ ७ ॥

भेदाद्विषयभेदाच्च सर्गादि करोति ॥४७॥४८ ॥ इति श्रीविष्णुपुराणव्याख्याने विष्णुचित्तीये प्रथमेंशे सप्तमोऽध्यायः ॥ ७ ॥ ॥ नित्यप्रलयहेतोरधर्मादेस्तामसस्य प्रसङ्गाद्भृगुसर्गमतिक्रम्य पूर्वोक्तकौमारसर्गान्तर्गतं तामसं रुद्रसर्गं प्रस्तौति कथित इति ॥ १ ॥ २ ॥ ३ ॥ नामेति ॥ रोदनद्रवणाभ्यां रुद्रनामनिरुक्तिः । "रोदनाद्द्रवणाच्चैव रुद्रनाम्नाभिविश्रुतः" इति वायूक्तेः ॥ ४ ॥ तत इति ॥ नामानि रुद्रभवादीनि स्थानानि सूर्यादीनि पत्नीः सुवर्चलादिकाः ॥ ५ ॥ ६ ॥ चक्रे नामानीति ॥

सर्वदा स्थितत्वात्कालभेदेनोत्पत्त्यादयो न स्युस्तदाह–सृष्टीति ॥ तथाहि विष्णुशक्तीनां सत्त्वादीनां कालभेदेन तत्र सञ्चारान्नायं दोष इति भावः ॥ ४७ ॥ यस्मात्त्रिगुणात्मिकविष्णुशक्तित्रयपरिवृत्त्या सृष्ट्यादिप्रवाहो भवति अतो गुणातीतस्य न पुनस्तत्प्रवाह इत्याह–गुणत्रय इति ॥ योतियाति अतिक्रामति स परम्पदं यात्येव स पुनर्नावर्त्तते "न च पुनरावर्त्तते" इति श्रुतेः ॥ ४८ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुपुराणव्याख्यायां प्रथमेंशे सप्तमोऽध्यायः ॥ ७ ॥ ॥ छ. ॥ ॥ दक्षजामातुर्धर्मस्य वंशोत्पत्त्या तत्प्रतियोगितया बुद्धिस्थस्याधर्मस्य नित्यप्रलयहेतुं तामसं वंशमुक्त्वा इदानीं तदनुवादपूर्वकं प्रस्तुतं दक्षकन्यान्वयमेवानुवर्त्तयितुं तत्परिणेतुर्नीललोहितरुद्रस्य सर्गमाह–कथित इति । यद्यपि ख्यातिस्सत्यथ सम्भूतिरित्युद्देशक्रमेण ख्यातेरन्वयं प्रथमं वक्तुं युक्तं तथाऽपि तत्कथाया अतिविस्तरत्वादनन्तरं वक्ष्यति । यद्वा पूर्वोक्तात्तामसाद्रुद्रसर्गादन्योऽयं कुमारसर्गान्तर्भूतः सात्त्विको रुद्रसर्गस्तमिमं शृण्विति सम्बन्धः ॥ १ ॥ २ ॥ ३ ॥ नामेति ॥ रुदन्प्रादुरासीदिति रुद्रनामनिरुक्तिः "एवमुक्तास्तु रुरुदुर्दुद्रुवुश्च समन्ततः । रोदनाद्द्रावणाच्चैव रुद्रनामेति विश्रुताः" इति वायूक्तेः । हे देव नाम्ना त्वं रुद्रोसि रोदनाद्द्रावणाच्चेत्यर्थः ॥ ४ ॥ परमेश्वरस्यापि सतो रोदनादि शिशुत्वनाट्यं लोकसंग्रहाय पितृपारतन्त्र्यद्योतनार्थम् अत एवाश्चर्याद्रोदनादेर्नामहेतोः रुद्रादिनामोपाधिभेदोऽष्टानामित्युच्यते तत इति ॥ ५ ॥ अन्यानि सप्त नामानि ददावित्युक्तं तान्येवाह–भवमिति ॥ तं भवादिनामानमुवाच तस्य भवादिनामानि कृतवानित्यर्थः ॥ ६ ॥ तदेवाह–चक्रे नामानीति ॥ रुद्रभवादीनां सूर्यादीन्यष्ट स्थानानि तान्येवाधिव्यक्तिस्थानत्वात् तनवः मूर्त्तय इत्युच्यन्ते दीक्षितो ब्राह्मण इति । स्वधर्मानुष्ठातरि क्षेत्रज्ञे परमात्माभिव्यक्तेस्तन्मूर्त्तित्वम् "आत्मा तस्याष्टमी मूर्त्तिः शिवस्य परमात्मनः । व्यापकेतरमूर्त्तीनां विश्वं तस्माच्छिवात्मकम् ॥ स्थानेष्वेतेषु ये रुद्रं ध्यायन्ति प्रणमन्ति च । तेषामष्टतनुर्देवो ददाति परमं पदम्" इति वायूक्तेः । सूर्यो जलं मही वायुर्वह्निरिति क्रमो द्रष्टव्यः । तथा सति सुवर्चलादीनां पत्नीनां

सुवर्चला तथैवोषा विकेशी चापरा शिवा ॥ स्वाहा दिशस्तथा दीक्षा रोहिणी च यथाक्रमम् ॥८॥ सूर्यादीनां द्विजश्रेष्ठ रुद्राद्यैर्नामभिः सह॥ पत्न्यः स्मृता महाभाग तदपत्यानि मे शृणु ॥९॥ एषां सूतिप्रसूतिभ्यामिदमापूरितं जगत् ॥१०॥ शनैश्चरस्तथा शुक्रो लोहिताङ्गो मनोजवः॥ स्कन्दः सर्गोऽथ सन्तानो बुधश्चानुक्रमात्सुताः॥११॥ एवंप्रकारो रुद्रोऽसौ सतीं भार्यामनिन्दिताम्॥ उपयेमे दुहितरं दक्षस्यैव प्रजापतेः॥१२॥ दक्षकोपाच्च तत्याज सा सती स्वकलेवरम् ॥ हिमवद्दुहिता साऽभून्मेनायां द्विजसत्तम ॥ १३ ॥ उपयेमे पुनश्चोमामनन्यां भगवान्हरः ॥१४॥ देवौ धातृविधातारौ भृगोः ख्यातिरसूयत ॥ श्रियं च देवदेवस्य पत्नी नारायणस्य या ॥ १५ ॥ श्रीमैत्रेय उवाच ॥ क्षीराब्धौ श्रीः समुत्पन्ना श्रूयतेऽमृतमन्थने ॥ भृगोः ख्यात्यां समुत्पन्नेत्येतदाह कथं भवान् ॥ १६ ॥ श्रीपराशर उवाच ॥ नित्यैवैषा जगन्माता विष्णोः श्रीरनपायिनी ॥ यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम ॥ १७ ॥ अर्थो विष्णुरियं वाणी नीतिरेषा नयो हरिः ॥ बोधो विष्णुरियं बुद्धिर्धर्मोऽसौ सत्क्रिया त्वियम् ॥ १८ ॥

अत्र वह्निर्वायुरिति पाठक्रमो न विवक्षितः ॥ अग्नेर्देवतापत्नीपुत्राणां पशुपतिस्वाहा स्कन्दानां पंचमस्थाने वक्ष्यमाणत्वात् ॥७॥८॥ सूर्यादीनामिति ॥ सूर्यादीनां रुद्रमूर्तीनाम् ॥९॥ एषामिति ॥ सूतिः पुत्रादिः प्रसूतिः पौत्रादिः ॥ १० ॥ ११॥ ॥ एवमिति ॥ सतीं सतीनाम्नीम् ॥ १२ ॥ १३॥१४॥१५॥ मैत्रेयश्चोदयति क्षीराब्धाविति॥१६॥ परिहरति नित्येति॥ जगत्पितुर्विष्णोरनपायिन्येषा जगन्मातृत्वेन तद्वन्नित्या तस्याश्च विष्णोरिवाविर्भावतिरोभावौ स्तः सा पूर्वं भृगोः सुतात्वेनाविर्भूता पश्चादिन्द्रस्य दुर्वाससश्शापात्तिरोभूत्वाऽमृतमथने प्रादुर्भूता अतो न विरोधः । यथेति । सर्वगतो विष्णुर्यथा यत्स्वभाव इयमपि तथा तत्स्वभावेति विष्णोः सर्वगतत्वसत्यज्ञानादिस्वरूपकल्याणगुणादीनामतिदेशः । अथवा भगवान्विभुत्वेन सर्वगतः अस्यास्तच्छक्तिवशादणुत्वेपि तत्रतत्र संधानात्सर्वगतत्वमुक्तमृइयं च सर्वगता ॥ १७ ॥ तयोः सर्वात्मकत्वमनपायित्वं चोपपादयति अर्थ इति ॥ अर्थः शब्दवाच्यः नीतिर्न्यायशास्त्रम् । नयो न्यायः । बुद्धिरध्यवसायात्मकमन्तःकरणं तत्कार्यो निश्चयो

यथाक्रमं सम्बन्धे वायोः शिवापतित्वं वह्नेः स्वाहेति सिद्ध्यति वक्ष्यमाणपुत्रक्रमेऽपि वह्नेः स्कन्दः पुत्र इत्युपपत्स्यते ततः वह्निर्वायुरिति पाठे क्रमो न विवक्षितः ॥ ७ ॥ ८ ॥ ९ ॥ एषामिति ॥ सूतीप्रसूतीभ्यां पुत्रैः पौत्रादिभिश्च ॥ १० ॥ उक्तस्य रुद्रसर्गस्य प्रस्तुतोपयोगमाह–एवं प्रकार इति ॥ सतीं नाम दक्षस्य कन्याम् ॥ ११ ॥ १२ ॥ दक्षकोपादिति ॥ दक्षस्य कोपात् । पित्रा दक्षेण स्वयज्ञे रुद्रावज्ञानोद्भूतत्वादतस्तत्सन्ततिर्नाभूदिति भावः ॥ १३ ॥ उपयेम इति ॥ अनन्यां भवैकनिष्ठाम् ॥ १४ ॥ देवाविति ॥ श्रीमन्नारायणस्य या पत्नी तां श्रियं चासूयत ॥ १५ ॥ क्षीरोदादिति ॥ प्रश्नः स्पष्टार्थः ॥ १६ ॥ नित्यैवेति ॥ उत्तरस्यायं भावः तस्या उत्पत्तिमत्वे भवेदयं विरोधः नित्याया एव सर्वगतायाः सर्वात्मिकायाश्च विष्णुशक्तेस्तस्याः कार्यवशेन विष्णोरिवाविर्भावतिरोभावमात्रम् अतः पूर्वं भृगुसुतारूपेणाविर्भूताया दुर्वाससः शापेन तिरोभूतायाः पुनः क्षीराब्धावाविर्भावो न विरुद्ध्यत इति ॥ तदेवाह–नित्यैवेत्यादिना यावदुत्तराध्यायसमाप्ति ॥ १७ ॥ लक्ष्मीनारायणयोः सर्वात्मकत्वं तथा तयोपासनार्थं प्रपञ्चयति अर्थो विष्णुरित्यादिना

स्रष्टा विष्णुरियं सृष्टिः श्रीर्भूमिर्भूधरो हरिः ॥ सन्तोषो भगवाल्लँक्ष्मीस्तुष्टिर्मैत्रेय शाश्वती ॥ १९ ॥ इच्छा श्रीर्भगवान्कामो यज्ञोऽसौ दक्षिणा त्वियम् ॥ आज्याहुतिरसौ देवी पुरोडाशो जनार्दनः ॥ २० ॥ पत्नीशाला मुने लक्ष्मीः प्राग्वंशो मधुसूदनः ॥ चितिर्लक्ष्मीर्हरिर्यूप इध्मा श्रीर्भगवान्कुशः ॥ २१ ॥ सामस्वरूपी भगवानुद्गीतिः कमलालया ॥ स्वाहा लक्ष्मीर्जगन्नाथो वासुदेवो हुताशनः ॥ २२ ॥ शंकरो भगवाञ्छौरिर्गौरीलक्ष्मीर्द्विजोत्तम ॥ मैत्रेय केशवः सूर्यस्तत्प्रभा कमलालया ॥ २३ ॥ विष्णुः पितृगणः पद्मा स्वधा शाश्वतपुष्टिदा ॥ द्यौः श्रीः सर्वात्मको विष्णुरवकाशोतिविस्तरः ॥ २४ ॥ शशांकः श्रीधरः कान्तिः श्रीस्तथैवानपायिनी ॥ धृतिर्लक्ष्मीर्जगच्चेष्टा वायुः सर्वत्रगो हरिः ॥ २५ ॥ जलधिर्द्विजगोविंदस्तद्वेला श्रीर्महामुने ॥ लक्ष्मीस्वरूपमिंद्राणी देवेन्द्रो मधुसूदनः ॥ २६ ॥ यमश्चक्रधरः साक्षाद्धूमोर्णा कमलालया ॥ ऋद्धिः श्रीः श्रीधरो देवः स्वयमेव धनेश्वरः ॥२७॥ गौरी लक्ष्मीर्महाभागा केशवो वरुणः स्वयम् ॥ श्रीर्देवसेना विप्रेन्द्र देवसेनापतिर्हरिः ॥ २८ ॥

बोधः सत्क्रिया यागादिः । धर्मस्तदुत्पाद्यमदृष्टम् ॥ १८॥ स्रष्टेति ॥ अलंबुद्धिस्तुष्टिः । तदभिव्यक्तं सुखं सन्तोषः । शाश्वतीति लक्ष्म्या विशेषणम् ॥१९॥ इच्छेति ॥ इच्छा अपेक्षा तज्जन्योऽभिनिवेशः कामः॥२०॥पत्नीशालेति ॥ इध्मा समित् । आर्षत्वाद्दाटाप् ॥२१॥ सामस्वरूपीति ॥ सामगानो मंत्रः साम तद्गानविशेष उद्गीतिः ॥ २२ ॥ २३ ॥ २४ ॥ शशाङ्क इति ॥ वायुर्जगत्प्राणः धृतिः धारणं जगच्चेष्टा च । प्रवहादिप्राणादिरूपवायुकृत्यम् ॥ २५ ॥ २६ ॥ यम इति यमस्य पत्नीधूमोर्णा । ऋद्धिः कुबेरस्य ॥ २७ ॥ गौरीति ॥ गौरी वरुणस्य पत्नी । देवसेना स्कन्दभार्या ॥ २८ ॥

यावदध्यायपरिसमाप्ति । अर्थ इति ॥ वाणी अर्थाभिधायिका वाक् इयं श्रीः नीतिरेषा श्रीर्नयः सामाद्युपायः बोधो अर्थप्रकाशः बुद्धिस्तदभिव्यञ्जिकाभिधावृत्तिः धर्मोऽपूर्वम् । सत्क्रिया यागादिः ॥ १८ ॥ स्रष्टेति ॥ भूधरो गिरिः भूपतिर्वा यदृच्छालाभैरलं प्रत्ययः सन्तोषः तत्कृता निर्वृतिस्तुष्टिः ॥ १९ ॥ इच्छेति ॥ इच्छा धनादिस्पृहा कामस्तद्भोगाभिलाषः ॥ २० ॥ पत्नीशालेति ॥ चितिरिष्टकाचयनम् ॥ २१ ॥ सामस्वरूपीति ॥ सामस्वरूपी रथन्तरादिसामस्वरूपः उद्गीतिस्तद्गानव्यापारः हुताशनो वासुदेवः स्वाहा तु लक्ष्मीः ॥ २२ ॥ २३ ॥ विष्णुरिति ॥ द्यौः श्रीः अवकाशो विष्णुः ॥ २४ ॥ शशाङ्क इति ॥ धृतिर्मेधादिधारणं जगच्चेष्टा च लक्ष्मीः तत्कर्त्ता वायुर्हरिः ॥ २५ ॥ २६ ॥ यम इति ॥ धूमोर्णा यमस्य भार्या धनेश्वरः कुबेरः ऋद्धिस्तस्य पत्नी ॥ २७ ॥ गौरीति ॥ वरुणस्य भार्यापि गौरीसंज्ञा ॥ २८ ॥

अवष्टंभो गदापाणिः शक्तिर्लक्ष्मीर्द्विजोत्तम ॥ काष्ठा लक्ष्मीर्निमेषोऽसौ मुहूर्त्तोऽसौ कला त्वियम् ॥ २९ ॥ ज्योत्स्ना लक्ष्मीः प्रदीपोऽसौ सर्वः सर्वेश्वरो हरिः ॥ लताभूता जगन्माता श्रीर्विष्णुर्द्रुमसंज्ञितः ॥३०॥ विभावरी श्रीर्दिवसो देवश्चक्रगदाधरः ॥ वरप्रदो वरो विष्णुर्वधूः पद्मवनालया ॥ ३१ ॥ नदस्वरूपी भगवाञ्छ्रीर्नदीरूपसंस्थिता ॥ ध्वजश्च पुण्डरीकाक्षः पताका कमलालया ॥ ३२ ॥ तृष्णा लक्ष्मीर्जगन्नाथो लोभो नारायणः परः ॥ रती रागश्च मैत्रेय लक्ष्मीर्गोविंद एव च ॥ ३३ ॥ किं चातिबहुनोक्तेन संक्षेपेणेदमुच्यते ॥३४॥ देवतिर्यङ्मनुष्यादौ पुन्नामा भगवान्हरिः ॥ स्त्रीनाम्नी श्रीश्च विज्ञेया नानयोर्विद्यते परम् ॥ ३५ ॥ इति श्रीविष्णुपुराणे प्रथमेंशे अष्टमोऽध्यायः ॥ ८ ॥ ॥ छ ॥ ॥ श्रीपराशर उवाच ॥ इदं च शृणु मैत्रेय यत्पृष्टोहमिह त्वया ॥ श्रीसम्बन्धं मयाप्येतच्छ्रुतमासीन्मरीचितः ॥ १ ॥ दुर्वासाः शंकरस्यांशश्चचार पृथिवीमिमाम् ॥ स ददर्श स्रजं दिव्यामृषिर्विद्याधरीकरे ॥ २ ॥ संतानकानामखिलं यस्या गंधेन वासितम् ॥ अतिसेव्यमभूद्ब्रह्मन् तद्वनं वनचारिणाम् ॥ ३ ॥

अवष्टम्भ इति ॥ अवष्टंभ आधारो बलं वा ॥ २९ ॥ ज्योत्स्नेति ॥ ज्योत्स्ना प्रभा ॥ ३० ॥ ३१ ॥ ३२ ॥ तृष्णेति ॥ देयस्यादित्सा निषिद्धलिप्सा च लोभः । लब्धेऽपर्याप्तधीस्तृष्णा । रतिः प्रियसंगमजा तत्कालप्रीतिः तत्प्रकर्षो रागः ॥ ३३ ॥ ३४ ॥ देवेति ॥ अनयोराभ्यां परमन्यत् । सर्वस्योभयात्मकत्वेपि तत्रतत्राभिमुख्यातिशयविशेषार्थं वाण्यादीनां तदात्मकत्वमुक्तम् ॥ ३५ ॥ इति श्रीविष्णुपुराणव्याख्याने विष्णुचित्तीये प्रथमेंशेऽष्टमोध्यायः ॥ ८ ॥ इदमिति ॥ मरीचितः काश्यपात् । मरीचिः काश्यपपिता ॥१॥ दुर्वासा इति ॥ शंकरस्यांश इति वक्ष्यमाणा क्षान्त्यादेर्हेतुनिर्देशः ॥ २ ॥ ३ ॥

अवष्टम्भ इति ॥ अवष्टम्भः पुरुषकारः शक्तिस्तत्सामर्थ्यम् ॥२९॥ ज्योत्स्ना इति ॥ ज्योत्स्ना प्रभा प्रदीपो हरिः हरेरेव विशेषणं सर्वः सर्वेश्वरश्चेति द्रुमसंस्थितिरिति लताया आश्रयः ॥३०॥ विभावरीति ॥ वधूर्जाया वरः पतिः ॥ ३१ ॥ ३२ ॥ तृष्णेति ॥ पुनः पुनरुपादित्सा तृष्णा । तत्प्राप्तावपर्याप्तधीर्लोभः । रागः कामः । तत्पत्नी रतिः ॥ ३३ ॥ ३४॥ देवेति ॥ अनयोराभ्यां परं न विद्यते ॥ ३५ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यविष्णुपुराणव्याख्यायां प्रथमांशेऽष्टमोध्यायः ॥ ८ ॥ ॥ तदेवं मैत्रेयकृताक्षेपपरिहारार्थं सर्वात्मकत्वप्रपञ्चनेन विष्णोरिव लक्ष्म्या अपि नित्यत्वमुक्तम् । इदानीमाविर्भावतिरोभावाभ्यां तदुक्तं विरोधं परिहरन्नाह–इदं चेत्यादिना पूर्वं भृगुसुता सतीत्यन्तेन–इदञ्चेति ॥ श्रीसम्बन्धं भृगुसुता अपि श्रीर्यदा क्षीराब्धौ जायत इत्युच्यते इदं च शृणु मयाऽप्येवमेव सन्दिहानेन मरीचेः सकाशादेतच्छ्रुतमासीत् ॥ १ ॥ तत्र प्रथमं भृगुसुतायाः सत्यास्तिरोधाने कारणं वक्तुमाह–दुर्वासा इति शङ्करस्यांश इत्यनेन तस्य शक्रशापे सामर्थ्यम् अपराधासहिष्णुत्वं चोक्तम् ॥ २ ॥ सन्तानकानामिति ॥ सन्तानो देवतरुः तदीयानां पुष्पाणां स्रजं मालां

उन्मत्तव्रतधृग्विप्रस्तां दृष्ट्वा शोभनां स्रजम् ॥ तां ययाचे वरारोहां विद्याधरवधूं ततः ॥ ४ ॥ याचिता तेन तन्वंगी मालां विद्याधरांगना ॥ ददौ तस्मै विशालाक्षी सादरं प्रणिपत्य तम् ॥ ५ ॥ तामादायात्मनो मूर्द्ध्नि स्रजमुन्मत्तरूपधृक् ॥ कृत्वा स विप्रो मैत्रेय परिबभ्राम मेदिनीम् ॥ ॥ ६ ॥ स ददर्श तमायान्तमुन्मत्तैरावते स्थितम् ॥ त्रैलोक्याधिपतिं देवं सह देवैः शचीपतिम् ॥ ७ ॥ तामात्मनः स शिरसः स्रजमुन्मत्त षट्पदाम् ॥ आदायामरराजाय चिक्षेपोन्मत्तवन्मुनिः ॥ ८ ॥ गृहीत्वाऽमरराजेन स्रगैरावतमूर्द्धनि ॥ न्यस्ता रराज कैलासशिखरे जाह्नवी यथा ॥ ९ ॥ मदान्धकारिताक्षोऽसौ गन्धाकृष्टेन वारणः ॥ करेणाघ्राय चिक्षेप तां स्रजं धरणीतले ॥ १० ॥ ततश्चुक्रोध भगवान्दुर्वासा मुनि सत्तमः ॥ मैत्रेय देवराजानं क्रुद्धश्चैतदुवाच ह ॥ ११ ॥ दुर्वासा उवाच ॥ ऐश्वर्यमददुष्टात्मन्नतिस्तब्धोसि वासव ॥ श्रियो धाम स्रजं यस्त्वं मद्दत्तां नाभिनन्दसि ॥ १२ ॥ प्रसाद इति नोक्तं ते प्रणिपातपुरःसरम् ॥ हर्षोत्फुल्लकपोलेन न चापि शिरसा धृता ॥ १३ ॥ मया दत्तामि मां मालां यस्मान्न बहु मन्यसे ॥ त्रैलोक्यश्रीरतो मूढ विनाशमुपयास्यति ॥ १४ ॥ मां मन्यसे त्वं सदृशं नूनं शक्रेतरद्विजैः ॥ अतोवमा नमस्मासु मानिना भवता कृतम् ॥ १५ ॥ मद्दत्ता भवता यस्मात्क्षिप्ता माला महीतले ॥ तस्मात्प्रणष्टलक्ष्मीकं त्रैलोक्यं ते भविष्यति ॥ १६ ॥

उन्मत्तेति ॥ उन्मत्तव्रतधृक् योगिनो हि जडोन्मत्तपिशाचवद्वर्त्तन्ते । अथ वा सनत्कुमारशापादुन्मत्तवृत्तधृक् ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ मदान्धेति ॥ गन्धाकृष्टेनेति पाठान्तरम् । करिणां करस्य गंधाकृष्टत्वं तस्यैव नासात्वात् ॥ १० ॥ ११ ॥ ऐश्वर्येति ॥ स्तब्धः अविनयोद्धतः । अत्र हेतुः श्रियेति श्रियो धामेति वा पाठः ॥१२॥ प्रसाद इति ॥ ते त्वया ॥१३॥१४॥१५॥ मद्दत्तेति ॥ प्रणष्टलक्ष्मीकं तिरोहितलक्ष्मीकम् अत्र प्रनष्टशब्दस्य तिरोहितत्वेनार्थः ॥१६॥

यस्या गन्धेन वासितं तद्वनं वनचारिणामतिसेव्यमभूत् ॥३॥ उन्मत्तव्रतधृगिति उन्मत्तव्रतधृग् योगिनो हि जडोन्मत्तपिशाचवद्वर्त्तन्ते तां स्रजं तां विद्याधरवधूं याचितवानिति द्विकर्मको याचिः ॥४॥५॥ तामिति ॥ तां स्रजं मूर्ध्नि कृत्वा मेदिनीं परिबभ्रामेत्यन्वयः ॥ ६ ॥ ७ ॥ ८ ॥ गृहीत्वेति ॥ ऐरावतमूर्ध्नि विनन्यता सा कैलासशिखरे स्थिता जाह्नवीव रराज ॥ ९ ॥ मदान्धकारिताक्ष इति ॥ मदेनान्धकारिते सञ्जातान्धकारे अक्षिणी यस्याऽसौ करेणाघ्रायेति करीणां करस्यैव घ्राणत्वात् ॥ १० ॥ ११ ॥ ऐश्वर्येति ॥ अतिस्तब्धोऽतिगर्वितोऽसि श्रियो धाम लक्ष्म्या वासभूतम् ॥ १२ ॥ प्रसाद इति ॥ ते त्वया हर्षेणोत्फुल्लौ विकसितौ कपोलौ यस्य तथाभूतेन सता त्वया ॥ १३ ॥ मयेति ॥ त्रैलोक्यश्रीः त्रैलोक्यैश्वर्यं विनाशमुपयास्यति शीघ्रमेव नङ्क्ष्यति ॥ १४ ॥ १५ ॥ मद्दत्तेति ॥ मद्दत्तमालाया बहिष्करणदोषात् गजनिक्षिप्ताया उपेक्षितत्वात् भव

यस्य संजातकोपस्य भयमेति चराचरम् ॥ तं त्वं मामतिगर्वेण देवराजावमन्यसे ॥ १७ ॥ श्रीपराशर उवाच ॥ महेन्द्रो वारणस्कंधादवतीर्य त्वरान्वितः ॥ प्रसादयामास मुनिं दुर्वाससमकल्मषम् ॥ १८ ॥ प्रसाद्यमानः स तदा प्रणिपातपुरःसरम् ॥ इत्युवाच सहस्राक्षं दुर्वासा मुनिसत्तमः ॥ १९ ॥ दुर्वासा उवाच ॥ नाहं कृपालुहृदयो न च मां भजते क्षमा ॥ अन्ये ते मुनयः शक्र दुर्वाससमवेहि माम् ॥ २० ॥ गौतमादिभिरन्यैस्त्वं गर्वमारोपितो मुधा ॥ अक्षान्तिसारसर्वस्वं दुर्वाससमवेहि माम् ॥ २१ ॥ वसिष्ठाद्यैर्दयासारैस्तोत्रं कुर्वद्भिरुच्चकैः ॥ गर्वं गतोसि येनैवं मामप्यद्यावमन्यसे ॥ २२ ॥ ज्वलज्जटाकलापस्य भृकुटीकुटिलं मुखम् ॥ निरीक्ष्य कस्त्रिभुवने मम यो न गतो भयम् ॥ २३ ॥ नाहं क्षमिष्ये बहुना किमुक्तेन शतक्रतो ॥ विडंबनामिमां भूयः करोष्यनुनयात्मिकाम् ॥ २४ ॥ श्रीपराशर उवाच ॥ इत्युक्त्वा प्रययौ विप्रो देवराजोपि तं पुनः ॥ आरुह्यैरावतं ब्रह्मन् प्रययावमरावतीम् ॥ २५ ॥ ततः प्रभृति निःश्रीकं सशक्रं भुवनत्रयम् ॥ मैत्रेयासीदपध्वस्तं संक्षीणौषधिवीरुधम् ॥ २६ ॥ न यज्ञाः समवर्त्तन्ते[१] न तपस्यन्ति तापसाः ॥ न च दानादिधर्मेषु मनश्चक्रे तदा जनः ॥ २७ ॥ निःसत्त्वाः सकला लोका लोभाद्युपहतेन्द्रियाः ॥ स्वल्पेपि हि बभूवुस्ते साभिलाषा द्विजोत्तम ॥ २८ ॥

॥ १७ ॥ महेन्द्र इति ॥ अकल्मषं सापराधे शापदोषाभावात् ॥ १८ ॥ १९ ॥ नाहमिति ॥ अन्ये ते मुनयः ये क्षमावन्तः ॥ २० ॥ गौतमादिरिति ॥ गौतमो हि अहल्याधर्षकं त्वां सर्वांगभगो भवेति शप्त्वा पुनस्त्वत्प्रसादितः सर्वांगनेत्रं चक्रे नैवं कारुणिकोहमिति भावः ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ नाहमिति ॥ विडम्बना अवमानः ॥ २४ ॥ २५ ॥ तत इति ॥ निःश्रीकत्वं भोग्यवस्त्वभाव एव । एवञ्च औषध्यादि भोग्याभावं तत्साधनयज्ञसत्वाद्यभावं चाह—संक्षीणेत्यादिना ॥ ॥ २६ ॥ २७ ॥ २८ ॥

तेन क्षितेत्युक्तं तस्मान्मालाया धरणीतले प्रक्षेपदोषात्त्वदीयं त्रैलोक्यं प्रणष्टलक्ष्मीकं दारिद्र्याभिभूतं भविष्यतीति द्वितीयः शापः ॥ १६ ॥ १७ ॥ महेन्द्र इति ॥ आकल्मषं सापराधशापे दोषाभावात् ॥ १८ ॥ ॥ १९ ॥ नाहमिति ॥ अन्ये ते मुनयः ये दयालवःअहं न तथा ॥२०॥ तदेवाह गौतमादिभिरिति ॥ गौतमादिभिः स्वभार्याधर्षगायपराधिनि त्वयि दाक्षिण्येनानुग्रहपरैः मुधा वृथैव गर्वं प्रापितोऽसि अक्षान्तिरेव सारस्तोयवलं तदेव सर्वस्वं यस्य तं माम् ॥ २१ ॥ वसिष्ठाद्यैरिति ॥ उच्चकैरुन्नतशिरोभिः उच्चासनोपविष्टस्य तव स्तोत्रं कुर्वद्भिरित्यर्थः ॥२२॥ मामपीत्युक्तं स्पष्टयति—ज्वलज्जटेति ॥ एवं मुखं निरीक्ष्य यो भयं न गतः स कः न कोपीत्यर्थः ॥ २३ ॥ नाहमिति ॥ विडम्बनामपहासम् ॥ २४ ॥ २५ ॥ ततः प्रभृतीति ॥ ध्वस्तं नष्टप्रायम् ॥२६॥ २७ ॥ निःसत्त्वा इति ॥ निःसत्त्वाः धैर्यशून्याः अतो लोभादिभिरुपहतेन्द्रियाः अतः स्वल्पेप्यर्थे

(१) समवर्तन्त—इति सम्प्रवर्तन्ते—इति वा पाठेन भाव्यम् ।

यतः सत्त्वं ततो लक्ष्मीः सत्त्वं भूत्यनुसारि च ॥ निःश्रीकाणां कुतः सत्त्वं विना तेन गुणाः कुतः ॥ २९ ॥ बलशौर्याद्यभावश्च पुरुषाणां गुणैर्विना ॥ लंघनीयः समस्तस्य बलशौर्यविवर्जितः ॥ ३० ॥ भवत्यपध्वस्तमतिर्लंघितः प्रथितः पुमान् ॥ एवमत्यन्तनिःश्रीके त्रैलोक्ये सत्त्ववर्जिते ॥ ३१ ॥ देवान्प्रति बलोद्योगं चक्रुर्दैतेयदानवाः ॥ ३२ ॥ लोभाभिभूता निःश्रीका दैत्याः सत्त्वविवर्जिताः ॥ श्रिया विहीनैर्निःसत्त्वैर्देवैश्चक्रुस्ततो रणम् ॥ ३३ ॥ विजितास्त्रिदशा दैत्यैरिन्द्राद्याः शरणं ययुः ॥ पितामहं महाभागं हुताशनपुरोगमाः ॥ ३४ ॥ यथावत्कथितो देवैर्ब्रह्मा प्राह ततः सुरान् ॥ परावरेशं शरणं व्रजध्वमसुरार्दनम् ॥ ३५ ॥ उत्पत्तिस्थितिनाशानामहेतुं हेतुमीश्वरम् ॥ प्रजापतिपतिं विष्णुमनन्तमपराजितम् ॥ ३६ ॥ प्रधानपुंसोरजयोः कारणं कार्यभूतयोः ॥ प्रणतार्त्तिहरं विष्णुं स वः श्रेयो विधास्यति ॥३७॥ श्रीपराशर उवाच ॥ एवमुक्त्वा सुरान्सर्वान् ब्रह्मा लोकपितामहः ॥ क्षीरोदस्योत्तरं तीरं तैरेव सहितो ययौ ॥ ३८ ॥ स गत्वा त्रिदशैः सर्वैः समवेतः पितामहः ॥ तुष्टाव वाग्भिरिष्टाभिः परावरपतिं हरिम् ॥ ३९ ॥ ब्रह्मोवाच ॥ नमामि सर्वं सर्वेशमनन्तमजमव्ययम् ॥ लोकधाम धराधारमप्रकाशमभेदिनम् ॥ ४० ॥ नारायणमणीयांसमशेषाणामणीयसाम् ॥ समस्तानां गरिष्ठं च भूरादीनां गरीयसाम् ॥ ४१ ॥

यत इति ॥ सत्त्वं धैर्यम् । सत्त्वगुणो वा । भूतिर्लक्ष्मीः । सत्त्वभूत्योरितरहेतुत्वम् । गुणाः सत्यशौचशीलाद्याः ॥ २९ ॥ ३० ॥ भवतीति ॥ प्रथितः प्रसिद्धः पुमान् लंघितोऽवज्ञातः पुमानपध्वस्तमतिर्भवति । प्रथितः पुमान्—लंघितश्चेदपध्वस्तमतिर्भवेदिति ॥ ३१ ॥ ३२ ॥ ३३ ॥ विजिता इति ॥ निःश्रीकत्वादिदोषसाम्येपि गुणित्वप्रकृतिप्रच्युता देवा निर्गुणत्वप्रकृतिस्थितैर्दैत्यैर्जिताः ॥ ३४ ॥ ३५ ॥ उत्पत्तीति ॥ अहेतुं स्वयं हेतुरहितम् । "न चास्य कश्चिज्जनिता" इत्यादिश्रुतेः । हेतुं सर्वस्योत्पत्त्यादेः ॥ ३६ ॥ प्रधानेति ॥ अजयोरपि कार्यत्वं स्वरूपस्वभावान्यथाभावेन च ॥ ३७ ॥ एवमिति ॥ उत्तरं तीरं उत्तरं कूलं शाकद्वीपाश्रितम् ॥ ३८॥३९ ॥ नमामीति ॥ अव्ययम् अपक्षयादिविकाररहितम् । अभेदिनं भेदानर्हम् ॥ ४० ॥ नारायणमिति ॥ अणीयसामात्मनाम् ॥ ४१ ॥

साभिलाषाः ॥ २८ ॥ एतदेव स्पष्टयति यत इति ॥ यत्र सत्त्वं धैर्यं तत्र लक्ष्मीः सत्त्वं च भूत्यनुसारि लक्ष्म्या एवानुवर्त्ति एवं धैर्यलक्ष्म्योः परस्पराऽविनाभूतत्वाच्छ्रीनिवृत्त्या सत्त्वनिवृत्तिमाह—निःश्रीकाणामिति ॥ तेन सत्त्वेन विना गुणाः औदार्यसन्तोषक्षमाशीलादयः कुतः ॥ २९ ॥ ततोऽनर्थपरम्परामाह—बलेति ॥ लङ्घनीयः अभिभाव्यः ॥ ३० ॥ भवतीति ॥ प्रथितः ख्यातः पुमान् लङ्घितः सन् अपध्वस्तमतिर्नष्टप्रज्ञो भवति ॥ ३१ ॥ ३२ लोभाभिभूता इति ॥ रणं युद्धम् ॥ ३३ ॥ इन्द्रापराधेन हि त्रैलोक्यस्य निःश्रीकत्वं प्राप्तम् अतस्त्रिलोक्यन्तर्वर्त्तितया प्राप्नुवदपि तद्विपक्षेषु देवेष्विव नातिप्रभूतमिति दैत्यानां जयः सङ्गच्छते हुताशपुरोगमा इति ॥ अग्निर्दूतत्वात्पुरोगमः ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ एवमिति ॥ उत्तरं तीरम् उत्तरदेशेऽवस्थितं तीरं परं कूलमिति वा ॥ ३८ ॥ स इति ॥ इष्टाभिः पूजिताभिः अपेक्षितार्थद्योतनाभिरिति वा परापराणामुत्कृष्टनिकृष्टानां पतिं ब्रह्मा तुष्टाव ॥ ३९ ॥ नमामीत्यस्योत्तरश्लोकेऽपि सम्बन्धः सर्वं सर्वरूपं सर्वेश्वरं च लोकधाम धराधारं लोकानां पृथिव्यादीनां धाम्नामण्डानां धराणां प्रभाववतामिन्द्रादीनामाधारम् ॥

यत्र सर्वं यतः सर्वमुत्पन्नं मत्पुरःसरम् ॥ सर्वभूतश्च यो देवः पराणामपि यः परः ॥ ४२ ॥ परः परस्मात्पुरुषात्परमात्मस्वरूपधृक् ॥ योगिभिश्चिन्त्यते योऽसौ मुक्तिहेतोर्मुमुक्षुभिः ॥ ४३ ॥ सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः ॥ स शुद्धः सर्वशुद्धेभ्यः पुमानाद्यः प्रसीदतु ॥ ४४ ॥ कला काष्ठा मुहूर्त्तादिकालसूत्रस्य गोचरे ॥ यस्य शक्तिर्न शुद्धस्य स नो विष्णुः प्रसीदतु ॥ ४५ ॥ प्रोच्यते परमेशो हि यः शुद्धोऽप्युपचारतः ॥ प्रसीदतु स नो विष्णुरात्मा यः सर्वदेहिनाम् ॥ ४६ ॥ यः कारणं च कार्यं च कारणस्यापि कारणम् ॥ कार्यस्यापि च यः कार्यं प्रसीदतु स नो हरिः ॥ ४७ ॥ कार्यकार्यस्य यत्कार्यं तत्कार्यस्यापि यः स्वयम् ॥ तत्कार्यकार्यभूतो यस्ततश्च प्रणतास्म तम् ॥ ४८ ॥ कारणं कारणस्यापि तस्य कारणकारणम् ॥ तत्कारणानां हेतुं तं प्रणता स्म परेश्वरम् ॥ ४९ ॥

॥ ४२ ॥ पर इति ॥ परस्मात् मुक्तात् ॥४३॥ सत्त्वादय इति अतः सर्वभूतेभ्यः शुद्धः ॥ ४४ ॥ कलेति ॥ शक्तिः लक्ष्मीविग्रहपरिजनपरिच्छदादिर्विभूतिः । "कलामुहूर्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुः" इत्यादेः ॥ ४५ ॥ प्रोच्यत इति ॥ उपचारतः शुद्धो मुक्तः पूर्वमविद्यान्तर्गतत्वेनाशुध्यभावात् यः 'शुद्धोप्युपचारत इत्यन्वयः । अत्र हेतुः 'आत्मा यः सर्वदेहिनाम्' इति ॥ ४६ ॥ य इति ॥ कारणमिति ॥ कारणं प्रकृतिः महतः कारणत्वात् कार्यं महान् कारणस्य प्रकृतेरपि कारणं ब्रह्म कार्यस्य महतः कार्यमहंकारः ॥ ४७ ॥ कार्यकार्यस्येति ॥ कार्यकार्यस्य कार्यभूतमहत्कार्यस्य अहंकारस्य कार्यं तन्मात्रपञ्चकं तस्यापि कार्यं भूतपंचकं तत्कार्यस्याण्डस्य कार्यं चतुर्मुखः ततश्च कार्यमित्यनुषङ्गः तत्कार्यं जगत् तत्सर्वं यः स्वयमेव तं प्रणतास्मेत्यन्वयः ॥ ४८ ॥ कारणमिति ॥ कारणस्य जगत्कारणस्य चतुर्मुखस्य कारणमण्डं तस्य कारणं भूतपंचकं तत्कारणं तन्मात्रपञ्चकं तत्कारणानामहंकारप्रभृतीनां हेतुं कारणं कारणावस्थं कार्यावस्थं च सर्वं स्वमेवेत्यर्थः ॥ ४९ ॥

इन्द्रादीनां प्रभावो यदाश्रय इत्यर्थः । अप्रकाशं प्रकाशरहितमित्यर्थः । अभेदिनमनिर्भेदं स्वव्यतिरिक्ते प्रकारशून्यमित्यर्थः ॥ ४० ॥ ४१ ॥ यत्रेति ॥ यत्र सर्वमित्यादि यच्छब्दानां स आद्यः पुमान्प्रसीदत्विति तृतीयेनान्वयः । पराणामक्षरादीनामपि यः परः पुरुषः तथा च श्रुतिः "इन्द्रियेभ्यः परा ह्यर्था ह्यर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥ महतः परमव्यक्तमव्यक्तात्पुरुषः परः" इति ॥ ४२ ॥ पर इति ॥ तस्मात्परस्मादव्यक्तात्तत्प्रेरकात्कारणात्मनः पुरुषादपि यः परः यतः परमात्मैव स्वरूपधृक् मूर्तिधारी अत एव योगिभिश्चिन्त्यते योऽसौ ॥ ४३ ॥ ४४ ॥ कलेति ॥ कलाकाष्ठानिमेषादिकाल एव सूत्रं सूत्रवच्चेष्टानियामकत्वात्तस्य गोचरे विषये यस्य शक्तिर्लक्ष्मीर्न वर्त्तते स्वरूपाभिन्नत्वान्नित्यैव सा कालगोचरवार्त्तिनी न भवतीत्यर्थः अत एव तस्या स्वरूपभेदाच्छुद्धस्येत्युक्तम् ॥ ४५ ॥ ननु यदि लक्ष्मीः तत्स्वरूपाभिन्ना कथं तर्हि लक्ष्म्याः पतिरित्युच्यते तत्राह–प्रोच्यत इति ॥ परा चासौ माया च लक्ष्मीस्तस्या ईशः परमेशः यश्शुद्धः केवलः उपचारतो भेदविवक्षया प्रोच्यते द्वितीयो यच्छब्दः प्रसिद्धौ ॥ ४६ ॥ ४७ ॥ पूर्वश्लोकार्थं प्रपञ्चयति कार्याकार्यस्येत्यादि द्वाभ्याम्–कार्याकार्यस्येति ॥ प्रकृतिकार्यस्य महतो यत्कार्यमहङ्कारः तस्य कार्यभूतः सूक्ष्मवर्गः तस्यापि कार्यं महाभूतवर्गः तत्कार्यभूतं ब्रह्माण्डं तस्य कार्यभूतो ब्रह्मदक्षादिवर्गः ततश्च पुत्रपौत्रादिप्रवाहभूतो यस्स्वयमेव तं प्रणतास्मेत्यन्वयः ॥ ४८ ॥ तथा–कारणमिति ॥ कारणं पुत्रपौत्रादिप्रवाहसृष्टेः ब्रह्मादि तस्य कारणं ब्रह्माण्डं तस्य कारणं महाभूतानि तत्कारणं भूतसूक्ष्माणि तत्का

भोक्तारं भोग्यभूतं च स्रष्टारं सृज्यमेव च ॥ कार्यकर्तृस्वरूपं तं प्रणता स्म परं पदम् ॥५० ॥ विशुद्धबोधवन्नित्यमजमक्षयमव्ययम् ॥ अव्यक्तमविकारं यत्तद्विष्णोः परमं पदम् ॥५१॥ न स्थूलं न च सूक्ष्मं यन्न विशेषणगोचरम् ॥ तत्पदं परमं विष्णोः प्रणमाम सदाऽमलम् ॥५२॥ यस्यायुतायुतांशांशे विश्वशक्तिरियं स्थिता ॥ परब्रह्मस्वरूपं यत्प्रणमामस्तमव्ययम् ॥५३॥ यद्योगिनः सदोद्युक्ताः पुण्यपापक्षयेऽक्षयम् ॥ पश्यन्ति प्रणवे चिन्त्यं तद्विष्णोः परमं पदम् ॥ ५४ ॥ यन्न देवा न मुनयो न चाहं न च शङ्करः ॥ जानन्ति परमेश स्य तद्विष्णोः परमं पदम् ॥ ५५ ॥ शक्तयो यस्य देवस्य ब्रह्मविष्णुशिवात्मिकाः ॥ भवन्त्यभूतपूर्वस्य तद्विष्णोः परमं पदम् ॥ ५६ ॥ सर्वेश सर्वभूतात्मन्सर्व सर्वाश्रयाच्युत ॥ प्रसीद विष्णो भक्तानां व्रज नो दृष्टिगोचरम् ॥ ५७ ॥ श्रीपराशर उवाच ॥ इत्युदीरितमाकर्ण्य ब्रह्मणस्त्रिदशास्ततः ॥ प्रणम्योचुः प्रसीदेति व्रज नो दृष्टिगोचरम् ॥ ५८ ॥ यन्नायं भगवान् ब्रह्मा जानाति परमं पदम् ॥ तन्नताः स्म जगद्धाम तव सर्वगताच्युत ॥ ५९ ॥ इत्यन्ते वचसस्तेषां देवानां ब्रह्मणस्तथा ॥ ऊचुर्देवर्षयस्सर्वे बृहस्पतिपुरोगमाः ॥ ६० ॥ आद्यो यज्ञः पुमानीड्यः पूर्वेषां यश्च पूर्वजः ॥ तन्नताः स्म जगत्स्रष्टुः स्रष्टारमविशेषणम् ॥ ६१ ॥ भगवन्भूतभव्येश यज्ञमूर्त्तिधराव्यय ॥ प्रसीद प्रणतानां त्वं सर्वेषां देहि दर्शनम् ॥ ६२ ॥ एष ब्रह्मा सहास्माभिः सह रुद्रैस्त्रिलोचनः ॥ सर्वादित्यैः समं पूषा पावकोऽयं सहाग्निभिः ॥ ६३ ॥

भोक्तारमिति ॥ भोज्यं भोग्यं शब्दादि सृज्यं घटादिकार्यं यागादि गत्यादि च परं पदं परमं प्राप्यस्थानम् ॥ ५० ॥ ५१ ॥ ५२ ॥ यस्येति ॥ अयुतांशो यः तस्यायुतांशो यः तस्यांशे स्थिता मेरोरिवाणुः पादोस्येत्यादि विश्वशक्तिः जगन्मयी ॥ ५३ ॥ यदिति ॥ अक्षयमिति पदच्छेदः ॥ ५४ ॥ ॥ ५५ ॥ अभूतपूर्वस्य न भूतं पूर्वं यस्मात् तस्य स हि सर्वस्मात्पूर्वः । भूतपूर्वस्येति पाठे भूतानां पूर्व इति ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥

रणानामहङ्कारमहत्सूत्राणां हेतुं प्रधानभूतं प्रणतास्मेत्यर्थः । प्रकृतेर्गुणक्षोभात् प्रथमं क्रिया शक्तिः सूत्रमुत्पद्यते ततो ज्ञानशक्तिर्महत्तत्वं ततोऽहङ्कार इति प्रक्रिया । तत्कारणानामित्यनेन बहुवचनान्तेनाहङ्कारमहत्सूत्राणां ग्रहणं तदुक्तम्—"सत्त्वं रजस्तम इति त्रिवृदेकमादौ सूत्रं महानहमिति प्रवदन्ति जीवम्" इति । यद्वा प्रकृत्या सह तत्कारणानामिति बहुत्वं सम्पाद्य तद्धेतुं 'प्रकृतिप्रेरकमीश्वरं प्रणतास्मेति योजनीयम् ॥ ४९ ॥ ५० ॥ विशुद्धमिति ॥ विशुद्धं बोधं शुद्धं ज्ञानं वृत्तिज्ञानं व्यावर्त्तयन् शुद्धत्वं दर्शयति—अव्यक्तमिति ॥ व्यक्तं :विषयस्तद्रहितमविकारं चेति तदुपपादयति । नित्यमित्यादिना अक्षयमनाधारं तद्विष्णोः परमं पदं प्रणमामेत्युत्तरेणान्वयः ॥ ५१ ॥ ५२ ॥ यस्यानन्तरशक्तेरयुतायुतांशो मायाशक्तिलेशः तस्यांशो रजोगुणः तस्मिन्नियं विश्वरचनाशक्तिः स्थिता तं प्रणमामेत्यस्योत्तरश्लोकत्रयेप्यनुषङ्गः ॥ ५३ ॥ यदिति ॥ पुण्यपापक्षये तत्प्रतिबन्धापगमे प्रणवे पश्यन्ति महावाक्यविषयत्वात्तस्य ॥ ५४ ॥ ५५ ॥ शक्तय इति ॥ अभूतपूर्वस्य न भूतः पूर्वः कश्चिदपि यस्मादनादेरित्यर्थः "तस्मान्न जातः परोऽन्यो अस्ति य आविवेश भुवनानि विश्वा" इति श्रुतेः ॥ ५६ ॥ तदेव स्तुत्वा प्रार्थयन्ते--सर्वेशेति ॥ ५७ ॥ ५८ ॥ यदिति ॥ जगद्धाम दिगन्तरप्रकाशकम् आश्रयभूतमिति वा ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ प्रणतानां प्रसीदेत्युक्तं तानेव प्रणतानाहुरेष ब्रह्मेत्यादि

अश्विनौ वसवश्चेमे सर्वे चैते मरुद्गणाः ॥ साध्या विश्वे तथा देवा देवेंद्रश्चायमीश्वरः ॥६४॥ प्रणामप्रवणा नाथ दैत्यसैन्यैः पराजिताः ॥ शरणं त्वामनुप्राप्ताः समस्ता देवतागणाः ॥ ६५ ॥ श्रीपराशर उवाच ॥ एवं संस्तूयमानस्तु भगवाञ्छंखचक्रधृक् ॥ जगाम दर्शनं तेषां मैत्रेय परमेश्वरः ॥ ६६ ॥ तं दृष्ट्वा ते तदा देवाः शंखचक्रगदाधरम् ॥ अपूर्वरूपसंस्थानं तेजसां राशिमूर्जितम् ॥ ६७ ॥ प्रणम्य प्रणताः सर्वे संक्षोभस्तिमितेक्षणाः ॥ तुष्टुवुः पुण्डरीकाक्षं पितामहपुरोगमाः ॥ ६८ ॥ देवा ऊचुः ॥ नमोनमो विशेषस्त्वं त्वं ब्रह्मा त्वं पिनाकधृक् ॥ इंद्रस्त्वमग्निः पवनो वरुणः सविता यमः ॥ ६९ ॥ वसवो मरुतः साध्या विश्वेदेवगणा भवान् ॥ योऽयं तवाग्रतो देव समीपं देवतागणः ॥ स त्वमेव जगत्स्रष्टा यतः सर्वगतो भवान् ॥ ७० ॥ त्वं यज्ञस्त्वं वषट्कारस्त्वमोङ्कारः प्रजापतिः ॥ विद्या वेद्यं च सर्वात्मँस्त्वन्मयं चाखिलं जगत् ॥ ॥ ७१ ॥ त्वामार्त्ताः शरणं विष्णो प्रयाता दैत्यनिर्जिताः ॥ वयं प्रसीद सर्वात्मंस्तेजसाप्याययस्व नः ॥ ७२ ॥ तावदार्त्तिस्तथा वांछा तावन्मोहस्तथाऽसुखम् ॥ यावन्न याति शरणं त्वामशेषाघनाशनम् ॥ ७३ ॥ त्वं प्रसादं प्रसन्नात्मन् प्रपन्नानां कुरुष्व नः ॥ तेजसां नाथ सर्वेषां स्वशक्त्याप्यायनं कुरु ॥ ७४ ॥ श्रीपराशर उवाच ॥ एवं संस्तूयमानस्तु प्रणतैरमरैर्हरिः ॥ प्रसन्नदृष्टिर्भगवानिदमाह स विश्वकृत् ॥ ७५ ॥ तेजसो भवतां देवाः करिष्याम्युपबृंहणम् ॥ वदाम्यहं यत्क्रियतां भवद्भिस्तदिदं सुराः ॥ ७६ ॥ आनीय सहिता दैत्यैः क्षीराब्धौ सकलौषधीः ॥ प्रक्षिप्यात्रामृतार्थं ताः सकला दैत्यदानवैः ॥मंथानं मन्दरं कृत्वा नेत्रं कृत्वा च वासुकिम् ॥ ७७ ॥

॥६४॥६५॥६६॥ तमिति ॥ अपूर्वरूपसंस्थानं समस्तलोकविलक्षणवर्णाङ्गसन्निवेशम् ॥६७॥ प्रणम्येति ॥ प्रणम्य पूर्वं प्रणता अपि भक्त्या पुनः प्रणम्य ॥६८ ॥ नमोनम इति ॥ अविशेषः सर्वसमः ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ आनीयेति ॥ ओषधीनां विचित्रशक्तिकत्वाद्विचित्रवस्तूत्पत्त्यर्थमानयनम् ॥ ७७ ॥

त्रिभिः ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ तमिति ॥ अपूर्वं रूपसंस्थानं देहिकः सन्निवेशो यस्य तम् ॥ ६७ ॥ प्रणम्येति ॥ पूर्वं प्रणता अपि भक्त्या पुनः प्रणम्य तुष्टुवुः ॥ ६८ ॥ नमोनम इति ॥ अविशेषः शुद्धः परमात्मा ब्रह्मादिरूपस्त्वमेव ॥ ६९ ॥ ७० ॥ ७१ ॥ त्वामिति ॥ तेजसा प्रभावादिना नः अस्मान् आप्याययस्व संवर्द्धयेत्यर्थः ॥ ७२ ॥ तावदिति ॥ आर्त्तिः शत्रुपीडा असुखं दुःखम् ॥ ७३ ॥ तावदिति ॥ स्वशक्त्या लक्ष्म्या ॥ ७४ ॥ भगवानिदमाहेत्यादेः श्रीमद्भागवते शुकमहर्पिणोक्ताभिप्रायः "एक एवेश्वरस्तस्मिन् सुरकार्ये सुरेश्वर । विहर्त्तुकामस्तानाह समुद्रोन्मथनादिभिः" इति ॥ ७५ ॥ ७६ ॥ आनीयेति ॥

मथ्यताममृतं देवाः सहाये मय्यवस्थिते ॥ ७८ ॥ सामपूर्वं च दैतेयास्तत्र साहाय्यकर्मणि ॥ सामान्यफलभोक्तारो यूयं वाच्या भविष्यथ ॥ ७९ ॥ मथ्यमाने च तत्राब्धौ यत्समुत्पत्स्यतेऽमृतम् ॥ तत्पानाद्बलिनो यूयममराश्च भविष्यथ ॥ ८० ॥ तथा चाहं करिष्यामि ते यथा त्रिदशद्विषः ॥ न प्राप्स्यन्त्यमृतं देवाः केवलं क्लेशभागिनः ॥ ८१ ॥ श्रीपराशर उवाच ॥ इत्युक्ता देवदेवेन सर्व एव तदा सुराः ॥ सन्धानमसुरैः कृत्वा यत्नवन्तोऽमृतेऽभवन् ॥ ८२ ॥ नानौषधीः समानीय देवदैतेयदानवाः ॥ क्षिप्त्वा क्षीराब्धिपयसि शरदभ्रामलत्विषि ॥ ८३ ॥ मंथानं मंदरं कृत्वा नेत्रं कृत्वा च वासुकिम् ॥ ततो मथितुमारब्धा मैत्रेय तरसाऽमृतम् ॥ ८४ ॥ विबुधाः सहिताः सर्वे यतः पुच्छं ततः कृताः ॥ कृष्णेन वासुकेर्दैत्याः पूर्वकाये निवेशिताः ॥ ८५ ॥ ते तस्य मुखनिश्वासवह्नितापहतत्विषः ॥ निस्तेजसोऽसुराः सर्वे बभूवुरमितौजसः ॥ ८६ ॥ तेनैव मुखनिश्वासवायुनास्तबलाहकैः ॥ पुच्छप्रदेशे वर्षद्भिस्तदा चाप्यायिताः सुराः ॥ ८७ ॥ क्षीरोदमध्ये भगवान्कूर्मरूपी स्वयं हरिः ॥ मन्थनाद्रेरधिष्ठानं भ्रमतोऽभून्महामुने ॥ ८८ ॥ रूपेणान्येन देवानां मध्ये चक्रगदाधरः ॥ चकर्ष नागराजानं दैत्यमध्येऽपरेण च ॥ ८९ ॥ उपर्याक्रान्तवाञ्शैलं बृहद्रूपेण केशवः ॥ तथापरेण मैत्रेय यन्न दृष्टं सुरासुरैः ॥ ९० ॥ तेजसा नागराजानं तथाप्यायितवान्हरिः ॥ अन्येन तेजसा देवानुपबृंहितवान्प्रभुः ॥ ९१ ॥

मथ्यतामिति ॥ अमृतं मथ्यतां मथनेनामृतमुत्पाद्यताम् ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ त इति ॥ अमितौजसस्तस्येत्यन्वयः ॥ ८६ ॥ तेनैवेति ॥ वह्निनास्तं बलाहकैरिति पाठे पुच्छे वह्निनास्तं सक्षीणमित्यर्थः । बलाहकैर्भगवता सृष्टैः ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥

क्षीराब्धौ क्षिप्तेति शेषः योक्त्रं ( नेत्रं ) मन्थानरज्जुं कृत्वा ॥ ७७ ॥ मथ्यतामिति॥ मथ्यतां मथनेनामृतमुत्पाद्यतामित्यर्थः ॥७८॥ सामपूर्वमिति ॥ सामपूर्वमुपपत्तिपूर्वकं सामान्यं समानं तत्फलं तस्य भोक्तारो यूयं भविष्यथेति वाच्याः युष्माभिरिति शेषः ॥ ७९ ॥ ८० ॥ यूयमिति ॥ सामान्यवचनाच्छङ्कमानान्प्रत्याह–तथा चेति ॥ भो देवाः त्रिदशद्विषः केवलं क्लेशभागिनो यथा भविष्यन्ति तथाऽहं करिष्यामि ॥ ८१ ॥ इतीति ॥ अमृते अमृतार्थम् ॥ ८२ ॥ नानौषधीरिति ॥ शरदभ्रस्येवं अमला त्विट् दीप्तिर्यस्मिन् ॥ ८३ ॥ मन्थानमिति ॥ अमृतं मथितुमारब्धाः आरभतेः कर्त्तरिक्तः । आरब्धवंत इत्यर्थः ॥ ८४ ॥ ८५ ॥ ८६ ॥ तेनैवेति ॥ येनासुराणां दुस्सहो वह्निरुत्पादितः तेनैव वासुकेर्मुखनिःश्वासवायुना अस्तबलाहकैः क्षिप्तैर्मेघैः ॥ ८७ ॥ सहाये मय्यवस्थित इति यदुक्तं तत्साहाय्यमाह क्षीरोदमध्य इत्यादि चतुर्भिः ॥ ८८ ॥ ॥ ८९ ॥ ९० ॥ ९१ ॥

मथ्यमाने ततस्तस्मिन्क्षीराब्धौ देवदानवैः ॥ हविर्धामाऽभवत्पूर्वं सुरभिः सुरपूजिता ॥ ९२ ॥ जग्मुर्मुदं ततो देवा दानवाश्च महामुने ॥ व्याक्षिप्तचेतसश्चैव बभूवुस्तिमितेक्षणाः ॥ ९३ ॥ किमेतदिति सिद्धानां दिवि चिंतयतां ततः ॥ बभूव वारुणी देवी मदाघूर्णितलोचना ॥ ९४ ॥ कृतावर्तात्ततस्तस्मात्क्षीरोदाद्वासयञ्जगत् ॥ गन्धेन पारिजातोभूद्देवस्त्रीनन्दनस्तरुः ॥ ९५ ॥ रूपौदार्यगुणोपेतस्तथा चाप्सरसां गणः ॥ क्षीरोदधेः समुत्पन्नो मैत्रेय परमाद्भुतः ॥ ९६ ॥ ततः शीतांशुरभवज्जगृहे तं महेश्वरः ॥ जगृहुश्च विषं नागाः क्षीरोदाब्धिसमुत्थितम् ॥ ९७ ॥ ततो धन्वन्तरिर्देवः श्वेताम्बरधरस्स्वयम् ॥ बिभ्रत्कमंडलुं पूर्णममृतस्य समुत्थितः ॥ ९८ ॥ ततः स्वस्थमनस्कास्ते सर्वे दैतेयदानवाः ॥ बभूवुर्मुदिताः सर्वे मैत्रेय मुनिभिः सह ॥ ९९ ॥ ततः स्फुरत्कान्तिमती विकासिकमले स्थिता ॥ श्रीर्देवी पयसस्तस्मादुद्भूता धृतपङ्कजा ॥ ॥ १०० ॥ तां तुष्टुवुर्मुदा युक्ताः श्रीसूक्तेन महर्षयः ॥ १०१ ॥ विश्वावसुमुखास्तस्या गन्धर्वाः पुरतो जगुः ॥ घृताचीप्रमुखास्तत्र ननृतुश्चाप्सरोगणाः ॥ १०२ ॥ गंगाद्याः सरितस्तोयैः स्नानार्थमुपतस्थिरे ॥ दिग्गजा हेमपात्रस्थमादाय विमलं जलम् ॥ स्नापयांचक्रिरे देवीं सर्वलोकमहेश्वरीम् ॥ १०३ ॥ क्षीरोदो रूपधृक्तस्यै मालामम्लानपंकजाम् ॥ ददौ विभूषणान्यङ्गे विश्वकर्मा चकार ह ॥ १०४ ॥ दिव्यमाल्याम्बरधरा स्नाता भूषणभूषिता ॥ पश्यतां सर्वदेवानां ययौ वक्षस्थलं हरेः ॥ १०५ ॥

मथ्यमान इति ॥ हविर्द्धाम हविष आश्रयः ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ तत इति ॥ आदौ भगवन्मनसो जातस्य चंद्रस्य द्वौ देहौ तत्रैकोब्धिजः शिवशिरोभूषणम् अन्यस्त्वत्रिनेत्रजो लोकयात्रानियुक्तः । नागाश्चेति च शब्दान्महेश्वरोपि विषं जग्राह ॥ ९७ ॥ तत इति ॥ अमृतस्य पूर्णमिति तृतीयार्थे षष्ठी ॥ ॥ ९८ ॥ ९९ ॥ तत इति ॥ द्रवरूपमेकं द्रवादमृतं जातम् अन्यत् सोमात्मकम् ॥ १०० ॥ १०१ ॥ १०२ ॥ १०३ ॥ १०४ ॥ १०५ ॥

मथ्यमान इति ॥ हविषः क्षीरदध्यादेर्धाम आश्रयभूता ॥ ९२ ॥ जग्मुरिति ॥ व्याक्षिप्तचेतसः तल्लोभाकृष्टचेतसः ॥ ९३ ॥ किमेतदिति ॥ वारुणी मदिरा देवी श्रीर्देवी ॥ ९४ ॥ कृतावर्त्तादिति ॥ मन्दरभ्रमणेन कृतः आवर्त्तः अम्भःसमावर्त्तो यस्मात् ॥ ९५ ॥ ९६ ॥ तत इति ॥ तं चन्द्रं विषं च महेश्वरो जगृहे तच्छेषं नागाश्च जगृहुः "प्रस्कन्नं पिबतः पाणेर्यत्किञ्चिज्जगृहुः स्म तत् । वृश्चिकाहिविषौषध्यो दन्दशूकाश्च येऽपरे" इति ॥ ९७ ॥ तत इति ॥ अमृतस्य कमण्डलुं तेनैव पूर्णं बिभ्रत्समुत्थितः ॥ ९८ ॥ तत इति ॥ स्वस्थमनस्काः स्वस्थमनसो बभूवुः ॥ ९९ ॥ १०० ॥ तामिति ॥ श्रीसूक्तेन हिरण्यवर्णामित्यादिपञ्चदशर्चेन ॥ १०१ ॥ १०२ ॥ १०३ ॥ १०४ ॥ दिव्येति ॥ पश्यतां सर्वदेवानांताननादृत्येत्यर्थः ॥ १०५ ॥

तया विलोकिता देवा हरिवक्षस्थलस्थया ॥ लक्ष्म्या मैत्रेय सहसा परां निर्वृतिमागताः ॥ १०६ ॥ उद्वेगं परमं जग्मुर्दैत्या विष्णु
पराङ्मुखाः ॥ त्यक्ता लक्ष्म्या महाभाग विप्रचित्तिपुरोगमाः ॥ १०७ ॥ ततस्ते जगृहुर्दैत्या धन्वन्तरिकरस्थितम् ॥ कमण्डलुं महावीर्या
यत्राऽऽस्तेऽमृतमुत्तमम् ॥ १०८ ॥ मायया मोहयित्वा तान्विष्णुः स्त्रीरूपसंस्थितः ॥ दानवेभ्यस्तदादाय देवेभ्यः प्रददौ प्रभुः ॥ १०९ ॥ ततः
पपुः सुरगणाः शक्राद्यास्तत्तदाऽमृतम् ॥ उद्यतायुधनिस्त्रिंशा दैत्यास्तांश्च समभ्ययुः ॥ ११० ॥ पीतेऽमृते च बलिभिर्देवैर्दैत्यचमूस्तदा ॥
वध्यमाना दिशो भेजे पातालं च विवेश वै ॥ १११ ॥ ततो देवा मुदा युक्ताः शंखचक्रगदाभृतम् ॥ प्रणिपत्य यथापूर्वमाशासत्तत्त्रिविष्टपम् ॥
॥ ११२ ॥ ततः प्रसन्नभाः सूर्यः प्रययौ स्वेन वर्त्मना ॥ ज्योतींषि च यथामार्गं प्रययुर्मुनिसत्तम ॥ ११३ ॥ जज्वाल भगवांश्चोच्चैश्चारुदी
प्तिर्विभावसुः ॥ धर्मे च सर्वभूतानां तदा मतिरजायत ॥ ११४ ॥ त्रैलोक्यं च श्रिया जुष्टं बभूव द्विजसत्तम ॥ शक्रश्च त्रिदशश्रेष्ठः पुनः श्रीमा
नजायत ॥ ११५ ॥ सिंहासनगतः शक्रस्संप्राप्य त्रिदिवं पुनः ॥ देवराज्ये स्थितो देवीं तुष्टावाब्जकरां ततः ॥ ११६ ॥ इन्द्र उवाच ॥ नम
स्ये सर्वलोकानां जननीमब्जसम्भवाम् ॥ श्रियमुन्निद्रपद्माक्षीं विष्णुवक्षस्थलस्थिताम् ॥ ११७ ॥ पद्मालयां पद्मकरां पद्मपत्रनिभेक्षणाम् ॥
वंदे पद्ममुखीं देवीं पद्मनाभप्रियामहम् ॥ ११८ ॥ त्वं सिद्धिस्त्वं स्वधा स्वाहा सुधा त्वं लोकपावनी ॥ सन्ध्या रात्रिः प्रभा भूतिर्मेधा श्रद्धा
सरस्वती ॥ ११९ ॥ यज्ञविद्या महाविद्या गुह्यविद्या च शोभने ॥ आत्मविद्या च देवि त्वं विमुक्तिफलदायिनी ॥ १२० ॥

॥१०६॥ १०७ ॥ १०८ ॥ १०९ ॥ ११० ॥ १११ ॥ ११२ ॥ तत इति ॥ स्वेन वर्त्मना अयनादिव्यत्यासं विना यथामार्गं वक्रातिचारवर्ज्जम् ॥११३॥
॥ ११४ ॥ ११५ ॥ ११६॥११७॥११८॥११९॥ यज्ञेति ॥ यज्ञविद्या धर्ममीमांसा महाविद्या इन्द्रजालादिकुहकज्ञानम् । गुह्यविद्या मन्त्रवादविशेषः॥१२०॥

॥ १०६ ॥ १०७ ॥ १०८ ॥ १०९ ॥ ११० ॥ १११ ॥ ११२ ॥ तत इति ॥ स्वेन वर्त्मना दक्षिणोत्तरायणनियमेन ज्योतींषि ताराः ग्रहाः भौमादयः यथामार्गं वक्रातिचारं विना ॥ ११३ ॥ ११४॥
॥ ११५ ॥ सिंहासनगत इति दुर्वासःशापः सन्नेव पुनर्मा भूदियं तथेत्यभिप्रायेण श्रियं मानयन् शक्रस्तुष्टाव ॥ ११६ ॥ स्तुतिप्रकारमाह—नमामीति ॥ नमामि नमस्ये सर्वभूतानां जननीं त्वाम् ॥ ११७ ॥ ११८॥
त्वमिति ॥ सिद्धिरणिमादिः प्रभा दिवसः ॥ ११९ ॥ यज्ञविद्येति ॥ यज्ञविद्या कर्मविद्या महाविद्या विश्वरूपाद्युपासना मुख्यविद्या तद्वाचकद्वादशाक्षरादिरहस्यमन्त्रविद्या आत्मविद्या उपनिषत्प्रतिपादितपरब्रह्मसाक्षात्का
रहेतुभूता एवं कर्मविद्यादिरूपेण विमुक्तिफलदायिनी त्वमेव ॥ १२० ॥

आन्वीक्षिकी त्रयीवार्त्ता दण्डनीतिस्त्वमेव च ॥ सौम्यासौम्यैर्जगद्रूपैस्त्वयैतद्देवि पूरितम् ॥१२१॥ का त्वन्या त्वामृते देवि सर्वयज्ञमयं वपुः॥
अध्यास्ते देवदेवस्य योगिचिन्त्यं गदाभृतः॥१२२॥त्वया देवि परित्यक्तं सकलं भुवनत्रयम् ॥ विनष्टप्रायमभवत्त्वयेदानीं समेधितम् ॥१२३॥
दाराः पुत्रास्तथाऽगारसुहृद्धान्यधनादिकम् ॥ भवत्येतन्महाभागे नित्यं त्वद्वीक्षणान्नृणाम् ॥ १२४ ॥ शरीरारोग्यमैश्वर्यमरिपक्षक्षयः सुखम् ॥
देवि त्वद्दृष्टिदृष्टानां पुरुषाणां न दुर्लभम् ॥ १२५ ॥ त्वं माता सर्वलोकानां देवदेवो हरिः पिता ॥ त्वयैतद्विष्णुना चाम्ब जगद्व्याप्तं चराचरम्॥
॥ १२६ ॥ मा नः कोशं तथा गोष्ठं मा गृहं मा परिच्छदम् ॥ मा शरीरं कलत्रं च त्यजेथाः सर्वपावनि ॥ १२७ ॥ मा पुत्रान्मा सुहृद्वर्गं मा
पशून्मा विभूषणम् ॥ त्यजेथा मम देवस्य विष्णोर्वक्षःस्थलालये ॥ १२८ ॥ सत्त्वेन सत्यशौचाभ्यां तथा शीलादिभिर्गुणैः ॥ त्यज्यंते ते
नराः सद्यः संत्यक्ता ये त्वयाऽमले ॥ १२९ ॥ त्वया विलोकिताः सद्यः शीलाद्यैरखिलैर्गुणैः ॥ कुलैश्वर्यैश्च युज्यंते पुरुषा निर्गुणा अपि ॥
॥ १३० ॥ स श्लाघ्यः स गुणी धन्यः स कुलीनः स बुद्धिमान् ॥ स शूरः स च विक्रान्तो यस्त्वया देवि वीक्षितः ॥ १३१ ॥ सद्यो
वैगुण्यमायांति शीलाद्याः सकला गुणाः ॥ पराङ्मुखी जगद्धात्री यस्य त्वं विष्णुवल्लभे ॥ १३२ ॥ न ते वर्णयितुं शक्ता गुणाञ्जिह्वापि
वेधसः ॥ प्रसीद देवि पद्माक्षि मास्मांस्त्याक्षीः कदाचन ॥ १३३ ॥ श्रीपराशर उवाच ॥ एवं श्रीः संस्तुता सम्यक् प्राह देवी शतक्रतुम् ॥
शृण्वतां सर्वदेवानां सर्वभूतस्थिता द्विज ॥ १३४ ॥ श्रीरुवाच ॥ परितुष्टास्मि देवेश स्तोत्रेणानेन ते हरे ॥ वरं वृणीष्व यस्त्विष्टो वर
दाहं तवागता ॥ १३५ ॥ इंद्र उवाच ॥ वरदा यदि मे देवि वरार्हो यदि वाप्यहम् ॥ त्रैलोक्यं न त्वया त्याज्यमेष मेस्तु वरः परः ॥१३६॥
आन्वीक्षिकीति॥ आन्वीक्षिकी तर्कशास्त्रम् । दण्डनीतिरर्थशास्त्रम् ॥ १२१ ॥ २२२ ॥ १२३ ॥ १२४ ॥ १२५ ॥ १२६ ॥ १२७ ॥ १२८ ॥
॥ १२९ ॥ १३० ॥ १३१ ॥ १३२ ॥ १३३ ॥ १३४ ॥ १३५ ॥ १३६ ॥

आन्विक्षिकी तर्कविद्या त्वमेव । त्रयी वेदत्रयं वार्त्ता शिल्पशास्त्रायुर्वेदादिः दण्डनीतिः सामाद्युपायप्रतिपादिका राजनीतिः एवमन्यैरपि । सौम्यासौम्यैर्जगद्रूपैः त्वयैतद्देवि पूरितम् ॥१२१॥ अतस्तव सौभाग्यमत्याश्चर्यमित्याह—का त्विति ॥ का पुनस्त्वदन्या गदाभृतो वपुरध्यास्ते तद्वक्षसि वसतीत्यर्थः ॥ १२२ ॥ अतस्तदुपेक्षापरिग्रहयोरीदृशं फलं दृष्टमित्याह—त्वयेति ॥ समेधितं संवर्द्धितम् ॥ १२३ ॥ १२४ ॥ १२५ ॥ ॥ १२६ ॥ मेति ॥ नैतच्चित्रमित्याह—दारा इति ॥ अतो मातृत्वान्नोऽस्माकं कोशादिकं मा त्यजेथाः परिच्छदं परिकरम् ॥ १२७ ॥ १२८ ॥ सत्येनेति ॥ त्वया त्यक्तानामरिष्टं दृष्टमित्याह—त्वयाऽमलेति ॥ १२९ ॥ त्वदनुकम्पितस्तु समस्तगुणाधिवासो भवतीत्याह—त्वया विलोकिता इति द्वाभ्याम् ॥ १३० ॥ १३१ ॥ त्वदुपेक्षितस्य गुणा अपि दोषा भवन्तीत्याह—सद्य इति ॥ वैगुण्यं सदोषत्वम् ॥ १३२ ॥ अतस्त्वद्गुणस्तुतौ न कोपि शक्त इत्याह—नेति ॥ अतस्त्वद्गुणस्तुतौ न कोपि शक्त इति कृपयैव केवलं प्रसीदेति वेधसोपि जिह्वा न शक्तेत्यन्वयः ॥ १३३ ॥ १३४ ॥ परितुष्टेति ॥ हरे इन्द्र ॥ १३५ ॥ १३६ ॥

१ धनैरिति पा० । २ यं त्वं देवि निरीक्षसे इति पा० ।

स्तोत्रेण यस्तथैतेन त्वां स्तोष्यत्यब्धिसम्भवे ॥ स त्वया न परित्याज्यो द्वितीयोस्तु वरो मम ॥ १३७ ॥ श्रीरुवाच ॥ त्रैलोक्यं त्रिद
शश्रेष्ठ न सन्त्यक्ष्यामि वासव ॥ दत्तो वरो मयायन्ते स्तोत्राराधनतुष्टया ॥ १३८ ॥ यश्च सायं तथा प्रातः स्तोत्रेणानेन मानवः ॥ मां
स्तोष्यति न तस्याहं भविष्यामि पराङ्मुखी ॥ १३९ ॥ श्रीपराशर उवाच ॥ एवं ददौ वरं देवी देवराजाय वै पुरा ॥ मैत्रेय श्रीर्महाभागा
स्तोत्राराधनतोषिता ॥ १४० ॥ भृगोः ख्यात्यां समुत्पन्ना श्रीः पूर्वमुदधेः पुनः ॥ देवदानवयत्नेन प्रसूताऽमृतमन्थने ॥ १४१ ॥ एवं
यदा जगत्स्वामी देवदेवो जनार्दनः ॥ अवतारं करोत्येषा तदा श्रीस्तत्सहायिनी ॥ १४२ ॥ पुनश्च पद्मादुत्पन्ना आदित्योभूद्यदा हरिः ॥
यदा तु भार्गवो रामस्तदाभूद्धरणी त्वियम् ॥ १४३ ॥ राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि ॥ अन्येषु चावतारेषु विष्णोरेषानपायि
नी ॥ १४४ ॥ देवत्वे देवदेहेयं मनुष्यत्वे च मानुषी ॥ विष्णोर्देहानुरूपां वै करोत्येषाऽऽत्मनस्तनुम् ॥ १४५ ॥ यश्चैतच्छृणुयाज्जन्म लक्ष्म्या
यश्च पठेन्नरः ॥ श्रियो न विच्युतिस्तस्य गृहे यावत्कुलत्रयम् ॥ १४६ ॥ पठ्यते येषु चैवेयं गृहेषु श्रीस्तुतिर्मुने ॥ अलक्ष्मीः कलहाधारा न ते
ष्वास्ते कदाचन ॥ १४७ ॥ एतत्ते कथितं ब्रह्मन्यन्मां त्वं परिपृच्छसि ॥ क्षीराब्धौ श्रीर्यथा जाता पूर्वं भृगुसुता सती ॥ १४८ ॥ इति सकल
विभूत्यवाप्तिहेतुः स्तुतिरियमिन्द्रमुखोद्गता हि लक्ष्म्याः ॥ अनुदिनमिह पठ्यते नृभिर्यैर्वसति न तेषु कदाचिदप्यलक्ष्मीः ॥ १४९ ॥ इति
श्रीविष्णुपुराणे प्रथमंशे नवमोऽध्यायः ॥ ९ ॥ श्रीमैत्रेय उवाच ॥ कथितं मे त्वया सर्वं यत्पृष्टोसि मया मुने ॥ भृगुसर्गात्प्रभृत्येष सर्गो मे
कथ्यतां पुनः ॥१॥ श्रीपराशर उवाच ॥ भृगोः ख्यात्यां समुत्पन्ना लक्ष्मीर्विष्णुपरिग्रहः ॥ तथा धातृविधातारौ ख्यात्यां जातौ सुतौ भृगोः॥२॥

॥ १३७ ॥ १३८ ॥ १३९ ॥ १४० ॥ १४१ ॥ एवमिति ॥ तत्सहायिनी तेनसहायति गच्छतीति तत्सहायिनी तत्सहचारिणीत्यर्थः ॥ १४२ ॥ १४३ ॥
॥ १४४ ॥ १४५ ॥ १४६ ॥१४७॥ १४८ ॥१४९ ॥ इति श्रीविष्णुपुराणव्याख्याने विष्णुचित्तीये प्रथमंशे नवमोध्यायः ॥ ९ ॥ अथ संक्षेपेण श्रुतं भृगुसर्गं
विस्तरतः श्रोतुं पृच्छति कथितमिति ॥ १ ॥ भृगोरिति ॥ परिग्रहः कलत्रम् ॥ २ ॥

॥ १३७ ॥१३८॥१३९॥१४०॥ प्रकृतं श्रियोऽवतारद्वयं निगमयन् प्रसङ्गादन्यानप्यवतारानाह–भृगोरित्यादिना यावदध्यायपरिसमाप्ति ॥१४१॥ एवमिति ॥ तत्सहायिनी तदनुवर्त्तनशीला ॥१४२॥ पुनरिति ॥ यदा
हरिरादित्यो वामनोऽभूत् भार्गवो जामदग्न्यः ॥ १४३ ॥ राघवत्व इति ॥ सीता रावणादिदुष्टनिग्रहसाधनभूता ॥ १४४ ॥ १४५ ॥ १४६ ॥ पठ्यत इति ॥ कलहाधारा कलह आधारो यस्याः सा अलक्ष्मीः
अश्रीः कलहोपि तेषु न भवतीत्यर्थः ॥१४७ ॥ १४८ ॥ १४९ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुपुराणव्याख्यायां प्रथमांशे नवमोऽध्यायः ॥ ९ ॥ कथमिति ॥ पुनः भृगुसर्गात्प्रभृति भृगुसुतानुवाद
पूर्वकं भृगोर्वंशः कथ्यताम् अन्यथा पूर्वापरसम्बन्धात्प्रतीतेरित्यर्थः ॥ १ ॥ अतो भृगोः सुताननुवदति–भृगोरिति ॥ विष्णोः परिग्रहः पत्नी ॥ २ ॥

आयतिर्नियतिश्चैव मेरोः कन्ये महात्मनः ॥ भार्ये धातृविधात्रोस्ते तयोर्जातौ सुतावुभौ ॥ ३ ॥ प्राणश्चैव मृकण्डुश्च मार्कण्डेयो मृकण्डुतः ॥ ततो वेदशिरा जज्ञे प्राणस्यापि सुतं शृणु ॥ ४ ॥ प्राणस्य द्युतिमान्पुत्रो राजवांश्च ततोऽभवत् ॥ ततो वंशो महाभाग विस्तरं भार्गवो गतः ॥ ५ ॥ पत्नी मरीचेः संभूतिः पौर्णमासमसूयत॥ विरजाः पर्वतश्चैव तस्य पुत्रो महात्मनः ॥ ६ ॥ वंशसंकीर्तने पुत्रान्वदिष्येहं ततो द्विज ॥ स्मृतिश्चाङ्गिरसः पत्नी प्रसूता कन्यकास्तथा ॥ सिनीवाली कुहूश्चैव राका चानुमती तथा ॥ ७ ॥ अनसूया तथैवात्रेर्जज्ञे निष्कल्मषान्सुतान् ॥ सोमं दुर्वाससं चैव दत्तात्रेयं च योगिनम् ॥ ८ ॥ प्रीत्यां पुलस्त्यभार्यायां दत्तोलिस्तत्सुतोऽभवत् ॥ पूर्वजन्मनि योऽगस्त्यः स्मृतः स्वायंभुवेन्तरे ॥ ९ ॥ कर्दमश्चार्वरीवांश्च सहिष्णुश्च सुतास्त्रयः ॥ क्षमा तु सुषवे भार्या पुलहस्य प्रजापतेः ॥ १० ॥ क्रतोश्च सन्ततिर्भार्या वालखिल्यानसूयत ॥ षष्टिपुत्रसहस्राणि मुनीनामूर्ध्वरेतसाम् ॥ अंगुष्ठपर्वमात्राणां ज्वलद्भास्करतेजसाम् ॥ ११ ॥ ऊर्जायां तु वसिष्ठस्य सप्ताजायन्त वै सुताः ॥ १२ ॥ रजो गोत्रोर्द्धबाहुश्च सवनश्चानघस्तथा ॥ सुतपाः शुक्र इत्येते सर्वे सप्तर्षयोऽमलाः ॥ १३ ॥ योऽसावग्न्यभिमानी स्यात् ब्रह्मणस्तनयोऽग्रजः ॥ तस्मात्स्वाहा सुताँल्लेभे त्रीनुदारौजसो द्विज ॥ १४ ॥

आयतिरिति ॥ तयोरायतिनियत्योः सुतावुभौ जातौ ॥ ३ ॥ तावेवाह प्राणश्चेति ॥ प्राणो मृकण्डुश्च तत्र मृकण्डुतो मार्कण्डेयो जज्ञ इत्यन्वयः तयोर्जाताविति पाठः ॥ ४ ॥ ॥ ५ ॥ अथ क्रमप्राप्तं मरीचेः सम्भूत्यां जातं वंशमाह—पत्नी मरीचेरिति ॥ अत्राल्पसन्तानो मरीचिः पुत्रः पौर्णमास उक्तः । बहुसन्तानान् काश्यपविवस्वदादीन्पुत्रपौत्रादीनस्मिन्नंशे वंशसंकीर्तने आदित्योत्पत्तिप्रस्तावे तुरीयेंशे सूर्यवंशप्रस्तावे च वक्ष्ये ॥ ६ ॥ ७ ॥ ८ ॥ प्रीत्यामिति॥ तत्सुतः तस्य पुलस्त्यस्यौरसः सुतः ॥ ९ ॥ १० ॥ ॥ ११ ॥ १२ ॥ रज इति ॥ सप्तर्षय इत्येते तृतीये मन्वन्तरे सप्तर्षयो वक्ष्यन्ते ॥ १३ ॥ सर्गप्रसंगादग्निसर्गमाह योसाविति ॥ १४ ॥

आयतिरिति ॥ ताभ्यां तयोरायतिनियत्योः प्रत्येकम् ॥ ३ ॥ प्राणश्चेति ॥ प्राणश्च मृकण्डुश्चेत्येवमुभौ जाताविल्यन्वयः ॥ ४ ॥ ५ ॥ तदेवं चतुर्विंशतिदक्षकन्यानां मध्ये श्रद्धादीनां त्रयोदशानां धर्मभार्याणां वंशाः कथिताः अनन्तरं ख्यातिस्सत्यथ सम्भूतिरित्युद्दिष्टानामेकादशानां भृगुमहादेवमरीच्यादिभार्याणां मध्ये ख्यात्यां भृगोर्वंशो निरूपितः । सत्याश्च भवभार्यायाः दक्षकोपादप्रौढाया एव देहत्यागोक्त्या तस्यां वंशो नाभूदित्यर्थः । अतः क्रमप्राप्तं मरीचेः सम्भूत्यां जातं वंशमाह—पत्नी मरीचेरिति॥वंशसङ्कीर्तन इति मरीचेरेव कश्यपो अन्यः पुत्रः तत्पुत्रा विवस्वदादय इत्यस्मिन्नेवांशे अदितिवंशसङ्कीर्त्तने वक्ष्यति । विवस्वतः श्राद्धदेवादयः श्राद्धदेवस्येक्ष्वाकुप्रमुखा इत्यादि तत्पुत्रान् विस्तरतो वंशसङ्कीर्त्तने चतुर्थांशे वक्ष्यति । अत्र स्वल्पत्वात्पौर्णमासान्वयमात्रमुक्तमित्यर्थः ॥ ६ ॥ स्मृतिश्चेति॥ ताः कन्या निर्दिर्शिताः सिनीवालीति ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ क्रतोश्चेति॥ अङ्गुष्ठपर्वमात्राणाम् अंगुष्टपर्वप्रमाणानाम् 'प्रमाणे मात्रच्' प्रत्ययः । अष्टाशीतिसहस्राणि ऋषीणामिति पाठान्तरम् ॥ ११ ॥ १२ ॥ रज इति ॥ सप्तर्षयस्तृतीये मन्वन्तरे ॥ १३ ॥ योऽसाविति ॥ अग्न्यभिमानी अग्न्यभिमानी देवः स तु

पावकं पवमानं तु शुचिं चापि जलाशिनम् ॥ १५ ॥ तेषां तु सन्ततावन्ये चत्वारिंशच्च पंच च ॥ कथ्यन्ते वह्नयश्चैते पितापुत्रत्रयं च यत्॥ ॥ १६ ॥ एवमेकोनपञ्चाशद्वह्नयः परिकीर्तिताः ॥ १७ ॥ पितरो ब्रह्मणा सृष्टा व्याख्याता ये मया द्विज ॥ अग्निष्वात्ता बर्हिषदोऽनग्नयः साग्नयश्च ये ॥ १८॥ तेभ्यः स्वधा सुते जज्ञे मेनां वै धारिणीं तथा ॥ ते उभे ब्रह्मवादिन्यौ योगिन्यावप्युभे द्विज ॥१९॥ उत्तमज्ञानसंपन्ने सर्वैः समुदितैर्गुणैः ॥ २० ॥ इत्येषा दक्षकन्यानां कथिता सत्यसंततिः ॥ श्रद्धावान्संस्मरन्नेतामनपत्यो न जायते ॥ २१ ॥ इति श्रीविष्णुपुराणे प्रथमेंशे दशमोऽध्यायः ॥ १० ॥ ॥ छ ॥ ॥ श्रीपराशर उवाच ॥ प्रियव्रतोत्तानपादौ मनोः स्वायंभुवस्य तु ॥ द्वौ पुत्रौ तु महावीर्यौ धर्मज्ञौ कथितौ तव ॥ १ ॥ तयोरुत्तानपादस्य सुरुच्यामुत्तमः सुतः ॥ अभीष्टायामभूद्ब्रह्मन्पितुरत्यन्तवल्लभः ॥ २ ॥ सुनीतिर्नाम या राज्ञ स्तस्यासीन्महिषी द्विज ॥ स नाति प्रीतिमांस्तस्यामभूद्यस्या ध्रुवः सुतः ॥ ३ ॥ राजासनस्थितस्याङ्कं पितुर्भ्रातरमाश्रितम् ॥ दृष्ट्वोत्तमं ध्रुव श्चक्रे तमारोढुं मनोरथम् ॥ ४ ॥

पावकमिति ॥ यथा कौर्मे "निर्मन्थ्यः पवमानः स्याद्वैद्युतः पावकः स्मृतः ॥ यश्चासौ तपते सूर्ये शुचिरग्निरसौ स्मृतः" इति जलाशिनमिति शुचिविशेषणम् ॥ १५॥ तेषामिति ॥ पितृपुत्रत्रयं पिता पुत्रत्रयं च त्रयः पुत्राः प्रत्येकं पञ्चदश पुत्रकाः ॥ १६ ॥ १७ ॥ पितर इति ॥ अग्निष्वात्ता अयज्वानो मूर्तास्त्रयो गणा बर्हिषदो यज्वानो मूर्त्तिमंतश्चत्वारः अग्निष्वात्तसुता मेना ॥ १८ ॥ १९ ॥ २० ॥ इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये प्रथमेंशे दशमोध्यायः ॥ १० ॥ मनोर्दौहित्रो वंश उक्तः । अथ तत्पुत्रान्वयं वक्तुमनुवदति प्रियव्रतेति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥

ज्वलनमात्रदेहः ब्रह्मणस्तनयोऽग्रजः "मुखादग्निरजायत" इति श्रुतेः ॥ उदारौजसः अतितेजस्विनः ॥ १४ ॥ पावकमिति ॥ जलाशिनं सूर्यस्थत्वात् तथा च कौर्मे "निर्मन्थ्यः पवमानः स्याद्वैद्युतः पावकः स्मृतः । यश्चासौ तपते सूर्ये शुचिरग्निरसौ स्मृतः" इति । पावकादीन्त्रीन् सुतान् लेभ इति पूर्वेणान्वयः ॥ १५ ॥ तेषामिति ॥ तेषां त्रयाणां पञ्चदशपञ्चदशपञ्चदशेति पञ्चचत्वारिंशद्वह्नयः पिता ब्रह्मपुत्रः एकः तत्पुत्रत्रयं पावकादि ॥ १६ ॥ एवमिति ॥ एवमेकोनपञ्चाशदग्नयः ॥ १७ ॥ पितर इति ॥ अग्निष्वात्ता अनग्नयः यज्वानः बर्हिषदः साग्नयो यज्वानः "ये वा अयज्वानो गृहमेधिनस्ते पितरोग्निष्वात्ता ये वै यज्वानस्ते पितरो बर्हिषदः" इति श्रुतेः ॥ १८ ॥ तयोर्विवाहादिकं नाभूदित्याह–ते उभे इति ॥ १९ ॥ २० ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुपुराणव्याख्यायां प्रथमेंशे दशमोध्यायः ॥ १० ॥ ॥ मनोः कन्यान्वयः प्रोक्तः पुत्रवंशोऽधुनोच्यते । अत्राध्यायत्रयेणाह–ध्रुवस्य चरितं महत् ॥ १ ॥ मनोः द्वौ पुत्रौ द्वे कन्ये च अत्र कन्ययोर्वंश उक्तः इदानीं पुत्रद्वयानुवादपूर्वकम् उत्तानपादवंशमाह–प्रियव्रतेत्यादिना ॥ १ ॥ ययोरिति ॥ तयोर्मध्ये उत्तानपादस्य सुरुचिः सुनीतिरिति द्वे भार्ये तस्य सुरुच्याम् अभीष्टायां प्रेयस्यामुत्तमो नाम पुत्रोऽभूत् ॥ २ ॥ ३ ॥ राजासनेति ॥ राजासनस्थितस्य पितुरङ्कम् उत्सङ्गमास्थितं भ्रातरमुत्तमं

प्रत्यक्षं भूपतिस्तस्याः सुरुच्या नाभ्यनन्दत ॥ प्रणयेनागतं पुत्रमुत्संगारोहणोत्सुकम् ॥ ५ ॥ सपत्नी तनयं दृष्ट्वा तमंकारोहणोत्सुकम् ॥ स्वपुत्रं च तथारूढं सुरुचिर्वाक्यमब्रवीत् ॥ ६ ॥ क्रियते किं वृथा वत्स महानेष मनोरथः ॥ अन्यस्त्रीगर्भजातेन ह्यसंभूय ममोदरे ॥ ७ ॥ उत्तमोत्तममप्राप्यमविवेको हि वाञ्छसि ॥ सत्यं सुतस्त्वमप्यस्य किं तु न त्वं मया धृतः ॥ ८ ॥ एतद्राजासनं सर्वभूभृत्संश्रयकेतनम् ॥ योग्यं ममैव पुत्रस्य किमात्मा क्लिश्यतेत्वया ॥ ९ ॥ उच्चैर्मनोरथस्तेयं मत्पुत्रस्यैव किं वृथा ॥ सुनीत्यामात्मनो जन्म किं त्वया नावगम्यते ॥ १० ॥ श्रीपराशर उवाच ॥ उत्सृज्य पितरं बालस्तच्छ्रुत्वा मातृभाषितम् ॥ जगाम कुपितो मातुर्निजाया द्विज मंदिरम् ॥ ११ ॥ तं दृष्ट्वा कुपितं पुत्रमीषत्प्रस्फुरिताधरम् ॥ सुनीतिरंकमारोप्य मैत्रेयेदमभाषत ॥ १२ ॥ वत्स कः कोपहेतुस्ते कश्च त्वां नाभिनन्दति ॥ कोवजानाति पितरं वत्स यस्तेपराध्यति ॥ १३ ॥ श्रीपराशर उवाच ॥ इत्युक्तः सकलं मात्रे कथयामास तद्यथा ॥ सुरुचिः प्राह भूपालप्रत्यक्षमतिगर्विता ॥ १४ ॥ विनिश्वस्येति कथिते तस्मिन्पुत्रेण दुर्मनाः ॥ श्वासक्षामेक्षणा दीना सुनीतिर्वाक्यमब्रवीत् ॥ १५ ॥ सुनीतिरुवाच ॥ सुरुचिः सत्यमाहेदं मन्दभाग्योसि पुत्रक ॥ न हि पुण्यवतां वत्स सपत्नैरेव मुच्यते ॥ १६ ॥ नोद्वेगस्तात कर्त्तव्यः कृतं यद्भवता पुरा ॥ तत्कोपहर्त्तुं शक्नोति दातुं कश्चाकृतं त्वया ॥ १७ ॥

॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ एतदिति ॥ पूर्वोक्तम् उत्तमत्वमाह सर्वेति ॥ सर्वभूभृदाश्रयकेतनमिति च पाठः । सर्वभूभृतामाश्रयस्य सार्वभौमस्य केतनं स्थानम् ॥ ९ ॥ उच्चैरिति ॥ उच्चैर्मनोरथः उच्चासनाभिलाषः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ निःश्वस्येति ॥ तस्मिन् वृत्तान्ते कथिते सति श्वासभागे क्षणश्वासेन दुःखजनितेन क्लेशदृष्टिः ॥ १५ ॥ १६ ॥ १७ ॥

दृष्ट्वा तमङ्कमारोढुं ध्रुवो मनोरथं चक्र इत्यन्वयः ॥ ४ ॥ प्रत्यक्षमिति ॥ सुरुच्याः प्रेयस्याः प्रत्यक्षं समक्षं तत्प्रणयभङ्गभयात् ध्रुवं नाभ्यनन्दत ॥ ५ ॥ सपत्नीतनयमिति ॥ तं ध्रुवं पितुरङ्कारोहणोत्सुकं दृष्ट्वा तथा स्वपुत्रं च तदङ्कारूढं दृष्ट्वा सुरुचिरब्रवीदित्यन्वयः ॥ ६ ॥ सुरुच्या दुरुक्तिमसहमानो ध्रुवः स्त्रीजितं पितरं विहाय मातुस्समीपं गत्वा दुःखितायास्तस्या अनुमत्या पुरान्निर्गत्य सप्तर्षीणामुपदेशेन मधुवने भगवन्तमाराध्य सर्वोत्तमं पदं प्रापेति क्रमेण कथयिष्यन् सुरुच्या गर्वोक्तिमाह–क्रियते किमित्यादिचतुर्भिः ॥ ७ ॥ उत्तमोत्तममिति ॥ अविवेकः अमतिः ॥ ८ ॥ एतदिति ॥ एतद्राजासनं सर्वभूभृतां संश्रयस्य चक्रवर्तिनः केतनं स्थानं मत्पुत्रस्यैव योग्यम् ॥ ९ ॥ उच्चैरिति ॥ न हि राजपुत्रमात्रलभ्यमेतत् किन्तु मद्गर्भसम्भवसौभाग्यलभ्यम् । अतस्तवायमुत्कृष्टर्द्धिमनोरथः वृथैवेत्यतिगर्वितोक्तिः ॥ १० ॥ ११ ॥ १२ ॥ वत्सेति ॥ यस्मै अपराध्यति अपराधं करोति तव पितरमवजानाति स चैवंभूतः क इत्यर्थः ॥ १३ ॥ १४ ॥ निःश्वस्येति ॥ अस्मिन् सुरुच्या वचसि कथिते सति श्वासेनात्युष्णेन क्षामे म्लाने ईक्षणे नेत्रे यस्याः सा ॥ १५ ॥ १६ ॥ नेति ॥

तत्त्वया नात्र कर्त्तव्यं दुःखं तद्वाक्यसम्भवम् ॥ १८ ॥ राजासनं राजच्छत्रं वराश्वावरवारणाः ॥ यस्य पुण्यानि तस्यैते मत्वैतच्छाम्य पुत्रक ॥ ॥ १९ ॥ अन्यजन्मकृतैः पुण्यैः सुरुच्यां सुरुचिर्नृपः ॥ भार्येति प्रोच्यते चान्या मद्विधा पुण्यवर्जिता ॥ २० ॥ पुण्योपचयसंपन्नस्तस्याः पुत्रस्तथोत्तमः ॥ मम पुत्रस्तथा जातः स्वल्पपुण्यो ध्रुवो भवान् ॥ २१ ॥ तथापि दुःखं न भवान् कर्त्तुमर्हसि पुत्रक ॥ यस्य यावत्स तेनैव स्वेन तुष्यति मानवः ॥ २२ ॥ यदि ते दुःखमत्यर्थं सुरुच्या वचसाभवत् ॥ तत्पुण्योपचये यत्नं कुरु सर्वफलप्रदे ॥ २३ ॥ सुशीलो भव धर्मात्मा मैत्रः प्राणिहिते रतः ॥ निम्नं यथापः प्रवणाः पात्रमायान्ति सम्पदः ॥ २४ ॥ ध्रुव उवाच ॥ अम्ब यत्त्वमिदं प्रात्थ प्रशमाय वचो मम ॥ नैतद्दुर्वचसा भिन्ने हृदये मम तिष्ठति ॥ २५ ॥ सोहं तथा यतिष्यामि यथा सर्वोत्तमोत्तमम् ॥ स्थानं प्राप्स्याम्यशेषाणां जगतामभि पूजितम् ॥ २६ ॥ सुरुचिर्दयिता राज्ञस्तस्या जातोस्मि नोदरात् ॥ प्रभावं पश्य मेंब त्वं वृद्धस्यापि तवोदरे ॥ २७ ॥ उत्तमः स मम भ्राता यो गर्भेण धृतस्तया ॥ स राजासनमाप्नोतु पित्रा दत्तं तथास्तु तत् ॥ २८ ॥ नान्यदत्तमभीप्स्यामि स्थानमम्ब स्वकर्मणा ॥ इच्छामि तदहं स्थानं यत्र प्राप पिता मम ॥ २९ ॥ श्रीपराशर उवाच ॥ निर्जगाम गृहान्मातुरित्युक्त्वा मातरं ध्रुवः ॥ पुराच्च निर्गम्य ततस्तद्बाह्योपवनं ययौ ॥ ३० ॥ स ददर्श मुनींस्तत्र सप्तपूर्वागतान्ध्रुवः ॥ कृष्णाजिनोत्तरीयेषु विष्टरेषु समास्थितान् ॥ ३१ ॥ स राजपुत्रस्तान्सर्वान्प्रणिपत्याभ्य भाषत ॥ प्रश्रयावनतः सम्यगभिवादनपूर्वकम् ॥ ३२ ॥

=यन्तेति पाठो भाति।

॥१८॥ १९॥ २०॥ २१॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ स इति ॥ पूर्वागतान्पूर्वमेवात्मनोऽनुग्रहणार्थमागतान् कृष्णाजिनोत्तरीयाण्येव विष्टरास्तेषु ॥ ३१ ॥ ३२ ॥

उद्वेगः क्लेशः ॥ १७ ॥ १८॥ राजासनमिति ॥ एतन्मत्वाऽवबुद्ध्य शाम्य उपशमं भज ॥ १९ ॥ अन्यजन्मकृतैरिति ॥ सुरुच्यां नृपतिः सुरुचिरतिप्रीतिमान् मद्विधा मादृशी तु केवलं भार्येति प्रोच्यते ॥ २० ॥ २१ ॥ तथापीति ॥ अस्य यावद्दैवप्राप्तं स तेन स्वेनैव दैवेन प्राप्तेन तुष्यति ॥ २२ ॥ २३ ॥ सुशीतल इति ॥ मैत्रः मित्रधर्मः प्रवणाः निम्नदेशाभिमुख्यः सत्यः आपः पात्रं सद्गुणं नरम् ॥ २४ ॥ अम्बेति ॥ अम्ब हे मातः मम प्रशमाय नोद्वेगस्तात कर्त्तव्य इत्यादिपञ्चश्लोकरूपं यद्वचः प्रात्थ प्रब्रवीषि तदेतत् उद्भिन्नभाण्डे पय इव मम हृदये न तिष्ठति ॥ २५ ॥ २६ ॥ सुरुचिरिति ॥ ऋद्धस्य वृद्धिं प्राप्तस्यापि ॥ २७ ॥ २८ ॥ नेति अन्यदत्तं नेच्छामि किन्तु स्वकर्मणा स्वकर्मसामर्थ्येनैव इच्छामि ॥ २९ ॥ ३० ॥ स इति ॥ पूर्वागतान् स्वानुग्रहाय ततः पूर्वमेव तत्रागतान् कृष्णाजिनमुत्तरीयमुपर्यास्तरणमेषां तेषु विष्टरेषु

१ शान्तिं प्राप्नुहि इति पा० ।

ध्रुव उवाच ॥ उत्तानपादतनयं मां निबोधत सत्तमाः ॥ जातं सुनीत्यां निर्वेदाद्युष्माकं प्राप्तमन्तिकम् ॥ ३३ ॥ ऋषय ऊचुः ॥ चतुःपंचाब्दसंभूतो बालस्त्वं नृपनन्दन ॥ निर्वेदकारणं किंचित्तव नाद्यापि वर्त्तते ॥ ३४ ॥ न चिंत्यं भवतः किंचिद्ध्रियते भूपतिः पिता ॥ न चैवेष्टवियोगादि तव पश्याम बालक ॥ ३५ ॥ शरीरे न च ते व्याधिरस्माभिरुपलक्ष्यते ॥ निर्वेदः किन्निमित्तस्ते कथ्यतां यदि विद्यते ॥ ३६ ॥ श्रीपराशर उवाच ॥ ततः स कथयामास सुरुच्या यदुदाहृतम् ॥ तन्निशम्य ततः प्रोचुर्मुनयस्ते परस्परम् ॥ ३७ ॥ अहो क्षात्रं परं तेजो बालस्यापि यदक्षमा ॥ सपत्न्या मातुरुक्तं यद्धृदयान्नापसर्पति ॥ ३८॥ भोभोः क्षत्रियदायाद निर्वेदाद्यत्त्वयाधुना ॥ कर्तुं व्यवसितं तन्नः कथ्यतां यदि रोचते ॥ ३९ ॥ यच्च कार्यं तवास्माभिः साहाय्यममितद्युते ॥ तदुच्यतां विवक्षुस्त्वमस्माभिरुपलक्ष्यसे ॥ ४० ॥ ध्रुव उवाच ॥ नाहमर्थमभीप्सामि न राज्यं द्विजसत्तमाः ॥ तत्स्थानमेकमिच्छामि भुक्तं नान्येन यत्पुरा ॥ ४१ ॥ एतन्मे क्रियतां सम्यक्कथ्यतां प्राप्यते यथा ॥ स्थानमग्र्यं समस्तेभ्यः स्थानेभ्यो मुनिसत्तमाः ॥ ४२ ॥ मरीचिरुवाच ॥ अनाराधितगोविन्दैर्नरैः स्थानं नृपात्मज ॥ न हि संप्राप्यते श्रेष्ठं तस्मादाराधयाच्युतम् ॥ ४३ ॥ अत्रिरुवाच ॥ परः पराणां पुरुषो यस्य तुष्टो जनार्दनः ॥ संप्राप्नोत्यक्षयं स्थानमेतत्सत्यं मयोदितम् ॥ ४४ ॥ अङ्गिरा उवाच ॥ यस्यान्तः सर्वमेवेदमच्युतस्याव्ययात्मनः ॥ तमाराधय गोविन्दं स्थानमग्र्यं यदीच्छसि ॥ ४५ ॥ पुलस्त्य उवाच ॥ परं ब्रह्म परं धाम योऽसौ ब्रह्म तथा परम् ॥ तमाराध्य हरिं याति मुक्तिमप्यति दुर्लभाम् ॥ ४६ ॥

॥ ३३ ॥ चतुःपंचेति ॥ इतः प्राक् चतुर्थे पंचमे वाऽब्दे सम्भूतः ॥ ३४ ॥ नेति ॥ चिन्त्यं कुटुम्बपोषणादि ध्रियते जीवति ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ॥ ३९ ॥ ४० ॥ ४१ ॥ एतदिति ॥ यथा प्राप्यते तथा कथ्यताम् एतत्कथनमेव साहाय्यं तत्क्रियताम् ॥ ४२ ॥ भगवति भक्त्यतिशयात् ध्रुवे कारुण्याच्च सर्वेपि प्रतिवदन्ति प्रणन्दन्ति च अनाराधितेति सप्तभिः ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥

कुशासनेषूपविष्टान् ॥ ३१ ॥ ३२ ॥ उत्तानपादतनयमिति ॥ निर्वेदाद्दुःखात्प्राप्तं जानीध्वम् ॥ ३३ ॥ चतुः पञ्चाब्देति ॥ चत्वारः पञ्च वा अब्दा यस्य स चासौ सम्भूतः सम्यक्भूतः सौकुमार्येण जातः अल्पवयाः कोमलतनुश्चेत्यर्थः ॥ ३४ ॥ नेति ॥ चिन्त्यं कुटुम्बादिविषयं भवतः किञ्चिन्नास्ति यतः पिता ध्रीयते जीवति ॥ ३५ ॥ ३६ ॥ ३७ ॥ अहो इति ॥ अक्षमा मानभङ्गासहनम् ॥ ३८ ॥ भो भो क्षत्रियदायादेति ॥ क्षत्रियदायाद क्षत्रियपुत्र ॥ ३९ ॥ यदिति ॥ विवक्षुः किञ्चिद्वक्तुमिच्छुः तत्साहाय्यम् ॥ ४० ॥ ४१ ॥ एतदिति ॥ एतत्साहाय्यं क्रियतां साहाय्यप्रकारमाह—सम्यक्कथ्यतामिति ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥

तत्त्वया नात्र कर्त्तव्यं दुःखं तद्वाक्यसम्भवम् ॥ १८ ॥ राजासनं राजच्छत्रं वराश्वावरवारणाः ॥ यस्य पुण्यानि तस्यैते मत्वैतच्छाम्य पुत्रक ॥
॥ १९ ॥ अन्यजन्मकृतैः पुण्यैः सुरुच्यां सुरुचिर्नृपः ॥ भार्येति प्रोच्यते चान्या मद्विधा पुण्यवर्जिता ॥ २० ॥ पुण्योपचयसंपन्नस्तस्याः
पुत्रस्तथोत्तमः ॥ मम पुत्रस्तथा जातः स्वल्पपुण्यो ध्रुवो भवान् ॥ २१ ॥ तथापि दुःखं न भवान् कर्त्तुमर्हसि पुत्रक ॥ यस्य यावत्स तेनैव
स्वेन तुष्यति मानवः ॥ २२ ॥ यदि ते दुःखमत्यर्थं सुरुच्या वचसाभवत् ॥ तत्पुण्योपचये यत्नं कुरु सर्वफलप्रदे ॥ २३ ॥ सुशीलो भव
धर्मात्मा मैत्रः प्राणिहिते रतः ॥ निम्नं यथापः प्रवणाः पात्रमायान्ति सम्पदः ॥ २४ ॥ ध्रुव उवाच ॥ अम्ब यत्त्वमिदं प्रात्थ प्रशमाय वचो
मम ॥ नैतद्दुर्वचसा भिन्ने हृदये मम तिष्ठति ॥ २५ ॥ सोहं तथा यतिष्यामि यथा सर्वोत्तमोत्तमम् ॥ स्थानं प्राप्स्याम्यशेषाणां जगतामभि
पूजितम् ॥ २६ ॥ सुरुचिर्दयिता राज्ञस्तस्या जातोस्मि नोदरात् ॥ प्रभावं पश्य मेंब त्वं वृद्धस्यापि तवोदरे ॥ २७ ॥ उत्तमः स मम भ्राता
यो गर्भेण धृतस्तया ॥ स राजासनमाप्नोतु पित्रा दत्तं तथास्तु तत् ॥ २८ ॥ नान्यदत्तमभीप्स्यामि स्थानमम्ब स्वकर्मणा ॥ इच्छामि तदहं
स्थानं यत्र प्राप पिता मम ॥ २९ ॥ श्रीपराशर उवाच ॥ निर्जगाम गृहान्मातुरित्युक्त्वा मातरं ध्रुवः ॥ पुराच्च निर्गम्य ततस्तद्बाह्योपवनं ययौ
॥ ३० ॥ स ददर्श मुनींस्तत्र सप्तपूर्वागतान्ध्रुवः ॥ कृष्णाजिनोत्तरीयेषु विष्टरेषु समास्थितान् ॥ ३१ ॥ स राजपुत्रस्तान्सर्वान्प्रणिपत्याभ्य
भाषत ॥ प्रश्रयावनतः सम्यगभिवादनपूर्वकम् ॥ ३२ ॥

=यन्त्रेति पाठो भाति।

॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ स इति ॥ पूर्वागतान्पूर्वमेवात्मनोऽनुग्रहणार्थमागतान्
कृष्णाजिनोत्तरीयाण्येव विष्टरास्तेषु ॥ ३१ ॥ ३२ ॥

उद्वेगः क्लेशः ॥ १७ ॥ १८ ॥ राजासनमिति ॥ एतन्मत्वाऽवबुद्ध्य शाम्य उपशमं भज ॥ १९ ॥ अन्यजन्मकृतैरिति ॥ सुरुच्यां नृपतिः सुरुचिरतिप्रीतिमान् मद्विधा मादृशी तु केवलं भार्येति प्रोच्यते
॥ २० ॥ २१ ॥ तथापीति ॥ अस्य यावद्दैवप्राप्तं स तेन स्वेनैव दैवेन प्राप्तेन तुष्यति ॥ २२ ॥ २३ ॥ सुशीतल इति ॥ मैत्रः मित्रधर्मः प्रवणाः निम्नदेशाभिमुख्यः सत्यः आपः पात्रं सद्गुणं नरम् ॥ २४ ॥
अम्बेति ॥ अम्ब हे मातः मम प्रशमाय नोद्वेगस्तात कर्त्तव्य इत्यादिपञ्चश्लोकरूपं यद्वचः प्रात्थ प्रब्रवीषि तदेतत् उद्भिन्नभाण्डे पय इव मम हृदये न तिष्ठति ॥ २५ ॥ २६ ॥ सुरुचिरिति ॥ ऋद्धस्य वृद्धिं प्राप्तस्यापि
॥ २७ ॥ २८ ॥ नेति अन्यदत्तं नेच्छामि किन्तु स्वकर्मणा स्वकर्मसामर्थ्येनैव इच्छामि ॥ २९ ॥ ३० ॥ स इति ॥ पूर्वागतान् स्वानुग्रहाय ततः पूर्वमेव तत्रागतान् कृष्णाजिनमुत्तरीयमुपर्यास्तरणमेषां तेषु विष्टरेषु

१ शान्तिं प्राप्नुहि इति पा० ।

ध्रुव उवाच ॥ उत्तानपादतनयं मां निबोधत सत्तमाः ॥ जातं सुनीत्यां निर्वेदाद्युष्माकं प्राप्तमन्तिकम् ॥ ३३ ॥ ऋषय ऊचुः ॥ चतुःपंचाब्दसंभूतो बालस्त्वं नृपनन्दन ॥ निर्वेदकारणं किंचित्तव नाद्यापि वर्त्तते ॥ ३४ ॥ न चिंत्यं भवतः किंचिद्ध्रियते भूपतिः पिता ॥ न चैवेष्टवियोगादि तव पश्याम बालक ॥ ३५ ॥ शरीरे न च ते व्याधिरस्माभिरुपलक्ष्यते ॥ निर्वेदः किन्निमित्तस्ते कथ्यतां यदि विद्यते ॥ ३६ ॥ श्रीपराशर उवाच ॥ ततः स कथयामास सुरुच्या यदुदाहृतम् ॥ तन्निशम्य ततः प्रोचुर्मुनयस्ते परस्परम् ॥ ३७ ॥ अहो क्षात्रं परं तेजो बालस्यापि यदक्षमा ॥ सपत्न्या मातुरुक्तं यद्धृदयान्नापसर्पति ॥ ३८॥ भोभोः क्षत्रियदायाद निर्वेदाद्यत्त्वयाधुना ॥ कर्तुं व्यवसितं तन्नः कथ्यतां यदि रोचते ॥ ३९ ॥ यच्च कार्यं तवास्माभिः साहाय्यममितद्युते ॥ तदुच्यतां विवक्षुस्त्वमस्माभिरुपलक्ष्यसे ॥ ४० ॥ ध्रुव उवाच ॥ नाहमर्थमभीप्सामि न राज्यं द्विजसत्तमाः ॥ तत्स्थानमेकमिच्छामि भुक्तं नान्येन यत्पुरा ॥ ४१ ॥ एतन्मे क्रियतां सम्यक्कथ्यतां प्राप्यते यथा ॥ स्थानमग्र्यं समस्तेभ्यः स्थानेभ्यो मुनिसत्तमाः ॥ ४२ ॥ मरीचिरुवाच ॥ अनाराधितगोविन्दैर्नरैः स्थानं नृपात्मज ॥ न हि संप्राप्यते श्रेष्ठं तस्मादाराधयाच्युतम् ॥ ४३ ॥ अत्रिरुवाच ॥ परः पराणां पुरुषो यस्य तुष्टो जनार्दनः ॥ संप्राप्नोत्यक्षयं स्थानमेतत्सत्यं मयोदितम् ॥ ४४ ॥ अङ्गिरा उवाच ॥ यस्यान्तः सर्वमेवेदमच्युतस्याव्ययात्मनः ॥ तमाराधय गोविन्दं स्थानमग्र्यं यदीच्छसि ॥ ४५ ॥ पुलस्त्य उवाच ॥ परं ब्रह्म परं धाम योऽसौ ब्रह्म तथा परम् ॥ तमाराध्य हरिं याति मुक्तिमप्यति दुर्लभाम् ॥ ४६ ॥

॥ ३३ ॥ चतुःपंचेति ॥ इतः प्राक् चतुर्थे पंचमे वाऽब्दे सम्भूतः ॥ ३४ ॥ नेति ॥ चिन्त्यं कुटुम्बपोषणादि ध्रियते जीवति ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ॥ ३९ ॥ ४० ॥ ४१ ॥ एतदिति ॥ यथा प्राप्यते॰ तथा कथ्यताम् एतत्कथनमेव साहाय्यं तत्क्रियताम् ॥ ४२ ॥ भगवति भक्त्यतिशयात् ध्रुवे कारुण्याच्च सर्वेपि प्रतिवदन्ति प्रणन्दन्ति च अनाराधितेति सप्तभिः ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥

कुशासनेषूपविष्टान् ॥ ३१ ॥ ३२ ॥ उत्तानपादतनयमिति ॥ निर्वेदाद्दुःखात्प्राप्तं जानीध्वम् ॥ ३३ ॥ चतुः पञ्चाब्देति ॥ चत्वारः पञ्च वा अब्दा यस्य स चासौ सम्भूतः सम्यक्भूतः सौकुमार्येण जातः अल्पवयाः कोमलतनुश्चेत्यर्थः ॥ ३४ ॥ नेति ॥ चिन्त्यं कुटुम्बादिविषयं भवतः किञ्चिन्नास्ति यतः पिता ध्रीयते जीवति ॥ ३५ ॥ ३६ ॥ ३७ ॥ अहो इति ॥ अक्षमा मानभङ्गासहनम् ॥ ३८ ॥ भो भो क्षत्रियदायादेति ॥ क्षत्रियदायाद क्षत्रियपुत्र ॥ ३९ ॥ यदिति ॥ विवक्षुः किञ्चिद्वक्तुमिच्छुः तत्साहाय्यम् ॥ ४० ॥ ४१ ॥ एतदिति ॥ एतत्साहाय्यं क्रियतां साहाय्यप्रकारमाह—सम्यक्कथ्यतामिति ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥

पुलह उवाच ॥ ऐन्द्रमिन्द्रः परं स्थानं यमाराध्य जगत्पतिम् ॥ प्राप यज्ञपतिं विष्णुं तमाराधय सुव्रत ॥ ४७ ॥ क्रतुरुवाच ॥ यो यज्ञपुरुषो यज्ञो योगेशः परमः पुमान् ॥ तस्मिंस्तुष्टे यदप्राप्यं किंतदस्ति जनार्दने ॥ ४८ ॥ वसिष्ठ उवाच ॥ प्राप्नोष्याराधिते विष्णौ मनसा यद्यदिच्छसि ॥ त्रैलोक्यान्तर्गतं स्थानं किमु वत्सोत्तमोत्तमम् ॥ ४९ ॥ ध्रुव उवाच ॥ आराध्यः कथितो देवो भवद्भिः प्रणतस्य मे ॥ मया तत्परितोषाय यज्जप्तव्यं तदुच्यताम् ॥ ५० ॥ यथा चाराधनं तस्य मया कार्यं महात्मनः ॥ प्रसादसुमुखास्तन्मे कथयन्तु महर्षयः ॥ ५१ ॥ ऋषय ऊचुः ॥ राजपुत्र यथा विष्णोराराधनपरैर्नरैः ॥ कार्यमाराधनं तन्नो यथावच्छ्रोतुमर्हसि ॥ ५२ ॥ बाह्यार्थादखिलाच्चित्तं त्याजयेत्प्रथमं नरः ॥ तस्मिन्नेव जगद्धाम्नि ततः कुर्वीत निश्चलम् ॥ ५३ ॥ एवमेकाग्रचित्तेन तन्मयेन धृतात्मना ॥ जप्तव्यं यन्निबोधैतत्तन्नः पार्थिवनन्दन ॥ ५४ ॥ हिरण्यगर्भपुरुषप्रधानव्यक्तरूपिणे ॥ ॐ नमो वासुदेवाय शुद्धज्ञानस्वरूपिणे ॥ ५५ ॥

॥ ४७॥४८॥ प्राप्नोषीति ॥ मनसेति इतः पूर्वमक्लृप्तमपि ददाति किं पुनः क्लृप्तमिति ॥४९॥ आराध्य । इति मयेति ॥ अनुपनीतस्याप्यात्मनो योग्यं जप्यं पृच्छति जप्तव्यामिति ॥ ५० ॥ यथेति जपाङ्गप्रश्नः ॥ ५१ ॥५२॥ चित्तैकाग्रतारूपो योगो जपस्याङ्गमिति स योगं जप्यमुपादशात बाह्येति त्रिभिः बाह्यार्थादिति ॥ बाह्यार्थाच्चित्तं त्याजयेदिति हिंसानृतादिनिषिद्धत्यागरूपो यमः सर्वविषयत्यागरूपः प्रत्याहारश्चोक्तः निश्चलं कुर्वीतेत्यासनप्राणायामौ तदधीनत्वाच्चित्तस्थैर्यस्य तस्मिन्नेवेति शुभाश्रये धारणा॥५३ ॥ एवमिति ॥धृतात्मनेति ॥ यथार्हं शौचादिषु कृतयत्नेति नियमः एकाग्रचित्तेनेति ध्यानम् तन्मयेनेति समाधिः इत्यष्टाङ्गयोग उक्तः तस्य मैत्रेययोगिन इति हि योगित्वं वक्ष्यति ॥ ५४ ॥ हिरण्येति "हिरण्यमस्य गर्भोभूद्धिरण्यस्यापि गर्भजः ॥ तस्माद्धिरण्यगर्भत्वं पुराणज्ञाः प्रचक्षिरे " इति

॥ ४७ ॥ ४८ ॥ प्राप्नोषीति ॥ मनसा यद्यदिच्छसि ब्रह्मलोकादि तदपि प्राप्नोषि किमु त्रैलोक्यान्तर्गतमुत्तमोत्तमस्थानं प्राप्नोषीति किमु वक्तव्यम् ॥ ४९ ॥ "कृष्णाराधनमेवैकं पुंसः सर्वफलप्रदम् । सर्वैरप्येवमेवोक्ते तदुपायं बुभुत्सते " ॥ १ ॥ ध्रुवः आराध्यः कथित इत्यादिद्वाभ्याम् ॥ ५० ॥ ५१ ॥ ५२ ॥ बाह्यार्थादिति ॥ बाह्यार्थाद्विरक्तादिना अष्टाङ्गयोगसाध्यचित्तसमाधानपूर्वकमन्त्रजपमुपदिशंति तत्र प्रथमं बाह्यार्थाच्चित्तं त्याजयेदिति । त्यागानुकूलप्राथमिकप्रयत्नविधानेन यथार्हं यमनियमासनप्राणायामपूर्वकप्रत्याहार उक्तः । तस्मिन्नेव निश्चलं कुर्वीति धारणोक्ता ॥ ५३ ॥ एवमिति ॥ एवमनेन प्रकारेण एकाग्रचित्तेनेति । पूर्वोक्तषडङ्गसाध्यं ध्यानमुक्तं तथा च वक्ष्यति "तद्रूपप्रत्ययैवैका सन्ततिश्चान्यनिस्पृहा । तद्ध्यानं प्रथमैरङ्गैः षड्भिर्निष्पाद्यते नृप" इति । तन्मयेनेति समाधिरुक्तः । धृतात्मनेति पुनर्लयविक्षेपप्राप्तौ तत्परिहाराय चित्तस्थैर्ये प्रयत्न उक्तः । तदुक्तं श्रीमद्गीतासु "यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् । ततस्ततो नियम्यैतदात्मन्येव वशं नयेत्" इति ॥ ५४ ॥ हिरण्यगर्भेति ॥ हिरण्यगर्भो ब्रह्मा पुरुषो विष्णुः प्रधीयते प्रक्षिप्यते प्रकृतौ विश्व

एतज्जजाप भगवान् जप्यं स्वायंभुवो मनुः ॥ पितामहस्तव पुरा तस्य तुष्टो जनार्दनः ॥९६॥ ददौ यथाभिलषितां सिद्धिं त्रैलोक्यदुर्लभाम् ॥
तथा त्वमपि गोविन्दं तोषयैतत्सदा जपन् ॥ ९७ ॥ इति श्रीविष्णुपुराणे प्रथमेंश एकादशोऽध्यायः ॥११॥ श्रीपराशर उवाच ॥ निशम्यैतद
शेषेण मैत्रेय नृपतेः सुतः ॥ निर्जगाम वनात्तस्मात्प्रणिपत्य स तानृषीन् ॥१॥ कृतकृत्यमिवात्मानं मन्यमानस्ततो द्विज ॥ मधुसंज्ञं महा
पुण्यं जगाम यमुनातटम् ॥ २ ॥ पुनश्च मधुसंज्ञेन दैत्येनाधिष्ठितं यतः ॥ ततो मधुवनं नाम्ना ख्यातमत्र महीतले ॥ ३ ॥ हत्वा च लवणं
रक्षो मधुपुत्रं महाबलम् ॥ शत्रुघ्नो मधुरां नाम पुरीं यत्र चकार वै ॥४॥ यत्र वै देवदेवस्य सान्निध्यं हरिमेधसः ॥ सर्वपापहरे तस्मिंस्तपस्तीर्थे
चकार सः॥५॥ मरीचिमुख्यैर्मुनिभिर्यथोद्दिष्टमभूत्तथा ॥ आत्मन्यशेषदेवेशं स्थितं विष्णुममन्यत ॥६॥ अनन्यचेतसस्तस्य ध्यायतो भगवा
न्हरिः ॥ सर्वभूतगतो विप्र सर्वभावगतोऽभवत्॥७॥ मनस्यवस्थिते तस्मिन्विष्णौ मैत्रेय योगिनः ॥ न शशाक धरा भारमुद्वोढुं भूतधारिणी॥८॥

भारतोक्त्या हिरण्यगर्भशब्दनिरुक्त्या हिरण्मयं ब्रह्मांडं गर्भे यस्य स हिरण्यगर्भः स चात्रपुरुषादिसमभिव्याहारात्कालात्मा ज्ञेयः । हिरण्यगर्भः प्रथमव्यष्टिपुरुषस्स
मष्टिरिति केचित् । अत्र द्वादशाक्षरमंत्रो विवक्षितः लैङ्गादिषु ध्रुवस्य तन्मन्त्रोपदेशप्रसिद्धेः स तु रहस्युपदेष्टव्यत्वादत्र यथापाठे न पठितः ॥ ५५ ॥ ५६ ॥ ददा
विति ॥ तथात्वमिति कुलदेवतामंत्रो हि शीघ्रं सिद्ध्यति ॥ ५७ ॥ इति श्रीविष्णुपुराणव्याख्याने विष्णुचित्तीये प्रथमेंश एकादशोध्यायः ॥ ११ ॥ ॥ १ ॥ २ ॥ ३॥
॥ ४ ॥ यत्रेति ॥ हरिमेधसः हारिः पापहारिणी स्वर्णवत् शुद्धा मेधा यस्य स हारिमेधाः तस्य हारिमेधसः । छान्दसत्वादसिच्प्रत्ययः ॥५॥ मरीचिमिश्रैरिति ॥ अ
मन्यत दध्यौ ॥६॥ अनन्यचेतस इति ॥ सर्वभावगतः चित्तवृत्तेः साकल्येन विषयतयाऽऽविर्भूतः ॥७॥ मनसीति ॥ न शशाकेति गारिमाख्यसिद्धिरासीदित्यर्थः ॥८॥

मनेनेति प्रलयहेतुः प्रधानसंज्ञः कालः अव्यक्तस्तेषां त्रयाणां नियन्ता त्रिगुणा माया शक्तिः कारणमात्मा ॐ नमोऽव्यक्तरूपायेति पाठान्तरेऽव्यक्तं विश्वमेतानि रूपाणि सन्ति यस्य तस्मै एवमादिकेषु सत्स्वपि शुद्धज्ञा
नात्मकं स्वभावः अच्युत एवास्ति यस्य तस्मै । ओंकारप्रतिपाद्याय नम इति मन्त्रार्थः । मन्त्रस्तु "ॐ नमो भगवते वासुदेवाय" इति ॥ ९५ ॥ ९६ ॥ ९७ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुपुराण
व्याख्यायां प्रथमांश एकादशोऽध्यायः ॥ ११ ॥ निशम्येति ॥ तस्मात्पुरोपवनान्निर्जगाम ॥ १ ॥ २ ॥ ३ ॥४ ॥यत्रेति ॥ हरतीति हरिः सर्वदुःखहारिणी यद्विषया मेधा हरिमेधाः हरिमेधसः "नित्यमसिच्प्रजामेधयोः"
इति सान्तत्वम् ॥ ५ ॥ मरीचिमिश्रैरिति ॥ मरीचिमिश्रैः मरीचिमुख्यैः यथोद्दिष्टमुपदिष्टम् अमन्यत दध्यौ ॥ ६ ॥ अनन्यचेतस इति ॥ सर्वभावगतः सर्वभावेन विश्वरूपेण तच्चित्ततां गतः प्राप्तोऽभवत् ॥ ७ ॥ ततश्च

वामपादस्थिते तस्मिन्ननामार्द्धेन मेदिनी ॥ द्वितीयं च ननामार्द्धं क्षितेर्दक्षिणतः स्थिते ॥ ९ ॥ पादांगुष्ठेन संपीड्य यथा स वसुधां स्थितः ॥ तदा समस्ता वसुधा चचाल सह पर्वतैः ॥ १० ॥ नद्यो नदाः समुद्राश्च संक्षोभं परमं ययुः ॥ तत्क्षोभादमराः क्षोभं परं जग्मुर्महामुने ॥ ११ ॥ यामा नाम तदा देवा मैत्रेय परमाकुलाः ॥ इन्द्रेण सह संमन्त्र्य ध्यानभंगं प्रचक्रमुः ॥ १२ ॥ कूष्माण्डा विविधैरूपैर्महेन्द्रेण महामुने ॥ समाधिभङ्गमत्यन्तमारब्धाः कर्त्तुमातुराः ॥ १३ ॥ सुनीतिर्नाम तन्माता सास्रा तत्पुरतः स्थिता ॥ पुत्रेति करुणां वाचमाह मायामयी तदा ॥ १४ ॥ पुत्रकास्मान्निवर्त्तस्व शरीरात्ययदारुणात् ॥ निर्बन्धतो मया लब्धो बहुभिस्त्वं मनोरथैः ॥ १५ ॥ दीनामेकां परित्यक्तुमनाथां न त्वमर्हसि ॥ सपत्नीवचनाद्वत्स अगतेस्त्वं गतिर्मम ॥ १६ ॥ क्व च त्वं पंचवर्षीयः क्वचैतद्दारुणं तपः ॥ निवर्ततां मनः कष्टान्निर्बन्धात्फलवर्जितात् ॥ १७ ॥ कालः क्रीडनकानान्ते तदन्तेऽध्ययनस्य ते ॥ ततः समस्तभोगानां तदन्ते चेष्यते तपः ॥ ॥ १८ ॥ कालः क्रीडनकानां यस्तव बालस्य पुत्रक ॥ तस्मिंस्त्वमिच्छसि तपः किं नाशायात्मनो रतः ॥ १९ ॥ मत्प्रीतिः परमो धर्मो वयोवस्थाक्रियाक्रमम् ॥ अनुवर्त्तस्व मा मोहान्निवर्त्तास्मादधर्मतः ॥ २० ॥

॥ ९ ॥ १० ॥ ११ ॥ यामा इति ॥ यामाः स्वायंभुवमन्वन्तरे देवाः ॥ १२ ॥ कूष्मांडा इति ॥ कूष्माण्डा उपदेवभेदाः ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ क्वेति ॥ निर्बन्धोऽभिनिवेशः ॥ १७ ॥ १८ ॥ १९ ॥ मत्प्रीतिरिति ॥ वयोवस्था क्रियाक्रमम् । वयोवस्थासु चोदितं क्रियाक्रमं निवर्त्यास्मादधर्मत इति "वृथा तीर्थं वृथा दानं वृथा जप्यं वृथा हुतम् ॥ स जीवति वृथा ब्रह्मन्यस्य माता सुदुःखिता" इति पुराणवचनान्मद्विरुद्धादकालतपश्चरणरूपादधर्मान्निवर्तस्वेति भावः । मत्प्रीत्या परमं

तद्भारमुद्वोढुं भूर्नाशक्नोदित्याह—मनस्यवस्थित इत्यादित्रिभिः ॥ ८ ॥ वामपादेति ॥ वामेन पादेन स्थिते तस्मिन्मेदिनी अर्द्धभागतो ननाम अवनताऽभूत् दक्षिणतः दक्षिणेन पादेन स्थिते तस्मिन् क्षितेर्द्वितीयं दक्षिणमर्धं ननाम ॥ ९ ॥ पादाङ्गुष्ठेनेति ॥ यदा सः पादाङ्गुष्ठेन च वसुधां मध्यतः सम्पीड्य आक्रम्य स्थितः तदा समस्ता वसुधा चचाल ॥ १० ॥ नद्य इति ॥ नद्यादयः क्षोभं प्राप्ताः तत्क्षोभात् नद्यादीनां क्षोभादमराः इन्द्रादयः परं क्षोभं जग्मुः प्राप्ताः ॥ ११ ॥ ततो देवैरनेकधा विघ्ने क्रियमाणे तत्समाधेरत्युत्थानलक्षणम् अतिदार्ढ्यमाह—यामानामेत्यादिना । एवं सर्वासु मायास्वित्येतत्प्राक्तनेन ग्रन्थेन ॥ १२ ॥ कूष्माण्डा इति ॥ कूष्माण्डाः केचिदुपदेवाः ॥ १३ ॥ सुनीतिरिति ॥ सास्रा अश्रुमती सती ॥ १४ ॥ पुत्रकेति ॥ शरीरस्यात्ययेन दारुणात्तीव्रात् निर्बन्धतः अस्मात्तपोनिर्बन्धान्निवर्त्तस्व ॥ १५ ॥ दीनामिति ॥ सपत्नीवचनात्क्रुद्धस्सन् मां त्युक्तुं नार्हसीत्यर्थः ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ मत्प्रीतिरिति ॥ यतो मत्प्रीतिर्मत्तोषणं तव परमो धर्मः अतः 'कालः क्रीडनकानां ते' इत्यादिना मदुक्तं वयोऽवस्थानुरूपं क्रियाणां क्रमम

परित्यजति वत्साद्य यद्येतन्न भवांस्तपः ॥ त्यक्ष्याम्यहमिह प्राणांस्ततो वै पश्यतस्तव ॥ २१ ॥ श्रीपराशर उवाच ॥ तां प्रलापवतीमेवं बा
ष्पाकुलविलोचनाम् ॥ समाहितमना विष्णौ पश्यन्नपि न दृष्टवान् ॥ २२ ॥ वत्स वत्स सुघोराणि रक्षांस्येतानि भीषणे ॥ वनेऽभ्युद्य
तशस्त्राणि समायान्त्यपगम्यताम् ॥ २३ ॥ इत्युक्त्वा प्रययौ साथ रक्षांस्याविर्बभुस्ततः ॥ अभ्युद्यतोग्रशस्त्राणि ज्वालामालाकुलैर्मुखैः
॥ २४ ॥ ततो नादानतीवोग्रान्राजपुत्रस्य ते पुरः ॥ मुमुचुर्दीप्तशस्त्राणि भ्रामयन्तो निशाचराः ॥ २५ ॥ शिवाश्च शतशो नेदुः सज्वाला-
कवलैर्मुखैः ॥ त्रासाय तस्य बालस्य योगयुक्तस्य सर्वदा ॥ २६ ॥ हन्यतां हन्यतामेष छिद्यतां छिद्यतामयम् ॥ भक्ष्यतां भक्ष्यतां चाय
मित्यूचुस्ते निशाचराः ॥२७॥ ततो नानाविधान्नादान् सिंहोष्ट्रमकराननाः ॥ त्रासाय राजपुत्रस्य नेदुस्ते रजनीचराः ॥ २८ ॥ रक्षांसि तानि
ते नादाः शिवास्तान्यायुधानि च ॥ गोविन्दासक्तचित्तस्य ययुर्नेन्द्रियगोचरम् ॥ २९॥ एकाग्रचेताः सततं विष्णुमेवात्मसंश्रयम् ॥ दृष्टवान्पृ
थिवीनाथपुत्रो नान्यं कथञ्चन ॥ ३० ॥ ततः सर्वासु मायासु विलीनासु पुनः सुराः ॥ संक्षोभं परमं जग्मुस्तत्पराभवशङ्किताः ॥ ३१ ॥ ते
समेत्य जगद्योनिमनादिनिधनं हरिम् ॥ शरण्यं शरणं यातास्तपसा तस्य तापिताः ॥३२॥ देवा ऊचुः ॥ देवदेव जगन्नाथ परेश पुरुषोत्तम ॥
ध्रुवस्य तपसा तप्तास्त्वां वयं शरणं गताः ॥३३॥ दिने दिने कलालेशैः शशाङ्कः पूर्यते यथा॥ तथायं तपसा देव प्रयात्यृद्धिमहर्निशम् ॥३४॥
औत्तानपादितपसा वयमित्थं जनार्दन ॥ भीतास्त्वां शरणं यातास्तपसस्तं निवर्तय ॥ ३५ ॥ न विद्मः किं स शक्रत्वं सूर्यत्वं किमभीप्सति ॥
वित्तपाम्बुपसोमानां साभिलाषः पदेषु किम् ॥ ३६ ॥ तदस्माकं प्रसीदेश हृदयाच्छल्यमुद्धर ॥ उत्तानपादतनयं तपसः सन्निवर्त्तय ॥ ३७ ॥

धर्ममिति पाठे वयोवस्था क्रियाक्रमरूपं परमं धर्मं मत्प्रीत्याऽनुवर्त्तस्व स्वधर्मो हि मातापितृगुरुधर्मान्नोत्कृष्यते अपि तु तत्सम्मत्येवोत्कृष्यते "यदेते ह्यनुजा
नीयुः कर्म लोकविगर्हितम् ॥ स धर्म इति मंतव्यो नात्र कार्या विचारणा" इति भारतोक्तेः ॥ २० ॥ २१ ॥ तामिति ॥ पश्यन्नपि व्यापारितचक्षुरिन्द्रियोपि
प्रयुक्तबाह्येन्द्रियोपि वा ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ॥ ३४ ॥ ॥ ३५ ॥ ३६ ॥ ३७ ॥

नुवर्त्तस्वेत्यर्थः ॥ २० ॥ २१ ॥ तामिति ॥ बाष्पैरश्रुभिराविले क्लिन्ने लोचने यस्यास्तां पश्यन्नपि उन्मीलितनेत्रोऽपि न दृष्टवान् विष्णौ समाहितमनस्कत्वादिति भावः ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ शिवा इति ॥
शिवाः भैरवाश्च ज्वाला एव कवलं ग्रासः तत्सहितैर्मुखैर्नेदुः नादं चक्रुः ॥ २६ ॥ २७ ॥ तत इति ॥ सिंहोष्ट्रमकराणामिव आननानि येषां ते ॥ २८ ॥ २९ ॥ ३० ॥ तत इति ॥ तस्मात्पराभवः स्वपदापकर्ष
लक्षणः तस्माच्छङ्किताः सन्तः ॥ ३१ ॥ ३२ ॥ ३३ ॥ दिनेदिन इति ॥ कलालेशैरिव शशाङ्कः ॥ ३४ ॥ ३५ ॥ ३६ तदिति ॥ शल्यं पराभवशङ्कालक्षणमुद्धरोत्पाटय ॥ ३७ ॥

श्रीभगवानुवाच ॥ नेन्द्रत्वं न च सूर्यत्वं नैवाम्बुपधनेशताम् ॥ प्रार्थयत्येष यं कामं तं करोम्यखिलं सुराः ॥ ३८ ॥ यात देवा यथाकामं
स्वस्थानं विगतज्वराः ॥ निवर्त्तयाम्यहं बालं तपस्यासक्तमानसम् ॥ ३९ ॥ श्रीपराशर उवाच ॥ इत्युक्ता देवदेवेन प्रणम्य त्रिदशास्ततः ॥
प्रययुः स्वानि धिष्ण्यानि शतक्रतुपुरोगमाः ॥ ४० ॥ भगवानपि सर्वात्मा तन्मयत्वेन तोषितः ॥ गत्वा ध्रुवमुवाचेदं चतुर्भुजवपुर्हरिः ॥ ४१ ॥
श्रीभगवानुवाच ॥ औत्तानपादे भद्रं ते तपसा परितोषितः ॥ वरदोहमनुप्राप्तो वरं वरय सुव्रत ॥ ४२ ॥ बाह्यार्थनिरपेक्षं ते मयि चित्तं यदा
हितम् ॥ तुष्टोहं भवतस्तेन तद्वृणीष्व वरं परम् ॥ ४३ ॥ पराशर उवाच ॥ श्रुत्वेत्थं गदितं तस्य देवदेवस्य बालकः ॥ उन्मीलिताक्षो ददृशे
ध्यानदृष्टं हरिं पुरः ॥ ४४ ॥ शंखचक्रगदाशार्ङ्गवरासिधरमच्युतम् ॥ किरीटिनं समालोक्य जगाम शिरसा महीम् ॥ ४५ ॥ रोमांचिताङ्गः
सहसा साध्वसं परमं गतः ॥ स्तवाय देवदेवस्य स चक्रे मानसं ध्रुवः ॥ ४६ ॥ किं वदामि स्तुतावस्य केनोक्तेनास्य संस्तुतिः ॥ इत्याकुल
मतिर्देवं तमेव शरणं ययौ ॥ ४७ ॥ ध्रुव उवाच ॥ भगवन्यदि मे तोषं तपसा परमं गतः ॥ स्तोतुं तदहमिच्छामि वरमेनं प्रयच्छ मे ॥ ४८ ॥
(ब्रह्माद्यैर्यस्य वेदज्ञैर्ज्ञायते यस्य नो गतिः ॥ तं त्वां कथमहं देव स्तोतुं शक्नोमि बालकः ॥ त्वद्भक्तिप्रवणं ह्येतत्परमेश्वर मे मनः ॥
स्तोतुं प्रवृत्तं त्वत्पादौ तत्र प्रज्ञां प्रयच्छ मे) श्रीपराशर उवाच ॥ शंखप्रांतेन गोविन्दस्तं पस्पर्श कृतांजलिम् ॥ उत्तानपादतनयं द्विजवर्य
जगत्पतिः ॥ ४९ ॥ अथ प्रसन्नवदनः स क्षणान्नृपनन्दनः ॥ तुष्टाव प्रणतो भूत्वा भूतधातारमच्युतम् ॥ ५० ॥

नेति ॥ कामं काम्यम् ॥ ३८ ॥ ३९ ॥ इतीति ॥ धिष्ण्यानि स्थानानि ॥ ४० ॥ भगवानिति ॥ तन्मयत्वेन ध्रुवस्य तदेकविषयचित्तत्वेन ॥ ४१ ॥ ४२ ॥
॥ ४३ ॥ श्रुत्वेति ॥ ध्यानदृष्टिर्हरिं पुरः यथाध्यानं बहिर्दृष्टवान् ॥ ४४ ॥ ४५ ॥ ४६ ॥ किं वदामीति ॥ किं वाक्यं वदामि केनोक्तेनार्थेन ॥ ४७ ॥
॥ ४८ ॥ शंखेति ॥ विद्याकोशः शंख इति भगवच्छास्त्रे अस्त्रभूषणाध्याये च दर्शनात् ॥ ४९ ॥ ५० ॥

नेति ॥ कामं वाञ्छितमर्थम् ॥ ३८ ॥ यातेति ॥ विगतज्वराः निश्शङ्काः ॥ ३९ ॥ इतीति ॥ स्वानि धिष्ण्यानि पदानि ॥ ४० ॥ ४१ ॥ ४२ ॥ वाह्यार्थेति ॥ यद्यस्मादाहितं समाहितम् ॥ ४३ ॥ ४४ ॥ शङ्खचक्रेति ॥
चतुर्भुजेषु शङ्खादिधरं: कक्षादौ वरासिधरं श्रेष्ठखङ्गधरं शिरसा महीं जगाम दण्डवत्प्रणतो बभूव ॥ ४५ ॥ रोमाञ्चिताङ्ग इति ॥ स्तवाय स्तोत्राय मानसं चक्रे ॥ ४६ ॥ किं वदामीति ॥ ततश्च ब्रह्मादिभिरविज्ञातगतेरस्य
स्तुतौ विषये बालोऽहं किं वदामि केन सर्वात्मकत्वेनोक्तेनास्य का स्तुतिर्भवेदिति व्याकुलमतिस्तमेव शरणं ययौ ॥ ४७ ॥ ४८ ॥ शङ्खप्रान्तेनेति ॥ सर्ववेदमयस्य शङ्खस्य प्रान्तेन वेदान्तभागेन परमेश्वरतत्त्वप्रतिपादकेन ब्रह्ममयेन
कम्बुना पस्पर्शेति श्रीशुकोक्तिः ॥ ४९ तत इति ॥ प्रसन्नवदनः प्राप्तज्ञानत्वाच्छोभतेऽस्य मुखम् "य एवं वेदेति ब्रह्मविद इव सौम्य ते मुखं भाति" इति श्रुतेः । भूतानां धातारमच्युतं तुष्टाव सर्वाश्रयस्थिरस्था

ध्रुव उवाच॥भूमिरापोनलो वायुः खं मनो बुद्धिरेव च ॥ भूतादिरादि प्रकृतिर्यस्य रूपं नतोस्मि तम् ॥ ५१ ॥ शुद्धः सूक्ष्मोखिलव्यापी प्रधानात्परतः पुमान्॥यस्य रूपं नमस्तस्मै पुरुषाय गुणात्मने ॥५२॥ भूतादीनां समस्तानां गंधादीनां च शाश्वतः ॥ बुध्यादीनां प्रधानस्य पुरुषस्य च यः परः॥५३॥ तं ब्रह्मभूतमात्मानमशेषजगतः पतिम् ॥ प्रपद्ये शरणं शुद्धं त्वद्रूपं परमेश्वर ॥५४॥ बृहत्त्वाद्बृंहणत्वाच्च यद्रूपं ब्रह्मसंज्ञितम् ॥ तस्मै नमस्ते सर्वात्मन्योगिचिन्त्याऽविकारिणे ॥ ५५ ॥ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ॥ सर्वव्यापी भुवः स्पर्शादत्यतिष्ठद्दशांगुलम् ॥५६॥

भूमिरिति॥भूम्यादिग्रहणं तन्मात्राणामप्युपलक्षणम् । मनोग्रहणं दशेन्द्रियाणां बुद्धिः महान् भूतादिरहंकारः । आदिप्रकृतिः प्रधानम्॥५१॥शुद्ध इति ॥ शुद्धः स्वतः सूक्ष्मोखिलव्यापी प्रतिक्षेत्रं व्यापी ज्ञानेन वा व्यापी गुणाशिन इति पाठान्तरम् । गुणाशी गुणभोक्ता॥५२॥मुक्तरूपमाह—भूतादीनामिति ॥ पुरुषो बद्धः॥५३॥तमिति ॥ बृंहभूतमपहतपाप्मत्वादिब्रह्मधर्मयुक्तम् । अशेषजगतः परमिति पाठान्तरम् । अशेषजगतः परं—"स सर्वान्पाप्मनोपहत्य सर्वेषां च भूतानां श्रेष्ठ्यम् स्वाराज्यमाधिपत्यं च पर्येति, य एवंवेद स स्वराड्भवति आप्नोति स्वाराज्यम्" इति श्रुतेः ॥५४॥ दिव्यरूपमाह—बृहत्वादिति ॥"समस्ताश्शक्तयश्चैता नृप यत्र प्रतिष्ठिताः" इत्यादिना बृहत्त्वं बृंहणत्वं चोक्तं 'मूर्तं' ब्रह्म महाभागी इति ब्रह्मसंज्ञत्वं 'सदैवरूपरूपाय' इत्यविकारित्वमुक्तम् । कलामुहूर्तेत्यादिना विभूतेर्नित्यत्वे सति का चिन्ता विग्रहादिनित्यत्वे ॥ ५५ ॥ दिव्यस्वरूपमाह—सहस्रशीर्षेति ॥ अनेन पुरुषस्य ज्ञानशक्त्योरानन्त्यं तत्फलीभूता व्याप्तिश्च प्रतिपाद्यते । अत्र सहस्रशब्दोऽनन्तवचनः । शीर्षग्रहणं सर्वाङ्गप्रत्यङ्गोपलक्षणम् । अतोत्र शीर्षशब्दः शिरसो ज्ञानकर्मेन्द्रियाणामाधारतया तत्कार्याणां ज्ञानशक्तीनामुपलक्षकः 'शीर्षंञ्छन्दसीति' शिरश्शब्दस्य शीर्षन्भावः । तथा निरुक्तं ब्राह्मणे 'शिरश्शब्दनिर्वचने बोधनमननश्रवणस्पर्शनरसनघ्राणज्ञानानि श्रितानि भवन्तीत्यतः शिरः' इति।अतोऽनेन पुरुषस्य ज्ञानशक्त्योरानन्त्यमुक्तम् । उक्तमर्थं प्रपंचयति सहस्राक्षः सहस्रपादिति । सहस्राक्ष इति ज्ञानस्यानन्त्यमुक्तम् । सहस्रपादिति शक्तेरानन्त्यम् । अत्राक्षिशब्दः सर्वज्ञानेन्द्रियाणामुपलक्षकः । पादशब्दः सर्व

नार्थित्वात् ॥ ५० ॥ भूमिरिति ॥ भूम्यादीनि सूक्ष्मरूपाणि दश मन इत्येकादशेन्द्रियोपलक्षणं बुद्धिर्महत्तत्त्वं भूतादिरहङ्कारः आदिप्रकृतिर्मूलप्रकृतिः इत्येवं चतुर्विंशतितत्त्वानि यस्य रूपं तं नतोस्मि ॥ ५१ ॥ शुद्ध इति ॥ प्रधानात्परस्तन्नियन्ता गुणात्मने गुणसाक्षिणे ॥ ५२ ॥ ५३ ॥ ५४ ॥ बृहत्वादिति ॥ बृहत्वात्सर्वगतत्वात् बृंहणत्वात्संवर्द्धनत्वात् विकारवन्न भवतीत्यविकारवत् योगिचिन्त्यं च तदविकारवच्च योगिचिन्त्याविकारवत् हे योगिचिन्त्येति पृथक् पदं वा ॥५५॥ बृहत्वं बृहणत्वं च विवृण्वन् पुरुषसूक्तार्थेन स्तौति—सहस्रशीर्षेति ॥ सहस्रमित्यपरिमितानामुपलक्षणं सहस्रम् अपरिमितानि शीर्षाणि यस्य विश्वरूपस्य सः सहस्रमक्षीणि यस्य सः सहस्रं पादा यस्य सः भुवः स्पर्शादिति ल्यब्लोपे पञ्चमी । दशाङ्गुलमित्याधिक्यमात्रपरं सावरणं ब्रह्माण्डं स्पृष्टाभिव्याप्य तदतिक्रम्य निरवधिर्भवांस्तिष्ठत इति स्पर्शश्चात्र न संयोगमात्रं किन्तु कारणत्वेन

यद्भूतं यच्च वै भव्यं पुरुषोत्तम तद्भवान् ॥ त्वत्तो विराट् स्वराट् सम्राट् त्वत्तश्चाप्यधिपूरुषः ॥५७॥ अत्यरिच्यत सोधश्च तिर्यगूर्ध्वं च वै भुवः ॥
त्वत्तो विश्वमिदं जातं त्वत्तो भूतं भविष्यति ॥५८॥ त्वद्रूपधारिणश्चान्तः सर्वभूतमिदं जगत् ॥ त्वत्तो यज्ञः सर्वहुतः पृषदाज्यं पशुर्द्विधा॥५९॥

कर्मेन्द्रियाणामुपलक्षकः । अत्र हि अङ्गप्रत्यङ्गादीनामभावात्तत्कार्यभूतज्ञानशक्त्योरानन्त्यमेवोच्यते । कुतः—"न तस्य कार्यं करणं च विद्यते" इति श्रुतेः । अयं हि भगवान्सर्वैः शरीरेन्द्रियैरेकैकेन वा विनिमयेन देहेन वाऽवयवेन वा स्वरूपेण वा सर्वं सदा सर्वथा साक्षात्करोति तथा च श्रुतिः "अपाणिपादो जवनो ग्रहीता" इत्यादि यथाहुः श्रीवत्सांकमिश्राः " न चायं शललीव शललैः सर्वतः शिरश्चक्षुरादिभिर्वैरूप्यावहैराचित इत्युच्यते किन्तु यथाऽपर्यन्तचक्षुषोः पर्यान्तावयवाश्च सर्वं द्रष्टुं कर्तुं च शक्नुवन्ति तथायमपि" इति। पुरुषशब्दस्य पूर्वमेवाहमिहासमिति "तत् पुरुषस्य पुरुषत्वं, पूरणात्सदनाच्चापि ततोसि पुरुषः स्मृतः" इत्यादिषु श्रुतिस्मृतिषु बहुप्रकारं निर्वचनं द्रष्टव्यम् । भुवः भवतीति भूः अनेनासद्व्यावृत्तानि चिदचिदात्मकानि सर्वाणि भूतानि लक्ष्यन्ते । स्पर्शादिति दशाङ्गुलं दशगुणं महाप्रमाणमिति भावः । अतीत्यातिष्ठत् सर्वव्यापित्वाद्भुवश्चिदचिदात्मकस्य जगतः स्पर्शात् स्पर्शं कृत्वा दशांगुलमत्यतिष्ठद्भगवानित्यन्वयः । स्पर्शादिति ल्यब्लोपे पंचमी "येनावृतं खं च दिवं महीं च यच्च किंचिज्जगत्" इत्यादिश्रुतिषु व्याप्याज्जगतो व्यापकस्य पुरुषस्य महत्त्वं प्रतिपादितम् ॥ ५६ ॥ न केवलं व्योमवद्व्यापकत्वं सर्वशरीरित्वं चेत्याह—यद्भूतमिति ॥ त्वत्त इत्यादि विराट् अव्यक्तशरीरोऽनिरुद्धः तथा च मोक्षधर्मे "ईश्वरो हि जगत्स्रष्टा प्रभुर्नारायणो विराट् ॥ ततो यज्ञश्च यष्टा च पुराणः पुरुषो विराट् । अनिरुद्ध इति प्रोक्तो लोकानां प्रभवोथ यः" इति च । सम्राट् परमं पदं प्राप्तः "सोक्षरः परमस्वराट्" इति विशेषणात् स्वराट् केवलात्मप्राप्तः । यद्वा "अयं लोकस्तु वै सम्राडन्तरिक्षं विराट् स्मृतम् ॥ स्वराडसौ स्मृतो लोकः" इति वायूक्तेर्लोका विराडादयः । अधिपूरुषः अधिकारिपुरुषो ब्रह्मा । अथ वा त्वामधिकरणीकृत्य पुरुषः आत्मसमष्टिरूपो हिरण्यगर्भोजायत ॥ ५७ ॥ अत्यरिच्यतेति ॥ स पुरुषो भुवोधः पाताले तिर्यक्सर्वद्वीपेषु ऊर्ध्वं स्वर्गादौ अत्यरिच्यत संतानात्मना वृद्धः व्यष्टिरूपेण वा ॥ ५८ ॥ त्वद्रूपधारिण इति ॥ त्वद्रूपधारिणः त्वत्स्वरूपधारिणोऽधिपुरुषस्यान्तः सर्वं भूतं सर्वमित्यर्थः ॥ त्वत्सृष्टस्यात्यन्तर्जगत् किं पुनस्तवेति भावः आत्मीयं

तद्व्याप्तिः ॥ ५६ ॥ कार्यात्कारणस्याधिक्यं युक्तमिति पूर्वोक्तं समर्थयति यद्भूतमित्यादिना—यद्भूतमिति ॥ विराट् ब्रह्माण्डं स्वराट् ब्रह्मा सम्राट् मनुः अधिपूरुषः एषामधिष्ठाता महापुरुषः ॥ ५७ ॥ अत्यरिच्यतेति ॥ यस्मादेते त्वत्तो जाताः तस्मात् भवान् भुवोऽधश्च तिर्यक् च ऊर्ध्वं चात्यरिच्यत अतिरिक्तोऽभूत् । भूशब्दोक्तस्य विश्वस्य तत्कार्यत्वेन तदन्तर्वर्तित्वात् ततोऽनन्यत्वमाह—त्वत्तो विश्वमिति । भूतं च भविष्यं च भूतभविष्यती ॥ ५८ ॥ त्वद्रूपेति ॥ त्वद्रूपधारिणश्चेति चकारोप्यर्थे । तवैव कारणभूतस्य स्वरूपं त्वद्रूपं धारयतीति न तु पृथक्त्वं यतस्त्वद्रूपधारि ब्रह्माण्डं तस्याप्यन्तः सर्वमिदं जगत्तदन्तर्भूतं किं वक्तव्यं तवान्तर्भूतमिति

त्वत्तो ऋचोथ सामानि त्वत्तश्छन्दांसि जज्ञिरे ॥ त्वत्तो यजूंष्यजायन्त त्वत्तोश्वाश्चैकतो दतः ॥ ६० ॥ गावस्त्वत्तः समुद्भूतास्त्वत्तोजा अवयो मृगाः ॥ त्वन्मुखाद्ब्राह्मणास्त्वत्तो बाहोः क्षत्रमजायत ॥ ६१ ॥ वैश्यास्तवोरुजाः शूद्रास्तव पद्भ्यां समुद्गताः ॥ अक्ष्णोः सूर्योनिलः प्राणाच्चन्द्रमा मनसस्तव ॥ ६२॥ प्राणोन्तः सुषिराज्जातो मुखादग्निरजायत ॥ नाभितो गगनं द्यौश्च शिरसः समवर्तत ॥६३॥ दिशः श्रोत्रात्क्षितिः पद्भ्यां त्वत्तः सर्वमभूदिदम् ॥ ६४ ॥ न्यग्रोधः सुमहानल्पे यथा बीजे व्यवस्थितः ॥ संयमे विश्वमखिलं बीजभूते तथा त्वयि ॥ ६५ ॥ बीजादंकुरसम्भूतो न्यग्रोधस्तु समुत्थितः ॥ विस्तारं च यथा याति त्वत्तः सृष्टौ तथा जगत् ॥ ६६ ॥ यथा हि कदली नान्या त्वक्पत्रादपि दृश्यते ॥ एवं विश्वस्य नान्यस्त्वं त्वत्स्थायीश्वर दृश्यते ॥ ६७ ॥ ह्लादिनी संधिनी संवित्त्वय्येका सर्वसंस्थितौ ॥ ह्लादतापकरी मिश्रा त्वयि नो गुणवर्जिते ॥ ६८ ॥

सर्वमस्मिन्यज्ञे पशुपुरोडाशादिरूपेण हुतमिति सर्वहुतः पृषदाज्यं दधिमिश्रमाज्यं पशुर्द्विधा ग्राम्यारण्यभेदेन ॥ ५९ ॥ त्वत्त इति ॥ एकतो दतः महिषादयः ॥ ६० ॥ गाव इति ॥ तेषु महिषादिषु गवादेः पृथगुक्तिः प्राशस्त्यात् ॥ ६१ ॥ ६२ ॥ प्राण इति ॥ प्राणान्मुख्यप्राणात् प्राणो नः सुषिराज्जात इति च पाठः । प्राणः नः सुषिरान्नासारन्ध्रात् । प्राणोन्तः सुषिरादिति वा पाठः तदा तत्र वर्तमानाद्वायोरित्यर्थः । प्राणः प्राणाख्यो वृत्तिविशेषः ॥ ६३ ॥ ६४ ॥ न्यग्रोध इति ॥ संयमे संहारे ॥ ६५ ॥ ६६ ॥ यथेति ॥ यथा च कारणभूता बालत्वक्पत्रावस्था कदली स्वकार्यभूतस्थूलत्वक्पत्रान्नान्या सैवेयमिति । प्रत्यभिज्ञानात् एवं कारणभूतस्त्वं कार्यभूताद्विश्वस्मान्नान्यः । "बहुस्यां तदात्मानं स्वयमकुरुत ज्योतींषि विष्णुः" इत्यादेः । अपि च विश्वस्मात्पृथग्भूतस्त्रिपाद्रूपेण त्वं दृश्यसे "व्यतिरिक्तं न यस्यास्ति व्यतिरिक्तोखिलस्य यः । त्रिपादस्य स्मृतं दिवि" इत्यादि ॥ ६७ ॥ ह्लादिनीति ॥ सर्वसंस्थितौ सर्वाधारे त्वयि संवत् ह्लादिनी निरवधिकाह्लादसं

सर्वाणि भूतानि यस्मिन् तज्जगद्ब्रह्माण्डस्यांतस्तिष्ठतीत्यर्थः । सर्वभूतादिदं जगदिति पाठे सर्वात्मकत्वद्रूपधारिणो ब्रह्माण्डादन्तरिदं जगत्तिष्ठतीत्यर्थः । किञ्च त्वत्तो यज्ञः स कथम्भूतः सर्वेषां च पुरोडाशादीनां हुतं हवनमस्मिन्निति सर्वहुतः नानाद्रव्यक इत्यर्थः । त्वत्तो यज्ञात्सर्वहुतादिति पाठे सर्वं हूयतेऽस्मिन्निति सर्वहुतः तस्माद्यज्ञादिति ल्यब्लोपे पञ्चमी । सर्वहुतं यज्ञमुद्दिश्य तत्साधनं पृषदाज्यादि त्वत्तो जातमित्यर्थः । पृषदाज्यं दधिमिश्रं घृतं पशुर्द्विधा ग्राम्यारण्यभेदेन ॥ ५९ ॥ त्वत्त इति ॥ छन्दांसि गायत्र्यादीनि त्वत्त अश्वाः एकतो दतश्च उभयतो दन्ता एकतोदन्ताश्च ॥ ६० ॥ तानाह–गाव इति ॥ ६१ ॥ ६२ ॥ ६३ ॥ ॥ ६४ ॥ ६५ ॥ ६६ ॥ त्वत्तो जातं विश्वं भिन्नं न भवतीति दृष्टान्तेनाह–यथाहीति ॥ यथा हि त्वचापत्रादेश्चान्या पृथग्भूता कदली न दृश्यते । एवं त्वक्पत्रस्थानीया त्वत्तो विश्वस्य नान्यत्त्वं यतस्त्वत्स्थायित्त्वस्येव सद्भे स्थातुं शीलमस्येति त्वत्स्थायि तथाभूतमेव सन्नेव घटः सन् पट इत्येवं दृश्यते न तु पृथक् भो ईश्वर ! सर्वजननियामक एवं विश्वस्य नान्यस्त्वमिति पाठान्तरेऽप्ययमेवार्थः ॥ ६७ ॥ ईश्वरत्वमेव जगीश्वरत्वेल

पृथग्भूतैकभूताय भूतभूताय ते नमः ॥ प्रभूतभूतभूताय तुभ्यं भूतात्मने नमः ॥ ६९ ॥ व्यक्तं प्रधानपुरुषौ विराट् सम्राट् स्वराट् तथा ॥ विभाव्यतेन्तःकरणे पुरुषेष्वक्षयो भवान् ॥ ७० ॥ सर्वस्मिन्सर्वभूतस्त्वं सर्वः सर्वस्वरूपधृक् ॥ सर्वं त्वत्तस्ततश्च त्वं नमः सर्वात्मनेऽस्तु ते ॥ ७१ ॥ सर्वात्मकोसि सर्वेश सर्वभूतस्थितो यतः ॥ कथयामि ततः किं ते सर्वं वेत्सि हृदि स्थितम् ॥ ७२ ॥ सर्वात्मन्सर्वभूतेश सर्वसत्त्वसमुद्भव ॥ सर्वभूतो भवान्वेत्ति सर्वसत्त्वमनोरथम् ॥ ७३ ॥

बन्धिनी अविच्छेदवती एका एकरूपा ह्लादतापोभयमिश्रा विच्छिन्नपरिमिताह्लादकरी केवलतापकरी च संवित्त्वयि नास्ति । अत्र हेतुः गुणवर्जित इति इयं च संविन्नत् कर्तृका वा तत्कर्मिका वा"विज्ञानमानन्दं ब्रह्म तमेवं विद्वानमृत इह भवति, रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवति" इत्यादि श्रुतेः॥६८॥पृथग्भूतेति॥ पृथग्भूतैकभूताय कार्यकारणावस्थायाः भूतभूताय पञ्चभूतशरीराय प्रभूतभूतभूतायेति च पाठः । प्रभूतभूतभूताय प्रभूतानि भूतानि ब्रह्मादयः प्राणिनस्तद्भूताय भूतात्मने एवं व्याप्तात्मने अथ वा भूतभूताय भूतसूक्ष्मत्वेनाविर्भूताय प्रभूतभूतभूताय महाभूतत्वं प्राप्ताय भूतात्मने सर्वप्राणिरूपाय नम इति॥६९॥ व्यक्तमिति॥ व्यक्तादयः प्रसिद्धाः विराडादयः पूर्वमेवोक्ताः।व्यक्तादीनां भवानित्यनेनान्वयः किं च पुरुषेष्वन्तःकरणे विभाव्यते भवान् ॥७०॥ सर्वस्मिन्निति ॥सर्वस्मिन् गगनादौ सर्वभूतः शब्दादित्वं "शब्दः खे पौरुषं नृषु तेजश्चास्मि विभावसौ" इत्यादि सर्वस्वरूपधरत्वात्सर्वः सर्वभूतः बहुस्यामिति सर्वरूपेण परिणतः सर्वं त्वत्तः निमित्तत्वादुपादानत्वाच्च सर्वं त्वमित्यर्थः॥७१॥७२॥७३॥

क्षण्येन दर्शयन्नाह—ह्लादिनीति ॥ ह्लादिनी आह्लादकारिणी सन्धिनी सन्तता सम्यग्विद्याशक्तिः एका मुख्या अव्यभिचारिणी स्वरूपभूतेति यावत् । सर्वसंस्थितौ सर्वस्य सम्यक् स्थितिर्यस्मिन् सर्वाधिष्ठानभूते त्वय्येव न तु जीवेषु या तु गुणमयी त्रिविधा संवित्सा त्वयि नास्ति तामेवाह ह्लादतापकरी मिश्रेति ह्लादकरी मनःप्रसादोत्था सात्त्विकी तापकरी विषयभोगादिषु दुःखकरी तामसी उभयमिश्रा च विषयजन्या राजसी तत्र हेतुः स्वगुणैर्वर्जिते तदुक्तं सर्वज्ञसूक्तौ "ह्लादिन्या संविदा श्लिष्टः सच्चिदानन्द ईश्वरः । स्वाविद्यासंवृतो जीवः संक्लेशनिकराकरः" इति ॥ ६८ ॥ ऐश्वर्यमेव विभूतिभिः प्रपञ्चयति—पृथग्भूतेति ॥ पृथग्भूतैकभूताय कार्यात्मना पृथग्भूताय कारणात्मना चैकरूपाय भूतभूताय भूतसूक्ष्माय प्रभूतभूतरूपाय प्रभूतभूतानि महाभूतानि तद्रूपाय भूतात्मने चराचरप्राणिरूपाय तुभ्यं नमः ॥ ६९ ॥ किञ्च—व्यक्तमिति ॥ पूर्वोक्तप्रधानरूपतयाऽन्तःकरणे योगिभिः भवान्विभाव्यते चिन्त्यते तथा पुरुषेषु क्षेत्रज्ञेषु उपाध्यभिमानेषु क्षीयमाणेष्वपि भवान् परमात्मा अक्षयो विभाव्यते ॥ ७० ॥ किञ्च सर्वस्मिन्निति ॥ सर्वस्मिन् देवादिशरीरे सर्वभूतस्तत्तत्क्षेत्रज्ञरूपस्त्वं सर्वश्च त्वं क्षेत्ररूपश्च त्वमेव । क्षेत्रक्षेत्रज्ञरूपत्वमेकस्य विरुद्धमित्याशङ्क्याह—सर्वस्वरूपधृक् चेतनाचेतनरूपस्त्वमेव "सर्वं खल्विदं ब्रह्म" इति श्रुतेरित्यर्थः । तदेतच्चोपपादयति सर्वं त्वत्तस्त्वत्तोहि सर्वं जायते अतस्सर्वरूपस्त्वमेव ननु प्रथमकार्यं हिरण्यगर्भादिकं मत्तो जायतां तत्पुत्रादिद्वारा यदन्यज्जायते तत्कथं मत्तो जातं स्यादत्राह—अतश्चेति ॥ त्वत्तो जातहिरण्यगर्भादेस्तत्पुत्रादिरूपेण त्वमेव जायसे अतस्तद्द्वारा जायमानं सर्वं त्वत्त एवेत्यर्थः । स्तुतिं निगमयति । एवं सर्वात्मने ते नमोस्त्विति ॥ ७१ ॥ सर्वमनोरथं सूचयन्नाह—सर्वात्मकोसीति ॥ ७२ ॥ एतदेव विवृण्वन्नाह—सर्वात्मन्निति ॥

यो मे मनोरथो नाथ सफलः स त्वया कृतः ॥ तपश्च तप्तं सफलं यद्दृष्टोसि जगत्पते॥७४॥श्रीभगवानुवाच॥तपसस्तत्फलं प्राप्तं यद्दृष्टोऽहं त्वया ध्रुव॥मद्दर्शनं हि विफलं राजपुत्र न जायते ॥ ७५ ॥ वरं वरय तस्मात्त्वं यथाभिमतमात्मनः ॥ सर्वं संपद्यते पुंसां मयि दृष्टिपथं गते ॥ ७६ ॥ ध्रुव उवाच॥भगवन्भूतभव्येश सर्वस्यास्ते भवान् हृदि॥ किमज्ञातं तव ब्रह्मन्मनसा यन्मयेक्षितम् ॥ ७७ ॥ तथापि तुभ्यं देवेश कथयिष्यामि यन्मया ॥ प्रार्थ्यते दुर्विनीतेन हृदयेनातिदुर्लभम् ॥ ७८ ॥ किं वा सर्वजगत्स्रष्टः प्रसन्ने त्वयि दुर्लभम् ॥ त्वत्प्रसादफलं भुंक्ते त्रैलोक्यं मघवानपि ॥ ७९ ॥ नैतद्राजासनं योग्यमजातस्य ममोदरात् ॥ इति गर्वादवोचन्मां सपत्नीमातुरुच्चकैः ॥८०॥ आधारभूतं जगतः सर्वेषामुत्तमोत्तमम् ॥ प्रार्थयामि प्रभो स्थानं त्वत्प्रसादादतोव्ययम् ॥८१ ॥ श्रीभगवानुवाच॥ यत्त्वया प्रार्थ्यते स्थानमेतत्प्राप्स्यति वै भवान् ॥ त्वयाऽहं तोषितः पूर्वमन्यजन्मनि बालक ॥ ८२ ॥ त्वमासीर्ब्राह्मणः पूर्वं मय्येकाग्रमतिः सदा ॥ मातापित्रोश्च शुश्रूषुर्निजधर्मानुपालकः ॥ ८३ ॥ कालेन गच्छता मित्रं राजपुत्रस्तवाभवत् ॥ यौवनेखिलभोगाढ्यो दर्शनीयोज्ज्वलाकृतिः ॥ ८४ ॥ तत्सङ्गात्तस्य तामृद्धिमवलोक्यातिदुर्लभाम् ॥ भवेयं राजपुत्रोहमिति वाञ्छा त्वया कृता ॥ ८५ ॥ ततो यथाभिलषिता प्राप्ता ते राजपुत्रता ॥ उत्तानपादस्य गृहे जातोसि ध्रुव दुर्लभे ॥ ८६ ॥ अन्येषां दुर्लभं स्थानं कुले स्वायम्भुवस्य यत् ॥ ८७ ॥

॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ अन्येषामिति ॥

हे सर्वात्मन् ! सर्वेषामात्मभूत सर्वभूतानामीश सर्वेषां सत्त्वानां समुद्भवो यस्मात् हे सर्वप्राणिजनक सर्वभूतश्च भवान् अतः सर्वेषां सत्त्वानां मनोरथं वेत्ति न केवलं मदीयमेवेत्यर्थः ॥ ७३ ॥ य इति ॥ यो मे मनोरथस्त्वत्सङ्कल्पविषयः संस्तुतिशक्तिदानेन त्वया सफलः कृतः अतो मया यदर्थं तपस्तप्तं तदपि सफलं जातमेवेति ज्ञायते यतस्त्वं दृष्टोसि ॥ ७४ ॥ तपस इति ॥ यत्त्वया काङ्क्षितं तपसः फलं तत्प्राप्तमेव किं तत्प्रार्थनेन यतो मद्दर्शनं विफलं न जायते ॥ ७५ ॥ अपि च—वरमिति ॥ तस्मात्प्राप्तादन्यत्किमपि परं मत्सालोक्यादिकं यथेप्सितं वृणीष्वेत्यर्थः ॥ ७६ ॥ ७७ ॥ तथापीति ॥ भगवन् ममाद्यापि त्वत्सालोक्यापेक्षा नास्ति तच्च ते विदितमस्ति तच्च भवानन्तर्यामी जानात्येव तथापि दुर्विनीतेन मया हृदयेन यत्प्रार्थ्यते तत्कथयिष्यामि ॥ ७८ ॥ भक्तिरहितस्यातिदुर्लभमपि कथं भक्तेन वृतम् अतिदुर्लभं स्यादनतिदुर्लभमेव प्रसादहीनस्य दुर्लभमपि प्रसादवत्सुलभमेवेत्याह—किम्वेति ॥ ७९ ॥ ब्रह्मादिदुर्लभं त्वत्सालोक्यं विहाय त्रैलोक्यान्तर्वर्त्तिस्थानं स्वप्रार्थ्यं सहेतुकमाह—नैतदित्यादिद्वाभ्याम् ॥ ८० ॥ ८१ ॥ यदिति ॥ भगवद्वाक्यं तदेवंविधं स्थानं भवान्प्राप्स्यति पूर्वजन्मनि यत्कृतं तदेव त्वया प्राप्तुं शक्यम् अन्तरायेण तु केनचित्त्वं राजपुत्रोसि तत्राप्ययं तत्रापरितोषो मत्तोषगप्रभावादेवाभूत्ततः किञ्चित्कालं राज्यभोगान्भुक्त्वा ततश्च कल्पान्तं ध्रुवपदे जनन्या सह स्थित्वा पश्चान्मोक्षमवाप्स्यसि तदाह त्वयेत्यादिना पुण्यं भविष्यतीत्यन्तेन ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ अन्येषामिति ॥ स्वायम्भुवस्यान्वये जन्म अन्येषां तापसानां परं श्रेष्ठम् ॥ ८७ ॥

तस्यैतदपरं बाल येनाहं परितोषितः ॥ मामाराध्य नरो मुक्तिमवाप्नोत्यविलम्बिताम् ॥ ८८ ॥ मय्यर्पितमना बाल किमु स्वर्गादिकं पदम्॥ ॥ ८९ ॥ त्रैलोक्यादधिके स्थाने सर्वताराग्रहाश्रयः ॥ भविष्यति न सन्देहो मत्प्रसादाद्भवान्ध्रुव ॥ ९० ॥ सूर्यात्सोमात्तथा भौमात्सोमपुत्राद्बृहस्पतेः ॥ सितार्कतनयादीनां सर्वर्क्षाणां तथा ध्रुव ॥ ९१ ॥ सप्तर्षीणामशेषाणां ये च वैमानिकाः सुराः ॥ सर्वेषामुपरि स्थानं तव दत्तं मया ध्रुव ॥ ९२ ॥ केचिच्चतुर्युगं यावत्केचिन्मन्वन्तरं सुराः ॥ तिष्ठन्ति भवतो दत्ता मया वै कल्पसंस्थितिः ॥ ९३ ॥ सुनीतिरपि ते माता त्वदासन्नातिनिर्मला ॥ विमाने तारका भूत्वा तावत्कालं निवत्स्यति ॥ ९४ ॥ ये च त्वां मानवाः प्रातः सायं च सुसमाहिताः ॥ कीर्त्तयिष्यंति तेषां च महत्पुण्यं भविष्यति ॥९५ ॥ श्रीपराशर उवाच ॥एवं पूर्वं जगन्नाथाद्देवदेवाज्जनार्दनात् ॥ वरं प्राप्य ध्रुवः स्थानमध्यास्ते स महामते ॥ ९६॥ स्वयं शुश्रूषणाद्धर्म्यान्मातापित्रोश्च वै तथा ॥द्वादशाक्षरमाहत्म्यात्तपसश्च प्रभावतः ॥९७॥ तस्याभिमानमृद्धिं च महिमानं निरीक्ष्य हि ॥देवासुराणामाचार्यः श्लोकमत्रोशना जगौ ॥ ९८॥ अहोस्य तपसो वीर्यमहोस्य तपसः फलम् ॥ यदेनं पुरतः कृत्वा ध्रुवं सप्तर्षयः स्थिताः ॥ ९९ ॥ ध्रुवस्य जननी चेयं सुनीतिर्नाम सूनृता ॥ अस्याश्च महिमानं कः शक्तो वर्णयितुं भुवि ॥ १०० ॥ त्रैलोक्याश्रयतां प्राप्तं परं स्थानं स्थिरायति ॥ स्थानं प्राप्ता परं धृत्वा या कुक्षिविवरे ध्रुवम् ॥ १०१ ॥

स्वायंभुवस्य कुले यत्स्थानं तन्मद्भक्तादन्येषां परस्थानम् ॥ ८७ ॥ तस्येति ॥ तस्य मद्भक्तस्य ते एतत्स्वायंभुवकुले स्थानम् अपरं तुच्छम् ॥८८ ॥ ८९ ॥ ९० ॥ ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ ध्रुवस्येति ॥ सूनृता सुशीलो भवेत्यायभिहितसत्यवाक्या ॥ १०० ॥ त्रैलोक्येति॥

तस्येति॥मामाराध्य प्राकृतोपि अविलम्बितं शीघ्रमेव मुक्तिमवाप्नोति त्वया तु येन राजपुत्रसङ्गत्या ऐश्वर्यकामेनाहं परितोषितः मामाराध्य नरो मुक्तिमवाप्नोतीत्युक्तस्य तव मद्भक्तस्य मध्ये एतदपरं शुभं जातम्॥८८॥मयीति ॥ स्वर्गादिकं पदं प्राप्नोतीत्यत्र किं वक्तव्यम् ॥ ८९ ॥ अधिकस्थाने भवानपि देवानामत्यलभ्यं स्थानं प्राप्नोतीत्याह–त्रैलोक्यादिति ॥ ९० ॥ स्थानस्याधिक्यमाह–सूर्यादिति ॥ सोमपुत्राद्बुधात् सितः शुक्रः अर्कतनयः शनैश्वरः ॥ ९१ ॥ ९२ ॥ ९३ ॥ सुनीतिरिति ॥ सुनीतिरपि ते मातेति त्वन्मातृत्वादेव तत्र विमाने निवत्स्यतीत्यर्थः ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ ध्रुवस्येति ॥ सूनृता पुण्योपचये यत्नं कुरुष्वेत्यादि हितसत्यवादिनी ॥ १०० ॥ त्रैलोक्येति ॥ त्रैलोक्याश्रयतां प्राप्तं यत्परं विष्णुपदाख्यं स्थानं स्थिरायति स्थिरा नित्या मुक्तरूपा आयतिरुत्तरकालफलं यस्मिन् तथाभूतं स्थानं निवासं प्राप्ता प्राप्येति वा

यश्चैतत्कीर्त्तयेन्नित्यं ध्रुवस्यारोहणं दिवि ॥ सर्वपापविनिर्मुक्तः स्वर्गलोके महीयते ॥ १०२ ॥ स्थानभ्रंशं न चाप्नोति दिवि वा यदि वा भुवि ॥ सर्वकल्याणसंयुक्तो दीर्घकालं स जीवति ॥ १०३ ॥ इति श्रीविष्णुपुराणे प्रथमेंशे द्वादशोऽध्यायः ॥ १२ ॥ श्रीपराशर उवाच ॥ ध्रुवाच्छिष्टिं च भव्यं च भव्याच्छम्भुर्व्यजायत ॥ शिष्टेराधत्त सुच्छाया पञ्चपुत्रानकल्मषान् ॥ १ ॥ रिपुं रिपुञ्जयं विप्रं वृकलं वृकतेजसम् ॥ रिपोराधत्त बृहती चाक्षुषं सर्वतेजसम् ॥ २ ॥ अजीजनत्पुष्करिण्यां वारुण्यां चाक्षुषो मनुम् ॥ प्रजापतेरात्मजायां वीरणस्य महात्मनः ॥ ३ ॥ मनोरजायन्त दश नड्वलायां महौजसः ॥ कन्यायां तपतां श्रेष्ठ वैराजस्य प्रजापतेः ॥ ४ ॥ कुरुः पुरुः शतद्युम्नस्तपस्वी सत्यवाञ्छुचिः ॥ अग्निष्टोमोतिरात्रश्च सुद्युम्नश्चेति ते नव ॥ अभिमन्युश्च दशमो नड्वलायां महौजसः ॥ ५ ॥ कुरोरजनयत्पुत्रान् षडाग्नेयी महाप्रभान् ॥ अङ्गं सुमनसं ख्यातिं क्रतुमङ्गिरसं शिबिम् ॥ ६ ॥ अङ्गात्सुनीथापत्यं वै वेनमेकमजायत ॥ प्रजार्थमृषयस्तस्य ममन्थुर्दक्षिणं करम् ॥ ७ ॥ वेनस्य पाणौ मथिते सम्बभूव महामुने ॥ वैन्यो नाम महीपालो यः पृथुः परिकीर्त्तितः ॥ ८ ॥ येन दुग्धा मही पूर्वं प्रजानां हितकारणात् ॥ ९ ॥ मैत्रेय उवाच ॥ किमर्थं मथितः पाणिर्वेनस्य परमर्षिभिः ॥ यत्र जज्ञे महावीर्यः स पृथुर्मुनिसत्तम ॥ १० ॥ श्रीपराशर उवाच ॥ सुनीथा नाम या कन्या मृत्योः प्रथमतोऽभवत् ॥ अङ्गस्य भार्या सा दत्ता तस्यां वेनो व्यजायत ॥ ११ ॥

स्थिरायति स्थिरोत्तरकालं स्थिरैश्वर्यं या परं केवलं कुक्षिविवरे स्थितं ध्रुवं धृत्वा ध्रुवधारणद्वारा त्रैलोक्याश्रयतां प्राप्तं विष्णुपदाख्यं परं स्थानं प्राप ॥ १०१ ॥ १०२ ॥ ॥ १०३ ॥ इति श्रीविष्णुपुराणव्याख्याने विष्णुचित्तीये प्रथमेंशे द्वादशोऽध्यायः ॥ १२ ॥ १ ॥ २ ॥ अजीजनदिति ॥ चाक्षुषस्य पुत्रः षष्ठो मनुः प्रजापतेरित्यर्धं पूर्वेण संबध्यते ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ अंगादिति ॥ सुनीथा मृत्युदुहिता ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

पाठः । कथं प्राप्ता परं श्रेष्ठं श्रीविष्णुभक्तं कुक्षिविवरे स्वल्पे धृत्वा या सुनीतिः परं स्थानं प्राप्ता तस्या महिमानं वर्णयितुं कः शक्त इत्यर्थः ॥ १०१ ॥ १०२ ॥ १०३ ॥ :इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुपुराणव्याख्यायां प्रथमांशे द्वादशोऽध्यायः ॥ १२ ॥ ॥ ध्रुवादिति ॥ भव्याद्भवात्परात् ध्रुवाच्छम्भुर्नामा भार्या शिष्टिं च व्यजायत शिष्टेः ध्रुवपुत्रात् सुच्छाया नाम योषित्पञ्चपुत्रान् आधत्त जनयामासेत्यर्थः । भार्या शम्भुर्व्यजायतेति केचित् पठन्ति ॥ १ ॥२॥ अजीजनदिति ॥ वारुण्यां वरुणसन्तानजायां वीरणस्य प्रजापतेरात्मजायां पुष्करिण्यां चाक्षुषः रिपुपुत्रः मनुं षष्ठमन्वन्तराधिपं जनयामासेत्यन्वयः ॥ ३॥ मनोरिति ॥ वैराजस्य प्रजापतेः कन्यायां नड्वलायां मनोर्महौजसो दशपुत्रा अजायन्तेत्यन्वयः ॥४॥ऊरुरिति ॥ नड्वलायां महौजस इति पुनरुक्तिस्तु नड्वलायां महौजसो ये दशेत्यनुवादेन त इति विधानार्था ॥५॥६॥ ७॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

स मातामहदोषेण तेन मृत्योः सुतात्मजः ॥ निसर्गादेष मैत्रेय दुष्ट एव व्यजायत ॥१२॥ अभिषिक्तो यदा राज्ये स वेनः परमर्षिभिः ॥ घोष
यामास स तदा पृथिव्यां पृथिवीपतिः ॥१३॥ न यष्टव्यं न दातव्यं न होतव्यं कथञ्चन ॥ भोक्ता यज्ञस्य कस्त्वन्योऽह्यहं यज्ञपतिः प्रभुः ॥१४॥
ततस्तमृषयः पूर्वं संपूज्य पृथिवीपतिम् ॥ ऊचुः सामकलं वाक्यं मैत्रेय समुपस्थिताः ॥ १५ ॥ ऋषय ऊचुः ॥ भोभो राजन् शृणुष्व त्वं
यद्वदाम महीपते ॥ राज्यदेहोपकाराय प्रजानां च हितं परम् ॥ १६ ॥ दीर्घसत्रेण देवेशं सर्वयज्ञेश्वरं हरिम् ॥ पूजयिष्याम भद्रं ते तस्यांशस्ते
भविष्यति ॥ १७ ॥ यज्ञेन यज्ञपुरुषो विष्णुः संप्रीणितो नृप ॥ अस्माभिर्भवतः कामान्सर्वानेव प्रदास्यति ॥ १८ ॥ यज्ञैर्यज्ञेश्वरो येषां राष्ट्रे
संपूज्यते हरिः ॥ तेषां सर्वेप्सितावाप्तिं ददाति नृप भूभृताम् ॥ १९ ॥ वेन उवाच ॥ मत्तः कोऽभ्यधिकोन्योस्ति कश्चाराध्यो ममापरः ॥ कोयं
हरिरिति ख्यातो यो वो यज्ञेश्वरो मतः ॥२०॥ ब्रह्मा जनार्दनः शम्भुरिन्द्रो वायुर्यमो रविः ॥ हुतभुग्वरुणो धाता पूषा भूमिर्निशाकरः ॥२१॥
एते चान्ये च ये देवाः शापानुग्रहकारिणः ॥ नृपस्यैते शरीरस्थाः सर्वदेवमयो नृपः ॥ २२ ॥ एवं ज्ञात्वा मयाज्ञप्तं यद्यथा क्रियतां तथा ॥
न दातव्यं न यष्टव्यं न होतव्यं च भो द्विजाः ॥२३॥ भर्तृशुश्रूषणं धर्मो यथा स्त्रीणां परो मतः ॥ ममाज्ञापालनं धर्मो भवतां च तथा द्विजाः
॥ २४ ॥ ऋषय ऊचुः ॥ देह्यनुज्ञां महाराज मा धर्मो यातु संक्षयम् ॥ हविषां परिणामोऽयं यदेतदखिलं जगत् ॥ २५॥ श्रीपराशर उवाच ॥
इति विज्ञाप्यमानोऽपि स वेनः परमर्षिभिः ॥ यदा ददाति नानुज्ञां प्रोक्तः प्रोक्तः पुनः पुनः ॥ २६ ॥ ततस्ते मुनयः सर्वे कोपामर्षसम
न्विताः ॥ हन्यतां हन्यतां पाप इत्यूचुस्ते परस्परम् ॥ २७ ॥

१२ ॥ १३ ॥ १४ ॥ तत इति ॥ साम सान्त्वनं कलम् अव्यक्तमधुरम् ॥ १५॥१६॥ दीर्घसत्रेणेति ॥ तस्यांशस्ते भविष्यतीति पाठः। तस्य यज्ञस्य अंशः षष्ठांशः ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥॥ २२ ॥ २३ ॥ २४ ॥ देहीति हविषां परिणामः कार्यं वृष्ट्युत्पादकः अदृष्टद्वारा ‘ अग्नौ प्रास्ताहुतिः ’ इति उक्त प्रकारेण ॥ २५ ॥ २६ ॥ तत इति अमर्षोऽतितिक्षा ॥ २७ ॥

॥१२॥१३॥ १४ ॥ तत इति ॥ सामकलं साम्ना कलं मधुरं वाक्यमूचुः ॥ १५ ॥ भो भो राजन्निति॥ राज्यदेहयोरुपभोगाय क्षेमाय॥ १६ ॥ दीर्घसत्रेणेति ॥ दीर्घसत्रेण सहस्रसंवत्सरेण अंशः षष्ठो भागः “पुण्यात्षड्भागमाधत्ते न्यायेन परिपालयन्” इति स्मृतेः ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ एतदिति ॥ मया यथा यदाज्ञप्तं तदेव क्रियतां तदेवाह–न दातव्यमिति ॥ २३ ॥ २४ ॥ देहीति ॥ हविषां परिणामो वृष्टिद्वारकः ॥ २५ ॥ २६ ॥ तत इति ॥ कोपश्च अमर्षश्च भगवन्निन्दाजनितौ ताभ्यां समन्विताः ॥ २७ ॥

यो यज्ञपुरुषं विष्णुमनादिनिधनं प्रभुम् ॥ विनिन्दत्यधमाचारो न स योग्यो भुवः पतिः ॥ २८ ॥ इत्युक्त्वा मंत्रपूतैस्तैः कुशैर्मुनिगणा नृपम् ॥ निजघ्नुर्निहतं पूर्वं भगवन्निन्दनादिना ॥ २९ ॥ ततश्च मुनयो रेणुं ददृशुः सर्वतो द्विज ॥ किमेतदिति चासन्नान्पप्रच्छुस्ते जनांस्तदा ॥ ३० ॥ आख्यातं च जनैस्तेषां चोरीभूतैरराजके ॥ राष्ट्रे तु लोकैरारब्धं परस्वादानमातुरैः ॥ ३१ ॥ तेषामुदीर्णवेगानां चोराणां मुनिसत्तमाः ॥ सुमहद्दृश्यते रेणुः परवित्तापहारिणाम् ॥ ३२ ॥ ततः संमंत्र्य ते सर्वे मुनयस्तस्य भूभृतः ॥ ममन्थुरूरुं पुत्रार्थमनपत्यस्य यत्नतः ॥ ३३ ॥ मथ्यमानात्समुत्तस्थौ तस्योरोः पुरुषः किल ॥ दग्धस्थूणाप्रतीकाशः खर्वाटास्योतिह्रस्वकः ॥ ३४ ॥ किं करोमीति तान्सर्वान्स विप्रानाह चातुरः ॥ निषीदेति तमूचुस्ते निषादस्तेन सोऽभवत् ॥ ३५ ॥ ततस्तत्संभवा जाता विन्ध्यशैलनिवासिनः ॥ निषादा मुनिशार्दूल पापकर्मोपलक्षणाः ॥ ३६ ॥ तेन द्वारेण तत्पापं निष्क्रान्तं तस्य भूपतेः ॥ निषादास्ते ततो जाता वेनकल्मषनाशनाः ॥ ३७ ॥ तस्यैव दक्षिणं हस्तं ममन्थुस्ते ततो द्विजाः ॥ ३८ ॥ मथ्यमाने च तत्राभूत्पृथुर्वैन्यः प्रतापवान् ॥ दीप्यमानः स्ववपुषा साक्षादग्निरिव ज्वलन् ॥ ३९ ॥ आद्यमाजगवं नाम खात्पपात ततो धनुः ॥ शराश्च दिव्या नभसः कवचं च पपात ह ॥ ४० ॥

॥ २८ ॥ इतीति ॥ देवतावेदयज्ञनिन्दया धर्मानुज्ञया आत्मप्रशंसया च स्वयमेव हतत्वात्तद्धंतुर्न दोष इति भावः ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ॥ ३३ ॥ मथ्यमानादिति ॥ मथ्यतः मथ्यमानात् खल्वाटः खलतिः "खर्वाटश्चाति ह्रस्वकः" इति च पाठः । खर्वटास्य इति पाठे ह्रस्ववक्त्रः ॥ ३४ ॥ ३५ ॥ तत इति ॥ निषादा जाता इत्यन्वयः ॥ ३६ ॥ तेनेति ॥ तेन निषादरूपेण द्वारेण तत्पापं भगवन्निन्दनादिरूपं पापम् ॥ ३७ ॥ ३८ ॥ ३९ ॥ आद्यमिति ।

॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ मथ्यमानादिति ॥ मथ्यतश्चेति पाठेऽपि मथ्यमानादित्येवार्थः । दग्धस्थूणाप्रतीकाशः दग्धस्तम्भतुल्यः कृष्णवर्ण इति यावत् । खर्वटास्यः ह्रस्वमुखः निबिडनासिकाक्षा इत्यर्थः । खर्वटाख्य इति पाठः । केचित्तु खर्वटाक्ष इति पठित्वा गोः अक्षिणी इव अक्षिणी यस्येति व्याचक्षते ॥ ३४ ॥ किं करोमीति अत्यन्तासम्भवे तथाभूतमभिषेक्तुं निषादेति तमूचुः ॥ ३५ ॥ तत इति ॥ पापरूपं कर्मैवोपलक्षणं चिह्नं येषां ते ॥ ३६ ॥ तेनेति ॥ तेन द्वारेण निषादरूपेण ॥ ३७ ॥ ३८ ॥ मथ्यमान इति ॥ अग्निरिवेति यथा काष्ठे मथ्यमाने धूमरूपेण तस्य मले निष्क्रान्ते पश्चादग्निरुत्पद्यते तथा निषादरूपेण कल्मषे निष्क्रान्ते पश्चादग्निरिव देदीप्यमानः पृथुरुत्पन्न इत्यर्थः ॥ ३९ ॥ आद्यमिति ॥ आद्यं शार्वं पिनाकसंज्ञं धनुः ॥ ४० ॥

स मातामहदोषेण तेन मृत्योः सुतात्मजः ॥ निसर्गादेष मैत्रेय दुष्ट एव व्यजायत ॥१२॥ अभिषिक्तो यदा राज्ये स वेनः परमर्षिभिः ॥ घोष
यामास स तदा पृथिव्यां पृथिवीपतिः ॥१३॥ न यष्टव्यं न दातव्यं न होतव्यं कथञ्चन ॥ भोक्ता यज्ञस्य कस्त्वन्योऽह्यहं यज्ञपतिः प्रभुः ॥१४॥
ततस्तमृषयः पूर्वं संपूज्य पृथिवीपतिम् ॥ ऊचुः सामकलं वाक्यं मैत्रेय समुपस्थिताः ॥ १५ ॥ ऋषय ऊचुः ॥ भोभो राजन् शृणुष्व त्वं
यद्वदाम महीपते ॥ राज्यदेहोपकाराय प्रजानां च हितं परम् ॥ १६ ॥ दीर्घसत्रेण देवेशं सर्वयज्ञेश्वरं हरिम् ॥ पूजयिष्याम भद्रं ते तस्यांशस्ते
भविष्यति ॥ १७ ॥ यज्ञेन यज्ञपुरुषो विष्णुः संप्रीणितो नृप ॥ अस्माभिर्भवतः कामान्सर्वानेव प्रदास्यति ॥ १८ ॥ यज्ञैर्यज्ञेश्वरो येषां राष्ट्रे
संपूज्यते हरिः ॥ तेषां सर्वेप्सितावाप्तिं ददाति नृप भूभृताम् ॥ १९ ॥ वेन उवाच ॥ मत्तः कोऽभ्यधिकोन्योस्ति कश्चाराध्यो ममापरः ॥ कोयं
हरिरिति ख्यातो यो वो यज्ञेश्वरो मतः ॥२०॥ ब्रह्मा जनार्दनः शम्भुरिन्द्रो वायुर्यमो रविः ॥ हुतभुग्वरुणो धाता पूषा भूमिर्निशाकरः ॥२१॥
एते चान्ये च ये देवाः शापानुग्रहकारिणः ॥ नृपस्यैते शरीरस्थाः सर्वदेवमयो नृपः ॥ २२ ॥ एवं ज्ञात्वा मयाज्ञप्तं यद्यथा क्रियतां तथा ॥
न दातव्यं न यष्टव्यं न होतव्यं च भो द्विजाः ॥२३॥ भर्तृशुश्रूषणं धर्मो यथा स्त्रीणां परो मतः ॥ ममाज्ञापालनं धर्मो भवतां च तथा द्विजाः
॥ २४ ॥ ऋषय ऊचुः ॥ देह्यनुज्ञां महाराज मा धर्मो यातु संक्षयम् ॥ हविषां परिणामोऽयं यदेतदखिलं जगत् ॥ २५॥ श्रीपराशर उवाच ॥
इति विज्ञाप्यमानोऽपि स वेनः परमर्षिभिः ॥ यदा ददाति नानुज्ञां प्रोक्तः प्रोक्तः पुनः पुनः ॥ २६ ॥ ततस्ते मुनयः सर्वे कोपामर्षसम
न्विताः ॥ हन्यतां हन्यतां पाप इत्यूचुस्ते परस्परम् ॥ २७ ॥

१२ ॥ १३ ॥ १४ ॥ तत इति ॥ साम सान्त्वनं कलम् अव्यक्तमधुरम् ॥ १५॥१६॥ दीर्घसत्रेणेति ॥ तस्यांशस्ते भविष्यतीति पाठः। तस्य यज्ञस्य अंशः षष्ठांशः ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥॥ २२ ॥ २३ ॥ २४ ॥ देहीति हविषां परिणामः कार्यं वृष्ट्युत्पादकः अदृष्टद्वारा 'अग्नौ प्रास्ताहुतिः' इति उक्त प्रकारेण ॥ २५ ॥ २६ ॥ तत इति अमर्षोतितिक्षा ॥ २७ ॥

॥१२॥१३॥ १४ ॥ तत इति ॥ सामकलं साम्ना कलं मधुरं वाक्यमूचुः ॥ १५ ॥ भो भो राजन्निति॥ राज्यदेहयोरुपभोगाय क्षेमाय॥ १६ ॥ दीर्घसत्रेणेति ॥ दीर्घसत्रेण सहस्रसंवत्सरेण अंशः षष्ठो भागः "पुण्यात्ष ड्भागमाधत्ते न्यायेन परिपालयन्" इति स्मृतेः ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ एतदिति ॥ मया यथा यदाज्ञप्तं तदेव क्रियतां तदेवाह–न दातव्यमिति ॥ २३ ॥ २४ ॥ देहीति ॥ हविषां परिणामो वृष्टिद्वारकः ॥ २५ ॥ २६ ॥ तत इति ॥ कोपश्च अमर्षश्च भगवन्निन्दाजनितौ ताभ्यां समन्विताः ॥ २७ ॥

यो यज्ञपुरुषं विष्णुमनादिनिधनं प्रभुम् ॥ विनिन्दत्यधमाचारो न स योग्यो भुवः पतिः ॥ २८ ॥ इत्युक्त्वा मंत्रपूतैस्तैः कुशैर्मुनिगणा नृपम् ॥ निजघ्नुर्निहतं पूर्वं भगवन्निन्दनादिना ॥ २९ ॥ ततश्च मुनयो रेणुं ददृशुः सर्वतो द्विज ॥ किमेतदिति चासन्नान्पप्रच्छुस्ते जनांस्तदा ॥ ३० ॥ आख्यातं च जनैस्तेषां चोरीभूतैरराजके ॥ राष्ट्रे तु लोकैरारब्धं परस्वादानमातुरैः ॥ ३१ ॥ तेषामुदीर्णवेगानां चोराणां मुनिसत्तमाः ॥ सुमहद्दृश्यते रेणुः परवित्तापहारिणाम् ॥ ३२ ॥ ततः संमंत्र्य ते सर्वे मुनयस्तस्य भूभृतः ॥ ममन्थुरूरुं पुत्रार्थमनपत्यस्य यत्नतः ॥ ३३ ॥ मथ्यमानात्समुत्तस्थौ तस्योरोः पुरुषः किल ॥ दग्धस्थूणाप्रतीकाशः खर्वटास्योतिह्रस्वकः ॥ ३४ ॥ किं करोमीति तान्सर्वान्स विप्रानाह चातुरः ॥ निषीदेति तमूचुस्ते निषादस्तेन सोऽभवत् ॥ ३५ ॥ ततस्तत्संभवा जाता विन्ध्यशैलनिवासिनः ॥ निषादा मुनिशार्दूल पापकर्मोपलक्षणाः ॥ ३६ ॥ तेन द्वारेण तत्पापं निष्क्रान्तं तस्य भूपतेः ॥ निषादास्ते ततो जाता वेनकल्मषनाशनाः ॥ ३७ ॥ तस्यैव दक्षिणं हस्तं ममन्थुस्ते ततो द्विजाः ॥ ३८ ॥ मथ्यमाने च तत्राभूत्पृथुर्वैन्यः प्रतापवान् ॥ दीप्यमानः स्ववपुषा साक्षादग्निरिव ज्वलन् ॥ ३९ ॥ आद्यमाजगवं नाम खात्पपात ततो धनुः ॥ शराश्च दिव्या नभसः कवचं च पपात ह ॥ ४० ॥

॥ २८ ॥ इतीति ॥ देवतावेदयज्ञनिन्दया धर्मानुज्ञया आत्मप्रशंसया च स्वयमेव हतत्वात्तद्धंतुर्न दोष इति भावः ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ॥ ३३ ॥ मथ्यमानादिति ॥ मथ्यतः मथ्यमानात् खल्वाटः खलतिः "खर्वाटश्चाति ह्रस्वकः" इति च पाठः । खर्वटास्य इति पाठे ह्रस्ववक्त्रः ॥ ३४ ॥ ३५ ॥ तत इति ॥ निषादा जाता इत्यन्वयः ॥ ३६ ॥ तेनेति ॥ तेन निषादरूपेण द्वारेण तत्पापं भगवन्निन्दनादिरूपं पापम् ॥ ३७ ॥ ३८ ॥ ३९ ॥ आद्यमिति ।

॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ मथ्यमानादिति ॥ मथ्यतश्चेति पाठेऽपि मथ्यमानादित्येवार्थः । दग्धस्थूणाप्रतीकाशः दग्धस्तम्भतुल्यः कृष्णवर्ण इति यावत् । खर्वटास्यः ह्रस्वमुखः निबिडनासिकवक्षा इत्यर्थः । खर्वटास्य इति पाठः । केचित्तु खर्वटाक्ष इति पठित्वा गोः अक्षिणी इव अक्षिणी यस्येति व्याचक्षते ॥ ३४ ॥ किं करोमीति अत्यन्तासम्भवे तथाभूतमभिषेक्तुं निषादेति तमूचुः ॥ ३९ ॥ तत इति ॥ पापरूपं कर्मैवोपलक्षणं चिह्नं येषां ते ॥ ३६ ॥ तेनेति ॥ तेन द्वारेण निषादरूपेण ॥ ३७ ॥३८॥मथ्यमान इति ॥ अग्निरिवेति यथा काष्ठे मथ्यमाने धूमरूपेण तस्य मले निष्क्रान्ते पश्चादग्निरुत्पद्यते तथा निषादरूपेण कल्मषे निष्क्रान्ते पश्चादग्निरिव देदीप्यमानः पृथुरुत्पन्न इत्यर्थः ॥ ३९ ॥ आद्यमिति ॥ आद्यं शार्वं पिनाकसंज्ञं धनुः ॥ ४० ॥

तस्मिन् जाते तु भूतानि संप्रहृष्टानि सर्वशः ॥ ४१ ॥ सत्पुत्रेणैव जातेन वेनोपि त्रिदिवं ययौ ॥ पुन्नाम्नो नरकात् त्रातः सुतेन सुमहात्मना ॥ ४२ ॥ तं समुद्राश्च नद्यश्च रत्नान्यादाय सर्वशः ॥ तोयानि चाभिषेकार्थं सर्वाण्येवोपतस्थिरे ॥ ४३ ॥ पितामहश्च भगवान्देवैराङ्गिरसैः सह ॥ स्थावराणि च भूतानि जङ्गमानि च सर्वशः ॥ समागम्य तदा वैन्यमभ्यसिञ्चन्नराधिपम् ॥ ४४ ॥ हस्ते तु दक्षिणे चक्रं दृष्ट्वा तस्य पितामहः ॥ विष्णोरंशं पृथुं मत्वा परितोषं परं ययौ ॥४५॥ विष्णुचक्रं करे चिह्नं सर्वेषां चक्रवर्तिनाम् ॥ भवत्यव्याहतो यस्य प्रभावस्त्रिदशैरपि ॥ ४६ ॥ महता राजराज्येन पृथुर्वैन्यः प्रतापवान् ॥ सोभिषिक्तो महातेजा विधिवद्धर्मकोविदैः ॥ ४७ ॥ पित्रा पराजितास्तस्य प्रजास्तेनानुरञ्जिताः ॥ अनुरागात्ततस्तस्य नाम राजेत्यजायत ॥ ४८ ॥ आपस्तस्तंभिरे चास्य समुद्रमभियास्यतः ॥ पर्वताश्च ददुर्मार्गं ध्वजभङ्गश्च नाभवत् ॥ ४९ ॥ अकृष्टपच्या पृथिवी सिद्ध्यन्त्यन्नानि चिंतया ॥ सर्वकामदुघा गावः पुटके पुटके मधु ॥ ५० ॥ तस्य वै जातमात्रस्य यज्ञे पैतामहे शुभे ॥ सूतः सूत्यां समुत्पन्नः सौत्येऽहनि महामतिः ॥ ५१ ॥

अजगवमेवाजगवं पिनाकः ॥ ४० ॥ ४१ ॥ ४२ ॥ ॥ ४३ ॥ पितामह इति ॥ देवैः अङ्गिरसैः षष्ठमन्वन्तरे तैर्देवैर्भविष्यद्भिः स्थावराणि हिमवदाद्यधिदैवतानि ॥ ४४ ॥ हस्त इति ॥ चक्रं रेखामयम् ॥ ४५ ॥ ४६ ॥ महतेति ॥ राजराज्येन राज्ञां राजत्वेन ॥ ४७ ॥ ४८ ॥ आप इति ॥ ध्वजभंगश्च नाभवत् वनेषु गच्छतः पृथोः आनम्रशाखाग्रा वृक्षाः आसन् अभवन् ॥ ४९ ॥ अकृष्टपच्येति ॥ अकृष्टपच्या पृथिवी दोहानन्तरं प्रजाकृतकृष्यादिविनापि सफला पृथिवी पृथुदुग्धक्षीरपरिणामौषध्याश्रयत्वात् पुटके कोटरे ॥ ५० ॥ तस्येति ॥ तस्य पृथोर्यज्ञे पैतामहे पितामहदैवत्ये—"वैन्यस्य हि पृथोर्यज्ञे वर्त्तमाने महात्मनः । सुत्यायाम

॥ ४१ ॥ सत्पुत्रेणेति ॥ सत्पुत्रेण तेन पृथुना स वेनः पुन्नाम्नो नरकात् त्रातः सन् त्रिदिवं ययौ । तथा च स्मृतिः "पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः । तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा" इति वचनात् ॥ ४२ ॥ तमिति ॥ समुद्रादयः तदभिमानिन्यो देवताः ॥ ४३ ॥ ४४ ॥ हस्त इति ॥ चक्रमिति दुष्टरेखान्तरानाकुलं रेखामयमप्रतिहतं चक्रं दृष्ट्वेत्यर्थः । तदुक्तम् "यस्याप्रतिहतं चक्रमंशः स परमेष्ठिनः" इति ॥ ४५ ॥ ४६ ॥ महतेति ॥ राजराज्येन चक्रवर्त्तित्वेन ॥ ४७ ॥ पित्रेति ॥ पित्रा नानुरंजिताः ॥ ४८ ॥ आप इति ॥ ध्वजभङ्गश्च वनेषु गच्छतो नाभवत् ॥ ४९ ॥ अकृष्टपच्येति ॥ अकृष्टपच्या कृषिं विनैव सफला पुटकं पर्णादिसंस्थानविशेषः ॥ ५० ॥ तस्येति ॥ सूत्यां सूतिः सोमाभिषवभूमिः तस्यां सौत्येहनि ॥ ५१ ॥

तस्मिन्नेव महायज्ञेजज्ञे प्राज्ञोऽथ मागधः॥प्रोक्तौ तदा मुनिवरैस्तावुभौ सूतमागधौ॥५२॥स्तूयतामेष नृपतिः पृथुर्वैन्यः प्रतापवान्॥कर्मैतदनुरूपं वां पात्रं स्तोत्रस्य चापरम् ॥५३॥ ततस्तावूचतुर्विप्रान्सर्वानेव कृताञ्जली ॥ अद्य जातस्य नो कर्म ज्ञायतेस्य महीपतेः ॥५४॥ गुणा न चास्य ज्ञायन्ते न चास्य प्रथितं यशः ॥ स्तोत्रं किमाश्रयं त्वस्य कार्यमस्माभिरुच्यताम् ॥ ५५ ॥ ऋषय ऊचुः ॥ करिष्यत्येष यत्कर्म चक्रवर्ती महाबलः ॥ गुणा भविष्या ये चास्य तैरयं स्तूयतां नृपः ॥ ५६ ॥ श्रीपराशर उवाच ॥ ततः स नृपतिस्तोषं तच्छ्रुत्वा परमं ययौ ॥ सद्गुणैः श्लाघ्यतामेति तस्माच्छ्लाघ्या गुणा मम ॥ ५७ ॥ तस्माद्यदद्य स्तोत्रेण गुणनिर्वर्णनं त्विमौ ॥ करिष्येते करिष्यामि तदेवाहं समाहितः ॥ ५८ ॥ यदिमौ वर्जनीयं च किंचिदत्र वदिष्यतः ॥ तदहं वर्जयिष्यामीत्येवं चक्रे मतिं नृपः ॥ ५९ ॥ अथ तौ चक्रतुः स्तोत्रं पृथोर्वैन्यस्य धीमतः ॥ भविष्यैः कर्मभिः सम्यक्सुस्वरौ सूतमागधौ ॥ ६० ॥ सत्यवाग्दानशीलोयं सत्यसन्धो नरेश्वरः ॥ ह्रीमान्मैत्रः क्षमाशीलो विक्रान्तो दुष्टशासनः ॥ ६१ ॥ धर्मज्ञश्च कृतज्ञश्च दयावान् प्रियभाषकः ॥ मान्यान्मानयिता यज्वा ब्रह्मण्यः साधुसम्मतः ॥ ६२ ॥ समः शत्रौ च मित्रे च व्यवहारस्थितौ नृपः ॥ ६३ ॥

भवत्सूतः'' इति वायूक्तेः । सूत्यां सूत्यायां सोमाभिषवे जाते सूययाते सोमोऽस्यामिति सूतीः ॥ ५१ ॥ ५२ ॥ स्तूयतामिति ॥ औदार्यादिगुणैरेष स्तूयतां पराक्रमादि कर्म चास्य स्तूयताम् ॥ ५३ ॥ ५४ ॥ गुणा इति ॥ यशो हि गुणक्रियाप्रसिद्धिः ॥५५॥५६॥ तत इति ॥ सद्गुणैरिति लोके हि जनः सद्गुणैः स्तुत्यो भवति तस्मान्ममया गुणा लभ्याः सम्पाद्याः ॥ ५७ ॥ तस्मादिति ॥ तदेव औदार्यादि ॥ ५८ ॥ ५९ ॥ ६० ॥ सत्यवागिति ॥ ह्रीः अकार्याल्लज्जा ॥ ६१ ॥ ६२ ॥ सम इति ॥

तस्मिंन्निति ॥ तस्मिन्नेव दिने ॥ ५२ ॥ स्तूयतामिति ॥ वां युवयोः ॥ ५३ ॥ ५४ ॥ गुणा इति ॥ अस्माभिरिति । अस्मदोर्द्वयोश्चेति बहुत्वम् ॥ ५५ ॥ करिष्यतीति ॥चक्रवार्त्तेदक्षिणहस्ते तच्चिह्नस्य चक्रस्योपलब्धेः महाबलश्च विष्णुवंशत्वात् अतः सर्वेप्यस्य सद्गुणाः सत्कर्माणि च भविष्यन्त्येव भविष्यैरेव सद्गुणकर्मभिः स्तूयताम् अयं भावः ''नियुज्यतेऽधमो दण्डैरुत्तमस्तु प्रियोक्तिभिः'' इति न्यायात् । अयं गुणकर्मस्तुत्यैव स्वकार्ये विज्ञापनीय इति ॥ ५६ ॥ पृथुरपि ह्यव्यक्तनेन स्तुतिविशेषेण ममायमृषिभिरुपदेशः क्रियत इति मत्वा तथैव कर्तुमध्यवसितवानित्याह ततस्स इत्यादित्रिभिः–तत इति ॥ मम गुणाः श्लाघ्याः श्लाघार्हाः स्तुतिविषयत्वात् तस्माल्लभ्या गुणा इति पाठे गुणाः सद्गुणाः लभ्याः प्राप्याः ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ सत्यवागिति ॥ सत्यसन्धः सत्यप्रतिज्ञः सत्यमर्यादो वा ह्रीमानकार्ये जुगुप्सावान् ॥ ६१ ॥ ६२ ॥ ६३ ॥

सूतेनोक्तान् गुणानित्थं स तदा मागधेन च ॥ चकार हृदि तादृक् च कर्मणा कृतवानसौ ॥ ६४ ॥ ततस्तु पृथिवीपालः पालयन्पृथिवीमिमाम् ॥ इयाज विविधैर्यज्ञैर्महद्भिर्भूरिदक्षिणैः ॥ ६५ ॥ तं प्रजाः पृथिवीनाथमुपतस्थुः क्षुधार्दिताः ॥ ओषधीषु प्रणष्टासु तस्मिन्काले ह्यराजके ॥ तमूचुस्ते नताः पृष्टास्तत्रागमनकारणम् ॥ ६६ ॥ प्रजा ऊचुः ॥ अराजके नृपश्रेष्ठ धरित्र्या सकलौषधीः ॥ ग्रस्तास्ततः क्षयं यान्ति प्रजाः सर्वाः प्रजेश्वर ॥ ६७ ॥ त्वन्नो वृत्तिप्रदो धात्रा प्रजापालो निरूपितः ॥ देहि नः क्षुत्परीतानां प्रजानां जीवनौषधीः ॥ ६८ ॥ श्रीपराशर उवाच ॥ ततस्तु नृपतिर्दिव्यमादायाजगवं धनुः ॥ शरांश्च दिव्यान्कुपितः सोन्वधावद्वसुन्धराम् ॥ ६९ ॥ ततो ननाश त्वरिता गौर्भूत्वा च वसुन्धरा ॥ सा लोकान्ब्रह्मलोकादीन्संत्रासादगमन्मही ॥ ७० ॥ यत्र यत्र ययौ देवी सा तदा भूतधारिणी ॥ तत्र तत्र तु सा वैन्यं ददृशेऽभ्युद्यतायुधम् ॥ ७१ ॥ ततस्तं प्राह वसुधा पृथुं राजपराक्रमम् ॥ प्रवेपमाना तद्बाणपरित्राणपरायणा ॥ ७२ ॥ पृथिव्युवाच ॥ स्त्रीवधे त्वं महापापं किं नरेन्द्र न पश्यसि ॥ येन मां हंतुमत्यर्थं प्रकरोषि नृपोद्यमम् ॥ ७३ ॥ पृथुरुवाच ॥ एकस्मिन् यत्र निधनं प्रापिते दुष्टकारिणि ॥ बहूनां भवति क्षेमं तस्य पुण्यप्रदो वधः ॥ ७४ ॥ पृथिव्युवाच ॥ प्रजानामुपकाराय यदि मां त्वं हनिष्यसि ॥ आधारः कः प्रजानां ते नृपश्रेष्ठ भविष्यति ॥ ७५ ॥ पृथुरुवाच ॥ त्वां हत्वा वसुधे बाणैर्मच्छासनपराङ्मुखीम् ॥ आत्मयोगबलेनेमा धारयिष्याम्यहं प्रजाः ॥ ७६ ॥

व्यवहारास्थितः नृप इति च पाठः । व्यवहारास्थितः । व्यवहारदर्शनाय धर्मासनस्थः ॥ ६३ ॥ ६४ ॥ तत इति ॥ यज्ञैरियाज देवपूजामकरोत् ॥ ६५ ॥ तमिति ॥ तस्मिन् काले वेनपृथुराज्यसन्धौ तेन आगमनकारणं पृष्टास्तमूचुः ॥ ६६ ॥ अराजक इति ॥ ओषधीः ओषध्यः ॥ ६७ ॥ ६८ ॥ ६९ ॥ तत इति ॥ ननाश अपलायत 'नाशः पलायने मृत्यौ मृतौ च' इति वैजयंती ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ त्वामिति ॥ योगः सामर्थ्यं तदेव बलं "आत्मानं प्रथ



॥ ६४ ॥ ६५ ॥ तस्मिन्काले वेनपृथुमहाराजयोः सन्धौ ॥ ६६ ॥ अराजक इति ॥ सकलौषधीः सकला औषध्यः ग्रस्ताः ॥ ६७ ॥ ६८ ॥ ६९ ॥ तत इति ॥ सा मही ब्रह्मलोकादीन् लोकान् प्रति ननाश अपलायत ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ त्वामिति ॥ आत्मयोगबलेन पृथिवीभावं प्राप्य धारयिष्यामि । तथा च हरिवंशे—"आत्मानं प्रथयित्वेमा धारयिष्याम्यहं प्रजाः" इति ॥ ७६ ॥

श्रीपराशर उवाच ॥ ततः प्रणम्य वसुधा तं भूयः प्राह पार्थिवम् । प्रवेपिताङ्गी परमं साध्वसं समुपागता ॥ ७७ ॥ पृथिव्युवाच ॥ उपायतः समारब्धाः सर्वे सिद्ध्यन्त्युपक्रमाः ॥ तस्माद्वदाम्युपायं ते तं कुरुष्व यदीच्छसि ॥ ७८ ॥ समस्ता या मया जीर्णा नरनाथ महौषधीः ॥ यदीच्छसि प्रदास्यामि ताः क्षीरपरिणामिनीः ॥ ७९ ॥ तस्मात्प्रजाहितार्थाय मम धर्मभृतां वर ॥ तं तु वत्सं कुरुष्व त्वं क्षरेयं येन वत्सला ॥ ८० ॥ समां च कुरु सर्वत्र येन क्षीरं समंततः ॥ वरौषधीबीजभूतं वीजं सर्वत्र भावये ॥ ८१ ॥ श्रीपराशर उवाच ॥ तत उत्सारयामास शैलान् शतसहस्रशः ॥ धनुष्कोट्या पदा वैन्यस्तेन शैला विवर्द्धिताः ॥ ॥ ८२ ॥ न हि पूर्वविसर्गे वै विषमे पृथिवीतले ॥ प्रविभागः पुराणां वा ग्रामाणां वा पुराऽभवत् ॥ ८३ ॥ न सस्यानि न गोरक्ष्यं न कृषिर्न वणिक्पथः ॥ वैन्यात्प्रभृति मैत्रेय सर्वस्यैतस्य सम्भवः ॥ ८४ ॥ यत्रयत्र समं त्वस्य भूमेरासीद्द्विजोत्तम ॥ तत्रतत्र प्रजाः सर्वा निवासं समरोचयन् ॥ ८५ ॥ आहारः फलमूलानि प्रजानामभवत्तदा ॥ कृच्छ्रेण महता सोपि प्रणष्टास्वौषधीषु वै ॥ ८६ ॥ स कल्पयित्वा वत्सं तु मनुं स्वायंभुवं प्रभुम् ॥ स्वपाणौ पृथिवीनाथो दुदोह पृथिवीं पृथुः ॥ सस्यजातानि सर्वाणि प्रजानां हितकाम्यया ॥ ८७ ॥ तेनान्नेन प्रजास्तात वर्तन्तेद्यापि नित्यशः ॥ ८८ ॥ प्राणप्रदाता स पृथुर्यस्माद्भूमेरभूत्पिता ॥ ततस्तु पृथिवीसंज्ञामवापाखिलधारिणी ॥ ८९ ॥

यित्वेमा धारयिष्याम्यहं प्रजाः" इति हरिवंशे ॥ ७६ ॥ ७७ ॥ ७८ ॥ समस्ता इति ॥ क्षीरपरिणामिनीः क्षीरेण परिणामिनीः ॥ ७९ ॥ ८० ॥ सममिति ॥ समां समस्थलां येन समीकरणेन भावये उत्पादये ॥ ८१ ॥ तत इति ॥ तेन उत्सादनेन विवर्जिताः विक्षिप्ताः । विवर्द्धिता इति पाठे एकत्र पुञ्जीकृताः । विवर्जिताः इति पाठे उत्सारणदेशे विवर्जिता इति ॥ ८२ ॥ नहीति ॥ पूर्वनिसर्ग इति च पाठः । पूर्वनिसर्गे पूर्वावस्थायां पुरा पृथोः पूर्वकाले ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ स इति ॥ सस्यं मनुष्याणां योनिं सस्यं पृथुर्दुदोह तत्र दोहे पृथुरेव यजमानः ऋत्विक् च ॥ ८७ ॥ ८८ ॥ प्राणेति ॥ प्राणप्रदाता अभयप्रदः "जनकश्चोपनेता

॥ ७७ ॥ ७८ ॥ ७९ ॥ तस्मादिति ॥ क्षरेयं क्षीररूपेणौषधीः स्रवेयम् ॥ ८० ॥ समामिति ॥मां च सर्वत्र समां कुरु येन समस्थलत्वेन क्षीरं सर्वत्र भावये धारयामि ॥ ८१ ॥ तत इति ॥ विवर्द्धिताः एकैकत्रोच्चतराः कृताः विवर्जिता इति पाठे उत्सारणदेशे विवर्जिता इत्यर्थः ॥ ८२ ॥ न हीति ॥ पूर्वविसर्गे पृथूत्पत्तेः पूर्वसृष्टौ ॥ ८३ ॥ ८४ ॥ ८५ ॥ आहार इति ॥ तदा पृथोः पूर्वमराजके सोपि फलाहारः महता कृच्छ्रेण सम्पाद्योऽभवत् ॥ ८६ ॥ स इति ॥ स पृथुस्तु प्रजासन्तानप्रवर्त्तकं मनुं वत्सं कृत्वा स्वपाणिरूपपात्रे सस्यबीजानि पृथिवीं दुदोहेत्यन्वयः ॥ ८७ ॥ ८८ ॥ प्राणप्रदातेति ॥ प्राणदानादभयदानाद्भूमेः पिताऽभूत् यथाहुः

ततश्च देवैर्मुनिभिर्दैत्यै रक्षोभिरद्रिभिः ॥ गन्धर्वैरुरगैर्यक्षैः पितृभिस्तरुभिस्तथा ॥ ९० ॥ तत्तत्पात्रमुपादाय तत्तद्दुग्धं मुने पयः ॥ वत्सदोग्धृविशेषाश्च तेषां तद्योनयोऽभवन् ॥ ९१ ॥ सैषा धात्री विधात्री च धारिणी पोषणी तथा ॥ सर्वस्य तु ततः पृथ्वी विष्णुपादतलोद्भवा॥९२॥ एवं प्रभावस्स पृथुः पुत्रो वैन्यस्य वीर्यवान् ॥ जज्ञे महीपतिः पूर्वो राजाभूज्जनरञ्जनात् ॥ ९३ ॥

च यश्च विद्यां प्रयच्छति ॥ अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः'' इति वचनात् ॥ ८९ ॥ ९० ॥ तत्तत्पात्रमिति ॥ पृथूपदेशाद्देवादिभिस्तत्तद्वत्सैस्तत्तत्पात्रमुपादाय भूस्तत्तत्पयो दुग्धा देवाद्यैर्यजमानस्थानीयैर्दर्शनपरैः ऋत्विक्स्थानीयैः सूर्यबृहस्पतिद्विमूर्द्धजतुनाभमेरुवसुरुचिधृतराष्ट्रसुपर्णान्तकसालाख्यदोग्धृविशेषैरिन्द्रसोमविरोचनसुमालिहिमवच्चित्ररथतक्षककुबेरयमप्लक्षाख्यवत्सविशेषैः सौवर्णं छन्दोमयमायसं कापालं शैलं पद्मपत्रमलाब्वपक्वमृण्मयं राजतं पालाशमिति तत्तत्पात्रमादाय बलं तपोमायां रुधिरमौषधं रत्नं गन्धं विषमन्तर्धानं स्वधां पुनः प्ररोहणमिति क्षीरविशेषं मात्स्यादिषूक्तक्रमेण दुग्धा अत्र नामभेदस्तु नामान्तरत्वेन बोध्यः । तेषामिति ॥ तेषां देवादीनां सूर्यादीनामिन्द्रादीनां च तद्योनयः तानि बलादीनि योनयः कारणम् ॥ ९१ ॥ सैषेति ॥ धात्री माता विधात्री कर्त्री ॥ ९२ ॥ ९३ ॥

"जनकश्चोपनेता च यश्च विद्याः प्रयच्छति । अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः'' इति ॥ ८९ ॥ ९० ॥ तत्तत्पात्रमिति ॥ देवादिभिर्दशभिर्वर्गैस्तत्तत्स्वाभिमतं पात्रमुपादाय तत्तत्स्वाभिमतं पयो भूमिर्दुग्धा । तेषां देवादीनां तद्योनयस्तत्तज्जातीया एव वत्स विशेषा दोग्धृविशेषाश्च अभवन् । तमेव देवादिषु दोग्धृवत्सादिक्रमं हरिवंशे मात्स्यादावप्युक्तं संक्षेपेण वक्ष्यामः । देवानामिन्द्रो वत्सः मित्रो दोग्धा सौवर्णं पात्रं बलं क्षीरम् । मुनीनां सोमो वत्सः बृहस्पतिर्दोग्धा छन्दांसि पात्रं तपो ब्रह्म च क्षीरम् । दैत्यानां त्रिमूर्द्धा वत्सः विरोचनो दोग्धा आयसं पात्रं माया क्षीरम् । राक्षसानां सुमाली वत्सः जन्तुर्नाम दोग्धा कपालं पात्रं रुधिरं क्षीरम् । अद्रीणां हिमवान्वत्सः मेरुर्दोग्धा शिलामयं पात्रं महौषधीः क्षीरम् । गन्धर्वाणां चित्ररथो वत्सः विश्वावसुर्दोग्धा पद्मं पात्रं गन्धः क्षीरम् । उरगाणां तक्षको वत्सः धृतराष्ट्रो दोग्धा अलाबुपात्रं विषं क्षीरम् । यक्षाणां कुबेरो वत्सः सुपर्णो दोग्धा मृन्मयं पात्रम् अन्तर्धानं क्षीरम् । पितॄणां यमो वत्सः अन्तको दोग्धा राजतं पात्रं स्वधा क्षीरम् । तरूणां प्लक्षो वत्सः सालवृक्षो दोग्धा पालाशं पात्रं छिन्नसंरोहणं क्षीरम् । तदुक्तं हरिवंशे "देवा मित्रेन्द्रसौपर्णैर्बलं तु मुनयस्तथा । बृहस्पतीन्दुवेदैश्च तपोदैत्यास्त्रिमूर्धतः ॥ विरोचनायसाभ्यां च मायां रक्षोगणा अपि । जन्तूनामसुमालिभ्यामस्थ्ना रक्तं ततोऽद्रयः ॥ हिमाद्रिमेरुशैलैस्तु रत्नं गन्धर्वजातयः। वसुचित्ररथाम्भोजैर्गन्धं तु भुजगास्ततः ॥ धृतराष्ट्रात्तक्षकालाबुभ्यां च विषमुल्बणम् । यक्षाः सुपर्णधनदमृत्योन्तार्द्धिं पितृव्रजः ॥ अन्तकप्रेतराड्राजतैः स्वधां हि महीरुहाः । सालप्लक्षपलाशैश्च छिन्नसंरोहणं मुहुः ॥ स्वदोग्धृवत्सपात्रैश्च तत्तद्दुदुहुरुर्वराम्'' इति ॥ ९१ ॥ सेति ॥ धात्री माता । विधात्री कर्त्री ॥ धरणी आधारः पोषणी पोषकर्त्री ॥ ९२ ॥ ९३ ॥

य इदं जन्म वैन्यस्य पृथोः संकीर्त्तयेन्नरः॥न तस्य दुष्कृतं किंचित्फलदायि प्रजायते॥९४॥दुस्स्वप्नोपशमं नृणां शृण्वतामेतदुत्तमम्॥पृथोर्जन्म प्रभावश्च करोति सततं नृणाम्॥९५॥ इति श्रीविष्णुपुराणे प्रथमेंशे त्रयोदशोध्यायः ॥१३॥ श्रीपराशर उवाच ॥ पृथोः पुत्रौ तु धर्मज्ञौ जज्ञा तेन्तर्द्धिवादिनौ ॥ शिखण्डिनी हविर्धानमन्तर्धानाद्व्यजायत ॥ १ ॥ हविर्धानात् षडाग्नेयी धिषणाऽजनयत्सुतान् ॥ प्राचीनबर्हिषं शुक्रं गयं कृष्णं वृजाजिनौ॥२॥प्राचीनबर्हिर्भगवान्महानासीत्प्रजापतिः ॥ हविर्धानान्महाभाग येन संवर्धिताः प्रजाः॥३॥ प्राचीनाग्राः कुशास्तस्य पृथिव्यां विश्रुता मुने ॥ प्राचीनबर्हिरभवत्ख्यातो भुवि महाबलः ॥४॥ समुद्रतनयायां तु कृतदारो महीपतिः॥महतस्तमसः पारे सवर्णायां महामते ॥५॥सवर्णाधत्त सामुद्री दश प्राचीनबर्हिषः ॥ सर्वे प्राचेतसो नाम धनुर्वेदस्य पारगाः ॥६॥ अपृथग्धर्मचरणास्ते तप्यन्त महत्तपः ॥ दशवर्ष सहस्राणि समुद्रसलिलेशयाः ॥ ७॥ श्रीमैत्रेय उवाच ॥ यदर्थं ते महात्मानस्तपस्तेपुर्महामुने ॥ प्राचेतसः समुद्राम्भस्येतदाख्यातुमर्हसि ॥८॥

॥ ९४ ॥ ९५ ॥ इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये प्रथमेंशे त्रयोदशोध्यायः ॥ १३ ॥छ॥ १ ॥ २ ॥ ३ ॥ प्राचीनाग्रा इति ॥ प्राचीनाग्राः कुशाः यज्ञविशेषीयाः ॥ ४ ॥ समुद्रेत्यादि ॥ अत्र दारशब्देन दारक्रिया लक्ष्यते कृतदारः कृतविवाह इत्यर्थः । महतस्तमसः पार इति सवर्णाविशेषणम् । पुत्रोत्पत्तिद्वारेण तामिस्रादिनरकोत्तारहेतुभूतायामित्यर्थः । समुद्रतनयायां सवर्णायां कृतविवाहः कृतदारो महीपतेरिति पाठे महीपतेरित्यस्योत्तरेण सम्बंधः ॥ ५ ॥ सवर्णेति ॥ प्राचीनबर्हिषो महीपतेः सामुद्री सवर्णा प्रचेतसो नाम पुत्रानाधत्त ये तमसः पारे तानिति वान्वयः । तामिस्रादिनरकनाशकानित्यर्थः । "शश्वत्पुत्रेण पितरो नाध्यायन्बहुलं तमः । ज्योतिर्हि पुत्रः परमेव्योमन्" इति च श्रुतेः ॥ ६ ॥ अपृथगिति ॥ अपृथग्धर्मचरणाः एकविधधर्माचरणाः इति दशानामप्येकपत्नीभोगोपक्षेपः॥ ७ ॥ ८॥

॥ ९४ ॥ ९५ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुपुराणव्याख्यायां प्रथमांशे त्रयोदशोऽध्यायः ॥ १३ ॥ ॥ पृथोरिति ॥ अन्तर्धिरेवान्तर्धानः तस्माद्भार्या शिखण्डिनी हविर्धानं पुत्रमसूयत ॥ १ ॥ हविर्धानादिति ॥ आग्नेयी अग्निवंशजा धिषणा नाम ॥ २ ॥ ३ ॥ प्राचीनाग्रा इति ॥ प्राचीनाग्राः कुशाः सर्वत्र यज्ञानुष्ठानात्तदुक्तम् "यस्येदं देवयजनमनुयज्ञं वितन्वतः । प्राचीनाग्रैः कुशैरासीदास्तृतं वसुधातलम्" ॥ इति ॥ ४ ॥: समुद्रतनयायामिति ॥ तपसः पारे सवर्णसंज्ञायां कृतदारः तपस्तप्त्वाऽनन्तरं तां परिणीतवानित्यर्थः । तमसः पार इति पाठे तमसो नरकस्य पारे निमित्तं पुत्रोत्पत्त्या नरकतारणार्थमित्यर्थः॥ ५ ॥ सवर्णेति ॥ सवर्णा दश प्रचेतसः आधत्त असूयत ॥६॥ अपृथगिति ॥ अपृथग्धर्मचरणाः समानधर्मचारिणः एतच्च तेषां वक्ष्यमाणैकभार्यात्वं सम्भावयितुमुक्तं समुद्रसलिलेशयाः तत्र निम्ने मग्नास्सन्तः ॥ ७ ॥ ८ ॥

श्रीपराशर उवाच ॥ पित्रा प्रचेतसः प्रोक्ताः प्रजार्थममितात्मना ॥ प्रजापतिनियुक्तेन बहुमानपुरस्सरम् ॥ ९ ॥ प्राचीनबर्हिरुवाच ॥ ब्रह्मणा देवदेवेन समादिष्टोस्म्यहं सुताः ॥ प्रजाः संवर्द्धनीयास्ते मया चोक्तं तथेति तत् ॥ १० ॥ तन्मम प्रीतये पुत्राः प्रजावृद्धिमतंद्रिताः ॥ कुरुध्वं माननीया वः सम्यगाज्ञा प्रजापतेः ॥ ११ ॥ श्रीपराशर उवाच ॥ ततस्ते तत्पितुः श्रुत्वा वचनं नृपनंदनाः ॥ तथेत्युक्त्वा च तं भूयः पप्रच्छुः पितरं मुने ॥ १२ ॥ प्रचेतस ऊचुः ॥ येन तात प्रजावृद्धौ समर्था कर्मणा वयम् ॥ भवेम तत् समस्तं नः कर्म व्याख्यातुमर्हसि ॥ १३ ॥ पितोवाच ॥ आराध्य वरदं विष्णुमिष्टप्राप्तिमसंशयम् ॥ समेति नान्यथा मर्त्यः किमन्यत्कथयामि वः ॥ १४ ॥ तस्मात्प्रजाविवृद्ध्यर्थं सर्वभूतप्रभुं हरिम् ॥ आराधयत गोविन्दं यदि सिद्धिमभीप्सथ ॥ १५ ॥ धर्ममर्थं च कामं च मोक्षं चान्विच्छतां सदा ॥ आराधनीयो भगवाननादिपुरुषोत्तमः ॥ १६ ॥ यस्मिन्नाराधिते सर्गं चकारादौ प्रजापतिः ॥ तमाराध्याच्युतं वृद्धिः प्रजानां वो भविष्यति ॥ १७ ॥ श्रीपराशर उवाच ॥ इत्येवमुक्तास्ते पित्रा पुत्राः प्राचेतसो दश ॥ मग्नाः पयोधिसलिले तपस्तेपुः समाहिताः ॥ १८ ॥ दशवर्षसहस्राणि न्यस्तचित्ता जगत्पतौ ॥ नारायणे मुनिश्रेष्ठ सर्वलोकपरायणे ॥ १९ ॥ तत्रैवावस्थिता देवमेकाग्रमनसो हरिम् ॥ तुष्टुवुर्यस्स्तुतः कामान् स्तोतुरिष्टान्प्रयच्छति ॥ २० ॥ श्रीमैत्रेय उवाच ॥ स्तवं प्रचेतसो विष्णोः समुद्राम्भसि संस्थिताः ॥ चक्रुस्तन्मे मुनिश्रेष्ठ सुपुण्यं वक्तुमर्हसि ॥ २१ ॥ श्रीपराशर उवाच ॥ शृणु मैत्रेय गोविन्दं यथापूर्वं प्रचेतसः ॥ तुष्टुवुस्तन्मयीभूताः समुद्रसलिलेशयाः ॥ २२ ॥ प्रचेतस ऊचुः ॥ नताः स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वती ॥ तमाद्यन्तमशेषस्य जगतः परमं प्रभुम् ॥ २३ ॥

॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ १७॥ १८ ॥ १९ ॥२०॥ स्तवमिति ॥ यं स्तवं चक्रुस्तं वक्तुमर्हसि ॥२१॥२२॥ नतास्स्मेति ॥ वचसां यत्र प्रतिष्ठा वाच्ये हि वचसां प्रतिष्ठा प्रवृत्तिनिमित्तमात्रं हि सर्वं वस्तुजातं वचसां न तु प्रधानतया वाच्यम् । यथा गुणजात्यादिकम् ॥ २३ ॥

॥ ९ ॥ ब्रह्मणेति॥ ते त्वया प्रजाः संवर्द्धनीयाः इत्यादिष्टोस्मि ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ धर्ममिति ॥ अन्विच्छतां धर्माद्यनन्तरं मोक्षमपीच्छताम् ॥ १६ ॥ यस्मिन्निति ॥ यस्मिन्नाराधिते यमाराध्येत्यर्थः ॥ १७ ॥ इतीति ॥ प्रचेतस एव प्राचेतसाः ॥ १८ ॥ १९ ॥ २० ॥ स्तवमिति ॥ प्रचेतसः यं स्तवं चक्रुः तं स्तवं वक्तुमर्हसि ॥ २१ ॥ २२ ॥ "जगद्बीजतया नत्वा चित्ररूपतया ततः । शुद्धरूपप्रणामेन दृष्टो विष्णुः प्रचेतसाम्" ॥ तत्र प्रथमं जगत्कारणतया प्रणमन्ति नतास्मेत्यादिद्वाभ्याम्—नतास्मेति ॥ प्रतिष्ठा तात्पर्यमित्यर्थः । आद्यन्तं करोतीत्याद्यन्तम् अत एव परमं च प्रभुश्च ॥ २३ ॥

ज्योतिराद्यमनौपम्यमण्वनन्तमपारवत् ॥ योनिभूतमशेषस्य स्थावरस्य चरस्य च ॥२४॥ यस्याहः प्रथमं रूपमरूपस्य तथा निशा॥संध्या च परमेशस्य तस्मै कालात्मने नमः ॥ २५ ॥ भुज्यतेऽनुदिनं देवैः पितृभिश्च सुधात्मकः ॥ बीजभूतं समस्तस्य तस्मै सोमात्मनेन मः॥ २६॥ यस्तमांस्यत्ति तीव्रात्मा प्रभाभिर्भासयन्नभः॥घर्मशीताम्भसां योनिस्तस्मै सूर्यात्मने नमः॥२७॥काठिन्यवान् यो बिभर्त्ति जगदेतदशेषतः॥ शब्दादिसंश्रयो व्यापी तस्मै भूम्यात्मने नमः॥२८॥यद्योनिभूतं जगतो बीजं यत्सर्वदेहिनाम् ॥ तत्तोयरूपमीशस्य नमामो हरिमेधसः ॥२९ ॥ यो मुखं सर्वदेवानां हव्यभुक्कव्यभुक् तथा ॥ पितॄणां च नमस्तस्मै विष्णवे पावकात्मने ॥ ३० ॥ पंचधावस्थितो देहे यश्चेष्टां कुरुतेऽनिशम् ॥ आकाशयोनिर्भगवांस्तस्मै वाय्वात्मने नमः॥ ३१ ॥ अवकाशमशेषाणां भूतानां यः प्रयच्छति ॥ अनन्तमूर्तिमाञ्छुद्धस्तस्मै व्योमात्मने नमः ॥ ३२ ॥ समस्तेन्द्रियसर्गस्य यः सदा स्थानमुत्तमम् ॥ तस्मै शब्दादिरूपाय नमः कृष्णाय वेधसे ॥ ३३ ॥ गृह्णाति विषयान्नित्यमिन्द्रियात्माक्षराक्षरः ॥ यस्तस्मै ज्ञानमूलाय नतास्म हरिमेधसे ॥ ३४ ॥ गृहीतानिन्द्रियैरर्थानात्मने यः प्रयच्छति ॥ अन्तःकरणरूपाय तस्मै विश्वात्मने नमः ॥ ३५ ॥ यस्मिन्ननन्ते सकलं विश्वं यस्मात्तथोद्गतम् ॥ लयस्थानं च यस्तस्मै नमः प्रकृतिधर्मिणे ॥ ३६ ॥

ज्योतिरिति ॥ ज्योतिः अप्राकृतज्योतिर्मयरूपम् आद्यं आदौ भवं "तमेव भान्तम्" इत्यादिश्रुतेः । अनौपम्यम् उपमैवौपम्यं तद्रहितम् ।अणु सूक्ष्मम् अनन्तमपारवत् देशकालपरिच्छेदरहितम् ॥२४॥२५॥ भुज्यत इति ॥ बीजभूतः समस्तस्येति च पाठः । बीजभूतः वृष्टौषधिद्वारा ॥२६॥ य इति ॥ घर्मः उष्णम् आतपः शीतं हिमम्॥ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ पञ्चधेति ॥ पञ्चधा प्राणादिरूपेण चेष्टाम् उच्छासनिश्वासव्यायामरससमाधानोच्चारणात्मिकाम् । आकाशयोनिः आकाशाद्धि वायुः ॥ ३१ ॥ ३२ ॥ समस्तेति ॥ स्थानमालम्बनम् ॥ ३३ ॥ गृह्णातीति ॥ विषयः क्षराक्षरः क्षरं चक्षुः निर्गत्य विषयग्रहणात् अक्षरं श्रोत्रादि ॥ ३४ ॥ गृहीतानिति ॥ गृहीतान् बाह्येंद्रियैः स्पृष्टान् आलोचितानात्मज्ञानविषयान्करोति । अन्तःकरणभूताय मनोबुद्ध्यहंकारचित्तात्मने ॥ ३५ ॥ यस्मिन्निति ॥ यस्मिन्सकलं

प्रधानशङ्कां व्यावर्त्तयति–ज्योतिरिति ॥ अनौपम्यं सूर्याद्युपमानशून्यं चिद्रूपमित्यर्थः । अनुनाडीप्रचारचातुर्यवत् अनन्तरं निर्भेदम् अपारवदवधिशून्यम् ॥ २४ ॥ कालरूपेण प्रणमन्ति–यस्या हरिरिति ॥ २५ ॥ विश्वरूपेण प्रणमन्ति भुज्यत इत्यादिदशभिः–भुज्यत इति ॥जीवभूत जीवनरूपः ॥ २६ ॥ य इति ॥ धर्मतापः शीतं च अम्भश्च तेषां योनिः कारणम् ॥२७॥ काठिन्यवानिति ॥ शब्ददीनां पञ्चानामपि गुणानां संश्रयः ॥ २८ ॥ यदिति ॥ योनिरूपं शोणितरूपेण बीजरूपं शुक्ररूपेण ॥ २९ ॥ य इति यो हव्यभुग्देवानां मुखं कव्यभुक् पितॄणां च मुखम् ॥ ३० ॥ पञ्चधेति ॥ पञ्चधा प्राणादिरूपेण ॥ ३१ ॥ ३२ ॥ ३३ ॥ ॥ ३४ ॥ ३५ ॥प्रधानरूपेण प्रणमन्ति–यस्मिन्निति ॥ यस्मिन्ननन्ते विश्वं तिष्ठति प्रकृतेर्धर्माः सत्त्वादयो गुणाः सन्त्यस्येति प्रकृतिधर्मा तस्मै ॥ ३६ ॥

शुद्धः सँल्लक्ष्यते भ्रान्त्या गुणवानिव योऽगुणः॥तमात्मरूपिणं देवं नतास्म पुरुषोत्तमम्॥३७॥अविकारमजं शुद्धं निर्गुणं यन्निरंजनम्॥ नतास्स्म तत्परं ब्रह्म विष्णोर्यत्परमं पदम् ॥ ३८ ॥ अदीर्घह्रस्वमस्थूलमण्वनमश्यामलोहितम् ॥ अस्नेहच्छायमतनुमसक्तमशरीरिणम् ॥ ३९ ॥ अनाकाशमसंस्पर्शमगन्धमरसं च यत् ॥ अचक्षुश्रोत्रमचलमवाक्पाणिममानसम् ॥४०॥ अनामगोत्रमसुखमतेजस्कमहेतुकम् ॥ अभयं भ्रांतिरहितम निद्रमजरामरम् ॥ ४१ ॥ अरजोशब्दममृतमप्लुतं यदसंवृतम् ॥ पूर्वापरेण वै यस्मिंस्तद्विष्णोः परमं पदम् ॥ ४२ ॥ परमेशत्वगुणवत्सर्वभूतम संश्रयम् ॥ नतास्म तत्पदं विष्णोर्जिह्वादृग्गोचरं न यत् ॥ ४३ ॥ श्रीपराशर उवाच ॥ एवं प्रचेतसो विष्णुं स्तुवन्तस्तत्समाधयः ॥ दश वर्षसहस्राणि तपश्चेरुर्महार्णवे ॥ ४४ ॥ ततः प्रसन्नो भगवांस्तेषामन्तर्जले हरिः ॥ ददौ दर्शनमुन्निद्रनीलोत्पलदलच्छविः ॥ ४५ ॥ पतत्रि राजमारूढमवलोक्य प्रचेतसः ॥ प्रणिपेतुः शिरोभिस्तं भक्तिभारावनामितैः ॥ ४६ ॥ ततस्तानाह भगवान्व्रियतामीप्सतो वरः । प्रसाद सुमुखोहं वो वरदः समुपस्थितः ॥ ४७ ॥ ततस्तमूचुर्वरदं प्रणिपत्य प्रचेतसः ॥ यथा पित्रा समादिष्टं प्रजानां वृद्धिकारणम् ॥ ४८ ॥

तिष्ठतीति शेषः । प्रकृतिधर्मिणे प्रकृतिरूपवते ॥ ३६ ॥ पुरुषरूपमाह शुद्ध इति ॥ ३७ ॥ मुक्तस्वरूपमाह अविकारमिति ॥ बद्धस्य ज्ञानसंकोचादिरूपो विकारोस्ति तद्रहितत्वमविकारत्वम् । निरंजनं प्रकृतिसंबन्धरहितम् । परं ब्रह्मेति प्रधानाद्यपेक्षया । सचानन्त्यायेति ब्रह्मत्वमुक्तम् । पद्यत इति पदं परमत्वं स्वराट्त्वम् ॥ ३८ ॥ अहंकारादिमुक्तपर्यन्तरूपवतः परस्य स्वरूपमाह अदीर्घेति ॥ अनेन व्यक्ताव्यक्तबद्धमुक्तेभ्यो व्यावृत्तिः । छाया कांतिः । अतनुं निरवयवम् असक्तम् अप्रतिहतम् ॥ ३९ ॥ अनाकाशमिति ॥ अनाकाशं विवररहितम् ॥४० ॥ अनामेति॥असुखम् अन्नपानादिजन्यसुखरहितम् । अभयमित्यादिना बद्धव्यावृत्तिः ॥ ४१ ॥ अरज इति ॥ अप्लुतं यदसंवृतमिति च पाठः । प्लुतं गतिः तद्रहितम् । पूर्वापरे वस्तुनी नस्तः तस्य नित्यत्वात् । परममक्षरं स्वरूपमितिशेषः ॥ ४२ ॥ परमिति ॥ परमेशित्वगुणवदिति च पाठः । परमेशित्वगुणवदिति मुक्तव्यावृत्तिः । असंश्रयमिति नित्यव्यावृत्तिः । सर्वभूतं सर्वात्मभूतम्॥ ४३ ॥ ४४ ॥ ४५॥ ४६॥ ४७॥४८॥

पुरुषरूपेण प्रणमन्ति–शुद्ध इति ॥ ३७ ॥ यस्याः प्रथमं रूपमित्यनेन कालरूपेण भुंज्यत इत्यादिना व्यक्तरूपेण यस्मिन्नित्यनेन प्रधानरूपेण शुद्ध इत्यनेन पुरुषरूपेण इत्येवं सृष्ट्याद्युपयोगि तत्तद्रूपविभागेन प्रणम्य ततः परं शुद्धरूपं प्रणमन्ति अविकारमित्यादिषड्भिः–अविकारमिति ॥ अविकारम् अस्तीत्यादिविकाररहितम् अजं जन्मरहितं शुद्धं स्वभावत एव निर्मलं निरञ्जनमातङ्कमलशून्यम् ॥ ३८ ॥ ३९ ॥ ४० ॥ अनामेति ॥ अनिद्रं निरवद्यम् ॥ ४१ ॥ अरज इति ॥ अप्लवं गतिशून्यं पूर्वापरे दिक्कालकृते ॥ ४२ ॥ परमिति ॥ परं निरुपाधिकमपि ईशित्वगुणवत्स्वाभाविकषड्गुणैश्वर्ययुक्तः । मायया सर्वभूतमपि असंश्रयं निराधारम् अत एव जिह्वाया दृशश्च गोचरं न भवति तं नताः स्म ॥ ४३ ॥ एवमिति ॥ तस्मिन्नेव समाधिश्चित्तैकाग्र्यं येषां ते तत्समाधयः॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥

स चापि देवस्तं दत्त्वा यथाभिलषितं वरम् ॥ अन्तर्धानं जगामाशु ते च निश्चक्रमुर्जलात् ॥ ४९॥ इति श्रीविष्णुपुराणे प्रथमेंशे प्रचेतास्तवो नाम चतुर्दशोऽध्यायः ॥ १४ ॥ श्रीपराशर उवाच ॥ तपश्चरत्सु पृथिवीं प्रचेतःसु महीरुहाः ॥ अरक्ष्यमाणामावव्रुर्बभूवाथ प्रजाक्षयः ॥ ॥ १ ॥ नाशकन्मरुतो वातुं वृतं खमभवद्द्रुमैः ॥ दशवर्षसहस्राणि न शेकुश्चेष्टितुं प्रजाः ॥ २ ॥ तान्दृष्ट्वा जलनिष्क्रान्ताः सर्वे क्रुद्धाः प्रचेतसः ॥ मुखेभ्यो वायुमग्निं च तेऽसृजन् जातमन्यवः ॥ ३ ॥ उन्मूलानथ तान्वृक्षान्कृत्वा वायुरशोषयत् ॥ तानग्निरदहद्घोरस्तत्राभूद्द्रुमसंक्षयः ॥ ४ ॥ द्रुमक्षयमथो दृष्ट्वा किञ्चिच्छिष्टेषु शाखिषु ॥ उपगम्याब्रवीदेतान्राजा सोमः प्रजापतीन् ॥ ५ ॥ कोपं यच्छत राजानः शृणुध्वं च वचो मम ॥ सन्धानं वः करिष्यामि सह क्षितिरुहैरहम् ॥ ६ ॥ रत्नभूता च कन्येयं वार्क्षेयी वरवर्णिनी ॥ भविष्यज्जानता पूर्वं मया गोभिर्विवर्द्धिता ॥ ७ ॥ मारिषा नाम नाम्नैषा वृक्षाणामिति निर्मिता ॥ भार्या वोस्तु महाभागा ध्रुवं वंशविवर्द्धिनी ॥ ८ ॥ युष्माकं तेजसोर्द्धेन मम चार्द्धेन तेजसः ॥ अस्यामुत्पत्स्यते विद्वान्दक्षोनाम प्रजापतिः ॥ ९ ॥ मम चांशेन संयुक्तो युष्मत्तेजोमयेन वै ॥ तेजसाग्निसमो भूयः प्रजाः संवर्द्धयिष्यति ॥ १० ॥

॥ ४९ ॥ इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये प्रथमेंशे चतुर्दशोध्यायः ॥ १४॥ छ ॥ १ ॥ २ ॥ ३ ॥ ४॥ द्रुमक्षयमिति ॥ राजा वृक्षादीनाम् ॥ ५ ॥ कोपमिति ॥ यच्छत नियमयत ॥ ६ ॥ रत्नभूतेति ॥ वार्क्षेया वृक्षजा भविष्यत् इयं दक्षप्रचेतसां पत्नी दक्षस्य माता च भविष्यतीत्यादिकम् । जानता मया गोभिः रश्मिभिः ॥७॥ मारिषेति ॥ सा तु प्रसिद्धा मारिषेतिनाम्ना वृक्षाणामिति । वृक्षाणां सम्बन्धिनी वार्क्षेयीति निर्मिता ॥ ८ ॥९ ॥ मम चेति॥मम दौहित्रत्वान्ममांं

॥४९॥इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यविष्णुपुराणव्याख्यायां प्रथमेंशे चतुर्दशोऽध्यायः॥१४॥ ॥तप इति॥प्रचेतस्सु तपश्चरत्सु सत्सु तत्पितरि च नारदात्तत्त्वज्ञानं प्राप्य राज्यं त्यक्त्वावनं गते सतीति द्रष्टव्यं तदुक्तम्‘‘प्राचीनबर्हिषं जातं कर्मस्वासक्तचेतसम् । नारदोऽध्यात्मतत्त्वज्ञः कृपालुः प्रत्यबोधयत्’’ इत्यादिना पुरञ्जनाख्यानेन। अरक्ष्यमाणां पृथिवीं कर्षणाद्यभावात् महीरुहा आवव्रुः आवृतवन्तः ॥ १॥२॥ ३॥ वायोरग्नेः सृष्टिप्रयोजनमाह—उन्मूलानिति ॥४॥ द्रुमक्षयमिति ॥ सोमो वृक्षाधिपः । प्रजापतिरित्यनेन कन्दमूलफलादिभिः प्रजावृद्धिकारणानां वृक्षाणां दाहः प्रजापालकानां युष्माकमनुचितमिति सामोपायः ॥५॥ कोपमिति ॥कोपं यच्छत उपरमत ॥६॥ उपप्रदानेन सन्धानं करोति—रत्नभूतेति ॥ वार्क्षेयी वृक्षजा भविष्यज्जानता भविष्यदीयं युष्माकं पत्नी भविष्यति अस्यां च दक्षो जनिष्यते तद्वंशेन च लोकं पूरयिष्यतीत्यादिजानता मया गोभिः सुधामयै रश्मिभिः संवर्द्धिता ॥ ७ ॥ मारिषेति ॥ नाम्ना मारिषाख्या वृक्षाणामेपेति कन्या नाम एवं हि प्रसिद्धा निर्मिता निष्पन्नेत्यन्वयः ॥ ८ ॥ युष्माकमिति ॥ युष्माकं तपोमयस्य तीव्रतेजसोर्द्धेन च शान्तैर्मदीयैर्गोभिः संवृद्धत्वादस्याः मम तेजसोर्द्धेन दक्षोऽस्यामुत्पत्स्यते ॥ ९ ॥ एवञ्च ममेति ॥ सौम्येन ममांशेन युष्मत्तेजोमयेन चाग्निना संयुक्तः अग्निषोमात्मकः अप्रधृष्यो भूत्वा प्रजाः संवर्द्धयिष्यतीत्यर्थः ॥ १० ॥

कण्डुर्नाम मुनिः पूर्वमासीद्वेदविदां वरः ॥ सुरम्ये गोमतीतीरे स तेपे परमं तपः ॥ ११ ॥ तत्क्षोभाय सुरेन्द्रेण प्रम्लोचाख्या वराप्सराः ॥ प्रयुक्ता क्षोभयामास तमृषिं सा शुचिस्मिता ॥ १२ ॥ क्षोभितः स तया सार्द्धं वर्षाणामधिकं शतम् ॥ अतिष्ठन्मन्दरद्रोण्यां विषयासक्तमानसः ॥१३॥ तं सा प्राह महाभाग गन्तुमिच्छाम्यहं दिवम् ॥ प्रसादसुमुखो ब्रह्मन्ननुज्ञां दातुमर्हसि ॥ १४ ॥ तयैवमुक्तः स मुनिस्तस्यामासक्तमानसः॥ दिनानि कतिचिद्भद्रे स्थीयतामित्यभाषत ॥ १५ ॥ एवमुक्ता ततस्तेन साग्रं वर्षशतं पुनः ॥ बुभुजे विषयांस्तन्वी तेन साकं महात्मना ॥ १६ ॥ अनुज्ञां देहि भगवन् व्रजामि त्रिदशालयम् ॥ उक्तस्तथेति स पुनः स्थीयतामित्यभाषत ॥ १७ ॥ पुनर्गते वर्षशते साधिके सा शुभानना ॥ यामीत्याह दिवं ब्रह्मन्प्रणयस्मितशोभनम् ॥ १८ ॥ उक्तस्तयैवं स मुनिरुपगुह्यायतेक्षणाम् ॥ इहास्यतां क्षणं सुभ्रु चिरकालं गमिष्यसि ॥ १९ ॥ सा क्रीडमाना सुश्रोणी सह तेनर्षिणा पुनः ॥ शतद्वयं किंचिदूनं वर्षाणामन्वतिष्ठत ॥ २० ॥ गमनाय महाभाग देवराजनिवेशनम् ॥ प्रोक्तः प्रोक्तस्तया तन्व्या स्थीयतामित्यभाषत ॥ २१ ॥ तस्य शापभयाद्भीता दाक्षिण्येन च दक्षिणा ॥ प्रोक्ता प्रणयभङ्गार्त्तिवेदिनी न जहौ मुनिम् ॥ २२ ॥

शेन सौम्येन शान्त्यादिबहुलेनात्मगुणेन युष्मत्तेजःसम्भवेनाग्नेयांशेन क्रौर्यशौर्यादिपितृगुणेन च युक्तः प्रजाः संवर्द्धयिष्यति सर्गस्याग्नीषोमात्मकत्वात् ॥ १० ॥ कन्याया आभिजात्यज्ञानाय तज्जन्माह कण्डुरित्यादिना ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ तस्येति ॥ "या गौरवं भयं प्रेम सद्भावं पूर्वनायके । न मुञ्चत्यन्यचित्तापि सा ज्ञेया दक्षिणा बुधैः" दक्षिणाया भावो दाक्षिण्यं प्रणयो याञ्चा ॥ २२ ॥

न चैवं शंकनीयं दशानां कथमियमेका भार्या भवतीति यस्मादियं कण्डोस्तपःसम्भूतेति।वीर्येणास्य गर्भसम्भूता महाप्रभावा चायोनिजा च दैवी न तु मानुषी न हि बहूनामेकाऽप्सरस्सम्भोगो विरुद्ध्यते विष्णोः प्रसादाच्चास्या बहवः पतयो न दुष्यन्तीति वर्णयन् तस्याः जन्माह—कण्डुर्नामेत्यादिना युष्मत्पत्नीनृपात्मजा इत्यन्तेन ॥ ११ ॥ तत्क्षोभायेति ॥ तस्य क्षोभाय चित्तविकारेण तपोनाशाय ॥ १२॥१३॥१४॥१५॥१६॥१७॥१८ ॥ उक्त इति ॥ उपगृह्य प्राहेत्यनेन सम्भोगातिरेकादनुरागातिरेकं दर्शयति चिरकालं गमिष्यसि गता सती शीघ्रं नागमिष्यसीत्यर्थः । अनेन बहुतपोनाशकत्वे दृष्टेपि स्त्रियः तल्लालनवशीकृतस्य ब्राह्मणस्य स्त्रीविषयेच्छा दुस्त्यजेति भावः ॥ १९ ॥ तच्छापभीतेति ॥ अन्वतिष्ठत अनन्तरमतिष्ठदित्यर्थः ॥ २० ॥ गमनायेति ॥ देवराजनिकेतन प्रति गमनाय ॥ २१ ॥ तस्येति ॥ दक्षिणेति ॥ "या गौरवं भयं प्रेम सद्भावं पूर्वनायके । न मुञ्चत्यन्य

तया च रमतस्तस्य परमर्षेरहर्निशम् ॥ नवंनवमभूत्प्रेम मन्मथाविष्टचेतसः ॥ २३ ॥ एकदा तु त्वरायुक्तो निश्चक्रामोटजान्मुनिः ॥ निष्क्रामन्तं च कुत्रेति गम्यते प्राह सा शुभा ॥ २४ ॥ इत्युक्तः स तया प्राह परिवृत्तमहः शुभे ॥ सन्ध्योपास्तिं करिष्यामि क्रियालोपोन्यथा भवेत् ॥ २५ ॥ ततः प्रहस्य सुदती तं सा प्राह महामुनिम् ॥ किमद्य सर्वधर्मज्ञ परिवृत्तमहस्तव ॥ २६ ॥ बहूनां विप्र वर्षाणां परिवृत्तमहस्तव ॥ गतमेतन्न कुरुते विस्मयं कस्य कथ्यताम् ॥ २७ ॥ मुनिरुवाच ॥ प्रातस्त्वमागता भद्रे नदीतीरमिदं शुभम् ॥ मया दृष्टासि तन्वङ्गि प्रविष्टासि ममाश्रमम् ॥ २८ ॥ इयं च वर्तते सन्ध्या परिणाममहर्गतम् ॥ उपहासः किमर्थोयं सद्भावः कथ्यतां मम ॥ २९ ॥ प्रम्लोचोवाच ॥ प्रत्यूषस्यागता ब्रह्मन् सत्यमेतन्न तन्मृषा ॥ नन्वस्य तस्य कालस्य गतान्यब्दशतानि ते ॥ ३० ॥ सोम उवाच ॥ ततस्स साध्वसो विप्रस्तां पप्रच्छायतेक्षणाम् ॥ कथ्यतां भीरु कः कालस्त्वया मे रमतः सह ॥ ३१ ॥ प्रम्लोचोवाच ॥ सप्तोत्तराण्यतीतानि नववर्षशतानि ते ॥ मासाश्च षट्तथैवान्यत्समतीतं दिनत्रयम् ॥३२॥ ऋषिरुवाच ॥ सत्यं भीरु वदस्येतत्परिहासोथ वा शुभे ॥ दिनमेकमहं मन्ये त्वया सार्द्धमिहासितम् ॥ ३३ ॥ प्रम्लोचोवाच ॥ वदिष्याम्यनृतं ब्रह्मन्कथमत्र तवान्तिके ॥ विशेषेणाद्य भवता पृष्टा मार्गानुवर्तिना॥३४॥

॥२३ ॥ एकदेति ॥ उटजः पर्णशाला ॥ २४ ॥ २५ ॥ तत इति ॥ परिवृत्तं परिणतम् । सर्वधर्मज्ञेति गतबह्वब्दकृत्यविस्मरणोपालंभः ॥ २६ ॥ बहूनामिति ॥ तव बहूनां वर्षाणां गतानां सताम् अहः परिणामं गतमित्येतत्कस्य विस्मयं न कुरुते इदं कथ्यताम् ॥ २७ ॥ २८ ॥ इयमिति ॥ सद्भावः सत्यम् ॥२९॥ ३० ॥ तत इति ॥ कः कियान् ॥ ३१ ॥ ३२ ॥ ३३ ॥ वदिष्यामीति ॥ मार्गानुवर्त्तिना रागकृतमुत्पथं त्यक्त्वा विवेकात्स्वधर्मानुसन्धित्सया परिहासानर्हेण ॥ ३४ ॥

सत्कापि सा ज्ञेया दक्षिणा बुधैः" इति । तस्याः भावो दाक्षिण्यं तेन ॥ २२ ॥ २३ ॥ एकदेति ॥ उटजात्पर्णशालायाः ॥ २४ ॥ इतीति ॥ परिवृत्तमत्यासन्नं जातम् ॥ २५ ॥ तत इति ॥ विस्मयेन प्रहस्य सर्वधर्मज्ञेति सोपालम्भं सम्बोधनम् अद्य तवाहः परिवृत्तं किमिति ॥ २६ ॥ स्वलीलामूढं ब्राह्मणं विचिन्त्य स्त्रैणस्य वचः अन्येषामतिविस्मयकरमिति स्वगतमनुभूय मुनिवचसो विस्मयहेतुं स्वयमेव स्फुटयिष्यति बहूनामिति ॥ एतद्बहुभिर्वर्षैः परिणामं गतं तवातिदीर्घमहः कस्य विस्मयं न कुरुते तदिदं कथ्यताम् ॥ २७ ॥ २८ ॥ इयमिति ॥ सद्भावः परमार्थः ॥ २९ ॥ प्रत्युषसीति ॥ तद्वदेकदिनवद्गतस्य कालस्याब्दशतानि गतानि ॥ ३० ॥ तत इति ॥ ततः धर्मलोपापराधेन ससाध्वसो विप्रस्तां पृच्छति स्म कः कालः कियानेव गतः कालः ॥३१॥३२॥ सत्यमिति ॥ इहास्थितमत्र स्थितम् ॥ ३३ ॥ वदिष्यामीति ॥ एतावन्तं कालमतिविश्रम्भार्हा सती कथ

सोम उवाच ॥ निशम्य तद्वचः सत्यं स मुनिर्नृपनन्दनाः ॥ धिक्धिक् मामित्यतीवेत्थं निनिन्दात्मानमात्मना ॥ ३५ ॥ मुनिरुवाच ॥ तपांसि मम नष्टानि हतं ब्रह्मविदां धनम् ॥ हतो विवेकः केनापि योषिन्मोहाय निर्मिता ॥ ३६ ॥ ऊर्मिषट्कातिगं ब्रह्म ज्ञेयमात्मजयेन मे ॥ मतिरेषा हृता येन धिक् तं कामं महाग्रहम् ॥ ३७ ॥ व्रतानि वेदवेद्याप्तिकारणान्यखिलानि च ॥ नरकग्राममार्गेण सङ्गेनापहृतानि मे॥३८॥विनिन्द्येत्थं स धर्मज्ञः स्वयमात्मानमात्मना ॥ तामप्सरसमासीनामिदं वचनमब्रवीत् ॥ ३९ ॥ गच्छ पापे यथाकामं यत्कार्यं तत्कृतं त्वया ॥ देवराजस्य मत्क्षोभं कुर्वन्त्या भावचेष्टितैः ॥ ४० ॥ न त्वां करोम्यहं भस्म क्रोधतीव्रेण वह्निना ॥ सतां सप्तपदं मैत्रमुषितोहं त्वया सह ॥ ४१ ॥ अथ वा तव को दोषः किं वा कुप्याम्यहं तव ॥ ममैव दोषो नितरां येनाहमजितेन्द्रियः ॥ ४२ ॥ यया शक्रप्रियार्थिन्या कृतो मे तपसो व्ययः ॥ त्वया धिक्तां महामोहमंजूषां सुजुगुप्सिताम् ॥ ४३ ॥ सोम उवाच ॥ यावदित्थं स विप्रर्षिस्तां ब्रवीति सुमध्यमाम् ॥ तावद्गलत्स्वेदजला साबभूवातिवेपथुः ॥ ४४ ॥ प्रवेपमानां सततं खिन्नगात्रलतां सतीम् ॥ गच्छ गच्छेति सक्रोधमुवाच मुनिसत्तमः ॥ ४५ ॥ सा तु निर्भर्त्सिता तेन विनिष्क्रम्य तदाश्रमात् ॥ आकाशगामिनी स्वेदं ममार्ज तरुपल्लवैः ॥ ४६ ॥

॥३५॥ तपांसीति ॥ हतं ब्रह्म विस्मृतो वेदः ॥ ३६ ॥ ऊर्मीति ॥ "अशनाया पिपासे च शोकमोहौ जरामृती ॥ युगपत्प्राणधीदेहधर्मास्ते हि षडूर्मयः" इति । आत्मजयो मनोनियमः । अत्रेतिकरणं द्रष्टव्यम् एषा ब्रह्मविषया मतिः ॥ ३७ ॥ व्रतानीति ॥ वेदवेद्यं ब्रह्म तदाप्तिकारणानि ॥३८॥ विनिन्द्येति ॥ आत्मना मनसा ॥ ३९ ॥ गच्छेति ॥ भावचेष्टितैः भावाख्यैश्चेष्टितैः विलासाद्यैः ॥ ४० ॥नेति ॥ सप्त पदानि सह गच्छतां सतां मैत्रं किं पुनश्चिरकालं त्वया सहोषितस्य मे ॥ ४१॥ ॥ ४२ ॥ ययेति ॥ मोहमंजूषां मोहनपञ्जरम् । मोहभाजनभूतां जुगुप्सितां त्वां धिगित्यन्वयः ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥

मयानृतं वदिष्यामि अद्य भवता कर्मलोपशंकाव्याकुलेन पुनः स्वमार्गानुवर्त्तिना तुष्टा सती ॥ निशम्येति ॥ धिग्धिमामिति गर्हायां धिगित्यन्वयः तद्योगे द्वितीया ॥ ३५ ॥ तपांसीति ॥ ब्रह्मविदां वेदज्ञानां तप एव धनञ्च मम हतं नष्टम् ॥ ३६ ॥ ऊर्मिषट्कातिगमिति 'क्षुत्तृष्णे लोभमोहौ च जरामृत्यू षडूर्मयः" इत्येवं प्रोक्तं यदूर्मिषट्कं तदतिक्रम्य स्थितं ब्रह्म मया मनोजयेन ज्ञेयमित्येवं कृतैषा मतिर्येन हृता तं धिक् ॥ ३७ ॥ ॥ ३८ ॥ ३९ ॥ गच्छेति ॥ प्रेमभावगर्भैश्चेष्टितैर्भ्रूभङ्गादिभिर्मम क्षोभं कुर्वन्त्या त्वया देवराजस्य यत्कार्यं तत्कृतमित्यन्वयः ॥ ४० ॥ ४१ ॥ ४२ ॥ अजितेन्द्रियस्यापि स्वस्य चित्तक्षोभे तवागमनं निमित्तमतस्तामेव पुनर्भर्त्सयति–ययेति ॥यया त्वया सम्भोगादिभिर्मेतपसो व्ययः कृतः तां त्वां महामोहस्य मञ्जूषां पेटिकाभूतां धिगित्यन्वयः॥४३॥यावदिति ॥ गलन्ति स्वेदजलानि घर्मविन्दवो यस्याः सा अतिशयेन वेपथुः कम्पो यस्याः सा तथाभूता बभूव ॥ ४४ ॥ प्रवेपमानामिति ॥ गात्रमेव लता कोमलत्वादिगुणैः स्विन्ना स्वेदयुक्ता गात्रलता यस्यास्ताम् ॥ ४५ ॥ देवस्त्रियः तस्या गर्भसम्भवं कण्डोः सम्भोगजं तद्गर्भस्य च योनिद्वारं विनैव

निर्मार्जमाना गात्राणि गलत्स्वेदजलानि वै ॥वृक्षाद्वृक्षं ययौ बाला तदग्रारुणपल्लवैः ॥ ४७ ॥ ऋषिणा यस्तदा गर्भस्तस्या देहे समाहितः ॥ निर्जगाम स रोमांचस्वेदरूपी तदङ्गतः ॥४८॥ तं वृक्षा जगृहुर्गर्भमेकं चक्रे तु मारुतः ॥ मया चाप्यायितो गोभिः स तदा ववृधे शनैः॥४९॥ वृक्षाग्रगर्भसम्भूता मारिषाख्या वरानना ॥ तां प्रदास्यन्ति वो वृक्षाः कोप एष प्रशाम्यताम् ॥ ५० ॥ कण्डोरपत्यमेवं सा वृक्षेभ्यश्च समुद्गता ॥ ममापत्यं तथा वायोः प्रम्लोचातनया च सा ॥ ५१ ॥ स चापि भगवान् कण्डुः क्षीणे तपसि सत्तमः ॥ पुरुषोत्तमाख्यं मैत्रेय विष्णोरायतनं ययौ ॥ ५२ ॥ तत्रैकाग्रमतिर्भूत्वा चकाराराधनं हरेः ॥ ब्रह्मपारमयं कुर्वञ्जपमेकाग्रमानसः ॥ ऊर्ध्वबाहुर्महायोगी स्थित्वासौ भूपनन्दनाः ॥ ५३ ॥ प्रचेतस ऊचुः॥ ब्रह्मपारं मुने श्रोतुमिच्छामः परमं स्तवम् ॥ जपता कण्डुना देवो येनाराध्यत केशवः ॥ ५४ ॥ सोम उवाच ॥ पारं परं विष्णुरपारपारः परः परेभ्यः परमार्थरूपी ॥ स ब्रह्मपारः परपारभूतः परः पराणामपि पारपारः ॥ ५५ ॥

॥ ४७ ॥ ४८ ॥ ४९ ॥ वृक्षेति ॥ वृक्षाणामग्रं पल्लवानि स एव गर्भः ॥ ५० ॥ ५१ ॥ अथ मारिषाजन्मानुपयुक्तमपि प्रसङ्गात्स्वदुष्कृतप्रायश्चित्तादिरूपं भगवत्स्तोत्रादिकं कण्डुचरितशेषमाख्याति स चापीति ॥ ५२ ॥ तत्रेति ॥ ब्रह्मपारमयं ब्रह्मपारस्वरूपम् ॥ ५३ ॥ ५४ ॥ पारंपरमिति ॥ पारंपरं संसाराध्वनः परं पारम् अतः "सोध्वनः पारमाप्नोति, यमध्वनः पारमुशन्ति योगिनः" इति श्रुतिपुराणाभ्याम् । यद्वा परंपरया गुरुसंप्रदायाविच्छेदेनोपदेश्यं रहस्यं वस्तु यथा छान्दोग्ये "तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्यः" इति "एवं परम्पराप्राप्तमिमं राजर्षयो विदुः" इति च । अपारपारः पारतीरकर्मसमाप्ताविति धातोः

निस्सरणमार्गं स्वेदोद्गममुक्त्वा तत्कन्याया वृक्षादिकन्यात्वे हेतुमाह–सा तु निर्भर्त्सितेत्यादिषड्भिः ॥ ४६ ॥ ४७ ॥ ऋषिणेति ॥ समाहितः सम्यगाहितः निषिक्तः ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ तर्हि योगभ्रष्टस्य कन्येयमित्यनादरं वारयितुं पुनः कण्डोर्योगमाह–स चापीति सार्द्धद्वाभ्याम् ॥५२॥ तत्रेति ॥ ब्रह्मशब्दश्च पारशब्दश्च प्रचुरो यस्मिंस्तं ब्रह्मपारमयं यद्वा–ब्रह्मणो वेदस्य पारो वेदान्तास्तन्मयं तत्परिणामभूतम् ॥ ५३॥ ब्रह्मपारमिति ॥ आराध्यत आराधितः ॥५४॥ "सङ्कीर्त्य तत्त्वं त्रिश्लोक्या प्रार्थनाच्च चतुर्थतः । ब्रह्मपारस्तवेनैवं कण्डोस्तुष्टोऽचिराद्धरिः॥" पारंपरमित्यादित्रिभिः श्लोकैर्विष्णोस्तत्त्वं संकीर्त्य चतुर्थेन रागादिदोषशमः प्रार्थ्यते पारम्परमिति ॥ पारं परं निरतिशयमावृत्तिशून्यं संसाराध्वनः पारमवधिः विष्णुः"सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इति श्रुतेः । तथा न पारः दुरन्तस्य संसाराध्वनः पारत्वादपारो दुष्प्रापः परोऽन्तो यस्य सः पारतीरकर्मसमाप्ताविति धातुः । तर्हि दीर्घेण कालेन प्राप्यः स्यात्तत्राह–परः परेभ्य इति । परेभ्य आकाशादिभ्योऽपि परः अनन्त इत्यर्थः "महतो महीयान्" इति श्रुतेः । अत एव परमार्थरूपी सत्यरूपः ।

स कारणं कारणतस्ततोपि तस्यापि हेतुः परहेतुहेतुः ॥ कार्येषु चैवं सह कर्मकर्तृरूपैरशेषैरवतीह सर्वम् ॥ ५६ ॥

यद्वक्तुं नैव पार्यत इत्यादौ शक्यार्थे प्रयोगदर्शनाल्लक्षणया पारः शक्तिः अपारपारः अनंतशक्तिरित्यर्थः । "परास्य शक्तिर्विविधैव श्रूयते" इति श्रुतेः । यद्वा पारं यस्य नास्ति सोऽपारपारः अपारिमितपरिमाण इतिवन्निर्देशः । "न ते विष्णो जायमानो न जातो देव महिम्नः परमं तमाप" इति श्रुतेः । अथ वा अपारस्यासमाप्तस्यापूर्णस्य यज्ञादिकर्मणः पारः स्वकीर्त्तनस्मरणादिना पारयिता समापकः पूरको "वा विष्णुर्वै यज्ञस्य दुरिष्टं पाति" इत्यादि "विदुः कृष्णं ब्राह्मणास्तत्त्वतो ये तेषां राजन् सर्वयज्ञाः समाप्ताः सर्वं करोति निश्छिद्रं नामसंकीर्त्तनं तव" इत्यादि च । परः परेभ्यः कारणत्वनिरतिशयानन्दत्वादिनापरेभ्यः ब्रह्मादिभ्यः परः परमार्थरूपी ब्रह्मादिवन्न विनाशिविग्रहः अपि तु सर्वशक्त्याश्रयपरमार्थदिव्यविग्रहः । परप्रयोजनानन्दस्वरूपो वा ब्रह्मपारः ब्रह्मणः प्रधानस्य पारः अवसानभूमिः । आर्षो लिंगव्यत्ययः । यद्वा सब्रह्मणः सवेदान् वैदिकान् पारयतीति सब्रह्मपारः रलयोरभेदः । परपारभूतः प्रधानापेक्षया परः समष्टिपुरुषः तस्य पारभूतः "प्रधानपुंसोरजयोः कारणं, उभावेतौ लीयेते परमात्मनि" इति च दर्शनात् । यद्वा परेषां परस्परभिन्नानां वस्तूनां पारभूतः असंकरकृन्मर्यादाभूतः 'एष सेतुर्विधारणम्' इति श्रुतेः । परः पराणां परेभ्यो नित्यमुक्तेभ्यः नित्यमुक्तत्वजगद्योनित्वशेषित्वादिभ्यः परः पारपारः सर्वहेतुभूतः कालस्तस्यापि पारः अवसानभूमिः कालं स पचत इति यद्वा पाराणां पूरकाणां व्योमादिविभुद्रव्याणां पारः पूरयिता पॄपालनपूरणयोरिति धातोर्णिजन्तात्पचाद्यच् :तेनेदं पूर्णं पुरुषेण सर्वमिति । अथ वा पालानां पालः रलयोरभेदः "एष ह्येदं सर्वं गोपायतीति, न हि पालनसामर्थ्यमृते सर्वेश्वरं हरिम्" इति ॥ ५५ ॥ स कारणमिति ॥

यद्वा–अर्थः प्रयोजनं परमपुरुषार्थः परमानन्दः स एव रूपी मूर्त्तिमान् अयं पुरुषोत्तम इत्यर्थः । ननु तस्यादृष्टत्वे कथं परमपुरुषार्थस्वरूपता कथं वा "सोऽध्वनः पारमाप्नोति" इति श्रुतिस्तत्राह–सब्रह्मपारः ब्रह्म वेदस्तपो वा तत्सहितास्तन्निष्ठास्स ब्राह्मणस्तेषां पारः प्राप्तुं शक्यः तत्कुत इत्यत आह–परपारभूतः परस्यानात्मप्रपञ्चस्य पारभूतोऽवधिरूपः तद्धेतुः परः पराणामपीति आत्माभ्यासादात्मत्वेन प्रतीतानामिन्द्रियादीनां परः निरुपाधि. परमात्मा "इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परम्" इत्युपक्रम्य "पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः" इति श्रुतेः । अयं भावः ग्रामादिवद्गत्या तत्प्राप्तिः दुरन्तसंसारपारत्वात् अपारपारत्वात् अनन्तत्वाच्च अज्ञैस्तु न प्राप्येत किन्त्वजानताम् अतिदूरीभूतोपि तपोविशुद्धचित्तैर्वेदोत्पन्नज्ञानेन: कृतानात्मप्रसङ्गापवादतः प्राप्तुं शक्य इति अत एवोपाधिपरिच्छेदाभावान्निरङ्कुशाचिन्त्यपारमैश्वर्येण पारपारः पारश्चासौ पारश्चेति समासः पॄपालनपूरणयोरिति धातोः :पार इति रूपम् । स्वभक्तानां पालनात्पारः अपेक्षितैर्वरैः पूरणं च पार इति द्वितीयपारशब्दस्यार्थः । यद्वा–पाराः पालकाः पूरकाश्च ये इन्द्रब्रह्मादयः तेषामपि पालकः पूरकश्चेत्यर्थः ॥ ९९ ॥ तदेवं विशुद्धरूपेण स्तुत्वा सार्वात्म्येन स्तौति–सकारणमिति ॥ कारणत इति षष्ठ्यर्थे तसिः । विष्णुः कारणस्यापि कारणं तस्यापि कारणमित्येवं चराचरकारणम्, ब्रह्माण्डमारभ्य मूलकारणपर्यन्तकारणमालात्मकः यथोक्तं ब्रह्मस्मृतौ

ब्रह्म प्रभुर्ब्रह्म स सर्वभूतो ब्रह्म प्रजानां पतिरच्युतोऽसौ ॥ ब्रह्माव्ययं नित्यमजं स विष्णुरपक्षयाद्यैरखिलैरसङ्गि ॥ ९७ ॥ ब्रह्माक्षरमजं नित्यं यथाऽसौ पुरुषोत्तमः ॥ तथा रागादयो दोषाः प्रयांतु प्रशमं मम ॥ ९८ ॥

कारणतस्तत इति षष्ठयर्थे तसिः । चरमकार्यस्य देहादेः कारणं विराट् तस्य भूतानीत्यादिकारणप्रकृत्यन्तानि स विष्णुः कारणतस्ततोपि कारणमित्यनुषंगः भूतानि तस्यापि हेतुस्तन्मात्राणि परहेतुहेतुः परोहंकारः तद्धेतुर्महान् तद्धेतुः प्रकृतिरिति । एवं महदादिदेहान्तकार्येषु च महदादिकार्यमालापि स एवेत्यर्थः। अनेनोपादानत्वमुक्तं रक्षकत्वमाह सहेति॥स इति पदच्छेदः। स एव तत्तत्क्रियारूपैस्तत्तत्कर्तृरूपैरात्मीयैरित्थंभूतः सर्वमवति। हेति प्रसिद्धौ—अथ वा सह कर्मभिः कर्मसहितैः तत्तत्कर्तृरूपैः॥९६॥ब्रह्मेति॥ ब्रह्मप्रभुः वेदनिर्वाहकः स ब्रह्मभूरिति पाठे ब्रह्मणि वेदे प्रतिपाद्यत्वेनाविर्भवतीत्यर्थः। ब्रह्म सः वेदश्च सः सर्वभूतः अन्यदपि वेदांगादिरूपं शब्दजातं स एव प्रकृतस जातीयविशेषपरामर्शी हि सर्वशब्दः। शब्दमूर्त्तिधरस्यैतदिति हि वक्ष्यति। ब्रह्म द्वे ब्रह्मणीति वक्ष्यमाणं ज्ञानद्वयं तदप्यसौ यद्वा ब्रह्मणो वेदे द्रष्टुर्विरिंचेस्तत्प्रजानां वेदार्थस्मर्तॄणां मन्वादीनां च पतिः। सर्वस्य स्वरूपमाह-ब्रह्माव्ययमिति। अव्ययत्वादिना प्रधानाद्व्यावृत्तिः।अजत्वेन बद्धात् तस्य कर्माधीनशरीरग्रहणलक्षणजन्मवत्वात् नित्यमजमिति। मुक्ताद्व्यावृत्तिः तस्य कदाचिज्जन्मवत्वात् ॥ ९७ ॥ एवमुक्तस्य ब्रह्मगुणजातस्यानुक्तस्य च सौलभ्यादेरर्चावतारे पौष्कल्यं सूचयन्छपथं करोति

"कारणं कारणस्यापि तस्य कारणकारणम्" इत्यादि। कार्येषु चैवमित्यनेन प्रकृतिकार्यमहत्तत्त्वमारभ्य चरमकार्यपर्यन्तकार्यमालात्मको विष्णुरेवेत्युक्तम्। तदेवं सृष्टिक्रियायामुपादानकारणत्वेन च सार्वात्म्यमुक्त्वा पालन क्रियायां पाल्यकर्मरूपतया तत्कर्तृतया च सार्वात्म्यमाह—स इति। ह इति निपातोऽवधारणार्थः। स विष्णुरेव कर्मरूपैः पालनीयैस्तत्पालकैश्च कर्तृरूपैरशेषैः स्वकीयैरुपलक्षितस्सन् अवति। यद्वा—अशेषैः कर्म कर्तृरूपैः सहैवमति कर्मकर्तृरूपमालान्तरात्मत्वादेः तत्र कर्तुरीप्सिततमं कर्मेति कर्तुः क्रियया ग्रामगमनादिकरणिकया भावनाख्यया यदीप्सिततमं तदेव मुख्यं कर्मात्र गृह्यते। ग्रामादेस्तु याथार्थ्यकर्मतैव न भावना कर्मता अत एव आस्ते शेते इत्यादिषु अकर्मकेष्वपि प्रत्ययांशे भावनाप्रतीतिर्भाव्यं विनाभावाच्च सुखकामः आसीत स्वास्थ्यकामः शयीतेत्यादिप्रयोगाच्चासनेन सुखं भावयेदित्येवमादि वचनं व्यक्तौ सुखादेर्भावनाकर्मत्वम भ्युपगम्यते तदुक्तं भाट्टैः "अस्त्यादावपि कर्त्रर्थे भाव्यस्यैव हि भावना। अन्यत्राशेषभावस्तु न तथा सा प्रकाशते" ॥ इति यद्येवमकर्मकेष्वपि भाव्यं स्यात् कस्तर्हि सकर्मकाकर्मकयोर्भेद इत्याक्षिप्य परिहारश्चोक्तः। "साक्षादव्यभिचारेण धात्वर्थो यत्र कर्मभाक्। सकर्मकः स धातुः स्यात्पारंपर्ये त्वकर्मकः ॥" इति। अतोऽत्र कर्मशब्देनेप्सिततमसुखवाचिना मानुषानन्दमारभ्य ब्रह्मानन्दपर्यन्तपुरुषार्थमालारूपो विष्णुरेव कर्तृशब्देन तत्साधकमानुषमनुष्यगन्धर्वदेवगन्धर्वादिरूपेणात्यन्तिकप्रलयाख्यमहानन्दपुरुषार्थसाधकोपि विष्णुरेवेत्युक्तम्। तदेवं कार्यकारणकर्मरूपैः सृष्टिप्रलयक्रियाप्रतियोगिभिस्तत्सम्बन्धिसार्वात्म्यमुक्तम्। तैरेव रूपैः पालनक्रिया प्रतियोगिभिः तत्सम्बन्धिसार्वात्म्यमाह—अशेषैरेतैरुपायैः स विष्णुः सर्वमवतीति ॥ ९६ ॥ ननु यदि शुद्धं ब्रह्मैवासौ विष्णुस्तर्हि कथमशेषैरूपैरवतीत्युच्यते। अथ सर्वात्मकस्तर्हि सर्वभावविकारप्राप्तेः कुतोऽस्य शुद्धतेत्याश ङ्क्याह—ब्रह्मेति ॥ स विष्णुः शुद्धं ब्रह्मैव वसन् सर्वभूतश्च ब्रह्मैव सर्वभूतानां पतिश्च पालकः न तु स्वरूपप्रच्युत्या यतोऽसावच्युतः प्रसिद्धः। अतः स विष्णुर्व्यापनशीलः सर्वात्मकोपि सन्नक्षरं ध्रुवं नित्यमजमपक्षया द्यैरसङ्गि अपक्षयवृद्धिपरिणामसङ्गरहितं च ब्रह्मैवाचिन्त्यस्वाधीनमायया सर्वात्मतया स विवर्त्तते अतो नायं विरोध इति भावः ॥ ९७ ॥ उक्तं तदेवमनुस्मरन्दोषोपशमं प्रार्थयते—ब्रह्माक्षरमिति ॥ यद्वा निर्विकारं ब्रह्मै

सोम उवाच॥एतद्ब्रह्म पराख्यं वै संस्तवं परमं जपन्॥अवाप परमां सिद्धिं स तमाराध्य केशवम्॥५९॥(इमं स्तवं यः पठति शृणुयाद्वापि नित्यशः॥ स कामदोषैरखिलैर्मुक्तः प्राप्नोति वाञ्छितम्॥ ) इयं च मारिषा पूर्वमासीद्या तां ब्रवीमि वः ॥ कार्यगौरवमेतस्याः कथने फलदायि वः॥६०॥ अपुत्रा प्रागियं विष्णुं मृते भर्त्तरि सत्तमाः ॥ भूपपत्नी महाभागा तोषयामास भक्तितः ॥६१॥ आराधितस्तया विष्णुः प्राह प्रत्यक्षतां गतः॥ वरं वृणीष्वेति शुभे सा च प्राहात्मवाञ्छितम् ॥६२॥ भगवन्बालवैधव्याद्वृथाजन्माहमीदृशी ॥ मन्दभाग्या समुद्भूता विफला च जगत्पते ॥६३॥भवन्तु पतयः श्लाघ्या मम जन्मनि जन्मनि ॥ त्वत्प्रसादात्तथा पुत्रः प्रजापतिसमोस्तु मे॥६४॥ कुलं शीलं वयः सत्यं दाक्षिण्यं क्षिप्रकारिता ॥ अविसंवादिता सत्त्वं वृद्धसेवा कृतज्ञता॥६५॥ रूपसम्पत्समायुक्ता सर्वस्य प्रियदर्शना ॥ अयोनिजा च जायेयं त्वत्प्रसादादधोक्षज ॥ ६६ ॥ सोम उवाच ॥ तयैवमुक्तो देवेशो हृषीकेश उवाच ताम् ॥ प्रणामनम्रामुत्थाप्य वरदः परमेश्वरः ॥ ६७ ॥ देव उवाच ॥ भविष्यन्ति महावीर्या एकस्मिन्नेव जन्मनि ॥ प्रख्यातोदारकर्माणो भवत्याः पतयो दश ॥ ६८ ॥ पुत्रञ्च सुमहावीर्यं महाबलपराक्रमम् ॥ प्रजापतिगुणैर्युक्तं त्वमवाप्स्यसि शोभने ॥६९॥ वंशानां तस्य कर्तृत्वं जगत्यस्मिन्भविष्यति ॥ त्रैलोक्यमखिला सूतिस्तस्य चापूरयिष्यति ॥७०॥

ब्रह्माक्षरमिति ॥ असाविति पुरुषोत्तमाख्याद्रौ पुरः स्थितं पुरुषोत्तमसंज्ञं भगवन्तमंगुल्या निर्दिश्याह ॥५८॥५९॥ इमश्चेति॥एतस्याः कथने मम कार्यगौरवं यत्नगौरवं वः सुपुत्रत्वादिफलदं कार्यं गौरवमितिपाठे युष्माभिर्गौरवं कर्त्तव्यमिति ॥ ६० ॥ ६१ ॥ ६२ ॥ भगवन्निति ॥ विफला वैफल्यमपुत्रत्वादि ॥ ६३ ॥ ६४ ॥ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८॥ ६९ ॥ वंशानामिति ॥ सूतिः संतानः सृष्ट्यर्थमित्यन्वयः ॥ ७० ॥

वासौ पुरुषोत्तमः तदा तदनुस्मरणेन तत्प्रसादात्तत्स्वरूपाविर्भावाच्च मम रागादयः राग आदिः कारणं येषां क्रियालोपयोगभङ्गादिदोषाणां ते सर्वदोषाः प्रशमं प्रकर्षेण शमं प्रयान्तु ॥ ५८ ॥ ५९ ॥ इदानीमस्या बहुपतित्वं भगवतैव प्रसादीकृतमिति नास्या युष्माकं वा कश्चिद्दोष इति वक्तुमाह इयञ्चेत्यादिना–इयञ्चेति ॥ कार्यगौरवं सत्पुत्रलाभाख्यं एतस्याः कथने सति वो युष्माकं फलदायि वंशविस्ताराख्यफलं भविष्यती त्यर्थः ॥ ६० ॥ अपुत्रेति ॥ प्राक् प्रथमजन्मनि भूपस्य पत्नीयं तस्मिन्भवे भर्त्तरि मृते सति विष्णुं तोषयामासेत्यन्वयः ॥ ६१ ॥ ६२ ॥ भगवन्निति ॥ वृथैव जन्म यस्याः सा वृथा जन्म विफला अपुत्रा ॥ ६३ ॥ भवन्त्विति ॥श्लाघ्याः विख्यातकर्माणः ॥ ६४ ॥६५ ॥ रूपेति ॥ रूपेण सम्पदा च समायुक्ता ॥ ६६ ॥ तयेति ॥ प्रणामेन नम्रां जन्मभेदेन तया बहुपतिप्रार्थने कृतेपि स्वभक्तानां पुनःपुनर्जन्मासहमानो विष्णुरेकस्मिन्नेव जन्मनि तं वरं ददौ ॥ ६७ ॥ तदाह देवः भविष्यन्तीति ॥ अन्यस्मिन्ननन्तर एव जन्मनि ॥ ६८ ॥ ६९ ॥ वंशानामिति ॥ सूतिः सन्ततिः ॥७० ॥

त्वं चाप्ययोनिजा साध्वी रूपौदार्यगुणान्विता ॥ मनःप्रीतिकरी नृणां मत्प्रसादाद्भविष्यसि ॥ ७१ ॥ इत्युक्तान्तर्दधे देवस्तां विशालविलोचनाम् ॥ सा चेयं मारिषा जाता युष्मत्पत्नी नृपात्मजाः ॥ ७२ ॥ श्रीपराशर उवाच ॥ ततः सोमस्य वचनाज्जगृहुस्ते प्रचेतसः ॥ संहृत्य कोपं वृक्षेभ्यः पत्नीधर्मेण मारिषाम् ॥ ७३ ॥ दशभ्यस्तु प्रचेतोभ्यो मारिषायां प्रजापतिः ॥ जज्ञे दक्षो महाभागो यः पूर्वं ब्रह्मणोऽभवत् ॥ ७४ ॥ स तु दक्षो महाभागस्सृष्ट्यर्थं सुमहामते ॥ पुत्रानुत्पादयामास प्रजासृष्ट्यर्थमात्मनः ॥ ७५ ॥ अवरांश्च वरांश्चैव द्विपदोथ चतुष्पदान् ॥ आदेशं ब्रह्मणः कुर्वन् सृष्ट्यर्थं समुपस्थितः ॥ ७६ ॥ स सृष्ट्वा मनसा दक्षः पश्चादसृजत स्त्रियः ॥ ददौ स दश धर्माय कश्यपाय त्रयोदश ॥ कालस्य नयने युक्ताः सप्तविंशतिमिन्दवे ॥ ७७ ॥ तासु देवास्तथा दैत्या नागा गावस्तथा खगाः ॥ गन्धर्वाप्सरसश्चैव दानवाद्याश्च जज्ञिरे ॥ ७८ ॥ ततः प्रभृति मैत्रेय प्रजा मैथुनसम्भवाः ॥ संकल्पाद्दर्शनात्स्पर्शात्पूर्वेषामभवन् प्रजाः ॥ तपोविशेषैः सिद्धानां तदात्यन्ततपस्विनाम् ॥ ७९ ॥ श्रीमैत्रेय उवाच ॥ अङ्गुष्ठाद्दक्षिणाद्दक्षः पूर्वं जातो मया श्रुतः ॥ कथं प्राचेतसो भूयः समुत्पन्नो महामुने ॥ ८० ॥ एष मे संशयो ब्रह्मन्सुमहान्हृदि वर्त्तते ॥ यद्दौहित्रश्च सोमस्य पुनः श्वशुरतां गतः ॥ ८१ ॥

७१ ॥ ७२ ॥ ७३ ॥ ७४॥ स इति ॥ सृष्ट्यर्थमित्यस्य यः पूर्वं ब्रह्मणोऽभवदित्यनेनान्वयः ॥ ७५ ॥ ७६ ॥ स सृष्ट्वेति ॥ चराचरादिरूपान् पुत्रान्मनसा सृष्ट्वा पश्चाद्वक्ष्यमाणहर्यश्वादिपुत्रनाशादूर्ध्वम् । कालस्य नयने ग्रहचारादिषु यत्नेन स्वभ्रमणेन च ज्ञापने नियुक्ताः अश्विन्यादिताराः ॥ ७७ ॥ ७८ ॥ तत इति ॥ पूर्वेषां दक्षात्पूर्वेषाम् ॥ ७९ ॥ ८० ॥ ८१ ॥

त्वञ्चेति ॥ साध्वी पतिव्रता॥७१॥७२॥७३॥दशभ्य इति ॥यः पूर्वं ब्रह्मणः पुत्रोऽभवत् स दक्षो मारिषायां जज्ञे ॥७४॥ स इति सृष्ट्यर्थं प्रजापतिसृष्टिवृद्ध्यर्थम् आत्मनः प्रजासृष्ट्यर्थं सन्तानार्थम् ॥७५॥ अवरानिति ॥ अवरान्नीचान्सर्वान् श्रेष्ठान् अचराञ्चरांश्चैवेति वा पाठः ॥ ७६ ॥ स इति ॥ पश्चात् हर्यश्वादिपुत्रनाशानन्तरं स्त्रियः कन्यासृष्टिमसृजत् (७७) तासां मध्ये पञ्चाशत्कन्यानां विवाहान् वंशांश्च प्रदर्शनार्थमुपक्षिपति ददावित्या दिद्वाभ्याम्—ददा विति ॥ कालस्य नयने परिवर्त्तने युक्ताः नियुक्ताः कृत्तिकाद्याः तदुक्तम् "कृत्तिकादीनि नक्षत्राणीन्दोः पत्न्यस्तु भारत" इति ॥७७॥७८॥ तत इति ॥ ततः प्रभृति ततो दक्षात्प्रभृति दक्षात्पूर्वेषां सङ्कल्पादिमात्रात् प्रजा अभवन् यद्यपि प्राचेतसाद्दक्षात्पूर्वमपि मैथुनसृष्टिरस्त्येव तथापि बाहुल्यात्प्रायेणैतदुच्यत इत्यविरोधः ॥७९॥८०॥ एष इति ॥ सोमदुहितुर्मारिषायाः पुत्रत्वात्सोमस्य दौहित्रः पुनश्च सप्तविंशतिकन्या इन्दवे

श्रीपराशर उवाच ॥उत्पत्तिश्च निरोधश्च नित्यो भूतेषु सर्वदा ॥ ऋषयोत्र न मुह्यन्ति ये चान्ये दिव्यचक्षुषः ॥ ८२ ॥ युगेयुगे भवन्त्येते दक्षाद्या मुनिसत्तम ॥ पुनश्चैवं निरुद्धयन्ते विद्वांस्तत्र न मुह्यति ॥ ८३ ॥ कानिष्ठ्यं ज्यैष्ठ्यमप्येषां पूर्वं नाभूद्द्विजोत्तम ॥ तप एव गरीयोभूत्प्रभावश्चैव कारणम् ॥ ८४ ॥ मैत्रेय उवाच ॥ देवानां दानवानां च गन्धर्वोरगरक्षसाम् ॥ उत्पत्तिं विस्तरेणेह मम ब्रह्मन्प्रकीर्त्तय ॥ ८५ ॥ श्रीपराशर उवाच॥ प्रजाः सृजेति व्यादिष्टः पूर्वं दक्षः स्वयंभुवा ॥ यथा ससर्ज भूतानि तथा शृणु महामुने ॥८६॥ मानसान्येव भूतानि पूर्वं दक्षोऽसृजत्तदा ॥ देवानृषीन्सगन्धर्वानसुरान्पन्नगांस्तथा ॥८७॥ यदास्य सृजमानस्य न व्यवर्धन्त ताः प्रजाः ॥ ततः संचिन्त्य स पुनः सृष्टिहेतोः प्रजापतिः॥८८॥ मैथुनेनैव धर्मेण सिसृक्षुर्विविधाः प्रजाः ॥ असक्नीमावहत्कन्यां वीरणस्य प्रजापतेः ॥ सुतां सुतपसा युक्तां महतीं लोकधारिणीम्॥८९॥ अथ पुत्रसहस्राणि वैरुण्यां पञ्च वीर्यवान् ॥ असिक्न्यां जनयामास सर्गहेतोः प्रजापतिः ॥९०॥ तान्दृष्ट्वा नारदो विप्र संविवर्द्धयिषून्प्रजाः ॥ संगम्य प्रियसंवादो देवर्षिरिदमब्रवीत् ॥ ९१ ॥ हे हर्यश्वा महावीर्याः प्रजा यूयं करिष्यथ ॥ ईदृशो दृश्यते यत्नो भवतां श्रूयतामिदम् ॥ ९२ ॥ बालिशा बत यूयं वै नास्या जानीत वै भुवः ॥ अन्तरूर्ध्वमधश्चैव कथं सृक्ष्यथ वै प्रजाः ॥ ९३ ॥ ऊर्ध्वं तिर्यगधश्चैव यदाऽप्रतिहता गतिः ॥ तदा कस्माद्भुवो नान्तं सर्वे द्रक्ष्यथ बालिशाः ॥ ९४ ॥

उत्पत्तिरिति ॥ नित्यः प्रवाहरूपेण ॥ ८२ ॥ युगेयुग इति ॥ युज्यंतेस्मिन्सर्वे ग्रहा एकस्थानं यान्तीति व्युत्पत्त्या ग्रहयुगं कल्पयतीति ज्योतिषप्रसिद्धेश्च कल्पमन्वन्तरादिकालोत्र युगम् । पुराणान्तरे दक्षस्य स्वायंभुवेन्तरे जातस्य पुनश्चाक्षुषे जन्मप्रसिद्धेः कल्पवासि भृग्वादिप्रजेश्वरान्तर्गतत्वाच्च ॥ ८३ ॥ ८४ ॥ ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ ऊर्ध्वमिति ॥ यथाप्रतिहतगतिरित्यत्र अप्रतिहतेति पदच्छेदः ॥ ९४ ॥

ददावित्युक्ते श्वशुरतां च गत इति अत एषोऽन्यः संशय इत्यर्थः । यद्दौहित्रस्येति पाठे दक्षकन्यायामनसूयायामत्रेः सोमस्योत्पत्तेर्दक्षस्य दौहित्रस्सोमस्तस्य दक्षः श्वशुरतां पुनर्गतः कथमिति ॥८१ ॥ उत्पत्तिरिति ॥ नित्यः प्रवाहरूपेणाविच्छिन्नः ॥८२॥ युगे युग इति भवन्ति सुप्तप्रबुद्धवदुद्भवन्ति तिरुद्धयन्ते सुप्तवल्लीयन्त इत्यर्थः । युगेयुग इति युज्यन्तेऽस्मिन् ग्रहा एकस्थानं यास्यन्तीति युगम् अत्र कल्पमन्वन्तरादिः कालः॥८३॥स्वायम्भुवमन्वन्तरे जातस्य दक्षस्य पुनश्चाक्षुषमन्वन्तरे प्रचेतोभ्यो जन्मप्रसिद्धेः । न चात्यन्तकनिष्ठस्य श्वशुरत्वे पूज्यपूजाव्यतिक्रम आशङ्कनीय इत्याह–कानिष्ठ्यमिति ॥ गरीयो गुरुतरं तपश्च प्रभावश्च ज्येष्ठ्यकारणमभूत् न तु वयोमात्रमित्यर्थः॥८४॥ दक्षसृष्टिं विस्तरेण जिज्ञासुः पृच्छति–देवानामिति ॥ इहास्मिन्प्राचेतसे दक्षे या देवादीनामुत्पत्तिः तां विस्तरेण प्रकीर्त्तयेत्यर्थः ॥८५॥८६॥८७॥८८॥८९॥९०॥ तानिति ॥ प्रजाः सम्यक् विवर्द्धयितुमिच्छतस्तान् दृष्ट्वाऽभिसङ्गम्याब्रवीत् ॥९१॥९२॥ बालिशा इति ॥ बालिशा बतेत्यादेरयं वास्तवार्थः । बतेति खेदे । तेषां तत्त्वविमर्शनं विना प्रजासृष्ट्यादिक्लेशप्राप्तेः । अहो यूयं बालिशा अज्ञाः । यतोऽस्या भुवः संसाराङ्कुरप्रसवक्षेत्रस्य लिङ्गशरीरस्याधः उपक्रममूर्ध्वमवसानम् अन्तर्मध्यञ्च न जानीथ अतो मोक्षमार्गमज्ञात्वा कथं प्रजाः स्रक्ष्यथ व्यर्थसंसारापादकं प्रजासर्गं किमिति करिष्यथ ॥ ९३ ॥ यूयञ्च विशुद्धबुद्धित्वात्तत्त्वज्ञाना

ते तु तद्वचनं श्रुत्वा प्रयाताः सर्वतो दिशम् ॥ अद्यापि नो निवर्तन्ते समुद्रेभ्य इवापगाः ॥ ९५ ॥ हर्यश्वेष्वथ नष्टेषु दक्षः प्राचेतसः पुनः ॥ वैरुण्यामथ पुत्राणां सहस्रमसृजत्प्रभुः ॥ ९६ ॥ विवर्द्धयिषवस्ते तु शबलाश्वाः प्रजाः पुनः ॥ पूर्वोक्तं वचनं ब्रह्मन्नारदेनैव नोदिताः ॥ ९७ ॥ अन्योन्यमूचुस्ते सर्वे सम्यगाह महामुनिः ॥ भ्रातॄणां पदवी चैव गन्तव्या नात्र संशयः ॥ ९८ ॥ ज्ञात्वा प्रमाणं पृथ्व्याश्च प्रजास्स्रक्ष्यामहे ततः ॥ ९९ ॥ तेपि तेनैव मार्गेण प्रयाताः सर्वतोमुखम् ॥ अद्यापि न निवर्त्तन्ते समुद्रेभ्य इवापगाः ॥ ततः प्रभृति वै भ्राता भ्रातुरन्वेषणे द्विज ॥ प्रयातो नश्यति तथा तन्न कार्यं विजानता ॥ १०० ॥ तांश्चापि नष्टान् विज्ञाय पुत्रान् दक्षः प्रजापतिः ॥ क्रोधं चक्रे महाभागो नारदं स शशाप च ॥ १०१ ॥ सर्गकामस्ततो विद्वान्स मैत्रेय प्रजापतिः ॥ षष्टिं दक्षोऽसृजत्कन्या वैरुण्यामिति नः श्रुतम् ॥ १०२ ॥ ददौ स दश धर्माय कश्यपाय त्रयोदश ॥ सप्तविंशति सोमाय चतस्रोऽरिष्टनेमिने ॥ १०३ ॥ द्वे चैव बहुपुत्राय द्वे चैवाङ्गिरसे तथा ॥ द्वे कृशाश्वाय विदुषे तासां नामानि मे शृणु ॥१०४॥ अरुन्धती वसुर्जामिर्लंघा भानुर्मरुत्वती ॥ संकल्पा च मुहूर्ता च साध्या विश्वा च तादृशी॥ धर्मपत्न्यो दश त्वेतास्तास्वपत्यानि मे शृणु॥विश्वेदेवास्तु विश्वायाः साध्या साध्यानजायत॥मरुत्वत्यां मरुत्वन्तो वसोश्च वसवः स्मृताः॥१०५॥

॥९५॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ १०० ॥ तानिति ॥ नारदशापे वायुः "शबलाश्वेषु नष्टेषु दक्षः क्रुद्धोशपद्द्विजम् । नारदं नाशमेहीति गर्भवासं वसेति च॥ तदा दक्षः सुतां प्रादात्प्रियां वै परमेष्ठिने । तस्मात्स नारदो जज्ञे भूयः शापभयादृषिः" इति ॥ १०१ ॥ १०२ ॥ ददाविति ॥ दाक्षायणीनां संज्ञावंशौ विस्तरेण वक्तुं ददावित्यनुवादः । सप्तविंशतीति सुपोलुक् ॥ १०३ ॥ १०४ ॥ अरुन्धतीति ॥ एता अरुन्धत्याद्याः प्राचेतसस्य दक्षस्य सुताः

धिकारिण एवेत्याह—ऊर्द्धमिति ॥ ऊर्द्धं तिर्यगधश्च सर्वतत्त्वविचारे यथेदानीं नृजन्मनि युष्माकं गतिः बुद्धिरप्रतिहता वर्धते तस्माद्भुवो लिङ्गशरीरस्यान्तं न द्रक्ष्यथ लिङ्गभागपर्यन्ते तत्त्वज्ञाने किमिति यत्नं न करिष्यथे त्यर्थः । तदुक्तं षष्ठस्कन्धे नारदोक्तविवरणे "ऋभुक्षेत्रं जीवसंज्ञं यदनादिनिबन्धनम् । अदृष्ट्वा तस्य निर्वाणं किमसत्कर्मभिर्भवेत् ॥" इत्यादि ॥ ९४ ॥ ते त्विति ॥ सर्वतो दिशं प्रयातास्तत्त्वज्ञतया सर्वासु दिक्षु स्वैरं व्यचरन् तपश्च मुक्त्वा नाद्यापि निवर्त्तन्ते ॥ ९५ ॥ हर्यश्वेष्विति ॥ नष्टेषु यत्र क्वापि गतेषु ॥ ९६ ॥ विवर्द्धयिषव इति ॥ पूर्वोक्तं बालिशेत्यादिवचनं प्रचोदिताः प्रेरितास्सन्तः ॥ ९७ ॥ अन्योन्यमिति ॥ अन्योन्यमूचुः भ्रातॄणां ज्येष्ठानां गुरूणां पदवी मोक्षमार्गः ॥ ९८ ॥ ज्ञात्वेति ॥ पृथिव्याः प्रमाणं लिङ्गशरीरावसानं ज्ञात्वा ततः पश्चात्पित्राज्ञया अनेन लोकसंग्रहार्थं प्रजाः स्रक्ष्यामह इति वास्तवार्थः । कथारूपार्थः स्पष्ट एव ॥ ९९ ॥ तदभिप्रायेणाह—ततः प्रभृतीति ॥ नश्यत्यदर्शनं याति ॥ १०० ॥ तानिति ॥ नारदशापश्च भागवतोक्तः "तस्माल्लोकेषु ते मूढ न भवेद्भ्राम्यतः पदम्" इति ॥ १०१ ॥ १०२ ॥ इदानीमुक्तानुवादपूर्वकं सर्वासां दक्षकन्यानां वंशान्वक्तुमाह ददावित्यादिना—ददाविति ॥ सप्तविंशतीति द्वितीयालोप आर्षः । पूर्वोक्ताः श्रद्धाद्यास्त्रयोदश ॥ १०३ ॥ १०४ ॥ अरुन्धतीति ॥ धर्मपत्न्यः धर्मस्य पत्न्यः स्वाय

भानोस्तु भानवः पुत्रा मुहूर्तायां मुहूर्तजाः ॥ १०६ ॥ लंबायाश्चैव घोषोथ नागवीथी तु जामिजा ॥ १०७ ॥ पृथिवीविषयं सर्वमरुन्धत्याम जायत ॥ संकल्पायास्तु सर्वात्मा जज्ञे संकल्प एव हि ॥ १०८ ॥ ये त्वनेकवसुप्राणदेवा ज्योतिःपुरोगमाः ॥ वसवोऽष्टौ समाख्यातास्तेषां वक्ष्यामि विस्तरम् ॥ १०९ ॥ आपो ध्रुवश्च सोमश्च धर्मश्चैवानिलोऽनलः ॥ प्रत्यूषश्च प्रभासश्च वसवो नामभिः स्मृताः ॥ ११० ॥ आपस्य पुत्रो वैतण्डः श्रमः शान्तोऽध्वनिस्तथा ॥ ध्रुवस्य पुत्रो भगवान्कालो लोकप्रकालनः ॥ १११ ॥सोमस्य भगवान्वर्चो वर्चस्वी येन जायते ॥ ११२ ॥ धर्मस्य पुत्रो द्रविणो हुतहव्यवहस्तथा ॥ मनोहरायां शिशिरः प्राणोथ रवणस्तथा ॥ ११३ ॥ अनिलस्य शिवा भार्या तस्याः पुत्रो मनोजवः ॥अविज्ञातगतिश्चैव द्वौ पुत्रावनिलस्य तु ॥ ११४ ॥ अग्निपुत्रः कुमारस्तु शरस्तम्बे व्यजायत ॥ तस्य शाखो विशाखश्च नैगमेयश्च पृष्ठजाः ॥ ११५ ॥ अपत्यं कृत्तिकानां तु कार्त्तिकेय इति स्मृतः ॥ ११६ ॥ प्रत्यूषस्य विदुः पुत्रं ऋषिं नाम्नाथ देवलम् ॥ द्वौ पुत्रौ देवलस्यापि क्षमावन्तौ मनीषिणौ ॥ ११७ ॥ बृहस्पतेस्तु भगिनी वरस्त्री ब्रह्मचारिणी ॥ योगसिद्धा जगत्कृत्स्नमसक्ता विचरत्युत ॥ प्रभासस्य तु सा भार्या वसूनामष्टमस्य तु ॥ ११८ ॥

दश धर्मपत्न्यः पूर्वोक्ताः श्रद्धायास्त्रयोदश तु स्वायम्भुवस्य दक्षस्येत्यविरोधः ॥ १०५ ॥ १०६ ॥ लंबाया इति ॥ नागवीथिः देवयानोत्तरवीथिः ॥ १०७ ॥ ॥ १०८ ॥ १०९ ॥ एतेषां धर्मपुत्राणां मध्ये वसुपुत्राः आपादयोऽष्टौ त्रयस्त्रिंशद्देवतान्तःपातित्वेन प्रसिद्धा इत्याह—ये त्विति ॥ अनेकवसुप्राणा अनेकं वसु धनं रश्मिर्वा प्राणो बलं येषां ते ज्योतिःपुरोगमा अग्निमुख्याः "वसूनामस्मि पावकः" इति स्मृतेः॥ ११० ॥ १११॥ सोमस्येति ॥ येन वर्चसा जनो वर्चस्वी जायते स वर्चोऽधिदैवतम् ॥ ११२ ॥ धर्मस्येति ॥ मनोहरायां धर्मादिति शेषः ॥ ११३ ॥ ११४ ॥ अग्निपुत्र इति ॥ अग्निपुत्रः पूर्वमग्नेः पुत्रः । यद्वा अग्निपुत्रः कुमारः तस्य कुमारस्येन्द्राहतपृष्टदेशाज्जातो नैगमेयः शाखविशाखौ स्कन्दसृष्टौ ॥ ११५ ॥ ११६ ॥ ११७ ॥ बृहस्पतेरिति ॥ असक्ता विरक्ताः ॥११८॥

म्भुवस्य दक्षस्य कन्याः । एताः कन्यास्त्वरुन्धत्या सह प्राचेतसस्य दक्षस्येत्यविरोधः ॥ १०५ ॥ मुहूर्ता इति॥ मुहूर्त्ताः मुहूर्त्ताभिमानिनो देवाः ॥१०६॥ लंबाया इति ॥ घोषस्तदभिमानी देवः । नागवीथिः देवयानोत्तरवीथ्यभिमानिनी देवता ॥ १०७ ॥ पृथिवीति ॥ पृथिव्येव विषय स्थानं यस्य चराचरस्य प्राणिजातस्य तत्सर्वं सर्वात्मा सर्ववस्तुविषयः ॥ १०८ ॥ वसूनामष्टानां नामपूर्वकं वंशान्वक्तुमाह—ये त्वित्यादिना विश्वरूपमहातपा इत्यन्तेन—ये त्विति ॥ अनेकं नानाविधं वसु तेजस्तदेव प्राणो बलमेषां ते अनेकवसुप्राणा इति वसूनां नामनिरुक्त्यर्थमुक्तम् । ज्योतिःपुरोगमा अग्निमुखाः "वसूनां पावकश्चास्मि" इति स्मृतेः ॥ १०९ ॥ ॥ ११० ॥ १११ ॥ ११२ ॥ ११३ ॥ ११४ ॥ अग्निपुत्र इति ॥ शरस्तम्बे मुञ्जस्तम्बे तस्य पृष्ठजा अनुजाः कुमारा गुहरूपाः । तदुक्त सभापर्वणि "ततोऽभवच्चतुर्मूर्त्तिः क्षणेन भगवान् गुहः" इत्यादि । ॥ ११५ ॥ अपत्यमिति ॥ कुमार एव कार्त्तिकेय इति स्मृतः ॥ ११६ ॥ ११७ ॥ बृहस्पतेरिति ॥ बृहस्पतेर्भगिनी प्रभासस्य भार्या असक्ता सङ्गवर्जिता ॥ ११८ ॥

विश्वकर्मा महाभागस्तस्यां जज्ञे प्रजापतिः ॥ कर्ता शिल्पसहस्राणां त्रिदशानां च वार्द्धकिः ॥ ११९ ॥ भूषणानां च सर्वेषां कर्ता शिल्पवतां वरः ॥ यः सर्वेषां विमानानि देवतानां चकार ह ॥ मनुष्याश्चोपजीवन्ति यस्य शिल्पं महात्मनः॥१२०॥अजैकपादहिर्बुध्न्यस्त्वष्टा रुद्रश्च वीर्यवान्॥त्वष्टु श्चाप्यात्मजः पुत्रो विश्वरूपो महातपाः॥ १२१ ॥ हरश्च बहुरूपश्च त्र्यम्बकश्चापराजितः ॥ वृषाकपिश्च शम्भुश्च कपर्दी रैवतः स्मृतः ॥ १२२ ॥ मृग व्याधश्च शर्वश्च कपाली च महामुने ॥ एकादशैते कथिता रुद्रास्त्रिभुवनेश्वराः ॥ १२३ ॥ शतं त्वेकं समाख्यातं रुद्राणाममितौजसाम् ॥ काश्यपस्य तु भार्या यास्तासां नामानि मे शृणु ॥ अदितिर्दितिर्दनुश्चैवारिष्टा च सुरसा खसा ॥ १२४ ॥ सुरभिर्विनता चैव ताम्रा क्रोधवशा इरा ॥ कद्रुर्मुनिश्च धर्मज्ञ तदपत्यानि मे शृणु ॥ १२५ ॥ पूर्वमन्वन्तरे श्रेष्ठा द्वादशासन्सुरोत्तमाः ॥ तुषिता नाम तेऽन्योन्यमूचुर्वैवस्वते न्तरे ॥ १२६ ॥ उपस्थितेऽतियशसश्चाक्षुषस्यान्तरे मनोः ॥ समवायीकृताः सर्वे समागम्य परस्परम् ॥ १२७ ॥

विश्वकर्मेति ॥ तस्यां विश्वकर्मा ॥ ११९ ॥ १२० ॥ अजैकपादिति ॥ अजैकपादादिरुद्रचतुष्कं च तस्यां प्रभासभार्यायामेव जज्ञे विश्वरूपान्तो वसुसन्तानः ॥ १२१ ॥ एवं रुद्रप्रसंगात्प्रागुक्तान् ब्रह्मपुत्रान्नीललोहितांशान् रुद्रान् हरादिनामभिर्निर्दिशति हरश्चेति ॥ अथ वा प्रभासभार्यासूनवस्त्रयो रुद्रास्त्वष्टसूनवोऽष्टौ तदन्वये पारिशिष्टा रुद्रा इति ॥ १२२ ॥ १२३ ॥ शतं त्वेकमिति ॥ एवं रुद्राणां शतकं समाख्यातम् । इदं शतकमीश्वरसृष्टमिति केचित् । अत्र शतशब्दोऽनन्तवचनः ॥ १२४ ॥ अदितिरिति ॥ अदित्यादयः काश्यपास्त्रियः सुरसाखसेति च पाठः ॥ १२५ ॥ पूर्वेति । पूर्वमन्वन्तरे द्वितीये स्वारोचिषमन्वन्तरे तुषितानाम देवा आसन् ते वैवस्वते सप्तमे मन्वन्तरे॥ १२६ ॥उपस्थित इति ॥ उपस्थिते आसन्ने चाक्षुषस्य षष्ठस्य मन्वन्तरे परस्परं समागम्य समवायीकृता

विश्वकर्मेति तस्यां जज्ञे विश्वकर्मा ॥११९॥१२०॥अजैकपादिति ॥ तस्यां बृहस्पतेर्भगिन्याम् अजैकपादाद्याश्चत्वारो जज्ञिरे॥१२१॥त्वष्टुरनुजस्य रुद्रस्यैकादशविभागमाह—हरश्चेत्यादिद्वाभ्याम्॥१२२॥१२३॥एषामेवैकादशानां प्रत्येकं शतं भेदानाह—शतं त्विति ॥ रुद्राणामेकं शतमाम्नातं यद्वा एतद्विरूपाणां रुद्राणामानन्त्यमश्नुते शतशब्दस्यापरिमितवाचकत्वात् । "असङ्ख्याताः सहस्राणि सहस्रशो ये रुद्रा अधिभूम्याम्" इति श्रुतेश्च ॥ १२४ ॥ तदेवं धर्मभार्याणां वंशा उक्ताः । इदानीं काश्यपाय त्रयोदशेत्युक्तानां नामानि च वंशान्वक्तुमाह—अदितिरित्यादिना ॥ १२५ ॥ तत्र तुषिता एवादितेः पुत्रा जाता इति कथापूर्वकमाह—पूर्वेति ॥ पूर्वे मन्वन्तरे चाक्षुषे तुषितानाम देवा आसन् ॥ १२६ ॥ उपस्थित इति ॥ ते चाक्षुषस्य मनोरन्तरे वर्त्तमाने वैवस्वतमन्वन्तरे भाविनि सति परस्परं समागम्यान्योन्यपार्श्वे गत्वा समवायीकृता मिलिताः सन्तोऽन्योन्यमू

आगच्छत द्रुतं देवा अदितिं संप्रविश्य वै ॥ मन्वन्तरे प्रसूयामस्तन्नः श्रेयो भवेदिति ॥१२८॥ एवमुक्त्वा तु ते सर्वे चाक्षुषस्यान्तरे मनोः ॥ मारीचात्कश्यपाज्जाता अदित्या दक्षकन्यया ॥ १२९ ॥ तत्र विष्णुश्च शक्रश्च जज्ञाते पुनरेव हि ॥ अर्यमा चैव धाता च त्वष्टा पूषा तथैव च ॥ १३० ॥ विवस्वान्सविता चैव मित्रो वरुण एव च ॥ अंशुर्भगश्चातितेजा आदित्या द्वादश स्मृताः ॥१३१॥ चाक्षुषस्यान्तरे पूर्वमासन्ये तुषिताः सुराः ॥ वैवस्वतेऽन्तरे ते वै आदित्या द्वादश स्मृताः ॥१३२॥ सप्तविंशति याः प्रोक्ताः सोमपत्न्योथ सुव्रताः ॥ सर्वा नक्षत्रयोगिन्य स्तन्नाम्नश्चैव ताः स्मृताः॥ तासामपत्यान्यभवन्दीप्तान्यमिततेजसाम्॥ १३३॥ अरिष्टनेमिपत्नीनामपत्यानीह षोडश॥ १३४ ॥ बहुपुत्रस्य विदुषश्चतस्रो विद्युतः स्मृताः ॥ १३५ ॥ प्रत्यङ्गिरसजाः श्रेष्ठा ऋचो ब्रह्मर्षिसत्कृताः ॥ १३६ ॥ कृशाश्वस्य तु देवर्षेर्देवप्रहरणाः स्मृताः॥१३७॥

-न्यम-

अन्योन्यमूचुरिति पूर्वेणान्वयः ॥ १२७ ॥ कथमूचुरित्यत्राह आगच्छतेति ॥ मन्वंतरे सप्तमेऽदितिं संप्रविश्य प्रसूयामः तन्नः श्रेय इति ॥ १२८ ॥ एतन्निगमयति एवमुक्तेति ॥ १२९ ॥ १३० ॥१३१॥१३२॥ भगवतः प्रतिमन्वन्तरं प्रतियुगं चावतारं तृतीयेंशे वक्ष्यति । अदितिवंशादनन्तरं प्राप्तमपि दित्यादिवंशं प्रह्लादचरितादि विस्तरविवक्षयान्ते वक्ष्यन्मध्ये स्वल्पत्वाच्छिष्टदक्षकन्यावंशमाह-याः सप्तविंशतिरिति ॥ १३३ ॥ १३४ ॥ बहुपुत्रस्येति ॥ चतस्रो विद्युतः कपिलातिरिक्तपीतासितवर्णाः ॥ १३५ ॥ प्रत्यंगिरसजा इति ॥ प्रत्यंगिरसः प्रत्यंगिराख्याः ऋचः याः कल्पयन्तीत्याद्यास्त्रिंशन्मंत्राः ॥१३६ ॥ कृशाश्वस्येति ॥ प्रहरणाः

चुरिति द्वयोरन्वयः । अतियशसः प्रख्यातकीर्तयः ॥ १२७ ॥ किमूचुस्तत्राह—आगच्छतेति ॥ मन्वन्तरे प्रसूयामह प्रसूयेमहि किमर्थमित्याह, तदिति । ततो नः श्रेयो भवेद्भद्रं भविष्यतीति ॥१२८॥ एवमिति ॥ चाक्षुषस्य मनोरन्तर एवमुक्त्वा वैवस्वतमन्वन्तरे अदित्या निमित्तभूतया काश्यपाज्जाता इत्यर्थः ॥ १२९ ॥ १३० ॥ १३१ ॥ एकोदरत्वाद्द्वादशादित्या इत्युपसंहरन्नाह—चाक्षुषस्येति ॥ १३२ ॥ एवं तावदष्टौ वसव एकादश रुद्रा द्वादशादित्या इत्यादिश्रुतिक्रमेण रुद्रानन्तरमादित्यादीनामुपस्थानात् अदित्या वंश उक्तः । इदानीमदितिर्दितिरिति कश्यपभार्योद्देशानुसारेण दित्यादिवंशक्रमं प्राप्तक्रममपि प्रह्लादचरितादिबहुविस्तरत्वेन पश्चाद्वक्ष्यन्नादौ तावदल्पत्वादन्यासां दक्षकन्यानां वंशानाह याः सप्तविंशतिः प्रोक्ता इत्यादिसार्द्धैः पञ्चभिः—या इति ॥ तासामतितेजसां दीप्तिमन्त्यपत्यान्यासन् । दीप्तान्यमिततेजस इति पाठान्तरे अमिततेजसः सोमा दीप्तान्यासन्नित्यर्थः ॥ १३३ ॥ चतस्रोरिष्टनेमिन इत्युक्तानां वंशमाह—अरिष्टनेमीति ॥ १३४ ॥ द्वे चैव बहुपुत्रा येत्युक्तयोर्वंशमाह—बहुपुत्रस्येति ॥ चतस्रो विद्युतस्तु "वाताय कपिला विद्युदातपायातिलोहिता । पीता वर्षाय विज्ञेया दुर्भिक्षायाशिता भवेत् ॥" इति ज्योतिःशास्त्रप्रसिद्धाः ॥ १३५ ॥ द्वे चैवाङ्गिरस इत्युक्तयोर्वंशमाह—प्रत्यङ्गिरसजा इति । अङ्गिरसं प्रत्यागते प्रत्यङ्गिरसे ताभ्यां जाताः प्रत्यङ्गिरसाख्यां ऋचः यां कल्पयन्तीयादित्रिंशन्मन्त्राभिमानिनीर्देवताः ॥ १३६ ॥ द्वे भृशाश्वायेत्युक्तयोर्वंशमाह—भृशाश्वस्येति ॥ देवप्रहरणाः देवाः शस्त्रदेवताः ॥ १३७ ॥

एते युगसहस्रान्ते जायन्ते पुनरेव हि ॥ सर्वे देवगणास्तात त्रयस्त्रिंशत्तु छन्दजाः ॥ तेषामपीह सततं निरोधोत्पत्तिरुच्यते ॥ १३८ ॥ यथा सूर्यस्य मैत्रेय उदयास्तमनाविह ॥ एवं देवनिकायास्ते सम्भवन्ति युगेयुगे ॥ १३९ ॥ दित्या पुत्रद्वयं जज्ञे कश्यपादिति नः श्रुतम् ॥ हिरण्यकशिपुश्चैव हिरण्याक्षश्च दुर्जयः ॥ १४० ॥ सिंहिका चाभवत्कन्या विप्रचित्तेः परिग्रहः ॥ १४१ ॥ हिरण्यकशिपोः पुत्राश्चत्वारः प्रथितौजसः॥अनुह्लादश्च ह्लादश्च प्रह्लादश्चैव बुद्धिमान्॥संह्लादश्च महावीर्या दैत्यवंशविवर्द्धनाः॥१४२॥तेषां मध्ये महाभाग सर्वत्र समदृग्वशी॥ प्रह्लादः परमां भक्तिं य उवाच जनार्दने ॥ १४३ ॥ दैत्येन्द्रदीपितो वह्निः सर्वांगोपचितो द्विज ॥ न ददाह च यं विप्र वासुदेवे हृदि स्थिते ॥ १४४ ॥ महार्णवान्तःसलिले स्थितस्य चलतो मही ॥ चचाल चलता यस्य पाशबद्धस्य धीमतः ॥ १४५ ॥ न भिन्नं विविधैः शस्त्रैर्यस्य दैत्येन्द्रपातितैः ॥ शरीरमद्रिकठिनं सर्वत्राच्युतचेतसः ॥ १४६ ॥ विषानलोज्वलमुखा यस्य दैत्यप्रचोदिताः ॥ नान्ताय सर्पपतयो बभूवुरुरुतेजसः ॥ १४७ ॥ शैलैराक्रान्तदेहोपि यः स्मरन्पुरुषोत्तमम् ॥ तत्याज नात्मनः प्राणान् विष्णुस्मरणदंशितः ॥ १४८ ॥ पतन्तमुच्चादवनिर्यमुपेत्य महामतिम् ॥ दधार दैत्यपतिना क्षिप्तं स्वर्गनिवासिना ॥ १४९ ॥ यस्य संशोषको वायुर्देहे दैत्येन्द्रयोजितः ॥ अवाप संक्षयं सद्यश्चित्तस्थे मधुसूदने ॥ १५० ॥ विषाणभङ्गमुन्मत्ता मदहानिं च दिग्गजाः ॥ यस्य वक्षःस्थले प्राप्ता दैत्येन्द्रपरिणामिताः ॥ १५१ ॥ यस्य चोत्पादिता कृत्या दैत्यराजपुरोहितैः ॥ बभूव नान्ताय पुरा गोविन्दासक्तचेतसः ॥ १५२ ॥

शस्त्रदेवताः ॥ १३७ ॥ एत इति ॥ स्वच्छन्दजाः स्वेच्छया जाताः निरोधश्चोत्पत्तिश्च निरोधोत्पत्तिः ॥ १३८ ॥ यथेति ॥ युगेयुगे प्रतियुगं कल्पमन्वन्तरादि ॥ ॥ १३९ ॥ १४० ॥ १४१ ॥ १४२ ॥ १४३ ॥ १४४ ॥ १४५ ॥ १४६ ॥ १४७ ॥ १४८ ॥ १४९ ॥ १५० ॥ विषाणेति ॥ परिणामिताः दन्तैर्हन्तुं प्रेरिताः ॥ १५१ ॥ १५२ ॥

एत इति ॥ त्रयस्त्रिंशत् अष्टौ वसव एकादश रुद्रा द्वादशादित्याः प्रजापतयश्चवषट्कारश्चेति श्रुत्युक्ताः । स्वच्छन्दतः स्वेच्छया जायन्त इति स्वच्छन्दजाः । निरोधसहिता उत्पत्तिनिरोधोत्पत्तिः ॥ १३८ ॥ उत्पत्तिनिरोधयोः इच्छा कथं स्यादित्याह–यथा सूर्यस्येति ॥ युगेयुगे प्रतिकल्पमन्वन्तरादिषु ॥ १३९ ॥ दितेर्वंशमाह–दित्या इत्यादिना यावदेकविंशतितमाध्यायं दनोर्वंशोक्तिः ॥ १४० ॥ सिंहिकेति ॥ परिग्रहो भार्या ॥ १४१ ॥ १४२ ॥ "प्रह्लादोयं नृसिंहैकभक्तिलाभाय देहिनाम् । आवहन् श्रवणौत्सुक्यं तत्प्रभावमसूचयत्॥" तेषां मध्य इत्यादिना यावत्समाप्ति ॥ १४३ ॥ १४४ ॥ १४५ ॥ १४६ ॥ १४७ ॥ शैलैरिति ॥ विष्णोः स्मरणेन दंशितः सन्नद्धः ॥ १४८ ॥ १४९ ॥ १५० ॥ विषाणेति ॥ दन्तैः प्रहर्तुं गजाशिक्षाक्रमेणोद्यताः ॥ १५१ ॥ १५२ ॥

शम्बरस्य च मायानां सहस्रमतिमायिनः ॥ यस्मिन्प्रयुक्तं चक्रेण कृष्णस्य वितथीकृतम् ॥ १५३ ॥ दैत्येन्द्रसूदोपहृतं यस्य हालाहलं विषम् ॥ जरयामास मतिमानविकारममत्सरी ॥ १५४ ॥ समचेता जगत्यस्मिन्यः सर्वेष्वेव जन्तुषु ॥ यथात्मनि तथान्येषां परं मैत्रगुणान्वितः ॥ १५५ ॥ धर्मात्मा सत्यशौर्यादिगुणानामाकरः परः ॥ उपमानमशेषाणां साधूनां यः सदाभवत् ॥ १५६ ॥ इति श्रीविष्णुपुराणे प्रथमेंशे पंचदशोऽध्यायः ॥ १५ ॥ श्रीमैत्रेय उवाच ॥ कथितो भवता वंशो मानवानां महात्मनाम् ॥ कारणं चास्य जगतो विष्णुरेव सनातनः ॥ १ ॥ यस्त्वेतद्भगवानाह प्रह्लादं दैत्यसत्तमम् ॥ ददाह नाग्निर्नास्त्रैश्च क्षुण्णस्तत्याज जीवितम् ॥ २ ॥ जगाम वसुधा क्षोभं यत्राब्धिसलिले स्थिते ॥ पाशैर्बद्धे विचलति विक्षिताङ्गैः समाहता ॥ ३ ॥ शैलैराक्रान्तदेहोपि न ममार च यः पुरा ॥ त्वया चातीव माहात्म्यं कथितं यस्य धीमतः ॥ ४ ॥ तस्य प्रभावमतुलं विष्णोर्भक्तिमतो मुने ॥ श्रोतुमिच्छामि यस्यैतच्चरितं दीप्ततेजसः ॥ ५ ॥

॥ १५३ ॥ दैत्येन्द्रेति ॥ हालाहलं विषम् । "नदी हलहलानाम तज्जं हालाहलं विषम्" इत्यायुर्वेदे ॥ १५४ ॥ १५५ ॥ १५६ ॥ इति श्रीविष्णुपुराणव्याख्याने विष्णुचित्तीये प्रथमेंशे पञ्चदशोऽध्यायः ॥ १५ ॥. ॥ कथित इति ॥ मानवानां स्वायम्भुवमनुवंशानाम् उत्तानपादादीनां कारणमिति शास्त्रतात्पर्यार्थप्रश्नोत्तरस्मारणम् ॥ १ ॥ तादृशः साधुः स्वबन्धुभिः किंनिमित्तं जिघांसित इति कौतुकच्छलेन विष्णुभक्तचरितशुश्रूषया पृच्छति ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

॥ १५३ ॥ दैत्येन्द्रेति ॥ यः दैत्येन्द्रस्य सूदैः सूपकारैरुपहृतं दत्तं हालाहलं विषं न चेदमप्रसिद्धम् "नदी हालाहला नाम हैमवत्यतिदारुणा । जाता तत्तीरसम्भूतविषं हालाहलं स्मृतम् ॥" अविकारं रोमाञ्चस्वेदवक्त्रशोषादिविकारशून्यं यथा भवत्येवं जरयामास ॥ १५४ ॥ १५५ ॥ १५६ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यविष्णुपुराणव्याख्यायां प्रथमांशे पञ्चदशोऽध्यायः ॥ १५ ॥ ॥ उक्तानुवादपूर्वकं प्रह्लादचरितं पृच्छति मैत्रेयः कथित इति ॥ मानवानामुत्तानपादध्रुवादीनाम् ॥ १ ॥ यस्त्विति ॥ ददाह यं नाग्निः अस्त्रैः क्षुण्णः प्रहतोपि ॥ २ ॥ जगामेति ॥ यत्र यस्मिन् प्रह्लादे बन्धैर्बद्धेपि विचलतीति तस्य विक्षिप्तैरङ्गैः समाहता वसुधा क्षोभं जगाम विक्षिप्ताङ्गः समाहित इति पाठे तूत्तरेणान्वयः । बन्धबद्धो विचलतीति पाठे पृथगेतद्वाक्यं शिष्टाः प्रश्नाः स्पष्टार्थाः ॥ ३ ॥ ४ ॥ ५

किंनिमित्तमसौ शस्त्रैर्विक्षितो दितिजैर्मुने ॥ किमर्थं चाब्धिसलिले विक्षिप्तो धर्मतत्परः ॥ ६ ॥ आक्रान्तः पर्वतैः कस्माद्दष्टश्चैव महोरगैः ॥ क्षिप्तः किमद्रिशिखरात्किं वा पावकसञ्चये ॥ ७ ॥ दिग्दन्तिनां दन्तभूमिं स च कस्मान्निरूपितः ॥ संशोषकोनिलश्चास्य प्रयुक्तः किं महासुरैः॥ ८ ॥ कृत्यां च दैत्यगुरवो युयुजुस्तत्र किं मुने ॥ शम्बरश्चापि मायानां सहस्रं किं प्रयुक्तवान् ॥ ९ ॥ हालाहलं विषमहो दैत्यसूदैर्महात्मनः ॥ कस्माद्दत्तं विनाशाय यज्जीर्णं तेन धीमता ॥ १० ॥ एतत्सर्वं महाभाग प्रह्लादस्य महात्मनः ॥ चरितं श्रोतुमिच्छामि महामाहात्म्यसूचकम् ॥ ११ ॥ न हि कौतूहलं तत्र यद्दैत्यैर्निहतो हि सः ॥ अनन्यमनसो विष्णौ कः समर्थो निपातने ॥ १२ ॥ तस्मिन्धर्मपरे नित्यं केशवाराधनोद्यते ॥ स्ववंशप्रभवैर्दैत्यैः कृतो द्वेषोतिदुष्करः ॥ १३ ॥ धर्मात्मनि महाभागे विष्णुभक्ते विमत्सरे ॥ दैतेयैः प्रहृतं कस्मात्तन्ममाख्यातुमर्हसि ॥ १४ ॥ प्रहरन्ति महात्मानो विपक्षा अपि नेदृशे ॥ गुणैस्समन्विते साधौ किं पुनर्यः स्वपक्षजः ॥ १५ ॥ तदेतत्कथ्यतां सर्वं विस्तरान्मुनिपुङ्गव ॥ दैत्येश्वरस्य चरितं श्रोतुमिच्छाम्यशेषतः ॥ १६ ॥ इति श्रीविष्णुपुराणे प्रथमेंशे षोडशोऽध्यायः ॥ १६॥

श्रीपराशर उवाच ॥ मैत्रेय श्रूयतां सम्यक् चरितं तस्य धीमतः ॥ प्रह्लादस्य सदोदारचरितस्य महात्मनः ॥ १ ॥ दितेः पुत्रो महावीर्यो हिरण्यकशिपुः पुरा ॥ त्रैलोक्यं वशमानिन्ये ब्रह्मणो वरदर्पितः ॥ २ ॥ इन्द्रत्वमकरोद्दैत्यः स चासीत्सविता स्वयम् ॥ वायुरग्निरपां नाथः सोमश्चाभून्महासुरः ॥ ३ ॥ धनानामधिपः सोऽभूत्सएवासीत्स्वयं यमः ॥ यज्ञभागानशेषांस्तु स स्वयं बुभुजेऽसुरः ॥ ४ ॥ देवाः स्वर्गं परित्यज्य तत्रासान्मुनिसत्तम ॥ विचेरुरवनौ सर्वे बिभ्राणा मानुषीं तनुम् ॥ ५ ॥ जित्वा त्रिभुवनं सर्वं त्रैलोक्यैश्वर्यदर्पितः ॥ उपगीयमानो गन्धर्वैर्बुभुजे विषयान्प्रियान् ॥ ६ ॥ पानासक्तं महात्मानं हिरण्यकशिपुं तदा ॥ उपासांचक्रिरे सर्वे सिद्धगन्धर्वपन्नगाः ॥ ७ ॥

॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ यत्त्वेतदिति ॥ न हि कौतूहलमिति । आश्चर्यश्रवणे हि कौतूहलम् इदं तु विष्णुभक्तस्य परैरवध्यत्वं नाश्चर्यं महानुभावस्य बन्धुभिः पीडननिमित्तशुश्रूषया पृच्छति ॥ १२ ॥ १३ ॥ १४ ॥ प्रहरंतीति ॥ यः स्वपक्षजस्तस्मिन्निति शेषः ॥ १५ ॥ तदिति ॥चरितं ॥ १६ ॥ इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये प्रथमेंशे षोडशोऽध्यायः ॥ १६ ॥ छ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुपुराणव्याख्यायां प्रथमांशे षोडशोऽध्यायः ॥ १६ ॥

॥ १ ॥ भगवद्द्वेष एव तद्भक्तस्वपुत्रद्वेषेपि कारणमिति वक्ष्यन् हिरण्यकशिपोर्वृत्तान्तमाह-दितेः पुत्र इत्यादिना–दितेः पुत्र इति ॥ "भूतेभ्यस्त्वद्विसृष्टेभ्यो मृत्युर्माभून्मम प्रभो" इत्याद्यनेकवरप्रार्थने कृते तथैव ब्रह्मणा दत्तैर्वरैर्दर्पितः सन् ॥ २ ॥ ३ ॥ ४ ॥ देवा इति ॥ तद्यासाद्धिरण्यकशिपोर्भयात् ॥ ५ ॥ ६ ॥ पानासक्तमिति ॥ महात्मानमप्रधृष्यप्रभावम् ॥ ७ ॥

अवादयन् जगुश्चान्ये जयशब्दं तथापरे ॥ दैत्यराजस्य पुरतश्चक्रुः सिद्धा मुदान्विताः ॥ ८ ॥ तत्र प्रनृत्ताप्सरसि स्फाटिकाभ्रमयेऽसुरः ॥ पपौ पानं मुदा युक्तः प्रासादे सुमनोहरे ॥९॥ तस्य पुत्रो महाभागः प्रह्लादो नामनामतः ॥ पपाठ बालपाठ्यानि गुरुगेहंगतोऽर्भकः ॥१०॥ एकदा तु स धर्मात्मा जगाम गुरुणा सह ॥ पानासक्तस्य पुरतः पितुर्दैत्यपतेस्तदा ॥ ११ ॥ पादप्रणामावनतं तमुत्थाप्य पिता सुतम् ॥ हिरण्यकशिपुः प्राह प्रह्लादममितौजसम् ॥ १२ ॥ हिरण्यकशिपुरुवाच ॥ पठ्यतां भवता वत्स सारभूतं सुभाषितम् ॥कालेनैतावता यत्ते सदोद्युक्तेन शिक्षितम् ॥ १३ ॥ प्रह्लाद उवाच ॥ श्रूयतां तात वक्ष्यामि सारभूतं तवाज्ञया ॥ समाहितमना भूत्वा यन्मे चेतस्यवस्थितम्॥ १४ ॥ अनादिमध्यान्तमजमवृद्धिक्षयमच्युतम् ॥ प्रणतोस्म्यन्तसन्तानं सर्वकारणकारणम् ॥ १५ ॥ श्रीपराशर उवाच ॥ एतन्निशम्य दैत्येन्द्रः सकोपो रक्तलोचनः ॥ विलोक्य तद्गुरुं प्राह स्फुरिताधरपल्लवः ॥ १६ ॥ हिरण्यकशिपुरुवाच ॥ ब्रह्मबन्धो किमेतत्ते विपक्षस्तुतिसंहितम् ॥ असारं ग्राहितो बालो मामवज्ञाय दुर्मते ॥ १७ ॥ गुरुरुवाच ॥ दैत्येश्वर न कोपस्य वशमागन्तुमर्हसि ॥ ममोपदेशजनितं नायं वदति ते सुतः ॥ १८ ॥ हिरण्यकशिपुरुवाच ॥ अनुशिष्टोसि केनेदृग्वत्स प्रह्लाद कथ्यताम् ॥ मयोपदिष्टं नेत्येष प्रब्रवीति गुरुस्तव ॥ १९ ॥ प्रह्लाद उवाच ॥ शास्ता विष्णुरशेषस्य जगतो यो हृदि स्थितः ॥ तमृते परमात्मानं तात कः केन शास्यते ॥ २० ॥ हिरण्यकशिपुरुवाच ॥ कोयं विष्णुः सुदुर्बुद्धे यं ब्रवीषि पुनः पुनः ॥ जगतामीश्वरस्येह पुरतः प्रसभँ मम ॥ २१ ॥ प्रह्लाद उवाच ॥ न शब्दगोचरे यस्य योगिध्येयं परं पदम् ॥ यतो यश्च स्वयं विश्वं स विष्णुः परमेश्वरः ॥ २२ ॥

अवादयन्निति ॥ अवादयन् वाद्यानि ॥८॥ तत्रेति॥ अभ्रम् अभ्रकाख्यः शिलाविशेषः स्फटिकाश्ममय इति वा पाठः ॥ ९॥ १०॥११॥१२॥१३॥ १४॥ अनादीति ॥ अनादीत्यादि अशेषविशेषणैरन्तवतो व्यावृत्तिः । अजमिति कर्माधीनजन्मनः पुरुषात् अन्तं संहारं सन्तनोतीत्यन्तसन्तानः ॥ १५॥ १६ ॥ १७ ॥१८॥ ॥१९ ॥शास्तेति ॥ शास्ता शासिता शास्यते शिक्ष्यते ॥२० ॥ २१ ॥ नेति ॥ पदं स्वरूपं न शब्दगोचरं जात्याद्यभावात् "यतो वाचो निवर्तन्ते" इति श्रुतेः ।

अवादयन्निति ॥ अवादयन् वाद्यानि चक्रुः जगुः गीतञ्चक्रुः॥८॥तत्रेति ॥ प्रकृष्टं नृत्तं यासान्ताः अप्सरसो यस्मिन् तस्मिन्प्रासादे स्फाटिकाभ्रमये स्फटिकशिलाभिरभ्रशिलाभिश्च रचिते पीयतइति पानं रुधिरादि॥९॥ तदेवं तस्य परमैश्वर्यमुक्त्वा पुत्रद्वेषकारणं वक्तुमाह—तस्य पुत्र इत्यादि ॥ १० ॥११॥१२॥१३॥१४॥ अनादिमध्यान्तमिति ॥ अनादिमध्यान्तं देशतः कालतश्च परिच्छेदरहितम् अजं जन्मशून्यम् अवृद्धिक्षयं वृद्धिक्षयशून्यम् अच्युतं नाशशून्यम् । तत्र हेतुः सर्वकारणानां कारणं प्रणतोस्मि अन्तं सन्तानमिति पाठे अन्तयतीति अन्तः संहर्त्ता सन्तन्यतेऽनेनेति सन्तानस्थितिकर्त्ता तं पाठान्तरं सुगमम् ॥१५॥१६॥ ब्रह्मबन्धो इति ॥ ब्रह्मबन्धो ब्राह्मणाधम ते त्वया विपक्षस्तुत्या संहितं सम्बद्धं किमेतद्ग्राहितः शिक्षितः ॥१७॥१८॥१९॥२०॥ कोयमिति ॥ प्रसभं निःशङ्कम् ॥ २१ ॥ नेति ॥ यतो विश्वं स्वयं विश्वं विश्वरूपः स परमेश्वरो विष्णुः ॥ २२ ॥

॥ हिरण्यकशिपुरुवाच ॥ परमेश्वरसंज्ञोज्ञ किमन्यो मय्यवस्थिते ॥ तथापि मर्तुकामस्त्वं प्रब्रवीषि पुनःपुनः ॥ २३ ॥ प्रह्लाद उवाच ॥ न केवलं तात मम प्रजानां स ब्रह्मभूतो भवतश्च विष्णुः ॥ धाता विधाता परमेश्वरश्च प्रसीद कोपं कुरुषे किमर्थम् ॥२४॥ हिरण्यकशिपुरुवाच॥ प्रविष्टः कोस्य हृदये दुर्बुद्धेरतिपापकृत् ॥ येनेदृशान्यसाधूनि वदत्याविष्टमानसः ॥ २५॥ प्रह्लाद उवाच ॥ न केवलं मद्धृदयं स विष्णुराक्रम्य लोकानखिलानवस्थितः ॥ स मां त्वदादींश्च पितस्समस्तान्समस्तचेष्टासु युनक्ति सर्वगः ॥ २६ ॥ हिरण्यकशिपुरुवाच ॥ निष्कास्यतामयं पापः शास्यतां च गुरोर्गृहे ॥ योजितो दुर्मतिः केन विपक्षविषयस्तुतौ ॥२७॥ श्रीपराशर उवाच ॥ इत्युक्तोसौ तदा दैत्यैर्नीतो गुरुगृहं पुनः ॥ जग्राह विद्यामनिशं गुरुशुश्रूषणोद्यतः ॥२८॥ कालेतीतेति महति प्रह्लादमसुरेश्वरः ॥ समाहूयाब्रवीद्गाथा काचित्पुत्रक गीयताम् ॥२९॥ प्रह्लाद उवाच ॥ यतः प्रधानपुरुषौ यतश्चैतच्चराचरम् ॥ कारणं सकलस्यास्य स नो विष्णुः प्रसीदतु ॥३०॥ हिरण्यकशिपुरुवाच ॥ दुरात्मा वध्यतामेष नानेनार्थोस्ति जीवता ॥ स्वपक्षहानिकर्तृत्वाद्यः कुलाङ्गारतां गतः ॥ ३१ ॥ श्रीपराशर उवाच ॥ इत्याज्ञप्तास्ततस्तेन प्रगृहीतमहायुधाः ॥ उद्यतास्तस्य नाशाय दैत्याः शतसहस्रशः ॥ ३२ ॥ प्रह्लाद उवाच ॥ विष्णुः शस्त्रेषु युष्मासु मयि चासौ व्यवस्थितः ॥ दैतेयास्तेन सत्येन माक्रमन्त्वायुधानि मे ॥ ३३ ॥ श्रीपराशर उवाच ॥ ततस्तैश्शतशो दैत्यैः शस्त्रोघैराहतोपि सन् ॥ नावाप वेदनामल्पामभूच्चैव पुनर्नवः ॥ ३४ ॥ हिरण्यकशिपुरुवाच ॥ दुर्बुद्धे विनिवर्तस्व वैरिपक्षस्तवाहतः ॥ अभयं ते प्रयच्छामि मातिमूढमतिर्भव ॥ ३५ ॥ प्रह्लाद उवाच ॥ भयं भयानामपहारिणि स्थिते मनस्यनन्ते मम कुत्र तिष्ठति ॥ यस्मिन्स्मृते जन्मजरान्तकादिभयानि सर्वाण्यपयान्ति तात ॥ ३६ ॥

वक्तुमशक्यमिति वा ॥ २२॥ २३ ॥ नेति ॥ धाता धारकः । विधाता निर्माता ॥२४ ॥२५ ॥ २६ ॥ निष्क्राम्यतामिति ॥ विपक्षपतितस्स्तुताविति च पाठः । विपक्षपतिः तस्य स्तुतौ केन योजित इति निर्वेदः ॥ २७ ॥ २८ ॥ काल इति ॥ गाथा श्लोकः ॥ २९ ॥ यत इति ॥ चराचरं कार्यभूतं जगत् ॥ ॥ ३० ॥ ३१ ॥ ३२ ॥ विष्णुरिति ॥ माक्रामन्त्वित्यत्र मामित्यध्याहारः ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥

॥ २३ ॥ नेति ॥ न केवलं ममैव प्रजानां सर्वासां भवतश्च धाता धारयिता विधाता कर्त्ता च परमेश्वरश्च स एव ॥ २४ ॥ २५ ॥ न केवलमिति ॥ आक्रम्याधिष्ठायावस्थितः युनक्ति प्रवर्त्तयति "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा" इति श्रुतेः ॥ २६ ॥ २७ ॥ इतीति ॥ जग्राह विद्यां गुरोरुपकारार्थमेव अन्यथा तद्वृत्तिलोपप्रसङ्गात् ॥ २८ ॥ काल इति ॥ गाथा गद्यपद्यादि ॥ २९ ॥ यत इति ॥ यतः प्रधानपुरुषा वा विर्भूतौ ॥ ३० ॥ दुरात्मेति ॥ कुलस्याङ्गारकतां दाहकताम् ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ भयमिति ॥ यस्मिंस्स्मृत एव जन्मादीन्यपि भयान्यपयान्ति तस्मिन्मनसि नित्यं स्थिते सति भयं कुत्रेति ॥ ३६ ॥

हिरण्यकशिपुरुवाच ॥ भोभोः सर्पाः दुराचारमेनमत्यन्तदुर्मतिम् ॥ विषज्वालाकुलैर्वक्त्रैः सद्यो नयतः संक्षयम् ॥ ३७ ॥ श्रीपराशर उवाच ॥ इत्युक्तास्ते ततः सर्पाः कुहकास्तक्षकादयः ॥ अदशन्त समस्तेषु गात्रेष्वतिविषोल्बणाः ॥३८॥ स त्वासक्तमतिः कृष्णे दश्यमानो महोरगैः ॥ न विवेदात्मनो गात्रं तत्स्मृत्याह्लादसुस्थितः ॥ ३९ ॥ सर्पा ऊचुः ॥ दंष्ट्रा विशीर्णा मणयः स्फुटन्ति फणेषु तापो हृदयेषु कंपः ॥ नास्य त्वचः स्वल्पमपीह भिन्नं प्रसाधि दैत्येश्वर कार्यमन्यत् ॥ ४०॥ हिरण्यकशिपुरुवाच ॥ हे दिग्गजाः संकटदन्तमिश्रा घ्नतैनमस्मद्रिपुपक्षभिन्नम् ॥ तज्जा विनाशाय भवन्ति तस्य यथाऽरणेः प्रज्वलितो हुताशः ॥ ४१ ॥ श्रीपराशर उवाच ॥ ततः स दिग्गजैर्बालो भूभृच्छिखरसन्निभैः ॥ पातितो धरणीपृष्ठे विषाणैर्वावपीडितः ॥ ४२ ॥ स्मरतस्तस्य गोविन्दमिभदन्ताः सहस्रशः ॥ शीर्णा वक्षस्थलं प्राप्य स प्राह पितरं ततः ॥ ४३ ॥ दन्ता गजानां कुलिशाग्रनिष्ठुराः शीर्णा यदेतेन बलं ममैतत् ॥ महाविपत्तापविनाशनोऽयं जनार्दनानुस्मरणानुभावः ॥ ४४ ॥ हिरण्यकशिपुरुवाच ॥ ज्वाल्यतामसुरा वह्निरपसर्पत दिग्गजाः ॥ वायो समेधयाग्निं त्वं दह्यतामेष पापकृत् ॥ ४५ ॥ श्रीपराशर उवाच ॥ महाकाष्ठचयस्थं तमसुरेन्द्रसुतं ततः ॥ प्रज्वाल्य दानवा वह्निं ददहुः स्वामिनोदिताः ॥ ४६ ॥ प्रह्लाद उवाच ॥ तातैष वह्निः पवनेरितोपि न मां दहत्यत्र समन्ततोहम् ॥ पश्यामि पद्मास्तरणास्तृतानि शीतानि सर्वाणि दिशां सुखानि ॥ ४७ ॥

॥ ३७ ॥ इतीति ॥ कुहकाः क्रूराः ॥ ३८ ॥ ३९ ॥ दंष्ट्रा इति ॥ दंष्ट्रा विशीर्णा इति विषस्य प्रातिलोम्यात् ॥ ४० ॥ हे दिग्गजा इति ॥ संकटेति चतुर्दन्ततया परस्परनिबिडदन्तयुक्ताः रिपुपक्षेण भिन्नम् अस्मत्तो भेदितं तस्य जनकस्य ॥ ४१ ॥ ४२ ॥ ४३ ॥ अपृष्टोपि भगवन्माहात्म्यज्ञापनायाह--दन्ता इति ॥ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥

॥ ३७ ॥ इतीति ॥ अदशन्त दष्टवन्तः ॥ ३८ ॥ ३९ ॥ दंष्ट्रा इति ॥ एतत्कार्यमशक्यम् अन्यत्कार्यं प्रशाधि व्यादिश ॥ ४० ॥ हे दिग्गजा इति ॥ सङ्कटैः सङ्कीर्णैर्दन्तैर्मिश्रा मिलिताः सन्तो घ्नन्त मारयत । अस्मद्रिपुपक्षैर्वैष्णवैः सामाद्युपायेनास्मत्तो भिन्नं पृथक्कृतं तस्माज्जाता अपि तस्य विनाशाय कचिद्भवन्ति, यथा अरणेर्जातो हुताशः अरणेर्नाशाय ॥ ४१ ॥ तत इति ॥ विषाणैर्दन्तैः ॥ ४२ ॥ ४३ ॥ पितुरपि भगवद्भक्तिमुत्पादयितुं तत्स्मरणप्रभावमाह—दन्ता इति ॥ कुलिशं वज्रं तस्याग्रमिव निष्ठुराः दृढतीक्ष्णाः महतीर्विपदस्तन्मूलभूतानि पापानि च विनाशयतीति च तथा ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥

श्रीपराशर उवाच ॥ अथ दैत्येश्वरं प्रोचुर्भार्गवस्यात्मजा द्विजाः ॥ पुरोहिता महात्मानः साम्ना संस्तूय वाग्मिनः ॥ ४८ ॥ पुरोहिता ऊचुः ॥ राजन्नियम्यतां कोपो बालेपि तनये निजे ॥ कोपो देवनिकायेषु तेषु ते सफलो यतः ॥ ४९ ॥ (ततः पुरोहितैरुक्तो हिरण्यकशिपुः स्वकैः) तथातथैनं बालं ते शासितारो वयं नृप ॥ यथा विपक्षनाशाय विनीतस्ते भविष्यति ॥ ५० ॥ बालत्वं सर्वदोषाणां दैत्यराजास्पदं यतः ॥ ततोत्र कोपमत्यर्थं योक्तुमर्हसि नार्भके ॥ ५१ ॥ न त्यक्ष्यति हरेः पक्षमस्माकं वचनाद्यदि ॥ ततः कृत्यां वधायास्य करिष्यामोऽनिवर्त्तिनीम् ॥ ५२ ॥ श्रीपराशर उवाच ॥ एवमभ्यर्थितस्तैस्तु दैत्यराजः पुरोहितैः ॥ दैत्यैर्निष्कासयामास पुत्रं पावकसंचयात् ॥ ५३ ॥ ततो गुरुगृहे बालः स वसन्बालदानवान् ॥ अध्यापयामास मुहुरुपदेशान्तरे गुरोः ॥ ५४ ॥ प्रह्लाद उवाच ॥ श्रूयतां परमार्थो मे दैतेया दितिजात्मजाः ॥ न चान्यथैतन्मन्तव्यं नात्र लोभादिकारणम् ॥ ५५ ॥ जन्म बाल्यं ततः सर्वो जन्तुः प्राप्नोति यौवनम् ॥ अव्याहतैव भवति ततोनुदिवसं जरा ॥ ५६ ॥ ततश्च मृत्युमभ्येति जन्तुर्दैत्येश्वरात्मजाः ॥ प्रत्यक्षं दृश्यते चैतदस्माकं भवतां तथा ॥ ५७ ॥ मृतस्य च पुनर्जन्म भवत्येतच्च नान्यथा ॥ आगमोऽयं तथा यच्च नोपादानं विनोद्भवः ॥ ५८ ॥

अथेति ॥ द्विजाःषण्डामर्कादयः ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ नेति ॥ कृत्या अभिचारजन्यो भूतविशेषः ॥ ५२॥५३॥ तत इति ॥ उपदेशान्तरे अध्यापनस्य विच्छेदावसरे ॥ ५४ ॥ श्रूयतामिति ॥ परमार्थः परमपुरुषार्थः लोभादीत्यादिशब्देनानाप्तत्वहेतुभ्रमविप्रलम्भादिग्रहणम् ॥५५॥ जन्मेति ॥ त्रिश्लोक्या देहात्मनोरनित्यत्वनित्यत्वे वदति ॥ ५६ ॥ तत इति ॥ दृश्यते चैतत् जन्मादिपंचकम् ॥ ५७ ॥ देहिनो देहात्प्रागूर्ध्वं च सत्त्वान्नित्यतेत्याह-मृतस्येति ॥ पुनर्जन्म भाविदेहग्रहणं स्यादेव अन्यथा मृतस्य जन्माभावे एतच्च वर्तमानं जन्म च न स्यात् । अत्र प्रमाणम्—'अयमध्येतृभिः प्रत्यक्षं पठ्यमानः स इतः प्रलीयन्नेव पुनर्जायते अथैतमेवाध्वानं पुनर्निवर्त्तन्ते मृत्वा पुनर्मृत्युमापद्यन्ते इत्यादिरागमः'यदागमेनोक्तं तच्च तथैवेत्यनुग्राहकं तर्कं चार्वाकादीन्प्रत्याह नोपादानमिति। प्रतिप्राणिप्रतीयमानः सुखदुःखादिकार्योद्भव.

अथेति ॥ भार्गवस्यात्मजाः षण्डामर्कादयः ॥४८॥४९॥५०॥५१॥ नेति ॥ निवर्त्तिनीं हिंस्राम् । अनिवर्त्तिनीमिति वा छेदः । दुष्प्रतीकारामित्यर्थः ॥५२ ॥ ५३ ॥ तत इति ॥ पितुर्विषयासक्त्या विष्णुभक्तिर्न भवति तेषां तु भविष्यतीति बालदानवान् गुरोरुपदेशस्य अध्यापनस्यान्तरे विच्छेदे तन्मध्ये मुहुर्मुहुः स्वयमध्यापयामास उपदिदेश ॥ ५४ ॥ श्रूयतामिति ॥ हे दितिजात्मजाः ! मद्भ्रातरः दैत्येयाः अन्ये परमार्थस्तत्त्वं श्रूयतां मे मत्तः एतदन्यथा मिथ्येत्येवं न मन्तव्यं यथात्र गुरूपदेश इव मदुक्तौ लोभादिकारणं नास्ति ॥ ५५ ॥ बाल्यादारभ्य बन्धमुक्तये विष्णुभक्तिरेव कर्त्तव्येति वक्तुं प्रवृत्तिमार्गे जन्मादिसर्वावस्थासु नित्यं दुःखमेवेति दर्शयन्नाह-जन्मेत्यादि ॥ सर्वदुःखमयं जगदित्यन्तैश्चतुर्दशभिः ॥ ५६ ॥ ५७ ॥ मृतस्येति ॥ मृतस्य पुनर्जन्म भवतीत्ययमेव तदर्थप्रतिपादकः प्रमाणभूतः श्रुतिस्मृत्यादिरूपः आगमोऽस्ति "योनिमन्ये प्रपद्यन्ते शरीरत्वाय

गर्भवासादि यावत्तु पुनर्जन्मोपपादनम् ॥ सम स्तावस्थकं तावद्दुःखमेवावगम्यताम् ॥ ५९ ॥ क्षुत्तृष्णोपशमं तद्वच्छीताद्युपशमं सुखम् ॥ मन्यते बालबुद्धित्वाद्दुःखमेव हि तत्पुनः ॥ ६० ॥ अत्यन्तस्तिमिताङ्गानां व्यायामेन सुखैषिणाम् ॥ भ्रान्तिज्ञानावृताक्षाणां दुःखमेव सुखायते ॥ ६१ ॥ क्व शरीरमशेषाणां श्लेष्मादीनां महाचयः ॥ क्व कान्तिशोभासौन्दर्यरमणीयादयो गुणाः ॥ ६२ ॥ मांसासृक्पूयविण्मूत्र स्नायुमज्जास्थिसंहतौ ॥ देहे चेत्प्रीतिमान् मूढो भविता नरकेप्यसौ ॥ ६३ ॥ अग्नेः शीतेन तोयस्य तृषा भक्तस्य च क्षुधा ॥ क्रियते सुखकर्तृत्वं तद्विलोमस्य चेतरैः ॥ ६४ ॥

प्राग्जन्मकृतसुकृतादिविशिष्टं स्थायिनमात्मानमुपादानकारणं विना न स्यादित्यर्थः । प्रत्यक्षमेव प्रमाणं नानुमानागमाविति वदतो वादिनो युक्तिपूर्वो विवादः स्वशास्त्रप्रण यनं च व्याहतमिति भावः ॥ ५८ ॥ नित्यस्याप्यात्मनोऽनित्यदेहादिकं गर्भादिपुनरुत्पत्तिपर्यन्तसमावस्थायुक्तं दुःखहेतुरिति वैराग्यायाह गर्भवासादीति ॥ ५९ ॥ नन्वन्नपानादीनां सुखहेतुत्वस्य दर्शनात्कथं दुःखमेवेत्युक्तमित्याशंक्य दुःखहेतावेव सुखहेतुत्वभ्रम इत्याह क्षुत्तृष्णेति ॥ क्षुच्छीतादिदुःखशामकमन्नाग्न्यादिदुःखमेव सुखसाधनं मन्यते बालो हिहेतौ तदन्नादिकं क्षुधाद्यभावे पुनरुद्गाराजीर्णसन्तापादिदुःखहेतुरेव ॥ ६० ॥ दुःखहेतुत्वेन प्रसिद्धेऽपि दुःखान्तरोपशामकत्वमात्रेण सुखहेतुत्व धीर्दृश्यत इति निदर्शनेनाह—अत्यन्तेति ॥ व्यायाम आयासः ॥६१॥ तथा स्वपरदेहे श्लेष्मादिचये दुःखेदेपि कान्त्याद्यारोपात्सुखहेतुत्वधियं दर्शयति क्व शरीरमिति॥ रमणीयं कमनीयं कमनीयत्वम् ॥ ६२ ॥ किं च नरके मलमांसादिकमात्मनोन्यत्वेन भुज्यते अत्र तु तत्समूहदेहं आत्मत्वेन भोग्यत्वेन च मन्यमानो नरके प्रियेततरा मित्यभिप्रायेणाह मांसेति ॥६३॥ क्षुत्तृष्णेत्यादिश्लोकोक्तं विवृणोति अग्नेरिति ॥ अग्नेः प्रतियोगिना शीतेन सुखकर्तृत्वं क्रियते न तु स्वतः एवं तोयभक्तयोस्तृट्क्षुद्भ्यां

देहिनः । स्थाणुमन्ये सुसंयान्ति यथा कर्म यथा श्रुतम्" इति ॥ "जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च" इत्यादि । एतदनुकूलतर्कमाह—तच्च तथैव मन्तव्यं यस्माज्जीवाधिष्ठितं शुक्रशोणितरूपमुपादानकारणं विना देह स्योद्भवो न घटते । श्रुतिश्च "इति नु पञ्चम्यामाहुतावाप पुरुषवचसो भवति" इति ॥ ५८ ॥ ततः किमत आह—गर्भवासादिति ॥ पुनर्जन्मनः उपपादनं प्राणा यावत्तावद्दुःखमेव ॥ ५९ ॥ अन्नपानादिजनितं सुख मस्ति कुतो दुःखमेवेत्युच्यत इतिचेत्तत्राह—क्षुदिति ॥ क्षुत्पिपासादिदुःखोपशमं मूर्खो भ्रान्तः सुखं मन्यते तदप्यन्नपानादिप्रयासाद्दुःखमेव ॥ ६० ॥ दुःखत्वेन प्रसिद्धेपि व्यायामप्रहारादौ सुखभ्रमं दृष्टान्तत्वेनाह—अत्य न्तेति ॥ अत्यन्तस्तिमिताङ्गानां वातादिदोषेणात्यन्तजडीभूतगात्राणां व्यायामेन गमनादिना श्रमेण सुखैषिणां सुखमिच्छतां व्यायामेपि सुखमिव भवति ; भ्रान्तिज्ञानावृताक्षाणाञ्च मोहपिहितदृष्टीनां कामिनां प्रणयकुपितका मिनीकलनूपुरझणत्कारचरणप्रहारोपि सुखवत्प्रतिभाति तदेव कामिनां सुखं वदन्ति चेति ॥ ६१ ॥ क्वेति ॥ महाचयः स्थूलसंघातः । कान्तिर्गौरत्वादि । अङ्गच्छाया शोभा भूषणादिकृता । सौरभ्यं सौगन्ध्यम् । कम नीयं सौन्दर्यम् । एवमादयो गुणागुणाश्च क्व ॥ ६२ ॥ मांसेति ॥ यदि देहे ममकारास्पदेऽतिप्रीतिमांस्तर्हि नरकेपि प्रीतिमान् भविष्यतीति तस्यापि नारकिभोग्यमांससंघत्वादविशेषात् ॥ ६३ ॥ किञ्च न वस्तुतः किञ्चित्सुखसाधनमस्ति सुखसाधनस्यैव कदाचिद्दुःखसाधनत्वदर्शनादित्याह, अग्नेरिति ॥ शीतेन पूर्वभाविना अग्नेः सुखकर्तृत्वं दृश्यते शीताभावे ग्रीष्मे अग्नेर्दुःखसाधनत्वम् एवं पूर्वभागिन्या ग्रीष्मे तृषा तोयस्य

करोति हे दैत्यसुता यावन्मात्रं परिग्रहम् ॥ तावन्मात्रं स एवास्य दुःखं चेतसि यच्छति ॥ ६५ ॥ यावतः कुरुते जन्तुः सम्बन्धान्मनसः प्रियान् ॥ तावन्तोस्य निखन्यन्ते हृदये शोकशङ्कवः ॥ ६६ ॥ यद्यद्गृहे तन्मनसि यत्र तत्रावतिष्ठतः ॥ नाशदाहोपकरणं तस्य तत्रैव तिष्ठति ॥६७॥ जन्मन्यत्र महद्दुःखं म्रियमाणस्य चापि तत् ॥ यातनासु यमस्योग्रं गर्भसंक्रमणेषु च॥६८॥ गर्भेषु सुखलेशोपि भवद्भिरनुमीयते ॥ यदि तत्कथ्यतामेवं सर्वं दुःखमयं जगत् ॥ ६९ ॥ तदेवमतिदुःखानामास्पदेत्र भवार्णवे ॥ भवतां कथ्यते सत्यं विष्णुरेकः परायणः ॥ ७० ॥

तद्विलोमस्य तेषामग्न्यादीनां प्रतियोगिनः शीतादेः इतरैरग्न्यादिभिः सुखकर्तृत्वं क्रियते यद्वा तद्विलोमस्य सुखविलोमस्य दुःखस्य कर्तृत्वमग्न्यादीनां शीतादीनामभावैः क्रियत इति । एवमनियतत्वादुभयमपि भ्रान्तम्, यथा वक्ष्यति—"तस्माद्दुःखात्मकं नास्ति न च किंचित्सुखात्मकम्" इति ॥६४॥ एवं भृत्यधनाद्यपि दुःखदमित्याह—करोतीति ॥ परिगृह्यते इति परिग्रहः ॥ ६५ ॥ तथा कलत्रादिसम्बन्ध्यपीत्याह—यावत इति ॥ सम्बध्यत इति सम्बन्धः सम्बन्धिनो न स्थिराः तन्नाशे शोकस्तु स्थिर इत्यर्थः ॥ ६६ ॥ किञ्चाज्ञानां परिग्रहादेः सन्निधावसन्निधौ च शोकः सम इत्याह—यद्यदिति ॥ यद्यद्गृहे वस्तु तस्य नाशदाहादिकरणं कुतस्स्यादिति यत्र कुत्राव तिष्ठतः स्वामिनो मनसि तत्तिष्ठतीत्यन्वयः। करणमेवोपकरणं गृहे क्षेमेण स्थितमपि प्रेम्णान्यथाशंकिनो दुःखायैव सर्वं वस्त्वित्यर्थः । नाशदाहोपहरणमिति च पाठः । यत्र तत्रावतिष्ठत इति च पाठः ॥ ६७ ॥ एवं बाल्यादिषु प्रत्यक्षं दुःखमुक्त्वा जन्मादिष्वपि तदेवानुमेयमित्याह—जन्मनीति ॥ जन्मादिषु दुःखमनुमीयत इत्यन्वयः ॥ ॥ ६८ ॥ गर्भे चेति ॥ सुखलेशोपि यदि तत्कथ्यतां तत्सुखं नास्तीत्यर्थः । तत् तस्मादेव दुःखमयं जगत् ॥६९॥ तस्माद्भगवत्प्राप्तिलक्षणो मोक्षः प्रार्थ्य इत्याह—तदेव

क्षुधा भक्तस्यान्नस्य तयोरभावे तोयान्नयोरपि प्रतिकूलत्वात्तद्विलोमस्याग्न्यादिप्रतियोगिनः शीतादेः इतरैरग्न्यादिभिः अग्निना सन्तापे सति कृशः अग्नौ सति क्षुधः सुखहेतुत्वम् अन्यथा तेषामेव दुःखहेतुत्वमित्यर्थः । तद्वैलोम्येनेति पाठेप्ययमेवार्थः ॥ ६४ ॥ किञ्च धनाश्वगजभृत्यादिपरिग्रहोपि दुःखहेतुरेव तत्पालनादिबहुक्लेशावहत्वादित्याह—करोतीति ॥ ६५ ॥ कलत्रपुत्रादिसम्बन्धो दुःखहेतुरेवेत्याह—यावत इति ॥ शोकरूपाः शङ्कवः कीलकानि खन्यन्ते निपात्यन्ते तेषामपगमे तन्नाशादिशोकानपगमादित्यर्थः ॥ ६६ ॥ एतत्स्पष्टयति—यद्यदिति ॥ यद्यद्गृहादावस्ति धनादि तदपि यत्र कुत्र देशान्तरेप्यवतिष्ठमानस्य मनसि नित्यं चिन्तयतस्तिष्ठति । तस्य धनादेर्नाशः दाहः उपहरणं वा तत्रैव गृह एव तिष्ठति न तु मनसि स्मर्यमाणतया स्थितस्य धनादेर्नाशादिर्भवति । कुतस्तत्रैव तिष्ठत इति पाठे गृहे मनसि च तस्यैव धनादेरवस्थानेपि गृहे तिष्ठत एव नाशादिकं भवति । मानसे मनसि स्थितस्य न तु भवतीति कुतः । अतो विचित्रं गृहे नष्टमपि धनादि यत्रकुत्रचिद्देशान्तरे स्थितमपि परिग्रहिणं व्यथयितुमेव मनसि वासनारूपेण तिष्ठति । अतस्तद्वासनापरित्यागे विनाशो भवति न तद्वियोगमात्रेणेति भावः । पाठान्तरेप्ययमेव तात्पर्यार्थः ॥ ६७ ॥ एवं सर्वास्ववस्थास्वपि दुःखमनुसन्धेयमित्याह—जन्मनीत्यादिद्वाभ्याम् ॥ ६८ ॥ ६९ ॥ तदेवं प्रवृत्तिमार्गे दोषोक्त्या विरक्तिमुत्पाद्य विष्णु

मा जानीत वयं बाला देही देहेषु शाश्वतः ॥ जरायौवनजन्माद्या धर्मा देहस्य नात्मनः ॥ ७१ ॥ बालोऽहं तावदिच्छातो यतिष्ये श्रेयसे युवा॥ युवाहं वार्द्धके प्राप्ते करिष्याम्यात्मनो हितम् ॥७२॥ वृद्धोऽहं मम कार्याणि समस्तानि न गोचरे ॥ किं करिष्यामि मंदात्मा समर्थेन न यत्कृतम् ॥ ७३ ॥ एवं दुराशया क्षिप्तमानसः पुरुषः सदा ॥ श्रेयसोऽभिमुखं याति न कदाचित्पिपासितः ॥ ७४ ॥ बाल्ये क्रीडनकासक्ता यौवने विषयोन्मुखाः ॥ अज्ञा नयन्त्यशक्त्या च वार्द्धकं समुपस्थितम् ॥ ७५ ॥ तस्माद्बाल्ये विवेकात्मा यतेत श्रेयसे सदा ॥ बाल्ययौवनवृद्धाद्यैर्देहभावैरसंयुतः ॥ ७६ ॥ तदेतद्वो मयाख्यातं यदि जानीत नानृतम् ॥ तदस्मत्प्रीतये विष्णुः स्मर्यतां बन्धमुक्तिदः ॥ ७७ ॥ प्रयासः स्मरणे कोऽस्य स्मृतो यच्छति शोभनम् ॥ पापक्षयश्च भवति स्मरतां तमहर्निशम् ॥ ७८ ॥ सर्वभूतस्थिते तस्मिन्मतिर्मैत्री दिवानिशम् ॥ भवतां जायतामेवं सर्वक्लेशान्प्रहास्यथ ॥ ७९ ॥

मिति ॥ ७० ॥ यदहरेव विरजेदिति श्रुत्या झटिति भगवज्ज्ञाने यतितव्यं न विलम्बितव्यमित्याह—मा जानीतेति ॥ ७१ ॥ ७२ ॥ ७३ ॥ एवमिति ॥ दुराशा विषयेच्छा पिपासितः श्रेयस्तृष्णावान् पिपासित इति । अन्तर्जलस्थरजकजालिकदृष्टान्तस्मारणम् । तौ हि पिपासितावेव पश्चात्पास्यामीति वस्त्रशोधनमत्स्यग्रहणोत्क्षीणौ ॥ ७४ ॥ ७५ ॥ तस्मादिति ॥ वृद्धाद्यैरिति वृद्धं वार्द्धकं भावे निष्ठा ॥ ७६ ॥ तदिति ॥ अस्मत्प्रीतये युष्माकमनिच्छायामपि ॥ ७७ ॥ आयास इति ॥ अहर्निशमिति स्मरणस्य सदाकाल इत्याह—यथा अपवित्रः पवित्रो वा इति ॥७८॥ अथ शमदमादिफला मैत्री करुणामुदितोपेक्षाश्चतुश्लोक्याऽऽह—सर्वभूत इति॥

सेवां प्रवर्त्तयन्नाह—तदेवमिति ॥ ७०॥ तथाप्यस्माकं बालानां तत्रानधिकार इति शङ्कां व्यावर्त्तयति मा जानीतेति ॥ वयं बालाः अतोऽस्माकम् अत्र नाधिकार इति यूयं मा जानीत परिणामभेदेन भिन्नेष्वपि बालयुवादिदेहेषु देहिनः प्रतिसन्धानाद्देही शाश्वतो नित्यः । अतो जराद्या धर्माः देहस्यैव न त्वात्मनः । देहात्मविवेकशून्यान्तम् अविरक्तानामेवात्र नाधिकारः तद्विवेकवतां तु विरक्तानां तत्समनन्तरमेवाधिकारः । देहावस्था तु न कारणं "यदहरेव विरजेत्तदहरेव प्रव्रजेत्" इति श्रुतेरिति भावः ॥ ७१ ॥ किञ्चिद्विवेकवतामप्यविरक्तानां श्रेयसि प्रवृत्तौ कालप्रतीक्षया वृथैव जीवितं यातीत्याह बालोहमित्यादित्रिभिः—बालोऽहमिति ॥ इच्छातो विचारिष्यामीति शेषः ॥ ७२ ॥ ७३ ॥ एवमिति ॥ दुराशया विषयासक्त्या आक्षिप्तमानसः आकृष्टचित्तः पिपासितः भोगतृष्णाकुलः अनेन रजकादिदृष्टान्तस्सूचितः । रजको हि जाह्नवीजलस्थोपीदं वस्त्रं प्रक्षाल्य पास्यामीदं चेत्येवं पिपासया म्रियते जालिकश्च इमञ्चामुञ्चापरं मत्स्यं हत्वा तोयं पास्यामीत्येवं पिपासित एव यथा म्रियते तद्वदित्यर्थः ॥ ७४ ॥ अज्ञास्तु पशुवदायुः क्षपयन्तीत्याह—बाल्य इति ॥ समुपस्थितप्राप्तं वार्द्धकं चाशक्त्या नयन्ते । न तु कदापि श्रेयोजिज्ञासा तेषामित्यर्थः ॥ ७५ ॥ अतः श्रेयसि विलम्बो न कार्य इत्याह—तस्मादिति ॥ विवेकात्मा विवेकचित्तः तमेव विवेकं स्मारयति बाल्येति ॥ ७६ ॥ तदेतदिति ॥ यद्यपि युष्माकमत्र नास्था तथाप्यस्मत्प्रीतये विष्णुः स्मर्यताम् ॥ ७७ ॥ युष्माकमपि विष्णुभक्तावेव प्रवृत्तिर्युक्ता सुकरत्वान्महाफलदत्वाच्चेत्याह—आयास इति ॥ ७८ ॥ विष्णुभक्तौ च सर्वत्र विष्णुदृष्टिः सर्वभूतमैत्री च कारणमित्याह—सर्वेति ॥ सर्वभूतेष्वन्तर्यामितया स्थिते विष्णौ मतिर्भवतामस्तु अत एव तदधिष्ठानभूतमात्रे मैत्री चाहर्निशमस्तु एवमनेन प्रकारेण रागद्वेषादिकृतान्सर्वान्क्लेशान्प्रहास्यथेत्यर्थः ॥ ७९ ॥

तापत्रयेणाभिहतं यदेतदखिलं जगत् ॥ तदा शोच्येषु भूतेषु द्वेषं प्राज्ञः करोति कः ॥ ८० ॥ अथ भद्राणि भूतानि हीनशक्तिरहं परम् ॥ मुदं तदापि कुर्वीत हानिर्द्वेषफलं यतः ॥ ८१ ॥ बद्धवैराणि भूतानि द्वेषं कुर्वन्ति चेत्ततः ॥ सुशोच्यान्यतिमोहेन व्याप्तानीति मनीषिणाम् ॥ ॥ ८२ ॥ एते भिन्नदृशां दैत्या विकल्पाः कथिता मया ॥ कृत्वाभ्युपगमं तत्र संक्षेपः श्रूयतां मम ॥ ८३ ॥ विस्तारः सर्वभूतस्य विष्णोः सर्व मिदं जगत् ॥ द्रष्टव्यमात्मवत्तस्मादभेदेन विचक्षणैः ॥ ८४ ॥ समुत्सृज्यासुरं भावं तस्माद्यूयं यथा वयम् ॥ तथा यत्नं करिष्यामो यथा प्राप्स्याम निर्वृतिम् ॥ ८५ ॥

सर्वात्मस्वरूपेण विष्णौ स्थिते सति सर्वत्र मित्रधीः कार्या ॥ ७९ ॥ सर्वात्मकत्वमेकस्य मानुसन्धायि तथापि तापत्रयदग्धेषु भूतेषु द्वेषो न कार्यः किन्तु करुणै व कार्येत्याह—तापत्रयेणेति ॥ ८० ॥ यदि पुण्याधिकानि भूतानि अहन्तु क्षीण इति मतिः तदा तेषु मुदिता कार्या न तु द्वेषः द्वेषस्यात्मपुण्यहानिफलत्वादित्याह— अथेति॥ ८१ ॥बद्धवैराणीति॥ यद्यात्मानं प्रतिबद्धवैराणि भूतानि द्विषन्ति तथाप्यहो मोहेन व्याप्तानीति तानि शोच्यानि तेषूपेक्षा कार्या॥ ८२॥एते मैत्र्यादिचित्तप्रसाधन विकल्पा भिन्नदृशां मध्यमाधिकारिणां मतमभ्युपगम्योक्ताः भिन्नदृशां सांख्यानां ते हि भिन्नं जगत्पश्यन्ति न भगवदात्मकत्वेनाभिन्नम् । प्रसन्नचित्तानामुत्तमाधिकारि णां मतं तु मत्तः संक्षिप्तं श्रूयतामित्याह—एत इति ॥ ८३ ॥ तदेवाह विस्तार इति ॥ ८४ ॥ समुत्सृज्येति ॥ आसुरं भावं देहात्माभिमानम् ॥ ८५ ॥

ननु सर्वभूतेषु मैत्री दुष्करा मदमत्सरादिभिस्सन्तप्यमानेषु च धनविद्यागर्वितेषु वृथैव बद्धवैरेषु च द्वेषस्य दुष्परिहारत्वादित्याह तापत्रयेणेत्यादित्रिभिः—तापत्रयेणेति ॥ तापत्रयेण :अध्यात्मिकादिदुःखत्रयेण मदमत्सरादिना जगदेतदभिहितम् इति यदा बुद्धिस्तदा शोच्येषु कृपाविषयेषु तेषु भूतेषु कः प्राज्ञो द्वेषं करोति ॥ ८० ॥ अथ तथैवंविधमतिः भूतानि भद्राणि धनविद्यादि सम्पदा हृष्टान्यहमेव केवलं धनधान्यार्जनहीनशक्तिरपि तथापि मुदं प्रीतिमेव कुर्वीत । न तु द्वेषं यतो द्वेषस्य फलं हानिरेव । तथाहि न्यायविदः इष्टसाधनज्ञानस्य रागत उपादानं फलम् । अनिष्टसाधनज्ञानस्य द्वेषतो हानिः फलमिति वर्णयन्ति । अतो हानिफलो द्वेषो न कार्य इत्यर्थः ॥ ८१ ॥ बद्धवैराणीति ॥ यदि चेद्वृथैव बद्धवैराणि तस्मिन् द्वेषं कुर्वन्ति तदा मनीषिणा तान्यतीव मोहेन व्याप्तानि शोच्यानि अनुकम्प्यानि तेषु सर्वथा द्वेषो न युक्त इत्यर्थः ॥ ८२ ॥ एते च द्वेषोपशमप्रकारा मध्यमाधिकारिणामेवोक्ताः न तूत्तमाधिकारिणामित्याह—यत इति ॥ भिन्नदृशां भेददृष्टीनां, छिन्नदृशामिति वा पाठः । तत्र भेददृष्टावङ्गीकारं कृत्वा एते विकल्पा द्वेषोपशमप्रकाराः कथिता उत्तमानां तु पर मार्थसंक्षेपो मत्तः श्रूयताम् ॥ ८३ ॥ तमेवाह—विस्तार इति ॥ ८४ ॥ समुत्सृज्येति ॥ आसुरं भावं सम्यगुत्सृज्य यूयं वयं च यथा निर्वृतिं यथा येन प्रकारेण प्राप्स्यामः तथा यत्नं करिष्यामः ॥ ८५ ॥

या नाग्निना न चार्केण नेन्दुना न च वायुना ॥ पर्जन्यवरुणाभ्यां वा न सिद्धैर्न च राक्षसैः ॥८६॥ न यक्षैर्न च दैत्येन्द्रैर्नोरगैर्न च किन्नरैः ॥ न मनुष्यैर्न पशुभिर्दोषैर्नैवात्मसम्भवैः ॥८७॥ ज्वराक्षिरोगातीसारप्लीहगुल्मादिकैस्तथा ॥ द्वेषेर्ष्यामत्सराद्यैर्वा रागलोभादिभिः क्षयम् ॥ ८८ ॥ न चान्यैर्नीयते कैश्चिन्नित्या यात्यन्तनिर्मला ॥ तामाप्नोत्यमलेन्यस्य केशवे हृदयं नरः ॥ ८९ ॥ असारसंसारविवर्तनेषु मा यात तोषं प्रसभं ब्रवीमि ॥ सर्वत्र दैत्यास्समतामुपैत समत्वमाराधनमच्युतस्य ॥ ९० ॥ तस्मिन्प्रसन्ने किमिहास्त्यलभ्यं धर्मार्थकामैरलमल्पकास्ते ॥ समाश्रिताद्ब्रह्मतरोरनन्तान्निःसंशयं प्राप्स्यथ वै महत्फलम् ॥ ९१ ॥ इति श्रीविष्णुपुराणे प्रथमेंशे प्रह्लादानुचरितं नाम सप्तदशोध्यायः ॥ १७ ॥ श्रीपराशर उवाच ॥ तस्यैतां दावनवाश्चेष्टां दृष्ट्वा दैत्यपतेर्भयात् ॥ आचचख्युः स चोवाच सूदानाहूय सत्वरः ॥ १ ॥ हिरण्यकशिपुरुवाच॥ हे सूदा मम पुत्रोसावन्येषामपि दुर्मतिः॥कुमार्गदेशिको दुष्टो हन्यतामविलम्बितम् ॥ २ ॥ हालाहलं विषं तस्य सर्वभक्षेषु दीयताम् ॥ अविज्ञातमसौ पापो हन्यतां मा विचार्यताम् ॥ ३ ॥

निर्वृतिं विशिनष्टि नैवाग्निनेत्यादिभिः—नैवाग्निनेति॥अग्न्यादिजं दुःखमाधिदैविकम्॥८६॥नेति॥मनुष्यादिजं दुःखमादिभौतिकम् आत्मदोषजं दुःखमाध्यात्मिकम्॥८७॥ तदाध्यात्मिकं दुःखं द्विधेत्याह—ज्वरेति॥ज्वरादि शारीरं द्वेषादि मानसम्॥८८॥नेति॥अन्यैरविद्यादिभिः॥८९॥उपसंहरति असारेति॥अपारसंसारेति च पाठः॥बहुदेहपरिवर्तनप्रदेषु स्वर्गादिप्रदेषु सर्वत्र विष्णुबुद्धिं कुरुत॥९०॥तस्मिंन्निति ॥ सर्वत्र सन्निहिताद्ब्रह्मकल्पतरोर्मोक्षफललाभो निःसंशयः ॥९१॥ इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये प्रथमेंशे सप्तदशोऽध्यायः ॥ १७ ॥ तस्येति ॥ चेष्टामुपदेशात्मिकाम् ॥ १ ॥ हे सूदा इति ॥ देशिकः उपदेशकृत् ॥ २ ॥ हालाहलमिति ॥

तामेव निर्वृतिं तत्प्रयत्नं च विशिनष्टि—नैवाग्निनेत्यादिचतुर्भिः ॥८६॥८७॥ ८८ ॥ नेति ॥ या विमोक्षाख्या सा अग्न्यादिना अन्यैरपि कैश्चित्क्षयं न नीयते तां निर्वृतिं केशवे हृदयं न्यस्य प्राप्नोतीति चतुर्थेनान्वयः । तत्र नैवाग्निनेत्याधिदैविकैरुपघातैः क्षयो वार्यते । न मनुष्यैर्न पशुभिरित्याधिभौतिकैः दोषैर्नैवात्मसम्भवैरिति शारीरमानसभेदेनाध्यात्मिकैः तत्र शारीरैर्ज्वरादिभिः मानसैर्द्वेषादिभिः अन्यैश्च तन्मूलभूतैरविद्याकर्मादिभिः या क्षयं न प्राप्यते तां निर्वृतिं केशवस्मृत्या प्राप्नोतीत्यर्थः ॥८९॥ सर्वोपदेशसारमाह—असारेति॥असारो यः संसारः तत्र विवर्त्तनानि देवमनुष्यतिर्यगादिजन्मानि तेषु तत्तदुचितैर्भोगैस्तोषं मा यात किन्तु सर्वभूतेषु समतां समदर्शितामुपेत प्राप्नुत तदेवाच्युतस्याराधनम् ॥ ९० ॥ ततः किमत आह—तस्मिन्निति ॥ तस्मिन्प्रसन्ने प्रीते सति न किञ्चिद्दुर्लभं तथापि तुच्छत्वात् त्रिवर्गो न प्रार्थ्यः । मोक्षोपि न प्रार्थ्यः । चूतमूलमाश्रितस्योपरि यथा तत्फलं पतति तथैव ब्रह्मतरुलक्षणादनन्तात्सम्यगाश्रितान्मुक्तिफलप्रपातस्यावश्यं भावित्वादित्यर्थः ॥ ९१ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुपुराणव्याख्यायां प्रथमांशे सप्तदशोध्यायः ॥ १७ ॥ ॥ तस्येति ॥ चेष्टामुपदेशरूपाम् ॥ १ ॥ हे सूदा इति ॥ कुमार्गस्य देशिकः उपदेष्टा ॥ २ ॥ हालाहलमिति ॥ पूर्वं शस्त्रसर्पगजादीन्दृष्ट्वा अनेन कोपि मन्त्रादिप्रतीकारः कृतः तस्मादविज्ञातं यथा भवत्येवं सर्वभ

श्रीपराशर उवाच ॥ ते तथैव ततश्चक्रुः प्रह्लादाय महात्मने॥विषदानं यथाज्ञातं पित्रा तस्य महात्मनः ॥४॥ हालाहलं विषं घोरमनन्तोच्चारणेन सः॥ अभिमन्त्र्य सहान्नेन मैत्रेय बुभुजे तदा ॥५॥ अविकारं स तद्भुक्त्वा प्रह्लादः स्वस्थमानसः ॥ अनन्तख्यातिनिर्वीर्यंजरयामास तद्विषम्॥६॥ ततः सूदा भयत्रस्ता जीर्णं दृष्ट्वा महद्विषम् ॥ दैत्येश्वरमुपागम्य प्रणिपत्येदमब्रुवन् ॥७॥ सूदा ऊचुः॥ दैत्यराज विषं दत्तमस्माभिरतिभीषणम्॥ जीर्णं तेन सहान्नेन प्रह्लादेन सुतेन ते ॥८॥ हिरण्यकशिपुरुवाच ॥ त्वर्यतां त्वर्यतां हे हे सद्यो दैत्यपुरोहिताः ॥ कृत्यां तस्य विनाशाय उत्पादयत मा चिरम् ॥ ९ ॥ श्रीपराशर उवाच ॥ सकाशमागम्य ततः प्रह्लादस्य पुरोहिताः ॥ सामपूर्वमथोचुस्ते प्रह्लादं विनयान्वितम् ॥ १० ॥ पुरोहिता ऊचुः ॥ जातस्त्रैलोक्यविख्यात आयुष्मन्ब्रह्मणः कुले ॥ दैत्यराजस्य तनयो हिरण्यकशिपोर्भवान् ॥ ११ ॥ किं देवैः किमनन्तेन किमन्येन तवाश्रयः ॥ पिता ते सर्वलोकानां त्वं तथैव भविष्यसि ॥ १२ ॥ तस्मात्परित्यजैनां त्वं विपक्षस्तवसंहिताम् ॥ श्लाघ्यः पिता समस्तानां गुरूणां परमो गुरुः ॥ १३ ॥ प्रह्लाद उवाच ॥ एवमेतन्महाभागाः श्लाघ्यमेतन्महाकुलम् ॥ मरीचेः सकलेप्यस्मिन् त्रैलोक्ये नान्यथा वदेत् ॥ १४ ॥ पिता च मम सर्वस्मिञ्जगत्युत्कृष्टचेष्टितः ॥ एतदप्यवगच्छामि सत्यमत्रापि नानृतम् ॥ १५ ॥ गुरूणामपि सर्वेषां पिता परमको गुरुः ॥ यदुक्तं भ्रान्तिस्तत्रापि स्वल्पापि हि न विद्यते ॥१६॥ पिता गुरुर्न सन्देहः पूजनीयः प्रयत्नतः ॥ तत्रापि नापराध्यामीत्येवं मनसि मे स्थितम् ॥ १७॥ यत्त्वेतत्किमनन्तेनेत्युक्तं युष्माभिरीदृशम् ॥ को ब्रवीति यथान्याय्यं किं तु नैतद्वचोर्थवत् ॥ १८ ॥

अविज्ञातं ज्ञाते हि स पूर्ववत्परिहारिष्यतीति ॥ ३ ॥ ४ ॥ ५ ॥ अविकारमिति ॥ सर्वविषहरत्वान्मृत्युञ्जयत्वाच्च भुक्त्वा नित्यजप्यस्यानन्तनाम्नः ख्यात्या कीर्तनेन निर्वीर्यं विषम् । अविकारम् अनुदितलालोद्गमभ्रमादिविकृति जरयामास ॥ ६ ॥ ७ ॥ ८ ॥ ९॥ १०॥ ११॥ किं देवैरिति ॥ त्वं तथैव तव पितेव लोकानामाश्रयो भविष्यसि ॥ १२ ॥ तस्मादिति ॥ स्तवसंहितां स्तवप्रबन्धम् । वाच्यः पितेति च पाठः । वाच्यः स्तुत्यः ॥ १३ ॥ एवमिति ॥ नान्यथा वदेत्कश्चिदपीति शेषः। भवेदिति वा पाठः ॥ १४ ॥ ॥ १५ ॥ १६ ॥ १७ ॥ यत्त्विति ॥ ब्रह्मकुलं श्लाघ्यमित्यादि यद्भवदुक्तं तत्सत्यम् । किं तु किमनन्तेनेति यदेतदुक्तम्

क्षेपु खण्डलड्डुकादिपु विषं दत्त्वा हन्यतामित्यर्थः ॥ ३ ॥ ४ ॥ हालाहलविषमिति ॥ अनन्तस्येति नानाभक्ष्यभोज्यादिसर्वमभिमन्त्र्य तस्मै निवेद्य तदिच्छाप्रसादरूपेण नित्यमसौ भुंक्ते ॥ ५ ॥ अविकारमिति ॥ तस्मादनन्तस्य ख्यात्या कीर्त्या निर्वीर्यत्वादविकारं यथा भवत्येवं जरयामास ॥ ६ ॥ ७ ॥ ८ ॥ सर्वस्माद्ब्रह्मशक्तिरधिकेति मत्वा ब्राह्मणान्नियुंक्ते त्वर्यतामिति ॥ ९ ॥ १० ॥ ११ ॥ किं देवैरिति ॥ तव ते पिता समस्तलोकानां सर्वलोकानामाश्रयः ॥ १२ ॥ तस्मादिति ॥ तस्मात् एतां विपक्षस्तवसंहितां परित्यज कुतः तव पिता समस्तानां गुरूणां परमो गुरुः । अत एव श्लाघ्यः ॥ १३ ॥ एवमिति ॥ कश्चिदप्यन्यथा न वदेत् ॥ १४ ॥ १५ ॥ १६ ॥ पितेति ॥ नापराध्यामि नान्यथा करोमि ॥ १७ ॥ यत्त्विति ॥ यथा यैर्दोषैरेतदयुक्तं तथा सर्वान्दोषान्को ब्रवीति । दोषानन्यान्न कोपि वक्तुं शक्नोतीत्यर्थः ॥ १८ ॥

इत्युक्त्वा सोऽभवन्मौनी तेषां गौरवयंत्रितः ॥ प्रहस्य च पुनः प्राह किमनन्तेन साध्विति ॥ १९ ॥ साधु भोः किमनन्तेन साधु भो गुरवो मम ॥ श्रूयतां यदनन्तेन यदि खेदं न यास्यथ ॥ २० ॥ धर्मार्थकाममोक्षाश्च पुरुषार्थां उदाहृताः ॥ चतुष्टयमिदं यस्मात्तस्मात्किं किमिदं वच ॥ २१ ॥ मरीचिमिश्रैर्दक्षाद्यैस्तथैवान्यैरनन्ततः ॥ धर्मः प्राप्तस्तथा चान्यैरर्थः कामस्तथाऽपरैः ॥ २२ ॥ तन्तत्त्ववेदिनो भूत्वा ज्ञानध्यानसमाधिभिः ॥ अवापुर्मुक्तिमपरे पुरुषा ध्वस्तबंधनाः ॥ २३ ॥ सम्पदैश्वर्यमाहात्म्यज्ञानसन्ततिकर्मणाम् ॥ विमुक्तेश्चैकतो लभ्यं मूलमाराधनं हरेः ॥ २४ ॥ यतो धर्मार्थकामाख्यं मुक्तिश्चापि फलं द्विजाः ॥ तेनापि किंकिमित्येवमनन्तेन किमुच्यते ॥ २५ ॥ किं चापि बहुनोक्तेन भवन्तो गुरवो मम ॥ वदन्तु साधु वासाधु विवेकोस्माकमल्पकः ॥ २६ ॥ बहुनात्र किमुक्तेन स एव जगतः पतिः ॥ स कर्त्ता च विकर्त्ता च संहर्ता च हृदि स्थितः ॥ २७ ॥ स भोक्ता भोज्यमप्येवं स एव जगदीश्वरः ॥ भवद्भिरेतत्क्षंतव्यं बाल्यादुक्तं तु यन्मया ॥ २८ ॥ पुरोहिता ऊचुः ॥ दह्यमानस्त्वमस्माभिरग्निना बाल रक्षितः ॥ भूयो न वक्ष्यसीत्येवं नैव ज्ञातोस्यबुद्धिमान् ॥ २९ ॥

एतद्वचो नार्थवत् ईदृशं वचः यथान्याय्यं को ब्रवीतीत्यन्वयः । किमनन्तेनेत्युक्तं युष्माभिरीदृशं इति च पाठः॥ १८॥इतीति॥गौरवयन्त्रितः गौरवेण यन्त्रितःनिरुद्धव्याहारः गुरूणामपि भगवन्निन्दकानामेषां किमनुसरणेनेत्याशयेन प्रहस्य किमनन्तेनेति तदुक्तमनुवदन्साध्विति सोपालम्भमाह–प्रहस्येति ॥ १९ ॥ अमर्षाद्भूयोप्यनुवदति साधु भोः किमनन्तेन साधु भो इति ॥ अनन्तेन यत्स्यात्तच्छ्रूयताम् ॥ २० ॥ धर्मेति ॥ इदं धर्मादिचतुष्टयं यस्मात्तस्मादनन्तात्किम् इदं वृथावचः न किंचिदित्यर्थः। तस्मात्किंकिमिदं वृथा इति च पाठः ॥२१॥ मरीचिमिश्रैरिति ॥ मिश्रशब्दः पूज्यवचनः गुरुत्वाद्बहुवचनम् ॥२२॥२३ ॥ पदित्यादि ॥ ऐश्वर्यादीनां संपद्विमुक्तिश्च एकतः आराधनादेव लभ्या हरेराराधनं संपदादीनां मूलं विमुक्तिश्च एकतः आराधनादेव लभ्या ॥२४॥ उक्तमर्थं निगमयति यत इति ॥ तेनाप्यनन्तेन किं किमित्येवं वचः किमर्थमुच्यते ॥२५॥ किञ्चेति ॥ किञ्चेत्यादिवचोपि सोपालम्भम् किं वात्रेति च पाठः ॥२६॥ बहुनेति ॥ विकर्त्ता परिणमयिता ॥ २७ ॥ २८ ॥ २९ ॥



॥ १९ ॥ २० ॥ २१ ॥ पुरुषार्थचतुष्टयप्राप्तिमेवोदाहरन्नाह–मरीचिमिश्रैरिति ॥ मिश्रस्य पूज्यप्रयोगान्मरीचिमुख्यैरित्यर्थः ॥२२॥२३॥ सम्पदिति ॥ एकतो लभ्यं परदृष्टिमात्रसुलभं हरेराराधनमेव सम्पादादीनां मुक्तेश्च मूलं कारणम् ॥ २४ ॥ यत इति ॥ यतो धर्मादिफलं तेनाप्यनन्तेन किमित्येवं किमिदमुच्यते ॥ २५ ॥ सोपालम्भोक्तिं निगमयति–किञ्चेति ॥२६॥२७॥२८॥ दह्यमान इति ॥ एवं विपक्षस्तुतियुक्तं वाक्यं भूयो न

यदास्मद्वचनान्मोहग्राहं न त्यक्ष्यते भवान् ॥ ततः कृत्यां विनाशाय तव सृक्ष्याम दुर्मते ॥३०॥ प्रह्लाद उवाच॥कः केन हन्यते जन्तुर्जन्तुः कः केन रक्ष्यते ॥ हन्ति रक्षति चैवात्मा ह्यसत्साधु समाचरन् ॥ ३१ ॥ कर्मणा जायते सर्वं कर्मैव गतिसाधनम् ॥ तस्मात्सर्वप्रयत्नेन साधु कर्म समाचरेत् ॥३२॥ श्रीपराशर उवाच ॥ इत्युक्तास्तेन ते क्रुद्धा दैत्यराजपुरोहिताः ॥ कृत्यामुत्पादयामासुर्ज्वालामालोज्ज्वलाकृतिम् ॥३३॥ अतिभीमा समागम्य पादन्यासक्षतक्षितिः ॥ शूलेन साधु संक्रुद्धा तं जघानाशु वक्षसि ॥ ३४ ॥ तत्तस्य हृदयं प्राप्य शूलं बालस्य दीप्तिमत् ॥ जगाम खण्डितं भूमौ तत्रापि शतधा गतम् ॥ ३५ ॥ यत्रानपायी भगवान् हृद्यास्ते हरिरीश्वरः ॥ भङ्गो भवति वज्रस्य तत्र शूलस्य का कथा ॥ ३६ ॥ अपापे तत्र पापैश्च पातिता दैत्ययाजकैः ॥ तानेव सा जघानाशु कृत्या नाशं जगाम च ॥ ३७ ॥ कृत्यया दह्यमानांस्तान्विलोक्य स महामतिः ॥ त्राहि कृष्णेत्यनन्तेति वदन्नभ्यवपद्यत ॥ ३८ ॥ प्रह्लाद उवाच ॥ सर्वव्यापिन् जगद्रूप जगत्स्रष्ट र्जनार्दन ॥ पाहि विप्रानिमानस्माद्दुःसहान्मंत्रपावकात् ॥३९॥ यथा सर्वेषु भूतेषु सर्वव्यापी जगद्गुरुः ॥ विष्णुरेव तथा सर्वे जीवन्त्वेते पुरोहिताः ॥४०॥ यथा सर्वगतं विष्णुं मन्यमानोनपायिनम् ॥ चिन्तयाम्यरिपक्षेपि जीवन्त्वेते पुरोहिताः ॥ ४१ ॥ ये हन्तुमागता दत्तं यैर्विषं यैर्हुताशनः ॥ यैर्दिग्गजैरहं क्षुण्णो दष्टः सर्पैश्च यैरपि ॥४२॥ तेष्वहं मित्रभावेन समः पापोस्मि न क्वचित् ॥ यथा तेनाद्य सत्येन जीवन्त्वसुरयाजकाः ॥ ४३ ॥ श्रीपराशर उवाच ॥ इत्युक्तास्तेन ते सर्वे संस्पृष्टाश्च निरामयाः ॥ समुत्तस्थुर्द्विजा भूयस्तमूचुः प्रश्रयान्वितम् ॥ ४४ ॥ पुरोहिता ऊचुः ॥ दीर्घायुरप्रतिहतो बलवीर्यसमन्वितः ॥ पुत्रपौत्रधनैश्वर्यैर्युक्तो वत्स भवोत्तमः ॥ ४५ ॥ श्रीपराशर उवाच ॥ इत्युक्त्वा तं ततो गत्वा यथावृत्तं पुरोहिताः ॥ दैत्यराजाय सकलमाचचख्युर्महामुने ॥ ४६ ॥ इति श्रीविष्णुपुराणे प्रथमेंशे प्रह्लादचरितेऽष्टादशोऽध्यायः ॥ १८ ॥

यदिति ॥ मोहग्रहम् अज्ञानदुराग्रहम् ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ कृत्ययेति ॥ अभ्यवत्तिरनुग्रहः ॥ ॥ ३८ ॥ ३९ ॥ यथेति ॥ यथेत्यादिना अपकारिष्वप्युपकुर्वतीति वैष्णवानामाचारः प्रदर्शितः ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥
इति श्रीविष्णुपुराणव्याख्याने विष्णुचित्तीये प्रथमेंशेऽष्टादशोऽध्यायः ॥ १८ ॥

वक्ष्यसीति मत्वा पूर्वमस्माभिस्त्वं रक्षितोसि अबुद्धिमान् त्वमिति ततो नैव ज्ञातोसि ॥२९॥ यदिति ॥ मोहग्राहमबुद्धिकृतं दुराग्रहम् ॥३०॥ क इति ॥ असत्समाचरन्नात्मैव आत्मानं हन्ति साधुसमाचरन्नात्मानं रक्षति चेत्यन्वयः ॥ ३१ ॥ ३२ ॥ अतिभीमेति ॥ पादयोर्न्यासैः निक्षिप्तैः क्षता क्षितिर्यस्याः सा ॥ ३३ ॥ तदिति ॥ खण्डितं भग्नं सत् भूमौ जगाम पपात ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ कृत्ययेति ॥ अभ्यवपद्यत रक्षणार्थं तदभिमुखम् अधावदित्यर्थः । इतःपरं स्पष्टमन्यत् ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥४२॥४३॥४४॥४५॥४६॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुपुराणव्याख्यायां प्रथमांशे अष्टादशोऽध्यायः ॥ १८ ॥

श्रीपराशर उवाच ॥ हिरण्यकशिपुः श्रुत्वा तां कृत्यां वितथीकृताम् ॥ आहूय पुत्रं पप्रच्छ प्रभावस्यास्य कारणम् ॥ १ ॥ हिरण्यकशिपुरुवाच ॥ प्रह्लाद सुप्रभावोसि किमेतत्ते विचेष्टितम् ॥ एतन्मंत्रादिजनितमुताहो सहजं तव ॥ २ ॥ श्रीपराशर उवाच ॥ एवं पृष्टस्तदा पित्रा प्रह्लादोऽसुरबालकः ॥ प्रणिपत्य पितुः पादाविदं वचनमब्रवीत् ॥ ३ ॥ न मंत्रादिकृतं तात न च नैसर्गिको मम ॥ प्रभाव एष सामान्यो यस्य यस्याच्युतो हृदि ॥ ४ ॥ अन्येषां यो न पापानि चिन्तयत्यात्मनो यथा ॥ तस्य पापागमस्तात हेत्वभावान्न विद्यते ॥ ५ ॥ कर्मणा मनसा वाचा परपीडां करोति यः ॥ तद्बीजं जन्म फलति प्रभूतं तस्य चाशुभम् ॥ ६ ॥ सोहं न पापमिच्छामि न करोमि वदामि वा ॥ चिन्तयन्सर्वभूतस्थमात्मन्यपि च केशवम् ॥ ७ ॥ शारीरं मानसं दुःखं दैवं भूतभवं तथा ॥ सर्वत्र शुभचित्तस्य तस्य मे जायते कुतः ॥ ८ ॥ एवं सर्वेषु भूतेषु भक्तिरव्यभिचारिणी ॥ कर्तव्या पण्डितैर्ज्ञात्वा सर्वभूतमयं हरिम् ॥ ९ ॥ श्रीपराशर उवाच ॥ इति श्रुत्वा स दैत्येन्द्रः प्रासादशिखरे स्थितः ॥ क्रोधान्धकारितमुखः प्राह दैतेयकिंकरान् ॥ १० ॥ हिरण्यकशिपुरुवाच ॥ दुरात्मा क्षिप्यतामस्मात्प्रासादाच्छतयोजनात् ॥ गिरिपृष्ठे पतत्वस्मिन् शिलाभिन्नाङ्गसंहतिः ॥ ११ ॥ ततस्तं चिक्षिपुः सर्वे बालं दैतेयदानवाः ॥ पपात सोप्यधः क्षिप्तो हृदयेनोद्वहन्हरिम् ॥ १२ ॥ पतमानं जगद्धात्री जगद्धातरि केशवे ॥ भक्तियुक्तं दधारैनमुपसंगम्य मेदिनी ॥ १३ ॥ ततो विलोक्य तं स्वस्थमविशिर्णास्थिपञ्जरम् ॥ हिरण्यकशिपुः प्राह शम्बरं मायिनां वरम् ॥ १४ ॥ हिरण्यकशिपुरुवाच ॥ नास्माभिः शक्यते हन्तुमसौ दुर्बुद्धिबालकः ॥ मायां वेत्ति भवांस्तस्मान्माययैनं निषूदय ॥ १५ ॥

॥ १ ॥ २ ॥ ३ ॥ नेति ॥ समान एव सामान्यः । सर्वगतोप्यच्युतो भक्तस्य शुद्धे हृद्याविर्भवति नान्यस्याशुद्धे ॥ ४ ॥ तां पापदुःखाभावरूपामात्मनो हृच्छुद्धिं चतुःश्लोक्याऽऽह अन्येषामिति॥ ५ ॥ कर्मणेति ॥ तद्बीजं जन्म सा परपीडैव बीजं यस्य तज्जन्म तस्य पीडयितुरशुभं फलति तद्बीजजन्मेति च पाठः ॥ ६ ॥ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ नेति ॥ हन्तुं न शक्यते ॥ १५ ॥

॥ १ ॥ प्रह्लादेति ॥ सहजं नैसर्गिकम् ॥ २ ॥ ३ ॥ नेति ॥ सामान्यः समानः ॥ ४ ॥ किञ्च अन्येषामिति ॥ अन्येषां यः पापानि पापफलानि दुःखानि न चिन्तयति तस्य पापागमो दुःखागमो नास्ति ॥ ५ ॥ कर्मणेति ॥ यतस्तत्पीडाकरणमेव वीजं तस्माद्यस्य जन्म यस्यैतदशुभं पापं तस्य कर्त्तुः प्रभूतमत्यधिकम् अशुभफलं फलति । अतिदुःखफलात्मतया वर्धते ॥ ६ ॥ ७ ॥ ८ ॥ एवमिति ॥ एवं सर्वभूतमयं हरिं ज्ञात्वा सर्वेषु भूतेषु तद्भक्तिः कर्त्तव्या ॥ ९ ॥ इतीति ॥ क्रोधेनान्धकारितं जातान्धकारीव दुष्प्रेक्ष्यं मुखं यस्य ॥ १० ॥ शस्त्रादिविषाग्निकृत्यानां मणिमन्त्रादिभिः स्तम्भनं सम्भवति पतने तु न किञ्चित्प्रभवतीत्याशयेन दैत्यानादिशति दुरात्मा क्षिप्यतामिति ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ वास्तवैरुपायैर्हन्तुमशक्यत्वात्तद्वधे मायाविनं नियुंक्ते नास्माभिरिति ॥ १५ ॥

शम्बर उवाच ॥ सूदयाम्येव दैत्येन्द्र पश्य मायाबलं मम ॥ सहस्रमत्र मायानां पश्य कोटिशतं तथा ॥१६॥ श्रीपराशर उवाच ॥ ततः स ससृजे मायां प्रह्लादे शम्बरोऽसुरः ॥ विनाशमिच्छन्दुर्बुद्धिः सर्वत्र समदर्शिनि ॥ १७॥ समाहितमतिर्भूत्वा शम्बरेपि विमत्सरः ॥ मैत्रेय सोपि प्रह्लादः सस्मार मधुसूदनम् ॥ १८॥ श्रीपराशर उवाच ॥ ततो भगवता तस्य रक्षार्थं चक्रमुत्तमम् ॥ आजगाम समाज्ञप्तं ज्वालामालि सुदर्शनम् ॥ १९॥ तेन मायासहस्रं तच्छम्बरस्याशुगामिना ॥ बालस्य रक्षता देहमेकैकं चारिशोधितम् ॥ २० ॥ संशोषकं तथा वायुं दैत्येन्द्रस्त्विदमब्रवीत् ॥ शीघ्रमेष ममादेशाद्दुरात्मा नीयतां क्षयम् ॥ २१ ॥ तथेत्युक्त्वा तु सोप्येनं विवेश पवनो लघु ॥ शीतोतिरूक्षः शोषाय तद्देहस्यातिदुःसहः॥ २२ ॥ तेनाविष्टमथात्मानं स बुद्ध्वा दैत्यबालकः ॥ हृदयेन महात्मानं दधार धरणीधरम् ॥ २३ ॥ हृदयस्थस्ततस्तस्य तं वायुमतिभीषणम् ॥ पपौ जनार्दनः क्रुद्धः स ययौ पवनः क्षयम् ॥ २४ ॥ क्षीणासु सर्वमायासु पवने च क्षयं गते ॥ जगाम सोपि भवनं गुरोरेव महामतिः ॥ २५ ॥ अहन्यहन्यथाचार्यो नीतिं राज्यफलप्रदाम् ॥ ग्राहयामास तं बालं राज्ञामुशनसा कृताम् ॥ २६ ॥ गृहीतनीतिशास्त्रं तं विनीतं च यदा गुरुः ॥ मेने तदैनं तत्पित्रे कथयामास शिक्षितम् ॥ २७ ॥ आचार्य उवाच ॥ गृहीतनीतिशास्त्रस्ते पुत्रो दैत्यपते कृतः ॥ प्रह्लादस्तत्त्वतो वेत्ति भार्गवेण यदीरितम् ॥ २८ ॥ हिरण्यकशिपुरुवाच ॥ मित्रेषु वर्तेत कथमरिवर्गेषु भूपतिः ॥ प्रह्लाद त्रिषु लोकेषु मध्यस्थेषु कथं चरेत् ॥ २९ ॥

॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ मित्रेष्विति ॥ मित्रेषु सहजप्राकृतकृत्रिमेषु

॥ १६ ॥ १७॥ १८ ॥ तत इति ॥ सुदर्शनं शुद्धज्ञानमयम् ॥१९॥ तेनेति ॥ अतस्तेन मायासहस्रं एकैकश्च प्रत्येकं विनाशितम् ॥२०॥ दृश्येषु वधोपायेषु प्रतिघातमसौ करोतीति अदृश्यवधोपायं वायुं नियुंक्तेत्याह—संशोषकमिति ॥२१॥ तथेति ॥ लघु शीघ्रं लघुरिति पाठे वेगवान् शीतोऽतिरूक्षश्च शीतज्वरप्रायः ॥२२॥ तेनेति ॥ तेनाविष्टं व्याप्तं धरणीधरं वायुभक्षस्वरूपम् ॥२३॥२४॥२५॥२६॥ २७॥२८॥ मित्रेष्विति ॥

कथं मंत्रि ष्वमात्येषु बाह्येष्वाभ्यंतरेषु च ॥ चारेषु पौरवर्गेषु शङ्कितेष्वितरेषु च ॥ ३० ॥ कृत्याकृत्यविधानञ्च दुर्गाटविकसाधनम् ॥ प्रह्लाद कथ्यतां सम्यक् तथा कण्टकशोधनम् ॥ ३१ ॥ एतच्चान्यच्च सकलमधीतं भवता यथा ॥ तथा मे कथ्यतां ज्ञातुं तवेच्छामि मनोगतम् ॥ ३२ ॥ श्रीपराशर उवाच ॥ प्रणिपत्य पितुः पादौ तदा प्रश्रयभूषणः ॥ प्रह्लादः प्राह दैत्येन्द्रं कृतांजलिपुटस्तथा ॥ ३३ ॥ प्रह्लाद उवाच ॥ ममोपदिष्टं सकलं गुरुणा नात्र संशयः ॥ गृहीतन्तु मया किन्तु न सदेतन्मतम्मम ॥ ३४ ॥ साम चोपप्रदानं च भेददण्डौ तथापरौ ॥ उपायाः कथिताः सर्वे मित्रादीनां च साधने ॥ ३५ ॥ तानेवाहं न पश्यामि मित्रादींस्तात मा क्रुधः ॥ साध्याभावे महाबाहो साधनैः किं प्रयोजनम् ॥ ॥ ३६ ॥ सर्वभूतात्मके तात जगन्नाथे जगन्मये ॥ परमात्मनि गोविन्दे मित्रामित्रकथा कुतः ॥ ३७ ॥

सहजं मातुलेयादि प्राकृतं स्वभूम्यनन्तरात् शत्रोरनन्तरम् । कृत्रिमं दानमानवशीकृतं आरिश्च त्रिविधः सहजो दायादः प्राकृतो भूम्यनंतरादिः कृत्रिमः कृतापकारः मध्यस्थाश्च त्रिविधाः । त्रिषु लोकेषु मित्रादिषु त्रिषु जनेषु । कालेष्विति पाठे क्षयवृद्धिस्थानकालेषु कथं वर्त्तेत वृत्तयो हि वर्षणादानानुप्रवेशमाध्यस्थपूर्णत्वप्रियत्वसहिष्णुत्वरूपाः सप्त । यथोक्तम् "इन्द्रस्यार्कस्य वायोश्च यमस्य वरुणस्य च । चन्द्रस्य च पृथिव्याश्च नृपः सप्तगुणो भवेत्" इति ॥ २९ ॥ कथमिति ॥ "मंत्री बुद्धिसहायः स्यादमात्यः कार्यसाह्यकृत् । दुर्गाध्यक्षो धनाध्यक्षः सेनाध्यक्षश्च भूपतेः ॥ सूतः पुरोधा दैवज्ञः सप्तैते मंत्रिणो मताः" ॥ दुर्गाध्यक्षो वनाध्यक्षः । 'पूतः पुरोधाः' इति च पाठः बाह्या अमात्याः शुल्काध्यक्षादयः आभ्यन्तराः अन्तःपुरमहानसाद्यधीशीकृताः शंकिताः जितदासभूताः सापराधाः वा इतरे स्वामिहितैषिणः । धर्मार्थकामभयपरीक्षासु शुद्धा वा ॥ ३० ॥ कृत्याकृत्येति ॥ कृत्याः भेद्याः तेषामकृत्यत्वस्याभेद्यत्वस्य विधानम् "अलब्धवेतनो लुब्धो मानी चाप्यवमानितः । क्रुद्धश्च कोपितोकस्मात्तथा भीतश्च भीषितः" इति भेद्याः । जलप्राकारमरुगिरिवनात्मकं पञ्चधा दुर्गम् । आटविकाः वन्या म्लेच्छायाः तत्साधनम् कण्टकश्चौरः क्षुद्रशत्रुर्वा तस्य शोधनम् ॥ ३१ ॥ एतदिति ॥ अन्यच्चेति औशनसोक्तं सप्त प्रकृत्यादिकम् ॥ ३२ ॥ ३३ ॥ ममोपदिष्टेति ॥ न सदेतत् शत्रुमित्रादिभेदविषयत्वादस्य ॥ ३४ ॥ ३५ ॥ ३६ ॥ सर्वभूतात्मक इति ॥ सर्वभूता

त्रिषु कालेषु क्षयवृद्धितत्साम्यकालेषु ॥ २९ ॥ कथमिति ॥ मन्त्रिषु बुद्धिसहायेषु अमात्येषु कार्यसहायेषु तदुक्तम् "मन्त्री बुद्धिसहायः स्यादमात्यः कार्यसाह्यकृत्" इति । बाह्येषु शुल्कादधिकृतेषु आभ्यन्तरेषु अन्तःपुरमहानसाद्यधिकृतेषु चारेषु गूढचारेषु चारेषु वा शङ्कितेषु जित्वा बलाद्दासीकृतेषु दूतेषु इतरेष्वशङ्कितेषु वा ॥ ३० ॥ कृत्याकृत्यविधानमिति ॥ सन्धिविग्रहयानादिषु कुत्र किं कृत्यं कुत्र किमकृत्यम् एवं प्रकारः । यद्वा कृत्या भेद्या तेषामकृत्यविधानम् अभेद्यत्वकरणं दुर्गं पार्वतोदकादि । आटविका महारण्यनिवासिनः पुलिन्दम्लेच्छादयः तेषां साधनं वशीकरणम् । कण्टकाश्चोराः गूढशत्रवो वा तेषां शोधनं निरासनम् ॥ ३१ ॥ एतदिति ॥ अन्यच्च सामभेदादि ॥ ३२ ॥ प्रणिपत्येति ॥ प्रश्रय एव भूषणं यस्य सः ॥ ३३ ॥ ३४ ॥ सामेति ॥ कुपितस्य स्तुत्यादिभिः सान्त्वनं साम । भूमिधनधान्यादिप्रदानमुपदानम् । ऐक्यमत्येन स्थितानां भयजननादिना पृथक्करणं भेदः । अर्थापहारादिर्दण्ड इत्येते उपायाः ॥ ३५ ॥ तानिति ॥ मा क्रुधः क्रोधं मा कार्षीः ॥ ३६ ॥ सर्वेति ॥ सर्वभूतात्मके सर्वेषां भूतानामात्मनि परमात्मनि सर्वजीव

त्वय्यस्ति भगवान् विष्णुर्मयि चान्यत्र चास्ति सः ॥ यतस्ततोयं मित्रं मे शत्रुश्चेति पृथक्कुतः॥३८॥तदेभिरलमत्यर्थं दुष्टारम्भोक्तिविस्तरैः ॥
अविद्यान्तर्गतैर्यत्नः कर्त्तव्यस्तात शोभने ॥३९॥ विद्याबुद्धिरविद्यायामज्ञानान्तात जायते ॥ बालोऽग्निं किं न खद्योतमसुरेश्वर मन्यते ॥४०॥
तत्कर्म यन्न बन्धाय सा विद्या या विमुक्तये ॥ आयासायापरं कर्म विद्यान्या शिल्पनैपुणम् ॥ ४१ ॥ तदेतदवगम्याहमसारं सारमुत्तमम् ॥
निशामय महाभाग प्रणिपत्य ब्रवीमि ते ॥ ४२ ॥ न चिन्तयति को राज्यं को धनं नाभिवाञ्छति ॥ तथापि भाव्यमेवैतदुभयं प्राप्यते नरैः॥
॥ ४३ ॥ सर्व एव महाभाग महत्त्वं प्रति सोद्यमाः ॥ तथापि पुंसां भाग्यानि नोद्यमा भूतिहेतवः ॥ ४४ ॥ जडानामविवेकानामशूराणामपि
प्रभो ॥ भाग्यभोज्यानि राज्यानि सन्त्यनीतिमतामपि ॥ ४५ ॥

त्मके सर्वजीवशरीरके जगन्मये व्यक्ताव्यक्तप्रपंचरूपे परमात्मनि आत्मान्तररहिते॥ ३७ ॥ ३८॥ तदिति ॥ दुष्टारम्भाः राज्याद्यर्थोद्योगाः तेषामुक्तिविस्तरैः अर्थशास्त्राद्यैः अविद्यान्तर्गतैः विद्यायामन्तर्गतानि विद्यास्थानानि तदितरैः शोभने परममङ्गलात्मविद्याविषये शास्त्रे ॥ ३९॥ नन्वर्थशास्त्रादे राज्याद्युपायज्ञापकत्वात्कथमविद्यास्थानत्वं तत्राह—विद्येति ॥ अर्थशास्त्रजन्यविद्यायास्तु अल्पास्थिरफलसाधनत्वाद्विद्यात्वं नास्तीति भावः ॥ ४० ॥ का तर्हि विद्या तत्राह—तत्कर्मेति ॥ या विमुक्तये सा विद्या अर्थशास्त्रादिविद्या शिल्पनैपुण्यम् । तत्कर्म यन्न बन्धाय अपि तु विद्यांगत्वेन मोक्षाय अपरं कर्म प्रवृत्तिकर्म ॥ ४१ ॥ कर्मनिरूपणं प्रासंगिकम्, राज्यादिदृष्टफलार्थिनापि तत्साधने धर्मे यतितव्यं न नीतिशास्त्रादावित्याह तदेतदित्यादिभिः तदेतदिति ॥ तदेतन्नीतिशास्त्रादिजन्यज्ञानादि निशामय शृणु ॥ ४२ ॥ भाव्यं प्राक्कर्मतो भावि उभयं राज्यं धनं च ॥ ४३ ॥ सर्व एवेति ॥ महत्त्वमैश्वर्यम् ॥ ४४ ॥ ४५ ॥

नियन्तारि॥३७॥ तदेव—त्वय्यस्तीति ॥ पृथग्भेदः कुतः ॥३८॥ तदिति ॥ दुष्टा रागद्वेषादिपूर्वका ये आरम्भा उद्यमाः तेषूक्तिविस्तरैर्नीतिशास्त्रैरलम् । दुष्टारम्भेति पाठे दृष्टा ऐहिकभोगार्थाः शोभने निष्कामे कर्मणि आत्मविद्यायाञ्च ॥३९॥ ननु "अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः। पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश । आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः ॥ अर्थशास्त्रचतुर्थास्तु विद्या अष्टादशैव तु" इति स्मृतेः । दण्डनीत्यादिकमपि विद्येति अत्र कथम् अविद्यान्तर्गतैरित्युच्यते तत्राह—विद्याबुद्धिरिति ॥ बालः खद्योतमग्निं किं न मन्यते अपि तु मन्यत एवेत्यर्थः ॥ ४० ॥ शोभने यत्नः कर्त्तव्य इति यदुक्तं तदेव शोभनं धर्मादिकमाह—तत्कर्मेति ॥ अपरमर्थकामाद्यर्थं कर्म आयासाय श्रमार्थमेव अन्या विद्या अर्थशास्त्रादिः । हि शिल्पनैपुणम् ऐन्द्रजालिकादि शिल्पविद्या च कौशलमात्रमेव तुच्छत्वादित्यर्थः ॥ ४१ ॥ तदिति ॥ तदेतद्राज्यादिसाध्यमसारं तुच्छं ज्ञात्वा उत्तमं साध्यं यत्प्रकर्षेण ब्रवीमि तन्निशामयेत्यन्वयः ॥ ४२ ॥ किञ्च राज्यादेः श्रेष्ठफलत्वेपि तदर्थं पुण्ये यत्नः कार्यः न केवलं दृष्टार्थोद्यममात्रे तस्य व्यभिचारः नेत्यादित्रिभिः—नेति ॥ भाव्यं प्राक्तनपुण्यवशाद्भवितव्यम् एतदुभयं राज्यं धनं च प्राप्यते ॥ ४३ ॥ सर्व एवेति ॥ महत्त्वं राज्यधनादिविभूतिं प्रति भाग्यान्येव भूतिहेतवः राज्यादिश्रेयो हेतवः न तूद्यमाः ॥ ४४ ॥ तैर्विनापि राज्यादेर्दृश्यमानत्वादित्याह—जडा

तस्माद्यतेत पुण्येषु य इच्छेन्महतीं श्रियम् ॥ यतितव्यं समत्वे च निर्वाणमपि चेच्छता ॥ ४६ ॥ देवा मनुष्याः पशवः पक्षिवृक्षसरीसृपाः ॥ रूपमेतदनन्तस्य विष्णोर्भिन्नमिव स्थितम् ॥ ४७ ॥ एतद्विजानता सर्वं जगत्स्थावरजङ्गमम् ॥ द्रष्टव्यमात्मवद्विष्णुर्यतोयं विश्वरूपधृक् ॥ ॥ ४८ ॥ एवं ज्ञाते स भगवाननादिः परमेश्वरः ॥ प्रसीदत्यच्युतस्तस्मिन्प्रसन्ने क्लेशसंक्षयः ॥ ४९ ॥ श्रीपराशर उवाच ॥ एतच्छ्रुत्वा तु कोपेन समुत्थाय वरासनात् ॥ हिरण्यकशिपुः पुत्रं पदा वक्षस्यताडयत् ॥ ५० ॥ उवाच च स कोपेन सामर्षः प्रज्वलन्निव ॥ निष्पिष्य पाणिना पाणिं हन्तुकामो जगद्यथा ॥ ५१ ॥ हिरण्यकशिपुरुवाच ॥ हे विप्रचित्ते हे राहो हे बलैष महार्णवे ॥ नागपाशैर्दृढैर्बद्धा क्षिप्यतां मा विलंब्यताम् ॥ ५२ ॥ अन्यथा सकला लोकास्तथा दैतेयदानवाः ॥ अनुयास्यन्ति मूढस्य मतमस्य दुरात्मनः ॥ ५३ ॥ बहुशो वारितोस्माभिरयं पापस्तथाप्यरेः ॥ स्तुतिं करोति दुष्टानां वध एवोपकारकः ॥ ५४ ॥ पराशर उवाच ॥ ततस्ते सत्वरा दैत्या बद्धा तं नागबन्धनैः ॥ भर्तुराज्ञां पुरस्कृत्य चिक्षिपुः सलिलार्णवे ॥ ५५ ॥ ततश्चचाल चलता प्रह्लादेन महार्णवः ॥ उद्वेलोभूत्परं क्षोभमुपेत्य च समन्ततः ॥ ५६ ॥ भूर्लोकमखिलं दृष्ट्वा प्लाव्यमानं महाम्भसा ॥ हिरण्यकशिपुर्दैत्यानिदमाह महामते ॥ ५७ ॥

तस्मादिति ॥ समत्वे भगवदात्मकत्वेन सर्वस्य समत्वबुद्धौ ॥ ४६ ॥ देव इति ॥ भिन्नमिव ततः पृथग्भूतमिव अनन्त एव तत्तद्रूपेण स्थित इति ज्ञापनमेव सम्यक् " नेह नानास्ति किञ्चन, न तदस्ति विना" इति च ॥ ४७ ॥ एत इति ॥ आत्मवत् अन्तर्यामिणा परमात्मना युक्तम् । मतुबन्तमेतत् । अत्र हेतुः यतोयं विश्वरूपधृगिति ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ तत इति ॥ सलिलार्णवेऽर्णवसलिले ॥ ५५ ॥ ५६ ॥ ५७ ॥

नासिति ॥ जडानामनुद्यमानाम् अविवेकानाम् इष्टानिष्टविवेकशून्यानाञ्च राज्यादयः सन्ति ॥ ४५ ॥ ४६ ॥ समत्वदृष्ट्या निर्वाणमाह–देवा इति ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ उवाचेति ॥ सामर्षः असहमानः ॥ ५१ ॥ अयं तावत्सर्वैरुपायैर्न हन्तुं शक्यते उपेक्षितश्चेत्सकलं विष्णुभक्त्या नाशयेत् । अतो नागपाशैर्बद्ध्वा समुद्रे क्षिप्त्वा पर्वतैराक्रमणीयः । ततः कालेन मरिष्यतीत्याशयेनाह–हे विप्रचित्त इति ॥५२॥५३॥ बहुश इति ॥ दोषशान्तिहेतुत्वात् पक्षो दुष्टानामुपकारक एव।यद्वा दुष्टानां पक्षे अयमुपकारक एव भवति।अतो हन्तव्यः दुष्टानां वध एवोपकारक इति पाठे दोषशान्तिहेतुत्वात् वधो दुष्टानामुपकारक एव ॥ ५४ ॥५५॥५६॥५७॥

हिरण्यकशिपुरुवाच ॥ दैतेयाः सकलैःशैलैरत्रैव वरुणालये ॥ निश्छिद्रैः सर्वशः सर्वैश्चीयतामेष दुर्मतिः ॥ ५८ ॥ नाग्निर्दहति नैवायं शस्त्रैश्छिन्नो न चोरगैः ॥ क्षयं नीतो न वातेन न विषेण न कृत्यया॥५९॥न मायाभिर्न चैवोच्चात्पातितो न च दिग्गजैः॥बालोतिदुष्टचित्तोयं नानेनार्थोस्ति जीवता ॥ ६० ॥ तदेष तोयमध्ये तु समाक्रान्तो महीधरैः ॥ तिष्ठत्वब्दसहस्रान्तं प्राणान्हास्यति दुर्मतिः ॥ ६१ ॥ ततो दैत्या दानवाश्च पर्वतैस्तं महोदधौ ॥ आक्रम्य चयनं चक्रुर्योजनानि सहस्रशः ॥ ६२ ॥ स चितः पर्वतैरन्तः समुद्रस्य महामतिः ॥ तुष्टावाह्निकवेलायामेकाग्रमतिरच्युतम् ॥ ६३ ॥ प्रह्लाद उवाच ॥ नमस्ते पुण्डरीकाक्ष नमस्ते पुरुषोत्तम ॥ नमस्ते सर्वलोकात्मन्नमस्ते तिग्मचक्रिणे ॥ ॥ ६४ ॥ नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ॥ जगद्धिताय कृष्णाय गोविन्दाय नमोनमः ॥ ६५ ॥ ब्रह्मत्वे सृजते विश्वं स्थितौ पालयते पुनः ॥ रुद्ररूपाय कल्पान्ते नमस्तुभ्यं त्रिमूर्तये ॥ ६६ ॥ देवा यक्षाः सुराः सिद्धा नागा गन्धर्वकिन्नराः ॥ पिशाचा राक्षसाश्चैव मनुष्याः पशवस्तथा ॥ ६७ ॥ पक्षिणस्थावराश्चैव पिपीलिकसरीसृपाः ॥ भूम्यापोग्निर्नभोवायुः शब्दः स्पर्शस्तथा रसः ॥ ६८ ॥ रूपं गन्धो मनो बुद्धिरात्मा कालस्तथा गुणाः ॥ एतेषां परमार्थश्च सर्वमेतत्त्वमच्युत ॥ ६९ ॥ विद्याविद्ये भवान्सत्यमसत्यं त्वं विषामृते ॥ प्रवृत्तं च निवृत्तं च कर्म वेदोदितं भवान् ॥ ७० ॥ समस्तकर्मभोक्ता च कर्मोपकरणानि च ॥ त्वमेव विष्णो सर्वाणि सर्वकर्मफलं च यत् ॥ ७१ ॥

॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ स इति ॥ आह्निकवेलायाम् अह्निक्रियमाणाराधनवेलायाम् ॥ ६३ ॥ ६४ ॥ नम इति ॥ ब्रह्मण्यदेवाय तपोवेदादिहिताय देवाय ॥ ६५ ॥ ब्रह्मत्व इति ॥ स्थितौ स्वरूपेणावस्थितौ ॥ ६६ ॥ ६७ ॥ ६८ ॥ रूपमिति ॥ आत्मा अहङ्कारःएतेषां परमार्थः एतेषां सम्बन्ध्यविनाशि जीवात्मा एतद्दृश्यं जगच्च त्वम् ॥ ६९ ॥ ७० ॥ ७१ ॥

दैत्या इति ॥ वरुणालये समुद्रे निश्छिद्रैर्निरन्तरैः पर्वतैश्चीयताम् उपर्युपरि निक्षिप्तैराक्रम्यताम् ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ स इति॥अहरहः कर्त्तव्यभजनादिसमये ॥ ६३ ॥ ६४ ॥ नम इति॥ब्रह्मण्यानां देवाय ॥ ६५ ॥॥ ६६ ॥ विश्वरूपेण स्तौति ॥ देवा इत्यादिसप्तभिः । देवा इत्यादीनां सर्वं त्वमेवेति तृतीयेनान्वयः । यक्षाश्चासुराश्च ॥ ६७ ॥ ६८ ॥ रूपमिति ॥ आत्माऽहङ्कारः गुणाः सत्त्वादयः एतेषां परमार्थश्च त्वं कारणम् ॥ ६९ ॥ ७० ॥ ७१ ॥

मय्यन्यत्र तथान्येषु भूतेषु भुवनेषु च ॥ तवैव व्याप्तिरैश्वर्यगुणसंसूचिकी प्रभो ॥ ७२ ॥ त्वां योगिनश्चिंतयन्ति त्वां यजंति च याजकाः ॥
हव्यकव्यभुगेकस्त्वं पितृदेवस्वरूपधृक् ॥७३॥ रूपं महत्ते स्थितमत्र विश्वं ततश्च सूक्ष्मं जगदेतदीश ॥ रूपाणि सर्वाणि च भूतभेदास्तेष्वन्त
रात्माख्यमतीव सूक्ष्मम् ॥ ७४ ॥ तस्माच्च सूक्ष्मादिविशेषणानामगोचरे यत्परमात्मरूपम् ॥ किमप्यचिन्त्यं तव रूपमस्ति तस्मै नमस्ते
पुरुषोत्तमाय ॥ ७५ ॥ सर्वभूतेषु सर्वात्मन्या शक्तिरपरा तव ॥ गुणाश्रया नमस्तस्यै शाश्वतायै सुरेश्वर ॥ ७६ ॥ यातीतगोचरा वाचां
मनसां चाविशेषणा ॥ ज्ञानिज्ञानपरिच्छेद्या तां वन्दे स्वेश्वरीं पराम् ॥ ७७ ॥

मयीति ॥ ऐश्वर्यगुणसंसूचिकी उपादाननिमित्तत्वलक्षणमैश्वर्यम् गुणो ज्ञानशक्त्यादिः तयोः सूचिका ॥ ७२ ॥ ७३ ॥ न ह्यनीश्वरस्यागुणस्य च व्याप्तिः सम्भवति अस्त्रभूषणरूपनिखिलाधारं शुभाश्रयतया लक्ष्यमाणं दिव्यस्वरूपमाह—रूपमिति ॥ ते महद्रूपमस्तीत्यनुषङ्गः । महत्त्वं स्वरूपतो गुणतश्च । एतद्विश्वं जगत्सूक्ष्मं यत्र तिष्ठति यतश्च भवति । यतश्च सूक्ष्ममिति च पाठः । रूपाणि सूक्ष्माणि अव्यक्तमहदादीनि । भूतभेदाः पृथिव्यादयः । अन्तरात्माख्यमात्मतत्त्वम् एतानि च यतो यत्र विश्वमिति संक्षेपोक्तिः, रूपाणीति विस्तरोक्तिः ॥ ७४ ॥ दिव्यस्वरूपमाह—तस्मादिति ॥ तस्मात्परमिति शेषः । परमार्थरूपं परमप्रयोजनरूपं यत्परमात्मरूपमिति च पाठः रूपं स्वरूपम् ॥ ७५ ॥ क्षेत्रज्ञरूपं मुक्तरूपं चाह—सर्वभूतेष्विति द्वाभ्याम्—सर्वभूतेष्विति ॥ गुणाः सत्त्वादयः आश्रयो यस्याः सा गुणाश्रया अपरा मुक्तापेक्षया निकृष्टा ॥ ७६ ॥ यातीतगोचरेति ॥ ईश्वरीं स्वतंत्राम् 'स स्वराट् भवतीति' श्रुतेः । परामुत्कृष्टाम् ।

मयीति ॥ ऐश्वर्यं सामर्थ्यातिशयं गुणाश्च सत्यसङ्कल्पादीन्संसूचयतीत्यैश्वर्यगुणसंसूचकी तवैव सच्चिद्रूपस्य व्याप्तिः ॥७२॥ अत एव त्वामिति॥ त्वामेव योगिनश्चिन्तयन्ति त्वामेव याजका यजन्ति पितृरूपस्वरूपधृक्त्वमेव । कव्यभुक् देवस्वरूपधृक्त्वमेव हव्यभुक् ॥ ७३ ॥ उक्तं प्रापञ्चिकं रूपम् अपवर्गप्रदं शुद्धस्वरूपमाह रूपमित्यादिद्वाभ्याम्—रूपमिति ॥ विश्वं विश्वरूपं सावरणं ब्रह्माण्डम् । एतद्भगवद्ब्रह्माण्डान्तर्वर्त्तिविराड्रूपम् । रूपं महत्ते स्थितमत्र विश्वमिति पाठे महद्रूपं विश्वं ब्रह्माण्डम् । अत्र स्थितं जगदेतत्ततश्च सूक्ष्मरूपमित्यन्वयः । ततो सूक्ष्माणि रूपाणि चतुर्भूतभेदाः । जरायुजादिचतुर्विधाः देहाः तेष्वप्यन्तरात्माख्यं क्षेत्रसंज्ञमतीव सूक्ष्मं रूपम् ॥ ७४ ॥ तस्मादिति ॥ तस्मादपि परं सूक्ष्मादिविशेषणानामगोचरे अविषये वर्त्तमानं यत्किमप्यचिन्त्यं रूपमस्ति तस्मै पुरुषोत्तमाख्याय ते रूपाय नमः "यस्मात्क्षरमतीतोहमक्षरादपि चोत्तमः । अतोस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" इति स्मृतेः ॥ ७५ ॥ नन्वेवंभूतस्य कुतः स्थूलसूक्ष्माद्यनेकरूपत्वमित्याशंक्य तदुत्पादकं शक्तिद्वयं प्रणमति सर्वभूतेष्वित्यादिद्वाभ्याम्—सर्वभूतेष्विति ॥ अपरा जडशक्तिः प्रकृत्याख्या ॥७६॥ यातीतगोचरेति ॥ वाचां मनसाञ्च यातीतगोचरा अतीतो अतिक्रान्तो गोचरो विषयो यया सा यस्मादविशेषणाज्जातिगुणादिविशेषणशून्या । ज्ञानिनां क्षेत्रज्ञानां यानि शब्दादिविषयाणि प्रादेशकानि ज्ञानानि तैस्तैः परिच्छेद्या सर्वतः प्रसरद्भिर्निर्झरोदकैः महासरोवत्सर्वगतत्वेनावगम । यद्वा ज्ञानी जीवः ज्ञान बुद्धिः उभयमपि परिच्छेद्यं ब्राह्मदीपप्रकाश्यं यस्याः सा तस्याः सर्वभासकत्वात् । तामैश्वरीमीश्वरस्य तत्त्वभूताञ्च परां

ॐ नमो वासुदेवाय तस्मै भगवते सदा ॥ व्यतिरिक्तं न यस्यास्ति व्यतिरिक्तोखिलस्य यः ॥७८॥ नमस्तस्मै नमस्तस्मै नमस्तस्मै महात्मने॥ नाम रूपं न यस्यैको योस्तित्वेनोपलभ्यते ॥ ७९ ॥ यस्यावताररूपाणि समर्चन्ति दिवौकसः ॥ अपश्यन्तः परं रूपं नमस्तस्मै महात्मने ॥ ॥ ८० ॥ योन्तस्तिष्ठन्नशेषस्य पश्यतीशः शुभाशुभम् ॥ तं सर्वसाक्षिणं विश्वं नमस्ये परमेश्वरम् ॥ ८१ ॥ नमोस्तु विष्णवे तस्मै यस्याभिन्नमिदं जगत् ॥ ध्येयः स जगतामाद्यः स प्रसीदतु मेऽव्ययः ॥ ८२ ॥ यत्रोतमेतत्प्रोतं च विश्वमक्षरमव्ययम् ॥ आधारभूतः सर्वस्य स प्रसीदतु मे हरिः ॥ ८३ ॥ ॐ नमो विष्णवे तस्मै नमस्तस्मै पुनः पुनः ॥ यत्र सर्वं यतः सर्वं यः सर्वं सर्वसंश्रयः ॥ ८४ ॥

एतच्छक्तिद्वयं विष्णुशक्तिः परा प्रोक्तेत्यादिना वक्ष्यते । तां वन्दे चेश्वरां परामिति च पाठः ॥ ७७ ॥ ॐनमः इति ॥ ओमित्यादिमन्त्रस्यार्थः तृतीयषष्ठयोर्वक्ष्यते । व्यतिरिक्तं न यस्यास्ति सर्वस्य तदात्मकत्वात् व्यतिरिक्तोखिलस्य यः कार्यभूताज्जगतो व्यतिरिक्तः । "अतो ज्यायान् त्रिपादूर्ध्व उदैत्पुरुषः, यस्यायुतायुतांशांशः" इति व्यतिरिक्तमित्यादिना वासुदेवशब्दार्थ उक्तः ॥ ७८ ॥ नम इति ॥ आदरान्नमस्कारावृत्तिः संकर्षणादिव्यूहविषया वा नाम रूपं न यस्य जीववन्न कर्मकृतम् ॥ ॥ ७९ ॥ ८० ॥ ८१ ॥ नमोस्त्विति ॥ यस्याभिन्नं कार्यत्वाद्रूपत्वाच्च ॥ ८२ ॥ यत्रेति ॥ यत्रैतद्विश्वम् "ओतं कुंड इव प्रोतं सूत्रे मणिगाणा इव । ब्रह्मन्हि विश्वा भूतानि नावीवान्तः समाहिताः" सूत्रे मणिगणा इवेति च ॥८३॥ ओमिति ॥ यत्र सर्वं स्थितं लीनमिति वा यतः सर्वमुपादानभूताद्भवति अत एव यः सर्वम्॥८४॥

चिच्छक्तिं वन्दे "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इति श्रुतेः ॥ ७७ ॥ अतः एवम्भूतशक्तिद्वयेनाचिन्त्यनिरतिशयैश्वर्याच्छुद्धत्वं स्थूलसूक्ष्माद्यनेकरूपत्वञ्च सङ्गच्छत एवेति । द्वादशाक्षरमन्त्रप्रतिपाद्यरूपेण प्रणमति—ॐ नम इत्यादिद्वाभ्याम् ॥ ७८ ॥ नम इति ॥ नमस्तस्मै इति त्रिभिः पुनरुक्त्या रूपं महदिति श्लोकोक्तचैतन्योपाधिभूतैर्विश्वरूपजगद्रूपभूतरूपैः प्रणामः नामरूपं न यस्य तस्मै नम इत्यनुषङ्गाच्छुद्धक्षेत्रज्ञरूपेण । एको योस्तित्वेनोपलभ्यते तस्मै महात्मने नम इति ब्रह्मरूपेण प्रणमतीति द्रष्टव्यम् ॥ ७९ ॥ नन्वेवं केवलश्चेत्परमेश्वरः तर्हि तस्याविषयत्वादर्चनादिकं न घटत इत्याशंक्याह—यस्येति ॥ ॥ ८० ॥ नन्वेवं परमेश्वर एव चेदर्चनीयस्तर्हि रुद्रादीनां पूज्यता कथमित्याशङ्क्य तेषामन्तर्यामीश्वररूपेणैव युज्यत इत्याशयेनाह—योन्तरिति ॥ ८१ ॥ जडस्यापि जगतः परमेश्वररूपेणोपास्यत्वमस्ति किं पुनर्देवतानामित्याशयेनाह—नमोस्त्विति ॥ अभिन्नत्वे हेतुर्जगतामाद्यः कारणमिति ॥ ८२ ॥ तदुपपादयन्नाह यत्रेति ॥ यत्र यस्मिन्प्रोतं विश्वं दीर्घतन्तुषु पटवद्ग्रथितं तिर्यक्तन्तुषु पटवदेवानुस्यूतम् अक्षरसंज्ञके प्रधानमहदादिरूपे ॥ ८३ ॥ ॥ तदुक्तं सर्वात्मत्वं संक्षेपतः स्मरन्प्रणमति—ओमिति ॥ यत्र सर्वं प्रलये तस्मै नमः । यतः सर्वं सृष्टौ तस्मै नमः । यः सर्वं स्थितौ पुनः तस्मै नमः । अत एव तस्य यः संश्रयः आधार आत्मा तस्मै नम इत्येवं

सर्वगत्वादनन्तस्य स एवाहमवस्थितः ॥ मत्तः सर्वमहं सर्वं मयि सर्वं सनातने ॥ ८५ ॥ अहमेवाक्षयो नित्यः परमात्मात्मसंश्रयः ॥ ब्रह्मसंज्ञो ऽहमेवाग्रे तथान्ते च परः पुमान् ॥ ८६ ॥ इति श्रीविष्णुपुराणे प्रथमेंश एकोनविंशतितमोऽध्यायः ॥ १९ ॥ श्रीपराशर उवाच ॥ एवं संचिन्तयन्विष्णुमभेदेनात्मनो द्विज ॥ तन्मयत्वमवाप्याग्र्यं मेने चात्मानमच्युतम् ॥ १ ॥ विसस्मार तथात्मानं नान्यत्किञ्चिदजानत ॥ अहमेवाव्ययोऽनन्तः परमात्मेत्यचिन्तयत् ॥ २ ॥ तस्य तद्भावनायोगात्क्षीणपापस्य वै क्रमात् ॥ शुद्धेन्तःकरणे विष्णुस्तस्थौ ज्ञानमयोच्युतः ॥ ॥ ३ ॥ योगप्रभावात्प्रह्लादे जाते विष्णुमयेऽसुरे ॥ चलत्युरगबन्धैस्तैर्मैत्रेय त्रुटितं क्षणात् ॥ ४ ॥

सर्वगत्वादिति ॥ सर्वतः सर्वत्रात्मत्वेन यो वसति अनादिमध्यान्तमित्यादिविशेषणैरचितः जडायो व्यावृत्तः सच्चिदानन्दस्वरूपः स एवाहमित्यत्र अनन्तस्य सर्वगतत्वं हेतुः ॥ ८५ ॥ अहमेवेति ॥ स परमात्मा किमाश्रय इत्यत्राह—आत्मसंश्रय इति ॥ न किंचिदाश्रितः स्वे महिम्नि प्रतिष्ठितः । ननु ब्रह्मणो जगदुत्पत्तिः श्रूयते "यतो वा इमानि" इत्यादिना तत्कथं मत्त इत्युच्यते तत्राह—ब्रह्मसंज्ञोहमिति । ब्रह्मात्मकत्वादहमेव ब्रह्मसंज्ञः अग्रे सृष्टेः प्राक् अन्ते प्रलये ॥ ॥ ८६ ॥ इति श्रीविष्णुचित्तीये श्रीविष्णुपुराणव्याख्याने प्रथमेंश एकोनविंशतितमोध्यायः ॥ १९ ॥ ॥ विशदविशदतरविशदतमक्रमेण योगकाष्ठां प्राप्त इत्याह एवमिति ॥ आत्मनोऽभेदेन स्वशरीरकत्वेन विष्णुशब्दः कारणवाची आत्मशब्दः कार्यभूतस्वप्रकारविशिष्टविष्णुवाची तेनाप्यभेदस्तन्मयत्वं तत्प्राचुर्यम् अग्र्यमुत्कृष्टं स्वस्य तदात्मकत्ववैशद्यमवाप अत एवात्मानमच्युतं मेने तन्मयत्वमवाप्य अग्रे इति च पाठः ॥ १ ॥ विसस्मारेति ॥ अयोगदशायामात्मानमतदात्मकत्वेन भ्रांत्या वासितं विसस्मार स्वप्रकाशस्य योगदशायामाविर्भूतस्य च स्वरूपस्य विस्मरणायोगात् स्वरूपविस्मृतौ तु वामदेवादेरहं मनुरभवमित्यादिवचनवन्मत्तः सर्वमित्यादिवचनं स्यात् तर्हि कथमचिन्तयत्तत्राह—अहमेवाव्यय इति ॥ २ ॥ ३ ॥ योगप्रभावादिति ॥ विष्णुमये विष्णुप्रचुरे योगाच्चलति सति उरगबन्धमिति नपुंसकत्वमार्ष

नमस्यावस्थाभेदात् नमस्कारावृत्तिः ॥ ८४ ॥ तदेवं विष्णोर्ब्रह्मतया सर्वात्मकत्वं भावयन् सर्वस्यापि ब्रह्मत्वाविर्भावेन तदभेदं पश्यन्नाह—सर्वगत्वादित्यादिद्वाभ्याम् ॥ ८५ ॥ अहमेवेति ॥ अग्रे सृष्टेः पूर्वम् अन्ते च प्रलयानन्तरम् ॥ ८६ ॥ अहं हरिः सर्वमिदं जनार्दनो नान्यत्ततः कारणकार्यजातम् ! ईदृङ्मनो यस्य न तस्य भूयो भवोद्भवा द्वन्द्वगदा भवन्ति ॥ १ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुपुराणव्याख्यायां प्रथमांश एकोनविंशोध्यायः ॥ १९ ॥ ॥ १ ॥ विसस्मारेति ॥ आत्मानं प्रह्लादोहमिति विस्मृतवान् ॥ २ ॥ तस्येति ॥ क्षीणपापस्य ध्वस्तसमस्तकर्मवासनामलस्य ॥ ३ ॥ योगप्रभावादिति ॥ त्रुटिताः

भ्रान्तग्राहगणः सोर्मिर्ययौ क्षोभं महार्णवः ॥ चचाल च मही सर्वा सशैलवनकानना ॥ ५ ॥ स च तं शैलसंघातं दैत्यैर्न्यस्तमथोपरि ॥ उत्क्षिप्य तस्मात्सलिलान्निश्चक्राम महामतिः ॥६॥ दृष्ट्वा च स जगद्भूयो गगनाद्युपलक्षणम् ॥ प्रह्लादोस्मीति सस्मार पुनरात्मानमात्मनि ॥ ॥ ७ ॥ तुष्टाव च पुनर्धीमाननादिं पुरुषोत्तमम् ॥ एकाग्रमतिरव्यग्रो यतवाक्कायमानसः ॥ ८ ॥ प्रह्लाद उवाच ॥ ॐनमः परमार्थाय स्थूल सूक्ष्मक्षराक्षर ॥ व्यक्ताव्यक्तकलातीत सकलेश निरञ्जन ॥ ९ ॥ गुणाञ्जन गुणाधार निर्गुणात्मन् गुणस्थित ॥ मूर्त्तामूर्तमहामूर्ते सूक्ष्ममूर्ते स्फु टास्फुट ॥ १० ॥ करालसौम्यरूपात्मन्विद्याऽविद्यामयाच्युत ॥ सदसद्रूपसद्भाव सदसद्भावभावन ॥ ११ ॥

त्वात् । भावेनिष्ठा उरगबन्धनैरिति वा पाठः ।चलत्युरगबन्धमिति च पाठः ॥४ ॥ ५ ॥ ६ ॥ दृष्ट्वेति ॥ प्रह्लादोस्मीति लोकदृष्टया केवलमौपाधिकरूपावच्छिन्नमात्मानं सस्मार न तु परमात्मरूपतया ॥ ७ ॥ ८ ॥ ओन्नम इति ॥ परमार्थाय अविनाशी परमार्थः । परमार्थार्थेति पाठे अर्थशब्दः प्रयोजनवाची । स्थूलेत्यादि सूक्ष्ममक्षर मव्यक्तं कारणरूपं स्थूलं क्षरं व्यक्तं कार्यरूपम् । पञ्चेन्द्रियाणि पञ्च विषयाः पञ्च भूतानि च कलातीतं मुक्तरूपं निरञ्जन इदं च मुक्तरूपम् । "निरञ्जनः परमं साम्यमुपैति" इति श्रुतेः ॥ ९ ॥ गुणाञ्जनेति ॥ गुणाञ्जन गुणाधारेति समष्टिरूपं ययेदं धार्यते जगदिति निर्गुणात्मन् "सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः" इति गुणस्थितसमस्तकल्याणगुणात्मकोसाविति मूर्ताऽमूर्तस्थूलसूक्ष्मप्रपंचरूपमहामूर्ते विश्वरूपाध्यायोक्तमहामूर्त्तिः वैश्वानरमूर्तिर्वा सूक्ष्ममूर्त्तिर्व्यूहः स्फुटो विभवः अस्फुटं पररूपम् ॥ १० ॥ करालेति ॥ करालत्वं संहारादिषु सौम्यात्मत्वं स्वतः अविद्याकर्म भ्रान्तिज्ञानं वा सदसद्रूपभावाभावरूपसद्भावसत्पदार्थः "ॐतत्सदिति

छिन्नाः । भावे क्तः ॥ ४ ॥ भ्रान्तग्राहेति ॥ भ्रान्तो ग्राहगणो यस्मिन् सोर्मिरूर्मिभिस्सह वर्त्तमानः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ॐ नम इति ॥ हे परमार्थज्ञानरूप हे अर्थदृश्यरूप "ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः । तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम्" इत्युक्तत्वात् ॥ स्थूलजाग्रद्दृश्यरूप सूक्ष्मस्वप्नदृश्यरूप क्षराक्षर कार्यकारणरूप अक्षरात्परेति पाठान्तरे अक्षरं प्रधानं तस्मादपि परं यदानाधारं ब्रह्म तद्रूप "अक्षरात्परतः परः" इति श्रुतेः । व्यक्ताव्यक्त दृश्यादृश्यरूप कलातीत निरवयव सकल सावयव ईश नियामक निरञ्जन निर्लेप ॥ ९ ॥ गुणाञ्जनेति ॥ गुणाननक्ति स्वसत्ताप्रकाशाभ्यामनुरञ्जयतीति तथा गुणानामाधार गुणेषु स्थित परस्थि तेति पाठे परमव्यक्तं तत्र स्थितेत्यर्थः । भक्तानां स्फुट अन्येषामस्फुट ॥ १० ॥ करालेति ॥ करालसौम्यरूपाणामात्मन् सदसद्रूपयोः कार्यकारणयोः सद्भाव उत्पत्तिर्यस्मात्तावेव सदसद्भावौ भावयति पालयतीति

नित्यानित्यप्रपञ्चात्मन्निष्प्रपञ्चामलाश्रित ॥ एकानेक नमस्तुभ्यं वासुदेवादिकारण ॥ १२ ॥ यः स्थूलसूक्ष्मः प्रकटोऽप्रकाशो यः सर्वभूतो न च सर्वभूतः ॥ विश्वं यतश्चैतदविश्वहेतो नमोस्तु तस्मै पुरुषोत्तमाय ॥ १३ ॥ पराशर उवाच ॥ तस्य तच्चेतसो देवः स्तुतिमित्थं प्रकुर्वतः ॥ आविर्बभूव भगवान् पीताम्बरधरो हरिः ॥ १४ ॥ ससम्भ्रमस्तमालोक्य समुत्थायाकुलाक्षरम् ॥ नमोस्तु विष्णवेत्येतद्व्याजहारासकृद्द्विज ॥ १५ ॥ प्रह्लाद उवाच ॥ देव प्रपन्नार्त्तिहर प्रसादं कुरु केशव ॥ अवलोकनदानेन भूयो मां पावयाच्युत ॥ १६ ॥ श्रीभगवानुवाच ॥ कुर्वतस्ते प्रसन्नोऽहं भक्तिमव्यभिचारिणीम् ॥ यथाभिलषितो मत्तः प्रह्लाद व्रियतां वरः ॥ १७ ॥ प्रह्लाद उवाच ॥ नाथ योनिसहस्रेषु येषु येषु व्रजाम्यहम् ॥ तेषु तेष्वच्युताभक्तिरच्युतास्तु सदा त्वयि ॥ १८ ॥ या प्रीतिरविवेकानां विषयेष्वनपायिनी ॥ त्वामनुस्मरतः सा मे हृदयान्मापसर्पतु ॥ १९ ॥ श्रीभगवानुवाच ॥ मयि भक्तिस्तवास्त्येव भूयोप्येवं भविष्यति ॥ वरस्तु मत्तः प्रह्लाद व्रियतां यस्तवेप्सितः ॥ २० ॥ प्रह्लाद उवाच ॥ मयि द्वेषानुबन्धोभूत्संस्तुतावुद्यते तव ॥ मत्पितुस्तत्कृतं पापं देव तस्य प्रणश्यतु ॥ २१ ॥ शस्त्राणि पातितान्यंगे क्षिप्तो यच्चाग्निसंहतौ ॥ दंशितश्चोरगैर्दत्तं यद्विषं मम भोजने ॥ २२ ॥ बद्ध्वा समुद्रे यत्क्षिप्तो यच्चितोऽस्मि शिलोच्चयैः ॥ अन्यानि चाप्यसाधूनि यानि पित्रा कृतानि मे ॥ २३ ॥

निर्देशो ब्रह्मणस्त्रिविधः स्मृतः । सद्भावे साधुभावे च सत्'' इति वस्तूनां सदसद्भावौ करोति जानातीति वा सदसद्भावभावन ॥११॥ नित्यानित्येति ॥ अनित्यं घटादि तदपेक्षया नित्यं गगनादि निष्प्रपञ्च प्रपञ्चान्निर्गत प्रपञ्चोत्तीर्णेत्यर्थः । एकानेक कारणरूपेणैक कार्यैरूपैरनेक ॥ १२ ॥ उपसंहरति य इति ॥ स्थूलत्वात्प्रकटः सूक्ष्मत्वादप्रकाशः । यः स्थूलसूक्ष्मप्रकटाप्रकाश इति च पाठः । सर्वभूतः स्वेतरसर्ववस्तुशरीरः न च सर्वभूतः स्वेतरसमस्तवस्तुविलक्षणः अविश्वहेतुः सृज्यकर्मसापेक्षत्वात् स्वतोविषमसृष्टेरहेतुः ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० मयीति ॥ मयि द्वेषानुबन्ध इत्यसह्योपचारः मत्पितुरिति क्षमाहेतुः ॥ २१ ॥ शस्त्राणीति ॥ त्वयि भक्तिमतो द्वेषादित्यस्य शस्त्राणि पातितानीत्यादिना सम्बन्धः तत्संभवं शस्त्रपातादिना संभवम् अयं भागवतापचारः ॥२२॥२३॥

तथा ॥ ११ ॥ नित्येति ॥ अमलैर्ज्ञानिभिराश्रितः तस्य संबुद्धिः परमार्थेत्यादिष्वादिकारणेत्यन्तेषु षट्त्रिंशत्सम्बोधनेषु तुभ्यं नम इत्यनुषङ्गेन प्रत्येकं प्रत्येकं वाक्यसमाप्तिः कर्त्तव्या ॥ १२ ॥ य इति ॥ सर्वेषां भूतानां यः प्रकटप्रकाशश्चिद्रूपत्वात् अविश्वहेतो सर्वकारणव्यतिरिक्त ॥ १३ ॥ १४ ॥ ससम्भ्रम इति ॥ विष्णवेति सन्धिरार्षः ॥ १५ ॥ देवेति ॥ अवलोकनं प्रत्यक्षदर्शनं तस्य दानेन ॥ १६ ॥ १७ ॥ नाथेति ॥ हे अच्युत ! त्वयि मे अच्युता एकान्तिका भक्तिरस्तु ॥ १८ ॥ एकान्तभक्तिः परमप्रीत्यधीनेति तां प्रीतिं प्रार्थयते । येति ॥ या यादृशी प्रीतिर्विषयेषु तदासक्तानां सा तादृशी प्रीतिर्मे हृदयान्मापसर्पतु मापयातु हृदये सदा तिष्ठत्वित्यर्थः । यद्वा हे माप लक्ष्मीपते सा विषयप्रीतिस्त्वामनुस्मरतो मे हृदयात् सर्पतु निर्गच्छतु । तत्प्रीतौ सत्यां त्वदनुस्मरणायोगादित्यर्थः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ बद्ध्वेति ॥ शिलो

त्वयि भक्तिमतो द्वेषादघं तत्संभवं च यत् ॥ त्वत्प्रसादात्प्रभो सद्यस्तेन मुच्यतु मे पिता ॥ २४ ॥ श्रीभगवानुवाच ॥ प्रह्लाद सर्वमेतत्ते मत्प्रसादाद्भविष्यति ॥ अन्यच्च ते वरं दद्मि व्रीयतामसुरात्मज ॥ २५ ॥ प्रह्लाद उवाच ॥ कृतकृत्योस्मि भगवन्वरेणानेन यत्त्वयि ॥ भवित्री त्वत्प्रसादेन भक्तिरव्यभिचारिणी ॥ २६ ॥ धर्मार्थकामैः किं तस्य मुक्तिस्तस्य करे स्थिता ॥ समस्तजगतां मूले यस्य भक्तिः स्थिरा त्वयि ॥ २७ ॥ श्रीभगवानुवाच ॥ यथा ते निश्चलं चेतो मयि भक्तिसमन्वितम् ॥ तथा त्वं मत्प्रसादेन निर्वाणम्परमाप्स्यसि ॥ २८ ॥ श्रीपराशर उवाच ॥ इत्युक्त्वान्तर्दधे विष्णुस्तस्य मैत्रेय पश्यतः ॥ स चापि पुनरागम्य ववन्दे चरणौ पितुः ॥ २९ ॥ तं पिता मूर्ध्न्युपाघ्राय परिष्वज्य च पीडितम् ॥ जीवसीत्याह वत्सेति बाष्पार्द्रनयनो द्विज ॥ ३० ॥ प्रीतिमांश्चाऽभवत्तस्मिन्ननुतापी महासुरः ॥ गुरुपित्रोश्चकारैवं शुश्रूषां सोपि धर्मवित् ॥ ३१ ॥ पितर्युपरतिं नीते नरसिंहस्वरूपिणा ॥ विष्णुना सोपि दैत्यानां मैत्रेयाभूत्पतिस्ततः ॥ ३२ ॥ ततो राज्यद्युतिं प्राप्य कर्मशुद्धिकरीं द्विज ॥ पुत्रपौत्रांश्च सुबहूनवाप्यैश्वर्यमेव च ॥ ३३ ॥ क्षीणाधिकारः स यदा पुण्यपापविवर्जितः ॥ तदा स भगवद्ध्यानात्परं निर्वाणमाप्तवान् ॥ ३४ ॥ एवं प्रभावो दैत्योसौ मैत्रेयासीन्महामतिः ॥ प्रह्लादो भगवद्भक्तो यं त्वं मामनुपृच्छसि ॥ ३५ ॥ यस्त्वेतच्चरितं तस्य प्रह्लादस्य महात्मनः ॥ शृणोति तस्य पापानि सद्यो गच्छन्ति संक्षयम् ॥ ३६ ॥ अहोरात्रकृतं पापं प्रह्लादचरितं नरः ॥ शृण्वन् पठंश्च मैत्रेय व्यपोहति न संशयः ॥ ३७ ॥

॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥

च्चयैः पर्वतैश्चितोस्म्याक्रान्तोस्मि अन्यानिति । तेन पापेन मे पिता मुच्येत ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ प्रीतिमानिति ॥ वैष्णवानुभावदर्शनात्प्रीतिमांश्च तदा तस्मिन्नभवत् ॥ ३१ ॥ पितरीति ॥ पुनश्च कालांतरे ब्रह्मशापवशादतिक्रोधेन तं हंतुमुद्यते तत्पितरि नृसिंहरूपेण विष्णुना उपरतिं नीते सति प्रह्लादो दैत्यानां पतिरभूत् ॥ ३२ ॥ तत इति ॥ राज्यभूतिं राज्यलक्ष्मीं कर्मशुद्धिकरीं भोगैः प्रारब्धक्षयकरीं प्राप्य ॥३३॥ क्षीणाधिकार इति ॥ क्षीणाधिकारः क्षीणप्रारब्धकर्मा ज्ञानात्पूर्वोत्तरैः पुण्यपापैश्च वर्जितः "पूर्वसर्वकर्मणां विनाशादश्लेषाच्चोत्तरेषां तत्सुकृतदुष्कृते विधूनतः" इत्यादिश्रुतेः । "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्" इति न्यायाच्च ॥ ३४ ॥ ३५ ॥ ३६ ॥ अहोरात्रकृतमिति ॥ अहोरात्रं निरंतरं यत्कृतं पापं तत्सकृच्छृण्वन्नेव वदन्नेव वा विशेषेण सवासनमपोहति निरस्यति न तु

पौर्णमास्याममावास्यामष्टम्यामथ वा पठन् ॥ द्वादश्यां वा तदाप्नोति गोप्रदानफलं द्विज ॥३८॥ प्रह्लादं सकलापत्सु यथा रक्षितवान्हरिः ॥ तथा रक्षति यस्तस्य शृणोति चरितं सदा ॥३९॥ इति श्रीविष्णुपुराणे प्रथमेंशे विंशोध्यायः ॥ २० ॥ प्रह्लादपुत्र आयुष्माञ्छिबिर्बाष्कल एव च ॥ विरोचनस्तु प्राह्लादिर्बलिर्जज्ञे विरोचनात् ॥ १ ॥ बलेः पुत्रशतं त्वासीद्बाणज्येष्ठं महामुने ॥ हिरण्याक्षसुताश्चासन्सर्व एव महाबलाः ॥ २ ॥ झर्झरः शकुनिश्चैव भूतसन्तापनस्तथा ॥ महानाभो महाबाहुः कालनाभस्तथापरः ॥३॥ अभवन्दनुपुत्राश्च द्विमूर्द्धा शंबरस्तथा ॥ अयोमुखः शंकुशिराः कपिलः शंकरस्तथा ॥ ४ ॥ एकचक्रो महाबाहुस्तारकश्च महाबलः ॥ स्वर्भानुर्वृषपर्वा च पुलोम च महाबलः ॥ ५ ॥ एते दनोः सुताः ख्याता विप्रचित्तिश्च वीर्यवान् ॥ ६ ॥ स्वर्भानोस्तु प्रभा कन्या शर्मिष्ठा वार्षपर्वणी ॥ उपदानी हयशिराः प्रख्याता वरकन्यकाः ॥ ७ ॥

॥ ३८ ॥ ३९ ॥ इति श्रीविष्णुपुराणव्याख्याने विष्णुचित्तीये प्रथमांशे विंशोऽध्यायः ॥ २० ॥ छ ॥ १ ॥ २ ॥ ३ ॥ शिष्टानां काश्यपपत्नीणां वंशानाह—अभवन्निति ॥ ४ ॥ ५ ॥ ६ ॥ स्वर्भानोरिति ॥ श्रीहरिवंशे दनुपुत्रशते उपदानववैश्वानरावुक्तौ । हयशिरा इति उपदानव्या उपदानवदुहितुर्नाम । हस्तिशिरा इति च पाठः । उपदानवीत्यत्र वृद्ध्यभावश्छान्दसः ॥ ७ ॥

संपूर्णं श्रुत्वा चेत्येकदेशश्रवणफलोक्तिः ॥ ३७ ॥ पौर्णमास्यामिति ॥ अमावास्याम् अमावास्यायामित्यर्थः । गोः प्रदानं प्रकर्षेण दानं कुरुक्षेत्रे सूर्यग्रहणे उभयतो मुख्यां सुवर्णशृंगादिसंपूर्णदक्षिणादिसत्पात्रादिसकलांगकलापेन यत्फलं तत्फलं एतच्चरितं पठन्प्राप्नोतीत्यर्थः ॥ ३८ ॥ सदाश्रवणस्य फलमाह ॥ प्रह्लादमिति ॥ "करुणं चरणानम्रे दारुणं पितरि द्रुहि । प्रह्लादवरदं वंदे नृसिंहं घृणिभीषणम्" ॥ ३९ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुपुराणव्याख्यायां प्रथमांशे विंशोऽध्यायः ॥ २० ॥ ॥ प्रह्लादपुत्र इति ॥ प्राह्लादिः प्रह्लादपुत्रः ॥ १ ॥ बलेरिति ॥ बाणो ज्येष्ठो यस्मिन्तत् ॥ २ ॥ एवं तावद्दितेरदितेश्च वंशा उक्ताः इदानीं क्रमप्राप्तानाम् अन्यासां काश्यपभार्याणां वंशान्वक्ष्यन्दनोर्वंशमाह—अभवन्निति सार्धैर्नवभिः ॥ ३ ॥ ४ ॥ ९ ॥ एत इति ॥ एते प्रख्याता इति विशेषणेन हरिवंशमात्स्यादिषु दनोः सुतशते गणिते वैश्वानरादयश्च सूचिताः ॥ ६ ॥ स्वर्भानोरिति ॥ शर्मिष्ठा वृषपर्वणः कन्या उपदानवी च हयशिराश्च तस्यैव कन्ये इति केचित् । अन्यदीये इति अन्ये । "वैश्वानरसुतायास्तु चतस्रश्चारुदर्शनाः । उपदानवी हयशिराः

वैश्वानरसुते चोभे पुलोमा कालका तथा ॥ उभे सुते महाभागे मारीचेस्तु परिग्रहः॥८॥ताभ्यां पुत्रसहस्राणि षष्टिर्दानवसत्तमाः॥पौलोमाः कालकेयाश्च मारीचतनयाः स्मृताः॥९॥ततोऽपरेमहावीर्या दारुणा स्त्वतिनिर्घृणाः॥सिंहिकायामथोत्पन्ना विप्रचित्तेः सुतास्तथा॥१०॥त्र्यंशः शल्यश्च बलवान् नभश्चैव महाबलः॥वातापी नमुचिश्चैव इल्वलः खसृमस्तथा ॥११॥ आन्धको नरकश्चैव कालनाभस्तथैव च ॥ स्वर्भानुश्च महावीर्यो वक्रयोधी महासुरः॥१२॥एते वै दानवाः श्रेष्ठा दनुवंशविवर्द्धनाः ॥ एतेषां पुत्रपौत्राश्च शतशोऽथ सहस्रशः॥१३॥प्रह्लादस्य तु दैत्यस्य निवातकवचाः कुले ॥ समुत्पन्नाः सुमहता तपसा भावितात्मनः ॥१४॥ षट् सुताः सुमहासत्त्वास्ताम्रायाः परिकीर्त्तिताः ॥ शुकी श्येनी च भासी च सुग्रीवी शुचिगृद्धिका ॥ १५ ॥ शुकी शुकानजनयदुलूकप्रत्युलूकिकान् ॥ श्येनी श्येनांस्तथा भासी भासान्गृद्धांश्च गृद्ध्यपि ॥ १६ ॥ शुच्यौदकान्पक्षिगणान्सुग्रीवी तु व्यजायत ॥ अश्वानुष्ट्रान्गर्दभांश्च ताम्रावंशः प्रकीर्त्तितः ॥ १७ ॥ विनतायास्तु द्वौ पुत्रौ विरतौ गरुडारुणौ ॥ सुपर्णः पततां श्रेष्ठो दारुणः पन्नगाशनः ॥ १८ ॥ सुरसायां सहस्रं तु सर्पाणाममितौजसाम् ॥ अनेकशिरसां ब्रह्मन् खेचराणां महात्मनाम् ॥१९॥काद्रवेयास्तु बलिनः सहस्रममितौजसः ॥ सुपर्णवशगा ब्रह्मन् जज्ञिरे नैकमस्तकाः॥२०॥ तेषां प्रधानभूतास्तु शेषवासुकितक्षकाः ॥ शंखश्वेतो महापद्मः कम्बलाश्वतरौ तथा ॥ २१ ॥ एलापुत्रस्तथा नागः कर्कोटकधनञ्जयौ ॥ एते चान्ये च बहवो दन्दशूका विषोल्बणाः ॥ २२ ॥ गणं क्रोधवशं विद्धि तस्याः सर्वे च दंष्ट्रिणः ॥ स्थलजाः पक्षिणोब्जाश्च दारुणाः पिशिताशनाः ॥ २३ ॥

वैश्वानर इति ॥ मरीचिः काश्यपो दानवविशेषो वा ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ शुकीति ॥ उलूकः कौशिकः प्रत्युलूकः काकः भासीभासाश्च ॥१६॥१७॥१८॥१९॥२०॥२१॥ एलापुत्र इति ॥ एते काद्रवेयाः सौरसेयाश्च अन्ये बहवः दन्दशूकाः विषोल्बणाः ॥ २२ ॥ गणमिति ॥

पुलोमा कालका तथा ॥" इति भागवताद्युक्तेः ॥ ७ ॥ ८ ॥ ९ ॥ तत इति ॥ सिंहिकायां हिरण्यकशिपोर्भगिन्यां विप्रचित्तेः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ दनुसुतान् ॥ सिंहाऽवलोकनेन पुनराह प्रह्लादस्येति ॥ भावितात्मनः प्रह्लादस्येत्यन्वयः ॥ १४ ॥ ताम्राया वंशमाह षडित्यादित्रिभिः षडिति ॥ सुताः कन्याः ता एवाह–शुकीति । सुग्रीवी च शुचिश्च गृद्धिका च ताः ॥ १५ ॥ शुकीति ॥ उलूकप्रत्युलूककान् उलूकान्प्रत्युलूकान् तत्प्रतिपक्षान् काकांश्च । उलूकीति वा पाठः । उलूकान् प्रत्युलूकांश्च सैवाजनयदित्यर्थः । न पुनरुलूकी संज्ञाऽन्या तस्या अनिर्दिष्टत्वात् "शुकी शुकानजनयदुलूकी प्रत्युलूककान्" इति मात्स्योक्तेः ॥ १६ ॥ शुचीति ॥ शुच्यौदकान् शुचिरेव शुची सा औदकान्पक्षिगणानजायत । सुग्रीवी त्वश्वादीनजायत इत्यर्थः । ताम्राया वंशः प्रकीर्तित इत्युपसंहारः ॥ १७ ॥ विनताया इति ॥ गरुडं विशिनष्टि सुपर्ण इति । पततां पक्षिणां श्रेष्ठः ॥१८॥ सुरसायामिति ॥ सुरसायां सहस्रं जज्ञे इति शेषः ॥१९ ॥ कद्र्वा वंशमाह–काद्रवेया इत्यादित्रिभिः काद्रवेया इति ॥ नैकमस्तकाः अनेकफणाः ॥२०॥२१॥२२॥ क्रोधवशाया

क्रोधात्तु पिशाचांश्च जनयामास महाबलान् ॥ गास्तु वै जनयामास सुरभीर्महिषीस्तथा ॥ इरावृक्षलतावल्लीस्तृणजातीश्च सर्वशः ॥ २४ ॥ स्वसा तु यक्षरक्षांसि मुनिरप्सरसस्तथा ॥ अरिष्टा तु महासत्त्वान् गन्धर्वान्समजीजनत् ॥ ॥ २५ ॥ एते कश्यपदायादाः कीर्त्तिताः स्थाणुजङ्गमाः ॥ तेषां पुत्राश्च पौत्राश्च शतशोथ सहस्रशः ॥ २६ ॥ एष मन्वन्तरे सर्गो ब्रह्मन्स्वारोचिषे स्मृतः ॥ २७ ॥ वैवस्वते च महति वारुणे वितते क्रतौ ॥ जुह्वानस्य ब्रह्मणो वै प्रजासर्ग इहोच्यते ॥२८॥ पूर्वं यत्र तु सप्तर्षीनुत्पन्नान्सप्तमान सान् ॥ पुत्रत्वे कल्पयामास स्वयमेव पितामहः ॥ गन्धर्वभोगिदेवानां दानवानां च सत्तम ॥ २९ ॥ दितिर्विनष्टपुत्रा वै तोषयामास काश्यपम् ॥ तया चाराधितः सम्यक्काश्यपस्तपतां वरः ॥ ३० ॥ वरेण च्छन्दयामास सा च वव्रे ततो वरम् ॥ पुत्रमिन्द्रवधार्थाय समर्थम मितौजसम् ॥ ३१ ॥ स च तस्मै वरं प्रादाद्भार्यायै मुनिसत्तमः ॥ दत्त्वा च वरमत्युग्रं कश्यपस्तामुवाच ह ॥ ३२ ॥ शक्रं पुत्रो निहन्ता ते यदि गर्भं शरच्छतम् ॥ समाहितातिप्रयता शौचिनी धारयिष्यसि ॥ ३३ ॥

ते च सर्वे सर्पा दंष्ट्रिणः तत्र काद्रवेयसौरसेयेभ्योऽन्यान् सर्पान्मांसादान् स्थलजान् पक्षिणश्च जलजान् दारुणांश्च क्रोधवशं गणं क्रोधवशाया वंशं विद्धि। क्रोधवशो गणस्त्रिधा "बलो गणात्क्रोधवशादहीन्द्रः" इति भागवतोक्तेः। "रक्षोगणं क्रोधवशी स्वनामानमजीजनत्" इति मात्स्योक्तेश्च ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ अथ वैवस्वतमन्वन्तरे प्रजासर्ग उच्यत इत्याह—वैवस्वत इति ॥ २८ ॥ पूर्वमित्यादि ॥ गन्धर्वादीनां पूर्वमुत्पन्नान् प्राङ्मन्वन्तरस्थान्सप्तर्षीनेव वर्त्तमानवारुणयज्ञाविच्छेदाय यत्र मन्वन्तरे प्रजासर्गार्थं पुत्रत्वे कल्पयामास तत्र प्रजासर्ग उच्यत इति पूर्वेणान्वयः। पितृत्वे कल्पयामस इति पाठे गन्धर्वादीनां पितृत्वे स्रष्टृत्व इत्यर्थः ॥ ॥ २९ ॥ ३० ॥ वरेणेत्यादि॥ वरं ददामीत्याश्वासितवान् ॥ ३१ ॥ ३२ ॥ शक्रमिति ॥ शौचिनी मात्स्योक्तशौचवती तत्र ह्युक्तम् "संध्यायां नैव भोक्तव्यं गर्भिण्या वरवर्णिनि। न स्थातव्यं न गन्तव्यं वृक्षमूलेषु सर्वदा ॥ वर्जयेत्कलहं लोके गात्रभङ्गं तथैव च ॥ नोन्मुक्तकेशी तिष्ठेच्चनाशुचिः स्यात्कदाचन" इति ॥ शुचिनी धार

वंशमाह—गणमिति ॥ क्रोधवशं गणं क्रोधवशाया जातं विद्धीत्यर्थः । तदनुजान्विशिनष्टि ते सर्वे च दंष्ट्रिणो राक्षसाः सर्पाश्च "रक्षोगणं क्रोधवशा स्वनामानमजीजनत्। दंष्ट्रिणं नियुतं तेषां भीमसेनात्क्षयं गतम्" इति मात्स्योक्तेः "बलो गणः क्रोधवशादहीन्द्रः" इति भागवतोक्तेश्च । स्थलजाश्च अब्जाश्च जलजाः मांसाशिनो दारुणाः पक्षिगणाः तस्यां जाता इति विद्धीत्यन्वयः । सुरभेरिरायाः खशायाश्च मुनेश्चारिष्टायाश्च पञ्चानां वंशानाह—गास्त्वित्यादिद्वाभ्याम् ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ वैवस्वत इति ॥ वैवस्वते त्विह मन्वन्तरे वारुणे वरुणकर्तृके महति वितते क्रतौ जुह्वानस्य होतृत्वेन वर्तमानस्य ब्रह्मणः प्रजासर्गः अन्यथोच्यते ॥ २८ ॥ तमेवाह—पूर्वमिति ॥ यत्र वैवस्वते मन्वन्तरे पूर्वमन्वन्तरोत्पन्नानेव सप्त ऋषीन्गन्धर्वादीनां पितामहो ब्रह्मा पुत्रत्वे प्रजासर्गाधिकारे कल्पयामास न त्वन्यान्ससर्ज स्वयं तद्यज्ञे व्यापृतत्वात् । पितृत्वे कल्पयामासेति पाठे गन्धर्वादीनां पितृत्वे तत्सृष्टौ न्ययुंक्तेत्यर्थः ॥ २९ ॥ अतः काश्यपादिभ्यो देवदानवादयः पूर्वं जाताः वैवस्वतमन्वन्तरे सप्तर्षिभ्यो जाता इत्युक्तं भवति । एकोनपंचाशन्मरुतो देवा अपि दितेः पुत्रा बभूवुरिति कथापूर्वकमाह—दितिरित्यादि यावत्समाप्ति ॥ ३० ॥ वरेणेति ॥ छन्दयामास प्रलोभितवान् ॥ ३१ ॥ ३२ शक्रमिति ॥ समाहिता श्रीविष्णुध्यानपरा शुचिनी शौचवती सती शरच्छतं यदि गर्भं

इत्येवमुक्त्वा तां देवीं संगतः कश्यपो मुनिः ॥ दधार सा च तं गर्भं सम्यक्छौचसमन्विता ॥३४॥ गर्भमात्मवधार्थाय ज्ञात्वा तं मघवानपि ॥ शुश्रूषुस्तामथागच्छद्विनयादमराधिपः ॥ ३५ ॥ तस्याश्चैवान्तरप्रेप्सुरतिष्ठत्पाकशासनः ॥ ऊने वर्षशते चास्या ददर्शान्तरमात्मना ॥ ३६ ॥ अकृत्वा पादयोः शौचं दितिः शयनमाविशत् ॥ निद्रां चाहारयामास तस्याः कुक्षिं प्रविश्य सः ॥ ३७ ॥ वज्रपाणिर्महागर्भं चिच्छेदाथ स सप्तधा ॥ सम्पीड्यमानो वज्रेण स रुरोदातिदारुणम् ॥३८॥ मा रोदीरिति तं शक्रः पुनःपुनरभाषत ॥ सोऽभवत्सप्तधा गर्भस्तमिंद्रः कुपितः पुनः ॥ ३९ ॥ एकैकं सप्तधा चक्रे वज्रेणारिविदारिणा ॥ मरुतो नाम देवास्ते बभूवुरतिवेगिनः ॥ ४० ॥ यदुक्तं वै भगवता तेनैव मरुतोऽभवन् ॥ देवा एकोनपञ्चाशत्सहाया वज्रपाणिनः ॥ ४१ ॥ इति श्रीविष्णुपुराणे प्रथमेंश एकविंशोध्यायः ॥ २१ ॥ श्रीपराशर उवाच ॥ यदाभिषिक्तः स पृथुः पूर्वं राज्ये महर्षिभिः ॥ ततः क्रमेण राज्यानि ददौ लोकपितामहः ॥ १ ॥ नक्षत्रग्रहविप्राणां वीरुधां चाप्यशेषतः ॥ सोमं राज्ये दधद्ब्रह्मा यज्ञानां तपसामपि ॥ २ ॥ राज्ञां वैश्रवणं राज्ये जलानां वरुणं तथा ॥ आदित्यानां पतिं विष्णुं वसूनामथ पावकम् ॥ ॥ ३ ॥ प्रजापतीनां दक्षं तु वासवं मरुतामपि ॥ दैत्यानां दानवानां च प्रह्लादमधिपं ददौ ॥ ४ ॥

मघवता-इति पाठो भाति।

यिष्यसि इति च पाठः ॥ ३३ ॥ ३४ ॥ ३५ ॥ तस्याश्चेति ॥ ऊने आसमाप्तकाले ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ इति श्रीविष्णुपुराणव्याख्याने विष्णुचित्तीये प्रथमेंश एकविंशोऽध्यायः ॥ २१ ॥ ॥ अथ पितामहः पृथोरभिषेकोत्तरं पूर्वसृष्टानामाधिपत्यविभागं तत्तन्मर्यादास्थापनार्थमकरोदित्याह—यदेति ॥ ततः कालादारभ्य ॥ १ ॥ नक्षत्रेति ॥ राज्ये आधिपत्ये ॥ २ ॥ राज्ञामिति ॥ विष्णुम् इन्द्रानुजम् ॥ ३ ॥ ४ ॥

धारयिष्यसि तर्हि तव पुत्रः शक्रं निहनिष्यति । शौचादिनियमवैकल्ये तु विष्णुध्यानशुद्धचित्ताया देवबन्धुरमरः पुत्रो भविष्यतीति गूढाभिप्रायः । शौचादिनियमाश्च मात्स्ये प्रोक्ताः "सन्ध्यायां नैव भोक्तव्यं गर्भिण्या वरवर्णिनि ॥ न स्थातव्यं न गन्तव्यं वृक्षमूलेषु सर्वदा ॥ वर्जयेत्कलहं लोके गात्रभङ्गं तथैव च ॥ नोन्मुक्तकेशी तिष्ठेच्च नाशुचिः स्यात्कदाचन" इत्याद्याः । श्रीमद्भागवते च "न हिंस्यात्सर्वभूतानि न शपेन्नानृतं वदेत्" इत्याद्याः ॥ ३३ ॥ ३४ ॥ ३५ ॥ तस्याश्चेति ॥ अन्तरं प्रेप्सुरशौचादिकालं दिदृक्षुः ॥ ३६ ॥ अन्तरमेवाह—अकृत्वेति ॥ आहारयामास नीतवती ॥ ३७ ॥ स इति ॥ पाट्यमानः भिद्यमानः ॥ ३८ ॥ ॥ ३९ ॥ मरुत इति ॥ यदुक्तं मारोदीरिति तेन मरुतोऽभवन्नित्यक्षरसाम्यान्निरुक्तिः । वज्रोपलक्षितः पाणिः वज्रपाणिः सोऽस्यास्तीति वज्रपाणी तस्य व्रीह्यादिभ्यश्चेति इनिप्रत्ययः ॥ ४० ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुपुराणव्याख्यायां प्रथमांश एकविंशोध्यायः ॥ २१ ॥ ॥ एवं तावद्देवादीनां सृष्टिरुक्ता इदानीं तत्तदधिपतिकथनमुखेन विष्णोर्विभूतिं वक्तुमाह—यदेत्यादिना यावत्समाप्ति ॥ १ ॥ नक्षत्रेति ॥ नक्षत्रादीनां तपोन्तानां राज्ये सोमं ददौ । नक्षत्रादीनां तपोन्तानां राज्ये सोमं पतिमतनोदित्यर्थः ॥ २ ॥ राज्ञामिति ॥ राज्ञां राज्ये वैश्रवणं कुबेरं न्यधादित्यनुषङ्गः ॥ ३ ॥ प्रजापतीनामिति ॥ मरुतामदितिपुत्राणां

पितॄणां धर्मराजानं यमं राज्येऽभ्यषेचयत् ॥ ऐरावतं गजेंद्राणामशेषाणां पतिं ददौ ॥ ५ ॥ पतत्रिणां तु गरुडं देवानामपि वासवम् ॥ उच्चैःश्रवसमश्वानां वृषभं तु गवामपि ॥ ६ ॥ मृगाणां चैव सर्वेषां राज्ये सिंहं ददौ प्रभुः ॥ शेषं तु दन्दशूकानामकरोत्पतिमव्ययः ॥ ७ ॥ हिमालयं स्थावरणां मुनीनां कपिलं मुनिम् ॥ नखिनां दंष्ट्रिणां चैव मृगाणां व्याघ्रमीश्वरम् ॥ ८ ॥ वनस्पतीनां राजानं प्लक्षमेवाभ्यषेचयत् ॥ एवमेवान्यजातीनां प्राधान्येनाकरोत्प्रभून् ॥९॥ एवं विभज्य राज्यानि दिशां पालाननन्तरम् ॥ प्रजापतिपतिर्ब्रह्मा स्थापयामास सर्वतः ॥ ॥ १० ॥ पूर्वस्यां दिशि राजानं वैराजस्य प्रजापतेः ॥ दिशापालं सुधन्वानं सुतं वै सोऽभ्यषेचयत् ॥ ११ ॥ दक्षिणस्यां दिशि तथा कर्दमस्य प्रजापतेः ॥ पुत्रं शंखपदं नाम राजानं सोऽभ्यषेचयत् ॥ १२ ॥ पश्चिमस्यां दिशि तथा रजसः पुत्रमच्युतम् ॥ केतुमन्तं महात्मानं राजानं सोऽभ्यषेचयत् ॥ १३ ॥ तथा हिरण्यरोमाणं पर्जन्यस्य प्रजापतेः ॥ उदीच्यां दिशि दुर्द्धर्षं राजानमभ्यषेचयत् ॥ १४ ॥ तैरियं पृथिवी सर्वा सप्तद्वीपा सपत्तना ॥ यथाप्रदेशमद्यापि धर्मतः परिपाल्यते ॥१५॥ एते सर्वे प्रवृत्तस्य स्थितौ विष्णोर्महात्मनः ॥ विभूतिभूता राजानो ये चान्ये मुनिसत्तम ॥ १६ ॥ ये भविष्यन्ति ये भूताः सर्वे भूतेश्वरा द्विज ॥ ते सर्वे सर्वभूतस्य विष्णोरंशा द्विजोत्तम ॥ १७ ॥ ये तु देवाधिपतयो ये च दैत्याधिपास्तथा ॥ दानवानां च ये नाथा ये नाथाः पिशिताशिनाम् ॥१८ ॥ पशूनां ये च पतयः पतयो ये च पक्षिणाम् ॥ मनुष्याणां च सर्पाणां नागानामधिपाश्च ये ॥ १९ ॥ वृक्षाणां पर्वतानां च ग्रहाणां चापि येऽधिपाः ॥ अतीता वर्त्तमानाश्च ये भविष्यन्ति चापरे ॥ ते सर्वे सर्वभूतस्य विष्णोरंशसमुद्भवाः ॥ २० ॥ न हि पालनसामर्थ्यमृते सर्वेश्वरं हरिम् ॥ स्थितं स्थितौ महाप्राज्ञ भवत्यन्यस्य कस्यचित् ॥ २१ ॥ सृजत्येष जगत्सृष्टौ स्थितौ पाति सनातनः ॥ हन्ति चैवान्तकत्वेन रजःसत्त्वादिसंश्रयः ॥ २२ ॥ चतुर्विभागः संसृष्टौ चतुर्धा संस्थितः स्थितौ ॥ प्रलयं च करोत्यन्ते चतुर्भेदो जनार्दनः ॥ २३ ॥

॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ एत इति ॥ ये चान्ये काश्यपाद्याः ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ ॥ २० ॥ नहीति ॥ पालनसामर्थ्ये सर्वेश्वरत्वं हेतुः ॥ २१ ॥ पालनवत्सृष्टिसंहारयोरपि तस्यैव सामर्थ्यमित्याह—सृजतीति ॥ २२ ॥ २३ ॥

वासवं त्वधिपतिं ददौ ॥ ४ ॥ ५ ॥ ६ ॥ मृगाणामिति॥ मृगाणां सिंहमीश्वरं पतिं शेषं तु नागराजानं मृगाणां सिंहमीश्वरमिति च पाठः ॥७॥८॥९॥१०॥ एवमिति ॥ दिशापालान् दिक्पालान् ॥ ११ ॥ १२ ॥ पश्चिमायामिति ॥ अच्युतमिति केतुमतो विशेषणम् ॥ १३ ॥ तथेति ॥ पर्जन्यस्य प्रजापतेः पुत्रमित्यनुषङ्गः ॥ १४ ॥ १५ ॥ उक्तानामनुक्तानां च तत्तत्पतीनां भगवद्विभूतित्वमाह—एत इत्यादिसार्धैः पञ्चभिः ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ नहीति ॥ नहीत्येष एव मुख्य इत्यर्थः ॥ २१ ॥ सृष्ट्यादिकर्ता स एवेत्याह—सृजत्येष इति ॥ २२ ॥ तदेव सृष्ट्यादिकर्तृत्वं चतुर्धा विभजति चतुर्विभाग इत्याद

एकेनांशेन ब्रह्मासौ भवत्यव्यक्तमूर्त्तिमान् ॥ मरीचिमिश्राः पतयः प्रजानां चान्यभागशः ॥२४॥ कालस्तृतीयस्तस्यांशः सर्वभूतानि चापरः॥ इत्थं चतुर्द्धा संसृष्टौ वर्त्ततेसौ रजोगुणः ॥ २५ ॥ एकांशेनास्थितो विष्णुः करोति प्रतिपालनम् ॥ मन्वादिरूपश्चान्येन कालरूपोऽपरेण च॥ ॥ २६ ॥ सर्वभूतेषु चान्येन संस्थितः कुरुते स्थितिम् ॥ सत्त्वं गुणं समाश्रित्य जगतः पुरुषोत्तमः ॥ २७ ॥ आश्रित्य तमसो वृत्तिमन्तकाले तथा पुनः ॥ रुद्रस्वरूपो भगवानेकांशेन भवत्यजः ॥ २८ ॥ अग्न्यन्तकादिरूपेण भागेनान्येन वर्त्तते ॥ कालस्वरूपो भागो यस्सर्वभूतानि चापरः ॥ २९ ॥ विनाशं कुर्वतस्तस्य चतुर्द्धैवं महात्मनः ॥ विभागकल्पना ब्रह्मन् कथ्यते सार्वकालिकी ॥ ३० ॥ ब्रह्मा दक्षादयः कालस्तथैवाखिलजन्तवः ॥ विभूतयो हरेरेता जगतः सृष्टिहेतवः ॥ ३१ ॥ विष्णुर्मन्वादयः कालः सर्वभूतानि च द्विज ॥ स्थितेर्निमित्तभूतस्य विष्णोरेता विभूतयः ॥ ३२ ॥ रुद्रः कालान्तकाद्याश्च समस्ताश्चैव जन्तवः ॥ चतुर्धा प्रलयायैता जनार्दनविभूतयः ॥ ३३ ॥ जगदादौ तथा मध्ये सृष्टिराप्रलया द्विज ॥ धात्रा मरीचिमिश्रैश्च क्रियते जन्तुभिस्तथा ॥ ३४ ॥ ब्रह्मा सृजत्यादिकाले मरीचिप्रमुखास्ततः ॥ उत्पादयन्त्यपत्यानि जन्तवश्च प्रतिक्षणम् ॥ ३५ ॥ कालेन न विना ब्रह्मा सृष्टिनिष्पादको द्विज ॥ न प्रजापतयः सर्वे न चैवाऽखिलजन्तवः ॥ ३६ ॥ एवमेव विभागोयं स्थितावप्युपदिश्यति ॥ चतुर्धा तस्य देवस्य मैत्रेय प्रलये तथा ॥ ३७ ॥ यत्किञ्चित्सृज्यते येन सत्त्वजातेन वै द्विज ॥ तस्य सृज्यस्य सम्भूतौ तत्सर्वं वै हरेस्तनुः ॥ ३८॥

एकेनेति ॥ अव्यक्तमूर्तिमान् अव्यक्तस्वरूपः । मरीचिमिश्राः मरीचिसहिताः ॥ २४ ॥ काल इति ॥ रजोगुणो यस्य स रजोगुणः ॥ २५ ॥ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ विनाशमिति ॥ सार्वकालिकी प्रतिकल्पभाविनी कथ्यते ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ॥ ३६ ॥ ३७ ॥ एतदुक्तं भवतीत्याह—यत्किञ्चिदिति ॥ संभूताविति निमित्तसप्तमी कार्योत्पत्तिनिमित्तं हि कारणाधिष्ठानेन हरेस्तनुत्वम् ॥ ३८ ॥

ष्टभिः—चतुर्विभाग इति ॥ संसृष्टौ सम्यक् सृष्टौ चतुर्धिभागः सन्निति कचित्पाठः ॥ २३ ॥ २४ ॥ काल इति ॥ रज एव गुणो यस्य स रजोगुणः ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ विनाशमेते ॥ सार्वकालिकी सर्वकल्पकता ॥ ३० ॥ एते ब्रह्मादयो देवविभूतय इत्याह—ब्रह्मेत्यादित्रिभिः ॥ ३१ ॥ ३२ ॥ ३३ ॥ ब्रह्मादिभगवद्विभूतीनां कालभेदेन स्रष्टृत्वमाह—जगदादावित्यादिद्वाभ्याम् ॥ ३४ ॥ ३५ ॥ कालाख्यविभूतेस्तु सर्वदा सृष्टिनिमित्तत्वमाह—न कालेनेति ॥ ३६ ॥ एतदेव स्थितिप्रलययोरप्यतिदिशति एवमेवेति ॥ ३७ ॥ उत्पादयन्त्यपत्यानीत्यपत्यग्रहणं सृज्यमात्रोपलक्षणमिति दर्शयन्नाह—यत्किंचिदिति ॥ सत्त्वजातेन

इति यावच्च यत्किञ्चित्सत्त्वं स्थावरजङ्गमम् ॥ जनार्दनस्य तद्रौद्रं मैत्रेयान्तकरं वपुः ॥ ३९ ॥ एवमेष जगत्स्रष्टा जगत्पाता तथा जगत् ॥ जगद्भक्षयिता देवः समस्तस्य जनार्दनः ॥ ४० ॥ सृष्टिस्थित्यन्तकालेषु त्रिधैवं संप्रवर्तते ॥ गुणप्रवृत्त्या परमं पदं तस्यागुणं महत् ॥ ४१ ॥ तच्च ज्ञानमयं व्यापि स्वसंवेद्यमनौपमम् ॥ चतुष्प्रकारं तदपि स्वरूपं परमात्मनः ॥ ४२ ॥ श्रीमैत्रेय उवाच ॥ चतुःप्रकारतां तस्य ब्रह्मभूतस्य हे मुने ॥ ममाचक्ष्व यथान्यायं यदुक्तं परमं पदम् ॥ ४३ ॥ श्रीपराशर उवाच ॥ मैत्रेय कारणं प्रोक्तं साधनं सर्ववस्तुषु ॥ साध्यं च वस्त्वभिमतं यत्साधयितुमात्मनः ॥ ४४ ॥ योगिनो मुक्तिकामस्य प्राणायामादिसाधनम् ॥ साध्यं च परमं ब्रह्म पुनर्नावर्त्तते यतः ॥ ४५ ॥ साधनालम्बनं ज्ञानं मुक्तये योगिनां हि यत् ॥ स भेदः प्रथमस्तस्य ब्रह्मभूतस्य वै मुने ॥ ४६ ॥

॥ ३९ ॥ एवमिति ॥ समस्तस्य देवो जनार्दन इत्यन्वयः ॥ ४० ॥ त्रिगुणवश्यं रूपं निगमयति सृष्टिस्थितीत्यारभ्य गुणप्रवृत्त्येत्यन्तेन सृष्टीति । सृष्ट्यादिकालेषु गुणप्रवृत्त्या त्रिधाभूत एवमुक्तप्रकारेण चतुर्भेदो वर्तते परममित्यादि परमं विरिञ्चादिपदात् अगुणं गुणमयप्रकृतिवियुक्तं महत् अव्यक्तात् सर्गस्थित्यन्तकालेष्विति च पाठः ॥ ॥ ४१ ॥ तच्चेति ॥ ज्ञानमयं ज्ञानप्रचुरम् । व्यापि ज्ञानेन स्वसंवेद्यं स्वयंप्रकाशं एवंभूतं यत्पदं पद्यत इति पदं मुक्तस्वरूपं तच्च चतुष्प्रकारम् । तदपि तस्य परमात्मनः स्वरूपमित्यन्वयः । अत्र स्वरूपशब्दो रूपवचनः स्वं रूपं हि स्वरूपम् ॥ ४२ ॥ ४३ ॥ तस्य चातुर्विध्यं दर्शयितुमुपक्रमते मैत्रेय इत्यादिभिः मैत्रेयेति ॥ यत्कारणं तस्याधनं [त्सा] यत्साधयितुमभिमतं तत्साध्यम् ॥ ४४ ॥ योगिन इति ॥ परमं ब्रह्म मुक्तरूपं सर्वब्रह्ममयो हरिरिति वचनात् प्रकृतिपुरुषयोरपि ब्रह्मत्वम् । तदपेक्षया मुक्तस्वरूपस्य परमब्रह्मत्वम् ॥ ४५ ॥ साधनालम्बनमिति ॥ साधनालम्बनं ज्ञानं योगशास्त्रजन्यम् । प्राणायामादिसाधनविषयं ज्ञानं स प्रथमो भेदः ॥ ४६ ॥

प्राणिमात्रेण पालनेप्येतद्द्रष्टव्यम् ॥ ३८ ॥ ३९ ॥ उक्तं ब्रह्मादीनां विष्णुविभूतित्वमुपसंहरन्नाह–एवमित्यादिद्वाभ्याम् ॥ ४० ॥ सर्गेति ॥ गुणप्रवृत्त्या गुणानां क्षोभेण त्रिविधं ब्रह्मादिरूपं सृष्ट्यादौ संप्रवर्तते तस्य तु परमं पदमगुणं ततो महत्पूर्णम् ॥ ४१ ॥ सरूपप्रकारोपदेशार्थं चातुर्विध्यमुपक्षिपति–तच्चेति ॥ ४२ ॥ अगुणस्य ज्ञानमयस्य च निर्भेदत्वात्कथं चातुर्विध्यमित्याशंक्य पृच्छति मैत्रेयः चतुष्प्रकारतामिति ॥ ४३ ॥ निर्गुणब्रह्मप्राप्तेः प्रागेव तत्प्राप्त्युपायभूतसाधनाद्यालम्बनमनुवृत्त्यभिव्यङ्ग्यावस्थाभेदात् ज्ञानस्य चातुर्विध्यं न स्वरूपेणेति वक्तुमाह मैत्रेयेत्याद्यष्टभिः–मैत्रेयेति ॥ सर्वेष्वपि वस्तुषु यत्कारणं तत्साधनं प्रोक्तं यच्चात्मनस्साधयितुमभिमतं वस्तु तत्साध्यं प्रोक्तमित्यन्वयः ॥ ४४ ॥ योगिन इति ॥ प्रस्तुतमुक्तिकामस्य योगिनो मुक्तेः प्राणायामादिसाधनं प्राणायामः आदिः चित्तैकाग्र्यद्वारेण कारणं यस्य देहात्मविवेकस्य तत्प्राणायामादिमुक्तिसाधनं देहात्मविवेकरूपं त्वं पदार्थशुद्धिं विना मलक्लेशसम्भवात् साध्यञ्च तत्पदलक्ष्यं परब्रह्मनित्यसुखात्मकत्वात् ॥ ४५ ॥ ततः किमत आह–साधनेति ॥ साधनं देहाद्यात्मविवेकत्वं पदार्थशुद्धिः तदालम्बनं

युञ्जतः क्लेशमुक्त्यर्थं साध्यं यद्ब्रह्म योगिनः ॥ तदालम्बनविज्ञानं द्वितीयोंशो महामुने ॥४७॥ उभयोस्त्वविभागेन साध्यसाधनयोर्हि यत् ॥ विज्ञानमद्वैतमयं तद्भागोन्यो मयोदितः ॥ ४८ ॥ ज्ञानत्रयस्य वै तस्य विशेषो यो महामुने॥ तन्निराकरणद्वारा दर्शितात्मस्वरूपवत् ॥४९॥ निर्व्यापारमनाख्येयं व्याप्तिमात्रमनूपमम् ॥ आत्मसम्बोधविषयं सत्तामात्रमलक्षणम् ॥५०॥प्रशान्तमभयं शुद्धं दुर्विभाव्यमसंश्रयम् ॥ विष्णोर्ज्ञानमयस्योक्तं तज्ज्ञानं ब्रह्मसंज्ञितम् ॥५१॥ तत्र ज्ञाननिरोधेन योगिनो यान्ति ये लयम् ॥ संसारकर्षणोप्तौ ते यान्ति निर्बीजतां द्विज॥५२॥

युञ्जत इति ॥ तदालम्बनविज्ञानं सांख्यजन्यं प्रकृतिविविक्तात्मविषयं विशिष्टज्ञानम् ॥ ४७ ॥ उभयोरित्यादि ॥ अविभागेन संयोगेन साध्यसाधनभावसम्बन्धेन अद्वैतमयं देवमनुष्यादिद्वैतरहितात्मविषयतया तत्प्रचुरं विज्ञानं ध्यानम् ॥ ४८ ॥ ज्ञानत्रयस्येति ॥ उक्तस्य ज्ञानत्रयस्य साधनज्ञानत्वादिरूपतो यो विशेषस्तस्य निराकरणम् अपरामर्शः यस्य द्वारं दर्शितात्मस्वरूपवत् । तत् आत्मावलोकनरूपज्ञानं चतुर्थो भाग इत्यनुषङ्गः ॥ ४९ ॥ विनिष्पन्नसमाधेरितरपरामर्शस्यात्मावलोकनविरोधित्वात्तन्निराकरणं द्वारमित्युक्तम् । दर्शितात्मस्वरूपवदित्युक्तस्यात्मावलोकनस्य विषयमात्मस्वरूपं दर्शयति निर्व्यापारमित्यादि ॥ निर्व्यापारं साधनानुष्ठानरहितम् अनाख्येयं रूपवर्णादीनामगोचरस्वरूपं व्याप्तिमात्रं मात्रशब्दोऽवधारणे व्याप्तमेव असंकुचित इत्यर्थः । अनुपममेवानूपमम् अनूपममिति च पाठः । आत्मसम्बोधविषयं स्वज्ञानगम्यं सत्तामात्रम् अपक्षयादिरहितं सत्त्वैकगुणकम् अलक्षणं स्त्रीत्वादिरहितं लिङ्गजन्यज्ञानागम्यमिति वा ॥ ५० ॥ प्रशान्तमिति ॥ प्रशान्तम् अशनायादिषडूर्मिरहितं शुद्धं कर्मरहितं दुर्विभाव्यम् अरूपादिमत्वात् अतर्क्यमिति वा । विष्णो रूपं ब्रह्मसंज्ञितं तज्ज्ञानमेवमुक्तम् । एवमुक्तमात्मयोगिनामन्तिमप्रत्ययेनावश्यंभाव्यम्॥ ५१ ॥अन्यथा पुनरावृत्तिरित्याह–तत्रेति॥तत्र निर्व्यापारमित्यादिनोक्ते निजस्वरूपे अन्यज्ञाननिरोधेन अन्तिमप्रत्ययबलाद्ये लयमुपाधिवियोगं यान्ति आविर्भूत

शुद्धत्वंपदार्थविषयं यज्ज्ञानं स एव चतुर्भेदज्ञानभूतस्य ब्रह्मणः प्रथमो भेदः ॥ ४६ ॥ युञ्जत इति ॥ क्लेशमुक्त्यर्थं युञ्जतो योगमभ्यस्यतो योगिनो यत्साध्यं ब्रह्म तद्विषयं सच्चिदानन्दब्रह्मेति तत्पदलक्ष्यार्थः । विशेषेण ज्ञानं विज्ञानं द्वितीयोंशः ॥ ४७ ॥ उभयोरिति ॥ उभयोस्त्वविभागेन परस्परैक्येन ब्रह्मैवाहमहमेव ब्रह्मेति विशेषं विज्ञानं सोऽन्यस्तृतीयो भागो मयोदितः ॥ ४८ ॥ ज्ञानत्रयस्येति ॥ एतस्य तत्त्वं पदार्थतदैक्यविषयस्य ज्ञानत्रयस्य यो विशेषो देहादिविलक्षणोऽहमिति सच्चिदानन्दरूपं ब्रह्मेति ब्रह्माहमिति च यस्तत्र विशेषांशः तस्य निराकरणं परित्यागस्तद्द्वारेण दर्शितं यन्निर्विशेषमात्मस्वरूपं तद्वत्तदेकाकारसमाध्यवस्थं विष्णोर्ज्ञानमयस्य परमपदाख्यं ज्ञानं चतुर्थमुक्तमिति तृतीयेनान्वयः ॥ ४९ ॥ तदेव द्वादशभिः पदैर्विशिनष्टि निर्व्यापारमिति ॥ निर्व्यापारं ध्यानादिसर्वव्यापारशून्यम् अत एवानाख्येयं निर्देशानर्हं किं तु व्याप्तिमात्रं मनसो ब्रह्माकारतामात्ररूपम् अनूपमं निरुपमं सर्वज्ञानविलक्षणत्वात्तदेवाह–आत्मनः सम्बोधः प्रकाशस्तद्विषयं स्वप्रकाशमित्यर्थः । तत्रापि सत्तामात्रमात्मस्वरूपभूतसत्यज्ञानानन्दादिविशेषशून्यं तत्र हेतुरलक्षणं लक्ष्यतेनेनेति लक्षणं मनोवृत्तिस्तद्रहितं तदुक्तं योगप्रदीपे "मनसो वृत्तिशून्यस्य ब्रह्माकारतया स्थितिः ॥ या संप्रज्ञातनामासौ समाधिरभिधीयते" इति ॥ ५० ॥ प्रशान्तमिति ॥ मनोवृत्त्यभावादेव प्रशान्तं रागादिशून्यमत एवाभयं द्वैतास्फूर्तेः शुद्धं निर्विषयमत एव दुर्विभाव्यमवितर्क्यं निर्विषयत्वादेवासंश्रयमाश्रयशून्यम् असंश्रितमितिपाठेपि स एवार्थः । वृत्तिप्रतियोगित्वादाश्रयविषययोः तदुक्तं कापिलयोगे "मुक्ताश्रयं यदिह निर्विषयं विरक्तं निर्वाणमृच्छति मनः सहसा यदार्चिः ॥ आत्मानमत्र पुरुषाव्यवधानमेकमन्वीक्षते प्रतिनिवृत्तगुणप्रवाहम्" इति ॥ ५१ ॥ एवम्भूतज्ञानस्वरूपे लीनाः कृतार्था भवन्तीत्याह–तत्रेति ॥ तत्र चतुर्थज्ञानस्वरूपे ब्रह्मणि अज्ञान

एवंप्रकारममलं नित्यं व्यापकमक्षयम् ॥ समस्तहेयरहितं विष्णवाख्यं परमं पदम् ॥ ५३ ॥ तद्ब्रह्म परमं योगी यतो नावर्त्तते पुनः ॥ श्रयत्यपुण्योपरमे क्षीणक्लेशेऽतिनिर्मले ॥ ५४ ॥ द्वे रूपे ब्रह्मणस्तस्य मूर्त्तं चामूर्तमेव च ॥ क्षराक्षरस्वरूपे ते सर्वभूतेष्ववस्थिते ॥ ५५ ॥ अक्षरं तत्परं ब्रह्म क्षरं सर्वमिदं जगत् ॥ एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा ॥ परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत् ॥५६॥ तत्राप्यासन्नदूरत्वाद्बहुत्वस्वल्पतामयः ॥ ज्योत्स्नाभेदोस्ति तच्छक्तेस्तद्वन्मैत्रेय विद्यते ॥ ५७ ॥

स्वरूपा भवन्तीत्यर्थः । कृष्यत इति कर्षणं केदारः । संसारकेदारे उप्तौ सस्यावापे वितुषव्रीहिवदबीजतां यांति॥५२॥ एवं तावद्भगवतो रूपद्वयमुक्तस्वरूपमाह—एवमित्यादिना एवमिति ॥ मुक्तस्योक्तं निर्व्यापारत्वाद्यतिदिश्यते "निरञ्जनः परमं साम्यमुपैति " इत्यादिश्रुतेः । अस्य नित्यशुद्धत्वसर्वात्मत्वपूर्णत्वहेयराहित्यानि प्रकृतिबद्धमुक्तेभ्यो विशेषः ॥ ५३ ॥तद्ब्रह्मेति ॥ योगी भगवद्योगी अस्याप्यन्तिमप्रत्ययबलेन भगवति लीनस्यापुनरावृत्तिर्द्रष्टव्या ॥ ५४ ॥ ब्रह्मणः पूर्वोक्तं रूपद्वयं प्रपञ्चयति द्वे रूपे इति ॥ मूर्त्तं सशरीरं ब्रह्मादिजीवजातम् अमूर्त्तम् अशरीरं मुक्तस्वरूपम् अत एवाक्षरं सर्वभूतेष्ववस्थितम् "दारुण्यग्निः स चानन्त्याय कल्पत" इत्यादेः ॥५५॥ अक्षरमिति ॥ इदं शक्तिरूपद्वयं परब्रह्मणः शक्तिरिति चोच्यते इत्याह—एकदेशेति॥ अत्र एकदेशस्थितस्य विस्तारिणीति पदद्वयेन प्रभाप्रभावतोर्वैलक्षण्यं दर्शितम्।अनेन प्रभारूपस्य परस्माद्ब्रह्मणो वैलक्षण्यं सूचितम् । भाष्यकारेण "प्रकाशादिवत्तु नैवं परः" इत्यस्मिन्सूत्रे प्रभा प्रभावतोरर्थान्तरत्वं समर्थितम् । अत्र जगच्छब्देनाचिद्विशिष्टस्य जीवस्य मुक्तस्य च ग्रहणम् ॥ ५६ ॥ शक्तिभूतस्य ब्रह्मादिस्थावरान्तस्य जगतो ज्ञानादिषु तारतम्यमस्तीत्याह—तत्रेति । तत्र दृष्टान्तेऽग्नौ तच्छक्तेः ब्रह्मणः शक्ते

निरोधेनाविद्यानाशेन ये लयमेवयं यान्ति तत्रान्यज्ञानरोधेति पाठे पूर्वोक्तज्ञानत्रयविशेषतिरस्कारेणेत्यर्थः । संसारकर्षणोप्तौ संसार एव कृष्यत इति कर्षणं क्षेत्रं तस्मिन्नुप्तिः बीजावापः कर्मकरणं तस्मिन्निर्बीजतां निर्वासनतां यान्ति निरहङ्कारैः ज्ञानोत्तरकालीनैः कर्मभिर्न्यासैश्च न संसरन्तीत्यर्थः ॥ ५२ ॥ तर्हि योगी किम्भवतीत्यत आह—एवमित्यादिद्वाभ्याम्—एवमिति ॥ एवं प्रकारं परमं ब्रह्मैव योगी प्राप्नोतीति शेषः ॥ ५३ ॥ ५४ ॥ तत्प्राप्तिसाधनभूतोपासनार्थमाह—द्वे रूपे इति ॥ मूर्त्तामूर्ते एव दर्शयन्नाह—क्षराक्षरस्वरूपे इति ॥ ५५ ॥ क्षराक्षरे एव रूपे व्याचष्टे अक्षरमिति ॥ क्षरं सर्वमिदं चेतनाचेतनात्मकं जगत् वक्ष्यति हि "आश्रयश्चेतसो ब्रह्म द्विधा तच्च स्वभावतः ॥ भूप मूर्तममूर्तं च परं चापरमेव च" इति । नन्वक्षरस्य परब्रह्मणस्तद्विलक्षणं क्षरं रूपं कथं स्यादित्याशङ्क्य दृष्टान्तेनोपपादयति एकदेशेति । प्रादेशिकस्याप्यग्नेर्दवादेर्दाहकस्यापि तद्विलक्षणा ज्योत्स्ना प्रभा यथा तत्प्रकाशशक्तिविस्तारः तथा ब्रह्मशक्तिकृतो विस्तारः । इदमखिलं ब्रह्मादिरूपं जगत् ॥ ५६ ॥ अग्निदृष्टान्तेनैव ब्रह्मादि जीवतारतम्यममि संगच्छत इत्याह—तत्रापीति ॥ तत्रापि दृष्टान्तभूतेऽग्नाविव आसन्नत्वाद्बहुत्वं दूरत्वादल्पत्वमित्येवं रूपो यथा ज्योत्स्नाया भेदोऽस्ति तथा ब्रह्मशक्तेरपि क्षेत्रज्ञरूपाया ब्रह्मादिस्थावरान्तेषु क्षेत्रेष्वविद्यावरणस्याल्पत्वबहुत्ववशात्तारतम्यं विद्यत इत्यर्थः । वक्ष्यति च "तया

ब्रह्मविष्णुशिवा ब्रह्मन्प्रधाना ब्रह्मशक्तयः ॥ ततश्च देवा मैत्रेय न्यूना दक्षादयस्ततः॥ ५८ ॥ ततो मनुष्याः पशवो मृगपक्षिसरीसृपाः ॥ न्यूना न्यूनतराश्चैव वृक्षगुल्मादयस्तथा॥५९॥ तदेतदक्षरं नित्यं जगन्मुनिवराखिलम् ॥ आविर्भावतिरोभावजन्मनाशविकल्पवत् ॥ ६० ॥ सर्वशक्तिमयो विष्णुः स्वरूपं ब्रह्मणः परम् ॥ मूर्तं यद्योगिभिः पूर्वं योगारम्भेषु चिन्त्यते ॥६१॥ सालम्बनो महायोगः सबीजो यत्र संस्थितः ॥ मनस्यव्याहते सम्यग्युञ्जतां जायते मुने ॥ ६२ ॥ स परः परशक्तीनां ब्रह्मणः समनन्तरम् ॥ मूर्तं ब्रह्म महाभाग सर्वब्रह्ममयो हरिः ॥ ६३ ॥

जगतः ज्ञानादेर्बहुत्वस्वल्पतामयो भेदो वियत इत्यर्थः ॥ ५७ ॥ ब्रह्मेति ॥ ब्रह्मशिवयोः शरीरत्वेन शक्तित्वं विष्णोः स्वांशावतारवत्स्वरूपेणैव ततस्तेभ्यो देवा ज्ञानशक्त्यादिना न्यूनाः एषामेतज्ज्ञानादेस्तारतम्यं कर्मरूपावरणाल्पत्वबहुत्वकृतं न तु स्वरूपकृतम् ॥५८॥५९॥उक्तं जगद्रूपं निगमयति तदेतदिति॥तदेतदक्षयमिति च पाठः। अक्षयं "अनन्तस्य न तस्यान्तः संख्या न चापि वियते" इति जीवानामसंख्येयत्वं वक्ष्यति । अतः प्रतिसर्गमन्यूनं नित्यं सत्कार्यत्वात् "अविच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमाः" इति वचनात्। प्रवाहरूपेण च नित्यं आविर्भावतिरोभावौ सङ्कोचविकासौ तावेव जन्मनाशौ ॥ ६० ॥ अथ विलक्षणं रूपान्तरं वक्तुं मूर्तामूर्तभेदेनोक्तं शक्तिशब्दवाच्यं रूपद्वयमुपसंहरति सर्वशक्तिमयोविष्णुरिति ॥ तदेव रूपान्तरमाह–स्वरूपमित्यारभ्य जायते मुने इत्यन्तेन । स्वरूपं रूपं योगारम्भेषु समाध्युपक्रमभूतासु चतुर्विधासु धारणासु ध्याने च ॥ ६१ ॥ सालम्बन इति ॥ सालम्बनो मूर्तविषयत्वात् महायोगः अस्त्रभूषणाङ्गविशिष्टदिव्यरूपविषयं चतुर्विधधारणाजन्यं ध्यानं सबीजः समंत्रानुसन्धानः स च निर्बीजयोगाख्यसमाधेरनन्तरः । यत्र रूपे ॥ ६२ ॥ स पर इति ॥ स विष्णुः सर्वासां रूपत्वेनोक्तानां शक्तीनां पर उत्कृष्टः । यदेतत्स्वरूपं ब्रह्मणोऽपरमित्युक्तं ब्रह्मशब्दावाच्यं तद्ब्रह्मणः विष्णोः समनन्तरम् । अन्तरङ्गमित्याह–ब्रह्मणः समनन्तरमिति ।

तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता ॥ सर्वभूतेषु भूपाल तारतम्येन वक्ष्यते" इति ॥ ५७ ॥ तदेवाह–ब्रह्मेत्यादिद्वाभ्याम् ॥ ५८ ॥ ५९ ॥ अस्य च तारतम्यस्यौपाधिकत्वात् सर्वमिदं जगद्ब्रह्मेत्येवोपासितव्यमित्याह–तदेतदिति ॥ आविर्भावतिरोभावावाधिक्यन्यूनभावौ जन्मनाशौ च उपाधिवशादेवम्भूतविकल्पवदपि जगद्वस्तुतोऽक्षरं न्यूनाधिकत्वशून्यं नित्यं च ब्रह्मैवेत्यर्थः ॥ ६० ॥ तदेवं स्थूलविश्वरूपोपासनया शुद्धचित्तस्य तत्कारणभूतपरमेश्वरोपासनं प्रस्तौति–सर्वशक्तिमय इति ॥ सृष्ट्यादिसर्वस्याश्रयो विष्णुः मूर्तं विशुद्धोर्जितसत्त्वात्मकं ब्रह्मण एव परं न वियते यस्मात्तदपरं श्रेष्ठं रूपं तदेवाह–यद्योगिभिः समाधेः पूर्वं योगारम्भेषु चिन्त्यते ॥ ६१ ॥ तच्चिन्ताप्रयोजनमाह–सालम्बन इति ॥ तस्मिन्मनस्यव्याहते एकाग्रे सति सालम्बनो वैष्णवस्सबीजो मन्त्रजपादिसहितो महायोगो युञ्जतां योगिनां संस्थितः सुस्थिरसमाधिपर्यन्तो जायत इत्यन्वयः ॥ ६२ ॥ यत्रेत्यनेन यच्छब्दोक्तस्य हरेः सर्वश्रेष्ठत्वमाह–स पर इत्यादिद्वाभ्यां–स पर इति ॥ ब्रह्मणः सर्वशक्तीनां ब्रह्मादीनां मध्ये स परः श्रेष्ठः यतः समनन्तरः अतिनिकटः यतो मूर्तेष्वाविर्भूतं ब्रह्मैव सः । तत्र

यत्र सर्वमिदं प्रोतमोतं चैवाखिलं जगत् ॥ ततो जगज्जगत्यस्मिन्स जगच्चाखिलं मुने ॥ ६४ ॥ क्षराक्षरमयो विष्णुर्बिभर्त्यखिलमीश्वरः ॥ पुरुषाव्याकृतमयं भूषणास्त्रस्वरूपवत् ॥ ६५ ॥ श्रीमैत्रेय उवाच ॥ भूषणास्त्रस्वरूपस्थं यच्चैतदखिलं जगत् ॥ बिभर्त्ति भगवान्विष्णुस्तन्ममाख्यातुमर्हसि ॥ ६६ ॥ श्रीपराशर उवाच ॥ नमस्कृत्वाप्रमेयाय विष्णवे प्रभविष्णवे ॥ कथयामि यथाख्यातं वसिष्ठेन ममाभवत् ॥ ६७ ॥ आत्मानमस्य जगतो निर्लेपमगुणामलम् ॥ बिभर्त्ति कौस्तुभमणिस्वरूपं भगवान्हरिः ॥ ६८ ॥ श्रीवत्ससंस्थानधरमनन्ते न समाश्रितम् ॥ प्रधानं बुद्धिरप्यास्ते गदारूपेण माधवे ॥ ६९ ॥ भूतादिमिंद्रियादिं च द्विधाहङ्कारमीश्वरः ॥ बिभर्त्ति शंखरूपेण शार्ङ्गरूपेण च स्थितम् ॥ ७० ॥ चलत्स्वरूपमत्यन्तं जवेनान्तारितानिलम् ॥ चक्रस्वरूपं च मनो धत्ते विष्णुकरे स्थितम् ॥ ७१ ॥

एतानि त्रीण्यपि रूपाणि ब्रह्मशब्दवाच्यानि तन्मयो हारिरित्याह—सर्वब्रह्ममयो हारिरिति ॥ ६३ ॥ यत्रेति। यत्र हरौ तत्र सर्वमिति च पाठः । शिष्टं स्पष्टम् ॥ ६४ ॥ क्षराक्षरमय इति ॥ क्षराक्षररूपे पूर्वमुक्ते भूषणास्त्रस्वरूपवदिति भूषणास्त्रस्वरूपेण युक्तम् । सूक्ष्मरूपेण तत्तदधिदेवताभूतभूषणास्त्रस्वरूपस्थं पुरुषाव्याकृतमयम् अखिलं बिभर्त्तीत्यर्थः ॥ ६५ ॥ ६६ ॥ ६७॥ प्रथममात्मनोऽभिमानि दैवतमाह—आत्मानमिति॥ "यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः" इत्यादिश्लोकेनात्मनो मणिसाम्यमुक्तम् । सूत्रकारेणापि गुणाद्वा लोकवदित्युक्तम्, तेन तद्रूपेण तद्धारणं युक्तम् । आत्मानमित्येकवचनं जात्यभिप्रायं समष्ट्यभिप्रायं वा॥६८॥श्रीवत्सेति ॥ श्रीवत्सो रोमावर्तविशेषः "श्रीवत्सेनोरसि श्रीमान् रोमावर्तेन राजते" इति हरिवंशोक्तेः।स च लक्ष्मीनिवासस्थानम् अमृतमयत्वात्सर्वप्ररोहहेतुः प्रधानाभिमानी गदाबुद्ध्योः स्थिरत्वेन साम्यम् ॥ ६९ ॥ भूतादिमिति ॥ शब्दगुणहेतुः शंखः शब्दादिरूपभूतकारणाहंकाराभिमानी ॥ ७० ॥ चलस्वरूपमिति ॥

हेतुः सर्वब्रह्ममयः कृत्स्नब्रह्मरूपः न तु ब्रह्मादिवत्तदंशः ॥ ६३ ॥ तत्र हेतुमाह—यत्रेति ॥ यस्मिन्नखिलं जगदोतं प्रोतं च तन्तुषु पटवत्सर्वतोऽनुस्यूतं कुत इत्यत्राह—जगज्जातं ततो जगत्तस्मिंस्तिष्ठति जगच्चाखिलं स एव कारणात्मकत्वात्कार्यस्य ॥ ६४ ॥ तदेवं हरेः श्रैष्ठ्यमुक्त्वा इदानीं तदुपासनप्रकारमुपक्षिपति क्षराक्षरमय इति ॥ कार्यकारणात्मको विष्णुः पुरुषाव्याकृतमयं पुरुषप्रकृत्यात्मकमिदं जगद्भूषणास्त्रस्वरूपेण बिभर्ति ॥ ६५ ॥ अतिरहस्यत्वान्मैत्रेयः विशेषतो बुभुत्सुः पृच्छति—भूषणेति ॥ ६६ ॥ नमस्कृत्वेति ॥ प्रभविष्णवे प्रभवनशीलाय सकृच्चिन्तनमात्रेण सर्वपुरुषार्थदानसमर्थाय इत्यर्थः । यथा मम वशिष्ठेनाख्यातमभवत्तथा कथयिष्यामि ॥ ६७ ॥ आत्मानमिति ॥ अस्य जगतः आत्मानं पुरुषं शुद्धं क्षेत्रज्ञम् ॥ ६८ ॥ श्रीवत्सेति ॥ प्रधानं च श्रीवत्सस्थानं सदैवानन्तेन समाश्रितं तस्मिन्नध्यास्त इत्यन्वयः । श्रीवत्सस्वरूपं च गारुड पुराणे प्रोक्तम् "प्रदक्षिणावर्तविचित्ररोमश्रीवत्ससद्भिर्म्बविभूषिताङ्गम् ॥ वीक्ष्याविचिन्त्यम्" इति । बुद्धिर्महत्तत्वं गदारूपेण अध्यास्ते ॥ ६९ ॥ भूतादिमिति ॥ भूतादिं तामसमिंद्रियादिं राजसं च द्विविधाऽहङ्कारं यथाक्रमं शङ्खरूपेण शार्ङ्गरूपेण च स्थितं बिभर्ति ॥ ७० ॥ चलस्वरूपमिति ॥ चलस्वरूपमत्यन्तमतिशीघ्रमत एव जवेनान्तारितः अतिक्रान्तोऽनिलः येन तत् मनस्सात्त्विकाहङ्कारात्मकं चक्रस्वरूपं धत्ते ॥ ७१ ॥

पञ्चरूपा तु या माला वैजयन्ती गदाभृतः ॥ सा भूतहेतुसंघाता भूतमाला च वै द्विज ॥ ७२ ॥ यानीन्द्रियाण्यशेषाणि बुद्धिकर्मात्म कानि वै ॥ शररूपाण्यशेषाणि तानि धत्ते जनार्दनः ॥ ७३ ॥ बिभर्त्ति यच्चासिरत्नमच्युतोत्यन्तनिर्मलम् ॥ विद्यामयं तु तज्ज्ञानमविद्या कोशसंस्थितम् ॥ ७४ ॥ इत्थं पुमान्प्रधानं च बुद्ध्यहङ्कारमेव च ॥ भूतानि च हृषीकेशे मनः सर्वेन्द्रियाणि च ॥ विद्याविद्ये च मैत्रेय सर्वमेतत्समाश्रितम् ॥ ७५ ॥ अस्त्रभूषणसंस्थानस्वरूपं रूपवर्जितः ॥ बिभर्ति मायारूपोसौ श्रेयसे प्राणिनां हरिः ॥ ७६ ॥ सविकारं प्रधानं च पुमांश्चैवाखिलं जगत् ॥ बिभर्त्ति पुण्डरीकाक्षस्तदेवं परमेश्वरः ॥ ७७ ॥ या विद्या या तथाविद्या यत्सद्यच्चासदव्ययम् ॥ तत्सर्वं सर्वभूतेशे मैत्रेय मधुसूदने ॥ ७८ ॥ कलाकाष्ठानिमेषादिदिनर्त्वयनहायनैः ॥ कालस्वरूपो भगवानपापो हरिरव्ययः ॥ ७९ ॥

मनसोपि शीघ्रतरत्वात्सुदर्शनस्य तन्नियंतृत्वम् ॥ ७१ ॥ पञ्चरूपेति ॥ पंचरूपा मुक्तामाणिक्यमरकतेन्द्रनीलवज्रसवर्णा । भूतहेतुसंघातः तन्मात्रसमुदायः । भूतमाला च महाभूतावलिश्च सूक्ष्मस्थूलभूतमयीत्यर्थः ।:भूतहेतुसंघातभूतमालेति पाठे तन्मात्रसंघातः तदुद्भूतमाला चेत्यर्थः । कृष्णशुक्लशोणितपीतश्यामाः पृथिव्यादय इति। भूत मालायाश्च पाञ्चरूप्यम् ॥ ७२ ॥ यानीति ॥ इन्द्रियाणां विषयेषु प्रेर्यमाणत्वाच्छरसाम्यम् ॥ ७३ ॥ बिभर्तीति ॥ असिवद्ब्रह्मविद्यायाः संसारच्छेदकत्वं तदसि रत्नं विद्यामयं विद्यामयज्ञानाधिदैवतमित्यर्थः । असिर्विद्यारूपमित्यर्थः । अविद्या अज्ञानं तस्यात्मतिरोधायकत्वाच्चर्मसाम्यम् ॥ ७४ ॥ उक्तमर्थं निगमयति इत्थमिति । उक्तार्थेऽभियुक्तवचनम् । "भास्वरं दिव्यवपुषमास्पदं चाखिलात्मनाम् ॥ कौस्तुभं पुरतो विष्णोर्भास्कराभमनुस्मरेत् ॥ प्रधानतत्त्वस्याधारं स्वमन्त्रेणाति सुन्दरम् । श्रीवत्सं पुरतो विष्णोर्हेमप्रभमनुस्मरेत् ॥ देवस्य दक्षिणे पार्श्वे हेतिराजं सुदर्शनम् । चलत्स्वरूपमत्युग्रं मनस्तत्त्वाधिदैवतम् ॥ यां वदन्ति पुराणज्ञा भूत मालां मनीषिणः । आधारभूतां भूतानाम्" इत्यादि ॥ ७५ ॥ अस्त्रभूषणसंस्थानस्वरूपमिति ॥ उक्तप्रकाराणामस्त्रभूषणानां संस्थानमास्पदं स्वरूपं विग्रहः रूपवर्जितः कर्मनिमित्तप्राकृतरूपरहितः मायारूपोऽनंताश्चर्यरूपः श्रेयसे दर्शनानुस्मरणनामसंकीर्तनादिना जगतोऽभ्युदयाय धर्मसंस्थापनार्थं च यथा वक्ष्यति—समस्ताश्श क्तयश्चैता इत्यारभ्य न सा कर्मनिमित्तजेत्यन्तेन। न ते रूपं न चाकारा इत्यादि च ॥ ७६ ॥ यथास्त्रभूषणादिरूपेणावस्थितं प्रधानादितत्त्वं बिभर्ति एवं जगद्बिभर्त्ती त्याह—सविकारमिति ॥ ७७ ॥ प्रसङ्गाद्विभूतिविस्तारमाह—या विद्येति ॥ ७८ ॥ कलेति ॥ हायनैरितीत्थं भूतलक्षणे तृतीया ॥ ७९ ॥

पञ्चरूपेति ॥ पञ्चरूपा मुक्तामाणिक्यमरकतेन्द्रनीलवज्रसमानवर्णा हरेर्या वैजयन्त्याख्या माला । भूतानां पञ्चतन्मात्राणां संघातः पंक्तिः भूतमाला च महाभूतपंक्तिश्च सूक्ष्मस्थूलमयीत्यर्थः । पाठान्तरे—ऽप्ययमेवार्थः॥७२॥७३॥ विभर्तीति ॥ अविद्यैव ज्ञानावरकः कोशः तत्र संस्थितम् ॥ ७४ ॥ उक्तमेव भूषणादिस्वरूपमनुवदन्नेतद्धारणप्रयोजनमाह—इत्थमित्यादिसार्धद्वाभ्याम् ॥ ७५ ॥ अस्त्रेति ॥ अस्त्रभूषणसंस्थानस्वरूपं समाहितमेतत्सर्वं विभर्तीत्यन्वयः । श्रेयसे उपासकानां पुरुषार्थसिद्धये ॥ ७६ ॥ उक्तं भूषणाद्युपासनं निगमयति सविकारमित्यादिद्वाभ्याम् ॥ ७७ ॥ ७८ ॥ इदानीं हरौ सर्वात्मदृष्टिदार्ढ्याय तच्छक्तिकालरूपेण च तत्तल्लोकतत्संभूत

भूर्लोकोथ भुवर्लोकः स्वर्लोको मुनिसत्तम ॥ महर्जनस्तपः सत्यं सप्त लोका इमे विभुः ॥ ८० ॥ लोकात्ममूर्त्तिः सर्वेषां पूर्वेषामपि पूर्वजः ॥ आधारः सर्वविद्यानां स्वयमेव हरिः स्थितः ॥ ८१ ॥ देवमानुषपश्वादिस्वरूपैर्बहुभिः स्थितः ॥ ततः सर्वेश्वरोऽनन्तो भूतमूर्त्तिरमूर्त्तिमान् ॥ ८२ ॥ ऋचो यजूंषि सामानि तथैवाथर्वणानि वै ॥ इतिहासोपवेदाश्च वेदान्तेषु तथोक्तयः ॥ ८३ ॥ वेदांगानि समस्तानि मन्वादिगदितानि च ॥ शास्त्राण्यशेषाण्याख्यानान्यनुवाकाश्च ये क्वचित् ॥ ८४ ॥ काव्यालापाश्च ये केचिद्गीतकान्यखिलानि च ॥ शब्दमूर्तिधरस्यैतद्वपुर्विष्णोर्महात्मनः ॥ ८५ ॥ यानि मूर्तान्यमूर्तानि यान्यत्रान्यत्र वा क्वचित् ॥ सन्ति वै वस्तुजातानि तानि सर्वाणि तद्वपुः ॥ ८६ ॥ अहं हरिः सर्वमिदं जनार्दनो नान्यत्ततः कारणकार्यजातम् ॥ ईदृङ्मनो यस्य न तस्य भूयो भवोद्भवा द्वन्द्वगदा भवन्ति ॥ ८७ ॥ इत्येष तेंशः प्रथमः पुराणस्यास्य वै द्विज ॥ यथावत्कथितो यस्मिन्श्रुते पापैः प्रमुच्यते ॥ ८८ ॥ कार्त्तिक्यां पुष्करस्नाने द्वादशाब्देन यत्फलम् ॥ तदस्य श्रवणात्सर्वं मैत्रेयाप्नोति मानवः ॥ ८९ ॥ देवर्षिपितृगन्धर्वयक्षादीनां च सम्भवम् ॥ भवन्ति शृण्वतः पुंसो देवाद्या वरदा मुने ॥ ९० ॥ इति श्रीविष्णुमहापुराणे प्रथमेंशे द्वाविंशोऽध्यायः ॥ २२ ॥

इति श्रीपराशरमुनिविरचिते श्रीविष्णुपरत्वनिर्णायके श्रीमति विष्णुमहापुराणे प्रथमांशः समाप्तः ॥

भूरिति ॥ सप्तलोकान् बिभर्त्तीति शेषः ॥ ८० ॥ लोकात्ममूर्तीरिति ॥ लोका आत्ममूर्त्तिर्यस्य स लोकात्ममूर्त्तिः ॥ ८१ ॥ ८२ ॥ ऋच इति ॥ इतिहासो भारतादिः । उपवेदा आयुर्धनुर्वेदगान्धर्ववेदण्डनीतयः । वेदांतेष्विति पृथग्ग्रहणं प्राशस्त्यात् ॥ ८३ ॥ वेदाङ्गानीति ॥ आख्यानानि सौपर्णादीनि । ऋक्समूहविशेषः । सूक्तं सूक्तसमूहोऽनुवाकः यजुःसमूहश्च ॥ ८४ ॥ काव्यालापा इति ॥ गीतकानि मातृकाप्रबन्धादीनि ॥ ८५ ॥ ८६ ॥ अहं हरिरिति ॥ अहमर्थः प्रत्यगात्मा सोपि हरिः तच्छरीरक इत्यर्थः ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये प्रथमांशे द्वाविंशोध्यायः ॥ २२ ॥ समाप्तं च प्रथमांशव्याख्यानम् ॥

रूपेण च तद्बोधकशब्दब्रह्मरूपेण च चतुर्धोपासनार्थमाह–कलाकाष्ठेत्यादिसप्तभिः ॥ ७९ ॥ भूरिति ॥ सप्तलोकानिमानिति पाठे व्याप्येति शेषः ॥ ८० ॥ लोकात्मेति ॥ लोकात्मिका मूर्तिर्यस्य स लोकात्ममूर्तिः ॥ ८१ ॥ ८२ ॥ ऋच इति ॥ ऋगादयो वेदाः इतिहासो भारतादिः उपवेदाः आयुर्वेदादयः ॥ ८३ ॥ वेदाङ्गानीति ॥ मन्वादिकृतानि धर्मशास्त्राणि आख्यानानि पुराणानि अनुवाकाः कल्पसूत्रादयः ॥ ८४ ॥ ॥ ८५ ॥ किं बहुनोक्तेन सर्वाणि वस्तुजातानि तन्मूर्तिरेवेत्याह–यानीति ॥ ८६ ॥ उपदेशसर्वस्वं तत्फलं चाह–अहमिति ॥ भवतीति भवः देहस्तस्मादुद्भवन्तीति भवोद्भवाः द्वन्द्वगदाः रागद्वेषादयो हृद्रोगाः न भवंति स्पष्टमन्यत् ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ इति श्रीधरस्वामिविरचितायामात्मप्रकाशाख्यायां श्रीविष्णुमहापुराणव्याख्यायां प्रथमांशे द्वाविंशोध्यायः ॥ २२ ॥ प्रथमांशः समाप्तः ॥



इदं पुस्तकं क्षेमराज–श्रीकृष्णदासश्रेष्ठिना मुम्बय्यां स्वकीये "श्रीवेङ्कटेश्वर" (स्टीम्) यन्त्रालये मुद्रयित्वा प्रकाशितम् । संवत् १९६७, शके १८३२.

॥ अथ श्रीविष्णुमहापुराणे विष्णुचित्त्यात्मप्रकाशाख्यश्रीधरीय
व्याख्याद्वयोपेते द्वितीयोंशः प्रारभ्यते ॥

श्रीमते रामानुजाय नमः ॥ मैत्रेय उवाच ॥ भगवन्सम्यगाख्यातं ममैतदखिलं त्वया ॥ जगतः सर्गसम्बन्धि यत्पृष्टोसि गुरो मया ॥ १ ॥ योयमंशो जगत्सृष्टिसम्बन्धो गदितस्त्वया ॥ तत्राहं श्रोतुमिच्छामि भूयोपि मुनिसत्तम ॥ २ ॥ प्रियव्रतोत्तानपादौ सुतौ स्वायम्भुवस्य यौ ॥ तयोरुत्तानपादस्य ध्रुवः पुत्रस्त्वयोदितः ॥३ ॥ प्रियव्रतस्य नैवोक्ता भवता द्विज सन्ततिः ॥ तामहं श्रोतुमिच्छामि प्रसन्नो वक्तुमर्हसि ॥ ४ ॥ श्रीपराशर उवाच ॥ कर्दमस्यात्मजां कन्यामुपयेमे प्रियव्रतः ॥ सम्राट् कुक्षी च तत्कन्ये दशपुत्रास्तथाऽपरे ॥५॥ महाप्रज्ञा महावीर्या विनीता दयिताः पितुः ॥ प्रियव्रतसुताः ख्यातास्तेषां नामानि मे शृणु॥६॥ आग्नीध्रश्चाग्निबाहुश्च वपुष्मान्द्युतिमांस्तथा ॥ मेधा मेधातिथिर्भव्यः सवनः पुत्र एव च ॥ ७ ॥ ज्योतिष्मान्दशमस्तेषां सत्यनामा सुतोऽभवत् ॥ प्रियव्रतस्य पुत्रास्ते प्रख्याता बलवीर्यतः ॥ ८ ॥ मेधाग्निबाहुपुत्रास्तु त्रयो योगपरायणाः ॥ जातिस्मरा महाभागा न राज्याय मनो दधुः ॥ ९ ॥ निर्मलाः सर्वकालन्तु समस्तार्थेषु वै मुने ॥ चक्रुः क्रियां यथान्यायमफलाकांक्षिणो हि ते ॥ १० ॥ प्रियव्रतो ददौ तेषां सप्तानां मुनिसत्तम ॥ सप्तद्वीपानि मैत्रेय विभज्य सुमहात्मनाम् ॥ ११ ॥

श्रीमते रामानुजाय नमः ॥ अथ विष्णुचित्ती–द्वितीयेंशे सृष्टिविशेषः तत्प्रसंगात्सृष्टानां निवासश्चोच्यते।तत्र प्रथमांशेऽवशेषितं प्रियव्रतान्वयं पृच्छति–भगवन्निति॥सर्गसम्बन्धि सृष्ट्यनुबन्धं वस्तु यथा जगद्बभूव यन्मयमित्यादिकम् ॥१॥ योऽयमिति ॥ सृष्टिसम्बन्धः सृष्ट्या वाचकत्वेन सम्बन्धः सृष्टिवाची हि प्रथमांशः ॥२॥३॥४॥ ॥५॥६॥ आग्नीध्र इति ॥ नवमस्य पुत्र इति संज्ञा ॥ ७ ॥ ज्योतिष्मानिति ॥ दशमो ज्योतिष्मान् सत्यनामा यथार्थनामा ज्योतिष्मत्त्वात् ॥ ८॥९॥१०॥११॥

॥ द्वितीयांशे चतुःप्रश्नः प्रसंगेनानुवर्ण्यते ॥ भूमंडलं सपातालं ज्योतिश्चक्रादिलक्षणम् ॥ १ ॥ अथ श्रीधरी–उक्तानुवादपूर्वकं प्रियव्रतवंशं पृच्छति भगवन्नित्यादिचतुर्भिः–भगवन्निति ॥ सर्गसंबंधि यथा जगद्भूवेत्यादि यत्पृष्टोसि ॥ १ ॥ योयमिति ॥ जगत्सृष्टौ व्याख्यायां वाचकत्वेन संबंधः ॥ २ ॥ प्रियव्रतेति ॥ ध्रुवो वंशप्रवर्तकस्त्वयोक्तः ॥ ३ ॥ ४ ॥ कर्दमस्येति ॥ आत्मजामौरसीं कन्यां संज्ञामिति वा दशपुत्राः पुत्रसंज्ञाः ॥ ५ ॥ ६ ॥ ७ ॥ ज्योतिष्मानिति ॥ तेषां तु ज्योतिष्मान् सत्यनामा अन्वर्थसंज्ञस्तेजस्वीत्यर्थः ॥ ८ ॥ ९ ॥ १० ॥ प्रियव्रत इति ॥ तेषां विरक्तव्यतिरिक्तानां विभज्य द्वीपानि ददौ । रथचक्रनेमिभिः परिघा

जम्बूद्वीपं महाभाग सोऽग्नीध्राय ददौ पिता ॥ मेधातिथेस्तथा प्रादात्प्लक्षद्वीपं तथापरम् ॥१२॥ शाल्मले च वपुष्मन्तं नरेन्द्रमभिषिक्तवान् ॥ ज्यो
तिष्मन्तं कुशद्वीपे राजानं कृतवान्प्रभुः ॥१३॥ द्युतिमंतं च राजानं क्रौञ्चद्वीपे समादिशत् ॥ शाकद्वीपेश्वरं चापि भव्यं चक्रे प्रियव्रतः ॥१४॥
पुष्कराधिपतिं चक्रे सवनं चापि स प्रभुः ॥ जम्बूद्वीपेश्वरो यस्तु आग्नीध्रो मुनिसत्तम ॥१५॥ तस्य पुत्रा बभूवुस्ते प्रजापतिसमा नव ॥ नाभिः
किंपुरुषश्चैव हरिवर्ष इलावृतः ॥१६॥ रम्यो हिरण्वान्षष्ठश्च कुरुर्भद्राश्व एव च ॥ केतुमालस्तथैवान्यःसाधुचेष्टोऽभवन्नृपः ॥१७॥ जम्बूद्वीपवि
भागांश्च तेषां विप्र निशामय ॥ पित्रा दत्तं हिमाह्वं तु वर्षं नाभेस्तु दक्षिणम् ॥१८॥ हेमकूटं तथा वर्षं ददौ किंपुरुषाय सः ॥ तृतीयं नैषधं वर्षं
हरिवर्षाय दत्तवान् ॥ १९ ॥ इलावृताय प्रददौ मेरुर्यत्र तु मध्यमः ॥ नीलाचलाश्रितं वर्षं रम्याय प्रददौ पिता ॥२०॥ श्वेतं यदुत्तरं तस्मात्पित्रा
दत्तं हिरण्वते॥२१॥यदुत्तरं शृङ्गवतो वर्षं तत्कुरवे ददौ॥ मेरोः पूर्वेण यद्वर्षं भद्राश्वाय प्रदत्तवान्॥२२॥गन्धमाधनवर्षं तु केतुमालाय दत्तवान् ॥
इत्येतानि ददौ तेभ्यः पुत्रेभ्यः स नरेश्वरः ॥ २३ ॥ वर्षेष्वेतेषु तान्पुत्रानभिषिच्य स भूमिपः ॥ सालग्रामं महापुण्यं मैत्रेय तपसे ययौ॥२४॥
यानि किंपुरुषादीनि वर्षाण्यष्टौ महामुने ॥ तेषां स्वाभाविकी सिद्धिः सुखप्राया ह्ययत्नतः ॥ २५ ॥ विपर्ययो न तेष्वस्ति जरामृत्युभयं न च ॥
धर्माधर्मौ न तेष्वास्तां नोत्तमाधममध्यमाः ॥ २६ ॥ न तेष्वस्ति युगावस्था क्षेत्रेष्वष्टसु सर्वदा ॥ हिमाह्वयं तु वै वर्षं नाभेरासीन्महात्मनः ॥
तस्यर्षभोऽभवत्पुत्रो मेरुदेव्यां महाद्युतिः ॥ २७ ॥

॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ तस्येति ॥ प्रजापतिसमाः भृग्वादिनवप्रजापतिभिस्तुल्याः ॥ १६ ॥ १७ ॥ जंबूद्वीपेति ॥ हिमाह्वं भारतं
दक्षिणं हिमवतः हिमवद्धेमकूटनिषधैर्गिरिभिः स्वस्मात्स्वस्माद्दक्षिणानां नीलश्वेतशृंगिभिरुत्तरेषां वर्षाणामेतद्व्यपदेशः ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ यदिति ॥
गन्धमादनवर्षं मेरोः पश्चिमम् ॥ २२ ॥ २३ ॥ २४ ॥ यानीति ॥ सिद्धिर्भोगानां स्वाभाविकी न कृष्यादिसाध्या ॥ २५ ॥ विपर्यय इति ॥ विपर्ययो दुःखप्राचु
र्यादिजरामृत्युभयं तत्कलृप्तादायुरवधेः प्राक् न धर्माधर्मौ वर्णाश्रमनियमाभावेन कर्माधिकाराभावात् ॥२६॥ नेति ॥ अतः पूर्वोक्ताद्धेतोः न युगावस्था सा हि धर्माधर्म

भूतगर्तजातैस्ससुद्रैर्द्वीपानि स्वयं विभक्तानि कृत्वा ददाविति भागवतोक्तरीत्या द्रष्टव्यम् ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ जम्बूद्वीपेति ॥ जम्बुद्वीपसन्निवेशं चोत्तराध्याये वक्ष्यति । हिमाह्वं
हिमवतो दक्षिणं भारतवर्षं नाम यथासुखं वासस्थानं तदुक्तं मात्स्ये—"वसन्त्यृषन्त्यो वर्षेषु प्रजा येषु चतुर्विधाः । ऋपिरित्येव रमणे वर्षत्वं तेन तेषु च ॥" इति ॥ १८ ॥ हेमकूटमिति ॥ हेमकूटं हिमवत उत्तरं हेमकूट
गिरेर्दक्षिणं नैषधम् ॥१९॥ इलावृतायेति ॥ हेमकूटादुत्तरं निषधगिरेर्दक्षिणं नैषधादुत्तरमिलावृतं प्रददौ । यत्र मध्ये मेरुस्तिष्ठति इलावृतादुत्तरतो नीलाचलः तदाश्रितम् ॥२०॥ श्वेतमिति ॥ तस्मादुत्तरं श्वेतम् यदिति ।
श्वेतगिरेरुत्तरं वर्षं गन्धमादनवर्षं मेरोः पश्चिमम् ॥ २१ ॥२२॥२३॥२४॥२५ ॥ विपर्यय इति ॥ विपर्ययः सुखमकालमृत्युश्च तेषु धर्माधर्मौ नास्तां न स्तः । तेषां भौमस्वर्गत्वेन धर्माद्यधीनत्वाभावात् ॥ २६ ॥ २७ ॥

ऋषभाद्भरतो जज्ञे ज्येष्ठः पुत्रशतस्य सः ॥ कृत्वा राज्यं स्वधर्मेण तथेष्ट्वा विविधान्मखान् ॥२८॥ अभिषिच्य सुतं वीरं भरतं पृथिवीपतिः ॥ तपसे स महाभागः पुलहस्याश्रमं ययौ ॥२९॥ वानप्रस्थविधानेन तत्रापि कृतनिश्चयः ॥ तपस्तेपे यथान्यायमियाज स महीपतिः ॥३०॥ तपसा कर्षितोत्यर्थं कृशो धमनिसन्ततः ॥ नग्नो वीटां मुखे कृत्वा वीराध्वानं ततो गतः ॥ ३१ ॥ ततश्च भारतं वर्षमेतल्लोकेषु गीयते ॥ भरताय यतः पित्रा दत्तं प्रातिष्ठता वनम् ॥ ३२ ॥ सुमतिर्भरतस्याभूत्पुत्रः परमधार्मिकः ॥ कृत्वा सम्यग्ददौ तस्मै राज्यमिष्टमखं पिता ॥ ॥ ३३ ॥ पुत्रसंक्रामितश्रीस्तु भरतः स महीपतिः ॥ योगाभ्यासरतः प्राणान्सालग्रामेऽत्यजन्मुने ॥ ३४ ॥ अजायत च विप्रोसौ योगिनां प्रवरे कुले ॥ मैत्रेय तस्य चरितं कथयिष्यामि ते पुनः ॥ ३५ ॥ सुमतेस्तेजसस्तस्मादिन्द्रद्युम्नो व्यजायत ॥ परमेष्ठी ततस्तस्मात्प्रतिहारस्त दन्वयः ॥ ३६ ॥

ह्रासवृद्धिकृता देहादिह्रासलक्षणेत्येकवचनपाठश्च ॥ २७ ॥ २८ ॥ अभिषिच्येति ॥ पुलहस्याश्रमं सालग्रामम् ॥ २९ ॥ ३० ॥ तपसेति ॥ वीटां कन्दुकं स चात्र मौनानशनव्रतस्थैः शिलामयः कार्यः वीराध्वानं महाप्रस्थानम् ॥ ३१ ॥ तत इति ॥ प्रातिष्ठता प्रतिष्ठमानेन ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ सुमतेरिति ॥

ऋषभादिति ॥ स ऋषभो राज्यं कृत्वा तपस्तप्तुं पुलहस्याश्रमं सालग्रामक्षेत्रं ययावित्युत्तरेणान्वयः ॥ २८ ॥ २९ ॥ ३० ॥ तपसेति ॥ धमनीभिश्शिराभिस्सन्ततो व्याप्तः । तपसा कृशदेहत्वात् विटं कन्तुकसदृशमश्मकवलं "तेषां तु क्रीडमानानामुदपानेंगुलीयकम् । पपात धर्मराजस्य विटस्तत्रैव चापतत् ॥" इति संभवोक्तेः । विटशब्देन कन्तुको गम्यते 'आस्ये कृत्वाश्मकवलम्' इति श्रीभागवतोक्तेश्च तत्साद्दश्यं लक्ष्यते । वीराध्वानं महाप्रस्थानम ॥ ३१ ॥ तत इति ॥ ततश्च ऋषभादनन्तरं भरतेन पालितत्वात् भारतमेतद्वर्षं गीयते । प्रातिष्ठता प्रस्थानं कुर्वतेत्यर्थः ॥ ३२ ॥ सुमतिरिति ॥ इष्टमखः पूजितयज्ञः सन् सम्यग्राज्यं कृत्वा पश्चात्तस्मै पुत्राय तद्राज्यं ददौ ॥ ३३ ॥ पुत्रसंक्रामितश्रीरिति ॥ पुत्रे संक्रमिता श्रीः राज्यलक्ष्मीर्येन सः ॥ ३४ ॥ अजायतेति ॥ पुनः कथयिष्यामीत्यस्यायं भावः स्थूलत्वे न संग्रहत्वात्प्रथमं तावत्प्रस्तुतं भुवनकोशं शृणु । ततस्स्थूले निर्जितमात्मानं शनैस्सूक्ष्मे धिया नयेदिति भागवतोक्तक्रमेण ग्रहणयोग्यं सूक्ष्मतत्त्वसम्बंधं च भरतस्य चरितं पश्चाद्वक्ष्यामीति ॥ ३५ ॥ सुमतेरिति ॥ तस्मात्

---

१ विटमिति तैलंगपाठः ।

प्रतिहर्तेति विख्यात उत्पन्नस्तस्य चात्मजः ॥ भवस्तस्मादथोद्गीथः प्रास्ताविस्तत्सुतो विभुः ॥ ३७ ॥ पृथुस्ततस्ततो नक्तो नक्तस्यापि गयः सुतः ॥ नरो गयस्य तनयस्तत्पुत्रोभूद्विराट् ततः ॥ ३८ ॥ तस्य पुत्रो महावीर्यो धीमांस्तस्मादजायत ॥ महान्तस्तत्सुतश्चाभून्मनस्युस्तस्य चात्मजः ॥ ३९ ॥ त्वष्टा त्वष्टुश्च विरजो रजस्तस्याप्यभूत्सुतः ॥ शतजिद्रजसस्तस्य जज्ञे पुत्रशतं मुने ॥ ४० ॥ विष्वग्ज्योतिप्रधानास्ते यैरिमा वर्द्धिताः प्रजाः ॥ तैरिदं भारतं वर्षं नवभेदमलंकृतम् ॥ ४१ ॥ तेषां वंशप्रसूतैश्च भुक्तेयं भारती पुरा ॥ कृतत्रेतादिसर्गेण युगाख्यामेकसप्ततिम् ॥ ४२ ॥ एष स्वायंभुवः सर्गो येनेदं पूरितं जगत् ॥ वाराहे तु मुने कल्पे पूर्वमन्वन्तराधिपः ॥ ४३ ॥ इति श्रीविष्णुपुराणे द्वितीयेंशे प्रथमोऽध्यायः ॥ १ ॥

तेजसो वीर्यात् ॥ ३६ ॥ प्रतिहर्तेति ॥ भुवो इति कस्यचिन्नाम भुवस्तस्मादिति च पाठः॥३७॥३८॥तस्येति॥महान्त इति कस्यचिन्नाम॥३९॥त्वष्टेति॥शतजित्पुत्रशतम् ॥४०॥ विष्वग्ज्योतिप्रधाना इति ॥ ते शतजित्पुत्राः ॥४१॥तेषामिति॥भारती भरतस्येयम् भूरिति भारती कृतत्रेतादिसंज्ञेययुगाख्या कृतादिव्यपदेशैर्युगैराख्येया तुर्युगैकसप्ततिरियं भारती भूर्भुक्ता एकसप्ततिमिति कालाध्वनोरिति द्वितीया प्राप्ता प्रथमाप्रयोग आर्षत्वात्साधुः एकमन्वन्तरं भुक्तेत्यर्थः।यद्वा युगैकसप्ततिमितो यः कालस्तं कालं भूर्भुक्तेति यत्तच्छब्दयोरध्याहारः। कृतत्रेतादिसर्गेण युगाख्यामेकसप्ततिमिति पाठे कृतादिस्वभावेन युगैराख्येयामेकसप्ततिं कालं भूर्भुक्तेति ॥ ४२ ॥ एष इति ॥ पूर्वमन्वंतराधिपे स्वायंभुव मनौ सति एष एकसप्ततियुगावच्छिन्नः सर्गः स्वायंभुवः स्वायंभुवस्य मनोः सम्बन्धी प्रियव्रतादिः ॥ ४३ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये द्वितीयेंशे प्रथमोऽध्यायः ॥ १ ॥

भरतादनन्तरं सुमतेस्तेजसो वीर्यादिन्द्रद्युम्नो जातस्तदन्वयः प्रतिहारः ॥ ३६ ॥ प्रतिहर्तेति ॥ प्रतिहारस्य पुत्रः प्रतिहर्ता ॥ ३७ ॥ ३८ ॥ ३९ ॥ त्वष्टेति ॥ शतजित्पुत्रशतम् ॥ ४० ॥ विष्वग्ज्योतिप्रधाना इति ॥ विष्वग्ज्योतिः प्रधानो मुख्यो येषां ते नवभेदं नवभेदांस्तृतीये अध्याये वक्ष्यति ॥ ४१ ॥ ननु पूर्वमुत्तानपादादयोऽपि सार्वभौमाः इदानीं प्रियव्रतादयोपि सार्वभौमा एवोच्यन्ते । तच्च समकाले न संगच्छते अतः क्रमो वक्तव्यस्तत्राह–तेषामिति ॥ तेषां प्रियव्रतान्वयप्रसूतानां वंशे प्रसूतैः पुरा प्रथममियं भारतीभूमिर्भुक्ता । पश्चादुत्तानपादादिभिः कियन्तं कालमतभुक्तत्यत्राह–कृतेति ॥ कृतत्रेतादीनां सर्गेण प्रवृत्त्या युगाख्या चतुर्युगैराख्यायते या एकसप्ततिर्मन्वन्तराख्यः कालः तावन्तं कालमित्यर्थः । कृतत्रेतादिसंज्ञेयेति पाठेप्येवमेव योज्यम्।युगाख्यामेकसप्ततिमिति पाठे तु स्फुटोयमर्थः ॥ ४२ ॥ एतदेव स्पष्टयति–एष इति ॥ वाराहेऽस्मिन् कल्पे यदा स्वायंभुवः सर्वस्य प्रथममन्वन्तराधिपोऽभूत्तदा एषः प्रियव्रतवंश्यानां राज्ञां सर्गः । ततः स्वारोचिषादावुत्तानपादवंश्यानामित्यर्थः । अत एवोत्तानपादवंश्यस्य प्राचेतसदक्षस्य कन्यायामादित्यानां जन्म वैवस्वतमन्वन्तरे प्रोक्तं पूर्वमन्वन्तराधिपे इति सप्तम्यन्तपाठे प्रथममन्वन्तराधिपे स्वायंभुवे वर्तमाने स्वायंभुवस्स्वयंभुवोंशभूतो यस्मादेव मनोः प्रियव्रतादिसर्गः प्रथमं प्रवृत्त इत्यर्थः। यदा–पूर्वोक्तसृष्टिनिगमनमेतदेष इति ॥ ४३ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यायां श्रीविष्णुमहापुराणव्याख्यायां द्वितीयांशे प्रथमोऽध्यायः ॥ १ ॥

---

१ तेजस इति कस्यचिन्नाम इति पाठान्तरम्।

श्रीमैत्रेय उवाच ॥ कथितो भवता ब्रह्मन्सर्गः स्वायम्भुवश्च मे ॥ श्रोतुमिच्छाम्यहं त्वत्तः सकलं मंडलं भुवः ॥ १ ॥ यावन्तः सागरा द्वीपास्तथा वर्षाणि पर्वताः ॥ वनानि सरितः पुर्यो देवादीनां तथा मुने ॥ २ ॥ यत्प्रमाणमिदं सर्वं यदाधारं यदात्मकम् ॥ संस्थानमस्य च मुने यथावद्वक्तुमर्हसि ॥ ३ ॥ श्रीपराशर उवाच ॥ मैत्रेय श्रूयतामेतत्संक्षेपाद्वदतो मम ॥ नास्य वर्षशतेनापि वक्तुं शक्यो हि विस्तरः ॥ ४ ॥ जम्बूप्लक्षाह्वयौ द्वीपौ शाल्मलिश्चापरो द्विज ॥ कुशः क्रौंचस्तथा शाकः पुष्करश्चैव सप्तमः ॥ ५ ॥ एते द्वीपाः समुद्रैस्तु सप्तसप्तभिरावृताः ॥ लवणेक्षुसुरासर्पिर्दधिदुग्धजलैः समम् ॥ ६ ॥ जम्बू ीपः समस्तानामेतेषां मध्यसंस्थितः ॥ तस्यापि मेरुर्मैत्रेय मध्ये कनकपर्वतः ॥ ७ ॥ चतुराशीतिसाहस्रो योजनैरस्य चोच्छ्रयः ॥८॥ प्रविष्टः षोडशाधस्ताद्द्वात्रिंशन्मूर्ध्नि विस्तृतः ॥ मूले षोडशसाहस्रो विस्तारस्तस्य सर्वशः ॥ ॥ ९ ॥ भूपद्मस्यास्य शैलोसौ कर्णिकाकारसंस्थितः ॥ १० ॥

॥ १ ॥ यावंत इति ॥ द्विरापत्वात् द्वीपाः वर्षाणि कुलाद्यवच्छिन्ना द्वीपांशाः वर्षशब्दनिर्वचनं मात्स्योक्तम् " वसन्त्यृषन्त्यो वर्षेषु प्रजा येषु चतुर्विधाः । ऋषिरित्येष रमणे वर्षत्वन्तेन तेषु तत् " इति ॥ २ ॥ ३ ॥ ४ ॥ भूमंडलं वक्तुमादौ तदवयवद्वीपाद्युत्पत्तिमाह जंबूप्लक्षाह्वयाविति ॥ ५ ॥ एत इति ॥ समं स्वस्वावरणीयद्वीपतुल्यविस्तारं यथा तथा एते आवृताः ॥ ६ ॥ ७ ॥ चतुरिति ॥ सहस्रमेव साहस्रम् अशीतिरेवाऽऽशीतिः । योजनैश्चतुरधिकाशीतिसाहस्राणि यस्य स उच्छ्रयश्चतुराशीतिसाहस्रः अस्योच्छ्रायश्चतुराधिकाशीतिसहस्रयोजन इत्यर्थः ॥ ८ ॥ प्रविष्ट इति ॥ योजनानां षोडशसहस्राणि भुवि खातः " हस्तोङ्गुलिविंशत्या चतुरन्वितया चतुष्करो दण्डः । तद्द्विसहस्रं क्रोशो योजनमेकं भवेच्चतुष्क्रोशम् " इति गणिते अष्टभिर्यवमध्यैः स्यादंगुलमिति च द्वात्रिंशत्सहस्राणि मूर्ध्नि व्यासः "सर्वत्र हि समवृत्ते व्यासस्त्रिगुणस्मृतो भवेत्परिधिः " इति गणितज्ञाः ॥ मूल इति । मूले भूमेरुपरि चतुर्दशयोजनसाहस्रावधिके ॥ ९ ॥ भूपद्मस्येति ॥ "यत्तद्धि कर्णिकामूलमिति सत्संप्रकीर्तितम् । तद्योजनसहस्राणां सप्ततीनामधः स्मृतम्" इति वायूक्तेः । मात्स्ये च मेरुसन्निवेश उक्तः "वृत्ताकृतिप्रमाणश्च

उक्तानुवादेन भुवनकोश सविशेषं बुभुत्सुः पृच्छति—कथित इति ॥ स्वयम्भुवोंशत्वान्मनुरेव स्वयम्भूस्तदीयः प्रियव्रतादिसर्गः कथितः तत्कथने च द्वीपवर्षादिविभागोक्त्या सूचितं भूमण्डलं श्रोतुमिच्छामि ॥ १ ॥ यावन्त इति ॥ देवादीनां पुर्यो नगर्यः ॥ २ ॥ यत्प्रमाणमिति ॥ एवमेते द्वादश प्रश्नाः एतेषां च वक्ष्यमाणैस्तत्संख्यासंस्थानादिभिः यथायोगमुत्तराणि द्रष्टव्यानि ॥ ३ ॥ ४ ॥ ५ ॥ यत इति ॥ जम्ब्वादिसप्तद्वीपास्सप्तभिर्लवणादिसंज्ञैस्समुद्रैस्समं यदा भवत्येवं सर्वत आवृताः ॥ ६ ॥ ७ ॥ चतुरिति ॥ अशीतिरेव आशीतिः सहस्रमेव साहस्रं चतुरधिकाण्याशीतिः साहस्राणि प्रमाणं यस्य स मेरोरुच्छ्रायः । लक्षयोजनप्रमाणो मेरुः तस्योच्छ्रायो बहिश्चतुरशीतियोजनसाहस्रो दृश्यते ॥ ८ ॥ प्रविष्ट इति ॥ षोडशयोजनसाहस्राण्यधस्ताद्भूम्यां प्रविष्टः खातः । द्वात्रिंशद्योजनसहस्राणि मूर्ध्नि विस्तृतः ॥ ९ ॥ भूपद्मस्येति ॥ अत एव मूर्ध्नि विस्तृतत्वान्मूले संकुचितत्वाच्च भूमध्यावस्थानाच्च भूरूपस्य पद्मस्य कर्णिकाकारेण संस्थितः ॥ १० ॥

हिमवान्हेमकूटश्च निषधश्चास्य दक्षिणे ॥ नीलः श्वेतश्च शृंगी च उत्तरे वर्षपर्वताः ॥११॥ लक्षप्रमाणौ द्वौ मध्यौ दशहीनास्तथापरे ॥ सहस्र
द्वितयोच्छ्रायास्तावद्विस्तारिणश्च ते ॥ १२ ॥ भारतं प्रथमं वर्षं ततः किंपुरुषं स्मृतम् ॥ हरिवर्षं तथैवान्यन्मेरोर्दक्षिणतो द्विज ॥ १३ ॥
रम्यकं चोत्तरं वर्षं तस्यैवानु हिरण्मयम् ॥ उत्तराः कुरवश्चैव यथा वै भारतं तथा ॥ १४ ॥ नवसाहस्रमेकैकमेतेषां द्विजसत्तम ॥ इलावृतं च
तन्मध्ये सौवर्णो मेरुरुच्छ्रितः ॥१५॥ मेरोश्चतुर्दिशं तत्तु नवसाहस्रविस्तृतम् ॥ इलावृतं महाभाग चत्वारश्चात्र पर्वताः ॥ १६ ॥ विष्कंभारचिता
मेरोर्योजनायुतमुच्छ्रिताः ॥ नवैः सरोभिश्च समं दिक्ष्वेते केशवाचलाः ॥१७॥ पूर्वेण मन्दरो नाम दक्षिणे गन्धमादनः ॥ विपुलः पश्चिमे पार्श्वे
सुपार्श्वश्चोत्तरे स्मृतः ॥ १८ ॥ कदम्बस्तेषु जम्बूश्च पिप्पलो वट एव च ॥ एकादशशतायामाः पादपा गिरिकेतवः ॥ १९ ॥ जम्बूद्वीपस्य सा
जम्बूर्नामहेतुर्महामुने ॥ महागजप्रमाणानि जम्ब्वास्तस्याः फलानि वै ॥ पतन्ति भूभृतः पृष्ठे शीर्यमाणानि सर्वतः ॥ २० ॥

चतुरस्रः समुत्थितः । विस्तारास्त्रिगुणश्चास्य परिणाहे सुमण्डलः” इति ॥ १० ॥ हिमवानिति ॥ वर्षपर्वताः वर्षाणां विभेदकाः पर्वताः ॥ ११ ॥ लक्षप्रमाणाविति ॥ उक्तानां वर्षाणां मध्ये मेरुमभितः स्थितौ नीलनिषधौ लक्षप्रमाणदैर्घ्यौ । मध्य इति पाठे जम्बूद्वीपस्येति शेषः । परे चत्वारो लक्षाद्दशांशेन दशसहस्रेण हीनाः । यथा वाराहे “जम्बूद्वीपप्रमाणेन निषधः परिकीर्तितः । तस्माच्च दशभागेन हेमकूटः प्रहीयते । विंशद्भागेन हिमवान्तद्वदेव प्रहीयते । द्वीपस्य मंडलीभावाद्ध्रासवृद्धी प्रकीर्तिते ॥ ” इति अन्यत्र च “वृत्तभावात्समुद्रस्य महीमंडलभावतः । आयामात्परिहीयन्ते चतुरश्च समा मता ॥ ” इति । एवं नीलादिष्विति द्रष्टव्यम् ॥ १२ ॥ १३ ॥ रम्यकमिति ॥ यथा वै भारतं तथा धनुराकारमित्यर्थः । “धनुःसंस्थे स्थिते ज्ञेये द्वे वर्षे दक्षिणोत्तरे । दीर्घाणि तत्र चत्वारि चतुरस्रमिलावृतम्” इति वायूक्तेः ॥ १४ ॥ नवसाहस्रमिति ॥ इलावृतं चतुस्त्रिंशत्सहस्रयोजनविस्तारं भद्राश्वकेतुमालौ प्राक् प्रत्यग्द्वात्रिंशद्योजनावित्यर्थः सिद्धम् । 'सहस्रमाल्यवद्गन्धमादनौ' इति वायूक्तेः ॥ १५ ॥ १६ ॥ विष्कंभा इति ॥ मेरोर्धारकाः कीला विष्कंभाः ॥ १७ ॥ १८ ॥ १९ ॥ जंबूद्वीपेति ॥ महागजेति “पंचोन्नतिः सप्तगजस्य दैर्घ्यमष्टौ च हस्ताः परिणाहमानम् । एकद्विवृद्धावथ

भारतवर्षमारभ्य मेरोर्दक्षिणोत्तरस्थितानां षण्णां वर्षाणां मर्यादापर्वतानाह–हिमवानिति ॥ वर्षाणां व्यवच्छेदकारकाः पर्वताः ॥ ११ ॥ लक्षप्रमाणाविति ॥ लक्षप्रमाणौ द्वौ प्राक्पश्चिमतो दैर्घ्येण निषधनीलौ । यद्यपि जम्बूद्वीपस्य मंडलाकारस्य लक्षयोजनप्रमाणत्वात्तन्मध्यरेखाया एव मुख्यं लक्षप्रमाणत्वं निषधनीलौ तु तन्मध्यरेखा तु दक्षिणतश्चोत्तरतश्च सप्तहस्रयोजनांतारितत्त्वादीषन्न्यूनौ तथापि स्थूलदृष्ट्या लक्षप्रमाणावित्युक्तम् । अपरे तु हेमकूटादयो दशहीनाः दशांशहीनाः हेमकूटश्वेतौ नवतियोजनसहस्रप्रमाणौ हिमवच्छृंगिणौ चाशीतियोजनसहस्रप्रमाणौ तदुक्तं वाराहे “द्वीपस्य मंडलीभावाद्ध्रासवृद्धी प्रकीर्तिते” इति ॥ १२ ॥ १३ ॥ रम्यकमिति ॥ यथा वै भारतमिति द्वीपमंडलप्रांतवर्तित्वाद्धनुराकारं कुरुवर्षमित्यर्थः ॥ १४ ॥ नवसाहस्रमिति ॥ एतेषां भारतादीनां मध्ये एकैकं वर्षं विस्तरतो नवसाहस्रयोजनविस्तारप्रमाणं इलावृतं च नवसहस्रं विस्तारसाम्येपि तत्र तद्विशेषमाह–तन्मध्य इति ॥ तदाह–वायुः ॥ 'धनुःसंज्ञे स्थिते ज्ञेये द्वे वर्षे दक्षिणोत्तरे । दीर्घाणि तत्र चत्वारि चतुरस्रमिलावृतम् ॥ ” इति ॥ १९ ॥ मेरोरिति ॥ किञ्चात्र इलावृते अन्ये चत्वारः पर्वताः मेरोश्चतुर्दिशम् ॥ १६ ॥ विष्कंभा इति ॥ विष्कंभाः दार्ढ्यार्थमवष्टंभा ईश्वरेण रचिताः अन्यथा मूलभागान्मूर्द्धभागस्य द्विगुणविस्ताराद्गौरवेण भंगप्रसंगात् ॥ १७ ॥ १८ ॥ कदंब इति ॥ तेष्व वस्तंभपर्वतेषु पूर्वादिक्रमेण चत्वारः पादपाः एकादशशतयोजनोच्छ्रायाः गिरेः केतवो ध्वजा इव रचिताः ॥ १९ ॥ जम्बूद्वीपस्येति ॥ नामहेतुः नामप्रवृत्तिहेतुः फलप्रमाणविशेषो वायुनोक्तः “अरत्नीनां शता

रसेन तेषां प्रख्याता तत्र जाम्बूनदीति वै ॥ सरित्प्रवर्त्तते चापि पीयते तन्निवासिभिः ॥ २१ ॥ न स्वेदो न च दौर्गन्ध्यं न जरा नेन्द्रियक्षयः ॥
तत्पानात्स्वच्छमनसां जनानां तत्र जायते ॥२२॥ तीरमृत्तद्रसं प्राप्य सुखवायुविशोषिता ॥ जाम्बूनदाख्यं भवति सुवर्णं सिद्धभूषणम् ॥२३॥
भद्राश्वं पूर्वतो मेरोः केतुमालं च पश्चिमे ॥ वर्षे द्वे तु मुनिश्रेष्ठ तयोर्मध्यमिलावृतः ॥ २४ ॥ वनं चैत्ररथं पूर्वे दक्षिणे गन्धमादनम् ॥ वैभ्राजं
पश्चिमे तद्वदुत्तरे नन्दनं स्मृतम् ॥ २५ ॥ अरुणोदं महाभद्रमसितोदं समानसम् ॥ सरांस्येतानि चत्वारि देवभोग्यानि सर्वदा ॥ २६ ॥
शीताम्भश्च कुमुन्दश्च कुररी माल्यवांस्तथा ॥ वैकंकप्रमुखा मेरोः पूर्वतः केसराचलाः ॥ २७ ॥ त्रिकूटः शिशिरश्चैव पतंगो रुचकस्तथा ॥
निषदाद्या दक्षिणतस्तस्य केसरपर्वताः ॥ २८ ॥ शिखिवासाः सवैडूर्यः कपिलो गन्धमादनः ॥ जारुधिप्रमुखास्तद्वत्पश्चिमे केसराचलाः ॥
॥ २९ ॥ मेरोरनन्तरांगेषु जठरादिष्ववस्थिताः ॥ शंखकूटोथ ऋषभो हंसो नागस्तथा परः॥कालञ्जाद्याश्च तथा उत्तरे केसराचलाः ॥ ३० ॥

मन्दभद्रौ संकीर्णनागौ नियतप्रमाणौ " इति वचनाल्लौकिकगजस्य दशहस्तावरप्रमाणप्रसिद्धेः । वायुना च जम्बूफलस्य ततोऽधिकमानोक्तेर्महागजशब्दोत्र दिव्यगजवाची यथा वायुः "अरत्नीनां शतान्यष्टावेकषष्ठ्यधिकानि तु । फलप्रमाणं संख्यातं मुनिभिस्तत्त्वदर्शिभिः" इति ॥२०॥ रसेनेति ॥ सरित्प्रवर्तते प्रदक्षिणमिति शेषः। तदुक्तं—"मेरुं प्रदक्षणीकृत्य जम्बूमूलं विशत्यधः" इति ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ वनमिति ॥ विष्कम्भाद्रिप्रस्थेषु चैत्ररथादिवनानि तद्बहिः सरांसि तद्बहिः केसराचला इति क्रमो वायूक्तः ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ मेरोरिति ॥ मेरोरनन्तरांगेषु मेरोरनन्तरं वर्षम् इलावृतं तस्यांगेष्ववयवेषु माल्यवन्निषधगन्धमादननीलाख्यवर्षाद्रिषु तथा इलावृतस्यैव वक्ष्यमाणयोः प्राक्सीमाभूतयोर्जठरदेवकूटयोः पश्चात्सीमाभूतयोर्निषधपारियात्रयोश्चावस्थिताः केसरपर्वताः एषामन्तस्था अन्ये शैलाः एते च केसराचलत्वेन गण्यन्ते तेषां माल्यवन्निषधगंधमादनानां स्वशब्देन नीलस्य तु कालांजनशब्देन च केसरेषु उक्तत्वात् "पत्राणि लोकपद्मस्य मर्यादाशैलबाह्यतः" इति वक्ष्यमाणत्वाच्च जठरादीनामपि केसरत्वं युक्तम् । एते स्ववर्षापेक्षया वर्षाद्रयः पत्रापेक्षया मर्यादाद्रयः मेर्वपेक्षया केसराद्रयश्चेति अयमर्थो गङ्गाचतुर्भेदप्रस्तावपठिष्यमाणवायूक्त्या व्यक्तीभविष्यति । एतेषां केसराणां "केसरास्तु शतोच्छ्रायाह्यशीतिपृथुलायताः" इति वायूक्तं मानं ज्ञेयम् ॥ ३० ॥

न्यष्टावेकषष्ट्यधिकानि तु । फलप्रमाणं संख्यातमृषिभिस्तत्त्वदर्शिभिः ॥" इति ॥ २० ॥ २१ ॥ २२ ॥ तीरमृदिति ॥ सुखस्पर्शो वायुस्तेन विशोषिता सती तीरमृत्सरित्तीरमृत्तिका सिद्धानां भूषणं सुवर्णं भवति ॥ २३ ॥ भद्राश्वमिति ॥ तयोर्मध्यमित्यनुवादः तत्रस्थविष्कम्भाद्रिसानुषु चैत्ररथादिवनानामरुणोदादिसरसां कथनार्थः ॥ २४ ॥ २५ ॥ २६ ॥ २७॥२८॥२९॥ उक्तानां वक्ष्यमाणानां च केसराचलानां स्थानान्याह—

चतुर्दशसहस्राणि योजनानां महापुरी ॥ मेरोरुपरि मैत्रेय ब्रह्मणः प्रथिता दिवि ॥ ३१ ॥ तस्यास्समन्ततश्चाष्टौ दिशासु विदिशासु च ॥
इंद्रादिलोकपालानां प्रख्याताः प्रवराः पुरः॥३२॥विष्णुपादविनिष्क्रान्ता प्लावयित्वेन्दुमण्डलम् ॥ समन्ताद्ब्रह्मणः पुर्यां गङ्गा पतति वै दिवः॥
॥ ३३ ॥ सा तत्र पतिता दिक्षु चतुर्द्धा प्रतिपद्यते ॥ सीता चालकनन्दा च चक्षुर्भद्रा च वै क्रमात् ॥ ३४ ॥ पूर्वेण शैलाच्छीता तु
शैलं यात्यन्तरिक्षगा ॥ ततश्च पूर्ववर्षेण भद्राश्वेनैति सार्णवम् ॥ ३५ ॥ तथैवालकनन्दापि दक्षिणेनैत्य भारतम् ॥ प्रयाति सागरं भूत्वा सप्त
भेदा महामुने ॥ ३६ ॥

॥ ३१ ॥ ३२ ॥ विष्णुपादविनिष्क्रान्तेति ॥ दिवः आकाशात् ॥ ज्योतिश्चक्रभ्रामकप्रवहानिलेन चतुर्धा विभक्ता ब्रह्मपुर्या बहिश्चतुर्दिक्षु मेरुशृङ्गेषु पतति। तथाह वायुः " विभज्यमानसलिलात्तैजसेनानिलेन सा। मेरोरन्तरकूटेषु निपपात चतुर्ष्वपि" इति ॥ ३३ ॥ ३४ ॥ पूर्वेणेति ॥ शैलाच्छैलमित्यत्र क्रमोक्तौ वायुः "शीताम्बुशिखरभ्रष्टा कुमुञ्जे वरपर्वते। निपपात महाभागा तस्मादपि कुरर्यगम् ॥ तस्मान्माल्यवतं शैलम्" इत्युपक्रम्य "एवं शैलसहस्राणि दारयन्ती महानदी। निपपात तदा सीता जठरे सिद्धसेविते ॥ तस्मादुपगता शैलं देवकूटं तरंगिणी" इत्यादि ॥ ३५ ॥ तथैवेति ॥ अलकनन्दां चाधिकृत्य " हेमकूटात्तु कैलासं देवावासं ततोपि च । हिमवत्युत्तमनदी निपपात शिलोच्चये" इत्यादि "कैलासो हिमवांश्चैव मर्यादापर्वतावुभौ" इति वायूक्तेः। गन्धमादनस्य हिमवत्पादाद्रित्वाद्धिमवच्छब्दे

मेरोरिति॥मेरोरनन्तराणि सन्निहितानि यान्यंगानि मूलसमीपस्थानि तान्येव जठरादीनि पूर्वदक्षिणपश्चिमोत्तरदेशवर्तितया जठरपार्श्वदक्षिणवर्तिपृष्ठनामसाम्यात्तेष्ववस्थिताः । मेरोः कर्णिकाया इव केसरभूताः मूलदेशे परित उपक्लृप्ता इति शुकोक्तेः ॥ ३० ॥ ३१ ॥ तस्या इति ॥ लोकपालानां पुरःसार्धत्रिसहस्रयोजनमानपरिमिताः लोकपालानामष्टानां यथादिशं यथारूपं तुरीयमानेन पुरोष्टावुपक्लृप्ता इति शुकोक्तेः ॥ ३२ ॥ तत्र गंगागमनमाह–विष्णुपादेति ॥ त्रिधा विक्रमतोविष्णोर्वामपादांगुष्ठनखनिर्भिन्नोर्ध्वांडकटाहविवरेणाधःप्रविष्टवाह्यजलाधारा हि ब्रह्मदत्तार्घ्यजलधर्मद्रवसंयुता गंगा । सा च विष्णोर्वामपादांगुष्ठाद्विनिष्क्रांता सती दिवोंतरिक्षात्पतिता ब्रह्मणः पुर्यां पतति ॥ ३३ ॥ सेति ॥ सा तत्र पतिता सती चतुर्धा भेदं प्राप्नोति । सितेति च पाठान्तरम् ॥ ३४ ॥ पूर्वेणेति ॥ शैलाच्छैलं यातीत्यत्र शुकोक्तिः 'सीता तु ब्रह्मसदनात्केशराचलादिशिखरेभ्योथ प्रस्रवन्ती" इत्यादि।वायुना चोक्तं 'सीताम्बुशिखरभ्रष्टा' इत्युपक्रम्य "एवं शैलसहस्राणि दारयंती महानदी । निपपात तदा सीता जठरे सिद्धसेविते ॥ तस्मादुपागता शैलं देवकूटं तरङ्गिणी" इत्यादि ॥ ३५ ॥ तथैवेति ॥ तथैवालकनंदापीति केसराचलादिक्रमेण निषधहेमकूटानतिक्रम्येत्यर्थः। सप्तभेदा भूत्वेति ते च भेदाः मात्स्ये प्रोक्ताः "नलिनी ह्रादिनी चैव पावनी चैव प्राच्यगाः ॥ सीता

चक्षुश्च पश्चिमगिरीनतीत्य सकलांस्ततः ॥ पश्चिमं केतुमालाख्यं वर्षं गत्वैति सागरम् ॥ ३७॥ भद्रा तथोत्तरगिरीनुत्तरांश्च तथा कुरून् ॥ अतीत्योत्तरमम्भोधिं समभ्येति महामुने ॥ ३८ ॥ आनीलनिषधायामौ माल्यवद्गन्धमादनौ ॥ तयोर्मध्यगतो मेरुः कर्णिकाकारसंस्थितः ॥ ॥ ३९ ॥ भारताः केतुमालाश्च भद्राश्वाः कुरवस्तथा ॥ पत्राणि लोकपद्मस्य मर्यादाशैलबाह्यतः ॥४०॥ जठरो हेमकूटश्च मर्यादापर्वतावुभौ॥ तौ दक्षिणोत्तरायामावानीलनिषधायतौ ॥ ४१ ॥ गन्धमादनकैलासौ पूर्ववच्चायतावुभौ ॥ अशीति योजनायामावर्णवान्तर्व्यवस्थितौ ॥४२॥

नोक्तिः ॥ ३६ ॥ चक्षुरिति ॥ चक्षुःप्रकरणे "वैडूर्यात्कपिलं शैलं कपिलाद्गन्धमादनम् । एवं शैलसहस्राणि पारयन्ती महानदी" इत्यन्तेन निषधमप्यत्र संसूच्य "पारियात्रे महाशैले निपपाताशुगामिनी" इत्याद्युक्तम् ॥ ३७ ॥ भद्रेति ॥ भद्रां प्रकृत्य "त्रिशृङ्गं शृङ्गकलिलं मर्यादापर्वतं गता । त्रिशृङ्गतः परिभ्रष्टा जारुधिं पर्वतं गता" इत्यादि । भारतवर्षे अलकनन्दाभेदाः सप्त मात्स्योक्ताः "नलिनी ह्लादिनी चैव पाविनी प्राच्यगास्त्रयः । सीता चक्षुश्च सिन्धुश्च तिस्रस्ता वै प्रतीच्यगाः ॥ सप्तमी त्वन्वगाद्गङ्गा दक्षिणेन भगीरथम्" इति ॥ ३८ ॥ आनीलेति ॥ पूर्वं केसरेषूक्तौ माल्यवद्गन्धमादनौ भद्राश्वकेतुमालवर्षपर्वतौ दक्षिणोत्तरौ चतुस्त्रिंशत्सहस्रायामौ । अत्र वायुः "चतुस्त्रिंशत्सहस्राणि गन्धमादनपर्वतः । उदग्दक्षिणतश्चैव आनीलनिषधा यतः ॥ चत्वारिंशत्सहस्राणि परिवृद्धो महीतलात् । सहस्रमवगाढश्च तावदेव च विस्तृतः ॥ पूर्वेण माल्यवाञ्छैलस्तत्प्रमाणः प्रकीर्त्तितः ॥" इति ॥ ३९ ॥ भारता इति ॥ मर्यादाशैलबाह्यत इति—मर्यादाद्रयोऽष्टौ जठराद्याः तेभ्यो बहिर्भद्राश्वादीनि चतुःपत्राणि । तेषु च मर्यादाद्रिषु माल्यवतः प्राच्यां जठरः तत्प्राच्यां देवकूटः एवं हिमवतो दक्षिणतः कैलासस्ततो गन्धमादनः तौ हिमवत्समायामौ तथा गन्धमादनवर्षाद्रेः पश्चिमो निषधः तद्बहिः पारियात्रः एवं शृंगिण उत्तरस्त्रिशृङ्गस्ततो जारुधिः अत्रार्थे प्राग्दर्शितो वायूक्तगंगाप्रवाहक्रमः प्रमाणम् ॥ ४० ॥ ४१ ॥ ४२ ॥

च चक्षुस्सिन्धुश्च तिस्रस्ता वै प्रतीच्यगाः । सप्तमी त्वन्वगाद्गंगा दक्षिणेन भगीरथम्" ॥ इति ॥३६॥३७॥३८॥ एवं तावद्दक्षिणोत्तरतो हिमादिभिष्षड्भिर्मर्यादागिरिभिर्विभक्तानि भारतादिसप्तवर्षाण्युक्तानि इलावृतमेरुमूर्धरचना विशेपगंगागमनप्रकाराश्चोक्ताः । इदानीं तु "भद्राश्वं पूर्वतो मेरोः केतुमालं तु पश्चिमे" इति पूर्वोक्तयोर्वर्षयोर्मर्यादापर्वतानाह—आनीलेति ॥ उत्तरो नीलः । दक्षिणो निषधः । तत्पर्यंत आयामो दैर्घ्यं ययोस्तावानीलनिषधायामौ । ततः पश्चिमो माल्यवान् । पूर्वो गन्धमादनः । अथ वा इलावृतमपरेण पूर्वेण च माल्यवद्गन्धमादनौ । आनिलनिषधायताविति शुकोक्तेः । केचित्त्वनयोर्वैपरीत्यमाहुः तयोर्मध्यगतो मेरुः इलावृतेन सहित इति द्रष्टव्यम् । "मेरोश्चतुर्दिशं त्वत्र नवसाहस्रविस्तृतम्" इत्युक्तत्वादनेन चतुस्त्रिंशद्योजनसहस्रायामौ तावित्युक्तं भवति तदाह वायुः "चतुस्त्रिंशत्सहस्राणि गन्धमादनपर्वतः । उदग्दक्षिणतश्चैव आनीलनिषधायतः॥" इत्यादि ॥३९॥ भारता इति ॥ लोको जम्बूद्वीपं तदेव पद्मं तस्य पत्राणि भारतकुरुवर्षयोर्भद्राश्वकेतुमालयोः परस्परं समानत्वादाभिमुख्येनावस्थानाच्च पत्रसादृश्यमुक्तम् ॥४०॥ इदानीं मेरोश्चतुर्दिक्षु द्वौ द्वौ परिधिपर्वतौ प्रमाणं संस्थानाभ्यां दर्शयति। जठर इत्यादिपंचभिः—जठर इति॥ देवकूटश्चेति च पाठः। इलावृतवर्ष एवान्तर्विभागहेतुत्वान्मर्यादावर्षपर्वताविति चोक्तम्। नववर्षमर्यादापर्वतानां पूर्वमुक्तत्वादन्यस्यासम्भवात् ॥४१॥ गन्धमादनकैलासाविति ॥

निषधः परियात्रश्च मर्यादापर्वतावुभौ ॥ मेरोः पश्चिमदिग्भागे यथा पूर्वे तथा स्थितौ ॥ ४३ ॥ त्रिशृङ्गो जारुधिश्चैव उत्तरौ वर्षपर्वतौ ॥ पूर्वपश्चायतावेतावर्णवान्तर्व्यवस्थितौ ॥ ४४ ॥ इत्येते मुनिवर्योक्ता मर्यादापर्वतास्तव ॥ जठराद्याः स्थिता मेरोस्तेषां द्वौद्वौ चतुर्दिशम् ॥ ४५ ॥ मेरोश्चतुर्दिशं ये तु प्रोक्ताः केसरपर्वताः ॥ शीतान्ताद्या मुने तेषामतीव हि मनोरमाः ॥ शैलानामन्तरे द्रोण्यः सिद्धचारणसेविताः ॥ ४६ ॥ सुरम्याणि तथा तासु काननानि पुराणि च ॥ लक्ष्मीविष्ण्वग्निसूर्यादिदेवानां मुनि सत्तम ॥ तास्वायतनवर्याणि जुष्टानि वरकिन्नरैः ॥ ४७ ॥ गन्धर्वयक्षरक्षांसि तथा दैतेयदानवाः ॥ क्रीडन्ति तासु रम्यासु शैलद्रोणीष्वह र्निशम् ॥ ४८ ॥ भौमा ह्येते स्मृताः स्वर्गा धर्मिणामालया मुने ॥ नैतेषु पापकर्माणो यान्ति जन्मशतैरपि ॥ ४९ ॥ भद्राश्वे भगवान्विष्णु रास्ते हयशिरा द्विज ॥ वराहः केतुमाले तु भारते कूर्मरूपधृक् ॥ ५० ॥ मत्स्यरूपश्च गोविंदः कुरुष्वास्ते जनार्दनः ॥ विश्वरूपेण सर्वत्र सर्वः सर्वत्रगो हरिः ॥ ५१ ॥ सर्वस्याधारभूतोसौ मैत्रेयास्तेखिलात्मकः ॥ ५२ ॥ यानि किंपुरुषादीनि वर्षाण्यष्टौ महामुने ॥ न तेषु शोको नायासो नोद्वेगः क्षुद्भयादिकम् ॥५३॥ स्वस्थाः प्रजा निरातङ्कास्सर्वदुःखविवर्जिताः ॥ दश द्वादशवर्षाणां सहस्राणि स्थिरायुषः ॥५४॥

॥ ४३ ॥ ४४ ॥ इत्येत इति ॥ एते जठराद्या मर्यादापर्वता उक्ताः । मेरोश्चतुर्दिशं पत्रमूलेषु येषां द्वौद्वौ स्थितावुक्तौ ॥ ४५ ॥ मेरोरिति ॥ द्रोण्यः पुष्करिण्यः "श्रीसरस्ताम्रपर्णश्च केसरं रमणी तथा " इत्याद्याः अवाप्ताष्टगुणैश्वर्याः सिद्धाः चारणा देवगायकाः ॥ ४६ ॥ सुरम्याणीति ॥ काननानि "श्रीवनं किंशुकवनं नलं च पनसं तथा" इत्यादीनि पुराणि " हेमचित्रं भूतवनं ब्रह्मपार्श्वं सुनाभकम्" इत्यादीनि ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ स्वस्था इति ॥ दश द्वादशेत्यनियमोक्तिः लैंगाद्युक्तं स्थानविशेषाच्चतुर्दशसहस्रपर्यन्तमायुः स्थितिं लक्षयति ॥ ५४ ॥

अशीतियोजन,आयामो विस्तारो ययोस्तौ माल्यवद्गंधमादनयोर्मध्ये अर्णवान्तर्व्यवस्थितौ ॥ ४२ ॥ निषध इति ॥ पूर्वे जठरदेवकूटौ यथा आनीलनिषधायतौ तथैव व्यवस्थितौ ॥ ४३ ॥ त्रिशृंग इति ॥ त्रिशृंगो जारुधिश्चैव उत्तरे यथा दक्षिणे तथा स्थितौ अष्टाभिरेतैः परिस्तृतोऽग्निरिव परितश्चकास्ति कांचन गिरिरिति शुकोक्तिः ॥ ४४ ॥ ४५ ॥ मेरोरिति ॥ तेषां शैला नामन्तरे मध्ये द्रोण्यः दरीविशेषाः सन्ति । सिद्धा अणिमाद्यैश्वर्ययुक्ताश्चारणा देवगायकाः तैस्सेविताः ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ स्वस्था इति ॥ नीरोगाः वर्षाणां सहस्राणि

न तेषु वर्षते देवो भौमान्यम्भांसि तेषु वै ॥ कृतत्रेतादिकं नैव तेषु स्थानेषु कल्पना ॥ ९९ ॥ सर्वेष्वेतेषु वर्षेषु सप्तसप्तकुलाचलाः ॥ नद्यश्च शतशस्तेभ्यः प्रसूता या द्विजोत्तम ॥ ९६ ॥ इति श्रीविष्णुमहापुराणे द्वितीयेंऽशे द्वितीयोऽध्यायः ॥ २ ॥ श्रीपराशर उवाच ॥ उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम् ॥ वर्षं तद्भारतं नाम भारती यत्र सन्ततिः ॥ १ ॥ नवयोजनसाहस्रो विस्तारोऽस्य महामुने ॥ कर्मभूमिरियं स्वर्गमपवर्गं च गच्छताम् ॥ २ ॥ महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः ॥ विंध्यश्च पारियात्रश्च सप्तात्र कुलपर्वताः ॥ ३ ॥ अतः संप्राप्यते स्वर्गो मुक्तिमस्मात्प्रयान्ति वै ॥ तिर्यक्त्वं नरकं चापि यान्त्यतः पुरुषा मुने ॥ ४ ॥ इतः स्वर्गश्च मोक्षश्च मध्यं चान्तश्च गम्यते ॥ न खल्वन्यत्र मर्त्यानां कर्मभूमौ विधीयते ॥ ५ ॥

॥ ५५ ॥ ५६ ॥ इति श्रीविष्णुमहापुराणव्याख्याने विष्णुचित्तीये द्वितीयेंशे द्वितीयोऽध्यायः ॥ २ ॥ उत्तरमिति ॥ समुद्रस्य पुरातनस्य न तु सगरसुतखातस्य भारती भरतस्य राज्ञः सम्बन्धिनी ॥१॥ नवयोजनेति ॥ विस्तारः दक्षिणोत्तरतः आयामस्तु हिमवत्पार्श्वे हिमवता समः दक्षिणतः किंचित्किञ्चिन्न्यूनः ॥२॥३॥ अत इति ॥ अतो मुक्तिं प्रयान्ति चेति वचनम् अस्मिन्भारतवर्षे मुक्तिः स्यादित्येतावद्वक्तुं न त्वन्यत्र निषेद्धुं कर्मभूमेरन्यत्रापि ब्रह्मविद्यासाध्यस्य मोक्षस्योपपत्तेः । सूत्रकारेण तदुपर्यपीत्यादिना सूत्रेण देवादीनामपि ब्रह्मविद्याधिकारस्योक्तत्वात् ॥ ४ ॥ उक्तमर्थमुपपादयति इत इत्यादिना ॥ मध्यम् अन्तरिक्षादि अन्तं नरकः पूर्वं फलवचनम्, अत्र तदाधारलोकवचनमित्यपुनरुक्तिः । न खल्वित्यादि । खलुशब्दः प्रसिद्धपरः । अन्यत्र भूमौ किंपुरुषादिवर्षाष्टके पुष्करद्वीपे च कर्म न विधीयते अर्थान्न निषिध्यते च प्लक्षादिद्वीपपञ्चके तु आपवर्गिकेतरत्कर्म न विधीयते आपवर्गिककर्मणा तत्राप्यनुष्ठानोक्तेः " यथोक्तकर्मकर्तृत्वात् स्वाधिकारक्षयाय ते । यजन्तः

दश वा द्वादश वा स्थिरायुष इति विकल्पोक्तिरिलावृतादिदेशभेदव्यवस्थया ॥ ९४ ॥ नेति ॥ तेषु देवो न वर्षति ततो भौमान्येवांभांसि नित्यं सन्ति ॥ ९९ ॥ सर्वेष्विति ॥ कुलाचलाः मुख्याः पर्वतास्तेभ्यः प्रसूता या नद्यः ताश्च शतशः सन्ति ॥९६॥ इति श्रीधरस्वामीविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां द्वितीयांशे द्वितीयोऽध्यायः ॥ २ ॥ जम्बूद्वीपस्य संस्थानमुक्तं वर्षविभागतः तत्रापि भारतं श्रेष्ठमाह—उत्तरमिति ॥ भारती भरतस्य संबन्धिनी सन्ततिः ॥ १ ॥ नवयोजनेति ॥ तत्रैव श्रेयःसाधनमनुष्ठेयमन्यत्र तदसंभवादिति दर्शयन्नाह—कर्मभूमिरिति ॥ स्वर्गमपवर्गं च गच्छतां पुंसां उभयसाधनभूतानां प्रवृत्तिनिवृत्तिकर्मणां भूमिरियं किंपुरुषादिवर्षाष्टके पुष्करद्वीपे च कर्मण एवाभावात् प्लक्षादिद्वीपपंचके च निवृत्तमेव नान्यद्वक्ष्यति हि "यथोक्तकर्मकर्तृत्वात्स्वाधिकारक्षयाय हि । तत्र ते तु कुशद्वीपे ब्रह्मभूतं जनार्दनम् ॥ यजन्तः क्षपयन्त्युग्रमधिकारफलप्रदम् ॥" इति ॥ २ ॥ समस्तपुरुषार्थसाधनं गंगादिनदीनां जन्मभूमयश्शैलाश्चात्रैव सन्तीत्याह—महेन्द्र इति ॥ ३ ॥ तस्माच्छुभाशुभं सर्वमत्रत्येनैव कर्मणा प्राप्यत इत्याह—अत इति ॥ अतोऽस्माद्वर्षात्स्वर्गः स्वर्गलोकः प्राप्यते क्रममुक्तिं चास्मात्प्रयान्ति ॥ ४ ॥ इत इति ॥ स्वर्गश्च भौम इलावृतादिः । मोक्षश्च सद्यो मुक्तिः । मध्यमंतरिक्षलोकः । अन्तः पातालादिरित एव गम्यते नान्यतः तत्साधनस्यात्रैव सुलभत्वात् । यस्माद

भारतस्यास्य वर्षस्य नवभेदान्निशामय ॥ इंद्रद्वीपः कसेरुश्च ताम्रपर्णो गभस्तिमान् ॥ ६ ॥ नागद्वीपस्तथा सौम्यो गन्धर्वस्त्वथ वारुणः ॥
अयं तु नवमस्तेषां द्वीपः सागरसंवृतः ॥७॥ योजनानां सहस्रं तु द्वीपोयं दक्षिणोत्तरात् ॥ पूर्वे किराता यस्यान्ते पश्चिमे यवनाः स्थिताः ॥
॥ ८ ॥ ब्राह्मणाः क्षत्रिया वैश्या मध्ये शूद्राश्च भागशः ॥ इज्यायुधवणिज्याद्यैर्वर्तयन्तो व्यवस्थिताः ॥ ९ ॥ शतद्रूचन्द्रभागाद्या हिमव
त्पादनिर्गताः ॥ वेदस्मृतिमुखाद्याश्च पारियात्रोद्भवा मुने ॥ १० ॥ नर्मदा सुरसाद्याश्च नद्यो विन्ध्याद्रिनिर्गताः ॥ तापीपयोष्णीनिर्विन्ध्या
प्रमुखा ऋक्षसंभवाः ॥ ११ ॥ गोदावरी भीमरथी कृष्णवेण्यादिकास्तथा ॥ सह्यपादोद्भवा नद्यः स्मृताः पापभयापहाः ॥ १२ ॥ कृतमाला
ताम्रपर्णीप्रमुखा मलयोद्भवाः ॥ त्रिसामा चर्षिकुल्याद्या महेन्द्रप्रभवाः स्मृताः ॥ १३ ॥ ऋषिकुल्याकुमाराद्याः शुक्तिमत्पादसम्भवाः ॥
आसां नद्य उपानद्यः सन्त्यन्याश्च सहस्रशः ॥ १४ ॥ तास्त्विमे कुरुपाञ्चाला मध्यदेशादयो जनाः ॥ पूर्वदेशादिकाश्चैव कामरूपनिवासिनः ॥
॥ १५ ॥ पुंड्राः कलिङ्गा मगधा दक्षिणाद्याश्च सर्वशः ॥ तथापरांताः सौराष्ट्राः शूराभीरास्तथार्बुदाः ॥ १६ ॥ कारूषा मालवाश्चैव पारियात्र
निवासिनः ॥ सौवीराः सैन्धवा हूणाः साल्वाः कोसलवासिनः ॥ १७ ॥ माद्रारामास्तथाम्बष्ठाः पारसीकादयस्तथा ॥ आसां पिबन्ति
सलिलं वसन्ति सहिताः सदा ॥ समीपतो महाभाग हृष्टपुष्टजनाकुलाः ॥ १८ ॥ चत्वारि भारते वर्षे युगान्यत्र महामुने ॥ कृतं त्रेता द्वापर
श्च कलिश्चान्यत्र न क्वचित् ॥ १९ ॥

क्षपयन्त्युग्रमधिकारं फलप्रदम्'' इति वक्ष्यमाणत्वात् । ''दानानि चात्र दीयन्ते परलोकार्थमादरात्'' इत्युक्तेर्भारतविषयत्वाच्च ॥ ५ ॥ भारतस्येत्यादि ॥ समुद्रवेला
मारभ्यहिमवदन्तमिन्द्रद्वीपाद्या मध्ये मध्ये सगरसुतखातान्तारिताः सहस्रयोजनविस्तारा भारतवर्षान्तरद्वीपा नव तेन सागरसंवृतत्वं नवानां न त्वेकस्यैवास्य नवमस्य
भारताख्यस्य ''भारतस्यास्य वर्षस्य नवभेदान्निबोधत । सागरान्तारिता ज्ञेयास्ते त्वगम्याः परस्परम्'' इति वायूक्तेः ॥६॥ नागद्वीप इति ॥ अयन्तु द्वीपो भारताख्यः
तदुक्तं वाराहे ''इन्द्रः कशेरुस्ताम्रवर्णो गभस्तिमान् नागः सौम्यो गान्धर्वो वारुणो भारतश्च'' इति । सागरसम्वृता इति द्वीपाः सागरसंवृता इति वा पाठः ॥७॥८॥
॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ तास्त्विति ॥ कामरूपो देशः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ चत्वारीति॥ चत्वारि युगानि धर्मपादव्यवस्थया

न्यत्र भूमौ वर्षान्तरादौ शास्त्रेषु कर्म न विधीयते ॥ ५ ॥ ६ ॥ नागद्वीप इति ॥ अयमिति समुद्रप्रांतवर्ती द्वीपः सागरसंवृतः समुद्रेणैकीभूतेन सागरेण सगरसुतखातेन संवृत इति ज्ञेयम् । सामान्यतः सगरसुत
खातसागरसंवृतत्त्वं सहस्रयोजनान्तरतः प्रत्येकमन्येषामस्त्येव यथाह वायुः ''भारतस्यास्य वर्षस्य नव भेदान्निबोधत । सागरान्तारिता ज्ञेयास्ते त्वगम्याः परस्परम् '' इति ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥
॥ १३ ॥ ऋषिकुल्येति ॥ अत्र क्रमाविवक्षया शुक्तिमत्पादनिःसृतानां पश्चान्निर्देशः ॥ १४ ॥ तास्त्विति ॥ इमे कुरुपाञ्चालादिनानादेशवर्तिनो जनास्तासु नदीषु वसन्ति । आसां सरितां जलं पिबन्ति चेति चतुर्थे
नान्वयः ॥ १५ ॥ १६ ॥ १७ ॥ चत्वारीति ॥ कृते युगे चतुष्पाद्धर्मः त्रेतायां पादन्यूनः द्वापरे द्विपाद् कलौ पादावशेष इत्यादिचतुर्युगव्यवस्था चेत्यर्थः ॥ १८ ॥ १९ ॥

तपस्तप्यन्ति मुनयो जुह्वते चात्र यज्वनः ॥ दानानि चात्र दीयन्ते परलोकार्थमादरात् ॥ २० ॥ पुरुषैर्यज्ञपुरुषो जम्बूद्वीपे सदेज्यते ॥ यज्ञैर्य ज्ञमयो विष्णुरन्यद्वीपेषु चान्यथा ॥२१॥ अत्रापि भारतं श्रेष्ठं जम्बूद्वीपे महामुने ॥ यतो हि कर्मभूरेषा ह्यतोन्या भोगभूमयः ॥ २२ ॥ अत्र जन्मसहस्राणां सहस्रैरपि सत्तम ॥ कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसंचयात् ॥ २३ ॥ गायन्ति देवाः किल गीतकानि धन्यास्तु ते भारत भूमिभागे ॥ स्वर्गापवर्गास्पदमार्गभूते भवन्ति भूयः पुरुषाः सुरत्वात् ॥ २४ ॥ कर्माण्यसंकल्पिततत्फलानि संन्यस्य विष्णौ परमात्म भूते ॥ अवाप्य तां कर्ममहीमनन्ते तस्मिल्लयं ये त्वमलाः प्रयान्ति ॥ २५ ॥ जानीम नैतत्क्व वयं विलीने स्वर्गप्रदे कर्मणि देहबन्धम् ॥ प्राप्स्याम धन्याः खलु ते मनुष्या ये भारते नेंद्रियविप्रहीनाः ॥ २६ ॥ नववर्षं तु मैत्रेय जम्बूद्वीपमिदं मया ॥ लक्षयोजनविस्तारं संक्षे पात्कथितं तव ॥ २७ ॥ जम्बूद्वीपं समावृत्य लक्षयोजनविस्तरः ॥ मैत्रेय वलयाकारः स्थितः क्षारोदधिर्बहिः ॥ २८ ॥ इति श्रीविष्णु महापुराणे द्वितीयेंशे तृतीयोध्यायः ॥ ३ ॥ श्रीपराशर उवाच ॥ क्षारोदेन यथा द्वीपो जम्बूसंज्ञोऽभिवेष्टितः ॥ संवेष्ट्य क्षारमुदधिं प्लक्षद्वी पस्तथा स्थितः ॥ १ ॥

युगव्यवस्था ॥ १९ ॥ २० ॥ पुरुषैरित्यादि ॥ यज्ञपुरुषो विष्णुः अत्र यज्ञरूप इज्यते अन्यथा सोमवाय्वादिरूपः ॥ २१ ॥ २२ ॥ २३ ॥ गायन्तीति ॥ ये देवाः सुरत्वादनन्तरं तत्र भारते भूयः पुरुषा मनुष्याः स्युस्ते धन्याः ॥ २४ ॥ एतत्समर्थयति कर्माणीति ॥ अत्रापि ते धन्या इत्यनुषंगः ॥ २५ ॥ जानीमेति ॥ नेन्द्रियविप्रहीनाः कर्मध्यानादियोग्यपटुकरणाः ॥२६॥२७॥२८॥ इति श्रीविष्णुमहापुराणव्याख्याने विष्णुचित्तीये द्वितीयेंशे तृतीयोऽध्यायः ॥३॥ क्षारोदेनेति ॥

॥२०॥ पुरुषैरिति ॥ यज्ञपुरुषरूपो विष्णुरत्रेज्यते अन्यद्वीपेषु प्लक्षादिष्वन्यथा सोमवायुसूर्यादिरूपः॥२१॥२२॥२३॥स्वर्गे देवत्वप्राप्तेरपि अत्र मनुष्यत्वं दुर्लभमित्यस्मिन्नर्थे देवगीतं प्रमाणयति—गायन्तीति ॥ स्वर्गश्चापवर्गश्च तयोरास्पदं प्राप्यस्थानं तस्य मार्गभूते भारताख्ये भूमिभागे ये पुरुषा भवन्ति ते तु सुरत्वात्सुरत्वं प्राप्तानस्मानप्यपेक्ष्य भूयोभ्यधिकं धन्याः सुकृतिन इत्यर्थः॥२४॥अत्र हेतुमाह—कर्माणीति॥तां कर्मभूमिं प्राप्य न संकल्पि तानि तानि प्रसिद्धानि दृष्टादृष्टानि फलानि येषां तान्यसंकल्पिततत्फलानि निष्कामानि कर्माणि विष्णौ संन्यस्य ये चामलाः सन्तस्तमेवालयं स्थानं प्रयान्ति तमालयमिति पाठः । तस्मिंल्लयमिति पाठान्तरे तस्मिंल्लयमैक्यं प्रयान्ति । ते धन्या इति पूर्वेण संबंधः ॥ २५ ॥ युष्माकमपि स्वर्गभोगानन्तरं भारते जन्म भविष्यतीति चेत्तत्तु न ज्ञायत इत्याहुः—जानीमेति ॥ स्वर्गप्रदे कर्मणि भोगेन विलीने सति कुत्र देहसंबन्धं जन्म प्राप्स्याम इति न जानीमः । ये त्वद्य भारते मनुष्या जाताः सन्ति ते खलु निश्चितं धन्याः अनायासेन मोक्षप्राप्तेः । तदाहुर्नेन्द्रियविप्रहीनाः अंधपंग्वादयो यदि न भवन्तीति इन्द्रियवत्वमात्रेण तत्र मोक्षः । न संसार इति भावः ॥ २६ ॥२७॥ २८ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां द्वितीयांशे तृतीयोऽध्यायः ॥ ३ ॥ ॥ अथ प्लक्षादिकान्द्वीपान्वर्षाब्धिसरिदद्रिभिः । वर्णपूज्यादिभेदेन वर्णयन्त्याकटा

जम्बूद्वीपस्य विस्तारः शतसाहस्रसम्मितः ॥ स एवं द्विगुणो ब्रह्मन् प्लक्षद्वीप उदाहृतः ॥ २ ॥ सप्त मेधातिथेः पुत्राः प्लक्ष द्वीपेश्वरस्य वै ॥ ज्येष्ठः शान्तहयो नाम शिशिरस्तदनन्तरः ॥ ३ ॥ सुखोदयस्तथानन्दः शिवः क्षेमक एव च ॥ ध्रुवश्च सप्तमस्तेषां प्लक्ष द्वीपेश्वरा हि ते ॥ ४ ॥ पूर्वं शान्तहयं वर्षं शिशिरं च सुखं तथा ॥ आनन्दं च शिवं चैव क्षेमकं ध्रुवमेव च ॥ ५ ॥ मर्यादाकारकास्तेषां तथान्ये वर्षपर्वताः ॥ सप्तैव तेषां नामानि शृणुष्व मुनिसत्तम ॥६॥ गोमेदश्चैव चन्द्रश्च नारदो दुन्दुभिस्तथा ॥ सोमकः सुमनाश्चैव वैभ्राजश्चैव सप्तमः ॥ ७ ॥ वर्षाचलेषु रम्येषु वर्षेष्वेतेषु चानघाः ॥ वसंति देवगन्धर्वसहिताः सततं प्रजाः ॥ ८ ॥ तेषु पुण्या जनपदाश्चिराच्च म्रियते जनः ॥ नाधयो व्याधयो वापि सर्वकालसुखं हि तत् ॥ ९ ॥ तेषां नद्यस्तु सप्तैव वर्षाणां च समुद्रगाः ॥ नामतस्ताः प्रवक्ष्यामि श्रुताः पापं हरंति याः ॥१०॥ अनुतप्ता शिखी चैव विपाशा त्रिदिवाक्लमः ॥ अमृता सुकृता चैव सप्तैतास्तत्र निम्नगाः ॥११॥ एते शैलास्तथा नद्यः प्रधानाः कथितास्तव ॥ क्षुद्रशैलास्तथा नद्यस्तत्र सन्ति सहस्रशः ॥ ताः पिबन्ति सदाहृष्टा नदीर्जनपदास्तु ते ॥ १२ ॥ अपसर्पिणी न तेषां वै न चैवोत्सर्पिणी द्विज ॥ न त्वेवास्ति युगावस्था तेषु स्थानेषु सप्तसु ॥१३॥ त्रेतायुगसमः कालः सर्वदैव महामते ॥ प्लक्षद्वीपादिषु ब्रह्मञ् शाक द्वीपान्तिकेषु वै ॥ १४ ॥ पंच वर्षसहस्राणि जना जीवन्त्यनामयाः ॥ धर्मः पञ्चस्वथैतेषु वर्णाश्रमविभागशः ॥ १५ ॥

तथा स्थितः वलयाकारत्वेन स्थितः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ तेष्विति ॥ चिरात्पञ्चसहस्राब्दान्ते तत् प्लक्षद्वीपम् ॥ ९ ॥ १०॥ अनुतप्तेति ॥ त्रिदिवाक्लमेति पाठः । अक्लमाख्या पंचमी नदी ॥ ११ ॥ १२ ॥ अपसर्पिणीति ॥ अपसर्पिणी द्वापरादिकल्यन्तं प्रजानामवरोहक्रमाद्ध्रासावस्था । उत्सर्पिणी कृतादित्रेतान्तमारोहक्रमाद्वृद्ध्यवस्था उत्सर्पिणी युगार्द्धं पश्चादपसर्पिणी युगार्द्धं चेत्यार्यभटोक्तेः । युगावस्था धर्मपादव्यवस्था तेषु प्लक्षद्वीपस्य वर्षेषु ॥ ॥ १३ ॥ त्रेतेति ॥ युगादिकृत्यं त्रिपाद्धर्मत्वम् । सस्यादिमत्वं च त्रेतासाम्यम् ॥ १४ ॥ १५ ॥

हृतः ॥ १ ॥ अत्र जम्बूद्वीपो लवणाब्धिश्च विस्तारतो लक्षयोजनप्रमाणौ एवमुत्तरोत्तरं द्वीपाब्धियुगं पूर्वस्मात्पूर्वस्माद्द्वीपाब्धियुगमाद् द्विगुणं द्रष्टव्यम् । प्लक्षादिद्वीपपंचके च द्वीपविस्तारप्रमाणैरुभयतस्समुद्रस्पर्शिभिर्म र्यादागिरिभिर्विभक्तान्युभयतस्समुद्रस्पर्शीनि सप्त वर्षाणि । पुष्करद्वीपे तु मध्यतो वलयाकारेण मानसोत्तरेण विभक्ते द्वे वर्षे । सर्वत्र वर्षाधिपतिसंज्ञाभिरेव वर्षाणां संज्ञा शैलनद्यादयश्च स्वस्वसंज्ञाभिरेव सर्वत्र स्पष्टं निर्दिष्टाः । तदेवं स्थिते तत्र तत्र किञ्चिद्व्याख्यायते ॥ २ ॥ प्लक्षद्वीपेश्वरानाह–सप्तेति ॥ ३ ॥ ४ ॥ तन्नामकवर्षक्रममाह–पूर्वमिति ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ तेष्विति ॥ जनः चिरात्पंचवर्षसहस्रान्ते म्रियते ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ अपसर्पिणीति ॥ अपसर्पिणी ह्रस्वावस्था । उत्सर्पिणी वृद्ध्यवस्था । भारते हि कृतादित्रेतान्तं प्रजा उत्तरोत्तरं वर्द्धन्ते । ततो द्वापरादि कलियुगान्तं ह्रसन्ति । तत्तेषां नास्ती त्यर्थः । युगावस्थेति "कृतादीनां व्यवस्थेयं धर्मपादव्यवस्थया" इति सूर्यसिद्धान्तादिप्रोक्ता युगावस्था च तेषु नास्ति ॥१३॥ त्रेतेति ॥ त्रिपाद्धर्मं सस्यादिसमृद्धिर्युगाद्यनुष्ठानादित्यादिना त्रेतायुगसमः कालः ॥ १४ ॥ १५॥

वर्णाश्च तत्र चत्वारस्तान्निबोध वदामि ते ॥१६॥ आर्यकाः कुरराश्चैव विदिश्या भाविनश्च ते ॥ विप्रक्षत्रियवैश्यास्ते शूद्राश्च मुनिसत्तम ॥१७॥ जम्बूवृक्षप्रमाणस्तु तन्मध्ये सुमहांस्तरुः ॥ प्लक्षस्तन्नामसंज्ञोयं प्लक्षद्वीपो द्विजोत्तम ॥ १८ ॥ इज्यते तत्र भगवांस्तैर्वर्णैरार्यकादिभिः ॥ सोम रूपी जगत्स्रष्टा सर्वः सर्वेश्वरो हरिः ॥१९॥ प्लक्षद्वीपप्रमाणेन प्लक्षद्वीपः समावृतः ॥ तथैवेक्षुरसोदेन परिवेषानुकारिणा ॥२०॥ इत्येवं तव मैत्रेय प्लक्षद्वीप उदाहृतः ॥ संक्षेपेण मया भूयः शाल्मलं मे निशामय ॥ २१ ॥ शाल्मलस्येश्वरो वीरो वपुष्मांस्तत्सुताञ्छृणु ॥ तेषां तु नामसंज्ञानि सप्तवर्षाणि तानि वै ॥ २२ ॥ श्वेतोथ हरितश्चैव जीमूतो रोहितस्तथा ॥ वैद्युतो मानसश्चैव सुप्रभश्च महामुने ॥ २३ ॥ शाल्मलेन समुद्रोसौ द्वीपेनेक्षुरसोदकः ॥ विस्ताराद्द्विगुणेनाथ सर्वतः संवृतः स्थितः ॥ २४ ॥ तत्रापि पर्वताः सप्त विज्ञेया रत्नयोनयः ॥ वर्षाभिव्यञ्जका ये तु तथा सप्त च निम्नगाः ॥२५॥ कुमुदश्चोन्नतश्चैव तृतीयश्च बलाहकः ॥ द्रोणो यत्र महौषध्यः स चतुर्थो महीधरः ॥२६॥ कङ्कस्तु पञ्चमः षष्ठो महिषः सप्तमस्तथा ॥ ककुद्मान्पर्वतवरः सरिन्नामानि मे शृणु ॥ २७ ॥ योनितोया वितृष्णा च चन्द्रा मुक्ता विमोचनी ॥ निवृत्तिः सप्तमी तासां स्मृतास्ताः पापशान्तिदाः ॥ २८ ॥ श्वेतञ्च हरितं चैव वैद्युतं मानसं तथा ॥ जीमूतं रोहितं चैव सुप्रभं चापि शोभनम् ॥ सप्तैतानि तु वर्षाणि चातुर्वर्ण्ययुतानि वै ॥ २९ ॥ शाल्मले ये तु वर्णाश्च वसन्त्येते महामुने ॥ कपिलाश्चारुणाः पीताः कृष्णाश्चैव पृथक् पृथक् ॥३०॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव यजन्तितम् ॥ भगवन्तं समस्तस्य विष्णुमात्मानमव्ययम् ॥ वायुभूतं मखश्रेष्ठैर्यज्वनो यज्ञसंस्थितिम् ॥ ३१ ॥ देवानामत्र सान्निध्यमतीव सुमनोहरे ॥ शाल्मलिः सुमहान्वृक्षो नाम्ना निर्वृतिकारकः ॥ ३२ ॥ एष द्वीपः समुद्रेण सुरोदेन समावृतः ॥ विस्ताराच्छाल्मलस्यैव समेन तु समन्ततः ३३ ॥ सुरोदकः परिवृतः कुशद्वीपेन सर्वतः ॥ शाल्मलस्य तु विस्ताराद्द्विगुणेन समन्ततः ॥ ३४ ॥ ज्योतिष्मतः कुशद्वीपे सप्त पुत्राञ्छृणुष्व तान् ॥ ३५ ॥ उद्भिदो वेणुमांश्चैव वैरथो लम्बनो धृतिः ॥ प्रभाकरोतिकपिलस्तन्नामा वर्षपद्धतिः ॥ ३६ ॥ तस्मिन्वसन्ति मनुजाः सह दैतेयदानवैः ॥ तथैव देवगन्धर्वयक्षकिंपुरुषादयः ॥ ३७ ॥

वर्णास्त्विति ॥ तत्र प्लक्षद्वीपे ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ कुमुदश्चेति ॥ महौषध्यः मृतसंजीवनाद्याः अयं । द्रोणाद्रिर्हनुमतानीतः ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥

॥ १६ ॥ आर्यका इति ॥ कुरराः कुरपाश्चेति च पाठः ॥ १७ ॥ जम्बूवृक्षेति ॥ तस्य प्लक्षस्य नाम्ना संज्ञा यस्य सः तन्नामसंज्ञः ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ कुमुद इति ॥ "विशल्यकरणी चैव मृतसंजीवनी तथा ॥ सौवर्णकरणी चान्या संधिनी च महौषधी ॥" एवंभूता महौषध्यः यत्र यस्मिन्द्रोणे यो हनूमतानीय प्रतिनीतः स द्रोणश्चतुर्थः ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ब्राह्मणा इति ॥ यज्ञानां संस्थितिर्यस्मिंस्तं यज्ञसंस्थितिम् ॥ ३१ ॥ ३२ ॥ ३३ ॥३४॥३५॥ उद्भिद इति ॥ तेषां नामान्येव नामानि यस्य तन्नामा । वर्षपद्धतिः वर्षाणां पंक्तिः ॥ ३६ ॥ ३७ ॥

वर्णास्तत्रापि चत्वारो निजानुष्ठानतत्पराः ॥ दमिनः शुष्मिणः स्नेहा मन्देहाश्च महामुने ॥ ३८ ॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चानुक्रमोदिताः ॥ ३९ ॥ यथोक्तकर्मकर्तृत्वात्स्वाधिकारक्षयाय ते ॥ तत्रैव तं कुशद्वीपे ब्रह्मरूपं जनार्दनम् ॥ यजन्तः क्षपयन्त्युग्रमधिकारफलप्रदम् ॥ ॥ ४० ॥ विद्रुमो हेमशैलश्च द्युतिमान् पुष्पवांस्तथा ॥ कुशेशयो हरिश्चैव सप्तमो मन्दराचलः ॥ ४१ ॥ वर्षाचलास्तु सप्तैते तत्र द्वीपे महामुने ॥ नद्यश्च सप्त तासां तु शृणु नामान्यनुक्रमात् ॥ ४२ ॥ धूतपापा शिवा चैव पवित्रा सम्मतिस्तथा ॥ विद्युदम्भा मही चान्या सर्वपापहरास्त्विमाः ॥ ४३ ॥ अन्याः सहस्रशस्तत्र क्षुद्रनद्यस्तथाचलाः ॥ कुशद्वीपे कुशस्तम्बः संज्ञया तस्य तत्स्मृतम् ॥ ४४ ॥ तत्प्रमाणेन स द्वीपो घृतोदेन समावृतः ॥ घृतोदश्च समुद्रो वै क्रौञ्चद्वीपेन संवृतः ॥४५॥ क्रौञ्चद्वीपो महाभाग श्रूयताञ्चापरो महान् ॥ कुशद्वीपस्य विस्ताराद्द्विगुणो यस्य विस्तरः ॥ ४६ ॥ क्रौञ्चद्वीपे द्युतिमतः पुत्रास्तस्य महात्मनः ॥ तन्नामानि च वर्षाणि तेषां चक्रे महीपतिः ॥ ४७ ॥ कुशलो मल्लगश्चोष्णः पीवरोथान्धकारकः ॥ मुनिश्च दुन्दुभिश्चैव सप्तैते तत्सुता मुने ॥ ४८ ॥ तत्रापि देवगन्धर्वसेविताः सुमनोहराः ॥ वर्षाचला महाबुद्धे तेषां नामानि मे शृणु ॥ ४९ ॥ क्रौञ्चश्च वामनश्चैव तृतीयश्चान्धकारकः ॥ चतुर्थो रत्नशैलश्च स्वाहिनी हयसन्निभः ॥ ५० ॥ दिवावृत्पञ्चमश्चात्र तथान्यः पुण्डरीकवान् ॥ दुन्दुभिश्च महाशैलो द्विगुणास्ते परस्परम् ॥ द्वीपाद्द्वीपेषु ये शैला यथा द्वीपानि ते तथा ॥ ५१ ॥

॥ ३८ ॥ ३९ ॥ यथोक्तेति ॥ यथोक्तं कर्म नित्यं नैमित्तिकं च स्वाधिकारक्षयाय च स्वस्यात्मज्ञानेन कर्मण्यधिकारं विहितकैंकर्यं निवर्तयितुमधिकारं प्राग्जन्मजं कर्म ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ क्रौञ्चद्वीप इति ॥ "क्रौञ्चद्वीपे गिरिः क्रौंचस्तस्य नाम्ना स उच्यते" इति मात्स्ये ॥ ४६ ॥ ॥ ४७ ॥ ४८ ॥ ४९ ॥ क्रौञ्चश्चेति ॥ स्वाहिनी हयसन्निभः वडवामुखाभः ॥ ५० ॥ दिवावृदिति ॥ द्विगुणा इत्यादि ये द्वीपाः द्वीपेषु स्थिता ये च शैलास्ते परस्परमुत्तरोत्तरं द्विगुणाः पूर्वपूर्वद्वीपेभ्य उत्तरोत्तरद्वीपा द्विगुणविस्तारा एवं पूर्वपूर्वद्वीपशैलेभ्य उत्तरोत्तरद्वीपशैला द्विगुणविस्ताराः । यथा द्वीपेषु ते तथेति द्वीपेषु यथा यावन्मानं तथा तावन्मानास्ते शैला इत्यर्थः । एतदुक्तं भवति लक्षसंख्याविस्तृते जम्बूद्वीपे स्थिताः शैलाः द्विसहस्रविस्तारा उभयतोब्धिस्पृशः द्विलक्षादिमिते

॥ ३८ ॥ ३९ ॥ यथेति ॥ स्वाधिकारक्षयाय सत्त्वशुद्ध्या अकर्त्रात्मज्ञानेन कर्माधिकारनिवृत्त्यर्थम् अधिकारम् अधिक्रियतेऽनेनेत्यधिकारः अहंकार स्तमुग्रं रागद्वेषादिहेतुं क्षपयन्ति । एतच्च प्लक्षादिषु पञ्चस्वपि द्रष्टव्यम् । धर्मः पंचस्विति पंचानां साधर्म्यस्योक्तत्वात् ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ क्रौंचस्येति ॥ प्रथमशैलः क्रौञ्चः तेनैव द्वीपोपि क्रौञ्चः ॥ ५० ॥ दिवावृदिति ॥ सप्तमो महाशैलः । पञ्चमश्चैव इति पाठे महाशैल इति दुन्दुभेर्विशेषणम् पूर्वस्मात्पूर्वस्मात्परस्परमुत्तरोत्तरं ते द्वीपा द्विगुणाः, तेषु द्वीपेषु ये शैलास्तेपि यथा द्वीपास्तथा उत्तरोत्तरं द्विगुणा इत्यर्थः ॥ ५१ ॥

वर्षेष्वेतेषु रम्येषु तथा शैलवरेषु च ॥ निवसंति निरातङ्काः सह देवगणैः प्रजाः ॥ ५२ ॥ पुष्कराः पुष्कला धन्यास्तितिख्याश्च महामुने ॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चानुक्रमोदिताः ॥ ५३ ॥ नदीर्मैत्रेय ते तत्र याः पिबन्ति शृणुष्व ताः ॥ सप्तप्रधानाः शतशस्तत्रान्याः क्षुद्र निम्नगाः ॥ ५४ ॥ गौरी कुमुद्वती चैव सन्ध्या रात्रिर्मनोजवा ॥ क्षान्तिश्च पुण्डरीका च सप्तैता वर्षनिम्नगाः ॥ ५५ ॥ तत्रापि विष्णुर्भग वान्पुष्कराद्यैर्जनार्दनः ॥ यागै रुद्रस्वरूपश्च इज्यते यज्ञसन्निधौ ॥ ५६ ॥ क्रौञ्चद्वीपः समुद्रेण दधिमण्डोदकेन च ॥ आवृतः सर्वतः क्रौञ्च द्वीपतुल्येन मानतः ॥ ५७ ॥ दधिमण्डोदकश्चापि शाकद्वीपेन संवृतः ॥ क्रौञ्चद्वीपस्य विस्ताराद्द्विगुणेन महामुने ॥ ५८ ॥ शाकद्वीपेश्वर स्यापि भव्यस्य सुमहात्मनः ॥ सप्तैव तनयास्तेषां ददौ वर्षाणि सप्त सः ॥ ५९ ॥ जलदश्च कुमारश्च सुकुमारो मरीचकः ॥ कुसुमोदश्च मौदाकिः सप्तमश्च महाद्रुमः ॥ ६० ॥ तत्संज्ञान्येव तत्रापि सप्त वर्षाण्यनुक्रमात् ॥ तत्रापि पर्वताः सप्त वर्षविच्छेदकारिणः ॥ ६१ ॥ पूर्वस्तत्रोदयगिरिर्जलाधारस्तथापरः ॥ तथा रैवतकः श्यामस्तथैवास्तगिरिर्द्विज ॥ आम्बिकेयस्तथा रम्यः केसरी पर्वतोत्तमः ॥ ६२ ॥ शाक स्तत्र महावृक्षः सिद्धगन्धर्वसेवितः ॥ यत्रत्यवातसंस्पार्शादाह्लादो जायते परः ॥ ६३ ॥ तत्र पुण्या जनपदाश्चातुर्वर्ण्यसमन्विताः ॥ नद्यश्चात्र महापुण्याः सर्वपापभयापहाः ॥ ६४ ॥ सुकुमारी कुमारी च नलिनी धेनुका च या ॥ इक्षुश्च वेणुका चैव गभस्ती सप्तमी तथा ॥६५॥ अन्या श्च शतशस्तत्र क्षुद्रनद्यो महामुने ॥ महीधरास्तथा सन्ति शतशोथ सहस्रशः ॥ ६६ ॥ ताः पिबन्ति मुदायुक्ता जलदादिषु ये स्थिताः ॥ वर्षेषु ते जनपदाः स्वर्गादभ्येत्य मेदिनीम् ॥६७॥ धर्महानिर्न तेष्वस्ति न संघर्षः परस्परम् ॥ मर्यादाव्युत्क्रमो नापि तेषु देशेषु सप्तसु ॥६८॥ वंगाश्च मागधाश्चैव मानसा मन्दगास्तथा ॥ वंगा ब्राह्मणभूयिष्ठा मागधाः क्षत्रियास्तथा ॥ वैश्यास्तु मानसास्तेषां शूद्रास्तेषां तु मन्दगाः ॥६९॥

प्लक्षादौ चतुःसहस्रादिविस्तारा उभयतोऽब्धिस्पृश इति ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ क्रौञ्चद्वीप इति ॥ दध्नो मण्डः सारः स एवोदकं यस्य तेन ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ शाक इति ॥ खरमृदुस्पर्शोभयपार्श्वपर्णो वृक्षविशेषः शाकः ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ताः पिबन्तीति ॥ स्वर्गप्रदकर्मक्षये तच्छेषाद्भुवमभ्येत्य जलदादिवर्षेषु ये स्थिताः जाताः जानपदा जनाः ते ता नदीः पिबन्ति ॥ ६७ ॥ ६८ ॥ ६९ ॥

॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ क्रौंचद्वीप इति ॥ दध्नो मण्डः सारः स एवोदकं यस्मिंस्तेन ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ शाक इति ॥ शाको नाम वृक्षविशेषः । यस्य पत्राण्यन्तः खरस्पर्शानि बहिर्मृदुस्पर्शानि "अन्तः खरा बहिः स्निग्धास्त्रियश्शाकदलोपमाः" इति वसिष्ठोक्तेः ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ता इति ॥ स्वर्गादभ्येत्येति स्वर्गभोगानन्तरं पुण्यशेषेण मेदिनीमभ्येत्य जलदादिषु वर्षेषु स्थिता जाताः जानपदा जनास्ते ता नदीः पिबन्तीत्यन्वयः ॥ ६७ ॥ धर्महानिरिति ॥ संघर्षः कलहः ॥६८॥ वंगा इति ॥ ब्राह्मणभूयिष्ठाः पूर्वोक्तेषु ब्राह्मणेष्वग्र्याः श्रेष्ठाः ॥६९॥

शाकद्वीपे तु तैर्विष्णुः सूर्यरूपधरो मुने ॥ यथोक्तैरिज्यते सम्यक्कर्मभिर्नियतात्मभिः ॥ ७० ॥ शाकद्वीपस्तु मैत्रेय क्षीरोदेन
समावृतः ॥ शाकद्वीपप्रमाणेन वलयेनेव वेष्टितः ॥ ७१ ॥ क्षीराब्धिः सर्वतो ब्रह्मन्पुष्कराख्येन वेष्टितः ॥ द्वीपेन शाकद्वीपात्तु द्विगुणेन
समन्ततः ॥ ७२ ॥ पुष्करे सवनस्यापि महावीरोऽभवत्सुतः ॥ धातुकिश्च तयोस्तत्र द्वे वर्षे नामचिह्निते ॥ महावीरं तथैवान्यद्धातुकीखण्डसं
ज्ञितम् ॥ ७३ ॥ एकश्चात्र महाभाग प्रख्यातो वर्षपर्वतः ॥ मानसोत्तरसंज्ञो वै मध्यतो वलयाकृतिः ॥ ७४ ॥ योजनानां सहस्राणि ऊर्ध्वं
पञ्चाशदुच्छ्रितः ॥ तावदेव च विस्तीर्णः सर्वतः परिमण्डलः ॥ ७५॥ पुष्करद्वीपवलयं मध्येन विभजन्निव ॥ स्थितोसौ तेन विच्छिन्नं जातं तद्व
र्षकद्वयम् ॥ ७६ ॥ वलयाकारमेकैकं तयोर्वर्षं तथा गिरिः ॥७७॥ दशवर्षसहस्राणि तत्र जीवन्ति मानवाः ॥ निरामया विशोकाश्च रागद्वेषा
दिवर्जिताः ॥ ७८ ॥ अधमोत्तमौ न तेष्वास्तां न वध्यवधकौ द्विज ॥ नेर्ष्यासूया भयं द्वेषो दोषो लोभादिको न च ॥ ७९ ॥ महापीतं
बहिर्वर्षं धातकीखण्डमन्ततः ॥ मानसोत्तरशैलस्य देवदैत्यादिसेवितम् ॥ ८० ॥ सत्यानृतेन तत्रास्तां द्वीपे पुष्करसंज्ञिते ॥ न तत्र नद्यः
शैला वा द्वीपे वर्षद्वयान्विते ॥ ८१ ॥ तुल्यवेषास्तु मनुजा देवास्तत्रैकरूपिणः ॥ ८२ ॥ वर्णाश्रमाचारहीनं धर्माचरणवर्जितम् ॥ त्रयीवार्ता
दण्डनीतिशुश्रूषारहितश्च यत् ॥ ८३ ॥ वर्षद्वयं तु मैत्रेय भौमः स्वर्गोयमुत्तमः ॥ सर्वर्तुसुखदः कालो जरारोगादिवर्जितः ॥ धातकीख
ण्डसंज्ञेथ महावीरे च वै मुने ॥ ८४ ॥ न्यग्रोधः पुष्करद्वीपे ब्रह्मणः स्थानमुत्तमम् ॥ तस्मिन्निवसति ब्रह्मा पूज्यमानः सुरासुरैः ॥ ८५ ॥

॥७०॥७१॥७२॥ पुष्कर इति ॥ धातकी शंड इति च तस्यैव राज्ञो नाम ॥ ७३ ॥ एकश्चेति ॥ पुष्करे मानसोत्तराद्रेर्वलयाकारत्वोक्त्या प्लक्षादिषु वर्षाद्रय
स्तिर्यग्रेखाकारा अभितोऽब्धिस्पृशो वर्षविभेदिन इति गम्यते ॥७४॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ महापीतमिति ॥ अन्ततः मानसोत्तराद्रेरन्तारित्यर्थः।
धातकीसंज्ञमन्तत इति च पाठः ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥ न्यग्रोध इति ॥ अस्य न्यग्रोधस्य पुष्कर इति नाम तेन द्वीपोपि पुष्कर इति स्मर्यते।

॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ महापीतमिति ॥ ततः मानसोत्तराद्रेः अंत इत्यर्थः ॥ ८० ॥ ८१ ॥ तुल्यवेषा इति ॥ तुल्यवेशा इति पाठे
वेशो भोगस्तुल्यसुखा इत्यर्थः ॥ ८२ ॥ वर्णाश्रमाचारहीनमिति ॥ नित्यनैमित्तिकैरावश्यकैर्वर्णाश्रमाचारैर्हीनं, धर्माचरणं काम्यधर्मानुष्ठानं तेन च वर्जितम् ॥ ८३ ॥ ८४ ॥ न्यग्रोध इति ॥ न्यक् तिर्यक् समन्ततः भूमिं
रुणद्धीति न्यग्रोधः पुष्करसंज्ञः "बृहत्पुष्करमेव, स प्रजापतिरेकः पुष्करपर्णे समभवत्" इति श्रुतेः "न्यग्रोधः पुष्करद्वीपे पुष्करस्तेन स स्मृतः" इति मात्स्योक्तेः । "यस्मिन्बृहत्पुष्करं ज्वलनशिखामलकनकपत्रायुतायुतं

स्वादूदकेनोदधिना पुष्करः परिवेष्टितः ॥ समेन पुष्करस्यैव विस्तारान्मण्डलं तथा ॥ ८६ ॥ एवं द्वीपाः समुद्रैश्च सप्तसप्तभिरावृताः ॥ द्वीपश्चैव समुद्रश्च समानौ द्विगुणौ परौ ॥ ८७ ॥ पयांसि सर्वदा सर्वसमुद्रेषु समानि वै ॥ न्यूनातिरिक्तता तेषां कदाचिन्नैव जायते ॥ ८८ ॥ स्थालीस्थमग्निसंयोगादुद्रेकिसलिले यथा ॥ तथेंदुवृद्धौ सलिलमंभोधौ मुनिसत्तम ॥८९॥ अन्यूनानतिरिक्ताश्च वर्धंत्यापो ह्रसंति च ॥ उदयास्तमनेष्विंदोः पक्षयोः शुक्लकृष्णयोः ॥९०॥ दशोत्तराणि पञ्चैव ह्यंगुलानां शतानि वै ॥ अपां वृद्धिक्षयौ दृष्टौ सामुद्रीणां महामुने ॥ ९१ ॥ भोजनं पुष्करद्वीपे तत्र स्वयमुपस्थितम् ॥ षड्रसं भुञ्जते विप्र प्रजाः सर्वाः सदैव हि ॥ ९२ ॥ स्वादूदकस्य परितो दृश्यते लोकसंस्थितिः ॥ द्विगुणा कांचनी भूमिः सर्वजंतुविवर्जिता॥९३॥लोकालोकस्ततश्शैलो योजनायुतविस्तृतः॥उच्छ्रायेणापि तावन्ति सहस्राण्यचलो हि सः॥९४॥

"न्यग्रोधः पुष्करद्वीपे पुष्करस्तेन स स्मृतः" इति मात्स्योक्तेः ॥ पुष्करः पुष्कलद्वीप इत्यर्थः ॥ ८५ ॥ ८६ ॥ एवमिति ॥ द्वीपश्चैव समुद्रश्च जम्बूद्वीपक्षारोदौ समानौ तद्द्विगुणौ प्लक्षद्वीपेक्षुरसोदौ एवमनन्तरद्वीपाब्ध्योः पूर्वपूर्वद्वीपद्वैगुण्यम् अन्योन्यसाम्यं चोह्यम् ॥ ८७ ॥ पयांसीति ॥ पयांसि समानि अवृद्धिशोषाणि चन्द्रस्य तु वृद्धौ पौर्णिमायामुदये च तेषामुत्क्षोभमात्रं न तु वृद्धिः । एवं चन्द्रह्रासे तावत् क्षुभितस्य ह्रासः न तन्मूलाम्बुक्षयः ॥८८॥ स्थालीस्थमिति ॥ यथा परिमितं जलं क्वाथे उद्रिच्यते यथा शैत्ये ह्रसति समीभवति ॥ ८९ ॥ अन्यूनानतिरिक्ता इति ॥ तथा शुक्ले कृष्णे वा चन्द्रस्योदयेऽपां सपादैकविंशतिहस्तमिता वृद्धिः । अस्तमये तावानेव ह्रासः ॥९०॥९१॥ भोजनमिति ॥ षड्रसभक्ष्यभोज्यलेह्यचोष्यपेयखाद्यात्मना षड्विधं रसं मधुराम्ललवणतिक्तकटुकषायाख्यरसवद्द्रव्यं वा॥९२॥ ॥ स्वादूदकस्येति ॥ लोकस्य जननिवासभूतस्य सप्तद्वीपात्मकस्य संस्थितिर्मर्यादाभूतस्वर्णभूमिः अलोकसंस्थितिरिति पदच्छेदे लोकसंस्थानरहिता दर्पणाकारा । सा च लोकान्मेरोरभितः स्थितात्ससप्तलक्षपञ्चकोटिमिताद्द्विगुणा सचतुर्दशलक्षदशकोटिः ॥ ९३ ॥ लोकालोकेति ॥ ततो लोकालोकाद्रिः एवं संहत्य मेरोरेकतो

भगवतः कमलासनस्याध्यासनं परिकल्पितम्" इति शुकोक्तेः ॥ ८५ ॥ ८६ ॥ एवमिति ॥ द्वीपश्चेति जंबूद्वीपश्च लवणसमुद्रश्च समानौ लक्षयोजनविस्तारौ । ततः परौ तु द्वीपसमुद्रावुत्तरोत्तरं द्विगुणावित्यर्थः ॥ ८७ ॥ ॥ ८८ ॥ स्थालीस्थमिति ॥ यथा स्थालीस्थं प्रस्थादिपरिमितमेव सलिलं तीव्राग्निसंयोगादुद्रेकि विरलावयवं सदुद्रेकयुक्तं भवति, अग्निसंयोगोपरमे च यथापूर्वं तिष्ठति तथेन्दुवृद्धौ पौर्णमास्यामम्भोराशिसलिलमत्यंतमुद्रिच्यते । अमावास्यायां च यथापूर्वं तिष्ठति ॥ ८९ ॥ अन्यूनानतिरिक्ता इति ॥ तथा शुक्लकृष्णयोः पक्षयोः प्रत्यहमिन्दोरुदयेष्वनतिरिक्ता एव आपः किंचित्किंचिद्वर्धन्ते । इन्दोरस्तमयेषु च अन्यूना एव किञ्चित्किञ्चिद्ह्रसन्तीत्यर्थः ॥ ९० ॥ परं वृद्धिह्रासयोः प्रमाणमाह—दशेति ॥ सार्धद्विचत्वारिंशद्वितस्तिपरिमितौ सामुद्रीणामपां वृद्धिक्षयौ शास्त्रतो दृष्टौ । यद्वा—तत्तीरस्थैरन्वयव्यतिरेकाभ्यां शास्त्रतो दृष्टौ ॥ ९१ ॥ भोजनमिति ॥ भुज्यत इति भोजनं भक्ष्यभोज्यादिचतुर्विधमन्नं पाकादिकं विना स्वयमेवोपस्थितं भुंजते । रसाः स्वाद्वम्ललवणतिक्तोष्णकषायाद्या इति प्रसिद्धाः षड्रसा यस्मिंस्तत् ॥ ९२ ॥ स्वादूदकस्येति ॥ अलोकसंस्थितिरिति च्छेदः । न विद्यते लोकस्य जननिवासभूतस्य संस्थितिर्यस्याः सा । अत एव सर्वजंतुभिर्विवर्जिता ससागरसप्तद्वीपवत्याः पूर्वोक्तायाः भूमेर्द्विगुणा शुद्धोदकसमुद्रात्परतः काञ्चनी भूमिर्योगिभिर्दृश्यते ॥ ९३ ॥ लोकालोक

ततस्तमः समावृत्य तं शैलं सर्वतः स्थितम् ॥ तमश्चाण्डकटाहेन समन्तात्परिवेष्टितम् ॥ ९५ ॥
पञ्चाशत्कोटिविस्तारा सेयमुर्वी महामुने ॥ सहैवांडकटाहेन सद्वीपाब्धिमहीधरा ॥ ९६ ॥

लोकालोकान्तं कोट्यो द्वादशलक्षाणि सप्तषष्टिः । पंचाशत्सहस्राणि एतेनालोकपरिमाणं व्याख्यातमिति भागवतोक्त्या किंचिदूनसार्द्धद्वादशकोट्यादिकमालोकाख्यम् ॥ ९४ ॥ तत इति ॥ तत्रैव तमोगर्तोदौ च तामसभूतावासभूतौ स गर्तोदात्तमसः परस्तात् परितः प्रतिदिशमण्डकटाहादर्वाङ् महापुरुषनिवासभूतो वैकुण्ठलोकः ततः कटाह इति ज्ञेयम् । भागवते हरिवंशे च ब्राह्मणपुत्रानयने प्रस्तावे भगवत्स्थानस्य तथोपवर्णितत्वात् ॥ ९५ ॥ पञ्चाशदिति ॥ एवं मेरोरेकतः कटाहान्तं पंचविंशति कोटिकं भूविस्तारार्द्धम् अन्यतश्च तथा इत्थं संहत्य पञ्चाशत्कोटिभूविस्तरः । एवमूर्ध्वाधः कटाहावधिश्चाण्डोच्छ्रायः पंचाशत्कोटिः "सूर्याण्डगोलयोर्मध्ये कोट्यः स्युः पंचविंशतिः" इति शुकोक्तेः । यद्वा–एकत एव लोकमानात्ससार्द्धत्रिलक्षाध्यर्धाद्विकोट्यात्मकाद्द्वैगुण्यं काञ्चनभूमेस्ससप्तलक्षपंचकोट्यात्मकं कृत्वा शिष्टं सप्तदश कोट्यादिकमन्तःकटाहादिमानत्वेन योज्यं पुराणकारस्य हि वैराग्योत्पादने भगवन्माहात्म्यज्ञापने च तात्पर्यान्न लोकसंख्यागणितेष्वत्यादरः । ततो यथाकथंचिदपि पंचाशत्कोटिविस्तारत्वं भुवो ज्ञेयम् । अन्ये तु विस्तारशब्दं व्यार्द्धपरं कृत्वा मेरोरभितः पंचाशत्कोटित्वं वर्णयन्तो भूमेः शतकोटिविस्तारत्वं प्राहुः । तथा च वाराहे–"भूमण्डलं तु शतकोटिविस्तारं साण्डकटाहम्" इति । अयमेव पक्षः स्कान्दे शिवरहस्ये विस्तरेणोक्तः।शैवतन्त्रान्तरे च "कोटिद्वयं त्रिपञ्चाशल्लक्षाणि च ततः परम् । पञ्चाशच्च सहस्राणि सप्तद्वीपाः ससागराः ॥ ततो हिरण्मयी भूमिर्दशकोट्यो वरानने ॥ देवानां क्रीडनार्थाय लोकालोकस्ततः परम् ॥ पर्वतो वलयाकारो योजनायुतविस्तृतः ॥ तस्माद्बाह्यं तमो घोरं दुष्प्रेक्ष्यं जीववर्जितम् ॥ पञ्चत्रिंशत्स्मृताः कोट्यो लक्षाण्येकोनविंशतिः ॥ चत्वारिंशत्सहस्राणि योजनानां वरानने । सप्तसागरमानस्तु गर्तोदस्तदनन्तरम् ॥ कोटियोजनमानस्तु कटाहः संव्यवस्थितः" इति । अस्मिंस्तु पक्षे "सूर्याण्डगोलयोर्मध्ये कोट्यः स्युः पंचविंशतिः" इति भागवतश्लोकस्थसूर्यशब्दस्तत्प्रकाश्यदे

इति ॥ तावंति अयुतव्यवहारकारकाणि सहस्राणि योजनायुतमेवोच्छ्रित इत्यर्थः । यद्वा तावंति अयुतसंख्याकानि सहस्राणीत्यर्थः । "यस्मात्सूर्यादीनां ध्रुवापवर्गाणां ज्योतिर्गणानां गभस्तयोर्वाचीनांस्त्रींल्लोकानावितन्वाना न कदाचित्पराचीना भवितुमुत्सहन्ते तावदुन्नहनायाम" इति शुकोक्तेः । अत्रायं गणनाक्रमः–पूर्वोक्तद्वीपाब्धिद्वैगुण्यक्रमेण मेरोः सर्वतः सप्तलक्षाधिकपञ्चकोटिप्रमाणा साब्धिसप्तद्वीपवती भूमिः । ततो द्विगुणा चतुर्दशलक्षोत्तरदशकोटिप्रमाणा काञ्चनी भूमिर्मेरोरेकतः उभयतस्त्वष्टाविंशतिलक्षाधिकविंशतिकोटिप्रमाणा तदेवं साब्धिद्वीपभूम्या सह काञ्चनी भूमिः । पञ्चत्रिंशल्लक्षोत्तरपञ्चविंशतिकोटिप्रमाणा संपद्यते । ततो लोकालोकशैलोऽयुतयोजनविस्तारस्सर्वतो वलयाकृतिः ॥ ९४ ॥ तत इति ॥ ततस्तं शैलं सर्वतस्तम आवृत्य तिष्ठति । तच्च विंशतिसहस्राधिकपञ्चविंशतिलक्षन्यूनपञ्चविंशतिकोटिपरिमितम् "एतेन ह्यलोकपरिमाणं च व्याख्यातम्"इति शुकोक्तेः ॥ ९५ ॥ पञ्चाशत्कोटिविस्तारेति ॥ तदेवं पञ्चाशत्कोटियोजनविस्तारा सेयमुर्वी ततोऽण्डकटाहःसर्वतस्समवर्तुलोन्तः पञ्चाशत्कोटिविस्तारः । "अण्डमध्यगतस्सूर्यो द्यावाभूम्योर्यदन्त

सेयं धात्री विधात्री च सर्वभूतगुणाधिका ॥ आधारभूता सर्वेषां मैत्रेय जगतामिति॥९७॥इति श्रीविष्णुमहापुराणे द्वितीयेंशे चतुर्थोऽध्यायः॥४॥
श्रीपराशर उवाच ॥ विस्तार एष कथितः पृथिव्या भवतो मया ॥ सप्ततिस्तु सहस्राणि द्विजोच्छ्रायोपि कथ्यते ॥ १ ॥ दशसाहस्रमेकैकं पातालं मुनिसत्तम ॥ अतलं वितलं चैव नितलं च गभस्तिमत् ॥ महाख्यं सुतलं चाग्र्यं पातालं चापि सप्तमम् ॥ २ ॥ शुक्लाकृष्णारुणाः पीताः शर्कराः शैलकांचनाः ॥ भूमयो यत्र मैत्रेय वरप्रासादमंडिताः ॥ ३ ॥ तेषु दानवदैतेया यक्षाश्च शतशस्तथा ॥ निवसन्ति महानागजातयश्च महामुने ॥ ४ ॥ स्वर्लोकादपि रम्याणि पातालानीति नारदः ॥ प्राह स्वर्गसदां मध्ये पातालाभ्यागतो दिवि ॥ ५ ॥ आह्लादकारिणः शुभ्रा मणयो यत्र सुप्रभाः ॥ नागाभरणभूषासु पातालं केन तत्समम् ॥ ६ ॥

शपरो योज्यः। "रविचंद्रमसोर्यावन्मयूखैरवभास्यते ॥ ससमुद्रसरिच्छैला तावती पृथिवी स्मृता॥" इति वक्ष्यमाणत्वात्। "प्रकाश्य पृथिवीमानं पञ्चविंशतिकोटिकम्" तत्प्रकाशकमेव सूर्यं कल्पयित्वा ततः परं यावदण्डकटाहं पञ्चविंशतिरित्येवार्थः। यद्वाऽण्डकटाहान्तः पंचाशत्कोटिः पृथिवी बहिरावरणभूता परेति शतकोटित्वं वराहपुराणानुसारायोज्यम्। यद्वा शास्त्रीयांगुलिसिद्धैर्योजनैः पञ्चाशत्कोटय एव लौकिकांगुलिसिद्धयोजनैः शतकोटयः स्युः। यद्वा कल्पभेदेन द्वयोरपि पक्षयोरविरोधः कल्प्यः ॥९६॥सेयमिति॥धात्री ओषधिद्वारा पोषकरी विधात्री कर्त्री गुणाधिका पंचगुणत्वात्॥९७॥इति श्रीविष्णुमहापुराणे विष्णुचित्तीये द्वितीयेंशे चतुर्थोध्यायः॥४॥विस्तार इति ॥ सप्ततिसहस्रोच्छ्रायत्वं सप्तभूमिकप्रासादन्यायेन ॥ १ ॥ दशसहस्रमिति ॥ दशसहस्रेण भूमितद्विवरमानविभागः शिवरहस्योक्तः "तदनन्तरपुटाः सप्त नागाः सुरसमाश्रयाः। योजनानां चायुतानि सप्त तत्त्वार्थचिन्तकैः ॥ सहस्रयोजनान्येषां दशाभ्यन्तरनेमयः। प्रत्येकशोन्तराण्येषां सहस्राणि नवाध्वनाम् ॥" इति। अध्वनां योजनानामित्यर्थः। अत्र विशेषो वायूक्तः "पृथिव्यामुदकं सा च पृथ्व्यपामुपरि स्थिता। आकाशश्चापरमधः पुनर्भूमिः पुनर्जलम् ॥" इति। महन्महातलम् तच्च वालुकामयम् ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ आह्लादकारिण इति ॥ नागाभरणेति आभ्रियत इत्याभरणं नागैर्भ्रियरम्। सूर्याण्डगोलयोर्मध्ये कोट्यः स्युः पञ्चविंशतिः" इति शुकोक्तेः। "क्वचित्क्वचित्पुराणेषु विरोधो यदि लक्ष्यते। कल्पभेदादिभिस्तत्र व्यवस्था सद्भिरिष्यते ॥" सहैवांडकटाहेनेति तन्मध्यपरिवर्तिनेत्यर्थः ॥ ९६ ॥ सेयमिति ॥ धात्री पालयित्री। विधात्री जनयित्री इत्येतैः पालनादिभिस्सर्वेभ्यो भूतेभ्यः आकाशादिभ्यो गुणैरधिका श्रेष्ठेत्यर्थः ॥ ९७ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां द्वितीयांशे चतुर्थोऽध्यायः ॥ ४ ॥ ॥ सप्तभूमिकविस्तारप्रासादवदधो भुवः ॥ सप्तपातालपंक्तिस्तु वर्ण्यतेऽनंतमस्तके ॥ १ ॥ दशसाहस्रमिति ॥ प्रत्येकं सहस्रयोजनोच्छ्रिता भूमिः। ततो नवसहस्रोच्छ्रितमेकैकं पातालं भूमिविवरमित्यर्थः। "सहस्रयोजनान्येषां दलान्यन्तरभूमयः ॥ प्रत्येकशोन्तराण्येषां सहस्राणि नवाध्वनाम् ॥" इति शिवरहस्योक्तेः। महाख्यं महातलम् ॥ २ ॥ ३ ॥ ४ ॥ स्वर्लोकादिति ॥ पातालेभ्यो दिवमागतः सन् स्वर्गसदां देवानां मध्ये प्राह ॥ ५ ॥ आह्लादकारिण इति ॥ शुभ्राः शुद्धा मणयो नागैराध्रियमाणासु भूषासु यत्र पाताले तत्पातालं केन समं न केनापि समं निरुपममित्यर्थः ॥ ६ ॥

दैत्यदानवकन्याभिरितश्चेतश्च शोभिते ॥ पाताले कस्य न प्रीतिर्विमुक्तस्यापि जायते ॥ ७ ॥ दिवार्करश्मयो यत्र प्रभां तन्वन्ति नातपम् ॥ शशिरश्मिर्न शीताय निशि द्योताय केवलम् ॥ ८ ॥ भक्ष्यभोज्यमहापानमुदितैरपि भोगिभिः ॥ यत्र न ज्ञायते कालो गतोपि दनुजादिभिः ॥ ९ ॥ वनानि नद्यो रम्याणि सरांसि कमलाकराः ॥ पुंस्कोकिलाभिलापाश्च मनोज्ञान्यम्बराणि च ॥ १० ॥ भूषणान्यतिशुभ्राणि गन्धाढ्यं चानुलेपनम् ॥ वीणावेणुमृदंगानां स्वनैरापूरितानि च ॥११॥ एतान्यन्यानि चोदारभाग्यभोग्यानि दानवैः ॥ दैत्योरगैश्च भुज्यन्ते पातालान्तरगोचरैः ॥ १२ ॥ पातालानामधश्चास्ते विष्णोर्या तामसी तनुः ॥ शेषाख्या यद्गुणान्वक्तुं न शक्ता दैत्यदानवाः ॥ १३ ॥ योनन्तः पठ्यते सिद्धैर्देवो देवर्षिपूजितः ॥ स सहस्रशिरा व्यक्तस्वस्तिकामलभूषणः ॥ १४ ॥ फणामणिसहस्रेण यः स विद्योतयन्दिशः ॥ सर्वान्करोति निर्वीर्यान् हिताय जगतोऽसुरान् ॥१५॥ मदाघूर्णितनेत्रोसौ यः सदैवैककुण्डलः ॥ किरीटी स्रग्धरो भाति साग्निः श्वेत इवाचलः ॥ १६ ॥ नीलवासा मदोत्सिक्तः श्वेतहारोपशोभितः ॥ साभ्रगङ्गाप्रवाहोसौ कैलासाद्रिरिवापरः ॥ १७ ॥ लाङ्गलासक्तहस्ताग्रो बिभ्रन्मुसलमुत्तमम् ॥ उपास्यते स्वयं कान्त्या यो वारुण्या च मूर्त्तया ॥ १८ ॥ कल्पान्ते यस्य वक्त्रेभ्यो विषानलशिखोज्ज्वलः ॥ संकर्षणात्मको रुद्रो निष्क्रम्यात्ति जगत्त्रयम् ॥ १९ ॥ स बिभ्रच्छेखरीभूतमशेषं क्षितिमण्डलम् ॥ आस्ते पातालमूलस्थः शेषोऽशेषसुरार्चितः ॥ २० ॥ तस्य वीर्यं प्रभावश्च स्वरूपं रूपमेव च ॥ न हि वर्णयितुं शक्यं ज्ञातुं च त्रिदशैरपि ॥ २१ ॥ यस्यैषा सकला पृथ्वी फणामणिशिखारुणा ॥ आस्ते कुसुममालेव कस्तद्वीर्यं वदिष्यति ॥२२॥ यदा विजृम्भतेनन्तो मदाघूर्णितलोचनः ॥ तदा चलति भूरेषा साब्धितोया सकानना ॥२३॥

माणासु भूषासु यद्वा भूषाश्चूडाद्यलङ्काराः नित्याः फणामणिप्रभृतयो वा । नागाभरणभूषास्विति च पाठः॥६॥दैत्यदानवकन्याभिरिति॥विमुक्तस्य विषयरागविमुक्तस्य ॥॥७॥दिवेत्यादि॥रश्मिप्रवेशवचनाद्द्वारसद्भावोऽनुमेयः ॥८॥९॥१०॥११॥१२॥ पातालानामिति॥ "तस्य मूलदेशे त्रिंशद्योजनसहस्रान्तर आस्ते या वै कला भगवतस्तामसी समाख्याताऽनन्ते" इति भागवतोक्तिः । तामसी संहारहेतुभूततमोधिष्ठात्री ॥ १३ ॥ य इति ॥ अत एवास्य वदनात् कालाग्निरुद्रनिष्क्रमणमुत्तरत्रोच्यते स्वस्तिकं फणस्थरेखाचिह्नविशेषः ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ कल्पान्त इति ॥ संकर्षणात्मकः सङ्कर्षणाधिष्ठितः ॥ १९ ॥ २० ॥ तस्येति ॥ वीर्यमुत्साहः प्रभावशक्तिः स्वरूपं तत्त्वं रूपमाकारः ॥ २१ ॥ २२ ॥ २३ ॥

दैत्यदानवकन्याभिरिति ॥ विमुक्तस्य वीतरागस्यापि ॥७॥८॥९॥ वनानीति ॥ पुंस्कोकिलानामभिलापाः कूजितानि च ॥१०॥ भूषणानीति ॥ तूर्याणि नृत्तगीतवाद्यानि ॥११॥ एतानीति ॥ उदारैर्भाग्यैः पुण्यैः भोग्यानि पातालानामन्तरं मध्यं गोचरो विषयो येषां तैः ॥ १२ ॥ १३ ॥ य इति ॥ स्वस्तिकं फणास्थरेखाचिह्नविशेषः । व्यक्तं स्वस्तिकमेवामलं भूषणं यस्य सः ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ लाङ्गलासक्तेति ॥ कान्त्या श्रिया वारुण्या मदिराधिष्ठातृदेवतया ॥ १८ ॥ १९ ॥ स इति ॥ शेखरीभूतं मुकुटवत्स्थितम् ॥ २० ॥ तस्येति ॥ वीर्यं बलं प्रभावः प्रतापः स्वरूपं तत्त्वं रूपमाकारः ॥ २१ ॥ २२ ॥ २३ ॥

गन्धर्वाप्सरसः सिद्धाः किन्नरोरगचारणाः ॥ नान्तं गुणानां गच्छन्ति तेनानन्तोयमव्ययः ॥ २४ ॥ यस्य नागवधूहस्तैर्लेबितं हरिचन्दनम् ॥ मुहुः श्वासानिलापास्तं याति दिक्क्षोदवासताम् ॥ २५ ॥ यमाराध्य पुराणर्षिर्गर्गो ज्योतींषि तत्त्वतः ॥ ज्ञातवान्सकलं चैव निमित्तपठितं फलम् ॥ २६ ॥ तेनेयं नागवर्येण शिरसा विधृता मही ॥ बिभर्ति मालां लोकानां सदेवासुरमानुषाम् ॥ २७ ॥ इति श्रीविष्णुमहापुराणे द्वितीयेंशे पंचमोऽध्यायः ॥ ५ ॥ पराशर उवाच ॥ ततश्च नरका विप्र भुवोधः सलिलस्य च ॥ पापिनो येषु पा[1]त्यन्ते ताञ्छृणुष्व महामुने ॥ १ ॥ रौरवः सूकरो रोधस्तालो विशसनस्तथा ॥ महाज्वालस्तप्तकुम्भो लवणोथ विलोहितः ॥ २ ॥

॥ २४ ॥ यस्येति ॥ गालितम् इति पाठे वस्त्रशोधितम् । लम्बितं हरिचन्दनमिति पाठे लम्बितं समालम्बनीकृतम् अंगरागीकृतमित्यर्थः । दिक्क्षोदवासतां दिशां क्षोदवासताम् अधिवासचूर्णत्वम् दिक्षूदवासतामिति पाठे जलाधिवासनचूर्णत्वमिति ॥ २५ ॥ यमिति ॥ निमित्ते ग्रहचारोत्पातशकुनादौ शुभाशुभसूचके पठितम् निमित्तफलितमिति च पाठः ॥ २६ ॥ २७ ॥ इति श्रीविष्णुमहापुराणव्याख्याने विष्णुचित्तीये द्वितीयेंशे पञ्चमोध्यायः ॥ ५ ॥ उक्ता पुण्यभोगभूमिः । अथ पापभोगभूमिरुच्यते—ततश्चेति ॥ सलिलस्य तमोगर्तोदकस्याधः ॥ १ ॥ रौरव इति ॥ रौरवसूकरौ रुरुवराहकृतपीडात्मकौ निखातवद्यत्र रुद्ध्यते स रोधः तालद्रुमात्पातनं तत्पर्णकाण्डेन च छेदनं यत्र स तालः करपत्रादिना तीक्ष्णशस्त्रेण यत्र छेदनं स विशसनः "मुक्तस्ततोस्य वह्निस्थः शेते संप्राप्य निर्वृतिम्" इत्युक्तो महाज्वालः यत्र तैलकुम्भेषु पच्यन्ते स तप्तकुम्भः छित्त्वा छित्त्वा तप्तक्षारोत्क्षेपणं यत्र स लवणः । लोहितस्य रुधिरस्य शोषणं

॥ २४ ॥ यस्येति ॥ लेपितं चर्चितम् अनुलिप्तं यस्य श्वासानिलैरपास्तं विक्षिप्तं दिक्षु उदवासतां याति उदकं वासयतीत्युदवासः एलादिः तत्तां तत्करणचूर्णतां यातीत्यर्थः । दिक्ष्वधिवाससामिति पाठे अधिवासचूर्णत्वं दिक्क्षोदवाससामिति पाठे दिक्षु क्षोदवासतां याति । हरिद्रादिरजस्थानीयं भवतीत्यर्थः । दिक्पटवाससामिति वा पाठः ॥ २५ ॥ यमिति ॥ ज्योतींषि ग्रहनक्षत्रादीनि । निमित्ते उत्पातशकुनादौ । फलितं शुभाशुभलक्षणं फलं च ज्ञातवान् ॥ २६ ॥ तेनेति ॥ सदेवासुरमानुषां सुरासुरमनुष्यैः सहितां लोकानां पातालादीनां मालां श्रेणिम् । तेन नागवर्येण शिरसा विधृता सतीयं मेदिनी बिभर्ति । लोकानामाधारभूताया भूमेरपि स आधार इत्यर्थः ॥ २७ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यविष्णुमहापुराणव्याख्यायां द्वितीयांशे पञ्चमोऽध्यायः ॥ ५ ॥ ॥ भारते कृतपुण्यानामुक्ताभोगप्रदा भुवः । तत्रैव कृतपापानां यातनाभूरथोच्यते ॥ १ ॥ ततश्चेति ॥ सलिलस्य चेति तमोगर्तोदकस्याधः ब्रह्माण्डगर्भोदकादूर्ध्वमेव दिशि दक्षिणस्यामस्ताद्भूमेरुपरिष्टाच्चाण्डजलाशयस्येति शुकोक्तेः ॥ १ ॥ २ ॥

---

१ पच्यन्त इति पाठान्तरम् ।

रुधिराम्भो वैतरणिः क्रिमिशः क्रिमिभोजनः ॥ असिपत्रवनं कृष्णो लालाभक्षश्च दारुणः ॥३॥ तथा पूयवहः पापो वह्निज्वालो ह्यधःशिराः ॥ सन्दंशः कालसूत्रश्च तमश्चाऽवीचिरेव च ॥ ४ ॥ श्वभोजनोथाप्रतिष्ठश्चाप्रचिश्च तथा परः ॥ इत्येवमादयश्चान्ये नरका भृशदारुणाः ॥ ५ ॥ यमस्य विषये घोराः शस्त्राग्निभयदायिनः ॥ पतन्ति येषु पुरुषाः पापकर्मरतास्तु ये ॥ ६ ॥ कूटसाक्षी तथाऽसम्यक्पक्षपातेन यो वदेत् ॥ यश्चान्यदनृतं वक्ति स नरो याति रौरवम् ॥ ७ ॥ भ्रूणहा पुरहन्ता च गोघ्नश्च मुनिसत्तम ॥ यान्ति ते नरकं रोधं यश्चोच्छ्वासनिरोधकः ॥ ८ ॥ सुरापो ब्रह्महा हर्ता सुवर्णस्य च सूकरे ॥ प्रयांति नरके यश्च तैः संसर्गमुपैति वै ॥ ९ ॥ राजन्यवैश्यहन्ता च तथैव गुरुतल्पगः ॥ तप्तकुण्डे स्वसृगामी हन्ति राजभटांश्च यः ॥ १० ॥ साध्वीविक्रयकृद्बंधपालः केसरिविक्रयी ॥ तप्तलोहे पतन्त्येते यश्च भक्तं परित्यजेत् ॥ ११ ॥

यत्र स विलोहितः ॥ २ ॥ रुधिराम्भ इति ॥ तप्तरुधिरमयो देशो रुधिराम्भः रुधिरमयी दुस्तरा नदी वैतरणी यत्र। क्रिमिषु शय्यते स क्रिमिशः यत्र क्रिमयो भुज्यंते स क्रिमिभोजनः कार्ष्णायसशंकुः निरन्तरं यत्र संचार्यते स कृष्णः ॥ अतिशीतात्मा दारुणः ॥ ३ ॥ तथेति ॥ सन्दंशैर्यत्र जिह्वोत्पाटः स सन्दंशः। यथोक्तम् "उत्पाटयन्ते तथा जिह्वाः सन्दंशैर्भृशदारुणैः। आक्रोशकानां दुष्टानां सदैवाबद्धभाषिणाम् ॥ शस्त्रधारां सदैवैतां मृणालप्रस्तरं नरः। मन्यते नारकैः शस्त्रैर्विक्षतो द्विजसत्तम ॥ हिमखण्डं च यच्छन्नो निवातं मन्यते नरः। विमुक्तो नरकाद्भीतादभ्रकाशं तमस्ततः ॥ क्रिमिकीटजलूकादितीक्ष्णदंष्ट्राग्रविक्षताः। भ्राम्यन्ते चान्धतामिस्रे वृथा मांसाशिनो हि ये ॥ कालसूत्रेण भिद्यन्ते चक्रारूढास्तु मानवाः। पादांगुलिस्थेन सदा ह्यापादतलमस्तकम्। एकीभूतशरीरश्च विरेच्यो तिचिरेण चेत्" इति ॥ ४ ॥ ५ ॥ ६ ॥ कूटसाक्षीति ॥ साक्षं जानन्नप्यवदन्नन्यथा वा वदन् यः स कूटसाक्षी तथा यो धर्माधिकृतः सन्नसम्यगयथार्थं वदति साक्षिवादादन्यद्धर्मादिव्यतिरिक्तमनृतम् ॥ ७ ॥ भ्रूणहेति ॥ भ्रूणो गर्भः सूत्रप्रवचनाध्यायी वा यथाह बोधायनः "उपनीतमात्रो व्रतचारी वेदानां किञ्चिदधीत्य ब्राह्मणः एकां शाखामधीत्य श्रोत्रियः, अंगाध्याय्यनूचानः, कल्पाध्यायी ऋषिकल्पः, सूत्रप्रवचनाध्यायी भ्रूणः, चतुर्वेदी ऋषिः, अत ऊर्ध्वं देवः" इति ॥८॥ सुराप इति ॥ सुवर्णस्य विप्रसम्बन्धिनो हेममात्रस्य षोडशमाषस्य वा हेम्नः संसर्गम् अब्दं सह शय्याशनादिना सकृद्याजनादिना वा "संवत्सरेण पतति पतितेन समाचरन्। याजनाध्यापनाध्ययनात्सद्यः पतति तत्समः ॥" इति स्मृतेः ॥ ९ ॥ राजन्येति ॥ राजन्यवैश्यौ यागस्थौ 'सवनगतौ हि क्षत्रियवैश्यौ' इत्यादिस्मृतेः। राजभटान युद्धस्थान् ॥ १० ॥ साध्वीविक्रयकृदिति ॥ साध्वी भार्या बन्धपालः कारागृहाधिकारी केसरी अश्वः "तप्तलोहे त्वश्ववणिक् तथा बन्धनरक्षिता। भार्याविक्रय

॥३॥४॥५॥६॥ कूटसाक्षीति॥जानन्नप्यन्यथा वदन्कूटसाक्षी यश्च धर्माधिकृतः सन् असम्यक् अन्यायं वदेत् यश्चान्यदनृतं वक्ति॥७॥भ्रूणहेति॥ भ्रूणहा गर्भहन्ता। पुरहन्ता पुरविलुम्पकः ॥८॥ सुराप इति॥तैः संसर्गमिति "संवत्सरेण संसर्गं पतितेन समाचरन्। याजनाध्यासनाद्यानात्सद्यः पतति तत्समः॥" इति स्मृतिप्रसिद्धं संसर्गम् ॥९॥ राजन्येति॥ राजभटान् राज्ञां भटान्दूतान्॥१०॥ साध्वीति ॥ साध्वी भार्या तस्याः विक्रयकृत् विक्र

१ कृष्णसूत्रश्चेति पा०।

स्नुषां सुतां चापि गत्वा महाज्वाले निपात्यते ॥ अवमन्ता गुरूणां यो यश्चाक्रोष्टा नराधमः ॥ १२ ॥ वेददूषयिता यश्च वेदविक्रयिकश्च यः ॥ अगम्यगामी यश्च स्यात्ते यान्ति लवणं द्विज ॥ १३ ॥ चोरो विलोहे पतति मर्यादादूषकस्तथा ॥ १४ ॥ देवद्विजपितृद्वेष्टा रत्नदूषयिता च यः ॥ स याति क्रिमिभक्षे वै क्रिमिशे च दुरिष्टकृत् ॥ १५ ॥ पितृदेवातिथींस्त्यक्त्वापर्यश्नाति नराधमः ॥ लालाभक्षे स यात्युग्रे शरकर्त्ता च वेधके ॥१६॥ करोति कर्णिनो यश्च यश्च खड्गादिकृन्नरः ॥ प्रयान्त्येते विशसने नरके भृशदारुणे ॥१७॥ असत्प्रतिगृहीता तु नरके यात्यधोमुखे ॥ अयाज्ययाजकश्चैव तथा नक्षत्रसूचकः॥१८॥वेगी पूयवहे चैको याति मिष्टान्नभुङ्नरः॥१९॥लाक्षामांसरसानां च तिलानां लवणस्य च ॥ विक्रेता ब्राह्मणो याति तमेव नरकं द्विज ॥ २० ॥ मार्जारकुक्कुटच्छागश्ववराहविहंगमान् ॥ पोषयन्नरकं याति तमेव द्विजसत्तम ॥ २१ ॥ रङ्गोपजीवी कैवर्त्तः कुण्डाशी गरदस्तथा ॥ सूची माहिषकश्चैव पर्वकारी च यो द्विजः ॥ २२ ॥

कर्ता च यश्च भक्तं परित्यजेत्'' इति वायुः । 'ब्रह्महा मुच्यते येन न तेन हयविक्रयी' इति श्रुतिः । भक्तं शरणागतम् ॥ ११ ॥ स्नुषामिति ॥ अवमन्ताऽलीकनिर्बन्धकर्ता आक्रोष्टा गुरूणां विप्राणां चाधिक्षेप्ता शप्ता वा ॥ १२ ॥ वेदेति ॥ वेददूषयिता निन्दको विस्मर्त्ता अगम्या मातुलान्यन्त्यजात्याद्याः ॥ १३ ॥ चोर इति ॥ सदाचारादिसिद्धसमयधर्ममर्यादाः ॥ १४ ॥ देवद्विजे इति ॥ दुरिष्टं विकलो यागः अभिचारो वा ॥ १५ ॥ पितृदेवातिथीनिति ॥ पित्रादीन्वर्जयित्वा आदावशनं पर्यशनम् ॥ १६ ॥ करोतीति ॥ कर्णिनश्शरविशेषाः ॥ १७ ॥ असत्प्रतिगृहीतेति ॥ असत्कृष्णाजिनमेषादि असतो म्लेच्छादिकाद्वा अयाज्याः शूद्राद्याः पतितव्रात्या वा "अविदित्वैव यः शास्त्रं दैवज्ञत्वं प्रपद्यते । स पङ्क्तिदूषकः पापो ज्ञेयो नक्षत्रसूचकः" नक्षत्रजीवी वा ॥ १८ ॥ वेगीति ॥ वेगी साहसिकः मिष्टान्नभुक् एक एव स्वादुभुक् ॥ १९ ॥ लाक्षेति ॥ लाक्षा जतु रसाः क्षीरमध्वाद्याः ॥ २० ॥ २१ ॥ रंगोपजीवीति ॥ रंगोपजीवी

यकर्ता । बन्धपालः कारागृहरक्षकः केसरिविक्रयी अश्वविक्रेता । भक्तं दासम् ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ देवद्विजेति ॥ दुरिष्टकृत् अभिचारकर्ता ॥ १५ ॥ पितृदेवातिथीनिति ॥ पर्यश्नाति परित्यज्यादौ भुंक्ते ॥ १६ ॥ करोतीति ॥ कर्णिनो बाणविशेषान् ॥१७॥ असत्प्रतिगृहीतेति ॥ नक्षत्रसूचकः नक्षत्रजीवी ॥१८॥ वेगीति ॥ पुत्रादीन्वञ्चयित्वा एक एव मिष्टान्नभुक् । वेगी साहसकारी ॥ १९ ॥२०॥ मार्जारेति ॥ तमेव पूयवहमेव ॥२१॥ रंगोपजीवीति ॥ रंगोपजीवी नटमल्लादिवृत्तिः । कैवर्तो धीवरवृत्तिः । पत्यौ जीवति जाराज्जातः कुंडः तदन्नभोजी कुण्डाशी । सूची पिशुनः । माहिषको महिषोपजीवी यद्वा "महिषीत्युच्यते

अगारदाही मित्रघ्नः शाकुनिर्ग्रामयाजकः ॥ रुधिरान्धे पतन्त्येते सोमं विक्रीणते च ये ॥ २३ ॥ मखहा ग्रामहन्ता च याति वैतरणीं नरः ॥ ॥ २४ ॥ रेतःपातादिकर्त्तारो मर्यादाभेदिनो हि ये ॥ ते कृष्णे यान्त्यशौचाश्च कुहकाजीविनश्च ये ॥ २५ ॥ असिपत्रवनं याति वनच्छेदी वृथैव यः ॥ औरभ्रिको मृगव्याधो वह्निज्वाले पतन्ति वै ॥ २६ ॥ यान्त्येते द्विज तत्रैव ये चापाकेषु वह्निदाः ॥ २७ ॥ व्रतानां लोपको यश्च स्वाश्रमाद्विच्युतश्च यः ॥ सन्दंशयातनामध्ये पततस्तावुभावपि ॥ २८॥ दिवा स्वप्ने च स्कन्दन्ते ये नरा ब्रह्मचारिणः ॥ पुत्रैरध्यापिता ये च ते पतन्ति श्वभोजने ॥ २९ ॥ एते चान्ये च नरकाः शतशोथ सहस्रशः ॥ येषु दुष्कृतकर्माणः पच्यन्ते यातनागताः ॥ ३० ॥ यथैव पापान्येतानि तथान्यानि सहस्रशः ॥ भुज्यन्ते तानि पुरुषैर्नरकान्तरगोचरैः ॥ ३१ ॥ वर्णाश्रमविरुद्धं च कर्म कुर्वन्ति ये नराः ॥ कर्मणा मनसा वाचा निरयेषु पतन्ति ते ॥ ३२ ॥ अधःशिरोभिर्दृश्यन्ते नारकैर्दिवि देवताः ॥ देवाश्चाधोमुखान्सर्वानधः पश्यन्ति नारकान् ॥ ३३ ॥

नटमल्लादिवृत्तिः कैवर्त्तो धीवरवृत्तिः । जीवति भर्त्तरि जारजः कुण्डः तदन्नभोजी कुंडाशी आश्रितमृद्भाण्डभोजी वा।गरदः विषदः सूची राजगामी पैशुनः "महिषीत्युच्यते भार्या भगेनोपार्जितं धनम् । उपजीवति यस्तस्याः स वै माहिषकः स्मृतः" इति ॥ तुलायीजीवो वा । लोभादिना अपर्वसु पर्वक्रियादिकर्ता पर्वकारी पर्वसु तैलस्त्रीमांसादि भोगकारी वा ॥ २२ ॥ अगारदाहीति ॥ शाकुनिः पक्ष्यादिजीवाः निमित्तशकुनाजीवो वा ॥ २३ ॥ ॥२४॥ रेतःपातादीति ॥ मर्यादाभेदिनः ग्रामादिसीमोल्लंघिनः कुहकं शाठ्यम् इन्द्रजालादि वा ॥ २५ ॥ असिपत्रवनमिति ॥ औरभ्रको मेषाजीवी ॥ २६ ॥ यान्तीति ॥ अपाको दाह्यमृत्पिण्डेष्टकादिगर्भ इन्धनचयः ॥ ॥ २७ ॥ २८ ॥ दिवेति ॥ स्कन्दन्ते शुक्रमवकिरन्ति चशब्दात्पुत्रैरध्यापिताश्च पच्यन्ते क्रमेणेति शेषः पातकिनस्तत्तदुक्तनरकं पूर्वं भुक्त्वा तच्छेषेण सर्वनरकान् पर्यायेण भुञ्जत इत्यर्थः ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ नारकिणां सुखिनो देवान्दृष्ट्वा क्लेशोऽधिकः स्यादित्याह अधःशिरोभिरिति ॥ देवाश्चेति ॥ ३३ ॥

भार्या भगेनोपार्जितं धनम् । उपजीवति यस्तस्याः स वै माहिषकः स्मृतः॥" इति प्रोक्तः । पर्वकारी धनादिलोभेन अपर्वस्वमावास्यादिक्रियाप्रवर्तकः । पर्वगामीति पाठे पर्वसु स्त्रीगामी ॥२२॥ अगारदाहीति ॥ शाकुनिः पक्षिजीवी शुभाशुभनिमित्तशकुनोपजीवी वा । ग्रामयाजकः ग्रामार्थं यष्टा । अंगारदाहीति च पाठः ॥२३॥२४॥ धनेति ॥ मर्यादाभेदिनः क्षेत्रादिसीमातिक्रमकारिणः । कुहकं परवंचनम् इन्द्रजालादिकं वा आजीवो वृत्ति र्येषान्ते ॥२५॥ असित्पत्रवनमिति॥ यज्ञार्थं समित्पत्रादिकार्यं विना वृथैव वनच्छेदी असिपत्रवनमेति । औरभ्रको मेषोपजीवी मृगव्याधश्च॥२६॥ यान्तीति ॥ मृगव्याधाश्च अपाकेषु वह्निदश्च वह्निज्वाले पतन्ति । अपाकदाहो मृद्भाण्डेष्टकादौ । एते पूर्वोक्ता वक्ष्यमाणाः पापिनस्तत्तत्साधारणनरकभोगानन्तरं वह्निज्वालनरकं यान्तीत्यर्थः । शिवधर्मोत्तरादिषु पापाधिक्यात्पापिनां क्रमेणानेकनरकपातोक्तेः॥२७॥२८॥ दिवेति॥ स्कन्दन्ति रेतोऽवकिरन्ति ॥२९॥३०॥३१॥ वर्णाश्रमेति ॥ वर्णाश्रमविरुद्धं नृत्तगीतादिव्यसनरूपं कर्म निरयेषु तत्तन्नरकेषु ॥ ३२॥ नरकस्थानां दुःखातिशयं दर्शयितुं स्वर्गस्थदेवदर्शनं देवानां वैराग्यार्थं नारकदर्शनं चाह–अधःशिरोभिरिति ॥३३॥



---

१ धनयौवनमत्ताश्च इति पाठान्तरम् ।

स्थावराः क्रिमयोऽब्जाश्च पक्षिणः पशवो नराः ॥ धार्मिकास्त्रिदशास्तद्वन्मोक्षिणश्च यथाक्रमम् ॥ ३४ ॥
सहस्रभागप्रथमा द्वितीयानुक्रमास्तथा ॥ सर्वे ह्येते महाभाग यावन्मुक्तिसमाश्रयाः ॥ ३५ ॥

नारकान् पश्यतां देवानामपि पुण्यक्षये पापान्नरके पतिष्याम इति नित्यं साशङ्कत्वात्स्वर्गे नातिसुखं स्यात् स्वर्गेपि पातभीतस्येति हि वक्ष्यति । एवं पापिनोऽनुभूत नानाविधनरकास्तच्छेषेण तामसादिगुणसंकरतारतम्येन नवधा भिन्नानि स्थावरादिजन्मानि यावन्मोक्षं क्रमेणारोहन्तीत्याह स्थावरा इत्यादिश्लोकद्वयेन—स्थावरा इति ॥ अब्जाः यादांसि धार्मिका मनुष्येष्वेव केचिन्मोक्षिणः ब्रह्मलोकस्थाः ॥ ३४ ॥ सहस्रेति ॥ सहस्रभागप्रथमा इति प्राथम्यमुत्तरोत्तरापेक्षया सहस्रतमभागभूताः सहस्रभागास्त एव प्रथमाः उत्तरोत्तरापेक्षया द्वितीयत्वमुत्तरत्वं पूर्वेपूर्वे सर्व एते स्थावराद्याः सहस्रतमभागाः सन्त उत्तरोत्तरं द्वितीयानुक्रमाः स्युः स्थावरादिपूर्वपूर्वजातीयाद्द्वितीयमुत्तरोत्तरं जन्मानुक्रामन्ति एतदुक्तं भवति पूर्वपूर्वजन्मसु स्थितेषु जन्तुषु कतिचिदेवोत्तरोत्तरं जन्म विन्दतीति। तथाह वायुः "यः सहस्रतमो भागस्स्थावराणां भवेदिह । पार्थिवाः क्रिमयस्तावत्संस्वेदात्संभवन्ति ते ॥ संस्वेदजानां भागेन साहस्रेण हि संमिताः ।" औदका जन्तव इत्युपक्रम्य "यः सहस्रतमो भागो भवेत्तु द्विपदामिह । धार्मिकास्ते भुवि ज्ञेया पुनर्भागेन धार्मिकाः ॥ साहस्रेणैव भागेन धार्मिकेभ्यो दिवं गताः । यः सहस्रतमो भागो धार्मिकाणां भवेद्दिवि ॥ सम्मितास्तेन भागेन मोक्षिणस्तावदेव हि । एवं सुदुर्लभाः शान्ता धार्मिकाः स्वर्गवासिनः " इति ।अयं च क्रमः प्रायिकः "तिर्यग्योनिगतः कश्चिन्मुच्यते नारकी परः । अनुग्रहप्रकारस्य क्रमोयं न विवक्षितः" इति वायूक्तेः । "व्युत्क्रमेणापि मानुष्यं प्राप्यते पुण्यगौरवात् । विचित्रा गतयः पुंसां कर्मणां गुरुलाघवैः" इत्यादित्यपुराणोक्तेश्च इदं च स्थावरादिश्लोकद्वयं मोक्षदौर्लभ्यप्रतिपादनपरं न तु जीवेयत्ताक्रमपरं स्वर्गनरकादिस्थानां जीवानामानन्त्यात् 'यावन्मुक्तिसमाश्रयाः' इति मुक्तास्तु द्विती

पापिनां नरकभोगानन्तरं स्थावराद्यासूत्तरोत्तरमुत्कृष्टासु नानाविधयोनिषु जन्मक्रममाह—स्थावरा इति ॥ अब्जा मत्स्यादयः । एतेष्वेव पुण्यविशेषेण केचिन्मोक्षिणश्च मुमुक्षवो यथाक्रमं भवन्तीति शेषः ॥ ३४ ॥ तेषां च पूर्वपूर्वबाहुल्यमुत्तरोत्तरमल्पत्वं चाह—सहस्रेति ॥ द्विऽतीयानुक्रमाः द्वितीयोनुक्रमः उद्देशो येषां द्वितीयस्थाने नुक्रान्ता ये क्रिमयः ते सहस्रभागप्रथमाः सहस्राणां भागाः प्रथमाः प्रथमं निर्दिष्टाः येषां ते क्रिमिभ्यः सहस्रगुणमधिकाः स्थावरा न तु सहस्रतमभागाः क्रिमय इत्यर्थः । द्वितीयानुक्रमादिति पंचम्यन्तपाठेपि द्वितीयस्थाने क्रान्तात् क्रिमिवर्गात्सहस्रगुणाः स्थावरा इत्येवार्थः । तथा सर्वे ह्येत इति । यथा स्थावरस्थानान्तनिर्देष्टव्याः सहस्रगुणमधिकाः एवं पक्ष्यादिष्वपि द्रष्टव्यम् । मोक्षं सम्यगाश्रयम् इति । मोक्षसमाश्रया मुमुक्षवो ज्ञाननिष्ठाः तत्पर्यन्तमेवं पूर्वपूर्वादुत्तरोत्तरन्यूनत्वेन जनक्रमः ! ततः: परं मुक्तिः । एतच्च संसारे भूतजीवबाहुल्यकथनं मोक्षस्य दुर्लभतासूचनार्थम् अयं च नवधा निर्दिष्टो जन्मक्रमः प्रायिक एव। तदुक्तमादित्यपुराणे—"व्युत्क्रमेणापि मानुष्यं प्राप्यते पुण्यगौरवात् । विचित्रा गतयः पुंसां कर्मगां गुरुलाघवैः ॥ " इति ॥ ३५ ॥

यावन्तो जन्तवः स्वर्गे तावन्तो नरकौकसः ॥ पापकृद्याति नरकं प्रायश्चित्तपराङ्मुखः ॥ ३६ ॥ पापानामनुरूपाणि प्रायश्चित्तानि यद्यथा ॥ तथा तथैव संस्मृत्य प्रोक्तानि परमर्षिभिः ॥ ३७ ॥ पापे गुरूणि गुरुणि स्वल्पान्यल्पे च तद्विदः ॥ प्रायश्चित्तानि मैत्रेय जगुः स्वायंभुवादयः ॥ ३८ ॥ प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै ॥ यानि तेषामशेषाणां कृष्णानुस्मरणम्परम् ॥ ३९ ॥

यानुक्रमा न भवन्तीत्यर्थः ॥ ३५ ॥ कृतादिकाले तद्धर्माधिक्येपि स्वर्गिवन्नारकिणोप्यनन्ता इत्याह यावन्त इति ॥ ३६ ॥ पापानां मध्ये यस्य यद्यथा प्रायश्चित्तं श्रुतावुक्तं तस्य तत्तथाऽनुस्मृत्य प्रायश्चित्तान्युक्तानीत्याह पापानामिति ॥ ३७ ॥ पाप इति ॥ गुरूणि प्रायश्चित्तानि सात्क्षात्कर्तुः प्राणान्तिकादीनि गुरूणि पापे मति पूर्वकमत्यन्तमावृत्ते स्वल्पानि रहस्यप्रायश्चित्तादीनि अल्पे सकृदज्ञानकृताप्रकाशानुमतिमात्रादिके तत्र ह्यज्ञानकृते ब्रह्महत्यादिमहापातके द्वादशवार्षिकं ज्ञानकृते तद्द्विगुणम् आवृत्तौ तद्विगुणम् अत्यन्तावृत्तौ तद्द्विगुणमिति साक्षात्कर्तुः अनुग्राहकस्यैतत्पादोनं प्रयोजकस्यार्द्धम् अनुमन्तुः सार्द्धपादः प्रोत्साहकादीनां च ततोऽवरमित्यादिक्रमः । तत्र च महापातकानामज्ञानकृतानां द्वादशवार्षिकं कर्तुः शोधकं संव्यवहार्यत्वकरं च मत्या कृतानां तु स्मृत्युक्तं प्राणान्तिकं व्यवहार्यत्वकरं नरकहरं च द्वादशवार्षिकं तु द्विगुणमपि कामकृतानां पातकानां कर्तुः व्यवहार्यत्वकरं न तु नरकहरम् । एवमादिपापस्य प्रायश्चित्तस्य च गुरुलघुत्वादि तारतम्यविदस्तद्विदः॥३८॥ अथ मन्वादिभिरुक्तानां प्रायश्चित्तानां तत्तत्पापमात्रनिवर्त्तकत्वात् यः सकृत्पातकं कुर्यात् "कुर्यादेनस्ततोपरम्" इति श्रुत्युक्तायाः पुनस्तत्पातकप्रवृत्तेरनिवारकत्वाच्च तान्युपेक्ष्य सर्वेषामंहसां महीयसामल्पीयसां च देशकालाद्यविशेषेणात्यन्तोच्छेदकत्वादत एव पुनः पापप्रवृत्तेर्निवारकत्वान्मोक्षादिफलप्रदत्वाच्च तेभ्योऽशेषेभ्यो मिलितेभ्यः परं प्रकृष्टं प्रायश्चित्तविशेषं सर्वोपनिषच्छ्रुतिस्मृतिपुराणसम्मतमाह प्रायश्चित्तानीति॥तप उपवासादि कर्म यज्ञदानादि अनुस्मरणम् अनुर्हीनार्थे स्वस्य शेषत्वानुसन्धानपूर्वकं स्मरणं यथोक्तम् "आत्मदास्यं हरेः स्वाम्यं स्वभावं च सदा स्मर" इति परं "क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता । तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयते" इत्यादि । इदमनुस्मरणं

तदेवं नारकाः सर्वे तद्भोगानन्तरं स्थावरादिक्रमेण पापक्षयात्पुण्यवशाच्च कदाचित्त्रिदशा भवन्तीत्युक्तम् । इदानीं त्रिदशा अपि सर्वे पुण्यक्षयात्पापवशाच्च कदाचिन्नारका भवन्तीति वैराग्यार्थमाह—यावन्त इति ॥ नरकौकसो भवन्तीति शेषः । इदानीं पापिनो नरकपरिहारोपायमाह—पापकृदिति । प्रायश्चित्तं यो न करोति स एव नरकं याति न तु कृतप्रायश्चित्तः ॥ ३६ ॥ तच्च प्रायश्चित्तं कर्मभक्तिज्ञानरूपेण त्रिविधं तत्र पापतारतम्येन कर्मात्मकं प्रायश्चित्तमाह—पापानामिति ॥ यत्पापं महदल्पं वा यथा ज्ञात्वा वा पापमज्ञात्वा वा पापं कृतं तथा तदेव तदनुरूपाणि प्रायश्चित्तानि वेदार्थं संस्मृत्य प्रोक्तानि॥ ३७ ॥ अनुरूपत्वमाह—पाप इति ॥ ३८ ॥ कर्ममयैः प्रायश्चित्तैर्निःशेषं सर्वपापक्षयाभावाद्दुष्करत्वाच्च सर्वोत्कृष्टं सुकरं च श्रीकृष्णभक्तिरूपं सर्वप्रायश्चित्तमाह—प्रायश्चित्तानीति ॥ तपांसि कृच्छ्रादीनि । कर्माणि च दानपूजाजपादीनि । तदात्मकानि

कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते ॥ प्रायश्चित्तं तु तस्यैकं हरिसंस्मरणं परम् ॥ ४० ॥ प्रातर्निशि तथा सन्ध्यामध्याह्नादिषु संस्मरन् ॥
नारायणमवाप्नोति सद्यः पापक्षयन्नरः ॥ ४१ ॥ विष्णुसंस्मरणात्क्षीणसमस्तक्लेशसञ्चयः ॥ मुक्तिं प्रयाति स्वर्गाप्तिस्तस्य विघ्नोऽनुमीयते ॥ ४२ ॥

कीर्त्तनस्याप्युपलक्षणम् । अनन्तरं "क जपो वासुदेवेति कीर्त्तनस्य प्रशंसनात्" ॥ ३९ ॥ ननु भगवतः स्मरणकीर्तनयोः "पापक्षयश्च भवति स्मरतां तमहर्निशम्" इत्यादिवचनेषु आवृत्तयोः पापक्षयहेतुत्वं गम्यते अवशेनापि यन्नाम्नि सकृत्स्मृतोपीत्यादिषु स्मरणकीर्तनयोः सकृत्कृतयोरेव तत्र कथमविरोध इत्याशंक्याह कृते पाप इति ॥ एकं सकृत्कृतं कृतानां सर्वांहसां सकृत्कृतं स्मरणादि करिष्यमाणानां तु आवर्त्यमानं पूर्वांहसां संस्कारनाशद्वारेण पुनरुत्पत्तिप्रतिबन्धतया प्रायश्चित्तमित्यविरोधः । नचात्रानुतप्तानामावृत्तिरनुतप्तानां तु सकृदित्यविरोधो वक्तव्यः । अनुतप्तस्यैव सर्वत्र प्रायश्चित्ताधिकारात् । न चेदं स्मरणमनुतापादिसहकारात्पापस्य निवर्त्तकं किन्तु वस्तुसामर्थ्यात् तिमिरस्येव तरणिः तस्मादत्रानुतापस्य नाङ्गत्वं किन्त्वधिकारिविशेषणता ॥ ४० ॥ किञ्चात्र कालाद्यपि नापेक्ष्यमित्याह—प्रातरिति ॥ सद्य इति वचनात्सकृदेवेति गम्यते अतः सद्य इत्यनेन विरोधात् प्रातरादिषु नावृत्तिरिति मन्तव्यम् । नर इति च जात्याश्रमानादरोक्तेर्देशकर्तृशौचाद्यनपेक्षा लक्ष्यते । "चक्रायुधस्य नामानि सदा सर्वत्र कीर्तयेत् । नाशौचं कीर्त्तने तस्य" इत्यादिवचनात् ॥ ४१ ॥ न केवलमिदं पापस्यैव नाशकं किं तु संसारस्यापीत्याह—विष्णुसंस्मरणादिति ॥ तस्य

यानि प्रायश्चित्तानि तेभ्यः सर्वेभ्यः कृष्णस्यानुस्मरणं परं श्रेष्ठम् ॥ ३९ ॥ श्रेष्ठत्वमेवाह—कृत इति ॥ पापे कृते यस्य पुंसोऽनुतापः प्रकर्षेण जायते तस्यैव मन्वाद्युक्तानां तपोदानादीनां मध्ये एकं किञ्चित्पापानुरूपं प्रायश्चित्तम् । अननुतप्तस्य तेष्वनधिकारात् हरिसंस्मरणं तु परम् ॥ ४० ॥ अनुतापमनपेक्ष्यापि निःशेषपापक्षयहेतुत्वात् 'अवशेनापि यन्नाम्नि कीर्तिते' इति वक्ष्यमाणत्वाद्देशकालादिकमनपेक्ष्य सद्यः पापक्षयहेतुत्वाच्च हरिसंस्मरणं श्रेष्ठमित्याह—प्रातरिति ॥ प्रातर्वा निशि वा संध्यायां वा मध्याह्ने वा । आदिशब्दाद्देशवयोवस्थादिनियमं वारयति—नर इति ॥ आश्रमादिनियमं च देशकालादिनियमं विनैव यथाकथंचिन्नारायणं संस्मरन्नेव सद्यस्तत्क्षणं पापक्षयमवाप्नोति । न तु संस्मरणं कृत्वा एतदुक्तं भवति द्वादशाब्दादिकं हि देशकालाधिकारिनियमाद्यपेक्षं यथावदनुष्ठितं कालान्तरे पापक्षयहेतुः । इदं तु न तथा अतः सर्वश्रेष्ठमिति । अयं भावः । शास्त्रगम्यं हि फलं यथाशास्त्रं देशकालादिनियमेन यथोक्तेनैवाधिकारिणानुष्ठितात्साधनान्निष्पाद्यते । हरिसंस्मरणफलं तु वस्तुसामर्थ्यप्रभावान्न देशकालादिनियममपेक्षत इति । तथा च विष्णुधर्मादिषु वस्तुशक्तिमेव पुरस्कृत्योक्तम्—"चक्रायुधस्य नामानि सदा सर्वत्र कीर्तयेत् । नाशौचं कीर्तने तस्य स पवित्रकरो यतः ॥" इति । "हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः । अनिच्छयापि संस्पृष्टो दहत्येव हि पावकः ॥" इति । "अज्ञानादथ वा ज्ञानादुत्तमश्लोकनाम यत् । संकीर्तनमघं पुंसो दहेदेधो यथानलः ॥" इत्यादि । न चैवं सति द्वादशाब्दादेरानर्थक्यं शङ्कनीयं नामादौ श्रद्धाशून्यानां तत्रैव प्रवृत्तिसिद्धेः । स्पष्टं चैतद्भागवतार्थदीपिकायामस्माभिः प्रपञ्चितमित्युपरम्यते ॥ ४१ ॥ किं च हरिसंस्मरणं द्वादशाब्दादिवत् न तु पापक्षयमात्रकारणम् । किन्तु मुक्तेरपि हेतुरित्याह—विष्णुसंस्मरणादिति ॥ क्षीणसमस्तक्लेशानां पाप

वासुदेवे मनो यस्य जपहोमार्चनादिषु ॥ तस्यान्तरायो मैत्रेय देवेंद्रत्वादिकं फलम् ॥ ४३ ॥ क्व नाकपृष्ठगमनं पुनरावृत्तिलक्षणम् ॥ क्व जपो वासुदेवेति मुक्तिबीजमनुत्तमम् ॥ ४४ ॥ तस्मादहर्निशं विष्णुं संस्मरन्पुरुषो मुने ॥ न याति नरकं मर्त्यः संक्षीणाखिलपातकः ॥ ४५ ॥ मनः प्रीतिकरः स्वर्गो नरकस्तद्विपर्ययः ॥ नरकस्वर्गसंज्ञे वै पापपुण्ये द्विजोत्तम ॥ ४६ ॥

मुक्तिसाधनीभूतभगवत्स्मरणवतः ॥ ४२ ॥ नित्यकर्माण्यपि भगवच्चिन्तायुक्तानि मुक्तिदानीत्याह—वासुदेव इति ॥ यथा प्रणयनं नित्ययागाङ्गमपि गोदोहनपात्रेण कृतं पशुफलप्रदं तथा नित्यमपि जपादिकर्म भगवच्चित्तेन कृतं मुक्त्यै भवतीति युक्तम् ॥ ४३ ॥ एवं मुक्तिबीजभगवत्सङ्कीर्त्तनवतो देवेन्द्रत्वादिपदं विघ्न इत्याह क्व नाकपृष्ठेति ॥ शाश्वतफलप्रदस्य हरिकीर्त्तनस्य स्वर्गादिपदं नश्वरत्वादननुरूपमित्यर्थः ॥ ४४ ॥ यस्मादेवं सकृत् कीर्तनादिकृतस्य पापस्य क्षपणं तस्मादावृत्तकीर्त्तनादिजः संस्कारः पापहेतुः दुःखसंसाराग्नाशक इत्याह—तस्मादिति ॥ इदं संकीर्त्तनं श्रवणस्याप्युपलक्षणम् । वक्ष्यति च "हन्ति कलुषं श्रोत्रं स यातो हरिः" इति ॥ एवं श्रवणादेः सकृच्छ्रुतेर्व्रीह्यवघातवद्दृष्टफलत्वाभावाच्च प्राकृतपापक्षयार्थं नावृत्तिकल्पना न्याय्या । अनादिगिरिगुहोदरस्तमोहरस्येव दीपस्य उत्तरपापानुदयार्थं यावद्ब्रह्मापरोक्ष्यमावृत्तिः कार्या पुनस्तमोनुदयाय दीपस्येव यावदर्कोदयं न चैवं सुकरे नामकीर्तनादौ सति दुष्करे द्वादशवार्षिकादौ पुरुषाणामप्रवृत्तेर्मन्वादिवाक्यानामननुष्ठानलक्षणो बाध इतिशंकनीयम् । भगवत्पराङ्मुखानां गुरुषु प्रायश्चित्तेषु स श्रद्धानां प्रवृत्तेः । किञ्च इदं स्मरणादि अश्रद्धया कृतमपि प्रायश्चित्तं भवति । यथा शिशुपालादेः "हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः" इत्यादिवचनात् स्मरणादेव पापक्षये सत्यपि युधिष्ठिरार्जुनबलभद्रादीनां विदुषामपि तीर्थयात्राद्यनुष्ठानमविद्वद्भक्तादिलोकसंग्रहार्थम् । अस्मिन्प्रकरणे हरिविष्णुनारायणेत्यनेकनाम्नां प्रयोगात्तेषां पापहरत्वमोक्षप्रदत्वप्रतिपादनाच्च सर्वाण्यपि नामानि सर्वपुरुषार्थसाधनानीति मन्तव्यम् । न तु वासुदेव इत्येकमेव नाम तथा श्रीविष्णुधर्मे "एकस्यैव समस्तस्य ब्रह्मणो द्विजसत्तम । नाम्नां बहुत्वं लोकानामुपकारकरं शृणु" इत्युपक्रम्य 'वासुदेवाच्युत' इति श्लोकेन केषांचिन्नाम्नां मोक्षप्रदत्वमभिधाय पश्चादन्येषां धर्मकामादिषु पृथग्विनियोगमुक्त्वा "यद्वाभिरोचते नाम्नां तत्सर्वार्थेषु कीर्त्तयेत् । सर्वार्थसिद्धिमाप्नोति नाम्नामेकार्थता यतः" इति सर्वेषां नाम्नां सर्वपुरुषार्थसाधकत्वस्योक्तत्वात् ॥ ४५ ॥ अथ स्वर्गादेरन्तरायत्वमुपपादयितुं निरुपाधिकसुखस्वरूपभगवद्वयति

मूलानां रागादीनां संचयस्समूहो यस्य सः । नरो मुक्तिमवाप्नोति स्वर्गप्राप्तिस्तु तुच्छत्वात्तस्य विघ्नप्रायेत्यर्थः ॥ ४२ ॥ किं च जपहोमादिसाद्गुण्यार्थमपि संस्मरणादिकं मुक्तावेव पर्यवस्यतीत्याह—वासुदेव इति ॥ तस्य मोक्षं प्राप्स्यतः पुंसो जपहोमार्चनादिसाध्यं देवेन्द्रत्वादिकं फलम् अतितुच्छत्वादन्तरायो विघ्न एव ॥ ४३ ॥ तदेवाह—क्वेति ॥ नाकपृष्ठस्सत्यलोकस्तद्गमनमपि पुनरावृत्तिकलंकित्वात् वासुदेवेति जपस्य कीर्तनस्य नित्यपरमानन्दफलस्य नानुरूपं किं पुनर्देवेंद्रत्वादिकमित्यर्थः । अत्र च हरिस्मरणजपयोर्ग्रहणं श्रवणादिनवविधभक्त्युपलक्षणार्थम् । वक्ष्यति हि हन्ति कलुषं श्रोत्रं समायातो हरिरित्यादि ॥ ४४ ॥ अतो मोक्षफलं विष्णुस्मरणं कुर्वन्नरकं न यातीति किमु वक्तव्यमित्युपसंहरति—तस्मादिति ॥ ४५ ॥ तदेवं हरिभक्तिरूपं सुलभं सर्वेषां सर्वप्रायश्चित्तमुक्तम् इदानीं विदुषामेव योग्यं ब्रह्मज्ञानात्मकं सर्वप्रायश्चित्तमुररीकृत्य ब्रह्मव्यतिरिक्तस्य पूर्वोक्तस्य स्वर्गनरकत

वस्त्वेकमेव दुःखाय सुखायेर्ष्यागमाय च ॥ कोपाय च यतस्तस्माद्वस्तु वस्त्वात्मकं कुतः ॥ ४७ ॥ तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते ॥ तदेव कोपाय यतः प्रसादाय च जायते ॥ ४८ ॥ तस्माद्दुःखात्मकं नास्ति न च किंचित्सुखात्मकम् ॥ मनसः परिणामोयं सुखदुःखादिलक्षणः ॥ ४९ ॥ ज्ञानमेव परं ब्रह्म ज्ञानं बन्धाय चेष्यते ॥ ज्ञानात्मकमिदं विश्वं न ज्ञानाद्विद्यते परम् ॥ ५० ॥ विद्याविद्येति मैत्रेय ज्ञानमेवोपधारय ॥ ५१ ॥

रिक्तस्य सर्वस्य वस्तुनः सुखात्मकत्वद्दुःखात्मकत्वं च कर्मकृतं न स्वाभाविकमतोऽस्थिरमनियतं चेत्याह—मनःप्रीतिकर इत्यादिना ॥ सुखदुःखसाधने स्वर्गनरके तेन पुण्यपापयोरेव सुखदुःखसाधनत्वात्त एवोपचारात्स्वर्गनरकशब्दवाच्ये ॥ ४६ ॥ अनियतत्वं दर्शयति वस्त्वेकमिति ॥ वस्तु अन्नपानादि एकमेव वस्तु अनेकपुरुषापेक्षया दुःखाद्यात्मकं भवति तस्माद्वस्तुवस्त्वात्मकं कुतः सुखदुःखाद्येकान्तरूपेण वस्तुनो वस्तुत्वं कुत एवमनेकपुरुषापेक्षया दुःखाद्यात्मकत्वमव्यवस्थितमित्युक्तम् ॥ ४७ ॥ एकस्मिन्नपि पुरुषे न व्यवस्थितमित्याह—तदेवेति ॥ ४८ ॥ उपसंहरति तस्मादिति ॥ सुखदुःखात्मकत्वं सर्वस्य वस्तुनः कर्मकृतं न स्वरूपकृतमतः कर्मावसाने तदपैतीत्यर्थः । तत्तद्विषयेषु पुण्यपापजन्यो मनोवृत्तिविशेषः सुखदुःखे इत्याह—मनस इति । यत्र विषयज्ञाने पुण्यमानुकूल्यं जनयति तत्सुखं, यत्र पापं प्रातिकूल्यं जनयति तद्दुःखमिति विवेकः ॥ ४९ ॥ मनोवृत्तिप्रसङ्गाद्विषयासंगिनी सा बन्धाय भवति विषयनिवृत्ता मोक्षायेत्याह—ज्ञानमिति ॥ ज्ञानं मनसः परिणामः तदेव परं ब्रह्म तत्प्राप्तिहेतुरित्यर्थः । "मन एव मनुष्याणां कारणं बन्धमोक्षयोः" इति वक्ष्यति । ज्ञानात्मकमिति मनोवृत्तिजनितपुण्यपापनिमित्तमिदं सर्वं यथाह—"कर्मानुरंजितो भुङ्क्ते परिणामं तु चेतसः" इति ॥ ५० ॥ विद्याविद्ये चेति ॥ विद्याविद्ये ज्ञानकर्मणी मोक्षसाधनभूतं ज्ञानं विद्या अनभिसंहितफलं कर्माऽविद्या ते च

त्संपादनादिसर्वप्रपंचस्य मिथ्यात्वमाह—मनःप्रीतिकरः स्वर्ग इत्यादिसार्धैः पञ्चभिः—मनःप्रीतिकरः इति ॥ तद्विपर्ययः मनोदुःखकरः अतः स्वप्नगतमनःप्रीतिदुःखकरवस्तुवत्स्वर्गनरकौ मिथ्यैवेति भावः । मिथ्याभूतस्वर्गनरकहेतुत्वात्पापपुण्ये अपि मिथ्यैवेत्याशयेनाह—नरकेति ॥ ४६ ॥ 'आयुर्वै घृतमिति' तत्साधने साध्यवदुपचारात्पापपुण्ये एव नरकस्वर्गसंज्ञे इत्युक्तम् । सुखदुःखसाधनानां स्रक्चंदनवनितादीनामप्यसत्यत्वमाह—वस्त्वेकमेवेति ॥ वस्तु स्रक्चंदनादिवस्त्वात्मकं नियतस्वभावं कुतः देशकालभोक्तृभेदेनानियतस्वभावत्वान्न परमार्थतस्सुखदुःखसाधनं किञ्चिदस्तीत्यर्थः ॥ ४७ ॥ ४८ ॥ तस्मादिति ॥ मनसः परिणामः स्वप्नमनोरथादिवन्मनोविलासमात्र इत्यर्थः ॥ ४९ ॥ किं तर्हि सत्यमित्यत्राह—ज्ञानमिति ॥ ज्ञानात्मकं परं ब्रह्मैव परमार्थ इति शेषः । एवं चेत्कुतोस्य बंधमोक्षौ तत्राह—ज्ञानमिति अविद्यया अहंकारादिरूपेण प्रतीतं ज्ञानमेव बंधायेष्यते । चशब्दाज्ज्ञानमेव विद्यया तन्निरासेन मोक्षाय प्रतिपद्यत इत्यर्थः । न चाभ्यसनीयं निरसनीयं वा अहंकारे तद्व्यतिरिक्तमस्तीत्याह—ज्ञानात्मकमिति ॥ ५० ॥ तदध्यासापवादहेतुविद्याविद्ये अपि अतः पृथग्विद्येते इत्यत्राह—विद्याविद्ये चेति ॥ तदेवमविद्या तत्कर्तृकफलादिरहितात्मानुसंधानं यावदज्ञानं तावत्सर्वप्रायश्चित्तं अपरोक्षज्ञाने तु न पापशंका न च प्रायश्चित्तं "यथा वै पुष्करपलाशः आपो न श्लिष्यंते न कर्मणा लिप्यते पापकेन" इत्यादिश्रुतेः । यद्वा मनःप्रीतिकरस्स्वर्ग इत्यादेरेवं संबंधः । यद्यपि स्वर्गनरकौ धर्माधर्मप्राप्यौ विधिवत्सुखदुःखभूयिष्ठौ मयोक्तौ तथापि न तत्प्राप्तिपरिहारयोरतीव यत्नः कार्यः । तत्साधनानां च अप

एवमेतन्मयाख्यातं भवतो मण्डलं भुवः ॥ पातालानि च सर्वाणि तथैव नरका द्विज ॥ ५२ ॥ समुद्राः पर्वताश्चैव द्वीपा वर्षाणि निम्नगाः ॥ संक्षेपात्सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि ॥ ५३ ॥ इति श्रीविष्णुमहापुराणे द्वितीयेंशे षष्ठोऽध्यायः ॥ ६ ॥ मैत्रेय उवाच ॥ कथितं भूतलं ब्रह्मन्ममैतदखिलं त्वया ॥ भुवर्लोकादिकाँल्लोकाञ्छ्रोतुमिच्छाम्यहं मुने ॥ १ ॥ तथैव ग्रहसंस्थानं प्रमाणानि यथा तथा ॥ समाचक्ष्व महाभाग तन्मह्यं परिपृच्छते ॥ २ ॥ श्रीपराशर उवाच ॥ रविचन्द्रमसोर्यावन्मयूखैरवभास्यते ॥ ससमुद्रसरिच्छैला तावती पृथिवी स्मृता ॥ ३ ॥ यावत्प्रमाणा पृथिवी विस्तारपरिमण्डलात् ॥ नभस्तावत्प्रमाणं वै व्यासमण्डलतो द्विज ॥ ४ ॥ भूमेर्योजनलक्षे तु सौरं मैत्रेय मण्डलम् ॥ लक्षाद्दिवाकरस्यापि मण्डलं शशिनः स्थितम् ॥ ५ ॥ पूर्णे शतसहस्रे तु योजनानां निशाकरात् ॥ नक्षत्रमण्डलं कृत्स्नमुपरिष्टात्प्रकाशते ॥ ६ ॥ द्वे लक्षे चोत्तरे ब्रह्मन् बुधो नक्षत्रमण्डलात् ॥ तावत्प्रमाणभागे तु बुधस्याप्युशनाः स्थितः ॥ ७ ॥ अङ्गारकोपि शुक्रस्य तत्प्रमाणे व्यवस्थितः ॥ लक्षद्वये तु भौमस्य स्थितो देवपुरोहितः ॥ ८ ॥ सौरिर्बृहस्पतेश्चोर्ध्वं द्विलक्षे समवस्थितः ॥ सप्तर्षिमण्डलं तस्माल्लक्षमेकं द्विजोत्तम॥९॥ऋषिभ्यस्तु सहस्राणां शतादूर्ध्वं व्यवस्थितः॥मेढीभूतः समस्तस्य ज्योतिश्चक्रस्य वै ध्रुवः॥१०॥

ज्ञानमेव मनोवृत्तिरूपज्ञानसाध्ये इत्यर्थः ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ इति श्रीविष्णुमहापुराणव्याख्याने विष्णुचित्तीये द्वितीयेंशे षष्ठोध्यायः ॥ ६ ॥ कथितमिति ॥ कथितमित्यादि भुवनशेषस्य ज्योतिश्चक्रस्य च प्रश्नः ॥ १ ॥ २ ॥ रवीति ॥ तावती भूलोकाख्या ॥ ३ ॥ यावदिति ॥ यावत्प्रमाणा अभितः कटाहद्वयस्पृक् विस्तारपरिमण्डलात् व्यासाद्वृत्तपरिधिमानाच्च नभो भुवर्लोकाख्यं व्यासमण्डलतस्तावद्विस्तारात्पञ्चाशत्कोटिवृत्तपरिधेः सार्द्धशतकोटिकं स्वर्लोकावधेः सूर्य्यस्य लक्षोच्छ्रितत्वोक्त्या भुवर्ल्लोको लक्षोत्सेध इत्यप्यर्थादुक्तम् ॥४॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥९॥ ऋषिभ्यइति॥मेढिः खलमध्यनिखातस्तम्भः ॥१०॥

रमार्थत्वात् । परं ब्रह्म चैकं सत्यं अतस्तत्प्राप्तये मनीषिभिर्ज्ञानाभ्यास एव यत्नः कार्य इति ॥९१॥ तदेवं नरकप्रसंगप्राप्तं परिसमाप्य प्रकृतमेवोपसंहरन्नाह–एवमित्यादिद्वाभ्याम् ॥९२॥९३॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां द्वितीयांशे षष्ठोध्यायः ॥६॥ नमो भगवते तस्मै पराशरमहर्षये । यत्प्रसादेन सर्वात्मा वासुदेवस्स्मृतो मया ॥१॥१॥ तथैवेति ॥ ग्रहाणां संस्थानं कस्योपरि को ग्रहोऽस्तीति तेषां संनिवेशं प्रमाणानि तेषाम् अन्तरान्तरयोजनसंख्याः ॥२॥ भूलोकमानेनैव भुवर्लोक इति वक्तुं तन्मानं तावदाह–रवीति पृथ्वीस्मृतेति भूलोकः स्मृतः इत्यर्थः॥३॥ यावदिति विस्तारो लोकालोकावधिःपरिमण्डलं वृत्तसंस्थानं तयोर्द्वैक्यं तस्मात् व्यासमण्डलतः विस्तारमंडलास्यां नभो भुवर्लोकाख्यं द्यावापृथिव्योर्लोकालोकपरिच्छिन्नयोरंतरालवर्त्ति भुवर्लोकोपि तावानेवेत्यर्थः।यथाह शुकः“एतावानेव भूवलयस्य सन्निवेशप्रमाणतो व्याख्यातः । एतेनैव हि दिवो मंलडमानं तद्विद उपदिशन्ति यथा द्विदल्योर्निष्पावादीनां तदन्तरेणान्तरिक्षं तदुपसंधितम्”इति॥४॥स्वर्लोकमाह–भूमेरित्यादिषड्भिः॥५॥पूर्ण इति॥शतसहस्रे लक्षे पूर्णे॥६॥७॥८॥सौरिरिति सौरिः शनैश्चरः॥९॥ऋषिभ्य इति।

त्रैलोक्यमेतत्कथितमुत्सेधेन महामुने ॥ इज्याफलस्य भूरेषा इज्या चात्र प्रतिष्ठिता ॥ ११ ॥ ध्रुवादूर्ध्वं महर्लोको यत्र ते कल्पवासिनः ॥ एकयोजनकोटिस्तु यत्र ते कल्पवासिनः ॥ १२ ॥ द्वे कोटी तु जनो लोको यत्र ते ब्रह्मणः सुताः ॥ सनन्दनाद्याः प्रथिता मैत्रेयामलचेतसः ॥ १३ ॥ चतुर्गुणोत्तरे चोर्ध्वं जनलोकात्तपः स्थितः ॥ वैराजा यत्र ते देवाः स्थिता दाहविवर्जिताः ॥ १४ ॥ षड्गुणेन तपोलोकात्सत्यलोको विराजते ॥ अपुनर्मारका यत्र ब्रह्मलोको हि संस्मृतः ॥ १५ ॥

त्रैलोक्यमिति ॥ इज्याफलस्य त्यागफलस्यभूः भोगभूमिरेषा इदं त्रैलोक्यम् इज्या चात्र भारतवर्षे कर्त्तव्या ॥ उपासना योगादिक्रिया तत्फलं च सर्वलोकेष्वपि स्यात् "योगीश्वराणां गतिमाहुरन्तर्बहिस्त्रिलोक्या" इति वचनात् ॥ ११ ॥ ध्रुवादिति ॥ कल्पवासिनः कल्पावधिकायुषः मन्वन्तराद्यधिकारिणः इन्द्राद्याः स्वाधिकारनिवृत्तौ कालप्रतीक्षया महर्लोके तिष्ठन्ति "विनिवृत्ताधिकारास्तु महर्लोकनिवासिनः" इति शैवोक्तेः। "कल्पाधिकारिणश्चात्र संस्थिता द्विजपुङ्गवाः" इति कूर्मोक्तेश्च । पुनस्ताननूद्य तल्लोकोच्छ्रायोऽभिधीयते एकेति ॥ १२ ॥ १३ ॥ चतुर्गुणोत्तर इति ॥ चतुर्गुणोत्तर इति कोटिद्वयं प्रकृत्योक्तत्वाज्जनलोकादष्टकोट्युत्तरे व्योम्नि तपः । षड्गुणेत्यत्रापि तपसो द्वादशकोट्युच्छ्रये सत्यम् । इत्थं त्रयोविंशतिकोट्यो ध्रुवादूर्ध्वं सत्यमारभ्याण्डकटाहान्तं किंचिदूनं कोटिद्वयं ज्ञेयं ब्रह्मलोक एव भगवतः पुरं रुद्रादीनां च तदुपरि समस्ततोऽण्डकटाहश्च यत्तु "जनलोकात्तपोलोकश्चतस्रः कोटयः स्मृताः । प्राजापत्यं ब्रह्मलोकः कोटिषट्कं तु सृज्यते" इति पुराणान्तरवचनं तत्तु तल्लोकान्तरालविषयम् । इदं चतुर्गुणोत्तरे षड्गुणेनेत्यादिवचनं तत्तल्लोकान्तरालस्य लोकोच्छ्रायघनस्य च संहत्यमानोक्तिपरमित्य विरोधः ॥ ॥ १४ ॥ षड्गुणेनेति ॥ तथा हि वायुनोक्तम् "अपुनर्मारकाः सत्यलोकं प्राप्ता हि न पुनः संसरन्ति" "ब्रह्मलोकमभिसम्पन्ना न पुनरिमं मानवमावर्त्तमावर्त्तन्ते" इति श्रुतेः । "ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्" इति स्मृतेश्च । "आब्रह्मभुवनादि" इत्यादिस्मृत्युक्तमावर्त्तनं चतुर्मुखाद्युपासनेन तत्तल्लोकप्राप्तिविषयं कल्प्यम् "तेषामेषां केचन ब्रह्मलोका रुद्रस्यान्ये सन्ति तत्रैव लोकाः । विष्णोरन्ये सन्ति लोका विशालास्ताँल्लोकाँस्तानुपास्य

मेढीभूतः धान्याक्रमणे पशूनामाश्रयः खलमध्यनिखातस्तम्भो मेढिः तद्वत्स्थितः ॥ १० ॥ त्रैलोक्यमिति ॥ उत्सेधेन उच्छ्रयेण पंचदशलक्षप्रमाणन इज्यादिफलस्य यागादिकर्मफलस्य भूरेषा त्रैलोक्यरक्षणा । त्वर्थे चकारः । इज्या त्वत्र भारतवर्ष एव प्रतिष्ठिता समाप्ता । उक्तं हि "यतो हि कर्मभूरेषा ह्यतोन्या भोगभूमयः" इति । अतोत्र लब्धजन्मना पुंसा नित्यं धर्मे यतितव्यमिति भावः ॥ ११ ॥ ध्रुवादिति ॥ कल्पं दिनपर्यंतमेव महर्लोके वसन्ति कल्पान्ते जनलोकं यान्तीति कल्पवासिनो भृग्वादयः । "त्रिलोक्यां दह्यमानायां शक्त्या संकर्षणाग्निना । यान्त्यूष्मणा महर्लोकाज्जनं भृग्वादयोदिताः ॥" इति शुकोक्तेः । तस्योच्छ्रायमाह--एकेति ॥ यत्रेत्यादेः पुनरुक्तिस्तदुच्छ्रायविधानार्था । सुगमं पाठम् ॥ १२ ॥ द्वे इति ॥ महर्लोकानंतरमुच्छ्रयेण द्वे कोटी जनोलोकः । यत्र ते कथिताः प्रख्याताः सनंदनाद्याः सन्ति ॥ १३ ॥ चतुर्गुणोत्तर इति ॥ जनलोकचतुर्गुणोत्तरे अष्टकोट्युच्छ्रये आकाशे व्याप्तस्तपोलोकस्स्मृतः ॥ १४ ॥ षड्गुणेनेति ॥ जनलोकापेक्षयैव षडगणेन द्वादशकोट्युच्छ्रयेण तपोलोकानन्तरं सत्य

पादगम्यन्तु यत्किञ्चिद्वस्त्वस्ति पृथिवीमयम् ॥ स भूर्लोकः समाख्यातो विस्तरोस्य मयोदितः ॥ १६ ॥ भूमिसूर्यान्तरं यच्च सिद्धादिमुनि सेवितम् ॥ भुवर्लोकस्तु सोप्युक्तो द्वितीयो मुनिसत्तम ॥ १७ ॥ ध्रुवसूर्यान्तरं यच्च नियुतानि चतुर्दश ॥ स्वर्लोकः सोपि गदितो लोकसं स्थानचिन्तकैः ॥ १८ ॥ त्रैलोक्यमेतत्कृतकं मैत्रेय परिपठ्यते ॥ जनस्तपस्तथा सत्यमिति चाकृतकं त्रयम् ॥ १९ ॥ कृतकाकृतयोर्मध्ये महर्लोक इति स्मृतः ॥ शून्यो भवति कल्पान्ते योत्यन्तं न विनश्यति ॥ २० ॥ एते सप्त मया लोका मैत्रेय कथितास्तव ॥ पातालानि च सप्तैव ब्रह्माण्डस्यैष विस्तरः ॥ २१ ॥ एतदण्डकटाहेन तिर्यक् चोर्ध्वमधस्तथा ॥ कपित्थस्य यथा बीजं सर्वतो वै समावृतम् ॥ २२ ॥ दशोत्तरेण पयसा मैत्रेयांडं च तद्वृतम् ॥ सर्वोम्बुपरिधानोसौ वह्निना वेष्टितो बहिः ॥ २३ ॥ वह्निश्च वायुना वायुर्मैत्रेय नभसा वृतः ॥ भूतादिना नभः सोपि महता परिवेष्टितः ॥ दशोत्तराण्यशेषाणि मैत्रेयैतानि सप्त वै ॥ २४ ॥ महान्तं च समावृत्य प्रधानं समवस्थितम् ॥ अनन्तस्य न तस्यान्तः संख्यानं चापि विद्यते ॥ २५ ॥

व्रजन्ति" इति पुराणान्तरवचनात् । तेषामपि नात्यन्तिकी संसारमण्डलप्राप्तिलक्षणा निवृत्तिः किन्तु ब्रह्मलोकलये ये मृताः पुनस्तस्मिन्सृष्टे तत्रैव जायन्ते ॥ १५ ॥ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ कृतकाकृतयोरिति ॥ शून्यो निर्जनः ॥ २० ॥ २१ ॥ २२ ॥ दशोत्तरेणेति ॥ असावम्बुपरिहितोण्डः ॥ २३ ॥ वह्निश्चेति ॥ प्रधानस्यानन्त्याद्दशोत्तरत्वमप्यस्तीति शते । पञ्चाशन्न्यायाद्दशोत्तराणि सप्तेत्युपपन्नम् । यद्वा कटाहादीनि महदन्तानि सप्तावरणानि तत्र कटाहस्य दशोत्तरत्ववचनं छत्रिन्यायात् ॥ २४ ॥ महान्तमिति ॥ अनन्तस्येति यतस्तस्यानन्तस्य अन्तः कालतो नाशः संख्यानयोजनेयत्तादिश्च नास्ति ॥ २५ ॥

लोकः न तु तपोलोकात्षड्गुणेनेति मन्तव्यम् । तथा सत्यष्टाविंशत्कोट्युच्छ्रयत्वेन ब्रह्माण्डे तस्यावकाशाभावात् । अपुनर्मार्गाः पुनर्मृत्युशून्याः । सत्यलोक एव कक्ष्यादिभेदेन ब्रह्मधिष्ण्यात्परं वैकुंठलोकादि ज्ञेयम् । एवं च भूस्तदूर्ध्वं पंचदशलक्षोत्तरात्रयोविंशतिकोट्यो भवन्ति सत्यलोकादूर्ध्वं पंचदशलक्षोनकोटिद्वयादंडकटाह इति ज्ञेयम् ॥ १९ ॥ महर्लोकादीनामुत्सेधप्रमाणमुक्त्वा भूरादिलोकत्रयस्य प्रत्येकमुत्सेधव्यवस्थामाह पाद गम्यमित्यादित्रिभिः—पादगम्यमिति । चरणसंचारयोग्यं गिरिशिखरादि यावत्तावदुत्सेधो भूर्लोक इत्यर्थः । विस्तारोऽस्य मयोदितः । सर्वलोकाऽऽलोकावधिः पंचविंशतिकोटिप्रमाणः ॥ १६ ॥ १७ ॥ ध्रुवसूर्यान्तर मिति । नियुतानि लक्षाणि ॥ १८ ॥ त्रैलोक्यमिति ॥ त्रैलोक्यं कृतकं प्रतिकल्पं कार्यत्वात् जनलोकादित्रयमकृतकम् । प्रतिकल्पमकार्यत्वात् ॥ १९ ॥ कृतकाकृतयोरिति ॥ महर्लोकस्य कृतकाकृतकत्वे हेतु माह—शून्य इति ॥ जनैश्शून्यः ॥ २० ॥ २१ ॥ एतदिति ॥ एतच्चतुर्दशभुवनात्मकं जगदंडकटाहेन समावृतं तदेव पृथिव्यावरणम् । स च कटाहः कोटियोजनविस्तारः । "सप्तसागरमानस्तु गर्तोदस्तदनन्त रम् । कोटियोजनमानस्तु कटाहस्स व्यवस्थितः ॥" इति स्वच्छन्दभैरवतंत्रोक्तेः ॥ २२ ॥ दशोत्तरेणेति । कटाहदशोत्तरेण दशगुणेन अम्बुपरिधानः पयोवेष्टितः दशोत्तराणि सप्तेति छत्रिन्यायेनोक्तं पृथिव्यावरणस्य दशोत्तरत्वाभावात् ॥ २३ ॥ २४ ॥ "एतद्भगवतो रूपं स्थूलं ते व्याहृतं मया । मह्यादिभिश्चावरणैरष्टभिर्बहिरावृतम् ॥" इति शुकाद्युक्तेरष्टममप्यावरणं प्रसिद्धं तदाह—महान्तं चेति । उत्पत्तिविनाशाभ्यां परि

तदनन्तमसंख्यातप्रमाणं चापि वै यतः ॥ हेतुभूतमशेषस्य प्रकृतिः सा परा मुने ॥२६॥ अंडानां तु सहस्राणां सहस्राण्ययुतानि च॥ ईदृशानां तथा तत्र कोटिकोटिशतानि च ॥ २७ ॥ दारुण्यग्निर्यथा तैलं तिले तद्वत्पुमानपि ॥ प्रधानेऽवस्थितो व्यापी चेतनात्मात्मवेदनः ॥ २८ ॥ प्रधानं च पुमांश्चैव सर्वभूतात्मभूतया ॥ विष्णुशक्त्या महाबुद्धे वृतौ संश्रयधर्मिणौ ॥ २९ ॥ तयोः सैव पृथग्भावकारणं संश्रयस्य च ॥ क्षोभकारणभूता च सर्गकाले महामते ॥ ३० ॥ यथा सक्तं जले वातो बिभर्त्ति कणिकाशतम् ॥ शक्तिः सापि तथा विष्णोः प्रधानपुरुषात्मकम् ॥ ३१ ॥ यथा च पादपो मूलस्कन्धशाखादिसंयुतः ॥ आदिबीजात्प्रभवति बीजान्यन्यानि वै ततः ॥ ३२ ॥

तदिति ॥ अतोऽनन्तमसंख्यातप्रमाणम् । तत्प्रधानमित्यन्वयः ॥२६॥ अण्डानां चेति ॥ तत्र प्रधाने सन्तीतिशेषः ॥ २७ ॥ दारुणीति ॥ चेतनात्मा ज्ञातृस्वरूपः आत्मवेदनः स्वयंप्रकाशः दारुणीत्यादिना दुर्विवेचत्वमुक्तम् ॥ २८ ॥ प्रधानमिति ॥ सर्वभूतात्मभूतया सर्वभूतव्यापिन्या विष्णुशक्त्या विष्णुसंकल्पेन संश्रयधर्मिणौ अन्योन्यसंश्लिष्टौ वृतौ धृतौ। ॥ २९ ॥ तयोरिति ॥ सैव शक्तिः पृथग्भावो मोक्षः संश्रयो बन्धः तयोः कारणं पुरुषस्य बन्धमोक्षहेतुरित्यर्थः । क्षोभकारणभूता गुणवैषम्यौन्मुख्यहेतुः ॥ ३० ॥ यथेति ॥ यथा वायुर्जले स्थितं कणिकाशतम् असक्तं निर्लेपं यथा बिभर्त्ति तथा विष्णोः सा शक्तिः प्रधानपुरुषात्मकं सर्वं तद्गतदोषैरस्पृष्टं बिभर्त्ति।अनेन श्लोकेन धारणादावक्लेशोपि दर्शितः ॥ ३१ ॥ यथा चेति ॥ कार्यभूतावृक्षा यल्लक्षणास्तल्लक्षणेन तद्धर्मकेण पार्थिवत्ववृक्षत्वचूतत्वादि

च्छिन्नानि च पृथिव्यादिसप्तावरणानि । प्रधानं तु न तथेत्याह–अनंतस्येति ॥ सर्वगतस्यान्तो नाशो नास्ति संख्यानं वा दशगुणात्मकम् ॥ २५ ॥ तदिति ॥ यतस्तदनंतं नित्यम् असंख्यातप्रमाणं चेति न विद्यते संख्यातं प्रमाणं यस्य तत्तथाभूतं च वै प्रसिद्धम् । नाहो न रात्रिरित्यादिश्रुतिपुराणेषु अतः कार्यस्य समस्तस्य हेतुभूतं परा प्रकृतिश्च अनादिमत्वात् ॥ २६ ॥ सर्वगत्वं व्यनक्ति अण्डानां चेति ॥ २७ ॥ ततश्च पुरुषाधिष्ठितमेव जगतो हेतुरित्याह–दारुणीति ॥ काष्ठे यथा तत्प्रकाशकः सूक्ष्मोग्निरवस्थितः तिले च तैलं यथा व्याप्तं आत्मवेदनस्स्वप्रकाशः ॥ २८ ॥ तयोरपि परमेश्वराधिष्ठितत्वमाह प्रधानं चेत्यादिद्वाभ्याम् । प्रधानं चेति ॥ विष्णोस्स्वरूपभूतया शक्त्या सच्छक्त्या वृतावधिष्ठितौ संश्रयधर्मिणौ नियम्यनियंतृभावेन स्थितौ ॥ २९ ॥ तयोरिति ॥ सैव कालात्मना स्थिता सती तयोः प्रलयकाले पृथग्भावस्य कारणं स्थितिकाले संश्रयस्य च कारणं सर्गकाले क्षोभकारणभूता चेत्यर्थः ॥ ३० ॥ एवं च प्रधानपुरुषद्वारा तत्कार्यभूतजगदाश्रयत्वेपि विष्णुशक्तेर्निमित्तत्वं दृष्टान्तेनाह–यथेति ॥ जले स्थितं कणिकाशतं परमाणुस्तोमम् असक्तं यथा भवत्येवं वातो बिभर्ति तथा प्रधानपुरुषात्मकं जगत्तत्रैव स्थितत्वादात्मन्यासक्तमेव विष्णुशक्तिर्बिभर्ति । यथा शैत्यं जले वातो बिभर्ति कणिकागतमिति पाठान्तरे जलस्थितं शैत्यं कणिकाद्वारेणागतं यथा वातो बिभर्ति तथा जलस्थानीयप्रधानपुरुषस्थं शैत्यस्थानीयं जगत् कणिकास्थानीयमहदादिद्वारेणागतं वातस्थानीया विष्णोः शक्तिर्बिभर्तीत्यर्थः ॥ ३१ ॥ एतदेव दृष्टान्तेन प्रपञ्चयन्सर्वेषां कारणानां मूलकारणानुगतिमाह यथा चेत्यादिसार्धैस्त्रिभिः–यथा चेति ॥ श्लोकद्वयस्याप्येकान्वयः । अन्यानि बीजानि ततः पादपात्प्रकर्षेण भवन्ति तेभ्यो बीजेभ्योऽन्ये द्रुमा भवन्ति । तद्बीजेभ्यश्चापरे द्रुमाः । तल्लक्षणं पूर्वद्रुमसजातीयं यच्चूतादि

प्रभवन्ति ततस्तेभ्यः सम्भवन्त्यपरे द्रुमाः॥ तेपि तल्लक्षणद्रव्यकारणानुगता मुने ॥३३॥ एवमव्याकृतात्पूर्वं जायन्ते महदादयः ॥ विशेषान्ता स्ततस्तेभ्यः संभवंत्यसुरादयः ॥ तेभ्यश्च पुत्रास्तेषां च पुत्राणामपरे सुताः ॥३४॥ बीजाद्वृक्षप्ररोहेण यथा नापचयस्तरोः॥ भूतानां भूतसर्गेण नैवास्त्यपचयस्तथा ॥ ३५ ॥ सन्निधानाद्यथाकाशकालाद्याः कारणं तरोः ॥ तथैवापरिणामेन विश्वस्य भगवान्हरिः ॥३६॥ व्रीहिबीजे यथा मूलं नालं पत्राङ्कुरौ तथा ॥ काण्डकोषस्तु पुष्पं च क्षीरं तद्वच्च तण्डुलाः ॥ ३७ ॥ तुषाः कणाश्च सन्तो वै यान्त्याविर्भावमात्मनः ॥ प्ररोहहेतुसामग्र्यमासाद्य मुनिसत्तम ॥३८॥ तथा कर्मस्वनेकेषु देवाद्याः समवस्थिताः ॥ विष्णुशक्तिं समासाद्य प्ररोहमुपयान्ति वै ॥ ३९ ॥ स च विष्णुः परं ब्रह्म यतः सर्वमिदं जगत् ॥ जगच्च यो यत्र चेदं यस्मिंश्च लयमेष्यति॥४०॥ तद्ब्रह्म तत्परं धाम सदसत्परमं पदम् ॥ यस्य सर्वमभेदेन यतश्चैतच्चराचरम् ॥ ४१ ॥

धर्मवता द्रव्येण उपादानकारणभूतेन यथानुगता एवं सत्त्वादिगुणमया महदाद्यास्तादृशा देवाऽव्यक्ताज्जायन्ते ॥ ३२ ॥ ३३ ॥ ३४ ॥ बीजेति ॥ यथा नापचयस्तरोः अनेकबीजवृक्षकारणभावेपि यथा वृक्षस्य न विनाशः केनाप्यवयवेन एवं देवादिसर्वसर्गेपि पञ्चभूतानां न क्षयः ॥ ३५ ॥ जगदुपादानकारणत्वेपि भगवतः स्वशरीरभूतप्रधानांशनिष्ठतया विकाराणां कालादिवत्स्वरूपेण परिणामित्वं नास्तीत्याह—सन्निधानादिति ॥ ३६ ॥ आत्मनां देवादिभेदेनोत्पत्तिरपि तत्तत्कर्मानुरूपभगवत्सङ्कल्पायत्तेत्याह—व्रीहीत्यादि ॥ व्रीहिबीजे मूलनालादयः कारणभूतव्रीहिद्रव्यरूपेणोदिताः परिणामशक्तिमतः क्षेत्रकर्षणोप्तिजलसेकादिप्ररोहहेतुसामग्रीमासाद्य मूलनालाद्यवस्थया यथाविर्भवन्ति, एवम् आत्मानः स्वकर्मशक्तिसहितविष्णुशक्तिरूपसामग्रीमासाद्य देवादिरूपेणाऽऽविर्भवन्तीति ॥ ३७ ॥ ३८ ॥ ३९ ॥ एवं विष्णोर्जगत्कारणत्वमुक्तम् । स एव परं ब्रह्मेत्याह—स चेति ॥ ४० ॥ अत्र यद्वृत्तैर्विष्णुः परामृश्यते कारणवाक्येषु सद्ब्रह्मादिशब्दवाच्यमपि स एवेत्याह—तद्ब्रह्मेति ॥

द्रव्यं तदेव कारणं तेनान्विता व्याप्ताः ॥ ३२ ॥ ३३ ॥ एवमिति ॥ विशेषान्ताः पृथिव्यन्ताः ॥ ३४ ॥ वहुकार्योत्पादकानामपि देवादीनामपक्षयाभावं दृष्टान्तेनाह—वीजवृक्षेति ॥ ३५ ॥ सर्वकारणभूतस्यापि हरे र्निर्विकारत्वं दृष्टान्तेनाह—सन्निधानादिति ॥ उपादानत्वमपि हरेः प्रकृतिद्वारेणैव न स्वरूपेणैति भावः ॥ ३६ ॥ एवमव्याकृतात्पूर्वं जायंत इत्यादिवाक्यात्प्राप्तामसद्वादशंकां दृष्टान्तेन वारयन्नाह व्रीहीत्यादित्रिभिः—व्रीहीति ॥ श्लोकत्रयस्याप्येकान्वयः।व्रीहिबीजे सन्त्येव मूलनालादयः आत्मनस्स्वस्य प्ररोहहेतुसामग्र्यमभिव्यक्तकारणपौष्कल्यं भूमिजलादिसंयोगमासाद्य प्राप्य यथा आविर्भावं यान्ति तथा अनेकेषु कर्मसु वासनासु स्थिताःदेवादीनामपि पूर्वं देहास्सूक्ष्मभूतप्रकारेण सन्त एव विष्णुशक्तिं कालकर्मादिभावापन्नां प्राप्याविर्भावं यान्ति न पुनरत्यन्तमसन्त एव जायन्ते " सदेव सोम्येदमग्र आसीत् " इति श्रुतेरित्यर्थः ॥३७॥ ३८ ॥३९॥ ननु सर्वकारणं ब्रह्मैव श्रुतिषु प्रसिद्धं न तु विष्णुस्तत्राह—स चेति ॥ विष्णुः परंब्रह्मैव तत्कुत इत्यपेक्षायां "विष्णोः सकाशादुद्भूतं जगत्तत्रैवं च स्थितम्" इत्यादिना पूर्वोक्तविष्णुस्वरूपमनुवदति यतस्सर्वमिति ॥ ४० ॥ ब्रह्म विष्णोरेव स्वरूप

स एव मूलप्रकृतिर्व्यक्तरूपी जगच्च सः ॥ तस्मिन्नेव लयं सर्वं याति तत्र च तिष्ठति ॥ ४२ ॥ कर्त्ता क्रियाणां स च इज्यते क्रतुः स एवतत्कर्मफलं च तस्य ॥ स्रुगादियत्साधनमप्यशेषं हरेर्न किञ्चिद्व्यतिरिक्तमस्ति ॥ ४३ ॥ इति श्रीविष्णुमहापुराणे द्वितीयेंशे सप्तमोऽध्यायः ॥ ७ ॥
श्रीपराशर उवाच ॥ व्याख्यातमेतद्ब्रह्माण्डसंस्थानं तव सुव्रत ॥ ततः प्रमाणसंस्थाने सूर्यादीनां शृणुष्व मे ॥ १ ॥ योजनानां सहस्राणि भास्करस्य रथो नव ॥ ईषादण्डस्तथैवास्य द्विगुणो मुनिसत्तम ॥ २ ॥ सार्धकोटिस्तथा सप्त नियुतान्यधिकानि वै ॥ योजनानां तु तस्याक्षस्तत्र चक्रं प्रतिष्ठितम् ॥ ३ ॥ त्रिनाभिमति पञ्चारे षण्णेमिन्यक्षयात्मके ॥ संवत्सरमये कृत्स्नं कालचक्रं प्रतिष्ठितम् ॥ ४ ॥

परं पदं परमप्राप्यम् एतच्चराचरं जगदविशेषेण यस्य यदीयमित्यर्थः ॥ ४१ ॥ स एवेति ॥ जगच्च स इत्यनन्यत्वोपपादनं स एव मूलप्रकृतिरिति ॥ ४२ ॥ तत्प्राप्त्युपायो यागादिस्तत्साधनं च स एवेत्याह—कर्त्ताक्रियाणामिति ॥ तत्कर्म तस्यानुष्ठानं तस्य क्रतोः ॥ ४३ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये द्वितीयेंशे सप्तमोध्यायः ॥ ७ ॥ अथ ज्योतिश्चक्रम् । व्याख्यातमिति ॥ एतत् ब्रह्माण्डसंस्थानं मया तव व्याख्यातम् ॥ १ ॥ योजनानामिति ॥ भास्करस्य देहव्याप्तो रथभागो नवसाहस्रः वक्ष्यमाणगंधर्वादिपरिवारावकाशार्थो रथांशश्च साहस्रमात्रः इत्थं दशसाहस्रो रथः "मण्डलं भास्करस्याथ योजनानां निबोधत । नवयोजनसाहस्रो विस्तारो भास्करस्य तु" इति "दशयोजनसाहस्रो विस्तारायामतो रथः" इति च तेजोमयतया दूरतो मण्डलत्वेन दृश्यमानस्य तद्देहस्य नवसहस्रतया तद्रथस्य च दशसहस्रतया वायूक्तेः ईषादण्डः द्विगुणः विंशतियोजनसहस्रः सार्धकोटिरिति ॥ २ ॥ अधिकानि पञ्चाशत्सहस्रयोजनानि आमेरोर्मानसोत्तरपर्यंतं स्थितस्येह महाक्षत्वेन विवक्षितत्वात् "तत्र मेरुमध्योपरि षोडशसहस्रोच्छ्रितगगनस्थोत्तराग्रे मानसोत्तरोपर्यर्द्धलक्षोच्छ्रितान्तरिक्षावस्थितदक्षिणाग्रे महाक्षे चक्रं हिरण्मयेनानल्पेनेति मात्स्योक्तमानम्" ॥ संवत्सरात्मककालचक्रतयोपास्यं प्रतिष्ठितम् ॥ ३ ॥ त्रिनाभिमतीति त्रिनाभीत्यादेर्मात्स्योक्तिर्व्याख्या "अहस्त्रिनाभि सूर्यस्य एकचक्रस्य वै स्मृतम् । अरास्संवत्सराः पञ्च तेभ्यःषडृतवः स्मृताः" इति वायूक्तिस्तु "अहस्त्रिनाभि सूर्यस्य अराः पञ्चर्तवः स्मृताः । तेभ्यः षडृतवस्तस्यइति । यद्वा चातुर्मास्यैस्त्रिनाभिर्हेमन्ताशिशिरयोरैक्यं

मित्याह—तद्ब्रह्मेति ॥ तच्छ्रुतिप्रसिद्धं ब्रह्म तस्य विष्णोः परमं धाम स्वरूपं यतस्सदसतोः परं पदं यत्तस्य चाभेदेन सर्वमेतज्जगद्भवति ॥ ४१ ॥ ततो विष्णुब्रह्मणोर्लक्षणाभेदाद्ब्रह्मैव विष्णुर्मूलकारणं चेत्याह—स एवेति ॥ अतः स एव सर्वकारणमित्यर्थः ॥ ४२ ॥ सर्वकर्मफलं तत्साधनादिरूपश्च स एवेति दर्शयन्नुक्तं सर्वात्मत्वं निगमयति कर्तेति ॥ ४३ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यविष्णुमहापुराणव्याख्यायां द्वितीयांशे सप्तमोऽध्यायः ॥ ७ ॥ श्रीगोपालसमुद्रस्थविद्वज्जनकृपाबलात् ॥ योजितं चैकदेशेन टीकया सह वैष्णवम् ॥ १ ॥ विस्तृतं विस्तरेणेदं ज्योतिश्चक्रं विचक्षणैः । मया तु मंदबोधाय संक्षेपेणोपवर्ण्यते ॥ १ ॥ योजनानामिति ॥ ईषादण्डः अक्षयुगयोस्संधानार्थो दण्डः द्विगुणः अष्टादशयोजनसहस्रः ॥ २ ॥ सार्धकोटिरिति ॥ मेरुमानसाचलयोर्यावदन्तरं तावदेवाक्षस्य मानं तस्य रथस्याक्षो मेरोर्मूर्धनि कृतो मानसोत्तरे स्थितरभागः । यत्र प्रोतं रविरथचक्रं तैलयन्त्रचक्रवन्मानसोत्तरगिरौ परिभ्रमतीति श्रीशुकोक्तेः ॥ ३ ॥ चक्रमेवोपासनार्थं विशिंष्यन्नाह—त्रिनाभिमतीति ॥ नाभिस्तम्भः यत्राक्षः प्रोतः स च त्रिमेखलः ।

कृत्वा पञ्चभिः पञ्चारं षडृतुभिः षण्णेमि । तथाहि यास्केन निरुक्तम् "त्रिनाभिचक्रं ऋतुः संवत्सरो ग्रीष्मो वर्षा हेमन्तः" इति । संवत्सरं सर्वमत्राभिस्तौति पञ्चारे चक्र इति पंचर्तुतया पञ्चर्त्तवः संवत्सरस्य इति च ब्राह्मणम् । हेमन्तशिशिरयोः समासेन षडर आहुरर्पितमिति षडृतुतया अराः प्रसृता नाभिमति च अक्षयात्मके नित्य प्रवाहे चक्रमिति पाठे सप्तम्यर्थे प्रथमा । प्रागुक्ते संवत्सरात्मके कालचक्रे कृत्स्नं कालायत्तं जगत्प्रतिष्ठितम् । त्रिनाभिपञ्चारत्वादिकं हि चक्रविशेषणं "द्वादश प्रधयश्च क्रमेकं त्रीणि नतानीति पञ्चारे चक्रे" इति श्रुतेः । यद्वा पूर्वश्लोकोक्ते संवत्सरादिकालात्मकतयोपास्ये रविरथचक्रे कृत्स्नं कालचक्रं परिवर्तनशीलं कालावयववृन्दं स्थितम् । लक्षप्रमाणमित्यादि ह्रस्वाक्षस्य यत्प्रमाणं तदेव तस्य रथस्य युगखण्डयोः संहत्यमानं सार्धपञ्चचत्वारिंशत्सहस्रं तस्य युगमित्यर्थः । युगस्य खण्डयोःपृथगुक्तिः विनियोगद्वैधात् । तथा हि मेरुमानसोतरावधि व्याप्तमहाक्षोपरि तदानुकूल्येन यमलवत्स्थितः उदग्दक्षिणायनकाष्ठयोरन्तरालमण्डलेषु रथस्याकर्षणविकर्षणार्थम् । ध्रुवगृहीतवातरश्मिबद्धः कुविन्दनाडीवत्सञ्चारी ह्रस्वाक्षस्तदुपरि बद्धो दशसहस्रो रथोऽवतिष्ठते ह्रस्वाक्षमध्यमारभ्य रथद्विगुण ईषादण्डः प्रत्यङ्मुखो ज्ञेयः "द्विगुणोऽस्य रथोपस्थादीषादण्डः प्रमाणतः" इति मात्स्योक्तेः । ईषाग्रे तिर्यङ् निबद्धः मध्ये ह्रस्वाक्षसमदैर्घ्यम् । युगं युगस्य वामार्द्धं सप्ताश्वबन्धने विनियुक्तम् । "असङ्गैस्तुरगैर्युक्तं ततः स्थितैः" इति लैङ्गोक्तेः "सप्ताश्वरूपच्छन्दांसि वहन्तो वामतो रविम्" इति लैङ्गवायव्योक्तेश्च । रथोत्तरभागस्थयुगार्द्धन्तु मेर्वासन्नं तद्वायुरश्मिद्वारा ध्रुवाधारम् । एवं तेन युतार्द्धेन सह ह्रस्वाक्षोत्तरभागोपि मेर्वासन्नो ध्रुवरश्मिबद्धस्तद्वारा ध्रुवाधारः।एतेन ह्रस्वाक्षश्च रथस्योत्तरभागस्थयुगाग्रं चोभयं दीर्घाक्षोपरि स्थितत्र्यशीतिशतमण्डलरेखामार्गेण सञ्चाराद्रथदक्षिणभागे स्वस्वाग्रद्वयनिबद्धरश्मिभ्यां ध्रुवेणोदगयने मेर्वभिमुखमाकृष्यते । दक्षिणायने महाक्षोपर्येव मानसोत्तराभिमुखं शिथिलीकृत्य विकृष्यते तेन महाक्षोपरि यन्त्रितह्रस्वाक्षस्थबिम्बस्य दक्षिणोत्तरगतिर्नान्यथेत्युक्तं भवति । यल्लैङ्गमात्स्यवायव्येषु "युगाक्षकोटिसम्बन्धौ द्वौ रश्मी स्यन्दनस्य तु । ध्रुवेण प्रगृहीतौ तौ विकृष्य युगयोस्तु वै ॥ युगाक्षकोटिस्थौ तस्य दक्षिणे स्यन्दनस्य तु । ध्रुवेण प्रगृहीतौ तौ रश्मी यौ नयतो रविम् ॥ भ्रमतो मण्डलानि स्युः खेचरस्य रथस्य तु । भ्रमन्तमनुगच्छन्तौ ध्रुवं रश्मी तु तावुभौ ॥ ह्रसतस्तस्य रश्मी तु मण्डलेषूत्तरायणे । वर्द्धेते दक्षिणे चैव भ्रमतो मण्डलानि तु ॥ आकृष्येते यदा तौ तु

अहो रूपत्वात्त्रिनाभित्वेनोपास्यत्वात् । मेखलारूपास्तिस्रो नाभयः पूर्वाह्णमध्याह्नापराह्णाः तदुक्ते । पंचारे पंच सम्वत्सरपरिवत्सरादयो वक्ष्यमाणा अराः शलाका यस्य तस्मिन् षण्णेमिनि षड् ऋतवो नेमयः प्रान्तवलयानि तद्वति कालात्मकत्वात् । अक्षयात्मके सम्वत्सरमये संवत्सराधारत्वात् संवत्सरत्वेनोपास्यत्वाच्च तन्मयत्वं तदुक्तं मात्स्ये—"अहस्त्रिनाभिस्सूर्यस्य ह्येचक्रस्य वै स्मृतम् । अराः संवत्सराः पंच नेम्यः षड् ऋतवस्स्मृताः ॥" इति । तस्मिन्कालचक्रं कालोपलक्षणभूतं कृत्स्नं ज्योतिश्चक्रं प्रतिष्ठितमाश्रितं सूर्यरथचक्रं तु महाक्षे । इयं चात्र रथप्रक्रियाभूतलाद्योजनलक्षे सूर्य्यः पञ्चदशलक्षे ध्रुवः चतुरशीतिसहस्रयोजनोच्छ्रायो मेरुः । अर्धलक्षोच्छ्रायेमेरोश्चोपरि षोडशहस्रोच्छ्राये वायुस्कंधे सप्तलक्षोत्तरसार्धकोटिप्रमाणो रविरथस्याक्षो मानसोत्तरप्रोतैकचक्रस्तिर्यग्विततोस्ति युगं चाक्षसमप्रमाणं दक्षिणार्धबद्धसप्ताश्वं तत्समानार्धं चाक्षवदेवास्ति तस्मिन् चाक्षे चक्रप्रान्तनिबद्धमूलो ह्स्वाक्षो वायुरश्मियुक्तो ध्रुवाधारोस्ति । युगं च दक्षिणार्धे वायुरश्मिसंबद्धं तथैवास्ति प्रवहादिवायुवशाच्च द्वादशराश्यात्मकं ज्योतिश्चक्रं प्रत्यहं मेरुं प्रदक्षिणं कुर्वन्नपि स्वगत्या राश्यभिमुखमपि किञ्चि

हयाश्च सप्तच्छदांसि तेषां नामानि मे शृणु ॥ गायत्री च बृहत्युष्णिग्जगती त्रिष्टुभेव च ॥ अनुष्टुप्पंक्तिरित्युक्ता छंदांसि हरयो रवेः ॥ ६ ॥

ध्रुवेणाधिष्ठितौ तदा। सोऽभ्यन्तरगतः सूर्यो भ्रमते मण्डलानि तु ।ध्रुवेण मुच्यमानाभ्यां रश्मिभ्यां पुनरेव तु ॥ तथैव बाह्यतः सूर्यो भ्रमते मण्डलानि तु" एवं सर्वाधार भूतो महाक्षोपि ध्रुवेण रश्म्यन्तरेण भ्राम्यमाणश्चक्रं भ्रामयन्प्रत्यग्भ्रमति।यथाऽऽह वायुः "चक्रमक्षे निबद्धं तु ध्रुवे चाक्षः समर्पितः।सह चक्रो भ्रमत्यक्षः सहाक्षो भ्रमति ध्रुवः" द्वितीयेक्ष इति द्वितीयशब्देन सन्निहितह्रस्वाक्षापेक्षया तत्र चक्रं प्रतिष्ठितमिति प्रागुक्तविनियोगो महाक्षः स्मर्यते ॥४॥ हयाश्चेत्यादि ॥ चशब्देन प्राग्विनियुक्ता दुत्तरयुगार्द्धादितरस्मिन् द्वितीये रथवामयुगार्द्धे छन्दोमयत्वेनोपास्याः सप्ताश्वाश्च संस्थिता इत्यनुषङ्गात्तद्योग्ययुगार्द्धपदं लभ्यते । अत्रेयं परिपाटी ज्ञातव्या—जम्बूद्वीपमध्ये मेरुः तदुपरि पंचदशलक्षे ध्रुवः मेरोरुपरि षोडशसहस्रांतरिक्षे महाक्षस्य मूलं तस्याग्रं सचक्रं मानसाद्र्युपर्यर्द्धलक्षेऽन्तरिक्षे महाक्षे त्र्यशीतिशतमण्डलरेखास्तत्तद्दिने रविबिम्बभ्रमणगोचराकाशप्रदेशवृत्तोपाधिभूता दक्षिणोत्तरकाष्ठयोरन्तरालभवा मण्डलाख्या मेरुं मध्यविन्दुं कृत्वा तत्तद्रेखागर्भमाकाशे तत्तद्दिनबिम्बभ्रमणमुत्पद्यते । यावद्दक्षिणोत्तरकाष्ठं त्र्यशीत्यधिकशतदिनगम्यत्वादयनस्य तावन्ति मण्डलानि स्युः । तत्राक्षे रथो दशसहस्रमितो रविबिम्बादिशब्दव्यपदेश्यो महाक्षोपरि संचारिणा ह्रस्वाक्षेण संयुतः प्रत्यङ्मुखः स च ज्योतिश्चक्रभ्रामकप्रवाहानिलाख्यध्रुवरश्मिवशाद्ग्रहतारागणैः सहित एव प्रत्यहं प्रत्यङ्मुखमेकवारं मेरुं प्रदक्षिणयन्नेव ह्रस्वाक्षयुगोत्तरकोट्यग्रबद्धध्रुवगृहीतवातरश्मिद्वयाकर्षणविकर्षणवशान्नक्षत्रचक्रमार्गेण च किंचित्किंचित्प्राग्लम्बमान एवोदग्दक्षिणायनयोर्यावत् काष्ठान्तमनुकृष्यते विकृष्यते च अश्विन्यां दृष्टग्रहस्यानन्तरं कालान्तरे तत्पुरतः स्थितभरण्यादौ स्थितिदर्शनात् किंचित्प्राग्गतिश्च रश्म्यन्तरवशात्स्वचारानुगुण्यात्सिद्धा । एवं दक्षिणोत्तरच्छायादर्शनादुदग्दक्षिणा गतिश्च सिद्धा ताराचक्रं नाम तत्तत्कालपरिदृश्यव्योमावच्छेदकं छत्राकारमश्विन्यादिसप्तविंशतिधिष्ण्यविभक्ताकाशक्षेत्रकं ज्योतिर्मण्डलं मेरुमध्यस्थध्रुवनाभिकम् । तत्पुनर्द्वादशधा कल्पितमेषादिराश्यात्मना विभक्तं सपादमश्विन्यादि नक्षत्रद्वयक्षेत्रं हि मेषादिरेकैको राशिः तत्र धनुर्मकरसन्धौ मानसोत्तरासन्ने दक्षिणपरमकाष्ठायामुत्तरायणोपक्रमः । एवं मिथुनकर्किसन्धौ मेर्वासन्ने उदक्काष्ठान्ते दक्षिणायनारम्भः । तच्च भचक्रं किंचिद्दक्षिणनम्रमुदगुन्नतप्रायं पूर्वाभिमुखप्रदक्षिणनिबद्धाश्विन्यादिनक्षत्रकल्पितराशिकं तत्र ह्युत्तराषाढाद्वितीयपादादिसार्द्धत्रयोदशर्क्षक्षेत्रमुत्तरमयनमेकार्धे अर्धान्तरे तु पुनर्वस्वन्त्यपादादिसार्धत्रयोदशर्क्षक्षेत्रं दक्षिणम् । मीनमेषसन्धिरुदग्विषुवन्मध्यं कन्यातुलासन्धिर्दक्षिणं विषुवम् । एवं महाक्षेप्यारोहावरोहाभ्यां

किंचित्प्रचलति तत्र दक्षिणायनादिषु ध्रुवगृहीतवायुपाशाकर्षणापकर्षणाभ्यां रवेर्गतिवैचित्र्यायथायथमहोरात्राणि ह्रस्वदीर्घसमानि भवन्ति । एवं चन्द्रादीनामपि ज्योतिश्चक्रवशात्प्रत्यहं मेरुं प्रदक्षिणं कुर्वतामपि नक्षत्राभिमुखी स्वकीया गतिरस्त्येव अश्विन्यां दृष्टानां भरण्यादौ दर्शनात् । एतच्च तत्र तत्र व्याख्यायां स्पष्टी भविष्यति ॥ ४ ॥ तत्र प्रागच्छतस्सूर्यस्य गायत्र्यादिच्छंदोरूपेणोपास्यान्हयानाह—हयाश्चेति ॥ पंक्तिरित्येतानि

चत्वारिंशत्सहस्राणि द्वितीयोऽक्षो विवस्वतः॥ पञ्चान्यानि तु सार्धानि स्यन्दनस्य महामते॥६॥अक्षप्रमाणमुभयोः प्रमाणं तद्युगार्द्धयो ॥ह्रस्वो क्षस्तद्युगार्द्धेन ध्रुवाधारो रथस्य वै ॥ द्वितीयेक्षे तु तच्चक्रं संस्थितं मानसाचले ॥७॥ मानसोत्तरशैलस्य पूर्वतो वासवी पुरी ॥ दक्षिणे तु यम स्यान्याप्रतीच्यां वरुणस्य च ॥ उत्तरेण च सोमस्य तासां नामानि मे शृणु ॥८॥ वस्वौकसारा शक्रस्य याम्या संयमनी तथा ॥ पुरी सुखा जलेशस्य सोमस्य च विभावरी ॥ ९ ॥ काष्ठां गतो दक्षिणतः क्षिप्तेषुरिव सर्पति ॥ मैत्रेय भगवान्भानुर्ज्योतिषां चक्रसंयुतः ॥ १० ॥

द्वे अयने राशिषट्कं सार्द्धत्रयोदशर्क्षं च कल्प्यम् । यथा महाक्षे दक्षिणोत्तरचलनं तदनुरूपं भचक्रं च तत्समान्तरिक्षे तिर्यङ्मुखबद्धं ज्ञेयम् । तथा राशिद्वयमेकषष्टि मण्डलं च भुक्तं चेद् भचक्रेपि षष्ठांशो राशिद्वयात्मकं सार्द्धचतुर्नक्षत्रं प्राग्गत्या भोक्तव्यमित्याधूह्यम् । तत्तद्देशे चक्रार्द्धस्य दर्शनादर्शनाभ्यां राशिषट्कस्योदितताऽस्त मितता च तत्र प्रायशो मीनमेषौ ह्रस्वौ वृषभकुम्भौ ततोऽधिकौ नक्रमिथुने किंचिद्दीर्घे सिंहवृश्चिकौ दीर्घतरौ धनुःकर्कटौ ततोऽधिकौ समे कन्यातुले तत्रार्कोक्रान्तरा श्यंशमारभ्य षड्राशिक्षेत्रदर्शनकाल एव तत्र देशेऽहः इतरषट्कदर्शनकालो रात्रिः । तद्राशिप्रमाणाधीनौ दिनरात्रिवृद्धिह्रासौ इत्यादिज्योतिःशास्त्रस्थितिश्च पुराण सम्मता ज्ञेया ॥ ५ ॥ ६ ॥ ७ ॥ उदयादिस्थानविभागप्रदर्शनायाह—मानसेति ॥ पूर्वत इति मानसोत्तरे मेरौ च पुरीणां दिक्चतुष्कं ब्रह्मापेक्षया नित्यनिबद्धं ज्ञेयम् । ब्रह्मणो ह्यादौ स्रष्टुं स्थितस्य पुरोदेशः पूर्वाभूत् पश्चाद्भागः प्रतीची दक्षिणहस्तदेशो दक्षिणा उत्तरहस्तदेश उत्तरेति तन्निरुक्तं यास्केन 'दीर्घहस्तप्रकृतिरिति' ॥ ८ ॥ ९ ॥ काष्ठां गत इति ॥ "अथ तस्योपरिष्टात्तु भ्रमतो दक्षिणायनम्" इति लैङ्गोक्ते इन्द्रादिपुरोपरि गगने भ्रमन्दक्षिणकाष्ठां गतो ज्योतिश्चक्रप्रान्तं गत्वा

छंदांसि रवेर्हरयो हयाः गत्यधीनत्वात् ॥ ९ ॥ कालचक्रस्य अक्षान्तरमाह—चत्वारिंशदिति ॥ पंचान्यानि तु सार्धानि चत्वारिंशत्सहस्राणि सार्धपंचचत्वारिंशत्सहस्र इत्यर्थः ॥ ६ ॥ महाक्षप्रमाणं युगेप्यतिदिशति—अक्ष प्रमाणमिति ॥ अश्वयोजनार्थो दण्डो युगम् अक्षस्य प्रमाणं तदेव युगार्धयोस्संहत्यप्रमाणं युगप्रमाणमिति वक्तव्ये युगार्धयोरित्युक्तं तत्रायं भावः । यस्मिन्नुभयतोऽश्वा बध्यंते तद्युगमीषाग्रयुक्तमर्धस्थानादुभयतस्समं भवति । अत्र त्वेकत एव सप्ताश्वाः न तूभयः । "असंगैस्तुरगैर्युक्तो यतश्चक्रं ततो रथः" इति लैङ्गोक्तेः । अतोऽश्वयुक्तिभागे युगस्य दैर्घ्यम् । अन्यतो ह्रस्वत्वमिति शंका माभूदित्येवमर्थं युगार्धयोरुभयोस्समयोस्सं हत्येतत्प्रमाणमित्युक्तं चाक्षयुगयोरेकप्रमाणमिति ह्रस्वाक्षस्योपयोगं दर्शयन्नाह—ह्रस्वोक्ष इति । सार्धपंचचत्वारिंशत्सहस्रो ह्रस्वोक्षः तस्य रथस्य युगार्धेन सह वायुरश्मिभिर्बद्धो ध्रुवाधारोस्ति तथा च शुकः—"तस्मिन्नक्षे कृतमूलो द्वितीयोक्षस्तुरीयमानेन संमितस्तैलयंत्राक्षवद्ध्रुवे कृतोपरिभाग" इति । मात्स्ये च "युगाक्षकोटिस्थौ तस्य दक्षिणे स्यन्दनस्य तु । ध्रुवेण प्रगृहीतौ तु तौ रश्मीनयतो रविम् ॥ " इति । अनन्तरोक्तह्रस्वाक्षा पेक्षया द्वितीये उक्ता इत्यन्वयः ॥ ७ ॥ मेरोश्चतुर्दशमुदयाद्युपलक्षणभूतं पुरचतुष्टयमाह—मानसोत्तरेति ॥ पूर्वत इत्यादि भारतवर्षस्थानमपेक्ष्योच्यते पूर्वादिविभागस्य सूर्यदर्शनाद्यपेक्षत्वेनानियमस्य लक्ष्यमाणत्वात् ॥ ८ ॥ वस्वौकसारेति । याम्या यमपुरी ॥ ९ ॥ तत्र तावदैन्द्रीं पुरीमवधिं कृत्वा सूर्यस्योदयास्तमयादिकं वक्ष्यन्नुत्तरायणान्तेत्यन्तम् उत्तरां दिशं गतस्य दक्षिणतः परावृत्तिमाह—काष्ठामिति ॥ दक्षिणतो या काष्ठा तां गतः

अहोरात्रव्यवस्थानकारणं भगवान्रविः ॥ देवयानः परः पन्था योगिनां क्लेशसंक्षये ॥ ११ ॥
दिवसस्य रविर्मध्ये सर्वकालं व्यवस्थितः ॥ सर्वद्वीपेषु मैत्रेय निशार्द्धस्य च सन्मुखः ॥ १२ ॥

शीघ्रं भ्रमति । कुलालचक्रप्रान्तस्थो जन्तुरिव ॥ १० ॥ अहोरात्रेति ॥ अह्नो रात्रेश्च व्यवस्थानकारणं रविर्जैनैर्दृश्योऽदृश्यः सन् देवयानोऽर्चिरादिः मुक्तिमार्गपरत्वात् । छान्दोग्ये "तेर्चिषमेवाभिसम्भवंति आर्चिषोहः अह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान् मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चंद्रमसो विद्युतं तत्पुरुषो मानवः स एनान् ब्रह्म गमयति एष वै देवयानः पन्थाः" इति चोक्तः । अत्र चोक्तश्लोकः "अर्चिर्वस्रोर्द्धमासः सित उदगयने ये षडर्कस्य मासास्त्वब्दो वाय्वर्कचन्द्रास्तडिति च पुरुषश्शक्रधात्रोश्च लोकौ । वोढारो विद्युतोर्वाङ्नयति तु पुरुषो वैद्युतस्तेभ्य ऊर्ध्वं ब्रह्मज्ञान्मानवोऽस्मात्परमिति कथयन्त्युत्तरं मार्गमेतम्" ॥ ११ ॥ दिवसस्येति ॥ दिवसस्येत्यादिश्लोकचतुष्टयस्यायं भावः । यथा लक्षोच्छ्रित एव व्योम्नि स्थितस्तीक्ष्णातपः स्वाभितो द्वितीययामगम्यदेशभासकस्सन्भ्रमति तथा स्थित एव स्वाधस्थ्यदेश्यानां मध्याह्नकृत् तत् सम्मुखः समसूत्रस्थभचक्रार्द्धव्यवहितोत्तरदेश्यानामर्द्धरात्रकृत् तथा तद्दिनभचक्रपादव्यवहितपाश्चिमदेशस्थैर्दूरत्वाद्भूलग्न इवादृश्यमान उदेतीति व्यपदेश्यः । तावद्दूरदेश्यः प्राग्देश्यैर्दूरीभवन्भूलग्न इवादृश्यमानोऽस्तमेतीति व्यपदेश्यः । उदयेऽस्तमये च दूरत्वान्नम्रधीः यथा मेघः स्वाधस्थैरुन्नतस्ततो दूरस्थैर्भूलग्न इव दृश्यः । एवं लक्षोच्छ्रिततीक्ष्णरश्मेर्मेरुं प्रदक्षिणयत एव दृष्टवशात्मध्याह्नादिव्यवहार इति तदुदाहृतं वायुना "मध्यमश्चामरावत्यां यावद्व्रजति भास्करः । वैवस्वते संयमने उदयस्तत्र दृश्यते । सुखायामर्धरात्रस्थो विभायामस्तमेति च" इत्यादि । अतो दूरत्वादेवादर्शनमस्तमयः न तु मेरुव्यवहितेः मेरोर्व्यवधायकत्वे तु नवकोटिमितं मानसोत्तरपरिधिमहोरात्रेण भ्रमतो भानोर्द्वात्रिंशत्सहस्रसंमितमेरुणाच्छाद्य मार्गस्य क्षणमात्रगम्यत्वान्नित्यं रात्रेरल्पत्वप्रसंगो नित्यमेवैशान्यवायव्ययोरेवोदयास्तमयप्रसंगो दक्षिणकाष्ठायामाग्नेयनैर्ऋत्योरुदयास्तमयसिद्ध्यर्थं प्रत्यहमाच्छादकान्तरकल्पनाप्रसङ्गश्च अतो दूरत्वादेवादर्शनं, तथाह वायुः "विदूरभावादर्कस्य प्रोद्यतस्य द्विरश्मिता । रक्तता च द्विरश्मित्वाद्रक्तत्वाच्चाप्यनुष्णता ॥ रेखायामास्थितः सूर्यो यत्र तत्र च दृश्यते ॥ ऊर्ध्वं शतसहस्रात्तु योजनानां न दृश्यते ॥" मात्स्ये च "विदूरभावादर्कस्य भूमेर्लेखा गतस्य च । हीयन्ते रश्मयो यस्मात्तेन रात्रौ न दृश्यते" रेखातद्दिन

दक्षिणायनं प्रविष्टस्सन् क्षिप्त इषुर्यथा कराच्छीघ्रं गच्छति ॥ १० ॥ अहोरात्रेति ॥ ततश्चैन्द्रीप्रभृतिषु तासु पुरीषु संसारिणामहोरात्रव्यवस्थानकारणं रविर्भवति क्लेशादीनां रोगादीनां संक्षये सति योगिनां क्रममुक्तिभाजां देवयानः परं श्रेष्ठः अपुनरावृत्तिकरः पंथाश्च स एव भवति "सूर्यद्वारेण ते विरजाः प्रयान्ति स तावत्क्षिप्यन्नसावादित्यं गच्छति" इति श्रुतेः । स तावत्क्षिप्यते ॥ ११ ॥ येन प्रकारेणाहोरात्रादिव्यवस्थानकारणं रविर्भवति तदाह दिवसस्येत्यादिपंचभिः—दिवसस्येति ॥ यथास्मिन्द्वीपे भारतवर्षे मध्याह्ने लक्षयोजनोच्छ्रितो व्योम्नि प्रस्फुटशुक्लातपेन रविः प्रतपन्वर्तते तथा सर्वकालमुदयास्तमयादिष्वपि सर्वद्वीपेषु नीचैर्भूलग्न

चत्वारिंशत्सहस्राणि द्वितीयोऽक्षो विवस्वतः॥ पञ्चान्यानि तु सार्धानि स्यन्दनस्य महामते॥६॥अक्षप्रमाणमुभयोः प्रमाणं तद्युगार्द्धयो ॥ह्रस्वोक्षस्तद्युगार्द्धेन ध्रुवाधारो रथस्य वै ॥ द्वितीयेक्षे तु तच्चक्रं संस्थितं मानसाचले ॥७॥ मानसोत्तरशैलस्य पूर्वतो वासवी पुरी ॥ दक्षिणे तु यमस्यान्याप्रतीच्यां वरुणस्य च ॥ उत्तरेण च सोमस्य तासां नामानि मे शृणु ॥८॥ वस्वौकसारा शक्रस्य याम्या संयमनी तथा ॥ पुरी सुखा जलेशस्य सोमस्य च विभावरी ॥ ९ ॥ काष्ठां गतो दक्षिणतः क्षिप्तेषुरिव सर्पति ॥ मैत्रेय भगवान्भानुर्ज्योतिषां चक्रसंयुतः ॥ १० ॥

द्वे अयने राशिषट्कं सार्द्धत्रयोदशर्क्षं च कल्प्यम् । यथा महाक्षे दक्षिणोत्तरचलनं तदनुरूपं भचक्रं च तत्समान्तरिक्षे तिर्यङ्मुखबद्धं ज्ञेयम् । तथा राशिद्वयमेकषष्टिमण्डलं च भुक्तं चेद् भचक्रेपि षष्ठांशो राशिद्वयात्मकं सार्द्धचतुर्नक्षत्रं प्रागत्या भोक्तव्यमित्याद्यूह्यम् । तत्तद्देशे चक्रार्द्धस्य दर्शनादर्शनाभ्यां राशिषट्कस्योदितताऽस्तमितता च तत्र प्रायशो मीनमेषौ ह्रस्वौ वृषभकुम्भौ ततोऽधिकौ नक्रमिथुने किंचिद्दीर्घे सिंहवृश्चिकौ दीर्घतरौ धनुःकर्कटौ ततोऽधिकौ समे कन्यातुले तत्रार्काक्रान्तराश्यंशमारभ्य षड्राशिक्षेत्रदर्शनकाल एव तत्र देशेऽहः इतरषट्कदर्शनकालो रात्रिः । तद्राशिप्रमाणाधीनौ दिनरात्रिवृद्धिह्रासौ इत्यादिज्योतिःशास्त्रस्थितिश्च पुराणसम्मता ज्ञेया ॥ ५ ॥ ६ ॥ ७ ॥ उदयादिस्थानविभागप्रदर्शनायाह—मानसेति ॥ पूर्वत इति मानसोत्तरे मेरौ च पुरीणां दिक्चतुष्कं ब्रह्मापेक्षया नित्यनिबद्धं ज्ञेयम् । ब्रह्मणो ह्यादौ स्रष्टुं स्थितस्य पुरोदेशः पूर्वाभूत् पश्चाद्भागः प्रतीची दक्षिणहस्तदेशो दक्षिणा उत्तरहस्तदेश उत्तरेति तन्निरुक्तं यास्केन 'दीर्घहस्तप्रकृतिरिति' ॥ ८ ॥ ९ ॥ काष्ठां गत इति ॥ "अथ तस्योपरिष्टात्तु भ्रमतो दक्षिणायनम्" इति लैङ्गोक्ते इन्द्रादिपुरोपरि गगने भ्रमन्दक्षिणकाष्ठां गतो ज्योतिश्चक्रप्रान्तं गत्वा

छंदांसि रवेर्हरयो हयाः गत्यधीनत्वात् ॥ ५ ॥ कालचक्रस्य अक्षान्तरमाह—चत्वारिंशदिति ॥ पंचान्यानि तु सार्धानि चत्वारिंशत्सहस्राणि सार्धपंचचत्वारिंशत्सहस्र इत्यर्थः ॥ ६ ॥ महाक्षप्रमाणं युगेप्यतिदिशति—अक्षप्रमाणमिति ॥ अश्वयोजनार्थो दण्डो युगम् अक्षस्य प्रमाणं तदेव युगार्धयोस्संहत्यप्रमाणं युगप्रमाणमिति वक्तव्ये युगार्धयोरित्युक्तं तत्रायं भावः । यस्मिन्नुभयतोश्वा वध्यंते तद्युगमीषाग्रयुक्तमर्धस्थानादुभयतस्समं भवति । अत्र त्वेकत एव सप्ताश्वाः न तूभयः । "असंगैस्तुरगैर्युक्तो यतश्चक्रं ततो रथः" इति लैङ्गोक्तेः । अतोश्वयुक्तिभागे युगस्य दैर्ध्यम् । अन्यतो ह्रस्वत्वमिति शंका माभूदित्येवमर्थं युगार्धयोरुभयोस्समयोस्संहत्यैतत्प्रमाणमित्युक्तं चाक्षयुगयोरेकप्रमाणमिति ह्रस्वाक्षस्योपयोगं दर्शयन्नाह—ह्रस्वोक्ष इति । सार्धपंचचत्वारिंशत्सहस्रो ह्रस्वोक्षः तस्य रथस्य युगार्धेन सह वायुरश्मिभिर्बद्धो ध्रुवाधारोस्ति तथा च शुकः—"तस्मिन्नक्षे कृतमूलो द्वितीयोक्षस्तुरीयमानेन संमितस्तैलयंत्राक्षवद्ध्रुवे कृतोपरिभाग" इति । मात्स्ये च "युगाक्षकोटिस्थौ तस्य दक्षिणे स्यन्दनस्य तु । ध्रुवेण प्रगृहीतौ तु तौ रश्मीनयतो रविम् ॥ " इति । अनन्तरोक्तह्रस्वाक्षापेक्षया द्वितीये उक्ता इत्यन्वयः ॥ ७ ॥ मेरोश्चतुर्दशमुदयाद्युपलक्षणभूतं पुरचतुष्टयमाह—मानसोत्तरेति ॥ पूर्वत इत्यादि भारतवर्षस्थानमपेक्ष्योच्यते पूर्वादिविभागस्य सूर्यदर्शनाद्यपेक्षत्वेनानियमस्य लक्षमाणत्वात् ॥ ८ ॥ वस्वौकसारेति । याम्या यमपुरी ॥ ९ ॥ तत्र तावदैन्द्रीं पुरीमवधिं कृत्वा सूर्यस्योदयास्तमयादिकं वक्ष्यन्नुत्तरायणान्तेत्यन्तम् उत्तरां दिशं गतस्य दक्षिणतः परावृत्तिमाह—काष्ठामिति ॥ दक्षिणतो या काष्ठा तां गतः

अहोरात्रव्यवस्थानकारणं भगवान्रविः ॥ देवयानः परः पन्था योगिनां क्लेशसंक्षये ॥ ११ ॥
दिवसस्य रविर्मध्ये सर्वकालं व्यवस्थितः ॥ सर्वद्वीपेषु मैत्रेय निशार्द्धस्य च सन्मुखः ॥ १२ ॥

शीघ्रं भ्रमति । कुलालचक्रप्रान्तस्थो जन्तुरिव ॥ १० ॥ अहोरात्रेति ॥ अह्नो रात्रेश्च व्यवस्थानकारणं रविर्जनैर्दृश्योऽदृश्यः सन् देवयानोऽर्चिरादिः मुक्तिमार्गपरत्वात् । छान्दोग्ये "तेर्चिषमेवाभिसम्भवंति आर्चिषोहः अह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान् मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चंद्रमसो विद्युतं तत्पुरुषो मानवः स एनान् ब्रह्म गमयति एष वै देवयानः पन्थाः" इति चोक्तः । अत्र चोक्तश्लोकः "अर्चिर्वस्रोर्द्धमासः सित उदगयने ये षडर्कस्य मासास्त्वब्दो वाय्वर्कचन्द्रास्तडिति च पुरुषश्शक्रधात्रोश्च लोकौ । वोढारो विद्युतोर्वाङ्नयति तु पुरुषो वैद्युतस्तेभ्य ऊर्ध्वं ब्रह्मज्ञान्मानवोऽस्मात्परमिति कथयन्त्युत्तरं मार्गमेतम्" ॥ ११ ॥ दिवसस्येति ॥ दिवसस्येत्यादिश्लोकचतुष्टयस्यायं भावः । यथा लक्षोच्छ्रित एव व्योम्नि स्थितस्तीक्ष्णातपः स्वाभितो द्वितीययामगम्यदेशभासकस्सन्भ्रमति तथा स्थित एव स्वाधस्थ्यदेश्यानां मध्याह्नकृत् तत् सम्मुखः समसूत्रस्थभचक्रार्द्धव्यवहितोत्तरदेश्यानामर्द्धरात्रकृत् तथा तद्दिनभचक्रपादव्यवहितपाश्चिमदेशस्थैर्दूरत्वाद्भूलग्न इवादृश्यमान उदेतीति व्यपदेश्यः । तावद्दूरदेश्यः प्राग्देश्यैर्दूरीभवन्भूलग्न इवादृश्यमानोऽस्तमेतीति व्यपदेश्यः । उदयेऽस्तमये च दूरत्वान्मन्दधीः यथा मेघः स्वाधस्थैरुन्नतस्ततो दूरस्थैर्भूलग्न इव दृश्यः । एवं लक्षोच्छ्रिततीक्ष्णरश्मेर्मेरुं प्रदक्षिणयत एव द्रष्टृवशात्मध्याह्नादिव्यवहार इति तदुदाहृतं वायुना "मध्यमश्चामरावत्यां यावद्व्रजति भास्करः । वैवस्वते संयमने उदयस्तत्र दृश्यते । सुखायामर्धरात्रस्थो विभायामस्तमेति च" इत्यादि । अतो दूरत्वादेवादर्शनमस्तमयः न तु मेरुव्यवहितेः मेरोर्व्यवधायकत्वे तु नवकोटिमितं मानसोत्तरपरिधिमहोरात्रेण भ्रमतो भानोर्द्वात्रिंशत्सहस्रसंमितमेरुणाच्छाद्य मार्गस्य क्षणमात्रगम्यत्वान्नित्यं रात्रेरल्पत्वप्रसंगो नित्यमेवैशान्यवायव्ययोरेवोदयास्तमयप्रसंगो दक्षिणकाष्ठायामाग्नेयनैर्ऋत्योरुदयास्तमयसिद्ध्यर्थं प्रत्यहमाच्छादकान्तरकल्पनाप्रसङ्गश्च अतो दूरत्वादेवादर्शनं, तथाह वायुः "विदूरभावादर्कस्य प्रोद्यतस्य द्विरश्मिता । रक्तता च द्विरश्मित्वाद्रक्तत्वाच्चाप्यनुष्णता ॥ रेखायामास्थितः सूर्यो यत्र तत्र च दृश्यते ॥ ऊर्ध्वं शतसहस्रात्तु योजनानां न दृश्यते ॥" मात्स्ये च "विदूरभावादर्कस्य भूमेर्लेखा गतस्य च । हीयन्ते रश्मयो यस्मात्तेन रात्रौ न दृश्यते" रेखातद्दिन

दक्षिणायनं प्रविष्टस्सन् क्षिप्त इषुर्यथा कराच्छीघ्रं गच्छति ॥ १० ॥ अहोरात्रेति ॥ ततश्चैन्द्रीप्रभृतिषु तासु पुरीषु संसारिणामहोरात्रव्यवस्थानकारणं रविर्भवति क्लेशादीनां रोगादीनां संक्षये सति योगिनां क्रममुक्तिभाजां देवयानः परं श्रेष्ठः अपुनरावृत्तिकरः पंथाश्च स एव भवति "सूर्यद्वारेण ते विरजाः प्रयान्ति स तावत्क्षिप्यन्नसावादित्यं गच्छति" इति श्रुतेः । स तावत्क्षिप्यते ॥ ११ ॥ येन प्रकारेणाहोरात्रादिव्यवस्थानकारणं रविर्भवति तदाह दिवसस्येत्यादिपंचभिः—दिवसस्येति ॥ यथास्मिन्द्वीपे भारतवर्षे मध्याह्ने लक्षयोजनोच्छ्रितो व्योम्नि प्रस्फुटशुक्लातपेन रविः प्रतपन्वर्तते तथा सर्वकालमुदयास्तमयादिष्वपि सर्वद्वीपेषु नीचैर्भूलग्न

उदयास्तमने चैव सर्वकालं तु सम्मुखे ॥ विदिशासु त्वशेषासु तथा ब्रह्मन् दिशासु च ॥ १३ ॥ यैर्यत्र दृश्यते भास्वान्स तेषामुदयः स्मृतः ॥
तिरोभावं च यत्रैति तत्रैवास्तमनं रवेः ॥ १४ ॥ नैवास्तमनमर्कस्य नोदयः सर्वदा सतः ॥ उदयास्तमनाख्यं हि दर्शनादर्शनं रवेः ॥ १५ ॥
शक्रादीनां पुरे तिष्ठन् स्पृशत्येष पुरत्रयम् ॥ विकोणौ द्वौ विकोणस्थस्त्रीन् कोणान्द्वे पुरे तथा ॥ १६ ॥

भ्रमणवृत्तचतुर्थांशे द्रष्टुः पूर्वापरयोः कल्पिता रेखा यत्र भूलग्न इव ग्रहो दृश्यते शतसहस्रशब्दश्च भानुभ्रमणपरिधितुरीयांशोपलक्षणम् । यद्भागवते "यथा चैन्द्र्याः पुर्याः प्रचलति पञ्चदशघटिकाभिर्याम्यां सपादकोटिद्वयं योजनानां सार्द्धद्वादशलक्षाणि साधिकानि चोपयाति एवं ततो वारुणीं सौम्यामैन्द्रीं च पुनः तथान्ये च ग्रहास्सोमादयो नक्षत्रैः सह ज्योतिश्चक्रे समभ्युद्यन्ति सह चाभिनिम्लोचन्ति तेन समुद्रतीरस्थानां द्रष्टॄणां समुद्रसलिलमध्यादिवोद्यन्नन्येषां तु भुवं भित्त्वेवोद्यन्नस्तं यात्वादृश्यः न तु परमार्थतो नम्रत्वमस्तमयादिर्वाऽर्कस्य न "स वा एष न कदाचनास्तमेति नोदेति" इति श्रुतेः "विभ्राजमानः सलिलस्य मध्यात् अद्भ्यो वा एष प्रातरुदेत्यपः सायं प्रविशति" इति मन्त्रब्राह्मणानि तु समुद्रवेलास्थितद्रष्टृप्रतिभासानुवादेन आदित्यस्तुतिपराणि गोलकाकारां भुवमुपर्यधोभागेन प्रदक्षिणयतो ज्योतिश्चक्रस्यार्द्धं तत्स्थग्रहांश्च भूम्यर्धमेवाच्छादयति तेनोदयास्तमयवैचित्र्यव्यवस्थितिं वदन्तो ज्योतिर्विदोपि पौराणिकरीत्योदयास्तमयव्यवस्थोपपत्तेः भूमेर्गोलकाकारानुपपत्तेश्च निरस्याः । भुवो हि गोलकाकारत्वे समुद्रजलानां परितो विसृमरत्वप्रसङ्गः सरित्प्रवाहादिनियमभङ्गप्रसङ्गश्च । अतो ज्योतिषं प्रतीत्यनुगुणगणितप्रधानं नात्र प्रमाणम् ॥ १२ ॥ ॥ १३ ॥ १४ ॥ १५ ॥ अथैतामेव दिक्चक्रार्द्धव्याप्तिमुदाहरति—शक्रादीनामिति । पुरेण दिगुपलक्ष्या विकोणेन विदिक् शक्राद्यन्यतमस्य पुरोपरिस्थितस्तत्पुरदिशं तदभितःस्थितं दिग्द्वयम् अनन्तरं विदिशौ च स्पृशति । एवमाग्नेयादिविदिक्संस्थो विदिशं तदभितः स्थितं दिग्द्वयम् अनन्तरं विदिग्द्वयं च भासयति अष्टदि

वद्दर्शनस्य मंदातपत्वादीनां च दूरत्वादिनिबन्धनत्वाद्यथाह वायुः "विदूरभावादर्कस्य प्रोद्यतस्य विरश्मिता । रक्तता च विरश्मित्वाद्रक्तत्वाचाप्यनुष्णता ॥" इति । यथाऽस्मिन्द्वीपवर्षादौ मध्याह्ने वर्तते तथा ततः तत्समानसूत्रस्थद्वीपान्तरादिषु जायमानस्य निशार्धस्य अर्धरात्रस्य सन्मुखो भवति ॥ १२ ॥ उदयेति ॥ उदयास्तमये च सर्वकालं भवतः ते च परस्परं संमुखे समानसूत्रस्थे भवतः ॥ १३ ॥ अत्र हेतुमाह—यैर्यत्रेति ॥ १४ ॥ नेति ॥ मुख्यौ उदयास्तमयौ सर्वदा मध्याह्न एव सत इत्युक्तेस्तस्य न स्त एव अतो रवेरुदयास्तमयाख्यं दर्शनादर्शनमात्रमेव ॥ १५ ॥ दर्शनादर्शनयोरवधिमाह—शक्रादीनामिति ॥ इन्द्राद्यन्यतमस्य पुरे मध्याह्ने तिष्ठन् तदेकं पुरमभितः पुरद्वयं चेत्येवं त्रीन्कोणान्तन्मध्यवर्तिनी द्वे पुरे तथैवोदयादिव्यवस्थाभिस्स्पृशति भूवलयस्यार्धे प्रतपन्दृश्यते तावदहः । अर्धे तु न दृश्यते तावती रात्रिरित्यर्थः । तथा हि इन्द्रपुरे मध्याह्ने यदा तिष्ठति तदा सौम्यपुरस्थानामस्तमयः । ईशकोणस्थानां तृतीयो यामः । अग्निकोणस्थानां प्रथमयामः । याम्यस्थितानामुदयः । एवं यदा याम्ये मध्याह्ने तिष्ठति तदा ऐन्द्रेऽस्तमयः । अग्निकोणे तृतीयो यामः । निर्ऋतिकोणे प्रथमो यामः । वारुणे उदयः । यदा च वारुणे मध्याह्ने तिष्ठति तदा याम्येस्तमयः । निर्ऋतिकोणे तृतीयो यामः । वायव्ये च प्रथमयामः । सौम्ये उदयः । यथा च सौम्ये मध्याह्नः तदा वारुणेऽस्तमयः । वायव्ये तृतीयो यामः । ईशानकोणे प्रथमः । ऐन्द्रे उदयः । एवमग्निकोणे यदा मध्याह्नः तदा ईशानकोणेऽस्तमयः इन्द्रपुरे तृतीयो यामः । याम्ये प्रथमः ।

उदितो वर्द्धमानाभिरामध्याह्नात्तपन्रविः ॥ ततः परं ह्रसन्तीभिर्गोभिरस्तं नियच्छति ॥ १७ ॥ उदयास्तमनाभ्यां च स्मृते पूर्वापरे दिशौ ॥
यावत्पुरस्तात्तपति तावत्पृष्ठे च पार्श्वयोः ॥ १८ ॥ ऋतेऽमरगिरेर्मेरोरुपरि ब्रह्मणः सभाम् ॥ येये मरीचयोर्कस्य प्रयान्ति ब्रह्मणः सभाम् ॥
तेते निरस्तास्तद्भासा प्रतीपमुपयान्ति वै ॥१९॥ तस्माद्दिश्युत्तरस्यां वै दिवारात्रिः सदैव हि ॥ सर्वेषां द्वीपवर्षाणां मेरुरुत्तरतो यतः ॥ २० ॥
प्रभा विवस्वतो रात्रावस्तं गच्छति भास्करे ॥ विशत्यग्निमतो रात्रौ वह्निर्दूरात्प्रकाशते ॥ २१ ॥

ण्यापि मण्डलार्द्धं भासयतीत्यर्थः । तद्यथा इंद्रपुर्या ऊर्ध्वं तिष्ठन् तत्र मध्याह्नमीशकोणस्थानां तृतीययामांतमग्निकोणस्थानामाद्ययामान्तं याम्यपुरस्थानामुदयं सौम्य पुरस्थानामस्तमयं करोति । एवमग्निकोणस्थस्तत्रस्थानां मध्याह्नं यमेन्द्रपुर्योराद्यतृतीययामान्तो निर्ऋतीशकोणयोरुदयास्तमयौ च करोति । एवं सर्वदिग्विदिक्षु योज्यम् ॥ १६ ॥ उदित इति ॥ गावो रश्मयः ॥ १७ ॥ उदयेति ॥ तद्वृद्धिह्रासावासत्तिविप्रकर्षकृतदर्शनादर्शनाभ्याम् । उदयेन पूर्वादिक् अस्तमयेनापरादिक् । अत एवोयंतं भास्वन्तं पश्यतां वामदक्षिणभागे स्थितत्वात्सर्वेषामुत्तरो मेरुर्लोकालोकाचलश्च दक्षिणः स्यात् ॥ १८ ॥१९॥ तस्मादिति ॥ तस्माद्दिश्युत्तरस्यां नित्योत्तरस्य मेरोरुपरि दिग्भागे ब्रह्मसभाप्रभया सदा दिवात्वं तत्रार्कप्रभासञ्चाराभावान्नित्यरात्रित्वोपचारः ॥ २० ॥ अथोदयास्तमयनिर्णयप्रसक्तसंध्यानुष्ठानाग्निहोत्रीयसंसृष्टहोमप्रथमाहुतिशेषं यस्य वै द्वौ पुण्यौ गृहे वसत इत्यादि ब्राह्मणमनुगृह्णाति प्रभाविवस्वत इत्यादिना प्रभेति॥सूर्यप्रभायाश्चतुर्थांशो निश्यग्निं विशति 'प्रभा हि सौरी पादेन' इति वायूक्तेः । वह्नि

निर्ऋतिकोणे उदय इत्यादि योज्यम् ॥ १६ ॥ एवं मेरोः परिभ्रमन् सूर्योऽर्धं भूवलयं प्रकाशयन् दर्शनादर्शनाद्यपेक्षया अहोरात्रव्यवस्थानकारणमित्युक्तो भवति । सन्निधानव्यवधानकृतमेव तस्य रश्मीनां वृद्धिह्रासतीव्रमंदत्वादिकमपीत्याह–उदित इति ॥ गोभीरश्मिभिः ॥ १७ ॥ दिग्विभागोऽप्युदयास्तमयनिमित्त एवेत्याह–उदयेति ॥ यत्र यस्योदेति सा तस्य पूर्वा दिक् । यत्रास्तमेति सा अपरा प्रतीची । तथा च श्रुतिः "तस्मादसावादित्यः सर्वाः प्रजाः प्रत्यङ्ङुदेति तस्मात्सर्व एव मन्यते मां प्रत्युदगात्" इति । पुरस्तादुद्यन्तं सूर्यं पश्यतश्च दक्षिणवामपार्श्वभागौ दक्षिणोत्तरे दिशाविति दर्शयन् रश्मिविस्तारविधिमाह–यावदिति । चतुर्दिक्षु लोकालोकाचलपर्यन्तं तपतीत्यर्थः ॥ १८ ॥ मेरौ तु विशेषमाह–ऋत इति ॥ ब्रह्मसभावर्जं मेरोरुपर्यपि सर्वतस्तपति न तु ब्रह्मसभां भासयति तत्र हेतुमाह–येये मरीचय इति ॥ १९ ॥ मेरोस्सर्वतो विशेषांतरमाह–तस्मादिति ॥ यतो यस्मात्सर्वेषां द्वीपानां वर्षाणां च मेरुरुत्तरत एव स्थितः । तस्मान्मेरोरुत्तरस्यां दिशि सदा दिवापि अन्येषां दिनेऽपि नित्यं रात्रिरेव । अयं भावः । मेरुं प्रदक्षिणीकुर्वन्तं सूर्यं ये यत्र पश्यन्ति सैव तेषां प्राची । तेषां च वामभाग एव मेरुः । अतः सर्वेषां सर्वदा मेरुरुत्तरत एव दक्षिणभागे च लोकालोकाचलः । तस्मादुत्तरस्यां दिशि सदा रात्रिः । दक्षिणस्यां च दिनमिति । यद्वा भारतादिवर्षस्थानां सम्मुखे सूर्यमुद्यन्तं पश्यतामुत्तरस्यां दिशि वामभागे मेरोरेकतः सदादिनमन्यतश्च सदा रात्रिः । दक्षिणभागे सदा मेरोर्दिनमेवेत्यर्थादुक्तं भवति ॥ २० ॥ उदयास्तमयनिर्णयप्रसंगात्तत्कालानुष्ठेयाग्निहोत्रमिश्रलिंगमंत्रविधिविशेषं ब्रह्मणोक्तम् । अग्निसूर्ययोः परस्परानुप्रवेशमुपासनार्थमाह प्रभेत्यादित्रिभिः श्लोकत्रयस्याप्येकान्वयः–प्रभेति ॥ वह्नेः पादश्चतुर्थांशो दिनेषु भानुं विशति । ततस्तावन्मात्रप्रवेशाद्भानोरुष्णत्वेऽप्यदाहकत्वम् । वह्नेश्च दाहकत्वमविरुद्धम् । तथा च "अग्निर्ज्योतिर्ज्योतिस्सूर्यः स्वाहेत्येव सायंहोतव्यम् । सूर्योज्योतिर्ज्योतिरग्निस्वाहेति प्रातः" इत्येतद्विधिदशाविशेषः श्रूयते । "अग्निं वावादित्यः सायं प्रविशति तस्मादग्निर्दूरान्नक्तं ददृशे

वह्नेः प्रभा तथा भानुर्दिनेष्वाविशति द्विज ॥ अतीव वह्निसंयोगादतः सूर्यः प्रकाशते ॥ २२ ॥ तेजसी भास्कराग्नेये प्रकाशोष्णस्वरूपिणी ॥ परस्परानुप्रवेशादाप्यायेते दिवानिशम् ॥ २३ ॥ दक्षिणोत्तरभूम्यर्द्धे समुत्तिष्ठति भास्करे ॥ अहोरात्रं विशत्यम्भस्तमःप्राकाश्यशीलवत् ॥ ॥ २४ ॥ आताम्रा हि भवंत्यापो दिवानक्तप्रवेशनात् ॥ दिनं विशति चैवांभो भास्करेस्तमुपेयुषि ॥ तस्माच्छुक्ला भवन्त्यापो नक्तमह्नः प्रवेशनात् ॥ २५ ॥ एवं पुष्करमध्येन यदा याति दिवाकरः ॥ त्रिंशद्भागस्तु मेदिन्यास्तदा मौहूर्त्तिकी गतिः ॥ २६ ॥

पादस्तथेति स्वोक्तेश्च ॥ २१ ॥ २२ ॥ २३ ॥ अथाहोरात्रसन्धिप्रसंगेन तदनुकारिच्छायातपसन्धिस्थवसतीवरीसंज्ञितजपग्रहणशेषं यद्वै दिवा भवतीत्यादि ब्राह्मणमनुगृह्णाति दक्षिणोत्तरेति सार्द्धद्विश्लोक्या दक्षिणोत्तरेति ॥ तमःप्राकाश्येत्यत्र क्रमो न विवक्षितः । तेन दक्षिणभूम्यर्द्धे रवौ तिष्ठति तमःशीलवती रात्रिरंभो विशति तदा तत्रत्यानामहः स्यात् उदग्भूम्यर्द्धस्थे त्वर्के प्रकाशकत्वशीलमहरपोविशति दक्षिणस्थानां तदा रात्रिः स्यात् ॥ २४ ॥ आताम्राहीति ॥ दिवा दिने नक्तं रात्रौ ॥ २५ ॥ एवमिति ॥ एवमहोरात्रं कुर्वन् पुष्करमध्येन मानसोत्तरशिखरेण मेदिन्याः रविरथचक्रभ्रमणोपलक्षणमानसोत्तरमध्यपरिधिकायास्त्रिंशोंशस्यैकमुहूर्त्तगतिः तद्वायूक्तम् "नवकोट्यः प्रसंख्याता योजनैः परिमण्डलम् । तथा शतसहस्राणि चत्वारिंशच्च पञ्च च ॥ अहोरात्रात्पतङ्गस्य गतिरेषा विधीयते । पूर्णा शतसहस्राणामेकत्रिंशत्तु सा स्मृता ॥ पंचाशत्तु तथान्यानि सहस्राण्यधिकानि च ॥ मौहूर्त्तिकी गतिर्ह्येषां सूर्यस्य तु विधीयते । मध्येन पुष्करस्याथ भ्रमतो दक्षिणायने" एवमुदक्काष्ठायां शाकद्वीपोत्तरान्तपरिधित्रिंशांशः विषुवे क्षीरोदोत्तरान्तपरिधित्रिंशांशो द्वौ मौहूर्त्तिकी गतिः वायुप्रोक्तादिप्रसिद्धिर्ज्ञेया ॥ २६ ॥

उद्यन्तं वावादित्यमग्निरनुसमारोहति तस्माद्धूम एवाग्नेर्दिवा ददृशे" इति ॥ २१ ॥ २२ ॥ २३ ॥ अहोरात्रप्रसंगात्तयोरप्सु प्रवेशमुपासनार्थमाह–दक्षिणेति ॥ मेरोर्दक्षिणभूम्यर्धे भास्करे समुत्तिष्ठति सति तमःशीला रात्रिरंभः प्रविशति । मेरोरुत्तरभूम्यर्धे च भास्करे समुत्तिष्ठति सति रात्रौ प्राकाश्यशीलयुक्तमहः अंभो विशतीत्यर्थः । प्राकाश्यं प्रकाशिकत्वम् ॥ २४ ॥ एतदेवोपपादयत्याताम्राहीति सार्धेन श्लोकेन आताम्रा हीति ॥ आताम्राः ईषत्ताम्राः दिवा दिने नक्तप्रवेशनात् रात्रेः प्रवेशादित्यर्थः । अस्तमुपेयुषि अस्तं गते सति नक्तं रात्रौ तथा । च श्रुतिः–"यद्वै दिवा भवत्यपो रात्रिः प्रविशति तस्मात्ताम्रा आपो दिवा ददृशे यं नक्तं भवत्यपोऽहः प्रविशति तस्माच्चंद्रा आपो नक्तं ददृशे" इति ॥ २५ ॥ एवं मेरुं प्रदक्षिणीकुर्वतो रवेर्मुहूर्तगम्यं मार्गं कथयन्नुत्तरायणविषुवद्दक्षिणायनगतिभिरहोरात्राणां दैर्घ्यसाम्यलघुत्वानि निरूपयति एवमित्यादिना ऊषाव्युष्ट्योरित्यन्तप्राक्तनेन ग्रन्थेन–एवमिति ॥ पुष्करद्वीपमध्येन रथचक्राधारभूतमानसोत्तरपरिमण्डलोपलक्षिताया मेदिन्यास्त्रिंशत्तमं भागं रविर्यदा याति तदा सा मुहूर्तसंबंधिनी गतिः । तदाह वायुः–"नवकोट्यः समाख्याता योजनाः परिमण्डलम् ॥ तथा शतसहस्राणि चत्वारिंशच्च पञ्च च । अहोरात्रात्पतंगस्य गतिरेषा विधीयते ॥ पूर्णाः शतसहस्राणामेतत्त्रिंशत्तु ताः स्मृताः । पंचाशत्तु तथान्यानि सह

कुलालचक्रपर्यन्ते भ्रमन्नेष दिवाकरः ॥ करोत्यहस्तथा रात्रिं विमुञ्चन्मेदिनीं द्विज ॥ २७ ॥ अयनस्योत्तरस्यादौ मकरं याति भास्करः ॥
ततः कुम्भं च मीनं च राशे राश्यंतरं द्विज ॥२८॥ त्रिष्वेतेष्वथ भुक्तेषु ततो वैषुवतीं गतिम् ॥ प्रयाति सविता कुर्वन्नहोरात्रं ततः समम्॥२९॥

कुलालचक्रपर्यन्त इति ॥ कुलालचक्रप्रान्तस्थजन्तुरिव ज्योतिश्चक्रपर्यंतस्थोऽर्को मेदिनीं प्रागुक्तां मानसाद्रिपरिधिकां दक्षिणकाष्ठात्मिकां विमुञ्चन् दक्षिणकाष्ठांत्यदिनापेक्षया विषुवमहोरात्रं च कुर्वन्नुत्तरोत्तरं मार्गं च गच्छन् मकरादिराशिषट्कं महाक्षस्थं तथा प्राग्गत्या भचक्रार्धं च याति अयनस्योत्तरस्येति देवदिनोपक्रमत्वान्मकरप्राधान्यम् । ध्रुवेण हि प्रवाहानिलेन नित्यं प्रत्यग्भ्राम्यमाणज्योतिश्चक्रस्थमर्कबिम्बं ध्रुवरश्मिगृहीते महाक्षे ह्रस्वाक्षयुगकोटियन्त्रितेतरध्रुवरश्मिद्वयाकर्षणवशात्तदयनानुगुणमुदग्दक्षिणतो वा एकैकामण्डरेखामाभ्यन्तरीं बाह्यां वा आरोहादवरोहाद्वा तदितरभ्रमणेन वृत्तमाभ्यन्तरमेर्वासन्नं बाह्यं मानसोत्तरासन्नं वा सम्पादयत्तथैव नक्षत्रचक्रे च किंचित्प्राग्लम्बनेन चलन्मासेन सपादद्वितारात्मकमेकैकराशिं प्राक्चरन् द्व्यशीतिशतसावनदिनैस्तावद्वारं भ्रमन्महाक्षे च परां काष्ठां सर्पद्भचक्रे च सार्द्धत्रयोदश ऋक्षात्मकं राशिषट्कं सौरषण्मासैर्भुङ्क्ते एवं षट्षष्टित्रिशताहोरात्रैर्द्व्ययनषड्ऋतुद्वादशमासराशिरूपकाल एकः सौराब्दः स्यात् । तत्र तु षष्टिषष्टित्रिशतवारं प्रत्यग्भ्रमणोदयास्तमयाः महाक्षे चैकवारमारोहावरोहौ रथस्य एकवारं च भचक्रे वैलोम्येन प्राग्गत्या सप्तविंशतिनक्षत्रात्मकद्वादशराशिचक्रभोगरूपमर्कस्यैकं विलोमभ्रमणं बहुवारं प्रत्यग्भ्रमत्कुलालचक्रस्थस्य तद्विलोमं भ्रमतः कीटस्येव स्यात् । एवं चक्रवशान्नित्यं प्रत्यग्गतिः स्वातंत्र्यात्प्राग्गतिश्च सर्वेषां ग्रहाणां भौमादेस्तु कदाचिदर्काद्दूरत्वाद्वक्रा च गतिः प्रत्यगपि स्यात् । चन्द्रादीनां चार्कासत्तौ तद्रश्म्यभिभूतेरस्तमयोर्कमण्डलप्रवेशाख्यः तद्विप्रकर्षादुदय इत्यादिश्रुतिपुराणाविरुद्धम्, ज्योतिश्शास्त्राज्ज्ञेयम् । इदं तु सौराब्दस्य षट्षष्टित्रिशताहोरात्रवत्वं सांप्रतं हि कलौ सशतचतुष्के चतुस्सहस्रे अब्दानां सपादपंचषष्टित्रिशतदिनस्य सौराब्दस्य प्रत्यक्षादिप्रसिद्धेः ॥ २७ ॥ २८ ॥ त्रिष्विति ॥ वैषुवतीं काष्ठयोर्मध्यगां ततस्तत्र विषुवाख्ये दिनेऽह्नो रात्रेश्च साम्यं तत्र हि मेषस्थार्कोदयान्मेषादिषड्राश्युदयकालास्त्रिंशन्नाड्यो दिनम् एवं तुलादिषड्राश्युदयकालो रात्रिः विषुवान्तरे पितृदैवत्येपि वैपरीत्येन त्रिंशनाडीत्वं विषुवसंधेः परं यावद्राशित्रयं भानोर्दिनं

स्राण्यधिकानि च ॥ मौहूर्तिकी गतिर्ह्येषा सूर्यस्य तु विधीयते ।'' इति ॥ २६ ॥ कुलालचक्रपर्यन्त इति ॥ रवेः कुलालचक्रसंबन्धाभावात्कुलालचक्रपर्यन्ते स्थितो जन्तुर्यथेत्यर्थः । तद्वद्दक्षिणायने ज्योतिश्चक्रपर्यन्ते भ्रमन्नेकैकमुहूर्तेन मेदिन्यास्त्रिंशद्भागं विमुंचन्नतिक्रामन्नुत्तरायणमारभ्याहश्च रात्रिं च पूर्ववैपरीत्येन करोति ॥ २७ ॥ तदेव प्रत्यहमहर्वृद्ध्या रात्रिह्रासेन च दर्शयन्नाह–अयनस्येत्यादिसार्धद्वाभ्याम् ॥ २८ ॥ त्रिष्विति ॥

ततो रात्रिः क्षयं याति वर्द्धतेऽनुदिनं दिनम् ॥ ३० ॥ ततश्च मिथुनस्यान्ते परां काष्ठामुपागतः ॥ राशिं कर्कटकं प्राप्य कुरुते दक्षिणायनम् ॥ ३१ ॥ कुलालचक्रपर्यंतो यथाशीघ्रं प्रवर्त्तते ॥ दक्षिणप्रक्रमे सूर्यस्तथा शीघ्रं प्रवर्त्तते ॥ ३२ ॥ अतिवेगितया कालं वायुवेगबलाच्चरन् ॥ तस्मात्प्रकृष्टां भूमिं तु कालेनाल्पेन गच्छति ॥ ३३ ॥ सूर्यो द्वादशभिः शैघ्र्यान्मुहूर्त्तैर्दक्षिणायने ॥ त्रयोदशार्द्धमृक्षाणामह्ना तु चरति द्विज ॥ मुहूर्त्तैस्तावदृक्षाणि नक्तमष्टादशैश्चरन् ॥ ३४ ॥ कुलालचक्रमध्यस्थो यथा मन्दं प्रसर्पति ॥ तथोदगयने सूर्यः सर्पते मन्दविक्रमः ॥ ३५ ॥ तस्माद्दीर्घेण कालेन भूमिमल्पां तु गच्छति ॥ अष्टादशमुहूर्तं यदुत्तरायणपश्चिमम् ॥ ३६ ॥

त्रिंशन्नाडीभ्यो वर्द्धते कर्कटाद्यावत्तुलं तद्वृद्धस्य ह्रासः तुलादौ त्रिंशतो ह्रासः नक्रादौ तद्ध्रासस्य पूर्तिर्यावन्मेष इति ॥ २९ ॥ ३० ॥ ३१ ॥ कुलालचक्रेति ॥ दक्षिणोपक्रमे तत्काष्ठागमने ॥ ३२ ॥ अतिवेगितयेति ॥ प्रकृष्टां भूमिं महावृत्तरूपां चक्रार्धमेदिनीम् ॥ ३३ ॥ एतदेवोदाहरन्प्रपञ्चयति सूर्यो द्वादशभिरित्यादिना ॥ ३४ ॥ कुलालचक्रमध्यस्थ इति ॥ चक्रमध्यस्थो नाभिनेम्योरन्तरालस्थः ॥ ३५ ॥ तस्मादिति ॥ अल्पाम् अभ्यन्तरवृत्तार्धरूपां भूमिं गच्छति । उत्तरायणपश्चिमं प्रांतदिनं दक्षिणायनाद्याहश्च समम् । दिनरात्रिव्यवहारस्यार्काधीनत्वात्तावन्मुहूर्त्तैस्तावन्ति नक्षत्राणि रविश्चरतीत्युपचारः । रवेर्दर्शनादर्शनकालाभ्यां तावत्संख्यनक्षत्रोदय इत्यर्थः । ह्रस्वराशिषट्कस्थभचक्रार्द्धोदयकालस्य दिनत्वात्तस्य द्वादशमुहूर्त्तत्वं तद्व्यत्ययादष्टादशमुहूर्त्तत्वं रात्रेः उदक्काष्ठायां दिननिशोर्मानव्यत्ययः मध्ये त्वसंपाताद्वृद्धिह्रासौ इमौ चाऽधिकौ वृद्धिह्रासौ पुराणप्रणेतृनिवासभूतकुरुनैमिषकाश्मीरादिदेशविषयौ यद्देशे विषुवद्दिनमध्याह्ने द्वादशांगुलस्य शंकोः सार्द्धाष्टाङ्गुलिप्राया छाया स्यात् । सर्वदेशेष्वपि विषुवत उदक्काष्ठास्थिते त्वर्केऽर्कस्य पुरस्थराशिषट्कोदयकालबाहुल्याद्दिनदैर्घ्यम् । तत्पाश्चात्यराशिषट्कोदयका

वैषुवतीम् उत्तरायणमध्ये मेषराशिर्विषुवत्तत्संबन्धिनीं गतिम् ॥ २९ ॥ तत इति ॥ ततो विषुवदनंतरम् ॥ ३० ॥ दक्षिणायने तु अह्नि ह्रासं रात्रौ च वृद्धिं दर्शयितुमाह–ततश्चेत्यादिसार्धैश्चतुर्भिः ततश्चेति ॥ परां काष्ठामुत्तरायणस्यान्तम् ॥ ३१ ॥ कुलालचक्रपर्यन्त इति ॥ कुलालचक्रपर्यन्ते स्थितो जन्तुर्यथेत्यर्थः ॥ ३२ ॥ अतिवेगतयेति ॥ कालं कालोपलक्षणं मार्गम् ॥ ३३ ॥ सूर्य इति ॥ ऋक्षाणां त्रयोदशार्धं सार्धत्रयोदशनक्षत्रोपलक्षितं ज्योतिश्चक्रार्धमित्यर्थः । तावदृक्षाणि सार्धत्रयोदशनक्षत्राणि नक्तं रात्रौ अष्टादशभिश्चरन् इदं च द्वादशाष्टादशमुहूर्ताश्च अहोरात्रयोर्देशविशेषापेक्षयोक्तं न सर्वत्रेति ज्ञेयम् ॥ ३४ ॥ उत्तरायणे त्वहोरात्रयोः पूर्ववैपरीत्यं स्पष्टयति । कुलालचक्रमध्यस्थ इत्यादिसार्धैस्त्रिभिः–कुलालचक्रमध्यस्थ इति ॥ मध्यस्थो नाभिनेम्यन्तरालस्थः ॥ ३५ ॥ तस्मादिति ॥ उत्तरायणे पश्चिममन्त्यदिनम् ॥ ३६ ॥

अहर्भवति तच्चापि चरते मन्दविक्रमः ॥ ३७ ॥ त्रयोदशार्द्धमह्ना तु ऋक्षाणां चरते रविः ॥ मुहूर्त्तैस्तावदृक्षाणि रात्रौ द्वादशभिश्चरन् ॥ ३८ ॥ अतो मन्दतरं नाभ्यां चक्रं भ्रमति वै यथा ॥ मृत्पिण्ड इव मध्यस्थो ध्रुवो भ्रमति वै तथा ॥ ३९ ॥ कुलालचक्रनाभिस्तु यथा तत्रैव वर्तते ॥ ध्रुवस्तथा हि मैत्रेय तत्रैव परिवर्तते ॥ ४० ॥ उभयोः काष्ठयोर्मध्ये भ्रमतो मण्डलानि तु ॥ दिवा नक्तं च सूर्यस्य मन्दा शीघ्रा च वै गतिः ॥ ४१ ॥ मन्दाह्नि यस्मिन्नयने शीघ्रा नक्तं तदा गतिः ॥ शीघ्रा निशि यदा चास्य तदा मंदा दिवा गतिः ॥ ४२ ॥ एकप्रमाणमेवैष मार्गं याति दिवाकरः ॥ अहोरात्रेण यो भुंक्ते समस्ता राशयो द्विज ॥ ४३ ॥ षडेव राशीन् यो भुंक्ते रात्रावन्यांश्च षड् दिवा ॥ ४४ ॥ राशिप्रमाणजनिता दीर्घह्रस्वात्मता दिने ॥ तथा निशायां राशीनां प्रमाणैर्लघुदीर्घता ॥ ४५ ॥ दिनादेर्दीर्घह्रस्वत्वं तद्भोगेनैव जायते ॥ उत्तरे प्रक्रमे शीघ्रा निशि मंदा गतिर्दिवा ॥ ४६ ॥

लाल्पतया राज्यल्पत्वं तद्वैपरीत्यं दक्षिणकाष्ठास्थे ॥ ३६ ॥ ३७ ॥ ३८ ॥ अत इति ॥ कुलालचक्रमध्यस्थो मृत्पिण्ड इव ज्योतिश्चक्रमध्यस्थो ध्रुवः कुलालचक्रं यथा नाभौ मन्दं भ्रमति तथा भ्रमति ॥ ३९ ॥ अतो ध्रुवो भ्रमन्न नाभिं त्यजतीत्याह—कुलालचक्रनाभिस्त्विति ॥ ४० ॥ नक्षत्रमुहूर्तवशादुक्तमेवाहोरात्रवैचित्र्यं राशिवशात्प्रपञ्चयति उभयोरित्यादिना ॥४१॥४२॥ एतच्चाहोरात्रगतिवैषम्यं द्वादशराश्युदयकालेनैकरूपम् । भ्रमतोप्यर्कस्य राश्युदयकालवैषम्यकृतमित्याह--एकप्रमाणमित्यादिना—एकप्रमाणमिति ॥ समस्ता राशय इति द्वितीयार्थे प्रथमा ॥४३॥४४॥४५॥ दिनादेरिति ॥ तद्भोगेन षड्राशिव्यापचक्रप्रदेशस्य परिवर्त्तनरूपेण भोगेन तद्वैषम्यं च भचक्रसंस्थानवैषम्याद्दृष्टृदृष्ट्याक्रान्तदेशभेदाच्च तद्गणितैकगम्यम् । इदन्त्विहोद्देशतः सुज्ञानं यद्द्रष्टुर्दृष्टिरभितो विषुवद्वृत्तपादान्तगं ग्रहं गोचरयति । तेन विषुवद्वृत्तार्द्धदृष्टेर्दिनरात्रिसाम्यं ततोऽधिकाल्पयोर्याम्यसौम्यवृत्तयोर्दृश्यांशस्य विषुवत्पादतुल्यस्वपादापेक्षयाऽल्पत्वमहत्त्वाभ्यां दिनह्रासवृद्धी इति । अग्नीशाविदिशोरुदयोपपत्तिश्च ॥ ४६ ॥

॥३७॥३८॥ ध्रुवस्य तु तथा गतिवैषम्यं नास्तीत्यत आह—अत इति॥ कुलालचक्रं नाभ्यां मंदतरं यथा भ्रमति अतस्तत्रस्थो मृत्पिण्डोपि यथा मन्दतरमेव भ्रमति तथा ज्योतिश्चक्रनाभिस्थो ध्रुवश्च ॥३९॥ कुलालचक्रनाभिरिति ॥ यथा नाभिस्तत्रैव परिवर्तते नाभिस्थो मृत्पिण्डस्तत्स्थानं न त्यजति तथैव ध्रुवः परिभ्रमन्नपि तत्स्थानं न त्यजतीत्यर्थः ॥ ४० ॥ एवं तावन्नक्षत्रमुहूर्तभेदैरहोरात्रवैचित्र्यमुक्तम् । इदानीं तदेव राशिभोगवशात्प्रपञ्चयन्नाह—उभयोरित्यादिषड्भिः ॥ ४१ ॥ ४२ ॥ अहोरात्रगम्यस्य समानत्वेपि राशिप्रमाणभेदात्तद्वैचित्र्यं घटत इत्याह—एकप्रमाणमेवेति ॥ राशयः राशीनित्यर्थः ॥ ४३ ॥ ४४ ॥ ४५ ॥ राशिप्रमाणवैचित्र्यस्याहोरात्रवैचित्र्यहेतुत्वमाह—दिनादेरिति ॥ तद्भोगेनैव अयमर्थः । ज्योतिश्चक्रस्य द्वादशोन्तः सपादद्विनक्षत्रदेशात्मक एकैकशो राशिः । तत्र प्रायशः मीनमेषौ ह्रस्वौ । वृषकुंभौ ततः किञ्चिदधिकौ । मकरमिथुने ततः किञ्चिद्दीर्घे । सिंहवृश्चिकौ दीर्घतरौ । कर्कटकचापौ दीर्घतमौ । समे कन्यातुले । तत्रार्काक्रान्तराश्यंशमारभ्य षड्राशिक्षेत्रदर्शनकालो दिनम् । इतरराशिषट्कदर्शनकालो रात्रिः । तथा च राशिप्रमाणाधीनौ दिनरात्री

दक्षिणे त्वयने चैव विपरीतां विवस्वतः ॥ ४७ ॥ उषा रात्रिः समाख्याताव्युष्टिश्चाप्युच्यते दिनम् ॥ प्रोच्यते च तथा संध्या उषाव्युष्ट्यो र्यदन्तरम् ॥ ४८ ॥ संध्याकाले च संप्राप्ते रौद्रे परमदारुणे ॥ मन्देहा राक्षसा घोराः सूर्यमिच्छन्ति खादितुम् ॥ ४९ ॥ प्रजापतिकृतः शापस्तेषां मैत्रेय रक्षसाम् ॥ अक्षयत्वं शरीराणां मरणं च दिने दिने ॥ ५० ॥ ततः सूर्यस्य तैर्युद्धं भवत्यत्यन्तदारुणम् ॥ ततो द्विजोत्तमा स्तोयं संक्षिपन्ति महामुने ॥ ५१ ॥ ॐकारब्रह्मसंयुक्तं गायत्र्या चाभिमन्त्रितम् ॥ तेन दह्यन्ति ते पापा वज्रीभूतेन वारिणा ॥५२॥ अग्निहोत्रे हूयते या समन्त्रा प्रथमाहुतिः ॥ सूर्योज्योतिः सहस्रांशुः समा दीप्यति भास्करः ॥ ५३ ॥ ओंकारो भगवान्विष्णुस्त्रिधामा वचसां पतिः ॥ तदुच्चारणतस्ते तु विनाशं यांति राक्षसाः॥५४॥ वैष्णवोंशः परः सूर्यो योन्तर्ज्योतिरसंप्लवम् ॥ अभियायक ॐकारस्तस्य तत्प्रेरकं परम्॥५५॥ तेन संप्रेरितं ज्योतिरोंकारेणाथ दीप्तिमत् ॥ दहत्यशेषरक्षांसि मन्देहाख्यान्यघानि वै ॥ ५६ ॥ तस्मान्नोल्लंघनं कार्यं संध्योपासनकर्मणः ॥ स हन्ति सूर्यं सन्ध्याया नोपास्तिं कुरुते तु यः ॥ ५७ ॥

॥४७॥ अथ दिनरात्रिसन्धिप्रसक्त्या "रात्रिर्वा उषा अहर्व्युष्टिः" इति श्रुत्युक्तनाम्ना दिनरात्रिव्यवहारसंपादनार्थं संध्यां प्रस्तौति उषेति ॥४८॥ "रक्षांसि ह वा पुरोनुवाक" इत्यादिस्वाध्यायब्राह्मणमनुगृह्णाति संध्याकाले त्विति ॥ ४९ ॥ ५० ॥ ५१ ॥ ओंकारब्रह्मसंयुक्तमिति ॥ ब्रह्मत्रयीसारं व्याहृतित्रयम् ॥ ५२ ॥ अग्निहोत्र इति ॥ सूर्योज्योतिरिति । प्रातर्होममन्त्रप्रतीकोक्तिस्सन्ध्ययोर्द्वयोस्तदुपास्त्यनन्तरमग्निहोत्रं विधातुम् ॥ ५३ ॥ ओंकार इति ॥ त्रिधामा व्याहृतिदेवताग्निवायुसूर्यत्रयाश्रयः ॥५४॥ वैष्णवोंश इति ॥ तस्य वैष्णवांशस्य ओंकारः प्रेरकः कार्योन्मुखत्वाद्बोधकः यस्य तत्प्रेरकम् । यद्वा तदोंकाराख्यं ब्रह्म तस्य ज्योतिषः प्रेरकः ॥५५॥ तेनेति ॥ अघानि पापिष्ठानि ॥ ५६ ॥ तस्मादिति ॥ सहन्ति सूर्यमिति अस्य तदकरणजपापक्षयार्था सन्ध्योपास्तिरवश्यं कार्येत्येवार्थम् ॥ ५७ ॥

वृद्धिह्रासावित्यादिज्योतिश्शास्त्रप्रक्रियापुराणाविरुद्धाऽत्रानुसंधेयेति । दिवाह्वि यस्मिन्नयन इत्यनेनोक्तं गतिवैचित्र्यं विशेषतो दर्शयति–उत्तर इति ॥ ४६ ॥ ४७ ॥ अहोरात्रप्रसंगात्तयोः संध्याकार्यं संध्याप्रस्तावादिकं वक्तुमाह–उपेत्यादिना पारणोद्यत इत्यन्तेन । ततश्श्रुतिप्रयुक्तौ उषाव्युष्टिशब्दौ प्रस्तुतरात्रिदिवसपरावित्याह–उषेति ॥ "रात्रिर्वा उषा अहर्व्युष्टिः" इति श्रुतेः ॥ ४८ ॥ तत्र संध्योपास्तिमकुर्वतः सूर्यहत्यादोषः स्यादिति संध्यार्थवादपूर्वकं संध्योपास्त्यादिकमाह–संध्याकालेत्त्वित्यादिचतुर्भिः ॥ ४९ ॥ प्रजापतिकृत इति ॥ प्रजापतिदत्तो वरोपि दुःखफलत्वाच्छाप इत्युच्यते । तथा च श्रुतिः–"रक्षाꣳसि हवा पुरोनुवाके तपोग्रमतिष्ठन्त तान्प्रजापतिर्वरेणोपामन्त्रयत तानि वरमवृणीतादित्यो नो योद्धा इति तान्प्रजापतिरब्रवीद्योधयध्वम्" इत्यादि ॥ ५० ॥ ५१ ॥ ॐकारब्रह्मसंयुक्तमिति ॥ दह्यंति दह्यन्ते द्विजैः प्रक्षिप्तेन वारिणा ॥ ५२ ॥ रवेर्विजयमुक्त्वा होमाद्दीप्तिप्रकर्षमाह–अग्निहोत्र इति ॥ सूर्यो ज्योतिरिति प्रातरग्निहोत्रमंत्रप्रतीकोक्तिः ॥ ५३ ॥ ओंकार इति ॥ त्रिधामा त्रीणि धामानि ऋग्यजुःसमानि यस्य सः । अत एव वचसां वेदानां पतिः । तथा च श्रुतिः "यैषा त्रय्येव विद्या तपति य एषोन्तरादित्ये हिरण्मयः पुरुषः" इति ॥५४॥ ओंकारोच्चारणाद्राक्षसनाशहेतुमाह–वैष्णवोंश इत्यादिद्वाभ्याम्–वैष्णवोंश इति ॥ असंप्लवं निर्विकारम् ॥ ५५ ॥ ५६ ॥५७॥

ततः प्रयाति भगवान्ब्राह्मणैरभिरक्षितः ॥ वालखिल्यादिभिश्चैव जगतः पालनोद्यतः ॥ ५८ ॥ काष्ठा निमेषा दश पंच चैव त्रिंशच्च काष्ठा गणयेत्कलां च ॥ त्रिंशत्कलश्चैव भवेन्मुहूर्तस्तैस्त्रिंशता रात्र्यहनी समेते ॥ ५९ ॥ ह्रासवृद्धी त्वहर्भागैर्दिवसानां यथाक्रमम् ॥ सन्ध्यामुहूर्त्तमात्रा वै ह्रासवृद्धौ समा स्मृता ॥ ६० ॥ रेखाप्रभृत्यथादित्ये त्रिमुहूर्त्तगते रवौ ॥ प्रातः स्मृतस्ततः कालो भागश्चाह्नः स पञ्चमः ॥ ६१ ॥ तस्मात्प्रातस्तनात्कालात्त्रिमुहूर्त्तस्तु सङ्गवः ॥ मध्याह्नस्त्रिमुहूर्त्तस्तु तस्मात्कालात्तु सङ्गवात् ॥ ६२ ॥ तस्मान्माध्याह्निकात्कालादपराह्ण इति स्मृतः ॥ त्रय एव मुहूर्त्तास्तु कालभागः स्मृतो बुधैः ॥६३॥ अपराह्णे व्यतीते तु कालः सायाह्न एव च ॥ दशपञ्च मुहूर्तं वै मुहूर्तास्त्रय एव च ॥ ६४ ॥ दशपंच मुहूर्तं वै अहर्वैषुवतं स्मृतम् ॥ ६५ ॥ वर्द्धते ह्रसते चैवाप्ययने दक्षिणोत्तरे ॥ अहस्तु ग्रसते रात्रिं रात्रिर्ग्रसति वासरम् ॥ ६६ ॥ शरद्वसन्तयोर्मध्ये विषुवं तु विभाव्यते ॥ तुलामेषगते भानौ समरात्रिदिनं तु तत् ॥ ६७ ॥

॥५८॥सन्ध्याकालेयत्ताज्ञापनार्थमाह—काष्ठेति ॥ ५९॥ ह्रासवृद्धीति॥ अहर्भागैर्मुहूर्तैः सह दिवसानां ह्रासवृद्धी । अह्नि त्रिंशन्नाडीभ्यो विवृद्धे तत्पञ्चदशांशो मुहूर्तो वर्द्धते क्षीणे क्षीयते एवं रात्रौ चेत्यर्थः । उक्तंच--"अह्नःपंचदशांशो रात्रेश्चैव मुहूर्त इति संज्ञेति संन्ध्यामुहूर्तस्तु अर्द्धोदयान्तमर्द्धास्तमयादिश्च द्विनाडीमात्र एव" । यथा गर्गः—"द्विनाडिका भवेत्सन्ध्या यावज्ज्योतिःप्रदर्शनम्" वराहमिहिरश्च "अर्द्धास्तमिताभ्युदितात्सूर्यादस्पृष्टभं नभो यावत् । तावत्सन्ध्याकालः" इति ॥ ६० ॥ रेखाप्रभृतीति॥ रेखाशब्देनोदयो लक्ष्यः॥६१॥६२॥६३॥अपराह्ण इति॥ मुहूर्तास्त्रय एव च सायाह्न इति पूर्वेणान्वयः । इदं च दशपञ्चमुहूर्ताहे पंचदशमुहूर्तोह्नि प्रातरादिपंचांशकल्पनमिति शेषः । दशपंचमुहूर्ताश्चेति पाठे विषुवे पञ्चदश भूतध्रुवमुहूर्ताः । अयनयोस्तु वृद्धिह्रासयोगिनो मुहूर्तास्त्रय एवेति संग्रहोक्तिः ॥ ६४ ॥ दशपंचमुहूर्तमिति ॥ विषुवद्दिनाहर्माननाडीत्रिंशच्चतुर्विंशत्यन्तह्रासो याम्येऽयने सौम्ये तु षट्त्रिंशदन्तं वृद्धिरित्यर्थः ॥ ६५ ॥ ६६ ॥ शरदिति ॥ शरन्मध्यं तुलारम्भः वसन्तमध्यं

॥ ५८ ॥ संध्याकालनिर्णयमाह—काष्ठेत्यादिद्वाभ्याम् ॥ ५९ ॥ ह्रासवृद्धीति ॥ अहर्भागैः प्रातरादिभिः सह दिवसानां ह्रासे वृद्धौ च तद्भागानामपि ह्रासवृद्धोरवश्यंभावित्वात् । संध्या तु मुहूर्तमात्रा अर्धोदयात्पूर्वं प्रातःसंध्या नाडीद्वयप्रमाणा अर्द्धास्तमयानन्तरं नाडीद्वयप्रमाणा चेत्यर्थः ॥ ६० ॥ प्रातराद्यहर्भागानां वृद्धिह्रासौ वक्तुं तेषां ध्रुवभूतं वैषुवतं मानमाह— लेखेत्यादिसार्धैस्त्रिभिः--लेखाप्रभृतीति ॥ अर्धोदयोऽत्र लेखा तामारभ्य ॥ ६१ ॥ ६२ ॥ ६३ ॥ अपराह्ण इति ॥ तां लेखामारभ्य प्रत्येकं मुहूर्तत्रयेण प्रातरादिरेकैकः कालः । तथा च स्मृतिः--"मुहूर्तानां त्रयः प्रातस्तावानेव च संगवः ॥ मध्याह्नस्त्रिमुहूर्तः स्यादपराह्णश्च तादृशः ॥ सायाह्नस्त्रिमुहूर्तोथ सर्वकर्मसु गर्हितः ॥" इति । एते च त्रिमुहूर्ताः पंचभागाः । दशपंचमुहूर्ताह्नि पंचदशमुहूर्ते त्रिंशन्नाडिकाऽह्नि भवंति । अन्यथा तु मुहूर्तास्त्रय एव क्रमेण ह्रासगोचरा भवन्तीति शेषः ॥ ६४ ॥ एतत्प्रपञ्चयति—दशपंचमुहूर्तमित्यादिसार्धैस्त्रिभिः ॥ ६५ ॥ ६६ ॥ शरदिति ॥ शरद्वसन्तयोर्मध्य इति आश्वयुक्कार्तिकौ हि शरद्, तयोर्मध्ये तुलाख्यं विषुवं भवति । चैत्रवैशाखौ वसन्तः,

कर्कटावस्थिते भानौ दक्षिणायनमुच्यते ॥ उत्तरायणमप्युक्तं मकरस्थे दिवाकरे ॥ ६८ ॥ त्रिंशन्मुहूर्तं कथितमहोरात्रं तु यन्मया ॥ तानि पंचदश ब्रह्मन् पक्ष इत्यभिधीयते ॥ ६९ ॥ मासः पक्षद्वयेनोक्तो द्वौ मासौ चार्कजावृतुः ॥ ऋतुत्रयं चाप्ययनं द्वेऽयने वर्षसंज्ञिते ॥ ७० ॥ संवत्सरादयः पंच चतुर्मासविकल्पिताः ॥ निश्चयः सर्वकालस्य युगमित्यभिधीयते ॥ ७१ ॥

मेषारम्भः स विषुवन्मध्यमार्गः ॥ ६७ ॥ ६८ ॥ अथ सूर्यगतिप्रसक्त्या तत्साध्यपञ्चाब्दमययुगज्ञापनायाह त्रिंशदिति ॥ त्रिंशन्मुहूर्तेन सावनदिनेन सौरदिनं लक्ष्यम् । पक्षश्चात्र सौरोऽर्धमासः सौरपञ्चाब्दत्वाद्युगस्य ऋतुरेकषष्टिः सावनदिनम् "एकषष्टिरहोरात्रमृतुरेको विभाव्यते" इति वायूक्तेः ॥ ६९ ॥ ७० ॥ संवत्सरादय इति ॥ चतुर्मासैश्चान्द्रसावनसौरनाक्षत्रमानजैः "दर्शाद्दर्शश्चान्द्रस्त्रिंशद्दिवसस्तु सावनो मासः । सौरोऽर्कराशिभोगान्नाक्षत्रश्चेन्दुमण्डलाद्गदितः" इत्युक्तेः । विकल्पिता विभक्ता विशेषिताः सन्तो युगं स्युरिति सर्वकालस्य प्रतिपर्यायमयं निश्चयः । अयमर्थः माघशुक्लप्रतिपत्सूर्योदयकाले युगपत्प्रक्रान्तानां चतुर्विधानामपि मासानां पंचाब्दान्ते यस्माद्युगपत्समाप्तिरूपो योगस्तत्समाप्तिकालो युगम् । लक्षणया तु तदब्दपञ्चकं युगं यथा आद्यन्तयोरेव सर्वग्रहयोगेपि सर्वं कृतादियुगम्, एतावत्स्वहोरात्रेषु गतेषु एतन्नक्षत्रराशिस्थेऽर्के एतस्यां तिथौ एतन्नक्षत्रस्थे वा चन्द्रे अयं संवत्सर आरभ्यते इति । पञ्चाब्दानां चतुर्मासविकल्पितत्वम् । सौराब्दपंचकमये हि युगे सौरा मासाः षष्टिः, सावना एकषष्टिः, चान्द्रा द्विषष्टिः, नाक्षत्राः सप्तषष्टिः, सौरेण त्रिंशदृतवः दशायनानि भानुभोग्यनक्षत्राणि पञ्चत्रिंशच्छतमित्यादि ज्ञेयम् । यथाह वायुः "शतान्यष्टादश त्रिंशदुदयाद्भास्करस्य तु ॥ ऋतवस्त्रिंशतस्सौरा अयनानि दशैव तु ॥ पंचत्रिंशच्छतं भानि षष्टिर्मासास्तु भास्करात् । सौरं सोमं च विज्ञेयं नाक्षत्रं सावनं तथा ॥ मानान्येतानि चत्वारि यैः पुराणं भविष्यति" पुराणं पुनर्युगान्तरावृत्तिर्यथा पूर्वमित्यर्थः । वृद्धगर्गश्च "यदा माघस्य शुक्लस्य प्रतिपच्चोत्तरायणे । सहोदयं श्रविष्ठायां सोमार्कौ प्रतिपद्यतः ॥ प्रथमः सोऽग्निदैवत्यो नाम्ना संवत्सरः स्मृतः । यदा माघस्य शुक्लस्य त्रयोदश्यामुदग्रविः ॥ युक्ते चन्द्रमसा रौद्रे वासवं प्रतिपद्यते । द्वितीयः

तयोर्मध्ये मेषाख्यं विषुवमित्यर्थः ॥ ६७ ॥ ६८ ॥ अथ सूर्यगतिप्रसंगात्क्रतसंवत्सरादिपंचकं वक्तुमाह--त्रिंशदित्यादिसार्धैश्चतुर्भिः । अत्र श्लोकद्वयस्यैकोऽभिप्रायः । त्रिंशदिति ॥ लोकप्रसिद्धसावनैर्दिनपक्षमासैः प्रसिद्धा अदूरविप्रकर्षादर्कजा एव दिनादयो लक्ष्यन्ते अर्कगत्यैवर्त्वयनाद्यभिधानात् ॥ ६९ ॥ ७० ॥ संवत्सरादय इति ॥ चतुर्मासविकल्पिता इति--"दर्शाद्दर्शश्चान्द्रस्त्रिंशद्दिवसस्तु सावनो मासः ॥ सौरोऽर्कराशिभोगान्नाक्षत्रश्चेन्दुमण्डलात्कथितः ॥" इत्येवं लक्षणैश्चान्द्रसावनसौरनाक्षत्रैश्चतुर्विधैर्मासैर्विविधतया कल्पिताः पंचसंवत्सरादयः एकं युगम् "सावनं चापि सौरं च चान्द्रं नाक्षत्रमेव च । चत्वार्येतानि मासानि यैर्युगं प्रविभज्यते" इति वृद्धगार्गोक्तिः । सर्वकालस्य मलमासादेर्निश्चयः निर्णयहेतुः । तथा हि--यदा शुक्लप्रतिपदि एकस्मिन्नक्षत्रे चंद्रेण सह स्थिते सूर्ये संक्रान्तिर्भवति तदा चतुर्विधा मासा युगपत्प्रवर्तन्ते तदा च सौरमानेन वर्षे षड्दिनानि ह्रसन्ति चान्द्रमानेन षड्दिनानि वर्धन्ते एवं प्रतिवर्षं चन्द्रार्कयोर्व्यवधानतारतम्ये तत्पंचवर्षात्मके युगे सौराष्षष्टिर्मासाः, सावना एकषष्टिः, चान्द्रा द्विषष्टिः, नाक्षत्राः सप्तषष्टिः । तन्मध्ये च मलमास

संवत्सरस्तु प्रथमो द्वितीयः परिवत्सरः ॥ इद्वत्सरस्तृतीयस्तु चतुर्थश्चानुवत्सरः ॥ वत्सरः पंचमश्चात्र कालोयं युगसंज्ञितः ॥ ७२ ॥ यः श्वेतस्योत्तरः शैलः शृङ्गवानिति विश्रुतः ॥ त्रीणि तस्य तु शृंगाणि यैरयं शृंगवान्स्मृतः ॥ ७३ ॥ दक्षिणं चोत्तरं चैव मध्यं वैषुवतं तथा ॥ शरद्व संतयोर्मध्ये तद्भानुः प्रतिपद्यते ॥ मेषादौ च तुलादौ च मैत्रेय विषुवं स्मृतम् ॥ ७४ ॥ तदा तुल्यमहोरात्रं करोति तिमिरापहः ॥ दशपञ्च मुहूर्तं वै तदेतदुभयं स्मृतम् ॥ ७५ ॥

सोमदैवत्यः प्रोच्यते परिवत्सरः ॥ कृष्णे माघस्य दशमी वासवादौ दिवाकरे । तदा तृतीयं संप्राहुरिडावत्सरकं बुधाः ॥ सप्तमी माघशुक्लस्य वासरादौ दिवाकरे । चतुर्थमिन्द्रदैवत्यं तमाहुरनुवत्सरम् ॥ यद्युत्तरायणं कृष्णे चतुर्थ्यां तपसो भवेत् । इद्वत्सरः स विज्ञेयः पञ्चमो मृत्युदैवतः ॥ नियतं पंचमस्यांते तथैव स्यात्सहोदयः । सावनं चापि सौरं च चान्द्रं नाक्षत्रमेव च ॥ चत्वार्येतानि मासानि यैर्युगं प्रविभज्यते ॥ " लगडाचार्यश्च "माघशुक्लप्रवृत्तस्य तैषकृष्णसमीपिनः । युगस्य पंचवर्षस्य कालज्ञानं प्रचक्षते " ॥ ७१ ॥ ७२ ॥ अथकालात्मविषयं वीथित्रयमर्कस्याह—यः श्वेतस्येति ॥ ७३ ॥ दक्षिणमिति ॥ तन्मध्यशृङ्गम् ॥ ७४ ॥ तदेति ॥ उभयं त्रिंशन्नाडीकं विषुवे अहोरात्रिश्च यत्तु मानसोत्तरे दक्षिणवीथिक्षीरोदमध्ये विषुवं शाकद्वीपोत्तरान्ते चोदक्काष्ठेति वायुप्रोक्ते प्रपञ्चितमित्यत्र सूचितं तत्तु तपस्तपस्यावित्यादिनामानि माघश्रावणयोरयनद्वयं वक्ष्यमाणं प्रथमे कृत्तिकाभाग इति वैशाखकार्तिकयोर्विषुवद्वयं च पञ्चसंवत्सरकल्पनानुगुणं यत्काले प्रत्यक्षसंवादितत्कालविषयं ज्ञेयम् । "पर्यागच्छत्पतङ्गोऽसौ माघे ज्येष्ठोत्तमेऽहनि । मध्येन पुष्करस्याथ भ्रमते दक्षिणायने । दक्षिणाद्विनिवृत्तोसौ विषुवस्थो यदा रविः ॥ क्षीरोदस्य समुद्रस्य उत्तरां तु दिशं चरेत् ॥ श्रावणे चोत्तरां काष्ठां चित्रभानुर्यदा व्रजेत् । शाकद्वीपस्य षष्ठस्य उत्तरांतां दिशं चरेत्" इति वायूक्तिलिङ्गात् । यत्तु ज्योतिस्सिद्धान्तसिद्धम् । उज्जयिन्यामुदक्काष्ठा लङ्कायां विषुवद्वीथिस्तद्दक्षिणे तावद्दक्षिणकाष्ठेति वीथित्रयम् । तत्तु मेषतुलाविषुवद्वयनक्रकर्कटायनद्वयसंवादिप्राक्कालविषयम् । यथा षट्त्रिंशच्छते कलिगताब्दे तथासीत् । संप्रति तु चतुश्चत्वारिंशच्छतेऽब्दे नक्रकर्कितुलामेषप्रदेशात्प्रागेव द्वादशे दिने अयनविषुवे प्रत्यक्षे दृश्येते अतस्तद्गणितानुरोधाद् इतः पूर्वमपि 'अयनादिपरिवृत्तिः कदाचिद्भवेदित्यनुमीयते येन त्रिशृंगवीथीसंवादः स्यात्, तस्मात् मार्गशीर्षे यदायनवर्षारम्भस्तत्कालवर्षविषयात्रिशृंगवीथीत्रयसञ्चारोऽर्कस्येति कल्प्यम् । मार्गशीर्षस्य हि वर्षादित्वं केचिद्ब्रूयुः । "आदाय मार्गशीर्षादि द्वौद्वौ मासावृतुर्मतः" इत्याह कात्ययनः अमरसिंहश्च "मार्गादीनां युगैः

द्वयं भवतीत्येवं सर्वकालनिश्चयो भवति ॥ ७१ ॥ संवत्सर इति ॥ ततश्च वर्षे षष्ठे तथैव चन्द्रार्कयोगाद्युगमित्यभिधीयत इत्यर्थः ॥ ७२ ॥ अथ शृंगवतः स्वं स्थानपूर्वकं विषुवत्कालं लक्षयति—यःश्वेतस्येत्यादिसार्धैस्त्रिभिः ॥ ७३ ॥ ७४ ॥ तदेति ॥ मेषतुलयोः प्रथमदिनेऽपि उभयम् अहश्च रात्रिश्च ॥ ७५ ॥

प्रथमे कृत्तिकाभागे यदा भास्वांस्तदा शशी ॥ विशाखानां चतुर्थेंशे मुने तिष्ठत्यसंशयम् ॥७६॥ विशाखानां यदा सूर्यश्चरत्यंशं तृतीयकम् ॥ तदा चन्द्रं विजानीयात्कृत्तिकाशिरसि स्थितम् ॥ ७७ ॥ तदैव विषुवाख्योऽयं कालः पुण्योऽभिधीयते ॥ तदा दानादि देयानि देवेभ्यः प्रयतात्मभिः ॥ ७८ ॥ ब्राह्मणेभ्यः पितृभ्यश्च मुखमेतत्तु दानजम् ॥ दत्तदानस्तु विषुवे कृतकृत्योभिजायते ॥ ७९ ॥ अहोरात्रार्द्धमासो तु कलाः काष्ठाः क्षणास्तथा ॥ पौर्णमासी तथा ज्ञेया अमावास्या तथैव च ॥ सिनीवाली कुहूश्चैव एका चानुमतिस्तथा ॥ ८० ॥

क्रमात् । द्वौद्वौ मार्गादिमासौ स्यादृतुः" इति च हेमन्तादिशरदन्तमृतून्मार्गादिकार्तिकान्तं मासांश्चानुक्रम्याभ्यधत्त । अग्रहायनमस्येति ह्याग्रहायणी मृगशिरस्तद्योगाद्या पूर्णिमा सा आग्रहायणी स अग्रहायणिको मासः इति समाख्यानिरुक्तितश्च इति । त्रिधा त्रिवीथीव्यवस्था । इदानीं तु वर्षस्य मार्गादित्वं व्रतार्थम् । "द्वौद्वौ माघादिमासौ स्यादृतुः" इति च पाठान्तरम् ।अतः माघादित्वं पंचाब्दयुगतत्फलादिज्ञानार्थं"मुखं वा एतत्संवत्सरस्य यत्फल्गुनी पूर्णमास इति श्रुतं तु फाल्गुन्यादित्वं यागाद्यर्थम् । तथा" मुखं वा एतत्संवत्सरस्य चित्रापूर्णमासः मधुश्च माधवश्चेत्यादिश्रुत्युपलक्षितत्वं वर्षस्य चैत्रशुक्लप्रतिपदादिबहुश्रुतिस्मृतिज्योतिश्शास्त्रपुराणादिलोकवार्तादिसिद्धं सर्वव्यवहारार्थमिति शास्त्रन्यायगणितप्रत्यक्षादिनिश्चितो विवेकः। यदुक्तं लैङ्गवायव्ययोः "आगमादनुमानाच्च प्रत्यक्षादुपपत्तितः।परीक्ष्य निपुणं बुध्या श्रद्धातव्यं विपश्चिता॥चक्षुषा लक्षितं लेख्यं गणितं बुद्धिसत्तमाः । पंचैव हेतवो विप्रा ज्योतिर्गणविचिन्तने" ॥७५॥प्रथम इति॥मुखं वा एतन्नक्षत्राणां यत्कृत्तिकाः प्रथमं विशाखे उत्तममित्यादि प्राक्कालविषयश्रुतिमूला विषुवद्द्वयोक्तिः । कृत्तिकाद्यंशे मेषांते विशाखानां चतुर्थेंशे वृश्चिकाद्यंशे ॥ ७६ ॥ विशाखानामिति ॥ कृत्तिकाशिरसि मेषान्ते विशाखाः तृतीयाशं तुलान्तम् ॥७७॥ तदैवेति॥अयं चन्द्रार्कयोरुभयोरपि विषुवावस्थितिरूपो महाविषुवाख्यः पुण्यो दानकालः प्राचीनविषुवसंवादी नेदानीन्तनसंवादी।अतः कालान्तरेपि तत्तत्कालीनचन्द्रार्कोभय विषुवविशेषसंस्थानस्योपलक्षणमिदम्।यथा इतः प्राङ्मीनान्तकन्यान्तयोश्चन्द्रार्कस्थितेर्दानकाल इत्यर्थः इमं विजानीयादसंशयं गणितेनेमं कालं बुद्ध्वा तत्र दानं दद्यात् ॥७८॥ ब्राह्मणेभ्य इति एतद्धि दानार्थं जातं विवृतं मुखं देवानाम् । अत्र काले दत्तं देवादीनां मुखे दत्तमिव साक्षात्प्रीणनमित्यर्थः । 'मुखमेतत्तु दैवतम्' इति वायूक्तेः । विषुवे तत्कालीनमध्यवीथीप्रवेशे ॥७९॥ दानप्रसङ्गाद्यागादिपुण्यकालाहोरात्रादि ज्ञेय मित्याह—अहोरात्रेति॥८०॥

इदानीं महाविषुवाख्यं कालं तत्प्राशस्त्यं चाह—प्रथम इत्यादिचतुर्भिः । प्रथम इति ॥ प्रथमे कृत्तिकाभागे मेषान्ते, विशाखानां चतुर्थेंशे वृश्चिकोपक्रमे, यदा शशी असंशयं यदि तिष्ठति तदा चन्द्रार्कयोर्द्वयोरपि पङ्क्तिव्यवधानेन विषुवावस्थितिरूपं महाविषुवमिति ॥ ७६ ॥ श्लोकद्वयस्यैकान्वयः विशाखानामिति ॥ विशाखानां तृतीयकमंशं कृत्तिकाशिरसि मेषान्तं चन्द्रं यदि जानीयात्तर्हि सोपि तथैव महाविषुवाख्यः पुण्यः कालः ॥ ७७ ॥ ७८ ॥ ब्राह्मणेभ्य इति ॥ अयं च विषुवाख्यः कालः कदाचिदेव भवति न सर्वदा तस्मादतिविशिष्टमेतत्तु दानजं मुखं दानार्थं जातम् विवृतं । देवादीनां मुखम् 'मुखमेतत्तु दैवतम्' इति वायूक्तेः । अस्मिन्काले दत्तं साक्षाद्देवादीनां मुखे दत्तं भवतीत्यर्थः ॥ ७९ ॥ पुण्यकालप्रसंगाद्यागादिपुण्यकालज्ञानार्थमहोरात्रविभागः सम्यग्ज्ञातव्य इत्याह--अहोरात्रेति सार्धेन--अहोरात्रेति ॥ सदृष्टचन्द्रा सिनीवाली न दृष्टचन्द्रा कुहूरित्यमावास्याभेदौ पूर्णचन्द्रा राका कलाहीनचन्द्रा अनुमतिरिति पूर्णमासीभेदौ । ऋतुत्रयं चाप्ययनमित्युक्तम् ॥ ८० ॥

तपस्तपस्यौ मधुमाधवौ च शुक्रः शुचिश्चायनमुत्तरं स्यात् ॥ नभोनभस्यौ च इषस्तथोर्जस्सहःसहस्याविति दक्षिणं तत् ॥ ८१ ॥ लोकालोकश्च यश्शैलः प्रागुक्तो भवतो मया ॥ लोकपालास्तु चत्वारस्तत्र तिष्ठन्ति सुव्रताः ॥ ८२ ॥ सुधामा शङ्खपाच्चैव कर्दमस्यात्मजौ द्विज ॥ हिरण्यरोमा चैवान्यश्चतुर्थः केतुमानपि ॥ ८३ ॥ निर्द्वन्द्वा निरभीमाना निस्तन्द्रा निष्परिग्रहाः ॥ लोकपालाः स्थिता ह्येते लोकालोके चतुर्दिशम् ॥ ८४ ॥ उत्तरं यदगस्त्यस्य अजवीथ्याश्च दक्षिणम् ॥ पितृयानः स वै पन्था वैश्वानरपथाद्बहिः ॥ ८५ ॥

तप इत्युक्ता पूर्वं माघादि ह्ययनक्लृप्तिः प्राचीना आश्लेषार्धाद्दक्षिणमुत्तरायणं रवेर्धनिष्ठायम् । "आसीत्कदापि नूनं येनोक्तं चैव पूर्वशास्त्रेषु । सांप्रतमयनं सवितुः कर्कटकाद्यं मृगादितश्चायम्" इति वराहमिहिरोक्तिलिंगात् ॥ ८१ ॥ लोकालोक इति ॥ पितृयानदक्षिणावधिभूतागस्त्यभ्रमणवृत्तलक्षकस्य लोकालोकस्योपरि प्रसंगाल्लोकपालस्थानोक्तिः मात्स्ये हि "लोकपालाः स्थिता ह्येते लोकालोके चतुर्दिशम् ॥ उत्तरं यदगस्त्यस्य शृङ्गं देवर्षिपूजितम्" ॥ ८२ ॥ ८३ ॥ ८४ ॥ उत्तरमिति ॥ अजवीथी अश्विन्यादित्रित्रिनक्षत्रलक्षितनववीथीषु याम्यवीथीत्रये प्रथमा मूलादित्रिनक्षत्राश्रिता "नागगजैरावतवृषभगोजरद्गवाजमृगपावकाख्याः । आश्विन्याद्यैः कैश्चित्त्रिभक्रमाद्वीथयः कथिताः" इति ज्योतिषोक्तेः । "मूलाषाढोत्तराषाढा अजवीथ्यभिशब्दिताः । श्रवणं च श्रविष्ठा च मार्गी शतभिषक्तथा ॥ वैश्वानरी भद्रपदा रेवती चेति कीर्तिताः" इति वायुमात्स्योक्तेश्च । एतेनागस्त्याजवीथ्योर्मध्यदेशः सर्वोऽपि पितृयानमेव किन्तु तत्रस्थापि तद्दक्षिणा वैश्वानरवीथी पितृयानतया न ग्राह्या॥८५॥

अयनद्वयं विविच्याह–तप इति ॥ माघादिद्विद्विमासैकऋतुत्रयमुत्तरायणम् । श्रावणादिद्विद्विमासैकऋतुत्रयं दक्षिणायनम् इत्यर्थः ॥ ८१ ॥ एतस्य स्थूलदृष्ट्यैवोक्तं लोकालोकोत्तरशृंगादगस्त्यस्थानात्पितृयानादिकं वक्ष्यन्प्रथमं तावद्बुद्धिस्थान् लोकालोकस्थान् लोकपालानाह–लोकालोक इत्यादित्रिभिः ॥ ८२ ॥ ८३ ॥ निर्द्वंद्वा इति ॥ तदुक्तं मात्स्ये–"लोकपालाः स्थिता ह्येते लोकालोकचतुर्दिशम् । उत्तरं यदगस्त्यस्य शृंगं देवर्षिपूजितम् ॥" इति ॥ ८४ ॥ तत्पितृयानमाह–उत्तरमित्यादिसार्धैः पंचभिः उत्तरमिति ॥ तत्र ज्योतिश्चक्रे वीथिक्रमो वायुनोक्तः–"सर्वग्रहाणां त्रीण्येव स्थानानि द्विजसत्तमाः ॥ स्थानं चाजभवं चैव तथैरावतमुत्तमम् ॥ वैश्वानरं दक्षिणतो निर्दिष्टमिह तत्त्वतः ॥" इति तदेव मध्यमोत्तरदक्षिणमार्गत्रयं प्रत्येकं वीथित्रयेण त्रिधा भिद्यते । तथा हि–त्रिभिस्त्रिभिरश्विन्यादिनक्षत्रैः नागवीथी गजवीथी ऐरावती चेत्युत्तरमार्गे वीथीत्रयम् । आर्षभवीथी गोवीथी जरद्गववीथी चेति मध्यममार्गे वीथीत्रयम् । अजवीथी मृगवीथी वैश्वानरवीथी चेति दक्षिणमार्गे वीथीत्रयम् । यदुक्तं तत्रैव–"अश्विनी कृत्तिका याम्या नागवीथीति शब्दिता ॥ रोहिण्यार्द्रा मृगशिरो गजवीथ्यभिधीयते ॥ ( १ ) ॥ पुष्याश्लेषे तथादित्या वीथी चैरावती स्मृता ॥ एतास्तु वीथयस्तिस्र उत्तरो मार्ग उच्यते ॥ ( २ ) ॥ तथा द्वे चापि फल्गुन्यौ मघा चैवार्षभी मता ॥ हस्तश्चित्रा तथा स्वाती गोवीथीति च शब्दिता ॥ (३) ॥ ज्येष्ठा विशाखानूराधा वीथी प्रोक्ता जरद्गवी ॥ एतास्तु वीथ्यस्तिस्रश्च मध्यमो मार्ग उच्यते ॥ (४) मूलाषाढोत्तराषाढा चाजवीथ्यभिशब्दिता ॥ श्रवणं च धनिष्ठा च मार्गी शतभिषक्तथा ॥ ( ५ ) ॥ वैश्वानरी भाद्रपदे रेवती चैव कीर्तिता ॥ एतास्तु वीथ्यस्तिस्रश्च दक्षिणो मार्ग उच्यते ॥ ( ६ ) ॥" याम्या भरणी । आदित्या आदितिदेवता पुनर्वसुः । मार्गी मृगवीथिः । एवं स्थिते

तत्रासते महात्मान ऋषयो येऽग्निहोत्रिणः ॥ भूतारम्भकृतं ब्रह्म शंसन्तो ऋत्विगुद्यताः ॥ प्रारभन्ते तु ये लोकास्तेषां पन्थाः स दक्षिणः ॥८६॥ चलितं ते पुनर्ब्रह्म स्थापयन्ति युगेयुगे ॥ सन्तत्या तपसा चैव मर्यादाभिः श्रुतेन च ॥ ८७ ॥ जायमानास्तु पूर्वे च पश्चिमानां गृहेषु वै ॥ पश्चिमाश्चैव पूर्वेषां जायन्ते निधनेष्विह ॥ ८८ ॥ एवमावर्त्तमानास्ते तिष्ठन्ति नियतव्रताः ॥ सवितुर्दक्षिणं मार्गं श्रिता ह्याचन्द्रतारकम् ॥ ८९ ॥ नागवीथ्युत्तरं यच्च सप्तर्षिभ्यश्च दक्षिणम् ॥ उत्तरः सवितुः पंथा देवयानश्च स स्मृतः ॥ ९० ॥

तत्रेति ॥ तत्र पितृयाने भूतारम्भः कृतं कृतिः कार्यं यस्य तद्ब्रह्मकर्मकाण्डं स्तुवन्तः ऋत्विग्द्वारा यज्ञोद्युक्ताः कर्म प्रारभन्ते ॥ ८६ ॥ ८७ ॥ जायमानाः इति ॥ पूर्वे पितरः पश्चिमानां स्वपुत्राणां पश्चिमाः पुत्राश्च पूर्वेषां स्वपुत्रीभूय स्थितानां निधनेषु कुलेषु अधिकारिकर्मवशाच्छ्रुत्यादिसंप्रदायाय भूयो जायन्ते । निलयेष्विति च पाठः । यथाह वायुः "प्राप्ते त्रेतायुगे चैव पुनः सप्तर्षयस्त्विह । प्रवर्त्तयन्ति तान्वर्णानाश्रमांश्च पृथक्पृथक् ॥ तेषामेवान्वये धीरा उत्पद्यन्ते पुनःपुनः ॥ जायमानः पिता पुत्रे पुत्रः पितारि चैव ह । एवमावर्त्तमानास्ते द्वापरेषु पुनःपुनः ॥ कल्पानां भाष्यविद्यानां ज्ञानशास्त्रकृतश्च ये" ॥ ८८ ॥ एवमिति ॥ दक्षिणो मार्गो धूमादिश्छान्दोग्योक्तो यथा "अथ य इमे ग्रामे इष्टापूर्त्ते दत्तमित्युपासते ते धूममभिसम्भवंति धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद्यान् षड्दक्षिणेति मासास्तानेते संवत्सरमभिप्राप्नुवन्ति मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष वै सोमो राजा तद्देवानामन्नं तद्देवा भक्षयन्ति तस्मिन्यावत्संपातमुषित्वाऽथैतमेवाध्वानं पुनरावर्त्तन्ते" इति । अत्र चोक्तश्लोकः "धूमो रात्रिर्बहुलमयने दक्षिणेऽर्कस्य मासानापद्यन्ते पितृपदमथ व्योम चन्द्रं दिवं च ॥ प्रत्यावृत्त्या गगनपवनौ धूममभ्रं च मेघं वृष्ट्युद्भिज्जान्पुरुपवनिते दक्षिणो मार्ग एषः" ॥ ८९ ॥ ९० ॥

अगस्त्यादुत्तरमजवीथ्याश्च दक्षिणं पितृयानं किं त्वगस्त्यनिकटवर्तिनो वैश्वानरपदाद्बहिः वैश्वानरवीथिं वर्जयित्वा मृगवीथिमात्रं पितृयानमित्यर्थः ॥ ८५ ॥ तत्रासत इति ॥ भूतारंभः प्रजोत्पादनं, कृतं कृतिः कार्यं यस्य तद्ब्रह्म शंसंतः प्रवृत्तं कर्म विधाय वेदभागं स्तुवंतः ऋत्विगुद्यताः युगांते यज्ञविच्छेदे सति ऋत्विग्भागेन यज्ञानुष्ठानायोद्यताः कर्माणि प्रारभंत इत्यर्थः ॥ ८६ ॥ चलितमिति ॥ चलितं विच्छिन्नसम्प्रदायं ब्रह्म वेदं स्थापयन्ति । संतत्या वंशप्रवर्तनेन । मर्यादाभिर्वर्णाश्रमादिव्यवस्थाभिः । श्रुतेन शास्त्रप्रवर्तनेन ॥ ८७ ॥ जायमाना इति ॥ पूर्वे पितरः, पश्चिमानां पुत्राणां पश्चिमाः पुत्राश्च, पूर्वेषां स्वपुत्रत्वेनोत्पन्नानां, पितॄणां निधनेषु गृहेषु, केनचिदंशेन स्वाधिकारवशाज्जायन्ते "पिता पुत्रेण पितृमान्योनियोनौ" इति श्रुतेः । तथा च वायुः—"प्राप्ते त्रेतायुगे चैव पुनः सप्तर्षयस्त्विह ॥ प्रवर्तयन्ति तान्वर्णानाश्रमांश्च पृथक् पृथक् ॥ (१) ॥ तेषामेवान्वये धीरा उत्पद्यन्ते पुनःपुनः ॥ जायमानः पिता पुत्रे पुत्रः पितारि चैव हि ॥ (२) ॥ एवमावर्तमानास्ते द्वापरेषु पुनः पुनः । कल्पानां भाष्यविद्यानां ज्ञानशास्त्रकृतश्च ये ॥ (३) ॥" इति ॥ ८८ ॥ एवमिति ॥ सवितुर्दक्षिणं धूमादिमार्गं श्रिताः । श्रुतिश्च "अथ ये ग्राम इष्टापूर्तं दत्तमित्युपासते ते धूममभिसंभवन्ति धूमाद्रात्रिं रात्रेरपरपक्षम्" इत्यादि ॥ ८९ ॥ देवयानमाह—नागवथीत्यादिषड्भिः—नागवीथ्युत्तर

तत्र ते वासिनः सिद्धा विमला ब्रह्मचारिणः ॥ सन्ततिं ते जुगुप्संति तस्मान्मृत्युर्जितश्च तैः ॥ ९१ ॥ अष्टाशीतिसहस्राणि मुनीनामूर्ध्वरेतसाम् ॥ उदक्पन्थानमर्यम्णः स्थिता ह्याभूतसंप्लवम् ॥ ९२ ॥ ते संप्रयोगाल्लोभस्य मैथुनस्य च वर्जनात् ॥ इच्छाद्वेषाप्रवृत्त्या च भूतारम्भविवर्जनात्॥९३॥ पुनश्च कामासंयोगाच्छब्दादेर्दोषदर्शनात् ॥ इत्येभिः कारणैः शुद्धास्तेमृतत्वं हि भेजिरे ॥ ९४ ॥ आभूतसंप्लवं स्थानममृतत्वं विभाव्यते ॥ त्रैलोक्यस्थितिकालोयमपुनर्मार उच्यते ॥ ९५ ॥ ब्रह्महत्याश्वमेधाभ्यां पापपुण्यकृतो विधिः ॥ आभूतसंप्लवान्तन्तु फलमुक्तं तयो र्द्विज ॥ ९६ ॥ यावन्मात्रे प्रदेशे तु मैत्रेयावस्थितो ध्रुवः ॥ क्षयमायाति तावत्तु भूमेराभूतसंप्लवात् ॥ ९७ ॥ ऊर्ध्वोत्तरमृषिभ्यस्तु ध्रुवो यत्र व्यवस्थितः ॥ एतद्विष्णुपदं दिव्यं तृतीयं व्योम्नि भासुरम् ॥ ९८ ॥

॥ ९१ ॥ ९२ ॥ त इति ॥ भूतारम्भविवर्जनान्निवर्तकश्रुत्याश्रयणात् ॥ ९३ ॥ ९४ ॥ आभूतसंप्लवं ब्रह्मादीनांतं यावत्स्थितेरमृतत्वाख्यानम् । तदुदङ्मार्गस्थानां मुक्तिरित्याह—आभूतसंप्लवं स्थानममृतत्वमिति ॥ त्रैलोक्यस्थितिकाल एव इहामृतापुनर्मारपर्यायः ॥ ९५ ॥ ब्रह्महत्याश्वमेधाभ्यामिति ॥ ब्रह्महत्याश्वमेधाख्यां क्रियाभ्यां पापपुण्यापूर्वे भावयतः पुंसोऽयं फलभोगो विधिः एवमाकल्पं ब्रह्महा नरकमश्वमेधी स्वर्गं भुंक्त इत्यर्थः ॥ ९६ ॥ ९७ ॥ अथ विष्णुपदं विष्णुपदीं च प्रसञ्जयेति ऊर्ध्वोत्तरमिति ॥ ऋषिभ्य उत्तरस्यां दिश्यूर्ध्वं च ध्रुवाधारो विष्णुपदाख्यं स्थानं भूम्यपेक्षया तृतीयम् । तच्च वैराजस्य हृदयनाडीस्थानीयत्वाद्विष्णोर्निवासः । अतोत्र विष्णुपदे स्वर्गाधिकसौख्यात्सत्यलोकादर्वाचीनत्वाच्च मोक्षोक्तिः क्रममुक्त्यर्था तत्स्थानक्रमाद्ब्रह्मलोकमेत्य ब्रह्मणा सह मुच्यंते विष्णुपदे स्थितास्तत्र लब्धज्ञाना मुच्यंते न तु तन्मुक्तेर्लभ्यं स्थानमित्यर्थः ॥ ९८ ॥

मिति ॥ उत्तरमार्गस्योत्तरा वीथिस्तस्या उत्तरं सप्तर्षिपर्यन्तं देवयानः पन्थाः ॥ ९० ॥ तत्रेति ॥ वशिनः जितेन्द्रियाः । अष्टाशीतिसहस्राणीति । अर्यम्णः सवितुरुदक्पन्थानम् उत्तरमार्गम् ॥ ९१ ॥ ९२ ॥ श्लोकद्वयस्यैकान्वयः त इति ॥ लोभस्यासंप्रयोगात्तृष्णावियोगादिच्छाद्वेषाभ्यामप्रवृत्त्या च कर्माकरणेन च अकामसंयोगाद्योगभ्रंशाभावात् अमृतत्त्वममृतद्वारा संभूतचिरकालावस्थायित्वं भेजिरे ॥ ९३ ॥ ९४ ॥ तदाह—आभूतसंप्लवं स्थानमिति ॥ ब्रह्माहःपर्यन्तं यत्स्थानं तदेवामृतत्वमुपचारादुच्यते उपचारबीजमाह—त्रैलोक्येति । अपुनर्मारः पुनर्मृत्युरहितः । क्रममुक्तिस्थानत्वादिति भावः ॥ ९५ ॥ आभूतसंप्लवस्थानोक्तिप्रसंगात् अन्यदप्याह—ब्रह्महत्याश्वमेधाभ्यामिति ॥ ब्रह्महत्याश्वमेधाभ्यां यत्पापं यत्पुण्यं च तत्कृतस्तन्निमित्तो विधीयते तस्मिन् फलमिति विधिः फलभोगकालः । तमेवाह आभूतसंप्लवान्तमिति । भूतसंप्लवरूपो योऽन्तः प्रलयः तत्पर्यंतं तयोः पापपुण्ययोः फलमुक्तमित्यर्थः । यद्ब्रह्महत्याश्वमेधाभ्यामुपलक्षितं पापं पुण्यं च तत्कृतः पुंसोयं फलभोगकाल इत्यर्थः । पापपुण्यकृतोऽवधिरिति पाठे अवधिरितिच्छेदेऽपि तावानेवार्थः ॥ ९६ ॥ ९७ ॥ सप्तर्षिभ्यो दक्षिणतो देवयानस्थितिमुक्त्वा तदूर्ध्वोत्तरतो विष्णुपदस्थितिमाह--ऊर्ध्वेत्यादि यावत्समाप्तिः,--ऊर्ध्वोत्तरमिति ॥ ऊर्ध्वं च तदुत्तरं च सप्तर्षिभ्य उरत्तस्यां दिशि ऊर्ध्वं यत्र ध्रुवस्तिष्ठति ध्रुवस्याश्रयभूतविष्णु

निर्धूतदोषपङ्कानां यतीनां संयतात्मनाम् ॥ स्थानं तत्परमं विप्र पुण्यपापपरिक्षये ॥ ९९ ॥ अपुण्यपुण्योपरमे क्षीणाशेषाप्तिहेतवः ॥ यत्र गत्वा न शोचन्ति तद्विष्णोः परपं पदम् ॥ १०० ॥ धर्मध्रुवाद्यास्तिष्ठन्ति यत्र ते लोकसाक्षिणः ॥ तत्साष्टर्योत्पन्नयोगर्धिस्तद्विष्णोः परमं पदम् ॥ १०१ ॥ यत्रोतमेतत्प्रोतं च यद्भूतं सचराचरम् ॥ भाव्यं च विश्वं मैत्रेय तद्विष्णोः परमं पदम् ॥ १०२ ॥ दिवीव चक्षुराततं योगिनां तन्मयात्मनाम् ॥ विवेकज्ञानदृष्टं च तद्विष्णोः परमं पदम् ॥ १०३ ॥ यस्मिन्प्रतिष्ठितो भास्वान्मेढीभूतः स्वयं ध्रुवः ॥ ध्रुवे च सर्वज्योतींषि ज्योतिष्वम्भोमुचो द्विज ॥१०४॥ मेघेषु संगता वृष्टिर्वृष्टेः सृष्टेश्च पोषणम् ॥ आप्यायनं च सर्वेषां देवादीनां महामुने ॥१०५॥ ततश्चाज्याहुतिद्वारा पोषितास्ते हविर्भुजः ॥ वृष्टेः कारणतां यांति भूतानां स्थितये पुनः ॥१०६॥ एवमेतत्पदं विष्णोस्तृतीयममलात्मकम् ॥ आधारभूतं लोकानां त्रयाणां वृष्टिकारणम् ॥ १०७ ॥ ततः प्रभवति ब्रह्मन्सर्वपापहरा सरित् ॥ गंगा देवांगनांगानामनुलेपनपिञ्जरा ॥१०८॥

॥ ९९ ॥ १०० ॥ धर्मध्रुवाद्या इति ॥ तस्य विष्णोः साष्टर्यं समानैश्वर्यता इन्द्रियादिवशीकरणैश्वर्याद्धि योगर्धिः—"ऐश्वर्याद्विहितो योगो योगादैश्वर्यमिष्यते । योगैश्वर्यमृते मोक्षः कथंचिन्नोपपद्यते" इति हारिवंशोक्तेः ॥ १०१ ॥ १०२ ॥ दिवीवेति ॥ चक्षुः सूर्यः अयं च तद्विष्णोरिति मंत्रद्वयानुग्रहः सूचितः ॥ १०३ ॥ १०४ ॥ १०५ ॥ १०६ ॥ १०७ ॥ तद्विष्णोः पदं सर्वस्य हेतुराश्रयश्चेत्युक्तम् । पावनं चेत्याह ततः प्रभवतीत्यादिना—तत इति ॥ ततो विष्णुपदमार्गात् गङ्गा हि "त्रिविक्रमपदोद्भिन्नब्रह्माण्डसुषिरोद्भवा" यथा च वामनपुराणे "ततः प्रतापवान्ब्रह्मन् बृहद्विष्ण्वंघ्रिरम्बरे । तं ब्रह्माण्डोदरमाहत्य निरालोकं जगाम सः ॥ विष्ण्वंघ्रिणा प्रसरता कटाहे हेम्नि भेदिते ॥ अम्बराद्विष्णुमायातं बाह्यमम्भः कटाहतः ॥ विष्ण्वंघ्रिपद्मोरुदण्डाद्वां गता वै नदी तदा ॥ बाह्यतोयमहाधारा

पदात्यभूम्यपेक्षया दिव्यं तृतीयं स्थानमित्यर्थः । तद्धि वैराजस्य हृदयनाडीस्थानं ततस्तदंतर्यामिणो विष्णोः स्थानम् ॥ ९८ ॥ ततः क्रममुक्तिस्थानमपि तत्साक्षान्मोक्षत्वेन वर्णयति निर्धूतदोषेत्यादिपञ्चभिः ॥ ९९ ॥ अपुण्यपुण्योपरम इति ॥ क्षीणाः अशेषाप्तेर्नानादेहप्राप्तेर्हेतवो येषां ते ॥ १०० ॥ धर्मध्रुवाद्या इति ॥ तत्साष्टर्यात्तेन विष्णुना समानैश्वर्येण इंद्रियादिवशीकारसामर्थ्येनोत्पन्नो यो योगस्समाधिस्तेन इद्धा दीप्ताः "ऐश्वर्याद्विहितो योगो योगादैश्वर्यमुच्यते । योगैश्वर्यमृते मोक्षः कथञ्चिन्नोपपद्यते ॥" इति हरिवंशोक्तेः ॥ १०१ ॥ १०२ ॥ दिवीवेति ॥ दिवि आततं सर्वप्रकाशकं सूर्यरूपम्, चक्षुरिव महात्मनां विततम्, सर्वाभासकत्वेन प्रतीतम्, विवेकज्ञानेन प्रपञ्चवैलक्षण्यसुज्ञानेन दृष्टञ्च अपरिच्छिन्नतया ज्ञातमित्यर्थः । अनेन तद्विष्णोरिति मंत्रद्वयार्थः सूचितः ॥ १०३ ॥ यत्रोतमेतत्प्रोतं चेत्यनेन विश्वस्य कारणमाश्रयश्चेत्युक्तम् । इदानीं ध्रुवाश्रयत्वेन तद्वारा विश्वपोषकत्वमाह यस्मिन्नित्यादिचतुर्भिः--यस्मिन्निति ॥ भास्वान् तेजस्वी । अंभोमुचः मेघाः ॥१०४॥ मेघेष्विति ॥ वृष्टेर्हेतोरोषधीद्वारा सृष्टेः पोषणं वृद्धिः अप्यायनं च तृप्तिः ॥१०५॥ ततश्चेति ॥ सृष्टेः कारणतां यान्तीति एतदुक्तं गीतासु "देवान्भावयतानेन ते देवा भावयन्तु वः । परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥" इति ॥१०६॥१०७॥ विश्वपावनत्वं विष्णुपदस्य दर्शयन्नाह--तत इति ॥ ततो विष्णुपदस्थानात्प्रकर्षेण गंगा भवति । त्रिविक्रमपदोद्भिन्नब्रह्माण्डसुषिरोद्भवत्वात् । ततः प्रागेव जातापि तत आरभ्य देवादिसेव्यत्वेन प्रकटीभवतीत्यर्थः । तदेवाह--देवाङ्गनानामङ्गानां जलकेलिषु क्षालितानि यान्यनुलेपनानि कुङ्कु

वामपादाम्बुजांगुष्ठनखस्रोतोविनिर्गताम् ॥ विष्णोर्बिभर्त्ति यां भक्त्या शिरसाहर्निशं ध्रुवः ॥ १०९ ॥ ततः सप्तर्षयो यस्याः प्राणायामपरायणाः ॥ तिष्ठन्ति वीचिमालाभिरुह्यमानजटाजले ॥ ११० ॥ वार्योघैः संततैर्यस्याः प्लावितं शशिमण्डलम् ॥ भूयोधिकतरां कांतिं वहत्येतदुह क्षये ॥ १११ ॥ मेरुपृष्ठे पतत्युच्चैर्निष्क्रांता शशिमण्डलात् ॥ जगतः पावनार्थाय प्रयाति च चतुर्दिशम् ॥ ११२ ॥ सीता चालकनन्दा च चक्षुर्भद्रा च संस्थिता ॥ एकैव या चतुर्भेदा दिग्भेदगतिलक्षणा ॥ ११३ ॥ भेदं चालकनन्दाख्यं यस्याः शर्वोपि दक्षिणाम् ॥ दधार शिरसा प्रीत्या वर्षाणामधिकं शतम् ॥ ११४ ॥ शम्भोर्जटाकलापाच्च विनिष्क्रान्तास्थिशर्कराः ॥ प्लावयित्वा दिवं निन्ये या पापान्सगरात्मजान् ॥११५॥ स्नातस्य सलिले यस्याः सद्यः पापं प्रणश्यति ॥ अपूर्वपुण्यप्राप्तिश्च सद्यो मैत्रेय जायते ॥ ११६ ॥ दत्ताः पितृभ्यो यत्रापस्तनयैः श्रद्धयान्वितैः ॥ समाशतं प्रयच्छंति तृप्तिं मैत्रेय दुर्लभाम् ॥ ११७ ॥ यस्यामिष्ट्वा महायज्ञैर्यज्ञेशं पुरुषोत्तमम् ॥ द्विजभूपाः परां सिद्धिमवापुर्दिवि चेह च ॥ ११८ ॥ स्नानाद्विधूतपापाश्च यज्जलैर्यतयस्तथा ॥ केशवासक्तमनसः प्राप्ता निर्वाणमुत्तमम् ॥११९॥

दशपापविनाशिनी" इत्यादि । श्रीविष्णुधर्मोत्तरे च "ब्रह्माण्डस्ताडितस्तेन छिद्रतामगमत्प्रभो । ब्रह्माण्डं बाह्यतोयेन दशपापवृतावृतम् ॥ तेन छिद्रेण तत्तोयं विवेशाण्डं महीपते" इति पुराणान्तरे तु ब्रह्मणः कमण्डलुजलेन हरिचरणे क्षालिते गङ्गोद्भूतेति । अन्यत्र तु धर्म एव ब्रह्माज्ञया द्रवीभूत इति । अतस्त्रैविक्रमे पादे ब्रह्मकमण्डलुजलेन क्षाल्यमाणे तदपर्याप्त्या तत्पूर्त्यर्थं धर्मे द्रवीभूते तत्राप्यपूर्णे ब्रह्माण्डकटाहभेदे बाह्योदकधारा तच्छिद्रेण विष्णुपादस्पर्शिनी गांगता गङ्गासीदित्यविरोधः ॥ १०८ ॥ अथ ध्रुवादिपातालान्तमवतीर्णगंगाप्रशंसा वामपादेति ॥ १०९ ॥ तत इति ॥ "विष्णोः पदे परमे मध्व उत्सः" इति मन्त्रोऽनुगृह्यते उह्यमानजटाजल इति सप्तर्ष्यघमर्षणस्नानसुखाधिक्योक्तिः ॥ ११० ॥ १११ ॥ मेरुपृष्ठ इति ॥ शशिमण्डलान्निष्क्रान्ता सूर्यमार्गान्मेरुं गतेत्यर्थः । "विष्णुपादाच्छिशुमाराद्ध्रुवाच्च सोमात्सूर्यान्मेरुकूटाच्च विष्णोः । समागता शिवमूर्ध्नो हिमाद्रिम्" इत्यादि व्यासोक्तेः ॥ ११२ ॥ ११३ ॥ ११४ ॥ शंभोरिति ॥ शर्कराः नयन्तःसूक्ष्मशिलास्ता इव सागरास्थीनि प्लावयित्वा ॥ ११५ ॥ ११६ ॥ ११७ ॥ ११८ ॥ ११९ ॥

मादीनि तैः पिञ्जरा पिशंगीभूता ॥ १०८ ॥ वामपादेति ॥ विष्णोर्वामपादाम्बुजम् अम्बुजसदृशो वामपादस्तस्यांगुष्ठनखात् स्रोतोरूपेण विनिर्गताम् ॥१०९ ॥ तत इति ॥ सप्तर्षयो यस्या जले अघमर्षणं कुर्वन्तस्तिष्ठन्ति । उह्यमाना इतस्ततश्चाल्यमाना जटा येषां ते ॥ ११० ॥ १११ ॥ ११२ ॥ सीता चेति ॥ दिग्भेदगतिलक्षणादिषु चतसृषु भेदेन या गतिः सैव चतुर्भेदलक्षणं यस्याः सा ॥ ११३ ॥ ११४ ॥ शंभोरिति ॥ अस्थिशर्करा अस्थिचूर्णानि पापान् ब्रह्मदण्डहतानपि ॥ ११५ ॥ ११६ ॥ दत्ता इति ॥ समाशतं वर्षशतम् ॥ ११७ ॥ ११८ ॥११९॥

श्रुताऽभिलषिता दृष्टा स्पृष्टा पीताऽवगाहिता ॥ या पावयति भूतानि कीर्तिता च दिनेदिने ॥ १२० ॥ गंगागंगेति यैर्नाम योजनानां शतेष्वपि ॥
स्थितैरुच्चारितं हन्ति पापं जन्मत्रयार्जितम् ॥१२१॥ यतः सा पावनायालं त्रयाणां जगतामपि ॥ समुद्भूता परं तत्तु तृतीयं भगवत्पदम् ॥१२२॥
इति श्रीविष्णुमहापुराणे द्वितीयेंशेऽष्टमोऽध्यायः ॥ ८ ॥ ॥श्रीपराशर उवाच ॥ तारामयं भगवतः शिशुमाराकृति प्रभोः ॥ दिवि रूपं हरे
र्यत्तु तस्य पुच्छे स्थितो ध्रुवः ॥ १ ॥ सैष भ्रमन् भ्रामयति चन्द्रादित्यादिकान् ग्रहान् ॥ भ्रमन्तमनु तं यान्ति नक्षत्राणि च चक्रवत् ॥ २ ॥

श्रुतेति ॥ श्रुताभिलषितेत्यादौ आसक्तिभूयस्त्वात्फलभूयस्त्वं यथोत्तरं दशगुणम् । यथा ब्रह्माण्डपुराणे "श्रुता गङ्गेति यैर्भक्त्या सकृद्दूरे स्थितै रपि । तत्रैव तारयेन्मर्त्यान्करुणार्द्रा भवार्णवात् ॥ कदा द्रक्ष्यामि तां गंगां कदा स्नानमहं लभे ॥ इति पुंसोऽभिलषिता कुलानि दश तारयेत् ॥ यथा कथंचिद्वै दृष्टा भक्तितश्चिन्मयी सकृत् । गंगा तारयते तेषां कुलानां शतमंहसः ॥ यैस्तु स्पृष्टा विशिष्टांगैर्गङ्गा भक्त्या सकृन्नरैः ॥ कुलानां तु सहस्रं वै तेषां तारयते भवात् ॥ पीता धर्मद्रवी मर्त्यैर्यैर्गंगा भक्तितः सकृत् । तेषां कुलानामयुतं भवात्तारयते ध्रुवम् ॥ यैः पुण्यवाहिनी गंगा सकृद्भक्त्यावगाहिता ॥ तेषां कुलानां लक्षं तु भवात्तारयते ध्रुवम् ॥ यैर्दिनं सेविता भक्त्या गंगा पुण्यजला नरैः ॥ कुलानां दशलक्षं तु तेषां तारयते भवात्" ॥ १२० ॥ गंगागंगेति ॥ द्विरुक्तिः प्रतिसंध्यं च त्रिधावृत्तेर्वृद्ध्यर्था ब्रह्माण्डे "गंगागंगेति गंगेति यैस्त्रिसन्ध्यं त्युदीरिता । सुदूरस्थैश्च तत्पापं हन्ति जन्मत्रयार्जितम् ॥ तथा—सहस्रयोजनस्थोपि त्रिसन्ध्यं त्रिः समाहितः ॥ गंगा गंगेति यो ब्रूयात्स गच्छेत्परमां गतिम्" नामोपलक्षणं स्मरणस्यापि "योजनानां सहस्रेषु गंगां यः स्मरते नरः । अपि दुष्कृतकर्मासौ लभते परमां गतिम्" इति मात्स्योक्तेः ॥ १२१ ॥ यत इति ॥ प्रकृतविष्णुपदमाहात्म्योपसंहारः त्रयाणामिति पातालव्याप्तिश्चोक्ता सगरोद्धारार्था तुशब्दोऽल्पमहानद्यन्तरोत्पत्तिस्थानात्सरःशैलद्रुमादेर्वैलक्षण्यं विष्णुपदाधिक्यं वदन् गंगामुत्कर्षयति गंगाया नद्यन्तरसाम्यदर्शिनो दोषस्मृतेः "गंगायां वैष्णवीशक्तौ नद्यन्तरविभावनाम् । प्रकुर्वन्ति च ये मर्त्या न तैस्तु सह संवसेत् ॥" नदीति नावमन्तव्येति भविष्यद्वाक्यम् ॥ १२२ ॥ इति श्रीविष्णुमहापुराणव्याख्याने विष्णुचित्तीये द्वितीयेंशेऽष्टमोध्यायः ॥ ८ ॥ ॥ अथ ध्रुवप्रसंगात्तद्द्वारा सर्वाधारं तारापुञ्जकल्पितावयवं शिशुमाराकृति भगवतो रूपमाह तारामयमिति ॥ १ ॥ २ ॥

॥ १२० ॥ १२१ ॥ प्रस्तुतं विष्णुपदं निगमयति यत इति ॥ यतः स्थानात्समुद्भूता प्राकट्यं प्राप्ता तद्भगवत्पदमिति ॥ १२२ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां द्वितीयांशेऽष्टमोध्यायः ॥८॥ ॥ विष्णुपदं ध्रुवादीनां सर्वेषामाश्रयः सृष्ट्यादिकारणं चेत्युक्तम्—"यस्मिन्प्रतिष्ठितो भास्वान्मेढीभूतः स्वयं ध्रुवः" इत्यादिना तदेव तेन प्रकारेणेत्यपेक्षायां तत्प्रकारं वक्तुमध्यायारंभः—तारामयमिति ॥ तारामयं नक्षत्रपुंजात्मकम्, शिशुमाराकृतिं शिशुमारः सरठगोधाद्याकारः सत्त्वविशेषः तस्याकृतिरिवाकृतिर्यस्य तत् । भगवतो रूपं तस्य प्रदक्षिणावर्तकुण्डलीभूतस्योन्नमित इच्छाग्रे ध्रुवः स्थित इत्यर्थः ॥१॥ तदेतदाह—सैष इति ॥

सूर्याचन्द्रमसौ तारा नक्षत्राणि ग्रहैः सह ॥ वातानीकमयैर्बन्धैर्ध्रुवे बद्धानि तानि वै ॥ ३ ॥ शिशुमाराकृति प्रोक्तं यद्रूपं ज्योतिषां दिवि ॥ नारायणोऽयनं धाम्नां तस्याधारः स्वयं हृदि ॥ ४ ॥ उत्तानपादपुत्रस्तु तमाराध्य जगत्पतिम् ॥ स तारा शिशुमारस्य ध्रुवः पुच्छे व्यवस्थितः ॥ ५ ॥ आधारः शिशुमारस्य सर्वाध्यक्षो जनार्दनः ॥ ध्रुवस्य शिशुमारस्तु ध्रुवे भानुर्व्यवस्थितः ॥६॥ तदाधारं जगच्चेदं सदेवासुरमानुषम् ॥७॥ येन विप्र विधानेन तन्ममैकमनाः शृणु ॥ विवस्वानष्टभिर्मासैरादायापो रसात्मिकाः ॥ वर्षत्यम्बु ततश्चान्नमन्नादप्यखिलं जगत् ॥८॥ विवस्वानंशुभिस्तीक्ष्णैरादाय जगतो जलम् ॥ सोमं पुष्णात्यथेन्दुश्च वायुनाडीमयैर्दिवि ॥ नालैर्विक्षिपतेऽभ्रेषु धूमाग्न्यनिलमूर्तिषु ॥९॥ न भ्रश्यन्ति यतस्तेभ्यो जलान्यभ्राणि तान्यतः ॥ अभ्रस्थाः प्रपतंत्यापो वायुना समुदीरिताः ॥ संस्कारं कालजनितं मैत्रेयासाद्य निर्मलाः ॥ १० ॥

सूर्याचन्द्रमसाविति ॥ वातानीकमयैः वातस्कन्धमयैः ऊर्ध्वं क्रमात् सप्तस्थानस्थमेघाऽर्केन्दुनक्षत्रग्रहसप्तर्षिध्रुवाश्रयैः "आवहः प्रवहश्चैव तथैवानुवहः परः॥ संवहो विवहश्चैव तदूर्ध्वं स्यात्परावहः ॥ तथा परिवहश्चोर्ध्वं वायव्यः सप्त नेमयः" इति कूर्मोक्तेः ॥ ३ ॥ शिशुमारेति ॥ ज्योतिषां रूपमित्यन्वयः । धाम्नां तेजसां लोकानां चायनम् आश्रयो नारायणस्तस्य हृद्याधारभूतस्तिष्ठति ॥ ४ ॥ ५ ॥ ६ ॥ तदाधारमिति ॥ तदाधारं भान्वाधारम् ॥ ७ ॥ ८ ॥ उक्तं वर्षप्रकारं प्रपञ्चयति विवस्वानंशुभिरिति ॥ नालैर्मार्गैः ॥ ९ ॥ १० ॥

"सोऽचि लोपे चेत्पादपूरणम्" इति सुलोपः । स एष ध्रुवः शिशुमारवशेन भ्रमन् ग्रहान्भ्रमयति नक्षत्राणि च तं भ्रामयन्तं ध्रुवमनुयांति ॥ २ ॥ तत्र हेतुमाह—सूर्याचंद्रमसाविति ॥ नक्षत्राण्यश्विन्यादीनि इतरास्तारकाः बुधादिग्रहैस्सह वातसमूहमयैर्बन्धैर्बध्यन्ते एभिरिति बंधाः पाशाः तैर्ध्रुवे बद्धानि यतः अतस्तमनुयान्तीत्यर्थः । वाताश्च कूर्मणोक्ताः "आवहः प्रवहश्चैव तथैवानुवहः परः । संवहो विवहश्चैव तदूर्द्ध्वं स्यात्पुरोवहः ॥ ( १ ) ॥ तथा परिवहश्चोर्द्ध्वं वायोर्वै सप्त नेमयः ॥ ( २ ) ॥" इति । स्थानानि तेषामुक्तानि "मध्ये भूमेवयोर्वायुरावहः प्रवहस्ततः । मेघभास्करयोः सूर्यश्शशिनोऽनुवहस्थितः ॥ ( १ ) ॥ चन्द्रनक्षत्रगणयोः संवहो निवहस्ततः । नक्षत्रग्रहमध्यस्थो ग्रहस्सप्तर्षिमध्यगः ॥ ( २ ) वहस्ततः परिवहस्सप्तर्षिध्रुवमध्यगः । इत्येवं वायवः सप्त वहन्ति भुवनत्रयम् ॥ ( ३ ) ॥" इति ॥ ३ ॥ शिशुमारस्याश्रयं दर्शयन्नाह—शिशुमारेति ॥ ज्योतिषां नक्षत्राणां धाम्नां च सूर्यादिस्थानानाम्, दिवि शिशुमाराकृति यद्रूपं प्रोक्तं तस्य हृदि स्थितः स्वयं नारायण एव तारारूपस्तस्याधार इत्यन्वयः । धामेति पाठान्तरे ज्योतिषां धाम यद्रूपं प्रोक्तं तन्नारायणाश्रयं कथमित्यत आह—हृदिस्थः सन्स्वयं नारायणस्तस्याधार इति ॥ ४ ॥ उत्तानपादेति ॥ स तूत्तानपादपुत्रो ध्रुवः तं जगत्पतिं नारायणम् आराध्य तारामयस्य शिशुमारस्य पुच्छे स्थितः ॥ ५ ॥ तदेव स्पष्टयति आधारः शिशुमारस्येत्यादिना ॥ ६ ॥ तदाधारमिति ॥ तदाधारं भान्वाश्रयम् ॥ ७ ॥ तदेवाह—येनेत्यादिसार्धेन ॥ ८ ॥ सूर्यादन्ननिष्पादकवृष्टिकारणमाह—विवस्वानंशुभिरित्यादिचतुर्भिः ॥ ९ ॥ धूमाग्न्यनिलापोमयानामपि मेघानां जलाधारत्वमभ्रसमाख्ययोपपादयति—न भ्रंश्यन्तीति ॥ संस्कारं माधुर्यरूपमतिशयम् ॥ १० ॥

सरित्समुद्रभौमास्तु तथापः प्राणिसम्भवाः ॥ चतुष्प्रकारा भगवानादत्ते सविता मुने ॥ ११ ॥ आकाशगंगासलिलं तथादायगभस्तिमान् ॥ अनभ्रगतमेवोर्व्यां सद्यः क्षिपति रश्मिभिः ॥ १२॥ तस्य संस्पर्शनिर्धूतपापपंको द्विजोत्तम ॥ न याति नरकं मर्त्यो दिव्यं स्नानं हि तत्स्मृतम् ॥ १३ ॥ दृष्टसूर्यं हि यद्वारि पतत्यभ्रैर्विना दिवः ॥ आकाशगंगासलिलं तद्गोभिः क्षिप्यते रवेः ॥ १४ ॥ कृत्तिकादिषु ऋक्षेषु विषमेषु च यद्दिवः ॥ दृष्टार्कपतितं ज्ञेयं तद्गांगं दिग्गजोज्झितम् ॥१५॥ युग्मर्क्षेषु च यत्तोयं पतत्यर्कोज्झितं दिवः ॥ तत्सूर्यरश्मिभिः सर्वं समादाय निरस्यते ॥ १६ ॥ उभयं पुण्यमत्यर्थं नृणां पापभयापहम् ॥ आकाशगंगासलिलं दिव्यं स्नानं महामुने ॥ १७ ॥ यत्तु मेघैः समुत्सृष्टं वारि तत्प्राणिनां द्विज ॥ पुष्णात्यौषधयः सर्वा जीवनायामृतं हि तत् ॥ १८ ॥ तेन वृद्धिं परां नीतः सकलश्चौषधीगणः ॥ साधकः फलपाकान्तः प्रजानां द्विज जायते ॥ १९ ॥ तेन यज्ञान्यथाप्रोक्तान्मानवाः शास्त्रचक्षुषः ॥ कुर्वन्त्यहरहस्तैश्च देवानाप्याययन्ति ते ॥ २० ॥ एवं यज्ञाश्च वेदाश्च वर्णाश्च द्विजपूर्वकाः ॥ सर्वे देवनिकायाश्च सर्वे भूतगणाश्च ये ॥ २१ ॥ वृष्ट्या धृतमिदं सर्वमन्नं निष्पाद्यते यया ॥ सापि निष्पाद्यते वृष्टिः सवित्रा मुनिसत्तम ॥ २२ ॥ आधारभूतः सवितुर्ध्रुवो मुनिवरोत्तम ॥ ध्रुवस्य शिशुमारोऽसौ सोपि नारायणात्मकः ॥ २३ ॥

॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ कृत्तिकादिष्विति ॥ कृत्तिकामृगशिरःप्रभृत्ययुग्मनक्षत्रेष्वर्के स्थिते ॥ १५ ॥ युग्मर्क्षेष्विति ॥ एवं रोहिण्यार्द्रादिषु युग्मेष्वर्के स्थिते अर्काक्रान्तनक्षत्रादेव वृष्टिव्यवहारलिंगात् पूर्वाषाढागतो भानुरित्यादेः ॥ १६ ॥ १७ ॥ यत्त्विति ॥ ओषधयः ओषधीः ॥ १८ ॥ तेनेति ॥ साधकः शरीरोत्पत्तिपोषणयोः ॥ १९ ॥ तेनेति ॥ ओषधिगणेन तैः यज्ञैः ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥

अभ्रगर्भावस्थानात्पूर्वमापो नानारसा इत्याह–सरिदिति ॥ सरित्समुद्रगता भूमिगताश्चेत्यर्थः । प्राणिसम्भवाः प्राणिदेहस्थाः ॥ ११ ॥ प्रसंगाद्वृष्टिविशेषं दिव्यस्नानमाह आकाशगंगेत्यादि षड्भिः ॥ १२ ॥ ॥ १३ ॥ १४ ॥ कृत्तिकादिष्विति ॥ कृत्तिका मृगशीर्षादिविषमनक्षत्रेषु स्थितेऽर्के दृष्टार्कमनभ्रं यदंबु पतति ॥ १५ ॥ युग्मर्क्षेष्विति ॥ एवं युग्मर्क्षेषु रोहिण्यार्द्रादिसमनक्षत्रेषु स्थितेऽर्के इति ज्ञेयम् । सूर्याक्रांतनक्षत्रैरेव व्यवहारदर्शनात् ॥ १६ ॥ १७ ॥ प्रासंगिकं परिसमाप्य पूर्वोक्तमेव वृष्टिमनुवर्तयति यत्त्वित्यादित्रिभिः ॥ १८ ॥ तेनेति ॥ साधकः दृष्टादृष्टहेतुः प्रजानां जायते ॥ १९ ॥ २० ॥ अध्यायार्थमुपसंहरति–एवमित्यादिचतुर्भिः ॥ २१ ॥ २२ ॥ २३ ॥

हृदि नारायणस्तस्य शिशुमारस्य संस्थितः ॥ बिभर्त्ता सर्वभूतानामादिभूतः सनातनः ॥ २४ ॥ इति श्रीविष्णुमहापुराणे द्वितीयेंशे नवमोऽध्यायः ॥ ९ ॥ ॥ श्रीपराशर उवाच ॥ त्र्यशीतिमण्डलशतं काष्ठयोरन्तरं द्वयोः ॥ आरोहणावरोहाभ्यां भानोरब्देन या गतिः ॥ १ ॥ स रथोधिष्ठितो देवैरादित्यै ऋषिभिस्तथा ॥ गन्धर्वैरप्सरोभिश्च ग्रामणीसर्पराक्षसैः ॥ २ ॥ धाता क्रतुस्थला चैव पुलस्त्यो वासुकिस्तथा ॥ रथभृद्ग्रामणीर्हेतिस्तुम्बुरुश्चैव सप्तमः ॥ ३ ॥ एते वसन्ति वै चैत्रे मधुमासे सदैव हि ॥ मैत्रेय स्यन्दने भानोः सप्तमासाधिकारिणः ॥ ४ ॥ अर्यमा पुलहश्चैव रथौजाः पुञ्जिकस्थला ॥ प्रहेतिः कच्छवीरश्च नारदश्च रथे रवेः ॥ ५ ॥

हृदीति ॥ विभर्त्ति शिशुमारम् ॥२४॥ इति श्रीविष्णुमहापुराणव्याख्याने विष्णुचित्तीये द्वितीयेंशे नवमोऽध्यायः ॥९॥ ॥ अथ भानुरथस्य दिनभ्रमणवृत्तसंख्यामाह—त्र्यशीतीति॥ काष्ठयोरन्तरम् उदग्दक्षिणायनयोर्मध्ये विषुवत्प्रदेशः त्र्यशीतिशतधा भिन्नः आरोहणावरोहणाभ्यां भानोरब्देन या गतिः स्यात्। गम्यत इति गतिः। महाक्षे हि तत्तद्वृत्तरेखान्तरालमुदगयनेऽनुदिनं मेर्वभिमुखो रथो यावत्काष्ठान्तमारोहति याम्यायने तु तान्येव मण्डलान्तरालानि प्रत्यहं मानसोत्तराभिमुखोऽवरोहति यावत्काष्ठम्। एवं च भानोरेकाब्दसाध्याद्वादशराशिभोगात्मिका षट्षष्ट्युत्तरत्रिशतत्रयवारभ्रमणगतिः स्यात्। सर्वोत्तरमेरुपतितगंगाप्रवाहाणां तत्तद्दक्षिणाब्धिप्रवेशोक्त्या मेरोरुन्नतनिश्चयान्महाक्षस्य च भूमेरुपरि लक्षोच्छ्रितत्वाद्रथस्य उदगारोहो दक्षिणावरोहश्च युक्तः। तथा यदिन्द्रप्रागुदक्तिर्यग्गतिः अधरादुदक्तादिति च याम्यदिशोरधरोत्तरत्वं श्रूयते ॥१॥ स रथ इत्यादि ॥ ग्रामण्यो यक्षाः ॥ २ ॥ धातेति ॥ रथभृद्ग्रामणीः रथभृन्नाम यक्षः हेतिः राक्षसः ॥ रथकृदिति च पाठः ॥ ३ ॥ ४ ॥ अर्यमेति ॥ रथौजा यक्षः प्रहेतिः राक्षसः कच्छवीरः सर्पः नारदो गन्धर्वः ॥ ५ ॥

हृदीति ॥ तस्य शिशुमारस्य हृदि स्थितो नारायणः तद्द्वारा सर्वभूतानां भर्ता धारकः। बिभर्ति सर्वभूतानामिति पाठे कर्मणि षष्ठी ॥ २४ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाख्यविष्णुमहापुराणव्याख्यायां द्वितीयांशे नवमोऽध्यायः ॥ ९ ॥ ॥ अथ प्रतिमासं सूर्यरथपरिभ्रमाधिकारिणो वक्ष्यन्नुत्तरायणदक्षिणायनयोरनुलोमप्रतिलोमं च गन्तव्यानि क्रान्तिवृत्तान्याह--त्र्यशीतीति ॥ उत्तरदक्षिणकाष्ठयोर्मध्यं त्र्यशीत्युत्तरशतं मण्डलं भानोर्गतिर्गन्तव्यं कर्म। आरोहणावरोहणाभ्यामिति। युगाक्षकोटिबद्धौ वायुपाशौ ध्रुवो यदाऽऽकर्षति तदोत्तरायणे प्रत्यहमभ्यन्तरैकैकमण्डलप्रवेशे रथस्यारोहणं भवति। यदा तु तौ पाशौ ध्रुवः प्रसारयति तेषु दक्षिणायनेष्वेषु मंडलेषु प्रतिलोमं वहिरेकैकमण्डलं प्रविशतो रथस्यावरोहणं भवति। तदुक्तं मात्स्ये--"आकृष्यते यदा तौ तु ध्रुवेण समधिष्ठितौ। तदासोभ्यंतरं सूर्यो भ्रमते मण्डलानि तु ॥ (१) ॥ ध्रुवेण मुच्यमाने तु पुरा रश्मियुगे, यदा। तदैव बाह्यतः सूर्यो भ्रमते मण्डलानि च ॥ (२) ॥" इति ॥ १ ॥ स इति ॥ देवैरादित्यैः। आदित्या एव देवास्तैः ग्रामणीर्यक्षः ॥ २ ॥ तानेवादित्यादीन् प्रतिमासं सप्तसप्तानुक्रामति धातेत्यादिना--विष्णुशक्त्युपबृंहिता इत्यन्तेन--धातेति ॥ धाता सूर्यः। रथभृत्संज्ञो ग्रामणीः। हेतिः राक्षसः ॥ ३ ॥ एत इति ॥ चैत्र एवमधुमासस्तस्मिन् ॥ ४ ॥ अर्यमेति ॥ रथौजाः

(१) सर्पोश्चार्के — इति विष्णुचित्तीयपाठः । सर्पिश्चार्के इति श्रीधरीयपाठः।



माधवे निवसन्त्येते शुचिसंज्ञे निबोध मे ॥ ६ ॥ मित्रोत्रिस्तक्षको रक्षः पौरुषेयोथ मेनका ॥ हाहा रथस्वनश्चैव मैत्रेयैते वसन्ति वै ॥ ७ ॥ वरुणो वसिष्ठो रम्भा च सहजन्या हुहूरथः ॥ रथचित्रस्तथा शुक्रे वसन्त्याषाढसंज्ञके ॥ ८ ॥ इन्द्रो विश्वावसुः स्रोता एलापुत्रस्तथांगिराः ॥ प्रम्लोचा च नभस्येते सर्पि(१)श्चार्के वसन्ति वै ॥९॥ विवस्वानुग्रसेनश्च भृगुरापूरणस्तथा ॥ अनुम्लोचा शंखपालो व्याघ्रो भाद्रपदे तथा ॥ १० ॥ पूषा च सुरुचिर्वातो गौतमोथ धनञ्जयः ॥ सुषेणोऽन्यो घृताची च वसन्त्याश्वयुजे रवौ ॥ ११ ॥ विश्वावसुर्भरद्वाजः पर्जन्यैरावतौ तथा ॥ विश्वाची सेनजिच्चापि कार्त्तिके च वसन्ति वै ॥ १२ ॥ अंशः काश्यपताक्ष्यौस्तु महापद्मस्तथोर्वशी ॥ चित्रसेनस्तथा विद्युन्मार्गशीर्षेधिकारिणः ॥ १३ ॥ क्रतुर्भगस्तथोर्णायुः स्फूर्जः कार्कोटकस्तथा ॥ अरिष्टनेमिश्चैवान्या पूर्वचित्तिर्वराप्सराः ॥ १४ ॥ पौषमासे वसन्त्येते सप्त भास्करमण्डले ॥ लोकप्रकाशनार्थाय विप्रवर्याधिकारिणः ॥ १५ ॥

॥ ६ ॥ मित्र इति ॥ कच्छनीरश्चेति पाठः । रथस्वनो यक्षः ॥ ७ ॥ वरुण इति ॥ वरुणो वशिष्ठो नागश्चेति पाठः । ग्रीष्मर्तौ तक्षको नाग एवेति लैङ्गोक्तेः । रथो राक्षसः रथचित्रो यक्षः ॥ ८ ॥ इन्द्र इति ॥ स्रोतो यक्षः । सर्पाः सकारान्तोयं शब्दः राक्षसनाम । विश्वावसुश्रोतः सर्पाश्चार्क इति च पाठः ॥ ९ ॥ विवस्वानिति ॥ उग्रसेनो गन्धर्वः आपूरणो यक्षः व्याघ्रो राक्षसः ॥ १० ॥ पूषेति ॥ वसुरुचिर्गन्धर्वः वातो राक्षसः धनञ्जयः सर्पः सुषेणो यक्षः ॥ ११ ॥ विश्वावसुरिति ॥ विश्वावसुर्गन्धर्वः ऐरावतः सर्पः सेनजिद्यक्षः ॥ १२ ॥ अंशेति ॥ अंशः राक्षसः ताक्ष्यों यक्षः महापद्मः सर्पः विद्युद्राक्षसः ॥ १३ ॥ क्रतुरिति ॥ ऊर्णायुर्गन्धर्वः । सूर्यः कार्कोट इति पाठः । सूर्यो राक्षसः अरिष्टनेमिर्यक्षः ॥ १४ ॥ १५ ॥

यक्षः । प्रहेतिः राक्षसः । कच्छवीरः सर्पः ॥ ५ ॥ माधव इति ॥ माधवे वैशाखे । शुचिसंज्ञेति ज्येष्ठो विवक्षितः ॥ ६ ॥ मित्र इति ॥ पौरुषेयो राक्षसः । रथस्वनो यक्षः ॥ ७ ॥ वरुण इति ॥ वरुणः सूर्यः । रंभा च सहजन्येति पाठे फाल्गुने वक्ष्यमाणरंभाव्यावृत्त्यर्थम् । सहजन्येति संज्ञान्तरेण तस्या विशेषणं रथचित्र इति च तदा यक्षसर्पयोरेकं नाम । "वरुणो वशिष्ठो नागश्च सहजन्याहुहूरथः" इति पाठे नागसंज्ञः सर्पः रथः राक्षसः आषाढसंज्ञिक इतिव्याख्यानादाषाढ एवात्र शुक्रः । पूर्वोक्तशुचिसंज्ञो ज्येष्ठ इति ज्ञेयम् ॥ ८ ॥ इन्द्र इति ॥ इन्द्रः सूर्यः । नभसि श्रावणे । सर्पिः राक्षसः ।, आर्के सूर्यरथे ॥ ९ ॥ विवस्वानिति ॥ उग्रसेनो गन्धर्वः आपूरणो यक्षः । व्याघ्रो राक्षसः ॥ १० ॥ पूषेति ॥ वसुरुचिर्गन्धर्वः । वातो राक्षसः । धनञ्जयः सर्पः । सुषेणो यक्षः ॥ ११ ॥ विश्वावसुरिति ॥ विश्वावसुसंज्ञ एव अपरो गन्धर्वः । पर्जन्यः सूर्यः । ऐरावतः सर्पः । श्येनजित्संज्ञकौ यक्षराक्षसौ । श्येनजिच्चाप इति पाठे आपो राक्षसः ॥ १२ ॥ अंशकाश्यपताक्ष्यौस्त्विति ॥ अंशः सूर्यः । ताक्ष्यों यक्षः । महापद्मः सर्पः । चित्रसेनो गन्धर्वः । विद्युद्राक्षसः ॥ १३ ॥ क्रतुरिति ॥ क्रतुः ऋषिः । भगः सूर्यः । ऊर्णायुर्गंधर्वः । ऊर्जो राक्षसः । कार्कोटकः सर्पः । अरिष्टनेमिर्यक्षः ॥ १४ ॥ १५ ॥

त्वष्टाथ जमदग्निश्च कम्बलोथ तिलोत्तमा ॥ ब्रह्मोपेतोथ ऋतजिद्धृतराष्ट्रोथ सप्तमः ॥ १६ ॥ माघमासे वसन्त्येते सप्त मैत्रेय भास्करे ॥ श्रूयतां चापरे सूर्ये फाल्गुने निवसन्ति ये ॥ १७ ॥ विष्णुरश्वतरो रम्भा सूर्यवर्चाश्च सत्यजित् ॥ विश्वामित्रस्तथा रक्षो यज्ञोपेतो महामुने ॥ ॥ १८ ॥ मासेष्वेतेषु मैत्रेय वसन्त्येते तु सप्तकाः ॥ सवितुर्मण्डले ब्रह्मन्विष्णुशक्त्युपबृंहिताः ॥ १९ ॥ स्तुवन्ति मुनयः सूर्यं गंधर्वैर्गीयते पुरः ॥ नृत्यन्त्यप्सरसो यान्ति सूर्यस्यानुनिशाचराः ॥ २० ॥ वहन्ति पन्नगा यक्षैः क्रियतेऽभीषुसंग्रहः ॥ २१ ॥ वालखिल्यास्तथैवैनं परिवार्य समासते ॥ २२ ॥

त्वष्टेति॥ कम्बलः सर्पः ब्रह्मोपेतो राक्षसः । ब्रह्मापेत इति च पाठः । ऋतुजिद्यक्षः धृतराष्ट्रो गन्धर्वः ॥१६॥१७॥ विष्णुरिति ॥ अश्वतरः सर्पः सूर्यवर्चा गन्धर्वः सत्यजिद्यक्षः श्रावणकार्त्तिकयोर्द्वौ विश्वावसू गन्धर्वौ ॥१८॥ मासेष्विति ॥ एते च सप्तगणाः कौर्मे विभज्योक्ताः "धातार्यमा च मित्रश्च वरुणश्चेन्द्र एव च ॥ विवस्वानथ पूषा च पर्जन्यश्चांशुरेव च ॥ भगस्त्वष्टा च विष्णुश्च आदित्या द्वादश स्मृताः । पुलस्त्यः पुलहश्चात्रिर्वसिष्ठोऽथाङ्गिरा भृगुः॥ गौतमश्च भरद्वाजः काश्यपः क्रतुरेव च । जमदग्निः कौशिकश्च मुनयो ब्रह्मवादिनः ॥ रथकृच्च रथौजाश्च ग्रामणीश्च रथस्वनः । चित्रस्रोताः पूरणश्च सुषेणः सेनजित्तथा॥ तार्क्ष्यश्चारिष्टनेमिश्च ऋतुजित्सत्यजित्तथा" एते यक्षाः । "अथ हेतिः प्रहेतिश्च पौरुषेयो वधस्तथा। सर्पो व्याघ्रस्तथा वातश्चापो विद्युद्दिवाकरः॥ ब्रह्मोपेतश्च विप्रेन्द्रो यज्ञोपेतश्च राक्षसाः । वासुकिः कच्छवीरश्च तक्षकः सर्पपुङ्गवः । एलापुत्रः शंखपालस्तथैरावतसंज्ञितः ॥ धनञ्जयो महापद्मस्तथा कार्कोटको द्विजाः ॥ कम्बलोश्वतरश्चैव वहन्त्येनं यथाक्रमम् । तुम्बुरुर्नारदो हाहाहूहूर्विश्वावसुस्तथा ॥ उग्रसेनो वसुरुचिर्विश्वावसुरथापरः । चित्रसेनस्तथोर्णायुर्धृतराष्ट्रो द्विजोत्तमाः ॥ सूर्यवर्चा द्वादशैते गन्धर्वा गायतां वराः । कृतस्थलाप्सरोवर्या तथान्या पुञ्जिकस्थला ॥ मेनका सहजन्या च प्रम्लोचा च द्विजोत्तमाः । अनुम्लोचा घृताची च विश्वाची चोर्वशी तथा ॥ अन्या च पूर्वचित्तिः स्यादन्या चैव तिलोत्तमा । रम्भा चेति" ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

त्वष्टेति ॥ त्वष्टा सूर्यः । कंबलः सर्पः । ब्रह्मोपेतो राक्षसः । ऋतजित् यक्षः । धृतराष्ट्रो गन्धर्वः ॥ १६ ॥ १७ ॥ विष्णुरिति ॥ विष्णुः सूर्यः । अश्वतरः सर्पः । सूर्यवर्चाः गंधर्वः । सत्यजित् यक्षः । यज्ञोपेतो राक्षसः ॥ १८ ॥ १९ ॥ तेषां व्यापारविशेषानाह स्तुवन्तीत्यादिसार्धेन ॥ २० ॥ वहन्तीति ॥ वहन्तीति वहनानुकूलया रथं सन्नह्यन्तीत्यर्थः । 'सन्नह्यन्ति रथं नागाः' इति शुकोक्तेः । अभीषुसंग्रहः रश्मिसंयोजनम् ॥ २१ ॥ नित्यसेवकानाह—वालखिल्या इति ॥ २२ ॥

सोयं सप्तगणः सूर्यमण्डले मुनिसत्तम ॥ हिमोष्णवारिवृष्टीनां हेतुः स्वसमयं गतः ॥ २३ ॥ इति श्रीविष्णुमहापुराणे द्वितीयेंशे दशमोऽध्यायः ॥ १० ॥ ॥ मैत्रेय उवाच ॥ यदेतद्भगवानाह गणः सप्तविधो रवेः ॥ मण्डले हिमतापादेः कारणं तन्मया श्रुतम् ॥ १ ॥ व्यापारश्चापि कथितो गन्धर्वोरगरक्षसाम् ॥ ऋषीणां वालखिल्यानां तथैवाप्सरसां गुरो ॥ २ ॥ यक्षाणां च रथे भानोर्विष्णुशक्तिधृतात्मनाम् ॥ किं चादित्यस्य यत्कर्म तन्नात्रोक्तं त्वया मुने ॥ ३ ॥ यदि सप्तगणो वारि हिममुष्णं च वर्षति ॥ तत्किमत्र रवेर्येन वृष्टिः सूर्यादितीर्यते ॥ ४ ॥ विवस्वानुदितो मध्ये यात्यस्तमिति किं जनः ॥ ब्रवीत्येतत्समं कर्म यदि सप्तगणस्य तत् ॥ ५ ॥ पराशर उवाच ॥ मैत्रेय श्रूयतामेतद्यद्भवान्परिपृच्छति ॥ यथा सप्तगणेऽप्येकः प्राधान्येनाधिको रविः ॥ ६ ॥ सर्वशक्तिः परा विष्णो ऋग्यजुःसामसंज्ञिता ॥ सैषा त्रयी तपत्यंहो जगतश्च हिनस्ति या ॥ ७ ॥ सैष विष्णुः स्थितः स्थित्यां जगतः पालनोद्यतः ॥ ऋग्यजुः सामभूतोन्तः सवितुर्द्विज तिष्ठति ॥ ८ ॥ मासिमासि रविर्योयस्तत्र तत्र हि सा परा ॥ त्रयीमयी विष्णुशक्तिरवस्थानं करोति वै ॥ ९ ॥

सोयमिति ॥ हिमोष्णवारिशब्दैर्वृष्टिशब्दः प्रत्येकं सम्बध्यते । एष गणो हेमंतादिस्वकाले हिमादेः स्वभक्तानां पापक्षयादेश्च हेतुर्भवति "एते तपन्ति वर्षन्ति भान्ति वान्ति स्रवन्ति च । भूतानामशुभं किंचिद्व्यपोहन्तीह कीर्तिताः" इति लैंगवायव्योक्तेः ॥ २३ ॥ इति श्रीविष्णुमहापुराणव्याख्याने विष्णुचित्तीये द्वितीयेंशे दशमोऽध्यायः ॥ १० ॥ ॥ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ सर्वशक्तिरित्यादि ॥ सर्वशक्तिः संपूर्णशक्तिः यत्तपति यच्च जगतोऽहो हिनस्ति सैषा विष्णोः परा सर्वशक्तिः ऋग्यजुःसामसंज्ञिता त्रयीत्यन्वयः ॥ ७ ॥ सैषेति ॥ जगतः पालनोद्यतः स्थित्यां स्थितो विष्णुः सैव शक्तिः । शक्तिशक्तिमतोरभेदात्सामानाधिकरण्यनिर्देशः ऋग्यजुःसामशरीरो विष्णुः सवितुरन्तस्तिष्ठति अतो रवेः प्राधान्यम् ॥ ८ ॥ ९ ॥

सप्तानां साधारणं कर्माह--सोयमिति ॥ सोऽयं सप्तगणः हिमोष्णवारिवृष्टीनां हेतुः । 'स्वसमयागत' इति पाठे स्वस्वकाले हेमंतग्रीष्मादौ, आगतः सन् हिमवृष्ट्यादीनां हेतुरित्यर्थः ॥ २३ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यविष्णुमहापुराणव्याख्यायां द्वितीयांशे दशमोऽध्यायः ॥ १० ॥ ॥ उक्तानुवादपूर्वकं रवेर्विशेषं मैत्रेयः पृच्छति यदेतदित्यादिपञ्चभिः । नन्वादित्यस्यापि वृष्टिलक्षणं कर्मोक्तमेव विवस्वानष्टभिर्मासैरित्यादिना अत आह यदिति ॥ सोयं सप्तविधो गणः हिमोष्णवृष्ट्यादीनां हेतुः साधारणस्योक्तत्वादित्यर्थः ॥ १ ॥ २ ॥ ३ ॥ अत्र विषये पुनर्मैत्रेयश्शङ्कते—यदिति ॥ ४ ॥ ननु साधारणत्वादेव रवेरपि तत्कर्म भवत्येव तत्राह—विवस्वानिति ॥ ५ ॥ विष्णुशक्त्यधिष्ठानातिशयाद्रविप्राधान्येन सर्वोप्ययं व्यवहारो युक्त इति परिहारमाह--मैत्रेयेत्यादिना ॥ ६ ॥ यदिति ॥ यद्यस्माद्या परा सर्वार्थप्रकाशिका विष्णोस्त्रयीरूपा शक्तिस्सैवैषा रविरूपेण तपति अंहश्च पापमुपासिता सती हिनस्ति अतः प्राधान्येनाधिको रविः "सैषा त्रय्येव विद्या तपति" इति श्रुतेः । 'सर्वशक्तिः' इति पाठे सर्वा शक्तिः समग्रा शक्तिरित्यर्थः ॥ ७ ॥ अतस्तस्या विष्णुना अभेदमेवाभिप्रेत्याह—सैषेति ॥ जगतः स्थित्यां स्थितस्सन् पालनायोद्यतोविष्णुर्नाम शक्तिरेवेत्यन्वयः ॥ ८ ॥ ९ ॥

ऋचस्तुवन्ति पूर्वाह्ने मध्याह्नेथ यजूंषि वै ॥ बृहद्रथन्तरादीनि सामान्यह्नःक्षये रविम् ॥ १० ॥ अंगमेषा त्रयी विष्णो ऋग्यजुः सामसंज्ञिता ॥ विष्णुशक्तिरवस्थानं सदादित्ये करोति सा ॥११॥ न केवलं रवेः शक्तिर्वैष्णवी सा त्रयीमयी ॥ ब्रह्माथ पुरुषो रुद्रस्त्रयमेतत्त्रयीमयम् ॥१२॥ सर्गादौ ऋङ्मयो ब्रह्मा स्थितौ विष्णुर्यजुर्मयः ॥ रुद्रः साममयोन्ताय तस्मात्तस्याशुचिर्ध्वनिः ॥ १३ ॥ एवं सा सात्त्विकी शक्तिर्वैष्णवी या त्रयीमयी ॥ आत्मसप्तगणस्थं तं भास्वंतमधितिष्ठति ॥ १४ ॥ तया चाधिष्ठितः सोपि जाज्वलीति स्वरश्मिभिः ॥ तमः समस्तजगतां नाशं नयति चाखिलम् ॥ १५ ॥ स्तुवन्ति चैनं मुनयो गन्धर्वैर्गीयते पुरः ॥ नृत्यन्त्योऽप्सरसो यान्ति तस्य चानु निशाचराः ॥ १६ ॥ वहन्ति पन्नगा यक्षैः क्रियतेऽभीषुसंग्रहः ॥ वालखिल्यास्तथैवैनं परिवार्य समासते ॥ १७ ॥ नोदेता नास्तमेता च कदाचिच्छक्तिरूपधृक् ॥ विष्णुर्विष्णोः पृथक् तस्य गणास्सप्तविधोऽप्ययम् ॥ १८ ॥

ऋच इति ॥ ऋचः स्तुवन्ति रवौ तिष्ठन्तं विष्णुमिति शेषः ॥ १० ॥ अङ्ग इति ॥ अङ्गशक्तिशब्दौ शरीरपर्यायौ शब्दमूर्त्तिधरस्यैतद्रूपमिति ह्युक्तम् ॥ अंश एवेति च पाठः ॥ ॥ ११ ॥ सा वैष्णवी त्रयीमयी शक्तिर्न केवलं रवेरेवान्तस्था किन्तु ब्रह्मादीनामपीत्याह न केवलमिति ॥ १२ ॥ सर्गादाविति ॥ तस्मादन्तहेतुरुद्रसम्बन्धात्तस्य साम्नः ॥ १३ ॥ उपसंहरति एवमिति ॥ सात्त्विकी शुद्धसत्त्वमयी वैष्णवी शक्तिः आत्मसप्तगणस्थं स्वशरीरभूतसप्तवर्गान्तर्गतं भास्वन्तमधितिष्ठति भास्वत्यतिशयेन तिष्ठति ॥ १४ ॥ १५ ॥ प्राधान्यादन्येपि स्तुत्याद्यैरेनमुपासत इत्याह स्तुवन्ति चैनमिति ॥ १६ ॥ १७ ॥ नेति ॥ शक्तिरूपधृग्विष्णुरधिष्ठाता स्थायीनोदेति नास्तमेति अधिष्ठेयात्संचारिणो गणाद्भिन्नत्वात् ॥ १८ ॥

ऋच इति ॥ ऋचस्स्तुवन्तीत्यत्र श्रुतिः "ऋचः पूर्वाह्णे दिवि देव ईयते यजुर्वेदे तिष्ठति मध्ये अह्नः सामवेदेनास्तमये महीयते" इत्यादि ॥ १० ॥ अङ्गमिति ॥ अङ्गं मूर्त्तिः ॥ ११ ॥ नेति ॥ न केवलं रवेरेव सा शक्तिरधिष्ठात्री किं तु ब्रह्मादीनामपीत्याह–ब्रह्मेति ॥ पुरुषो विष्णुः त्रयीमयं त्रयीप्रधानं तदधिष्ठितमित्यर्थः ॥ १२ ॥ सर्गादाविति ॥ यस्मात्सामशक्त्या रुद्रोऽन्तं करोति तस्मान्नाशकरत्वात्तस्य साम्नो ध्वनिरशुचिः अशुचिदेशकालादिवद्वेदान्तरस्यानध्यायत्वापादक इत्यर्थः । न सामध्वनावृग्यजुषी इति गौतमस्मृतेः ॥ १३ ॥ तत्र सप्तगणसंस्थाधिष्ठेये सप्तगणे स्थितं भास्वन्तं सूर्यम् । अतिशयो नाधितिष्ठति ॥ १४ ॥ तयेति ॥ जाज्वलीति अतिशयेन प्रकाशयति ॥ १५ ॥ अतस्तस्य प्राधान्यात्पूर्वोक्तैस्स्वव्यापारै ऋषिमुख्यास्तं सेवंत इत्याह–स्तुवंतीत्यादिद्वाभ्याम् ॥ १६ ॥ १७ ॥ "ऋग्यजुस्सामभूतोन्तस्सवितुर्द्विज तिष्ठति । विष्णुशक्तिरवस्थानं सदादित्ये करोति सा ॥" न केवलं रवेश्शक्तिरित्यादिषु त्रयीशक्तिरूपस्य विष्णोः प्रतिमासं भिन्नेष्वागमापायिषु सूर्येष्ववस्थानोक्तेस्सूर्यादिवत्प्रतिमासं विष्णोरप्यागमापायित्वं प्रतीतं वारयति–नेति ॥ नोदेता उदयं न गतः नास्तमेता अस्तं च न गतः । अधिष्ठाता विष्णुः, प्रतिमासमागमापायी न भवति किं तु तदधिष्ठेयस्सप्तमयस्सप्तभिस्सम्पाद्योयं सर्वो

स्तम्भस्थदर्पणस्येव योऽयमासन्नतां गतः ॥ छायादर्शनसंयोगं स तं प्राप्नोत्यथात्मनः ॥ १९ ॥ एवं सा वैष्णवी शक्तिर्नैवापैति ततो द्विज ॥ मासानुमासं भास्वन्तमध्यास्ते तत्र संस्थितम् ॥ २० ॥ पितृदेवमनुष्यादीन्स सदाप्याययन्प्रभुः ॥ परिवर्तत्यहोरात्रकारणं सविता द्विज ॥ २१ ॥ सूर्यरश्मिसुषुम्णायस्तर्पितस्तेन चन्द्रमाः ॥ कृष्णपक्षेमरैः शश्वत्पीयते वै सुधामयः ॥ २२ ॥ पीतं तं द्विकलं सोमं कृष्णपक्षक्षये द्विज ॥ पिबन्ति पितरस्तेषां भास्करात्तर्पणं तथा ॥ २३ ॥ आदत्ते रश्मिभिर्यंतु क्षितिसंस्थं रसं रविः ॥ तमुत्सृजति भूतानां पुष्ट्यर्थं सस्यवृद्धये ॥ २४ ॥ तेन प्रीणात्यशेषाणि भूतानि भगवान्रविः ॥ पितृदेवमनुष्यादीनेवमाप्याययत्यसौ ॥ २५ ॥

स्तंभस्थेति ॥ छायादर्शनसंयोगं छायायाः प्रतिबिम्बस्य आदर्शनस्य दर्पणस्य च संयोगम् ॥ १९ ॥ एवमिति ततो दर्पणस्थानीयात्सूर्यपदाधिकारिणः तत्र सूर्यपदे मासानुमासं मासान्मासान्तरं प्रतिमासमित्यर्थः । पुंखानुपुंखमितिवत् । यद्वा मासेषु द्वादशसु अनुमासेऽधिकमासे च तेन यो मासोधिकस्तन्मासोक्तसप्तगणावृत्तिः स्यात्॥ ॥ २० ॥ २१ ॥ पित्राद्याप्यायनप्रकारमाह सूर्यरश्मिरिति ॥ तर्पितः शुक्लप्रतिपदादिक्रमात्पूरितः पीयते । प्रतिपदादिपानं हि क्षयहेतुः अतः षोडशकलस्य कृष्णप्रतिपदमारभ्य एकैका कला अमरैः पीयते "प्रथमां पिबते वह्निः" इत्यादिस्मृतेः ॥ २२ ॥ पीतमिति ॥ अतः कृष्णचतुर्दश्यन्ते द्विकलत्वं कृष्णपक्षक्षये दर्शे पिबन्ति । एककलावर्जं तेषां देवपितॄणां तथा उक्तप्रकारेण ॥ २३ ॥ मनुष्यादितर्पणमाह—आदत्त इति ॥ भूतादीनां मनुष्यादीनाम् ॥ २४ ॥ २५ ॥

प्यागमापायी गणः ततः पृथगेव ॥ १८ ॥ एतदेव स्पष्टयति स्तम्भस्थेत्यादिद्वाभ्याम्—स्तंभस्थेति ॥ स्तम्भस्थदर्पणस्य सान्निध्यं योयो जनः प्राप्नोति स सर्वोपि क्रमेण आत्मनः छायादर्शनसंयोगं प्रतिबिंबाभासेन संबंधं यथा प्राप्नोति ॥ १९ ॥ एवमिति ॥ एवं स्तम्भस्थानीये सूर्येऽवस्थिता सा दर्पणस्थानीया वैष्णवी शक्तिस्ततस्थानान्नैवापगच्छति तत्रस्थैव तु मासानुमासं प्रतिमासं तत्र संस्थितम् आगंतृजनस्थानीयं भास्वंतमध्यास्ते अधितिष्ठति ॥ २० ॥ एवं विष्णुशक्त्यधिष्ठितस्य रवेः पित्रादितर्पकत्वमाह—पितृदेवेति ॥ आप्याययंस्तर्पयन् परिवर्त्तते परिभ्रमतीत्यर्थः ॥ २१ ॥ २२ ॥ २३ ॥ तत्र देवपितृतर्पणप्रकारमाह—आदत्त इत्यादिद्वाभ्याम् ॥ २४ ॥ २५ ॥

पक्षतृप्तिं तु देवानां पितृणां चैव मासिकीम् ॥ शश्वत्तृप्तिं च मर्त्यानां मैत्रेयार्कः प्रयच्छति ॥ २६ ॥ इति श्रीविष्णुमहापुराणे द्वितीयेंश एकादशोऽध्यायः ॥ ११ ॥ ॥ श्रीपराशर उवाच ॥ रथस्त्रिचक्रः सोमस्य कुन्दाभास्तस्य वाजिनः ॥ वामदक्षिणतो युक्ता दश तेन चरत्यसौ ॥ १ ॥ वीथ्याश्रयाणि ऋक्षाणि ध्रुवाधारेण वेगिना ॥ ह्रासवृद्धिक्रमस्तस्य रश्मीनां सवितुर्यथा ॥ २ ॥ अर्कस्येव हि तस्याश्वाः सकृद्युक्ता वहन्ति ते ॥ कल्पमेकं मुनिश्रेष्ठ वारिगर्भसमुद्भवाः ॥ ३ ॥ क्षीणं पीतं सुरैः सोममाप्याययति दीप्तिमान् ॥ मैत्रेयैककलं सन्तं रश्मिनैकेन भास्करः ॥ ४ ॥ क्रमेण येन पीतोऽसौ देवैस्तेन निशाकरम् ॥ आप्याययत्यनुदिनं भास्करो वारितस्करः ॥ ५ ॥

देवपितृमर्त्यादीनां तृप्तिं कालतो विशिनष्टि पक्षेति ॥ 'शुक्ले पूर्णे कृष्णे पिबंति देवाः' इति तेषां शुक्लपक्षे तृप्तिः एकमासिकी पूर्वदर्शादुत्तरदर्शं यावत् । यद्वा देवानां दर्शपूर्णमासयोरिष्टिः पितृणां दर्शे एवेष्टिः मनुष्याणां नित्यमुक्तिश्च तत्तत्साधनहविर्निष्पत्तिः सूर्यसाध्येति दिनपक्षादितृप्तिः "तस्मादहरहर्मनुष्याः" इत्यादिश्रुतेः । अर्कः प्रयच्छतीति पुनःकीर्त्तनाद्ग्रहान्तरकृतं वृष्ट्यादिफलमपि तत्तत्ताराग्रहानुग्राहकरश्मिद्वाराऽर्क एव प्रयच्छतीत्युक्तं स्यात् यथा—कौर्मे "हारिकेशस्तु यः प्रोक्तो रश्मिर्नक्षत्रपोषकः।विश्वकर्मा तथा रश्मिर्बुधं पुष्णाति सर्वदा । विश्वव्यचा सूर्यरश्मिः सितं पुष्णाति नित्यशः । संयद्वसुरिति ख्यातो यः स पुष्णाति लोहितम्॥बृहस्पतिं स पुष्णाति रश्मिरर्वावसुःप्रभोः॥शनैश्चरं स पुष्णाति सप्तमस्तु स्वराह्वयः" इति ॥ २६ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये द्वितीयेंश एकादशोऽध्यायः ॥ ११ ॥ ॥१॥२॥ अर्कस्यैवेति ॥ वारिगर्भसमुद्भवाः जलमयाः "वारिगर्भसमुद्भूतो रथः साश्वः ससारथिः" इत्यादित्यपुराणे ॥३॥ क्षीणमिति ॥ क्षीणम् अल्पीभूतशुक्लकलं तदुक्तं—"देवैस्संपीयमानस्य शुक्ला वर्धन्ति वै कलाः॥ सोमस्य कृष्णपक्षादौ भास्कराभिमुखस्य तु॥प्रक्षीयन्तेपरे भागे पीयमानाः कलाः क्रमात्"इत्यादि । आप्याययति शुक्लकला वर्द्धति "सुषुम्नाप्यायमानस्य शुक्ले वर्द्धन्ति वै कलाः" इति ॥४॥ क्रमेणेति॥येन क्रमेणेति कृष्णपक्षे यत्तिथौ बिम्बस्य यद्भागे यावान् ह्रासः शुक्ले तद्भागे ताव

वृष्णिकृतायां तृप्तौ विशेषमाह—पक्षतृप्तिमिति ॥ शश्वत्तृप्तिं तत्तद्दिनतृप्तिं स्वकृतवृष्णिनिष्पन्नैरन्नैस्सकृद्भुक्तैः पक्षमासाहोरात्रपरिमितां तृप्तिं देवपितृमर्त्यानामर्कः करोतीत्यर्थः । अत एव श्रुतिः "तस्मादहरहर्मनुष्या अशनमिच्छन्तेर्धमासे देवा इज्यन्ते मासि पितृभ्यः क्रियते" इति ॥ २६ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां द्वितीयांश एकादशोऽध्यायः ॥ ११ ॥ उक्ता चतुर्भिरध्यायैरष्टमाद्यै रविस्थितिः । अथ सोमादिसंस्थोत्त्या तत्प्रपंचोपसंहृतिः ॥ १ ॥ रथ इति ॥ कुंदाभाः श्वेताः । रविरथाद्विशेषमाह—वामतो दक्षिणतश्च युक्ताः तस्य रथस्याश्वाः दशेति तेन रथेन ॥ १ ॥ वीथ्याश्रयाणीति ॥ नागवीथ्याद्याश्रयाणि अश्विन्यादिनक्षत्राणि प्रागत्या च ह्रासवृद्धिक्रम इति उदितो वर्द्धमानाभिरामभ्याह्रादित्यत्र सवितू रश्मीनां यथोक्तस्तथा तस्यापि ॥ २ ॥ ३ ॥ क्षीणस्य सोमस्य पुनः पूर्णस्य सतो देवादितर्पकत्वमाह क्षीणमित्यादिचतुर्भिः—क्षीणमिति ॥ पंचदश्यां कलायां दर्शे पितृभिः पीतायां षोडशकलाया अवशिष्टत्वादेककलं संतमित्युक्तम् । एकेन रश्मिना सुषुम्णाख्येन ॥ ४ ॥ क्रमेणेति ॥ क्रमेण

संभृतं चार्धमासेन तत्सोमस्थं सुधामृतम् ॥ पिबन्ति देवा मैत्रेय सुधाहारा यतोऽमराः ॥ ६ ॥ त्रयस्त्रिंशत्सहस्राणि त्रयस्त्रिंशच्छतानि च ॥ त्रयस्त्रिंशत्तथा देवाः पिबन्ति क्षणदाकरम् ॥ ७ ॥ कलाद्वयावशिष्टस्तु प्रविष्टः सूर्यमण्डलम् ॥ अमाख्यरश्मौ वसति अमावास्या ततः स्मृता ॥ ८ ॥ अप्सु तस्मिन्नहोरात्रे पूर्वं विशति चंद्रमाः ॥ ततो वीरुत्सु वसति प्रयात्यर्कं ततः क्रमात् ॥ ९ ॥ छिनत्ति वीरुधो यस्तु वीरुत्संस्थे निशाकरे ॥ पत्रं वा पातयत्येकं ब्रह्महत्यां स विन्दति ॥ १० ॥ सोमं पञ्चदशे भागे किंचिच्छिष्टे कलात्मके ॥ अपराह्णे पितृगणा जघन्यं पर्युपासते ॥ ११ ॥ पिबन्ति द्विकलाकारं शिष्टा तस्य कला तु या ॥ सुधामृतमयी पुण्या तामिन्दोः पितरो मुने ॥ १२ ॥ निस्सृतं तदमावास्यां गभस्तिभ्यः सुधामृतम् ॥ मासं तृप्तिमवाप्याग्र्यां पितरः सन्ति निर्वृताः ॥ सौम्या बर्हिषदश्चैव अग्निष्वात्ताश्च ते त्रिधा ॥१३ ॥ एवं देवान् सिते पक्षे कृष्णपक्षे तथा पितॄन् ॥ वीरुधश्चामृतमयैः शीतैरप्परमाणुभिः ॥ १४ ॥

त्येव वृद्धिरिति । तस्करः अलक्षितं हर्ता ॥ ५ ॥ संभृतमिति ॥ सुधामृतम् सुष्ठु धीयते पीयत इति सुधा सैवामृतम् ॥ ६ ॥ ७ ॥ कलाद्वयावशिष्ट इति ॥ प्रविष्ट इति तद्रश्म्यभिभवात्प्रविष्ट इव ॥ ८ ॥ ९ ॥ १० ॥ सोममिति ॥ कलात्मके पंचदशेंशे किंचिच्छिष्टे दर्शापराह्णे जघन्यं पश्चाद्द्विकलं सोमं पितृगणाः पर्युपासते ॥ ॥ ११ ॥ पिबन्तीति ॥ किञ्चिच्छिष्टा या पंचदशी कला तां कलां पितरः पिबन्ति न षोडशीमित्यर्थः ॥ १२ ॥ निस्सृतमिति ॥ आदित्यरश्मिद्वारा निस्सृतं तत्सुधामृतं पीत्वेति शेषः ॥ १३ ॥ किञ्च "तस्मादापूर्यमाणपक्षे यजन्ति" इति श्रुतेः । अपरपक्षे पितॄणामिति स्मृतेश्च शुक्लकृष्णयोर्देवान्पितॄंश्च यागद्वारेणाप्याययती

प्रतिपत्प्रभृतिदेवैर्वह्न्यादिभिरसौ पीतः तेनैव क्रमेण प्रतिदिनं निशाकरम् आप्याययति अलक्षितं वारितस्करवद्धरतीति तथा एवं गृहीतेन वारिणा सोममापूरयतीत्यर्थः ॥ ५ ॥ सम्भृतमिति ॥ सुधारूपममृतं मृत्युभेषजम् ॥ ॥ ६ ॥ त्रयस्त्रिंशदिति ॥ क्षणदाकरं सोमम् ॥ ७ ॥ पितॄणां सोमपानप्रकारमाह–कलाद्वयेत्यादिसार्धैष्षड्भिः ॥ ८ ॥ सूर्यमण्डलप्रवेशक्रममाह–अप्स्विति ॥ ९ ॥ प्रसंगाद्दर्शे वीरुधां छेदकर्त्तारं निंदति–छिनत्तीति ॥१०॥ सोममिति ॥ तदेवं दर्शाहोरात्रे अप्सु च वीरुत्सु च प्रवेशादुपक्षीणप्राये कलात्मके पंचदशे भागे किञ्चिच्छिष्टे सति तज्जघन्यं पश्चात्पंचदश्यवशिष्टं सोममपराह्णे पितृगणाः पर्य्युपासते पानार्थं परितस्सेवंते ॥ ११ ॥ पिबंतीति ॥ ततश्च तस्येंदोः द्विकलाकारशिष्टाद्द्विकलो य आकारस्तत्र शिष्टा पंचदशीया कला तां पितरः पिबंति न तु षोडशं द्विकलं सोममिति पाठे द्विकलं पर्युपास्य शिष्टामेव कलां पिबन्तीत्यर्थः । द्विलवमिति पाठे लवस्सूक्ष्मः कलावयवः । द्विलवपरिमितकलम् उपास्यतां शिष्टां कलां पंचदशीं पिबंतीत्यर्थः ॥१२॥ निस्सृतमिति ॥ अमावास्याम् अमावास्यायां तत्सोमस्य गभस्तिभ्यो निस्सृतं सुधामृतं पीत्वेति शेषः॥१३॥ तदेवममृतद्वारा सोमादीनां तर्पणमुक्त्वा तन्निष्पादितान्नादिनापि तेषां तर्पणमाह एवमित्यादिद्वाभ्याम्–एवमिति ॥ सिते पक्षे देवानाप्याययति देवानां शुक्लपक्षे यजनात् "तस्मादापूर्यमाणपक्षेषु ये यजंत" इति श्रुतेः । अपरपक्षे

वीरुधौषधिनिष्पत्त्या मनुष्यपशुकीटकान् ॥ आप्याययति शीतांशुः प्राकाश्याह्लादनेन तु ॥१५॥ वाय्वग्निद्रव्यसंभूतो रथश्चन्द्रसुतस्य च ॥ पिशंगैस्तुरगैर्युक्तः सोष्टाभिर्वायुवेगिभिः ॥१६॥ सवरूथः सानुकर्षो युक्तो भूसंभवैर्हयैः ॥ सोपासंगपताकस्तु शुक्रस्यापि रथो महान् ॥१७॥ अष्टाश्वः काञ्चनः श्रीमान्भौमस्यापि रथो महान् ॥ पद्मरागारुणैरश्वैः संयुक्तो वह्निसम्भवैः ॥१८॥ अष्टाभिः पांडुरैर्युक्तो वाजिभिः कांचनो रथः ॥ तस्मिंस्तिष्ठति वर्षान्ते राशौराशौ बृहस्पतिः ॥१९॥ आकाशसम्भवैरश्वैः शबलैः स्यन्दनं युतम् ॥ तमारुह्य शनैर्याति मन्दगामी शनैश्चरः ॥ २० ॥ स्वर्भानोस्तुरगा ह्यष्टौ भृंगाभा धूसरं रथम् ॥ सकृद्युक्तास्तु मैत्रेय वहन्त्यविरतं सदा ॥ २१ ॥ आदित्यान्निस्सृतो राहुः सोमं गच्छति पर्वसु ॥ आदित्यमेति सोमाच्च पुनः सौरेषु पर्वसु ॥ २२ ॥ तथा केतुरथस्याश्वा अप्यष्टौ वातरंहसः ॥ पलालधूमवर्णाभा लाक्षारसनिभारुणाः ॥ २३ ॥ एते मया ग्रहाणां वै तवाख्याता रथा नव ॥ सर्वे ध्रुवे महाभाग प्रबद्धा वायुरश्मिभिः ॥ २४ ॥ ग्रहर्क्षताराधिष्ण्यानि ध्रुवे बद्धान्यशेषतः ॥ भ्रमन्त्युचितचारेण मैत्रेयानिलरश्मिभिः ॥ २५ ॥

त्याह एवमिति ॥ १४ ॥ वीरुदिति ॥ प्रकाशस्य भावः प्राकाश्यं प्राकाश्यमाह्लादनं चेति द्वंद्वैकवद्भावः । प्राकाश्याह्लादनेन चेति पाठः ॥ १५ ॥ १६ ॥ सवरूथ इति ॥ "वरूथो रथगुप्तिर्या तिरोधत्ते रथस्थितम् ॥ रथस्याधःस्थितं काष्ठमनुकर्षो निगद्यते ॥ उपासङ्गो रथोपस्थः" इति ॥ १७ ॥ १८ ॥ अष्टाभिरिति ॥ राशौ वर्षं तिष्ठतीति तत्तद्ग्रहराशिचारोपलक्षणम् ॥ १९ ॥ २० ॥ स्वर्भानोरिति ॥ स्तोकपाण्डुस्तु धूसरः अविरतम् अविच्छेदम् । सदा यावत्कल्पम् ॥ २१ ॥ आदित्यादिति ॥ अर्केन्द्वोरुपरि तृतीयदिवस्थाने चरन्नपि राहुश्चन्द्रस्यार्कस्य वा ग्रहणकालेऽधो गत्वा भूच्छायात्मकं तमोमयं बिम्बं गृहीत्वा तेन तौ राहुर्मेघवच्छादयन् तत्काल एव दृश्यत्वमेति । यथा कौर्मादिषु "स्वर्भानोस्तु गृहस्थानं तृतीयं यत्तमोमयम् । तुल्यं तयोस्तु स्वर्भानुर्भूत्वाधस्तात्प्रसर्पति" इत्यादि ॥ २२ ॥ २३ ॥ ॥२४॥ ग्रहेति॥धिष्ण्यानि विमानानि उचितचारेण "सौरोऽङ्गिराश्च शुक्रश्च ज्ञेया मन्दप्रचारिणः । सूर्यसोमौ बुधश्चैव शीघ्रगाः" इत्यादिकूर्मोक्तस्वगत्या सह भ्रत्य

'पितॄणाम्' इतिस्मृतेः । अप्परमाणुभिरपां सूक्ष्मैरंशैः ॥ १४ ॥ वीरुदिति ॥ वीरुधो लताद्याः ओषधयस्सस्यानि तासां निष्पत्त्या प्रकाशेन यदाह्लादनं तेन च ॥ १५ ॥ तदेवं सोमस्य रथादिप्रकारमुक्त्वा बुधादीनामप्याह—वाय्वग्नीत्यादिना । प्रवहस्तेन स स्मृत इत्यंतेन वाय्वग्निद्रव्येति ॥ पिशंगै कपिलैः ॥ १६ ॥ सवरूथ इति ॥ तदुक्तम् " वरूथो रथगुप्तिः स्यात्तिरोधत्ते रथस्थितम् ॥ रथस्याधस्स्थितं काष्ठमनुकर्षो निगद्यते" ॥ इति । उपासंगो रथोपस्थः । पताका प्रसिद्धा तत्सहितः ॥ १७ ॥ १८ ॥ १९ ॥ आकाशसम्भवैरिति ॥ शबलैश्चित्रवर्णैः ॥ २० ॥ स्वर्भानोरिति ॥ स्वर्भानो राहोः भृंगाभाः कृष्णाः धूसरमीषत्पाडुरम् अविरतमनुपरमम् ॥ २१ ॥ आदित्यादिति ॥ सोमं चंद्रं गच्छति ॥ २२ ॥ रथेति ॥ पलालम्बुसं तद्वद्धूमवर्णा भा दीप्तिर्येषां ते लाक्षारसवदरुणाश्च ॥ २३ ॥ २४ ॥ ग्रहेति ॥ ग्रहर्क्षताराणां धिष्ण्यानि मंडलानि उचितचारेण स्वस्वोचितगत्या ॥ ॥ २५ ॥

यावन्त्यश्चैव तारास्ता तावन्तो वातरश्मयः ॥ सर्वे ध्रुवे निबद्धास्ते भ्रमन्तो भ्रामयन्ति तम् ॥ २६ ॥ तैलपीडा यथा चक्रं भ्रमन्तो भ्रामयन्ति वै ॥ तथा भ्रमन्ति ज्योतींषि वातविद्धानि सर्वशः ॥ २७ ॥ अलातचक्रवद्यान्ति वातचक्रेरितानि तु ॥ यस्माज्ज्योतींषि वहति प्रवहस्तेन स स्मृतः ॥ २८ ॥ शिशुमारस्तु यः प्रोक्तः स ध्रुवो यत्र तिष्ठति ॥ सन्निवेशं च तस्यापि शृणुष्व मुनिसत्तम ॥ २९ ॥ यदह्ना कुरुते पापं तं दृष्ट्वा निशि मुच्यते ॥ यावन्त्यश्चैव तारास्ताः शिशुमाराश्रिता दिवि ॥ तावन्त्येव तु वर्षाणि जीवत्यभ्यधिकानि च ॥ ३० ॥ उत्तानपादस्तस्याधो विज्ञेयो ह्युत्तरो हनुः ॥ यज्ञोऽधरश्च विज्ञेयो धर्मो मूर्द्धानमाश्रितः ॥ ३१ ॥ हृदि नारायणश्चास्ते अश्विनौ पूर्वं पादयोः॥वरुणश्चार्यमा चैव पश्चिमे तस्य सक्थिनी॥३२॥शिश्नः संवत्सरस्तस्य मित्रोऽपानं समाश्रितः॥३३॥पुच्छेऽग्निश्च महेन्द्रश्च कश्यपोथ ततो ध्रुवः ॥ तारका शिशुमारस्य नास्तमेति चतुष्टयम् ॥ ३४ ॥ इत्येष सन्निवेशोऽयं पृथिव्या ज्योतिषां तथा ॥ द्वीपानामुदधीनां च पर्वतानां च कीर्तितः ॥ ३५ ॥ वर्षाणां च नदीनां च ये च तेषु वसन्ति वै ॥ तेषां स्वरूपमाख्यातं संक्षेपः श्रूयतां पुनः ॥ ३६ ॥

ङ्मुखं भ्रमन्ति ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ शिशुमार इति ॥ यः प्रोक्तः तारामयं भगवतः तत्पुच्छे ध्रुवः स्थित इति लक्षणं यस्योक्तं तस्य सन्निवेशं शृणु ॥ ॥ २९ ॥ यदह्नेति ॥ यदह्नेति नित्यद्रष्टव्यतोक्तिः ॥ ३० ॥ ३१ ॥ हृदीति ॥ सक्थिनी ऊरू ॥ ३२ ॥ ३३ ॥ पुच्छ इति ॥ अग्न्यादिदेवतारूपं ताराचतुष्कं पुच्छस्थं ध्रुववन्नित्यं दृश्यते न शिशुमारगात्रान्तर्गतर्क्षवदस्तमेति ध्रुवसहयायित्वात् ॥ ३४ ॥ इत्येष इति ॥ उक्तस्य भुवनकोशस्य अनुक्तं भगवदात्मकत्वं वक्तुमनुवादः इत्येष इति ॥ ३५ ॥ वर्षाणां चेति ॥ अथ चिदचिन्मिश्रे जगति चिदंशः स्वसंबंधस्वरूपभेदो ज्ञानैकाकारः अविनाशित्वेनाऽस्तिशब्दवाच्यः अचिदंशस्तु चिदंशकर्म निमित्तपरिणामभेदो विनाशीति नास्तिशब्दवाच्यः । उभयमपि परब्रह्मभूतवासुदेवशरीरतया तदात्मकमित्येतद्रूपं संक्षेपेणोच्यते इत्याह—संक्षेपः श्रूयतामिति ॥ ३६ ॥

॥ २६ ॥ तैलपीडा इति ॥ तैलपीडास्स्वयं भ्रमंतो यथा तैलचक्रं भ्रमयंति वातविद्धानि प्रवहाख्यवायुप्रेरितानि ॥ २७ ॥ अलातचक्रवदिति ॥ यस्माज्जोतींषि प्रकर्षेण वहति तेन स वायुः प्रवहः स्मृतः प्रवहस्यैव भेदा वायुस्कन्धास्सर्वे ध्रुवे निबद्धास्त इति ॥ २८ ॥ वस्तुतः ध्रुवाद्याधारभूतं शिशुमारं नवमाध्यायोपक्षिप्तमेवोपासनार्थं विशेषतो वक्तुमाह—शिशुमारस्त्विति ॥ २९ ॥ तद्दर्शनफलमाह—यदह्नेत्यादिसार्धेन ॥ ३० ॥ तत्सन्निवेशमाह उत्तानपाद इत्यादिसार्धैस्त्रिभिः—उत्तानपाद इति ॥ उत्तानपादयज्ञादयो नक्षत्ररूपा देवास्तदवयवत्वेनोच्यंते यज्ञो धरो हनुरित्यनुषङ्गः ॥ ३१ ॥ हृदीति ॥ सक्थिनी ऊरू ॥ ३२ ॥ ३३ ॥ पुच्छ इति ॥ तारकामयस्य शिशुमारस्य पुच्छे स्थितमग्न्यादिचतुष्टयं नास्तमेति । अत्युन्नतपुच्छस्थितमंतर्धानाभावान्नित्यं दृश्यते अन्यत्समिति पाठे तस्य पुच्छे चतुष्टयमेतन्न्यस्तं विहितमित्यर्थः । श्रुतिश्च—"अग्निः पुच्छस्य प्रथमं कांडं तत इंद्रस्ततः प्रजापतिरभयं चतुर्थम्" इति ॥ ३४ ॥ उक्तं भुवनकोशमुपसंहरंस्तस्य विष्ण्वात्मतां दर्शयन्नाह—इत्येष इत्यादिना यावत्समाप्ति ॥ ३५ ॥ ३६ ॥

यदम्बु वैष्णवः कायस्ततो विप्र वसुन्धरा ॥ पद्माकारा समुद्भूता पर्वताब्ध्यादिसंयुता ॥ ३७ ॥ ज्योतींषि विष्णुर्भुवनानि विष्णु र्वनानि विष्णुर्गिरयो दिशश्च ॥ नद्यः समुद्राश्च स एव सर्वं यदस्ति यन्नास्ति च विप्रवर्य ॥ ३८ ॥ ज्ञानस्वरूपो भगवान्यतोसा वशेषमूर्त्तिर्न तु वस्तुभूतः ॥ ततो हि शैलाब्धिधरादिभेदाञ्जानीहि विज्ञानविजृम्भितानि ॥ ३९ ॥ यदा तु शुद्धं निजरूपि सर्वं कर्मक्षये ज्ञानमपास्तदोषम् ॥ तदा हि संकल्पतरोः फलानि भवन्ति नो वस्तुषु वस्तुभेदाः ॥ ४० ॥

यदिति॥तत्र यदम्ब्वित्यनेन श्लोकेनाम्बुनो विष्णोः कायत्वेन तत्परिणामभूतं ब्रह्माण्डमपि तस्य कायः, तस्य च "विष्णुरात्मा" इति सकलश्रुतिगततादात्म्योपदेशोपबृंहणरूपस्य ज्योतींषीत्यादिना वक्ष्यमाणस्य सामानाधिकरण्यस्य शरीरात्मभाव एव निबन्धनमित्याह–ततः अम्बुनः ॥३७॥ तदेतत्तादात्म्यं सामानाधिकरण्येन व्यपदिशति–ज्योतींषीति। अत्रास्तिनास्त्यात्मकं च जगदन्तर्गतं वस्तु विष्णोः कायतया विष्ण्वात्मकमित्युक्तम् ॥ ३८ ॥ इदमस्त्यात्मकमिदं नास्त्यात्मकम् अस्य च नास्त्यात्मकत्वे हेतुरयमित्याह–ज्ञानस्वरूप इति। अयमर्थः–अशेषक्षेत्रज्ञात्मनावस्थितस्य भगवतो ज्ञानमेव स्वाभाविकं रूपं न देवमनुष्यादिवस्तुरूपम्। यत एवम् अत एवाचिद्रूपदेवमनुष्यशैलाब्धिधरादयस्तद्विज्ञानविजृम्भिताः तस्य ज्ञानैकाकारस्य सतो देवाद्याकारेण स्वात्मवैविध्यानुसन्धानमूला देवाद्याकारानुसन्धानमूलकर्मकल्पिता इत्यर्थः। यतश्चाचिद्वस्तु क्षेत्रज्ञकर्मानुगुणपरिणामास्पदं ततस्तन्नास्तिशब्दाभिधेयम् इतरदस्तिशब्दाभिधेयमित्यर्थादुक्तं भवति ॥ ३९ ॥ तदेतदेव विवृणोति–यदा तु शुद्धमिति ॥ यदैतज्ज्ञानैकाकारमात्मवस्तु देवाद्याकारेण स्वात्मनि वैविध्यानुसन्धानमूलसर्वकर्मक्षयान्निर्दोषं परिशुद्धं निजरूपि भवति तदा देवाद्याकारेणैकीकृतात्मकल्पनामूलकर्मफलभूतास्तद्भोगार्थावस्तुषु वस्तुभेदा न भवन्ति ये देवादिषु वस्तुष्वात्मतयाऽभिमतेषु भोग्यभूता देवमनुष्यशैलाब्धिधरादिवस्तुभेदास्ते मूलभूतकर्मसु विनष्टेषु न भवन्तीति। अचिद्वस्तुनः कादाचित्कावस्थाविशेषयोगितया नास्तिशब्दाभिधेयत्वमितरस्य सर्वदा निजसिद्धज्ञानैकरूपत्वेनास्तिशब्दाभिधेयत्वमित्यर्थः ॥ ४० ॥

यदिति ॥ यदम्बु वैष्णवः कायः विष्णोरेव मूर्तिः ततोऽम्बुनः गर्भोदकात् पद्माकारा मेरुकर्णिकाकारा सर्वतस्समवर्त्तुला नानापर्वतविभक्तानेकद्वीपवर्षा वसुंधरा समुद्भूता। सापि तन्मूर्त्तिरेव न ततः पृथगिति संक्षेपार्थः ॥ ३७ ॥ एतदुपलक्षणीकृत्य सर्वस्यापि तदात्मतामाह–ज्योतींषीति ॥ यदस्ति यन्नास्ति च भावाभावरूपेण प्रतीतं वस्तु तत्सर्वं स एव ॥ ३८ ॥ नन्वेकस्यानेकत्वं विरुद्धमित्याशंक्यानेकत्वस्यावास्तवत्वमाह–ज्ञानेति ॥ ज्ञानमेव स्वरूपं तत्त्वं यस्य स एवाऽसौ भगवान्यतः, अतः अशेषमूर्त्तिः प्रपंचमूर्त्तिरसौ न तु वस्तुभूतः परमार्थभूतो भवति। कथं तर्हि प्रपंचस्य तन्मूर्त्तित्वं तत्राह–ततो हीति ॥ तस्माज्ज्ञानस्वरूपाज्जातान् शैलादिभेदान् विज्ञानेऽधिष्ठाने विजृंभितानि मायया विलसितानि रूपाणि जानीहि ॥ ३९ ॥ तत्र हेतुमाह–यदा त्विति ॥ यदा तु प्रतिबंधककर्मक्षये सर्वमप्येतज्जगच्छुद्धं केवलं निजरूपि निजमात्मैव रूपं यस्य तत्तथा निरस्ताहंभावनादिदोषं ज्ञानमेव भवति, तदा संकल्पतरोः फलभूता वस्तुषु पृथिव्यादिषु उच्चावचभेदा न स्फुरंति। "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" इति श्रुतेः। अतस्तत्त्वज्ञानबाधितत्वान्न प्रपंचो वास्तव इत्यर्थः ॥ ४० ॥

वस्त्वस्ति किं कुत्राचिदादिमध्यपर्यन्तहीनं सततैकरूपम् ॥ यच्चान्यथात्वं द्विज याति भूयो न तत्तथा तत्र कुतो हि तत्त्वम् ॥ ४१ ॥ मही
घटत्वं घटतः कपालिका कपालिकाचूर्णरजस्ततोऽणुः ॥ जनैः स्वकर्मस्तिमितात्मनिश्चयैरालक्ष्यते ब्रूहि किमत्र वस्तु ॥४२॥ तस्मान्न विज्ञा
नमृतेस्ति किंचित्क्वचित्कदाचिद्द्विज वस्तुजातम् ॥ विज्ञानमेकं निजकर्मभेदविभिन्नचित्तैर्बहुधाभ्युपेतम् ॥ ४३ ॥ ज्ञानं विशुद्धं विमलं विशो
कमशेषलोभादिनिरस्तसङ्गम् ॥ एकं सदैकं परमः परेशः स वासुदेवो न यतोन्यदस्ति ॥ ४४ ॥

प्रतिक्षणमन्यथाभूततया कादाचित्कावस्थायोगिनोऽचिद्वस्तुनो नास्तिशब्दाभिधेयत्वमेवेत्याह—वस्त्वस्तीति ॥ अस्तिशब्दाभिधेयो ह्यादिमध्यपर्यन्तहीनः सततैकरूपः
पदार्थः तस्य कदाचिदपि नास्तिबुद्ध्यनर्हत्वादचिद्वस्तु किंचित् क्वचिदपि तथाभूतं न दृष्टचरम् । ततः किमित्यत आह--यच्चान्यथात्वमिति । यद्वस्तु प्रतिक्षणमन्य
थात्वं याति तदुत्तरोत्तरावस्थाप्राप्त्या पूर्वपूर्वावस्थां जहातीति तस्य पूर्वावस्थस्योत्तरावस्थायां न प्रतिसंधानमस्ति अतः सर्वथा तस्य नास्तिशब्दाभिधेयत्वमेव ॥ ४१ ॥
तथाह्युपलभ्यत इत्याह--महीघटत्वमिति॥चूर्णं सूक्ष्मम्, रजः सूक्ष्मतरम्, अणुः सूक्ष्मतमः, स्वकर्मणा देवमनुष्यादिभावेन स्तिमितात्मनिश्चयैः स्वभोग्यभूतमचिद्वस्तु प्रतिक्ष
णमन्यथाभूतमालक्ष्यते अनुभूयते । एवं सति किमप्यचिद्वस्तु अस्तिशब्दार्हमादिमध्यपर्यन्तहीनं सततैकरूपमालक्षितमस्ति किम् । न ह्यस्तीत्यभिप्रायः ॥४२॥ यस्मा
देवं तस्मात् ज्ञानस्वरूपात्मव्यतिरिक्तमचिद्वस्तु कदाचित्क्वचित्केवलास्तिशब्दवाच्यं न भवतीत्याह—तस्मान्न विज्ञानमिति ॥ आत्मा तु सर्वदा ज्ञानैकाकारतया देवादि
भेदप्रत्यनीकस्वरूपोपि देवादिशरीरप्रवेशहेतुभूतस्वकृतविविधकर्ममूलदेवादिभिन्नात्मबुद्धिस्तेन तेन रूपेण बहुधाऽनुसंहित इति तद्भेदानुसन्धानं नात्मस्वरूपप्रयुक्तमित्याह—
विज्ञानमेकमिति ॥ ४३ ॥ आत्मस्वरूपं तु कर्मरहितं तत एव मलरूपप्रकृतिस्पर्शरहितम् । ततश्च तत्प्रयुक्तशोकमोहलोभाद्यशेषहेयगुणाऽसङ्गि उपचयापचयानर्हत

“आदावंते च यन्नास्ति वर्त्तमानेपि तत्तथा” इत्यादिन्यायेन आगमापायित्वात्परिणामित्वाच्च न वस्तुत्वमस्येत्याह—वस्त्विति ॥ यच्चान्यथात्वं परिणामांतरं याति तद्वस्तु भूयो न तथा यथापूर्वं न भवति ।
तत्र तथाभूते कादाचित्के स्वरूपात्प्रच्युते च वस्तुनि शुक्तिरजतादिवत्तत्त्वं परमार्थत्वं कुतः ॥ ४१ ॥ अन्यथात्वमेवोदाहरन्मिथ्यात्वमाह—महीति ॥ मही पिंडादिद्वारा घटत्वं प्राप्ता लक्ष्यते घटत्वादनंतरं
च कपालिका लक्ष्यते :कपालिका सती चूर्णं रजश्च दृश्यते ततश्चाणुरतिसूक्ष्मा लक्ष्यते स्वकर्मणा प्रतिबंधकेन स्तिमितो मंदीभूत आत्मनिश्चयो येषां तैः परिणामपरंपरायां किं वस्त्वालक्ष्यते न
किंचित् पूर्वरूपप्रच्युतेरित्यर्थः । तथा च श्रुतिः “वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्” इति ॥ ४२ ॥ तस्मादिति ॥ निजानां कर्मणां भेदेन विभिन्नं चित्तं येषां तैः विज्ञानमेव
नानावस्तुरूपेणाभ्युपेतम् ॥ ४३ ॥ वृत्तिज्ञानं व्यावर्तयन्नाह—ज्ञानमिति ॥ विशुद्धं विषयभोगशून्यं विमलं रागादिशून्यमत एव स्वतोविकारम् अशेषाणां चित्ताद्युपाधीनां च शोकादिभिर्निरस्तः संगो

सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत् ॥ एतत्तु यत्संव्यवहारभूतं तत्रापि चोक्तं भुवनाश्रितं ते ॥ ४५ ॥ यज्ञः पशुर्वह्नि रशेषऋत्विक्सोमः सुराः स्वर्गमयश्च कामः ॥ इत्यादिकर्माश्रितमार्गदृष्टं भूरादिभोगाश्च फलानि तेषाम् ॥ ४६ ॥ यच्चैतद्भुवनगतं मया तवोक्तं सर्वत्र व्रजति हि तत्र कर्मवश्यः ॥ ज्ञात्वैवं ध्रुवमचलं सदैकरूपं तत्कुर्याद्विशति हि येन वासुदेवम् ॥ ४७ ॥ इति श्रीविष्णुमहापुराणे द्वितीयेंशे द्वादशोऽध्यायः ॥ १२ ॥ ॥ मैत्रेय उवाच ॥ ॥ भगवन्सम्यगाख्यातं यत्पृष्टोसि मया किल ॥ भूसमुद्रादिसरितां संस्थानं ग्रहसंस्थितिः ॥ १ ॥ विष्णवाधारं यथा चैतत्त्रैलोक्यं समवस्थितम् ॥ परमार्थस्तु ते प्रोक्तो यथाज्ञानं प्रधानतः ॥ २ ॥

यैकं तत एव सदैकरूपं यच्च वासुदेवशरीरमिति तदात्मकम्, अतदात्मकस्य कस्यचिदप्यभावादित्याह—ज्ञानं विशुद्धमिति ॥ ४४ ॥ चिदंशः सदैकरूपतया सर्वदाऽस्तिशब्दवाच्यः अचिदंशस्तु क्षणपरिणामित्वेन सर्वदा नाशगर्भ इति सर्वदा नास्तिशब्दाभिधेयः । एवंरूपं चिदचिदात्मकं जगद् वासुदेवशरीरं तदात्मकमिति जगद्याथात्म्यं सम्यगुक्तमित्याह—सद्भाव एवमिति॥"एषो भवतः"इति पाठे तु आर्षत्वात्सुलोपाभावः । अत्र सत्यमसत्यमिति यदस्ति यन्नास्तीति प्रक्रान्तस्योपसंहारः । एतदेकाकारतया सर्वशब्दागोचरस्वरूपभेदमेवाचिन्मिश्रं भुवनाश्रितं देवमनुष्यादिरूपेण सम्यग्व्यवहारार्हभेदं यद्वर्त्तते तत्र हेतुः कर्मैवेत्युक्तमित्याह—एतत्तु यदिति ॥ ४५॥ तदेव विवृणोति—यज्ञः पशुरिति ॥ कर्माश्रितमार्गदृष्टं यज्ञपश्वादिरूपं कर्मैवाश्रितो मार्गस्तत्र दृष्टं देवमनुष्यादिरूपं तेषां कर्मणां भूरादिभोगाश्च फलानि ॥ ४६ ॥ जगद्याथात्म्यज्ञानप्रयोजनं मोक्षोपाये यतनमित्याह--यच्चैतदिति ॥ ज्ञात्वैतदिति । कर्मफलस्यास्थिरत्वं ज्ञात्वा ध्रुवमित्यादिवासुदेवविशेषणं तदुपासनादि ॥ ४७ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये द्वितीयेंशे द्वादशोऽध्यायः ॥ १२ ॥ ॥ १ ॥ विष्णवाधारमिति ॥ चिदचिदात्मकं जगद्यथा विष्णवात्मकं तथो

यस्य तथाभूतं ज्ञानं सदैकमेव स एव च परमः सर्वोत्तमः परमेश्वरो वासुदेवः यतो व्यतिरिक्तं किञ्चिदपि नास्ति ॥ ४४ ॥ उपसंहरति—सद्भाव इति ॥ सद्भावः परमार्थः । एषो भवत इति सुलोपाभाव आर्षः । ननु चान्यस्यासत्यत्वे किमर्थमेतद्भुवनाद्याश्रितं बहु फणितं तत्राह—एतत्त्विति ॥ एतत्तु यदेतज्ज्ञानव्यतिरिक्तं तत्सर्वं संव्यवहारभूतं सम्यक्परमार्थोपयोगि व्यवहारभूतं स्थितं न तु स्वतः सत्त्वं तत्रापि च विशेषतस्तुभ्यं यद्भुवनाश्रितमुक्तम् ॥ ४५ ॥ यज्ञ इति ॥ "यज्ञः पशुः" इत्यादिकर्माश्रितमार्गदृष्टं चोक्तम् । भूरादिभोगाश्च तत्फलानीत्युक्तम् ॥ ४६ ॥ तत्तु वैराग्योत्पादनेन स्वधर्मानुष्ठानद्वारा श्रीवासुदेवप्राप्त्यर्थमित्याह—यच्चैतदिति ॥ कर्मवश्यो जीवो नानायोनीर्व्रजतीति ज्ञात्वा विरक्तस्सन् ध्रुवं नित्यमचलं परिपूर्णमतः सर्वदैकरूपं वासुदेवं येनोपायेन स्वकर्मादिना तद्भजनतत्प्रसादलब्धज्ञानेन विशति तदेव कुर्यादित्यर्थः ॥ ४७ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां द्वितीयांशे द्वादशोऽध्यायः ॥ १२ ॥ ॥ एवं तावद्धरेः स्थूले विश्वरूपे निरूपिते । तेन शुद्धमतिस्तस्य सूक्ष्मरूपं बुभुत्सते ॥ १ ॥ तत्कुर्याद्विशति हि येन वासुदेवमित्युक्ते तत्प्रवेशोपायभूतज्ञानयोगाश्रयं प्रथमाध्यायोपक्षिप्तमेव भरतचरितमुक्तानुवादपूर्वकं पृच्छति—भगवन्नित्यादिषड्भिः ॥ १ ॥ विष्णवाधारमिति ॥ प्रधानत इति प्रधानमित्यर्थः सार्व

१ अस्यायमेव मुख्यः पाठः ।

यत्त्वेतद्भगवानाह भरतस्य महीपतेः ॥ श्रोतुमिच्छामि चरितं तन्ममाख्यातुमर्हसि ॥ ३ ॥ भरतः स महीपालः सालग्रामेऽवसत्किल ॥
योगयुक्तः समाधाय वासुदेवे सदा मनः ॥ ४ ॥ पुण्यदेशप्रभावेन ध्यायतश्च सदा हरिम् ॥ कथं तु नाऽभवन्मुक्तिर्यदभूत्स द्विजः
पुनः ॥ ५ ॥ विप्रत्वे च कृतं तेन यद्भूयः सुमहात्मना ॥ भरतेन मुनिश्रेष्ठ तत्सर्वं वक्तुमर्हसि ॥ ६ ॥ श्रीपराशर उवाच ॥ सालग्रामे महा
भागो भगवन्न्यस्तमानसः ॥ स उवास चिरं कालं मैत्रेय पृथिवीपतिः ॥ ७ ॥ अहिंसादिष्वशेषेषु गुणेषु गुणिनां वरः ॥ अवाप परमां काष्ठां
मनसश्चापि संयमे ॥ ८ ॥ यज्ञेशाच्युत गोविन्द माधवानन्त केशव ॥ कृष्ण विष्णो हृषीकेश वासुदेव नमोस्तु ते ॥ ९ ॥ इति राजाह भरतो
हरेर्नामानि केवलम् ॥ नान्यज्जगाद मैत्रेय किंचित्स्वप्नान्तरेपि च ॥ एतत्पदन्तदर्थं च विना नान्यदचिंतयत् ॥ १० ॥ समित्पुष्पकु
शादानं चक्रे देवक्रियाकृते ॥ नान्यानि चक्रे कर्माणि निस्सङ्गो योगतापसः ॥ ११ ॥ जगाम सोभिषेकार्थमेकदा तु महानदीम् ॥ सस्नौ
तत्र तदा चक्रे स्नानस्यानन्तरक्रियाः ॥ १२ ॥ अथाजगाम तत्तीरं जलं पातुं पिपासिता ॥ आसन्नप्रसवा ब्रह्मन्नेकैव हरिणी वनात् ॥ १३ ॥

कम् । यथा चिदंशो निजसिद्धैकज्ञानैकाकारत्वेनाविनाशित्वात्परमार्थस्तथा प्राधान्येनोक्तः ॥ २ ॥ अथ भगवत्प्राप्त्युपायस्य ज्ञानयोगस्य तदन्तरायपरिहारयोश्चोदाह
रणभूतं भरतचरितं प्राक्प्रस्तुतं विस्तरेण श्रोतुं मैत्रेयः पृच्छति—यत्त्विति ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ अहिंसादिष्विति ॥ अहिंसादिषु गुणेषु योगांगेषु
वक्ष्यमाणेषु ॥ ८ ॥ ९ ॥ इतीति ॥ स्वप्नान्तरेषु स्वप्नमध्येषु एतद्यज्ञेशेत्यादिनाम एतन्नाम तदर्थं च तत्प्रवृत्तिनिमित्तं केवलमचिन्तयत् एतद्विना नान्यत् ॥ १० ॥
॥ ११ ॥ १२ ॥ १३ ॥

विभक्तित्वात्तसिल्प्रत्ययस्य ॥ २ ॥ यत्त्विति ॥ भरतस्य चरितं कथयिष्यामीति यद्भवानुक्तवान् तन्ममेदानीं हरेः स्थूलरूपश्रवणध्यानादिना शुद्धचित्तस्याख्यातुमर्हसीत्यर्थः ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ कथं नु नाभव
न्मुक्तिरित्यस्योत्तरत्वेन तस्मिञ्जन्मनि जातं योगभ्रंशं वक्तुं तस्य प्राचीनं योगमनुवदति—सालग्राम इत्यादिपञ्चभिः ॥ सालग्राम इति । भगवति न्यस्तं मानसं येन सः ॥ ७ ॥ अहिंसादिष्विति ॥ अहिंसादिषु यमनियमा
दिषु । तत्साध्ये च मनस्संयमे समाधौ । परमां काष्टाम् उत्कर्षमवाप ॥ ८ ॥ व्युत्थानसमये तु—यज्ञेशाच्युतेति ॥ ९ ॥ इतीति ॥ यज्ञेशाच्युतेति भगवन्नामैवाह नान्यद्वाचा जगाद, मनसा च एतद्भगवन्नामैव तदर्थञ्च
केवलमचिन्तयत् नान्यत्किमपि वेद ॥ १० ॥ समिदिति ॥ समित्पुष्पकुशादीनामादानं देवपूजार्थं चक्रे नान्यानि कर्माणि, योगयुक्तस्तापसः ॥ ११ ॥ हरिणसंगाद्योगभ्रंशगतिं वक्ष्यंस्तत्संगं प्रस्तौति—जगामेत्यादिना
निष्कृतिं ययावित्यन्तेन ॥ १२ ॥ १३ ॥

ततः समभवत्तत्र पीतप्राये जले तथा ॥ सिंहस्य नादः सुमहान्सर्वप्राणिभयंकरः ॥ १४ ॥ ततः सा सहसा त्रासादाप्लुता निम्न
गातटम् ॥ अत्युच्चारोहणेनास्या नद्यां गर्भः पपात ह ॥ १५ ॥ तमूह्यमानं वेगेन वीचिमालापरिप्लुतम् ॥ जग्राह स नृपो गर्भा
त्पतितं मृगपोतकम् ॥ १६ ॥ गर्भप्रच्युतिदोषेण प्रोत्तुङ्गाक्रमणेन च ॥ मैत्रेय सापि हरिणी पपात च ममार च ॥ १७ ॥ हरिणीं
तां विलोक्याथ विपन्नां नृपतापसः ॥ मृगपोतं समादाय निजमाश्रममागतः ॥ १८ ॥ चकारानुदिनं चासौ मृगपोतस्य वै नृपः ॥ पोषणं
पुष्यमाणश्च स तेन ववृधे मुने ॥ १९ ॥ चचाराश्रमपर्यन्ते तृणानि गहनेषु सः ॥ दूरं गत्वा च शार्दूलत्रासादभ्याययौ पुनः ॥ २० ॥
प्रातर्गत्वातिदूरं च सायमायात्यथाश्रमम् ॥ पुनश्च भरतस्याभूदाश्रमस्योटजाऽजिरे ॥ २१ ॥ तस्य तस्मिन्मृगे दूरसमीपपरिवर्तिनि ॥ आसी
च्चेतः समासक्तं न ययावन्यतो द्विज ॥ २२ ॥ विमुक्तराज्यतनयः प्रोज्झिताशेषबान्धवः ॥ ममत्वं स चकारोच्चैस्तस्मिन्हरिणबालके ॥ २३ ॥
किं वृकैर्भक्षितो व्याघ्रैः किं सिंहेन निपातितः ॥ चिरायमाणे निष्क्रान्ते तस्यासीदिति मानसम् ॥ २४ ॥ एषा वसुमती तस्य खुराग्रक्षतक
र्बुरा ॥ २५ ॥ प्रीतये मम जातोसौ क्व ममैणकबालकः ॥ विषाणाग्रेण मद्बाहुं कण्डूयनपरो हि सः ॥ क्षेमेणाभ्यागतोरण्यादपि मां सुखयि
ष्यति ॥ २६ ॥ एते लूनशिखास्तस्य दशनैरचिरोद्गतैः ॥ कुशाः काशा विराजन्ते बटवः सामगा इव ॥ २७ ॥ इत्थं चिरगते तस्मिन्स चक्रे
मानसं मुनिः ॥ प्रीतिप्रसन्नवदनः पार्श्वस्थे चाभवन्मृगे ॥ २८ ॥ समाधिभङ्गस्तस्यासीत्तन्मयत्वादृतात्मनः ॥ सन्त्यक्तराज्यभोगर्द्धिस्वजन
स्यापि भूपतेः ॥ २९ ॥ चपलं चपले तस्मिन्दूरगं दूरगामिनि ॥ मृगपोतेऽभवच्चित्तं स्थैर्यवत्तस्य भूपतेः ॥ ३० ॥

॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ एषेति ॥ क्षतकर्बुरा क्षतैर्विषमसंस्थाना ॥ २५ ॥
॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥

॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ प्रातरिति ॥ उटजाजिरे पर्णशालांगणे ॥ २१ ॥ कृपया पुष्यमाणे तस्मिंस्तस्य जातामासक्तिं प्रपञ्चयति—तस्येत्यादिना
॥ २२ ॥ २३ ॥ २४ ॥ एषेति ॥ खुराग्रक्षतैः कर्बुरा कृष्णवर्णा वा ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ समाधिभङ्ग इति ॥ तन्ममत्वे आदृतः सादर आत्मा चित्तं यस्य ॥ २९ ॥ चपल इति ॥
मृगपोते स्थैर्यवत् अनपायि ॥ ३० ॥

कालेन गच्छता सोऽथ कालं चक्रे महीपतिः ॥ पितेव सास्रं पुत्रेण मृगपोतेन वीक्षितः ॥ ३१ ॥ मृगमेव तदाद्राक्षीत्त्यजन्प्राणानसावपि ॥ तन्मयत्वेन मैत्रेय नान्यत्किंचिदचिन्तयत् ॥ ३२ ॥ ततश्च तत्कालकृतां भावनां प्राप्य तादृशीम् ॥ जम्बूमार्गे महारण्ये जातो जातिस्मरो मृगः ॥ ३३ ॥ जातिस्मरत्वादुद्विग्नः संसारस्य द्विजोत्तम ॥ विहाय मातरं भूयः सालग्राममुपाययौ ॥ ३४ ॥ शुष्कैस्तृणैस्तथा पर्णैः स कुर्वन्नात्मपोषणम् ॥ मृगत्वहेतुभूतस्य कर्मणो निष्कृतिं ययौ ॥ ३५ ॥ तत्र चोत्सृष्टदेहोसौ जज्ञे जातिस्मरो द्विजः ॥ सदाचारवतां शुद्धे योगिनां प्रवरे कुले ॥ ३६ ॥ सर्वविज्ञानसंपन्नः सर्वशास्त्रार्थतत्त्ववित् ॥ अपश्यत्स च मैत्रेय आत्मानं प्रकृतेः परम् ॥ ३७ ॥ आत्मनोऽधिगतज्ञानो देवादीनि महामुने ॥ सर्वभूतान्यभेदेन स ददर्श तदात्मनः ॥ ३८ ॥ न पपाठ गुरुप्रोक्तं कृतोपनयनः श्रुतिम् ॥ न ददर्श च कर्माणि शास्त्राणि जगृहे न च ॥ ३९ ॥ उक्तोपि बहुशः किंचिज्जडवाक्यमभाषत ॥ तदप्यसंस्कारगुणं ग्राम्यवाक्योक्तिसंश्रितम् ॥ ४० ॥ अपध्वस्तवपुः सोपि मलिनाम्बरधृग्द्विजः ॥ क्लिन्नदन्तान्तरः सर्वैः परिभूतः स नागरैः ॥ ४१ ॥ सम्माननापरां हानिं योगर्द्धेः कुरुते यतः॥ जनेनावमतो योगी योगसिद्धिं च विन्दति ॥ ४२ ॥

कालेनेति॥कालं मरणम् ॥३१॥ मृगमेवेति॥ तन्मयत्वेन चित्तवृत्तेस्तत्प्राचुर्येण ॥३२॥ ततश्चेति॥जम्बूमार्गे गङ्गातीरविशेषे ॥३३॥३४॥ शुष्कैरिति॥कर्मणः कर्मात्र च मृगस्नेहः तद्भावना च ॥३५॥३६॥ सर्वेति॥विज्ञानं शिल्पादिज्ञानं प्रकृतेः परं देहादिरूपेण स्थितायाः प्रकृतेर्विलक्षणं ज्ञानैकाकारमपश्यत् ॥३७॥ आत्मन इति॥ आत्मनोधिगतज्ञानः अधिगतात्मज्ञानः देवमनुष्यादिदेहस्थितानि सर्वभूतानि तत्तदाकारविलक्षणज्ञानैकाकारतया स्वात्मनो निर्विशेषाण्यपश्यत् ॥ ३८ ॥ नेति ॥ प्रागेवाध्ययनजन्यस्य ज्ञानस्य निसर्गादेव सिद्धेः विप्रत्वेपि वेदं न पपाठेत्याद्युक्तिर्युक्ता । "आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते" इति वचनात् अस्य च योगारूढत्वेन सिद्धात्मापरोक्षस्य यज्ञादिकर्माननुष्ठानं च युक्तम् । नैतावता वाक्यार्थज्ञानमात्रवतः कर्मत्यागो युक्तः "तत्प्राप्तिहेतुर्ज्ञानं च कर्म च" इत्यादिवचनात्॥ ३९ ॥व्यक्त इति॥जडवाक्यं जडस्येव वाक्यं हासावहम् । असंस्कारं व्याकरणाननुशिष्टम् । अगुणं श्लेषप्रसादादिगुणशून्यं, ग्राम्यवाक्यस्य व्रीडाजुगुप्सामाङ्गल्यदायिन उक्त्याश्रितम्॥४०॥ अपध्वस्तवपुरिति ॥ अपध्वस्तं पङ्कादिरूषितं, क्लिदन्तान्तरः अशोधितदशनमध्यः ॥ ४१ ॥ सम्माननेति ॥ सम्माननेत्यादिश्लोकद्वयं हिरण्यगर्भवचनम् ॥ योगिनो

कालेनेति ॥ कालं चक्रे मृत्युं प्राप ॥ ३१ ॥ ३२ ॥ ततश्चेति ॥ तत्कालकृतां भावनाम् अन्तकाले मृगचिन्तां, जम्बूमार्गे कालञ्जरे गिरौ । 'कालंजरात्प्रत्याजगाम' इति शुकोक्तेः । विष्णुसेवानुभावाज्जातिस्मरो मृगो जातः ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ नेति ॥ न ददर्श च कर्माणि निवृत्तवर्णाश्रमाद्यभिमानत्वात् ॥ ३९ ॥ व्यक्त इति ॥ असंस्कारगुणं संस्कारो व्याकरणोक्तः, गुणो यथोचितप्रियहितत्वादिः तद्रहितं यथा भवत्येवमभाषत ॥ ४० ॥ अपध्वस्तवपुरिति ॥ अपध्वस्तवपुः मलीमसदेहः, क्लिन्नानि आलापे नीलानि दन्तान्तराणि दन्तरंध्राणि यस्य सः ॥ ४१ ॥ ४२ ॥

तस्माच्चरेत वै योगी सतां धर्ममदूषयन् ॥ जना यथा वमन्येरन्गच्छेयुर्नैव सङ्गतिम् ॥ ४३ ॥ हिरण्यगर्भवचनं विचिन्त्येत्थं महामतिः ॥ आत्मानं दर्शयामास जडोन्मत्ताकृतिं जने ॥ ४४ ॥ भुंक्ते कुल्माषवाट्यादिशाकं वन्यं फलं कणान् ॥ यद्यदाप्नोति सुबहु तदत्ते कालसंयमम् ॥ ४५ ॥ पितर्युपरते सोऽथ भ्रातृभ्रातृव्यबान्धवैः ॥ कारितः क्षेत्रकर्मादिकदन्नाहारपोषितः ॥ ४६ ॥ समाक्षपीनावयवो जडकारी च कर्मणि ॥ सर्वलोकोपकरणं बभूवाहारवेतनः ॥ ४७ ॥ तं तादृशमसंस्कारं विप्राकृतिविचेष्टितम् ॥ क्षत्तासौवीर राजस्य काल्यै पशुमकल्पयत् ॥ ४८ ॥

इ न्यैस्सम्मान्यत्वेहमधिकोस्मीत्याद्यभिमानिकसुखभोगेनैव योगसुकृतं चारितार्थं स्यात् । एवमवमानजेन दुःखेन पापं च क्षीयते ॥ ४२ ॥ तस्मादिति ॥ सतां धर्ममदूषयन्निति यद्यसौ जडतामनभिव्यंजयन् कर्माणि नानुतिष्ठेत् तदेतरोजनस्तद्वत्कर्माणि नानुतिष्ठन्प्रत्यवायान्नरके पतेत् तस्माद्यथावमन्येरन् तथा जाड्येन चरेत् ॥ ४३ ॥ ४४ ॥ भुंक्त इति ॥ कुल्माष ईषत्पक्को माषयावकादिः । 'वाट्यो माषमयो भक्ष्यः कणः स्यात्क्षुद्रतण्डुलः' । यद्यदिति कालसंयमं मृत्युनिरोधकं देह धारकं भक्ष्यं यद्यदाप्नोति तत्तदल्पमपि संतोषात्सुबहुमन्यमानः अत्ते अत्ति भुंक्त इति यावत् । आत्मनेपदमार्षम् । तदत्त्येकान्तसंयमीति च पाठः ॥ ४५ ॥ पितरीति ॥ भ्रातृव्यः भ्रातृजः ॥ ४६ ॥ समाक्षेति ॥ जडकारी जडवत्कर्त्ता । कर्त्तर्युपमान इति णिनिः । आहारवेतनः आहारमात्रभृतिकः सर्वेषां कर्म करो बभूव ॥ ४७ ॥ तं तादृशमिति ॥ असंस्कारमृजादिरहितं न तूपनयनादिरहितम् । विप्राकृतिविचेष्टितं शिखायज्ञोपवीतस्नानसंध्याजपोपासनादिशिष्टाचा रमात्रवन्तम् ॥ ४८ ॥

तस्मादिति ॥ सतां वर्त्म त्वदूषयन् अवमानार्थमपि निषिद्धकर्म कुर्वन् ॥ ४३ ॥ हिरण्यगर्भवचनमिति ॥ संमाननेत्यादिश्लोकद्वयं हिरण्यगर्भोक्तयोगशास्त्रं विचिन्त्य ॥ ४४ ॥ भुंक्त इति ॥ कुल्माषः किञ्चित्पक्कमाषयाव कादिः । 'स्याद्यावकस्तु कुल्माषः' इत्यमरसिंहः । वाट्यो माषादिविकारः । आंध्रसौध्रः सुबहु असंकोचं यद्यदाप्नोति तत्तद्भुंक्ते लिम्पति देहाख्यं व्रणं लिंपन्नेवानासक्तः सन् भुंक्त इत्यर्थः । तथा च स्मृतिः "शरीरं व्रणवत्तद्वदन्नं च व्रणलेपनम् ॥ व्रणशोधनवत्स्नानं वस्त्रं च व्रणपट्टवत्" इति । कालसंयमं कालक्षपणमात्रं यथा भवति तथा । तदत्ते कालसंयममिति पाठे तस्याभावे कालसंयमं कालनियमं विना दिवा नक्तं वा यदृच्छाप्राप्तं यत्किमपि भंक्त इत्यर्थः ॥ ४५ ॥ पितरीति ॥ भ्रातृव्याः भ्रातृपुत्राः ॥ ४६ ॥ समाक्षेति ॥ जडवत्करोतीति जडकारी आहारो वेतनं भृतिर्यस्य सः ॥ ४७ ॥ इदानीं तस्यात्मवित्त्वं प्रख्यापयितुमाह

रात्रौ तं समलंकृत्य वैशसस्य विधानतः ॥ अधिष्ठितं महाकाली ज्ञात्वा योगेश्वरं तथा ॥ ४९ ॥ ततः खड्गं समादाय निशितं निशि सा तथा ॥ क्षत्तारं क्रूरकर्माणमच्छिनत्कंठमूलतः॥ स्वपार्षदयुता देवी पपौ रुधिरमुल्बणम् ॥५०॥ ततस्सौवीरराजस्य प्रयातस्य महात्मनः॥विष्टि कर्त्ताथ मन्येत विष्टियोग्योयमित्यपि ॥५१॥ तं तादृशं महात्मानं भस्मच्छन्नमिवानलम् ॥ क्षत्ता सौवीरराजस्य विष्टियोग्यममन्यत ॥५२॥ स राजा शिबिकारूढो गंतुं कृतमतिर्द्विज ॥ बभूवेक्षुमतीतीरे कपिलर्षेर्वराश्रमम् ॥ ५३ ॥ श्रेयः किमत्र संसारे दुःखप्राये नृणामिति ॥ प्रष्टुं तं मोक्षधर्मज्ञं कपिलाख्यं महामुनिम् ॥५४॥ उवाह शिबिकां तस्य क्षत्तुर्वचनचोदितः ॥ नृणां विष्टिगृहीतानामन्येषां सोपि मध्यगः ॥५५॥ गृहीतो विष्टिना विप्रः सर्वज्ञानैकभाजनम् ॥ जातिस्मरोसौ पापस्य क्षयकाम उवाह ताम् ॥५६॥ ययौ जडगतिः सोथ युगमात्रावलोकनम् ॥ कुर्वन्मतिमतां श्रेष्ठस्तदन्ये त्वरितं ययुः ॥ ५७ ॥ विलोक्य नृपतिः सोथ विषमां शिबिकागतिम् ॥ किमेतदित्याह समं गम्यतां शिबिका वहाः ॥ ५८ ॥ पुनस्तथैव शिबिकां विलोक्य विषमां हि सः ॥ नृपः किमेतदित्याह भवद्भिर्गम्यतेन्यथा ॥ ५९ ॥ भूपतेर्वदतस्तस्य श्रुत्वेत्थं बहुशो वचः ॥ शिबिकावाहकाः प्रोचुरयं यातीत्यसत्वरम् ॥ ६० ॥ राजोवाच ॥ किं श्रान्तोस्यल्पमध्वानं त्वयोढा शिबिका मम ॥ किमायाससहो न त्वं पीवानसि निरीक्ष्यसे ॥ ६१ ॥

॥ ४९ ॥ ५० ॥ ५१ ॥ तं तादृशमिति ॥ क्षत्ता सारथिर्द्वास्थो वा विष्टिकर्मकर्त्तुरफलदं बलात्कर्म तद्योग्यम् ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ गृहीत इति ॥ विष्टिना निमित्तेन ॥ ५६ ॥ ययाविति ॥ जडगतिः मन्दगतिः ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ किमिति ॥ आयाससहो ना॥सि किम् । आयाससह

तं तादृशमित्यादिना यावदंशसमाप्ति–तं तादृशमिति ॥ क्षत्ता पृषतराजस्येति च पाठः ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ तं तादृशमिति ॥ क्षत्ता द्वास्थः सारथिर्वा । विष्टिर्निर्मौल्यं कर्म तत्र योग्यं शिबिकावाहनादौ क्षमत्वात् असंस्कृतविप्राकृतित्वाच्च । स्मर्यते हि "सायं प्रातस्तथा संध्यां ये विप्रा न ह्युपासते ॥ तानेतान्धार्मिको राजा शूद्रकर्मसु योजयेत्" इति ॥ ५२ ॥ स इति ॥ शिबिका दारुमयं बहुपुरुषवाह्यं यानम् । तामारूढो भूत्वा कपिलस्य वराश्रमं गंतुं कृतमतिः सन् राजा शिबिकावहपुरुषागमनं प्रतीक्षमाणः इक्षुमत्या नद्यास्तीरे बभूव ॥ ५३ ॥ तद्गमनप्रयोजनमाह–श्रेय इति ॥ ५४ ॥ ५५ ॥ ५६ ॥ ययाविति ॥ जडगतिः मन्दगतिः सन् ॥ ५७ ॥ विलोक्येति ॥ किमेतद्विषमं गम्यते सम यथा भवति तथा गम्यतामित्याह ॥ ५८ ॥ ५९ ॥ भूपतेरिति ॥ अयमसत्वरं मंदं यातीति प्रोचुः ॥ ६० ॥ किमिति ॥ किं श्रांतोसि त्वं यतोल्पमेवाध्वानं त्वया शिबिका ऊढा आनीता । किञ्च–किं त्वम् आयाससहो नासि यतः पीवान् स्थूलो बलवान् निरीक्ष्यसे दृश्यसे पीवानिति नलोपाभत्र आर्षः ॥६१॥

॥ ब्राह्मण उवाच ॥ नाहं पीवा न चैवोढा शिबिका भवतो मया ॥ न श्रान्तोस्मि न चायासो सोढव्योस्ति महीपते ॥ ६२ ॥ राजोवाच ॥ प्रत्यक्षं दृश्यसे पीवानद्यापि शिबिका त्वयि ॥ श्रमश्च भारोद्वहने भवत्येव हि देहिनाम् ॥ ६३ ॥ ब्राह्मण उवाच ॥ प्रत्यक्षं भवता भूप यद्दृष्टं मम तद्वद ॥ बलवानबलश्चेति वाच्यं पश्चाद्विशेषणम् ॥ ६४ ॥ त्वयोढा शिबिका चेति त्वय्यद्यापि च संस्थिता ॥ मिथ्यैतदत्र तु भवाञ्छृणोतु वचनं मम ॥ ६५ ॥ भूमौ पादयुगं त्वास्ते जङ्घे पादद्वये स्थिते ॥ ऊर्वोर्जङ्घाद्वयावस्थौ तदाधारं तथोदरम् ॥ ६६ ॥ वक्षस्स्थलं तथा बाहू स्कन्धौ चोदरसंस्थितौ ॥ स्कन्धाश्रितेयं शिबिका मम भारोत्र किं कृतः ॥ ६७ ॥ शिबिकायां स्थितं चेदं वपुस्त्वदुपलक्षितम् ॥ तत्र त्वमहमप्यत्र प्रोच्यते चेदमन्यथा ॥ ६८ ॥ अहं त्वं च तथान्ये च भूतैरुह्याम पार्थिव ॥ गुणप्रवाहपतितो भूतवर्गोपि यात्ययम् ॥६९॥

एवासि तत्र हेतुः पीवान्निरीक्ष्यसे इति आर्षत्वान्नलोपाभावः ॥ ६१ ॥ नाहमिति ॥ पीवत्वादीनि नाहमर्थस्य किं तु शरीरस्येत्यभिप्रायः । आयासो भारोद्वहनादेर्देहक्लेशः । तेन कर्माशक्तिः श्रान्तिः ॥ ६२ ॥ अभिप्रायमजानन्पृच्छति प्रत्यक्षमिति ॥ ६३ ॥ प्रत्यक्षमिति ॥ प्रतिवक्तिः प्रत्यक्षं भवतेति मम यद्रूपं त्वया प्रत्यक्षं दृष्टं तद्वद नाहं दृष्टः अचाक्षुषत्वादात्मन इत्यभिप्रायः । तस्य पीवत्वं श्रान्त्यादिकर्म च बलाबलरूपविशेषणं पश्चाद्वाच्यं सुतरां दुर्वचम् । विशेष्यस्य धर्मिण एवाप्रत्यक्षत्वादितिभावः ॥६४॥ त्वयेति ॥ वचनमुत्तरमिति शेषः ॥ ६५ ॥ भूमाविति ॥ अवस्था स्थितिः ॥६६॥ वक्षस्स्थलमिति ॥ आतश्चोपसर्गे इति प्राङन्ताट्टाप् । मम अहमर्थस्य किं कृतो भारोऽतो नाहं वोढेत्यभिप्रायः ॥ ६७ ॥ नापि त्वं वाह्य इत्याह—शिबिकायामिति त्वदुपलक्षितः त्वयात्मत्वेन लक्षितः भ्रान्त्या दृष्टो देहः शिबिकायां स्थितः तत्र देहे स्थितस्त्वं अहमप्यस्मिन्देहे अत इदमात्मनोर्वाह्यत्वं वाहकत्वं चान्यथा मिथ्योच्यते ॥ ६८ ॥ यद्यहं त्वया नोह्ये केन तर्हि तत आह—अहं त्वं चेति ॥ भूतैर्देहत्वेन परिणतैः भूतसंघातस्य च गमनादिव्यापारभेदो गुणकृत इत्याह—गुणप्रवाहेति ॥ गुणपरिणामरूपतीव्रस्रोतोवेगपरतंत्रो याति तृणमिव

नेति ॥ नाहं पीवेति स्थौल्यशिबिकोद्वहनप्रयासानां देहधर्माणामात्मसंबंधो नास्तीत्यर्थः । तत्र श्रमकर्मण्यशक्तिः आयासः क्लेशः ॥६२॥ राजा लोकव्यवहारमुद्भावयन्नाह—प्रत्यक्षं दृश्यस इति ॥६३॥ ब्राह्मणस्तु लोकप्रतीतेर्मित्याभिप्रायेणाह—प्रत्यक्षमिति ॥ प्रत्यक्षं भवता यद्दृष्टं देहो वा जीवो वा परमात्मा वा प्रथमं वद विशेषणं पश्चाद्वाच्यं विशेष्याश्रयत्वाद्विशेषणस्य ॥ ६४ ॥ देवपक्षे तावदात्मनो भाराभावमाह त्वयेत्यादित्रिभिः ॥ संस्थिता संस्थितिः ॥ ६५ ॥ भूमाविति ॥ ऊर्वोर्जंघाद्वये अवस्था अवस्थानम् ॥ ६६ ॥ वक्षस्थलमिति ॥ पादादिव्यतिरेकेण देहस्यानिरूप्यत्वात्पदादीनामेवोत्तरोत्तरं प्रत्याधारत्वम् । अतो देहस्यैव तावद्भारो दुर्वचः मम तु तत्साक्षिणो भारः किं निमित्तं स्यादित्यर्थः ॥ ६७ ॥ यच्चोक्तं त्वयोढा शिबिका ममेति तदपि मिथ्येत्याह—शिबिकायामिति ॥ त्वदुपलक्षितं त्वया भ्रांत्यैवात्मत्वेन दृष्टं शरीरमेव शिबिकायां स्थितं न तु त्वम् । अतस्तत्र तस्यां शिबिकायाम् अहमप्यत्र भूमाविति तदपि अन्यथा मिथ्यैव प्रोच्यते ॥ ६८ ॥ जीवपक्षेप्याह—अहं त्वं चेत्यादिद्वाभ्याम्—अहं त्वञ्चेति ॥ सर्वेष्वपि जीवेष्वविद्यासंचितकर्माधीनस्सत्त्वादिगुणप्रवाहः तद्द्वारा च भूतवर्गो

कर्मवश्या गुणाश्चैते सत्त्वाद्याः पृथिवीपते ॥ अविद्यासंचितं कर्म तच्चाशेषेषु जन्तुषु ॥७०॥ आत्मा शुद्धोक्षरः शान्तो निर्गुणः प्रकृतेः परः॥ प्रवृद्ध्यपचयौ नास्य एकस्याखिलजन्तुषु ॥७१॥ यदा नोपचयस्तस्य न चैवापचयो नृप ॥ तदा पीवानसीतीत्थं कया युक्त्या त्वयेरितम् ॥ ७२ ॥ भूपादजंघाकटयूरुजठरादिषु संस्थिते ॥ शिबिकेयं यथा स्कन्धे तथा भारः समस्त्वया ॥ ७३ ॥ तथान्यैर्जन्तुभिर्भूप शिबिकोढा न केवलम् ॥ शैलद्रुमगृहोत्थोपि पृथिवी संभवोपि वा ॥ ७४ ॥ यदा पुंसः पृथग्भावः प्राकृतैः कारणैर्नृप ॥ सोढव्यस्तु तदायासः कथं वा नृपते मया ॥ ७५ ॥ यद्द्रव्या शिबिका चेयं तद्द्रव्यो भूतसंग्रहः ॥ भवतो मेऽखिलस्यास्य ममत्वेनोपबृंहितः ॥ ७६ ॥

वायूदकादिभिः दुर्लभमिव दृष्टाश्वाः । अन्तःकरणपर्यन्तं सम्भूतं तत्स्था गुणागमनासनेच्छाद्वेषादिरूपेण बहुधा प्रवर्त्तयन्ति अत्र "प्रकृतेः क्रियमाणानि" इत्याद्यनुसंधेयम्॥ ॥ ६९ ॥ गुणाश्च प्राचीनकर्मायत्तप्रवृत्तय इत्याह--कर्मवश्या इति । कर्म चाविद्यामूलमित्याह--अविद्येति । अनात्मसु देवादिदेहेष्वात्मबुद्धिरविद्या । तच्चाविद्यामूलं कर्म ब्रह्मादिसर्वजन्तुसाधारणमित्याह--तच्चाशेषेषु जन्तुष्विति । एवमात्मनो दृश्यत्वं वाहकत्वं च नास्तीत्युक्तम् ॥७०॥ अथ पीवत्वादिविशेषणत्वं नास्तीत्याह--आत्मेति ॥ शुद्धः कर्मरहितः पूयशोणिताद्यसंस्पृष्टश्च अक्षरः अविनाशी शान्तः अशनायाद्यूर्मिषट्करहितः निर्गुणः सत्त्वादिगुणरहितः । अत्र हेतुः प्रकृतेः पर इति । अतः प्रवृद्ध्यपचयौ नास्य हेत्वन्तरमाह--एकस्येति। एकस्यासङ्घातरूपस्य सङ्घातरूपस्य हि देहादेर्वृद्धिह्रासौ नासंघातरूपस्य गगनपरमाण्वादेः "अहं त्वं च तथान्ये च" इतिवद्यथा मयि तथा सर्वेष्वात्मसु साधारणमेतद्रूपमित्याह--अखिलजन्तुष्विति । उक्तमखिलजन्तुषु द्रष्टव्यमिति । यद्वा--अखिलजन्तुष्वेकस्येति सम्बन्धः जन्तुशब्दो देहविशिष्टात्मवाची जन्तुष्वात्मांश एक एवेत्यर्थः । देहानां संघातत्वात्प्रत्येकमनेकत्वम् ॥ ७१ ॥ ७२ ॥ मत्तोन्यस्मिन्स्कन्धे स्थितः शिबिकाभारो मम चेत्स्यात्तवापि स्यात् सर्वजीवानामपि स्यात् सर्वे भाराः सर्वेषां स्युरिति वाह्यादिप्रसङ्गं वाहकादिप्रसङ्गं चाह--भूपादेत्यादिद्वयेन ॥ ७३ ॥ ७४ ॥ अतो मम भारोद्वहनाभावात्तत्कृता श्रान्तिश्च नेत्याह--यदेति ॥ कारणैः करणेभ्यः ॥ ७५ ॥ किं च पार्थिवत्वाविशेषात्तज्जातीयकाष्ठादाविव देहे ममकारोपि न युक्तः किमुताहंकार इत्याह--यद्द्रव्येति ॥ भूतसंग्रहः देहो याति तदेवं भूतैरेव देहाकारपरिणतैस्तदभिमानिनो वयं सर्वे जीवास्तं तु फलोपभोगदेशमुह्याम प्राप्यामहे । ततो नावयोर्वाह्यवाहकभाव इत्यर्थः ॥ ६९ ॥ ७० ॥ परमात्मपक्षे तु त्वदुक्तं पीवत्वादिकम् अत्यंतनिर्युक्तिकमित्याह--आत्मेति ॥ शुद्धो देहादिव्यतिरिक्तः अक्षरोऽचलः शांतो रागादिशून्यः निर्गुणः सत्त्वादिगुणशून्यः प्रकृतेरपि परश्च अतोऽस्याखिलजंतुषु एकस्य परिपूर्णस्य प्रवृद्ध्यपचयौ न स्तः ॥ ७१ ॥ यथेति ॥ तदा पीवेति भाषणमयुक्तमित्यर्थः ॥ ७२ ॥ तदेवं मम देहादिव्यतिरिक्तत्वात् भारो नास्तीत्युक्तम् । इदानीं मद्व्यतिरिक्ते स्कंधे स्थितो भारो यदि मम स्यात्तर्हि सर्वेषामपि किन्न स्यात् यदि देहधियापि शिबिकया भारो ममोच्यते तर्हि पर्वतादेर्भारोपि किं नोच्यत इत्याह भूपादेत्यादिद्वाभ्याम्--भूपादेति ॥ भूपादादिषु स्थिते स्कंधे स्थितेयं शिबिका मम यदि भारः स्यात्तदा भारस्त्वया समस्स्यात् । तव चान्येषां चासौ भारस्स्यादित्यर्थः ॥ ७३ ॥ ७४ ॥ अत एव च मया सोढव्य आयासोपि नास्तीत्याह--यदेति ॥ ७५ ॥ किञ्च शिबिकायास्त्वदादिसर्वदेहानां भौतिकत्वेन नाने किं तवेयं शिबिका त्वं वा शिबिकायाः किमहं तव किं त्वं वा

॥ श्रीपराशर उवाच ॥ एवमुक्त्वाभवन्मौनी स वहञ्छिबिकां द्विज ॥ सोपि राजावतीर्योर्व्यां तत्पादौ जगृहे त्वरन् ॥७७॥ राजोवाच ॥ भोभो विसृज्य शिबिकां प्रसादं कुरु मे द्विज ॥ कथ्यतां को भवानत्र जाल्मरूपधरः स्थितः ॥ ७८ ॥ यो भवान्यन्निमित्तं वा यदागमनकारणम् ॥ तत्सर्वं कथ्यतां विद्वन्मह्यं शुश्रूषवे त्वया ॥७९॥ ब्राह्मण उवाच ॥ श्रूयतां सोहमित्येतद्वक्तुं भूप न शक्यते ॥ उपभोगनिमित्तं च सर्वत्रागमनक्रिया ॥ ८० ॥ सुखदुःखोपभोगौ तु तौ देहाद्युपपादकौ ॥ धर्माधर्मोद्भवौ भोक्तुं जन्तुर्देहादिमृच्छति ॥ ८१ ॥ सर्वस्यैव हि भूपाल जन्तोः सर्वत्र कारणम् ॥ धर्माधर्मौ यतः कस्मात्कारणं पृच्छते त्वया ॥ ८२ ॥ राजोवाच ॥ धर्माधर्मौ न सन्देहस्सर्वकार्येषु कारणम् ॥ उपभोगनिमित्तं च देहाद्देहान्तरागमः ॥ ८३ ॥ यस्त्वेतद्भवता प्रोक्तं सोहमित्येतदात्मनः ॥ वक्तुं न शक्यते श्रोतुं तन्ममेच्छा प्रवर्तते ॥ ८४ ॥

देहः ममत्वेनोपबृंहित इति वचनाद्देहे ममत्वमप्युपबृंहितम् आरोपितं न स्वतस्तदिति दर्शयति ॥ ७६ ॥ ७७ ॥ भोभो इति ॥ जाल्मो जडः ॥ ७८ ॥ को भवानित्येतद्विवृणोति यो भवानिति ॥ य इति जातिकुलप्रश्नः निमित्तं प्रयोजनम् आगतेः कारणं प्रतिपादकम् ॥ ७९ ॥ को भवानित्यस्य प्रश्नस्य एषोहमित्युत्तरे वक्तव्ये जात्यादेरनात्मधर्मत्वमभिप्रेत्य यस्त्वमिति प्रष्टुमहमेष इति प्रतिवक्तुं च न शक्यमित्याह—श्रूयतामिति ॥ निमित्तप्रश्नोत्तरमुपभोगेति पुंसः सर्वदेशेष्वागतिः सुखादिभोगाय ॥ ८० ॥ एतद्विवृणोति—सुखेति ॥ तौ धर्माद्युद्भवौ सुखादिभोगौ यस्मात्प्रतिनियतदेशदेहकालभोग्यौ तस्मात्तौ भोक्तुं जीवो देहदेशान्तराणि याति ॥ ८१ ॥ कारणप्रश्नोत्तरं सर्वस्येति ॥ सर्वत्र जन्मादावपि ॥ ८२ ॥ ८३ ॥ सोहमिति वक्तुं न शक्यत इत्युत्तरस्याभिप्रायमजानानश्चोदयति--यस्त्वेतदिति सार्द्धेन । यस्त्वेतदिति ॥ एतत्स्वरूपमिति शेषः ॥ ८४ ॥

ममेति गुणप्रधानाभावे नियामकं नास्तीत्याशयेनाह—यद्द्रव्येति ॥ भूतसंग्रहो देहः ॥ ७६ ॥ ७७ ॥ भो भो इति ॥ जाल्मरूपधरः जडवेषधृक् ॥ ७८ ॥ को भवानिति तद्विवृण्वन्नाह—य इति ॥ यो यज्जातीयः यन्निमित्तं येन प्रयोजनेन तवेहागमनं यच्चागमने कारणं हेतुः तत्सर्वं कथ्यताम् ॥ ७९ ॥ को भवानित्यस्योत्तरं वक्तुमशक्यमित्याह—श्रूयतामिति ॥ यन्निमितसित्यस्योत्तरमाह—उपभोगेति ॥ ८० ॥ उपभोगस्य देशान्तरादिगमनप्रयोजनत्वं स्फुटयति—सुखदुःखेति ॥ नियतदेशकालभोक्तृत्वं च सुखदुःखयोर्धर्माधर्मवशादित्याह—धर्माधर्मेति ॥ ८१ ॥ यदागमनकारणमित्यस्योत्तरमाह—सर्वत्रेति ॥ यतः सर्वत्र सुखदुःखतत्साधनादौ धर्माधर्मावेव सर्वस्य कारणम् अतो ममागमने विशेषतः कारणं त्वया कस्मात्पृच्छयत इत्यर्थः ॥ ८२ ॥ राजा तदागमनप्रश्नद्वयोत्तरमङ्गीकुर्वन्प्रथमप्रश्नोत्तरमाक्षिपति—धर्माधर्मावित्यादित्रिभिः ॥ ८३ ॥ यस्त्विति ॥ सोह

योस्ति सोहमिति ब्रह्मन्कथं वक्तुं न शक्यते ॥ आत्मन्येष न दोषाय शब्दोहमिति यो द्विज ॥८९॥ ब्राह्मण उवाच ॥ शब्दोहमिति दोषाय नात्मन्येष तथैव तत् ॥ अनात्मन्यात्मविज्ञानं शब्दो वा भ्रान्तिलक्षणः ॥ ८६ ॥ जिह्वा ब्रवीत्यहमिति दन्तोष्ठौ तालुके नृप ॥ एतेनाहं यतः सर्वे वाङ्निष्पादनहेतवः ॥ ८७ ॥ किं हेतुभिर्वदत्येषा वागेवाहमिति स्वयम् ॥ अतः पीवानसीत्येतद्वक्तुमित्थं न युज्यते ॥ ८८ ॥

य इति ॥ य आत्मा कर्तृभोक्तृरूपेण स्फुरन्सदास्ति सोहमितिशब्देन कथं वक्तुं न शक्यते न हि निरर्थकोऽहं शब्दः न च निर्विशेषणकोऽहमर्थः । आत्मा शुद्ध इत्यादिविशेषेणोक्तेः । तस्मात्सोहमित्युक्तौ नानुपपत्तिः यो भवानिति प्रष्टुं च नानुपपत्तिरिति भावः । अनात्मनि खल्वहमिति शब्दो न प्रयुज्यते आत्मनि तु तस्य प्रयोगे को दोष इत्यभिप्रायेणाह-आत्मनीति ॥ ८९ ॥ उत्तरमाह-शब्दोहमिति ॥ अयमभिप्रायः प्रतिवक्तुरेषोहंशब्दो नात्मनि दोषायेति यदुक्तं तत्सत्यम् । अहंता हि प्रत्यक्तं तेन प्रत्यक्त्वेनावभासमान एवात्मा न देहादिः अतोऽयमेवाहमिति वक्तुं शक्योपि सोहमिति वक्तुं यो भवानिति प्रष्टुं च न शक्यते तस्य शुद्धादिविशेषणान्तरसद्भावेपि जात्यादिधर्मासद्भावादिति आत्मविज्ञानमहं बुद्धिशब्दः अहमिति शब्दः । एवं तावद्देहादिविलक्षणात्मपक्षपरिग्रहेण योस्ति सोहमिति प्रश्नप्रतिवचनोपपत्तिं वदन्नृपः प्रत्युक्तः ॥ ८६ ॥ इदानीं देहाद्यात्मत्वपक्षं तस्य मते प्रधानं कुर्वन्निराकरोति जिह्वेति त्रिभिः ॥ हे नृप जिह्वाद्यहमिति ब्रवीतीति किं मन्यसे तन्न एतेनाहमिति बहुत्वान्नाहमर्थः । अहमर्थस्यैकत्वेन प्रतीतेः किं च यतो जिह्वादीनि शब्दनिष्पत्तिकारणानि अतो न कर्तृभावमनुभवन्ति कर्ता खल्वात्मा अनेन न्यायेनाहं स्पृशामि स्मरणमित्यादिषु बाह्यान्तःकरणानामात्मत्वनिरासः ॥ ८७ ॥ शंकान्तरमाह—किं हेतुभिरिति ॥ अथवागेवेन्द्रियरूपाजिह्वाद्यैः करणैः स्वातंत्र्येणाहमिति ब्रवीति तेन सैवात्मेति मतम् तच्च न तस्या अपि करणत्वेन स्वातंत्र्याभावात् आत्मत्वे च वाचःस्थौल्याभावात्पीवानसीत्यात्मधर्मत्वेन पीवत्वोक्तिव्याहतेः मम वागिति भेदव्यवहारानुपपत्तेश्च केचिच्छब्द एवार्थ इति वैय्याकरणपक्षपरिग्रहेण जिह्वादिकरणैर्वाणी स्वात्मानमहमिति वदतीति यथा घटशब्द

मित्येतदहंशब्दार्थत्वमात्मनो वक्तुं न शक्यत इति यत्त्वेतद्भवता प्रोक्तं तच्छ्रोतुमिच्छन्वयः ॥ ८४ ॥ खपुष्पादितुल्यश्चेति वात्मा स्यात्तर्हि वक्तुं न शक्येत तत्तावन्नास्तीत्याह-योऽस्तीति ॥ यदि च गुरौ हुङ्कारत्वंकारादिवदात्मन्यहंशब्दो दोषाय स्यात्तदा वक्तुं न शक्यते तच्च नास्तीत्याह—आत्मनीति ॥ ८९ ॥ ब्राह्मणस्यात्मन्यहंशब्दप्रयोगस्य प्रत्यवायाभावमंगीकृत्याहंशब्दस्यात्मवाचकत्वासंभवादशक्यत्वमुक्तमित्याह शब्दोहमित्यादिना-शब्दोहमिति ॥ अहमित्येष शब्द आत्मनि दोषाय न भवतीति त्वयोक्तं तत्तथैव । किं त्वहंशब्दादनात्मन्यात्मविज्ञानं स्यादहंशब्दश्चानात्मनि भ्रान्तिलक्षणोमूलः स्यात् । अहंशब्दस्य मिथ्यात्वविषयत्वादनात्मन्यात्मविज्ञानं दोषाय स्यादित्यर्थः ॥ ८६ ॥ तथाहि--जिह्वेति ॥ अहं ब्रवीमीत्यादिषु युष्मदर्थविलक्षणे अहंशब्दप्रयोक्तर्यहंशब्दः प्रयुज्यते । तत्प्रयोक्ता च किं जिह्वादिवागिन्द्रियं वा क्षेत्रज्ञो वा ॥ ८७ ॥ तत्र जिह्वादेरनात्मत्वमाह--किमिति ॥ हेतुभिर्जिह्वादिभिस्सह कृता किं वागेव स्वयमहमिति वदतः मतं तथापि वागिंद्रियमहं न भवामि । अत इत्थमेतद्वक्तुं न युज्यते इंद्रियस्यापि कारणत्वादेवेत्यर्थः ॥ ८८ ॥

पिण्डः पृथग्यतः पुंसः शिरःपाण्यादिलक्षणः ॥ ततोहमिति कुत्रैतां संज्ञां राजन्करोम्यहम्॥८९॥यद्यन्योस्ति परः कोपि मत्तः पार्थिवसत्तम ॥ तदैषोहमयं चान्यो वक्तुमेवमपीष्यते ॥ ९० ॥ यदा समस्तदेहेषु पुमानेको व्यवस्थितः ॥ तदा हि को भवान्सोहमित्येतद्विफलं वचः ॥९१॥

एव घट इत्युच्यत इति वर्णयन्ति । तत्राप्युक्त एव दोषः । अनेन न्यायेन स्पर्शरूपादीनां बुद्धिसुखेच्छादीनां च कर्तृत्वनिषेधः ॥ ८८ ॥ एवं जिह्वाद्याधारः शिरःपायुपाण्यादिसमुदायो देहोपि नात्मा, जागरे मम देह इति पृथग्भावात् । स्वप्नसुषुप्त्योरात्मनि भासमानेपि देहस्यान्यथाभानादभानाच्च स्वर्गकामादिश्रुतिसिद्धशरीरविलक्षणात्मप्रसिद्धिविरोधाच्च । यद्वा पिण्डः पुंसः पृथक् शिरःपाण्यादिरूपेणानेक इति यतोहमर्थश्चैक इति योजनान्तरम् । तस्माद्देहेन्द्रियादीनामनात्मत्वात्तेषु कुत्राऽहंशब्दं करोमीत्याह—तत इति ॥ ८९ ॥ ननु देहादिव्यतिरिक्तस्याहंशब्दो वाचकोस्त्वित्याशंक्य तस्य सर्वभूतेष्ववस्थितस्य ज्ञानैकाकारतया एकप्रकारत्वाच्छुद्धत्वाच्चासाधारण्याद्व्यावर्त्तकजात्यादिधर्माभावाच्च को भवान्सोहमिति प्रश्नप्रतिवचने निरर्थके इत्याह—यद्यन्योस्तीति द्वयेन । यद्यन्योस्तीति॥नात्रात्मनां व्यक्त्यैक्यं प्रतिपाद्यते कुतः यद्यन्योस्ति परः कोपि मत्त इति स्वस्माद्व्यतिरिक्तमात्मानमभ्युपगम्य तस्यान्यत्वनिषेधात् एकस्मिन्नर्थे परशब्दान्यशब्दयोः प्रयोगायोगात् अन्यशब्दः परस्यापि ज्ञानैकाकारत्वादन्यकारत्वप्रतिषेधार्थः। एतदुक्तं भवति यदि मद्व्यतिरिक्तः कोप्यात्मा मदाकारभूतज्ञानाकारादन्याकारः स्यात्तदाहमेवंप्राकारोऽयं चान्यादृशाकार इति शक्येत व्यपदेष्टुम् । न चैवमस्ति सर्वेषां ज्ञानैकाकारतया समत्वात् जातिकुलादेरनात्मधर्मत्वाच्च प्रकारैक्ये च एकत्वव्यवहारो मुख्य एव समानधर्मासमानधर्मेत्यस्मिन्नर्थे समानधर्मानेकधर्मेति प्रयोगदर्शनात् "एको व्रीहिः सुनिष्पन्नः सुपुष्टः कुरुते प्रजाः" इति च दर्शनात् । अतो नायमौपचारिकः प्रयोगः प्रकारैकत्वस्य निमित्तस्य विद्यमानत्वात् । अत्र पूर्वश्लोकेनात्मभेदनिर्देशमुखेन तेषामनेकाकारत्वं निषिद्धम् । उत्तरश्लोकेनैकाकारता विधीयतेआत्मैकत्वपक्षे—" नित्योनित्यानां चेतनश्चेतनानाम्, अहं त्वं च तथान्ये च" इत्यादिना विरोधः । समानाकारत्वं च "निर्दोषं हि समं ब्रह्म" इत्यादिषूक्तम् । तस्मादात्मनां वैषम्याभावात्प्रश्नप्रतिवचने न युक्ते इत्यर्थः ॥ ९० ॥ ९१ ॥

देहपक्षेप्यनात्मत्वमाह–पिंड इति ॥ पिंडो देहः पुंसः आत्मनः पृथगेव दृश्यत्वाद्घटवदित्यर्थः ॥ ८९ ॥ क्षेत्रज्ञपक्षेप्याह—यदीत्यादिद्वाभ्याम्--यदीति ॥ मत्तोन्यः सजातीयः परो विजातीयो वा यदि कोप्यस्ति तदा तद्व्यवच्छेदेन एषोहमिति वक्तुं युज्यते ॥ ९० ॥ किं च यदेति॥यदा तु सर्वदेहेष्वेक एवात्मा साक्षितया व्यवस्थितः तदा को भवानिति बहुषु निर्धारणरूपं तव प्रश्नवचः सोहमित्यन्यव्यावृत्त्या मम प्रतिवचश्च विफलम् ॥९१॥

त्वं राजा शिबिका चेयमिमे वाहाः पुरःसराः ॥ अयं च भवतो लोको न सदेतन्नृपोच्यते ॥ ९२ ॥ वृक्षाद्दारु ततश्चेयं शिबिका त्वदधिष्ठिता ॥ किं वृक्षसंज्ञा वास्याः स्याद्दारुसंज्ञाथ वा नृप ॥ ९३ ॥ वृक्षारूढो महाराजो नायं वदति ते जनः ॥ न च दारुणि सर्वस्त्वां ब्रवीति शिबिकागतम् ॥ ९४ ॥ शिबिकादारुसंघातो रचनास्थितिसंस्थितः ॥ अन्विष्यतां नृपश्रेष्ठ तद्भेदे शिबिका त्वया ॥ ९५ ॥ एवं छत्रशलाकानां पृथग्भावे विमृश्यताम् ॥ क्व यातं छत्रमित्येतन्न्यायस्त्वयि तथा मयि ॥ ९६ ॥ पुमांस्त्रीगौरजो वाजी कुञ्जरो विहगस्तरुः ॥ देहेषु लोकसंज्ञेयं विज्ञेया कर्महेतुषु ॥ ९७ ॥ पुमान्न देवो न नरो न पशुर्न च पादपः ॥ शरीराकृतिभेदास्तु भूपैते कर्मयोनयः ॥ ९८ ॥

एवं तावद्देहादीनां पृथगुपलब्धिकारणत्वानेकत्वादिभिरनात्मत्वमुक्तम् । इदानीमनित्यत्वेनानात्मत्वमाह—त्वं राजेत्यादिनाध्यायशेषेण त्वं राजेति ॥ अत्र शिबिकाग्रहणं यद्वद्व्या शिबिकेति वदनित्यत्वेऽनात्मत्वे च दृष्टान्तार्थम् । एतद्राजशिबिकादिसर्वं न सदनित्यम् । अतो नात्मेत्यभिप्रायः ॥ ९२ ॥ दृष्टान्तं निरूपयति वृक्षारूढ इति ॥ इयं शिबिका जीवद्दशायां वृक्षः भिन्नो दारु पश्चात्संयोजिता शिबिका । तत्र शिबिकावस्थायां वृक्षदारुसंज्ञे क्व गते वृक्षत्वाद्यवस्थानाशान्नष्टे इत्यर्थः ॥ ९३ ॥ एतदुपपादयति वृक्षारूढ इति ॥ जनो वृक्षारूढ इति न वदति दारुण्यारूढ इति च किं तु शिबिकागतं ब्रवीति ॥ ९४ ॥ शिबिका चास्थिरेत्याह शिबिकेति ॥ रचनास्थितिसंस्थितो दारुसंघातः शिबिका सा तद्भेदेऽन्विष्यतां नष्टेत्यर्थः ॥ ९५ ॥ एवमिति॥ एवं शलाकापृथग्भावे छत्रं विमृश्यताम् । त्वमहमर्थतया लोकाभिमतेष्वनित्येषु शरीरेष्वप्येष न्यायः ॥ ९६ ॥ पुमानिति ॥ आत्मतयाभिमतेषु देहेषु लोकसंज्ञा न तु शास्त्रन्यायदृष्टात्मसंज्ञा ॥ ९७ ॥ पुमानिति ॥ पुमानात्मा

ननु शिबिकाद्यचेतनभेदस्य वाह्यवाहकादिचेतनभेदस्य च दृश्यमानत्वात्कथमात्मनस्सजातीयविजातीयभेदो नास्तीत्याशंक्य तद्भेदस्य मिथ्यात्वमाह—त्वं राजेत्यादिना—त्वं राजेति ॥ लोकः परिजनः इत्येतत्सर्वं सन्नोच्यते अपि त्वसदेव ॥ ९२ ॥ अत्र तावच्छिबिकाकारणरूपस्य वृक्षादेरसत्त्वमाह—वृक्ष इति ॥ सरसो वृक्षः, ततश्छिन्नं शुष्कं काष्ठं दारु, ततश्चतुरस्ररचितेयं शिबिका, तथा च वृक्षदारुसंज्ञयोरभावाद्व्यभिचारत्वेन वृक्षदारुणोर्मिथ्यात्वमित्यर्थः ॥ ९३ ॥ शिबिकावस्थायां वृक्षदारुसंज्ञानिवृत्तिं तद्व्यवहारनिवृत्त्योपपादयति—वृक्षारूढ इति ॥ ९४ ॥ शिबिकावस्थाया अपि मिथ्यात्वमाह—शिबिकेति ॥ रचनास्थित्या संस्थितो दारुसंघातः शिबिका । दारुभेदे काष्ठविभागे कृते शिबिका क्व गतेति त्वया तार्किकेणान्विष्यताम् ॥ ९५ ॥ एवमिति ॥ एवं छत्रारंभकाणां शलाकानां विभागे न त्वं न चाहमित्यर्थः ॥ ९६ ॥ ननु तर्हि व्यवहारस्य किं मूलमित्यपेक्षायां वाचारंभणमित्याह—पुमांस्त्रीति ॥ कर्मैव हेतुर्येषां तेषु देहेषु इयं लोके संज्ञा न त्वात्मनि ॥ ९७ ॥ तस्य साक्षितया सर्वत्रैकरूप्यादिदर्शयन्नाह—पुमानिति ॥ ९८ ॥

वस्तु राजेति यल्लोके यच्च राजभटात्मकम् ॥ तथान्यच्च नृपेत्थं तन्न सत्संकल्पनामयम् ॥९९॥ यत्तु कालान्तरेणापि नान्यां संज्ञामुपैति वै ॥ परिणामादिसंभूतां तद्वस्तु नृप तच्च किम् ॥ १०० ॥ त्वं राजा सर्वलोकस्य पितुः पुत्रो रिपो रिपुः॥ पत्न्याः पतिः पिता सूनोः किं त्वां भूप वदाम्यहम् ॥ १०१ ॥ त्वं किमेतच्छिरः किं नु ग्रीवा तव तथोदरम् ॥ किमु पादादिकं त्वं वा तवैतत्किं महीपते ॥ १०२ ॥ समस्तावयवेभ्यस्त्वं पृथग्भूय व्यवस्थितः ॥ कोऽहमित्यत्र निपुणो भूत्वा चिन्तय पार्थिव ॥ १०३ ॥ एवं व्यवस्थिते तत्त्वे मयाहमिति भाषितुम् ॥ पृथक्करणनिष्पाद्यं शक्यते नृपते कथम् ॥ १०४ ॥ इति श्रीविष्णुमहापुराणे द्वितीयेंशे त्रयोदशोऽध्यायः ॥ १३ ॥ ॥

न देवादिरूपः एते देवत्वादयः ॥ ९८ ॥ वस्त्विति ॥ इत्थं सप्रतियोगिकं पितृपुत्रादिकं यत्तत्संकल्पनामयं संकल्पना उत्पत्तिस्तन्मयं तत्प्रचुरं अतो न सत् ॥९९॥ अत्राचिद्वस्तुन्यवस्त्वसच्छब्दौ न तुच्छत्वमिथ्यात्वपरावपि तु विनाशित्वपरावित्याह—यत्त्विति ॥ यत्तु कालभेदेन परिणामोपाध्यादिभिः कृतामन्यसंज्ञां न याति तद्वस्तु तत्किं दृश्येषु न किंचिदित्यर्थः । यच्चावस्त्वित्युक्तं तन्न तुच्छं मिथ्या वा कालान्तरेणेति वचनात् । विधिनिषेधयोर्देशकालैक्ये हि विरोधः । अत्र तु कालभेदादविरोधः॥ ॥ १०० ॥ अस्थिरमसदित्युक्तं तन्निदर्शयति—त्वं राजेति ॥ राजत्वादेर्लौकाद्युपाधिकत्वादस्थिरत्वम् ॥ १०१ ॥ अथ पिण्डः पृथगित्यादिना संक्षेपेणोक्तमर्थमुपपादयन्देहात्मविवेकं प्रकरणार्थमुपसंहरति त्वं किमेतदिति ॥ अन्धतमस्यक्षिनिमीलने च निरवयवत्वेनात्मनः प्रत्यक्तयाऽहमिति भासमानत्वादिदं बुद्धिबोध्यमदृश्यापरभागं च शिर आदिर्नात्मा न चात्मनोऽवयवः ॥ १०२ ॥ समस्तावयवेभ्य इति ॥ तस्मादेभ्यः पृथगात्मा व्यवस्थित इत्यर्थः । निपुणो भूत्वेति पाठः । यथोक्तं यामुनाचार्यैः "अहंबुद्ध्या परागर्थात्प्रत्यगर्थो हि भिद्यते" इति ॥ १०३ ॥ प्रकृतं प्रश्नप्रतिवचनवैय्यर्थ्यमुपसंहरति एवमिति ॥ तत्त्वे आत्मस्वरूपे पृथक्करणं पृथक्कारः देवादिजातिचतुर्णां पृथक्कारस्य भेदस्य देहगतत्वेनानात्मधर्मत्वादात्मान्तरेभ्यः पृथक्करणनिष्पाद्यं सोहमिति वचनं भाषितुं न शक्यं सर्वसाधारणाकारोऽहमिति वक्तुं न शक्यत इत्यर्थः ॥ १०४ ॥ इति श्रीविष्णुमहापुराणव्याख्याने विष्णुचित्तीये द्वितीयेंशे त्रयोदशोऽध्यायः ॥ १३ ॥ ॥

अतो लोकव्यवहारास्पदं वस्तु संकल्पमात्रविलसितमित्याह--वस्त्विति ॥९९॥ एतदेव परमार्थवस्तु वैलक्षण्येन स्पष्टीकरोति--यत्त्विति ॥ परिणामादिना जातं संज्ञान्तरं कालान्तरेणापि यन्न प्राप्नोति तत्परमार्थवस्तु तच्चात्र किं न किञ्चित् । राजादीनामपि बाल्ययौवनादिपरिणामादवस्तुत्वमित्यर्थः । तदुक्तं महीघटत्वमित्यादि ॥ १०० ॥ वर्तमानकालेऽप्यनवस्थितरूपत्वान्मिथ्यात्वमाह--त्वं राजेति ॥ १०१ ॥ ननु राजादिरूपस्य प्रतियोगिभेदेनाव्यवस्थितत्वेपि शिरःपाण्यादिमानहमेकरूप एवेत्यत्राह--त्वमिति ॥ अवयवावयविभावः स्यान्निरुक्तेस्तदपि वक्तुमशक्यमिति भावः ॥ १०२ ॥ ननु तथापि यूथवनादिवदवयवस्वरूपोऽहं वस्तुभूतः किं न स्यां तत्राह--समस्तेति ॥ अवयवानामुपचयेपि तद्द्रष्टृत्वेन पृथगैकरूप्येण त्वं व्यवस्थितः द्रष्टुश्च स्वप्रकाशितया शब्दादिगोचरत्वासंभवात्त्वमेव स्वानुभवेन चिन्तयेत्याह--कोऽहमित्यत्रेति ॥ १०३ ॥ अतो मया यदुक्तं सोहमित्येतद्वक्तुं न शक्यत इति तत्स्वेष्टमुपसंहरति--एवमिति ॥ एवमभिन्ने तत्त्वे व्यवस्थिते सति पृथक्करणेनास्य व्यवच्छेदेन निष्पाद्यमुच्चार्यमेषोहमित्युत्तरं कथं भाषितुं शक्यमित्यर्थः ॥ १०४ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां द्वितीयांशे त्रयोदशोऽध्यायः ॥ १३ ॥ ॥

(१) देहादेर्विविक्तं विज्ञानमित्यर्थः

॥ श्रीपराशर उवाच ॥ निशम्य तस्येति वचः परमार्थसमन्वितम् ॥ प्रश्रयावनतो भूत्वा तमाह नृपतिर्द्विजम् ॥ १ ॥ राजोवाच ॥ भगवन्यत्त्वया प्रोक्तं परमार्थमयं वचः ॥ श्रुते तस्मिन्भ्रमन्तीव मनसो मम वृत्तयः ॥ २ ॥ एतद्विवेकविज्ञानं यदशेषेषु जन्तुषु ॥ भवता दर्शितं विप्र तत्परं प्रकृतेर्महत् ॥ ३ ॥ नाहं वहामि शिबिकां शिबिका न मयि स्थिता ॥ शरीरमन्यदस्मत्तो येनेयं शिबिका धृता ॥ ४ ॥ गुणप्रवृत्त्या भूतानां प्रवृत्तिः कर्मचोदिता ॥ प्रवर्त्तन्ते गुणा ह्येते किं ममेति त्वयोदितम् ॥ ५ ॥ एतस्मिन्परमार्थज्ञ मम श्रोत्रपथं गते ॥ मनो विह्वलतामेति परमार्थार्थितां गतम् ॥६॥ पूर्वमेव महाभागं कपिलर्षिमहं द्विज ॥ प्रष्टुमभ्युद्यतो गत्वा श्रेयः किं त्वत्र शंस मे ॥ ७ ॥ तदन्तरे च भवता यदेतद्वाक्यमीरितम् ॥ तेनैव परमार्थार्थं त्वयि चेतः प्रधावति ॥८॥ कपिलर्षिर्भगवतः सर्वभूतस्य वै द्विज ॥ विष्णोरंशो जगन्मोहनाशायोर्वीमुपागतः ॥ ॥९॥ स एव भगवान्नूनमस्माकं हितकाम्यया ॥ प्रत्यक्षतामत्र गतो यथैतद्भवतोच्यते ॥ १० ॥ तन्मह्यं प्रणताय त्वं यच्छ्रेयः परमं द्विज ॥ तद्वदाखिलविज्ञानजलवीच्युदधिर्भवान् ॥ ११ ॥ ब्राह्मण उवाच ॥ भूप पृच्छसि किं श्रेयः परमार्थं नु पृच्छसि ॥ श्रेयांस्यपरमार्थानि अशेषाणि च भूपते ॥ १२ ॥

पूर्वाध्याये देहादिव्यतिरिक्त आत्मेत्युक्तम् अनन्तरेणाध्यायेन स एव नित्यत्वानन्यार्थत्वानौपाधिकत्वादिभिः परमपुरुषार्थ इत्युच्यते–निशम्येति ॥ परमार्थसमन्वितं परमार्थतया वक्ष्यमाणेनात्मना समन्वितं तद्विषयम् ॥ १ ॥ भगवन्निति ॥ परमार्थमयम् आत्मयाथात्म्यप्रतिपादकत्वेन परमप्रयोजनरूपम् । भ्रमन्ति परमपुरुषार्थशुश्रूषया पर्याकुला भवन्ति ॥ २ ॥ उक्तमनुवदन्नेवं प्रशंसति एतदिति ॥ यच्च प्रकृतेर्विवेकविज्ञानमस्ति तद्विवेकविज्ञानं यदेतदशेषजन्तुष्वनुवृत्तम् । विवेकविज्ञानमात्मतत्त्वं तत्प्रकृतेः परं विलक्षणं महच्च ॥३॥ ४ ॥ ५ ॥ एतस्मिन्निति ॥ आत्मा शुद्धोऽक्षर इति वचनात् । परमार्थार्थितां गतं परमप्रयोजनश्रवणेनार्थितां गतम् । 'परमार्थार्थतां गतम्' इति च पाठः ॥६॥७॥८॥९॥ स एवेति ॥ यदेतदिति एतदात्मकत्वं परमार्थार्थतां गतम् ॥ १० ॥ ११ ॥ श्रेयः किंत्विति नृपेण पूर्वमुक्तत्वात् । श्रेयःपरमार्थयोरत्यन्तवैलक्षण्यात्तयोः कतरत्पृच्छसीति विकल्पयति–भूप इति ॥ अपरमार्थानि अपरमार्थवस्तूनि आर्षत्वादर्थशब्दस्य नपुंसकत्वम् ॥ १२ ॥

नाहमित्यादिवाक्येन प्रमाणासंभवे गते । प्रमेयासंभवे शङ्की भूपोऽथ परिपृच्छति ॥ १ ॥ १ ॥ नाहं पीवेत्यादिवाक्यश्रवणतः प्रमाणासंभावनायां निवृत्तायामपि नानादर्शनप्रसिद्धश्रेयसां परमार्थत्वे सत्यात्मैव परमार्थ इत्यस्य प्रमेयस्यासंभावनया पृच्छति भगवन्नित्यादिदशभिः ॥ २ ॥ तर्हि मया किं संदिग्धमुक्तं येन तव मनसो वृत्तयो भ्रामन्तीत्यत आह--एतदिति ॥ यदेतद्भवता विवेकविज्ञानं दर्शितं तत्प्रकृतेः परं महद्ब्रह्मैव दर्शितं न तु त्वद्वाक्ये संदेहः कश्चिदस्तीत्यर्थः ॥ ३ ॥ तद्वाक्यमेवानुवदन् तत्र संदेहाद्यभावं दर्शयन्नाह--नाहं वहामीति ॥ ४ ॥ ५ ॥ ६ ॥ न चात्र ममानधिकारितया सम्यग्बोधानुत्पत्तिः । इतः प्रागेव तत्त्वजिज्ञासया गुरूपसत्तौ प्रवृत्तत्वादिति स्ववृत्तं कथयन्नाह--पूर्वमेवेति ॥ अत्र संसारे किं श्रेयः संश्रव इति कपिलमृषिं गत्वा प्रष्टुमभ्युद्यतोऽस्मि ॥ ७ ॥ ८ ॥ ॥ ९ ॥ स एवेति ॥ यथैतद्भवतोच्यते तेन स एव प्रत्यक्षतां गत इति मन्ये । अन्यस्यैवंविधोक्तेरसंभवादिति भावः ॥ १० ॥ तदिति ॥ अखिलानि यानि विज्ञानानि तान्येव जलवीचयो यस्मिन्स उदधिः परमज्ञानार्णवो भवान् अतः परमार्थरूपं श्रेयो वदेत्यर्थः ॥ ११ ॥ अत्र शास्त्रांतरसंमतेभ्यश्श्रेयोभ्यः आत्मतत्त्वमेव परमार्थ इति निर्णेतुं श्रेयःपरमार्थयोर्भेदं विकल्पपूर्वकमाह--भूपेति ॥ नु विकल्पे श्रेयांस्यपरमार्थान्यशेषा

देवताराधनं कृत्वा धनसम्पदमिच्छति ॥ पुत्रानिच्छति राज्यं च श्रेयस्तस्यैव तन्नृप ॥ १३ ॥ कर्म यज्ञात्मकं श्रेयः फलं तत्प्राप्तिलक्षणम् ॥ श्रेयः प्रधानं च फले तदेवानभिसंहिते ॥ १४ ॥ आत्मा ध्येयः सदा भूप योगयुक्तैस्तथा परम् ॥ श्रेयस्तस्यैव संयोगः श्रेयो यः परमात्मनः ॥ १५ ॥ श्रेयांस्येवमनेकानि शतशोथ सहस्रशः ॥ सन्त्यत्र परमार्थस्तु न त्वेते श्रूयतां च मे ॥ १६ ॥ धर्माय त्यज्यते किंतु परमार्थो धनं यदि ॥ व्ययश्च क्रियते कस्मात्कामप्राप्त्युपलक्षणः ॥ १७ ॥ पुत्रश्चेत्परमार्थः स्यात्सोप्यन्यस्य नरेश्वर ॥ परमार्थभूतः सोन्यस्य परमार्थो हि तत्पिता ॥ १८ ॥

धनादियोगान्तमुत्तरोत्कृष्टं श्रेयःसतर्कं दर्शयति देवतेतित्रिभिः ॥ देवताराधनमिति—तत्प्राप्तिलक्षणं तेषां धनादीनां प्राप्तिरूपम् ॥ १३ ॥ कर्मेति ॥ फलेऽनभिसंहिते सति तदेव कर्म मुख्यं श्रेयः ॥ १४ ॥ आत्मेति ॥ आत्मा ध्येय इति श्रेयः तद्ध्यानं श्रेय इत्यर्थः । तस्यैव जीवस्यैव परमात्मना संयोग ऐक्यम् । 'श्रेयो यत्परमात्मने' इति च पाठः ॥ १५ ॥ श्रेयांसीति ॥ अनेकानि शास्त्रोक्तानि स्वोत्प्रेक्षितानि च । अत्र लोके एते पदार्था न परमार्थाः न परमप्रयोजनं परमार्थस्तु मे मत्तः श्रूयताम् ॥ १६ ॥ धनादीनां श्रेयस्त्वं क्रमेण निराकरोति धर्मायेत्यादि ॥ कामप्राप्त्युपलक्षणः कामप्राप्तिहेतुः धनं धर्मकामार्थं त्याज्यत्वान्न स्वयं पुरुषार्थः । यदर्थं सर्वं यच्च नान्यार्थं स परमार्थः स आत्मेति भावः । "आत्मनस्तु कामाय सर्वं प्रियं भवति" इति श्रुतेः ॥ १७ ॥ पुत्रश्चेदिति ॥ सोप्यन्यस्य स्वपितुः परमार्थः अनन्यार्थः तत्पिता च अन्यस्य स्वपितुः परमार्थः एवं पुत्रस्य पित्रर्थत्वाज्जगति न परमार्थोस्ति एतदुपपादयति एवं न परमार्थोस्तीति ॥ १८ ॥

ध्येय भूपत इति पाठे न विद्यते परमार्थभूतोऽर्थो एषु तानि तथा ॥ १२ ॥ तान्येव: श्रेयांस्युत्तरोत्तरमुत्कृष्टानि ससोपन्यस्यति देवतेत्यादित्रिभिः । देवताराधनमिति ॥ यो हि धनं राज्यं पुत्रं चेच्छति तस्य तदेव श्रेय इत्यन्वयः ॥ १३ ॥ कर्म यज्ञात्मकमिति ॥ फले अनभिसंहिते असंकल्पिते तद्यज्ञादिकर्मैव प्रधानं मुख्यं श्रेयः । संकल्पिते तु यज्ञादिसाध्यं स्वर्गादिकमेव श्रेय इत्यर्थः ॥ १४ ॥ आत्मेति ॥ आत्मा ध्येय इति श्रेयः । आत्मध्यानं श्रेय इत्यर्थः ॥ १५ ॥ श्रेयांसीति ॥ श्रेयांस्येवमनेकानीति तदुक्तं श्रीभागवते "धर्ममेके यशश्चान्ये कामं सत्यं दमं शमम् ॥ अन्ये वदंति स्वार्थं वै ऐश्वर्यं त्यागभोजनम् ॥ (१) ॥ केचिद्यज्ञतपोदानव्रतानि नियमान्यमान् । आद्यंतवंत एवैषां लोकाः कर्मविनिर्मिताः ॥ (२) ॥ दुःखोदर्कास्तमोनिष्ठाः क्षुद्रानंदाः शुचार्पिताः ॥" (३) ॥ इत्यादिना ॥ १६ ॥ धनादीनामपरमार्थत्वमुपपादयति धर्मायेत्यादिना संक्षेपः श्रूयतां ममेत्यंतेन—धर्मायेति ॥ कामप्राप्तिरुपलक्षणं निमित्तं यस्य धनव्ययस्य सः धर्मकामसाधनत्वाद्धनस्य परमपुरुषार्थता नास्तीत्यर्थः ॥ १७ ॥ पुत्रस्यापरमार्थतामाह—पुत्रश्चेत्यादि द्वाभ्याम्—पुत्रश्चेति ॥ यस्य पुत्रः परमार्थाख्यः स पिताप्यन्यस्य पुत्रत्वात्परमार्थभूतः, सोप्यन्यस्य तत्पिताप्यन्यस्येत्येवं परमार्थः कोपि नास्तीत्यतिप्रसंगः । यस्मात्कार्याणि जन्यानि पुत्रादीनि कारणानां जनकानां परमार्थः

एवं न परमार्थोऽस्ति जगत्यस्मिश्चराचरे ॥ परमार्थो हि कार्याणि कारणानामशेषतः ॥ १९ ॥ राज्यादिप्राप्तिरत्रोक्ता परमार्थतया यदि ॥ परमार्था भवन्त्यत्र न भवंति च वै ततः ॥ २० ॥ ऋग्यजुःसामनिष्पाद्यं यज्ञकर्म मतं तव ॥ परमार्थभूतं तत्रापि श्रूयतां गदतो मम ॥ २१ ॥ यत्तु निष्पाद्यते कार्यं मृदा कारणभूतया ॥ तत्कारणानुगमनाज्ज्ञायते नृप मृण्मयम् ॥ २२ ॥ एवं विनाशिभिर्द्रव्यैः समिदाज्यकुशादिभिः ॥ निष्पाद्यते क्रिया या तु सा भवित्री विनाशिनी ॥ २३ ॥ अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते ॥ तत्तु नाशि न सन्देहो नाशिद्रव्योपपादितम् ॥ २४ ॥ तदेवाफलदं कर्म परमार्थो मतस्तव ॥ मुक्तिसाधनभूतत्वात्परमार्थो न साधनम् ॥ २५ ॥ ध्यानं चैवात्मनो भूप परमार्थार्थशब्दितम् ॥ भेदकारि परेभ्यस्तु परमार्थो न भेदवान् ॥ २६ ॥ परमात्मात्मनोर्योगः परमार्थ इतीष्यते ॥ मिथ्यैतदन्यद्द्रव्यं हि नैति तद्द्रव्यतां यतः ॥ २७ ॥

अशेषेण पुत्रादिकार्याणि कारणानां हि जनकानां परमार्थः । अनन्यार्थो हि परमार्थः ॥ १९ ॥ राज्यादिप्राप्तिरिति ॥ राज्यादिप्राप्तिः परमार्थो यदि ततः तर्हि अत्र लोके राज्यादयः परमार्था भवन्ति न भवन्ति नश्यन्ति च कथमस्ति राज्यादयः परमार्थ इति भावः । एतदस्थिरत्वं पुत्रादिष्वपि समानम् ॥ २० ॥ धर्मस्य नश्वरत्वमनुमानेन दर्शयति ऋगित्यादिना ॥२१॥२२॥२३॥२४॥ तदेवेति ॥ तदेव यज्ञकर्मैव चेन्नेत्यध्याहारः न हि परमार्थोऽन्यस्य साधनम् ॥ २५ ॥ ध्यानमिति ॥ परमार्थार्थशब्दितं ध्यानं न परमप्रयोजनभूतवस्तुशब्दवाच्यम् । यतस्तत्परेभ्यो घटादिभ्यो भेदं करोतीति भेदकारि विशदविशदतराद्यवस्थाभेदं स्वस्य करोति नैवमवस्थाभेदेन वैषम्यंपरमार्थस्य।यद्वा भेदकारि स्मृतिप्रत्ययत्वेन क्षणभंगुरत्वात् न तु परमार्थो भंगुरः ॥२६॥ परमात्मेति ॥ इष्यते यदीति शेषः । योगस्तादात्म्यम् । अन्यथा

तस्मादशेषतः परमार्थस्स्यात् ॥ १८ ॥ १९ ॥ राज्येति ॥ राज्यादिप्राप्तिः अत्र पक्षे परमार्था भवंति न भवन्ति चेति काक्वा उपयोज्यम । आगमापायित्वाद्राज्यादिकं न परमार्थ इत्यर्थः ॥ २० ॥ यज्ञादिसाध्यस्य स्वर्गादेरपि अनित्यतां साधयन्नपरमार्थतामाह—ऋगित्यादिचतुर्भिः ऋगिति ॥ यज्ञकर्मेति । यज्ञैरानुमिष्टतमं स्वर्गादिकं परमार्थभूतं यदि मतमित्यर्थः ॥ २१ ॥ २२ ॥ एवमिति ॥ या क्रिया निष्पाद्यत इति क्रियाद्वारा अपूर्वं स्वर्गादिकं यन्निष्पाद्यं तद्विनाशि भवेदित्यर्थः ॥ २३ ॥ २४ ॥ तदेवेति ॥ मुक्तिसाधनभूतत्वादफलदमित्येतन्नास्ति । तपश्चान्यार्थत्वात्परमार्थो न भवतीत्यर्थः ॥ २५ ॥ ध्यानमिति ॥ परेभ्यो देहादिभ्यो विविच्यात्मनश्चित्तालंबनभूतस्य ध्येयत्वाद्ध्यानं भेदकारि । परमार्थस्तु न भेदवान् "एकमेवाद्वितीयं ब्रह्म" इति श्रुतेः ॥ २६ ॥ परमात्मात्मनोरिति ॥ जीवपरमात्मनोरैक्योपासनया तादात्म्यलक्षणो योगः परमार्थ इत्येतदपि मतं मिथ्यैव । तथा हि तयोर्भिन्नयोरभिन्नयोर्वा योगस्स्यात् भिन्नत्वे गवाश्वयोरिव नैक्यसंभवः । अभिन्नत्वे च बिंबप्रतिबिंबयोरिव उपाधिव्युदासमात्रं विना योगशब्दार्थो नास्तीत्यर्थः ॥ २७ ॥

तस्माच्छ्रेयांस्यशेषाणि नृपैतानि न संशयः ॥ परमार्थस्तु भूपाल संक्षेपाच्छ्रूयतां मम ॥२८॥ एको व्यापी समः शुद्धो निर्गुणः प्रकृतेः परः॥ जन्मवृद्ध्यादिरहित आत्मा सर्वगतोव्ययः ॥२९॥ परज्ञानमयो सद्भिर्नामजात्यादिभिर्विभुः ॥ न योगवान्न युक्तोभून्नैव पार्थिव योक्ष्यते ॥३०॥ तस्यात्मपरदेहेषु सतोप्येकमयं हि यत् ॥ विज्ञानं परमार्थोसौ द्वैतिनोऽतथ्यदर्शिनः ॥ ३१ ॥ वेणुरन्ध्रप्रभेदेन भेदः षड्जादिसंज्ञितः ॥ अभेदव्यापिनोवायोस्तथास्य परमात्मनः ॥ ३२ ॥

उत्तरार्द्धेनासंगतेः एतदैश्वर्यं मिथ्या तत्र हेतुः—अन्यदिति॥ पूर्वेषु धनादिषु नश्वरत्वादियोगे तु स्वरूपाभावः ॥२७॥ उपसंहरति तस्मादिति॥एतानि धनादीनि श्रेयांस्येव न तु परमार्थः । परमार्थस्तु श्रूयताम् ॥२८॥ परमार्थमाह एक इति ॥ एकः देहवज्ज्ञानेकोपचयरूपः व्यापी ज्ञानेन सर्वव्यापनस्वभावः देवमनुष्यादीनां विषमेषु देहेषु स्थितोपि समः परस्परं च समः शुद्धः स्वतो निर्मलः निर्गुणः सत्त्वादिरहितः । तत्र हेतुः—प्रकृतेः परः जन्मादिषड्भावविकाररहितः आत्मा चेतनः सर्वगतः नाशकानाम ग्निजलादीनां सौक्ष्म्येण व्यापकः अतो दाहादिरहितः अव्ययः अविकल्पः ॥२९॥ परज्ञानमय इति ॥ परज्ञानमयः प्रकृष्टज्ञानस्वरूपः । परमज्ञानमय इति च पाठः । परशब्देन विषयज्ञानं व्यावर्त्यते सुखसंवित्स्वरूप इत्यर्थः। असद्भिर्विनाशिभिर्देवादिनामरूपैः असौ परः कालत्रयेष्वयुक्तः विभुः देहेन्द्रियाणां स्वामी स्वतः स्वराडिति वा ॥ ३० ॥ एवमेको व्यापीत्यादिना आत्मस्वरूपमुक्तम् । इदानीं तस्य देवादिरूपेष्वात्मपरदेहेषु सतोप्येकप्रकारं यद्विज्ञानं विज्ञानरूपमसौ परमार्थ इत्याह—तस्येति ॥ देवादिदेहेषु स्थितस्यात्मनस्तद्रूपेण भिन्नत्वप्रतीतिर्भ्रान्तिरित्याह—द्वैतिन इति ॥ ३१ ॥ आत्मानो हि स्वरूपेण परस्परं भिन्नाः न तु देवादिरूपेण तेषां तद्रूपत्वस्यो

तस्मादिति ॥ तस्माच्छ्रेयांस्येतान्यपेक्षितकारणानि भवंति न तु परमार्थरूपाणि परमार्थस्त्वात्मैवेत्यन्वयः ॥ २८ ॥ एक इति ॥ न चैक एव प्रतिदेहं भिन्नः व्यापी साक्षितया सर्वव्यापकः । सम एकरूपः न तु ज्ञानादि परिणामैरनेकरूपः । शुद्धः कर्तृत्वादिकालुष्यशून्यः निर्गुणः न तु बुद्ध्यादिगुणैर्युक्तः । प्रकृतेः परः तदुपाधिशून्यः । अतो जन्मवृद्ध्यादिभिर्देहादिविकारैरसंस्पृष्टः । अत एव च सर्वगतः न तु देहपरिमाणः । अतः अमव्यमपरिमाणत्वादव्ययः॥ २९॥ परज्ञानेति ॥ परमज्ञानमयः नित्यज्ञानस्वरूपः न तु क्षणिकज्ञानात्मा असद्भिरविद्यामयैर्नामजात्यादिभिर्वर्तमानभूतभविष्यत्कालेषु न योगवान् योगशून्यः । अतो विभुरीश्वरः स्वतंत्र इत्यर्थः ॥ ३० ॥ ननु प्रतिदेहमात्मनो भेदविकारादिप्रतीतेः कथमेकत्वसर्वगतत्वादि तत्राह—तस्येति ॥ आत्मपरदेहेषु तत्तदहंकारावच्छिन्नतया सर्वत्र सतोप्येकाकारं यद्विशिष्टं स्वप्रकाशपरिच्छिन्नं ज्ञानं स एव परमार्थः । भेदप्रतीतिरुपाधिनिबंधनत्वात् । द्वैतिनां द्वैतवादिनोऽपरमार्थदर्शिनः ॥ ३१ ॥ एतद्दृष्टांतेनोपपादयति वेणुरंध्रेत्यादिद्वाभ्याम्—वेणुरंध्रेति ॥ अभेदस्य व्यापिनो वायोर्यथा वेणुरंध्रोपाधिभेदेन षड्जर्षभगांधारस्वरादिव्यंजकत्वात्त

एकस्वरूपभेदश्च बाह्यकर्मावृतिप्रजः ॥ देवादिभेदेपध्वस्ते नास्त्येवावरणे हि सः ॥ ३३ ॥ इति श्रीविष्णुमहापुराणे द्वितीयेंशे चतुर्दशोऽध्यायः ॥ १४ ॥ ॥ श्रीपराशर उवाच ॥ इत्युक्ते मौनिनं भूयश्चिन्तयानं महीपतिम् ॥ प्रत्युवाचाथ विप्रोसावद्वैतान्तर्गतां कथाम् ॥ १ ॥

क्तत्वात्। केचिदत्रात्मनां स्वरूपेण भेदो निषिद्धयत इत्याहुः तदयुक्तम् । 'तस्यात्मपरदेहेषु' तत्र त्वमहमप्यत्र "अहं त्वं च तथान्ये च" इत्यात्मबहुत्वप्रतिपादकबहुवचन विरोधात् । श्रुतिस्मृतिसूत्रन्यायविरोधाच्च यदि देवादिरूपेणात्मनां न भेदः । किं तर्हि देवोयं मनुष्योयमिति वैषम्येण व्यवहार उपपद्यते तत्राह—वेणुरन्ध्रेति ॥ यथा वेणोरन्ध्रवर्तिनां वाय्वंशानां वायुत्वेनैकाकाराणां रन्ध्रभेदविनिष्क्रमणकृतषड्जादिसंज्ञाभेदः । एवमात्मनां ज्ञानैकाकाराणां देवादिदेहप्रवेशकृतो देवादिव्यवहारः न तु ताद्रूप्यकृतः । अभेदव्यापिनः अभेदेन वायुत्वाकारेण व्यापिनः । अत्र परमात्मशब्देनात्मैवोच्यते "परमात्मेति चाप्युक्तो ह्येतास्मिन्पुरुषः परः । तैरेव विगतः शुद्धः परमात्मा निगद्यते" इत्यादिदर्शनात् ॥ ३२ ॥ उक्तमर्थं विवृण्वन्नुपसंहरति एकस्वरूपेति ॥ एकस्वरूपभेदः "तस्यात्मपरदेहेषु सतोप्येकमयं हि यत् । विज्ञानं परमार्थोसौ" इत्युक्तज्ञानैकस्वरूपस्यात्मनो भेदो देवादिरूपः बाह्यकर्मावृतिप्रजः बाह्यकर्मावरणजातः फलाभिसन्धियुक्तं भगवत्यसमर्पितं च बाह्यकर्म आत्मनः स्वरूपबहिर्भूतं वा यथा वक्ष्यति । अविद्या कर्मसंज्ञान्या "तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता । सर्वभूतेषु भूपाल तारम्येन वर्तते" इति देवादिभेदश्चायं युगपदनेकेषामेकस्य च कालभेदेनापध्वस्ते आवरणे कर्मावरणे स देवादिभेदो न भवति। देवादिभेदोपध्वस्त इति च पाठः । यथाह शौनकः "कर्मिणां कर्मभेदेन देवभेदादयो यतः ॥ कर्मक्षयादशेषाणां भेदानां संक्षयस्ततः" इति ॥ ३३ ॥ इति श्रीविष्णुमहापुराणव्याख्याने विष्णुचित्तीये द्वितीयेंशे चतुर्दशोऽध्यायः ॥ १४ ॥ ॥ इत्युक्त इति ॥ इत्युक्ते एव मात्मनो वैषम्याभाव उक्ते क्षुत्पिपासादिधर्मैकत्वभ्रान्त्या आत्मनो द्वैतं चिन्तयानं मौनिनं वाचाऽसंचोदयन्तं महीपतिमभिप्रायज्ञो विप्रश्चिद्वस्तुवैषम्याभावविषयां कथामुवाच ॥ १ ॥

त्तत्रादसंज्ञितो भेदस्तथा तस्य महतोऽपरिच्छिन्नस्यात्मनस्सतः ॥ ३२ ॥ एकत्वमिति ॥ एकत्वं परमात्मनः तस्य रूपभेदस्तु एकस्वरूपभेदस्त्विति पाठे एकरूपस्य ज्ञानमयैकाकारस्यात्मनः भेदस्तु देवमनुष्यादिलक्षणो बाह्यकर्मप्रवृत्तिजः बाह्यानामात्मनः पृथग्भूतानां देहेंद्रियादीनां यत्कर्म तस्य प्रवृत्तिः फलं ततो जातः । पाठांतरे बाह्यादीनां कर्मभिरावृतिरावरणं तेन प्रजायत इति बाह्यकर्मावृतिप्रजो भेदः न तु स्वतंत्रहेतुः । यस्मा देवादिभेदे अपध्वस्ते भिद्यतेऽनेनेति भेदः अहंकारः देवादिभेदहेतावहंकारावरणे सुषुप्त्यादौ विनष्टे सति भेदो नास्त्येव । देवादिभेदमध्यास्त इति पाठे बाह्यकर्मावरणनिमित्तो रूपभेदोऽहंकार एव देवादिभेदमध्यास्ते अधिकृत्य वर्तते स्वतस्तु भेदो नास्त्येव । यस्मादावरणे सत्येव भेदः नान्यथेत्यर्थः ॥ ३३ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां द्वितीयांशे चतुर्दशोऽध्यायः ॥ १४ ॥ ॥ प्रमाणतर्के तस्सम्यग्ज्ञानमैक्ये विनिश्चिते । दुर्द्धवसंभावनोच्छित्त्यै निदाघाख्यानमर्यते ॥ १ ॥ इत्युक्त इति ॥ इत्युक्ते प्रमाणोपपत्तिभ्याम् आत्मैक्ये निरूपितेऽपि विपरीतभावनादैर्घ्याद्दुद्धवसंभावनया मौनिनं तूर्ष्णीं चिंतयानं

॥ ब्राह्मण उवाच ॥ श्रूयतां नृपशार्दूल यद्गीतमृभुणा पुरा ॥ अवबोधं जनयता निदाघस्य महात्मनः ॥ २ ॥ ऋभुर्नामाऽभवत्पुत्रो ब्रह्मणः परमेष्ठिनः ॥ विज्ञाततत्त्वसद्भावो निसर्गादेव भूपते तस्य शिष्यो निदाघोभूत्पुलस्त्यतनयः पुरा ॥ प्रादादशेषविज्ञानं स तस्मै परया मुदा ॥ ४ ॥ अवाप्तज्ञानतंत्रस्य न तस्याद्वैतवासना ॥ स ऋभुस्तर्कयामास निदाघस्य नरेश्वर ॥ ५ ॥ देविकायास्तटे वीरनगरं नाम वै पुरम् ॥ समृद्धमतिरम्यं च पुलस्त्येन निवेशितम् ॥ ६ ॥ रम्योपवनपर्यन्ते स तस्मिन्पार्थिवोत्तम ॥ निदाघो नाम योगज्ञ ऋभुशिष्योवसत्पुरा ॥ ७ ॥ दिव्ये वर्षसहस्रे तु समतीतेस्य तत्पुरम् ॥ जगाम स ऋभुः शिष्यं निदाघमवलोककः ॥ ८ ॥ स तस्य वैश्वदेवान्ते द्वारालोकनगोचरे ॥ स्थितस्तेन गृहीतार्घ्यो निजवेश्म प्रवेशितः ॥ ९ ॥ प्रक्षालितांघ्रिपाणिं च कृतासनपरिग्रहम् ॥ उवाच स द्विजश्रेष्ठो भुज्यतामिति सादरम् ॥ १० ॥ ऋभुरुवाच ॥ भो विप्रवर्य भोक्तव्यं यदन्नं भवतो गृहे ॥ तत्कथ्यतां कदन्नेषु न प्रीतिः सततं मम ॥ ११ ॥ निदाघ उवाच ॥ सक्तुयावकवाट्यानामपूपानां च मे गृहे ॥ यद्रोचते द्विजश्रेष्ठ तत्त्वं भुंक्ष्व यथेच्छया ॥ १२ ॥ ऋभुरुवाच ॥ कदन्नानि द्विजैतानि मृष्टमन्नं प्रयच्छ मे ॥ संयावपायसादीनि द्रप्सफाणितवन्ति च ॥१३॥ निदाघ उवाच ॥ हेहे शालिनि मद्गेहे यत्किंचिदतिशोभनम् ॥ भक्ष्योपसाधनं मृष्टं तेनास्यान्नं प्रसाधय ॥ १४ ॥

॥ २ ॥ ३ ॥ ४ ॥ अवाप्तेति ॥ ज्ञानतन्त्रमध्यात्मशास्त्रम् । अद्वैतवासना नेति तर्कयामास । न तस्याद्वैतवासनामिति च पाठः ॥ ५ ॥ ६ ॥ ७ ॥ दिव्यवर्षेति ॥ अवलोकः अवलोकयितुम् ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ सक्त्विति ॥ यावको यवविकारः ॥ १२ ॥ कदन्नानीति ॥ मृष्टं रुच्यं मधुरं वा संयावो यवगोधूमविकारो रज्जुरूपो भक्ष्यः । द्रप्सं दधिघनेतरत् फाणितं विकृतगौडानि ॥ १३ ॥ हे हे शालिनीति ॥ शालागृहं तद्वति गृहिणीत्यर्थः ॥ १४ ॥

महीपतिं प्रत्युवाच ॥ १ ॥ २ ॥ ऋभुर्नामेति ॥ निसर्गात्स्वभावादेव विज्ञातः तत्त्वस्य सद्भावो याथार्थ्यं येन सः ॥ ३ ॥ ४ ॥ अवाप्तेति ॥ दृष्टादृष्टयोरासक्त्या तस्याद्वैतवासनां न तर्कयामास ॥ ५ ॥ देविकाया इति ॥ देविकाया नद्यास्तटे ॥ ६ ॥ रम्येति ॥ रम्या उपवनपर्यंता यस्मिन् योगज्ञः कर्मप्रवीणः ॥ ७ ॥ दिव्यवर्षेति ॥ तुमुण्ण्वुलौ क्रियायां क्रियार्थायामिति ण्वुल् । युवोरनाकावित्यकादेशे सति अवलोकक इति रूपम् अवलोकितुमित्यर्थः ॥ ८ ॥ ९ ॥ १० ॥ तच्चित्तपरिज्ञानार्थमाह–भोविप्रवर्येत्यादिना भो विप्रेति ॥११॥ सक्त्विति ॥ यावको यवविकारः । वाट्यं वाटीभवं कंदमूलफलादि॥१२॥ कदन्नानीति ॥ मृष्टं मधुरं संयावो गोधूमादि विकारस्तंतुसन्निभः । 'द्रप्सं दधि घनेतरदित' इत्यमरः । 'फाणितं विकृतिर्गौडी' इति हलायुधः ॥१३॥ हेहे शालिनीति ॥ शालिनि श्लाघ्ये प्रिये भक्ष्यस्योपसाधनम् उपस्करणम् ॥ १४ ॥

॥ ब्राह्मण उवाच ॥ इत्युक्ता तेन सा पत्नी मृष्टमन्नं द्विजस्य यत् ॥ प्रसाधितवती तद्वै भर्तुर्वचनगौरवात् ॥ १५ ॥ तं भुक्तवन्तमिच्छातो मृष्टमन्नं महामुनिम् ॥ निदाघः प्राह भूपाल प्रश्रयावनतः स्थितः ॥ १६ ॥ निदाघ उवाच ॥ अपि ते परमा तृप्तिरुत्पन्ना तुष्टिरेव च ॥ अपि ते मानसं स्वस्थमाहारेण कृतं द्विज ॥ १७ ॥ क्वनिवासो भवान्विप्र क्व च गन्तुं समुद्यतः ॥ आगम्यते च भवता यतस्तच्च द्विजोच्यताम् ॥ १८ ॥ ऋभुरुवाच ॥ क्षुद्यस्य तस्य भुक्तेऽन्ने तृप्तिर्ब्राह्मण जायते ॥ न मे क्षुन्नाभवत्तृप्तिः कस्मान्मां परिपृच्छसि ॥ १९ ॥ वह्निना पार्थिवे धातौ क्षपिते क्षुत्समुद्भवः ॥ भवत्यम्भसि च क्षीणे नृणां तृडपि जायते ॥२०॥ क्षुत्तृष्णे देहधर्माख्ये न ममैते यतो द्विज ॥ ततः क्षुत्सम्भवाभावात्तृप्तिरस्त्येव मे सदा ॥ २१ ॥ मनसः स्वस्थता तुष्टिश्चित्तधर्माविमौ द्विज ॥ चेतसो यस्य तत्पृच्छ पुमानेभिर्न युज्यते ॥ २२ ॥ क्व निवासस्तवेत्युक्तं क्व गन्तासि च यत्त्वया ॥ कुतश्चागम्यते तत्र त्रितयेपि निबोध मे ॥२३॥ पुमान्सर्वगतो व्यापी आकाशवदयं यतः ॥ कुतः कुत्र क्व गन्तासीत्ये तदप्यर्थवत्कथम् ॥ २४ ॥

॥ १५ ॥ १६ ॥ अपीति ॥ तृप्तिः क्षुत्पिपासादिनिवृत्तिः, तुष्टिरलंबुद्धिः, मनसः क्षोभाभावः स्वास्थम् । 'अपि ते मनसः स्वास्थ्यम्' इति च पाठः ॥ ॥ १७ ॥ क्वेति । क्व निवास इति बहुव्रीहिः । यत्र सायंगृह इतिवत् ॥ १८ ॥ १९ ॥ २० ॥ क्षुत्तृष्णेति ॥ बुभुक्षापिपासयोरिच्छात्वेन अंतःकरणधर्मत्वेपि देहधर्माख्या देहस्थधातुक्षयत्वादौपचारिकी । "अशनायापिपासे प्राणस्य शोकमोहौ मनसः" इति श्रुतौ । प्राणधर्मत्वोक्तिश्च प्राणस्यान्तःकरणक्रियाशक्तित्वेन तदभेदात् तृप्तिग्रहणं तु तुष्ट्यादेरुपलक्षणम् ॥ २१ ॥ मनस इति ॥ एतद्धर्मत्रयं मे सदास्तीत्युपचारः । वस्तुतस्तु मनस एव स्वस्थतादयो धर्माः तस्मायस्य चेतस इमे धर्मास्तच्चेत इमांश्चेतोधर्मान् पृच्छ ॥ २२ ॥ २३ ॥ पुमानिति ॥ नात्र पुंसो गगनवत्परममहत्त्वेन गमनादिनिषिध्यते । तथा सति सर्वगतव्यापिपदयोः पौनरुक्त्यात् पूर्वत्र गमनानुमत्या परिमितत्वाभ्युपगमात्सूत्रविरोधाच्च न परममहत्त्वमात्मनः अयमर्थः ।

॥ १५ ॥ १६ ॥ अपीति ॥ तृप्तिः क्षुत्तृष्णोपशांतिः । तुष्टिः संतोषः । स्वस्थं प्रकृतिस्थम् ॥ १७ ॥ क्वेति ॥ क्व निवासस्तवेति शेषः ॥ १८ ॥ १९ ॥ २० ॥ क्षुत्तृष्ण इति ॥ देहधर्माख्ये देहस्य धर्माभ्यां पार्थिवाप्यधातुक्षयाभ्याम् आख्यायेते ते च तद्वारा प्राणधर्माः "अशनायापिपासे प्राणस्य" इति श्रुतेः । मम प्राणव्यतिरिक्तस्य एते न स्तः । क्षुन्निमित्तदुःखाभावसाम्यात्तृप्तिरस्त्येवेत्युपचारः । ततः क्षुत्संभवाभावात्तृप्तिरस्त्येव मे सदेति पाठे स्पष्टोर्थः ॥ २१ ॥ मनस इति ॥ मनस्स्वस्थता तुष्टिश्चेति यत्पृष्टं इमौ तु चित्तधर्मौ अतो यस्य चेतसश्चित्तस्य इमौ धर्मौ तच्चित्तमेव पृच्छ नन्वहं पुमान् प्रश्नार्हः यतः पुमानेभिः प्राणचित्तधर्मैस्तृप्तितुष्टिस्वास्थ्यैर्न युज्यते ॥ २२ ॥ २३ ॥ पुमानिति ॥ वायुवत्क्रमेण सर्वगतत्वं च व्यावर्तयितुं

सोहं गन्ता न चागन्ता नैकदेशनिकेतनः ॥ त्वं चान्ये च न च त्वं च नान्ये नैवाहमप्यहम् ॥ २५॥ मृष्टं न मृष्टमप्येषा जिज्ञासा मे कृता तव ॥ किं वक्ष्यसीति तत्रापि श्रूयतां द्विजसत्तम ॥ २६ ॥ किमस्वाद्वथ वा मृष्टं भुंजतोस्ति द्विजोत्तम ॥ मृष्टमेव यथा मृष्टं तदेवोद्वेगकारकम् ॥ २७ ॥ अमृष्टं जायते मृष्टं मृष्टादुद्विजते जनः ॥ आदिमध्यावसानेषु किमन्नं रुचिकारकम् ॥ २८ ॥

सर्वगतः सर्वत्र देवादिदेहेऽवस्थितः अयमात्मा व्यापी निरवयवत्वेनातिसूक्ष्मत्वात्सर्वाचेतनव्यापनशीलः । अतोऽस्य निरवयवस्यामूर्त्तस्य चाकाशादिवदति सौक्ष्म्यात्स्वतो गमनागमने न सम्भवतः । यथा इह सर्वंगतानाममूर्त्तानां जातिगुणादीनां स्वतः क्रिया नास्ति किन्तु आश्रयद्वारा देशान्तरप्रवृत्तिः । एवममूर्त्तस्यात्मनोपि चेतनद्वारा देशान्तरप्राप्तिः । यथा सवाहनस्य पंगोः यथोक्तं पूर्वत्र "अहं त्वं च तथान्ये च भूतैरुह्याम पार्थिव । उपभोगनिमित्तं च सर्वत्र गमनक्रिया ॥ उपभोगनिमित्तं च देशाद्देशान्तरागमः" इत्यादि एवं पूर्वापरविरोधादयमेवार्थः । अस्य तवैतद्वचः कथमर्थवदित्यन्वयः ॥२४॥ अतः स्वतो मे गमनादि न सम्भवति देह एव गमनादिकर्त्तेत्यभिप्रायेणाह—सोहमिति ॥ यथाहं न गमनादिकर्त्ता एवं त्वं चान्ये चात्मानः । नन्वस्ति ह्यहं गच्छामीति प्रत्ययस्तत्राह—न च त्वमिति । यस्त्वया गमनादिकर्तृत्वेनाभिमतो देहो न स त्वम् एवमुक्तयोः ॥ २५ ॥ मृष्टमिति ॥ मृष्टं नामृष्टमिति च पाठः । मृष्टं मे देय नामृष्टमिति मयाऽभिधीयते मृष्टामृष्टादिभेदः स्वाभाविक इति वौपाधिकमिति वा किमुत्तरमयं वक्ष्यतीति तव जिज्ञासा कृता न तु तयोः स्वाभाविकत्वधियेत्यर्थः । तत्रापि मृष्टामृष्टविषये श्रूयताम् । अस्वाभाविकत्वमिति भावः ॥ २६ ॥ तदेवाह—किमस्वाद्विति द्वयेन किमस्वाद्विति ॥ भुंजानस्य किमन्नं नियमेनास्वादु अथवा किमन्नं मृष्टं न किमपीति भावः । तदेवोपपादयति मृष्टमेवेति । अमृष्टमेव यदा यतो मृष्टं तन्मृष्टमेव चोद्वेगकारकम् । अमृष्टमित्येकस्योभयरूपत्वमस्वाभाविकत्वे हेतुः । तथाहि क्षुधि सत्यामसृष्टं कुल्माषादिकं मृष्टं रुच्यं जायते क्षुदभावे मृष्टात्संयावपायसादेरुद्विजते । अतो भोक्तुरवस्थावशादन्नादे रुच्यत्वारुच्यत्वे नियते मृष्टामृष्टभेदो न स्वाभाविक इति भावः ॥ २७ ॥२८ ॥

व्यापीत्युक्तम् ॥ २४ ॥ सोहमिति ॥ न केवलमहमेवैवंभूतः किं तु त्वं चान्ये च सर्वेपि । ननु मम चान्येषां च तव च परिच्छेदगमनादिप्रतीतेः कथं प्रत्यक्षविरुद्धमुच्यते तत्राह—न च त्वमिति । यस्त्वं लौकिकः परिच्छिन्नः प्रतीयसे स एष त्वं न भवसि । ये चान्ये प्रादेशिकाः प्रतीयंते तथाविधास्ते अन्ये न भवंति । अहमपि यादृशस्त्वया दृष्टः न तादृशोहं किं तु अहमित्यादिव्यवहारगोचरः परमात्मैव "आत्मैवेदꣳसर्वम्" इति श्रुतेः । अतः पूर्वोक्तो न प्रत्यक्षविरोधः ॥ २५ ॥ यद्येवं तर्हि मृष्टमेवान्नं त्वया किमर्थं याचितं तत्राह—मृष्टमिति ॥ एवं मयोक्ते त्वं किं वक्ष्यसीति जिज्ञासा कृता किं मृष्टामृष्टप्रस्तावे मया कृते तयोरवस्तुत्वोक्तिद्वारा किमध्यात्मतत्त्वाश्रितं वक्ष्यसि न वेति परीक्षा च कृता न तु मृष्टार्थितयोक्तम् । तद्भेदस्यावास्तवत्वात् ॥ २६ ॥ तदेवाह—किमित्यादिद्वाभ्याम् श्लोकद्वयस्यैकान्वयः ॥ किमिति ॥ किमस्वादु अमृष्टं अथवा किं मृष्टमन्नं नियतमस्ति भुंजानस्य पुंसः न किंचिदस्ति तदेवाह यन्मृष्टं तदेव यथातितृप्तस्य उद्वेगकारकममृष्टं भवति । अतिक्षुधितस्यामृष्टमेव यावकादि मृष्टं जायते तथैव यदा मृष्टादपि जनः कदाचिदुद्विजते तदा आदिमध्यावसानेषु रुचिकारकं मृष्टं किमन्नमस्ति । न किंचिदित्यर्थः ॥ २७ ॥ २८ ॥

मृण्मयं हि गृहं यद्वन्मृदा लिप्तं स्थिरं भवेत् ॥ पार्थिवोयं तथा देहः पार्थिवैः परमाणुभिः ॥२९॥ यवगोधूममुद्गादि घृतं तैलं पयो दधि ॥ गुडं फलादीनि तथा पार्थिवाः परमाणवः ॥ ३० ॥ तदेतद्भवता ज्ञात्वा मृष्टामृष्टविचारि यत् ॥ तन्मनस्समतालम्बि कार्यं साम्यं हि मुक्तये ॥३१॥ ॥ ब्राह्मण उवाच ॥ इत्याकर्ण्य वचस्तस्य परमार्थाश्रितं नृप ॥ प्रणिपत्य महाभागो निदाघो वाक्यमब्रवीत् ॥ ३२ ॥ प्रसीद मद्धितार्थाय कथ्यतां यस्त्वमागतः ॥ नष्टो मोहस्तवाकर्ण्य वचांस्येतानि मे द्विज ॥३३॥ ऋभुरुवाच ॥ ऋभुरस्मि तवाचार्यः प्रज्ञादानाय ते द्विज ॥ इहागतोहं यास्यामि परमार्थस्तवोदितः ॥ ३४ ॥ एवमेकमिदं विद्धि न भेदि सकलं जगत् ॥ वासुदेवाभिधेयस्य स्वरूपं परमात्मनः ॥ ३५ ॥ ब्राह्मण उवाच ॥ तथेत्युक्ता निदाघेन प्रणिपातपुरःसरम् ॥ पूजितः परया भक्त्या इच्छातः प्रययावृभुः ॥ ३६ ॥ इति श्रीविष्णुमहापुराणे द्वितीयेंशे पंचदशोऽध्यायः ॥ १५ ॥ ब्राह्मण उवाच ॥ ऋभुर्वर्षसहस्रे तु समतीते नरेश्वर ॥ निदाघज्ञानदानाय तदेव नगरं ययौ ॥ १ ॥

तर्हि तादृगन्नं किं त्वया भुक्तमित्याशंक्य कर्मानीतेन तादृगन्नेन तादृग्देह एव स्थैर्यार्थं लिप्यते नात्मेत्याह मृण्मयमिति ॥ यवेति ॥ भुक्तस्य यवाद्यन्नस्य स्थूलांशो मलमूत्रभूतो निर्गच्छति सूक्ष्मांशो मांसादिधातुः स्यात्सूक्ष्मतरो मनःपोषकः इति द्योतयितुं परमाणुशब्दः यथा छान्दोग्ये "अन्नमशितं त्रेधा विधीयते" इत्यादि ॥ २९ ॥ ३० ॥ उपसंहरति तदेतदिति ॥ एतत् आत्मनो देहव्यतिरिक्तत्वादिकमुक्तमर्थजातं ज्ञात्वा मृष्टामृष्टविचारीत्युपलक्षणं मृष्टमिदममृष्टमिदं देवोहं मनुष्योहमित्यादिकर्मकृतभेदावलम्बि यन्मनस्तदात्मनां ज्ञानैकाकारत्वेन समत्वावलम्बिकार्यम् अनुसंहितं हि साम्यं मुक्तये भवति ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ उक्तमर्थं स्पष्टयति एवमिति ॥ एवमुक्तप्रकारेण इदमात्मस्वरूपं ज्ञानैकाकारत्वेनैकं समं विद्धि न भेदि भेदरहितम् । क्षुत्पिपासादिरहितं च विद्धि अन्यच्च वेदितव्यमस्ति चेतनाचेतनात्मकं सकलं जगत्सर्वत्र "वसनाद्वासुदेवस्य वासितं ते जगत्त्रयम् । सर्वभूतनिवासोसि वासुदेव नमोस्तु ते ॥" इत्येवं वसनाद्वासुदेवयदाभिधेयस्य परमात्मनः स्वरूपं शरीरं विद्धि "परस्य ब्रह्मणो रूपं पुरुषः प्रथमं द्विज । तानि सर्वाणि तद्वपुस्तत्सर्वं वै हरेस्तनुः । यस्यात्मा शरीरम्" इत्यादि । अत्रात्मस्वरूपणप्रकरणनिगमने "तन्मनः समतालम्बि कार्यं साम्यं हि मुक्तये" इति वचनात् एवमेकमिदं विद्धीत्यादिष्वात्मगतमुक्तमेकत्वं ज्ञानैकाकारतया समत्वमेव न तु स्वरूपैक्यमित्यवगन्तव्यम् ॥ ३५ ॥ चिदाचिदात्मकस्य जगतो वासुदेवशरीरत्ववचनादात्मपरमात्मनोश्चाभेदो महर्षेर्नाभिप्रेत इत्यनुसन्धेयम् ॥ ३६ ॥ इति श्रीविष्णुमहापुराणव्याख्याने विष्णुचित्तीये द्वितीयेंशे पंचदशोऽध्यायः ॥ १५ ॥ उक्तस्यात्मसाम्यस्य दर्शनं चिरकालयोगसाध्यमित्युत्तराध्यायेनोच्यते--ऋभुरित्यादिना ॥ १ ॥

तर्हि किमिति त्वया मृष्टमेव भुक्तं तत्राह—मृण्मयं हीति ॥ पार्थिवैः परमाणुभिः सूक्ष्मैरंशैरालित उपबृंहितो भवति । प्रारब्धकर्मोपस्थापितं मृष्टमपि देहनिर्वाहमात्रोपयोगितया मृष्टं भुक्तं न तु मृष्टबुद्ध्येति भावः ॥ २९ ॥ देहधारणे च तुल्या एव सर्वे मृष्टामृष्टाः परमाणव इत्याह—यवेति ॥ ३० ॥ त्वयाप्यनयैव दृष्ट्या भोक्तव्यमित्याह—तदेतदिति ॥ मृष्टामृष्टविचारणशीलं यन्मनः तत्समतालंबनशीलं कार्यं यतो मृष्टं भुंजानस्यापि मनसस्साम्यं मुक्तय एव भवति ॥३१॥३२॥३३॥ ऋभुरिति ॥ प्रज्ञादानायेति वासुदेवस्सर्वमित्याकारकप्रज्ञाप्रदानायेत्यर्थः "विज्ञाय प्रज्ञां कुर्वीत" इति श्रुतेः ॥३४॥ तदेवाह—एकमिति ॥ न भेदि भेदवन्न भवति ॥३५॥३६॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां द्वितीयांशे पंचदशोऽध्यायः ॥ १५ ॥ ॥ ऋभुरिति ॥ वर्षसहस्रे समतीते निदाघज्ञानदानाय ययाविति वदन्नात्मैक्यभूतज्ञानस्य चिरकालबहूपदेशापेक्षितया अति

नगरस्य बहिः सोथ निदाघं ददृशे मुनिः ॥ महाबलपरीवारे पुरं विशति पार्थिवे ॥२॥ दूरे स्थितं महाभागं जनसम्मर्दवर्जकम् ॥ क्षुत्क्षामकण्ठमायान्तमरण्यात्ससमित्कुशम् ॥३॥ दृष्ट्वा निदाघं स ऋभुरुपगम्याभिवाद्य च ॥ उवाच कस्मादेकान्ते स्थीयते भवता द्विज ॥४॥ निदाघ उवाच॥भो विप्र जनसंमर्दो महानेष नरेश्वरः॥प्रविविक्षुः पुरं रम्यं तेनात्र स्थीयते मया॥५॥ ऋभुरुवाच ॥ नराधिपोत्र कतमः कतमश्चेतरो जनः॥कथ्यतां मे द्विजश्रेष्ठ त्वमभिज्ञो मतो मम ॥६॥ निदाघ उवाच ॥ योयं गजेन्द्रमुन्मत्तमद्रिशृंगसमुच्छ्रितम्॥अधिरूढो नरेंद्रोऽयं परिलोकस्तथेतरः ॥७॥ ऋभुरुवाच ॥ एतौ हि गजराजानौ युगपद्दर्शितौ मम ॥ भवता न विशेषेण पृथक्चिह्नोपलक्षणौ ॥८॥ तत्कथ्यतां महाभाग विशेषो भवतानयोः॥ज्ञातुमिच्छाम्यहं कोत्र गजः को वा नराधिपः ॥९॥ निदाघ उवाच ॥ गजो योयमथो ब्रह्मन्नुपर्यस्यैष भूपतिः ॥ वाह्यवाहकसम्बन्धं को न जानाति वै द्विज ॥ १० ॥ ऋभुरुवाच ॥ जानाम्यहं यथा ब्रह्मंस्तथा मामवबोधय ॥ अधःशब्दनिगद्यं हि किं चोर्ध्वमभिधीयते ॥११॥ ब्राह्मण उवाच ॥ इत्युक्तः सहसारुह्य निदाघः प्राह तमृभुम् ॥ श्रूयतां कथयाम्येष यन्मां त्वं परिपृच्छसि ॥ १२ ॥ उपर्यहं यथा राजा त्वमधः कुंजरो यथा॥अवबोधाय ते ब्रह्मन्दृष्टान्तो दर्शितो मया ॥१३॥ ऋभुरुवाच ॥ त्वं राजेव द्विजश्रेष्ठ स्थितोहं गजवद्यदि॥तदेतत्त्वं समाचक्ष्व कतमस्त्वमहं तथा ॥१४॥ ब्राह्मण उवाच ॥ इत्युक्तः सत्वरं तस्य प्रगृह्य चरणावुभौ ॥ निदाघस्त्वाह भगवानाचार्यस्त्वमृभुर्ध्रुवम् ॥ ॥१५॥ नान्यस्याद्वैतसंस्कारसंस्कृतं मानसं तथा ॥ यथाचार्यस्य तेन त्वां मन्ये प्राप्तमहं गुरुम् ॥१६॥ ऋभुरुवाच ॥ तवोपदेशदानाय पूर्वंशुश्रूषणादृतः ॥ गुरुस्नेहादृभुर्नाम निदाघ समुपागतः ॥१७॥ तदेतदुपदिष्टं ते संक्षेपेण महामते ॥ परमार्थसारभूतं यत्तदद्वैतमशेषतः ॥ १८ ॥

॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ नराधिप इति॥नराधिपोत्र कतम इति नैकस्मिन्नप्यात्मनि नराधिपत्वादिविशेषणं पश्यामीति भावः ॥६॥ भावाविज्ञानादाह–योयमिति ॥ परिलोकः परिजनः ॥ ७ ॥ एतौ हीति ॥ अयमयमिति हस्तमुद्रयैतौ दर्शितौ न मया गजत्वेन राजत्वेन चैतावात्मानौ दृष्टौ अहं तु निर्वाणज्ञानमयावेतौ पश्यामीति भावः ॥८॥९॥१०॥ ११ ॥ १२ ॥ आरोहणक्रिययैवोत्तरं दर्शयन् गुर्वतिक्रमदोषं परिहरति–उपरीति ॥१३॥ त्वमिति ॥ कतमस्त्वमहं तथेति आत्मनो देहरूपभेदाक्षेपः त्वमहंशब्दयोरर्थयोर्देहाद्विलक्षण इति भावः ॥१४॥१५॥ नान्यस्येति ॥ अद्वैतं देवादिद्वैतराहित्यम् ॥१६॥ तवेति॥शुश्रूषणादृतः शुश्रूषणेनादृतवान् पिण्डः पृथग्यतः पुंसः शिरःपाण्यादिलक्षणः इति प्रक्रमात् । "शुश्रूषणाहृतः" इति पाठे शुश्रूषणेन वशीकृतः । आहृत इति कर्त्तरि रूपम् ॥१७॥ तदेतदिति ॥ तत्तस्माद्द्वैतं

दुर्लभतां दर्शयति ॥१॥२॥ दूरे स्थितमिति ॥ अस्पृश्यस्पर्शादिशंकया जनसंमर्दवर्जितं, क्षुधा क्षामः कृशः कंठो यस्य तम् ॥३॥ दृष्ट्वेति ॥ आचार्यत्वं स्वीयं प्रच्छादयितुम् अभिवाद्य ॥ ४ ॥ ५ ॥ ६ ॥ य इति ॥ परिलोकः परिजनः ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ उपरीति ॥ तदुपर्यारोहापराधं परिहरति–दृष्टांतो दर्शित इति ॥ १३ ॥ १४ ॥ इत्युक्त इति ॥ तदेव त्वं ममाचक्ष्व कतमस्त्वमहं तथेति साक्षेपोक्त्या न त्वं त्वं नान्येनाहमप्यहमिति पूर्वं यदुक्तं त्वमहमित्यादिभेदो मिथ्येति तदेवं स्मारितस्सन् तस्य चरणौ प्रगृह्य क्षमापयन्निदाघ आह–ध्रुवं त्वं ममाचार्य इति ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

॥ ब्राह्मण उवाच ॥ एवमुक्त्वा ययौ विद्वान्निदाघं स ऋभुर्गुरुः ॥ निदाघोप्युपदेशेन तेनाद्वैतपरो भवत् ॥१९॥ सर्वभूतान्यभेदेन ददृशे स तदात्मनः॥ यथा ब्रह्मपरो मुक्तिमवाप परमां द्विजः ॥२०॥ तथा त्वमपि धर्मज्ञ तुल्योत्मारिपुबांधवः॥भव सर्गगतं जानन्नात्मानमवनीपते ॥ २१ ॥ सितनीलादिभेदेन यथैकं दृश्यते नभः॥भ्रान्तदृष्टिभिरात्मापि तथैकः सन्पृथक्पृथक्॥२२॥एकः समस्तं यदिहास्ति किंचित्तदच्युतो नास्ति परं ततोन्यत् ॥ सोहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम् ॥२३॥ श्रीपराशर उवाच ॥ इतीरितस्तेन स राजवर्यस्तत्याज भेदं परमार्थदृष्टिः ॥ स चापि जातिस्मरणाप्तबोधस्तत्रैव जन्मन्यपवर्गमाप ॥२४॥ इति भरतनरेन्द्रसारवृत्तं कथयति यश्च शृणोति भक्तियुक्तः॥स विमलमतिरेति नात्ममोहं भवति च संसरणेषु मुक्तियोग्यः ॥२५॥ इति श्रीविष्णुम० द्वि० षोडशोऽध्यायः ॥१६॥ ॥ इति श्रीविष्णुमहापुराणे द्वितीयोंशः समाप्तः ॥

देवादिभेदरहितं ज्ञानैकाकारं तदेतदात्मस्वरूपम् अद्य संक्षेपेणोपदिष्टम् ॥१८॥१९॥ सर्वभूतानीति॥सर्वभूतानि सर्वानात्मनः सुरनरत्वादिभेदराहित्येन स्वात्मनोऽभेदेन समत्वेनापश्यत् न त्वेकत्वेन तथा सति सर्वभूतान्यात्मन इति प्रातिपदिकाद्विभक्तिवैयर्थ्यप्रसङ्गः । तथा ब्रह्माभेदेन तादात्म्येनापश्यत् ॥ २० ॥ तथेति ॥ आत्मेति तूपगच्छन्ति ग्राहयंति चेति सूत्रात् । सर्वगतं तत्तत्कर्मागुण्येन तत्तद्देवादिदेहगतमात्मतत्त्वमुक्तप्रकारं जानन् तुल्यात्मारिपुबान्धवो भव ॥ २१ ॥ सितनीलेति ॥ एकः सन् ज्ञानैकाकारेणैकरूपो भवन् देवादिदेहप्रवेशात्तत्तद्रूपेण भ्रान्त्या पृथक्पृथक् दृश्यते ॥ २२ ॥ अथ "सकलं जगत् वासुदेवाभिधेयस्य स्वरूपं परमात्मन" इति पूर्वाध्यायोक्तं सर्वस्य भगवदात्मकत्वं निगमयति—एक इति ॥ यदिहास्ति किंचित्तत्समस्तमेकोच्युत एव तदात्मकमित्यर्थः । तस्मात्ततः परमुत्कृष्टमन्यद्व्यतिरिक्तं च नास्ति ततोन्यदुत्कृष्टं नास्ति वा सर्वात्मनां पूर्वोक्तं ज्ञानैकाकारं तच्छब्देन परामृश्य तत्सामानाधिकरण्येनात्मनां विज्ञानमेवाकार इत्युपसंहरन् देवाद्याकारभेदेनात्मसु भेदमोहं परित्यजेत्याह—सोहमिति ॥ न तत्रात्मनां स्वरूपभेदो निषिध्यते तथा सति देहातिरिक्तोपदेश्यस्वरूपे अहं त्वं सर्वमेतदात्मस्वरूपमिति भेदनिर्देशो न घटते देहात्मविवेकविषयश्चायमुपदेशः । कुतः "पिंडः पृथग्यतः पुंसः शिरःपाण्यादिलक्षणः" इति प्रक्रमात् ॥२३॥२४॥ इतीति ॥ सारवृत्तं सारभूतं वृत्तम् । संसरणेष्वात्ममोहं नैतीत्यन्वयः ॥२५॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये द्वितीयेंशे षोडशोऽध्यायः ॥ १६ ॥ समाप्तश्चायं विष्णुमहापुराणद्वितीयांशः ॥ २ ॥छ॥

॥१९॥२०॥तथेति॥सर्वगतं सर्वत्राधिष्ठानत्वेन अनुगतम् ॥२१॥ अप्रत्यक्षेप्यात्मनि प्रत्यक्षं भेदभ्रमम् आकाशदृष्टांतेन संभावयन्नुपदिष्टमर्थं निगमयति—सितनीलेत्यादिद्वाभ्याम् ॥२२॥२३॥ इतीरितेति ॥ जातिस्मरणेनाप्तो बोधो येन भरतजन्मस्मरणेन जातबोधः। ऋभुदेहेन यदुपदिष्टं ज्ञानं तदेव योगभ्रंशहेतुभूतप्रारब्धकर्मावसाने सत्यस्मिन् जन्मन्याविर्भूतमतस्तत्रैव जन्मन्यपवर्गमाप ॥२४॥ तच्चरितवक्तृश्रोत्रोरपि तदेव फलमाह—इतीति ॥२५॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां द्वितीयांशे षोडशोध्यायः॥१६॥परानन्दपदाम्भोजश्रीवरः श्रीधरो हरेः ॥ पुराणे वैष्णवे व्याख्यां द्वितीयांशस्य चाकरोत् ॥१॥ इति द्वितीयोऽशस्समाप्तः ॥

इदं पुस्तकं क्षेमराज-श्रीकृष्णदासश्रेष्ठिना मुम्बय्यां स्वकीये "श्रीवेङ्कटेश्वर" (स्टीम्) यन्त्रालये मुद्रयित्वा प्रकाशितम् । संवत् १९६७, शके १८३२.

॥ अथ श्रीविष्णुमहापुराणे विष्णुचित्त्यात्मप्रकाशाख्यश्रीधरीय
व्याख्याद्वयोपेते तृतीयोंशः प्रारभ्यते ॥

॥ श्रीमते रामानुजाय नमः ॥ ॥ मैत्रेय उवाच ॥ ॥ कथिता गुरुणा सम्यग्भूसमुद्रादिसंस्थितिः ॥ सूर्यादीनां च संस्थानं ज्योतिषां चातिविस्तरात् ॥ १ ॥ देवादीनां तथा सृष्टिर्ऋषीणां चापि वर्णिता ॥ चातुर्वर्ण्यस्य चोत्पत्तिस्तिर्यग्योनिगतस्य च ॥ २ ॥ ध्रुवप्रह्लादचरितं विस्तराच्च त्वयोदितम् ॥ मन्वंतराण्यशेषाणि श्रोतुमिच्छाम्यनुक्रमात् ॥ ३ ॥ मन्वंतराधिपांश्चैव शक्रदेवपुरोगमान् ॥ भवता कथितानेताञ्छ्रोतुमिच्छाम्यहं गुरो ॥ ४ ॥ श्रीपराशर उवाच ॥ अतीतानागतानीह यानि मन्वंतराणि वै ॥ तान्यहं भवतः सम्यक्कथयामि यथा क्रमम् ॥ ५ ॥ स्वायंभुवो मनुः पूर्वं परः स्वारोचिषस्तथा ॥ उत्तमस्तामसश्चैव रैवतश्चाक्षुषस्तथा ॥ ६ ॥ षडेते मनवोतीतास्सांप्रतं तु

स्ये रवेस्सुतः ॥ वैवस्वतोयं यस्त्वेतत्सप्तमं वर्त्ततेंतरम् ॥ ७ ॥ स्वायंभुवं तु कथितं कल्पादावंतरं मया ॥ देवास्सप्तर्षयश्चैव यथावत्कथिता मया ॥ ८ ॥ अत ऊर्ध्वं प्रवक्ष्यामि मनोस्स्वारोचिषस्य तु ॥ मन्वंतराधिपान्सम्यग्देवर्षीस्तत्सुतांस्तथा ॥ ९ ॥

॥ श्रीमते रामानुजाय नमः ॥ अथ विष्णुचित्ती ॥ उक्तः प्रथमांशे प्रजासर्गः । द्वितीये तच्छेषः प्रियव्रतवंशः प्रसक्तः । प्रकृष्टानामावासभूतो लोकसन्निवेशः । अथ तृतीयचतुर्थयोर्वैदिकमनुव्यासादिप्रवर्तितो धर्मसंस्थापनं क्षत्रवंशश्च क्रमादुच्यते । तत्रांशद्वयार्थमनूद्य मन्वंतराणि पृच्छति—कथित इति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ अतीतेति ॥ अतीतानागतयोरेव वर्त्तमानस्यांतर्भावान्न पृथगुक्तिः । इह वाराहे कल्पे ॥ ५ ॥ ६ ॥ ७ ॥ स्वायंभुवमिति ॥ स्वायंभुवं कथितं प्रथमांशे तत्र हि मनोः तस्य वंश्याः प्रियव्रताद्या उक्ताः । देवाश्च यामाख्या, द्वादश इंद्रस्तु विश्वभुगाख्यः । "तेषामिंद्रस्तदा ह्यासीद्विश्वभुक्प्रथमः स्मृतः" इति वायूक्तेः । ऋषयो मरीच्याद्याः ॥ ८ ॥ अत इति ॥ देवर्षीन् मरीच्यादीन् । तत्सुतान् मनुपुत्रान् ॥ ९ ॥

॥ अथ श्रीधरी ॥ उक्तांशद्वयतस्सर्गो भूतानां भूविभागतः । स्थितिहेतुर्मनुर्व्यासः सद्धर्मादिरथोच्यते ॥ १ ॥ अंशद्वयानुवादपूर्वकं मन्वंतराणि पृच्छति—कथितेत्यादिचतुर्भिः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ अतीतेति ॥ इह वर्तमानकाले च यन्मन्वंतरं तच्च कथयामि ॥ ५ ॥ ६ ॥ ७ ॥ स्वायंभुवमिति ॥ कल्पस्यादावुपक्रमे । स्वायंभुवं मन्वंतरं तत्तु कथितं प्रथमांशे देवास्तत्र यामाख्या द्वादश । ऋषयो मरीच्याद्याः । चशब्दात्प्रियव्रतोत्तानपादौ मनुपुत्रावुक्तौ । इंद्रस्तु विश्वभुक्संज्ञः "तेषामिंद्रस्तथा ह्यासीद्विश्वभुक्प्रथमः स्मृतः" इति वायूक्तेः ॥ ८ ॥ अत ऊर्ध्वमिति ॥ देवर्षीन् देवानृषींश्च तत्सुतान् मनोः पुत्रान् ॥ ९ ॥

पारावतास्सतुषिता देवास्स्वारोचिषेंतरे ॥ विपश्चित्तत्र देवेंद्रो मैत्रेयासीन्महाबलः ॥ १० ॥ ऊर्जस्तंभस्तथा प्राणो वातोथ[१] पृषभस्तथा ॥ निरयश्च परीवांश्च तत्र सप्तर्षयोऽभवन् ॥ ११ ॥ चैत्रकिंपुरुषाद्याश्च सुतास्स्वारोचिषस्य तु ॥ द्वितीयमेतद्व्याख्यातमंतरं शृणु चोत्तमम् ॥ १२ ॥ तृतीयेप्यंतरे ब्रह्मन्नुत्तमो नाम यो मनुः ॥ सुशांतिर्नाम देवेंद्रो मैत्रेयासीत्सुतांञ्छृणु ॥ १३ ॥ सुधामानस्तथा सत्या जपाश्चाथ प्रतर्दनाः ॥ वशवर्तिश्च पंचैते गणा द्वादशकास्स्मृताः ॥ १४ ॥ वसिष्ठतनया ह्येते सप्त सप्तर्षयोभवन् ॥ अजः परशुदीताद्यास्तथोत्तममनोस्सुताः ॥ १५ ॥ तामसस्यांतरे देवास्सुपारा हरयस्तथा ॥ सत्याश्च सुधियश्चैव सप्तविंशतिका गणाः ॥१६॥ शिबिरिंद्रस्तथा चासीच्छतयज्ञोपलक्षणः ॥ सप्तर्षयश्च ये तेषां तेषां नामानि मे शृणु ॥ १७ ॥ ज्योतिर्धामा पृथुः काव्यश्चैत्रोग्निर्धनकस्तथा ॥ पीवरश्चर्षयो ह्येते सप्त तत्रापि चांतरे ॥ १८ ॥ नरः ख्यातिः केतुरूपो जानुजंघादयस्तथा ॥ पुत्रास्तु तामसस्यासन्राजानस्सुमहाबलाः ॥ १९ ॥ पंचमे वापि मैत्रेय रैवतो नाम नामतः ॥ मनुर्विभुश्च तत्रेंद्रो देवांश्चात्रांतरे शृणु ॥ २० ॥ अमिताभा भूतरया वैकुंठास्सुसमेधसः ॥ एते देवगणास्तत्र चतुर्दश चतुर्दश ॥ २१ ॥ हिरण्यरोमा वेदश्रिरूर्ध्वबाहुस्तथावरः ॥ वेदबाहुस्सुधामा च पर्जन्यश्च महामुनिः ॥ एते सप्तर्षयो विप्र तत्रासन्रैवतेंतरे ॥ २२ ॥

॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ सुधामान इति ॥ आद्यतृतीययोर्देवगणानां द्वादशकत्वोक्त्या द्वितीयेपि द्वादशकत्वं ज्ञेयम् । "द्वितीये च तृतीये च द्वादशौ द्वौ गणौ स्मृतौ" इति वायूक्तेः ॥ १४ ॥ वसिष्ठतनया रजोगोत्राद्याः सप्तोक्ताः प्रथमांशे ॥ १५ ॥ १६ ॥ शिबिरिति ॥ शतयज्ञोपलक्षणः शताश्वमेधकर्तृत्वेनोपलक्षितं सहस्राक्षत्ववज्रित्वादिचिह्नं सर्वेन्द्राणां समम् "सर्वमन्वंतरेन्द्रास्ते विज्ञेयास्तुल्यलक्षणाः" इति वायूक्तेः ॥ १७ ॥ १८ ॥ १९ ॥ ॥ २० ॥ २१ ॥ २२ ॥

पारावता इति ॥ 'पाराचारा' इति च पाठः । विपश्चित्संज्ञो देवेंद्रः ॥ १० ॥ उर्जस्तंभ इति ॥ 'दांतोग्निः' इति च पाठः ॥ ११ ॥ १२ ॥ १३ ॥ सुधामान इति ॥ द्वादशकः द्वादशनामैकैकशो गणा इत्येवं पंचैते गणाः स्मृताः ॥ १४ ॥ १५ ॥ तामसस्येति ॥ सप्तविंशतिकास्सप्तविंशतिगणाः ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

---

१ दत्तोग्नी ऋषभस्तथा इति–पाठान्तरम् ।

बलबंधुश्च संभाव्यस्सत्यकाद्याश्च तत्सुताः ॥ नरेन्द्राश्च महावीर्य्या बभूवुर्मुनिसत्तम ॥२३॥ स्वारोचिषश्चोत्तमश्च तामसो रैवतस्तथा ॥ प्रियव्रतान्वया ह्येते चत्वारो मनवस्स्मृताः॥२४॥विष्णुमाराध्य तपसा स राजर्षिः प्रियव्रतः॥ मन्वंतराधिपानेताँल्लब्धवानात्मवंशजान् ॥ २५ ॥ षष्ठे मन्वंतरे चासीच्चाक्षुषाख्यस्तथा मनुः ॥ मनोजवस्तथैवेंद्रो देवानपि निबोध मे ॥ २६ ॥ आप्याः प्रसूता भव्याश्च पृथुकाश्च दिवौकसः ॥ महानुभावा लेखाश्च पंचैते ह्यष्टका गणाः ॥ २७ ॥ सुमेधा विरजाश्चैव हविष्मानुत्तमो मधुः ॥ अतिनामा सहिष्णुश्च सप्तासन्निति चर्षयः ॥ ॥ २८ ॥ ऊरुः पूरुश्शतद्युम्नप्रमुखास्सुमहाबलाः ॥ चाक्षुषस्य मनोः पुत्राः पृथिवीपतयोऽभवन् ॥ २९ ॥ विवस्वतस्सुतो विप्र श्राद्धदेवो महाद्युतिः ॥ मनुस्संवर्त्तते धीमान् सांप्रतं सप्तमेंतरे ॥३०॥ आदित्यवसुरुद्राद्या देवाश्चात्र महामुने ॥ पुरंदरस्तथैवात्र मैत्रेय त्रिदशेश्वरः ॥ ३१ ॥ वशिष्ठः काश्यपोथात्रिर्जमदग्निस्सगौतमः ॥ विश्वामित्रभरद्वाजौ सप्त सप्तर्षयोऽभवन् ॥ ३२ ॥ इक्ष्वाकुश्च नृगश्चैव धृष्टः शर्य्यातिरेव च ॥ नरिष्यंतश्च विख्यातो नाभागोरिष्ट एव च ॥ ३३ ॥ करूषश्च पृषध्रश्च सुमहाँल्लोकविश्रुतः ॥ मनोर्वैवस्वतस्यैते नव पुत्राः सुधार्मिकाः ॥ ॥ ३४ ॥ विष्णुशक्तिरनौपम्या सत्त्वोद्रिक्ता स्थितौ स्थिता ॥ मन्वंतरेष्वशेषेषु देवत्वेनाधितिष्ठति ॥३५॥ अंशेन तस्या जज्ञेऽसौ यज्ञस्स्वायंभुवेंतरे ॥ आकूत्यां मानसो देव उत्पन्नः प्रथमेंतरे ॥ ३६ ॥ ततः पुनः स वै देवः प्राप्ते स्वारोचिषेंतरे ॥ तुषितायां समुत्पन्नो ह्यजिषस्तुषितैः सह ॥ ३७ ॥

॥ २३ ॥ स्वारोचिष इति ॥ आदिसर्गे प्रथमषष्ठमन्वोरन्वयस्योक्तत्वादिह स्वारोचिषादिचतुष्कस्यान्वयमाह—प्रियव्रतान्वया इति ॥ २४ ॥ २५ ॥ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ विष्णुशक्तिरिति ॥ विष्णोः शक्तिः विष्णोरंशः । देवत्वेन मन्वादिजगद्रक्षकेण यज्ञादिदेवतारूपेणाधितिष्ठति, मन्वादिष्विति शेषः ॥ ३५ ॥ अंशेनेति ॥ तस्य विष्णोरंशेन स्वायंभुवेंतरे यज्ञो जज्ञे तस्येति पुँल्लिंगनिर्देशः पाठान्तरे । 'कथं जज्ञे' इत्यत्राह—आकूत्यामिति ॥ ३६ ॥ ३७ ॥

॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ तदेवं स्वायंभुवादिमन्वंतरेषु मनुर्मनुपुत्रा देवा इंद्रस्सप्तर्षय इत्येवं पंचकमनुक्रांतम् । इदानीं प्रथितमन्वंतरे । तेषां मन्वादीनाम् अधिष्ठातारं विष्णोरंशावतारमाह—विष्णुशक्तिरित्यादि यावत्समाप्ति ॥ विष्णुशक्तिरिति ॥ देवत्वेन यज्ञादिदेवतारूपेण विष्णोस्स्वरूपभूता शक्तिः ॥ ३५ ॥ ३६ ॥ ३७ ॥

औत्तमेप्यंतरे देवस्तुषितस्तु पुनस्स वै ॥ सत्यायामभवत्सत्यः सत्यैस्सह सुरोत्तमैः ॥ ३८ ॥ तामसस्यांतरे चैव संप्राप्ते पुनरेव हि ॥ हर्य्यायां हरिभिस्सार्द्धं हरिरेव बभूव ह ॥ ३९ ॥ रैवतेप्यंतरे देवस्संभूत्यां मानसो हरिः ॥ संभूतो रैवतैस्सार्द्धं देवैर्देववरो हरिः ॥ ४० ॥ चाक्षुषे चांतरे देवो वैकुण्ठः पुरुषोत्तमः ॥ विकुण्ठायामसौ जज्ञे वैकुंठैर्दैवतैः सह ॥ ४१ ॥ मन्वंतरेत्र संप्राप्ते तथा वैवस्वते द्विज ॥ वामनः काश्यपाद्विष्णुरदित्यां संबभूव ह ॥ ४२ ॥ त्रिभिः क्रमैरिमाँल्लोकाञ्जित्वा येन महात्मना ॥ पुरंदराय त्रैलोक्यं दत्तं निहतकंटकम् ॥ ४३ ॥ इत्येतास्तनवस्तस्य सप्तमन्वंतरेषु वै ॥ सप्तस्वेवाभवन्विप्र याभिः संवर्द्धिताः प्रजाः ॥ ४४ ॥ यस्माद्विष्टमिदं विश्वं यस्य शक्त्या महात्मनः ॥ तस्मात्स प्रोच्यते विष्णुर्विशेर्धातोः प्रवेशनात् ॥ ४५ ॥ सर्वे च देवा मनवस्समस्तास्सप्तर्षयो ये मनुसूनवश्च ॥ इन्द्रश्च योऽयं त्रिदशेशभूतो विष्णोरशेषास्तु विभूतयस्ताः ॥४६॥ इति श्रीविष्णुमहापुराणे तृतीयांशे प्रथमोऽध्यायः ॥१॥ ॥ मैत्रेय उवाच ॥ प्रोक्तान्येतानि भवता सप्त मन्वंतराणि वै ॥ भविष्याण्यपि विप्रर्षे ममाख्यातुं त्वमर्हसि ॥ १ ॥ श्रीपराशर उवाच ॥ सूर्य्यस्य पत्नी संज्ञाभूत्तनया विश्वकर्मणः ॥ मनुर्यमो यमी चैव तदपत्यानि वै मुने ॥ २ ॥ असहंती तु सा भर्तुस्तेजश्छायां युयोज वै ॥ भर्त्तृशुश्रूषणेरण्यं स्वयं च तपसे ययौ ॥ ३ ॥

॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ विष्णुत्वमेव विवृणोति–सर्वे चेति ॥ ४६ ॥ इति श्रीविष्णुचित्तीये विष्णुमहापुराणव्याख्याने तृतीयांशे प्रथमोऽध्यायः ॥ १ ॥ छ ॥ १ ॥ सूर्य्यस्येति ॥ सूर्य्यस्येत्यष्टममनोः प्रसंगाद्यमादीनां जन्मेतिहासः ॥ २ ॥ असहंतीति ॥ छायां प्रतिकृतिं तद्वदत्यंतात्मसदृशीं कांचित्स्त्रियं कृत्वा शुश्रूषणे युयोज न्ययुंक्त ॥ ३ ॥

॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ विष्णोर्मन्वाद्यधिष्ठातृत्वं तेषां विष्णुशक्त्यावेशाद्विभूतिमत्त्वं विष्णुनामनिरुक्त्या दर्शयति यस्मादित्यादिद्वाभ्याम् ॥ यस्मादिति ॥ प्रवेशनात् प्रवेशनार्थत्वादित्यर्थः ॥ ४५ ॥ ४६ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां तृतीयांशे प्रथमोऽध्यायः ॥ १ ॥ ॥ १ ॥ अष्टमोऽपि मनुस्सूर्यस्यैव पुत्र इति वक्तुमितिहासमाह–सूर्यस्येत्यादिना । सूर्यस्येति ॥ मनुः श्राद्धदेवः ॥ २ ॥ असहंतीति ॥ छायां प्रतिबिंबतुल्यां स्वसदृशीमन्यां स्त्रियं कृत्वा भर्तृशुश्रूषणार्थं युयोज न्ययुंक्त । स्वयं तु तपस्तप्तुं ययौ ॥ ३ ॥

संज्ञेयमित्यथार्कश्च छायायामात्मजत्रयम् ॥ शनैश्चरं मनुं चान्यं तपतीं चाप्यजीजनत् ॥ ४ ॥ छायासंज्ञा ददौ शापं यमाय कुपिता यदा ॥ तदान्येयमसौ बुद्धिरित्यासीद्यमसूर्य्ययोः ॥ ५ ॥ ततो विवस्वानाख्यातां तयैवारण्यसंस्थिताम् ॥ समाधिदृष्ट्या ददृशे तामश्वां तपसि स्थिताम् ॥ ६ ॥ वाजिरूपधरः सोथ तस्यां देवावथाश्विनौ ॥ जनयामास रेवंतं रेतसोंते च भास्करः ॥ ७ ॥ आनिन्ये च पुनः संज्ञां स्वस्थानं भगवान्रविः ॥ तेजसश्शमनं चास्य विश्वकर्मा चकार ह ॥ ८ ॥ भ्रममारोप्य सूर्य्यं तु तस्य तेजोनिशातनम् ॥ कृतवानष्टमं भागं स व्यशातयदव्ययम् ॥ ९ ॥ यत्तस्माद्वैष्णवं तेजश्शातितं विश्वकर्मणा ॥ जाज्वल्यमानमपतत्तद्भूमौ मुनिसत्तम ॥ १० ॥ त्वष्टैव तेजसा तेन विष्णोश्चक्रमकल्पयत् ॥ त्रिशूलं चैव शर्वस्य शिबिकां धनदस्य च ॥ ११ ॥ शक्तिं गुहस्य देवानामन्येषां च यदायुधम् ॥ तत्सर्वं तेजसा तेन विश्वकर्मा व्यवर्द्धयत् ॥ १२ ॥ छायासंज्ञासुतो योसौ द्वितीयः कथितो मनुः ॥ पूर्वजस्यासवर्णोसौ सावर्णिस्तेन कथ्यते ॥ १३ ॥

॥ ४ ॥ छायेति ॥ छायारूपा संज्ञा स्वपुत्रपक्षपातेन अतिकुपिता आत्मानं पदा जिघांसते यमाय तव पादः पतत्विति यदा शापं ददौ तदा जनन्याः शापो न संभवतीति अन्येयमित्यसौ बुद्धिरासीत् ॥ ५ ॥ ६ ॥ वाजिरूपधर इति ॥ रेतसोंत इति रेवंतत्त्वनिरुक्तिः ॥ ७ ॥ ८ ॥ भ्रममिति ॥ भ्रमः खड्गादीनां नैशित्यकरणं कर्षणशाणचक्रम् ॥ ९ ॥ १० ॥ त्वष्टैवेति ॥ शिबिकां पुष्पकाख्यं " विमानयोधी धनदो व्यनदत्पुष्पके स्थितः " इति हरिवंशोक्तेः । आयुधविशेषो वा ॥ ११ ॥ शक्तिमिति ॥ व्यवर्द्धयत् व्यरचयत् । "व्यकल्पयत्" इति च पाठः ॥ १२ ॥ १३ ॥

॥ ४ ॥ छायासंज्ञेति ॥ छायैव संज्ञारूपेण स्थिता छायासंज्ञा सा हि कदाचिच्छायासंज्ञा स्वपुत्रपक्षपातितया यमे पादप्रहारोद्यते सति तव पादः पतत्विति शापं ददौ । तथा च तस्या निर्दयत्वमालक्ष्य नेयं संज्ञा किंत्वन्येति यमसूर्ययोर्बुद्धिर्जाता ॥ ५ ॥ ६ ॥ वाजिरूपधर इति ॥ ततश्च सूर्येण त्वमस्य माता भवितुं नार्हसि । का त्वं सत्यं कथयेति पृष्टया नाहं संज्ञा किं तु तस्याः छायेत्याख्याते सूर्यस्संज्ञा क वास्त इति विचिंत्य ज्ञानदृष्ट्योत्तरकुरुष्वरण्ये वडवारूपिणीं तपस्तप्यमानां ज्ञात्वा वाजिरूपेण तामुपेत्य तस्यामश्विनौ रेवंतं च जनयामास 'रेतसोंते च रेवंतम्' इति रेवंतनामनिरुक्तेः ॥ ७ ॥ ८ ॥ भ्रममिति ॥ भ्रममारोप्य तस्य तेजोवशातनं चकार ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ छायेति ॥ पूर्वजस्य श्राद्धदेवस्य सवर्णेन सूर्यसुतत्वात्स्वरूपत्वाद्वा सावर्णिः ॥ १३ ॥

तस्य मन्वंतरं ह्येतत्सावर्णिकमथाष्टमम् ॥ तच्छृणुष्व महाभाग भविष्यत्कथयामि ते ॥ १४ ॥ सावर्णिस्तु मनुर्योसौ मैत्रेय भविता ततः ॥ सुतपाश्चामिताभाश्च मुख्याश्चापि तथा सुराः ॥ १५ ॥ तेषां गणाश्च देवानामेकैको विंशकः स्मृतः ॥ सप्तर्षीनपि वक्ष्यामि भविष्यान्मुनिसत्तम ॥ १६ ॥ दीप्तिमान् गालवो रामः कृपो द्रोणिस्तथा परः ॥ मत्पुत्रश्च तथा व्यास ऋष्यशृंगश्च सप्तमः ॥ १७ ॥ विष्णुप्रसादादनघः पातालांतरगोचरः ॥ विरोचनसुतस्तेषां बलिरिंद्रो भविष्यति ॥ १८ ॥ विरजाश्चोर्वरीवांश्च निर्मोकाद्यास्तथापरे ॥ सावर्णेस्तु मनोः पुत्रा भविष्यंति नरेश्वराः ॥ १९ ॥ नवमो दक्षसावर्णिर्भविष्यति मुने मनुः ॥ २० ॥ पारा मरीचिगर्भाश्च सुधर्माणस्तथा त्रिधा ॥ भविष्यंति तथा देवा ह्येकैको द्वादशो गणः ॥ २१ ॥ तेषामिंद्रो महावीर्य्यो भविष्यत्यद्भुतो द्विज ॥ २२ ॥ सवनो द्युतिमान् भव्यो वसुर्मेधातिथिस्तथा ॥ ज्योतिष्मान् सप्तमः सत्यस्तत्रैते च महर्षयः ॥ २३ ॥ धृतकेतुर्दीप्तिकेतुः पंचहस्तनिरामयौ ॥ पृथुश्रवाद्याश्च तथा दक्षसावर्णिकात्मजाः ॥ २४ ॥ दशमो ब्रह्मसावर्णिर्भविष्यति मुने मनुः ॥ सुधामानो विशुद्धाश्च शतसंख्यास्तथा सुराः ॥२५॥ तेषामिंद्रश्च भविता शांतिर्नाम महाबलः ॥ सप्तर्षयो भविष्यंति ये तथा ताञ्छृणुष्व ह ॥ २६ ॥ हविष्मान्सुकृतस्सत्यस्तपोमूर्त्तिस्तथापरः ॥ नाभागोऽप्रतिमौजाश्च सत्यकेतुस्तथैव च ॥ २७ ॥ सुक्षेत्रश्चोत्तमौजाश्च भूरिषेणादयो दश ॥ ब्रह्मसावर्णिपुत्रास्तु रक्षिष्यंति वसुंधराम् ॥ २८ ॥ एकादशश्च भविता धर्मसावर्णिको मनुः ॥ २९ ॥ विहंगमाः कामगमा निर्वाणा ऋषयस्तथा ॥ गणास्त्वेते तदा मुख्या देवानां च भविष्यताम् ॥ एकैकस्त्रिंशकस्तेषां गणश्चेंद्रश्च वै वृषा ॥ ३० ॥ निःस्वरश्चाग्नितेजाश्च वपुष्मान्घृणिरारुणिः ॥ हविष्माननघश्चैव भाव्याः सप्तर्षयस्तथा ॥ ३१ ॥

॥ १४ ॥ सावर्णिरिति ॥ अतस्तस्मिन्मनौ ॥ १५ ॥ १६ ॥ दीप्तिमानिति ॥ व्यासादीनां ब्रह्मापारोक्ष्ये सत्यपि आधिकारिककर्मक्षयावधि स्थातव्यत्वात् पुनस्सप्तर्षित्वेप्यविरोधः । यावदधिकारमवस्थितिराधिकारिकाणामिति न्यायात् ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ ॥ २७ ॥ सुक्षेत्रेति ॥ सुक्षेत्रादयो मनुपुत्राः ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥

॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ तेषामिति ॥ अद्भुतसंज्ञ इंद्रः ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ सुक्षेत्र इति ॥ सुक्षेत्रादयो ब्रह्मसावर्णिपुत्राः ॥ २८ ॥ ॥ २९ ॥ ३० ॥ ३१ ॥

सर्वत्रगस्सुधर्मा च देवानीकादयस्तथा॥भविष्यंति मनोस्तस्य तनयाः पृथिवीश्वराः ॥३२॥ रुद्रपुत्रस्तु सावर्णिर्भविता द्वादशो मनुः॥ ऋतुधामा च तत्रेंद्रो भविता शृणु मे सुरान् ॥ ३३ ॥ हरिता रोहिता देवास्तथा सुमनसो द्विज ॥ सुकर्माणः सुरापाश्च दशकाः पंच वै गणाः ॥ ३४ ॥ तपस्वी सुतपाश्चैव तपोमूर्त्तिस्तपोरतिः ॥ तपोधृतिर्द्युतिश्चान्यः सप्तमस्तु तपोधनः ॥ सप्तर्षयस्त्विमे तस्य पुत्रानपि निबोध मे ॥ ३५ ॥ देववानुपदेवश्च देवश्रेष्ठादयस्तथा ॥ मनोस्तस्य महावीर्य्या भविष्यंति महानृपाः ॥ ३६ ॥ त्रयोदशो रुचिर्नामा भविष्यति मुने मनुः ॥ ॥ ३७ ॥ सुत्रामाणः सुकर्माणः सुधर्माणस्तथामराः ॥ त्रयस्त्रिंशद्विभेदास्ते देवानां यत्र वै गणाः ॥ ३८ ॥ दिवस्पतिर्महावीर्य्यस्तेषामिंद्रो भविष्यति ॥ ३९ ॥ निर्मोहस्तत्त्वदर्शी च निष्प्रकंप्यो निरुत्सुकः ॥ धृतिमानव्ययश्चान्यस्सप्तमस्सुतपा मुनिः ॥ सप्तर्षयस्त्वमी तस्य पुत्रानपि निबोध मे ॥ ४० ॥ चित्रसेनविचित्राद्या भविष्यंति महीक्षितः ॥ ४१ ॥ भौमश्चतुर्दशश्चात्र मैत्रेय भविता मनुः ॥ शुचिरिंद्रः सुरगणास्तत्र पञ्च शृणुष्व तान् ॥ ४२ ॥ चाक्षुषाश्च पवित्राश्च कनिष्ठा भ्राजिकास्तथा ॥ वाचावृद्धाश्च वै देवास्सप्तर्षीनपि मे शृणु ॥ ४३ ॥ अग्निबाहुः शुचिः शुक्रो मागधोग्नीध्र एव च॥युक्तस्तथा जितश्चान्यो मनुपुत्रानतः शृणु ॥४४॥ ऊरुगंभीरबुद्ध्याद्या मनोस्तस्य सुता नृपाः ॥ कथिता मुनिशार्दूल पालयिष्यंति ये महीम् ॥४५॥ चतुर्युगांते वेदानां जायते किल विप्लवः॥प्रवर्त्तयंति तानेत्य भुवं सप्तर्षयो दिवः ॥ ४६ ॥ कृतेकृते स्मृतेर्विप्र प्रणेता जायते मनुः ॥ देवा यज्ञभुजस्ते तु यावन्मन्वंतरं तु तत् ॥ ४७ ॥ भवंति ये मनोः पुत्रा यावन्मन्वंतरं तु तैः ॥ तदन्वयोद्भवैश्चैव तावद्भूः परिपाल्यते ॥ ४८ ॥ मनुस्सप्तर्षयो देवा भूपालाश्च मनोः सुताः ॥ मन्वंतरे भवंत्येते शक्रश्चैवाधिकारिणः ॥ ४९ ॥

॥३२॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ चाक्षुषा इति ॥ चाक्षुषाया गणास्सप्तकाः ॥ ४३ ॥ ४४ ॥ ४५ ॥ चतुर्युगांत इति ॥ चतुर्युगांत इत्यादिना मन्वंतराधिकारिकृत्योक्तिः । तान् कलियुगांते अनध्ययनादुत्सन्नसांप्रदायान् वेदान् कृतारंभे भाव्यंशेनावतीर्य्य प्रवर्त्तयंति ॥ ४६ ॥ कृतेकृत इति ॥ मनुस्तु प्राचीनाः स्मृतीः स्वायंभुवदक्षादिकृताः प्रवर्त्तयति ॥ ४७ ॥ ४८ ॥ ४९ ॥

॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ उक्तानां मन्वादीनां कृत्यविभागमाह—चतुर्युगांत इत्यादिचतुर्भिः ॥ चतुर्युगांत इति ॥ दिवस्काशादेत्य अंशेनावतीर्य तानेव वेदानध्यापनादिना प्रवर्तयंतीति ॥ ४६ ॥ कृतेकृत इति ॥ स्मृतेः प्रणेता स्वयंभूर्दक्षादिकृतस्यैव धर्मशास्त्रस्य प्रवर्तको भवतीत्यर्थः ॥ ४७ ॥ ४८ ॥ ४९ ॥

चतुर्दशभिरेतैस्तु गतैर्मन्वंतरैर्द्विज ॥ सहस्रयुगपर्य्यंतः कल्पो निश्शेष उच्यते ॥ ५० ॥ तावत्प्रमाणा च निशा ततो भवति सत्तम ॥ ब्रह्म
रूपधरश्शेते शेषाहावंबुसंप्लवे ॥ ५१ ॥ त्रैलोक्यमखिलं ग्रस्त्वा भगवानादिकृद्विभुः ॥ स्वमायासंस्थितो विप्र सर्वभूतो जनार्दनः ॥ ५२ ॥
ततः प्रबुद्धो भगवान् यथा पूर्वं तथा पुनः ॥ सृष्टिं करोत्यव्ययात्मा कल्पेकल्पे रजोगुणः ॥ ५३ ॥ मनवो भूभुजस्सेंद्रा देवास्सप्तर्षयस्तथा ॥
सात्त्विकोंशः स्थितिकरो जगतो द्विजसत्तम ॥५४॥ चतुर्युगेप्यसौ विष्णुः स्थितिव्यापारलक्षणः ॥ युगव्यवस्थां कुरुते तथा मैत्रेय तच्छृणु ॥
॥ ५५ ॥ कृते युगे परं ज्ञानं कपिलादिस्वरूपधृक् ॥ ददाति सर्वभूतात्मा सर्वभूतहिते रतः ॥ ५६ ॥ चक्रवर्त्तिस्वरूपेण त्रेतायामपि स प्रभुः ॥
दुष्टानां निग्रहं कुर्वन्परिपाति जगत्त्रयम् ॥५७॥ वेदमेकं चतुर्भेदं कृत्वा शाखाशतैर्विभुः ॥ करोति बहुलं भूयो वेदव्यासस्वरूपधृक् ॥ ५८ ॥
वेदांस्तु द्वापरे व्यस्य कलेरंते पुनर्हरिः॥कल्किस्वरूपी दुर्वृत्तान्मार्गे स्थापयति प्रभुः॥५९॥एवमेतज्जगत्सर्वं शश्वत्पाति करोति च॥ हंति चांतेष्व
नंतात्मा नास्त्यस्माद्व्यतिरेकि यत् ॥ ६० ॥ भूतं भव्यं भविष्यं च सर्वभूतान्महात्मनः ॥ तदत्रान्यत्र वा विप्र सद्भावः कथितस्तव ॥ ६१ ॥
मन्वंतराण्यशेषाणि कथितानि मया तव ॥ मन्वंतराधिपांश्चैव किमन्यत्कथयामि ते ॥ ६२ ॥ इति श्रीविष्णुमहापुराणे तृतीयांशे द्विती
योऽध्यायः ॥ २ ॥ ॥ मैत्रेय उवाच ॥ ज्ञातमेतन्मया त्वत्तो यथा सर्वमिदं जगत् ॥ विष्णुर्विष्णौ विष्णुतश्च न परं विद्यते ततः ॥ १ ॥

॥ ५० ॥ तावत्प्रमाणेति ॥ ब्रह्मरूपधरः ब्रह्मशरीरमधिष्ठाय ॥ ५१ ॥ त्रैलोक्यमिति ॥ स्वमायासंस्थितः "आत्ममायामयीं दिव्यां योगनिद्रां समास्थितः"
संकल्पज्ञानं वा माया ॥ ५२ ॥ ५३ ॥ मनव इति ॥ सात्त्विकोंशः भगवतस्सात्त्विकतनुः ॥ ५४ ॥ चतुर्युग इति ॥ चतुर्युगेपि न केवलं मन्वंतरे ॥ ५५ ॥
॥ ५६ ॥ ५७ ॥ वेदमिति ॥ चतुर्भेदं युगादिरूपेण शाखाशतैर्बहुलमित्यन्वयः ॥ ५८ ॥ ५९ ॥ ६० ॥ भूतमिति॥उपसंहरति–तदत्रेति । सर्वभूताद्भगवतो व्यति
रिक्तं नास्तीत्येष सद्भावोत्र प्रकरणांतरे च कथितः ॥ ६१ ॥ ६२ ॥ इति श्रीविष्णुचित्तीये विष्णुमहापुराणव्याख्याने तृतीयांशे द्वितीयोऽध्यायः ॥२॥ ॥ ज्ञातमिति ॥
जगद्विष्णुरिति तादात्मकत्वमुक्तं, विष्णाविति लयस्थित्योः स्थानत्वं, विष्णुत इति कारणत्वम् ॥ १ ॥

॥५०॥तावदिति ॥ दिवा ब्रह्मरूपधरो भगवान् रात्रौ नारायणरूपेण शेषाहौ शेषसंज्ञे नागे शेते ॥ ५१ ॥ ५२ ॥ सर्वकल्पमन्वंतरयुगादिस्थितिं सप्रपंचमाह–ततः प्रबुद्ध इत्यादिना यावदध्यायसमाप्ति ॥ ५३ ॥ ५४ ॥
॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां तृतीयांशे द्वितीयोऽध्यायः ॥ २ ॥ ॥ ज्ञातमिति ॥ यथा सर्वं जगद्विष्णुरेव न

एतत्तु श्रोतुमिच्छामि व्यस्ता वेदा महात्मना ॥ वेदव्यासस्वरूपेण यथा तेन युगेयुगे ॥ २ ॥ यस्मिन्यस्मिन्युगे व्यासो यो य आसीन्महा मुने ॥ तंतमाचक्ष्व भगवञ्छाखाभेदांश्च मे वद ॥ ३ ॥ श्रीपराशर उवाच ॥ वेदद्रुमस्य मैत्रेय शाखाभेदास्सहस्रशः ॥ न शक्तो विस्तरा द्वक्तुं संक्षेपेण शृणुष्व तम् ॥ ४ ॥ द्वापरेद्वापरे विष्णुर्व्यासरूपी महामुने ॥ वेदमेकं सुबहुधा कुरुते जगतो हितः ॥ ५ ॥ वीर्यं तेजो बलं चाल्पं मनुष्याणामवेक्ष्य च ॥ हिताय सर्वभूतानां वेदभेदान्करोति सः ॥ ६ ॥ ययासौ कुरुते तन्वा वेदमेकं पृथक् प्रभुः ॥ वेदव्यासाभि धाना तु सा च मूर्तिर्मधुद्विषः ॥७॥ यस्मिन्मन्वंतरे व्यासा येये स्युस्तान्निबोध मे ॥ यथा च भेदश्शाखानां व्यासेन क्रियते मुने ॥ ८ ॥ अष्टाविंशतिकृत्वो वै वेदो व्यस्तो महर्षिभिः ॥ वैवस्वतेंतरे तस्मिन्द्वापरेषु पुनःपुनः ॥ ९ ॥ वेदव्यासा व्यतीता ये ह्यष्टाविंशति सत्तम ॥ चतुर्धा यैः कृतो वेदो द्वापरेषु पुनःपुनः ॥१०॥ द्वापरे प्रथमे व्यस्तस्स्वयं वेदः स्वयंभुवा ॥ द्वितीये द्वापरे चैव वेदव्यासः प्रजापतिः ॥११॥ तृतीये चोशना व्यासश्चतुर्थे च बृहस्पतिः ॥ सविता पंचमे व्यासः षष्ठे मृत्युस्स्मृतः प्रभुः ॥ १२ ॥ सप्तमे च तथैवेंद्रो वसिष्ठश्चाष्टमे स्मृतः ॥ सारस्वतश्च नवमे त्रिधामा दशमे स्मृतः ॥ १३ ॥ एकादशे तु त्रिशिखो भरद्वाजस्ततः परः ॥ त्रयोदशे चांतरिक्षो वर्णी चापि चतुर्दशे ॥ १४ ॥ त्रय्यारुणः पंचदशे षोडशे तु धनंजयः ॥ क्रतुंजयः सप्तदशे तदूर्ध्वं च जयस्स्मृतः ॥ १५ ॥

॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ वीर्यमिति ॥ वीर्यमुत्साहः, तेजस्तपोयोगादिजनितः प्रभावः, बलं धारणाशक्तिः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ वेदव्यासा इति ॥ व्यतीताः निवृत्ताऽधिकाराः । अष्टाविंशतीत्यार्षस्सुलोपः ॥ १० ॥ द्वापर इति । द्वितीयो मनुर्व्यासः ॥ "ब्रह्मा मनुमुवाचेदं वेदान्व्यस्य प्रजापते" इति वायूक्तेः ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

ततः परं विद्यते यथा च विष्णावेव तिष्ठति विष्णुतश्च यथा जातं तथा त्वत्तो मया ज्ञातम् ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ वीर्यमिति ॥ वीर्यमुत्साहस्तेजः प्रागल्भ्यं बलं च पठनसामर्थ्यम् अल्पमवेक्ष्य ॥ ६ ॥ ॥ ७ ॥ ८ ॥ ९ ॥ वेदव्यासा इति ॥ अष्टाविंशति र्व्यासा अतीता निवृत्ता अधिकारात्प्रच्युता इत्यर्थः ॥ १० ॥ द्वापर इति ॥ प्रजापतिः मनुः "ब्रह्मा मनुमुवाचेदं वेदान्व्यस्य प्रजापते" इति वायूक्तेः ॥ ११ ॥ ॥ १२ ॥ १३ ॥ एकादश इति ॥ 'एकादशे तु त्रिशिराः धर्मश्चापि चतुर्दश' इति च पाठः ॥ १४ ॥ त्रय्यारुणिरिति ॥ 'कृतञ्जयः सप्तदशे तदूर्ध्वं च रणंजयः' इति च पाठः ॥ १५ ॥

ततो व्यासो भरद्वाजो भरद्वाजाच्च गौतमः ॥ गौतमादुत्तरो व्यासो हर्य्यात्मा योभिधीयते ॥ १६ ॥ अथ हर्य्यात्मनोंते च स्मृतो वाजश्रवा मुनिः ॥ सोमशुष्कायणस्तस्मात्तृणबिंदुरिति स्मृतः ॥ १७ ॥ ऋक्षोभूद्भार्गवस्तस्माद्वाल्मीकिर्योभिधीयते ॥ तस्मादस्मत्पिता शक्तिर्व्यास स्तस्मादहं मुने ॥ १८ ॥ जातुकर्णोभवन्मत्तः कृष्णद्वैपायनस्ततः ॥ अष्टाविंशतिरित्येते वेदव्यासाः पुरातनाः ॥ १९ ॥ एको वेदश्चतुर्द्धा तु तैः कृतो द्वापरादिषु ॥ २० ॥ भविष्ये द्वापरे चापि द्रौणिर्व्यासो भविष्यति ॥ व्यतीते मम पुत्रेस्मिन् कृष्णद्वैपायने मुने ॥ २१ ॥ ध्रुवमेकाक्षरं ब्रह्म ओमित्येव व्यवस्थितम् ॥ बृहत्वाद्बृंहणत्वाच्च तद्ब्रह्मेत्यभिधीयते ॥ २२ ॥ प्रणवावस्थितं नित्यं भूर्भुवस्स्वरितीर्य्यते ॥ ऋग्यजुस्सामाथर्वाणो यत्तस्मै ब्रह्मणे नमः ॥ २३ ॥ जगतः प्रलयोत्पत्त्योर्यत्तत्कारणसंज्ञितम् ॥ महतः परमं गुह्यं तस्मै सुब्रह्मणे नमः ॥ २४ ॥

तत इति ॥ उत्तमादिचतुष्कस्य पुराणांतरप्रसिद्धानि हर्य्यात्मादिनामांतराणि ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ एक इति ॥ द्वापरादिषु द्वापर आदिर्येषां तानि द्वापरादीनि तेषु द्वापरसंध्यंशेष्वित्यर्थः । द्वापरांते वेदविभागप्रसिद्धेः । "द्वापरे तु परावृत्ते मनोस्स्वायंभुवेंतरे । ब्रह्मा मनुमुवाचेदं वेदान्व्यस्य प्रजापते" इति वायूक्तेः । शंतनुसमकाले द्वैपायनोत्पत्तिप्रसिद्धेश्च ॥ २० ॥ २१ ॥ अथ वेदविभागान् वक्ष्यन् प्रथमं परतत्त्वप्राप्त्युपायतयोपास्यमिति दर्शयितुं प्रणवात्मकं शब्दब्रह्म प्रणवमाह–ध्रुवमिति द्वयेन ध्रुवमिति ॥ ध्रुवमविनाशी ओमित्येव व्यवस्थितं वेदविभागेप्यविभक्तम् अविकृतं च यत्प्रणवाख्यमेकाक्षरं ब्रह्म तद्बृहत्वबृंहणत्वाभ्यां ब्रह्मेत्यभिधीयते । "यस्मादुचार्य्यमाण एव बृहते बृंहयते तस्मादुच्यते परं ब्रह्म" इति श्रुतेः ॥ २२ ॥ बृहत्वबृंहणत्वे उपपादयति प्रणवावस्थितमिति ॥ व्याहृतित्रयमृगादिचतुष्टयं च प्रणवावस्थितमीर्य्यत इति यत् । तस्माच्छब्दात्मने तस्मै ब्रह्मणे नम इत्यन्वयः । प्रणवस्य कारणावस्थायामंतर्गतव्याहृतिकत्वेन बृहत्त्वम् । कार्य्यावस्थायां व्याहृतिवेदरूपेण परिणामात् बृंहणत्वमिति भावः ॥ २३ ॥ अथ प्रणवं कारणतया प्रधानतादात्म्येन स्तुवन् प्रणमति–जगत् इत्यादिना

॥१६॥१७॥१८॥जातुकर्ण इति ॥ शंतनुसमकालं सत्यवत्यां कृष्णद्वैपायनोत्पत्तिप्रसिद्धेश्च ॥१९॥२०॥२१॥ अथ वेदविभागं वक्ष्यन्प्रथमं तावत्प्रणवावस्थाद्ब्रह्मणो वेदानामाविर्भावं दर्शयितुमाह–ध्रुवमिति ॥ देवादीनां प्रकृतिभूतम् ओमित्येकाक्षरं ब्रह्म पूर्वं व्यवस्थितम् । अविनाशितया स्थितम् । तस्य ब्रह्मसमाख्यायां हेतुमाह–बृहत्वदपरिच्छिन्नत्वबृंहणत्वादिति वेदानां । कारणत्वाच्च तदोंकाराक्षरं ब्रह्मेत्यभिधीयते "यस्मादुच्चार्यमाण एव बृंहति बृंहयति तस्मादुच्यते ब्रह्म" इति श्रुतेः ॥ २२ ॥ बृंहणत्वमेव दर्शयन्ब्रह्मप्रकाशं तद्ब्रह्मत्वेनोपास्यत्वमित्यभिप्रेत्य प्रणमति । प्रणवेति ॥ प्रणवे प्रणवरूपेणावस्थितं तदेव ब्रह्मभूतव्याहृतिरूपमीर्यते "भूरित्येष ऋग्वेदोभुवरिति यजुर्वेदस्सुवरिति सामवेदः" इति श्रुतेः । अथर्वाणं च वेदो यद्यतो जातं वदंतीति शेषः । तस्मै प्रणवात्मने ब्रह्मणे नमः "ओमिति ब्रह्म ओमितीदꣳसर्वम्" इत्यादिश्रुतेः ॥ २३ ॥ तस्यैव सार्वात्म्येनोपास्यत्वात्सर्वजगदात्मकप्रधानरूपेण प्रणमति जगत इत्यादि चतुर्भिः–जगत इति ॥ प्रलयोत्पत्त्योश्च यत्कारणसंज्ञं प्रधानं तस्मै सुब्रह्मणे सुपूजिताय, गुणिने महदाद्युपब्रह्मकाय, नम इत्यन्वयः । तदेव विशिनष्टि तन्महतः प्रथम

अगाधापारमक्षय्यं जगत्संमोहनालयम् ॥ स्वप्रकाशप्रवृत्तिभ्यां पुरुषार्थप्रयोजनम् ॥ २५ ॥ सांख्यज्ञानवतां निष्ठा गतिश्शमदमात्मनाम् ॥ यत्तदव्यक्तममृतं प्रवृत्तिर्ब्रह्म शाश्वतम् ॥ २६ ॥ प्रधानमात्मयोनिश्च गुहासंस्थं च शब्द्यते ॥ अविभागं तथा शुक्रमक्षयं बहुधात्मकम् ॥ २७ ॥ परमब्रह्मणे तस्मै नित्यमेव नमोनमः ॥ यद्रूपं वासुदेवस्य परमात्मस्वरूपिणः ॥२८॥ एतद्ब्रह्म त्रिधा भेदमभेदमपि स प्रभुः॥ सर्वभेदेष्वभेदोसौ भिद्यते भिन्नबुद्धिभिः ॥ २९ ॥ स ऋङ्मयस्साममयः सर्वात्मा स यजुर्मयः ॥ ऋग्यजुस्सामसारात्मा स एवात्मा शरीरिणाम् ॥ ३० ॥

वहुधात्मकमित्यंतेन ॥ जगत इति ॥ प्रलयोत्पत्त्योरपि प्रधानाद्धि जगदुत्पत्तिः । तस्मिन्न् लयः तस्मात्तयोस्तत्कारणम् ॥ २४ ॥ अगाधापारमिति ॥ जगत्संमोहनालयं पापिनां सम्मोहनतमोगुणालयं संप्रकाशप्रवृत्तिभ्यां सत्त्वरजःकार्य्याभ्यां ज्ञानकर्मभ्यां पुरुषार्थस्य साधनम् ॥ २५ ॥ सांख्येति ॥ निष्ठा प्रतिष्ठा पुरुषविवेकोपायत या शमदमात्मनां योगिनां गतिः शमादिश्चास्युपायः ॥ २६ ॥ प्रधानमिति ॥ आत्मनो योनिः आत्मा परमात्मा तस्य योनिः उपनिषत्स्वव्यक्ताद्यक्षरांतैः शब्दैर्यद्ब हुधात्मकं वहुविधं शब्द्यते तस्मै प्रधानात्मने शब्दब्रह्मणे नमः । कार्य्यदशायां महदादिरूपेण वा बहुधात्मकमुक्तैर्गुणैः पूजितत्वात्सुशब्दप्रयोगः ॥ २७ ॥ अथ प्रणवं भगवद्रूपत्वेन स्तुवन्न् प्रणमति—परमब्रह्मण इति ॥ परमब्रह्मत्वं च वासुदेवरूपत्वात् ॥ २८ ॥ एतदिति ॥ अकाराद्यवयवरूपेण त्रिधा भिन्नम् अवयविरूपेण च अभिन्नम् एतत्प्रणवरूपं ब्रह्म स प्रभुर्वासुदेवः, तद्रूपत्वात्तद्वाचकत्वाच्च । स च सर्वभूतेष्वात्मतयाऽवस्थितोप्यभेदः । एकः प्रभुत्वादकलुषश्च स्वाधिष्ठिताभिर्भिन्नाभिर्मूर्त्ति रेव भिद्यते॥२९॥अतस्सर्वात्मत्वात्स एव ऋगादिमूर्तिरित्याह—स ऋङ्मय इति ॥ सारः ऋगादिप्रतिपाद्यश्चतुर्विधः पुरुषार्थः तदात्मा । शरीरिणां क्षेत्रज्ञानाम् ॥ ३० ॥

कार्यस्यापि परमं ततो गुह्यं सूक्ष्मम् ॥ २४ ॥ अगाधापारमिति ॥ अगाधमपारम् अनादि सर्वगतं चात एवाक्षय्यं क्षयानर्हं जगत्सम्मोहनस्य तमोगुणस्यालयम् किंच, स्वप्रकाशप्रवृत्तिभ्यां पुरुषस्य योऽर्थो भोगोपलक्षणस्स एव प्रयोजनं यस्य तत्तथा ॥ २५ ॥ तदेवाह—सांख्यज्ञानवतामिति ॥ सांख्यज्ञानवतां मूलप्रकृत्युपासकानां निष्ठा प्राप्यं स्थानम्, शमं चित्तस्योपरमः, दमो वाह्येंद्रियोपरमः स एवात्मा स्वाभावो येषां तेषां गतिः प्रकृतिपुरुषविवेकहेतुरित्यर्थः । यत्तदव्यक्तमप्यतींद्रियमपि अमृतमविनाशि प्रवृत्ति ब्रह्म सक्रियं ब्रह्म शाश्वतं संकोचविकासाभ्यां सर्वदा वर्तमानम् ॥ २६ ॥ प्रधानमिति ॥ प्रधीयतेस्मिन्सर्वमिति प्रधानम् आत्मयोनिस्स्वत स्सिद्धं, गुहा संसारकारणत्वात् अविद्या तस्याः आवासम् अविद्यांतर्गतमिति वा । अविभागमनिर्भेदं शुक्रं दीप्तिमत् अक्षयमपक्षयशून्यं वहुधात्मकं गुणक्षोभान्नानाकार्यात्मकम् ॥ २७ ॥ तदेवं प्रधानरूपेण प्रणम्य तदा श्रयेश्वररूपेण प्रणमति--परमब्रह्मण इत्यादित्रिभिः ॥ परमब्रह्मण इति ॥ तस्मै परमात्मने ब्रह्मणे नमः । तस्य परब्रह्मत्वे हेतुमाह—यद्रूपमिति । "तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः, ओमिति ब्रह्म" इत्यादि श्रुतेः ॥ २८ ॥ परमात्मस्वरूपिणो वासुदेवस्य रूपमित्येतत्स्पष्टयति—एतदिति ॥ यत्प्रणवाख्यं ब्रह्म एकाक्षरत्वेनाभेदमपि भूरादिव्याहृतित्रयेण त्रिधा भिद्यत इति त्रिधाभेदं तदेतत्स प्रभुरीश्वरो वासुदेव एव । स हि सर्व भूतेष्वप्यभेदो भेदशून्यो भिन्नाभिर्बुद्धिभिर्भिद्यते । 'दृश्यते भिन्नबुद्धिभिः' इति पाठांतरे तु अभिन्नबुद्धिभिरविषयदृष्टिभिस्सर्वभूतेष्वभेदोऽसौ दृश्यत इत्यर्थः ॥ २९ ॥ अत एव--स इति ॥ स एव ऋगादिमयो ऋग्वेदादिरूपः

स भिद्यते वेदमयस्स्ववेदं करोति भेदैर्बहुभिस्सशाखम् ॥ शाखाप्रणेता स समस्तशाखाज्ञानस्वरूपो भगवानसंगः ॥ ३१ ॥ इति श्रीविष्णुमहापुराणे तृतीयांशे तृतीयोऽध्यायः ॥ ३ ॥ ॥ श्रीपराशर उवाच ॥ आद्यो वेदश्चतुष्पादः कृतः साहस्रसम्मितः ॥ ततो दशगुणः कृत्स्नो यज्ञोयं सर्वकामधुक् ॥ १ ॥ ततोत्र मत्सुतो व्यासो अष्टाविंशतिमेंतरे ॥ वेदमेकं चतुष्पादं चतुर्द्धा व्यभजत्प्रभुः ॥ २ ॥ यथा च तेन वै व्यस्ता वेदव्यासेन धीमता ॥ वेदास्तथा समस्तैस्तैर्व्यस्ता व्यस्तैस्तथा मया ॥ ३ ॥ तदनेनैव वेदानां शाखाभेदान्द्विजोत्तम ॥ चतुर्युगेषु पठितान्समस्तेष्ववधारय ॥ ४ ॥

भगवतस्सर्वात्मत्वं निगमयति—स भिद्यत इति ॥ सः अभिन्नः वेदमयः स एव ऋग्वेदाद्यात्मना भिद्यते स एव शाखाप्रणेतृभूतव्यासादिर्भूत्वा वेदं सशाखं बहुभिरवांतरशाखाभेदैर्भिन्नं च करोति समस्तशाखाश्च स एव ॥३१॥ इति श्रीविष्णुचित्तीये विष्णुमहापुराणव्याख्याने तृतीयांशे तृतीयोऽध्यायः ॥३॥ ॥ आद्य इति ॥ आद्यः सर्गादौ चतुर्मुखेनाविभक्तः पठितः । चतुष्पादः ऋगादिरूपेण । शतसाहस्रेति अनंतशाखासमुदायरूपः।ततस्तस्माद्दशगुणो यज्ञः प्रावर्त्तत । दशगुणो दशविधः स एव यज्ञः पंचविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुबन्धः सोम इति । तथा ‘ पंच वा एते महायज्ञाः ’ इत्युपक्रम्य ‘ देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञः’ इति श्रुतौ वैतानिका गार्ह्याश्च दश यज्ञाः । “ द्रव्यं देशः फलं कालो ज्ञानं कर्म च पंचकम् । श्रद्धावस्था कृतिर्निष्ठास्त्रैगुण्यास्सर्व एव हि ” इति भागवतोक्तगुणदशकवान् वा, अत्र पक्षे गुणशब्दोंगवचनः ॥ १ ॥ तत इति ॥ चतुर्द्धा ऋगादिरूपेण ॥ २ ॥ यथेति ॥ तथा मया षड्विंशे व्यस्ताः ॥ ३॥ तदिति ॥ अनेन वर्त्तमानेन

ऋगादिसारात्मा च प्रणवरूपः । शरीरिणां देवादिविभागकर्तॄणाम् आत्मा च ॥ ३० ॥ स इति ॥ स एव सर्वात्मत्वाद्वेदमयस्स एव भिद्यते । स एव व्यासरूपो भूत्वा बहुभिर्वेदैस्सशाखं वेदं करोति, अवांतरशाखाप्रणेता पैलादिरूपस्स एव । समस्तशाखारूपश्च स एव । यतो ज्ञानस्वरूपोऽसौ भगवांश्चानंतश्च । अनंततोनंतवेदशाखात्मकत्वात्प्रणेतृत्वं च तस्यैवोपपद्यते नान्यस्येत्यर्थः । अत एव वक्ष्यति—“कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम्” इति ॥ ३१ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां तृतीयांशे तृतीयोऽध्यायः ॥ ३ ॥ ॥ आद्य इति ॥ आद्यः ईश्वरादुद्भूतो वेदश्चतुष्पादः ऋगादिचतुर्वेदसमूहात्मकः । अत एव शतसाहस्रसम्मितः अपरिमित इत्यर्थः । ततः प्रवृत्तोयं कृत्स्नोपि यज्ञो दशगुणः “स एव यज्ञः पंचविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुस्सोमः” इति श्रुतेः । पंचविध एव प्रकृतिविकृतिभेदेन दशविध इत्यर्थः । यद्वा—यागवाद्यैः पंचमहायज्ञैस्सह दशविधः ॥ १ ॥ तत इति ॥ अत्र अस्मिन्मन्वंतरे अष्टाविंशतितमे युग इत्यर्थः । चतुष्पादमेकं संतं वेदं चतुर्धा चतुर्वेदरूपेण व्यभजत् । प्रभुरीश्वरावताररूपः ॥ २ ॥ यथा चेति ॥ तैः पूर्वैर्व्यासैर्विकृतिमयाश्च षड्विंशे व्यस्ताः ॥ ३ ॥ तदिति ॥ तत्तस्मादनेनैव वर्तमानकृष्णद्वैपायनकृतेन वेदादिविभागेन निदर्शनभूतेन सर्वेष्वपि चतुर्युगेषु वेदानां शाखाभेदान्पूर्वैर्व्यासैरपि कृताञ्ज्ञा

कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् ॥ को ह्यन्यो भुवि मैत्रेय महाभारतकृद्भवेत् ॥ ५ ॥ तेन व्यस्ता यथा वेदा मत्पुत्रेण महात्मना ॥ द्वापरे ह्यत्र मैत्रेय तस्मिञ्छृणु यथातथम् ॥ ६ ॥ ब्रह्मणा चोदितो व्यासो वेदान्व्यस्तुं प्रचक्रमे ॥ अथ शिष्यान्प्रजग्राह चतुरो वेदपारगान् ॥ ॥ ७ ॥ ऋग्वेदपाठकं पैलं जग्राह स महामुनिः ॥ वैशंपायननामानं यजुर्वेदस्य चाग्रहीत् ॥ ८ ॥ जैमिनिं सामवेदस्य तथैवाथर्ववेदवित् ॥ सुमंतुस्तस्य शिष्योभूद्वेदव्यासस्य धीमतः ॥९॥ रोमहर्षणनामानं महाबुद्धिं महामुनिः ॥ सूतं जग्राह शिष्यं स इतिहासपुराणयोः ॥१०॥ एक आसीद्यजुर्वेदस्तं चतुर्द्धा व्यकल्पयत् ॥ चातुर्होत्रमभूत्तस्मिंस्तेन यज्ञमथाकरोत् ॥११॥ आध्वर्यवं यजुर्भिस्तु ऋग्भिर्होत्रं तथा मुनिः ॥ औद्गात्रं सामभिश्चक्रे ब्रह्मत्वं चाप्यथर्वभिः ॥१२॥ ततस्स ऋच उद्धृत्य ऋग्वेदं कृतवान्मुनिः ॥ यजूंषि च यजुर्वेदं सामवेदं च सामभिः ॥ १३ ॥

नारायणांशेन द्वैपायनेन निदर्शनभूतेन समस्तेषु चतुर्युगेषु वेदपारगैरेव शाखाभेदान् रचितानवधारयेत्यर्थः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ रोमहर्षणेति ॥ "आर्षं बहुविधाख्यानं देवर्षिचरिताश्रयम् ॥ इतिहास इति प्रोक्तं भविष्यद्भूतकर्मगम् " ॥ १० ॥ एक इति ॥ यजुर्वेदे ह्यध्वर्युक्रियाबाहुल्याद्यजनसाधनत्वाच्च यजुःप्राचुर्यात्सर्वोपि वेदो यजुरित्युक्तम् । "यच्छिष्टं तु यजुर्वेदे तेन यज्ञमयुंजत ॥ यजनाद्धि यजुर्वेद इति शास्त्रस्य निश्चयः" इति वायूक्तेः ॥ अध्वर्यूद्गातृहोतृब्रह्माख्यचतुर्होतृकर्तृकं कर्म चातुर्होत्रं तच्चतुर्धा कृतो वेदोऽभूत् । तेन कर्मणा यज्ञमकरोत् प्रावर्त्तयत् ॥ ११ ॥ एतदेव प्रपंचयति—आध्वर्यवमिति ॥ ब्रह्मत्वं चाप्यथर्वभिरिति । अत्रापि शब्देन त्रयी समुच्चीयते, ब्रह्मत्वशब्देन ब्रह्मार्त्विज्यं पुरोहितकृत्यं चोच्यते । 'नमो ब्रह्मणे इति त्रिष्कृत्वो ब्रह्मणे नमस्करोमि' इति श्रुतेः । पुरोहितस्य ब्रह्मशब्दवाच्यत्वात् अयमर्थः, " अथ केन ब्रह्मत्वं क्रीयत इति त्रय्या विद्यया" इति ब्राह्मणात् "यज्ञं व्याख्यास्यामस्स त्रिभिर्वेदैर्विधीयते" इति सूत्राच्च ब्रह्मकृत्यं त्रिभिर्वेदैश्चक्रे । तथाथर्वणोक्तं राज्ञां शांतिकपौष्टिकाभिचारिकादिपुरोहितकृत्यमथर्वभिश्चक्र इति तं चतुर्द्धेत्युक्तम् ॥ १२ ॥ चातुर्विध्यं प्रपंचयति—ततस्स इति ॥ ततो वेदसमुदायात् ॥ १३ ॥

नीहि ॥४॥ तदेवं तस्य मुख्यत्वमुक्तं तत्र हेतुमाह—कृष्णद्वैपायनमिति ॥ ५ ॥ ६ ॥ ब्रह्मणेति ॥ वेदपारगान् वेदस्य पारं गंतुं समर्थान् ॥ ७ ॥ ८ ॥ ९ ॥ रोमहर्षणनामानमिति ॥ इतिहासपुराणयोरिति "आर्षं हि बहुधाख्यानं देवर्षिचरिताश्रयम् । इतिहासमिति प्रोक्तम् । भविष्यद्भूतधर्मयुक्" पुराणस्य सर्गादिपंचलक्षणं सर्गाद्यवांतरभेदविवक्षया दशलक्षणं चेति ज्ञेयम् ॥ १० ॥ एक आसीदिति ॥ याजुर्वेदिकाध्वर्युक्रियाबाहुल्यात् प्रधानकर्मणश्च याजनस्य तद्विहितत्वाद्यजुषः प्राधान्यादेवमुक्तं, तथा च वायुः—"यच्छिष्टं तु यजुर्वेदे तेन यज्ञमयुंजत । यजनाद्धि यजुर्वेद इति शास्त्रस्य निश्चयः" इति । चतुर्होत्रुपलक्षितं चातुर्होत्रं चत्वारः ऋत्विजश्चतुर्होतारः तैरनुष्ठेयं कर्म चातुर्होत्रं तद्यस्मिन्नभूत्तद्वेदं तेन चतुर्धा विकल्पितेन यज्ञं प्रवर्तितवान् ॥ ११ ॥ तदेवाह—आध्वर्यवमिति ॥ १२ ॥ चतुर्धा विभागमेवाह—तत इति ॥ ततो वेदराशेः यजूंषि च उद्धृत्येत्यनुषंगः ॥ १३ ॥

राज्ञां चाथर्ववेदेन सर्वकर्माणि च प्रभुः ॥ कारयामास मैत्रेय ब्रह्मत्वं च यथास्थिति॥१४॥ सोयमेको यथा वेदस्तरुस्तेन पृथक्कृतः॥चतुर्धाथ ततो जातं वेदपादपकाननम् ॥ १५॥ बिभेद प्रथमं विप्र पैलो ऋग्वेदपादपम् ॥ इन्द्रप्रमितये प्रादाद्बाष्कलाय च संहिते ॥१६॥ चतुर्धा स बिभेदाथ बाष्कलोपि च संहिताम् ॥ बोधादिभ्यो ददौ ताश्च शिष्येभ्यस्समहामुनिः ॥ १७ ॥ बोध्याग्निमाढकौ तद्वद्याज्ञवल्क्यपराशरौ ॥ प्रतिशाखास्तु शाखायास्तस्यास्ते जगृहुर्मुने ॥१८॥ इंद्रप्रमितिरेकां तु संहितां स्वसुतं ततः ॥ मांडुकेयं महात्मानं मैत्रेयाध्यापयत्तदा ॥१९॥ तस्य शिष्यप्रशिष्येभ्यः पुत्रशिष्यक्रमाद्ययौ ॥ २० ॥ वेदमित्रस्तु शाकल्यः संहितां तामधीतवान् ॥ चकार संहिताः पंच शिष्येभ्यः प्रददौ च ताः ॥ २१ ॥ तस्य शिष्यास्तु ये पंच तेषां नामानि मे शृणु ॥ मुद्गलो गोमुखश्चैव वात्स्यश्शालीय एव च ॥ शरीरः पंचमश्चासीन्मैत्रेय सुमहामतिः ॥२२॥ संहितात्रितयं चक्रे शाकपूर्णस्तथेतरः ॥ निरुक्तमकरोत्तद्वच्चतुर्थं मुनिसत्तम ॥२३॥ क्रौंचो वैतालिकस्तद्वद्बलाकश्च महामुनिः॥ निरुक्तश्च चतुर्थोभूद्वेदवेदांगपारगः ॥२४॥ इत्येताः प्रतिशाखाभ्यो ह्यनुशाखा द्विजोत्तम॥बाष्कलश्चापरास्तिस्रस्संहिताः कृतवान्द्विज॥ शिष्यः कालायनिर्गार्ग्यस्तृतीयश्च कथाजपः ॥२५॥ इत्येता बह्वृचाः प्रोक्ताः संहिता यैः प्रवर्त्तिताः ॥२६॥ इति श्रीविष्णुमहापुराणे तृतीयांशे चतुर्थोऽध्यायः ॥ ४ ॥ ॥ श्रीपराशर उवाच ॥ यजुर्वेदतरोश्शाखास्सप्तविंशन्महामुनिः ॥ वैशंपायननामासौ व्यासशिष्यश्चकार वै ॥ १ ॥

राज्ञामिति ॥ यथास्थितशास्त्रमर्य्यादानतिक्रमणेन ॥ १४॥ सोयमिति ॥ ततः पृथक्कृतेभ्यः अनंतशाखात्मकवेदपादपकाननं जातम् ॥१५॥१६॥१७॥ बोध्याग्निमाढकौ तद्वदिति ॥ तस्याः बाष्कलसंहितायाः ॥ १८ ॥ १९ ॥ २० ॥ वेदमित्र इति ॥ तामिंद्रप्रमितिसंहितां शाकल्यः पंचधा कृत्वा मुद्गलादिभ्योऽदात ॥२१॥ ॥ २२ ॥ संहितेति ॥ तामेव शाकल्यब्रह्मचारी शाकपूर्णस्त्रिधा कृत्वा क्रौंचादिभ्योऽदात्। वेदशब्दनिर्वचनरूपं निरुक्ताख्यं वेदांगं च कृत्वा निरुक्ताख्यायाऽदात ॥ २३ ॥ २४ ॥ इतीति ॥ तामेवान्यश्शाकल्यस्सब्रह्मचारी बाष्कलिस्तिस्रस्संहिताः कृतवान्। तस्य शिष्याः कालायन्यादयस्तेभ्योददादित्यर्थः ॥ २५ ॥ २६ ॥ इति श्रीविष्णुचित्तीये विष्णुमहापुराणव्याख्याने तृतीयांशे चतुर्थोऽध्यायः ॥ ४ ॥ छ ॥ यजुर्वेदतरोरिति ॥ सप्तविंशतियजुःप्रधानशाखाः ब्रह्मांडोक्तः षडशीतिपक्षः

॥ १४ ॥ १५ ॥ बिभेदेति ॥ प्रथमम् ऋग्वेदं पैलो द्विधा विभेद ॥ १६ ॥ १७ ॥ बोध्याग्निमाढकाविति ॥ तस्याः बाष्कलशाखायाः प्रतिशाखा अवांतरशाखाः। बोध्याग्निमाठराविति च पाठः ॥ १८ ॥ १९ ॥ ॥ २० ॥ वेदमित्र इति ॥ शाकल्यस्तामिंद्रप्रमितिसंहितामधीतवान्। ततस्तस्याः पंचसंहितास्स चकार। ताश्च मुद्गलादिभ्यः प्रददौ ॥ २१ ॥ २२ ॥ संहितात्रितयमिति ॥ तथान्यश्शाकल्यः सब्रह्मचारी शाकपूर्णः तस्या एव संहितायास्त्रितयं चक्रे। तथा निरुक्तं च वेदशब्दार्थनिर्वचनरूपं वेदांगं चक्रे॥ २३ ॥ क्रौंच इति ॥ तच्चतुष्टयाध्येतारश्च तच्छिष्या यथासंख्यं क्रौंचादयश्चत्वारः ॥ २४ ॥ इत्येता इति ॥ बाष्कलिश्चान्यश्शाकल्यसब्रह्मचारी तस्या एव इंद्रप्रमितिशाखायास्तिस्रस्संहिताश्चक्रे। तदध्येतारस्तच्छिष्याः कालायनिप्रमुखास्त्रयः ॥ २५ ॥ २६ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां तृतीयांशे चतुर्थोऽध्यायः ॥ ४ ॥ ॥ यजुर्वेदतरोरिति ॥ सप्तविंशत् सप्तविंशतिः ॥ १ ॥

शिष्येभ्यः प्रददौ ताश्च जगृहुस्तेप्यनुक्रमात् ॥ २ ॥ याज्ञवल्क्यस्तु तत्राभूद्ब्रह्मरातसुतो द्विज ॥ शिष्यः परमधर्मज्ञो गुरुवृत्तिपरस्सदा ॥ ३ ॥ ऋषिर्योद्य महामेरोः समाजे नागमिष्यति ॥ तस्य वै सप्तरात्रात्तु ब्रह्महत्त्या भविष्यति ॥ ४ ॥ पूर्वमेवं मुनिगणैस्समयो यः कृतो द्विज ॥ वैशंपायन एकस्तु तं व्यतिक्रांतवांस्तदा ॥ ५ ॥ स्वस्रीयं बालकं सोथ पदा स्पृष्टमताडयत् ॥ ६ ॥ शिष्यानाह स भोः शिष्या ब्रह्महत्त्यापहं व्रतम् ॥ चरध्वं मत्कृते सर्वे न विचार्य्यमिदं तथा ॥ ७ ॥ अथाह याज्ञवल्क्यस्तु किमेभिर्भगवन्द्विजैः ॥ क्लेशितैरल्पतेजोभिश्चरिष्येहमिदं व्रतम् ॥ ८ ॥ ततः क्रुद्धो गुरुः प्राह याज्ञवल्क्यं महामुनिम् ॥ मुच्यतां यत्त्वयाधीतं मत्तो विप्रावमानक ॥ ९ ॥ निस्तेजसो वदस्येनान्यत्त्वं ब्राह्मणपुंगवान् ॥ तेन शिष्येण नार्थोऽस्ति ममाज्ञाभंगकारिणा ॥ १० ॥ याज्ञवल्क्यस्ततः प्राह भक्त्यैतत्ते मयोदितम् ॥ ममाप्यलं त्वयाधीतं यन्मया तदिदं द्विज ॥ ११ ॥ श्रीपराशर उवाच ॥ इत्युक्तो रुधिराक्तानि सरूपाणि यजूंषि सः ॥ छर्दयित्वा ददौ तस्मै ययौ स स्वेच्छया मुनिः ॥१२॥ यजूंष्यथ विसृष्टानि याज्ञवल्क्येन वै द्विज ॥ जगृहुस्तित्तिरा भूत्वा तैत्तिरीयास्तु ते ततः ॥ १३ ॥ ब्रह्महत्त्याव्रतं चीर्णं गुरुणा चोदितैस्तु तैः ॥ चरकाध्वर्यवं[(१)] ते तु चरणान्मुनिसत्तम ॥ १४ ॥

तत्प्रतिशाखाविवक्षिताश्च काण्वादिशुक्लयजुःपंचदशकं च संहृत्यैकोत्तरशतमध्वर्युशाखाः आपस्तंबोक्तास्स्युः ॥ १ ॥ २ ॥ ३ ॥ ऋषिरिति ॥ अद्यास्मिन् दिने ॥ ४ ॥ ५ ॥ ६ ॥ यद्गुरुणा कार्य्यं तत्तस्य पुत्रशिष्यादिभिरपि कार्यमिति भावादाह—शिष्यानिति ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ममापि त्वयालं नार्थोऽस्तीत्यर्थः । याज्ञवल्क्य इति ॥ मयापि यदधीतं तदिदमिति ॥ ११ ॥ इत्युक्त्वेति ॥ इत्युक्ता सरूपाणि मूर्तानि ॥ १२ ॥ यजूंषीति ॥ याज्ञवल्क्यव्यतिरिक्तशिष्याश्छर्दितं विप्ररूपेण गृहीतुमनुचितमिति तित्तिरी भूत्वा जगृहुः ॥१३॥ ब्रह्महत्येति ॥ चीर्णमाचरितम् ॥ अध्वर्यवः यजुश्शाखाध्यायिनः । यजुश्शाखाध्ययनादध्वर्युत्वम् ॥ १४ ॥

॥ २ ॥ तैत्तिरीयशाखोत्पत्तिहेतुं तस्यान्यं शिष्यमाह—याज्ञवल्क्यश्चेति ॥ ३ ॥ तेन छर्दितैर्यजुभिस्तैत्तिरीयशाखा बभूवेत्याख्यानपूर्वकमाह—ऋषिरित्यादिना तैत्तिरीयास्तु ते तत इत्यंतेन ॥ ४ ॥ ५ ॥ स्वस्रीयमिति ॥ स्वस्रीयं स्वसुस्सुतं पदा स्पृष्टमताडयत् । अघातयदिति च पाठः । प्रमादात्पादेन स्पृष्टमात्रादेवासौ ममारेत्यर्थः ॥ ६ ॥ शिष्यानिति ॥ प्रमादाद्बाले मृते ब्रह्महत्याव्रतं कुर्याउत नेति न विचार्यम् । किं तु साक्षाद्ब्रह्मवधे यथा तथैव तद्व्रतं मदर्थं चरतेत्यर्थः ॥ ७ ॥ ८ ॥ तत इति ॥ विप्रावमानक विप्रावमंतः ॥ ९ ॥ १० ॥ याज्ञवल्क्य इति ॥ ममापि त्वया गुरुणा अलं त्वत्तो मया यदधीतं तदिदमिति मुखेङ्गुलिप्रक्षेपेण वमनमनुकरोति ॥ ११ ॥ १२ ॥ यजूंषीति ॥ छर्दितानां यजुषां विप्ररूपेण ग्रहणस्यायुक्तत्वात्तित्तिराः पक्षिणो भूत्वा मुनयस्तानि जगृहुः । ततो हेतोस्ते मुनयस्तैत्तिरीयाः प्रसिद्धाः ॥ १३ ॥ ब्रह्महत्येति ॥ ततोऽन्येषां चरणाध्वर्युसमाख्यां निर्वक्ति ! ब्रह्महत्याव्रतमिति ॥ ब्रह्महत्यानिवृत्त्यर्थं व्रतं यैः चरणात्कर्माचरणाच्चीर्णं यजुश्शाखाध्यायित्वात्तेषां चरणा

(१) टीकयोरनुसारेण चरणाध्वर्यवस्ते— चरकाध्वर्यवस्ते —इति च पाठो भाति

याज्ञवल्क्योपि मैत्रेय प्राणायामपरायणः॥तुष्टाव प्रयतस्सूर्यं यजूंष्यभिलषंस्ततः॥१५॥याज्ञवल्क्य उवाच॥नमस्सवित्रे द्वाराय मुक्तेरमिततेजसे॥ ऋग्यजुस्सामभूताय त्रयीधाम्ने च ते नमः॥ १६ ॥ नमोग्नीषोमभूताय जगतः कारणात्मने ॥ भास्कराय परं तेजस्सौषुम्णरुचिबिभ्रते ॥१७॥ कलाकाष्ठानिमेषादिकालज्ञानात्मरूपिणे ॥ ध्येयाय विष्णुरूपाय परमाक्षररूपिणे ॥ १८ ॥ बिभर्त्ति यस्सुरगणानाप्यायेंदुं स्वरश्मिभिः ॥ स्वधामृतेन च पितॄंस्तस्मै तृप्त्यात्मने नमः ॥ १९ ॥ हिमांबुघर्मवृष्टीनां कर्ता भर्त्ता च यः प्रभुः ॥ तस्मै त्रिकालरूपाय नमस्सूर्याय वेधसे ॥ २० ॥ अपहंति तमो यश्च जगतोस्य जगत्पतिः ॥ तुसत्त्व धामधरो देवो नमस्तस्मै विवस्वते ॥ २१ ॥ सत्कर्मयोग्यो न जनो नैवापः शुद्धिकारणम् ॥ यस्मिन्ननुदिते तस्मै नमो देवाय भास्वते ॥ २२ ॥ स्पृष्टो यदंशुभिर्लोकः क्रियायोग्यो हि जायते ॥ पवित्रकारणात्माय तस्मै शुद्धात्मने नः ॥ २३ ॥ नमः सवित्रे सूर्य्याय भास्कराय विवस्वते ॥ आदित्यायादिभूताय देवादीनां नमो नमः ॥ २४ ॥ हिरण्मयं रथं यस्य केतवोमृतवाजिनः ॥ वहंति भुवनालोकचक्षुषं तं नमाम्यहम् ॥ २५ ॥

याज्ञवल्क्य इति ॥ यजूंषि वैशंपायनादधीतानि ॥ १५ ॥ १६ ॥ नम इति ॥ आग्नीषोमात्मत्वमातपवृष्टिहेतुत्वात् कारणात्मने "याभिरादित्यस्तपति रश्मिभिः" इति प्रक्रियया सौषुम्णं सोमसंपोषकममृतम् ॥१७॥ कलेति ॥ कालसंज्ञात्मने कालस्य संज्ञोपपन्नाय परमाक्षरं वाक्षरं प्रणवः "ओमिति प्रस्तुत्य एतत्परममक्षरम्" इति श्रुतेः ॥ १८ ॥ बिभर्त्तीति ॥ धृत्यात्मने धारयित्रे ॥ तृप्त्यात्मन इति च पाठः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ स्पृष्ट इति ॥ पवित्रकरणात्मने इति पाठः । पवित्रकरणात्मा[illegible]येति पाठे त्वदंतत्वमार्षम् ॥ २३ ॥ नम इति ॥ सविता प्रेरकः । षू प्रेरण इति धातोस्सवितेति रूपनिष्पत्तिः । सूर्यो जनकः । सूयते रा इति निरुक्तिः । विवस्वान् तमसो विनाशकः ॥ २४ ॥ हिरण्मयमिति ॥ हिरण्मयमतीव रमणीयतेजोमयं केतवः प्रतानरूपाः अमृताः नित्याः ॥ २५ ॥

ध्वर्युसमाख्या:चरणाध्वर्यवस्ते त्विति च पाठः ॥ १४ ॥ ततोऽसौ सूर्यं स्तुत्वा तत्प्रसादलब्धैर्यजुर्भिः काण्वादिशाखाः कृतवानितिदर्शयन्नाह—याज्ञवल्क्योपीत्यादियावत्समाप्ति ॥ १५ ॥ नम इति ॥ त्रयीधाम्ने वेदत्रयात्मकदीप्तियुक्ताय "सैषा त्रय्येव विद्या तपति" इति श्रुतेः ॥ १६ ॥ नम इति ॥ अग्नीषोमभूताय अतो जगतः कारणात्मने अग्नीषोमात्मकत्वाज्जगतः तदेवाह—भास्करायेति ॥ तापकरत्वादग्निरूपांगत्वं सौषुम्नं सोमाप्यायकं तेजो बिभ्रत इति च सोमरूपत्वमुक्तम् । उक्तं च "सूर्यरश्मिस्सुषुम्नोयस्तर्पितस्तेन चंद्रमाः" इति ॥ १७ ॥ कलेति ॥ कलाकाष्ठानिमेषादिकालो ज्ञायते येन तथाभूत आत्मा स्वरूपं यस्य तस्मै परमाक्षररूपिणे "अक्षरात्परतः परः" इति श्रुतेः । परमाक्षरं परब्रह्म तत्स्वरूपाय ॥ १८ ॥ बिभर्तीति ॥ तृप्त्यात्मने तर्पकाय । धृत्यात्मन इति पाठे धारयित्रे ॥ १९ ॥ २० ॥ अपहंतीति ॥ सत्त्वधामधरः सत्त्वमूर्तिधरः । विवस्वते तमोविनाशकाय ॥ २१ ॥ २२ ॥ २३ ॥ भक्त्युद्रेकेण पूर्वोक्तैस्सर्वपर्यायैर्नमस्करोति ॥ नमस्सवित्र इति ॥ २४ ॥ हिरण्मयमिति ॥ हिरण्मयं तेजोमयं, केतवः प्रज्ञारूपाः, छंदोमया अश्वाः श्रुतिश्च । उदुत्य इति मंत्रार्थः

॥ श्रीपराशर उवाच ॥ इत्येवमादिभिस्तेन स्तूयमानस्स वै रविः ॥ वाजिरूपधरः प्राह व्रीयतामिति वाञ्छितम् ॥ २६ ॥ याज्ञवल्क्यस्तदा प्राह प्रणिपत्य दिवाकरम् ॥ यजूंषि तानि मे देहि यानि संति न मे गुरौ ॥ २७ ॥ श्रीपराशर उवाच ॥ एवमुक्तो ददौ तस्मै यजूंषि भगवान्रविः ॥ अयातयामसंज्ञानि यानि वेत्ति न तद्गुरुः ॥ २८ ॥ यजूंषि यैरधीतानि तानि विप्रैर्द्विजोत्तम ॥ वाजिनस्ते समाख्याताः सूर्योप्यश्वोभवद्यतः ॥ २९ ॥ शाखाभेदास्तु तेषां वै दश पंच च वाजिनाम् ॥ काण्वाद्यास्सुमहाभागा याज्ञवल्क्याः प्रकीर्त्तिताः ॥ ३० ॥ इति श्रीविष्णुमहापुराणे तृतीयांशे पंचमोऽध्यायः ॥ ५ ॥ ॥ श्रीपराशर उवाच ॥ सामवेदतरोश्शाखा व्यासशिष्यस्स जैमिनिः ॥ क्रमेण येन मैत्रेय बिभेद शृणु तन्मम ॥ १ ॥ सुमंतुस्तस्य पुत्रोभूत्सुत्वानश्चाभवत्सुतः ॥ अधीतवंतौ चैकैकां संहितां तौ महामती ॥ २ ॥ सहस्रसंहिताभेदं सुकर्मा तत्सुतस्ततः ॥ चकार तं च तच्छिष्यौ जगृहाते महाव्रतौ ॥ ३ ॥ हिरण्यनाभः कौसल्यः पौष्पिंजिश्च द्विजोत्तम ॥ उदीच्यास्सामगाः शिष्यास्तस्य पंचशतं स्मृताः ॥ ४ ॥ हिरण्यनाभात्तावत्यस्संहिता यैर्द्विजोत्तमैः ॥ गृहीतास्तेपि चोच्यंते पंडितैः प्राच्यसामगाः ॥ ५ ॥ लोकाक्षिनौंधमिश्चैव कक्षीवाँल्लांगलिस्तथा ॥ पौष्पिंजिशिष्यास्तद्भेदैस्संहिता बहुलीकृताः ॥६॥ हिरण्यनाभशिष्यस्तु चतुर्विंशतिसंहिताः ॥ प्रोवाच कृतनामासौ शिष्येभ्यश्च महामुनिः ॥ ७ ॥

॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ इति श्रीविष्णुचित्तीये विष्णुमहापुराणव्याख्याने तृतीयांशे पंचमोऽध्यायः ॥ ५ ॥ छ ॥ १ ॥ सुमंतुरिति ॥ तां जैमिनिसंहितां तत्पुत्रपौत्रावेकैकामयौगपद्येन स्वस्वपितुरधीतवंतौ ॥२॥ सहस्रेति ॥ एवं सुत्वनः पुत्रः सुकर्मापि स्वपितुरधीत्य साहस्रसंहिताभेदं चकार। "पुत्रमध्यापयामास सुमंतुमथ जैमिनिः। सुमंतुश्चापि सुत्वानं पुत्रमध्यापयन्मुनिः ॥ सुकर्माणं सुतं सुत्वा" इति वायूक्तेः ॥३॥ हिरण्यनाभ इति ॥ तस्य पौष्पिंजेर्वक्ष्यमाणलोकाक्ष्याद्याः पंचशतं शिष्याः उदीच्यास्सामगाः स्मृताः ॥ ४ ॥ ५ ॥ लोकाक्षिरिति ॥ तद्द्वैपायनपौष्पिंजिशिष्यभेदैर्बहुलीकृताः ख्यापिताः ॥ ६ ॥ हिरण्यनाभ इति ॥ कृतनामा राजा प्राच्य

सूचितः ॥ २५ ॥ २६ ॥ २७ ॥ एवमिति ॥ तस्य गुरुः वैशंपायनो यानि सम्यङ् न वेत्ति व्यासेनानुपदिष्टत्वात् ॥ २८ ॥ २९ ॥ ३० ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां तृतीयांशे पंचमोऽध्यायः ॥ ५ ॥ ॥ ऋग्यजुश्शाखोपशाखास्तत्संख्याश्च प्रपंचिताः । सामाथर्वपुराणोत्थशाखासंख्या तु कथ्यते ॥ १ ॥ १ ॥ सुमंतुरिति ॥ तस्य जैमिनिपुत्रस्य सुमंतोस्सुत्वा नाम पुत्रोऽभूत् । तौ जैमिनेः पुत्रपौत्रौ जैमिनिना कृतामेकैकां स्वेस्वे काले अधीतवंतौ ॥ २ ॥ सहस्रेति ॥ तत्सुतः सुतन्वनस्सुतस्सुकर्मा यथाह—वायुः "पुत्रमध्यापयामास सुमंतुमथ जैमिनिः ॥ सुमंतुश्चापि सुत्वानं पुत्रमध्यापयन्मुनिः ॥" सुकर्माणं सुतं सुत्वेति ॥ ३ ॥ तस्य शिष्यौ नामतः निर्दिशन्तयोरन्यतरस्य हिरण्यनाभस्य च शिष्यानाह—हिरण्यनाभ इति ॥ कौसल्योपि हिरण्यनाभनामकः । पौष्पिंजिश्चापरः । तस्य हिरण्यनाभस्य पंचशतानि शिष्याः ॥ ४ ॥ हिरण्यनाभादिति ॥ तावत्यः पंचशतानि तेपि च कालांतरे विदेशवासात् प्राच्यास्सामगा उच्यंते ॥ ५ ॥ पौष्पिंजिशिष्यानाह—लोकाक्षिरिति ॥ तद्भेदैस्तेषां शिष्यप्रशिष्यादिभिः ॥ ६ ॥ ७ ॥

तैश्चापि सामवेदोसौ शाखाभिर्बहुलीकृतः ॥ अथर्वणामथो वक्ष्ये संहितानां समुच्चयम् ॥ अथर्ववेदं स मुनिस्सुमंतुरमितद्युतिः ॥ ८ ॥ शिष्यमध्यापयामास कबंधं सोपि तं द्विधा ॥ कृत्वा तु देवदर्शाय तथा पथ्याय दत्तवान् ॥ ९ ॥ देवदर्शस्य शिष्यास्तु मेधोब्रह्मबलिस्तथा ॥ शौल्कायनिः पिप्पलादस्तथान्यो द्विजसत्तम ॥ १० ॥ पथ्यस्यापि त्रयशिष्याः कृता यैर्द्विज संहिताः ॥ जाबालिः कुमुदादिश्च तृतीयश्शौनको द्विज ॥ ११ ॥ शौनकस्तु द्विधा कृत्वा ददावेकां तु बभ्रवे ॥ द्वितीयां संहितां प्रादात्सैंधवाय च संज्ञिने ॥ १२ ॥ सैंधवान्मुंजिकेशश्च द्वेधाभिन्नास्त्रिधा पुनः ॥ नक्षत्रकल्पो वेदानां संहितानां तथैव च ॥ १३ ॥ चतुर्थस्स्यादांगिरसश्शांतिकल्पश्च पंचमः ॥ श्रेष्ठास्त्वथर्वणामेते संहितानां विकल्पकाः ॥ १४ ॥ आख्यानैश्चाप्युपाख्यानैर्गाथाभिः कल्पशुद्धिभिः ॥ पुराणसंहितां चक्रे पुराणार्थविशारदः ॥ १५ ॥

सामगेष्वन्यतमः ॥ ७ ॥ तैरिति ॥ सुमंतुर्व्यासशिष्यः ॥ ८ ॥ ९ ॥ देवदर्शस्येति ॥ अथर्ववेदे देवदर्शसंहिताश्चतस्रो मेधाद्यैर्गृहीताः ॥ १० ॥ ११ ॥ १२ ॥ सैंधवादिति ॥ मुंजिकेशसंहितयोश्शिष्या अन्येऽष्टौ ययोर्भेदेषु सुबहूपयोगाः पंच भेदाः नक्षत्रकल्पाद्याः । कल्पशब्दो वेदादिभिः प्रत्येकं संबध्यते। तथा वायुः—"नक्षत्रकल्पो वैतानसंहितानां तथा विधिः । चतुर्थोंगिरसां कल्पश्शांतिकल्पश्च पंचमः ॥ श्रेष्ठास्त्वथर्वणामेते संहितानां विकल्पकाः" इति । नक्षत्रकल्पो ज्योतिषामंशः । वैतानकल्पो वेदकल्पो ब्रह्मत्वादियज्ञविधिः । संहिताकल्पो मंत्रभागविधिः ॥ १३ ॥ चतुर्थ इति ॥ अंगिरसः कल्पोऽभिचारविधिः । शांतिकल्पोऽष्टादशमहाशांत्यादिविधिः ॥ १४ ॥ आख्यानैरिति ॥ आख्यानैर्भारतादीतिहासैः उपाख्यानैस्तत्प्रसंगैः ऋभुनिदाघकथायाः। गाथाः पितृपृथ्वीगीतायाः। कल्पशुद्धिर्वाराहादिकल्पवृत्तांतनिर्णयः । पितृकल्पमंत्रकल्पविधिर्वा । एतैस्सह सर्गादिपंचलक्षणां पुराणसंहितामष्टादशपुराणानां संक्षेपरूपां व्यासश्चक्रे । यथोक्तं मात्स्ये—"पुराणं सर्वशास्त्राणां प्रथमं ब्राह्मणं स्मृतम् । अनंतरं तु वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ॥ पुराणमेकमेवासीच्छतकोटिप्रविस्तरम्" इति धर्मसंहितायां च "ब्राह्ममेव कृते चाद्य

तैरिति । तैश्चापि कृतनाम्नश्शिष्यैः ॥ ८ ॥ ९ ॥ देवदर्शः स्वसंहितां चतुर्धा चक्रे । ताश्च मेधादयश्चत्वारो जगृहुरित्याह—देवदर्शस्येति ॥ १० ॥ पथ्यस्येति ॥ पथ्यकृतास्तिस्रस्संहिता जाबाल्यादयोच जगृहुः । तैश्चान्यास्संहिताः कृताः ॥ ११ ॥ १२ ॥ सैंधवादिति ॥ सैंधवमुंजिकेशसंहिताभेदा नक्षत्रकल्पादयः पंच । तत्र नक्षत्रकल्पो नक्षत्रपूजाविधिः । वेदानां संहितानां च कल्प इति शेषः । तत्र वेदकल्पो ब्रह्मत्वं चाप्यथर्वभिरिति पूर्वोक्तवैतानवैतानिकब्रह्मत्वादिविधिः संहिताकल्पो मंत्रविधिः ॥ १३ ॥ चतुर्थ इति ॥ आंगिरसः कल्पोऽभिचारविधिः । शांतिकल्पः अश्वगजाद्यष्टादशमहाशांतिविधिः ॥ १४ ॥ आख्यानैरिति ॥ आख्यानादिभिस्सह पुराणं चक्रे व्यास इत्यन्वयः । तत्र च "स्वयं दृष्टार्थकथनं प्राहुराख्यानकं बुधाः । श्रुतस्यार्थस्य कथनमुपाख्यानं प्रचक्षते" गाथास्तु पितृपृथिवीगीताख्याः कल्पशुद्धिः कल्पादि

प्रख्यातो व्यासशिष्योभूत्सूतो वै रोमहर्षणः ॥ पुराणसंहितां तस्मै ददौ व्यासो महामतिः ॥ १६ ॥ सुमतिश्चाग्निवर्चाश्च मित्रायुश्शांसपायनः ॥ अकृतव्रणसावर्णिषट्शिष्यास्तस्य चाभवन् ॥ १७ ॥ काश्यपः संहिताकर्त्ता सावर्णिश्शांसपायनः ॥ रोमहर्षणिका चान्या तिसृणां मूलसंहिता ॥१८॥ चतुष्टयेन भेदेन संहितानामिदं मुने ॥ १९ ॥ आद्यं सर्वपुराणानां पुराणं ब्राह्ममुच्यते ॥ अष्टादश पुराणानि पुराणज्ञाः प्रचक्षते ॥ २० ॥ ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ॥ तथाऽन्यं नारदीयं च मार्कंडेयं च सप्तमम् ॥ २१ ॥

पुराणं श्रुतिसंमितम् । अष्टादशविधं तत्र शतकोटिप्रभेदतः ॥ तस्मात्त्रेतायुगे प्रोक्तं शतमेकादशोत्तरम् । पुराणसंहिताकर्त्ता द्वापरे व्यास एव हि " इति । पुनर्मात्स्ये च "तदर्थोत्र चतुर्लक्षैस्संक्षेपेण निवेशितः । पुराणानि दशाष्टौ च सांप्रतं तदिहोच्यते" इति । अयमर्थः कृतयुगे वेदात्पूर्वं ब्रह्मणा सृष्टस्य शतकोटिप्रविस्तरस्य पुरा स्कंधस्य ब्राह्मसंज्ञस्य पुनस्त्रेतायां ब्रह्माद्यष्टादशर्षिभिः ग्रंथकोट्यस्संक्षिप्य ब्राह्मपाद्माद्यष्टादशात्मना विभक्तस्यैकादशाधिकशतसंहितस्य पुनर्द्वापरांते तस्य सारं वेदव्यासः चतुर्लक्षेण संक्षिप्याष्टादशपुराणसंहितां कृत्वा रोमहर्षणं सूतमध्यापयदिति ॥ १५ ॥ १६ ॥ सुमतिरिति ॥ सुमतिरित्यादि तस्य रोमहर्षणस्य ॥ १७ ॥ काश्यप इति ॥ काश्यपः अकृतव्रणः 'काश्यपो ह्यकृतव्रणः' इति वायूक्तेः । तिसृणां काश्यपादिकृतानां संहितानां चतुर्थी रोमहर्षणिकाख्या व्यासेन संक्षिप्ता । रोमहर्षणेनाधीता स्वशिष्येभ्यः प्रतिपादिता । रोमहर्षणिना उग्रश्रवसापि शौनकादिभ्यः ख्यापिताः । तथा च मात्स्ये–"चतुर्लक्षमिदं प्रोक्तं व्यासेनाद्भुतकर्मणा । मत्पित्रे मम पित्रा तु मया तुभ्यं निवेदितम्" इति । एवं तन्मूलास्सर्वाः पुराणसंहिताः कलौ चतुर्विधाः "सर्वास्ता हि चतुष्पादाः सर्वास्ताश्चार्थवादिकाः । पाठांतरपृथग्भूता वेदशाखा यथा तथा" इति वायूक्तेः । कौर्मे तु स्वस्य स्वेनैव चतुर्भेदत्वमुक्तम् । "इदं तु पंचदशमं पुराणं कौर्ममुत्तमम् । चतुर्द्धा संस्थितं पूर्णं संहितानां प्रभेदतः" इति ॥ १८ ॥ चतुष्टयेनेति ॥ पुराणसंहितानामेतेन चतुष्टयेन मूलभूतेन तदर्थं स्मृत्वा पुरुषभेदकालभेदानुगुण्येन मयेदं वैष्णवं पुराणं कृतमित्यर्थः । एतत्संहिताचतुष्टयमूलभूतत्वं सर्वपुराणानां साधारणम् ॥१९॥ ब्राह्मं पुराणं प्रशंसति–आद्यमिति । आद्यं मूलभूतम् । पुराणसंख्यामाह–अष्टादशेति ॥२०॥ तान्येवानुक्रामति–ब्राह्ममिति ॥ पुराणानां सर्वेषां चतुर्भेदत्वमुक्तं वैष्णवं तु षड्भेदं तेन पुराणांतरेषु वैष्णवस्य दशसाहस्राष्टसाहस्रत्वाद्युक्तस्संहिताभेदमानविषया कल्प्याः । यथा लैंगे "पुराणं वैष्णवं चक्रे प्रसादाद्वै पराशरः । षट्प्रकारं समस्तार्थसूचकं ज्ञानसंचयम् ॥ दशसाहस्रसंहितं सर्ववेदार्थसंयुतम्" शैवमात्स्ययोस्तु–वैष्णवं चाष्टसाहस्रम्' इति क्वचिद्देशे नवसहस्रं दृश्यते क्वचिच्चतुर्विंशतिसहस्रं क्वचित् द्वाविंशतिसहस्रम् । इदं तु षट्सहस्रमस्माभिर्व्याख्यायमानम् । सर्गादि पंचकं निर्णयः ॥ १५ ॥ १६ ॥ सुमतिश्चेति ॥ सुमत्यादयस्तस्य रोमहर्षणस्य षट्शिष्यास्तत्कृताः षट्संहिता जगृहुः ॥ १७ ॥ काश्यप इति ॥ अकृतव्रण एव काश्यपः "काश्यपो ह्यकृतव्रणः" इति वायूक्तेः । रोमहर्षणिका चान्या रोमहर्षणेन पुनः संक्षेपतः कृता ॥ १८ ॥ चतुष्टयेनेति ॥ एतासां काश्यपादिकृतानां संहितानां चतुष्टयेनापि मूलभूतेन तत्सारोद्धारात्मकमिदं विष्णुपुराणं मुने मैत्रेय मया कृतमिति शेषः ॥ १९ ॥ इदानीं व्यासकृतान्येवाष्टादशपुराणान्याह–आद्यमित्यादिसार्धैश्चतुर्भिः ॥ २० ॥

आग्नेयमष्टमं चैव भविष्यन्नवमं स्मृतम् ॥ दशमं ब्रह्मवैवर्त्तं लैंगमेकादशं स्मृतम् ॥ २२ ॥ वाराहं द्वादशं चैव स्कांदं चात्र त्रयोदशम् ॥ चतुर्दशं वामनं च कौर्मं पंचदशं तथा ॥ मात्स्यं च गारुडं चैव ब्रह्मांडं च ततः परम् ॥ महापुराणान्येतानि ह्यष्टादश महामुने ॥ २३ ॥ तथा चोप पुराणानि मुनिभिः कथितानि च ॥ सर्गश्च प्रतिसर्गश्च वंशमन्वंतराणि च ॥ सर्वेष्वेतेषु कथ्यंते वंशानुचरितं च यत् ॥ २४ ॥

पुराणानां सामान्यलक्षणम् । वैशेषिकं तु मात्स्योक्तम् । यथा—"ब्रह्मणाभिहितं पूर्वं यावन्मात्रं मरीचये । ब्राह्मं तद्दशसाहस्रं पुराणं परिकीर्त्यते ॥ एतदेव च वै ब्राह्मं पाद्मकल्पे जगद्धितम् । पाद्मं तत्पंचपंचाशत्सहस्राणि निगद्यते ॥ वाराहकल्पवृत्तांतमधिकृत्य पराशरः । यान्प्राह धर्मानखिलान् तदुक्तं वैष्णवं विदुः ॥ विष्णवाख्यम ष्टसाहस्रं तत्पुराणं विदुर्बुधाः । श्वेतकल्पप्रसंगेन धर्मान् वायुरिहाब्रवीत् ॥ यत्र तद्वायवीयं स्याद्रुद्रमाहात्म्यसंयुतम् । चतुर्विंशत्सहस्राणि पुराणं शैवमुच्यते ॥ यत्राधि कृत्य गायत्रीं वर्ण्यते धर्मविस्तरः । वृत्रासुरवधो यत्र तद्भागवतमुच्यते ॥ सारस्वताय मुनये यच्छ्रुध्येयुर्नरामराः । अष्टादशसहस्राणि तद्भागवतमुच्यते ॥ यत्रापि नारदो धर्मान् बृहत्कल्पाश्रयाणि ह । पंचविंशत्सहस्राणि नारदीयं तदुच्यते ॥ यत्राधिकृत्य शकुनेर्धर्मं धर्मविचारणात् ॥ तद्द्वात्रिंशत्सहस्रं वै मार्कंडेयमिहोच्यते" ॥ २१ ॥ आग्नेयमिति "शापावसाने भृगुणा ऋषिणा यत्प्रकाशितम् । चयनानां समुत्पत्तिरिष्टकागणनं तथा ॥ ऋतुसंख्यादितः कृत्वा ह्याग्नेयं तदिहोच्यते । आग्नेयं चाष्टसा हस्रं सर्वक्रतुफलप्रदम् ॥ शतानीकेन पृष्टेन व्यासशिष्येण धीमता । सौरा धर्मा विशेषेण व्याख्यातास्तु सुमंतुना ॥ एकत्रिंशत्सहस्राणि भविष्याख्यं सुभाषितम् । यत्र वै वैष्णवा धर्मा वसिष्ठेन महात्मना ॥ अंबरीषस्य वै प्रोक्तस्सर्गो ब्राह्मस्तथैव च ॥ पुराणं ब्रह्मवैवर्त्तं तद्द्वादशसहस्रकम् ॥ यत्तदीशानकल्पस्य वृत्तांतमधिकृत्य च । नंदिना लैंगमित्युक्तमेकादशसहस्रकम्" ॥ २२ ॥ वाराहमिति ॥ "महावराहस्य वपुर्माहात्म्यमधिकृत्य च । विष्णुनाभिहितं क्षोण्यास्तद्वाराहमिहोच्यते ॥ मानवस्य प्रसंगेन कल्पस्य मुनिसत्तमाः । चतुर्विंशत्सहस्राणि तत्पुराणमिहोच्यते ॥ यत्र माहेश्वरान् धर्मानधिकृत्य च षण्मुखः । कल्पे तत्पुरुषे रुद्रचारितैरुपबृंहितम् ॥ स्कांदं नाम पुराणं तत्सहस्रशतसम्मितम् । त्रिविक्रमस्य माहात्म्यमधिकृत्य चतुर्मुखः ॥ त्रिवर्गं च त्रिदैवत्यं वामनं परिकीर्त्यते । चतुर्दशसहस्राणि श्वेतकल्पानुगं शिवम्॥यत्र धर्मार्थकामानां मोक्ष्यस्य च रसातले । माहात्म्यं कथयामास कूर्मरूपी जनार्दनः॥इंद्रद्युम्नप्रसंगेन ऋषिभ्यश्शक्रसन्निधौ । कूर्मं तत् षट्सहस्राणि अग्निकल्पा नुषंगिकम् ॥ श्रुतीनां यत्र कल्पादौ प्रवृत्त्यर्थं जनार्दनः । मत्स्यरूपी च मनवे नरसिंहोपवर्णनम् ॥ अधिकृत्याब्रवीत्सप्तकल्पवृत्तं सहव्रतम् । तन्मात्स्यमिति जानीध्वं सहस्राणि चतुर्दश ॥ यथा च गारुडे कल्पे विश्वांडं गारुडोद्भवम् ।अधिकृत्याब्रवीद्विष्णुर्गारुडं तदिहोच्यते ॥ तत् षोडशसहस्राणि नृपते त्विह पठ्यते । ब्रह्मा ब्रह्मांडमाहात्म्य मधिकृत्याब्रवीत्पुनः॥तच्च द्वादशसाहस्रं ब्रह्मांडं द्विशताधिकम्। भविष्याणां च कल्पानां श्रूयते यत्र विस्तरः॥तद्ब्रह्मांडं पुराणं तु ब्रह्मणा समुदाहृतम्"इत्यादि॥२३॥२४॥

॥ २१ ॥ २२ ॥ २३ ॥ सर्वपुराणानां सामान्येनाभिधेयमाह—सर्गश्चेति॥प्रतिसर्गः प्रलयः ॥ २४ ॥

यदेतत्तव मैत्रेय पुराणं कथ्यते मया ॥ एतद्वैष्णवसंज्ञं वै पाद्मस्यसमनंतरम् ॥ २५ ॥ सर्गे च प्रतिसर्गे च वंशमन्वंतरादिषु ॥ कथ्यते भगवान्विष्णुरशेषेष्विव सत्तम ॥ २६ ॥ अंगानि वेदाश्चत्वारो मीमांसान्यायविस्तरः ॥ पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥ २७ ॥ आयुर्वेदो धनुर्वेदो गांधर्वश्चैव ते त्रयः ॥ अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादशैव ताः ॥ २८ ॥ ज्ञेया ब्रह्मर्षयः पूर्वं तेभ्यो देवर्षयः पुनः ॥ राजर्षयः पुनस्तेभ्य ऋषिप्रकृतयस्त्रयः ॥ २९ ॥ इति शाखास्समाख्याताश्शाखाभेदास्तथैव च ॥ कर्त्तारश्चैव शाखानां भेदहेतुस्तथोदितः ॥ ३० ॥ सर्वमन्वंतरेष्वेवं शाखाभेदास्समाः स्मृताः ॥ ३१ ॥ प्राजापत्या श्रुतिर्नित्या तद्विकल्पास्त्विमे द्विज ॥ ३२ ॥ एतत्ते कथितं सर्वं यत्पृष्टोहमिह त्वया ॥ मैत्रेय वेदसंबंधः किमन्यत्कथयामि ते ॥ ३३ ॥ इति श्रीविष्णुमहापुराणे तृतीयांशे षष्ठोध्यायः ॥ ६ ॥ ॥ मैत्रेय उवाच ॥ यथावत्कथितं सर्वं यत्पृष्टोसि मया गुरो ॥ श्रोतुमिच्छाम्यहं त्वेकं तद्भवान्प्रब्रवीतु मे ॥ १ ॥

॥२५॥ सर्गे चेति ॥ अशेषेषु पुराणेषु सर्गप्रतिसर्गादिकेषु कर्तृत्वेन भगवान् विष्णुः कथ्यते सर्गादेस्तत्कर्तृत्वात् "यतो वा इमानि" भूतानि इत्यादिश्रुतिः।"विष्णुर्ब्रह्मा शिवो विष्णुर्विष्णुरादित्य एव च । सर्वं विष्णुमयं ब्रह्मन्निति पौराणिकं वचः ॥ एवमेव पुराणेषु दशस्वष्टसु नान्यथा । अन्यथा ये प्रपद्यन्ते नारकास्ते भवंति वै" इत्यादित्यपुराणम् ॥ २६ ॥ पुराणानां वेदोपबृंहकत्वेन धर्मस्य वेदसहितत्वाद्धर्मविद्यास्थानेषु अंतर्भावं दर्शयति—अंगानीति ॥ इतिहासस्य पुराणेंतर्भावः । "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्" इति वचनात् ॥ २७ ॥ आयुरिति ॥ आयुर्वेदादिचतुष्कस्य दृष्टप्राधान्यात्केवलं विद्यास्थानत्वात् न धर्मस्थानत्वमिति तस्य पृथगुक्तिः । "आयुर्वेदो वैद्यशास्त्रं गांधर्वो गीतशासनम् । अर्थशास्त्रं दंडनीतिर्धनुर्वेदोस्त्रशासनम् ॥ चत्वार उपवेदास्ते" इति वैजयंती ॥ २८ ॥ वेदप्रसंगात्तद्दर्शिन ऋषयो वंशभेदास्त्रिधोक्ताः ज्ञेया इत्यादिना। ऋषिप्रकृतयः ऋषिस्वभावाः॥२९॥ इतीति ॥ भेदहेतुः मनुष्याणां बलाद्यल्पत्वम् ॥३०॥ सर्वमन्वंतरेष्विति ॥ प्राजापत्या ब्रह्मदृष्टास्तद्विकल्पाः तस्य विभागभूताः इमे अधीयमानाः शाखाभेदा इमे अनित्या इव प्रति द्वापरं किंचिद्भिन्नपाठतया शाखांतरत्वं नीताः संतः स्वतो नित्या एव तथातथा दृश्यंते ॥३१॥ ३२॥ ३३ ॥ इति श्रीविष्णुचित्तीये विष्णुमहापुराणव्याख्याने तृतीयांशे षष्ठोऽध्यायः ॥ ६ ॥ ॥ अथ श्रुत्याद्युक्तो धर्मो भगवदाराध

उद्दिष्टेषु पुराणेषु किमेतत्पुराणमित्यपेक्षायामाह—यदेतदिति ॥२५॥ अस्य वैष्णवसंज्ञायां हेतुमाह॥ सर्गे चेति ॥ २६ ॥ पुराणानां धर्मप्रतिपादकवेदोपबृंहकत्वेन धर्मविद्यास्थानेष्वंतर्भावमाह—अंगानीति ॥ अंगानि शिक्षादीनि षट् ॥ २७ ॥ धर्मविद्यास्थानव्यतिरिक्तं दृष्टार्थप्रधानमन्यद्विद्यास्थानचतुष्टयमाह—आयुर्वेद इति ॥ २८ ॥ शाखाप्रणेतृभेदमाह ॥ ज्ञेया इति ॥ २९ ॥ उपसंहरति—इतीति ॥ भेदहेतुश्च पुंसां प्रज्ञाह्रासः ॥ ३० ॥ ३१ ॥ शाखायाः पुरुषप्रणीतत्वे वेदस्यैव पौरुषेयत्वं स्यादित्याशंक्याह—प्राजापत्येति ॥ कल्पादौ प्रजापतिना दृष्टो वेदो नित्य एव इमे तु शाखाभेदास्तस्यैव विकल्पाः । अध्ययनादिसौकर्यायावांतरभेदाः न त्वपूर्वाः पुरुषैः प्रकृता इत्यर्थः ॥३२॥३३॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां तृतीयांशे षष्ठोऽध्यायः ॥६॥ ॥ वेदराशिरपारोसावुक्तश्शाखाविभागतः । तन्निर्णीतः परो धर्मो वर्णादीनामथोच्यते॥१॥उक्तमनुवद

सप्तद्वीपानि पातालविषयश्च महामुने ॥ सप्तलोकाश्च येंतस्था ब्रह्मांडस्यास्य सर्वतः ॥ २ ॥ स्थूलैः सूक्ष्मैस्तथा सूक्ष्मसूक्ष्मात्सूक्ष्मतरै स्स्मृता ॥ स्थूलात्स्थूलतरैश्चैव सर्वं प्राणिभिरावृतम् ॥ ३ ॥ अंगुलस्याष्टभागोपि न सोस्ति मुनिसत्तम ॥ वसंति प्राणिनो यत्र कर्म बंधनिबंधनाः ॥ ४ ॥ सर्वे चैते वशं यांति यमस्य भगवन् किल ॥ आयुषोंते तथा यांति यातनास्तत्प्रचोदिताः ॥ ५ ॥ यातनाभ्यः परिभ्रष्टा देवाद्यास्त्वथ योनिषु ॥ जंतवः परिवर्त्तंते शास्त्राणामेष निर्णयः ॥ ६ ॥ सोहमिच्छामि तच्छ्रोतुं यमस्य वशवर्त्तिनः ॥ न भवंति नरा येन तत्कर्म कथयस्व मे ॥ ७ ॥ श्रीपराशर उवाच ॥ अयमेव मुने प्रश्नो नकुलेन महात्मना ॥ पृष्टः पितामहः प्राह भीष्मो यत्त च्छृणुष्व मे ॥ ८ ॥ भीष्म उवाच ॥ पुरा ममागतो वत्स सखा कालिंगको द्विजः ॥ स मामुवाच प्रष्टो वै मया जातिस्मरो मुनिः ॥ ९ ॥ तेनाख्यातमिदं सर्वमित्थं चैतद्भविष्यति ॥ तथा च तदभूद्वत्स यथोक्तं तेन धीमता ॥ १० ॥ स पृष्टश्च मया भूयः श्रद्दधानेन वै द्विजः ॥ यद्यदाह न तद्दृष्टमन्यथा हि मया क्वचित् ॥ ११ ॥ एकदा तु मया पृष्टमेतद्यद्भवतोदितम् ॥ प्राह कालिंगको विप्रस्स्मृत्वा तस्य मुने र्वचः ॥ १२ ॥ जातिस्मरेण कथितो रहस्यः परमो मम ॥ यमकिंकरयोर्योभूत्संवादस्तं ब्रवीमि ते ॥ १३ ॥ कालिंग उवाच ॥ स्वपुरुष मभिवीक्ष्य पाशहस्तं वदति यमः किल तस्य कर्णमूले ॥ परिहर मधुसूदनप्रपन्नान्प्रभुरहमन्यनृणामवैष्णवानाम् ॥ १४ ॥

नतयानुष्ठितो निःश्रेयसायेत्येतदर्थं यमभटसंवादं प्रस्तौति यथावदिति ॥१॥२॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ अयमिति ॥ अयमेव प्रश्नो नकुलेन भीष्मं प्रति पृष्टः अतस्स नकुलायाहेत्यन्वयः ॥ ८ ॥ कालिंगको मुनिस्त्वया पृष्टमिममर्थं मया पृष्टो मां प्रत्युवाचेत्याह—पुरेति ॥ ९ ॥ स्वस्य तं प्रत्यस्यार्थस्य प्रश्नकारणं तस्य सत्यवादित्वमित्याह—तेनेति ॥ इदमित्थमिदानीं स देशांतरे वर्त्तते एतच्चेत्थं भविष्यति, इति व्यवहितं विप्रकृष्टं च तेन यथाख्यातं तत्तथाभूत् ॥ १० ॥ ११ ॥ एवं तस्य प्रत्ययितत्वेन त्वया पृष्टमेतदर्थरूपं मया पृष्टः प्रत्युवाचेत्याह—एकदेति ॥ किं प्रत्युवाचेत्यपेक्षायामाह—स्मृत्वेति ॥ १२ ॥ जातिस्मरेणेति ॥ तेन जातिस्मरेण यो यमकिंकरसंवादः कथितोऽभूत्तं संवादं तस्य मुनेर्वचस्स्मृत्वा ते ब्रवीमीत्यन्वयः ॥ १३ ॥ स्वपुरुषमिति ॥ स्वपुरुषमित्यादि कालिंगवचनं परिहरेत्यादि यमवचनं

न्सर्ववेदसारं परं धर्मं पृच्छति । यथावदित्यादिसप्तभिः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ अयमेवेति ॥ अयमेव प्रश्नः प्रष्टव्योर्थः नकुलेन भीष्मं प्रति पृष्टः ततश्च भीष्मस्तस्मै यत्प्राह तच्छृणुष्वे त्यर्थः ॥ ८ ॥ पुरेति ॥ मम सखा कालिंगकः कलिंगदेश्यः जातिस्मरो मुनिरागतस्सन् ॥ ९ ॥ १० ॥ ११ ॥ एकदा त्विति ॥ प्रसक्तानुप्रसक्ततया मया यदेतन्नकुल भवता पृष्टं तदुत्तरतया च स कालिंगो यम किंकरसंवादमाह—तदा जातिस्मरेणातिरहस्यो यमकिंकरसंवादो मम यः कथितोऽभूत्तं संवादं तस्य मुनेर्वाक्यं स्मृत्वा तुभ्यं ब्रवीमीत्यन्वयः ॥ १२ ॥ १३ ॥ तमेवाह—स्वपुरुषमित्यादिना सोन्यलोकस्य इत्यंतेन एकविंशति

अहममरवरार्चितेन धात्रा यम इति लोकहिताहिते नियुक्तः ॥ हरिगुरुवशगोस्मि न स्वतंत्रः प्रभवति संयमने ममापि विष्णुः ॥ १५ ॥ कट कमुकुटकर्णिकादिभेदैः कनकमभेदमपीष्यते यथैकम् ॥ सुरपशुमनुजादिकल्पनाभिर्हरिरखिलाभिरुदीर्यते तथैकः ॥ १६ ॥ क्षितितलपर माणवोनिलांते पुनरुपयांति यथैकतां धरित्र्याः ॥ सुरपशुमनुजादयस्तथांते गुणकलुषेण सनातनेन तेन ॥ १७ ॥ हरिममरवरार्चितांघ्रिपद्मं प्रणमति यः परमार्थतो हि मर्त्यः ॥ तमपगतसमस्तपापबंधं व्रज परिहृत्य यथाग्निमाज्यसिक्तम् ॥ १८ ॥ इति यमवचनं निशम्य पाशी यम पुरुषस्तमुवाच धर्मराजम् ॥ कथय मम विभो समस्तधातुर्भवति हरेः खलु यादृशोस्य भक्तः ॥ १९ ॥ यम उवाच ॥ न चलति निज वर्णधर्मतो यस्सममतिरात्मसुहृद्विपक्षपक्षे ॥ न हरति न च हंति किंचिदुच्चैः स्थितमनसं तमवेहि विष्णुभक्तम् ॥ २० ॥

प्रभुरिति स्वप्रभावभंगस्थानं न प्रकाश्यमिति नीत्या विष्णुनामसूच्चैरुच्चारितेषु नारकिणोपि तच्छ्रवणादिना नरकान्मुच्येरन् तेन स्वाधिकारहानिरित्यालोच्य कर्णमूले कथनं 'राजदारान्मागाः' इति वचनवद्रहसि कथनीयत्वाच्च यमस्य वैष्णवेष्वप्रभुत्वे प्रमाणम्—"द्रवंति दैत्याः प्रणमंति देवाः, प्रभवो भगवद्भक्ता मादृशानाम्" इत्यादेः ॥१४॥ अत्र हेतुमाह—अहमिति ॥ धात्रा ईश्वरेण हिताहिते हितप्रवर्त्तने अहितनिवर्त्तने च ॥ १५ ॥ विष्णुत्वविवरणमुखेनाखिलैश्वर्यमेव दर्शयति कटकेति ॥ अभेदं भेदरहितं तादात्म्यवत् । यथा—कारणभूतं कनकं कार्यभूतकटकादितादात्म्येपि एकमिष्यते । एवं कारण भूतो हरिः कार्य्यभूतसुरपशुमनुजादिभेदैः अभिन्नो पितदात्मभूत एक एवोदीर्य्यते । कारणत्वेन सर्वत्रैकत्वेन व्याप्य स्थितत्वात् स एवेश्वर इत्यर्थः ॥ १६ ॥ अथ तस्य संहर्तृत्वमाह—क्षितितलेति ॥ अनिलांते उत्थापका निलांते कलुषं कालुष्यम् ईश्वरसंकल्पगुणवैषम्येणोत्थापितास्सुरादयस्तस्य गुणकालुष्यस्य नाशे तमःशरीरेण तेन सनातनेनैकतां यान्ति ॥ १७ ॥ हरिमिति ॥ परमा र्थतया निरुपाधिकः अग्निदृष्टांतो भक्तसंसर्गिणामपि परिहारार्थः ॥ १८ ॥ १९ ॥ २० ॥

श्लोकेन स्वपुरुषमिति ॥ पाशहस्तं पापिजनानयनाय मर्त्यलोकं गंतुमुद्यतं वीक्ष्य विष्णुभक्तान् परिहृत्यान्यानानयेत्याद्यतिरहस्यं कर्णमूले यमो वदति ॥ १४ ॥ न वैष्णवानां प्रभुरित्यत्र हेतुमाह—अहमिति ॥ प्रजा संयमनाद्यम इति संज्ञया लोकस्य हिताहितशुभाशुभफलदानार्थं धात्रा नियुक्तोप्यहं हरिरेव गुरुस्तद्वशवर्त्यस्मि । न तु स्वतंत्रः । ममापि संयमने दंडे विष्णुः प्रभुर्भवति ॥ १५ ॥ कुत इत्यपेक्षायां तस्य सर्वात्मत्वेन सर्वे श्वरत्वादित्याह—कटकेति ॥ यथा कनकं कटकमुकुटकर्णभूषणादिभेदैरुपलक्षितमपि कनकात्मना सर्वानुगतमभेदमेकमिष्यते तथैक एव जगत्कारणभूतो हरिस्सुरादिस्वरूपैरुदीर्यते । प्रलये च सुरादीनां हरावेव लयात् ॥ १६ ॥ स एव सर्वात्मेति दृष्टांतेनाह—क्षितीति ॥ गुणानां कलुषेण क्षोभेण ये सुरादयो जाताः ते गुणक्षोभोपरमे तेनैवैकतां यांतीत्यर्थः ॥ १७ ॥ हरिमिति ॥ अतस्सर्वेश्वरत्वादमराणां गणैरर्चितांघ्रिपद्मं हरिं यः परमार्थतः सर्वात्मत्वेन प्रणमति तं परिहृत्य व्रज । यद्वा परमार्थतस्तत्त्वतोपगतस्समस्तपापबंधः यस्येत्यन्वयः । प्रणमतीति श्रवणादीनामप्युपलक्षणम् ॥ १८ ॥ १९ ॥ न चलतीति ॥ उच्चैरतिशयेन सितं स्वच्छं रागादि

कलिकलुषमलेन यस्य नाऽऽत्मा विमलमतेमलिनीकृतस्तमेनम् ॥ मनसि कृतजनार्दनं मनुष्यं सततमवेहि हरेरतीव भक्तम् ॥ २१ ॥ कनकमपि रहस्यवेक्ष्य बुद्ध्या तृणमिव यस्समवैति वै परस्वम् ॥ भवति च भगवत्यनन्यचेताः पुरुषवरं तमवेहि विष्णुभक्तम् ॥२२॥ स्फटिकगिरिशिलामलः क्व विष्णुर्मनसि नृणां क्व च मत्सरादिदोषः ॥ न हि तुहिनमयूखरश्मिपुंजे भवति हुताशनदीप्तिजः प्रतापः ॥२३॥ विमलमतिरमत्सरः प्रशांतश्शुचिचरितोखिलसत्त्वमित्रभूतः ॥ प्रियहितवचनोऽस्तमानमायो वसति सदा हृदि तस्य वासुदेवः ॥ २४ ॥ वसति हृदि सनातने च तस्मिन्भवति पुमाञ्जगतोस्य सौम्यरूपः ॥ क्षितिरसमतिरम्यमात्मनोंतः कथयति चारुतयैव सालपोतः ॥२५॥ यमनियमविधूतकल्मषाणामनुदिनमच्युतसक्तमानसानाम् ॥ अपगतमदमानमत्सराणां त्यज भट दूरतरेण मानवानाम् ॥ २६ ॥ हृदि यदि भगवाननादिरास्ते हरिररिशंखगदाधरोऽव्ययात्मा ॥ तदघविघातकर्तृभिन्नं भवति कथं सति चांधकारमर्के ॥ २७ ॥

कलिकलुषेति ॥ कलिकलुषं कलिकालुष्यं रागद्वेषादि तदेव मलम् ॥ २१ ॥ २२ ॥ स्फटिकेति ॥ सकलदोषप्रतिभटे कल्याणगुणात्मके भगवति मनिसि स्थिते नृणां मत्सरादिदोषो न भवतीत्यर्थः । न हीत्यादि वसतीति शेषः ॥२३॥ विमलमतिरिति ॥ यस्य हृदि वासुदेवः स निरस्तनिखिलदोषः कल्याणगुणयुक्तश्च भवतीत्यर्थः । मानो गर्वः माया शाठ्यं च ॥ २४ ॥ भगवद्ध्यानपरो भक्तश्चाक्षुषेण सौम्यत्वादिगुणेन ज्ञातुं शक्य इत्यत्राह—वसतीति ॥ सौम्यरूपः "स्तब्धोस्युततमादेशमप्राक्ष्यः । ब्रह्मविद इव सौम्य ते मुखं भाति" इत्यादिवत् बालसालतरुरात्मनश्चारुतयैव क्षितेरन्तस्थमतिरम्यं रसं सारं सूचयति ॥ २५ ॥ २६ ॥ हृदीति ॥ तदघं ध्यातुः पापमघविघातकर्त्रा भगवता भिन्नं विदीर्णं भवति । अर्के सत्यपि कथमंधकारम् ॥ २७ ॥

रहितं मनो यस्य तं विष्णुभक्तं विद्धि । मनस्स्वच्छत्वविज्ञेयत्वात्तस्य ज्ञापकचिह्नान्याह—न चलतीति ॥ विष्णोरियमाज्ञेत्येवं हि क्रियमाणस्स्वधर्मो विष्णुं प्रीणयंस्तत्त्वशुद्धिद्वारा तद्भक्तिहेतुः । अतस्स्वधर्मनिष्ठास्तद्भक्तिचिह्नं शुद्धसत्त्वस्य च रागाद्यभावादात्मनः सुहृत्पक्षे विपक्षपक्षेपि च सममतित्वं परस्वहरणादिनिवृत्तिश्च भवति तस्य चिह्नम् ॥ २० ॥ तस्यैव प्रपंचः कलिकलुषेत्यादिना—कलिकलुषेति ॥ आत्मा बुद्धिः ॥ २१ ॥ ॥ २२ ॥ स्फटिकेति ॥ स्फटिकगिरेश्शिलेवामलः तुहिनमयूखश्चंद्रस्तस्य रश्मीनां पुंजे मत्सराद्यभावो विष्णुभक्तचिह्नमित्यर्थः ॥ २३ ॥ विमलमतिरिति ॥ शुचि शुद्धं चरितं यस्य । अखिलानां सत्त्वानां मित्रं मित्रभूतः । अस्ते निरस्ते मानमाये गर्वदंभौ येन ॥ २४ ॥ प्रसन्नरूपता च विष्णुभक्तचिह्नमित्याह—वसतीति ॥ मुखप्रसादादिचिह्नं तदंतस्थं परमानंदमयं विष्णुं सूचयतीत्यत्र सन्निदर्शनमाह—क्षितीति ॥ चारुतया कोमलतया सालपोतो बालसालवृक्षः आत्मनोंतस्स्थितं क्षितिरसं कथयति सूचयतीत्यर्थः ॥ २५ ॥ २६ ॥ हृदीति ॥ तत्तर्हि अघम् अघविघातकर्त्रा भिन्नं विदीर्णं भवति । युक्तश्च विघातकसन्निधौ तद्विरोधिविनाश

हरति परधनं निहंति जंतून्वदति तथा नृतनिष्ठुराणि यश्च ॥ अशुभजनितदुर्मदस्य पुंसः कलुषमतेर्हृदि तस्य नास्त्यनंतः ॥ २८ ॥ न सहति परसंपदं विनिंदां कलुषमतिः कुरुते सतामसाधुः ॥ न यजति न ददाति यश्च संतं मनसि न तस्य जनार्दनोऽधमस्य ॥ २९ ॥ परमसुहृदि बांधवे कलत्रे सुततनयापितृमातृभृत्यवर्गे ॥ शठमतिरुपयाति योर्थतृष्णां तमधमचेष्टमवेहि नास्य भक्तम् ॥ ३० ॥ अशुभमतिरसत्प्रवृत्तिसक्तस्सततमनार्य्यकुशीलसंगमत्तः ॥ अनुदिनकृतपापबंधयुक्तः पुरुषपशुर्न हि वासुदेवभक्तः ॥ ३१ ॥ सकलमिदमहं च वासुदेवः परमपुमान्परमेश्वरस्स एकः ॥ इति मतिरचलाभवत्यनंते हृदयगते व्रजतान्विहाय दूरात् ॥ ३२ ॥ कमलनयन वासुदेव विष्णो धरणिधराच्युत शंखचक्रपाणे ॥ भवशरणमितीरयंति ये वै त्यज भट दूरतरेण तानपापान् ॥ ३३ ॥ वसति मनसि यस्य सोव्ययात्मा पुरुषवरस्य न तस्य दृष्टिपाते ॥ तव गतिरथ वा ममास्ति चक्रप्रतिहतवीर्यबलस्य सोन्यलोक्यः ॥ ३४ ॥ कालिङ्ग उवाच ॥ इति निजभटशासनाय देवो रवितनयस्स किलाह धर्मराजः ॥ मम कथितमिदं च तेन तुभ्यं कुरुवर सम्यगिदं मयापि चोक्तम् ॥ ३५ ॥

परहिंसादिना दोषेणाभक्तस्य हृदि भगवदसन्निधिर्ज्ञातुं शक्य इत्याह—हरतीत्यादिचतुर्भिः—हरतीति ॥ निष्ठुराणि परुषाणि ॥ २८ ॥ नेति ॥ न यजति संतं विष्णुं नार्चयति न ददाति तद्भक्ताय ॥ २९ ॥ परमेति ॥ अवेहि नास्य भक्तमिति भक्तपदेन नञः संबन्धः । अभक्तमवेहीत्यर्थः ॥ ३० ॥ अशुभमतिरिति ॥ अनार्यममंगलं कुशीलं दुःशीलं संगो विषमसंगः तैर्मत्तः पुरुषपशुरविवेकी । अनार्यकुलशीलसंगमत्त इति पाठः ॥ ३१ ॥ भक्तस्य लक्षणांतरमाह—सकलमिति ॥ ३२ ॥ कमलनयनेति ॥ ईरयंतीतिवचनादर्थज्ञानमंतरेणापि नामोच्चारणमात्रमेव पापहरमिति सूचितम् । ईरणं श्रवणादेरप्युपलक्षणम् ॥ ३३ ॥ वसतीति ॥ यस्य मनसि हरिर्वसति तस्य यावद्दृष्टिपातं चक्रं परिभ्रमति अतस्तद्दृष्टिपाते तत्प्रतिहतवीर्य्यबलस्य तव मम वा गतिर्नास्ति । सत्वन्यलोक्यः अन्यलोकार्हः न त्वस्मल्लोकार्हः । न खलु भागवता यमविषयं गच्छंतीति वचनात् ॥ ३४ ॥ इतीति ॥ तेन यमभटेन ॥ ३५ ॥

इत्याह—कथमर्के सत्यंधकारं भवतीति ॥ २७ ॥ अथाभक्तस्य चिह्नान्याह—हरतीत्यादिचतुर्भिः ॥ २८ ॥ न सहतीति ॥ संतमप्यर्थं यो न ददाति ॥ २९ ॥ ३० ॥ अशुभमतिरिति ॥ अनार्यैर्विशालो दीर्घकालस्संगस्तेन मत्तः अनार्यविशीलेति । अनार्यकुशीलेति च पाठे नीचैर्दुश्शीलैश्च जनैस्संगेन मत्त इत्यर्थः ॥३१॥ सर्वत्रेश्वरदृष्टिरेकांतभक्तचिह्नमित्याह—सकलमिति ॥३२॥ तन्नामकीर्तनं तदेकशरणताद्येकांतभक्तिचिह्नमित्याह—कमलनयनेति ॥ ३३ ॥ दूरतरेण त्यजेति यदुक्तं तत्र हेतुमाह—वसतीति ॥ तस्य दृष्टिपातं यावत्तावद्विष्णोश्चक्रं परिभ्रमति । अतस्तच्चक्रप्रतिहतं वीर्यं बलं च यस्य तव वा मम वा तावति देशे पापिष्ठं जनमानेतुमपि गतिर्नास्ति । स पुनरन्यलोक्यः वैकुंठलोकार्हः न त्वस्मल्लोकार्ह इति ॥ ३४ ॥ इतीति ॥ तेन भटेन मह्यं कथितं कुरुवर भीष्म ॥ ३५ ॥

॥ श्रीभीष्म उवाच ॥ नकुलैतन्ममाख्यातं पूर्वं तेन द्विजन्मना ॥ कलिङ्गदेशादभ्येत्य प्रीतेन सुमहात्मना ॥ ३६ ॥ मयाप्येतद्यथान्यायं सम्यग्वत्स तवोदितम् ॥ यथा विष्णुमृतेनान्यत्त्राणं संसारसागरे ॥ ३७ ॥ किंकराः पाशदंडाश्च न यमो न च यातनाः ॥ समर्थास्तस्य यस्यात्मा केशवालंबनस्सदा ॥ ३८ ॥ श्रीपराशर उवाच ॥ एतन्मुने समाख्यातं गीतं वैवस्वतेन यत् ॥ त्वत्प्रश्नानुगतं सम्यक्किमन्यच्छ्रोतुमिच्छसि ॥३९॥ इति श्रीविष्णुमहापुराणे तृतीयांशे सप्तमोऽध्यायः ॥ ७ ॥ ॥ मैत्रेय उवाच ॥ भगवन्भगवान्देवः संसारविजिगीषुभिः ॥ समाख्याहि जगन्नाथो विष्णुराराध्यते यथा ॥१॥ आराधिताच्च गोविंदादाराधनपरैर्नरैः ॥ यत्प्राप्यते फलं श्रोतुं तच्चेच्छामि महामुने ॥२॥ श्रीपराशर उवाच ॥ यत्पृच्छति भवानेतत्सगरेण महात्मना ॥ और्वः प्राह यथा पृष्टस्तन्मे निगदतश्शृणु ॥ ३ ॥ सगरः प्रणिपत्यैनमौर्वं पप्रच्छ भार्गवम् ॥ विष्णोराराधनोपायसंबंधं मुनिसत्तम ॥ ४ ॥

॥ ३६ ॥ ३७ ॥किंकरा इति ॥ यस्यात्मा केशवालंबन इत्यात्मनिवेदनोक्तिः । "श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वंदनं दास्यं सख्यमात्मनिवेदनम्" इति भक्तेर्नवविधत्वोक्तेः । एवमुक्तश्रवणादिनवविधांतरंगा वक्ष्यमाणसदाचारोपलक्षणा भगवदेकचित्तता स्वरूपलक्षणा भगवति निरुपाधिकप्रीतिरूपा भक्तिरेव यमवश्यत्वनिवारिकेत्यध्यायार्थः । अथवास्मिन्न अध्याये जातिस्मरो नाम कश्चिन्मुनिः, तदुक्तिमूला कालिंगोक्तिः भीष्मेण नकुलायोच्यते तत्रेयं योजना—पुरा ममेत्यादि मामुवाचेत्यंतं भीष्मवचनम् । पृष्टो वै मयेत्यारभ्य अन्यथा हि मया क्वचिदित्यंतं, कालिंगवाक्यं, तत्र वत्सेति भीष्मस्य संबोधनं द्विजो जातिस्मरः । एकादात्विति श्लोको भीष्मवाक्यम् । जातिस्मरेण कथित इत्यादि मयापि चोक्तमित्यन्तं कालिंगवाक्यम् । मम कथितमिदं च तेनेत्यत्र तच्छब्देन जातिस्मरस्य परामर्शः ॥ ३८ ॥ ३९ ॥ इति श्रीविष्णुचित्तीये विष्णुपुराणव्याख्याने तृतीयांशे सप्तमोऽध्यायः ॥ ७ ॥ ॥ पूर्वं भगवदाज्ञारूपश्रुतिस्मृत्युक्तवर्णाश्रमधर्मानुष्ठानं भक्तिलक्षणमुक्तम् । इदानीं तदेव चतुर्वर्गसाधनमित्युच्यते भगवन्नित्यध्यायनवकेन ॥ १ ॥ २ ॥ ३ ॥ ४ ॥

॥ ३६ ॥ ३७ ॥ किंकरा इति ॥ केशवालंबनः केशवाश्रयः ॥ ३८ ॥ ३९ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां तृतीयांशे सप्तमोऽध्यायः ॥ ७ ॥ ॥ विष्णुभक्तस्य चिह्नं यो निजधर्मः पुरोदितः । तमेवातिस्फुटं वक्तुं नवाध्यायोऽभिधीयते ॥ १ ॥ भगवन्निति ॥ यथा येनोपायेन विष्णुराराध्यते ॥ १ ॥ २ ॥ ३ ॥ ४ ॥

फलं चाराधिते विष्णौ यत्पुंसामभिजायते॥ स चाह पृष्टो यत्नेन तस्मै तन्मेखिलं शृणु ॥५॥ और्व उवाच॥भौमं मनोरथं स्वर्गं स्वर्गे रम्यं च यत्पदम् ॥ प्राप्नोत्याराधिते विष्णौ निर्वाणमपि चोत्तमम् ॥ ६ ॥ यद्यदिच्छति यावच्च फलमाराधितेऽच्युते ॥ तत्तदाप्नोति राजेंद्र भूरि स्वल्प मथापि वा ॥ ७ ॥ यत्तु पृच्छसि भूपाल कथमाराध्यते हरिः ॥ तदहं सकलं तुभ्यं कथयामि निबोध मे ॥ ८ ॥ वर्णाश्रमाचारवता पुरुषेण परः पुमान् ॥ विष्णुराराध्यते पंथा नान्यस्तत्तोषकारकः ॥९॥ यजन्यज्ञान्यजत्येनं जपंत्येनं जपन्नृप ॥ निघ्नन्न्यान्हिनस्त्येनं सर्वभूतो यतो हरिः ॥ १० ॥ तस्मात्सदाचारवता पुरुषेण जनार्दनः ॥ आराध्यस्तु स्ववर्णोक्तधर्मानुष्ठानकारिणा ॥ ११ ॥ ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्च पृथिवीपते ॥ स्वधर्मतत्परो विष्णुमाराधयति नान्यथा ॥ १२ ॥ परापवादं पैशुन्यमनृतं च न भाषते ॥ अन्योद्वेगकरं वापि तोष्यते तेन केशवः ॥ १३ ॥ परदारपरद्रव्यपरहिंसासु यो रतिम् ॥ न करोति पुमान्भूप तोष्यते तेन केशवः ॥ १४ ॥ न ताडयति नो हंति प्राणिनो न च हिंसकः ॥ यो मनुष्यो मनुष्येंद्र तोष्यते तेन केशवः ॥ १५ ॥ देवद्विजगुरूणां च शुश्रूषासु सदोद्यतः ॥ तोष्यते तेन गोविंदः पुरुषेण नरेश्वर ॥ १६ ॥ यथात्मनि च पुत्रे च सर्वभूतेषु यत्तथा ॥ हितकामो हरिस्तेन सर्वदा तोष्यते सुखम् ॥ १७ ॥ यस्य रागादिदोषेण न दुष्टं नृप मानसम् ॥ विशुद्धचेतसा विष्णुस्तोष्यते तेन सर्वदा ॥ १८ ॥ वर्णाश्रमेषु ये धर्माश्शास्त्रोक्ता मुनिसत्तम ॥ तेषु तिष्ठन्नरो विष्णुमाराधयति नान्यथा ॥ १९ ॥ सगर उवाच ॥ तदहं श्रोतुमिच्छामि वर्णधर्मानशेषतः ॥ तथैवाश्रमधर्मांश्च द्विजवर्य्य ब्रवीहि तान् ॥ २० ॥

॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ वर्णाश्रमेति ॥ आचारवतेत्यत्राचारग्रहणं यज्ञादेः कर्मणोप्युपलक्षणम् ॥ ९ ॥ ननु वर्णाश्रमधर्मो यदि देवताविषयः कथमस्य भगवदाराधनत्वमित्यत्राह—यजन्निति ॥ सर्वभूतस्सर्वात्मभूतः "ये यजंति पितॄन् देवान् ब्राह्मणान् सहुताशनान् । सर्वभूतांतरात्मस्थं विष्णुमेव यजंति ते" इति स्मृतेः । "येप्यन्यदेवता भक्ता यजंते श्रद्धयान्विताः । तेपि मामेव कौंतेय यजंत्यविधिपूर्वकम्" इति 'गावो हि द्विजमुख्याश्च' इत्यादि च ॥ १० ॥ ११ ॥१२॥१३॥१४॥ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ वर्णाश्रमेष्विति ॥ तेषु तिष्ठन् ताननुतिष्ठन् ॥ १९ ॥ २० ॥

॥ ५ ॥ भौममिति ॥ स्वर्गिवद्यं ब्रह्मलोकादिपदम् ॥ ६ ॥ ७ ॥ ८ ॥ वर्णाश्रमेति ॥ नान्यः विष्ण्वाराधनलक्षणश्रुतिस्मृतिविहितस्वधर्मत्यागेन केवलतद्व्रतधारणश्रवणकीर्तनादिः तत्तोषकारको न भवतीत्यर्थः ॥ ९ ॥ यजन्निति ॥ यज्ञान्यष्टव्यान् इंद्रादीन्यजन् एनं विष्णुं यजति ॥ १० ॥ ११ ॥ १२ ॥ परापवादमिति ॥ परस्यापवादः समक्षं निंदा । पैशुन्यं परोक्षं परदोषसूचनम् ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ पैशुन्यपरापवादादिनिवृत्तेरपि सत्त्वशोधकः स्वधर्मो मूलकारणमतस्तमेवादरार्थं पुनरप्याह—वर्णाश्रमेष्विति ॥ १९ ॥ तदिति ॥ तत्तर्ह्यहं श्रोतुमिच्छामि ॥ २० ॥

और्व उवाच ॥ ब्राह्मणक्षत्रियविशां शूद्राणां च यथाक्रमम् ॥ त्वमेकाग्रमतिर्भूत्वा शृणु धर्मान्मयोदितान् ॥ २१ ॥ दानं दद्याद्यजेद्देवान्यज्ञैस्स्वाध्यायतत्परः ॥ नित्योदकी भवेद्विप्रः कुर्याच्चाग्निपरिग्रहम् ॥ २२ ॥ वृत्त्यर्थं याजयेच्चान्यानन्यानध्यापयेत्तथा ॥ कुर्य्यात्प्रतिग्रहादानं शुक्लार्थान्न्यायतो द्विजः ॥ २३ ॥ सर्वभूतहितं कुर्य्यान्नाहितं कस्यचिद्द्विजः ॥ मैत्री समस्तभूतेषु ब्राह्मणस्योत्तमं धनम् ॥ २४ ॥ ग्राव्णि रत्ने च पारक्ये समबुद्धिर्भवेद्द्विजः ॥ ऋतावभिगमः पत्न्यां शस्यते चास्य पार्थिव ॥२५॥ दानानि दद्यादिच्छातो द्विजेभ्यः क्षत्रियोपि वा ॥ यजेच्च विविधैर्यज्ञैरधीयीत च पार्थिवः ॥ २६ ॥ शस्त्राजीवो महीरक्षा प्रवरा तस्य जीविका ॥ तत्रापि प्रथमः कल्पः पृथिवीपरिपालनम् ॥ ॥ २७ ॥ धरित्रीपालनेनैव कृतकृत्या नराधिपाः ॥ भवंति नृपतेरंशा यतो यज्ञादिकर्मणाम् ॥ २८ ॥

॥ २१ ॥ दानमिति ॥ नित्योदकी नित्योदकस्नानतर्पणातिकृत् अग्निपरिग्रहं स्मार्त्तस्यौपासनाग्नेः श्रौताग्नित्रयस्य परिग्रहम् ॥ २२ ॥ वृत्त्यर्थमिति ॥ प्रतिग्रहः प्रतिग्राह्यो गवादिः शुक्लार्थात् न्यायार्जितशुक्लधनात् विप्रादिस्स्ववृत्त्युपात्तं सर्वेषामेव शुक्लम् "क्रमागतं पितृदायं प्राप्तं च सह भार्य्यया । अविशेषेण सर्वेषां धनं शुक्लमुदाहृतम्" इति विष्णुः "श्रुतशौर्यतपःकन्यायाज्यशिष्यान्वयागतम् । धनं सप्तविधं शुक्लम्" इति नारदः । न्यायतः कालपुरुषदानादिनिषिद्धप्रतिग्रहादिवृत्तिं विना आगतं शुद्धाद्राजादेर्ग्राह्यम् "राजांतेवासिशिष्येभ्यः सीदन्निच्छेद्धनं क्षुधा"इति ॥ "न राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छास्त्रवर्तिनः" इति स्मृतेश्च ॥ २३ ॥ २४ ॥ ग्राव्णीति ॥ ऋतावभिगमः चतुर्थिप्रभृत्याषोडशमित्यादि । "षोडशर्तुर्निशाः स्त्रीणां तस्मिन्युग्मासु संविशेत् । ब्रह्मचार्य्येव पर्वाण्याद्याश्च तस्रस्तु वर्जयेत्" इति च ॥ २५ ॥ २६ ॥ शस्त्राजीव इति ॥ तत्रापि वृत्तिद्वयेपि पृथिवीपालनं प्रथमः कल्पः मुख्यत्वेन प्रवृत्त इति शेषः ॥ २७ ॥ धरित्रीति ॥ अंशाः षष्ठतुरीयार्थत्रिपादाख्याः । तत्र राज्ञां देशेषु कृतस्य षष्ठांशस्स्यात् अहं त्वां रक्षामीत्यभयप्रदाने पादः । तद्रक्षार्थमन्नदानेर्द्धं सत्कृत्यान्नदाने त्रिपादं "धर्मषष्ठांशभागी स्यात्प्रजा धर्मेण पालयन्" इति भारते । "यथा चतुर्थं धर्मस्य रक्षिता लभते फलम् । पापस्यापि तथा मूढो भागं प्राप्नोत्यरक्षिता ॥ रक्षिष्यामीति चोक्तं ते न च शक्नोषि रक्षितुम्" इति हरिवंशे अर्जुनंप्रति ब्राह्मणवचनम् "यस्यान्नपानपुष्टांगः कुरुते धर्मसंचयम् । अन्नप्रदातुस्तस्यार्द्धं

॥ २१ ॥ तत्र ब्राह्मणस्यावश्यकान्धर्मानाह–दानमिति ॥ नित्योदकी स्नानतर्पणादिकर्मकृत् नित्यमुदकपात्रत्यागी वा । यथाधिकारमौपासनाग्नेस्त्रेताग्नीनां च परिग्रहम् ॥ २२ ॥ जीवितार्थं धनार्जनादिनियमानाह–वृत्त्यर्थमिति ॥ प्रतिग्रहादानं प्रतिग्राह्यस्य धनादेरादानं शुक्लार्थात् शुक्लः शुद्धः न्यायार्जितोऽर्थो यस्य तस्माद्विप्रादेः तत्रापि न्यायतः यथोपयोगमयाजनादिकं च त्यक्त्वा ॥ २३ ॥ २४ ॥ ग्राव्णीति ॥ ग्राव्णि पाषाणे ॥ २५ ॥ क्षत्रियस्यावश्यकान् स्मृत्यर्थांश्च धर्मानाह ॥ दानानीत्यादिचतुर्भिः ॥ २६ ॥ शस्त्राजीव इति ॥ शस्त्राजीवो युद्धजीविका ॥ २७ ॥ धरित्रीति ॥ भवंति नृपतेरंशाः "पुण्यात् षड्भागमाधत्ते न्यायेन परिपालयन्" इत्यादि

दुष्टानां शासनाद्राजा शिष्टानां परिपालनात् ॥ प्राप्नोत्यभिमताँल्लोकान्वर्णसंस्थां करोति यः ॥ २९ ॥ पाशुपाल्यं च वाणिज्यं कृषिं च मनुजेश्वर ॥ वैश्याय जीविकां ब्रह्मा ददौ लोकपितामहः ॥ ३० ॥ तस्याप्यध्ययनं यज्ञो दानं धर्मश्च शस्यते ॥ नित्यनैमित्तिकादीनामनुष्ठानं च कर्मणाम् ॥ ३१ ॥ द्विजातिसंश्रितं कर्म तादर्थ्यं तेन पोषणम् ॥ क्रयविक्रयजैर्वापि धनैः कारूद्भवेन वा ॥ ३२ ॥ शूद्रस्य सन्नतिश्शौचं सेवा स्वामिन्यमायया ॥ अमंत्रयज्ञो ह्यस्तेयं तत्संगो विप्ररक्षणम् ॥ ३३ ॥ दानं च दद्याच्छूद्रोपि पाकयज्ञैर्यजेत च ॥ पित्र्यादिकं च तत्सर्वं शूद्रः कुर्वीत तेन वै ॥ ३४ ॥ भृत्यादिभरणार्थाय सर्वेषां च परिग्रहः ॥ ऋतुकालेभिगमनं स्वदारेषु महीपते ॥ ३५ ॥ दया समस्तभूतेषु तितिक्षा नातिमानिता ॥ सत्यं शौचमनायासो मंगलं प्रियवादिता ॥ ३६ ॥ मैत्र्यस्पृहा तथा तद्वदकार्पण्यं नरेश्वर ॥ अनसूया च सामान्यवर्णानां कथिता गुणाः ॥ ३७ ॥

धर्मस्यार्द्धं न संशयः ॥ अन्नदातुस्त्रयः पादाः कर्त्ता पादेन लिप्यते" इतिवचनात् ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ द्विजातीति ॥ शूद्रकर्म द्विजातिसंश्रितं तच्छुश्रूषारूपं तादर्थ्यं तच्छेषत्वं च ते तद्विजशुश्रूषादिजन्यधनेनात्मपोषणं मुख्यम् । आपदि तु वाणिज्येन तक्षादिकारुवृत्त्योत्पन्नधनेन वा ॥ ३२ ॥ शूद्रस्येति ॥ "शूद्रस्य द्विजशुश्रूषा तयाजीवन् वणिग्भवेत्" इत्यादिस्मृतेः ॥ ३३ ॥ दानमिति ॥ पाकयज्ञैः अल्पयज्ञैः "पाकोल्पेपि शिशावपि" इति वैजयंती । वैश्वदेवाद्यैः नमस्कारैर्मंत्रैः लौकिकानां पाकयज्ञशब्द इत्यापस्तंबः "नमस्कारेण मंत्रेण पंचयज्ञान्न हापयेत्" इति याज्ञवल्क्यः ॥ ३४ ॥ भृत्यादीति ॥ परिग्रहः स्वैरस्वीकृतानां तृणकाष्ठादीनां स्वीकारः स तु सर्वेषां वर्णानां साधारणः ॥ ३५ ॥ ३६ ॥ ३७ ॥

स्मृतेः ॥ २८ ॥ २९ ॥ वैश्यस्याप्याह—पाशुपाल्यमित्यादिद्वाभ्याम् ॥ ३० ॥ ३१ ॥ शूद्रस्याप्याह—द्विजातीत्यादिद्वाभ्याम्—द्विजातीति ॥ द्विजातिसंश्रयं त्रैवार्णिकशुश्रूषादिलक्षणं कर्म तादर्थ्यं तत्पारतंत्र्यं च स्वधर्मः । तेन पोषणं तच्छुश्रूषालब्धद्रव्येन कुटुंबभरणं तदसंभवे क्रियादिजन्यैर्धनैः तस्याप्यसंभवे दात्रादिकारुकर्मोद्भवेन धनेन पोषणम् ॥ ३२ ॥ ३३ ॥ दानं चेति ॥ पाकयज्ञैर्वैश्वदेवादिभिः "नमस्कारेण मंत्रेण पंचयज्ञान्न हापयेत्" इत्यादिस्मृतेः । पित्र्यादिकं च श्राद्धादि तेनैव द्विजशुश्रूषालब्धद्रव्येणैव कुर्वीत ॥ ३४ ॥ सर्वसाधारणान्धर्मानाह—भृत्यादीत्यादिकैस्सार्धैस्त्रिभिः—भृत्यादीति ॥ परिग्रहः अर्थसंपादनमित्याद्यास्सर्वेषां सामान्यगुणा इति तृतीयेनान्वयः ॥ ३५ ॥ दयेति ॥ "शरीरं पीडयते येन सुशुभेनापि कर्मणा । अत्यंतं तन्न कर्तव्यमनायासस्स उच्यते" इत्युक्तोनायासः । मंगलं तिलपुष्पादिधारणम् ॥ ३६ ॥ मैत्रीति ॥ अकार्पण्यं अलुब्धत्वं सामान्यगुणाः सामान्यधर्माः ॥ ३७ ॥

आश्रमाणां च सर्वेषामेते सामान्यलक्षणाः ॥ गुणांस्तथावद्धर्मांश्च विप्रादीनामिमाञ्छृणु ॥ ३८ ॥ क्षात्रं कर्म द्विजस्योक्तं वैश्यं कर्म तथा पदि ॥ राजन्यस्य च वैश्योक्तं शूद्रकर्म न चैतयोः ॥ ३९ ॥ सामर्थ्ये सति तत्त्याज्यमुभाभ्यामपि पार्थिव ॥ तदेवापदि कर्त्तव्यं न कुर्यात्क र्मसंकरम् ॥ ४० ॥ इत्येते कथिता राजन्वर्णधर्मा मया तव ॥ धर्मानाश्रमिणां सम्यग्ब्रुवतो मे निशामय ॥ ४१ ॥ इति श्रीविष्णुमहापुराणे तृतीयांशेऽष्टमोध्यायः ॥ ८ ॥ ॥ और्व उवाच ॥ बालः कृतोपनयनो वेदाहरणतत्परः ॥ गुरुगेहे वसेद्भूप ब्रह्मचारी समाहितः ॥ १ ॥ शौचाचारव्रतं तत्र कार्य्यं शुश्रूषणं गुरोः ॥ व्रतानि चरता ग्राह्यो वेदश्च कृतबुद्धिना ॥ २ ॥ उभे संध्ये रविं भूप तथैवाग्निं समाहितः ॥ उपतिष्ठेत्तदा कुर्य्याद्गुरोरप्यभिवादनम् ॥ ३ ॥ स्थिते तिष्ठेद्व्रजेद्याते नीचैरासीत चासति ॥ शिष्यो गुरोर्नृपश्रेष्ठ प्रतिकूलं न संचरेत् ॥ ४ ॥ तेनैवोक्तं पठेद्वेदं नान्यचित्तः पुरस्स्थितः ॥ अनुज्ञातश्च भिक्षान्नमश्नीयाद्गुरुणा ततः ॥ ५ ॥ अवगाहेदपः पूर्वमाचार्य्येणावगाहितः ॥ समिज्जलादिकं चास्य काल्यं काल्यमुपानयेत् ॥६॥ गृहीतग्राह्यवेदश्च ततोनुज्ञामवाप्य च ॥ गार्हस्थ्यमाविशेत्प्राज्ञो निष्पन्नगुरुनिष्कृतिः ॥ ७ ॥

आश्रमाणामिति ॥ सर्वेषां वर्णानां साधारणाः ॥ ३८ ॥ क्षात्रमिति ॥ आपदि तु ब्राह्मणस्य क्षात्रं कर्मोक्तम् । राजन्यस्य वैश्यं कर्म । शूद्रं कर्म वैश्यस्योक्तम् । उभयोर्ब्राह्मणराजन्ययोः न चोक्तम् ॥ ३९ ॥ सामर्थ्य इति ॥ उभाभ्यां ब्राह्मणराजन्याभ्यां सामर्थ्ये सति शक्तौ सत्यां तदापत्कर्म त्याज्यं शक्तस्य अनुकल्पाश्रयो अशक्तस्य मुख्यकल्पनिबंधश्च संकरः वृत्त्योर्व्यतिकरो वा ॥ ४० ॥ ४१ ॥ इति श्रीविष्णुचित्तीये विष्णुमहापुराणव्याख्याने तृतीयांशे अष्टमोऽध्यायः ॥ ८ ॥ ॥ १ ॥ शौचाचार इति ॥ व्रतानि प्राजापत्यादीनि मधुमांसादिवर्जनादि च । कृतबुद्धिना अवहितबुद्धिना ॥ २ ॥ ३ ॥ स्थित इति ॥ आसति आसीने गुरौ ॥ ४ ॥ ५ ॥ अवगाहेदिति ॥ काल्यं प्रातः ॥ ६ ॥ गृहीतेति ॥ गृहीतग्राह्यवेदः अर्थज्ञानपर्यंतं गृहीतस्वशाखः 'स्वाध्यायोऽध्येतव्यः' इति " स्थाणुरयं भारवहः किलाभूत्, अधीत्य वेदं न विजानाति योर्थम्, योर्थज्ञ इह सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा " इति श्रुतेः । गुरोर्निष्कृतिरत्र दक्षिणा ॥ ७ ॥

॥ ३८ ॥ क्षात्रमिति ॥ शौद्रं कर्म न चैतयोरिति अनेन वैश्यस्य तदभ्यनुज्ञातमिति गम्यते । शूद्रस्यापद्धर्माः प्रागेवोक्ताः "क्रयविक्रयजैर्वापि धनैः कारूद्भवेन च" इति ॥ ३९ ॥ ४० ॥ ४१ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां तृतीयांशेष्टमोऽध्यायः ॥ ८ ॥ ॥ १ ॥ शौचाचारव्रतेति "प्राजापत्यं तथा सौम्यमाग्नेयं वैश्वदैविकम्" इत्येवं प्रोक्तानि वेदव्रतानि । मधुमांसवर्जनादीनि चरता वेदो ग्राह्यः ॥ २ ॥ ३ ॥ स्थित इति ॥ आसति आसीने गुरौ ॥ ४ ॥ तेनेति ॥ तेनैवोक्तः पठेत् । न तु शीघ्रमध्यापनाय गुरुं नियुंजीत ॥ ५ ॥ अवगाहेदिति ॥ काल्यं काल्यं प्रातः प्रातः तत्तत्कालोचितमिति वा ॥६॥ गृहीतेति ॥ निष्पन्नगुरुनिष्कृतिः दत्तगुरुदक्षिणः ॥ ७ ॥

विधिनावाप्तदारस्तु धनं प्राप्य स्वकर्मणा ॥ गृहस्थकार्य्यमखिलं कुर्य्याद्भूपाल शक्तितः ॥ ८ ॥ निवापेन पितॄनर्चन्यज्ञैर्देवांस्तथातिथीन् ॥ अन्नैर्मुनींश्च स्वाध्यायैरपत्येन प्रजापतिम् ॥९॥ भूतानि बलिभिश्चैव वात्सल्येनाखिलं जगत् ॥ प्राप्नोति लोकान्पुरुषो निजकर्मसमार्जितान् ॥ ॥१०॥ भिक्षाभुजश्च ये केचित्परिव्राड्ब्रह्मचारिणः ॥ तेप्यत्रैव प्रतिष्ठंते गार्हस्थ्यं तेन वै परम् ॥११॥ वेदाहरणकार्य्याय तीर्थस्नानाय च प्रभो ॥ अटंति वसुधां विप्राः पृथिवीदर्शनाय च ॥ १२ ॥ अनिकेता ह्यनाहारा यत्र सायंगृहाश्च ये ॥ तेषां गृहस्थः सर्वेषां प्रतिष्ठा योनिरेव च ॥ ॥ १३ ॥ तेषां स्वागतदानादिवक्तव्यं मधुरं नृप ॥ गृहागतानां दद्याच्च शयनासनभोजनम् ॥ १४ ॥ अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्त्तते ॥ स दत्त्वा दुष्कृतं तस्मै पुण्यमादाय गच्छति ॥ १५ ॥ अवज्ञानमहंकारो दंभश्चैव गृहे सतः ॥ परितापोपघातौ च पारुष्यं च न शस्यते ॥ १६ ॥ यस्तु सम्यक्करोत्येवं गृहस्थः परमं विधिम् ॥ सर्वबंधविनिर्मुक्तो लोकानाप्नोत्यनुत्तमान् ॥ १७ ॥ वयःपरिणतो राजन्कृतकृत्यो गृहाश्रमी ॥ पुत्रेषु भार्यां निक्षिप्य वनं गच्छेत्सहैव वा ॥ १८ ॥ पर्णमूलफलाहारः केशश्मश्रुजटाधरः ॥ भूमिशायी भवेत्तत्र मुनिस्सर्वातिथिर्नृप ॥ १९ ॥ चर्मकाशकुशैः कुर्य्यात्परिधानोत्तरीयके ॥ तद्वत्त्रिषवणं स्नानं शस्तमस्य नरेश्वर ॥ २० ॥ देवताभ्यर्चनं होमस्सर्वाभ्यागतपूजनम् ॥ भिक्षाबलिप्रदानं च शस्तमस्य नरेश्वर ॥ २१ ॥

विधिनेति ॥ विधिना स्वगृह्योक्तप्रकारेण स्वकर्मणा याजनादिवृत्त्या ॥८॥ निवापेनेति ॥ निवापः पितृदानम् ॥९॥ भूतानीति ॥ निजकर्मसमार्जितान् स्वीयकर्मसाधितान् प्राजापत्यादीन् "सर्वे एते पुण्यलोका भवन्ति" इति श्रुतौ "य एतानव्यग्रो यथोपदेशं कुरुते नित्यः स्वर्गः पुष्टश्च" इति स्मृतौ च । नित्यानां प्रत्यवायव्यतिरेके फलान्तरस्य चोक्तेः ॥ १० ॥ ११ ॥ १२ ॥ अनिकेता इति ॥ यत्र सायं स्यात् तत्रैव गृहं स्थितिर्येषां ते ज्ञानिनः। प्रतिष्ठा आश्रयः योनिः माता अन्नादिना देहपोषकत्वात् ॥ १३ ॥ १४ ॥ १५ ॥ अतिथिं प्रति अवज्ञानं न कार्य्यमित्याह—अवज्ञानमित्यादि ॥ परितापो दानानुशयः उपघातस्ताडनादिः ॥ १६ ॥ यस्त्विति ॥ तत्तद्वर्णोक्तनित्याकरणजप्रत्यवायरूपात् तत्तल्लोकप्राप्तिप्रतिबंधान्मुक्तः ॥ १७ ॥ १८ ॥ पर्णेति ॥ अत्र केशशब्दो लोमवचनः ॥ १९ ॥ २० ॥ देवतेति ॥ नास्त्या

विधिनेति ॥ स्वकर्मणा अध्यापनादिना ॥ ८ ॥ निवापेनेति ॥ निवापेन पिंडदानादिना ॥ ९ ॥ १० ॥ भिक्षाभुज इति ॥ प्रतिष्ठंते प्रतिष्ठां यांति ॥ ११ ॥ १२ ॥ अनिकेता इति ॥ अनिकेताः अगृहाः अनाहाराः अपरिग्रहाः । यत्र सायं तत्र गृहं निवासो येषां ते योगिनः । प्रतिष्ठा आश्रयः योनिः स्वमाता सस्नेहमन्नपानादिना पोषकत्वात् ॥ १३ ॥ तेषामिति ॥ तेषां गृहागतानां स्वागतदानादिस्वागतोक्तिपूर्वकं वक्तव्यं मधुर प्रियम् ॥ १४ ॥ १५ ॥ अवज्ञानमिति ॥ परितापः वृथा दत्त इति अनुतापः । उपघातः प्रतिघातः ताडनं वा । पारुष्यं निष्ठुरता ॥ १६ ॥ यस्त्विति ॥ सर्वैर्बंधैः पापैर्विमुक्तस्सन् ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥

वन्यस्नेहेन गात्राणामभ्यंगश्चास्य शस्यते ॥ तपश्च तस्य राजेंद्र शीतोष्णादिसहिष्णुता ॥ २२ ॥ यस्त्वेतां नियतश्चर्यां वानप्रस्थश्चरेन्मुनिः ॥ स दहत्यग्निवद्दोषाञ्जयेल्लोकांश्च शाश्वतान् ॥ २३ ॥ चतुर्थश्चाश्रमो भिक्षोः प्रोच्यते यो मनीषिभिः ॥ तस्य स्वरूपं गदतो मम श्रोतुं नृपार्हसि ॥ २४ ॥ पुत्रद्रव्यकलत्रेषु त्यक्तस्नेहो नराधिप ॥ चतुर्थमाश्रमस्थानं गच्छेन्निर्धूतमत्सरः ॥ २५ ॥ त्रैवर्गिकांस्त्यजेत्सर्वानारंभानवनीपते ॥ मित्रादिषु समो मैत्रस्समस्तेष्वेव जंतुषु ॥ २६ ॥ जरायुजांडजादीनां वाङ्मनःकायकर्मभिः ॥ युक्तः कुर्वीत न द्रोहं सर्वसंगांश्च वर्जयेत् ॥ २७ ॥ एकरात्रस्थितिर्ग्रामे पंचरात्रस्थितिः पुरे ॥ तथा तिष्ठेद्यथाप्रीतिर्द्वेषो वा नास्य जायते ॥ २८ ॥ प्राणयात्रानिमित्तं च व्यंगारे भुक्तवज्जने ॥ काले प्रशस्तवर्णानां भिक्षार्थं पर्यटेद्गृहान् ॥ २९ ॥ कामः क्रोधस्तथा दर्पमोहलोभादयश्च ये ॥ तांस्तु सर्वान्परित्यज्य परिव्राण्निर्ममो भवेत् ॥३०॥ अभयं सर्वभूतेभ्यो दत्त्वा यश्चरते मुनिः ॥ तस्यापि सर्वभूतेभ्यो न भयं विद्यते क्वचित् ॥ ३१ ॥ कृत्वाग्निहोत्रं स्वशरीरसंस्थं शारीरमग्निं स्वमुखे जुहोति ॥ विप्रस्तु भैक्ष्योपहितैर्हविर्भिश्चिताग्निकानां व्रजति स्म लोकान् ॥ ३२ ॥

गतस्य तिथिः एकदिनमपीत्यतिथिः धर्मार्थार्थीनूतनोतिथिः अज्ञातपूर्वः अन्येभ्यागताः ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ त्रैवर्गिकानिति ॥ त्रैवर्गिकान् धर्मार्थकामसाधनभूतान् आरंभान् लौकिकवैदिकोद्योगान् त्यक्त्वा मुक्त्यर्थं ब्रह्मज्ञाने निष्ठा कार्या "ब्रह्मसंस्थोमृतत्वमेति" इति श्रुतेः । संन्यासस्य च मोक्षमार्गत्वात्तदशक्तस्य च जपतीर्थयात्रादि चानुमतं "प्रणवात्मको वेदः प्रणवं ध्यायेदिति प्रणवो ब्रह्मभूयाय कल्पत" इति च ॥ २६ ॥ २७॥ एकेति ॥ "अष्टौ मासान्विहारास्तु यतेरुक्ता मनीषिभिः । वाराणसीं प्रविष्टस्य विद्यते न हि संचरः ॥ " इति वचनाच्च ॥ २८ ॥ प्राणयात्रेति ॥ प्रशस्तवर्णाः अभिशस्तपतितवर्जिताः ॥ २९ ॥ ३० ॥ ॥ ३१ ॥ कृत्वेति ॥ प्राजापत्येष्ट्यनंतरमग्निहोत्रं स्वशरीरसंस्थं कृत्वा आत्मन्यारोप्येत्यर्थः । शारीरमग्निं जाठराग्निभूतं प्राणादियुक्तम् । तमुद्दिश्य मुखे कुंडस्थानीये अग्निहोत्रबुद्ध्या भिक्षान्नरूपैः हविर्भिर्यो जुहोति "प्राणोग्निरेवेदमत्ति चान्नं नाहं भोक्ता" इत्यनुसंधाय "स चिताग्नीनाम् अग्निचितान् लोकान् व्रजति" तृतीयान्तपाठे चिन्ताग्निना ज्ञानाग्निना दर्शितान् लोकान् व्रजति । अयमविद्वद्विषयश्लोकः उत्तरस्तु ब्रह्मविद्विषयः ॥ ३२ ॥

॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ प्राणयात्रेति ॥ भुक्तवंतो जना यस्मिन्काले प्रशस्ताः श्रेष्ठास्त्रयो वर्णास्तेषाम् ॥ २९ ॥ ३० ॥ ३१ ॥ कृत्वेति ॥ स्वशरीरसंस्थं प्राणाग्निहोत्रं कृत्वा चिताग्नीनां लोकान्व्रजति । तत्करणप्रकारमाह–शारीरमग्निं प्राणादिसहितमुद्दिश्य स्वमुखे कुंडस्थानीये भिक्षाप्राप्तैर्हविर्भिर्जुहोति । प्राणादिसहितो जाठराग्निरेव भोक्ता नाहमित्यनुसंधानेन यो विप्रो भुंक्ते सोऽग्निचिताँल्लोकान्व्रजति उपासनाफलोक्तेः । चिताग्निना इति पाठे चिंतया एवमनुसंधानेन रूपेण ज्ञानेन अग्निस्थानीयेन दर्शिताँल्लोकान्व्रजतीत्यर्थः ॥ ३२ ॥

मोक्षाश्रमं यश्चरते यथोक्तं शुचिस्सुखं कल्पितबुद्धियुक्तः ॥ अनिंधनं ज्योतिरिव प्रशांतस्स ब्रह्मलोकं श्रयते द्विजातिः ॥ ३३ ॥ इति श्रीविष्णु महापुराणे तृतीयांशे नवमोऽध्यायः ॥९॥ ॥ सगर उवाच ॥ कथितं चातुराश्रम्यं चातुर्वर्ण्यक्रियास्तथा॥पुंसः क्रियामहं श्रोतुमिच्छामि द्विज सत्तम ॥ १ ॥ नित्यनैमित्तिकाः काम्याः क्रियाः पुंसामशेषतः ॥ समाख्याहि भृगुश्रेष्ठ सर्वज्ञो ह्यसि मे मतः ॥ २ ॥ और्व उवाच ॥ यदेतदुक्तं भवता नित्यनैमित्तिकाश्रयम् ॥ तदहं कथयिष्यामि शृणुष्वैकमना मम ॥३॥ जातस्य जातकर्मादिक्रियाकांडमशेषतः ॥ पुत्रस्य कुर्वीत पिता श्राद्धं चाभ्युदयात्मकम् ॥ ४ ॥ युग्मांस्तु प्राङ्मुखान्विप्रान्भोजयेन्मनुजेश्वर ॥ यथा तृप्तिस्तथा कुर्य्याद्दैवं पित्र्यं द्विजन्मनाम् ॥ ५ ॥ दध्ना युक्तैस्सबदरैर्मिश्रान्पिंडान्मुदा युतः ॥ नांदीमुखेभ्यस्तीर्थेन दद्याद्दैवेन पार्थिव ॥ ६ ॥ प्राजापत्येन वा सर्वमुपचारं प्रदक्षिणम् ॥ कुर्वीत तत्तथाशेषवृद्धिकालेषु भूपते ॥ ७ ॥

मोक्षाश्रममिति ॥ मोक्षाश्रमं पारिव्राज्यं सुसंकल्पितबुद्धियुक्तः सम्यक् संपादितबुद्धियोगयुक्तः । लोक्यत इति लोकः ब्रह्मैवलोको ब्रह्मलोकः ब्रह्मणो लोक इति वा विग्रहः । द्विजातिरिति विप्रस्यैव संन्यासे अधिकारोक्तिः । "गतिस्तुर्याश्रमे नास्ति बाहुजोरूजयोः क्वचित् । तुर्याश्रमे गतिः प्रोक्ता मुखजानां स्वयंभुवा" इति दत्तात्रेयोक्तेः ॥ ३३ ॥ इति श्रीविष्णुचित्तीये विष्णुपुराणव्याख्याने तृतीयांशे नवमोऽध्यायः ॥ ९ ॥ ॥ कथितमिति ॥ पुंसः क्रियां षोडश संस्काररूपां गर्भाधानपुंसवनसीमंतोन्नयनविष्णुबलिजातकर्मनामकरणोपनिष्क्रमणान्नप्राशनचूडोपनयनवेदव्रतचतुष्टयसमावर्त्तनविवाहाः षोडशसंस्काराः ॥ १ ॥ २ ॥ यदेतदिति ॥ नित्यनैमित्तिकाश्रयमिति काम्यस्याप्युपलक्षणम् ॥ ३ ॥ जातस्येति ॥ जातकर्मग्रहणमाधानपुंसवनादीनामप्युपलक्षणम् ॥ ४ ॥ ५ ॥ दध्नेति ॥ नांदी उत्सवः तत्प्रधाना नांदीमुखाः । दैवेन कराग्रेण ॥ ६ ॥ प्राजापत्येनेति ॥ प्राजापत्येन कनिष्ठिकायां मूलेन तदुक्तम् "कनिष्ठदेशिन्यंगुष्ठमूलान्यग्रं

मोक्षाश्रममिति ॥ ब्रह्मलोकं ब्रह्मस्वरूपं लोकं व्रजतीत्युपासनफलोक्तेः । द्विजातिरिति पूर्वश्लोकोक्तस्य विप्रस्यैव निर्देशः "गतिस्तुर्याश्रमे नास्ति बाहुजोरूजयोः क्वचित् ॥ तुर्याश्रमगतिः प्रोक्ता मुखजानां स्वयंभुवा" इति दत्तात्रेयोक्तेः ॥ ३३ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां तृतीयांशे नवमोध्यायः ॥ ९ ॥ ॥ कथितमिति ॥ चत्वार आश्रमा एव चातुराश्रम्यं तद्धर्मः कथित इत्यर्थः । पुंसः क्रियां षोडशसंस्काररूपाम् ॥ १ ॥ २ ॥ ३ ॥ जातस्येति ॥ जातस्य पुत्रस्य जातकर्मादिक्रियाकांडं च जन्मनः प्राचीनं गर्भाधानपुंसवनानलोभनविष्णुबलिसीमंतोन्नयनादिक्रिया समूहं च पिता कुर्वीतेत्यर्थः ॥ तदुक्तं "गर्भाधानमृतौ पुंसः सवनं स्पंदनात्पुरा" इति ॥ ४ ॥ ५ ॥ दध्नेति ॥ दैवेन तीर्थेन कराग्रेण ॥ ६ ॥ प्राजापत्येनेति ॥. प्राजापत्येन कनिष्ठिकाया मूलेन तदुक्तं

ततश्च नाम कुर्वीत पितैव दशमेहनि ॥ देवपूर्वं नराख्यं हि शर्मवर्मादिसंयुतम् ॥८॥ शर्मेति ब्राह्मणस्योक्तं वर्मेति क्षत्रसंश्रयम् ॥ गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः ॥९॥ नार्थहीनं न चाशस्तं नापशब्दयुतं तथा ॥ नामंगल्यं जुगुप्साकं नाम कुर्यात्समाक्षरम् ॥ १० ॥ नातिदीर्घं नातिह्रस्वं नातिगुर्वक्षरान्वितम् ॥ सुखोच्चार्यं तु तन्नाम कुर्याद्यत्प्रणवाक्षरम् ॥ ११ ॥ ततोऽनंतरसंस्कारसंस्कृतो गुरुवेश्मनि ॥ यथोक्तविधिमाश्रित्य कुर्याद्विद्यापरिग्रहम् ॥ १२ ॥ गृहीतविद्यो गुरवे दत्त्वा च गुरुदक्षिणाम् ॥ गार्हस्थ्यमिच्छन्भूपाल कुर्याद्दारपरिग्रहम् ॥ १३ ॥ ब्रह्मचर्येण वा कालं कुर्यात्संकल्पपूर्वकम् ॥ गुरोश्शुश्रूषणं कुर्यात्तत्पुत्रादेरथापि वा ॥ १४ ॥ वैखानसो वापि भवेत्परिव्राडथ वेच्छया ॥ पूर्वसंकल्पितं यादृक् तादृक्कुर्यान्नराधिप ॥ १५ ॥

करस्य तु । प्रजापतिपितृब्रह्मदैवतीर्थान्यनुक्रमात्" इति मनुः । वृद्धिकालाः कन्यापुत्रविवाहेत्यत्र वक्ष्यमाणाः ॥ ७ ॥ तत इति ॥ दशमेहनीति स्मृत्योक्तकालोपलक्षणम् । "अहन्येकादशे नाम, नामधेयं दशम्यां च केचिदिच्छन्ति पार्थिव । द्वादश्यामथ वा रात्र्यां मासे पूर्णे तथापरे" इति च स्मृतेः । देवपूर्वं 'कुलदेवतानामसंबद्धं नाम कुर्यात्' इति शंखोक्तेः । नराख्यं पुंवाचि शर्मवर्मगुप्तदासयुक्तं यन्नाम यथा—विष्णुशर्मा इंद्रवर्मा चंद्रगुप्तः हारिदास इति देवशब्दः ऋषि पित्रादि स्वपूज्यवाची वा ॥ ८ ॥ ९ ॥ नार्थहीनमिति ॥ अशस्तमश्लीलासमाक्षरं व्रीडाकरम् ॥ १० ॥ नेति ॥ नातिदीर्घं घोषाद्यक्षरं द्व्यक्षरं चतुरक्षरं वा प्रवणाक्षरं सुसंधिलघूत्तरम् ॥११॥ तत इति ॥ अनंतराः उपनिष्क्रमणाद्युपनयनान्ताः ॥१२॥ गृहीतेति ॥ गुरुदक्षिणां गुरुत्वनिमित्तां दक्षिणां उपकुर्वाणस्तु गृहीतविद्यः समावृत्य गृही स्यात् वैखानसो यतिर्वा स्यात् ॥१३॥ ब्रह्मचर्य्येणेति॥नैष्ठिकः सन् ब्रह्मचर्याश्रमेण वा यावदायुः कालं नयेत् ॥१४॥ वैखानस इति॥किं च यावज्जीवमयमेव

"कनिष्ठादेशिन्यंगुष्ठमूलान्यग्रं करस्य च । प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात्" इति । अशेषेषु वृद्धिकालेषु कन्यापुत्रविवाहेष्विति त्रयोदशाध्याये वक्ष्यमाणेषु ॥ ७ ॥ ततश्चेति ॥ दशमेहनीत्यन्येषामपि कालानामुपलक्षणं तदाहुः "नामधेयं दशम्यां च केचिदिच्छंति पार्थिव ॥ द्वादश्यामथ वा रात्र्यां मासे पूर्णे तथापरे" इत्यादि । देवपूर्वं 'कुलदेवतानामपूर्वकं कुलदेवतानामसंबंधंनाम कुर्याद्' इति शंखस्मृतेः । यद्वा देव इव स्वपूज्यः पित्रादिस्तन्नामपूर्वकमित्यर्थः । नराख्यं पुरुषवाचकं प्रति शर्मवर्मादिसंयुक्तं च सोमवर्मा इंद्रगुप्तः शिवदास इत्यादि ॥ ८ ॥ ९ ॥ नार्थहीनमिति ॥ अशस्तं देशभाषायां लज्जावहं समाक्षरं कुर्यात् ॥ १० ॥ नातिदीर्घमिति ॥ प्रवणाक्षरं लघूत्तराक्षरं कुर्यात् ॥ ११ ॥ तत इति ॥ अनंतरसंस्कारैर्निष्क्रमणान्नप्राशनचौलोपनयनाख्यैस्संस्कृतस्सन् यथोक्तं गुरुशुश्रूषादिलक्षणं विधिमाश्रित्य ॥ १२ ॥ १३ ॥ ब्रह्मचर्येणेति ॥ गार्हस्थ्यानिच्छायां ब्रह्मचर्येण कालं नयेदिति ॥ १४ ॥ वैखानस इति ॥ वैखानसो वानप्रस्थः । इच्छया आश्रमादाश्रमांतरं गच्छेत् यावज्जीवं ममायमेवाश्रम इति यदि पूर्वं संकल्पितं तर्हि तत्रैव तिष्ठेत् । एतच्च

वर्षैरेकगुणां भार्य्यामुद्वहेत्त्रिगुणस्स्वयम् ॥ नाति केशामकेशां वा नातिकृष्णां न पिंगलाम् ॥ १६ ॥ निसर्गतोधिकांगां वा न्यूनांगामपि नोद्वहेत् ॥ नाविशुद्धां सरोमां वाकुलजां वापि रोगिणीम् ॥ १७ ॥ न दुष्टां दुष्टवाक्यां वा व्यंगिनीं पितृमातृतः ॥ न श्मश्रुव्यंजनवतीं न चैव पुरुषाकृतिम् ॥ १८ ॥ न घर्घरस्वरां क्षामां तथा काकस्वरां न च ॥ नानिबंधेक्षणां तद्वद्वृत्ताक्षीं नोद्वहेद्बुधः ॥ १९ ॥ यस्याश्च रोमशे जंघे गुल्फौ यस्यास्तथोन्नतौ ॥ गंडयोः कूपरौ यस्या हसंत्यास्तां न चोद्वहेत् ॥ २० ॥ नातिरूक्षच्छविं पांडुकरजामरुणेक्षणाम् ॥ आपीन हस्तपादां च नकन्यामुद्वहेद्बुधः ॥ २१ ॥ न वामनां नातिदीर्घां नोद्वहेत्संहतभ्रुवम् ॥ न चातिच्छिद्रदशनां न करालमुखीं नरः ॥ २२ ॥ पंचमीं मातृपक्षाच्च पितृपक्षाच्च सप्तमीम् ॥ गृहस्थश्चोद्वहेत्कन्यां न्यायेन विधिना नृप ॥ २३ ॥

ममाश्रम इति पूर्वं संकल्पितश्चेत्तत्रैव तिष्ठेत् न त्वाश्रमांतरं गच्छेत् तत्रापि विरक्तौ सत्यां यतिः स्यादेव न त्वाश्रमांतरगामी "यदहरेव विरज्येत्तदहरेव प्रव्रजेत्" इति श्रुतेः ॥ १५ ॥ वर्षैरिति ॥ एकगुणामिति यवीयसीत्वोपलक्षणम् । "अष्टवर्षा भवेत्कन्या नववर्षा तु रोहिणी । दशवर्षा भवेद्गौरी अत ऊर्ध्वं रजस्वला" इति कन्ययाः दशवर्षात्परमविवाह्यत्वस्मरणात् । 'असपिंडां यवीयसीम्' इति स्मृतेश्च ॥ १६ ॥ १७ ॥ न दुष्टामिति ॥ व्यंगिनीमिति व्यंगिनीं निंद्याम् । व्यंग्यमातापितृजां व्यंगाख्यत्वग्दोषमातापितृजां वा श्मश्रुरेव व्यंजनं पुंस्त्वचिह्नम् ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ न वामनामिति ॥ करालं दंतुरम् ॥ २२ ॥ पंचमीमिति ॥ स्वमातुः पितामहात् स्वस्य पंचमस्य संतानांतरजा तावत्संख्यजनव्यवहिता कन्या मातृपक्षात्पंचमी तथा वरप्रपितामहस्य कूटस्थस्य सप्तमस्य संतानां

दृढवैराग्याभावे द्रष्टव्यं दृढवैराग्ये तु भवेदेव "यदहरेव विरजेत्तदहरेव प्रव्रजेत्" इति श्रुतेः ॥१५॥ वर्षैरिति । वर्षैरेकगुणामिति न्यूनत्वमात्रोपलक्षणम् अन्यथा तु सांगवेदाध्ययनादिव्यासक्तस्य त्रिंशद्वर्षादूर्ध्वं बिवाहो यदि भवेत् "दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला" इति निंदितरजस्वलोद्वाहापत्तेः ॥ १६ ॥ निसर्गत इति ॥ अविशुद्धां शूद्रादिसंवर्धिताम् अकुलजां दुष्कुलजाम् ॥ १७ ॥ नेति ॥ दुष्टवाक्यां पापादिविरुद्धबहुभाषिणीं पितृतो मातृतो वा व्यंगिनीं व्यंगमत्र कुष्ठादि कुष्ठीं मातापितृजामित्यर्थः । श्मश्रुव्यंजनवतीं श्मश्रूणां व्यंजनं पुंस्त्वाभिव्यंजकं चिह्नं तद्वतीम् ॥ १८ ॥ नेति ॥ अनिबंधेक्षणां घनैः पक्ष्मभिरसंवृतनेत्रां वृत्ताक्षीं वर्तुलनेत्राम् ॥१९॥२०॥२१॥ नेति ॥ संहतभ्रुवं संहते संलग्ने भ्रुवौ यस्यास्तां करालमुखीं दंतुरास्याम् ॥ २२ ॥ पंचमीति ॥ पंचमीति यतस्सुतानां शाखाभेदस्स कूटस्थः तत्र मातृपक्षात्परं मातुः प्रपितामहात्कूटस्थात्तत्सोदरप्रभृतिशाखांतरे जनचतुष्टयमतीत्य पंचमीं तथा वरप्रपितामहाच्छाखांतरे तावज्जनव्यवधानवर्तीं पितृपक्षात्सप्तमीमुद्वहेत् । एवं च सति "पंचमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा" इति याज्ञवल्क्यवचनं कूटस्थप्रभृतिगणनेन समानार्थमेव । यत्तु पैठीनसिवचनं तन्मातृतः पंच पितृतः सप्त पुरुषानतीत्योद्वहेत् । यच्च सर्वपुराणप्रसिद्धं कृष्णार्जुनप्रद्युम्नानिरुद्धादीनां मातुलपितृस्वसृसुतोद्वहनं तद्देशभेदे सदाचारप्राप्तं तदपि सदा

ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः ॥ गांधर्वराक्षसौ चान्यौ पैशाचश्चाष्टमो मतः ॥ २४ ॥ एतेषां यस्य यो धर्मो वर्णस्योक्तो महर्षिभिः ॥ कुर्वीत दारग्रहणं तेनान्यं परिवर्जयेत् ॥ २५ ॥ सधर्मचारिणीं प्राप्य गार्हस्थ्यं सहितस्तया ॥ समुद्वहेद्ददात्येतत्सम्यगूढं महाफलम् ॥ २६ ॥ इति श्रीविष्णुमहापुराणे तृतीयांशे दशमोऽध्यायः ॥ १० ॥ ॥ सगर उवाच ॥ गृहस्थस्य सदाचारं श्रोतुमिच्छाम्यहं मुने ॥ लोकादस्मात्परस्माच्च यमातिष्ठन्न हीयते ॥ १ ॥ और्व उवाच ॥ श्रूयतां पृथिवीपाल सदाचारस्य लक्षणम् ॥ सदाचारवता पुंसा जितौ लोकावुभावपि ॥ २ ॥ साधवः क्षीणदोषास्तु सच्छब्दः साधुवाचकः ॥ तेषामाचरणं यस्तु सदाचारस्स उच्यते ॥ ३ ॥ सप्तर्षयोथ मनवः प्रजानां पतयस्तथा ॥ सदाचारस्य वक्तारः कर्तारश्च महीपते ॥ ४ ॥ ब्राह्मे मुहूर्त्ते चोत्थाय मनसा मतिमान्नृप ॥ प्रबुद्धश्चिंतयेद्धर्ममर्थं चाप्यविरोधिनम् ॥ ५ ॥ अपीडया तयोः काममुभयोरपि चिंतयेत् ॥ दृष्टादृष्टविनाशाय त्रिवर्गे समदर्शिना ॥ ६ ॥ परित्यजेदर्थकामौ धर्मपीडाकरौ नृप ॥ धर्ममप्यसुखोदर्कं लोकविद्विष्टमेव च ॥ ७ ॥ ततः काल्यं समुत्थाय कुर्य्यान्मूत्रं नरेश्वर ॥ ८ ॥

तरजाता तावत्संख्यजनव्यवहिता कन्या पितृपक्षात्सप्तमी । इदं च पंचमीसप्तमीभ्यामर्वाङ् निषेधपरम् । तयोर्न विवाहविधिपरम् । "पंचमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा" इति स्मृतेः ॥ २३ ॥ ब्राह्म इति ॥ ब्राह्मादिविवाहानां स्वरूपं स्मृतिषु द्रष्टव्यम् ॥ २४ ॥ २५ ॥ २६ ॥ इति श्रीविष्णुचित्तीये विष्णुमहापुराणव्याख्याने तृतीयांशे दशमोऽध्यायः ॥ १० ॥ छ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ब्राह्म इति ॥ ब्राह्मस्सूर्य्योदयात्प्राक् तृतीयो मुहूर्त्तः ॥ ५ ॥ ६ ॥ ७ ॥ तत इति ॥ मैत्रं

चारकल्प्यश्रुतिमूलत्वात् मातुलस्येव यो भागस्ते पैतृष्वसेयो वपामिवेत्येवमादिवैदिकालिंगमूलत्वाच्च यथादेशाचारं व्यवस्थापनीयम् । "देशजातिकुलधर्माश्चात्मीयैरविरुद्धाः प्रमाणम्" इति गौतमादिस्मृतेः । न च स्मृतिविरोधः । तासां सगोत्रमातुलविषयत्वात् तदाह शातातपः "मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च । समानप्रवरां चैव त्यक्त्वा चांद्रायणं चरेत्" इति । मातृगोत्रां मातुलसुतां विवाह्य चांद्रायणं चरेदिति । एवमादिषु मातृसगोत्रामिति विशेषणात् यत्र पुत्रिकाकरणविषये मातृसगोत्रो मातुलः तत्सुतैव विवाह्येति गम्यते । अन्यत्र तु "एकत्वं सा गता भर्तुः पिंडे गोत्रे च सूतके । स्वगोत्राद्भ्रिश्यते नारी विवाहोत्सव एव च" इत्यादि मातृस्वभर्त्रैक्ये सति मातुलसुतायाः मातृसगोत्रत्वाभावाद्विवाहो न विरुध्यत इत्यवादि वैदिकैः । प्रकृतमनुसरामः ॥ २३ ॥ न्यायेन धर्मविवाहेन तमेव दर्शयितुम् अष्टौ विवाहानाह—ब्राह्म इति ॥ स्मृतिश्च "ब्राह्मो विवाह आहूय दीयते शक्त्यलंकृता । यज्ञस्य ऋत्विजे दैव आदायार्षस्तु गोद्वयम् ॥ सहोभौ चरतां धर्मं प्राजापत्यो विधिस्स्मृतः । आसुरो द्रविणादानाद्गांधर्वस्समयान्वितः ॥ राक्षसो युद्धहरणात्पैशाचः कन्यकाछलात् ॥" इति ॥ २४ ॥ एतेषामिति ॥ तदाह देवलः "आद्या विवाहाश्चत्वारो धर्माः श्रेयःप्रदायकाः । अशुल्का ब्राह्मणार्हाश्च क्षालयंति द्वयोर्मलम्" इति "गांधर्वराक्षसौ चैव ह्यासुरो वैश्यशूद्रयोः । स पापिष्ठो विवाहानां पैशाचः कथितोऽष्टमः ॥" इति ॥ २५ ॥ सधर्मचारिणीमिति ॥ समुद्वहेद्बिभृयात् । ऊढं धृतं सत् ॥ २६ ॥ इति श्रीवरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां तृतीयांशे दशमोध्यायः ॥ १० ॥ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ब्राह्म इति ॥ ब्राह्मे सूर्योदयात् प्राक्तृतीये मुहूर्ते अर्थं च धर्मस्याविरोधिनम् ॥ ५ ॥ ६ ॥ परित्यजेदिति ॥ असुखोदर्कमसुखोत्तरफलम् ॥ ७ ॥ तत इति ॥ काल्यमुषसि । मैत्रं मित्राधिष्ठितपायु

नैर्ऋत्यामिषुविक्षेपमतीत्याभ्यधिकं भुवः ॥ दूरादावसथान्मूत्रं पुरीषं च विसर्जयेत् ॥ ९ ॥ पादावनेजनोच्छिष्टे प्रक्षिपेन्न गृहांगणे ॥ १० ॥ आत्मच्छायां तरुच्छायां गोसूर्य्याग्न्यनिलांस्तथा ॥ गुरुद्विजादींस्तु बुधो नाधिमेहेत्कदाचन ॥ ११ ॥ न कृष्टे सस्यमध्ये वा गोव्रजे जनसंसदि ॥ न वर्त्मनि न नद्यादितीर्थेषु पुरुषर्षभ ॥ १२ ॥ नाप्सु नैवांभसस्तीरे श्मशाने न समाचरेत् ॥ उत्सर्गं वै पुरीषस्य मूत्रस्य च विसर्जनम् ॥ १३ ॥ उदङ्मुखो दिवामूत्रं विपरीतमुखो निशि ॥ कुर्वीतानापदि प्राज्ञो मूत्रोत्सर्गं च पार्थिव ॥ १४ ॥ तृणैरास्तीर्य्य वसुधां वस्त्रप्रावृतमस्तकः ॥ तिष्ठेन्नातिचिरं तत्र नैव किंचिदुदीरयेत् ॥ १५ ॥ वल्मीकमूषिकोद्धृतां मृदं नांतर्जलां तथा ॥ शौचावशिष्टां गेहाच्च नादद्याल्लेपसंभवाम् ॥ १६ ॥ अणुप्राण्युपपन्नां च हलोत्खातां च पार्थिव ॥ परित्यजेन्मृदो ह्येतास्सकलाश्शौचकर्मणि ॥ १७ ॥ एका लिंगे गुदे तिस्रो दश वामकरे नृप ॥ हस्तद्वये च सप्त स्युर्मृदश्शौचोपपादिकाः ॥ १८ ॥ अच्छेनागंधलेपेन जलेनाबुद्बुदेन च ॥ आचामेच्च मृदं भूयस्तथा दद्यात्समाहितः ॥ १९ ॥ निष्पादितांघ्रिशौचस्तु पादावभ्युक्ष्य तैः पुनः ॥ त्रिः पिबेत्सलिलं तेन तथा द्विः परिमार्जयेत् ॥ २० ॥ शिर्षण्यानि ततः खानि मूर्द्धानं च समालभेत् ॥ बाहू नाभिं च तोयेन हृदयं चापि संस्पृशेत् ॥ २१ ॥ स्वाचांतस्तु ततः कुर्यात्पुमान्केशप्रसाधनम् ॥ आदर्शांजनमांगल्यं दूर्वाद्यालंभनानि च ॥ २२ ॥

मित्रदैवत्यं पायुकृत्यं मलोत्सर्गादिकम् ॥८॥ नैर्ऋत्यामिति ॥ नैर्ऋत्यां दिशि ग्रामात् तदसंभवे स्वावसथात् दूरे ॥९॥१०॥ आत्मच्छायामिति ॥ आत्मच्छायामित्यादि प्रतीविशेषः ॥ ११ ॥ १२ ॥ १३ ॥ उदङ्मुख इति ॥ दिवेति संध्ययोरुपलक्षणम् । "दिवासंध्यासुकर्णस्थयज्ञसूत्र उदङ्मुखः" इति स्मृतेः ॥ १४ ॥ १५ ॥ वल्मीकेति ॥ लेपसंभवां मूत्रादिलेपगताम् ॥ १६ ॥ १७ ॥ एकेति ॥ पूर्वं गंधलेपक्षयकरं शौचं कृत्वा अथैकादिसंख्यं मृच्छौचम् । अथ पादशौचमथाचमनमथ संध्यावंदनादिकमिति क्रमः ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

कृत्यं मलोत्सर्गादिकर्म ॥ ८ ॥ नैर्ऋत्यामिति ॥ ग्रामान्नैर्ऋत्यां तदसंभवे स्वगृहाद्दूरं मूत्राद्युत्सर्गं कुर्यात् ॥ ९ ॥ १० ॥ आत्मच्छायामिति ॥ गुरुद्विजातीन्प्रति तदभिमुखो न मेहीतेत्यर्थः ॥ ११ ॥ १२ ॥ १३ ॥ ॥ १४ ॥ १५ ॥ वल्मीकेति ॥ लेपसंभवां भित्तिसंभवाम् ॥ १६ ॥ अण्विति ॥ अणुभिः प्राणिभिरुपपन्नाम् ॥ १७ ॥ १८ ॥ अच्छेनेति ॥ आचामेत् शौचं कुर्यादित्यर्थः । यद्वा आचामेदित्याचमनं प्रस्तुत्य तस्य पूर्वांगमाह—मृदमिति । अन्यां मृदमादद्यात् ॥ १९ ॥ निष्पादितेति ॥ तया मृदा निष्पादितमंघ्रिशौचं येन सः तेन सलिलेन मुखं द्विः परिमार्जयेत् ॥ २० ॥ शीर्षण्यानीति ॥ शीर्षण्यानि शिरस्स्थानि खानि इंद्रियच्छिद्राणि आलभेत स्पृशेत् । अजपन्निति पाठे मौनीभूत्वेत्यर्थः । अत्र च विशेषो दक्षोक्तः "प्रक्षाल्य पादौ हस्तौ च त्रिः पिबेदंबु वीक्षितम् । संवृत्यांगुष्ठमूलेन द्विः प्रमृज्यात्ततो मुखम् ॥ संहताभिस्त्रिभिः पूर्वमास्यं तु समुपस्पृशेत् । अंगुष्ठविप्रदेशिन्या घ्राणं पश्चादनंतरम्॥अंगुष्ठानामिकाभ्यां च चक्षुःश्रोत्रे पुनःपुनः । कनिष्ठांगुष्ठतो नाभिं हृदयं तु तलेन वै॥ सर्वाभिस्तु शिरस्स्पर्शोद्बाहू चाग्रेण संस्पृशेत्" ॥२१॥ अथ प्रातस्स्नानस्य मूलका

ततस्स्ववर्णधर्मेण वृत्त्यर्थं च धनार्जनम् ॥ कुर्वीत श्रद्धासंपन्नो यजेच्च पृथिवीपते ॥२३॥ सोमसंस्था हविस्संस्थाः पाकसंस्थास्तु संस्थिताः ॥ धने यतो मनुष्याणां यतेतातो धनार्जने ॥ २४ ॥ नदीनदतटाकेषु देवखातजलेषु च ॥ नित्यक्रियार्थं स्नायीत गीरिप्रस्रवणेषु च ॥ २५ ॥ कूपेषूद्धततोयेन स्नानं कुर्वीत वा भुवि ॥ गृहेषूद्धततोयेन ह्यथवा भुव्यसंभवे ॥२६॥ शुचिवस्त्रधरः स्नातो देवर्षिपितृतर्पणम् ॥ तेषामेव हि तीर्थेन कुर्वीत सुसमाहितः ॥ २७ ॥ त्रिरपः प्रीणनार्थाय देवानामपवर्जयेत् ॥ ऋषीणां च यथान्यायं सकृच्चापि प्रजापतेः ॥ २८ ॥ पितॄणां प्रीणनार्थाय तदपः पृथिवीपते ॥ पितामहेभ्यश्च तथा प्रीणयेत्प्रपितामहान् ॥ २९ ॥ मातामहाय तत्पित्रे तत्पित्रे च समाहितः ॥ दद्यात्पैत्रेण तीर्थेन काम्यं चान्यच्छृणुष्व मे ॥ ३० ॥

॥ २३ ॥ सोमसंस्था इति ॥ सोमसंस्थादयो गौतमोक्ताः । "औपासनाष्टकपार्वणश्राद्धश्रावण्याग्रहायणीचैत्र्याश्वयुजीति सप्त पाकयज्ञसंस्थाः । अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रहायणी चातुर्मास्यादिनिरूढपशुबंधस्सौत्रामणिरिति सप्त हविर्यज्ञसंस्थाः । अग्निष्टोमोत्यग्निष्टोम उक्थ्याः षोडशी वाजपेयोतिरात्राप्तोर्याम इति सप्त सोमसंस्थाः" इति । यतः एताः संस्थाः धने संस्थिता धनायत्ता इति अतो धनार्जने यतेत ॥ २४ ॥ नदीति ॥ तटाको मनुष्यखातः । मनुष्यैरखातो द्रोण्यादिर्देवखातः ॥ ॥ २५ ॥ कूपेष्विति ॥ भुवि कूपतटाकभूमौ भुव्यसंभवे तत्र स्नातुं शक्त्यसंभवे उद्धृततोयेन गृहे स्नायात् ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥

रणभूतशौचोक्त्यैवोक्तप्रायत्वात् 'नित्योदकी भवेद्विप्रः' इति च पूर्वं संक्षेपेणोक्तत्वात्संध्योपासनहोमादीनां च सूर्योदयास्तमयप्रसंगेन प्रागेवोक्तत्वात्तदुपरितनं कर्मकांडमाह—स्नाचांतश्चेत्यादिना ॥ २२ ॥ २३ ॥ सोमसंस्था इति ॥ सोमसंस्था अग्निष्टोमाद्याः हविस्संस्था अग्न्याधेयाद्याः । यदाह गौतमः—"अष्टका पार्वणश्राद्धः श्रावण्याग्रहायणी चैत्र्याश्वयुजीति सप्त पाकयज्ञसंस्थाः अग्न्याधेयम् अग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि निरूढपशुबंधस्सौत्रामणीति सप्त हविर्यज्ञसंस्थाः । अग्निष्टोमोऽत्यग्निष्टोम उक्थ्याषोडशीवाजपेयातिरात्राप्तोर्यामा इतिं सप्त सोमसंस्थाः" इति ॥ २४ ॥ माध्याह्निकस्नानतर्पणान्याह—नदीनदेत्यादिना—नदीनदेति ॥ देवखातः अमनुष्यकर्तृको ह्रदः ॥ २५ ॥ कूपेष्विति ॥ कलशाभिरुद्धृतेन तोयेन तत्तटभूमौ स्नायात् । गमनाद्यशक्त्या तत्तटभूमिस्नानासंभवे कूपाद्युद्धृतेन शीतोदकेन स्वगृहे स्नायात् । तत्राप्यशक्तः उष्णोदकेन, तत्राप्यशक्तः मंत्रस्नानादिकं कुर्यादिति स्मृतिभ्यो ज्ञेयम् ॥ २६ ॥ २७ ॥ त्रिरप इति ॥ त्रिरप इति भूर्देवान्भुवर्देवान्सुवर्देवान्स्तर्पयामीत्येवं त्रिरपवर्जयेत् दद्यात्। तथर्षीणामपि भूर्भुवस्सुवः प्रयोगेण त्रिरपो दद्यात् प्रजापतिं तर्पयामीति सकृत् ॥ २८ ॥ पितॄणामिति ॥ पितॄणामपि भूरादिप्रयोगेण साधारणपितॄणां तत्प्रयोगं विना स्वपितॄणां चेत्यर्थः ॥२९॥ मातामहायेति ॥ पैत्रेण तर्जनीमूलेन काम्यं फलविशेषार्थम् ॥ ३० ॥

मात्रे स्वमात्रे तन्मात्रे गुरुपत्न्यै तथा नृप ॥ गुरूणां मातुलानां च स्निग्धमित्राय भूभुजे ॥ ३१ ॥ इदं चापि जपेदंबु दद्यादात्मेच्छया नृप ॥ उपकाराय भूतानां कृतदेवादितर्पणम् ॥ ३२ ॥ देवासुरास्तथा यक्षा नागगंधर्वराक्षसाः ॥ पिशाचा गुह्यकास्सिद्धाः कूष्मांडाः पशवः खगाः ॥ ३३ ॥ जलेचरा भूनिलया वाय्वाहाराश्च जंतवः ॥ तृप्तिमेतेन यांत्याशु मद्दत्तेनांबुनाऽखिलाः ॥ ३४ ॥ नरकेषु समस्तेषु यातनासु च संस्थिताः ॥ तेषामाप्यायनायैतद्दीयते सलिलं मया ॥ ३५ ॥ ये बांधवाबांधवा ये येन्यजन्मनि बांधवाः ॥ ते तृप्तिमखिला यांतु ये चास्मत्तोभिवांछति ॥ ३६ ॥ यत्र क्वचनसंस्थानां क्षुत्तृष्णोपहतात्मनाम् ॥ इदमाप्यायनायास्तु मया दत्तं तिलोदकम् ॥ ३७ ॥ काम्योदकप्रदानं ते मयैतत्कथितं नृप ॥ यद्दत्त्वा प्रीणयत्येतन्मनुष्यस्सकलं जगत् ॥ जगदाप्यायनोद्भूतं पुण्यमाप्नोति चानघ ॥ ३८ ॥ दत्त्वा काम्योदकं सम्यगेतेभ्यः श्रद्धयान्वितः ॥ आचम्य च ततो दद्यात्सूर्याय सलिलांजलिम् ॥ ३९ ॥ नमो विवस्वते ब्रह्मभास्वते विष्णुतेजसे ॥ जगत्सवित्रे शुचये सवित्रे कर्मसाक्षिणे ॥ ४० ॥ ततो गृहाऽर्चनं कुर्यादभीष्टसुरपूजनम् ॥ जलाभिषेकैः पुष्पैश्च धूपाद्यैश्च निवेदनम् ॥ ४१ ॥ अपूर्वमग्निहोत्रं च कुर्यात्प्राग्ब्रह्मणे नृप ॥ ४२ ॥ प्रजापतिं समुद्दिश्य दद्यादाहुतिमादरात् ॥ गृहेभ्यः काश्यपायाथ ततोनुमतये क्रमात् ॥ ४३ ॥

॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ नम इति ॥ ब्रह्मभास्वते वेदैः प्रकाशमानाय सवित्रे प्रेरकाय ॥ ४० ॥ तत इति ॥ गृहार्चनम् अभीष्टसुरपूजनं कुर्यादित्येव अपूर्वमित्यस्मात्प्राक् सर्वस्मिन्नपि वैराश्यमित्यर्थः । पारितप्यं तस्यार्थः । देवपूजनात्परं विश्वेभ्यो देवेभ्यो जुष्टं निर्वपामीति वैश्वदेवं हविर्निरूप्यते तेन देवयज्ञादिकर्म कुर्यात् ॥ ४१ ॥ तत्कथम् इत्यत्राह—अपूर्वमिति ॥ पूर्वमस्य प्रकृतिभूतं होमांतरं नास्तीत्यपूर्वं होमांतरप्रकृतित्वाभावात् । अग्निहोत्रमग्नौ दर्वीहोमं वैश्वदेवयज्ञाख्यं ब्रह्माहुत्यादिपंचाहुतिकम् । "अपूर्वो दर्विहोमो जुहोतिचोदनस्वाहाकारप्रधानः" इत्यापस्तंबः ॥ ४२ ॥ ४३ ॥

॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ नम इति ॥ ब्रह्म भास्वते वेदैः प्रकाशमानाय । ब्रह्मन्निति पाठे हे ब्रह्मन् भास्वदादिरूपाय तुभ्यं नम इत्यन्वयः । जगत्सवित्रे विश्वजनकाय कर्मदायिने प्रवर्तकाय ॥ ४० ॥ ४१ ॥ अपूर्वमिति ॥ अपूर्वमनन्यप्रकृतिकमग्निहोत्रम् अग्नौ होमं ब्रह्मादिपंचाहुतिकं देवयज्ञाख्यं दर्वीहोमं कुर्यादित्यर्थः । "अपूर्वो दर्विहोमो जुहोतिचोदनस्वाहाकारप्रधानः" इत्यापस्तंबोक्तेः ॥ ४२ ॥ ४३ ॥

तच्छेषं मणिके पृथ्वीपर्जन्येभ्यः क्षिपेत्ततः ॥ द्वारे धातुर्विधातुश्च मध्ये च ब्रह्मणे क्षिपेत् ॥४४॥ गृहस्य पुरुषव्याघ्र दिग्देवानपि मे शृणु ॥४५॥ इंद्राय धर्मराजाय वरुणाय तथेंदवे ॥ प्राच्यादिषु बुधो दद्याद्धुतशेषात्मकं बलिम् ॥ ४६ ॥ प्रागुत्तरे च दिग्भागे धन्वंतरिबलिं बुधः ॥ निर्वपेद्वै श्वदेवं च कर्म कुर्य्यादतः परम् ॥ ४७ ॥ वायव्यां वायवे दिक्षु समस्तासु यथादिशम् ॥ ब्रह्मणे चांतरिक्षाय भानवे च क्षिपेद्बलिम् ॥ ४८ ॥ विश्वेदेवान्विश्वभूतानथो विश्वपतीन्पितॄन् ॥ यक्षाणां च समुद्दिश्य बलिं दद्यान्नरेश्वर ॥ ४९ ॥ ततोन्यदन्नमादाय भूमिभागे शुचौ बुधः ॥ दद्यादशेषभूतेभ्यस्स्वेच्छया सुसमाहितः ॥ ५० ॥ देवा मनुष्याः पशवो वयांसि सिद्धास्सयक्षोरगदैत्यसंघाः ॥ प्रेताः पिशाचास्तरवस्समस्ता ये चान्नमिच्छंति मयात्र दत्तम् ॥ ५१ ॥ पिपीलिकाः कीटपतंगकाद्या बुभुक्षिताः कर्मनिबंधबद्धाः ॥ प्रयांतु ते तृप्तिमिदं मयान्नं तेभ्यो विसृष्टं सुखिनो भवंतु ॥ ५२ ॥ येषां न माता न पिता न बंधुर्नैवान्नसिद्धिर्न तथान्नमस्ति ॥ तत्तृप्तयेऽन्नं भुवि दत्तमेव ते यांतु तृप्तिं मुदिता भवंतु ॥ ५३ ॥

तदिति ॥ अथ भूतयज्ञः । पृथ्वीपर्जन्यादिबलिः मणिके उदधाने ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ वायव्यामिति ॥ वायव्यां वायव इति ॥ वीप्सया प्रतिदिशं वायुबलिः दिशां च बलिः प्राच्येति बलिः प्राच्यै दिश इत्यादि ब्रह्मादिबलित्रयं, मध्ये तदुत्तरतो विश्वेदेवादिबलिद्वयं, परं विश्वेदेवापरबलिः दक्षिणतः पितृबलिः वायव्ये यक्षबलिः । अयं क्रमः पारस्करगृह्ये द्रष्टव्यः । अथ पारस्करगृह्यं काण्वानां वैश्वदेवादन्नात्पर्युक्ष्य स्वाहाकारैर्जुहुयात् । ब्रह्मणे प्रजापतये गृह्येभ्यः काश्यपायानुमतय इति भूतगृहेभ्यो मणिके त्रीन् पर्जन्यायाद्भ्यः पृथिव्यै धात्रे विधात्रे च द्वार्यंतयोः प्रतिदिशं वायवे दिशां च मध्ये च त्रीन् ब्रह्मणेंतरिक्षाय सूर्याय विश्वेभ्यो देवेभ्यो विश्वेभ्यश्च भूतेभ्यः तेषामुत्तरत उषसे भूतानां च पतये परं पितृभ्यस्स्वधा नम इति दक्षिणतः पात्रं निर्णिज्योत्तरपूर्वस्यां दिशि निनयेद्यक्षेभ्यस्तत्र इत्युद्धृत्यान्नं ब्राह्मणायावनौ दद्याद्वायंतत इति ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ येषामिति ॥ सिद्धिः सामग्री ॥ ५३ ॥

भूतयज्ञमाह तच्छेषमित्यादिना—तच्छेषमिति ॥ मणिके तदौपासनसन्निधौ गृहस्य मध्ये ब्रह्मण इत्यन्वयः ॥ ४४ ॥ ४५ ॥ ४६ ॥ प्रागुत्तरे चेति ॥ धन्वंतरिबलिं बुधो निर्वपेदित्यन्वयः । तदेवं गार्ह्यदेवेभ्यो बलिहरणमुक्तं तदितरसमस्तदेवताबलिमाह—वैश्वदेवमित्यादिना—संति मानवा इत्यंतेन विश्वेगार्ह्यव्यतिरिक्ताः सर्वे यजनीया यस्मिन्तद्वैश्वदेवाख्यं बलिं कुर्यादित्यर्थः ॥४७॥ वायव्यामिति ॥ समस्तासु दिक्षु वायव्यां वायव इति वायुमेवोद्दिश्य बलिं क्षिपेत् । ततः प्राच्यै दिशे दाक्षिणायै दिश इति दिशां बलिं क्षिपेत् "वायव्यं वायवे दिक्षु समस्तासु ततो दिशाम्" इति पाठान्तरे तु वायव्यं वायवे दिक्षु च दिशां बलिं क्षिपेदित्यन्वयः ॥ ४८ ॥ विश्वेदेवानिति ॥ विश्वेदेवांश्चोद्दिश्य स्वगृह्योक्तविधानेन बलिं दद्यात् ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ येषामिति ॥ येषामन्नं व्रीह्यादि नास्ति तस्यापि तस्मिन्नान्नसिद्धिः पाकसाधनं नास्तीत्यर्थः ॥ ५३ ॥

भूतानि सर्वाणि तथान्नमेतदहं च विष्णुर्न यतोन्यदस्ति ॥ तस्मादहं भूतनिकायभूतमन्नं प्रयच्छामि भवाय तेषाम् ॥ ५४ ॥ चतुर्दशो भूतगणो य एष तत्र स्थिता येऽखिलभूतसंघाः ॥ तृप्त्यर्थमन्नं हि मया निसृष्टं तेषामिदं ते मुदिता भवंतु ॥ ५५ ॥ इत्युच्चार्य्य नरो दद्यादन्नं श्रद्धा समन्वितः ॥ भुवि सर्वोपकाराय गृही सर्वाश्रयो यतः ॥ ५६ ॥ श्वचंडालविहंगानां भुवि दद्यान्नरेश्वर ॥ ये चान्ये पतिताः केचिदपुत्राः संति मानवाः ॥ ५७ ॥ ततो गोदोहमात्रं वै कालं तिष्ठेद्गृहांगणे ॥ अतिथिग्रहणार्थाय तदूर्ध्वं तु यथेच्छया ॥ ५८ ॥ अतिथिं तत्र संप्राप्तं पूजयेत्स्वागतादिना ॥ तथासनप्रदानेन पादप्रक्षालनेन च ॥ ५९ ॥ श्रद्धया चान्नदानेन प्रियप्रश्नोत्तरेण च ॥ गच्छतश्चानुयानेन प्रीतिमुत्पादयेद्गृही ॥ ६० ॥ अज्ञातकुलनामानमन्यदेशादुपागतम् ॥ पूजयेदतिथिं सम्यङ्नैकग्रामनिवासिनम् ॥ ६१ ॥ अकिंचनमसंबंधमज्ञातकुलशीलिनम् ॥ असंपूज्यातिथिं भुक्त्वा भोक्तुकामं व्रजत्यधः ॥ ६२ ॥ स्वाध्यायगोत्राचरणमपृष्ट्वा च तथा कुलम् ॥ हिरण्यगर्भबुद्ध्या तं मन्येताभ्यागतं गृही ॥ ६३ ॥ पित्रर्थं चापरं विप्रमेकमप्याशयेन्नृप ॥ तद्देश्यं विदिताचारसंभूतिं पांचयज्ञिकम् ॥ ६४ ॥ अन्नाग्रं च समुद्धृत्य हंतकारोपकल्पितम् ॥ निर्वापभूतं भूपाल श्रोत्रियायोपपादयेत् ॥ ६५ ॥

भूतानीति॥ भूतनिकायभूतां प्राणिनां शरीरभूतम् ॥५४॥ चतुर्दश इति ॥ चतुर्दशो गणः। 'देवा मनुष्याः पितरः' इत्यादिना प्रागुक्तः। "अष्टविधं दैवत्यं तैर्यग्योन्यंच पंचधा भवति। मानुष्यं चैकविधं समासतो भौतिकः सर्गः।" इति "सिद्धगुह्यकगंधर्वयक्षराक्षसपन्नगाः। विद्याधराः पिशाचाश्च निर्दिष्टा देवयोनयः" इति "सरीसृपा वानराश्च पशुगोमृगपक्षिणः। तिर्यंच इति कथ्यंते पंचैताः प्राणिजातयः" इति। मनुष्या एकजातिरिति ॥ ५५ ॥ ५६ ॥ ५७ ॥ तत इति ॥ नाडिकायाश्चतुर्भागो गोदोहः ॥ ॥५८॥५९॥६०॥६१॥ अकिंचनमिति ॥ 'भोक्तुकाममसंपूज्य भोज्यं भुक्त्वा' इति पाठः। "असंभोज्यातिथिं भक्तं भोक्तुकामं व्रजत्यधः" इति वा पाठः। भक्तमश्नन् भुंजन् इति वा पाठः ॥६२॥ स्वाध्यायेति ॥ चरणं वेदावांतरशाखाः पूर्वाचारो वा ॥६३॥ पित्रर्थमिति ॥ पित्रर्थमतीतश्राद्धार्थं पांचयज्ञिकं पंचयज्ञकारिणम्॥ ॥ ६४ ॥ अन्नाग्रमिति ॥ अग्रं भोजनाद्यनुच्छिष्टम् "ग्रासमात्रं भवेद्भिक्षा अग्रं ग्रासचतुष्टयम्। अग्राण्येव तु चत्वारि हंतकारं प्रचक्षते" इति। निर्वपामीति पाका

॥ ५४ ॥ चतुर्दश इति ॥ चतुर्दशसंख्याको भूतगणो य एषः देवा मनुष्या इत्यादिकीटपतंगांत उक्तः। तत्र स्थिता येखिलभूतसंघास्तत्तदवांतरविशेषाः ॥ ५५ ॥ ५६ ॥ ५७ ॥ तत इति ॥ गोदोहनमात्रं घटिकायाश्चतुर्थांशम् ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ स्वाध्यायेति ॥ चरणमाचरणं शाखाविशेषमपृष्ट्वा ॥ ६३ ॥ पित्रर्थं चेति ॥ पित्रर्थं नित्यश्राद्धार्थम् आशयेत्। विदितः आचारस्संभूतिश्च कुलं यस्यसः। तं पांचयज्ञिकं पंचयज्ञकारिणम् ॥६४॥ अन्नाग्रमिति ॥ अन्नाग्रं भोजनाद्यनुच्छिष्टम्। अत्र चोक्तं—"ग्रासमात्रं भवेद्भिक्षा अग्रं ग्रासचतुष्टयम्। अग्राण्येव तु चत्वारि हंतकारं प्रचक्षते" इति। मनुष्येभ्यो हंतेति मंत्रेण

दद्याच्च भिक्षात्रितयं परिव्राड्ब्रह्मचारिणाम् ॥ इच्छया च बुधो दद्याद्विभवे सत्यवारितम् ॥ ६६ ॥ इत्येतेतिथयः प्रोक्ताः प्रागुक्ता भिक्षवश्च ये ॥ चतुरः पूजयित्वैतान्नृप पापात्प्रमुच्यते ॥ ६७ ॥ अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्त्तते ॥ स तस्मै दुष्कृतं दत्त्वा पुण्यमादाय गच्छति ॥ ६८ ॥ धाता प्रजापतिः शक्रो वह्निर्वसुगणोऽर्यमा ॥ प्रविश्यातिथिमेते वै भुंजतेन्नं नरेश्वर ॥ ६९ ॥ तस्मादतिथिपूजायां यतेत सततं नरः ॥ स केवलमघं भुंक्ते यो भुंक्ते ह्यतिथिं विना ॥ ७० ॥ ततः स्ववासिनीं दुःखीं गुर्विणीं वृद्धबालकान् ॥ भोजयेत्संस्कृतान्नेन प्रथमं चरमं गृही ॥ ७१ ॥ अभुक्तवत्सु चैतेषु भुंजन्भुंक्ते स दुष्कृतम् ॥ मृतश्च गत्वा नरकं श्लेष्मभुग्जायते नरः ॥ ७२ ॥ अस्नाताशी मलं भुंक्ते ह्यजपी पूयशोणितम् ॥ असंस्कृतान्नभुङ्मूत्रं बालादिप्रथमं शकृत् ॥ ७३ ॥ अहोमी च कृमीन्भुंक्ते अदत्त्वा विषमाश्नुते ॥ ७४ ॥ तस्माच्छृणुष्व राजेंद्र यथा भुंजीत वै गृही ॥ भुंजतश्च यथा पुंसः पापबंधो न जायते ॥ ७५ ॥ इह चारोग्यविपुलं बलबुद्धिस्तथा नृप ॥ भवत्यरिष्टशांतिश्च वैरिपक्षाभिचारिणः ॥ ७६ ॥ स्नातो यथावत्कृत्वा च देवर्षिपितृतर्पणम् ॥ प्रशस्तरत्नपाणिस्तु भुंजीत प्रयतो गृही ॥ ७७ ॥ कृते जपे हुते वह्नौ शुद्धवस्त्रधरो नृप ॥ दत्त्वाऽतिथिभ्यो विप्रेभ्यो गुरुभ्यस्संश्रिताय च ॥ पुण्यगंधशस्तमाल्यधारी चैव नरेश्वर ॥ ७८ ॥ नैकवस्त्रधरोऽनार्द्रपाणिपादो महीपते ॥ विशुद्धवदनः प्रीतो भुंजीत न विदिङ्मुखः ॥ ७९ ॥ प्राङ्मुखोदङ्मुखो वापि न चैवान्यमना नरः ॥ अन्नं प्रशस्तं पथ्यं च प्रोक्षितं प्रोक्षणोदकैः ॥ ८० ॥

त्सिद्धं निर्वापभूतं मनुष्येभ्यो हंतेतिमंत्रेण श्रोत्रियाय देयमन्नं हंतकाराख्यम् ॥६५॥६६॥ इत्येत इति ॥ एते अतिथयः 'अज्ञातकुलनामानम्' इत्युक्तश्च । श्रोत्रियश्च परिव्राड्ब्रह्मचारिवर्गश्च वेदाहरणकार्य्येणेति प्रागुक्तश्चेत्येतांश्चतुरो वर्गान् ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ तत इति ॥ परिणीता पितृगेहे स्थिता स्ववासिन्यादीनां चरमं पश्चात् गृही भुंजीतेति शेषः ॥ ७१ ॥ ७२ ॥ अस्नातेति ॥ असंस्कृतं वैश्वदेवादिना ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥

मनुष्ययज्ञार्थं प्रदेयमन्नं हंतकारार्थं निर्वापभूतं पृथक्कृत्य स्थापितम् ॥ ६५ ॥ ६६ ॥ इतीति ॥ इत्येते अतिथयः अज्ञातकुलनामा च श्रोत्रियश्च परिव्राट् ब्रह्मचारिवर्गश्चेत्यत्र प्रोक्तास्त्रयः । वेदाहरणकार्येणेति प्रागुक्तांश्चेत्येतांश्चतुरो वर्गान्पूजयेत् ॥ ६७ ॥६८॥६९॥७० ॥ तत इति ॥ स्ववासिनी कृतविवाहा पितृगृहस्थकन्या चरमं पश्चाद्गृही भुंजीत ॥७१॥७२॥७३॥७४॥७५॥७६॥७७॥७८॥७९॥ प्राङ्मुख इति ॥ प्राङ्मुख

व

न कुत्सिताहतं नैव जुगुप्साशूद्रसंस्कृतम् ॥ दत्त्वा तु भक्तं शिष्येभ्यः क्षुधितेभ्यस्तथा गृही ॥ ८१ ॥ प्रशस्तशुद्धपात्रे तु भुंजीताकुपितो द्विजः ॥ ८२ ॥ नासंदिसंस्थिते पात्रे नादेशे च नरेश्वर ॥ नाकाले नातिसंकीर्णे दत्त्वाग्रं च नरोग्नये ॥ ८३ ॥ मंत्राभिमंत्रितं शस्तं न च पर्युषितं नृप ॥ अन्यत्र फलमूलेभ्यश्शुष्कशाखादिकात्तथा ॥ ८४ ॥ तद्वद्धारीतकेभ्यश्च गुडभक्ष्येभ्य एव च ॥ भुंजीतोद्धृतसाराणि न कदापि नरेश्वर ॥ ८५ ॥ न शेषं पुरुषोश्नीय्यादन्यत्र जगतीपते ॥ मध्वंबुदधिसर्पिभ्यस्सक्तुभ्यश्च विवेकवान् ॥ ८६ ॥ अश्नीयात्तन्मयो भूत्वा पूर्वं तु मधुरं रसम् ॥ लवणाम्लौ तथा मध्ये कटुतिक्तादिकांस्ततः ॥ ८७ ॥ प्राग्द्रवं पुरुषोश्नीयान्मध्ये कठिनभोजनः ॥ अंते पुनर्द्रवाशी तु बलारोग्ये न मुंचति ॥ ८८ ॥ अनिंद्यं भक्षयेदित्थं वाग्यतोन्नमकुत्सयन् ॥ पंचग्रासं महामौनं प्राणाद्याप्यायनं हि तत् ॥ ८९ ॥ भुक्त्वा सम्यगथाचम्य प्राङ्मुखोदङ्मुखोपि वा ॥ यथावत्पुनराचामेत्पाणी प्रक्षाल्य मूलतः ॥ ९० ॥ स्वस्थः प्रशांतचित्तस्तु कृतासनपरिग्रहः ॥ अभीष्टदेवतानां तु कुर्वीत स्मरणं नरः ॥ ९१ ॥ अग्निराप्याययेद्धातुं पार्थिवं पवनेरितः ॥ दत्तावकाशं नभसा जरयत्यस्तु मे सुखम् ॥ ९२ ॥

नेति ॥ असंस्कृतं वैश्वदेवादिना ॥ ८१ ॥८२॥ नासंदीति ॥ आसंदि वेत्रादिमयं चतुष्पादमासनं 'नान्यमासनमारोपयेत्' इति विष्णुस्मृतेः । अदेशे कुत्सितस्थाने आकाशे अनावृते । अकाले इति वा पाठे 'नांतरा भोजनं कुर्य्याद्' इति अग्नयेग्रमिति परिविष्टस्यान्नस्याग्रं मंत्रं विनाग्नौ प्रक्षिपेदिति विधिः ॥८३॥८४॥तद्वदिति॥ हरीतकमपक्वलेह्यादिभेदः ॥ ८५ ॥ न शेषमिति ॥ शेषं स्वेनापि खादितशेषं "खादितार्धं पुनः खादन्मोदकानि फलानि वा । दंपत्योर्भुक्तशेषं वा भुक्त्वा चांद्रायणं चरेत्" इति स्मृतेः । नाशेषमिति पाठे निश्शेषं नाश्नीयात् ॥ ८६ ॥ ८७ ॥ ८८ ॥ अनिंद्यमिति ॥ अनिंद्यमनिषिद्धं पंचग्रासं भक्षयेदिति शेषः । महामौनमिति क्रियाविशेषणम् ॥ ८९ ॥ ९० ॥ ९१ ॥ अग्निरिति ॥ पार्थिवं धातुं देहं अन्नरसेनाप्याययन्नन्नं जरयत्विति शेषः ॥ ९२ ॥

उदङ्मुखो वा भुंजीत ॥ ८० ॥ ८१ ॥ ८२ ॥ नेति ॥ आसंदि दारुमयं त्रिपादादि । अदेशे अयोग्यस्थाने । अकाले संध्यादिसमये । आकाश इति पाठे अनावृते । अग्रमग्नये दत्त्वा परिशिष्टस्यान्नस्याग्रं किंचिदग्नौ क्षिप्त्वा ॥ ८३ ॥ ८४ ॥ तद्वदिति ॥ हरीतकेभ्यः अपक्वलेह्यादिभ्यः गुडभक्ष्येभ्यो मोदकादिभ्यः ॥ ८५ ॥ ८६ ॥ अश्नीयादिति ॥ तन्मयो भूत्वा अन्ने दत्तचित्तस्सन् ॥ ८७ ॥ ८८ ॥ अनिंद्यमिति ॥ अनिंद्यम् अनिषिद्धमन्नम् ॥ ८९ ॥ ९० ॥ ९१ ॥ अग्निरिति ॥ अग्निः पवनप्रेरितस्सन्नभसा दत्तावकाशमन्नं जरयतु ततश्चान्नरसादिकेन पार्थिवं धातुमाप्याययत्विति पंचभूतानुग्रहप्रार्थनम् ॥ ९२ ॥

त्वे स्त्व

अन्नं बलाय मे भूमेरपामग्न्यनिलस्य च ॥ भवत्येतत्परिणतं ममास्त्यव्याहतं सुखम् ॥९३॥ प्राणापानसमानानामुदानव्यानयोस्तथा॥ अन्नं पुष्टि करं चास्तु ममाप्यव्याहतं सुखम् ॥९४॥ अगस्तिरग्निर्वडवानलश्च भुक्तं मयान्नं जरयत्वशेषम्॥ सुखं च मे तत्परिणामसंभवं यच्छंत्वरोगं मम चास्तु देहे ॥ ९५ ॥ विष्णुस्समस्तेंद्रियदेहदेही वृथा न भूतो भगवान्व्यथैकः ॥ सत्येन तेनात्तमशेषमन्नमारोग्यतां मे परिणाममेतु ॥ ९६ ॥ विष्णुरत्ता तथैवान्नं परिणामश्च वै तथा ॥ सत्येन तेन मद्भुक्तं जीर्यत्यन्नमिदं तथा ॥ ९७ ॥ इत्युच्चार्य्य स्वहस्तेन परिमृज्य तथोदरम् ॥ अनायासप्रदायीनि कुर्य्यात्कर्माण्यतंद्रितः ॥ ९८ ॥ सच्छास्त्रादिविनोदेन सन्मार्गादविरोधिना ॥ दिनं नयेत्ततस्संध्यामुपतिष्ठेत्समाहितः ॥ ॥ ९९ ॥ दिनांतसंध्यां सूर्येण पूर्वामृक्षैर्युतां बुधः ॥ उपतिष्ठेद्यथान्याय्यं सम्यगाचम्य पार्थिव ॥ १०० ॥ सर्वकालमुपस्थानं संध्ययोः पार्थिवेष्यते ॥ अन्यत्र सूतकाशौचविभ्रमातुरभीतितः ॥ १०१ ॥ सूर्येणाभ्युदितो यश्च त्यक्तः सूर्येण वा स्वपन् ॥ अन्यत्रातुरभावात्तु प्रायश्चित्ती भवेन्नरः ॥१०२॥ तस्मादनुदिते सूर्य्ये समुत्थाय महीपते ॥ उपतिष्ठेन्नरस्संध्यामस्वपंश्च दिनांतजाम् ॥ १०३ ॥ उपतिष्ठंति वै संध्यां ये न पूर्वां न पश्चिमाम् ॥ व्रजंति ते दुरात्मानस्तामिस्रं नरकं नृप ॥ १०४ ॥ पुनः पाकमुपादाय सायमप्यवनीपते ॥ वैश्वदेवनिमित्तं वै पत्न्या सार्द्धं बलिं हरेत् ॥ १०५ ॥ तत्रापि श्वपचादिभ्यस्तथैवान्नविसर्जनम् ॥१०६॥ अतिथिं चागतं तत्र स्वशक्त्या पूजयेद्बुधः ॥ पादशौचासनप्रह्वस्वागतोक्त्या च पूजनम् ॥ ततश्चान्नप्रदानेन शयनेन च पार्थिव ॥ १०७ ॥ दिवातिथौ तु विमुखे गते यत्पातकं नृप ॥ तदेवाष्टगुणं पुंसस्सूर्य्योढे विमुखे गते ॥ १०८ ॥

॥९३॥९४॥अगस्तिरिति॥तदन्नं परिणामसंभवं मम देहे न रोगं संयच्छतु मे सुखं चास्त्वित्यन्वयः ॥९५॥ विष्णुरिति॥भुक्तम् अत्तम् ॥९६॥९७॥९८॥९९॥ ॥१००॥सर्वकालमिति ॥ विभ्रमः उन्मादादिवैचित्र्यम् । आतुरेति । आतुरत्वं रोगभावः । आशौचभावः आशौचसद्भावः ॥ १०१ ॥ १०२ ॥ १०३ ॥ १०४ ॥ पुनरिति ॥ वैश्वदेवप्रत्याम्नायत्वेनामंत्रकं पत्नी बलिं हरेत् ॥ १०५ ॥ १०६ ॥ अतिथिमिति ॥ प्रह्वत्वं नम्रभावः ॥ १०७ ॥ दिवेति ॥ "सूर्योढस्तु स संप्राप्तो

अन्नमिति ॥ मे मत्संबंधिनः भूम्यादीनामन्नं बलायास्तु ॥ ९३ ॥ ९४ ॥ अगस्तिरिति ॥ अरोगं रोगाभावम् ॥ ९५ ॥ विष्णुरिति ॥ अत्तं भुक्तम् ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ दिनांतेति ॥ दिनांते संध्यामित्यर्थः । "प्रातस्संध्यां सनक्षत्रामुपासीत यथाविधि । सादित्यां पश्चिमां संध्यामर्धास्तमितभास्कराम्" इति ॥ १०० ॥ सर्वकालमिति ॥ सूतकं पुत्रजन्मादि आशौचं शावं विभ्रम उन्मादादिवैचित्र्यम आतुरं रोगावस्था भीतिश्च ततोन्यत्र ॥१०१॥ सूर्येणेति ॥ यस्मिन्सुप्ते सूर्य उदेति स सूर्येणाभ्युदितः यस्मिन्सुप्तेऽस्तं याति स सूर्येण त्यक्तः । सूर्योदयास्तमययोः स्वपन्प्रायश्चित्तीयते पातकी भवेदित्यर्थः ॥१०२॥१०३॥ १०४ ॥ पुनरिति ॥ वैश्वदेवनिमित्तं वैश्वदेवाख्यकर्मसिद्ध्यर्थं तत्स्थाने ये भूता इत्येव मंत्रं विना बलिं हरेत् ॥ १०५ ॥ १०६ ॥ १०७ ॥ दिवेति ॥ सूर्येणास्तं गच्छता ऊढः प्रापित इत्यादित्यास्तमयानंतरमागत इत्यर्थः ॥ १०८ ॥

तस्मात्स्वशक्त्या राजेंद्र सूर्य्योढमतिथिं नरः ॥ पूजयेत्पूजिते तस्मिन्पूजितास्सर्वदेवताः ॥ १०९ ॥ अन्नशाकांबुदानेन स्वशक्त्या पूजयेत्पुमान् ॥ शयनप्रस्तरमहीप्रदानैरथवापि तम् ॥ ११० ॥ कृतपादादिशौचस्तु भुक्त्वा सायं ततो गृही ॥ गच्छेच्छय्यामस्फुटितामपि दारुमयीं नृप ॥ १११ ॥ नाविशालां न वै भुग्नां नासमां मलिनां न च ॥ न च जंतुमयींशय्यामधितिष्ठेदनास्तृताम् ॥ ११२ ॥ प्राच्यां दिशि शिरश्शस्तं याम्यायामथ वा नृप ॥ सदैव स्वपतः पुंसो विपरीतं तु रोगदम् ॥ ११३ ॥ ऋतावुपगमश्शस्तस्स्वपत्न्यामवनीपते ॥ पुन्नामर्क्षे शुभे काले ज्येष्ठायुग्मासु रात्रिषु ॥ ११४ ॥ नाद्यूनां तु स्त्रियं गच्छेन्नातुरां न रजस्वलाम् ॥ नानिष्टां न प्रकुपितां न त्रस्तां न च गर्भिणीम् ॥ ११५ ॥ नादक्षिणां नान्यकामां नाकामां नान्ययोषितम् ॥ क्षुत्क्षामां नातिभुक्तां वा स्वयं चैभिर्गुणैर्युतः ॥ ॥ ११६ ॥ स्नातस्स्रग्गंधधृक्प्रीतो नाध्मातः क्षुधितोपि वा ॥ सकामस्सानुरागश्च व्यवायं पुरुषो व्रजेत् ॥ ११७ ॥ चतुर्दश्यष्टमी चैव तथामाचाथ पूर्णिमा ॥ पर्वाण्येतानि राजेंद्र रविसंक्रांतिरेव च ॥ ११८ ॥

यस्सूर्येऽस्तंगतेतिथिः" ॥ १०८ ॥ १०९ ॥ अन्नेति ॥ प्रस्तरं तृणादिशयनम् ॥ ११० ॥ कृतेति ॥ अपि दारुमयीम् अनिषिद्धद्रुमकृताम् ॥ १११ ॥ ११२ ॥ ॥ ११३ ॥ ऋताविति ॥ पुन्नामर्क्षाणि दश बृहस्पत्युक्तानि—"सार्पाच्चतुष्कं रौद्रं च याम्यं त्वाष्ट्रत्रिकं जलम् । वैश्वेंद्रवासवं पौष्णं त्रिलिंगास्समुदाहृताः ॥ सौम्यवारुणमूलानि नपुंसकदिनानि तु । शेषाः पुँल्लिंगतांयाताः" इति ज्येष्ठायुग्मासु षष्ठ्यादियुग्मासु रात्रिषु तत्रापि ज्येष्ठासु यथोत्तरं शुभास्वित्यर्थः । चतुर्थीप्रभृत्याषोडशीमित्यादिना ॥ ११४ ॥ ११५ ॥ ११६ ॥ स्नात इति ॥ कामो रिरंसा । रागः प्रीतिः ॥ ११७ ॥ ११८ ॥

॥१०९॥ ११० ॥ कृतेति ॥ शय्यां खट्वाम् अस्फुटितामविदीर्णां गजदंतादिमयीं तदसंभवे दारुमयीमपि ॥ १११ ॥ ११२ ॥ ११३ ॥ ऋतावुपगमश्शस्त इत्यादिना अष्टमाध्यायोक्तमेवोपगममनूद्य गुणा विधीयंते यावत्समाप्ति ॥ ऋताविति ॥ पुन्नामर्क्षाणि दश अत्रोक्तं बार्हस्पत्यैः—"सार्पाच्चतुष्कं रौद्रं च याम्यं त्वाष्ट्रत्रिकं जलम् । वैश्वेंद्रवैष्णवं पौष्णं स्त्रीलिंगास्समुदाहृताः ॥ सौम्यवारुणमूलानि नपुंसकदिनान्यपि । शेषाः पुँल्लिंगतां प्रातास्तारास्सुरशचीपतेः" इति । तत्र पुन्नामर्क्षे अश्विनीरोहिणीकृत्तिकापुनर्वसुपुष्यहस्तानुराधाश्रवणपूर्वाभाद्रपदोत्तराभाद्रपदाख्ये काले ऋतुदर्शनात्परासु षष्ठ्याद्यासु युग्मासु रात्रिषु तत्रापि ज्येष्ठासु उत्तरोत्तरासु शुभासु ॥ ११४ ॥ नेति ॥ अद्यूनामननुकूलाम् ॥ ११५ ॥ ११६ ॥ स्नात इति ॥ आध्मातः । अतितृप्तः सकामः रिरंसुः सानुरागस्त्रियां प्रीतिमान् । व्यवायं सुरतम् ॥ ११७ ॥ ११८ ॥

तैलस्त्रीमांससंभोगी सर्वेष्वेतेषु वै पुमान् ॥ विण्मूत्रभोजनं नाम प्रयाति नरकं मृतः ॥ ११९ ॥ अशेषपर्वस्वेतेषु तस्मात्संयमिभिर्बुधैः ॥ भाव्यं सच्छास्त्रदेवेज्याध्यानजप्यपरैर्नरैः ॥ १२० ॥ नान्ययोनावयोनौ वा नोपयुक्तौषधस्तथा ॥ द्विजदेवगुरूणां च व्यवायी नाश्रमे भवेत् ॥ ॥ १२१ ॥ चैत्यचत्वरतीरेषु नैव गोष्ठे चतुष्पथे ॥ नैव श्मशानोपवने सलिलेषु महीपते ॥ १२२ ॥ प्रोक्तपर्वस्वशेषेषु नैव भूपाल संध्ययोः ॥ गच्छेद्व्यवायं मनसा न मूत्रोच्चारपीडितः ॥ १२३ ॥ पर्वस्वभिगमोनिन्द्यो दिवा पापप्रदो नृप ॥ भुवि रोगावहो नृणामप्रशस्तो जलाशये ॥ ॥ १२४ ॥ परदारान्न गच्छेत मनसापि कथंचन ॥ किमु वाचास्थिबंधोपि नास्ति तेषु व्यवायिनाम् ॥ १२५ ॥ मृतो नरकमभ्येति हीयते त्रापि चायुषः ॥ परदाररतिः पुंसामिह चामुत्र भीतिदा ॥ १२६ ॥ इति मत्वा स्वदारेषु ऋतुमत्सु बुधो व्रजेत् ॥ यथोक्तदोषहीनेषु सकामे ष्वनृतावपि ॥ १२७ ॥ इति श्रीविष्णुमहापुराणे तृतीयांश एकादशोऽध्यायः ॥ ११ ॥ ॥ और्व उवाच ॥ देवगोब्राह्मणान्सिद्धान्वृद्धाचार्यां स्तथार्चयेत् ॥ द्विकालं च नमेत्संध्यामग्नीनुपचरेत्तथा ॥ १ ॥ सदानुपहते वस्त्रे प्रशस्ताश्च महौषधीः ॥ गारुडानि च रत्नानि बिभृयात्प्रयतो नरः ॥ २ ॥ प्रस्निग्धामलकेशश्च सुगंधश्चारुवेषधृक् ॥ सितास्सुमनसो हृद्या बिभृयाच्च नरस्सदा ॥ ३ ॥ किंचित्परस्वं न हरेन्नाल्पमप्यप्रियं वदेत् ॥ प्रियं च नानृतं ब्रूयान्नान्यदोषानुदीरयेत् ॥४॥ नान्यस्त्रियं तथा वैरं रोचयेत्पुरुषर्षभ ॥ न दुष्टं यानमारोहेत्कूलच्छायां न संश्रयेत् ॥ ॥ ५ ॥ विद्विष्टपतितोन्मत्तबहुवैरादिकीटकैः ॥ वर्द्धकीबंधकीभर्त्तुः क्षुद्रानृतकथैस्सह ॥ ६ ॥

॥ ११९ ॥ १२० ॥ नान्ययोनाविति ॥ अन्ययोनौ गवादियोनौ । औषधं रसायनादि । द्विजदेवादेराश्रये तदालयस्थो व्यवायी न स्यात् ॥ १२१ ॥ चैत्येति ॥ चत्वरादिष्वपि न व्यवायी स्यात् ॥ १२२ ॥ १२३ ॥ १२४ ॥ परदारानिति ॥ तेषु परदारेषु व्यवायिनामस्थिबंधो नास्ति । ते हि अनस्थिकक्रिमिकीटादिजन्मानः स्युः ॥ १२५ ॥ १२६ ॥ १२७ ॥ इति श्रीविष्णुचित्तीये विष्णुमहापुराणव्याख्याने तृतीयांश एकादशोऽध्यायः ॥ ११ ॥ ॥ १ ॥ सदेति ॥ ओषधीः विष्णुक्रांतादूर्वाद्याः । गारुडानि रत्नानि च विषघ्नानि मरकतादीनि ॥ २ ॥ प्रस्निग्धा इति ॥ प्रस्निग्धाः अलंकृताः ॥ ३ ॥ किञ्चिदिति ॥ किंचित्किंचिदपि न हरेत् । पाठांतरे दरिद्रः ॥ ४ ॥ नेति ॥ कूलच्छाया जलौघक्षतदेशच्छाया ॥ ५ ॥ विद्विष्ट इति ॥ विद्विष्टादिभिः मैत्रीं न कुर्यात् । कीटकः कीटकवत्पीडकः

॥ ११९ ॥ १२० ॥ नेति ॥ अन्ययोनौ देवद्विजगुरूणामाश्रमे ॥ १२१ ॥ १२२ ॥ १२३ ॥ १२४ ॥ परदारानिति ॥ तेषु परदारेषु व्यवायिनामस्थिसंबंधोपि नास्ति केवलमनस्थिक्रिमिकूटेषु कुयोनिषु ते परदारगामिनः परिवर्तंत इत्यर्थः ॥ १२५ ॥ १२६ ॥ १२७ ॥ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां तृतीयांश एकादशोध्यायः ॥ ११ ॥ ॥ अथ गृहस्थादीनां दृष्टादृष्टप्रधानसदाचारप्रपंचः ॥ १ ॥ सदेति ॥ प्रशस्ता ओषधीर्विष्णुक्रांतादूर्वाद्याः ॥ २ ॥ प्रस्निग्धेति ॥ प्रस्निग्धाः अमलाः केशाः यस्य ॥ ३ ॥ ४ ॥ ५ ॥ विद्विष्टेति ॥ बहु वैरं यस्य अतिकीटकः अत्यंतं कीटव

तथातिव्ययशीलैश्च परिवादरतैश्शठैः ॥ बुधो मैत्रीं न कुर्वीत नैकः पंथानमाश्रयेत् ॥ ७ ॥ नावगाहेज्जलौघस्य वेगमग्रे नरेश्वर ॥ प्रदीप्तं वेश्म न विशेन्नारोहेच्छिखरं तरोः ॥ ८ ॥ न कुर्य्याद्दंतसंघर्षं कुष्णियाच्च न नासिकाम् ॥ नासंवृतमुखो जृंभेच्छ्वासकासौ विसर्जयेत् ॥ ९ ॥ नोच्चैर्हसेत्सशब्दं च न मुंचेत्पवनं बुधः ॥ नखान्न खादयेच्छिद्यान्न तृणं न महीं लिखेत् ॥ १० ॥ न श्मश्रु भक्षयेल्लोष्टं न मृद्नीयाद्विचक्षणः ॥ ज्योतींष्यमेध्यशस्तानि नाभिवीक्षेत च प्रभो ॥११॥ नग्नां परस्त्रियं चैव सूर्य्यं चास्तमयोदये ॥ न हुंकुर्याच्छवं गंधं शवगंधो हि सोमजः ॥ ॥ १२ ॥ चतुष्पथं चैत्यतरुं श्मशानोपवनानि च ॥ दुष्टस्त्रीसन्निकर्षं च वर्जयेन्निशि सर्वदा ॥ १३ ॥ पूज्यदेवद्विजज्योतिश्छायां नातिक्रमेद् बुधः ॥ नैकश्शून्याटवीं गच्छेत्तथा शून्यगृहे वसेत् ॥ १४ ॥ केशास्थिकंटकामेध्यबलिभस्मतुषांस्तथा ॥ स्नानार्द्रधरणीं चैव दूरतः परिवर्जयेत् ॥ १५ ॥ नानार्यानाश्रयेत्कांश्चिन्न जिह्मं रोचयेद्बुधः ॥ उपसर्पेन्न वै व्यालं चिरं तिष्ठेन्न वोत्थितः ॥ १६ ॥ अतीव जागर स्वप्ने तद्वत्स्थानासने बुधः ॥ न सेवेत तथा शय्यां व्यायामं च नरेश्वर ॥ १७ ॥ दंष्ट्रिणश्शृंगिणश्चैव प्राज्ञो दूरेण वर्जयेत् ॥ अवश्यायं च राजेंद्र पुरोवातातपौ तथा ॥ १८ ॥

दरिद्रः । बंधकी असती ॥ ६ ॥ ७ ॥ ८ ॥ न कुर्यादिति ॥ न कुष्णीयात् न निष्कर्षेत् । श्वासकासौ चासंवृतमुखो न विसर्जयेत् ॥ ९ ॥ १० ॥ ११ ॥ नग्नामिति ॥ न हुंकुर्य्यादिति शुक्लशोणितमयत्वेनाग्नीषोमीयस्य कायस्य अग्न्यंशे शुक्ले प्राणिना सह गते "यस्सोमांशो रसः सोमः शवगंधो हि सोमजः" "अग्निरूष्मा रसस्सोमश्शरीरं तन्मयं यतः" इतिवचनात् ॥ १२ ॥ चतुष्पथमिति ॥ सवेदिकः पूजितो वृक्षश्चैत्यतरुः ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

त्पीडकः । कीकटैरिति पाठे स एवार्थः । बंधकी असती ॥ ६ ॥ तथेति ॥ विद्विष्टादिभिर्मैत्रीं न कुर्यात् ॥ ७ ॥ ८ ॥ नेति ॥ दंतसंघर्षं न कुर्यात् दंतान्न संमर्दयेत् नासिकां न कुष्णीयात् नोत्किरेत् असंवृतमुखो न जृंभेत् जृंभणादि न कुर्यात् ॥ ९ ॥ १० ॥ नेति ॥ अशुचि ज्योतींषि न वीक्षेत । अमेध्यशस्तानीति पाठे अमेध्यान्यशस्तानि च सदा नाभिवीक्षेत ॥ ११ ॥ नग्नामिति ॥ शवं च तद्गंधं च न हुंकुर्यात् न जुगुप्सेत् । तद्गंधोहीति । अग्नीषोमात्मकरसोष्ममयदेहस्य अग्न्यंशे उष्मणि प्राणेन सह गते अवशिष्टसोमांशस्य रसस्य दाहोत्थस्सोमजो गंधः तदुक्तम्—"अग्निरूष्मा रसस्सोमश्शरीरं तन्मयं यतः" इति ॥ १२ ॥ चतुष्पथमिति ॥ चैत्यतरुं बद्धवेदिकं पूज्यं वृक्षम् ॥ १३॥१४॥१५॥ नेति ॥ जिह्मं कौटिल्यं न रोचयेत् नेच्छेत नान्यं ग्राहयेदिति वा । व्यालान्दुष्टगजान्सर्पान्वा नोपसर्पेत् । तत्संमुखं नोपसर्पेत । तत्संमुखे चोत्थितश्चिरं न तिष्ठेत् ॥ १६ ॥ अतीवेति ॥ अतीव जागरादीन्न सेवेत नाभ्यसेत् ॥ १७ ॥ दंष्ट्रिण इति ॥ अवश्यायं हिमम् ॥ १८ ॥

न स्नायान्न स्वपेन्नग्नो न चैवोपस्पृशेद्बुधः ॥ मुक्तकेशश्च नाचामेद्देवाद्यर्चां च वर्जयेत्॥१९॥होमदेवार्चनाद्यासु क्रियास्वाचमने तथा॥नैकवस्त्रः प्रवर्त्तेत द्विजपादावनेजने॥२०॥नासमंजसशीलैस्तु सहासीत कथंचन॥सद्वृत्तसन्निकर्षो हि क्षणार्द्धमपि शस्यते॥२१॥विरोधं नोत्तमैर्गच्छेन्नाधमैश्च सदा बुधः ॥ विवाहश्च विवादश्च तुल्यशीलैर्नृपेष्यते ॥२२॥ नारभेत कलिं प्राज्ञश्शुष्कवैरं च वर्जयेत्॥अप्यल्पहानिस्सोढव्या वैरेणार्थागमं त्यजेत् ॥ २३ ॥ स्नातो नांगानि संमार्जेत्स्नानशाट्या न पाणिना ॥ न च निर्धूनयेत्केशान्नाचामेच्चैव चोत्थितः ॥२४॥ पादेन नाक्रमेत्पादं न पूज्याभिमुखं नयेत् ॥ नोच्चासनं गुरोरग्रे भजेताविनयान्वितः ॥ २५ ॥ अपसव्यं न गच्छेच्च देवागारचतुष्पथान् ॥ मांगल्यपूज्यांश्च तथा विपरीतान्न दक्षिणम् ॥ २६ ॥ सोमार्काग्न्यंबुवायूनां पूज्यानां च न संमुखम् ॥ कुर्यान्निष्ठीवविण्मूत्रसमुत्सर्गं च पंडितः ॥ २७॥ तिष्ठन्न मूत्रयेत्तद्वत्पथिष्वपि न मूत्रयेत् ॥ श्लेष्मविण्मूत्ररक्तानि सर्वदैव न लंघयेत् ॥ २८ ॥ श्लेष्मशिंघाणिकोत्सर्गो नान्नकाले प्रशस्यते ॥ बलिमंगलजप्यादौ न होमे न महाजने ॥ २९ ॥ योषितो नावमन्येत न चासां विश्वसेद्बुधः ॥ न चैवेर्ष्या भवेत्तासु न धिक्कुर्यात्कदाचन ॥ ३० ॥ मंगल्यपूर्वरत्नाज्यपूज्याननभिवाद्य च ॥ न निष्क्रमेद्गृहात्प्राज्ञस्सदाचारपरो नरः ॥ ३१ ॥ चतुष्पथान्नमस्कुर्यात्काले होमपरो भवेत् ॥ दीनानभ्युद्धरेत्साधूनुपासीत बहुश्रुतान् ॥ ३२ ॥ देवर्षिपूजकस्सम्यक्पितृपिंडोदकप्रदः ॥ सत्कर्त्ता चातिथीनां यः स लोकानुत्तमान्व्रजेत् ॥ ॥ ३३ ॥ हितं मितं प्रियं काले वश्यात्मा योभिभाषते ॥ स याति लोकानाह्लाददहेतुभूतान्नृपाक्षयान् ॥ ३४ ॥

॥१९॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ अपसव्यमिति ॥ विपरीतानमंगल्यानपूज्यान्न प्रदक्षिणयेत् ॥२६॥२७॥२८॥ श्लेष्मेति ॥ शिंघाणो नासिकामलः ॥ २९ ॥ योषित इति ॥ न धिक्कुर्यात् योषिद्धिक्कारं न कुर्यात् ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

नेति ॥ नैवोपस्पृशेत् नाचामेत् ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ नेति ॥ कलिं कलहम् ॥ २३ ॥ २४ ॥ पादेनेति ॥ 'नीचासनं गुरोरग्रे' इति च पाठः । पूज्यानामभिमुखं पादं न नयेत् ॥ २५ ॥ अपसव्यमिति ॥ अपसव्यमप्रदक्षिणं विपरीतानमंगल्यादीन् प्रदक्षिणं न कुर्यात् ॥ २६ ॥ २७ ॥ २८ ॥ श्लेष्मेति ॥ शिंघाणकं क्षुतम् ॥ २९ ॥ योषित इति ॥ ईर्ष्या असहिष्णुता तासु न स्यात् योषिद्धिक्कारं न कुर्यात् ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥



१ कच्छश्चेति पाठांतरम् ।

धीमान्ह्रीमान्क्षमायुक्तो ह्यास्तिको विनयान्वितः ॥ विद्याभिजनवृद्धानां याति लोकाननुत्तमान् ॥ ३५ ॥ अकालगर्जितादौ च पर्वस्वाशौ चकादिषु ॥ अनध्यायं बुधः कुर्यादुपरागादिके तथा ॥ ३६ ॥ समं नयति यः क्रुद्धान्सर्वबंधुरमत्सरी ॥ भीताश्वासनकृत्साधुस्स्वर्गस्तस्याल्पकं फलम् ॥ ३७ ॥ वर्षातपादिषु च्छत्री दंडी रात्र्यटवीषु च ॥ शरीरत्राणकामो वै सोपानत्कस्सदा व्रजेत् ॥ ३८ ॥ नोर्ध्वं न तिर्यग्दूरं वा न पश्यन्पर्यटेद्बुधः ॥ युगमात्रं महीपृष्ठं नरो गच्छेद्विलोकयन् ॥ ३९ ॥ दोषहेतूनशेषांश्च वश्यात्मा यो निरस्यति ॥ तस्य धर्मार्थकामानां हानिर्नाल्पापि जायते ॥ ४० ॥ सदाचाररतः प्राज्ञो विद्याविनयशिक्षितः ॥ पापेप्यपापः परुषे ह्यभिधत्ते प्रियाणि यः ॥ मैत्रीद्रवांतःकरणस्तस्य मुक्तिः करे स्थिता ॥४१॥ ये कामक्रोधलोभानां वीतरागा न गोचरे ॥ सदाचारस्थितास्तेषामनुभावैर्धृता मही ॥ ४२ ॥ तस्मात्सत्यं वदेत्प्राज्ञो यत्परप्रीतिकारणम् ॥ सत्यं यत्परदुःखाय तदा मौनपरो भवेत् ॥ ४३ ॥ प्रियमुक्तं हितं नैतदिति मत्वा न तद्वदेत् ॥ श्रेयस्तत्र हितं वाच्यं यद्यप्यत्यंतमप्रियम् ॥ ४४ ॥ प्राणिनामुपकाराय यथैवेह परत्र च ॥ कर्मणा मनसा वाचा तदेव मतिमान्वदेत् ॥ ४५ ॥ इति श्रीविष्णुमहापुराणे तृतीयांशे द्वादशोऽध्यायः ॥१२॥ ॥ और्व उवाच ॥ सचैलस्य पितुः स्नानं जाते पुत्रे विधीयते ॥ जातकर्म तदा कुर्याच्छ्राद्धमभ्युदये च यत् ॥ १ ॥ युग्मान्देवांश्च पित्र्यांश्च सम्यक्सव्यक्रमाद्द्विजान् ॥ पूजयेद्भोजयेच्चैव तन्मना नान्यमानसः ॥ २ ॥

॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ सदाचारेति ॥ पापे पापकर्त्र्येपि अपापः अद्रोग्धा, परुषे परुषवक्तर्यपि प्रियवादी ॥ ४१ ॥ य इति ॥ अनुभावैः सत्यादिगुणैः । "सत्येनोत्तभिता भूमिः" इति श्रुतेः ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ॥ इति विष्णुचित्तीये श्रीविष्णुमहापुराणव्याख्याने तृतीयांशे द्वादशोऽध्यायः ॥ १२ ॥ ॥ १ ॥ युग्मानिति ॥ सव्यक्रमात प्रदक्षिणक्रमात् ॥ २ ॥

॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ सदाचारेति ॥ विद्यावृद्धानां विनयो विशिष्टो न्यायस्तेन शिक्षितः । पापेप्यपापः । परुष इत्यपकारिण्युपकर्ता । परुषभाषिण्यपि प्रियभाषी ॥ ४१ ॥ य इति ॥ ये कामादीनां न गोचरा आस्पदं न भवंतीत्यर्थः । तेषाम् अनुभावैः ॥ ४२ ॥ ४३ ॥ ४४ ॥ उपदेशसारं संक्षिप्याह—प्राणिनामिति ॥४५॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां तृतीयांशे द्वादशोऽध्यायः ॥ १२ ॥ ॥ अथ जातकर्मादिप्रपंचस्सचैलस्येत्यादिना ॥ १ ॥ युग्मानिति ॥ सव्यक्रमात्प्रदक्षिणक्रमेण ॥ २ ॥

दध्यक्षतैस्सबदरैः प्राङ्मुखोदङ्मुखोपि वा ॥ देवतीर्थेन वै पिंडान्दद्यात्कायेन वा नृप ॥३॥ नांदीमुखः पितृगणस्तेन श्राद्धेन पार्थिव॥ प्रीयते तत्तु कर्तव्यं पुरुषैस्सर्ववृद्धिषु ॥ ४ ॥ कन्यापुत्रविवाहेषु प्रवेशेषु च वेश्मनः ॥ नामकर्मणि बालानां चूडाकर्मादिके तथा ॥ ५ ॥ सीमंतोन्नयने चैव पुत्रादिमुखदर्शने ॥ नांदीमुखं पितृगणं पूजयेत्प्रयतो गृही ॥ ६ ॥ पितृपूजाक्रमः प्रोक्तो वृद्धावेष सनातनः ॥ श्रूयतामवनीपाल प्रेत कर्म क्रियाविधिः ॥ ७ ॥ प्रेतदेहं शुभैः स्नानैस्स्नापितं स्रग्विभूषितम् ॥ दग्ध्वा ग्रामाद्बहिः स्नात्वा सचैलस्सलिलाशये ॥ ८ ॥ यत्र तत्र स्थितायैतद मुकायेति वादिनः ॥ दक्षिणाभिमुखा दद्युर्बांधवास्सलिलाञ्जलीन् ॥ ९ ॥ प्रविष्टाश्च समं गोभिर्ग्रामं नक्षत्रदर्शने ॥ कटकर्म ततः कुर्युर्भूमौ प्रस्तरशायिनः ॥ १० ॥ दातव्योनुदिनं पिंडः प्रेताय भुवि पार्थिव ॥ दिवा च भक्तं भोक्तव्यममांसं मनुजर्षभ ॥ ११ ॥ दिनानि तानि चेच्छातः कर्तव्यं विप्रभोजनम् ॥ प्रेता यांति तथा तृप्तिं बंधुवर्गेण भुंजता ॥ १२ ॥ प्रथमेह्नि तृतीये च सप्तमे नवमे तथा ॥ वस्त्रत्यागबहि स्नाने कृत्वा दद्यात्तिलोदकम् ॥ १३ ॥ चतुर्थेह्नि च कर्तव्यं तस्यास्थिचयनं नृप ॥ तदूर्ध्वमंगसंस्पर्शस्सपिंडानामपीष्यते ॥ १४ ॥ योग्यास्स र्वक्रियाणां तु समानसलिलास्तथा ॥ अनुलेपनपुष्पादिभोगादन्यत्र पार्थिव ॥ १५ ॥ शय्यासनोपभोगश्च सपिंडानामपीष्यते ॥ भस्मास्थि चयनादूर्ध्वं संयोगो न तु योषिताम् ॥ १६ ॥ बाले देशांतरस्थे च पतिते च मुनौ मृते ॥ सद्यश्शौचं तथेच्छातो जलाग्न्युद्बंधनादिषु ॥ १७ ॥

दध्यक्षतैरिति ॥ कायेन प्राजापत्येन । वृद्धौ अभ्युदयिकश्राद्धे ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ पितृपूजेति ॥ वृद्धावभ्युदयश्राद्धे प्रेतकर्म तद्देहस्नापनदहनादिक्रियाविधिः पिंडोदकदानादिः ॥ ७ ॥ प्रेतदेहमिति ॥ स्नानैः स्नानसाधनकैः ॥ ८ ॥ यत्रेति ॥ अमुकशब्दस्तत्तद्गोत्रनामोपलक्षकः ॥ ९ ॥ प्रविष्टा इति ॥ गोप्रवेशकाले वा नक्षत्रदर्शने वा प्रवेशः । कटकर्म शवसंबंधमाशौचकृत्यं, प्रस्तरस्तृणादिशय्या ॥ १० ॥ दातव्य इति ॥ अनुदिनं यावदाशौचम् ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ योग्या इति ॥ सर्वक्रियाः संध्योपासनादिकाः ॥ १५ ॥ १६ ॥ बाल इति ॥ इच्छात इति विशेषणात् अकामतस्तु जलादिभिः मृतानां यथोक्तमाशौचादिकं

दध्यक्षतैरिति ॥ कायेन प्राजापत्येन ॥ ३ ॥ ४ ॥ ५ ॥ सीमन्तेति ॥ प्रवासादभ्येत्य पुत्रपौत्रादिमुखदर्शने च ॥ ६ ॥ ७ ॥ प्रेतदेहमिति ॥ स्नानैः स्नानीयैस्स्नानसाधनैः ॥ ८ ॥ यत्र तत्रेति ॥ अमुकायेति मृतस्य गोत्रनामोपलक्षणम् ॥ ९ ॥ प्रविष्टा इति ॥ कटकर्म प्रेतकृत्यमाशौचं, प्रस्तरस्तृणादिशय्या ॥ १० ॥ दातव्य इति ॥ अनुदिनं यावदाशौचं भक्तमोदनम् । आमांसमित्युक्ते मांस व्यतिरिक्तानुज्ञा ॥ ११ ॥ दिनानीति ॥ द्विजभोजनं विप्रभोजनं भोक्तॄणां विप्राणामिच्छातः कार्यम् । यद्वा–बंधुभोजनमेव विप्रभोजनम् ॥ १२ ॥ १३ ॥ १४ ॥ योग्या इति ॥ सपिंडसमानजल भेदः कूर्मोक्तः–"सपिंडता तु पुरुषे सप्तमे विनिवर्तते । समानोदकभावस्तु जन्मनाम्नोरवेदने" । सर्वक्रियाणामौपासनपंचयज्ञादीनाम् ॥ १५ ॥ १६ ॥ बाल इति ॥ देशांतरगते च देशांतरलक्षणं

मृतबंधोर्दशाहानि कुलस्यान्नं न भुज्यते ॥ दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्त्तते ॥ १८ ॥ विप्रस्यैतद्द्वादशाहं राजन्यस्याप्यशौचकम् ॥ अर्द्धमासं तु वैश्यस्य मासं शूद्रस्य शुद्धये ॥ १९ ॥ अयुजो भोजयेत्कामं द्विजानंते ततो दिने ॥ दद्याद्दर्भेषु पिंडं च प्रेतायोच्छिष्टसन्निधौ ॥ २० ॥ वार्य्यायुधप्रतोदास्तु दंडश्च द्विजभोजनात् ॥ स्प्रष्टव्योनंतरं वर्णैः शुद्धेरंते ततः क्रमात् ॥ २१ ॥ ततस्सवर्णधर्मा ये विप्रादीनामुदाहृताः ॥ तान्कुर्वीत पुमाञ्जीवेन्निजधर्मार्जनैस्तथा ॥ २२ ॥ मृताहनि च कर्त्तव्यमेकोद्दिष्टमतः परम् ॥ आह्वानादिक्रिया दैवनियोगरहितेन यत् ॥ २३ ॥ एकोर्घ्यस्तत्र दातव्यस्तथैवैकपवित्रकम् ॥ प्रेताय पिंडो दातव्यो भुक्तवत्सु द्विजातिषु ॥ २४ ॥ प्रश्नश्च तत्राभिरतिर्यजमानद्विजन्मनाम् ॥ अक्षय्यममुकस्येति वक्तव्यं विरतौ तथा ॥२५॥ एकोद्दिष्टमयो धर्म इत्थमावत्सरात्स्मृतः ॥ सपिंडीकरणं तस्मिन्काले राजेंद्र तच्छृणु ॥ २६ ॥ एकोद्दिष्टविधानेन कार्यं तदपि पार्थिव ॥ संवत्सरेथ षष्ठे वा मासे वा द्वादशेह्नि तव ॥ २७ ॥ तिलगंधोदकैर्युक्तं तत्र पात्रचतुष्टयम् ॥ २८ ॥ पात्रं प्रेतस्य तत्रैकं पैत्रं पात्रत्रयं तथा ॥ सेचयेत्पितृपात्रेषु प्रेतपात्रं ततस्त्रिषु ॥ २९ ॥

कार्यमेव "यदि कश्चित्प्रमादेन म्रियेताग्न्युदकादिभिः । तत्राशौचं विधातव्यं कर्तव्या चोदकक्रिया" इति स्मृतेः ॥ १७ ॥ मृतबंधोरिति ॥ मृतो बन्धुर्यत्र कुले तन्मृतबंधुतस्य कुलस्य ॥ १८ ॥ विप्रस्येति ॥ एतत्प्रागुक्तं दशाहाशौचम् ॥ ॥ १९ ॥ अयुज इति ॥ अंत्ये अशौचांत्यदिने 'आद्यमेकादशेहनि' इति स्मृतेः ॥ २० ॥ ॥ २१ ॥ २२ ॥ मृताहनीति ॥ आह्वानादीत्यादिशब्दादग्नौकरणादि ग्राह्यं दैवनियोगो वैश्वदैविकमामंत्रणम् ॥ २३ ॥ २४ ॥ प्रश्नश्चेति ॥ अभिरम्यतामिति यजमानेन प्रष्टव्यं द्विजैश्चाभिरतास्म इति प्रतिवक्तव्यम् ॥ २५ ॥ एकोद्दिष्टमय इति ॥ तस्मिन् काले संवत्सरेऽतीते ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥

स्मृत्युक्तं "महानद्यंतरं यत्र गिरिर्वा व्यवधायकः । वाचो यत्र विभिद्यंते तद्देशांतरमिष्यते ॥" इत्येतच्च मातापितृव्यतिरिक्तविषयं द्रष्टव्यम् "पितरौ चेन्मृतौ स्यातां दूरस्थोपि हि पुत्रकः ॥ श्रुत्वा तद्दिनमारभ्य दशाहं सूतकी भवेत्" इति । मुनौ यतौ इच्छात इति विशेषणादकामतस्तु जलादिभिर्मृतानां यथोक्तमाशौचादि कार्यमेव "यदिकश्चित्प्रमादेन म्रियतेग्न्युदकादिभिः । तस्याशौचं विधातव्यं कर्तव्या चोदकक्रिया" इति ॥ १७ ॥ मृतबंधोरिति ॥ मृतो बंधुर्यस्य तत्कुलस्य सपिंडस्यान्नं दशाहानि न भोक्तव्यम् ॥ १८ ॥ विप्रस्येति ॥ विप्रस्यैतद्दशाहमाशौचम् ॥ १९ ॥ आद्यैकोद्दिष्टश्राद्धमाह—अयुज इति ॥ एकं वा त्रीन्वा इत्येवं विषमसंख्यान् । अंते आशौचांते । आद्य इति पाठे आशौचानंतरमाद्येहनि इत्यर्थः "आद्यमेकादशेहनि" इति स्मृतेः ॥ २० ॥ वारीति ॥ द्विजभोजनानंतरं वर्णैर्विप्रादिभिरनुक्रमात् वार्यादयः स्प्रष्टव्याः । ततः शुद्ध्येरन्नित्यन्वयः ॥ २१ ॥ २२ ॥ मृताहनीति ॥ अतः परं द्वितीयादिमासेषु आह्वानमावाहनम् । आदिशब्दादग्नौकरणं दैवनियोगो वैश्वदेविकविप्रामंत्रणं तद्रहितमयुजो भोजयेदित्युक्तत्वात् ॥ २३ ॥ एक इति ॥ बहुष्वपि विप्रेषु भुक्तवत्सु प्रेतायैकः पिंडो दातव्यः ॥ २४ ॥ प्रश्नश्चेति ॥ प्रश्नश्चाभिरतिः । अभिरम्यतामिति यजमानोक्तिः । द्विजैरभिरमतास्म इति प्रतिवक्तव्यमित्यर्थः । अक्षय्यममुकस्येति पुराणकोद्दिष्टविषयम् उपतिष्ठत अक्षय्यस्थाने विप्रविसर्जने अभिरम्यतामिति वदेत् । ब्रूयुस्तेऽभिरताःस्मेति ॥ २५ ॥ एकोद्दिष्टेति ॥ तस्मिन्काले पूर्वसंवत्सरे ॥ २६ ॥ २७ ॥ २८ ॥ पात्रचतुष्टयविनियोगमाह—ञात्रं

ततः पितृत्वमापन्ने तस्मिन्प्रेते महीपते ॥ श्राद्धधर्मैरशेषैस्तु तत्पूर्वानर्चयेत्पितॄन् ॥३०॥ पुत्रः पौत्रः प्रपौत्रो वा भ्राता वा भ्रातृसंततिः ॥ सपिंडसंततिर्वापि क्रियार्हो नृप जायते ॥ ३१ ॥ तेषामभावे सर्वेषां समानोदकसंततिः ॥ मातृपक्षसपिंडेन संबंधा ये जलेन वा ॥ ३२ ॥ कुलद्वयेपि चोच्छिन्ने स्त्रीभिः कार्याः क्रिया नृप ॥ पितृमातृसपिंडैस्तु समानसलिलैस्तथा ॥ ३३ ॥ संघातांतर्गतैर्वापि कार्याः प्रेतस्य च क्रियाः ॥ उत्सन्नबंधुरिक्थाद्वा कारयेदवनीपतिः ॥ ३४ ॥ पूर्वाः क्रिया मध्यमाश्च तथा चैवोत्तराः क्रियाः ॥ त्रिःप्रकाराः क्रियास्सर्वास्तासां भेदं शृणुष्व मे ॥ ३५ ॥ आदाहाद्यादशाहाश्च स्पर्शाद्यंतास्तु याः क्रियाः ॥ ताः पूर्वा मध्यमा मासि मास्येकोद्दिष्टसंज्ञिताः ॥३६॥ प्रेते पितृत्वमापन्ने सपिंडीकरणादनु ॥ क्रियंते याः क्रियाः पित्र्याः प्रोच्यंते ता नृपोत्तराः ॥ ३७ ॥ पितृमातृसपिंडैस्तु समानसलिलैस्तथा ॥ संघातांतर्गतैर्वापि राज्ञा तद्धनहारिणा ॥ ३८ ॥ पूर्वाः क्रियाश्च कर्त्तव्याः पुत्राद्यैरेव चोत्तराः ॥ दौहित्रैर्वा नृपश्रेष्ठ कार्य्यास्तत्तनयैस्तथा ॥ ३९ ॥ मृताहनि च कर्त्तव्यास्त्रीणामप्युत्तराः क्रियाः ॥ प्रतिसंवत्सरं राजन्नेकोद्दिष्टविधानतः ॥ ४० ॥ तस्मादुत्तरसंज्ञायाः क्रियास्ताः शृणु पार्थिव ॥ यथायथा च कर्त्तव्या विधिना येन चानघ ॥ ४१ ॥ इति श्रीविष्णुमहापुराणे तृतीयांशे त्रयोदशोध्यायः ॥१३॥ ॥

तत इति ॥ श्राद्धधर्मैः पार्वणाद्यैः तत्पूर्वान् स पूर्वो येषां तान् सपिंडीकृतप्रमुखान् ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ संघातेति ॥ तत्संघातः तस्य मृतस्य सार्थः॥ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ पूर्वा इति ॥ पूर्वाः क्रियास्त्वित्यत्र पूर्वशब्देन मध्यमानामपि ग्रहणम् ॥ ३९ ॥ ४० ॥ ४१ ॥ इति श्रीविष्णुचित्तीये विष्णुमहापुराणव्याख्याने तृतीयांशे त्रयोदशोऽध्यायः ॥ १३ ॥ छ ॥

प्रेतस्येति ॥ पैत्रं पित्रादीनां पात्रत्रयम् ॥ २९ ॥ तत इति ॥ श्राद्धधर्मैस्स्वधाकारादिभिस्तत्पूर्वान् सः पूर्वो येषां तांस्त्रीनर्चयेत् । चतुर्थस्तु निवर्तते ॥ "तस्मादातृतीयात्पुरुषान्नाम गृह्णीयात्" इति श्रुतेः ॥ ३० ॥ मुख्यानुकल्पान्क्रियाकर्तॄनाह—पुत्र इत्यादिसार्धैस्त्रिभिः ॥ ३१ ॥ तेषामिति ॥ पिंडेन संबंधास्सपिंडाः । जलेन संबंधास्समानोदकाः ॥ ३२ ॥ ३३ ॥ संघातेति ॥ संघातांतस्थितैः सहाध्यायिसहायप्रमुखैः । यद्वा संघातः सार्थयात्रिका सार्थमृतस्य सार्थांतर्गतैः क्रियाः कार्या इत्यर्थः । उत्सन्ना बंधवो यस्य तस्य प्रेतस्य रिक्थाद्धनात् ॥ ३४ ॥ कर्तुर्व्यवस्थां वक्तुं क्रियात्रैविध्यमाह—पूर्वा इत्यादित्रिभिः ॥ ३५ ॥ आदाहेति ॥ आसमंताद्दह्यंतेस्मिन्नित्यादाहः श्मशानं तेन प्रेतदाहो लक्ष्यते । आदाहश्च वार्यायुधादिस्पर्शश्चाद्यंतो यासां ताः आदाहाद्या आशौचावधिकाः पूर्वाः क्रिया इत्यर्थः । तत्र पूर्वाः क्रियाः पितृमातृसपिंडादिभिर्यथार्हं कर्तव्याः उत्तरास्तु पुत्राद्यैर्मध्यमास्तु यथासंभवमुभयोरनियमेन कर्तव्या इति गम्यते ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्याने तृतीयांशे त्रयोदशोध्यायः ॥१३॥ ॥

१ अदाहवार्यायुधादि इति पाठान्तरम् ।

॥ और्व उवाच ॥ ब्रह्मेंद्ररुद्रनासत्यसूर्याग्निवसुमारुतान् ॥ विश्वेदेवान्पितृगणान्वयांसि मनुजान्पशून् ॥ १ ॥ सरीसृपानृषिगणान्यच्चान्यद्भूत संज्ञितम् ॥ श्राद्धं श्रद्धान्वितः कुर्वन्प्रीणयत्यखिलं जगत् ॥ २ ॥ मासिमास्यसिते पक्षे पंचदश्यां नरेश्वर ॥ तथाष्टकासु कुर्वीत काम्यान्काला ञ्छृणुष्व मे ॥३॥ श्राद्धार्हमागतं द्रव्यं विशिष्टमथ वा द्विजम् ॥ श्राद्धं कुर्वीत विज्ञाय व्यतीपातेऽयने तथा ॥ ४ ॥ विषुवे चापि संप्राप्ते ग्रहणे शशि सूर्ययोः ॥ समस्तेष्वेव भूपाल राशिष्वर्के च गच्छति ॥ ५ ॥ नक्षत्रग्रहपीडासु दुष्टस्वप्नावलोकने ॥ इच्छाश्राद्धानि कुर्वीत नवसस्यागमे तथा ॥ ६ ॥ अमावास्या यदा मैत्रविशाखास्वातियोगिनी ॥ श्राद्धैः पितृगणस्तृप्तिं तथाप्नोत्यष्टवार्षिकीम् ॥ ७ ॥ अमवास्या यदा पुष्ये रौद्रे थर्क्षे पुनर्वसौ ॥ द्वादशाब्दं तदा तृप्तिं प्रयांति पितरोर्चिताः ॥ ८ ॥ वासवाजैकपादर्क्षे पितणां तृप्तिमिच्छताम् ॥ वारुणे वाप्यमावास्या देवानामपि दुर्लभा ॥ ९ ॥ नवस्वृक्षेष्वमावास्या यदैतेष्ववनीपते ॥ तदा हि तृप्तिदं श्राद्धं पितॄणां शृणु चापरम् ॥ १० ॥

॥ १ ॥ २ ॥ मासीति ॥ अथोक्तक्रियाणां कालः अष्टकासु हेमंतशिशिरयोश्चतुर्णामपरपक्षाणाम् 'अष्टमीष्वष्टका' इत्याश्वलायनोक्तमासपंचके कृष्णपक्षसप्तम्या द्यास्तिस्रोऽष्टका इत्युक्तासु ॥ ३ ॥ ४ ॥ ५ ॥ नक्षत्रेति ॥ इच्छाश्राद्धानि काम्यश्राद्धानि ॥ ६ ॥ अमावास्येति ॥ मैत्रम् अनुराधा ॥ ७ ॥ ८ ॥ वासवेति ॥ वासवं धनिष्ठा अजैकपात् पूर्वभाद्रपदा वारुणं शतभिषक् ॥ ९ ॥ १० ॥

यदायदा च कर्तव्या इत्युपक्षितानुत्तरक्रियायाः कालान्वक्ष्यन्नादौ तावच्छ्राद्धप्रशंसामाह–ब्रह्मेंद्रेति ॥ १ ॥ २ ॥ मासिमासीति ॥ मासिमास्यसिते पक्षे यस्मिन्कस्मिंश्चिद्दिने कृष्णपक्षश्राद्धं तत्पंचदश्यां दर्श श्राद्धं कुर्वीतेत्यर्थः । "अमावास्याष्टकावृद्धिः कृष्णपक्षोयनद्वयम्" इत्यादिष्वमावास्याकृष्णपक्षयोः पृथगुक्तेः । तथाष्टकास्विति हेमंतशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका इत्याश्वलायनोक्तासु ॥ ३ ॥ श्राद्धार्हमिति ॥ श्राद्धार्हं द्रव्यं विशिष्टं वा द्विजमागतं विज्ञाय कुर्वीतेत्यन्वयः ॥ ४ ॥ विषुवे चेति ॥ समस्तेषु राशिष्वर्के गच्छति सति सर्वसंक्रांतीनां श्राद्धकालस्योक्तत्वात् । 'अयने विषुवे चेति' पृथगुक्तेः फलाधिक्यार्थे विज्ञेयम् ॥ ५ ॥ नक्षत्रेति ॥ इच्छाश्राद्धानि काम्यानि ॥ ६ ॥ अमावास्येति ॥ मैत्रमनुराधा ॥ ७ ॥ अमावास्येति ॥ रौद्रमार्द्रा ॥ ८ ॥ वासवेति ॥ वासवं धनिष्ठा । अजैकपादर्क्षं पूर्वभाद्रपदम् वारुणं शतभिषक् एतेषु अमावास्या पितॄणां देवानां च तृप्तिकर्तुमिच्छतां पुंसां दुर्लभा परमतृप्तिहेतुत्वात् । तृप्तिमिच्छतीति वा पाठः ॥ ९ ॥ एतत्परमतृप्तिहेतुत्वं मैत्रादिषु नवस्वप्यृक्षेषु अमावास्यायोगे तुल्यमित्याह–नवस्विति ॥ १० ॥

गीतं सनत्कुमारेण यथैलाय महात्मने ॥ पृच्छते पितृभक्ताय प्रश्रयावनताय च ॥११॥ सनत्कुमार उवाच॥ वैशाखमासस्य च या तृतीया नव म्यसौ कार्तिकशुक्लपक्षे ॥ नभस्यमासस्य च कृष्णपक्षे त्रयोदशी पंचदशी च माघे ॥ १२ ॥ एता युगाद्याः कथिताः पुराणेष्वनंतपुण्यास्तिथ यश्चतस्रः ॥ उपप्लवे चंद्रमसो रवेश्च त्रिष्वष्टकास्वप्ययनद्वये च ॥ १३ ॥ पानीयमप्यत्र तिलैर्विमिश्रं दद्यात्पितृभ्यः प्रयतो मनुष्यः ॥ श्राद्धं कृतं तेन समासहस्रं रहस्यमेतत्पितरो वदंति ॥१४॥ माघेऽसिते पंचदशी कदाचिदुपैति योगं यदि वारुणेन ॥ ऋक्षेण कालस्स परः पितॄणां न ह्यल्पपुण्यैर्नृप लभ्यतेसौ ॥ १५ ॥ काले धनिष्ठा यदि नाम तस्मिन्भवेत्तु भूपाल तदा पितृभ्यः ॥ दत्तं जलान्नं प्रददाति तृप्तिं वर्षायुतं तत्कुलजैर्मनुष्यैः ॥ १६ ॥ तत्रैव चेद्भाद्रपदानुपूर्वाः काले यथावत्क्रियते पितृभ्यः ॥ श्राद्धं परां तृप्तिमुपैति तेन युगं सहस्रं पितरस्स्वपंति ॥ ॥ १७ ॥ गंगां शतद्रूं यमुनां विपाशां सरस्वतीं नैमिशगोमतीं वा ॥ तत्रावगाह्यार्चनमादरेण कृत्वा पितॄणां दुरितानि हंति ॥ १८॥ गायंति चैतत्पितरः कदानु हर्षादमी तृप्तिमवाप्य भूयः ॥ माघासितांते शुभतीर्थतोयैर्यास्याम तृप्तिं तनयादिदत्तैः ॥ १९ ॥ चित्तं च वित्तं च नृणां विशुद्धं शस्तं च कालः कथितो विधिश्च ॥ पात्रं यथोक्तं परमा च भक्तिर्नृणां प्रयच्छंत्यभिवाञ्छितानि ॥ २० ॥ पितृगीतान्तथैवात्र श्लोकां स्ताञ्छृणु पार्थिव ॥ श्रुत्वा तथैव भवता भाव्यं तत्रादृतात्मना ॥ २१ ॥

गीतमिति ॥ ऐलः पुरूरवाः ॥ ११ ॥ १२ ॥ एता इति ॥ त्रिषु तिसृषु ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ गायन्त्येति ॥ वर्षासु नभस्य कृष्णपक्षे मघायुक्तत्रयोदशीनिर्देशः ॥ १९ ॥ २० ॥ २१ ॥

गीतमिति ॥ ऐलाय पुरूरवसे ॥ ११ ॥ वैशाखेति ॥ माघे पंचदशी कृष्णपक्ष इत्यनुषंगः ॥ १२ ॥ एता इति ॥ एता युगादयः त्रिष्वष्टकास्विति सप्तम्यादिषु त्रिषु दिवसेषु अष्टकासंज्ञेष्वित्यर्थः । तदुक्तं कौर्मे "मार्गशीर्षे तथा पौषे माघफाल्गुनयोरपि । तिस्रोष्टकाः कृष्णपक्षे सप्तम्यादिषु सूरिभिः" इति ॥ १३ ॥ पानीयमिति ॥ समासहस्रं वर्षाणां सहस्रम् ॥ १४ ॥ माघेऽसित इति ॥ माघेऽसित इत्युक्त्या पूर्वोक्तैरेव शतभिषग्धनिष्ठापूर्वाभाद्रपदाख्यैर्नक्षत्रैर्युक्तामावास्यातिश्रेष्ठेत्युच्यते । पूर्वं तु सर्वाप्यमावास्या तैर्युक्ता श्रेष्ठेत्युक्तमिति शेषः ॥ १५ ॥ १६ ॥ १७ ॥ गंगामिति ॥ पितॄणां समर्चनं कृत्वा आत्मनो दुरितानि हंति ॥ १८ ॥ गायंतीति ॥ वर्षामघातृप्तिमिति भाद्रपदापरपक्षमघात्रयोदशीश्राद्धे तृप्तिमवाप्येत्यर्थः ॥ १९ ॥ चित्तं चेति ॥ वित्तं विशुद्धं प्रशस्तद्रव्यं चित्तं च वित्तशाठ्यहीनम् ॥ २० ॥ एतदेव पितृगीतासु

अपि धन्यः कुले जायादस्माकं मतिमान्नरः ॥ अकुर्वन्वित्तशाठ्यं यः पिंडान्नो निर्वपिष्यति ॥ २२ ॥ रत्नं वस्त्रं महायानं सर्वभोगादिकं वसु ॥ विभवे सति विप्रेभ्यो योस्मानुद्दिश्य दास्यति ॥ २३ ॥ अन्नेन वा यथाशक्त्या कालेस्मिन्भक्तिनम्रधीः ॥ भोजयिष्यति विप्राग्र्यांस्तन्मात्रविभवो नरः ॥ २४ ॥ असमर्थोन्नदानस्य धान्यमामं स्वशक्तितः ॥ प्रदास्यति द्विजाग्रेभ्यः स्वल्पाल्पां वापि दक्षिणाम् ॥ २५ ॥ तत्राप्यसामर्थ्ययुतः कराग्राग्रस्थितांस्तिलान् ॥ प्रणम्य द्विजमुख्याय कस्मैचिद्भूप दास्यति ॥ २६ ॥ तिलैस्सप्ताष्टभिर्वापि समवेतं जलांजलिम् ॥ भक्तिनम्रस्समुद्दिश्य भुव्यस्माकं प्रदास्यति ॥ २७ ॥ यतः कुतश्चित्संप्राप्य गोभ्यो वापि गवाह्निकम् ॥ अभावे प्रीणयन्नस्मान्छ्रद्धायुक्तः प्रदास्यति ॥ २८ ॥ सर्वाभावे वनं गत्वा कक्षमूलप्रदर्शकः ॥ सूर्यादिलोकपालानामिदमुच्चैर्वदिष्यति ॥ २९ ॥ न मेऽस्ति वित्तं न धनं च नान्यच्छ्राद्धोपयोग्यं स्वपितॄन्नतोस्मि ॥ तृप्यंतु भक्त्या पितरो मयैतौ कृतौ भुजौ वर्त्मनि मारुतस्य ॥ ३० ॥ और्व उवाच ॥ इत्येतत्पितृभिर्गीतं भावाभावप्रयोजनम् ॥ यः करोति कृतं तेन श्राद्धं भवति पार्थिव ॥ ३१ ॥ इति श्रीविष्णुमहापुराणे तृतीयांशे चतुर्दशोऽध्यायः ॥ १४ ॥ ॥ और्व उवाच ॥ ब्राह्मणान्भोजयेच्छ्राद्धे यद्गुणांस्तान्निबोध मे ॥ १ ॥ त्रिणाचिकेतस्त्रिमधुस्त्रिसुपर्णष्षडंगवित् ॥ वेदविच्छ्रोत्रियो योगी तथा वै ज्येष्ठसामगः ॥ २ ॥

अपि धन्य इति ॥ जायात् जायेत ॥ २२ ॥ २३ ॥ २४ ॥ असमर्थ इति ॥ धान्यमविकृतं च आममपक्वम् ॥ २५ ॥ २६ ॥ २७ ॥ यत इति ॥ गवाह्निकं गोरेकाहतुष्टिकरणं तृणादिनाप्यायनम् ॥ २८ ॥ सर्वेति ॥ कक्षमूलप्रदर्शकः नैर्धन्यप्रकटनार्थमुत्क्षिप्तभुजः ॥ २९ ॥ न मेऽस्तीति । धनं जीवधनम् । अन्यद्धान्यादि ॥ ३० ॥ इत्येतदिति ॥ अन्यथा स्यादिति भावाभावप्रयोजनं शक्तावयं प्रयोज्यः प्रयोगः असंभवे त्वयमेवेति शक्त्यशक्तिप्रयुक्तं कृत्यम् ॥ ३१ ॥ इति श्रीविष्णुचित्तीये विष्णुमहापुराणव्याख्याने तृतीयांशे चतुर्दशोऽध्यायः ॥ १४ ॥ ॥ १ ॥ त्रिणाचिकेत इति ॥ द्वितीयकाठकस्था

स्पष्टीकरोति पितृगीतामित्यादि यावत्समाप्ति ॥ पितृगीतामिति ॥ अत्र चित्तवित्तादिप्रपंचकप्राशस्त्ये पितृगीतान् श्लोकाञ्छृणु ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ असमर्थ इति ॥ धान्यमामपक्वम् ॥ २५ ॥ २६ ॥ ॥ २७ यः कुतश्चिदिति ॥ गवाह्निकं गोजातेरेकाहतृप्तिकरतृणादिकम् ॥ २८ ॥ सर्वाभाव इति ॥ कक्षमूलप्रदर्शकः निर्धनत्वप्रकटनार्थमुत्क्षिप्तभुजः ॥ २९ ॥ नेति ॥ न मेस्ति वित्तं हिरण्यादि न चान्यद्धनं जीवनधनं त्वत्प्रियार्थं मया मारुतस्य वर्त्मन्याकाशे भुजावुत्क्षिप्तौ ॥ ३० ॥ इतीति ॥ भावाभावप्रयोजनं वित्तस्य भावे अभावे च प्रयोजनं पितृतृप्तिकारणमिति यावत् ॥ ३१ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्य श्रीविष्णुमहापुराणव्याख्याने तृतीयांशे चतुर्दशोऽध्यायः ॥ १४ ॥ ॥ अथ पार्वणं प्रयोगं वक्ष्यति । आदौ तावच्छ्राद्धार्हान्ब्राह्मणानाह ब्राह्मणानित्यादित्रिभिः—ब्राह्मणानिति ॥ यद्गुणान्यद्गुणैर्युक्तान् ॥ १ ॥ त्रिणाचिकेत इति॥ "अयं वाव यः पवत" इत्यादयो द्वितीयकाठकस्थाः त्रयोऽनुवाकास्त्रिणाचिकेतास्तदध्यायी तदनुष्ठाता च त्रिणाचिकेतः । मधुवाता इति त्यृचाध्यायी तद्व्रतश्च त्रिमधुः ब्रह्ममेतुमामित्यनुवाकत्रयाध्यायी तद्व्रतश्च त्रिसुपर्णः।

ऋत्विक्स्वस्रेयदौहित्रजामातृश्वशुरास्तथा ॥ मातुलोथ तपोनिष्ठः पंचाग्न्यभिरतस्तथा ॥ शिष्यास्संबंधिनश्चैव मातापितृरतश्च यः ॥ ३ ॥ एतान्नियोजयेच्छ्राद्धे पूर्वोक्तान्प्रथमे नृप ॥ ब्राह्मणान्पितृतुष्ट्यर्थमनुकल्पेष्वनंतरान् ॥४॥ मित्रध्रुक्कुनखी क्लीबश्श्यावदंतस्तथा द्विजः ॥ कन्यादूषयितावह्निवेदोज्झस्सोमविक्रयी ॥ ५ ॥ अभिशस्तस्तथा स्तेनः पिशुनो ग्रामयाजकः ॥ भृतकाध्यापकस्तद्वद्भृतकाध्यापितश्च यः ॥ ६ ॥ परपूर्वापतिश्चैव मातापित्रोस्तथोज्झकः ॥ वृषलीसूतिपोष्टा च वृषलीपतिरेव च ॥ ७ ॥ तथा देवलकश्चैव श्राद्धे नार्हति केतनम् ॥८॥ प्रथमेह्नि बुधश्शस्ताञ्छ्रोत्रियादीन्निमंत्रयेत् ॥ कथयेच्च तथैवेषां नियोगान्पितृदैविकान् ॥ ९ ॥

नुवाकविशेषास्त्रिणाचिकेताः तदध्यायी तदर्थानुष्ठायी त्रिणाचिकेतः । मधुवाता इति त्र्यर्चाध्यायी तद्व्रतस्त्रिमधुः । छांदोग्योक्तमधुविद्यानिष्ठो वा । ब्रह्मेतुमामित्यनुवाकत्रयाध्यायी तद्व्रतश्च त्रिसुपर्णः चतुर्वेगेत्र्यर्चाध्यायी तद्व्रतो वा । योगी ब्रह्मध्यायी आज्यदोहमित्यादिपरिभाषितस्सामविशेषो ज्येष्ठसाम 'मूर्द्धानं दिव' इत्याद्यृग्विशेषगीतं सामत्रयादिसामशाखानां जैमिनीयानां तु उदुत्यं चित्रमितित्र्यृचोत्पन्नं साम त्रेता सभ्यावसभ्यौ चेति द्वौ पंचाग्नयः । सावित्रनाचिकेतचातुर्होत्रवैश्वसृजारुणकेतुकास्तेषामुपासकः वेदांतोक्तपंचाग्निविद्यायुक्तो वा ॥ २ ॥ ३ ॥ एतानिति ॥ पूर्वोक्तगुणसंबंधिनः त्रिणाचिकेतादीन् प्रथमं नियोजयेत् । तेषामभावे अनंतरान् तद्गुणासंबंधिनो ऋत्विगादीन् अनुकल्पेषु ॥ ४॥ मित्रध्रुगिति ॥ निसर्गात् कुनखी कृष्णदंतश्च ॥५॥ अभिशस्त इति ॥ सत्येन वासत्येन वा महापातकेनाभिशस्तः ॥६॥ परपूर्वेति ॥ परपूर्वा पुनर्भूः वह्निवेदोज्झकः अकारणात् ॥ ७ ॥ तथेति ॥ देवलकः रुद्रकाल्पाद्युपजीवकः केतनमामंत्रणम् ॥ ८ ॥ ९ ॥

षडंगानि यस्य तं वेदं यो वेत्ति:षडंगवित् वेदविद्वेदार्थविचारकः श्रोत्रियस्तदनुष्ठाता । मूर्धानं दिव इत्यादिकृग्विशेषगीतमाज्यदोहमित्यादि साम ज्येष्ठसाम तद्यथावद्गायतीति ज्येष्ठसामगः ॥२॥ ऋत्विगिति॥ आहवनीयादित्रयं सभ्यावसभ्यौ चेति पंचाग्नयः तेष्वभिरतः । यद्वा वेदांतोक्तद्युपर्जन्यपृथिवीपुरुषयोषिद्रूपपंचाग्निविद्योपासकः ॥ ३ ॥ एतेषु मुख्यानुकल्पभेदमाह–एतानिति ॥ पूर्वोक्तांस्त्रिणाचिकेतान्प्रथमे मुख्यकल्पे नियोजयेत् । अनंतरान् ऋत्विगादीननुकल्पेषु ॥ ४ ॥ एतेषामसंभवे अनिषिद्धग्रहणार्थं निषेधानाह–मित्रध्रुगित्यादिसार्धैस्त्रिभिः–मित्रध्रुगिति ॥ कुनखी निसर्गतो विकृतनखः । श्यामदंतः निसर्गादेव कृष्णदंतः । वह्निवेदोज्झः अग्निवेदत्यागी ॥५॥ अभिशस्त इति ॥ अभिशस्तः सत्येनासत्येन वा महापातकेनाभियुक्तः । ग्रामयाजकः ग्रामार्थं यज्वा ॥ ६ ॥ परपूर्वेति ॥ परपूर्वा पुनर्भूः तस्याः पतिः । उज्झकः उपेक्षकः । वृषलीसूतिपोष्टा शूद्रापत्यपोषकः ॥ ७ ॥ तथेति ॥ देवलको देवोपजीवी । तदुक्तं "देवार्चनपरो यस्तु वित्तार्थं वत्सरत्रयम् । स वै देवलको नाम हव्यकव्येषु गर्हितः ॥" इति केतनं निमंत्रणम् ॥ ८ ॥ प्रथम इति ॥ पितृदैविकान्नियोगान्पित्रर्थे क्षणः कार्यः

ततः क्रोधव्यवायादीनायासं तैर्द्विजैस्सह ॥ यजमानो न कुर्वीत दोषस्तत्र महानयम् ॥ १० ॥ श्राद्धे नियुक्तो भुक्त्वा वा भोजयित्वा नियुज्य च ॥ व्यवायी रेतसो गर्ते मज्जयत्यात्मनः पितॄन् ॥ ११ ॥ तस्मात्प्रथममत्रोक्तं द्विजाग्र्याणां निमंत्रणम् ॥ अनिमंत्र्य द्विजानेवमागतान्भोजयेद्यतीन् ॥ १२ ॥ पादशौचादिना गेहमागतान्पूजयेद्द्विजान् ॥ १३ ॥ पवित्रपाणिराचांतानासनेषूपवेशयेत् ॥ पितॄणामयुजो युग्मान्देवानामिच्छया द्विजान् ॥ १४ ॥ देवानामेकमेकं वा पितॄणां च नियोजयेत् ॥ १५ ॥ तथा मातामहश्राद्धं वैश्वदेवसमन्वितम् ॥ कुर्वीत भक्तिसंपन्नस्तंत्रं वा वैश्वदैविकम् ॥ १६ ॥ प्राङ्मुखान्भोजयेद्विप्रान्देवानामुभयात्मकान् ॥ पितॄन् पितामहानां च भोजयेच्चाप्युदङ्मुखान् ॥ १७ ॥ पृथक्तयोः केचिदाहुः श्राद्धस्य करणं नृप ॥ एकत्रैकेन पाकेन वदंत्यन्ये महर्षयः ॥ १८ ॥ विष्टरार्थं कुशं दत्त्वा संपूज्यार्घ्यं विधानतः ॥ कुर्यादावाहनं प्राज्ञो देवानां तदनुज्ञया ॥ १९ ॥ यवांबुना च देवानां दद्यादर्घ्यं विधानवित् ॥ स्रग्गंधधूपदीपांश्च तेभ्यो दद्याद्यथाविधि ॥ २० ॥ पितॄणामपसव्यं तत्सर्वमेवोपकल्पयेत् ॥ अनुज्ञां च ततः प्राप्य दत्त्वा दर्भान्द्विधाकृतान् ॥ २१ ॥ मंत्रपूर्वं पितॄणां तु कुर्याच्चावाहनं बुधः ॥ तिलांबुना चापसव्यं दद्यादर्घ्यादिकं नृप॥२२॥ काले तत्रातिथिं प्राप्तमन्नकामं नृपाध्वगम् ॥ ब्राह्मणैरभ्यनुज्ञातः कामं तमपि भोजयेत्॥२३॥ योगिनो विविधै रूपैर्नराणामुपकारिणः ॥ भ्रमंति पृथिवीमेतामविज्ञातस्वरूपिणः ॥ २४ ॥ तस्मादभ्यर्चयेत्प्राप्तं श्राद्धकालेऽतिथिं बुधः ॥ श्राद्धक्रियाफलं हंति नरेंद्रापूजितोऽतिथिः ॥ २५ ॥ जुहुयाद्व्यंजनक्षारवर्जमन्नं ततोऽनले ॥ अनुज्ञातो द्विजैस्तैस्तु त्रिकृत्वः पुरुषर्षभ ॥२६॥

प्रथमेऽहनीत्यादिद्वयोरेकं वाक्यं तत इति ॥ द्विजैस्सह न कुर्वीत द्विजाश्च न कुर्वीरन् इत्यर्थः ॥ १० ॥ ११ ॥ तस्मादिति । यतीन् नियतेंद्रियान् ॥ १२ ॥ १३ ॥ ॥ १४ ॥ १५ ॥ तथेति ॥ तंत्रं सकृदनुष्ठानं पितृमातामहवर्गश्राद्धयोरेकमेव वैश्वदेवमित्यर्थः ॥ १६ ॥ प्राङ्मुखानिति ॥ उभयात्मकान् पितृमातामहवर्गान् ॥ १७ ॥ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ जुहुयादिति ॥ व्यंजनं शाकादि क्षारं लवणादि ॥ २६ ॥

विश्वेदेवार्थः । इति च पृथक्कथयेत् ॥ ९ ॥ १० ॥ तत्र महान्दोष इत्युक्तं तमेवाह–श्राद्धे नियुक्त इति ॥ ११ ॥ तस्मादिति ॥ द्विजाग्र्याणां स्वधर्मनिष्ठानां यतींश्च द्विजान्भोजयेत् । तान्पूर्वेद्युरनिमंत्र्यापि तस्मिंन्काले गृहमागतान्भोजययेत् ॥ १२ ॥ पादेति ॥ तांश्च सर्वान्पादशौचादिनोपचारेण भोजयेत् ॥ १३ ॥ पवित्रपाणिरिति ॥ पितॄणामयुजः अयुग्मान् देवानां युग्मानिच्छया यथाशक्ति योजयेत् ॥ १४ ॥ देवानामिति ॥ उभयेषामेकमेकं वा ॥ १५ ॥ तथेति ॥ तंत्रं पितृमातामहश्राद्धयोरेकमेव वैश्वदैविकमनुष्ठानमित्यर्थः ॥ १६ ॥ प्राङ्मुखानिति ॥ उभयात्मकान् पितृमातामहश्राद्धद्वयार्थान् ॥ १७ ॥ पृथगिति ॥ तयोः पितृमातामहवर्गयोः ॥ १८ ॥ विष्टरार्थमिति ॥ तदनुज्ञया देवात्मद्विजानुज्ञया ॥ १९ ॥ २० ॥ पितॄणामिति ॥ द्विधाकृतान् द्विगुणभुग्नानासनार्थं दत्त्वा ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ जुहुयादिति ॥ व्यंजनं

अग्नये कव्यवाहाय स्वधेत्यादौ नृपाहुतिः ॥ सोमाय वै पितृमते दातव्या तदनंतरम् ॥२७॥ वैवस्वताय चैवान्या तृतीया दीयते ततः ॥ हुतावशिष्टमल्पान्नं विप्रपात्रेषु निर्वपेत् ॥२८॥ ततोन्नं मृष्टमत्यर्थमभीष्टमतिसंस्कृतम् ॥ दत्त्वा जुषध्वमिच्छातो वाच्यमेतदनिष्ठुरम् ॥ २९॥ भोक्तव्यं तैश्च तच्चित्तैर्मौनिभिस्सुमुखैः सुखम् ॥ अक्रुद्ध्यता चात्वरता देयं तेनापि भक्तितः ॥ ३० ॥ रक्षोघ्नमंत्रपठनं भूमेरास्तरणं तिलैः ॥ कृत्वा ध्येयास्स्वपितरस्त एव द्विजसत्तमाः ॥३१॥ पिता पितामहश्चैव तथैव प्रपितामहः ॥ मम तृप्तिं प्रयांत्वद्य विप्रदेहेषु संस्थिताः ॥३२॥ पिता पितामहश्चैव तथैव प्रपितामहः ॥ मम तृप्तिं प्रयान्त्वद्य होमाप्यायितमूर्तयः ॥ ३३ ॥ पिता पितामहश्चैव तथैव प्रपितामहः ॥ तृप्तिं प्रयांतु पिंडेन मया दत्तेन भूतले ॥ ३४ ॥ पिता पितामहश्चैव तथैव प्रपितामहः ॥ तृप्तिं प्रयांतु मे भक्त्या मयैतत्समुदाहृतम् ॥ ३५ ॥ मातामहस्तृप्तिमुपैतु तस्य तथा पिता तस्य पिता ततोन्यः ॥ विश्वे च देवाः परमां प्रयांतु तृप्तिं प्रणश्यंतु च यातुधानाः ॥ ३६ ॥ यज्ञेश्वरो हव्यसमस्तकव्यो भोक्ताव्ययात्मा हरिरीश्वरोत्र ॥ तत्संनिधानादपयांतु सद्यो रक्षांस्यशेषाण्यसुराश्च सर्वे ॥ ३७ ॥ तृप्तेष्वेतेषु विकिरेदन्नं विप्रेषु भूतले ॥ दद्यादाचमनार्थाय तेभ्यो वारि सकृत्सकृत् ॥ ३८ ॥ सुतृप्तैस्तैरनुज्ञातस्सर्वेणान्नेन भूतले ॥ सतिलेन ततः पिंडान्सम्यग्दद्यात्समाहितः ॥ ३९ ॥ पितृतीर्थेन सलिलं तथैव सलिलांजलिम् ॥ मातामहेभ्यस्तेनैव पिंडांस्तीर्थेन निर्वपेत् ॥ ४० ॥ दक्षिणाग्रेषु दर्भेषु पुष्पधूपादिपूजितम् ॥ स्वपित्रे प्रथमं पिंडं दद्यादुच्छिष्टसन्निधौ ॥ ४१ ॥ पितामहाय चैवान्यं तत्पित्रे च तथापरम् ॥ दर्भमूले लेपभुजः प्रीणयेल्लेपघर्षणैः ॥ ४२ ॥

॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ पितामहायेति ॥ लेपभुजः चतुर्थादीन् प्रपितामहात्परे त्रयः "लेपभाजश्चतुर्थाद्याः पित्राद्याःपिंडभागिनः" इति स्मृतेः ॥ ४२ ॥

शाकादि क्षारं मरीचादि तद्वर्जम् ॥ २६ ॥ अग्नय इति ॥ कव्यवाहनाय स्वधेति च पाठः ॥ २७ ॥ वैवस्वतायेति ॥ वैवस्वताय यमायांगिरस्वत इति ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ सुतृप्तैरिति ॥ सर्वेण व्यंजनादिसहितेनान्नेन पिंडादि दद्यात् ॥ ३९ ॥ ४० ॥ ४१ ॥ पितामहायेति ॥ पिंडार्थमास्तृतदर्भमूले लेपभाजः चतुर्थादीन् प्रीणयेत् । "लेपभाजश्च

पिंडैर्मातामहांस्तद्वद्गंधमाल्यादिसंयुतैः ॥ पूजयित्वा द्विजाग्र्याणां दद्याच्चाचमनं ततः ॥ ४३ ॥ पितृभ्यः प्रथमं भक्त्यातन्मनस्को नरेश्वर ॥ सुस्वधेत्याशिषा युक्तां दद्याच्छक्त्या च दक्षिणाम् ॥ ४४ ॥ दत्त्वा च दक्षिणां तेभ्यो वाचयेद्वैश्वदेविकान् ॥ प्रीयंतामिह ये विश्वेदेवास्तेन इतीरयेत् ॥ ४५ ॥ तथेति चोक्ते तैर्विप्रैः प्रार्थनीयास्तथाशिषः ॥ पश्चाद्विसर्जयेद्देवान्पूर्वं पैत्र्यान्महीपते ॥ ४६ ॥ माता महानामप्येवं सह देवैः क्रमः स्मृतः ॥ भोजयेच्च स्वशक्त्या च दाने तद्वद्विसर्जने ॥ ४७॥ आपादशौचनात्पूर्वं कुर्याद्देवद्विजन्मसु ॥ विसर्जनं तु प्रथमं पैत्रं मातामहेषु वै ॥ ४८ ॥ विसर्जयेत्प्रीतिवचस्सम्मान्याभ्यर्थितास्ततः ॥ निवर्त्तेताभ्यनुज्ञात आद्वारंताननुव्रजेत् ॥ ४९ ॥ ततस्तु वैश्वदेवाख्यं कुर्यान्नित्यक्रियां बुधः ॥ भुंजीयाच्च समं पूज्य भृत्यबंधुभिरात्मनः ॥ ५० ॥ एवं श्राद्धं बुधः कुर्यात्पैत्र्यं मातामहं तथा ॥ श्राद्धैराप्यायिता दद्युस्सर्वान्कामान्पितामहाः ॥ ५१ ॥ त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः ॥ रजतस्य कथा दानं तथा संकीर्त्तनादिकम् ॥ ५२ ॥

॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ आपादेति ॥ वैश्वदेवतंत्रपक्षे पूर्वं वैश्वदेविकान् द्विजानर्चयेत् ततः पितृवर्गान् ततो मातामहादीन् । विसर्जनं तु प्रथमं पितॄणां ततो मातामहादीनामित्यर्थः ॥ ४८ ॥ विसर्जयेदिति ॥ ततस्सम्मान्याभ्यर्थितान् देवान् विसर्जयेत् । दौहित्रः उद्देश्यस्य पितरो हि सप्त गणाः कन्यासंततिप्रधानाः ॥ ४९ ॥ ५० ॥ ५१ ॥ त्रीणीति ॥ कुतपः दिवसस्याष्टमो मुहूर्त्तः । अन्ये च कुतपास्संति "मध्याह्नः खड्गपात्रं च तथा नेपालकंबलः । रूप्यं दर्भास्तिला गावो दौहित्रश्चाष्टमः स्मृतः" इति । "पापं कुत्सितमित्याहुस्तस्य संतापकारिणः । अष्टावपि यतस्तस्मात्कुतपा इति विश्रुताः"

तुर्याद्याः पित्राद्याः पिंडभागिनः" इति स्मृतेः ॥४२॥४३॥ पितृभ्य इति ॥ पितृभ्य इति मातामहापेक्षया पितृभ्यः प्रथमं दक्षिणां दद्यात् । वैश्वदेविकेभ्यस्तु ततः पितृपूर्वकमेव ॥४४॥४५॥४६॥४७॥ दत्तमेव स्पष्टयति । आपादशौचनादिति ॥ विश्वेदेवतंत्रपक्षे पादप्रक्षालनादिप्रभृति सर्वं देवार्थानां द्विजन्मनां प्रथमं कुर्यात् । ततः पितृवर्गाणां ततो मातामहवर्गाणां, विसर्जनं तु प्रथमं पितॄणां ततो मातामहानां ततो देवानामित्यर्थः ॥ ॥४८॥४९॥ ततस्त्विति ॥ पूज्या मान्याः तैश्च भृत्यैश्च बंधुभिस्सह भुंजीत ॥५०॥५१॥ त्रीणीति ॥ दौहित्रो दुहितुस्सुतः । कुतपोऽष्टमो मुहूर्तः । दौहित्रमिति पाठे दौहित्रं घृतविशेषः । तदुक्तं पाद्मपुराणे "अमावस्यागते सोमे या च खादति गौस्तृणम् । दुहिता नाम सा तस्या घृतं दौहित्रमुच्यते" यद्वा "दौहित्रः प्रोच्यते खड्गललाटाद्यश्च जायते । तस्य खड्गस्य यत्पात्रं तद्दौहित्रमुदाहृतम्" इति । रजतस्य कथा च कीर्तनं दर्शनादिकं

वर्ज्यानि कुर्वता श्राद्धं क्रोधोध्वगमनं त्वरा ॥ भोक्तुरप्यत्र राजेंद्र त्रयमेतन्न शस्यते ॥ ५३ ॥ विश्वेदेवास्सपितरस्तथा मातामहा नृप ॥ कुलं चाप्यायते पुंसां सर्वं श्राद्धं प्रकुर्वताम् ॥ ५४ ॥ सोमाधारः पितृगणो योगाधारश्च चंद्रमाः ॥ श्राद्धे योगिनियोगस्तु तस्माद्भूपाल शस्यते ॥५५॥ सहस्रस्यापि विप्राणां योगी चेत्पुरतःस्थितः ॥ सर्वान्भोक्तूंस्तारयति यजमानं तथा नृप ॥ ५६ ॥ इति श्रीविष्णुमहापुराणे तृतीयांशे पंचदशोऽध्यायः ॥१५॥ ॥ और्व उवाच ॥ हविष्यमत्स्यमांसैस्तु शशस्य नकुलस्य च ॥ सौकरच्छागलैणेयरौरवैर्गवयेन च ॥१॥

इति । रजतस्य कथा कीर्त्तनम् आदिशब्देन राजतपात्रादि गृह्यते ॥ ५२ ॥ ५३ ॥ ५४ ॥ सोमाधार इति ॥ आधिकारिदेवता अग्निष्वात्ताद्याः वसुरुद्रादित्यरूपाः संति ते अस्मादादिनिमंत्रितविप्रान् आविश्य तन्मुखेन श्राद्धं भुक्त्वा तृप्तास्संतो नित्यं स्वयोगाप्यायितसोमद्वारास्मदादिपितॄंस्तल्लोकस्थान् तर्पयंति कर्तॄंश्चास्मदादीन् कामैर्वर्द्धयंति ते चाधिकारिपितृगणास्सप्तचत्वारो मूर्त्तिमंतोऽत्र त्रय एषां मूर्त्तयः तेऽपि योगबलेन सोममाप्याययन्ति । सोप्यस्मदादिपितॄणामाधारः पोषकश्च तेषां योगनिष्ठाः प्रिया इति। श्राद्धे योगी निमंत्र्यः।पितॄणां लिंगेन धार्यते सर्वनियुक्तत्वात् स च सोमाधिकारिपितॄणां योगेन धार्यः ते हि प्रजासर्गे नियुक्तत्वात्।अग्नीसोमात्मकस्य जगतः सोमांशाधिक्यभावनया सृष्टिं पुष्णंति । एवमन्येपि योगिनः । तथा हरिवंशे भीष्मं प्रति शंतनूक्तिः—"अदितेयास्तु ते तात पितरोऽदितिदेवताः ॥ तान्यजस्व महाभाग श्राद्धे श्राद्धैरतंद्रितः ॥ ते हि श्रेयो विधास्यंति सर्वकामफलप्रदाः । त्वयैवाराध्यमानास्ते नामगोत्रादिकीर्त्तनैः ॥ अस्मानाप्याययिष्यंति स्वर्गस्थानपि भारत ॥ श्राद्धेषु ये प्रदास्यंति त्रीन्पिंडान्नामगोत्रतः । सर्वत्र वर्त्तमानान्स्वान्पितॄनथ पितामहान् ॥भावयिष्यंति सततं श्राद्धदानेन पूजिताः" इति । तत्रैव देवान्प्रति ब्रह्मा "श्राद्धैराप्यायिताश्चैव पितरस्सोममव्ययम् । आपीयमानं युष्माभिर्वर्धयिष्यंति नित्यशः ॥ श्राद्धैराप्यायितस्सोमो लोकानाप्याययिष्यति । श्राद्धानि पुष्टिकामाश्च ये चरिष्यंति मानवाः ॥ तेभ्यः पुष्टिं प्रजाश्चैव दास्यंति पितरस्तदा" इति। तत्रैव "एते हि पितरस्तात योगिनां योगवर्द्धनाः।आप्याययंति ये पूर्वं सोमं योगबलेन वै॥ तस्माच्छ्राद्धानि देयानि योगिनां द्विजसत्तम" इति । वायुप्रोक्ते च "श्राद्धे प्रीताः पुनस्सोमं पितरो योगमास्थिताः । आप्याययंति योगेन त्रैलोक्यं तेन जीवति" इति ॥ ५५ ॥ ५६ ॥ इति श्रीविष्णुचित्तीये विष्णुमहापुराणव्याख्याने तृतीयांशे पंचदशोऽध्यायः ॥ १५ ॥ हविष्येति ॥ हविष्येणैकं मासं तृप्तिः । मत्स्येन द्वौ

च पवित्रम् "पवित्रं राजतं तत्र पितॄणां पात्रमुच्यते । रजतस्य कथा दानं दर्शनन्नाम चोच्यते ॥" इति मत्स्यवायूक्तेः ॥५२॥५३॥५४॥ सोमाधार इति ॥ श्राद्धदेवताभूतो हि वसुरुद्रादित्यपितृगणस्सोमाधारः सोमोपजीवित्वात् । योगाधारश्चंद्रमाः तेषामेव पितॄणां योगबलेन पुनश्चंद्रस्याप्यायकत्वात् देहस्थचंद्रस्याप्यायनं च योगिनां योगबलेन प्रसिद्धं तस्माच्छ्राद्धे योगिनिमंत्रणं प्रसिद्धमित्यर्थः । तथा च हरिवंशे "एतेस्म त्पितरस्तात योगिनां योगवर्धनाः । आप्याययंति ये पूर्वं सोमं योगबलेन वै ॥ तस्माच्छ्राद्धानि देयानि योगिनां द्विजसत्तम" इति वायूक्तौ च "श्राद्धैः प्रीताः पुनस्सोमं पितरो योगमास्थिताः । आप्याययंति योगेन त्रैलोक्यं तेन जीवितम्" इति ॥ ५५ ॥ ५६ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां तृतीयांशे पंचदशोध्यायः ॥ १५ ॥ अथ श्राद्धे प्रदेयद्रव्यप्रशंसा श्लोकद्वयस्यै

औरभ्रगव्यैश्च तथा मासवृद्ध्या पितामहाः ॥ प्रयांति तृप्तिं मांसैस्तु नित्यं वार्ध्रीणसामिषैः ॥ २ ॥ खड्गमांसमतीवात्र कालशाकं तथा मधु ॥ शस्तानि कर्मण्यत्यंततृप्तिदानि नरेश्वर ॥ ३ ॥ गयामुपेत्य यः श्राद्धं करोति पृथिवीपते ॥ सफलं तस्य तज्जन्म जायते पितृतुष्टिदम् ॥ ४ ॥ प्रशान्तिकास्सनीवाराश्श्यामाका द्विविधास्तथा ॥ वन्यौषधीप्रधानास्तु श्राद्धार्हाः पुरुषर्षभ ॥ ५ ॥ यवाः प्रियंगवो मुद्गा गोधूमा व्रीहयस्तिलाः ॥ निष्पावाः कोविदाराश्च सर्षपाश्चात्र शोभनाः ॥ ६ ॥ अकृताग्रयणं यच्च धान्यजातं नरेश्वर ॥ राजमाषानणूंश्चैव मसूरांश्च विसर्जयेत् ॥ ७ ॥ अलाबुं गृंजनं चैव पलांडुं पिंडमूलकम् ॥ गांधारककरंबादिलवणान्यौषराणि च ॥ ८ ॥

मांसेन त्रीन् मासान् । अत्र मांसो हारिणादि 'त्रीन् मासान् हरिणेन तु' इति मनूक्तेः । छागलः अजः रुरुर्महान् कृष्णसारः ॥१॥ औरभ्रेति ॥ उरभ्र ऊर्णायुः गव्यं पयः पायसं वा "संवत्सरं तु गव्येन पयसा पायसेन वा" इति स्मृतेः । गव्यं मांसमित्यन्ये । संवत्सरं गव्येन प्रीतिर्भूयात् अतो माहिषेणैतेन 'ग्राम्यारण्यानां पशूनां मांसं मेध्यं पुण्यतमम्' इत्यापस्तंबोक्तिः।मासवृद्ध्या एकाद्येकोत्तरं द्वादशमासांतं मासवृद्ध्या तृप्तिः। "कृष्णग्रीवो रक्तशिराः श्वेतपक्षो विहंगमः। स वै वार्ध्रीणसः प्रोक्त इत्येषा नैगमी स्मृतिः॥" इति "त्रिःपिबं त्विन्द्रियक्षीणं वृद्धं श्वेतमजापतिम् । वार्ध्रीणसं तु तं प्राहुः याज्ञिकाः श्राद्धकर्मणि" इति च॥ २॥खड्गमांसमिति॥कालशाकः कैठर्यः ॥ ३ ॥ ४ ॥ प्रशान्तिका इति ॥ प्रशांतिकः कालयवाख्यधान्यविशेषः ॥५॥ यवा इति ॥ कोविदारः कोद्रवः युगपत्राख्यवृक्षो वा ॥ ६॥ अकृतेति ॥ राजमाषः अणुः क्षुद्रधान्यविशेषः । मसूरं गृंजनम् ॥ ७ ॥ अलाबिति । पलांडुश्च लशुनजातिविशेषः । पिंडमूलकं कंदविशेषः । गांधारकः सुगन्धशालिविशेषः । आरनाल

कान्वयः हविष्येति ॥ हविष्येण व्रीह्याद्यन्नेन मत्स्यादीनां दशानां मांसैश्च प्रत्येकं मासवृद्ध्या पितरस्तृप्तिं यांति । तद्यथा—हविष्येणैकं मासं, मत्स्यमांसेन द्वौ मासाविति । एवमेकादशमासांतं वार्ध्रीणसामिषैस्तु नित्यं तृप्यंतीत्यर्थः । छागलो वस्तः । ऐणेयः हरिः । रुरुः पृषतः तदीयं मांसं रौरवम् । गोसदृश आरण्यः पशुर्गवयः । उरभ्रो मेषः तदीयमौरभ्रं गव्यमत्र पयः पायसं वा "संवत्सरं तु गव्येन पयसा पायसेन च" इति स्मृतेः । मांसप्रायपाठात् गव्यं मांसमेवेत्यन्ये । वार्ध्रीणसं स्मृतिप्रसिद्धम् "त्रिः पिबत्विंद्रियक्षीणं वृद्धं श्वेतमजापतिम् । वार्ध्रीणसं तु तं प्राहुर्याज्ञिकाः श्राद्धकर्मणि" यद्वा "कृष्णग्रीवो रक्तशिराः श्वेतपक्षो विहंगमः । स वै वार्ध्रीणसः प्रोक्त इत्येषा नैगमी श्रुतिः" इति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ प्रशांतिका इति ॥ प्रशांतिका अरण्यव्रीहिसदृशाः श्वेतशूकाः श्यामाका द्विविधाः श्वेताः कृष्णाश्च ॥ ५ ॥ यवा इति ॥ प्रियंगवः निष्पावाः । वेल्लाः कोविदाराः । युगपत्राख्याः वृक्षाः । पैप्पलानि वक्ष्यंते ॥ ६ ॥ अथ वर्ज्यान्याह—अकृतेत्यादि ॥ पर्युषितं तथेत्यंतेन ॥ ७ ॥ अलाबुमिति ॥ गृजनं मूलभेदः । लशुनभेद इत्येके । पलांडुर्लशुनभेदः पिंडमूलं कंदाकारमूलकं तस्मादेव विशेषणादीर्घाकारमूलकाभ्यनुज्ञा गांधारकमारनालं शालिभेद इत्येके । करंभं भ्रष्टनिस्तुषधान्यचूर्णं धान्यभेद इत्येके । औषराणि ऊषरोद्भवानि ॥ ८ ॥

आरक्ताश्चैव निर्यासाः प्रत्यक्षलवणानि च ॥ वर्ज्यान्येतानि वै श्राद्धे यच्च वाचा न शस्यते ॥ ९ ॥ नक्ताहृतमनुच्छिन्नं तृप्यते न च यत्र गौः ॥ दुर्गंधिफेनिलं चांबु श्राद्धयोग्यं न पार्थिव ॥१०॥ क्षीरमेकशफानां यदौष्ट्रमाविकमेव च ॥ मार्गं च माहिषं चैव वर्जयेच्छ्राद्धकर्मणि ॥ ॥ ११ ॥ षंडापविद्धचंडालपापिपाषंडिरोगिभिः ॥ कृकवाकुश्वाननग्नवानरग्रामसूकरैः ॥ १२ ॥ उदक्यासूतिकाशौचमृतहारैश्च वीक्षिते ॥ श्राद्धे सुरा न पितरो भुंजंते पुरुषर्षभ ॥ १३ ॥ तस्मात्परिश्रिते कुर्याच्छ्राद्धं श्रद्धासमन्वितः ॥ उर्व्यां च तिलविक्षेपाद्यातुधानान्निवारयेत् ॥ ॥ १४ ॥ नखादिना चोपपन्नं केशकीटादिभिर्नृप ॥ न चैवाभिषवैर्मिश्रमन्नं पर्युषितं तथा ॥ १५ ॥ श्रद्धासमन्वितैर्दत्तं पितृभ्यो नामगोत्रतः ॥ यदाहारास्तु ते जातास्तदाहारत्वमेति तत् ॥ १६ ॥ श्रूयते चापि पितृभिर्गीता गाथा महीपते ॥ इक्ष्वाकोर्मनुपुत्रस्य कलापोपवने पुरा ॥ १७ ॥

कमित्यन्ये। करंबः भ्रष्टनिस्तुषधान्यचूर्णं लवणं लवणोत्कटम्॥८॥आरक्ता इति॥ निर्यासः हिंग्वादि॥९॥ नक्ताहृतमिति॥अनुच्छिष्टम् अभिनवोदकं यद्वा अवत्सायाः पयः ॥ १० ॥ क्षीरमिति ॥ शफः खुरः ॥ ११ ॥ षंडेति ॥ अपविद्धः गुरुद्विजादिबहिष्कृतः । नग्नः वेदकर्मत्यागी ॥ १२ ॥ उदक्येति ॥ अशौचः शौचहीनः मृतहारः शवोद्धारवृत्तिः ॥ १३ ॥ तस्मादिति ॥ परिश्रिते संवृते ॥ १४ ॥ नखादिनेति ॥ अभिषवैः निष्यंदतीर्थैः तंडुलजैर्वा मिश्रं न भुंजंत इत्यनुषंगः ॥ १५ ॥ श्रद्धेति ॥ यदन्नं यन्नामगोत्रान् पितॄनुद्दिश्य दत्तं तत्तल्लोकांतरस्थानामपि तत्तल्लोकतत्तज्जात्युचिताहारत्वेन परिजीर्णमन्नं भोगाय स्यात् । तद्यथा—ते पितरस्स्वर्गिणो जाताश्चेत्तत्रामृतं स्यात् मनुष्याश्चेदन्नं तिर्यंचश्चेत्तृणादि ॥ १६ ॥ श्रूयत इति ॥ कलापो हिमवत्पार्श्वे कश्चिद्ग्रामविशेषः ॥ १७ ॥

॥ ९ ॥ नक्ताहृतमिति ॥ अनुच्छिष्टमव्यवहृतं नवोदकमिति यावत् । अनुत्सृष्टमिति पाठे अपरित्यक्तकूपाद्युदकं यत्र गौर्न तृप्यति तदतिस्वल्पम् अंबु श्राद्धे तु न ग्राह्यम् ॥१०॥क्षीरमिति ॥ मार्गं मृगक्षीरम्॥११॥षंडेति॥ अपविद्धो महाजनबहिष्कृतः । कृकवाकुः कुक्कुटः । नग्नः उत्तराध्याये वक्ष्यमाणः ॥ १२ ॥ उदक्येति ॥ मृतहारः शवनिर्हरणवृत्तिः ॥ १३ ॥ तस्मादिति ॥ परिश्रिते परिवृते देशे ॥१४॥ नखादिनेति ॥ केशादिभिरुपपन्नम् उपहतम् अभिषवैर्निष्पीडितरसैः ।पूत्यादिना चोपपन्नमिति च पाठः ॥ १५ ॥ श्रद्धासमन्वितैरिति ॥ यदन्नं पितॄनुद्दिश्य दत्तं तदन्नं तत्पितरो यदाहारा यादृशाहारयोग्या जाताः तादृशाहारत्वमुपैति यदि देवा जाताः तदा तदमृतं भूत्वा तान्प्रीणयति । यदि मनुष्याः तर्ह्यन्नं भूत्वा यदि पशवस्तृणादिरूपं भूत्वा तांस्तर्पयतीत्यर्थः ॥ १६ ॥ श्रूयत इति ॥ कलापो नाम हिमवत्पार्श्वे ग्रामविशेषः । तस्योपवने इक्ष्वाकोः

अपि नस्ते भविष्यंति कुले सन्मार्गशीलिनः ॥ गयामुपेत्य ये पिंडान्दास्यंत्यस्माकमादरात् ॥१८॥ अपि नस्स कुले जायाद्यो नो दद्यात्त्रयोदशीम् ॥ पायसं मधुसर्पिर्भ्यां वर्षासु च मघासु च ॥ १९ ॥ गौरीं वाप्युद्वहेत्कन्यां नीलं वा वृषमुत्सृजेत् ॥ यजेत वाश्वमेधेन विधिवद्दक्षिणावता ॥ २० ॥ इति श्रीविष्णुमहापुराणे तृतीयांशे षोडशोऽध्यायः ॥ १६ ॥ ॥ श्रीपराशर उवाच ॥ इत्याह भगवानौर्वस्सगराय महात्मने ॥ सदाचारं पुरा सम्यङ् मैत्रेय परिपृच्छते ॥ १ ॥ मयाप्येतदशेषेण कथितं भवतो द्विज ॥ समुल्लंघ्य सदाचारं कश्चिन्नाप्नोति शोभनम् ॥ २ ॥ श्रीमैत्रेय उवाच ॥ षंडापविद्धप्रमुखा विदिता भगवन्मया ॥ उदक्याद्याश्च मे सम्यङ् नग्नमिच्छामि वेदितुम् ॥ ३ ॥ को नग्नः किं समाचारो नग्नसंज्ञां नरो लभेत् ॥ नग्नस्वरूपमिच्छामि यथावत्कथितं त्वया ॥ श्रोतुं धर्मभृतां श्रेष्ठ न ह्यस्त्यविदितं तव ॥ ४ ॥ ॥ श्रीपराशर उवाच ॥ ऋग्यजुस्सामसंज्ञेयं त्रयी वर्णावृतिर्द्विज ॥ एतामुज्झति यो मोहात्स नग्नः पातकी द्विजः ॥ ५ ॥ त्रयी समस्तवर्णानां द्विजसंवरणं यतः ॥ नग्नो भवत्युज्झितायां यतस्तस्यां न संशयः ॥ ६ ॥ इदं च श्रूयतामन्यद्यद्भीष्माय महात्मने ॥ कथयामास धर्मज्ञो वसिष्ठोऽस्मत्पितामहः ॥ ७ ॥ मयापि तस्य गदतश्श्रुतमेतन्महात्मनः ॥ नग्नसंबंधि मैत्रेय यत्पृष्टोहमिह त्वया ॥ ८ ॥

॥ १८ ॥ अपि न इति ॥ त्रयोदशीं त्रयोदश्यां वर्षासु भाद्रपदे मघासु मघानक्षत्रे मघानक्षत्रयुक्तभाद्रपदकृष्णत्रयोदश्यामित्यर्थः ॥ १९ ॥ गौरीमिति ॥ उद्वहेद्दद्यात् "लोहितो यस्तु वर्णेन मुखे पुच्छे च पांडुरः । श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते" ॥ २० ॥ इति श्रीविष्णुमहापुराणव्याख्याने विष्णुचित्तीये तृतीयांशे षोडशोऽध्यायः ॥ १६ ॥ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ त्रयीति ॥ त्रयी न वस्त्रादिवदावरणमात्रं किं तु संवरणं सर्वदुःखनिवारकम् अतस्तत्त्यागी नग्नः न तु दिगंबर इत्यर्थः ॥ ६ ॥ ७ ॥ ८ ॥

इक्ष्वाकुं प्रति पितृभिर्गीता । 'कलापोपवने तथा' इति च पाठः ॥ १७ ॥ १८ ॥ अपि न इति ॥ वर्षासु मघासु त्रयोदशीं भाद्रपदे तु मघात्रयोदश्यामित्यर्थः ॥ १९ ॥ गौरीमिति ॥ "गौरीं ददन्नाकपृष्ठं वैकुंठं याति रोहिणीम् ॥ कन्यां ददन्ब्रह्मलोकं रौरवं तु रजस्वलाम्" इति संवर्तोक्तेः । गौरीं दशवर्षां कन्यां "अष्टवर्षा भवेत्कन्या नववर्षा तु रोहिणी । दशवर्षा भवेद्गौरी अत ऊर्ध्वं रजस्वला" इति स्मृतेः । उद्वहेत् प्रापयेत् दद्यादित्यर्थः । नीलः स्मृत्युक्तः "लोहितो यस्तु वर्णेन मुखे पुच्छे च पांडुरः । श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते" इति ॥ २० ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां तृतीयांशे षोडशोध्यायः ॥ १६ ॥ ॥ एवं नवभिरध्यायैस्त्रयीधर्मः प्रपंचितः ॥ तत्परित्यागनिंदार्थमुक्तमध्यायमुत्तरम् ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ऋगिति ॥ वर्णानामावृतिः परिधानम् ॥ ५ ॥ त्रयीति ॥ किं च प्रावरणमपि सैव अतस्तत्परित्यागी नग्न इत्यर्थः । परिधानोत्तरीयशून्य एव नग्नो विज्ञेय इत्यत आह—त्रयीसंवरणं प्रावरणं यत इति ॥ ६ ॥ एतदेव स्पष्टीकर्तुमितिहासमाह—इदं चेत्यादिना ॥ ७ ॥ ८ ॥

देवासुरमभूद्युद्धं दिव्यमब्दशतं पुरा॥तस्मिन्पराजिता देवा दैत्यैर्ह्रादपुरोगमैः ॥९॥ क्षीरोदस्योत्तरं कूलं गत्वा तप्यन्त वै तपः॥विष्णोराराधनार्थाय जगुश्चेमं स्तवं तदा॥१०॥देवा ऊचुः॥ आराधनाय लोकानां विष्णोरीशस्य यां गिरम्॥वक्ष्यामो भगवानद्य तया विष्णुः प्रसीदतु॥११॥ यतो भूतान्यशेषाणि प्रसूतानि महात्मनः ॥ यस्मिंश्च लयमेष्यंति कस्तं स्तोतुमिहेश्वरः ॥ १२ ॥ तथाप्यरातिविध्वंसध्वस्तवीर्य्याभयार्थिनः ॥ त्वां स्तोष्यामस्तवोक्तीनां याथार्थ्यं नैव गोचरे ॥ १३ ॥ त्वमुर्वी सलिलं वह्निर्वायुराकाशमेव च ॥ समस्तमंतःकरणं प्रधानं तत्परः पुमान् ॥ १४ ॥ एकं तवैतद्भूतात्मन्मूर्त्तामूर्त्तमयं वपुः ॥ आब्रह्मस्तंबपर्यंतं स्थानकालविभेदवत् ॥ १५ ॥ तत्रेशं तव यत्पूर्वं त्वन्नाभिकमलोद्भवम् ॥ रूपं विश्वोपकाराय तस्मै ब्रह्मात्मने नमः ॥ १६ ॥ शक्रार्करुद्रवस्वश्विमरुत्सोमादिभेदवत् ॥ वयमेकं स्वरूपं ते तस्मै देवात्मने नमः ॥ १७ ॥ दंभप्रायमसंबोधि तितिक्षादमवर्जितम् ॥ यद्रूपं तव गोविंद तस्मै दैत्यात्मने नमः ॥ १८ ॥ नातिज्ञानवहा यस्मिन्नाड्यस्तिमिततेजसि ॥ शब्दादिलोभि यस्तस्मै तुभ्यं यक्षात्मने नमः ॥ १९ ॥ क्रौर्यं मायामयं घोरं यच्च रूपं तवासितम् ॥ निशाचरात्मने तस्मै नमस्ते पुरुषोत्तम ॥ २० ॥ स्वर्गस्थधर्मिसद्धर्मफलोपकरणं तव ॥ धर्माख्यं च तथा रूपं नमस्तस्मै जनार्दन ॥ २१ ॥

॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ तथेति ॥ त्वामिति । तव याथार्थ्यम् उक्तीनां न गोचर इत्यर्थः ॥ १३ ॥ त्वमुर्वीति ॥ समस्तमंतःकरणं मनोबुद्ध्यहंकाराः ॥ १४ ॥ एकमित्यादि ॥ स्थानकालविभेदवत् स्थानकालविशेषाभ्यां युक्तम् । एतदिति जगन्निर्दिश्यते । एवंभूतं जगत्तवैकं वपुरित्यर्थः । "जगत्सर्वं शरीरं ते तव ब्रह्मात्मने नमः" इत्यन्वयः । अत्रात्मशब्दो रूपवचनः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ नातिज्ञानेति ॥ यक्षाणां नाड्यो हि नाधिकज्ञानवाहिन्यः स्तिमिततेजसि स्तब्धविवेके । नाड्य इति पाठे यस्मिन् यक्षरूपे नृत्तादिस्तब्धविवेके । जना नातिज्ञानधराः संतीत्यर्थः ॥ १९ ॥ २० ॥ स्वर्गस्थ इति ॥ स्वर्गस्थानां

देवासुरमिति ॥ देवाश्चासुराश्च योद्धारो यस्मिन्तद्देवासुरं युद्धम् ॥९॥१०॥११॥ यत इति ॥ प्रसूतानि जातानि । प्रभूतानीति पाठे वृद्धिं प्राप्तानि ॥ १२ ॥ अतः—तथापीति ॥ यद्यपि तव याथार्थ्यं तत्त्वमुक्तीनां वचसां गोचरे नैव वर्तते तथाप्यरातिकृतेन विध्वंसेन पराभवेन ध्वस्तं वीर्यं प्रभवो येषां ते वयमभयार्थिनः ततो यथामति त्वां स्तोष्यामः ॥१३॥ तत्र तावद्विश्वरूपेण स्तुवंति त्वमुर्वीत्यादिना सर्वात्मने नम इत्यंतेन । त्वमुर्वीति ॥ समस्तं मनोबुद्ध्यहंकारचित्ताख्यं चतुर्विधमंतःकरणम् ॥ १४ ॥ एकमिति ॥ स्थाने तत्तद्देशे काले च नानाभेदास्पदमप्येतद्विश्वमेकमभिन्नं तव रूपमित्यन्वयः ॥ १५ ॥ तत्रेति ॥ पूर्वं प्रथमसर्गे विश्वोपकाराय यत्तव रूपं तस्मै नमः ॥ १६ ॥ १७ ॥ दंभप्रायमिति ॥ असंबोधि विवेकशून्यम् ॥ १८ ॥ नेति ॥ यस्मिन्यक्षरूपे स्तिमिततेजसि मंदसत्त्वे हृदयनाड्यो नातिज्ञानवहाः श्रेष्ठज्ञानवाहिन्यो न भवंति । नाड्यस्तिमितेति पाठे नाड्यं नृत्तादिः स्तिमिततेजसि स्तब्धविवेके यस्मिन्यक्षरूपे जना नोत्कृष्टज्ञानधरास्संतीत्यर्थः ॥ १९ ॥ क्रौर्यमिति ॥ असितं तमोमयं रूपम् ॥ २० ॥ स्वर्गस्थधर्मीति ॥ स्वर्गस्थो भविष्यति देहांतरे यो धर्मी यज

हर्षप्रायमसंसर्गि गतिमद्गमनादिषु ॥ सिद्धाख्यं तव यद्रूपं तस्मै सिद्धात्मने नमः ॥ २२ ॥ अतितिक्षायनं क्रूरमुपभोगसहं हरे ॥ द्विजिह्वं तव यद्रूपं तस्मै नागात्मने नमः ॥ २३ ॥ अवबोधि च यच्छांतमदोषमपकल्मषम् ॥ ऋषिरूपात्मने तस्मै विश्वरूपाय ते नमः ॥ २४ ॥ भक्षयत्यथ कल्पांते भूतानि यदवारितम् ॥ त्वद्रूपं पुंडरीकाक्ष तस्मै कालात्मने नमः ॥ २५ ॥ संभक्ष्य सर्वभूतानि देवादीन्यविशेषतः ॥ नृत्यत्यंते च यद्रूपं तस्मै रुद्रात्मने नमः ॥ २६ ॥ प्रवृत्त्या रजसो यच्च कर्मणां करणात्मकम् ॥ जनार्दन नमस्तस्मै त्वद्रूपाय नरात्मने॥२७॥ अष्टाविंशद्वधोपेतं यद्रूपं तामसं तव ॥ उन्मार्गगामि सर्वात्मंस्तस्मै वैश्यात्मने नमः ॥ २८ ॥ यज्ञांगभूतं यद्रूपं जगतः स्थितिसाधनम् ॥ वृक्षादिभेदैःषड्भेदि तस्मै मुख्यात्मने नमः ॥ २९ ॥ तिर्यङ्मनुष्यदेवादिव्योमशब्दादिकं च यत् ॥ रूपं तवादेः सर्वस्य तस्मै सर्वात्मने नमः ॥ ३० ॥ प्रधानबुद्ध्यादिमयादशेषाद्यदन्यदस्मात्परमं परात्मन् ॥ रूपं तवाद्यं यदनन्यतुल्यं तस्मै नमः कारणकारणाय ॥ ३१ ॥ शुक्लादिदीर्घादिघनादिहीनमगोचरं यच्च विशेषणानाम् ॥ शुद्धातिशुद्धं परमर्षिदृश्यं रूपाय तस्मै भगवन्नताः स्मः ॥ ३२ ॥

धर्मिणां सुकृतिनां सद्धर्मफलस्य सुखादेर्यदुपकरणं प्रापकं धर्माख्यं रूपम् ॥ २१ ॥ हर्षप्रायमिति ॥ गतिमद्गमनशीलं गमनादिष्वसंगि अस्खलितम् ॥ २२ ॥ अतितिक्षायनमिति ॥ उपभोगार्हमुपभोगसमर्थम् ॥ २३ ॥ अवबोधीति ॥ अदोषं रागादिरहितम् ऋषिरूपस्यात्मने विष्णुरूपाय व्याप्तरूपाय ॥२४॥२५॥२६॥ प्रवृत्त्येति ॥ करणात्मकम् अनुष्ठानात्मकं नरात्मने मनुष्यरूपाय ॥ २७ ॥ अष्टाविंशदिति ॥ अष्टाविंशद्वधः प्रथमांशे उक्तः ॥ २८ ॥ यज्ञांगभूतमिति ॥ षड्भेदि वृक्षगुल्मलतावीरुत्तृणगिरिभेदैर्ह्षद्वुपलादीनां यज्ञांगत्वमप्यस्ति । मुख्यात्मने मुख्यत्वं च तत्रैवोक्तम् ॥ २९ ॥ ३० ॥ प्रधानेति ॥ प्रधानेत्यादिना समष्टिपुरुषरूपमुच्यते । कारणकारणाय कारणमव्यक्तं तस्य कारणं पुरुषः "अव्यक्तमक्षरे लीयते" इति श्रुतेः ॥३१॥ भक्तस्वरूपमाह—शुक्लेति ॥ प्रकृत्यपेक्षया शुद्धो बद्धः तदमानः तस्य यस्त्वधर्मो यागादिस्तस्य यत्फलं सुखं तस्योपकरणं प्रापकं तव यद्धर्माख्यम् अपूर्वसंज्ञं रूपं तस्मै नमः ॥ २१ ॥ हर्षप्रायमिति ॥ असंसार्गि संगशून्यं सिद्धा हि जलाग्न्यादिषु स्थिता अपि तैर्न युज्यन्ते ॥ २२ ॥ २३ ॥ अवबोधीति ॥ अदोषं रागादिशून्यम् ॥ २४ ॥ भक्षयतीति ॥ कालात्मकं रूपं यत् भूतानि भक्षयत्येव ॥ २५ ॥ संभक्ष्येति ॥ रुद्रात्मकं रूपं सर्वभूतानि संभक्ष्य नृत्यतीति तयोर्भेदो दर्शितः ॥२६॥ प्रवृत्त्येति ॥ रजसः प्रवृत्त्या यत्कर्मणां कारणात्मकं कर्तृस्वभावं तस्मै नरात्मने मनुष्यात्मने नमः ॥ २७ ॥ अष्टाविंशद्वधोपेतमिति ॥ अष्टाविंशद्वधोपेतमिति एकादशेंद्रियवधाः नव तुष्टिवधाः अष्ट सिद्धिवधा इत्यष्टाविंशद्वधाः प्रागेव व्याख्याताः ॥ २८ ॥ यज्ञांगभूतमिति ॥ षड्भेदीति ॥ वृक्षगुल्मलतावीरुत्समस्तास्तृणजातयः गिरय इत्येतैष्षड्भिर्भेदैर्युक्तम् ॥ २९ ॥ तिर्यङ्मनुष्येति ॥ सर्वस्यादेः कारणभूतस्य तव यद्रूपं तिर्यङ्मनुष्यादीत्यन्वयः ॥ ३० ॥ विश्वरूपेण प्रणम्य शुद्धरूपेण प्रणमति । प्रधानेति ॥ अस्मादशेषाज्जडवर्गाद्यत्परमं अत एव नान्यतुल्यं तस्मै नमः ॥ ३१ ॥ अनन्यतुल्यत्वं स्पष्टयति—शुक्लादीत्यादित्रिभिः ॥ ३२ ॥

यन्नः शरीरेषु यदन्यदेहेष्वशेषवस्तुष्वजमक्षयं यत्॥तस्माच्च नान्यद्व्यतिरिक्तमस्ति ब्रह्मस्वरूपाय नताः स्म तस्मै॥३३॥सकलमिदमजस्य यस्य रूपं परमपदात्मवतस्सनातनस्य ॥ तमनिधनमशेषबीजभूतं प्रभुममलं प्रणतास्स्म वासुदेवम् ॥३४॥ श्रीपराशर उवाच ॥ स्तोत्रस्य चावसाने ते ददृशुः परमेश्वरम् ॥ शंखचक्रगदापाणिं गरुडस्थं सुरा हरिम् ॥ ३५ ॥ तमूचुस्सकला देवाः प्रणिपातपुरस्सरम् ॥ प्रसीद नाथ दैत्येभ्य स्त्राहि नश्शरणार्थिनः ॥ ३६ ॥ त्रैलोक्ययज्ञभागाश्च दैत्यैर्ह्लादपुरोगमैः ॥ हृता नो ब्रह्मणोप्याज्ञामुल्लंघ्य परमेश्वर ॥ ३७ ॥ यद्यप्यशेषभू तस्य वयं ते च तवांशजाः ॥ तथाप्यविद्याभेदेन भिन्नं पश्यामहे जगत् ॥ ३८ ॥ स्ववर्णधर्माभिरता वेदमार्गानुसारिणः ॥ न शक्यास्तेरयो हंतुमस्माभिस्तपसावृताः ॥ ३९ ॥ तमुपायमशेषात्मन्नस्माकं दातुमर्हसि ॥ येन तानसुरान्हंतुं भवेम भगवन्क्षमाः ॥ ४० ॥ श्रीपराशर उवाच ॥ इत्युक्तो भगवांस्तेभ्यो मायामोहं शरीरतः ॥ समुत्पाद्य ददौ विष्णुः प्राह चेदं सुरोत्तमान् ॥ ४१ ॥ मायामोहोयमखिलान्दैत्यां स्तान्मोहयिष्यति ॥ ततो वध्या भविष्यंति वेदमार्गबहिष्कृताः ॥ ४२ ॥ स्थितौ स्थितस्य मे वध्या यावंतः परिपंथिनः ॥ ब्रह्मणो ह्यधि कारस्य देवा दैत्यादिकाः सुराः ॥ ४३ ॥ तद्गच्छत न भीः कार्या मायामोहोयमग्रतः ॥ गच्छन्नद्योपकाराय भवतां भविता सुराः ॥ ४४ ॥ ॥ श्रीपराशर उवाच ॥ इत्युक्ताः प्रणिपत्यैनं ययुर्देवा यथागतम् ॥ मायामोहोपि तैस्सार्द्धं ययौ यत्र महासुराः ॥ ४५ ॥ इति श्रीविष्णुमहापुराणे तृतीयांशे सप्तदशोऽध्यायः ॥ १७ ॥ ॥ श्रीपराशर उवाच ॥ तपस्यभिरतान्सोथ मायामोहो महासुरान् ॥ मैत्रेय ददृशे गत्वा नर्मदातीरसंश्रितान् ॥ १ ॥ ततो दिगंबरो मुंडो बर्हिपिच्छधरो द्विज ॥ मायामोहोऽसुरान् श्लक्ष्णमिदं वचनमब्रवीत् ॥ २ ॥

पेक्षया मुक्तश्शुद्धः ॥३२॥ परस्वरूपमाह—यन्न इति ॥ यस्मादन्यद्व्यतिरिक्तं नास्ति पृथक्सिद्धमतदात्मकं यस्माद्व्यतिरिक्तं नास्तीत्यर्थः ॥ ३३॥ अन्यदा अन्यतरपद वैय्यर्थ्यं निगमयति—सकलमिति ॥ सकलं सचेतनमिदं जगत् परमपदं तत्रत्या आत्मानश्च यस्य रूपं स परमपदात्मवान् । अनेन श्लोकेनोभयविभूतिमत्त्वमुक्तमित्यनुसंधेयम् । अशेषबीजत्वम् अशेषरूपत्वहेतुः ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ इति श्रीविष्णुमहापुराण व्याख्याने विष्णुचित्तीये तृतीयांशे सप्तदशोऽध्यायः ॥ १७ ॥छ॥ १ ॥ २ ॥

॥३३॥ सकल मिति ॥ परमपदात्मवतः परमपदेन ब्रह्मणैव आत्मवतो मूर्तिमतश्चैतन्यघनस्येत्यर्थः ॥३४॥३५॥ तमिति ॥ शरणार्थिनोस्मान्दैत्येभ्यस्त्राहीति तमूचुरित्यन्वयः ॥३६॥ ३७ ॥ ३८ ॥ ३९ ॥ ४०॥४१॥ ॥ ४२ ॥ स्थिताविति ॥ हे सुराः ब्रह्मणोधिकारस्य ये यावंतः परिपंथिनः ते सर्वे मम वध्या इत्यन्वयः ॥ ४३ ॥ ४४ ॥ ४५ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां तृतीयांशे सप्तदशोऽध्यायः ॥ १७ ॥ ॥ तत इति ॥ श्लक्ष्णं मृदु ॥ १ ॥ २ ॥

मायामोह उवाच ॥ हे दैत्यपतयो ब्रूत यदर्थं तप्यते तपः ॥ ऐहिकार्थश्च पारत्र्यं तपसः फलमिच्छथ ॥३॥ असुरा ऊचुः ॥ पारत्र्यफललाभाय तपश्चर्या महामते ॥ अस्माभिरियमारब्धा किं वा तेऽत्र विवक्षितम् ॥ ४ ॥ मायामोह उवाच ॥ कुरुध्वं मम वाक्यानि यदि मुक्तिमभीप्सथ ॥ अर्हध्वमेनं धर्मं च मुक्तिद्वारमसंवृतम् ॥ ५ ॥ धर्मो विमुक्तेरर्होयं नैतस्मादपरो वरः ॥ अत्रैव संस्थिताः स्वर्गं विमुक्तिं वा गमिष्यथ ॥ ६ ॥ अर्हध्वं धर्ममेतं च सर्वे यूयं महाबलाः ॥ ७ ॥ श्रीपराशर उवाच ॥ एवंप्रकारैर्बहुभिर्युक्तिदर्शनचर्चितैः ॥ मायामोहेन ते दैत्या वेदमार्गादपाकृताः ॥ ८ ॥ धर्मायैतदधर्माय सदेतन्न सदित्यपि॥विमुक्तये त्विदं नैतद्विमुक्तिं संप्रयच्छति ॥ ९ ॥ परमार्थोयमत्यर्थं परमार्थो न चाप्ययम् ॥ कार्यमेतदकार्यं च नैतदेवं स्फुटं त्विदम् ॥१०॥ दिग्वाससामयं धर्मो धर्मोयं बहुवाससाम् ॥११॥ इत्यनेकांतवादं च मायामोहेन नैकधा ॥ तेन दर्शयता दैत्यास्स्वधर्मं त्याजिता द्विज ॥ १२ ॥ अर्हतैतं महाधर्मं मायामोहेन ते यतः ॥ प्रोक्तास्तमाश्रिता धर्ममर्हतास्तेन तेऽभवन् ॥ १३ ॥ त्रयीधर्मसमुत्सर्गं मायामोहेन तेऽसुराः ॥ कारितास्तन्मया ह्यासंस्ततोन्ये तत्प्रचोदिताः ॥ १४ ॥ तैरप्यन्ये परे तैश्च तैरप्यन्ये परे च तैः ॥ अल्पैरहोभिस्संत्यक्ता तैर्दैत्यैः प्रायशस्त्रयी ॥ १५ ॥ पुनश्च रक्तांबरधृङ् मायामोहो जितेंद्रियः ॥ अन्यानाहासुरान् गत्वा मृद्वल्पमधुराक्षरम् ॥ १६ ॥

॥ ३ ॥ ४ ॥ ५ ॥ धर्म इति ॥ अत्रैव धर्मे ॥ ६ ॥ ७ ॥ एवमिति ॥ एवंप्रकारैर्नैतद्युक्तिसहमित्यादिना विवरिष्यमाणैर्युक्तिचोदनचर्चितैस्तर्कागमकृताचारैः । युक्तिदर्शनतर्कितैरिति पाठे युक्तिर्योग्यता, दर्शनं प्रत्यक्षं, तर्कितं तर्कः ॥ ८ ॥ धर्मायेति ॥ धर्मायेत्यादिनैकधेत्यंतं विकल्पोदाहरणसप्तकं सप्तधा ह्यनेकांतवादिनामार्हतानां सप्तभंगी स्याद्वादः । स्यादस्ति स्यादस्ति च नास्ति च स्यादनिर्वचनीयं स्यादस्ति चानिर्वचनीयं स्यान्नास्ति चानिर्वचनीयं स्यादस्ति च नास्ति चानिर्वचनीयमिति ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ पुनारिति ॥ बौद्धमतारंभः ॥ १६ ॥

हे दैत्यपतय इति ॥ ऐहिकार्थमिहैव लोके भोग्यं नु वितर्के पारत्र्यं परलोकभोग्यं वेत्यर्थः ॥ ३ ॥ ४ ॥ कुरुध्वमिति ॥ एतं धर्मं मया वक्ष्यमाणम् ॥ ५ ॥ ६ ॥ ७ ॥ एवमिति ॥ एवं प्रकारैर्वाक्यैर्युक्तिदर्शनं शुष्कतर्कवादः तेन चर्चितैः । वर्धितैरिति वा पाठः ॥ ८ ॥ मुक्तिवादमेव सप्तभिर्दर्शयन्नाह--धर्मायेत्यादिसार्धद्वाभ्याम् ॥ ९ ॥ १० ॥ ११ ॥ इतीति ॥ इत्यनेकांतवादं नैकधा बहुप्रकारेण दर्शयता तेन मायामोहेन ते दैत्याः धर्मास्त्याजिताः तदुपदेशेन धर्मास्तत्यजुरित्यर्थः ॥ १२ ॥ अर्हतेति ॥ अर्हतास्तेनेति च पाठः ॥ १३ ॥ १४ ॥ १५ ॥ तदेवमार्हतमतेन दैत्यविमोहनमुक्तम् । अथ बौद्धमतेनाह--पुनश्चेत्यादिसप्तभिः ॥ १६ ॥

स्वर्गार्थं यदि वो वांछा निर्वाणार्थमथासुराः ॥ तदलं पशुघातादिदुष्टधर्मैर्निबोधत ॥ १७ ॥ विज्ञानमयमेवैतदशेषमवगच्छत ॥ बुध्यध्वं मे वचः सम्यग्बुधैरेवमिहोदितम् ॥ १८ ॥ जगदेतदनाधारं भ्रांतिज्ञानार्थतत्परम् ॥ रागादिदुष्टमत्यर्थं भ्राम्यते भवसंकटे ॥ १९ ॥ एवं बुध्यत बुध्यध्वं बुध्यतैवमितीरयन् ॥ मायामोहः स दैत्येयान्धर्मंमत्याजयन्निजम् ॥ २० ॥ नानाप्रकारवचनं स तेषां युक्तियोजनम् ॥ तथातथा त्रयीधर्मं तत्यजुस्ते यथायथा ॥ २१ ॥ तेप्यन्येषां तथैवोचुरन्यैरन्ये तथोदिताः ॥ मैत्रेय तत्यजुर्धर्मं वेदस्मृत्युदितं परम् ॥ २२ ॥ अन्यानप्यन्यपाषंडप्रकारैर्बहुभिर्द्विज ॥ दैतेयान्मोहयामास मायामोहोतिमोहकृत् ॥ २३ ॥ स्वल्पेनैव हि कालेन मायामोहेन तेऽसुराः ॥ मोहितास्तत्यजुस्सर्वां त्रयीमार्गाश्रितां कथाम् ॥ २४ ॥ केचिद्विनिंदां वेदानां देवानामपरे द्विज ॥ यज्ञकर्मकलापस्य तथान्ये च द्विजन्म नाम् ॥२५॥ नैतद्युक्तिसहं वाक्यं हिंसाधर्माय चेष्यते ॥ हवींष्यनलदग्धानि फलायेत्यर्भकोदितम् ॥२६॥ यज्ञैरनेकैर्देवत्वमवाप्येंद्रेण भुज्यते॥ शम्यादि यदि चेत्काष्ठं तद्वरं पत्रभुक्पशुः ॥२७॥ निहतस्य पशोर्यज्ञे स्वर्गप्राप्तिर्यदीष्यते ॥ स्वपिता यजमानेन किन्नु तस्मान्न हन्यते ॥२८॥

॥ १७ ॥ विज्ञानमयमिति ॥ तत्र विज्ञानमयमिति योगाचाराणामात्मख्यातिपक्षोक्तिः ॥ १८ ॥ जगदिति ॥ जगदेतदनाधारमिति निरधिष्ठाने भ्रांतिज्ञानार्थतत्परमिति माध्यमिकानां शून्यख्यातिपक्षोक्तिः ॥१९॥ एवमिति ॥ बुध्यतेरावृत्तिर्बौद्धत्वनिरुक्त्यर्था ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥२५॥ नेति ॥ अधर्ममयी हिंसा धर्माय चेष्यत इति वाक्यं निरुक्तिकम् । नेष्यतीति पाठे एतदग्नीषोमीयपशुहिंसाविधिवाक्यं न युक्तिसहम् । यतो "न हिंस्यात्सर्वाणि भूतानि" इति श्रुत्यैव हिंसा धर्माय नेष्यते ॥२६॥ यज्ञैरिति॥शम्यादीति तद्वरं स्वर्गं गत्वापि सकंटकशम्यादिकाष्ठभक्षकात्तस्मादिंद्रान्मृदु तत्पत्रमिहैवादञ्छागो वरो बुद्धिमान् "दैवाद्वते वरश्श्रेष्ठे त्रिषु क्लीबं मनाक् प्रिये" इत्यमरः ॥ २७ ॥ निहतस्येति ॥ यज्ञे निहतस्य पशोरपि स्वर्गसिद्धेः तद्धिंसा न दोषाय चेत्पितुः अन्यस्य पशोर्वधा

॥ १७ ॥ १८ ॥ १९ ॥ एवमिति ॥ बुध्यत बुध्यध्वमित्यादि बुध्यतेरावृत्तिर्बौद्धत्वनिर्वचनार्था ॥ २० ॥ २१ ॥ २२ ॥ अन्यानिति ॥ अन्यपाषंडप्रकारैर्लोकायतिकादिमतैर्न केवलं त्रयीं तत्यजुः अपि तु वेदादीनां च निंदां चक्रुरिति शेषः ॥ २३ ॥ २४ ॥ २५ ॥ निंदामेव तद्विजृंभितामाह–नैतदित्यादिना–नैतदिति ॥ परपीडादिरूपा हिंसा धर्माय चेष्यत इति तद्वाक्यं युक्तिसहं न भवतीत्यर्थः । हिंसा धर्माय नेष्यत इति पाठे युक्तिसहं नैतदित्यत्र हेतुः यस्मात् "न हिंस्यात्सर्वाणि भूतानि" इति निषेधश्रुतेर्हिंसाधर्मायेत्येतद्वाक्यं युक्तिसहं न भवतीत्यर्थः ॥ २६ ॥ यज्ञैरिति ॥ शम्यादिसमिद्रूपं काष्ठम् अग्नौ हुतं चेदिंद्रेण भुज्यते तद्वरं तर्हि ततोपि श्रेष्ठः पशुः छागादि तथासौ शम्यादि कोमलं पत्रं भुंक्ते न तु सकंटकं ज्वलत्काष्ठमित्यर्थः ॥ २७ ॥ २८ ॥

तृप्तये जायते पुंसो भुक्तमन्येन चेत्ततः ॥ कुर्याच्छ्राद्धं श्रमायान्नं न वहेयुः प्रवासिनः ॥ २९ ॥ जनश्रद्धेयमित्येतदवगम्य ततोत्र वः ॥ उपेक्षा श्रेयसे वाक्यं रोचतां यन्मयेरितम् ॥ ३० ॥ न ह्याप्तवादा नभसो निपतंति महासुराः ॥ युक्तिमद्वचनं ग्राह्यं मयान्यैश्च भवद्विधैः ॥ ३१ ॥ श्रीपराशर उवाच ॥ मायामोहेन ते दैत्याः प्रकारैर्बहुभिस्तथा ॥ वृथापिता यथा नैषां त्रयीं कश्चिदरोचयत् ॥ ३२ ॥ इत्थमुन्मार्गयातेषु तेषु दैत्येषु तेऽमराः ॥ उद्योगं परमं कृत्वा युद्धाय समुपस्थिताः ॥ ३३ ॥ ततो दैवासुरं युद्धं पुनरेवाभवद्द्विज ॥ हताश्च तेऽसुरा देवैः सन्मार्गपरिपंथिनः ॥ ३४ ॥ स्वधर्मकवचं तेषामभूद्यत्प्रथमं द्विज ॥ तेन रक्षाऽभवत्पूर्वं नेशुर्नष्टे च तत्र ते ॥ ३५ ॥ ततो मैत्रेय तन्मार्गवर्तिनो येभवञ्जनाः ॥ नग्नास्ते तैर्यतस्त्यक्तं त्रयीसंवरणं तथा ॥ कृताश्च तेऽसुरा देवैर्नाना वेदविनिन्दकाः ॥ ३६ ॥ ब्रह्मचारीगृहस्थश्च वानप्रस्थस्तथाश्रमी ॥ परिव्राड् वा चतुर्थोत्र पंचमो नोपपद्यते ॥३७॥ यस्तु संत्यज्य गार्हस्थ्यं वानप्रस्थो न जायते ॥ परिव्राट् चापि मैत्रेय स नग्नः पापकृन्नरः ॥ ३८ ॥ नित्यानां कर्मणां विप्र यस्य हानिरहर्निशम् ॥ अकुर्वन्विहितं कर्म शक्तः पतति तद्दिने ॥ ३९ ॥

वृत्था

द्वरं स्वपितुरेव यज्ञे वधः । यदीष्यत इति पाठे यस्मादेव श्रुत्येष्यते तस्मात्तत्पिता किं न हन्यत इत्यन्वयः ॥ २८ ॥ तृप्त इति ॥ अन्यभुक्तमन्यस्य तृप्तेर्जायत इति कृत्वा श्राद्धं कुर्याच्चेत्पुत्रः तर्हि, प्रोषिताः श्रमावहमन्नं न वहेयुः ग्रामस्थेन केनचिद्भुक्तेपि प्रोषितस्य तृप्तेः दद्याच्छ्राद्धमिति सम्यक्पाठः ॥ २९ ॥ तस्मादेतद्यागादिकं युक्तिहीनं प्राकृतजनश्रद्धेयमित्यवगम्यात्रोपेक्षा श्रेयसे ॥ ३० ॥ नन्वपौरुषेयत्वाद्वेदवाक्यं प्रमाणम् अतस्तदुक्तं यज्ञाद्यनुष्ठेयं न ते त्वदुक्तमित्याशंक्य वेदस्यापौरुषेयत्वमेव नोपपन्नमित्याह—न हीति ॥ आप्तवादाः प्रमाणवाक्यानि ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥३५॥३६॥ ब्रह्मचारीति ॥ आश्रम इति ब्रह्मचर्यादिभिः प्रत्येकं संबध्यते । आदिभरतस्तु नैष्ठिक इति तत्रैव दर्शितः ॥ ३७ ॥ ३८ ॥ ३९ ॥

तृप्तय इति ॥ अन्येन श्राद्धभुक्तमन्नम् अन्यस्य पुंसस्तृप्तये जायते चेत्ततः प्रवासिनः श्रमैकफलमन्नं न वहेयुः किं तु तत्तृप्तये ग्रामस्थितः पुत्रादिः श्राद्धं दद्यात् ॥ २९ ॥ जनश्रद्धेयमिति ॥ ततो युक्तं केवलं प्राकृतजनश्रद्धेयमेतद्यज्ञादि अतोत्र युष्माकमुपेक्षैव युक्ता ॥ ३० ॥ नन्वपौरुषेयेण सत्येन वेदेन विहितेर्थे कथमुपेक्षां युज्यते तत्राह--नहीति ॥ वेदानामाप्तवाक्यत्वमापाद्योच्यते तथाहि--न तावद्वेदस्यापौरुषेयत्वं घटते सर्ववर्णानुपूर्व्यादिविशिष्टं वाक्यं हि वेदः । न च नित्यत्वे सर्वगतत्वे च वर्णानामुच्चारणतः क्रमस्वरादिव्यतिरेकेण स्वतः क्रमादिसंभवः तस्मादाप्तवाक्यं वेद इत्यंगीकर्तव्यम् । आप्तवादाश्चाकस्मादाकाशान्न निपतंति किं तु आप्तैः प्रयुक्ता एव निपतंति । अतः पौरुषेयत्व अस्मदागमानां वेदानां च समाने युक्तिमद्वचनं प्रमाणीकर्तव्यमित्यर्थः ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥

प्रायश्चित्तेन महता शुद्धिमाप्नोत्यनापदि ॥ पक्षं नित्यक्रियाहानेः कर्त्ता मैत्रेय मानवः ॥ ४० ॥ संवत्सरं क्रियाहानिर्यस्य पुंसोभिजायते ॥ तस्यावलोकनात्सूर्यो निरीक्ष्यस्साधुभिस्सदा ॥ ४१ ॥ स्पृष्टे स्नानं सचेलस्य शुद्धेर्हेतुर्महामते ॥ पुंसो भवति तस्योक्ता न शुद्धिः पापकर्मणः ॥ ४२ ॥ देवर्षिपितृभूतानि यस्य विप्रस्य वेश्मनि ॥ प्रयांत्यनर्चितान्यत्र लोके तस्मान्न पापकृत् ॥ ४३ ॥ संभाषणानुप्रश्नादि सहास्यां चैव कुर्वतः ॥ जायते तुल्यता तस्य तेनैव द्विज वत्सरात् ॥ ४४ ॥ देवादिनिश्वासहतं शरीरं यस्य वेश्म च ॥ न तेन संकरं कुर्याद्गृहासनपरिच्छदैः ॥ ४५ ॥ अथ भुंक्ते गृहे तस्य करोत्यास्यां तथासने ॥ शेते चाप्येकशयने स सद्यस्त त्समो भवेत् ॥ ४६ ॥ देवतापितृभूतानि तथानभ्यर्च्य योऽतिथीन् ॥ भुंक्ते स पातकं भुंक्ते निष्कृतिस्तस्य नेष्यते ॥ ४७ ॥ ब्राह्मणाद्यास्तु ये वर्णास्स्वधर्मादन्यतोमुखाः ॥ यांति ते नग्नसंज्ञां तु हीनकर्मस्ववस्थिताः ॥ ४८ ॥ चतुर्णां यत्र वर्णानां मैत्रेयात्यंत संकरः ॥ तत्रास्या साधुवृत्तीनामुपघाताय जायते ॥ ४९ ॥ अनभ्यर्च्य ऋषीन्देवान्पितृभूतातिथींस्तथा ॥ यो भुंक्ते तस्य सँल्लापात्पतंति नरके नराः ॥ ५० ॥ तस्मादेतान्नरो नग्नांस्त्रयीसंत्यागदूषितान् ॥ सर्वदा वर्जयेत्प्राज्ञ आलापस्पर्शनादिषु ॥ ५१ ॥ श्रद्धावद्भिः कृतं यत्न देवान्पितृपितामहान् ॥ न प्रीणयति तच्छ्राद्धं यद्येभिरवलोकितम् ॥ ५२ ॥ श्रूयते च पुराख्यातो राजा शतधनुर्भुवि ॥ पत्नी च शैब्या तस्याभूदतिधर्मपरायणा ॥ ५३ ॥ पतिव्रता महाभागा सत्यशौचदयान्विता ॥ सर्वलक्षणसंपन्ना विनयेन नयेन च ॥ ५४ ॥ स तु राजा तया सार्द्धं देवदेवं जनार्दनम् ॥ आराधयामास विभुं परमेण समाधिना ॥ ५५ ॥ होमैर्जपैस्तथा दानैरुपवासैश्च भक्तितः ॥ पूजाभिश्चानु दिवसं तन्मना नान्यमानसः ॥ ५६ ॥ एकदा तु समं स्नातौ तौ तु भार्यापती जले ॥ भागीरथ्यास्समुत्तीर्णौ कार्त्तिक्यां समुपोषितौ ॥ पाषंडिनमपश्येतामायांतं सम्मुखं द्विज ॥५७॥ चापाचार्यस्य तस्यासौ सखा राज्ञो महात्मनः॥अतस्तद्गौरवात्तेन सखाभावमथाकरोत्॥५८॥

॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७॥५८॥

॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ संभाषणेति ॥ वत्सरं तेन सहास्यां कुर्वतां तत्साम्यं जायते ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ पाषंडालापदोषं दर्शयितुमितिहासमाह--श्रूयते चेत्यादियावत्समाप्ति ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥

न तु सा वाग्यता देवी तस्य पत्नी पतिव्रता ॥ उपोषितास्मीति रविं तस्मिन्दृष्टे ददर्श च ॥ ५९ ॥ समागम्य यथान्यायं दंपती तौ यथाविधि ॥ विष्णोः पूजादिकं सर्वं कृतवंतौ द्विजोत्तम ॥ ६० ॥ कालेन गच्छता राजा ममारासौ सपत्नजित् ॥ अन्वारुरोह तं देवी चितास्थं भूपतिं पतिम् ॥ ६१ ॥ स तु तेनापचारेण श्वा जज्ञे वसुधाधिपः ॥ उपोषितेन पाषंडसँल्लापो यत्कृतोऽभवत् ॥ ६२ ॥ सा तु जातिस्मरा जज्ञे काशीराजसुता शुभा ॥ सर्वविज्ञानसंपूर्णा सर्वलक्षणपूजिता ॥ ६३ ॥ तां पिता दातुकामोभूद्वराय विनिवारितः ॥ तयैव तन्व्या विरतो विवाहारंभतो नृपः ॥६४॥ ततस्सा दिव्यया दृष्ट्या दृष्ट्वा श्वानं निजं पतिम् ॥ विदिशाख्यं पुरं गत्वा तदवस्थं ददर्श तम् ॥६५॥ तं दृष्ट्वैव महाभागं श्वभूतं तु पतिं तदा ॥ ददौ तस्मै वराहारं सत्कारप्रवणं शुभा ॥ ६६ ॥ भुंजन्दत्तं तया सोन्नमतिमृष्टमभीप्सितम् ॥ स्वजातिललितं कुर्वन्बहु चाटु चकार वै ॥ ६७ ॥ अतीव व्रीडिता बाला कुर्वता चाटु तेन सा ॥ प्रणामपूर्वमाहेदं दयितं तं कुयोनिजम् ॥ ६८ ॥ स्मर्यतां तन्महाराज दाक्षिण्यललितं त्वया ॥ येन श्वयोनिमापन्नो मम चाटुकरो भवान् ॥ ६९ ॥ पाषंडिनं समाभाष्य तीर्थस्नानादनंतरम् ॥ प्राप्तोसि कुत्सितां योनिं किन्न स्मरसि तत्प्रभो ॥ ७० ॥ श्रीपराशर उवाच ॥ तयैवं स्मारिते तस्मिन्पूर्वजातिकृते तदा ॥ दध्यौ चिरमथावाप निर्वेदमतिदुर्लभम् ॥७१॥ निर्विण्णचित्तस्स ततो निर्गम्य नगराद्बहिः ॥ मरुत्प्रपतनं कृत्वा सार्गालीं योनिमागतः ॥७२॥ सापि द्वितीये संप्राप्ते वीक्ष्य दिव्येन चक्षुषा ॥ ज्ञात्वा सृगालं तं द्रष्टुं ययौ कोलाहलं गिरिम् ॥७३॥ तत्रापि दृष्ट्वा तं प्राह सार्गालीं योनिमागतम् ॥ भर्त्तारमपि चार्वंगी तनया पृथिवीक्षितः ॥७४॥ अपि स्मरसि राजेंद्र श्वयोनिस्थस्य यन्मया ॥ प्रोक्तं ते पूर्वचरितं पाषंडालापसंश्रयम् ॥ ७५ ॥ पुनस्तयोक्तं स ज्ञात्वा सत्यं सत्यवतां वरः ॥ कानने स निराहारस्तत्याज स्वं कलेवरम् ॥७६॥ भूयस्ततो वृको जज्ञे गत्वा तं निर्जने वने ॥ स्मारयामास भर्त्तारं पूर्ववृत्तमनिंदिता ॥ ७७ ॥ न त्वं वृको महाभाग राजा शतधनुर्भवान् ॥ श्वा भूत्वा त्वं सृगालोऽभूर्वृकत्वं सांप्रतं गतः॥७८॥

॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥६८॥६९॥ स्मर्यतामिति ॥ चाटु प्रीतिचेष्टा स्मर्यताम् ॥ ७० ॥७१॥७२॥ निर्विण्णचित्त इति ॥ मरुत्प्रपतनं गिरितटात्पातः ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ भूय इति ॥ वृकः वनश्वा बलिः उपहारःपिंडश्च ॥ ७७ ॥ ७८ ॥

॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ भुंजन्निति ॥ चाटु प्रीतिचेष्टा ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ निर्विण्णचित्त इति ॥ मरुत्प्रपतनं गिरितटात्प्रपतनं सार्गालीं जंबुकसंबंधिनीम् ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥

दा त्य
स्मारितेन यथा व्यक्तस्तेनात्मा गृध्रतां गतः ॥ अपापा सा पुनश्चैनं बोधयामास भामिनी ॥ ७९ ॥ नरेंद्र स्मर्यतामात्मा ह्यलं ते गृध्रचेष्टया ॥ पाषंडालापजातोऽयं दोषो यद्गृध्रतां गतः ॥ ८० ॥ ततः काकत्वमापन्नं समनंतरजन्मनि ॥ उवाच तन्वी भर्त्तारमुपलभ्या त्मयोगतः ॥ ८१ ॥ अशेषभूभृतः पूर्वं वश्या यस्मै बलिं ददुः ॥ स त्वं काकत्वमापन्नो जातोद्य बलिभुक् प्रभो ॥ ८२ ॥ एवमेव बकत्वेपि स्मारितस्स पुरातनम् ॥ तत्त्याज भूपतिः प्राणान्मयूरत्वमवाप च ॥ ८३ ॥ मयूरत्वे ततस्सा वै चकारानुगतिं शुभा ॥ दत्तैः प्रतिक्षणं भोज्यैर्बाला तज्जातिभोजनैः ॥ ८४ ॥ ततस्तु जनको राजा वाजिमेधं महाक्रतुम् ॥ चकार तस्यावभृथे स्नापयामास तं तदा ॥ ८५ ॥ सस्नौ स्वयं च तन्वंगी स्मारयामास चापि तम् ॥ यथासौ श्वसृगालादियोनिं जग्राह पार्थिवः ॥ ८६ ॥ स्मृतजन्मक्रमस्सोथ तत्त्याज स्वकलेवरम् ॥ जज्ञे स जनकस्यैव पुत्रोसौ सुमहात्मनः ॥ ८७ ॥ ततस्सा पितरं तन्वी विवाहार्थमचोदयत् ॥ स चापि कार यामास तस्या राजा स्वयंवरम् ॥ ८८ ॥ स्वयंवरे कृते सा तं संप्राप्तं पतिमात्मनः ॥ वरयामास भूयोपि भर्तृभावेन भामिनी ॥ ८९ ॥ बुभुजे च तया सार्द्धं संभोगान्नृपनंदनः ॥ पितर्युपरते राज्यं विदेहेषु चकार सः ॥ ९० ॥ इयाज यज्ञान्सुबहून्ददौ दानानि चार्थिनाम् ॥ पुत्रानुत्पादयामास युयुधे च सहारिभिः ॥ ९१ ॥ राज्यं भुक्त्वा यथान्यायं पालयित्वा वसुंधराम् ॥ तत्त्याज स प्रियान्प्राणान्संग्रामे धर्मतो नृपः ॥ ९२ ॥ ततश्चितास्थं तं भूयो भर्त्तारं सा शुभेक्षणा ॥ अन्वारुरोह विधिवद्यथापूर्वं मुदान्विता ॥ ९३ ॥ ततोऽवाप तया सार्द्धं राज पुत्र्या स पार्थिवः ॥ ऐंद्रानतीत्य वै लोकाँल्लोकान्प्राप तदाक्षयान् ॥ ९४ ॥ स्वर्गाक्षयत्वमतुलं दांपत्यमतिदुर्लभम् ॥ प्राप्तं पुण्यफलं प्राप्य संशुद्धिं तां द्विजोत्तम ॥९५॥ एष पाषंडसंभाषाद्दोषः प्रोक्तो मया द्विज ॥ तथाश्वमेधावभृथस्नानमाहात्म्यमेव च ॥ ९६ ॥ तस्मात्पाषंडिभिः पापैरालापस्पर्शनं त्यजेत् ॥ विशेषतः क्रियाकाले यज्ञादौ चापि दीक्षितः ॥ ९७ ॥

॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ तत इति ॥ ऐंद्रान् लोकानती त्य कामदुहो लोकानवाप्येत्यन्वयः ॥९४॥ स्वर्गेति ॥ दांपत्यं मिथुनं तां पूर्वोक्तां संशुद्धिं प्राप्य पुण्यफलमतुलं स्वर्गाक्षयत्वं प्राप्तमित्यन्वयः ॥९५॥९६ ॥ ९७ ॥

॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥

क्रियाहानिर्गृहे यस्य मासमेकं प्रजायते ॥ तस्यावलोकनात्सूर्यं पश्येत मतिमान्नरः ॥ ९८ ॥ किं पुनर्यैस्तु संत्यक्ता त्रयी सर्वात्मना द्विज ॥ पाषंडभोजिभिः पापैर्वेदवादविरोधिभिः ॥ ९९ ॥ सहालापस्तु संसर्गः सहास्या चातिपापिनी ॥ पाषंडिभिर्दुराचारैस्तस्मात्तां परिवर्जयेत् ॥ १०० ॥ पाषंडिनो विकर्मस्थान्बैडालव्रतिकान्छठान् ॥ हैतुकान्बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत् ॥ १०१ ॥ दूरतस्तैस्तु संपर्कस्त्याज्यश्चाप्यतिपापिभिः ॥ पाषंडिभिर्दुराचारैस्तस्मात्तान्परिवर्जयेत् ॥ १०२ ॥ एते नग्नास्तवाख्याता दृष्टा श्राद्धोपघातकाः ॥ येषां संभाषणात्पुंसां दिनपुण्यं प्रणश्यति ॥ १०३ ॥ एते पाषंडिनः पापा न ह्येतानालपेद्बुधः ॥ पुण्यं नश्यति संभाषादेतेषां तद्दिनोद्भवम् ॥ १०४ ॥ पुंसां जटाधरणमौञ्ज्यवतां वृथैव मोघाशिनामखिलशौचनिराकृतानाम् ॥ तोयप्रदानपितृपिंडबहिष्कृतानां संभाषणादपि नरा नरकं प्रयांति ॥ १०५ ॥ ॥ इति श्रीविष्णुमहापुराणे तृतीयांशेऽष्टादशोऽध्यायः ॥ १८ ॥ ॥ श्रीविष्णुमहापुराणे तृतीयांशस्समाप्तः ॥ ॥

॥ ९८ ॥ किं पुनरिति ॥ पाषंडान् भोजयंति तदन्नं भुंजत इति वा पाषंडभोजिनः ॥ ९९ ॥ १०० ॥ पाषंडिन इति ॥ पाषंडिनः पाषंडिलक्षणं तूक्तं यथा—"भ्रष्टः स्वधर्मात्पाषंडो विकर्मस्थो निषिद्धकृत् । यश्च धर्मध्वजो नित्यं सुरध्वज इवोच्छ्रितः ॥" स धर्मध्वजः दंडकमंडल्वादि धर्मचिह्नम् "प्रच्छन्नानि च पापानि वैडालं नाम तद्व्रतम्" तद्व्रतं तस्य व्रतम् "प्रियं वक्ति पुरोन्यत्र विप्रियं कुरुते भृशम् । व्यक्तापराधचेष्टश्च शठोयं कथितो बुधैः॥ संदेहकृद्धेतुभिर्यः सत्कर्मसु स हैतुकः । अर्वाग्दृष्टिर्नैकृतिकः स्वार्थसाधनतत्परः ॥ शठो मिथ्याविनीतश्च बकवृत्तिरुदाहृतः" इति ॥ १०१ ॥ १०२ ॥ १०३ ॥ १०४ ॥ पुंसामिति ॥ मोघाशिनां देवातिथिपितृपूजानुपयुक्तान्नभोजिनाम् ॥ १०५ ॥ इति श्रीविष्णुमहापुराणव्याख्याने विष्णुचित्तीये तृतीयांशेऽष्टादशोऽध्यायः ॥ १८ ॥छ॥ तृतीयांशः समाप्तः ॥

॥९८॥ किं पुनरिति ॥ पाषंडभोजिभिः पाषंडान्नभोजिभिः ॥९९॥१००॥ पाषंडिन इति॥पाषंडादीनां लक्षणं "भ्रष्टस्स्वधर्मात्पाषंडो विकर्मस्थो निषिद्धकृत् । यस्य धर्मध्वजो नित्यं सुरध्वज इवोच्छ्रितः॥प्रच्छन्नानि च पापानि वैडालं नाम तद्व्रतम्" तद्वान्वैडालव्रतिकः "प्रियं वक्ति पुरोन्यत्र विप्रियं कुरुते भृशम् । व्यक्तापराधचेष्टश्च शठोयं कथितो बुधैः ॥ संदेहकृद्धेतुभिर्यस्सत्कर्मसु स हैतुकः । अर्वाग्दृष्टिर्नैकृतिकः स्वार्थसाधनतत्परः ॥ शठो मिथ्याविनीतश्च बकवृत्तिरुदाहृतः" इति ॥ १०१ ॥ १०२ ॥ एत इति ॥ दृष्ट्या श्राद्धोपघातका इति च पाठः ॥ १०३ ॥ एत इति ॥ न ह्येतानालपेत् एतैस्संभाषणं न कुर्यात् ॥ १०४ ॥ प्रस्तुतमुपसंहरति ॥ पुंसामिति ॥ वृथैवेति विशेषणादथर्वशिरःप्रोक्तश्रौतपाशुपतव्रताद्यंगभूतजटाधारणमनुमन्यते । मोघाशिनां देवतातिथिपित्रादिपूजनानुप्रयुक्तान्नभोजिनाम् । अखिलेन बाह्याभ्यंतरशौचेन निराकृतानां वर्जितानां तोयप्रदानादिभ्यो बहिस्तद्व्यतिरिक्तमेव कृतं कर्म येषाम् ॥ १०५ ॥ इति श्रीमद्विष्णुभक्तशिरोरत्नश्रीधरस्वामिविरचितायामात्मप्रकाशाख्यायां श्रीविष्णुमहापुराणव्याख्यायां तृतीयांशेऽष्टादशोध्यायः ॥ १८ ॥ ओंतत्सत् तृतीयांशस्समाप्तः ॥

---

इदं पुस्तकं मुम्बय्यां श्रीकृष्णदासात्मजक्षेमराजश्रेष्ठिना स्वकीये "श्रीवेङ्कटेश्वर" ( स्टीम् ) मुद्रणालये मुद्रितम् । संवत् १९६७, शके १८३२.

॥ इति श्रीविष्णुमहापुराणे विष्णुचित्त्यात्मप्रकाशाख्यश्रीधरीयव्याख्याद्वयोपेते तृतीयांशः समाप्तः ॥

॥ अथ श्रीविष्णुमहापुराणे विष्णुचित्त्यात्मप्रकाशाख्यश्रीधरीयव्याख्याद्वयोपेते चतुर्थांशः प्रारभ्यते ॥

॥ श्रीमते रामानुजाय नमः ॥ मैत्रेय उवाच ॥ भगवन्यन्नरैः कार्य्यं साधुकर्मण्यवस्थितैः ॥ तन्मह्यं गुरुणाख्यातं नित्यनैमित्तिकात्मकम् ॥ १ ॥ वर्णधर्मास्तथाख्याता धर्मा ये चाश्रमेषु च ॥ श्रोतुमिच्छाम्यहं वंशं राज्ञां तद्ब्रूहि मे गुरो ॥ २ ॥ श्रीपराशर उवाच ॥ मैत्रेय श्रूयतामयमनेकयज्वशूरवीरधीरभूपालालंकृतो ब्रह्मादिर्मानवो वंशः ॥ ३ ॥ तदस्य वंशस्यानुपूर्वीमशेषवंशपापप्रणाशनाय मैत्रेयैतां कथां शृणु ॥ ४ ॥ तद्यथा सकलजगतामादिरनादिभूतस्स ऋग्यजुस्सामादिमयो भगवान् विष्णुस्तस्य ब्रह्मणो मूर्त्तं रूपं हिरण्यगर्भो ब्रह्मांडभूतो ब्रह्मा भगवान् प्राग्बभूव ॥ ५ ॥ ब्रह्मणश्च दक्षिणांगुष्ठजन्मा दक्षप्रजापतिः दक्षस्याप्यदितिरदितेर्विवस्वान् विवस्वतो मनुः ॥ ६ ॥ मनोरिक्ष्वाकुनृगधृष्टशर्यातिनरिष्यंतप्रांशुनाभागदिष्टकरूषपृषध्राख्या दश पुत्रा बभूवुः ॥ ७ ॥ इष्टिं च मित्रावरुणयोर्मनुः पुत्रकामश्चकार ॥ ८ ॥ तत्र तावदहुते होतुरपचारादिला नाम कन्या बभूव ॥ ९ ॥ सैव च मित्रावरुणयोः प्रसादात्सुद्युम्नो नाम मनोः पुत्रो मैत्रेय आसीत् ॥ १० ॥ पुनश्चेश्वरकोपात्स्त्री सती सा तु सोमसूनोर्बुधस्याश्रमसमीपे बभ्राम ॥ ११ ॥

॥ श्रीमते रामानुजाय नमः ॥अथ विष्णुचित्ती॥ तृतीयांशे भगवतस्थितिर्हेतुभूतमन्वादिरूपभेदानामधिकारभेद उक्तः । विशेषतश्चायमधिकारः जगत्स्थितिहेतुर्वर्णाश्रमधर्मः सदाचारश्चोक्तः । चतुर्थेंशे तु तत्स्थापकधार्मिकसोमसूर्योद्भवक्षत्रवंशस्तदनुचरितं चोच्यते ॥ १ ॥ २ ॥ मैत्रेयेति ॥ वीरः उत्साही । शूरः पराभिभावी ॥ ३ ॥ ४ ॥ ॥ ५ ॥ ब्रह्मण इति ॥ "अदितिर्ह्यजनिष्ट दक्षया दुहिता तव तां देवा अन्वजायन्ते" इत्यादिश्रुतिसम्मतत्वाद्ब्रह्मदक्षादिक्रम उक्तः । न तु ब्रह्ममरीच्यादिः ॥ ६ ॥ ॥ ७ ॥ इष्टिं चेति ॥ इक्ष्वाकादिपुत्रोत्पत्तेः पूर्वं इष्टिं चकार तस्मादिक्ष्वाकाद्युत्पत्तेः प्राक् इलाजन्म "अकरोत्पुत्रकामस्तु मनुरिष्टिं प्रजापतिः ॥ अनुत्पन्नेषु नवसु पुत्रेष्वेतेषु सुव्रत ॥" इति वायूक्तेः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

॥ अथ श्रीधरी ॥ उक्तास्तृतीये मन्वाद्या धर्माश्चैव प्रकीर्तिताः ॥ तद्धर्मपालसद्राजवंशस्तुर्ये निगद्यते ॥ १ ॥ उक्तमनुवदन्राजवंशं पृच्छति भगवन्नित्यादिद्वाभ्यां–भगवन्निति ॥ गुरुणा त्वयाऽऽख्यातम् ॥ १ ॥ २ ॥ मैत्रेयेति ॥ शूरः पराभिभावी वीरस्तूत्साही । तथा चोक्तं "ब्रह्माद्यं यो मनोर्वंशमहन्यहनि संस्मरेत् । तस्य वंशसमुच्छेदो न कदाचिद्भविष्यति" ॥ ३ ॥ ४ ॥ तद्यथेत्यत आह–सकलेति ॥ ५ ॥ ६ ॥ ७ ॥ इष्टिं चेति ॥ पुत्रोत्पत्तेः पूर्वमिष्टिं चकार । तदुक्तं वायुना "अकरोत्पुत्रकामस्तु मनुरिष्टिं प्रजापतिः । अनुत्पन्नेषु नवसु पुत्रेष्वेतेषु सुव्रत" इति ॥ ८ ॥ तत्र तु प्रथमं स्त्रीत्वेनोत्पन्नत्वात् ज्येष्ठोपि सुद्युम्नो राज्यार्हो नाभूदिति दर्शयन्नाह–तत्रेत्यादिना राज्यभागं न लेभ इत्यंतेन तत्रेति ॥ तत्र तस्मिन्कर्मणि मनुपत्न्या कन्यार्थं प्रार्थितस्य होतुरपचारात् कन्यापत्यसंकल्पादपहुते विकले जाते कन्याभूत् "तत्र श्रद्धा मनोः पत्नी होतारं समयाचत । दुहित्रर्थमुपागम्य प्रणिपत्य पयोव्रता ॥ तेन होत्रपचारेण कन्येला नाम साऽभवत्" इति शुकोक्तेः ॥ ९ ॥ १० ॥ पुनश्चेति ॥ ईश्वरकोपादिति । कदाचिदिलावृतवने रमणीये भवेन सह रहसि रममाणा भवानी भवं द्रष्टुमागतान् मुनीनालक्ष्य कुपिता सती कस्मिंश्चिन्निकुंजे सलज्जमलीयत । अथ तेषु तयोः रतिप्रसंगं दृष्ट्वा सहसा निर्गतेषु भवो भवानीमनुनयन् कोपाच्छापमदात् । इतः परमत्र यः पुमान् प्रवेक्ष्यति

सानुरागाच्च तस्यां बुधः पुरूरवसमात्मजमुत्पादयामास ॥ १२ ॥ जातेपि तस्मिन्नमिततेजोभिः परमर्षिभिरिष्टिमय ऋङ्मयो यजुर्मयस्साममयोथर्वणमयस्सर्ववेदमयो मनोमयो ज्ञानमयो न किंचिन्मयोन्नमयो भगवान् यज्ञपुरुषस्वरूपी सुद्युम्नस्य पुंस्त्वमभिलषद्भिर्यथावदिष्टस्तत्प्रसादादिला पुनरपि सुद्युम्नोऽभवत् ॥ १३ ॥ तस्याप्युत्कलगयविनतास्त्रयः पुत्रा बभूवुः ॥ १४ ॥ सुद्युम्नस्तु स्त्रीपूर्वकत्वाद्राज्यभागं न लेभे ॥ १५ ॥ तत्पित्रा तु वसिष्ठवचनात्प्रतिष्ठानं नाम नगरं सुद्युम्नाय दत्तं तच्चासौ पुरूरवसे प्रादात् ॥ १६ ॥ तदन्वयाश्च क्षत्रियास्सर्वे दिक्ष्वभवन् । पृषध्रस्तु मनुपुत्रो गुरुगोवधाच्छूद्रत्वमगमत् ॥१७॥ मनोः पुत्रः करूषः करूषात्कारूषाः क्षत्रिया महाबलपराक्रमा बभूवुः ॥ १८ ॥ दिष्टपुत्रस्तु नाभागो वैश्यतामगमत्तस्माद्बलंधनः पुत्रोभवत् ॥ १९ ॥ बलंधनाद्वत्सप्रीतिरुदारकीर्त्तिः ॥ २० ॥ वत्सप्रीतेः प्रांशुरभवत् ॥ २१ ॥ प्रजापतिश्च प्रांशोरेकोऽभवत् ॥ २२ ॥ ततश्च खनित्रः ॥ २३ ॥ तस्माच्चक्षुषः ॥ २४ ॥ चक्षुषाच्चातिबलपराक्रमो विंशोभवत् ॥ २५ ॥ ततो विविंशकः ॥ २६ ॥ तस्माच्च खनिनेत्रः ॥ २७ ॥ ततश्चातिविभूतिः ॥ २८ ॥ अतिविभूतेरतिबलपराक्रमः करंधमः पुत्रोभवत् ॥ २९ ॥ तस्मादप्यविक्षित् ॥ ३० ॥ अविक्षितोप्यतिबलपराक्रमः पुत्रो मरुत्तो नामाऽभवत् ॥ यस्येमावद्यापि श्लोकौ गीयेते ॥ ३१ ॥ मरुत्तस्य यथा यज्ञस्तथा कस्याभवद्भुवि ॥ सर्वं हिरण्मयं यस्य यज्ञवस्त्वतिशोभनम् ॥ ३२ ॥ अमाद्यदिंद्रस्सोमेन दक्षिणाभिर्द्विजातयः ॥ मरुतः परिवेष्टारस्सदस्याश्च दिवौकसः ॥ ३३ ॥ स मरुत्तश्चक्रवर्त्ती नरिष्यंतनामानं पुत्रमवाप ॥३४॥ तस्माच्च दमः ॥३५॥

॥ १२ ॥ जाते चेति ॥ न किंचिन्मयः कर्मकृतदेवादिरूपतत्कृतज्ञानसंकोचादिरहितः ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ पृषध्र इति ॥ सूचीकटाहन्यायेनाल्पत्वात्प्रथमं पृषध्रादिवंशोक्तिः बलंधनोत्पत्तेः पश्चान्नाभागस्य वैश्यत्वप्राप्तिः ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ अमाद्यदिति ॥ परिवेष्टारः भोजयितारः ॥ ३३ ॥ ३४ ॥ ३५ ॥

स स्त्री भविष्यतीति । एवं स्थिते कदाचिन्मृगयासक्तः सुद्युम्नस्तदजानन् तत्र प्रविष्टः स्त्री बभूव । तदेला पुनश्च स्त्री सती बुधस्याश्रमे बभ्राम ॥ ११ ॥ सानुराग इति ॥ सानुरागस्तस्यां बुधः पुरूरवसमात्मजमुत्पादयामासेति वदता सूर्यवंशे सोमवंशप्रवेशो दर्शितः ॥ १२ ॥ जाते चेति ॥ स मायावशाद्दगादिमयः वस्तुतस्तु न किंचिन्मयः ॥ १३ ॥ १४ ॥ सुद्युम्न इति ॥ स्त्री पूर्वत्वात् पूर्वं स्त्रीत्वादित्यर्थः ॥ १५ ॥ १६ ॥ राज्यभागं न लेभ इत्याह–पृषध्रस्त्विति ॥ वसिष्ठेन गोपालने नियुक्तः पृषध्रो रात्रौ गोव्रजे शार्दूलं प्रविष्टं जिघांसुः प्रमादाद्गां जघान । ततश्च तेन गुरुणा शूद्रो भवेति शप्तः शूद्रतामवाप ॥ १७ ॥ अल्पातिक्रमे सुकरत्वात् करूषादीनां वंशानाह–मनोरित्यादिना ॥ १८ ॥ दिष्टपुत्र इति ॥ बलंधनजन्मानंतरं नाभागः कर्मणा वैश्यतामगात् । अतो बलंधनस्य क्षत्रियत्वं गतम् ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ अमाद्यदिति ॥ अमाद्यत्सोमपानादितृप्त्या हृष्टोऽभूत् ॥ ३३ ॥ ३४ ॥ ३५ ॥

दमस्य पुत्रो राजवर्धनो जज्ञे ॥ ३६ ॥ राजवर्द्धनात्सुवृद्धिः ॥ ३७ ॥ सुवृद्धेः केवलः ॥३८॥ केवलात्सुधृतिरभूत् ॥ ३९ ॥ ततश्च नरः ॥४०॥ तस्माच्चंद्रः ॥ ४१ ॥ ततः केवलोभूत् ॥ ४२ ॥ केवलाद्बंधुमान् ॥ ४३ ॥ बंधुमतो वेगवान् ॥ ४४ ॥ वेगवतो बुधः ॥ ४५ ॥ ततश्च तृणबिंदुः ॥ ४६ ॥ तस्याप्येका कन्या इलविलानाम ॥४७॥ ततश्चालंबुसानाम वराप्सरास्तृणबिंदुं भेजे ॥४८॥ तस्यामप्यस्य विशालो जज्ञे यः पुरीं विशालां निर्ममे ॥ ४९ ॥ हेमचंद्रश्च विशालस्य पुत्रोभवत् ॥ ५० ॥ ततश्चंद्रः ॥ ५१ ॥ तत्तनयो धूम्राक्षः ॥ ५२ ॥ तस्यापि सृंजयोऽभूत् ॥ ५३ ॥ सृंजयात्सहदेवः ॥ ५४ ॥ ततश्च कृशाश्वो नाम पुत्रोभवत् ॥ ५५ ॥ सोमदत्तः कृशाश्वाज्जज्ञे योश्वमेधानां शतमाजहार ॥५६॥ तत्पुत्रो जनमेजयः ॥ ५७ ॥ जनमेजयात्सुमतिः ॥ ५८ ॥ एते वैशालिका भूभृतः ॥ ५९ ॥ श्लोकोप्यत्र गीयते ॥ ६० ॥ तृणबिंदोः प्रसादेन सर्वे वैशालिका नृपाः ॥ दीर्घायुषो महात्मानो वीर्यवंतोतिधार्मिकाः ॥ ६१ ॥ शर्यातेः कन्या सुकन्यानामाभवत् यामुपयेमे च्यवनः ॥ ६२ ॥ आनर्त्तनामा परमधार्मिकश्शर्यातिपुत्रोभवत् ॥ ६३ ॥ आनर्त्तस्यापि रेवतनामा पुत्रो जज्ञे योसावानर्त्तविषयं बुभुजे पुरीं च कुशस्थलीमध्युवास ॥ ६४ ॥ रेवतस्यापि रैवतः पुत्रः ककुद्मिनामा धर्मात्मा भ्रातृशतस्य ज्येष्ठोऽभवत् ॥ ६५ ॥ तस्य रेवतीनाम कन्याभवत् ॥ ६६ ॥ स तामादाय कस्येयमर्हतीति भगवंतमब्जयोनिं प्रष्टुं ब्रह्मलोकं जगाम ॥ ६७ ॥ तावच्च ब्रह्मणोंतिके हाहाहूहूसंज्ञाभ्यां गंधर्वाभ्यामतितानं नाम दिव्यं गांधर्वमगीयत ॥ ६८ ॥ तच्च त्रिमार्गपरिवृत्तैरनेकयुगपरिवृत्तिं तिष्ठन्नपि रैवतश्शृण्वन्मुहूर्त्तमिव मेने ॥६९॥

॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ स इति ॥ रैवतः ब्रह्मलोकं जगामेति ॥ ब्रह्मलोकः सत्यलोकः न तु मेरुस्थः यतो रैवतो ब्रह्मणोंतिके तिष्ठत्येव मेरुस्थो ब्रह्मा देवैस्सहाष्टाविंशद्वापरांते कृष्णावतारार्थं क्षीरोदमगमदिति पंचमेंशे वक्ष्यति । अतस्सत्यलोकस्थहिरण्यगर्भांशोन्यो ब्रह्मा मेरुस्थ इति न विरोधः ॥ ६७ ॥ ६८ ॥ तदिति ॥ परिवृत्तयः परिवृत्ताः एते दत्तिलादिषु

॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ तावदिति ॥ अतितानं गेयविशेषः । यद्वा तानानि गीतगाननामानि यथाह "सप्तस्वरास्त्रयो ग्रामा मूर्छनास्त्वेकविंशतिः । तानान्येकोनपंचाशदित्येतद्गेयमंडलम् ॥" इति । दिव्यं दिविभवं गांधारग्रामोद्भवं "भूलोकाज्जायते षड्जो भुवर्लोकाच्च मध्यमः । स्वर्गान्नान्यत्र गांधारो नारदस्य मतं यथा" इति ॥ ६८ ॥ तच्चेति ॥ त्रिमार्गपरिवर्तैस्त्रयो मार्गा द

गीतावसाने च भगवंतमब्जयोनिं प्रणम्य रैवतः कन्यायोग्यं वरमपृच्छत् ॥ ७० ॥ ततश्चासौ भगवानकथयत् कथय योभिमतस्ते वर इति ॥ ७१ ॥ पुनश्च प्रणम्य भगवते तस्मै यथाभिमतानात्मनस्स वरान् कथयामास ॥ क एषां भगवतोभिमत इति यस्मै कन्यामिमां प्रयच्छामीति ॥ ७२ ॥ ततः किंचिदवनतशिरास्ससस्मितं भगवानब्जयोनिराह ॥ ७३ ॥ य एते भवतोभिमता नैतेषां सांप्रतं पुत्रपौत्राप त्यापत्यसंततिरस्त्यवनीतले ॥ ७४ ॥ बहूनि तवात्रैव गांधर्वं शृण्वतश्चतुर्युगान्यतीतानि ॥ ७५ ॥ सांप्रतं महीतलेष्टाविंशतितममनोश्चतुर्युगम तीतप्रायं वर्तते ॥ ७६ ॥ आसन्नो हि कलिः ॥ ७७ ॥ अन्यस्मै कन्यारत्नमिदं भवतैकाकिनाभिमताय देयम् ॥ ७८ ॥ भवतोपि पुत्रमित्रक लत्रमंत्रिभृत्यबंधुबलकोशादयस्समस्ताः कालेनैतेनात्यंतमतीताः ॥ ७९ ॥ ततः पुनरप्युत्पन्नसाध्वसो राजा भगवंतं प्रणम्य पप्रच्छ ॥ ८० ॥ भगवन्नेवमवस्थिते मयेयं कस्मै देयेति ॥ ८१ ॥ ततस्स भगवान् किंचिदवनम्रकंधरः कृतांजलिर्भूत्वा सर्वलोकगुरुरंभोजयोनिराह ॥ ८२ ॥ ब्रह्मोवाच ॥ न ह्यादिमध्यांतमजस्य यस्य विद्मो वयं सर्वमयस्य धातुः ॥ न च स्वरूपं न परं स्वभावं न चैव सारं परमेश्वरस्य ॥ ८३ ॥ कलामुहूर्त्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुः ॥ अजन्मनाशस्य सदैकमूर्त्तेरनामरूपस्य सनातनस्य ॥ ८४ ॥

द्रष्टव्याः । त्रिमार्गपरिवृत्तैः चित्रदक्षिणधात्र्याख्यास्त्रिमार्गाः तद्विषये कालविशेषयुक्तगीतगानक्रियाभ्यामनेकयुगपरिवृत्तीरिति । कालाध्वनोरिति द्वितीया । परिवृत्तीरिति च पाठः ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ सांप्रतमिति ॥ अष्टाविंशतितमं चतुर्युगम् ॥ ७६ ॥ ७७ ॥ ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ न हीति ॥ स्वरूपं ज्ञानानंदादिलक्षणं स्वभावः 'परास्यशक्तिर्विविधैव श्रूयते स्वाभाविकी' इत्याद्युक्तं प्रभावं सारः विश्वधारणनियमनादिक्षमं बलम् ॥ ८३ ॥ कलेति कलामुहूर्त्तेति अनेन 'त्रिपादस्यामृतं दिवि' इति 'यत्र पूर्वे साध्याः संति देवाः, दिव्यं स्थानमजरम्' इत्यादिश्रुतिस्मृतिसिद्धस्य परमपदस्याकालकाल्यत्वमुच्यते अजन्मनाशस्य कर्मनिमित्तशरीरग्रहणतद्वियोगरहितस्य सदैकमूर्त्तेस्सदैकरूपस्य अनामरूपस्य कर्मकृतदेवादिनामरूपास्पृष्टस्य ॥ ८४ ॥

त्तिलादिप्रोक्ताः । चित्रा दक्षिणा धात्रीति एषां परिवर्तैरावर्तनैः अनेकेषां युगानां परिवृत्तिर्यथा भवति तथा अनेकयुगावृत्तिपर्यंतं तिष्ठन्नपि तच्छृण्वन् मुहूर्तमिव मेन इत्यर्थः ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ तत इति ॥ अवनतशिराश्चितयावनम्रमुखः ॥ ७३ ॥ ७४ ॥ ७५ ॥ सांप्रतमिति ॥ अस्य वैवस्वतस्य मनोरष्टाविंशतितमं युगं गतप्रायम् ॥ ७६ ॥ ७७ ॥ ७८ ॥ एकाकिना देयमित्यत्र हेतुमाह—भवतोपीति ॥ ७९ ॥ तत इति ॥ कन्याया वरालाभादुत्पन्नं साध्वसं यस्य सः ॥ ८० ॥ ८१ ॥ ८२ ॥ अत्र श्लोकाः " ब्रह्मोवाच—रामाय कन्यकां देहीति वक्ष्यत्यादौ कनीयसे । वर्षीयसी कथं देया" इत्याशंक्याह—न ह्यादिमध्यांतमित्यादिदशभिः नहीति ॥ यस्येत्यादि यच्छब्दानां स विष्णुर्धरित्र्यामवतीर्ण इत्यनेनान्वयः । न चैव सारं बलं न विद्मः ॥ ८३ ॥ कलेति ॥ यस्य विभूतेरवतारादिरूपायाः ॥ ८४ ॥

यस्य प्रसादादहमच्युतस्य मूर्तिः प्रजासृष्टिकरोंतकारी॥क्रोधाच्च रुद्रः स्थितिहेतुभूतो यस्माच्च मध्ये पुरुषः परस्मात् ॥८५॥ तद्रूपमास्थाय सृजत्य जोयः स्थितौ च योऽसौ पुरुषस्वरूपी ॥ रुद्रस्वरूपेण च योत्ति विश्वं धत्ते तथानंतवपुस्समस्तम् ॥८६॥ पाकाय योग्नित्वमुपैति लोकान्बि भर्त्ति पृथ्वीवपुरव्ययात्मा ॥ शक्रादिरूपी परिपाति विश्वमर्केंदुरूपश्च तमो हिनस्ति ॥ ८७ ॥ करोति चेष्टाश्श्वसनस्वरूपी लोकस्य तृप्तिं च जलान्नरूपी ॥ ददाति विश्वस्थितिसंस्थितस्तु सर्वावकाशं च नभस्स्वरूपी ॥ ८८ ॥ यस्सृज्यते सर्गकृदात्मनैव यः पाल्यते पालयिता च देवः ॥ विश्वात्मकस्संहृयतेंतकारी पृथक्‌ त्रयस्यास्य च योव्ययात्मा ॥ ८९ ॥ यस्मिञ्जगद्यो जगदेतदाद्यो यं चाश्रितोस्मिञ्जगति स्वयंभूः ॥ स सर्वभूतप्रभवो धरित्र्यां स्वांशेन विष्णुर्नृप तेऽवतीर्णः ॥९०॥ कुशस्थली या तव भूप रम्या पुरी पुराभूदमरावतीव ॥ सा द्वारका संप्रति तत्र चास्ते स केशवांशो बलदेवनामा ॥ ९१ ॥ तस्मै त्वमेनां तनयां नरेंद्र प्रयच्छ मायामनुजाय जायाम् ॥ श्लाघ्यो वरोसौ तनया तवेयं स्त्रीरत्नभूता सदृशो हि योगः ॥ ९२ ॥

यस्येति ॥ यस्माच्च मध्य इति सृष्टिसंहर्त्रोर्मध्ये स्थितिहेतुभूतः पुरुषस्स्वयं परस्माद्यस्माद्रामादिवत् प्रादुर्भूतः ॥ ८५ ॥ ८६ ॥ ८७ ॥ करोतीति ॥ विश्वस्थितिसंस्थितः विश्वस्थित्यै संस्थितः 'विष्टभ्याहम्' इत्युक्तत्वात् ॥ ८८ ॥ यस्सृज्यत इति ॥ यस्सृज्यत इत्यादिसर्गकृत्यः विश्वात्मना आत्मनैव सृज्यत इत्यन्वयः। आत्मनेति प्रकृत्या तृतीया । विश्वात्मभूतः स्वयमेव सृज्यत इत्यर्थः । एवमुत्तरत्रापि त्रयस्य सृज्यादेः स्रष्ट्रादेश्च । पृथङ् न यस्यास्तीति पाठे एतदात्मकं नास्तीत्यर्थः । 'न तदस्ति विना यत्स्यात्' इति ॥ ८९ ॥ ९० ॥ कुशस्थलीति ॥ पूर्वं वेलास्थिता सती कुशस्थली कृष्णेन समुद्राल्लब्धद्वादशयोजनस्थलेन सह द्वारका कृता ॥९१॥ तस्मा इति ॥ मायामनुजाय संकल्पभूतमनुजाय ॥ ९२ ॥

यस्येति ॥ यस्याच्युतस्य प्रसादात् प्रजासृष्टिरूपादहं ब्रह्मा प्रजासृष्टिकरो भूतः जातोस्मि । यस्य च क्रोधात्तमोदृष्टिरूपात् रुद्रोंतकारी जातः । यस्माच्च मध्ये स्थितः स्थितिहेतुभूतः पुरुषो विष्ण्वाख्यो जातः ॥ ८५ ॥ तर्हि किंचित्सृष्ट्यादिभिः क्रियते नेत्याह—तद्रूपमिति ॥ अनंतवपुश्शेषमूर्तिः ॥ ८६ ॥ शक्रेति ॥ पंचमहाभूतरूपेण स्थितिहेतुत्वमाह—पाकायेति सार्धेन ॥ ८७ ॥ ८८ ॥ स्रष्टृसृज्यादिभेदमपनुदन्नाह—य इत्यादिद्वाभ्याम् । य इति ॥ पृथक्त्रयस्येति स्रष्टृपालकसंहर्तृरूपस्य सृज्यादित्रयस्य यः पृथक्शुद्धचिद्रूपः । पृथङ् न यस्यास्तीति पाठे यस्मात्पृथगन्यन्नास्तीत्यर्थः । विश्वात्मक इति च पाठः ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥

श्रीपराशर उवाच ॥ इतीरितोसौ कमलोद्भवेन भुवं समासाद्य पतिः प्रजानाम् ॥ ददर्श ह्रस्वान् पुरुषान् विरूपानल्पौजसस्स्वल्प विवेकवीर्यान् ॥ ९३ ॥ कुशस्थलीं तां च पुरीमुपेत्य दृष्ट्वान्यरूपां प्रददौ स कन्याम् ॥ सीरायुधाय स्फटिकाचलाभवक्षस्थलायातुलधी र्नरेंद्रः ॥ ९४ ॥ उच्चप्रमाणामिति तामवेक्ष्य स्वलांगलाग्रेण च तालकेतुः ॥ विनम्रयामास ततश्च सापि बभूव सद्यो वनिता यथान्या ॥ ॥ ९५ ॥ तां रेवतीं रैवतभूपकन्यां सीरायुधोऽसौ विधिनोपयेमे ॥ दत्त्वाथ कन्यां स नृपो जगाम हिमालयं वै तपसे धृतात्मा ॥ ॥ ९६ ॥ इति श्रीविष्णुमहापुराणे चतुर्थांशे प्रथमोध्यायः ॥ १ ॥ ॥ श्रीपराशर उवाच ॥ यावच्च ब्रह्मलोकात्स ककुद्मी रैवतो नाभ्येति तावत्पुण्यजनसंज्ञा राक्षसास्तामस्य पुरीं कुशस्थलीं निजघ्नुः ॥ १ ॥ तच्चास्य भ्रातृशतं पुण्यजनत्रासाद्दिशो भेजे ॥ २ ॥ तदन्वयाश्च क्षत्रियास्सर्वदिक्ष्वभवन् ॥ ३ ॥ वृष्टस्यापि वार्ष्टकं क्षत्रमभवत् ॥ ४ ॥ नाभागस्यात्मजो नाभागसंज्ञोभवत् ॥ ५ ॥ तस्याप्यंबरीषः ॥ ६ ॥ अंबरीषस्यापि विरूपोभवत् ॥७॥ विरूपात्पृषदश्वो जज्ञे ॥ ८ ॥ ततश्च रथीतरः ॥ ९ ॥ अत्रायं श्लोकः ॥ एते क्षत्रप्रसूता वै पुनश्चांगिरसाः स्मृताः ॥ रथीतराणां प्रवराः क्षत्रोपेता द्विजातयः ॥ इति ॥ १० ॥ क्षुतवतश्च मनोरिक्ष्वाकुः पुत्रो जज्ञे घ्राणतः ॥ ११ ॥

॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ ॥ इति श्रीविष्णुचित्तीये श्रीविष्णुमहापुराणव्याख्याने चतुर्थांशे प्रथमोऽध्यायः ॥ १ ॥ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ एत इति ॥ रथीतराणां प्रवराः वंश्याः केनचित्संबंधेनांगिरोगणप्रविष्टत्वात्क्षत्रजत्वाच्च ब्रह्मक्षत्रतां गताः एषां हि तपसैव ब्रह्मत्वं यथाह वायुः—"विश्वामित्रो नरपतिर्मांधाता संकृतिः कपिः । वाध्र्यश्वः पुरुकुत्सश्च भास्वान् गृत्समदः प्रभुः ॥ अर्ष्टिषेणोजमीढश्च छागो गार्ग्यस्तथैव च । कक्षीवांश्च विरूपश्च मुद्गलो हरितस्तथा ॥ रथीतरश्च कण्वश्च विष्णुवृद्धादयो नृपाः । क्षत्रोपेता द्विजा ह्येते तपसा चर्षितां गताः" इति ॥ १० ॥ क्षुतवत इति ॥ क्षुतवतः क्षुतं कुर्वतः इक्ष्वाकुनामनिरुक्तिः ॥ ११ ॥

इतीति ॥ अल्पौजसः स्वल्पसामर्थ्याः ॥ ९३ ॥ कुशस्थलीमिति ॥ दृष्ट्वान्यरूपामिति । कुशस्थली पूर्वं समुद्रवेलायामासीदिदानीं समुद्रस्यांतस्तद्वृत्तद्वादशयोजनभूम्या सहैकीकृत्य नानारत्नमयानेकभूमिकविचित्रनव लक्षमहाप्रासादहैमस्फटिकानेकप्राकारपारिजातवनादिभिः परिशोभिता विश्वकर्मनिर्मितापूर्णरूपा ॥ ९४ ॥ ९५ ॥ ९६ ॥ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां चतुर्थांशे प्रथमोऽध्यायः ॥ १ ॥ तपसे जगामेत्युक्तं तत्र हेतुमाह--यावच्चेति ॥ पापिन एव विरुद्धलक्षणया पुण्यजनसंज्ञाः ॥ १ ॥ २ ॥ ३ ॥ वृष्टस्येति ॥ धृष्टस्यापि धार्ष्टकं क्षत्रमभवदिति च पाठः ॥ ४ ॥ नाभागस्येति ॥ नभगस्यात्मजो नाभागसंज्ञोऽभवदिति च पाठः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९॥ अत्रायं श्लोकः ॥ एते क्षत्रप्रसूता इति "रथीतरस्याप्रजस्य भार्यायां तं तदा ऋषिः । अंगिरा जनयामास ब्रह्मवर्चस्विनस्सुतान् ॥" इति शुकोक्तेः । रथीतरस्य क्षेत्रेंगिरसो वीर्याज्जातत्वात्ते रथीतराणां प्रवराः गोत्रजास्संतः पुनश्चांगिरसास्स्मृताः । तत एते क्षत्रोपेताद्विजातयः ॥ १० ॥ क्षुतवत इति ॥ क्षुतवतः क्षुतं कुर्वतः ॥ ११ ॥

तस्य पुत्रशतप्रधाना विकुक्षिनिमिदंडाख्यास्त्रयः पुत्रा बभूवुः ॥१२॥ शकुनिप्रमुखाः पंचाशत्पुत्राः उत्तरापथरक्षितारो बभूवुः ॥ १३॥ चत्वारिंशदष्टौ च दक्षिणापथभूपालाः ॥ १४ ॥ स चेक्ष्वाकुरष्टकायाश्श्राद्धमुत्पाद्य श्राद्धार्हं मांसमानयेति विकुक्षिमाज्ञापयामास ॥१५॥ स तथेति गृहीताज्ञो विधृतशरासनो वनमभ्येत्यानेकशो मृगान् हत्वा श्रांतोतिक्षुत्परीतो विकुक्षिरेकं शशमभक्षयत् ॥ शेषं च मांसमानीय पित्रे निवेदयामास ॥ १६ ॥ इक्ष्वाकुकुलाचार्यो वशिष्ठस्तत्प्रोक्षणाय चोदितः प्राह ॥ अलमनेनामेध्येनामिषेण दुरात्मना तव पुत्रेणैतन्मांसमुपहतं यतोऽनेन शशो भक्षितः ॥ १७ ॥ ततश्चासौ विकुक्षिर्गुरुणैवमुक्तश्शशादसंज्ञामवाप पित्रा च परित्यक्तः ॥ १८ ॥ पितर्युपरते चासावखिलामेतां पृथ्वीं धर्मतश्शशास ॥ १९ ॥ शशादस्य तस्य पुरंजयोनाम पुत्रोभवत् ॥ २० ॥ तस्येदं चान्यत् ॥ २१ ॥ पुरा हि त्रेतायां देवासुरयुद्धमतिभीषणमभवत् ॥ २२ ॥ तत्र चातिबलिभिरसुरैरमराः पराजितास्ते भगवंतं विष्णुमाराधयांचक्रुः ॥ २३ ॥ प्रसन्नश्च देवानामनादिनिधनोखिलजगत्परायणो नारायणः प्राह ॥ २४ ॥ ज्ञातमेतन्मया युष्माभिर्यदभिलषितं तदर्थमिदं श्रूयताम् ॥ २५ ॥ पुरंजयो नाम राजर्षेश्शशादस्य तनयः क्षत्रियवरो यस्तस्य शरीरेहमंशेन स्वयमेवावतीर्य तानशेषानसुरान्निहनिष्यामि तद्भवद्भिः पुरंजयोऽसुरवधार्थमुद्योगं कार्यतामिति ॥ २६ ॥ एतच्च श्रुत्वा प्रणम्य भगवंतं विष्णुममराः पुरंजयसकाशमाजग्मुरूचुश्चैनम् ॥ २७ ॥ भोभोः क्षत्रियवर्यास्माभिरभ्यर्थितेन भवतास्माकमरातिवधोद्यतानां कर्तव्यं साहाय्यमिच्छामः तद्भवतास्माकमभ्यागतानां प्रणयभंगो न कार्य इत्युक्तः पुरंजयः प्राह ॥ ॥ २८॥ त्रैलोक्यनाथो योयं युष्माकमिंद्रः शतक्रतुरस्य यद्यहं स्कंधाधिरूढो युष्माकमरातिभिस्सह योत्स्ये तदहं भवतां सहायः स्याम्॥२९॥

॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ तस्येति ॥ इदं चान्यत्पुरंजयस्य ककुत्स्थ इति नाम ॥ २१ ॥ २२ ॥ २३ ॥ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ भोभो इति ॥ प्रणयभंगः प्रणयो याच्ञा ॥ २८ ॥ २९ ॥

॥ १२ ॥ १३ ॥ १४ ॥ इक्ष्वाकुर्नाम विकुक्षिरेव शशादसंज्ञामवापेति वक्ष्यन्कथामाह--स चेक्ष्वाकुरिति ॥ उत्पाद्येति सिद्धोत्पादनं विना स्वयं मृगान्हत्वेत्यर्थः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ पुरंजय एव ककुत्स्थसंज्ञां प्राप्त इतीतिहासमाह--तस्येदं चेत्यादिना संज्ञामत्रापेत्यंतेन । तस्येदं चेति ॥ इदं चान्यत्तस्य नामेतिशेषः ॥ २१ ॥ २२ ॥ २३ ॥ प्रसन्न इति ॥ सकलमखिलं जगदेकपरायणं परमयनं यस्य नारायणस्य ॥ २४ ॥ २५ ॥ पुरंजय इति ॥ सर्वांतर्यामित्वादवतीर्य प्रविश्यानुगत इत्यर्थः ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥

इत्याकर्ण्य समस्तदेवैरिंद्रेण च बाढमित्येवं समन्विच्छितम् ॥ ३० ॥ ततश्च शतक्रतोर्वृषरूपधारिणः ककुदि स्थितोऽतिरोषसमन्वितो भगवतश्चराचरगुरोरच्युतस्य तेजसाप्यायितो देवासुरसंग्रामे समस्तानेवासुरान्निजघान ॥ ३१ ॥ यतश्च वृषभककुदि स्थितेन राज्ञा दैतेयबलं निषूदितमतश्चासौ ककुत्स्थसंज्ञामवाप ॥ ३२ ॥ ककुत्स्थस्याप्यनेनाः पुत्रोऽभवत् ॥ ३३ ॥ पृथुरनेनसः ॥ ३४ ॥ पृथोर्विष्टराश्वः ॥ ३५ ॥ तस्यापि चांद्रो युवनाश्वः ॥ ३६ ॥ चांद्रस्य तस्य युवनाश्वस्य शावस्तः यः पुरीं शावस्तीं निवेशयामास ॥ ३७ ॥ शावस्तस्य बृहदश्वः ॥ ३८ ॥ तस्यापि कुवलयाश्वः ॥ ३९ ॥ योसावुदकस्य महर्षेरपकारिणं दुंदुनामानमसुरं वैष्णवेन तेजसाप्यायितः पुत्रसहस्रैरेकविंशद्भिः परिवृतो जघान दुंदुमारसंज्ञामवाप ॥ ४० ॥ तस्य च तनयास्समस्ता एव दुंदुमुखनिश्वासाग्निना विप्लुष्टा विनेशुः ॥ ४१ ॥ दृढाश्वचंद्राश्वकपिलाश्वाश्च त्रयः केवलं शेषिताः ॥ ४२ ॥ दृढाश्वाद्धर्यश्वः ॥ ४३ ॥ तस्माच्च निकुंभः ॥ ४४ ॥ निकुंभस्यामिताश्वः ॥ ४५ ॥ ततश्च कृशाश्वः ॥ ४६ ॥ तस्माच्च प्रसेनजित् ॥४७॥ प्रसेनजितो युवनाश्वोभवत् ॥४८॥ तस्य चापुत्रस्यातिनिर्वेदान्मुनीनामाश्रममंडले निवसतो दयालुभिर्मुनिभिरपत्योत्पादनायेष्टिः कृता ॥ ४९ ॥ तस्यां च मध्यरात्रौ निवृत्तायां मंत्रपूतजलपूर्णं कलशं वेदिमध्ये निवेश्य ते मुनयः सुषुपुः ॥ ५० ॥ सुप्तेषु तेषु अतीव तृट्परीतस्स भूपालस्तमाश्रमं विवेश ॥ ५१ ॥ सुप्तांश्च तानृषीन्नैवोत्थापयामास ॥ ५२ ॥ तच्च कलशमपरिमेयमाहात्म्यमंत्रपूतं पपौ ॥ ५३ ॥

इतीति ॥ समन्विच्छितम् अनुमतम् ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ य इति ॥ एकविंशतिभिरित्येतत्संख्येयपरम् ॥ ४० ॥ तस्य चेति ॥ विप्लुष्टा दग्धाः ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ सुप्तानिति ॥ नैवोत्थापयामास क्षुत्तृट्क्षामकंठत्वान्निद्राभंगभयाद्वा ॥ ५२ ॥ ५३ ॥

॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ य इति ॥ एकविंशतिपुत्रसहस्रैरित्यर्थः ॥ ४० ॥ तस्येति ॥ प्लुष्टाः दग्धाः संतो मृताः ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ निकुंभस्येति ॥ निकुंभाच्च भीताश्व इति च पाठः ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ तस्यामिति ॥ निवृत्तायां समाप्तायाम् ॥ ५० ॥ ५१ ॥ सुप्तानिति ॥ सुप्तांश्च तान्नैवोत्थापयामास गतायासं न प्रबोधयेदिति निषेधात् ॥ ५२ ॥ ५३ ॥

प्रबुद्धाश्च ऋषयः पप्रच्छुः केनैतं मंत्रपूतं वारि पीतम् ॥ ५४ ॥ अत्र हि राज्ञो युवनाश्वस्य पत्नी महाबलपराक्रमं पुत्रं जनयिष्यति ॥ इत्याकर्ण्य स राजा अजानता मया पीतमित्याह ॥ ५५ ॥ गर्भश्च युवनाश्वस्योदरे अभवत् क्रमेण च ववृधे ॥ ५६ ॥ प्राप्तसमयश्च दक्षिणां गुष्ठेन कुक्षिमवनिपतेर्निर्भिद्य निश्चक्राम ॥ ५७ ॥ स चासौ राजा ममार ॥ ५८ ॥ जातो नामैष कं धास्यतीति ते मुनयः प्रोचुः ॥५९॥ अथागत्य देवराजोऽब्रवीत् मामयं धास्यतीति ॥ ६० ॥ ततो मांधातृनामा सोऽभवत् ॥ वक्त्रे चास्य प्रदेशिनी न्यस्ता देवेंद्रेण न्यस्ता तां पपौ ॥ ६१ ॥ तां चामृतस्राविणीमास्वाद्याह्नैव स व्यवर्द्धत ॥ ६२ ॥ ततस्तु मांधाता चक्रवर्त्ती सप्तद्वीपां महीं बुभुजे ॥ ६३ ॥ तत्रायं श्लोकः ॥ ६४ ॥ यावत्सूर्य उदेत्यस्तं यावच्च प्रतितिष्ठति ॥ सर्वं तद्यौवनाश्वस्य मांधातुः क्षेत्रमुच्यते ॥ ६५ ॥ मांधाता शतबिंदोर्दुहितरं बिंदुमतीमुपयेमे ॥ ६६ ॥ पुरुकुत्समंबरीषं मुचुकुंदं च तस्यां पुत्रत्रयमुत्पादयामास ॥ ६७ ॥ पंचाशद्दुहितरस्तस्यामेव तस्य नृपतेर्बभूवुः ॥ ६८ ॥ एकस्मिन्नंतरे बह्वृचश्च सौभरिर्नाम महर्षिरंतर्जले द्वादशाब्दं कालमुवास ॥ ६९ ॥ तत्र चांतर्जले संमदो नामातिबहुप्रजोऽतिमात्रप्रमाणो मीनाधिपतिरासीत् ॥ ७० ॥ तस्य च पुत्रपौत्रदौहित्राः पृष्ठतोऽग्रतः पार्श्वयोः पक्षपुच्छशिरसां चोपरि भ्रमंतस्तेनैव सदाहर्निशमतिनिर्वृत्ता रेमिरे ॥ ७१ ॥ स चापत्यस्पर्शोपचीयमानप्रहर्षप्रकर्षो बहुप्रकारं तस्य ऋषेः पश्यतस्तैरात्मजपुत्रपौत्रदौहित्रादिभिः सहानुदिनं सुतरां रेमे ॥ ७२ ॥ अथांतर्जलावस्थितस्सौभरिरेकाग्रतस्समाधिमपहायानुदिनं तस्य मत्स्यस्यात्मजपुत्रपौत्रदौहित्रादिभिस्सहातिरमणीयतामवेक्ष्याचिंतयत् ॥ ७३ ॥

॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ स इति ॥ स चासौ राजा ममार ॥ ५८ ॥ जात इति ॥ कं धास्यतीति स्तनाभावात् ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ॥ ६३ ॥ ६४ ॥ यावदिति ॥ यावत्तावच्च साकल्ये ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ अथेति ॥ ललितं क्रीडितम् ॥ ७३ ॥

॥ ५४ ॥ अत्रेति ॥ अत्रास्मिञ्जले पीते सति ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ जात इति ॥ कं धास्यति स्तनाभावात् ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ यावदिति ॥ यावदिति साकल्ये यावच्छब्दः मेरोस्सर्वतस्सूर्योदयास्तमयोपलक्षितं सर्वमपि मांधातृक्षेत्रमित्यर्थः ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ मांधातृकन्यानां वंशमत्याश्चर्यं वक्ष्यन्नादौ सौभरिचरितमाह—एकस्मिन्नन्तरे बह्वृचश्चेत्यादिना यावदुत्तरांशः ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ अथेति ॥ ललितं क्रीडासुखम् ॥ ७३ ॥

अहो धन्योयमीदृशमनभिमतं योन्यंतरमवाप्यैभिरात्मजपुत्रपौत्रदौहित्रादिभिस्सह रममाणोतीवास्माकं स्पृहामुत्पादयति ॥ ७४॥ वयमप्येवं पुत्रादिभिस्सह ललितं रमिष्याम इत्येवमभिकांक्षन् स तस्मादंतर्जलान्निष्क्रम्य संतानाय निवेष्टुकामः कन्यार्थं मांधातारं राजानमगच्छत् ॥ ॥ ७५ ॥ आगमनश्रवणसमनन्तरं चोत्थाय तेन राज्ञा सम्यगर्घ्यादिना संपूजितः कृतासनपरिग्रहः सौभरिरुवाच राजानम् ॥ ७६ ॥ सौभरिरुवाच ॥ निवेष्टुकामोऽस्मिनरेंद्र कन्यां प्रयच्छ मे मा प्रणयं विभांक्षीः ॥ न ह्यर्थिनः कार्यवशादुपेताः ककुत्स्थवंशे विमुखाः प्रयांति ॥७७॥ अन्येपि संत्येव नृपाः पृथिव्यां मांधातरेषां तनयाः प्रसूताः ॥ किं त्वर्थिनामर्थितदानदीक्षाकृतव्रतश्लाघ्यमिदं कुलं ते ॥ ७८ ॥ शतार्धसंख्यास्तव संति कन्यास्तासां ममैकां नृपते प्रयच्छ ॥ यत्प्रार्थनाभंगभयाद्बिभेमि तस्मादहं राजवरातिदुःखात् ॥ ७९ ॥ श्रीपराशर उवाच ॥ ॥ इति ऋषिवचनमाकर्ण्य स राजा जराजर्जरितदेहमृषिमालोक्य प्रत्याख्यानकातरस्तस्माच्च शापभीतो बिभ्यत्किंचिदधोमुखश्चिरं दध्यौ च ॥ ॥ ८० ॥ सौभरिरुवाच ॥ नरेंद्र कस्मात्समुपैषि चिंतामसह्यमुक्तं न मयात्र किंचित् ॥ यावश्यदेया तनया तयैव कृतार्थता नो यदि किं न लब्धा ॥ ८१ ॥ श्रीपराशर उवाच ॥ ॥ अथ तस्य भगवतश्शापभीतस्सप्रश्रयस्तमुवाचासौ राजा ॥ ८२ ॥ राजोवाच ॥ भगवन् अस्मत्कुलस्थितिरियं य एव कन्याभिरुचितोऽभिजनवान्वरस्तस्मै कन्या प्रदीयते भगवद्याच्ञा चास्मन्मनोरथानामप्यतिगोचरवर्त्तिनी कथमप्येषा संजाता तदेवमुपस्थिते न विद्मः किं कुर्म इत्येतन्मयाऽचिंत्यत इत्यभिहिते च तेन भूभुजा मुनिरचिंतयत् ॥ ८३ ॥

॥ ७४ ॥ वयमिति ॥ निर्वेष्टुकामः उद्वोढुकामः ॥ ७५ ॥ ७६ ॥ निर्वेष्टुकाम इति ॥ प्रणयं याच्ञां मा विभांक्षीः भग्नं मा कृथाः ॥ ७७ ॥ ७८ ॥ शतार्धेति ॥ अतिदुःखात्प्रार्थनाभंगभयाद्बिभेमीति यत् तस्मात्कन्यां प्रयच्छ ॥ ७९ ॥ इतीति ॥ शापतः शापात् कारणात्तस्मान्मुनेर्बिभ्यत् ॥ ८० ॥ नरेंद्रेति ॥ किं न लब्धा सर्वं लप्स्यते । कर्मणि लट् । लब्धमिति पाठे मया किं न लब्धं देव कृतार्थोस्मीत्यर्थः ॥ ८१ ॥ ८२ ॥ भगवन्निति ॥ भवद्याच्ञा तन्मनोरथानामगोचरवर्त्तिना अत्यंतदुर्लभा कथमप्येषा संजाता दैवात् ॥ ८३ ॥

॥ ७४ ॥ वयममिति ॥ निवेष्टुकामः उद्वोढुकामः ॥ ७५ ॥ ७६ ॥ निवेष्टुकाम इति ॥ मे प्रणयं मा विभाङ्क्षीः मम प्रेमभंगं मा कार्षीः ॥ ७७ ॥ ७८ ॥ शतार्धेति ॥ यद्यस्मात्प्रार्थनाभंगभयरूपात् अतिदुःखाद्बिभेमि तस्मादविचारयन्नेव त्वं ममैकां कन्यां प्रयच्छेत्यन्वयः ॥ ७९ ॥ ८० ॥ नरेंद्रेति ॥ यस्मै कस्मैचित्त्वयावश्यं देया या कन्या तयैव यद्यस्माकं कृतार्थता स्यात् तर्हि त्वया किं न लब्धम् । तवाप्यस्मिन्मनोरथपूरणे महान् लाभ इत्यर्थः । लब्धेति पाठे तर्हि किं न लब्धा किं नाम न लभसे सर्वे कामास्त्वया लब्धा एवेत्यर्थः ॥ ८१ ॥ ८२ ॥ ८३ ॥

अयमन्योऽस्मत्प्रत्याख्यानोपायो वृद्धोयमनभिमतः स्त्रीणां किमुत कन्यकानामित्यमुना संचिंत्यैतदभिहितमेवमस्तु तथा करिष्यामीति संचिंत्य मांधातारमुवाच ॥ ८४ ॥ यद्येवं तदादिश्यतामस्माकं प्रवेशाय । कंन्यांतःपुरं वर्षवरो यदि कन्यैव काचिन्मामभिलषति तदाहं दारसंग्रहं करिष्यामि अन्यथा चेत्तदलमस्माकमेतेनातीतकालारंभणेनेत्युक्त्वा विरराम ॥ ८५ ॥ ततश्च मांधात्रा मुनिशापशंकितेन कन्यांतःपुरवर्षधरस्समाज्ञप्तः ॥ ८६ ॥ तेन सह कन्यांतःपुरं प्रविशन्नेव भगवानखिलसिद्धगंधर्वेभ्योतिशयेन कमनीयं रूपमकरोत् ॥ ८७ ॥ प्रवेश्य च तमृषिमंतःपुरे वर्षधरस्ताः कन्याः प्राह ॥ ८८ ॥ भवतीनां जनयिता महाराजस्समाज्ञापयति ॥ ८९ ॥ अयमस्मान् ब्रह्मर्षिः कन्यार्थं समभ्यागतः ॥ ९० ॥ मया चास्य प्रतिज्ञातं यद्यस्मत्कन्या या काचिद्भगवंतं वरयति तत्कन्याच्छंदे नाहं परिपंथानं करिष्यामीत्याकर्ण्य सर्वा एव ताः कन्याः सानुरागाः सप्रमदाः करेणव इव मृगयूथपतिं तमृषिमहमहमिकया वरयांबभूवुरूचुश्च ॥ ९१ ॥ अलं भगिन्योहमिमं वृणोमि वृणोम्यहं नैष तवानुरूपः ॥ ममैष भर्त्ता विधिनैव सृष्टस्सृष्टाहमस्योपशमं प्रयाहि ॥ ९२ ॥ वृतो मयायं प्रथमं मयायं गृहं विशन्नेव विहन्यसे किम् ॥ मया मयेतिक्षितिपात्मजानां तदर्थमत्यर्थकलिर्बभूव ॥ ९३ ॥ यदा मुनिस्ताभिरतीवहार्दाद्वृतस्स कन्याभिरनिंद्यकीर्तिः ॥ तदा स कन्याधिकृतो नृपाय यथावदाचष्ट विनम्रमूर्त्तिः ॥ ९४ ॥ श्रीपराशर उवाच ॥ तदवगमात्किंकिमेतत्कथमेतत्किं किं करोमि किं मयाभिहितमित्याकुलमतिरनिच्छन्नपि कथमपि राजानुमेने ॥ ९५ ॥ कृतानुरूपविवाहश्च महर्षिस्सकला एव ताः कन्यास्स्वमाश्रममनयत् ॥९६॥

॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ मयेति ॥ छंदे इच्छायां परिपंथानं प्रातिकूल्यम् ॥ ९१ ॥ ९२ ॥ वृत इति ॥ कलिः कलहः ॥ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥

॥ ८४ ॥ यदीति ॥ वर्षवरः षंढः कन्यारक्षी । वर्षधर इति च पाठः ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ मयेति ॥ तर्हि कन्यायाश्छंदे इच्छायां सत्यां नाहं परिपंथानं प्रातिकूल्यं करिष्यामि इत्येवमादि ग्रंथेष्विति शब्दः काकाक्षिवदुभयतोऽन्वेतव्यः ॥ ९१ ॥ अहं पूर्वमिति संरंभक्रियया अहमिति वार्तामेवाह–अलं भगिन्य इत्यादिद्वाभ्याम् ॥ ९२ ॥ वृत इति ॥ किं विहन्यसे किमिति विघातं करिष्यसीत्यर्थः । यद्वा–मया किमिति विहन्यसे हनिष्यस इति परुषोक्तिः । कलिः कलहः ॥ ९३ ॥ यदेति ॥ अतीव हार्दात् स्नेहात् ॥ ९४ ॥ ९५ ॥ ९६ ॥

तत्र चाऽशेषशिल्पकल्पप्रणेतारं धातारमिवान्यं विश्वकर्माणमाहूय सकलकन्यानामेकैकस्याः प्रोत्फुल्लपंकजाः कूजत्कलहंसकारंडवादिविहंगमाभिरामजलाशयास्सोपधानाः सावकाशास्साधुशय्यापरिच्छदाः प्रासादाः क्रियंतामित्यादिदेश ॥ ९७ ॥ तच्च तथैवानुष्ठितमशेषशिल्पविशेषाचार्यस्त्वष्टा दर्शितवान् ॥ ९८ ॥ ततः परमर्षिणा सौभरिणाज्ञप्तस्तेषु गृहेष्वनिवार्यानंदकुंदमहानिधिरासांचक्रे ॥ ९९ ॥ ततोऽनवरतेन भक्ष्यभोज्यलेह्याद्युपभोगैरागतानुगतभृत्यादीनहर्निशमशेषगृहेषु ताः क्षितीशदुहितरो भोजयामासुः ॥ १०० ॥ एकदा तु दुहितृस्नेहाकृष्टहृदयस्स महीपतिरतिदुःखितास्ता उत सुखिता वा इति विचिंत्य तस्य महर्षेराश्रमसमीपमुपेत्य स्फुरदंशुमालाललामां स्फटिकमयप्रासादमालामतिरम्योपवनजलाशयां ददर्श ॥ १०१ ॥ प्रविश्य चैकं प्रासादमात्मजां परिष्वज्य कृतासनपरिग्रहः प्रवृद्धस्नेहनयनांबुगर्भनयनोऽब्रवीत् ॥ १०२ ॥ अप्यत्र वत्से भवत्यास्सुखमुत किंचिदसुखमपि ते महर्षिस्स्नेहवानुत न स्मर्यतेस्मद्गृहवास इत्युक्ता तं तनया पितरमाह ॥ १०३ ॥ तातातिरमणीयः प्रासादोत्रातिमनोज्ञमुपवनमेते कलवाक्यविहंगमाभिरुताः प्रोत्फुल्लपद्माकरजलाशयाः मनोनुकूलभक्ष्यभोज्यानुलेपनवस्त्रभूषणादिभोगो मृदूनि शयनासनानि सर्वसंपत्समेतं मे गार्हस्थ्यम् ॥ १०४ ॥ तथापि केन वा जन्मभूमिर्न स्मर्यते ॥ १०५ ॥ त्वत्प्रसादादिदमशेषमतिशोभनम् ॥ १०६ ॥ किं त्वेकं ममैतद्दुःखकारणं यदस्मद्गृहान्महर्षिरयं मद्भर्त्ता न निष्क्रामति ममैव केवलमतिप्रीत्या समीपपरिवर्त्तिनीनामन्यासामस्मद्भगिनीनाम् ॥ १०७ ॥ एवं च मम सोदर्योतिदुःखिता इत्येवमतिदुःखकारणमित्युक्तस्तया द्वितीयं प्रासादमुपेत्य स्वतनयां परिष्वज्योपविष्टस्तथैव पृष्टवान् ॥ १०८ ॥

तत्रेति ॥ शिल्पकल्पः शिल्पशास्त्रम् ॥ ९७ ॥ ९८ ॥ तत इति ॥ कुंदमहानिधिः कुंदाख्यनिधिविशेषः । "निधिर्ना शेवधिर्भेदाः पद्मशंखादयो निधेः । महापद्मश्च पद्मश्च शंखो मकरकच्छपौ ॥ मुकुंदकुंदनीलाश्च वराश्च निधयो नव" इत्यमरसिंहः ॥ ९९ ॥ तत इति ॥ अनुगताः अनुचराः ॥ १०० ॥ १०१ ॥ प्रविश्य चेति ॥ प्रवृत्तेन स्नेहेन नयनयोरंबुगर्भो यस्य स तथोक्तः ॥ १०२ ॥ १०३ ॥ १०४ ॥ १०५ ॥ १०६ ॥ १०७ ॥ १०८ ॥

तत्रेति ॥ कूजद्भिः कलहंसादिविहंगमैः अभिरामा जलाशयाः उपधानैस्सहितास्सोपधानाः उपबर्हसहितास्साधुशय्याश्च परिच्छदाः उपकरणपरिवारसहिताः प्रासादाश्च क्रियंतामित्यादिष्टवान् ॥ ९७ ॥ तच्चेति ॥ तच्च तथैवानुष्ठितं दर्शितवान् ॥ ९८ ॥ ततश्चेति ॥ आसांचक्रे आसांचकार ॥ ९९ ॥ १०० एकदेति ॥ स्फुरंत्यंशुमाला यस्य स तम् ॥ १०१ ॥ प्रविश्येति ॥ प्रवृत्तेन स्नेहेन नयने अंबुगर्भे यस्य नयनयोरंबुगर्भ इति वा सांबुगर्भनयन इत्येवार्थः ॥ १०२ ॥ १०३ ॥ १०४ ॥ १०५ ॥ १०६ ॥ १०७ ॥ १०८ ॥

तयापि च सर्वमेतत्तत्प्रासादाद्युपभोगसुखं भृशमाख्यातं ममैव केवलमतिप्रीत्या पार्श्वपरिवर्त्तिनीनामन्यासामस्मद्भगिनीनामित्येवमादि श्रुत्वा समस्तप्रासादेषु राजा प्रविवेश तनयां तनयां तथैवापृच्छत् ॥१०९॥ सर्वाभिश्च ताभिस्तथैवाभिहितः परितोषविस्मयनिर्भरविवशहृदयो भगवंतं सौभरिमेकांतावस्थितमुपेत्य कृतपूजोऽब्रवीत् ॥११०॥ दृष्टस्ते भगवन् सुमहानेष सिद्धिप्रभावो नैवंविधमन्यस्य कस्यचिदस्माभिर्विभूति भिर्विलसितमुपलक्षितं यदेतद्भगवतस्तपसः फलमित्यभिपूज्य तमृषिं तत्रैव तेन ऋषिवर्येण सह किंचित्कालमभिमतोपभोगान् बुभुजे स्वपुरं च जगाम ॥ १११ ॥ कालेन गच्छता तस्य तासु राजतनयासु पुत्रशतं सार्धमभवत् ॥ ११२ ॥ अनुदिनानुरूढस्नेहप्रसरश्च स तत्रातीव ममताकृष्टहृदयोऽभवत् ॥११३॥ अप्येतेऽस्मत्पुत्राः कलभाषिणः पद्भ्यां गच्छेयुः अप्येते यौवनिनो भवेयुः अपि कृतदारानेतान् पश्येयमप्येषां पुत्रा भवेयुः अप्येतत्पुत्रान्पुत्रसमन्वितान्पश्यामीत्यादिमनोरथाननुदिनं कालसंपत्तिप्रवृद्धानुपेक्ष्यैतच्चिंतयामास ॥ ११४ ॥ अहो मे मोहस्यातिविस्तारः ॥११५॥ मनोरथानां न समाप्तिरस्ति वर्षायुतेनाप्यथ वापि लक्षैः ॥ पूर्णेषुपूर्णेषु मनोरथानामुत्पत्तयस्संति पुनर्नवानाम् ॥११६॥ पद्भ्यां गता यौवनिनश्च जाता दारैश्च संयोगमिताः प्रसूताः ॥ दृष्टाः सुतास्तत्तनयप्रसूतिं द्रष्टुं पुनर्वांच्छति मेंऽतरात्मा ॥ ११७ ॥ द्रक्ष्यामि तेषामिति चेत्प्रसूतिं मनोरथो मे भविता ततोन्यः ॥ पूर्णेपि तत्राप्यपरस्य जन्म निवार्यते केन मनोरथस्य ॥ ११८ ॥ आमृत्युतो नैव मनोरथानामंतोस्ति विज्ञातमिदं मयाद्य ॥ मनोरथासक्तिपरस्य चित्तं न जायते वै परमार्थसंगि ॥ ११९ ॥ स मे समाधिर्जलवासमित्रमत्स्यस्य संगात्सहसैव नष्टः ॥ परिग्रहस्संगकृतो मयायं परिग्रहोत्था च ममातिलिप्सा ॥ १२० ॥ दुःखं यदेवैकशरीरजन्म शतार्द्धसंख्याकमिदं प्रसूतम् ॥ परिग्रहेण क्षितिपात्मजानां सुतैरनेकैर्बहुलीकृतं तत् ॥ १२१ ॥ सुतात्मजैस्तत्तनयैश्च भूयो भूयश्च तेषां च परिग्रहेण ॥ विस्तारमेष्यत्यतिदुःखहेतुः परिग्रहो वै ममताभिधानः ॥ १२२ ॥

॥ १०९ ॥ ११० ॥ १११ ॥ ११२ ॥ ११३ ॥ ११४ ॥ ११५ ॥ ११६ ॥ पद्भ्यामिति ॥ प्रसूताः जातापत्याः ॥ ११७ ॥ ११८ ॥ ११९ ॥ स इति ॥ लिप्सा लब्धुमिच्छा ॥ १२० ॥ १२१ ॥ सुतेति ॥ तेषां स्वपरिग्रहेण तेषां स्वं पुत्रपौत्रादि तत्परिग्रहेण विस्तारमेष्यतीत्यन्वयः ॥ १२२ ॥

॥ १०९ ॥ सर्वाभिरिति ॥ परितोषविस्मयाभ्निर्भरेण विवशं हृदयं यस्य सः । कृता पूजा येन सः ॥ ११० ॥ पूजामेवाह--दृष्ट इत्यादिना ॥ १११ ॥ ११२ ॥ ११३ ॥ ममताकृष्टत्वमेवाह--अप्येत इत्यादिना । अप्येत इति ॥ कालसंपत्तिवृद्धान् काले काले तत्तन्मनोरथसंपत्तावपि पुनर्वृद्धान् ॥ ११४ ॥ ११५ ॥ ११६ ॥ पद्भ्यामिति ॥ प्रसूताः जातापत्याः ॥ ११७ ॥ ११८ ॥ ११९ ॥ १२० ॥ १२१ ॥ १२२ ॥

चीर्णं तपो यत्तु जलाश्रयेण तस्यर्द्धिरेषा तपसोंतरायः ॥ मत्स्यस्य संगादभवच्च यो मे सुतादिरागो मुषितोस्मि तेन ॥ १२३ ॥ निस्संगता मुक्तिपदं यतीनां संगादशेषाः प्रभवंति दोषाः ॥ आरूढयोगो विनिपात्यतेधस्संगेन योगी किमुताल्पबुद्धिः ॥ १२४ ॥ अहं चरिष्यामि तदात्मनोर्थे परिग्रहग्राहगृहीतबुद्धिः ॥ यदा हि भूयः परिहीनदोषो जनस्य दुःखैर्भविता न दुःखी ॥ १२५ ॥ सर्वस्य धातारम चिंत्यरूपमणोरणीयांसमतिप्रमाणम् ॥ सितासितं चेश्वरमीश्वराणामाराधयिष्ये तपसैव विष्णुम् ॥१२६॥ तस्मिन्नशेषौजसि सर्वरूपिण्यव्यक्तवि स्पष्टतनावनंते ॥ ममाचलं चित्तमपेतदोषं सदास्तु विष्णावभवाय भूयः ॥ १२७ ॥ समस्तभूतादमलादनंतात्सर्वेश्वरादन्यदनादिमध्यात् ॥ यस्मान्न किंचित्तमहं गुरूणां परं गुरुं संश्रयमेमि विष्णुम् ॥ १२८ ॥ श्रीपराशर उवाच ॥ इत्यात्मानमात्मनैवाभिधायासौ सौभरिरप हाय पुत्रगृहासनपरिग्रहादिकमशेषमर्थजातं सकलभार्यासमन्वितो वनं प्रविवेश ॥ १२९ ॥ तत्राप्यनुदिनं वैखानसनिष्पाद्यमशेषक्रियाक लापं निष्पाद्य क्षपितसकलपापः परिपक्वमनोवृत्तिरात्मन्यग्नीन्समारोप्य भिक्षुरभवत् ॥ १३० ॥ भगवत्यासज्याखिलं कर्मकलापं हित्वानं तमजमनादिनिधनमविकारमरणादिधर्ममवाप परमनन्तं परवतामच्युतं पदम् ॥ १३१ ॥

॥ १२३ ॥ १२४ ॥ अहमिति ॥ जनस्य भार्यादेः ॥ १२५ ॥ सर्वस्येति ॥ सितासितं बद्धमुक्तरूपेण स्थितम् । यद्वा—युगभेदेन सितासितवर्णम् ॥ १२६ ॥ ॥ १२७ ॥ समस्तभूतादिति ॥समस्तं भूतं जगद्रूपं यस्य स तस्मात् समस्तभूतात् अन्यदतदात्मकं किंचिदपि नास्ति ॥ १२८ ॥ १२९ ॥ १३० ॥ भगवतीति ॥ भगवत्यासज्य भगवदाराधनमित्यनुसंधाय ॥ १३१ ॥

चीर्णमिति ॥ तस्य तपस एषा ऋद्धिः अंतरायो विघ्नः । मुषितो वंचितः ॥१२३॥ १२४ ॥ १२५ ॥ सर्वस्येति ॥ अतिप्रमाणं स्वप्रकाशत्वेन प्रमाणमतिक्रम्य स्थितम्महतो महीयांसमिति वा सितं शुद्धं प्रतिबिंबरूपं सितां शेनासितम् ॥ १२६ ॥ तस्मिन्निति ॥ ईश्वररूपेणाशेषौजसि सर्वशक्तौ अव्यक्तं कारणं विस्पष्टं कार्यं तदुभयं तनुर्यस्य तस्मिन् ॥ १२७ ॥ समस्तेति ॥ यस्माद्व्यतिरिक्तमन्यन्न किंचिदस्ति तमहं संश्रयमेमि शरणं व्रजामि ॥ १२८ ॥ १२९ ॥ तत्रेति ॥ भिक्षुर्यतिरभवत् ॥ १३० ॥ भगवतीति ॥ भगवत्यासज्य ईश्वरे समर्प्य अनंतं दिग्देशाद्यनवच्छिन्नं परवतां परम् 'इंद्रियेभ्यः परा ह्यर्थाः' इत्यादिश्रुत्या इंद्रियादयः परवंत उक्ताः तेषां परं पुरुषं 'पुरुषान्न परं किंचित्' इति श्रुतेः तदेवाच्युतपदं विष्णोः स्वरूपमवाप ॥ १३१ ॥

इत्येतन्मांधातृदुहितृसंबंधादाख्यातम् ॥ १३२ ॥ यश्चैतत्सौभरिचरितमनुस्मरति पठति पाठयति शृणोति श्रावयति धरत्यवधारयति लिखति लेखयति शिक्षयत्यध्यापयत्युपदिशति वा तस्य षट् जन्मानि दुस्संततिरसद्धर्मो वाङ्मनसोरसन्मार्गाचरणमशेषहेतुषु वा ममत्वं न भवति ॥ ॥ १३३ ॥ इति श्रीविष्णुमहापुराणे चतुर्थांशे द्वितीयोऽध्यायः ॥ २ ॥ ॥ अतश्च मांधातुः पुत्रसंततिरभिधीयते ॥ १ ॥ अंबरीषस्य मांधातृतनयस्य युवनाश्वः पुत्रोऽभूत् ॥ २ ॥ तस्माद्धारीतः यतोंगिरसो हारीताः ॥ ३ ॥ रसातले मौनेया नाम गंधर्वा बभूवुष्षट्कोटिसंख्यातास्तैरशेषाणि नागकुलान्यपहृतप्रधानरत्नाधिपत्यान्यक्रियंत ॥ ४ ॥ तैश्च गंधर्ववीर्यावधूतैरुरगेश्वरैस्स्तूयमानो भगवानशेषदेवेश आस्ते तच्छ्रवणोन्मीलितोन्निद्रपुंडरीकनयनो जलशयनो निद्रावसानप्रबुद्धः प्रणिपत्याभिहितः । भगवन्नस्माकमेतेभ्यो गंधर्वेभ्यो भयमुत्पन्नं कथमुपशममेष्यतीति ॥ ५ ॥ आह च भगवाननादिनिधनपुरुषोत्तमो योसौ यौवनाश्वस्य मांधातुः पुरुकुत्सनामा पुत्रस्तमहमनुप्रविश्य तानशेषान् दुष्टगंधर्वानुपशमं नयिष्यामीति ॥ ६ ॥ तदाकर्ण्य भगवते जलशायिने कृतप्रणामाः पुनर्नागलोकमागताः पन्नगाधिपतयो नर्मदां च पुरुकुत्सानयनाय चोदयामासुः ॥ ७ ॥ सा चैनं रसातलं नीतवती ॥ ८ ॥

॥ १३२ ॥ १३३ ॥ इति श्रीविष्णुमहापुराणव्याख्याने विष्णुचित्तीये चतुर्थेंशे द्वितीयोऽध्यायः ॥ २ ॥ ॥ १ ॥ २ ॥ तस्मादिति ॥ अथ हारीतानां त्र्यार्षेयाः आंगिरसांबरीषयौवनाश्वा इति प्रवरपाठात ॥ ३ ॥ रसातल इति ॥ मौनेयाः काश्यपपत्न्या मुनेस्तनयाः ॥ ४ ॥ तैश्चेति ॥ जलशयनं क्षीराब्धौ शेषतल्पम् ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥

राजवंशे प्रस्तुते अन्यासंगतिमाशंक्यमाह–इत्येतदिति ॥ १३२ ॥ १३३ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां चतुर्थांशे द्वितीयोऽध्यायः ॥ २ ॥ ॥ अत इति ॥ अतश्च अतः परम् ॥ ॥ १ ॥ २ ॥ तस्मादिति ॥ यतो हारिताद्धारीता अंगिरसो द्विजाः हरितगोत्रप्रवराः हरितनामार्षेयत्वम् । आंगिरसांबरीषयौवनाश्वेति प्रवरणम् ॥ ३ ॥ अथ मांधातुः पुत्रस्य पुरुकुत्सस्य वंशं वक्तुं कथां प्रस्तौति--रसातल इत्यादिना वरं ददुरित्यंतेन ॥ रसातल इति ॥ मौनेयाः काश्यपपत्न्या मुनेः पुत्राश्चित्रसेनाद्याः । उक्तं चादित्यपुराणे--"चित्रसेनोऽश्वसेनश्च ऊर्णायुरवमस्तथा । धृतराष्ट्रश्च गोमांश्च सूर्यवर्चास्तथैव च ॥" इत्यादि । अपहृतानि प्रधानरत्नान्याधिपत्यं च येषां तथाभूतान्यक्रियंत कृतानि ॥ ४ ॥ तैरिति ॥ गंधर्वाणां वीर्येण बलेनावधूतैर्निराकृतैर्भगवान् स्तूयमानः स्तवश्रवणेनोन्मीलिते उन्निद्रपुंडरीक इव नयने यस्य सः । जलशयनः क्षीराब्धिशायी । ऐकपद्यपाठे तु जले क्षीराब्धौ शयनरूपा या लीला निद्राया अवसाने विबुद्धस्स भगवानस्माकमेतेभ्यो गंधर्वेभ्यो भयं कथमुपशममेष्यतीत्यभिहितः ॥ ५ ॥ आहेति ॥ भगवान्मांधातुर्यः पुत्रस्तमहमनुप्रविश्य गंधर्वानुपशमं नयिष्यामीत्याहेत्यन्वयः ॥ ६ ॥ तदिति ॥ नर्मदां स्वभगिनीं पुरुकुत्सस्य भार्यां "नर्मदा भ्रातृभिर्दत्ता पुरुकुत्साय योरगैः । तया रसातलं नीतो भुजगेंद्रप्रयुक्तया ॥" इति शुकोक्तेः ॥ ७ ॥ ८ ॥

रसातलगतश्चासौ भगवत्तेजसाप्यायितात्मवीर्य्यस्सकलगंधर्वान्निजघान ॥ ९ ॥ पुनश्च स्वपुरमाजगाम ॥ १० ॥ सकलपन्नगाधिपतयश्च नर्मदायै वरं ददुः ॥ यत्तेनुस्मरणसमवेतं नामग्रहणं करिष्यति न तस्य सर्पविषभयं भविष्यतीति ॥ ११ ॥ अत्र च श्लोकः ॥ १२ ॥ नर्मदायै नमः प्रातर्नर्मदायै नमो निशि ॥ नमोस्तु नर्मदे तुभ्यं त्राहि मां विषसर्पतः ॥ १३ ॥ इत्युच्चार्याहर्निशमंधकारप्रवेशे वा सर्पैर्न दश्यते न चापि कृतानुस्मरणभुजो विषमपि भुक्तमुपघाताय भवति ॥ १४ ॥ पुरुकुत्साय संततिविच्छेदो न भविष्यतीत्युरगपतयो वरं ददुः ॥ १५ ॥ पुरुकुत्सो नर्मदायां त्रसद्दस्युमजीजनत् ॥ १६ ॥ त्रसद्दस्युतस्संभूतोऽनरण्यः यं रावणोदिग्विजये जघान ॥ १७ ॥ अनरण्यस्य पृषदश्वः पृषदश्वस्य हर्यश्वः पुत्रोऽभवत् ॥ १८ ॥ तस्य च हस्तः पुत्रोऽभवत् ॥ १९ ॥ ततश्च सुमनास्तस्यापि त्रिधन्वा त्रिधन्वनस्त्रय्यारुणिः ॥ २० ॥ त्रय्यारुणेस्सत्यव्रतः योऽसौ त्रिशंकुसंज्ञामवाप ॥ २१ ॥ स चंडालतामुपगतश्च ॥ २२ ॥

॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ इतीति ॥ कृतानुस्मरणभुजः नर्मदां स्मृत्वा अन्नादि भुंजानस्य ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ ॥ १९ ॥ २० ॥ त्रय्यारुणेरिति ॥ परिणीयमानविप्रकन्याहरणक्रुद्धस्य स्वपितुश्शापात् चंडालतां गतः वसिष्ठधेनुं हत्वा वृथा जिघांसेति त्रिभिर्दोषैस्त्रिशंकुः । यथा हरिवंशे—" पितुश्शापादिदोषेण गुरुदोग्ध्रीवधेन च । अप्रोक्षितोपयोगाच्च त्रिविधास्तद्व्यतिक्रमाः ॥ एवं त्रीण्यस्य शंकूनि तानि दृष्ट्वा महायशाः । त्रिशंकुरिति होवाच त्रिशंकुस्तेन स स्मृतः " इति ॥ २१ ॥ २२ ॥

रसातलेति ॥ आप्यायित आत्मा देहे वीर्यं बलं च यस्य ॥ ९ ॥ १० ॥ ११ ॥ तन्नामग्रहणप्रकारमाह–अत्र चेति ॥ अत्र च श्लोकः ॥ १२ ॥ १३ ॥ इतीति ॥ "नर्मदायै नमः प्रातर्नर्मदायै नमो निशि । नमोस्तु नर्मदे तुभ्यं त्राहि मां विषसर्पतः॥" इत्युच्चार्याहर्निशम् अहनि च निशायां चैवमुच्चार्य वर्तमानः । यद्वा–अंधकारगर्भगृहप्रवेशे इत्युच्चार्य प्रविशन् सर्पैर्न दश्यत इत्यर्थः । कृतानुस्मरणभुजः नर्मदां स्मृत्वा अन्नादिकं भुंजानस्य ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ त्रय्यारुणेरिति ॥ हृदि निखातशंकुवद्व्यथाजनकैः पित्राज्ञालंघनवसिष्ठधेनुवधाप्रोक्षणमांसभक्षणरूपैस्त्रिभिर्दोषैस्त्रिशंकुसंज्ञामवाप ॥ २१ ॥ चंडालतामिति ॥ परिणीयमानविप्रकन्याप्रहरणात् क्रुद्धेन स्वपित्रा शप्तश्चंडालतां चोपगतः । तदुक्तं हरिवंशे–"पितुश्चापरितोषेण गुरुदोग्ध्रीवधेन च । अप्रोक्षणप्रयोगाच्च त्रिविधस्ते व्यतिक्रमः ॥ एवं त्रीण्यस्य शंकूनि तानि दृष्ट्वा

द्वादशवार्षिक्यामनावृष्ट्यां विश्वामित्रकलत्रापत्यपोषणार्थं चंडालप्रतिग्रहपरिहरणाय च जाह्नवीतीरन्यग्रोधे मृगमांसमनुदिनं बबंध ॥ २३ ॥ स तु परितुष्टेन विश्वामित्रेण सशरीरस्स्वर्गमारोपितः ॥ २४ ॥ त्रिशंकोर्हरिश्चंद्रस्तस्माच्च रोहिताश्वस्ततश्च हरितो हरितस्य चंचुश्चंचोर्विजयवसुदेवौ रुरुको विजयाद्रुरुकस्य वृकः ॥ २५ ॥ ततो वृकस्य बाहुः योऽसौ हैहयतालजंघादिभिः पराजितोंतर्वत्न्या महिष्या सह वनं प्रविवेश ॥ २६ ॥ तस्याश्च सपत्न्या गर्भस्तंभनाय गरो दत्तः ॥ २७ ॥ तेनास्या गर्भस्सप्तवर्षाणि जठर एव तस्थौ ॥ ॥ २८ ॥ स च बाहुर्वृद्धभावादौर्वाश्रमसमीपे ममार ॥ २९ ॥ सा तस्य भार्या चितां कृत्वा तमारोप्यानुमरणकृतनिश्चयाऽभूत् ॥ ॥ ३० ॥ अथैतामतीतानागतवर्त्तमानकालत्रयवेदी भगवानौर्वस्स्वाश्रमान्निर्गत्याब्रवीत् ॥ ३१ ॥ अलमलमनेनासद्ग्राहेणाखिलभूमंडलपतिरतिवीर्यपराक्रमो नैकयज्ञकृदरातिपक्षक्षयकर्त्ता तवोदरे चक्रवर्त्ती तिष्ठति ॥ ३२ ॥ नैवमतिसाहसाध्यवसायिनी भवती भवेत्युक्ता सा तस्मादनुमरणनिर्बंधाद्विरराम ॥ ३३ ॥ तेनैव च भगवता स्वाश्रममानीता ॥ ३४ ॥ तत्र कतिपयदिनाभ्यंतरे च सहैव तेन गरेणातितेजस्वी बालको जज्ञे ॥ ३५ ॥ तस्यौर्वो जातकर्मादिक्रिया निष्पाद्य सगर इति नाम चकार ॥ ३६ ॥ कृतोपनयनं चैनमौर्वो वेदशास्त्राण्यस्त्रं चाग्नेयं भार्गवाख्यमध्यापयामास ॥ ३७ ॥ उत्पन्नबुद्धिश्च मातरमब्रवीत् ॥ ३८ ॥ अंब कथयात्र वयं क्व तातोस्माकमित्येवमादिपृच्छंतं माता सर्वमेवावोचत् ॥ ३९ ॥ ततश्च पितृराज्यापहरणादमर्षितो हैहयतालजंघादिवधाय प्रतिज्ञामकरोत् ॥ ४० ॥ प्रायशश्च हैहयतालजंघाञ्जघान ॥ ४१ ॥

॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ अलमलमिति ॥ असद्ग्राहेण वृथा निर्बंधेन ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥

महायशाः ॥ त्रिशंकुरिति होवाच त्रिशंकुस्तेन स स्मृतः ॥" इति ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ वृकस्येति ॥ अंतर्वत्न्या गर्भिण्या ॥ २६ ॥ तस्या इति ॥ गरो विषम् ॥ २७ ॥ २८ ॥ स चेति ॥ वृद्धभावात् वृद्धत्वात् ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥

शकयवनकांभोजपारदपह्लवाः हन्यमानास्तत्कुलगुरुं वसिष्ठं शरणं जग्मुः ॥ ४२ ॥ अथैनान्वसिष्ठो जीवन्मृतकान् कृत्वा सगरमाह ॥ ॥ ४३ ॥ वत्सालमेभिर्जीवन्मृतकैरनुमृतैः ॥ ४४ ॥ एते च मयैव त्वत्प्रतिज्ञापरिपालनाय निजधर्मद्विजसंगपरित्यागं कारिताः ॥ ४५ ॥ तथेति तद्गुरुवचनमभिनंद्य तेषां वेषान्यत्वमकारयत् ॥ ४६ ॥ यवनान्मुंडितशिरसोर्द्धमुंडिताञ्छकान् प्रलंबकेशान् पारदान् पह्लवान् श्मश्रुधरान् निस्स्वाध्यायवषट्कारानेतानन्यांश्च क्षत्रियांश्चकार ॥ ४७ ॥ एते चात्मधर्मपरित्यागाद्ब्राह्मणैः परित्यक्ता म्लेच्छतां ययुः ॥ ॥ ४८ ॥ सगरोपि स्वमधिष्ठानमागम्य अस्खलितचक्रस्सप्तद्वीपवतीमिमामुर्वीं प्रशशास ॥ ४९ ॥ इति श्रीविष्णुमहापुराणे चतुर्थांशे तृतीयोऽध्यायः ॥ ३ ॥ ॥ श्रीपराशर उवाच ॥ ॥ काश्यपदुहिता सुमतिर्विदर्भराजतनया केशिनी च द्वे भार्ये सगरस्यास्ताम् ॥ १ ॥ ताभ्यां चापत्यार्थमौर्वः परमेण समाधिनाराधितो वरमदात् ॥ २ ॥ एका वंशकरमेकं पुत्रमपरा षष्टिं पुत्रसहस्राणां जनयिष्यतीति यस्या यदभिमतं तदिच्छया गृह्यतामित्युक्ते केशिन्येकं वरयामास ॥ ३ ॥ सुमतिः पुत्रसहस्राणि षष्टिं वव्रे ॥ ४॥ तथेत्युक्ते अल्पैरहोभिः केशिनी पुत्रमेकमसमंजसनामानं वंशकरमसूत ॥ ५ ॥ काश्यपतनयायास्तु सुमत्याः षष्टिं पुत्रसहस्राण्यभवन् ॥ ६ ॥ तस्मादसमंजसादंशुमान्नाम कुमारो जज्ञे ॥ ७॥ स त्वसमंजसो बालो बाल्यादेवासद्वृत्तोऽभूत् ॥ ८ ॥ पिता चास्याचिंतयदयमतीतबाल्यः सुबुद्धिमान् भविष्यतीति ॥ ९ ॥ अथ तत्रापि च वयस्यतीते असच्चरितमेनं पिता तत्याज ॥ १० ॥ तान्यपि षष्टिः पुत्रसहस्राण्यसमंजसचरितमेवानुचक्रुः ॥ ११ ॥

॥ ४२ ॥ ४३ ॥ वत्सेति ॥ जीवन्मृतः "स्वधर्माद्यः परिभ्रष्टो वृद्धैर्यश्च बहिष्कृतः । स जीवन्नेव लोकेस्मिन्मृत इत्यभिधीयते" इति स्मृतेः । अनुमृतैः पुनर्मृतैः ॥४४॥४५॥ ४६ ॥ ४७ ॥ ४८ ॥ सगर इति ॥ चक्रम् आज्ञा बलं वा ॥४९॥ इति श्रीविष्णुमहापुराणव्याख्याने विष्णुचित्तीये तृतीयोऽध्यायः ॥३॥ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ स त्विति ॥ असद्वृत्तो दुराचारः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

॥ ४२ ॥ ४३ ॥ वत्सेति ॥ अनुमृतैः पुनर्मृतैः त्वया पुनर्हतैरलमित्यर्थः ॥ ४४ ॥ जीवन्मृतत्वं विवृणोति—एते हीति ॥ "यस्स्वधर्मात्परिभ्रष्टो वृद्धैश्चैव बहिष्कृतः । स जीवन्नेव लोकेस्मिन्मृत इत्यभिधीयते" इत्यादिस्मृतेः ॥ ४५ ॥ ४६ ॥ ४७ ॥४८॥ सगर इति ॥ अस्खलितमप्रतिहतं चक्रं सैन्यमाज्ञा च यस्य सः ॥४९॥ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां चतुर्थांशे तृतीयोऽध्यायः ॥ ३ ॥ ॥ १ ॥ ताभ्यामिति ॥ समाधिना चित्तैकाग्र्येण ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ पितेति ॥ अतीतबाल्यो निवृत्तबालभावः ॥ ९ ॥ १० ॥ तानीति ॥ तच्चरितं तदेव दुर्वृत्तमनुचक्रुः अनुसृतवंतः ॥ ११ ॥

त्नादि

ततश्चासमंजसचरितानुकारिभिस्सागरैरपध्वस्तयज्ञैस्सन्मार्गे जगति देवास्सकलविद्यामयमसंस्पृष्टमशेषदोषैर्भगवतः पुरुषोत्तमस्यांशभूतं कपिलं प्रणम्य तदर्थमूचुः ॥१२॥ भगवन्नेभिस्सगरतनयैरसमंजसचरितमनुगम्यते ॥१३॥ कथमेभिरसद्वृत्तमनुसरद्भिर्जगद्भविष्यतीति ॥ १४ ॥ अत्यार्त्त जगत्परित्राणाय च भगवतोत्र शरीरग्रहणमित्याकर्ण्य भगवानाहाल्पैरेव दिनैर्विनंक्ष्यन्तीति ॥१५॥ अत्रांतरे च सगरो हयमेधमारभत ॥१६॥ तस्य च पुत्रैरधिष्ठितमस्याश्वं कोप्यपहृत्य भुवो बिलं प्रविवेश ॥ १७ ॥ ततस्तत्तनयाश्चाश्वखुरगतिनिर्बंधेनावनीमेकैको योजनं चख्नुः ॥ ॥१८॥ पाताले चाश्वं परिभ्रमंतं तमवनीपतितनयास्ते ददृशुः ॥१९॥ नातिदूरेऽवस्थितं च भगवंतमपघने शरत्कालेर्कमिव तेजोभिरवनतमूर्द्ध मधश्चाशेषदिशश्चोद्भासयमानं हयहर्त्तारं कपिलर्षिमपश्यन् ॥ २० ॥ ततश्चोद्यतायुधा दुरात्मानोऽयमस्मदपकारी यज्ञविघ्नकारी हन्यतां हयहर्त्ता हन्यतामित्यवोचन्नभ्यधावंश्च ॥ २१ ॥ ततस्तेनापि भगवता किंचिदीषत्परिवर्त्तितलोचनेनावलोकितास्स्वशरीरसमुत्थेनाऽग्निना दह्यमाना विनेशुः ॥२२॥ सगरोप्यवगम्याश्वानुसारि तत्पुत्रबलमशेषं परमर्षिणा कपिलेन तेजसा दग्धं ततोंशुमंतमसमंजसपुत्रमश्वानयनाय युयोज ॥ २३ ॥ स तु सगरतनयखातमार्गेण कपिलमुपगम्य भक्तिनम्रस्तदा तुष्टाव ॥ २४ ॥ अथैनं भगवानाह ॥ २५ ॥ गच्छैनं पितामहायाश्वं प्रापय वरं वृणीष्व च पुत्रक पौत्रश्च ते स्वर्गाद्गंगां भुवमानेष्यति इति ॥ २६ ॥ अथांशुमानपि स्वर्यातानां ब्रह्मदंडहतानामस्मत्पितॄणामस्वर्गयोग्यानां स्वर्गप्राप्तिकरं वरमस्माकं प्रयच्छेति प्रत्याह ॥ २७ ॥ तदाकर्ण्य तं च भगवानाह उक्तमेवैतन्मयाद्य पौत्रस्ते त्रिदिवाद्गंगां भुवमानयिष्यतीति ॥ २८ ॥

॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ ततश्चेति ॥ अवनेर्योजनम् अवनिमारभ्याधस्ताद्योजनम् ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ तत इति ॥ किंचिदित्यनादरावलोकिताः ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ अथेति ॥ ब्रह्मदंडो ब्राह्मणशापः । स्वर्यातानां मृतानाम् ॥ २७ ॥ २८ ॥

ततश्चेति ॥ अपध्वस्ता विनाशिता यज्ञादयस्सन्मार्गा यस्मिन् ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ तत्रेति ॥ अधिष्ठितं संरक्षितम् ॥ १७ ॥ १८ ॥ १९ ॥ नेति ॥ अपघने निवृत्तमेघे ॥ २० ॥ २१ ॥ तत इति ॥ ईषत्परिवर्तिते लोचने येन तेन कपिलेन किंचिदवलोकिताः संतः ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ गच्छेति ॥ हे पुत्रक तव पौत्रो गंगामानेष्यतीति ॥ २६ ॥ अथेति ॥ पितॄणां पितृव्याणामित्यर्थः । ब्रह्मदंडो ब्राह्मणवधोद्यमस्तेन हतानामित्यर्थः ॥ २७ ॥ २८ ॥

तदंभसा च संस्पृष्टेष्वस्थिभस्मसु एते च स्वर्गमारोक्ष्यन्ति ॥ २९ ॥ भगवद्विष्णुपादांगुष्ठनिर्गतस्य हि जलस्यैतन्माहात्म्यम् ॥ ३० ॥ यन्न केवलमभिसंधिपूर्वकं स्नानाद्युपभोगेषूपकारकमनभिसंधितमप्यस्यां प्रेतप्राणस्यास्थिचर्मस्नायुकेशाद्युपस्पृष्टं शरीरजमपि पतितं सद्यश्शरीरिणं स्वर्गं नयतीत्युक्तः प्रणम्य भवगतेऽश्वमादाय पितामहयज्ञमाजगाम ॥ ३१ ॥ सगरोप्यश्वमासाद्य तं यज्ञं समापयामास ॥ ३२ ॥ सागरं चात्मजप्रीत्या पुत्रत्वे कल्पितवान् ॥ ३३ ॥ तस्यांशुमतो दिलीपः पुत्रोभवत् ॥ ३४ ॥ दिलीपस्य भगीरथः योऽसौ गंगां स्वर्गादिहानीय भागीरथीसंज्ञां चकार ॥३५॥ भगीरथात्सुहोत्रस्सुहोत्राच्छ्रुतः तस्यापि नाभागः ततोंबरीषः तत्पुत्रस्सिंधुद्वीपः सिंधुद्वीपादयुतायुः ॥३६॥ तत्पुत्रश्च ऋतुपर्णः योऽसौ नलसहायोक्षहृदयज्ञोभूत् ॥ ३७ ॥ ऋतुपर्णपुत्रस्सर्वकामः ॥ ३८ ॥ तत्तनयस्सुदासः ॥ ३९ ॥ सुदासात्सौदासो मित्रसहनामा ॥ ४० ॥ स चाटव्यां मृगयार्थी पर्यटन् व्याघ्रद्वयमपश्यत् ॥ ४१ ॥ ताभ्यां तद्वनमपमृगं कृतं मत्वैकं तयोर्बाणेन जघान ॥ ४२ ॥ म्रियमाणश्चासावतिभीषणाकृतिरतिकरालवदनो राक्षसोऽभूत् ॥ ४३ ॥ द्वितीयोपि प्रतिक्रियां ते करिष्यामीत्युक्त्वांतर्धानं जगाम ॥ ४४ ॥ कालेन गच्छता सौदासो यज्ञमयजत् ॥४५॥ परिनिष्ठितयज्ञे आचार्ये वसिष्ठे निष्क्रांते तद्रक्षो वसिष्ठरूपमास्थाय यज्ञावसाने मम नरमांसभोजनं देयमिति तत्संस्क्रियतां क्षणादागमिष्यामीत्युक्त्वा निष्क्रांतः ॥ ४६ ॥ भूयश्च सूदवेषं कृत्वा राजाज्ञया मानुषं मांसं संस्कृत्य राज्ञे न्यवेदयत् ॥ ४७ ॥ असावपि हिरण्यपात्रे मांसमादाय वसिष्ठागमनप्रतीक्षकोऽभवत् ॥ ४८ ॥ आगताय वसिष्ठाय निवेदितवान् ॥ ४९ ॥

॥ २९ ॥ ३० ॥ यदिति ॥ स्वर्यातानां यन्न केवलमित्यादिना अभिसंधिपूर्वकं स्नानादावेव न केवलमुपकारकं किं त्वपेतप्राणस्य उत्सृष्टशरीरस्यास्थिचर्मादिजले नाभिसंहितमपि पतितं शरीरिणं स्वर्गं नयतीति यत् एतन्माहात्म्यम् एतद्गंगाजलस्य माहात्म्यमिति पूर्वेणान्वयः ॥ ३१ ॥३२॥ सागरमिति ॥ सागरं सगरसुतैर्वर्द्धितम् ॥३३॥ ३४ ॥ ३५ ॥ ३६ ॥ तत्पुत्रश्चेति ॥ अक्षहृदयं द्यूतादिषु संख्याज्ञानम् ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१॥४२॥ म्रियमाण इति ॥ करालं दंतुरम् ॥ ४३ ॥ ४४ ॥ ४५ ॥ परिनिष्ठितेति ॥ देयमिति इति हेतौ तद्भोजनम् ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥

॥ २९ ॥ ३० ॥ यदिति ॥ प्रेतप्राणस्य शरीरजमस्थिकेशाद्यपि यत्तदुत्सृष्टं प्रक्षिप्तम् अनभिसंधितमपि शरीरिणं स्वर्गं नयतीत्युक्तः ॥ ३१ ॥ ३२ ॥ सागरं चेति ॥ स्वात्मजैः खननेन वृद्धिं प्राप्त इति । स्वात्मजप्रीत्या पुत्रत्वे कल्पितवान् पुत्रबुद्धिं कृतवानित्यर्थः ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ तदिति ॥ नलस्य सहायः द्यूतादौ गणत्वादिनिपुणः ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ सौदासस्यैव कल्माषपादसंज्ञां वक्तुं कथामाह—स चाटव्यामित्यादिना कल्माषपादसंज्ञामवापेत्यंतेन ॥ ४१ ॥ ताभ्यामिति ॥ अपगतमृगं निवृत्तमृगं तयोर्व्याघ्रयोर्मध्ये ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥

स चाप्यचिंतयदहोस्य राज्ञो दौश्शील्यं येनैतन्मांसमस्माकं प्रयच्छति किमेतद्द्रव्यजातमिति ध्यानपरोभवत् ॥ ५० ॥ अपश्यच्च तन्मांसं मानुषम् ॥ ५१ ॥ अतः क्रोधकलुषीकृतचेता राजनि शापमुत्ससर्ज ॥ ५२ ॥ यस्मादभोज्यमेतदस्मद्विधानां तपस्विनामवगच्छन्नपि भवान्मह्यं ददाति तस्मात्तवैवात्र लोलुपता भविष्यतीति ॥ ५३ ॥ अनंतरं च तेनापि भगवतैवाभिहितोस्मीत्युक्ते किं किं मयाभिहित मिति मुनिः पुनरपि समाधौ तस्थौ ॥ ५४ ॥ समाधिविज्ञानावगतार्थश्चानुग्रहं तस्मै चकार नात्यंतिकमेतद्द्वादशाब्दं तव भोजनं भवि ष्यतीति ॥ ५५ ॥ असावपि प्रतिगृह्योदकांजलिं मुनिशापप्रदानायोद्यतो भगवन्नयमस्मद्गुरुर्नार्हस्येनं कुलदेवताभूतमाचार्यं शप्तुमिति मद यंत्या स्वपत्न्या प्रसादितस्सस्यांबुदरक्षणार्थं तच्छापांबु नोर्व्यां न चाकाशे चिक्षेप किं तु तेनैव स्वपदौ सिषेच ॥५६॥ तेन च क्रोधाश्रितेनां बुना दग्धच्छायौ तत्पादौ कल्माषतामुपगतौ ततस्स कल्माषपादसंज्ञामवाप ॥ ५७ ॥ वसिष्ठशापाच्च षष्ठेषष्ठे काले राक्षसस्वभावमेत्या टव्यां पर्यटन्ननेकशो मानुषानभक्षयत् ॥ ५८ ॥ एकदा तु कंचिन्मुनिमृतुकाले भार्यासंगतं ददर्श ॥ ५९ ॥ तयोश्च तमतिभीषणं राक्षस स्वरूपमवलोक्य त्रासाद्दंपत्योः प्रधावितयोर्ब्राह्मणं जग्राह ॥ ६० ॥ ततस्सा ब्राह्मणी बहुशस्तमभियाचितवती ॥ ६१ ॥ प्रसीदेक्ष्वाकुकुल तिलकभूतस्त्वं महाराजो मित्रसहो न राक्षसः ॥ ६२ ॥

॥५०॥५१॥५२॥ यस्मादिति ॥ लोलुपता अत्यंतेच्छा ॥५३॥५४॥५५॥असाविति नोर्व्यां न चाकाशे चिक्षेप तस्यांबुदरक्षणार्थम्॥५६॥ तेन चेति॥क्रोधान लाश्रितेन क्रोधाग्नितप्तेन । कल्माषः कृष्णपांडुरः ॥ ५७ ॥ वसिष्ठशापादिति ॥ षष्ठे काले षष्ठभोजनकाले तृतीयदिनांते ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥६२ ॥

॥ ५० ॥ ५१ ॥ ५२ ॥ यस्मादिति ॥ लोलुपेति पाठे बुद्धिरिति शेषः । राक्षसो भविष्यसीत्यर्थः ॥ ५३ ॥ ५४ ॥ समाधीति ॥ समाधौ विज्ञानावगतार्थः राक्षसकृतमेतन्नास्यापराध इति विज्ञातार्थः । आत्यंतिकं यावज्जीवं न भविष्यति किन्तु द्वादशाब्दपरिमितमेतन्मांसभोजनं भविष्यतीतिशापसंकोचात्मकमनुग्रहं चकारेत्यर्थः ॥ ५५ ॥ असाविति ॥ भगवन्नयमस्मद्गुरुरित्याद्युपपत्त्या स्वपत्न्या मदयंत्या प्रसादितस्सन् वसिष्ठशापाद्वि निवृत्तस्सस्यांबुदरक्षणार्थं शापोदकं नोर्व्यां न चाकाशे चिक्षेप । उर्व्यां प्रक्षेपे सस्यनाशस्स्यात्, आकाशे प्रक्षेपे चांबुदनाशस्स्यादिति न तत्रोक्षिप्तवान् किंतु तेनोदकेन स्वपादावेव सिषेच ॥ ५६ ॥ तेनेति ॥ क्रोधोग्निस्तेनाश्रितेनांभसा सिक्तेन तस्य पादौ कल्माषतां कृष्णपांडुरतां प्राप्तौ । तदनेन मित्रस्य कलत्रस्योक्तिसहनात् मित्रसहत्वमपि तस्य व्याख्यातं द्रष्टव्यम् ॥ ५७ ॥ वसिष्ठेति ॥ षष्ठे भोजनकाले तृतीयदिनांते ॥ ॥ ५८ ॥ तदेवं सौदासस्य मित्रसहकल्माषपादसंज्ञे व्याख्याते । इदानीं तस्यौरसः पुत्रो नाभूदिति वक्तुं कथां प्रस्तौति–एकदेत्यादिना स्त्रीसंभोगं तत्याजेत्यंतेन ॥ ५९ ॥ तयोरिति ॥ तयोर्दंपत्योः प्रधावितयोः पलायितयोः मध्ये ब्राह्मणं जग्राह ॥ ६० ॥ ६१ ॥ ६२ ॥

नार्हसि स्त्रीधर्मसुखाभिज्ञो मय्यकृतार्थायामस्मद्भर्त्तारं हंतुमित्येवं बहुप्रकारं तस्यां विलपंत्यां व्याघ्रः पशुमिवाऽरण्येऽभिमतं तं ब्राह्मणमभक्षयत् ॥ ॥ ६३ ॥ ततश्चातिकोपसमन्विता ब्राह्मणी तं राजानं शशाप ॥६४॥ यस्मादेवं मय्यतृप्तायां त्वयायं मत्पतिर्भक्षितः तस्मात्त्वमपि कामोपभोगप्रवृत्तोंतं प्राप्स्यसीति ॥६५॥ शप्त्वा चैव साग्निं प्रविवेश ॥६६॥ ततस्तस्य द्वादशाब्दपर्यये विमुक्तशापस्य स्त्रीविषयाभिलाषिणो मदयंती तं स्मारयामास ॥६७॥ ततः परमसौ स्त्रीभोगं तत्याज ॥६८॥ वसिष्ठश्चापुत्रेण राज्ञा पुत्रार्थमभ्यर्थितो मदयंत्यां गर्भाधानं चकार ॥६९॥ यदा च सप्तवर्षाण्यसौ गर्भेण जज्ञे ततस्तं गर्भमश्मना सा देवी जघान ॥७०॥ पुत्रश्चाजायत ॥७१॥ तस्य चाश्मक इत्येव नामाभवत् ॥ ७२ ॥ अश्मस्य मूलको नाम पुत्रोऽभवत् ॥ ७३ ॥ योसौ निःक्षत्रे क्ष्मातलेस्मिन् क्रियमाणे स्त्रीभिर्विवस्त्राभिः परिवार्य रक्षितः ततस्तं नारीकवचमुदाहरंति ॥ ७४ ॥ मूलकाद्दशरथस्तस्मादिलिविलस्ततश्च विश्वसहः ॥७५॥ तस्माच्च खट्वांगः योसौ देवासुरसंग्रामे देवैरभ्यर्थितोऽसुराञ्जघान ॥७६॥ स्वर्गे च कृतप्रियैर्देवैर्वरग्रहणाय चोदितः प्राह ॥ ७७ ॥ यद्यवश्यं वरो ग्राह्यः तन्ममायुः कथ्यतामिति ॥ ७८ ॥ अनंतरं च तैरुक्तं मुहूर्त्तमेकं प्रमाणं तवायुरित्युक्तोथास्खलितगतिना विमानेन लघिमादिगुणो मर्त्यलोकमागम्येदमाह ॥ ७९ ॥ यथा न ब्राह्मणेभ्यस्सकाशादात्मापि मे प्रियतरः न च स्वधर्मोल्लंघनं मया कदाचिदप्यनुष्ठितं न च सकलदेवमानुषपशुपक्षिवृक्षादिकेष्वच्युतव्यतिरेकवती दृष्टिर्ममाभूत् तथा तमेवं मुनिजनानुस्मृतं भगवंतमस्खलितगतिः प्रापयेयमित्यशेषदेवगुरौ भगवत्यनिर्देश्यवपुषि सत्तामात्रात्मन्यात्मानं परमात्मनि वासुदेवाख्ये युयोज तत्रैव च लयमवाप ॥ ८० ॥

नेति ॥ स्त्रीधर्मस्सुरतम् ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ तत इति ॥ स्मारयामास तं ब्राह्मण्याश्शापम् ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ॥ ७३ ॥ य इति ॥ निःक्षत्रिये क्रियमाणे, जामदग्न्येनेति शेषः ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ यथेति ॥ प्रापयेयम् आत्मानमिति शेषः । प्राप्स्यामीति च पाठः । अनिर्देश्यवपुषि समस्तविलक्षणसर्वाश्चर्यजगद्बीजशुभाश्रयवपुषि सत्तामात्रात्मनि अपक्षयादिरहिततया यः सदास्तीति । केवलमित्युक्ते परमात्मन्यात्मानं युयोज "ब्रह्मणे त्वा महसे यत्पुरुषेण हविषा अहमेवाहं मां जुहोमि स्वाहा" इति च ॥ ८० ॥

नेति ॥ स्त्रीधर्मस्संभोगः तत्सुखाभिज्ञः । अभिमतं पशुं व्याघ्र इव ब्राह्मणमभक्षयत् ॥ ६३ ॥ ६४ ॥ यस्मादिति ॥ अंतं मृत्युम् ॥ ६५ ॥ ६६ ॥ तत इति ॥ द्वादशाब्दविपर्यये तदंते तं ब्राह्मण्याश्शापं स्मारयामास ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ अनंतरमिति ॥ देवैर्दत्तेन विमानेन लघिम्ना युक्तः । शीघ्रं मर्त्यलोकमागत्य ॥ ७९ ॥ ब्राह्मणप्रियत्वादिस्वपूर्ववृत्तमतिरम्यमनुस्मरन्नेवंभूतस्य ममेदानीं भगवत्समाधिना तत्पदप्राप्तिरेवानुरूपेति तत्समाधिमेवाध्यवस्यन्नाह–यथा न ब्राह्मणेभ्य इत्यादिना लयमवापेत्यंतेन ॥ ८० ॥

अत्रापि श्रूयते श्लोको गीतस्सप्तर्षिभिः पुरा ॥ खट्वांगेन समो नान्यः कश्चिदुर्व्यां भविष्यति॥८१॥येन स्वर्गादिहागम्य मुहूर्तं प्राप्य जीवितम्॥ त्रयोतिसंधिता लोका बुद्ध्या सत्येन चैव हि ॥८२॥ खट्वांगाद्दीर्घबाहुः पुत्रोऽभवत् ॥८३॥ ततो रघुरभवत्॥८४॥तस्मादप्यजः॥८५॥अजाद्दशरथः ॥ ८६ ॥ तस्यापि भगवानब्जनाभो जगतः स्थित्यर्थमात्मांशेन रामलक्ष्मणभरतशत्रुघ्नरूपेण चतुर्द्धा पुत्रत्वमायासीत् ॥ ८७ ॥ रामोपि बाल एव विश्वामित्रयागरक्षणाय गच्छंस्ताटकां जघान ॥ ८८ ॥ यज्ञे च मारीचमिषुवाताहतं समुद्रे चिक्षेप ॥ ८९ ॥ सुबाहुप्रमुखांश्च क्षयमनयत् ॥ ९० ॥ दर्शनमात्रेणाहल्यामपापां चकार ॥ ९१ ॥ जनकगृहे च माहेश्वरं चापमनायासेन बभंज ॥ ९२ ॥ सीतामयोनिजां जनकराजतनयां वीर्यशुल्कां लेभे ॥ ९३ ॥ सकलक्षत्रियक्षयकारिणमशेषहैहयकुलधूमकेतुभूतं च परशुराममपास्तवीर्यबलावलेपं चकार ॥ ९४ ॥ पितृवचनाच्चागणितराज्याभिलाषो भ्रातृभार्यासमेतो वनं प्रविवेश ॥ ९५ ॥ विराधखरदूषणादीन् कबंधवालिनौ च निजघान ॥ ९६ ॥ बद्ध्वा चांभोनिधिमशेषराक्षसकुलक्षयं कृत्वा दशाननापहृतां भार्यां तद्वधादपहृतकलंकामप्यनलप्रवेशशुद्धामशेषदेवसंघैस्स्तूयमानशीलां जनकराजकन्यामयोध्यामानिन्ये ॥ ९७ ॥ ततश्चाभिषेकमंगलं मैत्रेय वर्षशतेनापि वक्तुं न शक्यते संक्षेपेण श्रूयताम् ॥ ९८ ॥

॥ ८१ ॥ येनेति ॥ त्रय इत्यादि त्रयो लोकाः सात्त्विक्यादिगतयः अतिसंहिताः अतीताः । 'अनुसंधिताः' इति पाठे आत्मसात्कृताः विष्णौ लयात् । यद्वा त्रयो लोकाः त्रैलोक्यम् अभिसंहिताः प्राप्ताः सर्वविशिष्टः परमात्मा हि मुक्तप्राप्यः "इमान् लोकान् कामान्नीकामरूप्यनुसंचरन् सर्वेषु लोकेषु कामचारो भवति सर्वं हि पश्यः पश्यति सर्वमाप्नोति सर्वशः" इत्यादेः । बुद्ध्या ध्यानेन सत्येन तदुक्तत्रिविधशपथेन ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ तस्येति ॥ आयासीत् प्राप्तोभूत् ॥ ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥

॥ ८१ ॥ येनेति ॥ बुद्ध्या ज्ञानेन सत्येन परमार्थरूपेण त्रयो लोका अनुसंधिता अनुसृताः वासुदेवात्मनैव दृष्टा इत्यर्थः ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ तस्येति ॥ अयासीत् प्राप्तोभूत् ॥ ८७ ॥ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ सीतामिति ॥ वीर्यं पराक्रम एव शुल्कं मूल्यं यस्यास्तां सीतां भेजे लेभे ॥ ९३ ॥ सकलेति ॥ धूमकेतुं विनाशनं वीर्यं प्रभावः बलं शक्तिः अपास्तो वीर्यबलनिमित्तोवलेपो मदो यस्य तथाभूतं चकार ॥ ९४ ॥ पितृवचनादिति ॥ भ्रातृभार्यासमन्वितो लक्ष्मणसीतासहितः ॥ ९५ ॥ ९६ ॥ बद्ध्वेति ॥ तद्वधेन रावणवधेन अपहृतः कलंकः खेदो यस्यास्ताम् । अपिशब्दश्चार्थे ॥ ९७ ॥ ९८ ॥

लक्ष्मणभरतशत्रुघ्नविभीषणसुग्रीवांगदजाम्बवद्धनुमत्प्रभृतिभिस्समुत्फुल्लवदनैश्छत्रचामरादियुतैः सेव्यमानो दाशरथिर्ब्रह्मेंद्राग्नियमनिर्ऋतिवरुणवायुकुबेरेशानप्रभृतिभिस्सर्वामरैर्वसिष्ठवामदेववाल्मीकिमार्कण्डेयविश्वामित्रभरद्वाजागस्त्यप्रभृतिभिर्मुनिवरैः ऋग्यजुस्सामाथर्वैस्संस्तूयमानो नृत्यगीतवाद्याद्यखिललोकमंगलवाद्यैर्वीणावेणुमृदंगभेरीपटहशंखकाहलगोमुखप्रभृतिभिस्सुनादैस्समस्तभूभृतां मध्ये सकललोकरक्षार्थं यथोचितमभिषिक्तो दाशरथिः कोसलेंद्रो रघुकुलतिलको जानकीप्रियो भ्रातृत्रयप्रियस्सिंहासनगत एकादशाब्दसहस्रं राज्यमकरोत् ॥९९॥ भरतोपि गंधर्वविषयसाधनाय गच्छन् संग्रामे गंधर्वकोटीस्तिस्रो जघान ॥ १०० ॥ शत्रुघ्नेनाप्यमितबलपराक्रमो मधुपुत्रो लवणो नाम राक्षसो निहतो मथुरा च निवेशिता ॥ १०१ ॥ इत्येवमाद्यतिबलपराक्रमविक्रमणैरतिदुष्टसंहारिणोशेषस्य जगतो निष्पादितस्थितयो रामलक्ष्मणभरतशत्रुघ्नाः पुनरपि दिवमारूढाः ॥ १०२ ॥ येऽपि तेषु भगवदंशेष्वनुरागिणः कोसलनगरजानपदास्तेपि तन्मनसस्तत्सालोक्यतामवापुः ॥ १०३ ॥ अतिदुष्टसंहारिणो रामस्य कुशलवौ द्वौ पुत्रौ लक्ष्मणस्यांगदचंद्रकेतू तक्षपुष्कलौ भरतस्य सुबाहुशूरसेनौ शत्रुघ्नस्य ॥ १०४ ॥ कुशस्यातिथिरतिथेरपि निषधः पुत्रोऽभूत् ॥ १०५ ॥ निषधस्याप्यनलस्तस्मादपि नभाः नभसः पुंडरीकस्तत्तनयः क्षेमधन्वा तस्य च देवानीकस्तस्याप्यहीनकोऽहीनकस्यापि रुरुस्तस्य च पारियात्रकः पारियात्राद्देवलो देवलाद्वचलः तस्याप्युत्कः उत्काच्च वज्रनाभस्तस्माच्छंखणस्तस्माद्युषिताश्वस्ततश्च विश्वसहो जज्ञे ॥१०६॥ तस्माद्धिरण्यनाभः यो महायोगीश्वराज्जैमिनेश्शिष्याद्याज्ञवल्क्याद्योगमवाप ॥ ॥ १०७ ॥ हिरण्यनाभस्य पुत्रः पुष्यस्तस्माद् ध्रुवसंधिस्ततस्सुदर्शनस्तस्मादग्निवर्णस्ततश्शीघ्रगस्तस्मादपि मरुः पुत्रोऽभवत् ॥ १०८ ॥ योसौ योगमास्थायाद्यापि कलापग्राममाश्रित्य तिष्ठति ॥ १०९ ॥ आगामियुगे सूर्यवंशक्षत्रप्रवर्तयिता भविष्यति ॥ ११० ॥ तस्यात्मजः प्रशुश्रुकस्तस्यापि सुसंधिस्ततश्चाप्यमर्षस्तस्य च सहस्वांस्ततश्च विश्वभवः ॥ १११ ॥ तस्य बृहद्बलः योर्जुनतनयेनाभिमन्युना भारतयुद्धे क्षयमनीयत ॥ ११२ ॥

॥९९॥ १०० ॥ १०१ ॥ १०२ ॥ य इति ॥ कोशलनगर इत्यादिना तद्वासिन उच्यंते ॥ १०३ ॥ १०४ ॥ १०५ ॥१०६॥ १०७॥१०८॥१०९॥ ॥ ११० ॥ १११ ॥ ११२ ॥

॥ ९९ ॥ १०० ॥ १०१ ॥ इतीति ॥ अतिबलपराक्रमैः यानि विक्रमाणानि चरितानि तैः ॥ १०२ ॥ १०३ ॥ १०४ ॥ १०५ ॥ १०६ ॥ १०७ ॥ १०८ ॥ १०९ ॥ ११० ॥ १११ ॥ ११२॥

एते इक्ष्वाकुभूपालाः प्राधान्येन मयेरिताः ॥ एतेषां चरितं शृण्वन् सर्वपापैः प्रमुच्यते ॥ ११३ ॥ इति श्रीविष्णुमहापुराणे चतुर्थांशे चतुर्थोऽध्यायः ॥ ४ ॥ ॥ श्रीपराशर उवाच ॥ इक्ष्वाकुतनयो योसौ निमिर्नाम्ना सहस्रं वत्सरं सत्रमारेभे ॥ १ ॥ वसिष्ठं च होतारं वरयामास ॥ २ ॥ तमाह वसिष्ठोहमिंद्रेण पंचवर्षशतयागार्थं प्रथमं वृतः ॥ ३ ॥ तदनंतरं प्रतिपाल्यतामागतस्तवापि ऋत्विक् भविष्यामीत्युक्ते स पृथिवीपतिर्न किंचिदुक्तवान् ॥ ४ ॥ वसिष्ठोप्यनेन समन्विच्छितमित्यमरपतेर्यागमकरोत् ॥ ५ ॥ सोपि तत्काल एवान्यैर्गौतमादिभिर्यागमकरोत् ॥ ६ ॥ समाप्ते चामरपतेर्यागे त्वरया वसिष्ठोनिमियज्ञं करिष्यामीत्याजगाम ॥ ७ ॥ तत्कर्मकर्तृत्वं च गौतमस्य दृष्ट्वा स्वपते तस्मै राज्ञे मां प्रत्याख्यायैव तदनेन गौतमाय कर्मांतरं समर्पितं यस्मात्तस्मादयं विदेहो भविष्यतीति शापं ददौ ॥ ८ ॥ प्रबुद्धश्चासाववनिपतिरपि प्राह ॥ ९ ॥ यस्मान्मामसंभाष्याज्ञानत एव शयानस्य शापोत्सर्गमसौ दुष्टगुरुश्चकार तस्मात्तस्यापि देहः पतिष्यतीति शापं दत्त्वा देहमत्यजत् ॥ १० ॥ तच्छापाच्च मित्रावरुणयोस्तेजसि वसिष्ठस्य चेतः प्रविष्टम् ॥ ११ ॥ उर्वशीदर्शनादुद्भूतबीजप्रपातयोस्तयोस्सकाशाद्वसिष्ठो देहमपरं लेभे ॥१२॥ निमेरपि तच्छरीरमतिमनोहरगंधतैलादिभिरुपसंस्क्रियमाणं नैव क्लेदादिकं दोषमवाप सद्यो मृत इव तस्थौ ॥१३॥ यज्ञसमाप्तौ भागग्रहणाय देवानागतानृत्विज ऊचुः । यजमानाय वरो दीयतामिति ॥१४॥

॥ ११३ ॥ ११४ ॥ इति श्रीविष्णुचित्तीये विष्णुमहापुराणव्याख्याने चतुर्थांशे चतुर्थोऽध्यायः ॥ ४ ॥छ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ तत्कर्मेति ॥ कर्मान्तरं कर्मावकाशः ॥ ८ ॥ ९ ॥ १० ॥ तच्छापादिति ॥ तेजसि वीर्ये वसिष्ठतेजः लिंगशरीरम् ॥ ११ ॥ १२ ॥ निमेरिति ॥ मृतराजदेहस्थितिर्यज्ञसमाप्त्यर्था अराजकत्वपरिहारार्था च ॥ १३ ॥ १४ ॥

॥ ११३ ॥ ११४ ॥ इतिश्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां चतुर्थांशे चतुर्थोऽध्यायः ॥ ४ ॥ निमेर्विदेहसंज्ञां वक्तुं कथामाह–इक्ष्वाकुतनयो योसावित्यादिना उन्मेषं चक्रुरित्यंतेन ॥ १ ॥ ॥ २ ॥ ३ ॥ तदनंतरमिति ॥ तदनंतरमागत्य तवापि ऋत्विग्भविष्यामि तावत्प्रतिपाल्यतां प्रतीक्ष्यतामित्युक्ते निमिर्धर्मविलंबमसहमानो वसिष्ठभयाच्च न किंचिदुक्तवान् ॥ ४ ॥ वसिष्ठ इति ॥ समन्विच्छितमनुमतमिति ॥ ॥ ५ ॥ ६ ॥ ७ ॥ तदिति ॥ मामप्रत्याख्यायेति मत्कर्मसमाप्तिपर्यंतं त्वयान्यत्र न गंतव्यमित्येवं मामनिवार्यैव अनेन कर्मांतरं कर्मण्यंतरमन्यस्यावकाशो दत्तः तस्मादयं विदेहो गतदेहो मरिष्यतीति शापं ददौ ॥ ८ ॥ ॥ ९ ॥ यस्मादिति ॥ मामसंभाष्येति त्वया किमित्येव मामप्रतीक्ष्यान्यैः कर्म कारितमित्याद्यपृष्ट्वा ॥ १० ॥ तच्छापादिति ॥ तेजसि वीर्ये वसिष्ठस्य चेतः चैतन्यं लिंगशरीरं वा प्रविष्टम् । 'तेजः' इति पाठे स एवार्थः ॥ ११ ॥ १२ ॥ मृतादपि निमेर्देहात् राजवंशप्रवृत्तिं वक्तुं तद्देहधारणप्रकारमाह–निमेरपीति ॥ १३ ॥ १४ ॥

देवैश्च छंदितोसौ निमिराह ॥ १५ ॥ भगवंतोखिलसंसारदुःखहंतारः ॥ १६ ॥ न ह्येतादृगन्यद्दुःखमस्ति यच्छरीरात्मनोर्वियोगे भवति ॥ १७ ॥ तदहमिच्छामि सकललोकलोचनेषु वस्तुं न पुनश्शरीरग्रहणं कर्तुमित्येवमुक्तैर्देवैरसावशेषभूतानां नेत्रेष्ववतारितः ॥ ॥ १८ ॥ ततो भूतान्युन्मेषनिमेषं चक्रुः ॥ १९ ॥ अपुत्रस्य च तस्य भूभुजः शरीरमराजकभीरवो मुनयोऽरण्या ममंथुः ॥ २० ॥ तत्र च कुमारो जज्ञे ॥ २१ ॥ जननाज्जनकसंज्ञां चावाप ॥ २२ ॥ अभूद्विदेहोस्य पितेति वैदेहः मथनान्मिथिरिति ॥ २३ ॥ तस्योदावसुः पुत्रोऽभवत् ॥ २४ ॥ उदावसोर्नंदिवर्द्धनस्ततस्सुकेतुः तस्माद्देवरातस्ततश्च बृहदुक्थः तस्य च महावीर्यस्तस्यापि सुधृतिः ॥ २५ ॥ ततश्च धृष्टकेतुरजायत ॥ २६ ॥ धृष्टकेतोर्हर्यश्वस्तस्य च मनुः मनोः प्रतिकः तस्मात्कृतरथस्तस्य देवमीढः तस्य च विबुधः विबुधस्य महाधृतिस्त तश्च कृतरातः ततो महारोमा तस्य स्वर्णरोमा तत्पुत्रो ह्रस्वरोमा ह्रस्वरोम्णस्सीरध्वजोऽभवत् ॥ २७ ॥ तस्य पुत्रार्थं यजनभुवं कृषतः सीरे सीता दुहिता समुत्पन्ना ॥ २८ ॥ सीरध्वजस्य भ्राता सांकाश्यधिपतिः कुशध्वजनामासीत् ॥ २९ ॥ सीरध्वजस्यापत्यं भानुमान् भानु मतश्शतद्युम्नः तस्य तु शुचिः तस्माच्चोर्जनामा पुत्रो जज्ञे ॥ ३० ॥ तस्यापि शतध्वजः ततः कृतिः कृतेरंजनः तत्पुत्रः कुरुजित् ततो ऽरिष्टनेमिः तस्माच्छुतायुः श्रुतायुषः सुपार्श्वः तस्मात्सृंजयः ततः क्षेमावी क्षेमाविनोऽनेनाः तस्माद्भौमरथः तस्य सत्यरथः तस्मादुपगुः उपगो रुपगुप्तः तत्पुत्रः स्वागतस्तस्य च स्वानंदः तस्माच्च सुवर्चाः तस्य च सुपार्श्वः तस्यापि सुभाषः तस्य सुश्रुतः तस्मात्सुश्रुताज्जयः तस्य पुत्रो विजयः विजयस्य ऋतः ऋतात्सुनयः सुनयाद्वीतहव्यः तस्माद्धृतिः धृतेर्बहुलाश्वः तस्य पुत्रः कृतिः ॥ ३१ ॥ कृतौ संतिष्ठत्ययं जनकवंशः ॥ ३२ ॥

देवैरिति ॥ छंदितः प्रचोदितः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ जननादिति ॥ जननात् आविर्भावलक्षणाज्जनकसंज्ञामवाप ॥ २२ ॥ अभूदिति ॥ एवं वैदेहमिथिसंज्ञादयः ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ तस्येति ॥ सीरे हले ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ कृताविति ॥ संतिष्ठति समाप्य ॥ ३२ ॥

देवैरिति ॥ छंदितः पुत्रार्थमिच्छां कारित आह ॥ १५ ॥ १६ ॥ १७ ॥ तदिति ॥ अवतारितः अवस्थितिं कारितः ॥ १८ ॥ १९ ॥ तत्पुत्रस्य जनक इत्यादिसंज्ञात्रयं निर्वक्तुमाह—अपुत्रस्येति ॥ २० ॥ २१ ॥ जननादिति ॥ जननादाविर्भावलक्षणात् ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ कृताविति ॥ संतिष्ठति संतिष्ठते समाप्तिं यातीत्यर्थः ॥ ३२ ॥

इत्येते मैथिलाः ॥ ३३ ॥ प्रायेणैते आत्मविद्याश्रयिणो भूपाला भवंति ॥ ३४ ॥ ॥ इति श्रीविष्णुमहापुराणे चतुर्थांशे पंचमोऽध्यायः ॥ ५ ॥ ॥ मैत्रेय उवाच ॥ सूर्यस्य वंश्या भगवन्कथिता भवता मम ॥ सोमस्याप्यखिलान्वंश्याञ्छ्रोतुमिच्छामि पार्थिवान् ॥ ॥ १ ॥ कीर्त्यते स्थिरकीर्त्तीनां येषामद्यापि संततिः ॥ प्रसादसुमुखस्तान्मे ब्रह्मन्नाख्यातुमर्हसि ॥ २ ॥ श्रीपराशर उवाच ॥ श्रूयतां मुनिशार्दूल वंशः प्रतिथतेजसः ॥ सोमस्यानुक्रमात्ख्याता यत्रोर्वीपतयोऽभवन् ॥ ३ ॥ अयं हि वंशोतिबलपराक्रमद्युतिशीलचेष्टावद्भिरतिगुणान्वितैर्नहुषययातिकार्तवीर्यार्जुनादिभिर्भूपालैरलंकृतः तमहं कथयामि श्रूयताम् ॥ ४ ॥ अखिलजगत्स्रष्टुर्भगवतो नारायणस्य नाभिसरोजसमुद्भवाब्जयोनेर्ब्रह्मणः पुत्रोऽत्रिः ॥ ५ ॥ अत्रेस्सोमः ॥ ६ ॥ तं च भगवानब्जयोनिः अशेषौषधीद्विजनक्षत्राणामाधिपत्येऽभ्यषेचयत् ॥ ७ ॥ स च राजसूयमकरोत् ॥ ८ ॥ तत्प्रभावादत्युत्कृष्टाधिपत्याधिष्ठातृत्वाच्चैनं मद आविवेश ॥ ९ ॥ मदावलेपाच्च सकलदेवगुरोर्बृहस्पतेस्तारां नाम पत्नीं जहार ॥ १० ॥ बहुशश्च बृहस्पतिचोदितेन भगवता ब्रह्मणा चोद्यमानस्सकलैश्च देवर्षिभिर्याचमानोपि न मुमोच ॥ ११ ॥ तस्य चंद्रस्य च बृहस्पतेर्द्वेषादुशना पार्ष्णिग्राहोभूत् ॥ १२ ॥ अंगिरसश्च सकाशादुपलब्धविद्यो भगवान्रुद्रो बृहस्पतेः सहाय्यमकरोत् ॥ १३ ॥

॥ ३३ ॥ ३४ ॥ ॥ इति श्रीविष्णुचित्तीयव्याख्याने विष्णुमहापुराणे चतुर्थांशे पंचमोऽध्यायः ॥ ५ ॥ ॥ १ ॥ कीर्त्यत इति ॥ अद्यापीत्यनेन पुराणोक्तवंशकालीनपरीक्षद्वंशप्रशंसा ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ तस्येति ॥ पार्ष्णिग्राहः अनुचरः । सहाय इति यावत् ॥ १२ ॥ अंगिरस इति ॥ रुद्रः बृहस्पतेः सहायमकरोत् बृहस्पतेः आंगिरसत्वात् ॥ १३ ॥

॥ ३३ ॥ प्रायेणेति ॥ आत्मविद्याश्रयिणो ब्रह्मविदः ॥ ३४ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां चतुर्थांशे पंचमोऽध्यायः ॥ ५ ॥ ॥ १ ॥ २ ॥ ३ ॥ अयमिति ॥ अतिशयितं बलं सैन्यं शरीरं वा पराक्रमो विक्रमः । द्युतिस्तेजः शीलमाचारः चेष्टाः त्यागादिभोगलीलाः अतिबलपराक्रमयुक्तैरलंकृतः ॥ ४ ॥ अखिलेति ॥ भगवतो नारायणस्य नाभिसरो नाभिह्रदस्तत्संभवमब्जं योनिः कारणं यस्य तस्य ब्रह्मणोत्रिः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ तदिति ॥ अत्युत्कृष्टानामोषधिप्रभृतीनामाधिपत्येन सर्वाधिष्ठातृत्वाच्च ॥ ९ ॥ बृहस्पतेः पत्न्यां तारायां सोमस्य बुधः पुत्रोऽभूदिति वक्ष्यन् तत्कथामाह—मदावलेपाच्चेत्यादिना, बुध इति नाम चक्र इत्यंतेन ॥ १० ॥ ११ ॥ तस्येति ॥ पार्ष्णिग्राहस्सहायः ॥ १२ ॥ अंगिरस इति ॥ गुरुपुत्रत्वाद्बृहस्पतेः श्रीरुद्रस्तत्सहाय्यमकरोत् ॥ १३ ॥

यतश्चोशना ततो जंभकुंभाद्याः समस्ता एव दैत्यदानवनिकाया महान्तमुद्यमं चक्रुः ॥ १४ ॥ बृहस्पतेरपि सकलदेवसैन्ययुतः सहायः शक्रोऽभवत् ॥ १५ ॥ एवं च तयोरतीवोग्रसंग्रामस्तारानिमित्तस्तारकामयो नामाभूत ॥ १६ ॥ ततश्च समस्तशस्त्राण्यसुरेषु रुद्रपुरोगमा देवा देवेषु चाशेषदानवा मुमुचुः ॥ १७ ॥ एवं देवासुराहवसंक्षोभक्षुब्धहृदयमशेषमेव जगद्ब्रह्माणं शरणं जगाम ॥ १८ ॥ ततश्च भगवानब्जयोनिरप्युशनसं शंकरमसुरान्देवांश्च निवार्य बृहस्पतये तारामदापयत् ॥ १९ ॥ तां चांतःप्रसवामवलोक्य बृहस्पतिरप्याह ॥ २० ॥ नैष मम क्षेत्रे भवत्याऽन्यस्य सुतो धार्यस्समुत्सृजैनमलमलमतिधाष्टर्येनेति ॥ २१ ॥ सा च तेनैवमुक्तातिपतिव्रता भर्तृवचनानंतरं तमिषीकास्तंबे गर्भमुत्ससर्ज ॥ २२ ॥ स चोत्सृष्टमात्र एवातितेजसा देवानां तेजांस्याचिक्षेप ॥ २३ ॥ बृहस्पतिमिंदुं च तस्य कुमारस्यातिचारुतया साभिलाषौ दृष्ट्वा देवास्समुत्पन्नसंदेहास्तारां पप्रच्छुः ॥ २४ ॥ सत्यं कथयास्माकमिति सुभगे सोमस्याथ वा बृहस्पतेरयं पुत्र इति ॥ २५ ॥ एवं तैरुक्ता सा तारा ह्रिया किंचिन्नोवाच ॥ २६ ॥ बहुशोप्यभिहिता यदाऽसौ देवेभ्यो नाचचक्षे ततस्स कुमारस्तां शप्तुमुद्यतः प्राह ॥ २७ ॥ दुष्टेंब कस्मान्मम तातं नाख्यासि ॥ २८ ॥ अद्यैव ते व्यलीकलज्जावत्यास्तथा शास्तिमहं करोमि ॥ २९ ॥ यथा च नैवमद्याप्यतिमंथरवचना भविष्यसीति ॥ ३० ॥

॥ १४ ॥ बृहस्पतेरिति ॥ शक्रोऽभवत्सहायः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ नेति ॥ क्षेत्रे बीजावापार्हे उदरे ॥ २१ ॥ सेति॥ अतिपतिव्रतेति पदेन गर्भो बलादाहित इति गम्यते । इषीका काशः ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ अद्येति ॥ अलीकलज्जा मिथ्या लज्जा ॥ २९ ॥ यथेति ॥ मंथरा वक्रहृदया स्तब्धा वा ॥ ३० ॥

यत इति ॥ यतश्चोशनाः येषां पक्षे शुक्रः ॥ १४ ॥ बृहस्पतेरिति ॥ बृहस्पतेश्शक्रस्सहायोऽभवत् ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ तामिति ॥ अंतःप्रसवां गर्भिणीम् ॥ २० ॥ २१ ॥ सेति ॥ पतिव्रता अत एव तमिंदुनाहितं गर्भं भर्तृवचनादुत्ससर्ज इषीकास्तंबे ॥ २२ ॥ स चेति ॥ आचिक्षेप अपहतवान् ॥ २३ ॥ बृहस्पतिमिति ॥ 'माता भस्त्रा पितुः पुत्रः' इत्यादिवचनात्पितुरेव पुत्रः अतोस्य कः पितेति तारामपृच्छन् ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ यथेति ॥ अद्यापि व्यभिचारिणी दुष्टा सती यथा नैवं मंथरवचना स्तब्धवाग्भविष्यसीति ॥ ३० ॥

अथाह भगवान् पितामहः तं कुमारं सन्निवार्य स्वयमपृच्छत्तां ताराम् ॥ ३१ ॥ कथय वत्से कस्यायमात्मजः सोमस्य वा बृहस्पतेर्वा इत्युक्ता लज्जमानाह सोमस्येति ॥ ३२ ॥ ततः प्रस्फुरदुच्छ्वसितामलकपोलकांतिर्भगवानुडुपतिः कुमारमालिंग्य साधु साधु वत्स प्राज्ञोसीति बुध इति तस्य च नाम चक्रे ॥३३॥ तदाख्यातमेवैतत् स च यथेलायामात्मजं पुरूरवसमुत्पादयामास ॥ ३४ ॥ पुरूरवास्त्वतिदानशीलोऽतियज्वातितेजस्वी यं सत्यवादिनमतिरूपस्विनं मनस्विनं मित्रावरुणशापान्मानुषे लोके मया वस्तव्यमिति कृतमतिरुर्वशी ददर्श ॥ ३५ ॥ दृष्टमात्रे च तस्मिन्नपहाय मानमशेषमपास्य स्वर्गसुखाभिलाषं तन्मनस्का भूत्वा तमेवोपतस्थे ॥ ३६ ॥ सोऽपि च तामतिशयितसकललोकस्त्रीकांतिसौकुमार्यलावण्यगतिविलासहासादिगुणामवलोक्य तदायत्तचित्तवृत्तिर्बभूव ॥ ३७ ॥ उभयमपि तन्मनस्कमनन्यदृष्टि परित्यक्तसमस्तान्यप्रयोजनमभूत् ॥ ३८ ॥ राजा तु प्रागल्भ्यात्तामाह ॥ ३९ ॥ सुभ्रु त्वामहमभिकामोऽस्मि प्रसीदाऽनुरागमुद्वहेत्युक्ता लज्जावखंडितमुर्वशी तं प्राह ॥ ४० ॥ भवत्वेवं यदि मे समयपरिपालनं भवान् करोतीत्याख्याते पुनरपि तामाह ॥ ४१ ॥

॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ पुरूरवास्त्विति ॥ अतिरूपस्विनमिति अतिरूपमेव स्वं धनं तदस्यास्तीति ॥ ३५ ॥ ३६ ॥ स इति ॥ अतिशयिताः सकललोकस्त्रीणां कांत्यादिगुणाः यया ताम् । तथा च रूपके—"मन्मथाप्यायितच्छाया शोभा कांतिरुदाहृता । सौकुमार्यं मृदुत्वं च लावण्यं दीप्तिरुच्यते ॥ तात्कालिकविशेषस्तु विलासोंगक्रियादिषु" इति ॥ ३७ ॥ उभयमिति ॥ तन्मनस्कमुभयमनस्कं परस्परमनस्कमित्यर्थः ॥ ३८ ॥ राजेति ॥ प्रागल्भ्यं निरस्तसाध्वसत्वम् ॥ ३९ ॥ सुभ्रिवति । अनुरागमुद्वह मयीति शेषः । लज्जावखंडितं लज्जया मंथरं सगद्गदमित्यर्थः ॥ ४० ॥ ४१ ॥

॥ ३१ ॥ ३२ ॥ तत इति ॥ स्फुरतोरुच्छ्वसितयोर्विकसितयोरमलयोः कपोलयोः कांतिर्यस्य सः ॥ ३३ ॥ तथेति ॥ स च बुधो यथेलायां पुरूरवसमुत्पादयामास तत्तथा प्रागेवोक्तम् ॥ ३४ ॥ पुरूरवसस्तूर्वश्यामायुःप्रमुखाष्षट्पुत्रा जाता इति वक्तुं कथामाह—पुरूरवास्त्वित्यादिना यावत्समाप्ति ॥ पुरूरवा इति ॥ अतिरूपस्विनमतिरूपमेव स्वं धनमस्यास्तीति अतिरूपस्विनम् ॥ ३५ ॥ दृष्टमात्र इति ॥ मानं गर्वमपहाय तमेवोपतस्थे अभजत् ॥ ३६ ॥ स इति ॥ अतिशयिताः सकललोकस्त्रीणां कांत्यादयो गुणा यया ताम् । कांत्यादिलक्षणं धनिकेनोक्तम्—"मन्मथाप्यायितच्छाया शोभाकांतिरुदाहृता । सौकुमार्यं मृदुत्वं च लावण्यं दीप्तिरुच्यते ॥ तात्कालिको विशेषस्तु विलासो गतिरिष्यते" इति ॥ ३७ ॥ उभयमिति ॥ एवमुभयमपि तन्मिथुनं तन्मनस्कमन्योन्यासक्तचित्तमभूत् । नास्त्यन्या दृष्टिर्यस्य परित्यक्तं समस्तमन्यत्प्रयोजनं येन तत् ॥ ३८ ॥ राजेति ॥ प्रागल्भ्यात् निस्साध्वसत्वात् ॥ ३९ ॥ सुभ्रिवति ॥ लज्जावखंडितं लज्जयाऽवखंडितं मंथरं यथा भवति तथा तं प्राह । लज्जावकुंठितमिति पाठांतरं स्पष्टार्थम् ॥ ४० ॥ शापावसाने यदि मां

आख्याहि मे समयमिति ॥४२॥ अथ पृष्टा पुनरप्यब्रवीत् ॥४३॥ शयनसमीपे ममोरणकद्वयं पुत्रभूतं नापनेयम् ॥४४॥ भवांश्च मया न नग्नो द्रष्टव्यः ॥४५॥ घृतमात्रं च ममाहार इति ॥४६॥ एवमेवेति भूपतिरप्याह ॥ ४७ ॥ तया सह स चावनिपतिरलकायां चैत्ररथादिवनेष्वमलपद्म खंडेषु मानसादिसरस्स्वतिरमणीयेषु रममाण एकषष्टिवर्षाण्यनुदिनप्रवर्द्धमानप्रमोदोऽनयत् ॥४८॥ उर्वशी च तदुपभोगात्प्रतिदिनप्रवर्द्धमानानुरागा अमरलोकवासेऽपि न स्पृहां चकार ॥४९॥ विना चोर्वश्या सुरलोकोऽप्सरसां सिद्धगंधर्वाणां च नातिरमणीयोऽभवत् ॥५०॥ ततश्चोर्वशी पुरूरवसोस्समयविद्विश्वावसुर्गंधर्वसमवेतो निशि शयनाभ्याशादेकमुरणकं जहार ॥ ५१ ॥ तस्याकाशे नीयमानस्योर्वशी शब्दमशृणोत् ॥ ५२ ॥ एवमुवाच च ममानाथायाः पुत्रः केनापह्रियते कं शरणमुपयामीति ॥ ५३ ॥ तदाकर्ण्य राजा मां नग्नं देवी वीक्ष्यतीति न ययौ ॥ ५४ ॥ अथान्यमप्युरणकमादाय गंधर्वा ययुः ॥ ५५ ॥ तस्याप्यपह्रियमाणस्याकर्ण्य शब्दमाकाशे पुनरप्यनाथास्म्यहमभर्तृका कापुरुषाश्रयेत्यार्त्तराविणी बभूव ॥ ५६ ॥ राजाप्यमर्षवशादंधकारमेतदिति खड्गमादाय दुष्टदुष्ट हतोसीति व्याहरन्नभ्यधावत् ॥ ५७ ॥ तावच्च गंधर्वैरप्यतीवोज्ज्वला विद्युज्जनिता ॥ ५८ ॥ तत्प्रभया चोर्वशी राजानमपगतांबरं दृष्ट्वापवृत्तसमया तत्क्षणादेवापक्रान्ता ॥ ५९ ॥ परित्यज्य तावप्युरणकौ गंधर्वास्सुरलोकमुपगताः ॥ ६० ॥ राजापि च तौ मेषावादायातिहृष्टमनाः स्वशयनमायातो नोर्वशीं ददर्श ॥ ६१ ॥ तां चापश्यन् व्यपगतांबर एवोन्मत्तरूपो बभ्राम ॥ ६२ ॥ कुरुक्षेत्रे चांभोजसरस्यन्याभिश्चतसृभिरप्सरोभिस्समवेतामुर्वशीं ददर्श ॥ ६३ ॥

॥ ४२ ॥ ४३ ॥ शयनेति ॥ उरणकः मेषः ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ तदिति । अपवृत्तसमया निवृत्तसमया ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥

गंधर्वा नेष्यंति तदा समयभंगापराधमारोप्य गमिष्यामीति समयमुपक्षिपति--भवत्वेवमिति ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ४९ ॥ गंधर्वैस्तत्समयलंघने निर्मिते सत्युर्वश्या निर्गमसमयं दर्शयन्नाह--विना चोर्वश्येत्यादिना न ददर्शेत्यंतेन ॥ ५० ॥ तत इति ॥ शयनाभ्याशात्पर्यंकप्रांतात् ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ तदिति ॥ अपवृत्तसमया निवृत्तपरिभाषासंबंधा । अपक्रांता निर्गता ॥ ५९ ॥ ६० ॥ ६१ ॥ अथ पुनस्तत्र त्रेताग्निसाध्यकर्ममार्गेणोर्वशीप्राप्तिं कथयन्नाह--तां चापश्यन्नित्यादिना ॥ ६२ ॥ कुरुक्षेत्र इति ॥ अंभोजयुक्ते सरसि ॥ ६३ ॥

ततश्चोन्मत्तरूपो जाये हे तिष्ठ मनसि घोरे तिष्ठ वचसि कपटिके तिष्ठेत्येवमनेकप्रकारं सूक्तमवोचत् ॥ ६४ ॥ आह चोर्वशी ॥६५ ॥ महाराजालमनेनाविवेकचेष्टितेन ॥ ६६ ॥ अंतर्वत्न्यहमब्दांते भवताऽत्रागंतव्यं कुमारस्ते भविष्यति एकां च निशामहं त्वया सह वत्स्यामीत्युक्तः प्रहृष्टस्स्वपुरं जगाम ॥ ६७ ॥ तासां चाप्सरसामूर्वशी कथयामास ॥ ६८ ॥ अयं स पुरुषोत्कृष्टो येनाहमेतावंतं कालमनुरागाकृष्टमानसा सहोषितेति ॥ ६९ ॥ एवमुक्तास्ताश्चाप्सरस ऊचुः ॥७०॥ साधुसाध्वस्य रूपमप्यनेन सहास्माकमपि सर्वकालमास्या भवेदिति ॥ ७१ ॥ अब्दे च पूर्णे स राजा तत्राजगाम ॥ ७२ ॥ कुमारं चायुषमस्मै चोर्वशी ददौ ॥ ७३ ॥ दत्त्वा चैकां निशां तेन राज्ञा सहोषित्वा पंच पुत्रोत्पत्तये गर्भमवाप ॥ ७४ ॥ उवाच चैनं राजानमस्मत्प्रीत्या महाराजाय सर्व एव गंधर्वा वरदास्संवृत्ताः व्रियतां च वर इति ॥ ७५ ॥ आह च राजा ॥ ७६ ॥ विजितसकलारातिरविहतेंद्रियसामर्थ्यो बंधुमानमितबलकोशोऽस्मि नान्यदस्माकमुर्वशीसालोक्यात्प्राप्तव्यमस्ति तदहमनया सहोर्वश्या कालं नेतुमभिलषामीत्युक्ते गंधर्वा राज्ञेऽग्निस्थालीं ददुः ॥ ७७ ॥ ऊचुश्चैनमग्निमाम्नायानुसारी भूत्वा त्रिधा कृत्वोर्वशी सलोकतामनोरथमुद्दिश्य सम्यग्यजेथाः ततोऽवश्यमभिलषितमवाप्स्यतीत्युक्तस्तामग्निस्थालीमादाय जगाम ॥ ७८ ॥ अंतरटव्यामचिंतयत् अहो मेऽतीव मूढता किमहमकरवम् ॥ ७९ ॥ वह्निस्थाली मयैषानीता नोर्वशीति ॥ ८० ॥

ततश्चेति ॥ हे जाये मनसि घोरे तिष्ठ वचसि मया वाङ्मिश्रणं कुरु अनेन अये जाये मनसा तिष्ठ घोरे वचांसि मिश्रीकृणवावहै इत्याद्यष्टादशं च तयोस्संवादसूक्तं स्मारितम् ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८०॥

तंत इति ॥ हे जाये मनसि घोरे मनसा घोरे वचसि वाङ्मिश्रणार्थं क्षणमात्रं तिष्ठेत्यनेकधा विलापात्मकं सूक्तमवोचत् । असूक्तमिति पाठे विलापाद्यसूक्तं यथाभवत्येवमाहेत्यर्थः । एतेन "हे जाये मनसा तिष्ठ घोरे वचांसि मिश्राणि कृणवावहै" इत्यष्टादश तयोस्संवादात्मिका सूक्तिः । पुरूरवसो वाक्यानि सूचितानि ॥ ६४ ॥ आहेति ॥ आह चोर्वशीत्यनेन चोर्वश्याः प्रतिवचनानि । "पुरूरवा मा कृधा मा प्रवृत्तो मा त्वा वृकासो अशिवा स उक्षन् । अश्नीयुर्न वै स्तृणानि सख्यानि संति सालावृकाणां हृदयान्येतानि" इत्यादीनि सूचितानि ॥ ६५ ॥ ६६ ॥ अंतर्वत्नीति ॥ अंतर्वत्नी गर्भिण्यहमिदानीं मत्संभोगासंभवादब्दांते त्वया गंतव्यमित्याद्युक्तस्तेन साम्ना प्रहृष्टस्स्वपुरं जगाम ॥ ६७ ॥ ६८ ॥ अयमिति ॥ पुरुषोत्कृष्टो नरश्रेष्ठः ॥ ६९ ॥ ७० ॥ साध्विति ॥ सहास्या सहावस्थितिरस्माकं भवेदिति प्रार्थना ॥ ७१ ॥ ७२ ॥ कुमारमिति ॥ आयुषमायुर्नामानम् ॥ ७३ ॥ दत्त्वेति ॥ उषित्वा वासं कृत्वा पंच पुत्रोत्पत्तय इति तासां चतसृणां सहितानां सखीनां स्वभूतित्वात्पंचभी रूपैः पंचानां पुत्राणाम् उत्पत्तये गर्भमवापेति गम्यते । अस्माकमप्यनेन सहास्या भवेदिति प्रार्थनालिंगात् ॥ ७४ ॥ ७५ ॥ ७६ ॥ विजितेति ॥ अन्यत्प्राप्तव्यं नास्तीत्यत्र हेतुः विजितसकलारातिरित्यादि । उर्वशीसालोक्यमग्निसाध्यकर्मैकफलमित्यग्निस्थालीं ददुः ॥७७॥ ऊचुरिति ॥ गार्हपत्याहवनीयदक्षिणाग्निरूपेण त्रिधा कृत्वा ॥ ७८ ॥ 'शमीगर्भादग्निं मंथति' इत्यादिविधिमवतारयन्नाह–अंतरण्यामित्यादिना ॥ ७९ ॥ वह्निस्थालीति ॥ वह्निस्थाली मयैषाभिलषिता नोर्वशीति ॥ ८० ॥

अथैनामटव्यामेवाग्निस्थालीं तत्याज स्वपुरं च जगाम ॥ ८१ ॥ व्यतीतेऽर्द्धरात्रे विनिद्रश्चाचिंतयत् ॥ ८२ ॥ ममोर्वशीसालोक्यप्राप्त्यर्थम ग्निस्थाली गंधर्वैर्दत्ता सा च मयाटव्यां परित्यक्ता ॥ ८३ ॥ तदहं तत्र तदाहरणाय यास्यामीत्युत्थाय तत्राप्युपगतो नाग्निस्थालीमपश्यत् ॥ ॥ ८४ ॥ शमीगर्भं चाश्वत्थमग्निस्थालीस्थाने दृष्ट्वाऽचिंतयत् ॥ ८५ ॥ मयात्राग्निस्थाली निक्षिता सा चाश्वत्थश्शमीगर्भोऽभूत् ॥ ८६ ॥ तदेनमेवाहमग्निरूपमादाय स्वपुरमभिगम्यारणीं कृत्वा तदुत्पन्नाग्नेरुपास्तिं करिष्यामीति ॥ ८७ ॥ एवमेव स्वपुरमभिगम्यारणिं चकार ॥ ॥ ८८ ॥ तत्प्रमाणं चांगुलैः कुर्वन् गायत्रीमपठत् ॥ ८९ ॥ पठतश्चाक्षरसंख्यान्येवांगुलान्यरण्यभवत् ॥ ९० ॥ तत्राग्निं निर्मथ्याग्नित्रयमा म्नायानुसारी भूत्वा जुहाव ॥ ९१ ॥ उर्वशीसालोक्यं फलमभिसंधितवान् ॥ ९२ ॥ तेनैव चाग्निविधिना बहुविधान् यज्ञानिष्ट्वा गांधर्वलोकान वाप्योर्वश्या सहावियोगमवाप ॥ ९३ ॥ एकोऽग्निरादावभवत् एकेन त्वत्र मन्वंतरे त्रेधा प्रवर्तिताः ॥ ९४ ॥ ॥ इति श्रीविष्णुमहापुराणे चतुर्थांशे षष्ठोऽध्यायः ॥ ६ ॥ ॥ श्रीपराशर उवाच ॥ तस्याप्यायुर्धीमानमावसुर्विश्वावसुः श्रुतायुश्शतायुरयुतायुरितिसंज्ञाः षट् पुत्रा अभवन् ॥ १ ॥ तथामावसोर्भीमनामा पुत्रोऽभवत् ॥ २ ॥ भीमस्य कांचनः कांचनात्सुहोत्रः तस्यापि जह्नुः ॥ ३ ॥ योऽसौ यज्ञवाटमखि लं गंगांभसा प्लावितमवलोक्य क्रोधसंरक्तलोचनो भगवंतं यज्ञपुरुषमात्मनि परमेण समाधिना समारोप्याखिलमेव गंगामपिबत् ॥ ४ ॥

॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ पठत इति ॥ गायत्रीं पठतः अक्षरसंख्यानि तदक्षरसंख्यान्यंगुलानि अरणिर भवत् । 'चतुर्विंशत्यंगुलारणिः कार्या' इति विधिः ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये चतुर्थांशे षष्ठोऽध्यायः ॥ ६ ॥ ॥ १ ॥ तथेति ॥ अल्पत्वात्प्रथममावसोर्वंशोक्तिः, एवं नहुषस्याप्यनंतराध्याये ॥ २ ॥ ३ ॥ ४ ॥

॥ अथेति ॥ यद्यपि गंधर्वैरियमुर्वशीति न प्रलोभितः किं त्वग्निं त्रिधा कृत्वा यजस्वेत्येवोक्तं तथापि संमोहवशादुर्वशीत्येव तामग्निस्थालीमानयन्नेयमुर्वशीति बुद्ध्या तत्याजेति ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ ॥८६ ॥ ८७॥८८॥८९ ॥ पठत इति ॥ गायत्रीं पठतस्तत्सामर्थ्यात्तदक्षरसंख्यांगुलिप्रमाणैर्वारणिर्जाता तस्माच्चतुर्विंशत्यंगुला कार्येत्युक्तं भवति ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ एक इति ॥ त्रेधाग्नित्रयम् ॥ ९४ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां चतुर्थांशे षष्ठोऽध्यायः ॥ ६ ॥ तस्येति ॥ तस्यापि पुरूरवसोपि ॥ १ ॥ अतिविततत्वादायुर्वंशं पश्चाद्वक्ष्यति, एवं नहुषादिष्वपि द्रष्टव्यम् । अल्पत्वादमाव सोर्वंशं तावदाह–तथेत्यादिना यावदध्यायपरिसमाप्ति ॥ २ ॥ ३ ॥ ४ ॥

अथैनं देवर्षयः प्रसादयामासुः ॥ ५ ॥ दुहितृत्वे चास्य गंगामनयन् ॥ ६ ॥ जह्नोश्च सुमंतुर्नाम पुत्रोऽभवत् ॥ ७ ॥ तस्याप्यजकस्ततो बलाकाश्वस्तस्मात्कुशस्तस्यापि कुशांबकुशनाभाधूर्त्तरजसो वसुश्चेति चत्वारः पुत्रा बभूवुः ॥ ८ ॥ तेषां कुशांबः शक्रतुल्यो मे पुत्रो भवेदिति तपश्चकार ॥ ९ ॥ तं चोग्रतपसमवलोक्य मा भवत्वन्योऽस्मत्तुल्यो वीर्य इत्यात्मनैवास्येंद्रः पुत्रत्वमगच्छत् ॥ १० ॥ स गाधिर्नाम पुत्रः कौशिकोऽभवत् ॥ ११ ॥ गाधिश्च सत्यवतीं कन्यामजनयत् ॥ १२ ॥ तां च भार्गवः ऋचीको वव्रे ॥ १३ ॥ गाधिरप्यतिरोषणायातिवृद्धाय ब्राह्मणाय दातुमनिच्छन्नेकतश्श्यामकर्णानामिंदुवर्चसामनिलरंहसामश्वानां सहस्रं कन्याशुल्कमयाचत ॥ १४ ॥ तेनाप्यृषिणा वरुणसकाशादुपलभ्याश्वतीर्थोत्पन्नं तादृशमश्वसहस्रं दत्तम् ॥ १५ ॥ ततस्तामृचीकः कन्यामुपयेमे ॥ १६ ॥ ऋचीकश्च तस्याश्चरुमपत्यार्थं चकार ॥ ॥ १७ ॥ तत्प्रसादितश्च तन्मात्रे क्षत्रवरपुत्रोत्पत्तये चरुमपरं साधयामास ॥ १८ ॥ एष चरुर्भवत्या अयमपरश्चरुस्त्वन्मात्रा सम्यगुपयोज्य इत्युक्त्वा वनं जगाम ॥ १९ ॥ उपयोगकाले च तां माता सत्यवतीमाह ॥ २० ॥ पुत्रि सर्व एवात्मपुत्रमतिगुणमभिलषति नात्मजायाभ्रातृगुणेष्वतीवादृतो भवतीति ॥ २१ ॥ अतोर्हसि ममात्मीयं चरुं दातुं मदीयं चरुमात्मनोपयोक्तुम् ॥ २२ ॥ मत्पुत्रेण हि सकलभूमंडलपरिपालनं कार्यं कियद्वा ब्राह्मणस्य बलवीर्यसंपदेत्युक्ता सा स्वचरुं मात्रे दत्तवती ॥ २३ ॥ अथ वनादागत्य सत्यवतीमृषिरपश्यत् ॥ २४ ॥

॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ पुत्रीति ॥ आत्मजाया आत्मनो भार्या ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

अथेति ॥ जह्नुं देवा ऋषयश्च प्रसादयामासुः । ततस्तां मुमोचेति शेषः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ तं चेति ॥ आत्मना स्वयमेव इंद्रः पुत्रत्वमगमत् ॥ १० ॥ तदेवाह–स गाधिरिति ॥ ११ ॥ १२ ॥ ॥ १३ ॥ १४ ॥ तेनेति ॥ तेनापि रुचिकेनोपलभ्य प्राप्य ॥ १५ ॥ १६ ॥ १७ ॥ तदिति ॥ तया सत्यवत्या प्रसादितश्च तन्मात्रे गाधिभार्यायै ॥ १८ ॥ एष इति ॥ उपयोज्यः भक्ष्य इत्युक्त्वा कुशाद्यर्थं वनं जगाम ॥ १९ ॥ २० ॥ पुत्रीति ॥ आत्मनो जायाया भ्रातुर्गुणेषु जनस्यातीवादरः ॥ २१ ॥ २२ ॥ मत्पुत्रेणेति ॥ कियदिति किं प्रयोजनमित्युक्ता सती स्वचरुं मात्रे दत्तवती । मातुश्चरुं स्वयं भक्षितवती ॥ २३ ॥ २४ ॥

आह चैनामतिपापे किमिदमकार्यं भवत्या कृतम् अतिरौद्रं ते वपुर्लक्ष्यते ॥ २५ ॥ नूनं त्वया त्वन्मातृसात्कृतश्चरुरुपयुक्तो न युक्तमेतत् ॥ २६ ॥ मया हि तत्र चरौ सकलैश्वर्यवीर्यशौर्यबलसंपदारोपिता त्वदीयचरावप्यखिलशांतिज्ञानतितिक्षादिब्राह्मणगुणसंपत् ॥ २७ ॥ तच्च विपरीतं कुर्वंत्यास्तवातिरौद्रास्त्रधारणपालननिष्ठः क्षत्रियाचारः पुत्रो भविष्यति तस्याश्चोपशमरुचिर्ब्राह्मणाचार इत्याकर्ण्यैव सा तस्य पादौ जग्राह ॥ २८ ॥ प्रणिपत्य चैनमाह ॥ २९ ॥ भगवन्मयैतदज्ञानादनुष्ठितं प्रसादं मे कुरु मैवंविधः पुत्रो भवतु काममेवंविधः पौत्रो भवत्वित्युक्ते मुनिरप्याह ॥ ३० ॥ एवमस्त्विति ॥ ३१ ॥ अनंतरं च सा जमदग्निमजीजनत् ॥ ३२ ॥ तन्माता च विश्वामित्रं जनयामास ॥ ३३ ॥ सत्यवत्यपि कौशिकी नाम नद्यभवत् ॥ ३४ ॥ जमदग्निरिक्ष्वाकुवंशोद्भवस्य रेणोस्तनयां रेणुकामुपयेमे ॥ ३५ ॥ तस्यां चाशेषक्षत्रहंतारं परशुरामसंज्ञं भगवतस्सकललोकगुरोर्नारायणस्यांशं जमदग्निरजीजनत् ॥ ३६ ॥ विश्वामित्रपुत्रस्तु भार्गव एव शुनश्शेपो देवैर्दत्तः ततश्च देवरातनामाऽभवत् ॥ ३७ ॥ ततश्चान्ये मधुश्छंदोधनंजयकृतदेवाष्टककच्छपहरिताख्या विश्वामित्रपुत्रा बभूवुः ॥ ॥ ३८ ॥ तेषां च बहूनि कौशिकगोत्राणि ऋष्यंतरेषु विवाह्यान्यभवन् ॥ ३९ ॥ इति श्रीविष्णुमहापुराणे चतुर्थांशे सप्तमोऽध्यायः ॥ ७ ॥

॥२५॥ नूनमिति ॥ मातृसात्कृतः मातुस्संबंधी ॥ २६ ॥ २७ ॥ तच्चेति ॥ अस्त्रधारणम् अस्त्रविद्यांतगमनम् ॥ २८ ॥ २९ ॥ भगवन्निति ॥ काममिति इच्छानुमतौ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ विश्वामित्रेति ॥ भार्गव एवेति जमदग्निसोदरत्वात् भार्गवः शुनश्शेपः । यथाह—"और्वस्य ऋचिकस्यर्षेः सत्यवत्यां महायशाः । जमदग्निः सुतो विद्वाञ्जज्ञे वेदविदां वरः ॥ मध्यमश्च शुनश्शेपः" इत्यादि अयं च विश्वामित्रस्य स्वस्रीयः पुत्रवद्देवैर्दत्तत्वाद्देवरातः ॥ ॥ ३७ ॥ ३८ ॥ तेषामिति ॥ ऋष्यंतरेष्विति ॥ ऋष्यंतरेषु विवाह्याः समानप्रवरेष्वविवाह्याः इदं सर्वगोत्राणां प्रायेण समानम् । "एक एव ऋषिर्यावत्प्रवरेष्वनुवर्त्तते । तावत्समानगोत्रत्वमन्यत्र त्वंगिरोगणात्" इति सूत्रकारोक्तेः ॥३९॥ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये चतुर्थांशे सप्तमोऽध्यायः ॥ ७ ॥

॥ २५ ॥ नूनमिति ॥ त्वन्मातृसात्कृतः त्वन्मातुस्संबंधी ॥ २६ ॥ २७ ॥ तच्चेति ॥ अस्त्रधारणम् अस्त्रविद्यायाः पारगमनं तन्निष्ठः ॥ २८ ॥ २९ ॥ भगवन्निति ॥ काममित्यनेनेच्छानुमतिः ॥ ३० ॥ ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ विश्वामित्रेति ॥ भार्गवश्शुनश्शेपो देवैर्धर्मतो दत्त इति कौशिकगोत्रस्य देवरातप्रवरत्वमुक्तम् ॥ ३७ ॥ ततश्चेति ॥ मधुश्छंदःप्रभृतयस्तु विश्वामित्रस्यौरसाः पुत्राः ॥ ३८ ॥ तेषामिति ॥ प्रवरभेदाद्बहूनि कौशिकगोत्राणि ऋष्यंतरेषु प्रवरांतरेषु विवाह्यानि । एवं चैतत्प्रायेण गोत्रांतरेष्वपि तुल्यम् "एक एव ऋषिर्यत्र प्रवरेष्वनुवर्तते । तावत्समानगोत्रत्वमन्यत्र त्वंगिरोगणात् ॥" इति सूत्रकारोक्तेः ॥ ३९ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां चतुर्थांशे सप्तमोऽध्यायः ॥ ७ ॥ ॥

॥ श्रीपराशर उवाच ॥ पुरूरवसो ज्येष्ठः पुत्रो यस्त्वायुर्नामा स राहोर्दुहितरमुपयेमे ॥ १ ॥ तस्यां च पंच पुत्रानुत्पादयामास ॥ २ ॥ नहुषक्षत्रवृद्धरंभरजिसंज्ञास्तथैवानेनाः पंचमः पुत्रोऽभूत् ॥ ३ ॥ क्षत्रवृद्धात्सुहोत्रः पुत्रोऽभवत् ॥ ४ ॥ काश्यपकाशगृत्समदास्त्रयस्तस्य पुत्रा बभूवुः ॥ ५ ॥ गृत्समदस्य शौनकश्चातुर्वर्ण्यप्रवर्त्तयिताऽभूत् ॥ ६ ॥ काश्यस्य काशेयः काशीराजः तस्माद्राष्ट्रः राष्ट्रस्य दीर्घतपाः पुत्रोऽभवत् ॥ ७ ॥ धन्वंतरिस्तु दीर्घतपसः पुत्रोऽभवत् ॥ ८ ॥ स हि संसिद्धकार्यकरणस्सकलसंभूतिष्वशेषज्ञानविदा भगवता नारायणेन चातीत संभूतौ तस्मै वरो दत्तः ॥ ९ ॥ काशीराजगोत्रेऽवतीर्य त्वमष्टधा सम्यगायुर्वेदं करिष्यसि यज्ञभागभुग्भविष्यसीति ॥ १० ॥ तस्य च धन्वंतरेः पुत्रः केतुमान् केतुमतो भीमरथः तस्यापि दिवोदासः तस्यापि प्रतर्दनः ॥ ११ ॥ स च भद्रश्रेण्यवंशविनाशनादशेषशत्रवोनेनजिता इति शत्रुजिदभवत् ॥ १२ ॥ तेन च प्रीतिमतात्मपुत्रो वत्सवत्सेत्यभिहितो वत्सोऽभवत् ॥ १३ ॥ सत्यपरतया ऋतध्वजसंज्ञामवाप ॥ १४ ॥ ततश्च कुवलयनामानमश्वं लेभे ततः कुवलयाश्व इत्यस्यां पृथिव्यां प्रथितः ॥ १५ ॥ तस्य च वत्सस्य पुत्रोऽलर्कनामाभवत् यस्यायमद्यापि श्लोको गीयते ॥ १६ ॥ षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ॥ अलर्कादपरो नान्यो बुभुजे मेदिनीं युवा ॥ १७ ॥ तस्याप्यलर्कस्य सन्नतिनामाऽभवदात्मजः ॥ १८ ॥

॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ गृत्समदस्येति ॥ प्रवर्त्तयिता जनकः ॥ ६ ॥ ७ ॥ ८ ॥ सहीति ॥ संसिद्धिकार्यकरणः वशीकृतप्रकृतिः अजरदेहेंद्रियो वा अतीतसंभूतौ क्षीरोदादुत्पत्तौ ॥ ९ ॥ काशीराजेति ॥ अष्टधा अष्टांगं यथाह बाहलः "कायबालग्रहोर्द्ध्वांगशल्यदंष्ट्राजराविषान् । अष्टावंगानि तस्याहुश्चिकित्सा येषु संस्थिता" इति ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ गृत्समदस्येति ॥ चातुर्वर्ण्यप्रवर्तयिता चतुर्वर्णोत्पादकः ॥ ६ ॥ ७ ॥ ८ ॥ सहीति ॥ सांसिद्धकार्यकरणः जरादिरहितेंद्रियः संयतदेहेंद्रिय इति वा । अतीतसंभूतौ क्षीरोदादुत्पत्तौ वरो दत्तः ॥ ९ ॥ काशीराजेति ॥ अष्टभागं यथाह बाहलः "कायबालग्रहोर्ध्वांगशल्यदंष्ट्राजराविषान् । अष्टावंगानि तस्याहुश्चिकित्सा येषु सांस्थिता ॥" इति ॥ १० ॥ ११ ॥ प्रतर्दनस्यैव शत्रुजिद्वत्स इत्यादिकाश्चतस्रस्संज्ञा निर्वक्ति स चेत्यादिना प्रथित इत्यंतेन ॥ १२ ॥ तेन चेति ॥ दिवोदासेन प्रेमतोऽसौ वत्सवत्सेत्युपलालनेनाभिहितस्ततो वत्ससंज्ञोऽभूत् ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

सन्नतेः सुनीथः तस्यापि सुकेतुः तस्माच्च धर्मकेतुर्जज्ञे ॥ १९ ॥ ततश्च सत्यकेतुः तस्माद्विभुः तत्तनयस्सुविभुः ततश्च सुकुमारस्तस्यापि दृष्टकेतुः ततश्च वीतिहोत्रः तस्माद्भार्गः भार्गस्य भार्गभूमिः ततश्चातुर्वर्ण्यप्रवृत्तिरित्येते काश्यपभूभृतः कथिताः ॥ २० ॥ रजेस्तु संततिः श्रूयताम् ॥ २१ ॥ इति श्रीविष्णुमहापुराणे चतुर्थांशेऽष्टमोऽध्यायः ॥ ८ ॥ ॥ श्रीपराशर उवाच ॥ ॥ रजेस्तु पंच पुत्रशतान्यतुलबलपराक्रमसाराण्यासन् ॥ १ ॥ देवासुरसंग्रामारंभे च परस्परवधेप्सवो देवाश्चासुराश्च ब्रह्माणमुपेत्य पप्रच्छुः ॥ २ ॥ भगवन्नस्माकमत्र विरोधे कतमः पक्षो जेता भविष्यतीति ॥ ३ ॥ अथाह भगवान् ॥ ४ ॥ येषामर्थे रजिरात्तायुधो योत्स्यति तत्पक्षो जेतेति ॥ ५ ॥ अथ दैत्यैरुपेत्य रजिरात्मसाहाय्यदानायाभ्यर्थितः प्राह ॥ ६ ॥ योत्स्येऽहं भवतामर्थे यद्यहममरजयाद्भवतामिंद्रो भविष्यामीत्याकर्ण्यैतत्तैरभिहितम् ॥ ७ ॥ न वयमन्यथा वदिष्यामोऽन्यथा करिष्यामोऽस्माकमिंद्रः प्रह्लादस्तदर्थमेवायमुद्यम इत्युक्त्वा गतेष्वसुरेषु देवैरप्यसाववनिपतिरेवमेवोक्तस्तेनापि च तथैवोक्ते देवैरिंद्रस्त्वं भविष्यसीति समन्विच्छितम् ॥ ८ ॥ रजिनापि देवसैन्यसहायेनानेकैर्महास्त्रैस्तदशेषमहासुरबलं निषूदितम् ॥ ९ ॥ अथ जितारिपक्षश्च देवेंद्रो रजिचरणयुगलमात्मनः शिरसा निपीड्याह ॥ १० ॥ भयत्राणादन्नदानाद्भवानस्मत्पिताऽशेषलोकानामुत्तमोत्तमो भवान् यस्याहं पुत्रस्त्रिलोकेंद्रः ॥ ११ ॥ स चापि राजा प्रहस्याह ॥ १२ ॥ एवमस्त्वेवमस्त्वनतिक्रमणीया हि वैरिपक्षादप्यनेकविधचाटुवाक्यगर्भा प्रणतिरित्युक्त्वा स्वपुरं जगाम ॥ १३ ॥

१९ ॥ २० ॥ २१ ॥ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये चतुर्थांशेष्टमोऽध्यायः ॥ ८ ॥ ॥ रजेरिति ॥ सारः स्थैर्यम् ॥ १ ॥ २ ॥ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ एवमिति ॥ प्रणतिरनतिक्रमणीया प्रणताद्राज्यं न ग्राह्यमिति राजधर्मः ॥ १३ ॥

॥ १९ ॥ २० ॥ २१ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां चतुर्थांशे अष्टमोध्यायः ॥ ८ ॥ ॥ आयुःपुत्रस्य क्षत्रवृद्धस्य वंशमुक्त्वा तद्भ्रातुः रजेर्वंशमाह—रजेरिति ॥ १ ॥ तेषां च वंशो नाभूदिंद्रेण हतत्वादिति कथा पूर्वमाह—देवासुरेत्यादिना नाप्नोतीत्यंतेन ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ नेति ॥ न वयं कार्यसिद्ध्यर्थमन्यथा मिथ्या वदिष्यामः । सिद्धे च कार्ये पूर्वप्रतिज्ञातमन्यथा न करिष्यामः । अतः प्रह्लाद एवास्माकमिंद्रः तस्यैंद्रत्वसाधनार्थ एवास्मदुद्यम इति निष्कपटमुक्त्वा गतेषु ॥ ८ ॥ ९ ॥ १० ॥ भयत्राणादन्नदानादिति ॥ "जनकश्चोपनेता च यश्च विद्यां प्रयच्छति । अन्नदाता भयत्राता पंचैते पितरस्स्मृताः ॥" इति वचनात् ॥ ११ ॥ १२ ॥ एवमिति ॥ अनेकविधं चाटु प्रियं वाक्यं तद्गर्भा तत्सहिता प्रणतिरात्मनिवेदनरूपा अनतिक्रमणीया । वैरिणापि

शतक्रतुरपींद्रत्वं चकार ॥ १४ ॥ स्वर्याते तु रजौ नारदर्षिचोदिता रजिपुत्राश्शतक्रतुमात्मपितृपुत्रं समाचाराद्राज्यं याचितवन्तः ॥ १५ अप्रदानेन च विजित्येन्द्रमतिबलिनः स्वयमिंद्रत्वं चक्रुः ॥ १६ ॥ ततश्च बहुतिथे काले ह्यतीते बृहस्पतिमेकान्ते दृष्ट्वा अपहृतत्रैलोक्यय ज्ञभागः शतक्रतुरुवाच ॥ १७ ॥ बदरीफलमात्रमप्यर्हसि ममाप्यायनाय पुरोडाशखंडं दातुमित्युक्तो बृहस्पतिरुवाच ॥ १८ ॥ यद्येवं त्वयाहं पूर्वमेव चोदितस्स्यां तन्मया त्वदर्थं किमकर्त्तव्यमित्यल्पैरेवाहोभिस्त्वां निजं पदं प्रापयिष्यामीत्यभिधाय तेषामनुदिनमाभिचारकं बुद्धिमोहाय शक्रस्य तेजोभिवृद्धये जुहाव ॥ १९ ॥ ते चापि तेन बुद्धिमोहेनाभिभूयमाना ब्रह्मद्विषो धर्मत्या गिनो वेदवादपराङ्मुखा बभूवुः ॥ २० ॥ ततस्तानपेतधर्माचारानिंद्रो जघान ॥ २१ ॥ पुरोहिताप्यायिततेजाश्च शक्रो दिवमाक्रमत् ॥ २२ ॥ एतदिंद्रस्य स्वप दच्यवनादारोहणं श्रुत्वा पुरुषः स्वपदभ्रंशं दौरात्म्यं च नाप्नोति ॥ २३ ॥ रंभस्त्वनपत्योऽभवत् ॥ २४ ॥ क्षत्रवृद्धसुतः प्रतिक्षत्रोऽभवत् ॥ ॥ २५ ॥ तत्पुत्रः संजयः तस्यापि जयः तस्यापि विजयः तस्माच्च जज्ञे कृतः ॥ २६ ॥ तस्य च हर्यधनः हर्यधनसुतस्सहदेवः तस्माददी नस्तस्य जयत्सेनः ततश्च संकृतिः तत्पुत्रः क्षत्रधर्मा इत्येते क्षत्रवृद्धस्य वंश्याः ॥ २७ ॥ ततो नहुषवंशं प्रवक्ष्यामि ॥ २८ ॥ ॥

इति श्रीविष्णुमहापुराणे चतुर्थांशे नवमोऽध्यायः ॥ ९ ॥

॥ १४ ॥ स्वर्यात इति ॥ आचारात् पितृदायादन्यायात् ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ पुरोधसापि यजमानचोदितेनैव काम्यं कर्म कर्त्तव्यं न त्वन्यथा तदिच्छाया अज्ञातत्वादित्यभिप्रेत्याह—यद्येवमिति ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ पूर्वं क्षत्रवृद्धात्सुहोत्रो गृत्समदाद्द्विजातिवंशकृदुक्तः इह तु प्रतिक्षत्रः क्षत्रैकवंशकृदुच्यते क्षत्रवृद्धसुतः प्रतिक्षत्रोऽभवदित्यादिना ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये चतुर्थांशे नवमोऽध्यायः ॥ ९ ॥ ॥

प्रणतेन यदुक्तं तदनुमंतव्यमेव किं पुनस्त्वादृशेनेत्यर्थः ॥ १३ ॥ १४ ॥ स्वर्यात इति ॥ स्वर्याते मृते आत्मपितृपुत्रं स्वपितुः पुत्रतां प्राप्तं समाचारात्पितृस्वं पुत्राणां भवतीति न्यायात् ॥ १५ ॥ १६ ॥ ततश्चेति ॥ बहुतिथे दीर्घकाले ॥ १७ ॥ १८ ॥ यदीति ॥ यद्येवमित्यस्यायं भावः । स्वबुद्ध्यैव त्वं रजे पुत्रतामगाः तदैव चेदहमेतत् ज्ञापितस्स्यां तर्हि मया त्वदप्यन्यथा कार्यमेवेति ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ ॥ २४ ॥ पूर्वमायुषः पुत्रस्य क्षत्रवृद्धस्य सुहोतृवंश उक्तः । इदानीं तस्यैव वंशांतरमाह—क्षत्रवृद्धसुतः प्रतिक्षत्र इत्यादिना यावत्समाप्ति ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्य श्रीविष्णुमहापुराणव्याख्यायां चतुर्थांशे नवमोऽध्यायः ॥ ९ ॥ ॥

॥ श्रीपराशर उवाच ॥ यतिययातिसंयात्यायातिवियातिकृतिसंज्ञा नहुषस्य षट् पुत्रा महाबलपराक्रमा बभूवुः ॥ १ ॥ यतिस्तु राज्यं नैच्छत ॥ २ ॥ ययातिस्तु भूभृदभवत् ॥ ३ ॥ उशनसश्च दुहितरं देवयानीं वार्षपर्वणीं च शर्मिष्ठामुपयेमे ॥ ४ ॥ अत्रानुवंशश्लोको भवति ॥ ५ ॥ यदुं च दुर्वसुं चैव देवयानी व्यजायत ॥ द्रुह्युं चानुं च पूरुं च शर्मिष्ठा वार्षपर्वणी ॥ ६ ॥ काव्यशापाच्चाकालेनैव ययातिर्जरामवाप ॥ ७ ॥ प्रसन्नशुक्रवचनाच्च स्वजरां संक्रामयितुं ज्येष्ठं पुत्रं यदुमुवाच ॥ ८ ॥ वत्स त्वन्मातामहशापादियमकालेनैव जरा ममोपस्थिता तामहं तस्यैवानुग्रहाद्भवतस्संचारयामि ॥ ९ ॥ एकं वर्षसहस्रमतृप्तोऽस्मि विषयेषु त्वद्वयसा विषयानहं भोक्तुमिच्छामि ॥ १० ॥ नात्र भवता प्रत्याख्यानं कर्त्तव्यमित्युक्तस्स यदुर्नैच्छत्तां जरामादातुम् ॥ ११ ॥ तं च पिता शशाप त्वत्प्रसूतिर्न राज्यार्हा भविष्यतीति ॥ १२ ॥ अनंतरं च दुर्वसुं द्रुह्यमनुं च पृथिवीपतिर्जराग्रहणार्थं स्वयौवनप्रदानाय चाभ्यर्थयामास ॥ १३ ॥ तैरप्येकैकेन प्रत्याख्यातस्तांश्छशाप ॥ १४ ॥ अथ शर्मिष्ठातनयमशेषकनीयांसं पूरुं तथैवाह ॥ १५ ॥ स चातिप्रवणमतिः सबहुमानं पितरं प्रणम्य महाप्रसादोयमस्माकमित्युदारमभिधाय जरां जग्राह ॥ १६ ॥ स्वकीयं च यौवनं स्वपित्रे ददौ ॥ १७ ॥ सोऽपि पौरवं यौवनमासाद्य धर्माविरोधेन यथाकामं यथाकालोपपन्नं यथोत्साहं विषयांश्चचार ॥ १८ ॥ सम्यक् च प्रजापालनमकरोत् ॥ १९ ॥ विश्वाच्या देवयान्या च सहोपभोगं भुक्त्वा कामानामंतं प्राप्स्यामीत्यनुदिनं तन्मनस्को बभूव ॥ २० ॥ अनुदिनं चोपभोगतः कामानतिरम्यान्मेने ॥ २१ ॥ ततश्चैनमगायत ॥ २२ ॥

॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ यदुमिति ॥ व्यजायत असूत ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ विश्वाच्येति ॥ विश्वाची अप्सराः ॥ २० ॥ २१ ॥ २२ ॥

॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ यदुमिति ॥ व्यजायत प्रासूत ॥ ६ ॥ देवयान्यास्स्वपुत्र्या दासीत्वेन समर्पितायां वृषपर्वणः कन्यायां शर्मिष्ठायां ययातेरपत्योत्पादनं देवयान्या कथितं श्रुत्वा कुपितस्य काव्यस्य शापेनाकाले जरां ययातिरवाप । पुनश्च प्रसादितेन शुक्रेणोक्तं यत्र संक्रमयिष्यसि तत्र स्थास्यतीयं जरा । त्वदीयं च तारुण्यं त्वयि स्थास्यतीति तदिदमाह—काव्यशापाच्च कालेनेत्यादिना—अतिरम्यान्मेन इत्यंतेन ॥ ७ ॥ ८ ॥ वत्सेति ॥ भवंतं संचारयामि ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ स इति ॥ चचार बुभुजे ॥ १८ ॥ १९ ॥ विश्वाच्येति ॥ विश्वाच्या अप्सरसा ॥ २० ॥ २१ ॥ अथ निर्वेदात्तन्निवृत्तिप्रकारमाह—ततश्चैनमगायतेत्यादिना यावत्समाप्ति ॥ २२ ॥

१—भागवतादौ त्वायतिर्वियतिरिति पाठः ।

॥ श्लो० ॥ न जातु कामः कामानामुपभोगेन शाम्यति ॥ हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ॥ २३ ॥ यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ॥ एकस्यापि न पर्याप्तं तस्मात्तृष्णां परित्यजेत् ॥ २४ ॥ यदा न कुरुते भावं सर्वभूतेषु पापकम् ॥ समदृष्टेस्तदा पुंसः सर्वास्सुखमया दिशः ॥ २५ ॥ या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ॥ तां तृष्णां संत्यजेत्प्राज्ञस्सुखेनैवाभिपूर्यते ॥ २६ ॥ जीर्यन्ति जीर्यतः केशा दंता जीर्यंति जीर्यतः ॥ धनाशा जीविताशा च जीर्यतोऽपि न जीर्यतः ॥ २७ ॥ पूर्णं वर्षसहस्रं मे विषयासक्तचेतसः ॥ तथाप्यनुदिनं तृष्णा मम तेषूपजायते ॥ २८ ॥ तस्मादेतामहं त्यक्त्वा ब्रह्मण्याधाय मानसम् ॥ निर्द्वंद्वो निर्ममो भूत्वा चरिष्यामि मृगैस्सह ॥ ॥ २९ ॥ श्रीपराशर उवाच ॥ पूरोस्सकाशादादाय जरां दत्त्वा च यौवनम् ॥ राज्येभिषिच्य पूरुं च प्रययौ तपसे वनम् ॥ ३० ॥ दिशि दक्षिणपूर्वस्यां दुर्वसुं च समादिशत् ॥ प्रतीच्यां च तथा द्रुह्युं दक्षिणायां ततो यदुम् ॥ ३१ ॥ उदीच्यां च तथैवानुं कृत्वा मंडलिनो नृपान् ॥ सर्वपृथ्वीपतिं पूरुं सोभिषिच्य वनं ययौ ॥ ३२ ॥ ॥ इति श्रीविष्णुमहापुराणे चतुर्थांशे दशमोऽध्यायः ॥ १० ॥ ॥ श्रीपराशर उवाच ॥ अतः परं ययातेः प्रथमपुत्रस्य यदोर्वंशमहं कथयामि ॥ १ ॥ यत्राशेषलोकनिवासो मनुष्यसिद्धगंधर्वयक्षराक्षसगुह्यककिंपुरुषाप्सरोरगविहगदैत्यदानवादित्यरुद्रवस्वश्विमरुद्देवर्षिभिर्मुमुक्षुभिर्धर्मार्थकाममोक्षार्थिभिश्च तत्तत्फललाभाय सदाभिष्टुतोऽपरिच्छेद्यमाहात्म्यांशेन भगवाननादिनिधनो विष्णुरवततार ॥ २ ॥ अत्र श्लोकः ॥ ३ ॥ यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यते ॥ यत्रावतीर्णं कृष्णाख्यं परं ब्रह्मनराकृति ॥ ४ ॥ सहस्रजित्क्रोष्टुनलनहुषसंज्ञाश्चत्वारो यदुपुत्रा बभूवुः ॥ ५ ॥ सहस्रजित्पुत्रश्शतजित् ॥ ६ ॥ तस्य हैहयहेहयवेणुहयास्त्रयःपुत्रा बभूवुः ॥ ७ ॥

॥ २३ ॥ २४ ॥ यदेति ॥ पापकं रागद्वेषादि ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये चतुर्थांशे दशमोऽध्यायः ॥ १० ॥ ॥ १ ॥ यदुवंशस्य सर्वोत्कृष्टत्वमाह—यत्रेति ॥ यत्र यदोर्वंशे मुमुक्षुभिः केवलमोक्षार्थिभिः अंशेन लीलागृहीतपरिच्छिन्नमूर्त्तिव्यवहितत्वादंश इति व्यपदेश्येन स्वरूपेण अत एव परं ब्रह्म नराकृति इत्यभिहितम् ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

कृष्णवर्त्मा अग्निः ॥ २३ ॥ २४ ॥ कथं तर्हि विषयसुखपर्याप्तिस्स्यादित्याह--यदेत्यादिद्वाभ्यां--यदेति ॥ पापकं भावं रागद्वेषादिमयम् ॥ २५ ॥ २६ ॥ तृष्णा च स्वयं सुमतिभिस्संत्याज्या न तु स्वयमेव कदाचिदुपरमेदित्याह--जीर्यतीत्यादित्रिभिः ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां चतुर्थांशे दशमोऽध्यायः ॥ १० ॥ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

हैहयपुत्रो धर्मः तस्यापि धर्मनेत्रः ततः कुंतिः कुंतेः सहजित् ॥ ८ ॥ तत्तनयो महिष्मान् योऽसौ माहिष्मतीं पुरीं निर्वापयामास ॥ ९ ॥ तस्माद्भद्रश्रेण्यस्ततो दुर्दमस्तस्माद्धनकः धनकस्य कृतवीर्यकृताग्निकृतधर्मकृतौजसश्चत्वारः पुत्रा बभूवुः ॥ १० ॥ कृतवीर्यादर्जुनस्सप्तद्वीपाधिपतिर्बाहुसहस्रो जज्ञे ॥ ११ ॥ योऽसौ भगवदंशमत्रिकुलप्रसूतं दत्तात्रेयाख्यमाराध्य बाहुसहस्रमधर्मसेवानिवारणं स्वधर्मसेवित्वं रणे पृथिवीजयं धर्मतश्चानुपालनमरातिभ्योऽपराजयमखिलजगत्प्रख्यातपुरुषाच्च मृत्युमित्येतान्वरानभिलषितवाँल्लेभे च ॥ १२ ॥ तेनेयमशेषद्वीपवती पृथिवी सम्यक्परिपालिता ॥ १३ ॥ दशयज्ञसहस्राण्यसावयजत् ॥ १४ ॥ तस्य च श्लोकोऽद्यापि गीयते ॥ १५ ॥ न नूनं कार्त्तवीर्यस्य गतिं यास्यंति पार्थिवाः ॥ यज्ञैर्दानैस्तपोभिर्वा प्रश्रयेण श्रुतेन च ॥ १६ ॥ अनष्टद्रव्यता च तस्य राज्येऽभवत् ॥ १७ ॥ एवं च पंचाशीतिवर्षसहस्राण्यव्याहतारोग्यश्रीबलपराक्रमो राज्यमकरोत् ॥ १८ ॥ माहिष्मत्यां दिग्विजयाभ्यागतो नर्मदाजलावगाहनक्रीडातिपानमदाकुलेनायत्नेनैव तेनाशेषदेवदैत्यगंधर्वेशजयोद्भूतमदावलेपोपि रावणः पशुरिव बद्ध्वा स्वनगरैकांते स्थापितः ॥ १९ ॥ यश्च पंचाशीतिवर्षसहस्रोपलक्षणकालावसाने भगवन्नारायणांशेन परशुरामेणोपसंहृतः ॥ २० ॥ तस्य च पुत्रशतप्रधानाः पंचपुत्रा बभूवुः शूरशूरसेनवृषसेनमधुजयध्वजसंज्ञाः ॥ २१ ॥ जयध्वजात्तालजंघः पुत्रोभवत् ॥ २२ ॥ तालजंघस्य तालजंघाख्यं पुत्रशतमासीत् ॥ २३ ॥ एषां ज्येष्ठो वीतिहोत्रस्तथान्यो भरतः ॥ २४ ॥ भरताद्वृषः ॥ २५ ॥ वृषस्य पुत्रो मधुरभवत् ॥ २६ ॥ तस्यापि वृष्णिप्रमुखं पुत्रशतमासीत् ॥ ॥ २७ ॥

॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ अनष्टेति ॥ अनष्टद्रव्यताऽभवदिति उपलक्षणम् अद्यापि तन्नामोक्त्या नष्टलब्धेः । " अनष्टद्रव्यता चैव तव नामाभिकीर्त्तनात् । भविष्यति " इति श्रीविष्णुधर्मे " न तस्य द्रव्यनाशः स्यान्नष्टं प्रतिलभेत सः " इति श्रीहरिवंशे च ॥ "कार्तवीर्यार्जुनो नाम राजा बाहुसहस्रवान् । तस्य स्मरणतो विद्वान्नष्टद्रव्यं लभेत वै" इति मंत्रशास्त्रे च ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥

॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥

यतो वृष्णिसंज्ञामेतद्गोत्रमवाप ॥ २८ ॥ मधुसंज्ञाहेतुश्च मधुरभवत् ॥ २९ ॥ यादवाश्च यदुनामोपलक्षणादिति ॥ ३० ॥ ॥ इति श्रीविष्णुमहापुराणे चतुर्थांश एकादशोऽध्यायः ॥ ११ ॥ ॥ श्रीपराशर उवाच ॥ क्रोष्टोस्तु यदुपुत्रस्यात्मजो ध्वजिनीवान् ॥ १ ॥ ततश्च स्वातिः ततो रुशंकुः रुशंकोश्चित्ररथः ॥ २ ॥ तत्तनयश्शशिबिंदुः चतुर्दशमहारत्नेशश्चक्रवर्त्यभवत् ॥ ३ ॥ तस्य च शतसहस्रं पत्नीनामभवत् ॥ ४ ॥ दशलक्षसंख्याश्च पुत्राः ॥ ५ ॥ तेषां च पृथुश्रवाः पृथुकर्मा पृथुकीर्तिः पृथुयशाः पृथुजयः पृथुदानः षट्पुत्राः प्रधानाः ॥ ॥ ६ ॥ पृथुश्रवसश्च पुत्रः पृथुतमः ॥ ७ ॥ तस्मादुशना यो वाजिमेधानां शतमाजहार ॥ ८ ॥ तस्य च शितपुर्नाम पुत्रोऽभवत् ॥ ९ ॥ तस्यापि रुक्मकवचस्ततः परावृत् ॥ १० ॥ तस्य परावृतो रुक्मेषुपृथुज्यामघवलितहरितसंज्ञास्तस्य पंचात्मजा बभूवुः ॥ ११ ॥ तस्यायमद्यापि ज्यामघस्य श्लोको गीयते ॥ १२ ॥ भार्यावश्यास्तु ये केचिद्भविष्यंत्यथ वा मृताः ॥ तेषां तु ज्यामघः श्रेष्ठश्शैव्यापतिरभून्नृपः ॥१३॥ अपुत्रा तस्य सा पत्नी शैव्या नाम तथाप्यसौ ॥ अपत्यकामोऽपि भयान्नान्यां भार्यामविंदत ॥ १४ ॥ स त्वेकदा प्रभूतरथतुरगगजसम्मर्दातिदारुणे महाहवे युद्ध्यमानः सकलमेवारिचक्रमजयत् ॥ १५ ॥ तच्चारिचक्रमपास्तपुत्रकलत्रबंधुबलकोशं स्वमधिष्ठानं परित्यज्य दिशः प्रतिविद्रुतम्॥१६॥ तस्मिंश्च विद्रुतेतित्रासलोलायतलोचनयुगलं त्राहित्राहि मां तातांब भ्रातरित्याकुलविलापविधुरं स राजकन्यारत्नमद्राक्षीत्॥१७॥

॥ २८ ॥ २९ ॥ ३० ॥ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये चतुर्थांश एकादशोऽध्यायः ॥११॥ ॥ १ ॥ २॥ तत्तनय इति ॥ चतुर्दशमहारत्नेश इत्यत्र चतुर्दशरत्नानि धर्मसंहितोक्तानि—"चक्रं रथो मणिः खड्गं चर्म रत्नं च पंचमम् । केतुर्निधिश्च सप्तैव प्राणहीनानि चक्षते ॥ भार्या पुरोहितश्चैव सेनानी रथकृच्च यः । पत्त्यश्वकलभाश्चेति प्राणिनः सप्त कीर्त्तिताः ॥ चतुर्दशेतिरत्नानि सर्वेषां चक्रवर्त्तिनाम्" इत्येतानि स्वजातिश्रैष्ठ्याद्रत्नसंज्ञानि ॥ ३ ॥ ४ ॥ ५ ॥ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ तच्चेति ॥ अधिष्ठानं निवासम् ॥ १६ ॥ तस्मिन्निति ॥ विधुरमार्तम् ॥ १७ ॥

॥ २८ ॥ २९ ॥ ३० ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां चतुर्थांश एकादशोऽध्यायः ॥ ११ ॥ ॥ १ ॥ २ ॥ तत्तनय इति ॥ चतुर्दश महांति रत्नानि यस्य सः रत्नानि चात्र स्वजातिश्रेष्ठानि संहितोक्तानि-"चक्रं रथो मणिः खड्गं चर्म रत्नं च पंचमम् । केतुर्निधिश्च सप्तैव प्राणहीनानि चक्षते ॥ भार्या पुरोहितश्चैव सेनानी रथकृच्च यः । पत्त्यश्वाः कलभाश्चैव प्राणिनस्सप्त कीर्तिताः ॥ चतुर्दश हि रत्नानि सर्वेषां चक्रवर्तिनाम्" इति ॥ ३ ॥ तस्येति ॥ शतसहस्रं लक्षम् ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ ज्यामघस्यापुत्रस्य एकभार्यस्य भार्याभयमेव पुत्रप्रदं जातमिति वक्ष्यन्कथामाह—तस्यायमद्यापीत्यादिना यावत्समाप्ति ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ तच्चेति ॥ स्वमधिष्ठानं निवासम् ॥ १६ ॥ तस्मिन्निति ॥ अतित्रासेन लोलमायतलोचनयुगलं यस्य तत् । आकुलविलापं च तद्विधुरम् ॥ १७ ॥

तद्दर्शनाच्च तस्यामनुरागानुगतांतरात्मा स नृपोऽचिंतयत् ॥ १८ ॥ साध्विदं ममापत्यरहितस्य वंध्याभर्तुः सांप्रतं विधिनापत्यकारणं कन्यारत्नमुपपादितम् ॥ १९ ॥ तदेतत्समुद्वहामीति ॥ २० ॥ अथ वैनां स्यंदनमारोप्य स्वमधिष्ठानं नयामि ॥ २१ ॥ तयैव देव्या शैव्ययाऽहमनुज्ञातस्समुद्वहामीति ॥ २२ ॥ अथैनां रथमारोप्य स्वनगरमगच्छत् ॥ २३ ॥ विजयिनं च राजानमशेषपौरभृत्यपरिजनामात्यसमेता शैव्या द्रष्टुमधिष्ठानद्वारमागता ॥ २४ ॥ सा चावलोक्य राज्ञः सव्यपार्श्ववर्त्तिनीं कन्यामीषदुद्भूतामर्षस्फुरदधरपल्लवा राजानमवोचत् ॥ २५ ॥ अतिचपलचित्तात्र स्यंदने केयमारोपितेति ॥ २६ ॥ असावप्यनालोचितोत्तरवचनोतिभयात्तामाह स्नुषा ममेयमिति ॥ २७॥ अथैनं शैव्योवाच ॥ २८ ॥ श्लो० ॥ नाहं प्रसूता पुत्रेण नान्या पत्न्यभवत्तव ॥ स्नुषासंबंधता ह्येषा कतमेन सुतेन ते ॥ २९ ॥ श्रीपराशर उवाच ॥ इत्यात्मेर्ष्याकोपकलुषितवचनमुषितविवेको भयाद्दुरुक्तपरिहारार्थमिदमवनीपतिराह ॥ ३० ॥ यस्ते जनिष्यत्यात्मजस्तस्येयमनागतस्यैव भार्या निरूपितेत्याकर्ण्योद्भूतमृदुहासा तथेत्याह ॥ ३१ ॥ प्रविवेश च राज्ञा सहाधिष्ठानम् ॥३२॥ अनंतरं चातिशुद्धलग्नहोरांशकावयवोक्तकृतपुत्रजन्मलाभगुणाद्वयसः परिणाममुपगतापि शैव्या स्वल्पैरेवाहोभिर्गर्भमवाप ॥ ३३ ॥

॥१८॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ नेति ॥ पुत्रेणेति उपलक्षितेति शेषः ॥ २९ ॥ ३० ॥ य इति ॥ अनागतं पुत्रमुद्दिश्येति शेषः । 'अनागतम्' इति च पाठः ॥३१॥३२॥ अनंतरमिति ॥ अतिशुद्धेति शुभग्रहषड्वर्गशुभयुक्तेक्षितश्च लग्नं राश्युदयकालः तदर्धं होरा राशेरुद्यंशो द्रेष्काणः नवमो भागो नवांशकः अवयवशब्दाद्द्वादशांशस्त्रिंशांशश्च ग्राह्यः । अत्राहुः—"द्रेष्काणहोरानवभागसंज्ञास्त्रिंशांशका द्वादशसंज्ञिताश्च । क्षेत्रं च यद्यस्य स तस्य वर्गो होरेति लग्नं भवनस्य चार्धम्" इति । लग्नाद्यवयववति काले उक्तेन कृतो यः पुत्रजन्मविषयस्यालापस्य गुणः आलापगुणः वाक्यगुणः

॥१८॥१९॥ तदिति ॥ तदेतद्बंधुवियुक्तं समुद्वहामि परिणेष्यामि ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ विजयिनमिति ॥ अधिष्ठानद्वारं पुरद्वारम् ॥ २४ ॥ सेति ॥ ईषदुद्भूतेनामर्षेण स्फुरन्नधरपल्लवो यस्यास्सा ॥२५॥ ॥२६॥२७॥ २८ ॥ २९ ॥ इतीति ॥ आत्मनो राज्ञ ईर्ष्याकोपाभ्यां कलुषितं क्षुभितं च तस्या वचनं तेन मुषितो विवेको यस्य सः । दुरुक्तमसंभावितार्थं वाक्यं तस्य परिहारार्थम् ॥३०॥३१॥३२॥ अनंतरं चेति ॥ अनंतरं शैव्या गर्भमवापेत्यन्वयः । तत्र हेतुः--अतिशुद्धाः शुभा ये लग्नहोरांशकावयवास्तेषूक्तेन अस्तु देवतावाक्येन कृतो यः पुत्रजन्मलाभस्तस्य गुणः साफल्यं तस्मात् अस्तु देवताख्या हि काश्चिद्देवता नित्यं तत्कालोचितशुभाशुभमस्त्वित्येवमनुमोदमानास्तिष्ठंति अतश्चातिशुद्धलग्नादिकाले राज्ञा यदुक्तमस्ति भविष्यत्यात्मज इत्यादि तस्यापि ताभिरस्त्वित्यपत्याभ्यनुज्ञानात् शैव्या गर्भमवापेत्यर्थः । तत्र राशेरुदयो लग्नं राशेरर्धं

कालेन च कुमारमजीजनत् ॥ ३४ ॥ तस्य च विदर्भ इति पिता नाम चक्रे ॥ ३५ ॥ स च तां स्नुषामुपयेमे ॥ ३६ ॥ तस्यां चाऽसौ क्रथकैशिकसंज्ञौ पुत्रावजनयत् ॥ ३७ ॥ पुनश्च तृतीयं रोमपादसंज्ञं पुत्रमजीजनद्यो नारदादवाप्तज्ञानवान्भविष्यतीति ॥ ३८ ॥ रोमपादाद्बभ्रुः बभ्रोर्धृतिः धृतेः कैशिकः कैशिकस्यापि चेदिः पुत्रोऽभवत् यस्य संततौ चैद्या भूपालाः ॥ ३९ ॥ क्रथस्य स्नुषापुत्रस्य कुंतिरभवत् ॥ ४० ॥ कुंतेर्धृष्टिः धृष्टेर्निधृतिः निधृतेर्दशार्हस्ततश्च व्योमः तस्यापि जीमूतः ततश्च विकृतिः ततश्च भीमरथः तस्मान्नवरथः तस्यापि दशरथः ततश्च शकुनिः तत्तनयः करंभिः करंभेर्देवरातोऽभवत् ॥ ४१ ॥ तस्माद्देवक्षत्रः तस्यापि मधुः मधोः कुमारवंशः कुमारवंशादनुः अनोः पुरुमित्रः पृथिवीपतिरभवत् ॥ ४२ ॥ ततश्चांशुस्तस्माच्च सत्वतः ॥ ४३ ॥ सत्वतादेते सात्वताः ॥ ४४ ॥ इत्येतां ज्यामघस्य संततिं सम्यक्छ्रद्धासमन्वितः श्रुत्वा पुमान् मैत्रेय स्वपापैः प्रमुच्यते ॥ ४५ ॥ ॥ इति श्रीविष्णुमहापुराणे चतुर्थांशे द्वादशोऽध्यायः ॥ १२ ॥ ॥ श्रीपराशर उवाच ॥ भजनभजमानदिव्यांधकदेवावृधमहाभोजवृष्णिसंज्ञास्सत्वतस्य पुत्रा बभूवुः ॥ १ ॥ भजमानस्य निमिकृकणवृष्णयस्तथान्ये द्वैमात्राः शतजित्सहस्रजिदयुतजित्संज्ञास्त्रयः ॥ २ ॥ देवावृधस्यापि बभ्रुः पुत्रोऽभवत् ॥ ३ ॥ तयोश्चायं श्लोको गीयते ॥ ४ ॥ यथैव शृणुमो दूरात्संपश्यामस्तथांतिकात् ॥ बभ्रुः श्रेष्ठो मनुष्याणां देवैर्देवावृधस्समः ॥ ५ ॥

तस्मात् । पुत्रजन्मालापगुणादिति च पाठः ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ सत्वतादिति ॥ एते सात्वता वक्ष्यमाणाः ॥ ४४ ॥ ४५ ॥ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये चतुर्थांशे द्वादशोऽध्यायः ॥ १२ ॥ ॥ ॥ १ ॥ भजमानस्येति ॥ तद्द्वैमात्रा निम्यादिसापत्न्याः ॥ २ ॥ ३ ॥ ४ ॥ यथैवेत्यादि ॥ "बभ्रुः श्रेष्ठो मनुष्याणां देवैर्देवावृधः समः" इति दूरे स्थितौ यथा

होरा राशेर्नवमो भागोंशः । अवयवशब्देन राशेस्तु द्वादशांशा गृह्यंते एतेषु हि प्रशस्तं यदुक्तं कृतं वा तत्सफलं भवति । तदुक्तं वराहमिहिरेण ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ क्रथस्येति ॥ स्नुषापुत्रस्य पूर्वाख्याः यास्नुपायास्सत्याः ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ सत्वतादिति ॥ सत्वतादेवैते वक्ष्यमाणास्तद्वंश्यास्सात्वताः ॥ ४४ ॥ ४५ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां चतुर्थांशे द्वादशोऽध्यायः ॥ १२ ॥ ॥ भजनेति ॥ सत्वतस्य भजनादयः सप्त पुत्राः ॥ १ ॥ भजमानस्यैतद्वैमात्रास्तेषां निम्यादीनां त्रयाणां द्वैमात्रास्सपत्नीपुत्राः ॥ २ ॥ ३ ॥ ४ ॥ यथेति ॥ यथा दूराद्दूरतस्स्थितं यथा शृणुमः अंतिकात्समीपे स्थितमपि प्रत्यक्षतः तथैव संपश्यामः नन्वतः किंचिन्न्यूनम् अतो बभ्रुः श्रेष्ठः मनुष्याणां देवावृधः पुनर्देवैस्सम इति ॥ ५ ॥

पुरुषाः षट् च षष्टिश्च सहस्राणि तथाऽष्ट ये ॥ तेऽमृतत्वमनुप्राप्ता बभ्रोर्देवावृधादपि ॥ ६ ॥ महाभोजस्त्वतिधर्मात्मा तस्यान्वये भोजाः मृत्तिकावरपुरनिवासिनो मार्त्तिकावरा बभूवुः ॥७॥ वृष्णेः सुमित्रो युधाजिच्च पुत्रावभूताम्॥८॥ततश्चानमित्रः तथानमित्रान्निघ्नः॥९॥ निघ्नस्य प्रसेन सत्राजितौ ॥१०॥ तस्य च सत्राजितो भगवानादित्यः सखाऽभवत् ॥११॥ एकदा त्वंभोनिधितीरसंश्रयः सूर्यं सत्राजित्तुष्टाव तन्मनस्कतया च भास्वानभिष्टूयमानोऽग्रतस्तस्थौ ॥ १२ ॥ ततस्त्वस्पष्टमूर्त्तिधरं चैनमालोक्य सत्राजित्सूर्यमाह ॥ १३ ॥ यथैव व्योम्नि वह्निपिंडोपमं त्वामहमपश्यं तथैवाद्याग्रतो गतमप्यत्र भगवता किंचिन्न प्रसादीकृतं विशेषमुपलक्षयामीत्येवमुक्ते भगवता सूर्येण निजकंठादुन्मुच्य स्यमंतकं नाम महामणिवरमवतार्यैकान्ते न्यस्तम् ॥ १४ ॥ ततस्तमाताम्रोज्ज्वलं ह्रस्ववपुषमीषदापिंगलनयनमादित्यमद्राक्षीत् ॥ १५ ॥ कृतप्रणिपातस्तवादिकं च सत्राजितमाह भगवानादित्यस्सहस्रदीधितिः वरमस्मत्तोभिमतं वृणीष्वेति ॥ १६ ॥ स च तदेव मणिरत्नमयाचत ॥ १७ ॥ स चापि तस्मै तद्दत्त्वा दीधितिपतिर्वियति स्वधिष्ण्यमारुरोह ॥ १८ ॥ सत्राजितोऽप्यमलमणिरत्नसनाथकंठतया सूर्य इव तेजोभिरशेषदिगंतराण्युद्भासयन् द्वारकां विवेश ॥ १९ ॥ द्वारकावासी जनस्तु तमायांतमवेक्ष्य भगवंतमादिपुरुषं पुरुषोत्तममवनिभारावतरणायांशेन मानुषरूपधारिणं प्रणिपत्याह ॥ २० ॥ भगवन् भवंतं द्रष्टुं नूनमयमादित्य आयातीत्युक्तो भगवानुवाच ॥ २१ ॥ भगवान्नायमादित्यः सत्राजितोऽयमादित्यदत्तस्यमंतकाख्यं महामणिरत्नं बिभ्रदत्रोपयाति ॥ २२ ॥ तदेनं विस्रब्धाः पश्यतेत्युक्तास्ते तथैव ददृशुः ॥ २३ ॥ स च तं स्यमंतकमणिमात्मनिवेशने चक्रे ॥ २४ ॥

शृणुमः तथैव पुरःस्थितौ प्रत्यक्षयामः ॥ ५ ॥ पुरुषा इत्यादि ॥ बभ्रोर्देवावृधादपीति हेतौ पंचमी । ताभ्यामुपदिष्टमार्गेण ये अमृतत्वमनुप्राप्तास्ते उक्तसंख्याः पुरुषाः । बभ्रुदेवावृधावपीति पाठेपि हेतौ प्रथमा बभ्रोर्देवावृधादपीति एव हरिवंशादिषु पाठात् ॥ ६ ॥ महाभोज इति ॥ मार्त्तिकावराः मृत्तिकावत्याख्यपुरस्थाः । मार्त्तिकावता इति च पाठः ॥७॥८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८॥१९॥२०॥२१॥२२॥२३॥ २४ ॥

पुरुषा इति॥बभ्रोर्देवावृधादपि ताभ्यामुपदिष्टमार्गेण क्रमात् षट्षष्ट्यादयः पुरुषास्तच्छिष्यास्ते अमृतत्वं मुक्तिं प्राप्ताः । बभ्रुदेवावृधावपीति पाठे बभ्रुं देवावृधं चासाद्येत्यर्थः । अर्थस्स एव ॥ ६ ॥ महाभोज इति ॥ मृत्तिकावरं नाम पुरं तत्रस्था राजानो मार्तिकावराः ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ सत्राजितः प्रसंगात्स्यमंतकोपाख्यानमाह--तस्य त्वित्यादिना यावत्समाप्ति ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ स चेति ॥ स्वधिष्ण्यं स्वस्थानम् ॥ १८ ॥ सत्राजित इति ॥ अमलेन मणिरत्नेन मण्युत्तमेन सनाथकंठतया अलंकृतकंठत्वेन सत्राजित इत्यदंतोप्यस्ति ॥ १९ ॥ २० २१ ॥ २२ ॥ २३ ॥ स चेति ॥ आत्मनिवेशने चक्रे स्वगृहे

प्रतिदिनं तन्मणिरत्नमष्टौ कनकभारान्स्रवति ॥ २५ ॥ तत्प्रभावाच्च सकलस्यैव राष्ट्रस्योपसर्गानावृष्टिव्यालाग्नितो यद्दुर्भिक्षादिभयं न भवति ॥ २६ ॥ अच्युतोऽपि तद्दिव्यं रत्नमुग्रसेनस्य भूपतेर्योग्यमेतदिति लिप्सां चक्रे ॥ २७ ॥ गोत्रभेदभयाच्छक्तोपि न जहार ॥ २८ ॥ सत्राजिदप्यच्युतो मामेतद्याचयिष्यतीत्यवगम्य रत्नलोभाद्भ्रात्रे प्रसेनाय तद्रत्नमदात् ॥ २९ ॥ तच्च शुचिना ध्रियमाणमशेषमेव सुवर्णस्रवादिकं गुणजातमुत्पादयति अन्यथा धारयंतमेव हंतीत्यजानन्नसावपि प्रसेनस्तेन कंठसक्तेन स्यमंतकेनाश्वमारुह्याटव्यां मृगयामगच्छत् ॥३०॥ तत्र च सिंहाद्वधमवाप ॥ ३१ ॥ साश्वं च तं निहत्य सिंहोप्यमलमणिरत्नमास्याग्रेणादाय गंतुमभ्युद्यतः ऋक्षाधिपतिना जांबवता दृष्टो घातितश्च ॥ ३२ ॥ जांबवानप्यमलमणिरत्नमादाय स्वबिलं प्रविवेश ॥ ३३ ॥ सुकुमारसंज्ञाय बालकाय च क्रीडनकमकरोत् ॥ ३४ ॥ अनागच्छति तस्मिन्प्रसेने कृष्णो मणिरत्नमभिलषितवान्स च प्राप्तवान्नूनमेतदस्य कर्मेत्यखिल एव यदुलोकः परस्परं कर्णाकर्ण्याऽकथयत् ॥३५॥ विदितलोकापवादवृत्तांतश्च भगवान् सर्वयदुसैन्यपरिवारपरिवृतः प्रसेनाश्वपदवीमनुससार ॥ ३६ ॥ ददर्श चाश्वसमवेतं प्रसेनं सिंहेन विनिहतम् ॥ ३७ ॥ अखिलजनमध्ये सिंहपददर्शनकृतपरिशुद्धिः सिंहपदमनुससार ॥ ३८ ॥ ऋक्षपतिनिहतं च सिंहमप्यल्पे भूमिभागे दृष्ट्वा ततश्च तद्रत्नगौरवादृक्षस्यापि पदान्यनुययौ ॥ ३९ ॥ गिरितटे च सकलमेव तद्यदुसैन्यमवस्थाप्य तत्पदानुसारी ऋक्षबिलं प्रविवेश ॥ ४० ॥

प्रतिदिनमिति ॥ "माषो दशार्द्धगुंजः षोडशमाषो निगद्यते कर्षः । कर्षैष्षड्भिः स्वर्णस्तैरेव पलं चतुर्भिस्तु ॥ तुला पलशतं ज्ञेया भारस्याद्विंशतिस्तुलाः"इत्युक्तत्वात् ॥ ॥ २५ ॥ तदिति ॥ उपसर्गो रोगादिः । व्यालास्सर्पादयः ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ अनागच्छतीति ॥ कर्णाकर्णिकया कर्णपरंपरया ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥

स्थापयामास ॥ २४ ॥प्रतिदिनमिति ॥ भारप्रमाणं गणितोक्तं--"माषो दशार्धगुंजः षोडशमाषो निगद्यते कर्षः । कर्षैष्षड्भिस्स्वर्णस्तैरेव पलं चतुर्भिस्तु ॥ तुलां पलशते प्राहुर्भारस्याद्विंशतिस्तुलाः ॥" इति ॥ २५ ॥ तदिति ॥ उपसर्गाः स्फोटकादयः ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ अनागच्छतेति ॥ कर्णाकर्ण्या कर्णपरंपरया । कर्णाकर्णीति पाठे कर्ग इत्यर्थः ॥ ३५ ॥ ३६ ॥ ॥ ३७ ॥ अखिलेति ॥ सिंहपददर्शनेन कृता परिशुद्धिर्यस्य सः सिंहेनैव प्रसेनो हत इति निश्चयेन निरभियोगोपि मणिहेतोस्सिंहपदमनुससार ॥ ३८ ॥ ३९ ॥ ४० ॥

अन्तःप्रविष्टश्च धात्र्याः सुकुमारकमुल्लालयन्त्या वाणीं शुश्राव ॥ ४१ ॥ श्लो० ॥ सिंहः प्रसेनमवधीत्सिंहो जाम्बवता हतः ॥ सुकुमारक मा रोदीस्तव ह्येष स्यमंतकः ॥ ४२ ॥ इत्याकर्ण्योपलब्धस्यमंतकोंतःप्रविष्टः कुमारक्रीडनकीकृतं च धात्र्या हस्ते तेजोभिर्जाज्वल्यमानं स्यमंतकं ददर्श ॥ ४३ ॥ तं च स्यमंतकाभिलषितचक्षुषमपूर्वपुरुषमागतं समवेक्ष्य धात्री त्राहित्राहीति व्याजहार ॥ ४४ ॥ तदार्त्तरवश्रवणानंतरं चामर्षपूर्णहृदयः स जांबवानाजगाम ॥ ४५ ॥ तयोश्च परस्परमुद्धतामर्षयोर्युद्धमेकविंशतिदिनान्यभवत् ॥ ४६ ॥ ते च यदुसैनिकास्तत्र सप्ताष्टदिनानि तन्निष्क्रांतिमुदीक्षमाणास्तस्थुः ॥ ४७ ॥ अनिष्क्रमणे च मधुरिपुरसाववश्यमत्र बिलेऽत्यंतं नाशमवाप्तो भविष्यत्यन्यथा तस्य जीवतः कथमेतावंति दिनानि शत्रुजये व्याक्षेपो भविष्यतीति कृताध्यवसाया द्वारकामागम्य हतः कृष्ण इति कथयामासुः ॥ ॥ ४८ ॥ तद्बांधवाश्च तत्कालोचितमखिलमुत्तरक्रियाकलापं चक्रुः ॥ ४९ ॥ ततश्चास्य युद्ध्यमानस्यातिश्रद्धादत्तविशिष्टोपपात्रयुक्तान्नतोयादिना श्रीकृष्णस्य बलप्राणपुष्टिरभूत् ॥ ५० ॥ इतरस्यानुदिनमतिगुरुपुरुषभेद्यमानस्य अतिनिष्ठुरप्रहारपातपीडिताखिलावयवस्य निराहारतया बलहानिरभूत् ॥ ५१ ॥ निर्जितश्च भगवता जांबवान्प्रणिपत्य व्याजहार ॥ ५२ ॥ सुरासुरगंधर्वयक्षराक्षसादिभिरप्यखिलैर्भवान्न जेतुं शक्यः किमुतावनिगोचरैरल्पवीर्यैर्नरैर्नरावयवभूतैश्च तिर्यग्योन्यनुसृतिभिः किं पुनरस्मद्विधैरवश्यं भवताऽस्मत्स्वामिना रामेणेव नारायणस्य सकलजगत्परायणस्यांशेन भगवता भवितव्यमित्युक्तस्तस्मै भगवानखिलावनिभारावतरणार्थमवतरणमाचचक्षे ॥ ५३ ॥

॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ तत इति ॥ बलप्राणपुष्टिरिति श्राद्धविध्यर्थवाद इति केचित् ॥ ५० ॥ ५१ ॥ ॥ ५२ ॥ सुरेति ॥ नरापरभूतैः नरेभ्यो निकृष्टैः । नरावयवैरिति पाठे नृतुल्यैः नृतुल्यावयवा हि वानरऋक्षाद्याः ॥ ५३ ॥

॥ ४१ ॥ उल्लालनमेवाह--सिंहः प्रसेनमिति ॥ ४२ ॥ इतीति ॥ उपलब्धो विज्ञातः स्यमंतको येन । शमंतकमिति च पाठांतरम् । जाज्वल्यमानं प्रकाशमानम् ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ते चेति ॥ तन्निष्क्रांतिं कृष्णनिर्गमनम् ॥ ४७ ॥ अनिष्क्रमण इति ॥ व्याक्षेपो विलंबः ॥ ४८ ॥ ४९ ॥ तत्र प्रसंगाच्छ्राद्धप्रशंसनमाह--ततश्चास्य युध्यमानस्येति ॥ ५० ॥ ५१ ॥ ५२ ॥ सुरेति ॥ किमुतावनिगोचरैर्नरैस्तत्रापि नरावयवभूतैर्विशेषभूतैस्तत्क्रीडामृगैर्जेतुं न शक्यः किं पुनर्वक्तव्यमित्यर्थः । अखिलमवनेर्भूमेर्भारस्यावतारणमपाकरणं कृतं करिष्यमाणं च स्वावतारप्रयोजनमाख्यातवान् ॥ ५३ ॥

प्रीत्यभिव्यंजितकरतलस्पर्शनेन चैनमपगतयुद्धखेदं चकार ॥५४॥ स च प्रणिपत्य पुनरप्येनं प्रसाद्य जांबवतीं नाम कन्यां गृहागतायार्घ्यभूतां ग्राहयामास ॥ ५५ ॥ स्यमंतकमणिरत्नमपि प्रणिपत्य तस्मै प्रददौ ॥५६॥ अच्युतोप्यतिप्रणतात्तस्मादग्राह्यमपि तन्मणिरत्नमात्मसंशोधनाय जग्राह ॥ ५७ ॥ सह जांबवत्या स द्वारकामाजगाम ॥ ५८ ॥ भगवदागमनोद्भूतहर्षोत्कर्षस्य द्वारकावासिजनस्य कृष्णावलोकनात्तत्क्षणमेवातिपरिणतवयसोपि नवयौवनमिवाभवत् ॥५९॥ दिष्ट्यादिष्ट्येति सकलयादवाः स्त्रियश्च सभाजयामासुः ॥६०॥ भगवानपि यथानुभूतमशेषं यादवसमाजे यथावदाचचक्षे ॥ ६१ ॥ स्यमंतकं च सत्राजिताय दत्त्वा मिथ्याभिशस्तिपरिशुद्धिमवाप ॥ ६२ ॥ जांबवतीं चांतःपुरे निवेशयामास ॥ ६३ ॥ सत्राजितोपि मयास्याभूतमलिनमारोपितमिति जातसंत्रासात्स्वसुतां सत्यभामां भगवते भार्यार्थं ददौ ॥ ६४ ॥ तां चाक्रूरकृतवर्मशतधन्वप्रमुखा यादवाः प्राग्वरयाम्बभूवुः ॥ ६५ ॥ ततस्तत्प्रदानादवज्ञातमेवात्मानं मन्यमानाः सत्राजिते वैरानुबंधं चक्रुः ॥ ६६ ॥ अक्रूरकृतवर्मप्रमुखाश्च शतधन्वानमूचुः ॥ ६७ ॥ अयमतीव दुरात्मा सत्राजितो योऽस्माभिर्भवता च प्रार्थितोऽप्यात्मजामस्मान् भवंतं चाविगणय्य कृष्णाय दत्तवान् ॥ ६८ ॥ तदलमनेन जीवता घातयित्वैनं तन्महारत्नं स्यमंतकाख्यं त्वया किं न गृह्यते वयमभ्युपपत्स्यामो यद्यच्युतस्तवोपरि वैरानुबंधं करिष्यतीत्येवमुक्तस्तथेत्यसावप्याह ॥ ६९ ॥

॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ तदिति ॥ अभ्युपपत्स्यामः सहकरिष्यामः ॥ ६९ ॥

प्रीतीति ॥ यथा हि तैलादिस्नेहाक्तकरतलसंमर्दनेन श्रांतस्य श्रमोऽपनीयते तथा स्वयं प्रीत्याभ्यंजितस्य करतलस्य स्पर्शनेनैव जांबवंतं विगतयुद्धश्रमं चकारेत्यर्थः ॥ ५४ ॥ स इति ॥ एनं ग्राहयामास कन्यां दत्तवानित्यर्थः ॥ ५५ ॥ स्यमंतकेति ॥ स्यमंतकमपि पारिबर्हतया ददौ ॥ ५६ ॥ अच्युत इति ॥ आत्मनस्संशोधनाय मिथ्याभियोगमार्जनाय अन्यथा हि क्वचिन्मणिं निधायागत इति दुर्जनशंकाया दुर्निवारत्वात् ॥ ५७ ॥ ५८ ॥ ५९ ॥ दिष्ट्येति ॥ दिष्ट्या दिष्ट्या भद्रमित्यानंदेन सभाजयामासुः अपूजयन् ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ तदेवं स्यमंतकहरणप्रसंगेन जांबवत्या विवाहमुक्त्वा सत्यभामाविवाहमाह--सत्राजितोपीति ॥ अभूतमलिनं निर्निमित्तं दुर्यशः ॥ ६४ ॥ सत्राजितस्य कृष्णाभियोगफलं वक्तुमाह--तां चेत्यादिना मणिरत्नं चाददादित्यंतेन ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ तदिति ॥ अभ्युपपत्स्यामः साहाय्यं करिष्यामः ॥ ६९ ॥

जतुगृहदग्धानां पांडुतनयानां विदितपरमार्थोऽपि भगवान् दुर्योधनप्रयत्नशैथिल्यकरणार्थं पार्थानुकूल्यकरणाय वारणावतं गतः ॥ ७० ॥ गते च तस्मिन् सुप्तमेव सत्राजितं शतधन्वा जघान मणिरत्नं चाददात् ॥ ७१ ॥ पितृवधामर्षपूर्णा च सत्यभामा शीघ्रं स्यंदनमारूढा वारणावतं गत्वा भगवतेऽहं प्रतिपादितेत्यक्षांतिमता शतधन्वनाऽस्मत्पिता व्यापादितः तच्च स्यमंतकमणिरत्नमपहृतं यस्यावभासनेनापहृततिमिरं त्रैलोक्यं भविष्यति ॥ ७२ ॥ तदियं त्वदीयापहासना तदालोच्य यदत्र युक्तं तत्क्रियतामिति कृष्णमाह ॥ ७३ ॥ तया चैवमुक्तः परितुष्टांतःकरणोऽपि कृष्णः सत्यभामाममर्षताम्रनयनः प्राह ॥ ७४ ॥ सत्ये सत्यं ममैवैषापहासना नाहमेतां तस्य दुरात्मनस्सहिष्ये ॥ ॥ ७५ ॥ न ह्यनुल्लंघ्य परपादपं तत्कृतनीडाश्रयिणो विहंगमा वध्यंते तदलममुनास्मत्पुरतः शोकप्रेरितवाक्यपरिकरेणेत्युक्त्वा द्वारकामभ्येत्यैकांते बलदेवं वासुदेवः प्राह ॥ ७६ ॥ मृगयागतं प्रसेनमटव्यां मृगपतिर्जघान ॥ ७७ ॥ सत्राजितोऽप्यधुना शतधन्वना निधनं प्रापितः ॥ ७८ ॥ तदुभयविनाशात्तन्मणिरत्नमावाभ्यां सामान्यं भविष्यति ॥ ७९ ॥ तदुत्तिष्ठारुह्यतां रथः शतधन्वनिधनायोद्यमं कुर्वित्यभिहितस्तथेति समन्विच्छितवान् ॥ ८० ॥ कृतोद्यमौ च तावुभावुपलभ्य शतधन्वा कृतवर्माणमुपेत्य पार्ष्णिपूरणकर्मनिमित्तमचोदयत् ॥ ८१ ॥ आह चैनं कृतवर्मा ॥ ८२ ॥ नाऽहं बलदेववासुदेवाभ्यां सह विरोधायालमित्युक्तश्चाक्रूरमचोदयत् ॥ ८३ ॥

जतुगृहेति ॥ कृष्णः सर्वज्ञः सन्ननागतश्चेत् नूनं जीवंति पांडवा इति दुर्योधनः तदन्वेषणवधादौ सप्रयत्नः स्यात् अतस्तत्प्रयत्नशिथिलीकरणाय कुलोचितकृत्यकरणार्थं च तत्र गतः ॥ ७० ॥ ७१ ॥ ७२ ॥ तदिति ॥ अपहासना परिभवः ॥ ७३ ॥ तयेति ॥ प्रसेनानंतरमपुत्रस्य मिथ्याभिशंसिनो दुष्टस्य सत्राजितो विहतत्वात्तद्रत्नमस्मद्ग्राह्यमेव स्यादिति परितुष्टांतःकरणोऽपि श्रीकृष्णः अमर्षेण क्रोधेन ताम्रे नयने यस्य तथाभूतस्सन् सत्यभामामाह ॥ ७४ ॥ ७५ ॥ न हीति ॥ वाक्यपरिकरः वाक्यप्रपंचः ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ कृतोद्यमाविति ॥ पार्ष्णिपूरणं पार्ष्णिग्राहकृत्येऽनुग्रहः ॥ ८१ ॥ ८२ ॥ ८३ ॥

कृष्णे सन्निहिते सत्राजितवधासंभवात्कृष्णस्य प्रयाणमाह—जतुगृहेति ॥ दुर्योधनेति । यदि सर्वज्ञः कृष्णो नागच्छेत तर्हि पांडवाश्चापि गता नूनं जीवंतीति संभावनया दुर्योधनस्तदन्वेषणं विधाय वधादौ प्रयत्नं कुर्यात् अतस्तत्प्रयत्नशैथिल्यार्थं कुलोचितव्यवहारं कर्तुं कृष्णो वारणवताख्यं पुरं गत इत्यर्थः ॥ ७० ॥ ७१ ॥ इदानीमर्थनिमित्तान्बहूननर्थान्दर्शयन्कृष्णस्य पुनरपि मिथ्याभियोगप्रसंगं वक्तुमाह--पितृवधामर्ष इत्यादिना मारिकादिकं नाभूदित्यंतेन ॥ ७२ ॥ तदिति ॥ अपहासना परिभवः ॥ ७३ ॥ तयेति ॥ अर्थलुब्धस्याज्ञातिलंघिनस्सत्राजितस्य मृतत्वात्तस्यापुत्रत्वेन तन्मरणे सत्यभामागामित्वाच्च परितुष्टांतःकरणोपि ॥ ७४ ॥ सत्य इति ॥ ममैवैषापहासना ॥ ७५ ॥ अत्र हेतुः । नह्यनुलंघ्येति ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥

असावप्याह ॥ ८४ ॥ न हि कश्चिद्भगवता पादप्रहारपरिकंपितजगत्त्रयेण सुररिपुवनितावैधव्यकारिणा प्रबलरिपुचक्राप्रतिहतचक्रेण चक्रिणा मदमुदितनयनावलोकनाखिलनिशातनेनातिगुरुवैरिवारणापकर्षणाविकृतमहिमोरुसीरेण सीरिणा च सह सकलजगद्वंद्यानाममरवराणामपि योद्धुं समर्थः ॥ ८५ ॥ किमुताहं तदन्यश्शरणमभिलष्यतामित्युक्तश्शतधनुराह ॥ ८६ ॥ यद्यस्मत्परित्राणासमर्थं भवानात्मानमधिगच्छति तदयमस्मत्तस्तावन्मणिः संगृह्य रक्ष्यतामिति ॥ ८७ ॥ एवमुक्तः सोऽप्याह ॥ ८८ ॥ यद्यंत्यायामप्यवस्थायां न कस्मैचिद्भवान् कथयिष्यति तदहमेतं ग्रहीष्यामीति ॥ ८९ ॥ तथेत्युक्ते चाक्रूरस्तन्मणिरत्नं जग्राह ॥ ९० ॥ शतधनुरप्यतुलवेगां शतयोजनवाहिनीं वडवामारुह्यापक्रांतः ॥ ९१ ॥ शैब्यसुग्रीवमेघपुष्पबलाहकाश्वचतुष्टययुक्तरथस्थितौ बलदेववासुदेवौ तमनुप्रयातौ ॥ ९२ ॥ सा च वड़वा शतयोजनप्रमाणमार्गमतीता पुनरपि वाह्यमाना मिथिलावनोद्देशे प्राणानुत्ससर्ज ॥ ९३ ॥ शतधनुरपि तां परित्यज्य पदातिरेवाद्रवत् ॥ ९४ ॥ कृष्णोपि बलभद्रमाह ॥ ९५ ॥ तावदत्र स्यंदने भवता स्थेयमहमेनमधमाचारं पदातिरेव पदातिमनुगम्य यावद्घातयामि अत्र हि भूभागे दृष्टदोषास्सभया अतो नैतेश्वा भवतेमं भूमिभागमुल्लंघनीयाः ॥ ९६ ॥ तथेत्युक्त्वा बलदेवो रथ एव तस्थौ ॥ ९७ ॥ कृष्णोपि द्विक्रोशमात्रं भूमिभागमनुसृत्य दूरस्थितस्यैव चक्रं क्षिप्त्वा शतधनुषश्शिरश्चिच्छेद ॥ ९८ ॥ तच्छरीरांबरादिषु च बहुप्रकारमन्विच्छन्नपि स्यमंतकमणिं नावाप पदा तदोपगम्य बलभद्रमाह ॥ ९९ ॥ वृथैवास्माभिः शतधनुर्घातितः न प्राप्तमखिलजगत्सारभूतं तन्महारत्नं स्यमंतकाख्यमित्याकर्ण्योद्भूतकोपो बलदेवो वासुदेवमाह ॥ १०० ॥

॥ ८४ ॥ न हीति ॥ रिपुचक्रं रिपुबलम् । अमरवराणामपि मध्ये न कश्चिद्योद्धुं समर्थ इत्यन्वयः ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ १०० ॥

॥ ८४ ॥ न हीति ॥ भगवता चक्रिणा सीरिणा च सह अमरवराणामपि मध्ये कश्चिद्योद्धुं न समर्थ इत्यन्वयः । त्रिविक्रमावतारेषु पादप्रहारेण परिकंपितं जगत्त्रयं येन सः सुररिपुवनितानां तद्भर्तृवधेन वैधव्यकारिणा प्रबलानां रिपूणां चक्रे सैन्ये अप्रतिहतं चक्रं यस्य तेन चक्रिणा मदमुदितनयनाभ्यामवलोकनेन वीक्षणेनैवाखिलं निशातयतीति तथा तेन अतिगुरवो गरिष्ठा वैरिण एव वारणास्तेषामाकर्षणे आविष्कृतो महिमा येन तथाविध उरुस्सीरो हलो यस्य तेन सीरिणा च ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ १०० ॥

धिक्त्वां यस्त्वमेवमर्थलिप्सुरेतच्च ते भ्रातृत्वान्मया क्षांतं तदयं पंथास्स्वेच्छया गम्यतां न मे द्वारकया न त्वया न चाशेषबंधुभिः कार्य्यमलमलमेभिर्ममाग्रतोऽलीकशपथैरित्याक्षिप्य तत्कथां कथंचित्प्रसाद्यमानोपि न तस्थौ ॥ १०१ ॥ स विदेहपुरीं प्रविवेश ॥ १०२ ॥ जनकराजश्चार्घ्यपूर्वकमेनं गृहं प्रवेशयामास ॥ १०३ ॥ स तत्रैव च तस्थौ ॥ १०४ ॥ वासुदेवोऽपि द्वारकामाजगाम ॥ १०५ ॥ यावच्च जनकराजगृहे बलभद्रोऽवतस्थे तावद्धार्त्तराष्ट्रो दुर्योधनस्तत्सकाशाद्गदाशिक्षामशिक्षयत् ॥ १०६ ॥ वर्षत्रयांते च बभ्रूग्रसेनप्रभृतिभिर्यादवैर्न तद्रत्नं कृष्णेनाऽपहृतमिति कृतावगतिभिर्विदेहनगरीं गत्वा बलदेवस्संप्रत्याय्य द्वारकामानीतः ॥ ॥ १०७ ॥ अक्रूरोप्युत्तममणिसमुद्भूतसुवर्णेन भगवद्ध्यानपरोऽनवरतं यज्ञानियाज ॥ १०८ ॥ सवनगतौ हि क्षत्रियवैश्यौ निघ्नन्ब्रह्महा भवतीत्येवंप्रकारं दीक्षाकवचं प्रविष्ट एव तस्थौ ॥ १०९ ॥ द्विषष्टिवर्षाण्येवं तन्मणिप्रभावात्तत्रोपसर्गदुर्भिक्षमारिकामरणादिकं नाभूत् ॥ ॥ ११० ॥ अथाक्रूरपक्षीयैर्भोजैश्शत्रुघ्ने सात्वतस्य प्रपौत्रे व्यापादिते भोजैस्सहाक्रूरो द्वारकामपहायापक्रान्तः ॥ १११ ॥ तदपक्रांतिदिनादारभ्य तत्रोपसर्गदुर्भिक्षव्यालानावृष्टिमारिकाद्युपद्रवा बभूवुः ॥ ११२ ॥ अथ यादवा बलभद्रोग्रसेनसमवेता मंत्रममंत्रयन् ॥ ११३ ॥ भगवानुरगारिकेतनः किमिदमेकदैव प्रचुरोपद्रवागमनमेतदालोच्यतामित्युक्तेंधकनामा यदुवृद्धः प्राह ॥ ११४ ॥ अस्याक्रूरस्य पिता श्वफल्को यत्र यत्राभूत्तत्रतत्र दुर्भिक्षमारिकानावृष्ट्यादिकं नाभूत् ॥ ११५ ॥ काशीराजस्य विषये त्वनावृष्ट्या च श्वफल्को नीतः ततश्च तत्क्षणाद्देवो ववर्ष ॥ ११६ ॥

॥ १०१ ॥ १०२ ॥ १०३ ॥ १०४ ॥ १०५ ॥ १०६ ॥ वर्षेति ॥ संप्रत्याय्य विश्वास्य ॥ १०७ ॥ १०८ ॥ सवनेति ॥ सवनं यज्ञः एवं प्रकारमवध्यतापादकम् ॥ १०९ ॥ द्विषष्टीति ॥ मारिका जनमारिका ॥ ११० ॥ १११ ॥ ११२ ॥ ११३ ॥ भगवानिति ॥ एतत्किमित्यन्वयः ॥ ॥ ११४ ॥ ११५ ॥ ११६ ॥

धिगिति ॥ कथां कथ्यमानां वार्तामाक्षिप्य तिरस्कृत्य ॥ १०१ ॥ १०२ ॥ १०३ ॥ १०४ ॥ १०५ ॥ प्रासंगिकमाह--यावच्चेति ॥ १०६ ॥ वर्षेति ॥ महाभागस्याप्यक्रूरस्य तस्मिन्मणावभिलषणमपि रामस्य सर्वज्ञस्यापि तन्निमित्तमविश्वास इत्याद्युक्तिरर्थदोषप्रदर्शनेन वैराग्यार्थो । संप्रत्याय्य विश्वास्य ॥ १०७ ॥ १०८ ॥ १०९ ॥ द्विषष्टीति ॥ मारिका जनमारिणी ॥ ११० ॥ अथाक्रूरप्रदर्शितस्यमंतकरत्नेन शंकिताभियोगनिरासं वक्तुं कथां प्रस्तौति–अथाक्रूरपक्षीयैरित्यादिना यावत्समाप्ति ॥ १११ ॥ ११२ ॥ ११३ ॥ भगवानिति ॥ उरगारिर्गरुडस्स एव केतनं यस्य सः ॥ ११४ ॥ ११५ ॥ ११६ ॥

काशीराजपत्न्याश्च गर्भे कन्यारत्नं पूर्वमासीत् ॥ ११७ ॥ सा च कन्या पूर्णेपि प्रसूतिकाले नैव निश्चक्राम ॥ ११८ ॥ एवं च तस्य गर्भस्य द्वादशवर्षाण्यनिष्क्रामतो ययुः ॥ ११९ ॥ काशीराजश्च तामात्मजां गर्भस्थामाह ॥ १२० ॥ पुत्रि कस्मान्न जायसे निष्क्रम्य तामास्यं ते द्रष्टुमिच्छामि एतां च मातरं किमिति चिरं क्लेशयिष्यसीत्युक्ता गर्भस्थैव व्याजहार ॥ १२१ ॥ तात यद्येकैकां गां दिनेदिने ब्राह्मणाय प्रयच्छसि तदहमन्यैस्त्रिभिर्वर्षैरस्माद्गर्भात्ततोऽवश्यं निष्क्रमिष्यामीत्येतद्वचनमाकर्ण्य राजा दिनेदिने ब्राह्मणाय गां प्रादात् ॥१२२॥ साधि तावता कालेन जाता ॥१२३॥ ततस्तस्याः पिता गांदिनीति नाम चकार ॥ १२४ ॥ तां च गांदिनीं कन्यां श्वफल्कायोपकारिणे गृहमागतायार्घ्यभूतां प्रादात् ॥ १२५ ॥ तस्यामयमक्रूरः श्वफल्काज्जज्ञे ॥ १२६ ॥ तस्यैवंगुणमिथुनादुत्पत्तिः ॥ १२७ ॥ तत्कथमस्मिन्नप क्रान्ते अत्र दुर्भिक्षमारिकाद्युपद्रवा न भविष्यंति ॥ १२८ ॥ तदयमत्रानीयतामलमतिगुणवत्यपराधान्वेषणेनेति यदुवृद्धस्यांधकस्यैतद्वचन माकर्ण्य केशवोग्रसेनबलभद्रपुरोगमैर्यदुभिः कृतापराधतितिक्षुभिरभयं दत्त्वा श्वफल्कपुत्रः स्वपुरमानीतः ॥ १२९ ॥ तत्र चागतमात्र एव तस्य स्यमंतकमणेः प्रभावादनावृष्टिमारिकादुर्भिक्षव्यालाद्युपद्रवोपशमा बभूवुः ॥ १३० ॥ कृष्णश्चिंतयामास ॥ १३१ ॥ स्वल्पमेतत्का रणं यदयं गांदिन्यां श्वफल्केनाक्रूरो जनितः ॥ १३२ ॥ सुमहांश्चायमनावृष्टिदुर्भिक्षमारिकाद्युपद्रवप्रतिषेधकारी प्रभावः ॥ १३३ ॥ तन्नून मस्य सकाशे स महामणिः स्यमंतकाख्यस्तिष्ठति ॥ १३४ ॥ तस्य ह्येवंविधाः प्रभावाः श्रूयन्ते ॥ १३५ ॥ अयमपि च यज्ञादनंतरमन्यत्क्र त्वंतरं तस्यानंतरमन्यद्यज्ञांतरं चाजस्रमविच्छिन्नं यजतीति ॥ १३६ ॥ अनल्पोपादानं चास्यासंशयमत्राऽसौ मणिवरस्तिष्ठतीति कृताध्यव सायोऽन्यत्प्रयोजनमुद्दिश्य सकलयादवसमाजमात्मगृह एवाचीकरत् ॥ १३७ ॥

॥ ११७ ॥ ११८ ॥ ११९ ॥ १२० ॥ १२१ ॥ १२२ ॥ १२३ ॥ १२४ ॥ १२५ ॥ १२६ ॥ १२७ ॥ १२८ ॥ १२९ ॥ तत्र चेति ॥ तत्र बभूवुरित्यन्वयः ॥ १३० ॥ १३१ ॥ १३२ ॥ १३३ ॥ १३४ ॥ १३५ ॥ अयमिति ॥ क्रत्वंतरं तु क्रतुभेदम् ॥ १३६ ॥ अनल्पेति ॥ उपादानं

॥ ११७ ॥ ११८ ॥ ११९ ॥ १२० ॥ १२१ ॥ १२२ ॥ १२३ ॥ १२४ ॥ १२५ ॥ १२६ ॥ तस्येति ॥ श्वफल्कगांदिन्योर्महत्त्वोक्तिस्तत्पुत्राक्रूरमहिमाप्रशंसनार्था ॥ १२७ ॥ १२८ ॥ १२९ ॥ ॥ १३० ॥ कृष्ण इति ॥ कृष्णश्चिंतयामासेति सर्वज्ञस्यैव कृष्णस्य लिंगदर्शनादिना मणिसंभावनोक्तिः लोकरीत्यनुवृत्तिमात्रार्था न तु तत्त्वतः । भगवतारिष्टदर्शनादिकमपि न तात्त्विकमित्युक्तं किं च प्रागुदाहृतं मुनिवासनिवासे किं घटेतारिष्टदर्शनमित्यादिना तस्मात्सर्वप्रकारेण परप्रत्ययोत्पादनेन दुर्यशः परिहार्यमित्येवंपरं सर्वमिदं द्रष्टव्यम् ॥ १३१ ॥ १३२ ॥ १३३ ॥ १३४ ॥ १३५ ॥ १३६ ॥ अनल्पेति ॥ अनेन

तत्र चोपविष्टेष्वखिलेषु यदुषु पूर्वं प्रयोजनमुपन्यस्य पर्यवसिते च तस्मिन् प्रसंगांतरपरिहासकथामक्रूरेण कृत्वा जनार्दनस्तमक्रूरमाह॥१३८॥ दानपते जानीम एव वयं यथा शतधन्वना तदिदमखिलजगत्सारभूतं स्यमंतकं रत्नं भवतः समर्पितं तदशेषराष्ट्रोपकारकं भवत्सकाशे तिष्ठति तिष्ठतु सर्व एव वयं तत्प्रभावफलभुजः किं त्वेष बलभद्रोऽस्मानाशंकितवांस्तदस्मत्प्रीतये दर्शयस्वेत्यभिधाय जोषं स्थिते भगवति वासुदेवे सरत्नस्सोचिंतयत् ॥ १३९ ॥ किमत्रानुष्ठेयमन्यथा चेद्ब्रवीम्यहं तत्केवलांबरतिरोधानमन्विष्यंतो रत्नमेते द्रक्ष्यंति अतिविरोधो न क्षम इति संचिंत्य तमखिलजगत्कारणभूतं नारायणमाहाक्रूरः ॥ १४० ॥ भगवन्ममैतत्स्यमंतकरत्नं शतधनुषा समर्पितमपगते च तस्मिन्नद्य श्वः परश्वो वा भगवान् याचयिष्यतीति कृतमतिरतिकृच्छ्रेणैतावंतं कालमधारयम् ॥१४१॥ तस्य च धारणक्लेशेनाहमशेषोपभोगेष्वसंगिमानसो न वेद्मि स्वसुखकलामपि ॥ १४२ ॥ एतावन्मात्रमप्यशेषराष्ट्रोपकारी धारयितुं न शक्नोति भवान्मन्यत इत्यात्मना न चोदितवान् ॥ १४३ ॥ तदिदं स्यमंतकरत्नं गृह्यतामिच्छया यस्याभिमतं तस्य समर्प्यताम् ॥ १४४ ॥ ततः स्वोदरवस्त्रनिगोपितमतिलघुकनकसमुद्गकगतं प्रकटी कृतवान् ॥ १४५ ॥ ततश्च निष्क्राम्य स्यमंतकमणिं तस्मिन्यदुकुलसमाजे मुमोच ॥ १४६ ॥ मुक्तमात्रे च तस्मिन्नतिकान्त्या तदखिलमा स्थानमुद्योतितम् ॥ १४७ ॥ अथाहाक्रूरः स एष मणिः शतधन्वनास्माकं समर्पितः यस्यायं स एनं गृह्णातु इति ॥ १४८ ॥ तमालोक्य सर्वयादवानां साधुसाध्विति विस्मितमनसां वाचोऽश्रूयंत ॥ १४९ ॥ तमालोक्यातीव बलभद्रो ममायमच्युतेनैव सामान्यस्समन्विच्छित इति कृतस्पृहोऽभूत् ॥ १५० ॥

जीविकाद्रव्यम् अचीकरत् कारितवान् ॥ १३७॥ १३८ ॥ १३९॥ १४० ॥ १४१ ॥ १४२ ॥ एतावन्मात्रमिति ॥ एतावन्मात्रमल्पपरिमाणं रत्नमिति शेषः । रत्नधारणमात्रेणाप्ययमशेषराष्ट्रोपकारं न करोतीति कृष्णो मन्यत इत्यक्रूरोक्तिः स्वदोषापह्नवार्था ॥ १४३ ॥ १४४ ॥ तत इति ॥ समुद्गः संपुटः ॥ १४५ ॥ ॥ १४६ ॥ १४७ ॥ १४८ ॥ १४९ ॥ १५० ॥

हेतुना अनल्पोपादानमनल्पस्याक्षयस्य उपादानं निक्षेपभूतं जीविकाद्रव्यं मणिवरस्तिष्ठतीति निश्चित्यान्यत्प्रयोजनं विवाहादिकार्यमुद्दिश्याचीकरत् कारयामास ॥ १३७ ॥ तत्रेति ॥ यदुद्दिश्य यादवास्समायाता स्तत्प्रयोजनं पूर्वमुपन्यस्य युक्तमिदं न वेत्यादि पृष्ट्वा ॥ १३८ ॥ १३९ ॥ १४० ॥ १४१ ॥ तस्येति ॥ स्वसुखस्य कलामंशमपि न वेद्मि ॥ १४२ ॥ एतावन्मात्रमिति ॥ आत्मना स्वयं न चोदितवान् नाहमेतद्धारयितुं शक्नोमि त्वमिदं धारयस्वेति भीत्याहं नोक्तवान् ॥ १४३ ॥ १४४ ॥ तत इति ॥ कनकसमुद्गकं स्वर्णकरंडकम् ॥ १४५ ॥ १४६ ॥ १४७ ॥ १४८ ॥ १४९ ॥ १५० ॥

ममैवायं पितृधनमित्यतीव च सत्यभामापि स्पृहयांचकार ॥ १५१ ॥ बलसत्यावलोकनात्कृष्णोप्यात्मानं गोचक्रांतरावस्थितमिव मेने ॥ १५२ ॥ सकलयादवसमक्षं चाक्रूरमाह ॥ १५३ ॥ एतद्धि मणिरत्नमात्मसंशोधनाय एतेषां यदूनां मया दर्शितम् एतच्च मम बलभद्रस्य च सामान्यं पितृधनं चैतत्सत्यभामाया नान्यस्यैतत् ॥ १५४ ॥ एतच्च सर्वकालं शुचिना ब्रह्मचर्यादिगुणवता ध्रियमाणमशेषराष्ट्रस्योपकारकमशुचिना ध्रियमाणमाधारमेव हंति ॥ १५५ ॥ अतोहमस्य षोडशस्त्रीसहस्रपरिग्रहादसमर्थो धारणे कथमेतत्सत्यभामा स्वीकरोति ॥ १५६ ॥ आर्यबलभद्रेणापि मदिरापानाद्यशेषोपभोगपरित्यागः कार्यः ॥ १५७ ॥ तदलं यदुलोकोयं बलभद्रः अहं च सत्या च त्वां दानपते प्रार्थयामः ॥ १५८ ॥ तद्भवानेव धारयितुं समर्थः ॥ १५९ ॥ त्वद्धृतं चास्य राष्ट्रस्योपकारकं तद्भवानशेषराष्ट्रनिमित्तमेतत्पूर्ववद्धारयत्वन्यन्न वक्तव्यमित्युक्तो दानपतिस्तथेत्याह जग्राह च तन्महारत्नम् ॥ १६०॥ ततःप्रभृत्यक्रूरः प्रकटेनैव तेनातिजाज्वल्यमानेनात्मकंठावसक्तेनादित्य इवांशुमाली चचार ॥१६१॥ इत्येतद्भगवतो मिथ्याभिशस्तिक्षालनं यः स्मरति न तस्य कदाचिदल्पापि मिथ्याभिशस्तिर्भवति अव्याहताखिलेंद्रियश्चाखिलपापमोक्षमवाप्नोति ॥ १६२ ॥ इति श्रीविष्णुमहापुराणे चतुर्थांशे त्रयोदशोऽध्यायः ॥ १३ ॥

॥ १५१ ॥ बलेति ॥ गोचक्रेति शकटस्य हि चक्रानडुहोरंतरावस्थितः जंतुर्यथा क्लिश्यति तद्वदित्यर्थः ॥ १५२ ॥ १५३ ॥ १५४ ॥ १५५ ॥ १५६ ॥ ॥ १५७ ॥ १५८ ॥ १५९ ॥ १६० ॥ १६१ ॥ इतीति ॥ मिथ्याभिशस्तिक्षालनाय स्यमंतककथाश्रवणासक्तेन सिंहः प्रसेनमधीदित्यादिश्लोकोऽनुसंधेयः । तथा च ब्राह्मे—"वासुदेवाभिशस्तिस्तु निशाकरमरीचिषु । स्थिता चतुर्थ्यामद्यापि मनुष्यानापतेच्च सा ॥ अतश्चतुर्थ्यां चंद्रं तु प्रमादाद्वीक्ष्य संयुतः । पठेद्वात्रीयकं वाक्यं प्राङ्मुखो वाप्युदङ्मुखः" इति ॥ १६२ ॥ ॥ इति श्रीविष्णुमहापुराणव्याख्याने विष्णुचित्तीये चतुर्थांशे त्रयोदशोऽध्यायः ॥ १३ ॥ छ ॥

॥ १५१ ॥ बलेति ॥ गोचक्रांतरावस्थितमिति गच्छतश्शकटस्य चक्रबलीवर्दमध्यपतितजंतुर्यथोभयत्र संबाधात् क्लिश्यते तथात्मानं मेने ॥ १५२ ॥ १५३ ॥ १५४ ॥ एतच्चेति ॥ आधारं धारयितारमेव हंति ॥१५५॥ ॥ १५६ ॥ १५७ ॥ १५८ ॥ १५९ ॥ १६० ॥ तत इति ॥ ततःप्रभृति प्रकटेनेति अयं भावः—कृष्णानुमत्यैव अक्रूरस्तन्मणिरत्नं दधार तथापि स्वभक्ते अक्रूरे कृष्णेन स्थापितमित्येवं भूताभियोगपरिहाराय गुप्तमधारयत् । अनेनैवाभिप्रायेण शतधन्वना मणौ समर्प्यमाणे यद्यंत्यावस्थायामन्यस्मै न कथयिष्यसि तर्हि ग्रहीष्यामीत्युक्तवान् न तु सर्वज्ञस्य श्रीकृष्णस्य गोपनार्थं, यज्ञकवचधारणं च यादवभयादेव न तु श्रीकृष्णभयात्, अन्यथा मणिना सह रामकृष्णादिसमाजप्रवेशादि न संगच्छेत । अत्राक्रूरे महाभागवते मणिस्पृहादिकल्पनमतिमंदमित्युपेक्षणीयम् ॥ १६१ ॥ १६२ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां चतुर्थांशे त्रयोदशोध्यायः ॥ १३ ॥

॥ श्रीपराशर उवाच ॥ अनमित्रस्य पुत्रः शिनिर्नामाऽभवत् ॥ १ ॥ तस्यापि सत्यकः सत्यकात्सात्यकिर्युयुधानापरनामा ॥ २ ॥ तस्मादपि संजयः तत्पुत्रश्च कुणिः कुणेर्युगंधरः ॥ ३ ॥ इत्येते शैनेयाः ॥ ४ ॥ अनमित्रस्यान्वये वृष्णिः तस्मात् श्वफल्कः तत्प्रभावः कथित एव ॥ ५ ॥ श्वफल्कस्यान्यः कनीयांश्चित्रकोनाम भ्राता ॥ ६ ॥ श्वफल्कादक्रूरो गांदिन्यामभवत् ॥ ७ ॥ तथोपमद्गुः ॥ ८ ॥ उपमद्गो मृदामृदविश्वारिमेजयगिरिक्षत्रोपक्षत्रशतघ्नारिमर्दनधर्मदृग्दृष्टधर्मगंधमोजवाहप्रतिवाहाख्याः पुत्राः सुताराख्या कन्या च ॥ ९ ॥ देववानुपदेवश्चाक्रूरपुत्रौ ॥ १० ॥ पृथुविपृथुप्रमुखाश्चित्रकस्य पुत्रा बहवो बभूवुः ॥ ११ ॥ कुकुरभजमानशुचिकंबलबर्हिषाख्यास्तथांधकस्य चत्वारः पुत्राः ॥ १२ ॥ कुकुराद्धृष्टः तस्माच्च कपोतरोमा ततश्च विलोमा तस्मादपि तुंबुरुसखोऽभवदनुसंज्ञश्च ॥ १३ ॥ अनोरानकदुंदुभिः ततश्चाभिजित् अभिजितः पुनर्वसुः ॥ १४ ॥ तस्याप्याहुकः आहुकी च कन्या ॥ १५ ॥ आहुकस्य देवकोग्रसेनौ द्वौ पुत्रौ ॥ १६ ॥ देववानुपदेवः सहदेवो देवरक्षिता च देवकस्य चत्वारः पुत्राः ॥ १७ ॥ तेषां वृकदेवोपदेवा देवरक्षिता श्रीदेवा शांतिदेवा सहदेवा देवकी च सप्त भगिन्यः ॥ १८ ॥ ताश्च सर्वा वसुदेव उपयेमे ॥ १९ ॥ उग्रसेनस्यापि कंसन्यग्रोधसुनामानकाह्वशंकुसुभूमिराष्ट्रपालयुद्धतुष्टिसुतुष्टिमत्संज्ञाः पुत्रा बभूवुः ॥ २० ॥

अनमित्रस्य पौत्रस्सत्राजित तत्प्रसंगात्स्यमंतकाख्यानमुक्तम् । इदानीमनमित्रस्यैव संतानांतरमुच्यते—अनमित्रस्येति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ सात्वतपुत्रस्य वृष्णेरेव संतानान्तरं वक्तुं प्रस्तुतेनानमित्रेण पितामहत्वसंबंधं स्मारयति—अनमित्रस्यैवान्वये वृष्णिरिति ॥ ५ ॥ ६ ॥ ७ ॥ तथेति ॥ उपमद्गवाद्या अक्रूरसापत्न्याः ॥ ८ ॥ ॥ ९ ॥ १० ॥ ११ ॥ अंधकस्य सत्वतात्मजस्य ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

सत्वतः सुतो वृष्णिस्सात्वतः तत्पौत्रस्यानमित्रस्य प्रसेनसत्राजिताविव्येको वंश उक्तः । तत्प्रसंगाच्च स्यमंतकाख्यानमुक्तम् । इदानीमनमित्रस्यैव वंशांतरमाह--अनमित्रस्येत्यादिना शैनेया इत्यन्तेन ॥ १ ॥ २ ॥ ३ ॥ इतीति ॥ शिनेर्वंश्याः शैनेयाः ॥ ४ ॥ तस्यैव पुनर्वंशान्तरमाह--अनमित्रस्येत्यादिना बहवोभवन्नित्यंतेन ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ पृथ्विति ॥ चित्रकस्य श्वफल्कस्य भ्रातुः पृथुप्रमुखाः पुत्राः ॥ ११ ॥ कुकुरेति ॥ अंधकस्य सत्वतपुत्रस्य कुकुरादयः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

कंसाकंसवतीसुतनूराष्ट्रपलिकाह्वाश्चोग्रसेनस्य तनूजाः कन्याः ॥ २१ ॥ भजमानाच्च विदूरथः पुत्रोऽभवत् ॥ २२ ॥ विदूरथा च्छूरः शूराच्छमी शमिनः प्रतिक्षत्रः तस्मात्स्वयंभोजः ततश्च हृदिकः ॥ २३ ॥ तस्यापि कृतवर्मशतधनुर्देवार्हदेवगर्भाद्याः पुत्रा बभूवुः ॥ ॥ २४ ॥ देवगर्भस्यापि शूरः ॥ २५ ॥ शूरस्यापि मारिषा नाम पत्न्यभवत् ॥ २६ ॥ तस्यां चासौ दशपुत्रानजनयद्वसुदेवपूर्वान् ॥ २७ ॥ वसुदेवस्य जातमात्रस्यैव तद्गृहे भगवदंशावतारमव्याहतदृष्ट्या पश्यद्भिर्देवैर्दिव्यानकदुंदुभयो वादिताः ॥२८॥ ततश्चासावानकदुंदुभिसंज्ञाम वाप ॥ २९ ॥ तस्य च देवभागदेवश्रवाष्टककककुच्चक्रवत्सधारकसृंजयश्यामशमिकगंडूषसंज्ञा नव भ्रातरोऽभवन् ॥ ३० ॥ पृथा श्रुतदेवा श्रुत कीर्त्तिः श्रुतश्रवा राजाधिदेवी च वसुदेवादीनां पंच भगिन्योऽभवन् ॥ ३१ ॥ शूरस्य कुंतिर्नाम सखाऽभवत् ॥ ३२ ॥ तस्मै चापुत्राय पृथामात्मजां विधिना शूरो दत्तवान् ॥ ३३ ॥ तां च पांडुरुवाह ॥ ३४ ॥ तस्यां च धर्मानिलेंद्रैर्युधिष्ठिरभीमसेनार्जुनाख्यास्त्रयः पुत्रास्समुत्पा दिताः ॥ ३५ ॥ पूर्वमेवानूढायाश्च भगवता भास्वता कानीनः कर्णो नाम पुत्रोऽजन्यत ॥ ३६ ॥ तस्याश्च सपत्नी माद्री नामाभूत् ॥ ३७ ॥ तस्यां च नासत्यदस्राभ्यां नकुलसहदेवौ पांडोः पुत्रौ जनितौ ॥ ३८ ॥ श्रुतदेवां तु वृद्धधर्मा नाम कारूश उपयेमे ॥ ३९ ॥ तस्यां च दंतवक्रो नाम महासुरो जज्ञे ॥ ४० ॥ श्रुतकीर्त्तिमपि केकयराजा उपयेमे ॥ ४१ ॥ तस्यां च संतर्दनादयः कैकेयाः पंच पुत्रा बभूवुः ॥ ४२ ॥ राजाधिदेव्यामावंत्यौ विंदानुविंदौ जज्ञाते ॥ ४३ ॥ श्रुतश्रवसमपि चेदिराजो दमघोषनामोपयेमे ॥ ४४ ॥ तस्यां च शिशुपा लमुत्पादयामास ॥ ४५ ॥

॥ २१ ॥ भजमानादिति ॥ तदन्यत् भजमानाद्वंशांतरम् ॥ २२ ॥ विदूरथादिति ॥ शूरो देवमीढाख्यः ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥

कंसेति ॥ कंसाकंसवतीत्याद्या उग्रसेनस्य तनूजाः कन्याः ॥ २१ ॥ भजमानस्य सत्वतपुत्रस्य निमिकृकणवृष्णय इत्यादिना पूर्वमेको वंश उक्तः । इदानीं तस्यैव वंशांतरमाह—भजमानाच्चेत्यादिनां यावत्समाप्ति ॥ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ वसुदेवस्येति ॥ तद्गृहे देवमीलाख्यस्य शूरस्य गृहे आनकाः पटहाः दुंदुभयो भेर्यः ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ पूर्वमेवेति ॥ कानीनः कन्यकावस्थायां जातः ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥

स वा पूर्वमप्युदारविक्रमो दैत्यानामादिपुरुषो हिरण्यकशिपुरभवत् ॥ ४६ ॥ यश्च भगवता सकललोकगुरुणा नारसिंहेन घातितः ॥ ४७ ॥ पुनरपि अक्षयवीर्यशौर्य्यसंपत्पराक्रमगुणस्समाक्रांतसकलत्रैलोकेश्वरप्रभावो दशाननो नामाभूत् ॥ ४८ ॥ बहुकालोपभुक्तभगवत्सकाशावाप्तशरीरपातोद्भवपुण्यफलो भगवता राघवरूपिणा सोऽपि निधनमुपपादितः ॥ ४९ ॥ पुनश्चेदिराजस्य दमघोषस्यात्मजशिशुपालनामाऽभवत् ॥ ५० ॥ शिशुपालत्वेपि भगवतो भूभारावतारणायावतीर्णांशस्य पुंडरीकनयनाख्यस्योपरि द्वेषानुबंधमतितराञ्चकार ॥ ॥ ५१ ॥ भगवता च स निधनमुपानीतस्तत्रैव परमात्मभूते मनस एकाग्रतया सायुज्यमवाप ॥ ५२ ॥ भगवान् यदि प्रसन्नो यथाभिलषितं ददाति तथा अप्रसन्नोपि निघ्नन् दिव्यमनुपमं स्थानं प्रयच्छति ॥ ५३ ॥ ॥ इति श्रीविष्णुमहापुराणे चतुर्थांशे चतुर्दशोऽध्यायः ॥ १४ ॥

॥ मैत्रेय उवाच ॥ हिरण्यकशिपुत्वे च रावणत्वे च विष्णुना ॥ अवाप निहतो भोगानप्राप्यानमरैरपि ॥ १ ॥ न लयं तत्र तेनैव निहतः स कथं पुनः ॥ संप्राप्तः शिशुपालत्वे सायुज्यं शाश्वते हरौ ॥ २ ॥ एतदिच्छाम्यहं श्रोतुं सर्वधर्मभृतां वर ॥ कौतूहलपरेणैतत्पृष्टो मे वक्तुमर्हसि ॥ ३ ॥ श्रीपराशर उवाच ॥ ॥ दैत्येश्वरस्य वधायाखिललोकोत्पत्तिस्थितिविनाशकारिणा पूर्वं तनुग्रहणं कुर्वता नृसिंहरूपमाविष्कृतम् ॥ ४ ॥

॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ भगवानिति ॥ अप्रसन्नोपीति वस्तुस्वभावोक्तिः ॥ ५३ ॥ ॥ इति श्रीविष्णुमहापुराणव्याख्याने विष्णुचित्तीयेचतुर्थांशे चतुर्दशोऽध्यायः ॥ १४ ॥ छ ॥ १ ॥ ॥ २ ॥ ३ ॥ ४ ॥

॥ ४६ ॥ ४७ ॥ पुनरिति ॥ अक्षया वीर्यादिगुणा यस्य सः । वीर्यं बलं शौर्यमुत्साहः पराक्रमः प्रभावः समाक्रांता अभिभूताः सकलास्त्रैलोक्येश्वरा येन तथाभूतः प्रभावो यस्य सः ॥ ४८ ॥ बहुकालेति ॥ बहुकालमुपभुक्तं भगवत्सकाशादवाप्तशरीरपातोद्भवं पुण्यफलं येन सः ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ भगवद्वेषानुबंधौ तत्सायुज्यमुपपादयति—भगवानिति ॥५३॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां चतुर्थांशे चतुर्दशोध्यायः ॥ १४ ॥ ॥ १ ॥ २ ॥ एतदिति ॥ कौतूहलपरेण मया पृष्टस्सन्मह्यं वक्तुमर्हसि ॥ ३ ॥ सनकाद्यनुग्रहाज्जन्मत्रयानंतरं भगवत्प्राप्तिरिति मुख्यो हेतुः । तदनुसारि हेत्वंतरमप्याह—दैत्येश्वरस्येत्यादिना किमुत भक्तिमतामित्यंतेन ॥ ४ ॥

तत्र च हिरण्यकशिपोर्विष्णुरयमित्येतन्न मनस्यभूत् ॥ ५ ॥ निरतिशयपुण्यसमुद्भूतमेतत्सत्त्वजातमिति ॥ ६ ॥ रजोद्रेकप्रेरितैकाग्रमतिस्तद्भावनायोगात्ततोवाप्तवधहेतुकीं निरतिशयामेवाखिलत्रैलोक्याधिक्यकारिणीं दशाननत्वे भोगसंपदमवाप ॥ ७ ॥ न तु स तस्मिन्ननादिनिधने परब्रह्मभूते भगवत्यनालंबिनि कृते मनसस्तल्लयमवाप ॥ ८ ॥ एवं दशाननत्वेप्यनंगपराधीनतया जानकीसमासक्तचेतसा भगवता दाशरथिरूपधारिणा हतस्य तद्रूपदर्शनमेवासीत् नायमच्युत इत्यासक्तिर्विपद्यतोंतःकरणे मानुषबुद्धिरेव केवलमस्याभूत् ॥ ९ ॥ पुनरप्यच्युतविनिपातमात्रफलमखिलभूमंडलश्लाघ्यचेदिराजकुले जन्म अव्याहतैश्वर्य्यं शिशुपालत्वेप्यवाप ॥ १० ॥ तत्र त्वखिलानामेव स भगवन्नाम्नां त्वंकारकारणमभवत् ॥ ११ ॥ ततश्च तत्कालकृतानां तेषामशेषाणामेवाच्युतनाम्नामनवरतमनेकजन्मसु वर्द्धितविद्वेषानुबंधिचित्तो विनिंदनसंतर्जनादिषूच्चारणमकरोत् ॥ १२ ॥ तच्च रूपमुत्फुल्लपद्मदलामलाक्षिमत्युज्ज्वलपीतवस्त्रधार्यमलकिरीटकेयूरहारकटकादिशोभितमुदारचतुर्बाहुशंखचक्रगदाधरमतिप्ररूढवैरानुभावादटनभोजनस्नानासनशयनादिष्वशेषावस्थान्तरेषु नान्यत्रोपययावस्य चेतसः ॥ १३ ॥ ततस्तमेवाक्रोशेषूच्चारयंस्तमेव हृदयेन धारयन्नात्मवधाय यावद्भगवद्धस्तचक्रांशुमालोज्ज्वलमक्षयतेजस्स्वरूपं ब्रह्मभूतमपगतद्वेषादिदोषं भगवंतमद्राक्षीत् ॥१४॥

॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ तत्र त्विति॥ त्वंकाराणि करोतीति त्वंकारकं तस्य कारणं तत्प्रवृत्तिनिमित्तम् ॥ ११ ॥ ततश्चेति ॥ ऋषिप्रोक्तनामनिर्वचनाऽनादरेण निंदनार्थमुपेक्षया च भगवन्नाम्नामुच्चारणमकरोदिति संकीर्त्तनोक्तिः ॥ १२ ॥ तच्चेति ॥ तच्चेति मूर्त्तिध्यानोक्तिः ॥ १३ ॥ १४ ॥

॥ ९ ॥ ६ ॥ रजोद्रेकेति ॥ रजोद्रेकेत्यार्षस्संधिः । ब्रह्मशापवशादेव रजस उद्रेकेण अन्यथा ग्राहिण्येकाग्रा मतिर्यस्य सः । न तद्भावनारूपाद्योगात् ततोवाप्तो वध एव हेतुर्यस्यां ताम् अखिलत्रैलोक्याधिक्यकारिणीं निरतिशयां भोगसंपदमवापेत्यन्वयः ॥ ७ ॥ नेति ॥ अतस्तस्मिन्मनसोनालंबिनि कृते अविषयीकृते परब्रह्मभूते तल्लयं सायुज्यं नावाप ॥ ८ ॥ एवमिति ॥ एवं दशाननत्वेपि अस्य वध्यमानस्यांतःकरणे मनुष्यबुद्धिरेवाभूत् न त्वच्युतोयमित्यासक्तिः ॥ ९ ॥ पुनरिति ॥ अच्युताद्विनिपातमात्रफलं श्रेष्ठं जन्मैश्वर्यं च केवलं शिशुपालत्वे प्राप्तः ॥ १० ॥ अंते तस्य मोक्षं सहेतुकमाह–तत्र त्वित्यादिना ॥ तत्र त्विति ॥ भगवन्नाम्नां त्वंकारस्तुच्छीकारस्तत्र कारणमभवत् । अधिक्षेपकारणभूतो जात इत्यर्थः । एतेन तन्नामश्रवणासक्तिरुक्ता ॥ ११ ॥ ततश्चेति ॥ तर्जनं भर्त्सनं निंदनाद्यर्थमेव तत्कालकृतानां देवकीनंदनः कंसध्वंसीत्यादिनाम्नां नित्यमुच्चारणमकरोदित्यर्थः । तदनेन कीर्तनावृत्तिरुक्ता ॥ १२ ॥ मूर्तिध्याननिष्ठामाह–तच्च रूपमिति ॥ उत्फुल्लपद्मदलामलाक्षमित्यादिविशेषयुक्तं रूपं बुद्धितश्चेतसो नान्यत्र ययावित्यन्वयः ॥ १३ ॥ तदेवं विशुद्धचित्तस्यातिद्वेषादेरपगमात् ब्रह्मरूपसाक्षात्कारेण ध्वस्ताशेषपापस्य मोक्षोऽभूदित्याह–तत इति ॥ अक्रोशेषु आक्षेपोक्तिषु भगवता हस्तक्षिप्तं यच्चक्रं तस्यांशुमालाभिरुज्ज्वलम् ॥ १४ ॥

तावच्च भगवच्चक्रेणाशु व्यापादितस्तत्स्मरणदग्धाखिलाघसंचयो भगवतांतमुपनीतस्ततस्मिन्नेव लयमुपययौ ॥ १५ ॥ एतत्तवाखिलं मयाभिहितम् ॥ १६ ॥ अयं हि भगवान् कीर्त्तितश्च संस्मृतश्च द्वेषानुबंधेनापि अखिलसुरासुरादिदुर्लभं फलं प्रयच्छति किमुत सम्यग्भक्तिमतामिति ॥ १७ ॥ वसुदेवस्य त्वानकदुंदुभेः पौरवीरोहिणीमदिराभद्रादेवकीप्रमुखा बह्व्यः पत्न्योऽभवन् ॥ १८ ॥ बलभद्रशठसारणदुर्मदादीन्पुत्रान्रोहिण्यामानकदुंदुभिरुत्पादयामास ॥ १९ ॥ बलदेवोपि रेवत्यां विशठोल्मुकौ पुत्रावजनयत् ॥ २० ॥ सार्ष्टिमार्ष्टिशिशुसत्यसत्यधृतिप्रमुखाः सारणात्मजाः ॥ २१ ॥ भद्राश्वभद्रबाहुदुर्दमभूताद्याः रोहिण्याः कुलजाः ॥ २२ ॥ नंदोपनंदकृतकाद्या मदिरायास्तनयाः ॥ ॥ २३ ॥ भद्रायाश्चोपनिधिगदाद्याः ॥ २४ ॥ वैशाल्यां च कौशिकमेकमेवाजनयत् ॥ २५ ॥ आनकदुंदुभेर्देवक्यामपि कीर्त्तिमत्सुषेणोदायुभद्रसेनऋजदासभद्रदेवाख्याः षट् पुत्रा जज्ञिरे ॥ २६ ॥ तांश्च सर्वानेव कंसोघातितवान् ॥ २७ ॥ अनंतरं च सप्तमं गर्भमर्द्धरात्रे भगवत्प्रहिता योगनिद्रा रोहिण्या जठरमाकृष्य नीतवती ॥ २८ ॥ कर्षणाच्चासावपि संकर्षणाख्यामगमत् ॥ २९ ॥ ततश्च सकलजगन्महातरुमूलभूतो भूतभविष्यदादिसकलसुरासुरमुनिजनमनसामप्यगोचरोऽब्जभवप्रमुखैरनलमुखैःप्रणम्यावनिभारहरणाय प्रसादितो भगवाननादिमध्यनिधनो देवकीगर्भमवततार वासुदेवः ॥ ३० ॥ तत्प्रसादविवर्द्धमानोरुमहिमा च योगनिद्रा नंदगोपपत्न्या यशोदाया गर्भमधितिष्ठितवती ॥ ३१ ॥

तावदिति ॥ लयं सायुज्यम् ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ ॥ २९ ॥ ३० ॥ ३१ ॥

॥ १५ ॥ १६ ॥१७॥ शिशुपालजन्मोक्त्या प्रसक्तानुप्रसक्तं समाप्य प्रस्तुतं वंशमाह—वसुदेवस्य त्वित्यादिना ॥ १८ ॥ तस्य रोहिण्यां वंशमाह—बलभद्रेत्यादिना रोहिण्याः कुलजात इत्यंतेन ॥ १९ ॥ २० ॥ सार्ष्टीति॥ सार्ष्टिप्रमुखास्तस्य बलभद्रस्यैवात्मजा इति क्वचित्पाठः ॥ २१ ॥ २२ ॥ ॥ २३ ॥ भद्राया इति ॥ याद्या इति च पाठः ॥ २४ ॥ वैशाल्यामिति ॥ शैब्यां चेति पाठः ॥ २५॥२६॥२७॥ वसुदेवपुत्रस्यैव सतो बलभद्रस्य प्रागुक्तां रोहिणीपुत्रतां समर्थयितुमाह—अनंतरं चेति ॥ देवकीजठरादाकृष्य रोहिणीजठरं प्रत्यानीतवती ॥२८ ॥ एतदेव संकर्षणसमाख्ययोपपादयति—संकर्षणाच्चेति ॥ २९ ॥ ततश्चेति ॥ सकलजगदेव महातरुस्तस्य मूलभूतः भूता वर्तमाना अतीताश्च भविष्यतश्च आदिशब्दात्तत्तल्लोकवर्तिनो महांतस्सकलास्सुरासुरमुनिजनास्तेषां मनसामप्यगोचरः । अब्जभवप्रमुखैर्ब्रह्ममुख्यैः अनलमुखैर्देवैः प्रसादितो वासुदेवो देवक्या गर्भमवततार ॥ ३० ॥ तत्प्रसादेति ॥ तत्प्रसादेन विवर्धमानः उरुमहिमा सकलजगन्मोहनसर्वपूज्यादिलक्षणो यस्यास्सा योगनिद्रा ॥ ३१ ॥

सुप्रसन्नादित्यचंद्रादिग्रहमव्यालादिभयं स्वस्थमानसमखिलमेवैतज्जगदपास्ताधर्ममभवत्तस्मिंश्च पुंडरीकनयने जायमाने ॥ ३२ ॥ जातेन च तेनाखिलमेवैतत्सन्मार्गवर्त्ति जगदक्रियत ॥ ३३ ॥ भगवतोप्यत्र मर्त्यलोकेऽवतीर्णस्य षोडशसहस्राण्येकोत्तरशताधिकानि भार्याणामभवन् ॥ ३४ ॥ तासां च रुक्मिणी सत्यभामा जांबवती चारुहासिनीप्रमुखा ह्यष्टौ पत्न्यः प्रधाना बभूवुः ॥ ३५ ॥ तासु चाष्टावयुतानि लक्षं च पुत्राणां भगवानखिलमूर्तिरनादिमानजनयत् ॥ ३६ ॥ तेषां च प्रद्युम्नचारुदेष्णसांबादयः त्रयोदश प्रधानाः ॥ ३७ ॥ प्रद्युम्नोपि रुक्मिणस्तनयां रुक्मवतीं नामोपयेमे ॥ ३८ ॥ तस्यामनिरुद्धो जज्ञे ॥ ३९ ॥ अनिरुद्धोऽपि रुक्मिण एव पौत्रीं सुभद्रां नामोपयेमे ॥ ४० ॥ तस्यामस्य वज्रो जज्ञे ॥ ४१ ॥ वज्रस्य प्रतिबाहुः तस्यापि सुचारुः ॥ ४२ ॥ एवमनेकशतसहस्रपुरुषसंख्यस्य यदुकुलस्य पुत्रसंख्या वर्षशतैरपि वक्तुं न शक्यते ॥ ४३ ॥ यतो हि श्लोकाविमावत्र चरितार्थौ ॥ ४४ ॥ तिस्रः कोटयस्सहस्राणामष्टाशीतिशतानि च ॥ कुमाराणां गृहाचार्याश्चापयोगेषु ये रताः ॥ ४५ ॥ संख्यानं यादवानां कः करिष्यति महात्मनाम् ॥ यत्रायुतानामयुतलक्षेणास्ते सदाहुकः ॥ ४६ ॥ देवासुरे हता ये तु दैतेयास्सुमहाबलाः ॥ उत्पन्नास्ते मनुष्येषु जनोपद्रवकारिणः ॥ ४७ ॥ तेषामुत्सादनार्थाय भुवि देवा यदोः कुले ॥ अवतीर्णाः कुलशतं यत्रैकाभ्यधिकं द्विज ॥ ४८ ॥ विष्णुस्तेषां प्रमाणे च प्रभुत्वे च व्यवस्थितः ॥ निदेशस्थायिनस्तस्य ववृधुस्सर्वयादवाः ॥ ४९ ॥ इति प्रसूतिं वृष्णीनां यश्शृणोति नरः सदा ॥ स सर्वैः पातकैर्मुक्तो विष्णुलोकं प्रपद्यते ॥ ५० ॥ इति श्रीविष्णुमहापुराणे चतुर्थांशे पंचदशोऽध्यायः ॥ १५ ॥ ॥

॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ देवासुर इति ॥ देवासुरेयुद्धे॥ ॥४७॥४८॥ विष्णुरिति ॥ प्रमाणे प्रतिकार्यनिर्णये ॥ ४९ ॥ ५० ॥ इति श्रीविष्णुमहापुराणेविष्णुचित्तीयव्याख्याने चतुर्थांशे पंचदशोऽध्यायः ॥ १५ ॥ ॥

॥ सुप्रसन्नेति ॥ तथा च तस्मिञ्जायमाने प्रसन्नादित्यचंद्रादिलक्षणं जगदभवदित्यन्वयः ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ तास्विति॥ आदिमान्न भवतीत्यनादिमान् ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ॥ ४१ ॥ ४२ ॥ ४३ ॥ यत इति ॥ चरितार्थौ यथार्थौ ॥ ४४ ॥ तिस्र इति ॥ चापयोगेषु चापशिक्षासु ये रताः ते चापाचार्याः ॥ ४५ ॥ संख्यानमिति ॥ एकैकश्च बहूञ्छिक्षयतीति ततोप्यधिकाः शिष्या निष्पन्नविद्यातिबलाश्च ततोप्यधिकतरा इत्यानंत्यम् । यत्र सदा आहुकोऽत्र यदुराज ॥ ४६ ॥ एवं यादवानामसंख्येयत्वे दुर्जयत्वे च हेतुमाह–देवासुर इत्यादित्रिभिः देवासुर इति ॥ देवासुरे युद्धे देवैर्हता इत्यर्थः ॥ ॥४७॥ ४८ ॥ विष्णुरिति ॥ प्रमाणे कार्यनिर्णायकत्वे प्रभुत्वे पालकत्वे च निर्देशे आज्ञायां स्थातुं शीलं येषां ते ववृधुः पुत्रधनादिभिर्वृद्धिं प्राप्ताः ॥ ४९ ॥ ५० ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां चतुर्थांशे पंचदशोध्यायः ॥ १५ ॥

॥ श्रीपराशर उवाच ॥ इत्येष समासनस्ते यदोर्वंशः कथितः ॥ १ ॥ अथ दुर्वसोर्वंशमवधारय ॥ २ ॥ दुर्वसोर्वह्निरात्मजः वह्नेर्भार्गः भार्गाद्भानुः ततश्च त्रयीसानुः तस्माच्च करंदमः तस्यापि मरुत्तः ॥ ३ ॥ सोनपत्योभवत् ॥ ४ ॥ ततश्च पौरवं दुष्यंतं पुत्रमकल्पयत् ॥ ५ ॥ एवं ययातिशापात्तद्वंशः पौरवमेव वंशं समाश्रितवान् ॥ ६ ॥ इति श्रीविष्णुमहापुराणे चतुर्थांशे षोडशोऽध्यायः ॥ १६ ॥ ॥ श्रीपराशर उवाच ॥ द्रुह्योस्तु तनयो बभ्रुः ॥ १ ॥ बभ्रोस्सेतुः ॥ २ ॥ सेतुपुत्र आरब्धनामा ॥ ३ ॥ आरब्धस्यात्मजो गांधारः गांधारस्य धर्मः धर्माद् घृतः घृतात् दुर्दमः ततः प्रचेताः ॥ ४ ॥ प्रचेतसः पुत्रश्शतधर्मः बहुलानां म्लेच्छानामुदीच्यानामाधिपत्यमकरोत् ॥ ५ ॥ इति श्रीविष्णुमहापुराणे चतुर्थांशे सप्तदशोऽध्यायः ॥ १७ ॥ ॥ श्रीपराशर उवाच ॥ ययातेश्चतुर्थपुत्रस्यानोस्सभानलचक्षुःपरमेषुसंज्ञास्त्रयः पुत्रा बभूवुः ॥ १ ॥ सभानलपुत्रः कालानलः ॥ २ ॥ कालानलात्सृंजयः ॥ ३ ॥ सृंजयात् पुरंजयः ॥ ४ ॥ पुरंजयाज्जनमेजयः ॥ ५ ॥ तस्मान्महाशालः ॥ ६ ॥ तस्माच्च महामनाः ॥ ७ ॥ तस्मादुशीनरतितीक्षू द्वौ पुत्रावुत्पन्नौ ॥ ८ ॥ उशीनरस्यापि शिबिनृगनवकृमिवर्माख्याः पंच पुत्रा बभूवुः ॥ ९ ॥ पृषदर्भसुवीरकेकयमद्रकाश्चत्वारश्शिबिपुत्राः ॥ १० ॥

इतीति ॥ एष यदोर्वंशस्ते समासतः कथितः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये चतुर्थांशे षोडशोऽध्यायः ॥ १६ ॥ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ प्रचेतस इति ॥ द्रुह्युवंश्यः प्रचेतसः पुत्रः म्लेच्छानामाधिपत्यमकरोत् ॥ ५ ॥ छ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये चतुर्थांशे सप्तदशोऽध्यायः ॥ १७ ॥ छ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ एवमिति ॥ तद्वंशः तस्य तुर्वसोर्वंशः ॥ ६ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां चतुर्थांशे षोडशोध्यायः ॥ १६ ॥ तदेवं देवयान्याः पुत्रयोर्वंशमुक्त्वा शर्मिष्ठायाः ज्येष्ठपुत्रस्य द्रुह्योर्वंशमाह–द्रुह्योस्त्वित्यादिना द्रुह्योस्त्विति ॥ उदंतस्य द्रुह्युशब्दस्य अदंतत्वे च प्रयोगो वर्तते दशमाध्याये ॥ १ ॥ २ ॥ सेतुपुत्र इति ॥ अंधनामेति च पाठः ॥ ३ ॥ ४ ॥ प्रचेतस इति ॥ म्लेच्छानामाधिपत्यमकरोदिति तदाधिपत्येन ययातिशापो दर्शितः ॥ ५ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां चतुर्थांशे सप्तदशोऽध्यायः ॥ १७ ॥ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

तितीक्षोरपि रुशद्रथः पुत्रोऽभूत् ॥ ११ ॥ तस्यापि हेमः हेमस्यापि सुतपाः सुतपसश्च बलिः ॥ १२ ॥ यस्य क्षेत्रे दीर्घतमसांगवंगकलिंग सुह्मपौंड्राख्यं वालेयं क्षत्रमजन्यत ॥ १३ ॥ तन्नामसंततिसंज्ञाश्च पंचविषयाः बभूवुः ॥ १४ ॥ अंगादनपानस्ततो दिविरथस्तस्माद्धर्मरथः ॥ १५ ॥ ततश्चित्ररथः रोमपादसंज्ञः ॥ १६ ॥ यस्य दशरथो मित्रं जज्ञे ॥ १७ ॥ यस्याजपुत्रो दशरथश्शांतां नाम कन्यामनपत्यस्य दुहितृत्वे युयोज ॥ १८ ॥ रोमपादाच्चतुरंगः तस्मात्पृथुलाक्षः ॥ १९ ॥ ततश्चंपः यश्चंपां निवेशयामास ॥ २० ॥ चंपस्य हर्यंगो नामात्मजोऽभूत् ॥ २१ ॥ हर्यंगाद्भद्ररथः भद्ररथाद्बृहद्रथः बृहद्रथाद्बृहत्कर्मा बृहत्कर्मणश्च बृहद्भानुस्तस्माच्च बृहन्मनाः बृहन्मनसो जयद्रथः ॥ २२ ॥ जयद्रथो ब्रह्मक्षत्रांतरालसंभूत्यां पत्न्यां विजयं नाम पुत्रमजीजनत् ॥ २३ ॥ विजयश्च धृतिं पुत्रमवाप ॥ २४ ॥ तस्यापि धृतव्रतः पुत्रोऽभूत् ॥ २५ ॥ धृतव्रतात्सत्यकर्मा ॥ २६ ॥ सत्यकर्मणस्त्वतिरथः ॥ २७ ॥ यो गंगांगतो मंजूषागतं पृथापविद्धं कर्णं पुत्रमवाप ॥ २८ ॥ कर्णाद्वृषसेनः इत्येतदंता अंगवंश्याः ॥ २९ ॥ अतश्च पूरुवंशं श्रोतुमर्हसि ॥ ३० ॥ इति श्रीविष्णुमहापुराणे चतुर्थांशेऽष्टादशोऽध्यायः ॥ १८ ॥ ॥ श्रीपराशर उवाच ॥ पूरोर्जनमेजयस्तस्यापि प्रचिन्वान् प्रचिन्वतः प्रवीरः प्रवीरान्मनस्युर्मनस्योश्चाभयदः तस्यापि सुद्युस्सुद्यो र्बहुगतः तस्यापि संयातिस्संयातेरहंयातिः ततो रौद्राश्वः ॥ १ ॥

॥ ११ ॥ १२ ॥ यस्येति ॥ बालेयं बलेः क्षेत्रजम् ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ जयद्रथ इति ॥ ब्रह्मक्षत्रांतरालसंभूत्यां प्रातिलोम्येन ब्रह्मक्षत्रसंकरजातायां पत्न्यां विजयाख्यं पुत्रमजीजनत् अतो विजयायाः सूताः ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ य इति ॥ पृथापविद्धं पृथया कुंत्या अपविद्धं परित्यक्तम् । "मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा । यं पुत्रं प्रतिगृह्णीयादपविद्धः स उच्यते" इति स्मृतेः ॥ २८ ॥ ॥ २९ ॥ ३० ॥ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये चतुर्थांशेऽष्टादशोऽध्यायः ॥ १८ ॥ ॥ १ ॥

॥ ११ ॥ १२ ॥ यस्येति ॥ यस्य बलेः क्षेत्रे भार्यायाम् अतो बलिक्षेत्रजत्वाद्बालेयम् ॥१३॥ तन्नामसंततिसंज्ञा इति ॥ अंगवंगादिनामानो यास्संततयः तत्संज्ञा एव संज्ञा येषां ते विषया देशा बभूवुः ॥ १४ ॥ ॥ १५ ॥ तत इति ॥ रोमपादसंज्ञश्चित्ररथः ॥ १६ ॥ यस्येति ॥ दशरथो यस्य मित्रं जज्ञे ॥ १७ ॥ १८ ॥ १९ ॥ तत इति ॥ चंपां पुरीम् ॥ २० ॥ २१ ॥ २२ ॥ जयद्रथ इति ॥ प्रातिलोम्येन ब्रह्मक्षत्रयोरंतराले संकरे संभूतिर्जन्म यस्यास्तस्यास्सुतायामित्यर्थः ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ य इति ॥ 'ब्राह्मण्यां क्षत्रियात्सूतः' इति स्मृतेः । अतो विजयस्य सूतत्वात्तद्वंश्यः कर्णस्सूतत्वेन प्रसिद्धः । मंजूषागतं काष्ठपंजरस्थं पृथया कुंत्या अपविद्धं कन्यात्वाल्लज्जया परित्यक्तं कर्णं पुत्रमवाप "मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा । यं पुत्रं प्रतिगृह्णीयादपविद्धस्स उच्यते ॥" इति स्मृतेः ॥२८॥ ॥ २९ ॥ ३० ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां चतुर्थांशेऽष्टादशोऽध्यायः ॥ १८ ॥ ॥ १ ॥

ऋतेषुकक्षेषुस्थंडिलेषुकृतेषुजलेषुधर्मेषुधृतेषुस्थलेषुसन्नतेषुवनेषुनामानो रौद्राश्वस्य दश पुत्रा बभूवुः ॥ २ ॥ ऋतेषोरंतिनारः पुत्रोऽभूत् ॥ ३ ॥ सुमतिमप्रतिरथं ध्रुवं चाप्यंतिनारः पुत्रानवाप ॥ ४ ॥ अप्रतिरथस्य कण्वः पुत्रोऽभूत् ॥ ५ ॥ तस्यापि मेधातिथिः ॥ ६ ॥ यतः कण्वायना द्विजा बभूवुः ॥ ७ ॥ अप्रतिरथस्यापरः पुत्रोऽभूदैलीनः ॥ ८ ॥ ऐलीनस्य दुष्यंताद्याश्चत्वारः पुत्रा बभूवुः ॥ ९ ॥ दुष्यंताच्चक्रवर्त्ती भरतोऽभूत् ॥ १० ॥ यन्नामहेतुर्देवैश्श्लोको गीयते ॥ ११ ॥ माता भस्त्रा पितुः पुत्रो येन जातः स एव सः ॥ भरस्व पुत्रं दुष्यंतमावमंस्थाश्शकुंतलाम् ॥ १२ ॥ रेतोधाः पुत्रो नयति नरदेव यमक्षयात् ॥ त्वं चास्य धाता गर्भस्य सत्यमाह शकुंतला ॥ १३ ॥ भरतस्य पत्नित्रये नव पुत्रा बभूवुः ॥ १४ ॥ नैते ममानुरूपा इत्यभिहितास्तन्मातरः परित्यागभयात्तत्पुत्राञ्जघ्नुः ॥ १५ ॥

॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ मातेत्यादि ॥ भस्त्रा चर्मधृतिः तत्स्थानीया माता धृतौ निक्षिप्तं द्रव्यं न धृतेः किं तु निक्षेप्तुरेव एवं जनयितुरेव पुत्रः न मातुः स एव सः तद्बीजोपादानरूपत्वाद्देहस्य अतः स्वपुत्रं भरेति भरतनामनिरुक्तिः ॥ १२ ॥ रेतोधा इति ॥ पुरा बीजक्षेत्रिणोः पुत्रविषये विवादे यमसभायां पुत्रं रेतोधाः गर्भस्याधातैव नयति स्म स्वीचक्रे न तु क्षेत्री अस्य च गर्भस्य त्वमाधाता अतस्तवायं पुत्र इति सत्यमाह शकुंतला ॥ १३ ॥ १४ ॥ १५ ॥

॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ यन्नामहेतुरिति ॥ दुष्यंतो मृगयार्थम् अरण्यं गतो विश्वामित्रान्मेनकायामुत्पन्नां शकुंतलां कण्वाश्रमे संगम्य गांधर्वेण तामुद्वाह्य तस्यां गर्भमाधाय स्वपुरं गतः । तत्सर्वं विसस्मार तां च जातपुत्रां कण्वप्रहितेन तच्छिष्येणानीतामविश्वासादस्वीकुर्वंतं दुष्यंतं प्रति देवैरुक्तोयं श्लोकः ॥ ११ ॥ मातेति ॥ भस्त्रा चर्ममयी वृतिः तत्स्थानीया माता वीर्यधारणमात्रेण अतो न तस्याः पुत्रः किं तु निषेक्तुः पितुरेव किं च येन पित्रा जातस्स एव पुत्रस्तदंशभूतबीजोत्पादनात् श्रुतिश्च "पतिर्जायां प्रविशति गर्भो भूत्वा स मातरम् । तस्यां पुनर्नवो भूत्वा दशमे मासि जायते, आत्मा वै पुत्रनामासि" इत्यादि । अत्र स्वपुत्रं भरतं भर बिभृहि शकुंतलां निर्दोषां मावमंस्था इति भरतनामनिरुक्तिः ॥ १२ ॥ रेतोधा इति ॥ किं च रेतोधाः रेतस्सेक्ता संततिकर्ता पुत्रो यमक्षयान्नरकसकाशात्तत्रस्थं पितरं स्वर्गं नयति । उन्नयतीति पाठे उद्धरतीत्यर्थः । मत्पुत्रो न वेति संशयं मा कृथा इत्याह—त्वमेव चास्य गर्भस्य धाता आधारकर्तेति सत्यमाह शकुंतला । रेतोधाः पुत्रं नयतीति पाठे बीजक्षेत्रिणोः पुत्रविषयविवादे धर्मसभायां स्थितं पुत्रं रेतोधा वीर्याधातैव न्यायतो निर्जित्य ततो नयति न तु क्षेत्रीत्यर्थः । एवं चानुशासनिके पर्वण्याख्यातं शेषं पूर्ववत् । अत्र पूर्वश्लोकस्यैव भरतनामनिरुक्तिरत्वान्नामप्रवृत्तिहेतुः श्लोको गीयत इत्येकवचनमविरुद्धम् ॥ १३ ॥ १४ ॥ नेति ॥ नैते ममानुरूपा मत्सदृशा भवंतीति भरतेनोक्तास्तेषां पुत्राणां मातरो जीवत्सु तेषु वै सादृश्यानुसंधानेन व्यभिचारशंकया अस्मान्परित्यक्ष्यतीति भयात्पुत्राञ्जघ्नुः हतवत्यः ॥ १५ ॥

ततोऽस्य वितथे पुत्रजन्मनि पुत्रार्थिनो मरुत्सोमयाजिनो दीर्घतमसः पार्ष्ण्यपास्तद्बृहस्पतिवीर्यादुतथ्यपत्न्यां ममतायां समुत्पन्नो भरद्वाजाख्यः पुत्रो मरुद्भिर्दत्तः ॥ १६ ॥ तस्यापि नामनिर्वचनश्लोकः पठ्यते ॥ १७ ॥ मूढे भर द्वाजमिमं भरद्वाजं बृहस्पते ॥ यातौ यदुक्त्वा पितरौ भरद्वाजस्ततस्त्वयम् ॥ इति ॥ १८ ॥ भरद्वाजस्स तस्य वितथे पुत्रजन्मनि मरुद्भिर्दत्तः ततो वितथसंज्ञामवाप ॥ १९ ॥ वितथस्यापि मन्युः पुत्रोऽभवत् ॥ २० ॥ बृहत्क्षत्रमहावीर्यनगरगर्गा अभवन्मन्युपुत्राः ॥ २१ ॥ नगरस्य संकृतिस्संकृतेर्गुरुप्रीतिरंतिदेवौ ॥ २२ ॥ गर्गाच्छिनिः ततश्च गार्ग्याश्शैन्याः क्षत्रोपेता द्विजातयो बभूवुः ॥ २३ ॥ महावीर्याच्च दुरुक्षयो नाम पुत्रोऽभवत् ॥ २४ ॥ तस्य त्रय्यारुणिः पुष्करिणः कपिश्च पुत्रत्रयमभूत् ॥ २५ ॥ तच्च पुत्रत्रितयमपि पश्चाद्विप्रतामुपजगाम ॥ २६ ॥ बृहत्क्षत्रस्य सुहोत्रः ॥ २७ ॥ सुहोत्राद्धस्ती य इदं हस्तिनपुरमावासयामास ॥ २८ ॥

तत इति ॥ दीर्घतमस इति बृहस्पतेरग्रजस्योतथ्यस्य पत्न्या ममताख्याया गर्भे उतथ्यनिषिक्ते दीर्घतमस्संज्ञे मुनौ तिष्ठत्येव बृहस्पतिश्च कामाभिभूतश्चौर्येण स्ववीर्यं न्यषिंचत् तद्गर्भस्थेनौतथ्येन स्वपादपश्चाद्भागेन मातुर्योनेर्निष्कासितं भुवि पतितं ततः स तु गर्भस्थ औतथ्यो बृहस्पतिनांधो भवेति शप्तो दीर्घतमा जातः । तं तु भुवि पतितबृहस्पतिवीर्यजं बालं वीक्ष्य तौ पितरौ ममताबृहस्पती द्वाभ्यामावाभ्यां जनितत्वाद्द्वाजमिमं त्वं भर बिभृहीत्यन्योन्यमुक्त्वा तं पुत्रं त्यक्त्वा यद्गतौ अतो भरद्वाजाख्यः सः ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ सुहोत्रादिति ॥ य इदं हस्तिनपुरं य इदं धर्मक्षेत्रं योऽयं सांप्रतमिति च निर्देशलिंगैः परीक्षिद्राज्यकाले हस्तिनपुरासन्नकुरुक्षेत्रे तेनेदं पुराणमुक्तमिति गम्यते ॥ २८ ॥

तत इति ॥ वितथे व्यर्थे सति । अत्रैवमितिहासः बृहस्पतेरग्रजस्य उतथ्यस्य ममताख्यपत्नी गर्भिण्यासीत् । तस्यां बृहस्पतिः कामाभिभूतो वीर्यं व्यसृजत् । तच्च गर्भं प्राविशत् । गर्भस्थेन स्थानसंकोचभयात् पार्ष्णिप्रहारेणापास्तं बहिः पतितमप्यमोघवीर्यतया बृहस्पतेर्भरद्वाजनामा पुत्रोऽभवत् । गर्भस्थश्च बृहस्पतिना अस्मादेवापराधादंधो भवेति शप्तो दीर्घतमा नामाऽभवत् ॥ १६ ॥ तत्र भरद्वाजनामनिरुक्तिपरस्तत्पुत्रोत्पत्त्यभिवदनरूपोयं श्लोको देवैः पठितः ॥ १७ ॥ मूढ इति ॥ हे मूढे हे मूढमते द्वाजं द्वाभ्यां जातमिमं पुत्रं भर रक्ष एवं बृहस्पतिनोक्ता ममता तमाह । हे बृहस्पते द्वाजं द्वाभ्यां जातमिममेकाकिनी किमित्यहं रक्षिष्यामि त्वमिमं भरस्वेति परस्परमुक्त्वा यस्मात्पितरौ ममताबृहस्पती ततो यातौ ततो भरद्वाजाख्योयम् । यद्दुःखादिति पाठांतरे एवं विवदमानौ यद्दुःखाद्यन्निमित्ताद्दुःखात्पितरौ यातावित्यर्थः ॥ १८ ॥ भरद्वाज इति ॥ सः तदेवं द्वाभ्यां परित्यक्तो मरुद्भिर्भृतः मरुत्सोमाख्येन च यागेनाराधितैर्मरुद्भिस्तस्य वितथे पुत्रजन्मनि सति दत्तत्वाद्वितथसंज्ञां चावाप ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ गर्गादिति ॥ गर्गवंश्याच्छिनिवंश्यत्वाच्च गार्ग्याश्शैन्याश्चेति समाख्यताः क्षत्रिया एव संतः केनचित्कारणेन ब्राह्मणाश्च बभूवुः ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

अजमीढद्विजमीढपुरुमीढास्त्रयो हस्तिनस्तनयाः ॥ २९ ॥ अजमीढात्कण्वः ॥ ३० ॥ कण्वान्मेधातिथिः ॥ ३१ ॥ यतः कण्वायना द्विजाः ॥ ३२ ॥ अजमीढस्यान्यः पुत्रो बृहदिषुः ॥ ३३ ॥ बृहदिषोर्बृहद्धनुर्बृहद्धनुषश्च बृहत्कर्मा ततश्च जयद्रथस्तस्मादपि विश्वजित् ॥ ३४ ॥ ततश्च सेनजित् ॥ ३५ ॥ रुचिराश्वकाश्यदृढहनुवत्सहनुसंज्ञास्सेनजितः पुत्राः ॥ ३६ ॥ रुचिराश्वपुत्रः पृथुसेनः पृथुसेनात्पारः ॥ ३७ ॥ पारान्नीलः ॥ ३८ ॥ तस्यैकशतं पुत्राणाम् ॥ ३९ ॥ तेषां प्रधानः कांपिल्याधिपतिस्समरः ॥ ४० ॥ समरस्यापि पारसुपारसदश्वास्त्रयः पुत्राः ॥ ४१ ॥ सुपारात्पृथुः पृथोस्सुकृतेर्विभ्राजः ॥ ४२ ॥ तस्माच्चाणुहः ॥ ४३ ॥ यश्शुकदुहितरं कीर्त्तिं नामोपयेमे ॥ ४४ ॥ अणुहाद्ब्रह्मदत्तः ॥ ४५ ॥ ततश्च विष्वक्सेनस्तस्मादुदक्सेनः ॥ ४६ ॥ भल्लाभस्तस्य चात्मजः ॥ ४७ ॥ द्विजमीढस्य तु यवीनरसंज्ञः पुत्रः ॥ ४८ ॥ तस्यापि धृतिमांस्तस्माच्च सत्यधृतिस्ततश्च दृढनेमिस्तस्माच्च सुपार्श्वस्ततस्सुमतिस्ततश्च सन्नतिमान् ॥ ४९ ॥ सन्नतिमतः कृतः पुत्रोऽभूत् ॥ ५० ॥ यं हिरण्यनाभो योगमध्यापयामास ॥ ५१ ॥ यश्चतुर्विंशतिप्राच्यसामगानां संहिताश्चकार ॥ ५२ ॥

॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ य इति ॥ शुकदुहितरं व्यासपुत्रदुहितरं यथा हरिवंशे वायव्ये च "पराशरकुलोत्पन्नः शुको नाम महायशाः । व्यासादरण्यां संभूतो विधूमोऽग्निरिव ज्वलन् ॥ स तस्यां पितृकन्यायां पीवर्यां जनयिष्यति । कृष्णं गौरं प्रभुं शंभुं तथा भूरिश्रुतं जयम् ॥ कन्यां कीर्त्तिमतीं षष्ठीं योगिनीं योगमातरम् ॥ ब्रह्मदत्तस्य जननीं महिषीमणुहस्य च" इति ॥ ४४ ॥ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ य इति ॥ प्राच्यसामगानां चतुर्विंशतिसंहिताः यश्चकार ॥ ५२ ॥

॥ २९ ॥ अजमीढादिति ॥ अजमीढस्य कण्वादिरेको वंशः ॥ ३० ॥ ३१ ॥ ३२ ॥ अजमीढस्येति ॥ बृहदिषुप्रमुखोन्यः ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ तेषामिति ॥ कांपिल्यं नगरं तस्याधिपतिः ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ य इति ॥ शुकस्य व्यासपुत्रस्य दुहितरमुपयेमे । तथा च हरिवंशे वायवीये च–"पराशरकुलोत्पन्नः शुको नाम महायशाः । व्यासादरण्यां संभूतो विधूमोग्निरिव ज्वलन् ॥ स तस्यां पितृकन्यायामपत्यं जनयिष्यति । कृष्णं गौरं प्रभुं शंभुं तथा भूरिश्रुतं जयम् । कन्यां कीर्तिमतीं षष्ठीं योगिनीं योगमातरम् । ब्रह्मदत्तस्य जननीं महिषीमणुहस्य च" इति ॥ ४४ ॥ ४५ ॥ ४६ ॥ भल्लाभ इति ॥ भल्लाभः भल्लाटः इति च पाठः ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥

कृताश्चोग्रायुधः ॥ ५३ ॥ येन प्राचुर्येण नीपक्षयः कृतः ॥ ५४ ॥ उग्रायुधात्क्षेम्यः क्षेम्यात्सुधीरस्तस्माद्रिपुंजयः तस्माच्च बहुरथ इत्येते पौरवाः ॥ ५५ ॥ अजमीढस्य नलिनी नाम पत्नी तस्यां नीलसंज्ञः पुत्रोऽभवत् ॥ ५६ ॥ तस्मादपि शांतिः शांतेस्सुशांतिस्सुशांतेः पुरंजयः तस्माच्च ऋक्षः ॥ ५७ ॥ ततश्च हर्यश्वः ॥ ५८ ॥ तस्मान्मुद्गलसृंजयबृहदिषुयवीनरकांपिल्यसंज्ञाः पंचानामेव तेषां विषयाणां रक्षणायालमेते मत्पुत्रा इति पित्राभिहिताः पांचालाः ॥ ५९ ॥ मुद्गलाच्च मौद्गल्याः क्षत्रोपेता द्विजातयो बभूवुः ॥ ६० ॥ मुद्गलाद्धर्यश्वः ॥ ६१ ॥ हर्यश्वाद्दिवोदासोऽहल्या च मिथुनमभूत् ॥ ६२ ॥ शरद्वतश्चाहल्यायां शतानंदोऽभवत् ॥ ६३ ॥ शतानंदात्सत्यधृतिर्धनुर्वेदान्तगो जज्ञे ॥ ६४ ॥ सत्यधृतेर्वराप्सरसमुर्वशीं दृष्ट्वा रेतस्कन्नं शरस्तंबे पपात ॥ ६५ ॥ तच्च द्विधागतमपत्यद्वयं कुमारः कन्या चाभवत् ॥ ॥ ६६ ॥ तौ च मृगयामुपयातश्शंतनुर्दृष्ट्वा कृपया जग्राह ॥ ६७ ॥ ततः कुमारः कृपः कन्या चाश्वत्थाम्नो जननी कृपी द्रोणाचार्यस्य पत्न्यभवत् ॥ ६८ ॥ दिवोदासस्य पुत्रो मित्रायुः ॥ ६९ ॥ मित्रायोश्च्यवनो नाम राजा ॥ ७० ॥ च्यवनात्सुदासः सुदासात्सौदासः सौदासात्सहदेवस्तस्यापि सोमकः ॥ ७१ ॥ सोमकाज्जंतुः पुत्रशतज्येष्ठोऽभवत् ॥ ७२ ॥ तेषां यवीयान् पृषतः पृषताद्द्रुपदस्तस्माच्च धृष्टद्युम्नस्ततो धृष्टकेतुः ॥ ७३ ॥ अजमीढस्यान्यो ऋक्षनामा पुत्रोऽभवत् ॥ ७४ ॥ तस्य संवरणः ॥ ७५ ॥ संवरणात्कुरुः ॥ ७६ ॥ य इदं धर्मक्षेत्रं कुरुक्षेत्रं चकार ॥ ७७ ॥ सुधनुर्जह्नुपरीक्षित्प्रमुखाः कुरोः पुत्राः बभूवुः ॥ ७८ ॥ सुधनुषः पुत्रस्सुहोत्रस्तस्माच्च्यवनः च्यवनात् कृतकः ॥ ७९ ॥ ततश्चोपरिचरो वसुः ॥ ८० ॥

॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ शरद्वत इति ॥ शरद्वान् गौतमः तस्मात् ॥ ६३ ॥ ६४ ॥ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥

॥ ५३ ॥ येनेति ॥ नीपाः क्षत्रियविशेषाः तेषां क्षयः कृतः ॥ ५४ ॥ ५५ ॥ अजमीढस्येति ॥ अजमीढस्य नीलप्रभृतिरपरो वंशः ॥ ५६ ॥ ५७ ॥ ५८ ॥ तस्मादिति ॥ पंचानां विषयाणांमदीयानां देशानां शब्दादिविषयाणां वा ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ शरद्वतश्चेति ॥ शरद्वतश्च गौतमात् ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ अजमीढस्येति अजमीढस्य ऋक्षाच्चापरो वंशः ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥

बृहद्रथप्रत्यग्रकुशांबकुचेलमात्स्यप्रमुखाः वसोः पुत्रास्सप्ताजायंत ॥ ८१ ॥ बृहद्रथात्कुशाग्रः कुशाग्राद्वृषभः वृषभात् पुष्पवान् तस्मात्सत्य
हितः तस्मात्सुधन्वा तस्य च जतुः ॥ ८२ ॥ बृहद्रथाच्चान्यश्शकलद्वयजन्मा जरया संधितो जरासंधनामा ॥ ८३ ॥ तस्मात्सहदेवस्स
हदेवात्सोमपस्ततश्च श्रुतिश्रवाः ॥ ८४ ॥ इत्येते मया मागधा भूपालाः कथिताः ॥ ८५ ॥ इति श्रीविष्णुमहापुराणे चतुर्थांश
एकोनविंशोऽध्यायः ॥ १९ ॥ ॥ श्रीपराशर उवाच ॥ परीक्षितश्च जनमेजयश्रुतसेनोग्रसेनभीमसेनाश्चत्वारः पुत्राः ॥ १ ॥ जह्नोस्तु
सुरथोनामात्मजो बभूव ॥ २ ॥ तस्यापि विदूरथः ॥ ३ ॥ तस्मात्सार्वभौमस्सार्वभौमाज्जयत्सेनस्तस्मादाराधितस्ततश्चायुतायुरयुता
योरक्रोधनः ॥ ४ ॥ तस्माद्देवातिथिः ॥ ५ ॥ ततश्च ऋक्षोऽन्योभवत् ॥६॥ ऋक्षाद्भीमसेनस्ततश्च दिलीपः ॥ ७ ॥ दिलीपात् प्रतीपः ॥ ८ ॥
तस्यापि देवापिशंतनुबाह्लीकसंज्ञास्त्रयः पुत्रा बभूवुः ॥ ९ ॥ देवापिर्बाल एवारण्यं विवेश ॥ १० ॥ शंतनुस्तु महीपालोऽभूत् ॥ ११ ॥ अयं
च तस्य श्लोकः पृथिव्यां गीयते ॥ १२ ॥ यंयं कराभ्यां स्पृशति जीर्णं यौवनमेति सः ॥ शांतिं चाप्नोति येनाग्र्यां कर्मणा तेन शंतनुः ॥१३॥
तस्य च शंतनो राष्ट्रे द्वादशवर्षाणि देवो न ववर्ष ॥ १४ ॥ ततश्चाशेषराष्ट्रविनाशमवेक्ष्याऽसौ राजा ब्राह्मणानपृच्छत् कस्मादस्माकं राष्ट्रे
देवो न वर्षति को ममापराध इति ॥ १५ ॥ ततश्च तमूचुर्ब्राह्मणाः ॥ १६ ॥ अग्रजस्य ते हीयमवनिस्त्वया संभुज्यते अतः परिवेत्ता त्वमि
त्युक्तस्स राजा पुनस्तानपृच्छत् ॥ १७ ॥

॥ ८१ ॥ ८२ ॥ बृहद्रथादिति ॥ जरया राक्षस्या ॥ ८३ ॥ ८४ ॥ ८५ ॥ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये चतुर्थांश एकोनविं
शोऽध्यायः ॥ १९ ॥ ॥ परीक्षित इति ॥ परीक्षितः कुरुपुत्रात् ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥१३॥
॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

॥ ८१ ॥ ८२ ॥ बृहद्रथादिति ॥ शकलरूपं जन्म यस्य जरा नाम राक्षसी तया संधितः ॥ ८३ ॥ ८४ ॥ ८५ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां चतुर्थांश एकोनविं
शोध्यायः ॥ १९ ॥ ॥ कुरोः पुत्राणां मध्ये सुधनुषः वंश उक्तः । अथ कुरुपुत्रस्यैव परीक्षितो वंशमाह–परीक्षितश्चेति ॥ १ ॥ कुरुपुत्रस्यैव जह्नोर्वंशमाह–जह्नोरिति ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ततश्चेति ॥ अन्यः
पूर्वोक्तादेवाजमीढपुत्राहृक्षादन्यः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ देवापेस्तु वंशो नाभूदित्याशयेनाह–देवापिरिति ॥ १० ॥ ११ ॥ १२ ॥ यंयमिति ॥ यंयं जीर्णं पाणिना स्पृशति स यौवनमेति । शं तनोतीति शंतनुनाम
निरुक्तिः ॥ १३ ॥ प्रसंगात्परिवेतृवेदनिंदयोर्दोषं दर्शयन्नाह–तस्य चेत्यादिना ववर्ष भगवान्पर्जन्य इत्यंतेन ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

किं मयात्र विधेयमिति ॥ १८ ॥ ततस्ते पुनरप्यूचुः ॥ १९ ॥ यावद्देवापिर्न पतनादिभिर्दोषैरभिभूयते तावदेतत्तस्यार्हं राज्यम् ॥ ॥ २० ॥ तदलमेतेन तु तस्मै दीयतामित्युक्ते तस्य मंत्रिप्रवरेणाश्मराविणा तत्रारण्ये तपस्विनो वेदवादविरोधवक्तारः प्रयुक्ताः ॥ २१ ॥ तैरस्याप्यतिऋजुमतेर्महीपतिपुत्रस्य बुद्धिर्वेदवादविरोधमार्गानुसारिण्यक्रियत ॥ २२ ॥ राजा च शंतनुर्द्विजवचनोत्पन्नपरिदेवनशोकस्तान् ब्राह्मणानग्रतः कृत्वाऽग्रजस्य प्रदानायारण्यं जगाम ॥ २३ ॥ तदाश्रममुपगताश्च तमवनतमवनीपतिपुत्रं देवापिमुपतस्थुः ॥ २४ ॥ ते ब्राह्मणा वेदवादानुबंधीनि वचांसि राज्यमग्रजेन कर्त्तव्यमित्यर्थवंति तमूचुः ॥ २५ ॥ असावपि देवापिर्वेदवादविरोधयुक्तिदूषितमनेकप्रकारं तानाह ॥ २६ ॥ ततस्ते ब्राह्मणाश्शंतनुमूचुः ॥ २७ ॥ आगच्छ हे राजन्नलमत्रातिनिर्बंधेन प्रशान्त एवासावनावृष्टिदोषः पतितोयमनादिकालमभिहितवेदवचनदूषणोच्चारणात् ॥ २८ ॥ पतिते चाग्रजे नैव ते परिवेतृत्वं भवतीत्युक्तश्शंतनुस्स्वपुरमागम्य राज्यमकरोत् ॥ २९ ॥ वेदवादविरोधवचनोच्चारणदूषिते च तस्मिन्देवापौ तिष्ठत्यपि ज्येष्ठभ्रातर्यखिलसस्यनिष्पत्तये ववर्ष भगवान्पर्जन्यः ॥ ३० ॥ बाह्लीकात्सोमदत्तः पुत्रोऽभूत् ॥ ३१ ॥ सोमदत्तस्यापि भूरिभूरिश्रवशल्यसंज्ञास्त्रयः पुत्रा बभूवुः ॥ ३२ ॥ शंतनोरप्यमरनद्यां जाह्नव्यामुदारकीर्त्तिरशेषशास्त्रार्थविद्भीष्मः पुत्रोऽभूत् ॥३३॥ सत्यवत्यां च चित्रांगदविचित्रवीर्यौ द्वौ पुत्रावुत्पादयामास शंतनुः ॥ ॥ ३४ ॥ चित्रांगदस्तु बाल एव चित्रांगदेनैव गंधर्वेणाहवे निहतः ॥ ३५ ॥ विचित्रवीर्योऽपि काशीराजतनये अंबांबालिके उपयेमे ॥ ३६ ॥

॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ असाविति ॥ वेदवादविरोधयुक्तिभिः तेषां वचो यथा दूषितं भवति तथानेकप्रकारं तानाह देवापेस्तत्कालमेव पातित्यं योगसिद्ध्या आगामिकृतयुगे क्षत्रवंशकर्त्त्वेन वक्ष्यमाणत्वात्। यद्देवापिः शंतनवे पुरोहितमिति मंत्रप्रस्तुतं तत्कल्पांतरविषयं नेतव्यम् ॥२६॥ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥

॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ तदिति ॥ अश्मराविणा अश्मराविनाम्ना ॥ २१ ॥ तैरिति ॥ ऋजुमतेर्यावदुक्तार्थग्राहिणः ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ शंतनुवंशं विततत्वात्पश्चाद्वक्ष्यन्बाह्लिकवंशं तावदाह--बाह्लीकादिति ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥

तदुपभोगातिखेदाच्च यक्ष्मणा गृहीतः स पंचत्वमगमत् ॥ ३७ ॥ सत्यवतीनियोगाच्च मत्पुत्रः कृष्णद्वैपायनो मातुर्वचनमनतिक्रमणीयमिति कृत्वा विचित्रवीर्यक्षेत्रे धृतराष्ट्रपांडुतत्प्रहितभुजिष्यायां विदुरं चोत्पादयामास ॥ ३८ ॥ धृतराष्ट्रोपि गांधार्य्यां दुर्योधनदुश्शासनप्रधानं पुत्रशतमुत्पादयामास ॥ ३९ ॥ पांडोरप्यरण्ये मृगयायामृषिशापोपहतप्रजाजननसामर्थ्यस्य धर्मवायुशक्रैर्युधिष्ठिरभीमसेनार्जुनाः कुंत्यां नकुलसहदेवौ चाश्विभ्यां माद्र्यां पंचपुत्रास्ससमुत्पादिताः ॥ ४० ॥ तेषां च द्रौपद्यां पंचैव पुत्रा बभूवुः ॥ ४१ ॥ युधिष्ठिरात्प्रतिविंध्यः भीमसेनाच्छ्रुतसेनः श्रुतकीर्त्तिरर्जुनाच्छ्रुतानीको नकुलाच्छ्रुतकर्मा सहदेवात् ॥ ४२ ॥ अन्ये च पांडवानामात्मजास्तद्यथा ॥ ४३ ॥ यौधेयी युधिष्ठिरादेवकं पुत्रमवाप ॥ ४४ ॥ हिडिंबा घटोत्कचं भीमसेनात्पुत्रं लेभे ॥ ४५ ॥ काशी च भीमसेनादेव सर्वगं सुतमवाप ॥ ४६ ॥ सहदेवाच्च विजयी सुहोत्रं पुत्रमवाप ॥ ४७ ॥ रेणुमत्यां च नकुलोपि निरमित्रमजीजनत् ॥ ४८ ॥ अर्जुनस्याप्युलूप्यां नागकन्यायामिरावान्नाम पुत्रोऽभवत् ॥ ४९ ॥ मणिपुरपतिपुत्र्यां पुत्रिकाधर्मेण बभ्रुवाहनं नाम पुत्रमर्जुनोऽजनयत् ॥ ५० ॥ सुभद्रायां चार्भकत्वेपि योसावतिबलपराक्रमस्समस्तारातिरथजेता सोऽभिमन्युरजायत ॥ ५१ ॥ अभिमन्योरुत्तरायां परिक्षीणेषु कुरुष्वश्वत्थामप्रयुक्तब्रह्मास्त्रेण गर्भ एव भस्मीकृतो भगवतस्सकलसुरासुरवंदितचरणयुगलस्यात्मेच्छया कारणमानुषरूपधारिणोनुभावात्पुनर्जीवितमवाप्य परीक्षिज्जज्ञे ॥ ५२ ॥

॥ ३७ ॥ सत्यवतीति ॥ भुजिष्या दासी तस्याम् ॥ ३८ ॥ ३९ ॥ पांडोरिति ॥ पूर्वं यदुवंश्यशूरदुहितृकुंतीप्रसंगात् पांडवजन्मोक्तम् इदानीं पुरुवंश्यशंतनुपुत्रसंततिप्राप्तत्वात् पुनर्विस्मृत्त्योक्तम् । महत्वादर्जुनसंतानोंते प्रोक्तः ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८॥४९॥ मणिपुरपतीति ॥ पुत्रिकाधर्मेण "अस्यां यो जायते पुत्रस्स मे पुत्रो भविष्यति" इति परिभाषितदानेन ॥ ५० ॥ ५१ ॥ ५२ ॥

तदिति ॥ यक्ष्मणा यक्ष्मरोगेण ॥ २७ ॥ सत्यवतीनियोगाच्चेति ॥ भुजिष्याय दास्याम् ॥ ३८ ॥ ३९ ॥ पांडोरिति ॥ पूर्वं यदुवंश्यशूरदुहितृकुंतिप्रसंगादुक्तमपि पांडवानां जन्म पुनस्स्वस्थाने पूरुवंशे शंतनुसंततावुच्यत इति न पौनरुक्त्यदोषः ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ मणिपुरपतिपुत्र्यामिति ॥ मणिपुरनामनगरं तत्पतेः पुत्र्यां पुत्रिकाधर्मेण "अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम् । अस्यां यो जायते पुत्रस्स मे पुत्रो भवेदिति ॥" इति कन्यादानपरिभाषानिबंधेन ॥ ५० ॥ ५१ ॥ अभिमन्योरिति ॥ परिक्षीणेषु कुरुष्विति भगवदनुभावजीवितपरीक्षिन्नामनिरुक्तौ हेतुः ॥ ५२ ॥

योऽयं सांप्रतमेतद्भूमंडलमखंडितायतिधर्मेण पालयतीति ॥ ५३ ॥ इति श्रीविष्णुमहापुराणे चतुर्थांशे विंशोऽध्यायः ॥ २० ॥ श्रीपराशर उवाच ॥ अतः परं भविष्यानहं भूपालान्कीर्त्तयिष्यामि ॥ १ ॥ योऽयं सांप्रतमवनीपतिः परीक्षित्तस्यापि जनमेजयश्रुतसेनोग्रसेन भीमसेनाश्चत्वारः पुत्रा भविष्यंति ॥ २ ॥ जनमेजयस्यापि शतानीको भविष्यति ॥ ३ ॥ योऽसौ याज्ञवल्क्याद्वेदमधीत्य कृपा दस्त्राण्यवाप्य विषमविषयविरक्तचित्तवृत्तिश्च शौनकोपदेशादात्मज्ञानप्रवीणः परं निर्वाणमवाप्स्यति ॥ ४ ॥ शतानीकादश्वमेधदत्तो भविता ॥ ॥ ५ ॥ तस्मादप्यधिसीमकृष्णः ॥ ६ ॥ अधिसीमकृष्णान्निचक्नुः ॥ ७ ॥ यो गंगयापहृते हस्तिनपुरे कौशांब्यां निवत्स्यति ॥ ८ ॥ तस्या प्युष्णः पुत्रो भविता ॥ ९ ॥ उष्णाद्विचित्ररथः ॥ १० ॥ ततः शुचिरथः ॥ ११ ॥ तस्माद्वृष्णिमांस्ततस्सुषेणस्तस्यापि सुनीथस्सुनीथा न्नृपचक्षुस्तस्मादपि सुखिबलस्तस्य च पारिप्लवस्ततश्च सुनयस्तस्यापि मेधावी ॥ १२ ॥ मेधाविनो रिपुंजयस्ततोर्वस्तस्माच्च तिग्मस्त स्माद्बृहद्रथः बृहद्रथाद्वसुदासः ॥ १३ ॥ ततोऽपरश्शतानीकः ॥ १४ ॥ तस्माच्चोदयन उदयनाद्विहीनरस्ततश्चदंडपाणिस्ततो निमित्तः ॥ ॥ १५ ॥ तस्माच्च क्षेमकः ॥ १६ ॥ अत्रायं श्लोकः ॥ १७ ॥

य इति ॥ आयतिर्धनागमः ॥ ५३ ॥ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये चतुर्थांशे विंशोऽध्यायः ॥ २० ॥ ॥ १ ॥ २ ॥ ३ ॥ योऽसाविति ॥ शौनकोपदेशः विष्णुधर्मोक्तभक्तिज्ञानयोगविधिः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ ॥ १५ ॥ १६ ॥ १७ ॥

य इति ॥ अखंडिता आयतिः उत्तरोत्तरकालीना संपद्यथा भवति तथा पालयति । एतेन परीक्षिद्राज्यसमकालपुराणमेतत्पराशरेण मैत्रेयाय प्रोक्तमिति गम्यते ॥ ५३ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्य श्रीविष्णुमहापुराणव्याख्यायां चतुर्थांशे विंशोध्यायः ॥ २० ॥ ॥ १ ॥ य इति ॥ अस्यापि परीक्षितः कुरुपुत्रपरीक्षित इव जनमेजयादिसंज्ञा एव चत्वारः पुत्राः ॥ २ ॥ ३ ॥ योसाविति ॥ शौनको पदेशाद्विष्णुधर्मोत्तरलक्षणात् ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ य इति ॥ कौशांब्यां पुर्याम् ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ तत इति ॥ जनमेजयपुत्रात्पूर्वोक्तादपरश्शतानीकः । शिष्टं स्पष्टम् ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

ब्रह्मक्षत्रस्य यो यो निर्वंशो देवर्षिसत्कृतः ॥ क्षेमकं प्राप्य राजानं संस्थानं प्राप्यते कलौ ॥ इति ॥ १८ ॥ इति श्रीविष्णुमहापुराणे चतुर्थांश एकविंशोऽध्यायः ॥ २१ ॥ ॥ श्रीपराशर उवाच ॥ अतश्चेक्ष्वाकवो भविष्याः पार्थिवाः कथ्यन्ते ॥ १ ॥ बृहद्बलस्य पुत्रो बृहत्क्षणः ॥२॥ तस्मादुरुक्षयस्तस्माच्च वत्सव्यूहस्ततश्च प्रतिव्योमस्तस्मादपि दिवाकरः ॥ ३ ॥ तस्मात्सहदेवः सहदेवाद्बृहदश्वस्तत्सूनुर्भानुरथस्तस्य च प्रतीताश्वस्तस्यापि सुप्रतीकस्ततश्च मरुदेवस्ततः सुनक्षत्रस्तस्मात्किन्नरः ॥ ४ ॥ किन्नरादंतरिक्षस्तस्मात्सुपर्णस्ततश्चामित्रजित् ॥ ५ ॥ ततश्च बृहद्भ्राजस्तस्यापि धर्मी धर्मिणः कृतंजयः ॥ ६ ॥ कृतंजयाद्रणंजयः ॥ ७ ॥ रणंजयात्संजयस्तस्माच्छाक्यश्छाक्याच्छुद्धोदनस्तस्माद्राहुलस्ततः प्रसेनजित् ॥ ८ ॥ ततश्च क्षुद्रकस्ततश्च कुंडकस्तस्मादपि सुरथः ॥ ९ ॥ तत्पुत्रश्च सुमित्रः ॥ १० ॥ इत्येते चेक्ष्वाकवो बृहद्बलान्वयाः ॥ ११ ॥ अत्रानुवंशश्लोकः ॥ १२ ॥ इक्ष्वाकूणामयं वंशस्सुमित्रांतो भविष्यति ॥ यतस्तं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ ॥ १३ ॥ इति श्रीमहाविष्णुपुराणे चतुर्थांशे द्वाविंशोऽध्यायः ॥ २२ ॥ ॥ श्रीपराशर उवाच ॥ मागधानां बार्हद्रथानां भाविनामनुक्रमं कथयिष्यामि ॥ १ ॥ अत्र हि वंशे महाबलपराक्रमा जरासंधप्रधाना बभूवुः ॥ २ ॥ जरासंधस्य पुत्रः सहदेवः ॥ ३ ॥ सहदेवात्सोमापिस्तस्याश्रुतश्रवास्तस्याप्ययुतायुस्ततश्च निरमित्रस्तत्तनयस्सुनेत्रस्तस्मादपि बृहत्कर्मा ॥ ४ ॥

ब्रह्मक्षत्रस्येति ॥ संस्थानं समाप्तिम् ॥ १८ ॥ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये चतुर्थांश एकविंशोऽध्यायः ॥ २१ ॥ ॥ १ ॥ बृहद्बलस्येति ॥ बृहद्बलोऽभिमन्युहत इति चतुर्थाध्यायांत उक्तः ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये चतुर्थांशे द्वाविंशोऽध्यायः ॥ २२ ॥ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥

ब्रह्मक्षत्रस्येति ॥ संस्थानं संस्थितिम् ॥ १८ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां चतुर्थांशे एकविंशोध्यायः ॥ २१ ॥ ॥ १ ॥ बृहद्बलस्येति ॥ बृहद्बलो भारतयुद्धे अभिमन्युना हत इति यः पूर्वं चतुर्थाध्यायांते कथितस्तस्य पुत्रो बृहत्क्षणः । शिष्टं स्पष्टम् ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां चतुर्थांशे द्वाविंशोध्यायः ॥ २२ ॥ मागधानामिति ॥ बार्हद्रथानामिति उपरिचरवसोः पुत्रः प्रागुक्तो यः पूर्वो बृहद्रथस्तद्वंश्यानां भाविनामनुक्रमं कथयिष्यामीत्यर्थः ॥ १ ॥ २ ॥ तत्र जरासंधादींश्चतुरः पूर्वोक्तानपि कथासंगत्यर्थमनुवदन्नयुतायुःप्रभृतीन्भाविनः कथयति । जरासंधपुत्र इत्यादिना यावत्समाप्ति ॥ ३ ॥ ४ ॥

ततश्च सेनजित्ततश्च श्रुतंजयस्ततो विप्रस्तस्य च पुत्रश्शुचिनामा भविष्यति ॥ ५ ॥ तस्यापि क्षेम्यस्ततश्च सुव्रतस्सुव्रताद्धर्मस्ततस्सुश्रवाः ॥ ६ ॥ ततो दृढसेनः ॥ ७ ॥ तस्मात्सुबलः ॥ ८ ॥ सुबलात्सुनीतो भविता ॥ ९ ॥ ततस्सत्यजित् ॥ १० ॥ तस्माद्विश्वजित् ॥ ११ ॥ तस्यापि रिपुंजयः ॥ १२ ॥ इत्येते बार्हद्रथा भूपतयो वर्षसहस्रमेकं भविष्यंति ॥ १३ ॥ ॥ इति श्रीविष्णुमहापुराणे चतुर्थांशे त्रयोविंशोऽध्यायः ॥ २३ ॥ ॥ श्रीपराशर उवाच ॥ योऽयं रिपुंजयो नाम बार्हद्रथोंत्यः तस्यामात्यो सुनिको नाम भविष्यति ॥ १ ॥ स चैनं स्वामिनं हत्वा स्वपुत्रं प्रद्योतनामानमभिषेक्ष्यति ॥ २ ॥ तस्यापि बलाकनामा पुत्रो भविता ॥ ३ ॥ ततश्च विशाखयूपः ॥ ४ ॥ तत्पुत्रो जनकः ॥ ५ ॥ तस्य च नंदिवर्द्धनः ॥ ६ ॥ ततो नंदी ॥ ७ ॥ इत्येतेष्टत्रिंशदुत्तरमष्टशतं पंच प्रद्योताः पृथिवीं भोक्ष्यन्ति ॥ ८ ॥ ततश्च शिशुनाभः ॥ ९ ॥ तत्पुत्रः काकवर्णो भविता ॥ १० ॥ तस्य च पुत्रः क्षेमधर्मा ॥ ११ ॥ तस्यापि क्षतौजाः ॥ १२ ॥ तत्पुत्रो विधिसारः ॥ १३ ॥ ततश्चाजातशत्रुः ॥ १४ ॥ तस्मादर्भकः ॥ १५ ॥ तस्माच्चोदयनः ॥ १६ ॥ तस्मादपि नंदिवर्द्धनः ॥ १७ ॥ ततो महानंदी ॥ १८ ॥ इत्येते शैशनाभा भूपालास्त्रीणि वर्षशतानि द्विषष्ट्यधिकानि भविष्यंति ॥ १९ ॥ महानंदिनस्ततश्शूद्रागर्भोद्भवोतिलुब्धोतिबलो महापद्मनामा नंदः परशुराम इवापरोऽखिलक्षत्रांतकारी भविष्यति ॥ २० ॥ ततःप्रभृति शूद्रा भूपाला भविष्यंति ॥ २१ ॥ स चैकच्छत्रामनुल्लंघितशासनो महापद्मः पृथिवीं भोक्ष्यते ॥ २२ ॥ तस्याप्यष्टौ सुतास्सुमाल्याद्या भवितारः ॥ २३ ॥

॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ इतीति ॥ तेषां वर्षसंख्या तु कलौ स्वल्पायुष्यसूचने वरक्त्यर्था ॥ १३ ॥ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये चतुर्थांशे त्रयोविंशोऽध्यायः ॥ २३ ॥ छ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥

॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां चतुर्थांशे त्रयोविंशोऽध्यायः ॥ २३ ॥ ॥ एवं तावच्छुद्धो भविष्यन्मागधवंशो वर्णितः । इदानीं तमेव वंशं कलिवशेन विजातीयसंकरादिमलीमसं वैराग्यार्थं निरूपयति—योयमित्यादिना सर्वे पृथिव्यां भूभृतो भविष्यंतीत्यंतेन ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ इतीति ॥ प्रद्योताः प्रद्योतसंज्ञाः राज्यवर्षसंज्ञा च आयुराद्यल्पत्वदर्शनेन वैराग्यार्थम् ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ स चेति ॥ एकादिदशगुणोत्तरेषु त्रयोदशस्थानेषु महापद्मसंज्ञा "तच्च कोटिश्शतगुणा पद्मं शतगुणं पुनः । निखर्वं तद्दशगुणं महापद्ममितीष्यते ॥" महत्पद्मं यस्येति विग्रहेण तावत्संख्यसैन्यस्य धनस्य वा पतिर्महापद्मः । एकमेव च्छत्रं यस्यास्तां पृथिवीम् ॥ २२ ॥ २३ ॥

तस्य महापद्मस्यानुपृथिवीं भोक्ष्यंति ॥ २४ ॥ महापद्मपुत्राश्चैकं वर्षशतमवनीपतयो भविष्यंति ॥ २५ ॥ ततश्च नवचैतान्नंदान् कौटिल्यो ब्राह्मणस्समुद्धरिष्यति ॥ २६ ॥ तेषामभावे मौर्य्याः पृथिवीं भोक्ष्यंति ॥ २७ ॥ कौटिल्य एव चंद्रगुप्तमुत्पन्नं राज्येऽभिषेक्ष्यति ॥ २८ ॥ तस्यापि पुत्रो बिंदुसारो भविष्यति ॥ २९ ॥ तस्याप्यशोकवर्द्धनस्ततस्सुयशास्ततश्च दशरथस्ततश्च संयुतस्ततश्शालिशूकस्तस्मात्सोमशर्मा तस्यापि सोमशर्मणश्शतधन्वा ॥ ३० ॥ तस्यानुबृहद्रथनामा भविता ॥ ३१ ॥ एवमेते मौर्य्या दश भूपतयो भविष्यंति अब्दशतं सप्तत्रिंशदुत्तरम् ॥ ३२ ॥ तेषामंते पृथिवीं दश शुंगा भोक्ष्यंति ॥ ३३ ॥ पुष्यमित्रस्सेनापतिस्स्वामिनं हत्वा राज्यं करिष्यति तस्यात्मजोऽग्निमित्रः ॥ ३४ ॥ तस्मात्सुज्येष्ठस्ततो वसुमित्रस्तस्मादप्युदंकस्ततः पुलिंदकस्ततो घोषवसुस्तस्मादपि वज्रमित्रस्ततो भागवतः ॥ ३५ ॥ तस्माद्देवभूतिः ॥ ३६ ॥ इत्येते शुंगा द्वादशोत्तरं वर्षशतं पृथिवीं भोक्ष्यंति ॥ ३७ ॥ ततः कण्वानेषा भूर्यास्यति ॥ ३८ ॥ देवभूतिं तु शुंगराजानं व्यसनिनं तस्यैवामात्यः कण्वो वसुदेवनामा तं निहत्य स्वयमवनीं भोक्ष्यति ॥ ३९ ॥ तस्य पुत्रो भूमित्रस्तस्यापि नारायणः ॥ ४० ॥ नारायणात्मजस्सुशर्मा ॥ ४१ ॥ एते काण्वायनाश्चत्वारः पंचचत्वारिंशद्वर्षाणि भूपतयो भविष्यंति ॥ ४२ ॥ सुशर्माणं तु काण्वं तद्भृत्यो बलिपुच्छकनामा हत्वांध्रजातीयो वसुधां भोक्ष्यति ॥ ४३ ॥ ततश्च कृष्णनामा तद्भ्राता पृथिवीपतिर्भविष्यति ॥ ४४ ॥ तस्यापि पुत्रः शांतकर्णिस्तस्यापि पूर्णोत्संगस्तत्पुत्रश्शातकर्णिस्तस्माच्च लम्बोदरस्तस्माच्च पिलकस्ततो मेघस्वातिस्ततः पटुमान् ॥ ४५ ॥

॥ २४ ॥ २५ ॥ ततश्चेति ॥ कौटिल्यो वात्स्यायनविष्णुमित्रगुप्तादिपर्य्यायश्चाणक्यः समुद्धरिष्यति उन्मूलयिष्यति ॥ २६ ॥ २७ ॥ कौटिल्य इति ॥ चंद्रगुप्तं नंदस्यैव शूद्रायां मुरायां जातं मौर्याणां प्रथमम् ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥

॥ २४ ॥ २५ ॥ ततश्चेति ॥ नन्दानिति नंदं च तत्पुत्रांश्चेत्यर्थः । कौटल्यो वात्स्यायनविष्णुगुप्तादिपर्यायश्चाणक्यस्समुद्धरिष्यति उन्मूलयिष्यति ॥ २६ ॥ २७ ॥ कौटिल्य इति ॥ चंद्रगुप्तमुत्पन्नं नंदस्यैव भार्यायां मुरासंज्ञायां जातम् ॥ २८ ॥ २९॥३०॥३१॥ तेषामिति ॥ पुत्रा वैकार्षाणां दश शुंगाः॥३२॥ प्रथमं कथं शुंगा भोक्ष्यंतीत्यत्राह--पुष्यमित्र इति ॥ पुष्यमित्रश्शुंगानां प्रथमः ॥ ३३ ॥ तस्येति ॥ ततोग्निमित्रादय इति ॥ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ शुंगाधीना कथं कण्वानेषा भूर्यास्यतीत्यत आह--देवभूतिमिति ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥

ततश्चारिष्टकर्मा ततो हालाहलः ॥ ४६ ॥ हालाहलात्पललकस्ततः पुलिंदसेनस्ततः सुंदरस्ततश्शातकर्णिस्तश्शिवस्त्रातिस्ततश्च गोमतिपुत्रस्तत्पुत्रोऽलिमान् ॥ ४७ ॥ तस्यापि शांतकर्णिस्ततः शिवश्रितस्तश्च शिवस्कंधस्तस्मादपि यज्ञश्रीस्ततो द्वियज्ञस्तस्माच्चंद्रश्रीः ॥ ४८ ॥ तस्मात्पुलोमापिहि ॥ ४९ ॥ एवमेते त्रिंशच्चत्वार्यब्दशतानि षट्पंचाशदधिकानि पृथिवीं भोक्ष्यंति ॥ ५० ॥ आंध्रभृत्यास्सप्ताभीरप्रभृतयो दशगर्दभिनश्च भूभुजो भविष्यंति ॥ ५१ ॥ ततष्षोडश भूपतयो भवितारः ॥५२॥ ततश्चाष्टौ यवनाश्चतुर्दश तुरुष्कारा मुंडाश्च त्रयोदश एकादश मौना एते वै पृथिवीपतयः पृथिवीं दशवर्षशतानि नवत्यधिकानि भोक्ष्यंति ॥ ५३ ॥ ततश्च मौना एकादश भूपतयोऽब्दशतानि त्रीणि पृथिवीं भोक्ष्यंति ॥ ५४ ॥ तेषूत्सन्नेषु कैंकिला यवना भूपतयो भविष्यंत्यमूर्द्धाभिषिक्ताः ॥ ५५ ॥ तेषामपत्यं विंध्यशक्तिस्ततः पुरंजयस्तस्माद्रामचंद्रस्तस्माद्धर्मवर्मा ततो वंगस्ततोभून्नंदनस्ततस्सुनंदी तद्भ्राता नंदियशाश्शुक्रः प्रवीर एते वर्षशतं षड्वर्षाणि भूपतयो भविष्यंति ॥ ५६ ॥ ततस्तत्पुत्रास्त्रयोदशैते बाह्लिकाश्च त्रयः ॥ ५७ ॥ ततः पुष्पमित्राः पटुमित्रास्त्रयोदशैकलाश्च सप्तांध्राः ॥ ५८ ॥ ततश्च कोसलायां तु नव चैव भूपतयो भविष्यंति ॥ ५९ ॥ नैषधास्तु त एव ॥ ६० ॥ मगधायां तु विश्वस्फटिकसंज्ञोऽन्यान्वर्णान्करिष्यति ॥ ६१ ॥

॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ एवमिति ॥ एवमेते त्रिंशत् आंध्रा इति शेषः ॥ ५० ॥ ५१ ॥ ५२ ॥ ततश्चेति ॥ एते आभीराद्या अष्टषष्टिर्नृपाः पृथिवीं नवत्यधिकानि त्रयोदशवर्षशतानि भोक्ष्यंति ॥ ५३ ॥ ५४ ॥ तेष्विति ॥ भूपतयः अमूर्द्धाभिषिक्ताः ॥ ५५ ॥ तेषामिति ॥ तेषां वंश्यो विंध्यशक्तिः ॥ ५६ ॥ ५७ ॥ ५८ ॥ ततश्चेति ॥ कोसलायाम् अयोध्यायाम् ॥ ५९ ॥ ६० ॥ मागधायामिति ॥ मागधायां पुर्यां विश्वस्फाटिकः क्षत्रमुन्मूल्य कैवर्तादीन् राज्ये स्थापयिष्यति ॥ ६१ ॥

॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ एवमिति ॥ एते आंध्रास्त्रिंशत् ॥ ५० ॥ आंध्रेति॥ आभीरप्रभृतयः आभीराद्याः ॥ ५१ ॥ तत इति ॥ एतेन व्यतिरिक्ताः एकोनानि चतुर्दशाब्दशतानि पृथिवीं भोक्ष्यति ॥ ५२ ॥ आभीराद्यैस्सह गणितानामेव मौनानां पृथग्राज्यत्वात्तद्राज्याब्दसंख्याविशेषमाह–ततश्चेति ॥ ५३ ॥ ५४ ॥ तेष्विति ॥ किंकला नाम पुरी तत्र भवाः कैंकिलाः अमूर्धाभिषिक्ताः अक्षत्रियाः ॥ ५५ ॥ ५६ ॥ ५७ ॥ तत इति ॥ एकलाः खंडमंडलपतयः ॥ ५८ ॥ तानेव प्रपंचयति ततश्च कोसलायामित्यादिना अल्पप्रसादा इत्यंतेन । ततश्चेति ॥ कोसलायामयोध्यायाम् ॥ ५९ ॥ नैषधा इति ॥ नैषधाः निषधदेशाधिपतयः ॥ ६० ॥ मागधायामिति ॥ मागधायां पुर्याम् ॥ ६१ ॥

केवर्त्तबटुपुलिंदब्राह्मणान्राज्ये स्थापयिष्यति ॥ ६२ ॥ उत्साद्याखिलक्षत्रजातिं नव नागाः पद्मवत्यां नाम पुर्यामनुगंगाप्रयागं गया द्वृतांश्च मागधा भोक्ष्यंति ॥ ६३ ॥ कोशलांध्रपुंड्रताम्रलिप्तसमतटपुरीं च देवरक्षितो रक्षिता ॥ ६४ ॥ कलिंगमाहिषमहेंद्रभौमान् गुहा भोक्ष्यंति ॥ ६५ ॥ नैषधनैमिषककालकोशकाञ्जनपदान्मणिधान्यकवंशा भोक्ष्यंति ॥ ६६ ॥ त्रैराज्यमुषिकजनपदान्कनकाह्वयो भोक्ष्यति ॥ ॥ ६७ ॥ सौराष्ट्रावंत्यशूद्राभीरान्नर्मदामरुभूविषयांश्च व्रात्यद्विजाभीरशूद्राद्या भोक्ष्यंति ॥ ६८ ॥ सिंधुतटदाविकोर्वीचंद्रभागाकाश्मीरविषयांश्च व्रात्यम्लेच्छशूद्रादयो भोक्ष्यंति ॥ ६९ ॥ एते च तुल्यकालास्सर्वे पृथिव्यां भूभुजो भविष्यंति ॥ ७० ॥ अल्पप्रसादा बृहत्कोपास्सार्वकालमनृताधर्मरुचयः स्त्रीबालगोवधकर्त्तारः परस्वादानरुचयोल्पसारास्तमिस्रप्राया उदितास्तमितप्राया अल्पायुषो महेच्छा ह्यल्पधर्मा लुब्धाश्च भविष्यन्ति ॥ ७१ ॥ तैश्च विमिश्रा जनपदास्तच्छीलानुवर्त्तिनो राजाश्रयशुष्मिणो म्लेच्छाचाराश्च विपर्ययेण वर्त्तमानाः प्रजाः क्षपयिष्यंति ॥ ७२ ॥ ततश्चानुदिनमल्पाल्पह्रासव्यवच्छेदाद्धर्मार्थयोर्जगतस्संक्षयो भविष्यति ॥ ७३ ॥ ततश्चार्थ एवाभिजनहेतुः ॥ ७४ ॥ बलमेवाशेषधर्महेतुः ॥ ७५ ॥ अभिरुचिरेव दांपत्यसंबंधहेतुः ॥ ७६ ॥ स्त्रीत्वमेवोपभोगहेतुः ॥ ७७ ॥ अनृतमेव व्यवहारजयहेतुः ॥ ७८ ॥ उन्नतांबुतैव पृथिवीहेतुः ॥ ७९ ॥ ब्रह्मसूत्रमेव विप्रत्वहेतुः ॥ ८० ॥ रत्नधातुतैव श्लाघ्यताहेतुः ॥ ८१ ॥ लिंगधारणमेवाश्रमहेतुः ॥ ८२ ॥ अन्यायमेव वृत्तिहेतुः ॥ ८३ ॥ दौर्बल्यमेवावृत्तिहेतुः ॥ ८४ ॥ अभयप्रगल्भोच्चारणमेव पांडित्यहेतुः ॥ ८५ ॥ अनाढ्यतैव साधुत्वहेतुः ॥ ८६ ॥

॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ सिंध्विति ॥ दाविको देविकातटभवो देशः ॥ ६९ ॥ ७० ॥ अल्पप्रसादा इति ॥ उदितास्तमितप्रायाः क्षणिककल्पाः ॥ ७१ ॥ तैश्चेति ॥ राजाश्रयशुष्मिणः राजाश्रयेणैव शुष्मिणः बलिनः न तु धर्मेण ॥ ७२ ॥ ततश्चेति ॥ अल्पाल्पेत्यादि धर्मार्थयोरल्पाल्पह्रासरूपेण क्षयाज्जगतो युगपन्नाशः ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ उन्नतांबुतेति ॥ उन्नतांबुताम् उन्नतस्थले सुलभसुभगजलवत्त्वं पृथ्वीहेतुः पृथ्वीस्वीकारे हेतुः न तु पुण्यभूमित्वम् । उन्नताम्रतेतिपाठे प्रभूतचूतादिद्रुमवत्त्वम् ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥

॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ सिंधुतटेति ॥ दाविकोर्वी देविका नाम नदी तद्भवा भूः ॥ ६९ ॥ ७० ॥ तेषां स्वभावान्धर्मांश्चाहाल्पप्रसादा इत्यादिना जनः क्षयमपेष्यंतीत्यंतेन— अल्पप्रसादा इति ॥,तमिस्रप्रायाः हर्षविषादरहिताः ॥ ७१ ॥ तैश्चेति ॥ राजाश्रयेणैव शुष्मिणो बलिनः न तु धर्मेण ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ उन्नतेति ॥ उन्नतांबुता उन्नते गिरितटे अंबुमत्वम् । उन्नताम्रतेति पाठे प्रवृद्धचूतद्रुमत्वम् । रत्नधातुतैवेति पाठे रत्नधातुता श्रेष्ठताम्रादिमत्त्वमेव न तु पुण्यतीर्थादिमत्वम् ॥ ७९ ॥ ८० ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥

स्नानमेव प्रसाधनहेतुः ॥ ८७ ॥ दानमेव धर्महेतुः ॥ ८८ ॥ स्वीकरणमेव विवाहहेतुः ॥ ८९ ॥ सद्वेषधार्येव पात्रम् ॥ ९० ॥ दूरायतननोदकमेव तीर्थहेतुः ॥ ९१ ॥ कपटवेषधारणमेव महत्त्वहेतुः ॥ ९२ ॥ इत्येवमनेकदोषोत्तरे तु भूमंडले सर्ववर्णेष्वेव योयो बलवान्सस भूपतिर्भविष्यति ॥ ९३ ॥ एवं चातिलुब्धकराजासहाश्शैलानामंतरद्रोणीः प्रजास्संश्रयिष्यंति ॥ ९४ ॥ मधुशाकमूलफलपत्रपुष्पाद्याहाराश्च भविष्यंति ॥ ९५ ॥ तरुवल्कलपर्णचीरप्रावरणाश्चातिबहुप्रजाश्शीतवातातपवर्षसहाश्च भविष्यंति ॥ ९६ ॥ न च कश्चित्त्रयोविंशतिवर्षाणि जीविष्यति अनवरतं चात्र कलियुगे क्षयमायात्यखिल एवैष जनः ॥ ९७ ॥ श्रौतस्मार्त्ते च धर्मे विप्लवमत्यंतमुपगते क्षीणप्राये च कलावशेषजगत्स्रष्टुश्चराचरगुरोरादिमध्यांतरहितस्य ब्रह्ममयस्यात्मरूपिणो भगवतो वासुदेवस्यांशश्शंबलग्रामप्रधानब्राह्मणस्य विष्णुयशसो गृहेष्टगुणर्द्धिसमन्वितः कल्किरूपीजगत्यत्रावतीर्य सकलम्लेच्छदस्युदुष्टाचरणचेतसामशेषाणामपरिच्छिन्नशक्तिमाहात्म्यः क्षयं करिष्यति स्वधर्मेषु चाखिलमेव संस्थापयिष्यति ॥९८॥ अनंतरं चाशेषकलेरवसाने निशावसाने विबुद्धानामिव तेषामेव जनपदानाममलस्फटिकदलशुद्धा मतयो भविष्यंति ॥ ९९ ॥ तेषां च बीजभूतानामशेषमनुष्याणां परिणतानामपि तत्कालकृतापत्यप्रसूतिर्भविष्यति ॥ १०० ॥ तानि च तदपत्यानि कृतयुगानुसारीण्येव भविष्यंति ॥ १०१ ॥

॥ ८७ ॥ दानमेवेति ॥ दानमेव धर्महेतुः न तु यागादिः ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ श्रौतस्मार्ते चेति ॥ अष्टगुणा अणिमाद्याः । "अणिमा लघिमा प्राप्तिः प्राकाम्येशित्ववश्यताः । यत्र कामावसायित्वं महिमेति गुणाष्टकम्" ॥ ९८ ॥ ॥ ९९ ॥ १०० ॥ १०१ ॥

॥ ८७ ॥ दानमेवेति ॥ दानमेव धर्महेतुः न तु यागादिः ॥ ८८ ॥ ८९ ॥ सदिति ॥ सद्वेषधारीदांभिकः ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ ततः कल्क्यवतारेण कृतयुगप्रवृत्तिमाह–श्रौतस्मार्ते चेत्यादिना । श्रौतस्मार्ते चेति ॥ अष्टगुणर्धिभिस्समन्वितः "अणिमा लघिमा प्राप्तिप्राकाम्यं वशितेशिता । यत्र कामावसायित्वं महिमेति गुणाष्टकम् ॥" अन्ये त्वेवं गुणाष्टकमाहुः "अणिमा चैव महिमा लघिमा गरिमा तथा । ईशित्वं च वशित्वं च प्राप्तिः प्राकाम्यमष्टधा ॥" इति ॥ ९८ ॥ ९९ ॥ १०० ॥ १०१ ॥

अत्रोच्यते ॥ यथा चंद्रश्च सूर्यश्च तथा तिष्यो बृहस्पतिः ॥ एकराशौ समेष्यंति तदा भवति वै कृतम् ॥ १०२ ॥ अतीता वर्त्तमानाश्च तथैवानागताश्च ये ॥ एते वंशेषु भूपालाः कथिता मुनिसत्तम ॥ १०३ ॥ यावत्परीक्षितो जन्म यावन्नंदाभिषेचनम् ॥ एतद्वर्षसहस्रं तु ज्ञेयं पंचाशदुत्तरम् ॥१०४ ॥ सप्तर्षीणां तु यौ पूर्वौ दृश्येते ह्युदितौ दिवि ॥ तयोस्तु मध्ये नक्षत्रं दृश्यते यत्समं निशि ॥ १०५ ॥

यथा चंद्रश्चेति ॥ चंद्रादिग्रहणं सर्वग्रहोपलक्षणार्थं चतुर्युगांते सर्वेषां ग्रहाणां मीनांतस्थितेः सर्वग्रहयोगे हि युगम् । यद्वा एषां ग्रहणां चतुर्णामेव योगे कृतं तदर्थं खलु ग्रहबाहुल्यमित्यर्थः "चंद्रार्कजीवज्ञसिताः कुजार्की च यथाक्रमम् । सत्त्वं रजस्तमोपि" इति गोचरोक्तेः । तथा तिष्ये बृहस्पतिरिति पाठेप्ययमेवार्थः । प्रतिद्वादशाब्दं गुरौ कर्कटस्थे कर्कटकमासे अमावास्यायां बहुवारं योगस्यास्य संभवात् तथाप्येकराशौ समेष्यंतीति सहप्रवेशोक्तेर्नातिप्रसंगदोषः ॥ १०२ ॥ राजवंशं निगमयति अतीता इति ॥ १०३ ॥ यावदिति ॥ पंचशतोत्तरं वर्षसहस्रम् । पाठांतरे परीक्षित्समकालं मागधं सोममारभ्य रिपुंजयांतं मागधानां सहस्राब्दत्वस्योक्तत्वात् अनंतरं प्रद्योतशिशुनागानां पंचशताब्दत्वस्योक्तत्वात् सार्द्धसहस्रस्योक्तस्य व्याख्यातं वायूक्तेपि परीक्षिन्नंदांतरं सार्द्धसहस्रमेवेत्युक्तम् । अत एव प्रयास्यंति यदेत्यादिश्लोकस्यायमर्थः—नंदात्प्रभृत्येव प्रसरति कलौ काले यदैते पूर्वाषाढां प्रयास्यंति तदा कलेरधर्मस्य वृद्धिः पूर्वोक्तकृतशब्दस्य धर्मपरत्ववत् लक्षणया नंदान्तं क्षत्रियकुलमिति वचनात् । इहापि शूद्राद्याधिपत्योक्तेश्च अतः पापस्यैव वृद्धिः न तु नियतमानस्य कलेः । अतः कलौ नंदोत्तरकालीनेषु पूर्वाषाढापर्यायेषु स्थिता महर्षयः पापवृद्ध्ये जगत इति नक्षत्रऋषिचारफलोक्तिरेषा न तु कालावच्छेदोक्तिः ॥ १०४ ॥ सप्तर्षीणां त्विति ॥ शकटाकारतारासप्तकं मुनिमंडलं प्रागग्रे तत्र मंडले ईषास्थानीयः प्राच्यां मरीचिः, ततः पश्चान्नम्रयुगंधराकारो वसिष्ठः सभार्यः, ततः पश्चादीषदुन्नत ईषामूलस्थानीयोंगिराः, तदासन्नपश्चिमचतुष्कस्य ऐशान्ये अत्रिः, अत्रेर्याम्यः पुलस्त्यः, पुलस्त्यात्पश्चिमः पुलहः, तदुदीच्यश्चतुष्कवायव्ये क्रतुः, वसिष्ठाद्याम्यां सूक्ष्मतारा अरुंधती तत्र मंडले, उक्तं च पूर्वभागे मरीचिर्भगवान् अपरभागे स्थितो वसिष्ठोऽस्मात्परतोंगिराः ततोत्रिस्तस्यासन्नः पुलस्त्यः पुलहः क्रतुर्भगवानासन्नानुक्रमेण पूर्वाद्यास्तारा वसिष्ठमुनिवरमुपाश्रितारुंधती साध्वी स्थितेति एवं स्थिते यौ पूर्वौ उदये प्रथमं दृश्यौ पुलस्त्यक्रतुसंज्ञौ मुनी शकटस्य पश्चात्यौ तथापि पूर्वंउदितौ दृश्येते मध्ये गगनमध्ये तयोः ताभ्यां

कदा कृतयुगो भविष्यतीत्यपेक्षायामाह—यथा चंद्रश्चेति ॥ तिष्यः पुष्यः पुष्यनक्षत्रे चंद्रार्कबृहस्पतियोगे कृतं भविष्यतीत्यर्थः । यद्यपि प्रतिद्वादशाब्दं कर्कटकस्थे गुरौ अमावास्यायामेतेषां त्रयाणां पुष्यर्क्षे योगस्स्यात् । तथाप्येकराशौ समेष्यंतीति सहप्रवेशोक्तेर्नातिप्रसंगदोषः ॥ १०२ ॥ उक्तराजवंशं निगमयति । अतीता इति ॥ १०३ ॥ तत्र तत्र क्षत्रवंशमाह—यावदिति ॥ एतद्वर्षसहस्रं पंचाशदधिकं शुद्धक्षत्रवंशोपेतं ज्ञेयम् । ततः प्रद्योतनादिवंशांतरसंचारस्योक्तत्वादित्यर्थः । न तु कालमात्रसंख्येयं तथा सति परीक्षित्समकालं मागधं सोममारभ्य रिपुंजयांतं मागधानां सहस्राब्दवर्तित्वात् अनंतरं प्रद्योतशिशुनाभानां च पंचशताब्दवर्तित्वात् सार्धसहस्रोक्तत्वस्यैव व्याघातप्रसंगात् ॥ १०४ ॥ प्रसंगात्कलेः प्रवृत्तिं वृद्धिं च निरूपयितुं तत्तज्ज्ञानोपलक्षणमाह—सप्तर्षीणां त्विति ॥ अग्रे शकटाकारतारासप्तकं सप्तर्षिमंडलं तत्रैवमंडले

तेन सप्तर्षयो युक्तास्तिष्ठंत्यब्दशतं नृणाम् ॥ ते तु पारीक्षिते काले मघास्वासन्द्विजोत्तम ॥१०६॥ तदा प्रवृत्तश्च कलिर्द्वादशाब्दशतात्मकः ॥ ॥ १०७ ॥ यदैव भगवान्विष्णोरंशो यातो दिवं द्विज ॥ वसुदेवकुलोद्भूतस्तदैवात्रागतः कलिः ॥ १०८ ॥ यावत्सपादपद्माभ्यां पस्पर्शेमां वसुंधराम् ॥ तावत्पृथ्वीपरिष्वंगे समर्थो नाभवत्कलिः ॥ १०९ ॥ गते सनातनस्यांशे विष्णोस्तत्र भुवो दिवम् ॥ तत्याज सानुजो राज्यं धर्म पुत्रो युधिष्ठिरः ॥ ११० ॥ विपरीतानि दृष्ट्वा च निमित्तानि हि पांडवः ॥ याते कृष्णे चकाराऽथ सोऽभिषेकं परीक्षितः ॥ १११ ॥ प्रया स्यंति यदा चैते पूर्वाषाढां महर्षयः ॥ तदा नंदात्प्रभृत्येष गतिवृद्धिं गमिष्यति ॥ ११२ ॥ यस्मिन् कृष्णो दिवं यातस्तस्मिन्नेव तदा हनि ॥ प्रतिपन्नं कलियुगं तस्य संख्यां निबोध मे ॥ ११३ ॥ त्रीणि लक्षाणि वर्षाणां द्विज मानुष्यसंख्यया ॥ षष्टिश्चैव सहस्राणि भवि ष्यत्येष वै कलिः ॥ ११४ ॥

समं समदक्षिणोत्तररेखायां यदश्विन्याद्यन्यतमं नक्षत्रमार्जवेनावतिष्ठते तेन नक्षत्रेण ते युक्ताः शताब्दं तिष्ठंति तेषां प्रत्यक्षं शताब्दस्थित्युक्तिः कलिगताब्दज्ञानोद्दे शार्था ॥१०५॥ १०६ ॥ १०७ ॥ १०८ ॥ १०९ ॥ ११० ॥ १११ ॥ ११२ ॥ कृष्ण इति ॥ यस्मिन् श्रीकृष्णः दिवं जगाम तस्मिन्नहनि तत्क्षण एव कलियुगं प्रतिपन्नम्॥ ११३॥भगवद्ध्यानकालत्वेन कलेः प्रस्तावात् तत्संख्या प्रथमांशोक्तापीहानूद्यते त्रीणि लक्षाणीति ॥ अत्र संध्यादिविवर्जिता कलिसंख्योक्ता परीक्षित्काले । कलिसंध्यादित्वात् शतानि तानीत्यत्र तु दिव्यद्वादशाब्दशतमिति संध्यादिसहिता संख्योक्ता ॥ ११४ ॥

अग्रस्थानीयः प्राच्यो मरीचिः । ततः पश्चात् नम्रयुगंधराकारो वसिष्ठस्सभार्यः । ततः पश्चादीषदुन्नत ईषामूलस्थानीयोंगिराः । तदासन्नपश्चिमताराचतुष्टयस्यैशान्येऽत्रिः । अत्रेर्याम्यः । पुलस्त्यः पुलस्त्यस्य पश्चिमे पुलहः । तदुदीच्यश्चतुष्कवायव्ये क्रतुः एवं स्थिते यौ पूर्वौ उदये प्रथमं दृश्येते शकटस्थानस्य पश्चात्पुलस्त्यक्रतुसंज्ञौ तयोस्तत्पूर्वयोश्च मध्ये समं दक्षिणोत्तररेखायाः समदेशावस्थितं यदश्विन्याद्यन्यतमं नक्षत्रं दृश्यते ॥ १०५ ॥ तेनेति ॥ तेन नक्षत्रेण सप्तर्षयः युक्ता नृणामब्दशतं तिष्ठंति ॥ १०६ ॥ तदेति ॥ संध्यांशाभ्यां सह दिव्यद्वादशाब्दशतात्मकः संध्यारूपेण पूर्वमेव प्रविष्टोपि तदा प्रकर्षेण प्रविष्टः संध्यारूपमतिक्रम्य स्वेनैव रूपेण प्रविष्ट इत्यर्थः ॥ १०७ ॥ एतदेव स्फुटयति—यदैवेति ॥ यदैव कलिरागतः संध्यामतिक्रम्य स्वरूपेणागतः ॥ १०८ ॥ संध्यारूपेण तु पूर्वमेव कलिप्रवेशं सूचयन्नाह—यावदिति ॥ प्रविष्टोपि पृथिव्याः परिष्वंगे कलिस्समर्थो नाभूत् ॥ १०९ ॥ साक्षात्कलिप्रवेशे युधिष्ठिरनिर्गमनादिप्रवृत्तमित्याह—गत इत्यादिद्वाभ्याम् ॥११० ॥ १११ ॥ कलेः प्रवेशमुक्त्वा वृद्धिकालमाह—प्रयास्यंतीति ॥ यदि पूर्वाषाढाम्महर्षयः गमिष्यंति तदा प्रद्योतात्प्रभृति वृद्धिं गच्छतीत्यर्थः ॥ ११२ ॥ प्रवेशकालस्तु पूर्वोक्त एवेत्याह—यस्मिन्निति ॥ तस्मिन्नेवाहनीति तस्मिन्क्षणे प्रतिपन्नं प्रविष्टम् ॥ ११३ ॥ संध्यांशौ त्यक्त्वा कलेर्वर्षसंख्यामाह—त्रीणीति ॥ ११४ ॥

शतानि तानि दिव्यानां सप्त पंच च संख्यया ॥ निश्शेषेण गते तस्मिन्भविष्यति पुनः कृतम् ॥ ११५ ॥ ब्राह्मणाः क्षत्रिया वैश्याश्शूद्राश्च द्विजसत्तम ॥ युगेयुगे महात्मानः समतीतास्सहस्रशः ॥ ११६ ॥ बहुत्वान्नामधेयानां परिसंख्या कुलेकुले ॥ पौनरुक्त्याद्धि साम्याच्च न मया परिकीर्त्तिता ॥ ११७ ॥ देवापिः पौरवो राजा पुरुश्चेक्ष्वाकुवंशजः ॥ महायोगबलोपेतौ कलापग्रामसंश्रितौ ॥ ११८ ॥ कृते युगे त्विहागम्य क्षत्रप्रावर्त्तकौ हि तौ ॥ भविष्यतो मनोर्वंशबीजभूतौ व्यवस्थितौ ॥ ११९ ॥ एतेन क्रमयोगेन मनुपुत्रैर्वसुंधरा ॥ कृतत्रेताद्वापराणि युगानि त्रीणि भुज्यते ॥ १२० ॥ कलौ ते बीजभूता वै केचित्तिष्ठंति वै मुने ॥ यथैव देवापिपुरू सांप्रतं समधिष्ठितौ ॥ १२१ ॥ एष तूद्देशतो वंशस्तवोक्तो भूभुजां मया ॥ निखिलो गदितुं शक्यो नैष वर्षशतैरपि ॥ १२२ ॥ एते चान्ये च भूपाला यैरत्र क्षितिमंडले ॥ कृतं ममत्वं मोहांधैर्नित्यं हेयकलेवरे ॥ १२३ ॥ कथं ममेयमचला मत्पुत्रस्य कथं मही ॥ मद्वंशस्येतिचिंतार्त्ता जग्मुरंतमिमे नृपाः ॥१२४॥ तेभ्यः पूर्वतराश्चान्ये तेभ्यस्तेभ्यस्तथा परे ॥ भविष्याश्चैव यास्यंति तेषामन्ये च येऽप्यनु ॥ १२५ ॥ विलोक्यात्मजयोद्योगं यात्राव्यग्रान्नराधिपान् ॥ पुष्पप्रहासैश्शरदि हसंतीव वसुंधरा ॥ १२६ ॥ मैत्रेय पृथिवीगीताञ्छ्लोकांश्चात्र निबोध मे ॥ यानाह धर्मध्वजिने जनकायासितो मुनिः ॥ १२७ ॥ पृथिव्युवाच ॥ कथमेष नरेंद्राणां मोहो बुद्धिमतामपि ॥ येन केन सधर्माणोप्यतिविश्वस्तचेतसः ॥१२८॥

॥११५॥११६॥ बहुत्वादिति ॥ प्रतिकूलं नाम्नामानंत्यपौनरुक्त्याभ्यां परिसंख्या परितः संख्या नोक्ता ॥११७॥११८ ॥ ११९ ॥ एतेनेति ॥ कृतत्रेताद्वापराणि इति युगत्रयं भुक्तिवचनं कलेरल्पक्षत्रत्वात् ॥ १२० ॥ १२१ ॥ १२२ ॥ १२३ ॥ १२४ ॥ १२५ ॥ १२६ ॥ १२७ ॥ १२८ ॥

शतानीति॥निश्शेषेण समस्तेन संध्यांशसहितेन तु तानि प्रसिद्धानि दिव्याब्दानां संख्यया सप्तपंचशतानि द्वादशदिव्याब्दशतानि एष कलिः । ततस्तस्मिन्गते पुनः कृतयुगं भविष्यति ॥११५॥ उत्तरं राजवंशप्रकारमाह–ब्राह्मणा इति ॥११६॥ विस्तरेण किं नोच्यत इत्यत आह–बहुत्वादिति ॥ प्रतिकुलं नाम्नामानंत्यात् प्रायशस्समाननामतया पौनरुक्त्याच्च परितस्ते मया न कीर्तिताः ॥ ११७ ॥ कलावुत्सन्नस्य राजवंशस्य पुनः प्रवृत्ति माह–देवापिरिति ॥११८॥ कृत इति ॥ क्षत्रस्य प्रकर्षेण आवर्तकौ ॥११९॥ एतेनेति ॥ कलौ क्षत्रियाणामल्पत्वादंते तदुत्सादनाच्च त्रीणि युगानि भुज्यत इत्युक्तम् ॥१२०॥१२१॥१२२॥ राजवंशस्यैव राजवंशप्रवर्तकत्वोक्तेः वैराग्ये तात्पर्यमाह–एते चेति ॥ १२३ ॥ मोहमेवाह–कथं ममेयमित्यादिद्वाभ्याम् ॥ १२४ ॥ १२५ ॥ १२६ ॥ एतदेव भूमिगीतैः प्रपंचयन्नाह–मैत्रेयेत्यादिदशभिः ॥ १२७ ॥ कथमिति ॥ केन सधर्माणः

पूर्वमात्मजयं कृत्वा जेतुमिच्छंति मंत्रिणः ॥ ततो भृत्यांश्च पौरांश्च जिगीषंते तथा रिपून् ॥ १२९ ॥ क्रमेणानेन जेष्यामो वयं पृथ्वीं ससागराम् ॥ इत्यासक्तधियो मृत्युं न पश्यंत्यविदूरगम् ॥ १३० ॥ समुद्रावरणं याति भूमंडलमथो वशम् ॥ कियदात्मजयस्यैतन्मुक्तिरात्मजये फलम् ॥ १३१ ॥ उत्सृज्य पूर्वजा याता यां नादाय गतः पिता ॥ तां मामतीव मूढत्वाज्जेतुमिच्छंति पार्थिवाः ॥ १३२ ॥ मत्कृते पितृपुत्राणां भ्रातॄणां चापि विग्रहः ॥ जायतेत्यंतमोहेन ममत्वादृतचेतसाम् ॥ १३३ ॥ पृथ्वी ममेयं सकला ममैषा मदन्वयस्यापि च शाश्वतीयम् ॥ योयो मृतेऽन्यत्र बभूव राजा कुबुद्धिरासीदिति तस्यतस्य ॥१३४॥ दृष्ट्वा ममत्वादृतचित्तमेकं विहाय मां मृत्युवशं व्रजंतम् ॥ तस्यानु यस्तस्य कथं ममत्वं हृद्यास्पदं मत्प्रभवं करोति ॥ १३५ ॥ पृथ्वी ममैषाऽऽशु परित्यजैनां वदंति ये दूतमुखैस्स्वशत्रून् ॥ नराधिपास्तेषु ममातिहासः पुनश्च मूढेषु दयाऽभ्युपैति ॥ १३६ ॥ श्रीपराशर उवाच ॥ इत्येते धरणीगीताश्श्लोका मैत्रेय यैश्श्रुताः ॥ ममत्वं विलयं याति तपत्यर्के यथा हिमम् ॥ १३७ ॥ इत्येष कथितः सम्यङ्मनोर्वंशो मया तव ॥ यत्र स्थितिप्रवृत्तस्य विष्णोरंशांशका नृपाः ॥ १३८ ॥

॥ १२९ ॥ १३० ॥ राजमुक्त्योरिंद्रियजयसाध्यत्वे किं मुक्तिं हित्वा अल्पेन राज्येनेत्याह—समुद्रेति ॥ १३१ ॥ उत्सृज्येति ॥ यां भुवम् उत्सृज्य नादायैव पितामहाद्या याताः पिता च गतः ॥ १३२ ॥ १३३ ॥ पृथ्वीति ॥ पृथ्वी ममेयमिति भिन्नवक्तृवाक्यभंग्यः तत्र भूरेषा ममेत्येकः । इयं ममेत्यन्यः । अपरो ममेयं शाश्वतीति वदन्नेव योयो राजा मृतो लोकांतरे जातस्तस्य तस्यापि इह प्राङ्मरणादियं भूर्ममेति बुद्धिरासीत् । मृतेन्यत्रेति पाठे अन्यत्र प्राचीने राज्ञि मृते अथान्यो यो बभूव राजा तस्याप्येवं दुर्बुद्धिरासीत् ॥ १३४ ॥ दृष्ट्वेत्यादि ॥ तस्यानु यः परः मां त्यक्त्वा मृतं दृष्ट्वा यस्ततः परो नृपस्स्यात् तस्य हृदि मत्प्रभवं भूविषयं ममत्वं कथमास्पदं करोति ॥ १३५ ॥ पृथ्वीति ॥ इत्येवं ममत्वकारिषु ममातिहासो भवति दया चाभ्युपैति मामिति शेषः । दयामुपैमीति वा पाठः ॥ १३६ ॥ १३७ ॥ १३८ ॥

अचिरविनाशिनः ॥ १२८ ॥ पूर्वमिति ॥ पूर्वमात्मजयं कृत्वेति इंद्रियजयलंपटानां मंत्रिभृत्यादिजयासंभवात् ॥ १२९ ॥ १३० ॥ समुद्रेति ॥ एवं च सर्वमात्मसात्कुर्वतो यद्यपि भूमंडलं वशं याति तथाप्यात्मजयात्साध्यं कियदेतत्फलमनित्यं राज्यं तस्मादात्मजये सति मुक्तिरेवात्यंतिकं फलं भवति ॥ १३१ ॥ नित्यतामेवाह--उत्सृज्येति ॥ पूर्वजाः पितामहाद्याः ॥ १३२ ॥ किं च वैरादिदोषादप्यनुपादेयं राज्यमित्याह--मत्कृत इति ॥ १३३ ॥ पृथ्वी ममेयमिति ॥ बहूनां ममत्वोद्रेकवाक्यान्येवं व्यर्थानि मृतेन्यत्र पूर्वस्मिन् राज्ञि मृते यो यो राजा बभूव तस्य तस्येयं कुबुद्धिरासीत् ॥ १३४ ॥ दृष्ट्वेति ॥ बंधुपुत्रादिराज्यासक्तं मृतं दृष्ट्वा तत्पुत्रपौत्रासक्तिरप्यतिविचित्रमित्याह--तस्येति ॥ तस्य हृदि भूविषयं ममत्वं कथमास्पदं करोति ॥ १३५ ॥ पृथ्वीति ॥ तेषु भूतेषु मूढेषु ममातिहासो भविष्यति ॥ १३६ ॥ अस्यांशस्य श्रवणफलमाह शृणोतीत्यतदिना--शृणोतीति ॥ पुण्यकीर्तिनां राज्ञां श्रवणात् पापक्षयः धनधान्यादिलाभश्च भवति ॥ १३७ ॥ १३८ ॥

शृणोति य इमं भक्त्या मनोर्वंशमनुक्रमात् ॥ तस्य पापमशेषं वै प्रणश्यत्यमलात्मनः ॥ १३९ ॥ धनधान्यर्द्धिमतुलां प्राप्नोत्यव्याहतें द्रियः ॥ श्रुत्वैवमखिलं वंशं प्रशस्तं शशिसूर्ययोः ॥ १४० ॥ इक्ष्वाकुजह्नुमांधातृसगराविक्षितान्रघून् ॥ ययातिनहुषाद्यांश्च ज्ञात्वा निष्ठामु पागतान् ॥ १४१ ॥ महाबलान्महावीर्याननन्तधनसंचयान् ॥ कृतान्कालेन बलिना कथाशेषान्नराधिपान् ॥ १४२ ॥ श्रुत्वा न पुत्रदारादौ गृहक्षेत्रादिके तथा ॥ द्रव्यादौ वा कृतप्रज्ञो ममत्वं कुरुते नरः ॥ १४३ ॥ तप्तं तपो यैः पुरुषप्रवीरैरुद्बाहुभिर्वर्षगणानने कान् ॥ इष्ट्वा सुयज्ञैर्बलिनोतिवीर्याः कृतानुकालेन कथावशेषाः ॥ १४४ ॥ पृथुस्समस्तान्विचचार लोकानव्याहतो योऽविजितारि चक्रः ॥ स कालवाताभिहतः प्रणष्टः क्षिप्तं यथा शाल्मलितूलमग्नौ ॥ १४५ ॥ यः कार्त्तवीर्यो बुभुजे समस्तान्द्वीपान्समाक्रम्य हतारिचक्रः ॥ कथाप्रसंगेष्वभिधीयमानस्स एव संकल्पविकल्पहेतुः ॥ १४६ ॥ दशाननाविक्षितराघवाणामैश्वर्यमुद्भासितदिङ्मुखानाम् ॥ भस्मापि शिष्टं न कथं क्षणेन भ्रूभंगपातेन धिगंतकस्य ॥ १४७ ॥ कथाशरीरत्वमवाप यद्वै मांधातृनामा भुवि चक्रवर्त्ती ॥ श्रुत्वापि तत्को हि करोति साधुर्ममत्वमात्मन्यपि मंदचेताः ॥ १४८ ॥

॥ १३९ ॥ १४० ॥ इक्ष्वाकिति ॥ निष्ठा नाशम् ॥ १४१ ॥ १४२ ॥ १४३ ॥ १४४ ॥ १४५ ॥ य इति ॥ संकल्पविकल्पहेतुः संकल्पस्य मनसः विकल्पः संशयः तस्य हेतुः किमेवंविधः कश्चिदासीन्न वेति संशयस्य निमित्तम् ॥ १४६ ॥ दशाननेति ॥ भस्मापि कथं न जातं कथं न तिष्ठति । यद्वा तेषामैश्वर्यस्य निश्शेषदग्धत्वात् भस्मावस्थमपि न जातमिदं कथमित्याश्चर्ये ॥ १४७ ॥ कथाशरीरत्वमिति ॥ आत्मनि अहंत्वाश्रये देहेपि किमुत ममत्वास्पदे पुत्रकलत्र क्षेत्रादौ ॥ १४८ ॥

॥ १३९ ॥ १४० ॥ इक्ष्वाकिति ॥ निष्ठामंतम् ॥ १४१ ॥ महाबलानिति ॥ अनन्तो धनसंचयो येषां तान् ॥ १४२ ॥ श्रुत्वेति ॥ तन्नाशानुसंधानान्ममतानिवृत्तिश्चेत्यर्थः ॥ १४३ ॥ १४४ ॥ १४५ ॥ य इति ॥ संकल्पविकल्पहेतुः संकल्पात्मकस्य मनसो विकल्पहेतुः एवं भूतः कश्चिदासीद्वा न वेति संशयनिमित्तमेव भवति । चिरकालातीतत्वात् तत्सद्भावेपि संदेह इत्यर्थः ॥ १४६ ॥ दशाननेति ॥ उद्भासितानि दिशां मुखानि यैस्तेषां रावणादीनां क्षणमात्रप्रवृत्तेनांतकस्य भ्रूभंगपातेन भस्मापि कथं नात्रशिष्टं निश्शेषमेव कथं विनष्टाः अतो धिगैश्वर्यमित्यर्थः । रावणादिग्रहणं लोकदृष्टिमात्रेण वैराग्यार्थम् ॥ १४७ ॥ कथाशरीरत्वमिति ॥

भगीरथाद्यास्सगरं ककुत्स्थो दर्शननो राघवलक्ष्मणौ च ॥ युधिष्ठिराद्याश्च बभूवुरेते सत्यं न मिथ्या क्व नु ते न विद्मः ॥ १४९ ॥ ये सांप्रतं ये च नृपा भविष्याः प्रोक्ता मया विप्रवरोग्रवीयाः ॥ एते तथाऽन्ये च तथाभिधेयाः सर्वे भविष्यंति यथैव पूर्वे ॥ १५० ॥ एतद्विदित्वा न नरेण कार्यं ममत्वमात्मन्यपि पंडितेन ॥ तिष्ठंतु तावत्तनयात्मजायाः क्षेत्रादयो ये च शरीरिणोऽन्ये ॥ १५१ ॥ इति श्रीविष्णुमहापुराणे चतुर्थांशे चतुर्विंशोध्यायः ॥ २४ ॥ ॥ श्रीविष्णुमहापुराणे चतुर्थांशः समाप्तः ॥

॥ १४९ ॥ य इति ॥ पूर्वे अधिपा इव वर्त्तमाना भविष्याश्च नष्टा भविष्यंति इत्यभिधेयाः ॥ १५० ॥ उक्तमर्थं संक्षिपन्नाह—एतद्विदित्वेति ॥ १५१ ॥ ॥ इति श्रीविष्णुमहापुराणव्याख्याने विष्णुचित्तीये चतुर्थांशे चतुर्विंशोध्यायः ॥ २४ ॥ ॥ श्रीविष्णुचित्तीये चतुर्थांशः समाप्तः ॥

आत्मनि देहेपि किमुत पुत्रक्षेत्रादौ ॥ १४८ ॥ १४९ ॥ य इति ॥ यथा पूर्वे तथान्येप्यभिधेया भविष्यंति कथामात्रशेषा भविष्यंतीत्यर्थः ॥ १५० ॥ उक्तमर्थं संक्षिप्याह—एतद्विदित्वेति ॥ १५१ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां चतुर्थांशे चतुर्विंशोध्यायः ॥ २४ ॥ ॥ श्रीधरीये चतुर्थांशस्समाप्तः ॥

---

इदं पुस्तकं मुम्बय्यां श्रीकृष्णदासात्मजक्षेमराजश्रेष्ठिना स्वकीये "श्रीवेङ्कटेश्वर" (स्टीम्) मुद्रणालये मुद्रितम्। संवत् १९६७, शके १८३२.

॥ इति श्रीविष्णुमहापुराणे विष्णुचित्त्यात्मप्रकाशाख्यश्रीधरीयव्याख्याद्वयोपेते चतुर्थांशः समाप्तः ॥

॥ अथ श्रीविष्णुमहापुराणे विष्णुचित्त्यात्मप्रकाशाख्यश्रीधरीय
व्याख्याद्वयोपेते पञ्चमांशः प्रारभ्यते ॥

॥ श्रीमते रामानुजाय नमः ॥ मैत्रेय उवाच ॥ नृपाणां कथितस्सर्वो भवता वंशविस्तरः ॥ वंशानुचरितं चैव यथावदनुवर्णितम् ॥ १ ॥ अंशावतारो ब्रह्मर्षे योऽयं यदुकुलोद्भवः ॥ विष्णोस्तं विस्तरेणाहं श्रोतुमिच्छामि तत्त्वतः ॥ २ ॥ चकार यानि कर्माणि भगवान्पुरुषोत्तमः ॥ अंशांशेनावतीर्योर्व्यां तत्र तानि मुने वद ॥ ३ ॥ श्रीपराशर उवाच ॥ मैत्रेय श्रूयतामेतद्यत्पृष्टोऽहमिह त्वया ॥ विष्णोरंशांशसंभूतिचरितं जगतो हितम् ॥ ४ ॥ देवकस्य सुतां पूर्वं वसुदेवो महामुने ॥ उपयेमे महाभागां देवकीं देवतोपमाम् ॥ ५ ॥ कंसस्तयोर्वररथं चोदयामास सारथिः ॥ वसुदेवस्य देवक्या संयोगे भोजनंदनः ॥ ६ ॥ अथांतरिक्षे वागुच्चैः कंसमाभाष्य सादरम् ॥ मेघगंभीरनिर्घोषं समाभाष्येदमब्रवीत् ॥७॥ यामेतां वहसे मूढ सह भर्त्रा रथे स्थिताम् ॥ अस्यास्तवाष्टमो गर्भः प्राणानपहरिष्यति ॥ ८ ॥ श्रीपराशर उवाच ॥ इत्याकर्ण्य समुत्पाट्य खड्गं कंसो महाबलः ॥ देवकीं हंतुमारब्धो वसुदेवोऽब्रवीदिदम् ॥ ९ ॥ न हंतव्या महाभाग देवकी भवताऽनघ ॥ समर्पयिष्ये सकलान्गर्भानस्योदरोद्भवान् ॥ १० ॥

॥ श्रीमते रामानुजाय नमः ॥ अथ विष्णुचित्ती ॥ नृपाणामिति ॥ उक्तश्चतुर्थेंशे लोकज्ञापकधर्मप्रवर्त्तकः क्षत्रवंशः ॥ १ ॥ अंशावतार इति ॥ विष्णोः व्यापकस्य नारायणस्य "अंतर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" इति श्रुतेः ॥ २ ॥ चकारेति ॥ भगवान् पुरुषोत्तमः परव्यूहविभवादिषु सर्वत्र स्वरूपरूपगुणादिभिः परिपूर्ण एव सन् इच्छागृहीतपरिच्छिन्नदेवमनुष्यादिदेहतया अंश इति अंशांत इति च व्यपदिश्यते । कृष्णाद्यवतारेष्वपि विश्वरूपदर्शनायतिमानुषप्रवृत्तौ सर्वैश्वर्यस्य व्यक्तत्वात् ॥३॥ मैत्रेयेति ॥ संभूतिश्चरितं च संभूतिचारितम् ॥४॥५॥ कंस इति ॥ वररथं कल्याणरथम् । वधूश्च वरश्च वरौ तयो रथम् इति वा ॥ ६ ॥ अथेत्यादि ॥ अत्र वाक्छब्देनाशरीरी वक्ता लक्ष्यते आभाष्य सादरमिति समासपदमाभाष्यार्थे यथा सादरः स्यात्तथा तं समाभाष्य आमंत्र्य॥७॥८॥९॥ न हंतव्येति॥

॥ अथ श्रीधरी ॥ अथातः पञ्चमांशः श्रीकृष्णलीलामहोदयः । बिन्दुमाधवतोषाय यथामति वितन्यते ॥ १ ॥ उक्तानुवादपूर्वकं श्रीकृष्णावतारप्रकारं तच्चरित्रादि च पृच्छति नृपाणामित्यादित्रिभिर्मैत्रेयः ॥ १ ॥ अंशावतार इति ॥ विष्णोरंशावतारः परब्रह्मण एव परिच्छेदाकारेणावतारः । विस्तरेणेति यदर्थं यथा च येन प्रकारेणासाववतारो जात इत्याद्यशेषतः श्रोतुमिच्छामि ॥ २ ॥ तच्चरितानि च विस्तरेण वदेत्याह—चकारेति ॥ परब्रह्मणोंऽश इवांशः क्षीराब्धिशायी तस्यांश इवांशो यो नराकारः तेनावतीर्य यत्र यानि चकार तानि वदेत्यन्वयः ॥ ३ ॥ मैत्रेयेति ॥ संभूतिश्च चरितञ्चेति द्वंद्वैक्यम् ॥ ४ ॥ ५ ॥ कंस इति ॥ वररथंकल्याणार्थरथं कोटिस्थित्या सारथिरिव स्थितः चोदयामासेत्यर्थः । संयोगे वैवाहिके संबंधे ॥ ६ ॥ अथेति ॥ अंतरीक्षे अशरीरवागाभाष्य सादरमाभाष्ये वक्तव्ये यथा सादरस्स्यात्तथा उच्चैस्समाभाष्य संबोध्य मेघस्य गंभीरो निर्घोषो यथा भवत्येवमिदं वक्ष्यमाणवाक्यम् अब्रवीदित्यर्थः ॥ ७ ॥ ८ ॥ इतीति ॥ आरब्धः कर्त्तरि क्तः । हंतुं प्रवृत्त इत्यर्थः ॥ ९ ॥ न हंतव्येति ॥ अस्योदरोद्भवानित्यत्रार्षस्संधिः । अस्य कलत्रस्येति वा । अस्य तवेति

॥ श्रीपराशर उवाच ॥ तथेत्याह ततः कंसो वसुदेवं द्विजोत्तम ॥ न घातयामास च तां देवकीं सत्यगौरवात् ॥ ११ ॥ एतस्मिन्नेव काले तु भूरिभारावपीडिता ॥ जगाम धरणी मेरौ समाजं त्रिदिवौकसाम् ॥ १२ ॥ स ब्रह्मकान्सुरान्सर्वान्प्रणिपत्याऽथ मेदिनी ॥ कथयामास तत्सर्वं खेदात्करुणभाषिणी ॥ १३ ॥ भूमिरुवाच ॥ अग्निस्सुवर्णस्य गुरुर्गवां सूर्यः परो गुरुः ॥ ममाप्यखिललोकानां गुरुर्नारायणो गुरुः ॥ १४ ॥ प्रजापतिपतिर्ब्रह्मा पूर्वेषामपि पूर्वजः ॥ कलाकाष्ठानिमेषात्मा कालश्चाव्यक्तमूर्त्तिमान् ॥ १५ ॥ तदंशभूतस्सर्वेषां समूहो वस्सुरोत्तमाः ॥ १६ ॥ आदित्या मरुतस्साध्या रुद्रा वस्वश्विवह्नयः ॥ पितरो ये च लोकानां स्रष्टारोऽत्रिपुरोगमाः ॥ १७ ॥ एते तस्याप्रमेयस्य विष्णो रूपं महात्मनः ॥ १८ ॥ यक्षराक्षसदैतेयपिशाचोरगदानवाः ॥ गंधर्वाप्सरसश्चैव रूपं विष्णोर्महात्मनः ॥ १९ ॥

अस्योदरोद्भवानित्यार्षसंधिः । यद्वा अस्य तवेत्यन्वयः । अथ वा अस्य मम उदरोद्भवान् इति वा । "अंगादंगात्"इति श्रुतेः "पुमान् पुंसोधिके शुक्रे" इत्यादिस्मृतिवचनाच्च ॥१०॥ तथेति ॥ तथेत्यंगीकृत्य कंसः देवकीं न घातयामास । स्वार्थे णिच् ॥११॥१२॥१३॥ अग्निरित्यादि ॥ नारायणोगुरुरिति ॥ अगुरुः गुरुरहितः। अत्र गुरुशब्दः कारणवाची- "अग्नेरपत्यं प्रथमं हिरण्यं भूर्वैष्णवी सूर्यसुताश्च गावः । लोकास्त्रयस्तेन भवंति दत्ता यः कांचनं गां च महीं च दद्यात्" इति संवर्त्तस्मृतेः ॥१४॥१५॥ तदंशभूत इति ॥ तदंशभूतः तच्छरीरभूतः । उत्तरत्र रूपं विष्णोर्महात्मनः 'सर्वं विष्णुमयं जगत्' इत्यादेर्दर्शनात् ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥

वा । यद्वा 'असु क्षेपणे' इति धातोरस्येति हिलोपे रूपम् । मया समर्पितान्यत्र क्वापि यथेच्छं क्षिपेत्यर्थः ॥ १० ॥ ११ ॥ अतश्चारिभयात्कंसे देवकीप्रसूतिप्रतीक्षया स्थिते सति भारपीडितया धरण्या प्रार्थितैर्देवैस्संस्तुत्य प्रसादितो विष्णुः षड्गर्भादिपूर्वमवततारेति वक्तुमाह–एतस्मिन्नेवेत्यादिना यावदध्यायसमाप्ति–एतस्मिन्निति ॥ धरणी गोरूपेण जगामेति ज्ञेयम् । 'गौर्भूत्वाश्रुमुखी' इति शुकोक्तेः ॥ १२ ॥ स ब्रह्मकानिति ॥ तत्सर्वं दैत्यभारपीडादि ॥ १३ ॥ अग्निरिति ॥ अग्निरित्यादेरयमर्थः । यथाग्निस्सुवर्णस्य गुरुर्जनकः "अग्नेरपत्यं प्रथमं सुवर्णं भूर्वैष्णवी सूर्यसुताश्च गावः" इति स्मृतेः । अतो यथा अग्निस्सुवर्णस्य मलदहने रक्षति सुवर्णं यथा च गवां सूर्यः परो गुरुः अतस्ताः पर्जन्यरूपेण पुष्णाति गावो रश्मयो वा अर्थतस्तान्यथा वर्धयति तथा ममापि नारायणो गुरुः । यतोसावखिललोकानां गुरुः स एव नारायणो भारहर्ता पालकश्च । तथापि साक्षाद्विज्ञसौ ममासामर्थ्याद्भवतां च तदंशत्वाद्भवंतो मया भारापहरणाय प्रार्थ्यंत इति ॥ १४ ॥ प्रजापतिपतिरिति ॥ कालश्च तदंशभूतस्तच्छक्तित्वात् ॥ १५ ॥ तदंशभूत इति ॥ सर्वेषां वः युष्माकं च समूहस्तदंशभूतः विश्वरूपत्वात्तस्य ॥१६॥ एतदेव प्रपंचयति आदित्या इत्यादिसार्धैस्त्रिभिः । आदित्या इति ॥ वसवश्चाश्विनौ च वह्नयश्चेति विग्रहः ॥ १७ ॥ एत इति ॥ महात्मनो विश्वरूपस्य विष्णो रूपम् ॥१८॥१९॥

ग्रहर्क्षतारकाचित्रगगनाग्निजलानिलाः ॥ अहं च विषयाश्चैव सर्वं विष्णुमयं जगत् ॥ २० ॥ तथा चानेकरूपस्य यस्य रूपाण्य हर्निशम् ॥ बाध्यबाधकतां यांति कल्लोला इव सागरे ॥ २१ ॥ तत्सांप्रतममी दैत्याः कालनेमिपुरोगमाः ॥ मर्त्यलोकं समाक्रम्य बाधन्तेऽ हर्निशं प्रजाः ॥ २२ ॥ कालनेमिर्हतो योऽसौ विष्णुना प्रभविष्णुना ॥ उग्रसेनसुतः कंसस्संभूतस्स महासुरः ॥ २३ ॥ अरिष्टो धेनुकः केशी प्रलंबो नरकस्तथा ॥ सुंदोऽसुरस्तथात्युग्रो बाणश्चापि बलेस्सुतः ॥ २४ ॥ तथान्ये च महावीर्या नृपाणां भवनेषु ये ॥ समुत्पन्ना दुरात्मान स्तान्न संख्यातुमुत्सहे ॥ २५ ॥ अक्षोहिण्योत्र बहुला दिव्यमूर्त्तिधरास्सुराः ॥ महाबलानां दृप्तानां दैत्येन्द्राणां ममोपरि ॥ २६ ॥ तद्भूरिभार पीडार्त्ता न शक्नोम्यमरेश्वराः ॥ बिभर्तुमात्मानमहमिति विज्ञापयामि वः ॥ २७॥ क्रियतां तन्महाभागा मम भारावतारणम् ॥ यथा रसातलं नाहं गच्छेयमतिविह्वला ॥ २८ ॥ इत्याकर्ण्य धरावाक्यमशेषैस्त्रिदशेश्वरैः ॥ भुवो भारावतारार्थं ब्रह्मा प्राह प्रचोदितः ॥ २९ ॥ ब्रह्मोवाच ॥ यथाह वसुधा सर्वं सत्यमेव दिवौकसः ॥ अहं भवो भवंतश्च सर्वे नारायणात्मकाः ॥ ३० ॥ विभूतयश्च यास्तस्य तासामेव परस्परम् ॥ आधिक्यन्यूनताबाध्यबाधकत्वेन वर्त्तते ॥ ३१ ॥ तदागच्छत गच्छामः क्षीराब्धेस्तटमुत्तमम् ॥ तत्राराध्य हरिं तस्मै सर्वं विज्ञापयाम वै ॥ ॥ ३२ ॥ सर्वथैव जगत्यर्थे स सर्वात्मा जगन्मयः ॥ सत्त्वांशेनावतीर्योर्व्यां धर्मस्य कुरुते स्थितिम् ॥ ३३ ॥ श्रीपराशर उवाच ॥ इत्युक्त्वा प्रययौ तत्र सह देवैः पितामहः ॥ समाहितमनाश्चैवं तुष्टाव गरुडध्वजम् ॥ ३४ ॥ ब्रह्मोवाच ॥ द्वे विद्ये त्वमनाम्नायपरा चैवापरा तथा ॥ त एव भवतो रूपे मूर्त्तामूर्त्तात्मिके प्रभो ॥ ३५ ॥

ग्रहर्क्षेति ॥ ऋक्षाणि नक्षत्राणि । तारका अश्विन्यादयः ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ अक्षौहिण्य इति ॥ "अक्षौहिण्याः सप्ततिरष्टशतान्येकविंशतिसहस्रम् । द्विरदास्तथा रथास्तत्रिपंचगुणकास्तुरंगकनराः" ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ विभूतय इत्यादि ॥ तासामेवाधिक्यन्यूनता परस्परं बाध्यबाधकत्वेन वर्त्तते बाध्यबाधकत्वे हेतुरित्यर्थः ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ द्वे विद्ये इत्यादिश्लोकद्वयमेकं वाक्यम् ॥ द्वे विद्ये इति ॥ अनाम्नाय

ग्रहेति ॥ ग्रहादिभिश्चित्रमिति गगनविशेषादेव तेषामपि तद्रूपतोक्ता । अहं च भूः विषयाश्शब्दादयः ॥ २० ॥ एतस्यैव रूपं चेत्सर्वं कुतोन्योन्यविरोधस्तत्राह–तथा चेति ॥ २१ ॥ २२ ॥ ननु कालनेमिः प्रागेव हतस्तत्राह–कालनेमिरिति ॥ २३ ॥ २४ ॥ २५ ॥ अक्षौहिण्य इति ॥ अक्षौहिणीसंख्या भारतोक्ता "अक्षौहिणी प्रसंख्या तु रथानां दंतिनां तथा । एकविंशतिसाहस्रं शतान्यष्टौ च सप्ततिः ॥ ज्ञेयं शतसहस्रं तु सहस्राणि तथा नव ॥ नराणामपि पंचाशच्छतानि त्रीणि चैव हि ॥ पंचषष्टिसहस्राणि तथाश्वानां शतानि च । दशोत्तराणि षट् प्राहुरेवमक्षौहिणीं बुधाः ॥" ॥ २६ ॥ २७ ॥ २८ ॥ इतीति ॥ अशेषत्रिदशेश्वरैस्सह धराया वाक्यमाकर्ण्य धरयैव प्रचोदितो ब्रह्मा प्राह ॥२९॥ ३० ॥ विभूतय इति ॥ आधिक्यं बाधकत्वेन न्यूनता च बाध्यत्वेन वर्तत इत्यर्थः ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ द्वे विद्येति ॥ अनाम्नाय

द्वे ब्रह्मणी त्वणीयोतिस्थूलात्मन्सर्व सर्ववित् ॥ शब्दब्रह्मपरं चैव ब्रह्म ब्रह्ममयस्य यत् ॥ ३६ ॥ ऋग्वेदस्त्वं यजुर्वेदस्सामवेदस्त्वथर्वणः ॥ शिक्षा कल्पो निरुक्तं च च्छंदो ज्योतिषमेव च ॥ ३७ ॥ इतिहासपुराणे च तथा व्याकरणं प्रभो ॥ मीमांसा न्यायशास्त्रं च धर्मशास्त्राण्यधोक्षज ॥ ॥ ३८ ॥ आत्माऽऽत्मदेहगुणवद्विचाराचारि यद्वचः ॥ तदप्याद्यपते नान्यदध्यात्मात्मस्वरूपवत् ॥ ३९ ॥ त्वमव्यक्तमनिर्देश्यमचिंत्यानाम वर्णवत् ॥ अपाणिपादरूपं च शुद्धं नित्यं परात्परम् ॥ ४० ॥

आम्नायापरिच्छेद्य द्वे विद्ये इति शब्दजन्यं विवेकजन्यं च ज्ञानमुच्यते ॥ "आगमोत्थं विवेकाच्च द्विधा ज्ञानं तथोच्यते । शब्दब्रह्मागममयं परं ब्रह्म विवेकजम्" इति हि वक्ष्यति ब्रह्मपरं ब्रह्मविषयं शब्दब्रह्मागमोत्थं ज्ञानं परं चैव ब्रह्मविवेकजं ज्ञानं ब्रह्मविषये विवेकजशब्दब्रह्मविषयागमजज्ञानात्मिके परापरे द्वे विद्ये इत्यन्वयः। त्वद्रूपे इत्यर्थः। ते उपनिषत्प्रसिद्धे मूर्त्तामूर्तात्मिके द्वे ब्रह्मणी प्रकृतिपुरुषौ च भवत एव रूपे । अणीयोतिस्थूलात्मन् अणीयसामतिस्थूलानां चात्मभूत । अथ वा अनाम्नाय इत्यनादिरकर्तुरितिवदध्ययनादिविधेरवश्यं भवतो रूपे निरूपके मूर्तामूर्तात्मिके मूर्त्तामूर्त्तब्रह्मविषयतया तदात्मिके शब्दब्रह्मपरब्रह्मरूपे द्वे ब्रह्मशब्दवाच्ये मूर्त्तामूर्त्तात्मिके परावररूपे द्वे विद्ये त्वम् ते एव भवतो रूपे इत्यन्वयः ॥३५॥३६॥ कर्मप्रतिपादक ऋग्वेदाद्यागमोपि त्वद्रूपमित्याह ऋग्वेद-इत्यादिना ॥३७॥३८॥ ब्रह्मप्रतिपादकोपनिषद्भागोपि त्वद्रूपमित्याह—आत्मात्मेति॥ अत्र प्रथमेनात्मशब्देन जीवपरावुच्येते द्वितीयेन सूक्ष्मशरीरम् । देहस्स्थूलशरीरम् । गुणवदव्यक्तम् । एवमुभयात्मोभयदेहाव्यक्तविषयं विचारमाचरद्यदुपनिषद्वाक्यं तच्च त्वत्तो नान्यत् ॥ ३९ ॥ यथात्मानं देहमधिकृत्य वर्त्तमानतयाध्यात्मनो जीवस्य स्वरूपं त्वत्तो नान्यत्तद्वन्मुक्तोपि त्वद्रूपमित्याह—त्वमव्यक्तमिति ॥ अव्यक्तं बाह्येंद्रियागोचरम् अनिर्देश्यमितरसजातीयतया अचिंत्यं मनसा अनाम देवमनुष्यादिनामरहितम् अवर्णं पीतशुक्लादिवर्णहीनं शुद्धं क्लेशकर्मादिनिर्मुक्तं परं पदं

स्साक्षाद्वेदस्याप्यविषयभूतः तत्संबुद्धिः । "द्वे विद्ये वेदितव्ये परा चैवापरा च" इति श्रुतिप्रोक्ते । परापरब्रह्मविषये द्वे विद्ये त्वं ते एव तद्विषयभूते परापरे ब्रह्मणी मूर्तामूर्तात्मिके भवतो रूपे ॥ ३५ ॥ एतदेव स्फुटयति द्वे ब्रह्मणी त्विति ॥ द्वे ब्रह्मणी भवतो रूपे इत्यन्वयः । एतदेव संबोधनद्वारेण दर्शयति । अणीयस्सूक्ष्मतम अतिस्थूलात्मन् विराड्रूप अत एव सर्वविश्वरूप सर्ववित्सर्वज्ञ यज्जापकं शब्दब्रह्म यच्च जाप्यं परं ब्रह्म तद्द्वै परब्रह्मात्मकस्य भवतो रूपे इत्यन्वयः ॥ ३६ ॥ तत्र कर्मविषयं शब्दब्रह्मत्वमित्याह—ऋग्वेद इत्यादिद्वाभ्याम् ॥ ३७ ॥ ३८ ॥ परब्रह्मविषयमपि शब्दब्रह्मत्वमेवेत्याह—आत्मेति ॥ आत्मात्मशब्दाभ्यां जीवपरमात्मानौ देहशब्देन स्थूलसूक्ष्मशरीरे गुणवच्छब्देन तत्कारणमव्याकृतम् । एतेषां विचारमाचरतीति तथा एवं विचारे क्रियमाणे यदध्यात्मस्वरूपं त्वंपदलक्ष्यम् । आत्मस्वरूपं च तत्पदलक्ष्यं तद्ब्रह्म फलभूतमस्ति । यस्मिन्वचसि तत्तथाभूतमुपनिषद्वाक्यं तत्त्वत्तोन्यन्नभवति । भो आद्यपते ब्रह्मादिस्वामिन् । यद्वा ऋग्वेदादिपदैरेतैरुपनिषद्रूपत्वस्याप्युक्तत्वादनेन श्लोकेन सांख्ययोगाद्यनुसारि तत्तथाचार्योपदेशवचोरूपाद्वोचत इति व्याख्येयम् ॥३९॥ शब्दब्रह्मरूपतामित्युक्त्वा परब्रह्मरूपतामाह--त्वमिति॥ अव्यक्तं चक्षुराद्यगोचरम्, अनिर्देश्यं वाचामगोचरम्, अचिंत्यं मनसामप्यगोचरम्। अचिन्त्यं च तदनाम वर्णवच्च पाणिपाद

शृणोष्यकर्णः परिपश्यसि त्वमचक्षुरूपो बहुरूपरूपः ॥ अपादहस्तो जवनो ग्रहीता त्वं वेत्सि सर्वं न च सर्ववेद्यः ॥ ४१ ॥ अणोरणीयां समसत्स्वरूपं त्वां पश्यतो ज्ञाननिवृत्तिरग्र्या ॥ धीरस्य धीरस्य बिभर्त्ति नान्यद्वरेण्यरूपात्परतः परात्मन् ॥ ४२ ॥ त्वं विश्वनाभिर्भुवनस्य गोप्ता सर्वाणि भूतानि तवांतराणि ॥ यद्भूतभव्यं यदणोरणीयः पुमांस्त्वमेकः प्रकृतेः परस्तात् ॥ ४३ ॥ एकश्चतुर्द्धा भगवान्हुताशो वर्चोविभूतिं जगतो ददासि ॥ त्वं विश्वतश्चक्षुरनंतमूर्त्ते त्रेधा पदं त्वं निदधासि धातः ॥ ४४ ॥

मुक्तस्वरूपं गुणप्रवृत्त्या परं पदम् । तस्यागुणं महदित्युक्तं परविषयो वा अयं श्लोकः । शुद्धं नित्यं परं पदं चेति च पाठः ॥४०॥ अथ परमेवाह—शृणोषीत्यादिना॥अचक्षुरूपः अचक्षुररूपश्च चक्षुस्स्वरूपरहितो वा बहुरूपरूपः स्वेच्छागृहीतबहुविधरूपः अनेन कर्णनिरपेक्षं सर्वकार्यसामर्थ्यमुक्तम् । "अपाणिपादः" इत्यादिश्रुतेः ॥४१॥ अणोरिति ॥ अणोर्जीवादणीयांसम् असत्स्वरूपम् दृश्यरूपरहितम् । धीःअस्य यस्योपासकस्य धीः वरेण्यरूपात्त्वत्तोऽन्यन्न बिभर्त्ति न विषयीकरोति तस्य त्वां पश्यतः अग्र्या आत्यंतिकी अज्ञाननिवृत्तिः कर्मनिवृत्तिः।यद्वा पूर्वार्द्धमेकं वाक्यम् तस्य स्पष्टोर्थः।धीर्यस्य यस्य धीः संकल्पः सर्वं बिभर्त्ति तस्मात्त्वत्तोन्यन्नास्तीति ॥४२॥ त्वमिति ॥ नाभिराधारः अंतराणि अंतस्थानि यदणोरणीयः यद्भूतं भव्यम् । प्रकृतेः परस्तात् पुमान् यः तत्सर्वं त्वमेक एव ॥४३॥ एक इत्यादि ॥ चतुर्द्धात्रेतौपासनात्मना वैद्युत जाठरनिर्मथ्य वाडवात्मना वा यो हुताशो जगतो वर्चस्तेजः विभूतिम् अणिमादिं ददाति सोपि त्वं त्रेधापदं त्रिविक्रमत्वे त्रिषु लोकेषु पदं निदधासि । यद्वा "स इमान् लोकान् विचक्रमेधो एवानधोवाचम्" इति श्रुत्युक्तप्रकारेण । अथवा उपासनार्थं गिरित्रये सन्निधत्ते समारोहणे विष्णुपदे गयाशिरसीति हि नैरुक्ताः ॥ ४४ ॥

वर्जितस्वरूपं च नित्यं च परादव्यक्तात्परं नामरूपादिशून्यत्वादिंद्रियवाङ्मनसामपि अविषयभूतं यद्ब्रह्म विदुर्योगिनः तदपि त्वमेवेत्यन्वयः ॥ ४० ॥ ईश्वररूपतामाह—शृणोषीत्यादित्रिभिः--शृणोषीति ॥ बहूनि रूपाणि रूपं यस्य सः । अपादो जवनो वेगवान् । अहस्तो ग्रहीता "अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुस्स शृणोत्यकर्णः । स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महांतम्" इति ॥ ४१ ॥ ईश्वरमच्युतं ब्रह्मस्वरूपं पश्यंतः तद्दर्शित्वान्मोक्षः स्यादित्याह—अणोरिति ॥ त्वामचिंत्यशक्तिमीश्वरम् अणोरणीयांसं निरुपाधित्वेनातिसूक्ष्मतमम् अत एवासत्स्वरूपमिव स्थितम् । यद्वा असतः प्रपंचस्यात्मरूपं पश्यतः तद्दर्शिनोऽग्र्या आत्यंतिकी अज्ञाननिवृत्तिर्भवति । कथंभूतस्येत्यतआह--धीरस्येति । हे प्रभो परतः अव्यक्तात्परात्मन् अस्य धीरस्य विपश्चितो धीर्वरेण्यरूपात्परमानंदमूर्तेस्त्वत्तोन्यन्न बिभर्त्ति न ध्यायति । तस्य वासनाज्ञाननिवृत्त्या मोक्षो भवतीत्यर्थः ॥ ४२ ॥ ननु मायारूपालंबस्य कथं प्रकृतेः परत्वं तत्राह—त्वमिति ॥ विश्वस्य नाभिराश्रयः अंतराणि मध्ये स्थितानि । यद्यस्मात्त्वत्तो भूतं भव्यं च एवंभूतोपि पुमानीश्वरस्त्वम् । अणोरणीयः प्रकृतेः परस्मात्स्थितं ब्रह्मैव न तु प्रच्युतब्रह्मभावः मायायाः स्वाश्रयानावरकत्वादितिभावः ॥ ४३ ॥ भुवनस्य गोप्तेति यदुक्तं तत्प्रपंचयति--एकश्चतुर्धेति ॥ श्रौतास्त्रयोऽग्नय औपासनाग्निश्चैकः इत्येवं चतुर्धा । यद्वा "इदं नो जाठरश्चाग्निर्वैद्युतो वाडवस्तथा" इत्येवं चतुर्धा । यद्वा वैद्युतं निर्मथ्य सौरजाठररूपेण चतुर्धा । वर्चस्तेजः विभूतिं संपदं च ददाति । त्रेधापदं भुवस्स्वर्लोकेषु त्रिविक्रमावतारे निदधासि 'त्रेधा विष्णुरुरुगायो विचक्रमे' इति श्रुतेः ॥ ४४ ॥

यथाग्निरेको बहुधा समिध्यते विकारभेदैरविकाररूपः ॥ तथा भवान्सर्वगतैकरूपी रूपाण्यशेषाण्यनुपुष्यतीश ॥ ४५ ॥ एकं तवाग्र्यं परमं पदं यत्पश्यंति त्वां सूरयो ज्ञानदृश्यम् ॥ त्वत्तो नान्यत्किंचिदस्ति स्वरूपं यद्वा भूतं यच्च भव्यं परात्मन् ॥ ४६ ॥ व्यक्ताव्यक्तस्वरूपस्त्वं समष्टिव्यष्टिरूपवान् ॥ सर्वज्ञस्सर्ववित्सर्वशक्तिज्ञानबलर्द्धिमान् ॥ ४७ ॥ अन्यूनश्चाप्यवृद्धिश्च स्वाधीनो नादिमान्वशी ॥ क्लमतंद्री भय क्रोधकामादिभिरसंयुतः ॥ ४८ ॥ निरवद्यः परः प्राप्तेर्निरधिष्ठोऽक्षरः क्रमः ॥ सर्वेश्वरः पराधारो धाम्नां धामात्मकोऽक्षयः ॥ ४९ ॥ सकलावरणातीतनिरालंबनभावन ॥ महाविभूतिसंस्थान नमस्ते पुरुषोत्तम ॥ ५० ॥ नाकारणात्कारणाद्वा कारणाकारणान्न च ॥ शरीरग्रहणं वापि धर्मत्राणाय केवलम् ॥ ५१ ॥

॥४५॥ एकमिति॥अग्र्यमप्राकृतम् एकमद्वयं तव परमं पदं यत्तदपित्वमेवेति । यद्वा तव परमं पदं यत्तदेकं केवलमग्र्यमप्राकृतम् ॥४६॥ चेतनाचेतनयोः कार्यकारणभावावस्थाद्वयमपि त्वमेवेत्याह—व्यक्तेति॥यद्वा "समष्टिं विदुरव्यक्तं व्यष्टिर्व्यक्तमिहोच्यते" इति वा। अथवा समष्टिर्वासुदेवः व्यष्टिस्संकर्षणादिः।सर्वज्ञस्सर्वदृगिति च पाठः।सर्वज्ञस्सर्वदृगिति।सर्वश्चासौ ज्ञश्च सर्वदृक् सर्वद्रष्टा । यद्वा करणैः सर्वतश्च ज्ञाता सर्वशक्तिज्ञानबलर्द्धिमान् सामान्यविषयं ज्ञानं सर्वज्ञानम्॥४७॥४८॥ निरवद्य इति।परः प्राप्तेः प्राप्तेः परः दुष्प्राप इत्यर्थः । निरधिष्ठः निराधारः क्रमः अप्रतिबंधमहोत्साहः "वृत्तिसर्गतायनेषु क्रमः" इति सूत्रे वृत्तिरप्रतिबंधः। सर्ग उत्साहः तायनं स्थिततेति दर्शनात् क्रम इति कर्त्तरि द्वयोरर्थयोर्व्युत्पत्तिः । सर्वेश्वर पराधार सर्वेषामीश्वर परेषामाधार सर्वेषामीश्वराणां पराधारेति वा । धाम्नां धामात्मकज्योतिषां ज्योतिः । पाठांतरे सर्वेश्वरेत्यादि संबुद्धिः ॥ ४९ ॥ सकलेत्यादि ॥ आवरणानि प्रकृत्यादीनि कर्माणि वा निरालंबनभावनाशरण्यभावन महाविभूतिसंस्थान त्रिपाद्विभूतौ संस्थानं स्थितिर्यस्य तथोक्तः ॥५०॥ नाकारणादित्यादि ॥ कारणं प्रयोजनं सुखम् । अकारणम् अप्रयोजनं दुःखम् । कारणाकारणं मिश्रम् एतदुक्तं भवति न नार्कीवदध

अनंतमूर्तेरिति यदुक्तं तत्प्रपंचयति यथाग्निरित्यादित्रिभिः--यथाग्निरिति ॥ अनुपुष्यति वर्धयति ॥ ४५ ॥ ४६ ॥ व्यक्ताव्यक्तस्वरूप इति ॥ व्यक्तं महदादि अव्यक्तं प्रधानं तत्स्वरूपस्त्वम् अतः समष्टिः व्यापी विराट् व्यष्टिस्तद्विशेषश्चतुर्विधो भूतग्रामः तत्स्वरूपवान् सर्वज्ञः सामान्येन सर्वविद्विशेषतः ॥ ४७ ॥ तदेवं सर्वकार्यरूपत्वेऽपि कार्यदोषराहित्यं वदन्नचिंत्यैश्वर्यमाह--अन्यून इत्यादित्रिभिः । अन्यून इति ॥ वशी सकलजगन्नियंता । क्लमः श्रमः । तंद्री आलस्यम् ॥ ४८ ॥ निरवद्य इति ॥ निरवद्यः निर्मलः निरधिष्ण्यः प्रतिकूलशून्यः । निरधिष्ठ इति पाठे अधिष्ठानशून्य इत्यर्थः । पराधारः ब्रह्मादीनामाश्रयः । धाम्नां तेजसां सूर्यादीनां धामात्मकः प्रकाशात्मकरूपः ॥ ४९ ॥ सकलेति ॥ सकलावरणातीत अन्नमयादिरूपपंचकोशाद्यसंस्पृष्ट अतो निरालंबनभावननिरुपाधित्वान्निर्विषयेण चित्तेन विभाव्य महाविभूतिर्विश्वप्रपंचात्मिका संस्थानं सन्निवेशः यस्य तथाभूत ॥ ५० ॥ ननु कुतो मायावरणातीतत्वं मत्स्यकूर्माद्यनेकदेहवृतत्वादित्यत आह--नेति ॥ अकस्य दुःखस्य अरणात् प्रापणात् अकारणमधर्मः । कस्य सुखस्य अरणात्

॥ श्रीपराशर उवाच ॥ इत्येवं संस्तवं श्रुत्वा मनसा भगवानजः ॥ ब्रह्माणमाह प्रीतेन विश्वरूपं प्रकाशयन् ॥९२॥ श्रीभगवानुवाच ॥ भोभो ब्रह्मंस्त्वया मत्तस्सह देवैर्यदिष्यते ॥ तदुच्यतामशेषं च सिद्धमेवावधार्यताम् ॥ ९३ ॥ श्रीपराशर उवाच ॥ ततो ब्रह्मा हरेर्दिव्यं विश्वरूप मवेक्ष्य तत् ॥ तुष्टाव भूयो देवेषु साध्वसावनतात्मसु ॥ ९४ ॥ ब्रह्मोवाच ॥ नमो नमस्तेस्तु सहस्रकृत्वस्सहस्रबाहो बहुवक्रपाद ॥ नमो नमस्ते जगतः प्रवृत्तिविनाशसंस्थानकराप्रमेय ॥ ९५ ॥ सूक्ष्मातिसूक्ष्मातिबृहत्प्रमाण गरीयसामप्यतिगौरवात्मन् ॥ प्रधानबुद्धींद्रियवत्प्र धानमूलात्परात्मन्भगवन्प्रसीद ॥ ९६ ॥ एषा मही देव महीप्रसूतैर्महासुरैः पीडितशैलबंधा ॥ परायणं त्वां जगतामुपैति भारावतारार्थमपार सार ॥ ९७ ॥ एते वयं वृत्ररिपुस्तथायं नासत्यदस्रौ वरुणस्तथैव ॥ इमे च रुद्रा वसवस्ससूर्यास्समीरणाग्निप्रमुखास्तथान्ये ॥ ९८ ॥

र्मफलानुभवाय तव शरीरग्रहणं न च स्वर्गिधर्मफलानुभवार्थं नापि मनुष्यादिवदुभयफलानुभवार्थं किं तु केवलं धर्मत्राणायेति । यद्वा कस्य सुखस्य कारणत्वात् प्रापक त्वात् कारणं धर्मः तद्विरुद्धमकारणमधर्मः तदुभयं कारणाकारणम् एभ्यः क्रमात् तिर्यग्देवनराणां जन्म तव तु नैवम् अकर्मवश्यत्वात् किं तु केवलमिच्छया धर्मत्राणा येति । "इच्छागृहीताभिमतोरुदेहः । न साकर्मनिमित्तजा" इति च वक्ष्यति ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ सूक्ष्मेति ॥ प्रधानस्य प्रकृतेः बुद्धींद्रि यवतः पुंसश्च प्रधानशेषीभूत तेन मूलभूतादव्यक्तात्परात्मन् । तत्प्रधानेति पाठे अव्यक्तस्य बुद्ध्यायंतःकरणस्य चक्षुरादेर्वागादेश्च प्रधानमूलभूत जीवादुत्कृष्ट । प्रधान मूलमिति पाठे प्रधानमूलभूतस्त्वमित्यर्थः ॥ ५६ ॥ ५७ ॥ ५८ ॥

प्रापणात्कारणं धर्मः । तदुभयं कारणाकारणं विमिश्रम् एतेभ्यो हि यथाक्रमं तिर्यक्सुरनरादीनां जन्म प्रसिद्धं तव तु नैवं जन्म किं तु धर्मत्राणायैव । नरस्य परमानंदरूपस्य कर्मपारतंत्र्याभावात् । यद्वा--न विद्यते अकमेषामिति नाकाः देवाः तेषामार्णदाक्रोशात्कस्य परब्रह्मण आरणाद्वा । कारणाकारणात्तदुभयाक्रोशाद्वा ते शरीरग्रहणं न भवति, किं तु जनताकृपया धर्मत्राणाय केवलम् । न हि स्वेच्छाधृतविशुद्धोर्जस्व्यात्तविग्रहे आवरणं स्यादित्यर्थः ॥ ९१ ॥ ९२ ॥ भोभो ब्रह्मन्निति ॥ यदिष्यते अपेक्ष्यते ॥ ९३ ॥ तत इति ॥ साध्वसं भयं तेनावनतशरीरेषु सत्सु ॥ ९४ ॥ नमोनम इति ॥ प्रवृत्तिः सृष्टिः । संस्थानं स्थितिः ॥ ९५ ॥ सूक्ष्मातिसूक्ष्मेति ॥ अतिबृहत्प्रमाणं यस्य अतिगौरवयुक्त आत्मा मूर्तिर्यस्य । प्रधानं प्रकृतिः । बुद्धिर्महत्तत्त्वम् । इंद्रियवानहंकारः । तेषां प्रधानः पुरुषः स एव मूलं जगत्कारणत्वात्तस्मादपि परमात्मन् तन्नियंतृ स्वरूप ॥ ९६ ॥ एवं स्तुत्वा प्रस्तुतमाह--एषेति ॥ मही प्रसूतैर्महद्भिरसुरैः पीडितो विश्लथीकृतः शैलबंधः पर्वतमूलबंधो यस्याः सा । अपारसार अपरिमितबल ॥ ९७ ॥ अस्माभिश्च तव यत्साहाय्यं कार्यं तदा

सुरास्समस्तास्सुरनाथकार्यमेभिर्मया यच्च तदीश सर्वम्॥आज्ञापयाज्ञां परिपालयंतस्तवैव तिष्ठाम सदास्तदोषाः ॥५९॥ श्रीपराशर उवाच ॥ एवं संस्तूयमानस्तु भगवान्परमेश्वरः ॥ उज्जहारात्मनः केशौ सितकृष्णौ महामुने ॥६०॥ उवाच च सुरानेतौ मत्केशौ वसुधातले ॥ अवतीर्य भुवो भारक्लेशहानिं करिष्यतः॥ ६१ ॥ सुराश्च सकलास्स्वांशैरवतीर्य महीतले ॥ कुर्वंतु युद्धमुन्मत्तैः पूर्वोत्पन्नैर्महासुरैः ॥ ६२ ॥ ततः क्षयमशेषास्ते दैतेया धरणीतले ॥ प्रयास्यंति न संदेहो मद्दृक्पातविचूर्णिताः ॥ ६३ ॥ वसुदेवस्य या पत्नी देवकी देवतोपमा ॥ तत्रायमष्टमो गर्भो मत्केशो भविता सुराः ॥६४॥ अवतीर्य च तत्रायं कंसं घातयिता भुवि ॥ कालनेमिं समुद्भूतमित्युक्त्वांतर्दधे हरिः ॥ ६५ ॥ अदृश्याय ततस्तस्मै प्रणिपत्य महामुने ॥ मेरुपृष्ठं सुरा जग्मुरवतेरुश्च भूतले ॥ ६६ ॥ कंसाय चाष्टमो गर्भो देवक्या धरणीधरः ॥ भविष्यतीत्याचचक्षे भगवान्नारदो मुनिः ॥ ६७ ॥ कंसोऽपि तदुपश्रुत्य नारदात्कुपितस्ततः ॥ देवकीं वसुदेवं च गृहे गुप्तावधारयत् ॥ ६८ ॥ वसुदेवेन कंसाय तेनैवोक्तं यथा पुरा ॥ तथैव वसुदेवोपि पुत्रमर्पितवान्द्विज ॥ ६९ ॥ हिरण्यकशिपोः पुत्राष्षड्गर्भा इति विश्रुताः ॥ विष्णुप्रयुक्ता स्तान्निद्राक्रमाद्गर्भानयोजयत् ॥ ७० ॥

॥ ५९ ॥ एवमिति ॥ केशौ तेजसी क आत्मा तस्मिन् शेत इति केशः । मोक्षधर्मे केशवनाम निर्वचने । "सूर्यस्य तपतो लोकानग्नेस्सोमस्य चैव हि । अंशवो ये प्रकाशंते मम ते केशसंज्ञिताः" इति ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ वसुदेवस्येति ॥ तस्यायमिति पाठे तस्यायमित्यार्षस्संधिः ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ॥ ६८ ॥ ६९ ॥ हिरण्यकशिपोरिति ॥ षड्गर्भाः प्राग्जन्मनाम्ना कीर्तिमत्सुषेणाद्याः ते हि पूर्वं हिरण्यकशिपोर्भ्रातुः कालनेम्यसुरस्य पुत्रास्तं हिरण्यकशिपुमना

ज्ञापयेत्याह–एते वयमित्यादिद्वाभ्याम्। एत इति ॥ नासत्यदस्रावश्विनौ ॥ ५८ ॥ ५९ ॥ एवमिति ॥ उज्जहार उत्पाटितवान् ॥ ६० ॥ उवाचेति ॥ अयं भावः मम दुष्करं चेद्युष्माभिः कार्यं सहाय्यं स्यात् नन्विदमस्ति । भूभारहरणादौ महत्यपि कार्ये मत्केशमात्रस्यैव समर्थत्वादिति । न तु केशमात्रावतार इति मंतव्यं मद्दृक्पातविचूर्णिता इति कृष्णाष्टम्यामहमुत्पत्स्यामि इत्यादिषु साक्षात्स्वावतारस्योक्तेः । सितकृष्णकेशधारणमपि शोभार्थमेव । मिश्रकेश्यप्सरोवत् न त्वजरामरस्यार्थपलितत्वं संभवति "काष्ठामुहूर्तादिमयश्चकालो न यद्विभूतेः परिणामहेतुः" इत्युक्तत्वात् । मत्केशौ वसुधातलेऽवतीर्य भुवो भारनिमित्तस्य क्लेशस्य हानिं करिष्यतः ॥ ६१ ॥ तथापि युद्धादिक्रीडार्थं सुरानाज्ञापयति–सुराश्चेति ॥ ६२ ॥ तैर्योद्धुमशक्ता वयमिति न भेत्तव्यमित्याह–ततः क्षयमिति ॥ ६३ ॥ वसुदेवस्येति ॥ अयं कृष्णवर्णो मत्केशः रामलीलानामप्युपलक्षणमेतत् ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ कंस इति ॥ गुप्तौ सुरक्षितौ ॥ ६८॥ वसुदेवेनेति ॥ तेनैव पुरा यथोक्तौ । "समर्पयिष्ये सकलान्पुत्रानस्योदरोद्भवान् ॥" इति ॥ ६९ ॥ ७० ॥

योगनिद्रा महामाया वैष्णवी मोहितं यया ॥ अविद्यया जगत्सर्वं तामाह भगवान्हरिः ॥ ७१ ॥ श्रीभगवानुवाच ॥ निद्रे गच्छ ममादेशा त्पातालतलसंश्रयान् ॥ एकैकत्वेन षड्गर्भान्देवकीजठरं नय ॥ ७२ ॥ हतेषु तेषु कंसेन शेषाख्योंशस्ततो मम ॥ अंशांशेनोदरे तस्यास्सप्तमः संभविष्यति ॥ ७३ ॥ गोकुले वसुदेवस्य भार्यान्या रोहिणी स्थिता ॥ तस्यास्स संभूतिसमं देवि नेयस्त्वयोदरम् ॥ ७४ ॥ सप्तमो भोजराजस्य भयाद्रोधोपरोधतः ॥ देवक्याः पतितो गर्भ इति लोको वदिष्यति ॥७५॥ गर्भसंकर्षणात्सोऽथ लोके संकर्षणेति वै ॥ संज्ञामवाप्स्यते वीरश्श्वेताद्रिशिखरोपमः ॥ ७६ ॥ ततोऽहं संभविष्यामि देवकीजठरे शुभे ॥ गर्भं त्वया यशोदाया गंतव्यमविलंबितम् ॥७७॥ प्रावृट्काले च नभसि कृष्णाष्टम्यामहं निशि ॥ उत्पत्स्यामि नवम्यां तु प्रसूतिं त्वमवाप्स्यसि ॥७८॥ यशोदाशयने मां तु देवक्यास्त्वामनिंदिते॥मच्छक्तिप्रेरितमतिर्वसुदेवो नयिष्यति ॥ ७९ ॥ कंसश्च त्वामुपादाय देवि शैलशिलातले ॥ प्रक्षेप्स्यत्यंतरिक्षे च संस्थानं त्वमवाप्स्यसि ॥ ८० ॥

इत्य ब्रह्मार्चनात्कुपितेन तेन भाविजन्मनि पितैव वो निहनिष्यतीति शप्ताः समुद्रे शायिता इति श्रीहरिवंशे तेन हिरण्यकशिपोः पुत्रा इत्युपचारः । गर्भानयोजयत् देवकीजठरे गर्भत्वेनायोजयत् ॥ ७० ॥ योगनिद्रेति ॥ योगनिद्रा योग एव निद्रा भगवतः समाधिविशेषो योगः अयं निद्रायत इत्यन्येषां व्यामोहकत्वादस्य निद्रात्वं सैव विचित्रकार्यकारित्वान्महामाया ज्ञानविरोधित्वादविद्या ॥ ७१ ॥ ७२॥७३॥ गोकुल इति ॥ तस्याः संभूतिः सममिति क्रियाविशेषणम् । गर्भाधानप्रसवकालाविरोधेन नेय इत्यर्थः । प्रागेव हि वसुदेवनिषिक्तगर्भायाः पश्चाद्गोकुलं गताया रोहिण्या जठरे सप्तमासावस्थितं वायुरूपं गर्भमपसार्य तत्र देवकीगर्भं साप्तमासिकं संक्रामयेति हरिवंशे उक्तम् । तस्या उदरं नेय इत्यन्वयः ॥७४॥ सप्तम इति ॥ रोधोपरोधतः रुध्यतेऽस्मिन्निति रोधो निरोधस्थानम् ॥ ७५ ॥ ७६ ॥ ७७ ॥ प्रावृट्काल इति ॥ नभसि श्रावणे मासि नवम्यां कृष्णाष्टम्यां निशाशेषे नवम्यप्यस्तीति भावः ॥ ७८ ॥ ७९ ॥ ८० ॥

कथं सा विष्णुना प्रयुक्ता किं वा तस्याः कार्यमित्यपेक्षायामाह—योगनिद्रेत्यादिनायावत्समाप्ति । योगनिद्रेति॥योग एवात्मानुभूतिलक्षणो बाह्यानुभवाद् व्यावृत्तो निद्रेव निद्रा सैव ब्रह्मादीनपि मोहयंती महामाया सैव जीवानां ज्ञानमाच्छादयंती अविद्ययाअविद्यारूपेण जगत्सर्वमावृत्य यया स्वशक्त्या मोहितं मिथ्याभिनिवेशकृतं तामाहेत्यर्थः ॥ ७१ ॥ ७२ ॥ ७३ ॥ गोकुल इति ॥ संभूतेस्सममनुरूपं यथा भवति एवं नेयः प्रागेव वसुदेवाहितगर्भायाः रोहिण्याः पश्चाद्गोकुलं गतायास्सप्तमे मासि वायुभूतं तं गर्भमपसार्य देवकीजठरात्सप्तमासगर्भम् अलक्ष्यमाणाकृष्य तस्या उदरं नेयमित्यर्थः ॥ ७४ ॥ सप्तम इति ॥ रोधोपरोधतः कारागारनिरोधात् ॥ ७५ ॥ गर्भसंकर्षणादिति ॥ संकर्षण इति संज्ञामवाप्स्यति ॥ ७६ ॥ तत इति ॥ त्वया यशोदाया गर्भं प्रति गंतव्यम् ॥ ७७ ॥ प्रावृट्काल इति ॥ नभसि श्रावणे मासि । निश्यर्धरात्रे अष्टम्यामहमुत्पत्स्यामि । अर्धरात्रानंतरं नवम्यां प्रविष्टायां त्वम् ॥ ७८ ॥ यशोदाशयन इति ॥ यशोदाशयने मां नेष्यति त्वां देवक्याश्शयने ॥ ७९ ॥ तथापि त्वया न भेतव्यमित्याह—कंसश्चेति ॥ ८० ॥

ततस्त्वां शतदृक्छक्रः प्रणम्य मम गौरवात् ॥ प्रणिपातानतशिरा भगिनीत्वे ग्रहीष्यति ॥ ८१ ॥ त्वं च शुंभनिशुंभादीन्हत्वा दैत्या न्सहस्रशः ॥ स्थानैरनेकैः पृथिवीमशेषां मंडयिष्यसि ॥ ८२ ॥ त्वं भूतिः सन्नतिः क्षांतिः कांतिर्द्यौः पृथिवी धृतिः ॥ लज्जा पुष्टी रुषा या तु काचिदन्या त्वमेव सा ॥ ८३ ॥ ये त्वामार्येति दुर्गेति वेदगर्भांबिकेति च ॥ भद्रेति भद्रकालीति क्षेमदा भाग्यदेति च ॥ ॥ ८४ ॥ प्रातश्चैवापराह्ने च स्तोष्यंत्यानम्रमूर्त्तयः ॥ तेषां हि प्रार्थितं सर्वं मत्प्रसादाद्भविष्यति ॥ ८५ ॥ सुरामांसोपहारैश्च भक्ष्यभोज्यैश्च पूजिता ॥ नृणामशेषकामांस्त्वं प्रसन्ना संप्रदास्यसि ॥ ८६ ॥ ते सर्वे सर्वदा भद्रे मत्प्रसादादसंशयम् ॥ असंदिग्धा भविष्यंति गच्छ देवि यथोदितम् ॥ इति श्रीविष्णुमहापुराणे पंचमांशे प्रथमोऽध्यायः ॥ १ ॥ ॥ श्रीपराशर उवाच ॥ यथोक्तं सा जगद्धात्रा देवदेवेन वै तथा ॥ षड्गर्भगर्भविन्यासं चक्रे चान्यस्य कर्षणम् ॥ १ ॥ सप्तमे रोहिणीं गर्भे प्राप्ते गर्भं ततो हरिः ॥ लोकत्रयोपकाराय देवक्याः प्रविवेश ह ॥ २ ॥ योगनिद्रा यशोदायास्तस्मिन्नेव तथा दिने ॥ संभूता जठरे तद्वद्यथोक्तं परमेष्ठिना ॥ ३ ॥ ततो ग्रहगणस्सम्यक्प्रचचार दिवि द्विज ॥ विष्णोरंशे भुवं याते ऋतवश्चाबभुश्शुभाः ॥ ४ ॥ न सेहे देवकीं द्रष्टुं कश्चिदप्यतितेजसा ॥ जाज्वल्यमानां तां दृष्ट्वा मनांसि क्षोभमाययुः ॥ ५ ॥

तत इति ॥ शतदृक् सहस्रदृक् शतसहस्रादिशब्दा बहूर्थवाचिनोऽपि दृश्यन्ते ॥ ८१ ॥ त्वं चेति ॥ स्थानैः योगपीठाख्यायतनैर्विंध्यजालंधराद्यैः ॥ ८२ ॥ ८३ ॥ य इति ॥ आर्यादिनामाष्टकं दुर्गामंत्रविशेषोद्धारार्थम् ॥ ८४ ॥ प्रातरिति ॥ मत्प्रसादादिति न हि शक्तेः शक्तिमंतमंतरेण सामर्थ्यमिति भावः ॥ ८५ ॥ सुरेति ॥ सुरामांसाद्युपहारस्तु तत्तदधिकारविशेषशूद्रादेः न सर्वेषाम् ॥ ८६ ॥ ते सर्वे इति ॥ ते सर्वे कामाः असंदिग्धा अव्यभिचारितावाप्तयः स्युः । अत्र संशयो नास्ति ॥ ८७ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशे प्रथमोऽध्यायः ॥ १ ॥ यथोक्तमिति ॥ षड्गर्भाख्यानं गर्भे देवक्या उदरे निक्षेपम् अन्यस्य शेषाख्यस्य सप्तमगर्भस्य तज्जठरात् कर्षणम् ॥ १ ॥ सप्तम इति ॥ गर्भं इतो रोहिणीं प्राप्ते देवक्या गर्भं हरिः प्रविवेश ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

त्वां प्रोत्साहयति–ततस्त्वामित्यादिसप्तभिः–ततस्त्वामिति ॥ शतशब्दोऽपरिमितवचनः सहस्रदृगित्यर्थः ॥ ८१ ॥ त्वं चेति ॥ स्थानैर्योगपीठाद्यायतनैर्विंध्यजालंधराद्यैः ॥८२॥ तस्या विभूतिमाह–त्वंभूतिरिति ॥ काचिदन्या स्त्रीजातिर्या सापि त्वमेव ॥ ८३ ॥ ८४ ॥ ८५ ॥ सुरेति ॥ सुराद्युपहारैर्यथाधिकारं सर्वैश्शूद्रादिभिरिति तैरपि पूजिता परिपतितैस्सर्वैः ॥ ८६ ॥ त इति ॥ ते सर्वे त्वया प्रसन्नया दत्ताः कामाः मत्प्रसादादसंदिग्धा अव्यभिचरिता भविष्यंति अतोऽसंशयं गच्छेति ॥ ८७ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां पंचमांशे प्रथमोऽध्यायः ॥ १ ॥ यथोक्तमिति ॥ षड्गर्भाख्यानं देवक्या गर्भे विन्यासं क्रमेण निक्षेपम् अन्यस्य सप्तमगर्भस्य देवक्या उदराद्रोहिण्या जठरं प्रतिकर्षणं च चक्रे ॥ १ ॥ सप्तम इति ॥ देवक्या गर्भं हरिः प्रविवेशेत्यन्वयः ॥ २ ॥ योगनिद्रेति ॥ परमेष्ठिना परमेश्वरेण ॥ ३ ॥ ४ ॥ ५ ॥

अदृष्टाः पुरुषैस्स्त्रीभिर्देवकीं देवतागणाः ॥ बिभ्राणां वपुषा विष्णुं तुष्टुवुस्तामहर्निशम् ॥ ६ ॥ देवता ऊचुः ॥ प्रकृतिस्त्वं परा सूक्ष्मा ब्रह्मगर्भाऽभवत्पुरा ॥ ततो वाणी जगद्धातुर्वेदगर्भासि शोभने ॥ ७ ॥ सृज्यस्वरूपगर्भासि सृष्टिभूता सनातने ॥ बीजभूता तु सर्वस्य यज्ञभूता भवस्त्रयी ॥ ८ ॥ फलगर्भा त्वमेवेज्या वह्निगर्भा तथारणिः ॥ अदितिर्देवगर्भा त्वं दैत्यगर्भा तथा दितिः ॥ ९ ॥ ज्योत्स्ना वासरगर्भा त्वं ज्ञानगर्भासि सन्नतिः ॥ नयगर्भा परा नीतिर्लज्जा त्वं प्रश्रयोद्वहा ॥ १० ॥ कामगर्भा तथेच्छा त्वं तुष्टिः संतोषगर्भिणी ॥ मेधा च बोधगर्भासि धैर्यगर्भोद्वहा धृतिः ॥ ११ ॥ ग्रहर्क्षतारकागर्भा द्यौरस्याखिलहैतुकी ॥ एता विभूतयो देवि तथान्याश्च सहस्रशः ॥ १२ ॥ तथाऽसंख्या जगद्धात्री सांप्रतं जठरे तव ॥ समुद्राद्रिनदीद्वीपवनपत्तनभूषणा ॥ ग्रामखर्वटखेटाढ्या समस्ता पृथिवी शुभे ॥ १३ ॥ समस्तवह्नयोऽभांसि सकलाश्च समीरणाः ॥ महोरगास्तथा यक्षा राक्षसाः प्रेतगुह्यकाः ॥ १४ ॥ ग्रहर्क्षतारकाचित्रविमानशतसंकुलम् ॥ अवकाशमशेषस्य यद्ददाति नभस्थलम् ॥ १५ ॥ भूलोकश्च भुवर्लोकस्स्वर्लोकोऽथ महर्जनः ॥ तपश्च ब्रह्मलोकश्च ब्रह्मांडमखिलं शुभे ॥ १६ ॥

॥ ६ ॥ प्रकृतिरिति ॥ ब्रह्मगर्भा आत्मगर्भा । यद्वा ब्रह्मशब्दो महद्वाची या पुरा भवत् सा त्वमित्यन्वयः । जगद्धातुः संबंधिनी वेदगर्भा वाणी प्रणवः ॥ ७ ॥ ८ ॥ ॥ ९ ॥ ज्योत्स्नेति ॥ ज्योत्स्ना प्राक्संध्या सत्सु नतिः सन्नतिः शुश्रूषा । नीतिशास्त्रं तत्साध्यो न्यायो नयः ॥ १० ॥ कामगर्भेति ॥ कामः काम्योर्थः । तुष्टिस्तृप्तिः तज्जन्यो हर्षस्संतोषः । मेधाधारणा शक्तिः धृतिर्धीप्रतिष्ठा धैर्यमलौल्यम् ॥ ११ ॥ ग्रहर्क्षेति॥ हेतुरेव हैतुकी । एता इति एताः प्रकृत्यादयो विभूतयः अन्याश्च ॥ १२ ॥ तथेति ॥ असंख्या जगद्धात्री च तव जठरे इदं प्रकृत्याभिः तत्सामानाधिकरण्यनिबंधनम् ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

अदृष्टा इति ॥ तत्रस्थैः पुरुषैः स्त्रीभिश्च अदृष्टास्संतः तुष्टुवुः ॥ ६ ॥ प्रकृतिरिति ॥ या पुरा ब्रह्मगर्भा ब्रह्मप्रतिबिंबधारिणी प्रकृतिरभवत्सा त्वमित्यन्वयः । एवं सर्वत्र ॥ ७ ॥ ८ ॥ ९ ॥ ज्योत्स्नेति ॥ ज्योत्स्ना प्रकाशः । सन्नतिः सतां नतिः गुरूपसत्तिरित्यर्थः । नयो न्यायः सामादिर्गर्भे यस्यास्सा नीतिर्नीतिशास्त्रम् । लज्जा अनौद्धत्येन वृत्तिः ॥ १० ॥ कामगर्भेति ॥ कामः कामितार्थो गर्भे यस्यास्सा फलाव्यभिचारिणीच्छा च त्वमित्यर्थः । तुष्टिः अलंबुद्धिः तोषस्तन्निमित्तः संतोषः गर्भेऽस्ति यस्यास्सा त्वं धैर्यमलोल्यं धृतिर्बुद्धिस्थिरता ॥ ११ ॥ ग्रहर्क्षेति ॥ अखिलहैतुकी वृष्ट्यादिद्वारा सर्वस्य हेतुरेव हैतुकी । एताः प्रकृतिस्त्वमित्यादिना उक्ताः प्रतिनियतैकैकवस्तुगर्भास्तव विभूतयः ॥ १२ ॥ इदानीं तु पृथिव्यादिसमस्तप्रपंचगर्भः श्रीविष्णुस्तव गर्भेस्तीति स्तुवंतः प्राहुः—तथेत्यादिना यावत्समाप्ति ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

तदंतरे स्थिता देवा दैत्यगंधर्वचारणाः ॥ महोरगास्तथा यक्षा राक्षसाः प्रेतगुह्यकाः ॥ १७ ॥ मनुष्याः पशवश्चान्ये ये च जीवा यशस्विनि ॥ तैरंतस्थैरनंतोऽसौ सर्वगः सर्वभावनः ॥ १८ ॥ रूपकर्मस्वरूपाणि न परिच्छेदगोचरे ॥ यस्याखिलप्रमाणानि स विष्णुर्गर्भगस्तव ॥ १९ ॥ त्वं स्वाहा त्वं स्वधा विद्या स्वधा त्वं ज्योतिरंबरे ॥ त्वं सर्वलोकरक्षार्थमवतीर्णा महीतले ॥ २० ॥ प्रसीद देवि सर्वस्य जगतश्शं शुभे कुरु ॥ प्रीत्या तं धारयेशानं धृतं येनाखिलं जगत् ॥२१॥ ॥ इति श्रीविष्णुमहापुराणे पञ्चमांशे द्वितीयोऽध्यायः ॥ २ ॥

॥ श्रीपराशर उवाच ॥ एवं संस्तूयमाना सा देवैर्देवमधारयत् ॥ गर्भेण पुंडरीकाक्षं जगतस्त्राणकारणम् ॥ १ ॥ ततोऽखिलजगत्पद्मबोधायाच्युतभानुना ॥ देवकीपूर्वसंध्यायामाविर्भूतं महात्मना ॥ २ ॥

॥ १७ ॥ १८ ॥ रूपकर्मेति ॥ नामादेः प्रमाणानां परिच्छेदागोचरत्वमनवधित्वम् । प्रमाणानीति पाठे यस्य विभूत्यादेः ज्ञापकानि इत्यर्थः ॥ १९ ॥ त्वमिति ॥ ज्योतिरंबर इति । अत्र ज्योतिःशब्देन "अदितिर्द्यौरदितिरंतारिक्षम्" इति मंत्रोक्तादितिरुच्यते सुरभ्यदितिभ्यां प्रलोभितः काश्यपो वरुणस्य गां जहार ततः कुपितेन ब्रह्मणा गोपो[1] भवेति शप्तोऽसौ वसुदेवत्वं गतो गवाध्यक्षोऽभूत्[2] । अदितिर्देवकी सुरभिः रोहिणीति हि हरिवंशे कथा ॥ २० ॥ प्रसीदेति ॥ प्रीत्या धारय मातुः प्रीत्या हि गर्भस्य गुणपोषः ॥ २१ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशे द्वितीयोऽध्यायः ॥ २ ॥ ॥ १ ॥ २ ॥

॥ १७ ॥ १८ ॥ रूपेति ॥ रूपं तत्तत् कर्मविलासः । स्वरूपं मूर्तिः । नामकर्मेति वा पाठः । यस्य रूपादीनि अखिलानि प्रमाणानि बालत्वमहत्वादिपरिमाणानि परिच्छेदस्य निर्धारणस्य गोचरे विषये न वर्तंते । पाठांतरे यस्य नामादीन्यखिलानां प्रमाणानां परिच्छेद्यानि न भवंति स विष्णुस्तव गर्भगः गर्भं प्राप्तः ॥ १९ ॥ २० ॥ प्रसीदेति ॥ प्रीत्या धारय सकलगर्भसामान्यतो दृष्ट्वा विषादं मा कुरु ॥ ॥ २१ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां पंचमांशे द्वितीयोऽध्यायः ॥ २ ॥ ॥ १ ॥ तत इति ॥ अखिलं जगदेव पद्मं तस्य बोधाय विकासाय अच्युतरूपेण भानुना देवक्येव पूर्वसंध्या तस्यामाविर्भूतम् ॥ २ ॥

---

१ गोपो भव–इत्यनेन वसुदेवस्य गोपत्वं सिद्ध्यति तस्य तत्राभावात् गोप–इत्यत्र–गां पृथ्वीं पातीति गोपो भूपतिः–इति ज्ञेयम् । भूपतिशब्दः क्षत्रियवाची–"स्वर्गेषुपशुवाग्वज्रदिङ्नेत्र घृणिभूजले । लक्ष्यदृष्ट्योः स्त्रियां पुंसि गौः" इत्यमरः । "गोपो गोपालके गोष्ठाध्यक्षे भूतपतावपि" इति मेदिनी च । अनेन गोपो भव–नाम–क्षत्रियो भवइत्यर्थः । २ गवाध्यक्षो जितेन्द्रियः–"गवाध्यक्षो जितेन्द्रियः" इति हैमः । किंवा गवाध्यक्षो ग्रामाधिपतिः "ग्रामौघाधिकृते पुंसि शारिवाख्यौषधौ स्त्रियाम् । गवाध्यक्षः" इति मेदिनी च ॥

तज्जन्मदिनमत्यर्थमाह्लाद्यमलदिङ्मुखम् ॥ बभूव सर्वलोकस्य कौमुदी शशिनो यथा ॥ ३ ॥ संतस्संतोषमधिकं प्रशमं चंडमारुताः ॥
प्रसादं निम्नगा याता जायमाने जनार्दने ॥ ४ ॥ सिंधवो निजशब्देन वाद्यं चक्रुर्मनोहरम् ॥ जगुर्गंधर्वपतयो ननृतुश्चाऽप्सरोगणाः ॥ ५ ॥
ससृजुः पुष्पवर्षाणि देवा भुव्यंतरिक्षगाः ॥ जज्वलुश्चाग्नयश्शांता जायमाने जनार्दने ॥ ६ ॥ मंदं जगर्जुर्जलदाः पुष्पवृष्टिमुचो द्विज ॥ अर्द्ध
रात्रेऽखिलाधारे जायमाने जनार्दने ॥ ७ ॥ फुल्लेंदीवरपत्राभं चतुर्बाहुमुदीक्ष्य तम् ॥ श्रीवत्सवक्षसं जातं तुष्टावानकदुंदुभिः ॥ ८ ॥ अभि
ष्टूय च तं वाग्भिः प्रसन्नाभिर्महामतिः ॥ विज्ञापयामास तदा कंसाद्भीतो द्विजोत्तम ॥ ९ ॥ वसुदेव उवाच ॥ जातोसि देवदेवेश शंखचक्रग
दाधरम् ॥ दिव्यरूपमिदं देव प्रसादेनोपसंहर ॥ १० ॥ अद्यैव देव कंसोयं कुरुते मम घातनम् ॥ अवतीर्ण इति ज्ञात्वा त्वमस्मिन्मम
मंदिरे ॥ ११ ॥ देवक्युवाच ॥ योऽनंतरूपोऽखिलविश्वरूपो गर्भेपि लोकान्वपुषा बिभर्त्ति ॥ प्रसीदतामेष स देवदेवो यो माययाऽविष्कृतबा
लरूपः ॥ १२ ॥ उपसंहर सर्वात्मन्रूपमेतच्चतुर्भुजम् ॥ जानातु माऽवतारं ते कंसोयं दितिजन्मजः ॥ १३ ॥ श्रीभगवानुवाच ॥ स्तुतोऽहं य
त्त्वया पूर्वं पुत्रार्थिन्या तदद्य ते ॥ सफलं देवि संजातं जातोऽहं यत्तवोदरात् ॥ १४ ॥

तज्जन्मेति ॥ आह्लादि आह्लादकम् ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ य इति ॥ अखिलविश्वरूपः अखिलजगद्रूपः ।
गर्भेपि गर्भस्थितोपि । मायया आश्चर्यरूपया शक्त्या ॥ १२ ॥ उपसंहरेति ॥ दितिजन्मजः दितिजन्मा दैत्यः तस्माज्जातः द्रमिडाख्येन दैत्येनोग्रसेनस्य वेष
धरेण तद्भार्यायां चौर्येणोत्पादितः कंस इति हरिवंशोक्तेः ॥ १३ ॥ स्तुत इति ॥ पूर्वं स्वायंभुवे मन्वंतरे युवयोः पृश्निसुतपस्त्वे पृश्निगर्भः स एवादितिकाश्य
पयोर्वामनः देवकीवसुदेवत्वे कृष्ण इति जातोहम् इत्थं भागवतोक्तम् । कृष्णस्य चतुर्भुजरूपोपसंहारोक्त्या कंसवधांतं द्विभुजत्वोपलब्धिः । परमार्थतस्तु चतुर्भुजत्वमेव

तज्जन्मेति ॥ आह्लादि बभूव । अमलानि दिशां मुखानि यस्मिन्तत् । कौमुदी ज्योत्स्ना । यज्जन्मदिनमिति च पाठः ॥ ३ ॥ ४ ॥ सिंधव इति ॥ सिंधवस्समुद्रा नद्योपि ॥ ५ ॥ ससृजुरिति ॥ शांताः
सौम्याः प्रदक्षिणावर्ताः ॥ ६ ॥ मंदमिति ॥ जगर्जुः गर्जितं चक्रुः ॥ ७ ॥ ८ ॥ ९ ॥ जातोसीति ॥ तत्र भयं नास्त्येव तथापि मयि प्रसादेन हेतुना उपसंहर ॥ १० ॥ अद्यैवेति ॥ कुरुत इति
वर्तमाननिर्देशो वर्तमानसामीप्य इति । त्वां चतुर्भुजेन रूपेणावतीर्णं ज्ञात्वा ॥ ११ ॥ य इति ॥ अखिलविश्वरूपः सकलजगद्रूपी ॥ १२ ॥ उपसंहरेति ॥ दितिजन्मज इति । दितिजन्मा दैत्यः तस्माज्जातः
द्रमिलाख्येन दैत्येन उग्रसेनवेषधारिणा तद्भार्यायां कंस उत्पादित इति हरिवंशोक्तं ज्ञेयम् । दितिजात्मज इति पाठोप्येवमेव ॥ १३ ॥ स्तुत इति ॥ पूर्वं स्वायंभुवेंतरे ॥ १४ ॥

॥ श्रीपराशर उवाच ॥ इत्युक्त्वा भगवांस्तूष्णीं बभूव मुनिसत्तम ॥ वसुदेवोपि तं रात्रावादाय प्रययौ बहिः ॥ १५ ॥ मोहिताश्चाभवंस्तत्र रक्षिणो योगनिद्रया ॥ मथुराद्वारपालाश्च व्रजत्यानकदुंदुभौ ॥ १६ ॥ वर्षतां जलदानां च तोयमत्युल्बणं निशि ॥ संवृत्यानुययौ शेषः फणैरानकदुंदुभिम् ॥ १७ ॥ यमुनां चातिगंभीरां नानावर्त्तशताकुलाम् ॥ वसुदेवो वहन्विष्णुं जानुमात्रवहां ययौ ॥ १८ ॥ कंसस्य करदानाय तत्रैवाभ्यागतांस्तटे ॥ नंदादीन्गोपवृद्धांश्च यमुनाया ददर्श सः ॥ १९ ॥ तस्मिन्काले यशोदापि मोहिता योगनिद्रया ॥ तामेव कन्यां मैत्रेय प्रसूता मोहिते जने ॥ २० ॥ वसुदेवोपि विन्यस्य बालमादाय दारिकाम् ॥ यशोदाशयनात्तूर्णमाजगामामितद्युतिः ॥ ॥ २१ ॥ ददृशे च प्रबुद्धा सा यशोदा जातमात्मजम् ॥ नीलोत्पलदलश्यामं ततोत्यर्थं मुदं ययौ ॥ २२ ॥ आदाय वसुदेवोऽपि दारिकां निजमंदिरे ॥ देवकीशयने न्यस्य यथापूर्वमतिष्ठत ॥ २३ ॥ ततो बालध्वनिं श्रुत्वा रक्षिणस्सहसोत्थिताः ॥ कंसायावेदयामासुर्देवकीप्रसवं द्विज ॥ २४ ॥ कंसस्तूर्णमुपेत्यैनां ततो जग्राह बालिकाम् ॥ मुंचमुंचेति देवक्या सन्नकंठ्या निवारितः ॥ २५ ॥ चिक्षेप च शिलापृष्ठे सा क्षिप्ता वियति स्थिता ॥ अवाप रूपं सुमहत्सायुधाष्टमहाभुजम् ॥ २६ ॥ प्रजहास तथैवोच्चैः कंसं च रुषिताऽब्रवीत् ॥ किं मया क्षिप्तया कंस जातो यस्त्वां वधिष्यति ॥ २७ ॥

नरकशिशुपालपौंड्रकवधादिषु प्रसिद्धेः ॥ १४ ॥ ॥ १५ ॥ १६ ॥ वर्षतामिति ॥ अत्युल्बणमतिशब्दम् ॥ १७ ॥ यमुनामिति ॥ जानुमात्रवहामित्यत्र हेतुत्वं वहन् विष्णुमिति ॥ १८ ॥ कंसस्येति ॥ नंदादीन् ददर्श स्वयं तैरदृष्टः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ प्रजहासेति ॥ यस्त्वां वधिष्यति स जात इत्यन्वयः ॥ २७ ॥

इत्युक्त्वेति ॥ तूष्णीं बभूवेति प्राकृतबालभावोस्त्वेव कंसवधपर्यंतं पित्रोः प्रार्थनया चतुर्भुजोपसंहारः कृत इति गम्यते ॥ १५ ॥ १६ ॥ १७ ॥ यमुनां चेति ॥ विष्णुं वहन्निति तद्वहनादेव जानुमात्रजलां कृत्वा ययावित्यर्थः । अयमेव च हेतुः सर्वद्वारकवाटबंधविवृत्तावपि द्रष्टव्यः "ताः कृष्णवाहे वसुदेव आगते स्वयं व्यशीर्यंत यथा तमो रवौ" इति शुकोक्तेः ॥ १८ ॥ कंसस्येति ॥ अभिमुखमागतान्नंदादीन्तैरदृष्टस्सन्ददर्श ॥ ॥ १९ ॥ २० ॥ वसुदेव इति ॥ यशोदाशयने बालं विन्यस्य तत्कन्यामादाय आजगाम । अमितद्युतिः महाबुद्धिः ॥ २१ ॥ २२ ॥ आदायेति ॥ यथापूर्वं पादयोः शृंखलां प्रतिमुच्यातिष्ठत् ॥ २३ ॥ २४ ॥ कंस इति ॥ सन्नकंठ्या गद्गदकंठ्या निवारितोपि तां कन्यां जग्राह ॥ २५ ॥ चिक्षेपेति ॥ वियति आकाशे स्थिता सुमहद्रूपं चाप ॥ २६ ॥ २७ ॥

सर्वस्वभूतो देवानामासीन्मृत्युः पुरा स ते ॥ तदेतत्संप्रधार्याशु क्रियतां हितमात्मनः ॥ २८ ॥ इत्युक्त्वा प्रययौ देवी दिव्यस्रग्गंधभूषणा ॥ पश्यतो भोजराजस्य स्तुता सिद्धैर्विहायसा ॥ २९ ॥ इति श्रीविष्णुमहापुराणे पंचमांशे तृतीयोऽध्यायः ॥ ३ ॥

॥ श्रीपराशर उवाच ॥ कंसस्ततोद्विग्नमनाः प्राह सर्वान्महासुरान् ॥ प्रलंबकेशिप्रमुखानाहूयासुरपुंगवान् ॥ १ ॥ कंस उवाच ॥ हे प्रलंब महाबाहो केशिन् धेनुक पूतने ॥ अरिष्टाद्यास्तथैवाऽन्ये श्रूयतां वचनं मम ॥ २ ॥ मां हंतुममरैर्यत्नः कृतः किल दुरात्मभिः ॥ मद्वीर्यतापितान्वीरो न त्वेतान्गणयाम्यहम् ॥ ३ ॥ किमिंद्रेणाल्पवीर्येण किं हरेणैकचारिणा ॥ हरिणा वापि किं साध्यं छिद्रेष्वसुरघातिना ॥ ४ ॥किमादित्यैः किं वसुभिरल्पवीर्यैः किमग्निभिः ॥ किं वान्यैरमरैः सर्वैर्मद्बाहुबलनिर्जितैः ॥ ५ ॥ किं न दृष्टोमरपतिर्मया संयुगमेत्य सः ॥ पृष्ठेनैव वहन्बाणानपगच्छन्नवक्षसा ॥ ६ ॥ मद्राष्ट्रे वारिता वृष्टिर्यदा शक्रेण किं तदा ॥ मद्बाणभिन्नैर्जलदैरापो मुक्ता यथेप्सिताः ॥ ७ ॥ किमुर्व्यामवनीपाला मद्बाहुबलभीरवः ॥ ते सर्वे सन्नतिं याता जरासंधमृते गुरुम् ॥ ८ ॥ अमरेषु ममावज्ञा जायते दैत्यपुंगवाः ॥ हास्यं मे जायते वीरास्तेषु यत्नपरेष्वपि ॥ ९ ॥ तथापि खलु दुष्टानां तेषामप्यधिकं मया ॥ अपकाराय दैत्येन्द्रा यतनीयं दुरात्मनाम् ॥ १० ॥ तद्ये यशस्विनः केचित्पृथिव्यां ये च यज्वनः ॥ कार्यो देवापकाराय तेषां सर्वात्मना वधः ॥ ११ ॥

सर्वस्वभूत इति ॥ पुरा कालनेमित्वे ॥ २८ ॥ २९ ॥ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशे तृतीयोऽध्यायः ॥ ३ ॥ कंस इति ॥ ततोद्विग्नेत्यार्षः संधिः ॥ १ ॥ हे प्रलंबेति ॥ हे प्रलंबेत्यादि युष्माभिरन्यैश्च श्रूयताम् इत्यन्वयः ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ मद्राष्ट्र इति ॥ आपो मुक्ताः अमुक्ता इति च्छेदः ॥ ७ ॥ किमुर्व्यामिति ॥ ते सर्वे सन्नतिमित्यत्र असन्नतिमिति पदच्छेदः । न सर्व इति वा पाठः । गुरुं श्वशुरम् ॥ ८ ॥ ९ ॥ ॥ १० ॥ तदिति ॥ यज्वनः यज्वानः दीर्घाभाव आर्षः । वधान्निरन्नादेवानक्ष्यंतीति देवापकारः ॥ ११ ॥

सर्वस्वभूत इति ॥ पुरा कालनेमिजन्मनि ॥ २८ ॥ २९ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां पंचमांशे तृतीयोऽध्यायः ॥ ३ ॥ ॥ कंस इति ॥ ततोद्विग्नमनाः ततं विततम् उद्विग्नम् उद्वेगः विततोद्वेगयुक्तचित्त इत्यर्थः । तदेति पाठस्सुगमः ॥ १ ॥ हे प्रलंबेति ॥ युष्माभिरारिष्टाद्यैश्च मम वचः श्रूयताम् ॥ २ ॥ मामिति ॥ किलेति प्रसिद्धौ ॥ ३ ॥ किमिंद्रेणेति ॥ एकचारिणा तापसेन छिद्रेष्वनवधानादिसमयेषु ॥ ४ ॥ ५ ॥ किं न दृष्ट इति ॥ पृष्ठेनैव वहन्पलायमानः ॥ ६ ॥ मद्राष्ट्र इति ॥ किमापो आमुक्ता इति च्छेदः । नापो मुक्ता इति वा पाठः ॥ ७ ॥ किमुर्व्यामिति ॥ गुरुं श्वशुरं जरासंधमृते किं सर्वे सन्नतिं न याताः । ते सर्वे सन्नतिमिति पाठे असन्नतिमिति पदच्छेदः ॥ ८ ॥ ९ ॥ १० ॥ तदिति ॥ यशस्विनो दाननिष्ठाः देवापकारायेति तेषां वधे हविर्दातॄणाम् अभावात् देवानां वृत्तिनाशात् अपकारः स्यात् । "तस्मादितः प्रदानं देवा उपजीवंति" इति श्रुतेः ॥ ११ ॥

उत्पन्नश्चापि मे मृत्युर्भूतपूर्वस्स वै किल ॥ इत्येतद्दारिका प्राह देवकीगर्भसंभवा ॥१२॥ तस्माद्बालेषु च परो यत्नः कार्यो महीतले ॥ यत्रो
द्रिक्तं बलं बाले स हन्तव्यः प्रयत्नतः ॥ १३ ॥ इत्याज्ञाप्यासुरान्कंसः प्रविश्याशु गृहं ततः ॥ मुमोच वसुदेवं च देवकीं च निरोधतः ॥
॥ १४ ॥ कंस उवाच ॥ युवयोर्घातिता गर्भा वृथैवैते मयाऽधुना ॥ कोप्यन्य एव नाशाय मम गर्भस्समुद्यतः ॥ १५ ॥ तदलं परितापेन
नूनं तद्भाविनो हि ते ॥ अर्भका युवयोर्दोषाच्चायुषो यद्वियोजिताः ॥ १६ ॥ श्रीपराशर उवाच ॥ इत्याश्वास्य विमुक्त्वा च कंसस्तौ परिशं
कितः ॥ अंतर्गृहं द्विजश्रेष्ठ प्रविवेश ततः स्वकम् ॥ १७ ॥ इति श्रीविष्णुमहापुराणे पंचमांशे चतुर्थोऽध्यायः ॥ ४ ॥ ॥ श्रीपराशर
उवाच ॥ विमुक्तो वसुदेवोऽपि नंदस्य शकटं गतः ॥ प्रहृष्टं दृष्टवान्नंदं पुत्रो जातो ममेति वै ॥ १ ॥ वसुदेवोपि तं प्राह दिष्ट्यादिष्ट्येति
सादरम् ॥ वार्द्धकेऽपि समुत्पन्नस्तनयोऽयं तवाधुना ॥ २ ॥ दत्तो हि वार्षिकस्सर्वो भवद्भिर्नृपतेः करः ॥ यदर्थमागतास्तस्मान्नात्र स्थेयं
महाधनैः ॥ ३ ॥ यदर्थमागताः कार्यं तन्निष्पन्नं किमास्यते ॥ भवद्भिर्गम्यतां नंद तच्छीघ्रं निजगोकुलम् ॥ ४ ॥ ममापि बालकस्तत्र रोहिणी
प्रभवो हि यः ॥ स रक्षणीयो भवता यथायं तनयो निजः ॥ ५ ॥ इत्युक्ताः प्रययुर्गोपा नंदगोपपुरोगमाः ॥ शकटारोपितैर्भांडैः करं दत्त्वा
महाबलाः ॥ ६ ॥ वसतां गोकुले तेषां पूतना बालघातिनी ॥ सुप्तं कृष्णमुपादाय रात्रौ तस्मै स्तनं ददौ ॥ ७ ॥ यस्मै यस्मै स्तनं रात्रौ पूतना
संप्रयच्छति ॥ तस्यतस्य क्षणेनांगं बालकस्योपहन्यते ॥ ८ ॥ कृष्णस्तु तत्स्तनं गाढं कराभ्यामतिपीडितम् ॥ गृहीत्वा प्राणसहितं पपौ
क्रोधसमन्वितः ॥ ९ ॥ सातिमुक्तमहारावा विच्छिन्नस्नायुबंधना ॥ पपात पूतना भूमौ म्रियमाणातिभीषणा ॥ १० ॥

॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ तदलमिति ॥ तद्भाविनः भवितव्यतादृशमरणाः ॥ १६ ॥ १७ ॥ ॥ इति श्रीविष्णुमहापुराणव्याख्याने
श्रीविष्णुचित्तीये पंचमांशे चतुर्थोऽध्यायः ॥ ४ ॥ ॥ १ ॥ २ ॥ दत्तो हीति ॥ वार्षिकः सांवत्सरिकः । नात्र स्थेयमित्यादिना महाधनानां दुष्टनृपसमीपस्थि
तिर्दोषाय तद्गम्यतामिति स्वसुतरक्षणाभिप्रायेणोक्तिः सूचिता ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ तदिति ॥ तत्सद्योमरणं भावि येषां ते तद्भाविनः ॥ १६ ॥ १७ ॥ इति श्रीधरस्वामिविविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां पंचमांशे चतुर्थो
ऽध्यायः ॥ ४ ॥ ॥ विमुक्त इति ॥ कंसेन बालघाताय सर्वे दैत्याः प्रहिता इति जानन् वसुदेवोपि नंदादीन् गोकुलरक्षार्थं प्रस्थापयितुं नंदस्य शकटं शकटावमोचनस्थानं गतः ॥ १ ॥ २ ॥ कृतकार्यैर्धनिकै
र्दुष्टराजसन्निधौ न स्थेयमित्युपदिशन्नाह–दत्तोहीत्यादिद्वाभ्याम् ॥ ३ ॥ यदर्थमिति ॥ किमास्यते किमत्र स्थीयते ॥ ४ ॥ ममेति ॥ रोहिण्यां प्रभवो यस्य सः निज इति स्वायत्वेनाभिमत इति गूढाभिप्रायः ॥
॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ कृष्णस्त्विति ॥ केवलं तस्यास्तन्यमपत्यमिव प्राणसहितं पपौ ॥ ९ ॥ सेति ॥ विच्छिन्नं स्नायुलक्षणम् अस्थिबंधनं यस्यास्सा । प्रथमं मायास्वरूपेण सौम्यरूपेण प्रविष्टा इदानीं म्रियमाणा

तन्नादश्रुतिसंत्रस्ताः प्रबुद्धास्ते व्रजौकसः ॥ ददृशुः पूतनोत्संगे कृष्णं तां च निपातिताम् ॥ ११ ॥ आदाय कृष्णं संत्रस्ता यशोदापि द्विजो त्तम ॥ गोपुच्छभ्रामणेनाथ बालदोषमपाकरोत् ॥ १२ ॥ गोकरीषमुपादाय नंदगोपोपि मस्तके ॥ कृष्णस्य प्रददौ रक्षां कुर्वंश्चैतदुदीरयन् ॥ ॥१३॥ नंदगोप उवाच ॥ रक्षतु त्वामशेषाणां भूतानां प्रभवो हरिः ॥ यस्य नाभिसमुद्भूतपंकजादभवज्जगत् ॥१४॥ येन दंष्ट्राग्रविधृता धारय त्यवनिर्जगत् ॥ वराहरूपधृग्देवस्स त्वां रक्षतु केशवः ॥ १५ ॥ नखांकुरविनिर्भिन्नवैरिवक्षस्थलो विभुः ॥ नृसिंहरूपी सर्वत्र रक्षतु त्वां जना र्दनः ॥ १६ ॥ वामनो रक्षतु सदा भवंतं यः क्षणादभूत् ॥ त्रिविक्रमः क्रमाक्रांतत्रैलोक्यः स्फुरदायुधः ॥१७॥ शिरस्ते पातु गोविंदः कंठं रक्षतु केशवः ॥ गुह्यं च जठरं विष्णुर्जंघे पादौ जनार्दनः ॥१८ ॥ मुखं बाहू प्रबाहू च मनः सर्वेंद्रियाणि च ॥ रक्षत्वव्याहतैश्वर्यस्तव नारायणोऽव्ययः ॥ १९ ॥ शार्ङ्गचक्रगदापाणेश्शंखनादहताः क्षयम् ॥ गच्छंतु प्रेतकूष्मांडराक्षसा ये तवाहिताः ॥ २० ॥ त्वां पातु दिक्षु वैकुण्ठो विदिक्षु मधुसूदनः ॥ हृषीकेशोंऽबरे भूमौ रक्षतु त्वां महीधरः ॥ २१ ॥ श्रीपराशर उवाच ॥ एवं कृतस्वस्त्ययनो नंदगोपेन बालकः ॥ शायितश्श कटस्याधो बालपर्यंकिकातले ॥ २२ ॥ ते च गोपा महद्दृष्ट्वा पूतनायाः कलेवरम् ॥ मृतायाः परमं त्रासं विस्मयं च तदा ययुः ॥ २३ ॥ इति श्रीविष्णुमहापुराणे पंचमांशे पंचमोऽध्यायः ॥ ५ ॥ ॥ श्रीपराशर उवाच ॥ कदाचिच्छकटस्याधश्शयानो मधुसूदनः ॥ चिक्षेप चरणावूर्ध्वं स्तन्यार्थी प्ररुरोद ह ॥ १ ॥ तस्य पादप्रहारेण शकटं परिवर्त्तितम् ॥ विध्वस्तकुंभभांडं तद्विपरीतं पपात वै ॥ २ ॥

॥११॥१२॥१३॥१४॥१५॥१६॥ वामन इति ॥ त्रिभिर्विक्रमैः पदन्यासैः क्रमेणाक्रांतत्रैलोक्यः ॥ १७ ॥ १८ ॥ मुखमिति ॥ प्रबाहू कूर्परादधोभागौ ॥ ॥१९॥२०॥२१॥ एवमिति ॥ स्वस्त्ययनं क्षेमप्रापणं कर्म बालपर्यंकिका बालार्थोऽल्पपर्यंकतलमुपरिभागः ॥ २२ ॥ २३ ॥ ॥ इति श्रीविष्णुमहापुराणव्या ख्याने श्रीविष्णुचित्तीये पंचमांशे पञ्चमोऽध्यायः ॥५॥ ॥१॥ तस्येति ॥ विध्वस्तकुंभभांडं कुंभा घटाः भांडानि गर्गर्याद्युपकरणानि । कुप्यभांडमिति पाठे स्वर्णर

सा अतिभीषणा सती पपातेत्यर्थः ॥ १० ॥ ११ ॥ १२ ॥ गोकरीषमिति ॥ गोकरीषं गोमयचूर्णम् ॥ १३ ॥ रक्षत्विति ॥ प्रकर्षेण भवंत्यस्मादिति प्रभवः ॥ १४ ॥ १५ ॥ १६ ॥ वामन इति ॥ क्रमाः पादविन्यासाः तैराक्रांतं त्रैलोक्यं येन सः । स्फुरंत्यायुधानि यस्य सः । त्रिविक्रमक्रमेत्यैकपद्यपाठे तु त्रिभिर्विक्रमैःक्रमेणाक्रांतं त्रैलोक्यं येन तथाभूतो यः क्षणादभूदित्यर्थः ॥ १७ ॥ १८ ॥ मुखमिति ॥ प्रबाहू कूर्परस्याधोभागौ ॥ १९ ॥ २० ॥ २१ ॥ एवमिति ॥ कृतं स्वस्त्ययनं शांतिकरं कर्म यस्य सः । बालपर्यंकिका बालोचितस्वल्पशय्या तस्यास्तले तदुपरि शायितश्शकटस्याध इति शकटोच्चाटनप्रस्तावः ॥ २२ ॥ ॥ २३ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां पंचमांशे पंचमोऽध्यायः ॥ ५ ॥ ॥ १ ॥ तस्येति ॥ विध्वस्तकुंभभांडं विशीर्णकुंभाद्युपकरणम् । कुप्यभांडमिति पाठे कुप्यं स्वर्णरजत

ततो हाहाकृतः सर्वो गोपगोपीजनो द्विज ॥ आजगामाथ ददृशे बालमुत्तानशायिनम् ॥ ३ ॥ गोपाः केनेति केनेदं शकटं परिवर्त्तितम् ॥ तत्रैव बालकाः प्रोचुर्बालेनानेन पातितम् ॥ ४ ॥ रुदता दृष्टमस्माभिः पादविक्षेपपातितम् ॥ शकटं परिवृत्तं वै नैतदन्यस्य चेष्टितम् ॥ ॥ ५ ॥ ततः पुनरतीवासन्गोपा विस्मयचेतसः ॥ नंदगोपोपि जग्राह बालमत्यंतविस्मितः ॥ ६ ॥ यशोदा शकटारूढभग्नभांडक पालिका ॥ शकटं चार्चयामास दधिपुष्पफलाक्षतैः ॥ ७ ॥ गर्गश्च गोकुले तत्र वसुदेवप्रचोदितः ॥ प्रच्छन्न एव गोपानां संस्कारान करोत्तयोः ॥ ८ ॥ ज्येष्ठं च राममित्याह कृष्णं चैव तथाऽवरम् ॥ गर्गो मतिमतां श्रेष्ठो नाम कुर्वन्महामतिः ॥ ९ ॥ स्वल्पे नैव तु कालेन रिंगिणौ तौ तदा व्रजे ॥ घृष्टजानुकरौ विप्र बभूवतुरुभावपि ॥ १० ॥ करीषभस्मदिग्धांगौ भ्रममाणावितस्ततः ॥ न निवारयितुं सेहे यशोदा तौ न रोहिणी ॥ ११ ॥ गोवाटमध्ये क्रीडंतौ वत्सवाटं गतौ पुनः ॥ तदहर्जातगोवत्सपुच्छाकर्षणतत्परौ ॥ १२ ॥ यदा यशोदा तौ बालावेकस्थानचराबुभौ ॥ शशाक नो वारयितुं क्रीडंतावतिचंचलौ ॥ १३ ॥ दाम्ना मध्ये ततो बद्ध्वा बबंध तमुलूखले ॥ कृष्णमक्लिष्टकर्माणमाह चेदममर्षिता ॥१४॥ यदि शक्नोषि गच्छ त्वमतिचंचलचेष्टित ॥ इत्युक्त्वाथ निजं कर्म सा चकार कुटुंबिनी ॥१५॥

जतेतरद्रव्यमयभांडमित्यर्थः । शकटं मुराविष्टम् "तदा शकटरूपेण दैत्यस्तामाश्रितो मुरः" इति हरिवंशे ॥२॥३॥ गोपा इति ॥ केनकेनेत्यत्रापि प्रोचुरित्यन्वयः । विस्मयाद्वीप्सा ॥ ४ ॥ ५ ॥ ६ ॥ यशोदेत्यादि ॥ अर्चनार्थं शकटे आरोपिताः भग्नभांडकपालिका यया सा ॥७॥ गर्गश्चेति ॥ गर्गः यदुपुरोहितः गोपानां संछन्नः तैरज्ञातः ॥ ८ ॥ ज्येष्ठमिति ॥ मतिमतां मुनीनाम् ॥ ९ ॥ स्वल्पेनेति ॥ रंगिणौ संचारिणौ ॥ १० ॥ ११ ॥ गोवाटमध्य इति ॥ गोवाटं गोक्षेत्रम् ॥ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

व्यतिरिक्तं द्रव्यम् ॥ २ ॥ ३ ॥ गोपा इति ॥ केन केनेति संभ्रमार्थे द्विरुक्तिः ॥ ४ ॥ ५ ॥ ६ ॥ यशोदेति ॥ शकटारूढाः शकटे स्थापिताः भग्नानां भांडानां कपालिकाः ॥ ७ ॥ गर्गश्चेति ॥ गोपानां प्रच्छन्न इत्यत्र शुकोक्तिरनुसंधेया । गर्गोहि गोकुलमागतो नंदेन बालयोर्नामकरणार्थं यदा प्रार्थितस्तदा तेनोक्तम्—अहं तावद्यदुकुलाचार्यः प्रख्यातः त्वं च वसुदेवस्य प्रेष्ठस्सखा अशरीरदारिकावाक्याभ्यां च देवक्याः पुत्रः स्वस्य शत्रुः कश्चिज्जातोस्तीति कंसो मन्यते । किं च स तु मया यदुपुरोधसा नाम कर्मादिकृतं ज्ञात्वा देवकीपुत्र एव कथंचिद्गोकुलं प्राप्तो नंदस्य पुत्रतया अभिमत इति जातशंकः कंसो यदि वा स्यात्तर्हि महान नर्थस्स्यादिति तदा नंदेनोक्तं मदीयैर्गोपैरविज्ञातस्सन् रहसि द्विजोचितं संस्कारमात्रं कुर्विति । तदेतदुक्तं "प्रच्छन्न एव गोपानां संस्कारानकरोत्तयोः" इति । उत्तरत्र महामतिरिति ॥ ८ ॥ ९ ॥ स्वल्पेनैवेति ॥ चत्वर रंगिणावित्यस्यैव विवृतिः । घृष्टजानुकरावेति जानुभ्यां कराभ्यां भुवं संघृष्य संचरंतावित्यर्थः ॥ १० ॥ करीषभस्मेति ॥ करीषभस्मभ्यां दिग्धांगौ लिप्तगात्रौ ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

व्यग्रायामथ तस्यां स कर्षमाण उलूखलम् ॥ यमलार्जुनमध्येन जगाम कमलेक्षणः ॥ १६ ॥ कर्षता वृक्षयोर्मध्ये तिर्यग्गतमुलूखलम् ॥ भग्नावुत्तुंगशाखाग्रौ तेन तौ यमलार्जुनौ ॥ १७ ॥ ततः कटकटाशब्दसमाकर्णनतत्परः ॥ आजगाम व्रजजनो ददर्श च महाद्रुमौ ॥ ॥ १८ ॥ नवोद्गताल्पदंतांशुसितहासं च बालकम् ॥ तयोर्मध्यगतं दाम्ना बद्धं गाढं तथोदरे ॥ १९ ॥ ततश्च दामोदरतां स ययौ दामबंधनात् ॥ २० ॥ गोपवृद्धास्ततः सर्वे नंदगोपपुरोगमाः ॥ मंत्रयामासुरुद्विग्ना महोत्पातातिभीरवः ॥ २१ ॥ स्थानेनेह न नः कार्यं व्रजामोन्यन्महावनम् ॥ उत्पाता बहवो ह्यत्र दृश्यंते नाशहेतवः ॥ २२ ॥ पूतनाया विनाशश्च शकटस्य विपर्ययः ॥ विना वातादिदोषेण द्रुमयोः पतनं तथा ॥ २३ ॥ वृंदावनमितस्स्थानात्तस्माद्गच्छाम मा चिरम् ॥ यावद्भौममहोत्पातदोषो नाभिभवेद्व्रजम् ॥ २४ ॥ इति कृत्वा मतिं सर्वे गमने ते व्रजौकसः ॥ ऊचुस्स्वं स्वं कुलं शीघ्रं गम्यतां मा विलंबथ ॥ २५ ॥ ततः क्षणेन प्रययुः शकटैर्गोधनैस्तथा ॥ यूथशो वत्सपालाश्च कालयंतो व्रजौकसः ॥ २६ ॥ द्रव्यावयवनिर्धूतं क्षणमात्रेण तत्तथा ॥ काकभाससमाकीर्णं व्रजस्थानमभूद्द्विज ॥ २७ ॥ वृंदावनं भगवता कृष्णेनाक्लिष्टकर्मणा ॥ शुभेन मनसा ध्यातं गवां सिद्धिमभीप्सता ॥ २८ ॥ ततस्तत्रातिरूक्षेपि घर्मकाले द्विजोत्तम ॥ प्रावृट्काल इवोद्भूतं नवशष्पं समंततः ॥ २९ ॥

॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ स्थानेनेति ॥ स्थानेन स्थित्या ॥ २२ ॥ २३ ॥ वृंदावनमिति ॥ इतः बृहद्वनाख्यात् भौममहोत्पातः चरस्थिरेषु विकृतिः स सप्तरात्रपाकः तत्पाककालात्प्राक् तद्भूमित्यागिनां न दोष इति श्रूयते ॥ २४ ॥ इतीति ॥ कुलं कुटुंबम् ॥ ॥ २५ ॥ तत इति ॥ कालयंतः चारयन्तः । गोधनमिति शेषः ॥ २६ ॥ द्रव्यावयवेति ॥ द्रव्यावयवनिर्धूतं व्रीह्यन्नदध्यादिद्रव्यावयवा निर्धूता आकीर्णा यत्र 'क्तोधिकरणे च' इति सूत्रम् ॥ २७ ॥ २८ ॥ २९ ॥

व्यग्रायामिति ॥ यमलयोर्युग्मभूतयोरर्जुनवृक्षयोर्मध्येन ॥ १६ ॥ १७ ॥ तत इति ॥ कटकटेति शब्दानुकृतिः॥१८॥ नवोद्गतेति ॥ नवोद्गतानामल्पानां दंतानामंशुभिः सितश्शुचिः हासो यस्य तं बालकं ददर्शेति पूर्वेणान्वयः ॥ १९ ॥ २० ॥ २१ ॥ स्थानेनेति ॥ इह बृहद्वने स्थानेन वासेन ॥ २२ ॥ २३ ॥ वृंदावनमिति ॥ भौमः भूमिविशेषवासनिमित्तः महोत्पातरूपो दोषः ॥ २४ ॥ इतीति ॥ कुलं कुटुंबादि ॥ २५ ॥ तत इति ॥ कालयंतश्चालयंतः ॥२६॥ द्रव्यावयवेति ॥ द्रव्याणां दध्यादीनामन्नादीनां चावयवैश्शेषैर्निर्धूतं निरूपितं काकादिभिश्च समाकीर्णमभूत् ॥२७॥२८॥ तत इति ॥ नवमद्भुतं शष्पं बालतृणम् उद्भूतम ॥२९॥

स समावासितः सर्वो व्रजो वृंदावने ततः ॥ शकटावाटपर्यंतश्चंद्रार्द्धाकारसंस्थितः ॥ ३० ॥ वत्सपालौ च संवृत्तौ रामदामोदरौ ततः ॥ एकस्थानस्थितौ गोष्ठे चेरतुर्बाललीलया ॥ ३१ ॥ बर्हिपत्रकृतापीडौ वन्यपुष्पावतंसकौ ॥ गोपवेणुकृतातोद्यपत्रवाद्यकृतस्वनौ ॥ ३२ ॥ काकपक्षधरौ बालौ कुमाराविव पावकी ॥ हसंतौ च रमंतौ च चेरतुः स्म महावनम् ॥ ३३ ॥ क्वचिद्वहन्तावन्योन्यं क्रीडमानौ तथा परैः ॥ गोपपुत्रैस्समं वत्सांश्चारयंतौ विचेरतुः ॥ ३४ ॥ कालेन गच्छता तौ तु सप्तवर्षौ महाव्रजे ॥ सर्वस्य जगतः पालौ वत्सपालौ बभूवतुः ॥ ३५ ॥ प्रावृट्कालस्ततोतीव मेघौघस्थगितांबरः ॥ बभूव वारिधाराभिरैक्यं कुर्वन्दिशामिव ॥ ३६ ॥ प्ररूढनवशष्पाढ्या शक्रगोपाचिता मही ॥ तथा मारकतीवासीत्पद्मरागविभूषिता ॥ ३७ ॥ ऊहुरुन्मार्गवाहीनि निम्नगांभांसि सर्वतः ॥ मनांसि दुर्विनीतानां प्राप्य लक्ष्मीं नवामिव ॥ ३८ ॥

स इति ॥ शकटीवाटः अल्पशकटी श्रेणी प्रांते यस्य सः । व्रततिवाची वा वाटशब्दः । चंद्रार्द्धाकारत्वं यमुनानुरोधात् । शकटीवाटपर्यंत इति च पाठः ॥ ३० ॥ वत्सपालाविति ॥ एकस्थानस्थितौ लीलास्थानस्थितौ ॥ ३१ ॥ बर्हीति ॥ आपीडः शेखरः गोपवेणुकृतातोद्यपत्रवाद्यकृतस्वनौ गोपोचितवेणुभिरेव रचितमुरजादिकृत्यौ पर्णमयवाद्यैः कृतस्वनौ च ॥ ३२ ॥ काकपक्षधराविति ॥ काकपक्षशिखा पावकी शाखविशाखाख्यौ स्कंधांशौ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ प्ररूढेति ॥ शक्रगोपः अरुणः कीटविशेषः मारकती मरकतमयी ॥ ३७ ॥ ऊहुरितिः ॥ ऊहुः जग्मुः । वहतिरत्र प्रापणे ॥ ३८ ॥

स इति॥शकटावाटः अल्पशकटवृत्तिः पर्यंतो यस्य सः । चंद्रार्धाकारा संस्थितिस्सन्निवेशो यस्य सः ॥ ३० ॥ वत्सपालाविति ॥ एकस्मिन्नेव क्रीडास्थाने स्थितौ ॥ ३१ ॥ वर्हिपत्रेति ॥ वर्हिपत्रकृतापीडौ मयूरपिच्छकृतशेखरौ वन्यपुष्पावतंसकौ वन्यपुष्पमयकर्णाभरणौ गोपोचितवेणुभिरेव कृतातोद्यौ संपादितमृदंगादिवाद्यकृत्यौ च तौ पत्रमयैर्वाद्यैः कृतस्वनौ कृतविचित्रनानाध्वनी ॥ ३२ ॥ काकपक्षेति ॥ काकपक्षधरौ शिखाधरौ पावकी स्कंधस्यांशौ शाखविशाखाविव ॥ ३३ ॥ ३४ ॥ कालेनेति ॥ एवं तौ वत्सपालौ संतौ कालेन गच्छता सप्तवर्षौ गोपालने समर्थौ बभूवतुरित्यर्थः ॥ ३५ ॥ प्रावृट्कालीनां गोपालक्रीडां वर्णयिष्यन्प्रावृषं वर्णयति प्रावृडित्यादिभिरष्टभिः । प्रावृट्काल इति ॥ मेघौघैः स्थगितं च्छादितमम्बरं यस्य सः ॥ ३६ ॥ प्ररूढेति ॥ शक्रगोपैरिंद्रगोपाख्यलोहितकीटैराचिता व्याप्ता । मारकती गरुडनीलरत्नमयीव पद्मरागैर्लोहितैर्विभूषिता ॥ ३७ ॥ ऊहुरिति ॥ ऊहुरवहन् ॥ ३८ ॥

न रेजेंतरितश्चंद्रो निर्मलो मलिनैर्घनैः ॥ सद्वादिवादो मूर्खाणां प्रगल्भाभिरिवोक्तिभिः ॥ ३९ ॥ निर्गुणेनापि चापेन शक्रस्य गगने पदम् ॥ अवाप्यताविवेकस्य नृपस्यैव परिग्रहे ॥ ४० ॥ मेघपृष्ठे बलाकानां रराज विमला ततिः ॥ दुर्वृत्ते वृत्तचेष्टेव कुलीनस्यातिशोभना ॥ ४१ ॥ न ब बंधांबरे स्थैर्यं विद्युदत्यंतचंचला ॥ मैत्रीव प्रवरे पुंसि दुर्जनेन प्रयोजिता ॥ ४२ ॥ मार्गा बभूवुरस्पष्टास्तृणशष्पचयावृताः ॥ अर्थांतर मनुप्राप्ताः प्रजडानामिवोक्तयः ॥४३॥ उन्मत्तशिखिसारंगे तस्मिन्काले महावने ॥ कृष्णरामौ मुदायुक्तौ गोपालैश्चेरतुस्सह ॥ ४४ ॥ क्वचिद्गो भिस्समं रम्यं गेयतानरतावुभौ ॥ चेरतुः क्वचिदत्यर्थं शीतवृक्षतलाश्रितौ ॥ ४५ ॥ क्वचित्कदंबस्रक्चित्रौ मयूरस्रग्विराजितौ॥विलिप्तौ क्वचि दासातां विविधैर्गिरिधातुभिः ॥४६॥ पर्णशय्यासु संसुप्तौ क्वचिन्निद्रांतरैषिणौ॥क्वचिद्गर्जति जीमूते हाहाकाररवाकुलौ ॥ ४७ ॥ गायतामन्य गोपानां प्रशंसापरमौ क्वचित् ॥ मयूरकेकानुगतौ गोपवेणुप्रवादकौ ॥ ४८ ॥ इति नानाविधैर्भावैरुत्तमप्रीतिसंयुतौ ॥ क्रीडंतौ तौ वने तस्मि श्चेरतुस्तुष्टमानसौ ॥ ४९ ॥

नेति ॥ सद्वादिवादः वैदिकवादः । मूर्खाः वेदबाह्यकुदृष्टयः ॥ ३९ ॥ निर्गुणेनेति ॥ अविवेकनृपतिपरिग्रहे निर्गुणेन पुरुषेणैव ॥ ४० ॥ मेघपृष्ठ इति ॥ दुर्वृत्ते अपकारिणि कुलीनस्य अभिजातस्य वृत्तचेष्टा सच्चरितमुपकारादिकं लब्धपरभागमौज्ज्वल्यं याति । यद्वा दुर्वृत्तलक्षणं दृष्ट्वा सज्जनचेष्टेव ॥ ४१ ॥ ४२ ॥ मार्गा इति ॥ अर्थांतरं स्वविवक्षितादन्यमर्थम् ॥ ४३ ॥ उन्मत्तेति ॥ सारंगश्चातकः ऋष्यो वा ॥ ४४ ॥ क्वचिदिति ॥ गेयतानरतौ तानो नाम गायतोऽन्य स्यान्येन वेण्वादिकृत्यश्रुत्याद्यनुग्रहः ॥ ४५ ॥ ४६ ॥ पर्णशय्यास्विति ॥ निद्रांतरैषिणौ निद्रार्थमवकाशार्थिनौ ॥ ४७ ॥ गायतामिति ॥ केकागतौ तारध्वन्य नुगतौ। तदुक्तम्—"तारं तु विंद्यात्सवनं तृतीयं शिरोगतं तच्च सदा प्रयोज्यम् । मयूरहंसान्यभृतस्वराणां तुल्येन नादेन शिरःस्थितेन" इति ॥ ४८ ॥ ४९ ॥

॥ ३९ ॥ ४० ॥ मेघपृष्ठ इति ॥ मूर्खे कुलीनस्य वृत्तचेष्टा निष्कपटा वृत्तिरिव ॥ ४१ ॥ न बबंधेति ॥ अंबरे महत्यपि विद्युत् स्थैर्यं न बबंध न चकार । प्रयोजिता कृता ॥ ४२ ॥ मार्गा इति ॥ अस्पष्टास्सं दिग्धाः प्रजडानां मंदानामन्यद्विवक्षतामन्यद्ब्रुवतामुक्तयो यथा अर्थांतरं प्राप्तास्संतः संदिग्धास्स्युस्तद्वत् । यद्वा प्रकृष्टानां जडानां 'बालोन्मत्तपिशाचवद्'इत्युक्तेः निरंतरं निश्चलसमाधिना जडवद्वर्तमानानां निरतिशयब्रह्मानंद सुखितानां योगिनामुक्तय इव ते हि विवक्षितमर्थमर्थांतराभिधानेन निगूढमिव वदंतीति स्पष्टार्थः । प्रगल्भानामिति पाठेप्येवमेवार्थः ॥ ४३ ॥ तदुक्तप्रावृषमनुमन्य तत्कालोचितां क्रीडामाह—उन्मत्तेत्यादिना याव त्समाप्ति—उन्मत्तेति ॥ उन्मत्ताश्शिखिनो मयूरास्सारंगाश्च भ्रमरा यस्मिन् । अस्य प्रवेशभावादिति शुकोक्तेः ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥

विकाले च समं गोभिर्गोपवृंदसमन्वितौ ॥ विहृत्याथ यथायोगं व्रजमेत्य महाबलौ ॥ ५० ॥ गोपैस्समानैस्सहितौ क्रीडंतावमराविव ॥ एवं तावूषतुस्तत्र रामकृष्णौ महाद्युती ॥ ५१ ॥ इति श्रीविष्णुमहापुराणे पंचमांशे षष्ठोध्यायः ॥ ६ ॥ श्रीपराशर उवाच ॥ एकदा तु विना रामं कृष्णो वृंदावनं ययौ ॥ विचचार वृतो गोपैर्वन्यपुष्पस्रगुज्ज्वलः ॥ १ ॥ स जगामाथ कालिंदीं लोल कल्लोलशालिनीम् ॥ तीरसंलग्नफेनौघैर्हसंतीमिव सर्वतः ॥ २ ॥ तस्याश्चातिमहाभीमं विषाग्निश्रितवारिणम् ॥ ह्रदं कालीयनागस्य ददर्शातिविभीषणम् ॥ ३ ॥ विषाग्निना प्रसरता दग्धतीरमहीरुहम् ॥ वाताहतांबुविक्षेपस्पर्शदग्धविहंगमम् ॥ ४ ॥ तमतीव महा रौद्रं मृत्युवक्त्रमिवापरम् ॥ विलोक्य चिंतयामास भगवान्मधुसूदनः ॥ ५ ॥ अस्मिन्वसति दुष्टात्मा कालीयोऽसौ विषायुधः ॥ यो मया निर्जितस्त्यक्त्वा दुष्टो गच्छेत्पयोनिधिम् ॥ ६ ॥ तेनेयं दूषिता सर्वा यमुना सागरंगमा ॥ न नरैर्गोधनैश्चापि तृषार्त्तैरुपभुज्यते ॥ ७ ॥ तदस्य नागराजस्य कर्त्तव्यो निग्रहो मया ॥ निस्त्रासास्तु सुखं येन चरेयुर्व्रजवासिनः ॥ ८ ॥ एतदर्थं तु लोकेस्मिन्नवतारः कृतो मया ॥ यदेषामुत्पथस्थानां कार्या शांतिर्दुरात्मनाम् ॥ ९ ॥ तदेतं नातिदूरस्थं कदंबमुरुशाखिनम् ॥ अधिरुह्य पतिष्यामि ह्रदेऽस्मिन्ननिला शिनः ॥ १० ॥ श्रीपराशर उवाच ॥ इत्थं विचिंत्य बद्धा च गाढं परिकरं ततः ॥ निपपात ह्रदे तत्र नागराजस्य वेगतः ॥ ११ ॥

विकाले चेति ॥ विकाले च रात्रावपि ॥ ५० ॥ ५१ ॥ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशे षष्ठोऽध्यायः ॥ ६ ॥ ॥ एकदा त्विति ॥ विना रामं स हि तस्य नागह्रदप्रवेशं नानुमन्येत ॥ १ ॥ स इति ॥ फेनस्य शौक्ल्याद्धसंतीमिवेत्युत्प्रेक्षा । हसंतीमंगारशकटिकामिवेत्युपमा वा । अत्र ज्वालावत्कल्लोलः । भस्मवत्फेनः ॥ २ ॥ तस्या इति ॥ श्रितं ततम् ॥ ३ ॥ ४ ॥ ५ ॥ अस्मिन्निति यो मयेत्यादि मया मद्विभूतिभूतेन तार्क्ष्येणेत्यर्थः । नष्टः न दष्टः । सोऽस्मिन्नस्यानुजिघृक्षुः सौभरिशापभीततार्क्ष्यदुष्प्रवेशे वसति । अयमर्थो भागवते द्रष्टव्यः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ तदिति ॥ कदंबोऽसावमृतमा नयता तार्क्ष्येणाक्रांतत्वान्न दग्ध इति पुराणांतरसिद्धम् ॥ १० ॥ इत्थमिति ॥ परितः क्रियत इति परिकरो वस्त्रम् ॥ ११ ॥

॥५० ॥ ५१ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां पंचमांशे षष्ठोध्यायः ॥ ६ ॥ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ अगाधे ह्रदे स्थितस्य सर्पस्य ह्रदक्षो भणमृते निग्रहायोगात् तत्क्षोभक्रियायामध्यवस्यति। तदेतमिति ॥ स तु कदंबोऽमृतमानयता गरुडेनाक्रांतत्वान्न दह्यत इति पुराणांतरप्रसिद्धिः ॥१०॥ इत्थमिति ॥ परितः क्रियते परिवीयत इति परिकरं वस्त्रम् । तद्गाढं

तेनातिपतता तत्र क्षोभितस्स महाह्रदः ॥ अत्यर्थं दूरजातांस्तु समसिंचन्महीरुहान् ॥ १२ ॥ ते हि दुष्टविषज्वालातप्तांबुपवनोक्षिताः ॥ जज्वलुः पादपास्सद्यो ज्वालाव्याप्तदिगंतराः ॥ १३ ॥ आस्फोटयामास तदा कृष्णो नागह्रदे भुजम् ॥ तच्छब्दश्रवणाच्चाशु नागराजोऽभ्युपागमत् ॥ १४ ॥ आताम्रनयनः कोपाद्विषज्वालाकुलैर्मुखैः ॥ वृतो महाविषैश्चान्यैरुरगैरनिलाशनैः ॥ १५ ॥ नागपत्न्यश्च शतशो हारिहारोपशोभिताः ॥ प्रकंपिततनुक्षेपचलत्कुंतलकांतयः ॥ १६ ॥ ततः प्रवेष्टितस्सर्पैस्स कृष्णो भोगबंधनैः ॥ ददंशुस्तेऽपि तं कृष्णं विषज्वालाकुलैर्मुखैः ॥ १७ ॥ तं तत्र पतितं दृष्ट्वा सर्पभोगैर्निपीडितम् ॥ गोपा व्रजमुपागम्य चुक्रुशुः शोकलालसाः ॥ १८ ॥ गोपा ऊचुः ॥ एष मोहं गतः कृष्णो मग्नो वै कालियह्रदे ॥ भक्ष्यते नागराजेन तमागच्छत पश्यत ॥ १९ ॥ तच्छ्रुत्वा तत्र ते गोपा वज्रपातोपमं वचः ॥ गोप्यश्च त्वरिता जग्मुर्यशोदाप्रमुखा ह्रदम् ॥ २० ॥ हाहा क्वासाविति जनो गोपीनामतिविह्वलः ॥ यशोदया समं भ्रान्तो द्रुतप्रस्खलितं ययौ ॥ २१ ॥ नंदगोपश्च गोपाश्च रामश्चाद्भुतविक्रमः ॥ त्वरितं यमुनां जग्मुः कृष्णदर्शनलालसाः ॥ २२ ॥ ददृशुश्चापि ते तत्र सर्पराजवशंगतम् ॥ निष्प्रयत्नीकृतं कृष्णं सर्पभोगविवेष्टितम् ॥ २३ ॥ नंदगोपोपि निश्चेष्टो न्यस्य पुत्रमुखे दृशम् ॥ यशोदा च महाभागा बभूव मुनिसत्तम ॥ २४ ॥ गोप्यस्त्वन्या रुदंत्यश्च ददृशुः शोककातराः ॥ प्रोचुश्च केशवं प्रीत्या भयकातर्यगद्गदम् ॥ २५ ॥

॥१२॥१३॥१४॥१५॥ नागपत्न्यश्चेति ॥ हारिहारेत्यादिना हारादिभूषितत्वोक्तेः । व्यक्तवाक्योक्तेश्च तासां मनुष्यसमपूर्वकायत्वं विज्ञेयम् ॥ १६ ॥ १७ ॥ तमिति ॥ लालसाः व्याकुलाः पश्यतेति चुक्रुशुः ॥ १८ ॥ १९ ॥ २० ॥ हाहेति ॥ विह्वलः परवशः ॥ २१ ॥ नंदगोप इति ॥ कृष्णदर्शनलालसाः । अत्र लालसपदमौत्सुक्यपरम् ॥२२॥२३॥२४॥ गोप्य इति ॥ कातरा अधीराः ॥ २५ ॥

बध्वा वेगतः वेगात् ॥ ११ ॥ तेनेति ॥ समसिंचत् सम्यक्सिषेच ॥ १२ ॥ त इति ॥ अहिदुष्टविषज्वालाभितप्तं यदंबु तद्युक्तेन पवनोक्षितास्सिक्तास्संतो जज्वलुः । ज्वालाभिर्व्याप्तं दिशामंतरमवकाशो यैः ॥ १३ ॥ ॥ १४ ॥ आताम्रेति ॥ विषज्वालाभिराकुलैर्व्याप्तैः फणैरुपलक्षितः अभ्युपागमदिति पूर्वेणान्वयः ॥१५॥ नागपत्न्यश्चेति ॥ हारिभिर्मनोहरैर्हारैरुपशोभिता प्रकंपितानां तनूनां क्षेपेणोत्क्षेपेण चलद्भिः कुंडलैः कांतिः शोभा यासां ताः ॥ १६ ॥ तत इति ॥ भोगः देहस्स एव बंधनसाधनत्वाद्बंधनं तत्प्रदर्शितं तैः प्रवेष्टितः कुंडलीकृतैर्देहैरावेष्टित इत्यर्थः । ददंशुः दष्टवंतः ॥ १७ ॥ तमिति ॥ शोकेन लालसास्साभिलाषाः उत्सुका इत्यर्थः ॥ १८ ॥ कथं चुक्रुशुरित्यत्राह—एष इति ॥ १९ ॥ २० ॥ हाहेति ॥ द्रुतं प्रस्खलितं च यथा भवत्येवं ययौ ॥ २१ ॥ २२ ॥ २३ ॥ नंदगोप इति ॥ यशोदा च निश्चेष्टा बभूव ॥२४॥ गोप्य इति ॥

॥ गोप्य ऊचुः ॥ सर्वा यशोदया सार्द्धं विशामोत्र महाह्रदम् ॥ सर्पराजस्य नो गंतुमस्माभिर्युज्यते व्रजम् ॥ २६ ॥ दिवसः को विना सूर्यं विना चंद्रेण का निशा विना वृषेण का गावो विना कृष्णेन को व्रजः ॥ २७ ॥ विनाकृता न यास्यामः कृष्णेनानेन गोकुलम् ॥ अरम्यं नातिसेव्यं च वारिहीनं यथा सरः ॥ २८ ॥ यत्र नेंदीवरश्यामकायकांतिरयं हरिः ॥ तेनापि मातुर्वासेन रतिरस्तीति विस्मयः ॥ २९ ॥ उत्फुल्लपंकजदलस्पष्टकांतिविलोचनम् ॥ अपश्यंतो हरिं दीनाः कथं गोष्ठे भविष्यथ ॥ ३० ॥ अत्यंत मधुरालापहृताशेषमनोरथम् ॥ न विना पुंडरीकाक्षं यास्यामो नंदगोकुलम् ॥३१॥ भोगेनावेष्टितस्यापि सर्पराजस्य पश्यत ॥ स्मितशोभि मुखं गोप्यः कृष्णस्यास्मद्विलोकने ॥ ३२ श्रीपराशर उवाच ॥ इति गोपीवचः श्रुत्वा रौहिणेयो महाबलः ॥ गोपांश्च त्रासविधुरान्वि लोक्य स्तिमितेक्षणान् ॥ ३३ ॥ नंदं च दीनमत्यर्थं न्यस्तदृष्टिं सुतानने ॥ मूर्च्छाकुलां यशोदां च कृष्णमाहात्मसंज्ञया ॥ ३४ ॥ किमिदं देवदेवेश भावोऽयं मानुषस्त्वया ॥ व्यज्यतेत्यंतमात्मानं किमनंतं न वेत्सि यत् ॥ ३५ ॥ त्वमेव जगतो नाभिरराणामिव संश्रयः ॥ कर्त्तापहर्त्ता पाता च त्रैलोक्यं त्वं त्रयीमयः ॥ ३६ ॥

॥ २६ ॥ २७ ॥ २८ ॥ यत्रेति ॥ यत्र न हरिः तेनापि मातुर्वासेन जननीगृहेणापि रतिरस्ति चेद्विस्मयः कृष्णरहिते मातृगृहेपि प्रीतिर्नास्तीत्यर्थः ॥ २९ ॥ उत्फुल्लेति ॥ कथं भविष्यथ कथमपि भवितुं शक्ष्यथेत्यर्थः ॥ ३० ॥ अत्यर्थेति ॥ अत्यर्थमत्यन्तम् ॥ ३१ ॥ भोगेनेति ॥ अस्माद्विलोकने सतीति शेषः ॥३२॥ इतीति ॥ त्रासविधुरान् त्रासनिश्चेष्टान् ॥ ३३ ॥ नंदं चेति ॥ आत्मसंज्ञया अनन्यवेद्येन संकेतेन ॥ ३४ ॥ किमिदमिति ॥ किं त्वमात्मानमनंतमीश्वरं यन्न वेत्सि तेन सर्पदष्टत्वमूर्च्छादिरयं मानुषो भावोत्यंतं व्यज्यते किमिदमित्यन्वयः ॥ ३५ ॥ त्वमेवेति ॥ अराणां नाभिरिव त्वमस्य जगतः संश्रयः ॥ ३६ ॥

शोकेन कातरा विवशाः भयकातर्याभ्यां गद्गदं यथाभवत्येवं प्राचुः ॥ २९ ॥ यत्प्रोचुस्तदाह–सर्वा इत्यादिसप्तभिः ॥ २६ ॥ २७ ॥ विनाकृता इति ॥ कृष्णेन विनाकृताः विरहीकृताः न यास्यामः ॥ २८ ॥ यत्रेति ॥ यत्रायं हरिर्नास्ति तेन मातुर्वासेन जननीगृहेणापि रतिर्न भवतीति विस्मयोत्याश्चर्यं कृष्णरहितेन मातुर्गृहेण सुखं नास्त्येवेत्यर्थः ॥ २९ ॥ उत्फुल्लेति ॥ कथं भविष्यथ स्थास्यथ ॥ ३० ॥ अत्यं तेति ॥ अत्यंतमधुरैरालापैर्हृतमशेषं मनोरथरूपं धनं येन सः ॥ ३१ ॥ ३२ ॥ श्लोकद्वयमेकं वाक्यम् ॥ इतीति । त्रासविधुरान्मृत्युभयशून्यान्मर्तुमुद्यतानित्यर्थः । आत्मसंज्ञया स्वसंकेतेन कृष्णमाह ॥ ३३ ॥ ३४ ॥ तदेव स्पष्टयति किमिदमित्याद्यष्टभिः । किमिदमिति ॥ आत्मानं किं न वेत्सि नानुसंधत्से यदित्युत्तरेणान्वेति ॥ ३५ ॥ त्वमेवेति ॥ यद्यस्मात्त्वमस्य जगतः नाभिरतः संश्रयः आधारः "अराणां नाभिरिव यस्मिन् सर्वे

सेंद्रैरुद्राग्निवसुभिरादित्यैर्मरुदश्विभिः ॥ चिंत्य(से)त्वमचिंत्यात्मन् समस्तैश्चैव योगिभिः ॥ ३७ ॥ जगत्यर्थं जगन्नाथ भारावतरणेच्छया ॥ अवतीर्णोऽसि मर्त्येषु तवांशश्चाहमग्रजः ॥ ३८ मनुष्यलीलां भगवन् भजता भवता सुराः ॥ विडम्बयन्तस्त्वल्लीलां सर्व एव सहासते ॥ ३९ ॥ अवतार्य भवान्पूर्वं गोकुले तु सुरांगनाः ॥ क्रीडार्थमात्मनः पश्चादवतीर्णोऽसि शाश्वत ॥ ४० ॥ अत्रावतीर्णयोः कृष्ण गोपा एव हि बांधवाः ॥ गोप्यश्च सीदतः कस्मादेतान्बंधूनुपेक्षसे ॥ ४१ ॥ दर्शितो मानुषो भावो दर्शितं बालचापलम् ॥ तदयं दम्यतां कृष्ण दुष्टात्मा दशनायुधः ॥ ४२ ॥ श्रीपराशर उवाच ॥ इति संस्मारितः कृष्णः स्मितभिन्नोष्ठसंपुटः ॥ आस्फोट्य मोचयामास स्वदेहं भोगिबंधनात् ॥ ४३ ॥ आनम्य चापि हस्ताभ्यामुभाभ्यां मध्यमं शिरः ॥ आरुह्याभुग्नशिरसः प्रणनर्त्तोरुविक्रमः ॥ ४४ ॥ प्राणाः फणेऽभवंश्चास्य कृष्णस्यांघ्रिनिकुट्टनैः ॥ यत्रोन्नतिं च कुरुते ननामास्य ततश्शिरः ॥४५॥ मूर्च्छामुपाययौ भ्रांत्या नागः कृष्णस्य रेचकैः ॥ दंडपातनिपातेन ववाम रुधिरं बहु ॥ ४६ ॥

॥ ३७ ॥ जगत्यर्थमिति ॥ तवांशस्तव विभूतिः ॥ ३८ ॥ मनुष्येत्यादि ॥ मनुष्यदेहग्रहणात्मिकां लीलां भजता त्वया हेतुभूतेन सुराश्च गोपेषु जातास्त्वल्लीलामनुकुर्वन्त आसते ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ इतीति ॥ स्मितभिन्नेति मायोद्घाटनात् स्मितोदयः ॥ ४३ ॥ ४४ ॥ प्राणा इति ॥ निकुट्टनैः प्रहारैः ॥ ४५ ॥ मूर्च्छामिति ॥ भ्रांतिरेचकदंडपाताः नृत्तोक्ताः पादन्यासविशेषाः । यथाह भरतः—"अंतर्भ्रमरिका ज्ञेया भ्रमरी बाह्यपूर्विका । अलग्नभ्रमरी च स्यादुचितभ्रमरी तथा॥ चित्रभ्रमरिका चैव चक्रभ्रमरिका तथा । तिर्यग्भ्रमरिका चेति भ्रमास्सप्त प्रकीर्त्तिताः ॥ पार्श्वात्पार्श्वं तु गमनं स्खलितैश्चलितैः पदैः । विविधैश्चैव पादैश्च पादरेचक उच्यते ॥ पार्ष्णी यस्य स्थिता भूमावूर्द्धमग्रतलं तथा । अंगुल्यश्चाञ्चितास्सर्वास्सपादस्त्वञ्चितस्स्मृतः ॥ पृष्ठतो ह्यंचितं कृत्वा पादमग्रतलेन तु । द्रुतं निपातयेद्भूमौ वादिनूपुरपादिका ॥ चरणं नूपुरं कृत्वा पुरतः संप्रसारयेत् । क्षिप्रमाविद्धकरणं दंडपाता तु सा स्मृता" इति ॥ ४६ ॥

प्रतिष्ठिता रथनाभाविवारा इति विश्वं बिभर्ति भुवनस्य नाभिः" इति च श्रुतेः ॥ ३६ ॥ ३७ ॥ जगत्यर्थमिति ॥ जगत्यर्थं भूमेर्हितार्थम् ॥ ३८ ॥ मनुष्यलीलामिति ॥ मनुष्यलीलां भजता भवता हेतुभूतेन गोपवेषास्सुरा एते त्वल्लीलां विडंबयंतोऽनुकुर्वंतः त्वया सह क्रीडमाना वर्तंते ॥ ३९ ॥ अवतार्येति ॥ तथा सुरांगनाश्च भवानेवावतारितवानात्मनः क्रीडार्थम् ॥ ४० ॥ अत्रेति ॥ अवसन्नानस्मद्बंधूनेतान्नोपेक्षस्व ॥ ॥ ४१ ॥ ४२ ॥ ४३ ॥ आनम्येति ॥ अभुग्नशिरसः अनम्रमूर्ध्नः । आभुग्नशिरसः इति वा च्छेदः । अवनतफणस्येत्यर्थः ॥ ४४ ॥ ४५ ॥ मूर्च्छामिति ॥ कृष्णस्य भ्रांत्या नृत्यतो भ्रमेण मूर्च्छां नागः प्राप्तः ।

तं विभुग्नशिरोग्रीवमास्येभ्यस्स्रुतशोणितम् ॥ विलोक्य करुणं जग्मुस्तत्पत्न्यो मधुसूदनम् ॥ ४७ ॥ नागपत्न्य ऊचुः ॥ ज्ञातोऽसि देवदेवेश सर्वज्ञस्त्वमनुत्तमः ॥ परं ज्योतिरचिंत्यं यत्तदंशः परमेश्वरः ॥ ४८ ॥ न समर्थाः सुरास्स्तोतुं यमनन्यभवं विभुम् ॥ स्वरूपवर्णनं तस्य कथं योषित्करिष्यति ॥ ४९ ॥ यस्याऽखिलमहीव्योमजलाग्निपवनात्मकम् ॥ ब्रह्मांडमल्पकालपांशः स्तोष्यामस्तं कथं वयम् ॥ ५० ॥ यंतो न विदुर्नित्यं यत्स्वरूपं हि योगिनः ॥ परमार्थमणोरल्पं स्थूलात्स्थूलं नताः स्म तम् ॥ ५१ ॥ न यस्य जन्मने धाता यस्य चांताय नांतकः ॥ स्थितिकर्त्ता न चान्योस्ति यस्य तस्मै नमस्सदा ॥ ५२ ॥ कोपः स्वल्पोऽपि ते नास्ति स्थितिपालनमेव ते ॥ कारणं कालिय स्यास्य दमने श्रूयतां वचः ॥५३॥ स्त्रियोनुकंप्यास्साधूनां मूढा दीनाश्च जंतवः ॥ यतस्ततोस्य दीनस्य क्षम्यतां क्षमतांवर ॥ ५४ ॥ समस्त जगदाधारो भवानल्पबलः फणी ॥ त्वत्पादपीडितो जह्यान्मुहूर्त्तार्द्धेन जीवितम् ॥ ५५ ॥ क्व पन्नगोल्पवीर्योऽयं क्व भवान्भुवनाश्रयः ॥ प्रीतिद्वेषौ समोत्कृष्टगोचरौ भवतोऽव्यय ॥ ५६ ॥

॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ कोप इति ॥ स्थितिपालनं लोकमर्यादास्थापनम् । श्रूयतामथ–अथाऽस्मद्वचनं श्रूयताम् ॥ ५३ ॥ ॥ ५४ ॥ ५५ ॥ क्वेति ॥ समोत्कृष्टयोः प्रीतिर्द्वेषो वा कार्यः न त्वीदृशे निकृष्ट इति भावः ॥ ५६ ॥

दंडवत्पातो दंडपातः तीव्रप्रहारः तद्वन्निपातेन रेचकैर्मुखनासिकारंध्रैर्बहु रुधिरं ववाम छर्दितवान् । पाठांतरे दंडवत्पादनिपातेनेति स एवार्थः । यद्वा भ्रांतिरेचकदंडपाताख्याः नृत्तोक्ताः पादन्यासविशेषाः । यथाह भरतः "अंतर्भ्रमरिका ज्ञेया भ्रमरी बाह्यपूर्विका । अलग्नभ्रमरी च स्यादुचितभ्रमरी तथा । चित्रभ्रमरिका चैव चक्रभ्रमरिका तथा । निपातभ्रमरी चेति भ्रमास्सप्त प्रकीर्तिताः ॥ पार्श्वात्पार्श्वस्य गमनं स्खलितैश्चलितैः पदैः । विविधैश्चैकपादस्य पादरेचक उच्यते । नूपुरं चरणं कृत्वा पुरतस्संप्रसारयेत् । क्षिप्रमाविद्धकरणं दंडपातेति सा स्मृता ॥ " इति ॥ ४६ ॥ ४७ ॥ ज्ञातोऽसीति ॥ न विद्यते उत्तमो यस्मादनुत्तमः । परं ज्योतिस्स्व प्रकाशं यद्ब्रह्म यश्च तस्यांशः परमेश्वरः तच्च स च त्वमिति ज्ञातोसि ॥ ४८ ॥ एवं चेन्मदीयं तत्त्वं वर्णयतेति चेत्तत्राह–नेत्यादिद्वाभ्याम्–नेति ॥ अनन्येषु भवतीत्यनन्यभवः तं तस्य स्वरूपवर्णनं योषिन्मादृक्कथं करिष्यति ॥ ४९ ॥ ५० ॥ ५१ ॥ नेति ॥ यस्य स्थितिकर्ता चान्यो नास्ति विष्ण्वंतराभावात् ॥ ५२ ॥ एवं स्तुत्वा तद्रक्षां प्रार्थयते । कोप इति ॥ कोपेन चेदस्य दमनं स्यात् तर्हि कोपाधिक्येन वधोपि युक्तस्स्यात् लोकरक्षणार्थे तु दमने दमनानंतरं क्षमैव युक्तेत्यर्थः ॥ ५३ ॥ ५४ ॥ ५५ ॥ क्वेति ॥ न च द्वेषस्यायं विषय इत्याहुः–प्रीतिद्वेषाविति ॥ यथा प्रीतिस्समगोचरा तथा द्वेष उत्कृष्टगोचरः । न तु दीने द्वेषो युक्तः ॥ ५६ ॥

ततः कुरु जगत्स्वामिन्प्रसादमवसीदतः ॥ प्राणांस्त्यजति नागोऽयं भर्तृभिक्षा प्रदीयताम् ॥ ५७ ॥ भुवनेश जगन्नाथ महापुरुषपूर्वज ॥ प्राणांस्त्यजति नागोऽयं भर्तृभिक्षां प्रयच्छ नः ॥ ५८ ॥ वेदांतवेद्य देवेश दुष्टदैत्यनिबर्हण ॥ प्राणांस्त्यजति नागोऽयं भर्तृभिक्षा प्रदीयताम् ॥ ५९ ॥ श्रीपराशर उवाच ॥ इत्युक्ते ताभिराश्वस्य क्लांतदेहोपि पन्नगः ॥ प्रसीद देवदेवेति प्राह वाक्यं शनैः शनैः ॥ ६० ॥ कालिय उवाच ॥ तवाष्टगुणमैश्वर्यं नाथ स्वाभाविकं परम् ॥ निरस्तातिशयं यस्य तस्य स्तोष्यामि किन्वहम् ॥ ६१ ॥ त्वं परस्त्वं परस्याद्यः परं त्वत्तः परात्मक ॥ परस्मात्परमो यस्त्वं तस्य स्तोष्यामि किन्वहम् ॥ ६२ ॥ यस्माद्ब्रह्मा च रुद्रश्च चंद्रेंद्रमरुदश्विनः ॥ वसवश्च सहादित्यैस्तस्य स्तोष्यामि किन्वहम् ॥ ६३ ॥ एकावयवसूक्ष्मांशो यस्यैतदखिलं जगत् ॥ कल्पनावयवस्यांशस्तस्य स्तोष्यामि किन्वहम् ॥ ६४ ॥

॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ तवेत्यादि ॥ किन्नु स्तोष्यामीति भावः । अष्टौ गुणा यस्य तदष्टगुणमैश्वर्यं ते चाणिमादयः स्वाभाविकत्वादिविशेषणैस्सनकादिव्यावृत्तिः ॥ ६१ ॥ त्वं पर इत्यादि ॥ प्रकृतेः परः पुमांस्त्वम् । परस्माद्यः परः मुक्तः स त्वम् । परं त्वत्तः परात्मकमिंद्रियादेरुत्कृष्टं प्रधानमपि त्वत्तो भवति परस्मात्परमो यस्त्वम् । उक्ताद्बद्धमुक्तप्रधानरूपात्परस्मात्परमो यस्स त्वं तस्य तव किं स्तोष्यामि इति । परं त्वत्तः परात्मकेति पाठे हे परात्मक उत्कृष्टस्वरूप त्वत्तः परं प्रधानं प्रवर्त्तते परस्माद्यः मुक्तः स त्वमिति शेषः । त्वं परस्त्वं परस्ताद्यः परं त्वत्तः परात्मकम् इति च पाठः ॥ ६२ ॥ ६३ ॥ एकावयवेति ॥ कल्पनावयवात्मा संकल्पसिद्धावयवात्मा इच्छा गृहीताभिमतोरुदेह इति यावत् ॥ ६४ ॥

तत इति ॥ ततस्तस्मादेव हेतोः अवसीदतः अवसन्नस्य दीनस्य प्रसादमेव कुरु । न चात्रातिविलंबः कार्य इत्याहुः—प्राणानिति ॥ ५७ ॥ ५८ ॥ ५९ ॥ इत्युक्त इति ॥ ताभिः भर्तृभिक्षा प्रदीयतामित्युक्ते कृष्णस्यांघ्रिकुट्टनादिशैथिल्यमिवालक्ष्यते स किंचिदाश्वस्य न हनिष्यतीति विश्वस्य कालीयः शनैर्वाक्यं प्राह ॥ ६० ॥ तवेति ॥ यस्य तवाष्टगुणं परं निरतिशयं चैश्वर्यं तस्याष्टगुणैश्वर्ये किमहं स्तोष्यामि नैकदेशमपि स्तोतुं समर्थ इति भावः ॥ ६१ ॥ निरतिशयैश्वर्यमेव दर्शयन्नाह—त्वमिति ॥ त्वं परस्सर्वोत्कृष्टः एतदेवाह—परस्य हिरण्यगर्भस्याद्यो जनकस्त्वं—"यो ब्रह्माणं विदधाति पूर्वम्" इति श्रुतेः । तत्र हेतुः परमव्यक्तं त्वत्तः प्रवर्तते । हे परात्मक तत्प्रेरकेश्वररूप तत्कुत इत्यत्राह—परस्मादिंद्रियादेः परमो यः त्वं—"इंद्रियेभ्यः परा ह्यर्था ह्यर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥ महतः परमव्यक्तमव्यक्तात्पुरुषः परः ॥ पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः" इति श्रुतिरित्यर्थः । पाठान्तराण्यस्य पुनः सर्वैः पठित्वा सुलभतया व्याख्येयानि ॥ ६२ ॥ परत्वमेव प्रपंचयन्नाह—यस्मादित्यादिसप्तभिः ॥ ६३ ॥ एकावयवेति ॥ यदि यस्यैकावयवस्य सूक्ष्मांशोऽखिलमिदं जगत् । ननु चिदात्मकस्य जडं जगत्कथम् अंशस्स्यात्तत्राह—कल्पनेति । उपासनार्थं कल्पनामया

सदसद्रूपिणो यस्य ब्रह्माद्यास्त्रिदशेश्वराः ॥ परमार्थं न जानंति तस्य स्तोष्यामि किन्त्वहम् ॥ ६५ ॥ ब्रह्माद्यैरर्चितो यस्तु गंधपुष्पानुलेपनैः ॥ नंदनादिसमुद्भूतैस्सोर्च्यते वा कथं मया ॥ ६६ ॥ यस्यावताररूपाणि देवराजस्सदार्चति ॥ न वेत्ति परमं रूपं सोऽर्च्यते वा कथं मया ॥ ६७ ॥ विषयेभ्यस्समावृत्त्य सर्वाक्षाणि च योगिनः ॥ यमर्चयंति ध्यानेन सोऽर्च्यते वा कथं मया ॥ ६८ ॥ हृदि संकल्प्य यद्रूपं ध्यानेनार्चंति योगिनः ॥ भावपुष्पादिना नाथः सोर्च्यते वा कथं मया ॥ ६९ ॥ सोऽहं ते देवदेवेश नार्चनादौ स्तुतौ न च ॥ सामर्थ्यवान् कृपामात्रमनोवृत्तिः प्रसीद मे ॥ ७० ॥ सर्पजातिरियं क्रूरा यस्यां जातोस्मि केशव ॥ तत्स्वभावोऽयमत्रास्ति नापराधो ममाच्युत ॥ ७१ ॥ सृज्यते भवता सर्वं तथा संह्रीयते जगत् ॥ जातिरूपस्वभावाश्च सृज्यंते सृजता त्वया ॥ ७२ ॥ यथाहं भवता सृष्टो जात्या रूपेण चेश्वर ॥ स्वभावेन च साधुत्वं तथेदं चेष्टितं मया ॥ ७३ ॥ यद्यन्यथा प्रवर्त्तेयं देवदेव ततो मयि ॥ न्याऽयो दण्डनिपातो वै तवैव वचनं यथा ॥ ७४ ॥ तथाप्यज्ञे जगत्स्वामिन्दंडं पातितवान्मयि ॥ स श्लाघ्योयं परो दंडस्त्वत्तो मे नान्यतो वरः ॥ ७५ ॥

सदसद्रूपिण इति ॥ सदसद्रूपिणः मूर्त्तामूर्त्तरूपवतः ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ हृदीत्यादि ॥ यद्रूपं ध्यानेन संकल्प्य भावमयानि पुष्पाणि अहिंसादीनि "अहिंसा प्रथमं पुष्पं पुष्पमिंद्रियनिग्रहः । सर्वभूतदया पुष्पं क्षमा पुष्पं विशिष्यते ॥ शमः पुष्पं दमः पुष्पं ध्यानपुष्पं च सप्तमम् । सत्यं चैवाष्टमं पुष्पमेभिस्तुष्यति केशवः" इति वचनात् ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ तथेति ॥ स सोढव्य इति अयं दण्डरूपो वरस्त्वत्तो मामेति मया सोढव्यः "स सोढव्यो मया दंडस्त्वत्तो मामेत्ययं वरः" इति च पाठः ॥ ७५ ॥

अवयवा यस्य "पादोस्य विश्वाभूतानि" इति श्रुतेः ॥ ६४ ॥ सदिति ॥ सदसद्रूपिणः कार्यकारणात्मकस्य ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ पूर्वश्लोकार्थप्रपंचः । हृदीति ॥ भावपुष्पादिना मनोमयपुष्पधूपदीपाद्युपचारेण । यद्वा–भावेन अहिंसादिमयेन पुष्पादिना तदुक्तं–"अहिंसा प्रथमं पुष्पं पुष्पमिंद्रियनिग्रहः । सर्वभूतदया पुष्पं क्षमा पुष्पं विशिष्यते ॥ शमः पुष्पं तपः पुष्पं ध्यानं पुष्पं तथैव च ॥ सत्यं चैवाष्टमं पुष्पमेतैस्तुष्यति केशवः" इति ॥ ६९ ॥ तदेवं स्तुत्वा तत्प्रसादं प्रार्थयते–सोहमिति ॥ कृपामात्रा केवलकरुणामया मनोवृत्तिर्यस्य तथाभूतस्सन्प्रसीद । क्रियामात्रेति पाठे केवलं त्वदर्चादिक्रियायां मनोरथ एव न तु सामर्थ्यं यस्येत्यर्थः ॥ ७० ॥ त्वं दंड्य एव न त्वनुकंप्यः क्रूरत्वादिति चेत्तत्राह–सर्पजातिरित्यादिषड्भिः ॥ ७१ ॥ सृज्यत इति ॥ जातिरूपस्वभावाः जातिस्सर्पत्वादिः । रूपं फणित्वादि । स्वभावः क्रौर्यादिः ॥ ७२ ॥ यथेति ॥ साधुत्वमत्र त्वदादिष्टवर्णाचरणं तदेव मया कृतं नान्यदित्यर्थः ॥ ७३ ॥ यदीति ॥ तवैव वचनं श्रुतिस्मृत्यादि यथा "परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय संभवामि युगेयुगे ॥" इत्यादि ॥७४॥ तथेति ॥ त्वत्तो दंडोपि वरः श्लाघ्यत्वात् । त्वदन्यतो वरोऽपि न श्लाघ्यः । "स सोढव्यो मया दंडस्त्वत्तो मामेत्ययं वरः" इति पाठे दंडमिषेणायं वरः त्वत्तो मामुपैति दुष्ट

हतवीर्यो हतविषो दमितोऽहं त्वयाऽच्युत ॥ जीवितं दीयतामेकमाज्ञापय करोमि किम् ॥ ७६ ॥ श्रीभगवानुवाच ॥ नात्र स्थेयं त्वया सर्प कदाचिद्यमुनाजले ॥ सपुत्रपरिवारस्त्वं समुद्रसलिलं व्रज ॥ ७७ ॥ मत्पदानि च ते सर्प दृष्ट्वा मूर्द्धनि सागरे ॥ गरुडः पन्नगरिपुस्त्वयि न प्रहरिष्यति ॥ ७८ ॥ श्रीपराशर उवाच ॥ इत्युक्त्वा सर्पराजं तं मुमोच भगवान्हरिः ॥ प्रणम्य सोपि कृष्णाय जगाम पयसां निधिम् ॥ ७९ ॥ पश्यतां सर्वभूतानां सभृत्यसुतबांधवः ॥ समस्तभार्यासहितः परित्यज्य स्वकं ह्रदम् ॥ ८० ॥ गते सर्पे परिष्वज्य मृतं पुनरिवागतम् ॥ गोपा मूर्द्धनि हार्देन सिषिचुर्नेत्रजैर्जलैः ॥ ८१ ॥ कृष्णमक्लिष्टकर्माणमन्ये विस्मितचेतसः ॥ तुष्टुवुर्मुदिता गोपा दृष्ट्वा शिवजलां नदीम् ॥ ८२ ॥ गीयमानः स गोपीभिश्चरितैस्साधुचेष्टितैः ॥ संस्तूयमानो गोपैश्च कृष्णो व्रजमुपागमत् ॥ ॥ ८३ ॥ इति श्रीविष्णुमहापुराणे पंचमांशे सप्तमोऽध्यायः ॥ ७ ॥ ॥ श्रीपराशर उवाच ॥ गाः पालयंतौ च पुनः सहितौ बलकेशवौ ॥ भ्रममाणौ वने तस्मिन्रम्यं तालवनं गतौ ॥ १ ॥ तत्तु तालवनं दिव्यं धेनुको नाम दानवः ॥ मृगमांसकृताहारः सदाध्यास्ते खराकृतिः ॥ ॥ २ ॥ तत्तु तालवनं पक्वफलसंपत्समन्वितम् ॥ दृष्ट्वा स्पृहान्विता गोपा फलादानेऽब्रुवन्वचः ॥ ३ ॥ गोपा ऊचुः ॥ हे राम हे कृष्ण सदा धेनुकेनैष रक्ष्यते ॥ भूप्रदेशो यतस्तस्मात्पक्वानीमानि संति वै ॥ ४ ॥ फलानि पश्य तालानां गंधामोदितदिंशि वै ॥ वयमेतान्यभीप्सामः पात्यंतां यदि रोचते ॥ ५ ॥

॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ गत इति ॥ गोपा नंदाद्या वृद्धाः ॥ ८१ ॥ कृष्णमिति ॥ अन्ये श्रीदामादिसवयसः ॥ ८२ ॥ गीयमान इति ॥ चरितैर्हेतुभिः ॥ ८३ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशे सप्तमोऽध्यायः ॥ ७ ॥छ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

स्वभावनिवृत्तेः ॥ ७५ ॥ तदेवाह—हतवीर्य इति ॥ ७६ ॥७७॥ मत्पदानीति ॥ यद्भयात्त्वमत्र वससि स गरुडस्सागरे रमणीयकद्वीपे स्थितमपि त्वां न भक्षयिष्यति ॥ ७८ ॥ ७९ ॥ ८० ॥ गत इति ॥ गोपा नंदाद्याः । हार्देन प्रीत्या सिषिचुः ॥ ८१ ॥ कृष्णमिति ॥ अन्ये श्रीदामाद्यास्सवयसो गोपास्तुष्टुवुः ॥ ८२ ॥ ८३ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां पंचमांशे सप्तमोऽध्यायः ॥ ७ ॥ १ ॥ २ ॥ तत्त्विति ॥ फलानामादाने स्पृहान्वितास्संतः अब्रुवन् ॥ ३ ॥ ४ ॥ फलानीति ॥ गंधामोदितदिंशि गंधेनामोदितास्सुरभीकृता दिशो यैस्तानि फलानि पश्य । गंधामोदिदिशानीति पाठे टाबंतो दिशाशब्दः । येषां गंधेन आमोदवत्यो दिशास्तानीत्यर्थः ॥ ५ ॥

॥ श्रीपराशर उवाच ॥ इति गोपकुमाराणां श्रुत्वा संकर्षणो वचः ॥ एतत्कर्त्तव्यमित्युक्त्वा पातयामास तानि वै ॥ कृष्णश्च पातयामास भुवि तानि फलानि वै ॥ ६ ॥ फलानां पततां शब्दमाकर्ण्य सुदुरासदः ॥ आजगाम स दुष्टात्मा कोपाद्दैतेयगर्दभः ॥ ७ ॥ पद्भ्यामुभाभ्यां स तदा पश्चिमाभ्यां बलं बली ॥ जघानोरसि ताभ्यां च स च तेनाभ्यगृह्यत ॥ ८ ॥ गृहीत्वा भ्रामयामास सोंऽबरे गतजीवितम् ॥ तस्मिन्नेव स चिक्षेप वेगेन तृणराजनि ॥ ९ ॥ ततः फलान्यनेकानि तालाग्रान्निपतन्खरः ॥ पृथिव्यां पातयामास महावातो घनानिव ॥ १० ॥ अन्यानथ सजातीयानागतान्दैत्यगर्दभान् ॥ कृष्णश्चिक्षेप तालाग्रे बलभद्रश्च लीलया ॥ ११ ॥ क्षणेनालंकृता पृथ्वी पक्वैस्तालफलैस्तदा ॥ दैत्यगर्दभदेहैश्च मैत्रेय शुशुभेऽधिकम् ॥ १२ ॥ ततो गावो निराबाधास्तस्मिंस्तालवने द्विज ॥ नवशष्पं सुखं चेरुर्यन्न भुक्तमभूत्पुरा ॥ १३ ॥ इति श्रीविष्णुमहापुराणे पंचमांशेऽष्टमोऽध्यायः ॥ ८ ॥ ॥ श्रीपराशर उवाच ॥ तस्मिन्रासभदैतेये सानुगे विनिपातिते ॥ सौम्यं तद्गोपगोपीनां रम्यं तालवनं बभौ ॥ १ ॥ ततस्तौ जातहर्षौ तु वसुदेवसुतावुभौ ॥ हत्वा धेनुकदैतेयं भांडीरवटमागतौ ॥ २ ॥ क्ष्वेलमानौ प्रगायंतौ विचिन्वंतौ च पादपान् ॥ चारयंतौ च गा दूरे व्याहरंतौ च नामभिः ॥ ३ ॥ निर्योगपाशस्कंधौ तौ वनमालाविभूषितौ ॥ शुशुभाते महात्मानौ बालशृंगाविवर्षभौ ॥ ४ ॥

॥६॥७॥ पद्भ्यामिति ॥ ताभ्यां तयोरित्यर्थः ॥ गृहीत्वेति ॥८॥ तं गृहीत्वा तृणराजनि ताले ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशेऽष्टमोऽध्यायः ॥ ८ ॥छ॥ १ ॥ २ ॥ क्ष्वेलमानाविति ॥ क्ष्वेलंतौ सिंहवन्नादं कुर्वंतौ विचिन्वंतौ वासयोग्यान् देशानन्विच्छंतौ ॥ ॥ ३ ॥ निर्योगेति ॥ निर्योगपाशः नियमनरज्जुः ॥ ४ ॥

इतीति ॥ पातयामास बाहुभ्यामिति विज्ञेयं बाहुभ्यां तालांस्तान्परिकंपयन्निति शुकोक्तेः ॥ ६ ॥ ७ ॥ पद्भ्यामिति ॥ ताभ्यां तयोः पादयोस्स च धेनुः तेन रामेण अभ्यगृह्यत गृहीतः ॥ ८ ॥ गृहीत्वेति ॥ गृहीत्वा धेनुकं स रामः तृणराजनि ताले चिक्षेप ॥ ९ ॥ तत इति ॥ महावातेरितानीवेति पाठांतरे वाशब्द उपमार्थः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां पंचमांशेऽष्टमोऽध्यायः ॥ ८ ॥ ॥ १ ॥ तत इति ॥ भांडीराख्यं वटम् ॥ २ ॥ क्ष्वेलमानाविति ॥ क्ष्वेलमानौ सिंहवन्नदंतौ । 'क्ष्वेला तु सिंहनादः स्यात्' इत्यभिधानात् । विचिन्वंतौ वृक्षारोहणक्रीडार्थम् अन्विच्छंतौ । दूरे स्थितौ संतौ चारयंतौ गाः व्याहरंतौ नामभिः आह्वयंतौ ॥३॥ निर्योगेति॥ निर्युज्यंते निषिद्ध्यंते दुह्यमाना गावः एभिरिति निर्योगाः पादबंधनरज्जवः अदृश्यगवा

सुवर्णांजनचूर्णाभ्यां तौ तदा रूषितांबरौ ॥ महेंद्रायुधसंयुक्तौ श्वेतकृष्णाविवांबुदौ ॥ ५ ॥ चेरतुर्लोकसिद्धाभिः क्रीडाभिरितरेतरम् ॥ समस्तलोकनाथानां नाथभूतौ भुवं गतौ ॥ ६ ॥ मनुष्यधर्माभिरतौ मानयंतौ मनुष्यताम् ॥ तज्जातिगुणयुक्ताभिः क्रीडाभिश्चेरतुर्वनम् ॥ ७ ॥ ततस्त्वांदोलिकाभिश्च नियुद्धैश्च महाबलौ ॥ व्यायामं चक्रतुस्तत्र क्षेपणीयैस्तथाश्मभिः ॥ ८ ॥ तल्लिप्सुरसुरस्तत्र ह्युभयो रममाणयोः ॥ आजगाम प्रलंबाख्यो गोपवेषतिरोहितः ॥ ९ ॥ सोऽवगाहत निश्शंकस्तेषां मध्यममानुषः ॥ मानुषं वपुरास्थाय प्रलंबो दानवोत्तमः ॥ १० ॥ तयोश्छिद्रांतरप्रेप्सुरविषह्यममन्यत ॥ कृष्णं ततो रौहिणेयं हंतुं चक्रे मनोरथम् ॥ ११ ॥ हरिणाक्रीडनं नाम बालक्रीडनकं ततः ॥ प्रकुर्वन्तो हि ते सर्वे द्वौद्वौ युगपदुत्थितौ ॥ १२ ॥ श्रीदाम्ना सह गोविंदः प्रलंबेन तथा बलः ॥ गोपालैरपरैश्चान्ये गोपालाः पुप्लुवुस्ततः ॥ १३ ॥ श्रीदामानं ततः कृष्णः प्रलंबं रोहिणीसुतः ॥ जितवान्कृष्णपक्षीयैर्गोपैरन्ये पराजिताः ॥ १४ ॥

सुवर्णेति ॥ रूषितांबरौ रंजितवस्त्रौ । महेन्द्रायुधसंकाशावित्यंबुदविशेषणम् । महेंद्रायुधेन प्रकाशमानावित्यर्थः ॥ ५ ॥ ६ ॥ ७ ॥ तत इति ॥ आंदोलिकाभिः द्वयोर्गोपयोर्हस्तद्वयमयांदोलिकाभिः नियुद्धैर्बाहुयुद्धैर्व्यायामं श्रमम् ॥ ८ ॥ तल्लिप्सुरिति ॥ तल्लिप्सुः तौ जिघृक्षुः ॥ ९॥१० ॥ तयोरिति ॥ छिद्रान्तरप्रेप्सुः प्रमादावसरं प्रतीक्षमाणः ॥११॥ हरिणेति ॥ हरिणाक्रीडनं हरिणवदाक्रीडनम् उत्प्लुतिः । द्वयोर्युगपदुत्प्लुतयोरलसः जितः पटुर्जेता । तत्र जितो जेतारं वहन् भांडीरं गत्वा पुनरुत्प्लुतिस्थानं नयेदिति पणबंधः ॥ १२ ॥ श्रीदाम्नेति ॥ तत्र प्रलंबः श्रीदामपक्षीयः ॥ १३ ॥ १४ ॥

कर्षणार्थो वा ताश्च स्कंधे ययोस्तौ निर्योगपाशस्कंधौ बालशृंगाविव वयोविशेषोपलक्षणौ ॥ ४ ॥ सुवर्णेति ॥ रूषितांबरौ रंजितवस्त्रौ । महेंद्रायुधमिंद्रधनुः तत्संयुक्तावंबुदाविव ॥ ५ ॥ ६ ॥ ७ ॥ तत इति ॥ आंदोलिकाभिः गोपहस्तमयडोलारोहणैः वृक्षशाखादिषु डोलाक्रीडादिभिर्वा । स्वंदोलिकाभिश्चेति पाठांतरे नियुद्धे बाहुयुद्धे व्यायामं श्रमम् ॥ ८ ॥ तल्लिप्सुरिति ॥ तल्लिप्सुस्तज्जिघृक्षुः गोपवेषेण तिरोहितः असुर इत्यविवक्षितः ॥ ९ ॥ स इति ॥ अवगाहत प्राविशदित्यर्थः ॥ १० ॥ तयोरिति ॥ छिद्रांतरप्रेप्सुः प्रमादावसरं प्रतीक्षमाणः । अविषह्यमद्वेष्यम् ॥ ११ ॥ हरिणेति ॥ हरिणाक्रीडनं उत्प्लुत्योत्प्लुत्य गमनं यत्र द्वयोर्यस्त्वरतो याति स जेता इतरस्तु जितः । अत्र च जितो जेतारं वहन्भांडीरकं वटं नीत्वा पुनरुत्प्लुतिस्थानं नयेदिति पणबंधः ॥ १२ ॥ श्रीदाम्नेति ॥ पुप्लुवुः उत्प्लुतवंतः ॥ १३ ॥ श्रीदामानमिति ॥ अन्ये श्रीदामपक्षीयाः ॥ १४ ॥

ते वाहयंतस्त्वन्योन्यं भांडीरं वटमेत्य वै ॥ पुनर्निववृतुस्सर्वे येये तत्र पराजिताः ॥ १५ ॥ संकर्षणं तु स्कंधेन शीघ्रमुत्क्षिप्य दानवः ॥ नभस्स्थलं जगामाशु सचंद्र इव वारिदः ॥ १६ ॥ असहन्रौहिणेयस्य स भारं दानवोत्तमः ॥ ववृधे स महाकायः प्रावृषीव बलाहकः ॥ १७ ॥ संकर्षणस्तु तं दृष्ट्वा दग्धशैलोपमाकृतिम् ॥ स्रग्दामलंबाभरणं मकुटाटोपमस्तकम् ॥ १८ ॥ रौद्रं शकटचक्राक्षं पादन्यासचलत्क्षितिम् ॥ अभीतमनसा तेन रक्षसा रोहिणीसुतः ॥ ह्रियमाणस्ततः कृष्णमिदं वचनमब्रवीत् ॥ १९ ॥ कृष्णकृष्ण ह्रियाम्येष पर्वतोदग्रमूर्त्तिना ॥ केनापि पश्य दैत्येन गोपालच्छद्मरूपिणा ॥ २० ॥ यदत्र सांप्रतं कार्यं मया मधुनिषूदन ॥ तत्कथ्यतां प्रयात्येष दुरात्मातित्वरान्वितः ॥ २१ ॥ श्रीपराशर उवाच ॥ तमाह रामं गोविंदस्स्मितभिन्नोष्ठसंपुटः ॥ महात्मा रौहिणेयस्य बलवीर्यप्रमाणवित् ॥ २२ ॥ श्रीकृष्ण उवाच ॥ किमयं मानुषो भावो व्यक्तमेवावलंब्यते ॥ सर्वात्मन् सर्वगुह्यानां गुह्यगुह्यात्मना त्वया ॥ २३ ॥ स्मराशेषजगद्बीजकारणं कारणाग्रज ॥ आत्मानमेकं तद्वच्च जगत्येकार्णवे च यत् ॥ २४ ॥ किं न वेत्सि यथाहं च त्वं चैकं कारणं भुवः ॥ भारावतारणार्थाय मर्त्यलोकमुपागतौ ॥ २५ ॥ नभश्शिरस्तेंबुवहाश्च केशाः पादौ क्षितिर्वक्रमनंतवह्निः ॥ सोमो मनस्ते श्वसितं समीरणो दिशश्चतस्रोऽव्यय बाहवस्ते ॥ २६ ॥ सहस्रवक्रो भगवान्महात्मा सहस्रहस्तांघ्रिशरीरभेदः ॥ सहस्रपद्मोद्भवयोनिराद्यस्सहस्रशस्त्वां मुनयो गृणंति ॥ २७ ॥

॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ कृष्णकृष्णेति ॥ ह्रियामि ह्रिये । गोपालच्छद्मरूपिणा कृत्रिमगोपालरूपिणा ॥२०॥ यदत्रेति ॥ अत्र दानवे ॥२१॥ ॥ २२ ॥ २३ ॥ स्मरेत्यादि ॥ जगद्बीजकारणानामप्यादिभूत जगति जगदवस्थायां तद्वदेकार्णवे च एकार्णवावस्थायां च यत्तदेकं कारणमात्मानं किं न वेत्सि ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥

॥ १५ ॥ १६ ॥ १७ ॥ संकर्षणस्त्विति ॥ दग्धशैलोपमा तत्सदृशी आकृतिर्यस्य तं स्रग्भिर्ग्रथितं स्थूलं दाम तदेव लंबाभरणं यस्य तं मकुटेनाटोपं संरंभयुक्तं मस्तकं यस्य तं रौद्रं घोरं शकटचक्रे इवाक्षिणी यस्य तं पादन्यासेन चलंती क्षितिर्यस्मात्तम् ॥ १८ ॥ १९ ॥ कृष्णकृष्णेति ॥ ह्रियामि ह्रिये कर्मणि परस्मैपदम् आर्षम् । पर्वतवदुदग्रा उन्नता मूर्तिर्यस्य तेन ॥ २० ॥ २१ ॥ तमिति ॥ पूर्वं कालियभोगावृतं मां किमात्मानं परमेश्वरं न वेत्सि तत्त्वं संस्मर स्वयमिदानीं मुह्यतीति । विस्मयात् स्मितेन भिन्नमोष्ठसंपुटं यस्य सः ॥ २२ ॥ किमयमिति ॥ सर्वात्मन् सर्वरूप सर्वगुह्यानां सर्वेषां सूक्ष्माणां गुह्यकारणभूत अत एव गुह्यात्मना प्रलयेष्ववशिष्यमाणसूक्ष्मरूपेण ॥२३॥ एतत्प्रपंचयन्नाह–स्मरेत्यादिद्वाभ्याम्–स्मरेति ॥ अशेषजगद्बीजकारणं सर्वजगन्मूलस्यापि कारणम् आत्मानं स्मर । तत्र हेतुः–कारणस्याग्रज अग्रे व्यक्तस्यापि प्रवर्तकतया पूर्वं स्थितः तद्वच्च तथैव । जगत्येकार्णवे प्रलयावस्थे सति यदेकमवशिष्यते तदेवाहमित्यात्मानं स्मर ॥ २४ ॥ २५ ॥ विराड्रूपेण स्तौति--नभ इति ॥ २६ ॥ तदाधारविश्वरूपेण स्तौति–सहस्रवक्त्र इति ॥ सहस्रमपरिमिता हस्तांघ्रिशरी

दिव्यं हि रूपं तव वेत्ति नान्यो देवैरशेषैरवताररूपम् ॥ तदर्च्यते वेत्सि न किं यदंते त्वय्येव विश्वं लयमभ्युपैति ॥२८॥ त्वया धृतेयं धरणी बिभर्त्ति चराचरं विश्वमनंतमूर्त्ते ॥ कृतादिभेदैरज कालरूपो निमेषपूर्वो जगदेतदत्सि ॥ २९ ॥ अत्तं यथा वाडववह्निनांबु हिमस्वरूपं परिगृह्य कास्तम् ॥ हिमाचले भानुमतोंशुसंगाज्जलत्वमभ्येति पुनस्तदेव ॥ ३० ॥ एवं त्वया संहरणेऽत्तमेतज्जगत्समस्तं त्वदधीनकं पुनः ॥ तवैव सर्गाय समुद्यतस्य जगत्त्वमभ्येत्यसुकल्पमीश ॥ ३१ ॥ भवानहं च विश्वात्मन्नेकमेव च कारणम् ॥ जगतोस्य जगत्यर्थे भेदेनावां व्यवस्थितौ ॥ ३२ ॥ तत्स्मर्यताममेयात्मंस्त्वयात्मा जहि दानवम् ॥ मानुष्यमेवावलंब्य बंधूनां क्रियतां हितम् ॥ ३३ ॥

॥ २८ ॥ २९ ॥ अत्तमिति ॥ अत्तं चर्वितम् । कास्तं छर्दितम् । यद्वा—केन वायुनास्तं वडवाग्निगतेनार्करश्मिनाडीमयेन क्षिप्तम् । अयमर्थः । सवायुना वडवाग्निना पीतं समुद्रांबु घनीभूय हिमतां गतं तेन वायुनाडीमयार्करश्मिना सोमद्वारा हिमवतौ हिमाद्रौ क्षिप्तं ग्रीष्मे पुनरादित्यांशुसंयोगाद्विलीनं सत् यथा जलतां यातीति अयमेवार्थः सरित्समुद्रेत्यादिना पूर्वमुक्तः ॥ ३० ॥ एवमित्यादि ॥ संहरणात्तं संहरणकाले अत्तं तवैव सर्गाय समुद्यतस्य त्वय्येव सर्गाय समुद्यते सति ॥ ३१ ॥ ३२ ॥ तदिति ॥ मानुष्यमेवेति स्तुत्युद्बोधितदिव्यशक्तिरपि मानुष्यमवलंब्यैव मनुष्यमूर्त्यैव दानवं जहि ॥ ३३ ॥

राणां भेदा यस्य सः । शरीरमुदरं सहस्रं पद्मोद्भवा ब्रह्माणः ये तेषां योनिर्जनकः ॥ २७ ॥ दिव्यमिति ॥ तत्र दिव्यरूपमेतद्विश्वरूपमन्यो न वेत्ति । न वेत्सि नानुसंधत्से किम् ॥ २८॥ त्वयेति ॥ अत्सि ग्रससे ॥ २९ ॥ जगत्प्रलयोद्भवहेतुत्वं दृष्टांतेनाह—अत्तमित्यादिद्वाभ्याम्—अत्तमिति ॥ सामुद्रमंबु वाडवाख्येन वह्निना अत्तं जग्धं केन वायुना वाडवाग्निगतेनार्करश्मिनाडीमयेन अस्तं हिमाचले क्षिप्तम् हिमस्वरूपं परिगृह्य स्थितं सत् ग्रीष्मे भानुमतो रवेरंशुभिः संगात्पुनर्जलत्वं प्राप्नोति यथा । अयमर्थः—"सरित्समुद्रभौमास्तु तथापः प्राणिसंभवाः । चतुःप्रकारा भगवानादत्ते सविता मुने ॥ विवस्वानष्टभिर्मासैरादाय जगतो जलम् । सोमे मुंचत्यथेंदुश्च वायुनाडीमयैर्दिवि ॥ हिमोष्णवारिवृष्टीनां हेतुस्तु समयां गतः ॥" इत्यादिपूर्वोक्तरीत्या नद्यादिरूपेणागतं जलं जलधौ सवायुना वडवाग्निना पीतं घनीभवद्धिमतां गतं तेन वायुनाडीमयरश्मिना चंद्रद्वारा हिमवति हिमाद्रौ क्षिप्तं ग्रीष्मे पुनस्तपता तपनातपेन विलीयमानं जलतां याति यथा ॥ ३० ॥ एवमिति ॥ एवं तथैव त्वया संहरणे संहारकाले वडवाग्निस्थानीयेन रुद्रादिरूपेणात्तं भक्षितं जगत्त्वदधीनं त्वय्येव हिमाद्रिस्थानीये परमपुरुषे कारणात्मना क्षिप्तं यावत्प्रलयं स्थितं सत् अथ पुनर्हिरण्यगर्भात्मना सर्गोद्यतस्य तत्र सूर्यस्थानीयस्य सृज्यसंस्कारेच्छासंबंधात्पुनर्विराडात्मकस्थूलजगद्रूपत्वं प्रकृतिकल्पमेति । अत्र वाक्यार्थोपमालंकारः यथाह दंडी—"वाक्यार्थेनैव वाक्यार्थः कोपि यद्युपमीयते । एकानेकेव शब्दत्वात्सा वाक्यार्थोपमा मता" इति ॥ ३१ ॥ एवंभूतः परमेश्वरस्त्वमेव नाहमिति चेत्तत्राह—भवानहं चेति ॥ ३२ ॥ तदिति ॥ यद्यपि दैत्येन

॥ श्रीपराशर उवाच॥ इति संस्मारितो विप्र कृष्णेन सुमहात्मना॥विहस्य पीडयामास प्रलंबं बलवान्बलः ॥३४॥ मुष्टिना सोहनन्मूर्ध्नि कोपसं रक्तलोचनः ॥ तेन चास्य प्रहारेण बहिर्याते विलोचने ॥ ३५ ॥ स निष्कासितमस्तिष्को मुखाच्छोणितमुद्वमन् ॥ निपपात महीपृष्ठे दैत्य वर्यो ममार च ॥ ३६ ॥ प्रलंबं निहतं दृष्ट्वा बलेनाद्भुतकर्मणा ॥ प्रहृष्टास्तुष्टुवुर्गोपास्साधुसाध्विति चाब्रुवन् ॥ ३७ ॥ संस्तूयमानो गोपैस्तु रामो दैत्ये निपातिते ॥ प्रलंबे सह कृष्णेन पुनर्गोकुलमाययौ ॥ ३८ ॥ ॥ इति श्रीविष्णुमहापुराणे पंचमांशे नवमोऽध्यायः ॥ ९ ॥ ॥ ॥ श्रीपराशर उवाच ॥ तयोर्विहरतोरेवं रामकेशवयोर्व्रजे ॥ प्रावृड्व्यतीता विकसत्सरोजा चाभवच्छरत् ॥ १ ॥ अवापुस्तापमत्यर्थं शफर्यः पल्वलोदके ॥ पुत्रक्षेत्रादिसक्तेन ममत्वेन यथा गृही ॥२॥ मयूरा मौनमातस्थुः परित्यक्तमदा वने ॥ असारतां परिज्ञाय संसारस्येव योगिनः ॥ ॥३॥उत्सृज्य जलसर्वस्वं विमलास्सितमूर्तयः ॥ तत्यजुश्चांबरं मेघा गृहं विज्ञानिनो यथा ॥ ४ ॥ शरत्सूर्यांशुतप्तानि ययुश्शोषं सरांसि च ॥ बह्वालंबममत्वेन हृदयानीव देहिनाम् ॥ ५ ॥ कुमुदैश्शरदंभांसि योग्यतालक्षणं ययुः ॥ अवबोधैर्मनांसीव समत्वममलात्मनाम् ॥ ६ ॥

इतीति ॥ विहस्येति उद्बोधितस्वरूपानुसंधानाचिह्नम् ॥ ३४ ॥ ३५ ॥ स इति ॥ निष्कासितमस्तिष्कः निर्गमितमस्तकस्नेहः ॥ ३६ ॥ ३७ ॥ ३८ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशे नवमोऽध्यायः ॥ ९ ॥ छ ॥ ॥ १ ॥ अथ वर्ण्यमानशरद्दृष्टांतव्याजेनात्मविद्यामाह—अवापुरित्यादिना ॥ अवापुरिति ॥ शफर्यः क्षुद्रमत्स्याः ॥ २ ॥ मयूरा इति ॥ मौनमनुक्तिर्मुनिवृत्तिश्च ॥ ३ ॥ उत्सृज्येति ॥ जलसर्वस्वं कृत्स्नं जलम् अहंमानादिजडभावं च मलं कार्ष्ण्यं रागादि च सितं शुभ्रं शुद्धं च विग्रहं विरोधं 'विग्रहं ज्ञानिनो यथा' इति च पाठः ॥ ४ ॥ ॥ ५ ॥ कुमुदैरिति ॥ योग्यतालक्षणं योग्यतात्मकं संबंधं ययुः । योग्यो हि निर्मलजलस्य सितकुमुदानां च संबंधः । अमलात्मनाममलमनसाम् ॥ ६ ॥

निजरूपं नाविष्कृतं तथापि बंधुसौख्याय अनेनैव रूपेण स हंतव्य इत्याह—मानुष्यमेवेति ॥ ३३ ॥ ३४ ॥ ३५ ॥ स इति ॥ निष्कासितं निष्कामितं मस्तिष्कं मस्तकस्नेहो यस्य सः ॥ ३६ ॥ ३७ ॥ ३८ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां पंचमांशे नवमोध्यायः ॥ ९ ॥ ॥ गोवर्धनवहादीनि शरत्कर्माणि वर्णयन् । शरदं वर्णयत्यादावध्यात्मार्थोपमानतः ॥ १ ॥ तदेवं हरेः प्रावृट्क्रीडां वर्णयित्वा गोवर्धनपूजातदुद्धरणाद्यां शरत्क्रीडां वर्णयिष्यन् शरदं तावद्वैराग्यज्ञानगर्भोभिर्वर्णयति--तयोरित्यादिपंचदशभिः ॥ तयोरिति ॥ विकसंति सरोजानि यस्यां सा ॥१॥ अवापुरिति ॥ शफर्यः क्षुद्रमत्स्याः ॥ पल्वलोदके स्वल्पगर्तोदके ॥२॥ मयूरा इति ॥ परित्यक्तो मदो दर्पो यैस्ते ॥३॥ उत्सृज्येति ॥ जलमुदकं जडमहंकारादि तदेव सर्वस्वं हित्वा विमलाः मलः कार्ष्ण्यादिः रागश्च तद्रहितास्सितमूर्तयश्शुभ्ररूपाश्शुद्धसत्त्वाश्च विज्ञानिनः आत्मज्ञाः॥४॥ ॥ ५ ॥ कुमुदैरिति ॥ शरदंभांसि स्वच्छानि कुमुदैस्सितैः योग्यतालक्षणम् अन्योन्यानुरूपात्मकं संबंधं ययुः । अमलात्मनां वीतरागाणां. मनांस्यवबोधैस्तत्त्वमयैर्ज्ञानैरिव ॥ ६ ॥

तारकाविमले व्योम्नि रराजाखंडमंडलः ॥ चंद्रश्चरमदेहात्मा योगी साधुकुले यथा॥७॥शनकैश्शनकैस्तीरं तत्यजुश्च जलाशयाः॥ममत्वं क्षेत्रपुत्रादिरूढमुच्चैर्यथा बुधाः ॥८॥ पूर्वं त्यक्तैस्सरोंभोभिर्हंसा योगं पुनर्ययुः ॥ क्लेशैः कुयोगिनो शेषैरंतरायहता इव ॥९॥ निभृतो भवदत्यर्थं समुद्रस्स्तिमितोदकः ॥ क्रमावाप्तमहायोगो निश्चलात्मा यथा यतिः ॥ १० ॥ सर्वत्रातिप्रसन्नानि सलिलानि तथाऽभवन् ॥ ज्ञाते सर्वगते विष्णौ मनांसीव सुमेधसाम् ॥ ११ ॥ बभूव निर्मलं व्योम शरदा ध्वस्ततोयदम् ॥ योगाग्निदग्धक्लेशौघं योगिनामिव मानसम् ॥ १२ ॥ सूर्यांशुजनितं तापं निन्ये तारापतिः शमम् ॥ अहंमानोद्भवं दुःखं विवेकः सुमहानिव ॥ १३ ॥ नभसोब्दं भुवः पंकं कालुष्यं चांभसश्शरत् ॥ इंद्रियाणींद्रियार्थेभ्यः प्रत्याहार इवाहरत् ॥ १४ ॥ प्राणायाम इवांभोभिस्सरसां कृतपूरकैः ॥ अभ्यस्यतेऽनुदिवसं रेचकाकुंभकादिभिः ॥ १५ ॥

तारकेति॥ तारकाविमले तारकाभिर्विमले अखंडमंडलः पौर्णमास्याम् । चरमदेहात्मा चरमदेहस्य आत्मा ॥७॥८॥ पूर्वमिति ॥ अंतराया विघ्नाः ॥९॥ निभृत इति ॥ क्रमावाप्तमहायोगः । क्रमेण मंत्रस्पर्शभावाभावाख्ययोगचतुष्कानंतरं लब्धमहायोगः ॥ १० ॥ सर्वत्रेति ॥ सर्वत्र देशे शत्रुमित्रादिषु च ॥ ११ ॥ १२ ॥ ॥ १३ ॥ १४ ॥ प्राणायाम इत्यादि ॥ प्राणायामो हि कृतपूरकैर्योगिभिः आकुंभकरेचकप्रधानाभिर्वायुनयनक्रियाभिरभ्यस्यते "पूरकः पूरणं वायोः कुंभकस्स्थापनं क्वचित् ॥ बहिर्निस्सरणं तस्य रेचकः परिकीर्तितः" इति वचनात् । अयमर्थः सरसां योगिस्थानीयानां प्राणायामः तस्यार्थः कुल्यादिभिः पूर्वं कृत

तारकाविमल इति ॥ तारकाभिरुपलक्षिते व्योम्नि विमले अखंडमंडलः पूर्णप्रकाशः पूर्णिमाप्रांते चंद्रो रराज यथा तारैर्विद्याचारादिभिरमले साधूनां कुले पूर्णब्रह्मप्रकाशो योगी चरमदेह आत्मा यस्य सः ॥७॥८॥ पूर्वमिति ॥ अंतरायहताः विघ्नाभिहताः । कुयोगिनो योगभ्रष्टाः । अविद्यादिभिः क्लेशैर्यथा पुनर्युज्यंते तद्वत् ॥ ९ ॥ निभृत इति ॥ निभृतो निर्विकारस्तिमितोदको निश्चलांबुः । यमनियमादिक्रमेणावाप्तमहायोगस्संप्रज्ञातसमाधिलक्षणो येन सः अतो निश्चलात्मा यतिः यथा ॥ १० ॥ सर्वत्रेति ॥ सर्वत्र नद्यादौ सर्वत्र शत्रुमित्रादिषु । सुमेधसां मनांसीव ॥ ११ ॥ १२॥ १३ ॥ नभस इति ॥ नभआदिभ्योब्दपंककालुष्याणि शरदहरत् । यथा इंद्रियार्थेभ्यश्शब्दादिभ्यः इंद्रियाणि श्रोत्रादीनि प्रत्याहारः तद्वियोजनप्रयत्नो हरति ॥ १४ ॥ प्राणायाम इति ॥ सरसामंभोभिः कृतपूरकै रेचकैराकुंभकादिभिः प्राणायामोभ्यस्यत इवेति अभ्यस्यतेतिपाठे अभ्यस्त इवेत्यर्थः । तथा कुल्यादिजलैरापूर्य कुंभकीकृतवायुर्यत्किंचित्कालं तथैवावस्थाप्य पुनर्यथाकालं केदाराद्यर्थं प्रणालिकया निस्सार्यंत इति प्राणायामसाम्यम् । रेचकाकुंभकादिभिरित्यादिशब्दबहुवचनाभ्यां तदावृत्तिरुक्ता । पूरकादिलक्षणं

विमलांबरनक्षत्रे काले चाभ्यागते व्रजे ॥ ददर्शेंद्रं महारंभायोद्यतांस्तान्व्रजौकसः ॥ १६ ॥ कृष्णस्तानुत्सुकान्दृष्ट्वा गोपानुत्सवलालसान् ॥ कौतूहलादिदं वाक्यं प्राह वृद्धान्महामतिः ॥ १७ ॥ कोऽयं शक्रमहो नाम येन वो हर्ष आगतः ॥ प्राह तं नंदगोपश्च पृच्छंतमतिसादरम् ॥ ॥ १८ ॥ नंदगोप उवाच ॥ मेघानां पयसां चेशो देवराजश्शतक्रतुः ॥ तेन संचोदिता मेघा वर्षंत्यंबुमयं रसम् ॥ १९ ॥ तद्वृष्टिजनितं सस्यं वयमन्ये च देहिनः ॥ वर्त्तयामोपयुंजानास्तर्पयामश्च देवताः ॥ २० ॥ क्षीरवत्य इमा गावो वत्सवत्यश्च निर्वृताः ॥ तेन संवर्द्धितैस्स स्यैस्तुष्टाः पुष्टा भवंति वै ॥ २१ ॥ नासस्या नातृणा भूमिर्न बुभुक्षार्दितो जनः ॥ दृश्यते यत्र दृश्यंते वृष्टिमंतो बलाहकाः ॥ २२ ॥ भौममे तत्पयो दुग्धं गोभिः सूर्यस्य वारिदैः ॥ पर्जन्यस्सर्वलोकस्योद्भवाय भुवि वर्षति ॥ २३ ॥ तस्मात्प्रावृषि राजानस्सर्वे शक्रं मुदा युताः ॥ मखैस्सुरेशमर्चन्ति वयमन्ये च मानवाः ॥ २४ ॥ श्रीपराशर उवाच ॥ नंदगोपस्य वचनं श्रुत्वेत्थं शक्रपूजने ॥ रोषाय त्रिदशेंद्रस्य प्राह दामोदरस्तदा ॥ २५ ॥ न वयं कृषिकर्त्तारो वाणिज्याजीविनो न च ॥ गावोस्मद्दैवतं तात वयं वनचरा यतः ॥ २६ ॥ आन्विक्षिकी त्रयी वार्त्ता दंडनीतिस्तथा परा ॥ विद्या चतुष्टयं चैतद्वार्त्तामात्रं शृणुष्व मे ॥ २७ ॥

पूरकैः श्वासस्थानीयैरंभोभिः कारणैः पश्चात्स्थापनरेचकादिक्रियाभिरभ्यस्यते वा ॥ १५ ॥ विमलेति ॥ महः उत्सवः ॥ १६ ॥ कृष्ण इति । उत्सुकानुद्युक्तान् । उत्सवलालसान् उत्सवकामान् ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ भौममित्यादि ॥ पर्जन्यो हि भूगतं जलं सूर्यरश्मिभिरात्तं ततो मेघेषु दुग्धं तैर्जगद्भूत्यै वर्षति ॥ २३ ॥ तस्मादिति ॥ प्रावृषि गतायामिति शेषः । शरदः प्रस्तुतत्वात् यत्तु नभसि नभस्ये वा द्वादश्यामिंद्रमहारंभ इति गर्गा दिनोक्तं तत्तु गोवर्धनोद्धारोत्तरकालविषयं कल्प्यम् । एतद्धरिवंशे कृष्णं प्रतींद्रोक्तिः "ये चेमे वार्षिका मासाश्चत्वारो विहिता मम । एषां तेऽर्द्धं प्रदास्यामि शरत्कालं हि पश्चिमम् ॥ अद्यप्रभृति मासौ द्वौ ज्ञास्यंति मम मानवाः । वर्षार्द्धे च ध्वजे नित्यं ततः पूजामवाप्स्यसि" इति । यत्तु हरिवंश एव "ततः प्रवर्त्तते पुण्या शरत्सुप्तो त्थिते त्वयि" इत्यादीन्द्रवाक्यं तद्भगवत्प्रबोधानंतरशरच्छेषप्रसंगार्थम् ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥

च योगे प्रोक्तं "पूरकः पूरणं वायोः कुंभकः स्थापनं क्वचित् । वायोर्बहिर्निस्सरणं रेचकः परिकीर्तितः" इति ॥ १९ ॥ विमलेति ॥ इंद्रस्य महः पूजोत्सवः तदारंभाय उद्यतानुद्युक्तान् कृष्णो ददर्श ॥१६॥ कृष्ण इति ॥ उत्सुकानुद्युक्तान् ॥ १७ ॥ १८ ॥ १९॥ २० ॥ २१ ॥ २२ ॥ ननु सूर्यः स्वरश्मिभिर्भौमं रसमाकृष्य वर्षतीति प्रसिद्धं नेंद्रः तत्राह—भौममिति॥ दुग्धमात्तं पर्जन्य इन्द्रः स हि भूगतं सूर्यस्य रश्मिभिरात्तं मेघेषु प्रसारितं जगतः उद्भवाय वर्षति "याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति" इति श्रुतेः ॥ २३ ॥ तस्मादिति ॥ प्रावृषि गतायामिति शेषः । शरत्काले शक्रपूजायाः प्रस्तुतत्वात् ॥ २४ ॥ २५ ॥ २६ ॥ आन्वीक्षि

कृषिर्वणिज्या तद्वच्च तृतीयं पशुपालनम् ॥ विद्या ह्येका महाभाग वार्त्ता वृत्तित्रयाश्रया ॥ २८ ॥ कर्षकाणां कृषिर्वृत्तिः पण्यं विपणिजीविनाम् ॥ अस्माकं गौः परावृत्तिर्वार्त्ताभेदैरियं त्रिभिः ॥ २९ ॥ विद्यया यो यया युक्तस्तस्य सा दैवतं महत् ॥ सैव पूज्यार्चनीया च सैव तस्योपकारिका ॥ ३० ॥ यो यस्य फलमश्नन्वै पूजयत्यपरं नरः ॥ इह च प्रेत्य चैवासौ न तदाप्नोति शोभनम् ॥ ॥ ३१ ॥ कृष्यांता प्रथिता सीमा सीमांतं च पुनर्वनम् ॥ वनांता गिरयस्सर्वे ते चास्माकं परा गतिः ॥ ३२ ॥ न द्वारबंधावरणा न गृहक्षेत्रिणस्तथा ॥ सुखिनस्त्वखिले लोके यथा वै चक्रचारिणः ॥ ३३ ॥ श्रूयंते गिरयश्चैव वनेस्मिन्कामरूपिणः ॥ तत्तद्रूपं समास्थाय रमंते स्वेषु सानुषु ॥ ३४ ॥ यदा चैते प्रबाध्यंते तेषां ये काननौकसः ॥ तदा सिंहादिरूपैस्तान्घातयंति महीधराः ॥ ३५ ॥ गिरियज्ञस्त्वयं तस्माद्गोयज्ञश्च प्रवर्त्त्यताम् ॥ किमस्माकं महेंद्रेण गावश्शैलाश्च देवताः ॥ ३६ ॥

॥ २८ ॥ कर्षकाणामिति ॥ अस्माकमित्यादि गौरिति जात्यभिप्रायमेकवचनम् । सा परावृत्तिरिति पाठे परावृत्तिर्या पाशुपाल्यवृत्तिः त्रिभिर्भेदैरुपलक्षितेयं वार्त्ता ॥ ॥ २९ ॥ विद्ययेति ॥ पूज्या मान्या ॥ ३० ॥ ३१ ॥ कृष्यांता इति ॥ देशस्थितिरियं सेति गिरयः परामृश्यंते गतिशब्दसमभिव्याहारात् स्त्रीत्वमेकत्वं च कृष्यताः प्रथितास्सीमाः सा चास्माकं परा गतिरिति च पाठः ॥३२॥ न द्वारेति ॥ द्वारबंधैर्गृहैरावरणं येषां ते तथोक्ताः ग्रामस्थाः । यद्वा आवरणगृहैकवासा वणिजः । गृहक्षेत्रिण इति गृहकेदारादिक्षेत्रसंचारनियताः कर्षकाः । अयमन्वयः यथा गिरेर्बलेन तृणजलादिमत्प्रदेशेषु स्वैरं चक्रवता शकटेन चरंतो वयं सुखिनः न तथा द्वारबंधावरणः न तथा गृहक्षेत्रिण इति ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥

कीति ॥ आन्वीक्षिकी तर्कविद्या । त्रयी वेदत्रयात्मिका । वार्ता वक्ष्यमाणा । दंडनीतिरर्थशास्त्रम् । एतद्विद्याचतुष्टयं सर्वेषां ब्राह्मणानां दृष्टादृष्टार्थसाधनम् ॥ २७ ॥ कृषिरिति ॥ तत्र वार्ताख्या ह्येका विद्या कृष्यादिवृत्तित्रयाश्रया ॥ २८ ॥ कर्षकाणामिति ॥ गौः गावः । एवमियं वार्ता त्रिभिर्भेदैस्स्थिता ॥ २९ ॥ ततः किमत आह–विद्ययेति ॥ पूज्या मान्या अर्चनीया गंधपुष्पाक्षतादिभिः ॥ ३० ॥ विपक्षे दोषमाह–यो यस्येति ॥ ३१ ॥ किं च नास्माकं कर्षकाणामिव शक्रपूजा युक्ता भिन्नाऽऽस्थानत्वादित्याशयेनाह–कृष्यांतेति ॥ कृष्यं कृषेः कर्मणि यत् कृष्यं क्षेत्रं तदंतेपि मर्यादासाधारणप्रचारणभूमिः सीमाया अंते च वनम् अस्मन्निवासस्थानं वनानामंते च गिरयोऽस्माकं वनचारिणां परागतिः स्वैरविहारस्थानत्वात् ॥ ३२ ॥ तदेवाह–न द्वारेति ॥ न विद्यते द्वारबंधः कवाटादिरावरणं येषां न द्वारबंधश्चावरणं च कुड्यादिकं येषामिति वा । न च नियतं गृहं क्षेत्रं येषां ते वयं तु सर्वत्र प्रभूततृणोदकादिमति गिरिवनादौ यथेच्छं विहरंतस्सर्वस्मिञ्जने सुखिनः । यथा वै चक्रचारिणः चक्रोपलक्षितेन शकटेन चरंतः अनियता वासा यत्र सायंगृहाख्या मुनयस्तथा । ततो गृहक्षेत्राद्यभिमानवतां पण्यकृष्यादिजीवितानामिव नास्माकमिंद्रेण किंचित्कार्यमिति भावः ॥ ३३ ॥ किं चेंद्रादिपूजादरैरस्माभिर्यदि गिरयोऽवज्ञास्यंते तर्हि महाननर्थस्स्यादित्याह–श्रूयंत इत्यादिद्वाभ्याम् ॥ ३४ ॥ यदेति ॥ ये वनौकसः एते यदा तेषां गिरीणाम् अपराध्यंते अवज्ञालक्षणमपराधं कुर्वंति तदा तान् हिंस्रसिंहव्याघ्रसर्पादिरूपेण मारयंति ॥ ३५ ॥ ३६ ॥

मंत्रयज्ञपरा विप्रास्सीरयज्ञाश्च कर्षकाः ॥ गिरिगोयज्ञशीलाश्च वयमद्रिवनाश्रयाः ॥३७॥ तस्माद्गोवर्द्धनश्शैलो भवद्भिर्विविधार्हणैः ॥ अर्च्यतां पूज्यतां मेध्यान्पशून्हत्वा विधानतः ॥३८॥ सर्वघोषस्य संदोहो गृह्यतां मा विचार्यताम् ॥ भोज्यंतां तेन वै विप्रास्तथा ये चाभिवांछकाः॥ ॥ ३९ ॥ तत्रार्चिते कृते होमे भोजितेषु द्विजातिषु ॥ शरत्पुष्पकृतापीडाः परिगच्छंतु गोगणाः ॥४०॥ एतन्मम मतं गोपास्संप्रीत्या क्रियते यदि ॥ ततः कृता भवेत्प्रीतिर्गवामद्रेस्तथा मम ॥ ४१ ॥ श्रीपराशर उवाच ॥ इति तस्य वचः श्रुत्वा नंदाद्यास्ते व्रजौकसः ॥ प्रीत्युत्फुल्ल मुखा गोपास्साधुसाध्वित्यथाब्रुवन् ॥४२॥ शोभनं ते मतं वत्स यदेतद्भवतोदितम् ॥ तत्करिष्यामहे सर्वं गिरियज्ञः प्रवर्त्यताम् ॥४३॥ तथा च कृतवंतस्ते गिरियज्ञं व्रजौकसः ॥ दधिपायसमांसाद्यैर्ददुश्शैलबलिं ततः ॥ ४४ ॥ द्विजांश्च भोजयामासुश्शतशोऽथ सहस्रशः ॥ ४५ ॥ गावश्शैलं ततश्चक्रुरर्चितास्ताः प्रदक्षिणम् ॥ वृषभाश्चातिनर्दंतस्सतोया जलदा इव ॥४६॥ गिरिमूर्द्धनि कृष्णोऽपि शैलोहमिति मूर्त्तिमान् ॥ बुभुजेन्नं बहुतरं गोपवर्याहृतं द्विज ॥ ४७ ॥ स्वेनैव कृष्णो रूपेण गोपैस्सह गिरेश्शिरः ॥ अधिरुह्यार्चयामास द्वितीयामात्मनस्तनुम् ॥ ॥ ४८ ॥ अंतर्द्धानं गते तस्मिन्गोपा लब्ध्वा ततो वरान् ॥ कृत्वा गिरिमखं गोष्ठं निजमभ्याययुः पुनः ॥ ४९ ॥ ॥ इति श्रीविष्णुमहापुराणे पंचमांशे दशमोऽध्यायः ॥ १० ॥ ॥ श्रीपराशर उवाच ॥ मखे प्रतिहते शक्रो मैत्रेयातिरुषान्वितः ॥ संवर्त्तकं नाम गणं तोयदानामथाऽब्रवीत् ॥ १ ॥ भोभो मेघा निशम्यैतद्वचनं गदतो मम ॥ आज्ञानंतरमेवाशु क्रियतामविचारितम् ॥ २ ॥

मंत्रयज्ञेति ॥ मंत्रयज्ञपराः मंत्रप्रकाशितदेवतायज्ञपराः ॥ ३७ ॥ ३८ ॥ सर्वघोषस्येति ॥ संदोहः सम्यग्दुग्धम् ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ अंतर्द्धानमिति ॥ ततः गोवर्द्धनात् ॥ ४९ ॥ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशे दशमोऽध्यायः ॥ १० ॥ छ ॥ १ ॥ २ ॥

मंत्रयज्ञेति ॥ मंत्रयज्ञपराः केवलं मंत्रोक्त देवतार्चनपरा विप्राः न तु प्रत्यक्षदेवताः पश्यंति वयं तु गिरिगोयज्ञशीलाः प्रत्यक्षदेवताः गिरयो गावश्च तद्यजनशीलाः ॥ ३७ ॥ ३८ ॥ सर्वेति ॥ गोपालपल्यां सर्वस्यापि घोषस्य संदोहः सम्यग्दोहे दुग्धं गृह्यताम् ॥ ३९ ॥ तत्रेति ॥ परिगच्छंतु प्रदक्षिणं कुर्वंतु ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ गिरिमूर्धनीति ॥ इंद्रवैलक्षण्यार्थं शैलाभिमानिदेवतारूपेणात्मानं प्रदर्श्य शैलोहमिति ब्रुवन् गोपवर्यैराहृतं दत्तं बह्वन्नं बुभुजे ॥ ४७ ॥ स्वेनैवेति ॥ गोपानां भक्त्युद्रेकार्थं गोपमध्ये निजरूपेणैव तां मूर्तिम् अर्चयामास ॥ ४८ ॥ अंतर्धानमिति ॥ गोपाः ततः शैलदेवाद्वरांल्लब्ध्वा अंतर्धानं गते सति तस्मिन्निजं गोष्ठमभ्याययुः ॥ ४९ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां पंचमांशे दशमोऽध्यायः ॥ १० ॥ ॥ मख इति ॥ संवर्तकं संहारकम् ॥ १ ॥ २ ॥

नंदगोपस्सुदुर्बुद्धिर्गोपैरन्यैस्सहायवान् ॥ कृष्णाश्रयं बलाध्मातो मखभंगमचीकरत् ॥३॥ आजीवो याः परस्तेषां गावस्तस्य च कारणम् ॥ तागावो वृष्टिपातेन पीड्यन्तां वचनान्मम ॥४॥ अहमप्यद्रिशृंगाभं तुंगमारुह्य वारणम् ॥ साहाय्यं वः करिष्यामि वाय्वम्बूत्सर्गयोजितम् ॥५॥ श्रीपराशर उवाच ॥ इत्याज्ञप्तास्ततस्तेन मुमुचुस्ते बलाहकाः ॥ वातवर्षं महाभीममभावाय गवां द्विज ॥६॥ ततः क्षणेन पृथिवी ककुभोंबरमेव च ॥ एकं धारामहासारपूरणेनाभवन्मुने ॥ ७ ॥ विद्युल्लताकषाघातत्रस्तैरिव घनैर्घनम् ॥ नादापूरितदिक्चक्रैर्धारासारमपात्यत ॥ ८ ॥ अंधकारीकृते लोके वर्षद्भिरनिशं घनैः ॥ अधश्चोर्ध्वं च तिर्यक् च जगदाप्यमिवाभवत् ॥ ९ ॥ गावस्तु तेन पतता वर्षवातेन वेगिना ॥ धूताः प्राणाञ्जहुस्सन्नत्रिकसक्थिशिरोधराः ॥ १० ॥ क्रोडेन वत्सानाक्रम्य तस्थुरन्या महामुने ॥ गावो विवत्साश्च कृता वारिपूरेण चापराः ॥११॥ वत्साश्च दीनवदना वातकंपितकंधराः ॥ त्राहित्राहीत्यल्पशब्दाः कृष्णमूचुरिवातुराः ॥१२॥ ततस्तद्गोकुलं सर्वं गोगोपीगोपसंकुलम् ॥ अतीवार्त्तं हरिर्दृष्ट्वा मैत्रेयाचिंतयत्तदा ॥ १३ ॥ एतत्कृतं महेंद्रेण मखभंगविरोधिना ॥ तदेतदखिलं गोष्ठं त्रातव्यमधुना मया ॥१४॥

नंदगोप इति ॥ आध्मातः उपबृंहितः ॥ ३ ॥ आजीव इति ॥ आजीवो जीवनोपायः गोपत्वस्य च कारणं यास्तागावः ॥ ४ ॥ अहमिति ॥ वाय्वंबुनोरुत्सर्गेण संबद्धम् ॥ ५ ॥ ६ ॥ तत इत्यादि ॥ धारावेगवद्वर्षपूरणेन धरण्यादिकमेकमभवत् ॥ ७ ॥ विद्युल्लतेति ॥ घनं निरंतरम् । धारासारमपात्यत आर्षत्वा ल्लिंगव्यत्ययः ॥ ८ ॥ अंधकारीकृत इति ॥ आप्यम् अम्मयम् ॥ ९ ॥ गावस्त्विति ॥ धूताः कंपिताः त्रिकं 'पृष्ठवंशा धरे त्रिकम्' इत्यमरः । सक्थि ऊरुः ॥ ॥ १० ॥ क्रोडेनेति ॥ क्रोडः कुक्षिः ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥

नंदगोप इति ॥ कृष्णाश्रय एव बलं तेन आध्मात उत्सिक्तः । अचीकरत् कारितवान् ॥३॥ आजीव इति ॥ तेषामाजीवनहेतुः याश्च गावस्तस्य कारणं ता गावः पीड्यंताम् ॥ ४ ॥ अहमिति ॥ वाय्वंबुनोरुत्सर्गेण योजितम् अनुबंधम् । साहाय्यं सहकारित्वम् । तथा वायुनाशाय धारणाम् ॥ ५ ॥ ६ ॥ तत इति ॥ उदकधाराणां महानासारः अजस्रसंपातः तेन पूरणेन धरण्यादिकमेकमभवत् ॥ ७ ॥ विद्युदिति ॥ विद्युल्लतैव कशा तया घातं ततस्त्रस्तैरिव नादेन गर्जितेन आपूरितं दिशां चक्रं समूहो यैस्तैर्घनैर्घनं निबिडं यथा भवत्येवं धाराणां सारं श्रेष्ठवर्षमपात्यत । यद्वा–धारा अपात्यत आसारं समन्तात्प्रसरणं यथा भवत्येवमित्यर्थः । यथा लोके कशात्रस्तैर्दंडधैराक्रोशद्भिः कक्षादिसर्वस्वं निपात्यते तद्वदित्युत्प्रेक्षा ॥ ८ ॥ अंधकारीकृत इति ॥ आप्यमम्मयमिदं जगदभवत् ॥ ९ ॥ गाव इति ॥ धूताः कंपिताः । त्रिकः कटिः सक्थिरूरुश्शिरोधरा ग्रीवा । एतेन सन्ना आकुंचिता यासां ताः गावः प्राणान् जहुः मूर्च्छां प्राप्ता इत्यर्थः ॥ १० ॥ क्रोडेनेति ॥ क्रोडेन कुक्ष्या आक्रम्याच्छाद्य ॥ ११ ॥ १२ ॥ १३ ॥ एतदिति ॥ मखभंगाद्विरोधिना प्रतिकूलेन ॥१४॥

इममद्रिमहं धैर्यादुत्पाट्योरुशिखाघनम् ॥ धारयिष्यामि गोष्ठस्य पृथुच्छत्रमिवोपरि ॥ १५ ॥ श्रीपराशर उवाच ॥ इति कृत्वा मतिं कृष्णो गोवर्द्धनमहीधरम् ॥ उत्पाट्यैककरेणैव धारयामास लीलया ॥ १६ ॥ गोपांश्चाह हसञ्छौरिस्समुत्पाटितभूधरः ॥ विशध्वमत्र त्वरिताः कृतं वर्षनिवारणम् ॥ १७ ॥ सुनिवातेषु देशेषु यथा जोषमिहास्यताम् ॥ प्रविश्यतां न भेतव्यं गिरिपाताच्च निर्भयैः ॥ १८ ॥ इत्युक्तास्तेन ते गोपा विविशुर्गोधनैस्सह ॥ शकटारोपितैर्भांडैर्गोप्यश्चासारपीडिताः ॥ १९ ॥ कृष्णोपि तं दधारैव शैलमत्यंतनिश्चलम् ॥ व्रजौकवासिभिर्हर्षविस्मिताक्षैर्निरीक्षितः ॥ २० ॥ गोपगोपीजनैर्हृष्टैः प्रीतिविस्तारितेक्षणैः ॥ संस्तूयमानचरितः कृष्णश्शैलमधारयत् ॥ ॥ २१ ॥ सप्तरात्रं महामेघा ववर्षुर्नंदगोकुले ॥ इंद्रेण चोदिता विप्र गोपानां नाशकारिणा ॥ २२ ॥ ततो धृते महाशैले परित्राते च गोकुले॥ मिथ्याप्रतिज्ञो बलभिद्वारयामास तान्घनान् ॥ २३ ॥ व्यभ्रे नभसि देवेंद्रे वितथात्मवचस्यथ ॥ निष्क्रम्य गोकुलं हृष्टं स्वस्थानं पुनरागमत् ॥ २४ ॥ मुमोच कृष्णोपि तदा गोवर्द्धनमहाचलम् ॥ स्वस्थाने विस्मितमुखैर्दृष्टस्तैस्तु व्रजौकसैः ॥ २५ ॥ ॥ इति श्रीविष्णुमहापुराणे पंचमांश एकादशोऽध्यायः ॥ ११ ॥ ॥ श्रीपराशर उवाच ॥ धृते गोवर्द्धने शैले परित्राते च गोकुले ॥ रोचयामास कृष्णस्य दर्शनं पाकशासनः ॥ १ ॥

॥ १५ ॥ १६ ॥ १७ ॥ सुनिवातेष्विति ॥ निर्भयैः प्रविश्यतां गिरिपाताच्च भेतव्यमित्यन्वयः ॥१८॥१९॥ कृष्ण इति ॥ व्रजौकेत्यदंतत्वमार्षम् । व्रजैकवासिभिरिति वा पाठः ॥ २० ॥ २१ ॥ २२ ॥ तत इति ॥ मिथ्याप्रतिज्ञः व्यर्थप्रतिज्ञः ॥ २३ ॥ २४ ॥ मुमोचेति ॥ व्रजौकसैरित्यदंतत्वमार्षम् ॥ २५ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांश एकादशोऽध्यायः ॥ ११ ॥ ॥ १ ॥

इममिति ॥ धैर्यात्प्रागल्भ्यात् उरुशिलाघनं विशालाभिश्शिलाभिर्घनं सांद्रम् ॥ १५ ॥ १६ ॥ १७ ॥ सुनिवातेष्विति ॥ यथाजोषं यथासुखं निर्भयैर्वर्षादिभयशून्यैरिह गिरिमूलगर्ते प्रविश्यतां मद्धस्ताद्गिरिः पतिष्यतीति न भेतव्यं भयं न कार्यम् ॥ १८ ॥ १९ ॥ कृष्ण इति ॥ व्रज एवैकत्र वसंतीति व्रजैकवासिनस्तै । व्रजौकवासिभिरिति पाठे त्वोकश्शब्दस्य अदंतत्वमार्षम् ॥ २० ॥ २१ ॥ २२ ॥ ततमिरिति ॥ वलभिदिंद्रः ॥ २३ ॥ व्यभ्र इति ॥ वितथे आत्मवचसि प्रयत्नप्रतिज्ञे यस्य ॥ २४ ॥ मुमोचेति ॥ व्रजौकसैः व्रजौकोभिः ॥ २५ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां पंचमांश एकादशोऽध्यायः ॥ ११ ॥ धृत इति ॥ रोचयामास ऐच्छत् ॥ १ ॥

सोऽधिरुह्य महानागमैरावतममित्रजित् ॥ गोवर्द्धनगिरौ कृष्णं ददर्श त्रिदशेश्वरः ॥ २ ॥ चारयंतं महावीर्यं गास्तु गोपवपुर्धरम् ॥ कृत्स्नस्य जगतो गोपं वृतं गोपकुमारकैः ॥ ३ ॥ गरुडं च ददर्शोच्चैरंतर्द्धानगतं द्विज ॥ कृतच्छायं हरेर्मूर्ध्नि पक्षाभ्यां पक्षिपुंगवम् ॥ ४ ॥ अवरुह्य स नागेंद्रादेकांते मधुसूदनम् ॥ शक्रस्सस्मितमाहेदं प्रीतिविस्तारितेक्षणः ॥ ५ ॥ इंद्र उवाच ॥ कृष्णकृष्ण शृणुष्वेदं यदर्थं महमागतः ॥ त्वत्समीपं महाबाहो नैतच्चिंत्यं त्वयाऽन्यथा ॥ ६ ॥ भारावतारणार्थाय पृथिव्याः पृथिवीतले ॥ अवतीर्णोऽखिलाधार त्वमेव परमेश्वर ॥ ७ ॥ मखभंगविरोधेन मया गोकुलनाशकाः ॥ समादिष्टा महामेघास्तैश्चेदं कदनं कृतम् ॥८॥ त्रातास्ताश्च त्वया गावस्समुत्पाट्य महीधरम् ॥ तेनाऽहं तोषितो वीरकर्मणाऽत्यद्भुतेन ते ॥ ९ ॥ साधितं कृष्ण देवानामहं मन्ये प्रयोजनम् ॥ त्वयायमद्रिप्रवरः करेणैकेन यद्धृतः ॥ १० ॥ गोभिश्च चोदितः कृष्ण त्वत्सकाशमिहागतः ॥ त्वया त्राताभिरत्यर्थं युष्मत्सत्कारकारणात् ॥ ११ ॥ स त्वां कृष्णाभिषेक्ष्यामि गवां वाक्यप्रचोदितः ॥ उपेंद्रत्वे गवामिंद्रो गोविंदस्त्वं भविष्यसि ॥ १२ ॥ श्रीपराशर उवाच ॥ अथोपवाह्यादादाय घंटामैरावताद्गजात् ॥ अभिषेकं तया चक्रे पवित्रजलपूर्णया ॥ १३ ॥ क्रियमाणेऽभिषेके तु गावः कृष्णस्य तत्क्षणात् ॥ प्रस्नवोद्भूतदुग्धार्द्रां सद्यश्चक्रुर्वसुन्धराम् ॥ १४ ॥

॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ कृष्णकृष्णेति ॥ नैतदिति एतदागमनम् । अन्यथा विरोधधिया ॥ ६ ॥ ७ ॥ मखभंगेति ॥ कदनं संकुलवधः ॥८॥९॥१०॥ गोभिश्चेति ॥ गोभिर्गोलोकस्थाभिः इह त्राताभिर्गोभिरेककुलत्वात् त्राताभिरित्युक्तम् ॥ ११ ॥ स त्वामिति ॥ सोहं त्वामुपेंद्रत्वे उप उपरि सत्यलोकोपरिभागस्थगोलोकेश्वरत्वे अभिषेक्ष्यामि यथोक्तं हरिवंशे "ममोपरि यथेंद्रस्त्वं स्थापितो गोभिरीश्वरः । उपेंद्र इति लोके त्वां गास्यंति दिवि देवताः" इति । अतो गवामिंद्रो गोविंदो भविष्यसि ॥ १२ ॥ १३ ॥ १४ ॥

॥ २ ॥ चारयंतमिति ॥ गाश्चारयंतं गोपं गोप्तारम् ॥ ३ ॥ ४ ॥ ५ ॥ कृष्णकृष्णेति ॥ त्वत्समीपमहमागतो यदर्थं तवाभिषेकार्थं तदिदं शृणुष्व । अन्यथा विरोधबुद्ध्येति न चिंत्यम् ॥ ६ ॥ कार्यं विज्ञापयिष्यन् प्रथमं तावत् कृष्णैश्वर्यमभिनंदति भारावतरणार्थायेत्यादिचतुर्भिः ॥ ७ ॥ मयि गोकुलवधायोद्यतेपि तद्रक्षणात् अहं तोषितोस्मीत्याह—मखभंगेति ॥ कदनं विमर्दः ॥ ८ ॥ ॥ ९ ॥ १० ॥ प्रस्तुतं विज्ञापयति—गोभिश्चेति ॥ गोलोकस्थाभिः कामधेनुभिः त्वया तत्संततित्राणाभाताभिः ॥ ११ ॥ स इति ॥ उपेंद्रत्वे सत्यलोकोपरिस्थितगोलोकैश्वर्ये तथा चेंद्रवाक्यं हरिवंशे "ममोपरि यथेंद्रस्त्वं स्थापितो गोभिरीश्वरः । उपेंद्र इति लोके त्वां गास्यंति दिवि देवताः" इतिं । अतो गवामिंद्र इति निरुक्त्या गोविंदस्त्वं भविष्यसि ॥ १२ ॥ अथेति ॥ उपवाह्यात् राजवाहात् ॥ १३ ॥ क्रियमाण इति ॥ प्रस्न

अभिषिच्य गवां वाक्यादुपेंद्रं वै जनार्दनम् ॥ प्रीत्या सप्रश्रयं वाक्यं पुनराह शचीपतिः ॥ १५ ॥ गवामेतत्कृतं वाक्यं तथान्य दपि मे शृणु ॥ यद्ब्रवीमि महाभाग भारावतरणेच्छया ॥ १६ ॥ ममांशः पुरुषव्याघ्र पृथिव्यां पृथिवीधर ॥ अवतीर्णोऽर्जुनोनाम संरक्ष्यो भवता सदा ॥१७॥ भारावतरणे साह्यं स ते वीरः करिष्यति ॥ संरक्षणीयो भवता यथात्मा मधुसूदन ॥ १८ ॥ श्रीभगवानुवाच ॥ जानामि भारते वंशे जातं पार्थं तवांशतः ॥ तमहं पालयिष्यामि यावत्स्थास्यामि भूतले ॥१९॥ यावन्महीतले शक्र स्थास्याम्यहमरिंदम ॥ न तावदर्जुनं कश्चिद्देवेंद्र युधि जेष्यति ॥ २० ॥ कंसो नाम महाबाहुर्दैत्योऽरिष्टस्तथाऽसुरः ॥ केशी कुवलयापीडो नरकाद्यास्तथा परे ॥ ॥ २१ ॥ हतेषु तेषु देवेंद्र भविष्यति महाहवः ॥ तत्र विद्धि सहस्राक्ष भारावतरणं कृतम् ॥ २२ ॥ स त्वं गच्छ न संतापं पुत्रार्थे कर्तुमर्हसि॥ नार्जुनस्य रिपुः कश्चिन्ममाग्रे प्रभविष्यति ॥ २३ ॥ अर्जुनार्थे त्वहं सर्वान्युधिष्ठिरपुरोगमान् ॥ निवृत्ते भारते युद्धे कुंत्यै दास्याम्यविक्षतान् ॥ २४ ॥ श्रीपराशर उवाच ॥ इत्युक्तः संपरिष्वज्य देवराजो जनार्दनम् ॥ आरुह्यैरावतं नागं पुनरेव दिवं ययौ ॥ २५ ॥ कृष्णो हि सहि तो गोभिर्गोपालैश्च पुनर्व्रजम् ॥ आजगामाऽथ गोपीनां दृष्टिपूतेन वर्त्मना ॥ २६ ॥ ॥ इति श्रीविष्णुमहापुराणे पंचमांशे द्वादशोऽध्यायः ॥ १२ ॥ ॥ श्रीपराशर उवाच ॥ गते शक्रे तु गोपालाः कृष्णमक्लिष्टकारिणम् ॥ ऊचुः प्रीत्या धृतं दृष्ट्वा तेन गोवर्द्धनाचलम् ॥ ॥ १ ॥ वयमस्मान्महाभाग भगवन्महतो भयात् ॥ गावश्च भवता त्राता गिरिधारणकर्मणा ॥ २ ॥ बालक्रीडेयमतुला गोपालत्वं जुगुप्सि तम् ॥ दिव्यं च भवतः कर्म किमेतत्तात कथ्यताम् ॥ ३ ॥

॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशे द्वादशोऽध्यायः ॥ १२ ॥ ॥ १ ॥ २ ॥ बालक्रीडेति ॥ बालक्रीडा पूतनावधादि कर्म अद्रिधारणादि ॥ ३ ॥

वस्तनोद्गमः तेनोद्भूतं यद्दुग्धं तेनार्द्रम् ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ भारेति ॥ साह्यं साहाय्यं स च यथात्मा अहं तथा संरक्षणीयः ॥ १८ ॥ जानामीति ॥ यावत्स्थास्यामि भूतल इत्युक्त्या भाविनमा भीरेभ्यः पराभवं सूचयति ॥ १९ ॥ २० ॥ २१ ॥ हतेष्विति ॥ महाहवो भारतयुद्धम् ॥ २२ ॥ २३ ॥ अर्जुनार्थ इति ॥ अविक्षतान् शस्त्रक्षतशून्यान् ॥ २४ ॥ २५ ॥ कृष्ण इति ॥ कृष्णदर्शनौत्सुक्येन गोपी भिस्तन्मार्गेक्षणाद्गोपीनां दृष्टिपूतेन वर्त्मनेत्युक्तम् ॥ २६ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां पंचमांशे द्वादशोऽध्यायः ॥ १२ ॥ ॥ "गोपीभिस्सह कृष्णस्य रासकेलिर्महात्मनः । अंतर्धानं पुनस्तस्य दर्शनं चात्र वर्ण्यते" ॥ १ ॥ २ ॥ ३ ॥

कालीयो दमितस्तोये धेनुको विनिपातितः ॥ धृतो गोवर्द्धनश्चायं शंकितानि मनांसि नः ॥ ४ ॥ सत्यं सत्यं हरेः पादौ शपामोऽमित विक्रम ॥ यथावद्वीर्यमालोक्य न त्वां मन्यामहे नरम् ॥ ५ ॥ प्रीतिस्सस्त्रीकुमारस्य व्रजस्य त्वयि केशव ॥ कर्म चेदमशक्यं यत्समस्तैस्त्रिद शैरपि ॥ ६ ॥ बालत्वं चातिवीर्यत्वं जन्म चास्मासु शोभनम् ॥ चिंत्यमानममेयात्मञ्छंकां कृष्ण प्रयच्छति ॥ ७ ॥ देवो वा दानवो वा त्वं यक्षो गन्धर्व एव वा ॥ किमस्माकं विचारेण बांधवोऽसि नमोस्तु ते ॥ ८ ॥ श्रीपराशर उवाच ॥ क्षणं भूत्वा त्वसौ तूष्णीं किंचित्प्रण यकोपवान् ॥ इत्येवमुक्तस्तैर्गोपैः कृष्णोप्याह महामतिः ॥ ९ ॥ श्रीभगवानुवाच ॥ मत्संबंधेन वो गोपा यदि लज्जा न जायते ॥ श्लाघ्यो वाहं ततः किं वो विचारेण प्रयोजनम् ॥ १० ॥ यदि वोऽस्ति मयि प्रीतिः श्लाघ्योऽहं भवतां यदि ॥ तदात्मबंधुसदृशी बुद्धिर्वः क्रियतां मयि ॥ ११ ॥ नाहं देवो न गन्धर्वो न यक्षो न च दानवः ॥ अहं वो बांधवो जातो नैतच्चिंत्यमितोऽन्यथा ॥ १२ ॥ श्रीपराशर उवाच ॥ इति श्रुत्वा हरेर्वाक्यं बद्धमौनास्ततो वनम् ॥ ययुर्गोपा महाभाग तस्मिन्प्रणयकोपिनि ॥ १३ ॥ कृष्णस्तु विमलं व्योम शरच्चंद्रस्य चंद्रि काम् ॥ तदा कुमुदिनीं फुल्लामामोदितदिगन्तराम् ॥ १४ ॥ वनराजीं तथा कूजद्भृंगमालामनोहराम् ॥ विलोक्य सह गोपीभिर्मनश्चक्रे रतिं प्रति ॥ १५ ॥ विना रामेण मधुरमतीव वनिताप्रियम् ॥ जगौ कलपदं शौरिस्तारमंद्रकृतक्रमम् ॥ १६ ॥ रम्यं गीतध्वनिं श्रुत्वा संत्यज्यावसथांस्तदा ॥ आजग्मुस्त्वरिता गोप्यो यत्रास्ते मधुसूदनः ॥ १७ ॥ शनैश्शनैर्जगौ गोपी काचित्तस्य लयानुगम् ॥ दत्तावधाना काचिच्च तमेव मनसास्मरत् ॥ १८ ॥

॥ ४ ॥ सत्यंसत्यमिति ॥ पादौ पादाभ्याम् ॥ ५ ॥ प्रीतिरिति ॥ एकस्मिन् सर्वेषां प्रीतिश्चामानुषत्वशंकाहेतुः ॥ ६ ॥ बालत्वमिति ॥ अतिवीर्यत्वमिति बालत्वविशेषणम् । अशोभनमिति जन्मविशेषणम् ॥ ७ ॥ देवो वेति ॥ सर्वथा देवादिष्वन्यतम एवास्माकं बांधवोसि न गोपालमात्रं किं विचारेण नात्र संशयः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ नाहमिति ॥ अहं वो बांधवः केवलं गोपः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ विनेति ॥ कलपदम् अव्यक्तमधुराक्षरं गेयं तारमंद्रकृतक्रमं तारमंद्रौ उच्चोपांशुध्वनिधर्मौ । नानामात्रकृतक्रममिति पाठे द्रुतमध्यविलंबिताख्यत्रिमात्रलयकृतस्वरक्रमम् । नानातंत्रीकृतक्रममिति पाठे वीणांगध्वनिवन्नियतनिबद्धस्वरक्रमम् ॥ १६ ॥ १७ ॥ शनैश्शनैरिति ॥ तस्य लयानुगं द्रुतमध्यविलंबिताख्यत्रिलयात्मकतालविश्रांतिकालानुगुणम् । "तालांतराल

॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

काचित्कृष्णेतिकृष्णेति प्रोक्ता लज्जामुपाययौ ॥ ययौ च काचित्प्रेमांधा तत्पार्श्वमविलंबितम् ॥ १९ ॥ काचिच्चावसथस्यांते स्थित्वा दृष्ट्वा बहिर्गुरुम् ॥ तन्मयत्वेन गोविंदं दध्यौ मीलितलोचना ॥ २० ॥ तच्चित्तविमलाह्लादक्षीणपुण्यचया तथा ॥ तदप्राप्तिमहादुःखविलीनाशेषपातका ॥ २१ ॥ चिंतयंती जगत्सूतिं परब्रह्मस्वरूपिणम् ॥ निरुच्छ्वासतया मुक्तिं गतान्या गोपकन्यका ॥ ॥ २२ ॥ गोपीपरिवृतो रात्रिं शरच्चंद्रमनोरमाम् ॥ मानयामास गोविंदो रासारंभरसोत्सुकः ॥ २३ ॥ गोप्यश्च वृंदशः कृष्णचेष्टास्वायत्तमूर्त्तयः ॥ अन्यदेशं गते कृष्णे चेरुर्वृंदावनांतरम् ॥ २४ ॥ कृष्णे निबद्धहृदया इदमूचुः परस्परम् ॥ २५ ॥ कृष्णोऽहमेष ललितं व्रजाम्यालोक्यतां गतिः ॥ अन्या ब्रवीति कृष्णस्य मम गीतिर्निशम्यताम् ॥ २६ ॥ दुष्टकालिय तिष्ठात्र कृष्णोहमिति चापरा ॥ बाहुमास्फोट्य कृष्णस्य लीलया सर्वमाददे ॥ २७ ॥ अन्या ब्रवीति भो गोपा निश्शंकैः स्थीयतामिति ॥ अलं वृष्टिभयेनात्र धृतो गोवर्द्धनो मया ॥ ॥ २८ ॥ धेनुकोऽयं मयाक्षिप्तो विचरंतु यथेच्छया ॥ गावो ब्रवीति चैवान्या कृष्णलीलानुसारिणी ॥ २९ ॥ एवं नानाप्रकारासु कृष्णचेष्टासु तास्तदा ॥ गोप्यो व्यग्रास्समं चेरू रम्यं वृन्दावनांतरम् ॥ ३० ॥ विलोक्यैका भुवं प्राह गोपी गोपवरांगना ॥ पुलकांचितसर्वांगी विकासिनयनोत्पला ॥ ३१ ॥ ध्वजवज्रांकुशाब्जांकरेखावंत्यालि पश्यत ॥ पदान्येतानि कृष्णस्य लीलाललितगामिनः ॥ ३२ ॥

वर्त्ती यः कालोऽसौ लयनाल्लयः" इति वचनात् । दत्तावधाना कृतावधाना ॥ १८ ॥ १९ ॥ काचिदिति ॥ काचिदावसथस्येत्यनेन गोप्याः कामद्वारा भगवति लय उच्यते । तन्मयत्वेन आत्मनस्तत्तादात्म्येन ॥ २० ॥ तच्चित्तेति ॥ तच्चित्तेन तद्गतेन चित्तेन जातविमलाह्लादेन क्षीणपुण्यचया वैमल्यं दुःखासंभेदः । अनेन पूर्वसंचितप्रारब्धनिश्शेषकर्मक्षयो भोगादुक्तः ॥ २१ ॥ चिंतयंतीति ॥ परब्रह्मस्वरूपिणि स्वरूपि परब्रह्मणि । परब्रह्मस्वरूपिणमिति पाठे परब्रह्मभूतमिति । निरुच्छ्वासतया प्रियानुभवरूपध्यानादंतर्मग्ने मनसि तदविना भूतप्राणादेरप्यंतर्गतत्वान्निरुच्छ्वासत्वं दशम्यावस्थया प्रियमिति कामशास्त्रे वल्लभसायुज्यमुक्तम् । द्वेषाच्चैद्यादेरिव कामाद्गोपीनां सायुज्यमुपपन्नम् ॥ २२ ॥ गोपीपरिवृत इति ॥ रासारंभेति रासो नाम अन्योन्यव्यतिषक्तहस्तं गायतां स्त्रीपुंसां मंडलीभूय भ्रमणनृत्तं रासः । उक्तं च— "अनेकनर्त्तकीयोज्यं चित्रताललयान्वितम् । आचतुष्षष्टियुगलाद्रासकं मसृणोद्धतम्" इति ॥ २३ ॥ गोप्यश्चेति ॥ अन्यदेशं गत इति विप्रलंभशृंगारोक्तिः संभोगपोषार्द्धा कृष्णचेष्टास्वायत्तमूर्त्तय इति लीलोक्तिः । यदाह भरतः—"प्रियानुकरणं लीला मधुरांगविचेष्टितैः" इति ॥ २४ ॥ २५ ॥ कृष्णोहमिति ॥ ललितं व्रजामीति । "सुकुमारांगविन्यासो मसृणो ललितं भवेत्" इति ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ एवमिति॥व्यग्रा उत्सुकाः ॥३०॥३१॥ ध्वजवज्रेति॥

॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ध्वजवज्रेति ॥ ध्वजवज्रांकुशाब्जांकरेखावंति ध्वजादिलक्षणा या रेखास्तद्युक्तानि कृष्णस्य पादानि । अलि हे

कापि तेन समायाता कृतपुण्या मदालसा ॥ पदानि तस्याश्चैतानि घनान्यल्पतनूनि च ॥३३॥ पुष्पापचयमत्रोच्चैश्चक्रे दामोदरे ध्रुवम् ॥ येनाग्राक्रांतमात्राणि पदान्यत्र महात्मनः ॥ ३४ ॥ अत्रोपविश्य वै तेन काचित्पुष्पैरलंकृता ॥ अन्यजन्मनि सर्वात्मा विष्णुरभ्यर्चितस्तया ॥ ३५ ॥ पुष्पबंधनसंमानकृतमानामपास्य ताम् ॥ नंदगोपसुतो यातो मार्गेणानेन पश्यत ॥ ३६ ॥ अनुयातैनमत्रान्या नितंबभरमंथरा ॥ या गंतव्ये द्रुतं याति निम्नपादाग्रसंस्थितिः ॥ ३७ ॥ हस्तन्यस्ताग्रहस्तेयं तेन याति तथा सखी ॥ अनायत्तपदन्यासा लक्ष्यते पदपद्धतिः ॥ ३८ ॥ हस्तसंस्पर्शमात्रेण धूर्तेनैषा विमानिता ॥ नैराश्यान्मंदगामिन्या निवृत्तं लक्ष्यते पदम् ॥ ३९ ॥ नूनमुक्ता त्वरामीति पुनरेष्यामितेंतिकम् ॥ तेन कृष्णेन येनैषा त्वरिता पदपद्धतिः ॥ ४० ॥ प्रविष्टो गहनं कृष्णः पदमत्र न लक्ष्यते ॥ निवर्तध्वं शशांकस्य नैतद्दीधितिगोचरे ॥ ४१ ॥ निवृत्तास्तास्तदा गोप्यो निराशाः कृष्णदर्शने ॥ यमुनातीरमासाद्य जगुस्तच्चरितं तथा ॥ ४२ ॥

ध्वजवज्रांकुशाब्जरूपरेखावंति । आलि हे सख्यः । आर्षो वचनव्यत्ययः ॥ ३२ ॥ कापीति ॥ घनानि मदमंथरत्वादल्पांतराणि अल्पतनूनि स्त्रीत्वात् ह्रस्वान्यपृथूनि च ॥३३॥ पुष्पापचयमिति ॥ अग्राक्रांतमात्राणि प्रपदमात्राक्रांतानि ॥ ३४ ॥ अत्रेति॥ मृदितस्थलनिपतितपुष्पादिलिंगदर्शनेन अनुमानम् ॥३५॥ पुष्पबंधनेति॥ मानो गर्वः ॥३६॥ अनुयातेति ॥ पुरतो याति गच्छति कृष्णे तं प्राप्तुं द्रुतं गंतव्ये सति निम्नपादाग्रसंस्थितिर्याऽनुयाता इयमन्येत्यन्वयः ॥ ३७ ॥ ३८ ॥ हस्तसंस्पर्शेति ॥ एषा अन्या हस्तसंस्पर्शमात्रेण सत्कारांतररहितेन विमानिता । अत्र हेतुः नैराश्यादित्यादि ॥ ३९ ॥ नूनमिति ॥ रवोचितं स्थानमन्वेष्टुं त्वरे अन्विष्य पुनस्तेंतिकमेष्यामीति नूनं कृष्णेन काचिदुक्ता । अत्र लिगं येनेत्यादि ॥ ४० ॥ ४१ ॥ निवृत्ता इति ॥ जगुः तद्गानं हि तदपरोक्षदं सर्वेषाम् ॥ ४२ ॥

सख्यः । बहुवचनार्थे चैकवचनं लीलयालंकृतं यथाभवत्येवम् ॥ ३२ ॥ कापीति ॥ घनगीतस्य घनानि मंथरगतित्वादल्पांतराणि अल्पतनूनि अदीर्घाण्यस्थूलानि च एतानि स्त्रीपदत्वे लिंगानि ॥३३॥ पुष्पापचयमिति ॥ उच्चैः उर्ध्वीभूय स्थित्वा पुष्पापचयं चक्रे । तत्र लिंगं येनेति । अग्रेण प्रपदेनैव आक्रांतमात्रम् ईषद्भूस्पर्शो येषां तानि पदानि ॥३४॥ कृष्णजानुमध्योपवेशचिह्नं दृष्ट्वाहुः—अत्रोपविश्येति ॥ ३५ ॥ पुष्पबंधनेति ॥ पुष्पबंधनरूपेण संमानेन कृतो मानो गर्वो यया ताम् ॥ ३६ ॥ तस्य पृष्ठतोन्यस्याः पदानि दृष्ट्वा कल्पयंति—अनुयातेति ॥ नितंबभरेण मंथरापि या कृष्णेन सह गंतव्ये गमने कर्तव्ये सति द्रुतं याति तत्र लिंगं निम्नैः पादाग्रैस्संस्थितिर्यस्यास्सा ॥ ३७ ॥ हस्तन्यस्तेति ॥ हस्तन्यस्तोग्रहस्तो हस्ताग्रं यस्यास्सेयं तेन सह याति तत्र लिंगमनायत्तः । अस्वाधीनः पदन्यासो यस्यां तथाभूता हि पदपंक्तिर्लक्ष्यते ॥ ३८ ॥ हस्तसंस्पर्शमात्रेणेति ॥ हस्तग्रहणमात्रं कृत्वा समाधानशतेनैषा विमानिता अवज्ञया त्यक्ता । तत्र लिंगं नैराश्यान्मंदगामिन्या निराशतया मंदं गच्छंत्या निवृत्तिं प्रतिलोमं पदं लक्ष्यते ॥ ३९ ॥ नूनमुक्तेति ॥ त्वमत्रैव तिष्ठ तत्र कश्चिद्राक्षसोस्ति तं हंतुमर्हं त्वरामि शीघ्रं यास्यामि पुनश्च तवांतिकमागच्छामीति । नूनमियं तेनोक्ता येनैषा कृष्णस्य पदानां पद्धतिः पंक्तिः त्वरिता शीघ्रनिम्नागा लक्ष्यते ॥४०॥ अन्वेषणात्तासां निवृत्तिमाह—प्रविष्ट इत्यादि[illegible]भ्यां—प्रविष्ट इति ॥ गहनं निबिडं दुर्गमं वनं प्रविष्टः अत एव शशांकरश्मिप्रवेशाभावात्तस्य पदमत्र न लक्ष्यते ॥४१॥ निवृत्ता इति ॥ तदा निवृत्तास्सत्यो यमुनातीरं प्राक्तनं रासस्थानं शीघ्रमागत्य कृष्णोपनये तच्चरितं जगुः ॥४२॥

ततो ददृशुरायांतं विकासिमुखपंकजम्॥गोप्यस्त्रैलोक्यगोप्तारं कृष्णमक्लिष्टचेष्टितम् ॥४३॥ काचिदालोक्य गोविंदमायांतमतिहर्षिता॥ कृष्णकृष्णेति कृष्णेति प्राह नान्यदुदीरयत् ॥ ४४ ॥ काचिद्भ्रूभंगुरं कृत्वा ललाटफलकं हरिम् ॥ विलोक्य नेत्रभृंगाभ्यां पपौ तन्मुखपंकजम् ॥४५॥ काचिदालोक्य गोविंदं निमीलितविलोचना ॥ तस्यैव रूपं ध्यायंती योगारूढेव सा बभौ ॥ ४६ ॥ ततः कांचित्प्रियालापैः कांचिद्भ्रूभंगवीक्षितैः ॥ निन्येऽनुनयमन्यां च करस्पर्शेन माधवः ॥ ४७ ॥ ताभिः प्रसन्नचित्ताभिर्गोपीभिस्सह सादरम् ॥ ररास रासगोष्ठीभिरुदारचरितो हरिः ॥ ४८ ॥ रासमंडलबंधोपि कृष्णपार्श्वमनुज्झता ॥ गोपीजनेन नैवाभूदेकस्थानस्थिरात्मना ॥ ४९ ॥ हस्तेन गृह्य चैकैकां गोपीनां रासमंडले ॥ चकार तत्करस्पर्शनिमीलितदृशं हरिः ॥ ५० ॥ ततः प्रववृते रासश्चलद्वलयनिस्वनः ॥ अनुयातशरत्काव्यगेयगीतिरनुक्रमात् ॥ ५१ ॥

॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ रासेति ॥ एकस्थानस्थिरात्मना कृष्णपार्श्वे एवैकस्मिन् स्थाने स्थिरचित्तेन अत एव कृष्णपार्श्वमनुज्झता गोपीजनेन रासार्थमंडलीभावेन बंधोपि नाभूत् । रासमंडलबद्धोपि कृष्ण इति पाठे स्वयमभितो मंडलीभूयस्थितेन गोपीजनेन कृष्णो नैकस्थानोऽभूत् । गोपीमंडलांतः शीघ्रसंचारात्तत्पार्श्वस्थ इवाभवदित्यर्थः ॥ ४९ ॥ हस्तेनेति ॥ हरिरेकां हस्तेन गृह्णाति सा तस्य करस्पर्शसुखनिमीलिताक्षी भवति तामन्यस्याः स्वकरस्पर्शपरवशायाः हस्तेन हस्तं योजयति एवं चापरस्याः तादृश्या हस्तेनेति । हरिहस्तस्पर्शसुखवशात्कृष्णेन गृहीतहस्ताहऽमेवेति सर्वासां बुद्धिमुत्पादयन्नेकमूर्तिरेव हरिरगृहीतहस्त एव रासमंडले चकार । हरिरेवमेताभिः रासमंडलं बबंधेति रासवित्संप्रदायः । अन्ये तु द्वयोर्द्वयोर्मध्ये हरिरेकैकमूर्त्तिरातस्थावित्याहुः॥५०॥तत इति ॥ अनुयातेति ।

सप्रेमप्रमदागानमाकर्ण्यागते कृष्णे तद्दर्शनोत्सवमाह—तत इत्यादिचतुर्भिः ॥ ४३ ॥ ४४ ॥ काचिद्भ्रूभंगुरमिति ॥ प्रणयकोपेन वक्रीकृताभ्यां भ्रूभ्यां भंगुरम् आकुंचितं ललाटफलकं कृत्वा हरिं विलोक्य नेत्ररूपाभ्यां भृंगाभ्यां तस्य मुखपंकजं पपौ ॥ ४५ ॥ काचिदिति ॥ काचिद्गोविंदमालोक्य विवृतेन नेत्रद्वारेण तं प्रविश्य विवृतेन नेत्रद्वारेणैव पुनर्यास्यतीति निमीलितलोचना सती ध्यायंती बभौ ॥ ४६ ॥ तस्यानुनयपूर्वकं ताभी रासक्रीडामाह--ततः कांचिदित्यादिना क्षपिताहित इत्यंतेन—तत इति ॥ अनुनयं निन्ये सांत्वयामास ॥ ४७ ॥ ४८ ॥ रासमंडलबंधोपीति ॥ कृष्णस्य पार्श्वमनुज्झता अत्यजता । एकस्मिन् स्थाने कृष्णसमीप एव अहमहमिकया स्थिरात्मना निश्चलचित्तेन गोपीजनेन रासोचितमंडलबंधोपि नैवाभूत् ॥ ४९ ॥ कुतः पुनः क्रीडा । तथा च हरिर्यथा रासमंडलं कृतवान् तदाह—हस्तेन गृह्येति ॥ हरिरेकां गोपीं हस्तेन गृहीत्वा एकत्र स्थापितवान् सापि तत्करस्पर्शसुखेन निमीलितदृगासीत्तां चान्यस्यास्स्वकरस्पर्शसुखपरवशाया हस्तं ग्राहयामास । तामप्येवमन्यस्या हस्तमित्येकैकां हस्तेन गृहीत्वा रासमंडलं चकार ताश्च सर्वा हरिहस्तस्पर्शसुखपरवशाः प्रत्येकं हरिणैव गृहीतहस्तमात्मानं मेनिरे ॥ ५० ॥ तत इति ॥ चलतां वलयानां निस्वनो यस्मिन्सः अनुयातशरत्काव्यगेयगीतिरिति शरद्वर्णनादिरूपं यत्काव्येषु गेयं तस्य या गीतिस्सा अनुयाता अनुस्यूता यस्मिन् सः

कृष्णश्शरच्चंद्रमसं कौमुदीं कुमुदाकरम् ॥ जगौ गोपीजनस्त्वेकं कृष्णनाम पुनःपुनः ॥ ५२ ॥ परिवृत्तिश्रमेणैका चलद्वलयलापिनीम् ॥ ददौ बाहुलतां स्कंधे गोपी मधुनिघातिनः ॥ ५३ ॥ काचित्प्रविलसद्बाहुं परिरभ्य चुचुंब तम् ॥ गोपीगीतस्तुतिव्याजान्निपुणा मधुसूदनम् ॥५४॥ गोपीकपोलसंश्लेषमभिगम्य हरेर्भुजौ॥ पुलकोद्गमसस्याय स्वेदांबुघनतां गतौ ॥५५॥ रासगेयं जगौ कृष्णो यावत्तारतरध्वनिः॥ साधु कृष्णेति कृष्णेति तावत्ता द्विगुणं जगुः ॥ ५६ ॥ गतेनुगमनं चक्रुर्वलनं संमुखं ययुः ॥ प्रतिलोमानुलोमाभ्यां भेजुर्गोपांगना हरिम् ॥ ॥५७॥ स तथा सह गोपीभी रराम मधुसूदनः ॥ यथाब्दकोटिप्रतिमः क्षणस्तेन विनाऽभवत् ॥ ५८ ॥ ता वार्यमाणाः पतिभिः पितृभिर्भ्रातृभिस्तथा ॥ कृष्णं गोपांगना रात्रौ रमयंति रतिप्रियाः ॥ ५९ ॥ सोऽपि कैशोरकवयो मानयन्मधुसूदनः ॥ रेमे ताभिरमेयात्मा क्षपासु क्षपिताहितः ॥६०॥ तद्भर्तृषु तथा तासु सर्वभूतेषु चेश्वरः ॥ आत्मस्वरूपरूपोऽसौ व्यापी वायुरिव स्थितः ॥६१॥ यथा समस्तभूतेषु नभोऽग्निः पृथिवी जलम् ॥ वायुश्चात्मा तथैवाऽसौ व्याप्य सर्वमवस्थितः ॥ ६२॥ इति श्रीविष्णुमहापुराणे पंचमांशे त्रयोदशोऽध्यायः ॥ १३ ॥

शरद्वर्णनादिरूपं कविकृतं गेयं यत् तस्य या गीतिस्सानुयाता येन रासेन ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ गोपीति ॥ गोपीकपोलपुलकोद्गमसस्याय स्वेदांबुमद्धरिभुजद्वयं घनतां ययौ अनेनेतरेतरानुराग उक्तः ॥ ५५ ॥ ५६ ॥ गत इति ॥ वलने आवृत्तौ प्रतिलोमानुलोमाभ्यां गतिप्रवृत्तिनिवृत्तिभ्याम् ॥ ५७ ॥५८॥५९॥ स इति ॥ कैशोरकं कौमारकम् । मानयन् संभावयन् ॥ ६० ॥ अथ कृष्णस्य सर्वव्यापनादीश्वरत्वेनापहतपाप्मत्वात् गोपीसंभोगेपि जीववन्न लेप इत्याह—तद्भर्तृष्वितिद्वयेन आत्मस्वरूपरूपः ॥ जीवस्वरूपशरीरः। अत्र पूर्वश्लोकेनास्य सर्वचेतनशरीरत्वमुक्तम् उत्तरेण सर्वाचेतनशरीरत्वम् ॥ ६१ ॥ ६२ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशे त्रयोदशोऽध्यायः ॥ १३ ॥ ॥

रासः प्रवृत्तः प्रववृते ॥ ५१ ॥ तदेवाह—कृष्णश्शरच्चंद्रमसमिति ॥ ५२ ॥ परिवृत्तीति ॥ चलद्भिर्वलयैरालापिनीं मुखराम् ॥ ५३ ॥ ५४ ॥ गोपीति ॥ पुलकोद्गम एव सस्यं तदर्थं स्वेदरूपस्यांबुनो घनतां मेघभावं गतौ परिरभ्य गोप्या हरिभुजचुंबने क्रियमाणे हरेः भुजयोः स्वेदः तस्याः कपोले रोमोद्गममवर्धयदित्यन्योन्यानुरागोक्तिः ॥५५॥ ५६ ॥ गत इति ॥ वलने आवृत्तौ प्रतिलोमानुलोमाभ्यामिति ॥ गमने अनुलोमगत्या वलने प्रतिलोमगत्येत्यर्थः ॥ ५७ ॥ ५८ ॥ ५९ ॥ स इति ॥ कैशोरकं कौमारं वयो मानयन् तदवस्थोचितं चापलमनुकुर्वन्नेव ॥ ६० ॥ ननु धर्मस्थापनायावतीर्णो भगवान् कथं गोपांगनाः पापे प्रवर्तयन् स्वयमपि पापं चकारेत्यत्राह— तद्भर्तृष्विति ॥ न तावद्गोपीनां पापमस्ति स्वभक्ताहितक्षपणस्य तस्य तद्दोषक्षपणेतिसमर्थत्वात् । न च तस्य दोषः तद्भर्त्रादिसर्वव्यापिपरमात्मात्मरूपत्वात् ॥ ६१ ॥ सर्वव्यापित्वमेव दृष्टान्तेनाह—यथेति ॥ ६२ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां पंचमांशे त्रयोदशोध्यायः ॥ १३ ॥ ॥

॥ श्रीपराशर उवाच ॥ प्रदोषाग्रे कदाचित्तु रासासक्ते जनार्दने॥ त्रासयन्समदो गोष्ठमरिष्टस्समुपागमत् ॥१॥ स तोयतोयदच्छायस्तीक्ष्णशृंगोर्क लोचनः ॥ खुराग्रपातैरत्यर्थं दारयन्धरणीतलम् ॥२॥ लेलिहानस्सनिष्पेषं जिह्वयोष्ठौ पुनःपुनः ॥ संरंभाविद्धलांगूलः कठिनस्कंधबंधनः॥३॥ उदग्रककुदाभोगप्रमाणो दुरतिक्रमः ॥ विण्मूत्रलिप्तपृष्ठांगो गवामुद्वेगकारकः ॥ ४ ॥ प्रलंबकंठोऽतिमुखस्तरुखातांकिताननः ॥ पातयन्स गवां गर्भान्दैत्यो वृषभरूपधृक् ॥५॥ सूदयंस्तापसानुग्रो वनानटति यस्सदा ॥६॥ ततस्तमतिघोराक्षमवेक्ष्यातिभयातुराः॥ गोपा गोपस्त्रियश्चैव कृष्णकृष्णेति चुकुशुः ॥ ७ ॥ सिंहनादं ततश्चक्रे तलशब्दं च केशवः ॥ तच्छब्दश्रवणाच्चाऽसौ दामोदरमुपाययौ ॥ ८ ॥ अग्रन्यस्तविषाणाग्रः कृष्णकुक्षिकृतेक्षणः ॥ अभ्यधावत दुष्टात्मा कृष्णं वृषभदानवः ॥ ९ ॥ आयांतं दैत्यवृषभं दृष्ट्वा कृष्णो महाबलः ॥ न चचाल तदा स्थानादवज्ञास्मितलीलया ॥ १० ॥ आसन्नं चैव जग्राह ग्राहवन्मधुसूदनः ॥ जघान जानुना कुक्षौ विषाणग्रहणाचलम् ॥ ११ ॥ तस्य दर्पबलं भंक्त्वा गृहीतस्य विषाणयोः ॥ अपीडयदरिष्टस्य कंठं क्लिन्नमिवांबरम् ॥ १२ ॥ उत्पाट्य शृंगमेकं तु तेनैवाताडयत्ततः ॥ ममार स महादैत्यो मुखाच्छोणितमुद्वमन् ॥ १३ ॥ तुष्टुवुर्निहते तस्मिन्दैत्ये गोपा जनार्दनम् ॥ जंभे हते सहस्राक्षं पुरा देवगणा यथा ॥ १४ ॥ इति श्रीविष्णुमहापुराणे पंचमांशे चतुर्दशोध्यायः ॥ १४ ॥ ॥

॥ १ ॥ २ ॥ लेलिहान इति ॥ सनिष्पेषं सशब्दम् । आविद्धं वक्रितम् ॥ ३ ॥ उदग्र अतिशयितः ककुदाभोगः प्रमाणं च यस्य । उदग्रककुदाभोगः प्रमाणादिति च पाठः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ आसन्नमिति ॥ ग्राहवत् ग्राह इव ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशे चतुर्दशोध्यायः ॥ १४ ॥ ॥

प्रदोषाग्र इति ॥ प्रदोषाग्रे संध्यावसाने । अरिष्टो नाम वृषभाकृतिर्दैत्यस्समदो गोष्ठं त्रासयन्समुपागतः ॥ १ ॥ सतोयेति ॥ अर्काविव लोचने यस्य सः ॥ २ ॥ लेलिहान इति ॥ सनिष्पेषं ससंघर्षं यथा भवत्येवमोष्ठौ जिह्वया लेलिहानस्संरंभादाविद्धमुन्नमितं लांगूलं येन सः । कठिनं स्कन्धबंधनं यस्य सः ॥ ३ ॥ उदग्रेति ॥ उदग्रस्य उच्छ्रितस्य ककुदो गलपृष्ठस्याभोगो विस्तारो यस्य सः । उन्नतरात् प्रमाणादन्यैर्दुरतिक्रमः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ अग्रेति ॥ अग्रे पुरतो न्यस्ते विषाणाग्रे येन कृष्णस्य कुक्षौ कृतमीक्षणं येन ॥ ९ ॥ आयांतमिति ॥ अवज्ञया स्मितं सैव लीला तया ॥ १० ॥ आसन्नमिति ॥ विषाणग्रहणादचलं संतं जघान ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां पंचमांशे चतुर्दशोध्यायः ॥ १४ ॥ ॥

॥ श्रीपराशर उवाच ॥ ककुद्मति हतेऽरिष्टे धेनुके विनिपातिते ॥ प्रलंबे निधनं नीते धृते गोवर्द्धनाचले ॥ १ ॥ दमिते कालिये नागे भग्ने तुंगद्रुमद्वये ॥ हतायां पूतनायां च शकटे परिवर्त्तिते ॥ २ ॥ कंसाय नारदः प्राह यथावृत्तमनुक्रमात् ॥ यशोदादेवकीगर्भपरिवृत्ताद्यशेषतः ॥ ॥ ३ ॥ श्रुत्वा तत्सकलं कंसो नारदाद्देवदर्शनात् ॥ वसुदेवं प्रति तदा कोपं चक्रे सुदुर्मतिः ॥ ४ ॥ सोतिकोपादुपालभ्य सर्वयादवसंसदि ॥ जगर्हं यादवांश्चैव कार्यं चैतदचिंतयत् ॥ ५ ॥ यावन्न बलमारूढौ रामकृष्णौ सुबालकौ ॥ तावदेव मया वध्यावसाध्यौ रूढयौवनौ ॥ ६ ॥ चाणूरोत्र महावीर्यो मुष्टिकश्च महाबलः ॥ एताभ्यां मल्लयुद्धेन मारयिष्याम दुर्मती ॥ ७ ॥ धनुर्महमहायोगव्याजेनानीय तौ व्रजात् ॥ तथा तथा यतिष्यामि यास्येते संक्षयं यथा ॥ ८ ॥ श्वफल्कतनयं शूरमक्रूरं यदुपुंगवम् ॥ तयोरानयनार्थाय प्रेषयिष्यामि गोकुलम् ॥ ९ ॥ वृंदावनचरं घोरमादेक्ष्यामि च केशिनम् ॥ तत्रैवासावतिबलस्तावुभौ घातयिष्यति ॥ १० ॥ गजः कुवलयापीडो मत्सकाशमिहागतौ ॥ घातयिष्यति वा गोपौ वसुदेवसुतावुभौ ॥ ११ ॥ श्रीपराशर उवाच ॥ इत्यालोच्य स दुष्टात्मा कंसो रामजनार्दनौ ॥ हंतुं कृतमतिर्वीरावक्रूरं वाक्यमब्रवीत् ॥ १२ ॥ कंस उवाच ॥ भो भो दानपते वाक्यं क्रियतां प्रीतये मम ॥ इतः स्यंदनमारुह्य गम्यतां नंदगोकुलम् ॥ १३ ॥ वसुदेवसुतौ तत्र विष्णोरंशसमुद्भवौ ॥ नाशाय किल संभूतौ मम दुष्टौ प्रवर्द्धतः ॥ १४ ॥ धनुर्महो ममाप्यत्र चतुर्दश्यां भविष्यति ॥ आनेयौ भवता गत्वा मल्लयुद्धाय तत्र तौ ॥ १५ ॥ चाणूरमुष्टिकौ मल्लौ नियुद्धकुशलौ मम ॥ ताभ्यां सहानयोर्युद्धं सर्वलोकोऽत्र पश्यतु ॥ १६ ॥ गजः कुवलयापीडो महामात्रप्रचोदितः ॥ स वा हनिष्यते पापौ वसुदेवात्मजौ शिशू ॥ १७

ककुद्मतीति ॥ ककुद्मति वृषभे ॥ १ ॥ २ ॥ कंसायेति ॥ गर्भपरिवर्त्तः अपत्यव्यत्ययः ॥ ३ ॥ श्रुत्वेति ॥ देवदर्शनात् देवानामिव दर्शनं यस्य तस्मात् ॥ ४ ॥ स इति ॥ उपालभ्य विगर्ह्य ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

वसतो गोकुले चित्रं कर्म कृष्णस्य वर्णितम् । अथाह मथुराकृत्यं प्रस्तोतुं नारदागमम् ॥ १ ॥ तदेवं गोकुले रासक्रीडाविनोदैः कंसवधादिदेवकार्यं हरिणा विस्मृतमिवालक्ष्य तत्स्मरणप्रसंगाय नारदागमनमाह—ककुद्मतीति ॥ ककुद्मति वृषभाकृतौ दैतेये ॥ १ ॥ २ ॥ कंसायेति ॥ यशोदादेवक्योर्गर्भयोः अपत्ययोः परिवर्तादि ॥ ३ ॥ ४ ॥ स इति ॥ वसुदेवमुपालभ्य निर्भर्त्स्य जगर्ह निंदितवान् ॥ ५ ॥ कंसस्य मनोरथप्रकारमाह—यावदित्यादिषड्भिः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ स्वाभिप्रायमावेदयन्कंसोऽक्रूरमादिशति—भोभो इत्यादि दशभिः ॥ १३ ॥ वसुदेवेति ॥ प्रवर्धतः प्रकर्षेण वर्धेते ॥ १४ ॥ ॥ १५ ॥ १६ ॥ गज इति ॥ महामात्रेण हस्तिपकेन प्रचोदितः ॥ १७ ॥

तौ हत्वा वसुदेवं च नंदगोपं च दुर्मतिम् ॥ हनिष्ये पितरं चैनमुग्रसेनं सुदुर्मतिम् ॥ १८ ॥ ततस्समस्तगोपानां गोधनान्यखिलान्यहम् ॥ वित्तं चापहरिष्यामि दुष्टानां मद्वधैषिणाम् ॥ १९ ॥ त्वामृते यादवाश्चैते द्विषो दानपते मम ॥ एतेषां च वधायाहं यतिष्येऽनुक्रमात्ततः ॥ २० ॥ तदा निष्कंटकं सर्वं राज्यमेतदयादवम् ॥ प्रसाधिष्ये त्वया तस्मान्मत्प्रीत्यै वीर गम्यताम् ॥ २१ ॥ यथा च माहिषं सर्पिर्दधिचाप्युपहार्य वै ॥ गोपास्समानयंत्वाशु तथा वाच्यास्त्वया च ते ॥ २२ ॥ श्रीपराशर उवाच ॥ इत्याज्ञप्तस्तदाऽक्रूरो महाभागवतो द्विज ॥ प्रीतिमानभवत्कृष्णं श्वोद्रक्ष्यामीति सत्वरः ॥ २३ ॥ तथेत्युक्त्वा च राजानं रथमारुह्य शोभनम् ॥ निश्चक्राम ततः पुर्य्या मथुराया मधुप्रियः ॥ २४ ॥ इति श्रीविष्णुमहापुराणे पंचमांशे पंचदशोऽध्यायः ॥१५॥ ॥ श्रीपराशर उवाच ॥ केशी चापि बलोदग्रः कंसदूतः प्रचोदितः ॥ कृष्णस्य निधनाकांक्षी वृंदावनमुपागमत् ॥ १ ॥ स खुरक्षतभूपृष्ठस्सटाक्षेपधुतांबुदः ॥ द्रुतविक्रांतचंद्रार्कमार्गो गोपानुपाद्रवत् ॥ २ ॥ तस्य हेषितशब्देन गोपाला दैत्यवाजिनः ॥ गोप्यश्च भयसंविग्ना गोविंदं शरणं ययुः ॥ ३ ॥ त्राहित्राहीति गोविंदः श्रुत्वा तेषां ततो वचः ॥ सतोयजलदध्वानगंभीरमिदमुक्तवान् ॥ ४ ॥ अलं त्रासेन गोपालाः केशिनः किं भयातुरैः ॥ भवद्भिर्गोपजातीयैर्वीरवीर्यं विलोप्यते ॥ ५ ॥

॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ यथा चेति ॥ उपहार्य उपायनीकृत्य समानयंत्वाशु । चोपहार्यं तथातथेति च पाठः ॥ २२ ॥ २३ ॥ २४ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशे पंचदशोध्यायः ॥ १५ ॥ ॥ केशीति ॥ वृंदावनं कृष्णासन्नभागम् ॥ १ ॥ स इति ॥ द्रुतैरुत्प्लुतिभिर्विक्रांतावाक्रांतौ चंद्रार्कमार्गौ येन ॥ २ ॥ तस्येति ॥ भयसंविग्नाः भयेन चलिताः ॥ ३ ॥ ४ ॥ अलमिति ॥ केशिनस्त्रासेनालं गोपजातीयैर्भवद्भिर्वीराणां वीर्यं किं विलोप्यते गोपजातीयत्वविशेषणमेषां वीर्यहेतुः ॥ ५ ॥

॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ तथेति ॥ मधुप्रियः मधुवंश्यानां प्रियः ॥ २४ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां पंचमांशे पंचदशोऽध्यायः ॥ १५ ॥ ॥ केशीति ॥ बलोदग्रः बलेनोद्धतः कंसस्य दूतेन प्रचोदितः स्वस्थानादेवप्रचोदितः न तु कंसेनाहूय स्वयं प्रेषितः । असुरकार्यादिस्वार्थस्य तावद्विलंबासहनादेवेत्यर्थः ॥ १ ॥ स इति ॥ खुरैः क्षतं भूपृष्ठं येन सटानां केसराणां क्षेपेण धूननेन धुता विचालिता अंबुदा येन द्रुतं विक्रांतौ चंद्रार्कमार्गौ येन ॥ २ ॥ ३ ॥ त्राहि त्राहीति ॥ सतोयस्य जलदस्य ध्वानो गर्जितं तद्वद्गंभीरं यथाभवत्येवमुक्तवान् ॥ ४ ॥ अलमिति ॥ किं वीरवीर्यं विलोप्यते । यद्वा—स्वामिनि संनिहिते सत्यपि यदि परिजनो भयातुरस्स्यात् तदा स स्वामी स्वल्पवीर्य इत्यन्येषां बुद्धिस्स्यात् । अतो मदीयैर्भवद्भिर्भीरुतया वीरवीर्यं वीरस्य मम वीर्यं किं विलोप्यते किमिति विलोपं क्रियत इत्यर्थः ॥ ५ ॥

किमनेनाल्पसारेण हेषिताटोपकारिणा ॥ दैतेयबलवाह्येन वल्गता दुष्टवाजिना ॥ ६ ॥ एह्येहि दुष्ट कृष्णोऽहं पूष्णस्त्विव पिनाकधृत् ॥ पातयिष्यामि दशनान्वदनादखिलांस्तव ॥ ७ ॥ इत्युक्त्वाऽस्फोट्य गोविंदः केशिनस्संमुखं ययौ ॥ विवृतास्यश्च सोप्येनं दैतेयाश्व उपाद्रवत् ॥ ८ ॥ बाहुमाभोगिनं कृत्वा मुखे तस्य जनार्दनः ॥ प्रवेशयामास तदा केशिनो दुष्टवाजिनः ॥ ९ ॥ केशिनो वदनं तेन विशता कृष्णबाहुना ॥ शातिता दशनाः पेतुः सिताभ्रावयवा इव ॥ १० ॥ कृष्णस्य ववृधे बाहुः केशिदेहगतो द्विज ॥ विनाशाय यथा व्याधिरासंभूतेरुपेक्षितः ॥ ११ ॥ विपाटितोष्ठो बहुलं सफेनं रुधिरं वमन् ॥ सोक्षिणी विवृते चक्रे विशिष्टे मुक्तबंधने ॥ १२ ॥ जघान धरणीं पादैश्शकृन्मूत्रं समुत्सृजन् ॥ स्वेदार्द्रगात्रश्शांतश्च निर्यत्नस्सोऽभवत्तदा ॥ १३ ॥ व्यादितास्यमहारंध्रस्सोऽसुरः कृष्णबाहुना ॥ निपातितो द्विधा भूमौ वैद्युतेन यथा द्रुमः ॥ १४ ॥ द्विपादे पृष्ठपुच्छार्द्धे श्रवणैकाक्षिनासिके ॥ केशिनस्ते द्विधा भूते शकले द्वे विरेजतुः ॥१५॥ हत्वा तु केशिनं कृष्णो गोपालैर्मुदितैर्वृतः ॥ अनायस्ततनुस्स्वस्थो हसंस्तत्रैव तस्थिवान् ॥१६॥ ततो गोप्यश्च गोपाश्च हते केशिनि विस्मिताः ॥ तुष्टुवुः पुंडरीकाक्षमनुरागमनोरमम् ॥१७॥ अथाहांतर्हितो विप्र नारदो जलदे स्थितः ॥ केशिनं निहतं दृष्ट्वा हर्षनिर्भरमानसः ॥१८॥

किमनेनेति ॥ आटोपस्संभ्रमः दैतेयश्चासौ बलवाह्यश्च बलवाह्यः बलहीनः । वल्गता नृत्यता ॥ ६ ॥ ७ ॥ ८ ॥ बाहुमिति ॥ आभोगिनं परिणाहिनम् ॥ ९ ॥ ॥ १० ॥ कृष्णस्येति ॥ आसंभूतेरावृद्धेः ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ द्विपादे इति ॥ द्वौ पादौ ययोः अर्द्धरूपे पृष्ठे पुच्छे च ययोस्ते । द्विपादपृष्ठपुच्छार्द्धे इत्यैकपद्यपाठश्च । श्रवणेति एकशब्दः श्रवणपदात्प्राग्योज्यः एका श्रवणाक्षिनासिका ययोस्ते श्रवणैकाक्षिनासिके ॥ १५ ॥ १६ ॥ तत इति ॥ अनुरागेण मनोरमं यथा भवति तथा ॥ १७ ॥ १८ ॥

किमनेनेति ॥ हेषितमेवाटोपः तत्कारिणा दैतेयबलवाह्येन दैत्यैर्बलादाक्रम्य अश्वोयमारुह्यते अतो दैत्यहंतणामस्माकं किमनेन भवेदित्यर्थः । वल्गता त्रिकमवनम्य गच्छता तदुक्तं वलितं च नतत्रिकमिति ॥६॥ एह्येहीति ॥ पूष्णो दंतान्पिनाकधृत् वीरभद्र इव । पूष्णोरिवेति पाठे पौष्णश्चरुः ऐंद्रापौष्णश्चरुरित्यादिषु पूष्ण एव एकतमरूपेणैंद्रसाहित्यरूपेण देवताभेदरूपभेदाद्द्विवचनम् ॥ ७ ॥ ८ ॥ बाहुमिति ॥ आभोगिनं विसारिणम् ॥ ९ ॥ केशिन इति ॥ शातिताः आहताः ॥ १० ॥ कृष्णस्येति ॥ आसंभूतेः वृद्धिपर्यंतम् ॥ ११ ॥ १२ ॥ १३ ॥ व्यादितास्येति ॥ व्यादितं विवृतमास्यं यस्य वैद्युतेनाशनिना ॥ १४ ॥ द्विपादेति ॥ द्वौ पादौ ययोः पृष्ठपुच्छे अर्धरूपे ययोः एकशब्दः श्रवणपदात् प्राग्योज्यः । तथा च एकैका श्रवणाक्षिनासिका ययोस्ते तयोक्ते शकले । एककर्णाक्षिनासिके इति पाठांतरं तु सुष्ठु ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

साधुसाधु जगन्नाथ लीलयैव यदच्युत ॥ निहतोऽयं त्वया केशी क्लेशदस्त्रिदिवौकसाम् ॥ १९ ॥ युद्धोत्सुकोहमत्यर्थं नरवाजिमहाहवम् ॥ अभूतपूर्वमन्यत्र द्रष्टुं स्वर्गादिहागतः ॥ २० ॥ कर्माण्यत्रावतारे ते कृतानि मधुसूदन ॥ यानि तैर्विस्मितं चेतस्तोषमेतेन मे गतम् ॥ २१ ॥ तुरंगस्यास्य शक्रोपि कृष्ण देवाश्च बिभ्यति ॥ धुतकेसरजालस्य ह्रेषतोऽभ्रावलोकिनः ॥ २२ ॥ यस्मात्त्वयैष दुष्टात्मा हतः केशी जनार्दन ॥ तस्मात्केशवनाम्ना त्वं लोके ख्यातो भविष्यसि ॥ २३ ॥ स्वस्त्यस्तु ते गमिष्यामि कंसयुद्धेऽधुना पुनः ॥ परश्वोऽहं समेष्यामि त्वया केशिनिषूदन ॥ २४ ॥ उग्रसेनसुते कंसे सानुगे विनिपातिते ॥ भारावतारकर्त्ता त्वं पृथिव्या पृथिवीधर ॥ २५ ॥ तत्रानेकप्रकाराणि युद्धानि पृथिवीक्षिताम् ॥ द्रष्टव्यानि मया युष्मत्प्रणीतानि जनार्दन ॥२६॥ सोऽहं यास्यामि गोविंद देवकार्यं महत्कृतम् ॥ त्वयैव विदितं सर्वं स्वस्ति तेऽस्तु व्रजाम्यहम् ॥२७॥ नारदे तु गते कृष्णस्सह गोपैस्सभाजितः ॥ विवेश गोकुलं गोपीनेत्रपानैकभाजनम् ॥२८॥ इति श्रीविष्णुमहापुराणे पंचमांशे षोडशोऽध्यायः ॥ १६ ॥ ॥ श्रीपराशर उवाच ॥ अक्रूरोऽपि विनिष्क्रम्य स्यंदनेनाशुगामिना ॥ कृष्णसंदर्शनाकांक्षी प्रययौ नंदगोकुलम् ॥ १ ॥ चिंतयामास चाक्रूरो नास्ति धन्यतरो मया ॥ योहमंशावतीर्णस्य मुखं द्रक्ष्यामि चक्रिणः ॥ २ ॥

॥ १९ ॥ युद्धोत्सुक इति ॥ युद्धोत्सुकः युद्धदर्शनोत्सुकः ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ स्वस्त्यस्त्विति ॥ अधुना गमिष्यामीत्यन्वयः ॥ २४ ॥ उग्रसेनेति ॥ कर्त्ता भविष्यसि ॥ २५ ॥ तत्रेति ॥ तत्र भारावतरणे आयुष्मत्प्रणीतानीति पदच्छेदः । यामोषधीमिवायुष्मन्नितिवन्मंगलाशासनोक्तिः ॥२६॥२७॥ नारद इति ॥ नेत्रेति । नेत्रैः पानक्रियाणामेको विषयः ॥ २८ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशे षोडशोध्यायः ॥ १६ ॥ ॥ ॥ १ ॥ चिंतयामासेति ॥ मया मत्तः ॥ २ ॥

॥ १९ ॥ युद्धोत्सुक इति ॥ युद्धोत्सुकः युद्धदर्शनोत्सुकः ॥२०॥२१॥ तुरंगस्येति ॥ धुतं कंपितं केसराणां जालं समूहो येन तस्य ह्रेषतः ह्रेषारवं कुर्वतः ॥ २२ ॥ यस्मादिति ॥ केशिवधात्केशव इत्यक्षरसाम्यनामनिरुक्तिः ॥ २३ ॥ स्वस्त्यस्त्विति ॥ अधुनाऽऽगमिष्यामि परश्वः कंसयुद्धे पुनस्त्वयाहं समेष्यामि ॥ २४ ॥ उग्रसेनेति ॥ पृथिव्याः भारहर्ता त्वं भविष्यसि ॥ २५ ॥ तत्रेति ॥ तत्र भारावतारकरणे आयुष्मता त्वया प्रणीता नीतिर्लोकोक्तिः ॥ २६ ॥ २७ ॥ नारद इति ॥ इत्थं मनोरमैः कर्मभिः सभाजितस्सत्कृतः गोपीनेत्राणां पानस्यादरवीक्षणस्य एकमेव भाजनं विषयः कृष्णः गोकुलं विवेश ॥२८॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां पंचमांशे षोडशोऽध्यायः ॥ १६ ॥ अक्रूर इति ॥ श्रीकृष्णो यदा गोकुलं विवेश तदा अक्रूरोपि मथुराया विनिष्क्रम्य गोकुलं प्रययौ ॥ १ ॥ पथि गच्छतः अक्रूरस्य

अद्य मे सफलं जन्म सुप्रभाताऽभवन्निशा ॥ यदुन्निद्राब्जपत्राक्षं विष्णोर्द्रक्ष्याम्यहं मुखम् ॥ ३ ॥ पापं हरति यत्पुंसां स्मृतं संकल्पनामयम् ॥ तत्पुंडरीकनयनं विष्णोर्द्रक्ष्याम्यहं मुखम् ॥ ४ ॥ विनिर्जग्मुर्यतो वेदा वेदांगान्यखिलानि च ॥ द्रक्ष्यामि तत्परं धाम धाम्नां भगवतो मुखम् ॥ ५ ॥ यज्ञेषु यज्ञपुरुषः पुरुषैः पुरुषोत्तमः ॥ इज्यते योऽखिलाधारस्तं द्रक्ष्यामि जगत्पतिम् ॥ ६ ॥ इष्ट्वा यमिंद्रो यज्ञानां शतेनामरराजताम् ॥ अवाप तमनंतादिमहं द्रक्ष्यामि केशवम् ॥ ७ ॥ न ब्रह्मा नेंद्ररुद्राश्विवस्वादित्यमरुद्गणाः ॥ यस्य स्वरूपं जानंति प्रत्यक्षं याति मे हरिः ॥ ८ ॥ सर्वात्मा सर्ववित्सर्वस्सर्वभूतेष्ववस्थितः ॥ योह्यऽचिंत्योऽव्ययो व्यापी स वक्ष्यति मया सह ॥ ९ ॥ मत्स्यकूर्मवराहाश्वसिंहरूपादिभिः स्थितिम् ॥ चकार जगतो योऽजः सोऽद्य मां प्रलपिष्यति ॥ १० ॥ सांप्रतं च जगत्स्वामी कार्यमात्महृदि स्थितम् ॥ कर्तुं मनुष्यतां प्राप्तस्स्वेच्छादेहधृदव्ययः ॥ ११ ॥ योनंतः पृथिवीं धत्ते शेखरस्थितिसंस्थिताम् ॥ सोऽवतीर्णो जगत्यर्थे मामक्रूरेति वक्ष्यति ॥ १२ ॥ पितृपुत्रसुहृद्भ्रातृमातृबंधुमयीमिमाम् ॥ यन्मायां नालमुत्तर्तुं जगत्तस्मै नमोनमः ॥ १३ ॥

॥ ३ ॥ पापमिति ॥ संकल्पनामयम् अदितिदेवक्याद्याराधनसंकल्पानुरूपं हि भगवतो देवमनुष्यादिसजातीयम् इदं रूपमिदं विभवार्चावतारसाधारणम् । यथाह "ये यथा मां प्रपद्यंते" इति हृदयोपासनेपि उपासकसंकल्पाधीनांगप्रत्यंगरूपादिमत्त्वमुक्तं हृदि संकल्प्य यद्रूपमित्यादिना । अथवा संकल्पनामयमिति स्वसंकल्पकृतमिति इच्छागृहीतेत्यादि यथोक्तम् । हृद्योगे "बहिराराधनार्थं तु या मूर्तिरवतिष्ठते । तदाकारं विचिंत्याथ यजेत्सर्वेश्वरं हरिम्" इति॥ ४॥ विनिर्जग्मुरिति ॥ धाम धाम्नां तेजसां स्थानं तेजो वा ॥ ५ ॥ ६ ॥ इष्ट्वेति ॥ अनंतादिम् आद्यंतरहितम् ॥ ७ ॥ ८ ॥ सर्वात्मेति ॥ सर्वस्यात्मा सर्वभूतेष्ववस्थितः व्योमवद्वितत्य व्यापी नाग्निवाय्वादिवद्विच्छिद्यते ॥ ९ ॥ १० ॥ ११ ॥ योनंत इति ॥ शेखरेति शेखरसंनिवेशेन स्थितम् । सः रामः ॥ १२ ॥ पितृपुत्रेति ॥ अत्र पित्रादिरूपेण परिणता गुणत्रयी विचित्रकार्यकरत्वेन मायेत्युच्यते ॥ १३ ॥

मनोरथानाह–चिंतयामासेत्यादिना मामक्रूरेति वक्ष्यतीत्यंतेन । चिंतयामासेति ॥ मया सदृशो धन्यतरो नास्ति ॥ २ ॥ ३ ॥ पापमिति ॥ संकल्पनामयं ध्यानमात्रालंबनमपि ॥ ४ ॥ विनिर्जग्मुरिति ॥ धाम्नां तेजोमयानां परं धाम आश्रयं मुखावयवेषु लोचनवदनेषु सूर्यसोमाग्नीनामाश्रितत्वात् ॥ ५ ॥ ६ ॥ इष्ट्वेति ॥ नास्त्यंतश्च आदिश्च यस्य तं अनंतादिम् ॥ ७ ॥ ८ ॥ सर्वात्मेति ॥ वक्ष्यति–वदिष्यतीति ॥ ९ ॥ मत्स्येति ॥ अश्वसिंहरूपादिभिः अश्वो हयग्रीवः । सिंहो नृसिंहः । मामालपिष्यतीति अक्रूरेति तातेत्याभाषिष्यते ॥ १० ॥ ११ ॥ य इति ॥ शेखरस्यैव स्थित्या सन्निवेशेन स्थितां पृथिवीं यो धत्ते स शेषः अवतीर्णः वलदेवरूपेण अक्रूरेति मां वक्ष्यति ॥ १२ ॥ पुनर्मायाप्रतिबंधनिवृत्तये तमेव प्रणमति । पितृपुत्रेत्यादित्रिभिः ॥ १३ ॥

तरत्यविद्यां वितताः हृदि यस्मिन्निवेशिते ॥ योगमायाममेयाय तस्मै विद्यात्मने नमः ॥१४॥ यज्वभिर्यज्ञपुरुषो वासुदेवश्च सात्त्वतैः॥वेदांतवेदिभिर्विष्णुः प्रोच्यते यो नतोस्मि तम् ॥१५॥ यथा यत्र जगद्धाम्नि धातर्येतत्प्रतिष्ठितम् ॥ सदसत्तेन सत्येन मय्यसौ यातु सौम्यताम् ॥ १६॥ स्मृते सकलकल्याणभाजनं यत्र जायते ॥ पुरुषस्तमजं नित्यं व्रजामि शरणं हरिम् ॥१७॥ श्रीपराशर उवाच ॥ इत्थं संचिंतयन्विष्णुं भक्तिनम्रात्ममानसः ॥ अक्रूरो गोकुलं प्राप्तः किंचित्सूर्ये विराजति ॥ १८ ॥ स ददर्श तदा कृष्णमादावादोहने गवाम् ॥ वत्समध्यगतं फुल्लनीलोत्पलदलच्छविम् ॥ १९ ॥ प्रफुल्लपद्मपत्राक्षं श्रीवत्सांकितवक्षसम् ॥ प्रलंबबाहुमायामतुंगोरस्थलमुन्नसम् ॥ २० ॥ सविलासस्मिताधारं बिभ्राणं मुखपंकजम् ॥ तुंगरक्तनखं पद्भ्यां धरण्यां सुप्रतिष्ठितम् ॥ २१ ॥ बिभ्राणं वाससी पीते वन्यपुष्पविभूषितम् ॥ सेंदुनीलाचलाभं तं सितांभोजावतंसकम् ॥ २२ ॥ हंसकुंदेंदुधवलं नीलांबरधरं द्विज ॥ तस्यानु बलभद्रं च ददर्श यदुनंदनम् ॥ २३ ॥ प्रांशुमुत्तुंगबाह्वंसं विकासिमुखपंकजम् ॥ मेघमालापरिवृतं कैलासाद्रिमिवापरम् ॥ २४ ॥ तौ दृष्ट्वा विकसद्वक्त्रसरोजः स महामतिः ॥ पुलकांचितसर्वांगस्तदाऽक्रूरोऽभवन्मुने ॥ २५ ॥ तदेतत्परमं धाम तदेतत्परमं पदम् ॥ भगवद्वासुदेवांशो द्विधा योऽयं व्यवस्थितः ॥ २६ ॥ साफल्यमक्ष्णोर्युगमेतदत्र दृष्टे जगद्धातरि यातमुच्चैः ॥ अप्यंगमेतद्भगवत्प्रसादात्तदंगसंगे फलवन्मम स्यात् ॥ २७ ॥

तरतीति ॥ सैव भगवत्स्वरूपतिरोधायकत्वादन्यथाज्ञानजनकत्वाच्चाविद्येत्युच्यते ॥१४॥ यज्वभिरिति ॥ सात्वतैर्भगवच्छास्त्रनिष्ठैः ॥१५॥१६॥१७॥ इत्थमिति ॥ भक्तिनम्रात्ममानसः । भक्तिप्रह्वशरीरांतःकरणः किंचित्सूर्ये विराजति अस्तासन्ने ॥१८॥ स इति ॥ आदोहने दोहस्थाने ॥ १९ ॥ प्रफुल्लेति ॥ आयामतुंगोरस्थलं विशालपीनोरस्कमित्यर्थः ॥२०॥२१॥ बिभ्राणमिति ॥ सेंदुनीलाचलाभं सितांभोजावतंसकत्वात् ॥२२॥२३॥ प्रांशुमिति ॥ उत्तुंगबाह्वंसं पीनबाह्वंसम् ॥ २४ ॥ ॥ २५ ॥ तदेतदिति ॥ धाम तेजः । परमं पदं परं प्राप्यं पद्यते इति पदं भगवद्वासुदेवांशत्वात् ॥ २६ ॥ साफल्यमिति ॥ अंगं फलवदपि स्यादित्याशंसा ॥ २७ ॥

तरतीति ॥ अविद्यामात्मच्छादिकां शांभवीं मायाम् अहंकारममकारादिमोहकरीं ध्यानेन हृदि हृत्पुंडरीके यस्मिन्निवेशिते सति तरति ॥ १४ ॥ यज्वभिरिति ॥ यज्वभिः कर्मनिष्ठैः । यज्ञपुरुष इति । सात्वतैरुपासकैः वासुदेव इति । वेदांतवेदिभिर्ज्ञाननिष्ठैर्विष्णुरिति तत्तत्सोपाधिकशब्दैर्यः प्रोच्यते तं प्रणतोस्मि ॥ १५ ॥ अथ कंसस्य प्रियोयमिति मय्यसूयामकुर्वन्प्रसन्नोभव त्विति प्रार्थयते—यथेति ॥ सदसत्कार्यकारणात्मकं साध्वसाधुवृत्तोपेतं वा एतज्जगत् यत्र धाम्नि आश्रये प्रतिष्ठितं तेन सत्येन सर्वाधारतया सर्वसाक्षित्वेन मयि सौम्यतां प्रसन्नतां यातु ॥ १६ ॥ सत्यपराधे तत्सर्वं क्षम्यतामित्याशयेनाह—स्मृत इति ॥ १७ ॥ इत्थमिति ॥ भक्त्या नम्रः आत्मा बुद्धिर्मानसं च यस्य सः ॥ १८ ॥ स इति ॥ आदोहने दोहावसाने ॥ १९ ॥ प्रफुल्लेति ॥ आयामं विस्तारवत्तुंगमुरस्थलं यस्य तम् ॥ २० ॥ २१ ॥ २२ ॥ २३ २४ ॥ २५ ॥ २६ ॥ साफल्यमिति ॥ भगवता स्वांगसंगे दत्ते सति तत्प्रसादादेतन्ममांगमपि फलवत्स्यादित्याशंसा ॥ २७ ॥

अप्येष पृष्ठे मम हस्तपद्मं करिष्यति श्रीमदनन्तमूर्त्तिः ॥ यस्यांगुलिस्पर्शहताखिलाघैरवाप्यते सिद्धिरपास्तदोषा ॥ २८ ॥ येनाग्निविद्युद्रविरश्मिमालाकरालमत्युग्रमपेत चक्रम् ॥ चक्रं घ्नता दैत्यपतेर्हृतानि दैत्यांगनानां नयनांजनानि ॥ २९ ॥ यत्रांबु विन्यस्य बलिर्मनोज्ञानवाप भोगान्वसुधातलस्थः ॥ तथामरत्वं त्रिदशाधिपत्वं मन्वंतरं पूर्णमपेतशत्रुम् ॥ ३० ॥ अप्येष मां कंसपरिग्रहेण दोषास्पदीभूतमदोषदुष्टम् ॥ कर्त्ताऽवमानोपहतं धिगस्तु तज्जन्म यत्साधुबहिष्कृतस्य ॥ ३१ ॥ ज्ञानात्मकस्यामलसत्त्वराशेरपेतदोषस्य सदा स्फुटस्य ॥ किं वा जगत्यत्र समस्तपुंसामज्ञातमस्यास्ति हृदि स्थितस्य ॥ ३२ ॥ तस्मादहं भक्तिविनम्रचेता व्रजामि सर्वेश्वरमीश्वराणाम् ॥ अंशावतारं पुरुषोत्तमस्य ह्यनादिमध्यांतमजस्य विष्णोः ॥ ३३ ॥ इति श्रीविष्णुमहापुराणे पंचमांशे सप्तदशोऽध्यायः ॥ १७ ॥ ॥ श्रीपराशर उवाच ॥ चिंतयन्निति गोविंदमुपगम्य स यादवः ॥ अक्रूरोस्मीति चरणौ ननाम शिरसा हरेः ॥ १ ॥ सोऽप्येनं ध्वजवज्राब्जकृतचिह्नेन पाणिना ॥ संस्पृश्याकृष्य च प्रीत्या सुगाढं परिषस्वजे ॥ २ ॥ कृतसंवंदनौ तेन यथावद्बलकेशवौ ॥ ततः प्रविष्टौ संहृष्टौ तमादायात्ममंदिरम् ॥ ३ ॥

भगवत्पाणिपद्मस्य शुद्धिशौर्यौदार्याण्याह—अप्येष इत्यादिश्लोकत्रयेण—अप्येष इति ॥ श्रीमदिति हस्तपद्मविशेषणम् । यस्येति च तस्यैव निर्देशः अनाशदोषानाशदोषाभ्यां हीना अनाशदोषेति च पाठः ॥ २८ ॥ येनेति ॥ चक्रं बलम् अपेतचक्रमिति क्रियाविशेषणम् । अपास्य चक्रमिति च पाठः ॥ २९ ॥ ३० ॥ अप्येष इति ॥ अदोषदुष्टं मां कंसपरिग्रहेण दोषास्पदीभूतमपि कर्त्ता करिष्यतीत्यन्वयः । अवमानेत्यादिवाक्यांतरम् ॥ ३१ ॥ भगवान् सर्वज्ञत्वान्मां निरागसं ज्ञात्वा स्वीकरिष्यतीत्याह—ज्ञानात्मकस्येति ॥ जीवस्य ज्ञानात्मकत्वेऽपि रजस्तमोमूलरागादिदोषतिरोहितस्वरूपत्वात् । ततो भगवंतं व्यावर्त्तयति अमलसत्त्वेत्यादिना सदा स्फुटस्य अतिरोहितस्वरूपस्य ॥ ३२ ॥ ३३ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशे सप्तदशोध्यायः ॥ १७ ॥ ॥ १ ॥ २ ॥ ३ ॥

अप्येष इति ॥ यस्य हस्तस्यांगुलिस्पर्शेन हताखिलाघैरिति पवित्रतोक्ता ॥ २८ ॥ येनेति ॥ येन हस्तेन चक्रमपास्य प्रक्षिप्य दैत्यपतेः कालनेमिप्रभृतीनां चक्रं सैन्यं घ्नता मारयता दैत्यांगनानां नयनांजनानि तद्भर्तृवधादेव हृतानीति शौर्यातिशयोक्तिः ॥ २९ ॥ यत्रेति ॥ यत्रांबु विन्यस्येति हस्तस्यौदार्यमुक्तं वसुधातलस्थितः ॥ ३० ॥ अप्येष इति ॥ अदोषदुष्टमपि मां दोषास्पदीभूतं मत्वा यद्यवमानोपहतं कर्ता करिष्यति ॥ ३१ ॥ एवमाशंक्य सर्वज्ञस्य परावमंतृत्वं स्वयमेव न संभवतीत्याह—ज्ञानात्मकस्येति ॥ जीवस्य ज्ञानात्मकत्वेपि रजस्तमोमलावृतत्वान्न सर्वज्ञता । ईश्वरस्य तु तन्नास्तीत्याह—अमलसत्वराशेरिति ॥ अमलसत्वराशेः शुद्धसत्वमयस्य । न च जीववद्रागाद्यभिमानदोष इत्याह—अपेतदोषस्येति ॥ न च चक्षुराद्यपेक्षस्य जीवस्येव कादाचित्कं ज्ञानमीश्वरस्येत्याह—सदा स्फुटस्येति ॥ न च जीवस्येवोपाधिपरिच्छेदादसर्वज्ञत्वमित्याह—समस्तपुंसां हृदि स्थितस्येति । अतोत्र किं नाम तस्याज्ञातमस्ति ॥ ३२ ॥ तस्मान्निश्शंकस्तमहं व्रजामीत्याह—तस्मादिति ॥ ३३ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां पंचमांशे सप्तदशोऽध्यायः ॥ १७ ॥ ॥ चिंतयन्निति ॥ यादवोऽक्रूरोस्मीति यादवत्वोक्त्या स्वस्य तत्संबंधितां विज्ञापयन् स्वनामोक्तिपूर्वकं प्रणनाम ॥१॥ स इति ॥ परिषस्वजे आलिंगितवान् ॥ २ ॥ रामं च ननामेति दर्शयति

सह ताभ्यां तदाऽक्रूरः कृतसंवंदनादिकः ॥ भुक्तभोज्यो यथान्याय्यमाचचक्षे ततस्तयोः ॥४॥ यथा निर्भर्त्सितस्तेन कंसेनानकदुंदुभिः ॥ यथा च देवकी देवी दानवेन दुरात्मना ॥ ५ ॥ उग्रसेने यथा कंसस्स दुरात्मा च वर्त्तते ॥ यं चैवार्थं समुद्दिश्य कंसेन तु विसर्जितः ॥ ६ ॥ तत्सर्वं विस्तराच्छ्रुत्वा भगवान्देवकीसुतः ॥ उवाचाखिलमप्येतज्ज्ञातं दानपते मया ॥ ७ ॥ करिष्ये तन्महाभाग यदत्रौपयिकं मतम् ॥ विचिंत्यं नान्यथैतत्ते विद्धि कंसं हतं मया ॥ ८ ॥ अहं रामश्च मथुरां श्वो यास्यावस्सह त्वया ॥ गोपवृद्धाश्च यास्यंति ह्यादायोपायनं बहु ॥ ९ ॥ निशेयं नीयतां वीर न चिंतां कर्त्तुमर्हसि ॥ त्रिरात्राभ्यंतरे कंसं निहनिष्यामि सानुगम् ॥ १० ॥ श्रीपराशर उवाच ॥ समादिश्य ततो गोपानक्रूरोऽपि च केशवः ॥ सुष्वाप बलभद्रश्च नंदगोपगृहे ततः ॥ ११ ॥ ततः प्रभाते विमले कृष्णरामौ महाद्युती ॥ अक्रूरेण समं गंतुमुद्यतौ मथुरां पुरीम् ॥ १२ ॥ दृष्ट्वा गोपीजनस्सास्रः श्लथद्वलयबाहुकः ॥ निश्वासातिदुःखार्त्तः प्राह चेदं परस्परम् ॥ १३ ॥ मथुरां प्राप्य गोविंदः कथं गोकुलमेष्यति ॥ नगरस्त्रीकलालापमधु श्रोत्रेण पास्यति ॥ १४ ॥ विलासवाक्यपानेषु नागरीणां कृतास्पदम् ॥ चित्तमस्य कथं भूयो ग्राम्यगोपीषु यास्यति ॥१५॥ सारं समस्तगोष्ठस्य विधिना हरता हरिम् ॥ प्रहृतं गोपयोषित्सु निर्घृणेन दुरात्मना ॥ १६ ॥

सहेति ॥ कृतसंवंदनादिकः सुसत्कृतः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ करिष्य इति ॥ औपयिकं युक्तम् ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ दृष्ट्वेति ॥ श्लथद्वलयत्वं विरहकार्श्यात् ॥ १३ ॥ १४ ॥ विलासेति ॥ विलासवाक्यपानेषु ग्राम्यगोपीषु अविदग्धगोपीषु ॥ १५ ॥ १६ ॥

कृतसंवंदनौ तेनेति ॥ ३ ॥ सहेति ॥ कृतं संवंदनादिकं संभाषादि येन यथान्याय्यं संमानपूर्वकं भुक्तं भोज्यं भोजनार्हं संस्कृतमन्नादि येन सः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ करिष्य इति ॥ औपयिकम् उपयोगि ॥ ८ ॥ ९ ॥ १० ॥ समादिश्येति ॥ राजादेशनिवेदनेन गोपान् समादिश्य नंदगोपगृहे सुष्वापेत्यनेन नंदे पितृत्वव्यवहारनिवृत्तिं सूचयति ॥ ११ ॥ तत इति ॥ गंतुमुद्यतौ अनेन च नंदे पितृत्वव्यवहारनिवृत्तिः । मथुरां गंतुम् उद्यतौ दृष्ट्वा गोपीजनः प्राहेत्युत्तरत्रान्वयः ॥ १२ ॥ दृष्ट्वेत्यादिना सोपि रेणुर्नलक्ष्यत इत्यंतेन गोपीविरहालापोक्तिः ॥ दृष्ट्वेति ॥ सास्रः साश्रुनेत्रः । श्लथद्वलया बाहवो हस्ता यस्येति विरहदुःखकार्श्यमुक्तम् ॥ १३ ॥ मथुरामिति ॥ कथमेष्यति न कथंचित् तत्र हेतुमाह—नगरेति सार्धेन । नगरस्त्रीणां कलः अव्यक्तमधुराक्षरो य आलापः स एव मधु तद्यस्मात्पास्यति ॥ १४ ॥ विलासवाक्येति ॥ विलासवाक्यानि नयनाभिनयरूपविलासयुक्तानि वाक्यानि तेषां पानेषु शृंगारादिरसवत्त्वात् अमृतमाधुर्यवत्त्वात् वाक्यानाम् अत्यादरेण श्रोत्रद्वारा पेयत्वं सिद्धम् । चित्तस्य तद्विषये कृतास्पदत्वात् पातृत्वं च सिद्धम् । अतस्तच्चित्तं भूयो ग्राम्यगोपीषु कथं यास्यति । न कथमपि यास्यतीत्यर्थः ॥ १५ ॥ संप्रति विधिना वयं हतास्स्म इत्याहुः—सारमिति ॥ समस्तगोष्ठस्य सारभूतं हरिं हरता अत एव निर्घृणेन

भावगर्भस्मितं वाक्यं विलासललिता गतिः ॥ नागरीणामतीवैतत्कटाक्षेक्षितमेव च ॥१७॥ ग्राम्यो हरिरयं तासां विलासनिगडैर्युतः॥भवतीनां पुनः पार्श्वं कया युक्त्या समेष्यति ॥ १८ ॥ एषैष रथमारुह्य मथुरां याति केशवः ॥ क्रूरेणाक्रूरकेणात्र निर्घृणेन प्रतारितः ॥ १९ ॥ किं न वेत्ति नृशंसोयमनुरागपरं जनम् ॥ येनैवमक्ष्णोराह्लादं नयत्यन्यत्र नो हरिम् ॥ २० ॥ एष रामेण सहितः प्रयात्यत्यंतनिर्घृणः ॥ रथमारुह्य गोविंदस्त्वर्यतामस्य वारणे ॥ २१ ॥ गुरूणामग्रतो वक्तुं किं ब्रवीथ न नः क्षमम् ॥ गुरवः किं करिष्यंति दग्धानां विरहाग्निना ॥ २२ ॥ नंदगोपमुखा गोपा गंतुमेते समुद्यताः ॥ नोद्यमं कुरुते कश्चिद्गोविंदविनिवर्त्तने ॥ २३ ॥ सुप्रभाताद्य रजनी मथुरावासयोषिताम् ॥ पास्यंत्यच्युतवक्त्राब्जं यासां नेत्रालिपंक्तयः ॥२४॥ धन्यास्ते पथि ये कृष्णमितो यांत्यनिवारिताः ॥ उद्वहिष्यंति पश्यंतस्स्वदेहं पुलकांचितम् ॥२५॥ मथुरानगरीपौरनयनानां महोत्सवः॥ गोविंदावयवैर्दृष्टैरतीवाद्य भविष्यति ॥२६॥ को नु स्वप्नस्सभाग्याभिर्दृष्टस्ताभिरधोक्षजम्॥ विस्तारिकांतिनयना या द्रक्ष्यंत्यनिवारिताः॥२७॥अहो गोपीजनस्यास्य दर्शयित्वा महानिधिम्॥ उत्कृत्तान्यद्य नेत्राणि विधिनाकरुणात्मना ॥२८॥

भावगर्भेति ॥ भावगर्भस्मितमिति वाक्यविशेषणं नागरीणामेतद्वाक्यादिकम् अतीवपूजितं नैवंभूतमस्मदीयं वाक्यादिकम् । अतिक्रांतमिति वा ॥ १७ ॥ ग्राम्य इति ॥ ग्राम्यः ग्रामे भवः यतः यंत्रितः अग्राम्यत्वादपूर्वत्वेन नागरीणां विलासादि लोभनीयं भवति ॥ १८ ॥ एषैष इति ॥ अक्रूरकेणेति कुत्सायां कप्रत्ययः । अत्र व्रजे । निराशेन निरनुरागेण ॥१९॥ किमित्यादि ॥ अयं स्वयं निरनुरागोऽस्तु अनुरागपरमपि जनं किं न वेत्ति येनानुरक्तानामस्माकमक्ष्णोराह्लादकरं हरिमन्यत्र नयति ॥२०॥२१॥ गुरूणामित्यादि ॥ त्वर्यतामस्य वारणे इति नो गुरूणामग्रतो वक्तुं न क्षममिति किं ब्रवीथ । किं किमर्थं विरहाग्निना दग्धानां गुरवः किं करिष्यंति ॥ २२ ॥ २३ ॥ सुप्रभातेति ॥ मथुरा आवासो यासां ताः मथुरावासाः ॥ २४ ॥ धन्या इति ॥ ये अनिवारिता इतो यांति या अनिवारिता इतो यान्ति ते धन्याः ताः धन्याः ते हि पथि कृष्णं पश्यंतः ता हि पथि कृष्णं पश्यंत्यः पुलकांचितं स्वदेहमुद्वहिष्यंति ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

दुरात्मना विधिना गोपयोषित्सु प्रहृतम् ॥ १६ ॥ भावगर्भेति ॥ भावादेर्लक्षणं तु—"बाह्यार्थालंबने यस्तु विकारो मानसो भवेत् । भावस्स कथ्यते सद्भिस्तस्योत्कर्षो रसो मतः ॥ विलासो नेत्रजो ज्ञेयो विलासो नयनांतजः" इति । नागरीणामेतद्वाक्यादिकम् अतीवानंदजनकम् ॥ १७ ॥ ग्राम्य इति ॥ अतस्तासां विलासरूपैर्निगडैर्युतो युक्तः । यत इति पाठे यतस्संयतो बद्ध इत्यर्थः ॥ १८ ॥ एषैष इति ॥ एषैष इति विस्मयाद्वीप्सा संधिश्चार्षः । अक्रूरकेणेति कुत्सितः नृशंसः क्रूरः ॥ १९ ॥ अत्र प्रज्ञानं किं न वेत्तीति नोऽस्माकम् अक्ष्णोराह्लादं हरिमन्यत्र नयति येन हेतुना तत्किं तर्हि किमनुरागपरं जनं न वेत्ति । यदि क्वाप्यनुरागरसाभिज्ञो भवेत् तर्हि तद्वियोगदुःखं जानन्नेवं न कुर्यादिति भावः ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ धन्या इति ॥ ये जना इतः केनाप्यनिवारितास्संतो यांति ते धन्याः । यस्मात्पथि यंतं कृष्णं पश्यंतः स्वदेहं पुलकव्याप्तमुद्वहिष्यंतीत्यर्थः ॥ २५ ॥ मथुरेति ॥ मथुरानगर्यां पौरस्त्रीनयनानाम् ॥ २६ ॥ को न्विति ॥ विस्तारीणि कांतिमंति नयनानि यासां ताः ॥ २७ ॥ अहो इति ॥ महानिधितुल्यं श्रीकृष्णं

अनुरागेण शैथिल्यमस्मासु व्रजिते हरौः ॥ शैथिल्यमुपयांत्याशु करेषु वलयान्यपि ॥ २९ ॥ अक्रूरः क्रूरहृदयश्शीघ्रं प्रेरयते हयान् ॥ एव मार्त्तासु योषित्सु कृपा कस्य न जायते ॥ ३० ॥ एष कृष्णरथस्योच्चैश्चक्ररेणुर्निरीक्ष्यताम् ॥ दूरीभूतो हरिर्येन सोऽपि रेणुर्न लक्ष्यते ॥ ३१ ॥ श्रीपराशर उवाच ॥ इत्येवमतिहार्देन गोपीजननिरीक्षितः ॥ तत्याज व्रजभूभागं सह रामेण केशवः ॥ ३२ ॥ गच्छंतो जव नाश्वेन रथेन यमुनातटम् ॥ प्राप्तमध्याह्नसमये रामाक्रूरजनार्दनाः ॥ ३३ ॥ अथाह कृष्णमक्रूरो भवद्भ्यां तावदास्यताम् ॥ यावत्करोमि कालिंद्या आह्निकार्हणमंभसि ॥ ३४ ॥ श्रीपराशर उवाच ॥ तथेत्युक्तस्ततस्नातस्स्वाचांतस्स महामतिः ॥ दध्यौ ब्रह्म परं विप्र प्रविष्टो यमुना जले ॥ ३५ ॥ फणासहस्रमालाढ्यं बलभद्रं ददर्श सः ॥ कुंदमालांगमुन्निद्रपद्मपत्रायतेक्षणम् ॥ ३६ ॥ वृतं वासुकिरंभाद्यैर्महद्भिः पवना शिभिः ॥ संस्तूयमानमुद्गंधिवनमालाविभूषितम् ॥ ३७ ॥ दधानमसिते वस्त्रे चारुरूपावतंसकम् ॥ चारुकुंडलिनं भांतमंतर्जलतले स्थितम् ॥ ॥ ३८ ॥ तस्योत्संगे घनश्याममाताम्रायतलोचनम् ॥ चतुर्बाहुमुदारांगं चक्राद्यायुधभूषणम् ॥ ३९ ॥ पीते वसानं वसने चित्रमाल्योपशोभि तम् ॥ शक्रचापतडिन्मालाविचित्रमिव तोयदम् ॥ ४० ॥ श्रीवत्सवक्षसं चारु स्फुरन्मकरकुंडलम् ॥ ददर्श कृष्णमक्लिष्टं पुंडरीकावतंस कम् ॥ ४१ ॥ सनंदनाद्यैर्मुनिभिस्सिद्धयोगैरकल्मषैः ॥ संचिंत्यमानं तत्रस्थैर्नासाग्रन्यस्तलोचनैः ॥ ४२ ॥

अनुरागेणेति ॥ हरौ अस्मासु शैथिल्यं व्राजिते सति अस्माकं करेषु वलयान्यपि शैथिल्यमुपयांति ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ अथेति ॥ आह्निकार्हणं नित्यं माध्याह्निकाराधनम् ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥

दर्शयित्वा नेत्राण्युत्क्रत्तानि उद्धृतप्रायाणि विरहदुःखाद्वस्त्वंतरदर्शनस्याप्यरुच्या निवृत्तेः ॥ २८ ॥ किं च । अनुरागेणेति ॥ अस्मासु शैथिल्यं व्रजता हरेरनुरागेण सहास्मत्करेषु वलयान्यपि शैथिल्यमुपयांति कृष्णानु रागाविषयभूतत्वादस्मान्त्यक्त्वा वलयान्यपि तमेवानुगमिष्यंतीत्यर्थः । व्रजत इति पाठांतरे अस्मास्वनुरागेण शैथिल्यं प्रयातः अनुरागं शिथिलं कुर्वतः अतो वलयान्यपि शिथिलायंत इत्यर्थः ॥ २९ ॥ अक्रूर इति ॥ क्रूरहृदयो निर्घृणः तत्र हेतुः एवमार्तास्विति ॥ ३० ॥ ३१ ॥ इत्येवमिति ॥ व्रजभूभागं व्रजप्रांतम् ॥ ३२ ॥ गच्छंत इति ॥ जवना वेगयुक्ता अश्वा यस्मिन् तेन रथेन ॥ ३३ ॥ अथेति ॥ आह्निकार्हणं माध्या ह्निकस्नानदेवपूजादि । भवद्भ्यां तावदत्रैवास्यताम् ॥ ३४ ॥ ३५ ॥ इति अक्रूरस्योक्त्या तस्य मनसि बालावेतौ दुर्जयदुष्टकंससकाशं मया वृथैवानीताविति शंकामालक्ष्य जले स्वकीयमैश्वर्यं रूपं ताभ्यां दर्शितम् । असौ दृष्ट्वा तुष्टावेत्याह—फणासहस्रेत्यादिना यावत्समाप्ति । फणासहस्रेति ॥ फणानां सहस्रस्य मालया पंक्त्या आढ्यं युक्तं कुंदानां मालेवातिश्वेतमंगं यस्य तम् ॥ ३६ ॥ वृतमिति ॥ वासुकिरंभाद्यैर्वृतम् ॥ ३७ ॥ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥

बलकृष्णौ तथाक्रूरः प्रत्यभिज्ञाय विस्मितः॥ अचिंतयद्रथाच्छीघ्रं कथमत्रागताविति ॥४३॥ विवक्षोस्तंभयामास वाचं तस्य जनार्दनः ॥ ततो निष्क्रम्य सलिलाद्रथमभ्यागतः पुनः ॥ ४४ ॥ ददर्श तत्र चैवोभौ रथस्योपरि निष्ठितौ ॥ रामकृष्णौ यथापूर्वं मनुष्यवपुषान्वितौ ॥४५॥ निमग्नश्च पुनस्तोये ददर्श च तथैव तौ ॥ संस्तूयमानौ गंधर्वैर्मुनिसिद्धमहोरगैः ॥४६॥ ततो विज्ञातसद्भावस्स तु दानपतिस्तदा ॥ तुष्टाव सर्वं विज्ञानमयमच्युतमीश्वरम् ॥ ४७ ॥ अक्रूर उवाच ॥ सन्मात्ररूपिणेचिंत्यमहिम्ने परमात्मने ॥ व्यापिने नैकरूपैकस्वरूपाय नमोनमः ॥४८॥ सर्वरूपाय तेऽचिंत्यहविर्भूताय ते नमः ॥ नमो विज्ञानपाराय पराय प्रकृतेः प्रभोः ॥ ४९ ॥ भूतात्मा चेंद्रियात्मा च प्रधानात्मा तथा भवान् ॥ आत्मा च परमात्मा च त्वमेकः पंचधा स्थितः ॥ ५० ॥ प्रसीद सर्व सर्वात्मन् क्षराक्षरमयेश्वर ॥ ब्रह्मविष्णुशिवाख्याभिः कल्पनाभिरुदीरितः ॥ ५१ ॥

॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ तत इति ॥ सर्वविज्ञानमयं सर्वस्य विज्ञानप्रचुरं सर्वज्ञमित्यर्थः ॥ ४७ ॥ सन्मात्ररूपिण इति ॥ सन्मात्ररूपिणे मात्रचा सत्ताविरोध्यपक्षयादीनां व्यावृत्तिः, न त्वविरोधिनां नित्यत्वादीनां, नैकरूपैकस्वरूपाय कार्यावस्थायामनेकरूपाय कारणावस्थायामेकरूपाय ॥ ४८ ॥ सर्वरूपायेति ॥ विज्ञानस्य पाराय विज्ञानपर्यवसानाय अस्मात्परं ज्ञेयं नास्ति इत्यर्थः । अविज्ञातपारायेति वा पाठः ॥ ४९ ॥ भूतात्मेति ॥ भूतात्मा शब्दादिसहितपंचभूतशरीरकः । पंचभूतानामात्मेति वा एवमेकादशेंद्रियात्मा एष्वेव बुद्ध्यहंकारयोरंतर्भावः । प्रधानात्मा अव्यक्तात्मा आत्मा समष्टिव्यष्टिमुक्तरूपः परमात्मा आनंदमयः पंचधेति । त्रिविधं ब्रह्मैतदितिवत् ॥ ५० ॥ प्रसीदेति ॥ उक्तप्रकारेण क्षराक्षरमयब्रह्मेति आख्या संज्ञा

॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ तत इति ॥ विज्ञातस्सद्भावः परमार्थो येन सः । सर्वेषां यद्विज्ञानं तन्मयम् ॥ ४७ ॥ सन्मात्रेति ॥ नैकरूपोनेकरूपस्स चासावेकरूपश्च तस्मै कार्यकारणरूपाय ॥ ४८ ॥ सर्वरूपायेति ॥ हे अचिंत्य हविर्भूताय "यत्पुरुषेण हविषा" इति श्रुतेः । अविज्ञातः पारः अंतो यस्य तस्मै । प्रकृतेः पराय तामतिक्रम्य स्थिताय—"आदित्यवर्णं तमसः परस्तात्" इति श्रुतेः ॥ ४९ ॥ भूतात्मेति ॥ भूतात्मा भूतरूपः । इंद्रियात्मा इंद्रियरूपः । प्रधानात्मा प्रकृतिरूपः । आत्मा भूतादितया उपाधिपुरुषः । परमात्मा निरुपाधिः ॥५०॥ प्रसीदेति ॥ सर्व समस्तभूतरूप सर्वस्यात्मन् अत एव क्षराक्षरमयेश्वर क्षराक्षरनियामक । तदुक्तं गीतासु—"क्षरस्सर्वाणि भूतानि कूटस्थोक्षर उच्यते । उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ॥ यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः" इति । कल्पनाभिः

अनाख्येयस्वरूपात्मन्ननाख्येयप्रयोजन ॥ अनाख्येय भिधानं त्वां नतोस्मि परमेश्वर ॥५२॥ न यत्र नाथ विद्यंते नामजात्यादिकल्पनाः ॥ तद्ब्रह्म परमं नित्यमविकारि भवानजः ॥५३॥ न कल्पनामृतेर्थस्य सर्वस्याधिगमो यतः॥ ततः कृष्णाच्युतानंतविष्णुसंज्ञाभिरीडयते ॥५४॥ सर्वार्थास्त्वमज विकल्पनाभिरेतैर्देवाद्यैर्भवति हि यैरनंतविश्वम् ॥ विश्वात्मा त्वमिति विकारहीनमेतत्सर्वस्मिन्न हि भवतोस्ति किंचिद न्यत् ॥ ५५ ॥ त्वं ब्रह्मा पशुपतिरर्यमा विधाता धाता त्वं त्रिदशपतिस्समीरणोऽग्निः ॥ तोयेशो धनपतिरंतकस्त्वमेको भिन्नार्थैर्जगदभिपासि शक्तिभेदैः ॥ ५६ ॥ विश्वं भवान्सृजति सूर्यगभस्तिरूपो विश्वेश ते गुणमयोयमतः प्रपंचः ॥ रूपं परं सदिति वाचकमक्षरं यज्ज्ञानात्मने सदसते प्रणतोऽस्मि तस्मै ॥ ५७ ॥

सैव कल्पना ॥ ५१ ॥ अनाख्येयेति ॥ अनाख्येयस्वरूपात्मा अनंततया सामस्त्येनाभिधातुमशक्यं स्वरूपं निरूपकगुणगणो यस्यात्मनः सोनाख्येयस्वरूपात्मा तत्संबुद्धिः अनाख्येयप्रयोजन । उभयविभूत्यानंदात्मकं प्रयोजनमानंत्यादाख्यातुमशक्यं यस्य स तथाभूत । अनाख्येयाभिधानम् अनंतनामधेयत्वात्परमकारणत्वाच ॥ ५२ ॥ कर्मोपाधिकनामरूपव्याकरणविषयत्वेन जीववत्सुरपशुमनुजादिकल्पना नेत्याह—न यत्रेति ॥ शब्दजातिगुणक्रियाद्रव्यैर्वस्तुनो विशेषणं कल्पना "आकाशो ह वै नामरूपयोर्निर्हिता ते यदंतरा तद्ब्रह्म" इति श्रुतिः । ते नामरूपे अंतरा नामरूपास्पृष्टं यत् तद्ब्रह्मेति ॥ ५३ ॥ तथापि जगदुपकारायोपासकानुग्रहाय च स्वेच्छागृहीतदेवादिविविधरूपनामा ब्रह्मादिभिस्तत्तन्नामभिः स्तूयस इत्याह—न कल्पनामिति ॥ कृष्णादिनामग्रहणं भगवदवतारादिष्वन्येषामपि नाम्नामुपलक्षणं, मोक्षधर्मे चतुर्मुखस्यानिरुद्धोपासनमुक्तम्—"यस्यावताररूपाणि समर्चंति दिवौकसः" इति चास्मिन् पुराणे ॥५४॥ सर्वार्था इति ॥ यैरेतैर्देवाद्यैर्विकल्पनाभूतैरर्थैर्विश्वं भवति ते सर्वार्थास्त्वं विकारहीनमेतदात्मवस्तु च त्वम् अतो विश्वात्मा त्वमिति सर्वस्मिन् भवतोन्यन्न किंचिदस्तीति योजना ॥ ५५ ॥ त्वं ब्रह्मेति ॥ भिन्नार्थैः भिन्न कार्यैः शक्तिभेदैः ब्रह्मादिरूपभेदैः ॥ ५६ ॥ विश्वमिति ॥ सूर्यगभस्तिरूपो भूत्वा वृष्टिद्वारा विश्वं सृजति प्रपंचश्च ते शेषभूतः सदिति पदं यस्य वाचकं तत्सदिति वाचकम् अक्षरं यत्परं रूपम् ॐ तत्सदिति हि गीतम् । ज्ञानात्मने ज्ञानस्वरूपाय सदसते चिदचिदधिष्ठात्रे तस्मै रूपाय नम इति अन्वयः ॥ ५७ ॥

गुणोपाधिभिर्ब्रह्मादिसंज्ञाभिरुदीरितः ॥ ५१ ॥ वस्तुतस्तु, अनाख्येयस्वरूपात्मन्निति ॥ अनाख्येयस्वरूपात्मन् निर्देशानर्हस्वरूप आत्मा स्वभावो यस्य अनाख्येयं स्वरूपं तत्त्वमात्मा मूर्तिश्च यस्येति वा अनाख्येयं प्रयोजनं यस्य । आप्तकामत्वेन लीलाव्यतिरेकेण सृष्ट्यादिप्रयोजनं यस्यानाख्येयत्वात् । यद्वा—अनाख्येयं प्रयोजनं निर्गुणानंदस्तद्रूप । अनाख्येयानि अभिधानानि यस्य तम् । अनामधेयत्वादनंतनामत्वाद्वा ॥ ५२ ॥ तत्रानामत्वे हेतुमाह—न यत्रेति ॥ ५३ ॥ अथ गुणोपाधिककृष्णाच्युतानंतविष्ण्वादिनामत्वमाह—न कल्पनामिति ॥ ५४ ॥ रूपानंत्येनानंतनामत्वं प्रपंचयन्नाह—सर्वार्थास्त्वमित्यादित्रिभिः ॥५५॥५६॥ विश्वमिति ॥ सूर्यगभ

ॐ नमो वासुदेवाय नमस्संकर्षणाय च ॥ प्रद्युम्नाय नमस्तुभ्यमनिरुद्धाय ते नमः ॥ ५८ ॥ इति श्रीविष्णुमहापुराणे पंचमांशेऽष्टादशोऽध्यायः ॥ १८ ॥ ॥ श्रीपराशर उवाच ॥ एवमंतर्जले विष्णुमभिष्टूय स यादवः ॥ अर्चयामास सर्वेशं धूपपुष्पैर्मनोमयैः ॥ १ ॥ परित्यक्तान्यविषयो मनस्तत्र निवेश्य सः ॥ ब्रह्मभूते चिरं स्थित्वा विरराम समाधितः ॥ २ ॥ कृतकृत्यमिवात्मानं मन्यमानो महामतिः ॥ आजगाम रथं भूयो निर्गम्य यमुनांभसः ॥ ३ ॥ ददर्श रामकृष्णौ च यथापूर्वमवस्थितौ ॥ विस्मिताक्षस्तदाऽक्रूरस्तं च कृष्णोऽभ्यभाषत ॥ ४ ॥ श्रीकृष्ण उवाच ॥ नूनं ते दृष्टमाश्चर्यमक्रूर यमुनाजले ॥ विस्मयोत्फुल्लनयनो भवान्संलक्ष्यते यतः ॥ ५ ॥ अक्रूर उवाच ॥ अंतर्जले यदाश्चर्यं दृष्टं तत्र मयाऽच्युत ॥ तदत्रापि हि पश्यामि मूर्त्तिमत्पुरतः स्थितम् ॥ ६ ॥ जगदेतन्महाश्चर्य्यरूपं यस्य महात्मनः ॥ तेनाश्चर्यपरेणाहं भवता कृष्ण संगतः ॥ ७ ॥ तत्किमेतेन मथुरां यास्यामो मधुसूदन ॥ बिभेमि कंसाद्धिग्जन्म परपिंडोपजीविनाम् ॥ ८ ॥ इत्युक्त्वा चोदयामास स हयान् वातरंहसः ॥ संप्राप्तश्चापि सायाह्ने सोऽक्रूरो मथुरां पुरीम् ॥ ९ ॥ विलोक्य मथुरां कृष्णं रामं चाह स यादवः ॥ पद्भ्यां यातं महावीरौ रथेनैको विशाम्यहम् ॥ १० ॥ गंतव्यं वसुदेवस्य नो भवद्भ्यां तथा गृहम् ॥ युवयोर्हि कृते वृद्धस्स कंसेन निरस्यते ॥ ११ ॥ श्रीपराशर उवाच ॥ इत्युक्त्वा प्रविवेशाऽथ सोऽक्रूरो मथुरां पुरीम् ॥ प्रविष्टौ रामकृष्णौ च राजमार्गमुपागतौ ॥ १२ ॥ स्त्रीभिर्नरैश्च सानंदं लोचनैरभिवीक्षितौ ॥ जग्मतुर्लीलया वीरौ मत्तौ बालगजाविव ॥ १३ ॥

ओमिति ॥ ॐ नमो वासुदेवायेत्यादिः चतुर्व्यूहमंत्रः ॥ ५८ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशेऽष्टादशोऽध्यायः ॥ १८ ॥ ॥छ॥ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ तत्किमिति ॥ तत्किमेतेन अस्थाने तत्त्ववादेन किं मे परसेवकस्य । बिभेमि विलंबे कंसः कुप्येदिति । परपिंडोपजीविनां जन्म धिक् यत्साक्षात्कृतेऽपि भवति न संभाषितुं लभ्यते ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

स्तिरूप इति सूर्यरश्मिरूपेण वर्षयन् भवान् चराचरं विश्वं सृजति । सदिति पदं वाचकं यस्य तदक्षरं तव परं रूपम् ॥ ५७ ॥ चतुर्व्यूहरूपं प्रणमति—ओन्नम इति ॥ ५८ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां पंचमांशेऽष्टादशोऽध्यायः ॥ १८ ॥ ॥ १ ॥ २ ॥ ३ ॥ ददर्शेति ॥ विस्मिते अक्षिणी यस्य स तथाऽभवत् ॥ ४ ॥ ५ ॥ ६ ॥ जगदिति ॥ तेनाश्चर्यपरेण भगवतैव अहमंतर्जले चात्र च संगतोस्मि । अतो जल एव विशेषेणाश्चर्यं किं पृच्छसीत्यर्थः ॥ ७ ॥ रथे स्थितं मां जले स्थितः त्वं कथं दृष्टवानिति मोहयन्तमेवाह—तत्किमेतेनेति ॥ परमेश्वरे साक्षाद्दृष्टेपि विलंबे सति कंसः कुप्येदिति कंसाद्बिभेमि अतः परपिंडमन्यैर्दत्तमन्नमुपजीवंति ये तेषां जन्म धिक् ॥ ८ ॥ इतीति ॥ वातस्येव रंहो वेगो येषां तान् ॥ ९ ॥ विलोक्येति ॥ कृष्णमायामोहितस्सन् कंसभयादिव तौ शिक्षयन्नाह—पद्भ्यामिति ॥ पद्भ्यां युवां यातम् आगच्छतम् ॥ १० ॥ गंतव्यमिति ॥ युवयोः कृते युष्मन्निमित्तं निरस्यते आक्षिप्यते ॥ ११ ॥ १२ ॥ १३ ॥

भ्रममाणौ ततो दृष्ट्वा रजकं रंगकारकम् ॥ अयाचेतां सुरूपाणि वासांसि रुचिराणि तौ ॥१४॥ कंसस्य रजकः सोऽथ प्रसादारूढविस्मयः ॥ बहून्याक्षेपवाक्यानि प्राहोच्चै रामकेशवौ ॥१५॥ ततस्तलप्रहारेण कृष्णस्तस्य दुरात्मनः ॥ पातयामास रोषेण रजकस्य शिरो भुवि॥१६॥ हत्वाऽऽदाय च वस्त्राणि पीतनीलांबरौ ततः ॥ कृष्णरामौ मुदा युक्तौ मालाकारगृहं गतौ ॥ १७ ॥ विकासिनेत्रयुगलो मालाकारोतिविस्मितः ॥ एतौ कस्य सुतौ यातौ मैत्रेयाचिंतयत्तदा ॥ १८ ॥ पीतनीलांबरधरौ तौ दृष्ट्वातिमनोहरौ ॥ स तर्कयामास तदा भुवं देवावुपागतौ ॥ १९ ॥ विकासिमुखपद्माभ्यां ताभ्यां पुष्पाणि याचितः ॥ भुवं विष्टभ्य हस्ताभ्यां पस्पर्श शिरसा महीम् ॥२०॥ प्रसादपरमौ नाथौ मम गेहमुपागतौ ॥ धन्योऽहमर्चयिष्यामीत्याह तौ माल्यजीवनः ॥ २१ ॥ ततः प्रहृष्टवदनस्तयोः पुष्पाणि कामतः ॥ चारूण्येतान्यथैतानि प्रददौ स प्रलोभयन् ॥ २२ ॥ पुनःपुनः प्रणम्योभौ मालाकारो नरोत्तमौ ॥ ददौ पुष्पाणि चारूणि गंधवंत्यमलानि च ॥ २३ ॥ मालाकाराय कृष्णोपि प्रसन्नः प्रददौ वरान् ॥ श्रीस्त्वां मत्संश्रया भद्र न कदाचित्त्यजिष्यति ॥ २४ ॥ बलहानिर्न ते सौम्य धनहानिरथापि वा ॥ यावद्दिनानि तावच्च न नशिष्यति संततिः ॥ २५ ॥ भुक्त्वा च विपुलान्भोगांस्त्वमंते मत्प्रसादतः ॥ ममानुस्मरणं प्राप्य दिव्यं लोकमवाप्स्यसि ॥ २६ ॥ धर्मे मनश्च ते भद्र सार्वकालं भविष्यति ॥ युष्मत्संततिजातानां दीर्घमायुर्भविष्यति ॥ २७ ॥

भ्रममाणाविति ॥ रंगकारकं कुसुंभादिना वस्त्राणां रंजनं रंगः । राग इति केनचिदनवहितेन व्याख्यातम् । रंजेरुपधालोपस्मरणात् तस्मादार्षत्वात्साधुत्वमिति ॥१४॥ कंसस्येति ॥ विस्मयः विशिष्टः स्मयः दर्पः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ तत इति ॥ एतानि चारूणीति कतिचित्पूर्वं दत्त्वा पुनरेतान्यतिचारूणीति विलोभयन् ददौ ॥ २२ ॥ २३ ॥ मालाकारायेति ॥ श्रीः मत्संश्रयेति स्वस्य लक्ष्मीपतित्वं भक्तस्य प्रकटयति ॥ २४ ॥ बलहानिरिति ॥ यावद्दिनानि यावत्सूर्यः ॥ २५ ॥ २६ ॥ धर्म इति ॥ सार्वकालं सर्वकालसंबंधि । युष्मदिति बहुत्वं तद्वंशबहुत्वविवक्षया ॥ २७ ॥

भ्रममाणाविति ॥ रजकः वस्त्राणां नेजकः स्वतः तानि वस्त्राणि धातुभिः रंजयन् रंगकारः ॥ १४ ॥ कंसस्येति ॥ प्रसादारूढविस्मयः राज्ञः प्रसादेन गर्वमारूढः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ प्रसादपरमाविति ॥ प्रसादपरमौ अनुग्रहपरौ ॥ २१ ॥ तत इति ॥ कामतस्तदिच्छातः पुष्पाणि दत्त्वा पुनश्चैतानि चारूणि अथैतानि ततोपि चारूणीति प्रलोभयन् अनुरागं जनयन् प्रददौ ॥ २२ ॥ २३ ॥ मालाकारायेति ॥ मत्संश्रया मम वक्षसि स्थिता श्रीस्त्वां न त्यजिष्यति । सर्वसंपत्प्रदैरनुग्रहकटाक्षैर्नित्यं त्वामवलोकयिष्यतीत्यर्थः ॥ २४ ॥ बलहानिरिति ॥ यावद्दिनानि यावत्सूर्यस्तावत् ॥ २५ ॥ २६ ॥ २७ ॥

नोपसर्गादिकं दोषं युष्मत्संततिसंभवः ॥ अवाप्स्यति महाभाग यावत्सूर्यो भविष्यति ॥२८॥ श्रीपराशर उवाच ॥ इत्युक्त्वा तद्गृहात्कृष्णो बलदेवसहायवान् ॥ निर्जगाम मुनिश्रेष्ठ मालाकारेण पूजितः ॥२९॥ इति श्रीविष्णुमहापुराणे पंचमांश एकोनविंशोध्यायः ॥१९॥ ॥ श्रीपराशर उवाच ॥ राजमार्गे ततः कृष्णस्सानुलेपनभाजनाम् ॥ ददर्श कुब्जामायांतीं नवयौवनगोचराम् ॥ १ ॥ तामाह ललितं कृष्णः कस्येदमनुलेपनम् ॥ भवत्या नीयते सत्यं वदेंदीवरलोचने ॥ २ ॥ सकामेनेव सा प्रोक्ता सानुरागा हरिं प्रति ॥ प्राह सा ललितं कुब्जा तद्दर्शनबलात्कृता ॥ ३ ॥ कांत कस्मान्न जानासि कंसेन विनियोजिताम् ॥ नैकवक्रेति विख्यातामनुलेपनकर्मणि ॥ ४ ॥ नान्यपिष्टं हि कंसस्य प्रीतये ह्यनुलेपनम् ॥ भवाम्यहमतीवास्य प्रसादधनभाजनम् ॥ ५ ॥ श्रीकृष्ण उवाच ॥ सुगंधमेतद्राजार्हं रुचिरं रुचिरानने ॥ आवयोर्गात्रसदृशं दीयतामनुलेपनम् ॥ ६ ॥ श्रीपराशर उवाच ॥ श्रुत्वैतदाह सा कुब्जा गृह्यतामिति सादरम् ॥ अनुलेपनं च प्रददौ गात्रयोग्यमथोभयोः ॥ ७ ॥ भक्तिच्छेदानुलिप्तांगौ ततस्तौ पुरुषर्षभौ ॥ सेंद्रचापौ व्यराजेतां सितकृष्णाविवांबुदौ ॥ ८ ॥ ततस्तां चुबुके शौरिरुल्लापनविधानवित् ॥ उत्पाट्य तोलयामास द्व्यंगुलेनाग्रपाणिना ॥ ९ ॥ चकर्ष पद्भ्यां च तदा ऋजुत्वं केशवोऽनयत् ॥ ततस्सा ऋजुतां प्राप्ता योषितामभवद्वरा ॥ १० ॥ विलासललितं प्राह प्रेमगर्भभरालसम् ॥ वस्त्रे प्रगृह्य गोविंदं मम गेहं व्रजेति वै ॥ ११ ॥

॥ २८ ॥ २९ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांश एकोनविंशोऽध्यायः ॥ १९ ॥ ॥ छ ॥ ॥ १ ॥ तामिति ॥ ललितं सविलासम् ॥ २ ॥ सकामेनेति ॥ बलात्कृता वशीकृता ॥ ३ ॥ कांतेति ॥ अनुलेपनकर्मणि गंधवस्तुसाधने नियुक्ताम् ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ भक्तिच्छेदेति ॥ भक्तिच्छेदेन पत्रभंगिरचनया ॥८॥ तत इति ॥ उल्लापनम् ऋजूकरणम् । उत्पाट्य उन्नमय्य ग्रंथिभेदं कृत्वा तोलयामास । तोलनं कंपनम् ॥९॥ चकर्षेति॥ पद्भ्यां चकर्ष पादयोः पद्भ्यामाक्रांतवान् ॥ १० ॥ विलासेति ॥ प्रेमगर्भभरालसम् अंतर्गर्भितप्रेमातिशयमंथरम् ॥ ११ ॥

॥ २८ ॥ २९ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां पंचमांशे एकोनविंशोऽध्यायः ॥ १९ ॥ राजमार्ग इति ॥ सानुलेपनभाजनाम् अनुलेपनभाजनसहितां कुब्जाम् ॥ १ ॥ २ ॥ सकामेनेति ॥ तस्य दर्शनेन बलात्कृता आकृष्टचित्ता सती प्राह ॥ ३ ॥ कांतेति ॥ अनुलेपनकर्मणि गंधवस्तुसाधने कंसेन नियुक्ताम् ॥ ४ ॥ नेति ॥ अन्येन पिष्टम् अन्येन संमर्दितं गंधवस्तु कंसस्य प्रीतये न भवति, अतोहमतीवास्य कंसस्य प्रसादधनभाजनं प्रीतिधनस्य पात्रभूता ॥ ५ ॥ ६ ॥ ७ ॥ भक्तिच्छेदेति ॥ कुंकुमादिवर्णैः कपोलवक्षस्थलभुजादिषु पत्रभंगरचनाभक्तिच्छेदः । भक्तिच्छेदविधिनानुलिप्तांगौ अत एव चित्रवर्णानुलेपनेन स्वांगकांत्या च तयोरिंद्रचापसहितसितकृष्णांबुदसादृश्यम् ॥ ८ ॥ अनुलेपनार्पणफलं सद्य एव दर्शितमित्याह—तत इत्यादिसार्धेन ॥ तत इति ॥ उल्लापनमृजूकरणम् । पाठांतरे उल्लावनमरोगीकरणं तत्प्रकारज्ञः शौरिः मध्यमतर्जनीरूपद्व्यंगुल्युपलक्षितेन अग्रपाणिना पाण्यग्रेण चुबुके मुखस्याधस्तादुत्पाट्योद्धृत्य तोलयामास उच्चालितवान् ॥ ९ ॥ चकर्षेति ॥ स्वपद्भ्यां च पादयोस्तां चकर्ष आक्रांतवान् एवं तामृजुत्वमनयत् ॥ १० ॥ विलासेति ॥ विलासेन कटाक्षनिरीक्षणादिना ललितं यथा भवत्येवं प्राह । लालित्यमेवाह—प्रेमगर्भभरालसम् अंतर्गर्भितप्रेमातिशयेन मंथरं यथा भवत्येवम् ॥ ११ ॥

एवमुक्तस्तया शौरी रामस्यालोक्य चाननम् ॥ प्रहस्य कुब्जां तामाह नैकवक्रामनिंदिताम् ॥१२॥ आयास्ये भवतीगेहमिति तां प्रहसन्हरिः ॥ विससर्ज जहासोच्चै रामस्यालोक्य चाननम् ॥१३॥भक्तिभेदानुलिप्तांगौ नीलपीतांबरौ तु तौ॥धनुश्शालां ततो यातौ चित्रमाल्योपशोभितौ ॥ ॥ १४ ॥ आयागं तद्धनूरत्नं ताभ्यां पृष्टैस्तु रक्षिभिः ॥ आख्याते सहसा कृष्णो गृहीत्वा पूरयद्धनुः ॥ १५ ॥ ततः पूरयता तेन भज्यमानं बलाद्धनुः ॥ चकार सुमहच्छब्दं मथुरा येन पूरिता ॥ १६ ॥ अनुयुक्तौ ततस्तौ तु भग्ने धनुषि रक्षिभिः ॥ रक्षिसैन्यं निहत्योभौ निष्क्रांतौ कार्मुकालयात् ॥ १७ ॥ अक्रूरागमवृत्तांतमुपलभ्य महद्धनुः ॥ भग्नं श्रुत्वा च कंसोऽपि प्राह चाणूरमुष्टिकौ ॥ १८ ॥ कंस उवाच ॥ गोपालदारकौ प्राप्तौ भवद्भ्यां तु ममाग्रतः ॥ मल्लयुद्धेन हंतव्यौ मम प्राणहरौ हि तौ ॥ १९ ॥ नियुद्धे तद्विनाशेन भवद्भ्यां तोषितो ह्यहम् ॥ दास्याम्यभिमतान्कामान्नान्यथैतौ महाबलौ ॥ २० ॥ न्यायतोन्यायतो वापि भवद्भ्यां तौ ममाहितौ ॥ हंतव्यौ तद्वधाद्राज्यं सामान्यं वां भविष्यति ॥ २१ ॥ इत्यादिश्य स तौ मल्लौ ततश्चाहूय हस्तिपम् ॥ प्रोवाचोच्चैस्त्वया मल्लसमाजद्वारि कुंजरः ॥ २२ ॥ स्थाप्यः कुवलयापीडस्तेन तौ गोपदारकौ ॥ घातनीयौ नियुद्धाय रंगद्वारमुपागतौ ॥ २३ ॥ तमप्याज्ञाप्य दृष्ट्वा च सर्वान्मंचानुपाकृतान् ॥ आसन्नमरणः कंसः सूर्योदयमुदैक्षत ॥ २४ ॥ ततः समस्तमंचेषु नागरस्स तदा जनः ॥ राजमंचेषु चारूढास्सह भृत्यैर्नराधिपाः ॥ २५ ॥ मल्लप्राश्निकवर्गश्च रंगमध्यसमीपगः ॥ कृतः कंसेन कंसोऽपि तुंगमंचे व्यवस्थितः ॥ २६ ॥

॥ १२ ॥ आयास्य इति ॥ प्रहसन् प्रसादेन हासं कुर्वन् अस्मदनुग्रहमनुरागं मत्वा इयं मुह्यतीति रामं प्रत्युच्चैर्जहास ॥ १३ ॥ १४ ॥ आयागमिति ॥ आयागम् आभिमुख्येन यागोद्देश्यम् ॥१५॥१६॥ अनुयुक्ताविति ॥ अनुयुक्तौ अभियुक्तौ ॥ १७ ॥ १८ ॥ १९ ॥ नियुद्ध इति ॥ नान्यथा अन्यथा तु न दास्यामि ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ तमिति ॥ उपाकृतान् कल्पितान् ॥ २४ ॥ २५ ॥ मल्लप्राश्निकेति ॥ प्राश्निकाः परीक्षकाः ॥ २६ ॥

॥ १२ ॥ आयास्य इति ॥ कंसं हत्वा बंधूनां सौख्यं विधाय भवंत्या गेहमायास्य इति तां प्रस्थापितवान् । असमय एव स्त्रीणां कामातुरत्वं दृष्ट्वैव जहास ॥ १३ ॥ १४ ॥ आयागमिति ॥ आयागमाभिमुख्ये प्राप्तयागं पूजायामुद्देश्यं पाठांतरे आयोगम् आसमंताद्योज्यं वहुभिर्वाह्यमित्यर्थः । तद्धनूरत्नं श्रेष्ठं धनुः क्वास्तीति पृष्टे रक्षिभिः तस्मिन्नाख्याते सति ॥ १५ ॥ १६ ॥ अनुयुक्ताविति ॥ अनुयुक्तौ आक्षितौ अनिरुद्धाविति वा ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ न्यायत इति ॥न्यायतः मल्लशास्त्रोक्तमार्गेण । अन्यायतः तदतिक्रमेण वा । सामान्यं समानम् ॥ २१ ॥ २२ ॥ २३ ॥ तमिति ॥ उपाकृतान् उपकल्पितान् ॥ २४ ॥ २५ ॥ मल्लप्राश्निकवर्ग इति ॥ मल्लप्राश्निकाः मल्लयुद्धेषु युक्तायुक्तपरीक्षकाः तेषां वर्गस्समूहः ॥ २६ ॥

अंतःपुराणां मंचाश्च तथाऽन्ये परिकल्पिताः ॥ अन्ये च वारमुख्यानामन्ये नागरयोषिताम् ॥२७॥ नंदगोपादयो गोपा मंचेष्वन्येष्ववस्थिताः ॥ अक्रूरवसुदेवौ च मंचप्रांते व्यवस्थितौ ॥ २८ ॥ नागरीयोषितां मध्ये देवकीपुत्रगर्द्धिनी ॥ अंतकालेऽपि पुत्रस्य द्रक्ष्यामीति मुखं स्थिता ॥ ॥ २९ ॥ वाद्यमानेषु तूर्येषु चाणूरे चातिवल्गति ॥ हाहाकारपरे लोके ह्यास्फोटयति मुष्टिके ॥ ३० ॥ ईषद्धसंतौ तौ वीरौ बलभद्रज नार्दनौ ॥ गोपवेषधरौ बालौ रंगद्वारमुपागतौ ॥३१॥ ततः कुवलयापीडो महामात्रप्रचोदितः ॥ अभ्यधावत वेगेन हंतुं गोपकुमारकौ ॥३२॥ हाहाकारो महाञ्जज्ञे रंगमध्ये द्विजोत्तम ॥ बलदेवोऽनुजं दृष्ट्वा वचनं चेदमब्रवीत् ॥ ३३ ॥ हंतव्यो हि महाभाग नागोऽयं शत्रुचोदितः ॥ ॥ ३४ ॥ इत्युक्तस्सोऽग्रजेनाथ बलदेवेन वै द्विज ॥ सिंहनादं ततश्चक्रे माधवः परवीरहा ॥ ३५ ॥ करेण करमाकृष्य तस्य केशिनिषूदनः ॥ भ्रामयामास तं शौरिरैरावतसमं बले ॥ ३६ ॥ ईशोपि सर्वजगतां बाललीलानुसारतः ॥ क्रीडित्वा सुचिरं कृष्णः करिदंतपदांतरे ॥ ३७ ॥ उत्पाट्य वामदंतं तु दक्षिणेनैव पाणिना ॥ ताडयामास यंतारं तस्यासीच्छतधा शिरः ॥ ३८ ॥ दक्षिणं दंतमुत्पाट्य बलभद्रोऽपि तत्क्ष णात् ॥ सरोषस्तेन पार्श्वस्थान् गजपालानपोथयत् ॥ ३९ ॥ ततस्तूत्प्लुत्य वेगेन रौहिणेयो महाबलः ॥ जघान वामपादेन मस्तके हस्तिनं रुषा ॥ ४० ॥ स पपात हतस्तेन बलभद्रेण लीलया ॥ सहस्राक्षेण वज्रेण ताडितः पर्वतो यथा ॥ ४१ ॥ हत्वा कुवलयापीडं हस्त्यारोहप्रचोदितम् ॥ मदासृगनुलिप्तांगौ हस्तिदंतवरायुधौ ॥ ४२ ॥ मृगमध्ये यथा सिंहौ गर्वलीलावलोकिनौ ॥ प्रविष्टौ सुमहारंगं बलभद्रजनार्दनौ ॥ ४३ ॥

॥ २७ ॥ नंदगोपेति ॥ राजमंचप्रांते व्यवस्थितौ रहसि स्वैरालापार्थम् ॥ २८ ॥ नागरीयोषितामिति ॥ पुत्रगर्धिनी गृधु अभिकांक्षायामित्यस्माद्धातोर्णिनिः पुत्रवत्सला ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥

॥ २७ ॥ २८ ॥ नागरीति ॥ पुत्रगर्धिनी पुत्रक्षेमाभिकांक्षिणी पुत्रस्य मुखं द्रक्ष्यामीति स्थिता ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ हत्वेति ॥ मृदासृगनुलिप्तांगौ गजस्य मदरक्ताभ्याम् उक्षितगात्रौ गजस्य दंतावेव वरायुधे ययोस्तौ ॥ ४२ ॥ ४३ ॥

हाहाकारो महाञ्जज्ञे महारंगे त्वनंतरम् ॥ कृष्णोऽयं बलभद्रोयमिति लोकस्य विस्मयः ॥ ४४ ॥ सोऽयं येन हता घोरा पूतना बालघातिनी॥ क्षिप्तं तु शकटं येन भग्नौ तु यमलार्जुनौ ॥ ४५ ॥ सोयं यः कालियं नागं ममर्दारुह्य बालकः ॥ धृतो गोवर्द्धनो येन सप्तरात्रं महागिरिः ॥ ॥ ४६ ॥ अरिष्टो धेनुकः केशी लीलयैव महात्मना ॥ निहता येन दुर्वृत्ता दृश्यतामेष सोऽच्युतः ॥ ४७ ॥ अयं चास्य महाबाहुर्बलभद्रोऽग्रतोऽग्रजः ॥ प्रयाति लीलया योषिन्मनोनयननंदनः ॥ ४८ ॥ अयं स कथ्यते प्राज्ञैः पुराणार्थविशारदैः ॥ गोपालो यादवं वंशं मग्नमभ्युद्धरिष्यति ॥ ४९ ॥ अयं हि सर्वलोकस्य विष्णोरखिलजन्मनः ॥ अवतीर्णो महीमंशो नूनं भारहरो भुवः ॥ ५० ॥ इत्येवं वर्णिते पौरै रामे कृष्णे च तत्क्षणात् ॥ उरस्तताप देवक्याः स्नेहस्नुतपयोधरम् ॥ ५१ ॥ महोत्सवमिवासाद्य पुत्राननविलोकनात् ॥ युवेव वसुदेवोऽभूद्विहायाभ्यागतां जराम् ॥ ५२ ॥ विस्तारिताक्षियुगलो राजांतःपुरयोषिताम् ॥ नागरस्त्रीसमूहश्च द्रष्टुं न विरराम तम् ॥ ५३ ॥ सख्यः पश्यत कृष्णस्य मुखमत्यरुणेक्षणम् ॥ गजयुद्धकृतायासस्वेदांबुकणिकाचितम् ॥ ५४ ॥ विकासिशरदंभोजमवश्यायजलोक्षितम् ॥ परिभूय स्थितं जन्म सफलं क्रियतां दृशः ॥ ५५ ॥ श्रीवत्सांकं महद्धाम बालस्यैतद्विलोक्यताम् ॥ विपक्षक्षपणं वक्षो भुजयुग्मं च भामिनि ॥ ५६ ॥ किं न पश्यसि दुग्धेंदुमृणालधवलाकृतिम् ॥ बलभद्रमिमं नीलपरिधानमुपागतम् ॥ ५७ ॥ वल्गतामुष्टिकेनैव चाणूरेण तथा सखि ॥ क्रीडतो बलभद्रस्य हरेर्हास्यं विलोक्यताम् ॥ ५८ ॥ सख्यः पश्यत चाणूरं नियुद्धार्थमयं हरिः ॥ समुपैति न संत्यत्र किं वृद्धा युक्तकारिणः ॥५९॥

॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ अयं हीति ॥ अखिलजन्मनः अखिलस्य जन्म यस्मिन्निति विग्रहः ॥ ५० ॥ इतीति ॥ तताप तप्तम् ॥ ॥ ५१ ॥ ५२ ॥ विस्तारितेति ॥ राजांतःपुरयोषितां समूह इति शेषः ॥ ५३ ॥ ५४ ॥ ५५ ॥ श्रीवत्सांकमिति ॥ महद्धाम महतो लक्ष्म्यादेर्धाम ॥५६॥ ॥ ५७ ॥ वल्गतेति ॥ वल्गतेत्यादि हेतौ तृतीया हास्यमनादरकृतम् ॥ ५८ ॥ ५९ ॥

॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ विस्तारितेति ॥ राजांतःपुरयोषितां समूह इति शेषः ॥ ५३ ॥ स्त्रीणां च विस्मयोक्तिमाह - सख्य इत्यादिनवभिः—सख्य इति ॥ श्लोकद्वयस्यैकान्वयः । गजयुद्धकृतेनायासेन स्वेदांबुकणिकाभिराचितं व्याप्तम् । अवश्यायजलोक्षितं हिमवार्यलंकृतं शरत्कालीनमंभोजम् । परिभूय स्वशोभाधिक्येन तिरस्कृत्य स्थितं मुखं पश्यत तेन दृशोर्जन्म सफलं क्रियताम् ॥ ५४ ॥ ५५ ॥ श्रीवत्सांकमिति ॥ महद्धाम महतो लक्ष्म्यादेराश्रयभूतं वक्षः विपक्षक्षपणं भुजयुग्मं च विलोक्यताम् ॥ ५६ ॥ ५७ ॥ वल्गतेति ॥ वल्गता प्रनृत्यता ॥ ५८ ॥ ५९ ॥

क्व यौवनोन्मुखीभूतसुकुमारतनुर्हरिः ॥ क्व वज्रकठिनाभोगशरीरोऽयं महासुरः ॥ ६० ॥ इमौ सुललितैरंगैर्वर्त्तेते नवयौवनौ ॥ दैतेयमल्लाश्चा णूरप्रमुखास्त्वतिदारुणाः ॥ ६१ ॥ नियुद्धप्राश्निकानां तु महानेष व्यतिक्रमः ॥ यद्बालबलिनोर्युद्धं मध्यस्थैस्समुपेक्ष्यते ॥ ६२ ॥ श्रीपराशर उवाच ॥ इत्थं पुरस्त्रीलोकस्य वदतश्चालयन्भुवम् ॥ ववल्ग बद्धकक्ष्योंतर्जनस्य भगवान्हरिः ॥ ६३ ॥ बलभद्रोऽपि चास्फोटय ववल्ग ललितं तथा ॥ पदेपदे तथा भूमिर्यन्न शीर्णा तदद्भुतम् ॥ ६४ ॥ चाणूरेण ततः कृष्णो युयुधेऽमितविक्रमः ॥ नियुद्धकुशलो दैत्यो बलभद्रेण मुष्टिकः ॥ ६५ ॥ सन्निपातावधूतैस्तु चाणूरेण समं हरिः ॥ प्रक्षेपणैर्मुष्टिभिश्च कीलवज्रनिपातनैः ॥ ६६ ॥ पादोद्धूतैः प्रमृष्टैश्च तयोर्युद्धमभून्महत् ॥ ६७ ॥ अशस्त्रमतिघोरं तत्तयोर्युद्धं सुदारुणम् ॥ बलप्राणविनिष्पाद्यं समाजोत्सवसन्निधौ ॥ ६८ ॥ यावद्यावच्च चाणूरो युयुधे हरिणा सह ॥ प्राणहानिमवापाग्र्यां तावत्तावल्लवाल्लवम् ॥ ६९ ॥ कृष्णोपि युयुधे तेन लीलयैव जगन्मयः ॥ खेदाच्चालयता कोपान्निजकेसरशेखरम् ॥ ७० ॥ बलक्षयं विवृद्धिं च दृष्ट्वा चाणूरकृष्णयोः ॥ वारयामास तूर्याणि कंसः कोपपरायणः ॥ ७१ ॥

॥ ६० ॥ ६१ ॥ ६२ ॥ इत्थमिति ॥ बद्धकक्ष्यः दृढीकृतपरिकरः ॥ ६३ ॥ ६४ ॥ ६५ ॥ सन्निपातेति ॥ सन्निपातैः आदावन्योन्यं हस्तसंघट्टैः अवधूतैः। अपहस्ताख्येन बहिर्हस्तेन संश्लिष्टांगमोचनैः प्रक्षेपणैः आकृष्य निरसनैः कीलपातः कूर्परेण घातः वज्रपातः अरत्निद्वयस्वस्तिकांतरितान्यमात्रघातः मध्यमानामिकांतर्गतांगुष्ठमुष्टिविशेषघातो वा ॥ ६६ ॥ पादोद्धूतैरिति ॥ पादेन परस्योद्धूतैः प्रमृष्टाख्यैः सर्वांगग्रहणान्निपात्य निष्पेषणैः । प्रसृष्टैरिति पाठे उत्पाटय निरसनैः ॥६७॥ अशस्त्रमिति ॥ बलप्राणौ मनस्तनुशक्ती समाजोत्सवसन्निधौ सोत्सवसमाजसन्निधौ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥

क्वेति ॥ वज्रवत्कठिनमाभोगं विशालं शरीरं यस्य सः ॥ ६० ॥ ६१ ॥ नियुद्धेति ॥ समुपेक्ष्यते न निवार्यते ॥ ६२ ॥ इत्थमिति ॥ बद्धकक्ष्यः दृढीकृतपरिकरस्सन् जनस्यांतः रंगमद्ध्ये ववल्ग ननर्त ॥ ६३ ॥ ॥ ६४ ॥ ६५ ॥ सन्निपातेति ॥ सन्निपातः परस्परसंश्लेषः । अवधूतमवाक्पातनं तैः प्रक्षेपणैः प्रकृष्य आकृष्य निरसनैः मुष्टिभिः मुष्टिप्रहारैः कालनिपातनं कूर्परेण घातः वज्रनिपातनम् अरत्निद्वयेन घातः तैः । कीलवज्रनिपातिभिरिति पाठे कीलवद्वज्रवच्च निपातो येषामिति मुष्टिविशेषणम् ॥ ६६ ॥ पादोद्धूतैरिति ॥ पादोद्धूतैः पद्भ्यामुत्क्षेपणैः । प्रसृष्टैः सर्वावयवविशेषपिंडीकरणैः ॥ ६७ ॥ अशस्त्रमिति ॥ बलेन शौर्येण प्राणेन देहशक्त्या च विनिष्पाद्यम् ॥ ६८ ॥ यावदिति ॥ प्राणहानिं बलक्षयलक्षणाम् अग्र्यामाद्यां प्रागदृष्टामित्यर्थः । लवाल्लवं किंचित्किंचित् ॥ ६९ ॥ कृष्ण इति ॥ ईषत्कोपाच्च निजशेखरे स्वशिरोभूषणे स्थितं केसरं चालयता धुन्वता तेन चाणूरेण ॥ ७० ॥ ७१ ॥

मृदंगादिषु तूर्येषु प्रतिषिद्धेषु तत्क्षणात् ॥ खे संगतान्यवाद्यंत देवतूर्याण्यनेकशः ॥ ७२ ॥ जय गोविंद चाणूरं जहि केशव दानवम् ॥ अंतर्द्धानगता देवास्तमूचुरतिहर्षिताः ॥ ७३ ॥ चाणूरेण चिरं कालं पीडित्वा मधुसूदनः ॥ उत्पाट्य भ्रामयामास तद्वधाय कृतोद्यमः ॥ ७४ ॥ भ्रामयित्वा शतगुणं दैत्यमल्लममित्रजित् ॥ भूमावास्फोटयामास गगने गतजीवितम् ॥ ७५ ॥ भूमावास्फोटितस्तेन चाणूरः शतधाऽभवत् ॥ रक्तस्रावमहापंकां चकार च तदा भुवम् ॥ ७६ ॥ बलदेवोऽपि तत्कालं मुष्टिकेन महाबलः ॥ युयुधे दैत्यमल्लेन चाणूरेण यथा हरिः ॥ ७७ ॥ सोऽप्येनं मुष्टिना मूर्ध्नि वक्षस्याहत्य जानुना ॥ पातयित्वा धरापृष्ठे निष्पिपेष गतायुषम् ॥ ७८ ॥ कृष्णस्तोशलकं भूयो मल्लराजं महाबलम् ॥ वाममुष्टिप्रहारेण पातयामास भूतले ॥ ७९ ॥ चाणूरे निहते मल्ले मुष्टिके विनिपातिते ॥ नीते क्षयं तोशलके सर्वे मल्लाः प्रदुद्रुवुः ॥ ८० ॥ ववल्गतुस्ततो रंगे कृष्णसंकर्षणावुभौ ॥ समानवयसो गोपान्बलादाकृष्य हर्षितौ ॥ ८१ ॥ कंसोऽपि कोपरक्ताक्षः प्राहोच्चैर्व्यायतान्नरान् ॥ गोपावेतौ समाजौघान्निष्क्राम्येतां बलादितः ॥ ८२ ॥ नंदोऽपि गृह्यतां पापो निर्गलैरायसैरिह ॥ अवृद्धार्हेण दंडेन वसुदेवोऽपि वध्यताम् ॥ ८३ ॥ वल्गंति गोपाः कृष्णेन ये चेमे सहिताः पुरः ॥ गावो निगृह्यतामेषां यच्चास्ति वसु किंचन ॥ ८४ ॥ एवमाज्ञापयानं तु प्रहस्य मधुसूदनः ॥ उत्प्लुत्यारुह्य तं मंचं कंसं जग्राह वेगतः ॥ ८५ ॥ केशेष्वाकृष्य विगलत्किरीटमवनीतले ॥ स कंसं पातयामास तस्योपरि पपात च ॥ ८६ ॥ अशेषजगदाधारगुरुणा पततोपरि ॥ कृष्णेन त्याजितः प्राणानुग्रसेनात्मजो नृपः ॥ ८७ ॥ मृतस्य केशेषु तदा गृहीत्वा मधुसूदनः ॥ चकर्ष देहं कंसस्य रंगमध्ये महाबलः ॥ ८८ ॥

॥ ७२ ॥ जयेति ॥ जय न तावताल‌म् जहि च ॥ ७३ ॥ ७४ ॥ भ्रामयित्वेति ॥ शतगुणं शतकृत्वः ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ ॥ ८१ ॥ कंस इति ॥ व्यायतान् कृतश्रमान् ॥ ८२ ॥ ८३ ॥ वल्गंतीति ॥ गावः यत्किंचन अस्ति वसु तत्सर्वं निगृह्यताम् ॥ ८४॥ ८५॥८६॥८७॥८८॥

॥ ७२ ॥ ७३ ॥ ७४ ॥ भ्रामयित्वा शतगुणमिति ॥ शतगुणं शतवारम् ॥ ७५ ॥ ७६ ॥ बलदेवोपि तत्कालमिति ॥ तत्कालं तस्मिन्नेव काले ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ ववल्गतुरिति ॥ ववल्गतुः नृत्यं चक्रतुः ॥ ८१ ॥ कंस इति ॥ व्यायतान् सर्वतः स्थितान् समाजौघान् समाजानामनेकेषां समूहान् ॥ ८२ ॥ ८३ ॥ वल्गंतीति ॥ वसु धनम् ॥ ८४ ॥ ८५ ॥ ८६ ॥ अशेषेति ॥ अशेषस्य जगतः आधारेणाभिव्याप्य धारणेन गुरुणा ॥ ८७ ॥ ८८ ॥

गौरवेणातिपतता परिघातेन कृष्यता ॥ कृता कंसस्य देहेन वेगेनेव महांभसः॥८९॥कंसे गृहीते कृष्णेन तद्भ्राताऽभ्यागतो रुषा ॥ सुनामा बलभद्रेण लीलयैव निपातितः॥९०॥ ततो हाहाकृतं सर्वमासीत्तद्रंगमंडलम्॥अवज्ञया हतं दृष्ट्वा कृष्णेन मथुरेश्वरम्॥९१॥कृष्णोऽपि वसुदेवस्य पादौ जग्राह सत्वरः ॥ देवक्याश्च महाबाहुर्बलदेवसहायवान् ॥ ९२ ॥ उत्थाप्य वसुदेवस्तं देवकी च जनार्दनम् ॥ स्मृतजन्मोक्तवचनौ तावेव प्रणतौ स्थितौ ॥ ९३ ॥ श्रीवसुदेव उवाच ॥ प्रसीद सीदतां दत्तो देवानां यो वरः प्रभो ॥ तथावयोः प्रसादेन कृतोद्धारस्स केशव ॥९४॥ आराधितो यद्भगवानवतीर्णो गृहे मम ॥ दुर्वृत्तनिधनार्थाय तेन नः पावितं कुलम् ॥९५॥ त्वमंतः सर्वभूतानां सर्वभूतमयस्थितः ॥ प्रवर्त्तंते समस्तात्मंस्त्वत्तो भूतभविष्यती ॥ ९६ ॥ यज्ञैस्त्वमिज्यसेऽचिंत्य सर्वदेवमयाच्युत ॥ त्वमेव यज्ञो यष्टा च यज्वनां परमेश्वरः ॥ ९७ ॥ समुद्भवस्समस्तस्य जगतस्त्वं जनार्दन ॥ ९८ ॥ सापह्नवं मम मनो यदेतत्त्वयि जायते ॥ देवक्याश्चात्मजप्रीत्या तदत्यंतविडंबना ॥ ९९ ॥

गौरवेणेति ॥ कृष्यमाणेन देहेन परिघाकृता ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ प्रसीदेत्यादि ॥ सीदतां देवानां यो वरो दत्तः स आवयोः प्रसादेन जननरूपेण कृतोद्धारः निर्व्यूढः ॥ ९४ ॥९५॥ त्वमिति ॥ अंतः अवसानं प्रवर्त्तंते । अत्र लड्विवक्षितः ॥ ९६ ॥ ९७ ॥९८॥ सापह्नवमिति ॥ त्वयीश्वरे पुत्रप्रीत्या सापह्नवं सस्नेहं मनो जायते इति यत् मम तदत्यंतहास्यत्वावहम् ॥ ९९ ॥

गौरवेणेति ॥ कृष्यता आकृष्यमाणेन तेन देहेन परिवाकृता ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ उत्थाप्येति ॥ स्मृतजन्मोक्तवचनाविति "स्तुतोहं यत्त्वया पूर्वं पुत्रार्थिन्या तदद्य ते । सफलं देवि संजातं जातोहं यत्तवोदरात् ॥" इति । भगवता जन्मसमये यदुक्तं वचनं तत्स्मृतं याभ्यां तौ ॥ ९३ ॥ प्रसीदेति ॥ अस्य श्लोकस्य व्याख्यानद्वयानुसारतः पाठत्रयं वर्तते तथाहि "प्रसीद सीदतां दत्तो देवानां यो वरः प्रभो । तथावयोः प्रसादेन कृतोद्धारः स केशव ॥" "प्रसीद सीदतां दत्तो देवानां च वरः प्रभो । तथावयोः प्रसादेन कृतोद्धारोसि केशव ॥ प्रसीद सीदतां दत्तो देवानां यो वरः प्रभो । तथावयोः प्रसादश्च कृतोद्धारस्स केशव ॥" हे केशव सीदतां प्राणिनां प्रसीद । देवानां च वरो भूभाहरणलक्षणो वरो दत्तः । तथावयोश्च युवयोः पुत्रो भविष्यामीति प्रसादेन पुत्रभत्वोत्पत्त्या कृतोद्धारोसि । कृतः उद्धारः संसारादुद्धरणं येन तथाभूतोसि वा । पाठांतरे आवयोः नौ यः कृतः प्रसादः पुत्रो भविष्यामीत्येवं प्रतिज्ञालक्षणः स च कृतोद्धारः कृताविष्कारः स्फुटीकृत इति यावत् । एवमन्येषामपि सीदतां प्रसन्नो भवेत्यर्थः ॥ ९४ ॥ किं च यदुशापाभिभूतं चास्मत्कुलं पवित्रीकृतमित्याह—आराधित इति ॥ किं च मदाराधनं निमित्तीकृत्य दुर्वृत्तानां निधनाय त्वं मद्गृहेऽवतीर्णोसि ॥ ९५ ॥ एतावता न चैव त्वं मत्पुत्रः परमेश्वरत्वादित्याशयेनाह—त्वमंतरित्यादिद्वाभ्याम् ॥ ९६ ॥ ९७ ॥ ९८ ॥ सापह्नवमिति ॥ यत्त्वेतन्मम च देवक्याश्च मनः त्वयात्मज इति प्रीत्या सापह्नवं भ्रांतियुक्तं जायते तदत्यंतविडंबना जनापहास्यतैव ॥ ९९ ॥

त्वं कर्ता सर्वभूतानामनादिनिधनो भवान् ॥ त्वां मनुष्यस्य कस्यैषा जिह्वा पुत्रेति वक्ष्यति ॥ १०० ॥ जगदेतज्जगन्नाथ संभूतमखिलं यतः ॥ कया युक्त्या विना मायां सोऽस्मत्तः संभविष्यति ॥ १०१ ॥ यस्मिन्प्रतिष्ठितं सर्वं जगत्स्थावरजंगमम् ॥ स कोष्ठोत्संगशयनो मानुषो जाय ते कथम् ॥ १०२ ॥ स त्वं प्रसीद परमेश्वर पाहि विश्वमंशावतारकरणैर्न ममासि पुत्रः ॥ आब्रह्मपादपमिदं जगदेतदीश त्वत्तो विमोहयसि किं पुरुषोत्तमास्मान् ॥ १०३ ॥ मायाविमोहितदृशा तनयो ममेति कंसाद्भयं कृतमपास्तभयोऽतितीव्रम् ॥ नीतोऽसि गोकुलमरातिभया कुलेन वृद्धिं गतोऽसि मम नास्ति ममत्वमीश ॥ १०४ ॥ कर्माणि रुद्रमरुदश्विशतक्रतूनां साध्यानि यस्य न भवंति निरीक्षितानि ॥ त्वं विष्णुरीश जगतामुपकारहेतोः प्राप्तोसि नः परिगतो विगतो हि मोहः ॥ १०५ ॥ ॥ इति श्रीविष्णुमहापुराणे पंचमांशे विंशोध्यायः ॥ ॥ २० ॥ ॥ श्रीपराशर उवाच ॥ तौ समुत्पन्नविज्ञानौ भगवत्कर्मदर्शनात् ॥ देवकी वसुदेवौ तु दृष्ट्वा मायां पुनर्हरिः ॥ मोहाय यदुच क्रस्य विततान स वैष्णवीम् ॥ १ ॥

त्वमिति ॥ त्वां क मानुषकस्येति पाठे मानुषकस्य कुत्सायां कः । पुत्रेति वक्ष्यती वदंती जिह्वा क कुत्र ॥ १०० ॥ जगदिति ॥ मायामोहिनी भगवच्छक्तिः ॥ ॥ १०१ ॥ यस्मिन्निति ॥ कोष्ठोत्संगशयनः गर्भावस्थायां कोष्ठे शेते बाल्ये तूत्संगे ॥ १०२ ॥ १०३ ॥ १०४ ॥ कर्माणीति ॥ यस्य कर्माणि रुद्रा दीनामप्यसाध्यानि प्रत्यक्षितानि स त्वं जगदर्थं पुत्रतयास्मान् प्राप्तोसीति इदं परिगतं ज्ञातम् । हि हेतौ हि यस्मान्मोहो विगतः । यानीति पाठे तानीति च तस्मादि त्यध्याहृत्य योज्यम् ॥ १०५ ॥ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशे विंशोध्यायः ॥ २० ॥ ताविति ॥ मायां योगमायाम् ॥ १ ॥

एतदेव स्पष्टयति—त्वं कर्तेत्यादित्रिभिः ॥ १०० ॥ १०१ ॥ यस्मिन्निति ॥ कोष्ठांगशयनः उदरांतर्वर्तीभूत्वा ॥ १०२ ॥ तदेव परमेश्वर इति ज्ञात्वा प्रार्थयते—सत्त्वमिति ॥ अंशावतारकरणैर्विश्वं पाहि जगदेतत्त्वत्तो भवति ॥ १०३ ॥ मायाविमोहितेन मया त्वय्येतावंतं कालं पुत्रबुद्धिः कृता अधुना तु सा बुद्धिर्मिथ्यैवेत्याह—मायाविमोहितदृशेति ॥ १०४ ॥ ममत्वाभावे हेतुमाह—कर्माणीति ॥ यस्य तव कर्माणि रुद्रादीनामपि साध्यानि न भवंति निरीक्षितानि प्रत्यक्षतो दृष्टानि च न भवंति अचिंत्याद्भुतकर्मत्वात्तवेति भावः । यद्वा—निरीक्षितानि प्रत्यक्षीकृतानि अतः स त्वं साक्षाद्विष्णुरेव जगतामुपकाराय नः अस्माकं पुत्रत्वमिषेण प्राप्तोसीति परिगतः सम्यग्ज्ञातोऽसि अतः मोहो विनष्टः ॥ १०५ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां पंचमांशे विंशोऽध्यायः ॥ २० ॥ ताविति ॥ सार्धश्लोकस्यैकान्वयः ।

उवाच चांब हे तात चिराडुत्कंठितेन मे ॥ भवंतौ कंसभीतेन दृष्टौ संकर्षणेन च ॥ २ ॥ कुर्वतां याति यः कालो मातापित्रोरपूजनम् ॥ तत्खंडमायुषो व्यर्थमसाधूनां हि जायते ॥३॥ गुरुदेवद्विजातीनां मातापित्रोश्च पूजनम् ॥ कुर्वतां सफलः कालो देहिनां तात जायते ॥ ४ ॥ तत्क्षंतव्यमिदं सर्वमतिक्रमकृतं पितः ॥ कंसवीर्यप्रतापाभ्यामावयोः परवश्ययोः ॥ ५ ॥ श्रीपराशर उवाच ॥ इत्युक्त्वाऽथ प्रणम्योभौ यदुवृद्धाननुक्रमात् ॥ यथावदभिपूज्याथ चक्रतुः पौरमाननम् ॥६॥ कंसपत्न्यस्ततः कंसं परिवार्य हतं भुवि ॥ विलेपुर्मातरश्चास्य दुःखशोकपरिप्लुताः॥७॥बहुप्रकारमस्वस्थाः पश्चात्तापातुरो हरिः ॥ तास्समाश्वासयामास स्वयमस्राविलेक्षणः॥८॥उग्रसेनं ततो बंधान्मुमोच मधुसूदनः॥ अभ्यसिंचत्तदैवैनं निजराज्ये हतात्मजम् ॥९॥ राज्येभिषिक्तः कृष्णेन यदुसिंहस्सुतस्य सः ॥ चकार प्रेतकार्याणि ये चान्ये तत्र घातिताः ॥ ॥ १० ॥ कृतौर्द्ध्वदैहिकं चैनं सिंहासनगतं हरिः ॥ उवाचाज्ञापय विभो यत्कार्यमविशंकितः ॥ ११ ॥ ययातिशापाद्वंशोयमराज्यार्होपि सांप्रतम् ॥ मयि भृत्ये स्थिते देवानाज्ञापयतु किं नृपैः ॥ १२ ॥ श्रीपराशर उवाच ॥ इत्युक्त्वा सोऽस्मरद्वायुमाजगाम च तत्क्षणात् ॥ उवाच चैनं भगवान्केशवः कार्यमानुषः ॥१३॥ गच्छेदं ब्रूहि वायो त्वमलं गर्वेण वासव ॥ दीयतामुग्रसेनाय सुधर्मा भवता सभा ॥ १४ ॥ कृष्णो ब्रवीति राजार्हमेतद्रत्नमनुत्तमम् ॥ सुधर्माख्यसभायुक्तमस्यां यदुभिरासितुम् ॥ १५ ॥ श्रीपराशर उवाच ॥ इत्युक्तः पवनो गत्वा सर्वमाह शचीपतिम् ॥ ददौ सोऽपि सुधर्माख्यां सभां वायोः पुरंदरः ॥ १६ ॥ वायुना चाहृतां दिव्यां सभां ते यदुपुंगवाः ॥ बुभुजुस्सर्वरत्नाढ्यां गोविंदभुजसंश्रयाः ॥ १७ ॥

उवाचेति ॥ मे मया ॥ २ ॥ ३ ॥ ४ ॥ तदिति ॥ अतिक्रमकृतमिदं सर्वं क्षंतव्यम् । अतिक्रमकारणमाह—कंसवीर्येति ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ॥ ९ ॥ १० ॥ ११ ॥ ययातीति ॥ किं नृपैः ॥ १२ ॥ आज्ञतैः इतीति ॥ कार्यमानुषः धर्मसंस्थापनादिकार्येण मानुषः ॥ १३ ॥ १४ ॥ ॥ १५ ॥ १६ ॥ १७ ॥

तयोर्मोहाय यदुचक्रस्य च मोहाय मायां विततान विस्तारितवान् ॥ १ ॥ २ ॥ कुर्वतामिति ॥ अपूजनं प्रजाविरुद्धं कुर्वतामित्यर्थः ॥ ३ ॥ ४ ॥ ५ ॥ इतीति ॥ पौरमाननं पौराणां सम्माननम् ॥ ६ ॥ ७ ॥ ८ ॥ ॥ ९ ॥ १० ॥ कृतौर्ध्वदैहिकमिति ॥ हतानां कृतमौर्ध्वदैहिकं श्राद्धादि येन तम् ॥ ११ ॥ १२ ॥ इत्युक्त्वेति ॥ कार्यमानुषः कार्येण निमित्तेन मानुषः ॥ १३ ॥ गच्छेंद्रमिति ॥ वक्तव्यमाह—अलं गर्वेणेत्यादिपादोनद्वाभ्याम् ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

विदिताऽखिलविज्ञानौ सर्वज्ञानमयावपि ॥ शिष्याचार्यक्रमं वीरौ ख्यापयंतौ यदूत्तमौ ॥ १८ ॥ ततस्सांदीपनिं काश्यमवंतीपुरवासिनम् ॥ विद्यार्थं जग्मतुर्बालौ कृतोपनयनक्रमौ ॥ १९ ॥ वेदाभ्यासकृतप्रीती संकर्षणजनार्दनौ ॥ तस्य शिष्यत्वमभ्येत्य गुरुवृत्तिपुरौ हि तौ ॥ दर्शयांचक्रतुर्वीरावाचारमखिले जने ॥ २० ॥ सरहस्यं धनुर्वेदं ससंग्रहमधीयताम् ॥ अहोरात्रचतुष्षष्ट्या तदद्भुतमभूद्द्विज ॥ ॥ २१ ॥ सांदीपनिरसंभाव्यं तयोः कर्मातिमानुषम् ॥ विचिंत्य तौ तदा मेने प्राप्तौ चंद्रदिवाकरौ ॥ २२ ॥ सांगांश्च चतुरो वेदान्सर्वशास्त्राणि चैव हि ॥ अस्त्रग्राममशेषं च प्रोक्तमात्रमवाप्य तौ ॥ २३ ॥ ऊचतुर्व्रियतां या ते दातव्या गुरुदक्षिणा ॥ २४ ॥ सोप्यतींद्रियमालोक्य तयोः कर्म महामतिः ॥ अयाचत मृतं पुत्रं प्रभासे लवणार्णवे ॥ २५ ॥ गृहीतास्त्रौ ततस्तौ तु सार्घ्यहस्तो महोदधिः ॥ उवाच न मया पुत्रो हृतस्सांदीपनेरिति ॥ २६ ॥ दैत्यः पंचजनो नाम शंखरूपस्स बालकम् ॥ जग्राह योस्ति सलिले ममैवासुरसूदन ॥२७॥ श्रीपराशर उवाच ॥ इत्युक्त्वोंतर्जलं गत्वा हत्वा पंचजनं च तम् ॥ कृष्णो जग्राह तस्यास्थिप्रभवं शंखमुत्तमम् ॥ २८ ॥ यस्य नादेन दैत्यानां बलहानिरजायत ॥ देवानां ववृधे तेजो यात्यधर्मश्च संक्षयम् ॥ २९ ॥ तं पाञ्चजन्यमापूर्य गत्वा यमपुरं हरिः ॥ बलदेवश्च बलवाञ्जित्वा वैवस्वतं यमम् ॥ ३० ॥ तं बालं यातनासंस्थं यथापूर्वशरीरिणम् ॥ पित्रे प्रदत्तवान्कृष्णो बलश्च बलिनां वरः ॥ ३१ ॥

त्वो

विदितेति ॥ "मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः" इत्यमरः । क्रमः पारंपर्यम् ॥ १८ ॥ तत इति ॥ काश्यं वाराणसीजातम् ॥ १९ ॥ ॥ २० ॥ सरहस्यमिति ॥ रहस्यम् अस्त्रमंत्रोपनिषत् संग्रहः अस्त्रप्रयोगसंस्थानाद्युपदेशः । अधीयताम् अधीतवंतौ आर्षत्वात्साधुः ॥ २१ ॥ सांदीपनिरिति ॥ असंभाव्यम् अन्येषु कर्म शस्त्रास्त्राणां शीघ्रधारणशीघ्रप्रयोगादिकम् ॥ २२ ॥ २३ ॥ २४ ॥ स इति ॥ अतींद्रियं दिव्यम् ॥ २५ ॥ २६ ॥ २७ ॥ ॥ २८ ॥ २९ ॥ ३० ॥ तमिति ॥ यथापूर्वशरीरिणं कृत्वेति शेषः ॥ ३१ ॥

॥ १८ ॥ तत इति ॥ काश्यं काश्यां वाराणस्यां जातम् ॥ १९ ॥ २० ॥ सरहस्यमिति ॥ सरहस्यम् अस्त्रमंत्रोपनिषत्सहितं संग्रहश्शास्त्रप्रयोगः तत्सहितमधीतवंतौ ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ सोपीति ॥ अतींद्रियमन्यत्रादृष्टपूर्वम् ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ तमिति ॥ यथापूर्वशरीरिणं पूर्वं तस्य यादृशं शरीरमासीत्तादृशशरीरयुक्तं स्वमायया निर्माय ददौ ॥ ३१ ॥

मथुरां च पुनः प्राप्तावुग्रसेनेन पालिताम् ॥ प्रहृष्टपुरुषस्त्रीकामुभौ रामजनार्दनौ ॥ ३२ ॥ इति श्रीविष्णुमहापुराणे पंचमांश एकविंशो ध्यायः ॥ २१ ॥ ॥ श्रीपराशर उवाच ॥ जरासंधसुते कंस उपयेमे महाबलः ॥ अस्तिं प्राप्तिं च मैत्रेय तयोर्भर्तृहणं हरिम् ॥ १ ॥ महा बलपरीवारो मगधाधिपतिर्बली ॥ हंतुमभ्याययौ कोपाज्जरासंधस्सयादवम् ॥ २ ॥ उपेत्य मथुरां सोऽथ रुरोध मगधेश्वरः ॥ अक्षौहिणीभि स्सैन्यस्य त्रयोविंशतिभिर्वृतः ॥ ३ ॥ निष्क्रम्याल्पपरीवारावुभौ रामजनार्दनौ ॥ युयुधाते समं तस्य बलिनौ बलिसैनिकैः ॥ ४ ॥ ततो रामश्च कृष्णश्च मतिं चक्रतुरंजसा ॥ आयुधानां पुराणानामादाने मुनिसत्तम ॥ ५ ॥ अनंतरं हरेश्शार्ङ्गं तूणी चाक्षयसायकौ ॥ आकाशादागतौ विप्र तथा कौमोदकी गदा ॥ ६ ॥ हलं च बलभद्रस्य गगनादागतं महत् ॥ मनसोऽभिमतं विप्र सानंदं मुसलं तथा ॥ ॥ ७ ॥ ततो युद्धे पराजित्य ससैन्यं मगधाधिपम् ॥ पुरीं विविशतुर्वीरावुभौ रामजनार्दनौ ॥ ८ ॥ जिते तस्मिन्सुदुर्वृत्ते जरासंधे महा मुने ॥ जीवमाने गते कृष्णस्तेनामन्यत नाजितम् ॥ ९ ॥ पुनरप्याजगामाऽथ जरासंधो बलान्वितः ॥ जितश्च रामकृष्णाभ्यामपक्रांतो द्विजोत्तम ॥ १० ॥ दश चाष्टौ च संग्रामानेवमत्यंतदुर्मदः ॥ यदुभिर्मागधो राजा चक्रे कृष्णपुरोगमैः ॥ ११ ॥ सर्वेष्वेतेषु युद्धेषु याद वैस्स पराजितः ॥ अपक्रांतो जरासंधस्स्वल्पसैन्यैर्बलाधिकः ॥ १२ ॥ न तद्बलं यादवानां विजितं यदनेकशः ॥ तत्तु सन्निधिमाहात्म्यं विष्णोरंशस्य चक्रिणः ॥ १३ ॥ मनुष्यधर्मशीलस्य लीला सा जगतीपतेः ॥ अस्त्राण्यनेकरूपाणि यदरातिषु मुंचति ॥ १४ ॥

॥ ३२ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांश एकविंशोऽध्यायः ॥ २१ ॥ ॥ छ ॥ ॥ १ ॥ २ ॥ उपेत्येति ॥ त्रयोविंश तिभिः त्रयोविंशत्या ॥ ३ ॥ ४ ॥ तत इति ॥ अंजसा शीघ्रम् ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ जित इति ॥ तेन जरासंधेन आत्मानमजितं न मेने जितमित्येव मेने ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ न तदित्यादि ॥ जरासंधेन न जितमिति यत्र तद्यादवानां न सामर्थ्यम् ॥ १३ ॥ १४ ॥

॥ ३२ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां पंचमांश एकविंशोऽध्यायः ॥ २१ ॥ ॥ जरासंधेति ॥ अस्तिप्राप्तिसंज्ञे जरासंधसुते तयोर्भर्तृहणं कंसहंतारम् ॥ १ ॥ महाबलेति ॥ मगधाधिपतिर्जरासंधः । सयादवं यादवसहितम् ॥ २ ॥ उपेत्येति ॥ सैन्यस्य त्रयोविंशत्यक्षौहिणीभिर्वृतः ॥ ३ ॥ निष्क्रम्येति ॥ तस्य बलिभिस्सैनिकैस्सह ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ जित इति ॥ तं निर्जितं नामन्यत पुनस्तदागमस्यावश्यंभावित्वात् । पाठांतरे तेनैव निर्जितमात्मानम् अमन्यतेत्यर्थः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ नेति ॥ न विजितं जरासंधेनेति शेषः ॥ १३ ॥ ननु चक्रिणस्सन्निधिमात्र

मनसैव जगत्सृष्टिं संहारं च करोति यः ॥ तस्यारिपक्षक्षपणे कियानुद्यमविस्तरः ॥१५॥ तथाऽपि यो मनुष्याणां धर्मस्तमनुवर्त्तते ॥ कुर्वन्बलवता संधिं हीनैर्युद्धं करोत्यसौ ॥ १६ ॥ साम चोपप्रदानं च तथा भेदं च दर्शयन् ॥ करोति दंडपातं च क्वचिदेव पलायनम् ॥ १७ ॥ मनुष्यदेहिनां चेष्टामित्येवमनुवर्त्तते ॥ लीला जगत्पतेस्तस्य च्छंदतः परिवर्त्तते ॥ १८ ॥ ॥ इति श्रीविष्णुमहापुराणे पंचमांशे द्वाविंशोऽध्यायः ॥ २२ ॥ ॥ श्रीपराशर उवाच ॥ गार्ग्यं गोष्ठ्यां द्विजं श्यालष्षंड इत्युक्तवान्द्विज ॥ यदूनां सन्निधौ सर्वे जहसुर्यादवास्तदा ॥१॥ ततः कोपपरीतात्मा दक्षिणापथमेत्य सः ॥ सुतमिच्छंस्तपस्तेपे यदुचक्रभयावहम् ॥ २ ॥ आराधयन्महादेवं लोहचूर्णमभक्षयत् ॥ ददौ वरं च तुष्टोऽस्मै वर्षे तु द्वादशे हरः ॥ ३ ॥ संतोषयामास च तं यवनेशो ह्यनात्मजः ॥ तद्योषित्संगमाच्चास्य पुत्रोऽभूदलिसन्निभः ॥ ४ ॥ तं कालयवनं नाम राये स्वे यवनेश्वरः ॥ अभिषिच्य वनं यातो वज्राग्रकठिनोरसम् ॥ ५ ॥ स तु वीर्यमदोन्मत्तः पृथिव्यां बलिनो नृपान् ॥ अपृच्छन्नारदस्तस्मै कथयामास यादवान् ॥ ६ ॥ म्लेच्छकोटिसहस्राणां सहस्रैस्सोभिसंवृतः ॥ गजाश्वरथसंपन्नैश्चकार परमोद्यमम् ॥ ७ ॥

॥ १५ ॥ १६ ॥ साम चेति ॥ क्वचिद्यवनादौ ॥ १७ ॥ १८ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशे द्वाविंशोऽध्यायः ॥२२॥ ॥छ॥ गार्ग्यमिति ॥ षंड इति अपहासोऽनपत्यत्वात् ॥ १ ॥ तत इति ॥ दक्षिणापथं विंध्याद्दक्षिणदेशम् ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

माहात्म्यात्तन्न भवति स्वयमेवानेकविधास्त्रप्रयोगात्तत्राह–मनुष्यधर्मशीलस्येति ॥ मनुष्यधर्मशीलस्य सा लीलेति ॥ १४ ॥ लीलात्वमेव प्रपंचयति–मनसैवेति यावत्समाप्ति ॥ १५ ॥ १६ ॥ १७ ॥ मनुष्येति ॥ छंदतः इच्छातः लीला परिवर्तते ॥ १८ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां पंचमांशे द्वाविंशोऽध्यायः ॥ २२ ॥ ॥ क्वचित्पलायनं करोतीत्युक्तस्य पलायनस्य प्रस्तावाय कालयवनोत्पत्त्यादिप्रकारमाख्यायिकया वर्णयति–गार्ग्यमित्यादिना मथुरां ययावित्यंतेन ॥ गार्ग्यमिति ॥ गार्ग्यस्यानपत्यत्वात्तं षंड इत्युक्तवान् श्यालोपहसन्॥ १ ॥ २ ॥ आराधयन्निति ॥ स गार्ग्यो महादेवमाराधयन्नायसचूर्णं व्रतरूपेणाभक्षयत् ॥ ३ ॥ संतोषयामासेति ॥ तं चैवं लब्धवरमागतं ज्ञात्वा अनात्मजो पुत्रो यवनेशस्स्वभार्यायां पुत्रोत्पादनाय प्रार्थयिष्यन् तं संतोषयामास । आलिसन्निभः भृंगवत्कृष्णवर्णः ॥ ४ ॥ तमिति ॥ वज्राग्रात् कठिनोरसम् ॥ ५ ॥ ६ ॥ ७ ॥

प्रययौ स व्यवच्छिन्नं छिन्नयानो दिनेदिने ॥ यादवान्प्रति सामर्षो मैत्रेय मथुरां पुरीम् ॥ ८ ॥ कृष्णोऽपि चिंतयामास क्षपितं यादवं बलम् ॥ यवनेन रणे गम्यं मागधस्य भविष्यति ॥ ९ ॥ मागधस्य बलं क्षीणं स कालयवनो बली ॥ हंतैतदेवमायातं यदूनां व्यसनं द्विधा ॥ १० ॥ तस्माद्दुर्गं करिष्यामि यदूनामरिदुर्जयम् ॥ स्त्रियोऽपि यत्र युद्ध्येयुः किं पुनर्वृष्णिपुंगवाः ॥ ११ ॥ मयि मत्ते प्रमत्ते वा सुप्ते प्रवसितेऽपि वा ॥ यादवाभिभवं दुष्टा मा कुर्वंस्त्वरयोधिकाः ॥ १२ ॥ इति संचिंत्य गोविंदो योजनानां महोदधिम् ॥ ययाचे द्वादशपुरीं द्वारकां तत्र निर्ममे ॥ ॥ १३ ॥ महोद्यानां महावप्रां तटाकशतशोभिताम् ॥ प्रासादगृहसंबाधामिंद्रस्येवामरावतीम् ॥ १४ ॥ मथुरावासिनं लोकं तत्रानीय जनार्दनः ॥ आसन्ने कालयवने मथुरां च स्वयं ययौ ॥ १५ ॥ बहिरावासिते सैन्ये मथुराया निरायुधः ॥ निर्जगाम च गोविंदो ददर्श यवनश्च तम् ॥ १६ ॥

प्रययाविति ॥ छिन्नयानः त्यक्तयानः । दिनेदिने श्रांतं श्रांतं यानं त्यक्त्वा अन्येनाश्रांतेन प्रययावित्यर्थः ॥ ८ ॥ कृष्णोपीत्यादि ॥ प्रागेव क्षीणं मागधस्य बलं स कालयवनो बलित्वाद्धंता अतोस्य बलं यादवैर्दुर्धर्षं यादवबलं चानेन क्षपितं चेत् मागधस्य गम्यं साध्यं भविष्यति अतो द्विधा व्यसनमायातमिति चिंतयामासेत्यन्वयः । अथवा यवनेन क्षपितं यादवबलं मागधस्य गम्यं च भविष्यति यद्यपि मागधस्य बलं प्रागेव क्षीणं तथापि तत्सहायो यवनो बली हंतैतदिति एतत् एतस्मात् कारणात् द्विविधं व्यसनमायातमिति चिंतयामासेति । हंतेति विषादे ॥ ९ ॥ १० ॥ ११ ॥ मयीति ॥ प्रमत्ते अनवहिते । प्रवसिते प्रोषिते ॥ १२ ॥ १३ ॥ महोद्यानामिति ॥ वप्रः प्राकारमूलधिष्ण्यम् ॥ १४ ॥ १५ ॥ बहिरिति ॥ बहिरावासिते सैन्ये कालयवनेनेति शेषः ॥ १६ ॥

प्रययाविति ॥ सः छिन्नयानः अतिश्रांतं गजाश्वादिवाहनं त्यक्त्वा वाहनांतरे पूर्वमेव तत्र स्थापितेन व्यवच्छिन्नं यथा भवत्येवं मथुरां प्रययावित्यर्थः ॥ ८ ॥ कृष्णोपीति ॥ श्लोकद्वयमेकं वाक्यम् । एकतः कालयवने अन्यतश्च मागधे प्राप्तवति श्रीकृष्णश्चिंतयामास । कथं यवनेन रणे युद्धे तेन क्षपितं क्षीणप्रायं यादवबलं सैन्यं मागधस्य गम्यं साध्यं भविष्यतीति । मागधेन चेत् प्रथमं रणः क्रियते च तर्हि मागधस्य रणे मागधेन सह युद्धे क्षीणं यादवबलं सैन्यं स काल इति यवनो बली हंता हनिष्यति । तदेवं द्विधा उभयतोपि यदूनां व्यसनं प्राप्तम् ॥ ९ ॥ १० ॥ ११ ॥ मयीति ॥ किं च मयि मत्ते मद्यादिना प्रमत्ते अनवहिते प्रवसिते अन्यत्र गते ॥ १२ ॥ इतीति ॥ द्वादशयोजनानि समुद्रं याचितवान् ॥ १३ ॥ महोद्यानामिति ॥ महान् वप्रो यस्याः । प्रासादगृहसंबाधां प्रासादैर्गृहैश्च संकीर्णाम् । प्राकारगृहसंबाधामिति च पाठः ॥ १४ ॥ १५ ॥ बहिरिति ॥ आवासिते पुरमवरुद्ध्य निवेशिते ॥ १६ ॥

स ज्ञात्वा वासुदेवं तं बाहुप्रहरणं नृपः ॥ अनुयातो महायोगी चेतोभिः प्राप्यते न यः ॥ १७ ॥ तेनानुयातः कृष्णोऽपि प्रवि
वेश महागुहाम् ॥ यत्र शेते महावीर्यो मुचुकुंदो नरेश्वरः ॥ १८ ॥ सोऽपि प्रविष्टो यवनो दृष्ट्वा शय्यागतं नृपम् ॥ पादेन ताडयामास मत्वा
कृष्णं सुदुर्मतिः ॥ १९ ॥ उत्थाय मुचुकुंदोऽपि ददर्श यवनं नृपः ॥ २० ॥ दृष्टमात्रश्च तेनाऽसौ जज्वाल यवनोऽग्निना ॥ तत्क्रोधजेन मैत्रेय
भस्मीभूतश्च तत्क्षणात् ॥ २१ ॥ स हि देवासुरे युद्धे गतो हत्वा महासुरान् ॥ निद्रार्त्तस्सुमहाकालं निद्रां वव्रे वरं सुरान् ॥ २२ ॥ प्रोक्तश्च
देवैस्संसुप्तं यस्त्वामुत्थापयिष्यति ॥ देहजेनाग्निना सद्यस्स तु भस्मीभविष्यति ॥२३॥ एवं दग्ध्वा स तं पापं दृष्ट्वा च मधुसूदनम् ॥ कस्त्व
मित्याह सोऽप्याह जातोहं शशिनः कुले ॥ वसुदेवस्य तनयो यदोर्वंशसमुद्भवः ॥ २४ ॥ मुचुकुंदोऽपि तत्राऽसौ वृद्धगार्ग्यवचोऽस्मरत् ॥२५॥
संस्मृत्य प्रणिपत्यैनं सर्वं सर्वेश्वरं हरिम् ॥ प्राह ज्ञातो भवान्विष्णोरंशस्त्वं परमेश्वर ॥ २६ ॥ पुरा गार्ग्येण कथितमष्टाविंशतिमे युगे ॥ द्वाप
रांते हरेर्जन्म यदुवंशे भविष्यति ॥ २७ ॥ स त्वं प्राप्तो न संदेहो मर्त्यानामुपकारकृत् ॥ २८ ॥ तथाहि सुमहत्तेजो नालं सोढुमहं तव ॥
तथाहि सजलांभोदनादधीरतरं तव ॥ वाक्यं नमति चैवोर्वी युष्मत्पादप्रपीडिता ॥ २९ ॥ देवासुरमहायुद्धे दैत्यसैन्यमहाभटाः ॥ न सेहुर्मम ते
जस्ते त्वत्तेजो न सहाम्यहम् ॥ ३० ॥ संसारपतितस्यैको जंतोस्त्वं शरणं परम् ॥ प्रसीद त्वं प्रपन्नार्त्तिहर नाशय मेऽशुभम् ॥ ३१॥ त्वं पयो
निधयश्शैलस्सरितस्त्वं वनानि च ॥ मेदिनी गगनं वायुरापोऽग्निस्त्वं तथा मनः ॥ ३२ ॥ बुद्धिरव्याकृतप्राणाः प्राणेशस्त्वं तथा पुमान् ॥ पुंसः
परतरं यच्च व्याप्य जन्म विकारवत् ॥ ३३ ॥ शब्दादिहीनमजरममेयं क्षयवर्जितम् ॥ अवृद्धिनाशं तद्ब्रह्म त्वमाद्यंतविवर्जितम् ॥ ३४ ॥

स इति ॥ स ज्ञात्वा नारदोक्तलक्षणैः ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ मुचुकुंद इति ॥ वृद्धगार्ग्यवचः
"यथार्थं द्वापरस्यांते समुत्पत्स्यति केशवः" इत्यादि ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ बुद्धिरिति ॥ प्राणेशो व्यष्टि
वर्गः । पुमान् समष्टिपुरुषः । पुंसः परतरमिति परस्वरूपमाह ॥ ३३ ॥ ३४ ॥

स इति ॥ स यवनः । तं वासुदेत्रं नारदोक्तैर्लक्षणैर्ज्ञात्वा अनुयातः अन्वधावत । कथंभूतं महायोगिनामपि चेतोभिरपि यो न प्राप्यते तम् ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ दृष्टमात्रश्चेति ॥ तत्क्रोधजेनेति ॥ तत्क्रोधो
द्दीपितेन स्वदेहजेनेत्यर्थः ॥ २१ ॥ तस्य भस्मीभावे कारणमाह—स हीति द्वाभ्याम् ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ स त्वमिति ॥ हरेर्जन्म भविष्यतीति गार्ग्येण कथितो हरिस्त्वमेवेति ॥ २८ ॥
अत्र लिंगान्याह—तथाहीति सार्धद्वाभ्याम् ॥ २९ ॥ ३० ॥ संसारेति ॥ त्वं प्रपन्नार्तिहरः अतो ममाशुभं नाशय ॥ ३१ ॥ ३२ ॥ बुद्धिरिति ॥ त्वं व्यापिसर्वकार्यानुगतम् अजन्म विकारवत् जन्माख्यविकारशू
न्यम ॥ ३३ ॥ शब्देति ॥ आद्यंतविवर्जितं देशतः कालतोऽपरिच्छिन्नम् ॥ ३४ ॥

त्वत्तोऽमरास्सपितरो यक्षगंधर्वकिन्नराः ॥ सिद्धाश्चाप्सरसस्त्वत्तो मनुष्याः पशवः खगाः ॥ ३५ ॥ सरीसृपा मृगास्सर्वे त्वत्तस्सर्वे महीरुहाः ॥ यच्च भूतं भविष्यं च किंचिदत्र चराचरम् ॥ ३६ ॥ मूर्त्तामूर्त्तं तथा चापि स्थूलं सूक्ष्मतरं तथा ॥ तत्सर्वं त्वं जगत्कर्त्ता नास्ति किंचित्त्वया विना ॥ ३७ ॥ मया संसारचक्रेऽस्मिन्भ्रमता भगवंस्तदा ॥ तापत्रयाभिभूतेन न प्राप्ता निर्वृतिः क्वचित् ॥ ३८ ॥ दुःखान्येव सुखानीति मृगतृष्णाजलाशयाः ॥ मया नाथ गृहीतानि तानि तापाय मेऽभवन् ॥ ३९ ॥ राज्यमुर्वी बलं कोशो मित्रपक्षस्तथात्मजाः ॥ भार्या भृत्यजनो ये च शब्दाद्या विषयाः प्रभो ॥ ४० ॥ सुखबुद्ध्या मया सर्वं गृहीतमिदमव्ययम् ॥ परिणामे तदेवेश तापात्मकमभून्मम ॥ ४१ ॥ देवलोकगतिं प्राप्तो नाथ देवगणोऽपि हि ॥ मत्तस्साहाय्यकामोभूच्छाश्वती कुत्र निर्वृतिः ॥ ४२ ॥ त्वामनाराध्य जगतां सर्वेषां प्रभवास्पदम् ॥ शाश्वती प्राप्यते केन परमेश्वर निर्वृतिः ॥ ४३ ॥ त्वन्मायामूढमनसो जन्ममृत्युजरादिकान् ॥ अवाप्य तापान्पश्यंति प्रेतराजमनंतरम् ॥ ॥ ४४ ॥ ततो निजक्रियासूतिनरकेष्वतिदारुणम् ॥ प्राप्नुवंति नरा दुःखमस्वरूपविदस्तव ॥४५॥ अहमत्यंतविषयी मोहितस्तव मायया ॥ ममत्वगर्वगर्त्तांतर्भ्रमामि परमेश्वर ॥ ४६ ॥ सोऽहं त्वां शरणमपारमप्रमेयं संप्राप्तः परमपदं यतो न किंचित् ॥ संसारश्रमपरितापतप्तचेता निर्वाणे परिणतधाम्नि साभिलाषः ॥ ४७ ॥ ॥ इति श्रीविष्णुमहापुराणे पंचमांशे त्रयोविंशोऽध्यायः ॥ २३ ॥

॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ तत इति ॥ निजक्रियासूति स्वकर्मजम् ॥ ४५॥४६॥ सोहमिति ॥ परमपदं परमप्राप्यं यतः परमपदं न किंचित् तं त्वामित्यन्वयः । परिणतधाम्नि निरतिशयतेजसि ॥ ४७ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशे त्रयोविंशोध्यायः ॥ २३ ॥

॥३५॥३६॥३७॥३८॥ दुःखान्येवेति ॥ यथा जलाशया मृगतृष्णा मूढैर्गृह्यते तथा दुःखान्येव सुखबुद्ध्या गृहीतानि ॥३९॥४०॥४१॥४२॥४३॥४४॥ तत इति ॥ ततो नरकेषु निजक्रियासूतिस्वकर्मजं दुःखं प्राप्नुवंति । अस्वरूपविदः तव स्वरूपमजानंतः ॥ ४५ ॥ अहमिति ॥ मम त्वं च तन्निमित्तो गर्वः स एव गर्तः तन्मध्ये भ्रमामि ॥ ४६ ॥ सोहमिति ॥ परमपदरूपं त्वां यतस्त्वत्तो न किंचिद्व्यतिरिक्तमस्ति तं त्वाम् । परमपरमिति पाठे त्वत्तः परमपरं च किंचिन्नास्ति "यस्मात्परं नापरमस्ति किंचित्" इति श्रुतेः । तं त्वां परिणतधाम्नि परिपक्वयोगिनामाश्रये निर्वाणे ॥ ४७ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां पंचमांशे त्रयोविंशोऽध्यायः ॥ २३ ॥

"श्रीपराशर उवाच ॥ इत्थंस्तुतस्तदा तेन मुचुकुन्देन धीमता॥ प्राहेशः सर्वभूतानामनादिनिधनो हरिः॥१॥ श्रीभगवानुवाच ॥ यथाभिवांछितान्दिव्यान्गच्छलोकान्नराधिप ॥ अव्याहतपरैश्वर्यो मत्प्रसादोपबृंहितः ॥२॥ भुक्त्वा दिव्यान्महाभोगान्भविष्यसि महाकुले ॥ जातिस्मरो मत्प्रसादात्ततोमोक्षमवाप्स्यसि ॥३॥ श्रीपराशर उवाच ॥ इत्युक्तः प्रणिपत्येशं जगतामच्युतं नृपः ॥ गुहामुखाद्विनिष्क्रांतस्स ददर्शाल्पकान्नरान्॥ ॥४॥ततः कलियुगं मत्वा प्राप्तं तप्तुं नृपस्तपः ॥ नरनारायणस्थानं प्रययौ गंधमादनम् ॥५॥ कृष्णोपि घातयित्वारिमुपायेन हि तद्बलम् ॥ जग्राह मथुरामेत्य हस्त्यश्वस्यंदनोज्ज्वलम् ॥ ६ ॥ आनीय चोग्रसेनाय द्वारवत्यां न्यवेदयत् ॥ पराभिभवनिश्शंकं बभूव च यदोः कुलम् ॥ ७ ॥ बलदेवोऽपि मैत्रेय प्रशांताखिलविग्रहः ॥ ज्ञातिदर्शनसोत्कंठः प्रययौ नंदगोकुलम् ॥ ८ ॥ ततो गोपाश्च गोप्यश्च यथा पूर्वममित्रजित् ॥ तथैवाभ्यवदत्प्रेम्णा बहुमानपुरस्सरम् ॥ ९ ॥ स कैश्चित्संपरिष्वक्तः कांश्चिच्च परिषस्वजे ॥ हास्यं चक्रे समं कैश्चिद्गोपैर्गोपीजनैस्तथा ॥ १० ॥ प्रियाण्यनेकान्यवदन् गोपास्तत्र हलायुधम् ॥ गोप्यश्च प्रेमकुपिताः प्रोचुस्सेर्ष्यमथापराः ॥ ११ ॥ गोप्यः पप्रच्छुरपरा नागरीजनवल्लभम् ॥ कच्चिदास्ते सुखं कृष्णश्चलप्रेमलवात्मकः ॥ १२ ॥ अस्मच्चेष्टामपहसन्न कच्चित्पुरयोषिताम् ॥ सौभाग्यमानमधिकं करोति क्षणसौहृदः ॥ १३ ॥ कच्चित्स्मरति नः कृष्णो गीतानुगमनं कलम् ॥ अप्यसौ मातरं द्रष्टुं सकृदप्यागमिष्यति ॥ १४ ॥

॥ १ ॥२ ॥ ३ ॥४॥ तत इति ॥ प्राप्तमासन्नम् ॥५॥६॥७॥८॥ ९ ॥ स इति ॥ कैश्चिद्वृद्धैः कांश्चिद्यवीयसः कैश्चित्समैः ॥१०॥ प्रियाणीति ॥ गोप्यश्च मध्यस्थाः अपरा रामकांताः ॥११॥ गोप्य इति ॥ अपराः कृष्णकांता गोप्यः पप्रच्छुः ॥१२॥ अस्मदिति ॥ सौभाग्यमेव मानम्। अस्मच्चेष्टामपहसन्निति नागरीगर्वहेतुः। चेष्टापहसनमिति पाठेऽप्यवहसनं गर्वहेतुः ॥ १३ ॥ कच्चिदिति ॥ गीतानुगमनं गीतस्यानुगमनम् अप्यसावित्युत्कंठा चकारोध्याहार्य्यः ॥ १४ ॥

॥ १ ॥ कृतानां काम्यानां कर्मणां फलमादौ भुंक्ष्व जन्मांतरे मोक्षं ददामीत्याह–यथाभिवांछितानित्यादिद्वाभ्याम् ॥ २ ॥ ३ ॥ मम सत्त्वशुद्ध्यभावाद्भगवता न मुक्तिर्दत्तेति मत्वा तपस्तप्तुं ययावित्याह–इत्युक्त इत्यादिद्वाभ्याम् ॥ ४ ॥ ५ ॥ कृष्ण इति ॥ उपायेन मुचुकुंदं द्रष्टुं कृष्ण एक एव गिरिगुहां गत्वा यवनं घातयित्वा द्वारकामागतः ॥ ६ ॥ ७ ॥ तथा रामोप्येकाकी गोकुलं गत्वा कालिंदीकर्षणादिकं कृत्वा गत इति वक्ष्यन्नाह–बलदेवोपीत्यादिना यावदुत्तराध्यायपरिसमाप्ति–बलदेवोपीति ॥ ज्ञातीनां दर्शने सोत्कंठः चातुर्यवान् ॥ ८ ॥ ९ ॥ स इति ॥ यथान्यायं ज्येष्ठैस्संपरिष्वक्तः कनिष्ठान् परिषस्वजे समैर्हास्यं चक्रे ॥ १० ॥ प्रियाणीति ॥ हलायुधं प्रति काश्चिद्गोप्यो रामवल्लभाः प्रेमकुपिताः प्रोचुः एता एवापरास्सेर्ष्यं प्रोचुः ॥ ११ ॥ कृष्णवल्लभानां प्रश्नमाह–गोप्य इत्यादिसप्तभिः–गोप्य इति ॥ चलप्रेमलवः आत्मा स्वभावो यस्य सः ॥ १२ ॥ तदेवाह–अस्मदिति ॥ अस्माकं ग्राम्याणां चेष्टामपहसन् तेन सौभाग्यमानम् सौभाग्यगर्वम् अधिकं कच्चिन्न करोति प्रायशः करोतीति सेर्ष्यः प्रश्नः ॥ १३ ॥ विदग्धमन्या

अथ वा किं तदालापैः क्रियंतामपराः कथाः ॥ यस्यास्माभिर्विना तेन विनाऽस्माकं भविष्यति ॥ १५ ॥ पिता माता तथा भ्राता भर्त्ता बंधुजनश्च किम् ॥ संत्यक्तस्तत्कृतेस्माभिरकृतज्ञध्वजो हि सः ॥ १६ ॥ तथापि कच्चिदालापमिहागमनसंश्रयम् ॥ करोति कृष्णो वक्तव्यं भवता राम नानृतम् ॥ १७ ॥ दामोदरोऽसौ गोविंदः पुरस्त्रीसक्तमानसः ॥ अपेतप्रीतिरस्मासु दुर्दर्शः प्रतिभाति नः ॥ १८ ॥ आमंत्रितश्च कृष्णेति पुनर्दामोदरेति च ॥ जहसुस्सस्वरं गोप्यो हरिणा हृतचेतसः ॥ १९ ॥ संदेशैस्साममधुरैः प्रेमगर्भैरगर्वितैः ॥ रामेणाश्वासिता गोप्यः कृष्णस्यातिमनोहरैः ॥ २० ॥ गोपैश्च पूर्ववद्रामः परिहासमनोहराः ॥ कथाश्चकार रेमे च सह तैर्व्रजभूमिषु ॥ २१ ॥ इति श्रीविष्णु महापुराणे पंचमांशे चतुर्विंशोध्यायः ॥ २४ ॥

अथ वेति ॥ अथवेति निर्वेदः भविष्यति जीवनं कालयात्रा वा इदं चित्तसमाधानं विनेति स्नेहानुतापौ ॥ १५ ॥ पितेति ॥ किं किमर्थं संत्यक्तः अकृतज्ञानां ध्वजः प्रधानः॥१६॥ तथापीति ॥ तथापीति प्रत्याशा ॥ १७ ॥ दामोदर इति ॥ दुर्दर्श इति नैराश्योक्तिः ॥ १८ ॥ आमंत्रितश्चेति ॥ अत्र भावसंकरस्य बीजं हरिणा हृतचेतस्त्वम् । अत्र कृष्णरतिरूपस्थायीभावः तत्संचारीभावस्तु निर्वेदादि ॥ १९ ॥ २० ॥ २१ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशे चतुर्विंशोध्यायः ॥ २४ ॥

ऊचुः—कच्चिदिति ॥ गीतानुगमनं स्वगीतानुसरणम् अस्मद्गानं कलं मधुरं कच्चित्स्मरतीत्यर्थः । प्रणयकोपादाहुः—अप्यसौ मातरमिति ॥ १४ ॥ सनिर्वेदमूचुः अथवेति ॥ यस्य यथास्माभिर्विना तत्र स्थितिः तथा अस्माकमपि तेन विनात्र दुःखेनापि स्थितिर्भविष्यत्येवेत्यर्थः ॥१५॥ शोकतप्ता ऊचुः पितामातेति ॥ अकृतज्ञेषु ध्वज इव दृश्यः प्रसिद्ध इत्यर्थः ॥१६॥ आशाबद्धा ऊचुः तथापीति ॥१७॥ नैराश्यात्परस्परमूचुः दामोदर इति ॥ असाविति रामं लक्षीकृत्य कृष्णाकृष्टचित्ततया दामोदरो गोविंद इति च तमेव वदंति अस्मासु अपेतप्रीतिरतो दुर्दर्शः प्रतिभातीति नैराश्योक्तिः ॥ १८ ॥ राममेवालक्ष्योचुः । पुनश्च कृष्णवार्तां प्रष्टुम् आमंत्रित इति ॥ हे कृष्ण दामोदरेति स राम एवामंत्रितः । ताभिः यतो हरिणा हृतचेतसः ततः सहसा स्वयं कृष्णनाम्ना रामसंबोधलक्षणं संमोहं ज्ञात्वा सस्वरमुच्चैर्जहसुः ॥ १९ ॥ संदेशैरिति ॥ साम्ना प्रियोक्त्या मधुरैस्संदेशैराश्वासिताः ॥ २० ॥ २१ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां पंचमांशे चतुर्विंशोऽध्यायः ॥ २४ ॥

॥ श्रीपराशर उवाच ॥ वने विचरतस्तस्य सह गोपैर्महात्मनः ॥ मानुषच्छद्मरूपस्य शेषस्य धरणीधृतः ॥ १ ॥ निष्पादितो रुकार्यस्य कार्येणोर्वीप्रचारिणः ॥ उपभोगार्थमत्यर्थं वरुणः प्राह वारुणीम् ॥ २ ॥ अभीष्टा सर्वदा यस्य मदिरे त्वं महौजसः ॥ अनंतस्योपभोगाय तस्य गच्छ मुदे शुभे ॥ ३ ॥ इत्युक्ता वारुणी तेन सन्निधानमथाकरोत् ॥ वृंदावनसमुत्पन्नकदंबतरुकोटरे ॥ ४ ॥ विचरन् बलदेवोऽपि मदिरागंधमुत्तमम् ॥ आघ्राय मदिरातर्षमवापाथ वराननः ॥ ५ ॥ ततः कदंबात्सहसा मद्यधारां स लांगली ॥ पतंतीं वीक्ष्य मैत्रेय प्रययौ परमां मुदम् ॥ ६ ॥ पपौ च गोपगोपीभिस्समुपेतो मुदान्वितः ॥ प्रगीयमानो ललितं गीतवाद्यविशारदैः ॥ ७ ॥ स मत्तोत्यंतघर्मांभःकणिकामौक्तिकोज्ज्वलः ॥ आगच्छ यमुने स्नातुमिच्छामीत्याह विह्वलः ॥ ८ ॥ तस्य वाचं नदी सा तु मत्तोक्तामवमत्य वै ॥ नाजगाम ततः क्रुद्धो हलं जग्राह लांगली ॥ ९ ॥ गृहीत्वा तां हलांतेन चकर्ष मदविह्वलः ॥ पापे नायासि नायासि गम्यतामिच्छयान्यतः ॥१०॥ साकृष्टा सहसा तेन मार्गं संत्यज्य निम्नगा ॥ यत्रास्ते बलभद्रोऽसौ प्लावयामास तद्वनम् ॥ ॥ ११ ॥ शरीरिणी तदाऽभ्येत्य त्रासविह्वललोचना ॥ प्रसीदेत्यब्रवीद्रामं मुंच मां मुसलायुध ॥१२॥ ततस्तस्याः सुवचनमाकर्ण्य स हलायुधः ॥ सोऽब्रवीदवजानासि मम शौर्यबले नदि ॥ सोऽहं त्वां हलपातेन नयिष्यामि सहस्रधा ॥ १३ ॥ श्रीपराशर उवाच ॥ इत्युक्तयाति संत्रासात्तया नद्या प्रसादितः ॥ भूभागे प्लाविते तस्मिन्मुमोच यमुनां बलः ॥ १४ ॥ ततस्स्नातस्य वै कांतिरजायत महात्मनः ॥ १५ ॥ अवतंसोत्पलं चारु गृहीत्वैकं च कुंडलम् ॥ वरुणप्रहितां चास्मै मालामम्लानपंकजाम् ॥ समुद्राभे तथा वस्त्रे नीले लक्ष्मीरयच्छत ॥ १६ ॥

॥ १ ॥ निष्पादितेति ॥ कार्येण देवानाम् ॥ २ ॥ ३ ॥ ४ ॥ विचरन्निति ॥ तर्षं तृष्णा ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ गृहीत्वेति ॥ नायासि नायासीति कोपाद्वीप्सा गम्यतां शक्तिरस्ति चेत् ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ अवतंसेति ॥ अवतंसेत्यादि अयच्छ

॥१॥२॥३॥४॥ विचरन्निति ॥ मदिरायास्तर्षं पानेच्छाम् ॥५॥६॥७॥ स इति ॥ अत्यंतं घर्मांभःकणिका एव मौक्तिकानि तैरुज्ज्वलः स्नातुमिच्छामीत्युवाचेति शेषः ॥८॥९॥ गृहीत्वेति ॥ कोपात्तदपराधस्मरणार्था नायासि नायासीति द्विरुक्तिः यदि शक्नोषि तर्हि इच्छया छंदतः गम्यतामित्यर्थः ॥१०॥११॥१२॥ तत इति ॥ शौर्ये बले शौर्यं बलं च मामवजानासि ॥१३॥१४॥ तत इति ॥ कांतिः लक्ष्मीः ॥१५॥ अवतंसेति ॥ अवतंसोत्पलम् एकस्य कर्णस्याभरणार्थम् उत्पलम् अन्यस्य चैकं कुंडलं गृहीत्वा तथा च हरिवंशे लक्ष्मीवाक्यं "जातरूपमयं चैकं कुंडलं रत्नभूषितम् । आदिपद्मं च पद्माक्ष दिव्यं श्रवणभूषणम् । धेहीमां प्रतिगृह्णीष्व पौराणीं भूषण

कृतावतंसस्स तदा चारुकुंडलभूषितः ॥ नीलांबरधरस्स्रग्वी शुशुभे कांतिसंयुतः ॥ १७ ॥ इत्थं विभूषितो रेमे तत्र रामस्तथा व्रजे ॥ मासद्वयेन यातश्च स पुनर्द्वारकां पुरीम् ॥ १८ ॥ रेवतीं नाम तनयां रैवतस्य महीपतेः ॥ उपयेमे बलस्तस्यां जज्ञाते निशितोल्मुकौ ॥१९॥ इति श्रीविष्णुमहापुराणे पंचमांशे पंचविंशोध्यायः ॥ २५ ॥ ॥ श्रीपराशर उवाच ॥ भीष्मकः कुंडिने राजा विदर्भविषयेऽभवत् ॥ रुक्मी तस्याभवत्पुत्रो रुक्मिणी च वरानना ॥ १ ॥ रुक्मिणीं चकमे कृष्णस्सा च तं चारुहासिनी ॥ न ददौ याचते चैनां रुक्मी द्वेषेण चक्रिणे ॥ २ ॥ ददौ च शिशुपालाय जरासंधप्रचोदितः ॥ भीष्मको रुक्मिणा सार्द्धं रुक्मिणीमुरुविक्रमः ॥ ३ ॥ विवाहार्थं ततः सर्वे जरासंधमुखा नृपाः ॥ भीष्मकस्य पुरं जग्मुश्शिशुपालप्रियैषिणः ॥ ४ ॥ कृष्णोऽपि बलभद्राद्यैर्यदुभिः परिवारितः ॥ प्रययौ कुंडिनं द्रष्टुं विवाहं चैद्यभूभृतः ॥ ५ ॥ श्वो भाविनि विवाहे तु तां कन्यां हृतवान्हरिः ॥ विपक्षभारमासज्य रामादिष्वथ बंधुषु ॥ ६ ॥ ततश्च पौंड्रकश्श्रीमान्दंतवक्रो विदूरथः ॥ शिशुपालजरासंधशाल्वाद्याश्च महीभृतः ॥ ७ ॥ कुपितास्ते हरिं हंतुं चक्रुरुद्योगमुत्तमम् ॥ निर्जिताश्च समागम्य रामाद्यैर्यदुपुंगवैः ॥ ८ ॥ कुंडिनं न प्रवेक्ष्यामि ह्यहत्वा युधि केशवम् ॥ कृत्वा प्रतिज्ञां रुक्मी च हंतुं कृष्णमनुद्रुतः ॥ ९ ॥ हत्वा बलं सनागाश्वं पत्तिस्यंदनसंकुलम् ॥ निर्जितः पातितश्चोर्व्यां लीलयैव स चक्रिणा ॥ १० ॥

तेत्यंतमेकं वाक्यम् ॥ उत्पलं महोत्पलं यथा हरिवंशे लक्ष्मीवचनम् "जातरूपमयं चैकं कुंडलं वज्रभूषणम् । आदिपद्मं च पद्माक्ष दिव्यं श्रवणभूषणम् ॥ धेहीमां प्रतिगृह्णीष्व पौराणीं भूषणक्रियाम् । संगृह्य तमलंकारं ताश्च तिस्रः स्त्रियो बभौ" इति । तदेवमत्र वारुणीकांतिलक्ष्म्यस्तिस्रश्शक्तयो रामस्य देव्य इत्युक्तम् ॥ १६ ॥ ॥ १७ ॥ १८ ॥ १९ ॥ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशे पंचविंशोध्यायः ॥ २५ ॥ ॥ १ ॥ २ ॥ ददौ चेति ॥ जरासंधप्रचोदित इति ॥ शिशुपालो हि जरासंधस्य दत्तपुत्रः ॥ कृष्णस्तु द्वेष्यः अतस्तत्प्रीत्यै शिशुपालाय ददौ वाचा ददौ ॥ ३ ॥ ४ ॥ ५ ॥ श्व इति ॥ विपक्षभारं विपक्षयुद्धकृत्यम् ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

क्रियाम्" इति ॥ १६ ॥ १७ ॥ १८ ॥ अथ श्रीकृष्णस्य विवाहान् पुत्रांश्च वक्ष्यन्नादौ तावज्ज्येष्ठस्य रामस्य पूर्वोक्तविवाहार्थमनुस्मरति । रेवतीमिति ॥ १९ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां पंचमांशे पंचविंशोऽध्यायः ॥ २५ ॥ ॥ १ ॥ २ ॥ ददाविति ॥ रुक्मिणीं च कन्याम् आदौ चेदिराजाय ददाविति दत्तवानित्यर्थः ॥ ३ ॥ ४ ॥ ५ ॥ श्व इति ॥ पुराद्बहिरंबिकापूजार्थं निर्गतां तां हृतवान् हरिः विपक्षभारं विपक्षैस्सह कार्यं युद्धादिसंरंभं रामादिष्वासज्य समारोप्य ॥ ६ ॥ ७ ॥ ८ ॥ कुंडिनमिति ॥ कुंडिनं न प्रवेक्ष्यामीति प्रतिज्ञां कृत्वा रुक्मी कृष्णमनुद्रुतः अन्वधावत ॥ ९ ॥ हत्वेति ॥ पातित एव

निर्जित्य रुक्मिणं सम्यगुपयेमे च रुक्मिणीम् ॥ राक्षसेन विवाहेन संप्राप्तां मधुसूदनः ॥११ ॥ तस्यां जज्ञे च प्रद्युम्नो मदनांशस्सवीर्यवान् ॥ जहार शंबरो यं वै यो जघान च शंबरम् ॥१२॥ इति श्रीविष्णुमहापुराणे पंचमांशे षड्विंशोध्यायः ॥ २६ ॥ ॥ श्रीमैत्रेय उवाच ॥ शंबरेण हतो वीरः प्रद्युम्नः स कथं मुने ॥ शंबरः स महावीर्यः प्रद्युम्नेन कथं हतः ॥१॥ यस्तेनापहृतः पूर्वं स कथं विजघान तम् ॥ एतद्विस्तरतः श्रोतुमिच्छामि सकलं गुरो ॥२॥ श्रीपराशर उवाच ॥ षष्ठेह्नि जातमात्रं तु प्रद्युम्नं सूतिकागृहात् ॥ ममैष हंतेति मुने हृतवान्कालशंबरः ॥ ३ ॥ हत्वा चिक्षेप चैवैनं ग्राहोग्रे लवणार्णवे ॥ कल्लोलजनितावर्त्ते सुघोरे मकरालये ॥ ४ ॥ पातितं तत्र चैवैको मत्स्यो जग्राह बालकम् ॥ न ममार च तस्यापि जठराग्निप्रदीपितः ॥५॥ मत्स्यबंधैश्च मत्स्योऽसौ मत्स्यैरन्यैस्सह द्विज ॥ घातितोऽसुरवर्याय शंबराय निवेदितः ॥६॥ तस्य मायावती नाम पत्नी सर्वगृहेश्वरी ॥ कारयामास सूदानामाधिपत्यमनिंदिता ॥ ७ ॥ दारिते मत्स्यजठरे सा ददर्शातिशोभनम् ॥ कुमारं मन्मथतरोर्दग्धस्य प्रथमांकुरम् ॥ ८ ॥ कोऽयं कथमयं मत्स्यजठरे प्रविवेशितः ॥ इत्येवं कौतुकाविष्टां तन्वीं प्राहाथ नारदः ॥ ९ ॥ अयं समस्तजगतः स्थितिसंहारकारिणः ॥ शंबरेण हतो विष्णोस्तनयः सूतिकागृहात् ॥ १० ॥ क्षिप्तस्समुद्रे मत्स्येन निगीर्णस्ते गृहं गतः ॥ नररत्नमिदं सुभ्रु विस्रब्धा परिपालय ॥ ११ ॥

॥ ११ ॥ १२ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशे षड्विंशोध्यायः ॥ २६ ॥ छ ॥ १ ॥ २ ॥ षष्ठेह्नीति ॥ कालशंबरः कालः कृष्णः कालश्चासौ शंबरश्च ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

केवलं न तु हतः रुक्मिणीभ्रातृत्वात् ॥ १० ॥ निर्जित्येति ॥ राक्षसेन 'राक्षसो युद्धहरणात्' इति स्मृतिप्रसिद्धेन ॥ ११ ॥ तस्यामिति ॥ मदनांशः कामस्यांशभूतः अत एव पूर्ववैरमनुस्मरन् शंबरो जहार । यः प्रद्युम्नश्च तं जघान हतवान् ॥ १२ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां पंचमांशे षड्विंशोऽध्यायः ॥ २६ ॥ ॥ १ ॥ २ ॥ षष्ठेह्नीति ॥ कालशंबरः मृत्युतुल्यशंबरः ॥ ३ ॥ हत्वेति ॥ ग्राहैरुग्रे भयंकरे ॥ ४ ॥ पातितमिति ॥ न ममार भगवद्वीर्यजातत्वात् कामांशत्वाच्च न हि कामो जलादिभिस्संह्रीयते ॥ ५ ॥ मत्स्यबंधैरिति ॥ मत्स्यबंधैः मत्स्यघातिभिः ॥ ६ ॥ तस्येति ॥ मायावती नाम पत्नी मायारूपेण तस्य पत्नीत्येवं मोहोत्पादनतः तत्पत्नीति व्यवहारः । यद्वा नामपत्नी नाममात्रेण पत्नीत्युच्यते वस्तुतस्त्वनिंदिता पतिव्रता कामस्य भार्येत्यर्थः । एतच्चाग्रे स्फुटीभविष्यति ॥ ७ ॥ दारित इति ॥ दग्धस्य रुद्रकोपाग्निना ॥ ८ ॥ ९ ॥ १० ॥ क्षिप्त इति ॥ विस्रब्धा प्रणययुक्ता सती परिपालयेत्यनेन त्वद्भर्ता कामोयमिति सूचितम् ॥ ११ ॥

श्रीपराशर उवाच॥नारदेनैवमुक्ता सा पालयामास तं शिशुम्॥ बाल्यादेवातिरागेण रूपातिशयमोहिता ॥१२॥ स यदा यौवनाभोगभूषितोऽभून्म हामते ॥ साभिलाषा तदा साऽपि बभूव गजगामिनी ॥ १३ ॥ मायावती ददौ तस्मै मायास्सर्वा महामुने ॥ प्रद्युम्नायानुरागांधा तन्न्यस्तहृदये क्षणा ॥ १४ ॥ प्रसज्जंतीं तु तां प्राह स कार्ष्णिः कमलेक्षणाम् ॥ मातृत्वमपहायाद्य किमेवं वर्त्तसेऽन्यथा ॥ १५ ॥ सा तस्मै कथयामास न पुत्रस्त्वं ममेति वै ॥ तनयं त्वामयं विष्णोर्हृतवान्कालशंबरः ॥ १६ ॥ क्षिप्तः समुद्रे मत्स्यस्य संप्राप्तो जठरान्मया ॥ सा हि रोदिति ते माता कांताद्याप्यतिवत्सला ॥ १७ ॥ श्रीपराशर उवाच ॥ इत्युक्तश्शंबरं युद्धे प्रद्युम्नः स समाह्वयत् ॥ क्रोधाकुलीकृतमना युयुधे च महा बलः ॥ १८ ॥ हत्वा सैन्यमशेषं तु तस्य दैत्यस्य यादवः ॥ सप्तमाया व्यतिक्रम्य मायां प्रयुयुजेऽष्टमीम् ॥ १९ ॥ तया जघान तं दैत्यं मायया कालशंबरम् ॥ उत्पत्य च तया सार्द्धमाजगाम पितुः पुरम् ॥ २० ॥ अंतःपुरे निपतितं मायावत्या समन्वितम् ॥ तं दृष्ट्वा कृष्ण संकल्पा बभूवुः कृष्णयोषितः ॥ २१ ॥ रुक्मिणी साभवत्प्रेम्णा सास्रदृष्टिरनिंदिता ॥ धन्यायाः खल्वयं पुत्रो वर्त्तते नवयौवने ॥ २२ ॥ अस्मिन्वयसि पुत्रो मे प्रद्युम्नो यदि जीवति ॥ सभाग्या जननी वत्स सा त्वया का विभूषिता ॥ २३ ॥ अथ वा यादृशः स्नेहो मम यादृग्वपुस्तव ॥ हरेरपत्यं सुव्यक्तं भवान्वत्स भविष्यति ॥ २४ ॥ श्रीपराशर उवाच ॥ एतस्मिन्नंतरे प्राप्तस्सह कृष्णेन नारदः ॥ अंतः पुरचरां देवीं रुक्मिणीं प्राह हर्षयन् ॥ २५ ॥ एष ते तनयः सुभ्रु हत्वा शंबरमागतः ॥ हृतो येनाभवद्बालो भवत्यास्सूतिकागृहात् ॥ २६ ॥

॥ १२ ॥ १३ ॥ मायावतीति ॥ माया मोहनविद्याः ॥ १४ ॥ प्रसज्जंतीमिति ॥ प्रसज्जंतीं प्रकर्षेणानुरज्जंतीम् ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ हत्वेति ॥ सप्तमाया व्यतिक्रम्य शंबरप्रयुक्ताः व्यतिक्रम्य प्रयुयुजे प्रयुक्तवान् ॥ १९ ॥ २० ॥ अंतःपुर इति ॥ कृष्णसंकल्पाः कृष्णोयमिति भ्रांताः ॥ २१ ॥ ॥ २२ ॥ अस्मिन्निति ॥ प्रद्युम्नः प्रद्युम्न इति चिकीर्षितसंज्ञः अस्मिन् वयसि वर्त्तेतेति शेषः ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥

॥ १२ ॥ स इति ॥ यौवनाभोगेन तारुण्यविस्तारेण भूषितो यदाभूत् ॥ १३ ॥ १४ ॥ प्रसज्जंतीमिति ॥ प्रसज्जंतीं कामतस्सज्जमानाम् । अपहाय हित्वा ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ अंतः पुर इति ॥ अतिसादृश्यात्कृष्णोयमिति संकल्पो मनोवृत्तिर्यासां ताः ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥

इयं मायावती भार्या तनयस्यास्य ते सती ॥ शंबरस्य न भार्येयं श्रूयतामत्र कारणम् ॥ २७ ॥ मन्मथे तु गते नाशं तदुद्भवपरायणा ॥ शंबरं मोहयामास मायारूपेण रूपिणी ॥ २८ ॥ विहाराद्युपभोगेषु रूपं मायामयं शुभम् ॥ दर्शयामास दैत्यस्य तस्येयं मदिरेक्षणा ॥ २९ ॥ कामोऽवतीर्णः पुत्रस्ते तस्येयं दयिता रतिः ॥ विशंका नात्र कर्त्तव्या स्नुषेयं तव शोभने ॥ ३० ॥ ततो हर्षसमाविष्टौ रुक्मिणी केशवौ तदा ॥ नगरी च समस्ता सा साधुसाध्वित्यभाषत ॥३१॥ चिरं नष्टेन पुत्रेण संगतां प्रेक्ष्य रुक्मिणीम् ॥ अवाप विस्मयं सर्वो द्वारवत्यां तदा जनः ॥३२॥ इति श्रीविष्णुमहापुराणे पंचमांशे सप्तविंशोध्यायः ॥२७॥ ॥ श्रीपराशर उवाच॥ चारुदेष्णं सुदेष्णं च चारुदेहं च वीर्यवान् ॥ सुषेणं चारुगुप्तं च भद्रचारुं तथा परम् ॥१॥ चारुविंदं सुचारुं च चारुं च बलिनां वरम् ॥ रुक्मिण्यजनयत्पुत्रान्कन्यां चारुमतीं तथा ॥२॥ अन्याश्च भार्याः कृष्णस्य बभूवुः सप्त शोभनाः ॥ कालिंदी मित्रविंदा च सत्या चाग्नजिती तथा ॥ ३ ॥ देवी जाम्बवती चापि रोहिणी कामरूपिणी ॥ मद्रराजसुता चान्या सुशीला शीलमंडना॥४॥ सत्राजिती सत्यभामा लक्ष्मणा चारुहासिनी ॥ षोडशासन् सहस्राणि स्त्रीणा मन्यानि चक्रिणः ॥ ५ ॥ प्रद्युम्नोऽपि महावीर्यो रुक्मिणस्तनयां शुभाम् ॥ स्वयंबरे तां जग्राह सा च तं तनयं हरेः ॥ ६ ॥

॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशे सप्तविंशोध्यायः ॥ २७ ॥ ॥ १ ॥ ॥ २ ॥ अन्या इति ॥ मित्रविंदासत्याजांबवतीरोहिणीसुशीलासत्यभामालक्ष्मणाख्यास्सप्त प्रधानाः आसां कालिंद्यादीनि क्रमाद्विशेषणानि इयं लक्ष्मणा चतुर्थेंशे चारुहासिनीत्युक्ता ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

॥ २७ ॥ २८ ॥ विहारेति ॥ मदिरेक्षणा मदिरेव मदकरम् ईक्षणं यस्यास्सा ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां पंचमांशे सप्तविंशोऽध्यायः ॥ २७ ॥ ॥ चारुदेष्णमिति ॥ वीर्यवानिति वीर्यवंतमित्यर्थः । प्रद्युम्नः प्रागेवोक्तः ॥ १ ॥ २ ॥ ३ ॥ देवीति ॥ जांबवत्येव रोहिणीसंज्ञा अतो न संख्याधिक्यम् । अत एव तस्या ऋक्षजातित्वात् कामरूपिणीति विशेषणम् । केचिद्रोहिणी नाम पट्टमहिषीतुल्यान्येति प्राहुः । तथा नोपरिष्टात्तयोस्संतानबोधोक्तिरुपपत्स्यते ॥ ४ ॥ ५ ॥ ६ ॥

तस्यामस्याभवत्पुत्रो महाबलपराक्रमः ॥ अनिरुद्धो रणे रुद्धवीर्योदधिररिंदमः ॥७॥ तस्यापि रुक्मिणः पौत्रीं वरयामास केशवः॥ दौहित्राय ददौ रुक्मी तां स्पर्द्धन्नपि चक्रिणा॥८॥ तस्या विवाहे रामाद्या यादवा हरिणा सह ॥ कल्याणार्थं ततस्सर्वे ये चान्ये भूभृतस्तथा ॥ रुक्मिणो नगरं जग्मुर्नाम्ना भोजकटं द्विज ॥ ९ ॥ विवाहे तत्र निर्वृत्ते प्रद्युम्नस्य महात्मनः ॥ कलिंगराजप्रमुखा रुक्मिणं वाक्यमब्रुवन् ॥ १० ॥ अनक्षज्ञो हली द्यूते तथास्य व्यसनं महत् ॥ तज्जयामो बलं कस्माद्द्यूतेनैनं महाबलम् ॥ ११ ॥ श्रीपराशर उवाच ॥ तथेति तानाह नृपान्रुक्मी बलमदान्वितः ॥ सभायां सह रामेण चक्रे द्यूतं च वै तदा ॥ १२ ॥ सहस्रमेकं निष्काणां रुक्मिणा विजितो बलः ॥ द्वितीयेऽपि पणे चान्यत्सहस्रं रुक्मिणा जितः ॥ १३ ॥ ततो दशसहस्राणि निष्काणां पणमाददे ॥ बलभद्रोऽजयत्तानि रुक्मी द्यूतविदां वरः ॥ १४ ॥ ततो जहास स्वनवत्कलिंगाधिपतिर्द्विज ॥ दंतान्विदर्शयन्मूढो रुक्मी चाह मदोद्धतः ॥ १५ ॥ अविद्योऽयं मया द्यूते बलभद्रः पराजितः ॥ मुधैवाक्षावलेपांधो योऽवमेनेऽक्षकोविदान् ॥ १६ ॥ दृष्ट्वा कलिंगराजानं प्रकाशदशनाननम् ॥ रुक्मिणं चापि दुर्वाक्यं कोपं चक्रे हलायुधः ॥ १७ ॥ ततः कोपपरीतात्मा निष्ककोटिं समाददे ॥ ग्लहं जग्राह रुक्मी च तदर्थेऽक्षानपातयत् ॥ १८ ॥ अजयद्बलदेवस्तं प्राहोच्चैर्विजितं मया ॥ मयेति रुक्मी प्राहोच्चैरलीकोक्तैरलं बल ॥ १९ ॥ त्वयोक्तोऽयं ग्लहस्सत्यं न मयैषोनुमोदितः ॥ एवं त्वया चेद्विजितं विजितं न मया कथम् ॥ २० ॥ श्रीपराशर उवाच ॥ अथांतरिक्षे वागुच्चैः प्राह गंभीरनादिनी ॥ बलदेवस्य तं कोपं वर्द्धयंती महात्मनः ॥ २१ ॥

॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ अनक्षज्ञ इति ॥ तथा तथापि व्यसनम् आसंगः ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ ॥ १७ ॥ तत इति ॥ ग्लहं पणं तदर्थे कोटिग्लहार्थे तथेत्यनुक्त्वाऽक्षानपातयत् ॥ १८ ॥ १९ ॥ त्वयेति ॥ त्वयोक्तस्य पणबंधस्योभयानुमत्या भाव्यतया विनाप्यन्यतरजयश्चेदितरस्यापि स एव जयः किं न स्यादिति भावः ॥ २० ॥ २१ ॥

॥७॥ तस्यापीति ॥ शौरिणा स्पर्धमानोपि रुक्मी ददौ ॥८॥ स्पर्धाफलं वक्तुमाह–तस्या विवाह इत्यादिना यावत्समाप्ति ॥९॥१०॥ अनक्षज्ञ इति ॥ तथा तथापि अस्य द्यूते महद्व्यसनमस्ति ॥११॥१२॥१३॥ तत इति॥ बलभद्रो दशसहस्राणि पणमाददे तानि च रुक्म्यजयत् ॥१४॥ तत इति ॥ स्वनवत्सशब्दं यथा भवति तथा जहास ॥१५॥ अविद्य इति ॥ द्यूते अविद्यः ज्ञानशून्यः मुधा वृथैव अक्षावलेपांधः अक्षे अवलेपेन गर्वेण अंधः मूढः ॥ १६ ॥ दृष्ट्वेति ॥ प्रकाशदशनं विवृतदंतमाननं यस्य तं दुष्टानि वाक्यानि यस्य तम् ॥१७॥ तत इति ॥ ग्लहं पणम् ॥१८॥१९॥ मया जितमित्यत्र रुक्मी हेतुमाह–त्वयोक्तोयमिति ॥ २० ॥ यदुक्तं रुक्मिणा

जितं बलेन धर्मेण रुक्मिणा भाषितं मृषा ॥ अनुक्त्वापि वचः किंचित्कृतं भवति कर्मणा ॥ २२ ॥ ततो बलः समुत्थाय कोपसंरक्तलोचनः ॥ जघानाष्टापदेनैव रुक्मिणं स महाबलः ॥ २३ ॥ कलिंगराजं चादाय विस्फुरंतं बलाद्बलः ॥ बभंज दंतान्कुपितो यैः प्रकाशैर्जहास सः ॥ ॥ २४ ॥ आकृष्य च महास्तंभं जातरूपमयं बलः ॥ जघान तान्ये तत्पक्षे भूभृतः कुपितो भृशम् ॥ २५ ॥ ततो हाहाकृतं सर्वं पलायन परं द्विज ॥ तद्राजमंडलं भीतं बभूव कुपिते बले ॥ २६ ॥ बलेन निहतं दृष्ट्वा रुक्मिणं मधुसूदनः ॥ नोवाच किंचिन्मैत्रेय रुक्मिणी बल योर्भयात् ॥ २७ ॥ ततोनिरुद्धमादाय कृतदारं द्विजोत्तम ॥ द्वारकामाजगामाथ यदुचक्रं च केशवः ॥ २८ ॥ इति श्रीविष्णुमहापुराणे पंचमांशेऽष्टाविंशोध्यायः ॥ २८ ॥ ॥ श्रीपराशर उवाच ॥ द्वारवत्यां स्थिते कृष्णे शक्रस्त्रिभुवनेश्वरः ॥ आजगामाथ मैत्रेय मत्तैरावतपृष्ठगः ॥ १ ॥ प्रविश्य द्वारकां सोऽथ समेत्य हरिणा ततः ॥ कथयामास दैत्यस्य नरकस्य विचेष्टितम् ॥ २ ॥ त्वया नाथेन देवानां मनुष्यत्वेपि तिष्ठता ॥ प्रशमं सर्वदुःखानि नीतानि मधुसूदन ॥ ३ ॥ तपस्विव्यसनार्थाय सोरिष्टो धेनुकस्तथा ॥ प्रवृत्तो यस्तथा केशी ते सर्वे निहतास्त्वया ॥ ४ ॥ कंसः कुवलयापीडः पूतना बालघातिनी ॥ नाशं नीतास्त्वया सर्वे येऽन्ये जगदुपद्रवाः ॥ ५ ॥ युष्म दोर्दंडसंभूतिपरित्राते जगत्त्रये ॥ यज्वयज्ञांशसंप्राप्त्या तृप्तिं यांति दिवौकसः ॥ ६ ॥

जितमिति ॥ अनुक्त्वा ग्लहानुज्ञावचनमकृत्वाऽप्यक्षपातनादिना कर्मणा तद्वचनं कृतं भवति अनुमतिमूलक्रियानुष्ठानदर्शनात् अनुमतिस्सिद्धैवेति भावः ॥ २२ ॥ तत इति ॥ अष्टापदेन द्यूतफलकेन ॥ २३ ॥ २४ ॥ आकृष्येति ॥ पंचरूपं पंचवर्णम् । विचित्रितमिति च पाठः ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ इति श्रीविष्णु महापुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशेऽष्टाविंशोध्यायः ॥ २८ ॥ ॥ इदानीं भौमवधप्रसंगेन हरेः सहस्रभार्यालाभं वक्तुमिन्द्रागमनादिकमाह—द्वारवत्या मिति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ युष्मदिति ॥ संभूतिः सत्ता ॥ ६ ॥

न मयैषोनुमोदित इति तत्राह—अथेति ॥ अशरीरिणी वाक् ॥ २१ ॥ जितमिति ॥ अनुक्त्वापि अनुमोदवचनमनुक्त्वापि कर्मणैवाक्षपातनादिरूपेणानुमोदनं कृतं भवति । अन्यथा अनुमोदनोत्तरकालीनस्याक्षपातनादेः कर्मणोऽसंभवात् ॥ २२ ॥ तत इति ॥ अष्टापदेन अष्टद्यूतफलकेन ॥ २३ ॥ २४ ॥ आकृष्य चेति ॥ जातरूपमयं स्वर्णमयं महांतं स्तंभं सभामंडपस्थमाकृष्य तेन जघान ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां पंचमांशेऽष्टाविंशोऽध्यायः ॥ २८ ॥ ॥ इदानीं भौमवधप्रसंगेन हरेस्सहस्रशो भार्यालाभं वक्तुमिंद्रागमनादिकमाह—द्वारवत्यामित्यादिना परिसमाप्यता मित्यंतेन ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ युष्मदिति ॥ यज्वनां यज्ञांशाः यज्ञभागाः तेषां संप्राप्त्या ॥ ६ ॥

सोऽहं सांप्रतमायातो यन्निमित्तं जनार्दन ॥ तच्छ्रुत्वा तत्प्रतीकारप्रयत्नं कर्तुमर्हसि ॥७॥ भौमोऽयं नरको नाम प्राग्ज्योतिषपुरेश्वरः ॥ करोति सर्वभूतानामुपघातमरिंदम ॥ ८ ॥ देवसिद्धसुरादीनां नृपाणां च जनार्दन ॥ हत्वा तु सोऽसुरः कन्या रुरुधे निजमंदिरे ॥ ९ ॥ छत्रं यत्सलिलस्रावि तज्जहार प्रचेतसः ॥ मंदरस्य तथा शृंगं हृतवान्मणिपर्वतम् ॥ १० ॥ अमृतस्राविणी दिव्ये मन्मातुः कृष्णकुंडले ॥ जहार सोऽसुरो दित्या वांछत्यैरावतं गजम् ॥ ११ ॥ दुर्नीतमेतद्गोविंद मया तस्य निवेदितम् ॥ यदत्र प्रतिकर्तव्यं तत्स्वयं परिमृश्यताम् ॥ १२ ॥ श्रीपराशर उवाच ॥ इति श्रुत्वा स्मितं कृत्वा भगवान्देवकीसुतः ॥ गृहीत्वा वासवं हस्ते समुत्तस्थौ वरासनात् ॥ १३ ॥ संचिंत्यागतमारुह्य गरुडं गगनेचरम् ॥ सत्यभामां समारोप्य ययौ प्राग्ज्योतिषं पुरम् ॥ १४ ॥ आरुह्यैरावतं नागं शक्रोऽपि त्रिदिवं ययौ ॥ ततो जगाम कृष्णश्च पश्यतां द्वारकौकसाम् ॥ १५ ॥ प्राग्ज्योतिषपुरस्यापि समंताच्छतयोजनम् ॥ आचिता मौरवैः पाशैः क्षुरांतैर्भूर्द्विजोत्तम ॥ १६ ॥ तांश्चिच्छेद हरिः पाशान्क्षिप्त्वा चक्रं सुदर्शनम् ॥ ततो मुरस्समुत्तस्थौ तं जघान च केशवः ॥ १७ ॥ मुरस्य तनयान्सप्त सहस्रांस्तांस्ततो हरिः ॥ चक्रधाराग्निनिर्दग्धांश्चकार शलभानिव ॥ १८ ॥ हत्वा मुरं हयग्रीवं तथा पंचजनं द्विज ॥ प्राग्ज्योतिषपुरं धीमांस्त्वरावान्समुपाद्रवत् ॥ १९ ॥ नरकेणास्य तत्राभून्महासैन्येन संयुगम् ॥ कृष्णस्य यत्र गोविंदो जघ्ने दैत्यान्सहस्रशः ॥ २० ॥

॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ संचिंत्येति ॥ सत्यभामासमारोपणं तस्याः भूम्यंशत्वात् त्वत्पुत्रं त्वदनुज्ञया हनिष्यामि इति वरदानात्तदनुज्ञया भौमं हंतुं तथा नारददत्तपारिजातपुष्पप्रीतरुक्मिणीर्ष्याक्रुद्धसत्यभामासांत्वने तुभ्यं तं तरुमेव दास्यामीति हरिवंशोक्तां प्रतिज्ञां च कर्तुम् ॥ १४ ॥ १५ ॥ प्राग्ज्योतिषपुरस्येति ॥ मौरवैः मुरसंज्ञरक्षःकृतैः ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ अमृतस्राविणी इति ॥ कृष्णकुंडले जहार ॥ ११ ॥ दुर्नीतमिति ॥ दुर्नीतमन्यायम् ॥ १२ ॥ इतीति ॥ संप्रति कार्यार्थं मामुपसर्पति कृतकार्यस्तु पारिजातार्थं मया योत्स्यत इति स्मितं कृत्वा ॥ १३ ॥ संचिंत्येति ॥ संचिंत्यागतं स्मृतिमात्रेणोपगतं सत्यभामां समारोप्येत्यत्र हरिवंशोक्तं कारणं द्रष्टव्यम् । नारदानीते पारिजातकुसुमे रुक्मिण्यै दत्ते तद्विदित्वा प्रकुपितां सत्यभामां सांत्वयता भगवतोक्तम् । तुभ्यं पारिजाततरुमेवाहरिष्यामीति ॥ तदर्थं तां निन्य इति ॥ १४ ॥ १५ ॥ प्राग्ज्योतिषेति ॥ क्षुरांतैः क्षुरधारावत्तीक्ष्णैः । मौरवैर्मुरसंज्ञकेन राक्षसेन निर्मितैः । आचिता व्याप्ता भूरासीदिति ॥ १६ ॥ ॥ १७ ॥ १८ ॥ १९ ॥ नरकेणेति ॥ महत्सैन्यं यस्य तेन ॥ २० ॥

शस्त्रास्त्रवर्षं मुंचंतं तं भौमं नरकं बली ॥ क्षिस्वा चक्रं द्विधा चक्रे चक्री दैतेयचक्रहा ॥ २१ ॥ हते तु नरके भूमिर्गृहीत्वाऽदितिकुंडले ॥ उपतस्थे जगन्नाथं वाक्यं चेदमथाब्रवीत् ॥ २२ ॥ पृथ्व्युवाच ॥ यदाहमुद्धृता नाथ त्वया सूकरमूर्त्तिना ॥ त्वत्स्पर्शसंभवः पुत्रस्तदाऽयं मय्यजायत ॥ २३ ॥ सोऽयं त्वयैव दत्तो मे त्वयैव विनिपातितः ॥ गृहाण कुंडले चेमे पालयास्य च संततिम् ॥ २४ ॥ भारावतरणार्थाय ममैव भगवानिमम् ॥ अंशेन लोकमायातः प्रसादसुमुखः प्रभो ॥ २५ ॥ त्वं कर्त्ता च विकर्त्ता च संहर्त्ता प्रभवोऽप्ययः ॥ जगतां त्वं जगद्रूपस्स्तूयतेऽच्युत किं तव ॥२६॥ व्याप्तिव्याप्यं क्रियाकर्त्ता कार्यं च भगवान्यथा ॥ सर्वभूतात्मभूतस्य स्तूयते तव किं तथा ॥ २७ ॥ परमात्मा च भूतात्मा त्वमात्मा चाप्ययो भवान् ॥ यथातथा स्तुतिर्नाथ किमर्थं ते प्रवर्त्तते ॥ २८ ॥ प्रसीद सर्वभूतात्मन्नरकेण तु यत्कृतम् ॥ तत्क्षम्यतामदोषाय त्वत्सुतस्त्वन्निपातितः ॥ २९ ॥ श्रीपराशर उवाच ॥ तथेति चोक्त्वा धरणीं भगवान्भूतवानः ॥ रत्नानि नरकावासाज्जग्राह मुनिसत्तम ॥ ३० ॥ कन्यापुरे स कन्यानां षोडशातुलविक्रमः ॥ शताधिकानि ददृशे सहस्राणि महामुने ॥ ३१ ॥ चतुर्दंष्ट्रान्गजांश्चाग्र्यान् षट्सहस्रांश्च दृष्टवान् ॥ कांभोजानां तथाऽश्वानां नियुतान्येकविंशतिम् ॥ ३२ ॥ ताः कन्यास्तांस्तथा नागांस्तानश्वान् द्वारकां पुरीम् ॥ प्रापयामास गोविंदस्सद्यो नरककिंकरैः ॥ ३३ ॥ ददृशे वारुणं च्छत्रं तथैव मणिपर्वतम् ॥ आरोपयामास हरिर्गरुडे पतगेश्वरे ॥ ३४ ॥ आरुह्य च स्वयं कृष्णस्सत्यभामासहायवान् ॥ अदित्याः कुंडले दातुं जगाम त्रिदशालयम् ॥ ३५ ॥ इति श्रीविष्णुमहापुराणे पंचमांश एकोनत्रिंशोध्यायः ॥ २९ ॥

॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ त्वमिति ॥ कर्त्ता निमित्तकारणम् । विकर्त्ता विशेषेण कर्त्ता पोषकः प्रभवोद्भवः प्रभवस्य जन्मन उपादानम् । तव संबंधि किं स्तूयते ॥ २६ ॥ २७ ॥ २८ ॥ प्रसीदेति ॥ अदोषाय धर्मस्थापनाय ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांश एकोनत्रिंशोऽध्यायः ॥ २९ ॥

॥२१॥२२॥२३॥२४॥२५॥ त्वमिति ॥ त्वं कर्ता उत्पादकः । विकर्ता विशेषेण वृद्ध्यादीनां कर्ता पोपकः प्रभवत्यस्मादिति प्रभवः । उपादानकारणम् अपियंत्यस्मिन्निति अप्ययः लयस्थानम् । अत एव जगद्रूपश्च त्वम् अतस्तव प्रभावादिकं मया कथं स्तूयते स्तोतुं शक्यते ॥ २६ ॥ अतश्च स्तोतुं न शक्यमित्याह—व्यापीति द्वाभ्याम् ॥ २७ ॥ २८ ॥ प्रसीदेति ॥ किं चादोषाय दोषनिवृत्त्यर्थं त्वत्पुत्रोपि त्वयैव निपातितः । वधदंडेन निष्पापः कृतः किमत्र मया प्रार्थ्यमिति भावः ॥ २९ ॥ ३० ॥ ३१ ॥ चतुर्दंष्ट्रानिति ॥ षट्सहस्रान् षट्सहस्राणि संख्या एषां तान् नियुतानि लक्षाणि ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां पंचमांश एकोनत्रिंशोऽध्यायः ॥ २९ ॥

श्रीपराशर उवाच ॥ गरुडो वारुणं छत्रं तथैव मणिपर्वतम् ॥ सभार्यं च हृषीकेशं लीलयैव वहन्ययौ ॥ १ ॥ ततश्शंखमुपाध्मासीत्स्वर्गद्वारगतो हरिः ॥ उपतस्थुस्तथा देवास्साऱ्यर्घहस्ता जनार्दनम् ॥ २ ॥ स देवैरर्चितः कृष्णो देवमातुर्निवेशनम् ॥ शिताभ्रशिखराकारं प्रविश्य ददृशेऽदितिम् ॥ ३ ॥ स तां प्रणम्य शक्रेण सह ते कुंडलोत्तमे ॥ ददौ नरकनाशं च शशंसास्यै जनार्दनः ॥ ४ ॥ ततः प्रीता जगन्माता धातारं जगतां हरिम् ॥ तुष्टावादितिरव्यग्रा कृत्वा तत्प्रवणं मनः ॥ ५ ॥ अदितिरुवाच ॥ नमस्ते पुंडरीकाक्ष भक्तानामभयंकर ॥ सनातनात्मन् सर्वात्मन् भूतात्मन् भूतभावन ॥ ६ ॥ प्रणेतर्मनसो बुद्धेरिंद्रियाणां गुणात्मक ॥ त्रिगुणातीत निर्द्वंद्व शुद्धसत्त्व हृदि स्थित ॥ ७ ॥ सितदीर्घादिनिश्शेषकल्पनापरिवर्जित ॥ जन्मादिभिरसंस्पृष्ट स्वप्नादिपरिवर्जित ॥ ८ ॥ संध्यारात्रिरहो भूमिर्गगनं वायुरंबु च ॥ हुताशनो मनो बुद्धिर्भूतादिस्त्वं तथाऽच्युत ॥ ९ ॥ सर्गस्थितिविनाशानां कर्त्ता कर्तृपतिर्भवान् ॥ ब्रह्मविष्णुशिवाख्याभिरात्ममूर्त्तिभिरीश्वर ॥ १० ॥ देवा दैत्यास्तथा यक्षा राक्षसास्सिद्धपन्नगाः ॥ कूष्मांडाश्च पिशाचाश्च गंधर्वा मनुजास्तथा ॥ ११॥ पशवश्च मृगाश्चैव पतंगाश्च सरीसृपाः ॥ वृक्षगुल्मलताबह्व्यस्समस्तास्तृणजातयः ॥१२॥ स्थूला मध्यास्तथा सूक्ष्मास्सूक्ष्मात्सूक्ष्मतराश्च ये ॥ देहभेदा भवान् सर्वे ये केचित्पुर्गलाश्रयाः ॥ १३ ॥

॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ प्रणेतरिति ॥ गुणात्मक कल्याणगुणात्मक ॥ ७ ॥ ८ ॥ ९ ॥ सर्गेति ॥ कर्तृपतिः कर्तृणां ब्रह्मादीनां पतिः ॥ १० ॥ देवा इति ॥ देवा इत्यादिना तृणजात इत्यंतेन भगवतो देवतिर्यगादिचतुर्विधचेतनात्मत्वमुच्यते ॥११॥ १२ ॥ स्थूला इति ॥ स्थूला इत्यादिना पुर्गलाश्रया इत्यंतेन तस्यैव तद्देहात्मकत्वमुच्यते । ये केचित्पुर्गलाश्रयाः देहभेदाः ते सर्वे भवानित्यन्वयः । पुर्गलो जीवः । यथा कौर्मे–"अहंकारोभिमानश्च कर्त्ता मंता च स स्मृतः ।

॥ १ ॥ तत इति ॥ उपाध्मासीत् पूरितवान् ॥ २ ॥ ३ ॥ ४ ॥ तत इति ॥ तत्प्रवणं तदेकाग्रम् ॥ ५ ॥ नम इति ॥ सनातनात्मन् नित्यमूर्ते सर्वात्मन् सर्वांतर्यामिन् । भूतात्मन् भूतरूप भूतभावन महाभूतोत्पादक ॥ ६ ॥ प्रणेतरिति ॥ प्रणेता कर्ता गुणात्मकेत्यनेन तमसा भूतभावित्वं सत्वेन मनःप्रणेतृत्वं रजसा च बुद्धेरिंद्रियाणां च प्रणेतृत्वं समर्थ्यते । वस्तुतस्तु त्रिगुणातीत अतो निर्द्वंद्व एवंभूततया शुद्धसत्त्वानां ज्ञानिनां हृदि स्थित ॥ ७ ॥ सितेति ॥ सितदीर्घादिभिर्वर्णपरिमाणाद्याभिर्विशेषाभिः कल्पनाभिः परिवर्जित जन्मादिभिर्विकारैः असंस्पृष्ट स्वप्नाद्यवस्थाभिः परिवर्जित ॥ ८ ॥ ९ ॥ सर्गस्थितीति ॥ ब्रह्मादिसंज्ञाभिस्स्वमूर्तिभिः त्वमेव सृष्ट्यादीनां कर्ता । कर्तृपतिः अवांतरसृष्ट्यादिकर्तॄणां दक्षादीनां पतिः ॥ १० ॥ ११ ॥ १२ ॥ स्थूला इति ॥ पूर्यंति गलंति चेति पुर्गलाः

माया तवेयमज्ञातपरमार्थातिमोहिनी ॥ अनात्मन्यात्मविज्ञानं यया मूढो निरुद्धचते ॥ १४ ॥ अस्वे स्वमिति भावोत्र यत्पुंसामुपजायते ॥ अहं ममेति भावो यत्प्रायेणैवाभिजायते ॥ संसारमातुर्मायायास्तवैतन्नाथ चेष्टितम् ॥ १५ ॥ यैस्स्वधर्मपरैर्नाथ नरैराराधितो भवान् ॥ ते तरंत्यखिलामेतां मायामात्मविमुक्तये ॥ १६ ॥ ब्रह्माद्यास्सकला देवा मनुष्याः पशवस्तथा ॥ विष्णुमाया महावर्त्तमोहांधतमसावृताः ॥ १७॥ आराध्य त्वामभीप्संते कामानात्मभवक्षयम् ॥ यदेते पुरुषा माया सैवेयं भगवंस्तव ॥ १८ ॥ मया त्वं पुत्रकामिन्या वैरिपक्षजयाय च ॥ आराधितो न मोक्षाय मायाविलसितं हि तत् ॥ १९ ॥ कौपीनाच्छादनप्राया वांछा कल्पद्रुमादपि ॥ जायते यदपुण्यानां सोपराधः स्वदोषजः ॥ २० ॥ तत्प्रसीदाखिलजगन्मायामोहकराव्यय ॥ अज्ञानं ज्ञानसद्भावभूतं भूतेश नाशय ॥ २१ ॥

आत्मा च पुर्गलो जीवो यतस्सर्वाः प्रसूतयः" इति ॥ "पूरणाद्गलनाद्देहे पुर्गलाः परमाणवः" इत्यार्हताः ॥ १३ ॥ मायेति ॥ अज्ञातपरमार्था अज्ञातः परमार्थो ब्रह्म यस्या हेतोस्सा अज्ञातपरमार्था अतिमोहिनी इयं त्रिगुणात्मिका माया तव त्वदीया । मायाकार्यमाह–अनात्मनीति अस्यार्थस्य पूर्वेणान्वयः ॥ १४॥ अस्वे स्वमिति ॥ अस्वे स्वमिति भावः ज्ञानमुपजायत इति यत् एतत्तव त्वदीयायाः संसारमातुर्मायायाः चेष्टितम् ॥ १५ ॥ १६ ॥ ब्रह्माद्या इति ॥ मायैव महावर्त्तः तत्कृतो मोह एवांधतमसं तेनावृताः ॥ १७ ॥ आराध्येति ॥ कामानभीप्संत इति यत् तत्तव मायैव मायाचेष्टितमित्यर्थः ॥ १८ ॥ १९ ॥ कौपीनेति ॥ कौपीनाच्छादनप्राया तद्बहुला तद्विषयेत्यर्थः । स्वदोषो दुष्कर्म ॥ २० ॥ तदिति ॥ मायया मोहो मायामोहः ज्ञानसद्भावभूतसम्यग्ज्ञानस्वरूप । ज्ञानसद्भातभूतमिति पाठे

वृद्धयपक्षयभाजो ये अवयवाः तदाश्रया देहभेदाः यदाहुः "पूरणाद्गलनाद्देहे पुर्गलाः परमाणवः" इति ॥ १३ ॥ अथ मायास्वरूपानुवादपूर्वकं तन्निवृत्तिं प्रार्थयते माया तवेयमित्यादिना नाशयेत्यंतेन–मायेति ॥ अज्ञातपरमार्थानां जीवानामतिमोहिनी । मोहमेवाह–अनात्मनीति ॥ १४ ॥ एतदेव स्पष्टयति अस्वे स्वमिति ॥ अहं ममेति । संसारस्य मातुर्जनन्याः तव मायायाश्चेष्टितम् ॥ १५ ॥ १६ ॥ ब्रह्माद्या इति ॥ विष्णुमायया ये महांत आवर्ताः तत्तद्देहे अहंममाभिमानास्तेषु मोहांधतमसं कर्तृत्वभोक्तृत्वाभिनिवेशरूपं तेनावृताः ॥ १७ ॥ १८ ॥ १९ ॥ कौपीनेति ॥ स्वदोषजः स्वकर्मजः ॥ २० ॥ तदिति ॥ ज्ञानसद्भावभूतं

नमस्ते चक्रहस्ताय शार्ङ्गहस्ताय ते नमः ॥ नंदहस्ताय ते विष्णो शंखहस्ताय ते नमः ॥ २२ ॥ एतत्पश्यामि ते रूपं स्थूलचिह्नोपलक्षितम् ॥ न जानामि परं यत्ते प्रसीद परमेश्वर ॥ २३ ॥ श्रीपराशर उवाच ॥ अदित्यैवं स्तुतो विष्णुः प्रहस्याह सुरारणिम् ॥ माता देवि त्वमस्माकं प्रसीद वरदा भव ॥ २४ ॥ अदितिरुवाच ॥ एवमस्तु यथेच्छा ते त्वमशेषैस्सुरासुरैः ॥ अजेयः पुरुषव्याघ्र मर्त्यलोके भविष्यसि ॥ २५ ॥ श्रीपराशर उवाच ॥ ततः कृष्णस्य पत्नी च शक्रेण सहितादितिम् ॥ सत्यभामा प्रणम्याह प्रसीदेति पुनःपुनः ॥ २६ ॥ अदितिरुवाच ॥ मत्प्रसादान्न ते सुभ्रु जरा वैरूप्यमेव वा ॥ भविष्यत्यनवद्यांगि सुस्थिरं नवयौवनम् ॥ २७ ॥ श्रीपराशर उवाच ॥ अदित्या तु कृतानुज्ञो देवराजो जनार्दनम् ॥ यथावत्पूजयामास बहुमानपुरस्सरम् ॥ २८ ॥ शची च सत्यभामायै पारिजातस्य पुष्पकम् ॥ न ददौ मानुषीं मत्वा स्वयं पुष्पैरलंकृता ॥ २९ ॥ ततो ददर्श कृष्णोऽपि सत्यभामासहायवान् ॥ देवोद्यानानि हृद्यानि नंदनादीनि सत्तम ॥ ३० ॥ ददर्श च सुगंधाढ्यं मंजरीपुंजधारिणम् ॥ नित्याह्लादकरं ताम्रबालपल्लवशोभितम् ॥ ३१ ॥ मथ्यमानेऽमृते जातं जातरूपोपमत्वचम् ॥ पारिजातं जगन्नाथः केशवः केशिसूदनः ॥ ३२ ॥ तुतोष परमप्रीत्या तरुराजमनुत्तमम् ॥ तं दृष्ट्वा प्राह गोविंदं सत्यभामा द्विजोत्तम ॥ कस्मान्न द्वारकामेष नीयते कृष्ण पादपः ॥ ३३ ॥ यदि चेत्त्वद्वचः सत्यं त्वमत्यर्थं प्रियेति मे ॥ मद्गेहनिष्कुटार्थाय तदयं नीयतां तरुः ॥ ३४ ॥ न मे जांबवती तादृगभीष्टा न च रुक्मिणी ॥ सत्ये यथा त्वमित्युक्तं त्वया कृष्णासकृत्प्रियम् ॥ ३५ ॥ सत्यं तद्यदि गोविंद नोपचारकृतं मम ॥ तदस्तु पारिजातोऽयं मम गेहविभूषणम् ॥ ३६ ॥ बिभ्रती पारिजातस्य केशपक्षेण मंजरीम् ॥ सपत्नीनामहं मध्ये शोभेयमिति कामये ॥ ३७ ॥

स्वयमज्ञानमपि विज्ञानतयाऽवभासमानमज्ञानमिति ॥ २१ ॥ २२ ॥ २३ ॥ अदित्येति ॥ प्रहस्य हासेन मोहयित्वा अरणिः जन्मभूः ॥ २४ ॥ २५ ॥ २६ ॥ मत्प्रसादादिति ॥ सर्वकालमनवद्यांगी भविष्यसि ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ यदीति ॥ निष्कुटो गृहोद्यानम् ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥

विद्वानहमित्यभिमानात्मकम् ॥ २१ ॥ २२ ॥ २३ ॥ अदित्येति ॥ प्रहस्य हासेन मोहयित्वा सुरारणिं सुराणां जन्मभूमिं मातरम् ॥ २४ ॥ अदितिः मोहिता सत्युवाच एवमस्त्विति ॥ २५ ॥ २६ ॥ २७ ॥ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ यदीति ॥ निष्कुटार्थाय गृहोद्यानार्थम् ॥ ३४ ॥ ३५ ॥ ३६ ॥ बिभ्रतीति ॥ केशपक्षेण केशप्रकरेण सपत्नीनां मध्ये शोभेयमिति कामये ॥ ३७ ॥

श्रीपराशर उवाच ॥ इत्युक्तस्स प्रहस्यैनां पारिजातं गरुत्मति ॥ आरोपयामास हरिस्तमूचुर्वनरक्षिणः ॥ ३८ ॥ भो शची देवराजस्य महिषी तत्परिग्रहम् ॥ पारिजातं न गोविंद हर्त्तुमर्हसि पादपम् ॥ ३९ ॥ उत्पन्नो देवराजाय दत्तस्सोपि ददौ पुनः ॥ महिष्यै सुमहाभाग देव्यै शच्यै कुतूहलात् ॥४०॥ शचीविभूषणार्थाय देवैरमृतमंथने ॥ उत्पादितोऽयं न क्षेमी गृहीत्वैनं गमिष्यसि॥४१॥ देवराजो मुखप्रेक्षी यस्यास्तस्याः परिग्रहम् ॥ मौढ्यात्प्रार्थयसे क्षेमी गृहीत्वैनं हि को व्रजेत् ॥४२॥ अवश्यमस्य देवेंद्रो निष्कृतिं कृष्ण यास्यति ॥ वज्रोद्यतकरं शक्रमनुयास्यंति चामराः ॥४३॥ तदलं सकलैर्देवैर्विग्रहेण तवाऽच्युत ॥ विपाककटु यत्कर्म तन्न शंसंति पंडिताः ॥४४॥ श्रीपराशर उवाच ॥ इत्युक्ते तैरुवाचैतान् सत्यभामातिकोपिनी ॥ का शची पारिजातस्य को वा शक्रस्सुराधिपः ॥४५॥ सामान्यस्सर्वलोकस्य यद्येषोऽमृतमंथने ॥ समुत्पन्नस्तरुः कस्मादेको गृह्णाति वासवः ॥४६॥ यथा सुरा यथैवेंदुर्यथा श्रीर्वनरक्षिणः ॥ सामान्यस्सर्वलोकस्य पारिजातस्तथा द्रुमः ॥४७॥ भर्त्तृबाहुमहागर्वाद्रुणद्ध्येनमथो शची ॥ तत्कथ्यतामलं क्षांत्या सत्या हारयति द्रुमम् ॥४८॥ कथ्यतां च द्रुतं गत्वा पौलोम्या वचनं मम॥सत्यभामा वदत्येतदितिगर्वोद्धताक्षरम् ॥४९॥ यदि त्वं दयिता भर्त्तुर्यदि वश्यः पतिस्तव ॥ मद्भर्तुर्हरतो वृक्षं तत्कारय निवारणम् ॥ ५० ॥ जानामि ते पतिं शक्रं जानामि त्रिदशेश्वरम् ॥ पारिजातं तथाप्येनं मानुषी हारयामि ते ॥५१॥ श्रीपराशर उवाच ॥ इत्युक्ता रक्षिणो गत्वा शच्याः प्रोचुर्यथोदितम्॥ श्रुत्वा चोत्साहयामास शची चक्रं सुराधिपम् ॥५२॥ ततस्समस्तदेवानां सैन्यैः परिवृतो हरिम् ॥ प्रययौ पारिजातार्थमिंद्रो योद्धुं द्विजोत्तम ॥ ५३ ॥ ततः परिघनिस्त्रिंशगदाशूलवरायुधाः ॥ बभूवुस्त्रिदशास्सज्जाश्शक्रे वज्रकरे स्थिते ॥ ५४ ॥ ततो निरीक्ष्य गोविंदो नागराजोपरि स्थितम् ॥ शक्रं देवपरीवारं युद्धाय समुपस्थितम् ॥ ५५ ॥ चकार शंखनिर्घोषं दिशश्शब्देन पूरयन् ॥ मुमोच शरसंघातान्सहस्रायुतशश्शितान् ॥ ५६ ॥ ततो दिशो नभश्चैव दृष्ट्वा शरशतैश्चितम् ॥ मुमुचुस्त्रिदशास्सर्वे ह्यस्त्रशस्त्राण्यनेकशः ॥ ५७ ॥

॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ अवश्यमिति ॥ यास्यति करिष्यति ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥

इत्युक्त इति । औत्सुक्यात् स्त्रियोनर्थं जनयंतीति प्रहस्य ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२॥ अवश्यमिति ॥ निष्कृतिं यास्यति प्रतीकारं करिष्यति ॥४३॥ तदलमिति ॥ विपाककटु परिणामेऽनर्थकरम् ॥४४॥ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ यदीति ॥ सुरानुत्थाप्य निवारणं कारय ॥५०॥५१॥५२॥५३॥ तत इति ॥ सज्जाः सन्नद्धाः ॥५४॥५५॥५६ ॥ तत इति ॥ अस्त्रं मंत्राभिमंत्रितं शस्त्रं तदितरत् ॥५७॥

एकैकमस्त्रं शस्त्रं च देवैर्मुक्तं सहस्रशः ॥ चिच्छेद लीलयैवेशो जगतां मधुसूदनः ॥ ५८ ॥ पाशं सलिलराजस्य समाकृष्योरगात्पुनः ॥ चकार खंडशश्चंच्वा बालपन्नगदेहवत् ॥ ५९ ॥ यमेन प्रहितं दंडं गदाविक्षेपखंडितम् ॥ पृथिव्यां पातयामास भगवान् देवकीसुतः ॥ ॥ ६० ॥ शिबिकां च धनेशस्य चक्रेण तिलशो विभुः ॥ चकार शौरिरर्कं च दृष्टिदृष्टहतौजसम् ॥ ६१ ॥ नीतोग्निश्शीततां बाणैर्द्राविता वसवो दिशः ॥ चक्रविच्छिन्नशूलाग्रा रुद्रा भुवि निपातिताः ॥ ६२ ॥ साध्या विश्वेऽथ मरुतो गंधर्वाश्चैव सा यकैः ॥ शार्ङ्गिणा प्रेरितैरस्ता व्योम्नि शाल्मलितूलवत् ॥ ६३ ॥ गरुत्मानपि तुंडेन पक्षाभ्यां च नखांकुरैः ॥ भक्षयंस्ताडयन् देवान् दारयंश्च चचार वै ॥ ६४ ॥ ततश्शतसहस्रेण देवेंद्रमधुसूदनौ ॥ परस्परं ववर्षाते धाराभिरिव तोयदौ ॥ ६५ ॥ ऐरावतेन गरुडो युयुधे तत्र संकुले ॥ देवैस्समस्तैर्युयुधे शक्रेण च जनार्दनः ॥ ६६ ॥ भिन्नेष्वशेषबाणेषु शस्त्रेष्वस्त्रेषु च त्वरन् ॥ जग्राह वासवो वज्रं कृष्णश्चक्रं सुदर्शनम् ॥ ६७ ॥ ततो हाहाकृतं सर्वं त्रैलोक्यं द्विजसत्तम ॥ वज्रचक्रकरौ दृष्ट्वा देवराजजनार्दनौ ॥ ६८ ॥ क्षिप्तं वज्रमथेंद्रेण जग्राह भगवान्हरिः ॥ न मुमोच तदा चक्रं शक्रं तिष्ठेति चाब्रवीत् ॥ ६९ ॥ प्रणष्टवज्रं देवेंद्रं गरुडक्षतवाहनम् ॥ सत्यभामाब्रवीद्वीरं पलायनपरायणम् ॥ ॥ ७० ॥ त्रैलोक्येश न ते युक्तं शचीभर्तुः पलायनम् ॥ पारिजातस्रगाभोगा त्वामुपस्थास्यते शची ॥ ७१ ॥ कीदृशं देवराज्यं ते पारिजातस्रगुज्ज्वलाम् ॥ अपश्यतो यथापूर्वं प्रणयाभ्यागतां शचीम् ॥ ७२ ॥ अलं शक्र प्रयासेन न व्रीडां गंतुमर्हसि ॥ नीयतां पारिजातोयं देवास्संतु गतव्यथाः ॥ ७३ ॥ पतिगर्वावलेपेन बहुमानपुरस्सरम् ॥ न ददर्श गृहं यातामुपचारेण मां शची ॥ ७४ ॥

॥ ५८ ॥ ५९ ॥ ६० ॥ शिबिकां चेति ॥ दृष्टहतौजसं दृष्टत्वादेव हतौजसम् ॥ ६१ ॥ ६२ ॥ साध्येति ॥ अस्ता निरस्तेत्यर्थः ॥ ६३ ॥ ६४ ॥ ६५ ॥ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ त्रैलोक्येति ॥ स्रगाभोगा आभुज्यत इत्याभोगः स्रक् आभोगो यस्यास्सा स्रगाभोगा ॥ ७१॥७२॥७३॥७४॥

॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ साध्या इति ॥ अस्ताः निरस्ताः ॥ ६३ ॥ गरुत्मानिति ॥ तुंडेन वक्रेण भक्षयन् पक्षाभ्यां ताडयन् नखांकुरैर्दारयन् ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ॥ ६८ ॥ ६९ ॥ ७० ॥ सोल्लुंठनमाह–त्रैलोक्येशेत्यादित्रिभिः–त्रैलोक्येशेति ॥ पारिजातस्य स्रजो मालाः ताभिर्व्याप्ताः ॥ ७१ ॥ ७२ ॥ ७३ ॥ एवं सति किमर्थं तर्हि निग्रहः कृतस्तत्राह–पतीत्यादित्रिभिः–पतीति ॥

स्त्रीत्वादगुरुचित्ताहं स्वभर्तृश्लाघनापरा ॥ ततः कृतवती शक्र भवता सह विग्रहम् ॥ ७५ ॥ तदलं पारिजातेन परस्वेन हृतेन मे ॥ रूपेण गर्विता सा तु भर्त्रा का स्त्री न गर्विता ॥७६॥ श्रीपराशर उवाच॥ इत्युक्तो वै निववृते देवराजस्तया द्विज ॥ प्राह चैनामलं चंडि सख्युः खेदोक्तिविस्तरैः ॥७७॥ इंद्र उवाच ॥ न चापि सर्गसंहारस्थितिकर्त्ताखिलस्य यः ॥ जितस्य तेन मे व्रीडा जायते विश्वरूपिणा ॥७८॥ यस्माज्जगत्सकलमेतदनादिमध्याद्यस्मिन्यतश्च न भविष्यति सर्वभूतात् ॥ तेनोद्भवप्रलयपालनकारणेन व्रीडा कथं भवति देवि निराकृतस्य ॥७९॥ सकलभुवनसूतिर्मूर्तिरल्पाल्पसूक्ष्माविदितसकलवेद्यैर्ज्ञायते यस्य नान्यैः ॥ तमजमकृतमीशं शाश्वतं स्वेच्छयैनं जगदुपकृतिमर्त्त्यं को विजेतुं समर्थः ॥ ८० ॥ इति श्रीविष्णुमहापुराणे पंचमांशे त्रिंशोध्यायः ॥ ३० ॥ ॥ श्रीपराशर उवाच ॥ संस्तुतो भगवानित्थं देवराजेन केशवः ॥ प्रहस्य भावगंभीरमुवाचेंद्रं द्विजोत्तम ॥ १ ॥ श्रीकृष्ण उवाच ॥ देवराजो भवानिंद्रो वयं मर्त्त्या जगत्पते ॥ क्षंतव्यं भवतैवेदमपराधं कृतं मम ॥ २ ॥ पारिजाततरुश्चायं नीयतामुचितास्पदम् ॥ गृहीतोयं मया शक्र सत्यावचनकारणात् ॥ ३ ॥ वज्रं चेदं गृहाण त्वं यदत्र प्रहितं त्वया ॥ तवैवैतत्प्रहरणं शक्र वैरिविदारणम् ॥ ४ ॥ इंद्र उवाच ॥ विमोहयसि मामीश मर्त्त्योहमिति किं वदन् ॥ जानीमस्त्वां भगवतो न तु सूक्ष्मविदो वयम् ॥ ५ ॥

॥ ७५ ॥ ७६ ॥ इतीति ॥ हे चंडि उग्रे खेदोक्तिविस्तरैः मत्खेदविषयैरुक्तिविस्तरैः अलम् ॥ ७७ ॥ ७८ ॥ यस्मादिति ॥ सकलं जगद्यस्माद्भवति यस्मिन् भवति यतो न भविष्यति इत्थमुद्भवादिकारणेन तेन ॥ ७९ ॥ सकलभुवनेति ॥ मूर्त्तिः रूपम् अल्पाल्पसूक्ष्मा अतिसूक्ष्मतरा ॥ ॥ ८० ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशे त्रिंशोऽध्यायः ॥ ३० ॥ ॥ छ ॥ ॥ संस्तुत इति ॥ भावगंभीरं सूचितार्थगहनम् ॥ १ ॥ देवराज इति ॥ अपराधकृतं कृतापराधमित्यर्थः ॥ २ ॥ ३ ॥ वज्रं चेति ॥ तवैव योग्यमिति शेषः ॥ ४ ॥ विमोहयसीति ॥

पत्या यो गर्वस्तन्निमित्तेन अवलेपेन मदेन पतिगर्वावलेपेन ॥ ७४ ॥ ७५ ॥ तदलमिति ॥ पतिगर्वात्रलेपं शच्या दोषमुद्भाव्य स्वभर्तृश्लाघनापराहमिति वदंत्याः स्वस्या अपि तया साम्यमापन्नं परिहरति रूपेण गर्वितेति ॥ ७६ ॥ इत्युक्त इति ॥ चंडि उग्रे सख्युः मित्रभूतस्य मम खेदहेतुभिरुक्तिविस्तरैरलम् ॥ ७७ ॥ न व्रीडां गंतुमर्हसीति यदुक्तं तत्राह–न चापीति त्रिभिः ॥ ७८ ॥ यस्मादिति ॥ यस्मादुपादानकारणभूतात् जगदभूत् न भविष्यति चेत्यर्थः ॥ ७९ ॥ सकलभुवनेति ॥ अकृतमीशं स्वतस्सिद्धमीशम् ईश्वरं न तु कर्मनिमित्तमैश्वर्यं तस्येत्यर्थः । जगदुपकृतये स्वेच्छया मर्त्यं मर्त्यावतारम् ॥ ८० ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां पंचमांशे त्रिंशोऽध्यायः ॥ ३० ॥ ॥१॥२॥ पारिजातेति ॥ उचितास्पदं यथोचितं स्थानम् ॥३॥४॥ विमोहयसीति ॥ यथा दृष्टमात्ररूपं त्वां जानीमः न तु तव सूक्ष्मरूपविदः॥५॥

योऽसि सोऽसि जगत्त्राणप्रवृत्तौ नाथ संस्थितः ॥ जगतश्शल्यनिष्कर्षं करोष्यसुरसूदन ॥ ६ ॥ नीयतां पारिजातोऽयं कृष्ण द्वारवतीं पुरीम् ॥ मर्त्यलोके त्वया त्यक्ते नायं संस्थास्यते भुवि ॥ ७ ॥ देवदेव जगन्नाथ कृष्ण विष्णो महाभुज ॥ शंखचक्रगदापाणे क्षमस्वैतद्व्यतिक्रमम् ॥ ८ ॥ श्रीपराशर उवाच ॥ तथेत्युक्त्वा च देवेंद्रमाजगाम भुवं हरिः ॥ प्रसक्तैस्सिद्धगंधर्वैस्स्तूयमानस्सुरर्षिभिः ॥ ९ ॥ ततश्शंखमुपाध्माय द्वारकोपरि संस्थितः ॥ हर्षमुत्पादयामास द्वारकावासिनां द्विज ॥ १० ॥ अवतीर्याथ गरुडात्सत्यभामासहायवान् ॥ निष्कुटे स्थापयामास पारिजातं महातरुम् ॥ ११ ॥ यमभ्येत्य जनस्सर्वो जातिं स्मरति पौर्विकीम् ॥ वास्यते यस्य पुष्पोत्थगंधेनोर्वी त्रियोजनम् ॥१२॥ ततस्ते यादवास्सर्वे देहबंधानमानुषान् ॥ ददृशुः पादपे तस्मिन् कुर्वंतो मुखदर्शनम् ॥ १३ ॥ किंकरैस्समुपानीतं हस्त्यश्वादि ततो धनम् ॥ विभज्य प्रददौ कृष्णो बांधवानां महामतिः ॥ १४ ॥ कन्याश्च कृष्णो जग्राह नरकस्य परिग्रहान् ॥ १५ ॥ ततः काले शुभे प्राप्ते उपयेमे जनार्दनः ॥ ताः कन्या नरकेणासन्सर्वतो यास्समाहृताः ॥ १६ ॥ एकस्मिन्नेव गोविंदः काले तासां महाभुने ॥ जग्राह विधिवत्पाणीन्पृथग्गेहेषु धर्मतः ॥ १७ ॥ षोडशस्त्रीसहस्राणि शतमेकं ततोधिकम् ॥ तावंति चक्रे रूपाणि भगवान् मधुसूदनः ॥ १८ ॥ एकैकमेव ताः कन्या मेनिरे मधुसूदनः ॥ ममैव पाणिग्रहणं मैत्रेय कृतवानिति ॥ १९ ॥ निशासु च जगत्स्रष्टा तासां गेहेषु केशवः ॥ उवास विप्र सर्वासां विश्वरूपधरो हरिः ॥ २० ॥ इति श्रीविष्णुमहापुराणे पंचमांश एकत्रिंशोऽध्यायः ॥ ३१ ॥

नैव सूक्ष्मविदः सूक्ष्मरूपं न विद्मः ॥ ५ ॥ य इति ॥ शल्यनिष्कर्षं कंटकोद्धारम् ॥ ६ ॥ ७ ॥ ८ ॥ तथेति ॥ प्रसक्तैरनुबद्धैः ॥ ९ ॥ १० ॥ ॥ ११ ॥ १२ ॥ तत इति ॥ मुखदर्शनम् अभिमुखदर्शनम् । अमानुषान् प्राचीनान् । ददृशुः ज्ञातवंतः ॥ १३ ॥ १४ ॥ कन्याश्चेति ॥ परिग्रहान् स्वभूतान् ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांश एकत्रिंशोऽध्यायः ॥ ३१ ॥ ॥ छ ॥

योसीति ॥ शल्यनिष्कर्षं कंटकोद्धारम् ॥ ६ ॥ नीयतामिति ॥ न च ममाप्यत्यंतकोपाय पारिजातवियोग इत्याह—मर्त्यलोक इति ॥ ७ ॥ ८ ॥ तथेति ॥ प्रसक्तैरनुषक्तैः अनुगच्छद्भिः सिद्धादिभिः स्तूयमानः ॥ ९ ॥ १० ॥ ११ ॥ यमिति ॥ पौर्विकीं पूर्वजन्मसंबंधिनीम् ॥ १२ ॥ तत इति ॥ अमानुषान् स्वदेहान् देवाकारान् ददृशुः, तत्र जातिस्मरत्वात् ॥ १३ ॥ १४ ॥ कन्या इति ॥ परिग्रहान् विवाहार्थमवरुद्धाः कन्याः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां पंचमांश एकत्रिंशोऽध्यायः ॥ ३१ ॥

॥ श्रीपराशर उवाच ॥ प्रद्युम्नाद्या हरेः पुत्रा रुक्मिण्यां कथितास्तव ॥ भानुभौमेरिकाद्यांश्च सत्यभामा व्यजायत ॥ १ ॥ दीप्तिमत्ताम्रपक्षाद्या रोहिण्यां कथिता हरेः ॥ बभूवुर्जाम्बवत्यां च सांबाद्या बाहुशालिनः ॥ २ ॥ तनया भद्रविंदाद्या नाग्नजित्यां महाबलाः ॥ संग्रामजित्प्रधानास्तु शैब्यायां च हरेस्सुताः ॥ ३ ॥ वृकाद्याश्च सुता माद्र्यां गात्रवत्प्रमुखान्सुतान् ॥ अवाप लक्ष्मणा पुत्रान्कालिंद्याश्च श्रुतादयः ॥ ४ ॥ अन्यासां चैव भार्याणां समुत्पन्नानि चक्रिणः ॥ अष्टायुतानि पुत्राणां सहस्राणि शतं तथा ॥ ५ ॥ प्रद्युम्नः प्रथमस्तेषां सर्वेषां रुक्मिणीसुतः ॥ प्रद्युम्नादनिरुद्धोऽभूद्वज्रस्तस्मादजायत ॥ ६ ॥ अनिरुद्धो रणेऽरुद्धो बलेः पौत्रीं महाबलः ॥ उषां बाणस्य तनयामुपयेमे द्विजोत्तम ॥ ७ ॥ यत्र युद्धमभूद्घोरं हरिशंकरयोर्महत् ॥ छिन्नं सहस्रं बाहूनां यत्र बाणस्य चक्रिणा ॥ ८ ॥ मैत्रेय उवाच ॥ कथं युद्धमभूद्ब्रह्मन्नुषार्थे हरकृष्णयोः ॥ कथं क्षयं च बाणस्य बाहूनां कृतवान्हरिः ॥ ९ ॥ एतत्सर्वं महाभाग ममाख्यातुं त्वमर्हसि ॥ महत्कौतूहलं जातं कथां श्रोतुमिमां हरेः ॥ १० ॥ श्रीपराशर उवाच ॥ उषा बाणसुता विप्र पार्वतीं सह शंभुना ॥ क्रीडंतीमुपलक्ष्योच्चैः स्पृहां चक्रे तदाश्रयाम् ॥ ११ ॥ ततस्सकलचित्तज्ञा गौरी तामाह भामिनीम् ॥ अलमत्यर्थतापेन भर्त्रा त्वमपि रंस्यसे ॥ १२ ॥ इत्युक्ता सा तया चक्रे कदेति मतिमात्मनः ॥ को वा भर्त्ता ममेत्याह पुनस्तामाह पार्वती ॥ १३ ॥ पार्वत्युवाच ॥ वैशाखशुक्लद्वादश्यां स्वप्ने योभिभवं तव ॥ करिष्यति स ते भर्त्ता राजपुत्रि भविष्यति ॥ १४ ॥ श्रीपराशर उवाच ॥ तस्यां तिथावुषास्वप्ने यथा देव्या समीरितम् ॥ तथैवाभिभवं चक्रे कश्चिद्रागं च तत्र सा ॥ १५ ॥ ततः प्रबुद्धा पुरुषमपश्यंती समुत्सुका ॥ क्व गतोसीति निर्लज्जा मैत्रेयोक्तवती सखीम् ॥ १६ ॥

॥ १ ॥ २ ॥ तनया इति ॥ अत्राष्टप्रधानमहिषीमध्ये शैब्यानामप्रवेशः प्रख्यातपुत्रवतीप्रस्तावात् ॥ ३ ॥ ४ ॥ अन्यासां चेति ॥ अत्र अयुतसहस्रशतशब्दैः प्रत्येकमष्टशब्दः संबध्यते ॥ ५ ॥ ६ ॥ अनिरुद्ध इति ॥ रणेरुद्ध इत्यत्र अरुद्ध इति पदच्छेदः ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ उषेति ॥ यत्र उपवने । तदाश्रयां भर्तृक्रीडाविषयाम् ॥ ११ ॥ १२ ॥ १३ ॥ वैशाखेति ॥ अभिभवं प्रधर्षणम् ॥ १४ ॥ तस्यामिति ॥ उषास्वप्ने उषायाः स्वप्ने अभिभवं चक्रे ॥ १५ ॥ १६ ॥

पूर्वोक्तपुत्रानुवादपूर्वकं हरेस्सर्वान्पुत्रानाह–प्रद्युम्नाद्या इत्यादिपंचभिः ॥ १ ॥ २ ॥ तनया इति ॥ शैब्यायां मित्रविंदायाम् ॥ ३ ॥ ४ ॥ ५ ॥ अनिरुद्धस्य विवाहांतरं तावद्वक्तुं प्रद्युम्नाद्यनुवादः । प्रद्युम्न इति ॥ ६ ॥ ७ ॥ यत्रेति ॥ यत्र यस्मिन्विवाहे युद्धं समभूत्, यत्र युद्धे बाणस्य बहूनां सहस्रं चक्रिणा च्छिन्नम् ॥ ८ ॥ ९ ॥ १० ॥ उषेति ॥ तदाश्रयां स्वभर्त्रा सह क्रीडाविषयां स्पृहां चक्रे ॥ ११ ॥ १२ ॥ इतीति ॥ इत्युक्ता तया गौर्या सा उषा भर्त्रा रतिरात्मनः कदा स्यादिति मतिं चक्रे ॥ १३ ॥ वैशाखेति ॥ अभिभवम् आक्रम्य संभोगम् ॥ १४ ॥ १५ ॥ तत इति ॥ समुत्सुका औत्सुक्यात् कांतभ्रांत्या क्व गतोसीति सखीमिवोक्तवती ॥ १६ ॥

बाणस्य मंत्री कुंभांडः चित्ररेखा च तत्सुता ॥ तस्यास्सख्यभवत्सा च प्राह कोयं त्वयोच्यते ॥ १७ ॥ यदा लज्जाकुला नास्यै कथयामास सा सखी ॥ तदा विश्वासमानीय सर्वमेवाभ्यवादयत् ॥ १८ ॥ विदितार्थां तु तामाह पुनश्चोषा यथोदितम् ॥ देव्या तथैव तत्प्राप्तौ यो ह्युपायः कुरुष्व तम् ॥ १९ ॥ चित्रलेखोवाच ॥ दुर्विज्ञेयमिदं वक्तुं प्राप्तुं वाऽपि न शक्यते ॥ तथापि किंचित्कर्त्तव्यमुपकारं प्रिये तव ॥ २० ॥ सप्ताष्टदिनपर्यंतं तावत्कालः प्रतीक्ष्यताम् ॥ इत्युक्त्वाभ्यंतरं गत्वा उपायं तमथाकरोत् ॥ २१ ॥ श्रीपराशर उवाच ॥ ततः पटे सुरान्दैत्यान्गंधर्वांश्च प्रधानतः ॥ मनुष्यांश्च विलिख्यास्यै चित्रलेखा व्यदर्शयत् ॥ २२ ॥ अपास्य सा तु गंधर्वांस्तथोरगसुरासुरान् ॥ मनुष्येषु ददौ दृष्टिं तेष्वप्यंधकवृष्णिषु ॥ २३ ॥ कृष्णरामौ विलोक्यासीत्सुभ्रूर्लज्जाजडेव सा ॥ प्रद्युम्नदर्शने व्रीडादृष्टिं निन्येन्यतो द्विज ॥ २४ ॥ दृष्टमात्रे ततः कांते प्रद्युम्नतनये द्विज ॥ दृष्ट्वात्यर्थविलासिन्या लज्जा क्वापि निराकृता ॥ २५ ॥ सोयंसोयमितीत्युक्ते तया सा योगगामिनी ॥ चित्रलेखा ब्रवीदेनामुषां बाणसुतां तदा ॥ २६ ॥ चित्रलेखोवाच ॥ अयं कृष्णस्य पौत्रस्ते भर्त्ता देव्या प्रसादितः ॥ अनिरुद्ध इति ख्यातः प्रख्यातः प्रियदर्शनः ॥ २७ ॥ प्राप्नोषि यदि भर्त्तारमिमं प्राप्तं त्वयाऽखिलम् ॥ दुष्प्रवेशा पुरी पूर्वं द्वारका कृष्णपालिता ॥ २८ ॥ तथापि यत्नाद्भर्त्तारमानयिष्यामि ते सखि ॥ रहस्यमेतद्वक्तव्यं न कस्यचिदपि त्वया ॥ २९ ॥ अचिरादागमिष्यामि सहस्व विरहं मम ॥ ययौ द्वारवतीं चोषां समाश्वास्य ततः सखीम् ॥ ३० ॥ इति श्रीविष्णुमहापुराणे पंचमांशे द्वात्रिंशोऽध्यायः ॥ ३२ ॥ ॥

बाणस्येति ॥ तस्या उषायाः । कोऽयं, पुमानिति शेषः ॥ १७ ॥ १८ ॥ विदितार्थामिति ॥ यथोदितं देव्या तथैव विदितार्थां तां तत्प्राप्तौ तस्य कांतस्य प्राप्तौ यो ह्युपायस्तं कुरुष्वेति आहेत्यन्वयः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ अपास्येति ॥ मनुष्येषु साजात्याद्दृष्टिः यदुषु समवेषत्वेन च ॥ २३ ॥ कृष्णरामाविति ॥ कृष्णरामयोस्तु किंचित्सादृश्यात्तद्दर्शनेन सा लज्जया जडेवासीत् ॥ २४ ॥ दृष्टमात्र इति ॥ स्वप्नलब्धे कांते दृष्टमात्रे तस्मिन् रागाधिक्याल्लज्जा निराकृता ॥ २५ ॥ सोयमिति ॥ सोऽयंसोऽयमिति प्रत्यभिज्ञाविस्मयाभ्यां वीप्सा । योगगामिनी योगविद्यया गगनगामिनी ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ॥ ३० ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशे द्वात्रिंशोऽध्यायः ॥ ३२ ॥ ॥ छ ॥

॥ १७ ॥ यदेति ॥ अभ्यवादयत् आभिमुख्येन यथावृत्तमुषामेवावादयत् कथनमकारयत् ॥ १८ ॥ विदितार्थामिति ॥ देव्या यथोदितं ते भर्ता भविष्यतीति तथैव तत्प्राप्तौ तस्य भर्तुः प्राप्तौ ॥ १९॥२०॥२१॥२२॥ अपास्येति ॥ मनुष्येषु कांतसाजात्याद्दृष्टिं ददौ तत्राप्यंधकवृष्णिषु कांतसमानवेषत्वात् ॥२३॥ कृष्णरामाविति ॥ कृष्णरामौ तु श्वशुरप्रद्युम्नसदृशौ विलोक्य लज्जया जडेवासीत् । प्रद्युम्नदर्शने तु तस्य कांतसादृश्येन श्वशुरत्वं निश्चयाद्व्रीडायुक्तां दृष्टिमन्यतो निन्ये॥२४॥२५॥ सोयमिति ॥ योगबलादाकाशगामिनी॥२६॥२७॥२८॥२९॥३०॥इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां पंचमांशे द्वात्रिंशोऽध्यायः॥३२॥

॥ श्रीपराशर उवाच ॥ बाणोपि प्रणिपत्याग्रे मैत्रेयाह त्रिलोचनम् ॥ देव बाहुसहस्रेण निर्विण्णोस्म्याहवं विना ॥ १ ॥ कच्चिन्ममैषां बाहूनां साफल्यजनको रणः ॥ भविष्यति विना युद्धं भाराय मम किं भुजैः ॥ २ ॥ श्रीशंकर उवाच ॥ मयूरध्वजभंगस्ते यदा बाण भविष्यति ॥ पिशिताशिजनानंदं प्राप्स्यसे त्वं तदा रणम् ॥३॥ श्रीपराशर उवाच ॥ ततः प्रणम्य वरदं शंभुमभ्यागतो गृहम् ॥ सभग्नं ध्वजमालोक्य हृष्टो हर्षं पुनर्ययौ ॥ ४ ॥ एतस्मिन्नेव काले तु योगविद्याबलेन तम् ॥ अनिरुद्धमथानिन्ये चित्रलेखा वराप्सराः ॥ ५ ॥ कन्यांतःपुरमभ्येत्य रममाणं सहोषया ॥ विज्ञाय रक्षिणो गत्वा शशंसुर्दैत्यभूपतेः ॥६॥ व्यादिष्टं किंकराणां तु सैन्यं तेन महात्मना॥ जघान परिघं घोरमादाय परवीरहा ॥७॥ हतेषु तेषु बाणोपि रथस्थस्तद्वधोद्यतः ॥ युध्यमानो यथाशक्ति यदुवीरेण निर्जितः ॥८॥ मायया युयुधे तेन स तदा मंत्रिचोदितः॥ ततस्तं पन्नगास्त्रेण बबंध यदुनंदनम् ॥ ९ ॥ द्वारवत्यां क्व यातोऽसावनिरुद्धेति जल्पताम् ॥ यदूनामाचचक्षे तं बद्धं बाणेन नारदः ॥ १० ॥ तं शोणितपुरं नीतं श्रुत्वा विद्याविदग्धया ॥ योषिता प्रत्ययं जग्मुर्यादवा नामरैरिति ॥११॥ ततो गरुडमारुह्य स्मृतमात्रागतं हरिः ॥ बलप्रद्युम्नसहितो बाणस्य प्रययौ पुरम् ॥ १२ ॥ पुरप्रवेशे प्रमथैर्युद्धमासीन्महात्मनः ॥ ययौ बाणपुराभ्याशं नीत्वा तान्संक्षयं हरिः ॥ १३ ॥ ततस्त्रिपादस्त्रिशिरा ज्वरो माहेश्वरो महान् ॥ बाणरक्षार्थमभ्येत्य युयुधे शार्ङ्गधन्वना ॥ १४ ॥ तद्भस्मस्पर्शसंभूततापः कृष्णांगसंगमात् ॥ अवाप बलदेवोपि श्रममामीलितेक्षणः ॥ १५ ॥

बाण इति ॥ अग्रे अनिरुद्धवृत्तांतात्प्राक् ॥१॥ कच्चिदिति ॥ भाराय जातैः किं भुजैः॥२॥३॥तत इति॥देववचनाद्धृष्टः ध्वजभंगदर्शनाद्धर्षांतरं ययौ ॥४॥ ५ ॥ ॥६॥७॥८॥९॥ द्वारवत्यामिति॥अनिरुद्धेत्यार्षः संधिः॥१०॥ तमिति॥नामरैरिति पारिजातनिमित्तं बद्धवैरैरमरैरनिरुद्धो हतस्स्यादिति शंका हरिवंशोक्ता॥११॥ ॥ १२ ॥ १३॥१४॥ तद्भस्मेति ॥ तापः कृष्णांगसंगमात् अवाप बलदेवोपि । श्रममामीलितेक्षणः इति पाठः । तापः कृष्णांगसंगमात् शममिति पाठे अपिशब्दो

अथ युद्धे बाणबाहुच्छेदं वक्ष्यन् शंभोरपि तत्संमतमिति दर्शयन्नाह बाणोपीत्यादिचतुर्भिः—बाणोपीति ॥ अग्रे अनिरुद्धागमनात्प्राक् ॥ १ ॥ २ ॥ मयूरध्वजेति ॥ पिशिताशिनो मांसभुजो जनान् पिशाचादीनानंदयतीति तथा ॥ ३ ॥ तत इति ॥ शंभोर्वाक्यं श्रुत्वा हृष्टो गृहमागतस्सन् मयूरचिह्नध्वजभंगसंभवमालोक्य पुनर्हर्षं ययौ ॥ ४ ॥ ५ ॥ ६ ॥ व्यादिष्टमिति ॥ तेन बाणेन व्यादिष्टं सैन्यं परवीरहा अनिरुद्धो जघान ॥ ७ ॥ ८ ॥ ९ ॥ द्वारवत्यामिति ॥ अनिरुद्धेत्यत्रार्षस्संधिः । अनिरुद्धः क्व यात इति जल्पतामित्यर्थः ॥ १० ॥ तामिति ॥ नारदवाक्यादेव योगविद्यानिपुणया चित्रलेखया नीतं शोणितपुरे वर्तमानं श्रुत्वा अमरैर्न नीत इति प्रत्ययं निश्चयं जग्मुः । पारिजातहरणे पराजितैरमरैः प्रायशो नीतस्स्यादित्याशंकां जहुरित्यर्थः ॥ ११ ॥ १२ ॥ पुरप्रवेश इति ॥ प्रमथैः रुद्रपार्षदैः ॥ १३ ॥ तत इति ॥ "त्रिपाद्भस्मप्रहरणस्त्रिशिरारक्तलोचनः" इति मंत्रलिंगात् ॥ १४ ॥ तद्भस्मेति ॥ तस्य ज्वरस्य प्रहरणभूतं यद्भस्म तस्य स्पर्शात्संभूतस्तापो यस्य बलदेवस्य तथाभूतोपि तेन तापेनैवामीलिताक्षोपि कृष्णांगसंगमात्तदालिंगना

ततस्स युद्ध्यमानस्तु सह देवेन शार्ङ्गिणा ॥ वैष्णवेन ज्वरेणाशु कृष्णदेहान्निराकृतः ॥ १६ ॥ नारायणभुजाघातपरिपीडनवि
ह्वलम् ॥ तं वीक्ष्य क्षम्यतामस्येत्याह देवः पितामहः ॥ १७ ॥ ततश्च क्षांतमेवेति प्रोक्ता तं वैष्णवं ज्वरम् ॥ आत्मन्येव
लयं निन्ये भगवान्मधुसूदनः ॥ १८ ॥ ज्वर उवाच ॥ मम त्वया समं युद्धं ये स्मरिष्यंति मानवाः ॥ विज्वरास्ते भविष्यंती
त्युक्त्वा चैनं ययौ ज्वरः ॥ १९ ॥ ततोऽग्नीन्भगवान्पंच जित्वा नीत्वा तथा क्षयम् ॥ दानवानां बलं कृष्णश्चूर्णयामास लीलया ॥ २० ॥
ततस्समस्तसैन्येन दैतेयानां बलेस्सुतः ॥ युयुधे शंकरश्चैव कार्त्तिकेयश्च शौरिणा ॥ २१ ॥ हरिशंकरयोर्युद्धमतीवासीत्सुदारुणम् ॥ चुक्षुभुस्स
कला लोकाश्शस्त्रास्त्रांशुप्रतापिताः ॥ २२ ॥ प्रलयोयमशेषस्य जगतो नूनमागतः ॥ मेनिरे त्रिदशास्तत्र वर्त्तमाने महारणे ॥ २३ ॥ जृंभ
कास्त्रेण गोविंदो जृंभयामास शंकरम् ॥ ततः प्रणेशुर्दैतेयाः प्रमथाश्च समंततः ॥ २४ ॥ जृंभाभिभूतस्तु हरो रथोपस्थ उपाविशत् ॥ न
शशाक ततो योद्धुं कृष्णेनाक्लिष्टकर्मणा ॥ २५ ॥ गरुडक्षतवाहश्च प्रद्युम्नास्त्रेण पीडितः ॥ कृष्णहुंकारनिर्धूतशक्तिश्चापययौ गुहः ॥ २६ ॥
जृंभिते शंकरे नष्टे दैत्यसैन्ये गुहे जिते ॥ नीते प्रमथसैन्ये च संक्षयं शार्ङ्गधन्वना ॥ २७ ॥ नंदिना संगृहीताश्वमधिरूढो महारथम् ॥ बाण
स्तत्राययौ योद्धुं कृष्णकार्ष्णिबलैस्सह ॥ २८ ॥ बलभद्रो महावीर्यो बाणसैन्यमनेकधा ॥ विव्याध बाणैः प्रभ्रश्य धर्मतश्चापलायत ॥ २९ ॥

न संगतः ॥ १५ ॥ तत इति ॥ कृष्णस्पर्शी ज्वरो वैष्णवेन ज्वरेण कृष्णदेहान्निराकृतः ॥ १६ ॥ १७ ॥ ततश्चेति ॥ लयं सौक्ष्म्यं न नाशम् । "युवां ज्वरौ ज्वरपती पीडायां मारणे प्रभू । पीडायां तु भवानस्तु मारणे मामको ज्वरः" इति हरिवंशे भगवदुक्तेः ॥ १८ ॥ ममेति ॥ मम त्वयेत्यनेन कृष्णज्वरयुद्धस्मरणं ज्वरशांतिकरमुक्तम् । अत्र मंत्ररूपं श्लोकांतरम् । आद्यंतवंतः कवय इत्यादि आद्यंतवंतः जगतामाद्यंतकर्त्तारः ॥ १९ ॥ तत इति ॥ आद्यंतवंतः आद्यंतकर्तॄन् अग्नीन् पुररक्षकान् रुद्रानुचरान् ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ जृंभेति ॥ जृंभो गात्रपारवश्यम् ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ बलभद्र इति ॥

च्छमं स्वास्थ्यमवाप । पाठांतरे तद्भस्मस्पर्शोत्संभूतपापं यत्कृष्णस्यांगं तस्य संगमात् स्पर्शाद्बलदेवोपि श्रमं तापमवापेत्यर्थः ॥ १९ ॥ तत इति ॥ ततः स माहेश्वरो ज्वरो विष्णोर्देहं प्रविश्य तेन सह युद्ध्यमानः तदानीमेव वैष्णवेन ज्वरेण तद्देहाद्बहिर्निस्सारितः ॥ १६ ॥ १७ ॥ तत इति ॥ लयं सौक्ष्म्यं निन्ये न तु नाशं भगवतैव ज्वरद्वयकार्यावस्थापनात् । तदुक्तं हरिवंशे "युवां ज्वरौ ज्वरपती पीडायां मारणे प्रभू । पीडने तु भवानस्तु मारणे मामको ज्वरः ॥" इति ॥ १८ ॥ १९ ॥ तत इति ॥ अग्नीन् आहवनीयगार्हपत्यदक्षिणाग्निसभ्यावसथ्यान् । नीत्वाद्यंतवतः क्षयमिति च पाठः ॥ २० ॥ २१ ॥ हरिशंकरयोरिति ॥ शस्त्रास्त्राणामंशुभिः प्रकर्षेण तापितास्संतः ॥ २२ ॥ प्रलय इति ॥ प्रलयो नूनमागत इति मेनिरे ॥ २३ ॥ जृंभकास्त्रेणेति ॥ प्रणेशुः पलायिताः ॥ २४ ॥ जृंभाभिभूत इति ॥ जृंभाभिभूतः आलस्यव्याप्तः रथोपस्थे रथपृष्ठे ॥ २५ ॥ गरुडेति ॥ कृष्णस्य हुंकारेण निर्धूता अभिशस्ता शक्तिरायुधं यस्य सः गुहश्च अपययौ अपक्रांतः ॥ २६ ॥ २७ ॥ २८ ॥ बलभद्र इति ॥ प्रभ्रष्टं प्रभ्रश्यमानं सैन्यम् अपलायत पलायनमकरोत् ॥ २९ ॥

आकृष्य लांगलाग्रेण मुसलेनाशु ताडितम् ॥ बलं बलेन ददृशे बाणो बाणैश्च चक्रिणा ॥ ३० ॥ ततः कृष्णेन बाणस्य युद्धमासीत्सुदारुणम् ॥ ३१ ॥ समस्यतोरिषून्दीप्तान्कायत्राणविभेदिनः ॥ कृष्णश्चिच्छेद बाणैस्तान्बाणेन प्रहिताञ्छितान् ॥ विव्याध केशवं बाणो बाणं विव्याध चक्रधृक् ॥ ३२ मुमुचाते तथास्त्राणि बाणकृष्णौ जिगीषया ॥ परस्परक्षतिकरौ लाघवादनिशं द्विज ॥ ३३ ॥ भिद्यमानेष्वशेषेषु शरेष्वस्त्रे च सीदति ॥ प्राचुर्येण ततो बाणं हंतुं चक्रे हरिर्मनः ॥ ३४ ॥ ततोर्कशतसंघाततेजसा सदृशद्युति ॥ जग्राह दैत्यचक्रारिर्हरिश्चक्रं सुदर्शनम् ॥ ३५ ॥ मुञ्चतो बाणनाशाय ततश्चक्रं मधुद्विषः ॥ नग्ना दैतेयविद्याऽभूत्कोटरी पुरतो हरेः ॥ ३६ ॥ तामग्रतो हरिर्दृष्ट्वा मीलिताक्षस्सुदर्शनम् ॥ मुमोच बाणमुद्दिश्य च्छेत्तुं बाहुवनं रिपोः ॥ ३७ ॥ क्रमेण तत्तु बाहूनां बाणस्याच्युतचोदितम् ॥ छेदं चक्रेऽसुरापास्तशस्त्रौघक्षपणादृतम् ॥ ३८ ॥

प्रभ्रश्येति धर्मतः युद्धधर्मात्प्रभ्रश्यापलायत ॥ २९ ॥ आकृष्येति ॥ बलेन चक्रिणा मुसलेन बाणैश्च पीडितं स्वबलं बाणो ददर्शेत्यन्वयः ॥ ३० ॥ ॥ ३१ ॥ समस्यतोरिति ॥ समस्यतोः कृष्णबाणयोर्मध्ये कृष्णः बाणप्रहितान् तान् बाणांश्चिच्छेद ॥ ३२ ॥ ३३ ॥ भिद्यमानेष्विति ॥ प्राचुर्येणास्त्रे च सीदति ॥ ३४ ॥ ३५ ॥ मुंचत इति ॥ कोटरी विद्यारूपा दैतेयकुलदेवता गौर्यांशशक्तिः । तथा माथुरे हरिवंशे "दिग्वासा देववचनात्प्रातिष्ठत्तत्र कोटरी । लंबमाना महाभागा गौरी देव्यास्तथाऽष्टमी" इति । गोमंतहरिवंशे च "शशाप चैनां भगवान्यश्च मां भक्तिसंयुतः । द्वादशाब्दं नमस्कुर्यात्तेनाभूयत्फलं महत् ॥ त्वन्नमस्करणात्तस्य तत्सर्वं नश्यतां तदा । सदा दिगंबरा भूयास्तिष्ठ वा गच्छ वाऽग्रतः ॥" इति ॥ ३६ ॥ ३७ ॥ क्रमेणेति ॥ असुरेति असुरक्षिप्तशस्त्रौघक्षपणे आदृतम् ॥ ३८ ॥

आकृष्येति ॥ पीडितं प्रतापितं चक्रिणा च बाणैस्ताडितं स्वबलं बाणो ददृशे ददर्श ॥३०॥३१॥ समस्यतोरिति ॥ समस्यतोरित्यादिसार्धमेकं वाक्यं कायत्राणं कवचं तद्भेदकानिषूंश्च परस्परं समस्यतोः क्षिपतोः कृष्णबाणयोर्मध्ये कृष्णस्तु बाणेन प्रयुक्तान् बाणैश्चिच्छेद ॥३२॥३३॥ भिद्यमानेषु इति ॥ अस्त्रे तु प्राचुर्येण सीदति ॥ ३४ ॥ तत इति ॥ अर्कशतसंघातस्य यत्तेजस्तत्सदृशी द्युतिर्यस्य तत् । दैत्यचक्रारिः दैत्यचक्रघातुकः सुदर्शनाख्यं चक्रं जग्राह ॥ ३५ ॥ मुंचत इति ॥ कोटरी नाम दैतेयविद्या तन्मंत्रमयी कुलदेवता ॥ ३६ ॥ ३७ ॥ क्रमेणेति ॥ सुरैरपास्तस्य क्षिप्तस्य शस्त्रस्तोमस्य क्षपणे आदृतं सादरं बाहुवनम् । यद्वा असुरै

छिन्ने बाहुवने तत्तु करस्थं मधुसूदनः ॥ मुमुक्षुर्बाणनाशाय विज्ञातस्त्रिपुरद्विषा ॥ ३९ ॥ समुपेत्याह गोविंदं सामपूर्वमुमापतिः ॥ विलोक्य बाणं दोर्दंडच्छेदासृक्स्राववर्षिणम् ॥ ४० ॥ शंकर उवाच ॥ कृष्णकृष्ण जगन्नाथ जाने त्वां पुरुषोत्तमम् ॥ परेशं परमात्मानमनादिनिधनं हरिम् ॥४१॥ देवतिर्यङ्मनुष्येषु शरीरग्रहणात्मिका ॥ लीलेयं सर्वभूतस्य तव चेष्टोपलक्षणा ॥४२॥ तत्प्रसीदाभयं दत्तं बाणस्यास्य मया प्रभो ॥ तत्त्वया नानृतं कार्यं यन्मया व्याहृतं वचः ॥ ४३ ॥ अस्मत्संश्रयदृप्तोयं नापराधी तवाव्यय ॥ मया दत्तवरो दैत्यस्ततस्त्वां क्षमयाम्यहम् ॥ ४४ ॥ श्रीपराशर उवाच ॥ इत्युक्तः प्राह गोविंदश्शूलपाणिमुमापतिम् ॥ प्रसन्नवदनो भूत्वा गतामर्षोऽसुरं प्रति ॥ ४५ ॥ श्रीभगवानुवाच ॥ युष्मद्दत्तवरो बाणो जीवतामेष शंकर ॥ त्वद्वाक्यगौरवादेतन्मया चक्रं निवर्त्तितम् ॥ ४६ ॥ त्वया यदभयं दत्तं तद्दत्तमखिलं मया ॥ मत्तोऽविभिन्नमात्मानं द्रष्टुमर्हसि शंकर ॥ ४७ ॥ योहं स त्वं जगच्चेदं सदेवासुरमानुषम् ॥ मत्तो नान्यदशेषं यत्तत्त्वं ज्ञातुमिहार्हसि ॥ ४८ ॥ अविद्यामोहितात्मानः पुरुषा भिन्नदर्शिनः ॥ वदंति भेदं पश्यंति चावयोरंतरं हर ॥ ४९ ॥ प्रसन्नोऽहं गमिष्यामि त्वं गच्छ वृषभध्वज ॥ ५० ॥ श्रीपराशर उवाच ॥ इत्युक्त्वा प्रययौ कृष्णः प्राद्युम्निर्यत्र तिष्ठति ॥ तद्बंधफणिनो नेशुर्गरुडानिलपोथिताः ॥ ॥ ५१ ॥ ततोऽनिरुद्धमारोप्य सपत्नीकं गरुत्मति ॥ आजग्मुर्द्वारकां रामकार्ष्णिदामोदराः पुरीम् ॥ ५२ ॥ पुत्रपौत्रैः परिवृतस्तत्र रेमे जनार्दनः ॥ देवीभिस्सततं विप्र भूभारतरणेच्छया ॥ ५३ ॥ इति श्रीविष्णुमहापुराणे पंचमांशे त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

॥ ३९ ॥ ४० ॥ ४१ ॥ देवेति ॥ देवतिर्यङ्मनुष्येषु मध्ये देवादिशरीरग्रहणात्मिका तत्तच्चेष्टाविशिष्टा तव लीलेयम् ॥ ४२ ॥ ४३ ॥ ४४ ॥ ॥ ४५ ॥ ४६ ॥ त्वयेति ॥ मत्तोविभिन्नमात्मानमित्यत्र अविभिन्नमिति च्छेदः । योहं स त्वमितिवत् जगचेदं सदेवासुरमानुषमित्युक्तत्वात् इतरक्षेत्रज्ञ्नदस्य ब्रह्मात्मकत्वेनैक्यमुच्यते न तु स्वरूपतः ॥ ४७ ॥ ४८ ॥ अविद्येति ॥ भिन्नदर्शिनः अब्रह्मात्मकत्वेन भिन्नदर्शिनः ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ॥ ५३ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशे त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

रपास्तस्य क्षिप्तस्य शस्त्रौघस्य क्षपणे आहृतमिति सुदर्शनस्य विशेषणम् ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ त्वयेति ॥ मत्तः अविभिन्नमिति च्छेदः ॥ ४७ ॥ ४८ ॥ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां पंचमांशे त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

मैत्रेय उवाच ॥ चक्रे कर्म महच्छौरिर्बिभ्राणो मानुषीं तनुम् ॥ जिगाय शक्रं शर्वं च सर्वान्देवांश्च लीलया॥१॥यच्चान्यदकरोत्कर्म दिव्यचेष्टाविघात कृत् ॥ तत्कथ्यतां महाभाग परं कौतूहलं हि मे॥२॥श्रीपराशर उवाच ॥ गदतो मम विप्रर्षे श्रूयतामिदमादरात् ॥ नरावतारे कृष्णेन दग्धा वाराणसी यथा ॥ ३ ॥ पौंड्रको वासुदेवस्तु वासुदेवोऽभवद्भुवि ॥ अवतीर्णस्त्वमित्युक्तो जनैरज्ञानमोहितैः ॥ ४ ॥ स मेने वासुदेवोहमवतीर्णो महीतले ॥ नष्टस्मृतिस्ततस्सर्वं विष्णुचिह्नमचीकरत् ॥ ५ ॥ दूतं च प्रेषयामास कृष्णाय सुमहात्मने ॥ त्यक्त्वा चक्रादिकं चिह्नं मदीयं नाम चात्मनः ॥ ६ ॥ वासुदेवात्मकं मूढ त्यक्त्वा सर्वमशेषतः ॥ आत्मनो जीवितार्थाय ततो मे प्रणतिं व्रज ॥ ७ ॥ इत्युक्तस्संप्रहस्यैनं दूतं प्राह जनार्दनः ॥ निजचिह्नमहं चक्रं समुत्सृक्ष्ये त्वयीति वै॥८॥ वाच्यश्च पौंड्रको गत्वा त्वया दूत वचो मम ॥ ज्ञातस्त्वद्वाक्यसद्भावो यत्कार्यं तद्विधीयताम् ॥ ९ ॥ गृहीतचिह्नवेषोहमागमिष्यामि ते पुरम् ॥ उत्स्रक्ष्यामि च तच्चक्रं निजचिह्नमसंशयम् ॥ १० ॥ आज्ञापूर्वं च यदिदमागच्छेति त्वयोदितम् ॥ संपादयिष्ये श्वस्तुभ्यं समागम्याविलंबितम् ॥११॥ शरणं ते समभ्येत्य कर्त्तास्मि नृपते तथा॥ यथा त्वत्तो भयं भूयो न मे किंचिद्भविष्यति ॥ १२ ॥ श्रीपराशर उवाच ॥ इत्युक्तेपगते दूते संस्मृत्याभ्यागतं हरिः ॥ गरुत्मंतमथारुह्य त्वरितस्तत्पुरं ययौ ॥ १३ ॥

॥ १ ॥ यच्चान्यदकरोदिति ॥ दिव्यचेष्टाविघातकृत् दिव्यानां शर्वादीनां चेष्टाविघातकृत् ॥ २ ॥ ३ ॥ पौंड्रक इति ॥ पौंड्रकः पुंड्रदेशेशः ॥ ४ ॥ स इति ॥ अचीकरत् अकारयत् ॥ ५ ॥ दूतं चेति ॥ इत्युक्त्वा दूतं च प्रेषयामासेति इत्युक्तो दूतेनोक्त इति तंत्रेणेति शब्दो योज्यः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १०॥ ॥११॥ शरणमिति ॥ शरणमित्यादि प्रणतिं व्रजेत्यस्योत्तरम् । समभ्येत्य ते शरणं हिंसां कर्त्तास्मि शीर्णाद्धि शत्रोर्न भूयो भयं भवेदिति भावगर्भम् ॥१२॥१३॥

॥ १ ॥ यच्चान्यदिति ॥ दिव्यानां दिवि भवानां देवानां चेष्टा पराक्रमः तद्विघातकृत् ॥ २ ॥ ३ ॥ पौंड्रक इति ॥ पौंड्रकः पौंड्रदेशजः अज्ञानमोहितैः प्राकृतैर्जनैर्वासुदेवोवतीर्णस्त्वमित्युक्तः ॥ ४ ॥ स इति ॥ सत्यमेवाहं वासुदेव इति स मेने ॥ ५ ॥ ६ ॥ ७ ॥ इत्युक्त इति ॥ समुत्स्रक्ष्ये त्वयीति बुद्धिसन्निहितं पौंड्रकमभिसंधायोक्तं चक्रं क्षिप्त्वाहं हरिष्यामीति भावः ॥ ८ ॥ एतत्स्पष्टयन्नाह—वाच्यश्चेत्यादिचतुर्भिः—वाच्यश्चेति ॥ त्वद्वाक्यस्य सद्भावो याथार्थ्यम् ॥ ९ ॥ गृहीतेति ॥ निजचिह्नं मम चिह्नं चक्रं त्वयि उत्स्रक्ष्यामि प्रयोक्ष्ये ॥ १० ॥ ११ ॥ शरणमिति ॥ ते शरणं तव पुरं समभ्येत्य त्वत्तो यथा मे भयं भूयो न भविष्यति तथा कर्तास्मि करिष्यामि । त्वां हनिष्यामीत्यर्थः ॥ १२ ॥ १३ ॥

ततस्तु केशवोद्योगं श्रुत्वा काशीपतिस्तदा ॥ सर्वसैन्यपरीवारः पार्ष्णिग्राह उपाययौ ॥ १४ ॥ ततो बलेन महता काशीराजबलेन च ॥ पौंड्रको वासुदेवोऽसौ केशवाभिमुखो ययौ ॥ १५ ॥ तं ददर्श हरिर्दूरादुदारस्यंदने स्थितम् ॥ चक्रहस्तं गदाशार्ङ्गबाहुं पाणिगतांबुजम् ॥ १६ ॥ स्रग्धरं पीतवसनं सुपर्णरचितध्वजम् ॥ वक्षस्थले कृतं चास्य श्रीवत्सं ददृशे हरिः ॥ १७ ॥ किरीटकुंडलधरं नानारत्नोपशोभितम् ॥ तं दृष्ट्वा भावगंभीरं जहास गरुडध्वजः ॥ १८ ॥ युयुधे च बलेनास्य हस्त्यश्वबलिना द्विज ॥ निस्त्रिंशासिगदाशूलशक्तिकार्मुकशालिना ॥ १९ ॥ क्षणेन शार्ङ्गनिर्मुक्तैश्शरैरिरविदारणैः ॥ गदाचक्रनिपातैश्च सूदयामास तद्बलम् ॥ २० ॥ काशीराजबलं चैवं क्षयं नीत्वा जनार्दनः ॥ उवाच पौंड्रकं मूढमात्मचिह्नोपलक्षितम् ॥ २१ ॥ श्रीभगवानुवाच ॥ पौंड्रकोक्तं त्वया यत्तु दूतवक्त्रेण मां प्रति ॥ समुत्सृजेति चिह्नानि तत्ते संपादयाम्यहम् ॥ २२ ॥ चक्रमेतत्समुत्सृष्टं गदेयं ते विसर्जिता ॥ गरुत्मानेष चोत्सृष्टस्समारोहतु ते ध्वजम् ॥ २३ ॥ श्रीपराशर उवाच ॥ इत्युच्चार्य विमुक्तेन चक्रेणाऽसौ विदारितः ॥ पातितो गदया भग्नो ध्वजश्चास्य गरुत्मता ॥ २४ ॥ ततो हाहाकृते लोके काशीपुर्यधिपो बली ॥ युयुधे वासुदेवेन मित्रस्यापचितौ स्थितः ॥ २५ ॥ ततश्शार्ङ्गधनुर्मुक्तैश्छित्त्वा तस्य शिरश्शरैः ॥ काशीपुर्यां स चिक्षेप कुर्वंल्लोकस्य विस्मयम् ॥ २६ ॥ हत्वा त पौंड्रकं शौरिः काशीराजं च सानुगम् ॥ पुनर्द्वारवतीं प्राप्तो रेमे स्वर्गगतो यथा ॥ २७ ॥ तच्छिरः पतितं तत्र दृष्ट्वा काशीपतेः पुरे ॥ जनः किमेतदित्याह च्छिन्नं केनेति विस्मितः ॥ २८ ॥ ज्ञात्वा तं वासुदेवेन हतं तस्य सुतस्ततः ॥ पुरोहितेन सहितस्तोषयामास शंकरम् ॥ २९ ॥ अविमुक्ते महाक्षेत्रे तोषितस्तेन शंकरः ॥ वरं वृणीष्वेति तदा तं प्रोवाच नृपात्मजम् ॥ ३० ॥ स वव्रे भगवन्कृत्या पितृहंतुर्वधाय मे ॥ समुतिष्ठतु कृष्णस्य त्वत्प्रसादान्महेश्वर ॥ ३१ ॥

॥ १४ ॥ १५ ॥ १६ ॥ स्रग्धरमिति ॥ सुपर्णरचितध्वजं सुपर्णरचनोपेतध्वजम् ॥ १७ ॥ किरीटेति ॥ कृत्रिममपि मत्सारूप्यं सत्यमिव भातीति भावगंभीरं जहास ॥ १८ ॥ युयुध इति ॥ हस्त्यश्वबलिना हस्त्यश्वैर्बलवता ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ इत्युच्चार्येति ॥ चक्रेण विदारितः गदया पातितः ॥ २४ ॥ तत इति ॥ अपचितिः पूजा ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ स वव्र इत्यादि ॥ पितृहंतुः जायमानो मातुरागर्भो हंतीत्यादिमंत्रलिंगात् ॥ पित्रोररण्योर्हेतुरग्नेः कृष्णस्य

॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ युयुध इति ॥ हस्तिभिरश्वैश्च वलिना निस्त्रिंशाद्यायुधैश्च शालिना श्लाघ्येन ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ तत इति ॥ अपचितौ आनृण्ये स्थितस्सन् युयुधे ॥ २५ ॥ २६ ॥ २७ ॥ तच्छिर इति ॥ किमेतत्केन वा च्छिन्नमित्याह ॥ २८ ॥ २९ ॥ ३० ॥ स इति ॥ पितृहंतुर्वधाय कृत्या समुत्तिष्ठत्विति वव्रे न तु हंतुमिति । किं च मत्पितृहंतुः कृष्णस्य

॥ श्रीपराशर उवाच ॥ एवं भविष्यतीत्युक्ते दक्षिणाग्नेरनंतरम् ॥ महाकृत्या समुत्तस्थौ तस्यैवाग्नेर्विनाशनी ॥ ३२ ॥ ततो ज्वालाकरालास्या ज्वलत्केशकपालिका ॥ कृष्णकृष्णेति कुपिता कृत्या द्वारवतीं ययौ ॥ ३३ ॥ तामवेक्ष्य जनस्त्रासाद्विचलल्लोचनो मुने ॥ ययौ शरण्यं जगतां शरणं मधुसूदनम् ॥ ३४ ॥ काशीराजसुतेनेयमाराध्य वृषभध्वजम् ॥ उत्पादिता महाकृत्येत्यवगम्याऽथ चक्रिणा ॥ ३५ ॥ जहि कृत्यामिमामुग्रां वह्निज्वालाजटालकाम् ॥ चक्रमुत्सृष्टमक्षेषु क्रीडासक्तेन लीलया ॥ ३६ ॥ तदग्निमालाजटिलज्वालोद्गारातिभीषणाम् ॥ कृत्यामनुजगामाशु विष्णुचक्रं सुदर्शनम् ॥ ३७ ॥ चक्रप्रतापनिर्दग्धा कृत्या माहेश्वरी तदा ॥ ननाश वेगिनी वेगात्तदप्यनुजगाम ताम् ॥ ॥ ३८ ॥ कृत्या वाराणसीमेव प्रविवेश त्वरान्विता ॥ विष्णुचक्रप्रतिहतप्रभावा मुनिसत्तम ॥ ३९ ॥ ततः काशीबलं भूरि प्रमथानां तथा बलम् ॥ समस्तशस्त्रास्त्रयुतं चक्रस्याभिमुखं ययौ ॥ ४० ॥ शस्त्रास्त्रमोक्षचतुरं दग्ध्वा तद्बलमोजसा ॥ कृत्या गर्भामशेषां तां तदा वाराणसीं पुरीम् ॥ ४१ ॥ सभूभृद्भृत्यपौरां तु साश्वमातंगमानवाम् ॥ अशेषगोष्ठकोशां तां दुर्निरीक्ष्यां सुरैरपि ॥ ४२ ॥ ज्वालापरिष्कृताशेषगृहप्राकारचत्वराम् ॥ ददाह तद्धरेश्चक्रं सकलामेव तां पुरीम् ॥ ४३ ॥ अक्षीणामर्षमत्युग्रं साध्यसाधनसस्पृहम् ॥ तच्चक्रं प्रस्फुरद्दीप्ति विष्णोरभ्याययौ करम् ॥ ४४ ॥ इति श्रीविष्णुमहापुराणे पंचमांशे चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

कृष्णवर्णज्वालत्वेनाभिचारे ध्येयस्य मे मदीयस्य शत्रोः नाशाय कृत्या समुत्तिष्ठात्वित्यर्थः । अनंतरमेतद्विवृणोति तस्यैवाग्निर्विनाशनीति । यद्वा मे पितृहंतुः कृष्णस्य वधाय कृत्या समुत्तिष्ठत्विति ॥ ३१ ॥ एवं भविष्यतीति ॥ तस्यैवाग्नेर्विनाशिनीति तस्य दक्षिणाग्नेरेव विनाशिनीति अनेन कृत्यायाः क्रौर्यमुच्यते । तस्यैवात्मविनाशिनीति पाठे तस्यैवाभिचरत एव ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ जहीति ॥ जहीत्युत्सृष्टं चक्रम् अक्षक्रीडासक्तेन भगवता ॥ ३६ ॥ ३७ ॥ चक्रप्रतापेति ॥ ननाश पलाययांबभूव 'नाशः पलायने मृत्यौ' इति वैजयंती ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशे चतुस्त्रिंशोध्यायः ॥ ३४ ॥

त्वत्प्रसादात् मे वधाय वधसाधनाय कृत्या समुत्तिष्ठत्वित्यर्थश्च प्रतीयते ॥ ३१ ॥ एवमिति ॥ शंकरेणाप्येवं भविष्यतीति तस्यास्समुत्थानमात्रमेवानुमतमिति न विरोधः ॥ ३२ ॥ तत इति ॥ ज्वलत्केशं कपालं शिरो यस्यास्सा ॥ ३३ ॥ तामिति ॥ त्रासेन विचलंति लोचनानि यस्य स तथोक्तः ॥ ३४ ॥ ३५ ॥ जहीति ॥ वह्निज्वाला एव जटारूपाः संश्लिष्टाः अलकाः यस्याः सा तां जहीति चक्रमुत्सृष्टम् ॥ ३६ ॥ तदिति ॥ अग्निमालाभिर्जटिला चासौ ज्वालानामुद्गारैः अतिभीषणा च तां तदग्निमालाजटिलम् । ज्वालोद्गार्यतिभीषणमिति पाठांतरे चक्रविशेषणम् ॥ ३७ ॥ चक्रेति ॥ ननाश अपलायत ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ स भूभृदिति ॥ भूभृद्भृत्यैः राजभृत्यैः पौरैश्च सहिताम् ॥ ४२ ॥ ४३ ॥ अक्षीणेति ॥ अक्षीणामर्षम् अगतक्रोधम् अत एवात्यल्पस्य कृत्या वाराणसीदाहाद्दुस्साध्यस्य साधनेन सस्पृहं पुनः कार्यांतरसाधनापेक्षमित्यर्थः ॥ ४४ ॥ इति श्रीवरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां पंचमांशे चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

॥ मैत्रेय उवाच ॥ भूय एवाहमिच्छामि बलभद्रस्य धीमतः ॥ श्रोतुं पराक्रमं ब्रह्मन् तन्ममाख्यातुमर्हसि ॥ १ ॥ यमुनाकर्षणादीनि श्रुतानि भगवन्मया ॥ तत्कथ्यतां महाभाग यदन्यत्कृतवान्बलः ॥ २ ॥ श्रीपराशर उवाच ॥ मैत्रेय श्रूयतां कर्म यद्रामेणाभवत्कृतम् ॥ अनंतेनाप्रमेयेन शेषेण धरणीधृता ॥ ३ ॥ सुयोधनस्य तनयां स्वयंवरकृतक्षणाम् ॥ बलाद्दादत्तवान्वीरस्सांबो जांबवतीसुतः ॥ ४ ॥ ततः क्रुद्धा महावीर्याः कर्णदुर्योधनादयः ॥ भीष्मद्रोणादयश्चैनं बबंधुर्युधि निर्जितम् ॥ ५ ॥ तच्छ्रुत्वा यादवास्सर्वे क्रोधं दुर्योधनादिषु ॥ मैत्रेय चक्रुः कृष्णश्च तान्निहंतुं महोद्यमम् ॥ ६ ॥ तान्निवार्य बलः प्राह मदलोलकलाक्षरम् ॥ मोक्ष्यंति ते मद्वचनाद्यास्याम्येको हि कौरवान् ॥ ७ ॥ श्रीपराशर उवाच ॥ बलदेवस्ततो दृष्ट्वा नगरं नागसाह्वयम् ॥ बाह्योपवनमध्येऽभून्न विवेश च तत्पुरम् ॥ ८ ॥ बलमागतमाज्ञाय भूपा दुर्योधनादयः ॥ गामर्घ्यमुदकं चैव रामाय प्रत्यवेदयन् ॥ ९ ॥ गृहीत्वा विधिवत्सर्वं ततस्तानाह कौरवान् ॥ आज्ञापयत्युग्रसेनस्सांबमाशु विमुंचत ॥ १० ॥ ततस्तद्वचनं श्रुत्वा भीष्मद्रोणादयो नृपाः ॥ कर्णदुर्योधनाद्याश्च चुक्षुभुर्द्विजसत्तम ॥ ११ ॥ ऊचुश्च कुपितास्सर्वे बाह्लिकाद्याश्च कौरवाः ॥ अराज्यार्हं यदोर्वंशमवेक्ष्य मुसलायुध ॥ १२ ॥ भोभोः किमेतद्भवता बलभद्रेरितं वचः ॥ आज्ञां कुरुकुलोत्थानां यादवः कः प्रदास्यति ॥ १३ ॥

॥ १ ॥ २ ॥ ३ ॥ सुयोधनस्येति ॥ कृतक्षणां कृतावसराम् । आदत्तवान् आत्तवान् ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ बलदेव इति ॥ पुरं न विवेश अपेक्षितासिद्धौ विरोद्धुम् ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

॥ १ ॥ २ ॥ ३ ॥ यथा सकलबलजनकोशादिसहितां वाराणसीं विष्णुचक्रं ददाह । तथैव सर्वसहितं हस्तिनापुरं बलभद्रो गंगायां प्रक्षेप्तुमुद्यत इति वक्तुं तत्प्रस्तावमाह—सुयोधनस्येत्यादिना विविशुर्गजसाह्वयमित्यंतेन—सुयोधनस्येति ॥ स्वयंवरे कृतक्षणां स्वयंवरकृतक्षणां लब्धावसराम् ॥ ४ ॥ ५ ॥ ६ ॥ तानिति ॥ मदेन लोलं चपलं कलाक्षरं यथाभवत्येवं प्राह ॥ ७ ॥ बलदेव इति ॥ तत्पुरं न विवेश स्वोक्त्यनंगीकारे रणे तैर्योद्धुं तत्पुरं च गंगायां प्रक्षेप्तुमिच्छन् ॥ ८ ॥ बलमिति ॥ उदकं च पाद्यं च रामाय दत्तवंतः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

उग्रसेनोऽपि यद्याज्ञां कौरवाणां प्रदास्यति ॥ तदलं पांडुरैश्छत्रैर्नृपयोग्यैर्विडंबनैः ॥ १४ ॥ तद्गच्छ बल मा वा त्वं सांबमन्यायचेष्टितम् ॥ विमोक्ष्यामो न भवतश्चोग्रसेनस्य शासनात् ॥ १५ ॥ प्रणतिर्या कृतास्माकं मान्यानां कुकुरांधकैः ॥ न नाम सा कृता केयमाज्ञा स्वामिनि भृत्यतः ॥ १६ ॥ गर्वमारोपिता यूयं समानासनभोजनैः ॥ को दोषो भवतां नीतिर्यत्प्रीत्या नावलोकिता ॥ १७ ॥ अस्माभिरर्घो भवतो योयं बल निवेदितः ॥ प्रेम्णैतन्नैतदस्माकं कुलाद्युष्मत्कुलोचितम् ॥ १८ ॥ श्रीपराशर उवाच ॥ इत्युक्त्वा कुरवः सांबं मुंचामो न हरेस्सुतम् ॥ कृतैकनिश्चयास्तूर्णं विविशुर्गजसाह्वयम् ॥ १९ ॥ मत्तः कोपेन चाघूर्णस्ततोधिक्षेपजन्मना ॥ उत्थाय पार्ष्ण्या वसुधां जघान स हलायुधः ॥ २० ॥ ततो विदारिता पृथ्वी पार्ष्णिघातान्महात्मनः ॥ आस्फोटयामास तदा दिशश्शब्देन पूरयन् ॥ २१ ॥ उवाच चातिताम्राक्षो भृकुटीकुटिलाननः ॥ २२ ॥ अहो मदावलेपोयमसाराणां दुरात्मनाम् ॥ कौरवाणां महीपत्वमस्माकं किल कालजम् ॥ उग्रसेनस्य येनाज्ञां मन्यंतेऽद्यापि लंघनम् ॥ २३ ॥

उग्रसेन इति ॥ विडंबनैः हास्यार्हैः । विडंबितैरिति पाठे उग्रसेनेन विडंबितैरस्मच्छत्रैरलम् ॥ १४ ॥ १५ ॥ प्रणतिरिति ॥ पूर्वं कृतास्माकं या प्रणतिः सा अधुना न नाम न कृतास्तु भृत्यतः भृत्यभूतादुग्रसेनात् ॥ १६ ॥ गर्वमिति ॥ नीतिर्यत्प्रीत्या नावलोकितेति नीचेष्वपि युष्मासु प्रीत्या युष्माकमुचितमवमानमकृत्वा समानासनभोजनैः अस्मत्साम्यं नयद्भिरस्माभिरेव नीतिरुपेक्षिता । प्रीतिर्यत्प्रीत्येति पाठे अस्माभिः समानासनभोजनैः युष्माकं कृता प्रीतिः एभिः प्रीत्या कृतेति नावलोकिता किं तु भीत्येति ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ अहो इति ॥ अस्माकं यादवानां महीपत्वं कालजं कस्मिंश्चित्काले जातं नान्वयागतमिति येनावलेपेन लंघनमतिक्रमम् । यद्वा ये

उग्रसेन इति ॥ विडंबितैरस्मदनुसरणेन धृतैर्यमानां नृपार्हैश्छत्रैरलं तान्यपहरिष्याम इति भावः ॥ १४ ॥ १५ ॥ प्रणतिरिति ॥ अस्माकं मान्यानां यादवैः प्रणतिरत्र न कृता चेत्तथा वास्तु नाम केयमाज्ञा स्वामिनो वयं यादवास्त्वस्मद्भृत्याः । तत आज्ञा न युक्ता किं तु विज्ञापयतीति वक्तव्यमिति भावः ॥ १६ ॥ गर्वमिति ॥ नीतिर्येषु प्रीत्या नावलोकितेति हीनानामतिमानो न कार्य इत्येवंभूता राजनीतिः युष्मासु प्रीत्या नावलोकिता अस्माभिर्न विचारिता अतोस्माकमेवायं दोष इति भावः ॥ १७ ॥ १८ ॥ इत्युक्त्वेति ॥ न मुंचाम इति कृतैकनिश्चयाः कृतैकमत्याः ॥ १९ ॥ मत्त इति ॥ अधिक्षेपजन्मना तत्तिरस्कारकृतेन ॥ २० ॥ २१ ॥ २२ ॥ अहो इति ॥ असाराणां बलहीनानां कौरवाणां महीपतित्वं स्वतः अस्माकं तु कालजमागंतुकम् एतत्प्रसादजम् अद्यापीन्द्रादीनाज्ञापयतो मे आज्ञां न मन्यंते ना द्रियंते किं तु तल्लंघनमेव

उग्रसेनः समध्यास्ते सुधर्मां न शचीपतिः ॥ धिङ्मानुषशतोच्छिष्टे तुष्टिरेषां नृपासने ॥२४॥ पारिजाततरोः पुष्पमंजरीर्वनिताजनः ॥ बिभर्त्ति यस्य भृत्यानां सोऽप्येषां न महीपतिः ॥२५॥ समस्तभूभृतां नाथ उग्रसेनस्स तिष्ठतु ॥ अद्य निष्कौरवामुर्वीं कृत्वा यास्यामि तत्पुरीम् ॥२६॥ कर्णं दुर्योधनं द्रोणमद्य भीष्मं सबाह्लिकम् ॥ दुश्शासनादीन्भूरिं च भूरिश्रवसमेव च ॥२७॥ सोमदत्तं शलं चैव भीमार्जुनयुधिष्ठिरान् ॥ यमौ च कौरवांश्चान्यान्हत्वा साश्वरथद्विपान् ॥२८॥ वीरमादाय तं सांबं सपत्नीकं ततः पुरीम् ॥ द्वारकामुग्रसेनादीन्गत्वा द्रक्ष्यामि बांधवान् ॥ २९॥ अथ वा कौरवावासं समस्तैः कुरुभिस्सह ॥ भागीरथ्यां क्षिपाम्याशु नगरं नागसाह्वयम् ॥ ३० ॥ श्रीपराशर उवाच ॥ इत्युक्त्वा मदरक्ताक्षः कर्षणाधोमुखं हलम् ॥ प्राकारवप्रदुर्गस्य चकर्ष मुसलायुधः ॥३१॥ आघूर्णितं तत्सहसा ततो वै हास्तिनं पुरम् ॥ दृष्ट्वा संक्षुब्धहृदयाश्चुक्षुभुस्सर्वकौरवाः ॥ ३२ ॥ रामराम महाबाहो क्षम्यतां क्षम्यतां त्वया ॥ उपसंह्रियतां कोपः प्रसीद मुसलायुध ॥ ३३ ॥ एष सांबस्सपत्नीकस्तव निर्यातितो बलात् ॥ अविज्ञातप्रभावाणां क्षम्यतामपराधिनाम् ॥ ३४ ॥ श्रीपराशर उवाच ॥ ततो निर्यातयामासुस्सांबं पत्नीसमन्वितम् ॥ निष्क्रम्य स्वपुरात्तूर्णं कौरवा मुनिपुंगव ॥ ३५ ॥ भीष्मद्रोणकृपादीनां प्रणम्य वदतां प्रियम् ॥ क्षांतमेव मयेत्याह बलो बलवतां वरः ॥ ॥ ३६ ॥ अद्याप्याघूर्णिताकारं लक्ष्यते तत्पुरं द्विज ॥ एष प्रभावो रामस्य बलशौर्योपलक्षणः ॥ ३७ ॥ ततस्तु कौरवास्सांबं संपूज्य बलिना सह ॥ प्रेषयामासुरुद्वाहधनभार्यासमन्वितम् ॥ ३८ ॥ ॥ इति श्रीविष्णुमहापुराणे पंचमांशे पंचत्रिंशोऽध्यायः ॥ ३५ ॥ ॥

कौरवाः आज्ञां न मन्यंते न बहुमन्यंते किं तु लंघनं मन्यंते॥२३॥ अद्यापीति सूचितमैश्वर्यं दर्शयति उग्रसेन इत्यादिना—उग्रसेन इति॥एषां मनुष्यशतोच्छिष्टे नृपासने तुष्टिः धिगेतान् ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ इत्युक्त्वेति ॥ कर्षणाधोमुखं कर्षणार्थमधोमुखम् ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशे पंचत्रिंशोध्यायः ॥ ३५ ॥ ॥

मन्यंते ॥ २३ ॥ अद्यापीत्यस्याभिप्रायं विवृणोति उग्रसेन इति ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ सोमदत्तमिति ॥ यमौ नकुलसहदेवौ ॥ २८ ॥ २९ ॥ ३० ॥ इत्युक्त्वेति ॥ कर्षणायाधोमुखं प्राकारवप्रदुर्गस्य मूलदेश इति शेषः । प्राकारवप्रे विन्यस्य । चकर्ष मुसलायुध इति पाठे सुगमोर्थः ॥ ३१ ॥ आघूर्णितमिति ॥ आघूर्णितं विचलितम् ॥ ३२ ॥ ३३ ॥ एष इति ॥ निर्यातितः समर्पितः ॥ ३४ ॥ ३५ ॥ ३६ ॥ ॥ ३७ ॥ तत इति ॥ उद्वाहधनेन पारिबर्हेण भार्यया च समन्वितं प्रेषयामासुः प्रस्थापितवंतः ॥ ३८ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां पंचमांशे पंचत्रिंशोऽध्यायः ॥ ३५ ॥

॥ श्रीपराशर उवाच ॥ मैत्रेयैतद्बलं तस्य बलस्य बलशालिनः ॥ कृतं यदन्यत्तेनाऽभूत्तदपि श्रूयतां त्वया ॥१॥ नरकस्यासुरेंद्रस्य देवपक्षविरोधिनः ॥ सखाऽभवन्महावीर्यो द्विविदो वानरर्षभः ॥ २ ॥ वैरानुबंधं बलवान्स चकार सुरान्प्रति ॥ नरकं हतवान्कृष्णो देवराजेन चोदितः ॥ ॥ ३ ॥ करिष्ये सर्वदेवानां तस्मादेतत्प्रतिक्रियाम् ॥ यज्ञविध्वंसनं कुर्वन् मर्त्यलोकक्षयं तथा ॥ ४ ॥ ततो विध्वंसयामास यज्ञानज्ञानमोहितः ॥ बिभेद साधुमर्यादां क्षयं चक्रे च देहिनाम् ॥ ५ ॥ ददाह सवनान्देशान्पुरग्रामांतराणि च ॥ क्वचिच्च पर्वताक्षेपैर्ग्रामादीन्समचूर्णयत् ॥ ६ ॥ शैलानुत्पाट्य तोयेषु मुमोचांबुनिधौ तथा ॥ पुनश्चार्णवमध्यस्थः क्षोभयामास सागरम् ॥७॥ तेन विक्षोभितश्चाब्धिरुद्वेलो द्विज जायते ॥ प्लावयंस्तीरजान्ग्रामान्पुरादीनतिवेगवान् ॥८॥ कामरूपी महारूपं कृत्वा सस्यान्यशेषतः ॥ लुठन्भ्रमणसम्मर्दैस्संचूर्णयति वानरः ॥ ॥ ९ ॥ तेन विप्रकृतं सर्वं जगदेतद्दुरात्मना ॥ निस्स्वाध्यायवषट्कारं मैत्रेयासीत्सुदुःखितम् ॥ १० एकदा रैवतोद्याने पपौ पानं हलायुधः ॥ रेवती च महाभागा तथैवान्या वरस्त्रियः ॥ ११ ॥ उद्गीयमानो विलसल्ललनामौलिमध्यगः ॥ रेमे यदुकुलश्रेष्ठः कुबेर इव नंदने ॥ ॥ १२ ॥ ततस्स वानरोऽभ्येत्य गृहीत्वा सीरिणो हलम् ॥ मुसलं च चकारास्य संमुखं च विडंबनम् ॥ १३ ॥ तथैव योषितां तासां जहासाभिमुखं कपिः ॥ पानपूर्णांश्च करकाञ्चिक्षेपाहत्य वै तदा ॥ १४ ॥ ततः कोपपरीतात्मा भर्त्सयामास तं हली ॥ तथापि तमवज्ञाय चक्रे किलकिलध्वनिम् ॥ १५ ॥ ततः स्मयित्वा स बलो जग्राह मुसलं रुषा ॥ सोऽपि शैलशिलां भीमां जग्राह प्लवगोत्तमः ॥ १६ ॥

मैत्रेयेति ॥ एतद्बलं यमुनाकर्षणादिरूपम् । अन्यद्द्विविदवधादि ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ददाहेति ॥ ग्रामांतराणि ग्रामविशेषान् ॥ ६ ॥ ७ ॥ तेनेति ॥ उद्वेलो वेलामतिक्रांतः जायते ॥ ८ ॥ ९ ॥ तेनेति ॥ विप्रकृतं विनाशितम् ॥ १० ॥ ११ ॥ उद्गीयमान इति ॥ ललनामौलयः विलासिनीश्रेष्ठाः अशोकद्रुमो वा 'मौलिः किरीटे चूडायामशोके केशसंहतौ' इति निघंटुः । तदा ललनोपलक्षिताऽशोकवनांतस्थः ॥ १२ ॥ तत इति ॥ विडंबनं भ्रूनेत्रादिविकारः । सम्मुखस्येति च पाठः ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

॥ १ ॥ मैत्रेय श्रूयतामिति यदुक्तं तदेव विवृणोति–नरकस्येति ॥ २ ॥ ३ ॥ ४ ॥ ५॥६॥७॥८॥९॥१०॥ एकदेति ॥ रैवतको द्वारकायाः पूर्वतो गिरिः तत्संबंधिन्युद्याने ॥११॥ उद्गीयमान इति ॥ विलसल्ललनाः विलासिन्यः तासां मौलयः श्रेष्ठाः तासां मध्यगः ॥१२॥ तत इति ॥ विडंबनं भ्रूविक्षेपदंतदर्शनादिविक्रियाम् ॥ १३ ॥ तथैवेति ॥ पीयत इति पानं मदिरा तत्पूर्णान् करकान् कलशान् ॥ १४ ॥ १५ ॥ १६॥

चिक्षेप स च तां क्षिप्तां मुसलेन सहस्रधा ॥ बिभेद यादवश्रेष्ठस्सा पपात महीतले ॥ १७ ॥ अथ तन्मुसलं चासौ समुल्लंघ्य प्लवंगमः ॥ वेगेनागत्य रोषेण करेणोरस्यताडयत् ॥१८॥ ततो बलेन कोपेन मुष्टिना मूर्ध्नि ताडितः ॥ पपात रुधिरोद्गारी द्विविदः क्षीणजीवितः ॥ १९ ॥ पतता तच्छरीरेण गिरेश्शृंगमशीर्यत ॥ मैत्रेय शतधा वज्रिवज्रेणेव विदारितम् ॥ २० ॥ पुष्पवृष्टिं ततो देवा रामस्योपरि चिक्षिपुः ॥ प्रशशंसुस्ततोऽभ्येत्य साध्वेतत्ते महत्कृतम् ॥ २१ अनेन दुष्टकपिना दैत्यपक्षोपकारिणा ॥ जगन्निराकृतं वीर दिष्ट्या स क्षयमागतः ॥ २२ ॥ इत्युक्त्वा दिवमाजग्मुर्देवा हृष्टास्सगुह्यकाः ॥ २३ ॥ श्रीपराशर उवाच ॥ एवंविधान्यनेकानि बलदेवस्य धीमतः ॥ कर्माण्यपरिमेयानि शेषस्य धरणीभृतः ॥२४॥ इति श्रीविष्णुमहापुराणे पंचमांशे षट्त्रिंशोध्यायः ॥३६॥ ॥ श्रीपराशर उवाच ॥ एवं दैत्यवधं कृष्णो बलदेवसहायवान् ॥ चक्रे दुष्टक्षितीशानां तथैव जगतः कृते ॥१॥ क्षितेश्च भारं भगवान्फाल्गुनेन समन्वितः ॥ अवतारयामास विभुस्समस्ताक्षोहिणीवधात् ॥२॥ कृत्वा भारावतरणं भुवो हत्वाऽखिलान्नृपान् ॥ शापव्याजेन विप्राणामुपसंहृतवान्कुलम् ॥३॥ उत्सृज्य द्वारकां कृष्णस्त्यक्त्वा मानुष्यमात्मनः ॥ सांशो विष्णुमयं स्थानं प्रविवेश मुने निजम् ॥ ४ ॥

॥ १७ ॥ १८ ॥ तत इति ॥ क्षीणजीवित इत्यनेनास्यामृतप्राशनाद्दीर्घजीवित्वं महद्धिक्कारान्नष्टमित्युक्तम् " आयुः श्रियं यशो वित्तं लोकानाशिष एव च । हंति श्रेयांसि सर्वाणि पुंसो महदतिक्रमः" इति श्रीशुकोक्तेः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशे षट्त्रिंशोध्यायः ॥ ३६ ॥ ॥ एवमिति ॥ दुष्टक्षितीशानां वधमित्यनुषंगः ॥ १ ॥ २ ॥ कृत्वेति ॥ शापेति । उपसंहारे शापो व्याजमात्रं स्वेच्छेव हेतुः । यथोक्तम् "भवितव्यं तथा तद्धि दृष्टमेतन्महात्मना" इत्यादिना । कुलं स्वम् ॥ ३ ॥ उत्सृज्येत्यादि ॥ मानुष्यं मर्त्यदेहं सांशः संकर्षणादिः विष्णुमयं विष्णुप्रचुरम् । तत्तेजस्तद्विभूतितत्परिकरसूरिपूर्णमित्यर्थः । निजं स्थानं परमव्योम परमपदादिशब्दवाच्यं स्वासाधारणं यथा मौसले "दिव्यं स्थानमजरं चाप्रमेयम्"इत्यादि । अत्र मानुष्यमिति विशेषणात्"ऊर्ध्वं गच्छन् व्याप्य लोकान् स्वलक्ष्म्या" इत्युक्त्वा अनंतरं दिवं प्राप्तमित्यादिना वसुप्रभृतिभिर्देवैः प्रत्युद्गमनादिकमुक्त्वा ततो राजन् भगवानुग्रधन्वेत्यादिना स्वस्थानप्रवेशमभिधाय भुजैश्चतुर्भिस्समुपेतं ममेदमिति मौसलोक्तप्रकारेण स्वासाधारण

॥ १७ ॥ १८ ॥ १९ ॥ पततेति ॥ अशीर्यत विशीर्णमभवत् ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां पंचमांशे षट्त्रिंशोऽध्यायः ॥ ३६ ॥ ॥ एवमिति ॥ दुष्टक्षितीशानां वधं चक्रे ॥ १ ॥ क्षितेरिति ॥ फाल्गुनेन समन्वितः तत्सारथ्येन च क्षितेर्भारमवतारयामास ॥ २ ॥ ३ ॥ उत्सृज्येति ॥ मानुष्यं मनुष्यनाट्यं सांशः बल

॥ मैत्रेय उवाच ॥ स विप्रशापव्याजेन संजह्रे स्वकुलं कथम् ॥ कथं च मानुषं देहमुत्ससर्ज जनार्दनः ॥५॥ श्रीपराशर उवाच ॥ विश्वामित्रस्तथा कण्वो नारदश्च महामुनिः ॥ पिंडारके महातीर्थे दृष्ट्वा यदुकुमारकैः ॥ ६ ॥ ततस्ते यौवनोन्मत्ता भाविकार्यप्रचोदिताः ॥ सांबं जांबवतीपुत्रं भूषयित्वा स्त्रियं यथा ॥ ७ ॥ प्रश्रितास्तान्मुनीनूचुः प्रणिपातपुरस्सरम् ॥ इयं स्त्री पुत्रकामा वै ब्रूत किं जनयिष्यति ॥ ८ ॥ श्रीपराशर उवाच ॥ दिव्यज्ञानोपपन्नास्ते विप्रलब्धाः कुमारकैः ॥ मुनयः कुपिताः प्रोचुर्मुसलं जनयिष्यति ॥९॥ सर्वयादवसंहारकारणं भुवनोत्तरम् ॥ येनाखिलकुलोत्सादो यादवानां भविष्यति ॥ १० ॥ इत्युक्तास्ते कुमारास्तु आचचक्षुर्यथातथम् ॥ उग्रसेनाय मुसलं जज्ञे सांबस्य चोदरात् ॥ ११ ॥ तदुग्रसेनो मुसलमयश्चूर्णमकारयत् ॥ जज्ञे तदेरकाचूर्णं प्रक्षिप्तं तैर्महोदधौ ॥ १२ ॥ मुसलस्याथ लोहस्य चूर्णितस्य तु यादवैः ॥ खंडं चूर्णितशेषं तु ततो यत्तोमराकृति ॥ १३॥ तदप्यंबुनिधौ क्षिप्तं मत्स्यो जग्राह जालिभिः ॥ घातितस्योदरात्तस्य लुब्धो जग्राह तज्जराः ॥ १४ ॥ विज्ञातपरमार्थोऽपि भगवान्मधुसूदनः ॥ नैच्छत्तदन्यथा कर्त्तुं विधिना यत्समीहितम् ॥ १५ ॥ देवैश्च प्रहितो वायुः प्रणिपत्याह केशवम् ॥ रहस्येवमहं दूतः प्रहितो भगवन्सुरैः ॥ १६ ॥

दिव्यविग्रहवत एव गमनं ज्ञातव्यम् ॥ ४ ॥ ५ ॥ ६ ॥ तत इति ॥ भाविकार्यं भविष्यत्फलकर्म तेन प्रचोदिताः ॥ ७ ॥ ८ ॥ दिव्यज्ञानेति ॥ दिव्यज्ञानोपपन्नाः दिव्यस्य भगवदिच्छादेर्ज्ञानोपपन्नाः । यथा मौसल एव "भवितव्यं तथा तद्धि दृष्टमेतन्महात्मना । उपेक्षितं च कृष्णेन शक्तेनापि व्यपोहितुम्" इत्यादि । 'कुतश्शापो मनीषिणाम्' इत्यंतम् ॥ ९ ॥ १० ॥ ११ ॥ तदिति ॥ एरका त्रिधारः तृणविशेषः ॥ १२ ॥ मुसलस्येति ॥ तोमरमत्र बाणशल्यम् ॥ १३ ॥ तदिति ॥ जरानाम लुब्धकः ॥ १४ ॥ विज्ञातेति ॥ विधिना समीहितं स्वसंकल्पेन कृतम् ॥ १५ ॥ देवैश्चेति ॥ दूतः वायुः ॥ १६ ॥

प्रद्युम्नादिसहितः ॥ ४ ॥ ५ ॥ ६ ॥ तत इति ॥ भावि कार्यं यादवसंहारः तेन प्रचोदिताः ॥ ७ ॥ ८ ॥ दिव्यज्ञानेति ॥ दिव्यमलौकिकं ज्ञानं तेनोपपन्नाः विप्रलब्धाः प्रतारिताः ॥ ९ ॥ १० ॥ इत्युक्ता इति ॥ उग्रसेनायाचचक्षुः न तु श्रीकृष्णाय ॥ ११ ॥ तदिति ॥ उग्रसेनोऽपि श्रीकृष्णमविज्ञाप्यैव स्वयं तदायसमुसलं चूर्णमकारयत् । अनेन च विनाशकाले तेषां कृष्णवैमुख्यं सूचितं तच्च चूर्णं महोदधौ क्षिप्तं तद्वेलायां लग्नम् एरकाः धारात्रयोपेतस्तृणभेदो जज्ञे । एकेन मुसलेन बहूनां परस्परं प्रहरणासंभवाच्चूर्णद्वारा तदेव बहुधा परिणतमिति भावः ॥ १२ ॥ मुसलस्येति ॥ तोमराकृति तदग्रसदृशम् ॥१३॥ तदिति ॥ अंबुनिधौ क्षिप्तम् । तदपि खंडं मत्स्यो जग्राह । ततो जालिभिः मत्स्यघातिभिः घातितस्य मत्स्यस्योदरात् जरासंज्ञो लुब्धो व्याधः जग्राह । तत्र जरदधिष्ठातृदेवतांशो यदुवंश्य एव व्याधत्वं प्राप्त इति हरिवंशे प्रसिद्धम् ॥ १४॥१५॥१६॥

वस्वश्विमरुदादित्यरुद्रसाध्यादिभिस्सह ॥ विज्ञापयति शक्रस्त्वां तदिदं श्रूयतां विभो ॥ १७ ॥ भारावतरणार्थाय वर्षाणामधिकं शतम् ॥ भगवानवतीर्णोत्र त्रिदशैस्सह चोदितः ॥१८॥ दुर्वृत्ता निहता दैत्या भुवो भारोऽवतारितः ॥ त्वया सनाथास्त्रिदशा भवंतु त्रिदिवे सदा ॥१९॥ तदतीतं जगन्नाथ वर्षाणामधिकं शतम् ॥ इदानीं गम्यतां स्वर्गो भवता यदि रोचते ॥ २० ॥ देवैर्विज्ञाप्यते देव तथात्रैव रतिस्तव ॥ तत्स्थीयतां यथाकालमास्थेयमनुजीविभिः ॥ २१ ॥ श्रीभगवानुवाच ॥ यत्त्वमात्थाखिलं दूत वेद्म्येतदहमप्युत ॥ प्रारब्ध एव हि मया यादवानां परिक्षयः ॥ २२ ॥ भुवो नाद्यापि भारोऽयं यादवैरनिबर्हितैः ॥ अवतार्य करोम्येतत्सप्तरात्रेण सत्वरः ॥ २३ ॥ यथा गृहीतमंभोधेर्दत्त्वाहं द्वारकाभुवम् ॥ यादवानुपसंहृत्य यास्यामि त्रिदशालयम् ॥ २४ ॥ मनुष्यदेहमुत्सृज्य संकर्षणसहायवान् ॥ प्राप्त एवास्मि मंतव्यो देवेंद्रेण तथाऽमरैः ॥ २५ ॥ जरासंधादयो येऽन्ये निहता भारहेतवः ॥ क्षितेस्तेभ्यःकुमारोऽपि यदूनां नापचीयते ॥ २६ ॥ तदेतं सुमहाभारमवतार्य क्षितेरहम् ॥ यास्याम्यमरलोकस्य पालनाय ब्रवीहि तान् ॥ २७ ॥ श्रीपराशर उवाच ॥ इत्युक्तो वासुदेवेन देवदूतः प्रणम्य तम् ॥ मैत्रेय दिव्यया गत्या देवराजांतिकं ययौ ॥२८॥ भगवानप्यथोत्पातान्दिव्यभौमांतरिक्षजान् ॥ ददर्श द्वारकापुर्य्यां विनाशाय दिवानिशम् ॥ २९ ॥

॥ १७ ॥ भारावतरणार्थायेति ॥ अवतीर्णो वर्षाणामधिकं शतमत्र स्थित इति शेषः ॥ १८ ॥ १९॥२०॥२१॥२२॥ भुव इति ॥ भुवो भारो नाद्याप्यवतारित इति शेषः । एतद्गमनम् ॥ २३ ॥ २४ ॥ २५ ॥ जरासंधादय इति ॥ क्षितेर्भारहेतवो येऽन्ये जरासंधादयो निहताः तेभ्यः यदूनां संबंधी शिशुरपि नापचितो युद्धे । कुमार इति पाठे तेभ्योप्यधिको यदूनां संबंधि कुमारः भूभारः न क्षीयते ॥ २६ ॥ २७ ॥ २८ ॥ भगवानिति ॥ ग्रहर्क्षवैकृतं दिव्य उत्पातः उल्कादिपातनि

॥ १७ ॥ १८ ॥ १९ ॥ तदिति ॥ अधिकं पंचविंशत्याधिकं शरच्छतं व्यतीयाय पंचविंशाधिकमिति शुकोक्तेः ॥ २० ॥ देवैरिति ॥ यथाकालं स्वकार्यसिद्धौ सत्याम् ॥ २१ ॥ यदिति ॥ ब्रह्मशापमिषेण मयैव प्रारब्धः ॥ २२ ॥ किमर्थं यादवक्षयः प्राप्तस्तत्राह–भुव इति ॥ अनिबर्हितैः असंहृतैः ॥ २३ ॥ २४ ॥ मनुष्यदेहमिति ॥ प्राप्त एवास्मीति मंतव्यः ॥ २५ ॥ जरासंधेति ॥ यदूनां कुमारोपि बालोपि तेभ्यो नापचीयते न्यूनो न भवति ॥ २६ ॥ २७ ॥ २८ ॥ भगवानिति ॥ भगवानपि स्वयमेव सृष्टानुत्पातान् ददर्श । तत्र दिव्या उत्पाताः ग्रहयुद्धादयः भौमाः भूकंपादयः आंतरिक्षाः दिग्दाहोल्कापाता

तान्दृष्ट्वा यादवानाह पश्यध्वमतिदारुणान् ॥ महोत्पाताञ्छमायैषां प्रभासं याम मा चिरम् ॥ ३० ॥ श्रीपराशर उवाच ॥ एवमुक्ते तु कृष्णेन यादवप्रवरस्ततः ॥ महाभागवतः प्राह प्रणिपत्योद्धवो हरिम् ॥ ३१ ॥ भगवन्यन्मया कार्यं तदाज्ञापय सांप्रतम् ॥ मन्ये कुलमिदं सर्वं भगवान्संहरिष्यति ॥ ३२ ॥ नाशायास्य निमित्तानि कुलस्याच्युत लक्षये ॥ ३३ ॥ श्रीभगवानुवाच ॥ गच्छ त्वं दिव्यया गत्या मत्प्रसादसमुत्थया ॥ यद्बदर्याश्रमं पुण्यं गंधमादनपर्वते ॥ नरनारायणस्थाने तत्पवित्रं महीतले ॥ ३४ ॥ मन्मना मत्प्रसादेन तत्र सिद्धिमवाप्स्यसि ॥ अहं स्वर्गं गमिष्यामि ह्युपसंहृत्य वै कुलम् ॥ ३५ ॥ द्वारकां च मया त्यक्तां समुद्रः प्लावयिष्यति ॥ मद्वेश्म चैकं मुक्त्वा तु भयान्मत्तो जलाशये ॥ तत्र सन्निहितश्चाहं भक्तानां हितकाम्यया ॥ ३६ ॥ श्रीपराशर उवाच ॥ इत्युक्तः प्रणिपत्यैनं जगामाशु तपोवनम् ॥ नरनारायणस्थानं केशवेनानुमोदितः ॥ ३७ ॥ ततस्ते यादवास्सर्वे रथानारुह्य शीघ्रगान् ॥ प्रभासं प्रययुस्सार्द्धं कृष्णरामादिभिर्द्विज ॥ ३८ ॥ प्रभासं समनुप्राप्ताः कुकुरांधकवृष्णयः ॥ चक्रुस्तत्र महापानं वासुदेवेन चोदिताः ॥ ३९ ॥ पिबतां तत्र चैतेषां संघर्षेण परस्परम् ॥ अतिवादेंधनो जज्ञे कलहाग्निः क्षयावहः ॥ ४० ॥ मैत्रेय उवाच ॥ स्वंस्वं वै भुंजतां तेषां कलहः किंनिमित्तकः ॥ संघर्षो वा द्विज श्रेष्ठ तन्ममाख्यातुमर्हसि॥४१॥श्रीपराशर उवाच ॥ मृष्टं मदीयमन्नं ते न मृष्टमिति जल्पताम् ॥ मृष्टामृष्टकथा जज्ञे संघर्षकलहौ ततः॥४२॥ ततश्चान्योन्यमभ्येत्य क्रोधसंरक्तलोचनाः ॥ जघ्नुः परस्परं ते तु शस्त्रैर्दैवबलात्कृताः ॥४३॥ क्षीणशस्त्राश्च जगृहुः प्रत्यासन्नामथैरकाम् ॥४४॥

र्वातपरिवेषादिरांतारिक्षः चरस्थिरजो भौमः ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ इत्युक्त इति ॥ अनुमोदितः तत्त्वोपदेशपादुकाप्रदानादिनाऽनुग्रहीतः ।:यादवत्वेपि भगवत्स्वातंत्र्यप्रदर्शनार्थं सात्वतविद्यासंतानायोद्धवो राजसंतानाय वज्रश्च शेषितौ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ॥ ४२ ॥ ४३ ॥ ४४ ॥

दयः ॥ २९ ॥ द्वारकायां मरणे आधिकारिकदेवांशानां यादवानामेव मुक्तिस्स्यादिति विशिष्टलोकावाप्तिसाधनं प्रभासं गंतुं प्ररोचयन्नाह–तानिति ॥ एषामुत्पातानां शमाय उपशमनार्थं प्रभासं याम गच्छाम ॥ ३० ॥ ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ इत्युक्त इति ॥ अनुमोदितः तत्त्वज्ञानोपदेशेनानुगृहीतः ॥ ३७ ॥ ३८ ॥ ३९ ॥ पिबतामिति ॥ संघर्षेण स्पर्धया अतिवादः अधिक्षेपः स एवेंधनम् उद्दीपको यस्य सः कलहरूपोऽग्निर्जज्ञे ॥ ४० ॥ ४१ ॥ ४२ ॥ तत इति ॥ दैवबलात्कृताः कृष्णविमोहिताः ॥ ४३ ॥ क्षीणशस्त्रा इति ॥ एरकां मुसलचूर्णजातां श्रीकृष्णेन पुरैव प्रभासप्रांते उत्पादितत्वात्प्रत्यासन्नाम् ॥ ४४ ॥

एरका तु गृहीता वै वज्रभूतेव लक्ष्यते ॥ तया परस्परं जघ्नुस्संप्रहारे सुदारुणे ॥ ४५ ॥ प्रद्युम्नसांबप्रमुखाः कृतवर्माथ सात्यकिः ॥ अनिरुद्धादयश्चान्ये पृथुर्विपृथुरेव च ॥ ४६ ॥ चारुवर्मा चारुकश्च तथाक्रूरादयो द्विज ॥ एरकारूपिभिर्वज्रैस्ते निजघ्नुः परस्परम् ॥ ४७ ॥ निवारयामास हरिर्यादवांस्ते च केशवम् ॥ सहायं मेनिरेरीणां प्राप्तं जघ्नुः परस्परम् ॥ ४८ ॥ कृष्णोऽपि कुपितस्तेषामेरकामुष्टिमाददे ॥ वधाय सोपि मुसलं मुष्टिर्लौहमभूत्तदा ॥ ४९ ॥ जघान तेन निश्शेषान्यादवानाततायिनः ॥ जघ्नुस्ते सहसाभ्येत्य तथाऽन्येपि परस्परम् ॥ ५० ॥ ततश्चार्णवमध्येन जैत्रोऽसौ चक्रिणो रथः ॥ पश्यतो दारुकस्याथ प्रायादश्वैर्धृतो द्विज ॥ ५१ ॥ चक्रं गदा तथा शार्ङ्गं तूणी शंखोसिरेव च ॥ प्रदक्षिणं हरिं कृत्वा जग्मुरादित्यवर्त्मना ॥ ५२ ॥ क्षणेन नाभवत्कश्चिद्यादवानामघातितः ॥ ऋते कृष्णं महात्मानं दारुकं च महामुने ॥ ५३ ॥ चंक्रम्यमाणौ तौ रामं वृक्षमूले कृतासनम् ॥ ददृशाते मुखाच्चास्य निष्क्रामंतं महोरगम् ॥ ५४ ॥ निष्क्रम्य स मुखात्तस्य महाभोगो भुजंगमः ॥ प्रययावर्णवं सिद्धैः पूज्यमानस्तथोरगैः ॥ ५५ ॥ ततोर्घ्यमादाय तदा जलधिस्संमुखं ययौ ॥ प्रविवेश ततस्तोयं पूजितः पन्नगोत्तमैः ॥ ५६ ॥ दृष्ट्वा बलस्य निर्याणं दारुकं प्राह केशवः ॥ इदं सर्वं समाचक्ष्व वसुदेवोग्रसेनयोः ॥ ५७ ॥

॥ ४५ ॥ ४६ ॥ ४७ ॥ निवारयामासेति ॥ माध्यस्थ्यात्केशवो युध्यमानान् निवारयामास ते च तम् । अरीणां स्वविपक्षाणां सहायं प्राप्तं मेनिरे अतस्तमनादृत्यान्योन्यं च जघ्नुः ॥ ४८ ॥ ४९ ॥ जघानेति ॥ आततायी वधोद्यतः ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥

एरकेति ॥ संप्रहारे युद्धे ॥ ४५ ॥ ४६ ॥ ४७ ॥ निवारयामासेति ॥ ते निवार्यमाणा यादवाः केशवम् अरीणां स्वप्रतिपक्षाणां सहायं प्राप्तं मेनिरे । अतस्तद्वाक्यमनादृत्य परस्परं जघ्नुः ॥ ४८ ॥ कृष्ण इति ॥ सोप्येरकामुष्टिः तदा पुनर्लोहमयमुसलमिवासीत् ॥ ४९ ॥ जघानेति ॥ आततायिनः स्ववधे प्रवृत्तान् ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ चंक्रम्यमाणाविति ॥ चंक्रम्यमाणौ तत्र तत्र भ्रमंतौ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥

निर्याणं बलभद्रस्य यादवानां तथा क्षयम् ॥ योगे स्थित्वाहमप्येतत्परित्यक्ष्ये कलेवरम् ॥ ५८ ॥ वाच्यश्च द्वारकावासी जनस्सर्वस्तथाहुकः ॥ यथेमां नगरीं सर्वां समुद्रः प्लावयिष्यति ॥५९॥ तस्माद्भवद्भिस्सर्वैस्तु प्रतीक्ष्यो ह्यर्जुनागमः ॥ न स्थेयं द्वारकामध्ये निष्क्रांते तत्र पांडवे ॥६०॥ तेनैव सह गंतव्यं यत्र याति स कौरवः ॥ ६१ ॥ गत्वा च ब्रूहि कौंतेयमर्जुनं वचनान्मम ॥ पालनीयस्त्वया शक्त्या जनोऽयं मत्परिग्रहः ॥ ॥ ६२ ॥ त्वमर्जुनेन सहितो द्वारवत्यां तथा जनम् ॥ गृहीत्वा याहि वज्रश्च यदुराजो भविष्यति ॥ ६३ ॥ श्रीपराशर उवाच ॥ इत्युक्तो दारुकः कृष्णं प्रणिपत्य पुनःपुनः ॥ प्रदक्षिणं च बहुशः कृत्वा प्रायाद्यथोदितम् ॥ ६४ ॥ स च गत्वा तदाचष्ट द्वारकायां तथाऽर्जुनम् ॥ आनिनाय महाबुद्धिर्वज्रं चक्रे तथा नृपम् ॥ ६५ ॥ भगवानपि गोविंदो वासुदेवात्मकं परम् ॥ ब्रह्मात्मनि समारोप्य सर्वभूतेष्वधारयत् ॥ निष्प्रपंचे महाभाग संयोज्यात्मानमात्मनि ॥ तुर्यावस्थसलीलं च शेतेस्म पुरुषोत्तमः ॥ ६६ ॥ संमानयन्द्विजवचो दुर्वासा यदुवाच ह ॥ योगयुक्तोऽभवत्पादं कृत्वा जानुनि सत्तम ॥ ६७ ॥ आययौ स जरानाम तदा तत्र स लुब्धकः ॥ मुसलावशेषलोहैकसायकन्यस्ततोमरः ॥ ६८ ॥

निर्याणमिति ॥ योगेन देहत्यागो लोकसंग्रहार्थः ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ स चेति ॥ द्वारवत्यां स्थितमिति शेषः ॥ ॥ ६५ ॥ भगवानपीति ॥ सर्वभूतेषु स्थितमत एव वासुदेवात्मकं ब्रह्म आत्मन्यधारयत् आत्मानं ब्रह्म अभावयत् इत्यर्थः ॥ ६६ ॥ संमानयन्निति ॥ द्विजवचः विप्रशापवचः दुर्वासा यदुवाच तच्च संमानयन् पादं लुब्धकदृश्यं स्वस्तिकासनेन जानुनि कृत्वा योगं चक्रे । श्रीकृष्णो हि मदुच्छिष्टेन सर्वांगं लिंपेदिति दुर्वाससो वचनात् विप्रोच्छिष्टं पादेन न स्प्रष्टव्यमिति पादवर्जं सर्वांगे लिप्ते पादौ न लिप्ताविति क्रुद्धेन दुर्वाससा तत्रैव पादे विद्धो भवेति शप्त इत्युक्तं भारते॥६७॥आययाविति॥

॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ भगवानिति ॥ आत्मनि समारोप्य ब्रह्मैवाहमिति ध्यात्वा तमात्मानं सर्वभूतेष्वधारयत् सर्वभूतान्यप्यहमेवेति दध्यावित्यर्थः । एतच्चाप्रच्युतब्रह्मभावे भवति लोकसंग्रहमात्रं द्रष्टव्यम् ॥ ६६ ॥ संमानयन्निति ॥ दुर्वासा यदुवाच तद्विजस्सम्मानयन् जानुनि पादं कृत्वा स्वस्तिकासने उपविश्य योगयुक्तोऽभवत् । एवं किल भारते कदाचित्तमुन्मत्तवेषं दुर्वाससमतिथिं भगवान् पूजयामास । तदाज्ञया स्वांगं पादवर्जं तदुच्छिष्टेनालिंपत् तदा कुपितस्स प्राह तव पादतलं मर्म भविष्यतीति । तदेतद्वाक्यं संमानयितुं तथोपविष्ट इति ॥ ६७ ॥ आययाविति ॥ मुसलावशेषलोहमेव

स तत्पादं मृगाकारमवेक्ष्यारादवस्थितः ॥ तले विव्याध तेनैव तोमरेण द्विजोत्तम ॥ ६९ ॥ ततश्च ददृशे तत्र चतुर्बाहुधरं नरम् ॥ प्रणिपत्याह चैवैनं प्रसीदेति पुनःपुनः ॥ ७० ॥ अजानता कृतमिदं मया हरिणशंकया ॥ क्षम्यतां मम पापेन दग्धं मां त्रातुमर्हसि ॥ ७१ ॥ श्रीपराशर उवाच ॥ ततस्तं भगवानाह न तेस्तु भयमण्वपि ॥ गच्छ त्वं मत्प्रसादेन लुब्ध स्वर्गं सुरास्पदम् ॥ ७२ ॥ ॥ श्रीपराशर उवाच ॥ विमानमागतं सद्यस्तद्वाक्यसमनंतरम् ॥ आरुह्य प्रययौ स्वर्गं लुब्धकस्तत्प्रसादतः ॥७३॥ गते तस्मिन्सभगवान्संयोज्यात्मानमात्मनि ॥ ब्रह्मभूतेऽव्ययेचिंत्ये वासुदेवमयेऽमले ॥ ७४ ॥ अजन्मन्यमरे विष्णावप्रमेयेऽखिलात्मनि ॥ तत्याज मानुषं देहमतीत्य त्रिविधां गतिम् ॥ ७५ ॥ इति श्रीविष्णुमहापुराणे पंचमांशे सप्तत्रिंशोध्यायः ॥ ३७ ॥ श्रीपराशर उवाच ॥ अर्जुनोपि तदान्वीक्ष्य रामकृष्णकलेवरे ॥ संस्कारं लंभयामास तथान्येषामनुक्रमात् ॥ १ ॥ अष्टौ महिष्यः कथिता रुक्मिणीप्रमुखास्तु याः ॥ उपगुह्य हरेर्देहं विविशुस्ता हुताशनम् ॥ २ ॥ रेवती चापि रामस्य देहमाश्लिष्य सत्तमा ॥ विवेश ज्वलितं वह्निं तत्संगाह्लादशीतलम् ॥ ३ ॥ उग्रसेनस्तु तच्छ्रुत्वा तथैवानकदुंदुभिः ॥ देवकी रोहिणी चैव विविशुर्जातवेदसम् ॥ ४ ॥ ततोर्जुनः प्रेतकार्यं कृत्वा तेषां यथाविधि ॥ निश्चक्राम जनं सर्वं गृहीत्वा वज्रमेव च ॥ ५ ॥ द्वारवत्या विनिष्क्रांताः कृष्णपत्न्यः सहस्रशः ॥ वज्रं जनं च कौंतेयः पालयञ्छनकैर्ययौ ॥ ६ ॥ सभा सुधर्मा कृष्णेन मर्त्यलोके समुज्झिते ॥ स्वर्गं जगाम मैत्रेय पारिजातश्च पादपः ॥ ७ ॥ यस्मिन्दिने हरिर्यातो दिवं संत्यज्य मेदिनीम् ॥ तस्मिन्नेवावतीर्णोऽयं कालकायो बली कलिः ॥ ८ ॥

मुसलावशेषलोहम् एकसायके न्यस्तं तोमरं यस्य स तथोक्तः । अक्षराधिक्यमार्षम् ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ तत इति ॥ गच्छ त्वमित्यादिना लोकसंग्रहार्थं योगेन स्वदेहं त्यजन्नपि भगवानात्मनो निरतिशयमैश्वर्यं प्रकटयितुमनर्हमपि लुब्धकं सशरीरमेव स्वर्गमगमयदित्यभिप्रेतम् ॥ ७२ ॥ ॥ ७३ ॥ गत इति ॥ गत इत्यादिश्लोकद्वयस्यैकान्वयः । तस्मिन् लुब्धके स्वर्गं गते सति भगवान् श्रीकृष्णः ब्रह्मभूत इत्याद्युक्तविशेषणविशिष्टे आत्मनि स्वस्मिन्नात्मानं मनस्संयोज्य त्रिविधां सात्त्विकराजसतामसरूपेण त्रिविधां गतिमतीत्य ॥ ७४ ॥ ७५ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशे सप्तत्रिंशोऽध्यायः ॥ ३७ ॥ ॥ छ ॥ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ यस्मिन्निति ॥ कालकायः मलिनांगः । कालकाम इति पाठे कृष्णोपेक्षावसर

एतस्मिन्मुख्ये सायके न्यस्तं तोमरं तदाकारं शल्यं येन सः ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ गत इति ॥ त्रिविधां गतिं त्रिगुणात्मिकाम् ॥ ७४ ॥ ७५ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्य श्रीविष्णुमहापुराणव्याख्यायां पंचमांशे सप्तत्रिंशोऽध्यायः ॥ ३७ ॥ ॥ १ ॥ २ ॥ रेवतीति ॥ तत्संगेन य आह्लादः तेन शीतलप्रायम् ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ यस्मिन्निति ॥ अवतीर्णः आविर्भूतः ।

प्लावयामास तां शून्यां द्वारकां च महोदधिः ॥ वासुदेवगृहं त्वेकं न प्लावयति सागरः ॥ ९ ॥ नातिक्रांतुमलं ब्रह्मंस्तदद्यापि महोदधिः ॥ नित्यं सन्निहितस्तत्र भगवान्केशवो यतः ॥ १० ॥ तदतीव महापुण्यं सर्वपातकनाशनम् ॥ विष्णुश्रियान्वितं स्थानं दृष्ट्वा पाप्माद्विमुच्यते ॥ ११ ॥ पार्थः पंचनदे देशे बहुधान्यधनान्विते ॥ चकार वासं सर्वस्य जनस्य मुनिसत्तम ॥ १२ ॥ ततो लोभस्समभवत्पार्थेनैकेन धन्विना ॥ दृष्ट्वा स्त्रियो नीयमाना दस्यूनां निहतेश्वराः ॥ १३ ॥ ततस्ते पापकर्माणो लोभोपहतचेतसः ॥ आभीरा मंत्रयामासुस्समेत्यात्यंतदुर्मदाः ॥ १४ ॥ अयमेकोऽर्जुनो धन्वी स्त्रीजनं निहतेश्वरम् ॥ नयत्यस्मानतिक्रम्य धिगेतद्भवतां बलम् ॥ १५ ॥ हत्वा गर्वसमारूढो भीष्मद्रोणजयद्रथान् ॥ कर्णादींश्च न जानाति बलं ग्रामनिवासिनाम् ॥ १६ ॥ यष्टिहस्तानवेक्ष्यास्मान्धनुष्पाणिस्स दुर्मतिः ॥ सर्वानेवावजानाति किं वो बाहुभिरुन्नतैः ॥ १७ ॥ ततो यष्टिप्रहरणादस्यवो लोष्टधारिणः ॥ सहस्रशोभ्यधावंत तं जनं निहतेश्वरम् ॥ १८ ॥ ततो निर्भर्त्स्य कौंतेयः प्राहाभीरान्हसन्निव ॥ निवर्त्तध्वमधर्मज्ञा यदि न स्थ मुमूर्षवः ॥ १९ ॥ अवज्ञाय वचस्तस्य जगृहुस्ते तदा धनम् ॥ स्त्रीधनं चैव मैत्रेय विष्वक्सेनपरिग्रहम् ॥ २० ॥ ततोर्जुनो धनुर्दिव्यं गांडीवमजरं युधि ॥ आरोपयितुमारेभे न शशाक च वीर्यवान् ॥ २१ ॥ चकार सज्यं कृच्छ्राच्च तच्चाभूच्छिथिलं पुनः ॥ न सस्मार ततोस्त्राणि चिंतयन्नपि पांडवः ॥ २२ ॥ शरान्मुमोच चैतेषु पार्थो वैरिष्वमर्षितः ॥ त्वग्भेदं ते परं चक्रुरस्ता गांडीवधन्विना ॥ २३ ॥ वह्निना येऽक्षया दत्ताश्शरास्तेपि क्षयं ययुः ॥ युद्ध्यतस्सह गोपालैरर्जुनस्य भवक्षये ॥ २४ ॥

प्रतीक्षः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ पार्थ इति ॥ पंचनदाख्यो देशः ॥ १२ ॥ १३ ॥ तत इति ॥ लोप्त्रं चौर्यधनम् । लोभोपहतचेतस इति च पाठः ॥ १४ ॥ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

कालकायः कलिर्नाम ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ पार्थ इति ॥ पंचनदे देशे पंचनदाख्ये देशे ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ तत इति ॥ यष्टिप्रहरणाः दंडायुधाः । लोष्टधारिणः लोष्टप्रहरणाः ॥ १८ ॥ तत इति ॥ मुमूर्षवो यदि न स्थ न भवथ तर्हि निवर्तध्वम् ॥ १९ ॥ २० ॥ २१ ॥ चकार इति ॥ अस्त्राणि तत्तन्मंत्रान् ॥ २२ ॥ २३ ॥ वह्निनेति ॥ खांडवदाहे अग्निना दत्ताः भवक्षये

अचिंतयच्च कौंतेयः कृष्णस्यैव हि तद्बलम् ॥ यन्मया शरसंघातैस्सकला भूभृतो हताः ॥ २५ ॥ मिषतः पांडुपुत्रस्य ततस्ताः प्रमदोत्तमाः ॥ आभीरैरपकृष्यंत कामं चान्याः प्रदुद्रुवुः ॥ २६ ॥ ततश्शरेषु क्षीणेषु धनुष्कोव्या धनंजयः ॥ जघान दस्यूंस्ते चास्य प्रहाराञ्जहसुर्मुने ॥ ॥ २७ ॥ प्रेक्षतस्तस्य पार्थस्य वृष्ण्यंधकवरस्त्रियः ॥ जग्मुरादाय ते म्लेच्छाः समस्ता मुनिसत्तम ॥ २८ ॥ ततस्सुदुःखितो जिष्णुः कष्टं कष्टमिति ब्रुवन् ॥ अहो भगवतानेन मुष्टोस्मीति रुरोद वै ॥ २९ ॥ तद्धनुस्तानि शस्त्राणि स रथस्ते च वाजिनः ॥ सर्वमेकपदे नष्टं दानमश्रोत्रिये यथा ॥ ३० ॥ अहोतिबलवद्दैवं विना तेन महात्मना ॥ यदसामर्थ्ययुक्तेपि नीचवर्गे जयप्रदम् ॥ ३१ ॥ तौ बाहू स च मे मुष्टिः स्थानं तत्सोस्मि चार्जुनः ॥ पुण्येनैव विना तेन गतं सर्वमसारताम् ॥ ३२ ॥ ममार्जुनत्वं भीमस्य भीमत्वं तत्कृते ध्रुवम् ॥ विना तेन यदाभीरैर्जितोहं रथिनां वरः ॥ ३३ ॥ श्रीपराशर उवाच ॥ इत्थं वदन्ययौ जिष्णुरिंद्रप्रस्थं पुरोत्तमम् ॥ चकार तत्र राजानं वज्रं यादवनंदनम् ॥ ॥ ३४ ॥ स ददर्श ततो व्यासं फाल्गुनः काननाश्रयम् ॥ तमुपेत्य महाभागं विनयेनाभ्यवादयत् ॥ ३५ ॥ तं वंदमानं चरणाववलोक्य मुनिश्चिरम् ॥ उवाच वाक्यं विच्छायः कथमद्य त्वमीदृशः ॥ ३६ ॥ अवीरजोनुगमनं ब्रह्महत्या कृताथ वा ॥ दृढाशाभंगदुःखीव भ्रष्टच्छायोऽसि सांप्रतम् ॥ ३७ ॥ सांतानिकादयो वाते याचमाना निराकृताः ॥ अगम्यस्त्रीरतिर्वा त्वं येनासि विगतप्रभः ॥ ३८ ॥

॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ तत इति ॥ मुष्टः मुष्टितः मायया शक्तिहरणात् ॥ २९ ॥ तद्धनुरिति ॥ एकपदे एकक्षणे ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ॥ ३४ ॥ ३५ ॥ ३६ ॥ अवीरजोऽनुगमनमिति ॥ अविशब्देन अजजातिर्लक्ष्यते । अविः खरादिजातिर्वा । अविशब्दस्यौणादिक ईकारः संज्ञायाम् ॥ ३७ ॥ सांतानिकादय इति ॥ सांतानिकः संतानार्थमुद्वोढुमिच्छन् आदिशब्देन वक्ष्यमाणादयो गृह्यंते।यथाह मनुः “सांतानिकं यक्ष्यमाणमध्वगं सार्ववेदसम्। गुर्वर्थपितृमात्रर्थं स्वाध्यायार्थ्युपतापिनः ” इति ॥ ३८ ॥

उद्धवनाशे ॥ २४ ॥ २५ ॥ २६ ॥ तत इति ॥ धनुष्कोव्या चापाग्रेण दंडेनैव जघान । जहसुः दंडप्रहारे अर्जुनादपि तेषामेव वैदग्ध्यात् ॥ २७ ॥ २८ ॥ तत इति ॥ मुष्टः वंचितोस्मि ॥ २९ ॥ तदिति ॥ एकपदे एकस्मिन्नेव क्षणे अश्रोत्रिये वेदवर्जिते ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ स इति ॥ इन्द्रप्रस्थात् गजाह्वयं गच्छन्नर्जुनः क्वचित्काननाश्रयं व्यासं ददर्श ॥ ३५ ॥ तमिति ॥ कथमीदृशः अत्यंतं निःश्रीकोऽसि । निःश्रीकोसीति चिरमुवाच । पृच्छमानेपि दुःखवशात्तस्मिन्प्रतिवक्तुमशक्नुवति चिरं पुनरुवाचेत्यर्थः ॥ ३६ ॥ पुनरेव निःश्रीकत्वे हेतून्बहून्कल्पयन्नाह—अवीरज इत्यादिपंचभिः—अवीरजोनुगमनमिति ॥ अवीनां रजः अनु पृष्ठतः किं गमनं कृतम् । उपलक्षणं चैतत्त्रिविद्वानामजखरादिरजसामनुगमनस्य अयं मां रक्षिष्यतीति कस्यचिद्या दृढाशा तस्या भंगेन वा दुःखम् ॥ ३७ ॥ सांतानिकादय इति ॥ सांतानिकः संतानार्थमुद्वोढु

भुङ्क्तेऽप्रदाय विप्रेभ्यो मृष्टमेकोथ वा भवान् ॥ किं वा कृपणवित्तानि हृतानि भवताऽर्जुन ॥३९॥ कच्चित्तु शूर्पवातस्य गोचरत्वं गतोऽर्जुन ॥ दुष्टचक्षुर्हतो वासि निःश्रीकः कथमन्यथा ॥ ४० ॥ स्पृष्टो नखांभसा वाथ घटवार्युक्षितोपि वा ॥ केन त्वं वासि विच्छायो न्यूनैर्वा युधि निर्जितः ॥४१॥ श्रीपराशर उवाच ॥ ततः पार्थो विनिश्वस्य श्रूयतां भगवन्निति ॥ प्रोक्का यथावदाचष्टे व्यासायात्मपराभवम् ॥४२॥ अर्जुन उवाच ॥ यद्बलं यच्च मत्तेजो यद्वीर्यं यः पराक्रमः ॥ या श्रीश्छाया च नः सोस्मान्परित्यज्य हरिर्गतः ॥४३॥ ईश्वरेणापि महता स्मितपूर्वाभिभाषिणा ॥ हीना वयं मुने तेन जातास्तृणमया इव ॥ ४४ ॥ अस्त्राणां सायकानां च गांडीवस्य तथा मम ॥ सारता याभवन्मूर्त्तिस्स गतः पुरुषोत्तमः ॥ ॥ ४५ ॥ यस्यावलोकनादस्माञ्छ्रीर्जयः संपदुन्नतिः ॥ न तत्याज स गोविंदस्त्यक्त्वास्मान्भगवान्गतः ॥ ४६ ॥ भीष्मद्रोणांगराजाद्यास्तथा दुर्योधनादयः ॥ यत्प्रभावेन निर्दग्धास्स कृष्णस्त्यक्तवान्भुवम् ॥ ४७ ॥ निर्यौवना गतश्रीका नष्टच्छायेव मेदिनी ॥ विभाति तात नैकोहं विरहे तस्य चक्रिणः ॥ ४८ ॥ यस्य प्रभावाद्भीष्माद्यैर्मय्यग्नौ शलभायितम् ॥ विना तेनाद्य कृष्णेन गोपालैरस्मि निर्जितः ॥ ॥ ४९ ॥ गांडीवस्त्रिषु लोकेषु ख्यातिं यदनुभावतः ॥ गतस्तेन विनाऽऽभीरलगुडैस्स तिरस्कृतः ॥ ५० ॥ स्त्रीसहस्राण्यनेकानि मन्नाथानि महामुने ॥ यततो मम नीतानि दस्युभिर्लगुडायुधैः ॥ ५१ ॥

॥३९॥४०॥ स्पृष्ट इति ॥ घटवारि घटान्नीयमानाच्चलितादुच्चलद्वारि ॥ ४१ ॥ ४२ ॥ ४३ ॥ ईश्वरेणेति ॥ इतरेणेव महता सतापि इतरेणेव प्राकृतेनेव स्मितादिकं कुर्वता तृणमयाः तृणकृताः पुरुषाः ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ निर्यौवनेति ॥ नाहमेक एव निर्यौवनादिकः यौवनशब्देन शक्तिर्लक्ष्यते । छाया कांतिः ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥

कामः । धनार्थी आदिशब्दान्मनूक्ता अन्ये यक्ष्यमाणादयो गृह्यंते । यथा मनुः "सांतानिकं यक्ष्यमाणमध्वगं सार्ववेदसम् । गुर्वर्थपितृमात्रर्थस्वाध्यायार्थ्युपतापिनः ॥" इति ॥ ३८ ॥ ३९ ॥ ४० ॥ स्पृष्ट इति ॥ त्वयि पूर्णे घटे नीयमाने तत उच्चलता उच्चलत्तोयेन उक्षितः सिक्तः ॥ ४१ ॥ ४२ ॥ यदिति ॥ बलं शक्तिः । तेजः प्रागल्भ्यम् । प्रभावः वीर्यम् । पराक्रमो विक्रमः । श्रीः संपत् । छाया कांतिः ॥ ४३ ॥ ईश्वरेणेति ॥ इतरेणेव प्राकृतेन मित्रेणेव मृगादिनिषेधार्थं क्षेत्रेषु निर्मितास्तृणमयाः धन्विन इव वयं जाताः । इतरेणेव महतेति च पाठः ॥ ४४ ॥ ४५ ॥ ४६ ॥ भीष्मेति ॥ अंगराजाद्याः कर्णाद्याः ॥ ४७ ॥ निर्यौवनेति ॥ निर्गतं यौवनं सस्यादिप्रसवसामर्थ्यं यस्यास्सा निर्यौवना ॥ ४८ ॥ यस्येति ॥ अग्नितुल्ये मयि पतंगवदाचरितम् ॥ ४९ ॥ ५० ॥ स्त्रीसहस्राणीति ॥ अहं नाथः पालको येषां तानि यततः यतमानं मम मामता इत्य

आनीयमानमाभीरैः कृष्ण कृष्णावरोधनम् ॥ हतं यष्टिप्रहरणैः परिभूय बलं मम ॥ ५२ ॥ निश्श्रीकता न मे चित्रं यज्जीवामि तदद्भुतम् ॥ नीचावमानपंकांकी निर्लज्जोस्मि पितामह ॥ ५३ ॥ व्यास उवाच ॥ अलं ते व्रीडया पार्थ न त्वं शोचितुमर्हसि ॥ अवेहि सर्वभूतेषु कालस्य गतिरीदृशी ॥ ५४ ॥ कालो भवाय भूतानामभवाय च पांडव ॥ कालमूलमिदं ज्ञात्वा भव स्थैर्यपरोऽर्जुन ॥ ५५ ॥ नद्यः समुद्रा गिरयस्सकला च वसुंधरा ॥ देवा मनुष्याः पशवस्तरवश्च सरीसृपाः ॥ ५६ ॥ सृष्टाः कालेन कालेन पुनर्यास्यंति संक्षयम् ॥ कालात्मकमिदं सर्वं ज्ञात्वा शममवाप्नुहि ॥ ५७ ॥ कालस्वरूपी भगवान्कृष्णः कमललोचनः ॥ यच्चात्थ कृष्णमाहात्म्यं तत्तथैव धनंजय ॥ ५८ ॥ भारावतारकार्यार्थमवतीर्णस्स मेदिनीम् ॥ भाराक्रांता धरा याता देवानां समितिं पुरा ॥ ५९ ॥ तदर्थमवतीर्णोऽसौ कालरूपी जनार्दनः ॥ तच्च निष्पादितं कार्यमशेषा भूभुजो हताः ॥ ६० ॥ वृष्ण्यंधककुलं सर्वं तथा पार्थोपसंहृतम् ॥ न किंचिदन्यत्कर्त्तव्यं तस्य भूमितले प्रभोः ॥ ॥ ६१ ॥ अतो गतस्स भगवान्कृतकृत्यो यथेच्छया ॥ सृष्टिं सर्गे करोत्येष देवदेवः स्थितौ स्थितिम् ॥ अंतेंताय समर्थोयं सांप्रतं वै यथा गतः ॥ ६२ ॥ तस्मात्पार्थ न संतापस्त्वया कार्यः पराभवे ॥ भवंति भावाः कालेषु पुरुषाणां यतः स्तुतिः ॥ ६३ ॥ त्वयैकेन हता भीष्मद्रोणकर्णादयो रणे ॥ तेषामर्जुन कालोत्थः किं न्यूनाभिभवो न सः ॥ ६४ ॥ विष्णोस्तस्य प्रभावेण यथा तेषां पराभवः ॥ कृतस्तथैव भवतो दस्युभ्यस्स पराभवः ॥ ६५ ॥ स देवेशश्शरीराणि समाविश्य जगत्स्थितिम् ॥ करोति सर्वभूतानां नाशमंते जगत्पतिः ॥ ६६ ॥ भगोदये ते कौंतेय सहायोऽभूज्जनार्दनः ॥ तथांते तद्विपक्षास्ते केशवेन विनाशिताः ॥ ६७ ॥ कश्श्रद्दध्यात्सगांगेयान्हन्यास्त्वं कौरवानिति ॥ आभीरेभ्यश्च भवतः कः श्रद्दध्यात्पराभवम् ॥ ६८ ॥ पार्थैतत्सर्वभूतस्य हरेर्लीलाविचेष्टितम् ॥ त्वया यत्कौरावा ध्वस्ता यदाभीरैर्भवाञ्जितः ॥ ६९ ॥

आनीयमानमिति ॥ कृष्ण हे व्यास ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ तस्मादिति ॥ भावास्सर्वे कालेष्वभ्युदयकालेषु ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥

आनीयमानमिति ॥ कृष्ण हे व्यास ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ सृष्टा इति ॥ कालात्मकं कालाऽधीनम् ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ यथैकस्मात्त्वत्तो भीष्मादीनां पराभवः कालकृतः तथैव न्यूनेभ्यः आभीरेभ्यस्तवापि कालोद्भवोऽयं पराभव इत्युपपादयति—त्वयैकेनेत्यादिषड्भिः ॥ ६४ ॥ ६५ ॥ स इति ॥ सर्वभूतानां शरीराणि समाविश्य जगत् स्थितिं नाशं च एक एव करोति ॥ ६६ ॥ भगोदय इति ॥ भगोदये भाग्यस्योदये तदन्ते भाग्यनाशे ॥ ६७ ॥ ६८ ॥ ६९ ॥

गृहीता दस्युभिर्याश्च भवाञ्छोचति तास्त्रियः ॥ एतस्याहं यथावृत्तं कथयामि तवार्जुन ॥ ७० ॥ अष्टावक्रः पुरा विप्रो जलवासरतोऽभवत् ॥ बहूंवर्षगणान्पार्थ गृणन्ब्रह्म सनातनम् ॥ ७१ ॥ जितेष्वसुरसंघेषु मेरुपृष्ठे महोत्सवः ॥ बभूव तत्र गच्छंत्यो ददृशुस्तं सुरस्त्रियः ॥ ७२ ॥ रंभातिलोत्तमाद्यास्तु शतशोऽथ सहस्रशः ॥ तुष्टुवुस्तं महात्मानं प्रशशंसुश्च पांडव ॥ ७३ ॥ आकंठमग्नं सलिले जटाभारवहं मुनिम् ॥ विनयावनताश्चैनं प्रणेमुस्तोत्रतत्पराः ॥ ७४ ॥ यथायथा प्रसन्नोऽसौ तुष्टुवुस्तं तथातथा ॥ सर्वास्ताः कौरवश्रेष्ठ तं वरिष्ठं द्विजन्मनाम् ॥ ७५ ॥ अष्टावक्र उवाच ॥ प्रसन्नोऽहं महाभागा भवतीनां यदिष्यते ॥ मत्तस्तद्व्रियतां सर्वं प्रदास्याम्यतिदुर्लभम् ॥ ७६ ॥ रंभातिलोत्तमाद्यास्तं वैदिक्योप्सरसोऽब्रुवन् ॥ प्रसन्ने त्वय्यपर्याप्तं किमस्माकमिति द्विज ॥ ७७ ॥ इतरास्त्वब्रुवन्विप्र प्रसन्नो भगवान्यदि ॥ तदिच्छामः पतिं प्राप्तुं विप्रेंद्र पुरुषोत्तमम् ॥ ७८ ॥ व्यास उवाच ॥ एवं भविष्यतीत्युक्त्वा ह्युत्ततार जलान्मुनिः ॥ तमुत्तीर्णं च ददृशुर्विरूपं वक्रमष्टधा ॥ ७९ ॥ तं दृष्ट्वा गूहमानानां यासां हासः स्फुटोऽभवत् ॥ ताश्शशाप मुनिः कोपमवाप्य कुरुनंदन ॥ ८० ॥ यस्माद्विकृतरूपं मां मत्वा हासावमानना ॥ भवतीभिः कृता तस्मादेतं शापं ददामि वः ॥ ८१ ॥ मत्प्रसादेन भर्त्तारं लब्ध्वा तु पुरुषोत्तमम् ॥ मच्छापोपहतास्सर्वा दस्युहस्तं गमिष्यथ ॥ ८२ ॥ व्यास उवाच ॥ इत्युदीरितमाकर्ण्य मुनिस्ताभिः प्रसादितः ॥ पुनस्सुरेंद्रलोकं वै प्राह भूयो गमिष्यथ ॥ ८३ ॥ एवं तस्य मुनेश्शापादष्टावक्रस्य चक्रिणम् ॥ भर्त्तारं प्राप्य ता याता दस्युहस्तं सुरांगनाः ॥ ८४ ॥ तत्त्वया नात्र कर्त्तव्यश्शोकोऽल्पोपि हि पांडव ॥ तेनैवाखिलनाथेन सर्वं तदुपसंहृतम् ॥ ८५ ॥ भवतां चोपसंहार आसन्नस्तेन पांडव ॥ बलं तेजस्तथा वीर्यं माहात्म्यं चोपसंहृतम् ॥ ८६ ॥

॥ ७० ॥ ७१ ॥ ७२ ॥ रंभेति ॥ स्तुतिर्गानसहिता प्रशंसा तद्रहिता ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ ॥ ८३ ॥ ८४ ॥ ८५ ॥ भवतामिति ॥ तेजः पराभिभवासहिष्णुत्वं माहात्म्यमस्त्रमन्त्रादिजं सामर्थ्यम् ॥ ८६ ॥

तासां च स्त्रीणां दस्युभिर्हरणमष्टावक्रशापप्राप्तं केन वारयितुं शक्यमित्याख्यायिकां कथयन्नाह–गृहीता इत्यादिना दस्युहस्तं गमिष्यथेत्यन्तेन ॥ ७० ॥ ७१ ॥ ७२ ॥ रम्भेति ॥ तुष्टुवुः प्रगीतैर्वाक्यैः प्रशशंसुः ॥ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ रम्भेति ॥ वैदिक्यः वेदप्रसिद्धाः ॥ ७७ ॥ ७८ ॥ एवमिति ॥ उत्ततार बहिर्निर्गतः ॥ ७९ ॥ तमिति ॥ गूहमानानां हासं प्रच्छादयन्तीनाम् ॥ ८० ॥ ८१ ॥ मत्प्रसादेनेति शापं विवृणोति ॥ मच्छापेति ॥ ८२ ॥ इतीति ॥ प्रसादयन्तीस्ताः पुनः सुरेन्द्रलोकं गमिष्यथेति प्राह–पुनरिति ॥ ८३ ॥ ८४ ॥ ८५ ॥ भवतामिति ॥ माहात्म्यं गौरवम् ॥ ८६ ॥

जातस्य नियतो मृत्युः पतनं च तथोन्नतेः ॥ विप्रयोगावसानस्तु संयोगः संचये क्षयः ॥ ८७ ॥ विज्ञाय न बुधाश्शोकं न हर्ष मुपयांति ये ॥ तेषामेवेतरे चेष्टां शिक्षंतस्संति तादृशाः ॥ ८८ ॥ तस्मात्त्वया नरश्रेष्ठ ज्ञात्वैतद्भ्रातृभिस्सह ॥ परित्यज्याऽखिलं तंत्रं गंतव्यं तपसे वनम् ॥ ८९ ॥ तद्गच्छ धर्मराजाय निवेद्यैतद्वचो मम ॥ परश्वो भ्रातृभिस्सार्द्धं यथा यासि तथा कुरु ॥ ९० ॥ इत्युक्तोभ्येत्य पार्थाभ्यां यमाभ्यां च सहार्जुनः ॥ दृष्टं चैवानुभूतं च सर्वमाख्यातवांस्तथा ॥ ९१ ॥ व्यासवाक्यं च ते सर्वे श्रुत्वार्जुनमुखेरितम् ॥ राज्ये परीक्षितं कृत्वा ययुः पांडुसुता वनम् ॥ ९२ ॥ इत्येतत्तव मैत्रेय विस्तरेण मयोदितम् ॥ जातस्य यद्यदोर्वंशे वासुदेवस्य चेष्टितम् ॥ ९३ ॥ यश्चैतच्चरितं तस्य कृष्णस्य शृणुयात्सदा ॥ सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥ ९४ ॥ इति श्रीविष्णुमहापुराणे पंचमांशेऽष्टात्रिंशोऽध्यायः ॥ ३८ ॥ ॥ समाप्तश्चायं विष्णुमहापुराणस्य पञ्चमांशः ॥

॥ ८७ ॥ विज्ञायेति ॥ विबुधाः विद्वांसः संति तादृशाः तादृशा भवंति ॥ ८८ ॥ तस्मादिति ॥ तंत्रं परिच्छदम् ॥ ८९ ॥ ९० ॥ इत्युक्त इति ॥ दृष्टं प्रत्यक्षितं व्यासोक्त्या श्रुतं च सर्वम् ॥ ९१ ॥ ९२ ॥ श्रीकृष्णलीलां निगमयति । इत्येतदिति ॥ ९३ ॥ भगवच्चरित्रश्रवणादिफलमाह—यश्चैतच्चरितमिति ॥ ९४ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशेऽष्टात्रिंशोऽध्यायः ॥ ३८ ॥ ॥ समाप्तश्चायं पञ्चमांशः ॥

जातस्येति ॥ उच्चैस्सकाशात्पतनं च संचयानन्तरं क्षयश्च ॥ ८७ ॥ विज्ञायेति ॥ तादृशाः हर्षशोकविहीनाः सन्ति ॥ ८८ ॥ तस्मादिति ॥ तन्त्रं राज्यपरिकरम् ॥ ८९ ॥ ९० ॥ इतीति ॥ दृष्टं यदुकुलक्षयादि अनुभूतं स्वपराभवादि ॥ ९१ ॥ ९२ ॥ इतीति ॥ इत्येतदिति ॥ श्रीकृष्णलीलां निगमयति ॥ ९३ ॥ श्रवणादिफलं प्रकटयति ॥ यश्चेति ॥ ९४ ॥ इति श्रीमद्विष्णुभक्तशिरोरत्न–श्रीधरस्वामिविरचितायामात्मप्रकाशाख्यायां श्रीविष्णुमहापुराणव्याख्यायां पञ्चमांशेऽष्टात्रिंशोऽध्यायः ॥ ३८ ॥ ॥ ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥ ॥ पञ्चमांशः समाप्तः ॥

---

इदं पुस्तकं मुम्बय्यां श्रीकृष्णदासात्मजक्षेमराजश्रेष्ठिना स्वकीये "श्रीवेङ्कटेश्वर" (स्टीम्) मुद्रणालये मुद्रयित्वा प्रकाशितम् । संवत् १९६७, शके १८३२.

॥ इति श्रीविष्णुमहापुराणे विष्णुचित्त्यात्मप्रकाशाख्यश्रीधरीयव्याख्याद्वयोपेते पञ्चमांशः समाप्तः ॥

॥ अथ श्रीविष्णुमहापुराणे विष्णुचित्त्यात्मप्रकाशाख्यश्रीधरीय
व्याख्याद्वयोपेते षष्ठांशः प्रारभ्यते ॥

॥ श्रीमते रामानुजाय नमः ॥ मैत्रेय उवाच ॥ व्याख्याता भवता सर्गवंशमन्वंतरस्थितिः ॥ वंशानुचरितं चैव विस्तरेण महामुने ॥१॥ श्रोतु मिच्छाम्यहं त्वत्तो यथावदुपसंहृतिम् ॥ महाप्रलयसंज्ञां च कल्पांते च महामुने ॥२॥ श्रीपराशर उवाच ॥ मैत्रेय श्रूयतां मत्तो यथावदुपसंहृतिः॥ कल्पांते प्राकृते चैव प्रलयो जायते यथा ॥ ३ ॥ अहोरात्रं पितॄणां तु मासोऽब्दस्त्रिदिवौकसाम् ॥ चतुर्युगसहस्रे तु ब्रह्मणो वै द्विजोत्तम ॥४॥ कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम् ॥ दिव्यैर्वर्षसहस्रैस्तु तद्द्वादशभिरुच्यते ॥५॥ चतुर्युगाण्यशेषाणि सदृशानि स्वरूपतः ॥ आद्यं कृतयुगं मुक्त्वा मैत्रेयांत्यं तथा कलिम् ॥६॥ आद्ये कृतयुगे सर्गो ब्रह्मणा क्रियते यथा ॥ क्रियते चोपसंहारस्तथांऽते च कलौ युगे ॥७॥ मैत्रेय उवाच॥ कलेस्स्वरूपं भगवन्विस्तराद्वक्तुमर्हसि ॥ धर्मश्चतुष्पाद्भगवान्यस्मिन्विप्लवमृच्छति ॥८॥ श्रीपराशर उवाच॥ कलेस्स्वरूपं मैत्रेय यद्भवाञ्छ्रोतु मिच्छति ॥ तन्निबोध समासेन वर्त्तते यन्महामुने॥९॥वर्णाश्रमाचारवती प्रवृत्तिर्न कलौ नृणाम् ॥ न सामऋग्यजुर्धर्मविनिष्पादनहैतुकी ॥१०॥

॥ श्रीमते रामानुजाय नमः ॥ अथ विष्णुचित्ती॥व्याख्यातेति ॥ प्रथमांशे सर्ग उक्तः । द्वितीयादिषु वंशमन्वंतरवंशानुचरितरूपा स्थितिरुक्ता ॥१॥ श्रोतुमिति ॥ अथ कल्पांते उपसंहृतिं महाप्रलयं संज्ञामुपसंहृतिं च श्रोतुमिच्छामि ॥२॥ मैत्रेयेति ॥ प्राकृते प्रलय इति शेषः । द्विपरार्द्धक इति वक्ष्यमाणे यथोपसंहृतिर्जायते तथा यथा वत् परमार्थतः श्रूयताम् ॥३॥ अहोरात्रमिति ॥ मानुषो मासः पितॄणामहोरात्रम्, अब्दो देवानां दिव्ये चतुर्युगसहस्रे द्वे ब्रह्मणोऽहोरात्रम् ॥४॥५॥ चतुर्युगाणीति॥ स्वरूपतः परिमाणधर्माधर्मादिभिः । "यथोक्तं हरिवंशे—कृते धर्मश्चतुष्पात्स्यादधर्मः पादभागथ।द्वाभ्यामधर्मः पादाभ्यां त्रिभिर्धर्मस्ततः स्थितः॥द्वाभ्यां धर्मः स्थितः पद्भ्याम धर्मस्त्रिभिरुच्छ्रितः । कलावधर्मश्चतुष्पात्स्याद्धर्मः पादशेषगः" इति । अयमर्थः । कृते कृतयुगे आदौ पादभाक् । अथ कृतांते क्रमेणाधर्मः पादभाग्भवति ततस्त्रेतायाम्॥६॥ आद्य इति ॥ ब्रह्मणा चतुर्मुखशरीरकेण भगवता " भोगिशय्यागतः शेते त्रैलोक्यग्रासबृंहितः " इति वचनात् । आद्यंतयोर्युगयोः सृष्टिसंहारादेव विशेषः ॥ ७ ॥ ॥ ८ ॥ ९ ॥ वर्णाश्रमेति ॥ वर्णाश्रमेत्यादिस्मार्त्तप्रवृत्तिविषयं सामर्ग्यजुरिति श्रौतप्रवृत्तिविषयत्रयीप्रतिपाद्याग्निहोत्रादिधर्मविनिष्पादनं यस्याः प्रवृत्तेः । हेतुः प्रयो

अथ श्रीधरी ॥ सच्चिदानंदरूपाय कृष्णायाऽक्लिष्टकारिणे । नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे ॥ १ ॥ प्रथमांशारंभोक्तमर्थमनुवदन् बुभुत्सितमर्थं पृच्छति मैत्रेयः—व्याख्यातेत्यादिद्वाभ्याम् ॥ १ ॥ श्रोतुमिच्छामीति ॥ यथावत् उपसंहृतिमात्यन्तिकप्रलयमित्यर्थः ॥ २ ॥ मैत्रेयेति ॥ कल्पान्ते ब्रह्मणो दिनान्ते । प्राकृते महाप्रलये ॥ ३ ॥ कल्पप्रमाणं दर्शयन्नाह—अहोरात्रमिति ॥ मनुष्याणां मासः पितॄणामहोरात्रं मनुष्याणामब्दः देवाना महोरात्रम् । द्वे चतुर्युगसहस्रे ब्रह्मणोऽहोरात्रम् ॥४॥ चतुर्युगस्य प्रमाणमाह—कृतमिति ॥५॥ चतुर्युगस्वरूपमाह—चतुर्युगाणीति ॥६॥ आद्यन्तयोर्वै सादृश्यहेतुमाह—आद्य इति ॥७॥ अपर्यवसित एव पूर्वप्रश्नोत्तरे लब्धाऽव सरोऽन्यत्पृच्छति । कलेरिति ॥ विप्लवं नाशम् ॥८॥ उत्तरमाह—कलेः स्वरूपमित्यादिना यावदध्यायसमाप्ति॥९॥ वर्णाश्रमेति ॥ वर्णानामाश्रमाणां च य आचारस्तदनुसारिणी नृणां प्रवृत्तिर्न भवति । सामादिवेदोक्तं कर्म

विवाहा न कलौ धर्म्या न शिष्यगुरुसंस्थितिः ॥ न दांपत्यक्रमो नैव वह्निदेवात्मकः क्रमः ॥ ११ ॥ यत्र कुत्र कुले जातो बली सर्वेश्वरः कलौ ॥ सर्वेभ्य एव वर्णेभ्यो योग्यः कन्यावरोधने ॥ १२ ॥ येन केन च योगेन द्विजातिर्दीक्षितः कलौ ॥ यैव सैव च मैत्रेय प्रायश्चित्तं कलौ क्रिया ॥ १३ ॥ सर्वमेव कलौ शास्त्रं यस्य यद्वचनं द्विज ॥ देवता च कलौ सर्वा सर्वस्सर्वस्य चाश्रमः ॥ ॥ १४ ॥ उपवासस्तथाऽऽयासो वित्तोत्सर्गस्तपः कलौ ॥ धर्मो यथाभिरुचितैरनुष्ठानैरनुष्ठितः ॥ १५ ॥ वित्तेन भविता पुंसां स्वल्पेनाढ्यमदः कलौ ॥ स्त्रीणां रूपमदश्चैवं केशैरेव भविष्यति ॥ १६ ॥ सुवर्णमणिरत्नादौ वस्त्रे चोपक्षयं गते ॥ कलौ स्त्रियो भविष्यंति तदा केशैरलंकृताः ॥ १७ ॥ परित्यक्ष्यंति भर्त्तारं वित्तहीनं तथा स्त्रियः ॥ भर्त्ता भविष्यति कलौ वित्तवानेव योषिताम् ॥ १८ ॥ यो वै ददाति बहुलं स्वं स स्वामी सदा नृणाम् ॥ स्वामित्वहेतुस्संबंधो न चाभिजनता तथा ॥ १९ ॥

जनं सा तथोक्ता सा च नेत्यर्थः ॥ १० ॥ विवाहा इति ॥ दांपत्यक्रमः दंपत्योर्धर्मः, दंपती एव दांपत्यम् । वह्निदेवात्मकः वह्नौ देवयज्ञक्रियात्मकः । क्रमोऽनुष्ठानम् ॥ ११ ॥ यत्र कुत्रेति ॥ वर्णेभ्यः वर्णानां धनी योग्यः न तु वृत्तविद्यादिमान् ॥ १२ ॥ येनेति ॥ येन केन च श्रुतिस्मृतिभ्यामनुकल्पतयोक्तेन योगेन प्रकारेण दीक्षितो भवति ॥ १३ ॥ सर्वमेवेति ॥ देवता च सर्वा अवैदिकी काल्यादिः सर्वः सर्वस्य चाश्रमः ब्रह्मचर्यवैराग्यादिरहितस्यापि ॥ १४ ॥ उपवास इति ॥ आयासः तीर्थयात्रादिकायक्लेशः । उपवासादिस्स्वाभिरुचितानुष्ठानानुष्ठितो धर्मो भवति ॥ १५ ॥ १६ ॥ सुवर्णमणीति ॥ केशैः प्रशस्तैः सुवर्णादिभूषणसहपाठात् ॥ १७ ॥ १८ ॥ य इति ॥ स्वामित्वहेतुरिति बह्वर्थदानादिना संबन्ध एव स्वामित्वहेतुः, भावी न त्वभिजनः स्वामित्वहेतुः, सम्बन्धो भविता । अभिजन इति

निष्पादनं हेतुर्यस्याः सा तथाभूता च न भवति । किं तु, अर्थकामप्रयोजनैवेत्यर्थः । यज्ञुःकर्मेति च पाठः ॥ १० ॥ विवाहा इति ॥ ब्राह्मादिषु विवाहेषु यस्य यो विहितः स एव तस्येति व्यवस्था नास्तीत्यर्थः । शिष्यगुर्वोश्च सम्यक्स्थितिः । शुश्रूषाऽनुग्रहरूपा । नास्ति दाम्पत्ये यः क्रमः परस्परनियमः । वह्निदेवपूजादिषु क्रमश्च नास्ति ॥ ११ ॥ यत्र कुत्रेति ॥ सर्वेश्वरो नियंता दंडधर इति यावत् । सर्व एव सर्ववर्णेभ्यः कन्याया अवरोधने धनेश्वर एव कन्याया योग्यो भविष्यति । कन्यावरोधनीति पाठे सवर्णत्वादिनियमं विना सर्वेभ्य एव वर्णेभ्यः धनी धनवान् । कन्यावरो योग्यो भविष्यतीत्यर्थः ॥ १२॥ येनेति ॥ येन केनाप्युपायेन निषिद्धद्रव्यादिनाऽपि दीक्षितः स्यात्.॥ १३ ॥ १४ ॥ उपवास इति ॥ विधिक्रमं विना यथाऽभिरुचितैरनुष्ठानैः कृत उपवासादिर्धर्मः स्यात् । आयासः कृच्छ्रादिरपि ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ य इति ॥ यः कोऽपि बहुधनं ददाति स स्वामी । उत्तमानामपि तत्र हेतुः । द्रव्यदानादिना यः संबन्धः स एव स्वामित्वे हेतुर्भावी । न त्वभिजनसत्कुलत्वम् । 'स्वामित्वहेतुसम्बंधो भविताऽभिजनः' इति पाठे–स्वामित्वे हेतुना

गृहांता द्रव्यसंघाता द्रव्यांता च तथा मतिः ॥ अर्थाश्चात्मोपभोग्यांता भविष्यंति कलौ युगे ॥ २० ॥ स्त्रियः कलौ भविष्यंति स्वैरिण्यो ललितस्पृहाः ॥ अन्यायादात्तवित्तेषु पुरुषाः स्पृहयालवः ॥ २१ ॥ अभ्यर्थितापि सुहृदा स्वार्थमेव निरीक्ष्यते ॥ पणार्धार्धार्द्धमात्रेऽपि करिष्यंति तथा स्पृहाम् ॥ २२ ॥ समानपौरुषं चेतो भावि विप्रेषु वै कलौ ॥ क्षीरप्रदानसंबंधि भावि गोषु च गौरवम् ॥२३॥ अनावृष्टिभयप्रायाः प्रजाः क्षुद्भयकातराः ॥ भविष्यंति तदा सर्वे गगनासक्तदृष्टयः ॥ २४ ॥ कंदमूलफलाहारास्तापसा इव मानवाः ॥ आत्मानं घातयिष्यंति ह्यनावृष्ट्यादिदुःखिताः ॥ २५ ॥ दुर्भिक्षमेव सततं तथा क्लेशमनीश्वराः ॥ प्राप्स्यंति व्याहतसुखप्रमोदा मानवाः कलौ ॥ २६ ॥ अस्नानभोजिनो नाग्निदेवतातिथिपूजनम् ॥ करिष्यंति कलौ प्राप्ते न च पिंडोदकक्रियाम् ॥ २७ ॥ लोलुपा ह्रस्वदेहाश्च बह्वन्नादनतत्पराः ॥ बहुप्रजाल्पभाग्याश्च भविष्यंति कलौ स्त्रियः ॥ २८ ॥

पाठे स्वामित्वहेतुर्वसुदानादिसम्बन्धः, स एवाभिजनः न तु महाकुलीनत्वम् । हीनवर्णोऽप्यर्थदो महाकुलीनवत्सेव्य इत्यर्थः ॥ १९ ॥ गृहांता इति ॥ बुद्धेस्साध्यं धनार्जनम्, न त्वात्मज्ञानादि । तच्च धनं गृहनिर्माणार्थम्, न तु यागाधानाद्यर्थम् । ते चार्था गृहरूपाः स्वदेहभोगार्थाः, न त्वतिथ्यादिभोगार्थाः ॥ २० ॥ स्त्रियः इति ॥ ललितेषु पुरुषेषु स्पृहा यासां तास्तथोक्ताः ॥२१॥ अभ्यर्थितापीति ॥ अभ्यर्थितापि अभ्यर्थिता अपि । अत्र आर्षः संधिः । देवापि यं न पश्यंतीतिवत् । पणः कपर्दिकाशीतिः । पंचगुंजातुलितं स्वर्णं वा ॥ २२ ॥ समानपौरुषमिति ॥ समानपौरुषमित्यपरवर्णाश्शूद्रादयः । विप्रान् स्वसमानतेजस्कान् मन्यंत इत्यर्थः । 'समानपरुषम्' इति पाठे सगर्वनिष्ठुरं च चेत इति॥२३॥२४॥कंदमूलेति॥घातयिष्यंति क्लेशयिष्यंति॥२५॥ दुर्भिक्षमिति ॥ प्रमोदः उल्लासः ॥२६॥२७॥२८॥

बहुधनादिना यः संबन्धः स एवाऽभिजनो महाकुलीनत्वं भविष्यतीत्यर्थः ॥ १९ ॥ गृहांता इति ॥ द्रव्याणां संघाताः संचया अपि । गृह एवान्तः समाप्तिर्येषां ते तथा । बहुधनादिसंग्रहा अपि गृहनिर्माणादिष्वेवोपक्षीणा भविष्यंति न तु धर्मोपयोगिन इत्यर्थः । नृणां मतिश्च द्रव्यांता द्रव्यार्जनमात्रनिष्ठा । न त्वात्मज्ञानोपयोगिनी । अर्थाश्च भोग्याः स्रक्चंदनादयः । आत्मोपभोग्यान्ताः स्वभोगमात्रपर्यवसायिनः । न त्वतिथिदेवतार्था भविष्यंति ॥ २० ॥ स्त्रिय इति ॥ स्वैरिण्यः पुंश्चल्यः । तत्र हेतुः ललिते सुन्दरे स्पृहा यासां ताः ॥ २१ ॥ अभ्यर्थिता इति ॥ पणं वराटिका तदर्धं वा काचः तदर्धार्धमात्रेऽपि विषये । स्वार्थस्य हानिं न करिष्यंति । कपर्दिकांशकमपि न त्यक्ष्यंतीत्यर्थः । पणः कपर्दिकाशीतिः । पंचगुंजातुलितस्वर्णं वा पणः तत्राऽपीति द्रष्टव्यम् । 'करिष्यंति कलिं द्विज' इति पाठे कलिं कलहम् ॥ २२ ॥ समानेति ॥ समानपौरुषम् अस्मासु विप्रेषु च पुरुषत्वं समानम् । तदस्मत्तो विप्रेषु को विशेष इत्यनादरयुक्तं चित्तं शूद्रादेर्भविष्यतीत्यर्थः । 'समानपरुषम्' इति पाठे सगर्वनिष्ठुरं चेत्यर्थः । क्षीरेति । महिष्यादिष्विव क्षीरप्रदानतो गोषु सत्कारो भविष्यति ॥ २३ ॥ अनावृष्टीति ॥ क्षुद्भयेन कातराः व्याकुलाः प्रजाः मेघप्रतीक्षया गगने आसक्तदृष्टयो भविष्यंति ॥ २४ ॥ २५ ॥ दुर्भिक्षमिति ॥ अनीश्वरा निर्दयाः । व्याहतं सुखम् । प्रमोदो हर्षश्च येषां ते ॥ २६ ॥ २७ ॥ २८ ॥

उभाभ्यामपि पाणिभ्यां शिरःकंडूयनं स्त्रियः ॥ कुर्वंत्यो गुरुभर्तृणामाज्ञां भेत्स्यंत्यनादराः ॥ २९ ॥ स्वपोषणपराः क्षुद्रा देहसंस्कारवर्जिताः ॥ परुषानृतभाषिण्यो भविष्यंति कलौ स्त्रियः ॥ ३० ॥ दुःशीला दुष्टशीलेषु कुर्वंत्यस्सततं स्पृहाम् ॥ असद्वृत्ता भविष्यंति पुरुषेषु कुलांगनाः ॥ ३१ ॥ वेदादानं करिष्यंति बटवश्चाकृतव्रताः ॥ गृहस्थाश्च न होष्यंति न दास्यंत्युचितान्यपि ॥ ३२ ॥ वानप्रस्था भविष्यंति ग्राम्याहारपरिग्रहाः ॥ भिक्षवश्चापि मित्रादिस्नेहसंबंधयंत्रणाः ॥ ३३ ॥ अरक्षितारो हर्त्तारश्शुल्कव्याजेन पार्थिवाः ॥ हारिणो जनवित्तानां संप्राप्ते तु कलौ युगे ॥ ३४ ॥ योयोऽश्वरथनागाढ्यस्स स राजा भविष्यति ॥ यश्च यश्चाबलस्सर्वस्स भृत्यः कलौ युगे ॥ ३५ ॥ वैश्याः कृषिवणिज्यादि संत्यज्य निजकर्म यत् ॥ शूद्रवृत्त्या प्रवर्त्स्यंति कारुकर्मोपजीविनः ॥ ३६ ॥ भैक्षव्रतपराः शूद्राः प्रव्रज्यालिंगिनोऽधमाः ॥ पाषंडसंश्रयां वृत्तिमाश्रयिष्यंति सत्कृताः ॥ ३७ ॥ दुर्भिक्षकरपीडाभिरतीवोपद्रुता जनाः ॥ गोधूमान्नयवान्नाढ्यान्देशान्यास्यंति दुःखिताः ॥ ॥ ३८ ॥ वेदमार्गे प्रलीने च पाषंडाढ्ये ततो जने ॥ अधर्मवृद्ध्या लोकानामल्पमायुर्भविष्यति ॥ ३९ ॥ अशास्त्रविहितं घोरं तप्यमानेषु वै तपः ॥ नरेषु नृपदोषेण बाल्ये मृत्युर्भविष्यति ॥ ४० ॥

॥ २९ ॥ ३० ॥ ३१ ॥ वेदादानमिति ॥ अकृतव्रताः वेदव्रतरहिताः ॥ ३२ ॥ वानप्रस्था इति ॥ वनवासिनः वानप्रस्थाः ॥ ३३ ॥ अरक्षितार इति ॥ शुल्कव्याजेन शुल्कमिति व्यपदिश्य शुल्कव्यतिरिक्तैर्दंडैश्च ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥

उभाभ्यामिति ॥ अनादराः आदरशून्याः ॥ २९ ॥ स्वपोषणपरा इति ॥ परुषमनृतं भाषितुं शीलं च यासां ताः ॥ ३० ॥ दुश्शीला इति ॥ दुष्टशीलेष्वसद्वृत्तेषु स्पृहां कुर्वन्त्योऽसद्वृत्ता व्यभिचारिण्यो भविष्यन्ति ॥ ३१ ॥ आश्रमाणां विप्लवमाह–वेदादानमिति ॥ अकृतव्रताः वेदव्रतादिहीनाः । वटवो ब्रह्मचारिणः । वेदादानं वेदाऽध्ययनं करिष्यंति ॥ ३२ ॥ वानप्रस्था इति ॥ वानप्रस्थाः वल्कलवाससः । ग्राम्याहारपरिग्रहा भविष्यन्ति, न तु वन्याहारपरिग्रहाः । भिक्षवः संन्यासिनः । पितृभ्रात्रादीन् विहाय अन्यान् मित्रादीन् संपाद्य तेषु स्नेहबंधेन यन्त्रणं तद्वशत्वं येषां ते तथाभूता भविष्यन्ति ॥ ३३ ॥ अरक्षितार इति ॥ पार्थिवाः अरक्षितारः प्रजापालनमकुर्वन्त एव हर्त्तारः करग्राहिणः । तथा वणिग्जनवित्तानां च अपहारिणो भविष्यन्ति ॥ ३४ ॥ ३५ ॥ वैश्या इति ॥ शूद्रवृत्त्या सेवया प्रवर्त्स्यन्ति प्रकर्षेण वर्त्स्यन्ति, वासं करिष्यन्ति वर्त्तिष्यन्त इत्यर्थः । कारूणाम् अंबुतुषादीनाम् । कर्म कटक्रियादि तेनोपजीवितुं शीलं येषां ते ॥ ३६ ॥ ३७ ॥ दुर्भिक्षेति ॥ गोधूमाद्यन्नाढ्यान्देशान् यास्यन्ति ॥ ३८ ॥ ३९ ॥ ४० ॥

भविता योषितां सूतिः पंचषट्सप्तवार्षिकी ॥ नवाष्टदशवर्षाणां मनुष्याणां तथा कलौ ॥ ४१ ॥ पलितोद्भवश्च भविता तथा द्वादशवार्षिकः ॥ नातिजीवति वै कश्चित्कलौ वर्षाणि विंशतिः ॥ ४२ ॥ अल्पप्रज्ञा वृथालिंगा दुष्टांतःकरणाः कलौ ॥ यतस्ततो विनंक्ष्यंति कालेनाल्पेन मानवाः ॥ ४३ ॥ यदायदा हि मैत्रेय हानिर्धर्मस्य लक्ष्यते ॥ तदातदा कलेर्वृद्धिरनुमेया विचक्षणैः ॥ ४४ ॥ यदायदा हि पाषंडवृद्धिर्मैत्रेय लक्ष्यते ॥ तदातदा कलेर्वृद्धिरनुमेया महात्मभिः ॥ ४५ ॥ यदायदा सतां हानिर्वेदमार्गानुसारिणाम् ॥ तदातदा कलेर्वृद्धिरनुमेया विचक्षणैः ॥ ॥ ४६ ॥ प्रारंभाश्चावसीदंति यदा धर्मभृतां नृणाम् ॥ तदानुमेयं प्राधान्यं कलेर्मैत्रेय पंडितैः ॥ ४७ ॥ यदायदा न यज्ञानामीश्वरः पुरुषोत्तमः ॥ इज्यते पुरुषैर्यज्ञैस्तदा ज्ञेयं कलेर्बलम् ॥ ४८ ॥ न प्रीतिर्वेदवादेषु पाषंडेषु यदा रतिः ॥ कलेर्वृद्धिस्तदा प्राज्ञैरनुमेया विचक्षणैः ॥ ॥ ४९ ॥ कलौ जगत्पतिं विष्णुं सर्वस्रष्टारमीश्वरम् ॥ नार्चयिष्यंति मैत्रेय पाषंडोपहता जनाः ॥ ५० ॥ किं देवैः किं द्विजैर्वेदैः किं शौचेनांबुजन्मना ॥ इत्येवं विप्रवक्ष्यंति पाषंडोपहता जनाः ॥ ५१ ॥ स्वल्पांबुवृष्टिः पर्जन्यः सस्यं स्वल्पफलं तथा ॥ फलं तथाल्पसारं च विप्र प्राप्ते कलौ युगे ॥ ५२ ॥ शाणीप्रायाणि वस्त्राणि शमीप्राया महीरुहाः ॥ शूद्रप्रायास्तथा वर्णा भविष्यंति कलौ युगे ॥ ५३ ॥ अणुप्रायाणि धान्यानि चाज्यप्रायं तथा पयः ॥ भविष्यति कलौ प्राप्ते ह्यौशीरं चानुलेपनम् ॥ ५४ ॥ श्वश्रूश्वशुरभूयिष्ठा गुरवश्च नृणां कलौ ॥ श्यालाद्या हारिभार्याश्च सुहृदो मुनिसत्तम ॥ ५५ ॥ कस्य माता पिता कस्य यथा कर्मानुगः पुमान् ॥ इति चोदाहरिष्यंति श्वशुरानुगता नराः ॥ ५६ ॥ वाङ्मनःकायगैर्दोषैरभिभूताः पुनःपुनः ॥ नराः पापान्यनुदिनं करिष्यंत्यल्पमेधसः ॥ ५७ ॥

॥ ४१ ॥ पलितेति ॥ विंशतिं नातिजीवंति । कलेरंते त्रयोविंशतिमिति चतुर्थोक्तं जीवनमितः पूर्वम् ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ॥ ५० ॥ ५१ ॥ ५२ ॥ शाणीप्रायाणीति ॥ शाणश्शाणी वा शणविकारः । शाटीति पाठे ह्रस्वस्थूलम् ॥ ५३ ॥ ५४ ॥ श्वश्रूश्वशुरेति ॥ हारिभार्याः हारिण्यः हृद्या भार्याः । बहुव्रीहिर्वा हारिण्यो भार्या येषां ते ते सुहृदः । भर्तॄणां जाराणां च रम्यभार्या हि सुहृदः ॥ ५५ ॥ ५६ ॥ ५७ ॥

भवितेति ॥ मनुष्याणां पुंसां सूतिः ॥ ४१ ॥ पलितोद्भवश्चेति ॥ विंशतिवर्षाण्यतिक्रम्य न जीवंति ॥ ४२ ॥ ४३ ॥ कलेः प्राबल्ये लिङ्गान्याह—यदायदेत्यादिपंचभिः ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ॥ ५० ॥ किं देवैरिति ॥ अंबुजन्मना वारिणा कृतेन शौचेन किम् ॥ ५१ ॥ स्वल्पेति ॥ अल्पसारं निर्वीर्यम् ॥ ५२ ॥ शाणीति ॥ शाणी शणसूत्रमयी पट्टिका दतिका वा तत्तुल्यानि वस्त्राणि ॥ ५३ ॥ अणुप्रायाणीति ॥ उशीरं सुरभितृणविशेषः ॥ ५४ ॥ श्वश्रूश्वशुरेति ॥ श्यालाः पत्नीभ्रातरः । हारिण्यो मनोहराः भार्या येषां ते तथाविधेषु नृषु सख्यं भवति ॥ ५५ ॥ कस्येति ॥ कर्मानुगः स्वकर्माऽधीनः ॥ ५६ ॥ ५७ ॥

निस्सत्त्वानामशौचानां निर्ह्रीकाणां तथा नृणाम् ॥ यद्यद्दुःखाय तत्सर्वं कलिकाले भविष्यति ॥ ५८ ॥ निस्स्वाध्यायवषट्कारे स्वधास्वाहाविवर्जिते ॥ तदा प्रविरलो धर्मः क्वचिल्लोके निवत्स्यति ॥ ५९ ॥ तत्राल्पेनैव यत्नेन पुण्यस्कंधमनुत्तमम् ॥ करोति यः कृतयुगे क्रियते तपसा हि सः ॥ ६० ॥ इति श्रीविष्णुमहापुराणे षष्ठांशे प्रथमोऽध्यायः ॥ १ ॥ ॥ श्रीपराशर उवाच ॥ व्यासश्चाह महाबुद्धिर्यदत्रैव हि वस्तुनि ॥ तच्छ्रूयतां महाभाग गदतो मम तत्त्वतः ॥ १ ॥ कस्मिन्कालेऽल्पको धर्मो ददाति सुमहत्फलम् ॥ मुनीनां पुण्यवादोऽभूत्कैश्चासौ क्रियते सुखम् ॥ २ ॥ संदेहनिर्णयार्थाय वेदव्यासं महामुनिम् ॥ ययुस्ते संशयं प्रष्टुं मैत्रेय मुनिपुंगवाः ॥३॥ ददृशुस्ते मुनिं तत्र जाह्नवीसलिले द्विज ॥ वेदव्यासं महाभागमर्द्धस्नातं सुतं मम ॥ ४ ॥ स्नानावसानं ते तस्य प्रतीक्षंतो महर्षयः ॥ तस्थुस्तीरे महानद्यास्तरुषंडमुपाश्रिताः ॥ ५ ॥ मग्नोऽथ जाह्नवीतोयादुत्थायाह सुतो मम ॥ शूद्रस्साधुः कलिस्साधुरित्येवं शृण्वतां वचः ॥ तेषां मुनीनां भूयश्च ममज्ज स नदीजले ॥ ६ ॥ साधुसाध्विति चोत्थाय शूद्र धन्योसि चाब्रवीत् ॥ ७ ॥

॥५८॥ निस्स्वाध्यायेति ॥ क्वचित्कीकटादौ ॥५९॥ तत्रेति ॥ तत्र कलौ । अल्पेनैव यत्नेन हरिकीर्त्तनादिना । अनुत्तमं पुण्यस्कंधं पुण्यराशिं करोति पुरुषः । यः पुण्यस्कंधः क्रियते स कृतयुगे तपसा हि क्रियते ॥ ६० ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये षष्ठांशे प्रथमोऽध्यायः ॥ १ ॥ ॥ छ ॥ ॥ व्यासश्चेति ॥अत्र वस्तुनि अल्पयत्नेन पुण्यस्कंधप्राप्तौ ॥१॥ कस्मिन्निति ॥ पुण्यवादः पुण्यविषयविचारः ॥२॥ संदेहनिर्णयार्थायेति ॥ संशयं संशयितमर्थं प्रष्टुम्॥ ॥ ३ ॥ ४ ॥ ५ ॥ मग्न इति ॥ शूद्रस्साधुः कलिः साधुरिति वचनम् ॥ ६ ॥ साधुसाध्विति ॥ साधुसाधु शूद्र धन्योसीत्युक्तिः । हृदयसन्निधेः प्रत्यक्षोक्तिरिव

निःसत्वानामिति ॥ यद्यद्वस्तु तत्सर्वं दुःखार्थमेव भविष्यति ॥ ९८ ॥ निस्स्वाध्यायेति ॥ क्वचिन्निष्कुटादौ ॥ ९९ ॥ कलेरेकं महान्तं गुणमाह तत्रेति ॥ अल्पेनैव यत्नेन हरिकीर्तनादिना । पुण्यस्कंधं पुण्यराशिं यो नरः करोति स हि कृयुतगे तपसा महता क्रियते । य इति पाठे यः कोऽपि अतिमलिनोऽपीत्यर्थः । अतोऽनेनैव गुणेन कलिः सर्वश्रेष्ठ इत्यर्थः । "करोति यं कृतयुगे क्रियते तपसा हि सः" इति पाठः सुगमः ॥ ६० ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां षष्ठांशे प्रथमोऽध्यायः ॥ १ ॥ ॥ निकृष्टोऽपि कलिरल्पायासेन महाफलप्रद इति प्रसङ्गान्निकृष्टयोः स्त्रीशूद्रयोरपि गुणाधिक्यं वक्तुमितिहासं प्रस्तौति, व्यास इत्यादिना—व्यासश्चेति ॥ वस्तुनि अर्थे ॥ १ ॥ कस्मिन्निति ॥ वादो विचारः । कैश्चापि जातिभिः । असौ धर्मः । सुखमनायासेन क्रियते ॥ २ ॥ संदेहेति ॥ संशयविषयभूतमर्थं प्रष्टुं ययुः ॥ ३ ॥ ४ ॥ स्नानावसानमिति ॥ स्नानावसानं स्नानसमाप्तिं प्रतीक्षमाणाः । तरूणां षंडं समूहम् । उपाश्रिताः तस्थुः स्थिताः ॥ ५ ॥ मग्न इति ॥ उन्मज्ज्य उत्थाय । तेषां मुनीनां शृण्वताम् । कलिः साधुः शूद्रः साधुरित्येवं वचो मम सुतः व्यासः आहेत्यन्वयः । तदेवं मुनिभिः अपृष्टेनैव 'कस्मिन्कालेऽल्पको धर्मो ददाति सुमहत् फलम्' इत्येतत्प्रश्नोत्तरतया कलेः साधुत्वमुक्तम् ॥ ६ ॥ कैश्चासौ

निमग्नश्च समुत्थाय पुनः प्राह महामुनिः ॥ योषितः साधु धन्यास्तास्ताभ्यो धन्यतरोस्ति कः ॥८॥ ततः स्नात्वा यथान्यायमाचांतं च कृतक्रियम्॥उपतस्थुर्महाभागं मुनयस्ते सुतं मम॥९॥कृतसंवंदनांश्चाह कृतासनपरिग्रहान् ॥ किमर्थमागता यूयमिति सत्यवतीसुतः॥१०॥श्रीपराशर उवाच ॥ तमूचुस्संशयं प्रष्टुं भवंतं वयमागताः ॥ अलं तेनास्तु तावन्नः कथ्यतामपरं त्वया ॥ ११ ॥ कलिस्साध्विति यत्प्रोक्तं शूद्रः साध्विति योषितः॥ यदाह भगवान्त्साधु धन्याश्चेति पुनःपुनः॥१२॥तत्सर्वं श्रोतुमिच्छामो न चेद्गुह्यं महामुने ॥ तत्कथ्यतां ततो हृत्स्थं पृच्छामस्त्वां प्रयोजनम् ॥१३॥ श्रीपराशर उवाच ॥ इत्युक्तो मुनिभिर्व्यासः प्रहस्येदमथाब्रवीत् ॥ श्रूयतां भो मुनिश्रेष्ठा यदुक्तं साधुसाध्विति ॥१४॥ व्यास उवाच ॥ यत्कृते दशभिर्वर्षैस्त्रेतायां हायनेन तत् ॥ द्वापरे तच्च मासेन ह्यहोरात्रेण तत्कलौ ॥ १५ ॥ तपसो ब्रह्मचर्यस्य जपादेश्च फलं द्विजाः ॥ प्राप्नोति पुरुषस्तेन कलिस्साध्विति भाषितम् ॥ १६ ॥ ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन् ॥ यदाप्नोति तदाप्नोति कलौ संकीर्त्त्य केशवम् ॥ १७ ॥ धर्मोत्कर्षमतीवात्र प्राप्नोति पुरुषः कलौ ॥ अल्पायासेन धर्मज्ञास्तेन तुष्टोस्म्यहं कलेः ॥ १८ ॥ व्रतचर्यापरैर्ग्राह्या वेदाः पूर्वं द्विजातिभिः ॥ ततस्स्व धर्मसंप्राप्तैर्यष्टव्यं विधिवद्धनैः ॥ १९ ॥

भातीति ॥ ७ ॥ निमग्नश्चेति ॥ ताभ्यो योषिद्भ्यः । कलौ साधुत्वं शूद्रे धन्यत्वं योषितां धन्यतरत्वं चेति । तद्गुणतारतम्याद्विरस्य त्रिधोक्तिः ॥ ८ ॥ ९ ॥ ॥ १० ॥ तमिति ॥ तेन प्राविवक्षितेनार्थेन अलमस्तु तन्निवृत्तिरस्तु ॥ ११ ॥ १२ ॥ १३ ॥ इत्युक्त इति ॥ प्रहस्येति धिगस्त्वितिवत् । स्वप्रश्नोत्तरं दत्तमप्यबुद्ध्वा पुनः पृच्छतो मुनीन् प्रति हासः ॥ १४ ॥ १५ ॥ १६ ॥ ध्यायन्निति ॥ कृते चित्तशुद्धिसंभवाद्ध्यानेन फलप्राप्तिः । त्रेतायां तदभावेपि चित्तशुद्ध्या यज्ञैः फलसिद्धिः । द्वापरे तयोरभावेपि आचारशुद्ध्याऽर्चनेन सिद्धिः । "संध्याहीनोऽशुचिर्नित्यम्" इत्यादिवचनात् । कलौ तु तेषामभावेपि भगवन्नामसंकीर्त्तनेनैव फलसिद्धिरिति कलेस्साधुत्वम् ॥ १७ ॥ एतदेव विवृणोति । धर्मेति ॥ स्वल्पायासेन संकीर्त्तनादिना ॥१८॥ व्रतचर्येति ॥ व्रतचर्येत्यादि शूद्रसाधुत्वस्य उपोद्घातः ॥१९॥

क्रियते सुखमित्येतन्निर्णयार्थम् । शूद्रस्य स्त्रीणां च धन्यत्वमाह–साधुसाध्विति ॥ साधुसाधु । शूद्र धन्योसीति बुद्धिसन्निधानात्प्रत्यक्षमिवोक्तम् ॥ ७ ॥ निमग्नश्चेति ॥ ताभ्यो योषिद्भ्यः धन्यतरः कः प्राण्यस्ति, न कोपीत्यर्थः । अतस्ता एव धन्यतराः । अत्र च कलेः साधुत्वम् । शूद्रस्य साधुत्वं धन्यत्वम् । योषितां धन्यतरत्वं साधुत्वं चेति । यथोत्तरं गुणाधिक्यम् । तत्र गंगायामघमर्षणे भगवद्ध्यानपूते चित्ते प्रतीतमिति । उन्मज्ज्योन्मज्ज्य पदत्रयोक्त्या दर्शितम् । उन्मज्ज्येति च पाठः ॥ ८ ॥ ९ ॥ कृतसंवंदनानिति ॥ कृतं संवंदनं यैस्तान् कृतसंवंदनान् ॥ १० ॥ तमिति ॥ तेन तावदलमस्तु । तत्तावदास्तामित्यर्थः ॥ ११ ॥ ॥ १२ ॥ १३ ॥ इत्युक्त इति ॥ हृत्स्थप्रश्नस्यैवोत्तरम् । दत्तमप्यविज्ञाय पृच्छन्तीति प्रहस्येदमब्रवीत् ॥ १४ ॥ तदेव स्फुटयति । यत्कृते दशभिरित्यादिद्वाभ्याम् । यत्कृते दशभिरिति ॥ कृते कृतयुगे हायनेन वर्षेण ॥ १५ ॥ १६ ॥ अल्पेन कालेन धर्मः सिद्ध्यतीत्याह–ध्यायन् कृत इत्यादिद्वाभ्याम् ॥ १७ ॥ धर्मेति ॥ अल्पायासेनेति कलेः साधुत्वमुक्तम् ॥ १८ ॥ शूद्रस्याल्पायासेन पुरुषार्थसिद्धिं च वक्तुं त्रैवर्णिकानां तत्राऽति

वृथा कथा वृथा भोज्यं वृथेज्या च द्विजन्मनाम् ॥ पतनाय ततो भाव्यं तैस्तु संयमिभिस्सदा ॥ २० ॥ असम्यक्करणे दोषस्तेषां सर्वेषु वस्तुषु ॥ भोज्यपेयादिकं चैषां नेच्छाप्रातिकरं द्विजाः ॥ २१ ॥ पारतंत्र्यं समस्तेषु तेषां कार्येषु वै यतः ॥ जयंति ते निजाँल्लोकान्क्लेशेन महता द्विजाः ॥ २२ ॥ द्विजशुश्रूषयैवैष पाकयज्ञाधिकारवान् ॥ निजाञ्जयति वै लोकाञ्छूद्रो धन्यतरस्ततः ॥ २३ ॥ भक्ष्याभक्ष्येषु नास्यास्ति पेयापेयेषु वै यतः ॥ नियमो मुनिशार्दूलास्तेनाऽसौ साध्विती रितः ॥ २४ ॥ स्वधर्मस्याविरोधेन नरैर्लब्धं धनं सदा ॥ प्रतिपादनीयं पात्रेषु यष्टव्यं च यथाविधि ॥ २५ ॥ तस्यार्जने महाक्लेशः पालने च द्विजोत्तमाः ॥ तथासद्विनियोगेन विज्ञातं गहनं नृणाम् ॥ २६ ॥ एवमन्यैस्तथा क्लेशैः पुरुषा द्विजसत्तमाः ॥ निजाञ्जयंति वै लोकान्प्राजापत्यादिकान्क्रमात् ॥ २७ ॥ योषिच्छुश्रूषणाद्भर्त्तुः कर्मणा मनसा गिरा ॥ तद्धिता शुभमाप्नोति तत्सालोक्यं यतो द्विजाः ॥ २८ ॥ नातिक्लेशेन महता तानेव पुरुषो यथा ॥ तृतीयं व्याहृतं तेन मया साध्विति योषितः ॥ २९ ॥ एतद्वः कथितं विप्रा यन्निमित्तमिहागताः ॥ तत्पृच्छत यथाकामं सर्वं वक्ष्यामि वः स्फुटम् ॥ ३० ॥ ऋषयस्ते ततः प्रोचुर्यत्प्रष्टव्यं महामुने ॥ अस्मिन्नेव च तत्प्रश्ने यथावत्कथितं त्वया ॥३१॥ श्रीपराशर उवाच ॥ ततः प्रहस्य तानाह कृष्णद्वैपायनो मुनिः ॥ विस्मयोत्फुल्लनयनांस्तापसांस्तानुपागतान् ॥ ३२ ॥

॥ २० ॥ असम्यक्करण इति ॥ इच्छैव प्रातिकरी यस्य तदिच्छाप्रातिकरम् । इच्छया प्राप्यं न ॥ २१ ॥ अत्र हेतुः--पारतंत्र्यमिति ॥ पारतंत्र्यं विधिपारतंत्र्यम् ॥ २२ ॥ द्विजशुश्रूषयैवेति ॥ पाकयज्ञाऽधिकारवान् शूद्रस्याप्यमंत्रकपक्कहोमादिष्वधिकारः । अस्मै साधुचरितमिति शेषः ॥ २३ ॥ २४ ॥ स्वधर्मस्येति ॥ स्वधर्मस्येति स्त्रीसाधुत्वस्य प्रस्तावः । नरैः पुंभिः ॥२५॥ तस्येति ॥ गहनं क्लेशः ॥२६॥२७॥२८॥ नेति ॥ तानेवेति पुरुषो यथा प्राजापत्यादिकान्प्राप्नोति तथा योषित्तानेव प्राप्नोतीत्यर्थः ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥

क्लेशमाह व्रतचर्यापरैरित्यादिचतुर्भिः ॥ व्रतचर्यापरैरिति ॥ 'व्रतचर्योपहरणैः' इति पाठे उपहरणमुपहारः । गुरवे सर्वलाभाऽर्पणैरित्यर्थः ॥ १९ ॥ वृथेति ॥ वृथा कथा श्रीकृष्णकीर्तनरहिता । वृथा भोज्यं हरेरनिवेदितम् । वृथेज्या दम्भलोभादिपूर्विका ॥ २० ॥ असम्यगिति ॥ इच्छया प्रातिकरं प्राप्यं न भवति, किन्तु चोदनया ॥ २१ ॥ २२ ॥ शूद्रस्य तादृक्क्लेशाभावेन धन्यत्वमुक्तमित्याह—द्विजशुश्रूषयेत्यादिद्वाभ्याम् ॥ २३ ॥ २४ ॥ स्त्रीणामनायासेन श्रेयःप्राप्त्या धन्यत्वं वक्तुं पुरुषाणां तत्प्राप्तौ क्लेशमाह—स्वधर्मस्येत्यादित्रिभिः ॥ २५ ॥ तस्येति ॥ एवं नृणां महान् क्लेशः ॥ २६ ॥ २७ ॥ योषितां तादृक्क्लेशो नास्तीत्याह—योषिदित्यादिद्वाभ्याम् ॥ २८ ॥ नातिक्लेशेनेति ॥ पुरुषो यथा महता क्लेशेन प्राजापत्यादिकान् लोकान् प्राप्नोति तथा तानेव लोकान्नातिक्लेशेन योषित्प्राप्नोतीत्यर्थः ॥ २९ ॥ ३० ॥ ३१ ॥ तत इति ॥

मयैष भवतां प्रश्नो ज्ञातो दिव्येन चक्षुषा ॥ ततोहं वः प्रसंगेन साधुसाध्विति भाषितम् ॥ ३३ ॥ स्वल्पेन हि प्रत्यनेन धर्मस्सिध्यति वै कलौ ॥ नरैरात्मगुणांभोभिः क्षलिताखिलकिल्बिषैः ॥ ३४ ॥ शूद्रैश्च द्विजशुश्रूषातत्परैर्द्विजसत्तमाः ॥ तथा स्त्रीभिरनायासात्पतिशुश्रूषयैव हि॥३५॥ततस्त्रितयमप्येतन्मम धन्यतरं मतम् ॥ धर्मसंपादने क्लेशो द्विजातीनां कृतादिषु ॥३६॥ भवद्भिर्यदभिप्रेतं तदेतत्कथितं मया ॥ अपृष्टेनाऽपि धर्मज्ञाः किमन्यत्क्रियतां द्विजाः ॥३७॥ श्रीपराशर उवाच ॥ ततस्संपूज्य ते व्यासं प्रशशंसुः पुनःपुनः॥यथाऽगतं द्विजा जग्मुर्व्यासोक्तिकृतनिश्चयाः ॥३८॥ भवतोऽपि महाभाग रहस्यं कथितं मया ॥ अत्यंतदुष्टस्य कलेरयमेको महान्गुणः ॥३९॥ यच्चाहं भवता पृष्टो जगतामुपसंहतिम् ॥ प्राकृतामंतरालां च तामप्येष वदामि ते ॥४०॥ इति श्रीविष्णुमहापुराणे षष्ठांशे द्वितीयोऽध्यायः ॥ २ ॥

श्रीपराशर उवाच ॥ सर्वेषामेव भूतानां त्रिविधः प्रतिसंचरः ॥ नैमित्तिकः प्राकृतिकः तथैवात्यंतिको लयः ॥ १ ॥ ब्राह्मो नैमित्तिकस्तेषां कल्पांते प्रतिसंचरः ॥ आत्यंतिकस्तु मोक्षाख्यः प्राकृतो द्विपरार्द्धकः॥२॥मैत्रेय उवाच ॥ परार्द्धसंख्यां भगवन्ममाचक्ष्व यया तु सः ॥ द्विगुणीकृतया ज्ञेयः प्राकृतः प्रतिसंचरः॥३॥श्रीपराशर उवाच ॥स्थानात्स्थानं दशगुणमेकस्माद्गुण्यते द्विज॥ततोष्टादशमे भागे परार्द्धमभिधीयते॥४॥

॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये षष्ठांशे द्वितीयोऽध्यायः ॥ २ ॥ ॥ १ ॥ ब्राह्म इति ॥ प्राकृतो द्विपरार्द्धक इति जल्पनात् परार्द्धद्वयात्मके ब्रह्मायुषि पूर्णे प्रकृतौ तत्कार्यस्य लयः प्राकृतः ॥ २ ॥ ३ ॥ स्थानात् स्थानमिति ॥ "एकं दश शतमस्मात्सहस्रमयुतं ततः परं लक्षम् । प्रयुतं कोटिमथार्बुदमब्जं खर्वं ततो निखर्वं च ॥ तस्मान्महासरोजं शंकुं सरितां पतिं ततश्चान्त्यम् । मध्यं परार्द्धमाहुर्यथोत्तरं दशगुणं हि वै तज्ज्ञाः ॥" एवं द्विपरार्द्धमानुषवत्सरे तु महासंहारः ॥ ४ ॥

इदानीं मदुक्तमेतैर्ज्ञातमिति पुनः प्रहस्याह–अपृष्टेनैव व्यासेन कथमेवं निर्णयः कृत इति । विस्मयेनोत्फुल्ले नयने येषां तान् ॥ ३२ ॥ ३३ ॥ उक्तमर्थं निगमयति ॥ स्वल्पेनेत्यादिचतुर्भिः–स्वल्पेनेति ॥ आत्मनो हरेः । गुणा एवांभांसि तैः । अभिक्षालितमखिलं किल्बिषं येषां तैः कर्तृभिः । धर्मः सिध्यति ॥ ३४ ॥ ३५ ॥ ३६ ॥ भवद्भिरिति ॥ यदभिप्रेतं ज्ञातुमिष्टम् ॥ ३७ ॥ ३८ ॥३९॥ पुनः प्रासंगिकं परिसमाप्य प्रस्तुतमनुसंधत्ते यच्चाहमिति । अन्तरालां ब्रह्मणो दिनेदिने भवाम् ॥ ४० ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां षष्ठांशे द्वितीयोऽध्यायः ॥ २ ॥ ॥ सर्वेषामिति ॥ प्रतिसंचरः प्रलयः ॥ १ ॥ ब्राह्म इति ॥ प्राकृतो द्विपरार्धक इति, द्विगुणे परार्द्धे ब्रह्मायुःसमाप्तौ भगवतः प्रकृतौ तत्कार्यस्य लयः प्राकृतः ॥ २ ॥ प्रथमांशे परार्धमानमुक्तमेव तथापि किं तदेव मानं परार्द्धस्य उत प्रकारान्तरमप्यस्तीत्याशयेन पुनः पृच्छति–परार्धेति ॥ ३ ॥ प्रकारान्तरमप्यस्तीत्याह–स्थानात्स्थानमिति ॥ यथाह वायुः–"कोटिकोटिसहस्राणि परार्धमिति कीर्त्यते । परार्धद्विगुणं चाऽपि परमाहुर्मनीषिणः ॥ स्थानं दशगुणं विद्यादेकं दशशतं

१ ततो मध्यम् । अन्त्यं परार्द्धम्–इति क्वचित्पाठः प्रामादिकः ।

परार्द्धद्विगुणं यत्तु प्राकृतस्स लयो द्विज ॥ तदाऽव्यक्तेखिलं व्यक्तं स्वहेतौ लयमेति वै ॥ ५ ॥ निमेषो मानुषो योऽसौ मात्रामात्राप्रमाणतः॥ तैः पंचदशभिः काष्ठा त्रिंशत्काष्ठा कला स्मृता ॥ ६ ॥ नाडिका तु प्रमाणेन सा कला दश पंच च ॥ ७ ॥ उन्मानेनांभसस्सा तु पलान्यर्द्ध त्रयोदश ॥ मागधेन तु मानेन जलप्रस्थस्तु स स्मृतः ॥ हेममाषैः कृतच्छिद्रैश्चतुर्भिश्चतुरंगुलैः ॥ ८ ॥

॥ ५ ॥ निमेष इत्यादि ॥ यः प्रागुक्तो निमेषः असौ मात्रेत्युच्यते मात्राप्रमाणत्वात् । एकमात्रलघ्वक्षरोच्चारणकालसंमितो ह्यसौ ॥ ६ ॥ ७ ॥ उन्मानेनेति ॥ तुलया मितस्यांभसोर्द्धत्रयोदशपलानि, अर्द्धं त्रयोदशं येषां तानि अर्द्धत्रयोदश सार्द्धद्वादशेत्यर्थः । सा नाडिका उपचारात्तैर्नाडिका ज्ञातव्या इत्यर्थः कथमित्याह--हेमेति । माषः पंचगुंजामानम् । जलस्यैतत्सार्द्धं पलद्वादशकं मगधदेश्यं प्रस्थं पूरयति । स च प्रस्थश्चतुर्गुणस्सन्नाडीज्ञापक इति शेषः । यथाह वायुः--"उन्मानेनांभसश्चापि पलान्यर्द्धत्रयोदश । मागधेन तु मानेन जलप्रस्थो विधीयते ॥ एते चाप्युदकप्रस्थाश्चत्वारो नाडिका घटः । हेममाषैः कृतच्छिद्रश्चतुर्भिश्चतुरंगुलैः" इति । एवं चतुर्माससुवर्णरचितचतुरंगुलसूचीकृताधश्छिद्रादाढकजलपूर्णात्पंचाशत्परिमाणाद्घटात्तच्छिद्रेण पंचाशत्पलं जलं यावता कालेन निस्सरति तावत्कालो नाडीत्युक्तं भवति । अथ वा अहोरात्रेण जलस्य पूरणं निस्सरणं वा षष्टिवारं यथा स्यात् तथा तत्पात्रमानं कार्यम् । अन्ये तु चतुर्माषहेमनिर्मितया चतुरंगुलया सूच्या कृतच्छिद्रे सार्द्धद्वादशपले ताम्रपात्रे तत्प्रमाणं जलं तच्छिद्रेण यावता काले प्रविशति स काल एका नाडिका तानि पलानि मागधमानेन जलप्रस्थ इति वर्णयंति । कृतच्छिद्रैरिति च पठंति । तत्रायमन्वयः--सा नाडिका चतुर्भिर्हेममाषैः कृतच्छिद्रैर्निष्पन्नान्यंभसोर्द्धत्रयोदशपलानीति ॥ ८ ॥

ततः । सहस्रमयुतं तस्मान्नियुतं प्रयुतं ततः ॥ अर्बुदं न्यर्बुदं चैव वृंदं चैव ततः परम् । खर्वं चैव निखर्वं च शंखं पद्मं तथैव च ॥ समुद्रो मध्यमंतश्च परार्धं परमेव च । एवमष्टादशैतानि पदानि गणनाविधौ ॥ कल्पसंख्याप्रवृत्तस्तु परार्धो ब्रह्मणः स्मृतः । तावच्छेषोऽस्य कालस्य तदन्ते प्रतिसृज्यते " इति । एकं दशगुणं दश, दश दशगुणं शतम्, शतं दशगुणं सहस्रमित्येवमेकस्थानादीनां मानतो वृद्ध्वा अष्टादशस्थाने परार्धं भवति कल्पाश्चात्र संख्येयाः, "कल्पसंख्याप्रवृत्तस्तु परार्धो ब्रह्मणः स्मृतः ।" इति वायूक्तेः ॥ ततश्च कल्पानां कोटिकोटिसहस्राणि परार्धम् । तद्द्विगुणं परं ब्रह्मायुरित्युक्तं भवति । यत्तूक्तं प्रथमांशे "निजेन तस्य मानेन चायुर्वर्षशतं स्मृतम् । तत्पराख्यं तदर्धं तु परार्धमभिधीयते ॥ एवं तु ब्रह्मणो वर्षमेवं वर्षशतं स्मृतम्" इत्यादि । तस्मिन्पक्षे कल्पानां षट्त्रिंशत्सहस्राणि ब्रह्मण आयुरित्युक्तं स्यात् । अनयोश्च पक्षयोर्महाकल्पभेदेन व्यवस्था । यद्वा--यथोक्तकल्पशब्देन लक्षणया तदंशभूतदिव्यमानुषवर्षादिभिः परार्धमानेन विरोध इति संपादनीयम् ॥ ४ ॥ ५ ॥ नैमित्तिकं लयं प्रपंचयिष्यन्निमेषादिक्रमेण प्रथमांशोक्तमेव कल्पप्रमाणमनुसारयति--निमेष इत्यादिसप्तभिः॥ निमेष इति ॥ मात्रैव मात्रा सैव प्रमाणं यस्य सः एकमात्रलघ्वक्षरोच्चारणमात्रकालसम्मितो निमेषः "निमेषकालतुल्यो हि मात्रा लघ्वक्षरं च यत् ।" इति ब्रह्माण्डोक्तेः ॥ ६ ॥ ७ ॥ नाडिकाज्ञानोपायमाह उन्मानेनेत्यादिनार्धेन॥ उन्मानेनेति ॥ अंभसः उन्मानेन उन्मीयते अनेनेत्युन्मानं पात्रम् । अर्धोनानि त्रयोदश सार्धद्वादशेत्यर्थः । उन्मानरूपेण घटितानि सार्धद्वादशपलानि सा नाडिका । सार्धद्वादशपलताम्रनिर्मितपात्रान्नाडिका ज्ञातव्येत्यर्थः । किंप्रमाणं तत्पात्रं कार्यं तत्राऽऽह--मागधेनेति ॥ "मागधेन प्रमाणेन जलप्रस्थस्तु स स्मृतः" इति । सार्धद्वादशपलजलेन हि मगधदेश्यः प्रस्थः

नाडिकाभ्यामथ द्वाभ्यां मुहूर्त्तो द्विजसत्तम ॥ अहोरात्रं मुहूर्त्तास्तु त्रिंशन्मासो दिनैस्तथा ॥९॥ मासैर्द्वादशभिर्वर्षमहोरात्रं तु तद्दिवि ॥ त्रिभिर्वर्षशतैर्वर्षं षष्ट्या चैवासुरद्विषाम् ॥१०॥ तैस्तु द्वादशसाहस्रैश्चतुर्युगमुदाहृतम् ॥ चतुर्युगसहस्रं तु कथ्यते ब्रह्मणो दिनम् ॥११॥ स कल्पस्तत्र मनवश्चतुर्दश महामुने ॥ तदंते चैव मैत्रेय ब्राह्मो नैमित्तिको लयः ॥ १२ ॥ तस्य स्वरूपमत्युग्रं मैत्रेय गदतो मम ॥ शृणुष्व प्राकृतं भूयस्तव वक्ष्याम्यहं लयम् ॥१३॥ चतुर्युगसहस्रांते क्षीणप्राये महीतले ॥ अनावृष्टिरतीवोग्रा जायते शतवार्षिकी ॥१४॥ ततो यान्यल्पसाराणि तानि सत्त्वान्यशेषतः ॥ क्षयं यांति मुनिश्रेष्ठ पार्थिवान्यनुपीडनात् ॥१५॥ ततः स भगवान्विष्णू रुद्ररूपधरोऽव्ययः ॥ क्षयाय यतते कर्त्तुमात्मस्थास्सकलाः प्रजाः ॥१६॥ततस्स भगवान्विष्णुर्भानोस्सप्तसु रश्मिषु॥ स्थितः पिबत्यशेषाणि जलानि मुनिसत्तम॥१७॥पीत्वांभांसि समस्तानि प्राणिभूमिगतान्यपि ॥ शोषं नयति मैत्रेय समस्तं पृथिवीतलम् ॥१८॥ समुद्रान्सरितः शैलनदीप्रस्रवणानि च ॥ पातालेषु च यत्तोयं तत्सर्वं नयति क्षयम् ॥ १९ ॥ ततस्तस्यानुभावेन तोयाहारोपबृंहिताः ॥ त एव रश्मयस्सप्त जायंते सप्त भास्कराः ॥ २० ॥ अधश्चोर्ध्वं च ते दीप्तास्ततस्सप्त दिवाकराः ॥ दहंत्यशेषं त्रैलोक्यं सपातालतलं द्विज ॥ २१ ॥ दह्यमानं तु तैर्दीप्तैस्त्रैलोक्यं द्विज भास्करैः ॥ साद्रिनद्यर्णवाभोगं निस्स्नेहमभिजायते ॥ २२ ॥

॥९॥१० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ तत इति ॥ क्षयाय रुद्ररूपधरो भूत्वा ॥ १६ ॥ तत इति ॥ सप्त रश्मयः "सुषुम्णो हरिकेशश्च विश्वकर्मा तथैव च । विश्वव्यचा स्वधा संयद्वसुरर्वाग्वसुस्तथा" इत्युक्ताः ॥ १७ ॥ १८ ॥ १९ ॥ तत इति ॥ भास्करा आरोगो भ्राज इत्यादयः ॥२०॥२१॥२२॥

पूर्यते तावत्प्रमाणं पात्रं कार्यमित्यर्थात्सिद्धम् । ननु तथाऽपि पात्रेण कथं नाडिकाज्ञानं क्रियापरिच्छेद्यत्वात्कालस्येत्याशंक्य क्रियासिद्धये प्रस्थं विशिनष्टि—हेमेति । माषः पंचगुंजः हेममाषैश्चतुर्भिः चतुरंगुलशलाकारूपेण कृतैः कृतच्छिद्रः । तदुक्तं भवति—सार्धद्वादशपलताम्रमयं मागधप्रस्थसम्मितम् ऊर्ध्वायनं पात्रं चतुर्माषचतुरंगुलहेमशलाकया कृतच्छिद्रं जले स्थापितं तेन च्छिद्रेण यावता कालेन पूर्यते तावत्कालो नाडिकेति ॥ तथा च शुकः—"द्वादशार्धपलोन्मानं चतुर्भिश्चतुरंगुलैः । स्वर्णमाषैः कृतच्छिद्रं यावत्प्रस्थं जलप्लुतम् ॥" इति ॥ ८ ॥ नाडिकाभ्यामिति ॥ तथा त्रिंशता दिनैः मास इत्यर्थः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ नैमित्तिकलयप्रकारमाह—तस्य स्वरूपमित्यादिना यावदध्यायपरिसमाप्ति ॥ १३ ॥ चतुर्युगेति ॥ क्षीणप्राये दुर्भिक्षादिभिः ॥ १४ ॥ १५ ॥ तत इति ॥ क्षयाय रुद्ररूपधरः सन् । आत्मस्थाः स्वस्मिँल्लीनाः प्रजाः कर्तुं यतते प्रयतते ॥ १६ ॥ तत इति ॥ सप्त रश्मयः पूर्वोक्ताः । "सुषुम्नो हरिकेशश्च विश्वकर्मा तथैव च । विश्वव्यचा स्वधा संयद्वसुरर्वाग्वसुस्तथा" इति ॥ १७ ॥ पीत्वेति ॥ प्राणिगतानि रक्तवसादीनि । भूमिगतानि तटाकादिस्थितानि ॥ १८ ॥ १९ ॥ तत इति ॥ भास्कराः सप्त ॥ "आरोगो भ्राजः पटरः पतंगः स्वर्णरोऽज्योतिषीमान् विभास ।" इति सप्त सूर्याः श्रुत्युक्ताः ॥ २० ॥ २१ ॥ दह्यमानमिति ॥ आभोगो विस्तारः ।

ततो निर्दग्धवृक्षांबुत्रैलोक्यमखिलं द्विज ॥ भवत्येषा च वसुधा कूर्मपृष्ठोपमाकृतिः ॥ २३ ॥ ततः कालाग्निरुद्रोऽसौ भूत्वा सर्वहरोऽनलः ॥ शेषाहिश्वाससंभूतः पातालानि दहत्यधः ॥ २४ ॥ पातालानि समस्तानि स दग्ध्वा ज्वलनो महान् ॥ भूमिमभ्येत्य सकलं बभस्ति वसुधातलम् ॥ २५ ॥ भुवर्लोकं ततस्सर्वं स्वर्लोकं च सुदारुणः ॥ ज्वालामालामहावर्त्तस्तत्रैव परिवर्त्तते ॥ २६ ॥ अंबरीषमिवाभाति त्रैलोक्यमखिलं तदा ॥ ज्वालावर्त्तपरीवारमुपक्षीणचराचरम् ॥ २७ ॥ ततस्तापपरीतास्तु लोकद्वयनिवासिनः ॥ कृताधिकारा गच्छंति महर्लोकं महामुने ॥ २८ ॥

॥ २३ २४ ॥ पातालानीति ॥ बभस्ति भक्षयति "भस भक्षणदीप्त्योः" ॥ २५ ॥ २६ ॥ अंबरीषमिवेति ॥ अंबरीषं भर्जनभांडम् ॥ २७ ॥ तत इति ॥ कृताधिकारा मन्वादयः । दशावृत्त्या सप्तपातालानि त्रयो लोका इति दश तेष्वावृत्त्या वृत्त्यभावेन । यद्वा—तापदशाया आवृत्त्या । परैषिणः परस्थानैषिणः । अथ वा त्रैलोक्ये ये कृताधिकारा मन्वाद्याः ते हृताधिकारा भोगात्प्रक्षीणतद्देशभोग्यकर्माणः संतो महर्लोकं प्राप्य तस्मादपि तप्तास्तल्लोकवासिभिस्सह सशरीराः जनलोकं यांति । तेषां मध्ये ये परैषिणः परं प्राप्तुमिच्छवस्ते दशवारावृत्त्यैव क्रमात्तपस्सत्यप्राप्तिद्वारा ततः परमीश्वरं विशंति । अन्ये त्रैलोक्यस्था जीवाः स्वात्मनि संलीयंते । यथाह वायुः--"पितृभिर्मनुभिश्चैव साध्यैस्सप्तर्षिभिस्तथा । यज्वानश्चैव येप्यन्ये तद्भक्ताश्च तैस्सह ॥ महर्लोकं गमिष्यंति त्यक्त्वा त्रैलोक्यमीश्वराः । महर्लोकं परित्यज्य गणास्तेऽपि चतुर्दश ॥ सशरीराश्च यांत्यन्ये जनलोकं सहाऽनुगैः । एवं देवास्सपितर ऋषयो मानवाश्च ये ॥ मित्रैस्सहोर्ध्वं गच्छंति व्यावर्त्तंते च तैस्सह । जनलोकात्सुरास्सर्वे दशकल्पान्पुनःपुनः ॥ पर्यायकाले संप्राप्ते संभूतानि धनेष्विह । अवश्यभाविनार्थेन संबध्यंते तथा तु ते ॥ निवर्त्तंते तथा वृत्त्या तेषां सद्यो न निस्तरः । महर्जनं चापि जनात्तपं च ह्येकांततस्तानि भवंति सत्ये । मन्वंतराणां परिवर्त्तनानि मुंचंति सत्येन तपोपराणि ॥ तपोभियोगाद्विषयप्रहाणाद्विशंति तेऽपीश्वरमेव देवम्" इति । "अथ आत्मनि महातेजास्सर्वमाधाय सर्वकृत् । ततस्स रात्रिं स्वपिति तमस्येकार्णवे जले" इति ॥ हृताधिकारा

निस्नेहमतिरूक्षम् ॥ २२ ॥ २३ ॥ २४ ॥ पातालानीति ॥ हिनस्ति[१] भस्मीकरोति ॥ २५ ॥ २६ ॥ २७ ॥ तत इति ॥ तत इत्यादिश्लोकद्वयस्यैकान्वयः, दशावृत्त्या गभस्तिगतस्वीयनियोगदशायाः तत्रत्यफलभोगाऽवस्थायाः । आवृत्त्या परिवृत्त्या । परैषिण ऊर्ध्वलोकैषिणः । अन्ये त्वाहुः—त्रैलोक्येऽपि ये कृताऽधिकारा मन्वाद्याः, ते हृताऽधिकारा भोगप्रक्षीणकर्माणः सन्तः महर्लोकं प्राप्य तस्मादभितप्ताः तद्वासिभिः सह सगणं जनं यान्ति । तेषां मन्वादीनां मध्ये ये परैषिणः परवस्तुप्राप्तुमिच्छन्तः ते दशवारमावृत्त्या आक्रम्य तद्व्याप्तिद्वारा ततः परमीश्वरं विशन्ति । अन्ये तु त्रैलोक्यस्था जीवाः आत्मनि सँल्लीयन्ते । यथाऽऽह वायुः—

१ हिनस्ति—इ०पा० ।

तस्मादपि महातापतप्ता लोकात्ततः परम् ॥ गच्छंति जनलोकं ते दशावृत्त्या परैषिणः ॥ २९ ॥ ततो दग्ध्वा जगत्सर्वं रुद्ररूपी जनार्दनः ॥ मुखनिश्वासजान्मेघान्करोति मुनिसत्तम ॥ ३० ॥ ततो गजकुलप्रख्यास्तडित्वंतोऽतिनादिनः ॥ उत्तिष्ठंति तथा व्योम्नि घोरास्संवर्त्तका घनाः ॥ ३१ ॥ केचिन्नीलोत्पलश्यामाः केचित्कुमुदसन्निभाः ॥ धूम्रवर्णा घनाः केचित्केचित्पीताः पयोधराः ॥ ३२ ॥ केचिद्रासभवर्णाभा लाक्षारसनिभास्तथा ॥ केचिद्वैडूर्यसंकाशा इन्द्रनीलनिभाः क्वचित् ॥ ३३ ॥ शंखकुंदनिभाश्चान्ये जात्यंजननिभाः परे ॥ इंद्रगोपनिभाः केचित्ततश्शिखिनिभास्तथा ॥ ३४ ॥ मनश्शिलाभाः केचिद्वै हरितालनिभाः परे ॥ चाषपत्रनिभाः केचिदुत्तिष्ठंते महाघनाः ॥ ३५ ॥ केचित्पुरवराकाराः केचित्पर्वतसन्निभाः ॥ कूटागारनिभाश्चान्ये केचित्स्थलनिभा घनाः ॥ ३६ ॥ महारावा महाकायाः पूरयंति नभःस्थलम् ॥ वर्षंतस्ते महासारास्तमग्निमतिभैरवम् ॥ शमयंत्यखिलं विप्र त्रैलोक्यांतरधिष्ठितम् ॥ ३७ ॥ नष्टे चाग्नौ च सततं वर्षमाणा ह्यहर्निशम् ॥ प्लावयंति जगत्सर्वमंभोभिर्मुनिसत्तम ॥ ३८ ॥ धाराभिरतिमात्राभिः प्लावयित्वाऽखिलां भुवम् ॥ भुवर्लोकं तथैवोर्द्ध्वं प्लावयंति हि ते द्विज ॥ ३९ ॥ अंधकारीकृते लोके नष्टे स्थावरजंगमे ॥ वर्षंति ते महामेघा वर्षाणामधिकं शतम् ॥ ४० ॥ एवं भवति कल्पांते समस्तं मुनिसत्तम ॥ वासुदेवस्य माहात्म्यान्नित्यस्य परमात्मनः ॥ ४१ ॥ इति श्रीविष्णुमहापुराणे षष्ठांशे तृतीयोऽध्यायः ॥ ३ ॥

गच्छंतीति च पाठः ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये षष्ठांशे तृतीयोऽध्यायः ॥ ३ ॥ ॥ छ ॥

"पितृभिर्मनुभिश्चैव साध्यैः सप्तर्षिभिस्तथा । यज्वानश्चैव येऽप्यन्ये तद्भक्ताश्चैव तैः सह ॥ महर्लोकं गमिष्यन्ति त्यक्त्वा त्रैलोक्यमीश्वराः । महर्लोकं परित्यज्य गणास्ते वै चतुर्दश ॥ सशरीराश्च यान्त्यन्ये जनलोकं सहानुगैः । एवं देवाः सपितर ऋषयो मानवाश्च ये ॥ मित्रैः सहोर्द्ध्वं गच्छन्ति व्यावर्त्तंते च तैः सह । जनलोकात्सुराः सर्वे दश कल्पान्पुनःपुनः ॥ पर्यायकाले संप्राप्ते संभूता निधनेष्विह । अवश्यभाविनार्थेन संबध्यन्ते तथा मुने ॥ निवर्त्तन्ते तथा वृत्तौ तेषां सद्यो न निस्तरः ॥ महर्जनं चापि जनात्तपं च एकान्ततस्तानि भयन्ति सत्ये । मन्वंतराणां परिवर्तनानि मुंचंति सत्येन तपोविराणि ॥ तपोऽभियोगाद्विषयप्रहाणाद्विशंति तेऽपीश्वरमेव देवम् ॥ अथात्मनि महातेजाः सर्वमास्थाय सर्वकृत् । ततो हि रात्रिं स्वपिति तमस्येकार्णवे जले" इति ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ मनःशिलेति ॥ चाषो नीलपक्षशकुनिः ॥ ३५ ॥ केचिदिति ॥ कूटागारं गृहविशेषः ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां षष्ठांशे तृतीयोऽध्यायः ॥ ३ ॥

॥ श्रीपराशर उवाच ॥ सप्तर्षिस्थानमाक्रम्य स्थितेंऽभसि महामुने ॥ एकार्णवं भवत्येतत्त्रैलोक्यमखिलं ततः ॥ १ ॥ मुखनिश्वासजो विष्णोर्वायुस्ताञ्जलदांस्ततः ॥ नाशयन्वाति मैत्रेय वर्षाणामपरं शतम् ॥ २ ॥ सर्वभूतमयोऽचिंत्यो भगवान्भूतभावनः ॥ अनादिरादिर्विश्वस्य पीत्वा वायुमशेषतः ॥ ३ ॥ एकार्णवे ततस्तस्मिञ्छेषशय्यागतः प्रभुः ॥ ब्रह्मरूपधरश्शेते भगवानादिकृद्धरिः ॥ ४ ॥ जनलोकगतैस्सिद्धैस्सनकाद्यैरभिष्टुतः ॥ ब्रह्मलोकगतैश्चैव चिंत्यमानो मुमुक्षुभिः ॥ ५ ॥ आत्ममायामयीं दिव्यां योगनिद्रां समास्थितः ॥ आत्मानं वासुदेवाख्यं चिंतयन्मधुसूदनः ॥ ६ ॥ एष नैमित्तिको नाम मैत्रेय प्रतिसंचरः ॥ निमित्तं तत्र यच्छेते ब्रह्मरूपधरो हरिः ॥ ७ ॥ यदा जागर्त्ति सर्वात्मा स तदा चेष्टते जगत् ॥ निमीलत्येतदखिलं मायाशय्यां गतेऽच्युते ॥ ८ ॥ पद्मयोनेर्दिनं यत्तु चतुर्युगसहस्रवत् ॥ एकार्णवीकृते लोके तावती रात्रिरिष्यते ॥ ९ ॥ ततः प्रबुद्धो रात्र्यंते पुनस्सृष्टिं करोत्यजः ॥ ब्रह्मस्वरूपधृग्विष्णुर्यथा ते कथितं पुरा ॥१०॥ इत्येष कल्पसंहारोऽवांतरप्रलयो द्विज ॥ नैमित्तिकस्ते कथितः प्राकृतः शृण्वतः परम् ॥ ११ ॥ अनावृष्ट्यादिसंपर्कात्कृते संक्षालने मुने ॥ समस्तेष्वेव लोकेषु पातालेष्वखिलेषु च ॥ १२ ॥ महदादेर्विकारस्य विशेषांतस्य संक्षये ॥ कृष्णेच्छाकारिते तस्मिन्प्रवृत्ते प्रतिसंचरे ॥१३॥

॥ १ ॥ २ ॥ ३ ॥ एकार्णव इति ॥ ब्रह्मरूपधरः इति प्रथमांशे व्याख्यातं ननूत्तरत्र ब्रह्मादीनां शुभाश्रयत्वं निषिध्यते तत्कथमत्र ब्रह्मरूपधरस्य मुमुक्षुभिश्चिंत्यमानत्वम् उच्यते। धारणासिध्यर्थं तत्र शुभाश्रय उक्तः निष्पन्नसमाधीनां तु जगद्रूपतया भगवदनुसंधानमविरुद्धं यथा "मत्तस्सर्वमहं सर्वं, अहंमनुरभवम्" इत्यादि किं च परशुरामकल्क्यादिवदनुप्रवेशावतारत्वाच्चेतनाविरोधः ॥ ४ ॥ ५ ॥ आत्मेति ॥ आत्ममायामयीं मूलप्रकृत्यभिमानिदेवताम् । योगनिद्रां योगरूपां निद्राम् । एतद्विवृणोति आत्मानं चिंतयन्निति यत् ॥ ६ ॥ एष इति ॥ निमित्तं तत्रेति । तत्र ब्रह्मणो दिनांते ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ अनावृष्टीत्यादि ॥ समस्तेषु लोकेषु पातालेषु च संक्षालने नाशे कृते ॥ १२ ॥ महदादेरिति ॥ तस्मिन्प्राकृते प्रतिसंचरे महदादेर्विशेषांतस्य विकारस्य संक्षये च प्रवृत्ते प्रस्तुते ॥ १३ ॥



तदेवं नैमित्तिकं त्रैलोक्यप्रलयं निरूप्य तत्कालीनां स्थितिं निरूपयन्नाह–सप्तर्षिस्थानमित्यादिना अनावृष्ट्येत्यतः। प्राक्तनेन ग्रन्थेन ॥ १ ॥ २ ॥ ३ ॥ एकार्णव इति ॥ शेष एव शय्या तां गतः शेते ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ यदेति॥ स यदा जागर्त्ति तदा जगच्चेष्टते सृष्ट्युन्मुखं भवति ॥ ८ ॥ कियन्तं कालं शेते कदा वा प्रबुध्यते। स जगत्पतिरित्यत्राह–पद्मयोनेरित्यादिद्वाभ्याम् ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ महदादेरिति ॥

आपो ग्रसंति वै पूर्वं भूमेर्गंधात्मकं गुणम् ॥ आत्तगंधा ततो भूमिः प्रलयत्वाय कल्पते ॥ १४ ॥ प्रणष्टे गंधतन्मात्रे भवत्युर्वी जला
त्मिका ॥ आपस्तदा प्रवृद्धास्तु वेगवत्यो महास्वनाः ॥ १५ ॥ सर्वमापूरयंतीदं तिष्ठंति विचरंति च ॥ सलिलेनोर्मिमालेन आलोकांता
त्समंततः ॥ १६ ॥ अपामपि गुणो यस्तु ज्योतिषा पीयते तु सः ॥ नश्यंत्यापस्ततस्ताश्च रसतन्मात्रसंक्षयात् ॥ १७ ॥ ततश्चापो हृतरसा
ज्योतिषं प्राप्नुवंति वै ॥ अग्न्यवस्थे तु सलिले तेजसा सर्वतो वृते ॥ १८ ॥ स चाग्निः सर्वतो व्याप्य चादत्ते तज्जलं तथा ॥ सर्वमापूर्यतेऽर्चि
र्भिस्तदा जगदिदं शनैः ॥ १९ ॥ अर्चिर्भिस्संवृते तस्मिंस्तिर्यगूर्ध्वमधस्तदा ॥ ज्योतिषोऽपि परं रूपं वायुरत्ति प्रभाकरम् ॥ २० ॥ प्रलीने
च ततस्तस्मिन्वायुभूतेऽखिलात्मनि ॥ प्रनष्टे रूपतन्मात्रे हृतरूपो विभावसुः ॥ २१ ॥ प्रशाम्यति तदाज्योतिर्वायुर्दोधूयते महान् ॥ निरा
लोके तथा लोके वाय्ववस्थे च तेजसि ॥ २२ ॥ ततस्तु मूलमासाद्य वायुस्संभवमात्मनः ॥ ऊर्ध्वं चाधश्च तिर्यक्च दोधवीति दिशो दश ॥
॥ २३ ॥ वायोरपि गुणं स्पर्शमाकाशो ग्रसते ततः ॥ प्रशाम्यति ततो वायुः खं तु तिष्ठत्यनावृतम् ॥ २४ ॥ अरूपरसमस्पर्शमगंधं न च
मूर्त्तिमत्॥ सर्वमापूरयच्चैव सुमहत्तत्प्रकाशते॥२५॥परिमंडलं च सुषिरमाकाशं शब्दलक्षणम् ॥ शब्दमात्रं तदाकाशं सर्वमावृत्य तिष्ठति ॥२६॥
ततश्शब्दगुणं तस्य भूतादिर्ग्रसते पुनः ॥ भूतेंद्रियेषु युगपद्भूतादौ संस्थितेषु वै ॥ अभिमानात्मको ह्येष भूतादिस्तामसस्स्मृतः ॥ २७ ॥

आप इत्यादि ॥ प्रलयत्वाय प्रकृष्टो लयो यस्याः सा प्रलया तद्भावाय ॥ १४ ॥ प्रणष्ट इति ॥ अत्र तन्मात्रग्रहणं विशेषस्याप्युपलक्षणम् ॥ १५ ॥ सर्वमिति ॥
सलिलेन ओघेन आलोकांतात् लोकांतं यावत् । आलोकस्तेजो वा ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ प्रशाम्यतीति ॥ अज्योतिरिति पदच्छेदः ।
तच्च वायुविशेषणम् । ज्योतिर्विरोधी ॥ २२ ॥ तत इति ॥ तुमुलं सशब्दम् । आत्मनः संभवं खम् ॥ २३ ॥ २४ ॥ अरूपमिति ॥ न च मूर्त्तिमत् निरवय
वम् ॥ २५ ॥ २६ ॥ तत इति अहंकारावच्छिन्नतया परिमाणनिषेधायोगात् भूतादिशब्देन त्रिविधाहंकारस्य ग्रहणम् ॥ २७ ॥

महदादेर्विशेषान्तस्य संक्षये निमित्ते प्रतिसंचरे प्रवृत्त इत्यर्थः ॥ १३ ॥ आप इति ॥ आत्तः अपहृतो गन्धो यस्याः सा । आत्मगन्धेति पाठेऽप्येवमेवार्थः । प्रलयत्वाय लीनत्वात्सलिलेनैव लोका व्याप्ता
आसन्निति तृतीयेनान्वयः ॥ १४ ॥ १५ ॥ सर्वमिति ॥ सलिलेनैवोर्मिता व्याप्ता लोकाः । समंतत इति च पाठः ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ अर्चिर्भिरिति ॥ प्रभाकरं प्रकाशकरं रूपं वायुरत्ति
ग्रसते ॥ २० ॥ २१ ॥ प्रशाम्यतीति ॥ तदा आज्योतिः ज्योतिर्युक्तः वायुर्दोधूयते प्रचलति ॥ २२ ॥ तत इति ॥ तुमुलं सशब्दम् । आत्मनः सम्भवं कारणमाकाशम् आसाद्य पूर्वाद्याः दश दिशोपि दोधवीति
कंपयति ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ तत इति ॥ भूतादिग्रसत इत्यनेनात्र न तामसमात्रस्य ग्रहणं किं तु तमःप्रधानत्वेन सामान्यतोऽहंकारमात्रस्य अत एव भूतानामिंद्रियाणां च युगपत्तत्र लयोक्तेर्देवानाम

भूतादिं ग्रसते चापि महान्वै बुद्धिलक्षणः ॥ २८ ॥ उर्वी महांश्च जगतः प्रांतेंतर्बाह्यतस्तथा ॥ २९ ॥ एवं सप्त महाबुद्धे क्रमा त्प्रकृतयस्स्मृताः ॥ प्रत्याहारे तु तास्सर्वाः प्रविशंति पुरस्परम् ॥ ३० ॥ येनेदमावृतं सर्वमंडमप्सु प्रलीयते ॥ सप्तद्वीपसमुद्रांतं सप्तलोकं सप र्वतम् ॥ ३१ ॥ उदकावरणं यत्तु ज्योतिषा पीयते तु तम् ॥ ज्योतिर्वायौ लयं याति यात्याकाशे समीरणः ॥ ३२ ॥ आकाशं चैव भूतादिर्ग्र सते तं तथा महान् ॥ महांतमेभिस्सहितं प्रकृतिर्ग्रसते द्विज ॥ ३३ ॥ गुणसाम्यमनुद्रिक्तमन्यूनं च महामुने ॥ प्रोच्यते प्रकृतिर्हेतुः प्रधानं कारणं परम् ॥ ३४ ॥ इत्येषा प्रकृतिस्सर्वा व्यक्ताव्यक्तस्वरूपिणी ॥ व्यक्तस्वरूपमव्यक्ते तस्मान्मैत्रेय लीयते ॥ ३५ ॥ एकश्शुद्धोऽक्षरो नित्यस्सर्वव्यापी तथा पुमान् ॥ सोप्यंशस्सर्वभूतस्य मैत्रेय परमात्मनः ॥ ३६ ॥

॥ २८ ॥ उर्वीत्यादि ॥ उर्वी महांश्च । अंतः अंडस्यांतः । स्थितस्य जगतः प्रांते चरमकोटयां प्रथमकोटयां च तथा बाह्यतः अंडाद्बहिरपि तथा पृथिव्येक प्रांते महानितरप्रांते ॥ २९ ॥ एवमिति ॥ अयमावरणलयविषयः श्लोकः । महदादयः सप्तक्रमादहंकारादीनां प्रकृतयः स्मृताः ताः प्रत्याहारे तु परस्परं स्वंस्वं कारणम् एवं पूर्वोक्तलयक्रमेण प्रविशंति ॥ ३० ॥ एतदेव प्रपंचयति—येनेति ॥ एवंभूतमिदमंडं येनावृतं तत्पृथिव्यावरणमप्सु लीयते ॥ ३१ ॥ ३२ ॥ ३३ ॥ ॥ ३४ ॥ इत्येषा प्रकृतिरिति । व्यक्तावस्थमपि प्रकृतिद्रव्यमेव न द्रव्यांतरं तस्माद्व्यक्तमव्यक्ते लीयते । तस्या (वा) इति पाठे स्वरूपमित्यनुषंगः ॥ ३५ ॥ एक इति ॥ एकः शुद्धः प्रकृतिवदनेकत्वानर्हः वैचित्र्यानर्हश्च । अनेकत्वबोधकवैचित्र्यार्हसत्त्वादिगुणमयत्वाभावात् अत एकाक्षरो नित्यश्च । तत्र हेतुमाह--सर्वव्यापीति । सूक्ष्म त्वात्प्रकृतेरपि व्यापनस्वभावः सोऽपि पुमान् परमात्मनोंशः । यथा प्रकृतिः अत्र लयस्थानत्वेन प्रकृतेः प्रकृतत्वात् प्रसंगात् पुरुषपरमात्मनोः प्रस्तावः ॥ ३६ ॥

ष्युपलक्षगम् । अभिमानविषयाणां भूतादीनां लीनत्वात् केवलाभिमानात्मकस्य चावरणैकभावत्वादेष भूतादिस्तमः प्रधानः स्मृत इत्यर्थः ॥ २७ ॥ भूतादिमिति ॥ बुद्धिलक्षणः सत्त्वप्रधानत्वात् ॥ २८ ॥ यथा सृष्टि क्रमप्रातिलोम्येन पृथिव्यादेर्महत्तत्त्वपर्यंतो लय उक्तः । तथा आवरणेष्वप्ययमेव लयक्रम इति वक्तुं ब्रह्माण्डांतर्वर्त्तिनः कार्यस्य जगतः कोटिं दर्शयति उर्वी महांश्चेति ॥ ब्रह्माण्डस्यांतर्यथा जगतः पृथिवी महत्तत्त्वं च प्रांते आद्यन्तसीम्नोर्भवतः तथा ब्रह्माण्डाद्बाह्यतोपि ॥ २९ ॥ ततः किमत आह—एवमिति ॥ यथा चरमसृष्टां पृथिवीमारभ्य प्रथमसृष्टमहत्तत्त्वपर्यंतं प्रातिलोम्येन स्वस्वकारणे लयमेष्यंति । कारणभूता अपि याः पृथि व्याद्याः सप्त प्रकृतयः ता अपि प्रत्याहारे परस्परं स्वंस्वं कारणं प्रविशंति ॥ ३० ॥ तदाह येनेत्यादित्रिभिः—येनेति ॥ येन सप्तद्वीपादिकमावृतमासीत्तदंडकटाहरूपा पृथिवी स्वावरणरूपास्वप्सु प्रलीयत इत्यर्थः॥३१॥ ॥ ३२ ॥ ३३ ॥ प्रकृतिस्वरूपं दर्शयन् तत्कार्यं तस्मिन् लयमुपसंहरति—गुणसाम्यमित्यादिद्वाभ्याम् ॥ ३४ ॥ इतीति ॥ व्यक्ताव्यक्तस्वरूपिणी कार्यकारणरूपा ॥ ३५ ॥ प्रकृतिपुरुषयोरपि परमात्मनि लयं वक्तुं

न संति यत्र सर्वेशे नामजात्यादिकल्पनाः ॥ सत्तामात्रात्मके ज्ञेये ज्ञानात्मन्यात्मनः परे ॥ ३७ ॥ तद्ब्रह्म परमं धाम परमात्मा स चेश्वरः ॥ स विष्णुस्सर्वमेवेदं यतो नावर्त्तते यतिः ॥ ३८ ॥ प्रकृतिर्या मयाख्याता व्यक्ताव्यक्तस्वरूपिणी ॥ पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ॥ ३९ ॥ परमात्मा च सर्वेषामाधारः परमेश्वरः ॥ विष्णुनामा स वेदेषु वेदांतेषु च गीयते ॥ ४० ॥ प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् ॥ ताभ्यामुभाभ्यां पुरुषैस्सर्वमूर्त्तिस्स इज्यते ॥ ४१ ॥ ऋग्यजुस्सामभिर्मार्गैः प्रवृत्तैरिज्यते ह्यसौ ॥ यज्ञेश्वरो यज्ञपुमान्पुरुषैः पुरुषोत्तमः ॥ ४२ ॥

परमाह—न संतीति ॥ नन्वंशत्ववचनात् पुरुषस्य परमात्मैकद्रव्यत्वं स्यात् नैवं ' समस्तहेयरहितम् ' स सर्वभूतप्रकृतिं विकारान्, विष्णुस्समस्तेंद्रियदेहदेही, क्षेत्रज्ञशक्तिः स्वावेष्टिता, 'नित्यो नित्यानां,' 'पृथगात्मानं प्रेरितारं च मत्वा,' ' उत्तमः पुरुषस्त्वन्यः ' इत्यादिभिस्तयोरत्यंतवैलक्षण्यस्योक्तत्वात् कथमंशत्वमित्याशंक्य "प्रकाशादिवन्नैवं परः" इत्यादिना सूत्रकारः प्रकाशजातिगुणदेहवदात्मनोऽपि शरीरभूतस्य तिष्ठतः परमात्मैकदेहत्वात् अंशत्वमुपपादितवान् सत्तामात्रात्मक इति विकारनिषेधः ज्ञेये ' नारायणं महाज्ञेयम् ' इत्यादिना आत्मनः परे यस्यात्मा शरीरमिति शरीरत्वेनोक्तत्वात् बद्धान्मुक्ताच्चात्मनोत्यंतविलक्षणे प्रकाशतद्वतोरिव जगद्ब्रह्मणोश्शरीरशरीरिभावस्स्वाभाविकः न जीववत्कर्मकृतः । "तत्पुरुषस्य विश्वमाजानमग्रे, वेदात्मशक्तिं स्वाच्छरीरात्" इत्यादेः ॥ ३७ ॥ ३८ ॥ प्रकृतिरित्यादि ॥ प्रकृतेः परमात्मनि लयः पुरुषे लयद्वारा "अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते तमः परे देव एकीभवति" इति श्रुतेः ॥ ३९ ॥ परमात्मेति ॥ "विष्णुनामा स वेदेषु वेदान्तेषु च गीयते" विष्णुनामा स एव परमेश्वरो वेदेषु वेदान्तेषु च सद्ब्रह्मादिशब्दैर्गीयते ॥ ४० ॥ प्रवृत्तमिति ॥ कथमिंद्रादियागैरस्येज्यत्वमित्यत्राह सर्वमूर्त्तिरिति ॥ ४१ ॥ ४२ ॥

तयोस्तदंशत्वमाह—एक इति ॥ सर्वव्यापी प्रकृतेस्तत्कार्यस्य चाधिष्ठाता सोपीत्यपि शब्दात् प्रकृतिरपि सर्वभूतस्य प्रकृत्यादिसर्वात्मकस्य परमात्मनः अंशः ॥ ३६ ॥ कः पुनः परमात्मेत्यत्राह, न संतीत्यादिद्वाभ्याम्—न संतीति ॥ आत्मनः पुरुषात्परे ॥ ३७ ॥ ३८ ॥ प्रकृतिरिति ॥ परमात्मनि पुरुषोत्तमे लीयते लीनावतिष्ठते ॥ ३९ ॥ तस्य तु नास्ति लय इत्याह—परमात्मेति ॥ सर्वेषामाधारः तस्मात्स एव परम ईश्वरः पुरुषोत्तम इत्यर्थः ॥ ४० ॥ तत्प्राप्त्यर्थमेव सर्वसाधनजातमित्याह—प्रवृत्तं चेति ॥ ४१ ॥ कैः कथमिज्यत इत्यत्राह—ऋगित्यादिद्वाभ्याम्—ऋगिति ॥ प्रवृत्तैरविरक्तैः पुरुषैः ऋग्वेदादिविहितैः कर्मभिर्मार्गभूतैः इज्यते ॥ ४२ ॥

ज्ञानात्मा ज्ञानयोगेन ज्ञानमूर्त्तिः स चेज्यते ॥ निवृत्ते योगिभिर्मार्गे विष्णुर्मुक्तिफलप्रदः ॥ ४३ ॥ ह्रस्वदीर्घप्लुतैर्यत्तु किंचिद्वस्त्वभिधीयते ॥ यच्च वाचामविषयं तत्सर्वं विष्णुरव्ययः ॥ ४४ ॥ व्यक्तस्स एव चाव्यक्तस्स एव पुरुषोत्तमः ॥ परमात्मा च विश्वात्मा विश्वरूपधरो हरिः ॥ ४५ ॥ व्यक्ताव्यक्तात्मिका तस्मिन्प्रकृतिस्संप्रलीयते ॥ पुरुषश्चापि मैत्रेय व्यापिन्यव्याहतात्मनि ॥ ४६ ॥ द्विपरार्द्धात्मकः कालः कथितो यो मया तव ॥ तदहस्तस्य मैत्रेय विष्णोरीशस्य कथ्यते ॥ ४७ ॥ व्यक्ते च प्रकृतौ लीने प्रकृत्यां पुरुषे तथा ॥ तत्र स्थिते निशा चास्य तत्प्रमाणा महामुने ॥ ४८ ॥ नैवाहस्तस्य न निशा नित्यस्य परमात्मनः ॥ उपचारस्तथाप्येष तस्येशस्य द्विजोच्यते ॥४९॥ इत्येष तव मैत्रेय कथितः प्राकृतो लयः ॥ आत्यंतिकमथो ब्रह्मन्निबोध प्रतिसंचरम् ॥ ५० ॥ इति श्रीविष्णुमहापुराणे षष्ठांशे चतुर्थोऽध्यायः ॥ ४ ॥ ॥ श्रीपराशर उवाच ॥ आध्यात्मिकादि मैत्रेय ज्ञात्वा तापत्रयं बुधः ॥ उत्पन्नज्ञानवैराग्यः प्राप्नोत्यात्यंतिकं लयम् ॥१॥

ज्ञानात्मेति ॥ ज्ञानात्मा ज्ञानस्वरूपः ज्ञानमूर्त्तिः ज्ञानात्मिका मूर्त्तिर्विग्रहो यस्य । निवृत्ते मार्गे ज्ञानयोगेन ज्ञानयोगप्रधानेन कर्मणेज्यते मुक्तिफलप्रदः निवृत्तिमार्गेणेष्ट एव ॥ ४३ ॥ ह्रस्वेति ॥ ह्रस्वादिशब्दैरभिधेयमचिद्वस्तु वाचामविषयं चिद्वस्तु तत्सर्वं विष्णुः तदात्मकम् ॥ ४४ ॥ व्यक्तमिति ॥ व्यक्तादिसामानाधिकरण्यहेतुर्विश्वात्मा विश्वरूपधर इति पुरुषः कार्यकारणरूपोभयावस्थः परमात्मा मुक्तः । व्यक्तं स एव चाव्यक्तमिति च पाठः ॥ ४५ ॥ व्यक्तेत्यादि ॥ उक्तस्यैवाऽनुवादो गुणांतरविध्यर्थः । अव्याहतात्मनि अविकृतस्वरूपे ॥ ४६ ॥४७ ॥ व्यक्त इति ॥ प्रकृत्यां पुरुषे लीनायामिति शेषः । तथा तत्र स्थिते तथाभूते पुरुषे तत्र परमात्मनि स्थिते द्वयोर्युगपल्लयपक्षे ग्रंथस्सुगमः । व्यक्त इति पुनर्लयानुवादः परमात्मनो रात्र्यादिकल्पनाविध्यर्थः ॥ ४८ ॥ नैवेति ॥ नित्यस्य परमात्मनः इति अत्र स्वरूपनित्यत्वस्य ब्रह्मादीनामपि साधारण्याद्विग्रहवत्त्वस्य नित्यत्वमभिप्रेतम् "सदैकरूपरूपाय" इत्यादिभिर्विग्रहनित्यत्वस्य प्रतिपादनात् ॥ ४९ ॥ ५० ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये षष्ठांशे चतुर्थोऽध्यायः ॥ ४ ॥ ॥ छ ॥ ॥ १ ॥

ज्ञानात्मेति ॥ योगिभिः कर्मभिर्विशुद्धचित्तैः निवृत्ते मार्गे स्थितैरिति शेषः । ज्ञानयोगेनेज्यत इत्यर्थः ॥ ४३ ॥ ज्ञानयोगस्वरूपमाह--ह्रस्वदीर्घेत्यादिद्वाभ्याम् ॥४४॥४५॥ स सर्वं विष्णुरेव न तु तस्माद्व्यतिरिक्तमस्तीत्यत्र हेतुमाह--व्यक्ताव्यक्तात्मिकेति ॥ ४६ ॥ विष्णोः सर्वोत्कर्षप्रतिपत्त्यर्थं सर्वातिशायिनीमहोरात्रकल्पनामाह--द्विपरार्धात्मक इत्यादिद्वाभ्याम् ॥ ४७ ॥ व्यक्ते चेति ॥ तथा तत्र पुरुषे परमेश्वरे स्थिते सति प्रकृत्यां च तत्र स्थितायामित्यर्थः ॥ ४८ ॥ एतच्च न वास्तवमित्याह—नैवेति ॥ उपचारस्सर्वोत्कर्षप्रतिपत्तये उच्यते क्रियत इत्यर्थः ॥ ४९ ॥ प्राकृतं लयमुपसंहरन् आत्यन्तिकं लयमुपक्षिपति—इतीति ॥ ५० ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां षष्ठांशे चतुर्थोऽध्यायः ॥४॥ आध्यात्मिकादीति ॥ आत्यंतिकलयो नाम सर्वात्मनः अज्ञानतत्कार्यनाशात्मको मोक्षः आत्मानं देहसंघातं च निमित्तीकृत्य भवतीत्याध्यात्मिकः ॥१॥

आध्यात्मिकोपि द्विविधश्शारीरो मानसस्तथा ॥ शारीरो बहुभिर्भेदैर्भिद्यते श्रूयतां च सः ॥२॥ शिरोरोगप्रतिश्यायज्वरशूलभगंदरैः ॥ गुल्मार्शःश्वयथुश्वासच्छर्द्यादिभिरनेकधा ॥ ३ ॥ तथाक्षिरोगातीसारकुष्ठांगामयसंज्ञितैः ॥ भिद्यते देहजस्तापो मानसं श्रोतुमर्हसि ॥ ४ ॥ कामक्रोधभयद्वेषलोभमोहविषादजः ॥ शोकासूयावमानेर्ष्यामात्सर्यादिमयस्तथा ॥ ५ ॥ मानसोऽपि द्विजश्रेष्ठ तापो भवति नैकधा ॥ इत्येवमादिभिर्भेदैस्तापो ह्याध्यात्मिकः स्मृतः ॥ ६ ॥ मृगपक्षिमनुष्याद्यैः पिशाचोरगराक्षसैः ॥ सरीसृपाद्यैश्च नृणां जायते चाधिभौतिकः ॥ ७ ॥ शीतवातोष्णवर्षांबुवैद्युतादिसमुद्भवः ॥ तापो द्विजवरश्रेष्ठैः कथ्यते चाधिदैविकः ॥ ८ ॥ गर्भजन्मजराज्ञानमृत्युनारकजं तथा ॥ दुःखं सहस्रशो भेदैर्भिद्यते मुनिसत्तम ॥ ९ ॥ सुकुमारतनुर्गर्भे जंतुर्बहुमलावृते ॥ उल्वसंवेष्टितो भुग्नपृष्ठग्रीवास्थिसंहतिः ॥१०॥ अत्यम्लकटुतीक्ष्णोष्णलवणैर्मातृभोजनैः ॥ अत्यंततापैरत्यर्थं वर्द्धमानातिवेदनः ॥ ११ ॥ प्रसारणाकुंचनादौ नांगानां प्रभुरात्मनः ॥ शकृन्मूत्रमहापंकशायी सर्वत्र पीडितः ॥ १२ ॥ निरुच्छ्वासः सचैतन्यस्स्मरञ्जन्मशतान्यथ ॥ आस्ते गर्भेऽतिदुःखेन निजकर्मनिबंधनः ॥ १३ ॥ जायमानः पुरीषासृङ्मूत्रशुक्राविलाननः ॥ प्राजापत्येन वातेन पीड्यमानास्थिबंधनः ॥ १४ ॥

॥ २ ॥ शिरोरोगेति ॥ प्रतिश्यायः पीनसः । श्वयथुः शोफः ॥३॥४॥ कामक्रोधेति ॥ द्वेषः अप्रीतिः मोहो मूर्च्छा विषादः सत्वसंशयः शोकः प्रियविरहजः ईर्ष्या परसंपदक्षमा ॥ ५ ॥ ६ ॥७॥८॥ गर्भेति ॥ नारकजं नरकजं "स्यान्नारकस्तु नरकः" इत्यमरः ॥९॥ सुकुमारेति ॥ उल्वं गर्भवेष्टनचर्म ॥१०॥११॥१२ ॥ ॥ १३ ॥ जायमान इति ॥ प्राजापत्येन ब्रह्मणा नियुक्तेन गात्रसंकोचकेन "तस्माज्ज्यायान् सगर्भः कनीयांसं सूतियोनिमजानानो हिनस्ति ब्रह्मणा हि सकृतः" इति

तं प्रपंचयति—आध्यात्मिक इत्यादिपंचभिः ॥ २ ॥ शिरोरोगेति ॥ प्रतिश्यायः पीनसः श्वयथुः शोफः ॥ ३ ॥ तथेति ॥ अंगामयो वातरोगादिः ॥ ४ ॥ कामक्रोधेति ॥ विषादो दुःखम् । शोकोऽनुशोचनम् । असूया गुणेषु दोषारोपः । ईर्ष्या क्षमाराहित्यम् । मात्सर्यं परोत्कर्षासहिष्णुत्वमसहनम् ॥ ५ ॥ ६ ॥ भूतानि निमित्तत्वेनाधिकृत्य भवतीत्याधिभौतिकः, तमाह—मृगेति ॥ मृगादिभिः यो जायते स आधिभौतिकः ॥ ७ ॥ केवलं दैवमेवाधिकृत्य भवतीत्याधिदैविकः, तमाह—शीतवातेति ॥८॥ एतदेव तापत्रयमागर्भाद्यवस्थाभेदेन सहस्रशः प्रपंचयति—गर्भेत्यादिना, इति संसारदुःखार्त्तीत्यतः प्राक्तनेन ग्रंथेन ॥ ९ ॥ तत्र गर्भदुःखमाह—सुकुमारेत्यादिचतुर्भिः—सुकुमारेति ॥ उल्वं गर्भवेष्टनमांसं भुग्नं चक्रीभूतं पृष्ठादि यस्य सः ॥ १० ॥ अत्यम्लेति ॥ अत्यंतम् अम्लादिभिर्वर्द्धमाना अतिवेदना यस्य ॥ ११ ॥ प्रसारणेति ॥ अंगानाम् आत्मनोंगानां प्रसारणादौ न प्रभुः असमर्थः ॥ १२ ॥ १३ ॥ जन्मदुःखमाह—जायमान इत्यादिद्वाभ्याम्—जायमान इति ॥ पुरीषादिभिराविले क्लिन्नम् आननं यस्य सः प्राजापत्येन प्रजापति

अधोमुखो वै क्रियते प्रबलैस्सूतिमारुतैः ॥ क्लेशान्निष्क्रांतिमाप्नोति जठरान्मातुरातुरः ॥ १५ ॥ मूर्च्छामवाप्य महतीं संस्पृष्टो बाह्यवायुना ॥ विज्ञानभ्रंशमाप्नोति जातश्च मुनिसत्तम ॥ १६ ॥ कंटकैरिव तुन्नांगः क्रकचैरिव दारितः ॥ पूतिव्रणान्निपतितो धरण्यां क्रिमिको यथा ॥ १७ ॥ कंडूयनेऽपि चाशक्तः परिवर्त्तेप्यनीश्वरः ॥ स्नानपानादिकाहारमप्याप्नोति परेच्छया ॥ १८ ॥ अशुचिप्रस्तरे सुप्तः कीटदंशादिभिस्तथा ॥ भक्ष्यमाणोऽपि नैवैषां समर्थो विनिवारणे ॥ १९ ॥ जन्मदुःखान्यनेकानि जन्मनोनंतराणि च ॥ बालभावे यदाप्नोति ह्याधिभौतादिकानि च ॥२०॥ अज्ञानतमसाच्छन्नो मूढांतःकरणो नरः ॥ न जानाति कुतः कोहं क्वाहं गंता किमात्मनः ॥ २१ ॥ केन बंधेन बद्धोहं कारणं किमकारणम् ॥ किं कार्यं किमकार्यं वा किं वाच्यं किं च नोच्यते ॥ २२ ॥ को धर्मः कश्च वाऽधर्मः कस्मिन्वर्त्तेऽथ वा कथम् ॥ किं कर्त्तव्यमकर्त्तव्यं किं वा किंगुणदोषवत् ॥२३॥ एवं पशुसमैर्मूढैरज्ञानप्रभवं महत् ॥ अवाप्यते नरैर्दुःखं शिश्नोदरपरायणैः ॥२४॥ अज्ञानं तामसो भावः कार्यारंभप्रवृत्तयः ॥ अज्ञानिनां प्रवर्त्तंते कर्मलोपास्ततो द्विज ॥ २५ ॥ नरकं कर्मणां लोपात्फलमाहुर्मनीषिणः ॥ तस्मादज्ञानिनां दुःखमिह चामुत्र चोत्तमम् ॥ २६ ॥ जराजर्जरदेहश्च शिथिलावयवः पुमान् ॥ विचलच्छीर्णदशनो वलिस्नायुशिरावृतः ॥२७॥

श्रुतेः ॥ १४ ॥ अधोमुख इति ॥ सूतिमारुतैः सूत्यर्थं गर्भप्रेरकैः ॥ १५ ॥ १६ ॥ कंटकैरिति ॥ तुन्नांगः व्यथितदेहः । पूतिव्रणात् दुर्गंधव्रणात् योनेरित्यर्थः ॥ १७ ॥ १८ ॥ १९ ॥ जन्मेति ॥ कंडूयनेनेत्यादिनोक्तानि जन्मनोनंतराणि कीटदंशादिभिः बालभावे यदाप्नोति तदप्यनेकमिति शेषः ॥२० ॥ कामांधत्वादाधिक्यायौवने अज्ञानजं दुःखं विशिष्याह—अज्ञानेत्यादिना ॥ २१ ॥ केनेति ॥ कार्य्यं कारणजन्यम् ॥२२॥ को धर्म इति ॥ क्व वा कस्मिन्वा वर्त्ते तत्सर्वं च कथमिति न जानातीति पूर्वेणान्वयः ॥ २३ ॥ २४ ॥ अज्ञानमिति ॥ अज्ञानं तमसो विकारः तेनाज्ञानिनां तदनुगुणकार्यारंभेषु प्रवृत्तयो भवंति अतो वैदिककर्मलोपाः प्रवर्त्तंते ॥ २५ ॥ २६ ॥ जरेति ॥ वलिस्नायुशिरावृत इति वलिस्त्वक्तरंगः रक्तवहा नाडी सिरा सैव बंधनी स्नायुः ॥ २७ ॥

युक्तेन गर्भसंकोचेन "तस्माज्ज्यायां स गर्भः कनीयान् संसूतियोनिमजानानो हिनस्ति ब्रह्मणा हि सक्तः" इति श्रुतेः ॥ १४ ॥ अधोमुख इति ॥ सूतिमारुतैः प्रसूत्यर्थं गर्भप्रेरकैः ॥ १५ ॥ जन्मांतरदुःखान्याह—मूर्च्छामित्यादिचतुर्भिः ॥ १६ ॥ कंटकैरिति ॥ तुन्नांगः व्यथितगात्रः । क्रकचैः दारणयंत्रैः । पूतिव्रणाद्दुर्गंधव्रणतुल्याद्योनेः ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ यौवनदुःखान्याह—अज्ञानेत्यादिचतुर्भिः—अज्ञानेति ॥ अज्ञानमिह काममोहाद्यभिनिवेशः तेन तमसा छन्नः अंधीभूतः । कार्याकार्ये लौकिके कर्त्तव्याकर्त्तव्ये वैदिके ॥ २१ ॥ २२ ॥ २३ ॥ २४॥ अज्ञानस्वरूपं तत्फलं च दर्शयति—अज्ञानमित्यादिद्वाभ्याम्—अज्ञानमिति ॥ अज्ञानं तामसो भावः यतो ज्ञानिनां विहितेष्वपि कार्यारम्भेष्वप्रवृत्तयो विहितकार्यारंभेषु प्रवृत्तयश्च स्युस्ततः कर्मलोपाः प्रवर्त्तंते ॥ २५॥ नरकमिति ॥ ततः कर्मलोपात् नरकप्राप्तिरिति उत्तमम् अधिकं दुःखम् ॥ २६ ॥ स्थाविरदुःखान्याह—

दूरप्रनष्टनयनो व्योमांतर्गततारकः ॥ नासाविवरनिर्यातलोमपुंजश्चलद्वपुः ॥ २८ ॥ प्रकटीभूतसर्वास्थिर्नतपृष्ठास्थिसंहतिः ॥ उत्सन्नजठराग्नित्वादल्पाहारोऽल्पचेष्टितः ॥ २९ ॥ कृच्छ्राच्चंक्रमणोत्थानशयनासनचेष्टितः ॥ मंदीभवच्छ्रोत्रनेत्रस्स्रवल्लालाविलाननः ॥ ॥ ३० ॥ अनायत्तैस्समस्तैश्च करणैर्मरणोन्मुखः ॥ तत्क्षणेप्यनुभूतानामस्मर्ताऽखिलवस्तुनाम् ॥ ३१ ॥ सकृदुच्चारिते वाक्ये समुद्भूतमहाश्रमः ॥ श्वासकाशसमुद्भूतमहायासप्रजागरः ॥ ३२ ॥ अन्येनोत्थाप्यतेऽन्येन तथा संवेश्यते जरी ॥ भृत्यात्मपुत्रदाराणामवमानास्पदीकृतः ॥ ३३ ॥ प्रक्षीणाखिलशौचश्च विहाराहारसस्पृहः ॥ हास्यः परिजनस्यापि निर्विण्णाशेषबांधवः ॥३४॥ अनुभूतमिवान्यस्मिञ्जन्मन्यात्मविचेष्टितम् ॥ संस्मरन्यौवने दीर्घं निश्वसत्यभितापितः ॥३५॥ एवमादीनि दुःखानि जरायामनुभूय वै ॥ मरणे यानि दुःखानि प्राप्नोति शृणु तान्यपि ॥ ३६ ॥ श्लथद्ग्रीवांघ्रिहस्तोऽथ व्याप्तो वेपथुना भृशम् ॥ मुहुर्ग्लानिः परवशो मुहुर्ज्ञानलवान्वितः ॥ ३७ ॥ हिरण्यधान्यतनयभार्याभृत्यगृहादिषु ॥ एते कथं भविष्यंतीत्यतीव ममताकुलः ॥ ३८ ॥ मर्मभिद्भिर्महारोगैः क्रकचैरिव दारुणैः ॥ शरैरिवांतकस्योग्रैश्छिद्यमानासुबंधनः ॥ ३९ ॥ परिवर्त्तितताराक्षो हस्तपादं मुहुः क्षिपन् ॥ संशुष्यमाणताल्वोष्ठपुटो घुरघुरायते ॥ ४० ॥ निरुद्धकंठो दोषौघैरुदानश्वासपीडितः ॥ तापेन महता व्याप्तस्तृषा चार्त्तस्तथा क्षुधा ॥ ४१ ॥ क्लेशादुत्क्रांतिमाप्नोति यमकिंकरपीडितः ॥ ततश्च यातनादेहं क्लेशेन प्रतिपद्यते ॥ ४२ ॥ एतान्यन्यानि चोग्राणि दुःखानि मरणे नृणाम् ॥ शृणुष्व नरके यानि प्राप्यंते पुरुषैर्मृतैः ॥ ४३ ॥

दूरेति॥दूरप्रनष्टनयनः अधिकप्रनष्टनयनशक्तिः व्योमांतर्गततारकः दृग्गोलकाकाशनिमग्नकनीनकः॥२८॥२९॥३०॥अनायत्तैरिति ॥ अनायत्तैः प्रवृत्त्यक्षमैः ॥ ३१॥ सकृदिति ॥ काशः श्लेष्मा ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ निरुद्धेति ॥ दोषः वातादिः । उदानेति । "उरःस्थानमुदानस्य नासानाभिगलांश्चरेत् । वाक्प्रवृत्तिप्रयत्नोर्जा बलवर्णस्मृतिक्रियः" अस्य गलसंचारित्वात् "उदानः कंठदेशस्थः" इत्यमरः ॥ ४१ ॥ ४२ ॥४३॥

जराजर्जरेत्यादिभिः—जराजर्जरेति ॥ वलिः लम्बमानत्वक्शिरारक्तवसादिः सेव स्नायुः अस्थिवंधनी ॥ २७ ॥ दूरेति ॥ दूरे दूरस्थे अर्थे प्रनष्टं नयनं ग्रहणासमर्थं चक्षुर्यस्य सः व्योम्नि चक्षुर्गोलाकाशे अन्तर्गते तारके कनीनिके यस्य सः ॥ २८ ॥ २९ ॥ ३० ॥ अनायत्तैरिति ॥ अनायत्तैः अस्वाधीनैः करणैः ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ अनुभूतमिवेति ॥ यौवने यदात्मनः विविधं चेष्टितं तदन्यजन्मानुभूतमिव संस्मरन् दीर्घश्वासं मुंचति ॥ ३५ ॥ ३६ ॥ मरणदुःखान्याह—श्लथद्ग्रीवेत्यादिसार्धैः षड्भिः—श्लथद्ग्रीवेति ॥ वेपथुना कंपेन ॥ ३७ ॥ ३८ ॥ ३९ ॥ परिवार्त्तितेति ॥ घुरघुरायते घुरघुर इत्येव शब्दं करोति ॥ ४० ॥ निरुद्धेति ॥ दोषौघैः श्लेष्मसंघैः निरुद्धः कंठो यस्य सः । अत एव घुरघुरायत इति पूर्वेणान्वयः ॥ ४१ ॥ क्लेशादिति ॥ यातनादेहं यातनार्थमन्यदेहग्रहणम् ॥ ४२ ॥ एतानीति ॥ नरकदुःखान्याह—शृणुष्वेत्यादि

यास्यकिंकरपाशादिग्रहणं दंडताडनम् ॥ यमस्य दर्शनं चोग्रमुग्रमार्गविलोकनम् ॥४४॥ करंभवालुकावह्नियंत्रशस्त्रासिभीषणे ॥ प्रत्येकं नरके याश्च यातना द्विज दुःसहाः ॥४५॥ क्रकचैः पाट्यमानानां मूषायां चापि दह्यताम्॥ कुठारैः कृत्यमानानां भूमौ चापि निखन्यताम्॥४६॥शूले ष्वारोप्यमाणानां व्याघ्रवक्त्रे प्रवेश्यताम् ॥ गृध्रैस्संभक्ष्यमाणानां द्वीपिभिश्चोपभुज्यताम् ॥४७॥ क्वाथ्यतां तैलमध्ये च क्लिद्यतां क्षारकर्दमे ॥ उच्चान्निपात्यमानानां क्षिप्यतां क्षेपयंत्रकैः॥४८॥नरके यानि दुःखानि पापहेतूद्भवानि वै ॥ प्राप्यंते नारकैर्विप्र तेषां संख्या न विद्यते॥४९॥ न केवलं द्विजश्रेष्ठ नरके दुःखपद्धतिः ॥ स्वर्गेऽपि पातभीतस्य क्षयिष्णोर्नास्ति निर्वृतिः ॥ ५० ॥ पुनश्च गर्भे भवति जायते च पुनःपुनः ॥ गर्भे विलीयते भूयो जायमानोऽस्तमेति वै ॥५१॥ जातमात्रश्च म्रियते बालभावेऽथ यौवने ॥ मध्यमं वा वयः प्राप्य वार्द्धके वाथ वा मृतिः ॥ ॥ ५२ ॥ यावज्जीवति तावच्च दुःखैर्नानाविधैः प्लुतः ॥ तं तु कारणपक्ष्मौघैरास्ते कार्पासबीजवत् ॥ ५३ ॥ द्रव्यनाशे तथोत्पत्तौ पालने च सदा नृणाम् ॥ भवंत्यनेकदुःखानि तथैवेष्टविपत्तिषु ॥५४॥ यद्यत्प्रीतिकरं पुंसां वस्तु मैत्रेय जायते॥ तदेव दुःखवृक्षस्य बीजत्वमुपगच्छति॥ ॥५५॥ कलत्रपुत्रमित्रार्थगृहक्षेत्रधनादिकैः ॥ क्रियते न तथा भूरि सुखं पुंसां यथा सुखम् ॥ ५६ ॥ इति संसारदुःखार्कतापतापितचेतसाम् ॥ विमुक्तिपादपच्छायामृते कुत्र सुखं नृणाम् ॥ ५७ ॥ तदस्य त्रिविधस्याऽपि दुःखजातस्य वै मम ॥ गर्भजन्मजराद्येषु स्थानेषु प्रभविष्यतः ॥ ५८ ॥ निरस्तातिशयाह्लादसुखभावैकलक्षणा ॥ भेषजं भगवत्प्राप्तिरेकांतात्यंतिकी मता ॥ ५९ ॥.

॥ ४४ ॥ करंभेति ॥ भज्यमानकरंभसमवालुका करंभादिभीषणवस्तुभिर्युता यातना दुःसहाः ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ॥ ५२ ॥ यावदिति ॥ तंतुकारणेति । पक्ष्माणि अंशवः ॥ ५३ ॥ ५४ ॥ ५५ ॥ कलत्रेति ॥ असुखं दुःखम् ॥ ५६ ॥ ५७ ॥ ५८ ॥ निरस्तेति ॥

सार्द्धैष्षड्भिः ॥ ४३ ॥ याम्येति ॥ याम्यकिंकरैः पाशादिभिर्ग्रहणम् ॥ ४४ ॥ करंभेति ॥ करंभवालुका तप्तवालुका ॥ ४५ ॥ क्रकचैरिति ॥ दह्यतां खन्यतामित्यादिपरस्मैपदमार्षम् । कृत्यमानानां छिद्यमानानाम् ॥४६॥ शूलेष्विति ॥ द्वीपिभिर्व्याघ्रैः ॥ ४७ ॥ ४८ ॥ नरक इति ॥ पापमेव हेतुः तदुद्भवानि ॥ ४९ ॥ स्वर्गेऽपि दुःखमेवेत्याह–न केवलमिति ॥ स्वर्गेऽपि निर्वृतिर्नास्ति दुःखपद्धतिरेवास्तीत्यर्थः ॥ ५० ॥ स्वर्गनरकभोगानंतरं पुनर्गर्भादिदुःखमाह–पुनश्चेत्यादिषड्भिः ॥ ५१ ॥ ५२ ॥ यावदिति ॥ दुःखैः प्लुतो व्याप्तः आस्ते तंतूनां करणं पक्ष्माणि अंशवः तेषामोघैः समूहैः कार्पासबीजं यथा व्याप्तं तद्वत् ॥ ५३ ॥ द्रव्येति ॥ उत्पत्तौ द्रव्यस्यार्जने ॥ ५४ ॥ ५५ ॥ कलत्रेति ॥ कलत्रादिकैर्यथा असुखं भूरि क्रियते न तथा सुखं क्रियते ॥ ५६ ॥ एवं दुःखानुसंधानलब्धविवेकवैराग्यस्य पुंसो मुमुक्षैव युक्तेत्याशयेनाह–इतीत्यादिचतुर्भिः ॥ ५७ ॥ तदिति ॥ गर्भादिस्थानेषु प्रकर्षेण भविष्यतो दुःखजातस्य भगवत्प्राप्तिरेव मम मता सम्मतेत्युत्तरत्रान्वयः ॥ ५८ ॥ कथंभूता तत्प्राप्तिस्तदाह–निरस्तातिशयेति ॥ निरस्तातिशयः आह्लादो निर्वृतिर्यस्मिन् सुखे

तस्मात्तत्प्राप्तये यत्नः कर्त्तव्यः पंडितैर्नरैः ॥ तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं महामुने ॥ ६० ॥ आगमोत्थं विवेकाच्च द्विधा ज्ञानं तदुच्यते ॥ शब्दब्रह्मागममयं परं ब्रह्म विवेकजम् ॥ ६१ ॥ अंधं तम इवाज्ञानं दीपवच्चेंद्रियोद्भवम् ॥ यथा सूर्यस्तथा ज्ञानं यद्विप्रर्षे विवेकजम् ॥ ६२ ॥ मनुरप्याह वेदार्थं स्मृत्वा यन्मुनिसत्तम ॥ तदेतच्छ्रूयतामत्र संबंधे गदतो मम ॥ ६३ ॥

सुखांतरस्यातिशयो निरस्तो येन तन्निरस्तातिशयम् आह्लादरूपं सुखम्। आह्लादसुखं आह्लादो मोहसंभेदः सुखांतरानुभवाक्षमत्वापादकोत्कर्षवत्सुखम् । भावशब्देन सुखस्य दुःखनिवृत्तिरूपता व्यावर्त्यते । एवं निरतिशयाह्लादरूपसुखत्वमेव भगवत्प्राप्तिस्वरूपमित्युक्तम् । एकांता दुःखाऽसंभिन्ना आत्यंतिकी अंतमतीत्य वर्त्तमाना नित्या । अत्र भगवच्छब्देन प्राप्यस्य हेयप्रत्यनीकाशेषकल्याणगुणात्मकत्वं वक्ष्यमाणं सूचयता तत्प्राप्तेर्निरस्तातिशयेत्याद्युच्यमानं वैशिष्ट्यं प्रतिपादितम् ॥ ५९ ॥ तस्मादिति ॥ यस्माद्भगवत्प्राप्तिरेव तापत्रयनिवृत्तिहेतुः तस्मात्तत्प्राप्तये यत्नः कर्त्तव्यः इति बुद्धे क्षेमप्रापणमिति मोक्षोपायज्ञानमभिधेयमिति वदतो निरस्यति प्राप्त्युपायं च दर्शयति । ज्ञानं च कर्म चेति । अत्र ज्ञानमेव साक्षात् प्राप्त्युपायः कर्म तु तदंगत्वेन न तु विपर्ययः समुच्चयो वा "ब्रह्मविद्यामधिष्ठाय इयाज सोऽपि सुबहून्" इति हि वक्ष्यति ॥ ६० ॥ आचारे कर्मस्वरूपमुक्तम् । ज्ञानं द्विधा विभज्य दर्शयति—आगमोत्थमिति॥ विवेकजं विवेकाद्योगाज्जन्यम्। तत्रागमोत्थं ज्ञानं शब्दब्रह्मेति विवेकजं परब्रह्मेति च मन्वादिभिरुच्यत इत्याह—शब्दब्रह्मेति ॥ ६१ ॥ अथ ब्रह्मविषयमिदं ज्ञानद्वयं प्रशंसति कुदृष्टिनिरसनाय तस्य ज्ञानद्वयस्य वैषम्यं च दर्शयति ॥ अंधं तम इति ॥ अज्ञानं आगमश्रवणात्पूर्वम्। आत्मनात्मविद्याख्यकर्मतिरोहितस्वरूपत्वादात्मपरमात्मयाथात्म्यस्यापरिज्ञानम् । अन्यथाज्ञानं वा । तच्च ज्ञानविरोधित्वादंधं तम इव आगमजन्यं ज्ञानं श्रोत्रेंद्रियगृहीतागमजन्यत्वादिंद्रियोद्भवमित्युच्यते । तच्चाज्ञानतमोविरोधित्वाद्दीपवदिति । अतः आगमोत्थं ज्ञानं तमसि दीपवदन्यथाज्ञानसंवलितमल्पं च । अथ अज्ञानतन्मूलाविद्यारूपसर्वतमोनिरसनत्वात आगमोत्थादपि विशदतमप्रत्यक्षरूपत्वाच्च विवेकजं सूर्यवदित्युच्यते ॥ ६२ ॥ उक्तेर्थे मनुवचनं प्रमा

तद्भावस्तदात्मत्वमेव एकं लक्षणं यस्यास्सा तथा । किंच एकांता भगवन्निष्ठामात्रेणावश्यंभाविनी न तु ऋत्विगादिवैगुण्येन कर्मफलवदनित्या आत्यंतिकी अंतमतीत्य वर्त्तमाना ॥ ५९ ॥ तस्मादिति ॥ तत्प्राप्त्युपायमाह—तदिति ॥ अतस्तत्प्राप्त्युपायः कर्मचित्तशुद्धिद्वारा तदंगत्वेन ज्ञानं तु साक्षात् ॥ ६० ॥ तत्र द्विविधमाह—आगमेति ॥ तद्विवृणोति—शब्दब्रह्मेति आगममयम् आगमोत्थं ज्ञानं शब्दब्रह्मशब्दात् "सत्यं ज्ञानमनंतं ब्रह्म" इति वाक्याज्जायमानं शब्दश्रवणं ज्ञानमागमोत्थमित्यर्थः । देहादिविविक्ताविकारचित्तवृत्त्या निदिध्यासनाख्यया प्रकाशमानं परं ब्रह्म विवेकजं ज्ञानमित्यर्थः । वृत्तिव्यक्तस्य ब्रह्मण एव ज्ञानाभिधानत्वाद्ब्रह्मज्ञानमित्युक्तम् ॥ ६१ ॥ ननु शब्दश्रवणादपि ब्रह्मज्ञानमेवोत्पद्यते तेनैवाज्ञाननिवृत्त्या भगवत्प्राप्तिसिद्धेः किं ववेकजन्यज्ञानेनेत्याशंक्याह—अंधं निबिडं तम इवाज्ञानं व्यापकमिवावरणं श्रोत्रेंद्रियग्राह्यशब्दादिद्वारा जन्यं ज्ञानं दीपवत् असंभावनाद्यभिभूतं न सर्वात्मना अज्ञाननिवर्त्तकं विवेकजं तु ज्ञानं सूर्यवत्सर्वाज्ञाननिवर्त्तकमित्यर्थः ॥ ६२ ॥ उक्तलक्षणे ज्ञानद्वये मनुसम्मतिमाह—मनुरपीत्यादिद्वाभ्याम्—मनुरपीति ॥ अत्र संबंधे अस्मिन् प्रसंगे ॥ ६३ ॥

द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत् ॥ शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥ ६४ ॥ द्वे वै विद्ये वेदितव्ये इति चाथर्वणी श्रुतिः ॥ परया त्वक्षरप्राप्तिर्ऋग्वेदादिमयापरा ॥ ६५ ॥ यत्तदव्यक्तमजरमचिंत्यमजमव्ययम् ॥ अनिर्देश्यमरूपं च पाणिपादाद्यसंयुतम् ॥ ६६ ॥ विभु सर्वगतं नित्यं भूतयोनिरकारणम् ॥ व्याप्य व्याप्तं यतः सर्वं यद्वै पश्यंति सूरयः ॥६७॥ तद्ब्रह्म तत्परं धाम तद्ध्येयं मोक्षकांक्षिभिः ॥ श्रुतिवाक्योदितं सूक्ष्मं तद्विष्णोः परमं पदम्॥६८॥तदेव भगवद्वाच्यं स्वरूपं परमात्मनः ॥ वाचको भगवच्छब्दस्तस्याद्यस्याक्षयात्मनः॥६९॥

णयति । मनुरपीति ॥ अत्र संबंधे मोक्षतत्साधनसंबंधे ॥ ६३ ॥ विद्यातः पुरुषार्थो न कर्मण इति मनुवचनमेवोदाहरति—द्वे इति ॥ परं च यत् ब्रह्मेति शेषः । शब्दब्रह्मणि शास्त्रजन्यज्ञाने निष्णातः निपुणः परं ब्रह्म प्रत्यक्षरूपं विवेकजं ज्ञानं लभते ॥ ६४ ॥ मनुवचनमूलश्रुतिमुदाहरति—द्वे विद्ये इति ॥ विद्ये आगमविवेकोत्थे परया विवेकोत्थया अक्षरस्य परब्रह्मणः प्राप्तिर्यया "तदक्षरमधिगम्यते" इति श्रुतेः । अनेन वाक्यार्थज्ञानात्कर्मणो वा मोक्षं वदंतो निरस्ताः । वाक्यार्थज्ञानान्मोक्षं वदतः "तच्छास्त्रैर्विप्रतिषिद्धं बुद्ध्येत् क्षेमप्रापणमिहैव न दुःखमुपलभेत्" इति सूत्रविरोधः प्रत्यक्षविरोधश्च । अत्र प्रकरणे स्वोक्तस्यार्थस्य वेदविदग्रेसरमनुवचनप्रामाणि कादागमविवेकजपदयोरैकायनाद्युक्तोर्थो न विवक्षित इति वेदितव्यम् ॥ ६५ ॥ अथ परविद्योपास्यस्य प्राप्यभूतस्य ब्रह्मणस्स्वरूपमाह—यत्तदिति ॥ यथाह श्रुतिः "यत्तदद्रेश्यम्" इत्यादिना श्रुतिव्यतिरिक्तैः प्रमाणैः न व्यजत इति अव्यक्तम् । "वेदाहमेतं, नावेदविन्मनुते तं बृहंतम्" इति अजरमजमित्यादिना षड्भावविकार राहित्यमुक्तम् । अचिंत्यमनिर्देश्यमिति। वाङ्मानसागोचरत्वम् । अरूपं देवमनुष्यादिरूपरहितम् । अन्यथा रूपवत्त्वश्रुत्यादिविरोधात्॥६६॥विभ्विति॥विभु सर्वगतं वितत्य व्यापि विभुत्वं नियंतृत्वं वा अकारणं स्वयं कारणरहितं व्याप्यव्यापकरूपेणावस्थितं सर्वं जगद्यतः भूतयोनिरिति जीवाभिप्रायम् अत्र परविद्याविषयस्याक्षरस्य भूतयो नित्वविभुत्वादिविशेषणैः परविद्या निर्गुणब्रह्मविषयेत्येतन्निरस्तं "यद्वै पश्यंति सदा पश्यंति" इति श्रुतेः ॥६७॥ तद्ब्रह्मेति ॥ धाम तेजोमयं "तद्विष्णोः परमं पदम्" इति श्रुतिवाक्योदितं सूक्ष्मं तत्परं ब्रह्म मोक्षकांक्षिभिर्ध्येयम् ॥ ६८ ॥ उक्तगुणविशिष्टं तदेव ब्रह्म भगवच्छब्दवाच्यमित्याह—तदेवेति ॥ इदं वचनं ध्यानक्रियाभ्यां

द्वे ब्रह्मणी इति ॥ शब्दब्रह्मणि निष्णातः विवेकजेन परं ब्रह्म अधिगच्छति प्राप्नोति ॥६४॥ तत्प्राप्तिहेतुः ज्ञानं च कर्म चोक्तमित्यत्र श्रुतिसम्मतिमाह—द्वे विद्ये इति ॥ विद्याशब्देन तद्धेतुकर्म ब्रह्मविषयौ वेदभागौ गृह्येते । तदाह—परयेति । अक्षरप्रतिपादकपराख्यवेदभागादितरः कर्मभागः ऋग्वेदादिशब्देनोच्यते ब्राह्मणपरिव्राजकादिवत् सा त्वपरा साननविषयत्वात् ॥ ६५ ॥ अथ परा सा यया तदक्षरमधिगम्यते । यत्तदद्रश्यमग्राह्यमि त्याद्याथर्वणश्रुत्युक्तं परविद्याविषयमक्षराख्यं परं तत्त्वमाह—यत्तदित्यादित्रिभिः ॥ ६६ ॥ विभ्विति ॥ विभु प्रभु । सर्वगतम् अनवच्छिन्नं व्यापि सर्वकार्यानुगतम् । अव्याप्तं स्वयमन्येनाव्याप्तम् । यतः सर्वं भवति ॥ ६७ ॥ तदिति ॥ तत्परं ब्रह्मैव स्वेच्छयाऽविष्कृतषाड्गुण्यं परमेश्वराख्यम् ॥ ६८ ॥ द्वादशाक्षरादिपरविद्योपासनया भक्तैः सुलभदृश्यं भगवच्छब्दवाच्यं तदेवेत्याह—तदेवेति ॥ ६९ ॥

एवं निगदितार्थस्य तत्तत्त्वं तस्य तत्त्वतः ॥ ज्ञायते येन तज्ज्ञानं परमन्यत्त्रयीमयम् ॥ ७० ॥ अशब्दगोचरस्यापि तस्य वै ब्रह्मणो द्विज ॥ पूजायां भगवच्छब्दः क्रियते ह्युपचारतः ॥ ७१ ॥ शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्द्यते ॥ मैत्रेय भगवच्छब्दस्सर्वकारणकारणे ॥ ७२ ॥ संभर्त्तेति तथा भर्त्ता भकारोर्थद्वयान्वितः ॥ नेता गमयिता स्रष्टा गकारार्थस्तथा मुने ॥ ७३ ॥

"भगवान् सर्वव्यापी च भगवान् नारायणो भगवान् प्रजापतिः"। "वासुदेवाय धीमहि" "ओमित्यात्मानं युंजीत" "नमो रुचाय ब्राह्मये" इत्यादिवेदांतसारोद्धार रूपं द्वादशाक्षरचिंतका इति पूर्वमुक्तं मंत्रविशेषमभिप्रेत्याभिहितम् । सकलहेयप्रत्यनीककल्याणगुणात्मकं जगत्कारणं परविद्याधिगम्यमुक्तं परब्रह्मैव भगवच्छब्दवाच्यं नान्यदित्यवधारयति तदेवेति । मनुरपि "ततस्स्वयंभूर्भगवान्" इत्यादिना जगत्कारणमेव भगवच्छब्दवाच्यमित्याह—अथ ब्रह्मणस्स्वरूपरूपगुणविभवैरनंतस्य याथात्म्य वचनसमर्थोयं शब्द इत्याह—वाचक इति ॥६९॥ एवमिति ॥ एवं भगवच्छब्देनाभिहितस्य निगदितभूतयोनित्वाद्यर्थस्य तस्य ब्रह्मणस्तत्त्वं स्वरूपं येन विवेकजज्ञानेन तत्त्वतो यद् ज्ञायते दृश्यते तत्पुष्कलसाक्षात्काररूपं परम् अन्यदुद्देशतः शास्त्रजं परोक्षरूपमपरमित्युपसंहरति ॥ ७० ॥ सर्वकारणे परे ब्रह्मणि भगवच्छब्दो मुख्यः अन्यत्रोपचारत इति वक्ष्यन् मुक्ते तावदुपचारत इत्याह—अशब्देति ॥ मुक्तो ह्यशब्दगोचरः नामरूपाद्विमुक्तः "न शब्दगोचरे यस्य, यच्च वाचामविषये, अगोचरं वचसाम्" इत्यादिभ्यः उपनिषत्प्रसिद्धया तस्येति मुक्तस्य परामर्शः, ब्रह्मत्वं च ब्रह्मसाम्यात् पूजायां निमित्तभूतायां तस्योपचारतो भगवच्छब्दः क्रियते । अस्य श्लोकस्य भगवद्विषयत्वे व्याहतिस्स्यात् । तत्र "शब्दोयं नोपचारेण त्वन्यत्र ह्युपचारतः" इत्यनंतरं वक्ष्यमाणत्वात् तदेव भगवद्वाच्यमित्यादेरुक्तत्वाच्च ॥७१॥ परम कारणे परे ब्रह्मणि शब्दोयमनुपचारतः शब्द्यत इत्याह—शुद्ध इति ॥ शुद्धिर्मलप्रत्यनीकत्वम् महाविभूत्याख्ये महाविभूतिसंज्ञे महाविभूतिर्हि ब्रह्मणः अन्यत्र मुख्य त्वासंभवज्ञापनाय ॥ ७२ ॥ भगवच्छब्दं निर्वक्ति—संभर्त्तेति ॥ संभरणं प्रकृतेः कार्ययोग्यताकरणम् । भर्त्ता स्वामी पोषकश्च नेता गोप्ता गमयिता आत्मानं गमयिता संहर्त्तेत्यर्थः । स्रष्टा आत्मानमुद्गमयिता एवं गुपेः गुप्त्यर्थत्वात् गत्यर्थत्वात् गमेश्च गकारो निरुक्तः । ज्ञानार्थत्वाद्वा गमेर्गकारः तदैक्षतेति संकल्परूपेक्षणस्य कर्त्तेत्यर्थः ।

ईदृग्विषयं च ज्ञानं परविद्येत्याह—एवमिति ॥ निगदितार्थस्य द्वादशाक्षरादिभिरुक्तार्थस्येश्वरस्य तत्त्वं स्वरूपं तत्त्वतः अप्रच्युतब्रह्मस्वरूपेण येन द्वादशाक्षरादिना ज्ञायते तत्परं ज्ञानं परा विद्या त्रयीमयं त्वन्यत् अपरा विद्या कर्माख्या ॥७०॥ ननु यदीश्वरो ब्रह्मैव कथं तर्हि तस्यानिर्देश्यस्य भगवच्छब्दवाच्यत्वमित्याशंक्याह—अशब्दगोचरस्येति ॥ पूजायां निमित्तभूतायाम् आविष्कृतषाड्गुण्येन तदभेदं प्रयुज्य उपचारार्थाय प्रयुज्यते॥७१॥ तद्भेदभूतविवक्षायां त्वर्थभूतो मुख्य एव भगवच्छब्दार्थ इत्याह—शुद्ध इति ॥शुद्धे असंगे महाविभूत्याख्ये अचिंत्यैश्वर्ये ॥ ७२ ॥ अक्षरात्तनिरुक्त्या भगवच्छब्दस्य परमेश्वरवाचकत्वमाह—संभर्तेत्यादिना—संभर्तेति ॥ संभर्ता पोषकः । भर्ता नित्याधार इत्यर्थद्वयान्वितः अर्थद्वयेनान्वितः । नेता कर्मज्ञानफलप्रपत्तेर्नेतृत्वं प्रयोज्यगमनगर्भमिति गकारार्थः । गमयिता प्रलये कार्याणां प्रतिहर्ता पुनरपि तेषामुद्गमयिता सर्गकर्तेति वा गकारार्थः ॥७३॥

ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसश्श्रियः ॥ ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥ ७४ ॥ वसंति तत्र भूतानि भूतात्मन्यखिलात्मनि ॥ स च भूतेष्वशेषेषु वकारार्थस्ततोऽव्ययः ॥ ७५ ॥ एवमेष महाञ्छब्दो मैत्रेय भगवानिति ॥ परमब्रह्मभूतस्य वासुदेवस्य नान्यगः ॥ ७६ ॥ तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः ॥ शब्दोयं नोपचारेण त्वन्यत्र ह्युपचारतः ॥७७॥ उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् ॥ वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥७८॥ ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ॥ भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥ ७९ ॥

गमयिता ज्ञापयितेति वा गकारः । तथा ह्येकायननिरुक्तं भ इत्यस्माद्भकाराद्भर्ता संभर्तेति द्वौ धात्वर्थौ गम्येते । ग इति पुनरस्माद्गशब्दाद्गमयिता नेता स्रष्टा परत्र गमनं वा पुनरव्यय इत्यतो गः सोऽसौ भर्तृसंभर्तृनेतृगमनवानेतद्वान् भगवानित्येव भवतीति । तथाऽथर्वशिरसि—"यस्सर्वान्भगवानीक्षत्यात्मज्ञानान्निरीक्षायति योगं गमयति तस्मादुच्यते स भगवान्" इति ॥ ७३ ॥ अथ समुदायनिरुक्तिः—ऐश्वर्यस्येति ॥ समग्रपदं सर्वत्र संबध्यते । भगः षाड्गुण्यं तद्वान् भगवानित्यभिप्रायः ॥ ७४ ॥ वकारार्थमाह—वसंतीति ॥ भूतात्मनि भूतशरीरे अखिलात्मनि अखिलस्यात्मभूते भूतानि वसंति तत्रेति जगदाधारत्वमुक्तम् । "सदायतना" इत्यादि श्रुतेः । स च भूतेष्वंतरात्मत्वम् "एतदात्म्यमिदं सर्वम्" इति श्रुतेः । अतो वः मतुपो वतेश्च तंत्रेणायं वकारः ॥ ७५ ॥ एवमिति ॥ एवमुक्तप्रकारेणावयवार्थयोगादयं शब्दो वासुदेवस्यैव ॥ ७६ ॥ रूढिशक्त्याऽपि तस्यैवेत्याह—तत्रेति ॥ "तत्रभवान् भगवान् इति शब्दो वृद्धैः प्रयुज्यते पूज्ये" इति नैघंटुकप्रसिद्ध्या अयं शब्दो लोके पूज्यपदार्थस्योक्तौ या परिभाषा तया समन्वितोऽपि विष्णौ नियतः नारायणविष्ण्वादिशब्दवत् नोपचारेण तस्य सर्वकारणतया सर्वगुणपरिपूर्णतया परमपूज्यतया चायं शब्दो नौपचारिकः । अन्यत्र जीवविशेषे त्वापेक्षिकपूज्यत्वादमुख्यः ॥ ७७ ॥ अन्यत्रोपचारतः प्रवृत्तौ ज्ञानविशेषो निमित्तमित्याह—उत्पत्तिमिति ॥ ७८ ॥ अथ भगवतोऽन्वयविशेषणभूतानां सत्यकामत्वादीनां गुणांतराणामुक्तेषु गुणेष्वंतर्भावं व्यतिरेकविशेषणानां सत्त्वादिगुणानां भगवानित्यत्र नकारवाच्यत्वं चाह--ज्ञानशक्तीति ॥ अशेषतः अशेषैः स्वविस्तारभूतैर्गुणांतरैस्सह नकारस्यार्थमाह--विना हेयैरिति । गुणादिभिः त्रिगुणतत्कार्यक्लेशादिभिः निखिलहेयप्रत्यनीकत्वं समस्तक

इदानीं भग इत्यक्षरद्वयात्मकस्य पदस्यार्थमाह—ऐश्वर्यस्येति ॥ भग इतीरणा संज्ञेत्यर्थः ॥ ७४ ॥ वकारार्थमाह—वसंतीति ॥ वसंति यत्र भूतानि इति च पाठः । यत्राधिष्ठानभूते भूतानि वसंति स च भूतेषु वसतीति वकारस्यार्थः ॥ ७५ ॥ एवमिति ॥ एवमेष शब्दो वासुदेवस्य वाचकः न त्वन्यस्येत्यर्थः । भश्चासौ गश्च वश्च भगवानित्यक्षरसाम्यान्निरुक्तिः षाड्गुण्यं भगसंज्ञं तद्वान्भगवानित्यनुषंग एव ॥ ७६ ॥ तदेवं परमेश्वरे निरतिशयैश्वर्यादियुक्ते मुख्योऽयं शब्दः । अन्यत्र तु गौण इत्याह—तत्रेति ॥ पूज्यस्य ज्येष्ठस्य पदार्थस्योक्ता या परिभाषा संकेतरूपसंबंधग्रहः तत्समन्वितोयं शब्दः । तत्र परब्रह्मणि अतः नोपचारेण वर्तते अन्यत्र तु देवादौ उपचारेण वर्तते ॥ ७७ ॥ उपचारबीजमाह—उत्पत्तिमिति ॥ ७८ ॥ भगवच्छब्दवाच्यं षाड्गुण्यं प्रकारांतरेणाह—ज्ञानेति ॥ हेयैः प्रतिगुणैः तत्कार्यकर्मभिः तत्फलैर्विना ॥ ७९ ॥

सर्वाणि तत्र भूतानि वसंति परमात्मनि ॥ भूतेषु च स सर्वात्मा वासुदेवस्ततः स्मृतः ॥ ८० ॥ खांडिक्यजनकायाह पृष्टः केशिध्वजः पुरा ॥ नामव्याख्यामनंतस्य वासुदेवस्य तत्त्वतः ॥ ८१ ॥ भूतेषु वसते सोंऽतर्वसंत्यत्र च तानि यत् ॥ धाता विधाता जगतां वासुदेवस्ततः प्रभुः ॥ ॥ ८२ ॥ स सर्वभूतप्रकृतिं विकारान्गुणादिदोषांश्च मुने व्यतीतः ॥ अतीतसर्वावरणोखिलात्मा तेनास्तृतं यद्भुवनांतराले ॥ ८३ ॥ समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशावृतभूतवर्गः ॥ इच्छागृहीताभिमतोरुदेहस्संसाधिताशेषजगद्धितो यः ॥ ८४ ॥ तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः ॥ परः पराणां सकला न यत्र क्लेशादयस्संति परावरेशे ॥ ८५ ॥

ल्याणगुणात्मकत्वं च उभयलिंगं कृत्स्नं भगवच्छब्दवाच्यमित्यनुसंधेयमिति। एवं भगवत्प्राप्तिसाधनपरविद्यांगत्वेनोक्तश्रीमद्द्वादशाक्षरमंत्रे भगवच्छब्दो निरुक्तः । वेदशाखाभेदप्रकरणे प्रणवार्थ उक्तः ॥ ७९ ॥ अथ वासुदेवशब्दार्थमाह--सर्वाणीति ॥ भूतानि जीवाः "वसनात्सर्वभूतानां वसुत्वाद्देवयोनितः । वासुदेवस्ततो ज्ञेय" इत्युद्योगपर्वणि "वसनाद्देवनाच्चैव वासुदेवं ततो विदुः" इति मोक्षधर्मे । देवनाद्द्योतनाद्वेति देवः वासुश्चाऽसौ देवश्च वासुदेवः वसंत्यस्मिन् देवे भूतानीत्येकायननिरुक्तम् ॥ ८० ॥ उक्तमेव वासुदेवशब्दनिर्वचनं ज्ञाननिष्ठैर्जनकादिभिरपि परिगृहीतमित्याह--खांडिक्येति ॥ ८१ ॥ भूतेष्विति ॥ नैरुक्तं देवशब्दनिर्वचनं दर्शयति--धातेति । दधातेर्वकारः निरुक्तस्यानुवादः वासुदेवस्तत इति ॥ ८२ ॥ अथ विद्याद्वयविषयभूतद्वादशाक्षरप्रतिपाद्यतया दर्शितमर्थं बुद्धिस्थेम्ने प्रपंचयति--स सर्वेत्यादिचतुर्भिः--स सर्वेति ॥ सर्वभूतप्रकृतिरव्यक्तं विकारा महदाद्याः गुणास्सत्त्वाद्याः आदिशब्देन तत्कार्यदुःखाज्ञानादय उक्ताः व्यतीतः तेभ्यो विलक्षणः कर्मकृतसंबंधरहितश्च अनेनाचितस्तत्संसृष्टाचेतनाच्च व्यावृत्तिः॥अतीतसर्वावरण इति मुक्तात् मुक्तो हि संसारदशायामविद्यावृतः । अखिलात्मेति नित्याद्व्यावृत्तिः । अखिलात्मत्वमुपपादयति--तेनास्तृतमिति । यत्सदसद्वस्तुजातम् आस्तृतमंतर्बहिश्च व्याप्तम्॥८३॥समस्तेति ॥ अत्रात्मशब्दः स्वभाववचनः । निजेच्छया गृहीताभिमतपूज्यदेहः । यद्वा--जगद्धितायावतारकालेष्विच्छया गृहीततत्तत्कार्योचितानेकदेहः ॥ ८४ ॥ तेजोबलेति ॥ भगवानितिशब्दस्थनकारस्यार्थमपि विस्तरेणाह--न यत्रेति । क्लेशाः

द्वादशाक्षरगतं भगवच्छब्दस्यार्थमुक्त्वा वासुदेवशब्दस्यार्थमाह--सर्वाणीति ॥ वसनाद्वासनाच्च वासुः साधनात् साधुरितिवत् । द्योतनाद्देवः वासुश्चासौ देवश्चेति वासुदेवः । तदुक्तं मोक्षधर्मे--"वासनाद्द्योतनाच्चैव वासुदेवं ततो विदुः" इति॥८०॥ जनकादयोपि भगवन्नामालोचननिष्ठयैव ब्रह्मज्ञानं प्राप्ता इति दर्शयन्नाह--खांडिक्येत्यादिषड्भिः ॥८१॥ भूतेष्विति ॥ भूतेषु वसते सोंतरिति वासुशब्दो व्याख्यातः । धाता विधातेत्यादिना देवशब्दो दिवो धातोरनेकार्थप्रपंचेन व्याख्यात इति ज्ञेयम् ॥ ८२ ॥ स इति ॥ भुवनांतराले यदस्ति तत्सर्वं तेनास्तृतं छन्नं व्याप्तमिति यावत् ॥ ८३ ॥ ८४ ॥ कल्याणगुणानेवाह--तेजोबलेत्यादिद्वाभ्याम् ॥ ८५ ॥

स ईश्वरो व्यष्टिसमष्टिरूपो व्यक्तस्वरूपः प्रकटस्वरूपः ॥ सर्वेश्वरस्सर्वदृक् सर्वविच्च समस्तशक्तिः परमेश्वराख्यः ॥ ८६ ॥ संज्ञायते येन तद स्तदोषं शुद्धं परं निर्मलमेकरूपम् ॥ संदृश्यते वाप्यवगम्यते वा तज्ज्ञानमज्ञानमतोन्यदुक्तम् ॥ ८७ ॥ इति श्रीविष्णुमहापुराणे षष्ठांशे पंचमोऽध्यायः ॥ ५ ॥ ॥ श्रीपराशर उवाच ॥ स्वाध्यायसंयमाभ्यां स दृश्यते पुरुषोत्तमः ॥ तत्प्राप्तिकारणं ब्रह्म तदेतदिति पठ्यते ॥ १ ॥

अविद्यास्मितादयः । आदिशब्देन कर्मविपाकाशया उक्ताः । आशयो वासना ॥८५॥ स इति ॥ व्यूहविभवादिरूपेण च व्यष्टिसमष्टिरूपः पररूपेणाव्यक्तरूपः व्यूहा दिरूपेण व्यक्तरूपः । एवं सर्वावस्थचिदचित्स्वरूपत्वेपि सर्वेश्वरः न तु परवशः । सर्वदृक् "तच्चक्षुर्देवहितम्, चक्षुर्देवानाम् उत त्रैलोक्यस्यैकचक्षुः" इतिवत् । यद्वा "यस्सर्वज्ञस्सर्वविदितिवत् सर्वं वेत्ति सर्वप्रकारेण वेत्तीति" । अथ वा करणमंतरेण करणैश्च जानातीति 'विद्लृ लाभे' इत्यतो वेत्तीति वा । समस्तशक्तिः स परः सर्वशक्तीनां समस्ताश्शक्तयश्चेति ॥ ८६ ॥ अथ परविद्यां प्रशंसन्नुपसंहरति–संज्ञायत इति॥ स ज्ञायते येनेति च पाठः । स इत्युक्तलक्षणः पुरुषोत्तमः परामृश्यते तदिति हेतौ यस्माद्भगवत्प्राप्तिरेव तापत्रयस्य भेषजं तस्मात्स येन आगमोत्थेन ज्ञानेन ज्ञायते येन विवेकजेन संदृश्यते येन च दर्शनसमानाकारेण भक्तिरूपापन्नेन गम्यते तदेव ज्ञानम् अज्ञानमतोऽन्यत् भगवद्व्यतिरिक्तविषयमज्ञानम् अविद्यारूपं बंधकमित्यर्थः । अस्तदोषमिति विकारास्पदाचिद्विषयाद्व्यावृत्तिः । शुद्धमिति तत्सं सृष्टचेतनविषयात् परं निर्मलमिति हेयार्हमुक्तविषयात् एकरूपमिति । सूरिविषयात् तेषामनेकरूपत्वात् "तमेवं विद्वान्, तमेवं विदित्वा नान्यः पंथा" इत्यादिश्रुतिभि रित्थमुक्तमिति ॥ ८७ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये षष्ठांशे पंचमोऽध्यायः ॥ ५ ॥ ॥ छ ॥ ॥ एवं तावदुपास्यभूतं भगवत्स्वरूपमुक्तम् । इदानीमुपासनपर्यायं सांगोपांगं वक्तुमारभते–स्वाध्यायेति ॥ स्वाध्यायशब्देन वेदांतद्वादशाक्षरप्रणवादीनां तत्त्वपराणां मीमांसासहितानां वाक्यानां निर्देशः स इत्युक्तगुणविभूतिविग्रहादिविशिष्टः पुरुषोत्तमः परामृश्यते स्वाध्यायसंयमजनितं ब्रह्मविषयत्वाद्ब्रह्मशब्दवाच्यम्, तदेतज्ज्ञानं न केवलं दर्शनसाधनम् अपि तु प्राप्तिसाधनं

स इति ॥ व्यष्टिस्संकर्षणादिरूपः, समष्टिर्वासुदेवात्मा॥८६॥प्रकृतमुपसंहरति–सज्ञायत इति ॥ येन संज्ञायते परोक्षबुद्ध्या संदृश्यते साक्षात्क्रियते अवगम्यते निश्शेषाविद्यानिवृत्त्या प्राप्यते तज्ज्ञानम्।अविद्यांतर्वर्तिनी अपराविद्य त्यर्थः ॥ ८७ ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीष्णुमहापुराणव्याख्यायां षष्ठांशे पंचमोऽध्यायः ॥ ५ ॥ ॥ पूर्वाध्यायांते संज्ञायते येनेत्यत्र परमात्मनः ज्ञानसंदर्शनप्राप्तये यद्भवति तत्परं ज्ञानमित्युक्तं तद्दृढ ज्ञानं मननसहकृतेन वेदांतवाक्यश्रवणेन भवतीति प्रसिद्धमेव अतस्तदुल्लंघ्य दर्शनप्राप्तौ कारणमाह–स्वाध्यायेति ॥ स्वाध्यायः प्रणवादिजपः । संयमो योगः । ताभ्यां स पुरुषोत्तमो दृश्यते तस्य प्राप्तावपि तदेव द्वयं कारणम् ।

स्वाध्यायाद्योगमासीत योगात्स्वाध्यायमावसेत् ॥ स्वाध्याययोगसंपत्त्या परमात्मा प्रकाशते॥२॥तदीक्षणाय स्वाध्यायश्चक्षुर्योगस्तथा परम्॥ न मांस चक्षुषा द्रष्टुं ब्रह्मभूतस्स शक्यते ॥३॥ मैत्रेय उवाच ॥ भगवंस्तमहं योगं ज्ञातुमिच्छामि तं वद ॥ज्ञाते यत्राखिलाधारं पश्येयं परमेश्वरम् ॥४॥ श्रीपराशर उवाच ॥ यथा केशिध्वजः प्राह खांडिक्याय महात्मने ॥ जनकाय पुरा योगं तमहं कथयामि ते॥५॥मैत्रेय उवाच॥ खांडिक्यः कोऽभवद्ब्रह्मन्को वा केशिध्वजः कृती ॥ कथं तयोश्च संवादो योगसंबंधकारणात् ॥ ६ ॥ श्रीपराशर उवाच ॥ धर्मध्वजो वै जनकस्तस्य पुत्रोऽमितध्वजः ॥ कृतध्वजश्च नाम्नासीत्सदाध्यात्मरतिर्नृपः ॥ ७ ॥ कृतध्वजस्य पुत्रोऽभूत्ख्यातः केशिध्वजो नृपः ॥ पुत्रोमितध्वजस्यापि खांडिक्यजनकोऽभवत् ॥ ८ ॥ कर्ममार्गेण खांडिक्यः पृथिव्यामभवत्पतिः ॥ केशिध्वजोऽप्यतीवासीदात्मविद्याविशारदः ॥९॥ तावुभावपि चैवास्तां विजिगीषू परस्परम् ॥ केशिध्वजेन खांडिक्यस्स्वराज्यादवरोपितः ॥ १० ॥ पुरोधसा मंत्रिभिश्च समवेतोऽल्पसाधनः ॥ राज्यान्निराकृतस्सोऽथ दुर्गारण्यचरोऽभवत् ॥११॥इयाज सोऽपि सुबहून्यज्ञाञ्ज्ञानव्यपाश्रयः ॥ ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया ॥१२॥

चोच्यते इत्याह—तत्प्राप्तीति । तत्प्राप्तिकारणं तदेतज्ज्ञानं ब्रह्मेति पठ्यत इति वा योजना ॥ १ ॥ स्वाध्यायादिति ॥ समीमांसात्स्वाध्यायात् अर्थं परिच्छिद्य योगमासीत गुणत्रयमयत्वेन मनसः प्रमादसंभवादन्यथोपासनपरिहाराय योगात्स्वाध्यायमावसेत । योगात्स्वाध्यायमामनेदिति च पाठः । यथा बालो मातृकापत्रिकां वीक्ष्य लिपिविन्यासमभ्यस्यति तद्वत्कपिलानुसारिभिर्हि केवलयोगावलंबनाज्जगतः प्रधानपरमाण्वादिकारणत्वनिरीश्वरत्वादिकं दृष्टम् । वेदानुसारिभिस्तु ब्रह्मकारणत्वब्रह्मात्मकत्वादियोगो दृष्टः । संपत्तिः पौष्कल्यम् ॥ २ ॥ एतदुपपादयति—तदीक्षणाय स्वाध्यायश्चक्षुरिति ॥ योगः परं चक्षुः प्रधानं चक्षुः अपरोक्षरूपत्वात् ॥ ३ ॥ ४ ॥ ॥५॥ खांडिक्य इति ॥ योगसंबंधकारणात् योगेन संबंधो योगसंबंधः । कृती पंडितः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११॥ "स्वाध्यायप्रवचने एव" इति श्रुतेः ।

अत एव तदेव द्वयं दर्शनद्वारा ब्रह्मप्राप्तिहेतुत्वाद्ब्रह्मेत्यभिधीयते ॥ १ ॥ तदनुष्ठानप्रकारमाह—स्वाध्यायादिति ॥ स्वाध्यायानंतरं योगमभ्यसेत् योगानंतरं च स्वाध्यायं कुर्यात् । एवं तयोस्संपत्त्या समृद्ध्या परमात्मा प्रकाशते । तथा च योगशास्त्रे—"जपाच्छ्रांतः पुनर्ध्यायेद्ध्यानाच्छ्रांतः पुनर्जपेत् । जपध्यानादियोगेन पश्येदात्मानमात्मनि ॥" इति ॥ २ ॥ ननु चक्षुरादिभिरप्यात्मन एव स्फुरणात् कथमिदमेव द्वयं तत्प्रकाशकमुच्यते तत्राह—तदीक्षणायेति ॥ विषयावच्छेदं विना पूर्णब्रह्मभूतो मांसमयैश्चक्षुरादिभिर्द्रष्टुं न शक्यत इत्यर्थः ॥ ३ ॥ भगवन्निति ॥ यत्र यस्मिन्योगे ज्ञाते ज्ञात्वाऽनुष्ठिते सतीत्यर्थः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ कर्ममार्गेणेति ॥ पूर्वाध्यायोपक्षिप्तमेवेतिहासं योगनिरूपणार्थमनुवर्तयति—केशिध्वज इत्यादिना यावदुत्तराध्यायसमाप्ति ॥ ९ ॥ ताविति ॥ अवरोपितः भ्रंशितः ॥ १० ॥ पुरोधसेति ॥ अल्पसाधनः स्वल्पपरिकरः ॥ ११ ॥ इयाजेति ॥ सोऽपि केशिध्वजो ज्ञानव्यपाश्रयः ज्ञाननिष्ठोपि ब्रह्मविद्यामधिष्ठाय ब्रह्मार्पणन्यायेन कर्तृकर्मादिकं सर्वं ब्रह्मैवेति दृष्ट्या बहून्यज्ञानियाज । किमर्थम् अविद्यया कर्मलक्षणया मृत्युं संसारहेतुं कामादिकाशेषं

एकदा वर्त्तमानस्य यागे योगविदां वर ॥ धर्मधेनुं जघानोग्रश्शार्दूलो विजने वने ॥ १३ ॥ ततो राजा हतां श्रुत्वा धेनुं व्याघ्रेण चर्त्विजः ॥ प्रायश्चित्तं स पप्रच्छ किमत्रेति विधीयताम् ॥ १४ ॥ तेप्यूचुर्न वयं विद्मः कशेरुः पृच्छतामिति ॥ कशेरुरपि तेनोक्तस्तथैव प्राह भार्गवम् ॥ ॥ १५ ॥ शुनकं पृच्छ राजेंद्र नाहं वेद्मि स वेत्स्यति ॥ स गत्वा तमपृच्छच्च सोप्याह शृणु यन्मुने ॥ १६ ॥ न केशरुर्न चैवाहं न चैक स्सांप्रतं भुवि ॥ वेत्त्येक एव त्वच्छत्रुः खांडिक्यो यो जितस्त्वया ॥ १७ ॥ स चाह तं व्रजाम्येष प्रष्टुमात्मरिपुं मुने ॥ प्राप्त एव महायज्ञो यदि मां स हनिष्यति ॥ १८ ॥ प्रायश्चित्तमशेषेण स चेत्पृष्टो वदिष्यति ॥ ततश्चाविकलो योगो मुनिश्रेष्ठ भविष्यति ॥ १९ ॥ श्रीपराशर उवाच ॥ इत्युक्त्वा रथमारुह्य कृष्णाजिनधरो नृपः ॥ वनं जगाम यत्रास्ते स खांडिक्यो महामतिः ॥ २० ॥ तमापतंतमालोक्य खांडिक्यो रिपुमात्मनः ॥ प्रोवाच क्रोधताम्राक्षस्समारोपितकार्मुकः ॥ २१ ॥ खांडिक्य उवाच ॥ कृष्णाजिनं त्वं कवचमाबध्यास्मान्हनिष्यसि ॥ कृष्णाजिनधरे वेत्सि न मयि प्रहरिष्यति ॥ २२ ॥ मृगाणां वद पृष्ठेषु मूढ कृष्णाजिनं न किम् ॥ येषां मया त्वया चोग्राः प्रहिताश्शितसायकाः ॥ २३ ॥ स त्वामहं हनिष्यामि न मे जीवन्विमोक्ष्यसे ॥ आततायष्यसि दुर्बुद्धे मम राज्यहरो रिपुः ॥ २४ ॥

स्वाध्यायस्य विद्यांगत्वमुक्तम् इदानीं यज्ञादिश्रुतेर्यज्ञांगत्वमुच्यते–इयाजेति ॥ सोऽपि केशिध्वजः ज्ञानव्यपाश्रयः आत्मज्ञानवान् ब्रह्मविद्यामधिष्ठाय ब्रह्मोपासननिष्ठ एव इयाज । किमर्थमित्यत आह–तर्त्तुमिति । मृत्युः परविद्योत्पत्तिविरोधिप्राचीनकर्म अविद्यया कर्मणा अविद्या कर्मसंज्ञेति वक्ष्यति ॥१२॥ एकदेति ॥ घर्मः प्रवर्ग्यहविः तद्दोग्ध्रीति घर्मधेनुः ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ स चाहेति ॥ प्राप्त एवेति धर्मार्थमुद्युक्तस्यांतरा विपत्तौ सत्यामपि तत्फलसिद्धेः शास्त्रसिद्धत्वात् ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ कृष्णाजिनमिति ॥ मयि न प्रहरिष्यतीति वेत्सीत्यन्वयः । अत्रेति शब्दोऽध्याहार्यः ॥ २२ ॥ २३ ॥ स इति ॥ राज्य

तर्तुं क्षपयितुम् ॥ १२ ॥ एकदेति ॥ घर्मदोग्ध्रीमिति पाठे प्रवर्ग्यो हविर्विशेषो घर्मस्तदर्थं पयोदोग्ध्रीं, शार्दूलो व्याघ्रः ॥ १३ ॥ तत इति ॥ किमत्र प्रायश्चित्तं विधीयतामिति पप्रच्छ ॥ १४ ॥ त इति ॥ तथैव तेनोक्तः कशेरुरपि शुनकं पृच्छेत्याहेत्युत्तरेणान्वयः ॥ १५ ॥ १६ ॥ १७ ॥ स चेति ॥ आत्मरिपुमपि तं प्रायश्चित्तं प्रष्टुमेषोहं व्रजामि यदि मां स हनिष्यति तर्हि महायज्ञः प्राप्त एव महायज्ञफलं प्राप्तमेव मयेत्यर्थः । तथा च "धर्मार्थं यतमानस्तु अंतरा चेद्विपद्यते । स धर्मफलमाप्नोति" इति वचनात् ॥ १८ ॥ प्रायश्चित्तमिति ॥ मया पृष्टः स प्रायश्चित्तमशेषेण वक्ष्यति चेत् ततश्च यागोऽविकलो भविष्यति । ततश्चेत्युक्त्या प्रायश्चित्तकथनेऽपि वा मदीययागस्सफलो भविष्यतीत्यभिप्रायेणाहेति पूर्वेणान्वयः ॥ १९ ॥ २० ॥ २१ ॥ कृष्णाजिनमिति ॥ कृष्णाजिनकवचबंधे तस्याभिप्रायमुत्प्रेक्षते कृष्णाजिनधरे मयि खांडिक्यो न प्रहरिष्यतीति वेत्सि मन्यसे ॥ २२ ॥ तद्व्यर्थमित्याह--मृगाणामिति ॥ येषां पृष्ठेष्वित्यनुषंगः ॥ २३ ॥ स त्वामिति ॥ "अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारहरश्चैव षडेते ह्याततायिनः ॥" इति स्मृतेः । त्वमाततायी अतः

केशिध्वज उवाच ॥ खांडिक्य संशयं प्रष्टुं भवंतमहमागतः॥न त्वां हंतुं विचार्यैतत्कोपं बाणं विमुंच वा॥२५॥श्रीपराशर उवाच॥ततस्स मंत्रिभि स्सार्द्धमेकांते सपुरोहितः ॥ मंत्रयामास खांडिक्यस्सर्वैरेव महामतिः ॥२६॥ तमूचुर्मंत्रिणो वध्यो रिपुरेष वशं गतः ॥ हतेऽस्मिन्पृथिवी सर्वा तव वश्या भविष्यति ॥ २७ ॥ खांडिक्यश्चाह तान्सर्वानेवमेतन्न संशयः ॥ हतेस्मिन्पृथिवी सर्वा मम वश्या भविष्यति ॥ २८ ॥ परलोक जयस्तस्य पृथिवी सकला मम ॥ न हन्मि चेल्लोकजयो मम तस्य वसुंधरा ॥ २९ ॥ नाऽहं मन्ये लोकजयादधिका स्याद्वसुंधरा ॥ परलोक जयोऽनंतस्स्वल्पकालो महीजयः ॥ ३० ॥ तस्मान्नैनं हनिष्यामि यत्पृच्छति वदामि तत् ॥ ३१ ॥ श्रीपराशर उवाच ॥ ततस्तमभ्युपेत्याह खांडिक्यजनको रिपुम् ॥ प्रष्टव्यं यत्त्वया सर्वं तत्पृच्छस्व वदाम्यहम् ॥ ३२ ॥ श्रीपराशर उवाच ॥ ततस्सर्वं यथावृत्तं धर्मधेनुवधं द्विज ॥ कथयित्वा स पप्रच्छ प्रायश्चित्तं हि तद्गतम् ॥ ३३ ॥ स चाचष्ट यथान्यायं द्विज केशिध्वजाय तत् ॥ प्रायश्चित्तमशेषेण यद्वै तत्र विधी यते ॥ ३४ ॥ विदितार्थस्स तेनैव ह्यनुज्ञातो महात्मना ॥ यागभूमिमुपागम्य चक्रे सर्वाः क्रियाः क्रमात् ॥ ३५ ॥ क्रमेण विधिवद्यागं नीत्वा सोऽवभृथाप्लुतः ॥ कृतकृत्यस्ततो भूत्वा चिंतयामास पार्थिवः ॥ ३६ ॥ पूजिताश्च द्विजास्सर्वे सदस्या मानिता मया ॥ तथैवार्थिजनोऽप्य र्थैर्योजितोऽभिमतैर्मया ॥ ३७ ॥ यथार्हमस्य लोकस्य मया सर्वं विचेष्टितम् ॥ अनिष्पन्नक्रियं चेतस्तथापि मम किं यथा ॥ ३८ ॥

हरत्वादाततायी अतो यज्ञस्थस्यापि ते न पातकम् ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ स चष्टेति ॥ यद्वै तत्र विधीयत इत्यत्र प्रायश्चित्तं वाजसनेयोक्तं स्पृणोमि होमाख्यम् । इयं ह्याख्यायिका वाजसनेयशाखायां केशिगृहपतिना 'उपसम्राजमनड्हं शार्दूलो जघान' इत्युपक्रम्य 'स्पृते हुत्वेत्यादि चोक्त्वा पृथिव्यै ते शरीरं स्पृणोमि स्वाहा' इत्यंता सप्रपंचमुक्ता आपस्तंबेन तु 'यद्यनड्वाहं धर्मदोग्ध्रीं वा शार्दूलो हन्यादर्कक्षीरमजाक्षीरमन्यधेनुं वाश्रित्य प्रचरेत्' इत्याद्युक्तम् ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ यथाहमिति ॥ तथापि ममेदं चेतः अनिष्पन्नक्रियं यथाऽकृतकृत्यमिव भवति किमिति चिंता यथाशब्दः

सवनस्थस्यापि तव वधे न दोषः "नाततायिवधे दोषो हंतुर्भवति कश्चन ॥" इत्यादिवचनात् ॥ २४ ॥ खांडिक्येति ॥ बाणं वेत्यन्वयः ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ परलोकेति ॥ परलोकजयस्तस्येति धर्मार्थं प्रवृत्तस्यांतरामरणेऽपि तत्फलसिद्धेरिति भावः । न हन्मि चेल्लोकजय इत्युपपन्नवधकृतचापप्रतिबन्धाभावे पूर्वैरेव पुण्यैः परलोकसिद्धेरिति भावः ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ स चाचष्टेति ॥ इम मेव विषयं प्रस्तुत्य वाजसनेयके स्पृणोमि होमाख्यं प्रायश्चित्तमुक्तं "चंद्रात्ते मनस्स्पृणोमि स्वाहासूर्यात्ते चक्षुस्स्पृणोमि स्वाहा वातात्ते प्राणं स्पृणोमि स्वाहा" इत्यादि । आपस्तंबेन चोक्तं "यद्यनड्वाहं धर्मदोग्ध्रीं शार्दूलो वा हन्यात् अर्कक्षीरमजाक्षीरमन्यधेनुं वा प्रचरेत्" इत्यादि । अस्य च प्रायश्चित्तस्य स्फुटत्वेपि यथादेशकालावस्थाविशेषप्रायश्चित्तप्रकल्पनं खांडिक्यादपरो न वेत्तीति पूर्वोक्ताभिप्रायः । तदाह यद्वै तत्र प्रायश्चित्तं विधीयते तदशेषं यथान्यायं केशिध्वजायाचष्टेति ॥ ३४ ॥ ३५ ॥ क्रमेणेति ॥ यागं नीत्वा समाप्य ॥ ३६ ॥ ३७ ॥ यथार्हमिति ॥ तथापि यदनिष्पन्नक्रियम् अकृतकृत्यमिवाप्रसन्नं चेतः किमिति तिष्ठ

इत्थं संचिंतयन्नेव सस्मार स महीपतिः ॥ खांडिक्याय न दत्तेति मया वै गुरुदक्षिणा ॥३९॥ स जगाम तदा भूयो रथमारुह्य पार्थिवः ॥ मैत्रेय दुर्गगहनं खांडिक्यो यत्र संस्थितः ॥ ४० ॥ खांडिक्योऽपि पुनर्दृष्ट्वा तमायांतं धृतायुधम् ॥ तस्थौ हंतुं कृतमतिस्तमाह स पुनर्नृपः ॥४१॥ भो नाहं तेऽपराधाय प्राप्तः खांडिक्य मा क्रुधाः ॥ गुरोर्निष्क्रयदानाय मामवेहि त्वमागतम् ॥ ४२ ॥ निष्पादितो मया यागः सम्यक्त्वदुपदेशतः ॥ सोऽहं ते दातुमिच्छामि वृणीष्व गुरुदक्षिणाम् ॥ ४३ ॥ श्रीपराशर उवाच ॥ भूयस्स मंत्रिभिस्सार्द्धं मंत्रयामास पार्थिवः ॥ गुरुनिष्क्रयकामोऽयं किं मया प्रार्थ्यतामिति ॥ ४४ ॥ तमूचुर्मंत्रिणो राज्यमशेषं प्रार्थ्यतामयम् ॥ शत्रुभिः प्रार्थ्यते राज्यमनायासितसैनिकैः ॥ ४५ ॥ प्रहस्य तानाह नृपस्स खांडिक्यो महामतिः ॥ स्वल्पकालं महीपाल्यं मादृशैः प्रार्थ्यते कथम् ॥ ४६ ॥ एवमेतद्भवंतोऽत्र ह्यर्थसाधनमंत्रिणः ॥ परमार्थः कथं कोऽत्र यूयं नात्र विचक्षणाः ॥ ४७ ॥ श्रीपराशर उवाच ॥ इत्युक्त्वा समुपेत्यैनं स तु केशिध्वजं नृपः ॥ उवाच किमवश्यं त्वं ददासि गुरुदक्षिणाम् ॥ ४८ ॥ बाढमित्येव तेनोक्तः खांडिक्यस्तमथाब्रवीत् ॥ भवानध्यात्मविज्ञानपरमार्थविचक्षणः ॥४९॥ यदि चेद्दीयते मह्यं भवता गुरुनिष्क्रयः ॥ तत्क्लेशप्रशमायालं यत्कर्म तदुदीरय ॥ ५० ॥ इति श्रीविष्णुमहापुराणे षष्ठांशे षष्ठोध्यायः ॥ ६ ॥ ॥ केशिध्वज उवाच ॥ न प्रार्थितं त्वया कस्मादस्मद्राज्यमकंटकम् ॥ राज्यलाभाद्विना नान्यत्क्षत्रियाणामतिप्रियम् ॥ १ ॥ खांडिक्य उवाच ॥ केशिध्वज निबोध त्वं मया न प्रार्थितं यतः ॥ राज्यमेतदशेषं ते यत्र गृध्नंत्यपंडिताः ॥ २ ॥

सादृश्ये ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ भो इति ॥ निष्क्रयो दक्षिणा निष्क्रिय इति च पाठः ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ एवमिति ॥ अत्र राज्यचिंतायाम् । अत्र संसारे कः परमार्थस्स च कथमित्यत्रार्थे यूयं न विचक्षणाः ॥ ४७ ॥ ४८ ॥ बाढमिति ॥ अध्यात्मेति अध्यात्मविज्ञानस्य परमार्थः प्रयोजनं स च क्लेशनिवृत्तिः ॥४९॥ यदीति॥ तत्तस्मात् क्लेशप्रशमाय यदलं तदुदीरयेत्यब्रवीत् इत्यन्वयः ॥५०॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये षष्ठांशे षष्ठोऽध्यायः ॥ ६ ॥ ॥ ७ ॥ ॥ अथ केशिध्वजः क्लेशं मुमुक्षोः खांडिक्यस्य वैराग्यं परीक्षितुमाह—न प्रार्थितमिति ॥ प्रजापालनादेः क्षत्रधर्मस्य राज्यमूलत्वात्तदुपेक्षायां दोषात्किं राज्यं न प्रार्थितमिति भावः ॥ १ ॥ यतः कारणान्न प्रार्थितं तच्छृण्वित्याह—केशिध्वजेति ॥ २ ॥

तीति चिंतयामासेत्यन्वयः ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ भो इति ॥ भोः खांडिक्य मा क्रुधाः क्रोधं माकार्षीः ॥ ४२ ॥ ४३ ॥ ४४ ॥ तमिति ॥ अनायासिताः युद्धादिक्लेशमप्रापिताः सैनिकाः भटाः यैः ॥ ४५ ॥ ४६ ॥ एवमिति ॥ अत्र संसारे कः परमार्थः स च कथं भवतीत्यर्थे यूयं न पंडिताः ॥ ४७ ॥ ४८ ॥ ४९ ॥ यदीति ॥ तर्त्ताहि ॥ ५० ॥ इति श्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां षष्ठांशे षष्ठोऽध्यायः ॥ ६ ॥ ॥ खांडिक्याय ददौ विद्यां कर्मिणे गुरवे पराम् । केशिध्वजो न तच्चित्रं किमदेयं महात्मनाम् ॥ १ ॥ तत्त्वजिज्ञासवे खांडिक्याय तत्त्वज्ञानमुपदेष्टुं केशिध्वजस्तस्य विवेकवैराग्यपरीक्षार्थमाह—न प्रार्थितमिति ॥ अकंटकं निष्प्रतिपक्षं राज्यं विना प्रजापरिपालनादेः क्षत्रधर्मस्यासिद्धेः तत्सिद्धये राज्यप्रार्थनैव युक्ता अन्यथा स्वधर्महानिप्रसंगादिति भावः ॥ १ ॥ अत्रोत्तरं—केशिध्वजे

क्षत्रियाणामयं धर्मो यत्प्रजापरिपालनम् ॥ वधश्च धर्मयुद्धेन स्वराज्यपरिपंथिनाम् ॥३॥ तत्राशक्तस्य मे दोषो नैवास्त्यपहृते त्वया ॥ बंधायैव भवत्येषा ह्यविद्याप्यक्रमोज्झिता ॥ ४ ॥ अल्पोपभोगलिप्सार्थमियं राज्यस्पृहा मम ॥ अन्येषां दोषजा सैव धर्मं वै नानुरुध्यते ॥ ५ ॥ न याच्ञा क्षत्त्रबंधूनां धर्मायैतत्सतां मतम् ॥ अतो न याचितं राज्यमविद्यांतर्गतं तव ॥ ६ ॥ राज्ये गृध्नंत्यविद्वांसो ममत्वाहृतचेतसः ॥ अहंमानमहापानमदमत्ता न मादृशाः ॥ ७ ॥ श्रीपराशर उवाच ॥ प्रहृष्टस्साध्विति ततः प्राह केशिध्वजो नृपः ॥ खांडिक्यजनकं प्रीत्या श्रूयतां वचनं मम ॥८॥ केशिध्वज उवाच ॥ अहं ह्यविद्यया मृत्युं तर्तुकामः करोमि वै ॥ राज्यं यागांश्च विविधान्भोगैः पुण्यक्षयं तथा ॥९॥

तदेव कारणमाह—क्षत्रियाणामिति सार्द्धेन--क्षत्रियाणामिति ॥ सत्यं राज्ये सति प्रजारक्षणादिधर्मः ॥ ३ ॥ तत्रेति ॥ मम त्वशक्तस्य च तत्र राज्ये त्वयाऽपहृते सति तदुपेक्षायां न धर्मलोपदोषः अनधिकारात् सत्यधिकारे तदुपेक्षायां दोष इत्याह—बंधायेति । अक्रमोज्झिता विद्यमानेप्यधिकारे त्यक्ता अविद्या प्रजापालनादिक्रिया बंधाय पापाय । हि शब्दो हेतौ ॥४॥ असक्तस्येत्येतद्विवृणोति—जन्मेति ॥ अन्येषां दोषजा रागादिदोषजा राज्यस्पृहा न धर्मानुरोधिनी केवलमल्पोपभोगलिप्सार्थं भवति इयं न ममेत्यन्वयः । जन्मोपभोगेति पाठे अन्येषां संबंधिनी मम जन्मांतरोपभोगलिप्सैव । कुतः, अर्थमनुरुध्यते न धर्ममिति अस्मिन् जन्मन्युपभोगलिप्सार्थमेवेति वा ॥ ५ ॥ तर्हि पालनादिधर्मार्थम् अपहृतस्य राज्यस्य याच्ञा कर्त्तव्येत्यत्राह—न याच्ञेति ॥ क्षत्त्रबंधूनां क्षत्रियश्रेष्ठानाम् अविद्यांतर्गतं पालनादिकर्त्तव्यांतर्गतम् ॥ ६ ॥ यत्र गृध्नंत्यपंडिता इत्येतद्विवृणोति राज्य इति ॥ ७ ॥ ८ ॥ योगस्वरूपं वक्ष्यन् तदंतर्भूतमध्यात्मयोगाधिगमेनेति श्रुतिविहितम् प्रकृतिपुरुषविवेकं विहितं कर्म चाह—

त्यादि ॥ यतः कारणात्त्वदीयं राज्यं मया न प्रार्थितं तदिदं निबोध शृणु । यत्र राज्ये अपंडिताः अविवेकिनः भोगलिप्सव एव गृध्नंति अपेक्षां कुर्वंति ॥ २ ॥ ननु स्वधर्मसिद्धये पंडितानामपि राज्यकांक्षा युक्तैवेत्युक्तं तत्राह—क्षत्रियाणामिति ॥ यत्प्रजापरिपालनं यश्च स्वराज्यपरिपंथिनां वधः अयं राज्याधिकृतानां क्षत्रियाणां धर्मः । न तु क्षत्रियमात्रस्य ॥ ३ ॥ अतस्तत्रेति ॥ तत्र मद्राज्ये त्वयाऽपहृते सति पुनरात्मसात्कर्तुमशक्तस्य मम प्रजापरिपालनादित्यागेपि दोषो नैवास्ति । तत्रासक्तस्येति पाठे तत्र राज्ये असक्तस्य अनासक्तस्य मे दोषो नास्तीत्यर्थः । राज्याधिकाराभावेन तदधिकृतधर्मेऽप्यधिकारनिवृत्तेः अन्यथा तु दोषस्स्यादेव न पुनरविद्या । अस्य कर्मणस्त्यागे किं स्यादिति वक्तुं शक्यं हि यस्मादेषा कर्ममयी अविद्यापि अक्रमोज्झिता अन्यायेन सत्येवाधिकारे परित्यक्ता सती बंधाय भवत्येवेत्यर्थः ॥ ४ ॥ एवं च सति मम वा मंत्रिणां वा त्वद्राज्ये स्पृहा धर्माय न भवतीत्याह—जन्मेति ॥ यद्येवं धर्मः तदा ममेयं राज्यस्पृहा राजधर्मोचितच्छत्रचामरादिजन्मांतरोपभोगलिप्सार्थमेव भवति न तु धर्मार्थम् । अन्येषां सचिवादीनां सैव त्वद्राज्यस्पृहा रागलोभादिदोषजा अतो धर्ममेव केवलं नानुरुध्यते नानुवर्तते अपि तु धर्मवंचनेनार्थशास्त्रमेवानुवर्तत इत्यर्थः ॥ ५ ॥ ननु तथापि याचनामात्रेण राज्यं लब्ध्वा महान् धर्मः किमिति न क्रियते तत्राह—न याच्ञेति ॥ अतो धर्मत्वादविद्यांतर्गतत्वाच्च त्वदीयं राज्यं मया न प्रार्थितम् ॥ ६ ॥ अतो यत्र गृध्नंत्यपंडिता इति यदुक्तं तदेव सिद्धमित्याह—राज्य इति ॥ अहंमान एव महापानं तेन यो मदस्तेन मत्ताः ॥ ७ ॥ खांडिक्येनोक्तं श्रुत्वा केशिध्वजः किंकृतवानित्यपेक्षायामाह—प्रहृष्ट इति ॥ ॥ प्रहृष्टः साध्वीति पाठे तव बुद्धिरिति शेषः ॥ ८ ॥ अविद्यामयेपि राज्ये स्वप्रवृत्तौ तावत्कारणमाह—अहं हीति ॥ सत्यं त्वयोक्तं अविद्यांतर्गतत्वाद्राज्यमनुपादेयमिति तच्च ममापि

तदिदं ते मनो दिष्ट्या विवेकैश्वर्यतां गतम् ॥ तच्छ्रूयतामविद्यायास्स्वरूपं कुलनंदन ॥ १० ॥ अनात्मन्यात्मबुद्धिर्या चास्वे स्वमिति या मतिः ॥ संसारतरुसंभूतिबीजमेतद्द्विधा स्थितम् ॥ ११ ॥ पंचभूतात्मके देहे देही मोहतमोवृतः ॥ अहं ममैतदित्युच्चैः कुरुते कुमतिर्मतिम् ॥ १२ ॥ आकाशवाय्वग्निजलपृथिवीभ्यः पृथक् स्थिते ॥ आत्मन्यात्ममयं भावं कः करोति कलेवरे ॥१३॥ कलेवरोपभोग्यं हि गृहक्षेत्रादिकं च कः ॥ अदेहे ह्यात्मनि प्राज्ञो ममेदमिति मन्यते ॥ १४ ॥ इत्थं च पुत्रपौत्रेषु तद्देहोत्पादितेषु कः ॥ करोति पंडितस्स्वाम्यमनात्मनि कलेवरे ॥१५॥ सर्वं देहोपभोगाय कुरुते कर्म मानवः ॥ देहश्चान्यो यदा पुंसस्तदा बंधाय तत्परम् ॥ १६ ॥

अहं हीति ॥ "अविद्यया वर्णाश्रमविहितकर्मणा मृत्युं विद्योत्पत्तिविरोधि प्रारब्धकर्म अन्येषामप्येष विनाशः" इति श्रुतेः ॥९॥ तदिदमिति ॥ विवेकाख्यमैश्वर्यं विवेक एव ऐश्वर्यं यस्य तद्विवेकैश्वर्यं तद्भावो विवेकैश्वर्यता । कर्माख्याविद्यायाः स्वरूपमाह--तच्छ्रूयतामिति सार्द्धेन ॥ १० ॥ अनात्मनीति ॥ अनात्मनि देहे अहमिति भ्रमः अस्वे देहपोषकधारकादौ वस्तुनि स्वमिति संसारफलकं काम्यकर्मविद्या सैव तरुः तत्संभूतेर्बीजम् ॥ ११ ॥ एतद्द्विविधं च भ्रमं प्रपंचयति पंचभूतात्मक इत्यादि चतुर्भिः । पंचभूतात्मक इति ॥ देहे पंचभूतात्मके कुमतिर्देही इदं देहाद्यहमेवेति इदं क्षेत्रादि ममेति च मतिं कुरुते । मोहतमः पूर्वकर्मवासना ॥ १२ ॥ १३ ॥ कलेवर इति ॥ अदेहे आत्मनि देहादन्यस्मिन्नात्मनि सति ॥१४॥ इत्थं चेति ॥ अनात्मनि आत्मनोन्यस्मिन् सति ॥ १५ ॥ उक्तेनाज्ञानद्वयेन देहोपभोगार्थं कर्म

तुल्यं तथाप्यविद्यया प्रजापालनादिकर्मलक्षणया सत्त्वशुद्धया कामक्रोधादिलक्षणं मृत्युं संसारहेतुं तर्तुमिच्छन्नहं राज्यादि करोमि "अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते" इत्यादि श्रुतेः ॥ ९ ॥ तदिति ॥ तव पुनस्तदिदं मनः विवेके ऐश्वर्यं सामर्थ्यं यस्य तस्य भावो विवेकैश्वर्यता तां गतं प्राप्तम् उपदेशाद्यनपेक्षं स्वयमेव विवेकाधिकारतां गतं प्राप्तम् एतद्दिष्ट्या भद्रमित्यर्थः । विवेकैश्वर्यमागतमिति तु पाठः सुगमः । तदेवं शिष्यस्य विवेकादिकं परीक्ष्याभिनंद्य चेदानीं तेन यत्पृष्टं तत्क्लेशप्रशमायालं यत्कर्म तदुदीरयेति तद्वक्तुं प्रथमं तावदविद्याख्यं क्लेशस्वरूपं दर्शयति तच्छ्रूयतामित्यादिसार्धेन श्लोकेन ॥ १० ॥ अनात्मनीति ॥ अनात्मनि देहादौ स्वक्षेत्रादौ च अहंममेति या मतिस्सा अविद्या विपर्ययरूपा या "अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या" इति पातंजलं तस्या अनर्थहेतुत्वमाह--एतद्द्विधादर्शितमविद्यास्वरूपं संसारतरुसंभूतेः बीजतया स्थितम् ॥ ११ ॥ देहादावहंमानस्याविद्यात्वमुपपादयति--पंचेति ॥ पंचभूतात्मके देहे देही कुमतिः विपर्ययमतिः अहं ममैतदिति मतिं कुरुते । द्वितीयमतिशब्दस्तदावृत्त्यर्थः । विपर्यासे हेतुः मोहतमसा स्वरूपाज्ञानेनावृत इति । अज्ञाते हि वस्तुस्वरूपे विपर्यासो भवति ॥ १२ ॥ कुमतित्वमेव स्पष्टयति--आकाशेति ॥ आकाशादिभ्यस्तत्साक्षितया आत्मनि पृथक्स्थिते सति तत्कार्ये देहे आत्ममयं भावं कः कुर्यात् ॥ १३ ॥ मम प्रत्ययस्यापि मिथ्यात्वं स्पष्टयति कलेवरेत्यादिद्वाभ्याम्--कलेवरेति ॥ अदेहे देहव्यतिरिक्ते आत्मनि सति देहोपभोग्यं गृहादि मदीयमिति कः प्राज्ञो मन्यते ॥ १४ ॥ इत्थं चेति ॥ कलेवरे अनात्मनि सति तदुत्पादितेषु कस्स्वाम्यं करोति ॥ १५ ॥ तदेव देहगेहादिषु अहं ममाभिमानयोरविद्यात्वं समर्पितम्, इदानीं तत्पूर्वकं कर्तृत्वभोक्तृत्वाद्यपि अविद्यामयमेवेत्याह--सर्वमित्यादिना ॥ देहं च यदा पुंसस्सकाशादन्यं मन्यते तदा

मृण्मयं हि यथा गेहं लिप्यते वै मृदंभसा ॥ पार्थिवोऽयं तथा देहो मृदंब्वालेपनस्थितः ॥ १७ ॥ पंचभूतात्मकैर्भोगैः पंचभूतात्मकं वपुः ॥ आप्यायते यदि ततः पुंसो भोगोऽत्र किं कृतः ॥१८॥ अनेकजन्मसाहस्रीं संसारपदवीं व्रजन् ॥ मोहश्रमं प्रयातोऽसौ वासनारेणुकुंठितः॥१९॥ प्रक्षाल्यते यदा सोस्य रेणुर्ज्ञानोष्णवारिणा ॥ तदा संसारपांथस्य याति मोहश्रमश्शमम् ॥२०॥ मोहश्रमे शमं याते स्वस्थांतःकरणः पुमान्॥ अनन्यातिशयाबाधं परं निर्वाणमृच्छति ॥ २१ ॥ निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः ॥ दुःखाज्ञानमया धर्माः प्रकृतेस्ते तु नात्मनः ॥ ॥ २२ ॥ जलस्य नाग्निसंसर्गस्थालीसंगात्तथापि हि ॥ शब्दोद्रेकादिकान्धर्मांस्तत्करोति यथा नृप ॥ २३ ॥

करोति तच्च बंधाय भवतीत्याह—सर्वमिति ॥ देहस्योपभोगाय नात्मनः बंधाय देहांतरोत्पादनाय ॥ १६ ॥ देहोपभोगमेव दर्शयति । मृण्मयं हीत्यादिद्वयेन ॥ १७ ॥ १८ ॥ देहस्य पार्थिवत्वपांचभौतिकत्वोक्तिः मतभेदेन तदिदमुभयविधमज्ञानमध्यात्मज्ञानेन निरस्यत इत्याह—अनेकेति द्वयेन—अनेकेति ॥ वासना अज्ञानकर्मोभयवासना मोहश्रमम् अज्ञानजं दुःखम् ॥ १९ ॥ २० ॥ मोहेति ॥ अनन्यातिशयमन्यातिशयरहितम् । अबाधमदुःखं निर्वाणं मोक्षसुखम् ॥ २१ ॥ निर्वाणमात्मनः स्वरूपं न तु कर्मफलवदौपाधिकमित्याह—निर्वाणमय इति ॥ निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः निर्मलसुखरूपज्ञानरूप एवायमात्मा यथोक्तम् "यथा न क्रियते ज्योत्स्ना मलस्याक्षालनान्मणेः । दोषाप्रहाणान्न ज्ञानमात्मनः क्रियते तथा" इति । "न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते, संपद्याविर्भावः स्वेन शब्दात्, यावदात्मभावित्वात्" इत्यादि । आगंतुकचैतन्यादिगुणक आत्मेति वादोऽपि बाह्यः प्रकृतेस्ते तु नात्मन इति प्राप्ताप्राप्तविवेकेन प्रकृतिसं बन्धनिबन्धनत्वात् उक्तं न त्वचेतनधर्माः । न हि देहस्य कारणानां वा सुखित्वाद्यनुसंधानसंभवः "पुरुषः प्रकृतिस्थो हि भुंक्ते" इत्यादिविरोधश्च ॥ २२ ॥ अत्र दृष्टांतमाह—जलस्येति ॥ यथा स्वतः शीतमंबु शब्दफेनादिरहितम् एवमात्मा स्वत एव निर्मलानंतज्ञानानंदः तस्यास्संगादात्माहंमानादिदूषितः अग्निसंयुक्तस्था

पुंसो भोगसंबंधो नास्त्येव । परं केवलं तत्कर्म तस्य बंधायैव भवति ॥ १६ ॥ देहोपभोगायेति यदुक्तं तदेव दृष्टांतेन समर्थयति मृण्मयमित्यादिद्वाभ्यां—मृण्मयमिति ॥ मृदंबुभ्यामन्नपानरूपाभ्यामालेपनेन स्थितिर्यस्य स तथा ॥ १७ ॥ १८ ॥ भोगैर्भुज्यमानैरन्नादिभिः पुंसो बंधायेत्युक्तं तत्र हेतुमाह--अनेकेति ॥ सहस्रमेव साहस्रम् अनेकजन्मसाहस्राणि यस्यां तां संसाररूपां पदवीं मार्गं गच्छन्नसौ मोहः कर्तृत्वाद्यभिनिवेशः तत्कृतं श्रमं प्रयातः प्राप्तः । यतः वासना अहंममेति मिथ्याज्ञानसंस्कारः सैव रेणुः तेन कुंठितः छन्नः ॥ १९ ॥ कदा तस्य श्रमोपशम इत्यपेक्षायामाह--प्रक्षाल्यत इति ॥ ज्ञानात्मकेनोष्णवारिणा उष्णोदकेन हि सुखेनैव अंतर्गतोपि मलः प्रकर्षेण क्षाल्यते यदा तदा संसारपांथस्य मोहश्रमश्शमं याति ॥ २० ॥ ततः किमत आह--मोहश्रम इति ॥ न विद्यते अन्यः अतिशयो यस्मिन् तदनन्याशयं तच्च तदबाधं च निरुपद्रवं निर्वाणं सुखं परं मोक्षाख्यं प्राप्नोति ॥ २१ ॥ नन्वेवं निर्वाणस्यागंतुकत्वे अनित्यता प्रसज्येत तत्राह--निर्वाणमय एवेति ॥ २२ ॥ कथं तस्यात्मनो दुःखादिप्रतीतिस्तत्राह--जलस्येत्यादिद्वाभ्याम्--जलस्येति ॥ अग्नि

तथात्मा प्रकृतेस्संगादहंमानादिदूषितः ॥ भजते प्राकृतान्धर्मानन्यस्तेभ्यो हि सोऽव्ययः ॥ २४ ॥ तदेतत्कथितं बीजमविद्याया मया तव ॥ क्लेशानां च क्षयकरं योगादन्यन्न विद्यते ॥ २५ ॥ खांडिक्य उवाच ॥ तं ब्रवीहि महाभाग योगं योगविदुत्तम ॥ विज्ञातयोगशास्त्रार्थस्त्वम स्यां निमिसंततौ ॥ २६ ॥ केशिध्वज उवाच ॥ योगस्वरूपं खांडिक्य श्रूयतां गदतो मम ॥ यत्र स्थितो न च्यवते प्राप्य ब्रह्मलयं मुनिः ॥ ॥ २७ ॥ मन एव मनुष्याणां कारणं बंधमोक्षयोः ॥ बंधाय विषयासंगि मुक्त्यै निर्विषयं मनः ॥ २८ ॥ विषयेभ्यस्समाहृत्य विज्ञानात्मा मनो मुनिः ॥ चिंतयेन्मुक्तये तेन ब्रह्मभूतं परेश्वरम् ॥ २९ ॥ आत्मभावं नयत्येनं तद्ब्रह्म ध्यायिनं मुनिम् ॥ विकार्यमात्मनश्शक्त्या लोहमाकर्षको यथा ॥ ३० ॥

लीस्थानीया तापत्रययुक्ता प्रकृतिः । तथा प्राकृतान् धर्मान् क्षुत्तृष्णादीन् स्वकीयान् मन्यते भजते तेन दुःखादिकं जायते ॥२३॥२४॥ तदेतदिति ॥ तत्क्लेश प्रशमायालमिति प्रश्नस्य प्रतिवचनमाह—क्लेशानामिति । योगाद्भगवद्योगात् ॥२५॥२६॥ योगस्वरूपमिति ॥ ब्रह्मलयं ब्रह्मणि लयं ब्रह्मभावमित्यर्थः । "ये कर्मणा देवान् पियंति" इतिवत् । यद्वा "मेने चात्मानमच्युतम्" ॥ २७ ॥ अथ योगस्य स्वरूपं करणं विषयं फलं चाह—मन एवेत्यादिभिः ॥२८॥ विषयेभ्य इति ॥ विज्ञानात्म कृतिपुरुषेश्वरवैलक्षण्यज्ञानात् तेन मानसेन चिंतयेत् इति । योगस्वरूपं परमेश्वरमिति चिन्तयेत् ॥ २९ ॥ फलमाह—आत्मभावमित्यादिना । आत्मभावमिति ॥ विकार्यमिति अनाद्यविद्याकर्मवासनादेहैर्बद्धस्यात्मनो भगवज्ज्ञानेन तदवस्थानाशस्सर्वभावनानाशश्चात्यंतिकलयशब्दवाच्यं विकार्यत्वम् । एवं विकार्यमात्मानं चिंतितं तद्ब्रह्मात्मभावं नयति । आत्मनो भावस्स्वभावः आत्मभावः सत्यकामत्वादिः जक्षन् क्रीडन्नित्यादिव्यापारश्च "ब्राह्मेण जैमिनिरुपन्यासादिभ्यः" इत्यादिसूत्रैर्व्यक्तस्य मुक्तस्य ब्रह्मणः क्रीडादीनामाविर्भाव उक्तः । अत्राप्युक्तं निर्वाणमय एवायमात्मेत्यादि वक्ष्यति च "प्रापणीयस्तथैवात्मा प्रक्षीणाशेषभावनः" इति । आकर्षको मणिरयस्कांतः आकर्षको हि लोहमात्मभावं नयति स्वस्मिन् तिष्ठति स्थापयति गच्छति गमयति भ्रमति भ्रामयति "अनुकृतेस्तस्य च कामरूप्यनुसंचरन् वत्सो वा मातरं छायावासत्वम्" इत्यादिश्रुतिशतं च । यद्वा दोषाकर्षकत्वादाकर्षक इत्यग्निरुच्यते "यथाग्निसंगात्कनकमपदोषं प्रजायते । संक्लिष्टं वासुदेवेन मनुष्याणां तथा मनः ॥

संसर्गेण तप्तायाः स्थाल्यास्संगादंतःस्थितं जलं शब्दमुद्रेकं च आदिशब्दाच्छोपम् उष्णत्वादिकं च यथा भजते ॥ २३ ॥ तथेति ॥ तथा प्राकृते देहे स्थित आत्मा अहंमानाद्यात्मधर्मान्भजते ॥ २४ ॥ अविद्यामुपसंहरंस्तन्निवर्तकं योगमुपक्षिपति--तदेतदिति ॥ अविद्यायाः पंचक्लेशाख्यायाः बीजं मोहतमस्संज्ञम् आत्मावरणाज्ञानम् ॥ २५ ॥ २६ ॥ योगस्वरूपमिति ॥ यत्र योगे स्थितः योगारूढो मुनिः ब्रह्मलयं प्राप्य मुक्तिं प्राप्य ततो न च्यवते पुनर्न संसरति ॥ २७ ॥ योगे स्थितिश्च मनसो विषयवैतृष्ण्यं विना न सिद्धयतीत्याशयेनाह—मन इति ॥ २८ ॥ अतो मुमुक्षुरेवं कुर्यादित्याह--विषयेभ्य इति ॥ विज्ञानात्मा विवेकज्ञानयुक्तः मुनिः मननशीलः पुमान् शब्दादिभ्यो मनः प्रत्याहृत्य तेन मनसा ब्रह्मभूतं परमेश्वरं चिंतयेत् ॥ २९ ॥ ततः किमत आह--आत्मभावमिति ॥ तत् चिंतितं शब्दब्रह्म एनं ध्यायिनं पुरुषमात्मभावमैक्यं

आत्मप्रयत्नसापेक्षा विशिष्टा या मनोगतिः ॥ तस्या ब्रह्मणि संयोगो योग इत्यभिधीयते ॥३१॥एवमत्यंतवैशिष्ट्ययुक्तधर्मोपलक्षणः ॥ यस्य योगस्स वै योगी मुमुक्षुरभिधीयते ॥३२ ॥ योगयुक् प्रथमं योगी युंजानो ह्यभिधीयते ॥ विनिष्पन्नसमाधिस्तु परं ब्रह्मोपलब्धिमान् ॥३३॥ यद्यंतरायदोषेण दूष्यते चास्य मानसम् ॥ जन्मांतरैरभ्यसतो मुक्तिः पूर्वस्य जायते ॥ ३४ ॥

यथाग्निरुद्धतशिखः कक्षं दहति सानिलः । तथा चित्तस्थितो विष्णुः प्राणिनां सर्वकिल्बिषम् ॥" "यथेषिकातूलमग्नौ प्रोतं प्रदूयते एवं हास्य सर्वे पाप्मानः प्रदूयंते" इत्यादिभिर्भगवतोऽग्निसाम्यमुक्तम् । अग्निवद्भावो हि कनकस्य दोषविगमाज्जायते पूर्वं दोषसंस्पृष्टं तिरोहितस्वप्रभं कनकमग्निर्हि स्वशक्त्या स्वसमानवर्णं करोति ॥ ३० ॥ एवं संक्षिप्योक्तं योगमध्यायशेषेण विस्तरतो दर्शयति—आत्मप्रयत्नेति ॥ विषयेष्वनादिवासनावासितत्वात्परमात्मनोऽत्यंतापूर्वत्वाच्च दुरारोहत्वादात्मप्रयत्नसापेक्षा विशिष्टा एका संततिश्चैति वक्ष्यमाणप्रकारा विशदतमप्रत्यक्षतापन्ना निरस्तातिशयाह्लादरूपा पूर्वोक्तानंतगुणकषायविशेषविशिष्टा वा या मनोगतिः तस्या ब्रह्मणि संयोगः योगः । अनेनात्मपरमात्मनोर्योगो योग इति पक्षो निरस्तः ॥ ३१ ॥ एवमिति ॥ उक्तप्रकारात्यंतवैशिष्ट्ययुक्तो धर्मरूपो योगो यस्य स मुमुक्षुर्योगीत्यभिधीयते । अत्र मोक्षसाधनं योगः स च धर्मरूप इति वदन् वाक्यार्थज्ञानं मोक्षसाधनं ज्ञानमविधेयमिति च वादिनो निरस्यति ॥ ३२ ॥ अथ योगिनोवस्थाभेदेन संज्ञाद्वयमाह—योगयुगिति ॥ प्रथमं युंजानो योगे प्रक्रांतो योगयुगित्यभिधीयते साक्षात्कृतपरमात्मस्वरूपो विनिष्पन्नसमाधिरित्यभिधीयते। ध्यानपर्यंतसप्तांगयोगनिष्ठस्य योगयुक्तं समाधिमतो योगित्वमिति विभागः ॥ ३३ ॥ तयोः पूर्वस्यानेकजन्मस्वभ्यासान्मुक्तिः इतरस्य तत्रैवेत्याह—यद्यंतरायेत्यादिद्वयेन—यद्यंतरायेति ॥ अंतरायाः प्रक्रांतयोगानां यावद्धारणम् आलस्यादयो दश धारणातः परं प्रतिभाद्याः षट् । तथा च वायुसंहितायाम्—"आलस्यं व्याधयस्तीव्राः प्रमादस्थानसंशयः । अनवस्थितचित्तत्वमश्रद्धा भ्रांतिदर्शनम् ॥ दुःखानि दौर्मनस्यं च विषयेषु च लोलता । दशैते युंजतां पुंसामंतरायाः प्रकीर्त्तिताः ॥ शांतेष्वेतेषु विघ्नेषु योगसक्तस्य योगिनः । उपसर्गाः प्रवर्त्तंते दिव्याः षट् सिद्धिसूचकाः ॥ प्रतिभाश्रवणं वार्त्ता दर्शनास्वादवेदनाः । सूक्ष्मे चांतर्हितेऽतीते विप्रकृष्टे त्वनागते ॥ प्रतिभा कथ्यते योर्थे प्रतिभासो यथातथम् । श्रवणं सर्वशब्दानां श्रवणं त्वप्रयत्नतः ॥ वार्त्ता वार्त्तासु विज्ञानं सर्वेषामेव देहिनाम् । दर्शनं नाम दिव्यानां दर्शनं चाप्रयत्नतः ॥ तथा स्वादश्च दिव्येषु

नयति विकार्यं विकारार्हं लोहं स्वशक्त्या आकर्षकः अयस्कांतः यथा । अयं तु दृष्टांतस्संयोगमात्रे न तु तदैक्ये ॥ ३० ॥ इदानीं संयोगस्वरूपं दर्शयति—आत्मेति ॥ आत्मनः प्रयत्नो यमनियमादिविषयः तत्सापेक्षा तदधीना विशिष्टा सत्त्वमयी मनसो वृत्तिः तस्याः ब्रह्मण्यैव संयोगो योगः ॥ ३१ ॥ योगिनो लक्षणमाह—एवमिति ॥ एवमनेन प्रकारेण ॥ ३२ ॥ योगिनोऽवस्थाभेदेन द्वैविध्यमाह—योगयुगिति ॥ प्रथमं योगनिष्पत्तेः पूर्वं तदर्थं योगाभ्यासं कुर्वन्योगयुगित्युच्यते। परं ततः पश्चाद्ब्रह्मोपलब्धिमान् सन् विनिष्पन्नसमाधिः कथ्यते ॥ ३३ ॥ किंचिद्विशेषमाह—यदीत्यादिद्वाभ्याम्—यदीति ॥ "आलस्यं व्याधयस्तीव्राः प्रमादस्थानसंशयः ।

विनिष्पन्नसमाधिस्तु मुक्तिं तत्रैव जन्मनि ॥ प्राप्नोति योगी योगाग्निदग्धकर्मचयोऽचिरात् ॥३५॥ ब्रह्मचर्यमहिंसां च सत्यास्तेयापरिग्रहान् ॥ सेवेत योगी निष्कामो योग्यतां स्वमनो नयन् ॥ ३६ ॥ स्वाध्यायशौचसंतोषतपांसि नियतात्मवान् ॥ कुर्वीत ब्रह्मणि तथा परस्मिन्प्रवणं मनः ॥ ३७ ॥ एते यमास्सनियमाः पंच पंच च कीर्त्तिताः ॥ विशिष्टफलदाः काम्या निष्कामानां विमुक्तिदाः ॥ ३८ ॥ एकं भद्रासनादीनां समास्थाय गुणैर्युतः ॥ यमाख्यैर्नियमाख्यैश्च युंजीत नियतो यतिः ॥ ३९ ॥ प्राणाख्यमनिलं वश्यमभ्यासात्कुरुते तु यत् ॥ प्राणायामस्स विज्ञेयस्सबीजोऽबीज एव च ॥ ४० ॥ परस्परेणाभिभवं प्राणापानौ यथानिलौ ॥ कुरुतस्सद्विधानेन तृतीयस्संयमात्तयोः ॥ ४१ ॥

रसेष्वास्वाद उच्यते । स्पर्शनाधिगमस्तद्वद्वेदनानामविश्रुता ॥ गंधादीनां च दिव्यानामाब्रह्मभवनावधि" इति ॥ तथा अहिंसादिफलभूतास्तत्सन्निधौ वैरत्याग इत्यादिना पतंजलिनोक्तास्संगस्यापादिकाः सिद्धयोऽष्टैश्वर्याद्याश्च निष्कामस्यांतरायाः "प्रतिमादिष्वशुद्धेषु गुणेष्वासक्तचेतसाम् । न सिद्ध्येत्परमैश्वर्यमक्षयं सार्वकामिकम्" इति वायूक्तेः ॥ ३४ ॥ ३५ ॥ योगांगेषु प्रथमं यमनियमावाह–ब्रह्मचर्यमित्यादित्रिभिः–ब्रह्मचर्यमिति ॥ ब्रह्मचर्यं मैथुनत्यागः, निषिद्धद्रव्याणामनादानमपरिग्रहः ॥ ३६ ॥ स्वाध्यायेति ॥ तपः उपवासादि परस्मिन् ब्रह्मणि मनःप्रावण्यमेको गुणः ॥ ३७ ॥ एत इति ॥ विशिष्टफलदाः सकामानाम् ॥ ३८ ॥ एकमिति ॥ आदिशब्देन स्वस्तिकादीनि गृह्यंते, भद्रासनादीनां लक्षणं याज्ञवल्क्येनोक्तम् ॥ ३९ ॥ प्राणेत्यादि ॥ सबीजः सगर्भः सालंबनः भगवन्मूर्त्तिध्यानमंत्रजपयुक्तः । अबीजः तद्विधुरः ॥ ४० ॥ रेचकादिरूपेण प्राणायामं त्रिधा दर्शयति–परस्परेणेति ॥ प्राणेन निश्वासेन अपानस्य उच्छ्वासस्याभिभवो निरोधः प्रथमः प्राणायामो रेचकः विपरीतः । पूरकाख्यो द्वितीयः स द्विधा तेनेति । सः प्राणायामः तेन उक्तेन प्रकारद्वयेन द्विधा । सद्विधानेनेति पाठांतरेऽप्येवमेवार्थः । तयोरुच्छ्वासनिश्वासयोर्युगपत्संयमात्तृतीयः कुंभकाख्यः । एते त्रयोऽपि प्रत्येकं मात्राभेदात्त्रिधा । यथोक्तम्--"मात्राद्वादशको मंदश्चतुर्विंशतिमात्रकः । मध्यमः प्राणसंरोधः षट्त्रिंश

अनवस्थितचित्तत्वमश्रद्धा भ्रांतिदर्शनम् ॥ दुःखानि दौर्मनस्यं च विषयेषु च लोलता ॥" इत्येवमाद्यंतरायरूपेण पूर्वस्य योगयुक्तस्य ॥ ३४ ॥ विनिष्पन्नेति ॥ योगाग्निना दग्धः कर्मसमूहो यस्य ॥ ३५ ॥ इदानीं यमनियमासनप्राणायामप्रत्याहारधारणाद्ध्यानसमाधय इत्यष्टयोगांगानि क्रमेण दर्शयिष्यन् यमनियमावाह–ब्रह्मचर्यमित्यादित्रिभिः–ब्रह्मचर्यमिति ॥ स्वकीयं मनः ब्रह्मप्रवेशयोग्यतां प्रापयन् ॥ ३६ ॥ स्वाध्यायेति ॥ परस्मिन्ब्रह्मणि मनः प्रवणं कुर्वीतेत्यनेन ईश्वरे प्रणिधानाख्यं पंचमं नियमं दर्शयति ॥ ३७ ॥ ३८ ॥ आसनमाह–एकमिति ॥ यमाख्यैर्नियमाख्यैश्च गुणैर्युतस्सन् भद्रासनादीनां लक्षणमुक्तं याज्ञवल्क्येन "गुल्फौ तु वृषणस्याधः सीवन्याः पार्श्वतः क्षिपेत् । पार्श्वपादौ च हस्ताभ्यां दृढं बद्ध्वा सुनिश्चलम् ॥ भद्रासनं भवेदेतत्सर्वव्याधिविषापहम् ॥" इत्यादि ॥ ३९ ॥ प्राणायाममाह–प्राणाख्यमिति ॥ सबीजस्सालंबनः भगवन्मूर्तिध्यानमंत्रजपसहितः ॥४०॥ द्विविधस्यापि पुनस्त्रैविध्यमाह–परस्परेणेति ॥ उच्छ्वासेन मुखनासाभ्यां बहिर्गच्छति यो वायुः स प्राणः, निश्वासेनांतः प्रविशति यः सोऽपानः । तत्र प्राणवृत्त्या अपानवृत्तेरभिभवः

तस्य चालंबनवतः स्थूलरूपं द्विजोत्तम ॥ आलंबनमनंतस्य योगिनोऽभ्यसतः स्मृतम् ॥ ४२ ॥ शब्दादिष्वनुरक्तानि निगृह्याक्षाणि योगवित् ॥ कुर्याच्चित्तानुकारीणि प्रत्याहारपरायणः ॥ ४३ ॥ वश्यता परमा तेन जायतेति चलात्मनाम् ॥ इन्द्रियाणामवश्यैस्तैर्न योगी योगसाधकः ॥ ४४ ॥ प्राणयामेन पवने प्रत्याहारेण चेंद्रिये ॥ वशीकृते ततः कुर्यात्स्थितं चेतश्शुभाश्रये ॥ ४५ ॥ खांडिक्य उवाच ॥ कथ्यतां मे महाभाग चेतसो यश्शुभाश्रयः ॥ यदाधारमशेषं तद्धंति दोषमलोद्भवम् ॥ ४६ ॥ केशिध्वज उवाच ॥ आश्रयश्चेतसो ब्रह्म द्विधा तच्च स्वभावतः ॥ भूप मूर्त्तममूर्त्तं च परं चापरमेव च ॥ ४७ ॥

न्मात्र उत्तमः ॥ प्रस्वेदकंपनोत्थानजनकास्ते यथाक्रमम् । जातु प्रदक्षिणीकृत्य न द्रुतं न विलंबितम् ॥ अंगुलीस्फोटनं कुर्यात्सा मात्रेति प्रकीर्त्तिता । प्राणस्स्वदेहजो वायुरायामस्तन्निरोधनम् ॥ तद्रेचकः पूरकश्च कुंभकश्च त्रिधोच्यते । नासिकापुटमंगुल्या निपीड्यैकं परेण तु ॥ औदरं रेचयेद्वायुं तदायं रेचकः स्मृतः । बाह्येन वायुना देहं धृतिवत्परिपूरयेत् । नासापुटेनापरेण पूरणात्पूरको मतः ॥ न मुंचति न गृह्णाति वायुमंतर्बहिस्स्थितम् । संपूर्णकुंभवत्तिष्ठेदचलस्स तु कुंभकः ॥ रेचकादित्रयाभ्यासो नासाशोधनपूर्वकः । स्वेदोत्क्रमणपर्यंतः प्रोक्तो योगानुशासने ॥ अगर्भश्च सगर्भश्च प्राणायामो द्विधा पुनः । जपध्यानं विना गर्भः सगर्भस्तत्समन्वयात् ॥ अगर्भाद्गर्भसंयुक्तः प्राणायामश्शताधिकः ॥" इति ॥ ४१ ॥ प्राणायामं सबीजनिर्बीजतया द्विधाऽभिप्रेत्य तत्र सबीजस्यालंबनमाह—तस्येति ॥ स्थूलरूपं मूर्त्तं भगवतो रूपमिति वक्ष्यमाणं रूपस्य स्थूलत्वं भगवत्स्वरूपापेक्षया ॥ ४२ ॥ प्रत्याहारमाह--शब्दादिष्विति ॥ ४३ ॥ ४४ ॥ प्राणायामेनेति ॥ प्राणायामेन पवने प्रत्याहारेण चेंद्रिये वशीकृते सति चेतश्शुभाश्रये पूर्वोक्तभगवत्स्थूलरूपे स्थितं कुर्यात् । अनेन श्लोकेन धारणोक्ता ॥ ४५ ॥ कथ्यतामिति ॥ तच्चेतः दोषमलोद्भवं दोषमलयोरुद्भवं दोषः कल्मषं मलं रागादि ॥ ४६ ॥ अथ शुभाश्रयं वक्ष्यन्न् प्रथमं हेयमशुभाश्रयं दर्शयति--आश्रय इति ॥ चेतस आश्रयो ब्रह्म

निरोधो रेचकाख्यः प्राणायामः । एवमपानवृत्त्या प्रागवृत्तेरभिभवः पूरकाख्यः । एवमनेन परस्पराभिभवप्रकारद्वयेन प्राणायामो द्विधा तयोर्युगपत्संयमात्कुंभकाख्यस्तृतीयः प्राणायामः । यद्वा सद्विधानेनेत्येकमेव पदं तत्रायमर्थः—सद्विधानेन सद्गुरूपदिष्टमार्गेण रेचकपूरकाभ्यां परस्पराभिभवद्वयं यश्च कुंभकेन उभयोस्सहाभिभवः एवमभिभवत्रयेणैकः प्राणायाम इति ॥ ४१ ॥ सबीजस्यालंबनमाह—तस्य चेति ॥ ४२ ॥ स्थूलं वक्ष्यमाणहिरण्यगर्भादिरूपं प्रत्याह--शब्दादिष्विति ॥ चित्तानुकारीणि चित्तालंबनाद्यन्यशून्यानीत्यर्थः ॥ ४३ ॥ एवंभूतस्य प्रत्याहारस्योपयोगमाह—वश्यतेति ॥ इंद्रियवश्यतायाः फलमाह—अवश्यैरस्वाधीनैः इंद्रियैः योगस्य धारणादेः साधको न स्यात् ॥ ४४ ॥ तस्मात्प्राणायामप्रत्याहारपूर्वकमेव धारणामभ्यसेदित्याह—प्राणायामेनेति ॥ ४५ ॥ कथ्यतामिति ॥ यदाधारं चेतः दोषमलानामंतरायाणामुद्भवं हंति स आश्रयः कथ्यताम् ॥ ४६ ॥ तमेवाह--आश्रय इति ॥ चेतसः आश्रयो ब्रह्मैव तच्च मंदमध्यमोत्तमाधिकारिणां यथायोगं मूर्तामूर्तपरापरभेदेन चतुर्धावस्थितं क्रमेण धारणाविषय इति दर्शयितुं ब्रह्मणश्चातुर्विध्यमाह—द्विधेति ॥ तच्च ब्रह्म मूर्तममूर्तं चेति द्विधा स्वभावतः स्वेच्छातः ।

त्रिविधा भावना भूप विश्वमेतन्निबोधताम् ॥ ब्रह्माख्या कर्मसंज्ञा च तथा चैवोभयात्मिका ॥ ४८ ॥ कर्मभावात्मिका ह्येका ब्रह्मभावात्मिका परा ॥ उभयात्मिका तथैवान्या त्रिविधा भावभावना ॥ ४९ ॥ सनंदनादयो ये तु ब्रह्मभावनया युताः ॥ कर्मभावनया चान्ये देवाद्याः स्थावरावराः ॥ ५० ॥ हिरण्यगर्भादिषु च ब्रह्मकर्मात्मिका द्विधा ॥ बोधाधिकारयुक्तेषु विद्यते भावभावना ॥ ५१ ॥ अक्षीणेषु समस्तेषु विशेषज्ञानकर्मसु ॥ विश्वमेतत्परं चान्यद्भेदभिन्नदृशां नृणाम् ॥ ५२ ॥ प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम् ॥ वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ॥ ५३ ॥

तच्च स्वरूपतो द्विधा मूर्त्तममूर्त्तं च मूर्तं सशरीरं हिरण्यगर्भादिवद्धरूपम् । अमूर्त्तमशरीरं मुक्तरूपं परत्वापरत्वे व्युत्क्रमेण तयोर्विशेषणे ब्रह्मात्मकत्वात् तयोर्ब्रह्मशब्दनिर्देशः अनयोरपि भगवद्रूपत्वेन ध्येयत्वप्रसंगात्तत्प्रतिषेधाय प्रस्तावः ॥ ४७ ॥ त्रिविधेति ॥ अनंतरोक्तं मूर्त्तामूर्त्तात्मकमेतद्विश्वं त्रिविधा भावना भावनात्रयात्मकमित्यर्थः । तां भावनां निबोध ब्रह्माख्येत्यादिब्रह्मकर्मादिविषयतया ब्रह्मादिव्यपदेशः ॥४८॥ एतदेवाह--कर्मभावात्मिकेति ॥ भावभावना भावो मनोव्यापारः भावेन भावना भावभावना भावः पदार्थो वा ॥४९॥ केषां का भावनेति तत्राह--सनंदनादय इति ॥ स्थावराऽवराः स्थावरचरमाः स्थावराणां हिमवदादीनां हि कर्मस्वधिकारः श्रूयते । "बिल्वा मार्दंगिका ह्यासन् क्रीडंत्योषधयस्सदा" इति च ॥ ५० ॥ हिरण्यगर्भादिष्विति ॥ संसारदशायामधिकारबोधयुक्तेषु भावनात्रयान्वय इत्याह--बोधाधिकारीति ॥ अधिकारो नाम मत्फलसाधनत्वात् मदर्थमिदं कर्मेति कर्मण्यैश्वर्यबोधः ॥ ५१ ॥ विश्वमेतदुक्तमर्थरूपं विशेषज्ञानकर्मस्वक्षीणेष्वित्याह--अक्षीणेष्विति ॥ विशेषज्ञानं देवमनुष्यादिभेदभिन्नतयाऽऽत्मानुसंधानं तत्तदभिमानानुरूपं कर्म विशेषकर्म । अथ पराख्यं मूर्त्तरूपमाह--परं चान्यदित्यादिना परमात्मन इत्यंतेन । भेदभिन्नदृशामिति पंचम्यर्थे षष्ठी ये पूर्वश्लोके अक्षीणसमस्तविशेषज्ञानकर्माण उक्ताः तेभ्यो भेदभिन्नदृग्भ्यो ब्रह्मसनकादिभ्योऽन्यत् तत्पराख्यम् ॥ ५२ ॥ अन्यत्वमुपपाद

मूर्तं मूर्तिमत् अमूर्तं तद्रहितं तत्पुनः प्रत्येकं परं चापरं चेति द्विधा । तत्र परममूर्तं निर्गुणं ब्रह्म । अपरममूर्तं षड्गुणैश्वर्यरूपम् । परं मूर्तं पद्मनाभादिलीलाविग्रहरूपम् । अपरं मूर्तं हिरण्यगर्भादिविश्वरूपम् । तदेवं परं ब्रह्म ब्रह्मैश्वर्यलीलामूर्तविश्वरूपभेदैश्चतुर्धेत्युक्तम् ॥ ४७ ॥ तत्र चतुर्थं विश्वाख्यं रूपमाह--त्रिविधेत्यादिना--त्रिविधेति ॥ त्रिविधभावनाश्रयजीवात्मकत्वात् उपचारेण त्रिविधा भावनेत्युच्यते । तदेव हरेः स्थूलरूपम् । अतः पररूपप्राप्त्युपायत्वात्तत्र प्रथमं मनस्संधार्यमिति भावः । भावना नाम ज्ञानविशेषजा वासना तां त्रिविधामपि संज्ञयोद्दिशति--ब्रह्माख्येति ॥ ४८ ॥ तामपि विषयत्रैविध्येन विविनक्ति--कर्मभावात्मिकेति ॥ भावः भावना विषयवस्तु तद्विषयभावना त्रिविधा ॥ ४९ ॥ तत्र वयं ब्रह्मैव भवामः वयं कर्मैव कुर्मः वयं पुनरुभयं संदध्महे इत्येवं त्रिविधभावनायुक्तान् जीवानुदाहरति--सनंदनादय इत्यादिद्वाभ्याम् ॥ ५० ॥ हिरण्यगर्भादिष्विति ॥ बोधश्च स्वरूपविषयः । अधिकारश्च स्वर्गादिविषयः । तद्युक्तेषु तदुभयानुबंधनात्मिका द्विविधा भावभावना विद्यते ॥५१॥ ब्रह्मभावनावंतोपि सनंदनादयो जीवा एव । देहानुसंधानानिवृत्तेरित्याशयेनाह--अक्षीणेष्विति ॥ विशेषज्ञानहेतुषु कर्मसु निश्शेषं क्षीणेषु सत्सु विश्वमेतद्ब्रह्म अन्यद्भाति भेदेन भेदकारणेनाहंकारेण भिन्नदृशाम् अतस्तेपि ध्यातृध्येयभेददर्शित्वात् स्थूलविश्वांतःपातिन एवेत्यर्थः ॥५२॥ शुद्धब्रह्मस्वरूपमाह--

तच्च विष्णोः परं रूपमरूपाख्यमनुत्तमम् ॥ विश्वस्वरूपवैरूप्यलक्षणं परमात्मनः ॥ ५४ ॥ न तद्योगयुजा शक्यं नृप चिंतयितुं यतः ॥ ततस्स्थूलं हरे रूपं चिंतयेद्विश्वगोचरम् ॥ ५५ ॥ हिरण्यगर्भो भगवान्वासुदेवः प्रजापतिः ॥ मरुतो वसवो रुद्रा भास्करा स्तारका ग्रहाः ॥ ५६ ॥ गंधर्वयक्षदैत्याद्यास्सकला देवयोनयः ॥ मनुष्याः पशवश्शैलास्समुद्रास्सरितो द्रुमाः ॥ ५७ ॥ भूप भूतान्यशेषाणि भूतानां ये च हेतवः ॥ प्रधानादिविशेषांतं चेतनाचेतनात्मकम् ॥ ५८ ॥ एकपादं द्विपादं च बहुपादमपादकम् ॥ मूर्त्त मेतद्धरे रूपं भावनात्रितयात्मकम् ॥ ५९ ॥ एतत्सर्वमिदं विश्वं जगदेतच्चराचरम् ॥ परब्रह्मस्वरूपस्य विष्णोश्शक्तिसमन्वितम् ॥ ६० ॥

यति—प्रत्यस्तमितेति ॥ प्रयस्तमितभेदम् अशरीरत्वेन जात्यादिभेदरहितम् । अत एव वचसामगोचरं सत्तामात्रम् । अपक्षयादिविकारपंचकरहितम् । आत्मसंवेद्यं स्वयंप्रकाशं ज्ञानं ज्ञानगुणैकनिरूपणीयं तद्गुणसारत्वादिति ह्युक्तम् । ज्ञानस्वरूपत्वं त्वात्मसंवेद्यमित्यनेन दर्शितं ब्रह्मात्मकत्वात् ब्रह्मसंज्ञितमित्युक्तं यदेवं रूपं ज्ञानं तद्ब्रह्मसंज्ञितमित्यन्वयः ॥ ५३ ॥ तच्चेति ॥ अरूपाख्यम् अमूर्त्ताख्यं पूर्वोक्तविश्वरूपवैरूप्यलक्षणम् । अन्वयलक्षणासंभवेन मूर्त्तरूपाद्व्यतिरेकलक्षणं तच्च परमात्मनो विष्णोः परं रूपम् ॥ ५४ ॥ नेति ॥ तद्योगयुजा योगेन प्रक्रांतेन चिंतयितुं न शक्यं तेन स्थूलरूपं चिंत्यमित्याह—तत इति ॥ स्थूलं पूर्वोक्तं बद्धरूपम् ॥ ५५ ॥ विस्तरेण तदेव दर्शयति—हिरण्यगर्भ इत्यादिना मूर्त्तमेतद्धरे रूपमित्यंतेन ॥ ५६ ॥ ५७ ॥ ५८ ॥ एकपादमिति ॥ श्लोकद्वयस्यैकान्वयः । भावनात्रितयात्मकमेत त्सर्वमित्युक्तम् । एतत्स्थूलरूपं चिंतयितुं शक्यमपि भावनात्रितयात्मकम् । अतोऽशुद्धत्वादशुभाश्रय इति भावः । इदं विश्वमिति विश्वमेतन्निबोधतामित्युक्तस्योपसंहारः । जगदेतच्चराचरम् इत्यादि विष्णोश्शक्तिसमन्वितमित्यंतमेकं वाक्यम् । एवंविधमेतज्जगद्विष्णोः शक्तित्वेन समन्वितं शक्तिशरीरम् + अंश इति पर्यायः । शरीरतया तत्संकल्पशक्त्या व्याप्तमिति च अस्मच्छरीरवत् । केचित् एतत्सर्वमिति हिरण्यगर्भादि इदं विश्वमिति सनंदनादिजगदेतदिति सुरनरादि च परामृश्य इदं त्रितयं विष्णोश्शक्तिसमन्वितमिति योजयंति तत्पक्षे भावनात्रितयात्मकमित्यस्य पूर्वेणोत्तरेण वा संबन्धः ॥ ५९ ॥ ६० ॥

प्रत्यस्तमितेत्यादिद्वाभ्याम्—प्रत्यस्तमितेति ॥ प्रत्यस्तमितः प्रलीनो भेदो यस्मिन् तद्वचसामगोचरम् आत्मसंवेद्यं स्वसंवेद्यं स्वानुभवगम्यमित्यर्थः ॥ ५३ ॥ तदिति ॥ विश्वरूपात् वैरूप्यं वैलक्षण्यमेव लक्षणं यस्य तत् ज्ञानम् । परमात्मनः विष्णोः परमं स्वरूपमित्यन्वयः ॥ ५४ ॥ ननु तस्य श्रेष्ठत्वादिदमेव चिंतयितुं युक्तं तत्राह—नेति ॥ योगयुजा प्रथमाध्यासिना ॥ ५५ ॥ स्थूलरूपं प्रपंचयति—हिरण्य गर्भ इत्यादिपंचभिः ॥ ५६ ॥ ५७ ॥ भूपेति ॥ विशेषांतं पृथिव्यंतम् ॥ ५८ ॥ ५९ ॥ एतदिति ॥ एतानि सर्वाणि चराचराणि यस्मिंस्तदेतत्सर्वं जगत् । ओंकारास्पदं त्रिधाख्यं मूर्तं हरेः रूपमिति

विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथाऽपरा ॥ अविद्याकर्मसंज्ञान्या तृतीया शक्तिरिष्यते ॥ ६१ ॥ यया क्षेत्रज्ञशक्तिस्सा वेष्टिता नृप सर्वगा ॥ संसारतापानखिलानवाप्नोत्यतिसंततान् ॥ ६२ ॥ तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता ॥ सर्वभूतेषु भूपाल तारतम्येन लक्ष्यते ॥ ६३ ॥ अप्राणवत्सुस्वल्पा सा स्थावरेषु ततोऽधिका ॥ सरीसृपेषु तेभ्योपि ह्यतिशक्त्या पतत्रिषु ॥ ६४ ॥ पातत्रिभ्यो मृगास्तेभ्यस्तच्छक्त्या पशवोऽधिकाः ॥ पशुभ्यो मनुजाश्चातिशक्त्या पुंसः प्रभाविताः ॥ ६५ ॥ तेभ्योपि नागगंधर्वयक्षाद्या देवता नृप ॥ ६६ ॥ शक्रस्समस्तदेवेभ्यस्ततश्चातिप्रजापतिः ॥ हिरण्यगर्भोऽपि ततः पुंसश्शक्त्युपलक्षितः ॥ ६७ ॥ एतान्यशेषरूपाणि तस्य रूपाणि पार्थिव ॥ यतस्तच्छक्तियोगेन युक्तानि नभसा यथा ॥६८॥ द्वितीयं विष्णुसंज्ञस्य योगिध्येयं महामते ॥ अमूर्त्तं ब्रह्मणो रूपं यत्सदित्युच्यते बुधैः ॥६९॥

तत्र परा विष्णुशक्तिः प्रत्यस्तमितेत्यादिनोक्ता क्षेत्रज्ञाख्या अपरा हिरण्यगर्भ इत्यादिनोक्तेत्याह—विष्णुशक्तिरिति ॥ अथ यागादिकर्माख्यमविद्यापर्यायं विष्णोश्शक्त्यंतरमाह—अविद्येति ॥ ६१ ॥ तत्स्वरूपमाह—ययेति ॥ सर्वगा कर्मनिमित्तसर्वशरीरगा ॥६२॥ तयेत्यादि ॥ तारतम्येन ज्ञानानंदतारतम्येन ॥६३॥ तारतम्यमेव दर्शयति—अप्राणवत्स्विति ॥ शिलाकाष्ठादिषु सा क्षेत्रज्ञशक्तिः स्वल्पा ज्ञानानंदादिना न तु स्वरूपेण सरीसृपेषु तेभ्योप्यधिकेति शेषः । अतिशक्त्याऽतिज्ञानशक्त्या अधिकेत्यर्थः ॥६४॥ पतत्रिभ्य इति ॥ तच्छक्त्या आत्मनो ज्ञानशक्त्या प्रभाविताः प्रभूताः कृताः ॥६५॥६६॥६७॥ एतान्यप्राणवदादीनि हिरण्यगर्भातान्यशेषरूपाण्यविशेषेण तस्य शरीराणीत्याह—एतानीति ॥ तत्र हेतुमाह—यत इति ॥ यथा हि जीवस्य शरीरं जीवसंकल्पव्याप्तम्, एवं चेतनाचेतनात्मकं सर्वं भगवच्छक्तियोगेन व्याप्तं नियाम्यं धार्यं च अतस्तच्छरीरं शक्तियोगेनेति शक्तिरूपो योगः शक्तियोगः शक्तिस्सामर्थ्यं योगः संकल्पः । नभसा यथेति संकल्पनैरंतर्यमुक्तं महात्मा भूतभावनः "यथाकाशः स्थितो नित्यम्" इत्यादि ॥६८॥ एवं भावनात्रयात्मकं भगवतो मूर्त्तं रूपमुक्तम् । इदानीं मुक्तरूपममूर्त्तं रूपमित्याह--द्वितीयमिति ॥ यत्सदित्युच्यते

पूर्वेणान्वयः । एतच्च न तत्त्वतो विष्णोस्स्वरूपमिति चिंतनीयं किंतु तच्छक्तिव्याप्तत्वादित्याह—शक्तिसमन्वितमिति ॥ ६० ॥ कासौ शक्तिः यया व्याप्तमित्यत आह—विष्णुशक्तिरिति ॥ विष्णुशक्तिः विष्णोः स्वरूपभूता परा चिच्छक्तिः परमपदपरब्रह्मपरत्वाख्या प्रोक्ता "प्रत्यस्तमितभेदं यत्सत्तामात्रम्" इत्यत्र प्रागुक्तस्वरूपमेव कार्योन्मुखं शक्तिशब्देनोक्तम् । इदानीं परशक्तिव्याप्यं भावनात्रयात्मकं क्षेत्रज्ञस्वरूपं प्रपंचयिष्यन्नाह—क्षेत्रज्ञाख्येति ॥ व्याप्यव्यापकभेदहेतुभूतं विष्णोश्शक्त्यंतरमाह—अविद्येति ॥ अविद्येति कर्मेति च संज्ञे यस्यास्सा तया च मायोपलक्ष्यते । हेतुहेतुमतोरविद्याकर्मणोरेकीकृत्योक्तिः । संसारलक्षणा कार्यं स्यात् ॥ ६१ ॥ तदेवाह—ययेति ॥ वस्तुतस्सर्वगतापि सा क्षेत्रज्ञशक्तिर्यया अविद्यया वेष्टिता सती भेदं प्राप्य कर्मभिस्संसारतापान्प्राप्नोतीत्यर्थः ॥ ६२ ॥ जीवानां न्यूनाधिकभावेपि सैव हेतुरित्याह--तयेति ॥ ६३ ॥ तारतम्यमेवाह—अप्राणवत्स्वित्यादिसार्धैश्चतुर्भिः—अप्राणवत्स्विति ॥ अप्राणवत्सु अनभिव्यक्तप्राणेषु स्वल्पा अत्यंतमल्पा ततोऽधिका सरीसृपेषु क्षुद्रजंतुषु ततोधिका पतत्रिषु अतिशक्त्या लक्ष्यते ॥ ६४ ॥ ६५ ॥ ॥ ६६ ॥ शक्र इति ॥ ततश्शक्रादतिशयितः प्रजापतिः ॥ ६७ ॥ एतानीति ॥ असंगत्वेपि सर्वव्याप्तौ दृष्टांतः—नभसा यथेति ॥ ६८ ॥ तदेवं मूर्तयो रूपयोः स्थूलरूपं प्रपंचितम् । अमूर्तयोस्तु प्रथमं रूपं

समस्ताश्शक्तयश्चैता नृप यत्र प्रतिष्ठिताः ॥ तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥ ७० ॥ समस्तशक्तिरूपाणि तत्करोति जनेश्वर ॥ देवतिर्यङ्मनुष्यादिचेष्टावंति स्वलीलया ॥ ७१ ॥ जगतामुपकाराय न सा कर्मनिमित्तजा ॥ चेष्टा तस्याप्रमेयस्य व्यापिन्यव्याहतात्मिका ॥ ७२ ॥ तद्रूपं विश्वरूपस्य तस्य योगयुजा नृप ॥ चिंत्यमात्मविशुद्ध्यर्थं सर्वकिल्बिषनाशनम् ॥ ७३ ॥

सत्तामात्रमित्युच्यते। योगिध्येयं निष्पन्नयोगेन ध्यातुं शक्यं तद्विष्णुसंज्ञस्य ब्रह्मणोऽमूर्तं द्वितीयं रूपमित्यन्वयः ॥६९॥ अथोक्तशक्तित्रयस्यास्त्रभूषणादिरूपेण नित्याश्रयभूतं जगदेककारणतयोक्तं भगवद्रूपं तस्य शुभाश्रयत्वं वक्तुमाह—समस्ता इति ॥ विश्वरूपवैरूप्यम् उक्तविश्वरूपवैलक्षण्यं रूपम्। शरीरम्। अन्यत् द्रव्यांतरम्। "आदित्यवर्णं तमसः परस्तात्, अमृवो हिरण्मयः विद्युतः पुरुषादधि, महारजतं वासः पुण्डरीकमेवमक्षिणी रुक्मवर्णं कर्त्तारमीशं रुक्माभम्" इत्यादिवचनसिद्धं महत् स्थूलं गुणतोऽपि महत्त्वं विवक्षितम्। एवंविधं रूपमस्यास्तीति सिद्धम् ॥ ७० ॥ समस्तशक्त्याश्रयं तद्रूपं भगवानेव जगदुपकाराय स्वलीलया देवतिर्यङ्मनुष्यादिचेष्टावंति देवाद्यवताररूपाणि करोतीत्याह—समस्तेत्यादिद्वयेन—समस्तेति ॥ समस्तशक्तीति पदच्छेदः समस्ताः शक्तयः यस्मिन् तत्तथोक्तम्। "मन्वंतरेष्वशेषेषु देवत्वेनाधितिष्ठति" इति। प्रतिकल्पं चतुर्दशदेवावताराः त्रिमूर्त्तिमध्यगतविष्ण्वादयश्च मत्स्यादयस्तिर्यगवतारा रामादयो मनुष्यावताराः स्वलीलया न तु प्रयोजनांतरेण। देवतिर्यङ्मनुष्याख्यचेष्टावंतीति च पाठः ॥ ७१ ॥ किंच, जगतामिति ॥ जगतामुपकाराय न कर्मफलभोगाय सा जन्मादिरूपा चेष्टा तत्र जन्मरूपा देवमनुष्यादिसर्वजातिव्यापिनी यथाह—"बहुधा विजायते" इति कर्मरूपा वृंदावनगोकुलकालियह्रदादिव्यापिनी अव्याहतात्मिका। रावणशिशुपालबाणशक्रशर्वादिभिरप्रतिहता न सा कार्मनिमित्तजेत्यनेन त्रिभावनातीतत्वादवताराणामपि शुभाश्रयत्वं दर्शितम् ॥ ७२ ॥ यद्यप्यनंतस्यानंतबद्धमुक्तरूपाणि संति तथापि

ब्रह्मोक्तं द्वितीयममूर्तं सच्छब्दादिवाच्यमीश्वराख्यं रूपमाह—द्वितीयमिति ॥ योगिध्येयमारूढयोगिभिर्श्चिंत्यम् ॥ ६९ ॥ तदेव विशिनष्टि—समस्ता इति ॥ एताः कार्यगताः समस्ताश्शक्तयः यत्र ईश्वरे सर्वकारणभूते प्रतिष्ठिताः। अत एव विश्वरूपवैरूप्यमुक्तविश्वरूपविलक्षणमत एव महत्सर्वोत्कृष्टम् ॥ ७० ॥ तत एषामाविर्भावमाह--समस्तेति ॥ समस्तशक्तियुक्तानि रूपाणि। तदेव प्रकटयति। देवाद्यनुरूपचेष्टायुक्तानि। देवः उपेंद्रादिः। तिर्यक् मत्स्यादिः। मनुष्यो रामादिः। आदिशब्दान्मिश्रो नृसिंहादिः ॥ ७१ ॥ लीलयेत्युक्तं समर्थयते—जगतामिति ॥ कर्मनिमित्ताज्जाता हि चेष्टा परिच्छिन्ना सप्रतिघाता च सा तु कर्मनिमित्तजा न भवति। अतः व्यापिनी अपरिच्छिन्ना अव्याहतात्मिका च अतस्सा चेष्टा स्वतंत्रस्याप्रमेयस्येश्वरस्य लीलैवेत्यर्थः ॥ ७२ ॥ भवतु प्रस्तुते किमायातमित्यत आह--तद्रूपमिति ॥ तद्रूपं चतुर्थोक्तेषु तृतीयं लीला

यथाग्निरुद्धतशिखः कक्षं दहति सानिलः ॥ तथा चित्तस्थितो विष्णुर्योगिनां सर्वकिल्बिषम् ॥ ७४ ॥ तस्मात्समस्तशक्तीनामाधारे तत्र चेतसः ॥ कुर्वीत संस्थितिं सा तु विज्ञेया शुद्धधारणा ॥ ७५ ॥ शुभाश्रयस्स चित्तस्य सर्वगस्याचलात्मनः ॥ त्रिभावभावनातीतो मुक्तये योगिनो नृप ॥ ७६ ॥ अन्ये तु पुरुषव्याघ्र चेतसो ये व्यपाश्रयाः ॥ अशुद्धास्ते समस्तास्तु देवाद्याः कर्मयोनयः ॥ ७७ ॥ मूर्त्तं भगवतो रूपं सर्वापाश्रयनिस्पृहम् ॥ एषा वै धारणा प्रोक्ता यच्चित्तं तत्र धार्यते ॥ ७८ ॥

व्यूहविभवादिरूपेण स्थितं तदेव भगवतो रूपं चिंत्यमित्याह—तद्रूपमिति ॥ सर्वकिल्बिषनाशनं सर्वकर्मक्षयकरं यत एवं विलक्षणं योगयुजाभ्यासवशेन चिंतयितुं शक्यं च ॥ ७३ ॥ ७४ ॥ तस्मात्तत्र रूपे धारणां कुर्यादित्याह—तस्मादिति ॥ आधारशुद्ध्या धारणायाः शुद्धिः ॥ ७५ ॥ शुभाश्रयत्वे त्रिभावभावनातीतत्वम् । हेतुमाह—शुभाश्रय इति॥शुद्धाश्रय इति च पाठः ।स्वत स्सर्वगतस्य चंचलस्य विलक्षणविषये अचलात्मनस्सर्वविलक्षणत्वात् स शुभाश्रयः।अवताररूपाण्यपि भावनात्रयातीतत्वेन मुक्तिहेतुतया च शुभाश्रय इति स्मृत्यादिभिरुक्तम् । "एवं यो वेत्ति तत्त्वतः । यादृशे वा मनःस्थैर्यं रूपे बध्नाति चक्रिणः । नृसिंहवामनादीनाम्" इत्यादिना शौनकः । श्रीसात्वते "दशेंद्रियाननं घोरं यो मनोरजनीचरम् । विवेकशरजालेन शमं नयति योगिनाम् । ध्येयस्स एव विश्वात्मा सतोयजलदप्रभः । रक्तराजीवनयनो धनुश्शरकरांकितः" इत्यादिना प्रत्याविर्भावमुक्तम् ॥ ७६ ॥ एतद्व्यतिरिक्ताः पूर्वोक्ता बद्धमुक्ता ये ते अशुभाश्रया इत्याह—अन्ये त्विति ॥ अत्रापि शौनकः "आब्रह्मस्तंबपर्यंता जगदंतर्व्यवस्थिताः । प्राणिनः कर्मजनितास्संसारवशवर्त्तिनः ॥ यतस्ततो न ते ध्याने ध्यानिनामुपकारकाः । अविद्यांतर्गतास्सर्वे ते हि संसारगोचराः ॥ पश्चादुद्भूतबोधाश्च ध्यानेनैवोपकारकाः । नैसर्गिको न वै बोधस्तेषामप्यन्यतो यतः ॥ तस्मात्तदमलं ब्रह्म निसर्गादेव बोधवत् । ध्येयम्" इत्यादि । महाभारते 'ब्रह्माणं शितिकंठं च' इत्यादि, "एतदंतास्तु गतयो ब्रह्माद्यास्समुदाहृताः" इत्यादि मनुः । कर्मयोनित्वमशुद्धिहेतुः ॥ ७७ ॥ अथ धार

विग्रहरूपम् ॥ ७३ ॥ यथेति ॥ कक्षं शुष्कतृणम् ॥ ७४ ॥ तस्मादिति ॥ समस्तशक्तीनामाधारे आश्रये तत्रावताररूपे चेतसस्स्थितिं कुर्वीत ॥ ७५ ॥ शुभाश्रय इति ॥ सर्वगतस्यात्मनः परब्रह्मणोप्याश्रयः प्रतिष्ठा । तदुक्तं भगवता गीतासु "ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च । शाश्वतस्य च धर्मस्य सुखस्यैकांतिकस्य च ॥" इति । त्रिभावभावनातीतः असंसारित्वात् ॥ ७६ ॥ अन्यदेवतानिंदया भगवन्मूर्तिश्रगामेव दृढीकरोति—अन्ये त्वित्यादिद्वाभ्याम ॥ ७७ ॥ मूर्तमिति ॥ सर्वेष्वप्यपाश्रयेषु आश्रयणीयेष्वर्थेषु निःस्पृहं परमानंदरूपत्वात् चित्तविशेषणं वा ॥ ७८ ॥

यच्च मूर्त्तं हरे रूपं यादृक्चित्यं नराधिप ॥ तच्छ्रूयतामनाधारा धारणा नोपपद्यते ॥ ७९ ॥ प्रसन्नवदनं चारुपद्मपत्रोपमेक्षणम् ॥ सुकपोलं सुविस्तीर्णललाटफलकोज्ज्वलम् ॥ ८० ॥ समकर्णांतविन्यस्तचारुकुंडलभूषणम् ॥ कंबुग्रीवं सुविस्तीर्णश्रीवत्सांकितवक्षसम् ॥ ८१ ॥ वलित्रिभंगिना मग्ननाभिना ह्युदरेण च ॥ प्रलंबाष्टभुजं विष्णुमथवापि चतुर्भुजम् ॥ ८२ ॥ समस्थितोरुजंघं च सुस्थितांघ्रिवरांबुजम् ॥ चिंतयेद्ब्रह्मभूतं तं पीतनिर्मलवाससम् ॥ ८३ ॥ किरीटहारकेयूरकटकादिविभूषितम् ॥ ८४ ॥ शार्ङ्गशंखगदाखड्गचक्राक्षवलयान्वितम् ॥ वरदाभयहस्तं च मुद्रिकारत्नभूषितम् ॥ ८५ ॥ चिंतयेत्तन्मयो योगी समाधायात्ममानसम् ॥ तावद्यावद्दृढीभूता तत्रैव नृप धारणा ॥ ८६ ॥ व्रजतस्तिष्ठतोन्यद्वा स्वेच्छया कर्म कुर्वतः ॥ नापयाति यदा चित्तात्सिद्धां मन्येत तां तदा ॥ ८७ ॥ ततः शंखगदाचक्रशार्ङ्गादिरहितं बुधः ॥ चिंतयेद्भगवद्रूपं प्रशांतं साक्षसूत्रकम् ॥ ८८ ॥ सा यदा धारणा तद्वदवस्थानवती ततः ॥ किरीटकेयूरमुखैर्भूषणै रहितं स्मरेत् ॥ ८९ ॥ तदेकावयवं देवं चेतसा हि पुनर्बुधः ॥ कुर्यात्ततोऽवयविनि प्रणिधानपरो भवेत् ॥ ९० ॥

णाया ध्यानस्य चाश्रयरूपमाह—मूर्त्तमिति ॥ मूर्त्तं भगवतो रूप इति च पाठः । मूर्त्तं स्थूले ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ वलीति ॥ त्रयो भंगा यस्य तात्रिभंगि वलिभिस्त्रिभंगिना ॥ ८२ ॥ ८३ ॥ ८४ ॥ अथ धारणां विषयभेदेन चतुर्धा दर्शयति—शार्ङ्गेत्यादिना ॥ अष्टभुजत्वपक्षे शार्ङ्गादीनि षट् षण्णां धार्याणि शिष्टभुजयोः पद्मबाणौ वराभये वा । चतुर्भुजत्वे शंखचक्रगदाब्जानि तत्र शार्ङ्गेत्यादिना तां तदेत्यंतेन अस्त्रभूषणप्रत्यंगप्रधानांगचतुष्टयविषया प्रथमा धारणोक्ता । अस्त्रप्रधानेयं धारणा ॥ ८५ ॥ ८६ ॥ ८७ ॥ तत इति ॥ ततश्शंखेत्यादिना साक्षसूत्रकमित्यंतेन शंखाद्यस्त्ररहितसाक्षसूत्रकिरीटादिभूषणप्रत्यंगप्रधानांगविषया द्वितीयोक्ता । इयं भूषणप्रधाना ॥ ८८ ॥ सेति ॥ किरीटेत्यादिना भूषणरहितप्रत्यंगप्रधानांगविषया तृतीयोक्ता । इयं प्रत्यंगप्रधाना ॥ ८९ ॥ तदिति ॥ तदेकावयवमि

यच्चेति ॥ अनाधारा विशिष्टालंबनरहिता ॥७९॥८०॥ समकर्णेति ॥ कंबुग्रीवं रेखात्रयांकितकंधरं, सुविस्तीर्णं श्रीवत्सांकितं वक्षो यस्य तम् ॥ ८१ ॥ वलीति ॥ विष्णुं त्रयो भंगाः तरंगाकारा यस्मिन् तत्त्रिभंगि वलिभिस्त्रिभंगिना मग्ना निम्ना नाभिर्यस्य तस्मिंस्तथाभूतेनोदरेण चोपलक्षितम् ॥८२॥ समस्थितेति ॥ ब्रह्मभूतं घृतकाठिन्यमिव घनीभूतं ब्रह्ममूर्तिम् ॥८३॥ ८४॥ शार्ङ्गेति ॥ अक्षवलयमक्षमाला अष्टभुजत्वे शिष्टयोर्भुजयोः पद्मबाणौ वराभये वा । चतुर्भुजत्वे शंखचक्रगदाब्जान्वितम् ॥ ८५ ॥ ८६ ॥ धारणादार्ढ्यलक्षणमाह—व्रजत इति ॥ चित्ताद्यदा मूर्तिर्नापयाति तदा तां धारणां सिद्धां दृढां मन्येत ॥ ८७ ॥ मूर्तिधारणामेवायुधभूषणादिपरित्यागेनालंबनसौक्ष्म्यतारतम्येनाह—तत इति ॥ ८८ ॥ सेति ॥ अवस्थानवती दृढा ॥ ८९ ॥ तदिति ॥ एकावयवं पादगुल्फादिनानावयवनिष्ठं चित्तदार्ढ्यम् । एकत्र नियोज्य एकावयवं चेतसा कुर्यात् ।

तद्रूपप्रत्यया चैका संततिश्चान्यनिःस्पृहा ॥ तद्ध्यानं प्रथमैरंगैः षड्भिर्निष्पाद्यते नृप ॥ ९१ ॥ तस्यैव कल्पनाहीनं स्वरूपग्रहणं हि यत् ॥ मनसा ध्याननिष्पाद्यं समाधिस्सोऽभिधीयते ॥ ९२ ॥ विज्ञानं प्रापकं प्राप्ये परे ब्रह्मणि पार्थिव ॥ प्रापणीयस्तथैवात्मा प्रक्षीणाशेष भावनः ॥ ९३ ॥

त्यादिना प्रधानांगविषया चतुर्थी धारणोक्ता । आयुधभूषणप्रत्यंगेषु अभ्यासेन सुदृढं गृहीतेषु पुनस्तदेकावयवं तेषां प्रत्यंगानां प्रधानावयवयुक्तं देवं चेतसा कुर्यात् चिंतयेदित्यर्थः । इयमेकावयवप्रधाना । अथ ध्यानमाह—ततोऽवयविनीति ॥ ततो धारणानंतरमस्त्रभूषणप्रत्यंगप्रधानांगानामाश्रये गोमुखाकारेऽवयविनि अस्त्राद्यनुषंगेण ध्यानपरो भवेत् ॥ ९० ॥ ध्यानलक्षणमाह—तद्रूपेति ॥ तद्रूपप्रत्यय इति च पाठः । तद्रूपप्रत्यये धारणासिद्धरूपविषयप्रत्यये एका असदृशी अन्यनिःस्पृहा विजातीयप्रत्ययानंतरिता या संततिः प्रवाहः तद्ध्यानं षड्भिरंगैर्यमादिभिः । एवमुपासनसोपानक्रमेणारूढदिव्यविषयमिदं ध्यानम् । पूर्वत्र तस्य चालंबनवत इति प्रस्तुतः सालंबनो योगः । अस्त्रभूषणाध्याये ह्यस्त्रभूषणमयसर्वशक्त्याश्रयदिव्यविग्रहः सबीजयोगविषय इति स्पष्टमुक्तम्—सालंबनो महायोगस्सबीज इत्यादिना ॥ ९१ ॥ अथ ध्यानपर्यंतसप्तांगजन्यं निर्बीजयोगाख्यं भगवत्स्वरूपविषयं समाधिमाह—तस्यैवेति ॥ तस्यैव विग्रहादिविशिष्टतया ध्यानस्यैव कल्पना नामरूपवर्णापक्षयविनाशादयः अयं समाधिः पूर्वाध्याये परविद्येत्युक्तं विवेकजज्ञानम् । इदं चास्त्रभूषणादिविशिष्टदिव्यविग्रहवत एव भगवतोऽस्त्रभूषणाध्यायादिषु । "बिभर्त्ति पुण्डरीकाक्षस्सदैव परमेश्वरः । कलामुहूर्त्तादिमयश्च कालः" इत्यादिभिः प्रतिपादितत्वात् । अस्त्रादीनां राहित्येनोत्तरोत्तरध्यानस्य वचनम् अन्यथा तस्याशक्यत्वात् न तु त्याज्यत्वात् तेषामस्त्रादिविशिष्टविग्रहवत एव प्राप्यत्वात् तत्क्रतुन्यायेन तेषामपि दृढं ध्येयत्ववचनाच्च ॥ ९२ ॥ उक्तस्य समाधिरूपज्ञानस्य भेषजं भगवत्प्राप्तिरित्युक्तम् । परब्रह्मप्राप्तिफलमाह—विज्ञानमिति ॥ इदं विज्ञानं प्राप्ये परे ब्रह्मणि प्रापकं तथैव ब्रह्मवत् भावनात्रयरहितो भगवदुपासक आत्मा प्रापणीयः प्रापयितव्यः "ब्रह्मविदा

तदुक्तं भागवते "तत्सर्वव्यापकं चित्तमाकृष्यैकत्र धारयेत् । नान्यानि चिंतयेद्भूयस्सुस्मितं भावयेन्मुखम् ॥" इति । तदेवं लीलाधारणैव स्थूलसूक्ष्मक्रमेण चतुर्धोक्ता । इदानीं तत्कारणेश्वरधारणामाह । प्रससन्नचारुवदनमित्यादिनोक्तावयवा येन लीलामूर्तिना आविष्कृतास्तस्मिन् अवयविनि । यद्वा—अवयवा लीलावतारा येन गृहीताः तस्मिन्प्रणिधानं चित्तस्थैर्यं तत्परो भवेत् ॥ ९० ॥ इदानीं ध्यानमाह—तद्रूपेति ॥ तद्रूपस्यैव धारणासिद्धस्यैव वस्तुनः प्रत्ययो यस्यां संततौ सा एकाऽविच्छिन्ना संततिः । अन्यनिःस्पृहा विषयांतरेणाव्यवधीयमाना विजातीयप्रत्यानंतरितसजातीयप्रत्ययप्रवाहो ध्यानमित्यर्थः । यच्च प्रथमैर्यमादिभिर्धारणांतैष्षड्भिरंगैर्निष्पाद्यते ॥ ९१ ॥ तस्यैवेति ॥ तस्यैव ध्येयस्य कल्पनाहीनं ध्यातृध्यानध्येयाभेदं यथा भवति एवं यत्स्वरूपग्रहणं तदेकाकारतयाऽवस्थानं ज्ञानसाध्यं समाधिः । तदाह पतंजलिः—"एकदेशबंधश्चित्तस्य धारणा तत्प्रत्ययैकता ध्यानं तदेकाकारतयावस्थितिः समाधिः" इति ॥ ९२ ॥ निष्पन्नसमाधेर्मुक्तिप्रकारमाह—विज्ञानमिति ॥ समाधिजन्यस्वरूपसाक्षात्कारो विज्ञानम् । प्रक्षीणाः अशेषाः पूर्वोक्ताः तिस्रो भावना यस्य सः ॥ ९३ ॥

क्षेत्रज्ञः करणी ज्ञानं करणं तस्य तेन तत् ॥ निष्पाद्य मुक्तिकार्यं वै कृतकृत्यं निवर्त्तते ॥ ९४ ॥ तद्भावभावमापन्नस्ततोऽसौ परमात्मना ॥ भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत् ॥ ९५ ॥ विभेदजनके ज्ञाने नाशमात्यंतिकं गते ॥ आत्मनो ब्रह्मणो भेदम संतं कः करिष्यति ॥९६॥ इत्युक्तस्ते मया योगः खांडिक्य परिपृच्छतः ॥ संक्षेपविस्तराभ्यां तु किमन्यत्क्रियतां तव ॥९७॥ खांडिक्य उवाच ॥ कथिते योगसद्भावे सर्वमेव कृतं मम ॥ तवोपदेशेनाशेषो नष्टश्चित्तमलो यतः ॥ ९८ ॥ ममेति यन्मया चोक्तमसदेतन्न चान्यथा ॥ नरेंद्र गदितुं शक्यमपि विज्ञेयवेदिभिः ॥ ९९ ॥

मोति परम्, विद्ययामृतत्वमश्नुते, भक्त्या त्वनन्यया शक्यः, भक्त्यामामभिजानाति, तत्प्राप्तिहेतुर्ज्ञानं च" इत्यादि ॥ ९३ ॥ इदं ज्ञानं न केवलं ब्रह्मप्रापकमात्रं किं तु मुक्तिकारणमपीत्याह—क्षेत्रज्ञ इति ॥ क्षेत्रज्ञः अनादिकालक्षेत्ररूपमायागुणत्रयतिरोहितस्वस्वरूपः करणी करणवान् समाधिरूपं ज्ञानं करणं तज्ज्ञानं तेन करणत्वेन तस्य क्षेत्रज्ञस्य मुक्तिकार्यं निष्पाद्य कृतकृत्यं निवर्त्तते, मुक्तिमकृत्वा न निवर्त्तत इत्यर्थः ॥ ९४ ॥ मुक्तिस्वरूपमाह—तद्भावभावमिति ॥ तद्भावभावमापन्नः तस्य परस्य ब्रह्मणो भावाः अपहतपाप्मत्वादयो धर्माः तेषां भावमाविर्भावमापन्नः प्राप्तः तदाऽसौ परमात्मना अभेदी भवति। ज्ञानानंदाद्याकारैरेकप्रकारो भवतीत्यर्थः । भेदो देवादिरूपः तदन्वयोस्य कर्मरूपाज्ञानकृतः "निरंजनः परमं साम्यमुपैति, ब्रह्मणो महिमानमाप्नोति, परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते, संपद्याविर्भावः स्वेनशब्दात्, मम साधर्म्यमागताः" इत्यादेः ।स्वरूपैक्यपक्षे तु द्वितीयो भावशब्दो निरर्थकः । अभेदी भवतीत्यस्य च पुनरुक्तिः 'अन्यद्द्रव्यं हि नैति तद्द्रव्यतां यतः' इति चोक्तविरोधः ॥ ९५ ॥ एतदेव विवृणोति--विभेदजनक इति ॥ विभेदो देवमनुष्यादिरूपः आत्मनि ज्ञानैकरूपे देवादिविविधरूपविविधभेदहेतुभूतकर्माख्याज्ञाने परब्रह्मदर्शनेनात्यंतिकनाशं गते सति परस्माद्ब्रह्मण आत्मनो देवादिरूपं भेदं कः करिष्यति न कोपि करिष्यतीत्यर्थः । यथाहशौनकः—"चतुर्विधो हि भेदोऽयं मिथ्याज्ञाननिबंधनः" इति ॥ ९६ ॥ ९७ ॥ ९८ ॥ कथित इत्यादिश्लोके ममेतिवचनस्याहंकारममकारहेतुभूतचित्तमलनाशवचनेन व्याहतिं परिहरति—ममेति ॥

॥ ९४ ॥ ननु तर्हि विज्ञानेनैव व्यवधानात्कथमात्मब्रह्मैक्यं तत्राह—तद्भावभावमिति ॥ ननु ज्ञानिनोपि भेदप्रतीतिरस्त्येव । अन्यथोपदेशाद्यसिद्धेः तत्राह--भेदश्चेति ॥ बाधित एव कथंचिदनुवर्तित इत्यर्थः । तस्मादज्ञानं तत्कार्यं च संसारं विना स्वयमेव ज्ञानकार्यमनोवृत्तिहतत्वाद्दग्धेंधनानलवत् ॥ ९५ ॥ अज्ञाने विनष्टे सति न पुनस्संसारप्ररोहशंकेत्याह—विभेदेति ॥ ९६ ॥ ९७ ॥ कथित इति ॥ योगस्य सद्भावे योगाद्ये कथिते सति मम चित्तमलोऽहंममतादिर्नष्टः यतः ॥ ९८ ॥ कुतो मम तवोपदेशेनेत्येतद्वचनं विद्यत इत्यत आह—ममेति ॥ ममेति यन्मया प्रोक्तम् एतदसदेव बाधितानुवृत्त्या प्रोक्तम् । अन्यथा तु विज्ञेयवेदिभिः अवगत

अहं ममेत्यविद्येयं व्यवहारस्तथानयोः ॥ परमार्थस्त्वसंलापो गोचरे वचसां न यः ॥ १०० ॥ तद्गच्छ श्रेयसे सर्वं ममैतद्भवता कृतम् ॥
यद्विमुक्तिप्रदो योगः प्रोक्तः केशिध्वजाऽव्ययः ॥ १०१ ॥ श्रीपराशर उवाच ॥ यथार्हं पूजया तेन खांडिक्येन स पूजितः ॥ आजगाम पुरं
ब्रह्मंस्ततः केशिध्वजो नृपः ॥ १०२ ॥ खांडिक्योऽपि सुतं कृत्वा राजानं योगसिद्धये ॥ वनं जगाम गोविंदे विनिवेशितमानसः ॥ १०३ ॥
तत्रैकांतमतिर्भूत्वा यमादिगुणसंयुतः ॥ विष्णवाख्ये निर्मले ब्रह्मण्यवाप नृपतिर्लयम् ॥ १०४ ॥ केशिध्वजो विमुक्त्यर्थं स्वकर्मक्षपणोन्मुखः॥
बुभुजे विषयान्कर्म चक्रे चानभिसंहितम् ॥१०५॥ अकल्याणोपभोगैश्च क्षीणपापोऽमलस्तथा ॥ अवाप सिद्धिमत्यंतां तापक्षयफलां द्विज ॥
॥ १०६ ॥ इति श्रीविष्णुमहापुराणे षष्ठांशे सप्तमोऽध्यायः ॥ ७ ॥

यद्यप्यहंममत्वहेतुचित्तमलनाशे सत्यहंममत्वनाशादहंममेतिशब्दप्रयोगो न युज्यते तथापि विज्ञेयवेदिभिः साक्षात्कृतपरमार्थैरपि तत्प्रयोगं विना न गदितुं शक्यम्
यद्यप्यहंममत्वहेतुचित्तमलनाशे सत्यहंममत्वनाशादहंममेतिशब्दप्रयोगो न युज्यते तथापि विज्ञेयवेदिभिः साक्षात्कृतपरमार्थैरपि तत्प्रयोगं विना न गदितुं शक्यम्
॥ ९९ ॥ एतदेव विवृणोति--अहंममेति ॥ अहं ममेति इयं बुद्धिरविद्या अन्यथाज्ञानं तथा व्यवहारः पुमान् स्त्री गौरयं वाजीत्यादिव्यवहारोऽप्यनया अविद्यया द्वैता
द्वैतयोरभेदः भ्रमकृत इत्यर्थः । परमार्थः अविनाश्यात्माऽसंलाप्यः अजमहिषादिविशेषरहिततया तत्तच्छब्दैरनिर्देश्यः । तत्र हेतुः--'गोचरे वचसां न यः' इति ॥१००॥
॥ १०१ ॥ १०२ ॥ १०३ ॥ तत्रेति ॥ लयः नामरूपकर्मणामात्यंतिकनाशः "यथा नद्यस्स्यंदमानास्समुद्रेऽस्तं गच्छंति नामरूपे विहाय, अश्व इव रोमाणि
विधूय पापं, भिद्यते हृदयग्रंथिः, निरंजनः परमं साम्यमुपैति" इत्यादेः । न तु स्वरूपैक्यं नित्यनैमित्तिकप्राकृतलये प्रदर्शनात् तथा सतीश्वरस्य वैषम्यनैर्घृण्यादिदोषो
जीवानामकृताभ्यागमः कृतविप्रणाशश्च स्यात् पुनर्देहसंबंधाभाव एवात्यंतिके विशेषः ॥ १०४ ॥ केशिध्वज इति ॥ अनभिसंधितम् अनभिसंहितं फलम् ॥१०५॥
अकल्याणेति ॥ अमलः क्षपितप्रारब्धकर्मविशेषः ॥ १०६ ॥ इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये षष्ठांशे सप्तमोऽध्यायः ॥ ७ ॥ ॥ छ ॥ ॥

परमार्थैर्गदितुमपि न शक्यं कुतः पुनः प्रारब्धकर्मभोगस्तेषामित्यर्थः ॥ ९९ ॥ तत्स्पष्टयति--अहं ममेति ॥ १०० ॥ १०१ ॥ १०२ ॥ खांडिक्य इति ॥ राजानं वनदुर्गमंत्रिभृत्यादिस्वामिनं सुतं कृत्वा ॥ १०३ ॥ ॥२९१॥
॥ १०४ ॥ केशिध्वज इति ॥ मुक्त्यर्थं विदेहकैवल्यार्थमनभिसंहितं फलाभिसंधिशून्यं लोकसंग्रहार्थं कर्म चक्रे ॥ १०५ ॥ अकल्याणेति ॥ क्षीणपापः क्षीणप्रारब्धकर्मा ॥ १०६ ॥ इति श्रीधरस्वामिविरचितात्म
प्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां षष्ठांशे सप्तमोऽध्यायः ॥ ७ ॥

॥ श्रीपराशर उवाच ॥ इत्येष कथितस्सम्यक्तृतीयः प्रतिसंचरः ॥ आत्यंतिको विमुक्तिर्या लयो ब्रह्मणि शाश्वते ॥ १ ॥ सर्गश्च प्रतिसर्गश्च वंशमन्वंतराणि च ॥ वंशानुचरितं चैव भवतो गदितं मया ॥ २ ॥ पुराणं वैष्णवं चैतत्सर्वकिल्बिषनाशनम् ॥ विशिष्टं सर्वशास्त्रेभ्यः पुरुषार्थोपपादकम् ॥ ३ ॥ तुभ्यं यथावन्मैत्रेय प्रोक्तं शुश्रूषवेऽव्ययम् ॥ यदन्यदपि वक्तव्यं तत्पृच्छाद्य वदामि ते ॥ ४ ॥ मैत्रेय उवाच ॥ भगवन्कथितं सर्वं यत्पृष्टोसि मया मुने ॥ श्रुतं चैतन्मया भक्त्या नान्यत्प्रष्टव्यमस्ति मे ॥ ५ ॥ विच्छिन्नास्सर्वसंदेहा वैमल्यं मनसः कृतम् ॥ त्वत्प्रसादान्मया ज्ञाता उत्पत्तिस्थितिसंक्षयाः ॥ ६ ॥ ज्ञातश्च त्रिविधो राशिश्शक्तिश्च त्रिविधा गुरो ॥ विज्ञाता सा च कात्स्न्र्येन त्रिविधा भावभावना ॥ ७ ॥ त्वत्प्रसादान्मया ज्ञातं ज्ञेयमन्यैरलं द्विज ॥ यदेतदखिलं विष्णोर्जगन्न व्यतिरिच्यते ॥ ८ ॥ कृतार्थोहमसंदेहस्त्वत्प्रसादान्महामुने ॥ वर्णधर्मादयो धर्मा विदिता यदशेषतः ॥ ९ ॥ प्रवृत्तं च निवृत्तं च ज्ञातं कर्ममयाखिलम् ॥ प्रसीद विप्रप्रवर नान्यत्प्रष्टव्यमस्ति मे ॥ १० ॥ यदस्य कथनायासैर्योजितोऽसि मया गुरो ॥ तत्क्षम्यतां विशेषोस्ति न सतां पुत्रशिष्ययोः ॥ ११ ॥ श्रीपराशर उवाच ॥ एतत्ते यन्मयाख्यातं पुराणं वेदसंमितम् ॥ श्रुतेऽस्मिन्सर्वदोषोत्थः पापराशिः प्रणश्यति ॥ १२ ॥

इत्येष इति ॥ या विमुक्तिः एष ब्रह्मण्यात्यंतिको लयस्तृतीयः प्रतिसंचर इत्थं कथितः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ज्ञात इति ॥ त्रिविधो राशिः सृष्टिपालनप्रलयहेतवो ब्रह्मदक्षादिः, विष्णुमन्वादिः, रुद्रकालांतकादिरिति त्रयो राशयः । चतुर्विध इति पाठे भगवता सह पुंप्रधानव्यक्तकालाख्या हि विष्णुशक्तिः । परेत्याद्युक्ता त्रिविधा शक्तिः ॥ ७ ॥ त्वत्प्रसादादिति ॥ विष्णोर्न व्यतिरिच्यते तदात्मकत्वेन पृथक्सिध्यनर्हं ज्ञातमिति शेषः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ एतदिति ॥

अनंतराध्यायत्रयोक्तात्यंतिकलयोपसंहारपूर्वकमादितस्सप्रशंसं सर्वपुराणार्थमुपसंहरन्नाह–इतीत्यादिचतुर्भिः–इतीति ॥ ब्रह्मणि लयरूपा या विमुक्तिः सैवात्यंतिकः प्रतिसंचरः कथित इत्यन्वयः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ज्ञात इति ॥ चतुर्विधो राशिः " चतुर्विभागस्संसृष्टौ चतुर्धा संस्थितः स्थितौ । प्रलयं च करोत्यंते चतुर्भेदो जनार्दनः ॥ " इति प्रथमांशे उक्तः । पूर्वाध्यायोक्ता हि परतत्वेश्वरतदवतारजगद्रूपा त्रिविधा शक्तिः " विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथा परा । अविद्याकर्मसंज्ञान्या तृतीया शक्तिरिष्यते ॥ " इत्युक्त्वा त्रिविधा भावभावना ब्रह्मभावना कर्मभावना उभयभावना चेति ॥ ७ ॥ त्वदिति ॥ यद्विष्णोर्न व्यतिरिच्यते तज्ज्ञेयं ज्ञातमित्यन्वयः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ एतदिति ॥ वेदैस्सम्मितं तुल्यं सर्ववेदार्थसारोक्तं सर्वे दोष

सर्गश्च प्रतिसर्गश्च वंशमन्वंतराणि च ॥ वंशानुचरितं कृत्स्नं मयाऽत्र तव कीर्त्तितम् ॥ १३ ॥ अत्र देवास्तथा दैत्या गंधर्वोरगराक्षसाः ॥ यक्ष विद्याधरास्सिद्धाः कथ्यंतेऽप्सरसस्तथा ॥ १४ ॥ मुनयो भावितात्मानः कथ्यंते तपसान्विताः ॥ चातुर्वर्ण्यं तथा पुंसां विशिष्टचरितानि च ॥ १५ ॥ पुण्याः प्रदेशा मेदिन्याः पुण्या नद्योऽथ सागराः ॥ पर्वताश्च महापुण्याश्चरितानि च धीमताम् ॥ १६ ॥ वर्णधर्मादयो धर्मा वेदशास्त्राणि कृत्स्नशः ॥ येषां संस्मरणात्सद्यस्सर्वपापैः प्रमुच्यते ॥१७॥ उत्पत्तिस्थितिनाशानां हेतुर्यो जगतोऽव्ययः ॥ स सर्वभूतस्सर्वात्मा कथ्यते भगवान्हरिः ॥ १८ ॥ अवशेनापि यन्नाम्नि कीर्त्तिते सर्वपातकैः ॥ पुमान्विमुच्यते सद्यस्सिंहत्रस्तैर्मृगैरिव ॥ १९ ॥ यन्नामकीर्त्तनं भक्त्या विलायनमनुत्तमम् ॥ मैत्रेयाशेषपापानां धातूनामिव पावकः ॥ २० ॥ कलिकल्मषमत्युग्रं नरकार्त्तिप्रदं नृणाम् ॥ प्रयाति विलयं सद्यस्सकृद्यत्र च संस्मृते ॥ २१ ॥ हिरण्यगर्भदेवेंद्ररुद्रादित्याश्विवायुभिः ॥ पावकैर्वसुभिस्साध्यैर्विश्वेदेवादिभिस्सुरैः ॥ २२ ॥ यक्षरक्षोरगैस्सिद्धैर्दैत्यगंधर्वदानवैः ॥ अप्सरोभिस्तथा तारानक्षत्रैस्सकलैर्ग्रहैः ॥ २३ ॥ सप्तर्षिभिस्तथा धिष्ण्यैर्धिष्ण्याधिपतिभिस्तथा ॥ ब्राह्मणाद्यैर्मनुष्यैश्च तथैव पशुभिर्मृगैः ॥ २४ ॥ सरीसृपैर्विहंगैश्च पलाशाद्यैर्महीरुहैः ॥ वनाग्निसागरसरित्पातालैस्ससुराग्निभिः ॥ २५ ॥ शब्दादिभिश्च सहितं ब्रह्मांडमखिलं द्विज ॥ मेरोरिवाणुर्यस्यैतद्यन्मयं च द्विजोत्तम ॥ २६ ॥ स सर्वः सर्ववित्सर्वस्वरूपो रूपवर्जितः ॥ भगवान्कीर्त्तितो विष्णुरत्र पापप्रणाशनः ॥ २७ ॥ यदश्वमेधावभृथे स्नातः प्राप्नोति वै फलम् ॥ मानवस्तदवाप्नोति श्रुत्वैतन्मुनिसत्तम ॥ २८ ॥ प्रयागे पुष्करे चैव कुरुक्षेत्रे तथाऽर्णवे ॥ कृतोपवासः प्राप्नोति तदस्य श्रवणान्नरः ॥ २९ ॥

दोषोत्थः न केवलं बुद्धिकृतः रागादिकृतोऽपि ॥ १२ ॥ वैशिष्ट्यप्रदर्शनाय कात्स्न्येन पुराणांगान्युक्तानीति ज्ञापनार्थं पुनस्तान्यन्वाह–सर्गश्चेति ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥

निषिद्धाः क्रियाः तदुत्थाः ॥ १२ ॥ कृत्स्नपुराणोक्तानुवादपूर्वकं तच्छ्रवणादिफलं प्रपंचयति–सर्गश्चेत्यादिना ॥ १३ ॥ १४ ॥ १५ ॥ पुण्या इति ॥ धीमतां ज्ञानिनां चरितानि ॥ १६ ॥ १७ ॥ १८ ॥ अवशेनेति ॥ अवशेनापि यदृच्छयापि यस्य नाम्नि कीर्तिते सति यथा अकस्मादागतं सिंहं दृष्ट्वा हरिणमवरुधंतं वृकाः तं विसृज्य पलायंते तद्वत् ॥ १९ ॥ भक्त्या तत्कीर्तने फलमाह–यन्नामेति ॥ द्वादशाब्दादि प्रायश्चित्तैः पापमेव विनङ्क्ष्यति तत्संस्कारस्त्ववशिष्यते । इदं त्वशेषाणां संस्काराणां पापानां विलायनं विनाशकं न चान्येन निश्शेषपापक्षयस्स्यादिति दृष्टांतेनाह–यथा धातूनां सुवर्णादीनामुत्तेजनतक्षणप्रक्षालनादिकं धात्वंतरसंयोगजं नाशयति किं, किंतु पावक एव तथा सर्वोत्तममिदमेवेत्यर्थः ॥ २० ॥ हरिस्मृतेः फलमाह--कलिकल्मषमिति ॥ यत्र यस्मिन्विष्णौ हिरण्यगर्भादिभिस्सहितमेतद्ब्रह्मांडं मेरोः परमाणुर्यथा तथा अत्यंतमल्पं यस्य स विष्णुरत्र कीर्तित इति सप्तमेनान्वयः । धिष्ण्यैः स्थानैः तं मंगल्यमित्यादौ यत्र विष्णुः कीर्तित इति शेषः ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ यदिति ॥ अन्यदीयाश्वमेधावभृथे स्नातो यत्फलं प्राप्नोति तत्सकलमिदं पुराणं प्रसंगतः किंचिच्छ्रुत्वा प्राप्नोतीत्यर्थः ॥ २८ ॥ प्रयाग इति ॥ प्रयागादौ कृतमासोपवासादिना यत्प्राप्नोति तदस्यैकदेशश्रवणात्प्राप्नोतीत्यर्थः ॥ २९ ॥

ज्ञानप्रवृत्तिनियमैक्यमयाय पुंसो भोगप्रदानपटवे त्रिगुणात्मकाय ॥ अव्याकृताय भवभावनकारणाय वंदे स्वरूपभवनाय सदाऽजराय॥६२॥ व्योमानिलाग्निजलभूरचनामयाय शब्दादिभोग्यविषयोपनयक्षमाय ॥ पुंसस्समस्तकरणैरुपकारकाय व्यक्ताय सूक्ष्मबृहदात्मवते नतोऽस्मि ॥ ॥ ६३ ॥ इति विविधमजस्य यस्य रूपं प्रकृतिपरात्ममयं सनातनस्य ॥ प्रदिशतु भगवानशेषपुंसां हरिरपजन्मजरादिकां स सिद्धिम् ॥६४॥

इति श्रीविष्णुमहापुराणे षष्ठांशेऽष्टमोऽध्यायः ॥ ८ ॥ ॥ समाप्तोऽयं षष्ठांशः ॥ ॥ इति श्रीविष्णुमहापुराणं समाप्तम् ॥ ॥ छ ॥

च पाठः ॥ ६१ ॥ प्रधानस्वरूपमाह—ज्ञानेति ॥ ज्ञानप्रवृत्तिनियमाः सत्त्वादीनां कार्याणि नियमः स्तंभो ज्ञानसंकोचश्च एषामैक्यम् । एकत्र लयः तद्रूपाय गुणसाम्यावस्थायां हि तत्तत्कार्याणि न भवंति अव्याकृताय अनुद्भूतमहदाद्यवस्थाय प्रधानायेत्यर्थः । भवभावनकारणाय भवः संसारः तद्भावनस्य कर्मणः कारणाय । स्वरूपभवनाय स्वरूपेण भवनं यस्य तत् स्वरूपभवनं स्वतस्सिद्धाय आदिरहितायेत्यर्थः ॥ ६२ ॥ तस्यैव व्यक्ताख्यं रूपमाह—व्योमेति ॥ सूक्ष्मबृहदात्मवते सूक्ष्मं महदादि बृहत् पृथिव्यादि । आत्मा अत्र आत्मशब्दः स्वरूपवचनः ॥ ६३ ॥ अथैवमुपपादितात्स्वेतरसमस्तचिदचिद्वस्तुशरीरात्पुरुषोत्तमात् सर्वपुंसां परमपुरुषार्थं मोक्षमाशासानः पुराणं पूरयति—इतीति ॥ इति उक्तप्रकारेण प्रकृतिपरात्ममयं प्रकृतिर्व्यक्ताव्यक्तात्मिका तस्याः परम् अप्राकृतदिव्यशरीरम् आत्मा पुरुषः । प्रकृतिपरात्मवत इति च पाठः । अत्र प्रकृतिपुरुषयोः परस्माद्भेदः तयोर्जगद्ब्रह्मसमानाधिकरण्यनिबन्धनं तद्रूपत्वम् । अशेषपुंसामिति निर्देशात् आत्मनां परस्परभेदः भगवतः अपजन्मजरादिकसिद्धिप्रदेष्टृत्ववचनेन स एव मोक्षप्रद इत्याद्युक्तमित्यनुसंधेयम् ॥ ६४ ॥ इति श्रीमद्भगवद्रामानुजयतीश्वरचरणसरोजचञ्चरीकश्रीविष्णुचित्तार्यप्रसादिते श्रीविष्णुमहापुराणव्याख्याने षष्ठांशेऽष्टमोऽध्यायः ॥ ८ ॥ ॥ छ ॥ ॥ इति श्रीविष्णुमहापुराणे विष्णुचित्तीयव्याख्यानं समाप्तम् ॥ ॥ छ ॥ ॥

ज्ञानेति ॥ ज्ञानं च प्रवृत्तिश्च तयोर्नियमश्च तयोः संकोचः तदैक्यमयाय । तत्र हेतुः—त्रिगुणात्मकायेति । त्रिगुणस्वरूपभावनाय त्रिगुणस्वरूपभूतायेति वा अव्याकृतस्वरूपं वंदे॥६२॥व्योमेति ॥ व्यक्ताय प्रपंचस्वरूपाय सूक्ष्मेण ब्रह्मस्वरूपेण । विमलाय पाठांतरे सूक्ष्मे अव्यक्ते विलयो यस्येत्यर्थः । सूक्ष्मबृहदात्मवत इति पाठे सूक्ष्मं महदादि बृहत् पृथिव्यादि आत्मशब्दस्स्वरूपवाची॥६३॥ इदानीमुक्तचतुस्स्वरूपाद्भगवतस्समस्तजीवानामेतत्पुराणश्रवणादिद्वारा मोक्षमाशासानः पुराणं निगमयति—इतीति॥ इति प्रकृतिपरात्ममयं प्रकृतिर्व्यक्ताव्यक्तरूपा, परः ईश्वरः आत्मा पुरुषः तन्मयम्, अपगतजन्मजरादिकां मोक्षलक्षणां सिद्धिं प्रदिशत्वित्याशीर्वादः ॥६४॥इति श्रीमद्विष्णुभक्तशिरोरत्नश्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां षष्ठांशेऽष्टमोऽध्यायः ॥८॥ इति षष्ठांशव्याख्या समाप्ता ॥श्रीविष्णुचित्तीयाऽऽत्मप्रकाशाख्यव्याख्यानद्वयसहितं श्रीविष्णुमहापुराणं समाप्तम् ॥



इदं पुस्तकं मुम्बय्यां क्षेमराज–श्रीकृष्णदासश्रेष्ठिना स्वकीये "श्रीवेङ्कटेश्वर" (स्टीम्) मुद्रणालये मुद्रयित्वा प्रकाशितम्। संवत् १९६७, शके १८३२.

सर्गश्च प्रतिसर्गश्च वंशमन्वंतराणि च ॥ वंशानुचरितं कृत्स्नं मयाऽत्र तव कीर्त्तितम् ॥ १३ ॥ अत्र देवास्तथा दैत्या गंधर्वोरगराक्षसाः ॥ यक्ष विद्याधरास्सिद्धाः कथ्यंतेऽप्सरसस्तथा ॥ १४ ॥ मुनयो भावितात्मानः कथ्यंते तपसान्विताः ॥ चातुर्वर्ण्यं तथा पुंसां विशिष्टचरितानि च ॥ १५ ॥ पुण्याः प्रदेशा मेदिन्याः पुण्या नद्योऽथ सागराः ॥ पर्वताश्च महापुण्याश्चरितानि च धीमताम् ॥ १६ ॥ वर्णधर्मादयो धर्मा वेदशास्त्राणि कृत्स्नशः ॥ येषां संस्मरणात्सद्यस्सर्वपापैः प्रमुच्यते ॥१७॥ उत्पत्तिस्थितिनाशानां हेतुर्यो जगतोऽव्ययः ॥ स सर्वभूतस्सर्वात्मा कथ्यते भगवान्हरिः ॥ १८ ॥ अवशेनापि यन्नाम्नि कीर्त्तिते सर्वपातकैः ॥ पुमान्विमुच्यते सद्यस्सिंहत्रस्तैर्मृगैरिव ॥ १९ ॥ यन्नामकीर्त्तनं भक्त्या विलायनमनुत्तमम् ॥ मैत्रेयाशेषपापानां धातूनामिव पावकः ॥ २० ॥ कलिकल्मषमत्युग्रं नरकार्त्तिप्रदं नृणाम् ॥ प्रयाति विलयं सद्यस्सकृद्यत्र च संस्मृते ॥ २१ ॥ हिरण्यगर्भदेवेंद्ररुद्रादित्याश्विवायुभिः ॥ पावकैर्वसुभिस्साध्यैर्विश्वेदेवादिभिस्सुरैः ॥ २२ ॥ यक्षरक्षोरगैस्सिद्धैर्दैत्यगंधर्वदानवैः ॥ अप्सरोभिस्तथा तारानक्षत्रैस्सकलैर्ग्रहैः ॥ २३ ॥ सप्तर्षिभिस्तथा धिष्ण्यैर्धिष्ण्याधिपतिभिस्तथा ॥ ब्राह्मणाद्यैर्मनुष्यैश्च तथैव पशुभिर्मृगैः ॥ २४ ॥ सरीसृपैर्विहंगैश्च पलाशाद्यैर्महीरुहैः ॥ वनाग्निसागरसरित्पातालैस्ससुराग्निभिः ॥ २५ ॥ शब्दादिभिश्च सहितं ब्रह्मांडमखिलं द्विज ॥ मेरोरिवाणुर्यस्यैतद्यन्मयं च द्विजोत्तम ॥ २६ ॥ स सर्वः सर्ववित्सर्वस्वरूपो रूपवर्जितः ॥ भगवान्कीर्त्तितो विष्णुरत्र पापप्रणाशनः॥ २७ ॥ यदश्वमेधावभृथे स्नातः प्राप्नोति वै फलम् ॥ मानवस्तदवाप्नोति श्रुत्वैतन्मुनिसत्तम ॥ २८ ॥ प्रयागे पुष्करे चैव कुरुक्षेत्रे तथाऽर्णवे ॥ कृतोपवासः प्राप्नोति तदस्य श्रवणान्नरः ॥ २९ ॥

दोषोत्थः न केवलं बुद्धिकृतः रागादिकृतोऽपि ॥ १२ ॥ वैशिष्ट्यप्रदर्शनाय कात्स्न्येन पुराणांगान्युक्तानीति ज्ञापनार्थं पुनस्तान्यन्वाह–सर्गश्चेति ॥ १३ ॥ १४ ॥ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥

निषिद्धाः क्रियाः तदुत्थाः ॥ १२ ॥ कृत्स्नपुराणोक्तानुवादपूर्वकं तच्छ्रवणादिफलं प्रपंचयति–स्वर्गश्चेत्यादिना ॥ १३ ॥ १४ ॥ १५ ॥ पुण्या इति ॥ धीमतां ज्ञानिनां चरितानि ॥ १६ ॥ १७ ॥ १८ ॥ अवशेनेति ॥ अवशेनापि यदृच्छयापि यस्य नाम्नि कीर्तिते सति यथा अकस्मादागतं सिंहं दृष्ट्वा हरिणमवरुध्यंतं वृकाः तं विसृज्य पलायंते तद्वत् ॥ १९ ॥ भक्त्या तत्कीर्तने फलमाह–यन्नामेति ॥ द्वादशाब्दादि प्रायश्चित्तैः पापमेव विनङ्क्ष्यति तत्संस्कारस्त्ववशिष्यते । इदं त्वशेषाणां संस्काराणां पापानां विलायनं विनाशकं न चान्येन निश्शेषपापक्षयस्स्यादिति दृष्टांतेनाह–यथा धातूनां सुवर्णादीनामुत्तेजनतक्षणप्रक्षालनादिकं धात्वंतरसंयोगजं नाशयति किं, किंतु पावक एव तथा सर्वोत्तममिदमेवेत्यर्थः ॥ २० ॥ हरिस्मृतेः फलमाह--कलिकल्मषमिति ॥ यत्र यस्मिन्विष्णौ हिरण्यगर्भादिभिस्सहितमेतद्ब्रह्मांडं मेरोः परमाणुर्यथा तथा अत्यंतमल्पं यस्य स विष्णुरत्र कीर्तित इति सप्तमेनान्वयः । धिष्ण्यैः स्थानैः तं मंगल्यमित्यादौ यत्र विष्णुः कीर्तित इति शेषः ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ यदिति ॥ अन्यदीयाश्वमेधावभृथे स्नातो यत्फलं प्राप्नोति तत्सकलमिदं पुराणं प्रसंगतः किंचिच्छ्रुत्वा प्राप्नोतीत्यर्थः ॥ २८ ॥ प्रयाग इति ॥ प्रयागादौ कृतमासोपवासादिना यत्प्राप्नोति तदस्यैकदेशश्रवणात्प्राप्नोतीत्यर्थः ॥ २९ ॥

यदग्निहोत्रे सुहुते वर्षेणाप्नोति मानवः ॥ महापुण्यफलं विप्र तदस्य श्रवणात्सकृत् ॥ ३० ॥ यज्ज्येष्ठशुक्लद्वादश्यां स्नात्वा वै यमुनाजले ॥ मथुरायां हरिं दृष्ट्वा प्राप्नोति पुरुषः फलम् ॥ ३१ ॥ तदाप्नोत्यखिलं सम्यगध्यायं यश्शृणोति वै ॥ पुराणस्यास्य विप्रर्षे केशवार्पितमानसः ॥ ३२ ॥ यमुनासलिलस्नातः पुरुषो मुनिसत्तम ॥ ज्येष्ठामूले सिते पक्षे द्वादश्यां समुपोषितः ॥ ३३ ॥ समभ्यर्च्याच्युतं सम्यङ् मथुरायां समाहितः ॥ अश्वमेधस्य यज्ञस्य प्राप्नोत्यविकलं फलम् ॥ ३४ ॥ आलोक्यर्द्धिमथान्येषामुन्नीतानां स्ववंशजैः ॥ एतत्किलोचुरप्येषां पितरः सपितामहाः ॥ ३५ ॥ कच्चिदस्मत्कुले जातः कालिंदीसलिलाप्लुतः ॥ अर्चयिष्यति गोविंदं मथुरायामुपोषितः ॥३६॥ ज्येष्ठामूले सिते पक्षे केनैवं वयमप्युत ॥ परामृद्धिमवाप्स्यामस्तारितास्स्वकुलोद्भवैः ॥ ३७॥ ज्येष्ठामूले सिते पक्षे समभ्यर्च्य जनार्दनम् ॥ धन्यानां कुलजः पिंडान्यमुनायां प्रदास्यति ॥ ३८ ॥ तस्मिन्काले समभ्यर्च्य तत्र कृष्णं समाहितः ॥ दत्त्वा पिंडं पितृभ्यश्च यमुनासलिलाप्लुतः ॥ ३९ ॥ यदाप्नोति नरः पुण्यं तारयन्स्वपितामहान् ॥ श्रुत्वाध्यायं तदाप्नोति पुराणस्यास्य शक्तितः ॥ ४० ॥ एतत्संसारभीरूणां परित्राणमनुत्तमम् ॥ श्राव्याणां परमं श्राव्यं पवित्राणामनुत्तमम् ॥ ४१ ॥ दुःस्वप्ननाशनं नृणां सर्वदुष्टनिबर्हणम् ॥ मंगलं मंगलानां च पुत्रसंपत्प्रदायकम् ॥ ४२ ॥ इदमार्षं पुरा प्राह ऋभवे कमलोद्भवः ॥ ऋभुः प्रियव्रतायाह स च भागुरयेऽब्रवीत् ॥ ४३ ॥ भागुरिस्तंभमित्राय दधीचाय स चोक्तवान् ॥ सारस्वताय तेनोक्तं भृगुस्सारस्वतेन च ॥ ४४ ॥ भृगुणा पुरुकुत्साय नर्मदायै स चोक्तवान् ॥ नर्मदा धृतराष्ट्राय नागायापूरणाय च ॥ ४५ ॥ ताभ्यां च नागराजाय प्रोक्तं वासुकये द्विज ॥ वासुकिः प्राह वत्साय वत्सश्चाश्वतराय वै ॥ ४६ ॥ कंबलाय च तेनोक्तमेलापुत्राय तेन वै ॥ ४७ ॥ पातालं समनुप्राप्तः ततो वेदशिरा मुनिः ॥ प्राप्तवानेतदखिलं स च प्रमतये ददौ ॥ ४८ ॥

॥३०॥३१॥३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥३६॥ ज्येष्ठामूल इति ॥ केनैवं वयमप्युतेति केन वा पुरुषेण एवं मथुरायां कृतगोविंदपूजनेन वयं तारिताः परामृद्धिमपवर्गर्धिम् अवाप्स्यामः ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥

॥ ३० ॥ ३१ ॥३२॥ मथुरायां हरिं दृष्ट्वा यत्फलं परमां च गतिं प्राप्नोतीत्युक्ते तत्र किं फलं प्राप्नोतीत्यपेक्षायामाह–यमुनासलिल इत्यादिद्वाभ्याम्–यमुनासलिल इति ॥ ज्येष्ठानक्षत्रं पूर्णिमायुक्तं मूलं प्रवृत्तिहेतुर्यस्यासौ ज्येष्ठामूलः ज्येष्ठमासः तस्मिञ्छुक्लपक्षे ॥ ३३ ॥ ३४ ॥ अत्रार्थे पितृगीताः प्रमाणयन्नाह–आलोक्येत्यादिचतुर्भिः ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ समाधानेन कीर्तनाद्यत्फलमुक्तं तदेव समाहितस्सन् श्रुत्वापि प्राप्नोतीत्याह–तस्मिन्काल इत्यादिद्वाभ्याम् ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ एतत्पुराणसंप्रदायं कथयन्नाह–इदमार्षमित्यादिना–इदमार्षमिति ॥ ऋषिर्नारायणः तेन प्रोक्तमार्षम् ॥ ४३ ॥ भागुरिरिति ॥ भृगुः प्राप्तवानिति शेषः ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥

दत्तं प्रमतिना चैतज्जातुकर्णाय धीमते ॥ जातुकर्णेन चैवोक्तमन्येषां पुण्यकर्मणाम् ॥ ४९ ॥ पुलस्त्यवरदानेन ममाप्येतत्स्मृतिं गतम् ॥ मयापि तुभ्यं मैत्रेय यथावत्कथितं त्विदम् ॥ ५० ॥ त्वमप्येतच्छिनीकाय कलेरंते वदिष्यसि ॥ ५१ ॥ इत्येतत्परमं गुह्यं कलिकल्मषनाशनम् ॥ यश्शृणोति नरो भक्त्या सर्वपापैः प्रमुच्यते ॥ ५२ ॥ समस्ततीर्थस्नानानि समस्तामरसंस्तुतिः ॥ कृता तेन भवेदेतद्यश्शृणोति दिनेदिने ॥ ५३ ॥ कपिलादानजनितं पुण्यमत्यंतदुर्लभम् ॥ श्रुत्वैतस्य दशाध्यायानवाप्नोति न संशयः ॥ ५४ ॥ यस्त्वेतत्सकलं शृणोति पुरुषः कृत्वा मनस्यच्युतं सर्वं सर्वमयं समस्तजगतामाधारमात्माश्रयम् ॥ ज्ञानंज्ञेयमनादिमंतरहितं सर्वामराणां हितं स प्राप्नोति न संशयो स्त्यविकलं यद्वाजिमेधे फलम् ॥ ५५ ॥ यत्रादौ भगवांश्चराचरगुरुर्मध्ये तथांते च स ब्रह्मज्ञानमयोऽच्युतोऽखिलजगन्मध्यांतसर्गप्रभुः ॥ तत्सर्वं पुरुषः पवित्रममलं शृण्वन्पठन्वाचयन्प्राप्नोत्यस्ति न तत्फलं त्रिभुवनेष्वेकांतसिद्धिर्हरिः ॥ ५६ ॥ यस्मिन्न्यस्तमतिर्न याति नरकं स्वर्गोऽपि यच्चिंतने विघ्नो यत्र निवेशितात्ममनसो ब्राह्मोऽपि लोकोऽल्पकः ॥ मुक्तिं चेतसि यस्स्थितो मलधियां पुंसां ददात्यव्ययः किं चित्रं यदघं प्रयाति विलयं तत्राच्युते कीर्त्तिते ॥ ५७ ॥

॥ ४९ ॥ पुलस्त्येति ॥ ममाप्येतत्स्मृतिं गतमिति मह्यं सारस्वतेन चेति पूर्वमुक्तमुपजीव्योच्यते। आद्ये कृतयुगे सर्वपुराणानां संग्रहरूपस्य ब्रह्मसंज्ञस्य कर्तुर्ब्रह्मणो दक्षादिपुरुकुत्सांतः संप्रदायः पराशरस्य त्रेतायां महद्विष्णुपुराणं कुर्वतः प्रागुक्तकालदैर्घ्यात्तद्विच्छेदे पुनः पराशरर्षिदृष्टमेव तत्पुराणं ब्रह्मणैव ऋभ्वादिजातूकर्णांतसंप्रदायांतरेण पुनस्त्रैलोक्ये प्रवर्त्तितम्। इदानीं त्वष्टाविंशतियुगारंभे मैत्रेयपृष्टेन पराशरेण प्राग्जन्मनि सारस्वतमुखाच्छ्रुतमिह जन्मनि वसिष्ठपुलस्त्यवरदानेनेदं स्मृतं स्वल्पग्रंथसंग्रहितं मैत्रेयायोक्तम् । अतः संप्रदायाविच्छेदोक्तिरविरुद्धा । अस्य गर्भस्थस्यैव जन्मांतरश्रुतवेदस्मरणवत्पुराणार्थस्मरणमप्युपपन्नं षड्विंशे युगे व्यासत्वसिद्ध्या तदाद्यस्य सद्भावाद्युक्ता पुलस्त्यवरात् पुराणसंहिताकर्तृत्वसिद्धिः ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ यस्मिन्निति ॥ मतिः श्रवणमननरूपं ज्ञानं, चिंतनं धारणा, आत्मनि

॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ यस्त्वेतदिति ॥ कृत्वा मनस्यच्युतमित्यादेः श्रोतृविशेषणस्य यद्वाजिमेध इत्यत्राप्यनुषंगः । अतोयमर्थः । एवंभूतमच्युतं मनसि कृत्वा अश्वमेधे कृते यत्फलं तत्सकलं प्राप्नोतीति । ततश्च पूर्वोक्तैकदेशश्रवणकीर्तनात्समस्तश्रवणे फलभूयस्त्वमुक्तं भवति ॥ ५५ ॥ यत्रेति ॥ पवित्रं परमश्रेष्ठं शृण्वन्पठन्यत्फलं प्राप्नोति न तत्कुत्राप्यस्ति यस्मादेकांता नियता सर्वपापक्षयादिद्वारा सिद्धिर्विमुक्तिर्यस्मात्स हरिरेव तत्प्राप्यं फलं स्वर्गादिलोकेष्वस्तीत्यर्थः ॥ ५६ ॥ हरेः कीर्तनमात्रेण सर्वपापक्षयो भवतीति यदुक्तं तत्कैमुतिकन्यायेनोपपादयति--यस्मि

यज्ञैर्यज्ञविदो यजंति सततं यज्ञेश्वरं कर्मिणो यं वै ब्रह्ममयं परावरमयं ध्यायंति च ज्ञानिनः ॥ यं संचिंत्य न जायते न म्रियते नो वर्द्धते हीयते नैवासन्न च सद्भवत्यति ततः किं वा हरेश्श्रूयताम् ॥ ५८ ॥ कव्यं यः पितृरूपधृग्विधिहुतं हव्यं च भुंक्ते विभुर्देवत्वे भगवाननादिनिधनस्स्वाहास्वधासंज्ञिते ॥ यस्मिन्ब्रह्मणि सर्वशक्तिनिलये मानानि नो मानिनां निष्ठायै प्रभवंति हंति कलुषं श्रोत्रं स यातो हरिः ॥५९॥ नांतोस्ति यस्य न च यस्य समुद्भवोऽस्ति वृद्धिर्न यस्य परिणामविवर्जितस्य ॥ नापक्षयं च समुपैत्यविकारि वस्तु यस्तं नतोस्मि पुरुषोत्तममीशमीड्यम् ॥ ६० ॥ तस्यैव योनु गुणभुग्बहुधैक एव शुद्धोप्यशुद्ध इव भाति हि मूर्त्तिभेदैः ॥ ज्ञानान्वितस्सकलसत्त्वविभूतिकर्त्ता तस्मै नमोस्तु पुरुषाय सदाव्ययाय ॥ ६१ ॥

मनोनिवेशनं ध्यानं, भगवति चेतस्स्थितिस्समाधिः ॥ ५७ ॥ यज्ञैरिति ॥ न जायते इति । शरीरपरिग्रहो जन्म तत्त्यागो मरणम् । वृद्धिह्रासौ ज्ञानतः नैवासन्न च सदिति कारणत्वकार्यत्वनिरासः । ततः हरेः अति अतिक्रमेण किं वा श्रूयतां तदधिकं न किंचित् श्रूयत इत्यर्थः ॥ ५८ ॥ स्वनामादिद्वारा हरिरेव श्रोतव्य इत्याह—कव्यमिति ॥ मानिनां प्रमाणवतां मानानि निष्ठायै परिच्छेदाय न प्रभवंति न समर्थानि भवंति ॥ ५९ ॥ अथ शास्त्रं समापयिष्यन्नीश्वरपुरुषप्रधानव्यक्तानि मंगलाय प्रणमति—नांतोस्तीत्यादिचतुर्भिः—नांतोस्तीति ॥ तत्रायं प्रथमश्लोकः शुभाश्रयत्वेनोक्तदिव्यविग्रहविशिष्टेश्वरविषयः । कालोपीश्वरेंतर्भूतः ॥ ६० ॥ द्वितीयेन श्लोकेन तस्य पुरुषरूपं नमस्करोति—तस्यैवेति ॥ यः पुरुषः तस्यैवानुगुणभुक् शेषभूत इत्यर्थः । एकः देवादिभेदरहितः ज्ञानैकस्वरूपः स्वतश्शुद्धोऽपि प्राकृतदेहेष्वात्मभ्रमात्तद्धर्मयुक्ततया भानादशुद्ध इव भाति । ज्ञानान्वितः ज्ञानधर्मकः तत्त्वादीनां महदादीनां विभूतेर्विस्तरस्य कर्मद्वारा कर्त्ता । सकलतत्त्वविभूतिकर्त्तेति

त्विति ॥ न्यस्ता निक्षिता मतिर्येन अच्युतैकचित्त इति यावत् । सप्रमादकृतैरघैर्नरकं न याति । तस्मिन्पापसंश्लेषाभावात् । यस्य चिंतने क्रियमाणे स्वर्गप्राप्तिरपि विघ्नप्राया यस्मिन्निवेशितः आत्मा मनश्च स समाधिना येन तस्य ब्रह्मलोकोप्यतितुच्छः । यथाकथंचिदपि यश्चेतसि स्थितो मुक्तिमेव ददाति यदैवं स्वार्थं केवलं मनोमात्रेणाच्युतनिष्ठानामीदृशं फलगौरवं तदा तन्नामकीर्तनेन परेषामप्यघं विलयं प्रयाति स्वकीयाघनाशः किं चित्रमित्यर्थः ॥ ९७ ॥ अतो हरिरेव श्रोतव्यस्सर्वपूज्यत्वादित्याह—यज्ञैरित्यादिद्वाभ्याम्—यज्ञैरिति ॥ नैवासन्न च सदिति कार्यं कारणं च न भवति । पितृपुत्रादिभावेन संसरति ततो हरेरति अतिक्रमेण किं श्रूयताम् ॥ ९८ ॥ कव्यमिति ॥ विप्रमुखे विधिना हुतं कव्यं देवत्वेन वर्तमानो हव्यं च यो भुंक्ते मानानि यस्मिन्निष्ठायै परिच्छेदाय न समर्थानि स्वप्रकाशत्वात् । हरिः श्रोत्रं प्राप्तः कलुषं हंति तस्मात्स एव श्रोतव्य इत्यर्थः॥९९॥पुराणसमाप्तौ भगवतस्सृष्ट्याद्युपयोगाय प्रतिपादितं परमेश्वरपुरुषप्रधानव्यक्ताख्यरूपचतुष्टयं प्रणमति—नांत इत्यादिचतुर्भिः--नांत इति॥विकारिविकल्पं वस्तु ब्रह्मैव यतः कालोपि ईश्वरांतर्भूतः तं नतोस्मि॥६०॥ तस्येति ॥ तस्यैवानु परमेश्वरात्समनंतरं पुरुष एक एव तथापि बहुधा ब्रह्मादिरूपेण शुद्धोप्यशुद्ध इव सृष्ट्यादिष्वासक्त इव मूर्तिविभागानां दक्षादिमन्वादिरूपाणां भेदैः सर्वसत्त्वानां विभूतिकर्ता विस्तारकृत् ॥ ६१ ॥

दत्तं प्रमतिना चैतज्जातुकर्णाय धीमते ॥ जातुकर्णेन चैवोक्तमन्येषां पुण्यकर्मणाम् ॥ ४९ ॥ पुलस्त्यवरदानेन ममाप्येतत्स्मृतिं गतम् ॥ मयापि तुभ्यं मैत्रेय यथावत्कथितं त्विदम् ॥ ५० ॥ त्वमप्येतच्छिनीकाय कलेरंते वदिष्यसि ॥ ५१ ॥ इत्येतत्परमं गुह्यं कलिकल्मषनाशनम् ॥ यश्शृणोति नरो भक्त्या सर्वपापैः प्रमुच्यते ॥ ५२ ॥ समस्ततीर्थस्नानानि समस्तामरसंस्तुतिः ॥ कृता तेन भवेदेतद्यश्शृणोति दिनेदिने ॥ ५३ ॥ कपिलादानजनितं पुण्यमत्यंतदुर्लभम् ॥ श्रुत्वैतस्य दशाध्यायानवाप्नोति न संशयः ॥ ५४ ॥ यस्त्वेतत्सकलं शृणोति पुरुषः कृत्वा मनस्यच्युतं सर्वं सर्वमयं समस्तजगतामाधारमात्माश्रयम् ॥ ज्ञानंज्ञेयमनादिमंतरहितं सर्वामराणां हितं स प्राप्नोति न संशयो स्त्यविकलं यद्वाजिमेधे फलम् ॥ ५५ ॥ यत्रादौ भगवांश्चराचरगुरुर्मध्ये तथांते च स ब्रह्मज्ञानमयोऽच्युतोऽखिलजगन्मध्यांतसर्गप्रभुः ॥ तत्सर्वं पुरुषः पवित्रममलं शृण्वन्पठन्वाचयन्प्राप्नोत्यस्ति न तत्फलं त्रिभुवनेष्वेकांतसिद्धिर्हरिः ॥ ५६ ॥ यस्मिन्न्यस्तमतिर्न याति नरकं स्वर्गोऽपि यच्चिंतने विघ्नो यत्र निवेशितात्ममनसो ब्राह्मोऽपि लोकोऽल्पकः ॥ मुक्तिं चेतसि यस्स्थितो मलधियां पुंसां ददात्यव्ययः किं चित्रं यदघं प्रयाति विलयं तत्राच्युते कीर्त्तिते ॥ ५७ ॥

॥४९॥पुलस्त्येति॥ममाप्येतत्स्मृतिं गतमिति मह्यं सारस्वतेन चेति पूर्वमुक्तमुपजीव्योच्यते।आद्ये कृतयुगे सर्वपुराणानां संग्रहरूपस्य ब्रह्मसंज्ञस्य कर्तुर्ब्रह्मणो दक्षादिपुरुकुत्सांतः संप्रदायः पराशरस्य त्रेतायां महद्विष्णुपुराणं कुर्वतः प्रागुक्तकालदैर्घ्यात्तद्विच्छेदे पुनः पराशरर्षिदृष्टमेव तत्पुराणं ब्रह्मणैव ऋभ्वादिजातूकर्णांतसंप्रदायांतरेण पुनस्त्रैलोक्ये प्रवर्त्तितम्।इदानीं त्वष्टाविंशतियुगारंभे मैत्रेयपृष्टेन पराशरेण प्राग्जन्मनि सारस्वतमुखाच्च्युतमिह जन्मनि वसिष्ठपुलस्त्यवरदानेनेदं स्मृतं स्वल्पग्रंथसंग्रहितं मैत्रेयायोक्तम् । अतः संप्रदायाविच्छेदोक्तिरविरुद्धा । अस्य गर्भस्थस्यैव जन्मांतरश्रुतवेदस्मरणवत्पुराणार्थस्मरणमप्युपपन्नं षड्विंशे युगे व्यासत्वसिद्ध्या तदाद्यस्य सद्भावाद्युक्ता पुलस्त्यवरात् पुराणसंहिताकर्तृत्वसिद्धिः ॥५०॥५१॥५२॥५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ यस्मिन्निति ॥ मतिः श्रवणमननरूपं ज्ञानं, चिंतनं धारणा, आत्मनि

॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ यस्त्वेतदिति ॥ कृत्वा मनस्यच्युतमित्यादेः श्रोतृविशेषणस्य यद्वाजिमेध इत्यत्राप्यनुषंगः । अतोयमर्थः । एवंभूतमच्युतं मनसि कृत्वा अश्वमेधे कृते यत्फलं तत्सकलं प्राप्नोतीति । ततश्च पूर्वोक्तैकदेशश्रवणकीर्तनात्समस्तश्रवणे फलभूयस्त्वमुक्तं भवति ॥ ५५ ॥ यत्रेति ॥ पवित्रं परमश्रेष्ठं शृण्वन्पठन्यत्फलं प्राप्नोति न तत्कुत्राप्यस्ति यस्मादेकांता नियता सर्वपापक्षयादिद्वारा सिद्धिर्विमुक्तिर्यस्मात्स हरिरेव तत्प्राप्यं फलं स्वर्गादिलोकेष्वस्तीत्यर्थः ॥ ५६ ॥ हरेः कीर्तनमात्रेण सर्वपापक्षयो भवतीति यदुक्तं तत्कैमुतिकन्यायेनोपपादयति--यस्मि

यज्ञैर्यज्ञविदो यजंति सततं यज्ञेश्वरं कर्मिणो यं वै ब्रह्ममयं परावरमयं ध्यायंति च ज्ञानिनः ॥ यं संचिंत्य न जायते न म्रियते नो वर्द्धते हीयते नैवासन्न च सद्भवत्यति ततः किं वा हरेश्श्रूयताम् ॥ ५८ ॥ कव्यं यः पितृरूपधृग्विधिहुतं हव्यं च भुंक्ते विभुर्देवत्वे भगवाननादिनिधनस्स्वाहास्वधासंज्ञिते ॥ यस्मिन्ब्रह्मणि सर्वशक्तिनिलये मानानि नो मानिनां निष्ठायै प्रभवंति हंति कलुषं श्रोत्रं स यातो हरिः ॥५९॥ नांतोस्ति यस्य न च यस्य समुद्भवोऽस्ति वृद्धिर्न यस्य परिणामविवर्जितस्य ॥ नापक्षयं च समुपैत्यविकारि वस्तु यस्तं नतोस्मि पुरुषोत्तममीशमीड्यम् ॥ ६० ॥ तस्यैव योनु गुणभुग्बहुधैक एव शुद्धोप्यशुद्ध इव भाति हि मूर्त्तिभेदैः ॥ ज्ञानान्वितस्सकलसत्त्वविभूतिकर्त्ता तस्मै नमोस्तु पुरुषाय सदाव्ययाय ॥ ६१ ॥

मनोनिवेशनं ध्यानं, भगवति चेतस्स्थितिस्समाधिः ॥ ५७ ॥ यज्ञैरिति ॥ न जायते इति । शरीरपरिग्रहो जन्म तत्त्यागो मरणम् । वृद्धिह्रासौ ज्ञानतः नैवासन्न च सदिति कारणत्वकार्यत्वनिरासः । ततः हरेः अति अतिक्रमेण किं वा श्रूयतां तदधिकं न किंचित् श्रूयत इत्यर्थः ॥ ५८ ॥ स्वनामादिद्वारा हरिरेव श्रोतव्य इत्याह—कव्यमिति ॥ मानिनां प्रमाणवतां मानानि निष्ठायै परिच्छेदाय न प्रभवंति न समर्थानि भवंति ॥ ५९ ॥ अथ शास्त्रं समापयिष्यन्नीश्वरपुरुषप्रधानव्यक्तानि मंगलाय प्रणमति—नांतोस्तीत्यादिचतुर्भिः—नांतोस्तीति ॥ तत्रायं प्रथमश्लोकः शुभाश्रयत्वेनोक्तदिव्यविग्रहविशिष्टेश्वरविषयः । कालोपीश्वरेंतर्भूतः ॥ ६० ॥ द्वितीयेन श्लोकेन तस्य पुरुषरूपं नमस्करोति—तस्यैवेति ॥ यः पुरुषः तस्यैवानुगुणभुक् शेषभूत इत्यर्थः । एकः देवादिभेदरहितः ज्ञानैकस्वरूपः स्वतश्शुद्धोऽपि प्राक्तद्देहेष्वात्मभ्रमात्तद्धर्मयुक्ततया भानादशुद्ध इव भाति । ज्ञानान्वितः ज्ञानधर्मकः तत्त्वादीनां महदादीनां विभूतेर्विस्तरस्य कर्मद्वारा कर्त्ता । सकलतत्त्वविभूतिकर्त्तेति

न्निति ॥ न्यस्ता निक्षिप्ता मतिर्येन अच्युतैकचित्त इति यावत् । सप्रमादकृतैरघैर्नरकं न याति । तस्मिन्पापसंश्लेषाभावात् । यस्य चिंतने क्रियमाणे स्वर्गप्राप्तिरपि विघ्नप्राया यस्मिन्निवेशितः आत्मा मनश्च स समाधिना येन तस्य ब्रह्मलोकोप्यतितुच्छः । यथाकथंचिदपि यश्चेतसि स्थितो मुक्तिमेव ददाति यदैवं स्वार्थं केवलं मनोमात्रेणाच्युतनिष्ठानामीदृशं फलगौरवं तदा तन्नामकीर्तनेन परेषामप्यघं विलयं प्रयाति स्वकीयाघनाशः किं चित्रमित्यर्थः ॥ ५७ ॥ अतो हरिरेव श्रोतव्यस्सर्वपूज्यत्वादित्याह—यज्ञैरित्यादिद्वाभ्याम्—यज्ञैरिति ॥ नैवासन्न च सदिति कार्यं कारणं च न भवति । पितृपुत्रादिभावेन संसरति ततो हरेरति अतिक्रमेण किं श्रूयताम् ॥ ५८ ॥ कव्यमिति ॥ विप्रमुखे विधिना हुतं कव्यं देवत्वेन वर्तमानो हव्यं च यो भुंक्ते मानानि यस्मिन्निष्ठायै परिच्छेदाय न समर्थानि स्वप्रकाशत्वात् । हरिः श्रोत्रं प्राप्तः कलुषं हंति तस्मात्स एव श्रोतव्य इत्यर्थः॥५९॥पुराणसमाप्तौ भगवतस्सृष्ट्याद्युपयोगाय प्रतिपादितं परमेश्वरपुरुषप्रधानव्यक्ताख्यरूपचतुष्टयं प्रणमति—नांत इत्यादिचतुर्भिः—नांत इति॥विकारिविकल्पं वस्तु ब्रह्मैव यतः कालोपि ईश्वरांतर्भूतः तं नतोस्मि॥६०॥ तस्येति ॥ तस्यैवानु परमेश्वरात्समनंतरं पुरुष एक एव तथापि बहुधा ब्रह्मादिरूपेण शुद्धोप्यशुद्ध इव सृष्ट्यादिष्वासक्त इव मूर्तिविभागानां दक्षादिमन्वादिरूपाणां भेदैः सर्वसत्त्वानां विभूतिकर्ता विस्तारकृत् ॥ ६१ ॥

ज्ञानप्रवृत्तिनियमैक्यमयाय पुंसो भोगप्रदानपटवे त्रिगुणात्मकाय ॥ अव्याकृताय भवभावनकारणाय वंदे स्वरूपभवनाय सदाऽजराय॥६२॥ व्योमानिलाग्निजलभूरचनामयाय शब्दादिभोग्यविषयोपनयक्षमाय ॥ पुंसस्समस्तकरणैरुपकारकाय व्यक्ताय सूक्ष्मबृहदात्मवते नतोस्मि ॥ ॥ ६३ ॥ इति विविधमजस्य यस्य रूपं प्रकृतिपरात्ममयं सनातनस्य ॥ प्रदिशतु भगवानशेषपुंसां हरिरपजन्मजरादिकां स सिद्धिम् ॥६४॥ इति श्रीविष्णुमहापुराणे षष्ठांशेऽष्टमोऽध्यायः ॥ ८ ॥ ॥ समाप्तोऽयं षष्ठांशः ॥ ॥ इति श्रीविष्णुमहापुराणं समाप्तम् ॥ ॥ छ ॥

च पाठः ॥ ६१ ॥ प्रधानस्वरूपमाह—ज्ञानेति ॥ ज्ञानप्रवृत्तिनियमाः सत्त्वादीनां कार्याणि नियमः स्तंभो ज्ञानसंकोचश्च एषामैक्यम् । एकत्र लयः तद्रूपाय गुणसाम्यावस्थायां हि तत्तत्कार्याणि न भवंति अव्याकृताय अनुद्भूतमहदाद्यवस्थाय प्रधानायेत्यर्थः । भवभावनकारणाय भवः संसारः तद्भावनस्य कर्मणः कारणाय । स्वरूपभवनाय स्वरूपेण भवनं यस्य तत् स्वरूपभवनं स्वतस्सिद्धाय आदिरहितायेत्यर्थः ॥ ६२ ॥ तस्यैव व्यक्ताख्यं रूपमाह—व्योमेति ॥ सूक्ष्मबृहदात्मवते सूक्ष्मं महदादि बृहत् पृथिव्यादि । आत्मा अत्र आत्मशब्दः स्वरूपवचनः ॥ ६३ ॥ अथैवमुपपादितात्स्वेतरसमस्तचिदचिद्वस्तुशरीरात्पुरुषोत्तमात् सर्वपुंसां परमपुरुषार्थं मोक्षमाशासानः पुराणं पूरयति—इतीति ॥ इति उक्तप्रकारेण प्रकृतिपरात्ममयं प्रकृतिर्व्यक्ताव्यक्तात्मिका तस्याः परम् अप्राकृतदिव्यशरीरम् आत्मा पुरुषः । प्रकृतिपरात्मवत इति च पाठः । अत्र प्रकृतिपुरुषयोः परस्माद्भेदः तयोर्जगद्ब्रह्मासमानाधिकरण्यनिबन्धनं तद्रूपत्वम् । अशेषपुंसामिति निर्देशात् आत्मनां परस्परभेदः भगवतः अपजन्मजरादिकसिद्धिप्रदेष्टृत्ववचनेन स एव मोक्षप्रद इत्याद्युक्तमित्यनुसंधेयम् ॥ ६४ ॥ इति श्रीमद्भगवद्रामानुजयतीश्वरचरणसरोजचञ्चरीकश्रीविष्णुचित्तार्यप्रसादिते श्रीविष्णुमहापुराणव्याख्याने षष्ठांशेऽष्टमोऽध्यायः ॥ ८ ॥ ॥ छ ॥ ॥ इति श्रीविष्णुमहापुराणे विष्णुचित्तीयव्याख्यानं समाप्तम् ॥ ॥ छ ॥ ॥

ज्ञानेति ॥ ज्ञानं च प्रवृत्तिश्च तयोर्नियमश्च तयोः संकोचः तदैक्यमयाय । तत्र हेतुः—त्रिगुणात्मकायेति । त्रिगुणस्वरूपभावनाय त्रिगुणस्वरूपभूतायेति वा अव्याकृतस्वरूपं वंदे॥६२॥व्योमेति ॥ व्यक्ताय प्रपंचस्वरूपाय सूक्ष्मेण ब्रह्मस्वरूपेण । विमलाय पाठांतरे सूक्ष्मे अव्यक्ते विलयो यस्येत्यर्थः । सूक्ष्मबृहदात्मवत इति पाठे सूक्ष्मं महदादि बृहत् पृथिव्यादि आत्मशब्दस्स्वरूपवाची॥६३॥ इदानीमुक्तचतुस्स्वरूपाद्भगवतस्समस्तजीवानामेतत्पुराणश्रवणादिद्वारा मोक्षमाशासानः पुराणं निगमयति--इतीति॥ इति प्रकृतिपरात्ममयं प्रकृतिर्व्यक्ताव्यक्तरूपा, परः ईश्वरः आत्मा पुरुषः तन्मयम्, अपगतजन्मजरादिकां मोक्षलक्षणां सिद्धिं प्रदिशत्वित्याशीर्वादः ॥६४॥इति श्रीमद्विष्णुभक्तशिरोरत्नश्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुमहापुराणव्याख्यायां षष्ठांशेष्टमोऽध्यायः ॥८॥ इति षष्ठांशव्याख्या समाप्ता ॥श्रीविष्णुचित्तीयाऽऽत्मप्रकाशाख्यव्याख्यानद्वयसहितं श्रीविष्णुमहापुराणं समाप्तम् ॥

---

इदं पुस्तकं मुम्बय्यां क्षेमराज-श्रीकृष्णदासश्रेष्ठिना स्वकीये "श्रीवेङ्कटेश्वर" (स्टीम्) मुद्रणालये मुद्रयित्वा प्रकाशितम्। संवत् १९६७, शके १८३२.

इदं पुस्तकं क्षेमराज-श्रीकृष्णदासश्रेष्ठिना मुम्बय्यां ( खेतवाडी ७ वीं गल्ली खम्बाटा लैन ) स्वकीये "श्रीवेङ्कटेश्वर" ( स्टीम् ) मुद्रणयन्त्रालये मुद्रयित्वा प्रकाशितम्। संवत् १९६७, शके १८३२.

॥ इति श्रीविष्णुमहापुराणं विष्णुचित्त्यात्मप्रकाशाख्यश्रीधरीय
व्याख्याद्वयोपेतं समाप्तम् ॥

# ॥ * ॥ अथ विष्णुधर्मोत्तरमहापुराणप्रारम्भः ॥ * ॥

# प्रस्तावना।

सुविदितमेवैतत्पुराणसुरधुनीमज्जनक्षपिताखिलमनोमलानामिन्दिराजानिचरितकोकनदमकरन्दमधुव्रतानामास्तिकधुरीणानां यद्–"इतिहासपुराणानि पञ्चमं वेदमीश्वरः। सर्वेभ्य एव वेदेभ्यः ससृजे सर्वदर्शनः॥" इति श्रीमद्भागवतोक्तेः पुराणानां पञ्चमवेदत्वं प्रसिद्धमेवेति। किञ्च वेदानामतिदुरूहत्वात्पुराणानाञ्चातिगहनधर्मादिविषयस्यातिसरलतया बुद्धिविषयीकरणात्साधारणमतीनामप्यल्पायासेन प्रचुरोपकारकत्वम्। यदाह भगवान् याज्ञवल्क्यः–"पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः। वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश॥" इति। अत्र च पुराणानामतिशयोपकारकत्वमेव प्रथमोच्चारणे प्रमाणम्। तत एव मरीचिप्रश्नोत्तरे ब्रह्मणा हितमुपदिष्टम्–"शृणु वत्स प्रवक्ष्यामि पुराणानां समुच्चयम्। यस्मिञ्ज्ञाते भवेज्ज्ञातं वाङ्मयं सचराचरम्॥" इति। नात्र चित्रं यद्भगवता व्यासरूपिणा विविधाख्यानकैर्मनुष्याणामनुष्टेयसारमत्र निर्दिष्टम्।

विष्णुपुराणस्यादिभागे षडंशा निर्दिष्टाः। द्वितीये भागे तु "अतः परन्तु सूतेन शौनकादिभिरादरात्। पृष्टेन चोदिताः शश्वद्विष्णुधर्मोत्तराह्वयाः॥ नानाधर्मकथाः पुण्या व्रतानि नियमा यमाः। धर्मशास्त्रं चार्थशास्त्रं वेदान्तं ज्यौतिषं तथा॥ वंशाख्यानं प्रकरणात्स्तोत्राणि मनवस्तथा। नानाविद्याश्रयाः प्रोक्ताः सर्वलोकोपकारकाः॥ एतद्विष्णुपुराणं वै सर्वशास्त्रार्थसंग्रहम्॥" इति नारदीयपुराणपूर्वभागीयबृहदुपाख्यानचतुर्थपादचतुर्नवत्यध्यायस्थपद्यैः संक्षिप्तप्रकारेण विषय उक्तः। तत्रापि नक्षत्रादिपूजनराज्याभिषेकादिप्रयोगेष्वाथर्वणिकविधिनाऽसाधारणविषयप्रतिपादनं राष्ट्रस्यातीवोपकारकमित्यपिहितं धीमताम्।

किञ्च चित्रसूत्रवर्णनप्रसङ्गे देवनृपार्षिगन्धर्वदैत्यदानवदेशविशेषानुरूपासनशयनमानवेशसरित्सागरवाहनशैलशिखरसद्वीपभूमण्डलशङ्खपद्मादिनिधिसचन्द्रनक्षत्ररात्रिसन्ध्याशृङ्गारादिनवरसविद्याधरादिचित्राणां प्रमाणाकारादिनिर्माणवर्णनमितरपुराणासाधारणमत्र लक्ष्यते। तत्रापि राजप्रासादे सभायाञ्च कानिकानि चित्राणि लेख्यानि केषाञ्च निषेध इति व्यवस्था रजतकाञ्चनादिरङ्गाणां चिरस्थायित्वसम्पादनादिप्रकारोऽपूर्वतयात्र सम्पादितः।

अपरञ्च तृतीयखण्डे सप्तविंशत्युत्तरद्विशततमाध्यायमारभ्य द्विचत्वारिंशदुत्तरत्रिशततमाध्यायपर्य्यन्तं पञ्चदशोत्तरशताध्यायेषु ( ११९ ) सत्ययुगान्ते ज्ञानस्य किञ्चित्क्षीणत्वाद्धंसरूपिणा भगवता विश्वाभ्युदयाय हंसगीतोपदिष्टा। तस्याञ्च ब्रह्मचर्य्यगृहस्थाद्याश्रमधर्मवर्णनम्, मानमदलोभक्रोधनास्तिक्याहङ्कारादिदोषनिषेधपुरस्सरं शौचज्ञानधर्मगुरुशुश्रूषार्कीर्त्तिशीलसत्यतपःशौर्याहिंसाक्षमाकृतज्ञतातीर्थानुसरणोपवासमनःशौचश्रद्धाप्राणायामप्रत्याहारधारणाध्यानसमाधिदेवातिथिब्राह्मणपूजनगोमहत्त्वदयादाक्षिण्याद्यप्यपूर्वतयाभ्यधायि।

काशिकराजकीयसंस्कृतपाठशालात एकं पुस्तकं ज्योतिर्विच्चक्रचूडामणिमहामहोपाध्यायपण्डित**सुधाकर**शर्मद्वारा समुपलब्धम्, तत्साहाय्येन सद्गुणगरिमरत्नजयपुरपत्तननिवास्तव्यविद्यावाचस्पतिश्री**मधुसूदन**शर्मभिः, पण्डित**माधवप्रसाद**शर्ममिश्रैः संशोधितम्। तदेतद् **'विष्णुधर्मोत्तरं'** मया **मुम्बय्यां** स्वकीये **"श्रीवेङ्कटेश्वर"** ( स्टीम् ) मुद्रणयन्त्रालये मुद्रयित्वा प्रकाशितम्। तदेतद्ग्रन्थं पारायणावलोकनादिभिः सफलयन्तु मे परिश्रममनुग्राहका ग्राहका विद्वांस इति।

अत्र च त्रयोविंशत्यधिकद्विशततमाध्यायशेषभागस्य चतुर्विंशत्यधिकद्विशततमाध्यायस्य च पाठः। पुस्तकद्वये परिभ्रष्ट इति येषां महाशयानामंतिक एतावत्पाठविशिष्टपुस्तकं चेत्तेऽवश्यमनुकम्पया सूचयेयुः प्रेषयेयुर्वा तावन्तं भागम्। यतश्च द्वितीयाऽऽवृत्तौ तत्सम्मेलनं स्यादिति च सविनयं निवेदयते–

**क्षेमराज–श्रीकृष्णदास–**

"श्रीवेङ्कटेश्वर" यन्त्रालयाध्यक्षो–मुम्बयीस्थः।

॥ श्रीगणेशाय नमः ॥

# अथ विष्णुधर्मोत्तरमहापुराणविषयानुक्रमणिकाप्रारम्भः ।



॥ इति प्रथमखण्डः ॥

## अथ द्वितीयखण्डः ।

४

॥ इत्यनुक्रमणिका समाप्ता ॥

---

केके ह्यपूर्वविषयाः प्रतिपादिता न धर्मोत्तरेऽत्र महिते किल विष्णुपूर्वे ॥
तस्यातिसूक्ष्मविषयप्रतिपादकोयं योऽनुक्रमोऽकृत मया तनुबुद्धिभाजा ॥ १ ॥
सर्वान्तरस्थितमहामहिमप्रतीतः सर्वेश्वरः सकलवाञ्छितसिद्धिदाता ॥
लक्ष्मीसहाय उरुगाययशाः प्रसीदेदित्थं प्रयाचति हृदा हरिदत्तशर्म्मा ॥ २ ॥



श्रीगणेशाय नमः ॥ ॐ श्रीनारायणाय नमः ॥ अथ श्रीविष्णुधर्मोत्तरप्रारम्भः ॥ नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ॥ देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ १ ॥ कृतवर्मा तथा भोजः श्वेतो माहिष्मतीपतिः ॥ कुलिन्दः सर्वदमनो मालविश्चन्द्रवर्द्धनः ॥ २ ॥ वत्सनाभश्च बाणश्च नन्दीशो दरसत्पतिः ॥ प्रतिसारश्चित्रधनुस्सर्वो वायुरथस्तथा ॥ ३ ॥ द्रविडः कुसुमापीड ओत्रश्च समरप्रियः ॥ शम्भुः किरातराजश्च औरसो नन्दिवर्धनः ॥ ४ ॥ वटुमूलश्च तूनेशः शाल्वश्च जनमेजयः ॥ सुह्मराजो दधीकर्णो बाह्लीको दमनस्तथा ॥ ५ ॥ हिरण्यनाभः कौसल्यो दाशार्हो विजयस्तथा ॥ एते चान्ये च राजानः शतशो बहुदक्षिणाः ॥ ६ ॥ सम्पूर्णचन्द्रवदना गजराजकरोरवः ॥ उपासांचक्रिरे वज्रं सिंहासनगता नृपाः ॥ ७ ॥ बहुभिर्भूमिपालैश्च तथा वज्रेण धीमता ॥ युधिष्ठिरेण च सदा शोभिता शुशुभे सभा ॥८॥ राजानस्ते ततो दृष्ट्वा ऋषीन्दुर्लभदर्शनान् ॥ ब्रह्मलोकस्थमात्मानममन्यन्त यशोभृतः ॥ ९ ॥ ऊचुस्ते प्रणयाद्वाक्यं वज्रं भूरिसहस्रदम् ॥ यथा त्रेतायुगे राजन् द्वापरे च यथा नृपाः ॥ ब्राह्मणा ब्रह्मकल्पाश्च तथैव सुसमागताः ॥ १० ॥ अस्मिंस्तिष्ये च संप्राप्ते तव राजन् प्रसादतः ॥ राजन् कृष्णसगोत्रोऽसि तेनेयन्ते सभा नृप ! ॥ ११ ॥ उपास्यते महाभागैर्ब्रह्मकल्पैस्तपोधनैः ॥......................न तथा वीर्यनिर्जिता ॥ १२॥ भक्त्या यथा तु तस्यैव कृष्णस्यामिततेजसः ॥ तेन कृष्णेन ये चक्रुर्व्यतीताः पूर्वपार्थिवाः ॥ १३ ॥ वर्त्तता तेन कृष्णेन ते राजन् मोक्षमाप्नुयुः ॥ अय तिष्ययुगः प्राप्तो घोरः परमदारुणः ॥ १४॥ दुर्लभं दर्शनं यत्र नृपसंघे महात्मनाम् ॥ १५ ॥ तस्मात्त्वं राजशार्दूल प्रष्टुमर्हो द्विजोत्तमान् ॥ वैष्णवान्विविधान्धर्मान्सरहस्यान्ससंग्रहान् ॥ १६॥ इत्येवमुक्तो वज्रस्तैस्त्यक्त्वा सिंहासन तदा ॥ वज्रं तु प्राञ्जलिं दृष्ट्वा सर्वे एव नराधिपाः ॥ १७ ॥ वरासनान्विहायाशु तस्थुः प्राञ्जलयस्तदा ॥ वज्र उवाच ॥ भवद्भिर्नृपशार्दूलाः प्रार्थिता ये द्विजाः श्रिताः ॥ १८ ॥ अनुग्रहार्थं भूपानां जगतो हितकाम्यया ॥ भवन्तो वक्तुमर्हन्ति विष्णुधर्मान्सनातनान् ॥ १९ ॥ तस्मात्तिष्ययुगे नास्ति भवतो दर्शनं नृपैः ॥ ऋषय ऊचुः ॥ उत्तिष्ठ त्वं महीपाल अलङ्कुरु स्वमासनम् ॥ २० ॥ श्रवणेपि वयं तस्य विशेषेणार्थिता नृप ॥ वज्र ते संशयान्सर्वाञ्छेत्स्यत्येष महामुनिः ॥ २१ ॥ इत्येवमुक्त्वा वज्रं ते ऋषयस्तपसि स्थिताः ॥ मार्कण्डेयमथोचुस्ते ब्रूहि धर्मान्महीपते ॥ २२ ॥ वैष्णवान्विविधान्धर्माँल्लोकानामघहारिणः ॥ तथा पार्थिवसंघस्य संशयान् मनसि स्थितान् ॥ २३ ॥ मार्कण्डेय उवाच ॥ ब्रह्मण्यः सत्यवान् धन्यः सर्वशत्रुनिबर्हणः ॥ यद्यत्पृच्छसि मां वज्र तत्तद्वक्तास्म्यसंशयम् ॥ २४ ॥ सिंहासनस्थो भव भूमिपाल

१ 'वरणो वत्सनाभश्च' इति खपुस्तके। २ 'बालश्च' इति क०। ३–'भूभुजा' इति ख०। ४ 'ऋषिसंघे महीक्षितान्' इति ख०। ५ 'तदासनम्' इति ख०।

भवन्तु सर्वेऽपि तथा महीपाः ॥ सुखोपविष्टैरिह भूमिपालैः स्वसंशयान् ब्रूहि यथाप्रकामम् ॥ २५ ॥ इत्येवमुक्तः स यदुप्रधानो भृगुप्रबर्हेण महर्षिमध्ये ॥ प्रणम्य विप्रान्स जगाम राजा सिंहासनं रत्नसहस्रचित्रम् ॥ २६ ॥ सिंहासनस्थे नृपवर्यमुख्ये सिंहासनस्थाः क्षितिपप्रधानाः ॥ सर्वे बभूवुः प्रणतास्तथा च शुश्रूषवो ब्राह्मणमुख्यवाक्यम् ॥ २७ ॥ वज्र उवाच ॥ आचक्ष्व मह्यं भृगुवंशचन्द्र समुद्भवं त्वं जगतो यथावत् ॥ शृण्वंति मे ब्राह्मणसंघमुख्या नरेंद्रमुख्याश्च वचस्त्वदीयम् ॥ २८ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे कथाप्रस्तावनं नाम प्रथमोऽध्यायः ॥ १ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ नारायणं नमस्कृत्य सर्वभूतपरायणम् ॥ लक्ष्मीसहायं वरदं शेषपर्यङ्कशायिनम् ॥ १ ॥ जगतोऽस्य समुत्पत्तिस्थितिनाशैककारणम् ॥ ज्ञानज्ञेयं ज्ञानगम्यं हृदि सर्वस्य संस्थितम् ॥ २ ॥ वक्ष्यामि जगतां राजन्समुत्पत्तिं निबोध ताम् ॥ सर्वपापप्रशमनीमायुष्यां स्वर्गदां शिवाम् ॥ ३ ॥ नारायणोऽस्य जगतः सृष्टिसंहारपालनम् ॥ करोति जगतीपाल यस्य सर्वमिदं महान् ॥ ४ ॥ वेदेषु गीयते योऽसौ पुरुषः पञ्चविंशकः ॥ अनादिनिधनो धाता त्वनन्तः पुरुषोत्तमः ॥ ५ ॥ यस्योन्मेषस्तु दिवसो ब्रह्मणः परमेष्ठिनः ॥ निमेषस्तु तथा रात्रिस्तच्च कल्पं प्रकीर्तितम् ॥ ६ ॥ पुरुषत्वे त्वनन्तस्य न रूपं नृप विद्यते ॥ न च शब्दो न च घ्राणः स्पर्शो वा पृथिवीपते ॥ ७ ॥ न तस्य परिमाणं वा नचादिर्निधनं कुतः ॥ सर्वतः पाणिपादान्तः सर्वतोक्षिशिरोमुखः ॥ ८ ॥ सर्वतः श्रुतिमाँल्लोके सर्वमावृत्य तिष्ठति ॥ सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ॥ ९ ॥ असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ तं च प्राप्य भवन्तीह ये मुक्ताः पुरुषोत्तमाः ॥ १० ॥ सुगतिर्योगसिद्धानां तस्मात्सर्वस्य सम्भवः ॥ तस्माद्भवति चाव्यक्तस्तस्मादात्मापि जायते ॥ ११ ॥ तस्माद्बुद्धिर्मनस्तस्मात्ततः खं पवनस्ततः ॥ तस्मात्तेजस्ततस्त्वापस्तेभ्योण्डमभवत्किल ॥ १२ ॥ अण्डो हिरण्मयो राजंस्तस्यान्तः स्वयमेव हि ॥ शरीरग्रहणं पूर्वं सृष्ट्यर्थं कुरुते प्रभुः ॥ १३ ॥ ब्रह्मा चतुर्मुखो देवो रजोमात्राधिकः सदा ॥ शरीरग्रहणं कृत्वा सृजतीदं चराचरम् ॥ १४ ॥ अण्डस्यान्तर्जगत्सर्वं सदेवासुरमानुषम् ॥ सप्तलोकान् सपातालान् सप्तद्वीपार्णवां महीम् ॥ १५ ॥ सृष्टिं कृत्वा स भगवान् सात्त्विकीमास्थितस्तनुम् ॥ क्षीरोदे केशवो भूत्वा शेषभोगमयः प्रभुः ॥ १६ ॥ लक्ष्मीसहायो लोकांस्तु सर्वान्पालयते सदा ॥ योगनिद्रां समास्थाय सर्वसत्त्वशरीरगः ॥ १७ ॥ शुभाशुभानि कर्माणि सर्वेषां स हि पश्यति ॥ अन्तकाले हरो भूत्वा जगत्संहरते पुनः ॥ १८ ॥ तामसीं तनुमास्थाय लीलयैव महायशाः ॥ ब्रह्मातो सृष्टिकाले तु जलमध्यगतां महीम् ॥ १९ ॥ दृष्ट्वोद्धरति यज्ञात्मा वाराहीमास्थितस्तनुम् ॥ ब्रह्मास्य सर्गे परिपालने च विष्णुर्महात्मा भवतीह नित्यम् ॥



१ 'यतः' इति क० ख० ।

संहारकाले च हरत्वमेति त्रैधं विधत्ते स त्रिकालयोगात् ॥ २० ॥ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे हिरण्यगर्भोत्पत्ति
कथनो नाम द्वितीयोऽध्यायः ॥ २ ॥ ॥ मार्कण्डेय उवाच ॥ ब्रह्मरात्र्यां व्यतीतायां विबुद्धे पद्मसम्भवे ॥ विष्णुः सिसृक्षुर्भूतानां ज्ञात्वा भूमिं जला
न्तगाम् ॥ १ ॥ जलक्रीडारुचि शुभं कल्पादिषु यथा पुरा ॥ वाराहमास्थितो रूपमुज्जहार वसुन्धराम् ॥ २ ॥ वेदपाद्यूपदंष्ट्रश्च चतुर्वक्त्रश्चतुर्मुखः ॥
अग्निजिह्वो दर्भरोमा ब्रह्मशीर्षो महातपाः ॥ ३ ॥ अहोरात्रेक्षणो दिव्यो वेदाङ्गः श्रुतिभूषणः ॥ आज्यनासः स्रुवतुण्डः सामघोषस्वनो महान् ॥
॥ ४॥ धर्मः सत्यमहाः श्रीमान्कर्मविक्रमसत्कृतः ॥ प्रायश्चित्तमयो धीरः प्रांशुजानु[1]र्महायशाः ॥ उद्गात्रं[2]त्रो होमलिङ्गः फलबीजमहौषधिः ॥ ५ ॥
वाय्वन्तरात्मा मन्त्रास्थिर्विकृतः सोमशोणितः ॥ वेदस्कंधो हविर्गन्धो हव्यकव्यातिवेगवान् ॥ ६ ॥ प्राग्वंशकायो द्युतिमान्नानादीक्षाभिरन्वितः ॥
दक्षिणाहृदयो योगी महाक्रतुमयो महान् ॥ ७ ॥ उपाकर्मेष्टिरुचिरः प्रवर्ग्यावर्तभूषणः ॥मायापत्नीसहायो वै महाशृङ्ग इवोदिताम् ॥८॥ महीं सागर
पर्यन्तां सशैलवनकाननाम् ॥ एकार्णवजलभ्रष्टामेकार्णवगतः प्रभुः ॥ ९ ॥ दंष्ट्राग्रेण समुद्धृत्य लोकानां हितकाम्यया ॥ आदिदेवो महायोगी
चकार जगतीं पुनः ॥ १० ॥ एवं ज्ञात्वा वराहेण भूत्वा भूतहितार्थिना ॥ उद्धृता पृथिवी देवी जलमध्यगता पुरा ॥ ११ ॥ उद्धृत्य भूमिं सविभुर्म
हात्मा वराहरूपेण जलान्तरस्थाम् ॥ चक्रे विभागं जगतस्तदीशो[3] यथायथा तच्छृणु राजसिंह ॥ १२ ॥ इति श्रीविष्णुधर्मोऽत्तरे प्रथमखण्डे
मार्कण्डेयवज्रसंवादे वराहप्रादुर्भावो नाम तृतीयोऽध्यायः ॥ ३ ॥ ॥ मार्कण्डेय उवाच ॥ जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः ॥ प्रथमं तत्प्र
माणानां त्रसरेणुं प्रचक्षते ॥ १ ॥ त्रसरेणवोऽष्टौ विज्ञेया लिक्षैका परिमाणतः ॥ ता राजसर्षपास्तिस्रस्तास्त्रयो गौरसर्षपाः ॥ २ ॥ सर्षपाः षड्यवो
मध्ये अङ्गुलं च तदष्टकम् ॥ द्वादशाङ्गुलिकः शङ्कुस्तद्द्वयं हस्त उच्यते ॥३॥ तच्चतुष्कं धनुः प्रोक्तं क्रोशो धनुःसहस्रिका ॥ क्रोशद्वयं च गव्यूतिः
योजन तच्चतुष्टयम् ॥ ४ ॥ योजनानां प्रमाणेन चायुतानां शतत्रयम् ॥ अयुतानां च पञ्चाशच्छेषस्थानं मनोहरम् ॥ ५ ॥ स एव लोके वाराहः
कथितश्च स्वयं प्रभुः ॥ वाराहरूपी भगवाञ्छतरूपधरस्तथा ॥६॥ तत्रास्ते भगवान्विष्णुर्भक्तैःसह महात्मभिः ॥ लोकोऽयमण्डसंलग्नश्छत्राकारः
प्रकीर्तितः ॥ ७ ॥ स्वयं प्रभुर्वीतरजाः सर्वदुःखविवर्जितः ॥ एकान्तभावोपगतास्तं प्रयान्ति हरिं जनाः ॥ ८ ॥ सर्वाधस्तादयं लोकः कथितस्ते
मनोहरः ॥ तस्योपरिष्टादपरस्तावदेव प्रमाणतः ॥ ९ ॥ कालाग्निरुद्रलोकस्तु कथ्यतेऽग्निसमर्चितः ॥ एक एव स तत्रास्ते स्वप्रभाभास्वरा

१ 'पशुजानुः' इति ख० । २ 'प्राग्वर्यावर्त' इति ख० । ३ 'तदेशो' इति ख० ।

त्मकः ॥ १० ॥ तस्मात्समुत्थितो वह्निर्जगत्प्राप्ते दिनक्षये ॥ भस्मसात्कुरुते सर्वं यच्चेङ्गं यच्च नेङ्गते ॥ ११ ॥ तस्योपरिष्टादपरस्तावदेव प्रमाणतः ॥
पातालनामा पातालः प्रथमः परिकीर्तितः ॥ १२ ॥ योगमायां समास्थाय द्वितीयामास्थितस्तनुम् ॥ सर्वतो भगवानास्ते शेषमूर्तिर्जनार्दनः ॥
॥ १३ ॥ रुक्मभौमः स पातालो धृतो रुद्रस्य तेजसा ॥ तस्मिन्स भगवानास्ते शेषपर्यङ्कमास्थितः ॥ १४ ॥ नित्यं तालध्वजो वाग्मी वनमालाविभू
षितः ॥ धारयञ्छिरसा नित्यं रत्नचित्रां फणावलीम् ॥ १५ ॥ लाङ्गली मुसली खड्गी नीलाम्बरविभूषितः ॥ स्तूयमानः स गन्धर्वैर्नागैर्ऋषिवरैस्तथा
॥ १६ ॥ तस्योपरिष्टादपरस्तावदेव प्रमाणतः ॥ सुतलसंज्ञः पातालः शिलाभासः समन्ततः ॥ १७ ॥ बलिस्तु भगवांस्तत्र बहिस्तिष्ठति संयतः ॥ रम्यं
पुरवरं तस्य विष्णुना निर्मितं स्वयम् ॥ १८ ॥ निवासं देवराजस्य विशिष्टं तत्पुरोत्तमम् ॥ सा वैष्णवी कला प्रोक्ता ययेदं धार्यते जगत् ॥ १९ ॥
(फणेषु तस्य विश्रान्ता मिलिता च शुभाशुभा ॥ तत्रास्ते स महाभागः श्रिया परमया युतः ॥ २० ॥ तमुपासन्ति सततं गन्धर्वाप्सरसां गणाः ॥)[1]
तत्रास्ते देवदेवस्य मूर्तिः कृष्णस्य चापरा ॥ २१ ॥ तस्योपरिष्टादपरस्तावदेव प्रमाणतः ॥ आभासतल इत्येव पातालो नीलमृत्तिकः ॥ २२ ॥
तृतीयः स तु विख्यातः सुरभिर्यत्र तिष्ठति ॥ दिग्धेनवस्तथा तत्र चतस्रश्च तथा स्थिताः ॥ २३ ॥ सुभद्रा वह्निरूपा च विश्वरूपा तथैव च ॥
रोहिणी च महाभागा याभिर्वृतमिदं जगत् ॥ २४ ॥ तासां क्षीरेण सर्वासां कृतः क्षीरार्णवः प्रभो ॥ पातालमध्ये तस्मिंस्तु पुरं विष्णोर्मनोरमम् ॥
॥ २५ ॥ यत्रास्ते भगवान्विष्णुः शेषपर्यङ्कगस्तथा ॥ अग्निज्वालापरिक्षिप्तः सह लक्ष्म्या परन्तप ॥ २६ ॥ तस्योपरिष्टादपरस्तावदेव प्रमाणतः ॥
पीतभौमश्चतुर्थस्तु गभस्तितलसंज्ञितः ॥ २७ ॥ तत्रास्ते भगवान्विष्णुर्देवो हयशिरोधरः ॥ शशांकशतसंकाशः शातकौंभविभूषणः ॥ २८ ॥
पुरं तत्रैव विख्यातं गरुडस्य महात्मनः ॥ (प्रह्लादस्यासुरेन्द्रस्य बाष्कलेश्च महात्मनः)[2] ॥ २९ ॥ तस्योपरिष्टादपरस्तावदेव प्रमाणतः ॥ महा
तलेति[3] विख्यातो रक्तभौमस्तु पञ्चमः ॥ ३० ॥ सरोवरं तस्य मध्ये योजनानां दशायुतम्[4] ॥ जंगमाजंगमैः सर्वैर्जलजैश्च विवर्जितम् ॥ ३१ ॥
तत्रारूपेण वसति कूर्मरूपधरो हरिः ॥ तस्योपरिष्टादपरस्तावदेव प्रमाणतः ॥ ३२ ॥ षष्ठश्चैव महाराज नाम्ना भीमतलस्तु सः ॥ तत्रापि सरसी
दिव्या योजनानां शतं गता ॥ तस्यां च वसते देवो मत्स्यरूपधरो हरिः ॥ ३३ ॥ सप्तमः कृष्णभौमस्तु नाम्ना भीमतलस्तु सः ॥
तत्रास्ते कपिलो देवो वासुदेवः स्वयं प्रभुः ॥ ३४ ॥ तत्राश्मनगरं नाम वरुणस्य पुरं स्मृतम् ॥ तथा दानववीराणां नगराणि पृथक्पृथक् ॥ ३५ ॥

१ कोष्ठान्तर्गतः पाठः ख पुस्तके नास्ति । २ कोष्ठान्तर्गतः पाठो नास्ति ख पुस्तके । ३ 'महातेजेति' इति ख० । ४ 'योजनं दशसंयुतम्' इति ख० ।

विरोचनस्य कुम्भस्य निकुम्भस्य हरस्य च ॥ शम्बरस्य करालस्य नरकस्य हयस्य च ॥ ३६ ॥ हयग्रीवस्य सुन्दस्य घसस्य प्रघसस्य च ॥ बलेः पुरवरं चात्र योगीशस्य तथापरम् ॥३७॥ यत्रस्थमेनं दद्दशे रावणो लोकरावणः ॥ तथा पुरवरं तत्र विष्णोरमिततेजसः ॥३८॥ लक्ष्मीसहायो यत्रास्ते चाग्नेयाम्बरसंवृतः ॥ तिस्त्रः कोव्यस्तु यत्रास्य भक्तानां सुमहात्मनाम् ॥ ३९ ॥ शङ्खचक्रगदापद्मधारिणां पीतवाससाम् ॥४०॥ नीलोत्पल सवर्णानां विष्णोः सद्दशतेजसाम् ॥ विष्णोः सुतानां हृष्टानां सततं भूरिवर्चसाम् ॥ ४१ ॥ तत्रस्थो द्दष्टवान् देवो पौलस्त्यो रावणः पुरा ॥ पुरी भोगवती तत्र तथा वासुकिपालिता ॥ ४२ ॥ नागानां च पुराण्यत्र तथैव च पृथक्पृथक् ॥ पद्मस्य धृतराष्ट्रस्य विरक्तस्य कुरोस्तथा ॥ ४३ ॥ तक्षकस्यैलपत्रस्य तथा कर्कोटकस्य च ॥ धनञ्जयस्य शङ्खस्य तथैवाश्वतरस्य च ॥ ४४ ॥ कन्दलस्य सुरासस्य सुमुखस्य गयस्य च ॥ दिशां गजानां च तथा तत्र स्थानं पृथक्पृथक् ॥ ४५ ॥ येषां स्कंधगता भूमिः सशैलवनकानना ॥ विरूपाक्षस्य नागस्य महापद्मस्य चाप्यथ ॥ ४६ ॥ तथा सुमनसश्चात्र रुद्रस्य च महात्मनः ॥ पञ्चायुतपरीमाणा भूमिः सर्वेषु पार्थिव ॥ ४७ ॥ पातालेषु विनिर्दिष्टा पठितान्तरवर्तिनी ॥ अण्डस्यार्धमिदं प्रोक्तमधस्तात्तु प्रमाणतः ॥ ४८ ॥ तिस्त्रः कोटयस्तु राजेन्द्र नियुतानि तथा दश ॥ पञ्चान्यानि महीपाल भूमि पुष्ट्या महानघ ॥ ४९ ॥ पञ्चायुतपरीमाणाः पुष्टिर्भूमेः प्रकीर्तिता ॥ भूमेरथोपरिष्टाच्च अण्डस्यार्धमथापरम् ॥ एतावदेव निर्दिष्टा भूमिपाल प्रमाणतः ॥ ५० ॥ चन्द्रार्कभासा रहितं नृवीर स्वयं प्रभेदं कथितं मयैतत् ॥ पातालपूगं विविधं सुरम्यं शृणुष्व लोकान् गदतोममान्या न् ॥ ५१ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे पातालवर्णनो नाम चतुर्थोऽध्यायः ॥ ४ ॥ ॥ मार्कण्डेय उवाच ॥ भूर्लोकः प्रथमो राजञ्शृणुष्व गदतो मम ॥ पातालेन तु तत्तुल्यमूर्ध्वतः परिकीर्त्तितः ॥ १ ॥ वायुस्कन्धा विनिर्दिष्टास्ते तु सप्त महात्मभिः ॥ एकैकं नियुताः पंच योजनानां प्रकीर्तितम् ॥ २ ॥ पशवः पक्षिणः कीटा मनुष्याः किन्नरास्तथा ॥ यक्षराक्षसगन्धर्वाः पिशाचा भूमिगोचराः ॥ ३ ॥ सर्व एते विनिर्दिष्टा अन्नादा भूमिगोचराः ॥ विद्याधराणां प्रथमं वायुमार्गः प्रकीर्त्तितः ॥ ४ ॥ द्वितीयः सिद्धविद्यानां तृतीयस्तु गरुत्मताम् ॥ चतुर्थो वायुमार्गस्तु गन्धर्वाणां प्रकीर्त्तितः ॥ ५ ॥ विनायकाः पञ्चमगा षष्ठे च करिणां गणाः ॥ येषां शीकरतोयेन चावश्यायः प्रकीर्त्तितः ॥ ६ ॥ सप्तमे च महाभाग सिद्धास्तिष्ठंति यादव ॥ तस्योपरिष्टादपरस्तावदेव प्रमाणतः ॥७॥ भुवर्लोक इति ख्यातो यत्र तिष्ठंति देवताः ॥ मन्वन्तराधिका

१--'स्तोत्र' इति ख० ।

रेषु ये भविष्या महीपते ॥ ८ ॥ तस्योपरिष्टादपरस्तावदेव प्रमाणतः ॥ स्वर्लोको वसतिर्यत्र प्रायशः पुण्यकर्मणाम् ॥ ९ ॥ सोमपानां च देवानां शक्रादीनां महीपते ॥ महर्लोकस्थितिर्यत्र देवतानां महात्मनाम् ॥ १० ॥ विनिवृत्ताधिकाराणां सिद्धानां नृपसत्तम ॥ तस्योपरिष्टादपरस्तावदेव प्रमाणतः ॥ ११ ॥ जनलोकः स्थितिर्यत्र गवां पार्थिवसत्तम ॥ तिष्ठन्ति ब्रह्मणो रात्र्यां यत्र जीवाः समन्ततः ॥ १२ ॥ तस्योपरिष्टादपरस्तावदेव प्रमाणतः ॥ तपोलोकः स्थितिर्यत्र प्राणेशानां महात्मनाम् ॥ १३ ॥ तस्योपरिष्टादपरस्तावदेव प्रमाणतः ॥ सत्यलोकः स्थितिर्यत्र ब्रह्मणः परमेष्ठिनः ॥ १४ ॥ इत्येते कथिताः सप्त तव लोका महात्मनाम् ॥ एतावानेव सवितुर्विचरन्ति मरीचयः ॥ १५ ॥ एतेषु लोकसंज्ञोक्ता तस्मादेव मनीषिभिः ॥ तस्योपरिष्टादपरस्तावदेव प्रमाणतः ॥ १६ ॥ स्थानं रुद्रस्य कथितं रुद्रतेजोविराजितम् ॥ ब्रह्मलोकोपरिष्टात्तु रुद्रलोको महत्तमः ॥ १७ ॥ योजनानां सहस्राणि पञ्चभिर्निबिडं मतम् ॥ आदित्यमन्दिरं प्रोक्तं यदेतद्दिवि दृश्यते ॥ १८ ॥ यदेतद्दृश्यते नीलं तमस्तत्पृथिवीपते ॥ तमसस्तु परे पारे रुद्रलोकः स्वयं प्रभो ॥ १९ ॥ रुद्रत्वं समनुप्राप्तैस्तत्र भक्तैर्महानघ ॥ क्रीडन्नास्ते महादेवः सपत्नीको वृषध्वजः ॥ २० ॥ तस्योपरिष्टादपरस्तावदेव प्रमाणतः ॥ अगम्यस्सर्वदेवानां विष्णुलोकः प्रकीर्त्तितः ॥ २१ ॥ तस्योपरिष्टाद्ब्रह्माण्डः काञ्चनो दीप्तिसंयुतः ॥ भुवर्लोके तु वसतिर्वामनस्य महात्मनः ॥ २२ ॥ स्वर्लोके वसतिर्विष्णोर्वैकुण्ठस्य महात्मनः ॥ नृवराहस्य वसतिर्मह र्लोके प्रकीर्तिता ॥ २३ ॥ नृसिंहस्य तथा प्रोक्ता जनलोके महात्मनः ॥ त्रिविक्रमस्य वसतिस्तपोलोके प्रकीर्तिता ॥ २४ ॥ लोकाः सन्तानका नाम सत्यलोके प्रकीर्त्तिताः ॥ एतेषु देवं पश्यन्ति देवाः सेन्द्रपुरोगमाः ॥ २५ ॥ तपसा महता राजन् भक्ताश्च सततं प्रभुम् ॥ रुद्रस्थानोपरिष्टात्तु विष्णोः स्थानं मयोदितम् ॥ २६ ॥ न कश्चिदेनं शक्नोति द्रष्टुं देववरं हरिम् ॥ न तत्र सूर्य्यस्तपति चन्द्रमा न विराजते ॥ २७ ॥ तेजसा तस्य देवस्य स तु देशो विराजते ॥ तस्योपरिष्टादारभ्य यावदन्तं महीपते ॥ २८ ॥ प्रोक्तं वराहस्थानस्य तत्र मानं निबोध मे ॥ योजनानां च षट्कोट्यस्त्रिंशच्च नियुतान्यथ ॥ २९ ॥ एतावच्चैवं भूतानां वसतिः परिकीर्तिता ॥ एतावदेव चन्द्रस्य तलमुक्तं समंततः ॥ ३० ॥ एतेषु देवं पश्यन्ति देवाः सेन्द्रपुरोगमाः ॥ तपसा महता राजन् भक्ताश्च सततं प्रभुम् ॥ ३१ ॥ बाह्यतोऽण्डं दशगुणं त्वद्भिस्तु परिवारितम् ॥ आपो दशगुणेनैव बाह्यतस्तेजसा वृताः ॥ ३२ ॥ तेजोदशगुणेनैव बाह्यतः पवनेन च ॥ वायुर्दशगुणेनैव गगनेन तथावृतः ॥ ३३ ॥ आकाशं च दशघ्नेन

१–'एतावदेव' इति ख० ।

मनसा बाह्यतो वृतम् ॥ मनश्च बुद्ध्या सकलं वृतं राजन् दशघ्नया ॥ ३४ ॥ आत्मना चावृता बुद्धिर्दशघ्नेन समन्ततः ॥ अव्यक्तेन तथैवात्मा दशघ्नेनैव चावृतः ॥३५॥अव्यक्तः पुरुषेणाथ त्वनन्तेनावृतोऽनघ ॥ एवं विधानामण्डानामव्यक्तः पुरुषोत्तमः ॥ ३६॥ तिर्य्यगूर्ध्वमधः संख्या वक्तुं राजन्न शक्यते ॥ अनन्तत्वात्प्रधानस्य पुरुषस्य महात्मनः ॥३७॥ एकरूपास्तथैवाण्डाः सर्व एव नराधिप ॥ तुल्यदेशविभागश्चै तुल्यजन्तव एव च ॥३८॥ देशेदेशे समाना ये अण्डेषु नृपसत्तम ॥ सुखदुःखे समे तेषां जीवितं मरणं तथा ॥३९॥ सर्वाण्डानां समा ज्ञेया कालसंख्या नराधिप ॥ पौरुषस्य दिनस्यान्ते सर्वे ह्यण्डनिवासिनः ॥ ४० ॥ एकोऽप्यनन्तो राजेन्द्र नान्तरेव प्रकीर्तितः ॥ अयं मयोक्तो नृप सन्निवेशः संक्षेपमात्रेण चराचरस्य ॥ व्यासेन चैवं परिकीर्त्यमानः समाप्यते नैव कदाचिदेव ॥ ४१ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे लोकवर्णनं नाम पञ्चमोऽध्यायः ॥ ५ ॥ ॥ वज्र उवाच ॥ भूमण्डलस्य कृत्स्नस्य संस्थानेन च भार्गव ॥ वद प्रमाणं कृत्स्नं तत्तत्र मे संशयो महान् ॥१॥ मार्कण्डेय उवाच ॥ भूमण्डलस्य राजेन्द्र मध्ये मेरुर्महागिरिः ॥ योजनानां सहस्राणि तस्य मध्ये समन्ततः ॥२॥ जम्बूद्वीपस्तु पञ्चाशत्प्रमाणेन प्रकीर्तितः ॥ योजनानां तु नियुतं तस्य पारं महीपते ॥ ३ ॥ लवणेन समुद्रेण तेनासौ परिवेष्टितः ॥ लवणद्विगुणेनापि शाकद्वीपेन लावणः ॥४॥ वेष्टितश्च महाराज शाकद्वीपो न संशयः ॥ क्षीरोदेन स्वतुल्येन क्षीरोदोऽपि च वेष्टितः ॥ ५ ॥ क्षीरोदद्विगुणेनापि कुशद्वीपेन योजनैः ॥ आज्योदेन कुशद्वीपः स्वतुल्येन च वेष्टितः ॥ ६॥ क्रौञ्चद्वीपेन चाज्योदो द्विगुणेन च वेष्टितः ॥ क्रौञ्चद्वीपः स्वतुल्येन दधिमण्डोदकेन च ॥ ७ ॥ द्वीपेन शाल्मलेनाथ द्विगुणेन च वेष्टितः ॥ सुरोदो द्विगुणेनाथ गोमेदेन च वेष्टितः ॥ ८॥ पुष्करद्वीपमध्ये तु द्वीपसंस्थानमण्डपः ॥ पर्वतः सुमहाँल्लोके विख्यातो मानसोत्तरः ॥ ९ ॥ नियुतार्धं योजनानां प्रमाणेन प्रकीर्तितः ॥ नानाप्रकारशिखरस्तावदेव समुच्छ्रितः ॥ १० ॥ मेरोस्तु पूर्वदिग्भागे मानसोत्तरमूर्धनि ॥ पुरी शक्रस्य विख्याता नामतस्त्वमरावती ॥ ११ ॥ पूर्वदक्षिणदिग्भागे तथा वह्नेः प्रभावती ॥ यमस्य दक्षिणे भागे नाम्ना संयमनी पुरी ॥ १२ ॥ विरूपाक्षस्य विक्रान्ता भागे दक्षिणपश्चिमे ॥ पश्चिमे च तथा भागे वरुणस्य सुखप्रभा ॥ १३ ॥ शिवा नाम पुरी वायोर्भागे वै पश्चिमोत्तरे ॥ विभावरी सोमपुरी उत्तरेण प्रकीर्तिता ॥ १४ ॥ शर्मदा च पुरी शैवी भागे पूर्वोत्तरे स्मृता ॥ पुष्करश्च स्वतुल्येन वृतः स्वादूदकेन च ॥ १५ ॥ स्वादूदकात्परं क्षोणी कार्तस्वरमयी शुभा ॥ योजनानां प्रमाणेन सहस्राणि तु विंशतिः ॥ १६ ॥

१ 'मनन्तः' इति ख० । २ 'तुल्यदेशे विभागाश्च' इति ख० ।

दश चान्यानि राजेन्द्र पञ्च पञ्च प्रकीर्तिता ॥ समन्ततस्त्वेकशिला देवोद्याने मही शुभा ॥ १७ ॥ स्थितस्तां परिवार्योर्वीं लोकालोको महीधरः ॥
अयुतं योजनानां तु विस्तरेणोच्छ्रयेण च ॥ १८ ॥ लोकालोके महीपाल लोकपालास्त्वमी स्मृताः ॥ प्राच्यादिषु महावीर्य्याः कल्पस्थायिन
एव ते ॥ १९ ॥ सुदामा शेषपादश्च केतुमान्सुमहाबलः ॥ हिरण्यरोमा च तथा विज्ञेयाश्च दिगीश्वराः ॥ २० ॥ अर्वाक्तस्य महीध्रस्य चन्द्रार्क
ग्रहतारकाः ॥ प्रपतन्ति महाराज न तु पारे कदाचन ॥ २१ ॥ दर्भोदकसमुद्रस्तु लोकालोकं समन्ततः ॥ परिवार्य स्थितो राजन्नन्धकारे महा
र्णवः ॥ २२ ॥ एकषष्टिप्रमाणेन नियुतानि समन्ततः ॥ तस्य पारे ततो राजन्ब्रह्माण्डस्तु समन्ततः ॥ २३ ॥ ऊर्द्ध्वंनाधश्च विष्कम्भो यावान
ण्डस्य कीर्तितः ॥ तावदेव प्रमाणेन तिर्यक्षु परिवारितः ॥ २४ ॥ मेरुमध्यात्समुद्रस्य पारं गर्भोदकस्य तु ॥ कोटित्रयं योजनानां नियुतानि
तथा दश ॥ २५ ॥ पञ्चान्यानि च राजेन्द्र प्रमाणं परिकीर्तितम् ॥ तस्य राज... ब्रह्माण्डस्तु समन्ततः ॥ २६ ॥........तदर्द्धं द्वितीयस्य
महीपते । ॥ एतदेव तु निर्दिष्टं प्रमाणं तत्त्वचिन्तकैः ॥ २७ ॥ मेरोस्तु पूर्वदिग्भागे मध्ये तु लवणोदधेः ॥ विष्णुलोको महान्प्रोक्तः सलिलान्तर
संस्थितम्॥२८॥स्वभासयात्र देवस्य सततं नृप राजितम् ॥ तत्र स्वपिति घर्मान्ते देवदेवो जनार्दनः ॥ २९ ॥ लक्ष्मीसहायः सततं शेषपर्यङ्क
माश्रितः ॥एकादश्यामाषाढस्य शुक्लपक्षे जनार्दनम् ॥ ३० ॥ देवाश्च ऋषयश्चैव गन्धर्वाप्सरसां गणाः ॥ अभिष्टुवन्ति ते गत्वा सततं दिनपञ्च
कम् ॥ ३१॥ उत्सवं चैव कुर्वन्ति गीतनृत्यसमाकुलम् ॥ ततस्तु चतुरो मासान् योगनिद्रामुपासते ॥३२॥ सुप्तं च तमुपासते ऋषयो ब्रह्मसम्मताः ॥
सशरीराणि शास्त्राणि भक्तास्तं देवमानवाः ॥३३॥ कार्तिकस्य सिते पक्षे तदेव दिनपञ्चकम् ॥ विबोधयन्ति देवेशं गत्वा सेन्द्रा दिवौकसः ॥३४॥
देवास्तथैव कुर्वन्ति तदापि च महोत्सवम् ॥मेरोस्तु पूर्वदिग्भागे मध्ये क्षीरार्णवस्य तु ॥३५॥ क्षीराम्बुमध्यगा शुभ्रा देवस्यान्या तथा पुरी ॥ लक्ष्मी
सहायस्तत्रास्ते शेषासनगतः प्रभुः ॥३६॥ तत्रापि चतुरो मासान् सुप्तस्तिष्ठति वार्षिकान् ॥ अस्त्रैः स केवलैस्तत्र दृश्यते शाश्वतः प्रभुः ॥ ३७ ॥
तस्मिंस्तथैव दिग्भागे मध्ये क्षीरार्णवस्य तु ॥ योजनानां सहस्राणि मण्डलः पञ्चविंशतिः ॥ ३८॥ श्वेतद्वीपस्तु विख्यातो द्वीपः परमशोभनः ॥
नराः सूर्यप्रभास्तत्र शीतांशुसमदर्शनाः ॥३९॥ तेजसा दुर्निरीक्ष्याश्च देवानामपि यादव ॥ पञ्चकालविधानज्ञाः पूजयन्ति जनार्दनम् ॥ ४० ॥ ॥ ६ ॥
पूजां तु तेषां शिरसा स तु देवः प्रयच्छति ॥ इहस्थैश्च कृतां पूजां पादतश्च प्रयच्छति॥४१॥एकान्तभावोपगतास्तत्र यान्ति हरिं नराः ॥ तत्र गत्वा

१ 'महेन्द्रस्य' इति क० । २ 'गर्भोदकसमुद्रस्तु' इति ख० । ३ 'मेरुपश्चात्' इति ख० । ४ 'तथापि च' इति ख० ५ 'अस्त्रैश्च' इति ख० । ६ 'पद्मयां' इति क० ।

नशोचन्ति निवर्त्तन्ते न चाप्यथ ॥ ४२ ॥ पूजयित्वा चिरं कालं देवदेवं जनार्दनम् ॥ आदित्यमण्डलं भित्त्वा ब्रह्माणं प्रविशन्ति ते ॥ ४३ ॥ ततो निरुद्धं देवेशं प्रद्युम्नं चाप्यनन्तरम् ॥ ततः संकर्षणं देवं वासुदेवं ततः परम् ॥ ४४ ॥ वासुदेवं च संप्राप्य मुच्यन्ते सर्ववर्त्तनैः ॥ श्वेतद्वीपगता स्तस्मान्न निवर्तन्ति कर्हिचित् ॥ ४५ ॥ पूर्वोत्तरे तु दिग्भागे मध्ये क्षीरार्णवस्य तु ॥ वैजयन्त इति ख्यातः पर्वतः सर्वकाञ्चनः ॥ ४६ ॥ योजनानां सहस्राणि प्रमाणेन दश स्मृतः ॥ आयामविस्तरोच्छ्रायैः प्रमाणं तस्य कीर्तितम् ॥ ४७ ॥ योजनानां सहस्राणि पञ्च तस्य गुहा स्मृता ॥ उच्छ्रिता योजनशतं तावदेव च विस्तृता ॥ ४८ ॥ तिमिरेणावृता द्वारि योजनानां तथा शतम् ॥ स्वप्रभाभरणा दिव्या ततः परतरं हि सा ॥ ४९ ॥ नाम्ना च लोके विख्याता ऋषिभिस्तिमिरावती ॥ तस्यां देववरो विष्णुः स्वपन्नास्ते जनार्दनः ॥ ५० ॥ तत्रैनमुपतिष्ठन्ति देव्यस्तिस्रो महीपते ! ॥ निद्रा च कालरात्रिश्च लक्ष्मीश्च वरवर्णिनी ॥ ५१ ॥ उपासते च तं देवं भृग्वाद्या परमर्षयः ॥ शरीरधारिभिश्चास्त्रैस्तथा तत्र च सेव्यते ॥ ५२ ॥ तस्य सुप्तस्य वदनान्निश्वासोच्छ्वासतः क्रमात् ॥ प्रजानां पङ्क्तयो ह्युच्चैर्निपतन्ति पतन्ति च ॥ ५३ ॥ तस्योच्छ्वासश्च जन्तूनां सम्भवः कथितो नृप ! ॥ निःश्वासकाले च तथा जन्तूनां मरणं स्मृतम् ॥ ५४ ॥ मध्ये घृतसमुद्रस्य मेरोः पश्चिमतस्तथा ॥ योजनानां तु नियुतं द्वीपस्तु परिमण्डलः ॥ ५५ ॥ तत्र गोवर्धनस्योक्ता वसतिः सुमहात्मनः ॥ दिव्यानां तत्र धेनूनां वसतिश्च तथा स्मृता ॥ ५६ ॥ सततं कामरूपेण भाभिः स रमते हरिः ॥ मध्ये दधिसमुद्रस्य द्वीपस्तावत्प्रमाणतः ॥ ५७ ॥ हेमरूपधरो यत्र नित्यं वसति केशवः ॥ तत्रस्थमेनं पश्यन्ति ऋषयो भूरितेजसः ॥ ५८ ॥ सुरासमुद्रमध्ये तु द्वीपः परमविस्तृतः ॥ तत्र संकर्षणो देवो विभुरास्ते सुराऽसुराः ॥ ५९ ॥ उपतिष्ठन्ति तत्रैनं दिव्यस्तिस्रो मनोरमाः ॥ कान्तिश्च मदिरा चैव तथा देवी करीषिणी ॥ ६० ॥ तत्रस्थमेनं पश्यन्ति प्रजानां पतयः सदा ॥ क्ष्मामण्डलं कृत्स्नमिदं तवोक्तं क्ष्मापालवृन्दाम्बरपूर्णचन्द्र ॥ समासतो व्यासगिरामशक्यं वक्तुं महेन्द्रोपि न वर्षपूगैः ॥ ६१ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे द्वीपविभागवर्णनो नाम षष्ठोऽध्यायः ॥ ६ ॥ ॥ वज्र उवाच ॥ जम्बूद्वीपस्य संस्थानं विस्तरेण महामुने ! ॥ त्वत्तोहं श्रोतुमिच्छामि यत्र जातोऽसि भार्गव ॥ १ ॥ ॥ मार्कण्डेय उवाच ॥ अवगाढावुभयतस्समुद्रौ पूर्वपश्चिमौ ॥ जम्बूद्वीपे महाराज ! षडिमे कुलपर्वताः ॥ २ ॥ हिमवान्हेमकूटश्च निषधो नील एव च ॥ मेरुश्च शृंगवांश्चैव सर्वे रत्नाकराः शुभाः ॥ ३ ॥ मध्ये तु मण्डलः शैलो नीलस्य निषधस्य च ॥ सौवर्णः कथ्यते मेरुः प्रमाणं तस्य मे शृणु ॥ ४ ॥ चतुराशीतिसाहस्राः कथिताश्चोच्छ्रयेण च ॥ अधस्तात्षोडशैवोक्तः षोडशैव तु विस्तृतः ॥ ५ ॥ विस्तारो द्विगुणश्चास्य भूलग्नो

मण्डलः स्मृतः ॥ वृन्दपुष्पनिभश्चोर्द्धं द्वात्रिंशच्चैव विस्तृतः ॥ ६ ॥ विस्तारो द्विगुणश्चास्य तत्राधिकविधिः स्मृतः ॥ मेरुस्तु नवतिः प्रोक्तः सहस्रः पूर्वतो गिरिः ॥ ७ ॥ योजनानां सहस्रं तु माल्यवान् नाम नामतः ॥ आनीलं निषधं यावत्पश्चिमेन तु तावता ॥ ८ ॥ तावत्प्रमाणो निर्दिष्टः पूर्वतो गन्धमादनः ॥ मेरोस्तूत्तरतः श्वेतः पूर्वतोऽनन्त उच्यते ॥ ९ ॥ दक्षिणे च तथा पीतः कृष्णः पश्चिमतः स्मृतः ॥ अन्तरेण स्मृतो विप्रः पूर्वतः क्षत्रियः स्मृतः ॥ १० ॥ दक्षिणेन तथा वैश्यः शूद्रः पश्चिमतः स्मृतः ॥ तस्मादुदीची विप्राणां प्राची स्यात्क्षत्रजन्मनाम् ॥ ११ ॥ दक्षिणा वैश्यजातीनां शूद्राणां पश्चिमा स्मृता ॥ प्राच्यां महेन्द्रस्य पुरी मेरुपृष्ठेऽमरावती ॥ १२ ॥ वह्नेः प्रदक्षिणेनोक्ता पुरी नाम्ना सभावती ॥ यमस्य दक्षिणेनोक्ता नाम्ना संयमनी पुरी ॥ १३ ॥ प्रोक्ता वै नैर्ऋती भागे पुरी पश्चिमदक्षिणे ॥ पश्चिमेन तथा रम्या सुसुखा वरुणस्य च ॥ १४ ॥ अनन्तरं शिवा नाम पुरी वायोः प्रकीर्तिता ॥ उत्तरेण पुरी रम्या सोमस्योक्ता विभावरी ॥ १५ ॥ अनन्तरं शिवस्योक्ता नगरी शाङ्करी शिवा ॥ मेरुपृष्ठे यथा देवाः संश्रितास्तु यथादिशम् ॥ १६ ॥ विज्ञेयास्ते तु दिक्पालास्तस्यांतस्यां तथा दिशि ॥ देवः स्वां नगरीं नित्यं मानसोत्तरमूर्धनि ॥ १७ ॥ मेरुन्तु पश्यति विभुस्तत्स्थो मेरुगतां पुरीम् ॥ उदक्शृङ्गवतोऽर्धे तु याम्येन कुरुसंज्ञितम् ॥ १८ ॥ वर्षन्तु कथितं दिव्यं सर्वोपद्रववर्जितम् ॥ शृङ्गवच्छ्वेतयोर्मध्ये वर्षं ज्ञेयं हिरण्यमम् ॥ १९ ॥ रम्यन्तु वर्षं विज्ञेयं मध्यतः श्वेतनीलयोः ॥ मध्ये निषधनीलाभ्यां पश्चार्धे गन्धमादनः ॥ २० ॥ केतुमालः स्मृतो वर्षस्त्वतीव सुमनोहरः ॥ मध्ये निषधनीलाभ्यां पूर्वे माल्यवतो गिरेः ॥ २१॥ वर्षो रुद्रसुखो नाम नित्यं मुदितमानवः ॥ मेरोश्चतुर्दिशं नाम्ना वर्षो राजन्निलावृतः ॥ २२ ॥ तस्यापि भेदाश्चत्वारो नामतस्तान्निबोध मे ॥ भद्राश्वो जम्बुमालश्च केतुमान्कुरवस्तथा ॥ २३ ॥ जम्बूवृक्षस्तु विख्यातो जम्बुमाले तु यादव ! ॥ योजनानां सहस्रं तु तत्पूर्वं तस्य कीर्तितम् ॥ २४ ॥ तत्फलेभ्यः प्रभवति रम्या जांबूनदी शुभा ॥ मेरोः प्रदक्षिणं कृत्वा स्वमूले सा च नश्यति ॥ २५ ॥ वृक्षराजेन तेनेदं जम्बूद्वीपं प्रचक्षते ॥ इलावृतस्तु प्रभया मेरोर्नित्यं प्रकाशते ॥ २६ ॥ न तत्र भ्राजते सूर्यो न चन्द्रो न च तारकाः ॥ मेरोः शरावसंस्थत्वान्नित्यमेव तिरोहितः ॥ २७ ॥ हेमकूटादुत्तरतो हरिवर्षं प्रचक्षते ॥ हेमकूटाद्दक्षिणतस्तथा किंपुरुषं स्मृतम् ॥ २८ ॥ हिमाचलाद्दक्षिणतो वर्षं यादव भारतम् ॥ कर्मभूमिर्महीपाल यत्र वर्तामहे वयम् ॥ २९ ॥ भारतेऽस्मिन्युगावस्था केशवेन विनिर्मिता ॥ वर्षे द्वे चाथ संस्थाने विज्ञेये दक्षिणोत्तरे ॥ ३० ॥ वर्षत्रयं तु



१ 'गन्धमालश्च' इति ख० ।

विज्ञेयं चतुरस्रं तु मध्यमम् ॥ दीर्घं तथैव विज्ञेयं वर्षाणां च चतुष्टयम् ॥ ३१ ॥ वर्षाणां नवसाहस्रो विष्कम्भः कथितो नृप ॥ योजनानां प्रमाणेन कथितस्तत्त्वदर्शिभिः ॥ ३२ ॥ विष्कम्भः पर्वतानां तु सहस्रद्वितयं स्मृतम् ॥ मेरोर्योजनसाहस्रो विष्कम्भः कथितस्तथा ॥ ३३ ॥ योजनानां तु नियुतं जम्बूद्वीपः प्रकीर्तितः ॥ याम्योत्तरेण तस्येदं प्रमाणं ते मयेरितम् ॥ ३४ ॥ पूर्वापरेण तस्यापि प्रमाणं शृणु पार्थिव ॥ योजनानां सहस्राणि द्वात्रिंशच्च शतानि च ॥ ३५ ॥ भद्राश्वकेतुमालौ द्वौ प्रत्येकं पार्थिवोत्तम ! ॥ योजनानां सहस्रेण शतसाहस्रकानि च ॥ ३६ ॥ नवमेरुस्तथा प्रोक्तो गन्धमादनमानतः ॥ मेरोर्नवसहस्राणि माल्यवांश्च निगद्यते ॥ ३७ ॥ मेरोर्योजनसाहस्रो विष्कम्भः कथितस्तथा ॥ एवमप्येष नियुतं जम्बूद्वीपः प्रकीर्तितः ॥ ३८ ॥ हिमाचले यक्षवरा निविष्टा दैत्यप्रधानाः खलु हेमकूटे ॥ गन्धर्वमुख्या निषधे च शैले नागा निविष्टाश्च तथैव नीले ॥ ३९ ॥ श्वेते पितॄणां च गतिर्निविष्टा सिद्धास्तथा शृङ्गवतश्च पृष्ठे ॥ सेन्द्रास्तथा देवगणाश्च मेरौ क्रीडाविहारेण सदा वसन्ति ॥ ४० ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे जम्बूद्वीपवर्णनो नाम सप्तमोध्यायः ॥ ७ ॥ ॥

॥ वज्र उवाच ॥ भगवन्भारतं वर्षं श्रोतुमिच्छामि तत्त्वतः ॥ कर्मभूमिषु मर्त्यानां वर्षं भार्गव ! भारतम् ॥ १ ॥ मार्कण्डेय उवाच ॥ भारतस्यास्य वर्षस्य नव भेदाः प्रकीर्तिताः ॥ अष्टभिर्गिरिभिश्छन्ना येत्वगम्याः परस्परम् ॥ २ ॥ हिमाचलादासमुद्रं गिरयस्ते व्यवस्थिताः ॥ याम्योत्तरेण राजेन्द्र नामतस्तान्निबोध मे ॥ ३ ॥ स्वमाली हेममाली च शम्भुः कार्तस्वराकरः ॥ वैडूर्यपर्वतश्चैव राजतो मणिमान्भवः ॥ ४ ॥ इन्द्रद्युम्नः कदेतश्च ताम्रवर्णो गभस्तिमान् ॥ रागद्वेषस्तथैवान्यो गान्धर्वस्त्वथ वारुणः ॥ ५ ॥ तेषां तु नवमो मध्ये द्वीपो नाम्ना तु मध्यमः ॥ अस्मिन्मन्वन्तरे क्षिप्तः सागरैश्च चतुर्दिशम् ॥ ६ ॥ वैडूर्यपर्वतः पूर्वमुत्तरेण हिमाचलात् ॥ पश्चार्धे काञ्चनगिरेरुदगेव च लावणात् ॥ ९ ॥ वेष्टितः सागरः सर्वो नानासत्त्वाश्रयो नृप ! ॥ हिमालयः सागरैस्तु कृतो देशद्वयस्तथा ॥ ८ ॥ लवणस्योत्तरे पार्श्वे सागरस्य च दक्षिणे ॥ पुरी लंका सन्निविष्टा यस्यां वै रावणो हतः ॥ ९ ॥ लवणेन च संपृक्तः समुद्रो लवणो यतः ॥ हिमाचलस्य यो भागो वर्षेऽस्मिन्नृप भारते ॥१०॥ तत्रास्ति शैलप्रवरो द्वितीयो गन्धमादनः ॥ श्वेतश्च पर्वतश्रेष्ठो मन्दरश्च महागिरिः ॥ ११ ॥ एते शैलवरा दृष्टा पाण्डवैश्च महात्मभिः ॥ हिमाचलस्य मध्ये तु कैलासो नाम पर्वतः ॥ १२॥ हिमवत्येव विख्यातो नरनारायणाश्रमः॥ यत्र सा बदरी रम्या नानाशकुनिसेविता ॥१३॥ उष्णतोयवहा गङ्गा श्वेततोयवहा

१—'नामतः' इति ख० ।

परा ॥ सुवर्णसिकता राजंस्तापसैरुपशोभिता ॥ १४ ॥ इत्येते कथिता द्वीपाः प्राधान्येन तवानघ ॥ एतेषामंतरे द्वीपाः शतशोथ सहस्रशः ॥१५॥
न ते वर्णयितुं शक्या वर्षाणां तु शतैरपि ॥ विवर्जयित्वा भरतस्य वर्षं वर्षेषु सर्वेषु नरेंद्रसिंह ॥ निरामया वीतभया मनुष्या वर्षेषु सर्वेषु तथैव
चोक्ताः ॥ १६ ॥ आयुःप्रमाणं लभते हि राजन् द्वीपेषु सर्वेषु नरो मयोक्तम् ॥ कृत्वा शुभं कर्म तु भारतेऽस्मिन्द्वीपेषु सर्वेषु नराः प्रयान्ति ॥
॥ १७ ॥ वृक्षेषु तेषां प्रभवन्ति कामाः स्त्रियश्च तेषामपि रूपवत्यः ॥ दण्डश्च तेषां च न दाण्डिकोऽस्ति सन्मार्गगास्तेऽपि तथा च राजन् ॥१८॥
इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे भारतवर्षवर्णनं नामाऽष्टमोऽध्यायः ॥ ८ ॥ ॥ वज्र उवाच ॥ श्रोतुं जनानिहेच्छामि
सागरद्वीपवासिनः ॥ प्राधान्येन भृगुश्रेष्ठ विस्तराद्विस्तरो यतः ॥ १ ॥ मार्कण्डेय उवाच ॥ पाञ्चालाः कुरवो मत्स्या यौधेयाः सवटश्चराः ॥
कुन्तयः शूरसेनाश्च मध्यदेशजनाः स्मृताः ॥ २ ॥ वृषध्वजांजनाः पन्नाः सुह्मा मागधचेदयः ॥ काशयश्च विदेहाश्च पूर्वस्यां कोशला
स्तथा ॥ ३ ॥ कलिङ्गवङ्गपुण्ड्राङ्गवैदर्भा मूलकास्तथा ॥ विन्ध्यान्तनिलयाः प्रोक्ताः पूर्वदक्षिणतः स्मृताः ॥ ४ ॥ पुलिन्दाश्मकजीमूतनरराष्ट्र
निवासिनः ॥ कर्णाटका भोजकटा दक्षिणापथवासिनः ॥ ५ ॥ अम्बष्ठा द्रविडा नागाः काम्बोजाः स्त्रीमुखाः शकाः ॥ आनन्तवासिनश्चैव
ज्ञेया दक्षिणपश्चिमे ॥ ६ ॥ स्त्रीराज्यं सैन्धवा म्लेच्छा नास्तिक्या यवनास्तथा ॥पश्चिमेन च विज्ञेयाः पट्टमानौषधैः सह ॥ ७॥ माण्डव्याश्च
तुषाराश्च मूलिकाश्च मुखाः खशाः ॥ महाकेशा महानासा देशास्तूरत्तरपश्चिमे ॥ ८ ॥ लम्पगास्तालनागाश्च मरुगान्धारजाहुताः ॥ हिमवन्निलया
म्लेच्छा ह्युदीचीं दिशमाश्रिताः ॥ ९ ॥ त्रिगर्तमीनकौलूता ब्रह्मपुत्रास्सतीगणाः ॥ अभिसाराश्च काश्मीराश्चोदक्पूर्वेण कीर्तिताः ॥ १० ॥ राजे
न्द्रसागरद्वीपा प्रधाना वसुधाधिपाः ॥ भवतेऽहं प्रवक्ष्यामि दिग्देशेन निबोध तत् ॥ ११॥ पञ्चालनाथो मगधाधिपश्च कलिङ्गराड् भोजकटेश्वरश्च ॥
अनन्तकः सैन्धवकस्तुषारो मद्रेश्वरश्चाथ कुलूतनाथः ॥ १२ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे जनपदवर्णनो नाम
नवमोऽध्यायः ॥ ९ ॥ वज्र उवाच ॥ निविष्टान्सागरे द्वीपे सप्ताहं कुलपर्वतान् ॥ नामतः श्रोतुमिच्छामि तत्प्रसूताश्च निम्नगाः ॥ १ ॥
मार्कण्डेय उवाच ॥ महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः ॥ विन्ध्यश्च पारियात्रश्च सप्तास्मिन्कुलपर्वताः ॥ २ ॥ त्रिसामा ऋषिकुल्याश्च इक्षुगा ॥ ७॥
त्रिदिवालया ॥ लांगूलिनी वंशधरा नद्यस्त्वेता महेन्द्रजाः ॥३ ॥ कृतमाला ताम्रपर्णी पुष्पजा चोत्पलावती ॥ शीतोदका गिरिवहा नद्यो मलयस

१ 'निलया देशाः' इति ख० । २ 'त्रिसप्त' इति क० ।

म्भवाः ॥४॥ तुङ्गभद्रा सुप्रकारा वाह्या कावेरिका तथा ॥ दक्षिणापथमध्यस्था सह्यपादविनिस्सृताः ॥ ५ ॥ ऋषिका सुकुमारी च मन्दगा मन्दवा
सिनी ॥ नृपमाला शिरी चैव शुक्तिमत्पादनिस्सृताः ॥ ६ ॥ मन्दाकिनी दशार्णा च शोणो देवी च नर्मदा ॥ तमसा पिप्पला चेति ऋक्षवत्पादनिः
सृताः ॥७॥ वेणा वैतरणी चैव नर्मदा च कुमुद्वती ॥ तोया सेतुशिला चैव विन्ध्यपादविनिस्सृताः ॥८॥ पारा चर्मण्वती पादा विदिशा वेणुवत्यपि ॥
सिप्रा ह्यवन्ती कुन्ती च पारियात्रविनिःसृताः ॥ ९॥ नद्यः प्रधानाः कथितास्तवैताः पुण्याः पवित्रा ऋषिसेविताश्च ॥ सन्तीह नद्यश्च सहस्रशोऽन्या
वक्तुं न शक्या यदुवृन्दनाथ ! ॥ १० ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे सप्तगिर्युद्भवनदीवर्णनो नाम दशमोऽध्यायः ॥१०॥
वज्र उवाच ॥ हिमवत्पादसम्भूताः पुण्या ब्रह्मन्विशेषतः ॥ प्राधान्येन समाचक्ष्व नद्यः पापभयापहाः ॥१॥ मार्कण्डेय उवाच ॥ कौशेयवर्णसलिला
कुशेशयविमिश्रिता ॥ कौशिकस्य प्रिया नित्यं कौशिकी निम्नगोत्तमा ॥ २ ॥ निमज्जत्पापसंघौघनिर्मलीकरणे शुभा ॥ निश्चरा निम्नगा श्रेष्ठा
नित्यं मुनिजनप्रिया ॥३॥ गजेन्द्रभिन्नकूला तु गङ्गातुल्या च पुण्यतः ॥ गन्धर्वगणगीता च गण्डकी गोकुलाकुला ॥ ४ ॥ लोकानां पावनायालं
लोकनाथेन निर्मिता ॥ लोकदृष्टिमनोहारी लोहित्यश्च महानदः ॥५॥ दिवः सेव्या सदा विप्रैर्दिवि देवगणैर्यथा ॥ दृषद्वती समाकीर्णा दर्शनीयोदका
तथा ॥ ६ ॥ बहुदा बहुसत्त्वाऽथ मेना च प्रलयक्षमा ॥ अनवच्छिन्नवाहा तु लिखितस्य च बाहुदा ॥७॥ धर्मप्रदा सेवकानां धूतपापा महानदी॥
गोमती गोकुलाकीर्णा गजेन्द्रगणगाहिता ॥ ८ ॥ गन्धर्वगीतगंभीरा गणयक्षगणैर्युता ॥ कुहूकदम्बकादम्बकेकारवविनादिता ॥ ९ ॥ कुमुदोत्पल
कह्लारकुसुमैराकुलोदका ॥ देवदेवस्य या देवी दयिता शङ्करस्य च ॥ १० ॥ देविका सा पुरा राजन् देवलोकगतिप्रदा ॥ विस्तारितमहाकूला विषमद्वीप
वीजिता ॥ ११ ॥ विष्णुलोकप्रदा देवी वितस्तावविनाशिनी ॥ चन्द्रभागा च चन्द्रांशुचारुशीतजलाविला ॥ १२ ॥ चन्द्रलोकप्रदा स्नाने
चामरत्वप्रदायिनी ॥ सरोजाकुलतीर्था च सरयूः सारितां वरा ॥१३॥ सततं सेविता सद्भिः सोमलोकमभीप्सुभिः ॥ इन्द्रेभसेविततटा इन्द्रलोक
प्रदायिनी ॥ १४ ॥ इन्दीवराकुलजला तथा देवी इरावती ॥ विशिष्टपाशविच्छेदे विपाशा कुशला तथा ॥ १५ ॥ तथैव सर्वपापानां विपाकेका
रिणी नृणाम् ॥ वशिष्ठविद्रुता देवी शतद्रुर्द्रुतगामिनी ॥ १६ ॥ रौद्राणामपि सत्त्वानां रुद्रलोकप्रदा शिवा ॥ कृष्णेन कृष्णतोया च बाल्ये पीतपयो
धरा ॥ १७ ॥ यमस्वसा च यमुना याम्यदुःखविनाशिनी ॥ सप्तप्रकारा च नदी तथा देवी सरस्वती ॥१८॥ तस्याः सप्तसु भागेषु नामानि शृणु

१ 'वीणा' इति ख० । २ ' विपाप ' इति क० ।

मे नृप ! ॥ सुप्रभा कातराक्षी च विशाला मानसह्रदा ॥ १९ ॥ सरस्वत्योघनादा च सुवेणुर्विमलोदका ॥ पुष्करे नैमिषे चैव गयायां कोशलेषु
च ॥ २० ॥ कुरुक्षेत्रे क्रमाज्ज्ञेया गङ्गाद्वारे हिमाचले ॥ नद्यस्तथैता हिमवत्प्रसूताः प्रधानभूताः कथिता नृवीर ! ॥ उक्ताश्च नद्यश्च सहस्रशोऽन्याः
सर्वाः पवित्रा ऋषिवर्यजुष्टाः ॥ २१ ॥ वर्षस्य तस्यापि तथान्तरेऽस्मिन्सप्तप्रकारा च त्रिमार्गगापि ॥ द्वीपं प्रविष्टा भरतस्य राजन् भगीरथा
राधितपद्मजोक्ता ॥ २२ ॥ इति श्रीविष्णुधर्म्मोत्तरे प्रथमखण्डे मार्कण्डेववज्रसंवादे हिमवन्नदीवर्णनं नामैकादशोऽध्यायः ॥ ११ ॥ ॥वज्र उवाच ॥
भारतस्यास्य वर्षस्य भेदेऽस्मिन्नवमे प्रभो ॥ किमर्थं सागरः खातः स कृतः सगरैस्तथा॥१॥मार्कण्डेय उवाच॥ भारतस्यास्य वर्षस्य भेदेऽस्मिन्नवमे
नृप ! ॥ नवमे च दिशां भागे पूर्वस्यां दिशि यादव ॥ २ ॥ कोशलो नाम विषयः प्रभूतधनधान्यवान् ॥ स्फीतग्रामगुणाढचोऽस्ति नित्यं मुदित
मानवः ॥ ३ ॥ पयस्विन्यः पयस्विन्यो यत्र सस्यधरा धरा ॥ मनोऽभिरामा रामाश्च पुरुषाः पौरुषाग्रगाः ॥ ४ ॥ विदग्धजनभूयिष्ठा सर्वपुण्य
समाकुला ॥ नगरैर्न विशिष्यन्ते यत्र ग्रामा मनोहराः ॥ ५ ॥ गवां प्रवेशे सायाह्ने यत्र ग्रामेषु भास्करः ॥ धूलिपुञ्जपरिक्षिप्तः वनसानुविरा
जितः ॥ ६ ॥ पश्चिमे प्रथमे चैव यत्र यामे विराजितः ॥ रात्रौ ब्रह्मध्वनिस्तत्र तिष्ठतीव नभस्तलम् ॥ ७ ॥ फलावनतशाखाढचाश्छायाद्रुमसमा
कुलाः ॥ प्रपाकूपतडागाढ्याः पन्थानो यत्र यादव ! ॥ ८ ॥ व्याधितस्करदुर्भिक्षपरराष्ट्रभयानि च ॥ जना यत्र न जानन्ति नाकालमरणं
तथा ॥ ९ ॥ यूपचिह्ना मही यत्र देववेश्मावतंसिका ॥ यत्रोत्पलसमाकीर्णवरवापीविभूषिता ॥ १० ॥ उद्यानेषु सदा यत्र वेणुगान्धर्वनिःस्वनम् ॥
शिलीमुखरवैर्मिश्रं यात्यसंबाधतां गुणैः ॥ ११ ॥ यस्मिन्न कश्चिच्च्यवते स्वधर्माद्दीनो जनो यत्र न चास्ति कश्चित् ॥ न नेत्रहीनो विकलेन्द्रियो
वा वसुन्धरा यत्र यथार्थनामा ॥ १२ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे कोसलवर्णनो नाम द्वादशोऽध्यायः ॥ १२ ॥
मार्कण्डेय उवाच ॥ कोसलाविषये स्फीते तस्मिन्मनुजपुङ्गव ! ॥ देवानामप्ययोध्यास्ति त्वयोध्यानामतः पुरी ॥ १ ॥ प्राकारपार्खोपेता
सरयूतीरशोभिता ॥ शोभिता भवनैर्मुख्यैः सुविभक्तमहापथा ॥ २ ॥ नित्यप्रसन्नैर्मातङ्गैरंजनाचलसन्निभैः ॥ देवनागकुलोत्पन्नैः शतसंख्यैर्विरा
जिता ॥ ३ ॥ निर्मांसवक्त्रैस्तुरगैः सुकर्णैश्च मनोजवैः ॥ दीर्घग्रीवाक्षकूटैश्च महोरुजघनैर्वृता॥४॥ पद्मगर्भसवर्णाङ्ग्यः पूर्णचन्द्रनिभाननाः ॥ संलापो
ह्लासकुशला यत्र वेश्याः सहस्रशः ॥ ५ ॥ न तत्पुण्यं न सा विद्या न तच्छिल्पं न सा क्रिया ॥ अयोध्यां प्राप्य यस्यार्थी निराशः प्रतिगच्छति ॥ 
॥ ६ ॥ उद्यानशतसंबाधा समाजोत्सवशालिनी ॥ अरोगवीरपुरुषा सर्वतर्कविवर्जिता ॥७॥ वीणावेणुमृदङ्गानां शब्दैः सततनादिता ॥ सदा प्रहृष्ट

मनुजा बहुरत्नोपशोभिता ॥ ८ ॥ ब्रह्मघोषमहाघोषा द्विजवृन्दोपशोभिता ॥ साज्यधूमोद्गमाढ्येन वायुना नष्टकिल्बिषा ॥ ९ ॥ सुगन्धिधूपविक्षेप सुरभीकृतमारुता ॥ सुगन्धिमनुजाकीर्णा नित्यमापणवीथिषु ॥ १० ॥ यत्र दीनो जनो नास्ति मलिनः कृशितोऽपि वा ॥ वेदनिन्दापरः क्षुद्रो भिन्नसेतुर्न नास्तिकः ॥ ११ ॥ विस्तीर्णा दश मध्ये च योजनानां महापुरी ॥ सरयूतीरमाश्रित्य योजनत्रयमायता ॥१२॥ मन्वन्तरेऽस्मिन्पुनरेव राज्ञा विनिर्मिता सा मनुना नृवीर ! ॥ मन्वन्तरं येन जगत्समग्रं पाल्यं यथावद्यदुवृन्दनाथ ! ॥ १३ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे अयोध्यावर्णनं नाम त्रयोदशोऽध्यायः ॥ १३ ॥ ॥ मार्कण्डेय उवाच ॥ वैवस्वतेन मनुना येन सा निर्मिता पुरी ॥ स तु कृत्वा चिरं राज्यमिक्ष्वाकुमभिषिच्य च ॥ १ ॥ पुत्रे भारं समावेश्य सशरीरो दिवं गतः ॥ तत्रस्थः पालयन्नास्ते त्रैलोक्यं सचराचरम् ॥ २ ॥ तेन मन्वन्तरं सर्वं पालनीयमिदं जगत् ॥ इक्ष्वाकुस्तस्य तनयः पालयामास मेदिनीम् ॥३॥ धर्मज्ञश्च कृतज्ञश्च सत्यवादी जितेन्द्रियः ॥ सुदर्शः सर्वभूतानां नयापनयकोविदः ॥ ४ ॥ ब्रह्मण्यश्च शरण्यश्च दीनानाथानुकम्पकः ॥ दैवमन्त्रप्रभूत्साहशक्तिभिश्च समन्वितः ॥ ५ ॥ षाड्गुण्यविन्महोत्साहः स्मितपूर्वाभिभाषणः ॥ युक्तदंडो न निर्दंडो न च दण्डरतिस्तथा ॥६॥ वेदवेदाङ्गतत्त्वज्ञो यज्ञयाजी तपोरतिः ॥ अक्षुद्रलीलोऽभिमतः सर्वसत्त्वो न हिंसकः ॥ ७ ॥ मान्यो मानयतां शक्यः सुखः पूज्यप्रपूजकः ॥ कामः क्रोधो मदो मानो लोभो हर्षस्तथैव च ॥ ८ ॥ नित्यं शरीरप्रभवा रिपवस्तेन षड् जिताः ॥ सर्वत्र विधिना दृश्यः सुभगः प्रियदर्शनः ॥ ९ ॥ बहुधान्यो बहुधनो बहुनागाश्वपूरुषः ॥ अयोध्यानिलयो नित्यं देवारिगणदर्पहा ॥१०॥ स तदा पालयामास पुत्रवत्सकलाः प्रजाः ॥ नाधर्मः कश्चिदप्यासीत्तस्मिन्राजनि मानवः ॥ ११ ॥ दीनो वा व्याधितो वापि स्वल्पायुर्वा च दुःखितः ॥ मूर्खो वा मन्दरूपो वा दुर्भगो वा निराकृतिः ॥१२॥ एकत्र देहे सकलं गुणौघं द्रष्टाहमित्येव विशिष्टबुद्धिः ॥ ससर्ज यं राजवरं महात्मा प्रजापतिः सर्वजगत्प्रधानः ॥१३॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे इक्ष्वाकुकुलवर्णनं नाम चतुर्दशोऽध्यायः॥ ॥१४॥॥छ॥ मार्कण्डेय उवाच ॥ इक्ष्वाकोरभवत्पुत्रो विकुक्षिर्नाम धार्मिकः ॥ ककुत्स्थस्तनयस्तस्य चानेनास्तस्य चात्मजः॥१॥ तस्य पुत्रः पृथुः श्रीमान् विश्वदासस्तदात्मजः ॥ तस्य श्रावस्तको नाम श्रावस्ती येन निर्मिता॥२॥बृहदश्वः सुतस्तस्य कुवलाश्वस्तदात्मजः ॥ कुवलाश्वो महातेजा धुन्धुमारत्वमागतः ॥ धुंधुं हत्वा महाकायमुदके जलराक्षसम् ॥ ३ ॥ वज्र उवाच ॥ कथं धुंधुर्महातेजाः कुवलाश्वेन घातितः ॥ कश्चायं धुंधुरित्येष विश्रुतो जलराक्षसः ॥ ४॥ मार्कण्डेय उवाच ॥ एकार्णवे पुरा लोके नष्टस्थावरजङ्गमे ॥ ५ ॥ नष्टचन्द्रार्कपवने विनष्टग्रहतारके ॥ शेषपर्यङ्कमासाद्य

सुप्तो देवो जनार्दनः ॥ ६ ॥ नाभौ तस्य समुत्पन्नं देवस्य कमलं शुभम् ॥ तत्र जज्ञे स्वयं ब्रह्मा देवः शुभचतुर्मुखः॥७॥ तत्रास्ते सोऽभ्यसन्वेदान्सुप्ते
देवे जनार्दने ॥ उपासांचक्रिरे तस्य वेदा देहभृतस्तथा ॥ ८ ॥ वेदाभ्यासरते तत्र स्वेदबिन्दुरजायत ॥ सपद्मपत्रमासाद्य द्विधाभूतोभवन्नृप ॥ ९ ॥
रजस्तमोमयौ तस्माज्जातौ दैत्यौ बलोत्कटौ ॥ मधुकैटभनामानौ महाबलपराक्रमौ ॥ १० ॥ ततस्तौ जह्रतुर्वेदान्ब्रह्मणः पापनिश्चयौ ॥ सशरीरेषु
वेदेषु हृतेष्वथ पितामहः ॥ ११॥ बोधयामास देवेशं पद्मनाभं स चानघः ॥ स विबुद्धस्तदा देवः कृत्वा हयशिरोधरम् ॥ १२ ॥ शशाङ्कशतसंकाशं
नानाभरणशोभितम् ॥ द्वितीयेन शरीरेण रसातलतलं गतः ॥ १३॥ तेनाश्वशिरसा गत्वा वेदानादाय शाश्वतान् ॥ पितामहाय प्रददौ भूय
एव जगद्गुरुः ॥१४॥ ततो हयशिरोधारी गतोन्तर्धानमीश्वरः ॥ आजग्मतुस्ततो देशं दानवौ मधुकैटभौ ॥१५॥ विष्णुश्चकार देहौ द्वौ विष्णुर्जिष्णु
रिति स्मृतौ ॥ मधुना युयुधे जिष्णुर्विष्णुर्वै कैटभेन च ॥ १६ ॥ ततस्तयोः सुयुद्धेन तुष्टो देवो जनार्दनः ॥ उवाच तौ महाकायौ दानवौ मधु
कैटभौ ॥ १७ ॥ वरं वरयतां श्रेष्ठं भवन्तावपराजितौ ॥ तावब्रूतां ततो देवं विष्णुं कमललोचनम् ॥ १८ ॥ पुत्रोऽस्माकं भवेद्देव महाबलपराक्रमः ॥
पुत्रे जाते तु यौ तौ द्वौ विष्णुना जिष्णुना पुरा ॥ १९ ॥ निहतौ च तदा वीरौ ह्युदकं च समाश्रितौ ॥ मेदो मुमुचतुस्तत्र व्याप्ता येनाभवन्मही ॥
॥ २० ॥ मेदिनीति ततः ख्याता लोकेऽस्मिंस्तत्त्वचिन्तकैः ॥ वराहरूपेण तदा चोद्धृता वसुधा ततः ॥ २१ ॥ तेनैव देवदेवेन पूर्वस्थाने निवे
शिता ॥ सर्गं चक्रे ततो ब्रह्मा देवदेवस्य शासनात् ॥ २२ ॥ एवं तदा देववरस्य युद्धे निपातितौ तौ मधुकैटभाख्यौ ॥ देवस्य विष्णोः सदनं प्रयातौ
क्षीरार्णवे तस्य समीपगौ च ॥ २३॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे मधुकैटभवधोपाख्यानं नाम पञ्चदशोऽध्यायः ॥ १५ ॥
॥ मार्कण्डेय उवाच ॥ भारतस्यास्य वर्षस्य भागेऽस्मिन्नवमे नृप ! ॥ समुद्रो वालुकापूर्ण उज्जानक इति श्रुतिः ॥ १ ॥ तस्य मध्ये
समुद्रस्य धुन्धुप्रस्थपतेः सदा ॥ संवत्सरस्य सोन्ते तु महोच्छ्वासं प्रमुञ्चति ॥२॥ यदा तदा भूः स्खलति सशैलवनकानना॥ प्राणिनो येऽल्पसत्त्वाश्च
ते यान्ति यमसादनम् ॥ ३ ॥ यदा विबुद्धो भवति किञ्चिच्छेषा मही तदा ॥ आहारार्थं करोत्युग्रः पापात्मा जलराक्षसः ॥ ४ ॥ एतस्मिन्नेव काले
तु चोत्तङ्कस्तप्यते तपः ॥ तपसोन्ते महात्मानं ददर्श मधुसूदनम् ॥ ५ ॥ तमुवाच हरिर्देवो वरं वरय भार्गव ! ॥ उत्तंकः प्राञ्जलिर्भूत्वा तुष्टाव ॥ ९ ॥
मधुसूदनम् ॥ ६ ॥उवाच वरदं देवमेष एव वरो मम ॥ यदहं देवदेवस्य दृष्टवांश्चरणाम्बुजौ ॥ ७ ॥ श्रीभगवानुवाच ॥ अवश्यं ते वरो देयो मया
भृगुकुलोद्वह ॥ अजरश्चामरश्चैव मत्प्रसादाद्भविष्यसि ॥ ८ ॥ यत्रेच्छसि जलं तत्र भविष्यति तथा तव ॥ देवतानां महत्कार्यं तथैव च

करिष्यसि ॥ ९ ॥ आश्रमस्यास्य ते बाधां यः करोति सदानघ ॥ कुवलाश्वेन तं गत्वा धुंधुं घातय मा चिरम् ॥ १० ॥ अहं चास्य प्रवेक्ष्यामि कुवलाश्वस्य विग्रहम् ॥ तेजसा स मदीयेन धुंधुमाजौ हनिष्यति ॥ ११ ॥ न ह्यल्पतेजसा हन्तुं धुंधुः शक्यो भृगूत्तम ! ॥ मार्कण्डेय उवाच ॥ एतावदुक्त्वा भगवान् गतोऽन्तर्धानमीश्वरः ॥ १२ ॥ जगाम च तथायोध्यामुत्तंकोऽपि महातपाः ॥ पूजितो बृहदश्वेन बृहदश्वमभाषत ॥ १३ ॥ उतङ्क उवाच ॥ कथं निद्रासि राजेन्द्र सुखं पर्यङ्कमास्थितः ॥ धुन्धोश्चरितमालोक्य बद्धकक्षो भवाधुना ॥ १४ ॥ वचनान्मम राजेन्द्र धुंधुं हन्तुं तवास्ति भोः ॥ शक्तिः किमुद्यमाद्राज्ञां दुष्करं ते पुनः कथम् ॥ १५ ॥ जहि धुंधुं महाकायं नृपते द्विजबाधकम् ॥ श्रुत्वा मुनिवचो राजा कुवलाश्वमभाषत ॥ १६ ॥ अहं वनप्रवृत्तस्तु त्यक्तदण्डस्तथैव च ॥ जहि तं दानवश्रेष्ठं त्वमुत्तङ्केन पालितः ॥ १७ ॥ एवमुक्तः परिष्वक्तः पित्रा प्रकृतिवत्सलः ॥ उत्तङ्कसहितो गत्वा युद्धायोदकराक्षसम् ॥ १८ ॥ युयुधे तं च धर्मात्मा धुंधुं तेनैव केशवः ॥ उतङ्कानुमते पश्चाद्ब्रह्मास्त्रेण जघान तम् ॥ १९ ॥ हत्वा तं राक्षसं लेभे त्रिदशेभ्यस्तदा वरान् ॥ कृष्णे भक्तिं स्थितिं धर्मे वासं स्वर्गे तथाक्षयम् ॥ २० ॥ मधुकैटभयोः पुत्रं घातयित्वा नराधिप ॥ धुन्धुमारत्वमगमदशोभत तथा पुरीम् ॥ २१ ॥ तस्मिन्हते दैत्यवरे प्रसन्ना दिशो बभूवुर्मुदिताश्च देवाः ॥ विनष्टविघ्नं च जगत्तदास राजा च कीर्तिं परमामवाप ॥ २२ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे धुंधुमारोपाख्यानं नाम षोडशोऽध्यायः ॥ १६ ॥ ॥ मार्कण्डेय उवाच ॥ धुंधुमाराद्दृढाश्वस्तु हर्यश्वस्तस्य चात्मजः ॥ निकुंभस्तस्य तनयः सुहितश्च तदात्मजः॥१॥ भृशाश्वस्तनयस्तस्य मान्धाता तस्य चात्मजः॥ दैवेन विधिना राजा जातस्तस्यैव चोदरात् ॥ २ ॥ पुरुकुत्सः सुतस्तस्य त्रसदस्युस्तदात्मजः ॥ शम्भुस्तस्यात्मजः श्रीमाननरण्येति विश्रुतः ॥३॥ रावणेन हतो योऽसौ त्रिलोकविजयी पुरा ॥ दृशदश्वः सुतस्तस्य तस्माद्वसुमना नृपः ॥ ४ ॥ तस्य पुत्रस्त्रिधन्वाख्यः तस्मात्त्रय्यारुणिः स्मृतः ॥ तस्य सत्यव्रतः पुत्रः त्रिशङ्कुं यं प्रचक्षते ॥ ५ ॥ हरिश्चन्द्रः सुतस्तस्य रोहिताश्वस्तदात्मजः ॥ हरितस्तत्सुतो राजा चञ्चुर्हारित उच्यते ॥ ६ ॥ विजयस्तस्य तनयश्चालर्कस्तस्य चात्मजः ॥ अलर्कस्य वृकः पुत्रस्तस्माद्बाहुस्तु जज्ञिवान् ॥७॥ पानस्त्रीमृगयाक्षेषु स बहुव्यसनान्वितः ॥ व्यसने तस्य सक्तस्य नरेन्द्रस्यारिभिस्तदा ॥ ८ ॥ हैहयैस्तालजङ्घैश्च सर्वम्लेच्छगणावृतैः ॥ छलेनापहृतं राज्यं हतराज्यो वनं गतः ॥ ९ ॥ पद्भ्यामनुययौ तस्य वनं भार्या गुणान्विता ॥ गुर्विणी प्राग्ददौ यस्याः सपत्नी तु गरं किल ॥१०॥ ततस्सा सगरं पुत्रं सुषाव वनगा शुभा ॥ जातपुत्रो नरपतिः संयुक्तः कालकर्मणा ॥११॥ अन्वारुरोह तं राज्ञी यादवी धर्मवत्सला॥ संस्कृतः सर्वसंस्कारैः सगरश्च्यवनेन च ॥१२॥ शास्त्रग्रामे धनुर्वेदे नीतः पारं

तथा परम् ॥ स यौवनमनुप्राप्य एक एव नराधिपः॥१३॥ पदातिर्बद्धनिर्स्त्रिंशश्च्यवनस्य प्रसादतः ॥ हैहयांस्तालजङ्घांश्च निजघान परन्तपः॥१४॥तत स्त्वयोध्यां संप्राप्य लेभे राज्यमकंटकम् ॥ सगरो राज्यमासाद्य बलेन चतुरङ्गिणा ॥१५॥ विजित्य सकलान्म्लेच्छान्वशं चक्रे च पार्थिवान् ॥ विजित्य पृथिवीं कृत्स्नां प्राप्य राज्यमकण्टकम् ॥ १६ ॥ च्यवनं पूजयामास सत्कारेण पुनःपुनः ॥ च्यवनेनाभ्यनुज्ञातः स चक्रे दारसंग्रहम् ॥ १७ ॥ आसीद्भार्याद्वयं तस्य सगरस्य महात्मनः ॥ स ताभ्यां सहितो राजा पुत्रार्थं तप्तवांस्तपः ॥१८॥ तपसोन्ते हरः प्राह राजानं तपसा कृशम् ॥ एकं वंशकरं पुत्रमेका ते जनयिष्यति ॥१९॥ षष्टिः पुत्रसहस्राणि द्वितीया जनयिष्यति ॥ एवं लब्धवरो राजा सभार्यः स्वपुरं गतः ॥ २० ॥ पुत्रं पुत्रांश्च धर्मात्मा जनयामास वीर्यवान् ॥ कर्मणा चैव नाम्ना च राजपुत्रोऽसमञ्जसः॥२१॥ पित्रा विवासितो राज्यात्पौराणामहिते रतः॥ तस्य पुत्रोंशुमान्नाम सर्वैः समुदितो गुणैः ॥ तोषयामास पितरं पितुः पृथ्वीपतिं च सः ॥ २२ ॥ पौत्रेण तेनानघः सेव्यमानः पुत्रैर्महावीर्यपराक्रमैश्च ॥ स रञ्जय न्राजवरो जितारिः शशास पृथ्वीं सकलां महात्मा ॥ २३ ॥ इति श्रीविष्णुधर्म्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे सगरोपाख्यानं नाम सप्त दशोऽध्यायः ॥ १७ ॥ ॥ मार्कण्डेय उवाच ॥ सगरस्य तु ते पुत्रास्संहता वीर्यसंयुताः ॥ संजाता दैवयोगेन देवब्राह्मणकंटकाः ॥ १ ॥ तेषां तु कर्मणोद्विग्ना देवाः सर्वे पितामहम् ॥ अब्रुवन्सागरैः सर्वैर्देव बाध्याम संहतैः ॥२॥ एवमुक्तस्तदा ब्रह्मा सर्वलोकपितामहः ॥ उवाच देवान्सकलान्सा गरैः प्रत्यमर्षितान् ॥ ३ ॥ यस्त्वस्य जगतो नाथः परमात्मा सनातनः ॥ वासुदेवः स कपिलः सुरास्तान् घातयिष्यति ॥ ४ ॥ एवमुक्ताः सुरा स्तेन ययुः सर्वे त्रिविष्टपम् ॥ एतस्मिन्नेव काले तु सगरः स महीपतिः ॥ ५ ॥ दीक्षितो वाजिमेधाय विधिवद्वेदपारगैः ॥ तुरङ्गं चारयामासुर्यज्ञियं तनया महीम् ॥ ६ ॥ तेषां चारयतां सोऽश्वः कपिलेन तथा हृतः ॥ कपिलेन हृतं नाश्वं ते जानन्ति विमोहिताः ॥ ७ ॥ अन्वेषन्तोऽपि यत्नेन नापुस्ते तुरगं यतः ॥ पित्रे निवेद्य ते सर्वे निचख्नुः पृथिवीतलम् ॥ ८ ॥ भारतस्यास्य वर्षस्य भेदेऽस्मिन्नवमे नृप ! ॥ समन्ततस्ततश्चक्रुः खातकर्मबलान्विताः ॥ ९ ॥ विस्तराद्योजनशतं पातालतलगामिनम् ॥ वैडूर्यपर्वतात्पूर्वमुत्तरेण हिमाचलात् ॥ १० ॥ पश्चार्धे काञ्चनगिरेरुदगेव च लावणात् ॥ हिमाचलश्च तर्वीरैः राजन्देशद्वये क्षतः ॥ ११ ॥ हिमाचलस्य खण्डश्च खातस्यान्तः प्रवेशितः ॥ उत्तरः सागरस्तस्माद्धिम शैलेन दुर्गमः ॥ १२ ॥ एवंविधेन खातेन ते प्रविश्य पृथक्पृथक् ॥ एकीकृता दैवयोगात्कपिलो यत्र वै स्थितः ॥ १३ ॥ कपिलस्य समीपस्थं ददृशुस्ते तुरङ्गमम् ॥ तुरङ्गसहितं दृष्ट्वा कपिलं ते त्वमर्षिताः ॥ १४ ॥ कुद्दाललेपिकाहस्तास्तस्य जग्मुर्वधेप्सया ॥ तान्बाधमानान्दुर्बुद्धीन्सं

ददर्श तदा ऋषिः ॥ १५ ॥ चक्षुषा दृष्टमात्रास्ते भस्मीभूतास्तु सागराः ॥ नरकं च गताः सर्वे देवब्राह्मणकण्टकाः ॥ १६ ॥ विज्ञाय तनयान्नष्टा न्नारदात्सगरो नृपः ॥ प्रेषयामास सततमंशुमन्तं स धार्मिकम् ॥१७॥ अंशुमानपि संप्राप्य कपिलं मुनिसत्तमम् ॥ अभिवाद्य महातेजास्तुष्टाव यदुनन्दनः ॥ १८ ॥ तस्य तुष्टोऽथ तुरगं दत्तवान्कपिलो मुनिः ॥ अंशुमन्तं तदोवाच पितॄणां सलिलार्थिनाम् ॥ १९ ॥ पौत्रस्ते भविता राजंस्तपसा तस्य तोषिता ॥ आगमिष्यति सा देवी गङ्गा गगनमेखला ॥ २० ॥ तया क्लिन्नमिदं भस्म सागराणां दुरात्मनाम् ॥ २१ ॥ यदा भविष्यति तदा सागराः स्वर्गगामिनः ॥ अन्यस्यापि यदा त्वस्थि गङ्गातोये पतिष्यति ॥ २२ ॥ तस्यापि स्वर्लोकगतिर्भविष्यति न संशयः ॥ एवमुक्तोंशुमाञ्शीघ्रं चाभिवाद्य जगद्गुरुम् ॥ २३ ॥ आगम्य योजयामास तुरगेण पितामहम् ॥ यज्ञं समापयामास सगरोऽपि महीपतिः ॥ २४ ॥ एवं हि सागरैर्मत्तैः खातको नृपसत्तम ॥ येन कृतमिदं द्वीपं सागरं नृप कथ्यते॥ ॥ २५ ॥ लवणोदात्समुद्राच्च तोयेन नृप सागरः॥ यदा पूर्णस्तदा जातो लवणोदो नराधिप ! ॥ २६ ॥ कृत्स्नं य एवं जयति स सम्राडिति कीर्त्यते ॥ ततो गतः स धर्मात्मा कालेन महता दिवम् ॥ २७ ॥ दिलीपे भारमासज्य जगाम तनये स्वके ॥ दिलीपोऽपि समादाय राज्यं पुत्रं भगीरथम् ॥ २८ ॥ जगाम त्रिदिवं राजा वने तप्त्वा महत्तपः ॥ आसाद्य राज्यं स भगीरथोऽपि आनीय गङ्गां तपसा च भूमिम् ॥ २९ ॥ संप्लावयामास जलेन भस्म तत्सागराणां यदुवृन्दनाथ ! ॥ ३० ॥ संप्लाविते भस्मनि राजपुत्रा गङ्गाजलौघेन दिवं प्रयाताः ॥ स्वर्लोकमासाद्य तथाऽक्षयं ते वसन्ति हृष्टास्त्रिदशैः समेताः ॥३१॥ इति श्रीविष्णुधर्मो त्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे सगरोपाख्यानं नामाष्टादशोऽध्यायः ॥ १८ ॥ ॥ मार्कण्डेय उवाच ॥ राज्यं प्राप्य महातेजा दिलीपतनयो नृपः ॥ नरकस्थान् पितॄञ्श्रुत्वा राज्यं न्यस्याशु वृद्धये ॥१॥ गङ्गामाराधयामास तपसा महता तदा ॥ यज्ञैश्च नियमै राजन्नपर्णाशनकैस्तथा ॥ २॥ दशवर्षसहस्राणि तपस्तेपे भृशं नृपः ॥ अथ गंगा महादेवी प्रसन्नाभूद्गतक्लमा ॥ ३ ॥ भगीरथोऽपि धर्मात्मा वरं लेभे कुतूहली ॥ ततो लेखनदी देवी प्रावोचत्तं भगीरथम् ॥ ४ ॥ पतन्त्या गगनात्सोढुं मम वेगं वसुन्धरा ॥ ५ ॥ न समर्था यदा तस्मात्तोषयस्वाशु शंकरम् ॥ स हि शक्तः पतंत्या मे वेगं सोढुं नरेश्वर ॥ ६ ॥ एवमुक्त्वा ययौ देवी तदान्तर्धानमीश्वरी ॥ भगीरथोऽपि धर्मात्मा तपस्तेपे सुदारुणम् ॥ ७ ॥ आराधनार्थं देवस्य शङ्करस्य महात्मनः ॥ तपसोऽन्ते महातेजा दृष्टवाञ्जगदीश्वरम् ॥ ८ ॥ देवदेव उवाच ॥ तपसोग्रेण ते राजन्

१ 'तं देश' इति ख० ।

प्रसन्नोऽस्मि यथेप्सितम् ॥ ददामि ते यतो भक्तिं पितॄणां चाक्षयं यशः ॥९॥ मार्कण्डेय उवाच ॥ एवमुक्तस्तु देवेन पूजयित्वा महेश्वरम् ॥ जगाम गङ्गां मनसा राजा पूर्णमनोरथः ॥१०॥ शङ्कराधिष्ठितं ज्ञात्वा नृपतेश्च चिकीर्षितम् ॥ पपात गगनाद्गंगा तदा राजीवलोचन ! ॥११॥ गंगायाः पतनं ज्ञात्वा ब्रह्मा तं देशमागतः ॥ यमेन्द्रवरुणान्देवान्पुरस्कृत्यामितौजसः ॥ १२ ॥ ऋषयो नागगन्धर्वविद्याधरमहोरगाः ॥ सुपर्णकिन्नरगणास्तथैवाप्सरसां गणाः ॥ १३ ॥ विमानशतसंबाधं तद्बभूव नभस्तलम् ॥ प्रकीर्यमाणं कुसुमैर्देवनागविराजितम् ॥ सुरप्रभादुर्निरीक्ष्यं तदाभरणभासुरम् ॥१४॥ सुगन्धि चारु पवनं सुरतूर्यनिनादितम् ॥ नभसस्तस्य मध्येन पपात गगनान्नदी ॥१५॥ विशामि भित्त्वा पातालं स्रोतसा गृह्य शङ्करम् ॥ इत्येवं दुष्टभावा सा पपात हरमूर्धनि ॥१६॥ ज्ञात्वा क्रूरमभिप्रायं देव्या देवः पिनाकभृत् ॥ जटाकलापे तां देवीं तिरश्चक्रे चतुर्मुखः ॥१७॥ बभ्राम सा तिरो भूत्वा तत्रैव त्वचिरं नदी ॥ तस्याः पतंत्या ये केचिद्बिंदवः क्षितिमागताः ॥१८॥ तैः कृतं पृथिवीपाल तदा बिन्दुसरः शुभम् ॥ देवोपि दृष्ट्वा राजानं क्षुधया व्याकुलेन्द्रियम् ॥ १९ ॥ तत्याज तां तदा शीघ्रं जटाग्रेण महेश्वरः ॥२०॥ धृतगंगो जगामाथ ततोऽन्तर्धानमीश्वरः ॥ महेश्वरशिरोभ्रष्टा प्रविष्टा च सरः शुभम् ॥ २१ ॥ तस्माद्विनिःसृता भूयः सप्तधा देवनिम्नगा ॥ ह्लादिनी ह्लादिनी चैव प्लाविनी चेति प्राच्यगाः ॥२२॥ सीतावङ्क्षुश्च सिन्धुश्च प्रतीच्यभिमुखा गताः ॥ दक्षिणेन तथा गंगा भगीरथपथानुगा ॥ क्वचिद्वेगेन महता क्वचिन्मन्दविसर्पिणी ॥ २३ ॥ क्वचित्फेनाकुलजला क्वचिदावर्तमालिनी ॥ क्वचिद्गम्भीरशब्दौघा निःशब्दा च तथा क्वचित् ॥ २४ ॥ क्वचिद्धंसरवोद्दामा चक्रवाकयुगा क्वचित् ॥ ऊर्मिमालाकुलजला कुसुमोत्करमण्डिता॥२५॥ जलसत्त्वशताकीर्णा सुरसिद्धसुखप्रदा ॥ अमृतस्वादुसलिला हरसंसर्गनिर्मला ॥ २६ ॥ विष्णुपादप्रहारोत्था सर्वपातकनाशिनी ॥ एवं संप्राप्य सा विंध्यं प्रविष्टा पूर्वसागरम् ॥ २७ ॥ सागरेण समासाद्य पातालं भीमदर्शनम् ॥ प्लावयामास तद्भस्म सागराणां महात्मनाम्॥२८॥ भस्मनि प्लाविते सर्वे गतास्ते सागरा दिवम् ॥२९॥ एवं धरां देवनदी प्रयाता सुपुण्यतोया ऋषिवर्यजुष्टा ॥ महानुभावा नृप जह्नुकन्या निश्रेणिभूता त्रिदिवप्रयाणे ॥३०॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे गङ्गावतरणं नामैकोनविंशोऽध्यायः॥१९॥ वज्र उवाच ॥ भागीरथीत्वं गङ्गात्वं देवनद्या मया श्रुतम् ॥ किमर्थं जाह्नवी लोके कथ्यते सागरङ्गमा ॥ १ ॥ मार्कण्डेय उवाच ॥ पञ्चालाख्योऽस्ति विषयो मध्यदेशे महीपते ॥ स्वधर्मकर्मनिरतैर्युतो वर्णाश्रमैः सदा ॥ २ ॥ महोदयं पुरं तत्र कुशस्तम्भेन निर्मितम् ॥ सर्वरत्नसमाकीर्णं कान्यकुब्जेति विश्रुतम् ॥ ३ ॥ तस्मिन्बभूव भूपालो जह्नुः परमधार्मिकः ॥ यस्य कीर्तिमतः कीर्तिर्ब्रह्माण्डं व्याप्य तिष्ठति ॥ ४ ॥ स कदाचिन्महीपालो

हयमेधमुपाहरत् ॥ दीक्षितस्य नरेन्द्रस्य यज्ञवाटं तु निम्नगा ॥ ५ ॥ प्लावयामास वेगेन जलौघैर्यदुसत्तम ॥ प्लाविते यज्ञवाटे तु राजा गङ्गां तदा ब्रवीत् ॥ ६॥ अस्य गङ्गेऽवलेपस्य सद्यः फलमवाप्नुहि ॥ पिबामि सकलं तोयं तव सागरवल्लभे ॥ ७॥ एवमुक्त्वा पपौ राजा सर्वं भागीरथीजलम् ॥ तपसा महता राजंस्तथा योगबलेन च ॥ ८ ॥ दृष्ट्वैव गङ्गां निस्तोयां दीनैर्मुनिजनैस्ततः ॥ प्रसादितस्तु गङ्गार्थे तत्याज श्रवणेन ताम् ॥ ९ ॥ दुहितृत्वे च जग्राह राजा भागीरथीं तदा ॥ तेन सा कथिता लोके जाह्नवी यदुनन्दन ॥ १० ॥ अतीव दर्पितो राजा गङ्गायाः स यदा नृप ॥ यशोऽर्थं प्लावयामास यज्ञवाटं तदानघ ॥११॥ एवं त्रिलोके नृप जह्नुकन्या प्रोक्ता बुधैर्विष्णुपदी पवित्रा ॥ हिमाचलस्याद्रिपतेस्तनूजा समुद्रपत्नी वरदा विशोका ॥ १२ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे जह्नुकन्योपाख्यानं नाम विंशतितमोऽध्यायः ॥ २० ॥ वज्र उवाच ॥ गङ्गा विष्णुपदी लोके किमर्थं कथिता बुधैः ॥ तन्ममाचक्ष्व तत्त्वेन भृगुवंशविवर्धन ! ॥ १ ॥ मार्कण्डेय उवाच ॥ स्वायम्भुवेन्तरे पूर्वं चत्वारो देवतागणाः ॥ जयाख्याश्चाजिताख्याश्च शुक्राख्याश्च प्रकीर्तिताः ॥ २ ॥ तेषां बभूव देवेन्द्रो विश्वभुग्लोकपूजितः ॥ आसंस्तस्या सुरा घोरास्तदा दायादबान्धवाः ॥ ३ ॥ बभूव राजा तेषां च बाष्कलिर्न्नाम नामतः ॥ येन विक्रम्य शक्रस्य हृतं राज्यं तदा बलात् ॥ ४ ॥ हृतराज्यस्तु देवेन्द्रो ब्रह्माणं शरणं गतः ॥ ब्रह्मापि शक्रमादाय जगाम शरणं हरिम् ॥ ५ ॥ निवेदयामास तदा देवदेवाय शार्ङ्गिणे ॥ बाष्कलेर्विजयं सर्वं ब्रह्मा शुभचतुर्मुखः ॥ ६ ॥ श्रीभगवानुवाच ॥ ब्रह्मन्प्रत्याहरिष्यामि राज्यमस्य शतक्रतोः॥ दिवि देवेषु धर्मात्मन्निवृत्तो भव मा चिरम् ॥७॥ अहं वामनरूपेण प्रयास्ये बाष्कलिं नृपम् ॥ मां दृष्ट्वा विस्मितं तन्तु गत्वा याचतु देवराट् ॥ ८ ॥ लोकत्रयं मम हृतं त्वया विक्रम्य बाष्कले ॥ तत्राग्निशरणार्थाय दीयतां मे क्रमत्रयम् ॥ ९ ॥ अतीव ह्रस्वगात्रस्य वामनस्यास्य मा चिरम् ॥ एवमुक्तस्तु शक्रेण तदा दाता क्रमत्रयम् ॥ १० ॥ मार्कण्डेय उवाच ॥ ॥ इत्येवमुक्तो देवेन ब्रह्मा स्वभवनं गतः ॥ देवोऽपि वामनो भूत्वा प्रयातो यत्र बाष्कलिः ॥ ११ ॥ बाष्कलिर्वामनं दृष्ट्वा विस्मयोत्फुल्ललोचनः ॥ निरीक्ष्य तं यथाकाममसुरैर्बहुभिर्वृतः ॥ १२ ॥ एतस्मिन्नेव काले तु शक्रस्तं देशमाययौ ॥ पाद्यार्घ्याचमनीयाद्यैः शक्रं संपूज्य बाष्कलिः ॥ १३ ॥ किमागमनकार्यं ते तमुवाच प्रहृष्टवाक् ॥ अत्याश्चर्यमिदं मन्ये तवागमनकारणम् ॥ १४ ॥ शक्र उवाच ॥ लोकत्रयं मेऽपहृतं विक्रमेण तु बाष्कले ! ॥ तत्राग्निशरणार्थाय दीयतां मे क्रमत्रयम् ॥ १५ ॥ अतीव ह्रस्वगात्रस्य वामनस्यास्य पार्थिव ॥ भूमिभागे तु पारक्ये वस्तुं न त्वहमुत्सहे॥१६॥ बाष्कलिरुवाच ॥ क्रमत्रयं वामनके देवराज कृतं शुभम् ॥ तत्रास्स्व

मुदितः प्राप्तः सुखी सुरपते भव ॥ १७ ॥ मार्कण्डेय उवाच ॥ एवमुक्तो बाष्कलिना त्यक्त्वा रूपं तु वामनम् ॥१८॥ हरिर्विचक्रमे लोकान्देवानां हितकाम्यया ॥ ब्रह्मलोकं ततो गत्वा............ ॥ देवस्य वामश्चरणो निविष्टो दानवालये ॥ १९ ॥ ततः क्रमं स प्रथमं ददौ सूर्य्ये जगत्पतिः ॥ द्वितीयं च ध्रुवे देवस्तृतीयेन च यादव ।॥ २० ॥ ब्रह्माण्डं ताडयामास ह्यसंपूर्णेन केशवः ॥ ब्रह्माण्डस्ताडितस्तेन छिद्रतामगमत्प्रभो ॥२१॥ ब्रह्माण्डबाह्यतोयेन शतघ्नेनाम्भसावृतम् ॥ तेनच्छिद्रेण तत्तोयं विवेशाण्डं महीपते ।॥ २२ ॥ अंगुष्ठाग्रक्षतादण्डाद्यत्प्रविष्टं जलं शुचि ॥ प्राप्ता देवनदीत्वं तु सा तु विष्णुपदी नदी ॥ २३ ॥ देवनद्या तया व्याप्तं ब्रह्माण्डं सकलं नृप !॥ विभूतिभिर्महाभाग सर्वानुग्रहकाम्यया ॥ २४ ॥ वामनेन समाक्रान्ताः सर्वे लोका यदानघ ! ॥ असुरैस्ते तदा त्यक्ता देवानां सत्यबान्धवैः ॥ २५ ॥ पातालश्च यदा तेन नाक्रान्तं हरिमेधसा ॥ असुरैस्तैस्तदा घोरैरुष्यते यदुनन्दन ! ॥ २६ ॥ देवोऽपि हत्वा त्रैलोक्यं जगामादर्शनं तदा ॥ पातालनिलयश्चापि सुखमास्ते स बाष्कलिः ॥ २७ ॥ शक्रोऽपि पालयामास विपश्चिद्भुवनं तदा ॥ इमं त्रिविक्रमं नाम प्रादुर्भावं जगद्गुरोः ॥ २८ ॥ गङ्गासंभवसंयुक्तं सर्वकिल्बिषनाशनम् ॥ २९ ॥ तेनैव देवदेवेन प्राप्ते वैवस्वतेऽन्तरे ॥ भूयो लोकास्त्रयः क्रान्ताः पदा संयमिनो नृप ॥ ३० ॥ अनेन कारणेनोक्ता गंगा विष्णुपदी नृप ॥ यया सर्वमिदं व्याप्तं त्रैलोक्यं सचराचरम् ॥३१॥ गंगासमुत्पत्तिरियं मयोक्ता श्रुत्वैव यां मुञ्चति सर्वपापम् ॥ पापैर्विशिष्टोऽपि नरो नृवीर साधुव्रतस्तु त्रिदिवं प्रयाति ॥ ३२ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे त्रिविक्रमोपाख्यानं नामैकविंशतितमोऽध्यायः ॥ २१ ॥ वज्र उवाच ॥ ब्रह्मन्विष्णुपदी गंगा त्रैलोक्यं व्याप्य तिष्ठति ॥ यथा तथा भृगुश्रेष्ठ सर्वमेव प्रकीर्तय ॥ १ ॥ मार्कण्डेय उवाच ॥ प्रविश्य देवी ब्रह्माण्डं विष्णुलोकमुपागता ॥ ब्राह्मीं सभां प्लावयित्वा तपोलोकमुपागता ॥ २ ॥ जनलोकं गता तस्मान्महर्लोकं ततो गता ॥ स्वर्गलोकं समासाद्य प्रविष्टा चन्द्रमण्डलम् ॥ ३ ॥ चन्द्रमण्डलविभ्रष्टा भुवर्लोकमुपागता ॥ आकाशगंगा कथिता तत्र सा रतिवर्धिनी ॥४ ॥ तस्यास्तु दृश्यते पन्थाः सततं व्योम्नि निर्मले ॥ आकाशगंगामध्ये सा मेरौ निपतिता गिरौ ॥ ५ ॥ मेरुमध्याददृश्यन्ती दृश्यन्ती च तथा क्वचित् ॥ प्रयाता सर्ववर्षाणि द्वीपानि च महामते ॥६॥ सा तु देवी जया नाम कुरुवर्षे ह्रदास्तु ते ॥ तेभ्यः शान्ता च साध्वी च द्विधा गंगा विनिस्सृता ॥ ७ ॥ ज्योत्स्ना च मृगमन्दा च स्मृता हैरण्वती शुभा ॥ पुण्डरीका पयोदा च रम्ये वर्षे निगद्यते ॥ ८ ॥ भद्रा



१ 'माध्वी' इति ख० ।

च कथिता देवी गान्धर्वी च मनोऽनुगा ॥ इलावृते तथा सैव प्रोक्ता जाम्बवती शुभा ॥ ९ ॥ तस्यास्तीरभवं मूर्ध्नि कनकं धार्यते सुरैः ॥
केतुमाले च कथिता निर्मला नङ्वला तथा ॥ १० ॥ मनस्विनी ज्योतिष्मती हरिवर्षे निगद्यते ॥ तथा किम्पुरुषाख्ये तु रम्भा चन्द्रवती शुभा ॥ ११ ॥
इन्द्रद्युम्नपयोदा सा काशैका मतिपावनी ॥ मनोजवा ताम्रपर्णी गभस्तिमतिमालिनी ॥ १२ ॥ नागद्वीपे नागवती सौम्ये सोमप्रभा तथा ॥ रुद्र
लोकं ततः प्राप्ता ब्रह्मलोकं ततो गता ॥ १३ ॥ गान्धर्वी चैव गन्धर्वी वारुणे वरुणह्रदा ॥ ह्रादिनी ह्लादिनी चैव पुण्यतोया च वर्षिणी ॥ १४ ॥
सीता चक्षुश्च सिन्धुश्च गंगा चास्मिन्प्रकीर्तिता ॥ अमरान्निषधान्सर्वान्धीवरानृषिकांस्तथा ॥ १५ ॥ ओष्ठप्रावरणान्सौम्यान्कर्णप्रावरणांस्तथा ॥
कालोदरान्विकर्णांश्च ह्रादिनी तु निषेवते ॥ १६ ॥ इन्द्रद्युम्नसरः पुण्यमुपचारादजायत ॥ तथा खरपदान्देशान्वेत्रशङ्कुपदानपि ॥ १७ ॥ तज्ञा
नकामतं चैव ह्लादिनी तु निषेवते ॥ दरदाञ्हुडांश्चैव काश्मीरान्नैरसान्कुरून् ॥ १८ ॥ गान्धारान्दरदाभीरान्कुपर्वान्भीमरौरवान् ॥ शिवपर्वा
निन्द्रपर्वान्सिन्धुतीरान्निषेवते ॥ १९ ॥ देवान्दैत्यान्कालकेयान्गन्धर्वान्किन्नरांस्तथा ॥ विद्याधरांस्तथा नागान्सुपर्वान्सुमनोहरान् ॥ २० ॥
कलापग्रामकांश्चैव नरनारायणाश्रमम् ॥ किरातांश्च पुलिन्दाँश्च मयस्य नगरीं तथा ॥ २१ ॥ कुतून्सभारतांश्चैव पुलिन्दाँश्चैव भागशः ॥
पाञ्चालान्काशयान्वत्सान्मागधांस्ताम्रलिप्तकान् ॥ २२ ॥ सह्योत्तरांश्च वङ्गांश्च तथा श्रावस्तिवासिनः ॥ अङ्गान्वंगान्सपुण्ड्रांश्च गगा भावयते
शुभा ॥ २३ ॥ ह्रादिनी ह्लादिनी चैव पावनी जाह्नवी तथा ॥ प्रविष्टा सागरं पूर्वं द्वीपेस्मिन्नृपसत्तम ॥ २४ ॥ सीताचक्षुश्च सिन्धुश्च पश्चिमं नृप
सागरम् ॥ गङ्गाव्याप्तिस्तव प्रोक्ता जम्बूद्वीपे मयानघ ॥ २५ ॥ लोकेषु च तथा राजन्द्वीपेष्वन्येषु मे शृणु ॥ सुकुमारी कुमारी च सुकृता सेविनी
तथा ॥ २६ ॥ इक्षुश्च वेणुका नन्दा शाकद्वीपे च सप्तधा ॥ शाल्मले त्वथ गोमेदे[2] द्वीपे पुष्करसंज्ञके ॥ २७ ॥ नदीत्वं सा समुत्सृज्य चोदधित्वमु
पागता ॥ तस्मिन्द्वीपत्रये नद्यो न सन्ति यदुनन्दन ॥२८॥ उदकान्युद्भिदान्येव तेषु सन्ति सहस्रशः ॥ एवं भूमितलं प्लाव्य पातालं कृष्णमृत्ति
कम् ॥ २९ ॥ एकीभूता प्रविष्टा सा भोगवत्यां समीपतः ॥ श्वेतभौमं गता तस्माद्रक्तभौमं ततो गता ॥ ३० ॥ शिलाभौमं गता तस्माद्रुक्मभौमं
ततो गता ॥ रुक्मभौमादपि गता रौद्रं तेजस्सुदारुणम् ॥ ३१ ॥ ततोऽपि विलयं गत्वा वाराहं लोकमागता ॥ वाराहलोकाद्ब्रह्माण्डं तदर्थं भिन्न
वाहिनी ॥ ३२ ॥ छिद्रेण तेन सा देवी स्वां योनिं पुनरागता ॥ ३३ ॥ एवं नरेन्द्रेश जगत्समग्रमाक्रम्य गंगा सततं स्थिता या ॥ तस्याः प्रभाव

१ ' खरपदां ' इति क० । २ ' गोमेधे ' इति ख० ।

श्रवाणदशेषं पापं नराणां समुपैति शांतिम् ॥ ३४ ॥ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे गंगाव्यात्तिर्नाम द्वाविंशतितमो
ऽध्यायः ॥ २२ ॥ वज्र उवाच ॥ भगीरथस्य राजर्षेर्वंशमुत्तमपूरुष ॥ त्वत्तोऽहं श्रोतुमिच्छामि गङ्गा येनावतारिता ॥ १ ॥ मार्कण्डेय उवाच ॥
भगीरथसुतः श्रीमान्विश्रुतो नाम धार्मिकः ॥ विश्रुतस्यात्मजः श्रीमान्नाभाग इति विश्रुतः ॥ २ ॥ अम्बरीषस्तु नाभागिरयुतारिस्तदात्मजः ॥
तत्सुतो ऋतुपर्णश्च राजा नलसखो बली ॥ ३ ॥ शर्वकामः सुतस्तस्य सुदासस्तस्य चात्मजः ॥ तस्य मित्रसहः पुत्रः तस्य पुत्रोऽश्मको
नृप ॥ ४ ॥ मूलकस्तत्सुतो राजा महाबुद्धिर्नरेश्वरः ॥ क्षत्रियाणां वधे घोरे रामेण विनिपातितः ॥ ५ ॥ पुरा पितृवधामर्षाद्रामो भार्गवनन्दनः ॥
त्रिःसप्तकृत्वः पृथिवीं चक्रे निःक्षत्रियामिमाम् ॥६॥ भगीरथकुलोत्पन्नं मूलकं नाम जघ्निवान् ॥ वज्र उवाच ॥ कथं रामेण वसुधा पुरा निःक्षत्रिया
कृता ॥ किमर्थं च महाभाग तन्ममाचक्ष्व पृच्छतः ॥ ७॥ मार्कण्डेय उवाच ॥ सोमवंशसमुत्पन्नो ययातिर्नाम पार्थिवः ॥ तस्यापि संहतः पुत्रो बभूव
पृथिवीपतिः ॥ ८ ॥ सहस्रजित्सुतस्तस्य नभजित्तस्य चात्मजः ॥ तस्यापि हैहयः पुत्रः कुन्तिस्तस्यापि चात्मजः ॥ ९ ॥ तस्यापि संहतः पुत्रो
महिष्मांऽस्तस्य चात्मजः ॥ माहिष्मती कृता येन नगरी सुमनोहरा ॥ १० ॥ भद्रश्रेण्यः सुतस्तस्य दुर्मदस्तस्य चात्मजः ॥ कनकस्तत्सुतो राजा
कृतवीर्यस्तदात्मजः ॥११॥ अर्जुनस्तनयस्तस्य सप्तद्वीपेश्वरोऽभवत् ॥ दत्तात्रेयोऽथ भगवान्विष्णुरूपानुरूपधृक् ॥१२॥ आराध्य तपसा येन प्राप्तं राज्यं
सुदुर्लभम् ॥ तथा बाहुसहस्रं च मतिं धर्मे तथोत्तमाम् ॥ १३ ॥ अधर्मे वर्त्तमानस्य मरणं च जनार्दनात् ॥ युद्धेन पृथिवीं जित्वा धर्मेणैवानुरंजयन्
॥ १४ ॥ तेनेयं पृथिवी सर्वा सप्तद्वीपा सपत्तना ॥ सप्तोदधिपरिक्षिप्ता क्षात्रेण विधिना जिता ॥ १५ ॥ पातालनगरे शैले वसुधायां रसातले ॥
तस्य पार्थिवसिंहस्य चक्रं न प्रतिहन्यते ॥१६॥ द्वीपेषु स हि सर्वेषु खातं खातमथाऽकरोत् ॥ यूपचिह्नानि च तथा खड्गी शतशनी रथी ॥ १७ ॥
देशाननु चरन्योगात्सदा पश्यति तस्करान् ॥ स एव पशुपालोभूत्क्षेत्रपालः स एव च ॥ १८ ॥ स एव वृष्ट्या पर्जन्यो योगित्वादर्जुनोऽभवत् ॥
स तु बाहुसहस्रेण ज्याघातकठिनत्वचा ॥ १९ ॥ भाति रश्मिसहस्रेण शारदेनेव भास्करः ॥ राक्षसा निर्जितास्तेन तेन बद्धश्च रावणः ॥ २० ॥
जित्वा भोगवती तेन कर्कोटकसुता हृता ॥ तस्य बाहुसहस्रेण क्षोभ्यमाणे महोदधौ ॥ भवन्ति लीना निश्चेष्टाः पातालस्था महासुराः ॥ २१ ॥
मन्दरक्षोभचकिताअमृतोत्पादशङ्किताः ॥ नतनिश्चलमूर्धानो भवन्ति च महोरगाः ॥ २२ ॥ दशयज्ञसहस्राणि तेनेष्टानि महीक्षिता ॥ द्वीपे
द्वीपे महाराज धर्मज्ञेन महात्मना ॥ २३ ॥ सर्वे यज्ञा महाराज तस्यासन्भूरिदक्षिणाः ॥ सर्वे काञ्चनवेदीकाः सर्वे यूपैश्च काञ्चनैः ॥२४॥ द्विजानां

परिवेष्टरस्तस्य यज्ञेषु देवताः ॥ स्वयमासन्महाराज स्वयं भागहरास्तथा ॥ २५ ॥ तस्य यज्ञे जगौ गाथा नारदस्सुमहत्तपाः ॥ न नूनं कार्तवीर्यस्य गतिं यास्यन्ति पार्थिवाः ॥ २६ ॥ यज्ञैर्दानैस्तपोभिर्वा विक्रमेण श्रुतेन वा ॥ २७ ॥ पञ्चाशीतिसहस्राणि वर्षाणां स महीपतिः ॥ सप्तद्वीपेश्वरः सम्राट् चक्रवर्त्ती बभूव ह ॥२८॥तस्य राज्ञस्तु वसुधा बहुपार्थिवसङ्कुला ॥ भाराक्रान्ता विलुलिता बभूव पृथिवीपते॥२९॥ तस्य राज्ञो गतातङ्कैर्बहुपुत्रैर्नरोत्तम ॥ तेजोयुक्तैः समाकीर्णा वसुधा वसुधाधिप ॥ ३० ॥ बहुनागाश्वसंकीर्णा बहुगोकुलसङ्कुला ॥ न शक्ता नृपते सोढुं तेजस्तदतिमानुषम् ॥ ३१ ॥ ज्वालावलिवपुः श्रान्ता खिन्ना नाकमुपागता ॥ ३२ ॥ एवं प्रभावे नरदेवनाथे पृथ्वीं समग्रां परिपाल्यमाने ॥ भारेण सन्ना पृथिवी जगाम महेन्द्रलोकं मुनिदेवजुष्टम् ॥ ३३ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादेऽर्जुनोपाख्यानं नाम त्रयोविंशोऽध्यायः ॥ २३ ॥ वज्र उवाच ॥ देवकार्यं विना विष्णुर्नोत्पत्स्यति महीतले ॥ कस्मिन्कार्ये बभूवासौ दत्तात्रेय इति श्रुतः ॥ १ ॥ मार्कण्डेय उवाच ॥ शक्रेण च यदा वृत्रो हतो वीर्योपबृंहितः ॥ २ ॥ तस्मिन्हतेऽसुरे त्वष्टा विश्वरूपमवासृजत् ॥ तपस्यन्तं च तं गत्वा जघान च शचीपतिः ॥ ३ ॥ तस्मिन्हते ब्रह्महत्या जगाम बलसूदनम् ॥ ब्रह्महत्याभिभूतस्तु राज्यं त्यक्त्वा त्रिविष्टपे ॥ ४ ॥ मानसे बिसतन्तुस्थो बभूव स पुरन्दरः ॥ राजा कृतः शक्रहीनैर्देवैस्तु नहुषस्तदा ॥ ५ ॥ सोऽकामयत पौलोमीं शक्रस्य महिषीं प्रियाम् ॥ कालालाभपरा प्राह शक्रं देवी तथा शची ॥ ६ ॥ अपूर्वेणा यानेन समीपं मे सुरेश्वर ॥ ऋषिभिः शिबिकां युक्त्वा स जगाम तदन्तिकम् ॥ ७ ॥ शिबिकां वहमानं तु मन्दंमन्दं द्विजोत्तमम् ॥ पादेन ताडयामास सोऽगस्त्यं पापनिश्चयः ॥ ८ ॥ अगस्त्येन तथा शप्तो भव सर्पो महीपते ॥ युधिष्ठिरेण संगम्य शापमोक्षमवाप्स्यसि ॥ ९ ॥ एवमुक्ते तु मुनिना सर्पत्वं स जगाम वै ॥ नष्टे शक्रे च पतिते नहुषे पापनिश्चये ॥ १० ॥ रजस्तमोभ्यामाक्रान्ता बभूवुस्त्रिदशालयाः ॥ ततः प्रवृत्ता लोकेऽस्मिन्ननावृष्टिः सुदारुणा ॥ ११ ॥ दुर्भिक्षमरकौ चोभौ विषण्णास्त्रिदशालयाः ॥ नष्टोत्सवमहायज्ञं निर्वषट्कारमङ्गलम् ॥ १२ ॥ अनावृष्टिहतं सर्वं बभूव वसुधातलम् ॥ क्षुत्क्षाममानुषप्रायं विनष्टपशुसञ्चयम् ॥ १३ ॥ कपालास्थिसमाकीर्णं केशशैवालसंकुलम् ॥ स्नायुभग्नद्विजगणैः क्रव्यादैरतिसंकुलम् ॥ १४ ॥ निर्गन्धिकुणपाकीर्णं शून्यप्रायं विभीषणम् ॥ क्षुत्क्षामभूतसङ्घाभ्यां विनिवृत्तवणिक्पथम् ॥ १५ ॥ प्रनष्टकृषिवार्तं च दातृभिश्च विवर्जितम् ॥ नरकेऽपि महाघोरे निराक्रन्दैर्जनैर्युतैः ॥ १६ ॥

१ 'कस्मिन्काले' इति ख० । २ 'जनैर्वृतैः' इति ख० ।

दुर्लभान्नं निरानन्दं स्कन्धासक्तकुमारकैः ॥ इतश्चेतश्च यास्यद्भिर्दीनवैरतिसंकुलम् ॥ १७ ॥ शुष्कतोयाशयं भीमं नामशेषमहापगम् ॥ तस्मिन्काले महाघोरे चोत्सृष्टनियमा द्विजाः ॥ १८ ॥ आर्यावर्तं परित्यज्य म्लेच्छदेशमुपाश्रिताः ॥ भक्ष्याभक्ष्यं परित्यज्य कुर्वाणाः प्राणधारणम् ॥ १९ ॥ प्राणधारणसक्तानां क्षुधाव्याकुलचेतसाम् ॥ तेषां ब्रह्म तदा नष्टं धावतां च इतस्ततः ॥ २० ॥ तदा नष्टेषु देवेषु म्लेच्छीभूतमिदं जगत् ॥ म्लेच्छीभूते जगत्यस्मिन्स्वधास्वाहाविवर्जिताः ॥ २१ ॥ यथा मर्त्यास्तथा जाताः सर्वे ते देवतागणाः ॥ क्षुत्क्षामकण्ठैस्त्रिदशैः प्रार्थितश्च जनार्दनः ॥ २२ ॥ शक्रार्थं त्रिदशा गत्वा त्रैलोक्यहितकाम्यया ॥ २३ ॥ तानुवाच हरिर्देवः सर्वे गच्छन्तु मानसम् ॥ बिसतंतुगतं शक्रं तस्माल्लप्स्यथ मा चिरम् ॥ २४ ॥ यजतां सोऽश्वमेधेन मामेव सुरसत्तमाः ! ॥ अहमेव करिष्यामि विपाप्मानं विडौजसम् ॥ २५ ॥ तत्कृता ब्रह्महत्यां तु चतुर्धा स करिष्यति ॥ २६ ॥ अमेध्यक्षेपके वह्नौ पादेनैकेन यास्यति ॥ तथा चैकेन पादेन ह्यशुचिक्षेपके जले ॥ २७ ॥ पादेनैकेन च तथा सर्वकाले द्रुमच्छिदम् ॥ रजस्वलांगं पादेन तथा चैकेन यास्यति ॥ २८ ॥ अहमंशेन यास्यामि भूतलं सुरकारणात् ॥ नष्टे च भूतले धर्मं स्थापयिष्याम्यहं पुनः ॥ २९ ॥ एतत्सर्वं यथोद्दिष्टं देवदेवेन शार्ङ्गिणा ॥ चक्रुस्सुरगणाः सर्वे राज्यं चावाप वृत्रहा ॥ ३० ॥ शक्रेण नित्यं बिसतन्तुगेन ध्यातो महात्मा हरिरप्रमेयः ॥ हत्वापि कामेन स विप्रमुख्यं लेभे त्रिलोकीं पुनरेव तस्मात् ॥ ३१ ॥ इति श्रीविष्णुधर्मोऽत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे वृत्रवधोपाख्यान नाम चतुर्विंशतितमोऽध्यायः ॥ २४ ॥ मार्कण्डेय उवाच ॥ ब्रह्मणोऽत्रिः सुतः श्रीमान्प्रभावाद्ब्रह्मणा समः ॥ प्रभाकरस्तस्य सुतः पितामहसमो गुणैः ॥ १ ॥ स्वर्भानुना हते सूर्ये पतमाने दिवो महीम् ॥ तमोभिभूते तपसा प्रभा येन विवर्धिता ॥ २ ॥ स्वस्त्यस्त्विति स होवाच पतमानं दिवाकरम् ॥ वचनात्तस्य ब्रह्मर्षेः स पपात दिवो महीम् ॥ ३ ॥ अत्रिश्रेष्ठानि गोत्राणि यश्चकार महायशाः ॥ यज्ञेष्वत्रिवनं यश्च सुरैर्यस्य प्रकीर्तितम् ॥ ४ ॥ तस्य पुत्रत्वमापन्नौ जनार्दनमहेश्वरौ ॥ दत्तात्रेयोऽथ दुर्वासा लोके ख्यातिमुपागतौ ॥ ५ ॥ दत्तात्रेयत्वमासाद्य भगवान्मधुसूदनः ॥ वेदानध्यापयामास ब्राह्मणांश्चरितव्रतान् ॥ ६ ॥ तेषु नष्टेषु वेदेषु क्रियासु च मखेषु च ॥ चातुर्वर्ण्ये समाकीर्णे धर्मे शिथिलतां गते ॥ ॥ ७ ॥ अभिवर्धति चाधर्मे सत्ये नष्टेऽनृते स्थिते ॥ प्रजासु शीर्यमाणासु धर्मे चाकुलतां गते ॥ ८ ॥ सयज्ञाः सक्रिया वेदाः प्रत्यानीता हि तेन वै ॥ चातुर्वर्ण्यमसंकीर्णं कृतं तेन महात्मना ॥ ९ ॥ दुर्भिक्षमरकौ नष्टौ तस्मिञ्जाते महीतले ॥ प्रववर्ष च देवेन्द्रः सहस्रनयनः क्षितौ ॥ १० ॥ भूय एव

१ 'विप्रर्षेः' इति ख० । २ ' प्रवर्तितम् ' इति क० ।

जगद्वृत्तं यथापूर्वं जगत्पते ॥ प्रनष्टकलुषे लोके सन्मार्गस्थषु राजसु ॥ ११ ॥ यजत्सु[1] विप्रमुख्येषु तपस्यभिरतेषु च ॥ वार्तासक्तेषु वैश्येषु शुश्रूषुष्वन्त्यजेषु च ॥ १२ ॥ मुदितेषु च लोकेषु त्रैलोक्ये देवसाद्गते ॥ विष्णोर्भागे क्षितिगते[2] कार्तवीर्यार्जुनस्तदा ॥ १३ ॥ दशवर्षसहस्राणि कृतवान्दुश्चरं तपः ॥ प्रयागवनमासाद्य दत्तात्रेयाश्रमं प्रति ॥१४॥ आराधयामास तदा दत्तं शुश्रूषया नृप ॥ तेन दत्तवरश्चक्रे स राज्यं हतकण्टकम् ॥१५॥ आर्यावर्तेषु निम्लेंच्छा कृता तेन वसुन्धरा ॥ तस्मिन्राजनि धर्मज्ञे दैत्यैर्देवनिपातितैः ॥ १६ ॥ संप्राप्तैर्भूमिपालत्वं वसुधा भारपीडिता ॥ नाकपृष्ठं ययौ शीघ्रं शक्रदर्शनलालसा ॥ १७॥ वज्र उवाच ॥ आसाद्य लोकं त्रिदिवेश्वरस्य भारेण खिन्ना वसुधा नरेन्द्रैः ॥ किं तत्र चक्रे वद तन्ममाद्य दृष्ट्वा क्षितिं यच्च चकार शक्रः ॥१८॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे दत्तात्रेयोपाख्यानं नाम पञ्चविंशत्तमोऽध्यायः ॥२५॥ मार्कण्डेय उवाच ॥ नाकपृष्ठगता भूमिर्ददर्श मधुसूदनम् ॥ रत्नासनगतं वीरं श्रिया परमया युतम् ॥ १ ॥ उपास्यमानं त्रिदशैर्भासयन्तं सभां शुभाम् ॥ आदित्यैर्वसुभिः साध्यैर्विश्वेदेवैर्मरुद्गणैः ॥ २ ॥ रुद्रैर्भृग्वङ्गिरोभिश्च नासत्यैश्च महात्मभिः ॥ ऋषिभिः सूर्यसंकाशैस्तपसा द्योतितप्रभैः ॥ ३ ॥ गन्धर्वैरप्सरोभिश्च स्तूयमानं सहस्रशः ॥ किरीटोत्तमसंच्छन्नं हारकेयूरभूषितम् ॥ ४ ॥ रत्नाङ्गदकृतोद्द्योतं रत्नगर्भसमप्रभम् ॥ हरिचन्दनदिग्धांगं नीलाम्बरधरं हरिम् ॥ ५ ॥ तिर्यग्ललाटकेनाऽक्ष्णा तृतीयेन विराजितम् ॥ पश्यन्तं सर्वलोकस्य सततं धर्मकर्मणी ॥ ६ ॥ विष्णोरचिन्त्यमङ्गं तत्त्रैलोक्यस्यैव कारणम् ॥ गोब्राह्मणहितासक्तं ददर्श वसुधा तदा ॥ ७ ॥ सन्ध्यासह समासीनं श्रिया चैव जनार्दनम् ॥ तं ववन्दे वसुमती दैत्यभारभरार्दिता ॥ ८ ॥ पाद्यार्घ्याचमनीयाद्यैः शक्रोऽपि वसुधां तदा ॥ पूजयित्वा[3] सुखासीनां पप्रच्छागमनक्रियाम् ॥ ९ ॥ पृष्टा शक्रेण सा देवी वक्तुं समुपचक्रमे ॥ १० ॥ पृथिव्युवाच ॥ अन्तरिक्षं दिवं यच्च तथैवाऽहं जगत्पते ॥ तवायत्ता महाभाग त्वं हि देवेश्वरो विभुः ॥ ११ ॥ त्वयि भारं समासज्य वेदाभ्यसनतत्परः ॥ सुखमास्ते प्रशान्तात्मा ब्रह्मा शुभचतुर्मुखः ॥ १२ ॥ त्वयि भारं समासज्य देवदेवोऽपि शङ्करः ॥ आस्ते तपस्यभिरतः कैलासे पर्वतोत्तमे ॥ १३ ॥ त्वयि भारं समासज्य सुखं स्वपिति केशवः ॥ क्षीरोदशयने नित्यं शेषपर्यङ्कमास्थितः ॥ १४ ॥ पितामहस्य यत्तेजः केशवस्य शिवस्य च ॥ स्थितं तत्सकलं तुभ्यं त्वं हि सर्वमयोऽरिहा ॥ १५ ॥ त्वया विनिहतो वृत्रो बलश्चापि निषूदितः[4] ॥ त्वया च नाशितः पाकस्त्वया दैत्या निषूदिताः[5] ॥ १६ ॥ ब्रह्मण्यस्त्वं शरण्यस्त्वं प्रणतार्तिविनाशनः ॥ सहस्रनयनः

१ 'जपत्सु' इति ख० । २ 'स्थितिगते' इति क० । ३ 'पूरयित्वा' इति ख० । ४ 'बलश्च विनिषूदितः' इति क० । ५ 'निपातिताः' इति क० ।

श्रीमान्वज्रपाणिर्जगत्प्रियः ॥ १७ ॥ तेजसा तपसा यज्ञैः श्रुतेन च दमेन च ॥ त्वत्तो विशिष्टं लोकेऽस्मिन्न पश्यामि शचीपते ॥ १८ ॥ वेदेषु
सरहस्येषु गीयसे त्वं पुनःपुनः ॥ वेदाः प्रवृत्ता यज्ञार्थं तदर्थं क्रतवस्तथा ॥ १९ ॥ ये हता दानवा युद्धे त्वया शक्र पुनःपुनः ॥ त इमे नृषु
सम्भूताः कार्तवीर्यं समाश्रिताः ॥ २० ॥ तेऽद्य जाता मम विभो पीडयन्ति च मां भृशम् ॥ साऽहं भारसमाक्रान्ता त्वामद्य शरणं गता ॥ २१ ॥
॥ शक्र उवाच ॥ जानामि भारखिन्नां त्वां दैत्येभ्यो वरवर्णिनि ॥ तेषां गत्वा वधोपायमहं प्रष्टास्मि वेधसम् ॥ २२ ॥ मार्कण्डेय उवाच ॥
इत्येवमुक्त्वा त्रिदशप्रधानः पृथ्वीसमेतो गुरुणा च राजन् ॥ ययौ सभां देववरस्य तस्य पितामहस्याप्रतिमस्य वीरः ॥ २३ ॥
इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे पृथ्वीशक्रलोकगमनं नाम षड्विंशतितमोऽध्यायः ॥ २६ ॥ ॥ छ ॥ ॥
॥ मार्कण्डेय उवाच ॥ ॥ ते समेताः समासाद्य पितामहसभां शुभाम् ॥ पद्मासनगतं तत्र ददृशुः पद्मसम्भवम् ॥ १ ॥ पद्मपत्रस
वर्णांगं पद्मबोधसमप्रभम् ॥ चतुर्वक्त्रं चतुर्वेदं चतुराश्रमपूजितम् ॥ २ ॥ चातुर्वर्ण्यधरं देवं चातुर्होत्रप्रवर्तकम् ॥ कृष्णाजिनधरं शान्तं
प्रभुं प्रभवतामपि ॥ ३ ॥ स्वयंभुवमचिन्त्यं च सर्गसंहारकारकम् ॥ तं समासाद्य जगती शक्रश्च गुरुणा सह ॥ ४ ॥ ववन्दुस्ते
महाभागं तुष्टुवुश्च जगत्प्रभुम् ॥ शक्रादय ऊचुः ॥ नमस्ते देवदेवेश सृष्टिसंहारकारण ! ॥ वेदमूर्ते तदाधार यज्ञ यज्ञांग यज्ञप ॥ ५ ॥
यज्ञयोने जगद्योने सर्वसत्त्वाभयप्रद ॥ प्रजापतिपते देव जगद्बीज नमोऽस्तु ते ॥ ६ ॥ स्वयम्भुवे स्वयं कर्त्रे सर्वभूतान्तरात्मने ॥
सर्वभूतवरेण्याय सर्वभूतेश्वराय च ॥ ७ ॥ अचिन्त्यायाऽप्रमेयाय प्रकाशाय महात्मने ॥ त्वमस्य जगतो नाथस्त्वयि सर्वं प्रतिष्ठितम् ॥ ८ ॥
त्वया विना जगत्यस्मिन्नान्यत्किंचन विद्यते ॥ इन्द्रियाणीन्द्रियार्थाश्च तेभ्यः परतरञ्च यत् ॥ ९ ॥ व्यक्ताव्यक्तो जगन्नाथ त्वमेवैकः प्रकीर्तितः ॥
त्वं तपांसि वरिष्ठानि कृच्छ्राणि नियमानि च ॥ १० ॥ कलाः काष्ठा मुहूर्ताश्च कालस्यावयवाश्च ये ॥ कालचक्रं जगच्चक्रं त्वमेकः पुरुषोत्तमः॥ ११॥
त्वमेव वरदो दाता देवः शुभचतुर्मुखः ॥ त्वत्तः प्रसूतौ लोकेऽस्मिन्धर्मरुद्रौ जगत्पते ॥ १२ ॥ भृग्वंगिरा मरीचिस्तु पुलस्त्यः पुलहः क्रतुः ॥
अत्रिश्चैव वशिष्ठश्च त्वया सृष्टा जगत्पते ॥ १३ ॥ सनत्कुमारो भगवान्सनकश्च सनन्दनः ॥ आकृतिश्च रुचिः श्रद्धा त्वया देव विनिर्मिता ॥ १४ ॥

१ 'सर्वतत्त्वाभयप्रद' इति ख० । २ 'सर्वभूतेश्वरात्मने' इति ख० । ३ 'त्वमस्य जगतां नाथ' इति क० । ४ 'नान्यत्किञ्चिन्न' इति क० । ५ 'त्वमेकैकः' इति क० । ६ 'तपसां त्वम्' इति क० । ७ 'काला' इति क० । ८ 'जगत्पती' इति ख० । ९ 'अत्रिर्वसिष्ठश्च तथा' इति ख० ।

पूर्वात्ते वदनाज्जातमृग्वेदममृतप्रभम् ॥ दक्षिणाद्वदनाज्जातं यजुर्वेदं तथैव च ॥ १५ ॥ पश्चिमाद्वदनाज्जातं सामवेदं तथा तव ॥ उत्तराद्वदनाज्जात मथर्वांगिरसं शुभम् ॥ १६ ॥ ब्राह्मणास्ते मुखाज्जाता बाहुभ्यां क्षत्रियास्तथा॑ ॥ ऊरुद्वयात्तथा वैश्याः पद्भ्यां शूद्रास्तथैव च ॥ १७ ॥ विद्युतोऽशनिमेघाश्च रोहितेन्द्रधनूंषि च ॥ त्वत्तः प्रभो प्रसूतानि प्रविशन्ति तथा त्वयि ॥ १८ ॥ स्वयम्भूर्भगवान्विष्णुर्देवदेवः सनातनः ॥ नाममात्रविभेदेन मोहयस्यखिलं जगत् ॥ १९ ॥ त्वत्तेजसा मया दैत्या ये युद्धे विनिपातिताः ॥ ते क्षितौ क्षत्रिया जाताः पीडयन्ति तथा क्षमाम् ॥ २० ॥ तेषां भारेण खिन्नेयं त्वत्सकाशमुपागता ॥ वसुधा वसुधापाल तां त्रायस्व नमोऽस्तु ते ॥ २१ ॥ मार्कण्डेय उवाच ॥ एवं पितामहो देवः स्तुतः शक्रेण धीमता ॥ गुरुणा च संमेतेन पूजयामास तावुभौ ॥ २२ ॥ पूजयित्वा च वसुधां शक्रं वचनमब्रवीत् ॥ व्रजध्वं देवदेवस्य शङ्करस्य महात्मनः ॥ २३ ॥ भुवश्चिकीर्षितं सर्वं निवेदयत मा चिरम् ॥ उपायं क्षत्रियवधे युष्माकं कथयिष्यति ॥ २४ ॥ इत्येवमुक्तास्तु पितामहेन जग्मुस्तदा रुद्रसदः प्रतीताः ॥ शक्रोऽथ देवी च वसुन्धरा च गुरुः सुराणाञ्च स धर्मशीलः ॥ २५ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे ब्रह्मलोकगमनं नाम सप्तविंशतितमोऽध्यायः ॥ २७ ॥

मार्कण्डेय उवाच ॥ रुद्रलोकमथासाद्य ददृशुस्त्र्यम्बकं तदा ॥ वह्निपुञ्जप्रकाशेन जटाभारेण राजितम् ॥ १ ॥ सूर्यभासा तृतीयेन नयनेन च शोभितम् ॥ भालचन्द्रेण शुभ्रेण जटामण्डलशोभिना ॥२॥ व्यालयज्ञोपवीतञ्च नागेश्वरकृतांशुकम् ॥ नीलकण्ठं विशालाक्षं दन्तिचर्मोत्तरच्छदम् ॥ ॥ ३ ॥ उमासहायं वरदं सर्वभूतभवोद्भवम् ॥ नन्दिनानुगतं वीरं प्रमथैश्च सहस्रशः ॥ ४ ॥ नानावक्त्रशिरोग्रीवैर्नानायुधविभूषणैः ॥ तं दृष्ट्वा प्रणतः प्राह शक्रस्तु गुरुणा सह ॥ ५ ॥ शक्र उवाच ॥ नमोऽस्तुदेवदेवेश प्रणतार्तिविनाशन ॥ नीलकण्ठ महाभाग ह्युमाभूषणतत्पर ॥ ६ ॥ गङ्गातरङ्गनिर्धौतजटामण्डलमण्डित ! ॥ शशाङ्कशतसंकाश सूर्यकोटिसमप्रभ ॥ ७ ॥ वामनैर्जटिलैर्मुण्डैः प्रमथैरीड्यसे सदा ॥ तैश्च सार्धं महादेव रमसेऽमितविक्रम ॥ ८ ॥ घोरं हि ब्रह्मचर्यं ते यथा नान्यस्य कस्यचित् ॥ तव लिङ्गार्चनरताः पूयन्ते सर्वकिल्बिषैः ॥९॥ स्मरन्ति ये त्वां सततं ते हि यान्ति परां गतिम् ॥ विष्णोरचिन्त्यभागोऽसि प्रजासंहरणे कृते ॥ १० ॥ सर्वदेवमयो धाता सर्वदेवमयोऽपि च ॥ सर्वदेववरेण्यस्त्वं

---

१ 'क्षत्रियाः स्मृताः इति ख० । २ 'मोहयत्यखिलम्' इति ख० । ३ 'गुरुणाऽनुसमेतेन 'इति ख० । ४ 'निकाशेन' इति ख० । ५ 'बालचन्द्रेण' इति ख० । ६ 'नानायुद्धविभूषणैः' इति ख० । ७ 'नमस्ते' इति ख० । ९ 'सर्वभूतवरेण्यस्त्वम्' इति ख० । 'सर्वभूतविभावितः' इति च ख० ।

सर्वभूतविभावनः ॥११॥ सर्वामरगुरुर्देवः सर्वभूतेश्वरेश्वरः ॥ सर्वदेवो[1] महायोगी महाजयो महाबलः ॥ १२ ॥ महाबुद्धिर्महावीर्यो महातेजा महायशाः ॥
चतुष्पात्सकलो धर्मो वाहनस्ते महावृषः[2] ॥ १३ ॥ श्मशाने वसतिर्नित्य चिताधूमसमाकुले ॥ नृत्यद्भूताकुले भूमेर्भूतिश्वेतानुलेपनः ॥ १४ ॥
भूखार्कवर्चःसलिलयजमानेन्दुवायवः[3] ॥ मूर्त्तयस्ते स्मृता देव याभिर्व्याप्तमिदं जगत् ॥ १५ ॥ त्वया विना जगत्यस्मिन्नान्यत्किञ्चन विद्यते ॥
दैत्यभाराभितप्ताङ्गां पालयस्व नमोऽस्तु ते ॥ १६ ॥ मार्कण्डेय उवाच ॥ एवमुक्तस्तु शक्रेण देवः शक्रमभाषत ॥ कार्तवीर्यमहं त्वाजौ कर्ता
निःक्षत्रियां महीम् ॥ १७ ॥ न शक्तस्त्रिदशश्रेष्ठ[4] यतः स्मर्तास्मि तद्वधम् ॥ विष्णुदत्तवरो राजा सोऽवध्यो मम वासव ॥ १८ ॥ तमेव
प्रार्थयिष्यामि वधं तस्य महात्मनः ॥ सर्वे[5] यात स्वकं स्थानं त्वहमप्यमरेश्वरम् ॥ १९ ॥ चन्द्रमण्डलमध्यस्थं यास्ये वरदमीश्वरम् ॥
विष्णुश्चार्धेन[6] भागेन दत्तात्रेयोऽभवत्क्षितौ ॥ २० ॥ तेन दत्तवरो राजा पालपत्यखिलां महीम् ॥ २१ ॥ इत्येवमुक्तस्त्रिदशेश्वरस्तु देवेन
साक्षात्त्रिपुरान्तकेन ॥ जगाम शीघ्रं स्वपुरं प्रविष्टो मही समादाय गुरुश्च राजन् ॥ २२ ॥ इति श्रीविष्णुधर्मोत्तररे प्रथमखण्डे मार्कण्डेय
वज्रसंवादे हरदर्शनं नामाष्टाविंशतितमोऽध्यायः ॥ २८ ॥ मार्कण्डेय उवाच ॥ गते[7] सुरेश्वरे देवे शक्रे च सपुरोहिते ॥ जगत्याश्च प्रया
तायां देवदेवो महेश्वरः ॥ १ ॥ अङ्गुष्ठमात्रको भूत्वा गङ्गातोये न्यमज्जत ॥ सोऽवगाह्य स्वलोकस्थां गङ्गां सर्वगतां नदीम् ॥ २ ॥
तयोह्यमानः प्रययौ विस्तीर्ण चन्द्रमण्डलम् ॥ नवयोजनसाहस्रो विष्कम्भो यस्य कीर्तितः ॥ ३ ॥ विस्ताराद्द्विगुणश्चैव परिणाहः
समन्ततः ॥ तोयसारमयं पिण्ड पितॄणां धाममध्यगम् ॥ ४ ॥ प्रजानां भावनं सर्वं चाधारं जगतामपि ॥ शरीरिणां शरीरेषु रसं पञ्चात्मकं
स्मृतम् ॥ ५ ॥ आलम्बकं क्लेदकं च तथा चैवावबोधकम् ॥ संघातकं तर्षकं[8]श्च देहिनां देहगोचरम् ॥ ६ ॥ मनःसर्वेन्द्रि
याणाञ्च सर्वेषां नाथकं तथा ॥ ओषधीशं जगद्योनिममृताधारमव्ययम् ॥ ७ ॥ यं पिबन्ति सदा देवाः पितरश्चामृतार्थिनः ॥ यश्चक्षुर्दे

---

१ 'महादेवो महायोगी महामायो महाबलः' इति ख० । २ 'तथा वृषः' इति ख० । ३ 'भूमिवह्न्यर्कसलिलयजमानेन्दुवायवः' इति ख० । किन्त्वत्र महेशस्योक्तास्वष्टसु मूर्तिष्वेकस्य न्यूनता ।
४ 'त्रिदिवश्रेष्ठ' इति ख० । ५ 'सर्वे यात स्वकं स्थानमहमप्यमहेश्वर । चन्द्रमण्डलमध्यस्थं याये वरदमीश्वरम्' इति ख० । ६ 'विष्णोश्चान्द्रेण भागेन' इति ख० । ७ 'गते सुरेश्वरे शक्रे तथा देवपुरोहिते' इति
ख० । ८ 'तर्षणम्' इति ख० ।

वदेवस्य विष्णोर्वा स प्रकीर्तितः ॥८॥ हव्यकव्याशनो देवो भूतात्मा भूतभावनः ॥ प्रविश्य मण्डलं तस्य देवदेवो महेश्वरः ॥९॥तस्य यद्व्यापकं तेजः सूक्ष्ममन्नरसं हि तम् ॥ अङ्गुष्ठमात्रं पुरुषं यं बुधाः के शिवं विदुः ॥ १० ॥ चक्षुर्गोलकमध्यस्था दृक्शक्तिरिव यः स्थितः ॥ चन्द्रगोलकमध्यस्थः पुरुषः स परः स्मृतः ॥ ११ ॥ कर्मसाक्षी स लोकानां स चाधारः परः स्मृतः ॥ आदित्यरश्मयश्चंद्रे तमःसंमूर्च्छितं क्षितौ ॥ १२ ॥ क्षपयिष्यंति यन्नैशं शीतांशुस्तस्य तेजसां ॥ यस्य रूपमनिर्देश्यं यस्य तेजः सुदुःसहम् ॥ १३ ॥ तं तु देववरं दृष्ट्वा तुष्टाव त्रिपुरान्तकः ॥ ईश्वर उवाच ॥ अग्नीषोममयं चैतज्जगदेतत्प्रकीर्तितम् ॥ अग्नीषोमौ जगन्नाथौ देवदेवो जनार्दनः ॥ १४ ॥ तस्याग्नेयी तनुर्या च सोऽहं स च दिवाकरः ॥ सौम्या तु या तनुस्तस्य स भवान् स पितामहः ॥ १५ ॥ त्वयेदं धार्यते सर्वं नान्यत्पश्यामि कारणम् ॥ त्वद्बिम्बे निर्मले पृथ्वी सशैलवनकानना ॥१६॥ शशाकृतिः सदा दृश्या शशलक्ष्माऽसि चानघ ॥ तेनैव कारणेन त्वमुच्यसे मृगलाञ्छनः ॥ १७॥ शशी शशत्वसंबन्धात्सौम्यत्वात्सोम उच्यते ॥ शीतांशुत्वाच्च शीतांशुः निशेशे त्वद्विराजनात् ॥ १८ ॥ नक्षत्रनाथस्तत्स्वाम्याद्राजत्वात्त्वं द्विजेश्वरः ॥ वसन्ति ते पितृगणाः पितृनाथस्ततो भवान् ॥ १९ ॥ बह्वर्थश्चन्द्र इत्येष धातुरुक्तो मनीषिभिः ॥ शुक्लत्वे ह्यमृतत्वे च शीतत्वे ह्लादनेऽपि च ॥२०॥ तेन ते चन्द्रताख्याता सततं धर्मवत्सल ! ॥ सर्वे चाह्लादमायान्ति दृष्टे त्वयि महाद्युते ॥ २१ ॥ प्रजाकार्यं त्वदायत्तं तत्कुरुष्व जगत्प्रभो ॥ दत्तात्रेयत्वमासाद्य त्वया दत्तवरो नृपः ॥२२॥कार्तवीर्यार्जुनो नाम दानवास्तमुपाश्रिताः ॥ सर्वे क्षत्रियतां प्राप्य तद्वधे यत्नवान् भव ॥ २३ ॥ त्वया दत्तवरं हन्तुं नान्यः शक्नोति कश्चन ॥ अवश्यं च त्वया कार्यं देवकार्यं सदा विभो ॥ २४ ॥ मार्कण्डेय उवाच ॥ शंकरेणैवमुक्तस्तु प्रतिपूज्य च शंकरम् ॥ उवाच देवदेवेशं प्रणतार्तिहरं हरम् ॥ २५ ॥ चन्द्र उवाच ॥ इयं शङ्कर सौम्या मे तनुः सुविहिता तव ॥ तस्मादर्कस्थितां गच्छ सा ते कामं करिष्यति ॥ २६ ॥ मार्कण्डेय उवाच ॥ इत्येवमुक्तस्त्रिपुरान्तकारी सोमेन राज्ञा परमेश्वरेण ॥ संपूज्य देवं प्रययौ स शीघ्रं तेजोमयं मंडलमाशु राजन् ॥ २७ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे चन्द्रमण्डलदर्शनं नामैकोनत्रिंशत्तमोऽध्यायः ॥ २९ ॥ ॥ मार्कण्डेय उवाच ॥

---

१ 'यच्चक्षुर्देवदेवस्य विष्णोर्वाम्' प्रकीर्तितः' इति ख० । २ 'केशवम्' इति ख० । ३ 'चक्षुर्गोलकमध्यस्थः कृष्णाक्तिरिव यः स्थितः' इति ख० । ४ 'तमः संमूर्च्छिते' इति खः । ५ 'तेजसः' इति ख० । ६ 'तस्याग्नेये तनुर्या तु सोऽहं सोपि दिवाकरः । सौम्या तुर्या तनुस्तस्य स भवान्मे पितामह' इति ख० । ७ 'विश्वम्' इति ख० । ८ 'त्वद्विबं' निर्ममे पृथ्वी सशैलवनकानना । शशाकृतिः सदा दृश्या येन त्वं शशलक्षणः इति खः । ९ 'स्वमतत्वे' इति ख० ।

 स ददर्श ततो गत्वा विपुलं सूर्यमण्डलम् ॥ चन्द्रमण्डलमानेन मानं यस्य च संस्कृतम् ॥ १ ॥ यत्तत्प्रज्वलितं पिण्डं पिण्डितस्य विभावसोः ॥ 
॥ १७ ॥ देवदेवस्य यद्धाम वासुदेवस्य धीमतः ॥ २ ॥ तस्य धर्मः परं पिण्डं ब्रह्माण्डान्तरदीपनम् ॥ आगारं[1] सर्वभूतानां जठरस्थं हुताशनम् ॥ ३ ॥ 
पञ्चधाऽवस्थितं देहे[2] सर्वेषां प्राणिनां स्मृतः ॥ आलोचकः पाचकश्च रोचको गञ्जकस्तथा ॥ ४ ॥ भ्राजकश्च तथा देवः सर्वेषां प्राणिनां तथा ॥
यन्मयं देहिनां चक्षुर्यश्चक्षुर्दक्षिणस्तथा ॥ ५ ॥ स[3] वै देवातिदेवस्य वासुदेवस्य कीर्तितः ॥ अग्नौ[4] प्रास्ताहुतिः सम्यङ्नित्यं यत्रोपतिष्ठते ॥ ६ ॥
यस्य दत्तं सदा तेजः सर्वेषामेव तेजसा ॥ यस्मादम्बुधरोत्पत्तिर्यस्माद्वर्षणसंभवः[5] ॥७ ॥ यस्मात्प्रवर्तते सर्वं कालचक्रं तथैव च ॥ औषधीनां परः
पाकः परं यस्मान्न विद्यते ॥ ८ ॥ तन्मण्डलमथासाद्य कृत्वा रूपं तु तैजसम् ॥ विवेश मण्डलं भित्त्वा तन्मध्यं शङ्करस्तदा ॥ ९॥ सोऽङ्गुष्ठमात्रं
पुरुषं दृक्छक्तिमिव[6] वेष्टितम् ॥ तैजसं दृष्टवान् रुद्रः तुष्टाव च महाद्युतिः ॥ १० ॥ रुद्र उवाच ॥ त्वां नमस्यामि देवेश तेजसां
तु परं निधिम् ॥ आराध्यस्त्वं वरेण्यस्त्वं सर्वभूतभवोद्भवः ॥ ११ ॥ स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं तथा भवान् ॥ अनन्तश्चा[7]
प्रमेयस्त्वं सूक्ष्मात्सूक्ष्मतरस्तथा ॥ १२ ॥ मया समर्पितं तेजः सकलं त्वयि भास्कर ॥ मत्तस्त्वं न हि भिन्नोऽसि न च देवाज्जनार्दनात् ॥१३॥अहं
विष्णुर्भवान् विष्णुर्ब्रह्मा विष्णुः प्रभाकर ॥ अस्माकं सकलं धाम त्वयि तिष्ठति भास्कर ॥ १४ ॥ धामकार्यं हि क्रियते येनास्य जगतः सदा ॥
प्रजानां तु प्रसवनात्सवितेति निगद्यसे ॥ १५ ॥ रसानाञ्च तथा दानाद्रविरित्यभिधीयसे ॥ आदित्यस्त्वं तथा दानान्मित्रस्त्वं मैत्रभावतः ॥१६ ॥
पुष्णासि सकलाँल्लोकांस्तेन पूषा निगद्यसे ॥ धारणाच्च तथा धाता यमनादर्यमा तथा ॥ १७ ॥ अंशुस्त्वमंशुधारित्वाद्विसर्गाद्वरुणस्तथा ॥ भवः
सौभाग्यर्वाच्यत्वात्त्वष्टा[8] सर्वक्रियाकृतेः ॥ १८ ॥ सर्वजन्तुसमत्वाच्च विवस्वानभिधीयते ॥ क्रमणाच्च तथा विष्णुरीशत्वादिन्द्र उच्यते ॥ १९ ॥
तस्मात्त्वया प्रजाकार्यं कर्तव्यमविचारितम् ॥ स्थावरैर्जंगमस्थैर्वा भूमिर्भाराभिपीडिता ॥ २० ॥ कदाचिज्जङ्गमैर्भूमिः सूर्य[9]भारेण पीडिता ॥
कदाचित्स्थावरैरद्य भारद्वितयपीडिता ॥ २१ ॥ अर्जुने नृपतौ वृद्धिः परा भास्कर[10] शाखिनाम् ॥ दैत्याः क्षत्रियतां प्राप्य पीडयन्ति च
मेदिनीम् ॥ २२ ॥ सूर्य उवाच ॥ तव दर्शनकामेन प्रागेव न कृता मया ॥ स्थावरैर्जङ्गमैः सर्वा प्रकृतिस्थां वसुन्धराम् ॥ २३ ॥ यथा पूर्वं तथैं[11]ऽ 

१ 'आधारम्' इति ख० । २ 'देहं सर्वेषां प्राणिनां तथा' इति ख० । ३ 'सर्वदेवातिदेवस्य' इति ख० । ४ 'अग्नौ प्राताहुतिर्यस्मान्नित्यमेवोपतिष्ठते' इति ख० । ५ 'संश्रयः' इति ख०। ६ 'दृक्छक्तिरिव' इति ख० । ७ 'अनन्यश्चाप्रमेयस्त्वम्' इति ख० । ८ 'सौभाग्यवाचित्वात्' इति ख० । ९ 'भूरिभारेण इति ख० । १० 'आदित्य इति ख० । ११ 'तथैवाहम्' इति ख० ।

द्याहं करिष्यामि महेश्वर ॥ साम्प्रतं ब्राह्मणो भूत्वा चार्जुनेनैव पादपान् ॥२४॥ सर्वान्विनाशयिष्यामि शासनेन तथार्जुनम् ॥ वसिष्ठाद्योजयिष्यामि ततोंशेन वसुन्धराम् ॥२५॥ भृगुवंशे करिष्यामि ततो निःक्षत्रियां प्रजाम् ॥ मार्कण्डेय उवाच ॥ इत्येवमुक्तस्त्रिपुरान्तकारी सूर्येण सद्रश्मिविराजितेन ॥ जगाम धाम स्वमसौ बिभेति यत्सर्वलोकाञ्जगतां प्रधानः ॥ २६ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे आदित्यदर्शनं नाम त्रिंशत्तमोऽध्यायः ॥ ३० ॥ मार्कण्डेय उवाच ॥ द्विजरूपमथास्थाय देवदेवोऽपि भास्करः ॥ माहिष्मतीं ययौ शीघ्रं नगरीं रत्नमालिनीम् ॥ १ ॥ स तत्र ददृशे वीरं कार्तवीर्यार्जुनं नृपम् ॥ यजमानं सुदोर्दण्डं कल्पवृक्षमिवापरम् ॥ २ ॥ पूजितः कृतवीर्येण ब्राह्मणो नृपमब्रवीत् ॥ ३ ॥ ब्राह्मण उवाच ॥ महाशनं मां जानीहि ब्राह्मणं क्षुधयार्दितम् ॥ प्रयच्छ तस्य मे तृप्तिं त्वमेको हैहयोत्तम ॥ ४ ॥ अर्जुन उवाच ॥ केनांऽन्नेन भवत्तृप्तिः किमन्नं विदधामि त ॥ तन्ममाऽऽचक्ष्व भगवन् सुच्छंदेनैव मा चिरम् ॥ ५ ॥ ब्राह्मण उवाच ॥ आदित्यं मां विजानीहि स्थावरान् भोक्तुमुद्यतम् ॥ प्रयच्छ तानि सर्वाणि मम पार्थिवपुंगव ॥ ६ ॥ अर्जुन उवाच ॥ स्थावरं भूगतं दातुं शक्तिर्नाऽस्ति ममाऽनघ ॥ कथं हि स्थावरा दग्धुं शक्या मानुष्यतेजसा ॥ ७ ॥ आदित्य उवाच ॥ रथस्थः पार्थिवश्रेष्ठ शरान्मुंच यदृच्छया ॥ तेष्वहं प्रज्वलंराजन्भक्षयिष्यामि पादपान् ॥ ८ ॥ तावदेव त्वया कार्यं नृपते शरमोक्षणम् ॥ यावन्न प्रज्वलिष्यामि मुक्तेष्वपि शरेष्वहम् ॥ ९ ॥ मार्कण्डेय उवाच ॥ एवमुक्त्वा गते सूर्ये कल्पयित्वा रथोत्तमम् ॥ चिक्षेप स शरान्राजा यत्र तत्र द्रुमोत्करम् ॥ १० ॥ ते क्षिप्ता हैहयेशेन शातकौंभोज्ज्वलाः शराः ॥ जज्वलन्नृपशार्दूल ज्वलयंतो वने द्रुमान् ॥ ११ ॥ दुंदुभिस्वननिर्घोषो विस्फुलिंगगणाकुलः ॥ आलोलार्चिर्महावेगः सर्वसत्त्वभयंकरः ॥ १२ ॥ निदहन् वृक्षपुंजानि तप्तकांचनसुप्रभः ॥ ज्वालामाली तदा भाति सर्वतः पावकः क्षितौ ॥ १३ ॥ वनेषु दह्यमानेषु तापतृष्णार्दिता मृगाः ॥ जलाशयेषु चित्रेषु गतच्छायाग्निकेषु च ॥ १४ ॥ ददाहाग्निस्तदा वृक्षान् यावदिच्छां जगत्पतेः ॥ बभूवाऽथ प्रशांतार्चिः कृत्वा लघ्वीं वसुंधराम् ॥ १५ ॥ न जज्वाल तथा वह्निः कार्तवीर्यशरेष्वपि ॥ कृतकार्यं तदा गत्वा कार्तवीर्यो दिवाकरम् ॥ १६ ॥ विनिवृत्य रथं पश्चाद्यावन्माहिष्मतीं पुरीम् ॥ स गच्छन्नेव ददृशे वसिष्ठं सर्वतेजसम् ॥ १७ ॥ तेन शप्तो

---

१ 'भृगुवंशे करिष्यामि कतु निःक्षत्रियां प्रजाम्' इति ख०। २ 'केनान्नेन भवान् तृप्येत्' इति ख०। ३ 'तन्ममाऽऽचक्ष्व भगवान् स्वदत्तेनैव मा चिरम्' इति ख०। ४ 'वरान्भोक्तुमुपद्यतम्' इति ख०। ५ 'यथेच्छया' इति ख०। ६ 'पादपान्' इति ख० ७ 'यत्र' इति ख०। ८ 'ते क्षिप्त्वा हेमवेशेन' इति ख०। ९ 'तथा' इति कः। १० 'यावदिच्छं' इति ख०। ११ 'साध्वीम्' इति ख०। १२ 'सदृशी' इति ख०।

वने दग्धे स्वकीये नृपपुङ्गवः ॥ यस्मात्त्वया वनं दग्धं मम पार्थिवशासन ! ॥ १८ ॥ तस्माचेच्छिद्यते बाहून् ब्राह्मणः शंसितव्रतः ॥ तेन शापेन
विप्रस्य रामः क्षत्रियनन्दनः ॥ १९ ॥ तस्य बाहुवनं सर्वं चिच्छेद भृगुनन्दनः ॥ २० ॥ वज्र उवाच ॥ रामस्तु कस्मिन्स बभूव वंशे कथञ्च
राज्ञस्तु महाबलस्य ॥ चिच्छेद दोर्दण्डवनं नृवीरः सर्वं ममाऽऽचक्ष्व भृगुप्रधान ॥ २१ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे
वनदाहो नामैकत्रिंशत्तमोऽध्यायः ॥ ३१ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ सर्वदेवातिदेवस्य ब्रह्मणस्तनयो भृगुः ॥ पौलोम्यां जनयामास च्यवनं
भगवान्भृगुः ॥१॥ ययातिजा सुकन्यापि च्यवनाद्भृगुनन्दनात् ॥ आत्मवानं दधीचश्च जनयामास धार्मिकौ ॥२ ॥ ऋषिपत्नी महाभागा चाऽऽत्म
वानस्य नाहुषी ॥ औौर्वं संजनयामास ऋचीकापरसंज्ञितम् ॥ ३ ॥ येन क्रोधाभिभूतेन दृष्टोऽग्निर्वडवामुखः ॥ तस्य सत्यवती भार्या कौशिकी
गाधिजा शुभा ॥ ४ ॥ तस्यां सञ्जनयामास पुत्राणां शतमूर्जितम् ॥ जमदग्निश्च वत्सश्च तेषां श्रेष्ठतमावुभौ ॥ ५ ॥ स्त्रीणां चरुविपर्यासाज्जमदग्नि
रजायत ॥ ६ ॥ वज्र उवाच ॥ कथ्यतांम्मे यतो ब्रह्मन्वाडवस्य च संभवः ॥ संभवं जमदग्नेश्च श्रोतुमिच्छामि तत्त्वतः ॥ ७ ॥ मार्कण्डेय उवाच ॥
भृगूणां हैहयानाञ्च वैरमासीत्सुदारुणम् ॥ धनहेतोस्तदा पापैर्हैहयैर्भृगवो हताः ॥ ८ ॥ येऽपि गर्भगता बालास्तेऽपि तैर्विनिषूदिताः ॥ गर्भेषु हन्य
मानेषु ऋषिः परमदुःखितः ॥ ९ ॥ अरुणं धारयामास गर्भेष्टं दीप्ततेजसम् ॥ पूर्णे काले तदा बाल ऊरुं भित्त्वा व्यजायत ॥ १० ॥ जात
मात्रस्तु चुक्रोध देवतानां महातपाः ॥ हैहयैर्हन्यमानानां बन्धूनां सुमहात्मनाम् ॥ ११ ॥ भवद्भिर्न कृतं त्राणं तस्मात्सर्वाञ्शपाम्यहम् ॥
तं क्रुद्धं पितरो हन्तुं वारयामासुरोजसा ॥१२॥ क्रोधः पुत्र न कर्तव्यः स हि शत्रुर्नृणां सदा ॥ वयं सर्वे जितक्रोधाः क्षत्रियैर्विनिपातिताः ॥१३॥
अस्माकं न वधे शक्ताः क्षत्रिया हैहयाधिपाः ॥ एवमुक्तः पितृगणैर्ऋचीकस्तानथाऽब्रवीत् ॥ १४ ॥ न हि मे शाम्यति क्रोधो युष्मन्निधनका
रितः ॥ तस्माद्देवगणान्सर्वान्निहनिष्यामि तेजसा ॥१५॥ एतस्मिन्नेव काले तु महीतोयसमाकुला ॥ जगाम शरणं विष्णुं सर्वभूतभवोद्भवम् ॥
॥ १६ ॥ श्रीभगवानुवाच ॥ देवान्प्रति समुत्पन्नं क्रोधमौर्वस्य यच्छुभम् ॥ तं प्रविश्य ग्रसिष्यामि तोयं सर्वं वसुन्धरे॥१७॥मार्कण्डेय उवाच॥
इत्येवमुक्ता वसुधामौर्वं क्रोधं समाविशत् ॥ भूत्वा च वडवावक्त्रस्तच्छरीराद्विनिस्सृतः ॥ १८ ॥ न त्रातारो भविष्यन्ति पुत्र सर्वे दिवौकसः ॥

१ 'यस्मात्त्वया वरो दत्तो मया पार्थिवशासन' इति ख० । २ 'औौर्वं स जनयामास ऋचीकमिति संज्ञितम्' इति ख० । ३ 'मयि जः' इति ख० । ४ 'स्त्रीणां चैव विपर्यासात्' इति ख० । ५ 'कथितो मे त्वया ब्रह्मन्' इति ख० । ६ 'उरणाम्' इति ख० । ७ तोयभयाकुला' इति ख० ।

क्रोधश्चाऽयं तव वृथा न भविष्यति पुत्रक ॥ १९ ॥ एवमुक्तस्तु भृगुणा ऋचीकोऽग्निमभाषत ॥ पूर्वोत्तरे समासाद्य समुद्रे वस पुत्रक ॥ २० ॥
पिबँस्तत्र सदा वेगमम्भसां सुमहाद्युते ॥ अस्माकं तु कुले भावी क्षत्रधर्मा द्विजोत्तमः ॥ २१ ॥ क्षत्रियाणां समुच्छेदं यः करिष्यत्यनेकशः ॥
एवमुक्तस्तु पित्रा वै पिबन्मासाष्टकं जलम् ॥ २२ ॥ चैत्रमासं समारभ्य नित्यमास्ते सुखी जले ॥ पीतं मासाष्टकं तोयं जठरे भस्मसाद्गतम् ॥
॥ २३ ॥ फूत्कृत्य मासाँश्चतुरः शिशिराख्ये महीतले ॥ नित्यं हिमौघं सृजति तस्मादपि समीरणः ॥२४ ॥ हिमाचले पातयति प्रवाहो नाम
पार्थिव ॥ एषा तोयाद्धिमोत्पत्तिर्हिमतौ यस्य संभवः ॥ २५ ॥ वृद्धिक्षयविहीनस्य कथितं तव धार्मिक ॥ २६ ॥ उत्पत्तिरेषा तव
वाडवाग्नेः प्रोक्ता मया भूमिपतिप्रधान ॥ श्रुत्वाऽपि यां मुञ्चति मोहजालं संसारजातेश्च यथा प्रबुद्धः ॥ २७ ॥ इति श्रीविष्णु
धर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे वडवाग्न्युत्पत्तिर्नाम द्वात्रिंशत्तमोऽध्यायः ॥ ३२ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ और्वस्य भार्या
धर्मज्ञा नाम्ना सत्यवती शुभा ॥ वने पर्यचरद्भक्त्या गाधिजा भृगुनन्दनम् ॥ १ ॥ तस्याः परमया भक्त्या भर्ता तोषमुपागतः ॥ उवाच
तां वरारोहामृचीको भृगुनन्दनः ॥ २ ॥ ॥ ऋचीक उवाच ॥ ॥ वरं वरय सुश्रोणि यत्ते मनसि वर्तते ॥ तोषितोऽहं त्वया भद्रे वने
शुश्रूषया वदं ॥ ३ ॥ सत्यवत्युवाच ॥ मातुः प्रयच्छ मे पुत्रं भगवन्वीर्यवत्तरम् ॥ पुत्रं मम च धर्मज्ञं युतं ब्राह्मणतेजसा ॥ ४ ॥ ऋचीक
उवाच ॥ चरुद्वयं करिष्यामि मातुरर्थे तथा तव ॥ यस्य संप्राशनात्पुत्रं त्वं चैव जनयिष्यसि ॥ ५ ॥ मार्कण्डेय उवाच ॥ एवमुक्त्वा तदा चक्रे
ऋचीकस्तु चरुद्वयम् ॥ एकस्मिन्सकलं क्षात्रं तेजश्चक्रे सवैष्णवम् ॥ ६ ॥ श्वश्र्वर्थे तं चरुं कृत्वा द्वितीये स न्यवेशयत् ॥ ब्राह्मं रौद्रञ्च यत्तेजः
पत्न्यर्थे कृतवांश्चरुम् ॥७॥ ऋचीक उवाच ॥ अयं प्राश्यस्त्वया भद्रे त्वयं मात्रा चरुस्तव ॥ अश्वत्थालिङ्गनं कार्यं मात्रा तत्र तदा शुभे ॥८॥
तथैवौदुम्बरस्याऽपि त्वया राजीवलोचने ॥ ९ ॥ मार्कण्डेय उवाच ॥ एवमुक्ता ततो गत्वा मात्रे सर्वं न्यवेदयत् ॥ १० ॥ ततस्तामब्रवीन्माता
गाधेः पत्नी यशस्विनी ॥ ध्रुवं भगवता पुत्रस्तव पुत्रचिकीर्षया ॥ ११ ॥ श्रेष्ठतेनं तेजसा युक्तश्चरुरेष कृतः शुभे ॥ तस्माच्चरुविपर्यासं मदर्थे
कुरु मा चिरम्॥१२॥ अलिङ्गने विपर्यासं द्रुमयोः क्रियतां तथा ॥ सा मातुर्वचनं सर्वं चक्रे गौरवयन्त्रिता ॥१३॥ सगर्भा स गते काले भर्ता

१ 'समुद्रेण स पुत्रक' इति ख० । २ ' चैत्रमासात्समारम्य नित्यमास्ते सुखे जले' इति ख० । ३ 'हिमाचम्' इति क० । ४ 'संसारजातश्च यशःप्रबुद्धः ' इति ख० । ५ 'तस्याः स परया भक्त्या' इति ख० ६ । 'ददे' इति ख० । ७ 'अश्वत्थे तं चरुं कृत्वा' इति ख० । ८ 'भागवतः' इति ख० । ९ 'स्वेनैव' इति ख० । १० 'सगर्भा चागते' इति ख० ।

वचनमब्रवीत् ॥ १४ ॥ ऋचीक उवाच ॥ ध्रुवं चरुविपर्यासो द्रुमयोश्च त्वया कृतम् ॥ येन त्वमसितापाङ्गि युक्ता क्षत्रियतेजसा ॥ १५ ॥
ब्राह्मेण तेजसा युक्तं कृतवानस्मि ते चरुम् ॥ मातुस्ते चारुसर्वांगि तथा क्षत्रियतेजसा ॥ १६ ॥ कृतं चरुविपर्यासं सा विप्रं जनयिष्यति ॥
क्षत्रधर्मरतं पुत्रं विप्रं त्वं जनयिष्यसि ॥१७॥ सत्यवत्युवाच॥ मातुर्मतात्कृतमिदं भगवन्क्षन्तुमर्हसि ॥ क्षत्रधर्मरतः पुत्रो न मे भवितुमर्हति ॥
॥ १८ ॥ ऋचीक उवाच ॥ एवमस्तु न ते पुत्रः क्षत्रधर्मा भविष्यति ॥ पौत्रस्त्ववश्यं भविता भाव्यर्थविधिचोदितः ॥ १९ ॥ सत्यवत्युवाच ॥
सर्वेश्वरत्वं भगवन्किमर्थं पौत्रस्य मे क्षत्रियभावमुग्रम् ॥ निवर्तितुं नेच्छसि मातुलेन वदस्व तन्मे यदि ते न गुह्यम् ॥ २० ॥ इति श्रीविष्णुध
र्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे चरुविपर्यासो नाम त्रयस्त्रिंशत्तमोऽध्यायः ॥ ३३ ॥ ऋचीक उवाच ॥ ब्रह्मणोऽत्रिः सुतः सौम्यः
सुतस्तस्याऽपि चन्द्रमाः ॥ सोमस्य तु बुधः पुत्रो बुधपुत्रः पुरूरवाः ॥ १ ॥ श्रुतायुस्तनयस्तस्य पुत्रस्तस्यापि नग्नजित् ॥ तस्याऽपि काञ्चनः
पुत्रः सुहोत्रस्तस्य चाऽऽत्मजः ॥ २ ॥ तस्य जह्नुः स्मृतः श्रीमान्येन गङ्गा तु जाह्नवी ॥ सुव्रतस्तनयस्तस्य चालर्कस्तस्य चात्मजः ॥ ३॥
तस्य पुत्रो बलाकश्च कुशिकस्तस्य चाऽऽत्मजः ॥ महोदयपुरवरे स तु नित्यं कृतालयः ॥ ४ ॥ एतस्मिन्नेव काले तु श्वसुरः च्यवनस्तव ॥
स्ववंशसंकरं बुद्ध्वा कुशिकेभ्यो महायशाः ॥५॥ कुशिकानां समुच्छित्त्यै कुशिकं नृपतिं ययौ॥ पूजितः कुशिकेनापि कुशिकं वाक्यमब्रवीत्॥६॥
राजन्वक्ष्यामि कार्यं ते यदि शुश्रूषसे नघ ॥ सभार्येण च कर्तव्यं राजञ्छुश्रूषणं त्वया ॥७॥ कुशिक उवाच ॥ स्वमेवेदं तव गृहं यथेष्टं वस भार्ग
व॥ शक्तितस्तव शुश्रूषां करिष्ये भार्यया सह॥८॥ ऋचीक उवाच॥ गृहोषितं तं च्यवनं शुश्रूषुरनहंकृतः॥ पूजयामास सततं सर्वकामसमृद्धिभिः॥९॥
बहुसख्यान्दिनगणांश्च्यवनो नावबुद्ध्यति ॥ निराहारः सभार्यस्तं पर्युपास्ते महीपतिः ॥ १० ॥ अकाले प्रार्थयत्यन्नं कदाचिदपि दुर्लभम् ॥
कृतमित्येव तद्राजा निवेदयति सत्वरम् ॥११॥ कदाचिद्बहु भुंक्तेऽन्नं न भुङ्क्ते दिवसान्बहून् ॥ धनेन च तदीयेन तर्पयामास वै द्विजान् ॥ १२ ॥
कदाचिद्दीपयत्येव वह्निं तातगृहोद्भवम् ॥ कदाचिच्च रथे युक्तं सभार्यो राजपुङ्गवम् ॥ १३ ॥ राजमार्गे प्रतोदेन तुदन्यति यथेच्छया॥ तस्याऽसौ
हितमेवेदं कर्मणा मनसा गिरा ॥ १४ ॥ समाचरति यत्नेन भार्गवप्रियकम्यया ॥ यदा न वृजिनं किंचिद्दृष्टवांस्तस्य भार्गव ॥ १५ ॥ तदा



१ 'ब्राह्मेण तेजसा युक्तः कृतवानस्मि ते चरुः' इति क० । २ 'मातुर्मतात्कृतमिदम्' इति ख० । ३ 'को हेतुर्यदि' इति ख० । ४ 'राज्ये शुश्रूषणं त्वया' इति ख० । ५ 'प्रार्थयत्यन्नम्' इति ख० ।
६ 'बहुभुक्तोऽन्नम्' इति ख० ।

तस्य वरं प्रादाद्वरं यन्मनसेप्सितम् ॥ १६ ॥ च्यवन उवाच ॥ वरं वरय भद्रं ते प्रसन्नोऽहं तवानघ ॥ निर्व्याजं तेऽनया राजन्सेवयाऽनघया सदा ॥ १७ ॥ कुशिक उवाच ॥ यदि मे त्वं प्रसन्नोऽसि भृगूणां वंशवर्धन ॥ वंशो ब्राह्मणतां यातु वरमेतद्वृणोम्यहम् ॥ १८ ॥ च्यवन उवाच ॥ एतदेव ध्रुवं भावी नन्मां वरयसे नृप ॥ अस्मद्वंशानुवंशस्य ब्राह्मण्यं ते भविष्यति॥१९॥ तव वंशकृतोऽस्माकं क्षत्रधर्म्मो द्विजोत्तमः॥ भविष्यति नरेन्द्रेन्द्र चैतत्सुविदितं मम ॥ २० ॥ एतज्ज्ञात्वा समुत्सेधं चिकीर्षुः स्वकुलस्य ते ॥ विकारैः क्रोधनार्थं ते गृहेऽहमवसं चिरम् ॥ २१॥ विकारं न ततो दृष्टं मया भाव्यर्थचोदितम् ॥ तन्मास्मातुस्त्वया प्राप्तं वरमेतत्सुदुर्लभम् ॥२२॥ कुशास्यनामा पुत्रस्ते भविताऽति स्वधार्मिकः ॥ तस्यापि भविता पुत्रो गाधिरित्येव विश्रुतः ॥ २३ ॥ विश्वामित्रः सुतस्तस्य ब्राह्मण्यमुपलप्स्यति ॥ कृत्वा वैरं वसिष्ठेन तपसा महता नृप ॥ २४ ॥ स्त्रीणां चरुविपर्यासाद्विश्वामित्रस्य संभवः ॥ अस्मद्वंशानुभविता निर्वृत्तो भव पार्थिव ॥ २५॥ यत्ते विनाशितं दग्धं भविता तद्विशेषवत् ॥ भार्यया सहितश्चैव जराहीनो भविष्यसि ॥२६॥ एवमुक्त्वा गते विप्रे राजा पूर्णमनोरथः ॥ उवाच सुमुखीं भद्रे जराशोक विवर्जिताम् ॥२७ ॥ एतत्सुनेत्रे च्यवस्य वाक्यं कस्याऽस्ति शक्तिर्भुवि मानवस्य ॥ कर्तुं मृषा तेन वरोरुमध्ये पौत्रस्तवोग्रो भविता नृलोके ॥ ॥ २८ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे कुशिकवरप्रदानं नाम चतुस्त्रिंशत्तमोऽध्यायः ॥ ३४ ॥ मार्कण्डेय उवाच ॥ एवमुक्ता सत्यवती काले पूर्णे द्विजोत्तमम् ॥ जनयामास धर्मज्ञं जमदग्निं तपोधनम् ॥ १ ॥ ततश्च जनयामास वात्स्यं भृगुकुलो द्वहम् ॥ ततोष्टनवतिं पुत्रान्गोत्रकारान्पृथक्पृथक् ॥ २ ॥ गाधेरपि तदा भार्या जनयामास पुत्रकम् ॥ विश्वामित्रमिति ख्यातं युतं ब्राह्मणतेजसा ॥ ३ ॥ जितो युद्धे वसिष्ठेन मन्युना यः स पार्थिवः ॥ ब्राह्मण्यं तपसा लेभे धर्मात्मा संशितव्रतः ॥४॥राजा प्रसेनजिन्नाम सुतां तस्याऽथ रेणुकाम् ॥ पत्न्यर्थे प्रतिजग्राह जमदग्निर्महातपाः ॥ ५ ॥ सा तं वनगतं भक्त्या नित्यं पर्यचरद्वने ॥ कदाचिदथ घर्मतौ मध्यं प्राप्ते दिवाकरे ॥ ॥ ६ ॥ क्रीडार्थं प्रास्यति चिरं जमदग्निर्महातपाः ॥ क्षिप्तान्क्षिप्ताः शरास्तेन रेणुका चारुलोचना ॥ ७ ॥ आनयामास धर्मज्ञा भर्तुर्वचनकारिणी ॥ अथाऽर्कतापसंतप्ता दह्यमानांघ्रिपङ्कजा ॥ ८ ॥ पुष्पितस्य च वृक्षस्य छायामासाद्य विष्ठिता ॥ विश्रम्य तु मुहूर्तं सा भर्तुर्निन्ये शरोत्तमम् ॥९॥ तां प्राप्तां कुपितो भर्ता जमदग्निरभाषत ॥ क्रीडतो मे शरैर्भद्रे विघ्नं किं कृतवत्यसि ॥१०॥ न बिभेषि च मां भद्रे त्वथ वाप्य

१ 'वंशे कृते' इति ख०। २'एतज्ज्ञात्वा समुच्छेदं चिकीर्षुः स्वाकुलस्य ते' इति ख०। ३'कुशाम्बनामा' इति ख०।४'ब्राह्मेण तेजसा' इति ख०। ५'घर्मान्ते' इति ख०। ६'पुष्पितस्य शारीरस्य' इति ख०।

वमन्यसे ॥ ११ ॥ रेणुकोवाच ॥ अर्काग्नितापसंतप्ता क्षणमात्रं महाव्रत ॥ अपारयंती विश्रान्ता तस्मात्त्वं क्षन्तुमर्हसि ॥ १२ ॥
॥ मार्कण्डेय उवाच ॥ ॥ रेणुकाया वचः श्रुत्वा जमदग्निर्महातपाः ॥ जातरोषस्तदा सूर्ये सायकान्क्षेप्तुमुद्यतः ॥ १३ ॥ एत
स्मिन्नेव काले तु विप्ररूपो दिवाकरः ॥ शीघ्रमागम्य तेजस्वी जमदग्निमभाषत ॥ १४ ॥ सूर्य उवाच ॥ ॥ स्वभाव एष मे ब्रह्मन्
यदहं दहनात्मकः ॥ वर्ततश्च स्वभावेन न मे त्वं क्रोद्धुमर्हसि ॥ १५ ॥ पुत्रस्तेऽहं भविष्यामि त्वस्यामेव द्विजोत्तम ॥ सुरकार्यं
करिष्यामि लोकानाञ्च हितं महत् ॥ १६ ॥ इयञ्च पत्नी धर्मज्ञा रेणुका तव सांप्रतम् ॥ छत्रोपानहमेतन्मे गृह्णातु वरवर्णिनी ॥ १७ ॥
तस्याऽनुकम्पया छत्रं तथा ब्रह्मन्नुपानहौ ॥ मया सृष्टौ[1] जगत्यस्मिन्नित्यमेव भविष्यतः ॥ १८ ॥ छत्रोपानहयोर्दानं लोके श्रेष्ठं भविष्यति ॥ छत्रोपा
नहदानेन नरः स्वर्गं गमिष्यति[2] ॥ १९ ॥ एवमुक्तस्तु सूर्येण जमदग्निर्महातपाः ॥ संपूज्य सूर्यं जग्राह सवितुः सकलं वचः ॥ २० ॥ ततः सूर्ये
गते देवी सूर्यपुत्रा[3] पुरा सती ॥ पुत्रं कनीयसं रामं जनयामास रेणुका ॥ तमन्वावसुषेणश्च वसुर्विश्वावसुस्तथा ॥ २१ ॥ तेषां जघन्यजो रामो
विष्णुर्मानुषरूपधृक् ॥ २२ ॥ अंशेन[4] जाते भुवि देवदेवे सुनिर्वृता भूमिरथो बभूव ॥ हतांश्च मेने दितिजप्रजातां पीडां नृणां स्वस्य च सा धरित्री[5]
॥ २३ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे रामोत्पत्तिर्नाम पञ्चत्रिंशत्तमोऽध्यायः ॥ ३५ ॥ मार्कंडेय उवाच ॥ ॥
अथ बाल्यं समुत्तीर्णो रामो भृगुकुलोद्वहः ॥ शुश्रूषमाणः पितरं नित्यमास्ते महायशाः ॥ १ ॥ एतस्मिन्नेव काले तु रामे वनगते तदा ॥ आजगाम
महातेजा राजा चित्राङ्गदो वनम् ॥ २ ॥ विहर्तुं सह रामाभिर्देवराजसमद्युतिः ॥ तं दृष्ट्वा रेणुका चक्रे स्पृहां भोगेषु भामिनी ॥ ३ ॥ जगाम
मनसा तं सा राजानं कामसन्निभम् ॥ तस्मिन्नेव क्षणे सा तु भ्रष्टा ब्राह्मणतेजसा ॥ ४ ॥ गतश्रियं तु तां दृष्ट्वा जमदग्निर्महातपाः ॥
पुत्रानुवाच तान्क्रोधाद्धन्यतां जननी स्वका[6] ॥ ५ ॥ ते विचार्य ततः सर्वे मातुर्गौरवमुत्तमम् ॥ नैव चक्रुः पितुर्वाक्यं
तान्छशाप स भार्गवः ॥ ६ ॥ यूयं तिर्यक्सधर्माणो नष्टसंज्ञा भविष्यथ ॥ इध्मभारमुपादाय रामो रतिकरः पितुः[7] ॥
॥ ७ ॥ अथाऽऽश्रममनुप्राप्तः पिता[8] तं समचोदयत ॥ जहीमां मातरं क्षुद्रां राम मा त्वं चिरं कृथाः ॥ ८ ॥ एवमुक्तः स पित्रा तु तद्वाक्य

१ 'सृष्टैव' इति ख० । २ 'परं स्वर्गं भविष्यति' इति ख० । ३ 'सुतपुत्रा' इति क० । ४ 'अनेन' इति क० । ५ 'कृतश्च मेने सकलं च कामं हतांश्च मेने दितिजप्रधानान्' इति ख० । ६ 'स्वयम्' इति ख० । ७ 'प्रभुः' इति ख० । ८ 'पितरम्' इति क० ।

समनन्तरम् ॥ शिरश्चिच्छेद तीक्ष्णेन रामः परशुना तदा ॥ ९ ॥ तुतोषाथ पिता तस्य ततो धर्मभृतां वरः ॥ १० ॥ जमदग्नि
रुवाच ॥ स्वच्छन्दमरणं पुत्र तुष्टे त्वं मयि लप्स्यसे ॥ यावच्च वैष्णवं तेजस्त्वयि तिष्ठति पुत्रक॥ ११॥तावदेव न ते युद्धे कश्चिज्जेता भविष्यति॥
भविष्यति च धर्मात्मा रामो दशरथात्मजः ॥ रघुवंशे समुत्पन्नो विष्णुर्मानुषरूपधृक् ॥ १२ ॥ यदा समेष्यते तेन तदा वैष्णवतेजसा ॥ कृतकर्मा
विमुक्तस्त्वं स च युक्तो भविष्यति ॥ १३ ॥ ततः परं त्वया पुत्र न कार्यं शस्त्रधारणम् ॥ आर्तत्राणमृते वीर स्त्रीब्राह्मणकृतेऽथ वा ॥ यथेप्सितं
चाऽप्यपरं वरं वरय पुत्रक ॥ १४ ॥ राम उवाच ॥ गुरुश्रेष्ठ समुत्थानं जनन्याः कथयाम्यहम् ॥ अस्मृतिश्च तथा तस्यां भ्रातॄणाञ्च तथा
ऽस्मृतिम् ॥१५॥ जमदग्निरुवाच ॥ एवमस्तु महाभाग तपसा महता तथा ॥ समाराधय देवेशं शङ्करं नीललोहितम्॥ १६॥ मार्कण्डेय उवाच ॥
एवमुक्ते समुत्तस्थौ रेणुका चारुहासिनी ॥ रामस्य भ्रातरः सर्वे मुक्तशापास्तथैव ते ॥१७॥ पित्रा रामस्तथोक्तस्तु हिमवत्यचलोत्तमे ॥ तपस्तेपे
महातेजा रुद्राराधनकाम्यया ॥ १८ ॥ एतस्मिन्नेव काले तु देवाः सेन्द्रपुरोगमाः ॥ सैंहिकेयभयत्रस्ताः शङ्करं शरणं गताः ॥ १९ ॥
॥ देवा ऊचुः ॥ ॥ भगवन् देवदेवेश प्रणतार्तिविनाशन ॥ सैंहिकेयैर्वयं सर्वैः स्थानेभ्यस्त्ववरोपिताः ॥ २० ॥ सैंहिकेयानथाऽऽश्रित्य
दैत्याः शतसहस्रशः ॥ सर्वे वसन्ति सततं तेषां यत्नं वधे कुरु ॥ २१ ॥ ॥ महादेव उवाच ॥ ॥ शृण्वन्तु देवताः सर्वा
दानवा देवकण्टकाः ॥ रामेणाऽऽहं वधिष्यामि नरबुद्ध्या यतस्तु तान् ॥ २२ ॥ मार्कण्डेय उवाच ॥ गतेषु देवसंघेषु देवदेवः पिनाकभृत् ॥
आहूय भार्गवं राममिदं वचनमब्रवीत् ॥ २३ ॥ महादेव उवाच ॥ सैंहिकेयान्दुराचारानसुराञ्जहि पुत्रक ॥ समर्थस्तान्भवान्हन्तुं नाऽन्यः
कश्चन विद्यते ॥ २४ ॥ राम उवाच ॥ अस्त्रग्रामं समग्रं मे प्रयच्छ भगसूदन ॥ येन तान्सुदुराचारान्घातयिष्यामि दानवान् ॥ २५ ॥ महा
देव उवाच ॥ किं तवास्त्रैर्भृगुश्रेष्ठ विष्णुस्त्वं नासि मानुषः ॥ व्यस्त्रस्याऽपि न ते शक्ता योद्धुं प्रमुखतस्तव ॥२६॥ राम उवाच ॥ घातयिष्याम्यहं
सर्वान्सैंहिकेयान्दुरासदान् ॥ त्रिपुरारे महाभाग त्वदाज्ञापरिबृंहितः ॥ २७ ॥ मार्कण्डेय उवाच ॥ इत्येवमुक्तस्त्रिपुरान्तकेन रामस्त्रिनेत्रप्रतिम
प्रभावः ॥ आदाय तीक्ष्णं परशुं जगाम यत्र स्थितास्ते च रिपुप्रधानाः ॥ २८ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे रामस्य
महेश्वरादेशो नाम षट्त्रिंशत्तमोऽध्यायः ॥ ३६ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ एतस्मिन्नेव काले तु काष्ठोदर्काः सुदारुणाः ॥ बभूवुः सुमहो

१ 'समनन्तरम्' इति क० । २ 'तुतोषाथ ततस्तस्य पिता धर्मभृतां वरः' इति ख० । ३ 'भृगुश्रेष्ठ' इति ख० । ४ 'युद्धे' इति क० । ५ 'सुदारुणान्' इति ख० ।

 

त्पाताः सैंहिकेयनिवेशने ॥ १ ॥ चचाल शब्दं कुर्वाणा मही सवनकानना ॥ पपात महती चोल्का मध्येनाऽऽदित्यमण्डलात् ॥ २ ॥ अपर्वणि शशाङ्कार्कौ संछन्नौ तमसा तथा ॥ प्रवृष्टाश्च तथा रक्तं भूरि मेघा भयावहम् ॥ ३ ॥ शस्त्राणि मुमुचुर्धूममसकृदश्रुवाहनाः ॥ इन्द्रचापसवर्णेन परिवेशेन भास्करः ॥ ४ ॥ परिविष्ट उभे सन्ध्ये चन्द्रश्च सकलां निशम् ॥ सैंहिकेयो विपत्न्योपि सालवस्य सुमहात्मनः ॥ ५ ॥ आक्रम्य जन्मनक्षत्रं केतुस्तस्थौ महाग्रहः ॥ ववुस्तीक्ष्णा महावाताः क्षोभयन्तो दिशो दश ॥ ६ ॥ भानुश्चाऽऽसीत्कबन्धाङ्को मृगाश्चासन्नसस्वनाः ॥ न्यलीयन्त ध्वजाग्रेषु दानवानां दुरात्मनाम् ॥७॥ क्रव्यादपक्षिसंघाता ह्यपसव्यं भयानकाः ॥ शुष्केन्धनसमृद्धोऽपि न जज्वाल हुताशनः ॥८॥ वपूंषि दानवेन्द्राणां न प्राकाशंत यादव ॥ उष्णशीतविपर्यास ऋतूनामप्यदृश्यत ॥ ९ ॥ प्रसुस्तुवुर्द्रुमा रक्तं व्यशीर्यन्त च भूषणाः ॥ खरा गोषु व्यजायन्त मार्जारा मूषिकासु च ॥ १० ॥ अकाले पुष्पिता वृक्षा अकाले फलिता द्रुमाः ॥ विना वर्षं महानद्यः प्रतीपं जग्मुरोजसा ॥ ११ ॥ भयानकाञ्जातभयः सुघोरानुत्पातसंघान्प्रसमीक्ष्य राजा ॥ सालवः समाहूय भृगोस्तस्नूजं दैत्यैः समेतोऽथ चकार मन्त्रम् ॥ १२ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवाद औत्पातिकं नाम सप्तत्रिंशत्तमोऽध्यायः ॥ ३७ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ रत्नचित्रां सुविपुलां समासाद्य सभां तदा ॥ सिंहिकातनयः सालवः शुक्रं वचनमब्रवीत् ॥ १ ॥ सालव उवाच ॥ दृश्यन्त एते भगवन्नुत्पाता घोरदर्शनाः ॥ आचक्षाणा महायुद्धं विनाशमपि दारुणम् ॥ २ ॥ रिपुं न चैव पश्यामो येन युद्धं भविष्यति ॥ सर्वज्ञत्वाद्भवान्वेत्ति तन्नः प्रब्रूहि पृच्छताम् ॥ ३ ॥ शुक्र उवाच ॥ आराध्य देवं ब्रह्माणं तपसा सिंहिका पुरा ॥ त्रिदशेभ्यो ह्यवध्यत्वं स्वसुतानामलब्ध सा ॥ ४ ॥ वरदानकृतोत्साहैर्भवद्भिर्विद्यया मम ॥ निर्जितास्त्रिदशाः सर्वे शंकरं शरणं गताः ॥ ५ ॥ तेन युष्मद्वधार्थाय विष्णुर्मानुषरूपधृक् ॥ जमदग्निसुतो रामः प्रेषितो रणकर्कशः ॥ ६ ॥ सदा देवो महातेजा मानुषं स तु साम्प्रतम् ॥ मनुष्याच्च भयं घोरं बुद्ध्यस्वाऽसुरसत्तम ॥ ७ ॥ सालव उवाच ॥ भगवन् सर्वदेवानामीश्वरो मधुसूदनः ॥ तस्मात्परतरं देवं नाऽन्यं कञ्चन शुश्रुम ॥ ८ ॥ किमर्थं स महातेजाः शंकरस्य महात्मनः ॥ आज्ञाकारी भृगुश्रेष्ठ सैंहिकेयं जिघांसति ॥९॥ शुक्र उवाच ॥ यदा यदा हि धर्मस्य ग्लानिर्भवति दानव ॥ अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजत्यसौ ॥१०॥ कदाचिद्दैत्यदेवेषु कदाचिन्मनुजेषु च ॥ कदाचिदथ तिर्यक्षु ज्ञात्वा कार्यबलाबलम् ॥ ११ ॥ यदा भवति देवेषु देववच्चेष्टते तदा ॥ तिर्यक्षु च यदा 

१ 'मध्येनादित्यमण्डलम्' इति ख० । २ 'शस्त्राणि मुमुचुर्धूमं सकृदश्रु च वाहनः' ख० । ३ 'जन्तूनाम्' इति क० ।

देवस्तिर्यग्वच्चेष्टते तदा ॥ १२ ॥ यदा भवति मानुष्ये तदा भवति मर्त्यवत् ॥ मानुष्यं रूपमासाद्य तपसा त्रिपुरान्तकम् ॥ १३ ॥ आराधयामास
हरं स्वदेहे परमं नृप ॥ स तु देववरस्याज्ञां पुरस्कृत्य महातपाः ॥ १४ ॥ युष्मद्वधार्थमायाति रामेण कृतलक्षणः ॥ तस्माच्छक्रेण संधानं भवतो
मम रोचते ॥ १५ ॥ त्रिविष्टपश्च देवानां भवत्वसुरसत्तम ॥ पातालनिलया यूयं निवसध्वं गतज्वराः ॥ १६ ॥ अहं निवारयिष्यामि शंकरेण च
भार्गवम् ॥ अन्यथा निविशध्वं च मनुष्येण निराकृताः ॥ १७ ॥ मार्कण्डेय उवाच ॥ एवमुक्तास्तु शुक्रेण बुद्धा दैतेयदानवाः ॥ ऊचुर्वाक्यं सुसं
रब्धाः शुक्रं भृगुकुलोद्वहम् ॥१८॥ दैत्या ऊचुः ॥ एकत्राऽधिष्ठितं सर्वं जगत्स्थावरजंगमम् ॥ यद्यस्मात्प्रतियुध्येत न भीस्तत्राऽपि विद्यते ॥१९॥
ते कथं मानुषाद्भीता नाकं त्यक्ष्याम शत्रवे ॥ शंकरं तं विजेष्यामो येनाऽसौ प्रेषितो द्विजः ॥ २० ॥ शुक्र उवाच ॥ एकत्र
पिंडितं सर्वं जगत्स्थावरजंगमम् ॥ एकत्र भगवान्विष्णुर्जगतः सोऽतिरिच्यते ॥ २१ ॥ स न शक्यो युधा जेतुं नैव देवो
महेश्वरः ॥ ते यूयं प्राकृतीं बुद्धिं त्यक्त्वा सर्वे महासुराः ॥ संधिं कुरुत देवेन शक्रेणाऽमित्रघातिना ॥ २२ ॥ शक्रकार्ये सदोद्युक्तो
देवदेवो जनार्दनः ॥ येन दैत्या विनिहताः पूर्वे पूर्वतराश्च ये ॥ २३ ॥ शंबरो नमुचिः शम्बुः कार्तवीर्यः कृतागमः ॥ हिरण्यक
शिपुः केशी हिरण्याक्षो मदोत्कटः ॥ २४ ॥ मधुश्च कैटभश्चैव विटो धूम्रोऽतिऽकोपनः ॥ हयग्रीवो निसुन्दश्च सुन्दश्चन्द्रार्कलोचनः ॥ २५ ॥
चन्द्रार्कमर्दनश्चैव चन्द्रहर्ता रणप्रियः ॥ सूर्यशत्रुर्जितामित्रो यज्ञहा यज्ञतापनः ॥ २६ ॥ मेघनादो महारोमा मेघवादो भयानकः ॥ दशग्रीवः
शतग्रीवो महाग्रीवश्च दानवः ॥२७॥ कालकः कालकेयश्च कालनेमि सुलोचनः ॥ कालश्च कालकल्पश्च मकराक्षो जनान्तकः ॥ २८ ॥ अन्तः केशंस
नो भीमो देवान्तकनरान्तकौ ॥ क्रोधहा बहुनेत्रश्च महाकालो जलान्तकः ॥२९॥ एकलव्यः स चाधारो दुर्मुखो दुर्धरो वडिः ॥ इन्दुतापनरम्भौ
च रणचण्डहरप्रियौ ॥ ३० ॥ किरीटी गजवक्त्रश्च महासालो विलोहितः ॥ ह्रादानुह्रादप्रह्रादवृक्षरक्षरदारुणाः ॥ ३१ ॥ शतभः शलभश्चैव
कूपनश्च महासुरः ॥ विप्रचित्तिः शिवः शङ्कुरयः शङ्कुस्तथैव च ॥ ३२ ॥ अयःशिरा अश्वशिरा भीमदक्षो गुहाशयः ॥ वेगवान्केतुमानुग्रः
सोग्रविग्रो महासुरः ॥ ३३ ॥ पुष्करः पुष्कलश्चैव साल्वोश्वपतिरेव च ॥कुम्भो निकुम्भः शतदा संग्रहो गगनप्रियः ॥ ३४ ॥ एते चाऽन्ये
च विख्याता दैतेयाः समरोद्धताः ॥ सर्वे लब्धवराः शूराः सर्वे च गतमन्यवः ॥ ३५ ॥ सर्वैस्त्रिदशराज्यानि कारितानि बलोद्धतैः ॥ ते

१ 'तस्य' इति ख० । २ 'कृतागरः' इति ख० । ३ 'मेघनादो महारोमोद्धधी मेघो भयानकः' इति ख० । ४ 'कालकम्पश्च' इति ख० । ५ 'श्च तथा' इति ख० ।

हतास्तेन देवेन वासवप्रियकाम्यया ॥ ३६ ॥ केचिन्मनुष्यरूपेण तिर्यग्रूपेण चाऽपरे ॥ केचिच्च देवरूपेण निहता भूरितेजसा ॥ ३७ ॥
साल्व उवाच ॥ जानामि तस्य माहात्म्यं देवदेवस्य शार्ङ्गिणः ॥ अहं स्वमरणं मत्वा तेन योत्स्यामि भार्गव ॥ ३८ ॥ विशिष्टान्मरणं श्रेष्ठं न
हीनाद्[1]विजयो रणे ॥ विष्णोः करविनष्टानां भूयो राज्यं भविष्यति ॥ ३९ ॥ मार्कण्डेय उवाच ॥ इत्येवमुक्तस्त्वसुराधिपेन भृगुप्रधानो भगवान्
स शुक्रः ॥ ज्ञात्वा स दैत्यान्सकलान्विनष्टाञ्जगाम काष्ठामपरामभीष्टाम् ॥ ४० ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्र
संवादे शुक्रसाल्वसंवादो नामाऽष्टात्रिंशत्तमोऽध्यायः ॥३८॥ मार्कण्डेय उवाच ॥ एवमुक्ता गते शुक्रे गविष्ठो वाक्यमब्रवीत् ॥ राजञ्छुक्रस्य वचनं
क्रियतामविचारयन्॥१॥ स्वप्ना हि सुमहाघोरा दृश्यन्ते भयवर्धनाः ॥ भवतां हि विनाशाय रात्र्यन्ते सततं विभो ॥२॥ भवान्स्वप्ने मया दृष्टो रक्त
स्रगनुलेपनः ॥ उष्ट्रेण शिशुमारेण वराहेण तथा व्रजन्॥३॥ तैलाक्ताश्चापरे दैत्याः खरयानमुपाश्रिताः ॥ पतन्तः पर्वता दृष्टा राजँस्ते भयकार
णम्॥४॥केचित्कृष्णांबरधराः[2] केचित्कुसरभोजिनः॥ केचित्पङ्कगता दृष्टाः केचिद्भस्मशया गताः॥५॥केचिद्विवस्त्रया नार्या कृष्यन्ते दक्षिणां दिश
म् ॥काचिद्रक्ताम्बरा नारी नीयते दक्षिणां दिशम्॥६॥ केचिन्नृत्यन्ति भूपाला हसन्ति च तथाऽपरे ॥ केचिन्मुण्डा मया दृष्टाः केचित्काषायवा
ससः ॥ ७॥ चण्डालस्कन्धगाः केचित्केचित्किंशुकसंस्थिताः ॥ गजाश्वपत्तिसैन्येन सर्वेण च भवान्वृतः ॥ ८ ॥ वापीं सुकलुषां प्राप्य निमग्नो
गोमये ह्रदे ॥ राजश्रीश्च मया दृष्टा शक्रालिङ्गनतत्परा ॥ ९ ॥ तस्य मे रोचते सन्धिस्तव शक्रेण पार्थिव ॥ प्राणान्रक्षत भो राजञ्जीवन्भ
द्राण्युपाश्नुते ॥ १० ॥ साल्व उवाच ॥ यदैव भगवान्विष्णुः श्रुतः शत्रुर्मयाऽनघ ॥ तत्रैव देव तच्छ्रुत्वा राज्यं त्यक्तं तथा मया ॥ ११ ॥
इष्टं यज्ञैस्तपस्तप्तं राज्यं कृतमकण्टकम् ॥ मूर्ध्नि स्थितममित्राणां सुहृदः परिपालिताः ॥ १२ ॥ [3]धृतो भृत्यजनः सर्वः कृतकृत्यास्ततो वयम् ॥
गोविन्दान्मरणं प्राप्य भूयो राज्यं भविष्यति ॥ १३ ॥ मार्कण्डेय उवाच ॥ इत्येव वाक्यं तु निशम्य राज्ञो मेने तदा युक्ततमं गविष्ठः ॥
तूष्णीं बभूवाऽथ सुनिश्चितात्मा मेने च दैत्यान्समरे विनष्टान् ॥ १४ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे
स्वप्नाध्यायो नामैकोनचत्वारिंशत्तमोऽध्यायः ॥ ३९ ॥ मार्कण्डेय उवाच ॥ एतस्मिन्नेव काले तु साल्वस्य च महात्मनः ॥ शीर्षमात्रावशिष्टस्तु[4]
ददृशे चाग्रजस्य च ॥ १ ॥ राहुरित्येव विख्यातः पूजयामास तं नृपः ॥ यथार्हं पूजितो राज्ञा निषण्णो वाक्यमब्रवीत् ॥ २ ॥

१ 'नेतरात्' इति ख० । २ 'केचित्कृष्णाम्बरा दृष्टा' इति ख० । ३ 'भृतो' इति ख० । ४ 'भ्रातुर्ज्येष्ठः स दृश्यते' इति ख० ।

राहुरुवाच ॥ न हि मे रोचते वैरं विष्णुना प्रभविष्णुना ॥ यस्य क्रोधादनङ्गोऽहं जातः परबलार्दनः ॥ ३ ॥ प्रसादाच्च तथा यस्य ग्रहत्वमुपलब्धवान् ॥ किमन्यैः कीर्तितैस्तस्य कर्मभिस्तेऽसुरात्मज ॥ ४ ॥ साल्व उवाच ॥ भगवञ्छ्रोतुमिच्छामि कथं तेन महात्मना ॥ अनंगस्त्वं कृतो वीर ग्रहेशश्च कथं कृतः ॥ ५ ॥ राहुरुवाच ॥ अमरत्वमभीप्संतः पुरा देवा सवा सवाः............केशवं शरणं गताः ॥ ६ ॥ देवा ऊचुः ॥ भगवन् देवदेवेश जगतामार्तिनाशन ॥ निर्विशेषा वयं मर्त्यैस्त्राता तत्राऽस्तु नो भवान् ॥ ७ ॥ श्रीभगवानुवाच ॥ क्षीरोदमथने यत्नं त्रिदशाः कर्तुमर्हथ ॥ दानवैः सहिता भूत्वा ततः श्रेयोऽप्यवाप्स्यथ ॥ ८ ॥ राहुरुवाच ॥ एवमुक्ताः सुराः सर्वे देवदेवेन शार्ङ्गिणा ॥ दानवैः सहिता भूत्वा ममन्थुर्वरुणालयम् ॥ ९ ॥ साहाय्यमकरोत्तेषां तत्र कर्मणि पार्थिव ॥ विना विष्णुसहायेन न शक्ताः ससुरासुराः ॥ १० ॥ अनन्तः स ततो भूत्वा चांशः संकर्षणस्य च ॥ उत्पाट्य मंदिरं दोर्भ्यां चिक्षेप पयसां निधौ ॥ ११ ॥ अकूपारे ततो भूत्वा कूर्मरूपी जनार्दनः ॥ मन्दरं धारयामास क्षीराब्धिगतमञ्जसा ॥ १२ ॥ स्वेनैव तेजसा नागं तथा संयोज्य वासुकिम् ॥ चक्रे स नेत्रतां तत्र तत्र कर्मणि दानव ॥ १३ ॥ ततो ममन्थुः सहसा समुद्रं देवदानवाः ॥ यतो मुखं ततो दैत्या यतः पुच्छं ततः सुराः ॥ १४ ॥ वासुकेरभवद्दैत्या मथ्यमाने महोदधौ ॥ मुखञ्च नागराजस्य करेण धृतवान्स्वयम् ॥ १५ ॥ आकाशाभिमुखं कृत्वा देवदेवो जनार्दनः ॥ मुखे निःश्वासवातेन सविषेण हि भूपते ॥ १६ ॥ अन्यथा दैत्यसंघानां विनाशमभविष्यत ॥ हिमाचलाभाः काल्लोलाः क्षीराब्धेर्गगनस्पृशः ॥ १७ ॥ उत्पेतुर्मथ्यमानस्य बलिभिर्देवदानवैः ॥ १८ ॥ शृङ्गाणि निपतन्ति स्म मन्दरस्य महोदधौ ॥ रत्नचित्राणि रम्याणि शतशोऽथ सहस्रशः ॥ १९ ॥ द्रुमाश्च शतशः पेतुर्मृगाः पेतुः सहस्रशः ॥ त्रैलोक्यं पूरयन्नादै रराास पयसां निधिः ॥ २० ॥ क्षीरकल्लोलवसनः श्वेतमेघकृतांशुकः ॥ राजते मन्दराद्रिस्स नानाधातुविभूषितः ॥ २१ ॥ चलन्मेघांशुको घूर्णन्नृत्यर्थं वायुपूरितैः ॥ गुहामुखैः सप्रणतं गिरिर्मत्तैरिवार्णवः ॥ २२ ॥ निर्झराश्रुर्महानादः शृङ्गोच्छ्रितमहाभुजः ॥ अनिशं स गिरिश्रेष्ठः स्थानहान्येव रोदिति ॥ २३ ॥ देवोपभोग्यान्सकलान्महान्त इति चिन्तयन् ॥ वाद्यत्सु देववाद्येषु नृत्यतीव स मन्दरः ॥ २४ ॥ एवं हि मथ्यमानस्य क्षीराब्धेः सुमहात्मनः ॥ प्रादुर्भूतं विषं घोरं कालानलसमप्रभम् ॥ २५ ॥ येन प्रोद्भूतमात्रेण विषण्णा देवदानवाः ॥

१ 'सहायम्' इति ख०। २ 'अंशात्' इति ख०।

 तत्पपौ भगवाञ्छंभुस्त्रैलोक्यहितकाम्यया ॥२६॥ विषे कण्ठमनुप्राप्ते नीलकण्ठत्वमागतः ॥ धारयामास तत्कण्ठे शोभार्थं सुरवारितः ॥ २७ ॥ 
 ततश्चन्द्रकला जाता त्रैलोक्यस्यैव सुन्दरी ॥ जटाजूटेन तां चक्रे देवदेवो महेश्वरः ॥ २८ ॥ रश्मिज्वालावलीपुञ्जविभासितजगत्त्रयम् ॥ 
वैडूर्यकौस्तुभं जातं यं बभार हृदा हरिः ॥ २९ ॥ वातरंहो महाकायः शशाङ्कसदृशच्छविः ॥ उच्चैःश्रवाह यो जातस्स च देवानुपाश्रितः ॥ ३० ॥
ततः सुरा समुत्पन्ना सा च पीता महासुरैः ॥ ततस्त्वप्सरसो जाता देवरामा मनोरमाः ॥ ३१ ॥ देवी लक्ष्मीस्ततो जाता रूपेणाऽप्रतिमा
शुभा॥३२॥ यस्याः शुभौ तामरसप्रकाशौ पादाम्बुजौ स्पृष्टतलाङ्गुलीकौ ॥ जङ्घे शुभे रोमविवर्जिते च गूढास्थिकं जानुयुगं सुरम्यम् ॥ ३३ ॥
सुवर्णदण्डप्रतिमौ तथोरू चाभोग्यरम्यं जघनं घनं च ॥ मध्यं सुवृत्तं कुलिशोदराभं वलित्रयं चारु शुभं दधानम् ॥३४॥ उत्तुङ्गमाभोगि समं
विशालं स्तनद्वयं चारुसुवर्णवर्णम् ॥ बाहू सुवृत्तावतिकोमलौ च करद्वयं पद्मदलाग्रकान्ति ॥ ३५ ॥ कण्ठश्च शङ्खाग्रनिभं सुरम्यं पृष्ठं समं चारु
सिराविहीनम् ॥ कर्णौ शुभौ चारुशुभप्रमाणौ[1] सम्पूर्णचन्द्रप्रतिमश्च वक्त्रम् ॥ ३६ ॥ कुन्देन्दुतुल्या दशनास्तथोष्ठौ प्रवालकानां प्रतिपक्षभूतौ ॥
स्पष्टा च नासा चिबुकं च रम्यं कपोलयुग्मं शशितुल्यकान्ति ॥ ३७ ॥ उन्निद्रनीलोत्पलसन्निकाशं त्रिवर्णमाकर्णिकमक्षियुग्मम् ॥ शिरोरुहाः
कुञ्चितनीलदीर्घा वीणेव वाणी मधुरा शुभा च ॥ ३८॥ वस्त्रे सुसूक्ष्मे विमले दधाना चन्द्रांशुतुल्येऽतिमनोभिरामे ॥ श्रोत्रद्वयेनाप्यथ कुण्डले च
संतानकानां शिरसा च मालाम् ॥ ३९ ॥ गङ्गाप्रवाहप्रतिमश्च हारं कण्ठेन शुभ्रं दधती सुवृत्तम् ॥ ४० ॥ तथाङ्गदौ रत्नसहस्रचित्रौ हंसस्वनौ
चाऽप्यथ नूपुरौ च ॥४०॥ करेण पद्मं भ्रमरोपगीतं वैडूर्यनालश्च शुभं गृहीत्वा ॥ स्वरूपमूढेषु सुरासुरेषु दृष्टिं ददौ चारुमनोभिरामा ॥४१॥सा
देवसंघानसुरांश्च दृष्ट्वा ददर्श देवं जगतां प्रधानम् ॥ देवासुरेभ्यस्त्वतिरिक्तरूपं सूर्यायुताभं भुवनेष्वजेयम् ॥४२॥ उन्निद्रनीलनलिनद्युतिचारुवर्णं
संतप्तहाटकनिभे वसने वसानम् ॥ दृष्ट्वैव जातपुलकोद्गममात्रकम्पा क्षीराब्धिजा मदनबाणवशं जगाम ॥ ४३॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे
मार्कण्डेयवज्रसंवादे समुद्रमथने लक्ष्मीसमुद्भवो नाम चत्वारिंशत्तमोऽध्यायः ॥४०॥ राहुरुवाच ॥ सा कामबाणाभिहता समीक्ष्य मधुसूदनम् ॥
स्वयं वृतवती नाथं भर्तारमपराजितम् ॥१॥ प्रकृतिस्सा विनिर्दिष्टा पुरुषः पुरुषोत्तमः ॥ तया वियुज्यते नाऽसौ कदाचिदपि शत्रुहा ॥२॥ शंकरः 
पुरुषः प्रोक्तः प्रकृतिः पार्वती स्मृता ॥ पुरुषः पाकहा प्रोक्तः प्रकृतिश्च तथा शची ॥३॥ हुताशनश्च पुरुषः स्वाहा च प्रकृतिः स्मृता ॥ यमश्च

१ 'कर्णौ शुभौ चारुतरौ प्रमाणौ' इति ख० ।

पुरुषः प्रोक्तो धूम्रोर्णा प्रकृतिः स्मृता ॥ ४ ॥ विरूपाक्षश्च पुरुषः प्रकृतिर्निर्ऋतिः स्मृता ॥ वरुणः पुरुषः प्रोक्तो गौरी च प्रकृतिस्तथा ॥ ५ ॥
वायुश्च पुरुषो ज्ञेयः प्रकृतिश्च तथा शिवा ॥ पुरुषश्च धर्मो वृक्षस्तद्विश्वप्रकृतिः स्मृता ॥ ६ ॥ चन्द्रमा पुरुषः प्रोक्तो ज्योत्स्ना च प्रकृतिस्तथा॥
धर्मश्च पुरुषः प्रोक्तः प्रकृतिश्च करीषिणी ॥ ७ ॥ यज्ञश्च पुरुषः प्रोक्तो दक्षिणा प्रकृतिस्तथा ॥ दिवसः पुरुषः प्रोक्तो प्रकृतिश्च तथा निशा ॥ ८ ॥
आकाशः पुरुषः प्रोक्तः प्रकृतिश्च तथा मही ॥ ॐकारः पुरुषः प्रोक्तः सावित्री प्रकृतिः स्मृताः ॥९॥ प्रकृतिः सा शुभा लक्ष्मीर्विष्णुः पुरुष उच्यते ॥
सा सदेहा विदेहा सा सगुणा निर्गुणा च सा ॥ १० ॥ तया सर्वमिदं व्याप्तं त्रैलोक्यं सचराचरम् ॥ सा कान्तिः सा धृतिः सा श्रीः सा प्रभा च
सनातनी ॥ ११ ॥ सा निद्रा सा शुभा वाणी सा च देवी सरस्वती ॥ रतिः प्रीतिः क्षितिर्द्यौश्च सा गंगा सा सरस्वती ॥ १२ ॥ तुष्टिः पुष्टिर्वपुः
प्रज्ञा स्वधा मेधा सरस्वती ॥ सैव नद्यः शुभा सर्वाः सैव देवी वनस्पती ॥ १३ ॥ सा वास्तुदेवता दीक्षा सा शक्तिर्वैष्णवी स्मृता ॥ बुद्धिर्लज्जा
धृतिः शान्तिः सुधा शोभा जया त्विरा ॥ १४ ॥ सिनीवाली कुहू राका त्वेवं चानुमतिः शुभा ॥ कात्यायनी भद्रकाली सुप्रभा विजया तथा ॥
॥ १५ ॥ अदितिर्दितिर्दनुः काला खशायुः सिंहिका मुनिः ॥ कद्रूः क्रोधा त्विरा प्रावा विनता सुरभिः खगा ॥ १६ ॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधा क्षमा
श्रद्धा क्रिया रतिः ॥ अनसूया सती भूतिर्विभूतिर्वारुणी तथा ॥ १७ ॥ अरुन्धती वसुर्जामी लोभा भानुररुन्धती ॥ संकल्पा च महूर्ता च
साध्या विश्वा तथैव च ॥ १८ ॥ मृगा च मृगमन्दा च हरिभद्रा ध्रुवा त्विडा ॥ भूता च कपिला दंष्ट्री सरमा सुरमा तथा ॥ १९ ॥ राजश्रीर्भूमि
पालानां ब्रह्मश्रीस्तद्विदां शुभा ॥ पुष्पश्रीः काननानां सा जयश्रीर्जयिनां रणे ॥ २० ॥ स्वर्गश्रीः स्वर्गतानां सा दीक्षा सा यज्ञयाजिनाम् ॥ बुद्धि
र्बुद्धिमतां देवी क्षमा देवी क्षमावताम् ॥ २१ ॥ शिखा वह्नौ प्रभा सूर्ये ज्योत्स्ना चन्द्रे प्रकीर्तिता ॥ कान्तिस्तारागणस्योक्ता सा सिद्धिः सर्वकर्म
णाम् ॥ २२ ॥ सहस्रनेत्रजा दृष्टिः सहस्रनयनस्य सा ॥ उपत्यका पर्वतानां फलश्रीः सा च शाखिनाम् ॥ २३ ॥ महोदधेश्च सा वेला नक्षत्राणाञ्च
कृत्तिका ॥ धनुर्लता च मन्त्राणां हेतीनां चाप्यसेर्लता ॥ २४ ॥ गान्धारी सर्वविद्यानां वृष्टिः सा जगतीतले ॥ कार्षकाणां तथा सीता सस्य
शोभा महीतले ॥ २५ ॥ मदलेखा च नागानां भोगिनाञ्च फणावली ॥ रत्नावली च शेषस्य धृतिर्भूमण्डलस्य सा ॥ २६ ॥ सा स्थिता सततं
चन्द्रे बिल्वे नीलोत्पले वृषे ॥ कुञ्जरे तुरगे सिंहे खड्गे च विमले शुभे ॥ २७ ॥ चामरे व्यजने छत्रे भृंगारे गोमये वने ॥ सहस्रकिरणे सूर्ये

१ 'प्रकृतिस्तथा' इति ख० । २ 'कीर्तिः इति ख० । ३ 'क्षितिः प्रीतिरतिर्द्यौश्च' इति ख० । ४ 'खशा'इति ख० । ५ 'सुधा' इति ख० ।

शक्रे वैश्रवणे यमे ॥ २८ ॥ कमले रजते हेम्नि शंखे भद्रासने शुभे ॥ गोमूत्रे सर्पिषि क्षीरे दध्नि क्षीरफलेषु च ॥ २९ ॥ वरुणे च जलाध्यक्षे समुद्रेषु जलेषु च ॥ कुसुमेषु च शुक्लेषु प्रासादेषु सितेषु च ॥ ३० ॥ हुताशने प्रज्वलिते पार्थिवे चारुशोभिते ॥ रत्नेषु च विचित्रेषु तथैवामलकेषु च ॥ ३१ ॥ यथा व्याप्तं जगत्सर्वं देवदेवेन शार्ङ्गिणा ॥ तथा व्याप्तं जगत्सर्वं राजन् क्षीराब्धिकन्यया ॥ ३२ ॥ स्वायंभुवेऽन्तरे देवी भृगोः सा दुहिता स्मृता ॥ स्वारोचिषे तथा जाता सैव देवी हुताशनात् ॥ ३३ ॥ औत्तमस्यान्तरे जाता सलिलाद्विमलाच्छुभा ॥ तामसस्यान्तरे राजन् भूतलात्सा समुत्थिता ॥ ३४ ॥ बिल्वात्समुत्थिता देवी रैवतस्यान्तरे तथा ॥ उत्फुल्लकमलोद्भूता चाक्षुषेऽपि तथान्तरे ॥ ३५ ॥ वैवस्वतेऽन्तरे जाता तथैवाऽमृतमन्थनात् ॥ क्षीराब्धिजातां तां प्राप्य हृदयेन जनार्दनः ॥ ३६ ॥ दधार दुर्धरां देवीं त्रैलोक्ये तमृते प्रभुम् ॥ आदाय साऽमृतं शुद्धं शुभमर्ककमण्डलुम् ॥ ३७ ॥ एतस्मिन्नन्तरे जातो वैद्यो धन्वन्तरिस्तथा ॥ अमृते जातमात्रे तु दैत्यसंघाः समाकुलाः ॥ ॥ ३८ ॥ धन्वन्तरिमथोन्मथ्य परिभूय च देवताः ॥ अमृतं च समादाय जग्मुर्दैत्या निवेशनम् ॥ ३९ ॥ हृतामृतान्देवगणान्विपानानाश्वास्य[1] देवो भुवनस्य गोप्ता ॥ स्थाने च विन्यस्य गिरीन्द्रमुख्यं जगाम देवोऽसुरनाथवेश्म[2] ॥ ४० ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादेऽमृतमन्थनं नामैकचत्वारिंशतत्तमोऽध्यायः ॥ ४१ ॥ ॥ राहुरुवाच ॥ ॥ बभूव नारी कल्याणी स देवो मधुसूदनः ॥ अनिर्देश्यवयोरूपा सर्वलक्षणपूजिता ॥ १ ॥ समांगुलितलौ श्लक्ष्णौ रक्ततुंगनखौ शुभौ ॥ बिभृते चरणौ शुभ्रौ गूढगुल्फौ मनोहरौ ॥ ॥ २ ॥ जंघे मनोहरे शुभ्रे स्पष्टे लोमविवर्जिते ॥ गूढसंध्यस्थिके श्लक्ष्णे जानुनी च तथा शुभे ॥ ३ ॥ ऊरू करिकराकारौ कदलीदलकोमलौ ॥ घनमाभोगि जघनं मध्यं कुलिशसन्निभम्[3] ॥ ४ ॥ त्रिवलीत्रिपथाधारिनाभीपुष्करमण्डितम् ॥ गूढस्फिके समे पार्श्वे समं पृष्ठं मनोरमम्[4] ॥ ५ ॥ समौ सुसंहतौ पीनौ कोमलावग्रचूचुकौ ॥ आभोगिनौ मण्डलिनौ स्तनौ कनकसन्निभौ ॥ ॥ ६ ॥ मृणालसदृशौ बाहू करौ कोमलकोमलौ ॥ कम्बुतुल्यं शुभं कण्ठं चोन्नता च कृकाटिका ॥ ७ ॥ मुखं पूर्णेन्दुसंकाशं द्विजाः कुन्दसमप्रभाः ॥ अधरौ विद्रुमाकारौ नासा स्पष्टमनोरमा ॥ ८ ॥ मधूकपुष्पसंकाशौ कपोलौ ललिताबुभौ ॥ भ्रूर्युग्मं[5] कामचापान्तसदृशं सुमनोहरम् ॥ ९ ॥ नातिप्रलम्बौ श्रवणौ नात्यचारू च कुण्डलौ ॥ चिबुकं च मनोहारि ललाटं शशिसुप्रभम् ॥ १० ॥



१ 'विषण्णान्' इति ख० । २ 'दैत्याधिपनाथवेश्म' इति ख० । ३ 'सन्निभम्' इति ख० । ४ 'मनोहरम्' इति ख० । ५ 'भ्रूयुगम्' इति ख० ।

कृष्णमध्ये सुरक्तान्ते नयने श्वेतभूमिके ॥ नीलोत्पलदलाकारे दीर्घे चाऽतिमनोरमे[1] ॥ ११ ॥ कोकिलाऽलिकुलाकारं भिन्नाञ्जनचयप्रभम् ॥ केशपाशं तथा किंचिद्दधार कुटिलं शुभम् ॥ १२ ॥ चन्द्ररश्मिप्रकाशेन वस्त्रयुग्मेन भूषिता ॥ १३ ॥ रूपेणाप्रतिमा राजन्सर्वालंकारभूषिता ॥ यत्रयत्र पदन्यासं करोति गजगामिनी ॥ १४ ॥ तत्र तत्रैव वसुधा सपद्मेवोपलक्ष्यते ॥ यत्रयत्राऽतिमधुरां दृष्टिं क्षिपति भामिनी ॥ १५ ॥ सितासितोत्पलैस्तत्र किरतीव वसुंधराम् ॥ यत्रयत्र स्थिता भाति देशे कनकवर्णिनी ॥ १६ ॥ तत्र तत्रैव सौवर्णं सा करोति नभस्तलम् ॥ तां दृष्ट्वा चारुसर्वांगीं मन्मथाविष्टचेतसः ॥ १७ ॥ प्रह्लादरहिताः सर्वे बभूवुर्दानवास्तदा ॥ पादयोः पृथिवीं तस्या धृतिं देवीं च जङ्घयोः ॥ १८ ॥ जानुभ्यां च तथा क्षान्तिं कान्तिमूरुयुगे शुभे ॥ आयतिं नियतिं लक्ष्मीं वेलां तु जघने तथा ॥ १९ ॥ मध्ये वाहां सतीं पृष्ठे पार्श्वयोश्च सुधां मुखे ॥ रतिं प्रीतिं कुचयुगे कण्ठे वाणीं तथैव च ॥ २० ॥ जयां च विजयां चैव करयोर्भुजयोस्तथा ॥ शोभां प्रभां वक्षसि च श्रियं देवीं मनोरमाम् ॥ २१ ॥ अरुन्धतीं च चिबुके जिह्वायां च सरस्वतीम् ॥ ज्योत्स्नां कपोलयोर्देवीं निद्रां नेत्रयुगे तथा ॥ २२ ॥ केशपाशे तथा रात्रिं दिशः श्रोत्रयुगे तथा ॥ भद्रकालीं ललाटे च नासायां च तथा शचीम् ॥ २३ ॥ सर्वाङ्गसन्धिगा नद्यो लोमस्वथ वनस्पतिम् ॥ पार्श्वयोः पर्वताश्चैव दैत्येशः सर्वदेवताः ॥ २४ ॥ दृष्टवान्स्त्रीतनुं तत्र प्रह्लादोऽरिकुलान्तकः ॥ विश्वरूपधरां दृष्ट्वा प्रह्लादस्तां च योषितम् ॥ २५ ॥ विष्णुं मत्वा विशालाक्षीं ज्ञात्वा चैवाऽमृतार्थिनीम् ॥ कामार्त्तदैत्यानुमतः प्रह्लादो दैत्यसत्तमः ॥ २६ ॥ प्रददावमृतं तस्यै प्रणिपत्य प्रसाद्य च ॥ स्त्रीरूपमास्थितैर्देवैस्त्रैलोक्यं सचराचरम् ॥ २७ ॥ स्त्रीचेष्टमभवत्सर्वं तस्मिन्काल उपस्थिते ॥ उवाच सा स्त्री प्रह्लादं दैत्य त्वममृतं विना ॥ २८ ॥ ब्राह्ममेकमहः सौम्य जीवितान्न विमोक्ष्यसे ॥ योद्धुमभ्युदिता दैत्यदेवैर्दितिजकारणात् ॥ २९ ॥ न प्रबोध्यास्तमोयुक्तास्त्वया दैत्य जनार्दनाः ॥ भक्तोसि मे सदा वत्स सदैव विजितेन्द्रियः ॥ ३० ॥ तेन ते दर्शिता सौम्य प्रकृतिर्या परा मम ॥ इत्येवमुक्त्वा प्रह्लादं सोममादाय सत्वरा ॥ ३१ ॥ कामार्त्तान्दितिजाँस्त्यक्त्वा जगाम सुरमन्दिरम् ॥ स्त्रीरूपं तत्र संत्यज्य देवरूपमुपाश्रितः ॥ ३२ ॥ पाययामास तत्सर्वं सुरान्सर्वान्समाहितान् ॥ मयाऽपि मध्ये देवानां पीतं तत्सूर्यरूपिणा ॥ ३३ ॥ आदित्यरूपे दैत्योऽयं ज्ञातोऽहं शशिभास्करैः ॥ निवेदितश्च देवाय तेनाऽपि लघुकारिणा ॥ ३४ ॥ चक्रेण पातितं वत्स सभुजं मस्तकं मम ॥ अमृतप्राशनात्प्राणै

१ 'मनोहरे' इति ख० ।

नवियुक्तोऽस्मि दानव ॥ ३५ ॥ न मे कण्ठादधोभागमागतं मम चक्रिणा ॥ शिरच्छिन्नं महाराज तत्र प्राणास्ततः स्थिताः ॥ ३६ ॥ शिरस
श्छेदनादीनं मां दृष्ट्वा मधुसूदनः ॥ जातानुकम्पो भगवानिदं वचनमब्रवीत् ॥ ३७ ॥ पीतामृतस्य दैत्यस्य मरणं नाऽस्ति कर्हिचित् ॥ मम
हस्तविनष्टानां गतिर्भवति शोभना ॥ ३८ ॥ अमरत्वं त्वमासाद्य वरं वरय कांक्षितम् ॥ ततो मयोक्तो भगवान्प्रणम्य मधुसूदनः ॥
॥ ३९ ॥ लभेयातां हि सोमार्कौ मत्तो देव पराभवम् ॥ पूजाञ्च प्रार्थये लोकाद्ग्रहत्वञ्च जनार्दन ॥ ४० ॥ एवमुक्तः स भगवा
न्मामुवाच तदा[1] हरिः ॥ ग्रहस्त्वं भविता दैत्य पूजां चैवोपलप्स्यसे ॥ ४१ ॥ पर्वकाले च संप्राप्ते चन्द्रार्कौ छादयिष्यसि ॥ ४२ ॥ तमो
मूर्त्तिरदृश्यश्च विपरीतं चरिष्यसि ॥ भूमिच्छायागतश्चन्द्रं चन्द्रगोऽर्कं च दानवः ॥४३॥ यस्योदयिष्यसि यदा तदा भागमवाप्स्यसि ॥ स्नाने
जाप्ये तथा होमे दाने श्राद्धे सुरार्चने ॥ ४४ ॥ पुण्यः स कालो भविता नित्यमेवाऽसुरेश्वर ॥ एवमुक्त्वा स भगवांन्तत्रैवान्तरधीयत ॥४५॥ पीत
शेषमथादाय सोमं सुरगणेश्वरः ॥ सुरलोके सन्निहितं चकार बलवृत्रहा ॥४६॥ मच्छीर्षपाताभिविवृद्धकोपा हताऽमृता दैत्यगणाः समस्ताः ॥ व्यर्थश्रमा
देवगणान्निहन्तुं सन्नद्धसैन्याः प्रययुस्तदानीम् ॥४७॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादेऽमृतविभागो नाम द्विचत्वारिंशत्तमो
ऽध्यायः ॥ ४२ ॥ ॥ राहुरुवाच ॥ बलिबाणमहाकूर्मं शम्बरावर्तभीषणम् ॥ अनुह्लादमहाग्राहं कालकेयमहाजलम् ॥ १ ॥ हिरण्याक्षमहारत्नं
प्रह्लादाचलनिश्चलम् ॥ तथा नमुचिकल्लोलं ह्लादसंह्लादशब्दवत् ॥२॥ ि रण्यकशिपूद्योतं कालनेमिबलाहकम् ॥ अमृताहरणक्षुब्धं तदा दैत्यमहा
र्णवम् ॥ ३ ॥ क्षुब्धं दैत्यार्णवं श्रुत्वा निर्गतं समराय च ॥ निर्ययुस्त्रिदशाः सर्वे सन्नद्धा युद्धकाङ्क्षिणः ॥ ४ ॥ ततः प्रवर्तते युद्धं घोरं भीरुभयं
करम् ॥ देवाना दानवानां च परस्परवधैषिणाम् ॥५॥ पात्यमानेषु शस्त्रेषु[2] कवचेषु महात्मनाम् ॥ देवानां दानवानाञ्च ह्युत्पेतुर्ज्वलनार्चिषः[3] ॥६॥ गज
वाजिखुरक्षुण्णमुत्तस्थौ सुमहद्रजः ॥ युगान्तानलधूमाभं त्रैलोकस्येव दह्यतः ॥ ७ ॥ तस्मिन्प्रवृत्ते रजसि घोरे भीरुभयंकरे ॥ निर्मर्यादमभूद्युद्धं
देवानां दानवैः सह॥८॥ततो दैत्यसमुत्थेन तथा देवोद्भवेन च ॥ रुधिरेण मही व्याप्ता प्रशान्तश्च रजः क्षणात्॥९॥ध्वजे च्छत्रे रथे नागे चामरे व्यजने हये॥
सर्वत्र दृश्यते दैत्यरक्तं लाक्षारसप्रभम् ॥१०॥ तस्मिन्युद्धे महारौद्रे दैत्यदानवनाशने ॥ बभ्रमुः कुञ्जरा मत्ता महामात्रप्रचोदिताः ॥११॥ हतैर्वीरैस्तथै 
वाऽन्यैः कुञ्जराः पर्वतोपमाः ॥ कुर्वन्तः स्वान्यनीकानि दृश्यन्ते शतशो रणे ॥ १२ ॥ छिन्नदन्ता भिन्नध्वजा[4] विहस्तचरणास्तथा ॥ शैलाभा

१ 'मुदा' इति ख० । २ 'वस्त्रेषु' इति क० । ३ 'समरार्चिषः' इति ख० । ४ 'भिन्नघटा' इति ख० ।

पतितास्तत्र शोभयन्तो रणाजिरम् ॥ १३ ॥ बभ्रमुः सादिभिर्हीना हयाः सूर्यहयोपमाः ॥ मृताश्च शतशस्तत्र दृश्यन्ते विकृताननाः ॥ १४ ॥ आगुल्फमवसीदन्ति दैत्याः शोणितकर्दमे ॥ रथिभिर्निहता नागा नागैश्च निहता रथाः ॥ १५ ॥ हयाश्च विद्धा नागैस्तु सादिभिः कुञ्जरा हताः ॥ रथसादिगजारोहैर्निहताश्च पदातयः ॥१६॥ पत्तिना महता सादी कुञ्जरो रथ एव च ॥ ततः प्रावर्तत नदी रुधिरौघतरङ्गिणी ॥१७॥ अस्त्रग्राहा धनुर्मीना चक्रकूर्मा महास्वरा ॥ छत्रहंसा नागवती केशशैवलशाद्वला ॥ १८ ॥ दैत्यशीर्षोपला रौद्रा तथा भीरुभयावहा ॥ बाहुसर्पा महावर्ता शूराणां हर्षवर्द्धिनी ॥ १९ ॥ अपारगम्या पत्तीनां फेनपुञ्जसमाकुला ॥ तस्मिन्युद्धे महाघोरे तुमुले लोमहर्षणे ॥ २० ॥ आकीर्णा वसुधा भाति वदनैः कमलोपमैः ॥ विवृत्तैश्च महादंष्ट्रैर्दानवानां महात्मनाम् ॥ २१ ॥ बाहुभिश्चाङ्गदैश्चैव रक्तचन्दनरूषितैः ॥ हस्तिहस्तैर्महाप्रासैरसिभिश्च महाधनैः ॥ २२ ॥ तालवृन्तैस्तथा छत्रैश्चामरैर्यष्टिभिस्तथा ॥ मुकुटैः कुण्डलैश्चैव शुशुभे भूर्विभूषिता ॥२३॥ ततस्ते दानवाः क्रुद्धाः स्वयुद्धेन दिवेप्सवः ॥ अभिद्रवन्ति देवेशं सहस्राक्षं पुरंदरम् ॥२४॥ दैत्यानां पततां दृष्ट्वा प्रह्लादं देवसूदनम् ॥प्रत्युद्ययौ गजेनाऽऽजौ देवराजो महाबलः ॥ २५ ॥ हुताशनोऽपि नमुचिमनुह्लादं तथा शशी ॥ वरुणश्च तथा बाणं यमो देवस्तथा बलिम् ॥२६॥ हिरण्यकशिपुं रुद्रो वायुर्वृत्रासुरं रणे ॥ विरूपाक्षं तथा शंभुर्हिरण्याक्षं धनेश्वरः ॥२७॥ अन्ये च दैत्याः शतशः संयुक्ता देवतागणैः ॥ द्वन्द्वयुद्धसहस्रेषु तेष्ववर्तत दानवैः ॥ २८ ॥ प्रायशो विजिता देवा ययुर्भग्ना दिशो दश ॥ दानवाश्च जयं लब्ध्वा देवाननु ययुर्बलात् ॥२९ ॥ ते भग्नास्त्रिदशाः सर्वे दानवैश्चाप्यभिद्रुताः ॥ त्राणार्थमथ संप्राप्ता नरनारायणाश्रमम् ॥ ३० ॥ देवानामभयं दत्त्वा नरनारायणौ तदा ॥ शंखचक्रायुधधरौ युद्धाय समवस्थितौ ॥ ३१ ॥ नरनारायणौ दृष्ट्वा तत्क्षुब्धं दैत्यसागरम् ॥ सर्वायुधविसर्गेण तयोर्युद्धं व्यवस्थितम् ॥ ३२ ॥ गजाभ्रजालसंछन्नं शरधारौघवर्षणम् ॥ चलन्खड्गलताविद्युद्दैत्यदुर्दिनमाबभौ ॥ ३३ ॥ ततः शरै रुक्मविभूषिताग्रैः सुनेत्रपुंखैर्ज्वलनार्कवर्णैः ॥ बिभेद गात्राणि नरो रिपूणां जहार शीर्षाणि सकुण्डलानि ॥ ३४ ॥ नारायणोप्युत्तमवीर्यतेजाश्चक्रेण चक्रे दितिनन्दनानाम् ॥ विदारयामास महानुभावस्तस्मिन्रणे घोरतरे तदानीम् ॥ ३५ ॥ वीर्यं तयोरप्रतिमं निरीक्ष्य ते दानवा भग्ननिकृत्तयोधाः ॥ हतामृता जीवितमात्रशेषा वेगेन याता वरुणाधिवासम् ॥ ३६ ॥

१ 'रथिना निहतो नागो नागेन निहतो रथी ॥ हयश्च विद्धो नागेन सादिना कुञ्जरो हतः ॥ इति ख० । २ 'हयैः प्रासै रथिभिश्च' इति ख० । ३ 'महास्त्रैः' इति ख० । ४ 'अभिद्रवन् हि' इति ख० । ५ 'शार्ङ्गचक्रायुधधरौ' इति ख० । ६ 'हन्तुम्' इति ख० । ७ 'निवृत्त' इति ख० ।

लब्ध्वा जयं देवपतिर्महात्मा प्रह्लादमाजौ च तथा विजित्य ॥ संपूजयामास महानुभावौ धर्मात्मजौ तापससंघमुख्यौ ॥ ३७ ॥ संपूज्य तौ धर्मसुतौ जितारिर्देवैः प्रहृष्टैरनुयास्यमानः ॥ जगाम नाकं त्रिदशप्रधानः सुखी बभूवाथ गतज्वरश्च ॥ ३८ ॥ एवं प्रभावो भगवान्स विष्णुर्वैरं न मे रोचति तेन नित्यम् ॥ सन्धिं कुरुष्वाऽऽत्महिताय राजञ्छक्रेण तेनारिनिषूदनेन ॥ ३९ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे राहुवाक्येन देवदानवयुद्धवर्णनो नाम त्रिचत्वारिंशत्तमोऽध्यायः ॥ ४३ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ एवमुक्तस्तदा साल्वो राहुणा भीमविक्रमः ॥ जगाद भ्रातरं वाक्यं सारभूतमहेतुमत् ॥ १ ॥ साल्व उवाच ॥ असारे ग्रह संसारे नित्ये सततयायिनि ॥ भवक्षये मतिः कार्या रुजोपकरणेषु वा ॥ जन्तवस्त्रिविधा लोके त्रिधा येषां विचेष्टितम् ॥ २ ॥ तामसा राजसाश्चैव सात्त्विकाश्च ग्रहेश्वर ॥ भवक्षये ये विमुखा भवोपकरणेषु च ॥ ३ ॥ लोकद्वितयविभ्रष्टास्तामसास्ते प्रकीर्तिताः ॥ भवक्षयमतिभ्रष्टा भवोपकरणे स्थिताः ॥ ४ ॥ राजसास्ते विनिर्दिष्टा मध्यस्थाः सर्वजन्तुषु ॥ भवोपकरणे दैत्य मतिर्येषां न विद्यते ॥ ५ ॥ भवक्षये मतिर्येषां सात्त्विकास्ते प्रकीर्तिताः ॥ तामसत्वान्मया दैत्य मतिः पूर्वं भवक्षये ॥ ६ ॥ न कृता तेन तप्यामि राज्यतन्त्रमनुष्ठितम् ॥ मन्वन्तरेऽपि सम्पूर्णे मृतिर्येषां ग्रहोत्तम ॥ ७ ॥ उद्विजन्त्येव ते मृत्योर्महन्मृत्युकृतं भयम् ॥ अवश्यं दैत्य मर्त्तव्यं सर्वेणेह शरीरिणा ॥ ८ ॥ सोऽहं मोक्षपरिभ्रष्टः कामये केशवाद्वधम् ॥ इष्टं यज्ञैस्तपस्तप्तं रिपूणां मूर्धनि स्थितम् ॥ ९ ॥ मर्त्तव्ये च ध्रुवे रामान्मरणं कामयाम्यहम् ॥ संप्राप्य केशवान्मृत्युं गतिं प्राप्स्याम्यनुत्तमाम् ॥ १० ॥ भूयो राज्यमवाप्स्यामि नाकभ्रष्टो ग्रहोत्तम ॥ विवास्य वासवं स्वर्गात्परिभूय पुनःपुनः ॥ ११ ॥ कथं सन्धिं करिष्यामि तेनाऽहं जीवितप्रियः ॥ प्रणामं देवराजस्य केशवान्मरणं वरम् ॥ १२ ॥ समीक्ष्य साधु पश्यामि केशवान्मरणं रणे ॥ शक्रेण कृतसन्धानं पातालनिलयं तथा ॥ १३ ॥ त्यक्ष्यन्ति मां दैत्यगणा वृद्धं पतिमिवाऽङ्गनाः ॥ दिवि भूमौ तथा स्वर्गे पाताले गगने जले ॥ १४ ॥ देहिनां मृत्युरभ्येति तस्य नाऽस्ति पलायनम् ॥ सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ॥ १५ ॥ संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् ॥ अवश्यभाविन्यर्थेऽस्मिन्सर्वेषां ग्रह सर्वदा ॥ १६ ॥ पुण्यभाजो हि मरणं संग्रामे यदि जायते ॥ सोऽहं क्षत्रियधर्मेण संपूज्य समरे हरिम् ॥ १७ ॥ तस्मान्मृत्युमनुप्राप्य गतिं प्राप्स्यामि शोभनाम् ॥ नैवेद्यैः पुष्पधूपाद्यैर्न तथा पूजितो हरिः ॥ १८ ॥ तोषमायाति दैत्येन्द्र स धर्मेण यथा नृणाम् ॥ भ्रात्रा ज्येष्ठेन यद्वाच्यं सुहृदा हितमिच्छता ॥ १९ ॥

१ 'एवमुक्तस्तदा साल्वो राहुणा भीरुविक्रमः' इति क॰ । २ 'भवोपकरणेषु' इति ख॰ । ३ 'हि' इति क॰ । ४ 'मतिस्तेषां' इति क॰ । ५ 'प्राप्स्याम्यनुत्तमाम्' इति ख॰ ।

तदुक्तोऽस्मि त्वया नाथ दैवात्तन्मे न रोचते ॥ स त्वं गच्छ महाभाग दिवि द्रष्टासि मां पुनः ॥ २० ॥ देहान्तरमनुप्राप्तं ग्रह दिव्येन चक्षुषा ॥
॥ मार्कण्डेय उवाच॥ इत्येव सात्वस्य निशम्य वाक्यं कालानुरूपं च तथा विदित्वा॥ न किञ्चिदुक्त्वैव जगाम राहुर्दिवं महात्मा जगतां प्रधानः॥२१॥
इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे साल्ववाक्यं नाम चतुश्चत्वारिंशत्तमोऽध्यायः ॥ ४४ ॥ ॥ मार्कण्डेय उवाच ॥
राहौ दिवमसंप्राप्ते साल्वे राज्ञि सभां गते ॥ रामेण प्रेषितो दूतः संप्राप्तस्त्वकृतव्रणः॥ १ ॥ स प्रविष्टः सभां रम्यां साल्वराज्ञा च पूजितः ॥
पाद्यार्घ्याचमनीयाद्यैर्निषण्णो वाक्यमब्रवीत् ॥ २ ॥ अकृतव्रण उवाच ॥ दूतोऽहं प्रेषितः साल्व रामेणाऽक्लिष्टकर्म्मणा॥श्रुत्वा रामस्य वचनं ततः
कुरु यथेप्सितम् ॥३॥ आह त्वां भार्गवो रामस्त्र्यम्बकेण विसर्जितः॥त्वया युद्धाय दैत्येन्द्र संग्रामे क्रियतां क्षणम्॥४॥विवास्य वासवं स्वर्गाद्देवाञ्जित्वा
सदाऽऽहवे॥ अनयस्याऽस्य घोरस्य फलं प्राप्नुहि दुर्मते ॥५॥ नाहं प्रमत्ते विश्वस्ते प्रहरामि कदाचन॥ तेन ते प्रेषितो दूतस्तस्माद्युद्धे स्थिरो भव ॥६॥
मार्कण्डेय उवाच ॥ एवमुक्तस्तदा साल्वो ब्राह्मणं वाक्यमब्रवीत् ॥ नाऽहं रामकृते ब्रह्मन्सन्नह्यामि कदाचन ॥ ७ ॥ किन्तु सैन्येन सर्वेण
सन्नद्धेन वरूथिना ॥ महादेवं विजेष्यामि येन रामो विसर्जितः ॥ ८ ॥ सन्नद्धसैन्यसहितं महादेवजयैषिणम् ॥ यदि मां योत्स्यते रामो
हन्तास्मि तमहं मृधे ॥ ९॥ स त्वं गच्छ यथाकामं रामाय विनिवेदय ॥ एतद्वचनमादाय साल्वस्य स महात्मनः ॥ १० ॥ जगाम रामं धर्म्मज्ञं
साल्ववाक्यनिवेदितः ॥ गत्वा शशंस रामाय सैंहिकेयविचेष्टितम् ॥ ११ ॥ तेन वाक्येन रामोऽपि रोषाद्दैत्यपुरं ययौ ॥ रामदूते गते तस्मिन्
दैत्यान्साल्वः प्रचोदयत् ॥ १२ ॥ सन्नह्यध्वं विजेष्यामः सगणं भगसूदनम् ॥ ततस्ते दानवाः सर्वे साल्ववाक्यप्रचोदिताः ॥ १३ ॥ सन्नद्धा
स्वगृहेभ्यस्तु राजद्वारमुपागताः॥कुञ्जराणां निनादेन शङ्खभेरीरवेण च॥१४॥राजद्वारे महाञ्छब्दस्तुमुलः समपद्यत॥हुत्वा हुताशनं स्नातः साल्व
संपूज्य च द्विजान् ॥ १५ ॥ आरुरोह गजं मत्तं शैलाग्रं सविता यथा ॥ १६ ॥ विनिर्गतं दैत्यपतिं समीक्ष्य दैत्येश्वराः कालसमानदर्पाः ॥
ऊचुस्तदा तं समरेष्वजेयं जयस्व शम्भुं युधि संप्रगृह्य ॥१७॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे श्रीभार्गवरामयुद्धे साल्वनिर्याणं
नाम पञ्चचत्वारिंशत्तमोऽध्यायः ॥ ४५ ॥ मार्कण्डेय उवाच ॥ व्यस्पन्दतांऽथ साल्वस्य राजन्बाहुरदक्षिणः ॥ हृदयञ्च तथा पृष्ठं नयनञ्चाप्य
दक्षिणम् ॥१॥ शून्यचित्तश्च विमनाः कम्पते च मुहुर्मुहुः ॥ पपात नायकश्चाऽपि किरीटात्तारकप्रभः ॥२॥ आक्रमन्ति गजाः पादं तथा वामेन

१ 'विवास्य वासवं जित्वा स्वर्गाद्देवान् सदाऽऽहवे' इति ख० । २ 'सन्नक्ष्यामि कथञ्चन' इति ख० । ३ 'रणे' इति ख० । ४ 'साल्ववाक्यनिवेदक' इति ख० । ५ 'व्यस्फूर्जताऽथ' इति ख० ।

दक्षिणम् ॥ करेण वेष्टयन्तिस्म तथा दन्तमदक्षिणम् ॥ मदं त्यजन्ति ये मत्तास्तुरगाश्च मुहुर्मुहुः ॥ ३ ॥ संस्पृशन्ति तथा वामं पार्श्वं प्रोथेन
वासुना॥ वृकाः शृगालाः शार्दूला बिडाला गर्दभाः शशाः ॥४॥ वामीभूत्वा दानवानां यान्ति दक्षिणतस्ततः॥ एणा वराहाः पृषतो यान्ति तेषाञ्च
वामतः॥५॥ दीप्तायां दिशि वाशन्ति मृगास्तेषामपस्वनम् ॥ तैलपङ्कगुडाङ्गारचर्मकेशतृणानि च ॥६॥ दानवानां प्रयातानां संभवन्त्यग्रतस्तथा ॥
एवंविधा दुर्निमित्ता जाताः साल्वस्य पश्यतः ॥७॥ मतिः सुनिश्चितैवाऽऽसीन्मरणं प्रति यादव ॥ स ययौ सह सैन्येन महता चतुरङ्गिणा॥८॥
कैलासपर्वतं योद्धुं महादेवेन शूलिना ॥ ९ ॥ युद्धोत्सुके दैत्यपतौ प्रयाते व्यदृश्यताग्रेचरचण्डवेगः ॥ रामः प्रवालारुणकोमलेन दीप्तप्रतापेन
विराजमानः ॥ १० ॥ इति श्रीविष्णुधर्म्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे साल्वसेनादुर्निमित्तदर्शनं नाम षट्चत्वारिंशत्तमोऽध्यायः ॥४६॥
मार्कण्डेय उवाच ॥ वह्निज्वालाग्रवर्णेन जटाजूटेन राजितम् ॥ गगनार्द्धमिवाऽऽरूढं निदाघे रविमण्डलम् ॥ १ ॥ आधारं सर्वदेवानां तपसा
द्योतितप्रभम् ॥ सेवमानमवसनं पीतगात्रमरिन्दमम् ॥ २ ॥ एकमेकाकिनं वीरं सहस्रशतमण्डितम् ॥ पिण्डितं सकलं धाम ब्रह्मक्षत्रियते
जसाम् ॥ ३ ॥ कृष्णाजिनोत्तरासङ्गभ्राजमानं बलोद्धतम् ॥ स्निग्धया रञ्जितमिव प्रायेण पार्वतीदृशा ॥ ४ ॥ विराजमानं दोर्दण्डरुक्मदण्डेन
भास्वता॥परश्वधेन तीक्ष्णेन विमलाकाशवर्चसा ॥ ५ ॥ तपस्विनमनादृश्यं यमकालान्तकोपमम् ॥ कम्पमानं पदन्यासैर्वसुधां सकलां तथा ॥६॥
मुष्णन्तं सर्वतेजांसि प्रभाते रविमण्डलम्॥ प्रांशुं कनकवर्णाङ्गं सितयज्ञोपवीतिनम् ॥७॥ गङ्गायाः प्रवहेणैव मेरुशृंगं विराजितम्॥ तेजसा दहनाका
रं प्रजासंहारकारकम् ॥ ८ ॥ विषमं प्रमथेशस्य तृतीयमिव लोचनम् ॥ अप्रसह्यमनावार्यं दुर्लङ्घ्यं जीवितच्छिदम् ॥ ९ ॥ कालेनेव भुजं सव्यं
दैत्यहेतोः प्रसारितम् ॥ रामे दृष्टिपथं प्राप्ते दानवानां समन्ततः ॥ १० ॥ हाहाकारो महानासीत्तमेकं निघ्नतां रणे ॥ शस्त्रधारणविभ्रष्टब्राह्मण्यं
स्वपथाच्युतम् ॥ ११ ॥ घातयध्वं दुराचारमेनमूचुः परस्परम् ॥ एवमाद्रवतां तेषां बहूनामाततायिनाम् ॥ १२ ॥ जग्राह वेगं सर्वेषां
मरुतामिव पर्वतः ॥ स हन्यमानो नाराचैस्तोमरैर्मुशलैस्तथा ॥१३॥ गदाभिरसिभिः पाशैर्भुशुण्डीभिरयोगुडैः ॥ पट्टिशैर्भिन्दिपालैश्च हुतैः शूलैः
परश्वधैः ॥१४॥ न विव्यथे ह्यमेयात्मा धराधर इवाऽनिलैः ॥१५॥ संवेष्टितं सर्वत एव सैन्यैरदृष्टयुद्धोऽपि रणे महात्मा दैत्यार्णवं गोष्पदतुल्य

१ 'वामे भूत्वा' इति ख० । २ 'स्तथा' इति ख० । ३ 'स्वरं' इति ख० । ४ 'स्तदा' इति ख० । ५ 'दैत्य' इति ख० । ६ 'कारणम्' इति ख० । ७ 'शस्त्रधारणविभ्रष्टब्रह्मण्यं स्वयमच्युतम्' इति ख० ।

मात्रममन्यताऽऽजौ रणचण्डवेगः ॥१६॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे युद्धे भार्गवरामदर्शनं नाम सप्तचत्वारिंशत्तमोऽध्यायः ॥ ४७ ॥ मार्कण्डेय उवाच ॥ सिंहिकापुत्रसैन्येन हन्यमानस्तदा रणे ॥ गोचराभ्यागतान्सर्वान्रामो निन्ये यमक्षयम् ॥ १ ॥ तेन कृत्ताः परशुना यथा परशुना मृगाः ॥ आलिङ्ग्य शेरते क्षोणीं दानवास्ते मदोद्धताः ॥२॥ तीक्ष्णधाराग्रदुष्प्रेक्ष्यकुठारच्छिन्नमस्तकैः ॥ आततार तदा भूमिं कुशैर्वेदिमिवाध्वरे ॥ ३ ॥ परश्वधाग्रसंभिन्नदैत्यदेहसमुद्भवम् ॥ प्रसुस्राव तदा रक्तं येनाऽऽसीत्कर्दमं महत् ॥ ४ ॥ ते हन्यमाना रामेण राममेवाऽभिदुद्रुवुः ॥ परिपूर्णे यथा काले शलभा जातवेदसम् ॥ ५ ॥ रामस्य प्रमुखे दैत्यास्तदा तिष्ठन्ति ये नृप ॥ निमेषान्तर[1]मात्रेण ते प्रयान्ति यमक्षयम् ॥ ६ ॥ कुञ्जरस्तुरगः पत्तिर्नाजौ यादव दृश्यते ॥ द्वितीयं प्रददौ यस्य प्रहारं भृगुनन्दनः ॥ ७ ॥ एकप्रहाराभिगतान्दानवान्पर्वतोपमान् ॥ अपश्याम रणे तत्र ब्रह्मणा सहिता वयम् ॥८॥ रामेण हन्यमानानां दानवानां मुहुर्मुहुः ॥ आरावः श्रूयते घोरो वनानामिव दह्यताम् ॥ ९ ॥ आक्रम्य पद्भ्यां तरसा रथस्थानामथाहरत् ॥ शीर्षाणि तेन तीक्ष्णेन तथा परशुना रणे ॥ १० ॥ रामेणाऽऽक्रम्यमाणेषु रथेषु रथयूथपाः [2]॥ भूमौ निविष्टमूर्द्धानस्तत्यजुर्जीवितं हयाः ॥ ११ ॥ निष्पिपेष रथस्थानां दारयन्कुञ्जरान्रणे ॥ बभ्रमे तत्र तत्रैकः कालोत्सृष्ट इवान्तकः ॥ १२ ॥ विच्छिन्दन्योधशीर्षाणि रणे रामो रथाद्रथम् ॥ व्रजन्भाति विशालाक्षो वृक्षाद्वृक्षमिवाऽण्डजः ॥ १३ ॥ स शराञ्चितसर्वाङ्गः शोणितेन समुक्षितः ॥ रराज रामः समरे रश्मिमानिव भास्करः ॥ १४ ॥ दैत्यबाहुविनिर्मुक्तानायुधाञ्छतशस्तथा ॥ प[3]रश्वधाग्रेण रणे चिच्छेद रणकर्कशः ॥ १५ ॥ तेषां संछिद्यमानानां प्रादुरासीद्धुताशनः ॥ येन तानेव तरसा क्षितौ चक्रे स भस्मसात् ॥ १६ ॥ बहुत्वाद्दैत्ययोधानां रामस्संछादितो रणे ॥ हेतिपुञ्जेन महता शैलाभेन न दृश्यते ॥ १७ ॥ हेतिपुञ्जं विधूयोग्रमभ्रपुञ्जं यथा रविः ॥ पुनर्दर्शनमायाति संहर्त्ता दैत्यतेजसाम् ॥ १८ ॥ ब्रह्मा सुरगणैः सार्द्धमृषिभिश्च महात्मभिः ॥ पूजयामास तद्युद्धं साधुवादेन यादव ॥ १९ ॥ दृष्टवन्तश्च धनुषा युद्धानि च मुहुर्मुहुः ॥ तथैवाऽऽश्चर्यभूतानि लोकानां खड्गचर्मणा ॥ २० ॥ अपूर्व एष संग्रामो रामस्य बहुभिः सह ॥ परश्वधायुधस्योग्र इति देवास्तथाऽब्रुवन् ॥ २१ ॥ पूज्यमानः स रामोऽपि देवपुष्पोत्करैस्तदा ॥ चिच्छेद युधि दैत्यानां शिरांसि शतशो रणे ॥ २२ ॥ दैत्यशोणितदिग्धाङ्गं भार्गवं लघुविक्रमम् ॥ अलातचक्रप्रतिमं तदा पश्यति यादव ॥ २३ ॥ भ्रमताऽनेन रौद्रेण रणे

१ 'निमिषान्तरमात्रेण' इति ख० । २ 'कुञ्जरस्तुरगः पत्ती नाऽसौ यादव दृश्यते' इति ख० । ३ 'परशुधारेण रामाश्चिच्छेद रणकर्कशः' इति क० ।

कालाग्निवर्चसा ॥ कृताः समरशौण्डेन भीमा रुधिरनिम्नगाः ॥ २४ ॥ परश्वधाग्रविक्षेपगतजीवितकुञ्जरैः ॥ पादोपलैश्च समरे प्रतस्तार स भार्गवः ॥ २५ ॥ दन्तिदन्तपदन्यासप्राप्तं कुञ्जरमस्तकम् ॥ विनिघ्नन्स गजारोहाञ्छेचनवद्विचरन् लघु ॥ २६ ॥ आरुह्य कुंजरश्चैकं कुञ्जरात्कुञ्जरान्तरम् ॥ अपश्याम रणे रामं विचरन्तं यथासुखम् ॥ २७ ॥ भूयो भूमिगतो रामः कुञ्जराणां परश्वधा ॥ चकार कदनं घोरं प्रलयाग्निरिवोत्थितः ॥ २८ ॥ छिन्नाग्रहस्तान्विरदान्द्विरदाञ्छोणितोक्षितान् ॥ क्षितौ गता न पश्यामः श्यामीकृतदिगन्तरान् ॥ २९ ॥ एवं हि युध्यता तेन रणे कालाग्निवर्चसा ॥ हतानि दानवेन्द्राणां प्रयुतान्यर्बुदानि च ॥ ३० ॥ येषां प्रहारं संसोढुं नेयं शक्ता वसुन्धरा ॥ तेषां प्रहारभिन्नाङ्गो नैव रामो व्यकम्पत ॥ ३१ ॥ दृष्ट्वा प्रहारवैक्लव्यं निहतांश्च महासुरान् ॥ प्रदुद्रुवुर्दैत्यगणाः साल्वं शरणमाहवे ॥ ३२ ॥ अल्पावशिष्टान्दितिजान्प्रनष्टान्संवीक्ष्य साल्वः स्वहिते निविष्टान् ॥ रामं ययौ तेन गजेन युद्धे रामाद्रणे युद्धमभीप्समानः ॥ ३३ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मा०सं० साल्वसैन्यवधो नामाऽष्टचत्वारिंशत्तमोऽध्यायः ॥ ४८ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ ततः साल्वो महातेजाः कुञ्जरेण तरस्विना ॥ अर्पयामास धर्मज्ञ रेणुकानन्दवर्धनम् ॥ १ ॥ स्तब्धकर्णो विवृत्ताक्षः कृत्वा कुण्डलिनं करम् ॥ ग्रीवां सञ्चाल यन्नागो ययौ गजमदोद्धतम् ॥ २ ॥ दृष्ट्वैवापततस्तस्य वेगं रामोऽपि तं गजम् ॥ हुंकारमात्रेण रणे स्तम्भयामास वेगितम् ॥ ३ ॥ स्तम्भयामास नागेन्द्रं शैलेन्द्रशिखरोपमम् ॥ तस्थौ स पुरतस्तस्य साल्वस्य समरप्रियः ॥ ४ ॥ परशुं रुधिराक्ताङ्गं सकलङ्कमलं करे ॥ धारयन् विष्णुवद्भाति सकलं कमलङ्करे ॥ ५ ॥ दन्तिना दन्तिनः पृष्ठं रामस्याऽऽरोढुमिच्छतः ॥ जहार वेगवान्वेगं शरैः सन्नतपर्वभिः ॥ ६ ॥ साल्वसायकसंघातविमुखीकृतविक्रमम् ॥ रामं रणे दैत्यगणाश्छादयन्ति वरायुधैः ॥ ७ ॥ महता सोऽस्त्रपुंजेन रामः संछादितो रणे ॥ निमीलिताक्षश्चिक्षेप साल्वाय परशुं तदा ॥ ८ ॥ आगच्छमानं वेगेन साल्वस्तं परशुं रणे ॥ आयुधैर्वारयामास न शशाक च शत्रुहा ॥ ९ ॥ स साल्वायुधसंघातं भङ्क्त्वा सर्वमशेषतः ॥ जहार शीर्षं साल्वस्य मुकुटोत्तमभूषितम् ॥ १० ॥ रामोऽपि भूतलात्प्राप्य गदां हेमविभूषिताम् ॥ आविध्य निजघानोग्रं साल्वं कुञ्जरसंस्थितम् ॥ ११ ॥ द्वावङ्कुशधरौ श्रेष्ठौ द्वौ च चर्मासिधारिणौ ॥ पताकाधारिणं चैकं गजस्य जघने स्थितम् ॥ १२ ॥ देहं च तस्य साल्वस्य पताकां च मनोरमाम् ॥ एतदादाय सकलमाजगाम वसुन्धराम् ॥ १३ ॥ सिंहनादेन रामस्य वित्रस्तो

१ तेषां प्रहारदिग्धाङ्गो नैव रामो व्यकम्पयत्' इति ख० । २ 'साल्वस्यायुधसंघातम्' इति ख० । ३ 'सुमनोहराम्' इति ख० ।

गजयूथपः ॥ आर्त्तनादं महत्कृत्वा प्रदुद्राव नराधिप ॥ १४ ॥ रामकर्मणि वृत्ते तु भूतलात्परशुं रणे ॥ जग्राह वेगावान्वेगाद्दानवान्तचिकीर्षया ॥ १५ ॥ दृष्ट्वा सपरशुं रामं साल्वं च विनिपातितम् ॥ हतशेषांस्तु[1] ते दैत्याः प्रविष्टा वरुणालयम् ॥१६॥ एतस्मिन्नेव काले तु देवाः सेन्द्रपुरोगमाः ॥ आयोधनमुपाजग्मुः पुरस्कृत्य पितामहम् ॥ १७ ॥ प्रणाममकरोत्तेषां रामो रतिकरः पितुः ॥ पूजयित्वा तु ते रामं ययुर्देवाः स्वमालयम् ॥ १८ ॥ शक्रोऽपि लब्ध्वा त्रिदिवं रामबाहुप्रसाधितम् ॥ विजहार दिवं[2] राजन्पालयानो जगत्रयम् ॥ १९ ॥ रथेन सिंहयुक्तेन महादेवोऽपि भार्गवम्॥ आदाय प्रययौ शीघ्रं कैलासं पर्वतोत्तमम् ॥ २० ॥ स्नेहेन चाऽस्य गात्राणां चक्रे सम्मार्जनं हरः ॥ येनाऽऽसीद्बलवान्रामो निर्व्रणश्च महाशयाः ॥ २१ ॥ गतव्रणं श्रियोपेतं जयं लब्ध्वा ह्युपस्थितम् ॥ रामं प्रहरतां श्रेष्ठं शंकरो वाक्यमब्रवीत् ॥ २२ ॥ शङ्कर उवाच ॥ रामराम महाभाग त्वयाऽहं परितोषितः ॥ तस्मात्तवाऽहं दास्यामि चास्त्रग्रामं ह्यनुत्तमम् ॥ २३ ॥ अस्त्राणां धारणे शक्तस्त्वमेको[3] भुवि भार्गव ॥ तव धैर्यमनौपम्यं तव सत्त्वमनुत्तमम् ॥ २४ ॥ अस्त्रयोगमिहस्थस्त्वं[4] कृत्वा पुत्र शनैःशनैः ॥ सर्वास्त्रवित्ततो राम गन्तासि पितरं स्वकम् ॥ २५ ॥यश्चैष परशुर्दिव्यः पित्रा दत्तस्तवाऽनघ ॥ अद्य प्रभृति ते क्षिप्तः करं भूयः समेष्यति ॥ २६ ॥ उपलक्षणमेतच्च तथा तव भविष्यति ॥ छेत्स्यामि ते संशयांश्च निर्वृतो भव पुत्रक ॥ २७ ॥ मार्कण्डेय उवाच ॥ इत्येवमुक्तःपरिपूर्णकामो रामो महात्मा जितसैन्यनावः ॥ उवास तत्र प्रमथैः समेतः सर्वाण्यथास्त्राण्यनुशिक्षमाणः ॥ २८ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे साल्ववधो नामैकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

॥ मार्कण्डेय उवाच ॥

॥ ब्रह्मास्त्रं वैष्णवं रौद्रमाग्नेयमथ वासवम् ॥ अस्त्रञ्च नैर्ऋतं याम्यं कौबेरमथ वारुणम् ॥ १ ॥ वायव्यमथ सौम्यञ्च सौरं पार्वतमेव च ॥ चक्रास्त्रमथ वज्रास्त्रं पाशास्त्रं सार्पमेव च ॥ २ ॥ गान्धर्वं स्वापनं भौतं तथा पाशुपतं शुभम् ॥ ऐषीकं तर्जनं प्रासं भारुण्डं नर्तनं तथा ॥ ३ ॥ अस्त्ररोधनमादित्यं[5] रैवतं मानवं तथा ॥ अक्षिसंतर्जनं भीमं जृम्भणं रोधनं तथा ॥ ४ ॥ सौपर्णमथ पार्जन्यं राक्षसं मोहनं तथा ॥ कालास्त्रं दानवास्त्रञ्च अस्त्रं ब्रह्मशिरस्तथा ॥ ५ ॥ एतान्यन्यानि चाऽन्यानि रामो निवसने ततः ॥ सप्रयोगरहस्यानि ससंहाराणि चाप्यथ ॥ ६ ॥ आजहार महादेवात्प्रसादसुमुखात्ततः ॥ एवं हि वसतः कालो ययौ रामस्य धीमतः ॥ ७ ॥ हरप्रसादसंजातविस्रम्भो भृगुनन्दनः ॥ ध्यानासक्तं हरं[6] देवं कदाचिदथ दृष्टवान् ॥८ ॥ ध्यानप्रसक्तं स हरं समीक्ष्य

१ 'हतदर्पास्तु' इति ख० । २ 'सुखी' इति ख० । ३ 'त्वमेव' इति ख० । ४ 'अस्त्रयोगमवस्थस्त्वम्' इति ख० । ५ 'अस्यरोधन' इति ख । ६ 'वरम् इति' क० ।

रामस्तु संजातकुतूहलेन ॥ विसिष्मिये धर्मभृतां वरिष्ठः स चेतसा यादववंशचन्द्र ॥ ९ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखंडे मार्कण्डेयवज्रसंवादे अस्त्र
प्रदानं नाम पञ्चाशत्तमोऽध्यायः ॥ ५० ॥ ॥मार्कण्डेय उवाच॥ कैलासशिखरे रम्ये नानाधातुविचित्रिते ॥ नानाद्रुमलताकीर्णे नानापक्षिनिना
दिते ॥ १ ॥ गंगानिर्झरसंजाते सततं चारुनिस्वने ॥ देवदेवं महादेवं पर्यपृच्छत भार्गवः ॥ २ ॥ राम उवाच ॥ देवदेव महादेव गंगालुलित
मूर्द्धज ॥ शशांकलेखासंयुक्त जटाभारातिभास्वर ॥ ३ ॥ पार्वतीदत्तदेहार्ध कामकालाङ्गनाशन ॥ भगनेत्रान्तकाचिन्त्य पूष्णो दशनशातन ॥
॥ ४ ॥ त्वत्तः परतरं देवं नाऽन्यं पश्यामि कञ्चन ॥ पूजयन्ति सदा लिंगं तव देवाः सवासवाः ॥ ५ ॥ स्तुवन्ति त्वामृषिगणा ध्यायन्ति
च मुहुर्मुहुः ॥ पूजयन्ति तथा भक्त्या वरदं परमेश्वर ॥ ६ ॥ जगतोऽस्य समुत्पत्तिस्थितिसंहारपालने ॥ त्वामेकं कारणं मन्ये त्वयि सर्वं
प्रतिष्ठितम् ॥ ७ ॥ कं त्वं ध्यायसि देवेश तत्र मे संशयो महान् ॥ आचक्ष्व तन्मे भगवन्यद्यनुग्राह्यता मयि ॥ ८ ॥ प्रसादसांमुख्यतया
मयैतद्विस्रम्भमासाद्य जगत्प्रधान ॥ भवन्तमीड्यं प्रणिपत्य मूर्ध्ना पृच्छामि संजातकुतूहलात्मा ॥ ९ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे
मार्कण्डेयवज्रसंवादे परशुरामोपाख्याने शंकरगीतासु रामप्रश्नो नामैकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥ छ ॥ शंकर उवाच ॥ त्वदुक्तोयमनुप्रश्नो
राम राजीवलोचन ॥ त्वमेकः श्रोतुमर्होऽसि मत्तो भृगुकुलोद्वह ॥ १ ॥ यत्तत्परमकं धाम मम भार्गवनन्दन ॥ यत्तदक्षरम
व्यक्तं परं यस्मान्न विद्यते ॥ ज्ञानज्ञेयं ज्ञानगम्यं हृदि सर्वस्य चाश्रितम् ॥ २ ॥ त्वामहं पुण्डरीकाक्षं चिन्तयामि जनार्दनम् ॥ एतद्राम
रहस्यं ते यथावत्कथितं वचः ॥ ३ ॥ ये भक्तास्तमजं देवं न ते यान्ति पराभवम् ॥ तमीशमजमव्यक्तं सर्वभूतपरायणम् ॥ ४ ॥
नारायणमनिर्देश्यं जगत्कारणकारणम् ॥ सर्वतः पाणिपादन्तं सर्वतोऽक्षिशिरोमुखम् ॥ ५ ॥ सर्वतः श्रुतिमाँल्लोके सर्वमावृत्य तिष्ठति ॥ सर्वे
न्द्रियगुणाभासं सर्वेन्द्रियवि वर्जितम् ॥ ६॥ असक्तं सर्वतश्चैव निर्गुणं गुणभोक्तृ च ॥ बहिरन्तश्च भूतानामचरश्चर एव च ॥ ७ ॥ सूक्ष्मत्वात्तद
विज्ञेयं दूरस्थं चान्तिकं च यत् ॥ अविभक्तं विभक्तेषु विभक्तमिव च स्थितम् ॥८॥ भूतवर्ति च तज्ज्ञेयं ग्रशिष्णु प्रभविष्णु च ॥ ज्योतिषामपि
तज्ज्योतिः तमसां परमुच्यते ॥९॥ अनादिमत्परं ब्रह्म न सत्तन्नाऽसदुच्यते ॥ प्रकृतिर्विकृतिर्योऽसौ जगतां भूतभावनः॥१०॥यस्मात्परतरं नास्ति

१ 'गंगाशर्करसंजाते' इति ख० । २ 'शशांकलेखासंयुक्त जयभारासुरान्तक' इति ख० । ३ 'धिष्ठितम्' इति ख० । ४ 'मे' इति ख० ।

तं देवं चिन्तयाम्यहम् ॥ इच्छामात्रमिदं सर्वं त्रैलोक्यं सचराचरम् ॥ ११ ॥ यस्य देवादिदेवस्य तं देवं चिन्तयाम्यहम् ॥
यस्मिन्सर्वं यतः सर्वं यः सर्वं सर्वतश्च यः ॥ १२ ॥ यश्च सर्वमयो नित्यस्तं देवं चिन्तयाम्यहम् ॥ योगीश्वरं पद्मनाभं विष्णुं
जिष्णुं जगत्पतिम् ॥ १३ ॥ जगन्नाथं विशालाक्षं चिन्तयामि जगद्गुरुम् ॥ शुचिं शुचिपदं हंसं तत्परं परमेष्ठिनम् ॥ १४ ॥ युक्त्वा
सर्वात्मनाऽऽत्मानं तं प्रपद्ये प्रजापतिम् ॥ यस्मिन्विश्वानि भूतानि तिष्ठन्ति च विशन्ति च ॥ १५ ॥ गुणभूतानि भूतेशे सूत्रे मणिगणा इव ॥
यस्मिन्नित्ये तते तन्तौ दृष्टे स्रगिव तिष्ठति ॥ १६ ॥ सदसद्ग्रथितं विश्वं विश्वांगे विश्वकर्मणि ॥ हरिं सहस्रशिरसं सहस्रचरणेक्षणम् ॥ १७ ॥
प्राहुर्नारायणं देवं यं विश्वस्य परायणम् ॥ अणीयसामणीयांसं स्थविष्ठञ्च स्थवीयसाम् ॥ १८ ॥ गरीयसां गरिष्ठञ्च श्रेष्ठञ्च श्रेयसामपि ॥ यं
वाकेष्वनुवाकेषु निषत्सूपनिषत्स्वपि ॥ १९ ॥ गृणन्ति सत्यकर्माणं सत्यं सत्येषु सामसु ॥ चतुर्भिश्चतुरात्मानं सत्त्वस्थं सात्त्वतां पतिम् ॥ २० ॥
यं दिव्यैर्देवमर्चन्ति गुह्यैः परमनामभिः ॥ यमनन्यो व्यपेताशीरात्मानं वीतकल्मषम् ॥ २१ ॥ दृष्ट्वानन्त्याय गोविन्दं पश्यत्यात्मन्यवस्थितम् ॥
पुराणः पुरुषः प्रोक्तो ब्रह्मा प्रोक्तो युगादिषु ॥ २२ ॥ क्षये संकर्षणः प्रोक्तस्तमुपास्यमुपास्महे ॥ यमेकं बहुधात्मानं प्रादुर्भूतमधोक्षजम् ॥ २३ ॥
नान्यभक्ताः क्रियावन्तो यजन्ते सर्वकामदम् ॥ यमाहुर्जगतां कोशं यस्मिन्सन्निहिताः प्रजाः ॥ २४ ॥ यस्मिंल्लोकाः स्फुरन्तीमे जाले शकुनयो
यथा ॥ ऋतमेकाक्षरं ब्रह्म यत्तत्सदसतः परम् ॥ २५ ॥ अनादिमध्यपर्यन्तं न देवा नर्षयो विदुः ॥ यं सुरासुरगन्धर्वास्ससिद्धर्षिमहोरगाः ॥ २६ ॥
प्रयता नित्यमर्चन्ति परमं दुःखभेषजम् ॥ अनादिनिधनं देवमात्मयोनिं सनातनम् ॥ २७ ॥ अप्रतर्क्यमविज्ञेयं हरिं नारायणं प्रभुम् ॥
अतिवाय्विन्द्रकर्माणं चाऽतिसूर्याग्नितेजसम् ॥ २८ ॥ अतिबुद्धीन्द्रियग्रामं तं प्रपद्ये प्रजापतिम् ॥ यं वै विश्वस्य कर्त्तारं जगतस्तस्थुषां
पतिम् ॥ २९ ॥ वदन्ति जगतोऽध्यक्षमक्षरं परमं पदम् ॥ यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः ॥ ३० ॥ चन्द्रादित्यौ च नयने तं
देवं चिन्तयाम्यहम् ॥ यस्य त्रिलोकी जठरे यस्य काष्ठाश्च वाहनाः ॥ ३१ ॥ यस्य श्वासश्च पवनस्तं देवं चिन्तयाम्यहम् ॥ विषये वर्त्तमानानां
यं तं वैशेषिकैर्गुणैः ॥ ३२ ॥ प्राहुर्विषयगोप्तारं तं देवं चिन्तयाम्यहम् ॥ परः कालात्परो यज्ञात्परस्सदसतश्च यः ॥ ३३ ॥ अनादिरादिर्विश्वस्य
तं देवं चिन्तयाम्यहम् ॥ पद्भ्यां यस्य क्षितिर्जाता श्रोत्राभ्याञ्च तथा दिशः ॥ ३४ ॥ पूर्वभागे दिवं यस्य तं देव चिन्तयाम्यहम् ॥ नाभ्यां यस्या

१ 'ईहामात्रम्' इति ख० । २ 'यसतोऽन्यो' इति क० । ३ 'यमाहुर्जगतः कोशं' इति ख० ।

न्तरिक्षस्य नासाभ्यां पवनस्य च ॥ ३५ ॥ प्रस्वेदादम्भसां जन्म तं देवं चिन्तयाम्यहम् ॥३६॥ वराहशीर्षं नरसिंहरूपं देवेश्वरं वामनरूपरूपम्॥
त्रैलोक्यनाथं वरदं वरेण्यं तं राम नित्यं मनसा नतोऽस्मि ॥३७॥ वाक्त्राद्यस्य ब्राह्मणास्संप्रसूता यद्वक्षसः क्षत्रियाः संप्रसूताः ॥ यस्योरुयुग्माच्च तथैव
वैश्याः पद्भ्यां तथा यस्य शूद्राः प्रसूताः ॥३८॥ व्याप्तं तथा येन जगत्समग्रं विभूतिभिर्भूतभवोद्भवेन ॥ देवाधिनाथं वरदं वरेण्यं तं राम नित्यं मनसा
नतोऽस्मि॥३९॥इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे श्रीभार्गवरामप्रश्ने शङ्करगीतासु ध्येयनिर्देशो नाम द्विपञ्चाशत्तमोऽध्यायः५२।
राम उवाच ॥ वराहं नरसिंहं च वामनं च महेश्वर॥ त्वत्तोऽहं श्रोतुमिच्छामि प्रादुर्भावान्महात्मनः ॥ १ ॥शङ्कर उवाच॥अदितिश्च दितिश्चैव द्वे भार्ये
कश्यपस्य च ॥ अदितिर्जनयामास देवानिन्द्रपुरोगमान् ॥२॥ दितिश्च जनयामास द्वौ पुत्रौ भीमविक्रमौ ॥ हिरण्याक्षं दुराधर्षं हिरण्यकशिपुं
तथा ॥ ३ ॥ ततोऽभिषिक्तवाञ्छक्रं देवराज्ये प्रजापतिः ॥ दानवानां तथा राज्ये हिरण्याक्षं बलोत्कटम् ॥ ४ ॥ अभिषिच्य तयोः प्रादात्स्वर्गं
पातालमेव च॥पातालं शासति तथा हिरण्याक्षे महासुरे ॥५॥ धराधारा धरां त्यक्त्वा खमुत्पेतू रयात्पुरा॥ पक्षवन्तो महाभाग नूनं भाव्यर्थचोदिताः ॥
॥६॥ धराधरपरित्यक्ता धरा चलनिबन्धना ॥ यदा तदा दैत्यपुरं सकलं व्याप्तमम्भसा ॥ ७ ॥ दृष्ट्वैव स्वपुरं व्याप्तमम्भसा दितिजोत्तमः ॥
सैन्यमुद्योजयामास[1] जातशङ्कः सुरान्प्रति ॥ ८ ॥ उद्युक्तेन[2] स सैन्येन दैत्यानां चतुरंगिणा ॥ विजित्य त्रिदशाञ्जन्ये आजहार त्रिविष्टपम् ॥
॥ ९ ॥ हताधिकारास्त्रिदशा जग्मुः शरणमञ्जसा ॥ देवराजं पुरस्कृत्य वासुदेवमजं विभुम् ॥ १० ॥ त्रिदशाञ्छरणं प्राप्ता
न्हिरण्याक्षविवासितान् ॥ संयोज्याऽभयदानेन विससर्ज जनार्दनः॥ ११ ॥ विसृज्य त्रिदशान्सर्वांश्चिन्तयामास केशवः ॥ किन्तु रूपमहं कृत्वा
घातयिष्ये सुरार्दनम् ॥१२॥ तिर्यङ्मनुष्यदेवानामवध्यः स सुरान्तकः ॥ ब्रह्मणो वरदानेन तस्मात्तस्य वधेप्सया ॥१३॥ नृवराहो भविष्यामि न
देवो न च मानुषः ॥ तिर्यग्रूपेण चौवाहं घातयिष्यामि तं ततः ॥ १४ ॥ एतावदुक्त्वा संगेन नृवराहोऽभवत्प्रभुः ॥ चूर्णिताञ्जनशैलाभस्तत
जाम्बूनदाम्बरः ॥ १५ ॥ यमुनावर्त्तकृष्णाङ्गः[3] तदावर्ततनूरुहः ॥ तदोघ इव दुर्वार्य्यस्तत्पित्रा तेजसा समः ॥ १६ ॥ तत्प्रवाह[4] इवाक्षोभ्यस्त
त्प्रवाह इवौघवान् ॥ तत्प्रवाहामलतनुस्तत्प्रवाहमनोहरः ॥ १७ ॥ सजलाञ्जनकृष्णाङ्गः सजलाम्बुदसच्छविः ॥ पीतवासास्तदा भाति सवि
द्युदिव तोयदः ॥ १८ ॥ उरसा धारयन्हारं शशाङ्कसदृशच्छविः ॥ शुशुभे सर्वभूतात्मा सबलाक इवाम्बुदः ॥ १९ ॥ शशाङ्कलेखाविमले



१ 'सैन्यमुद्रेजयामास' इति ख० । २ 'तदुक्तेन' इति ख० । ३ 'यमुनाकृष्णवर्णाङ्गस्तदापर्वतभूरुहः' इति ख० । ४ 'तत्प्रवाह इवाक्षोभ्यः प्रवाह इव घोषवान्' इति ख० ।

दंष्ट्रे तस्य विरेजतुः ॥ मेघान्तरितबिम्बस्य द्वौ भागौ शशिनो यथा ॥ २० ॥ कराभ्यां धारयन्भाति शङ्खचक्रे जनार्दनः ॥ चन्द्रार्कसदृशे
राम पादचारीव पर्वतः ॥ २१ ॥ महाजीमूतसंकाशो महाजीमूतसंन्निभैः[1] ॥ महाजीमूतवद्वेगी महाबलपराक्रमः ॥ २२ ॥ दानवेन्द्रवधाकाङ्क्षी
हिरण्याक्षसभां ययौ ॥ हिरण्याक्षोऽपि तं दृष्ट्वा नृवराहं जनार्दनम् ॥ २३ ॥ दानवाँश्चोदयामास तिर्यग्जातमपूर्वकम् ॥ गृह्यतां वध्यतां चैव
क्रीडार्थं स्थाप्यतां तथा ॥ २४ ॥ इत्येवमुक्तः संरब्धः पाशहस्ताँस्तु दानवान् ॥ जिघृक्षमाणांश्चक्रेण जघान शतशो रणे ॥ २५ ॥
हन्यमानेषु दैत्येषु हिरण्याक्षोऽथ दानवान् ॥ चोदयामास संरब्धान्वराहाधिककारणात् ॥ २६ ॥ चोदिता दानवेन्द्रेण दान
वाः शस्त्रपाणयः ॥ प्रववर्षुस्तथा देवं शस्त्रवर्षेण केशवम् ॥ २७ ॥ दैत्याः शस्त्रनिपातेन देवदेवस्य चक्रिणः ॥ नैव शेकुर्वृथां[2]
कर्तुं यत्नवन्तोऽपि निर्भयाः ॥ २८ ॥ हन्यमानोऽपि दैत्येन्द्रैर्दानवान्मधुसूदनः॥ जघान चक्रेण तदा शतशोऽथ सहस्रशः ॥२९॥ हन्यमानेषु
संन्येषु हिरण्याक्षः स्वयं ततः ॥ उत्थाय धनुषा देवं प्रववर्ष सुरोत्तमम् ॥ ३० ॥ हिरण्याक्षस्तु तान्दृष्ट्वा विफलाँश्च शिली
मुखान् ॥ शिलीमुखाभान्संपश्यन्समपश्यन्महद्भयम् ॥ ३१ ॥ ततोऽस्त्रैर्युयुधे तेन देवदेवेन चक्रिणा ॥ तान्यस्य फलहीनानि चकार भगवान्
स्वयम् ॥ ३२ ॥ ततो गदां काञ्चनपट्टनद्धां विभूषितां किंकिणिजालसंघैः ॥ चिक्षेप दैत्याधिपतिः स घोरां तां चाऽपि देवो
विफलीचकार ॥ ३३ ॥ शक्तिं ततः पट्टविनद्धमध्यामुल्कानलाभां तपनीयचित्राम् ॥ चिक्षेप दैत्यस्स वराहकाये हुङ्कारदग्धा निपपात सा च ॥
॥ ३४ ॥ ततस्त्रिशूलं ज्वलिताग्रशूलं स शीघ्रगं देवगणस्य संख्ये ॥ दैत्याधिपस्तस्य सजर्ज वेगाद्वेक्षितः[3] सोऽपि जगाम भूमिम् ॥ ३५ ॥
शङ्खस्वनेनाऽपि जनार्दनश्च विद्राव्य दैत्यान्सकलान्महात्मा ॥ सकुण्डलं दैत्यगणाधिपस्य चिच्छेद चक्रेण शिरः प्रसह्य ॥ ३६ ॥ निपातिते
दैत्यपतौ स देवः संपूजितः शक्रपितामहाभ्याम् ॥ मया च सर्वैस्त्रिदशैः समेतैर्जगाम काष्ठां मनसा त्वभीष्टाम् ॥ ३७ ॥ शक्रोपि लब्ध्वा त्रिदिवं
महात्मा चिच्छेद पक्षान्धरणीधराणाम् ॥ ररक्ष चेमां सकलां त्रिलोकीं धर्मेण धर्मज्ञभृतां वरिष्ठः ॥ ३८ ॥ ॥ इति श्रीविष्णुधर्म्मोत्तरे
प्रथमखण्डे मार्कण्डेयवज्रसंवादे शङ्करगीतासु नृवराहप्रादुर्भावे हिरण्याक्षवधो नाम त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥ ॥ शङ्कर उवाच ॥
हिरण्याक्षे हते दैत्ये भ्राता तस्य महात्मनः ॥ हिरण्यकशिपुर्नाम चकारोग्रं महत्तपः ॥ १ ॥ दशवर्षसहस्राणि दशवर्षशतानि च ॥ जपो

---

१ 'निस्वनः' इति ख० । २ 'व्यथाम्' इति ख० । ३ 'वेगादेवेक्षितः' इति ख० ।

पवासनिरतः स्नानमौनाश्रितव्रतः[1] ॥ २ ॥ तपःशमदमाभ्यां च ब्रह्मचर्येण चाऽनघ ॥ ब्रह्मा प्रीतमनास्तस्य स्वयमागत्य भार्गव ॥
॥ ३ ॥ विमानेनाऽर्कवर्णेन हंसयुक्तेन भास्वता ॥ आदित्यैस्सहितः साध्यैस्सहितो मरुदश्विभिः ॥ ४ ॥ रुद्रैर्विश्वसहायैश्च
यक्षराक्षसपन्नगैः ॥ दिग्भिर्विदिग्भिश्च तथा खेचरैश्च महाग्रहैः ॥५ ॥ निम्नगाभिः समुद्रैश्च मासर्त्वयनसंधिभिः ॥ नक्षत्रैश्च मुहूर्त्तैश्च कालस्या
वयवैस्तथा ॥ ६ ॥ देवर्षिभिः पुण्यतमैः सिद्धैः सप्तर्षिभिस्तथा ॥ राजर्षिभिः पुण्यतमैर्गन्धर्वैरप्सरोगणैः ॥ ७ ॥ चराचरगुरुः श्रीमान्वृतः
सर्वैर्दिवौकसैः ॥ ब्रह्मा ब्रह्मविदां श्रेष्ठो दैत्यं वचनमब्रवीत् ॥ ८ ॥ ब्रह्मोवाच ॥ प्रीतोस्मि तव भक्तस्य तपसाऽनेन सुव्रत ॥ वरं वरय भद्रं ते
यथेष्टं काममाप्नुहि ॥ ९ ॥ हिरण्यकशिपुरुवाच ॥ न देवासुरगन्धर्वा न यक्षोरगराक्षसाः ॥ न मानुषाः पिशाचा वा हन्युर्मां देवसत्तम ॥१०॥
ऋषयोपि न मां शापं क्रुद्धा लोकपितामह ॥ शपेयुस्तपसा युक्ता वरमेतद्वृणोम्यहम् ॥ ११ ॥ न शस्त्रेण न चास्त्रेण गिरिणा पादपेन च ॥
न शुष्केन न चाऽऽर्द्रेण वधं मे स्यात्कथञ्चन ॥ १२ ॥ भवेयमहमेवार्कः सोमो वायुर्हुताशनः ॥ सलिलं चाऽन्तरिक्षञ्च नक्षत्राणि दिशो
दश ॥ १३ ॥ अहं क्रोधश्च कामश्च वरुणो वासवो यमः ॥ धनदश्च तथाध्यक्षो यक्षः किंपुरुषाधिपः ॥ १४ ॥ ब्रह्मोवाच ॥ एते दिव्यवरा
स्तात मया दत्तास्तवाद्भुताः ॥ सर्वान्कामानिमाँस्तस्मात्प्राप्स्यसि त्वं न संशयः ॥ १५ ॥ शङ्कर उवाच ॥ एवमुक्त्वा स भगवाञ्जगामाऽऽका
शमेव हि ॥ वैराजं देवसदनं[2] महर्षिगणसेवितम् ॥ १६ ॥ ततो देवाश्च नागाश्च गन्धर्वा मुनयस्तथा ॥ वरप्रदानं श्रुत्वैव पितामहमुपस्थिताः ॥
॥ १७ ॥ देवा ऊचुः ॥ वरेणाऽनेन भगवान्वधिष्यति स नोऽसुरः ॥ तन्नः प्रसीद भगवन्वधोऽप्यस्य विचिन्त्यताम् ॥ १८ ॥ भगवान्स
र्वभूतानां स्वयम्भूरादिकृत्प्रभुः ॥ स्रष्टा च हव्यकव्यानां चाऽव्यक्तः प्रकृतिर्ध्रुवः ॥ १९ ॥ शङ्कर उवाच ॥ सर्वलोकहितं वाक्यं श्रुत्वा देवः
प्रजापतिः ॥ प्रोवाच वरदो वाक्यं सर्वान्देवगणांस्ततः ॥ २० ॥ ब्रह्मोवाच ॥ अवश्यं त्रिदशास्तेन प्राप्तव्यं तपसः फलम् ॥ ततस्तस्य वधं
विष्णुस्तपसोऽन्ते करिष्यति ॥ २१ ॥ शङ्कर उवाच ॥ एवं श्रुत्वा सुराः सर्वे वाक्यं पङ्कजजन्मनः ॥ स्वानि स्थानानि दिव्यानि जग्मुस्ते वै
मुदान्विताः ॥ २२ ॥ लब्धमात्रे वरे तस्मिन्सर्वाः सोऽबाधत प्रजाः ॥ हिरण्यकशिपुर्दैत्यो वरदानेन दर्पितः ॥ २३ ॥ आश्रमेषु महात्मानो
मुनीन्द्रान्संशितव्रतान् ॥ सत्यधर्मरतान्दान्तान्दुराधर्षोभवस्तु सः[3] ॥ २४ ॥ देवांस्त्रिभुवनस्थांश्च पराजित्य महासुरः ॥ त्रैलोक्यं वशमानीय

१ 'स्नानमौनधृतव्रतः' इति ख० । २ 'ब्रह्मसदनम्' इति ख० । ३ 'सत्यधर्मव्रतान्दान्तान्दुराधर्षोभवस्तु सः' इति ख० ।

स्वर्गे वसति दानवः ॥ २५ ॥ यदा वरमदोन्मत्तो ह्यावासं कृतवान् दिवि ॥ याज्ञियान्कृतवान्दैत्यानयाज्ञेयाश्च देवताः ॥ २६ ॥ आदित्या
वसवो रुद्रा विश्वेदेवास्तथाऽश्विनौ ॥ भृगवोऽङ्गिरसः साध्या मरुतश्च सवासवाः ॥ २७ ॥ शरण्यं शरणं विष्णुमुपतस्थुर्महाबलम् ॥ देवं ब्रह्म
मयं विष्णुं ब्रह्मभूत सनातनम् ॥ २८ ॥ भूतभव्यभविष्यस्य [1]प्रभुं लोकपरायणम् ॥ नारायणं विभुं देवाः शरण्यं शरणं गताः ॥२९॥देवा ऊचुः॥
त्रायस्व नोऽद्य देवेश हिरण्यकशिपोर्वधात् ॥ त्वं हि नः परमो देवो ब्रह्मादीनां सुरोत्तम ॥ ३० ॥ प्रोत्फुल्लामलपत्राक्ष शत्रुपक्षक्षयंकर ॥ क्षयाय
दितिवंशस्य शरणं त्वं भवस्व नः ॥ ३१ ॥ श्रीभगवानुवाच ॥ भयं त्यजध्वममरा अभयं वो ददाम्यहम् ॥ तथैव त्रिदिवं देवाः प्रतिपद्यत मा
चिरम् ॥ ३२ ॥ [2]एषोऽमुं सबलं दैत्यं वरदानेन दर्पितम्॥ अवध्यममरेन्द्राणां दानवेन्द्रं निहन्म्यहम् ॥ ३३ ॥ शङ्कर उवाच ॥ एवमुक्त्वा स भग
वान्विसृज्य त्रिदिवेश्वरान् ॥ नारसिंहं वपुश्चक्रे सहस्रांशुसमप्रभम् ॥ ३४ ॥ प्रांशुं कनकशैलाभं ज्वालापुञ्जविभूषितम् ॥ दैत्यसैन्यमहाम्भोधि
वडवानलवर्चसम् ॥ ३५ ॥ सन्ध्यानुरक्तमेघाभं नीलवाससमच्युतम् ॥ देवदारुवनच्छन्नं यथा मेरुं महागिरिम् ॥ ३६ ॥ संपूर्णवक्त्रदशनैः
शशाङ्कशकलोपमैः ॥ पूर्णं मुक्ताफलैः शुभ्रैः समुद्रमिव काञ्चनम् ॥ ३७ ॥ नखैर्विद्रुमसंकाशैर्विराजितकरद्वयम् ॥ दैत्यनाथक्षयकरैः क्रोधस्येव
यथाङ्कुरैः ॥ ३८ ॥ सटाभारं सकुटिलं वह्निज्वालाग्रपिंगलम् ॥ धारयन्भाति सर्वात्मा दावानलमिवाचलः ॥ ३९ ॥ दृश्यादृश्यमुखे तस्य
जिह्वा[3]भ्युदितचञ्चला ॥ प्रलयान्ताम्बुदस्येव चञ्चला तु तडिल्लता ॥ ४० ॥ आवर्त्तिभिर्लोमघनैर्[4]व्याप्तं विग्रहमूर्जितम् ॥ महाकटितटस्कन्धमला
तप्रतिमेक्षणम् ॥ ४१ ॥ कल्पान्तमेघनिर्घोषज्वालानिःश्वासमारुतम् ॥ दुर्निरीक्ष्यं दुराधर्षं वज्रमध्यविभीषणम् ॥ ४२ ॥ कृत्वा मूर्तिं
नृसिंहस्य दानवेन्द्रसभां ययौ ॥ ताम्बभञ्ज तु वेगेन दैत्यानां भयवर्धनः॥ ४३ ॥ भज्यमानां सभां दृष्ट्वा नृसिंहेन महात्मना ॥ हिरण्यकशिपू
राजा दानवान्समचोदयत् ॥ ४४ ॥ सत्त्वजातमिदं घोरं चापूर्वं पुनरागतम् ॥ घातयध्वं दुराधर्षं येन मे नाशिता सभा ॥४५॥ तस्य तद्वचनं
श्रुत्वा दैत्याः शतसहस्रशः ॥ आयुधैर्विविधैर्जघ्नुर्देवदेवं जनार्दनम् ॥ ४६ ॥ नानायुधसहस्राणि तस्य गात्रेषु भार्गव ॥ विशीर्णान्येव दृश्यन्ते
मृल्लोष्टानीव पर्वते ॥ ४७ ॥ दैत्यायुधानां वैफल्यं कृत्वा हत्वा च दानवान् ॥ करपादप्रहारैश्च शतशोऽथ सहस्रशः ॥ ४८ ॥ जग्राह वेगा
द्दैतेयं हिरण्यकशिपुं ततः ॥ नृसिंहहेतोर्विक्रान्तमस्त्रवर्षमहाम्बुदम् ॥ ४९ ॥ वेगेनोत्संगमारोप्य कदलीदललीलया ॥ दारयामास दैत्येशं

१ 'प्रभविष्णुं परायणम्' इति क० । २ 'एषोऽहम्' इति ख० । ३ 'जिह्वात्यमितचञ्चला' इति ख० । ४ 'लोमगणैः' इति ख० । ५ 'रूपन्' इति ख० ।

वक्षस्स्थलमहागिरिम् ॥ ५० ॥ कृत्वा तमसुभिर्हीनं दैत्येशं केशवः स्वयम् ॥ असुराणां विनाशं च क्रुद्धो नरहरिर्व्यधात् ॥ ५१ ॥ हत्वाऽसुरं शोणितबिन्दुचित्रं संपूज्य देवाः सह वासवेन ॥ जग्मुस्स्वधिष्ण्यानि मुदा समेता देवोप्यथान्तर्हितमूर्तिरास ॥ ५२ ॥ इति श्रीविष्णुधर्म्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शङ्करगीतासु नरसिंहप्रादुर्भावो नाम चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥ शङ्कर उवाच ॥ हते हिरण्यकशिपौ दानवे देवकण्टके ॥ हतशेषास्तु दैतेयाः पातालतलमाश्रिताः ॥ १ ॥ पातालतलसंस्थेषु दानवेषु महायशाः ॥ प्रह्लादपौत्रो धर्मात्मा विरोचनसुतो बलिः ॥ २ ॥ आराध्य तपसोग्रेण वरं लेभे पितामहात् ॥ अवध्यत्वमजेयत्वं समरेषु सुरासुरैः ॥ ॥ ३ ॥ वरलब्धं बलिं ज्ञात्वा पुनश्चक्रुर्दितेः सुताः ॥ प्रहृष्टा दैत्यराजानं प्रह्लादानुमतेर्बलिम् ॥ ४ ॥ संप्राप्य दैत्यराज्यं तु बलेन चतुरंगिणा ॥ जित्वा देवेश्वरं शक्रमाजहाराऽमरावतीम् ॥ ५ ॥ स्थानभ्रष्टो महेन्द्रोऽपि कश्यपं शरणं गतः ॥ कश्यपेन तदा सार्धं ब्रह्माणं शरणं गतः ॥ ६ ॥ ब्रह्मणाऽभिहितो देवं जगाम शरणं हरिम् ॥ अमृताध्मातमेघाभं शङ्खचक्रगदाधरम् ॥ ७ ॥ देवोऽप्यभयदानेन संयोज्य बलसूदनम् ॥ उवाच वचनं काले मेघगम्भीरया गिरा ॥८॥ श्रीभगवानुवाच ॥ गच्छ शक्र भविष्यामि त्राता ते बलसूदन ॥ देवरूपधरो भूत्वा वञ्चयिष्यामि तं बलिम् ॥९ ॥ शङ्कर उवाच ॥ एवमुक्तस्तदा शक्रः प्रययौ कश्यपाश्रमम्॥आदिदेशाऽदित्तेर्गर्भं चांशेनाऽथ च सर्वदा ॥१०॥ गर्भस्थ एव तेजांसि दानवेभ्यः स आददे[1] ॥ ततः कालेन सुषुवे अदितिर्वामनाकृतिम् ॥ ११ ॥ यस्मिञ्जाते सुरगणाः प्रहर्षमतुलं गताः ॥ ऋषयश्च महाभागास्त्रैकाल्यामलदर्शिनः ॥ १२ ॥ एतस्मिन्नेव काले तु हयमेधाय दीक्षितः ॥ बलिर्दैत्यपतिः श्रीमान्स्पालिग्राममुपाश्रितः ॥ १३ ॥ वामस्कन्धे तमादाय[2] तस्य यज्ञे बृहस्पतिः ॥ अनयद्भृगुशार्दूल नूनं तस्यैव मायया ॥ १४ ॥ यज्ञवाटं स संप्राप्य यज्ञं[3] तुष्टाव वामनः ॥ आत्मानमात्मना ब्रह्मन्भस्मच्छन्न इवाऽनलः ॥ १५ ॥ प्रवेशयामास च तं बलिर्धर्मभृतां वरः ॥ ददर्श च महाभागं वामनं सुमनोहरम् ॥ १६ ॥ संयुक्तसर्वावयवैः पीनैः संक्षिप्तपर्वभिः ॥ कृष्णाजिनजटादण्डकमण्डलुविराजितम् ॥१७॥ विक्रमिष्यन्यथा व्याघ्रो लीयति स्म स्वविग्रहे ॥ विक्रमिष्यँस्तथैवोर्वीं लीनगात्रः स्वविग्रहे ॥ १८ ॥ एतन्मिन्नेव काले तु हयमेधाय दीक्षितः ॥ तस्मात्तु प्रार्थयद्राजन्देहि मह्यं क्रमत्रयम् ॥ १९ ॥ एवमुक्तस्तु देवेन बलिर्दैत्यगणाधिपः ॥ प्रददावुदकं तस्य पाँवयस्वेति[4] चाब्रवीत् ॥ २० ॥ अन्यच्च यदभीष्टन्ते तद्गृहाण द्विजोत्तम ॥ प्रतिजग्राह च जलं

१ 'दानवानां स आददे' इति ख० । २ 'वामनं स्कन्ध आदाय' इति ख० । ३ 'यज्ञात्' इति क० । ४ 'मां पायस्वेति' इति ख० ।

प्रवात्येव तदा हरिः ॥ २१ ॥ उदङ्मुखैर्दैत्यवरैर्वीक्ष्यमाण इवाम्बुदः ॥ आक्रमंस्तु हरिर्लोकान्दानवाः शस्त्रपाणयः ॥ २२ ॥ अभिद्रवन्ति वेगेन नानावक्त्रशिरोधराः ॥ गरुडाननाः खड्गमुखा मयूरवदनास्तथा ॥ २३ ॥ घोरा मकरवक्त्राश्च क्रोष्टुवक्त्राश्च दानवाः ॥ आखुदर्दुरवक्त्राश्च घोर वृकमुखास्तथा ॥ २४ ॥ मार्जारशशवक्त्राश्च हंसकाकाननास्तथा ॥ गोधाशल्यकवक्त्राश्च अजाविमहिषाननाः ॥ २५ ॥ सिंहव्याघ्रशृगालानां द्वीपिवानरपक्षिणाम् ॥ हस्त्यश्वगोखरोष्ट्राणां भुजगानां समाननाः ॥ २६॥ प्रतिग्रहजलं प्राप्य व्यवर्धत तदा हरिः ॥ उदङ्मुखैर्देवगणैरी क्ष्यमाण इवाम्बुदः ॥ २७॥ विक्रमन्तं हरिं लोकान्दानवाः शस्त्रपाणयः ॥ मत्स्यकच्छपवक्त्राणां दर्दुराणां समाननाः ॥ २८ ॥ स्थूलदन्ता विवृत्ताक्षा[1] लम्बोष्ठजठरास्तथा ॥ पिङ्गलाक्षा विवृत्तास्या नानाबाहुशिरोधराः ॥ २९ ॥ स्थूलाग्रनासाश्चिपिटा महाहनुकपालिनः ॥ चीनांशुकोत्तरासंगाः केचित्कृष्णाजिनाम्बराः ॥ ३० ॥ भुजङ्गाभरणाश्चान्ये केचिन्मुकुटभूषिताः ॥ सकुण्डलाः सकटकाः सशिरस्त्राणमस्तकाः ॥ ३१ ॥ धनुर्बाणधराश्चाऽन्ये तथा तोमरपाणयः ॥ खड्गचर्मधराश्चाऽन्ये तथा परिघपाणयः ॥ ३२ ॥ शतघ्नीचक्रहस्ताश्च गदामुशलपाणयः ॥ अश्मयन्त्रायुधोपेता भिण्डिपालायुधास्तथा ॥ ३३ ॥ शूलोलूखलहस्ताश्च परश्वधधरास्तथा ॥ महावृक्षप्रवहणा[2] महापर्वतयोधिनः ॥ ३४ ॥ क्रममाणं हृषीकेशमुपावर्त्तन्त सर्वशः ॥ स तान्ममर्द सर्वात्मा तन्मुखान्दैत्यदानवान् ॥ ३५ ॥ सरसीव महापद्मान्महाहस्तीव दानवान् ॥ प्रमथ्य[3] सर्वान्दैतेयान्हस्तपादतलैस्ततः ॥३६ ॥ रूपं कृत्वा महाभीममाजहाराऽऽशु मेदिनीम्॥ तस्य विक्रमतो भूमिं चन्द्रादित्यौ स्तनान्तरे ॥ ३७ ॥ परं प्रक्रममाणस्य नाभिदेशे व्यवस्थितौ ॥ ततः प्रक्रममाणस्य जानुदेशे व्यवस्थितौ ॥ ३८ ॥ ततोपि क्रममाणस्य पद्भ्यां देवौ व्यवस्थितौ ॥ जित्वा स मेदिनीं कृत्स्नां हत्वा चासुरपुंगवान् ॥ ३९ ॥ ददौ शक्राय वसुधां विष्णुर्बलवतां वरः ॥ स्वं रूपंञ्च[4] तथाऽऽसाद्य दानवेन्द्रमभाषत ॥ ४० ॥ श्रीभगवानुवाच ॥ यज्ञवाटे त्वदीयेऽस्मिन्सालिग्रामे महासुर॥ मया निविष्टपादेन मापितेयं वसुन्धरा ॥ ४१ ॥ प्रथमं तु पदं जातं नौर्बन्धशिखरे मम ॥ द्वितीयं मेरुशिखरे तृतीयं नाऽभवत्क्वचित् ॥ ४२ ॥ तन्मे वरय दैत्येन्द्र यन्मयाप्तं प्रतिग्रहम्॥ बलिरुवाच ॥ यावती वसुधा देव त्वयैव परिनिर्मिता ॥ ४३ ॥ तावती[5] ते न संपूर्णा देवदेव क्रमत्रयम् ॥ न कृतं यत्त्वया देव कुतस्तन्मे महेश्वर ॥ ४४ ॥ न च तद्विद्यते देव तथैवाऽन्यस्य कस्यचित् ॥ श्रीभगवानुवाच ॥ न मे त्वयापूर्यते मे दानवेन्द्र यथाश्रुतम् ॥ ४५ ॥ सुतलं नाम पाताले वस

१ 'पिङ्गलास्या विवृत्ताक्षा' इति ख० । २ 'महावृक्षप्रहरणा' इति ख० । ३ 'मत्तान्' इति ख० । ४ 'स्वञ्च रूपं समासाद्य' इति ख० । ५ 'तावती वसुधा पूर्णा' इति ख० ।

तत्र सुसंयतः ॥मयैव निर्मिता तत्र मनसा शोभना पुरी ॥४६॥ ज्ञातिभिः सह धर्मिष्ठैर्वस तत्र यथासुखम्॥तत्र त्वं भोक्ष्यसे भोगान्विशिष्टान्बल सूदनात् ॥४७॥ अवाप्स्यसि तथा भोगाँल्लोकाद्विधिविवर्जितान्॥प्राकाम्ययुक्तश्च तथा लोकेषु विहरिष्यसि ॥४८॥ मन्वन्तरे द्वितीये च महेन्द्रत्वं करिष्यसि ॥ तेजसा च मदीयेन शक्रत्वे योक्ष्यसे बले ॥ ४९ ॥ तव शत्रुगणान्सर्वान्घातयिष्याम्यहं तदा ॥ ब्रह्मण्यस्त्वं शरण्यस्त्वं यज्ञशीलः प्रियंवदः ॥ ५० ॥ तपस्वी दानशीलश्च वेदवेदांगपारगः ॥ तस्माद्यशोभिवृद्ध्यर्थं मया त्वमभिसन्धितः ॥ ५१ ॥ देवराजाधिकान्भोगान्पातालस्थोऽपि भोक्ष्यसे ॥ सन्निधानश्च तत्राहं करिष्याम्यसुराधिप ॥५२॥ मया च रंस्यसे सार्धं स्पृहणीयः सुरैरपि॥ शक्रत्वं च तथा कृत्वा भाव्ये सावर्णिकेऽन्तरे ॥ ५३ ॥ सर्वसंधिविनिर्मुक्तो मयैव सह रंस्यसे ॥५४॥ शङ्कर उवाच ॥ इत्येवमुक्त्वा सजलाम्बुदाभः प्रतप्तचामीकरधौतवस्त्रः ॥ अदर्शनं देववरो जगाम शक्रश्च लेभे सकलां त्रिलोकीम् ॥ ५५ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मा०सं० शंकरगीतासु वामनप्रादुर्भावो नाम पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥ राम उवाच ॥ तस्य देवातिदेवस्य विष्णोरमिततेजसः ॥ त्वत्तोऽहंश्रोतुमिच्छामि दिव्या आत्मविभूतयः ॥ १ ॥ शङ्कर उवाच ॥ न शक्या विस्तराद्वक्तुं देवदेवस्य भूतयः ॥ प्राधान्यतस्ते वक्ष्यामि शृणुष्वैकमना द्विज ॥२ ॥ सर्गे ब्रह्मा स्थितौ विष्णुः संहारे च तथा हरः ॥ वरुणो वायुराकाशो ज्योतिश्च पृथिवी तथा ॥ ३ ॥ दिशश्च विदिशश्चाऽपि तथा ये च दिगीश्वराः ॥ आदित्या वसवो रुद्रा भृगवोऽगिरसस्तथा ॥ ४ ॥ साध्याश्च मरुतो देवा विश्वेदेवास्तथैव च ॥ अश्विनौ पुरुहूतश्च गन्धर्वाप्सरसां गणाः ॥ ५ ॥ पर्वतोदधिपाताला लोका द्वीपाश्च भार्गव ॥ तिर्यगूर्ध्वमधश्चैव त्विङ्गितं यश्च नेङ्गते ॥ ६ ॥ सच्चाऽसच्च महाभाग प्रकृतिर्विकृतिश्च यः ॥ कृमिकीटपतङ्गानां वयसां योनयस्तथा ॥ ७ ॥ विद्याधरास्तथा यक्षा नागाः सर्पाः सकिन्नराः ॥ राक्षसाश्च पिशाचाश्च पितरः कालसंधयः ॥८ ॥ धर्मार्थकाममोक्षाश्च धर्मद्वाराणि यानि च ॥ यज्ञाङ्गानि च सर्वाणि भूतग्रामं चतुर्विधम्॥९॥जरायुजाण्डजाश्चैव संस्वेदजमथोद्भिजम् ॥ एकज्योतिः स मरुतां वसूनां स च पावकः॥१०॥अहिर्बुध्न्यश्च रुद्राणां नादेवाश्विनयोस्तथा ॥ नारायणश्च साध्यानां भृगूणाञ्च तथा क्रतुः॥११॥ आदित्यानां तथा विष्णुरायुरङ्गिरसां तथा ॥ विश्वेषाञ्चैव देवानां रोचमानः स कीर्तितः ॥१२॥ वासवः सर्वदेवानां ज्योतिषां च हुताशनः ॥ यमः संयमशीलानां विरूपाक्षः क्षमाभृताम् ॥ १३ ॥ यादसां वरुणश्चैव पवनः प्लवतां तथा ॥ धनाध्यक्षश्च यक्षाणां रुद्रो रौद्रस्तथान्तरः ॥ १४ ॥ अनन्तः सर्वना

१ 'भूयः कथयतः कथाम्' इति ख० । २ 'संहारे स हरस्तथा' इति ख० । ३'सर्वत्रोदधिपातालल्लोका' इति ख० ।

गानां सूर्यस्तेजस्विनां तथा ॥ ग्रहाणाञ्च तथा चन्द्रो नक्षत्राणाञ्च कृत्तिका ॥ १५ ॥ कालः कलयतां श्रेष्ठो युगानां च कृतं युगम् ॥ कल्पं मन्वन्तरेशाश्च मनवश्च चतुर्दश ॥ १६ ॥ स एव देवः सर्वात्मा ये च देवेश्वरास्तथा ॥ संवत्सरस्तु वर्षाणां चायनानां तथोत्तरः ॥ १७ ॥ मार्गशीर्षस्तु मासानां ऋतूनां कुसुमाकरः ॥ शुक्लपक्षस्तु पक्षाणां तिथीनां पूर्णिमा तिथिः ॥१८॥ कारणानां वधः प्रोक्तो मुहूर्त्तानां तथाऽभिजित् ॥ पातालानां सुतलश्च समुद्राणां पयोदधिः ॥ १९ ॥ जम्बूद्वीपश्च द्वीपानां लोकानां सत्य उच्यते ॥ मेरुः शिलोच्चयानां च वर्षेष्वपि च भारतम् ॥ २० ॥ हिमालयः स्थावराणां जाह्नवी सरितां तथा ॥ पुष्करः सर्वतीर्थानां गरुडः पक्षिणां तथा ॥ २१ ॥ गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥ ऋषीणाञ्च भृगुर्देवो देवर्षीणां च नारदः ॥२२॥ तथा ब्रह्मऋषीणाञ्च अंगिराः परिकीर्तितः ॥ विद्याधराणां सर्वेषां देवश्चित्रांगदस्तथा ॥२३॥ कंबरः किन्नराणां च सर्पाणामथ वासुकिः ॥ प्रह्लादः सर्वदैत्यानां रम्भा चाप्सरसां तथा ॥ २४ ॥ उच्चैःश्रवसमश्वानां धेनूनां चैव कामधुक् ॥ ऐरावतो गजेन्द्राणां मृगाणां च मृगाधिपः ॥ २५ ॥ आयुधानां तथा वज्रो नराणाञ्च नराधिपः ॥ क्षमा क्षमावतां देवो बुद्धिर्बुद्धिमतामपि ॥ २६ ॥ धर्मा विरुद्धः कामश्च तथा धर्मभृतां नृणाम् ॥ धर्म्मो धर्म्मभृतां देवस्तपश्चैव तपस्विनाम् ॥२७॥ यज्ञानां जपज्ञश्च सत्यः सत्यवतां तथा ॥ वेदानां सामवेदश्च अंशूनां ज्योतिषां पतिः ॥ २८ ॥ गायत्री सर्वमंत्राणां वाचः प्रवदतां तथा ॥ अक्षराणामकारश्च यन्त्राणाञ्च तथा धनुः ॥२९॥ अध्यात्मविद्या विद्यानां कवीनामुशना कविः ॥ चेतना सर्वभूतानामिन्द्रियाणां मनस्तथा ॥ ३० ॥ ब्रह्मा ब्रह्मविदां देवो ज्ञानं ज्ञानवतां तथा ॥ कीर्तिः श्रीर्वाक् च नारीणां स्मृतिर्मेधा तथा क्षमा ॥ ३१ ॥ आश्रमाणां चतुर्थश्च वर्णानां ब्राह्मणस्तथा ॥ स्कन्दः सेनाप्रणेतृणां सदयश्च दयावताम् ॥ ३२ ॥ जयश्च व्यवसायश्च तथोत्साहवतां प्रभुः ॥ अश्वत्थः सर्ववृक्षाणामोषधीनां तथा यवः ॥ ३३ ॥ मृत्युः स एव म्रियतामुद्भवश्च भविष्यताम् ॥ झषाणां मकरश्चैव द्यूतं छलयतां तथा ॥ ३४ ॥ मानश्च सर्वगुह्यानां रत्नानां कनकं तथा ॥ धृतिर्भूमौ रसस्तेजस्तेजश्चैव हुताशने ॥ ३५ ॥ वायुः स्पर्शगुणानां च खञ्च शब्दगुणस्तथा ॥ एवं विभूतिभिः सर्वं व्याप्य तिष्ठति भार्गव ॥ ३६ ॥ एकांशेन भृगुश्रेष्ठ तस्यांशत्रितयं दिवि ॥ देवाश्च ऋषयश्चैव ब्रह्मा चाऽहं च भार्गव ॥ ३७ ॥ चक्षुषा यन्न पश्यंति विना ज्ञानगतिं द्विज ॥ ज्ञाता ज्ञेयस्तथा ध्याता ध्येयश्चोक्तो जनार्दनः ॥ ३८ ॥ यज्ञो यष्टा च गोविन्दः क्षेत्रं क्षेत्रज्ञ एव च ॥ अन्नमन्नाद एवोक्तः

१ 'पयोनिधिः' इति ख०। २ 'स्रोतसाम्' इति ख०। ३ 'धर्माविरुद्धकामश्च तथा कामात्मनां नृणाम्' इति ख०। ४ 'पश्यामि' इति ख०। ५ 'ज्ञाता ज्ञेयं तथा ज्ञानं त्रयं चोक्तो जनार्दनः' इति ख०।

स एव च गुणत्रयम् ॥ ३९ ॥ गामाविश्य च भूतानि धारयत्योजसा विभुः ॥ पुष्णाति चौषधीः सर्वा सोमो भूत्वा रसात्मकः ॥ ४० ॥ प्राणिनां
जठरस्थोऽग्निर्भुक्तपाची स भार्गव ॥ चेष्टाकृत्प्राणिनां ब्रह्मन्स च वायुः शरीरगः[1] ॥ ४१ ॥ यथादित्यगतं तेजो जगद्भासयतेऽखिलम् ॥ यच्च
न्द्रमसि यच्चाऽग्नौ तत्तेजस्तत्र[2] कीर्तितम् ॥ ४२ ॥ सर्वस्य चाऽसौ हृदि सन्निविष्टस्तस्मात्स्मृतिर्ज्ञानमपोहनञ्च ॥ सर्वैश्च देवैश्च स एव वन्द्यो वेदा
न्तकृद्वेदकृदेव चाऽसौ ॥ ४३ ॥ इति श्रीविष्णुधर्मोऽत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शङ्करगीतासु विभूतिवर्णनं नाम षट्पञ्चाशत्तमो
ऽध्यायः ॥ ५६ ॥ ॥ छ ॥ ॥ राम उवाच ॥ ॥ आराध्यते स भगवान्कर्मणा येन शङ्कर ॥ तत्समाचक्ष्व[3] भगवन्सर्वसत्त्वसुखप्रदम् ॥ १ ॥
॥ शङ्कर उवाच ॥ साधु राम महाभाग साधु दानवनाशन ॥ यन्मां पृच्छसि धर्मज्ञ केशवाराधनं प्रति ॥ २ ॥ दिवसं दिवसार्धं वा मुहूर्त्तमेक
मेव वा ॥ नाशश्चाऽशेषपापस्य भक्तिर्भवति केशवे ॥ ३ ॥ अनेकजन्मसाहस्रैर्नानायोन्यन्तरेषु च ॥ जन्तोः कल्मषहीनस्य भक्तिर्भवति केशवे ॥
॥ ४ ॥ नाऽधन्यः केशवं स्तौति नाऽधन्योर्चयति प्रभुम् ॥ नमत्यधन्यश्च हरिं नाऽधन्यो वेत्ति माधवम् ॥ ५ ॥ मनश्च तद्धि धर्मज्ञ
केशवे यत्प्रवर्तते ॥ सा बुद्धिस्तद्गतायैव सततं प्रतितिष्ठति ॥ ६ ॥ सा वाणी केशवं देवं या स्तौति भृगुनन्दन ॥ श्रवणौ तौ श्रुता याभ्यां
सततं तत्कथाः शुभाः ॥ ७ ॥ अवेहि धर्मज्ञ तथा तत्पूजाकरणात्करौ ॥ तदेकं सफलं कर्म केशवार्थाय यत्कृतम् ॥ ८ ॥ यतो मुख्यफला
वाप्तौ करणं सप्रयोजनम् ॥ मनसा तेन किं कार्य्यं यन्न तिष्ठति केशवे ॥ ९ ॥ बुद्ध्या वा भार्गवश्रेष्ठ तया नास्ति प्रयोजनम् ॥ रोगः सा र
सना वाऽपि यया न स्तूयते हरिः ॥ १० ॥ गतौ ब्रह्मव्रतौ कर्णौ याभ्यां तत्कर्म न श्रुतम् ॥ भारभूतैः करैः कार्यं कि तस्य नृपशोर्द्विज ॥ ११ ॥
यैर्न संपूजितो देवः शङ्खचक्रगदाधरः ॥ पादौ तौ सफलौ राम केशवालयगामिनौ ॥ १२ ॥ ते च नेत्रे महाभाग याभ्यां संदृश्यते हरिः ॥ किं
तस्य चरणैः कार्यं कृतस्य निपुणैर्द्विज ॥ १३ ॥ याभ्यां न व्रजते जन्तुः केशवालयदर्शने ॥ जात्यन्धतुल्यं तं मन्ये पुरुषं पुरुषोत्तम ॥ १४ ॥
यो न पश्यति धर्मज्ञ केशवार्चां पुनःपुनः ॥ क्लेशसंजननं कर्म वृथा तद्भृगुनन्दन ॥ १५ ॥ केशवं प्रति यद्राम क्रियतेऽहनि सर्वदा ॥ पश्य
केशवमाराध्य मोदमानं शचीपतिम् ॥ १६ ॥ यमश्च वरुणश्चैव तथा वैश्रवणं प्रभुम् ॥ देवेन्द्रत्वमतिस्फीतं सर्वभूतिस्मितं[4] पदम् ॥ १७ ॥
हरिभक्तिद्रुमात्पुष्पं राजसात्सात्त्विकं फलम् ॥ अणिमा महिमा प्राप्तिः प्राकाम्यं लघिमा तथा ॥ १८ ॥ ईशित्वञ्च वशित्वञ्च यत्र कामावसा

१ 'शरीरिणः' इति ख० । २ 'तस्य' इति ख० । ३ 'तन्समाचक्ष्व' इति ख० । ४ 'सर्वं भूतोऽस्मितं पदम्' इति ख० ।

यिता ॥ आराध्य केशवं देवं प्राप्यन्ते नाऽत्र संशयः ॥ १९ ॥ हतप्रत्यङ्गमातङ्गो रुधिरारुणभूतले ॥ संग्रामे विजयं राम प्राप्यते तत्प्रसादतः ॥ ॥ २० ॥ महाकटितटश्रोण्यः पीनोन्नतपयोधराः ॥ अकलङ्कशशाङ्काभवदना नीलमूर्धजाः ॥ २१ ॥ रमयन्ति नरं स्वप्ने देवरामा मनोहराः ॥ सकृद्येनार्चितो देवो हेलया वा नमस्कृतः ॥ २२ ॥ वेदवेदाङ्गवपुषां मुनीनां भावितात्मनाम् ॥ ऋषित्वमपि धर्मज्ञ विज्ञेयं तत्प्रसादजम् ॥ २३ ॥ रमन्ते सह रामाभिः प्राप्य वैद्याधरं पदम् ॥ अन्यभावतया नाम्नः कीर्तनादपि भार्गव ॥ २४ ॥ रत्नपर्यङ्कशयिता महाभोगाश्च भोगिनः ॥ वीज्यन्ते सह रामाभिः केशवस्मरणादपि ॥ २५ ॥ सौगन्धिके वने रम्ये कैलासपर्वते द्विज[1] ॥ यद्यक्षा विहरन्तिस्म तत्प्राहुः कुसुमं नतेः ॥ २६ ॥ रत्नचित्रासु रम्यासु नन्दनोद्यानभूमिषु ॥ क्रीडन्ति च सह स्त्रीभिर्गन्धर्वीभिः कथाश्रुतेः[2] ॥ २७ ॥ चतुस्समुद्रवेलायां मेरुविन्ध्यपयोधराम् ॥ धरां ये भुञ्जते भूपाः प्रणिपातस्य तत्फलम् ॥ २८ ॥ तस्मात्तवाऽहं वक्ष्यामि यद्यदा चरतः सदा ॥ पुरुषस्येह भगवान्सुतोषस्तुष्यते हरिः ॥ २९ ॥ पूज्यः स नित्यं वरदो महात्मा स्तव्यः स नित्यं जगदेकवन्द्यः ॥ ध्येयः स नित्यं सकलाघहर्ता चैतावदुक्तं तव राम गुह्यम् ॥ ३० ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शङ्कर गीतासु भक्तिफलप्रदर्शनं नाम सप्तपञ्चाशत्तमोऽध्ययाः ॥ ५७ ॥ ॥ शङ्कर उवाच ॥ अहिंसा सत्यवचनं दया भूतेष्वनुग्रहम् ॥ यस्यैतानि सदा राम तस्य तुष्यति केशवः ॥ १ ॥ मातापितृगुरूणाञ्च यः सम्यगिह वर्त्तते ॥ वर्जको मधुमांसस्य तस्य तुष्यति केशवः ॥ २ ॥ वराहमत्स्यमांसानि यो नात्ति भृगुनन्दन ॥ विरतो मद्यपानाच्च तस्य तुष्यति केशवः ॥ ३ ॥ न धारयति निर्माल्यमन्यदेवोद्धतं तु यः ॥ भुंक्ते न चान्यनैवेद्यं तस्य तुष्यति केशवः ॥ ४ ॥ अवैष्णवे देवधृतं निर्माल्यं यः प्रयच्छति ॥ नैवेद्यं वा महाभाग तस्य तुष्यति केशवः ॥ ५ ॥ बिभर्ति मूर्ध्नि निर्माल्यं केशवार्चाधृतं तु यः॥अनिवेद्य न चाश्नाति तस्य तुष्यति केशवः ॥ ६॥ परपीडाकरं कर्म यस्य नाऽस्ति महात्मनः॥संविभागी च भूतानां[3] तस्य तुष्यति केशवः ॥ ७ ॥ शृणुते सर्वधर्मांश्च सर्वान्देवान्नमस्यति ॥ अनसूयुर्जितक्रोधस्तस्य तुष्यति केशवः ॥ ८ ॥ तीर्थोपवाससेवी च द्विजातिगणसेवकः ॥ पूजको विष्णुभक्तानां तस्य तुष्यति केशवः ॥ ९ ॥ पञ्चरात्रविदो मुख्यान्यस्तु संपूजयेत्सदा[4] ॥ देववद्भृगुशार्दूल तस्य तुष्यति केशवः ॥ १० ॥ पितृदेवार्चनरतः स्वदारनिरतः सदा ॥ ऋतुकालाभिगामी च तस्य तुष्यति केशवः ॥११॥ नाम्नां सहस्रेण तथा यश्च

१ 'कैलासशिखरे द्विज' इति ख० । २ 'क्रीडन्ति च सहस्राणि गन्धर्वास्तत्कथाश्रुतेः' इति ख० । ३ 'भक्तानाम' इति ख० । ४ 'पञ्चरात्रविधानेन यो विष्णुं पूजयेत्सदा' इति ख० ।

गायति तन्मनाः ॥ सततं कल्यमुत्थाय तस्य तुष्यति केशवः ॥१२॥ पौरुषेण च सूक्तेन जप्यहोमादिकं सदा॥ यः करोत्यमितप्रज्ञस्तस्य तुष्यति केशवः ॥ १३ ॥ मित्रस्वामिगुरुद्रोहो यस्य नाऽस्ति महात्मनः ॥ पर[१]दारधनेच्छा न तस्य तुष्यति केशवः ॥ १४ ॥ राजा शास्त्रोपदेशेन राज्यं यश्च प्रशासति ॥ राजधर्मरतिर्नित्यं तस्य तुष्यति केशवः॥१५॥या तु नारी पतिप्राणा पतिभक्ता पतिव्रता ॥ तस्याः सुतोषो भगवाँस्तोषमायाति केशवः॥१६॥अग्निहोत्रपरो विद्वान्यज्ञैर्नित्यमतन्द्रितः ॥ यस्तु तर्पयते देवांस्तस्य तुष्यति केशवः॥१७॥ स्ववर्णाश्रमधर्मस्थः पूजयन्मधुसूदनम् ॥ कालं नयति यो ब्रह्मँस्तस्य तुष्यति केशवः ॥१८॥ सोपवासस्तु पक्षान्ते द्वादश्यां वा भृगूत्तम ॥ बौधेऽह्नि श्रवणर्क्षे वा तृतीयायान्तु वा पुनः ॥ सोपवासोऽर्चयति यस्तस्य तुष्यति केशवः ॥ १९ ॥ पुष्पं विना हरिं प्राप्य फली रत्नं क्षुमां पि वा ॥ निवेदयति यः कृष्णे तस्य तुष्यति केशवः॥२०॥कृष्णे पश्यति यत्सर्वं कृष्णं सर्वत्र पश्यति ॥ महात्मा बुद्धिसम्पन्नस्तस्य तुष्यति केशवः ॥ २१ ॥ तत्कथायाञ्च रमते तत्कथां यः करोति च ॥ तन्मनास्तद्गतप्राणस्तस्य तुष्यति केशवः ॥२२॥ सर्वभूतहिते युक्तः सर्वभूतहिते रतः ॥ सर्वभूतानुकम्पी च तस्य तुष्यति केशवः ॥ २३ ॥ अप्रणम्य क्रियां कांचिद्यस्तु नाऽऽरभते हरिम् ॥ असंभिन्नार्थमर्यादस्तस्य तुष्यति केशवः ॥ २४ ॥ नामसंकीर्त्तनं नित्यं क्षुतप्रस्खलनादिषु ॥ यः करोति महाभागस्तस्य तुष्यति केशवः ॥ २५ ॥ नैवं[२] पत्रं फलं पुष्पं निवेद्य मधुसूदने ॥ पश्चाद्भुङ्क्ते स्वयं यश्च तस्य तुष्यति केशवः ॥ २६ आपद्यपि च कष्टायां देवेशशपथं नरः ॥ न करोति हि यो ब्रह्मंस्तस्य तुष्यति केशवः ॥ २७ ॥ देवादुद्धृत्य निर्माल्यं छायां नाक्रमते च यः ॥ धूपाग्निभस्म च तथा तस्य तुष्यति केशवः ॥२८॥ दृष्ट्वा संपूजितामर्चां यश्च भक्त्याभिनन्दति ॥ स्वयं संपूजयेद्यस्तु तस्य तुष्यति केशवः ॥ २९ ॥ नित्यं संपूजयेद्यस्तु देवदेवस्य भक्तितः ॥ यथाशक्त्या महाभाग तस्य तुष्यति केशवः ॥ ३० ॥ न राम विविधैर्दानैर्न रत्नधनसंचयैः ॥ तोषमायाति देवेशो भक्त्या तुष्यति केशवः ॥ ३१ ॥ दानैर्भृगुश्रेष्ठ बहुप्रकारैस्तीर्थोपवासव्रतदर्शनैश्च ॥ तथा न तोषं भगवान्प्रयाति भक्त्या यथा तद्गतमानसानाम् ॥ ३२ ॥ एतावदुक्तं तव राम गुह्यं न देयमेतद्भुवि मत्सराणाम् ॥ न तर्कशास्त्राकुलमानसानां नाऽवैष्णवानां न च नास्तिकानाम् ॥ ३३ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे भक्तिलक्षणो नामाष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥ श्रीराम उवाच ॥ उपोषितेन येनेह यं यं कामं प्रयच्छति ॥ तदहं श्रोतुमिच्छामि गदतस्ते वृषध्वज ॥ १॥ शंकर उवाच॥



१ 'परदाऽधनेच्छा च' इति ख० । २ 'देवम्' इति ख० । ३ ' नाम मन्त्रम् ' इति क० । ४ 'संपूजयति यः' इनि ख० । ५ 'संपूजको' इति ख० । ६ 'शक्तितः' इति ख० ।

पूजितः प्रयतैः स्नानैः सोपवासैर्दिने रवेः॥ संवत्सरं महाभाग दीर्घमायुः प्रयच्छति ॥ २ ॥ सोमवारे महाभाग चारोग्यं संप्रयच्छति ॥ तथा भौमदिने राम वैश्वर्यं संप्रयच्छति ॥ ३ ॥ वासरे सोमपुत्रस्य सर्वान्कामान्प्रयच्छति ॥ अभीष्टाञ्च तथा विद्यामाखण्डलगुरोर्दिने ॥ ४ ॥ सौभाग्यमतुलं लोके भार्गवाह्नि प्रयच्छति ॥ तथा शनैश्चरस्याह्नि रिपून्सर्वान्व्यपोहति ॥ ५ ॥ कृत्तिकासु तथाऽभ्यर्च्य यज्ञान्प्राप्नोत्यनुत्तमान् ॥ प्राजापत्ये तथाऽभ्यर्च्य प्रजां प्राप्नोति शोभनाम् ॥ ६ ॥ विन्दते ब्रह्मवर्चस्यं मृगशीर्षेऽर्चयन्हरिम् ॥ रौद्रकर्मत्वमाप्नोति सिद्धिं रौद्रे समर्चयन् ॥ ७ ॥ च्युतः स्थानमवाप्नोति पूजयानः पुनर्वसौ ॥ पुष्ये संपूजितो देवः पुष्टिमग्र्यां प्रयच्छति ॥८॥ अश्लेषायां तथाऽभ्यर्च्य श्रियं विन्दति मानवः ॥ पितृप्रसादमाप्नोति पित्र्ये संपूजयन्हरिम् ॥ ९ ॥ सौभाग्यं महदाप्नोति फाल्गुनीष्वर्चयंस्तथा[2] ॥ तथैव चोत्तरायोगे गतिं विन्दति शोभनाम् ॥ १० ॥ हस्ते[3] संपूजयन्देवं गजान्प्राप्नोत्यनुत्तमान् ॥ चित्रासु च तथाऽभ्यर्च्य वस्त्राण्याप्नोति मानवः ॥ ११ ॥ आप्ये समर्चयन्देवं रत्नभागी भवेन्नरः ॥ तथोत्तरास्वाषाढासु कीर्तिं प्राप्नोति शाश्वतीम् ॥ १२ ॥ सर्वान्कामानवाप्नोति श्रवणेऽभ्यर्चयन्हरिम् ॥ धनिष्ठासु तथा वित्तमारोग्यं वारुणे तथा ॥ १३ ॥ आजे पशूनवाप्नोति गावश्च तदनन्तरम् ॥ पौष्णे शीलमवाप्नोति चाश्वान्प्राप्नोति चाऽश्विने ॥ १४ ॥ दीर्घं जीवितमाप्नोति भरणीषु महाभुज[4] ॥ प्रतिपद्यर्थमाप्नोति कुप्यं प्राप्नोत्यनुत्तमम्[5] ॥ १५ ॥ सर्वान्कामानवाप्नोति तृतीयायां समर्चयन् ॥ पशूँश्चतुर्थ्यामाप्नोति पञ्चम्यां श्रियमुत्तमाम् ॥ १६ ॥ षष्ठ्यां प्राप्नोत्यथाऽऽरोग्यं सप्तम्यां सुहृदस्तथा ॥ अष्टम्यां च तथा भृत्यान्नवम्यां च तथा यशः ॥ १७ ॥ कर्मसिद्धिमवाप्नोति दशम्यां पूजयन्हरिम् ॥ एकादश्यां पूजयानः श्रीभागी स सदा भवेत् ॥ १८ ॥ अभीष्टां गतिमाप्नोति द्वादश्यां पूजयन्हरिम् ॥ त्रयोदश्यां पूजयानो रूपं प्राप्नोत्यनुत्तमम् ॥ १९ ॥ न दुर्गतिमवाप्नोति पूजयानश्चतुर्दशीम् ॥ सर्वान्कामानवाप्नोति पञ्चदश्यां महामुने[6] ॥ २० ॥ इत्येतदुक्तं तव मानवानां काम्यं फलं सम्यगुपोषितानाम् ॥ देवेश्वरं पूजयतां यथावत्परं पुराणं पुरुषं वरेण्यम् ॥ २१ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे श्रीशंकरगीतासूपवासफलो नामैकोनषष्टितमोऽध्यायः ॥ ५९ ॥ ॥ राम उवाच ॥ उपवासासमर्थानां किं स्यादेकमुपोषितम् ॥ महाफलं महादेव तत्समाचक्ष्व पृच्छतः ॥१॥

---

१ 'समभ्यर्च्य' इति ख० । २ 'हरिम्' इति ख० । ३ 'हस्ते संपूजयन्देवं राज्यं प्राप्नोत्यनुत्तमम्' इति ख० । ४ 'महाभयम्' इति ख० । ५ 'प्राप्नोत्यनन्तरम्' इति ख० । ६ 'तथा मुने' इति ख० ।

॥ शङ्कर उवाच ॥ या राम श्रवणोपेता द्वादशी महती च सा ॥ तस्यामुपोषितः स्नातः पूजयित्वा जनार्दनम् ॥ २ ॥ प्राप्नोत्ययत्नाद्धर्मज्ञ द्वादशद्वादशीफलम् ॥ दध्योदनयुतं तस्यां जलपूर्णं घटं द्विजे ॥ ३ ॥ वस्त्रसंवेष्टितं दत्त्वा छत्रोपानहमेव च ॥ न दुर्गतिमवाप्नोति गतिमन्याञ्च विन्दति ॥ ४ ॥ अक्षय्यं स्थानमाप्नोति नाऽत्र कार्या विचारणा ॥ श्रवणद्वादशीयोगे बुधवारो भवेद्यदि ॥ ५ ॥ अत्यन्तं महती नाम द्वादशी सा प्रकीर्तिता ॥ स्नानं जप्यं तथा दानं होमं श्राद्धं सुरार्चनम् ॥ ६ ॥ सर्वमक्षय्यमाप्नोति तस्य भृगुकुलोद्वह ॥ तस्मिन्दिने तथा स्नातो यत्र क्वचन संगमे ॥ ७ ॥ स क्रतुस्नानजं पुण्यं फलमाप्नोत्यसंशयम् ॥ श्रवणे संगमाः सर्वे फलपुष्टिप्रदाः सदा ॥ ८ ॥ विशेषाद्द्वादशीयुक्ते बुधयुक्ते विशेषतः ॥ यथैव द्वादशी प्रोक्ता बुधश्रवणसंयुता ॥ ९ ॥ तृतीया च तथा ज्ञेया सर्वकामसमन्विता ॥ यथा तृतीया धर्मज्ञ तथा पञ्चदशी शुभा ॥ १० ॥ त्र्यहःस्पृशेऽपि दिवसे चोपवासे महाफलः ॥ केशवाभ्यर्चने राम दानजप्यादिकेषु च ॥ ११ ॥ राम उवाच ॥ त्र्यहःस्पृग्दिवसः कीदृक्कदा भवति वा प्रभो ॥ तस्य मे संशयं ब्रूहि देवदेव वृषध्वज ॥ १२ ॥ शंकर उवाच ॥ दिवा विनिर्गता यत्र व्यतीता स्यात्तिथिर्द्विज ॥ रात्रिशेषे तथावेश्य भविष्या स्पृशती तिथिः ॥ १३ ॥ तिथित्रितयसंस्पर्शादहोरात्रे भृगूत्तम ॥ त्र्यहस्पृक्स विनिर्दिष्टः पुण्यः परमपावनः ॥ १४ ॥ तत्रोपोष्य शिरःस्नातैः कर्त्तव्यं देवतार्चनम् ॥ जपं होमं तथा दानं कामयद्भिर्महत्फलम् ॥ १५ ॥ कर्मणां परिशेषाणामकर्म्मण्यं हि तद्दिनम् ॥ भोज्यं त्रिमधुरं राम ब्राह्मणाँस्तत्र भोजयेत् ॥ १६॥ महत्पूर्णा भवत्येका पौर्णमासी द्विजोत्तम ॥ प्रतिसंवत्सरं तस्यां सोपवासो जनार्दनम् ॥१७॥ यः पूजयति धर्मज्ञ तेन संवत्सरं हरिः ॥ पूजितः पौर्णमासीषु भवतीति ह निश्चयः ॥ १८ ॥ तस्यां दानं स्वल्पमपि महद्भवति भार्गव ॥ दानं जप्यं ततो होमो यश्चान्यत्सुकृतं भवेत् ॥ १९ ॥ राम उवाच ॥ संवत्सरे पौर्णमासी महत्पूर्वा वृषध्वज ॥ कथं ज्ञेया जगन्नाथ तन्ममाचक्ष्व पृच्छतः ॥ २० ॥ शंकर उवाच ॥ यस्यां पूर्णेंदुना योगं यायाज्जीवो महाबलः ॥ पौर्णमासी तु सा ज्ञेया महत्पूर्वा द्विजोत्तम ॥ २१ ॥ आदित्यग्रहणे राम ग्रहणे वा निशाभृतः ॥ उपवासादवाप्नोति सर्वकिल्बिषनाशनम् ॥ २२ ॥ स्नानं दानं तथा जप्यं चाक्षय्यं परिकीर्त्तितम् ॥ श्राद्धञ्च भार्गवश्रेष्ठ वह्निसंपूजनं तथा ॥ २३ ॥ राम उवाच ॥ नक्षत्रं देवदेवेश तिथिञ्चात्र विनिर्गताम् ॥ दृष्ट्वा यथावत्कर्तव्यं तिथिं शङ्कर जानता ॥ २४ ॥ शङ्कर उवाच ॥ सा तिथिस्तदहोरात्रं यस्यामेवोदितो रविः ॥ तया कर्माणि कुर्वीत ह्रासवृद्धिर्न

१ 'सङ्कीर्तिस्नानजं नाम' इति ख०। २ 'परं पुष्टिप्रदा' इति ख०। ३ 'स्मृता' इति ख०। ४ 'त्येषा' इति ख०। ५ 'तपो' इति ख०

कारणम् ॥२५॥ शुक्लपक्षे तिथिर्ज्ञेया यस्यामभ्युदितो रविः ॥ उपोषितव्यं नक्षत्रं येनास्तं याति भास्करः ॥ २६ ॥ यश्च वा युज्यते राम निशीथे शशिना सह ॥२७॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शङ्करगीतासूपवासविधिर्नाम षष्टितमोऽध्यायः॥६०॥ राम उवाच ॥ तस्य मायाशरीरस्य विष्णोरमिततेजसः ॥ प्राप्नुवन्ति कथं स्थानं नित्यमक्षय्यमव्ययम् ॥ १ ॥ शङ्कर उवाच ॥ अखण्डकारिणो राम विष्णोरमिततेजसः ॥ प्राप्नुवन्ति परं स्थानं नित्यमक्षय्यमव्ययम् ॥ २ ॥ राम उवाच ॥ अखण्डकारी भगवन्कथं भवति शङ्कर ॥ एतन्मे संशयं ब्रूहि देवदेव वृषध्वज ॥ ३ ॥ शङ्कर उवाच ॥ पञ्चकालविधानज्ञस्तत्कर्मकरणे रतः ॥ अखण्डकारी भवति राम दानवनाशन ॥ ४ ॥ राम उवाच ॥ भगवन्पञ्च के कालाः कथं तेषां तथा विधिः ॥ एतन्मे देवदेवेश कौतूहलमपानुद ॥ ५ ॥ शङ्कर उवाच ॥ रामाभिगमनं पूर्वमुपादानमतः परम् ॥ इज्यास्वाध्यायकालौ च योगकालस्तथैव च ॥६॥ तेषां प्रत्येकंशो वक्ष्ये विधिं ते भृगुनन्दन ॥ तन्निबोध महाभाग प्रयतेनान्तरात्मना ॥ ७ ॥ राम कल्ये समुत्थाय दन्तधावनपूर्वकम् ॥ स्नानं कृत्वा यथाशास्त्रं स्वाचान्तः सुसमाहितः ॥ ८ ॥ यश्चेह भगवन्मन्त्रं पठन्देवगृहं विशेत् ॥ प्रविन्द्याद्राम जानुभ्यां पाणिभ्यां शिरसा तथा ॥ ९ ॥ ॐकारं सनमस्कारं प्रयुज्य सुसमाहितः ॥ योगकालं तु सन्दध्यादुपादध्यादनन्तरम्॥१०॥ रामाभिगमकालं तु तत्र मन्त्रं तथार्पयेत्॥ भगवतो बलेनेति वीर्येणैतेन तेजसा॥११॥ सुप्रकीर्तिततोयेन वेदिं प्रक्षालयेद्बुधः॥ सौवर्णीं राजतीं ताम्रीं मृण्मयीमायसीं तथा॥१२॥शिलां चन्दनजां वापि देवदारुभवामथ॥ शिंशपाक्षोटसरलकदम्बार्जुनजामथ॥ ॥१३॥ साल्वाश्वकर्णजां राम त्वायामेन तथैव च ॥ वामप्रवाणां प्रक्षाल्य पूर्णकुम्भान्नवांस्ततः॥१४॥ कल्पनीयास्तु कलशाश्चत्वारो भृगुनन्दन॥ सौवर्णा राजतास्ताम्रा अथवापि ह रीतिजाः॥१५॥पाद्यमाचमनीयं च त्वर्घ्यं स्नानीयमेव च ॥ पाद्यात्पाद्यं तु दातव्यं स्नानीयात्स्नानमेव च॥१६॥ तथाध्याचमनीयाख्याद्देयमाचमनं भवेत् ॥दानं प्रणयनं प्रीतिर्विसर्गं विस्तरं तथा ॥१७॥ तर्पणं चार्हणं चैव त्वर्घ्यादेतानि कारयेत् ॥ द्वादशाक्षरकं मन्त्रं ततो जप्त्वा समाहितः ॥ १८ ॥ ततः पवित्रमन्त्रेण वेदिमभ्युक्षयेद्द्विज ॥ आत्मानं च तथा भोगान्कुर्यान्मार्गत्रयं ततः॥१९॥ विद्या ज्ञानं ततः कर्म ब्रह्मचक्रं तथैव च ॥ मार्गत्रयश्च कर्तव्यं नामार्घ्यकलशान्सदा ॥ २० ॥ पाणिमार्गं कूर्चमार्गं मधुमार्गं तथैव च ॥ उशीरमूलजं कूर्चं जीवन्नोपालसम्भवम् ॥२१॥ जीवश्च मरणं चापि कर्तव्यं भृगुनन्दन ॥ प्रतिस्थानं ततः कार्यं समानानां क्रमाद्भवेत् ॥ २२ ॥ तथैव पादपीठानां प्रभवेन

१ 'अक्षरम्' इति ख० । २ 'प्रत्यक्षशो' इति ख० । ३ 'महाप्राज्ञ' इति ख० । ४ इत आरभ्य सार्धः श्लोकः खपुस्तके नास्ति । ५ 'आयामे च' इति ख० । ६ 'समासानाम्' इति ख० ।

महाभुज ॥ आसनान्यथ कार्याणि रत्नचित्राणि भार्गव ॥ २३ ॥ सौवर्णान्यथ रौप्याणि ताम्रशैलमयानि च ॥ ततस्त्वावाहनं कार्यं ततोऽभि
गमनं ततः ॥२४॥ नमस्कारस्ततः कार्यः प्रणीतेन ततः पुनः ॥ ब्रह्मश्चकामनौ मन्त्रं प्रभवेनापि येन च॥२५॥ ततो जप्त्वा महाभाग प्रणवेन निवे
दयेत् ॥ आसनैरर्चयेद्देवं ततः प्रयतमानसः ॥ २६ ॥ अर्घ्याभिरद्भिश्च ततो भोगैः सर्वैरनन्तरम् ॥ पाद्यप्रतिग्रहेणाथ पाद्याभिश्चाप्यनन्तरम् ॥
॥ २७ ॥ पादुकाभिस्ततो राम देवदेवं समर्चयेत् ॥ ततस्त्वाचमनीयार्थं देवदेवप्रतिग्रहम् ॥ २८ ॥ देवमाचमनीयञ्च पादपीठांस्तथैव च ॥
दन्तकाष्ठं ततो दद्याज्जिह्वानिर्लेखनं ततः ॥ २९ ॥ गण्डूषणं ततो दद्यान्मुखप्रक्षालनं तथा ॥ भूयस्त्वाचमनं देयं तर्पणं चाप्यनन्तरम् ॥ ३० ॥
पुष्पं दीपमलङ्कारं धूपप्रकरमेव च ॥ निवेद्य विधिवत्सर्वं ततः पश्चान्निवेदयेत् ॥ ३१ ॥ सेव्यानि राम बीजानि त्वर्हणीयं ततः पुनः ॥ मधुपर्कं
ततो दद्याद्दधि सर्पिस्तथा मधु ॥ ३२ ॥ दध्यलाभे पयः कार्यं मध्वलाभे तथा गुडम् ॥ घृतप्रतिनिधिर्नास्ति तत्रं यत्नात्समर्चयेत् ॥ ३३ ॥
एकांगो वा समस्तो वा मधुपर्को विधीयते ॥ व्यंगं वर्ज्यं प्रयत्नेन नित्यमेव विजानता ॥ ३४ ॥ दर्पणं तु ततो दद्यात्ततो निर्भर्त्सनं बुधः ॥ तत
स्त्वाचमनीयं च विधिवत्सुसमाहितः ॥३५॥ हस्तनिष्पुंसनार्थाय ततो दद्यात्तु गंधकम् ॥ ततः पशुं बुधः कुर्य्याद्यथावन्माधुपार्किकम् ॥३६॥ माधु
पार्किकमश्वत्थपत्रं वा विनिवेदयेत् ॥ घृतावद्यं ततो दद्यात्ताम्बूलञ्चाप्यनन्तरम् ॥ ३७ ॥ मात्राश्च दक्षिणार्थाय ब्राह्मणाय निवेदयेत् ॥ मंगलानि
यथाशक्त्या ततो देवे निवेदयेत् ॥३८॥ ततोऽभिगमकालन्तु संदद्यात्पुरुषोत्तमे॥ उपादानमथो दद्यात्कुर्याच्चैव विसर्ज्जनम् ॥ ३९ ॥ ततोऽग्नि
शरणं गत्वा वह्निं संतर्पदेद्बुधः ॥ ब्राह्मणानां यथाशक्ति दानं दद्यादनन्तरम् ॥ ४० ॥ एतन्मया ते कथितं समग्रं यथानुपूर्व्याभिगमस्य
कालम् ॥ गच्छेदुपादानकृतप्रयत्नस्ततो यथावद्भृगुवंशचन्द्र ॥ ४१ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे
शङ्करगीतास्वभिगमकालो नामैकषष्टितमोऽध्यायः ॥ ६१ ॥ ॥ शङ्कर उवाच ॥ भोगानामर्जनं कार्यं ततो राम स्वकर्मणा ॥ स्थिराणाम
स्थिराणां च यथावद्भृगुनन्दन ॥ १ ॥ आसनाद्यास्तु ये भोगाः कालेनाप्यविनाशिनः ॥ स्थिरास्ते राम निर्दिष्टा परिशिष्टास्तथा चराः ॥ २ ॥
पुष्पं पत्रं फलं मूलं तथा हरितकं शुभम् ॥ उदकं चार्चनीयं स्यात्तस्मिन्नहनि भार्गव ॥ ३ ॥ उपादानाय निष्क्रान्ते कुटुम्बिन्यथ सत्वरम् ॥

१ ‘ प्रणतं च ’ इति क० ‘ प्रणतश्च ’ इति ख० । २ ‘ देवमाचमनीयाँश्च पादपीठांस्तथैव च ’ इति क० ख० । ३ ‘ घृतम् ’ इति ख० । ४ ‘ ततो ’ इति ख० । ५ ‘ हस्तनिष्पुस
नार्थीयम् ’ इति क० । ६ ‘ माधुपार्किकपश्वार्थां मात्राम् ’ इति क० । ७ ‘तटाकम्’ इति ख० ।

कुटुम्बिनी सुप्रयाता धौतोपस्करभाजना ॥४॥ साध्यानां राम बीजानां पशोश्च सुकृतस्य च ॥ शाकानां व्यञ्जनानां च स्वर्जितानां गतेऽहनि ॥५॥ शक्तिं कुर्यात्सदा तस्य वह्निनोपदमेन च ॥ देशे शुचौ सुप्रयाता सुसहायगुणान्विता ॥ ६ ॥ सर्वं प्रक्षालितं कार्यं केशकीटादिवर्जितम् ॥ भूमावनु पलिप्तायां स्थाप्यं राम न किञ्चन ॥७॥ सर्वं साध्यमथान्नाद्यं गन्धवर्णरसान्वितम् ॥नित्यं परिपचेद्राम नास्वाद्यं केनचित् क्वचित् ॥८॥ उपादानम थादाय प्रविश्य च गृही गृहम् ॥ शुचौ प्रक्षालितं सर्वं चोपादानमुपन्यसेत् ॥ ९ ॥ सुप्रक्षाल्य तथा भागं पवित्रेण समुत्क्षिपेत् ॥ एवं कृत्वा ह्युपादानं स्नायात्तु विधिना ततः ॥ १० ॥ धौतवासाः सुप्रयतः स्वाचान्तः सुसमाहितः ॥ प्रविश्य देवतावेश्म प्राग्वद्भृगुकुलोद्वह ॥ ११ ॥ नम स्कारादिकं सर्वं प्रयुञ्जीत समाहितः ॥ उपादानानुसंधानं त्वादानं चाप्यनन्तरम् ॥ १२ ॥ इज्याकालस्य धर्मज्ञ कुर्यात्प्रयतमानसः ॥१३॥ आसन्न भोगः प्रयतान्तरात्मा कुर्यादथेज्यां रणचण्डवेग ॥ क्रोधं नियम्यात्महिते निविष्टस्तद्भावभावोपहितश्च नित्यम् ॥ १४ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मा०सं० शङ्करगीतासूपादानकरणो नाम द्विषष्टितमोऽध्यायः ॥६२॥ ॥ शङ्कर उवाच ॥ पादपीठान्तकं कर्म कृत्वा प्रागुक्तमञ्जसा ॥ निवेद्य दर्पणं देवे ततो मात्रां निवेदयेत् ॥ १ ॥ बीजैस्तु परिधानार्थं प्रयतः सुसमाहितः ॥ तैलमुद्वर्तनं चैव चमसीं चाप्यनन्तरम् ॥ २ ॥ ततो निष्पुंसनं कृत्वा देयान्याचमनानि च ॥ रोध्रं कालीयकं चैव तथा वै बीजपूरकम् ॥ ३ ॥ वर्णकं तगरं चैव प्रियङ्गुं गौरसर्षपाः ॥ सर्वौषधीर्वृक्षबीजं सर्वगन्धाँश्च भार्गव॥४॥ रत्नोदकं च विविधं स्नानीयमुदकं तथा ॥ स्नानीयं च ततो राम सुसुगन्धं च दापयेत्॥५॥ततः सुघर्मणार्थीयाः कलशाः सुमनोहराः ॥ स्वलंकृताः प्रदातव्याः फलपल्लवपूरिताः॥६॥पुष्पगन्धयुता राम पवित्रेण पवित्रिताः ॥ शुभानां तीर्थसारितां राम पुण्यजलैः शुभैः॥ ॥७॥ यथाविभवतस्तेषां बहुत्वमपि कारयेत् ॥ तस्मिन्काले तथा कार्यं क्ष्वेडितोत्कृष्टनिःस्वनम् ॥८॥ जयशब्दं च विपुलं शङ्खभेरीविमिश्रितम्॥ उदकग्रहणार्थीयं ततो दद्याच्च शाटकम् ॥ ९ ॥ ततो राम प्रदातव्यं धौतवासोयुगं शुभम् ॥ ततस्तु पूर्णकलशमासनानां प्रदक्षिणम् ॥१०॥ कृत्वा राम क्षिपेद्देव्यां पुष्पपल्लवशोभितम् ॥ ततस्त्वाचमनीयं च पूर्ववद्विनिवेदयेत् ॥११॥मङ्गलानि च मुख्यानि ततो दद्याद्विचक्षणः ॥सत्यासनस्थं देवेश मर्चयिष्याम्यतः परम् ॥ १२ ॥ स्नानासनानि त्यज्यन्तामित्येवं परिकीर्तयेत् ॥ मार्गत्रयादथारभ्य पादपीठान्तकं पुनः ॥ १३ ॥ कर्तव्यं सकलं कर्म त्वावाहनविसर्जनम् ॥ ततोऽनुलेपनं दद्याद्व्यजनेन च वीजयेत् ॥ १४ ॥ ततश्च वीटकं दद्यात्तथा कूर्चप्रसादनम् ॥

१ 'सुक्षवस्य' इति ख० । २ 'परिचरेद्राम' इति ख० । ३ 'परिदानार्थं तथा वै बीजपूरकम्' इति ख० । ४ 'सामगानाम्' इति क० । ५ 'कूर्चप्रसाधनम्' इति ख० ।

वस्त्रं विभूषणं चैव पुष्पाणि विविधानि च ॥ १५ ॥ वेष्टनं च स्रजं चैव कङ्कणं च मनोहरम् ॥ तथा रम्यं प्रतिसरं सुपिष्टं च तथाञ्जनम् ॥ १६ ॥ दर्पणं चोपचारं च प्रदीपं धूपमेव च ॥ तथैवाचमनीयं च गीतवाद्यस्वरं तथा ॥ १७ ॥ पुण्याहजयशब्दं च स्तोत्रोदीरणमेव च ॥ तथैवोपानहौ देये छत्रं चामरमेव च ॥ १८ ॥ यानं च वाहनं चैव पताकाश्च ध्वजानि च ॥ भोगानां पूरणार्थीयां ततो मात्रां निवेदयेत् ॥ १९ ॥ भोगानां सर्जनं कृत्वा यथाशक्त्या द्विजोत्तम ॥ अविद्यमाना ये भोगा मात्रास्वेव प्रकल्पयेत् ॥ २० ॥ एवमभ्यर्च्य देवेशं सर्वभोगैस्समाहितः ॥ अर्चयेन्मधुपर्केण पशुयागो न चेद्भवेत् ॥ २१ ॥ पशुयागाभिगमने मधुपर्को विधीयते ॥ अभ्यर्च्य मधुपर्केण ततस्त्वन्येन पूजयेत् ॥ २२ ॥ अत्रासनान्यपीच्छन्ति केचिदप्यपराणि तु ॥ आदौ स्थालीं च तेनाथ प्रदद्यादर्हणीं ततः ॥ २३ ॥ अन्नं हरितकोपेतं भक्ष्यं व्यञ्जनसंयुतम् ॥ निवेद्य दर्पणं दद्यात्तथा निष्पुंसनं ततः ॥ २४ ॥ कृत्वा ह्याचमनीयं तु मात्रां च तदनन्तरम् ॥ ततस्तु संविभागार्थं दातव्यं त्वर्हणं ततः ॥ २५ ॥ भूयो निवेदयेदन्नं पूर्ववत्सुसमाहितः ॥ दर्पणं च ततो दद्यात्पाद्यं निष्पुंसनं ततः ॥ २६ ॥ दत्त्वा चाचमनीयं च शाटकं च निवेदयेत् ॥ हस्तनिष्पुंसनार्थाय मात्रां च तदनन्तरम् ॥ २७ ॥ निवेद्य पश्चात्ताम्बूलं देवं वह्नौ समर्चयेत् ॥ वह्निसंपूजनं कृत्वा कार्यकारिसमर्पणम् ॥ २८ ॥ अतिथीनां ततः कार्यं भर्तव्यानां च भार्गव ॥ ततोऽनुयागकाले तु पवित्रेण समुत्क्षिपेत् ॥ २९ ॥ आसनं भाजनं चैव सान्नं प्रयतमानसः ॥ उपविश्य ततः पश्चात्प्रभवेनाप्ययेन च ॥ ३० ॥ इदमग्नेतिमन्त्रेण प्राच्यां ग्रासाष्टकं भवेत् ॥ ततस्तु प्रयतो भूत्वा विशेद्देवगृहं ततः ॥ ३१ ॥ इज्याकालानुसंधानं ततः कुर्यात्समाहितः ॥ कुर्यात्स्वन्यायकालस्य चोपादानमनन्तरम् ॥ ३२ ॥ विसर्जनं ततः कुर्यात्प्रयतेनान्तरात्मना ॥ इज्याकालविधिस्त्वेष मया ते राम कीर्तितः ॥ ३३ ॥ भगवान्वासुदेवस्तु देवस्संकर्षणस्ततः ॥ प्रद्युम्नश्चानिरुद्धश्च प्रभावोऽयमुदाहृतः ॥ ३४ ॥ संकर्षणस्तथाव्यक्त आत्मा प्रद्युम्न उच्यते ॥ देवस्तत्त्वगतस्सर्व अनिरुद्धो महायशाः ॥ ३५ ॥ स नाथस्सर्वलोकानां सृष्टिसंहारकारकः ॥ ( पुरुषोऽपि तथा सत्य अच्युतश्च द्विजोत्तम ॥ ३६ ॥ भगवान्वासुदेवश्च त्वव्ययोऽयमुदाहृतः ॥ चत्वार एते धर्मज्ञ वासुदेवाः प्रकीर्तिताः ॥ ३७ ॥ भगवच्छब्दवाच्याश्च सर्वभूतभवोद्भवाः ॥ यः परः पुरुषो राम वासुदेवः प्रकीर्तितः ॥ ३८ ॥ भगवच्छब्दवाच्यश्च सर्वभूतभवोद्भवः ॥ ॥ ३८ ॥
शेषतत्त्वं गतः सर्वमनिरुद्धो महायशाः ॥ ३९ ॥ स नाथः सर्वलोकानां सृष्टिसंहारकारणः ॥ ) तदेतत्पठ्यते सूक्ते पौरुषे द्विजसत्तम ॥ ४० ॥

१ 'छत्रमासनमेव च' इति क०। २ 'वीटकम्' इति ख०। ३'प्राच्यम्' इति क०। ४ कोष्ठान्तर्गतः पाठः खपुस्तके नास्ति।

पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवि ॥ भुजिः प्रीतिस्तथैवार्चिः प्राणस्तर्पणमर्हणम् ॥ ४१ ॥ निवेदनञ्चाचमनमष्टधा मन्त्रनिर्णयः ॥
मन्त्रेण चार्हणान्तेन प्रदद्यादर्हणं पुनः ॥ ४२ ॥ तथैवाचमनान्तेन देयमाचमनं भवेत् ॥ प्राशनान्तेन मन्त्रेण तर्पणं विनिवेदयेत् ॥ ४३ ॥
प्रतिग्रहेषु मात्रासु पादुकासु च दर्पणे ॥ छत्रे च वालव्यजने तालवृन्ते तथैव च ॥ ४४ ॥ उपानत्सु तथा याने वाहनेषु भृगूत्तम ॥
अब्धिध्वजेषु च तथा पताकासु च कीर्तिताः ॥४५॥ शेषाणां कामभोगानां नित्यं संकीर्तयेत्तु वै ॥ सर्वत्र प्रीणनं कार्यमेतावान्मन्त्रनिर्णयः ॥४६॥
देवानां पादपीठानां कलशानां तथैव च ॥ वह्नेस्तथासनानां च चतुर्द्वं विनिवर्तते ॥ ४७ ॥ कलशासनवह्नीनां संकरं तु न कारयेत् ॥
तथैव पदपीठानां तेषां चिह्नं च कारयेत् ॥ ४८ ॥ प्रापणे मधुपर्के च मात्रासु च भृगूत्तम ॥ सुमनस्सु सदा राम यत्नः कार्यः समर्चने[1]
॥ ४९ ॥ सौमनस्यं परं राम देवदेवे निवेदितम् ॥ यस्मात्तु वर्तते तस्मात्प्रोक्ताः सुमनसः सदा ॥ ५० ॥ मां त्रास्यति भयाद्घोरात्तस्मान्मात्रा
प्रकीर्तिता ॥ प्रापयिष्यति च स्थाने नित्यं दुःखविवर्जिते ॥ ५१ ॥ यस्मात्तस्माद्द्विजश्रेष्ठ प्रोक्तं प्रापणकं सदा ॥ परमं यत्परं राम मधुसंज्ञं
तदुच्यते ॥ ५२ ॥ तदाप्यते यदा तेन मधुपर्कस्तदा स्मृतः ॥ इज्याविधानोऽयमुदीरतस्ते समासतो भार्गववंशचन्द्र ॥ अतः परं राम
निबोध पुण्यं स्वाध्यायकालं गदतो ममाद्य ॥ ५३ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शङ्करगीतासु इज्याका
लविधिर्नाम त्रिषष्टितमोऽध्यायः ॥ ६३ ॥ ॥ शङ्कर उवाच ॥ ॥ आदौ देशे तथा राम प्रयतः सुसमाहितः ॥ स्वाध्यायेनार्चयेद्देवं
प्रयतेनान्तरात्मना ॥ १ ॥ तावत्कार्यं द्विजश्रेष्ठ स्वाध्यायं विधिवत्सदा ॥ यावदस्तं गतो राम सविता दीप्तदीधितिः ॥ २ ॥ततस्त्वस्तं
गते सूर्ये स्वाचान्तः सुसमाहितः ॥ प्रविश्य देवतावेश्म नैराज्यं कर्म कारयेत् ॥ ३ ॥ पादपीठान्तकं कर्म कृत्वा प्रागुक्तमञ्जसा ॥
अर्घ्यमाचमनीयं च दत्त्वा पाद्यं च भार्गव ॥ ४ ॥ स्थालीमक्लिन्ननैवेद्यादारभ्याभिहितं ततः ॥ कर्तव्यमनुयागान्तं प्रयतः सुसमाहितः ॥ ५ ॥
कृत्वानुयागं विधिवत्प्रविश्य सुरमन्दिरम् ॥ स्वाध्यायस्यानुसंधानं ततः कुर्यात्समाहितः ॥ ६ ॥ योगकालमुपादाय पश्चात्कुर्याद्विसर्जनम् ॥
कृत्वा विसर्जनं युक्तस्तिष्ठेद्यामम तन्द्रितः ॥७ ॥ योगादनन्तरं स्वप्यादेवं युक्तस्य भार्गव ॥ स्वयं कालोऽपि सततं योगमध्येऽभिधीयते ॥ ८ ॥

---

१ 'समर्जने' इति क० ।

स्नानार्हकत्वं यदि नास्ति तस्य यामे विबुद्धस्तु तथा चतुर्थे ॥ युञ्जीत योगं रिपुकालभूतं योगेन बुद्धिः समुपैति सर्गम् ॥९॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मा०सं० शङ्करगीतासु स्वाध्यायकालकथनं नाम चतुःषष्टितमोऽध्यायः ॥ ६४ ॥ शङ्कर उवाच ॥ जानुतुल्यं मृदु शुभं चैलाजिनकुशोत्तरम् ॥ शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ॥ १ ॥ चतुर्णामासनानां च बद्ध्वा तत्रैकमासनम् ॥ योगं युञ्जीत विधिवद्यथावदनुपूर्वशः ॥ २ ॥ राम उवाच ॥ योगासनानि चत्वारि भगवन्कानि ब्रूहि मे ॥ येषामेकमथास्थाय योगं युञ्जीत मानवः ॥ ३ ॥ शङ्कर उवाच ॥ स्वस्तिकं सर्वतोभद्रं पर्यङ्कं कमलासनम् ॥ योगासनानि चत्वारि तेषां वक्ष्यामि लक्षणम् ॥ ४ ॥ आसन्ने जानुनी कृत्वा यथावत्सुसमाहितः ॥ वामं कृत्वेतरे पादे वामजङ्घोरुपीडितम् ॥ ५॥ स्वस्तिकं नाम तत्प्रोक्तमासनं प्रथमं शुभम् ॥ ऊरू च जानुनी जङ्घे यत्रासनगतः समम् ॥६॥ आसनं सर्वतोभद्रं तद्विद्धि मनुजोत्तम ॥ पर्यङ्के योगपट्टेन बध्नीयात्पृष्ठयोगतः ॥ ७ ॥ आकुञ्च्य जानुनी सम्यक्पादं कृत्वा च बाह्यतः ॥ दक्षिणं वामजङ्घायां पर्यङ्कासनकारणम् ॥ ८ ॥ आसने सर्वतोभद्रे यदा भवति मानवः ॥ ऊरुस्थोत्तानचरणस्तदा स्यात्कमलासनम् ॥ ९ ॥ आसनस्थस्य करणं निबोध गदतो मम ॥ समानीयोरुमूलेन हस्तौ भार्गव तिर्यगौ॥१०॥कृत्वोत्तानौ समौ विद्वान्वामस्योपरि दक्षिणम्॥अङ्गुलीच्छादकं विद्वानङ्गुलीनां तु विन्यसेत् ॥ ११ ॥ किञ्चिदाकुञ्चिताङ्गुष्ठौ कर्तव्यौ च तथा करौ ॥ उरश्चोत्थाप्य विततं कृत्वा राम परिश्लथम् ॥ १२ ॥ पृष्ठमाकुञ्चयेत्स्कन्धे देहमुन्नामयेत्सुधीः ॥ निष्कम्पां सुदृढामृज्वीं नातिस्तब्धां न कुञ्चिताम् ॥ १३ ॥ ग्रीवां विधारयेद्यत्नाच्छिरः कार्यं समं सदा ॥ संपश्यन्नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ १४ ॥ किञ्चिन्निमीलिते नेत्रे दन्तैर्दन्तान्न संस्पृशेत् ॥ तालुमध्यगतेनैव जिह्वाग्रेण समाहितः ॥ १५ ॥ स बद्धकरणो विद्वानभ्यासात्पवनं जयेत् ॥ जित्वा वायुं यथाशक्ति योगं युञ्जीत बुद्धिमान् ॥ १६ ॥ आदौ तु चिन्तयेत्स्थूलां भूमिं पञ्चगुणान्विताम् ॥ लब्धलक्षो महायोगी भूमियोगं समुत्सृजेत् ॥ १७ ॥ ततश्चतुर्गुणं ध्यानं कर्तव्यमुदके द्विज ॥ लब्धलक्ष अपां योगी जलयोगं समुत्सृजेत् ॥ १८ ॥ ततस्तु योगं युञ्जीत त्रिगुणं द्विज तेजसि ॥ लब्धलक्षश्च तत्रापि वह्नियोगं समुत्सृजेत् ॥ १९ ॥ ततस्तु योगं युञ्जीत पवने द्विगुणं द्विज ॥ लब्धलक्षश्च तत्रापि वायुयोगं समुत्सृजेत् ॥ २० ॥ ततस्त्वेकगुणं योगं युञ्जीत गगने बुधः ॥ लब्धलक्षश्च तत्रापि मनोयोगगतिर्भवेत् ॥ २१ ॥ मनसश्चन्द्रमाः प्रोक्तः प्रथमं चन्द्रमण्डले ॥ ऊर्ध्वलक्षं बुधः कृत्वा चन्द्रमण्डलमध्यगे ॥ २२ ॥

१ 'बुद्धिम्' इति क० । २ 'भगवन्प्रब्रवीमि ते' इति ख० । ३ 'योगपादेन' इति ख० । ४ 'नासयां पवनं जयेत्' इति ख० । ५ 'सूक्ष्माम्' इति क० ।

अङ्गुष्ठमात्रे पुरुषे लक्षबन्धं तु कारयेत् ॥शशाङ्कशतसंकाशे सर्वालङ्कारभूषिते॥२३॥लब्धलक्षश्च तत्रापि बुद्धियोगगतिर्भवेत् ॥ बुद्धिश्च भगवान्सूर्यः प्रथमं सूर्यमण्डले ॥ २४ ॥ समग्रमेव संपश्येद्ध्यानयोगेन बुद्धिमान् ॥ सूर्यमण्डलमध्यस्थं शतसूर्यसमप्रभम् ॥ २५ ॥ अङ्गुष्ठमात्रं पुरुषं सर्वाभरणभूषितम् ॥ चिन्तयेत्प्रयतो नाम तत्परः सुसमाहितः ॥ २६ ॥ लब्धलक्षश्च तत्रापि नित्यमात्मानमात्मना ॥ आत्मस्थमेव संपश्येद्ध्यानयोगेन भार्गव ॥ २७ ॥ अङ्गुष्ठमात्रं पुरुषं सूर्यबिम्बगतं यथा ॥ ध्यानयोगेन संपश्येत्तथा पश्येत्तथात्मनि ॥ २८ ॥ अधोमुखे हृत्कमले कर्णिकायां भृगूत्तम ॥ लब्धलक्षश्च तत्रापि अव्यक्तं चिन्तयेत्पदम् ॥ २९ ॥ बहिरन्तश्च सर्वत्र तेजसा तत्र चिन्तयेत् ॥ नैवार्केण न चन्द्रेण सर्वं व्याप्तमशेषतः ॥ ३० ॥ लब्धलक्षश्च तत्रापि पुरुषं चिन्तयेत्परम् ॥ शून्यं तु पुरुषं ध्यानं प्रवदन्ति मनीषिणः ॥ ३१ ॥ साकारे बद्धलक्षस्तु शून्यं शक्नोति चिन्तितुम् ॥ अन्यथा तु सुकष्टं स्यान्निरालम्बस्य चिन्तनम् ॥ ३२ ॥ चित्तवृत्तिनिरोधो हि दुष्करः प्रतिभाति मे ॥ तत्र यत्नः सदा कार्यो विजये पवनस्य च ॥ ३३ ॥ चित्तवृत्तिनिरोधेन पवनस्य जयेन च ॥ उपासनाया शून्यस्य निष्फलत्वं विधीयते ॥ ३४ ॥ अरूपगन्धमनसं शब्दस्पर्शविवर्जितम् ॥ सर्वेन्द्रियगुणं राम सर्वस्थं सर्वगं च यत् ॥३५॥ ( तं ध्या[१]यन्पुरुषं तस्य ध्यानं शून्यं प्रकीर्तितम् ॥ ) तस्य स्वरूपं विज्ञाय राम शून्यमुपासतः ॥ ३६ ॥ सर्वबन्धनमुक्तस्य निष्फलत्वं विधीयते ॥ अखण्डकारिणस्त्वेवं नित्यं भृगुकुलोद्वह ॥ ३७ ॥ संवत्सरशते पूर्णे सत्रिभागे महाभुज ॥ निष्फलत्वं परं स्थानं ध्रुवं भवति भार्गव ॥ ३८ ॥ राम उवाच ॥ संवत्सरशतं पूर्णं त्रिभागसहितं विभो ॥ अजीवतो निष्फलत्वं कथं भवति शङ्कर ॥ ३९ ॥ शङ्कर उवाच ॥ अखण्डकारी भवति यद्येकमपि जन्मनि ॥ जन्मक्रमादवश्यं हि राम जन्मनिजन्मनि ॥ ४० ॥ पूरणीयं सत्रिभागं ध्रुवं तेन समाः शतम् ॥ अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ ४१ ॥ अखण्डकारिणो राम प्रवृत्तस्य द्विजन्मनः ॥ अवश्यमेव तत्स्थानं यद्विष्णोः परमं पदम् ॥ ॥ ४२ ॥ राम उवाच ॥ अखण्डकारिता प्रोक्ता त्वया देव द्विजन्मनाम् ॥ शूद्रो वा यदि वा नारी कथं स्थानमवाप्नुयात ॥ ४३ ॥ शङ्कर उवाच ॥ अखण्ड[२]कारिणी पत्नी प्राप्नोति परमं पदम् ॥ शूद्रः स्वकर्मनिरतः केशवार्पितमानसः ॥ ४४ ॥ जात्यन्तरमथासाद्य भक्तियोगेन भावितः ॥ अखण्डकारी भवति ततः प्राप्नोति तत्पदम् ॥ ४५ ॥ मार्कण्डेय उवाच ॥ एतावदुक्तं देवेन त्र्यम्बकेण महात्मना ॥ तदा तुष्टेन रामाय रहस्य

१ कोष्ठान्तर्गतः पाठः खपुस्तके नास्ति । २ 'अखण्डकारिणः' इति ख० ।

मृषिपूजितम् ॥ ४६ ॥ एतद्भक्तिविहीनाय न तु वाच्यं यदूत्तम ॥ न नास्तिकाय मूर्खाय तर्कदुष्टाय वा तथा ॥ ४७ ॥ एतत्तु शृण्वते वाच्यं शिष्याय च सुताय च ॥ यो वा दद्यान्महीं कृत्स्नां सशैलवनकाननाम् ॥ ४८ ॥ एतद्धन्यं परं पुण्यं पवित्रं पापनाशनम् ॥ आयुष्यं च यशस्यं च कलिदुःस्वप्ननाशनम् ॥ ४९ ॥ अध्येतव्यमिदं सम्यग्वचनं शंकरस्य च ॥ सर्वबन्धविनिर्मुक्तः प्राप्नोति परमं पदम् ॥ ५० ॥ एतावदुक्तं त्रिपुरान्तकेन तुष्टेन रामस्य महाबलस्य ॥ मया तथा तेऽभिहितं नरेन्द्र धार्यं त्वयेदं सततं यथावत् ॥ ५१ ॥ इति विष्णुधर्म्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शङ्करगीतासमाप्तिर्नाम पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ कैलासशिखरे रम्ये रामस्य रमतस्तदा ॥ आजगाम हरं द्रष्टुं देवदेवः पुरन्दरः ॥ १ ॥ स समासाद्य देवेशं प्रणम्य वृषभध्वजम् ॥ उवाच वचनं सम्यङ्मुदा रामस्य सन्निधौ ॥ २ ॥ शक्र उवाच ॥ त्वत्प्रसादेन देवेश मया प्राप्तं त्रिविष्टपम् ॥ रामेण घातिताः सर्वे यथा मे देवशत्रवः ॥ ३ ॥ अवध्यास्त्रिदशानां ये वरदानबलोद्धताः ॥ नरवध्याः कृतास्ते हि ब्रह्मणा सुमहात्मना ॥ ४ ॥ पातालनिलया देव अवध्या देवतागणैः ॥ बाधन्ते नरवध्या मे लोकानां च जगत्पते ॥ ५ ॥ तांश्च घातय देवेश रामेणाक्लिष्टकर्मणा ॥ मार्कण्डेय उवाच ॥ एवं करिष्यतीत्युक्त्वा विसृज्य त्रिदशेश्वरम् ॥ ६ ॥ उवाच वचनं रामं भार्गवं पुरतः स्थितम् ॥ शङ्कर उवाच ॥ गच्छ भार्गव पातालं पातालनिलयाञ्जहि ॥ ७ ॥ शक्रशत्रून्दुराचारान्नरवध्यान्महासुरान् ॥ वैष्णवं चापरत्नं ते मया न्यस्तं पितुः करे ॥ ८ ॥ तदादाय शरैस्तीक्ष्णैर्जहि तान्राम दानवान् ॥ अक्षयं तूणमादाय शरपूर्णमिदं तथा ॥ ९ ॥ मार्कण्डेय उवाच ॥ एवमुक्त्वा ददौ चास्य तूणमक्षयसायकम् ॥ दत्त्वा च भगवानाह रामं परबलार्दनम् ॥ १० ॥ शङ्कर उवाच ॥ तूणमेतत्प्रदातव्यं त्वयागस्त्याय भार्गव ॥ चापरत्नं च रामाय कृते कर्मणि सुव्रत ॥ ११ ॥ अगस्त्योऽपि महातेजास्तूणमक्षयसायकम् ॥ राघवायातियशसे रामायैव प्रदास्यति ॥ १२ ॥ रामसंदर्शनादूर्ध्वं मा कृथाः शस्त्रधारणम् ॥ रामसंदर्शने राम तव तेजो हि वैष्णवम् ॥ १३ ॥ रामं प्रवेक्ष्यति तदा सुरकार्यार्थमूर्जितम् ॥ यावत्त्वं तेजसा युक्तो वैष्णवेन परंतप ॥ १४ ॥ तावच्छत्रुगणान्सर्वान्समरेषु विजेष्यसि ॥ स्थातुं न शक्तास्तव दैत्यसेना अस्तायुधस्य प्रमुखे द्विजेन्द्र ॥ आदाय चापं युधि वैष्णवं तत्तूणं तथेमं जहि देवशत्रून् ॥ १५ ॥ इति श्रीविष्णुधर्मोत्तरे मा० सं० प्रथमखण्डे रामं प्रति शङ्करानुशासने षट्षष्टितमोऽध्यायः ॥ ६६ ॥ राम उवाच ॥ वैष्णवं चापरत्नं

१ 'गुणान्वितः' इति ख० । २ 'सर्वबाधाविनिर्मुक्तः' इति ग० ।

तत्किमर्थं भवता करे ॥ न्यस्तं च तन्मे भगवँश्चापरत्नं च कीदृशम् ॥ १ ॥ शङ्कर उवाच ॥ माया हि वैष्णवी राम यया संमोहिताः पुरा ॥
देवाश्च ऋषयश्चैव गत्वान्तः प्रणताः स्थिताः ॥ २ ॥ यजतां परमाधारं देवं कमलसंभवम् ॥ भूतभव्यभविष्यस्य प्रभुं लोकनमस्कृतम् ॥
॥ ३॥ देवा ऊचुः ॥ वासुदेवस्य देवस्य महादेवस्य चाप्यथ ॥ अन्तरं ज्ञातुमिच्छामः कः कस्मादतिरिच्यते ॥४॥ शङ्कर उवाच ॥ एवमुक्तस्सुरैः
सर्वै ऋषिभिश्च पितामहैः ॥ विहस्योवाच तान्सर्वांस्तयोर्गत्वा परस्परम् ॥ ५ ॥ ब्रह्मोवाच ॥ जनयध्वं सुराः सर्वे विरोधमृषिभिस्सह ॥
विरोधे तु समुत्पन्ने तयोर्युद्ध उपस्थिते ॥ ६ ॥ ज्ञास्यध्वमन्तरं देवास्तयोर्नास्त्यत्र संशयः ॥ शङ्कर उवाच ॥ एवमुक्ताः सुराः सर्वे सार्धमृषि
गणैस्तदा ॥ ७ ॥ आवयोर्जनयामासुर्विरोधं भृगुनन्दन ॥ विष्णोराधिक्यमन्विच्छँस्तस्य मायाविमोहिताः ॥ ८ ॥ कृतवानस्मि देवेन देव
वाक्येन विग्रहम् ॥ प्रभावदर्शनार्थाय त्वावयोर्विग्रहे तदा ॥ ९ ॥ आसन्नमभवद्युद्धं सर्वसत्त्वभयङ्करम् ॥ आवयोर्भृगुशार्दूल तदा युद्धे उप
स्थिते ॥ १० ॥ आजगामाथ तं देशं ब्रह्मा शुभचतुर्मुखः ॥ देवा ब्रह्मर्षयश्चैव तथा राजर्षयोऽमलाः ॥११॥ सर्वेषां समवेतानामावयोर्युद्धसंगरे ॥
उवाच वचनं ब्रह्मा सर्वलोकनमस्कृतः ॥ १२ ॥ ब्रह्मो वाच ॥ न कर्तव्यं जगन्नाथौ युद्धं परमदारुणम् ॥ युष्मद्युद्धेन सकलं नश्यतीदं
जगत्त्रयम् ॥ १३ ॥ गृहीतं चापरत्नं यत्स्वयं देवेन चक्रिणा ॥ तदारोपयतां शूली शूलिचापं जनार्दनः ॥ १४ ॥ ज्ञास्यामि चान्तरं देवौ
चापारोपणकर्मणा ॥ शङ्कर उवाच ॥ एवमुक्ते मम कराद्धनुर्जग्राह केशवः ॥ आरोपितुं न मे शक्तिः सर्वयत्नेन चाभवत् ॥ १५ ॥ ततश्च
गतमोहेन मया ज्ञातो महेश्वरः ॥ ज्ञात्वा विसृष्टचापेन स्तुतश्च भगवांस्तदा ॥ १६ ॥ नमोऽस्तु ते देववराप्रमेय नमोऽस्तु ते सर्वगु
णान्तराय ॥ नमोऽस्तु ते देवगणार्चिताय नमोऽस्तु ते सर्वगुणोत्तराय ॥ १७ ॥ उन्मेषमात्रेण तवाप्रमेय दिनं समग्रं प्रपितामहस्य ॥
निमिषमात्रेण निशा प्रदिष्टा यस्यां समादाय जगत्स शेते ॥ १८ ॥ न कारणं वेद्मि तवेश सृष्टौ संहारकार्यं च तथा न वेद्मि ॥ आद्यं न मध्यं
न तथैव चान्तं त्वमेक ईशः पुरुषः पुराणः ॥ १९ ॥ सर्वेषु भूतेषु तथा स्थितस्त्वं सर्वाणि भूतानि तथा तवेश ॥ भूतान्तरस्थोऽपि न भूतसंस्थ
आश्चर्यमेतन्मम देवदेव ॥ २० ॥ भूतान्तरस्थोपि न भूतनाथः भूतार्जितैः कर्मभिराप्यसे त्वम् ॥ कर्माणि सर्वाणि जगत्त्रयस्य धर्मे सदा
यन्महदद्भुतं तत् ॥ २१ ॥ गन्धः पृथिव्यां च रसोऽप्सु देव वायौ यथा स्पर्शगुणस्त्वदीयः ॥ रूपं तथाग्नौ गगने च शब्दो गुणाः समग्रास्तव
भूतसंघे ॥ २२ ॥ मनोगतस्त्वं च तथा वितर्को बुद्धौ गतस्त्वं च विनिश्चयोऽत्र ॥ चिद्रूपमात्मन्यथ देवदेव अव्यक्तसंस्थस्य गुणत्रय

स्त्वम् ॥ २३ ॥ त्वमेव भूतानि च तद्गुणाश्च मूर्तैर्विभिन्नोसि न भूतभिन्नः ॥ तत्त्वानि सर्वाणि च तद्व्यतीतः त्वमेव देवः पुरुषः प्रदिष्टः ॥ २४ ॥ तवेच्छया स्यात्सकला त्रिलोकी तवेच्छया देव तथा विनश्येत् ॥ इत्थंविधस्यानघ कर्मणस्ते स्तुतिः कथं स्यात्परमस्य धाम्नः ॥ २५ ॥ एवं स्तुतो देववरो मयासावुवाच मां देवगणस्य मध्ये ॥ योऽहं स देवः परमेश्वरस्त्वं योऽहं स देवः प्रपितामहश्च ॥ २६ ॥ आश्रित्य मूर्तित्रितयं मयेदं कर्मत्रयं शङ्कर साध्यते वै ॥ उत्पत्तिनाशौ परिपालनं च कालत्रये शङ्कर देवकार्यात् ॥ २७ ॥ मूर्तिर्ममोग्रा जगतां तवेयं संहारकार्यार्थमुदीर्णदर्पा ॥ त्वप्रभुर्भवः कारणकारणानां पूज्यश्च सर्वेश्वर सर्वदेवैः ॥ २८ ॥ ये त्वां नमस्यन्ति जगत्प्रधानं भक्तिं परां ये च वहन्ति तुभ्यम् ॥ भक्त्या च नित्यं तव पूजयन्ति स्थानं हि तेषां सुलभं मदीयम् ॥ २९ ॥ मदीयमेतद्भुवि चापरत्नं प्रदीयतां भार्गवनन्दनाय ॥ ऋचीकपुत्राय गुणाधिकाय तस्मात्समादास्यति तस्य पुत्रः ॥ ३० ॥ स तेन चापेन निहत्य शत्रून्कृत्वा च लब्धीं वसुधां सुरेश ॥ तच्चापरत्नं भुवि राघवाय प्रदास्यते राम इति श्रुताय ॥३१॥ कृत्वा स रामोपि हि तेन कर्म प्रदास्यते तद्वरुणाय चापम् ॥ तस्मात्समादास्यति फाल्गुनोऽपि देवार्थकार्यैकरतिर्महात्मा ॥ ३२ ॥ स्वं चापरत्नं जनकाय देहि निमीतिनाम्ना भुवि शब्दिताय ॥ तेनापि चापेन स तत्प्रसूतो राजा महत्कर्म करिष्यतीति ॥३३॥ एतावदुक्त्वा भगवान्महात्मा जगाम काष्ठां मनसस्त्वभीष्टाम् ॥ मया तथा ते भुवि चापरत्ने द्विजप्रधान क्षितिपेषु दत्ते ॥ ३४ ॥ यद्वैष्णवं चापवरं पितुस्ते न्यस्तं करे वासुकितुल्यरूपम् ॥ तद्देवकार्येण विना न शक्यं केनाप्यधिज्य युधि राम कर्तुम् ॥ ३५ ॥ अज्ञातवस्तुरचितं सुरकार्यदक्षं गोविन्दबाहुविटपाश्रयलब्धमानम् ॥ न्यस्तं पुरा पितृकरे तव युद्धशौण्ड चेत्थं मया हरिवचः प्रसमीक्ष्य राम ॥३६॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मा० सं० वैष्णवधनुःप्रादुर्भावो नाम सप्तषष्टितमोऽध्यायः ॥ ६७ ॥ मार्कण्डेय उवाच ॥ ॥ एवमुक्तस्तदा रामो देवदेवेन शम्भुना ॥ प्रणम्य शिरसा देवं पार्वतीं वरदां तथा ॥ १ ॥ प्रमथैश्च परिष्वक्तस्सोत्कण्ठेनान्तरात्मना ॥ जगामाश्रममुद्दिश्य पितुः परबलार्दनः ॥ २ ॥ सोऽचिरेणैव संप्राप्य ददर्शाश्रममण्डले ॥ वयोवृद्धं तपोवृद्धं पितरं दीप्ततेजसम् ॥ ३ ॥ सोऽभिवाद्य पितुः पादौ मातुश्च परवीरहा ॥ भ्रातॄणामानुपूर्व्येण धर्मनित्यो जितेन्द्रियः ॥ ॥ ४ ॥ तैश्च मूर्धन्युपाघ्रातः सान्त्वितस्स महातपाः ॥ स मत्प्रसादं पृष्टश्चेत्युक्त्वा सर्वमशेषतः ॥५॥ आख्यातवाँस्ततः पश्चात्पातालगमनं तदा ॥ आसन्नं देवकार्यं च चापरत्नं च वैष्णवम् ॥ ६ ॥ जमदग्निर्महातेजाः श्रुत्वा रामवचस्तदा ॥ चापरत्नं च रामाय प्रददौ देवपूजितम् ॥ ७ ॥ दत्त्वोवाच स तं रामं हुताशनसमप्रभम् ॥ पश्चिमेन समुद्रेण प्रविश्य वरुणालयम्॥८॥ संपूज्य वरुणं रामस्तस्यैवानुमते तदा ॥ शत्रुशत्रून्दुराचारान्पाताल निलय

श्रहि ॥ अनेन चापरत्नेन वैष्णवेन महाबल ॥ दैतेयान्समरे हत्वा गत्वा च वरुणालयम् ॥ १० ॥ प्रष्टव्यो वरुणो देवस्त्वया धर्मान्सनातनान् ॥ स पुत्र वरुणाद्धर्माञ्छ्रुत्वा राम यथाविधि ॥ ११ ॥ आगच्छेथा यथाकालं मत्समीपं महाभुज ॥ एवमुक्तस्तदा रामः पित्रा धर्मभृतां वरः ॥ १२ ॥ पितरं मातरं भ्रातॄनभिवाद्य यथाविधि ॥ जगाम वरुणावासं रामो वैश्वानरद्युतिः ॥ १३ ॥ स प्रविश्य समुद्रेण महादेवप्रसादतः ॥ ततोऽश्म नगरं रामो ददर्श पुरमुत्तमम् ॥ १४ ॥ मनोऽभिरामं स्फटिकाश्मचित्रं तुरङ्गनागेन्द्रकुलाकुलं च ॥ विभूषितं पन्नगदैत्यनाथैरुद्यानवापीशत संकुलं च ॥ १५ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मा०सं० रामस्याश्मनगरदर्शनं नामाष्टषष्टितमोऽध्यायः ॥ ६८ ॥ ॥ मार्कण्डेय उवाच ॥ तस्मिन्पुरवरे रम्ये रत्नचित्रसभागतम् ॥ रत्नासनगतं वीरं चारुकुण्डललोचनम् ॥ १ ॥ स्निग्धवैडूर्यसंकाशं शुक्लाम्बरविभूषितम् ॥ हार भारार्पिततनुं चारुकेयूरधारिणम् ॥ २ ॥ प्रवालमणिमुक्ताढ्यं गम्भीरं भुजगाश्रयम् ॥ किरीटोत्तंससंछन्नं यादोगणसमाश्रयम् ॥ ३ ॥ आदित्य मुदकावासमंभसां पतिमूर्जितम् ॥ लोकनाथं महद्भूतं भक्तानामभयप्रदम् ॥ ४ ॥ विष्णोर्भागं विशालांसं विशालाक्षं महाभुजम् ॥ सेव्यमानं महाभागैस्त्रिदशैर्ब्राह्मणैस्तथा ॥ ५ ॥ दैतेयैश्च महाभागैर्भीमैर्भीमपराक्रमैः ॥ सुन्दोपसुन्दशक्राक्षशम्बरामरकण्टकैः ॥ ६ ॥ हयग्रीवमहाग्री वदशग्रीवसुरान्तकैः [१]॥ भीमभीमाक्षनरकविकटोत्कटमारणैः ॥ ७ ॥ अतिकायमहाकायभीमकायबलोद्धतैः ॥ नागैश्च सुमहाकायैर्महाभोगैर्ज गद्धितैः ॥ ८ ॥ नागराज्ञा वासुकिना शङ्खेन कुरुणा तथा ॥ (महापद्मेन पद्मेन कर्कोटकधनंजयैः ॥ ९ ॥ ऐरावतेन नागेन तक्षकेण बलेन च ॥ कंबलाश्वतराभ्यां च ह्यार्यकेण महात्मना ॥ १० ॥) वालव्यजनहस्तास्तमुपवीजन्ति निम्नगाः ॥ गङ्गा च सरयू राजन् वितस्ता यमुना तथा ॥ ११ ॥ इरावती चन्द्रभागा नर्मदा च महानदी ॥ पयोष्णी ब्राह्मणी गौरी विपाशा देविका तथा ॥ १२ ॥ शतद्रुः कम्पना सिन्धुस्तथा चान्यास्सहस्रशः ॥ सेव्यमानस्तथा कूपैस्तडागैश्च सविग्रहैः ॥ १३ ॥ सरोवरैस्सागरैश्च समुद्रैश्च यदूत्तम ॥ तं दृष्ट्वा वरुणं राजन्स ववन्दे भृगूत्तमः ॥ १४ ॥ पूजयामास च तथा वरुणोऽपि भृगूत्तमम् ॥ पाद्यार्घ्याचमनीयाद्यैरासनेनोदकेन च ॥ १५ ॥ आसीनश्च तदा रामो दैतेयानां वधे वृतः ॥ महादेववचस्सर्वं वरुणाय न्यवेदयत् ॥ १६ ॥ स च तेनाभ्यनुज्ञातो ययौ दैत्यपुरं महत् ॥ वरुणोऽपि महातेजा रामवाक्येन यादव ॥ १७ ॥ संवादयामास तदा रामं रणकृतक्षणम् ॥ तदा वरुणदूतेभ्यो दैतेयाः श्रुतविस्तराः ॥ १८ ॥ निष्क्रम्य नगराद्राजँश्च

१ कोष्ठान्तर्गतः पाठः खपुस्तके नास्ति ।

रङ्गबलान्विताः ॥ सुसन्नद्धाः प्रतीक्षन्तो राममद्भुतविक्रमम् ॥१९॥ ददृशुश्च महाभागं वरचापधरं तदा ॥ मृत्योर्भुजमिवोदग्रं लोकाकर्षणतत्परम्
॥ २०॥ दीप्तांशुजालं रणचण्डवेगं धनुर्धरं कालभुजप्रकाशम् ॥ महानुभावं समरेष्वजेयं लेलिह्यमानं भुजगेन्द्रबाहुम् ॥२१॥ इति श्रीविष्णुधर्मोत्तरे
प्रथमखण्डे मा० सं० वरुणादिदर्शनं नामैकोनसप्ततितमोऽध्यायः ॥६९॥ मार्कण्डेय उवाच ॥ सन्नद्धं दानवगणं पताकाशतसंकुलम् ॥ नानाप्रका
रवादित्रं सिंहनादबलोद्धतम् ॥ १ ॥ दृष्ट्वा रामो महातेजाः सज्जं चक्रे महद्धनुः ॥ शरैस्संछादयामास दैत्यसैन्यं महाबलम् ॥ २ ॥ अभ्रच्छायेव
संजज्ञे रामसृष्टैश्शिलीमुखैः ॥ तिर्यगूर्ध्वमधश्चैव शरैर्व्याप्तं समन्ततः ॥ ३ ॥ चापमण्डलमध्यस्थः परिवेषीव भास्करः ॥ दृष्टमात्रेण सैन्यानां चक्षू
ष्यपहरद्रणे ॥ ४ ॥ शरान्धकारे मग्नास्ते दानवा दुष्टचेतसः ॥ रामसन्दर्शनादेव दृष्टेऽर्के कौशिका यथा ॥ ५ ॥ स दानवानां व्यसृजन्रामो
भाति शिलीमुखान् ॥ सदार्णवानां मधुवत्कुसुमानां शिलीमुखः ॥ ६ ॥ शरान्धकारे महति मग्नो मतिमतां वरः ॥ मायां कृत्वा तदाग्नेयीं तं
ददाह शरोत्करम् ॥ ७ ॥ शरान्धकारगहनान्निष्क्रान्तास्ते दितेः सुताः ॥ भार्गवं कोष्टकीकृत्य रणे बिभिदुरञ्जसा ॥ ८ ॥ प्रचण्डैरर्धनाराचैर्व
त्सदन्तैस्सचूचुकैः ॥ वराहकर्णैर्भल्लैश्च क्षुरप्रैश्चटकाननैः ॥ ९ ॥ तोमरैर्भिण्डिपालैश्च पाषाणैर्लगुडैश्शुभैः ॥ खड्गैः प्रासैस्तथा चक्रैर्गदामुसल
कम्पनैः ॥ १० ॥ परिघैरायसैश्शूलैस्त्रिशूलैश्शक्तिभिस्तथा ॥ स बाध्यमानोऽपि रणे दैत्यनाथायुधोत्करैः ॥११॥ न विव्यथे महातेजा हुताहुतिरि
वानलः ॥ यदा शस्त्रप्रहारैस्तं न शेकुस्समरे द्विजम् ॥ १२ ॥ हन्तुं दैत्यवरा युद्धे चक्रुरस्त्रं तदा महत् ॥ अयश्शङ्कुर्महातेजा राजा दैत्यग
णस्य यः ॥ १३ ॥ समेतैर्दानवैस्सार्धं रामं रणकृतक्षणम् ॥ शरैः संछादयामास दिव्यास्त्रप्रतिमन्त्रितैः ॥ १४ ॥ अस्त्रैरस्त्राणि संवार्य दानवेन्द्रस्य
भार्गवः ॥ चिच्छेद सशरं चापं रुक्मदण्डं तथा ध्वजम् ॥ १५ ॥ सारथेश्च शिरः कायाच्छिरस्त्राणविभूषितम् ॥ एतत्कृत्वा रणे कर्म दक्षिणेन
स पाणिना ॥ १६ ॥ जग्राह परशुं तीक्ष्णं दैत्यकायविदारणम् ॥ पद्भ्यामाक्रम्य वेगेन समरे रथकूबरम् ॥ १७ ॥ निर्जीवान्पादवेगेन कृत्वा
तुरगसत्तमान् ॥ गदया च रथस्थस्य दानवेन्द्रस्य संयुगे ॥ १८ ॥ जहार सशिरस्त्राणं शिरो ज्वलितकुण्डलम् ॥ अयःशङ्कौ हते दैत्ये भार्गवं समरे
तदा ॥ १९ ॥ सर्वे दैत्यगणाः क्रुद्धाश्छादयामासुरञ्जसा ॥ अस्त्रपुञ्जं रणे च्छित्त्वा तेषां भृगुकुलोद्भवः ॥ २० ॥ रणे चिच्छेद गात्राणि शिरांसि
च महातपाः ॥ क्षणमात्रेण रामोऽपि दैत्यदेहसमाकुलाम् ॥ २१ ॥ शोणितौघनदीं चक्रे केशशैवालशाद्वलाम् ॥ बाणमीनां चापनक्रां छत्रहंसावलीं
तथा ॥ २२ ॥ प्रेतलोकार्णवगमां भीरुकल्मषवर्द्धिनीम् ॥ हस्तिशीर्षोपलां रौद्रां चारुतत्पुच्छपन्नगाम् ॥ २३ ॥ एवं विधेऽपि संवृत्ते रणे कर्मणि

दानवाः ॥ तं राममक्षतं दृष्ट्वा हतशेषाः प्रदुद्रुवुः ॥ २४ ॥ मयतारप्रभृतयः पुरं च विविशुस्तदा ॥ पलायमानान्समरे न जघान स भार्गवः ॥२५॥
किञ्चिच्छेषेषु दैत्येषु विनिवृत्तस्तदा रणात् ॥ हतदैत्यायुतगणो रामोऽश्मनगरं ययौ ॥ २६ ॥ रामप्रवेशे नगरं वरुणस्याज्ञया तदा ॥
पताकाध्वजसंबाधं कृतं देवैर्विशेषवत् ॥ २७ ॥ नागैश्च दानवैश्चैव सिक्तं चन्दनवारिणा ॥ धूपपुञ्जसमुत्क्षिप्तं कुसुमोत्करमण्डितम् ॥
॥ २८ ॥ ततश्च सुमहातेजा वरुणस्तु विनिर्गतः ॥ पुत्रपौत्रैः परिवृतो रामप्रग्रहकारणात् ॥ २९ ॥ संपूज्यमानं वरुणो रथमा
रोप्य च स्वकम् ॥ प्रवेशयामास पुरं बहुतूर्यपुरस्कृतम् ॥ ३० ॥ रामप्रवेशे च तदा नृत्यन्तोऽप्सरसां गणाः ॥ गन्धर्वमुख्या
गायन्ति संस्तुवन्ति च बन्दिनः ॥ ३१ ॥ स प्रविश्याथ नगरं वरुणस्य तथा गृहम् ॥ उवास तत्र धर्मात्मा वरुणेन सुपूजितः ॥ ३२ ॥
धर्माणामागमं कृत्वा वरुणात्ससुतात्तदा ॥ ३३ ॥ एवं स रामः परवीरघाती संप्राप्य यादोगणनाथवेश्म ॥ उवास पुत्रैर्वरुणस्य सार्धं संपूजितस्तेन
जलेश्वरेण ॥ ३४ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे अयश्शङ्कुवधो नाम सप्ततितमोऽध्यायः ॥ ७० ॥ ॥ वज्र उवाच ॥ ॥ यत्स शुश्राव
धर्मात्मा वरुणाद्भृगुनन्दन ॥ तन्ममाचक्ष्व तत्त्वेन परं कौतूहलं हि मे ॥ १ ॥ मार्कण्डेय उवाच ॥ जमदग्निसुतो रामो वरुणस्य गृहोषितः ॥
कदाचिद्वरुणं देवमिदं वचनमब्रवीत् ॥ २ ॥ राम उवाच ॥ नमस्ते देवदेवेश सुरासुरगणार्चित ॥ गोब्राह्मणहितासक्त यादोगणजलेश्वर ॥ ३ ॥
त्वं तस्य देवदेवस्य विष्णोरमिततेजसः ॥ अयनमृषिभिर्येन विष्णुर्नारायणः स्मृतः ॥ ४ ॥ त्वमेवेदं जगत्सर्वं स्थावरं जङ्गमञ्च यत् ॥ ब्रह्मा
विष्णुश्च रुद्रश्च त्वच्छरीरे समाश्रिताः ॥ ५ ॥ त्वमिन्द्रस्त्वं च धनदस्त्वमीशस्त्वं समीरणः ॥ त्वमग्निस्त्वं यमश्चैव सर्वाधारस्त्वमच्युतः ॥ ६ ॥
देवानामीश्वरश्चैव नागानामीश्वरस्तथा ॥ सागराणां च सरसां सरितां च महाभुज ॥७॥ कूपवापीतटाकानां शौचस्य परमस्य च ॥ विष्णोर्वामस्य
नेत्रस्य शशाङ्कस्य महात्मनः ॥ ८ ॥ त्वन्मयं मण्डलं देव त्वन्मयास्सर्वतारकाः ॥ त्वमेव सरितां नाथस्समुद्रो यादसां पतिः ॥ ९ ॥ आधा
रस्सर्वरत्नानां विद्यानां च जगत्पते ॥ त्वन्मयो देहिनां प्राणो जीवो रुधिरसंज्ञकः ॥ १० ॥ रामस्त्वं प्राणिनां देव सर्वदेवमयो विभुः ॥ भवता
संयता पाशैर्दानवा देव दारुणैः ॥ ११ ॥ पातालद्वारमाश्रित्य भवांस्तिष्ठति निर्भयः ॥ मेरुपृष्ठे च भगवन्पुरी ते देवनिर्मिता ॥१२ ॥ तृतीया च
महाभाग मानसोत्तरमूर्धनि ॥ पुरत्रये त्वं वससि प्राकाम्येन जलेश्वर ॥१३॥ सर्वत्र पूज्यसे देवैस्सर्वभूतभवोद्भव ॥ आधारस्त्वं हि तपसां शौचानां

१ 'जगाम' इति ख० ।

भुवनस्य च ॥१४॥ त्रैलोक्यं सकलं देव प्रकृतिर्विकृतिश्च ते ॥ ममापि सुमहाभाग प्रसादसुमुखो ह्यसि॥१५॥तस्मान्मे भगवंश्छिन्धि संशयान्मनसि
स्थितान् ॥ वरुण उवाच ॥ यत्रास्ति ते संशयमस्त्रधारिञ्छेत्तास्मि ते तत्र न संशयोऽत्र ॥ यथा ममेशस्त्रिपुरान्तकोऽसौ तथा भवान्मे रणचण्डवेगः॥
॥१६॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मा०सं० श्रीपरशुरामवरुणकृतस्तोत्रो नामैकसप्ततितमोऽध्यायः॥७१॥राम उवाच॥ स्निग्धवैदूर्यसंकाश
यादोगणजलेश्वर ॥ त्वत्तोहं श्रोतुमिच्छामि कालसंस्था महाभुज ॥ १ ॥ वरुण उवाच ॥ अनादिनिधनः कालो रुद्रस्संकर्षणः स्मृतः ॥ सर्वभूत
समत्वाच्च स तु रुद्रः प्रकीर्तितः ॥ २ ॥ अनादिनिधनत्वेन स महान्परमेश्वरः ॥ निमेषादपि सूक्ष्मत्वात्सूक्ष्मसूक्ष्मतरो ह्यति ॥ ३ ॥ तस्य
सूक्ष्मातिसूक्ष्मस्य कालस्य परमेष्ठिनः ॥ दुर्विभाव्या महाभाग योगिनामपि सूक्ष्मता ॥ ४ ॥ पद्मपत्रसहस्रं तु सूच्या वै भिद्यते यदा ॥
समकालं तु तद्भिन्नमबुधो मन्यते जनः ॥ ५ ॥ कालक्रमेण तद्भिन्नं सा तस्य द्विज सूक्ष्मता ॥ तस्य सूक्ष्मातिसूक्ष्मस्य न चातिसहते द्विज॥ ६ ॥
नामसंख्यां बुधैर्ज्ञेया ग्रहगत्यनुसारतः ॥ तत्र ताराग्रहाः पञ्च द्वौ च ज्ञेयौ महाग्रहौ ॥ ७ ॥ उपग्रहौ च द्वौ ज्ञेयावेवं प्रोक्ता नव ग्रहाः ॥
भौमज्ञजीवभृगुजसौरास्ताराग्रहास्स्मृताः ॥ ८ ॥ चन्द्रादित्यौ तथा राम विज्ञेयौ द्वौ महाग्रहौ ॥ उपग्रहौ च द्वौ ज्ञेयौ राहुः केतुश्च भार्गव ॥ ९ ॥
चण्डार्कगत्या कालस्य परिच्छेदमुखो यदा ॥ तदा तयोः प्रवक्ष्यामि गतिमाश्रित्य भार्गव ॥ १० ॥ भगणेन समग्रेण ज्ञेया द्वादश राशयः ॥
त्रिंशांशश्च तथा राशेर्भाग इत्यभिधीयते ॥ ११ ॥ आदित्याद्विप्रकृष्टस्तु भागे द्वादशके तथा ॥ चन्द्रमास्स्यात्तदा राम मासार्धेन न संशयः
॥ १२ ॥ भागद्वादशकेनैव तिथ्यांतिथ्यां क्रमेण तु ॥ चन्द्रमाः कृष्णपक्षान्ते सूर्येण सह युज्यते ॥ १३ ॥ सन्निकर्षादथारभ्य सन्निकर्षमथा
परम् ॥ चण्डार्कयोर्बुधैर्मासश्चान्द्र इत्यभिधीयते ॥ १४ ॥ सावने च तथा मासि त्रिंशत्सूर्योदयास्स्मृताः ॥ आदित्यराशिभोगेन सौरो मासः
प्रकीर्त्तितः ॥ १५ ॥ सर्वर्क्षपरिवर्तैश्च नाक्षत्रो मास उच्यते ॥ तिथिनैकेन दिवसश्चान्द्रमाने प्रकीर्त्तितः ॥ १६ ॥ अहोरात्रेण चैकेन सावनो
दिवसस्स्मृतः ॥ आदित्यभागभोगेन सौरो दिवस उच्यते ॥ १७ ॥ चन्द्रनक्षत्रभोगेन नाक्षत्रो दिवसस्स्मृतः ॥ माने मासस्तु नाक्षत्रः सप्तविं
शतिभिर्दिनैः ॥ १८ ॥ परिशेषेषु मासेषु मासस्त्रिंशद्दिनः स्मृतः ॥ सौरेणाब्दस्तु मासेन यदा भवति भार्गव ॥ १९ ॥ सावनेन तु मानेन दिवसं ॥ ४३ ॥
केन पूर्यते ॥ ऊनरात्राश्च ते राम प्रोक्तास्संवत्सरेण षट् ॥ २० ॥ सौरसंवत्सरस्यान्ते मानेन शशिजेन तु ॥ एकादशातिरिच्यन्ते दिनानि

१ 'सूक्ष्मात्सूक्ष्मतमो ह्यसि' इति ख० । २ 'तथातिमहतो' इति ख० । ३ 'मानसंख्या' इति ख० । ४ 'परिच्छेदस्सुखी यदा' इति ख० । ५'सन्निष्क्रमादथारम्य इति ख० ।

भृगुनन्दन ॥ २१ ॥ समाद्वये सार्द्धमासे दिनषोडशकान्विते ॥ नाडीचतुष्टयान्ते तु तस्मान्मासोऽतिरिच्यते ॥ २२ ॥ स चाधिमासकः प्रोक्तः काम्यकर्मसु गर्हितः ॥ यदा चान्द्रेण मानेन पूर्णस्संवत्सरो भवेत् ॥ २३ ॥ तदा नाक्षत्रमानेन स मासो वार्षिको भवेत् ॥ एवं कालस्य सूक्ष्मस्य प्रोक्तं मानचतुष्टयम् ॥ २४ ॥ येनयेन च मानेन यद्यत्कार्यं निबोध तत् ॥ २५ ॥ अब्दायनं तु ग्रहचारकर्म सौरेण मानेन सदा व्यवस्येत् ॥ सत्राण्युपास्यान्यथ सावनेन लोके च यत्स्याद्व्यवहारकर्म ॥ २६ ॥ स्यात्पूर्वकालक्षयपूरणाभ्यां चान्द्रेण मानेन युगं च राहोः ॥ नक्षत्रसत्राण्ययनानि चेन्दोर्मानेन कुर्याद्भगणात्मकेन ॥२७॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मा०सं०वरुणं प्रति परशुरामप्रश्नेऽर्कादिमासवर्णनं नाम द्विसप्ततितमोऽध्यायः ॥ ७२ ॥ वरुण उवाच ॥ लघ्वक्षरसमा मात्रा निमेषः परिकीर्तितः ॥ अतः सूक्ष्मतरः कालो नोपलभ्यो भृगूत्तम ॥१॥ नोपलभ्यं यथा द्रव्यं सुसूक्ष्मं परमाणुतः ॥ द्वौ निमेषौ त्रुटिर्ज्ञेया प्राणो दशत्रुटिः स्मृतः ॥ २ ॥ विनाडिका तु षट्प्राणास्ताः षष्टिर्नाडिका मता ॥ अहोरात्रं च ताष्षष्ट्या नित्यमेतैः प्रकीर्तितम् ॥ ३ ॥ त्रिंशन्मुहूर्ताश्च तथा अहोरात्रेण कीर्तिताः ॥ तत्र पञ्चदश प्रोक्ता राम नित्यं दिवाचराः ॥ ४ ॥ उत्तरां तु यदा काष्ठां क्रमादाक्रमते रविः ॥ तदा तथा भवेद्वृद्धिर्दिवसस्य महाभुज ॥ ५ ॥ दिवसश्च यथा राम वृद्धिं समधिगच्छति ॥ तदाश्रितमुहूर्तानां ज्ञेया हानिस्तदा तथा ॥ ६ ॥ दक्षिणां च यदा काष्ठां क्रमादाक्रमते रविः ॥ दिवसस्य तदा हानिर्ज्ञातव्या नित्यमेव तु ॥ ७ ॥ क्षीयन्ते दिनहानौ तु तन्मुहूर्तास्तथैव च ॥ रात्र्याश्रिताश्च वर्धन्ते रात्रिवृद्धौ तथातथा ॥ ८ ॥ यदा मेषं सहस्रांशुस्तुलां च प्रतिपद्यते ॥ समरात्रिंदिनः कालो विषुवच्छब्दवाचकः ॥९॥ तत्र दानं स्वल्पमपि महद्भवति भार्गव ॥ श्राद्धं जप्यं हुतं दत्तं यच्चान्यत्सुकृतं भवेत् ॥ १० ॥ सूर्यसंक्रमणस्यान्ते सौरो मासस्समाप्यते ॥ सौरमासद्वयं राम ऋतुरित्यभिधीयते ॥ ११ ॥ ऋतुत्रयं चायनं स्यात्तद्वयं च समा स्मृता ॥ देवतानामहोरात्रं स च राम प्रकीर्तितः ॥ १२ ॥ मेषादिषट्के सूर्ये तेषां दिवस उच्यते ॥ तुलादिषट्के सूर्ये तेषां रात्रिः प्रकीर्तिता ॥ १३ ॥ पितॄणां चान्द्रमासेन अहोरात्रोभिधीयते ॥ कृष्णपक्षाष्टमीमध्ये तेषां रात्र्युदयः स्मृतः ॥ १४ ॥ शुक्लपक्षाष्टमीमध्ये तेषामस्तमयस्तथा ॥ अर्धरात्रः पौर्णमास्यां पितॄणां समुदाहृतः ॥ १५ ॥ कृष्णपक्षावसाने च तेषां मध्याह्न उच्यते ॥ कृष्णपक्षक्षये तस्मात्तेषां श्राद्धं प्रदीयते ॥ कृष्णपक्षक्षये श्राद्धं यश्च नित्यं करिष्यति ॥ सततं तर्पितास्तेन भवन्ति

१ 'वर्षद्वये' इति क० । २ 'कार्षिको' इति क० । ३ ''विनालिका' इति ख० ।

पितरोऽव्ययाः ॥ १६ ॥ समाशतैर्द्वादशभिर्दिव्यैस्तिष्ययुगं स्मृतम् ॥ द्विगुणं द्वापरं ज्ञेयं त्रेता त्रिगुणमुच्यते ॥ १७ ॥ चतुर्गुणं कृतं प्रोक्तं पिण्डितं चाब्दसंख्यया ॥ चतुर्युगं सहस्राणि राम द्वादश कीर्तितम् ॥१८॥ अतः परं युगावस्थां निबोध गदतो मम ॥ चतुष्पात्सकलो धर्मस्तथा ब्रह्मोत्तरं जगत् ॥ १९ ॥ श्वेतवर्णो हरिर्देवो ज्ञाननित्याश्च मानवाः ॥ चत्वार्यब्दसहस्राणि तेषामायुः प्रकीर्तितम् ॥ २० ॥ समानवीर्य्याश्च नरास्तत्र नास्त्यधरोत्तरम् ॥ त्रिपादविग्रहो धर्मो राम त्रेतायुगे तदा ॥ २१ ॥ केशवे रक्ततां याते नरा दशशतायुषः ॥ यज्ञे शुभे प्रवर्तन्ते नित्यं हिंसात्मकेषु च ॥ २२ ॥ जगत्क्षत्रोत्तरं चैव तदा भवति भार्गव ॥ द्विपादविग्रहो धर्मः पीततामच्युते गते ॥ २३ ॥ समाः शतानि चत्वारि तदा जीवन्ति मानवाः॥युद्धशौण्डा महोत्साहा लोका वैश्योत्तरास्तदा ॥२४ ॥ जायन्ते शास्त्रभेदाश्च मतिभेदास्तथैव च ॥ स्वल्पमायुर्नृणां बुद्ध्वा विष्णुर्मानुषरूप धृक् ॥ २५ ॥ एकमेव यजुर्वेदं चतुर्धा व्यभजत्पुनः ॥ तस्य शिष्यप्रशिष्याश्च वेदमेकं पुनःपुनः ॥ २६ ॥ शाखाभेदसहस्रेण विभजन्ति द्विजोत्तमाः ॥ एकपादस्थिते धर्मे कृष्णतां केशवे गते ॥ २७ ॥ धर्मभेदे समुत्पन्ने देवतानामनिश्चये ॥ न विद्यते तदा राम आयुषस्तु विनिश्चयम् ॥ २८ ॥ गर्भस्थाश्च म्रियन्तेत्र बाल्ययौवनगास्तथा ॥ शूद्रोत्तरस्तदा लोकस्तिष्ये भवति भार्गव ॥ २९ ॥ सुरप्रतिष्ठा धर्मश्च तदा भवति भूतले ॥ पापिष्ठो वर्धते राम धार्मिष्ठः क्षीयते तदा ॥ ३० ॥ राजानः शूद्रभूयिष्ठाश्चौराश्चार्थोपजीविनः ॥ ब्राह्मणास्सर्वभक्ष्याश्च भवन्ति भृगुनन्दन ॥ ३१ ॥ धर्मनिष्ठश्चिरं राजा न तदा राम जीवति ॥ तस्मिन्काले सुकृतिनां भक्तिर्भवति केशवे ॥ ३२ ॥ तेषामल्पेन कालेन तोषमायाति केशवः ॥ धन्याः कलियुगे राम तपस्तप्स्यन्ति मानवाः ॥ ३३ ॥ तपसाल्पेन ते सिद्धिं प्राप्स्यन्तीति च निश्चयः ॥ चतुर्युगैकस त्या मन्वन्तरमिहोच्यते ॥ ३४ ॥ कल्पस्तु राम विज्ञेयो मनवस्तु चतुर्दश ॥ आदिमध्यान्तरालेषु मनूनां भृगुसत्तम ॥ ३५ ॥ कृतमानप्रमाणेन सन्धिर्भवति मानद ॥ चतुर्युगसहस्रं तु कल्पमाहुर्मनीषिणः ॥ ३६ ॥ कल्पश्च दिवसः प्रोक्तो ब्रह्मणः परमेष्ठिनः ॥ तावती च निशा तस्य यस्यां शेते स भार्गव ॥ ३७ ॥ एवंविधैरहोरात्रैर्दिनमासादिसंख्यया ॥ पूर्णं वर्षशतं सर्वं ब्रह्मा भार्गव जीवति ॥ ३८ ॥ ब्रह्मायुषा परिच्छिन्नः पौरुषो दिवसः स्मृतः ॥ तावती च निशा तस्य यस्येदं सकलं जगत् ॥ ३९ ॥ एवं विधा ये

१ 'मनवस्ते' इति ख० ।

दिवसा व्यतीता न चागता ये च महानुभाव ॥ अनादिसत्त्वात्परमेश्वरस्य ह्यानन्त्यभावाश्च तथा त्वसंख्याः ॥ ४० ॥ इति श्रीविष्णुधर्मोत्तरे प्र० मा० सं० वरुणरामसंभाषणे कालसंख्यावर्णनं नाम त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥ वज्र उवाच ॥ यदेतदुक्तं रामस्य वरुणेन महात्मना ॥ एतच्छ्रुत्वा तु मे जातस्संशयो भृगुनन्दन ॥ १ ॥ अस्मिंस्तु भारते वर्षे परिक्षीणे युगे तथा ॥ अवस्था या भवेद्ब्रह्मंस्तन्मे व्याख्यातुमर्हसि ॥ २ ॥ मार्कण्डेय उवाच ॥ युगेयुगे परिक्षीणे वर्षे यादव भारते ॥ संग्रामेण विनश्यंति प्रायो वर्णोत्तमा जनाः ॥ ३ ॥ वज्र उवाच ॥ अस्माच्चतुर्युगाद्ब्रह्मन्यदतीतं युगत्रयम् ॥ तेष्वहं श्रोतुमिच्छामि संग्रामं भृगुनन्दन ॥ ४ ॥ मार्कण्डेय उवाच ॥ आसीत्कृतयुगस्यान्ते विप्राणां क्षत्रियैस्सह ॥ वैश्यानां च सशूद्राणां युद्धं परमदारुणम् ॥ ५ ॥ वर्णत्रयं तत्र रणे क्षत्रियैर्विनिपातितम् ॥ ( ततश्च ब्राह्मणाः केचित्क्षत्रियानेवमब्रुवन् ॥ ६ ॥ अल्पैर्भवद्भिः कार्येण वयं केन विनिर्जिताः ॥) तानब्रुवन्महाभागाः क्षत्रियास्सत्यसंगराः ॥ ७॥ एकोऽस्माकं द्विजश्रेष्ठस्सेनानीरिति विश्रुतः ॥ सर्वशस्त्रास्त्रकुशलो वयं तस्य मते स्थिताः ॥ ८ ॥ भवतां बहुचित्तत्वाद्वयं तस्मात्पदेपदे ॥ जयामो विपुलं सैन्यं नात्र कार्या विचारणा ॥ ९ ॥ क्षत्रियैरेवमुक्तास्ते ब्राह्मणास्संशितव्रताः ॥ शशाङ्कं शरणं जग्मुर्द्विजेशं सोममञ्जसा ॥ १० ॥ स तानुवाच धर्मात्मा सोमो राजा द्विजोत्तमान् ॥ प्रयागे भार्गवो विद्वान्ब्राह्मणस्संशितव्रतः ॥ ११ ॥ शूर इत्येव विख्यातो नित्यं वसति धार्मिकः ॥ प्रमतिर्नाम तस्यास्ति पुत्रो धर्मभृतां वरः ॥ १२॥ सर्वशास्त्रार्थकुशलो धनुर्वेदपरायणः ॥ विष्णुर्मानुष्यमापन्नो युष्मत्कार्यार्थसिद्धये ॥ १३ ॥ कृत्वा सेनाप्रणेतारं तं तु कृष्णाजिनध्वजम् ॥ निर्मर्यादात्रणे सर्वान्क्षत्रियांस्तान्विजेष्यथ ॥ १४ ॥ सोमस्य वचनं सर्वैरेवमुक्तैर्द्विजैः कृतम् ॥ प्रायः क्षत्रियहीनेयं लब्ध्वी वसुमती कृता ॥ १५ ॥ आदौ कृता क्षत्रबलैर्विट्छूद्रद्विजवर्जिता ॥ एवं कृतयुगस्यान्ते युद्धमासीत्सुदारुणम् ॥ १६ ॥ तथा त्रेतायुगस्यान्ते राक्षसैर्युद्धकर्कशैः ॥ राष्ट्रंराष्ट्रमथासाद्य पार्थिवास्सगणा हताः ॥ १७ ॥ राजा भीमरथो नाम विष्णुर्मानुष्यरूपधृक् ॥ दिवोदासान्वयं जातो निजघान राक्षसान् ॥ १८ ॥ एवं त्रेतायुगस्यान्ते महाविजयकाङ्क्षिभिः ॥ राक्षसैः क्षत्रिया युद्धे केशवेन च ते हताः ॥ १९ ॥ तथैव द्वापरस्यान्ते वासुदेवार्जुनौ रणे ॥ चक्रतुर्वसुधां लघ्वीं नरनारायणौ नृप ॥ २० ॥ द्वापरेद्वापरे राजंस्तथैव मधुसूदनः ॥ एकमेव यजुर्वेदं चतुर्धा व्यभजत्पुनः ॥ २१ ॥ द्वापरेस्मिन्नृपातीते वसिष्ठकुलवर्धनः ॥ पाराशरसुतश्श्रीमान्विष्णुर्द्वैपायनः स्मृतः ॥ २२ ॥ प्रकाशो जनितो येन लोके

१ कोष्ठान्तर्गतः पाठः ख० नास्ति । २ 'ततश्च ब्राह्मणानूचुः क्षत्रिया' इति ख० । ३ 'शस्त्रास्त्रकुशलो' इति क० ।

भारतचन्द्रमाः ॥ परीक्षितपुत्रं राज्यस्थं राजानं जनमेजयम् ॥ २३ ॥ वैशम्पायन इत्येव शिष्यो व्यासस्य विश्रुतः ॥ आख्यास्यति महाऽऽख्यानं सर्वपापभयापहम् ॥ २४ ॥ धर्मे चार्थे च कामे च मोक्षे च यदुनन्दन ॥ प्रदीपभूतं सर्वत्र बुधबुद्धिविवर्धनम् ॥ २५ ॥ यत्र विष्णुकथा देव्याः श्रुतयश्च सनातनाः ॥ तच्छ्रोतव्यं मनुष्येण परं पदमभीप्सता ॥ २६ ॥ भारतात्पारणं प्राप्य नरकं तु न गच्छति ॥ न चेत्स्याद्यदि भूपाल महापातकसंयुतः ॥ २७ ॥ दशभिः पारणैः स्थानं प्राप्नोति जगतः पतेः ॥ केशवस्य महाभाग निर्मितं येन भारतम् ॥ २८ ॥ व्यस्य वेदं चतुर्धा तु विष्णुर्द्वैपायनो मुनिः ॥ शिष्यानध्यापयामास नामतस्तान्निबोध मे ॥ २९ ॥ ऋग्वेदमथ पैलं तु सामवेदं तु जैमिनिम् ॥ आथर्वणं सुमन्तुं तु यजुर्वेदं महामुनिम् ॥ ३० ॥ अध्यापयामास तदा वैशम्पायनसंज्ञकम् ॥ वाकोवाक्यं पुराणं च सूतं भारतमेव च ॥ ३१ ॥ अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ॥ धर्मशास्त्रं पुराणं च विद्यास्त्वेताश्चतुर्दश ॥ ॥ ३२ ॥ शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गतिम् ॥ छन्दोविशेषः षष्ठश्च षडङ्गो वेद उच्यते ॥ ३३ ॥ सांख्यं योगं पञ्चरात्रं शैवं पाशुपतं तथा ॥ कृतान्तपञ्चकं विद्धि ब्रह्मणः परिमार्गणे ॥ ३४ ॥ संसारक्षयहेत्वर्थे भावोपकरणेषु च ॥ सोत्तरा वैष्णवा धर्मास्सार मेतत्प्रकीर्तितम् ॥ ३५ ॥ एतावानेव सकलो विद्याग्रामस्तवेरितः ॥ विद्याः प्रशस्ताश्चैताभ्यः शतशोथ सहस्रशः ॥ ३६ ॥ योसौ व्यासस्य शिष्योभूदारणेयः सुतः शुकः ॥ तेनैव देवदेवेन विष्णुना प्रभविष्णुना ॥ ३७ ॥ त्रेतायुगे चतुर्विंशे भृगुवंशोद्भवेन तु ॥ वाल्मीकिना तु रचितं स्वमेव चरितं शुभम् ॥ ३८ ॥ रामाख्यानं महापुण्यं श्रोतॄणां विष्णुलोकदम् ॥ वर्तमाने कलियुगे क्षीणे नृपतिसत्तम ॥ ३९ ॥ कल्की विष्णुयशो नाम भविष्यति जगत्पतिः ॥ घातयिष्यति सर्वान्स म्लेच्छान्परबलार्दनः ॥ ४० ॥ म्लेच्छाक्रान्तां वसुमतीं कृत्वा म्लेच्छविव र्जिताम् ॥ धर्मसंस्थापनं कृत्वा स्वस्थानमुपयास्यति ॥ ४१ ॥ प्रजासु धर्मयुक्तासु ततस्संपत्स्यते कृतम् ॥ इत्येवं भगवान्विष्णुर्युगे क्षीणेऽभि जायते ॥ ४२ ॥ धर्मसंस्थापनार्थाय नित्यमेव यदूद्वह ॥ प्रादुर्भावसहस्राणि समतीतान्यनेकशः ॥ ४३ ॥ भविष्यति तथा तस्य येषां संख्या न विद्यते ॥४४॥ एतत्तवोक्तं हि नरेन्द्रचन्द्र क्षीणे युगे यद्भवतीह लोके ॥ अतः परं धर्मभृतां वरिष्ठ प्रब्रूहि किं ते कथयामि राजन्॥४५॥ ॥ ४५ ॥

इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मा० सं० युगान्तवर्णनो नाम चतुस्सप्ततितमोऽध्यायः ॥ ७४ ॥ वज्र उवाच ॥ मन्वन्तरे परिक्षीणे यादृशी द्विज

१ 'जगतांपते' इति ख० । २ 'विचितिः षष्ठानि' इति ख० । ३ 'आद्या' इति क० ।

जायते ॥ समवस्था महाभाग तादृशीं वक्तुमर्हसि ॥ १ ॥ मार्कण्डेय उवाच ॥ मन्वन्तरे परिक्षीणे देवा मन्वन्तरेश्वराः ॥ महर्लोकमथासाद्य तिष्ठन्ति गतकल्मषाः ॥ २ ॥ मनुश्च सह शक्रेण देवाश्च यदुनन्दन ॥ ब्रह्मलोकं प्रपद्यन्ते पुनरावृत्तिदुर्लभम् ॥ ३ ॥ ऋषयश्च तथा सप्त तत्र तिष्ठन्ति ते सदा ॥ अधिकारं विना सर्वे सदृशाः परमेष्ठिनः ॥ ४ ॥ भूतलं सकलं वज्र तोयरूपी महेश्वरः ॥ ऊर्मिमाली महावेगः सर्वमावृत्य तिष्ठति ॥ ५ ॥ भूलोकमाश्रितं सर्वं तदा नश्यति यादव ॥ न विनश्यन्ति राजेन्द्र विश्रुताः कुलपर्वताः ॥ ६ ॥ महेन्द्रो मलयस्सह्यः शुक्तिमा नृक्षवानपि ॥ विन्ध्यश्च पारियात्रश्च माल्यवान्गन्धमादनः ॥ ७ ॥ हिमवान्हेमकूटश्च निषधो नील एव च ॥ श्वेतश्च शृङ्गवान्मेरुर्न विनश्यन्ति पर्वताः ॥ ८ ॥ शेषं विनश्यति जगत्स्थावरं जङ्गमं च यत् ॥ नौर्भूत्वा तु सती देवी तदा यदुकुलोद्वह ! ॥ ९ ॥ धारयत्यथ बीजानि सर्वाण्येवा विशेषतः ॥ भविष्यश्च मनुस्तस्यां भविष्या ऋषयस्तथा ॥ १०॥ तिष्ठन्ति राजशार्दूल सप्त ये प्रथिता भुवि ॥ मत्स्यरूपधरो विष्णुः शृङ्गी भूत्वा जगत्पतिः ॥११॥ आकर्षति तु तां नावं स्थानात्स्थानं स लीलया ॥ कर्षमाणन्तु तां नावं देवदेवं जगत्पतिम्॥१२॥ स्तुवन्ति ऋषयः सर्वे दिव्यैः कर्मभिरच्युतम् ॥ घूर्णमानस्तदा मत्स्यो जलवेगोर्मिसंकुले ॥ १३ ॥ घूर्णमानां तु तां नावं नयत्यमितविक्रमः ॥ हिमाद्रिशिखरं नावं देवदेवो जगत्पतिः ॥ १४ ॥ मत्स्यस्त्वदृश्यो भवति ते च तिष्ठन्ति तत्रगाः ॥ १५ ॥ कृततुल्यं तदा कालं तावत्प्रक्षालनं स्मृतम् ॥ आपस्साम्यमथो यान्ति यथापूर्वं नराधिप ॥ ऋषयश्च मनुश्चैव सर्वं कुर्वन्ति ते तदा ॥ १६ ॥ मन्वन्तरान्ते जगतामवस्था मयेरिता ते यदुवृन्दनाथ ॥ अतः परं यत्तव कीर्तनीयं समासतस्तद्वद भूमिपाल॥१७॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मा०सं०मन्वन्तरवर्णनो नाम पञ्चसप्ततितमोऽध्यायः॥७५॥ वज्र उवाच ॥ ब्राह्मस्य दिवसस्यान्ते यादृशी द्विज जायते ॥ जगतोऽस्य समावस्था तादृशीं वक्तुमर्हसि ॥ १ ॥ मार्कण्डेय उवाच ॥ वृत्ते प्रक्षालने राजन्कल्पस्यान्ते चतुर्दिशम् ॥ उत्तिष्ठंति तदा घोरा दिवि सप्त दिवाकराः ॥ २ ॥ ते तु पीत्वा जलं सर्वं शोषयन्ति जगत्रयम् ॥ विनाशे सर्वभूतानामयोगुडसमा तदा ॥ ३ ॥ भूमिर्भवति भूपाल दग्धास्सर्वे च जन्तवः ॥ विनष्टकिल्बिषास्सर्वे जीवमात्रावशेषकाः ॥ ४ ॥ जनलोकमथासाद्य तत्र तिष्ठन्ति निर्भयाः ॥ भूर्भुवस्स्वर्महश्चैव तदा नश्यन्ति पार्थिव ॥ ५ ॥ जनलोकादयो लोका न तु नश्यन्ति पार्थिव ॥ ततोऽर्कास्ते तु नश्यन्ति संहिता रुद्रतेजसा ॥ ६ ॥ उत्तिष्ठन्ति महारौद्रास्ततो दिविचरा घनाः ॥ केचिदञ्जनपुञ्जाभाः केचिद्गजकुलोपमाः ॥ ७ ॥ केचित्पुरवरा

१ 'वीर्याणि' इति क० ।

 

कारः केचिद्धारिद्रसन्निभाः ॥ हरितालाञ्जनप्रख्यास्तथा हिङ्गुलकप्रभाः ॥ ८ ॥ शुकपत्रनिभाः केचित्केचिन्नीलोत्पलप्रभाः ॥ विद्युन्माला विनद्धाङ्गा गर्जन्तोऽथ बलाहकाः ॥ ९ ॥ आक्रम्य गगनं राजन्पूरयन्ति महीतलम् ॥ गङ्गाप्रवाहप्रतिमैर्धारापातैः पुनःपुनः ॥ १० ॥ ततस्ससुद्रा भूपाल वेलोद्भेदतरङ्गिणः ॥ छादयन्ति महीं सर्वां दग्धां सूर्यगभस्तिभिः ॥ ११ ॥ ततस्संवर्तको वायुर्घनानारुजति क्षणात् ॥ ततो वायुं समादाय स्वशरीरे पितामहः ॥ १२ ॥ स्वपित्येकार्णवे लोके नष्टस्थावरजङ्गमे ॥ नष्टचन्द्रार्कपवने ग्रहनक्षत्रतारके ॥ १३ ॥ सुप्त्वा युगसहस्रं तु देवदेवो जगत्पतिः ॥ पुनर्विबुद्धः कुरुते सृष्टिं प्राग्वत्पितामहः ॥ १४ ॥ सृष्टिं करोति धर्मज्ञ कल्पेकल्पे पुनःपुनः ॥ पितामहस्य रात्र्यन्ते तस्माद्धि सृजति प्रजाः॥१५॥ जन्तूनां जननाद्राजञ्जन इत्यभिधीयते ॥१६॥ एतावदुक्तं तव भूमिपाल कल्पे गते यद्भवतीह लोके ॥ अतः परं सर्वयदुप्रधान वदस्व किं ते कथयामि राजन् ॥ १७ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मा०सं० कल्पान्तवर्णनो नाम षट्सप्ततितमोऽध्यायः ॥ ७६ ॥ वज्र उवाच ॥ महाकल्पक्षये ब्रह्मन्समवस्थां वदस्व मे ॥ भवाञ्ज्ञाननिधिः स्फीतो यथा ब्रह्मा पितामहः ॥ १ ॥ मार्कण्डेय उवाच॥पूर्णे संवत्सरशते संहृत्य सकलं जगत् ॥ शेते ब्रह्मा महाराज प्राग्वदेकार्णवे तदा ॥ २ ॥ सन्न्यस्य देहं योगेन पुरुषं प्रतिपद्यते ॥ मोक्षस्थानमनुप्राप्ते देवदेवे पितामहे ॥ ३ ॥ ये गता ब्रह्मणः स्थानं मुच्यन्ते सर्व एव ते ॥ अण्डस्याभ्यन्तरं सर्वं तदाम्भोभिः प्रपूर्यते ॥ ४ ॥ शरीरधारिणस्सर्वे तदा नश्यन्ति पार्थिव ॥ अन्तर्गतेन तोयेन भिन्नमण्डं जगत्पते ॥ ५ ॥ पूर्णे ब्रह्मायुषि तदा बाह्यस्थेऽम्भसि लीयते ॥ एवं सा जगदाधारा धारा तोये प्रलीयते ॥ ६ ॥ ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते ॥ खे वायुः प्रलयं याति मनस्याकाशमेव च ॥ ७ ॥ मनः प्रलीयते बुद्धौ बुद्धिश्चात्मनि लीयते ॥ अव्यक्ते लीयते चात्मा अव्यक्तः पुरुषे परे ॥ ८ ॥ अनन्तानि तथोक्तानि यान्यण्डानि मया पुरा ॥ सर्वाणि तानि संहृत्य समकालं जगत्पतिः ॥ ९ ॥ प्रकृतौ तिष्ठति तदा सा रात्रिस्तस्य कीर्तिता ॥ ब्राह्मे समाशते पूर्णे पुनरेव जगत्पतिः ॥ १० ॥ ( सर्वं विधत्ते धर्मज्ञ यथापूर्वमुदाहृतम् ॥ अव्यक्तादिक्रमेणाथ विधायाण्डं महेश्वरः ॥ ११ ॥ अण्डे शरीरे भवति स्वयंभूरमृतद्युतिः ॥ ) स्वयं स एव धर्मज्ञ ब्रह्मा शुभचतुर्मुखः ॥ १२ ॥ सर्वेष्वण्डेषु धर्मज्ञस्समकालं जगत्पतिः ॥ स्वयं शरीरे भवति प्राकाम्यान्मनुजेश्वर ॥ १३ ॥ ब्रह्मायुषोन्ते जगतामवस्था मयेरिता ते यदुवृन्दनाथ ॥ अतः परं किं कथयामि तुभ्यं तन्मे वदस्वायतलोहिताक्ष ॥ १४ ॥ इति श्रीविष्णुधर्मोत्तरे

१ 'यानियानि' इति ख० । २ कोष्ठान्तर्गतः पाठः खपुस्तके नास्ति ।

प्रथमखण्डे मा०सं०महाकल्पवर्णनो नाम सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥ ॥ वज्र उवाच ॥ ॥ सप्तमस्ते महाभाग जातस्य दिवसस्त्वयम् ॥ वर्तते ब्रह्मणो ब्रह्मँस्तत्र मन्वन्तरक्षये ॥ १ ॥ कथं कालस्त्वया नीतः पुरा कल्पक्षये तदा ॥ एतन्मे संशयं छिन्धि त्वं समः परमेष्ठिनः ॥ २ ॥ मार्कण्डेय उवाच ॥ नौगतेन मया नीतः कालो मन्वन्तरक्षये ॥ भूयोभूयो महाभाग देवदेवप्रसादतः ॥ ३ ॥ कल्पक्षयमनुप्राप्य दाहकाल उपस्थिते ॥ जनलोकगतेनाथ कालो नीतस्स वै मया ॥ ४ ॥ दाहकाले तदा वृत्ते प्रलयाम्भोधिसंप्लवे ॥ जनलोकादहं भ्रष्टः पतितो धरणीतले ॥ ५ ॥ नूनं तस्यैव देवस्य सा माया भीमविक्रमा ॥ एकार्णवे भूमितले पतितस्यापि मे नृप ॥ ६ ॥ जीवितं न परिभ्रष्टं नूनं तस्य प्रसादतः ॥ तदाहं नष्टविज्ञानः पतितोऽभसि दारुणे ॥ ७ ॥ ऊह्यमानोम्बुकल्लोलैरितश्चेतश्च यादव ॥ अपश्यमानो जगतीं सशैलवनकाननाम् ॥ ८ ॥ निर्वेदं जीविते दीर्घे तदा प्राप्तोऽस्मि शत्रुहन् ॥ सोऽहमार्तोऽथ निर्विण्णस्तस्मिंस्तूदकसंप्लवे ॥ ९ ॥ पश्यामि जलमध्यस्थं विपुले वटपादपम् ॥ महाशाखं घनच्छायं स्निग्धपल्लवशोभितम् ॥ १० ॥ तमहं बाहुभिर्गत्वा तस्मिन्न्यग्रोधपादपे ॥ (शाखाँसक्तं तु पश्यामि सवितारं तथोज्ज्वलम् ॥ ११ ॥ दिव्यं पश्यामि पर्यङ्कं सर्वरत्नोपशोभितम् ॥) पर्यङ्के तत्र पश्यामि बालं कमललोचनम् ॥१२॥ अतसीपुष्पसंकाशं पीतवाससमच्युतम् ॥ पद्मपत्राभचरणं तदाकारकरं तथा ॥ १३ ॥ अलङ्कृतं चाभरणैः शिखण्डैकविभूषितम् ॥ एकं साहस्रमध्यस्थं भ्राजमानमिव श्रिया ॥ १४ ॥ स मां दृष्ट्वा तदा बालः स्मितपूर्वमुवाच ह ॥ यदि श्रान्तोऽसि धर्मज्ञ विग्रहं वदनेन मे ॥ १५ ॥ प्रविश्य विश्रमस्वाद्य यावद्वा रुचितं तव ॥ एवमुक्तस्य सञ्जाता व्रीडा यदुकुलोद्वह ॥ १६ ॥ ततोऽहमवशस्तस्य प्रविष्टो नृप विग्रहम् ॥ जगतीं तत्र पश्यामि सशैलवनकाननाम् ॥ १७ ॥ यथापूर्वं महाभाग नगराकारशालिनीम् ॥ देवदैत्योरगाकीर्णां समुद्रवरभूषणाम् ॥ १८ ॥ नृपराष्ट्रसमाकीर्णां वणिग्भिरुपशोभिताम् ॥ द्विजाध्ययनसंघुष्टां वर्णाश्रमसमाकुलाम् ॥१९॥ सरित्पर्वतवृक्षाढ्यां यज्ञोत्सवसमाकुलाम् ॥ तां दृष्ट्वा कौतुकं जातं तस्य बालस्य कर्मणा॥२०॥द्रष्टुमिच्छामि तस्यान्तं भ्रममाणस्ततस्ततः ॥ यदा नासादयाम्यत्र तस्य बालस्य चेष्टितम् ॥२१॥ पूर्णे युगसहस्रेऽपि तमेवाहं तदा शिशुम् ॥ संप्राप्तः शरणं राजन्नहं भाव्यर्थचोदितः ॥ २२ ॥ ततोऽहं वदनात्तस्य निर्गतश्शशिसन्निभात् ॥ यदा तस्योदरेऽपश्यं त्रैलोक्यं सचराचरम् ॥ २३ ॥ तथा पश्यामि सकलं बहिर्भूमि

१ 'योगस्थेन मया नीतः' इति ख० । २ 'मन्वन्तराश्च ये' इति क० । ३ 'सोऽहं शान्तोऽथ निर्विण्णः' इति ख० । ४ कोष्ठान्तर्गतः पाठः खपुस्तके नास्ति । ५ 'नगराट्टालमालिनीम्' इति ख० । ६ 'मम' इति ख० । ७ 'नूनमव्यक्तचोदितः' इति ख० ।

पसत्तम ॥ ततोऽहं पतितस्तस्य पादयोस्सुमहात्मनः ॥२४॥ततस्सोऽन्तार्हितो बालस्सह तेनैव शाखिना॥ एवं मया तस्य निशा नरेन्द्र संप्राप्य पुण्यं
जठरे हि नीता ॥ महाशरीरस्य महानुभाव महाप्रमेयस्य पितामहस्य ॥२५॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मा०सं० बालप्रभावकथनो नामाष्टसप्त
तितमोऽध्यायः ॥७८॥ वज्र उवाच ॥ ॥ कस्त्वसौ बालवेषेण कल्पान्तेषु पुनःपुनः ॥ दृष्टोऽपि न त्वया ज्ञातस्तत्र कौतूहलं महत् ॥१॥ मार्कण्डेय
उवाच ॥ भूयोभूयस्त्वसौ दृष्टो मया देवो जगत्पतिः ॥ कल्पक्षये न विज्ञातस्तन्मायामोहितेन वै ॥२॥ कल्पक्षये व्यतीते तु तं तु देवं पितामहात् ॥
अनिरुद्धं विजानामि पितरं ते जगत्पतिम् ॥ ३ ॥ वज्र उवाच ॥ ज्ञातवानसि तं देवं कथं देवात्पितामहात् ॥ दुर्विज्ञेयं जगद्योनिं सर्वभूतभवो
द्भवम् ॥ ४ ॥ मार्कण्डेय उवाच ॥ मायया मोहितस्तस्य बालस्यामिततेजसः ॥ दृष्ट्वोदरे जगत्कृत्स्नं विस्मयाविष्टचेतनः ॥ ५ ॥ गत्वाहं ब्रह्मसदनं
पृष्टवाँस्तं पितामहम् ॥ एकार्णवे मया लोके देवदेवे जगत्पतौ ॥ ६ ॥ दृष्टो बालो महातेजास्तस्याहमवशस्ततः ॥ प्रविष्टो जठरे तस्य देव सर्वं
चराचरम् ॥ ७ ॥ मया दृष्टं जगत्सर्वं न च जानामि बालकम् ॥ ध्रुवं तं भगवान्वेत्ति सर्वज्ञत्वाज्जगद्गुरुः ॥ ८ ॥ एवं पृष्टो मया ब्रह्मा मामुवाच
जगद्गुरुः ॥ मार्कण्डेय विजानामि ह्यनिरुद्धं जगद्गुरुम् ॥ ९ ॥ त्वं च तं वेत्थ तत्त्वेन न च कल्पक्षये मुने ॥ त्वया दृष्टं यथा तस्य जठरे
भुवनं मुने ॥ १० ॥ तथा दृष्टं मया तस्य जगद्योनेर्महात्मनः ॥ मदीयस्य दिनस्यान्ते कदाचिद्भृगुनन्दन ॥ ११ ॥ एकार्णवे तदा लोके नष्टे
स्थावरजङ्गमे ॥ नागपर्यङ्कशयने पश्यामि पुरुषं तदा ॥ १२ ॥ तस्मिन्काले न जानामि तमहं तेन मोहितः ॥ ततः पृच्छामि तं देवं को भवानिति
विस्मितः ॥ १३ ॥ स मामुवाच प्रहसन्ममेदं सकलं जगत् ॥ न तु मां वेत्सि तत्त्वेन जगतामीश्वरेश्वरम् ॥ १४ ॥ मयाप्युक्तः स देवेशो ममेदं
सकलं जगत् ॥ वृथा प्रलयमध्ये ते मत्समीपे विशेषतः ॥ १५ ॥ विप्रत्ययश्च यदि ते प्रविश्य जठरं मम ॥ त्रैलोक्यमखिलं पश्य संहृतं
यन्मया स्वयम् ॥ १६ ॥ एवमुक्तस्स तु मया तदा केनापि हेतुना ॥ प्रविश्य जठरं मे स क्षणमात्राद्विनिर्गतः ॥ १७ ॥ निर्गम्य मामब्रवीच्च दृष्टं
त्रिभुवनं मया ॥ तवोदरे जगन्नाथ त्वं च पश्य ममोदरे ॥ १८ ॥ एवमुक्त्वा स सुष्वाप भोगिभोगासने तदा ॥ अहमप्यवशस्तस्य प्रविष्टो जठरं
तदा ॥१९॥ पश्यामि जगतीं ब्रह्मन्सशैलवनकाननाम् ॥ ससमुद्रसरिद्द्वीपलोकपातालभूषिताम्॥२०॥ दृष्ट्वाहं पृथिवीं तस्य तथा जठरसंस्थिताम् ॥
निर्गमिष्यन्नपश्यामि शरीरं तस्य भार्गव ॥२१ ॥ अन्तरिक्षं प्रपश्यामि निरालम्बं परिभ्रमन् ॥ परिभ्रमणखिन्नोऽस्मि तमेव शरणं गतः ॥ २२ ॥
ततस्तु तस्य पश्यामि रन्ध्रहीनं तु विग्रहम् ॥ तस्य देहाद्विनिर्गन्तुं शक्तिर्नासीत्तथा च मे ॥२३॥ रन्ध्रहीनान्महाभाग तमेव शरणं गतः ॥ ततोऽहं

गतवान्ब्रह्मन्नन्त्यं प्राप्तं मयानघ ॥ २४ ॥ बालाग्रादपि सूक्ष्मं तत्ततोऽहं तेन निर्गतः ॥ पद्मनालेन निष्क्रान्तं पश्याम्यात्मानमात्मना ॥ २५ ॥ नाभिसरसि तत्पद्मं जातं देवस्य शार्ङ्गिणः ॥ शेषरत्नार्कशैवालि विकासितदलं महत् ॥ २६ ॥ ततोऽहं पद्मजन्मेति लोके ख्यातिमुपागतः ॥ नाभिजातं च यत्पद्मं तस्य देवस्य भार्गव ॥ २७॥ तन्महामण्डलं कृत्स्नं मेरुस्तस्य च कर्णिका ॥ तत्राहं तस्य संभूतो देवदेवस्य चक्रिणः॥ २८॥ देवस्स विष्णुर्जगतामधीशः सर्वेश्वरः सर्वजगत्प्रधानः ॥ यो बालरूपी भवतान्तकाले दृष्टोऽस्य सर्वस्य चराचरस्य ॥ २९ ॥ एवं हि तस्योदरसंस्थितेन मयोषितं जातकुतूहलेन ॥ तस्यैव मायापरिमोहितेन कल्पान्तकालेषु सदा नरेन्द्र ॥ ३० ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मा० सं० पद्मनाभोपाख्यानो नामैकोनाशीतितमोऽध्यायः ॥ ७९ ॥ वज्र उवाच ॥ ब्रह्मणोऽस्य समुत्पत्तिमारभ्य सुमहाद्युते ॥ कालस्य गतिमिच्छामि श्रोतुं भृगुकुलोद्वह ॥ १ ॥ मार्कण्डेय उवाच ॥ स्वेनाहोरात्रमानेन ब्रह्मणोऽस्य जगत्पतेः ॥ समाष्टकं गतं राजन्पञ्चमासास्तथैव च ॥ २ ॥ अहोरात्रचतुष्कं च वर्तमानदिनाद्गतम् ॥ अतः परं प्रवक्ष्यामि तन्मे निगदतः शृणु ॥ ३ ॥ मनवः[1] षड् गतास्सप्त सन्धयश्च तथा गताः ॥ सप्तविंशद्व्यतीताश्च तथैव च चतुर्युगाः ॥ ४ ॥ युगत्रयं तथातीतं वर्तमानचतुर्युगात् ॥ संवत्सराणां दशकं तथा कलियुगाद्गतम् ॥ ५ ॥ वाताश्वमेधकालेऽस्मिन्सह यक्षेण यादव ॥ भविष्याणामतीतानां ब्रह्मणां भूरिदक्षिण ॥ ६ ॥ अनादिमत्त्वात्कालस्य संख्यां वक्तुं न शक्यते ॥ गङ्गायाः सिकता धारा यथा वर्षति वासवः ॥ ७ ॥ शक्या गणयितुं राजन्न व्यतीता पितामहाः ॥ अन्तवत्तां बुधो बुद्ध्वा सर्वस्य जगतीपते ॥ ८ ॥ तन्मार्गं परिमार्गन्ते यद्विष्णोः परमं पदम् ॥ वज्र उवाच ॥ कियत्कालपरीमाणं मया शास्या वसुन्धरा ॥ ९ ॥ परीक्षिता च धर्मज्ञ तन्मे ब्रूहि भृगूत्तम ॥ मार्कण्डेय उवाच ॥ अद्यप्रभृति राजेन्द्र समापञ्चाशके गते ॥ १० ॥ परीक्षिति महाराजे[2] दिवं प्राप्ते कुरूद्वहे ॥ परीक्षिद्धीने लोकेस्मिन्प्राणितुं त्वं तु शक्यसे ॥ ११ ॥ महाप्रस्थानमाविश्य नागलोकं गमिष्यसि ॥ स्वर्गते त्वयि राजेन्द्र परीक्षिति तथा नृपे ॥ १२ ॥ राजा नागपुरे भावी पारीक्षिज्जनमेजयः ॥ मथुरायां तथा भावी तव पुत्रोऽचलो नृपः ॥ १३ ॥ नगरं खाण्डवप्रस्थं भयादिविनिर्वर्जितम् ॥ पालयिष्यति धर्मात्मा पुत्रस्ते भीमविक्रमः ॥ १४ ॥ दानवेन्द्रो मयः पूर्वं फाल्गुनेन प्रयास्यता ॥ महाप्रस्थानमित्युक्तो राजंस्त्वत्प्रियकाम्यया ॥ १५ ॥ यावद्वज्रो महीं भुङ्क्ते खाण्डवप्रस्थमाश्रितः ॥ तावत्सभेयं संरक्ष्या त्वया मदुपरोधतः॥१६॥ सेयं संरक्ष्यते तेन

१ 'मनवश्च' इति ख० । २ 'परीक्षितुं महाराज' इति ख० ।

प्रतिज्ञाय धनञ्जये ॥ त्वयि नाकमनुप्राप्ते सभेयं मयशासनात् ॥ १७ ॥ हिमाचलं तु नेष्यन्ति यत्र बिन्दुसर सरः ॥ राक्षसाः किङ्करा नाम
यत्तस्मान्निर्मिता पुरा ॥ १८ ॥ उक्तं हि ते कालगतं मयैतदायुःप्रमाणं च तथा तवोक्तम् ॥ अतः परं धर्मभृतां वरिष्ठ वदस्व किं ते कथयामि
राजन् ॥ १९ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मा०सं० यानकालवर्णनो नामाशीतितमोऽध्यायः ॥ ८०॥ वज्र उवाच ॥ त्वयोदितानां धर्मज्ञ
समासेन पृथक्पृथक् ॥ कालस्यावयवानां च श्रोतुमिच्छामि देवताः ॥ १ ॥ मार्कण्डेय उवाच ॥ पौरुषं यदहोरात्रं श्रुतवानसि यादव ॥
कालात्मा पुरुषस्तस्य सर्वभूतपतिः प्रभुः ॥ २ ॥ कल्पस्य दैवतं ब्रह्मा यस्येदं सकलं जगत् ॥ क्रमान्मन्वन्तराणां तु मनवस्तु चतुर्दश ॥ ३ ॥
स्वायम्भुवस्तु प्रथमो मनुः स्वारोचिषस्तथा ॥ वैवस्वतोऽथ सावर्णिर्ब्रह्मपुत्रस्तथैव च ॥ ४ ॥ धर्मपुत्रो रुद्रपुत्रो दक्षपुत्रश्च यादव ॥ रौच्यो भौत्यश्च
विश्वात्मा मनवस्तु चतुर्दश ॥५॥ वज्र उवाच॥य एते भवता प्रोक्ता मनवश्च चतुर्दश ॥ नित्यं ब्राह्मे दिने प्राप्ते एत एव क्रमाद्द्विज ॥६॥ भवन्त्युतान्ये
धर्मज्ञ एतन्मे च्छिन्धि संशयम् ॥ अथवा वर्त्तमानेऽस्मिन्भवता मम कीर्तिताः ॥ ७ ॥ मार्कण्डेय उवाच ॥ एत एव महाराज मनवस्तु चतुर्दश ॥
कल्पेकल्पे त्वया ज्ञेया नात्र कार्या विचारणा ॥८॥ एकरूपास्त्रयः कल्पा ज्ञातव्यास्सर्व एव हि ॥ क्वचित्किंचिद्विभिन्नाश्च मायया परमेष्ठिनः ॥९॥
ज्ञातव्यमेकरूपत्वमब्दानां च तथा त्वया ॥ कल्पेकल्पे महाराज मनूनां च विशेषतः ॥ १० ॥ वज्र उवाज ॥ कल्पानां जनसादृश्ये युक्तिर्नैवोप
पद्यते ॥ कदाचिदपि धर्मज्ञ तत्र पश्यामि कारणम् ॥ ११ ॥ एकस्मिन्नन्तरे मुक्तिं कल्पेकल्पे गते द्विज ॥ प्रभविष्यज्जगच्छून्यं कालस्यादेर[1]
भावतः ॥ १२ ॥ मार्कण्डेय उवाच ॥ जीवस्यान्यस्य सर्गेण नरे मुक्तिमुपागते ॥ अचिन्त्यशक्तिर्भगवाञ्जगत्पूरयते सदा ॥ १३ ॥ ब्रह्मणा
सह मुच्यन्ते ब्रह्मलोकमुपागताः ॥ सृज्यन्ते च महाकल्पे तद्विधाश्चापरे जनाः ॥ १४ ॥ ते प्राप्ताः परमं स्थानं येषां जन्म न विद्यते ॥
समजीवप्रमाणाश्च सर्वे कल्पास्तथा नृप ॥ ब्रह्मलोके विष्णुलोके रुद्रलोके च ये गताः ॥ १५ ॥ विष्णुलोकास्सुबहवो रुद्रलोकास्तथैव च ॥ श्वेत
द्वीपगता ये च तेषां जन्म न विद्यते ॥ १६ ॥ न तु सर्वेषु राजेन्द्र तेषु मुक्तिः प्रकीर्तिता ॥ ब्रह्मलोकोपरिष्टाच्च ये लोका रौद्रवैष्णवाः ॥ १७ ॥
मयोदितास्तयोर्गत्वा पुनर्जन्म न विद्यते ॥ महाकल्पक्षये जीवाः सर्वे तं परमेश्वरम् ॥ १८ ॥ प्राप्यापि विनिवर्तन्ते विना ज्ञानेन यादव ॥ 
भूय एव तदा लोकान्सर्गे सृजति तान्प्रभुः ॥ १९ ॥ कल्पमध्ये तु कल्पान्ते ज्ञानोज्झितकलेवराः ॥ प्राप्नुवन्ति परं स्थानं तद्विष्णोः परमं

१ 'कालस्यैव प्रभावतः' इति ख० ।

पदम् ॥ २० ॥ जीवबीजान्यसर्गेण तत्स्थानं परमेश्वरः ॥ प्रपूरयति धर्मज्ञ राजन्केनापि हेतुना ॥ २१ ॥ वज्र उवाच ॥ कल्पानां सति सादृश्ये यो भेदो भृगुनन्दन ॥ तमहं श्रोतुमिच्छामि तत्र मे कौतुकं महत् ॥ २२ ॥ मार्कण्डेय उवाच ॥ कल्पानां सति सादृश्ये शृणु भेदं नराधिप ॥ समतीते यथा कल्पे षष्ठे मन्वन्तरे गते ॥ २३ ॥ सप्तमस्य चतुर्विंशे राजंस्त्रेतायुगे तदा ॥ यदा रामेण समरे सगणो रावणो हतः ॥ २४ ॥ रामेणैव तदा राजन्कुम्भकर्णो निपातितः ॥ वर्तमाने तु यद्वृत्तं कल्पे यदुकुलोद्वह ॥ २५ ॥ रामस्य चरितं बद्धं तदा वाल्मीकिना शुभम् ॥ अतीतकल्पे यद्वृत्तं मया तत्काम्यके वने ॥ २६ ॥ युधिष्ठिराय कथितं धर्मपुत्राय पार्थिव ॥ कल्पानां सति सादृश्ये भेद एष तवेरितः ॥ २७ ॥ तेषां स्वरूपं च तथा तथा राजन्ननुक्रमम् ॥ ब्रह्मजन्मनिसर्गाश्च तथा तस्य पृथग्विधाः ॥ २८ ॥ कार्तिकेयस्य लक्ष्म्याश्च तथा देवस्य शूलिनः ॥ एवमाद्याः प्रभेदास्तु त्वया ज्ञेया नु पार्थिव ॥ कल्पादीनां महाराज चान्यत्रापि यदूद्वह ॥ २९ ॥ सादृश्यभेदाविह भूमिपाल कल्पस्यकल्पस्य मयोदितौ ते ॥ युगादिभिन्नस्य च दैवतानि वक्ष्याम्यतस्तानि निबोध राजन् ॥३०॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मा०सं०कल्पसादृश्यो नामैकाशीतितमोऽध्यायः ॥ ८१ ॥ मार्कण्डेय उवाच ॥ ॥ भगवान्वासुदेवश्च तथा संकर्षणः प्रभुः ॥ प्रद्युम्नश्चानिरुद्धश्च कृतादीनां च दैवताः ॥ ॥ १ ॥ तथा खण्डयुगानीह द्वादशोक्तानि भूपते ॥ षष्ठ्यब्दे च विवर्तन्ते पञ्चाब्दानि पृथक्पृथक् ॥ २ ॥ तेषां तव प्रवक्ष्यामि दैवतांस्तु पृथक्पृथक् ॥ विष्णुर्बृहस्पतिश्शक्रो वह्निस्त्वष्टा तथैव च ॥ ३ ॥ अहिर्बुध्न्यश्च पितरो विश्वेदेवा निशाकरः ॥ इन्द्राग्नी चैव नासत्यौ भगश्चैव महाबलः ॥ ४ ॥ इति द्वादश ते प्रोक्ता मया खण्डयुगेश्वराः ॥ अथ षष्ट्यब्दनामानि निबोध गदतो मम ॥ ५ ॥ वर्तमाने तथा कल्पे षष्ठे मन्वन्तरे गते ॥ तस्यैव च चतुर्विंशे राजँस्त्रेतायुगे तदा ॥ ६ ॥ यदा रामेण समरे सगणो रावणो हतः ॥ लक्ष्मणेन तथा राजन्कुम्भकर्णो निपातितः ॥ ७ ॥ माघशुक्लं समारभ्य चन्द्रार्कौ वासवर्क्षगौ ॥ जीवयुक्तौ यदा स्यातां षष्ट्यब्दादिस्तदा स्मृतः ॥ ८ ॥ प्रभवो विभवः शुक्लः प्रमोदश्च प्रजापतिः॥ वैष्णवे तु युगे पञ्च प्रोक्तास्संवत्सराश्शुभाः ॥ ९ ॥ अङ्गिरा श्रीमुखो भावो युवा धाता तथैव च ॥ अब्दा जीवयुगे पञ्च येषामाद्यास्शुभास्त्रयः ॥ ॥ १० ॥ ईश्वरो बहुधान्यश्च प्रमाथी विक्रमो वृशः ॥ शक्राब्दाः पञ्च निर्दिष्टा येषामाद्यावुभौ शुभौ ॥ ११ ॥ वह्निस्स्वभानुस्तरणो वारिदश्च तथाऽव्ययः ॥ आग्नेयाः पञ्च निर्दिष्टा द्वितीयं तेष्वशोभनम् ॥ १२ ॥ सर्वजित्सर्वधारी च विरोधी विकृतिः खरः ॥ त्वाष्ट्रे पञ्च युगे तेषां द्वितीयं तु

१ 'पार्थिवश्च' इति ख० ।

शुभप्रदम् ॥ १३ ॥ नन्दनो विजयश्चैव जयः कामश्च दुर्मुखः ॥ आहिर्बुध्न्ये युगे पञ्च येषामाद्या हितास्त्रयः ॥१४ ॥ हेममाली विलम्बी च विकारी शर्वरी प्लवः ॥ पैत्र्ये पञ्चयुगे तेषां पञ्चमश्च शुभप्रदः ॥ १५ ॥ शोककृच्छुभकृत्क्रोधी विश्वावसुपरावसू ॥ वैश्वे पञ्च शुभा वैषामब्दौ राजन्द्विपंचमौ ॥१६॥ प्लवङ्गः कीलकस्सौम्यस्सोमो रोधकृदेव च ॥ सौम्ये पञ्च शुभावेषां प्रथमानन्तरावुभौ ॥१७॥ धावनं मथनं वीरं राक्षसं चानलं तथा ॥ इन्द्राग्निदैवते पञ्च सर्व एव शुभप्रदाः ॥१८॥ पिङ्गलः कालयुक्तश्च सिद्धार्थो रौद्रदुर्मती ॥ आश्विनेऽपि युगे पञ्च चतुर्थस्तेषु शस्यते ॥१९॥ दुन्दुभ्यङ्गारकौ रक्तः क्रोधश्चापि क्षयस्तथा ॥ भाग्ये पञ्च शुभास्सर्वे विशेषेण तु पञ्चमः ॥ २० ॥ अतः परं चारवशादेवाचार्यस्य पार्थिव ॥ द्वादशाब्दाधिपांस्तुभ्यं कथयामि फलान्वितान् ॥ २१ ॥ आग्नेयकक्षगे जीवे वर्षं स्याद्वह्निदैवतम् ॥ अहितं तद्विनिर्दिष्टं गोद्विजाम्युपजीविनाम् ॥ २२ ॥ सौम्यरौद्रोपगे जीवे सौम्यवर्षमुदाहृतम् ॥ ईतयस्सकला यत्र चानावृष्टिभयं तथा ॥ २३ ॥ अदित्यपुष्यगे चाब्दो विज्ञेयो गुरुदैवतः ॥ शुभङ्करी हितो लोके क्षेमारोग्यसुभिक्षदः ॥ २४ ॥ सार्पपैत्र्योपगे जीवे पैत्र्यं वर्षमुदाहृतम् ॥ हार्दं वृष्टिप्रदं लोके शिवसौभिक्ष्यकारकम् ॥ २५ ॥ फाल्गुनीद्वयहस्तस्थे वर्षं भाग्यमुदाहृतम् ॥ चौरप्राबल्यकं घोरं नारीदौर्बल्यकारकम् ॥ २६ ॥ चित्रास्वातिगते जीवे त्वाष्ट्रः संवत्सरः शुभः ॥ शूकधान्यक्षयकरः शिबिधान्यविवर्धनः ॥ २७ ॥ इन्द्राग्निदैवतं जीवे विशाखामैत्रसंस्थिते ॥ यज्ञक्रियाप्रवृत्तानां हितं मुदितमानवम् ॥ २८ ॥ ज्येष्ठामूलगते जीवे शाक्रमब्दमुदाहृतम् ॥ शूकधान्यक्षयकरं भूतानां भयवर्धनम् ॥ २९ ॥ आषाढाद्वयगे जीवे वैश्वदेवमुदाहृतम् ॥ नाशुभं न शुभं लोके राज्ञां विग्रहकारकम् ॥ ३० ॥ विष्णुवासवसंस्थे तु वैष्णवं परिकीर्तितम् ॥ क्षेमसौभिक्षदं लोके पाषंडिपरिपीडनम् ॥ ३१ ॥ प्रोष्ठपदाद्वयगते जीवे वारुणसंस्थिते ॥ पूर्वधान्यप्रदं त्वाजं पश्चाद्धान्यविनाशनम् ॥ ३२ ॥ पौष्णाश्वियाम्यगे जीवे वर्षं स्यादश्विदैवतम् ॥ सुवृष्टिक्षेमदं लोके सर्वातङ्कविवर्जितम् ॥ ३३ ॥ चैत्रशुक्लसमारम्भे जगतां जगदीश्वर ॥ सर्वं चक्रे तदा राजँस्ततस्तस्मिन्सदा दिने ॥ ३४ ॥ संवत्सरेशः क्रियते ब्रह्मणा तु सदा ग्रहः ॥ नागो यज्ञश्च धर्मज्ञ गन्धर्वश्च तथैव च ॥ ३५ ॥ सतच्छिन्ने तु यः श्लेषः कलिपातसमागणे ॥ आदित्यादिस्स बोद्धव्यो ग्रहः संवत्सराधिपः ॥ ३६ ॥ आदित्येन सहानन्तो नागो भवति भूमिप ॥ चित्राङ्गदश्च गन्धर्वो दीर्घभद्रो निशाचरः ॥३७॥ सौम्येन वासुकिर्नागः पूर्णभद्रो निशाचरः ॥ चित्रसेनश्च गन्धर्वः समाश्चामी प्रकीर्तिताः ॥३८॥

१ 'हेमलम्बी' इति ख० ।

भौमेन तक्षको नागो मणिभद्रो निशाचरः ॥ तदा चित्ररथो नाम गन्धर्वश्चाभिषिच्यते ॥ ३९ ॥ बुधेन नागः कार्कोटो यक्षभद्रो निशा
चरः ॥ तुम्बुरुर्नाम गन्धर्वः समास्वाम्यभिषिच्यते॥४०॥जीवेन नागः पद्मस्तु दीर्घबाहुर्निशाचरः ॥ गन्धर्वश्च महातेजास्तथा शालिशिरः प्रभुः ॥
॥ ४१ ॥ महापद्मस्तु शुक्रेण नागो भवति भूपते ॥ नारदश्चैव गन्धर्वो महाबाहुर्निशाचरः ॥ ४२ ॥ सौरेण नागः शङ्खस्तु महाकर्णो निशाचरः ॥
ऊर्णायुश्चैव गन्धर्वः समास्वाम्यभिषिच्यते ॥ ४३ ॥ अतः परं प्रवक्ष्यामि समारूपं महीपते ॥ ग्रहस्वामिभवं तुभ्यं शेषास्सर्वे तदाश्रयाः ॥ ४४ ॥
तीक्ष्णार्कस्स्वल्पमत्स्यश्च गतमेघोऽतिभास्करः ॥ बहुनागव्याधिगणो भास्कराब्दो रणाकुलः ॥४५॥ बहुवर्षोऽतिसस्यश्च गवां क्षीरप्रदायकः ॥ चन्द्रा
ब्दः कामिनामिष्टः चित्यङ्कितमहीतलः ॥ ४६ ॥ अग्नितस्कररोगाढ्यो नृपविग्रहदायकः ॥ गतसस्यो बहुव्यालो भौमाब्दो बालहा भृशम् ॥४७॥
विप्रक्षत्रियसस्यानां जनानां च कलाभृताम् ॥ बुद्धिप्रदोऽब्दो बौद्धस्तु बहुसस्याकरः क्षितौ ॥ ४८ ॥ बहुयज्ञोऽतिसस्यश्च गोगजाश्वहितस्तथा ॥
बहुवृष्टिप्रदः सौम्यो जीवाब्दो द्विजपुष्टिदः ॥ ४९ ॥ सस्याढ्यो धर्मबहुलो गतातंको बहूदकः ॥ कामिनां कामदः कामः सिताब्दो
नृपशर्मदः ॥ ५० ॥ दुर्भिक्षमरकान्रोगान्करोति पवनस्तथा ॥ शनैश्चराब्दः शोकांश्च विग्रहाणि च भूभुजाम् ॥ ५१ ॥ क्रमेण परिवर्त्तन्ते
पञ्च यादव वत्सराः ॥ तेषामधिपतीन्वक्ष्ये नामानि च फलानि च ॥ ५२ ॥ पञ्च भक्ते तु यच्छेषं तिष्ठेदब्दगणे गते ॥ संवत्सराद्यः
संज्ञेयो नित्यं संवत्सरो बुधैः ॥ ५३ ॥ आद्यः संवत्सरो नाम द्वितीयः परिवत्सरः ॥ इडाख्यश्च तृतीयोऽत्र चतुर्थश्चानुवत्सरः ॥
इद्वत्सराख्यः कथितः तथा चैवात्र पञ्चमः ॥ ५४ ॥ संवत्सरोऽग्निः परिवत्सरोऽर्क इडाभिधानो भगवाञ्छशाङ्कः ॥ ब्रह्मा स्वयंभूरनुवत्सरोऽपि
इद्वत्सरः शैलसुतापतिश्च ॥ ५५ ॥ वृष्टिः समाख्ये कथिता द्वितीये प्रभूततोया कथिता तृतीये ॥ पश्चाज्जल मुञ्चति यश्चतुर्थः स्वल्पो
दकं पंचममब्दमुक्तम् ॥ ५६ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मा० स० अब्दफलनिर्देशो नाम द्व्यशीतितमोऽध्यायः ॥ ८२ ॥ मार्कण्डेय
उवाच ॥ उत्तरं त्वयनं दिव्यं पैत्र्यं स्याद्दक्षिणायनम् ॥ वसन्तश्चाग्निदैवत्यः शाक्रो ग्रीष्म उदाहृतः ॥ १ ॥ वैश्वदेवी तथा प्रावृट्प्राजा पत्या
शरत्स्मृता ॥ हेमन्तो वैष्णवः प्रोक्तो मारुतः शिशिरः स्मृतः ॥ २ ॥ त्वाष्ट्रश्चैत्रस्तु वैशाखो मासश्चैवाग्निदैवतः ॥ ज्येष्ठश्शाक्रस्स्मृतो मास
आषाढो वैश्वदैवतः ॥३॥ श्रावणो विश्वदैवत्य आजो भाद्रपदस्तथा ॥ अश्वयुक्ताश्विनो मास आग्नेयः कार्त्तिकः स्मृतः ॥४॥ मार्गशीर्षस्तथा सौम्यः
पौषस्याज्जीवदैवतः ॥ पैत्र्यो मासस्स्मृतो माघः फाल्गुनो भगदैवतः ॥ ५ ॥ मासेषु मासदैवत्या शुक्लपक्षाः प्रकीर्तिताः ॥ वक्ष्यामि

कृष्णपक्षाणां देवतानि तवानघ ॥ ६ ॥ चैत्रो याम्यस्स्मृतो राजन्नाग्नेयश्चाप्यनन्तरः ॥ ज्येष्ठो रौद्रः स्मृतः पक्षस्त्वाषाढः सार्प उच्यते ॥ ७ ॥ पैत्रश्च श्रावणो मासः सावित्रश्चाप्यनन्तरः ॥ मैत्रश्चाश्वयुजो मासः शाक्रश्चाप्यग्निदैवतः ॥ ८ ॥ तथा च नैर्ऋतः सौम्यः पौषः स्याद्विष्णुदैवतः ॥ वारुणश्च तथा पैत्रः फाल्गुनः पौष्ण उच्यते ॥ ९ ॥ अतः परं प्रवक्ष्यामि यद्देवो यद्ग्रहः स्मृतः ॥ अग्निरर्कस्स्मृतस्सोमो वरुणः परिकीर्तितः॥१०॥ अङ्गारकः कुमारश्च बुधश्च भगवान्हरिः ॥ बृहस्पतिस्स्मृतः शक्रः शुक्रो देवी च पार्वती ॥ ११ ॥ प्रजापतिश्शनैश्चारो राहुर्ज्ञेयो गणाधिपः ॥ विश्वकर्मा स्मृतः केतुर्ये ग्रहास्ते पुरः स्मृताः ॥ १२ ॥ अतः परं प्रवक्ष्यामि तव नक्षत्रदेवताः ॥ कृत्तिका चाग्निदैवत्या रोहिण्यर्केश्वरा स्मृता ॥ १३ ॥ इन्द्वर्क्षः सौम्यदैवत्यो रौद्री आर्द्रा तथा स्मृता ॥ पुनर्वसुस्तथादित्यो पुष्यश्च गुरुदैवतः ॥ १४ ॥ आश्लेषा सर्पदैवत्या मघा च पितृदैवता ॥ भाग्याश्च पूर्वफाल्गुन्य आर्यमाश्च तथोत्तराः ॥ १५ ॥ सावित्रश्च तथा हस्तश्चित्रा त्वाष्ट्री प्रकीर्तिता ॥ स्वातिश्च वायुदैवत्या नक्षत्रे परिकीर्तिता ॥ १६ ॥ इन्द्राग्नीदैवता प्रोक्ता विशाखा यदुनन्दन ॥ मैत्रमृक्षमनूराधा शाक्रं ज्येष्ठा प्रकीर्तिता ॥ १७ ॥ तथा नैर्ऋत्यदैवत्यो मूलश्च तदुदाहृतम् ॥ आप्यस्त्वाषाढपूर्वाः स्युश्चोत्तरा वैश्वदैवताः ॥ १८ ॥ ब्राह्मी चैवाभिजित्प्रोक्ता श्रवणो वैष्णवः स्मृतः ॥ वासवं च तथा ऋक्षं धनिष्ठा प्रोच्यते बुधैः ॥ १९ ॥ तथा शतभिषक्प्रोक्त नक्षत्रे वारुणं नृप ॥ आजं भद्रापदापूर्वा आहिर्बुध्न्यं तथोत्तरा ॥ २० ॥ पौष्णं च रेवती चार्क्षमश्विनी चाश्विदैवतम् ॥ भरण्यश्च तथा याम्यं प्रोक्तास्ते ऋक्षदेवताः ॥ २१ ॥ ब्रह्मा प्रजापतिर्विष्णुर्यमस्सोमस्तथैव च ॥ कुमारो मुनयस्सप्त ह्यष्टौ च मनवस्तथा ॥ २२ ॥ पिशाचश्च तथा धर्मो रुद्राश्चैकादश स्मृताः ॥ आदित्या द्वादश तथा कामदेवस्तथैव च ॥ २३ ॥ यक्षाश्च पितरश्चैव प्रतिपत्प्रभृतिर्नृप ॥ तिथीश्वरास्तथा प्रोक्ता करणान्नामतः शृणु ॥ २४ ॥ तिथ्यर्धभोगि करणं सदा भवति पार्थिव ॥ स्थिराणि तेषां चत्वारि सप्त विद्धि चराणि च ॥ २५ ॥ अन्ते कृष्णचतुर्दश्यां द्वितीये शकुनिः स्मृतः ॥ प्रथमे पञ्चदश्यर्धे कृष्णे प्रोक्तं चतुष्पदम् ॥ २६ ॥ तस्यैव चापरे राजन्नागाख्यं करणं मतम् ॥ शुक्लप्रतिपदार्धे तु किंस्तुघ्नं करणं मतम् ॥२७॥ एतानि राजन्प्रोक्तानि स्थिराणि करणानि तु ॥ कलिर्धर्मस्तथा सर्पो येषां वायुश्च दैवतम्॥२८॥ शुक्लप्रतिपादार्धे तु द्वितीये यदुनन्दन॥२९॥ पञ्चम्यां च तथा ह्यर्धे त्वष्टम्यां च तथा परे ॥ द्वादश्यर्धे तथा पूर्वे पौर्णमास्यां तथा परे॥३०॥ कृष्णपक्षचतुर्थ्यां तु प्रथमेऽर्धे तथैव च ॥ सप्तम्यां चापरे त्वर्धे ह्येकादश्यां तथाद्यके॥३१॥करणं तु बवं नाम कथितं शक्रदैवतम् ॥ द्वितीयार्धे तथाद्ये तु पञ्चम्यर्धे तथा परे ॥ ३२ ॥ नवम्यर्धे तथा पूर्वे द्वादश्यर्धे तथा परे ॥ कृष्णप्रतिपदाद्यार्धे चतुर्थ्यर्धे तथा परे ॥ ३३ ॥

अष्टम्यर्धे तथा पूर्वे ह्येकादश्यां तथा परे ॥ बालवं नाम करणं कथितं ब्रह्मदैवतम् ॥ ३४ ॥ शुक्लपक्षे द्वितीयार्धे षष्ठचर्धे प्रथमे तथा ॥ नवम्यर्धे तथैवान्ते त्रयोदश्यां तथाद्यके ॥ ३५ ॥ कृष्णप्रतिपदार्धेतु पञ्चम्यां प्रथमे तथा ॥ द्वितीयार्धे तथाष्टम्यां द्वादश्यां प्रथमे तथा ॥३६॥ कौलवं नाम करणं कथितं मित्रदैवतम् ॥ आद्ये शुक्लतृतीयार्धे षष्ठचर्धे च तथा परे ॥ ३७ ॥ कृष्णद्वितीयाप्रथमे पञ्चम्यर्धे तथा परे ॥ नवम्यर्धे तथा पूर्वे द्वादश्यर्धे तथा परे ॥३८॥ तौतिलं नाम करणमार्यम्णं कथितं बुधैः ॥ अन्ते शुक्लतृतीयार्धे सप्तम्यां प्रथमे तथा ॥३९॥ दशम्यर्धे तथैवान्ते चतुर्दश्यां तथाद्यके ॥ कृष्णपक्षद्वितीयान्ते षष्ठचर्धे प्रथमे तथा ॥ ४० ॥नवम्यां च तथैवान्ते त्रयोदश्यां तथाद्यके॥ गराभिधानं करणं पृथिवीदैवतं स्मृतम् ॥४१॥ शुक्लपक्षचतुर्थ्यर्धे सप्तम्यां च तथा परे ॥ एकादश्यां तथा पूर्वे चतुर्दश्यां तथा परे ॥ ४२ ॥ कृष्णतृतीयाप्रथमे षष्ठचर्धे च तथा परे ॥ दशम्यर्धे तथा पूर्वे त्रयोदश्यां तथा परे ॥ ४३ ॥ वणिजं नाम करणं श्रीदेवमभिधीयते ॥ शुक्लपक्षे चतुर्थ्यन्ते ह्यष्टम्यां प्रथमे तथा ॥ ४४ ॥ एकादश्यपरे चार्धे पौर्णमास्यां तथाद्यके ॥ अन्ते कृष्णतृतीयार्धे सप्तम्यां प्रथमे तथा ॥ ४५ ॥ द्वितीये च दशम्यर्धे चतुर्दश्यां तथाद्यके ॥ विष्टिरित्येव करणं कथितं मृत्युदैवतम् ॥ ४६ ॥ सर्वकर्मसु राजेन्द्र सर्वदा गर्हितं च तत् ॥ चतुर्विंशत्यहोरात्रे राजन्होराः प्रकीर्त्तिताः ॥ ४७ ॥ ग्रहेशदेवगन्धर्वनागयक्षेश्वरप्रभाः ॥ सूर्योदयादथारभ्य दिनपाद्याः क्रमेण ताः ॥४८॥ षष्ठक्रमेण च तथा क्रमं तासां निबोध मे ॥ अर्कशुक्रर्क्षराञ्चीश सौरजीवकुजेश्वराः ॥ ४९ ॥ सर्वासां च तथा कालं राहुर्भुङ्क्ते महाग्रहः ॥ कुलिकश्च तथा नागो यक्षः पद्मोऽतिविश्रुतः ॥ ५० ॥ अङ्गारपर्णश्च तथा गन्धर्वश्चाभिधीयते ॥ कुलिकस्य तु या वेला सा वर्ज्या सर्वकर्मसु ॥ ५१ ॥ तस्यां भुक्ते भवेद्व्याधिर्विषं भुक्तं न जीर्यते ॥ प्रत्यक्षमपि तार्क्ष्यस्य तस्यां दष्टो न जीवति ॥ ५२ ॥ भुक्तं तस्यां तु भैषज्यं न तु कार्यकरं भवेत् ॥ सा तु कुलिविदा ज्ञेया मन्त्रिणा भिषजा तथा ॥ ५३ ॥ अविज्ञाय तु तां वेलां त्रयस्ते राजपुङ्गव ॥ वैफल्यकरणान्मूढाः प्राप्नुवन्त्ययशो महत् ॥५४॥ प्रत्येकस्यैव वेलायां राहोर्भोगं निबोध मे ॥ एकैका तु भवेद्धोरा सार्धं विघटिकाशतम् ॥५५॥ विनाडिकाः सप्तषष्ट्या रवेः षोडश कीर्त्तिताः ॥ होरांकुलिकवेलस्तु शेषः कालो रवेस्स्मृतः ॥ ५६ ॥ स्वहोरान्ते तथा वेलाश्चतस्रस्तु विनाडिकाः ॥ राहोश्चक्रस्य कथिताः शेषः कालः सितस्य च ॥५७॥ सौम्यहोरासमारम्भे चषकौ द्वौ प्रकीर्त्तितौ॥ होरा कुलिकवेला तु शेषः कालो बुधस्य च ॥ ५८ ॥ एकसप्ततिमुल्लङ्घ्य होरायां तु निशाभृतः ॥ अष्टौ तु कुलिकस्योक्ताः शेषः कालो निशा

१ 'घोरा' इति ख० ।

भृतः ॥ ५९ ॥ षडशीतिमतिक्रम्य चषकान्नविजस्य तु ॥ यच्छेषस्तद्विनिर्दिष्टः कालस्तु कुलिकस्य च ॥ ६० ॥ सप्तसप्तत्यतिक्रम्य सार्धांस्तु चषकान्गुरौ ॥ राहोस्तु चषको होरा शेषकालो गुरोर्मतः ॥६१॥ भौमहोरासमारम्भे द्वात्रिंशत्तु विनाडिकाः ॥ वेला तु कुलिकस्योक्ता शेषः कालः कुजस्य तु ॥ ६२ ॥ जीवज्ञशुक्रहोरासु सर्वकर्माणि कारयेत् ॥ क्रूरासु च तथान्यासु न किञ्चित्कुलिकस्य च ॥ ६३ ॥ अतः परं मुहूर्तानां देवतानि निबोध मे ॥ सर्वर्क्षाणि विवर्तन्ते ह्यहोरात्रेण पार्थिव ॥६४॥ सततं ते विनिर्दिष्टा मुहूर्तास्त्रिंशदेव तु ॥ वज्र उवाच ॥ अष्टाविंशतिरुक्तानि त्वया तानि ममानघ ॥ ६५ ॥ त्रिंशन्मुहूर्ताश्च कथं त एव द्विजसत्तम ॥ मार्कण्डेय उवाच ॥ दिनरात्र्योस्समारंभे ह्यर्धं भवति पार्थिव ॥ ६६ ॥ तयोर्मध्ये च सततमभिजिच्चाभिधीयते ॥ तयोर्द्वित्वान्मया त्रिंशन्मुहूर्ता विहितास्तव ॥ ६७ ॥ नक्षत्रैर्दैवतैस्तेषां देवताः परिकीर्त्तिताः ॥ केवलं क्रमहानिश्च क्रमस्तेषां निबोध मे ॥ ६८ ॥ रौद्रस्सार्पस्तथा मैत्रः पैत्रो वासव एव च ॥ आप्यो वैश्वस्तथा राजन्केश्वरः शक्रदैवतः ॥ ६९ ॥ ऐन्द्राग्नेयौ नैर्ऋतस्तु वारुणश्च महीपते ॥ आर्यम्णस्तु तथा भोग्यो मुहूर्त्तास्तु दिवाचराः ॥ ७० ॥ रौद्राऽजदेवोहिर्बुध्न्याः पौष्णश्चाश्विन एव च ॥ याम्योऽग्निदैवतश्चैव ब्राह्मस्सौम्यस्तथैव च ॥ ७१ ॥ आदित्यो जीवदैवत्यो वैष्णवः सूर्यदैवतः ॥ त्वाष्ट्रश्चैवाथ वायव्यो मुहूर्ता रात्रिचारिणः ॥ ७२ ॥ अह्नः पञ्चदशो भागो रात्रेश्च यदुनन्दन ॥ मुहूर्तसंज्ञः कथितो मुनिभिस्तत्त्वदर्शिभिः ॥ ७३ ॥ महाकल्यादथारभ्य कालावयवदैवताः ॥ उक्तास्तव मुहूर्ताश्च तेषां काले स्वकेऽर्चनम् ॥ ७४ ॥ महाफलं हि निर्दिष्टं स्याद्वियोगे[1] विशेषतः ॥ स्वकाले देवताः पूज्याः सोपचारैर्विशेषतः[2] ॥ तस्यास्सकाशाद्धर्मज्ञ कामयद्भिर्महत्फलम् ॥ ७५ ॥ काले स्वके यः प्रयतस्तु भक्त्या देवान्यथावत्स मुपैति राजन् ॥ सपर्यया तस्य दिशन्ति देवाः फलानभीष्टान्नृषु लोहिताक्ष ॥७६॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मा० सं० कालावयवदैवतानां माहात्म्यवर्णनो नाम त्र्यशीतितमोऽध्यायः ॥ ८३ ॥ मार्कण्डेय उवाच ॥ लग्नानि द्वादशोक्तानि दिनरात्रेण नित्यशः ॥ यत्रादित्यः स्थितो राशौ तदाद्यानि[3] नराधिप ॥ १ ॥ मेषो वृषोथ मिथुनः कुलीरस्सिंह एव च ॥ कन्या तुला तथा कीटो धन्वी मकर एव च ॥ २ ॥ कुम्भो मीनश्च राजेन्द्र लग्ना द्वादश कीर्त्तिताः ॥ कुजश्शुक्रो बुधश्चन्द्रः सूर्यश्चान्द्रिस्सितस्तथा ॥ ३ ॥ भौमो जीवश्च[4] सौरश्च शनिर्जीविस्तथैव च ॥ मेषादीनां क्रमेणोक्ताः प्रभावः पृथिवीपते ॥४ ॥ लग्नस्यार्धं स्मृता होरा तयोर्विषमराशिषु ॥ आदित्यचन्द्रौ चन्द्रार्कावीश्वरौ समराशिषु ॥ ५ ॥ लग्नत्रिभागो द्रेष्काणः



१ 'व्याधियोगे' इति ख० । २ 'स्वोपवासैः' इति ख० । ३ 'ह्युदयादिर्' इति ख० । ४ 'भौमो जीवश्शनैश्चारी सौरो जीवस्तथैव च' इति ख० ।

क्रमात्तेषां तथेश्वराः ॥ लग्नेशः पंचमेशश्च नवमेशस्तथैव च ॥६॥ मेशाद्याः कथिता नित्यं मेषसिंहधनुर्धराः ॥ मकराद्यास्तथा प्रोक्ता वृषकन्यामृगा स्तथा॥७॥तुलाद्या मिथुनस्तौली कुम्भश्च वसुधाधिप ॥ कुलीराद्याः कुलीरश्च कीटो मीनस्तथैव च ॥८॥ आद्युक्तराशिप्रभृति गणनीया नवांशकाः॥ राशीनां तु यथोक्तानां क्रमान्नव नवेश्वराः ॥ ९ ॥ स्वराशितस्तथारभ्य क्रमेणैव नवेश्वराः ॥ राशीश्वरेश्वराः प्रोक्ता राशीनां द्वादशांशकाः ॥ १० ॥ पंच भौमस्य सौरस्य पंच त्रिंशांशका मताः ॥ जीवस्याष्टौ विनिर्दिष्टाः सप्त प्रोक्ता बुधस्य तु ॥ ११ ॥ शुक्रस्योक्तास्तथापञ्च राशौ विषम संज्ञके ॥ आद्यास्तु पञ्च शुक्रस्य ततस्सप्त बुधस्य च ॥ १२ ॥ जीवस्याष्टौ तथा प्रोक्ताः पञ्च सौरस्य चाप्यथ ॥ कुजस्य तु तथा पञ्च राशौ तु समसंख्यके ॥ १३ ॥ लग्नं च होरा च तथा द्रिकाणं नवांशकं द्वादशभागसंज्ञम् ॥ त्रिंशांशकं चाप्यथ षष्ठमत्र षड्भेदमाहुर्मुनयश्च लग्नम् ॥ १४ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मा०सं० षड् लग्नवर्णनो नाम चतुरशीतितमोऽध्यायः ॥८४॥ वज्र उवाच ॥ शुभो वाप्यशुभो वापि कथं कालो महीतले ॥ ज्ञायते भार्गवश्रेष्ठ तन्ममाचक्ष्व पृच्छतः ॥ १ ॥ मार्कण्डेय उवाच ॥ कृत्तिका याम्यवायव्ये नागवीथ्युत्तरोत्तरे ॥ गजवीथीह्युदङ्मध्ये[1] प्राजापत्यादयस्त्रयः[2] ॥२॥ ऐवराणे ह्युदग्भागे[3] अहोरात्रचतुष्टयम्॥ मध्ये वरे तथावीथी फल्गुनीऋक्षयोर्द्वयोः ॥३ ॥ मध्येमध्ये तु गोवीथी अजाद्यं भचतुष्टयम् ॥मध्ययामे[4] जरद्गः स्यात्त्रितयं श्रवणादिकम् ॥ ४ ॥ याम्योत्तरेण तु मृगा हस्तचित्रे प्रकीर्तिते ॥ अजादक्षिणमध्ये तु विशाखा मैत्रयोस्स्मृताः ॥५॥ आविकायाम्ययाम्ये तु शक्राद्यं भचतुष्टयम् ॥ वैश्वानरपथं प्राहुस्तमेवात्यन्तदारुणम् ॥६॥ उदयास्तमयाभ्यां च चारेण च तथा ग्रहाः ॥ उत्तरासु[5] शुभाः प्रोक्ता दक्षिणास्त्वशुभावहाः ॥७॥ सुप्रभारश्मिमन्तश्च नागवीथ्यां यदा ग्रहाः ॥ न तदस्ति शुभं लोके यन्न पश्यन्ति मानवाः ॥ ८ ॥ विरश्मयो विवर्णाश्च वैश्वानरपथाश्रिताः ॥ न तदस्ति शुभं राम यन्न कुर्युर्जगत्त्रये ॥ ९ ॥ रोहिणीशकटं भिन्द्यु र्ग्रहा यदि भवेत्तदा ॥ नाशः प्रजानां क्रूरश्च विशेषेणात्र लक्ष्यते॥१०॥सौरारसूर्याः क्रूरास्तु तथा क्षीणश्च चन्द्रमाः॥ क्रूरैर्युक्तो बुधश्चैव राहुः केतुस्तथैव च॥११॥शेषास्सौम्यग्रहाः प्रोक्ता मुनिभिस्तत्त्वदर्शिभिः॥ रोहिणी कृत्तिका पित्र्यं वैष्णवं मैत्रमेव च॥१२॥ पीडयन्तो ग्रहा हन्युर्दिशं वरुणपालिताम्॥ पूर्वस्यां दिशि दृश्यन्ते सर्वताराग्रहा यदि ॥ १३ ॥ प्राच्यानां तु तदा राज्ञां भवेत्पीडा सुदारुणा ॥ मध्ये च यदि दृश्यन्ते मध्यदेशनिवासि नाम् ॥ १४ ॥ वारुण्यां यदि दृश्यंते तां दिशं पीडयन्ति च ॥ हीनाधिकं चरन्तश्च व्यभ्रे वाऽदर्शनं गताः ॥१५॥ धूमायन्तो ज्वलन्तो वा वेदयन्ति

१ 'तदा मध्ये' इति ख० । २ 'दयस्तुये' इति क० । ३ 'ह्युदग्याने' इति ख० । ४ 'म्ये' इति ख० । ५ 'उत्तरायां शुभाः' इति क० ।

महद्भयम् ॥ एकान्तरितनक्षत्रगताः स्युश्चेद्ग्रहा दिवि ॥ १६॥ मालानाम भवेद्योगो मध्यदेशक्षितीशहा ॥ प्रासश्चक्रं धनुर्वज्रं संस्थानां क्षुद्रवृष्टिदाः ॥ ॥ १७॥ ग्रहा भयावहा नित्यं शृङ्गाटकपुरोगमाः ॥ भवेयुरेकर्क्षगतास्त्रिभिरूर्द्ध्वं यदा ग्रहाः ॥ १८॥ विनाशायैव लोकानां विज्ञेयास्सुमहीक्षिताम् ॥ एकेन यदि वा द्वाभ्यां ग्रहाभ्यां सहितो गुरुः ॥ १९ ॥ शनैश्चरो वा दृश्येत तदा दुर्भिक्षमादिशेत् ॥ चित्रायां लोहितो यत्र मूले देवगुरुस्तथा ॥ ॥ २० ॥ भार्गवश्च श्रविष्ठासु तदा घोरं भयं भवेत् ॥ कृत्तिकासु शनैश्चारी विशाखासु बृहस्पतिः ॥ २१ ॥ स्थितौ प्रजानां पीडायै वृष्टिमन्त र्दिवं भवेत् ॥ प्राग्द्वारेषु चरन्भेषु सौरो वक्रमियाद्यदि ॥ २२ ॥ पृथिवीं पीडयेत्सर्वां पूर्वदेशं विशेषतः ॥ रौद्रे हस्ते तथैवाप्ये[1] आहिर्बुध्न्ये शनैश्चरः ॥ २३ ॥ यदोदयं प्रपद्येत[2] तदा नश्यन्ति पार्थिवाः ॥ सौम्ये त्वाष्ट्रे श्रविष्ठासु स्थिते सौरे महीक्षितः[3] ॥ २४ ॥ सर्वपीडां समर्हन्ति यया यान्ति यमान्तिकम् ॥ पूर्वां पराशां संप्राप्तौ भृगुजीवौ परस्परम् ॥ २५ ॥ सप्तमर्क्षगतौ स्यातां तदा देवो न वर्षति ॥ अपर्वणि शशाङ्कार्कौ त्वष्टानाम महाग्रहः ॥ २६ ॥ आवृणोति तमः श्यामः सर्वलोकविपत्तये ॥ उदयास्तमये भानोश्चन्द्रस्य च यदा भवेत् ॥ २७ ॥ परिवेषस्तदा राजा क्षिप्रं वधमवाप्नुयात् ॥ सकलं चेदहस्सूर्यो रात्रिं चेत्सकलां शशी ॥ २८ ॥ परिवेषी भवेद्राजा तत्रापि वधमर्हति ॥ द्विसूर्ये गगने वृद्धिं क्षत्रियाणां विनिर्दिशेत् ॥ २९ ॥ द्विचन्द्रे ब्राह्मणानां तु चाधिक्यं प्रलयाय तु ॥ उदयास्तमयौ यत्र सोमार्कौ रक्तमण्डलौ ॥ ३० ॥ न चात्राभ्राणि दृश्यन्ते तन्महाभयलक्षणम् ॥ चन्द्रमा जन्मनक्षत्रं परित्यजति यस्य तु ॥ ३१ ॥ श्यावो रूक्षोपसव्यं तु तस्य विद्यादुपद्रवम् ॥ अत्यन्तादर्शने राहोस्तथा चात्यन्तदर्शने ॥ ३२ ॥ प्रजापीडा विनिर्देश्या व्याधिदुर्भिक्षतस्करैः ॥ यन्नक्षत्रगतो राहुर्ग्रसते चन्द्रभास्करौ ॥ ३३ ॥ तज्जातानां भवेत्पीडा ये नराश्शान्तिवर्जिताः ॥ ग्रहोपसृष्टे नक्षत्रे ग्रहणं तु यदा भवेत् ॥ ३४ ॥ तदा पीडा विनिर्देश्या सैनिकानां नृपैस्सह ॥ गृहीतो राहुणा चन्द्रः सूर्यो वा गगनाच्च्युतः ॥ ३५ ॥ उल्कानि हन्यात्तत्रान्यो राजा राज्यं करिष्यति ॥ गृहीतौ परिवेषे तौ यदा चन्द्रदिवाकरौ॥३६॥ समन्तात्पीड्यते देशः शस्त्रकोपश्च जायते ॥ मेघैस्संछाद्यते राहुस्त्वतिवर्षति वा यदा ॥ ३७ ॥ अकालजैस्तदा राज्ञो भयं विद्यादुपस्थितम् ॥ यन्नक्षत्रागते सूर्ये छिद्रं वै संप्रपद्यते ॥ ३८ ॥ तज्जातः पार्थिवः क्षिप्रं यमलोकं गमिष्यति ॥ ताम्रकुङ्कुमरूक्षाभो घृतहारिद्रसन्निभः ॥ ३९ ॥ बन्धुजीवनिभो भानुः शिशिराद्येषु शस्यते ॥ अस्वच्छवर्णः परुषो वेपनः खण्डमण्डलः ॥४०॥ सच्छिद्रे रजसा ध्वस्त उल्काद्युपहतोपि वा ॥ मण्डला



१ 'वाख्ये' इति ख० । २ 'प्रपश्येत' इति क० । ३ 'महीक्षिताम्' इति क० । ४ 'रतिवृष्टिस्तवदा भवेत्' इति ख० ।

दन्यसंस्थानं मेघैश्चायुधसन्निभैः ॥ ४१ ॥ उदयास्तमये च्छन्नः पार्थिवानां न शस्यते ॥ पक्षादौ चापसंस्थाने युद्धं शशिनि निर्दिशेत् ॥ ४२ ॥
लाभस्तेषां जयस्तेषां यत्र दृष्टं भयं ततः ॥ समकोटिविशालश्च किंचिद्वाप्युत्तरोन्नतः ॥ ४३ ॥ मासादौ चन्द्रमाः शस्तो वाम एव विपर्ययः ॥
मण्डलेनान्तरीकुर्वञ्शृङ्गे सा यदि वा स्पृशेत् ॥ ४४ ॥ ताराग्रहं तदा कुर्याद्भयं जनपदे शशी ॥ शुक्लपक्षस्य या वृद्धिर्लोके क्षेमसुभिक्षदा॥४५ ॥
सा सितेतरपक्षस्य पृथिव्यां नैव शस्यते ॥ श्रवणेभ्युदितो भौमः पुष्ये वक्रमियाद्यदि ॥ ४६ ॥ प्राजापत्युदितश्चन्द्रो नाशाय स्यान्महीक्षिताम् ॥
गतागतं यदा कुर्यान्मघामध्येन लोहितः॥ ४७ ॥ तदा भवत्यनावृष्टिः पाण्डयो राजा विनश्यति ॥ फल्गुन्योरुदयं कृत्वा वक्रः स्याद्वैश्वदैवके॥४८॥
प्रजापत्ये प्रवासश्च त्रैलोक्यं तत्र पीड्यते ॥ ध्रुवेषु वैष्णवे मूले शाक्रे च विचरन्कुजः ॥ ४९ ॥ घोरां करोत्यनावृष्टिं कृत्तिकासु मघासु च ॥
कार्त्तिकेऽश्वयुजे पौषे चाषाढे श्रावणे बुधः ॥५०॥ दृष्टो लोके भयाय स्यान्माघवैशाखयोस्तथा ॥ अकस्माद्यत्र दृश्येत दिवा देवपुरोहितः॥५१॥
राजा वा म्रियते तत्र स वा देशो विनश्यति ॥ अहस्सर्वं यदा शुक्रो दृश्यतेऽथ महाग्रहः ॥ ५२ ॥ तदा त्वग्न्यादिभिर्ग्रामान्बाधते
नगराणि च ॥ कार्त्तिके तु यदा मासि कुर्वातेऽस्तमयोदयौ ॥ ५३ ॥ तदह्नां नवतिं पूर्णं भुवि देवो न वर्षति ॥ शनैश्चरो देशपीडां
देशनक्षत्रपीडने ॥ ५४ ॥ ध्रुवं करोति राजेन्द्र नित्यं चारवशेन तु ॥ सप्ताहान्तर्गता ये वै दिव्यपार्थिवनाभसाः ॥ ग्रहोपरागे तीव्रास्स्युरुत्पाताः
स्वफलेषु ते ॥ ५५ ॥ एकस्मिन्यदि मासे स्याद्ग्रहणं चन्द्रसूर्ययोः ॥ ब्रह्मक्षत्रविरोधाय विपरीतविवृद्धये ॥ ५६ ॥ यस्मिन्दृश्येत नक्षत्रे विशाखायां
प्रधूपवत् ॥ तद्देशजाता पीडा स्याद्बुधकेतुमहाग्रहाः ॥ ५७ ॥ उल्काद्यभिहते सूर्ये केतुभिर्वा विधूमिते अगस्त्ये वा ध्रुवे वापि प्रजापीडां
विनिर्दिशेत् ॥ ५८ ॥ उल्कयाभिहता रूक्षा स्फुरणा रजसा युताः ॥ ऋषयस्सप्त लोकानां विनाशाय च भूभृताम् ॥ ५९ ॥ कृत्तिकाभिस्स
होदेति शांकरीं दिशमाश्रितः ॥ कुमारीप्रीतितो हन्याल्लोके नृपकुमारकान् ॥ ६० ॥ समागमे ग्रहाणां तु चन्द्रमाः शस्यते ह्युदक् ॥
नक्षत्राणां च राजेन्द्र दक्षिणेन न शस्यते ॥ ६१ ॥ राहुः केतुः कुजः शुक्रश्चन्द्रेण सह यायिनः ॥ बुधो जीवश्च सौरश्च नागरा रविणा सह॥६२॥
यायिना विजिते पौरे राज्ञां स्याद्यायिनां जयः ॥ यायिग्रहे पौरजिते पुरा राज्ञां जयो मृधे ॥ ६३ ॥ पौरेण विजिते पौरे पौरैः पौरक्षयं वदेत् ॥
यायिना यायिनि हते यायिभ्यो यायिनां क्षयः ॥ ६४ ॥ ग्रहाणां चेद्भवेत्साम्यं साम्यं राज्ञां विनिर्दिशेत् ॥ जयाजयौ नरेन्द्राणां निर्देश्यौ

१'उदयेस्तमये मातुः' इति ख०। २'पृष्ठभयम्' इति ख०। ३'विपर्यये' इति ख०। ४ 'यदा' इति ख०। ५'स्फूरणा' इति क०। ६'पुरराज्ञाम्' इति क०। ७'पौरेण विजिते चोरे चौरैश्चौरक्षयं वदेत्' इति ख०।

ग्रहवद्बुधैः ॥ ६५ ॥ ग्रहारूढश्च्युतस्स्थानात्स्फुरेण विजितो ग्रहः ॥ विजितो जयलिङ्गैश्च कृष्णः श्यामद्युतिस्तथा ॥ ६६ ॥ उदङ्मार्गगतिः स्निग्धो विमलो विमलप्रभः ॥ बृहद्रूपोतिशुक्रश्च विजयी[1] कथितो ग्रहः ॥ ६७ ॥ न देयमेतच्चपलस्य लोके न नास्तिकस्याधमपूरुषस्य ॥ गुह्यं मुनीनामपि पार्थिवेन्द्र मयेरितं कालविनिश्चयं ते॥६८॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मा०सं० ग्रहशुभाशुभपरिज्ञानवर्णनं नाम पञ्चाशीतितमोध्यायः ॥ ८५ ॥ वज्र उवाच ॥ प्रतिदेशं महाभाग कथं प्राप्तमुपद्रवम्[2] ॥ विज्ञायते द्विजश्रेष्ठ तन्ममाचक्ष्व पृच्छतः ॥ १ ॥ मार्कण्डेय उवाच ॥ कृत्तिकां रोहिणीं सौम्यं मध्यदेशस्य निर्दिशेत् ॥ पीडिते त्रितयेऽतस्मिन्मध्यदेशः प्रपीड्यते ॥ २ ॥ आर्द्रां पुनर्वसुं पुष्यं पूर्वदेशस्य निर्दिशेत् ॥ पीडिते त्रितये तस्मिन्पूर्वदेशः प्रपीड्यते ॥ ३ ॥ आश्लेषां तु मघां पूर्वां चाग्नेय्यां दिशि निर्दिशेत् ॥ पीडिते त्रितये तस्मिन्नाग्नेयी पीड्यतेऽथ दिक् ॥ ४ ॥ आर्यम्णमथ हस्तं च त्वाष्ट्रं स्याद्दिशि दक्षिणे ॥ पीडिते त्रितये तस्मिन्पीड्यते दक्षिणा च दिक् ॥ ५ ॥ स्वातिं विशाखां मैत्रं च नैर्ऋत्यां दिशि निर्दिशेत् । पीडिते त्रितये तस्मिन्पीड्यते नैर्ऋती च दिक् ॥ ६ ॥ वायव्यां दिशि निर्दिष्टा वैश्ववैष्णववासवाः । पीडिते त्रितये तस्मिन्वायवी पीड्यते च दिक् ॥ ७ ॥ वारुणं चाजदैवत्यं चाहिर्बुध्न्यं तथोत्तरे ॥ पीडिते त्रितये तस्मिन्नुत्तरा दिक्प्रपीड्यते ॥ ८ ॥ रेवती चाश्विनी याम्यमैशानी दिक् प्रपीडिता ॥ पीडिते त्रितये तस्मिन्नीशानी दिक् प्रपीड्यते ॥ ९ ॥ आदित्यो भृगुजो भौमो राहुस्सौरो निशाकरः ॥ बुधो बृहस्पतिश्चैव प्राच्यादीशाः प्रकीर्तिताः[3] ॥ ॥ १० ॥ विध्वस्तवपुषस्ते च ग्रहयुद्धे पराजिताः ॥ नीचाः पितृगृहस्थाश्च स्वां दिशं पीडयन्ति ते ॥ ११ ॥ वज्र उवाच ॥ स्वदेशपीडनं कुर्यान्नक्षत्रः पीडितः कथम् ॥ सर्वमेतन्ममाचक्ष्व सर्वधर्मभृतां वर ॥ १२ ॥ मार्कण्डेय उवाच ॥ शनैश्चरार्कौ चारेण वक्रेणाङ्गारको ग्रहः ॥ उपरागेण राहुश्च केतुश्चाधूमनोदयैः ॥ १३ ॥ उदयास्तमयाभ्यां च जीवशुक्रशशाङ्कजाः ॥ संच्छादनेन च शशी ह्यगस्त्यश्चैव योगतः ॥ १४ ॥ तथा यस्मिँश्च नक्षत्रे दिव्यपार्थिवनाभसाः ॥ दृश्यन्ते तु महोत्पाताः स्वां दिशं संप्रपीडयेत् ॥ १५ ॥ देशेषु सर्वेषु मयेरितं ते शुभाशुभं यादवमुख्यनाथ ॥ अतः परं धर्मभृतां वरिष्ठ वदस्व किं ते कथयामि राजन् ॥१६॥इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मा०सं० प्रतिदेशपीडावर्णनं नाम षडशीतमोऽध्यायः ॥८६ ॥ ॥ वज्र उवाच ॥ शुभाशुभपरिज्ञानं भगवन्पुरुषं प्रति ॥ त्वत्तोहं श्रोतुमिच्छामि तन्ममाचक्ष्व पृच्छतः ॥ १ ॥



१ 'विजये' इति क० । २ 'प्राप्त' इति ख० ३ "कीर्तितम्" इति क० ख० ।

मार्कण्डेय उवाच ॥ जन्माश्रितस्त्रिषष्ठश्च सप्तमो दशमस्तथा ॥ एकादशः शशी येषां तदा तेषां शुभं भवेत् ॥२॥ जन्मन्यथ चतुर्थे च साष्टमे दशमे तथा ॥ एकादेशे बुधो येषां तेषामपि शुभं वदेत् ॥ ३ ॥ द्विपञ्चमगतो जीवस्सप्तमो नवमस्तथा ॥ एकादशस्तथा ह्येषां तेषामपि शुभं वदेत् ॥ ॥ ४ ॥ षष्ठसप्तमगः शुक्रो दशमे न च शोभनः ॥ द्वादशश्च तथा ह्येषां तेषां पीडां विनिर्दिशेत् ॥ ५ ॥ तृतीये दशमे षष्ठे तथा चैकादशे शुभाः ॥ सौरारतीक्ष्णकिरणा येषां तेषां शुभं वदेत् ॥ ६ ॥ यस्मिन्हि जननं यस्य जन्मर्क्षं तस्य तत्स्मृतम् ॥ चतुर्थं मानसं तस्माद्दशमं कर्मसंज्ञितम् ॥ ७ ॥ संगातकं षोडशं स्याद्विंशं स्यात्सामुदायिकम् ॥ वैनाशकं तु नक्षत्रं कर्मर्क्षं यत्त्रयोदशम् ॥ ८ ॥ षण्णक्षत्रस्तु पुरुषस्सर्वः प्रोक्तो महीपते ॥ राजा च नवनक्षत्रो नक्षत्रत्रितयं शृणु ॥ ९ ॥ नित्यमभ्यधिकं षड्भ्यः पार्थिवस्य नृपोत्तम ॥ देशाभिषेकनक्षत्रौ जातिनक्षत्रमेव च ॥ १० ॥ जात्याश्रितानि वक्ष्यामि नक्षत्राणि तवानघ ॥ पूर्वात्रयमथाग्नेयं ब्राह्मणानां प्रकीर्तितम् ॥ ११ ॥ उत्तरात्रितयं पुष्यं क्षत्रियाणां प्रकीर्त्तितम् ॥ पौष्णं मैत्रं तथा पित्र्यं प्राजापत्यं विशां स्मृतम् ॥ १२ ॥ आदित्यमाश्विनं हस्तः शूद्राणामभिजित्तथा ॥ सार्पं विशाखा याम्यं च वैष्णवं च नराधिप ॥ १३ ॥ प्रतिलोमभवानां च सर्वेषां परिकीर्तितम् ॥ ईहादे ह्यर्थहानिस्स्याज्जन्मर्क्षे चोपतापिते ॥ १४ ॥ कर्मर्क्षे कर्मणां हानिः पीडा मनसि मानसे ॥ मूर्त्तिद्रविणबन्धूनां हानिस्संघातिके हते ॥ १५ ॥ संतप्ते सामुदायर्क्षे मित्रभृत्यार्थसंक्षयः ॥ वैनाशिके विनाशस्स्याद्देहद्रविणसंपदाम् ॥ १६ ॥ पीडिते चाभिषेकर्क्षे राज्यभ्रंशं विनिर्दिशेत् ॥ देशर्क्षे पीडिते पीडां देशस्य च पुरस्य च ॥ १७ ॥ पीडिते जातिनक्षत्रे राज्ञो व्याधिं विनिर्दिशेत् ॥ १८ ॥ ग्रहर्क्षजातां समवाप्य पीडां पूजा तु कार्या विधिना स्वकेन ॥ ततश्शुभं विन्दति राजसिंह विधूतपापः पुरुषस्सदैव ॥१९॥ इति श्रीविष्णुधर्म्मोत्तरे प्रथमखण्डे मा०सं० प्रतिपुरुषशुभाशुभनिर्देशो नाम सप्ताशीतितमोऽध्यायः ॥ ८७ ॥ वज्र उवाच ॥ ग्रहाणां भृगुशार्दूल नक्षत्राणां तथैव च ॥ पूजने विधिमाचक्ष्व तत्र मे संशयो महान् ॥ १ ॥ मार्कण्डेय उवाच ॥ ग्रहस्साधिपतिः कार्यो नित्यं मण्डलके बुधैः ॥ नक्षत्रश्चन्द्रसहितस्तथा साधिपतिर्नृप ॥ २ ॥ संख्याता तारकास्तस्य यथावन्मनुजेश्वर ॥ तेषां तारकसंख्यानं निबोध गदतो मम ॥ ३ ॥ रौद्रं पुष्यं तथा त्वाष्ट्रं वायव्यं वारुणं तथा ॥ पौष्णं च पार्थिवश्रेष्ठ कथितं त्वेकतारकम् ॥ ४ ॥ द्वितारं फल्गुनीयुग्मं तथा भाद्रपदाद्वयम् ॥ आदित्यं च तथा मूलं चैन्द्राग्नं चाश्विनं तथा ॥ ५ ॥ त्रितारं भरणी सौम्यमैन्द्रं

१ 'सांघातिकम्' इति ख० । २ 'सप्तममुदयं स्मृतम्' इति ख० । ३ 'वैनाशिकम्' इति ख० । ४ 'समुदय' इति ख० ।

ब्राह्मं सवैष्णवम् ॥ चतुस्तारमथाषाढे द्वे मैत्रं यदुनन्दन ॥ ६ ॥ पञ्चतारः स्मृतो हस्तः प्राजापत्यं च वासवम् ॥ सार्पं पित्र्यमथाग्नेयं षट्तारं परिकीर्तितम् ॥ ७ ॥ आदित्यमण्डलं कार्यं पद्मवर्णं नराधिप ॥ श्वेतं चन्द्रमसः कार्यं रक्तं कार्यं कुजस्य च ॥ ८ ॥ नीलं बुधस्य कर्त्तव्यं पीतवर्णं बृहस्पतेः ॥ श्वेतं शुक्रस्य कर्त्तव्यं कृष्णं सौरस्य पार्थिव ॥ ९ ॥ आकाशवर्णं तमसः केतोर्धूम्रप्रभं तथा ॥ रक्तवर्णं कृत्तिकानां फल्गुनीद्वितयस्य च ॥ १० ॥ हस्तस्य च सपौष्णस्य मैत्रस्य च नराधिप ॥ पीतं पुष्यस्य केशस्य शाक्रवाडवयोस्तथा ॥ ११ ॥ श्वेतं सौम्यस्य रौद्रस्य आप्यवारुणयोस्तथा ॥ आदित्यसार्पपित्र्याणां ब्राह्मवायव्ययोस्तथा ॥ १२ ॥ प्रोष्ठपादद्वयस्याथ श्वेतमेवाभिधीयते ॥ विचित्रवर्णं त्वाष्ट्रस्य वैश्वदेवस्य चाप्यथ ॥ १३ ॥ आश्विनस्य तथा कार्यं नित्यमेव नराधिप ॥ कृष्णं याम्यस्य मूलस्य पालाशं श्रवणस्य च ॥ १४ ॥ विशाखायां पीतरक्तं कर्त्तव्यं नृपमण्डलम् ॥ १५ ॥ यथोक्तवर्णेन नरेन्द्र कृत्वा पूर्वं ग्रहस्यानघ मण्डलं स्वम् ॥ ऋक्षस्य वा पूज्यतमस्य राजन्पूजा विधेया तदनन्तरं च ॥ १६ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखंडे मा० सं० ग्रहर्क्षमण्डलनिर्देशो नामाष्टाशीतितमोऽध्यायः ॥८८॥

मार्कण्डेय उवाच ॥ शकृन्मूत्रं तु संगृह्य श्वेतस्य वृषभस्य च ॥ श्वेतगोः पयसा सार्धं स्नातव्यं कुशवारिणा ॥ १ ॥ जन्मनक्षत्रपीडायां तस्माद्दोषाद्विमुच्यते ॥ शिरीषचन्दनाश्वत्थताटनागाम्बुभिर्नरः ॥ २ ॥ स्नानश्चेन्मानसे तत्ते तस्माद्दोषो विमुच्यते ॥ सिद्धार्थकान्प्रियङ्गुं च शतपुष्पां शतावरीम् ॥ ३ ॥ स्नातव्यमम्भसि क्षिप्त्वा कर्मर्क्षे नृप पीडिते ॥ प्रियङ्गुबिल्वसिद्धार्थयवाश्वत्थसुराह्वयान् ॥ ४ ॥ चन्दनोदकसंयुक्ते स्नाने सांघातिके हते ॥ सर्वगन्धोदकैः स्नानं तथा सिद्धार्थकैः शुभैः ॥ ५ ॥ पीडिते सामुदायर्क्षे पुंसां कल्मषनाशनम् ॥ वृषशृङ्गोद्धृतमृदा तथा बिल्वोदकैश्शुभैः ॥ ६ ॥ शतपुष्पाससोमाह्वैः स्नानं वैनाशिके भवेत् ॥ पीडिते चाभिषेकर्क्षे सर्वरत्नोदकैस्तथा ॥ ७ ॥ पीडिते देशनक्षत्रे मृद्भिस्स्नानं विधीयते ॥ मृत्तिकाश्च प्रवक्ष्यामि गदतः शृणु मे नृप ॥ ८ ॥ नदीकूलद्वयान्मध्यात्संगमात्सरसस्तटात् ॥ अश्वस्थानाद्गजस्थानाद्गोस्थानाद्गिरिमस्तकात् ॥ ९ ॥ सर्पस्थानात्सवल्मीकाद्राजस्थानाद्वरालयात् ॥ गजशृङ्गोद्धृतां चैव वृषशृङ्गोद्धृतां तथा ॥ १० ॥ सर्वबीजोदकस्नातो जातिनक्षत्रपीडने ॥ मुच्यते किल्बिषाद्राजन्नात्र कार्या विचारणा ॥ ११ ॥ इदमापः प्रवहतः स्नानमन्त्राः प्रकीर्तिताः ॥ १२ ॥ स्नातस्तथैवं नृपचन्द्र पश्चात्स्नानं प्रकुर्वीत ग्रहोपदिष्टम् ॥ पीडाकरस्याथ ततस्तु कार्यं नक्षत्रयागाभिहितं यथावत् ॥ १३ ॥ पूजा ग्रहेन्द्रस्य



१ 'स वै पौष्णः' इति क० । २ 'मित्राणाम्' इति ख० । ३ 'पीडिते' इति क० 'पीडनम्' इति ख० ।

नरेन्द्रचन्द्र पीडाकरस्याथ ततस्तु कार्या ॥ तं पूजयेच्चाप्यथ चन्द्रयुक्तं ततः स दोषान्सकलाञ्जहाति ॥ १४ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मा०सं० नक्षत्रस्नानं नामैकोननवतितमोऽध्यायः ॥ ८९ ॥ ॥ वज्र उवाच ॥ ग्रहाणां भार्गवश्रेष्ठ नक्षत्राणां तथैव च ॥ पूजाविधिमहं त्वत्तः श्रोतुमिच्छामि तत्त्वतः ॥१॥ मार्कण्डेय उवाच ॥ ग्रहं वाप्यथ नक्षत्रं यं पूजयितुमिच्छति ॥ उपस्पृश्य शुचिर्भूत्वा कृत्वा तस्याथ मण्डलम् ॥२॥ मण्डले कल्पितं वापि स्वयं दैवविदा नृप ॥ पूज्यस्नानेन विधिवत्स्नातः प्रयतमानसः ॥ ३ ॥ विधिनोपसमादाय प्रयतो जातवेदसम् ॥ अथ वोपसमादाने कृते तत्र पुरोधसा ॥ ४ ॥ प्राक्तन्त्रे च कृते तत्र चक्षुष्यत्रे यथाविधि ॥ मण्डलात्पश्चिमे भागे प्राङ्मुखः प्रयतश्शुचिः ॥ ५ ॥ मण्डलस्य तु शौचार्थं पञ्चगव्यं प्रकल्पयेत् ॥ अभ्युक्ष्य पञ्चगव्येन मण्डलं प्रयतः शुचिः ॥ ६ ॥ अर्घ्यादिकल्पनां कुर्यात्पाद्यान्तां तदनन्तरम् ॥ जीवादानं ततः कुर्याज्जीवस्यावाहनं ततः ॥ ७ ॥ पूज्यस्यावाहनं कुर्यात्ततोऽर्घ्यं विनिवेदयेत् ॥ पाद्यं निवेदयेत्पश्चादासनं च निवेदयेत् ॥ ८ ॥ दत्त्वैवाचमनीयं च मधुपर्कं निवेदयेत् ॥ ततोऽनुलेपनं दद्यात्ततो दद्याद्विभूषणम् ॥ ९ ॥ ततो यज्ञोपवीतं च ततः प्रतिसराञ्शुभान् ॥ वस्त्रं तथा पताकां च पुष्पं धूपं तथैव च ॥ १० ॥ दीपं च दत्त्वा नैवेद्यं मुखवासं च पार्थिव ॥ ततोऽग्निहवनं कुर्याद्यस्य यस्य यथा भवेत् ॥ ११ ॥ कृत्वैवोत्तरतन्त्रं च दत्त्वा पूर्णाहुतिं ततः ॥ तदुक्तां दक्षिणां दत्त्वा मण्डले प्रतिपादयेत् ॥ १२ ॥ होतुर्वस्त्रयुगं देयं गौस्सुवर्णं तथैव च ॥ ग्राह्यं कालविदा तच्च यद्दत्तं ग्रहमण्डले ॥ १३ ॥ यथाशक्ति च दातव्या ब्राह्मणानां च दक्षिणा ॥ विसर्जनं ततः कार्यं ततो ब्राह्मणभोजनम् ॥ ॥ १४ ॥ भुक्तवत्सु च विप्रेषु प्रमार्ष्टिर्मण्डले भवेत् ॥ अर्घ्यपुष्पादिकं सर्वं जले प्रक्षिप्य पार्थिव ॥ १५ ॥ अम्बुना तर्पणं कार्यं पूजा स्यात्त दनन्तरम् ॥ १६ ॥ पूजाविधिस्ते गदितो मयाद्य समासतः पार्थिवसंघमुख्य ॥ अतः परं किं कथयामि तुभ्यं तन्मे वदस्वाखिलराजसिंह ॥ ॥ १७ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मा०सं० ग्रहर्क्षपूजाविधिवर्णनं नाम नवतितमोऽध्यायः ॥९०॥ वज्र उवाच ॥ ग्रहाणां भार्गवश्रेष्ठ नक्षत्राणां पृथक्पृथक् ॥ स्नानानि श्रोतुमिच्छामि तत्पीडाशमनान्यहम् ॥ १ ॥ मार्कण्डेय उवाच ॥ मञ्जिष्ठां मातुलुंगं च कुंकुमं रक्तचन्दनम् ॥ पूर्णकुम्भे कृते ताम्रे सूर्यस्नानं विधीयते ॥ २ ॥ उशीरं च शिरीषं च पद्मकं चन्दनं तथा ॥ शंखे न्यस्तमिदं स्नानं चन्द्रदोषनिवारणम् ॥ ॥ ३ ॥ खदिरं देवदारुं च तिलान्यामलकानि च ॥ पूर्णकुम्भे कृते रौप्ये भौमपीडाविनाशनम् ॥ ४ ॥ नदीसंगमतोयानि

१ 'र्घम्' इति ख० । २ 'शुभं दानम्' इति क० । ३ 'द्यामथगातङ्गम्' इति ख० । ४ 'ताम्रे' इति ख० ।

तन्मृदा सहितानि च ॥ न्यस्तानि कुम्भे माहीये बुधपीडाविनाशनम् ॥ ५ ॥ गोरोचनं नागमदं शतपुष्पा शतावरी ॥ विन्य
स्य राजते कुम्भे शुक्रपीडानिवारणम् ॥ ६ ॥ तिलान्माषान्प्रियंगुं च गन्धपत्रं तथैव च ॥ न्यस्तं कार्ष्णायसे कुम्भे सौरपीडानिवार
णम् ॥ ७ ॥ गुग्गुलुं हिंगुलं तालं शुभां चैव मनःशिलाम् ॥ शृंगे च माहिषे न्यस्तं राहुपीडाविनाशनम् ॥ ८ ॥ वराहनिर्हृतां राजन्पर्वताग्रमृदं
तथा ॥ छागं क्षीरं खड्गपात्रे केतुपीडाविनाशनम् ॥ ९ ॥ ग्रहस्नानमिदं प्रोक्तमृक्षस्नानमतः शृणु ॥ येन सम्यक्प्रयुक्तेन मुच्यते किल्बिषान्नरः ॥
॥ १० ॥ वटाश्वत्थशिरीषाणां पत्राणि तु तिलैस्सह ॥ सर्वगन्धोपपन्नानि कृत्तिकासु विधीयते ॥ ११ ॥ सर्वबीजोदकस्नानं रोहिणीषु प्रश
स्यते ॥ सर्वरत्नोदकस्नानं मृगशीर्षे विधीयते ॥ १२ ॥ वचा च गन्धा कान्ताभिः स्नानं रौद्रे प्रकीर्तितम् ॥ गोष्ठमृद्गोमयस्नानमादित्ये पाप
नाशनम् ॥ १३ ॥ सर्वौषध्यः पञ्चगव्यं तथा गौराश्च शालयः ॥ सिद्धार्थकास्सर्वगन्धास्तिष्यस्नाने शुभप्रदाः ॥ १४ ॥ वल्मीकाग्रमृदा स्नानं
तथा सार्पे शुभप्रदम् ॥ सतिलं देवनिर्माल्यं स्नानं शस्तं मघासु च ॥ १५ ॥ फल्गुनीषु च पूर्वासु शाड्वलं लवणं घृतम् ॥ उत्तरासु तथा स्नानं
शिम्बिमुस्ताप्रियंगुभिः ॥ १६ ॥ हस्ते स्नानं प्रशंसन्ति पर्वताग्रसरोमृदा ॥ चित्रासु देवनिर्माल्यं स्वातौ पुष्पैर्जलोद्भवैः ॥ १७ ॥ विशाखासु
प्रशंसन्ति रौद्रचन्दनपद्मकैः ॥ नदीकूलद्वयान्मृद्भिर्मैत्रे स्नानं प्रकीर्तितम् ॥ १८ ॥ ज्येष्ठोदकेन ज्येष्ठासु सुवर्णसहितं हितम् ॥ सर्वमूलजलैः
स्नानमाप्ये मुक्ताफलोदकैः ॥ १९ ॥ वैश्वदेवे प्रशंसन्ति पद्मकोशीरचन्दनैः ॥ सर्वौषधैश्चाभिजिति श्रवणे संगमोदकैः ॥ २० ॥ नदीवापीजल
युतैर्वारुणे तु प्रशस्यते ॥ आजे श्रीवासकं स्नानं कान्ता पुरुहितं हितम् ॥ २१ ॥ आहिर्बुध्न्ये तथा स्नानं पद्मकोशीरचन्दनैः ॥ कुङ्कुमागुरुकर्पूरैः
सहितं पापनाशनम् ॥ दर्भैर्मूलयुतैः पौष्णे हरिद्राद्वयचन्दनैः ॥ २२ ॥ नागाश्वगन्धा मदवन्तिका च क्षौद्रान्विता चाश्विनके प्रदिष्टा ॥ सुराह्व
काष्ठं रजनीद्वयं च स्नानं वचाभिः सहितं च याम्यम् ॥ २३ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मा० सं० ग्रहनक्षत्रस्नानविधिवर्णनं नामैक
नवतितमोऽध्यायः ॥ ९१ ॥ ॥ छ ॥ ॥ वज्र उवाच ॥ ॥ प्राक्तन्त्रोत्तरतन्त्रौ द्वौ सर्वेषामग्निकर्मणाम् ॥ त्वत्तोऽहं श्रोतुमिच्छामि सर्वधर्म
भृतां वर ॥ १ ॥ मार्कण्डेय उवाच ॥ उद्धृत्योर्वीमयीं शुद्धे देशे वेदिं च कारयेत् ॥ प्रागुदक्प्रवणां शुद्धामायामात्पदसप्तकम् ॥ २ ॥ पूर्वभागे
च विज्ञेया विस्तरात्पदपञ्चकम् ॥ पश्चिमे च तथा भागे विस्तरात्स्याच्चतुष्टयम् ॥ ३ ॥ आगारदेशे च तथा विस्तृता सा पदत्रयम् ॥ पूर्वभागा

१ 'ग्रन्थिपत्रम्' इति ख० । २ 'गन्ध्यः' इति ख० । ३ 'याम्ये' इति ख० ।

दतिक्रम्य पश्चात्पदचतुष्टयम् ॥ ४ ॥ याम्येनोत्तरतश्चैव विज्ञेयं तु पदं पदम् ॥ आगारात्पश्चिमे भागे वेदी ज्ञेया पदद्वयम् ॥ ५ ॥ वेदिमेवं विधां कृत्वा स्नात्वाचम्य प्रयत्नतः ॥ सौवर्णांस्राजताँस्ताम्रानथवापि महीमयान् ॥ ६ ॥ सूत्रार्घ्यमाल्यैर्गन्धैश्च सफलैः पल्लवैर्युतान् ॥ पूर्णोदकुम्भांश्चतुरो विदिक्षु सुदृढं न्यसेत् ॥ ७ ॥ वेद्यामुल्लिखनं कार्यमैन्द्रीभिर्नृपसत्तम ॥ उदुम्बरस्य शाखाभिः प्रागग्राभिः समन्ततः ॥ ८ ॥ शुष्केन्धनसमृद्धस्तु ततः कार्य्यो हुताशनः ॥ न धमेत्तालवृन्तेन न शूर्पेण न वाससा ॥ ९ ॥ मुखेनोपधमेदग्निं मुखादग्निरजायत ॥ परिसमुह्य पर्युक्ष्य परिषिच्य परिस्तरेत् ॥ १० ॥ हुताशनं बोधयित्वा भूयश्चावाहयेद्बुधः ॥ वक्ष्यामि बोधने मन्त्रं तथा चावाहने नृप ॥ ११ ॥ उद्बुद्ध्याग्ने बोधयन्ति देवतास्तास्सवासवाः ॥ ब्रह्मा विष्णुश्च रुद्रश्च स्कन्दो वैश्रवणो यमः ॥ १२ ॥ वरुणो वायुराकाशं चन्द्रादित्यौ प्रभाकरौ ॥ ऋषयश्च महाभागास्त्रैलोक्यामलदर्शनाः ॥ १३ ॥ वेदाश्च वेदमाता च सावित्री पापनाशिनी ॥ ओषध्योऽथ वषट्कारो मन्त्राश्च विविधास्तथा ॥ १४ ॥ कालस्यावयवास्सर्वे दिशश्च विदिशस्तथा ॥ उद्बुद्ध्य यजमानस्य सर्वान्कामान्प्रयच्छ वै ॥ १५ ॥ (ओम्) आवाहयाम्यहं देवं देवदेवं हुताशनम् ॥ जगतोऽस्य समुत्पत्तिस्थितिसंहारकारकम् ॥ १६ ॥ वेदमूर्तिं तदाधारं सर्वदेवमुखं विभुम् ॥ पिङ्गेक्षणं पिङ्गजटं धूमकेतुं विभावसुम् ॥ १७ ॥ शुकयानगमं देवं सर्वाभरणभूषितम् ॥ सर्वगं वरदं भानुं जठरस्थं च देहिनाम् ॥ १८ ॥ तेजोमूर्त्तिं दुराधर्षं सप्तजिह्वं महाबलम् ॥ सप्तार्चिषं सप्तर्षिकं च समित्सप्तकमच्युतम् ॥ १९ ॥ विष्णोरंशमनिर्देश्यं भावनं जातवेदसम् ॥ पावनं पुष्टिदं सौम्यं भक्तानां भूतिवर्धनम् ॥ २० ॥ तदत्तमाहुतिगणं संप्रतीच्छ जगद्गुरो ॥ तेन भावय देवेश यथाहं देवतागणान् ॥ २१ ॥ याजकं यजमानं च पुष्ट्या विभज सर्वशः ॥ इदमर्घ्यमिदं पाद्यं धूपं दीपं प्रगृह्यताम् ॥ २२ ॥ एवमावाहनं कृत्वा पाद्यार्घ्यं विनिवेदयेत् ॥ वेद्यामेव न तौ देयौ वह्नौ यदुकुलोद्वह ॥ २३ ॥ गन्धपुष्पादिकं देयं सकलज्ञातवेदसि ॥ धूपं दीपं सनैवेद्यं वेद्यामेव निवेदयेत् ॥ २४ ॥ ततस्तु प्रस्तरेद्वेदिमक्षताग्रैः कुशैर्द्विज ॥ उपमूलादधोलूनैः प्रागग्रैः प्रयतः शुचिः ॥ २५ ॥ पूर्वे च प्राग्दक्षिणतः पश्चाच्चैवापसव्यतः ॥ उत्तरेण ततः कुर्यात्प्रस्तरस्य समापनम् ॥ २६ ॥ मूलच्छिन्नन्तु दातव्यं प्रस्तरे भूभृतां वर ॥ ओषध्यः फलवन्त्यश्च पर्ववत्यस्तथैव च ॥ २७ ॥ दर्भाभावे प्रशंसन्ति तिस्रस्तत्र च वर्जयेत् ॥

१ 'सूत्रार्घै' इति ख० । २ 'दर्शिनः' इति ख० । ३ कोष्टान्तर्गतः पाठः खपुस्तके नास्ति । ४ 'सप्तऋषिकम्' इति ख० ।

राजसीरवरूकं च परिबाधमथोत्कटम् ॥ २८ ॥ विष्णुर्मनसा पूते स्तो मन्त्रेणानेन सुव्रत ॥ दार्भं पवित्रमुत्सृज्य ताभ्यां च तदनन्तरम् ॥ २९ ॥
देवोव इत्यथैतेन उत्पूयमुदकं शुचि ॥ स्रुक्स्रुवावथ पालाशौ शमीन्यग्रोधसंभवौ ॥ ३० ॥ उदुम्बरमयौ ताम्रौ रूप्यरुक्ममयौ तथा ॥
आज्यस्थाली च कर्तव्या तैजसद्रव्यसम्भवा ॥३१॥ माहेयी वापि भूपाल नित्यं सर्वाग्निकर्मसु ॥ हस्तमात्रः स्रुवः कार्यो स्रुवबाहुसमं तथा ॥३२॥
अङ्गुष्ठमध्यप्रतिमं होमस्थानं स्रुवस्य तु ॥ आज्यस्थाल्याः प्रमाणन्तु यथाकामन्तु कारयेत् ॥ ३३ ॥ श्रामं पृश्चापयोसीति मन्त्रेणाज्यं
नराधिप ॥ आज्यस्थाल्याः पयोत्पूतं पञ्चानामिति पञ्चकम् ॥ ३४ ॥ पठन्गृह्णीत राजेन्द्र अर्जेत्यग्नावधिश्रयेत् ॥ आज्यस्याथ पवित्रेण कार्य
मुत्प्लवनं द्विज ॥ ३५ ॥ अग्निर्जिह्वेति सततं हविरस्युत्पवनान्तरम् ॥ अक्षीणन्तु न कर्तव्यं सततं पार्थिवोत्तम ॥ ३६ ॥ शुभाभ्यां स्रुक्स्रुवौ
राजन्प्रत्युष्टमिति भावय ॥ पवित्रस्याग्रदर्भेण आयुरित्येव मानद ॥ ३७ ॥ प्रतिमार्ष्टि स्रुवं पश्चाच्चक्षुरित्येव पार्थिव ॥ प्रतिमार्ष्टि स्रुवं ताँश्च
दर्भान्वह्नावथोत्सृजेत् ॥३८॥ दर्भोत्सर्गे पठेन्मन्त्रमिमं पार्थिवसत्तम ॥ दिवि शिल्पमवततं पृथिव्याः ककुभिः श्रितम् ॥ ३९॥ तेन सहस्रकाण्डेन
द्विषन्तं तापयामसि ॥ द्विषन्तस्तप्यतां चोक्त्वा क्षिपेद्दर्भान्हुताशने ॥४०॥ इध्मद्वयं ततो देयं याज्ञियद्रुमसम्भवम् ॥ पलाशः खदिरो बिल्वः शम्य
श्वत्थवटास्तथा ॥४१॥ उदुम्बरमपामार्गः फल्गुश्च क्रमुकस्तथा ॥ चन्दनं देवदारुश्च द्रुमा द्वादश याज्ञियाः ॥४२॥ चतुर्गृहीतं विन्यस्य स्रुचि पूर्वं
विचक्षणः ॥ इध्मद्वये प्रज्वलिते सौम्यभागे नराधिप ॥४३॥ प्रजानाम्पतये त्वादावाहुतिं मनसा न्यसेत् ॥ चतुर्गृहीते मूर्द्धेति देया दक्षिणतो भवेत्॥
॥४४॥ युक्तः परस्तादित्यादि पञ्चकं जुहुयात्ततः ॥ सन्ततीश्च जयाद्यास्तास्तथा राष्ट्रभृतो नृप ॥४५॥वार्त्रघ्नौ चाज्यभागौ च दातव्यौ पार्थिवोत्तम ॥
अथौदुम्बरपत्राणां वेदौ दक्षिणतो नृप ॥ ४६ ॥ सञ्चये पद्मपत्राणामथवापि महीपते ॥ आवाहनं तु कर्तव्यं देवस्य परमेष्ठिनः ॥ ४७ ॥ आवाह
याम्यहं देवं ब्रह्माणं परमेष्ठिनम् ॥ जगतोऽस्य समुत्पत्तिस्थितिसंहारकारकम् ॥४८॥ चतुर्वेदं चतुर्वक्त्रं चातुर्वर्ण्यप्रभुं प्रभुम् ॥ चतुराश्रमगोप्तारं वरदं
भूतभावनम् ॥ ४९ पद्मयोनिं जगद्योनिं यज्ञयोनिं जगत्पतिम् ॥ आत्मयोनिमनाधृष्यं यज्ञवाहं जगत्पतिम् ॥ ५० ॥ यज्ञेशं यज्ञमूर्तिं च
त्रैलोक्यस्यैककारणम् ॥ सर्वगं वरदं सौम्यं परमं परमेश्वरम् ॥ ५१ ॥ भूतभव्यभवं नाथं योगज्ञेयं सनातनम् ॥ आगच्छ भगवन्ब्रह्म
न्यजमानस्य वृद्धये ॥ ५२ ॥ इदमर्घ्यमिदं पाद्यं धूपं चेदं प्रगृह्यताम् ॥ ब्रह्मलिङ्गांस्ततो मन्त्राञ्जपेद्भक्त्या समाहितः ॥ ५३ ॥ आपोहिष्ठेति

१ 'द्रव' इति क० । २ 'ककुभि' इति ख० । ३ 'नोद्धेति' इति ख० 'नोन्वेति' इति क० । ४ 'अन्तर्वेदिम्' इति ख०।

मन्त्रेण ब्रह्मणोऽर्घ्यं निवेदयेत् ॥ शन्नोदेवीति पाद्यं च प्रयतः सुसमाहितः ॥ ५४ ॥ हिरण्यगर्भेति तथा दद्यादाचमनं बुधः ॥ ध्रुवा द्यौरिति मन्त्रेण ह्यासनं विनिवेदयेत् ॥ ५५ ॥ गन्धं पुष्पमलङ्कारं वस्त्रं धूपं सदीपकम् ॥ नैवेद्यं च तथा देयं सावित्रेण नराधिप ॥ ५६ ॥ प्राक्तन्त्रमेतदुक्तं ते मया सर्वाग्निकर्मसु ॥ प्राक्तन्त्रे तु कृते कार्यं होममन्त्रमयासकम् ॥ ५७ ॥ एवं कार्यं महीनाथ सर्वेष्वेवाग्निकर्मसु ॥ ५८ ॥ होमस्य विहितस्यान्ते तन्त्रं कार्यमथोत्तरम् ॥ महाकल्पस्य कल्पस्य तथा मन्वन्तरस्य च ॥ ५९ ॥ युगस्याथ समायाश्चायनस्य हि तथैव च ॥ ऋतोर्मासस्य पक्षस्य ग्रहनक्षत्रयोस्तथा ॥ ६० ॥ तिथेश्च करणस्याथ मुहूर्तस्य च पार्थिव ॥ वर्त्तमानस्य सर्वस्य देयस्याधिपतिर्भवेत् ॥ ६१ ॥ इह गाव अयं यज्ञ आनः प्रजास्तथैव च ॥ धृतिं चैवोपधृतिं च इहाभागं तथैव च ॥ ६२ ॥ देयं चतुर्गृहीतेन होमद्रव्येण पार्थिव ॥ त्वन्नो अग्ने वरुणस्य स त्वंनो अग्न एव च ॥ ६३ ॥ अयाश्चाग्नेस्तथैवेति तथा व्याहृतयो नृप ॥ त्वन्नो अग्नेति च ततो होतव्यमृक्त्रयं पुनः ॥ ६४ ॥ न्यूनं ततेति रिक्तेति न्यूने चैवातिरिक्तकम् ॥ समं समे तथा हुत्वा होतव्यमृक्त्रयं ततः ॥ ६५ ॥ अनाज्ञातं यदाज्ञातं स्विष्टिश्चाप्यथ पार्थिव ॥ मनोज्योतिस्तथैवात्र त्रयस्त्रिंशत्तथैव च ॥ ६६ ॥ यन्मे च मनसा च्छिद्रं विश्वकर्मा तथैव च ॥ अयाश्चाग्नेस्तथा राजन्त्वन्नो अग्ने तथैव च ॥ सत्वन्नो अग्ने इत्येवं हुत्वा पार्थिवसत्तम ॥ ६७ ॥ आश्रावितेति मन्त्रेण देया पूर्णाहुतिर्भवेत् ॥ ६८ ॥ इष्टो हि यज्ञो भृगुभिर्मंत्रेणानेन पार्थिव ॥ आज्यस्थालीं स्रुक्स्रुवौ च दर्भैस्तु परिमार्जयेत् ॥ ६९ ॥ तांश्च दर्भान्क्षिपेद्वह्नौ प्रयतः सुसमाहितः ॥ पूर्णमित्येव च स्रुवा कार्यं संवीक्षणं ततः ॥ ७० ॥ यथादिशं महीपाल तथा कुर्याद्विमोचनम् ॥ ततो विसर्जनं कार्यं ब्रह्मणः परमेष्ठिनः ॥ ७१ ॥ भगवन्देवदेवेश जगतामार्तिनाशन ॥ व्रजस्व पूजामादाय पुनरागमनाय च ॥७२॥ यजमानस्य शान्त्यर्थं सर्वस्य जगतस्तथा ॥ आरोग्यधनधान्येन यजमानं च वर्धय ॥७३॥ हुताशनस्य कर्त्तव्यं ततो राजन्विसर्जनम् ॥ द्रव्यभुक्त्वं वरेण्यस्त्वं प्रणतार्तिविनाशनः ॥७४॥ व्रजस्व पूजामादाय पुनरागमनाय च ॥ शान्त्यर्थं यजमानस्य राष्ट्रस्य च विवृद्धये ॥७५॥ गोब्राह्मणहितार्थाय जयाय च महीपतेः ॥ पूर्णपात्रमथादाय वाच्यं स्वस्त्ययनं ततः ॥७६॥ ततस्तु दक्षिणा देया यथा प्रोक्ता मया पुरा ॥ एतदुत्तरतन्त्रं तु प्रोक्तं सर्वाग्निकर्मणाम् ॥७७॥ विधानमेतत्कथितं तवाद्य सर्वाग्निकर्मस्वनघोपयोगि ॥ अतः परं किं कथयामि राजंस्तन्मे वदस्वायतलोहिताक्ष ॥७८॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे अग्निकार्ये प्राक्तन्त्रोत्तर

१ 'भजतामा' इति ख० ।

तन्त्रविधिर्नाम द्विनवतितमोऽध्यायः ॥ ९२ ॥ वज्र उवाच ॥ विस्तराच्छ्रोतुमिच्छामि ग्रहनक्षत्रपूजनम् ॥ त्वत्तोऽहं भार्गवश्रेष्ठ तन्ममाचक्ष्व पृच्छतः ॥ १ ॥ मार्कण्डेय उवाच ॥ कल्पिते मण्डले स्नातः प्राक्तन्त्रे च तथा कृते ॥ मण्डलस्य तु शौचार्थं पञ्चगव्यं प्रकल्पयेत् ॥ २ ॥ पयः काञ्चनवर्णाया नीलायाश्च तथा घृतम् ॥ दधि वै कृष्णवर्णायाः श्वेतायाश्चैव गोमयम् ॥३॥ गोमूत्रं ताम्रवर्णायाः पञ्चगव्यं प्रकल्पयेत् ॥ अथैतानि समस्तानि कपिलायास्समाहरेत् ॥ ४ ॥ गायत्र्या गृह्य गोमूत्रं रथे अक्षेति गोमयम् ॥ आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि ॥ ५ ॥ तेजोसि शुक्रमित्याज्यं सावित्रेण कुशोदकम् ॥ अघमर्षणमन्त्रेण संयोज्य प्रणवेन तु ॥ ६ ॥ मण्डलाभ्युक्षणं कार्यं सावित्र्या तदनन्तरम् ॥ पूर्णं क्षीराक्षतोपेतं सर्षपातण्डुलैर्युतम् ॥ ७ ॥ शङ्खे रजते ताम्रे वा कुर्यादर्घ्यं विचक्षणः ॥ रथे अक्षेति मन्त्रेण द्रविणेन तथैव च ॥ ८ ॥ पाद्यस्य कल्पना कार्या द्रुपदायास्तथैव च ॥ हिरण्यवर्णेत्यारभ्य ऋक्त्रयेण तथैव च ॥ ९ ॥ आपो हिष्ठेति तिसृभिः शन्नोदेवीति पार्थिव ॥ जीवदानं ततो देयं मण्डले नृपपुङ्गव ॥ १० ॥ अर्घ्योदकं पवित्रेण तत्र मन्त्रः प्रकीर्तितः ॥ अग्नेरायुरसीत्येवमनुवाकं नराधिप ॥ ११ ॥ जीवस्यावाहनं कार्यं तं च वक्ष्याम्यतः परम् ॥ ओम्[1]–आवाहयाम्यहं देवं जीवं सर्वगतं विभुम् ॥ १२ ॥ पञ्चधावस्थितं देहं[3] पञ्चधावस्थितं पुनः ॥ पञ्चाधावस्थितं भूयः पञ्चधावस्थितं ततः ॥ १३ ॥ वायव्येन तु भावेन पञ्चधावस्थितस्सदा ॥ आग्नेयेन तु भावेन पञ्चधावस्थितस्तथा ॥ १४ ॥ भूतात्मकेन तु तथा पञ्चधावस्थितं प्रभुम् ॥ वारुणेन च भावेन पञ्चधावस्थितं सदा ॥ ॥ १५ ॥ मण्डलेऽस्मिन्नदृश्यस्त्वं प्रविशाद्य नमोस्तु ते ॥ जीवस्यावाहनं कृत्वा यथावत्पार्थिवोत्तम ॥ १६ ॥ वक्ष्याम्यावाहनाध्यायान्पूज्यस्यावाहनं भवेत् ॥ तद्विष्णोः परमित्येवमर्घ्यं देयं नराधिप ॥ १७ ॥ ध्रुवा द्यौरिति मन्त्रेण ह्यासनं विनिवेदयेत् ॥ आपोहिष्ठेति तिसृभिः पाद्यं च विनिवेदयेत् ॥ १८ ॥ अर्घ्योदकादाचमनं गायत्र्या विनिवेदयेत् ॥ दधि क्षौद्रं घृतं चैव मधुपर्कं निवेदयेत् ॥ १९ ॥ तत्र मंत्रत्रयं ज्ञेयं दधिक्राव्णेति पार्थिव ॥ तेजोसि शुक्रमित्येव मधुवाता ऋतायते ॥ २० ॥ मधुपर्किकमश्वत्थं ततो मात्रां निवेदयेत् ॥ सहिरण्यं बीजपात्रं[2] द्रविणेन सदैव तु ॥ २१ ॥ पशुः कलौ न कर्तव्य इत्याह भगवान्भृगुः ॥ रथे अक्षेति मन्त्रेण दातव्यमनुलेपनम् ॥ २२ ॥ विभूषणं च तेनैव ततः परतरं नृप ॥ यज्ञोपवीतं तु नवं तथा प्रतिसरं शुभम् ॥ २३ ॥ वस्त्रं पताकां च तथा सावित्रेण निवेदयेत् ॥ पुष्पं पुष्पवतीत्येव धूपं धूरसि

१ 'ओम्' इति ख० नास्ति। २ 'बीजम्' इति ख०। ३ 'देहे' इति ख०।

चाप्यथ ॥ २४ ॥ धूपमन्त्रमिदं चान्यं निबोध गदतो मम ॥ वनस्पतिरसो दिव्यो गन्धाढ्यो गन्ध उत्तमः ॥ २५ ॥ आह्वानं सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥ तेजोसि शुक्रमित्येव दीपं दद्यान्महीपते ॥ २६ ॥ हिरण्यगर्भेत्यष्टर्चं देयं सर्वं निवेदयेत् ॥ निबोध गदतो मन्त्रमन्न पाननिवेदने ॥ २७ ॥ तुष्टिपुष्टिकरं ह्यमाहारं सर्वदेहिनाम् ॥ गृहाण वरदाचिन्त्य पानं भक्त्या मयोदितम् ॥ २८ ॥ पानेनानेन परमा तृप्तिरस्तु तवानघ ॥ तृप्तस्तर्पय कामैस्तु यजमानं नमोऽस्तु ते ॥ २९ ॥ अनुक्तमंत्रं श्रुत्वाऽथ ग्रहेभ्यो यः प्रयच्छति ॥ सावित्रं तस्य निर्दिष्टं मन्त्रं पार्थिवसत्तम ॥ ३० ॥ ततोऽग्निहवनं कृत्वा दत्त्वा राजेन्द्र दक्षिणाम् ॥ सावित्रेण तु मन्त्रेण ततः कार्यं विसर्जनम् ॥ ३१ ॥ इमां पूजां समादाय मया भक्त्या निवेदिताम् ॥ पुनरागमनायेह व्रजध्वं नाकमुत्तमम् ॥ ३२ ॥ आधयो व्याधयश्चैव प्रशमं यान्तु सर्वशः ॥ रक्षा चाऽस्तु शिवं चास्तु यजमानस्य सर्वतः ॥ ३३ ॥ गवां शिवं चास्तु तथा द्विजानां राज्ञां शिवं चास्तु तथा प्रजानाम् ॥ आतङ्कहीनं जगदस्तु सर्वं दोषाः प्रणाशं सकलाः प्रयान्तु ॥ ३४ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मा० सं० ग्रहपूजाविधानं नाम त्रिनवतितमोऽध्यायः ॥ ९३ ॥ ॥ वज्र उवाच ॥ ॥ एकैकस्येदमुक्तं ते विधानं द्विजपूजने ॥ सर्वग्रहाणां यजने विधानं मम कीर्तय ॥ १ ॥ ॥ मार्कण्डेय उवाच ॥ एकैकस्येदमुक्तं ते विधानं राजसत्तम ॥ सर्वग्रहाणां यजने मण्डलस्य विधिं शृणु ॥ २ ॥ आदावेव नरव्याघ्र यागं वक्ष्याम्यतः परम् ॥ प्रागायतं तु कर्तव्यमादौ लेखाद्वयं नृप ॥ ३ ॥ तस्योपरि तथा कार्यमपरं तूत्तरायतम् ॥ एवं कृते यदुत्पन्नं मध्ये तु चतुरस्रकम् ॥ ४ ॥ ततो ग्रहेभ्यः कर्तव्यं तथा लेखाचतुष्टयम् ॥ (तच्छक्तिभ्यः प्रकर्तव्यं तथा रेख्या चतुष्टयम् ॥) एवं कृते सम्भवति भगणं द्वादशक्षयम् ॥५॥ त्रयोदशं तथा तस्य ध्रुवस्थानं तु मध्यमम् ॥ ६ ॥ प्राच्यां दिशि महीनाथ मेषं तु परिकल्पयेत् ॥ तदाद्या गणना कार्या परिशेषेषु राशिषु ॥७॥ रेखाविधानं द्विगुणं शोभार्थं परिकल्पयेत् ॥ राशिस्थानानि सर्वाणि राशिवर्णेन रञ्जयेत्॥८॥राशि वर्णान्यथो वक्ष्ये यथावदनुपूर्वशः ॥ अरुणश्च सितश्चैव हरितः पाटलस्तथा ॥९॥ आपाण्डुश्च विचित्रश्च कृष्णश्च कपिलस्तथा ॥ पिंगलः कर्बुरो बभ्रुर्मलिनश्च यथाक्रमम् ॥१०॥ मेषादीनां विनिर्दिष्टा वर्णाः पार्थिवसत्तम ॥ आकाशवर्णं कर्त्तव्यं ध्रुवस्थानं तथैव च ॥११॥ ध्रुवस्थाने महीनाथ देवतासप्तकं न्यसेत् ॥मण्डलैश्शुक्लवर्णैस्तु दिग्विभागं निबोध मे॥१२॥ध्रुवस्य मण्डलं मध्ये प्राग्भागे मण्डलत्रयम् ॥ मण्डलं गगनस्यात्र भागे

१ 'ज्ञेयम्' इति क० ख० । २ कोष्ठान्तर्गतः पाठः कपुस्तके नास्ति ।

प्रागुत्तरे भवेत् ॥१३॥ प्राग्भागे च तथा राजन्मण्डलं ब्रह्मणः स्मृतम् ॥ प्राग्दक्षिणे तथा भागे दिशं पूर्वां प्रकल्पयेत् ॥१४॥ भागे वै नैर्ऋते कार्यं भुवो भूपाल मण्डलम् ॥ शेषस्यं च तथा कार्यं प्रतीच्यां दिशि मण्डलम् ॥ १५ ॥ दिगधस्तात्तथा तस्य मण्डलं पश्चिमोत्तरे ॥ ग्रहश्चारवशाद्राज न्यस्मिन्राशौ व्यवस्थितः ॥ १६ ॥ मण्डलं तस्य कर्तव्यं तस्मिन्नेव यथाविधि ॥ न्यासं कार्यं ग्रहेन्द्राणां देवताभिः सहानघ ॥१७॥ आदित्या त्सप्तमे राशौ केतोः कार्यं तु मण्डलम् ॥ राशौ सवर्णे तद्वर्णं यस्य स्यान्मण्डलं नृप ॥१८॥ उत्पाद्यः परिधिस्तस्य रंगेनान्येन पार्थिव ॥ गन्धचू र्णयुता रङ्गाः कर्त्तव्या भूतिमिच्छता ॥१९॥ राशिचक्रं समग्रन्तु रेखया परिवारयेत् ॥ नक्षत्राणां ततः कार्यो न्यासः पार्थिवसत्तम ॥२०॥ राशौ राशौ यथास्थानं रेखया परिवारितम् ॥ राशौ राशावतो वक्ष्ये नक्षत्राणां समाश्रयम् ॥२१॥ अश्विनी भरणी चैव कृत्तिकांशं चतुर्थकम् ॥ मेषराशौ विनिर्दिष्टं नित्यं पार्थिवसत्तम ॥ २२ ॥ पादत्रयं कृत्तिकानां रोहिणी सकला तथा ॥ इल्वलानां तथैवार्धं ज्ञेयं वृषसमाश्रयम् ॥ २३ ॥ इल्व लार्द्धं तथैवार्द्रा ह्यदित्याश्चरणत्रयम् ॥ नित्यमेव समुद्दिष्टं मिथुनस्य समाश्रयम् ॥ २४ ॥ पादं पुनर्वसोः पुष्यं सार्पं कर्कटकाश्रयम् ॥ पित्र्यं भाग्यं तथार्यम्णं प्रथमं चरणं तथा ॥ २५ ॥ सिंहराशौ विनिर्दिष्टं नित्यं पार्थिवसत्तम ॥ पादत्रयमथार्यम्णं हस्तश्चित्रार्धमेव च ॥ २६ ॥ कन्याराशौ विनिर्दिष्टं नित्यं पार्थिवसत्तम ॥ चित्रार्धमथ वायव्यं विशाखाचरणत्रयम् ॥ २७ ॥ तुलाराशौ विनिर्दिष्टं मुनिभिस्तत्त्वदर्शिभिः ॥ विशाखाचरणं मैत्रं शाक्रं वृश्चिकभे स्मृतम् ॥ २८ ॥ मूलमाप्यं तथा पादं वैश्वदेवस्य धन्विनि ॥ पादत्रयं वैश्वदेवाद्राजन्वैष्णवमेव च ॥ २९ ॥ धनिष्ठार्धं च मकरे नित्यमेव प्रकीर्तितम् ॥ धनिष्ठार्धं शतभिषगजपाचरणत्रयम् ॥ ३० ॥ कुम्भराशौ विनिर्दिष्टं सततं पार्थिवोत्तम ॥ पादमा जस्य सकलं चाहिर्बुध्न्यं नराधिप ॥ ३१ ॥ पौष्णन्तु कथितं मीने मुनिभिस्तत्त्वदर्शिभिः ॥ भचक्रपूजने राजन्नक्षत्रस्य पृथक्पृथक् ॥ ३२ ॥ राशिचक्रस्य बाह्ये तु ह्येकैकं तारकं न्यसेत् ॥ प्रागुक्तवर्णैर्भूपाल न्यासः कार्यो यथाविधि ॥ ३३ ॥ ताराचक्रस्य विन्यासं रेखया परिवार्य तम् ॥ नक्षत्रदैवतन्यासं बहिः कार्यं समन्ततः ॥ ३४ ॥ यथा नक्षत्रस्वामी स्याद्दक्षवर्णैः पृथक्पृथक् ॥ तस्यापि रेखा कर्त्तव्या वृत्ता चाप्यतु मण्डलम् ॥ ३५ ॥ रेखाबाह्येन विन्यासं दिगीशानां तु कारयेत् ॥ दिशश्च पार्थिवश्रेष्ठ यथावदनुपूर्वशः ॥ ३६ ॥ स्वाश्रयर्क्षसमं वर्णं दिगीशानां तु कारयेत् ॥ उत्तरायां च कर्त्तव्यं धनदस्य च मण्डलम् ॥३७॥ रुक्मवर्णं प्रयत्नेन दिशो वर्णमतः शृणु ॥ उत्तरा तु भवेच्छुक्ला



२ 'मेषस्य' इति क० ।

रक्ता प्राची प्रकीर्तिता ॥ ३८ ॥ दक्षिणा पीतवर्णा स्यात्कृष्णा ज्ञेया च पश्चिमा ॥ पद्मवर्णा तथा ज्ञेया ताम्रा स्यात्पूर्वदक्षिणा ॥ ३९ ॥
पालाशा च विनिर्दिष्टा तथा दक्षिणपश्चिमा ॥ नीलोत्पलसवर्णा तु वायव्या परिकीर्तिता॥४०॥ शुक्लवर्णा तथा ज्ञेया चैशानी तत्त्वदर्शिभिः॥
दिङ्मण्डलं तु तद्विद्वाँल्लेखया परिवारयेत् ॥ ४१ ॥ वृत्तया वेष्टयेद्वृत्तां लेखया चतुरस्रया ॥ तन्मध्यं शङ्खपद्माद्यैर्मङ्गलैरुपशोभयेत् ॥ ४२ ॥
लेखाविधानं द्विगुणं सर्वत्रैव प्रकल्पयेत् ॥ मण्डलस्य तु कोणेषु ह्युदक्कुम्भान्नवान्दृढान् ॥ ४३ ॥ फलपल्लवसंछन्नान्गन्धपुष्पादिसंयुतान् ॥
चतुरो विन्यसेद्विद्वान्नित्यमेव विचक्षणः ॥ ४४ ॥ लेखासु विन्यसेद्राजन्पताकाश्च ध्वजाँस्तथा ॥ छत्राणि च सवर्णानि ग्रहेन्द्राणां पृथ
क्पृथक् ॥ ४५ ॥ स्थानन्तु विज्ञाय यथावदत्र कार्यं यथा मण्डलकप्रमाणम् ॥ यथा महत्ता नृप मण्डलस्य तथातथा वृद्धिमुपैति कर्ता ॥ ४६ ॥
इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मा०सं० मण्डलकल्पना नाम चतुर्नवतितमोऽध्यायः ॥९४॥ मार्कण्डेय उवाच ॥ आवाहनान्यतो वक्ष्ये सर्वेषां
पार्थिवोत्तम ॥ सर्वस्यावाहनस्यान्ते श्लोकोऽयं परिकीर्त्यते ॥ १ ॥ मण्डले सम्प्रविश्यास्मिन्मया भक्त्या निवेदितम् ॥ इदमर्घ्यमिदं पाद्यं
धूपोऽयं प्रतिगृह्यताम् ॥ २ ॥ ध्रुवमावाहयिष्यामि सर्वग्रहगणेश्वरम् ॥ निरुद्धं भ्राम्यते येन भचक्रं वातरज्जुभिः ॥ ३ ॥ एहि मे ध्रुव देवेश
केशवाचिन्त्यविक्रम ॥ सर्वग्रहगणाध्यक्ष सर्वलोकनमस्कृत ॥ ४ ॥ आवाहयिष्याम्याकाशं विमानशतमण्डितम् ॥ तृतीयं देवदेवस्य पदं
विष्णोर्महात्मनः ॥ ५ ॥ एहि मे भगवन्सौम्य निरालम्ब नभस्तल ॥ अप्रमेयातिगम्भीर नक्षत्रग्रहमण्डित ॥ ६ ॥ आवाहयाम्यहं देवं ब्रह्माणं
जगतां पतिम् ॥ जगतोऽस्य समुत्पत्तिस्थितिसंहारकारकम् ॥ ७ ॥ एहि सर्वप्रजाध्यक्ष पद्मयोने चतुर्मुख ॥ वेदमूर्ते तदाधार कालनिर्माण
तत्पर ॥ ८ ॥ ऊर्द्ध्वमावाहयिष्यामि ह्यनन्तां महतीं दिशम् ॥ अप्रमेयां निरालम्बां चन्द्रसूर्यांशुवर्जिताम् ॥ ९ ॥ आगच्छेह महाभागे सततं
सिद्धसेविते ॥ अनन्ते विपुले देवि निर्मले हितकारिणि ॥ १० ॥ पृथ्वीमावाहयिष्यामि सर्वसत्त्वहिते रताम् ॥ धरां भूमिं क्षमां क्षोणीं वरदां
भूतधारिणीम् ॥ ११ ॥ एहि मे वसुधे देवि वाराहेण समुद्धृते ॥ सर्वबीजधरे भद्रे सर्वभूतापहारिणि ॥ १२ ॥ शेषमावाहयिष्यामि महीमण्डल
धारणम् ॥ फणावलीरत्नजालमरीचिविकसोज्ज्वलम् ॥ १३ ॥ एहि शेष महाभाग एह्यनन्तादिकेशव ॥ आहेयी त्वं तनुस्तस्य विष्णोरमितते
जसः ॥ १४ ॥ आवाहयाम्यधस्तात्तु दिशं शेषेण पालिताम् ॥ नागदैत्योरगगणैस्सततं च निषेविताम् ॥ १५ ॥ एहि मे रत्नबाहुल्ये
नित्यं शेषेण पालिते ॥ गम्भीरे विपुले भीमे बहुस्थानाभिमण्डिते ॥ १६ ॥ आवाहयिष्ये वरदं देवेशं जातवेदसम् ॥ वेदमूर्त्ति

तदाधारं देवदेवं हुताशनम् ॥ १७ ॥ एह्यग्ने सर्वदेवेश सर्वदेवमुखाच्युत ॥ सर्वत्रस्थ महाभाग सर्वभूतहिते रत ॥ १८ ॥ आवाहयिष्ये
वरदं सहस्रांशुं दिवाकरम् ॥ तेजोमूर्त्ति दुराधर्षं भक्तानामभयप्रदम् ॥ १९ ॥ एहि देव जगन्नाथ ऋक्सामयजुषां पते ॥
त्रैलोक्यमण्डलद्वीप सर्वव्याधिविनाशन ॥ २० ॥ आवाहयाम्यहं देवमादित्यसुदकेशयम् ॥ स्निग्धवैडूर्यसङ्काशं वरुणं सुमहाद्युतिम् ॥ २१ ॥
एहि देव जलाध्यक्ष यादोगणमहेश्वर ॥ नागदैत्योरगगणैस्सततं सेविताच्युत ॥ २२ ॥ आवाहयाम्यहं चन्द्रं शीतांशुममृतप्रभम् ॥
ओषधीशं द्विजाध्यक्षं नयनानन्दकारकम् ॥ २३ ॥ एहि मे भगवँश्चन्द्र एहि मे मृगलाञ्छन ॥ भक्तानुकम्पिन्सततं सर्वनक्षत्रपूजित ॥ २४ ॥
स्कन्दमावाहयिष्यामि षण्मुखं वरदं शिशुम् ॥ देवा सेनामथनं पार्वत्यानन्दवर्द्धनम् ॥ २५ ॥ एहि देवतमाराध्य महिषासुरतस्कर ॥
कार्तिकेय जगन्नाथ मयूरवरवाहन ॥ २६ ॥ भौममावाहयिष्यामि तेजोमूर्तिं दुरासदम् ॥ रुद्रमूर्तिमनिर्देश्यवक्रं रुधिरसप्रभम् ॥ २७ ॥
एि मे भगवन्भौम अङ्गारक महाप्रभ ॥ त्वयि सर्वं समायत्तं भूतलेस्मिञ्छुभाशुभम् ॥ २८ ॥ विष्णुमावाहयिष्यामि शङ्खचक्रगदाधरम् ॥
अतसीकुसुमश्यामं पीतवाससमच्युतम् ॥ २९ ॥ एहि मे देवदेवेश प्रजानिर्माणकारक ॥ नारायण सुदुष्पार महाशार्ङ्गधनुर्धर ॥ ३० ॥
बुधमावाहयिष्यामि बोधकं जगदीश्वरम् ॥ चान्द्रिं ग्रहगणाध्यक्षं तेजोमूर्तिं दुरासदम् ॥ ३१ ॥ एहि शीतांशुजाचिन्त्य जगज्जिष्णो जनार्दन ॥
महाबल महासत्त्व महाबाहो महाद्युते ॥ ३२ ॥ शक्रमावाहयिष्यामि देवं सुरगणेश्वरम् ॥ वज्रपाणिं महाबाहुं गोब्राह्मणहिते रतम् ॥ ३३ ॥
एहि देव सहस्राक्ष देवारिबलसूदन ॥ ऐरावतस्थ धर्मज्ञ शचीहृदयनन्दन ॥ ३४ ॥ जीवमावाहयिष्यामि देवेश्वरपुरोहितम् ॥
बृहस्पतिं बृहद्वाचं वेदवेदाङ्गपारगम् ॥ ३५ ॥ एहि जीव महाभाग जीवभूत महीतले ॥ सस्यवृद्धिस्तवायत्ता सततं भूमिवर्धन ॥ ३६ ॥ देवी
मावाहयिष्यामि पार्वतीं वरदामुमाम् ॥ हरस्य दयितां भार्यां चार्वङ्गीं भूतिवर्धिनीम् ॥ ३७ ॥ एहि देवि जगन्नाथे मेनाहृदयनन्दिनि ॥
पवित्रे वरदे सौम्ये नित्यं भक्तजनप्रिये ॥ ३८ ॥ शुक्रमावाहयिष्यामि भार्गवं जगदीश्वरम् ॥ नित्यं सर्वजनाध्यक्षं तपसा द्योतितप्रभम् ॥३९॥
एहि शुक्र महाभाग षोडशार्चिर्वरप्रद ॥ प्रभुस्त्वं वरदाचिन्त्य वर्षावर्षस्य निग्रहे ॥ ४० ॥ आवाहयाम्यहं देवं प्रजाध्यक्षमकल्मषम् ॥ ॥ ६९ ॥
भक्तानुकम्पिनं देवं प्रजानिर्माणकारकम् ॥ ४१ ॥ एहि देव प्रजाध्यक्ष पूजानिर्माणकारक ॥ त्वयि देव समायुक्तं प्रजानामभवोद्भवम् ॥ ४२ ॥
एहि मे भगवन्ब्रह्मन्प्रजापतिमहाद्युते ॥ सौरिमावाहयिष्यामि शनैश्चारिणमच्युतम् ॥ ४३ ॥ तपस्विनमनाधृष्यं भक्तानामभयप्रदम् ॥ एहि

तीक्ष्णांशुजाचिन्त्य भावाभावप्रदर्शक ॥ ४४ ॥ त्वयि सर्वं समायत्तं राज्ञां भूमौ शुभाशुभम् ॥ आवाहयाम्यहं देवं गजवक्त्रं गणेश्वरम् ॥ ४५ ॥ विघ्नेशं विघ्नहर्तारं पार्वतीहृदयप्रियम् ॥ एहि देव गणाध्यक्ष लम्बोदर महाभुज ॥ ४६ ॥ कार्यसिद्धिः समायत्ता त्वयि सर्वेश देहिनाम् ॥ राहुमावाहयिष्यामि दैत्येशं ग्रहताङ्गतम् ॥ ४७ ॥ केशवाप्तवरं वीर तपसा दग्धकिल्बिषम् ॥ एह्येहि दैत्यप्रवर वरदाचिन्त्यविक्रम ॥ ४८ ॥ तपोमूर्ते दुराधर्ष विपरीतचराम्बरे ॥ आवाहयाम्यहं देवं विश्वकर्माणमच्युतम् ॥ ४९ ॥ सर्वासां देवतानां तु सदा शिल्पप्रवर्तकम् ॥ एहि देववराचिन्त्य सर्वशिल्पप्रवर्तक ॥ ५० ॥ त्वयि सर्वैव सर्वेषां कर्मणामाश्रिता गतिः ॥ केतुमावाहयिष्यामि केतुं सर्वदिवौकसाम् ॥ ५१ ॥ ब्रह्मण्यं सर्वधर्मज्ञं भक्तानामभयप्रदम् ॥ धूमकेतो इहाभ्येहि हुताशनसमप्रभ ॥ ५२ ॥ शिखाकरालविकच पूजिताघविनाशन ॥ वह्नेरावाहनं प्रोक्तं पूर्वमेव मयानघ ॥ ५३ ॥ आवाहयिष्यामि शुभां कृत्तिकां देवपूजिताम् ॥ एहि साधारणे देवि ज्येष्ठदक्षसुते शुभे ॥ ५४ ॥ प्रजापतेस्तथा प्रोक्तं रोहिण्याः शृणु पार्थिव ॥ आवाहयामि वरदां रोहिणीं चन्द्रवल्लभाम् ॥ ५५ ॥ एहि रोहिणि धर्मज्ञे ध्रुवकर्मसु शोभने ॥ चन्द्रस्यावाहनं प्रोक्तमिल्वलाया निबोध मे ॥ ५६ ॥ आवाहयामि वरदामिल्वलां शशिवल्लभाम् ॥ एहि मे इल्वले देवि मृदुकर्मसु शोभने ॥ ५७ ॥ रुद्रमावाहयिष्यामि त्रिनेत्रं शूलपाणिनम् ॥ एहि शङ्कर सर्वात्मन्महादेव गणेश्वर ॥ ५८ ॥ आर्द्रामावाहयिष्यामि नक्षत्रं बाहुसंज्ञिकम् ॥ एह्यार्द्रे चारुसर्वाङ्गि दारुणे रुद्रसम्मते ॥ ५९ ॥ आवाहयिष्याम्यदितिं तपसा दग्धकिल्बिषाम् ॥ आदित्यारणि धर्मज्ञे एहि देवि महाप्रभे ॥ ६० ॥ ऋक्षमावाहयिष्यामि धर्मज्ञं तु पुनर्वसुम् ॥ पुनर्वसो इहागच्छ चरकर्मप्रसादक ॥ ६१ ॥ जीवस्यावाहनं प्रोक्तं पुष्यस्याथ प्रचक्षते ॥ पुष्यमावाहयिष्यामि नक्षत्रं क्षिप्रसंज्ञिकम् ॥ ६२ ॥ एहि पुष्य महाभाग पोषं वर्धय सर्वतः ॥ सर्पानावाहयिष्यामि त्रैलोक्यान्तरगोचरान् ॥ ६३ ॥ आयान्तु सर्वतः सर्पाः सौम्यरूपा भवन्तु च ॥ आवाहयिष्याम्याश्लेषां भक्तानां श्रीविवर्द्धनाम् ॥ ६४ ॥ आश्लेषे त्वमिहाभ्येहि दारुणे विजयप्रदे ॥ पितॄनावाहयिष्यामि मूर्त्यमूर्तिधरानहम् ॥ ६५ ॥ आयान्तु पितरश्शीघ्रं सुधाकव्यभुजोऽव्ययाः ॥ मघामावाहयिष्यामि उग्रनक्षत्रमञ्जसा ॥ ६६ ॥ एहि मे सुभगे देवि मघेऽघविनिषूदने ॥ भगमावाहयिष्यामि पूर्वफल्गुनसंज्ञितम् ॥ ६७ ॥ एहि भाग्ये महाभागे उग्रकर्मप्रसादिके ॥ आवाहयिष्याम्यर्यम्णमादित्यं तेजसां निधिम् ॥ ६८ ॥ अर्यमँस्त्वं समम्येहि भक्त

१ 'सर्वाघ' इति क० ।

पातकनाशन ॥ ऋक्षमावाहयिष्यामि चोत्तराफल्गुनीं शुभाम् ॥ ६९ ॥ एहि त्वं सुभगे देवि ध्रुवे[1]सर्वाङ्गसुन्दरि ॥ आवा
हनं मया प्रोक्तं सवितुर्दीप्ततेजसः ॥ ७० ॥ हस्तमावाहयिष्यामि सावित्रं क्षिप्रमञ्जसा ॥ एहि सावित्र धर्मज्ञ भक्तानां पापनाशन ॥ ७१ ॥
आवाहयाम्यहं देवं त्वष्टार[2]ममितद्युतिम् ॥ एहि मे भगवँस्त्वष्टः प्रजापालनतत्पर ॥ ७२ ॥ चित्रामावाहयिष्यामि चित्ररूपां मनोहराम् ॥
एहि मे वरदे चित्रे मृदुकर्मप्रसाधिनि ॥ ७३ ॥ वायुमावाहयिष्यामि सर्वगं दीप्ततेजसम् ॥ देव वायो त्वमभ्येहि सर्वभूतजगत्प्रिय ॥ ७४ ॥
स्वातिमावाहयिष्यामि नित्यमुत्तरमार्गगाम् ॥ देवि स्वाते त्वमभ्येहि चरकर्मसु शोभने ॥ ७५ ॥ आवाहयिष्यामीन्द्राग्नी सहितौ दीप्ततेजसौ ॥
इन्द्राभ्येहि जगन्नाथ एह्यग्ने विजयप्रद ॥ ७६ ॥ ऋक्षमावाहयिष्यामि विशाखां दीप्ततेजसम् ॥ विशाखे त्वमिहाभ्येहि देवि साधारणे शुभे ॥ ७७ ॥
मित्रमावाहयिष्यामि देवं दीप्तांशुमूर्जितम् ॥ एहि मित्र महाभाग भक्ताघप्रलयङ्कर ॥ ७८ ॥ ऋक्षमावाहयिष्यामि ह्यनुराधां वरप्रदाम् ॥
अनूराधे त्वमभ्येहि मृदुकर्मसु शोभने ॥ ७९ ॥ शक्रस्यावाहनं प्रोक्तं ज्येष्ठायाः शृणु पार्थिव ॥ ज्येष्ठामावाहयिष्यामि नक्षत्रं शक्रदैवतम् ॥ ८० ॥
ज्येष्ठे देवि त्वमभ्येहि दारुणे चारुलोचने ॥ देवमावाहयिष्यामि देवं निर्ऋतिजं प्रभुम् ॥ ८१ ॥ एहि देव विरूपाक्ष महाबलपराक्रम ॥
मूलमावाहयिष्यामि नक्षत्रं दारुणं महत् ॥ ८२ ॥ एहि मूल महाभाग भक्तानामभयप्रद ॥ अपस्त्वावाहयिष्यामि सर्वगा वरदाः शिवाः ॥
॥ ८३ ॥ आपस्त्वायान्तु वरदाः पवित्रा मङ्गलावहाः ॥ ऋक्षमावाहयिष्यामि पूर्वाषाढेतिसंज्ञितम् ॥ ८४ ॥ एहि त्वमुग्रे वरदे चाषाढे पूर्व
पूर्वके ॥ विश्वानावाहयिष्यामि देवानद्भुततेजसः ॥ ८५ ॥ आयान्तु वरदाः सर्वे विश्वेदेवा महाबलाः ॥ ऋक्षमावाहयिष्यामि उत्तराषाढसंज्ञि
तम् ॥ ८६ ॥ एहि त्वमुत्तराषाढे सर्वकर्मसु शोभने ॥ ब्रह्मण आवाहनं प्रोक्तमभिजिति शृणु हे प्रभो ॥ ८७ ॥ ऋक्षमावाहयिष्यामि यत्तदभिजि
दुच्यते ॥ एहि धिष्ण्यवरिष्ठाद्य क्षिप्रकर्मप्रसाधक ॥ ८८ ॥ विष्णोरावाहनं प्रोक्तं श्रवणस्य निबोध मे ॥ ऋक्षमावाहयिष्यामि श्रवणं सर्वका
मदम् ॥ ८९ ॥ ॥ अश्वत्थ त्वं समभ्येहि चरकर्मप्रसाधक ॥ वसूनावाहयिष्यामि देवानष्टौ वरप्रदान् ॥ ९० ॥ आयान्तु वरदा देवा वसवः पाप
नाशनाः ॥ धनिष्ठामावाहयिष्यामि नक्षत्रं राशिवल्लभम्[3] ॥ ९१ ॥ धनिष्ठे त्वमिहागच्छ चरकर्मप्रासाधके ॥ आवाहनं मया प्रोक्तं वरुणस्य महा
त्मनः ॥ ९२ ॥ ऋक्षमावाहयिष्यामि नाम्ना शतभिषं शुभम् ॥ आगच्छ त्वं शतभिषे चरकर्मसु शोभने ॥ ९३ ॥ अजैकपादं वरदं रुद्रमावाह

१ 'शुभे' इति ख० । २ 'मसितद्युतिम्' इति ख० । ३ 'राशिवल्लभम्' इति ख० ।

याम्यहम् ॥ अहिर्बुध्न्य समभ्येहि जटाजूटोपशोभित ॥ ९४ ॥ ध्रुवमावाहयिष्यामि देशे भाद्रपदोत्तरे ॥ एहि त्वं सुमहाभागे मम भाद्रपदोत्तरे॥ ऋक्षमावाहयिष्यामि रेवतीं चारुदर्शनाम् ॥ ९५ ॥ एहि रेवति धर्मज्ञे मृदुकर्मप्रसाधके ॥ आवाहयाम्यहं देवं पूषणं पापनाशनम् ॥ ९६ ॥ पूषन्सम्यगिहाभ्येहि सर्वकर्मप्रसादिके ॥ आवाहयाम्यहं देवौ नासत्यौ सूर्यनन्दनौ ॥ ९७ ॥ आगच्छेतां महाभागौ वरदावश्विनावुभौ ॥ ऋक्षमावाहयिष्यामि चाश्विनीं सर्वकामदम् ॥ ९८ ॥ यमस्यावाहनं प्रोक्तं भरणीमथ वै शृणु ॥ ऋक्षमावाहयिष्यामि चोग्रं भरणिसंज्ञकम् ॥ ९९ ॥ एहि त्वं देवि भरणि सुभगे चारुदर्शिनि ॥ शक्रस्यावाहनं प्रोक्तं पूर्वमेव मया नृप ॥ १०० ॥ प्राचीमावाहयिष्यामि सूर्योदयविभूषिताम् ॥ एहि त्वं वरदे पूर्वे शुभकर्मप्रसाधिके ॥ १०१ ॥ वह्नेरावाहनं प्रोक्तं पूर्वमेव मया तव ॥ दिशमावाहयिष्यामि वरदां पूर्वदक्षिणाम् ॥ १०२ ॥ वह्निप्रिये समभ्येहि वरदे पूर्वदक्षिणे ॥ यमस्यावाहनं प्रोक्तं याम्यायाश्च दिशः शृणु ॥ १०३ ॥ अहमावाहयिष्यामि दक्षिणां दक्षिणां दिशम् ॥ दक्षिणे त्वं समभ्येहि सर्वकर्मसु शोभने ॥ १०४ ॥ पूर्वमावाहनं प्रोक्तं विरूपाक्षस्य धीमतः ॥ दिशमावाहयिष्यामि शुभां दक्षिणपश्चिमाम् ॥ १०५ ॥ एहि मे नैर्ऋती देवि सततं भूतिवर्धिनि ॥ आवाहनं मया प्रोक्तं वरुणस्य महात्मनः ॥ १०६ ॥ दिशमावाहयिष्यामि वारुणीं वरुणीं शुभाम् ॥ आगच्छ पश्चिमे देवि वरदे वरुणप्रिये ॥ १०७ ॥ आवाहनं मया प्रोक्तं वायोश्चैवं महात्मनः ॥ आवाहयामि विदिशं वायव्यां पश्चिमोत्तराम् ॥ ॥ १०८ ॥ वरदे त्वं समभ्येहि वायव्ये पश्चिमोत्तरे ॥ आवाहयामि धनदं देवं वैश्रवणं प्रभुम् ॥ १०९ ॥ राजराज समभ्येहि सर्वयज्ञधनाधिपं ॥ दिशमावाहयिष्यामि सौम्यां धनदपालिताम् ॥ ११० ॥ उत्तरे त्वं समभ्येहि सर्वकर्मसु शोभने ॥ देवस्यावाहनं प्रोक्तं त्र्यम्बकस्य महात्मनः ॥ ॥ १११ ॥ दिशमावाहयिष्यामि शुभां प्रागुत्तरामहम् ॥ एहि त्वं सुभगे देवि सततं शिवपालिते ॥ ११२ ॥ सर्वानावाहयिष्यामि पूर्वकुम्भेषु सागरान् ॥ रत्नाध्यक्षाः समायान्तु चत्वार इह सागराः ॥ ११३ ॥ ईशान्यां दिशि यः कुम्भः पूर्वस्तस्य तु सागरः ॥ आग्नेय्यान्तु समायातु दक्षिणे दक्षिणः शिवः ॥ ११४ ॥ पश्चिमस्तु समायातु कुम्भे दक्षिणपश्चिमे ॥ उत्तरश्च तथाऽभ्येतु कुम्भे वै पश्चिमोत्तरे ॥ ११५ ॥ आवाहितानां कर्तव्यं भूमौ कृत्वा ततः शिरः ॥ प्रणाममभिवाद्यं च ततो मन्त्रमुदीरयेत् ॥ ११६ ॥ भवतां हि प्रसादेन भवतां प्रतिपूजनैः ॥ प्रयतिष्ये यथाशक्त्या तन्मेऽनुज्ञातुमर्हथ ॥ ११७ ॥ युष्माकं पूजनं कर्तुं केन शक्यं यथाविधि ॥ युष्मत्पूजाविहीनेन कुतो लभ्यं

१ 'सर्वकल्मषनाशन' इति क०ख०। २ 'क्षिप्रमश्विनिसंज्ञिकम्' इति ख०। ३ 'विभूषणाम्' इति ख०। ४ 'पूर्वम्' इति ख०। ३ 'जनाधिप' इति ख०।

महत्पदम् ॥ ११८ ॥ ततः कर्तुं यथाशक्त्या भवतां प्रतिपूजने ॥ वरदाः प्रयतिष्यामि तन्मेऽनुज्ञातुमर्हथ ॥ ११९ ॥ भवत्पूजाविधावस्मिन्बहु
विघ्नं सदैव तु ॥ स्वांस्वां दिशमधिष्ठाय दिक्पाला दीप्ततेजसः ॥१२० ॥ उत्सादयन्तु सकलान्विघ्नान्मे समुपस्थितान् ॥ अस्मादेशात्प्रणश्यन्तु
यज्ञघ्ना ब्रह्मराक्षसाः ॥ १२१ ॥ विनायका विघ्नकरा ममोग्रा यज्ञद्विषो ये पिशिताशनाश्च ॥ सिद्धार्थकैर्वज्रसमानकल्पैर्मया निरस्ताः स्वगृहं
प्रयान्तु ॥ १२२॥ एतावदुक्त्वा विकिरेत विद्वान्सिद्धार्थकान्दिक्षु तथा विदिक्षु ॥ रक्षोहणं चात्र तथैव मंत्रं वक्तव्यमुच्चैर्द्विजपुङ्गवेन ॥ १२३ ॥
सर्वग्रहाणां यजने प्रदिष्टं सर्वौषधैः स्नानमदीनसत्त्व ॥ बीजैः समग्रैश्च तथैव गन्धैर्मृद्भिश्च रत्नैश्च तथा जलैश्च ॥ १२४ ॥ इति श्रीविष्णु
धर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे ग्रहर्क्षावाहनमन्त्राध्यायो नाम पञ्चनवतितमोऽध्यायः ॥ ९५ ॥ वज्र उवाच ॥ सर्वेषां तु समाचक्ष्व
गन्धमाल्यं तथैव च ॥ धूपं ब्रह्मन्स्नैवेद्यं पानं चैव पृथक्पृथक् ॥ १ ॥ होमद्रव्यं तथा मन्त्रं दक्षिणाश्च भृगूत्तम ॥ एकस्त्वं सर्वविद्ब्रह्म
न्ब्रह्मा वा जगतां पतिः ॥ २ ॥ मार्कण्डेय उवाच ॥ ध्रुवस्थाननिविष्टानां देवानां च महीपते ॥ सर्वासां चन्दनं देयं नित्यमेव पृथक्पृथक् ॥ ३॥
सूर्याय कुङ्कुमं देयं कर्पूरं शशिने तथा ॥ भौमाय चन्दनं रक्तं चागुरुं शशिजाय च ॥ ४ ॥ जीवाय चन्दनं देयं कुङ्कुमेन विमिश्रितम् ॥
शुक्राय चन्दनं श्वेतं सौराय च मृगोद्भवम् ॥ ५ ॥ कुङ्कुमेन युतं दद्याद्दानवाय मृगोद्भवम् ॥ अगुरुं कुङ्कुमं चोभौ सुदेयौ धूमकेतवे ॥ ६ ॥
कुङ्कुमं कृत्तिकानां तु रोहिणीनां मृगोद्भवम् ॥ इल्वलानां च कर्पूरं रौद्रे नागमदं तथा ॥ ७ ॥ आदित्यस्य प्रदातव्यावुभौ कुङ्कुमचन्दनौ ॥
उशीरचन्दनौ देयावाश्लेषापैत्र्ययोस्तथा ॥ ८ ॥ प्रियङ्गुचन्दनौ देयौ तथा भाग्यस्य पार्थिव ॥ अर्यम्णश्च प्रदातव्यौ चन्दनौ
श्वेतरक्तकौ ॥ ९ ॥ सावित्रस्य प्रदातव्यं कुङ्कुमं पृथिवीपते ॥ त्वाष्ट्रस्य चन्दनं देयं कुङ्कुमं समृगोद्भवम् ॥ १० ॥ जातीफलयुतं देयं वायव्यस्य
च चन्दनम् ॥ विशाखायाः प्रदातव्यं कुङ्कुमं चन्दनं तथा ॥ ११ ॥ तुरुष्कसहितं देयं तथा मैत्राय चन्दनम् ॥ ज्येष्ठायाश्च प्रदातव्यं चन्दनं
कुङ्कुमं तथा ॥ १२ ॥ मूलाय शिंशपासारं तथा देयं मृगोद्भवम् ॥ आप्याय कुष्ठसंयुक्तं दातव्यं चन्दनं भवेत् ॥ १३ ॥ वैश्वदेवाय मृगजं
चन्दनागुरुणी तथा ॥ ब्राह्माय चन्दनं देयं वैष्णवायागुरुं तथा ॥१४॥ जातीलवङ्गौ दातव्यौ सुपिष्टौ वासवाय तौ ॥ वारुणाय च कर्पूरमाजा
हिर्बुध्न्ययोस्तथा ॥ १५ ॥ पौष्णाय चन्दनं रक्तमाश्विनाय तथा सितम् ॥ याम्यायागुरुसंयुक्तं तथा देयं मृगोद्भवम् ॥ १६ ॥ समानदेवनक्षत्रं
कथितं च तथा दिशम् ॥ उत्तरायास्तथा देये चन्दनागुरुणी शुभे ॥ १७ ॥ सागराणां प्रदातव्यं सर्वेषामेव चन्दनम् ॥ अलाभे तु तथा देयं

सर्वेषामेव चन्दनम् ॥ १८ ॥ मङ्गल्यं तत्पवित्रं च देवानां दयितं च तत् ॥ धार्यं च देयं तद्राजँस्तत्र लक्ष्मीः प्रतिष्ठिता ॥ १९ ॥ यद्यद्ग्रहस्याभिहितं मयैतदृक्षस्य वा भूमिपतिप्रधान ॥ तद्देवतायाश्च तदेव देयं दिशस्तथा नात्र विचारणास्ति ॥ २० ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे अनुलेपकथनो नाम षण्णवतितमोऽध्यायः ॥ ९६ ॥ मार्कण्डेय उवाच ॥ सवर्णानि ग्रहर्क्षाणां दिशां च जगतीपते ॥ नित्यं देयानि वासांसि पताकाश्च विजानता ॥ १ ॥ भूषणानि च देयानि काञ्चनानि शुभानि च ॥ रत्नचित्राणि रम्याणि यथाशक्त्या नराधिप ॥ २ ॥ ध्रुवस्थाननिविष्टानां देवतानां महीपते ॥ जातीपुष्पाणि देयानि सर्वेषामविशेषतः ॥ ३ ॥ रक्तपद्मानि सूर्यस्य श्वेतपद्मानि चेन्दवे ॥ बन्धूकानि च भौमाय बुधायेन्दीवराणि च ॥ ४ ॥ जीवाय यूथिका पीता सिताय च तथा सिता ॥ बाणपुष्पाणि सौराय राहवे पाटलानि च ॥ ५ ॥ तथा दमनकं देयं केतवे वसुधाधिप ॥ कृत्तिकासु च देयानि राजरक्तोत्पलानि च ॥ ६ ॥ चम्पकानि च रोहिण्या इल्विलायाः सितोत्पलम् ॥ धत्तूरकाण्यथार्द्राया आदित्यस्य च मल्लिका ॥ ७ ॥ चम्पकान्येव पुष्यस्य जाती स्यात्सार्पपित्र्ययोः ॥ भाग्यस्य कान्ता दातव्या अर्यम्णश्च सुवर्चला ॥८ ॥ सावित्रत्वाष्ट्रयोर्नित्यं बन्धूककुसुमानि च ॥ वायव्यस्य च देयानि सिन्धुवाराणि पार्थिव ॥ ९ ॥ ऐन्द्राग्न्यस्य च देयानि कुरण्डकुसुमानि च ॥ रक्ताशोकस्य पुष्पाणि तथा मैत्रस्य पार्थिव ॥ १० ॥ चम्पकानि च शाक्रस्य तथा देयानि भूपते ॥ मूलस्य च तथा देयं राजन्कृष्णकुहेटकम् ॥११॥ कह्लाराणि तथाप्यस्य वैश्वदेवस्य कुब्जकम् ॥ ब्राह्मस्य जातीपुष्पाणि वैष्णवस्य च चम्पकम् ॥ १२ ॥ पाटला वासवस्यापि वारुणस्योत्पलानि तु ॥अ र्कपुष्पाण्य थाप्यस्य तथा देयानि पार्थिव ॥ १३ ॥ आहिर्बुध्न्यस्य देयानि धत्तूरकुसुमानि च ॥ करवीरकपुष्पाणि तथा पौष्णस्य पार्थिव ॥ १४ ॥ चूतपुष्पाणि देयानि आश्विनस्य नराधिप ॥ नीलोत्पलानि याम्यस्य तथा देयानि भूपते ॥ १५ ॥ समानवेशनक्षत्रकथितानि तथा दिशाम् ॥ उत्तरायाश्च देयानि नागपुष्पाणि पार्थिव ॥ १६ ॥ सागराणां च देयानि कमलानि महीपते ॥ उक्तालाभे प्रदेयानि सवर्णानि नराधिप ॥ स्वकालजानि पुष्पाणि सर्वेषामविशेषतः ॥ १७ ॥ यद्यद्ग्रहस्याभिहितं मयात्र ऋक्षस्य वा भूमिपतिप्रधान ॥ तद्देवतायाश्च तथैव देयं दिशस्तथा नात्र विचारणास्ति ॥१८॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे ग्रहर्क्षविशेषपुष्पदेयादेयाध्यायो नाम सप्तनवतितमोऽध्यायः ॥ ९७ ॥ मार्कण्डेय उवाच ॥ ध्रुवस्थाननिविष्टानां देवतानां महीपते ॥ गुग्गुलुं घृतसंयुक्तं धूपं दद्याद्विचक्षणः ॥ १ ॥ धूपं त्वगुरुरर्काय नमेरुं च तथेन्दवे ॥ भौमाय गुग्गुलुं दद्यात्सर्जं दद्याद्बुधाय च ॥ २ ॥ शिलाजतु

तु जीवाय दातव्यं पार्थिवोत्तम ॥ श्रीवासकं तु शुक्राय नखं सौराय पार्थिव ॥ मदश्च राहवे देयं केतवे च वसा तथा ॥ ३ ॥ कृत्तिकानां घृतं देयं रोहिणीनां च चन्दनम् ॥ इल्वलानां च कर्पूरमार्द्रायां च नखं तथा ॥ ४ ॥ पुनर्वसोश्चाप्यगुरुं पुष्यस्य च तथाक्षतम् ॥ श्रीवासकं च सार्पस्य पैत्रस्य च तथा घृतम् ॥५ ॥ प्रियङ्गुं मधुना युक्तं[1] भाग्यस्य सघृतं भवेत् ॥ घृतेन मधुना युक्तमार्यम्णस्य शतावरीम् ॥ ६ ॥ कुन्दुरुं चैव हस्ताय त्वाष्ट्राय च तलं भवेत् ॥ वायव्याय च कर्पूरमैन्द्राग्न्याय मिसिर्भवेत् ॥ ७ ॥ मैत्राय कुङ्कुमं देयं शाक्राय मृगजं भवेत् ॥ शाटीमूलं च मूलाय आप्याय नलदं तथा ॥ ८ ॥ गुग्गुलुं वैश्वदेवाय ब्राह्माय घृतचन्दने ॥ वैष्णवायागुरुं दद्याद्वासवाय तथा पलम् ॥ ९ ॥ वारुणाय तथोशीरमाजाय च पलं भवेत् ॥ अहिर्बुध्न्याय दातव्यं देवदारुं नराधिप ॥ १० ॥ कङ्कोलकानि पौष्णाय आश्विनाय च चन्दनम् ॥ याम्याय गुग्गुलुर्देयः सततं भूतिमिच्छता ॥ ११ ॥ कर्पूरं कुङ्कुमं चैव चन्दनं मृगजं तथा ॥ तुरुष्कमगुरुं कान्तां गुग्गुलुं च क्रमाद्दिशाम् ॥ १२ ॥ प्राच्यादीनां महीनाथ सागराणां च चन्दनम् ॥ सर्वाभावे च दातव्याः सर्वेषामेव गुग्गुलुम् ॥ १३ ॥ वनस्पतिरसो दिव्यो गन्धाढ्यो गन्ध उत्तमः ॥ आघ्राणः सर्वदेवानां गुग्गुलुप्रवरः शुभः ॥१४॥ दीपश्चाज्येन दातव्यः सर्वेषामविशेषतः॥तैलेन वा महीनाथ वसाढ्येन विवर्जयेत् ॥१५॥यद्यद्ग्रहस्याभिहितं मयात्र ऋक्षस्य वा भूमिपतिप्रधान॥ तद्देवतायाश्च तथैव देयं दिशां तथा नात्र विचारमस्ति॥१६॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे ग्रहर्क्षधूपदीपो नामाष्टनवतितमोऽध्यायः ॥ ९८ ॥ ॥ छ ॥ ॥ मार्कण्डेय उवाच ॥ ध्रुवस्थाननिविष्टानां देवतानां नराधिप ॥ दध्योदनं पायसं च प्रत्येकं विनिवेदयेत् ॥ १ ॥ गुडौदनं गुडापूपाः फलानि गुडपायसम् ॥ निवेदनं तु सूर्याय धान्यलाजे मधूत्कटे ॥ २ ॥ सर्पिर्दध्योदनं चैव फलानि विविधानि च ॥ मोदकानि च मुख्यानि पायसं शशिनस्तथा ॥ ३ ॥ गुडौदनं गुडापूपा यावकं गुडपायसम् ॥ कृसरं च तथा देयं भूमिपुत्राय पार्थिव ॥ ४ ॥ क्षीरौदनं ससर्पिष्कं क्षीरवृक्षफलानि च ॥ क्षीरिण्यश्च तथौषध्यो सोमपुत्राय दापयेत् ॥ ५ ॥ शिम्बिधान्यविकाराणि बिल्वान्यामलकानि च ॥ घृतौदनं च जीवाय दातव्यं भूतिमिच्छता ॥ ६ ॥ दध्योदनं पायसं च मधुना सर्पिषा युतम् ॥ उत्कारिकं मोदकांश्च भार्गवाय निवेदयेत् ॥ ७ ॥ माषौदनं ससर्पिष्कं कृसरं दधि यावकम् ॥ निवेदयेत्तु सौराय कुलत्थं चणकैः सह ॥ ८ ॥ प्लक्षं दधित्थं च तथा पललं चैव राहवे ॥ माषौदनं तथा देयं यवापूपांस्तथैव च ॥ ९ ॥ तद्वो



१ 'घृतेक्षुमधुभिर्युक्ता' इति ख० ।

पिकास्तथा मत्स्याः केतवे कृसरं तथा ॥ वसासर्पींषि च तथा देयानि मनुजेश्वर ॥ १० ॥ मधुलाजे कृत्तिकानां कुल्माषं दधिसर्पिषी ॥ रोहिणीनां च बीजानि दधिपिष्टवृषाणि च ॥ ११ ॥ दध्योदकं चेल्वलानां मृगमांसं तथैव च ॥ रुधिरं कृसरं चोभौ रौद्रस्य विनिवेदयेत् ॥ १२ ॥ पुनर्वसोः प्रदातव्यं पललं सविलायनम् ॥ पायसं च ससर्पिष्कं तिष्याय विनिवेदयेत् ॥ १३ ॥ पिष्टसर्पाणि सार्पस्य क्षौद्रं दधियुतं तथा ॥ तिलौदनं सपललं पैत्र्यस्य विनिवेदयेत् ॥ १४ ॥ षष्टिकान्नं च भाग्यस्य मधुसर्पींषि चाप्यथ ॥ आर्यम्णाय तिलापूपान्षष्टिकान्नं तथैव च ॥ ॥ १५ ॥ प्रियंगुतण्डुलैः सिद्धं सावित्राय च पायसम् ॥ त्वाष्ट्रस्य चैव पीयूषं द्विजा चित्राण्डजास्तथा ॥ १६ ॥ वायव्यस्य च फल्गूनि मूलकानि शुभानि च ॥ कुलत्थानि विशाखासु यवापूपास्तथैव च ॥ १७ ॥ कुलत्थभक्तं मित्राय दधिक्षौद्रान्वितं तथा ॥ घृतौदनं च शाक्राय फलानि विविधानि च ॥ १८ ॥ मूलानि च विचित्राणि तथा मूलफलानि च ॥ आप्यस्य सक्तवो देया मधुमिश्रोदकैः सह ॥ १९ ॥ सक्तवो वैश्वदेवाय मधुलाजे तथैव च ॥ ब्राह्माय पायसं देयं सगुडं भूतिमिच्छता ॥ २० ॥ दध्योदनं पायसं च वैष्णवाय निवेदयेत् ॥ घृतोदकं च शाकानि वासवाय निवेदयेत् ॥२१॥ पैष्टं बिडालं शाकांश्च वारुणाय तथा दधि ॥ आदाय मांसमाजं तु व्याघ्रं पिष्टकृतं दधि ॥२२॥ आहिर्बुध्न्याय मांसानि तथैव च रसौदनम् ॥ पौष्णाय सक्तवो माषा माषयुक्ताश्च सक्तवः ॥२३॥ अश्वं पिष्टकृतं माषान्यावकं च तथा दधि ॥ आश्विनस्याथ याम्यस्य तण्डुलानि तिलानि च॥२४॥राजन्पैष्टाश्च पशवो मांसं पक्वामकं तथा॥पायसं सघृतं क्षौद्रं पूर्वस्यां विनिवेदयेत्॥२५॥आग्नेय्यां दिशि राजेन्द्र कृसरं क्षीरमिश्रितम् ॥ दक्षिणस्यां च दातव्यं कृसरं तैलमिश्रितम् ॥२६॥ नैर्ऋत्यां च प्रदातव्यं कृसरं मत्स्यसंयुतम् ॥ कुल्माषांश्चैव मत्स्यांश्च पश्चिमस्यां निवेदयेत् ॥२७॥ वायव्यायाश्च मत्स्यानि तथा क्षीरोदनानि च ॥ ऐशान्यायाः प्रदातव्यौ घृतक्षीरोदनावुभौ ॥२८ ॥ मोदकोल्लोपिकामिश्राः सागराणां बलिर्भवेत् ॥२९॥ यद्यद्ग्रहस्याभिहितं मयात्र ऋक्षस्य वा भूमिपतिप्रधान ॥ तद्देवतायाश्च तदेव देयं दिशस्तथा नात्र विचारणास्ति ॥ ३० ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे ग्रहर्क्षनैवेद्यदेयादेयविधिर्नाम नवनवतितमोऽध्यायः ॥९९ ॥ मार्कण्डेय उवाच ॥ ध्रुवस्थाननिविष्टानां देवतानां पृथक्पृथक् ॥ पानाय दापयेत्क्षीरं प्रीतये वान्तरात्मनः॥ गन्धोदकं तथार्काय पयः सोमाय कीर्तितम् ॥ १ ॥ भूमिपुत्राय खर्जूरं मार्द्वीकं शशिजाय च॥ जीवाय च तथा तक्रं शुक्रायेक्षुरसं तथा ॥ २ ॥ मांसपानं तु सौराय राहोर्मीनरसं तथा ॥ छागं पयः प्रदातव्यं केतवे मनुजेश्वर ॥ ३ ॥ गन्धोदकं

१ 'प्रयतेनान्तरात्मना' इति ख०।

कृत्तिकानां रोहिणीनां सुवीरकम् ॥ इल्वलानां पयः प्रोक्तं रौद्रेः खार्जूरमासवम् ॥ ४ आदित्याय तथा गौडं क्षीरं तिष्याय दापयेत् ॥ क्षीरमेव च
सार्पाय तथा पित्र्याय यादव ॥५॥ गन्धोदकं च भाग्याय तथार्यम्णाय कीर्तितम् ॥ सावित्राय तथायस्तु त्वाष्ट्राय च तथा पयः ॥६॥ वायव्याय च
मार्द्वीकमैन्द्राग्न्याय च काञ्जिकम् ॥ मित्राय[२] तक्रं देयं च शाक्राय दधि दापयेत् ॥ ७ ॥ नारिकेलाम्बु मूलाय तथाप्याय मधूदकम् ॥ खार्जूरं
वैश्वदेवाय ब्राह्माय सलिलं हितम् ॥ ८ ॥ आग्नेः पानं वैष्णवाय जम्बुभिर्वासवाय च ॥ वारुणाय मधूकैश्च रसमाजस्य पार्थिव ॥ ९ ॥
आहिर्बुध्न्यस्य च तथा रसमेव भवेन्नृप ॥ पौष्णाय च भवेच्छागं चाश्विनाय च माहिषम् ॥ याम्याय च तथा देयं स्वच्छं मांसरसं तथा
॥ १० ॥ समानदेवनक्षत्रं कथितं च तथा दिशाम् ॥ उत्तरायै प्रदातव्यं तथा क्षीरं नराधिप ॥ ११ ॥ सागराणां च
सर्वेषां सततं भूतिमिच्छता ॥ १२ ॥ यद्यद्ग्रहस्याभिहितं मयात्र ऋक्षस्य वा भूमिपतिप्रधान ॥ तद्देवतायाश्च तथैव देयं दिशस्तथा
नात्र विचारणास्ति ॥ १३ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे प्रतिग्रहर्क्षदेयादेयपानो नाम शततमोऽध्यायः ॥ १०० ॥
॥ मार्कण्डेय उवाच ॥ ध्रुवस्थाननिविष्टानां देवतानां महीपते ॥ घृताक्तैरक्षतै होमः कार्य्यश्च सतिलैर्भवेत् ॥१॥ अर्कः पलाशः खदिरश्चापामार्गो
ऽथ पिप्पलः ॥ उदुम्बरश्शमीदूर्वाः कुशाश्चेति यथाक्रमम् ॥ २ ॥ समिदर्थं प्रशस्यन्ते सूर्य्यादीनां नराधिप ॥ होतव्यास्समिधश्चैव घृताक्ता
मनुजेश्वर ॥ ३ ॥ तथा प्रादेशमात्राश्च प्रागग्रा नित्यमेव च ॥ ऊर्ध्वशुष्काः सपत्राश्च वित्वचश्च विवर्जयेत् ॥ ४ ॥ कृत्तिकानां घृतेनाक्तो होमः
पार्थिवसत्तम ॥ रोहिणीनां तथा बीजैरिल्विलानां च पायसैः ॥ ५ ॥ माक्षिकैश्च तथार्द्रायामादित्यस्य च तण्डुलैः ॥ पुष्यस्य पायसेनापि सार्प
स्य च तथौषधैः ॥६॥ तिलैः सतण्डुलैर्होमः तथा पैत्र्यस्य कीर्तितः ॥ प्रियङ्गुभिश्च भाग्यस्य चार्य्यम्णस्य तथाक्षतैः ॥ ७ ॥ सावित्रस्य तथा
दध्ना चित्रायाः पायसेन च ॥ वायव्यस्याक्षतैः कार्य्याः सघृतैर्मनुजेश्वर ॥८॥ ऐन्द्राग्नस्य सदा कार्य्यो यावकेन तथैव च ॥ मसूरैश्चैव मैत्रस्य
शाक्रस्य चणकेन तु ॥ ९ ॥ मूलस्यौषधिभिः कार्य्यस्तथैवाप्यस्य शालिभिः ॥ वैश्वदेवस्य पयसा तथा ब्राह्मस्य पायसैः ॥ १० ॥ मणिभि ॥ ६२ ॥
स्तण्डुलोपेतैः श्रवणस्य विधीयते ॥ न्यग्रोधोदुम्बरफलैर्वासवस्य विधीयते ॥ ११ ॥ वारुणस्योदकैः पुष्पैस्तथा चैवाक्षतैश्शुभैः ॥ आजस्या
ज्येन मधुना दध्ना च नृपसत्तम ॥ १२ ॥ व्रीहीभिश्च तथा कार्य्याश्चाहिर्बुध्न्यस्य पार्थिव ॥ फलैश्च साक्षतैः कार्य्यस्तथा पौष्णस्य पार्थिव॥१३॥

---

२ 'गुडौदनं च मैत्राय तक्रं शाक्राय दापयेत्' इति ख० ।

क्षीरवृक्षसमिद्भिश्च आश्विनस्य विधीयते ॥ याम्यस्य मधुसंयुक्तैस्तिलैः पार्थिवसत्तम ॥ १४ ॥ आज्यं तिलाश्च तैलं च कृशरं मधु पायसम् ॥
दधि क्षीरं घृतं क्षौद्रं प्राच्यादीनां यथाक्रमम् ॥ १५ ॥ सागराणां च पयसा होमः कार्यः पृथक्पृथक् ॥ उक्तालाभे च सर्वेषां होमः कार्य्यस्ति
लाक्षतैः ॥ १६ ॥ सघृतैः पार्थिवश्रेष्ठ द्रव्यशाठ्यं विवर्जयेत् ॥ प्रभोः प्रथमकल्पस्य योऽनुकल्पेन वर्तते ॥ १७ ॥ न साम्परायिकं तस्य भव
तीह सुदुर्मतेः ॥१८॥ यद्यद्ग्रहस्याभिहितं मयात्र ऋक्षस्य वा भूमिपतिप्रधान ॥ तद्देवतायाश्च तथैव देयं दिशस्तथा नात्र विचारणास्ति ॥ १९ ॥
इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे होमद्रव्यविभागो नामैकोत्तरशततमोऽध्यायः ॥ १०१ ॥ मार्कण्डेय उवाच ॥ ध्रुवा द्यौरिति
मन्त्रेण होमः कार्यो ध्रुवस्य तु ॥ ऊर्ध्वो अधर इत्येव ध्रुवायाश्च दिशो भवेत् ॥ १ ॥ ब्रह्मयज्ञानमित्येष ब्रह्मणः परिकीर्तितः ॥ द्यौस्त्वा इति च
मन्त्रेण दिवः कार्यो महीपते ॥ २ ॥ पृथिवी दिवि चेत्येव पृथिव्याः परिकीर्तितः ॥ प्रणवेन च शेषस्य चाधस्ताच्च तथा दिशः ॥ ३ ॥ अग्निर्मू
र्धेति मन्त्रोऽयमग्नये परिकीर्तितः ॥ उदुत्तमं वरुणपाशं मन्त्रोयं वरुणस्य तु ॥ ४ ॥ प्रणवश्च कुमारस्य तद्विष्णोर्विष्णवे भवेत् ॥ त्रातारमिन्द्रं
शक्रस्य देव्याश्च प्रणवो भवेत् ॥ ५ ॥ प्रजापते न त्वदेता मन्त्रोऽयं स्यात्प्रजापतेः ॥ विनायकाय प्रणवो विश्वकर्मेति चाप्यथ ॥ ६ ॥ मन्त्रश्च
कथियो राजन्सततं विश्वकर्मणः ॥ आकृष्णेति च मन्त्रोऽयमादित्यस्य प्रकीर्तितः ॥ ७ ॥ इमं देवेति सोमस्य अग्निर्मूर्धा कुजस्य
तु ॥ उद्बुध्यस्वा बुधस्यापि मन्त्रः प्रोक्तो नरेश्वर ॥ ८ ॥ बृहस्पते अति यदर्यो मन्त्र उक्तो बृहस्पतेः ॥ अन्नात्परिस्रुतेत्येवं
मन्त्रः शुक्रस्य कीर्तितः ॥ ९ ॥ शन्नोदेवीति सौरस्य काण्डात्काण्डेति राहवे ॥ केतुं कृण्वन्निति तथा मन्त्र उक्तश्च केतवे ॥ १० ॥
अग्निर्मूर्द्धा कृत्तिकानां रोहिणीनां प्रजापते ॥ मधुव्वातेति मन्त्रोऽयमिल्वलानां प्रकीर्तितः ॥ ११ ॥ मृडनो रुद्रमार्द्रायाः सुत्रामाणं
पुनर्वसोः ॥ तव श्रियेति पुष्यस्य होममन्त्रो विधीयते ॥ १२ ॥ नमोऽस्तु सर्पेभ्यश्चेति मन्त्रः सार्पस्य कीर्तितः ॥ अहं पितॄनिति तथा मन्त्रः
पित्र्यस्य कीर्तितः ॥ १३ ॥ सदासुगेति भाग्यस्य तथा मन्त्रः प्रकीर्तितः ॥ एते अर्य्यमन्नित्येवमार्यम्णस्य च निर्दिशेत् ॥ १४ ॥
सावित्रस्य च सावित्री त्वाष्ट्रस्य य इमे तथा॥ वायुरग्रेति च तथा वायव्यस्य नराधिप ॥ १५॥ इन्द्राग्नी रोचनेत्येवमिन्द्राग्नस्य प्रकीर्तितः॥ १६॥
मित्रोजनेति मैत्रस्य होममन्त्रः प्रकीर्तितः ॥ इन्द्रः सुत्राम इति च शाक्रस्य वसुधाधिप ॥ १७ ॥ यन्ते देवीति निर्ऋतिं मूलस्य च तथा
भवेत् ॥ शन्न आपस्तथाप्यस्य होममन्त्रः प्रकीर्तितः ॥ १८ ॥ विश्वेदेवीति वैश्वस्य तथा च वसुधाधिप ॥ ब्रह्मयज्ञानमित्येवं तथा ब्राह्मस्य

निर्दिशेत् ॥ १९ ॥ वषट्ते विष्ण इत्येवं वैष्णवस्य तथा भवेत् ॥ आमे ग्रहा भक्त्येवं वासवस्य प्रकीर्तितः ॥ २० ॥ इमं मे वरुणेत्येवं वारुणस्य तथा भवेत् ॥ उपप्रागेतिमन्त्रेण होममाजस्य कारयेत् ॥ २१ ॥ मन्त्रश्चाहिरिवेत्येवमाहिर्बुध्न्यस्य कीर्तितः ॥ प्रयादमिति मन्त्रेण अश्विनस्य प्रकीर्तितः ॥ २२ ॥ यमो दाधार पृथिवीं तथा याम्यस्य कीर्तितम् ॥ नक्षत्रदेवताहोमे मन्त्रा एते प्रकीर्तिताः ॥ २३ ॥ नक्षत्रदेवता तुल्या दिगीशानां तथैव च ॥ प्रणवेन दिशः कार्यस्तथा वैश्रवणस्य च ॥ २४ ॥ सागराणां च राजेन्द्र पृथगेवं विजानता ॥ एकचक्रेति वा द्व्यर्चं ग्रहाणां च नराधिप ॥ २५ ॥ समाग्नेति तथा द्व्यर्चं नक्षत्राणां विधीयते ॥ २६ ॥ एतावदुक्तो नृपवर्य तुभ्यं होमाश्रयो मन्त्रगणो ग्रहाणाम् ॥ हुतेन येनानघमानवानां कामानभीष्टान्प्रदिशन्ति लोके ॥ २७ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे होममन्त्राध्यायो नाम द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥ मार्कण्डेय उवाच ॥ ध्रुवस्थाननिविष्टानां देवतानां पृथक्पृथक् ॥ दक्षिणार्थे प्रदातव्यं सर्वेषामेव काञ्चनम् ॥ १ ॥ रक्तां वत्सयुतां धेनुं दद्यादर्काय पार्थिव ॥ शङ्खं दद्यान्नरेन्द्रेण दक्षिणार्थं निशाभृतः ॥ २ ॥ रक्तवर्णोह्यनड्वाँश्च दातव्यः क्षितिजस्य तु ॥ काञ्चनीं स्वां प्रतिकृतिं बालक्रीडनकानि च ॥ ३ ॥ बुधाय राजन्देयानि दक्षिणार्थे विशेषतः ॥ क्षौमं दुकूलं कार्पासवासांसि गुरवे तथा ॥ ४ ॥ सितवर्णं च तुरगं भार्गवाय प्रदापयेत् ॥ कृष्णां धेनुं सवत्सां च दद्यात्सूर्यसुताय वै ॥ ५ ॥ उष्णीषं लोहदण्डश्च दातव्यो नृप राहवे ॥ छागश्च केतवे देयं कुतपं च नराधिप ॥ ६ ॥ कृत्तिकानां तु कनकं दातव्यं भूतिमिच्छता ॥ सर्वबीजानि देयानि रोहिणीनां तथैव च ॥ ७ ॥ दोग्ध्रीं धेनुश्चेल्वलानामनड्वाहं च राहवे ॥ आदित्याय शुभं वस्त्रं पुष्याय कनकं घृतम् ॥८॥ सार्पाय वृषभं दद्याद्रुक्मशृङ्गं महीपते ॥ पित्र्यस्य च तिलान्दद्याद्वायव्यस्य च चामरम् ॥९॥ भाग्यस्य देया गन्धाश्च आर्यम्णस्य च काञ्चनम् ॥ हस्तस्य कुञ्जरं दद्यात्कनकं वा महीपते ॥१०॥ त्वाष्ट्रस्य वृषभं दद्यादैन्द्राग्नस्य नराधिप ॥ वस्त्राणि चैव मैत्रस्य शाक्रस्य कनकं तथा ॥११॥ दद्यान्मूलस्य मूलानि फलानि विविधानि च ॥ आप्यस्य दधिपात्राणि शकटं वासवस्य च ॥१२॥ तथा चन्दनकाष्ठञ्च वारुणस्य प्रदापयेत् ॥ अजमाजस्य दातव्यमाहिर्बुध्न्यस्य चौदनम् ॥ १३ ॥ धेनुं पौष्णस्य तुरगमाश्विनस्य तथैव च ॥ तिलधेनुश्च याम्यस्य दद्यात्पापापनुत्तये ॥ १४ ॥ कुञ्जरं च तथैवोष्ट्रं रथं शकटमेव च ॥ हयमश्वतरं चैव नरयानं च पार्थिव ॥ १५ ॥ प्राच्यादीनां क्रमाद्दद्याद्दक्षिणाश्च नराधिप ॥ सागराणां च दातव्यं कनकं भूरिदक्षिणम् ॥ १६ ॥ नक्षत्राणां ग्रहाणाञ्च दिशाञ्च मनुजेश्वर ॥ यदुक्तमत्र तद्देयं देवतानां पृथक्पृथक् ॥ १७ ॥ उक्ताभावे च दातव्या धेनुः पार्थिवसत्तम ॥ प्रत्येकस्य महाभाग

शुभा कांस्योपदोहना ॥ १८ ॥ दोग्ध्री सवत्सा शीलाढ्या वस्त्ररत्नोपशोभिता ॥ रुक्मशृङ्गैः खुरै रौप्यैर्मुक्तालांगूलभूषिता ॥ १९ ॥ ततो विसर्जनं कार्यं पूर्वोक्तविधिना नृप ॥ दधिक्षीरघृतप्रायं तथा त्रिमधुरान्वितम् ॥ २० ॥ भोजयेद्ब्राह्मणान्भक्त्या प्रत्येकस्य नराधिप ॥ यथाशक्त्या महाराज तेषां दद्याच्च दक्षिणाम् ॥ प्रयतस्ताँश्च याचेत पूजितान्प्रीणनं बुधः ॥ २१ ॥ एतावदुक्तं तव शान्तिकर्म समस्तपापप्रशमाय राजन् ॥ कर्त्तव्यमेतत्प्रयतेन शक्त्या न वित्तशाठ्येन न मायया च ॥ २२ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे दक्षिणाध्यायो नाम त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥ ॥ छ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ एवं शान्त्यवसाने तु यजमानस्य याजकः ॥ हृदि विन्यस्य दर्भाग्रान्स्थितान्स्वे दक्षिणे करे ॥ १ ॥ कुर्यात्प्रतिसराबन्धं तन्मे निगदतः शृणु ॥ बद्धप्रतिसरस्यास्य सर्वे नश्यन्तु राक्षसाः ॥ २ ॥ ध्रुवस्त्वा मूर्ध्वतः पातु पूर्वतः पातु भास्करः ॥ भौमो दक्षिणतः पातु पश्चात्पातु शनैश्चरः ॥ ३ ॥ उत्तरेण बुधः पातु केतुः पातु तथा ह्यधः ॥ पूर्वदक्षिणतः शुक्रो दक्षिणापरतस्तमः ॥ ४ ॥ पश्चिमोत्तरतश्चन्द्रो जीवः प्रागुत्तरेण तु ॥ उक्तसन्धिषु सर्वाणि नक्षत्राणि तवानघ ॥ ५ ॥ स्वांस्वां दिशमधिष्ठाय तव नित्यं दिगीश्वराः ॥ रक्षन्तु सर्वदुष्टेभ्यः शक्रवह्निपुरोगमाः ॥ ६ ॥ शात्रवाणां च चोराणां व्याधीनां पातकस्य च ॥ अमङ्गलानां घोराणामरिष्टानां तथैव च ॥ ७ ॥ दुस्स्वप्नानां च घोराणां चिन्तितानां तथा मृषा ॥ वज्रेण नाशनं शक्रः करोतु बलसूदनः ॥ ८ ॥ दण्डेन नाशनं नित्यं विदधातु यमोन्तकः ॥ पाशेन वरुणो देवो गदया च धनेश्वरः ॥ ९ ॥ ग्रहैसन्नाहसन्नद्धो ग्रहपञ्जरमध्यगः ॥ अदृश्यः सर्वभूतानां सर्वदुःखविवर्जितः ॥१०॥ सर्वव्याधिविहीनश्च कालकर्णीविवर्जितः ॥ तथा त्वं भव दीर्घायुर्ग्रहेन्द्राणां प्रसादतः ॥११॥ रक्षन्तु ते देवगणाः समग्रा धर्मे मतिं चापि सदा दिशन्तु ॥ नाशं तथा शत्रुगणस्य चोग्रं भोगान्मनोज्ञान्विपुलाञ्च लक्ष्मीम् ॥ १२ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शान्त्यवसाने प्रतिसरबन्धाशीर्वादो नाम चतुरधिकशततमोऽध्यायः ॥ १०४ ॥ ॥ छ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ हविष्याशी ततस्तिष्ठेद्ब्रह्मचारी च तां निशाम् ॥ ग्रहशान्तिरियं प्रोक्ता मया कल्मषनाशिनी ॥ १ ॥ अनावृष्ट्यां प्रयोक्तव्या वृष्टिकामेन भूभुजा ॥ अतिवृष्ट्यां प्रयोक्तव्या वृष्टिं शमयता तथा ॥ २ ॥ यात्राकाले तथा कार्य्या रिपूणां क्षयमिच्छता ॥ रणकाले तथा कार्य्या संग्रामे जयमिच्छता ॥ ३ ॥ कर्तव्या चाभिचारार्थं शत्रूणां मनुजेश्वर ॥ पुष्टिकामैर्नरैः कार्य्या विद्याकामैस्तथैव च ॥ ४ ॥

१ 'शत्रव इति क० । २ 'ग्रहसंन्यास' इति क० ।

लाभार्थं च तथा वैश्यैः शूद्रैर्धर्म्मफलेप्सुभिः ॥ राज्यकामेन कर्तव्या राजपुत्रेण पार्थिव ॥ ५ ॥ तथा बन्धनमोक्षार्थं बद्धेन च महीपते ॥ स्थानच्युतेन कर्तव्या स्थानलब्धिमथेच्छता ॥ ६ ॥ व्याधितेन च कर्तव्या व्याधेः प्रशममिच्छता ॥ मारके च तथा कार्य्या मारकक्षयमिच्छता ॥ ७ ॥ पराभिचारशङ्कायां ग्रहशान्तिं प्रयोजयेत् ॥ दिव्यान्तारिक्षभौमानामुत्पातानां तथोद्भवे ॥ ८ ॥ ग्रहाधीना नरेन्द्राणामुच्छ्रायाः पतनानि च ॥ भावाभावौ च जगतां ग्रहायत्तौ नराधिप ॥ ९ ॥ ब्रह्मणैषां वरो दत्तः पूजिताः पूजयिष्यथ ॥ तस्मात्सर्वप्रयत्नेन नृणां पूज्यतमा ग्रहाः ॥ १० ॥ गुरुभक्तस्य दान्तस्य धर्मार्जितधनस्य च ॥ पूजकस्य ग्रहेन्द्राणां सदा सानुग्रहा ग्रहाः ॥११॥ मानवस्यास्वतन्त्रस्य गोब्राह्मणहितस्य च ॥ मांसभक्षणहीनस्य सदा सानुग्रहा ग्रहाः ॥ १२ ॥ ये भक्ताः पुण्डरीकाक्षं देवदेवं जनार्दनम् ॥ नास्ति तेषां जगत्यस्मिन्दोषो ग्रहकृतो नृणाम् ॥ १३ ॥ यथा बाणप्रहाराणां कवचं वारणं भवेत् ॥ तथा दैवोपघातानां शान्तिर्भवति वारणम् ॥१४॥ ग्रहयागविधिं सम्यग्यश्चाधीते नराधिप ॥ ग्रहपापकृतं चैव तस्यापि न भविष्यति ॥ १५ ॥ अतीव विस्तरेणेयं ग्रहशान्तिरुदाहृता ॥ धन्या यशस्या चायुष्या सर्वकिल्बिषनाशिनी ॥ १६ ॥ प्रयुञ्जतः सम्यगिमां नरेन्द्र न जातु लोके भयमस्ति किञ्चित् ॥ आरोग्यमासाद्य चिरं च जीवेत्प्राप्नोति लक्ष्मीं सकलांश्च भोगान् ॥ १७ ॥ इति श्रीविष्णुधर्म्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे ग्रहशान्तिफलवर्णनो नाम पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥ ॥ वज्र उवाच ॥ ध्रुवस्याहं द्विजश्रेष्ठ ब्राह्मणानां पृथक्पृथक् ॥ सम्भवं श्रोतुमिच्छामि नक्षत्राणां च मानद ॥ १ ॥ ॥ मार्कण्डेय उवाच ॥ ब्रह्मणा सृष्टिकामेन पूर्वमेव नराधिप ॥ आदित्यस्तमसां हन्ता तेजसां गोलकः कृतः ॥२॥ तमोमयो गोलकश्च राहुस्तेन तथा कृतः ॥ अम्मयानि तथान्यानि गोलकानि नराधिप॥३॥ कृतानि तेन धर्म्मज्ञ ग्रहर्क्षाणां पृथक्पृथक् ॥ ध्रुवस्थाननिविष्टाश्च तारकाश्च चतुर्दश ॥ ४ ॥ तेषां नामविभागं मे गदतः शृणु पार्थिव ॥ उत्तानपादस्तस्याथ विज्ञेयः सोत्तरो हनुः ॥ ५ ॥ यज्ञोऽधरस्तु विज्ञेयो धर्मो मूर्धानमाश्रितः ॥ हृदि नारायणः साध्यावश्विनौ पूर्वपादयोः ॥ ६ ॥ वरुणश्चार्यमा तस्य पश्चिमे चैव सक्थिनी ॥ शिश्नः संवत्सरस्तस्य मित्रोऽपानं समाश्रितः ॥ ७ ॥ पुच्छेग्निश्च महेन्द्रश्च मारीचः कश्यपो ध्रुवः ॥ ध्रुवस्थास्तुग्रहर्क्षाणाम्मेढीभूतः प्रकीर्तितः ॥ ८ ॥ ध्रुवेण भ्राम्यते सर्वमायत्तं त्रिदिवं ध्रुवे ॥ ध्रुवो हि भगवान्विष्णुः कालो लोकप्रकालनः ॥ ९ ॥ शिशुमारनिबद्धानां तारकाणां पृथक्पृथक् ॥ नामधेयानि विज्ञाय

१ 'मया तु त्रिदिवे श्रुतम्' इति ख० ।

दृष्ट्वा च विमलेऽम्बरे ॥ १० ॥ आयुरभ्यधिकं जीवेद्वर्षाणि तु चतुर्दश ॥ अहोरात्रकृतात्पापात्तत्क्षणादेव मुच्यते ॥ ११ ॥ आम्मयानां ग्रह
र्क्षाणां मूर्च्छिताः सूर्य्यरश्मयः ॥ जनयन्ति प्रकाशत्वं नात्र कार्य्या विचारणा ॥ १२ ॥ स्फाटिकानि विमानानि तथा सुकृतिनां नृप ॥ नाके
तारकबद्धानि अम्मयानीव यादव ॥ १३ ॥ ग्रहर्क्षाणि समस्तानि ध्रुवश्च भगवांस्तथा ॥ कल्पस्थायीनि राजेन्द्र नात्र कार्य्या विचारणा ॥
॥ १४ ॥ तेषां तदभिमानिन्यो देवता यदुनन्दन ॥ मन्वन्तरादौ जायन्ते न भवन्ति पुनःपुनः ॥ १५ ॥ औत्तानपादिर्धर्मात्मा ध्रुवस्तेष्वपि
यादव ॥ स्वायम्भुवेन्तरे जातस्तिष्ठत्याभूतसंप्लवम् ॥ १६ ॥ तस्य ते जन्म वक्ष्यामि सर्वकल्मषनाशनम् ॥ पूर्वं ब्रह्मा महीपाल सिसृक्षुर्विविधाः
प्रजाः ॥ १७ ॥ द्विधा कृत्वात्मनो देहमर्धेन पुरुषोऽभवत् ॥ अर्धेन नारी तस्यासीद्विराजमसृजत्प्रभुः ॥ १८ ॥ विराडसृजत्पुरुषं पुरुषो मनु
रुच्यते ॥ यस्यैकसप्ततिगुणं मन्वन्तरमिहोच्यते ॥ १९ ॥ प्रियव्रतोत्तानपादौ मनोः पुत्रावुभौ स्मृतौ ॥ क्षत्रप्रवर्त्तकौ तौ तु पूर्वे मन्वन्तरे
स्मृतौ ॥ २० ॥ उत्तानपादपुत्रस्तु ध्रुवो विष्णुः प्रकीर्तितः ॥ निबद्धो भ्राम्यते यत्र मरुतां ज्योतिषां गणः ॥ २१ ॥ सप्तर्षि
मण्डलं नित्यं तस्याधस्तात्प्रकीर्तितम् ॥ मरीचिश्च वसिष्ठश्च अङ्गिराश्चात्रिरेव च ॥ २२ ॥ पुलस्त्यः पुलहश्चैव क्रतु
स्सप्तर्षयोऽमलाः ॥ वशिष्ठमाश्रिता साध्वी तेषाम्मध्यादरुन्धती ॥ २३ ॥ तस्याधस्ताद्भचक्रञ्च तस्याधस्ताच्छनैश्चरः ॥ तस्याधस्तात्तथा
जीवस्तस्याधस्तात्कुजः स्मृतः ॥ २४ ॥ तस्याधस्ताद्दिनेशश्च तस्याधस्ताच्च भार्गवः ॥ तस्याधस्ताद्बुधः प्रोक्तस्तस्याधस्ताच्च चन्द्रमाः ॥
॥ २५ ॥ प्राग्दक्षिणगतिश्चैव ज्योतिषां चक्रमुच्यते ॥ सर्वे ग्रहाः प्राग्गतयस्तुल्यवेगाः प्रकीर्तिताः ॥ २६ ॥ शीघ्रत्वेनोपचर्यन्ते यथा
सन्नं महीपते ॥ यथा यथा विशिष्टाश्च तथा मन्दाः प्रकीर्त्तिताः ॥ २७ ॥ तेषां ते सम्भवं वक्ष्ये प्राप्ते वैवस्वतेऽन्तरे ॥ तेषां जननसाहस्रैरतीतैः किं
प्रयोजनम् ॥ २८ ॥ अनादिनिधनः श्रीमान्विष्णुर्नारायणः प्रभुः ॥ स एव देवकार्यार्थं भूत्वा द्वादशधा पुरा ॥ २९ ॥ अदितेर्जनयामास
ह्यात्मानं कश्यपात्प्रभुः ॥ तेषां तु मध्यात्सविता आदित्यस्य च देवता ॥ ३० ॥ प्रोक्तं ते सवितुर्जन्म शृणु चन्द्रमसस्ततः ॥ दशभ्यश्च दिशाभ्यश्च
तथात्रेः सुमहात्मनः ॥ ३१ ॥ विष्णुरेवाभवद्राजन्पुत्रः स मृगलाञ्छनः ॥ दाक्षायणी वसोर्नाम पत्नी धर्मस्य विश्रुता ॥ ३२ ॥ जनयामास धर्मज्ञं
वसुमध्ये निशाकरम् ॥ श्रीसहायस्तथा जातः सोमश्चामृतमन्थनात् ॥ ३३ ॥ प्राकाम्येन शशाङ्कस्य जन्म तेऽभिहितं त्रिधा ॥ अतः परं प्रवक्ष्यामि
तव भौमस्य सम्भवम् ॥ ३४ ॥ आसीद्दैत्यो हिरण्याक्षो महाबलपराक्रमः ॥ स वै कन्यामजनयद्विकेशीं नाम नामतः ॥ ३५ ॥ सा लेभे तपसा

केशाँस्तां वै स्थाणुरकामयत् ॥ तस्यां मैथुनसक्तस्य देवेशस्य पिनाकिनः ॥ ३६॥ वह्निसम्भवभीतेन कृतो विघ्नो ह्यथाग्निना ॥ प्रविष्टं मैथुनागारं वह्निं दृष्टवतस्तदा ॥ ३७ ॥ क्रोधायासोद्भवः स्वेदो हरस्य समपद्यत ॥ आननस्वेदजो बिन्दुर्देवस्यामित्रघातिनः ॥ ३८ ॥ तस्याः पपात वदने सा पपौ तत्प्रयत्नतः ॥ अन्तर्वत्न्यथ तेनासीन्न शशाक च तेजसा॥३९॥मोहिता तस्य बालस्य गर्भं धारयितुं तदा॥ उत्ससर्जाथ तं गर्भं दीप्तानलसम द्युतिम् ॥ ४० ॥ तं दधार महीपाल धरा देवीस्वरूपिणी ॥ संस्कारमकरोच्चास्य स्वयमेव च कश्यपः ॥ ४१ ॥ अङ्गारनिकटस्थत्वान्नाम्ना चाङ्गारकः कृतः ॥ उक्तं ते जन्म भौमस्य बुधस्यातः परं शृणु ॥४२॥ कश्यपस्य धनुर्नाम पत्नी त्रैलोक्यविश्रुता ॥ जनयामास तनयं रजोनामेति विश्रुतम् ॥ ४३ ॥ सोऽकामयत वै कन्यां वरुणस्य महात्मनः ॥ वारुणीमिति विख्यातां त्रैलोक्यस्यैकसुन्दरीम् ॥ ४४ ॥ ततस्तपश्च तेजश्च बलं वीर्यं तथैव च ॥ शुल्कार्थं स ददौ तस्यै तानादाय वराङ्गना ॥ ४५ ॥ अप्सु लीना तदा जाता पतसोग्रेण दानवः ॥ तामप्सु लीनां विज्ञाय प्रविवेशोदकं तदा ॥ ४६ ॥ तस्याः स्पर्शोपलम्भेन द्रवीभूतः स दानवः ॥ द्रवतां समनुप्राप्तां तां विज्ञाय निशाकरः ॥ ४७ ॥ ममन्थ सहसा तोयं पुत्रार्थी मनुजेश्वर ॥ मथ्यमाने जले तेन तदा सोमेन पार्थिव ॥ ४८ ॥ विवेश तेजसि पयो विष्णुर्देवनमस्कृतः ॥ ततः कुमारस्सञ्जातो बुधस्तु ग्रहबोधनः॥४९॥तद्दधार तदा तारा गुरुपत्नी यशस्विनी॥ यदा धारयितुं शक्ता न बालं तेजसान्वितम्॥५०॥दाक्षायणी चोत्ससर्ज चन्द्रपत्नी सुतं तदा ॥ एवं जन्म बुधस्योक्तं जीवस्यातः परं शृणु ॥५१॥सुरूपा नाम दुहिता मारीचेस्तु प्रजापतेः॥दत्ता त्वङ्गिरसे सा तु रूपयौवनशालिनी॥५२॥ तस्यां स जनयामास देवाचार्यं बृहस्पतिम् ॥ बृहद्वाचं महाबुद्धिं वेदवेदाङ्गपारगम् ॥ ५३ ॥ उक्तं ते जन्म जीवस्य शुक्रस्यातः परं शृणु ॥ उषा नाम तथा कन्या हिरण्यकशिपोस्सुता ॥ ५४ ॥ भृगुपत्नी विशालाक्षी सर्वलोकैकसुन्दरी ॥ जनयामास धर्मज्ञं ख्यातमौशनसं प्रभुम् ॥ ५५ ॥ स जहाराथ योगात्मा धनं वैश्रवणस्य तु ॥ हृते वित्ते तु यक्षेशो जगाम शरणं हरम् ॥ ५६ ॥ ततः क्रुद्धो महादेवो भार्गवं हन्तुमुद्यतः ॥ भार्गवोऽपि च योगेन प्रविवेश हरं तदा ॥ ५७ ॥ हरोदरस्थस्तुष्टाव देवीं पर्वतनन्दिनीम् ॥ तयोक्तस्तं तु तत्याज तदा शिश्नेन शङ्करः ॥ ५८ ॥ शुक्रस्तु नाम चैवास्य तदा चक्रे जगद्गुरुः ॥ धनेशत्वं ददौ चास्य धनेशेन सहानघ ॥ ५९ ॥ मैत्र्यं चास्य धनेशेन तथा चक्रे त्रिलोचनः ॥ शनैश्चरस्य वक्ष्यामि जन्मातस्ते नरेश्वर ॥ ६० ॥ ब्रह्मणो मानसः पुत्रस्त्वष्टा नाम प्रजापतिः ॥ संज्ञां तु जनयामास कन्यां त्रैलोक्यसुन्दरीम् ॥ ६१ ॥ तां ददौ सवितुः पत्नीं तस्यां सूर्यो महातपाः ॥ जनयामास धर्मज्ञं मनुं वैवस्वतं प्रभुम् ॥ ६२॥

यमं च यमुनां चैव त्रैलोक्यस्यैकपालिनीम् ॥ तेषु जातेषु पुत्रेषु संज्ञा सा चारुलोचना ॥ ६३ ॥ भर्तुस्तेजोऽतिदुर्धर्षमसहन्ती वराङ्गना ॥ सा तु च्छायां समाहूय इदं वचनमब्रवीत् ॥ ६४ ॥ मद्रूपेण त्वया भद्रे वस्तव्यमविकारया ॥ पालनीयौ च मे पुत्रौ त्वयेमौ दुहिता च मे ॥ ६५ ॥ एवमुक्त्वा ययौ देवी पितरं वरवर्णिनी ॥ पित्रा निरस्ता भर्तारं गच्छगच्छेति भाषिता ॥ ६६ ॥ उत्तरांस्तु कुरून्गत्वा वडवारूपधारिणी ॥ चचार शाद्वलान्छुभ्रान्वनेषूपवनेषु च ॥ ६७ ॥ छायायां च तथार्कोऽपि संज्ञेयमिति चिन्तयन् ॥ द्वौ पुत्रौ जनयामास सावर्णं तु शनैश्चरम् ॥ ६८ ॥ वज्र उवाच ॥ कथं तामाप्तवान्संज्ञां भूय एव दिवाकरः ॥ एतन्मे संशयं ब्रूहि भृगुवंशविवर्धन ॥ ६९ ॥ मार्कण्डेय उवाच ॥ पुत्रयोः सूतपुत्राँस्तु यथा छायानुवर्तते ॥ न तथा वर्तते देवी संज्ञासूतेषु भामिनी ॥ ७० ॥ ततः कदाचित्तां क्रुद्धः संततर्ज तदा यमः ॥ तं शशाप तदा च्छाया पादस्ते पततामयम् ॥ ७१ ॥ यमः शशंस तत्सर्वं पितुः परबलार्दनः ॥ श्रुत्वा यमस्य वचनं यमं प्रोवाच भास्करः ॥ ७२ ॥ कृमयो मांसमादाय तथा यास्यन्ति भूतलम् ॥ एवं शाप्येच्च शापस्ते त्वं च त्रातो भविष्यसि ॥ ७३ ॥ एतच्छ्रुत्वा पितुर्वाक्यं चकार सुमहत्तपः ॥ आराधयामास तदा देवदेवं जनार्दनम् ॥ ७४ ॥ तस्मात्स लेभे धर्मात्मा धर्मराजत्वमञ्जसा ॥ सूर्योऽप्यविन्दँस्तत्त्वेन पुत्रशापस्य कारणम् ॥७५॥ क्रोधाविष्टस्तदा छायां पप्रच्छामित्रघातनः॥ शशंस तस्य सा सर्वं यथावृत्तमनिन्दिता ॥७६॥ श्रुत्वा तु वचनं तस्यास्त्वष्टुर्वेश्मागमद्रविः ॥ न ददर्श च तत्रस्थां तां भार्यां शुभचारिणीम् ॥ ७७ ॥ त्वष्ट्रा चाशंसितं तस्य वडवारूपधारिणी ॥ असहन्ती तु तेजस्ते कुरूनावसते शुभा ॥ ७८ ॥ भ्रमिमावेश्य देवेशं त्वष्टापि जगतां पतिम् ॥ तेजसः शातनं चक्रे देवस्य सवितुस्तदा॥७९ ॥ कीर्णे तेजसि तद्रूपं भृशं कान्ततरं स्थितम् ॥ शीर्णेन तेजसा चक्रं त्वष्टा चक्रे जगद्गुरोः ॥ ८० ॥ सुदर्शनमिति ख्यातं देवस्य हरिमेधसः ॥ कान्तरूपस्तु सविता हयरूपधरस्तदा ॥ ८१ ॥ उत्तरांस्तु कुरून्गत्वा वडवारूपधारिणीम् ॥ स्वां ददर्श तदा भार्यां शीतलद्व्यसंयुताम् ॥८२ ॥ मैथुनार्थी तु तां देवो जगाम त्वरितस्तदा ॥ वेगवन्तं तु सम्प्राप्तं दृष्ट्वा तुरगमुत्तमम् ॥ ८३ ॥ व्यचेष्टत च सा देवी परपुंसोपशङ्कया ॥ मुखे च भावयामास तां सूर्यो दीप्तदीधितिः ॥ ८४ ॥ तस्या नासापुटौ पूर्णौ तदा शुक्रेण पार्थिव ॥ तथा तस्यास्तदा जातौ नासत्यावश्विनावुभौ ॥ ८५ ॥ भूमौ च पतितं यच्च ताभ्यां शुक्रं विमर्दितम् ॥ तस्मात्सोऽश्वात्समुत्पन्नः कुमारः सूर्यसन्निभः ॥ ८६ ॥ ततः स्वरूपमास्थाय देवदेवोऽपि भास्करः ॥ स्वरूपिणीमथादाय संज्ञां तां स्वगृहं ययौ ॥ ८७ ॥ नासत्यौ देवभिषजौ कृतवानश्विनावुभौ ॥ ततो विमर्दनाज्जातं पुत्रं

दृष्ट्वा दिवाकरः ॥८८॥ रेवन्तेति तदा तस्य नाम चक्रे जगद्गुरुः ॥ तं च पुत्रमुवाचाथ सूर्यो ग्रहगणेश्वरः ॥८९॥ यस्मात्सोऽश्वात्समुत्पन्नो मत्तस्त्व
दीप्तदीधितिः ॥ पूजामाप्स्यसि सोऽश्वेभ्यस्तस्मान्नित्यं जगत्प्रियः ॥ ९० ॥ ये च त्वां पूजयिष्यन्ति तेषां वृद्धिर्भविष्यति ॥ शनैश्चरस्य ते जन्म
मयोक्तं नृपसत्तम ॥ ९१ ॥ अतः परं प्रवक्ष्यामि राहोर्जन्म तथानघ ॥ दाक्षायणी सिंहिकाख्या भार्या वै कश्यपस्य तु ॥९२॥ अकाले वरयामास
भर्तारं तपसान्वितम् ॥ भगन्पुत्रकामाहं तं प्रयच्छ ममानघ॥९३॥ अकालयाच्ञासंक्रुद्धस्तां जगाद स कश्यपः ॥ दैत्यदानवसंकाशं पुत्रं त्वं जनयि
ष्यसि॥९४॥राहुं सा जनयामास वरदानान्महात्मनः॥अतः परं प्रवक्ष्यामि केतोस्ते जन्म पार्थिव॥९५॥प्रजानां महतीं वृद्धिं दृष्ट्वा देवः पितामहः ॥
क्षये तासां तदा चक्रे बुद्धिं बुद्धिमतां वरः ॥ ९६ ॥ क्षयं चिन्तयतस्तस्य प्रजानां मनुजेश्वर ॥ प्रादुर्भूता ततः कन्या मृत्युर्नामेति विश्रुता ॥ ९७ ॥
तां जगाद तदा ब्रह्मा प्रजाः संहर शोभने ॥ सा तथोक्ता तदा तेन रुरोद वरवर्णिनी ॥ ९८ ॥ तदाश्रुबिन्दुभिर्जाता व्याधयोऽथ सहस्रशः ॥ दृष्ट्वा
व्याधीन्समुत्पन्नान्संहृत्याश्रूणि भामिनी ॥ ९९ ॥ सुदुश्चरं तपस्तेपे पुष्करारण्यमाश्रिता ॥ स्थानेषु च तथान्येषु बहून्वर्षगणाञ्छुभा ॥ १०० ॥
भूयो जगाद तां ब्रह्मा प्रजाः संहर शोभने ॥ मयोक्तं यत्पुरा भद्रे तत्तथा न तदन्यथा ॥ १०१ ॥ तपसा ते वरं ग्राह्यं तदाचक्ष्व सुशोभने ॥ नृणां
निमित्तं मरणे लोके यास्यति दोषतः ॥ १०२ ॥ न कश्चिद्दोषतो मन्ता त्वां कदाचिदपि ध्रुवे ॥ एवमुक्ता तदा तेन ब्रह्मणा सा शुभानना ॥१०३॥
दीर्घमुष्णं च निःश्वासं मुमोच वरवर्णिनी॥ कृष्णसर्पसमाकारस्तस्मात्केतुरजायत॥१०४॥ शिखिदीप्तशिखो राजन्कालानलसमप्रभः ॥ धूमप्रभस्य
तस्याथ केतुरूपस्य पार्थिव ॥ १०५ ॥ संज्ञां चकार सर्वात्मा देवदेवः पितामहः ॥ धूमकेतुरयं नाम्ना भविष्यति जगत्त्रये ॥ १०६ ॥ दर्शयिष्यति
लोकानां तथैव च शुभाशुभम् ॥ दिव्यन्तरिक्षे भुवि चैक एषः सन्दृश्यते धूमकेतुर्महात्मा ॥ संस्थानरूपैस्तु बहुप्रकारैः शुभाशुभं दर्शयन्मानुषा
णाम् ॥ १०७ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे ग्रहसम्भवो नाम षडुत्तरशततमोऽध्यायः ॥ १०६ ॥ मार्कण्डेय उवाच ॥
पूर्वं ब्रह्मा महीपाल सिसृक्षुर्विविधाः प्रजाः ॥ अभ्ययुङ्क्त तदात्मानं तस्य युक्तस्य पार्थिव ॥ १ ॥ ततोऽस्य जघनात्पूर्वमसुराञ्जज्ञिरे सुतान् ॥
असुः प्राणः स्मृतो विप्रैस्तज्जन्मानस्ततोऽसुराः ॥२॥ यथा सृष्टाः सुरास्तन्वा तां तनुं सोव्यपोहत ॥ अव्यक्तं तत्त्वबहुलं ततस्तान्सोभ्ययुञ्जत ॥३॥
ततस्तान्युञ्जमानस्य प्रियमासीत्प्रभोः किल ॥ ततो मुखात्समुत्पन्ना दिव्यतस्तस्य देवताः ॥ ४ ॥ उत्पन्ना दिव्यतस्तस्माद्देवास्तेन ततः स्मृताः ॥
धातुर्देवीति यत्प्रोक्तं क्रीडार्थं संविभाव्यते ॥५॥ तस्माद्देव्यान्तु तन्वायां जज्ञिरे तस्य देवताः ॥ देवान्दृष्ट्वा ततः सो वै तनुमन्यां प्रपद्यत ॥६॥

सत्त्वमात्रात्मिकामेव तनुं तां सोऽभ्ययुञ्जत ॥ पितेव मन्यमानस्तान्सुतान्प्रध्याय स प्रभुः ॥ ७ ॥ पितरो ह्युपपक्षाभ्यां मध्ये रात्र्यह्नयोः पुरा ॥
तस्मात्ते पितरो देवाः पितृत्वं तेषु तत्स्मृतम् ॥ ८ ॥ यया सृष्टास्तु पितरस्तनुं तां स व्यपोहत ॥ सापविद्धा तनुस्तेन सद्यः संध्या व्यजायत॥९॥
तस्मादहर्देवतानां रात्रिः स्यादासुरी मता ॥ तयोर्मध्ये तु पितरः सा तनुस्तु गरीयसी ॥ १० ॥ तस्माद्देवासुराश्चैव ऋषयो मानवास्तथा ॥
युक्तास्ते तामुपासन्ते तथा विष्णोर्यदन्तरम् ॥ ११ ॥ तस्माद्रात्र्यह्नयोः सन्धावुपासन्ते द्विजास्तु ताम् ॥ ततोऽन्यस्यां पुनर्ब्रह्मा स तन्वामुप
पद्यत ॥ १२ ॥ राजसत्त्वात्मिकायां तु मनसा सोऽसृजत्प्रभुः ॥ मनसा तु ततस्तस्य प्रजानाञ्जज्ञिरे प्रजाः ॥ १३ ॥ मनसा च मनुष्यास्ते
जननात्प्रथिताः प्रजाः ॥ सृष्ट्वा पुनः प्रजाः सौम्य स्वां तनुं सोऽव्यपोहत ॥ १४ ॥ सापविद्धा तनुस्तेन ज्योत्स्ना
सद्यः प्रजायत ॥ तस्माद्भवन्ति संहृष्टा ज्योत्स्नाया उद्भवे प्रजाः ॥ १५ ॥ तामुत्सृज्य ततो ज्योत्स्नां ततोऽन्यां प्राविशत्पुनः ॥
मूर्तिं रजस्तमासक्तां ततस्तां सोभ्ययुञ्जत ॥ १६ ॥ ततोऽन्यास्सान्धकारे तु क्षुधाविष्टाः प्रजाः सृजन् ॥ ताः सृष्ट्वा तु क्षुधाविष्टा अंगुल्या दातु
मुद्यताः ॥ १७ ॥ अंभांस्येतानि रक्षाम उक्तवन्तस्तु तेषु ये ॥ राक्षसास्ते स्मृतास्तस्मात्क्षुधात्मानो निशाचराः ॥ १८ ॥ ध्रुवं क्षणोमि ये
म्भांसि तेषु दृष्ट्वा परस्परम् ॥ तेन ते कर्मणा यक्षा गुह्यकाः क्रूरकर्मिणः ॥ १९ ॥ रक्षणे पालने चापि धातुरेव विभाव्यते ॥ यक्ष इत्येष धातुर्वै
क्षेपणे सन्निरुध्यते ॥ २० ॥ रक्षणाद्रक्ष इत्युक्ताः क्षपणाद्यक्ष उच्यते ॥ तान्दृष्ट्वा तत्क्षणेनास्य केशाः शीर्यन्त धीमतः ॥ २१ ॥ ते शीर्णा
श्च्युत्थिता ह्यूर्ध्वमारोहन्त ततः पुनः ॥ सर्पणात्तु स्मृताः सर्पाः पन्नत्वात्पन्नगाः स्मृताः ॥ २२ ॥ बालात्मानः स्मृता व्याला हीनत्वाच्चाहयः
स्मृताः ॥ पन्नत्वात्पन्नगाश्चापि सर्पास्तेऽपायसर्पणात् ॥ २३ ॥ तेषां लयाः पृथिव्यापः सूर्याचन्द्रमसौ वनाः ॥ तस्य क्रोधोऽभवद्धूममग्निगर्भः
सुदारुणः ॥ २४ ॥ स तान्सर्पान्समुत्पन्नानाविवेश विषात्मकान् ॥ सर्पान्दृष्ट्वा ततः क्रोधात्क्रोधात्मानो विनिर्ममे ॥ २५ ॥ गां धयन्तस्ततो
दृष्ट्वा गन्धर्वा अग्निरेतसः ॥ धय इत्येष धातुर्वै पाने ह्येष निरुध्यते ॥ २६ ॥ पिबन्तो जज्ञिरे वाचा गन्धर्वास्तेन ते स्मृताः ॥ कर्णेन कपिला
भूत्वा पिशाचाः कपिशा ह्यलम् ॥ २७ ॥ भूतत्वात्ते स्मृता भूताः पिशाचाः पिशिताशिनः ॥ अष्टासु तासु सृष्टासु देवयोनिषु स प्रभुः ॥ २८ ॥
ततः स्वच्छन्दतोऽन्यानि वयांसि वयसा सृजन् ॥ पक्षिणः स तु दृष्ट्वा वै ततः पशुगणान्सृजन् ॥ २९ ॥ मुखतोऽजाः सृजन्सो वै वक्षसश्चा
वयोऽसृजत् ॥ गावश्चैवोदराद्ब्रह्मा पुनरन्यांश्च निर्ममे ॥ ३० ॥ पादतोऽश्वांस्तुरङ्गांश्च रासभान्गवयान्मृगान् ॥ उष्ट्रांश्चैव वराहांश्च श्वानानन्यांश्च

जातयः ॥ ३१ ॥ ओषध्यः फलमूलिन्यो रोमभिस्तस्य जज्ञिरे ॥ एवंविधौषधीः सृष्ट्वा न्ययुजत्सोऽध्वरेषु ताः ॥ ३२ ॥ अस्य त्वादौ तु कल्पस्य त्रेतायुगमुखे पुरा ॥ गौरजः पुरुषोथाविरथाश्वतरगर्दभाः ॥ ३३ ॥ एते ग्राम्याः स्मृताः सप्त आरण्याः सप्त चापरे ॥ महिषो गवयो ष्ट्रस्तु द्विखुरः शरभो द्विपः ॥ ३४ ॥ मर्कटः सप्तमस्तेषामारण्याः पशवस्तु ते ॥ गायत्रीं च ऋचं चैव त्रिवृत्स्तोमं रथन्तरम् ॥ ३५ ॥ अग्निष्टोमं च यज्ञानां निर्ममे प्रथमान्मुखात् ॥ यज्ञोऽपि त्रैष्टुभं छन्दः स्तोमं पञ्चदशस्तथा ॥ ३६ ॥ बृहत्साम तथोक्तं च दक्षिणात्सोऽसृजन्मुखात् ॥ सामानि जगती चैव स्तोमं सप्तदशं तथा ॥ ३७ ॥ वैरूप्यमतिरात्रं च पश्चिमात्सोऽसृजन्मुखात् ॥ अथर्वमेकविंशं च त्रिष्टुब्वैराजमेव च ॥ अप्तुर्यामं च यज्ञानां चोत्तरात्सोऽसृजन्मुखात् ॥ ३८ ॥ विद्युतोऽशनिमेघांश्च रोहितेन्द्रधनूंषि च ॥ ३९ ॥ सृष्ट्वा चतुष्टयं पूर्वं देवर्षिपितृमानवान् ॥ ततोऽसृजत्स भूतानि स्थावराणि चराणि च ॥ ४० ॥ सृष्ट्वा यक्षपिशाचांश्च गन्धर्वाप्सरसस्तथा ॥ नरकिन्नररक्षांसि वयःपशुमृगोरगान् ॥ ४१ ॥ अव्ययं च व्ययं चैव द्वयं स्थावरजङ्गमम् ॥ जरायुजं चाण्डजं च सस्वेदजमथोद्भिजम् ॥ ४२ ॥ भूतग्रामं संकृतवान्देवदेवश्चतुर्विधम् ॥ पशवश्च मृगाश्चैव व्यालाश्चोभयतोदतः ॥ ४३ ॥ रक्षांसि च पिशाचांश्च मनुष्याश्च जरायुजाः ॥ अण्डजाः पक्षिणः सर्पानक्रान्मत्स्यांश्च कच्छपान् ॥ ४४ ॥ यानि चैवं प्रकाराणि स्थावराणि चराणि च ॥ स्वेदजं दंशमशकयूकामक्षिकमत्कुणम् ॥ ४५ ॥ ऊष्मणश्चोपजायन्ते यच्चान्यत्किञ्चिदीदृशम् ॥ उद्भिज्जास्तरवः सर्वे बीजकाण्डप्ररोहिणः ॥ ४६ ॥ ओषध्यः फलपाकान्ता बहुपुष्पफलोपगाः ॥ अपुष्पाः फलवन्तो ये ते वनस्पतयः स्मृताः॥४७॥ पुष्पिणः फलिनश्चैव वृक्षाश्चोभयतः शुभाः ॥ प्रतानाश्चैव वल्ल्यश्च वीरुधः परिकीर्तिताः॥४८॥ गुच्छगुल्मं तु विविधं तथैव तृणजातयः ॥ बीजकाण्डरुहाण्येव प्रताना वल्ल्य एव च ॥ ४९ ॥ तमसा बहुरूपेण वेष्टिताः कर्महेतुना ॥ अनुसंज्ञा भवन्त्येते सुखदुःखसमन्विताः ॥ ५० ॥ एकदन्तास्तु गतयो ब्रह्माद्याः समुदाहृताः ॥ घोरेऽस्मिन्भूतसंसारे नित्ये सततयायिनि ॥ ५१ ॥ यं तु कर्मणि यस्मिन्स न्ययुङ्क्त प्रथमं प्रभुः ॥ तत्तदेव स्वयं तेजो युज्यमानः पुनःपुनः ॥ ५२ ॥ हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मे ऋतानृते ॥ तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते ॥ ५३ ॥ यद्यस्य सोऽददात्सर्गे स तत्तत्स्वयमाविशत् ॥ यथर्तुलिङ्गान्यृतवः स्वयमेव तु पर्यये ॥ ५४ ॥ स्वानिस्वान्यभिपद्यन्ते तथा कर्माणि देहिनाम् ॥ लोकानां तु विशुद्ध्यर्थं मुखबाहूरुपादतः ॥ ५५॥ ब्राह्मणं क्षत्रियं वैश्यं शूद्रं च निरवर्तयत्॥ आस्याद्वै ब्राह्मणा जाता बाहुभ्यां क्षत्रियाः शुभाः ॥ ५६ ॥ ऊरुभ्यां च विशः सृष्टाः शूद्रः पद्भ्यामजायत ॥ वर्णानामाश्रमाणां च धर्मं चक्रे पृथ

कृपृथक् ॥५७॥ स्वधर्मे च निविष्टानां स्थानानि व्यदधात्प्रभुः ॥ ब्रह्मलोकं ब्राह्मणानां शाक्रं क्षत्रियजन्मनाम् ॥५८॥ मारुतं च विशां स्थानं गान्धर्वं शूद्रजन्मनाम् ॥ ब्रह्मचारिव्रतस्थानां ब्रह्मलोकं प्रजापतिः ॥ ५९ ॥ प्राजापत्यं गृहस्थानां यथाविहितकारिणाम् ॥ स्थानं सप्त ऋषीणां च तथैव वनवासिनाम् ॥ ६० ॥ यतीनामकृतं स्थानं यत्रेच्छागामिनां सदा ॥ कृत्वा स सूत्रसंस्थानं प्रजागर्भं तु मानसम् ॥ ६१ ॥ अथासृजत्प्रजाकर्तॄन्मानसाँस्तनयान्प्रभुः ॥ धर्मं रुद्रं मनुं चैव सनकं च सनन्दनम् ॥ ६२ ॥ भृगुं सनत्कुमारं च रुचिं श्रद्धां तथैव च ॥ मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ॥ ६३ ॥ वसिष्ठं च महाभागं नारदं च महामुनिम् ॥ स्वभास्करान्बर्हिषदः अग्निष्वात्तांस्तथैव च ॥ ६४ ॥ क्रव्यादांश्चोपहूतांश्च आज्यपांश्च सुकालिनः ॥ आद्या मूर्तिविहीनाश्च त्रयस्तेषां गणाः स्मृताः ॥ ६५ ॥ चरमास्ते गणास्तेषां कथितास्तु समूर्तयः ॥ महाभूतशरीराणि सृष्टवान्स तथैव च ॥ ६६ ॥ एवं कृत्वा प्रजासर्गं चाङ्गुष्ठाद्दक्षिणात्ततः ॥ ससर्ज दक्षं भगवान्वामाङ्गुष्ठात्तथैव च ॥ ६७ ॥ ससर्ज भार्यां तस्यैव देवदेवः पितामहः ॥ तस्यां तु जनयामास दक्षो दुहितरः शुभाः ॥६८॥ ददौ ताश्च स धर्मात्मा ब्रह्मपुत्रेभ्य एव च ॥ सतीं ददौ स रुद्राय रुद्रा यस्याः सुताः स्मृताः ॥ ६९ ॥ असंख्येया महावीर्या हरतुल्यपराक्रमाः ॥ यैर्व्याप्तं भुवनं सर्वं सूर्यस्येव गभस्तिभिः ॥७०॥ भृगवे च ददौ ख्यातिं रूपेणाप्रतिमां शुभाम् ॥ भृगुर्धाताविधातारौ जनयामास साधुधौ ॥ ७१ ॥ श्रियं च जनयामास खचराँश्च तुरङ्गमान् ॥ भृगुः प्रदाच्छ्रियं देवीं राजन्नारायणस्य च॥७२॥तस्यां संजनयामास बलोन्मादौ मदोत्कटौ ॥ मेरोः पर्वतराजस्य द्वे कन्ये भुवि विश्रुते ॥७३॥ धातुर्विधातुस्ते दत्ते आयति नियतिस्तथा ॥ आयतिर्जनयामास प्राणं यदुकुलोद्वह ॥७४॥ नियतिर्जनयामास मृकण्डुं तपसां निधिम् ॥ व्यतीते सप्तमे कल्पे मृकण्डोः सुमहात्मनः॥ ॥७५॥ अहं पुत्रः समुत्पन्नो मनस्विन्यां नराधिप ॥ पत्नी मरीचेस्संभूतिर्दक्षस्य तनया शुभा ॥७६॥ प्रजापतिं पूर्णमासं जनयामास भामिनी ॥ पूर्णमासस्य विरजाः सुदामा तु तदात्मजः ॥ ७७ ॥ लोकालोकनिविष्टस्तु लोकपालो मयेरितः ॥ पुत्रश्च पौर्णमासस्य सर्वेशो नाम चापरः ॥ ७८ ॥ जनयामास पुत्रौ द्वौ स्तम्बः कश्यप एव च ॥ तयोर्गोत्रकरौ पुत्रौ ज्ञेयौ संन्यासनिश्चयौ ॥ ७९ ॥ स्मृतिमङ्गिरसं प्रादाद्दक्षः पूर्वं प्रजापतिः ॥ सिनीवाली कुहू राका तथैवानुमतिः शुभा ॥ ८० ॥ तस्यां संजनयामास अग्निं च भरतं तथा ॥ भरतस्य तथा पुत्रः पर्जन्य इति विश्रुतः ॥ ८१ ॥ हिरण्यरोमा पर्जन्य उदीचीं दिशमाश्रितः ॥ लोकालोकेऽवतिष्ठँस्ते लोकपालो मयेरितः ॥ ८२ ॥ अनुसूयां ददौ दक्षः तथात्रेः सुमहात्मनः ॥ तस्यां स जनयामास तपोराशिकरं परम् ॥ ८३ ॥ प्रीतिं दक्षः पुलस्त्याय दत्तोर्णां जननीं ददौ ॥

पुलस्त्या क्षमांम्प्रादात्कर्दमस्य तु मातरम् ॥ ८४ ॥ कार्दमिः शङ्खपादश्च दक्षिणामाश्रितो दिशम् ॥ लोकालोकनिविष्टस्ते लोकपालो मयेरितः ॥ ८५ ॥ दक्षश्च सन्नतिं प्रादात्क्रतवे भूरितेजसे ॥ षष्टिः पुत्रसहस्राणि बालखिल्या इति स्मृताः ॥ ८६ ॥ जनयामास धर्मज्ञान्सर्वांस्तानूर्ध्वरेतसः ॥ दक्षः प्रादादथैवोर्णां[1] वसिष्ठाय महात्मने ॥ ८७ ॥ तस्यामस्य सुता जाताः सप्त सप्ताश्ववर्चसः ॥ रजोबाहुरूर्ध्वबाहुः पवनश्चानघश्च यः ॥ ८८ ॥ सुतपाः शक्तिरित्येते वासिष्ठाः सप्त कीर्तिताः ॥ केतुमान्सुमहातेजा राजसश्च तथा सुतः ॥ ८९ ॥ लोकालोकनिवासी ते प्रतीच्यां स मयेरितः ॥ स्वाहां प्रादात्स दक्षोऽपि सशरीराय वह्नये ॥ ९० ॥ दिव्यान्तारिक्षभौमानामग्नीनां जननीं प्रभुः ॥ स्वधां प्रादात्पितृभ्यस्तु मेनाया जननीं शुभाम् ॥ ९१ ॥ हिमाचलाय मेनापि पितृभिः प्रतिपादिता ॥ चतुर्दशेमाः कन्याश्च दक्षो धर्माय वै ददौ ॥ ९२ ॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः ॥ बुद्धिर्लज्जा वपुः शान्तिः तुष्टिः सिद्धिश्चतुर्दश ॥ ९३ ॥ कीर्तिपुत्रो यशोदेवो दर्पो लक्ष्मीसुतः स्मृतः ॥ निश्चयश्च धृतेः पुत्रो मेधापुत्रस्तथा श्रुतः ॥ ९४ ॥ पुष्टिर्लाभः सुतश्चैव कामः श्रद्धासुतः स्मृतः ॥ क्रियायास्तनयो देवो मतिपुत्रस्तथा दमः ॥ ९५ ॥ बुद्धेर्बोधः सुतः प्रोक्तो लज्जाया विनयः स्मृतः ॥ वपुषो व्यवसायस्तु क्षेमः शान्तिसुतस्तथा ॥ ९६ ॥ तुष्टेः पुत्रस्तु सन्तोषः सुखः सिद्धेश्च भास्वरः ॥ कामस्य च रतिर्भार्या तत्पुत्रो हर्ष उच्यते ॥ ९७ ॥ एवं प्रजाविवृद्ध्यर्थं दक्षो दत्त्वाऽथ कन्यकाः ॥ ईजे कदाचिद्यज्ञेन हयमेधेन पार्थिव ॥ ९८ ॥ तस्य जामातरः सर्वे गता यज्ञनिमन्त्रिताः ॥ भार्याभिः सहिताः सर्वे रुद्रं देवं सतीं विना ॥ ९९ ॥ रुद्रो नतिं न कुरुते भाव्यर्थविनिचोदितः ॥ कदाचिदपि दक्षश्च तेनासौ न निमन्त्रितः ॥ १०० ॥ अनाहूतापि च गता पश्चात्तत्र सती शुभा ॥ दक्षान्न लेभे पूजां सा ततः क्रुद्धा शुभानना ॥ १०१ ॥ तत्याज दक्षसम्भूतां तां तनुं हिमकन्दरे ॥ विनष्टां तु सतीं श्रुत्वा देवदेवः पिनाकधृक् ॥ १०२ ॥ शशाप दक्षं धर्मज्ञं मनुष्यस्त्वं भविष्यसि ॥ ध्रुवस्यान्वयसंभूतो राजा त्रैलोक्यविश्रुतः ॥ १०३ ॥ तत्रापि विघ्नं कर्तास्मि यज्ञकर्मण्युपस्थिते ॥ भृगुं मरीचिमात्रिं च पुलस्त्यं पुलहं क्रतुम् ॥ १०४ ॥ शशाप चैवाङ्गिरसं वसिष्ठं च महामुनिम् ॥ सतीमनुप्रवृत्तस्य दक्षस्यास्य प्रजापतेः ॥ १०५ ॥ अनुवृत्तिः कृता यस्माद्भवद्भिर्धर्मकोविदैः ॥ तस्माद्वैवस्वते प्राप्ते शुभे मन्वन्तरे द्विजाः ॥ १०६ ॥ ब्रह्मणो यजमानस्य जन्म क्रूरमवाप्स्यथ ॥

१ 'वोर्जाम्' इति ख० ।

देहत्यागे कृते राजन्सती देवी महाबला ॥ १०७ ॥ उमेति विश्रुता लोके मेनायाः समपद्यत ॥ हिमाचलोऽपि तां देवीं ददौ शर्वाय पार्थिव ॥
॥ १०८ ॥ तया वियुज्यते नासौ कदाचिदपि विश्रुता ॥ तस्यां तु जनयामास देवदेवोऽपि शङ्करः ॥ १०९ ॥ विनायकं कुमारं च भृङ्गेशं
सुमहाबलम् ॥ विघ्नानां च गणानां च पुत्रं राज्येऽभ्यषेचयत् ॥ ११० ॥ विनायकं महादेवो गजवक्त्रं मनस्विनम् ॥ देवसेनापतिं शक्रः कुमारं
कृतवाँस्तदा ॥ १११ ॥ न तत्याज समीपाच्च भृंगेशं शङ्करस्तदा ॥ वैवस्वतेन्तरे प्राप्ते राजा दक्षो व्यजायत ॥ ११२ ॥ ध्रुवस्यान्वयसम्भूतो
महाबलपराक्रमः ॥ तत्राश्वमेधे वितते अनाहूतेन शूलिना ॥ ११३ ॥ यज्ञो विध्वंसितस्तस्य वीरभद्रेण पार्थिव ॥ स दक्षो जनयामास कन्याः
पार्थिवसत्तम ॥ ११४ ॥ तासां च मध्यात्प्रददावष्टाविंशतिमिन्दवे ॥ देवतास्त्वभिमानिन्यो नक्षत्राणां पृथक्पृथक् ॥ ११५ ॥ उक्तं हि ते ऋक्ष
गणस्य जन्म शुभावहं पापभयापहं च ॥ अतः परं किं कथयामि तुभ्यं तत्त्वं वदस्वायतलोहिताक्ष ॥११६॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे
मा० सं० ग्रहर्क्षादिसंभवाध्यायो नाम सप्तोत्तरशततमोऽध्यायः ॥१०७॥ ॥ छ ॥ ॥ वज्र उवाच ॥ ॥ दक्षस्य वंशं सकलं नक्षत्राणां च
सम्भवम् ॥ त्वत्तोऽहं श्रोतुमिच्छामि सर्वधर्मभृतां वर ॥ १ ॥ मार्कण्डेय उवाच ॥ औत्तानपादिर्धर्मात्मा ध्रुवः पूर्वं मयोदितः ॥ ध्रुवस्त्वजनयत्सृष्टिं
महाबलपराक्रमाम् ॥ २ ॥ तस्य प्राचीनगर्भस्तु पुत्रस्तस्याप्युदारधीः ॥ दिवंजयस्तस्य सुतस्तस्य पुत्रो रिपुः स्मृतः ॥ ३ ॥ रिपोः पुत्रस्तथा
श्रीमांश्चाक्षुषः कीर्तितो मनुः ॥ ऊरुस्तस्य सुतः श्रीमानङ्गस्तस्याप्यथात्मजः ॥ ४ ॥ अत्रिर्जग्राह तं पुत्रं दत्तकं तु यशस्विने ॥ अङ्गस्य वेनः
पुत्रस्तु नास्तिको धर्मवर्जितः ॥ ५ ॥ असच्छास्त्ररतो नित्यं लोकायतिकसत्तमः ॥ चकार लोके मर्यादां धर्मबाह्यो नराधिपः ॥ ६ ॥ न
यष्टव्यं न होतव्यं न देयं धर्मकारणम् ॥ ऋषयस्तं समागम्य कदाचिद्वाक्यमब्रुवन् ॥ ७ ॥ ऋषय ऊचुः ॥ पूर्वप्रवृत्तां मर्यादां पूर्वैः पूर्वतरैः
कृताम् ॥ लोकायतिकवाक्येन न त्वं हन्तुमिहार्हसि ॥ ८ ॥ कर्मणा सुकृतेनेह सुखं जन्तुः समश्नुते ॥ दुःखं जन्तुश्च प्राप्नोति दुष्कृतेन
च कर्मणा ॥ ९ ॥ ये यजन्ते सदा देवान्गुरुशुश्रूषकाश्च ये ॥ विप्रपूजारता ये च तीर्थयात्रारताश्च ये ॥ १० ॥ तपस्विनः सत्यरता
ये च दाने सदा रताः ॥ समश्नुवन्ति भूपाल परलोके सुखानि ते ॥ ११ ॥ स त्वं सुखपरिभ्रष्टान्नृलोकान्गन्तुमर्हसि ॥ वेन
उवाच ॥ भवतां किं प्रलापेन वृथैव द्विजपुङ्गवाः ॥ १२ ॥ ये मृतास्ते मृताः सर्वे मृतानां सम्भवः कुतः ॥ प्राणस्य वायुभूतस्य
निष्क्रान्तस्य शरीरतः ॥ १३ ॥ भूयः शरीरग्रहणं युक्त्या नैवोपपद्यते ॥ तपांसि हायनाश्चित्राः संयमो भोगवञ्चना ॥ १४ ॥ अग्नि

होत्रादिकं कर्म बालक्रीडेव लक्ष्यते ॥ ग्राम्याणां मूढचित्तानां स्रग्विणां चैव योषिताम् ॥ १५ ॥ अन्येषां चैव धनिनां धूर्तैरादि
त्सुभिर्धनम् ॥ शास्त्राण्यनेकरूपाणि ग्रथितानि सहस्रशः ॥ १६ ॥ देहि नित्यं यजस्वैवं देवास्तेऽनुग्रहीकृताः ॥ धनमाप्स्यसि शत्रूंश्च
विजेष्यसि सुखं च ते ॥ १७ ॥ मुग्धा एवं प्रतार्यन्ते धूर्तैर्धनजिहीर्षया ॥ यावज्जीवं सुखं जीवेन्नास्ति मृत्योरगोचरम् ॥ १८ ॥
भस्मीभूतस्य शान्तस्य पुनरागमनं कुतः ॥ नास्ति दत्तं हुतं चेष्टं न देवा ऋषयो न च ॥ १९ ॥ मयाप्तं भुवि राज्यं च भोगाश्चान्ये पृथग्विधाः॥
कथं प्राप्तं हि त्यक्ष्यामि भवतां वचनेन वै ॥ २० ॥ मार्कण्डेय उवाच ॥ एतच्छ्रुत्वा वचस्तस्य वेनस्य नृपसत्तम ॥ ऋषयस्तमथोचुस्ते राजानं
दुष्टचेतसम् ॥ २१॥ ऋषय ऊचुः ॥ नैतदौपयिकं वाक्यं ध्रुववंशोद्भवस्य ते ॥ प्रत्यक्षं कर्मणां लोके फलं पार्थिव दृश्यते ॥ २२॥ काङ्क्ष्यमाणाञ्ज
नान्पश्य भोजनाच्छादनं परम् ॥ सहस्रंभरकानन्यान्पश्य भूपाल मानवान् ॥२३॥ शिबिकाभ्यस्तथैवान्यान्गच्छमानान्यथासुखम् ॥ क्षुधया च
परीतांश्च शाकोच्छिष्टभुजस्तथा ॥ २४ ॥ काष्ठभारसमाक्रान्तान्परिभूतान्परैस्तथा ॥ जुगुप्सितांस्तथा दीनान्बहुशल्यान्नरांस्तथा ॥ २५ ॥
पङ्गूनन्यान्कुब्जकांश्च कुष्ठज्वरविपीडितान् ॥ रोगैर्बहुभिराक्रान्तान्परिभूतान्परैस्तथा॥२६॥ तार्किकान्कृपणान्दीनान्व्याधिग्रस्तान्सुखच्युतान्॥
इष्टबन्धुवियोगार्तान्पश्य पापेन मानवान् ॥२७॥ आरोग्यरूपसत्त्वौजोधनधान्यसमन्वितान् ॥ धर्मेण च जनान्पश्य बन्धुभृत्यसमन्वितान्॥२८॥
राजमार्गमिमं लोकास्तव कर्मानुवर्तते ॥ मार्कण्डेय उवाच ॥ ततस्तेषां वचः श्रुत्वा ऋषीणामुग्रचेतसाम् ॥ २९ ॥ हस्तेन हस्तं संघट्य प्रहसंस्ता
नुवाच ह ॥ वेन उवाच ॥ शुभेन कर्मणा सौख्यं दुःखं पापेन कर्मणा ॥ ३० ॥ नाप्नुवन्ति जना विप्राः प्राप्नुवन्ति स्वभावतः ॥ स्वभावश्च
विचित्रोऽयं संसारोद्वेजकः सदा ॥ ३१ ॥ नात्र पूर्वकृतं कर्म धूर्तवादो यथा द्विजाः ॥ अश्मानः कर्मणा केन सूक्ष्माश्चान्ये महत्तराः ॥ ३२ ॥
विन्यस्ताः कर्मणा केन सुरार्चापापभूमिषु ॥ पाषाणार्चादिदत्तेन कथं तुष्यन्ति देवताः ॥ ३३ ॥ के देशा न मया दृष्टा नापि पूर्वं पितामहैः ॥
नान्यैर्जन्यैस्तथा तांश्च धूर्तवाक्यात्प्रतीमहे ॥ ३४ ॥ अन्यभुक्तेन चान्यस्य तृप्तिश्चैव कथं भवेत् ॥ अन्यभुक्तेन चान्यस्य यदि तृप्तिर्भवि
ष्यति ॥ ३५ ॥ दद्यात्प्रवसिते श्राद्धं न स पथ्योदनं महत् ॥ मृतस्य पक्षे दग्धस्य भस्मीभूतस्य वा पुनः ॥ ३६ ॥ सर्वभावविनष्टस्य किं नु ॥ ७० ॥
श्राद्धैः प्रयोजनम् ॥ कृपणैर्यज देहीति धनलुब्धैः प्रकीर्तितम् ॥ ३७ ॥ धनिनां धननाशाय सततं स्वार्थतत्परैः ॥ धर्मे निविष्टाः पुरुषा दृश्यन्ते

१ 'भिन्नाङ्गान्खञ्जमस्तकान्' इति ख० ।

दुःखजीविनः ॥ ३८ ॥ सुखान्विता हि दृश्यन्ते पापकर्मरतास्तथा ॥ तस्माद्धर्मेण किं कार्यं सुखं जीवेत्तु पण्डितः ॥ पुरुषार्थः परः कामो धनेन च
तदाप्यते ॥३९॥ ऋषय ऊचुः ॥ प्रत्यक्षमेव पश्यन्तः पूर्वजन्मनि मानवाः ॥४०॥ परलोकं न पश्यन्ति पश्य दैवेन वञ्चिताः ॥ जातमात्रो यथा
जन्तुस्तनं गृह्णाति पार्थिव ॥ ४१ ॥ पूर्वजन्मान्तराभ्यासं विना तत्कस्य चेष्टितम् ॥ प्राणेन वायुभूतेन जन्मन्यस्मिन्यथा नरः ॥ ४२ ॥
करोति देहग्रहणं जन्मान्तरगतस्तथा ॥ महीविकारमश्मानः कर्मजीवविवर्जितान् ॥ ४३ ॥ सूक्ष्मत्वं च महत्त्वं च तेषामीश्वरकारितम् ॥ मन्त्रेण
नीयते श्राद्धं परलोकगते जने ॥ ४४ ॥ दृष्टः प्रवासिनो नैव तथा मन्त्रस्य पार्थिव ॥ प्राकाम्ययुक्ता देवाश्च युक्ता लघिमना तथा ॥ ४५ ॥ ज्ञान
युक्ताश्च गृह्णन्ति सर्वत्र विनिवेदितम् ॥ धर्ममासेवतां नृणां विपत्तिर्या नराधिप ॥ ४६ ॥ पूर्वजन्मकृतेनेह सुकृतेन च कर्मणा ॥ सुतप्तेनेह तपसा
ब्राह्मणैर्वसुधाधिप ॥ ४७ ॥ शापानि दीयमानानि प्रत्यक्षं किन्न पश्यसि ॥ अमोघाशास्तथा विप्राः सुतप्ततपसो नृप ॥ ४८ ॥ किन्न पश्यसि
लोकेऽस्मिन्प्रत्यक्षं धर्मदर्शनम् ॥ बीजानि बीजकालेषु यैरेवाप्तानि पार्थिव ॥ ४९ ॥ त एव लोके दृश्यन्ते प्रत्यक्षं फलभागिनः ॥ दृष्ट्वा मन्त्रप्रभा
वेण विप्रकर्षणतत्परान् ॥ ५० विषापहारं कुर्वाणान्धर्मोऽप्यस्तीति चिन्तय ॥ येषामपि वचः क्षुद्रं परलोकं न विद्यते ॥ ५१ ॥ तेऽप्युद्विजन्ते
पापानां तस्मात्पापं विवर्जय ॥ मार्कण्डेय उवाच ॥ एतच्छ्रुत्वा तु वचनमृषीणां भावितात्मनाम् ॥ ५२ ॥ हतोत्तरस्तदा दीनो नोत्तरं प्रत्य
भाषत ॥ चिन्तयामास मनसा ब्राह्मणैर्धर्मतत्परैः ॥ ५३ ॥ यदेतदुक्तं वचनं मिथ्यैतन्नात्र संशयः ॥ अभिप्रायं नरेन्द्रस्य ज्ञात्वा ब्राह्मणपुङ्गवाः ॥
॥५४॥ विनष्टं मेनिरे सर्वं त्रैलोक्यं सचराचरम् ॥ एतस्मिन्नन्तरे देवैर्ब्राह्मणानां महात्मनाम् ॥ ५५ ॥ बुद्धिर्निवेशिता तस्य विनाशाय दुरात्मनः ॥
सर्वेश्वरः सर्वशक्तिः सर्वदृक्सर्वसाधनः ॥ ५६ ॥ प्रार्थितश्च तदा विष्णुः पृथिवीराज्यकारणात् ॥ देवा ऊचुः ॥ ध्रुववंशोद्भवं देव वेनं भूपालकि
ल्बिषम् ॥ ५७ ॥ ब्राह्मणा घातयिष्यन्ति मन्त्रपूतैः कुशोदकैः ॥ ऊरू चास्य ततः क्षिप्रं मथिष्यन्ति समाहिताः ॥ ५८ ॥ कुरुष्व संभवं तत्र
लोकानां हितकाम्यया ॥ कृत्वा तु संभवं तत्र पालयस्व जगत्त्रयम् ॥ ५९ ॥ आस्थाय मानुषं रूपं त्वं हि पालय तापतः ॥ एवं करिष्य इत्युक्तं
देवदेवेन दक्षिण ! ॥ ६० ॥ देवक्रोधेन संक्रुद्धा निजघ्नुर्ब्राह्मणा नृपम् ॥ मन्त्रपूतैः कुशैः सर्वैस्ततस्तस्य दुरात्मनः ॥ ६१ ॥ ऊरू ममन्थुः
सहसा ततोऽस्य तनयोऽभवत् ॥ ह्रस्वोऽतिमात्रं कृष्णांगो दारुणो दारुणाकृतिः ॥ ६२ ॥ निषीदेति तमूचुस्ते ब्राह्मणा वेदपारगाः ॥
सर्वभूतनिषादानामृषिवाक्येन पार्थिव ॥ ६३ ॥ निषादवंशकर्तारं वेनकल्मषसम्भवम् ॥ ततोऽस्य दक्षिणं पाणिं ममन्थुः सहसा द्विजाः ॥६४ ॥

तस्मादस्य सुतो जातो विष्णुर्मानुषरूपधृक् ॥ पृथुरित्येव नामास्य चक्रुस्ते द्विजपुङ्गवाः ॥ तेन जातेन पुत्रेण वेनः पापादमुच्यत ॥ ६५ ॥
सत्पुत्रलाभात्त्रिदिवं जगाम वेनो दुरात्मा कृतसर्वपापः ॥ दृष्ट्वापि जातमृषयः कुमारं संमेनिरे लोकमिदं कृतार्थम् ॥ ६६ ॥ इति
श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे पृथूद्भवो नामाष्टोत्तरशततमोध्यायः ॥ १०८ ॥ मार्कण्डेय उवाच ॥ आद्यमाजगवं नाम
धनुर्गृह्य महायशाः ॥ दृष्ट्वा जातं पृथुं देवाः सर्व एव सवासवाः ॥ १ ॥ आजग्मुः पुष्करं तीर्थमभिषेक्तुं तदा पृथुम् ॥ तं चाभिसिषिचुर्देवा
रत्नचित्रवरासने ॥ २ ॥ ब्रह्मा विष्णुश्च रुद्रश्च चन्द्रादित्यौ प्रभाकरौ ॥ दिशश्च विदिशश्चैव लोकपालाः सवासवाः ॥ ३ ॥ सर्वे देवगणाश्चैव
ऋषयश्च तपोधनाः ॥ स्वं स्वं तोयमुपादाय समुद्राश्च नराधिप ॥ ४ ॥ सरांसि सरितः शैलाः सर्वे तीर्थवरास्तथा ॥ सोऽभिषिक्तस्तदा
श्रीमान्वेनपुत्रः परन्तप ॥ ५ ॥ संवत्सरः कृतस्तस्य वृद्धगर्गो महायशाः ॥ स्थिताः शिष्यवरा नित्यं तस्योत्पातनिरीक्षणे ॥ ६ ॥ पुरोहितः
कृतस्तस्य याज्ञवल्क्यो महायशाः ॥ आथर्वणेन यस्तस्य सर्वान्दोषान्व्यपोहत ॥ ७ ॥ उशनाश्च तथा मन्त्री कृतस्तस्य महात्मनः ॥
षाड्गुण्ययोगाद्यस्तस्य सर्वान्दोषान्व्यपोहत ॥ ८ ॥ कमलाभरणो नाम सुप्रतीकसुतस्तदा ॥ राजहस्ती कृतस्तस्य स्वयं गर्गेण धीमता ॥ ९ ॥
श्रीसुतस्तुरगः श्रेष्ठः शशाङ्कसदृशच्छविः ॥ मङ्गलाश्वः कृतस्तस्य वृद्धगर्गेण पार्थिव ॥ १० ॥ स्वयं देववरैस्तस्य दत्तानि मनुजाधिप ॥
छत्रं सवालव्यजनं खड्गं च वसुधाधिप ॥ ११ ॥ तस्य लक्षणसंयुक्तं ददुर्देवा नरेश्वर ॥ इत्येवं चाभिषिक्तस्तु पृथुर्वैन्यो महायशाः ॥ १२ ॥
विधिना शास्त्रदृष्टेन ब्राह्मणैर्मन्त्रपारगैः ॥ तस्य पैतामहे यज्ञे हयमेधे पुरातने ॥१३॥ आप्तुर्यामस्य सुत्येऽह्नि सूतो जातः परन्तप ॥ सामगेष्वथ
गायत्सु अध्वरे वैश्वदेविके ॥ १४ ॥ मागधश्च समुत्पन्नस्तस्मिन्नेव महाक्रतौ ॥ पृथोस्तवार्थं तौ देवौ चोदितावृषिभिस्तथा ॥ १५ ॥ ऊचतुस्तौ
तदा देवानृषींश्च प्रणतौ स्थितौ ॥ कर्मभिस्तूयते सर्वः कर्म चास्य न विद्महे ॥ १६ ॥ कर्मणश्चात्यविज्ञानात्स्तोष्यावस्तत्कथं पृथुम् ॥ ऋषय
ऊचुः॥अस्मत्प्रभावविज्ञातौ स्तुवतामविचारतः ॥१७॥ मार्कण्डेय उवाच॥ऋषिभिस्तौ नियुक्तौ तु तुष्टुवाते स्वकर्मभिः॥भविष्यत्पृथिवीपालं दिव्य
ज्ञानौ परन्तपौ॥१८॥तयोर्वैन्यस्तु सुप्रीतः पृथुः प्रादात्प्रजेश्वरः॥अनूपदेशं सूताय मगधं मागधाय च॥१९॥ततो वैन्यं महाभागं प्रजास्ताः संप्रदुद्रुवुः॥
त्वन्नो वृत्तं ददस्वेति महर्षिवचनात्तदा ॥ २० ॥ सोऽभिद्रुतः प्रजाभिस्तु प्रजाहितचिकीर्षया ॥ धनुरादाय बाणांश्च वसुधां मर्दयन्बली ॥ २१ ॥
ततो वैन्यभयत्रस्ता गौर्भूत्वा प्राद्रवन्मही ॥ ब्रह्मलोकादिकाँल्लोकान्न च त्राणमविन्दत ॥ २२ ॥ सर्वत्रैव पृथुं वैन्यमात्तकार्मुकमच्युतम् ॥ ददर्श

॥ ७१ ॥

सुमहाभागं तेजसा भास्करप्रभम् ॥ २३ ॥ अलभन्ती तु सा त्राणं वैन्यमेवान्वपद्यत ॥ कृताञ्जलिपुटा देवी पूज्या लोकैस्त्रिभिस्तदा ॥ २४ ॥
उवाच वैन्यं नाधर्मं स्त्रीवधे परिपश्यसि ॥ कथं धारयिता चासि मया हीनास्त्विमाः प्रजाः ॥ २५ ॥ पृथुरुवाच ॥ एकस्यार्थाय यो हन्यादात्मनो
वा परस्य वा ॥ एकं जीवं बहुत्वेऽपि कामं नैवास्ति पातकम् ॥ २६ ॥ यस्मिंस्तु निहते भद्र एधन्ते बहवः सुखम् ॥ तस्मिन्हते नास्ति परे
पातकं नोपपातकम् ॥ २७ ॥ सोऽहं प्रजानिमित्तं त्वां वधिष्यामि वसुन्धराम् ॥ आत्मानं प्रथयित्वा तु धारयिष्ये प्रजास्त्विमाः ॥ २८ ॥
वृत्त्युपायं न चेदासां प्रजानां त्वं विधास्यसि ॥ विधास्यसि यदा भद्रे तदा त्वं सुखमाप्स्यसि ॥ २९ ॥ पृथिव्युवाच ॥ प्रजानां जीवनोपायं
विधास्यामि नरेश्वर ॥ विधत्स्व वत्सं धर्मज्ञ क्षरेयं येन वत्सला ॥ ३० ॥ समां च कुरु सर्वत्र मम धर्मभृतां वर ॥ यथा निष्यन्दमानं वै क्षीरं
सर्वत्र भावयेत् ॥ ३१ ॥ मार्कण्डेय उवाच ॥ तत उत्सारयामास शिलाजालानि सर्वतः ॥ पृथुर्वैन्यो महातेजास्तेन शैला विवर्द्धिताः ॥ ३२ ॥
ततः प्रभृति राजेन्द्र ग्रामाश्च नगराणि च ॥ कृष्यादिकं च सकलं भुवि कर्म प्रवर्तितम् ॥ ३३ ॥ तस्याः सस्यानि सा दुग्धा पृथुना पृथिवी
क्षिता ॥ वत्सं स्वायंभुवं कृत्वा मनुं वै दक्षिणे करे ॥ ३४ ॥ ततस्तु ऋषिभिर्दुग्धा च्छन्दःपात्रे वसुन्धरा ॥ वत्सः सोमोभवत्तेषां दोग्धा चैव
बृहस्पतिः ॥ ३५ ॥ ऊर्जं देवगणैर्दुग्धा रुक्मपात्रे वसुन्धरा ॥ वत्सस्तु मघवानासीद्दोग्धा च सविता तथा ॥ ३६ ॥ सुधां च पितृभिर्दुग्धा
रौप्यपात्रे वसुन्धरा॥ अन्तकश्चाभवद्दोग्धा वत्सो वैवस्वतो यमः ॥३७॥ पयश्चैवायसे पात्रे दुग्धा दैत्यैर्वसुन्धरा ॥ दोग्धा गगनमूर्धा सा वत्सं कृत्वा
विरोचनम् ॥३८॥ अलाबुपात्रे सर्पैश्च विषं दुग्धा धरा तथा ॥ तेषां च वासुकिर्दोग्धा वत्सश्चासीच्च तक्षकः ॥ ३९ ॥ अन्तर्धानं यदा यक्षे रामपात्रे
वसुन्धरा ॥ दुग्धा रजतनाभेन वत्सं कृत्वा धनेश्वरम् ॥४०॥ कपाले रुधिरं दुग्धा राक्षसैर्भीमविक्रमैः ॥ हेतिः प्रहेतिश्च तथा दोग्धा वत्सस्तथाऽभवत् ॥
॥४१॥ दुग्धा गन्धान्पद्मपात्रे गन्धर्वाप्सरसां गणैः ॥ वत्सश्चित्ररथस्तेषां दोग्धा वसुरुचिस्तथा ॥४२॥ ओषध्यश्च तथा शैलैर्दुग्धा पात्रे शिलामये ॥
वत्सस्तु हिमवानासीद्दोग्धा मेरुर्महागिरिः ॥ ४३ ॥ पलाशपात्रे वृक्षैस्तु दुग्धा पुष्पफलं शुभम् ॥ कामधुक् च ततः सालं प्लक्षो वत्सस्तु वै स्मृतः ॥
॥४४॥ सर्वकामदुघा दोग्ध्री पृथिवी भूतभाविनी ॥ सैषा धात्री विधात्री च जननी भावनी तथा ॥४५॥ चराचरस्य लोकस्य प्रतिष्ठोत्पत्तिरेव च ॥
सर्वभूतहिरण्या च सर्वभूतहितैषिणी ॥ ४६ ॥ वर्गदा मेदिनी भूमिः क्षमा क्षोणी वसुन्धरा ॥ सर्वभूतशरीरस्था सर्वानुग्रहकारिणी ॥ ४७ ॥
मन्वन्तरेऽस्मिन्संप्राप्ते वैन्येन पृथिवीक्षिता ॥ प्रथमं वसुधा दुग्धा ततो दुग्धा यथोदितैः ॥ ४८ ॥ दुहितृत्वं गता तस्य पृथिवी तेन चोच्यते ॥

एवंप्रभावः स पुरा पृथुरासीन्महीपतिः ॥ ४९ ॥ पित्राऽपरञ्जितास्तस्य प्रजास्तेनानुरञ्जिताः ॥ प्रजानां रञ्जनात्तस्य नाम राजेति कीर्तितम् ॥ ५० ॥ राजा भोजो विराट् सम्राट् गोपतिः पार्थिवस्तथा ॥ स एवोक्तो महीनाथ शब्दैः पर्यायवाचकैः ॥ ५१ ॥ नमस्कारस्तु कर्तव्यस्तस्य नित्यं द्विजोत्तमैः ॥ वेदकामैर्वेदविद्भिः प्रार्थयद्भिर्महद्यशः ॥ ५२ ॥ पार्थिवैश्च महाभागैः प्रार्थयद्भिर्महद्यशः ॥ वृत्तिदाता तथा वैश्यैर्नमस्कार्यस्तथा पृथुः ॥ ५३ ॥शूद्रैरपि नमस्कार्यो धर्मकामैर्महीपतिः ॥ क्षेमेप्सुभिस्तथा ध्याने नमस्कार्यः पृथुर्नृपः ॥ ५४ ॥ यो हि योधो रणे याति कीर्तयित्वा पृथुं नृपम् ॥ स घोररूपात्संग्रामात्क्षेमी भवति पार्थिव ॥ ५५ ॥ पृथोः कृत्वा नमस्कारं सर्वत्र विजयी भवेत् ॥ तस्मात्तस्य नमस्कारः सदा कार्यो जयेप्सुना ॥ ५६ ॥ वैन्यस्य भूपालवरस्य राजञ्छ्रुत्वाभिषेकं प्रयतो मनुष्यः ॥ पापं समग्रं विजहाति शीघ्रं जयं तथाप्नोति यशश्च लोके ॥ ५७॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे पृथ्वभिषेकादिवर्णनं नाम नवोत्तरशततमोऽध्यायः ॥ १०९ ॥ मार्कण्डेय उवाच ॥ अन्तर्धानः पृथोः पुत्रो हविर्धानस्तदात्मजः ॥ प्राचीनबर्हिस्तत्पुत्रः पृथिव्यामेकराड् बभौ ॥ १ ॥ उपयेमे समुद्रस्य लवणस्य स वै सुताम् ॥ सुवर्णायां तु सामुद्र्यां दश प्राचीनबर्हिषः ॥ २ ॥ सर्वे प्राचेतसो नाम धनुर्वेदस्य पारगाः ॥ अपृथग्धर्मचरणास्तेऽतप्यन्त महत्तपः ॥ ३ ॥ दशवर्षसहस्राणि समुद्रसलिलेशयाः ॥ समुद्रगेषु दशसु तपस्यत्सु महीरुहाः ॥ ४ ॥ अरक्ष्यमाणां गां वव्रुर्बभूवेत्थं प्रजाक्षयः ॥ न शक्यो मारुतो वातुं वृत्तं खमभवद्द्रुमैः ॥ ५ ॥ तदुपश्रुत्य राजानः सर्वे युक्ताः प्रचेतसः ॥ मुखेभ्यो वायुमग्निं च ससृजुर्जातमन्यवः ॥ ६ ॥ निर्मूलानथ वृक्षांस्तान्कृत्वा वायुरशोषयत् ॥७॥ तानग्निरदहत्क्रुद्ध एवमासीद्द्रुमक्षयः ॥ द्रुमक्षयमथो दृष्ट्वा किञ्चिद्दग्धेषु शाखिषु ॥ उपगम्याब्रवीदेतान्सोमो राजा प्रचेतसः ॥ ८ ॥ कोपं त्यजत राजानः सर्वे प्राचीनबर्हिषः ॥ कृता मही वृक्षशून्या शाम्येतामग्निमारुतौ ॥ ९ ॥ रत्नभूता च कन्येयं वृक्षाणां वरवर्णिनी ॥ भविष्यं जानता ह्येषा धृता गर्भेण वै मया ॥ १० ॥ मारिषा नाम भवतां पत्न्यर्थे प्रददाम्यहम् ॥ ततः सोमस्य वचनाज्जगृहुस्ते प्रचेतसः ॥ ११ ॥ संहृत्य कोपं वृक्षेभ्यः पत्नीधर्मेण मारिषाम् ॥ मनसा च दधुस्तस्यां गर्भं सर्वे प्रचेतसः ॥ १२ ॥ दशभ्यस्तु प्रचेतोभ्यो मारिषायां प्रजापतिः ॥ भवशापेन संभूतो भूयो दक्षप्रजापतिः ॥ १३ ॥ असृजन्मनसा दक्षः प्रजाः पूर्वं चतुर्विधाः ॥ नोत्पद्यन्ते च तास्तस्य अपध्याता हरेण तु ॥ १४ ॥ मैथुनेन ततः सृष्टिं कर्तुमिच्छन्प्रजापतिः ॥ असिक्नीमवहद्भार्यां वीरणस्य प्रजापतेः ॥ १५ ॥ सुतां सुमहतीं युक्तां तपसा लोकधारिणीम् ॥ तस्य पुत्रसहस्रं तु वीरिण्यां समपद्यत ॥ १६ ॥ तांस्तु दृष्ट्वा महातेजा विवर्धयिषवः प्रजाः ॥

तानुवाच महातेजा ब्रह्मपुत्रः स नारदः॥१७॥ किं प्रमाणं तु मेदिन्यां स्रष्टव्यस्य तथैव च॥अज्ञानात्तु कथं सर्गं भवन्तः कर्तुमुद्यताः॥१८॥महीमान
मथान्वेष्टुं गता दक्षसुतास्ततः ॥ लोकालोकस्य परतो गर्भोदस्य तथोपरि ॥१९॥ वायुमण्डलमासाद्य भ्रमणान्नाशमागताः ॥ दक्षोऽपि तेषु नष्टेषु
वीरिण्यामेव धर्मवित् ॥ २० ॥ सहस्रं जनयामास पुत्राणामपरं ततः ॥ विवर्धयिषवस्ते तु शबलाश्वाः पुनः प्रजाः ॥ २१ ॥ पूर्वमुक्तं वचस्तद्वै
श्राविता नारदेन तु ॥ अन्योन्यमूचुस्ते सर्वे सम्यगाह महानृषिः ॥२२॥ भ्रातॄणां पदवीं चैव गन्तव्या नात्र संशयः ॥ तेऽपि हर्यश्वमार्गेण प्रयाताः
पृथिवीमिमाम् ॥ २३ ॥ तमेव वायुमासाद्य विनष्टाः शाश्वतीस्समाः ॥ तदाप्रभृति वै भ्रान्ता भ्रातुरन्वेषणे रताः ॥ २४ ॥ प्रयातो नश्यति विभो
तन्नः कार्यं विजानता ॥ अथ तेषु विनष्टेषु दक्षः कोपसमन्वितः ॥२५॥ शशाप नारदं क्रुद्धः तुल्यं जन्म न चाप्स्यसि ॥ देहं त्यक्त्वा स शापेन तेन
दक्षस्य नारदः ॥ २६ ॥ भूयो मुनिसुतो जातः कश्यपस्य महात्मनः ॥ अश्वमेधं च विततं दक्षस्याद्भुतकर्मणः ॥ २७ ॥ विध्वंसयामास हरः
पूर्ववैरेण भावितः ॥ दक्षोऽपि शप्तवान्रुद्रं शप्तास्ते ब्राह्मणोत्तमाः ॥२८॥ अद्य प्रभृति यक्ष्यन्ति नत्वा सार्धं दिवौकसैः ॥ जन्मान्तरेऽपि वैराणि
विनश्यन्ति न पार्थिव ॥ २९ ॥ तस्माद्वैरं न कर्तव्यं कदाचिदपि केनचित् ॥ हर्यश्वेष्वपि नष्टेषु महात्मसु पुरा तदा ॥ ३० ॥ असिक्न्यां जनया
मास दक्षो दुहितरस्तदा ॥ षष्टिः कन्या रूपयुक्तास्तपसा महता युताः ॥ ३१ ॥ द्वे ददौ बाहुपुत्राय चतस्रोऽरिष्टनेमिने ॥ द्वे प्रादात्स कृशाश्वाय
दश धर्माय चाप्यथ ॥ ३२ ॥ चतुर्दश कश्यपाय चाष्टाविंशतिमिन्दवे ॥ प्रददौ बाहुपुत्राय सुप्रभां भामिनीं तदा ॥ ३३ ॥ मनोरमां भानुमतीं
विशालां बाहुदामथ ॥ दक्षः प्रादान्महाभागश्चतस्रोऽरिष्टनेमिने॥३४॥स कृशाश्वाय च प्रादात्सुप्रभां च तथा जयाम् ॥अरुन्धतीं वसुं जामिं लम्बां
भानुमिरावतीम् ॥३५॥ संकल्पां च मुहूर्तां च साध्यां विश्वां तथैव च ॥ ददौ स दश धर्माय महात्मा लोकविश्रुतः॥३६॥ अदितिर्दितिर्दनुः काला
दनायुः सिंहिका मुनिः ॥ कद्रूः क्रोधा इरा प्राधा विनता सुरभिः खगा ॥ ३७ ॥ चतुर्दशैताः प्रददौ कश्यपाय प्रजापतिः॥ नामभिः पूर्व
विख्याताः कृत्तिकाद्यास्तथैव च ॥ ३८॥ ददौ नक्षत्रयोगिन्य अष्टाविंशतिमिन्दवे ॥ देवतास्त्वभिमानिन्यो नक्षत्राणां महीपते ॥ ३९ ॥
एतावदुक्तं तव दक्षवंशमृक्षोद्भवं चाप्यथ भूमिपाल ॥ अतः परं किं कथयामि तुभ्यं तन्मे वदस्वायतलोहिताक्ष ॥ ४० ॥ इति श्रीविष्णुधर्मोत्तरे
प्रथमखण्डे मा० सं० दक्षवंशवर्णनं नाम दशोत्तरशततमोऽध्यायः ॥ ११० ॥ ॥ छ ॥ ॥ वज्र उवाच ॥ ॥ महादेवेन ऋषयः शप्ताः
स्वायंभुवेऽन्तरे ॥ तेषां वैवस्वते प्राप्ते सम्भवं मम कीर्तय ॥ १ ॥ दाक्षायणीनां च तथा प्रजाः कीर्तय मे विभो ॥ ऋषीणां च तथा वंशं भृगुवंश

विवर्धन ॥ २ ॥ मार्कण्डेय उवाच ॥ मन्वन्तरेऽस्मिन्संप्राप्ते राजन्वैवस्वते पुरा ॥ अश्वमेधे तु वितते ब्रह्मणः परमेष्ठिनः ॥ ३ ॥ महादेवस्य शापेन त्यक्त्वा देहान्स्वयं ततः ॥ ऋषयस्तु समुद्भूता हुते शुक्रे प्रजेप्सया ॥ ४ ॥ देवानां मातरो दृष्ट्वा देवपत्नीस्तथैव च ॥ स्कन्नं शुक्रं महाराज ब्रह्मणः परमेष्ठिनः ॥ ५ ॥ तज्जुहाव ततो ब्रह्मा ततो जातो हुताशनात् ॥ ततो जातो महातेजा भृगुः स तपसां निधिः ॥ ६ ॥ अङ्गारेस्त्वंगिरा जातस्सभार्योऽत्रिस्तथैव च ॥ मरीचिभ्यो मरीचिश्च ततो जातो महातपाः ॥७॥ वसुमध्यात्समुत्पन्नो वसिष्ठश्च महातपाः ॥ भृगुः पुलोम्नश्च सुतां दिव्यां भार्यामविन्दत ॥ ८ ॥ यस्यां तस्य सुता जाता देवा द्वादश याज्ञिकाः ॥ भुवनो भावनश्चैव सुजन्यः सुजनस्तथा ॥९॥ क्रतुः सुवश्च पूगश्च व्याजश्च व्यश्नुजश्च ह ॥ प्रसवश्चाव्ययश्चैव दक्षो द्वादशमस्तथा ॥ १० ॥ इत्येते भृगवो नाम देवा द्वादश कीर्तिताः ॥ पौलोम्यजनयद्विप्रं देवानां तु कनीयसम् ॥ ११ ॥ च्यवनं तु महाभागमात्मवन्तं तथाप्यसौ ॥ आत्मवानात्मजस्त्वौर्वो जमदग्निस्तदात्मजः ॥ १२ ॥ और्वो गोत्रकरस्तस्य भार्गवानां महात्मनाम् ॥ तत्र गोत्रकरान्वक्ष्ये भृगोर्दीप्तौजसस्त्वहम् ॥ १३ ॥ भृगुश्च च्यवनश्चैव आत्मवांस्तु तथैव च ॥ और्वश्च जमदग्निश्च वात्स्यो दंभिर्नडायनः ॥ १४ ॥ नागायनो वहेतिश्च पैलुश्चैरानुशातिकः ॥ शौनकायनजीवन्तिः कौयोधः पार्षतिस्तथा ॥ १५ ॥ वैहीनारिर्विरूपाक्षो रोहिण्यायनिरेव च ॥ वैश्वानारिरुपारीरुर्वशावर्णिर्वृकास्वकः ॥ १६ ॥ विष्णुः पौरेयवालाकितौलिकेनान्तभागिनः ॥ मृतभागेयमर्कण्डजिहितोर्दीधिनस्तथा ॥ १७ ॥ मण्डूमाण्डव्यमण्डूकस्फेनसाङ्कृतिनस्तथा ॥ स्थालिपिण्डिः शिलापत्तिः शार्कराक्षिस्तथैव च ॥१८॥ मृकायणो देवमतिः षाण्ढरायिः सिगालवः ॥ सकृत्वश्चातकिः कायियाज्ञो दार्भिस्त्रिलायनिः ॥ १९ ॥ गार्ग्यायणो ह्रायनश्च ऋषिर्गेहायनस्तथा ॥ गोष्ठचायनो बाह्यायनो वैशम्पायन एव च ॥ २० ॥ वैकर्णेयिः शार्ङ्गरवो याज्ञेयिर्भ्राष्ट्रकायनः ॥ ललाटिर्लकुटिश्चैव लाक्ष्म्यायाः परिमण्डलः ॥ २१ ॥ ऊलुम्बिः शैलुकिः कोष्टिस्तथान्यः पैप्पलायनिः ॥ सत्यायनिर्मालयनिः कोटालिः कौचहस्तिकः ॥ २२ ॥ शौक्तिः शौक्तिः स कौचाक्षिः कौसिश्चान्द्रमसिस्तथा ॥ जैकहिह्निर्जिह्वशून्यवाज्यलेढिकवैरिणः ॥ २३ ॥ शारद्वतिकरेनित्यौ लोष्ठाक्षिश्चलवैरिणः ॥ नागायनिश्चानुमतिः पौर्णभागधिकाशिकृत् ॥ २४ ॥ समाख्यातास्तथैतेषां पञ्च तु प्रवरा मताः ॥ भृगुश्च च्यवनश्चैव आत्मवानस्तथैव च ॥२५॥ और्वश्च जमदग्निश्च पञ्चैते प्रवरा मताः ॥ परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥ २६ ॥ वाज्यावाज्यो न



१ 'धन्विन्नतायनः' इति ख० ।

वैवाह्या ज्ञेयास्त्रिप्रवरास्तु ते ॥ भृगुश्च जमदग्निश्च तथैवोर्वश्च पार्थिव ॥ २७ ॥ अतः परं प्रवक्ष्यामि शृणु चान्यान्भृगूद्वहान् ॥ जमदग्निर्विदश्चैव पौलस्त्यो वैजभृत्तथा ॥ २८ ॥ प्राचीनयोग्यो भगवानृषिः कौश्चायनस्तथा ॥ ऋषिभयश्चाजातश्च एकायनवटायनौ ॥ २९ ॥ आत्रेयोऽभिमतश्चैषां सर्वेषां प्रवरः स्मृतः ॥ भृगुश्च च्यवनश्चैव ह्यात्मवानस्तथैव च ॥ ३० ॥ परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥ ऋग्वेदीया मार्गपथे ग्रामायणिरथायनिः ॥ ३१ ॥ आपस्तम्बिस्तथा ताल्विर्नैकठिः कण्ठिरेव च ॥ आर्ष्टिषेणो गार्दभिश्च कार्दमायणिरेव च ॥ ३२ ॥ अश्वायनिरथान्नापि पंचार्षेयाः प्रकीर्तिताः ॥ परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥ ३३ ॥ योविराधो वीतहव्यो नासाथश्चण्डमो दमः ॥ जीवंत्यायनिमौद्गश्च विलिश्चैव खलिस्तथा ॥ ३४ ॥ भाविलिर्भागवित्तिश्च कौशाम्बेयिर्वृकाश्चकिः ॥ वालेयिः समदा गेयिर्गौरक्षितिरथैव च ॥ ३५ ॥ गौर्गजिश्च सवंशालस्तथा पौष्णायनो मुनिः ॥ रोमादश्च तथैतेषामार्षेयाः प्रवरा मताः ॥ ३६ ॥ भृगुश्च वीतहव्यश्च तथा चैव सदेवसः ॥ परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥३७॥ खालायनिः शाकटाख्यो मैत्रेयः सातयस्तथा ॥ द्रोणायनो नौक्मायन आँशिषिश्च पिकायनिः ॥ ३८ ॥ होमजिह्विस्तथैतेषामार्षेयाः प्रवरा मताः ॥ भृगुश्चैवाथ वध्न्यश्वो दिवोदासस्तथैव च ॥३९॥ परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥ सकायनो यज्ञपचिर्मध्यगन्धिस्तथैव च ॥ ४० ॥ प्रत्यूहश्च तथा श्रौभ्यक्षोक्षिर्वैकादशायनिः ॥ तथा गृत्समदो राजञ्शुनकश्च महानृषिः ॥ ४१ ॥ प्रवरस्तु यथोक्तानां ह्यार्षेयाः परिकीर्तिताः ॥ भृगुर्गृत्समदश्चैव द्वावेतौ परिकीर्तितौ ॥ परस्परमवैवाह्या इत्येते परिकीर्तिताः ॥४२ ॥ एते तवोक्ता भृगुवंशजाता महानुभावा नृप गोत्रकाराः ॥ येषां च नाम्नां परिकीर्तनेन पापं समग्रं विजहाति जन्तुः ॥ ४३ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे भृगुवंशानुकीर्तनं नामैकादशोत्तरशततमोऽध्यायः ॥ १११ ॥ मार्कण्डेय उवाच ॥ मरीचितनया राजन्सुरूपा नाम विश्रुता ॥ भार्या ह्यङ्गिरसो दिव्या यस्याः पुत्रा दश स्मृताः ॥ १ ॥ आत्मा ह्यायुर्मनुर्दक्षो मदः प्राणस्तथैव च ॥ हविष्मांश्चागविष्ठश्च ऋतः सत्यश्च ते दश ॥ ॥ २ ॥ इत्येतेऽङ्गिरसो नाम देवा वै सोमपीथिनः ॥ सुरूपा जनयामास ऋषीन्सर्वेश्वरानिमान् ॥ ३ ॥ बृहस्पतिं गौतमं च संवर्तं च महाऋषिम् ॥ अयस्यं वामदेवं च उतथ्यमुशिजं तथा ॥ ४ ॥ इत्येते ऋषयः सर्वे गोत्रकाराः प्रकीर्तिताः ॥ तेषां गोत्रसमुत्पन्नान्गोत्रकारान्निबोध मे ॥ ५ ॥ उतथ्यो गौतमश्चैव तैलजोऽभिजितिस्तथा ॥ बौद्धिनैषिः सलौगाक्षिः क्षोरोजो टांकिरेव च ॥ ६ ॥ राहोहकिः सौपुरिश्च कैरतिः शारिलौमकिः ॥ पौण्यजिर्भानुभावश्च ऋषिश्चैव बडोबडः ॥ ७ ॥ कराटकश्च माचीयः उपबिन्दुरथैषिणिः ॥ रौहिण्यायनिजार्गालिः

क्रोष्टा चैवारुणायनिः ॥ ८ ॥ सोमो डायनिकाशेकः कौटिल्यः पार्थिवस्तथा ॥ रोहिण्यायनिरौवायुर्[1]मूलयोवांशुरेव च॥९॥ तथा च गुल्मयोवांशु स्तम्बयोषांशुरेव च ॥ कावाक्षिः पुष्पधश्चैव क्षीरकारण्डिरेव च ॥ १० ॥ क्षपादिश्च करेरिश्च पारिकारीरिरेव च ॥ इत्यार्षेयास्तु सर्वेषां प्रवराः परिकीर्त्तिताः ॥ ११ ॥ आंगिराश्च तथोतथ्यो मुनिर्दीर्घतपास्तथा[2] ॥ परस्परमवैवाह्या इत्येते परिकीर्तिताः ॥ १२ ॥ उद्वाजिष्ट अयस्यश्च[3] कक्षीवान्गौतमस्तथा ॥ आर्षेयाः प्रवराश्चैव तेषां च प्रवराञ्शृणु ॥ १३ ॥ अंगिरश्च ततोतश्च उ[4]षाजिश्च महानृषिः ॥ सौमस्तम्भिर्वितम्भिश्च सालुभिर्वालुभिस्तथा ॥ १४ ॥ भारद्वाजिः सौवुद्धिश्च मेधी देवमतिस्तथा ॥ आग्नयायणसाविष्टचौ ह्यग्निवेशः शलाथलिः ॥ १५ ॥ वालिशेयनिश्शैकेर्यि[5] वाराहिर्वाकलिस्तथा ॥ शाटिश्च[6] ऋषिवर्णश्च प्रावाहिश्चाश्वलायनिः ॥ परस्परमवैवाह्या ऋषयः परिकीर्तिताः॥ १६ ॥ कावाकिश्च सभाकायिस्तथा चांशुमतिः प्रभुः ॥ भावीकेयूरिनैभुल्विः पुष्पान्वेषी तथैव च ॥१७॥ बाध्यो विच्छिन्दिशाटीकिः खारग्रीविस्तथैव च ॥ देवाद्यारि[7]र्देवस्थानिर्हरिकर्णिः सभ्राङ्गिकः[8] ॥ १८ ॥ धौवायिः[9] साभिसुग्रिश्च[10] तथा गोमदगन्धिकः ॥ मात्स्यक्राथः सालहरो ह्यलो हारस्तथैव च ॥ १९ ॥ गार्गोदयिः कौतपतिः कौरुक्षेत्रिस्तथैव च ॥ ताटाकिर्जैन्यद्रोणिश्च जैवालायनिरेव च ॥२०॥ आपस्तधर्मोजहृष्टिः कार्ष्णपिङ्गलिरेव च ॥ पौलश्चैव महातेजाः शङ्कलायनिरेव च ॥ २१ ॥ आर्षेयो नामतश्चैषां सर्वेषां प्रवरो नृप ॥ अङ्गिराः प्रवरस्तेषां द्वितीयश्च बृहस्पतिः ॥ २२ ॥ तृतीयश्च भरद्वाजः प्रवराः परिकीर्तिताः ॥ परस्परमवैवाह्या इत्येते परिकीर्तिताः ॥ २३ ॥ काणायनाः कौपयवास्तथा वात्स्यपरायणाः[11] ॥ भ्राष्ट्रकृद् भ्राष्ट्रविन्दी च नेन्द्रालिस्सयकायनः ॥२४॥ क्रोडिः शाक्री च कार्षी च तालकृन्माथुरावताः ॥ लापकृद्वालविप्रेपो मर्कटः पैलुकायनः ॥ २५ ॥ मृत्संशश्च तथा चाक्री गर्गः श्यामायनिस्तथा ॥ वाललिः साहरिश्चैव पञ्चार्षेयाः प्रकीर्तिताः ॥ २६ ॥ अङ्गिरास्तु महातेजा देवाचार्यो बृहस्पतिः ॥ भरद्वाजस्तथा गर्गश्चैत्यश्च भगवानृषिः ॥ २७ ॥ परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥ कपीतरः स्वस्तितरो दर्भः शक्तिः पतञ्जलिः ॥ २८ ॥ भूयसी जलसन्धिश्च विन्दुदण्डिः कुशीतकिः ॥ भृगुस्तु राजकेशी च शौम्बाटिः शांशिबिस्तथा ॥ २९ ॥ शालिश्च शकलः काण्वो मुनिः केरीरयिस्तथा ॥ काद्यो वाध्यायनिश्चैव सावस्यायनिरेव च ॥ ३० ॥



१ 'वायुः' इति ख० । २ 'दीर्घतमा' इति ख० । ३ 'अयम्यश्च' इति ख० । ४ 'उशिज' इति ख० । ५ 'कैशेयी' इति ख० । ६ 'शौटिः' इति ख० । ७ 'देवागरिः' इति ख० । ८ 'सजङ्गकिः' इति ख० । ९ 'औवायिः' इति क० । १० 'सात्यमुग्रिश्च' इति ख० । ११ 'वत्स्यतरायणः' इति ख० ।

त्यार्षेयो नामतस्तेषां प्रवरो भूमिपोत्तम ॥ अङ्गिरादमवाह्यश्च तथा चैवाप्यतत्क्षयः ॥ ३१ ॥ परस्परमवैवाह्याः सर्व एव प्रकीर्तिताः ॥ सक्रुतिश्च त्रिमार्ष्टिश्च शेधूः शैपविरेव च ॥ ३२ ॥ तण्डिश्च जानकिश्चैव तैलकाद्व्य एव च ॥ नारायणिश्चार्षभिश्च लौक्षिर्गार्गिर्हलस्तथा ॥ ३३ ॥ गालविश्चापि त्र्यार्षेयः सर्वेषां प्रवरा मताः ॥ अंगिराः संकृतिश्चैव गौरिवीतिस्तथैव च॥३४॥परस्परमवैवाह्याः ऋषय परिकीर्तिताः ॥ काण्वायनो हरितकः कौत्स्यः पौंग्यस्तथैव च ॥ ३५ ॥ हस्तिदमो वात्स्यमालिर्मान्द्रिर्गालिर्गवेरणः ॥ भीमवेशः शांख्यदर्भिः सर्वे त्रिप्रवरा मताः ॥ ३६ ॥ अङ्गिरास्तु तमस्युश्च पुरुकुत्सस्तथैव च ॥ कुत्साः कुत्सैरवैवाह्या एवमाहुः पुरातनाः ॥ ३७ ॥ रथीतराणां प्रवराः त्र्यार्षेयाः परिकीर्तिताः ॥ अङ्गिराश्च सुरूपाश्च तथैव च रथेतरः ॥ ३८ ॥ रथेतरा अवैवाह्या नितराश्च रथेतरैः ॥ विष्णुवृद्धिः शगे मद्रिर्जत्रिणः कत्रिणस्तथा ॥ ३९ ॥ प्रडिवश्च महातेजास्तथा चैव परायणः ॥ त्र्यार्षेयश्च मतस्तेषां सर्वेषां प्रवरः शुभः ॥४०॥ अङ्गिराश्च विरूपाश्च पृथुदश्वस्तथैव च ॥ परस्परमवैवाह्या इत्येते परिकीर्तिताः ॥ ४१ ॥ सान्त्यमुग्धिर्महातेजा हिरण्यस्तम्बिमुद्गलौ ॥ त्र्यार्षेयोऽपि मतश्चैषां सर्वेषां प्रवरो नृप ॥ ४२ ॥ अङ्गिरागृत्सदश्वश्च मुद्गलश्च महातपाः ॥ परस्परमवैवाह्या इत्येते परिकीर्तिताः ॥ ४३ ॥ मोहजिह्वो देवजिह्वो अग्निजिह्वविराडयः ॥ अपानेयरुय्यग्रयश्च वैरिण्यास्ताविमौद्गलाः ॥ ४४ ॥ त्र्यार्षेयोऽपि मतश्चैषां सर्वेषां प्रवरः शुभः ॥ अङ्गिराश्चैव ताविश्च मौद्गल्यश्च महातपाः ॥ ॥ ४५ ॥ परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥ उरुण्डश्च भुरुण्डश्च तृतीयः शाकटायनः ॥ ४६ ॥ ततः प्रागधमो नार्री मर्कटो रमणः शणः ॥ काण्वमार्कटयश्चैव तथा रामवणो मुनिः ॥ ४७ ॥ श्यामायनस्तथैतेषां त्र्यार्षेयः प्रवरो मतः ॥ अङ्गिराश्चाजर्मीढश्च काण्वश्चैव महातपाः ॥ ४८ ॥ परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥ तित्तिरिः कपिभूश्चैव गार्ग्यश्चैव महानृषिः ॥ ४९ ॥ परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥ आर्षेयो नामतश्चैषां सर्वेषां प्रवरः शुभः॥५०॥अङ्गिरास्तित्तिरिश्चैव कपिभूश्च महानृषिः ॥ परस्परमवैवाह्या ऋषयः परिकीर्त्तिताः ॥ ५१ ॥ अङ्गिराः सभरद्वाजो ऋषिर्वान्दनवस्तथा ॥ ५२ ॥ बृहस्पतिर्मैत्रवचाः पञ्चार्षेयाः प्रकीर्तिताः ॥ अङ्गिराः सभरद्वाजस्तथा चैव बृहस्पतिः ॥ ५३ ॥ ऋषिर्मित्रवचश्चैव ऋषिर्वान्दतवस्तथा ॥ परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥ ५४ ॥ भारद्वाजः, कटाशौङ्गः शैशिरेयस्तथैव च ॥ इत्येते कथिताः सर्वे द्व्यामुष्यायणनोत्रजाः ॥५५॥ पञ्चाग्नेयास्तथाप्येषां प्रवराः परिकीर्तिताः ॥ अङ्गिराः सभरद्वाजस्तथैव च

१ 'प्राङ्गिः' इति ख० । २ 'आर्षेयश्च' इति ख० । किञ्चास्मिस्थले यत्रयत्र त्र्यार्षेय इति पदं तत्र सर्वत्र आर्षेय इत्येव खपुस्तके दृष्टम् । ३ 'रावणजैमुनी' इति ख० ।

बृहस्पतिः ॥ ९६ ॥ सौङ्गश्च शैशविश्चैव प्रवराः परिकीर्तिताः ॥ परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥९७॥ एते तवोक्ताङ्गिरसस्तु वंशे महानुभावा नृप गोत्रकाराः ॥ येषां च नाम्नां परिकीर्तनेन पापं समग्रं पुरुषो जहाति ॥ ९८ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे अङ्गिरसो वंशानुकीर्तिवर्णनं नाम द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥ मार्कण्डेय उवाच ॥ अत्रिवंशसमुत्पन्नान्गोत्रकारान्निबोध मे ॥ कर्पूरायणशाखेयास्तथा शाराहणाश्च ये ॥ शैवालकी शौनवर्णिरघोसौद्रुतयश्च ये ॥ १ ॥ गौरग्रीवः सकारञ्जिरथ मैत्रायणाश्च ये ॥ आत्मयन्यावामरथ्या गोपनास्ताकिबिन्दवः ॥२॥ ह्वानजिह्वाह्वुरिन्द्रोविरेन्द्रालिः शाकटायनः ॥ तैलेयश्चैव बौलेयश्चात्रिगौणी मतिस्तथा ॥ ३ ॥ जलदो भगपादश्च सौपुष्पिश्च महातपाः ॥ छान्दोगेयस्तथैतेषामार्षेयः प्रवरो मतः ॥४॥ ध्याराश्वाश्च तथात्रिश्च ऋचनानस एव च ॥ परस्परमवैवाह्या ऋषयः परिकीर्तिताः॥५॥दक्षिर्बलिः पालकृच्च और्णनाभिः सिलिर्मिलिः ॥ बीजवापी शिरीषश्च मौंजकेशगविष्ठिरौ॥६॥बलन्धनस्तथैतेषां त्र्यार्षेयः प्रवरो मतः ॥ अत्रिर्गविष्ठिरश्चैव तथा पूर्वातिथिः स्मृताः॥७॥ परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥ आत्रेयान्पुत्रिकापुत्रानत ऊर्ध्वं निबोध मे ॥८॥ हालेयश्च सवालेयो वाममथ्यस्तथैव च ॥ गोत्रेयश्चैव गोत्रेयाः त्र्यार्षेयाः परिकीर्तिताः ॥ ९ ॥ अत्रिश्च वामरथ्यश्च पोत्रिश्चैव महानृषिः ॥ परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥ १० ॥ इत्यत्रिवंशप्रभवास्तवोक्ता महानुभावा नृप गोत्रकाराः ॥ येषां तु नाम्नां परिकीर्तनेन पापं समग्रं पुरुषो जहाति ॥ ११ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे अत्रिवंशानुकीर्तनं नाम त्रयोदशाऽधिकशततमोऽध्यायः॥ ११३ ॥ मार्कण्डेय उवाच ॥ अत्रेरेवापरं वंशं तव वक्ष्यामि पार्थिव ॥ अत्रेः सोमः सुतः श्रीमांस्तस्य वंशोद्भवो नृपः ॥ १ ॥ विश्वामित्रस्तु तपसा ब्राह्मण्यं समवाप्तवान् ॥ तस्य वंशमहं वक्ष्ये तन्मे निगदतः शृणु ॥ २ ॥ विश्वामित्रो देवरातस्तथा चेकितिगालवौ ॥ वतण्डश्च शलङ्कश्च तथा चाश्वाततायनः ॥ ३ ॥ श्यामायनो याज्ञवल्क्यो जाबालिः सैन्धनायनः ॥ दाभ्रव्याश्च कारीषी च सौश्रुत्या अथ सौश्रुताः ॥ ४ ॥ औलूषा औपगवयः पाण्योदरयमाश्वयः ॥ खरबाधा वहलयः पाणतम्बः सकौशिकाः ॥ ५ ॥ त्र्यार्षेयाः प्रवरास्तेषां सर्वेषां परिकीर्तिताः ॥ विश्वामित्रो देवरातः उद्दालश्च महायशाः ॥ ६ ॥ परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥ मार्गमित्रास्तथाद्याश्च माधुच्छन्दस एव च ॥ ७ ॥ त्र्यार्षेयाः प्रवरास्त्वेते ऋषयः परिकीर्तिताः ॥ विश्वामित्रस्तथा ज्येष्ठो मधुच्छन्दास्तथैव च ॥ ८ ॥ परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥ धनञ्जयः कपर्देयः

१ 'चेकित' इति ख० ।

परिकुष्टश्च पार्थिव ॥ ९ ॥ पाणिनिश्चैव त्र्यार्षेयाः सर्व एते प्रकीर्तिताः ॥ विश्वामित्रो मधुच्छन्दस्तथा चैवाघमर्षणः ॥ १० ॥ परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥ कामलायनिजाश्चैव आश्मरथ्यास्तथैव च ॥ ११ ॥ बन्धुलिश्चैव त्र्यार्षेयाः सर्वेषां प्रवरा मताः ॥ विश्वामित्रश्चाश्मरथो बधुलिश्च महातपाः ॥ १२ ॥ परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥ पूरणाः परिधावन्तः द्व्यार्षेयाः परिकीर्तिताः ॥ १३ ॥ विश्वामित्रः पूरणश्च तयोर्द्वौ प्रवरौ स्मृतौ ॥ परिवर्ता अवैवाह्याः पूरणाश्च परस्परम् ॥ १४ ॥ लोहिता अष्टकाश्चैव त्र्यार्षेयाः परिकीर्तिताः ॥ विश्वामित्रो लोहितश्च अष्टकश्च महातपाः ॥ १५ ॥ अष्टका लोहितैर्नित्यमवैवाह्याः परस्परम् ॥ उदरेण्डः कन्थकश्च ऋषिश्चौदावहिस्तथा ॥ १६ ॥ त्र्यार्षेयोऽपि मतश्चैषां सर्वेषां प्रवरः शुभः ॥ ऋणवान्ग्रथितश्चैव विश्वामित्रस्तथैव च ॥ १७ ॥ परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥ औदुम्बारिः शैशिरटिर्ऋषिस्तार्क्षायणस्तथा ॥ १८ ॥ टैकायनिस्तैकायनिस्तार्क्षायणिरथैव च ॥ कात्यायनिः करीरामिः शालङ्कायनिलावकी ॥ १९ ॥ मौञ्जायनिश्च भगवांस्त्र्यार्षेयाः परिकीर्तिताः ॥ किलिः कलिस्तथा विद्वान्विश्वामित्रस्तथैव च ॥ परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥ २० ॥ एते तवोक्ताः कुशिका नरेन्द्र महानुभावाः सततं द्विजेन्द्राः ॥ येषां तु नाम्नां परिकीर्तनेन पापं समग्रं पुरुषो जहाति ॥ २१ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे विश्वामित्रवंशानुकीर्तनं नाम चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥ मार्कण्डेय उवाच ॥ मरीचेः कश्यपः पुत्रः कश्यपस्य तथा कुले ॥ गोत्रकारानृषीन्वक्ष्ये तेषां नामानि मे शृणु ॥ १ ॥ आग्रायणा झषगणा मेषकौरीटिकायनाः ॥ गुरुव्रजी माठरश्च गोजाविरथ लक्ष्मणः ॥ २ ॥ शालाहलेयाः कोरिज्याश्चौकन्याश्चासुरायणाः ॥ मन्दान्यावै मृगयनो श्रोतसो भौसतायनाः ॥ ३ ॥ देवयाता गोपयाता अथोच्छायतयश्च ये ॥ ताकयानाश्चित्रहया अभियोगा गदायनाः ॥ ४ ॥ कातुवन्दिर्महाचक्रिर्दाक्षपाणय एव च ॥ ग्रीवायणा हर्किरयो हास्तिदासास्तथैव च ॥ ५ ॥ वात्स्या वालिन्यकृतहा हास्तलायनिसस्तथा ॥ आग्रायणः पेलुमूली[1] राश्वताताय नस्तथा ॥ ६ ॥ कौशीतकाश्च पाकान्ता अग्निशर्मायणाश्च ये ॥ मैषयः कैवमेयाश्च तथा चैव सुबभ्रवः ॥ ७ ॥ प्राचीथयो ज्ञानगया आग्रावमथ एव तु ॥ श्यामोचरा नैमिषयः तत्स्था ये शाद्वलायनाः ॥ ८ ॥ काष्टहायननामारीचा डौजिहायनहास्तिकाः ॥ वैकर्णेयाः काश्यपाश्च शामिशा हारितायनाः ॥ ९ ॥ मातंगिनो बभ्रसवः त्र्यार्षेयाः परिकीर्तिताः ॥ वत्सरः कश्यपश्चैव निध्रुवश्च महातपाः ॥ १० ॥ परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥ रैहाश्च सांख्यमित्राश्च यार्षे

१ 'पैलमौलि' इति ख० ।

याः परिकीर्तिताः ॥ ११ ॥ वत्सारः कश्यपश्चैव रैहाश्चैव महातपाः ॥ परस्परमवैवाह्यौ गोत्रौ द्वौ परिकीर्तितौ ॥ १२ ॥ अतः परं प्रवक्ष्यामि द्व्यामुष्यायणगोत्रजान् ॥ आनुष्टुभो भात्करयः स्वातयो राजवल्कयः ॥ १३ ॥ शैरेशिरो देवहिश्च सैरन्धी रौपसीवकिः ॥ सालुलिः काटुविङ्गाक्षिः शतशंभिस्तथैव च ॥ १४ ॥ दिवा वसिष्ठा इत्यते नक्तं ज्ञेयाश्च काश्यपाः ॥ त्र्यार्षेयाश्च तथा तेषां सर्वेषां प्रवराः शुभाः ॥ १५ ॥ वत्सारः कश्यपश्चैव वसिष्ठश्च महातपाः ॥ परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥ १६ ॥ सा माता बलिपुत्रश्च भौप्यलोऽथ जलत्वरः ॥ मुञ्जामश्रूरः पर्यश्च सोऽष्टमो गर्दभीमुखः ॥ १७ ॥ हिरण्यबाहुः कैरातः उभौ काश्यपगोभिलौ ॥ आहलो वृषकण्डश्च सुकेतुश्च तथोत्तरः ॥ १८ ॥ उदकेभस्तृणो वत्स्यो महाकेरलयश्च ये ॥ शाडीलवैशानवसौ द्रावोलेवलयातवः ॥१९ ॥ पैप्पलादिः पूर्ववरिर्वरिवित्था वरीनिकः ॥ त्र्यार्षेयोपि मतश्चैषां सर्वेषां प्रवरः शुभः ॥ २० ॥ असितो देवलश्चैव कश्यपश्च महातपाः ॥ परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥ २१ ॥ ऋषिप्रधानस्य तु कश्यपस्य दाक्षायणाभ्यः सकलं प्रसूतम् ॥ जगत्समग्रं यदुसिंहमुख्य तत्ते च वक्ष्याम्यहमुत्तरत्र ॥ २२ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे कश्यपवंशानुकीर्तनं नाम पञ्चदशाधिकशततमोऽध्यायः ॥ ११५॥ ॥ मार्कण्डेय उवाच ॥ वसिष्ठवंशजान्विप्रान्निबोध गदतो मम ॥ एकार्षेयश्च प्रवरो वसिष्ठानां प्रकीर्तिताः ॥ १ ॥ वसिष्ठ एव वासिष्ठा अविवाह्या वसिष्ठजैः ॥ व्याघ्रपादा औपगवाः वैक्लवा शाद्वलायनाः ॥ २ ॥ कापिष्ठला शैटलोमा आश्वलाः सर्वटाकराः ॥ गोपायना बोधयश्च द्वाकल्पा अपवाह्यकृत् ॥ ३ ॥ बालिशेया पालिशिष्यास्तथोमाङ्कुरवश्च ये ॥ आयस्थूणाः शीतवृक्षास्तथा ब्रह्मपुरोहिताः ॥ ४ ॥ लोमात्याः स्वस्तिकराः माण्डलिर्गौतलिस्तथा ॥ वाह्नेहण्डिश्च सुमना श्वपादिर्विद्धिरेव च ॥ ॥ ५ ॥ शौलिर्लोलिर्ब्रह्मबलो वैलिश्रवस एव च ॥ मौण्डवो याज्ञवल्क्यश्च एकार्षेयास्तथा नृप ॥ ६ ॥ वसिष्ठ एषां प्रवर अवैवाह्याः परस्परम् ॥ शैलालयो महाकर्णो कौरव्यः क्रैवणिस्तथा ॥७॥ कपिञ्जलो बालशिखिर्भागवित्तायनाश्च ये ॥ कौरायणा लाकहया कौलकृद्धागुरायणाः ॥ ८ ॥ शाकहर्व्याः कशापेया अथो उलपयाश्च ये ॥ साङ्ख्यायना अनडुहा अथो मांषशिराधयः ॥ ९ ॥ दामकायना वाहयवो वाक्ययोगोरथस्तथा ॥ आबायनाश्च ऋषयो ये च क्रोडादनायवाः ॥ १० ॥ प्रलम्बायनाश्च ऋषय औपमन्यव एव च ॥ साङ्ख्यायनाश्च ऋषयस्तथा ये च दशेरकाः ॥ ॥ ११ ॥ पादकायन औद्राहा ऋषयश्चैव लेखयः ॥ मालेया ब्रह्मवलयः पूर्णागारिस्तथैव च ॥ १२ ॥ त्र्यार्षेयोऽपि मतश्चैषां सर्वेषां प्रवरस्तथा ॥

१ 'असितो देवलश्चैव' इति ख०। २ 'शाकल्या अथ वाह्यकृत्' इति ख०। ३ 'पुरोधिका' इति क०। ४ 'शाकहर्या' इति ख०। ५ 'माप्र' इति ख०। ६ 'दातकायना' इति ख०। ७ 'नायका' इति ख०।

भगो वसुर्वसिष्ठश्च इन्द्रः सम्मतिरेव च ॥ १३ ॥ परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥ औपस्वस्थाः स्वस्थलयो वालो हालो हयाश्च ये ॥
॥ १४ ॥ मध्यन्दिना अक्षतयः पैप्पला देविचैङ्कपी ॥ त्रैशृङ्गा वनगा आलवाः कुण्डिनाश्च नरोत्तम ॥ १५ ॥ त्र्यार्षेयोऽपि मतश्चैषां सर्वेषां
प्रवरः शुभः ॥ वसिष्ठमित्रावरुणौ कुण्डिनश्च महातपाः ॥ १६ ॥ परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥ जातूकर्णा यवश्चैव पाद
पाश्च तथैव च ॥ १७ ॥ त्र्यार्षेयोऽपि मतश्चैषां सर्वेषां प्रवरस्तथा ॥ जातूकर्णो वसिष्ठश्च तथैवान्त्यश्च पार्थिव ॥ परस्परमवैवाह्या ऋषयःपरिकी
र्तिताः ॥ १८ ॥ वसिष्ठवंशेऽभिहिता मयैते ऋषिप्रबर्हा नृप गोत्रकाराः ॥ येषान्तु नाम्नां परिकीर्तनेन पापं समग्रं पुरुषो जहाति ॥१९ ॥ इति
श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मा० सं० वसिष्ठवंशानुकीर्तनं नाम षोडशाधिकशततमोऽध्यायः ॥११६॥ ॥छ॥ ॥ मार्कण्डेय उवाच ॥ ॥
वसिष्ठस्तु महातेजा निमेः पूर्वपुरोहितः ॥ १ ॥ बभूव पार्थिवश्रेष्ठ यज्ञैस्तस्य समन्ततः ॥ शान्तात्मा पार्थिवश्रेष्ठ विशश्राम तदा पुरा ॥ २ ॥
तं गत्वा पार्थिवश्रेष्ठो निमिर्वचनमब्रवीत् ॥ भगवन्यष्टुमिच्छामि तन्मा याजय मा चिरम् ॥ ३ ॥ तमुवाच महातेजा वशिष्ठः पार्थिवोत्तमम् ॥
कञ्चित्कालं प्रतीक्षस्व तव यज्ञैः समन्ततः ॥ ४ ॥ भृशं श्रान्तोऽस्मि विश्रम्य याजयिष्यामि ते नृप ॥ एवमुक्तः प्रत्युवाच वसिष्ठं नृपसत्तमः ॥५॥
पारलौकिककार्येषु कः प्रतीक्षितुमुत्सहे ॥ न यस्य सौहृदं ब्रह्मन्कृतान्तेन बलीयसा ॥ ६ ॥ धर्मकार्ये त्वरा कार्या चलं यस्माद्धि जीवितम् ॥
धर्ममार्गरतो जन्तुर्मृतोऽपि सुखमश्नुते ॥ ७ ॥ श्वःकार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ॥ न हि प्रतीक्षते मृत्युः कृतं वास्य न वा कृतम् ॥ ८ ॥
क्षेत्रापत्यगृहासक्तमन्यत्र गतमानसम् ॥ वृकीवोरणमासाद्य मृत्युरादाय गच्छति ॥ ९ ॥ न कालस्य प्रियः कश्चिद्द्वेष्यो वास्य न विद्यते ॥ आयुष्ये
कर्मणि क्षीणे प्रसह्य हरते जनम् ॥ १० ॥ प्राणो वायुश्चलत्वञ्च वायोर्विदितमेव च ॥ यत्र यज्जीव्यते ब्रह्मन्क्षणमात्रं तदद्भुतम् ॥ ११ ॥
सोऽहं सम्भृतसंभारो भवन्मूलमुपागतः ॥ न चेद्याजयसे मह्यं यास्याम्यन्यं तु याजकम् ॥ १२ ॥ एवमुक्तस्तदा तेन निमिना ब्राह्मणोत्तमः ॥
शशाप तं निमिं क्रोधाद्विदेहस्त्वं भविष्यसि ॥१३॥ श्रान्तं मां त्वं समुत्सृज्य यस्मादन्यं द्विजोत्तमम् ॥ धर्मज्ञः सन्नरेन्द्राद्य याजकं कर्तुमर्हसि ॥१४॥
निमिस्तं प्रत्युवाचाथ धर्मकार्यरतस्य मे ॥ विघ्नं करोषि नान्येन याजनं च तथेच्छसि ॥ १५ ॥ शापं ददामि तस्मात्त्वं विदेहोऽद्य भविष्यसि ॥
एवमुक्ते तु तौ जातौ विदेहौ द्विजपार्थिवौ ॥ १६ ॥ देहहीनौ तयोर्जीवौ ब्रह्माणमुपजग्मतुः ॥ आगतौ तौ समीपेऽथ ब्रह्मा वचनमब्रवीत् ॥१७॥

१ 'भाविचम्पकी' इति ख० ।

 

अद्य प्रभृति ते स्थानं निमे जीवं ददाम्यहम् ॥ नेत्रपक्ष्मसु सर्वेषां मनुष्याणां भविष्यसि ॥ १८ ॥ त्वत्सम्बन्धात्तथा तेषां निमेषः सम्भविष्यति ॥ चालयिष्यन्ति तु यदा नेत्रपक्ष्माणि मानवाः ॥ १९ ॥ एवमुक्ते मनुष्याणां नेत्रपक्ष्मसु सर्वशः ॥ जगाम निमिजीवं तु वरदानात्स्वयम्भुवः ॥ २० ॥ वशिष्ठजीवं भगवान्ब्रह्मा वचनमब्रवीत् ॥ मित्रावरुणयोः पुत्रो वशिष्ठ त्वं भविष्यसि ॥ २१ ॥ वशिष्ठ इति ते नाम तत्रापि च भविष्यति ॥ जन्मद्वयमतीतं च तत्रापि त्वं स्मरिष्यसि ॥ २२ ॥ एतस्मिन्नेव काले तु मित्रश्च वरुणस्तथा ॥ बदर्याश्रममासाद्य तपस्तेपतुरव्ययम् ॥ २३ ॥ तपस्यतोस्तयोरेवं कदाचिन्माधवे ऋतौ ॥ पुष्पितद्रुमसंछिन्ने शुभे दक्षिणमारुते ॥ २४ ॥ उर्वश्यथ वरारोहा कुर्वती कुसुमोच्चयम् ॥ ससूक्ष्मरक्तवसना तयोर्दृष्टिपथं गता ॥ २५ ॥ तां दृष्ट्वा सुमुखीं सुभ्रूं नीलनीरजलोचनाम् ॥ उभौ चुक्षुभतुर्वीर्यात्तद्रूपपरिमोदितौ ॥ २६ ॥ स्कन्नं रेतस्तयोर्दृष्ट्वा शापभीता वराप्सराः ॥ चकार कलशे सुभ्रूस्तोयपूर्णे मनोरमे ॥ २७ ॥ तस्माद्दृषिवरौ जातौ तेजसाप्रतिमौ भुवि ॥ वशिष्ठश्चाप्यगस्त्यश्च मित्रावरुणयोः सुतौ ॥ २८ ॥ वशिष्ठस्तूपयेमेथ भगिनीं नारदस्य तु ॥ अरुन्धतीं वरारोहां तस्यां शक्तिमजीजनत् ॥ २९ ॥ शक्तेः पराशरः पुत्रस्तस्य वंशं निबोध मे ॥ यस्य द्वैपायनः पुत्रः स्वयं विष्णुरजायत ॥ ३० ॥ प्रकाशो जनितो येन लोके भारतचन्द्रमाः ॥ पराशरस्य तस्य त्वं शृणु वंशमनुत्तमम् ॥ ३१ ॥ कार्द्रमयो वाहयानो जैमयो मैमतायनः ॥ गोपालिः पञ्चमश्चैषां ज्ञेया कृष्णपराशराः ॥ ३२ ॥ प्रारोहयो बाह्यतपाः पार्षयः कौतुजातयः ॥ हार्यश्विः पञ्चमश्चैषां ज्ञेया नीलपराशराः ॥ ३३ ॥ कार्ष्णायणाः कापिसौधाः कोकेयस्या तयास्तपाः ॥ पुष्करः पञ्चमश्चैषां ज्ञेया रक्तपराशराः ॥ ३४ ॥ श्रविष्ठायना वार्ष्णेया दासेयाः श्लोकजाश्च ये ॥ इषीकहस्तः पञ्चमश्च एते श्वेतापराशराः ॥ ३५ ॥ वटिका बादराश्चैव स्कम्भन्याः क्रोशकातयः ॥ क्षामिरेषां पञ्चमश्च एते गौरपराशराः ॥ ३६ ॥ खल्वायणी वार्ष्यणी तिलवणो बैल्वयूथपः ॥ तामिरेषां पञ्चमश्च एते धूम्रपराशराः ॥ ३७ ॥ पराशराणां सर्वेषां त्र्यार्षेयः प्रवरो मतः ॥ पराशरश्च शक्तिश्च वशिष्ठश्च महातपाः ॥ ३८ ॥ परस्परमवैवाह्याः सर्व एव पराशराः ॥ ३९ ॥ उक्तास्तथैते नृप वंशमुख्याः पाराशराः सूर्यसमप्रभावाः ॥ येषां तु नाम्नां परिकीर्तनेन पापं समग्रं पुरुषो जहाति ॥ ४० ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे पराशरवंशानुकीर्तनं नाम सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥ ॥ मार्कण्डेय उवाच ॥ अतः परमगस्त्यस्य वक्ष्ये वंशोद्भवान्द्विजान् ॥ आगस्त्येषः करम्भो यः कौसल्याकुलजास्तथा ॥१॥ स्वमेधसो मयोभुवस्तथा गान्धारकायनिः॥ पौलस्त्याः पुलहाश्चैव क्रतुवंशभवास्तथा॥२॥

वार्ष्णेयोऽपि मतश्चैषां सर्वेषां प्रवराः शुभाः ॥ अगस्त्यश्च महेन्द्रश्च ऋषिश्चैव मयोभुवः ॥ ३ ॥ परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥ पौर्णमासाः पारणाश्च त्र्यार्ष्णेयाः परिकीर्तिताः ॥४॥ अगस्त्यः पौर्णमासश्च पारणश्च महातपाः ॥ परस्परमवैवाह्या पौर्णमासाश्च पारणम् ॥ ५॥ एतदुक्तमृषीणां ते वंशमुक्तमपूरुषम् ॥ अतः परं प्रवक्ष्यामि किं तवानघ कथ्यताम् ॥६॥ वज्र उवाच ॥ पुलहस्य पुलस्त्यस्य क्रतोश्चैव महात्मनः ॥ अगस्त्यस्य तथा चैकं कथं वंशं तदुच्यते ॥ ७ ॥ मार्कण्डेय उवाच ॥ क्रतुः खल्वनपत्योऽस्ति राजन्वैवस्वतेन्तरे ॥इध्मवाहं स पुत्रत्वे जग्राह नृपसत्तम ॥ ८ ॥ अगस्त्यपुत्रं धर्मज्ञ आगस्त्यात्क्रतवस्तथा ॥ पुलहस्य तथा पुत्रः तिरश्चः पृथिवीपते [1]॥ ९ ॥ तेषां ते जन्म वक्ष्यामि उत्तरत्र यथाविधि ॥ पुलहस्त्वप्रजां दृष्ट्वा नातिप्रीतमना ह्यभूत् ॥ १० ॥ अगस्त्यजं दृढस्युं तं पुत्रत्वे कृतवांस्तदा ॥ पौलहाश्च तथा राजन्नागस्त्याः परिकीर्तिताः ॥ ११॥ एते तवोक्ताः प्रवरा द्विजानां महानुभावा नृप गोत्रकाराः ॥ येषां च नाम्नां परिकीर्तनेन पापं समग्रं पुरुषो जहाति ॥ १२ ॥

इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे अगस्त्यवंशानुकीर्तनं नामाष्टदशाधिकशततमोऽध्यायः ॥ ११८ ॥

॥ मार्कण्डेय उवाच ॥ अस्मिन्वैवस्वते प्राप्ते शृणु धर्मस्य पार्थिव ॥ दाक्षायण्याश्च सकलं शृणु त्वं वंशमुत्तमम् ॥ १ ॥ एवं तानि महीदुर्गशरीराणि नराधिप ॥ अरुन्धत्या प्रसूतानि धर्मो वैवस्वतेन्तरे ॥ २ ॥ अष्टौ च वसवः पुत्राः सोमपाश्च वसोस्तथा ॥ धरो ध्रुवश्च सोमश्च आपश्चैवानलानिलौ ॥ ३ ॥ प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ॥ धरस्य पुत्रोऽम्बुनिम्बः कालः पुत्रो ध्रुवस्य च ॥ ४ ॥ कालस्यावयवानां तु शरीराणि नराधिप ॥ मुहूर्तवर्जं कालाद्धि प्रसूतान्यविशेषतः ॥ ५ ॥ सोमस्य भगवान्वर्चाः श्रमस्त्वापस्य कीर्त्यते ॥ अनेकजन्मा जनवः कुमारश्चानलस्य तु ॥ ६ ॥ पुरोजवाश्चानिलस्य प्रत्यूषस्य च देवलः ॥ विश्वकर्मा प्रभासस्य त्रिदशानां स वार्धकिः ॥ ७ ॥ जामी दुहितरः प्रोक्ता नागवीथ्यादयो नव ॥ लंबापुत्रः स्मृतो घोषो भानोः पुत्रश्च भानवः ॥ ८ ॥ ग्रहर्क्षाणां तु सर्वेषां चान्येषामपि तेजसाम् ॥ मरुत्वत्यां मरुत्वन्तः सर्वे पुत्राः प्रकीर्तिताः ॥ ९ ॥ संकल्पायाश्च संकल्पास्तथा पुत्राः प्रकीर्तिताः ॥ मुहूर्ताश्च मुहूर्तायाः साध्यात्साध्यासुताः स्मृताः ॥ १० ॥ मत्तोन्मत्तश्च प्राणश्च नरोपाणश्च वीर्यवान् ॥ चित्तिर्नरो हयश्चैव हंसो नारायणस्तथा ॥ ११ ॥ विभुश्चापि प्रभुश्चापि साध्या द्वादश कीर्तिताः ॥ विश्वायाश्च तथा पुत्रा विश्वेदेवाः प्रकीर्तिताः ॥ १२ ॥ क्रतुर्दक्षो वसुः सत्यः कालः कामो धुनिस्तथा ॥ ऊरवान्मनुजो

[1] 'पर्वतादि' इति ख० ।

विश्वेरोमायाश्च हि ते दश ॥ १३ ॥ एतावदुक्तं तव धर्मवंशं संक्षेपतः पार्थिवसंघमुख्य ॥ व्यासेन वक्तुं न हि शक्तिरस्ति राजन्विना वर्षशतै
रनेकैः ॥ १४ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मा० सं० धर्मवंशानुकीर्तनं नामैकोनविंशाधिकशततमोऽध्यायः ॥ ११९ ॥ ॥ छ ॥ ॥ मार्क
ण्डेय उवाच ॥ ॥ अतः परं कश्यपस्य शृणु वंशं नराधिप ॥ यत्र प्रायेण संभूतं जगत्स्थावरजङ्गमम् ॥ १ ॥ अदितेर्द्वादशादित्या देवपुत्राः
प्रकीर्तिताः ॥ धाता पुत्रोऽर्यमा पूषा शक्रोंऽशो वरुणो भगः ॥ २ ॥ त्वष्टा विवस्वान्वरुणो विष्णुर्द्वादशमस्तथा ॥ विष्णोरंशेन संभूताः
साध्या देवगणा नृप ॥ ३ ॥ त एव तेजसोऽर्धेन जाताश्चैवादितेः सुताः ॥ नरनारायणौ चोभौ यौ ते राजन्मयेरितौ ॥४॥ इन्द्राविष्णू तथैवोक्ता
वादित्येषु नराधिप ॥ मनोरन्तरमासाद्य सर्वत्रैव जनार्दनः ॥ ५ ॥ अंशेनैकेन भवति सगणः सोमपायिनाम् ॥ तस्मिन्गणे देववरो विष्णुर्लोक
नमस्कृतः ॥ ६ ॥ तेजसाऽभ्यधिको नैको भवतीति न संशयः ॥ यस्तेषामार्तिशमनं करोति वसुधाधिप ॥ ७ ॥ कर्माण्यतीतेषु तथान्तरेषु
वक्ष्ये भविष्येषु तथा नरेन्द्र ॥ मन्वन्तराणां परिकीर्तनेषु शृणुष्व तावददितिवंशमुग्रम् ॥ ८ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्क
ण्डेयवज्रसंवादे आदित्योत्पत्तिर्नाम विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥ ॥ छ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ दितिः पुत्रद्वयं राज
ञ्जनयामास विश्रुतम् ॥ हिरण्याक्षं च दुर्धर्षं हिरण्यकशिपुं तथा ॥ १ ॥ हिरण्याक्षो हतो राजन्नृवराहेण संयुगे ॥ हिरण्यकश्यपू
राजन्नृसिंहेन निपातितः ॥ २ ॥ हिरण्यकशिपोः पुत्रः प्रह्लादोऽरिकुलान्तकः ॥ कालनेमिश्च दुर्धर्षो विष्णुना घातितो युधि ॥ ३ ॥
आराध्य केशवं देवं प्रह्लादश्च महाबलः ॥ प्राप्तवाञ्जीवितं दीर्घं ब्राह्मं दिनमनुत्तमम् ॥ ४ ॥ कालनेमिश्च दुर्धर्षो महाबलपराक्रमः ॥ निहतो
वासुदेवेन निवृत्ते तारकामये ॥ ५॥ प्रह्लादस्य सुतः श्रीमान्राजन्नाम्ना विरोचनः ॥ विरोचनसुतः श्रीमान्बलिरित्येव विश्रुतः ॥ ६ ॥ वामनं रूपमा
स्थाय बद्धो यो विष्णुना पुरा ॥ बलेर्बाणः सुतो राजन्स्मृतो बाहुसहस्रवान् ॥ ७ ॥ पितुस्ते श्वशुरः श्रीमान्पितुरर्थे तवानघ ॥ विवाहं कृतवा
न्कृष्णो नगरे शोणिताह्वये ॥ ८ ॥ यस्मिन्स वै देववरः प्रसह्य स्कन्दं च रुद्रं दितिजैः समेतम् ॥ रणे विजिग्ये नृपतिप्रधान सहानुगं वीर्यबलोप
पन्नम् ॥ ९ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे दितिवंशानुकीर्तनं नामैकविंशत्यधिकशततमोऽध्यायः ॥ १२१॥ वज्र उवाच ॥
हिरण्यकशिपोः पुत्रो कालनेमिर्महासुरः॥कथं कृष्णेन निहतस्तन्ममाचक्ष्व पृच्छतः॥१॥ मार्कण्डेय उवाच ॥यदा दैत्यवधे वृत्ते दैत्याः पातालमाश्रिताः॥

१ 'रोचमानस्तथैव च' इति ख० ।

मयतारौ समाश्रित्य भूयो देवान्प्रदुद्रुवुः ॥ २ ॥ तत्र देवगणाः सर्वे मयतारपुरःसरैः ॥ दानवैर्निहता युद्धे देवाचार्यं बृहस्पतिम् ॥ ३ ॥ संप्राप्ताः शरणं विप्रं तानुवाच बृहस्पतिः ॥ तारकश्च मयश्चैव महाबलपराक्रमौ ॥ ४ ॥ ययुर्जेतुं देवगणाँस्ताविमौ चोदयाम्यहम् ॥ एवमुक्त्वा देवगणान्देवाचार्यो बृहस्पतिः ॥ तुष्टाव देवदेवेशं बहुरूपं हुताशनम् ॥ ५ ॥ बृहस्पतिरुवाच ॥ त्वमग्ने सर्वभूतानामन्तश्चरसि पावक ॥ वेदास्त्वदर्थं जाताश्च जातवेदास्तथा ह्यसि ॥ ६ ॥ त्वं यज्ञस्त्वं वषट्कारस्त्वं हवींषि महाद्युते ॥ त्वं स देव चरस्यात्मा विष्णोरमिततेजसः ॥ ७ ॥ त्वं मुखं सर्वदेवानां सर्वस्यात्मा तथा भवान् ॥ ऊष्मा त्वं देहिनां देहे भुक्तपीतवतस्तथा॥८॥ यच्छक्तिः सर्वदेवानां त्वदीया भूतभावन ॥ प्राप्ता त्वयाहुतिः सम्यगादित्यमुपतिष्ठते ॥ ९ ॥ आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥ सर्वदेववरेशानः सर्वलोकनमस्कृतः ॥ १० ॥ त्रैलोक्यस्य समुत्पत्तावेकः कारणतां गतः ॥ कालाग्निरुद्रो भगवाञ्जगत्संहारकारकः॥११॥ स्थितौ निमित्तं च भवान्सर्वेषां देहिनां शमः॥ अतीव दुर्धरं देव तव तेजः सुदारुणम् ॥१२॥ तेजसा तेन दैत्येन्द्राञ्जहि मा त्वं चिरं कृथाः ॥ सखा च ते रणे देव भविष्यति समीरणः ॥१३॥ इत्येवमुक्तोऽङ्गिरसा महात्मा तथेति तं प्राह नृपेन्द्र पूज्यम् ॥ जीवोऽपि गत्वा पवनं जगाद देवेश्वरस्यानघसिद्धिमिच्छन्॥१४॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादेऽग्निस्तोत्रं नाम द्वाविंशत्यधिकशततमोऽध्यायः ॥१२२॥ बृहस्पतिरुवाच॥जगदायुर्भवान्वायो शरीरस्थः शरीरिणाम्॥अनन्तमूर्तिर्धर्मात्मा देवो नारायणः प्रभुः ॥१॥ अचिन्त्यवीर्यः पुरुषः सदाधारः सनातनः ॥ साक्षिभूतश्च सर्वेषां कर्मणां शुभपापयोः ॥२॥ प्राणस्त्वं देहिनां देहे चेष्टितश्च तथा भवान् ॥ भवान्रुद्रो भवान्ब्रह्मा भवान्विष्णुः सनातनः ॥ ३ ॥ तवायत्तं हि जगतां वर्षावर्षं शुभाशुभम् ॥ भवान्विसृजते मेघान्भवान्संहरते पुनः ॥ ४ ॥ भवान्धारयते मेघान्वर्षमाणाँस्तथा दिवि ॥ आदित्यरश्मिपीतस्य मेघोदरगतस्य च ॥५॥ रसस्य भक्ता सततं भवानेव नभस्तले ॥ तडिल्लतानां च तथा भवान्कर्ता जगत्त्रये ॥ ६ ॥ अम्भसां भेदकाले तु सर्वाधारः समीरणः ॥ परस्परं हि भवतस्तथा संघटनात्प्रभो ॥ ७ ॥ गर्जितं जायते लोके मेघोदरगतं महत् ॥ बलेन त्वत्समं नान्यं भूतं पश्यामि भूतले ॥ ८ ॥ तस्मात्त्वं कुरु साहाय्यं वेदमूर्तेर्विभावसोः ॥ ९ ॥ एतावदुक्तोऽङ्गिरसा महात्मा तथेति तं प्राह समीरणोऽपि ॥ जगाम युद्धं सह पावकेन दैत्येश्वरान्देवरिपून्महात्मा ॥ १० ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे वायुस्तोत्रं नाम त्रयोविंशत्युत्तरशततमोऽध्यायः ॥ १२३ ॥ ॥ मार्कण्डेय उवाच ॥ वाय्वग्नी सहितौ गत्वा मयतारपुरोगमान् ॥ जिग्यतुः समरे दैत्यान्नानाप्रहरणोद्यतान् ॥ १ ॥ विजितास्ते रणे दैत्या मयतारपुरोगमाः ॥ त्यक्तदेवालयाः सर्वे वरुणालयमागताः ॥ २ ॥ एत

 

स्मिन्नेव काले तु हिरण्यकशिपोः सुतः ॥ कालनेमिरिति ख्यातः शीतंशीर्षोनुदृश्यते ॥ ३ ॥ शतबाहुर्महाकायः पर्वताकारदर्शनः ॥ ब्रह्मलब्धवरो रौद्रो दग्धशैलसमच्छविः ॥ ४ ॥ एकोदरो द्विपादश्च एकग्रीवः सुरान्तकः ॥ अङ्गदी बद्धमुकुटः कुण्डलाम्बरभूषणः ॥ ५ ॥ सर्वायुधधरो रौद्रो गदापाणिर्विभीषणः ॥ दत्त्वाऽभयं स दैत्यानां तस्मै मेरुं सुरालयम् ॥ ६ ॥ गत्वा विजिग्ये त्रिदशान्स्थानेभ्यश्चावरोपयत ॥ त्रैलोक्यमात्मसा त्कृत्वा सुखमास्ते त्रिविष्टपे ॥ ७ ॥ तस्य ते ह्यनुगाः सर्वे लोकाः स्थावरजङ्गमाः ॥ तदाज्ञाकारिणः सर्वे तद्भावस्यानुवर्तकाः ॥ ८ ॥ पञ्च तत्रा भ्यवर्तन्त विपरीतेन कर्मणा ॥ वेदो धर्मः क्षमा सत्यं श्रीश्च नारायणाश्रया ॥ ९ ॥ सर्वेषामनुसन्धानात्सरोषो दानवेश्वरः ॥ वैष्णवं पदमन्विच्छ न्ययौ नारायणान्तिकम् ॥ १० ॥ ज्ञात्वा दैत्यमथायान्तं देवोपि मधुसूदनः ॥ तार्क्ष्यमावाहयाञ्चक्रे आरुरोह च तं हरिः ॥ स ददर्श हरिं देवं तार्क्ष्यस्थं दैत्यराट् तदा ॥११॥ सजलजलदनीलं पद्मपत्रायताक्षं खगपतिमवरूढं कल्पवृक्षोपमानम् ॥ हलमुसलगदाभिः शोभितं देवदेवं वरपुरुष मजेयं शार्ङ्गचक्रासिपाणिम् ॥ १२ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे कालनेम्युपाख्याने श्रीभगवद्दर्शनो नाम चतुर्विंश त्यधिकशततमोऽध्यायः ॥ १२४ ॥ ॥ मार्कण्डेय उवाच ॥ दृष्ट्वा स पुरतो देवं दानवानभ्यभाषत ॥ अयं स दृश्यते विष्णुर्दा नवा येन घातिताः ॥ १ ॥ कुतृष्णयेव शक्रार्थे बभूव किल वामनः ॥ यदा वञ्चितवान्पुत्रं भ्रातृव्यस्य बलिं मम ॥ २ ॥ नृवराहवपुः कृत्वा लोकचित्तहरं पुरा ॥ हिरण्याक्षं जघानैव पितृव्यं मम विस्मितम् ॥ ३ ॥ अपूर्वं रूपमास्थाय नरसिंहस्य दानवाः ॥ पितरं यो जघानैव हिरण्यकशिपुं रणे ॥ ४ ॥ वराहरूपिणानेन पातालतलमास्थिताः ॥ असम्भाव्यभयेनाजौ दानवा विनिपातिताः ॥ ५ ॥ नराश्व वपुषा येन मधुकैटभयोः पुरा ॥ पातालादाहृता वेदास्ततस्तौ युधि घातितौ ॥ ६ ॥ अस्याज्ञाकारिणो देवा न संतिष्ठन्ति शासने ॥ अयं स रक्षां देवानामस्माभिर्विप्रकृष्यताम् ॥ ७ ॥ त्रैलोक्ये दैत्यमुद्भूतं युद्धेनैव पुनःपुनः ॥ देवसाद्गम इत्येव तेन वध्योऽथ मे रिपुः ॥ ८ ॥ अतीत स्याद्य कालस्य दुर्नयस्य कृतस्य च ॥ भोक्ष्यतेऽयं फलं दैत्याः सर्वे पश्यन्त मा चिरम् ॥ ९ ॥ इत्येतद्दैत्यनाथस्य वाक्यं श्रुत्वैव दानवाः ॥ जयशब्दं ततश्चक्रुः सिंहनादरवं तथा ॥ १० ॥ वाचश्च प्रतिकूलास्तास्तेन दुष्टेन चेतसा ॥ तच्छ्रुत्वा च हरिर्देवः क्रुद्धो नामेदमब्रवीत् ॥ ११ ॥ किमिदं गर्जसे दैत्य शारदाम्बुदवद्वृथा ॥ प्रजापतिकृतं सेतुं कथं लङ्घितुमिच्छसि ॥ १२ ॥ एवं कथतोर्देवदैत्ययोः पार्थिवोत्तम ॥ प्रावर्तत रणो घोरो गदापातविभीषणः ॥ १३ ॥ दानवैर्देवदेवोऽपि कालनेमिपुरःसरैः ॥ संछाद्यते महास्त्रौघैर्मेघैरिव नभस्तलम् ॥ १४ ॥ संछाद्यमानो दैत्यै

न्द्रैर्देवदेवो न विव्यथे ॥ योधयामास स रणे गदया दानवान्बहून् ॥ १५ ॥ तस्य दैत्यप्रसक्तस्य कालनेमिर्महासुरः ॥ पातयामास वेगेन गदां गरुडमूर्धनि ॥ १६ ॥ गदाघातेन रौद्रेण तेन ताक्ष्यस्य मानद ॥ नासा भग्ना व्यथा जाता रक्तच्छर्दिश्च दारुणा ॥ १७ ॥ व्यथितं गरुडं दृष्ट्वा देवेन हरिमेधसा ॥ क्षिप्तं दैत्यविनाशाय तदा चक्रं सुदारुणम् ॥ १८ ॥ यत्तत्सुदर्शनं नाम सूर्यतेजःसमुद्भवम् ॥ वज्रनाभं सहस्रारं क्षरपर्यन्तमण्डलम् ॥ १९ ॥ च्युतं चक्रिकराच्चक्रं कालनेमिं महासुरम् ॥ शीघ्रं विशिरसं चक्रे विबाहुं च तथा नृप ॥ २० ॥ विबाहुशिरसं कृत्वा देवहस्तमुपेयिवान् ॥ विबाहुशिरसं कायं क्षरच्छोणितनिर्झरम् ॥ २१ ॥ न पपातास्य मेदिन्यां यदा ताक्ष्यस्ततो रयात् ॥ उरसा पातयामास देवानां पश्यतां तदा ॥ २२ ॥ पतता दैत्यकायेन सशैलवनकानना ॥ कम्पिता वसुधा सर्वा पतिताश्च शिलोच्चयाः ॥ २३ ॥ दानवेन्द्रं हतं दृष्ट्वा मयतारपुरोगमाः ॥ तुष्टुवुर्देवदेवशं वरचक्रासिपाणिनम् ॥ २४ ॥ तुष्टाव च तदा देवो ब्रह्मा शुभचतुर्मुखः ॥ स्तुतश्च ब्रह्मणा देवो लोकपालान्यथा पुरा ॥२५॥ स्थानेषु योजयामास यज्ञं देवमुखे तथा ॥ जगाम ब्रह्मणा सार्धं ब्रह्मलोकं तदा विभुः ॥२६॥ तत्रात्मानं यज्ञमूर्तिमिज्यमानं द्विजोत्तमैः ॥ दृष्ट्वा स्वयं तु जग्राह यज्ञभागं महात्मनाम् ॥ २७ ॥ तत्र पूजामुपादाय जगाम स हिरण्वतीम् ॥ अस्त्रैरनुगतस्तत्र सुष्वाप किल योगवित् ॥२८॥ एवं स दैत्यप्रवरो नरेन्द्र कृष्णेन चक्रेण पुरा निरस्तः ॥ अतः परं किं कथयामि तुभ्यं तन्मे वदस्वायतलोहिताक्ष ॥२९॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे कालनेमिवधो नाम पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥ वज्र उवाच ॥ यदुक्तं दैत्यनाथेन दैत्यानां कालनेमिना ॥ पातालदैत्यशमनं वपुर्देवस्य चक्रिणः ॥ १ ॥ तदहं श्रोतुमिच्छामि तत्र मे संशयो महान् ॥ चरितं तस्य देवस्य भावान्वेत्ति यथातथम्॥२॥मार्कण्डेय उवाच ॥ विष्णुना तु बलौ बद्धे पातालतलमाश्रिताः॥जघ्नुर्दैत्यगणा लोकान्ब्राह्मणांश्च विशेषतः॥३॥ भूतले हन्यमाने तु यज्ञे नाशमुपागते॥क्षुत्क्षामैस्त्रिदशैर्ब्रह्मा दैत्यहेतोः प्रचोदितः॥४॥ब्रह्मापि चोदयामास देवदेवं जनार्दनम्॥ब्रह्मणा चोदितो देवः पातालगमनेच्छयः ॥५॥ चकार रूपं वाराहं भिन्नाञ्जनचयप्रभम् ॥ शशाङ्कलेखादंष्ट्राग्रं वज्रप्रोथखुरं तथा ॥६॥ वज्रसंहननं भीमं त्रैलोक्यक्षोभकारकम् ॥ पीनवृत्तायतस्कन्धं महापीनशिरोधरम् ॥ ७ ॥ विवृत्तास्यं महाकायं भीमाक्षं भीमनिस्वनम् ॥ आवर्त्तरोमसंघातं तेन विग्रहमूर्जितम् ॥ ॥ ८ ॥ स समुद्रेण पातालं प्रविश्य मधुसूदनः ॥ दैत्यानां दर्शने तस्थौ महाबलपराक्रमः ॥ ९ ॥ पाताले सूकरं दृष्ट्वा प्रोथदारितभूतलम् ॥ सुसुप्तगर्भकवलं शुंशुंकारकृताननम् ॥ १० ॥ पङ्कानुलिप्तसर्वाङ्गं निर्ययुर्दानवास्तदा ॥ सततं मृगयाशीला जघ्नुस्तश्च वरायुधैः ॥ ११ ॥

 

स हन्यमानो दैत्याद्यैः पृषतैरिव पर्वतः ॥ स्कन्धकण्डूच्छलेनाजौ दैत्याधिपनिवेशनम् ॥ १२ ॥ पातयामास वेगेन महाद्रिशिखरोपमम् ॥
वेश्मनश्च निपातेन देवदेवस्य मायया ॥ १३ ॥ हन्यन्ते दानवा घोराः शतशोऽथ सहस्रशः ॥ ते क्षयाद्दैत्यमुख्यानां दैत्यमुख्यक्षयङ्कराः॥१४॥
यथार्थक्षयतां जग्मुः क्षये रौद्र उपस्थिते ॥ क्षीयमाणाः क्षयैर्दृष्ट्वा क्षतजोत्क्षिप्तमूर्धजान् ॥ १५ ॥ क्ष्मातलस्थान्क्षतैर्गोत्रैः क्षणेन क्षणदाचरान् ॥
प्रधाना दैत्यमुख्या ये औरसेन बलेन ते ॥१६॥ जग्मुर्वरायुधैर्देवं शतशोऽथ सहस्रशः ॥ स हन्यमानो दैत्येन्द्रैः प्रोथेन दितिजोत्तमान् ॥१७॥
विदारयामास रणे दंष्ट्राग्रेण तथापरान् ॥ एवं वराहेण रणे हतान्दृष्ट्वा दितेः सुतान् ॥ १८ ॥ हरिं विज्ञातवान्देवं प्रह्लादो दैत्यसत्तमः ॥
स प्रणम्य हरिं देवं तुष्टाव परवीरहा ॥ १९ ॥ तं जगाद महातेजा देवदेवो जनार्दनः ॥ अनुग्राह्योऽसि मे दैत्य भक्तोऽसि सततं यतः ॥ २०॥
तवाज्ञालङ्घका घोरा प्रायेण निहता मया ॥ तवाज्ञाकारिणो दैत्या न मे वध्या दितेः सुताः ॥ २१ ॥ शासनं पालय मह्यं पाताले त्वं
सुखी भव ॥ मार्गे स्थापय दैत्याँस्त्वं त्वदाज्ञापरिबृंहितान् ॥२२॥ आभूतसंप्लवं दैत्य जीवं त्वं न विमोक्ष्यसे ॥ धर्मिष्ठानां च दैत्यानां सदा राजा
भविष्यसि ॥ २३ ॥ मद्भक्त्या परया वत्स पुत्रस्तव विरोचनः ॥ मार्गच्युतोऽपि न हतः कल्पायुश्च तथा कृतः ॥ २४ ॥ बलिर्वैरोचनश्चैव
मया बद्धः कृते तव ॥ करिष्यति स शक्रत्वं प्राप्ते सावर्णिकेन्तरे ॥ २५ ॥ बाणं च तनयं तस्य मम विप्रियकारकम् ॥ त्वत्कृते न हनिष्यामि
तस्य च्छेत्स्यामि दोर्द्रुमान् ॥ २६ ॥ छिन्नबाहुर्मया युद्धे हरस्यानुचरो बली ॥ महाकाल इति ख्यातो कल्पस्थायी भविष्यति ॥ २७ ॥
एकमेकं तु दैत्येन्द्र सन्ताने सततं तव ॥ नाहं वधिष्ये धर्मज्ञ त्वत्कृते व्येतु ते भयम् ॥ २८ ॥ भवान्भक्तस्तथा मह्यं भक्तेष्वपि तथा मम ॥
नास्त्यदेयं महाभाग तस्मात्त्वं गच्छ निर्वृतः ॥ २९ ॥ हतशेषानुपादाय दैत्यान्सत्पथमाश्रितान् ॥ एतावदुक्त्वा प्रह्लादं तत्रैवान्तरधीयत ॥३० ॥
एतद्वाराहचरितं तव राजसिंह प्रोक्तं मया सकलकल्मषनाशकारि ॥ उद्वृत्तदैत्यशमनस्य ऋषिस्तुतस्य कण्डूविनोदनहतासुरपुङ्गवस्य ॥ ३१ ॥
इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे पाताले वराहप्रादुर्भावो नाम षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥ वज्र उवाच ॥
दितिर्विनष्टपुत्रा च यच्चकार द्विजोत्तम ॥ तन्ममाचक्ष्व संक्षेपात्तत्र मे संशयो महान् ॥ १ ॥ मार्कण्डेय उवाच ॥ दितिर्विनष्टपुत्रा च तपसा
महता नृप ॥ आराधयामास तदा भर्तारं कश्यपं मुनिम् ॥२ ॥ आराधितः सुतपसा च्छन्दयामास भामिनीम् ॥ वरेण च वचःकाले पुत्रव्यसनक
र्षिताम् ॥ ३ ॥ कश्यप उवाच ॥ वरं वरय सुश्रोणि वरदोऽहमुपस्थितः ॥ एवमुक्ता वरं वव्रे देवी पुत्रविनाकृता ॥ ४ ॥

दितिरुवाच ॥ शक्रहन्तारमिच्छामि पुत्रं ब्रह्मन्यशस्विनम् ॥ यदि तुष्टोऽसि मे ब्रह्मंस्तं प्रयच्छ सुतं मम ॥ ५ ॥ मार्कण्डेय उवाच ॥ एवमुक्तस्तदा भर्ता नातिप्रीतोऽब्रवीद्वरम् ॥ एवं ते भविता भद्रे शुचि त्वं चेद्भविष्यसि ॥ ६ ॥ पूर्णं वर्षसहस्रं च नान्यथा तद्भविष्यति ॥ एवमुक्त्वा तया सार्धमुवास रजनीं द्विजः ॥७॥ ततो जगाम धर्मात्मा तपसे दृढनिश्चयः ॥ आतस्थौ नियमं देवी सगर्भा च दितिस्तदा ॥ नियमस्थां तु तां दृष्ट्वा शक्रो वचनमब्रवीत् ॥ ८ ॥ शक्र उवाच ॥ अहं देवि करिष्यामि तव शुश्रूषणं सदा ॥ स्थितताया नियमे घोरे तदनुज्ञातुमर्हसि ॥ ९ ॥ मार्कण्डेय उवाच ॥ बाढमस्त्वित्यथोक्तस्तु तया देवः पुरन्दरः ॥ तत्रोवास च्छलान्वेषी शुश्रूषुर्मातरं सदा ॥ १० ॥ तदाब्दशेषे काले च दिवा सुप्ताऽदितिर्नृप ॥ मध्याह्नसमये राजन्पादयोः कृतमूर्धजा ॥ ११ ॥ तस्याः संप्राप्य तच्छिद्रं वज्री परपुरञ्जयः ॥ विवेश गर्भमार्गेण विवृतेन नरेश्वर ॥ १२ ॥ संप्रविश्यैव तं गर्भं वज्रेण त शुपर्वणा ॥ कृतवान्सप्तधा वज्री भागंभागं ततः पुनः ॥ १३ ॥ एकैकं सप्तधा चक्रे गर्भोऽपि प्रारुदत्तदा ॥ मा रुदस्वेति तं वज्री प्राह कार्ये स्वके स्थितः ॥ १४ ॥ एतस्मिन्नेव काले च दैत्येन्द्रजननी तदा ॥ विबुद्धा वारयामास शक्रं दशशतेक्षणम् ॥ १५ ॥ वज्रगर्भाञ्जलिः शक्रो मातुर्वचनयन्त्रितः ॥ निश्चक्रामोदरात्तस्याः सह बालैर्महात्मभिः ॥ १६ ॥ तं जगाद दितिः शक्रं प्राञ्जलिं पुरतः स्थितम् ॥ न ते शक्रापराधोऽस्ति मम गर्भनिकृन्तने ॥ १७ ॥ सर्वोपायैर्नियन्तव्यः शत्रुर्नयविदा सदा ॥ ममापराधाद्गर्भोऽयं त्वयाद्य बहुधा कृतः ॥ १८ ॥ भवन्तु मरुतो नाम सर्वे देवाः पृथक्पृथक् ॥ मा रुदध्वमिति प्रोक्ता यतः शक्र त्वया सुताः ॥१९॥ ततश्च मरुतो नाम भविष्यन्ति जगत्त्रये ॥ त्वत्सहाया भविष्यन्ति त्वदाज्ञावशवर्तिनः ॥ २० ॥ न चैतेभ्यो भयं किञ्चित्कदाचित्ते भविष्यति ॥ एषां नामविभागाँस्तु स्थानानि च तथा कुरु ॥ २१ ॥ एकज्योतिश्च द्विज्योतिस्त्रिचतुर्ज्योतिरेव च ॥ एकशक्रो द्विशक्रश्च त्रिशक्रश्च महाबलः ॥ २२ ॥ प्रथमे पवनस्कन्धे गणोऽयं सुरथः स्मृतः ॥ इन्द्रश्च गव्यो दृश्यश्च इतः प्रतिशिरास्तथा ॥ २३ ॥ मितश्च सम्मितश्चैव अमितश्च महाबलः ॥ द्वितीये पवनस्कन्धे गणो नाम प्रघोषणः ॥२४॥ ऋतजित्सत्यजिच्चैव सुषेणः सेनजित्तथा ॥ अतिमित्रो नामित्रश्च पुरुमित्रोऽपराजितः ॥ २५ ॥ तृतीये पवनस्कन्धे गणः सन्तापनः स्मृतः ॥ ऋतेश्च ऋतवान्धाता विधाता धरणो ध्रुवः ॥ २६ ॥ विधारणः चतुर्थस्तु गृहमेधो गणः स्मृतः ॥ ईदृक्षश्च सदृक्षश्च एतादृगमृताशनः ॥ २७ ॥ क्रीतनः प्रसदृक्षश्च सरभश्च महायशाः ॥ गृहे च रोषणा नाम वायुस्कन्धे च पञ्चमे ॥ २८ ॥ धर्ता दुर्गंध्व निर्भीमो ह्यभियुक्तिः कृपा सहः ॥ षष्ठे तु पवनस्कन्धे सास्वी नाम गणः स्मृतः ॥२९ ॥ द्युतिर्वपुरनादृश्यो वासः कामो जयो विराट् ॥ प्रेजेषणो

गणो नाम वायुस्कन्धे च सप्तमे ॥ ३० ॥ एषां नामविभागन्तु दत्त्वा स्थानानि चाच्युतः ॥ जगाम स्वगृहं प्रीत्या दितिश्च स्वगृहं
ययौ ॥ ३१ ॥ एतत्तवोक्तं मरुतां नृवीर जन्मोत्तमं पापभयापहारि ॥ यस्मिञ्श्रुतेनैव जनस्य लोके भयन्तु वृत्त्या न भविष्यतीह ॥ ३२ ॥
इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मा० सं० मरुदुत्पत्तिर्नाम सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥ ॥ छ ॥ ॥ मार्कण्डेय उवाच ॥
जनयामास राजेन्द्र दनुर्दानवपुङ्गवान् ॥ विप्रचित्तिमुखान्वीरान्दैत्यपक्षमुपाश्रितान् ॥ १ ॥ कालं च जनयामास कालकेयान्सुदारुणान् ॥
दैत्यपक्षाश्रितान्क्रूरान्विरुद्धान्देवतागणे ॥ २ ॥ दनायुषायाः पुत्रस्तु वृत्रो नाम महासुरः ॥ विरुद्धस्तु सदा देवैर्दैत्यपक्षमुपाश्रितः ॥ ३ ॥
सिंहिका जनयामास सैंहिकेयान्महासुरान् ॥ राहुसाल्वमुखान्वीरान्बहूनमिततेजसः ॥ ४ ॥ गन्धर्वाप्सरसो दिव्या मुनयस्तान्निबोध मे ॥
चित्रसेनोग्रसेनौ च ऊर्णायुरनघस्तथा ॥ ५ ॥ धृतराष्ट्रश्च गोपश्च सूर्यवर्चास्तथैव च ॥ युगपस्तृणपः पार्ष्णिरर्धश्चित्ररथस्तथा ॥ ६ ॥
कलिः शालिशिराश्चैव पर्जन्यो नारदस्तथा ॥ तेषां चैव यवीयस्यो दिव्याश्चाप्सरसः शुभाः ॥ ७ ॥ अनूचानानवद्या च प्रियमुख्या गणेचरी ॥
मिश्रकेशी तथा चापि पर्णांशा पुञ्जिकस्थला ॥ ८ ॥ मरीचिः शुचिका चैव विद्युत्पर्णी तिलोत्तमा ॥ आह्निका लक्ष्मणा क्षेमा देवी रम्भा
मनोरमा ॥ ९ ॥ आसिता च सुबाहुश्च सुव्रता सुवपुस्तथा ॥ पुण्डरीका सुगन्धा च सुदारा सुरसा तथा ॥ १० ॥ हेमा शरद्वती चैव प्रसूता
कमला च या ॥ सुमुखी हंसमार्गा च सौरीयाप्सरसः स्मृताः ॥ ११ ॥ कद्रूश्च जनयामास नागांस्तीव्रपराक्रमान् ॥ येषां शेषः प्रधानस्तु
विष्णुर्नागवपुर्धरः ॥ १२ ॥ येनेयं धार्यते भूमिः सशैलवनकानना ॥ आहेयी वासुदेवस्य पूर्वं मूर्तिर्मयेरिता ॥ १३ ॥ अनन्त इति विख्याता
महाकल्पविनाशिनी ॥ महाकल्पे महासत्त्वे स्वयं भवति या सदा ॥ १४ ॥ तस्यांशेन समुत्पन्नः शेषो हि धरणीधरः ॥ तस्यानुजांस्ते नागेन्द्रा
न्प्राधान्येन वदाम्यहम् ॥ १५ ॥ वासुकिस्तक्षकश्चैव ऐलापत्रो धनञ्जयः ॥ ऐरावतो महापद्मः कम्बलाश्वतरावुभौ ॥ १६ ॥ शङ्खपद्मौ
महापद्मो धृतराष्ट्रबलाहकौ ॥ नीलाश्वः पुष्पदन्तश्च सुमुखो दुर्मुखस्तथा ॥ १७ ॥ नहुषः कररोमा च कुरुश्च कुलिकस्तथा ॥ क्रोधश्च जनयामास
दश कन्या नराधिप ॥ १८ ॥ पुलहाय च ता दत्ताः कश्यपेन महात्मना ॥ मृगा च मृगमन्दा च हरिभद्रा मनोहरा ॥ १९ ॥ भूता च
कशिपा दंष्ट्रा सरसा सुरसा तथा ॥ इरा चैव तृणं सर्वं जनयामास भामिनी ॥ २० ॥ पञ्चप्रकारं धर्मज्ञ तं मे निगदतः शृणु ॥ वृक्षगुल्मलता
वल्यस्त्वक्सारतृणजातयः ॥ २१ ॥ अन्तःसंज्ञा भवन्त्येता घोरेण तमसा वृताः ॥ एतेषामभिमानिन्यो देवता यदुनन्दन ॥ २२ ॥

जनयामास धर्मज्ञ इरा दाक्षायणी शुभा ॥ प्राधा प्रसूताप्सरसस्तासां नामानि मे शृणु ॥ २३ ॥ अनवद्या अनूका च मूनूका करुण
प्रिया ॥ मनूना सुभगा चैव सहजन्या च मेनका ॥ २४ ॥ घृतस्थूला घृताची च विषूची पूर्वचित्यपि ॥ प्रम्लोचीत्यप्सराश्चैव
निम्लोचन्ती तथैव च ॥ २५ ॥ अनेनैव प्रसंगेन तथान्यासां महीपते ॥ जन्म तेऽप्सरसां वक्ष्ये तन्मे निगदतः शृणु ॥ २६ ॥
सुन्दोपसुन्दनाशाय निर्मिता विश्वकर्मणा ॥ तिलंतिलं समादाय सर्वरत्नैस्तिलोत्तमा ॥२७॥ यस्याः प्रदक्षिणाज्जातश्चतुर्वक्त्रः पिनाकभृत् ॥ सहस्र
नयनः श्रीमान्वज्री शक्रश्च पाकहा ॥ २८ ॥ शेषैर्देवगणैर्दृष्टा भ्रमद्वक्त्रैः प्रदक्षिणैः ॥ कृते कर्मणि सा प्राप्ता सूर्यलोकं वराङ्गना ॥ २९ ॥ एकस्थं
रूपसौन्दर्यं द्रष्टुमिच्छन्पितामहः ॥ अहल्यां नाम कृतवांस्त्रैलोक्यस्यैकसुन्दरीम् ॥ ३० ॥ गौतमाय च तां प्रादाद्ब्रह्मा शुभचतुर्मुखः ॥
यस्याः कृते गौतमेन शक्रो निर्वृषणः कृतः ॥३१॥ नारायणोरुसंभूता तथा चैवोर्वशी शुभा ॥ संत्यक्तमानसा वव्रे भर्तारं बुधजं नृपम् ॥ ३२ ॥
पुरूरवसनामानं रूपेणाप्रतिमं भुवि ॥ तेनैव सार्धमद्यापि दिवं प्राप्ता च तिष्ठति ॥ ३३ ॥ आहूत्य इति विख्याता तथैवाप्सरसः शुभा ॥ ब्रह्मणा
मनसा सृष्टा देवरामा मनोरमाः ॥ ३४ ॥ मनोः सुताः शौचवत्यो विद्युज्ज्वालरुचः स्मृताः ॥ भीरवश्च सुता मृत्योर्भूमिजाता भुवः स्मृताः ॥ ३५ ॥
अमृताख्याश्च सम्भूतास्तथैवामृतमन्थने ॥ वह्निजाता सुदा नाम सोमाद्धेकुरयास्तथा ॥ ३६ ॥ आयुर्वत्यस्तथा प्रोक्ताः सूर्यरश्मिसमुद्भवाः ॥
यज्ञोत्पन्नास्तथा नाम ऋक्सामभ्यस्तथेष्टयः ॥ ३७ ॥ वायूत्पन्ना सुदा नाम देवरामाः प्रकीर्तिताः ॥ इत्येते बहुसाहस्रा विज्ञेयाप्सरसां
गणाः ॥ ३८ ॥ देवतानामृषीणां च पत्न्यस्ता मातरश्च वै ॥ सुगन्धाश्चाप्यनिष्यन्दा सर्वा ह्यप्सरसः शुभाः ॥३९ ॥ तासामाप्यायते स्पर्शादानन्दं
चाश्नुते महत् ॥ विनता जनयामास रुद्रान्वै सोमपीथिनः ॥ ४० ॥ अङ्गारकं तथा सूर्यं निर्ऋतिं च खगं तथा ॥ अजैकपादाहिर्बुध्न्यधूमकेतु
ध्वजास्तथा ॥ ४१ ॥ हवनं नृश्वरं स्वभ्यं कपालमथ किङ्किणीम् ॥ एकादशैते कथितास्तव रुद्रा महाबलाः ॥ ४२ ॥ येषां च जनयामास द्वौ
पुत्रौ यक्षराक्षसौ ॥ ययोः सन्तानसंभूता राजन्वै यक्षराक्षसाः ॥ ४३ ॥ इमं च वंशं नियमेन यः पठेन्महात्मनां ब्राह्मणदेवसन्निधौ ॥
अपत्यलाभं स लभेत पुष्कलां श्रियं तथा प्रेत्य च शोभनां गतिम् ॥ ४४ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे कश्यप
सर्गो नामाष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥ ॥ छ ॥ ॥ वज्र उवाच ॥ ॥ उर्वशी च कथं जाता बुधजं पार्थिवं कथम् ॥
पतिं कृतवती देवी मानुषं तत्प्रकीर्तय ॥ १ ॥ मार्कण्डेय उवाच ॥ साध्यौ धर्मसुतौ प्रोक्तौ नरनारायणावृषी ॥ यौ तौ पूर्वं महीपालौ तावुभौ

यदुनन्दन ॥ २ ॥ विष्णोरंशौ महावीर्यौ तपस्यभिरतौ सदा ॥ तयोस्तदाश्रमं रम्यं सुगन्धिविटपद्रुमम् ॥ ३ ॥ बदर्याश्रममित्युक्तं
मृदुस्पर्शहिमं शुभम् ॥ उष्णतोयवहा गङ्गा शीततोयवहा परा ॥ ४ ॥ सुवर्णसिकता रम्या काञ्चनोत्पलमालिनी ॥ तत्र सा बदरी रम्या
नित्यपुष्पफलोपगा ॥ ५ ॥ तत्र तौ मुनिशार्दूलौ घोरं तप उपाश्रितौ ॥ भवाय सर्वलोकस्य सर्वलोकेश्वरावुभौ ॥ ६ ॥ तयोस्तप
स्यतोरेवं मौनेयाप्सरसो दश ॥ तयोस्तु तपसो विघ्नं संभूय कृतनिश्चयाः ॥ ७ ॥ तं प्रदेशमनुप्राप्ता नानाभरणभूषणाः ॥
पितामहान्न सौम्योऽस्ति कश्चिद्राजञ्जगत्रये ॥ ८ ॥ तासां दर्शनमासाद्य नरः कामवशो भवेत् ॥ कुसुमानि विचिन्वत्यो ललन्त्यश्च
यथासुखम् ॥ ९ ॥ दृष्ट्वा नारायणेनाथ सर्वा बालमृगेक्षणाः ॥ तासामन्तर्गतं भावं ज्ञात्वा वेदविदां वरः ॥ १० ॥ जितक्रोधो
महातेजा जितकामोऽर्थधर्मवित् ॥ आदाय सहकारस्य रसं मदनदीपनम् ॥ ११ ॥ ऊर्वोश्चित्रेण चार्वङ्गीं निर्ममेऽप्सरसं शुभाम् ॥
ऊर्वोः कृता सा चित्रेण चित्राकरणशालिनी ॥१२॥ तस्मिन्नेव क्षणे नारी बभूवायतलोचना ॥ न देवी न च गन्धर्वी नासुरी न च पन्नगी ॥१३॥
तादृग्विधा त्रिलोकेऽस्मिन्यादृशी सा वराङ्गना ॥ तां दृष्ट्वा व्रीडितास्सर्वा मौनेयाप्सरसो दश ॥ १४ ॥ जग्मुर्यथागतं राजँस्तच्छुश्राव पुरन्दरः॥
द्रष्टुं कौतूहलात्तां च बदर्याश्रममागतः ॥ १५ ॥ पादयोर्न्यपतद्वज्री साध्ययोर्धर्मनित्योः ॥ ददर्श च शुभाङ्गीं तां श्रियं देवीमिवापराम् ॥ १६ ॥
तमुवाच हसन्साध्यस्तदा नारायणः प्रभुः ॥ ममोरुजाता धर्मज्ञ उर्वशीयं भवेदिति ॥ १७ ॥ नयस्व त्रिदिवं चैनां भवत्वप्सरसां शुभा ॥
एवमुक्ते मुदं प्राप्य अभिवाद्य च तावृषी ॥ १८ ॥ अनयत्तां ततः स्वर्गं देवीं बालमृगेक्षणाम् ॥ शिष्यत्वे प्रददौ त्वेनां गन्धर्वस्य च तुम्बुरोः॥१९॥
ततः कदाचिच्छक्रस्य ननर्त पुरतस्तु सा ॥ उपदेशमतिक्रम्य तुम्बरोश्चारुहासिनी ॥२०॥ तां शशाप स गन्धर्वो मानुष्ये वत्स्यसे शुभे ॥ देवलो
कमिमं त्यक्त्वा मानुषेण सहानघे ॥ २१ ॥ कञ्चित्कालमुपास्यैवं मानुषं तं शुचिस्मिते ॥ आगम्य त्रिदिवे तावत्तस्मादभ्यस्यसे ततः ॥ २२ ॥
तेनैव सार्धं त्रिदिवे रंस्यसे त्वं शुभानना ॥ वैवस्वताख्यस्य मनोर्यावदन्तरमुच्यते ॥ २३ ॥ एवं हि शप्ता नृपवर्य तेन पपात राजन्गुरुणा
नृलोके ॥ उवास राज्ञा सहिता तु तस्मात्स्वर्गं समासाद्य तथैव तेन ॥ २४ ॥ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयव
ज्रसंवादे उर्वशीसंभवो नामैकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥
वज्र उवाच ॥ नाकं त्यक्त्वोर्वशी ब्रह्मन्बुधपुत्रं कथं गता ॥ क्व च सा तं नरेन्द्रेन्द्रं दृष्टवत्यपराजितम् ॥ १ ॥ मार्कण्डेय उवाच ॥ मनो

वैवस्वतस्यास्य द्वापरे प्रथमे पुरा ॥ वृत्ते देवासुरे युद्धे वृत्ते चामृतमन्थने ॥ २॥ संग्रामे कृतकर्माणं तस्मिन्नेव नराधिपम् ॥ शक्रस्यार्धासन
गतं रूपेणाप्रतिमं तदा ॥ ३ ॥ सम्पूज्यमानं त्रिदशैर्ददर्शायतलोचना ॥ बुधपुत्रं नरेन्द्रेन्द्रं तदा नारायणात्मजा ॥ ४ ॥ दृष्ट्वा बभूव चास्वस्था
काममार्गणताडिता ॥ ततः प्रभृति भव्येषु मेरुकुञ्जेषु भामिनी ॥ ५ ॥ आकारं गूहमाना सा कालं नयति कामिनी ॥ चिन्तयन्ती नरेन्द्रेन्द्रं
कन्दर्पप्रतिमं सदा ॥ ६ ॥ न सा भुङ्क्ते न स्वपिति श्रान्ता स्वपिति वा यदा ॥ तदा पश्यति तं स्वप्ने नीलनीरजलोचना ॥ ७ ॥ मनोरथाँश्च
कुरुते याँश्च तं प्रति भूमिपम् ॥ ८ ॥ तानि सा पश्यति स्वप्ने कथञ्चित्स्वप्नमोहिता ॥ कदाचित्क्रीडते राज्ञा कदाचिदनुनीयते ॥ ९ ॥ सुप्ता
कदाचिद्राजेन्द्र वदती प्रतिबुद्ध्यते ॥ कण्ठे गृहीता सा राज्ञा तया चासौ महीपतिः ॥ १० ॥ एवं दृष्ट्वा तु सा स्वप्ने निद्रामोहमुपागता ॥ तथैव
बाहुपाशेन रचितेन विबुध्यते ॥ ११ ॥ स्वप्नसंस्थं यदा दृष्ट्वा मोहमायाति सा चिरम् ॥ कृत्वा चित्रगतं पट्टे कदाचिच्च निरीक्षते ॥ १२ ॥
एवं नरेन्द्रे गतसर्वभावां विज्ञाय तां चारुतराङ्गयष्टिम् ॥ आपाण्डुरक्षामकपोलभित्तिं दृष्ट्वैव रम्भा त्वरितं जगाद ॥ १३ ॥ यत्नेन चार्वङ्गि
निगूहमाना भावं मया त्वं विदितासि सुभ्रूः ॥ तस्मिन्नरेन्द्रे हृदयं तवेदं योऽसौ महात्मा समरेष्वजेयः ॥ १४ ॥ पुरूरवा नाम जगत्त्रयेऽस्मि
न्ख्यातिं गतः सच्चरितैर्नृवीरः ॥ रूपेण कामं व्यतिरिच्य भाति शौर्येण शक्रादतिरिच्यते सः ॥ १५ ॥ दाने समस्तस्य च नास्ति कश्चित्स
त्येप्यनौपम्यगुणे नृवीरः ॥ देवासुरेऽस्मिन्समरे हतानि तेनासुराणां नियुतानि पञ्च ॥ १६ ॥ केशी विशालो मदनस्तथोग्रो महाबलस्तेन
तथापि शस्तः ॥ चन्द्रस्य पौत्रश्च बुधस्य पुत्रो मातापि तस्यार्कसुतस्य धात्री ॥ १७ ॥ मानं समुत्सृज्य विशालनेत्रं तं गच्छ बाले नृपतिं
प्रतीतम् ॥ त्वदाप्तये तस्य च नास्ति यत्नः सुदुर्लभत्वं खलु देवतानाम् ॥ १८ ॥ मनोरथानां त्वमगम्यभूमिर्यस्माद्विशालाक्षि सुरासु
राणाम् ॥ मृणालशय्या सुतनु त्वयेवं संक्लेशिता चन्दनपङ्कयुक्ता ॥ १९ ॥ तस्याङ्कमारुह्य भवस्व कान्ते विमुक्ततापा तपनीयवर्णे ॥
यास्याम एह्येहि नरेश्वरस्य तस्याशु भो वेश्म वरप्रयोगे ॥ २० ॥ पुरं प्रतिष्ठानमिति प्रतीतं मातामहाद्यत्समवाप राजा ॥ इत्येवमुक्ता
तपनीयवर्णा तथ्यं विदित्वा त्रपिता बभूव ॥ २१ ॥ उवाच रम्भां सखि तथ्यमुक्तं त्वया मतं तद्रुचितं भृशं मे ॥ यास्याव अद्यैव
नरेश्वरस्य तस्यान्तिकं बालमृगाभनेत्रे ॥ २२ ॥ यद्यद्य तं नीलसरोजनेत्रं सम्पूर्णचन्द्राभमुखं नरेन्द्रम् ॥ पश्यामि नाहं पृथुदीर्घबाहुं ततो
गमिष्याम्यवशावसानम् ॥ २३ ॥ पश्चैव कामस्य जनः पृषत्कान्यदाह रम्भे तदलं मृषैव ॥ ममानिशं बाणभरैस्तु विध्यन्न शाम्यते त्वक्षिनिमेष

मात्रम् ॥ २४ ॥ कामाग्निमध्ये परिवर्तमानं न याति भस्मत्वमिदं शरीरम् ॥ तस्यैव राज्ञो वदनेन्दुना तत्संरक्ष्यते मे हृदयस्थितेन ॥ २५॥ नय
स्व मां तस्य विशालनेत्रे समीपमद्यैव नरेश्वरस्य ॥ इत्येवमुक्ता करुणं हि रम्भा पाणावुपादाय विशालनेत्राम्॥२६॥ बुद्ध्या समुत्प्लुत्य ततोऽन्त
रिक्षं जगाम राज्ञो भवनं प्रहृष्टा ॥ २७ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे उर्वशीरम्भासंवादो नाम त्रिंशदुत्तरशततमो
ऽध्यायः॥१३०॥ मार्कण्डेय उवाच ॥ उर्वशी रम्भया सार्द्धं जगाम त्वरितं तदा ॥ कामार्त्ता सिद्धमार्गेण सा ददर्शाथ नारदम् ॥१ ॥ व्रजन्तं सिद्ध
मार्गेण देवलोकादुपागतम् ॥ सम्पूज्य नारदं सुभ्रूः प्रययावेव सत्वरा ॥ २ ॥ तामाह नारदो रम्भे केयं ते प्रस्थिता सखी ॥ रम्भा शापभया
त्तस्याः सर्वमेव न्यवेदयत् ॥ ३ ॥ तामाह नारदो भूयः शृणुष्व वचनं मम ॥ उर्वशी गतभावेयं मानुषं तं नरेश्वरम् ॥ ४ ॥ शापेन तुम्बरोर्मोहा
दुचितं तत्र वत्स्यति ॥ यथा शुभं तथा कार्यं त्वया मे वचनं शुभे ॥५॥ समयेनोर्वशी तस्य वसत्वसितलोचना ॥ समयश्चानया कार्यो यो राज्ञस्तं
निबोध मे ॥ ६ ॥ मेषद्वयं तु पुत्रत्वे पुरा कृतवती शुभा ॥ तन्नित्यं शयनाभ्याशे स्थापनीयं सुलोचने ॥ ७ ॥ आहारं घृतमात्रं च कर्तव्यमनया
तथा ॥ न द्रष्टव्यस्तथा नग्नो राजा रम्भे पुरूरवाः ॥८॥न कर्तव्यमकामायास्तथा तेन च मैथुनम् ॥ एकस्मिन्नप्यथो भग्ने समये चारुलोचना ॥९॥
यदि वत्स्यति राजानं शिलाभूता भविष्यति ॥ उर्वशी रम्भया सार्धमेवमस्त्विति नारदम् ॥ १० ॥ उक्त्वा संपूज्य च मुनिं प्रतस्थे पुनरेव
च ॥ नारदो व्यगमद्विप्रः पुरं वैश्रवणस्य च ॥ ११ ॥ ददर्श च प्रतिष्ठानं चोर्वशी रम्भया सह ॥ प्राकारेणार्कवर्णेन काञ्चनेन विराजितम् ॥१२॥
चतुर्भिर्गोपुरैश्शुभ्रै राजतैश्च विराजितम् ॥ शोभनं च तथा रम्यं विद्रुमस्य च तोरणैः ॥ १३ ॥ सुविभक्तमहारण्यं महाराजपथं शुभम् ॥ परिखा
भिर्विचित्राभिः पद्मिनीभिरलंकृतम् ॥ १४ ॥ खमुल्लिखद्भिः प्रासादैः पाण्डुरैरुपशोभितम् ॥ शूराढ्यजनभूयिष्ठं दिव्यं पुरुषसंयुतम् ॥१५॥ वणि
ग्भिरुपसंकीर्णं नानापण्यविभूषितम् ॥ ऐरावतकुलोत्पन्नैश्चलत्पर्वतसन्निभैः ॥१६॥ कुञ्जरैर्बहुसाहस्रैस्संयुतं सुमनोहरैः ॥ तुरगैर्वह्निजातैश्च पवनस्य
समैर्जवे ॥ १७ ॥ पानमत्तैर्नरैर्युक्तमुद्यानेषु ततस्ततः ॥ शङ्खभेरीमृदङ्गानां पटहानां च निःस्वनैः ॥१८॥ विविधानां च वाद्यानां वादित्रं सर्ववेश्म
गम् ॥ ब्रह्मघोषं महाघोषं वीणावेणुनिनादितम् ॥१९॥ हृष्टपुष्टजनाकीर्णं सर्वबाधाविवर्जितम् ॥ पद्मकिञ्जल्कवर्णाभिर्युतं स्त्रीभिः सहस्रशः॥२०॥
श्यामाभिश्च महाराज काण्डगौरीभिरेव च ॥ ॥ नानावेषधरैर्युक्तं नानादेशोद्भवैस्तथा ॥२१॥ नरैरनेकरूपैश्च शिल्पज्ञैश्च ह्यनेकशः ॥ पुरस्य तस्य
मध्ये सा ददर्श नृपतेर्गृहम् ॥२२ ॥ मध्ये हिमाचलस्येव कैलासं पर्वतोत्तमम् ॥ श्रीमद्भिः संयुतं रम्यैर्गृहमेधैः सहस्रशः॥२३॥सुधावदातैर्विपुलैश्चन्द्र

शिमसमप्रभैः ॥ क्वचिद्गात्नैः क्वचिद्रौक्मैः क्वचिद्रूपाल राजतैः ॥२४॥ मणिविद्रुमसोपानैर्मुक्ताजालविभूषितैः ॥ क्वचिच्च पुष्पदामाढ्यैर्वैजयन्तीयुतैः क्वचित् ॥ २५ ॥ तस्याविदूरे विपुलं वनं चैत्ररथोपमम् ॥ राज्ञः क्रीडावनं रम्यं ददर्श विपुलेक्षणा ॥ २६ ॥ द्रुमैर्बहुविधैर्युक्तं पुष्पपूगफलोपगैः ॥ पद्मिनीभिर्विचित्राभिः क्रीडाशैलैर्मनोहरैः ॥ २७ ॥ प्रासादैश्च तथा रम्यै रम्यैर्मणिगणैस्तथा ॥ तत्तु रम्भावनं दृष्ट्वा सखी वचनमब्रवीत् ॥ २८ ॥ राज्ञः क्रीडावने रम्ये गहनेऽस्मिन्सुलोचने ॥ मायाच्छन्ना निवत्स्यावो यावदस्तमयं रवेः ॥ २९ ॥ ततो गत्वा नरेन्द्रं तं चोक्त्वा तव चिकीर्षितम् ॥ अहं त्वां तु नयिष्यामि सविधे तस्य भूपतेः ॥ एवमुक्त्वा सखीवाक्यं नोदयामास चोर्वशी ॥ ३० ॥ क्रीडावनं ते च ततोऽवतीर्णे तद्देवरामे सुमनोभिरामम् ॥ क्रीडावने तत्र तथोर्वशी सा सूर्यास्तकालं मनसा समैच्छत् ॥ ३१ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे क्रीडावनावतरणो नामैकत्रिंशदुत्तरशततमोऽध्यायः ॥ १३१ ॥ मार्कण्डेय उवाच ॥ सूर्यास्तमयमिच्छन्तीं ज्ञात्वा रम्भा तथोर्वशीम् ॥ विनोदार्थं हि तस्याश्च दर्शयामास तद्वनम् ॥१॥ चारुप्रसूनं पश्येमं सुभगे चम्पकद्रुमम् ॥ त्वद्गात्रवर्णसदृशैः समन्तात्कुसुमैश्चितम् ॥२॥ इमं च दाडिमं पश्य पुष्पितं वामलोचने ॥ योऽयं बिभर्त्ति कुसुमैस्त्वदीयामधरश्रियम् ॥३॥ पश्य कामशराकारं सहकारं मनोरमम् ॥ यत्र चात्मसमुत्पन्ना रूढास्तस्य महात्मनः ॥ ४ ॥ श्रियं कपोलयोस्तुभ्यमाददानैर्मनोरमैः ॥ पुष्पैरुपेता चार्वङ्गि मधूकं पश्य शोभने ॥५॥ त्वत्पयोधरसंकाशै रम्यैरुपचितं फलैः ॥ पश्य तालद्रुमं सौम्ये मनसः प्रीतिवर्धनम् ॥६॥ स्तम्भैस्त्वदूरुसंकाशैः कदलीं पश्य शोभने ॥ सुवर्णा चारुसर्वाङ्गी निर्मिता विश्वकर्मणा ॥ ७ ॥ पश्यातिमुक्तकलतां कुसुमाढ्यां मनोहराम् ॥ त्वत्केशपाशसंकाशैर्भ्रमरैरुपशोभिताम् ॥ ८ ॥ पश्येमं कुन्दविटपं त्वद्दन्तसदृशैः शुभैः ॥ समन्ताच्छोभितं पुष्पैर्विशालाक्षि मनोहरैः ॥ ९ ॥ पश्य चोत्पलिनीमेतामुत्पलैरुपशोभिताम् ॥ त्वन्नेत्रसदृशैः फुल्लैर्मनोहृदयनन्दनैः ॥१०॥ नलिनीं सुभगे पश्य कमलैः पुष्पितैर्युताम् ॥तव निःश्वासगन्धाढ्यैः सौवर्णैर्वज्रकेसरैः॥११॥राजहंसानिमान्पश्य नलिनीतीरगोचरान् ॥गमनं सुमनोहारि त्वदीयमिव शिक्षितान् ॥ १२ ॥ त्वत्कराग्रविधान्सौम्ये धारयद्भिश्च पल्लवान् ॥ क्रीडाशैलमिमं पश्य युक्तं बहुविधैर्द्रुमैः ॥ १३ ॥ क्रीडाशैले चूतगतः कोकिलः कामवर्धनः ॥ कूजत्ययं मनोहारिस्वनेन सदृशेन ते॥१४॥ क्रीडाशैले नदीं पश्य निःसृतां शीतलोदकाम् ॥ तुल्यं ते मनसा सौम्ये वहन्तीं निर्मलं जलम्॥१५॥बह्वाश्चर्ययुतं सौम्यं दर्शनीयं वनं बहु ॥ किं तु पश्य विशालाक्षि सूर्योऽस्तमुपगच्छति ॥१६॥ त्वां तु कामवशां ज्ञात्वा कृपयेव दिवाकरः ॥ संवृत्तांशुधरो देवस्त्वस्तमायाति भामिनि ॥१७॥ कठोराण्यपि पत्राणि पल्लवानीव सुन्दरि ॥ अस्ततापानुरक्तानि राजन्ते शाखिनां

भृशम् ॥ १८ ॥ गिरीणां शिखरान्रक्तान्करोत्येष दिवाकरः ॥ जगामास्तं विशालाक्षि कुलकर्मा दिनक्षये ॥ १९ ॥ सन्ध्याकालेन रक्तेन प्रतीचीं
पश्य शोभने ॥ आलिङ्ग्यमानां सहसा कामिनीमिव कामिनीम् ॥ २० ॥ सांप्रतं नियमोपेता द्विजा द्विजवरोद्भवे ॥ सन्ध्याकालमुपासन्ते सतां
मार्गमनुव्रताः ॥ २१ ॥ अनुयाता रविं सन्ध्या गतमस्तमपि प्रभुम् ॥ साध्वीव वनिता कान्ते कुलजाता मनस्विनी ॥ २२ ॥ व्याप्यमानं
सुनासोरु तमसा पश्य भूतलम् ॥ भृङ्गोदरतमालानां तुल्येन वरवर्णिनि ॥ २३ ॥ व्याप्तं हि तमसा सर्वं न विराजति किञ्चन ॥ मलिनेनाय
तापाङ्गि जगत्सर्वं समीकृतम् ॥ २४ ॥ अस्यां हि सखि वेलायां मदनेन वशीकृताः ॥ नीलाम्बरधराः कान्ता यान्ति कान्तानलङ्कृताः ॥२५॥
पश्योदितं च सुभगे सुभगं चन्द्रमण्डलम् ॥ पानमत्तपुरन्ध्रीणां वदनेन समत्विषम् ॥ २६ ॥ किञ्चिदाक्रम्य गगनं श्वेततां तु गतं सखि ॥
पश्य चन्द्रमसं सुभ्रु नयनानन्दकारकम् ॥ २७ ॥ जगतोऽस्य तमो गत्वा शशाङ्कः सत्त्वसन्निभः ॥ विराजत्यमलः सौम्ये गगने सितसुप्रभे॥२८॥
कामबाणहतायास्ते सदृशं गण्डयोः श्रिया ॥ बिभर्त्युभयतश्चन्द्रो ज्योत्स्नाजालं समुत्सृजन् ॥ २९ ॥ चन्द्रराजतकुम्भेन दिशेयं वरवर्णिनि ॥
ज्योत्स्नाच्छलेन क्ष्मा देवी राजतीव विराजते ॥ ३० ॥ चन्द्रमस्युदिते पश्य फुल्लां कुमुदिनीं शुभे ॥ त्वदीयहाससंकाशैः कुसुमैरुपशोभिताम् ॥
॥ ३१ ॥ विरही चक्रवाकोऽयं रक्तामुत्पलिनीं शुभे ॥ सितामिव सुदुःखार्तो विशत्यायतलोचने ॥ ३२ ॥ चन्द्रकान्तगृहादस्माच्चन्द्ररश्मि
समप्रभाः ॥ चन्द्ररश्मिपरामृष्टाः पतन्त्युदकबिन्दवः ॥ ३३ ॥ आलिङ्गिता चन्द्रमसा जहौ रात्रिस्तमःपटम् ॥ कामिनेव विशालाक्षि कामिनी
वसनं शुभा ॥ ३४ ॥ चन्द्रोदये चन्द्रसमानवक्त्रे नरेन्द्रचन्द्रे प्रमदावरेऽस्मिन् ॥ पश्य त्वमाशंस च जीविताशां त्वद्भाग्यतुल्यं सहसा
प्रविष्टम् ॥ ३५ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे उपवने चन्द्रोदयवर्णनो नाम द्वात्रिंशदुत्तरशततमोऽध्यायः ॥ १३२ ॥
मार्कण्डेय उवाच ॥ इत्युक्ता रम्भया वाक्यं दृष्ट्वा राजानमागतम् ॥ दृष्ट्वा ससाध्वसा देवी बभूवाथ तथोर्वशी ॥ १ ॥ अत्याश्चर्यमभूद्दृष्टे राज्ञि
तस्याः शुभानने ॥ रोमाञ्चिततनुत्वं च सप्रस्वेदं समाबभौ ॥ २ ॥ तामुवाच ततो रम्भा शृणूर्वशि वचो मम ॥ नेहागमेऽस्य नृपतेः
कार्यमल्पं भविष्यति ॥ ३ ॥ राजा सखासहायोऽयं प्रविष्टो निशि काननम् ॥ प्रच्छन्ने शृणुवस्तावदस्य वाक्यानि भूपतेः ॥ ४ ॥
एवमस्त्वित्युवाचाथ रम्भां नारायणात्मजा ॥ मायाच्छन्नशरीरे ते ततश्चाययतुर्नृपम् ॥ ५ ॥ राजानं चारुसर्वाङ्गं पप्रच्छ तु तदा सखा ॥ राज्ञो
बहुमतो नित्यं गुणवाँश्चातिधार्मिकः ॥ ६ ॥ सखोवाच ॥ यतः प्रभृति राजेन्द्र त्रिदिवात्त्वमिहागतः ॥ ततः प्रभृति चास्वस्थो मया दृष्टोऽसि

मानद ॥७॥ तदस्वास्थ्यं कामकृतं ज्ञातवानस्मि ते नृप ॥ तन्ममाचक्ष्व ते गुह्यं न चेन्नरवरोत्तम ॥ ८ ॥ पुरूरवा उवाच ॥ तव गुह्यं न मे किञ्चि त्कदाचिदपि विद्यते ॥ अस्वास्थ्यकारणं सौम्य तव वक्ष्याम्यथात्मनः ॥ ९ ॥ नारायणसुता कान्ता रूपेणाप्रतिमा शुभा ॥ उर्वशीनामतः ख्याता मया दृष्टा वराप्सराः॥१०॥ यतः प्रभृति चार्वङ्गी ततः प्रभृति मे सखे ॥ कामेनालोड्यते चित्तं न च शाम्यति मे तथा ॥ ११ ॥ न चोपायं प्रपश्यामि तस्या लाभे द्विजोत्तम ॥ देवतानामपि शुभा दुर्लभा सा वराङ्गना ॥ १२ ॥ एवं दुःखपरीतस्य सखे कालो गतो मम ॥ उपभुक्ता मया स्वप्ने साद्य चार्वसितेक्षणा ॥ १३ ॥ चन्द्रकान्तगृहे ह्यस्मिन्काममार्गणताडिता ॥ चन्द्रोदये चारुमुखी त्रैलोक्यस्यैकसुन्दरी ॥ १४ ॥ विनोदनार्थं हि सखे मनसोऽति मनोहरम् ॥ चन्द्रोदये ततः प्राप्तं चन्द्रकान्तशिलागृहम् ॥ १५ ॥ तदेहि त्वरितं सौम्य प्रविश्य रुचिरं गृहम् ॥ विनोदयामि हृदयं मन्मथेन वशीकृतम् ॥ १६ ॥ सखोवाच ॥ यथा दृष्टं त्वया स्वप्ने तथाद्य भविता ध्रुवम् ॥ सापि कामपरीताङ्गी त्वामु पेष्यति भामिनी ॥ १७ ॥ मार्कण्डेय उवाच ॥ एवमुक्त्वा विवेशाथ चन्द्रकान्तशिलागृहम् ॥ आसाञ्चक्रे तदा तस्मिन्मदनेन वशीकृतः ॥ १८ ॥ उर्वशी रम्भया सार्धं तच्छ्रुत्वा हर्षमागता ॥ आत्मानं दर्शयामास रम्भापि नृपतेस्तदा ॥ १९ ॥ जयेत्युक्त्वा महीनाथं रम्भा कामवशात्तदा ॥ बभूव पुरतस्तस्य शोभयन्तीव तद्गृहम् ॥ २०॥ तामुवाच ततो राजा स्वागतं ते वरानने ॥ अलङ्कुरुष्व चार्वङ्गि रत्नासनमिदं शुभम् ॥ २१ ॥ रत्नासनोपविष्टायां तदागमनविस्मितः ॥ तदा राजीवरक्ताक्षस्तामुवाच वराननाम् ॥२२॥ शक्रस्य नगरं रम्भे राजते नित्यशस्त्वया ॥ पौर्णमास्यां यथा रात्रिः शशाङ्केनेव भामिनि ॥ २३ ॥ त्वं सभामण्डनं तस्य सच्छिष्या त्वं च तुम्बुरोः ॥ त्वयाभिभूतास्सकलाः स्त्रियः सुप्ताः सुशो भने ॥ २४ ॥ त्वयाभिभूताः सकलाः स्त्रियः स्वर्गे सुशोभने ॥ तव नेत्रसहस्रेण पश्यन्नपि तु पाकहा ॥ २५ ॥ सर्वत्र चारुसर्वांगि न तृप्यति शुभानने ॥ तन्ममाचक्ष्व सुभगे इहागमनकारणम् ॥ २६ ॥ रम्भोवाच ॥ शृणुष्वावहितो राजन्ममागमनकारणम् ॥ श्रुत्वा तच्च नरेन्द्रेन्द्र कुरुष्व वचनं मम ॥ २७॥ नारायणसुता देवी तत्र त्रैलोक्यसुन्दरी ॥ उर्वशी नाम चार्वङ्गी भूमिपाल सखी मम ॥ २८ ॥ सा त्वां दृष्ट्वा महेन्द्रस्य सदने काममोहिता ॥ न शर्म लभते बाला हाहेति वदती मुहुः ॥ २९ ॥ सा त्वदर्थमनंगेन मार्गणैर्भृशपीडिता ॥ लावण्य शेषा संवृत्ता दिनैः कतिपयैः शुभा ॥ ३० ॥ क्षामक्षामकपोला सा त्वत्समर्पितमानसा ॥ मदनेनाभितप्तांगी मानमुत्सृज्य भामिनी ॥ ३१ ॥ प्रस्थिता सा मया सार्द्धं तव दर्शनलालसा ॥ अन्तरा नारदेनोक्ता यत्र त्वं प्रस्थिता शुभे ॥ ३२ ॥ तत्र त्वया तु वस्तव्यं समयेन वरानने ॥

मेषद्वयं तु पुत्रत्वे यत्त्वया परिकल्पितम् ॥ ३३ ॥ तत्तु ते शयनाभ्याशे स्थापयेत्सततं यदि ॥ स राजा चारुसर्वाङ्गि नग्नो नेक्षेत भामिनि ॥३४॥ मैथुनं चाप्यकामाया नासौ ते कर्तुमर्हति ॥ घृताहारा तथा तत्र वस त्वं सुभगे सदा ॥ ३५ ॥ एकस्मिन्नप्यतिक्रान्ते समये यदि पार्थिवम् ॥ न त्यक्ष्यसि तदा सौम्ये शिलाभूता भविष्यसि ॥ ३६ ॥ एतानि समयान्युक्ता नारदेन सखी मम॥तानि त्वं प्रतिपद्यस्व भजस्व च शुभाननाम्॥३७॥ पुरूरवा उवाच ॥ रम्भे तवाद्य वाक्येन अमृतेनेव भामिनि ॥ मृत्योर्वशमनुप्राप्तो जीवितोऽस्मि शुभानने ॥ ३८ ॥ ममापि तत्कृते रम्भे मदनः शरवृष्टिभिः ॥ दुनोति हृदयं सुभ्रूर्दिवारात्रमतन्द्रितः ॥ ३९ ॥ सा त्वं जीवय मां शीघ्रं दर्शयस्व वराङ्गनाम् ॥ स्थास्यामि समये तस्मिन्यस्मिन्मां वक्ष्यसे शुभे ॥४०॥ कृतं तं समयं विद्धि नारदेन यदीरितम् ॥ अनाक्रन्दे निमग्नस्य मम काममहोदधौ ॥४१॥ प्लवो भव विशालाक्षि प्राणदा भव सुन्दरि ॥ मार्कण्डेय उवाच ॥ एवमुक्ता नरेन्द्रेण रम्भा चान्तर्दधे तदा ॥ ४२ ॥ उर्वशीसहिता चाथ दर्शयामास सा नृपम् ॥ जयेत्युक्त्वा नरेन्द्रं तु तदा नारायणात्मजा ॥ ४३ ॥ व्रीडिता पुरतस्तस्थौ तस्य राज्ञो महात्मनः ॥ तां दृष्ट्वा प्रीतिमापाथ स नरेन्द्रो महाद्युतिः ॥ ४४ ॥ पुलकाचित सर्वाङ्गो वर्णितुं सा न शक्यते ॥ पाणावादाय नृपितामुत्सङ्गे चोपवेशयत् ॥ ४५ ॥ रत्नासनं तथा भेजे रम्भापि सुमनोहरम् ॥ ततश्चोवाच वचनं राजा मुदितमानसः ॥४६॥ पुरूरवा उवाच ॥ कामदेवः प्रसन्नोऽद्य ममोर्वशि वरावने ॥ अद्य वेद्म्यधिकं सुभ्रूः शक्रादात्मानमात्मना॥४७॥ त्रैलोक्यराज्यलाभेऽपि कुतः सा मे शुभे रतिः ॥ आज्ञाकारित्वमासाद्य या तवाद्य सुलोचने ॥ ४८ ॥ मार्कण्डेय उवाच ॥ एवं वदति भूपाले ययौ रम्भावरानना ॥ क्षणेन मेषसहिता पुनः प्राप्ता नृपान्तिकम् ॥ ४९ ॥ मेषौ दत्त्वा नरेन्द्रस्य राजानं वाक्यमब्रवीत् ॥ रम्भोवाच ॥ यास्यामि लङ्कां राजेन्द्र तत्र प्राणेश्वरो मम ॥५०॥ मत्प्रतीक्षः स्थितः श्रीमान्धनदस्यात्मसंभवः ॥ नलकूबरनामासौ त्रैलोक्यविदितः प्रभो ॥५१ ॥ यथा चेयं सखी मह्यं नोत्कण्ठां कुरुते शुभा ॥ सखीजनस्य स्वर्ग्यस्य तथा कार्यं त्वयानघ ॥ ५२ ॥ पुरूरवा उवाच ॥ यतिष्येऽहं तथा कर्तुं निर्वृता भव मानदे ॥ रत्नान्येतान्युपादाय निर्गच्छस्व यथासुखम् ॥ ५३ ॥ मार्कण्डेय उवाच ॥ एवमुक्ता ततो रम्भा नृपतेः प्रीतिकारणात् ॥ रत्नान्युपादाय ययौ खेन लङ्कां महापुरीम् ॥५४॥ लब्ध्वोर्वशीं नरेन्द्रोऽपि रेमे स सहितस्तया ॥ यथा शच्या सुरारिघ्नो बलवान्पाकशासनः ॥ ५५ ॥ संन्यस्तभारः स तु मन्त्रिमुख्यं रेमे तया यादवसिंहमुख्य ॥ लक्ष्म्या समेतो भगवाननन्तो यथा स देवो भुवनस्य गोप्ता ॥ ५६ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे उर्वशीपुरूरवःसमागमो नाम त्रयस्त्रिंशदुत्तरशततमोऽध्यायः ॥ १३३॥ मार्कण्डेय उवाच ॥

प्रासादेषु विचित्रेषु तथा मणिगृहेषु च ॥ पुष्पवेश्मसु रम्येषु तथा वस्त्रगृहेषु च ॥ १ ॥ रत्नवेश्मसु मुख्येषु तथा चित्रगृहेषु च ॥ पर्वतानां च दुर्गेषु नदीनां पुलिनेषु च ॥ २ ॥ पद्मिनीषु च फुल्लासु तथा चोत्पलिनीषु च ॥ शय्यासु च परार्ध्यासु पुष्पशय्यासु चाप्यथ ॥ ३ ॥ रमयामास तां देवीं तथा विरचितेषु च ॥ गृहेषु बहुरत्नेषु धूपोद्गारिषु पार्थिव ॥४॥ रेमे स तु तया सार्धं मानसेषु पुनःपुनः ॥ रमयँस्तां वरारोहां न तृप्यति स नित्यशः ॥ ५ ॥ निशासु च सचन्द्रासु चन्द्रकान्ततरं मुखम् ॥ पपौ तस्या यथाकामं नरेन्द्रः स नराधिप॥६॥निशासु नष्टचन्द्रासु तन्मुखो द्योतितप्रभे ॥ देशे तां रमयामास राजा राजीवलोचनः॥७॥वर्धयन्ती नरेन्द्रस्य सा तु कामं दिने दिने ॥ अदृष्टपूर्वेव शुभा भवत्यायतलोचना ॥८॥ राज्ञो दृढं सा दयिता तस्याश्च द्विगुणो नृपः ॥ तयाऽसौ प्रीयते राजा तेन सापि वराङ्गना ॥ ९ ॥ वरचन्दनदिग्धाङ्गौ नानाभरणभूषितौ ॥ रेमाते दम्पती हृष्टौ नानारत्नावभूषितौ ॥ १० ॥ अलङ्करोति तां राजा स्वयमेव कदाचन ॥ तयाऽलंक्रियमाणश्च प्रीतिमाप्नोत्यनुत्तमाम् ॥ ११ ॥ वरेषु तौ विचित्रेषु रेमाते मुदितौ भृशम् ॥ केशान्संशोभयन्तौ तौ कुसुमैस्तु परस्परम् ॥ १२ ॥ उर्वश्यभ्युदितं पुष्पं तथा च ग्रथितं पुनः ॥ धारयामास शिरसा प्रेम्णा पार्थिवसत्तमः॥ १३॥ पत्रच्छेदेन याँश्चक्रे तिलकान्स नराधिपः ॥ ताँश्च सा धारयामास ललाटे चारुहासिनी ॥ १४॥ एवं संक्रीडतो राज्ञस्तया सह सुमध्यया ॥ बभूवुस्तनयाः पञ्च नामतस्तान्निबोध मे ॥ १५ ॥ आयुर्ज्येष्ठस्ततो धीमाँस्ततश्चान्यस्त्वनामयः ॥ अयुतायुश्चतुर्थोऽभूच्छतायुश्चैव पञ्चमः ॥ १६ ॥ एवं तस्याः प्रसूता वै याति काले मनोहरे ॥ १७ ॥ गन्धर्वमुख्यास्तु तदा समेता तया विहीना भृशमुत्सुकास्तु ॥ तदागमायाथ सुरेन्द्रलोके मन्त्रं तदा चक्रुरदीनसत्त्वाः ॥ १८ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमकाण्डे मार्कण्डेयवज्रसंवादे उर्वशीसम्भोगवर्णनो नाम चतुस्त्रिंशदुत्तरशततमोऽध्यायः ॥ १३४ ॥ मार्कण्डेय उवाच ॥ उर्वश्यागमने यत्नं चक्रुस्ते मन्त्रमुत्तमम् ॥ गन्धर्वस्तूग्रसेनाख्यस्तदा मन्त्रमभाषत ॥ १ ॥ उग्रसेन उवाच ॥ समयेवस्थिता तस्मिन्नुर्वशी चारुभूषणा ॥ व्युत्क्रान्तसमयं सा तु राजानं त्यक्ष्यते च तम् ॥ २ ॥ तमहं वेद्मि समयं तत्र यास्यामि चानघ ॥ युष्मत्कार्यं करिष्यामि ससहायो न संशयः ॥ ३ ॥ मार्कण्डेय उवाच ॥ एवमुक्त्वा ययौ तत्र यत्रासौ नृपतिः स्थितः ॥ रात्रौ जहार मेषं च मायया स नराधिप ॥ ४ ॥ मेषं ज्ञात्वा हृतं देवी राजानमिदमब्रवीत् ॥ मेषो हृतो महीपाल केनाप्यद्धा सुतो मम ॥ ५ ॥ द्वितीयश्च हृतो राजँस्तमानय सुतं मम ॥ एवमुक्तस्तया राजा नग्न एवाथ संभ्रमात् ॥ ६ ॥

१ 'अच्युतायुश्चतुर्थोऽभूत्' इति ख० ।

उत्थायान्वेषणं चक्रे मेषयोः पुरुषर्षभ ॥ अथापश्यत सा नग्नं राजानमसितेक्षणा ॥ ७ ॥ संस्मृत्य नारदवचस्तिरोभूता बभूव सा ॥
गन्धर्वाणां ययौ सापि समीपं दुःखिता तदा ॥ ८ ॥ स्वर्गं प्राप्य विशालाक्षी नित्यं नृपपरायणा ॥ कामनुन्नशरीरापि कालं नयति सुन्दरी ॥ ९ ॥
ऋषिशापभयाद्भीता मदनेन वशीकृता ॥ नित्यमास वरारोहा निःश्वासपरमा सती ॥ १० ॥ अप्राप्य मेषयुगलं विनिवृत्तो नराधिपः ॥
नापश्यच्छयने देवीं सस्मार समयं तदा ॥११॥ विदित्वा त्यक्तमात्मानं स्मृत्वा समयमात्मनः ॥ कामबाणार्दितो राजा तथापि विजने वने॥१२॥
तां मार्गति वरारोहामुन्मत्त इव सर्वतः ॥ एकाकी विजने राजा प्रियया रहितस्तदा ॥ १३ ॥ विललाप महासत्त्वः कुसत्त्व इव कश्चन ॥ पुरूरवा
उवाच ॥ क्व गतासि विशालाक्षि विहाय विजनेत्र माम्॥१४॥ कथं प्रवेक्ष्यामि पुरं प्रतिष्ठानं विना त्वया ॥ प्राणास्त्यक्त्वा गमिष्यन्ति शरीरं मम
सुन्दरि ॥ १५ ॥ अनुगन्तुं शरीरेण न शक्नोमि वरानने ॥ त्वं हि मे चपलापाङ्गि प्राणेभ्योऽपि गरीयसी ॥ १६ ॥ त्वया त्यक्तो ध्रुवं प्राणाँस्त्य
क्ष्यामि वरवर्णिनि ॥ क्वासि क्वाहं गमिष्यामि किं करोमि व्रजामि काम् ॥ १७ ॥ शरणं कामतप्तस्य को मे संदर्शयेत्प्रियाम् ॥
कं स्वित्पृच्छामि विजने कस्य सा विदिता भवेत् ॥ १८ ॥ क्षेमो वा मम कस्य स्याद्यो मे संदर्शयेत्प्रियाम् ॥ प्रियाविरहितस्यैष
निशाशेषो गतो मम ॥ १९ ॥ अन्तर्धानं गतास्तारा यथा देवी ममोर्वशी ॥ देवोऽरुणकरस्पर्शाच्छोभां त्यजति चन्द्रमाः ॥ २० ॥
निशाक्षये क्षामवपुर्यथाहं तद्विनाकृतः ॥ एषा ह्यावर्तते पूर्वा सन्ध्या स्नात्वा द्विजातयः ॥ २१ ॥ नूनं नियमसंयुक्तास्तिष्ठन्ति विजिते
न्द्रियाः ॥ अयं ह्युदयमायाति सविता रक्तमण्डलः ॥ २२ ॥ सर्वसत्त्वसमो देवः सर्वेषां पापनाशनः ॥ उदितश्चाप्ययं सूर्यो विभाति विमले
म्बरे ॥ २३ ॥ एकं फुल्लं महापद्मं सरसीवामले यथा ॥ उदितं भास्करं ज्ञात्वा नलिनी पद्मलोचना ॥ २४ ॥ उन्मील्यालोकते सर्वं विना
तेन निमीलिता ॥ तीक्ष्णार्कः संप्रवृत्तोऽयं दिवसः कामवर्धनः ॥ २५ ॥ नैदाघो मां विशेषेण सन्तापयति तां विना ॥ कं पृच्छामि वरारोहां
संतप्तकनकप्रभाम् ॥ २६ ॥ दृष्टा मयेति सा देवी को मां वक्ष्यति कानने ॥ करीन्द्रस्त्वयमभ्येति तत्कुचाभौ समुद्वहन् ॥ २७ ॥ कुम्भौ
कठोरौ सुमुखं पृच्छाम्येनं मतङ्गजम् ॥ त्वद्दन्तयुगलप्रख्यं यदूरुयुगलं ह्यभूत ॥ २८ ॥ गतां तां यदि जानीषे कथयस्व ममोर्वशीम् ॥ एष
हस्ती गतस्त्रासात्सिंहस्यास्य महात्मनः ॥ २९॥ अदत्त्वैवोत्तरं मह्यं सिंहं पृच्छाम्यहं वने ॥ मध्यस्त्वदुपमस्तस्याः क्व सा सम्प्रति केसरिन् ॥३०॥
उर्वशी दयिता मह्यं यदि जानासि कथ्यताम् ॥ अदत्त्वैवोत्तरं सिंहः कथमेष गतो मम ॥ ३१ ॥ दृष्टा कथय हे बिम्ब देवीं बिम्बफलाधराम् ॥

अनेनापि न चाख्याता पृष्टेन सुदती मम ॥ ३२ ॥ मयूर यदि जानीषे बालां बालमृगेक्षणाम् ॥ उर्वशीं कथयस्वाद्य
क्व प्रिया मम वर्तते ॥ ३३ ॥ अन्तःशरीरं कामाग्निर्बहिर्दहति भास्करः ॥ तापार्त्ता निःश्वसन्त्येते सिंहा गिरिगुहागताः ॥ ३४ ॥
निरस्तजिह्वाः स्रस्ताङ्गा विवृतास्या मुहुर्मुहुः ॥ यूथानि महिषीणां च शेरते नलिनीजले ॥ ३५ ॥ सूर्योद्धतजलास्त्वन्ये पङ्कशेषा
सु शेरते ॥ गगनं चातकश्चायं तृष्णार्तो लोकते मुहुः ॥ ३६ ॥ स भृशं तोयपानार्थी उर्वश्यर्थे यथा त्वहम् ॥ यान्त्येते पद्मिनी
खण्डान्कुञ्जरास्तापरूषिताः ॥ ३७ ॥ सुहस्तमुक्तैश्च जलैः सिंचन्त्यात्मानमात्मना ॥ महाद्रुमाणां स्कन्धेषु विषण्णाश्चापरे गजाः
॥ ३८ ॥ तापं नयन्ति मध्याह्ने मुञ्चन्तः शीकरं मुहुः ॥ शाखापर्णान्तराण्येते विहगास्तापतापिताः ॥ ३९ ॥ विशन्ति चैव त्राणार्थं
मध्याह्नसमये भृशम् ॥ द्रुमशाखागता ह्येते विहगानां च बालकाः ॥ ४० ॥ रक्तान्तचक्राः सुभृशं विशन्तीह मुहुर्मुहुः ॥ त्यक्ताहारक्रियाश्चैते
मृगयूथा महावने ॥ ४१ ॥ द्रुमच्छायासु तिष्ठन्ति रोमन्थं कुर्वतो मुहुः ॥ अन्वेषमाणो दयितां श्रातोऽस्मि विजये भृशम् ॥ ४२ ॥ छायायां
विश्रमिष्यामि शिरीषस्यास्य साम्प्रतम् ॥ तद्वात्रसुकुमाराणि पुष्पाण्यस्य वनस्पतेः ॥ ४३ ॥ शिरीषवृक्षो रम्योऽयं मनोहृदयनन्दनः॥ किन्तु मां
पीडयत्येष शिरीषस्तद्विनाकृतम् ॥ ४४ ॥ सूर्यश्चास्तमुपायाति क्व गमिष्यामि शर्वरीम् ॥ अस्तं यातः सहस्रांशुर्निशा प्राप्ता सुदारुणा ॥४५॥
रात्रिमेनां विवत्स्यामि न्यग्रोधेऽस्मिन्महाद्रुमे ॥ उर्वश्या ऋद्धिरचिते वरवेश्मनि पार्थिवः ॥ ४६ ॥ स क्रीडति तया सार्धं सर्वकामैः
सुपूजितः ॥ नूनं मां स जनो वेत्ति प्रतिष्ठानपुरे तु मे ॥ ४७ ॥ एतामवस्थां कश्चिन्मे न विजानाति साम्प्रतम् ॥ पौरो जान
पदः कश्चिज्जनो मे दयितः सदा ॥ ४८ ॥ निद्रे भजस्व मन्नेत्रे ध्रुवं स्वप्ने वराननाम् ॥ तां तु प्राप्स्याम्यहं सौम्यां मनसः प्रीति
वर्धिनीम् ॥ ४९ ॥ कथमभ्युदितश्चन्द्रः पीडां जनयते मम ॥ तद्वक्रविजितः पूर्वं विकरोत्यधुना मयि ॥ ५० ॥ तुद चन्द्र यथाकामं
मम देहं विनाकृतम् ॥ त्वया तु नाथं संप्राप्य सापत्न्यं मम दर्शय ॥ ५१ ॥ हा हतोऽस्मि विनष्टोऽस्मि उर्वश्या रहितो वने ॥ चन्द्र पौत्रे
कुरु दयां दर्शयस्व मम प्रियाम् ॥ ५२ ॥ शशाङ्क देव शीतांशो नृणां दृष्टिमनोहर ॥ आक्रन्दामि तवाद्याहं दर्शयस्व प्रियां मम ॥ ५३ ॥ अतृप्त
दर्शनस्यैव सा गता सुन्दरी मम ॥ अन्तर्धानं विशालाक्षी तां दर्शय ममोर्वशीम् ॥ ५४ ॥ कदाऽधररसं तस्याः पास्याम्यमृतसन्निभम् ॥ कदा
द्रष्टास्मि तां भूयः कमलोदरसन्निभाम् ॥५५॥ मृणालबाहुयुगलां पद्मवक्त्रां कदा प्रियाम् ॥ नीलोत्पलाक्षीमालिङ्ग्य तापं त्यक्ष्याम्यनङ्गजम्॥५६॥

अनङ्गशरतुन्नस्य बाले भव गतिर्मम ॥ ददस्व दर्शनं सुभ्रूः का ममान्या गतिर्भवेत् ॥५७ ॥ काममोहगृहीतस्य त्वमेवाभूर्गतिर्मम ॥ भूयस्त्वमेव सुभगे गतिर्भव ममानघे ॥ ५८ ॥ एषा विरलिता रात्रिर्मम वर्षशतोपमा ॥ अन्वेष्टुं क्व गमिष्यामि निर्घृणां तां ममोपरि ॥ ५९ ॥ यस्याः कोपं न जानामि स्वप्नेऽपि वरवर्णिनि ॥ दैवेनोपहतस्याद्य त्यक्ता सा सुभगा गता ॥ ६० ॥ मार्कण्डेय उवाच ॥ एवं स विलपन्राजा त्यक्ताहारः परिभ्रमन् ॥ आससाद कुरुक्षेत्रं द्वादशाहेन पार्थिव ॥६१॥ पुष्करिण्यास्तटप्लक्षे पुष्करैरुपशोभिते ॥ निषसाद तदा श्रान्तः क्षुत्पिपासासमन्वितः॥ विललाप स तत्रापि मदनेन वशीकृतः ॥ ६२ ॥ कदा नु तच्चन्द्रमसोऽनुकान्ति मुखं स्मितं चारुविलोचनायाः ॥ उन्नाम्य पास्याम्यधरं तृषार्तो वारीव पान्थः पथि कृच्छ्रलभ्यम् ॥ ६३ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे पुरूरवःप्रलापवर्णनो नाम पञ्चत्रिंशदुत्तरशततमोध्यायः ॥ १३५ ॥ मार्कण्डेय उवाच ॥ उर्वश्यपि वरारोहा मदनेनाभिपीडिता ॥ जगाद नारदस्याथ स्वामवस्थां नृपं विना ॥ १ ॥ ततस्तां नारदः प्राह सुभगे गच्छ पार्थिवम् ॥ तस्याप्यवस्था महती त्वद्विहीनस्य सुन्दरि ॥२ ॥ एकां रात्रिं नरेन्द्रेण सहोष्य वरवर्णिनि ॥ स्वर्गलोकमुपागच्छ श्रेयः प्राप्स्यसि वै ततः ॥ ३ ॥ नारदेनैवमुक्ता सा सखीभिर्बहुभिर्वृता ॥ पुष्करिण्यास्तरुप्लक्षे ययौ स्नातुं वरानना ॥ ४ ॥ एतस्मिन्नेव काले तु निद्रयोपहतो नृपः ॥ अप्सरोभिरविज्ञातस्तत्र सुष्वाप पार्थिव ॥ ५ ॥ अद्य यास्यामि राजानमिति दृष्टा तदोर्वशी॥ क्रीडन्त्यत्र जले तस्मिन्सखीगणवृता तदा ॥ ६ ॥ त्यक्तनिद्रो नरेन्द्रोऽपि विललाप चिरं पुनः ॥ शुश्राव विलपन्तं सा सखीभिः सहिता नृपम् ॥ ७ ॥ दर्शयामास चात्मानं पार्थिवस्य शुभा ततः ॥ उवाच च वरारोहा नारदोक्तमशेषतः ॥ ८ ॥ तत्रैवोवास तां रात्रिं सह तेन वरानना ॥ रात्रिक्षये विसंज्ञं सा राजानं वाक्यमब्रवीत् ॥ ९ ॥ उर्वश्युवाच ॥ आराधयस्व गन्धर्वान्मोहं त्यक्त्वा नरेश्वर ॥ तेषां प्रार्थय मां सौम्य ततः प्राप्स्यसि मा चिरम् ॥ १० ॥ मार्कण्डेय उवाच ॥ एवमुक्त्वा ययौ स्वर्गं राजा तत्रैव पार्थिव ॥तपः स विपुलं चक्रे तद्गतेनैव चेतसा ॥११ ॥ अथ संवत्सरे पूर्णे सूर्यस्योदयनं प्रति ॥ नारदं पुरतः कृत्वा गन्धर्वा दर्शनं ददुः ॥१२॥ गन्धर्वा ऊचुः ॥ वरं वरय राजेन्द्र यदिच्छसि महाभुज ॥ वयं हि तव दास्यामः सर्व एवामरप्रभाः ॥ १३ ॥ पुरूरवा उवाच ॥ भवन्तश्चेत्प्रसन्ना मे यदि मे रोचते वरम् ॥ उर्वशी सेह चार्वङ्गी भवद्भिर्मम दीयताम्॥ १४॥ गन्धर्वा ऊचुः ॥ स्थालीं पूर्णामिमां राजन्गृहाणाग्नेर्महाभुज ॥ अस्मादग्निं त्रिधा कृत्वा यजस्व विगतज्वरः ॥ १५ ॥ वेदोक्तेन विधानेन गन्धर्वत्वमवाप्स्यसि ॥ त्रेताग्निपूर्वस्य विधेरस्मिन्मन्वन्तरे भवान् ॥१६॥ भविता दार्शिता लोके गुरुश्च जगतीपतिः ॥ गन्धर्वत्वमवाप्याथ राजन्प्राप्स्यस्यथो

र्वशीम् ॥ १७ ॥ मन्वन्तरमिमं सर्वं रन्ता च त्वं तया सह ॥ मन्वन्तरे गते राजन्नुर्वश्या सहितो भवान् ॥ १८ ॥ प्रवेक्ष्यति निशानाथं सोमं
शीतांशुमुज्ज्वलम् ॥ आधारं सर्वलोकस्य पितॄणां स्थानमुत्तमम् ॥ १९ ॥ मार्कण्डेय उवाच ॥ अग्निस्थालीं नृपे दत्त्वा गन्धर्वास्त्रिदिवं ययुः ॥
अथाऽऽजगाम तं देशं बालमादाय चोर्वशी ॥ २० ॥ उर्वश्युवाच ॥ तस्मिन्समागमे सौम्य जातोऽयं तनयः प्रभो ॥ तमादाय प्रतिष्ठानं व्रज
पार्थिव मा चिरम् ॥ २१ ॥ कृतं नामास्य गन्धर्वैर्विश्वायुरिति भूमिप ॥ मार्कण्डेय उवाच ॥ एवं दत्त्वा नृपे बालं सा प्रयाता त्रिविष्टपम् ॥ २२ ॥
एकाकी चिन्तयामास बुधपुत्रोऽप्यनन्तरम् ॥ किन्तु बालमुपादाय गमिष्यामि पुरं स्वकम् ॥२३॥ अथादाय गमिष्यामि स्थालीमेतां विभावसोः॥
श्वापदेभ्यो भयं घोरं बालस्येह भविष्यति ॥ २४ ॥ मया विहीनस्य भयं नास्ति किञ्चिद्विभावसोः ॥ एवं स निश्चयं कृत्वा बालमादाय सत्वरः
॥ २५ ॥ जगाम स्वपुरं हृष्टः ससैन्यश्चागमत्पुनः ॥ स्थालीं ददर्श हीनां तु दृष्ट्वा मोहमुपागतः ॥ २६ ॥ त्रिदिवादेत्य गन्धर्वा मूढं पार्थिवसत्त
मम् ॥ उत्थापयित्वा वचनमूचुस्तद्धितकाङ्क्षिणः ॥ २७ ॥ राजन्नस्मिञ्छमीगर्भे प्रविष्टः स हुताशनः ॥ अस्मात्त्वमरणिं कृत्वा जनयस्व हुताश
नम् ॥ २८ ॥ त्रिधा कृत्वा तु तं वीर यजस्व विधिवत्तदा ॥ तमिष्ट्वा प्राप्स्यसे वीर गन्धर्वत्वमसंशयम् ॥ २९ ॥ त्रेताग्निं ते नरेन्द्रेह होष्यन्ति
सततं द्विजाः ॥ सप्तवर्षाणि तेऽप्येवं यास्यत्यस्मत्सलोकताम् ॥ ३० ॥ त्रयोऽग्नयश्चौपसदं तव राजन्प्रकीर्तिताः ॥ अग्निराहवनीयस्तु वासुदेवो
नराधिप ॥ ३१ ॥ दक्षिणाग्निस्तथा ज्ञेयो नित्यं संकर्षणो बुधैः ॥ तथा च गार्हपत्योऽग्निः प्रद्युम्नः परिपठ्यते ॥३२॥ तथैवौपसदो राजन्ननिरुद्धः
प्रकीर्तितः ॥ तस्मादेव वरो विष्णुश्चतुरात्मा नराधिप ॥ ३३ ॥ फलाभिसन्धानहुतो गन्धर्वत्वं प्रयच्छति ॥ कामं विनाग्निहोत्रेण हुतो राजञ्ज
नार्दनः ॥ ३४ ॥ प्रयच्छति परं स्थानममृतं शाश्वतं ध्रुवम् ॥ अग्निहोत्रादृते राजन्गन्धर्वत्वं न विद्यते ॥ ३५ ॥ सुहुतेनाग्निहोत्रेण प्राप्यते संशयं
विना ॥ एवमुक्त्वा ययुः सर्वे गन्धर्वास्त्रिदिवं ततः ॥ ३६ ॥ राजाप्यरणिमादाय शमीगर्भाद्गृहं ययौ ॥ ततः प्रभृति राजेन्द्र शमीगर्भाद्धुताशनम्॥
जनयन्ति द्विजश्रेष्ठास्तत्र सन्निहितस्त्वसौ ॥ ३७ ॥ एकोऽग्निरासीन्नृपवर्य पूर्वं वैवस्वतस्यास्य तथान्तरेऽस्मिन् ॥ त्रिधाकृतस्तेन महानुभाव
सम्यं त्रिविप्रैः क्रतुशास्त्रविज्ञैः ॥ ३८ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे त्रेताग्न्युत्पत्तिर्नाम षट्त्रिंशदुत्तरशततमोऽध्यायः ॥
॥ १३६ ॥ मार्कण्डेय उवाच ॥ ततः स स्वपुरं प्राप्य चाग्न्युपासनतत्परः ॥ ईजे बहुविधैर्यज्ञैः प्रजा धर्मेण पालयन् ॥ १ ॥ अश्वमेधशतैरिष्ट्वा
वाजपेयैः सहस्रशः ॥ अग्निष्टोमैश्चातिरात्रैर्द्वादशाहैः पुनःपुनः ॥ २ ॥ सप्तद्वीपसमुद्रायां पृथिव्यामेकराड् बभौ ॥ अमानुषैर्वृतः सत्त्वैः स

विजिग्ये महीतलम् ॥ ३ ॥ दुर्भिक्षं मरणं व्याधिर्नाभवत्कस्यचित्कचित ॥ सर्वो धर्मपरो लोकः सर्व एव सुखी जनः ॥ ४ ॥ सर्वे
चैव समृद्धार्थास्तस्मिञ्जनपदेश्वरे ॥ नासीत्पशुवधार्हाणां वधस्तस्मिन्वृथा तदा ॥ ५ ॥ सर्वभूतानि राजानं भावेनोपगतानि तम् ॥
सर्वस्य च जनन्यासीत्स राजा पितृसन्निभः ॥६॥ दृष्ट्वा तं भूपतिं स्वप्ने प्रसीदन्ति जनास्तदा ॥ यदा निर्यात्यसौ राजा चतुरङ्गबलान्वितः ॥७॥
गृहचर्यारता नार्यस्तदा पश्यन्ति तं सदा ॥ पुष्पैश्चन्दनधूपैश्च तथैव विकिरन्ति तम् ॥ ८ ॥ उर्वशी कृतपुण्या सा देवी नारायणात्मजा ॥
यया क्रीडितमस्याङ्के वदन्त्येवं च योषितः ॥ ९ ॥ अयमायात्यसौ राजा यदा शृण्वन्ति योषितः ॥ गृहकार्याण्यपि त्यक्त्वा तदा यान्ति
गवाक्षकान् ॥ १० ॥ अभ्राणि शारदानीव बहुचन्द्राणि योषिताम् ॥ मुखै राजन्ति वेश्मानि निर्याते पृथिवीश्वरे ॥ ११ ॥ या न पश्यति तं
यान्तं सा तं ज्ञात्वा तिरोहितम् ॥ मुषितं चैव साऽऽत्मानं वेत्ति निन्दति सा भृशम् ॥ १२ ॥ या च पश्यति तं यान्तं कन्दर्पसदृशं नृपम् ॥
तद्गतेन हृदा सापि शून्या तिष्ठति वेश्मनि ॥ १३ ॥ यदा यजति यज्ञैश्च तदा शून्या वसुन्धरा ॥ सर्वा भवति राजानं तदा गच्छति वै जनः ॥
॥ १४ ॥ यश्च याति जनस्तस्य यज्ञे राज्ञो महात्मनः ॥ किमिच्छकैस्तदा राज्ञा सर्वः संपूज्यते तदा ॥ १५ ॥ सभासंस्थस्य वै राज्ञः प्रती
हारो दिने दिने ॥ उद्घोषयति कार्यार्थी तस्य राज्ये कथंचन ॥ १६ ॥ इत्येवं शासतो राज्यं गतः कालो महीपतेः ॥ स कदाचिद्द्विजानाह
दर्शयध्वं ममोर्वशीम् ॥ १७ ॥ द्रक्ष्यसे तां स्वयं राजन्न वयं दर्शयामहे ॥ ततस्तेषां धने लोभं चक्रे कामनिपीडितः ॥ १८ ॥ ह्रियमाणे धने
विप्रैः शप्तः पञ्चत्वमागतः ॥ जीवितश्चापरैर्विप्रैर्गतरोषैर्महीपतिः ॥ १९ ॥ आत्मानं गर्हयित्वाऽसौ लब्धसंज्ञो महीपतिः ॥ आयुं राज्येऽभिषि
च्यैव प्रतिष्ठानपुरे स्वके ॥ २० ॥ साग्निहोत्रस्ततो राजा ययौ नारायणाश्रमम् ॥ तस्याश्रमे तपश्चक्रे राजा संवत्सरत्रयम् ॥ २१ ॥ ततो नारायणः
प्राह तं नृपं तपसि स्थितम् ॥ अद्य प्राप्स्यसि तां राजन्यत्कृते परितप्यसे ॥ २२ ॥ सशरीरोऽद्य गन्तासि त्रिदिवं राजसत्तम ॥ एवं द्विजेन्द्र
वदति विमानं प्रत्यदृश्यत ॥ २३ ॥ उर्वश्यधिष्ठितं रम्यं गन्धर्वैश्च सहस्रशः ॥ यस्मिन्युक्तं तुरङ्गाणां सहस्रं चन्द्रवर्चसाम् ॥ २४ ॥ विमाना
दवरुह्याथ गन्धर्वाप्सरसां गणाः ॥ उर्वशी च ववन्दैनमृषिं ज्वलनतेजसम् ॥ २५ ॥ अनुज्ञातोऽथ ऋषिणा तदा राजा पुरूरवाः ॥ कृत्वाग्नि
होत्रमात्मस्थं विमानं तं समास्थितः ॥ २६ ॥ ऋषिं प्रदक्षिणीकृत्य त्रिदिवं स नृपो गतः ॥ सशरीरो नृपः स्वर्गं तदा प्राप्य सुदुर्लभम् ॥ २७ ॥
शक्रेणाभ्यर्चितः काले विजहार यथासुखम् ॥ देवोद्यानेषु सर्वेषु उर्वश्या सहितस्तदा ॥ २८ ॥ नासौ वियुज्यते साक्षात्कदाचिदपि पार्थिवः ॥

अमावस्याममावस्यां नियतं चन्द्रभास्करौ ॥ २९ ॥ द्रष्टुं यातौ महीपालमेकराशिगतौ सदा ॥ उर्वश्या सहितं पौत्रं यदा पश्यति चन्द्रमाः ॥३०॥ तदा सुधारसं देवः स्नेहात्स्रवति मानद ॥ सुधामृतरसं तं च पिबन्ति पितरः सदा ॥ ३१ ॥ श्राद्धकालस्तदाप्युक्तो नृणां नृपवरोत्तम ॥ तदा श्राद्धं हि यद्दत्तं सुधारसविमिश्रितम् ॥ ३२ ॥ तदश्नन्ति महीपाल पितरोऽमृतसन्निभम् ॥ अमावस्याममावस्यां तदा श्राद्धं प्रयत्नतः ॥ ॥ ३३ ॥ कुरुष्व भूमिपश्रेष्ठ सर्वान्कामानवाप्स्यसि ॥ येऽपि श्राद्धं करिष्यन्ति तदा चान्ये नराधिप ॥ ३४ ॥ तेषामायुर्यशः सौख्यं दास्यन्ति प्रपितामहाः ॥ देवकार्यादपि श्रेष्ठं पितृकार्यं प्रचक्षते ॥ ३५ ॥ पितरो नाम राजेन्द्र देवानामपि देवताः ॥ राज्यकामः स्वर्गकामः पुष्टिकामस्तथैव च ॥ ३६ ॥ पितॄन्सन्तर्पयेच्छ्राद्धे चन्द्रसूर्यसमागमे ॥ वसन्ति सततं राजन्पितरश्चन्द्रमण्डले ॥ ३७ ॥ तेषां मासमहोरात्रं विभागं तत्र मे शृणु ॥ कृष्णपक्षाष्टमी मध्ये तेषामुदयते रविः ॥ ३८ ॥ शुक्लाष्टम्यां तथैवास्तं तेषां याति दिवाकरः ॥ अमावस्या तदा तेषां मध्याह्नं जायते नृप ॥ तस्माच्छ्राद्धानि देयानि तस्मिन्काले प्रयत्नतः ॥ ३९॥ एतावदुक्तं नृपवर्य तस्य धर्मात्मजस्याऽप्रतिमस्य वृत्तम् ॥ धन्यं यशस्यं रिपुनाशनं च सौभाग्यदं पापहरं सुखं च ॥ ४० ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे पुरूरवसः स्वर्गप्राप्तिर्नाम सप्तत्रिंशदुत्तरशततमोऽध्यायः ॥ १३७ ॥ ॥ वज्र उवाच ॥ वर्तन्ते पितरः स्वर्गे केषांचिन्नरके तथा ॥ नरकस्थाः फलं दातुं कथं शक्ता वदस्व मे ॥ १ ॥ मार्कण्डेय उवाच ॥ पितॄणां तु गणाः सप्त नामतस्तान्निबोध मे ॥ त्रयोऽमूर्तिमतश्चैषां चत्वारश्चसमूर्तयः ॥ २ ॥ सभासुरा बर्हिषदोऽग्निष्वात्तास्तथैव च ॥ त्रयो मूर्तिमतश्चैषां चत्वारश्चाप्यमूर्तयः ॥ ३ ॥ क्रव्यादाश्चोपहूताश्च आज्यपाश्च सुकालिनः ॥ मूर्तिमन्तः पितृगणाश्चत्वारश्च प्रकीर्तिताः ॥ ४ ॥ सुभास्वरा ब्रह्मसुताः सोममाप्याययन्ति ये ॥ ब्रह्मलोकचरा राजन्नित्यं मूर्तिविवर्जिताः ॥५॥ तथा बर्हिषदो नाम राजपुत्रा मरीचिनः ॥ आप्याययन्ति ते देवाँल्लोके सोमपदे स्थिताः ॥ ६ ॥ विभ्राजलोके तिष्ठन्ति अग्निष्वात्ता नराधिप ॥ पुलस्त्यस्य ऋषेः पुत्रा भावयन्ति जगन्ति ते ॥ ७ ॥ दानवान्यक्षगन्धर्वान्पिशाचोरगराक्षसान् ॥ दैत्यान्भूतपिशाचांश्च विद्याधरगणांस्तथा ॥८॥ नागान्सर्पान्सुपर्णांश्च पर्वतान्सरितस्तथा ॥ क्रव्यादाँश्चोपहूतांश्च अज्यपाँश्च सुकालिनः ॥ ९ ॥ ब्राह्मणान्क्षत्रियान्वैश्यान्भावयन्त्यन्त्यजाँस्तथा ॥ कवेराङ्गिरसश्चैव कर्दमस्य प्रजापतेः ॥ १० ॥ वसिष्ठस्य तथा पुत्राः क्रमेणैते प्रकीर्तिताः ॥ ज्योतिर्भासः स्मृता लोके ये च लोका मरीचिनः ॥११॥ तेजस्विनो मानसाश्च क्रमेणैते प्रकीर्तिताः ॥ एते श्राद्धस्य भोक्तारो विश्वेदेवैः सदा सह ॥ १२ ॥ एते श्राद्धं सदा भुक्त्वा पितॄन्संतर्पयन्त्यतः ॥ यत्र क्वचन धर्मज्ञ

 

वर्तमाना हि योगतः ॥१३॥ एते च पुष्ट्या विनियोजयन्ति श्राद्धस्य दातारमदीनसत्त्वाः ॥ तृप्तास्तथैते विनियोजयन्ति दातुः पितॄन्सर्वगता न्महीप ॥१४॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे पितृस्वर्गनरकनिवासहेतुनिर्णयो नामाष्टत्रिंशदुत्तरशततमोऽध्यायः ॥१३८॥

॥ वज्र उवाच ॥ वैवस्वतेऽन्तरे प्राप्ते प्रथमे भृगुनन्दन ॥ श्राद्धं प्रदर्शितं केन तन्ममाचक्ष्व पृच्छतः ॥ १ ॥ मार्कण्डेय उवाच ॥ हिरण्याक्षवधे पूर्वं यदा त्यक्ता धराधराः ॥ धरां सपक्षा खगमाः खं गता मनुजेश्वर ॥ २ ॥ धराधरपरित्यक्ता तदा चलितबन्धना ॥ धरा स्थानाच्युता वेगात्प्रवि वेश रसातलम् ॥ ३ ॥ हिरण्याक्षं तदा हत्वा नृवराहो जनार्दनः ॥ प्रोथेन च कराभ्यां च विधार्य वसुधां बलात् ॥ ४ ॥ संपूज्यमानस्त्रिदशैः प्रवि वेश रसातलम् ॥ रसातलतलं गत्वा शेषमूर्तौ स्वके स्थितः ॥ ५ ॥ दंष्ट्राग्रेण समुद्धृत्य महीं दध्रे तदा भुजे ॥ वामबाहुनिविष्टां तां कृत्वा त्रिद शपुङ्गवः ॥ ६ ॥ उज्जहार महातेजा लोकानां हितकाम्यया ॥ रत्नज्वालावलीपुञ्जदुर्विभाव्यमुखाम्बुजः ॥ ७ ॥ शेषस्तुष्टाव देवेशं तस्मिन्काले जगद्गुरुम् ॥ पुरंध्रिवेशा वसुधा देवं तद्बाहुसंस्थिता ॥८॥ तदा तुष्टाव भूपाल रमणीयतमाकृतिः ॥ उद्धृत्य वसुधां स्थाने स्थापयित्वा तथा स्वके ॥९॥ जगाम भूमौ धर्मज्ञ वराहं नाम पर्वतम् ॥ कल्पारम्भे वराहस्य परमूर्तेः सशैलताम् ॥ १० ॥ तां समासाद्य धर्मात्मा देवः सर्वगतः प्रभुः ॥ दंष्ट्राग्रलग्नं मृत्पिण्डं गृहीत्वा दक्षिणे करे ॥ ११ ॥ प्रस्वेदाच्च तिलान्कृत्वा दर्भान्रोमभ्य एव च ॥ जलप्रस्रवणाभ्याशे तस्मिन्गिरिवरे तदा ॥ १२ ॥ दक्षिणाग्राँस्तु विन्यस्य दर्भांस्तान्मधुसूदनः ॥ मृत्पिण्डान्सतिलाँस्तेषु दत्तवाँस्त्रीन्नराधिप ॥ १३ ॥ दत्त्वा च गन्धपुष्पाद्यैः पूजयामास धार्मिकः ॥ पूजयित्वा च मर्यादां कृतवान्स नराधिप ॥ १४ ॥ अद्यप्रभृति लोकेषु प्रेतानुद्दिश्य वै पितॄन् ॥ ये तु श्राद्धं करिष्यन्ति तेषां पुष्टिर्भविष्यति ॥ १५ ॥ श्राद्धकाले तथा तेन पिण्डनिर्वपणं तथा ॥ पितॄणां ये करिष्यन्ति तेषां पुष्टिर्भविष्यति ॥ १६ ॥ पिता पितामहश्चैव तथैव प्रपितामहः ॥ पूजया ते भविष्यन्ति स्वयं पिण्डेषु नित्यदा ॥ १७ ॥ तेषां त्रयः पूजिताश्च भविष्यन्ति तथाग्नयः ॥ त्रयो लोकास्त्रयो देवास्तथैव च युगत्रयम् ॥ १८ ॥ पूजिताश्च त्रयो देवा ब्रह्मविष्णुमहेश्वराः ॥ पूजितैस्तैर्भविष्यामि चतुरात्मा तथाप्यहम्॥ १९॥ पितुः पैतामहः पिण्डो वासुदेवः प्रकीर्तितः ॥ पैतामहश्च निर्दिष्टस्तथा संकर्षणः प्रभुः ॥ २० ॥ पितृपिण्डश्च विज्ञेयः प्रद्युम्नश्चापराजितः ॥ आत्माऽनिरुद्धो विज्ञेयः पिण्डनिर्वपणं बुधैः ॥ २१ ॥ श्राद्धं कर्तुं कथं शक्यं विना वैष्णवतेजसा ॥ एवं संपूजितस्तेन चतुरात्मा त्वहं स्थितः ॥ २२ ॥ भविष्यामि प्रदास्यामि तस्य कामान्यथेप्सितान् ॥ चत्वारः पूजिता वेदाश्चत्वारश्च तथाग्नयः ॥ २३ ॥ चत्वारश्च युगास्तेन

चतस्रश्च दिशस्तथा ॥ चत्वारश्च तथा वर्णाश्चत्वारश्च तथाश्रमाः ॥ २४ ॥ चत्वारो लोकपालाश्च भविष्यन्तीह पूजिताः ॥ एवं कृत्वा स मर्यादां तत्रैवान्तरधीयत ॥ ततः प्रभृति लोकेऽस्मिञ्छ्राद्धं सद्भिः प्रकीर्तितम् ॥२५॥ स्वर्गं च मोक्षं च यशः सुखानि राज्यं च पुत्रानथ भूमिपाल ॥ स्त्रियश्च मुख्या विविधांश्च कामान्देवेश्वरः श्राद्धकृतो विधत्ते ॥ २६ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे श्राद्धोत्पत्तिर्नामैकोनचत्वारिंशदुत्तरशततमोऽध्यायः ॥ १३९ ॥ वज्र उवाच ॥ भगवञ्छ्रोतुमिच्छामि कथ्यमानमहं त्वया ॥ विधिं श्राद्धस्य धर्मज्ञ तन्ममाचक्ष्व पृच्छतः ॥ १ ॥ मार्कण्डेय उवाच ॥ वक्ष्यमाणगुणान्विप्रान्पूर्वेद्युरुपमन्त्रयेत् ॥ कर्त्रा समेतैस्तैर्भाव्यं संयतैश्च निमन्त्रितैः ॥ २ ॥ श्राद्धाहे प्रयतः स्नातः स्वाचान्तः सुसमाहितः ॥ शुक्लवासाः समभ्यर्च्य नृवराहं जनार्दनम् ॥ ३ ॥ आमश्राद्धेषु काम्येषु हुत्वा प्रथमपञ्चकम् ॥ ( [1]मध्यमं पञ्चकं हुत्वा पशुश्राद्धेष्वसंशयम् ॥ ४ ॥ अमावस्यासु सर्वासु हुत्वा चोत्तमपञ्चकम् ॥ ) हुत्वा च पञ्चकानेतानष्टकात्रितयं क्रमात् ॥ ५ ॥ अन्वष्टकासु च तथा भोजयेत्प्रयतो द्विजान् ॥ द्वौ दिव्ये प्राक् त्रयः पित्रे चैकैकमुभयत्र वा ॥ ६ ॥ उदङ्मुखाँश्च पित्रर्थे स्नातान्विद्याद्बुध क्रमात् ॥ तिलदर्भावकीर्णेषु चासनेषूपवेशयेत् ॥ ७ ॥ पितॄनावाहयामीति स्वयमुक्त्वा समाहितः ॥ आवाहयस्वेति ततो द्विजैरुक्तोऽथ तन्मनाः ॥ ८ ॥ अपयान्त्वसुरा द्वाभ्यां यातुधानविसर्जनम् ॥ तिलैः कुर्यात्प्रयत्नेन त्वथवा गौरसर्षपैः ॥ ९ ॥ एते पितर इत्येव सर्वांस्तानग्न आवह ॥ आग्नेयन्तु तथोदीर्य एतद्वः पितरस्तथा ॥ १० ॥ कुशाँस्तिलावमिश्रेण तथा गन्धयुतेन च ॥ यास्तिष्ठन्ति धारयन्ति अमृतावागिति त्र्यृचा ॥ ११ ॥ यन्मे मातेति च तथा पाद्यमर्घ्यञ्च कारयेत् ॥ निवेद्य विप्रेषु तथा पाद्यार्थं प्रयतः क्रमात् ॥ १२ ॥ गन्धैर्वस्त्रैश्च पुष्पैश्च धूपैश्चाप्यथ भूषणैः ॥ अर्चयेद्ब्राह्मणाञ्छक्त्या श्रद्दधानः समाहितः ॥ १३ ॥ आदौ समर्चयेद्विप्रान्वैश्वदेवनिवेशितान् ॥ निवेशिताँश्च पित्रर्थे ततः पश्चात्समर्चयेत् ॥ १४ ॥ वैश्वदेवनिविष्टानां चरमं हस्तधावनम् ॥ विसर्जनं च निर्दिष्टं तेषु रक्षा यतः स्थिता ॥ १५ ॥ सर्वमन्यत्प्रदातव्यमादौ तेषां नराधिप ॥ संपूज्य गन्धपुष्पैश्च ब्राह्मणान्प्रयतस्तदा ॥ १६ ॥ आदित्या वसवो रुद्रा द्विजान्वीक्ष्य ततो जपेत् ॥ अग्नौ च करवाणीति तैरुक्तं च कुरुष्वेति ॥ १७ ॥ परिस्तीर्य ततो वह्निमग्निमुद्धृत्य सर्वतः ॥ आहिताग्निस्तु जुहुयाद्दक्षिणाग्नौ समाहितः ॥ १८ ॥ अनाहिताग्निश्चौपसदे अग्न्यभावे तथाप्सु वा ॥ सोमायादौ पितृमते कव्यवाहनाय

१ कोष्ठकान्तर्गतः पाठः खपुस्तके नास्ति ।

चाग्नये ॥ १९ ॥ यमाय चैवाङ्गिरसे हुत्वा प्रयतमानसः ॥ ये मामकाश्च पितर एतद्वः पितरस्तथा ॥ २० ॥ अयं यज्ञस्तथैवेति एषां वो
गीतिरप्यथ ॥ प्रयतस्तन्मनाः कृत्वा राजँश्चैवाभिमन्त्रणम् ॥ २१ ॥ आमा सुपक्केति ततो घृतं वाप्यथवा पयः ॥ निषिच्य रौप्यपात्रेषु रजता
क्तेषु भावतः ॥ २२ ॥ यथोपपन्नेष्वथवा तूष्णीमन्नं निवेदयेत् ॥ नमो विश्वेभ्य इति च सतिलेनोदकेन च ॥ २३ ॥ प्राङ्मुखेषु च यद्दत्तं
तदन्नमुपमन्त्रयेत् ॥ उदङ्मुखेषु यद्दत्तं नामगोत्रप्रकीर्तनैः ॥ २४ ॥ मन्त्रयेत्प्रयतः प्राज्ञः स्वधान्तैः सुसमाहितः ॥ यन्मे प्रकामाहोरात्रैर्यद्रा
क्रव्यात्तथैव च ॥ २५ ॥ इतिहासपुराणानि धर्मशास्त्राणि चाप्यथ ॥ सप्तर्चं परमं मन्त्रं श्रावयेदग्रतो द्विजान् ॥ २६ ॥ दक्षिणाग्रांस्ततो दर्भां
ल्लूनांश्चैवोपमूलतः ॥ मन्त्रितान्ब्रह्ममन्त्रेण विकिरेत्सुसमाहितः ॥ २७ ॥ पिण्डनिर्वपणं कुर्यात्तेषु दर्भेष्वसंशयम् ॥ मध्वाज्यतिलमिश्रेण चान्ने
नाग्र्येण यादव ॥ २८ ॥ पितृपिण्डे भवेन्मन्त्रः पृथिवी दर्विरक्षिता ॥ पैतामहे भवेन्मन्त्रस्त्वन्तारिक्षेति पार्थिव ॥ २९ ॥ प्रपितामहके मन्त्रं
द्यौर्दार्वीरिति कीर्तयेत् ॥ ये तत्र पितरः प्रेता मन्त्रेणानेन धर्मवित् ॥ ३० ॥ सूत्रं निवेदयेद्भक्त्या क्षीरान्नं च निवेदयेत् ॥ ऊर्जं वहन्तीति ततः
सान्नं दद्यादथोदकम् ॥ ३१ ॥ अपसव्येन पिण्डेषु श्रद्धया परया युतः ॥ गन्धैः पुष्पैस्तथा धूपैर्दीपैर्भक्ष्यैश्च भोजनैः ॥ ३२ ॥ पानैः समर्चये
त्पिण्डान्सादरः प्रयतः सदा ॥ यत्किञ्चित्पच्यते गेहे भक्ष्यं वा भोज्यमेव वा ॥ ३३ ॥ अनिवेद्य न भोक्तव्यं तस्मिन्नायतने सदा ॥ भुक्तव
त्स्वथ विप्रेषु विधिं मे गदतः शृणु ॥ ३४ ॥ अन्नं सतृणमभ्युक्ष्य मामेक्षिष्टेति यत्नतः ॥ उदङ्मुखानां विप्राणां पुरतः सोदकं ततः ॥ ३५ ॥
अन्नन्तु विकिरेद्भक्त्या पितृभागस्तु सः स्मृतः ॥ प्रष्टव्या ब्राह्मणा भक्त्या भूनिविष्टेन जानुना ॥ ३६ ॥ तृप्ता भवन्तः संपन्नो भवतां कश्चिदेव
तु ॥ तृप्ताः स्मेति च तैरुक्तः संपन्नमिति चाप्यथ ॥ ३७ ॥ दद्यादाचमनं भक्त्या श्रद्दधानः समाहितः ॥ यन्मे रामश्च शक्रश्च इति कृत्वा प्रदक्षि
णाम् ॥३८॥ प्रत्येकं तर्पयेद्विद्वान्दक्षिणाभिः स्वशक्तितः ॥ भवन्तोऽभिरमन्विति वाच्या विप्रास्त्वनन्तरम् ॥ ३९ ॥ तैरुक्तोऽभिरताः स्मेति
द्विजानां पुरतः स्थितः ॥ देवाश्च पितरश्चेति जपेन्मन्त्रमतन्द्रितः ॥ ४० ॥ पितृणां नामगोत्रेण जलं देयमनन्तरम् ॥ ब्राह्मणानां
द्विजैर्वाच्यं चाक्षयं मनुजेश्वर ॥ ४१ ॥ ततस्तु प्रार्थना कार्या मन्त्रेणानेन भूमिप ॥ दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च ॥ ४२ ॥
श्रद्धा च नो मा व्यगमद्बहु देयं च नोस्त्विति ॥ वाजेवाजेति तूत्थाप्य कृत्वा चैषां प्रदक्षिणाम् ॥ ४३ ॥ जानुभ्यामवनिं गत्वा प्रणिपत्य
विसर्जयेत् ॥ अपसव्येन कर्तव्यं पितृकार्यं नराधिप ॥ ४४ ॥ ब्राह्मणैर्नैव वक्तव्या यदि पृष्टा हविर्गुणाः ॥ यावदूष्मा भवत्यन्ने

यावदश्नन्ति वाग्यताः ॥४५॥ तावदश्नन्ति पितरो यावन्नोक्ता हविर्गुणाः ॥ उच्छिष्टमार्जनं यावन्न कृतं नृपसत्तम ॥४६॥ तावदश्नन्ति पितरः स्वधा रसविमिश्रितम् ॥ हस्तदत्तानि लेह्यानि लवणं व्यञ्जनानि च॥४७॥दातारं नोपतिष्ठन्ति भोक्ता भुङ्क्ते च किल्बिषम् ॥ सौवर्णराजताभ्यान्तु फल्गुपात्रेण चाप्यथ ॥ ४८ ॥ दत्तमक्षयतां याति खड्गेनौदुम्बरेण वा ॥ मांसं नाश्नाति यः पङ्क्त्यां यथावद्विनियोजितम् ॥४९॥स प्रेत्य नरकं याति नात्र कार्या विचारणा ॥ ५० ॥ श्राद्धे दाता च भोक्ता च मैथुनं यदि गच्छतः ॥ तन्मांसं पितरस्तस्य भुञ्जते रेतसा युतम् ॥ एवं श्राद्धं तथा कार्यं शूद्रेणापि नराधिप ॥ ५१ ॥ मन्त्रवर्ज्यं हि शूद्रस्य सर्वमेतद्विधीयते ॥ वज्र उवाच ॥ यस्य जीवेत्पिता श्राद्धं कस्यासौ कर्तुमर्हति ॥ ५२ ॥ त्वमेव संशयच्छेत्ता संशयं छिन्धि मे द्विज ॥ मार्कण्डेय उवाच ॥ येषां श्राद्धं पिता कुर्यात्तेषामेव स कारयेत् ॥ मन्त्रहीनं प्रकर्तव्यं तेन श्राद्धं यथा विधि ॥५३॥ मातामहानां श्राद्धं तु मन्त्रहीनं च कारयेत् ॥ श्राद्धं च सुहृदां कुर्यात्स्त्रीणां चाक्षयवाचकम् ॥ ५४ ॥ वज्र उवाच ॥ पिता पितामहश्चैव जीवेतां यस्य देहिनः ॥ तेन श्राद्धं कथं कार्यं तन्ममाचक्ष्व पृच्छतः ॥५५॥ मार्कण्डेय उवाच॥येषां पितामहः कुर्यात्तेषां श्राद्धं नराधिप ॥ तेन कार्यं महाप्राज्ञ यथावदनुपूर्वशः ॥ ५६ ॥ वज्र उवाच ॥ पिता पितामहश्चैव तथैव प्रपितामहः ॥ यस्य जीवन्ति कर्तव्यं तेन श्राद्धं कथं द्विज ॥ ५७ ॥ मार्कण्डेय उवाच ॥ तेन श्राद्धं न कर्तव्यं विधिलोपं तु यादव ॥ पूजनीयाश्च पितरः पितामहपितुः स्वयम् ॥ ५८ ॥ वज्र उवाच ॥ जीवेत्पितामहो यस्य पितुश्चैव पितामहः ॥ पिता प्रेतस्तथा यस्य तस्य श्राद्धविधिं वद ॥ ५९ ॥ मार्कण्डेय उवाच॥ पिण्डनिर्वपणं कृत्वा स पितुर्मनुजेश्वर ॥ पितुः पितामहादूर्ध्वं द्वाभ्यां पिण्डं निवेदयेत् ॥६० ॥ वज्र उवाच ॥ पिता पितामहौ प्रेतौ यस्य स्यातां द्विजोत्तम ॥ पितुः पितामहो जीवेत्तस्य श्राद्धविधिं वद ॥६१॥ मार्कण्डेय उवाच ॥ पित्रे सपित्रे कृत्वा तु पिण्डनिर्वपणं ततः ॥ पिण्डनिर्वपणं कुर्यात्पितामहपितामहे॥६२॥वज्र उवाच ॥ प्रेतः पिता भवेद्यस्य पितुश्चैव पितामहः ॥ तेन कार्यं कथं श्राद्धं तन्ममाचक्ष्व पृच्छतः॥६३॥मार्कण्डेय उवाच॥ स तु दत्त्वा पितुः पिण्डं ततः ऊर्ध्वं पितामहात् ॥ द्वाभ्यां दद्यात्सदा पिण्डं त्वेवमाहुर्मनीषिणः ॥ ६४ ॥ वज्र उवाच ॥ प्रेतः पितामहो यस्य पिता जीवेद्विजोत्तम ॥ पितुः पितामहो जीवेत्तस्य श्राद्धविधिं वद ॥ ६५ ॥ मार्कण्डेय उवाच ॥ दत्त्वा पितामहे पिण्डं स तूर्ध्वं प्रपितामहात् ॥ पिण्डनिर्वपणं कुर्याद्वाभ्यान्नित्यमतन्द्रितः॥६६॥ वज्र उवाच॥ सप्तार्चिषमहं मन्त्रं श्रोतुमिच्छामि भार्गव ॥ श्राद्धकालेषु नियतं रक्षोघ्नं यस्य कीर्तितम्॥६७॥

१ 'श्राद्धन्तु' इति क० ।

मार्कण्डेय उवाच ॥ पापापहं पावनीयमश्वमेधसमं तथा ॥ मन्त्रं वक्ष्याम्यहं तस्मादमृतं ब्रह्मनिर्मितम् ॥ ६८ ॥ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ॥ नमः स्वधायै स्वाहायै नित्यमेव भवन्त्विह ॥६९॥ आद्यवसाने श्राद्धस्य त्रिवारं तु जपेत्सदा ॥ अश्वमेधफलं ह्येतद्द्विजैः सत्कृतिपूजितम् ॥७०॥ पिण्डनिर्वपणे चापि जपेदेतत्समाहितः ॥ पितरः क्षिप्रमायान्ति राक्षसाः प्रद्रवन्ति च ॥७१॥ पितॄँश्च त्रिषु लोकेषु मन्त्रोऽयं तारयत्युत ॥ पठ्यमानः सदा श्राद्धे नियतैर्ब्रह्मवादिभिः ॥७२॥ राज्यकामो जपेदेतत्सदा मन्त्रमतन्द्रितः ॥ वीर्यसर्वार्थशौर्यादिश्र्यायुर्बुद्धिविवर्धनम् ॥ ॥७३॥ प्रीयन्ते पितरोनेन जपेन नियमेन च ॥ सप्तार्चिषं प्रवक्ष्यामि सर्वकामप्रदं शुभम्॥७४॥ अमूर्तानां समूर्तानां पितॄणां दीप्ततेजसाम् ॥ नमस्यामि सदा तेषांध्यानिनां योगचक्षुषाम् ॥ ७५ ॥ इन्द्रादीनां च नेतारो दक्षमारीचयोस्तथा ॥ सप्तर्षीणां पितॄणां च तान्नमस्यामि कामदान् ॥७६ ॥ मन्वादीनां च नेतारः सूर्याचन्द्रमसोस्तथा ॥ तान्नमस्कृत्य सर्वान्वै पितॄनप्स्वर्णवेषु च ॥ ७७ ॥ नक्षत्राणां ग्रहाणां च वाय्वग्निपितरस्तथा ॥ द्यावापृथिव्योश्च तथा नमस्ये तान्कृताञ्जलिः ॥ ७८ ॥॥ देवर्षीणां च नेतारः सर्वलोकनमस्कृतान् ॥ त्रातारः सर्वभूतानां नमस्ये तान्पितामहान् ॥ ७९ ॥ प्रजापतेर्गवां वह्नेः सोमाय च यमाय च ॥ योगेश्वरेभ्यश्च तथा नमस्ये तान्कृताञ्जलिः ॥८०॥ पितृगणेभ्यः सप्तभ्यो नमो लोकेषु सप्तसु ॥ स्वयम्भुवे नमस्कृत्य ब्रह्मणे लोकचक्षुषे ॥८१॥ एतत्तदुक्तं सप्तार्चिर्ब्रह्मर्षिगणपूजितम् ॥ पवित्रं परमं ह्येतच्छ्रीमद्रक्षोविनाशनम्॥ ८२ ॥ एतेन विधिना युक्तः त्रीण्येवं लभते नरः ॥ अन्नमायुः सुताँश्चैव वदन्ति पितरो भुवि ॥ ८३ ॥ भक्त्या परमया युक्तः श्रद्दधानो जितेन्द्रियः ॥ सप्तार्चिषं जपेद्यस्तु नित्यमेव समाहितः ॥ सप्तद्वीपसमुद्रायां पृथिव्यामेकराड् भवेत्॥८४॥ वज्र उवाच ॥ ब्रह्मन्मन्त्रं समाचक्ष्व सर्वरक्षोनिबर्हणम्॥ पिण्डनिर्वपणे येन मन्त्रणीयाः कुशोत्तमाः ॥ ८५ ॥ मार्कण्डेय उवाच ॥ निहन्मि सर्वं यदमेध्यवद्भवेद्धताश्च सर्वेसुरदानवा मया ॥ ये राक्षसा यक्षपिशाचगुह्यका हता मया यातुधानाश्च सर्वे ॥ ८६ ॥ एतेन मन्त्रेण सुसंयतात्मा तिलान्किरेद्दिक्षु तथा विदिक्षु ॥ यस्मिन्देशे पठ्यते मन्त्र एष तं वै देशं राक्षसा वर्जयन्ति ॥ ८७ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे श्राद्धविवरणो नाम चत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४० ॥ ॥ छ ॥ ॥ वज्र उवाच ॥ ॥ कस्मिन्देशे न कर्तव्यं श्राद्धं भृगुकुलोद्वह ॥ किञ्च देयमदेयं च तन्मे ब्रूहि द्विजोत्तम ॥ १ ॥ ॥ मार्कण्डेय उवाच ॥ त्रिशङ्कुं वर्जयेद्देशं सर्वं द्वादशयोजनम् ॥ उत्तरेण पतङ्गस्य दक्षिणेन च कैकटम् ॥ ॥ २ ॥ देशस्त्रैशङ्कवो नाम विवर्ज्यः श्राद्धकर्मणि ॥ कारस्कराः कलिङ्गाश्च सिन्धोरुत्तरमेव च ॥ ३ ॥ चातुर्वर्ण्य

विहीनाश्च ये च देशा नराधिप ॥ अन्येष्वपि च देशेषु तद्देशजनदर्शनम् ॥ ४ ॥ वर्जयेच्छ्राद्धकाले तु पतितानां विशेषतः ॥ रजस्वलाश्च षण्ढाश्च श्वानसूकरकुक्कुटाः ॥ ५ ॥ यथा श्राद्धं न पश्यन्ति तथा कार्यं विजानता ॥ रक्षार्थं चाप्यथैतेषां गुप्तिः कार्या नरेश्वर ॥६॥ तिलाविकिरणं कार्यं यातुधानविनाशनम् ॥ पिण्डाँश्च गोऽजविप्रेभ्यो दद्यादप्स्वथ क्षिपेत् ॥ ७ ॥ मध्यमं पुत्रकामा वा पत्नी पिण्डं च भक्षयेत् ॥ तीर्थश्राद्धे सदा पिण्डान्क्षिपेत्तीर्थे विचक्षणः ॥ ८ ॥ दक्षिणाभिमुखो भूत्वा पैत्री दिक्सा प्रकीर्तिता ॥ पिण्डनिर्वपणं कार्यं कुशालाभे विचक्षणैः ॥ ९ ॥ कुशेषु राजन्सर्वेषु पवित्रे ते परे मते ॥ सूत्रं प्रदेयं वासोऽर्थे क्षौमकार्पाससम्भवम् ॥ १० ॥ दशां विवर्जयेत्प्राज्ञो यद्यप्यहतवस्त्रजा ॥ क्षौमकार्पासजं त्यक्त्वा सूत्रमन्यत्र दापयेत् ॥ ११ ॥ घृतेन दीपो दातव्यस्त्वथवाप्यौषधीरसैः ॥ वसामेदोद्भवं दीपं प्रयत्नेन विवर्जयेत् ॥ १२ ॥ चन्दनागुरुकर्पूरंकुङ्कुमाँश्च प्रदापयेत् ॥ अश्वमेधसमा ह्येते पितॄणामनुलेपनाः ॥ १३ ॥ न दातव्यं मनुष्येन्द्र यदन्यच्चानुलेपनम् ॥ धूपो गुग्गुलुजो देयस्तथा चन्दनसारजम् ॥ १४ ॥ अगुरुं च सकर्पूरं तुरुष्कं च प्रदापयेत् ॥ अतोऽन्यदपि यत्किंचिद्धूपार्थे तद्विवर्जयेत् ॥ १५ ॥ सघृतं गुग्गुलुं धूपं धूपार्थे यः प्रयच्छति ॥ अश्वमेधफलं तस्य धूपदातुस्तथैव च ॥ १६ ॥ जात्यश्च सर्वा दातव्या मल्लिका श्वेतयूथिका ॥ जलोद्भवानि सर्वाणि कुसुमानि विवर्जयेत् ॥ १७ ॥ यानि कण्टकिजातानि न देयानि नराधिप ॥ यानि कण्टकिताग्राणि शुक्लानि सुरभीणि च ॥ १८ ॥ तानि राजेन्द्र देयानि लताजानि विशेषतः ॥ रक्तानि जलजातानि तथा देयानि यादव ॥ १९ ॥ विपुलां श्रियमाप्नोति पितॄन्पुष्पैः समर्चयन् ॥ अभक्ष्याणि विवर्ज्यानि श्राद्धे नित्यमतन्द्रितैः ॥ २० ॥ भक्ष्येष्वपि न देयानि यानि तानि निबोध मे ॥ भूस्तृणं सुसुकं शिग्रुं पालक्यं तण्डुलीयकम् ॥ २१ ॥ कूष्माण्डालाबुवृन्ताकपिप्पलीमारिचानि च ॥ श्राद्धेषु नागरं देयं लवणं सैन्धवं तथा ॥ २२ ॥ सैन्धवव्यतिरेकेण लवणानि न दापयेत् ॥ नक्तं गृहीतमुदकं तथा पल्वलसम्भवम् ॥ २३ ॥ श्राद्धकाले विवर्ज्यं च माहिषं क्षीरमेव च ॥ राजमाषमसूराश्च चणकाः कोरदूषकाः ॥ २४ ॥ वर्ज्याश्चाभिषवो नित्यं शतपुष्पं गवेधुकम् ॥ करम्भाणि कुसुम्भं च पटोलं बृहतीफलम् ॥ २५ ॥ करीरसुरभी चोभौ पूतिगन्धि च यद्भवेत् ॥ जम्बीरजफलं वर्ज्यं कोविदारं च पार्थिव ॥ २६ ॥ वस्तुसंदर्शनं शस्तं श्राद्धे नित्यमरिन्दम ॥ कुतपस्य च सान्निध्यं तथा कृष्णाजिनस्य च ॥ २७ ॥ कृष्णाजिनस्य दानं च रजतस्य विशेषतः ॥ कृष्णाजिनं सकुतपं कृष्णानि च तिलानि च ॥ २८ ॥ श्राद्धकर्मणि शस्तानि विट्पतिस्तत्सुतस्तथा ॥ सोमः सदैव मासान्ते रविणा सह संगतः ॥ २९ ॥

आपश्चैवौषधीश्चैव तदा विशति पार्थिव ॥ अमायां तु पयः पीत्वा भुक्त्वा चैवौषधीः शुभाः ॥ ३० ॥ पयः क्षरन्ति यद्दिव्यं गावोऽमृ
तरसोपमम् ॥ तत्पवित्रं परं राजन्कापिलं चेद्विशेषतः ॥ ३१ ॥ हव्ये कव्ये च तद्राजन्सोमतुल्यं प्रकीर्तितम् ॥ तिलैर्व्रीहिय
वैर्माषैरद्भिर्मूलफलेन च ॥ ३२ ॥ प्रियङ्गुभिस्तथा दारैः शृङ्गाटकफलैः शुभैः ॥ गोधूमैश्चेक्षुभिर्मुद्गैः सचीनचणकैस्तथा ॥ ३३ ॥
श्यामाकैर्हस्तिश्यामाकैर्मधूकैर्हव्यदाडिमैः ॥ पनसैर्नारिकेरैश्च खर्जूराम्रफलैस्तथा ॥ ३४ ॥ आम्रातैश्चाम्रनारंगैर्बिल्वैर्दीर्घैश्च मूलकैः ॥ विदार्यानि
र्भरूटैश्च विशेषैश्च वराटकैः ॥ ३५ ॥ पिचुकैश्च तथा कर्दैर्बदरैः करकन्दुभिः ॥ पालेवतै राष्ट्रकैश्च अक्षोटैः पनसैस्तथा ॥ ३६ ॥ काकोलैः
क्षीरकाकोलैस्तथा पिण्डालुकैः शुभैः ॥ सुवर्चलामधूकैश्च वास्तुकेन च पार्थिव ॥३७॥ सिताखण्डगुडैर्मुख्यैः फणितेन च सक्तुभिः ॥ लाजाभिश्च
सदानाभिस्त्रपुसैर्वारुचिर्भटैः ॥ ३८ ॥ सर्षपाराजशाकाभ्यामिङ्गुदै राजजम्बुभिः ॥ प्रियालामलकैर्मुख्यैः फल्गुभिश्च तिलोलकैः ॥ ३९ ॥ वेत्रा
ङ्कुरैस्तालदर्भैश्चुक्रीकाक्षीरिकाधवैः ॥ चोचैः समीचैर्लकुचैस्तथावै बीजपूरकैः ॥ ४० ॥ छत्रातिच्छत्रक्षीराकैः कलण्डुककशेरुकैः ॥ सुजातकैः
पद्मफलैर्भक्ष्यैर्भोज्यैः सुसंस्कृतैः ॥ ४१ ॥ रागषाढवचोष्यैश्च त्रिजातकसमन्वितैः ॥ दत्तेन मासं प्रीयन्ते श्राद्धेन पितरो नृणाम् ॥ ४२ ॥
द्वौ मासौ मत्स्यमांसेन त्रीन्मासान्हारिणेन तु ॥ औरभ्रेणाथ चतुरः शाकुनेन च पञ्च वै ॥ ४३ ॥ षण्मासाञ्छाशिकेनापि सप्त पारिशतेन
च ॥ तथाष्टौ छागमांसेन पयसा पायसेन च ॥ ४४ ॥ वाराहेण नवैवाहू रौरवेण तथा दश ॥ मासानेकादशैवाहुर्गवयेन नराधिप ॥ ४५ ॥
संवत्सरं तु गव्येन पयसा पायसेन च ॥ पयोविकारैश्च तथा हृद्यैश्च मनुजेश्वर ॥ ४६ ॥ पानकैश्च तथा हृद्यैस्त्रिसुगन्धैः सुशीतलैः ॥ वार्ध्रीण
सस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥ ४७ ॥ वज्र उवाच ॥ वार्ध्रीणसमहं ब्रह्मञ्छ्रोतुमिच्छामि तत्त्वतः ॥ यस्य मांसेन कथिता तृप्तिर्द्वादश
वार्षिकी ॥ ४८ ॥ मार्कण्डेय उवाच ॥ त्रिपिबन्त्विन्द्रियक्षीणं यूथस्याग्रसरं तथा ॥ रक्तं वर्णेन राजेन्द्र छागं वार्ध्रीणसं विदुः ॥४९॥ कालशाकं
महाशल्कं खड्गमांसं तथैव च ॥ आनन्त्याय भवेद्दत्तं सर्वं च मधुसंयुतम् ॥ ५० ॥ खड्गा विषाणैः परिवर्जिता ये तेषां हि मांसेन भवत्यन
न्तम् ॥ श्राद्धं महाराज ततः प्रदेयं खड्गस्य मांसेन हिताय तेषाम् ॥ ५१ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मा॰ सं॰ श्राद्धहविर्वर्णनो नामै
कचत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४१ ॥ ॥ छ ॥ ॥ वज्र उवाच ॥ ॥ श्राद्धकालं समाचक्ष्व सर्वधर्मभृतां वर ॥ कस्मिन्काले कृते
श्राद्धे प्रीयन्ते पितरो नृणाम् ॥ १ ॥ मार्कण्डेय उवाच ॥ श्राद्धकालस्त्वमावस्यां नित्यं पार्थिवसत्तम ॥ पौर्णमासी तथा माघी श्रावणी च

नरोत्तम ॥२॥ प्रोष्ठपद्यामतीतायां तथा कृष्णत्रयोदशी ॥ आग्रहायण्यतीतायां कृष्णास्तिस्रोऽष्टकास्तथा ॥३॥ शाकैश्च प्रथमं कार्या मांसैश्च तदनन्तरा ॥ तृतीया च तथाऽपूपैर्नित्यमेव विजानता ॥ ४ ॥ अन्वष्टकासु च स्त्रीणां श्राद्धं कार्यं तथैव च ॥ अष्टकाविधिना हुत्वा क्रमेणैतास्तु पञ्चकाः ॥ ५॥ मात्रे राजन्पितामह्यै श्राद्धं कार्यं यथाविधि ॥ तथैव प्रपितामह्यै विश्वेदेवपुरस्सरम् ॥६॥ पिण्डनिर्वपणं कार्यं तासां च पितृवन्नृप॥ भुक्तवत्सु च विप्रेषु तत्र कर्म निबोध मे ॥ ७ ॥ प्रादेशमात्रा राजेन्द्र चतुरंगुलमायताः ॥ तावदेव समुत्सेधाः षट्कर्षूस्तत्र कारयेत् ॥ ८ ॥ प्रत्येककर्षुमूले तु परिस्तीर्य हुताशनम् ॥ अग्निसोमयमानां च यागं कृत्वा यथा पुरा ॥ ९ ॥ कर्षुत्रितयमूले तु पुरुषाणां तु कारयेत् ॥ पिण्डनिर्वपणं प्राग्वदेकैकस्मिन्यथाविधि ॥ १० ॥ कर्षूभिस्त्रितयं तच्च क्षीरान्नाद्भिः प्रपूरयेत् ॥ कर्षुत्रितयमूले तु स्त्रीणां निर्वपणं भवेत् ॥ ११ ॥ दध्ना मांसेन पयसा कर्षूणां चैव पूरणम् ॥ अन्नोदकविमिश्रेण कार्यं मनुजपुङ्गव ॥ १२ ॥ भवन्तीभ्यो भवत्वेतदक्षयं परिकीर्तितम् ॥ एतानि श्राद्धकालानि नित्यान्याह प्रजापतिः ॥ १३ ॥ श्राद्धमेतेष्वकुर्वाणो नरकं प्रतिपद्यते ॥ वृद्धौ श्राद्धं नरः कुर्वन्नित्यं वृद्धिमुपाश्नुते ॥ १४ ॥ वृद्धौ समर्चयेद्विद्वान्नित्यं नान्दीमुखान्पितॄन् ॥ वृद्धिश्राद्धेषु कर्तव्यास्तिलस्थाने यवास्तथा ॥ १५ ॥ कर्कन्धुदधिसंमिश्राँस्तथा पिण्डाँश्च निर्वपेत् ॥ अच्छिन्ननाभ्यां कर्तव्यं श्राद्धं वै पुत्रजन्मनि ॥ १६ ॥ आशौचोपरमे कार्यमथवाऽपि नराधिप ॥ विवाहदिवसे श्राद्धं तथा कार्यं विचक्षणैः ॥१७॥ वृद्धिश्राद्धं विधानेन चन्द्रे जन्मर्क्षमाश्रिते ॥ श्राद्धं प्रयत्नात्कर्तव्यं भूतिकामेन पार्थिव ॥ १८ ॥ उत्तरादयनाच्छ्राद्धं श्रेष्ठं स्याद्दक्षिणायने ॥ चातुर्मास्यं च तत्रापि प्रसुप्ते केशवे हितम् ॥१९ ॥ प्रोष्ठपद्यपरं पक्षं तथापि च विशेषवत् ॥ पञ्चम्यूर्ध्वं च तत्रापि दशम्यूर्ध्वं ततोऽप्यति॥२०॥मघायुता च तत्रापि शस्ता राजंस्त्रयोदशी ॥ तत्राक्षय्यं भवेच्छ्राद्धं मधुना पायसेन च ॥ २१ ॥ सर्वस्वेनापि कर्तव्यं श्राद्धमत्र नराधिप ॥ परान्नभोजी त्वपचः श्राद्धमत्र तु कारयेत् ॥ २२ ॥ यस्तु श्राद्धं सदा कुर्यात्सोऽश्वमेधफलो भवेत् ॥ निद्रां त्यजति सर्वात्मा यस्मिन्काले जनार्दनः ॥ २३ ॥ तत्र श्राद्धमथानन्त्यं नात्र कार्या विचारणा ॥ श्राद्धं संक्रमणे भानोः कर्तव्यं पृथिवीपते ॥ २४ ॥ विषुवद्वितयं तत्र अयने द्वे विशेषतः ॥ व्यतीपाते तथा श्राद्धं ज्ञेयं बहुफलं नृप ॥ २५ ॥ अक्षय्यं च तथा श्राद्धं विज्ञेयं राहुदर्शने ॥ व्रीहिपाके च कर्तव्यं यवपाके तथैव च ॥ २६ ॥ न तानद्युर्महाराज विना श्राद्धं कथंचन ॥ आश्विनस्यापरे पक्षे प्रथमे कार्तिकस्य च ॥ २७ ॥ पूर्वाह्णे शुक्लपक्षस्य श्राद्धं कुर्याद्विचक्षणः ॥ अपराह्णे तथा कार्यं कृष्णपक्षे नराधिप ॥ २८ ॥ संध्ययोर्वर्जयेच्छ्राद्धं तत्र रात्रौ नरेश्वर ॥ रात्रावपि च कर्तव्यं यदा स्याद्राहुदर्शनम् ॥ २९ ॥

अक्षय्यं तत्समुद्दिष्टं यद्दतं राहुदर्शने ॥ अतः काम्यानि वक्ष्यामि श्राद्धानि तव पार्थिव ॥ ३० ॥ अरोग्यमथ सौभाग्यं समरे विजयं तथा ॥ सर्वान्कामाँस्तथा विद्यां धनं जीवितमेव च ॥ ३१ ॥ आदित्यादिदिनेष्वेवं श्राद्धं कुर्वन्सदा नरः ॥ क्रमेणैतदवाप्नोति नात्र कार्या विचारणा ॥ ॥ ३२ ॥ स्वर्गं ह्यपत्यानि तथा ब्रह्मवर्चसमेव च ॥ रौद्रेण कर्मणा सिद्धिं सुवं पुष्टिं तथा श्रियम् ॥ ३३ ॥ सर्वान्कामाँश्च सौभाग्यं धनं ज्ञाति प्रधानताम् ॥ रूपयुक्ताँश्च तनयान्वाणिज्याद्धनसंपदम् ॥ ३४ ॥ कनकं सुहृदो राज्यं सफलां च तथा कृषिम् ॥ समुद्रयानाल्लाभं च सर्वान्कामाँस्तथैव च ॥ ३५ ॥ श्रैष्ठ्यकामांस्तथा सर्वान्बलमारोग्यमेव च ॥ रूप्यं द्रव्यं गृहं गाश्च तुरगाँश्चैव जीवितम् ॥ ३६ ॥ कृत्तिकादिभरण्यन्तं क्रमात्तु भगणे नरः ॥ एकैकस्मिन्क्रमात्कुर्वञ्छ्राद्धं प्राप्नोत्यसंशयम् ॥ ३७ ॥ स्त्रियः सुरूपाः स्वगृहे कन्यानां च तथा वरान् ॥ सर्वान्कामान्यशश्चैव श्रियं द्यूतजयं कृषिम् ॥ ३८ ॥ वाणिज्यं पशवश्चैव वाजिनश्च तथा सुतान् ॥ सुवर्णरौप्यसौभाग्यं प्राप्नोति श्राद्धदः क्रमात् ॥ ३९ ॥ प्रतिपत्प्रभृति ह्येतद्यावद्राजँस्त्रयोदशी ॥ चतुर्दश्यां तु कर्तव्यं ये नराः शस्त्रघातिताः ॥ ४० ॥ श्राद्धं सदा पञ्चदशीषु कार्यं कामान्समग्राँल्लभते मनुष्यः ॥ तस्मात्प्रयत्नेन नरेन्द्र कार्यं श्राद्धं सदा पञ्चदशीषु तज्ज्ञैः ॥ ४१ ॥ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे श्राद्धकालवर्णनो नाम द्विचत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४२ ॥ ॥ छ ॥ ॥ वज्र उवाच ॥ ॥ कस्मै श्राद्धं न दातव्यं केन भुक्तं महाफलम् ॥ भवतीह द्विजश्रेष्ठ तन्ममाचक्ष्व पृच्छतः ॥ १ ॥ मार्कण्डेय उवाच ॥ ॥ अनूढातनयो राजन्यश्च पौनर्भवः सुतः ॥ शूद्रापतिर्दुराचारो वाणिज्यायुधजीवकः ॥ २ ॥ तथा वार्धुषिको यश्च शूद्रस्य च पुरोहितः ॥ पर्वकारस्तथा सूची यस्य चोपपतिर्गृहे ॥ ३ ॥ कृत्वा नक्षत्रनिर्देशं यश्च जीवति पार्थिव ॥ चिकित्सितेन च तथा यस्य वृत्तिर्नरेश्वर ॥ ४॥ वेदविक्रयको यश्च वेदनिन्दक एव च ॥ तर्कशास्त्रेण दग्धश्च नास्तिको धर्मवर्जितः ॥ ५ ॥ पित्रा विवदमानश्च यश्चैवोपनयेद्बहून् ॥ अयाज्ययाजी स्तेनश्च यक्ष्मी कितव एव च ॥ ६ ॥ श्वित्री च यस्तथा काणो बधिरोऽन्धः कुणिस्तथा ॥ परपूर्वापतिश्चैव ग्रामप्रेष्यो निराकृतिः ॥ ७ ॥ अवकीर्णी कुण्डगोलौ कुनखी श्यावदन्तकः ॥ कन्यादूष्यभिशप्तश्च मित्रध्रुक पिशुनस्तथा ॥ ८ ॥ परिवित्तिः परिवेत्ता तस्य कन्याप्रदश्च यः ॥ याजकश्च तथा तस्य सोमविक्रयकस्तथा ॥ ९ ॥ कूटसाक्षी च वाग्दुष्टः परदारो विकर्मकः ॥ तथा देवापविद्धाग्निः विरुद्धजनकस्तथा ॥ १० ॥ यश्च हीनातिरिक्ताङ्गो



१ 'श्चतुर्दशी' इति ख० । २ 'तथैव चापविद्धाग्निर्विद्धप्रजननस्तथा' इति ख० ।

दुश्चर्मा दमकस्तथा ॥ यश्च युक्तस्तथा राजन्पातकैश्चोपपातकैः ॥ ११ ॥ द्विषन्मित्रे उभे चैव प्रयत्नेन विवर्जयेत् ॥ अतः परं प्रवक्ष्यामि ब्राह्मणान्पङ्क्तिपावनान् ॥ १२ ॥ ब्रह्मदेयानुसन्तानः तपस्वी विजितेन्द्रियः ॥ पारगो[1] यजुषां यश्च सामवेदस्य पारगः ॥ १३ ॥ ऋग्वेदपारगो यश्च भृग्वङ्गिरसपारगः ॥ अथर्वशिरसोऽध्येता त्रिसुपर्णस्य पारगः ॥ १४ ॥ त्रिणाचिकेतः पञ्चाग्निधर्मशास्त्रविशारदः ॥ पुराणपारगो यश्च इतिहासविशारदः ॥ १५ ॥ अधीते सोत्तरं यश्च विष्णुधर्ममिदं शुभम् ॥ विजानाति यथावच्च यश्च व्याकरणं नृप ॥ १६ ॥ ज्योतिषश्च तथा वेत्ता आयुर्वेदस्य च द्विजः ॥ ताभ्यां वृत्तिं न चेत्कुर्याद्वृत्तिस्ताभ्यां विगर्हिता ॥ १७ ॥ आहिताग्निश्च यो विद्वान्सोमपश्च द्विजोत्तमः ॥ गुरुशुश्रूषणपरस्तीर्थपूतश्च यादव ॥ गायत्रीजापनिरतो योगी ध्यानपरायणः ॥ १८ ॥ यस्याप्यनन्ते जगतामधीशे भक्तिः परा यादव देवदेवे ॥ तस्मात्परं नापरमस्ति किञ्चित्पात्रं त्रिलोके पुरुषप्रवीर ॥ १९ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे पात्रापात्रपरीक्षाविधिर्नाम त्रिचत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४३ ॥ वज्र उवाच ॥ कस्मिन्बहुफलं श्राद्धं देशे ब्राह्मणपुङ्गव ॥ एतत्सर्वं समाचक्ष्व भवान्ब्रह्म इवाऽपरः ॥ १ ॥ मार्कण्डेय उवाच ॥ गयाशीर्षवटे श्राद्धमक्षय्यं परिकीर्तितम् ॥ यदर्थमेषा चरति गाथा लोके पुरातनी ॥ २ ॥ एष्टव्या बहवः पुत्रा यद्येकोपि गयां व्रजेत् ॥ यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥ ३ ॥ पुष्करेष्वक्षयं श्राद्धं प्रयागे नैमिषे तथा ॥ वाराणस्यां प्रभासे च कुरुक्षेत्रे समन्ततः ॥ ४ ॥ सन्निहत्यां विशेषेण राहुग्रस्ते निशाकरे ॥ ([2]राहुग्रस्ते दिनकरे सन्नीत्यां पार्थिवोत्तम) ॥ ५ ॥ श्राद्धं कृत्वा समाप्नोति राजसूयशतं नरः ॥ अश्वमेधसहस्रस्य सम्यगिष्टस्य यत्फलम् ॥ ६ ॥ स्नात एव तदाप्नोति कृत्वा श्राद्धं स मानवः ॥ सर्वेषु देवलोकेषु कामचारी विराजते ॥ ७ ॥ पद्मवर्णेन यानेन किङ्किणीजालमालिना ॥ देवरामागणाढ्येन वीणामुरजनादिना ॥ ८ ॥ दिव्यश्वेताश्वयुक्तेन कामगेन यथासुखम् ॥ आभूतसंप्लवं यावत्क्रीडत्यप्सरसां गणैः ॥ ९ ॥ कृतकृत्यश्च भवति पितॄणामनृणस्तथा ॥ श्राद्धं तथा पितॄणां च नोपयुज्येत वै पुनः ॥ १० ॥ यत्र क्वचन गङ्गायां श्राद्धस्यानन्त्यमुच्यते ॥ यमस्य भगिनी देवी यमुना पापनाशिनी ॥ ११ ॥ यत्र क्वचन तस्यां हि श्राद्धस्यानन्त्यमुच्यते ॥ पितॄणां दुहिता राजन्नर्मदा सरितां वरा ॥ १२ ॥ तस्यास्तीरे तथानन्तं श्राद्धं सर्वत्र पार्थिव ॥ अक्षय्यं च तथा श्राद्धममरान्तिकपर्वते ॥ १३ ॥ वराहपर्वते राजञ्छ्राद्धस्यानन्त्यमुच्यते ॥ हिमवान्पर्वतश्रेष्ठः शङ्करश्वशुरो गिरिः ॥ १४ ॥ आकरः सर्वरत्नानां सर्वसत्त्वसमाश्रयः ॥ तापसाना

---

१ 'पारगोऽध्वर्युशाखायाम्' इति ख० । २ कोष्टान्तर्गतः पाठः खपुस्तके नास्ति ।

मधीवासः श्राद्धं तत्राऽक्षयं भवेत् ॥१५॥ एवमादिषु तीर्थेषु पर्वतेषु सरित्सु च ॥ सरोवरेषु मुख्येषु ऋषीणामाश्रमेषु च ॥१६॥निर्झरेषु तथारण्ये नदीनां प्रभवेषु च ॥ सङ्गमेषु च मुख्येषु पुलिनेषु विशेषतः ॥१७॥ उद्यानेषु विचित्रेषु सैकतेषु समेषु च॥ शाद्वलेषु च रम्येषु गिरीणां कन्दरासु च ॥ १८ ॥ गह्वरेषु नितम्बेषु च्छायायां कुञ्जरस्य च ॥ महीगतान्तरन्यस्तगजच्छायासु पार्थिव ॥ १९ ॥ यः कुर्यादपराह्णे तु सकृच्छ्राद्धं प्रयत्नतः ॥ अक्षय्यमन्नपानं तु पितॄणां चोपतिष्ठते॥२०॥गोमयेनोपलिप्तेषु श्राद्धं कार्यं गृहेषु च॥मनोज्ञेषु विचित्रेषु रुचिरेषूत्तमेषु च॥२१॥देवायतनगोष्ठेषु श्राद्धं बहुफलं भवेत् ॥२२॥ तीर्थानि यानीह नरेन्द्रचन्द्र लोके पुराणैः परिकीर्तितानि ॥ तीरेषु तेषां विधिवत्प्रदाय श्राद्धं न शोचेन्मरणं जितात्मा ॥ २३ ॥ इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे श्राद्धदेशानुकीर्तनो नाम चतुश्चत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४४ ॥

मार्कण्डेय उवाच ॥ अतः परं प्रवक्ष्यामि पितृभिर्याः प्रकीर्तिताः ॥ गाथाः पार्थिवशार्दूल कामयद्भिः पुरे स्वके ॥ १ ॥ अपि स्यात्स कुलेऽस्माकं यो नो दद्याज्जलाञ्जलिम् ॥ नदीषु बहुतोयासु शीतलासु विशेषतः ॥ २ ॥ अपि स्यात्स कुलेऽस्माकं हिममिश्रं जलाञ्जलिम् ॥ तिलमाक्षिकसंयुक्तं यो नो दद्यात्समाहितः ॥ ३ ॥ अपि स्यात्सकुलेऽस्माकं यो नो दद्याच्च भक्तितः ॥ पायसं मधुसंमिश्रं वर्षासु च मघासु च ॥४॥ दाल्भ्य उवाच ॥ पत्न्यो नृणां मुनिश्रेष्ठ योषितां च तथा नराः ॥ तच्छ्रोतुमिच्छा विप्रर्षे विधवा स्त्री न जायते ॥ ५ ॥ उपोषितेन येनाग्र्य पत्न्या न रहितो नरः ॥ पुलस्त्य उवाच ॥ अशून्यशयनां नाम द्वितीयां शृणु भो द्विज ॥६ ॥ यामुपोष्य न वैधव्यं प्रयाति स्त्री द्विजोत्तम ॥ पत्नीविमुक्तश्च नरो न कदाचित्प्रजायते ॥ ७ ॥ शेते जलनिधौ कृष्णः श्रिया सार्धं यदा द्विज ॥ अशून्यशयना नाम तदा श्राद्धे हि सा तिथिः ॥ ८ ॥ कृष्णपक्षद्वितीयायां श्रावणे मुनिसत्तम ॥ इममुच्चारयेन्मन्त्रं प्रणम्य जगतः पतिम् ॥ ९ ॥ श्रीवत्सधारिणं श्रीशं भक्त्याभ्यर्च्य श्रिया सह ॥ श्रीवत्सधारिञ्छ्रीकान्त श्रीधाम श्रीपतेऽच्युत ॥ १० ॥ गार्हस्थ्यं मा प्रणाशं मे यातु धर्मार्थकामद ॥ अग्नयो मा प्रणश्यन्तु मा प्रणश्यन्तु देवताः ॥ ११ ॥ पितरो मा प्रणश्यन्तु मत्तो दाम्पत्यभेदतः ॥ लक्ष्म्या वियुज्यते देव न कदाचिद्यथा भवान् ॥ १२ ॥ तथा कलत्रसंबन्धो देव मे नैव भिद्यतु ॥ लक्ष्म्या ह्यशून्यं वरद यथा ते शयनं सदा ॥ १३ ॥ शय्या ममाप्यशून्यास्तु तथैव मधुसूदन ॥ एवं प्रसाद्य पूजां च कृत्वा लक्ष्म्यास्तथा हरेः ॥१४॥ फलानि दद्याच्छायायामभीष्टानि जगत्पतेः ॥ नक्तं प्रणम्यायतने हविर्भुञ्जीत वाग्यतः ॥ १५ ॥ ब्राह्मणाय द्वितीयेऽह्नि शय्यां दद्यात्सदक्षिणाम्॥एवं करोति यः सम्यङ्नरो मासचतुष्टयम्॥१६॥तस्य जन्मत्रये दाल्भ्य गृहभङ्गो न जायते॥अशून्यशयनश्चासौ

धर्मकर्मार्थसाधकः ॥१७॥ भवत्यव्याकृतैश्वर्यः पुरुषो नात्र संशयः ॥ नारी च दाल्भ्य धर्मज्ञ व्रतमेतद्यथाविधि ॥१८॥ या करोति न सा शोच्या बन्धुवर्गस्य जायते ॥ वैधव्यं दुर्भगत्वं वा भर्तृव्यङ्गत्वं च सत्तम ॥१९॥ नाप्नोति जन्मत्रितयमेतच्चीर्त्वा पतिव्रता ॥ २० ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे अशून्यशयनद्वितीयावर्णनो नाम पञ्चचत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४५ ॥ दाल्भ्य उवाच ॥ उपवासाश्रितं सम्यग्लोकद्वयफलप्रदम् ॥ कथितं भवता सर्वं यत्पृष्टोऽसि मया द्विज ॥ १ ॥ अन्यदिच्छाम्यहं श्रोतुं तद्भवान्प्रब्रवीतु मे ॥ संसारहेतुं मुक्तिञ्च संसारान्मुनिसत्तम ॥ २ ॥ पुलस्त्य उवाच ॥ अविद्याप्रभवं कर्म हेतुभूतं द्विजोत्तम ॥ संसारस्यास्य तन्मुक्तिः संक्षेपाच्छ्रूयतां मम ॥ ३ ॥ स्वजातिविहितं कर्म रागद्वेषविवर्जितम् ॥ कुर्वतः क्षीयते पूर्वमन्यबन्धश्च नेष्यते ॥ ४ ॥ अपूर्वसंभवाभावात्क्षयं याते तु कर्मणि[1] ॥ दाल्भ्य संसारविच्छेदः कारणाभावसंभवः ॥ ५ ॥ भवत्यसंशयं चान्यच्छ्रूयतामत्र कारणम् ॥ संसारविच्युतेर्दाल्भ्य समासाद्वदतो मम ॥ ६ ॥ गृहीता कर्मणा येन पुंसा जातिर्द्विजोत्तम ॥ तत्प्रायश्चित्तभूतं वै शृणु कर्मक्षयावहम् ॥ ७ ॥ ब्राह्मणक्षत्रियविशां शूद्रान्त्यानां च सत्तम ॥ स्वजातिविहितं कर्म रागद्वेषविवर्जितम् ॥ ८ ॥ जातिप्रदस्याक्षयदं तदेवाद्यस्य कर्मणः ॥ ज्ञानकारणभावं च तदेव प्रतिपद्यते ॥ ९ ॥ पुमाँश्चाधिगतज्ञानो भेदं नाप्नोति सत्तम ॥ ब्रह्मणा विष्णुसंज्ञेन परमेणाव्ययात्मना ॥१०॥ एतत्ते कथितं दाल्भ्य संसारस्य समासतः ॥ कारणं भवमुक्तिश्च जायते योगिनो यथा ॥ ११ ॥ मार्कण्डेय उवाच ॥ इति दाल्भ्यः पुलस्त्येन यथावत्प्रतिबोधितः ॥ आराधयामास हरिं लेभे कामाँश्च वाञ्छितान् १२ ॥ तथा त्वमपि राजेन्द्र केशवाराधनं कुरु ॥ आराध्य तं जगन्नाथं न कश्चिदवसीदति ॥ १३ ॥ एतन्मयोक्तं सकलं तव भूमिप पृच्छतः ॥ अनाराध्याच्युतं देवं कः कामानाप्नुयान्नरः ॥ १४ ॥ वज्र उवाच ॥ भगवानवतीर्णोऽभून्मर्त्यलोकमिहाच्युतः ॥ भारावतारणार्थाय भुवो भूमिपतिर्हरिः ॥१५॥ मानुषत्वे च गोविन्दो मम पूर्वपितामहः ॥ चकार प्रीतिमतुलां पाण्डुपुत्रैः सह द्विज ॥१६॥ सारथ्यं कृतवाँश्चैव तेषां सर्वेश्वरो हरिः ॥ निस्तीर्णो येन भीष्मौघो कुरुसैन्यमहोदधिः ॥१७॥ उपकारी महाभागः स तेषां सर्ववस्तुषु ॥ केशवः पाण्डुपुत्राणां सुतानां जनको यथा ॥ १८ ॥ धन्यास्ते कृतपुण्याश्च ते मे पाण्डुसुता मताः ॥ विविशुर्ये परिष्वङ्गैर्गोविन्दभुजपञ्जरम् ॥ १९ ॥ राज्यहेतोररीञ्जघ्नुर कस्मात्पाण्डुनन्दनाः ॥ सप्तलोकैकनाथेन ये भवन्त्येकशायिनः ॥ २० ॥ आत्मानमनुगच्छामि भगवन्गतकल्मषम् ॥ जातं निर्धूतपापेऽस्मिन्

१ 'क्षयं यात्यादिकर्मणि' इति ख० ।

कुले विष्णुपरिग्रहे ॥ २१ ॥ एवं देववरस्तेषां प्रसादसुमुखो हरिः ॥ पृच्छतां कच्चिदाचष्ट किञ्चिद्गुह्यं महात्मनाम् ॥ २२ ॥ गुह्याञ्जनार्दनं याँस्तु धर्मपुत्रो युधिष्ठिरः ॥ पप्रच्छ धर्मानखिलाँस्तान्समाख्यातुमर्हसि ॥ २३ ॥ धर्मार्थकाममोक्षेषु यद्गुह्यं मधुसूदनः ॥ तेषामवोचद्भगवाञ्छ्रोतु मिच्छामि तत्त्वतः ॥ २४ ॥ मार्कण्डेय उवाच ॥ बहूनि धर्मगुह्यानि धर्मपुत्राय केशवः ॥ पुरा प्रोवाच राजेन्द्र प्रसादसुमुखो हरिः ॥ २५ ॥ शरतल्पगताद्भीष्माद्धर्माञ्छ्रुत्वा युधिष्ठिरः ॥ पृष्टवान्यज्जगन्नाथं तन्मे निगदतः शृणु ॥ २६ ॥ पञ्चमेनाश्वमेधेन यदा स्नातो युधिष्ठिरः ॥ युधिष्ठिर उवाच ॥ ॥ भगवन्वैष्णवा धर्माः किंफलाः किंपरायणाः ॥ २७ ॥ किं कृत्यमधिकृत्यैते भवतोत्पादिताः पुरा ॥ यदि ते पाण्डवस्नेहो विद्यते मधुसूदन ॥ २८ ॥ श्रोतव्यास्ते मया धर्मास्ततस्तान्कथयाखिलान् ॥ पवित्राश्चैव ये धर्माः सर्वपापप्रणाशनाः ॥ २९ ॥ तव वक्त्रच्युता देव सर्वधर्मेष्वनुत्तमाः ॥ याञ्छ्रुत्वा ब्रह्महा गोघ्नः पितृघ्नो गुरुतल्पगः ॥ ३० ॥ सुरापो वा कृतघ्नश्च मुच्यते सर्वकिल्बिषैः ॥ एतन्मे कथितं सर्वं सभामध्ये सुरोत्तम ॥ ३१ ॥ वसिष्ठाद्यैर्महाभागैर्मुनिभिर्भावितात्मभिः ॥ ततोऽहं तव देवेश पादमूलमुपागतः ॥ ३२ ॥ धर्मान्कथय तान्देव यद्यहं भवतः प्रियः ॥ श्रुत्वा मे मानवान्धर्मान्वासिष्ठान्वा महाफलान् ॥ ३३ ॥ पराशरकृताँश्चैव तथाऽत्रेयस्य धीमतः ॥ श्रुत्वा शङ्खस्य गार्ग्यस्य लिखितस्य यमस्य च ॥ ३४ ॥ जाबालेश्च महाबाहोर्मुनेर्द्वैपायनस्य च ॥ उमामहेश्वराश्चैव जातिधर्माश्च पावनाः ॥ ३५ ॥ गुणस्य गुणबाहोश्च काश्यपेयास्तथैव च ॥ बह्वायनकृताश्चैव शाकुनेयास्तथैव च ॥ ३६ ॥ अगस्त्यगीता मौद्गल्याः शाण्डिल्याः सौरभास्तथा ॥ भृगोरङ्गिरसश्चैव कश्यपोद्दालकोदिताः ॥ ३७ ॥ सुमन्ता जैमिनीयाश्च पैलस्य च महात्मनः ॥ वैशम्पायनगीताश्च पिप्पलादकृताश्च ये ॥ ३८ ॥ ऐन्द्राश्च वारुणाश्चैव कौबेरा वात्स्य[1]पौणकाः ॥ आपस्तम्बकृता धर्मास्तथा गोपालकस्य च ॥ ३९ ॥ भृग्वङ्गिरःकृताश्चैव सौरा हारीतकास्तथा ॥ श्रीभगवानुवाच ॥ शृणु राजन्महाबाहो धर्मात्मन्कुरुनन्दन ॥ ४० ॥ धर्मवृद्धिकरं वच्मि वृषभस्य तु लक्षणम् ॥ ऋषभः स समुद्राख्यः सततं कुलवर्धनः ॥ ४१ ॥ मल्लिकापुष्पचित्रश्च धन्यो भवति पुङ्गवः ॥ कामलैर्माण्डलैश्चापि चित्रो भवति भोगदः ॥ ४२ ॥ अतसीपुष्पवर्णश्च तथा धन्यतरः स्मृतः ॥ एते धन्यास्तथाधन्यान्कीर्तयिष्यामि ते नृप ॥ ४३ ॥ कृष्णतालवोष्ठदशना रूक्षशृङ्गशफाश्च ये ॥ अव्यक्तवर्णा ह्रस्वाश्च व्याघ्रभस्मनिभाश्च ये ॥ ४४ ॥ ध्वाङ्क्षगृध्रसवर्णाश्च तथा मूषकसन्निभाः ॥ कुब्जाः काणा

१ 'वात्स्यपौलकाः' इति ख० ।

स्तथा खञ्जाः केकराक्षास्तथैव च ॥ ४५ ॥ विषमश्वेतपादाश्च उद्भ्रान्तनयनास्तथा ॥ न ते वृषाः प्रयोक्तव्या न च धार्यास्तथा गृहे ॥ ४६ ॥
मोक्तव्यानां च धार्याणां भूयो वक्ष्यामि लक्षणम् ॥ ४७ ॥ स्वस्तिकाकारशृङ्गाश्च मेघौघसदृशस्वनाः ॥ महाप्रमाणाश्च तथा मत्तमातङ्गगामिनः ॥
॥ ४८ ॥ महोरस्का महोच्छ्वासा महाबलपराक्रमाः ॥ शिरः कर्णौ ललाटं च वालधिश्चरणानि च ॥ ४९ ॥ नेत्रपार्श्वे च कृष्णानि
शस्यन्ते चन्द्रमस्त्विषः ॥ चिह्नान्येतानि शस्यन्ते कृष्णस्य तु विशेषतः ॥ ५० ॥ भूमिं कर्षति लांगूलात्प्रशस्तः स्थूलवालधिः ॥
पुरस्तान्न तथा नीचो वृषभश्च प्रशस्यते ॥ ५१ ॥ शक्तिध्वजपताकाभा येषां राजिर्विराजते ॥ अनड्वाहस्तु ते धन्या ऋद्धिसिद्धिजया
वहाः ॥ ५२ ॥ प्रदक्षिणं निवर्तन्ते स्वयं ये विनिवर्तिताः ॥ समुन्नतशिरोग्रीवा धन्यास्ते कोशवर्धनाः ॥ ५३ ॥ रक्तशृङ्गाग्रनयनाः
श्वेतवर्णा भवन्त्यपि ॥ शफैः प्रवालसदृशैर्नास्ति धन्यतरस्ततः ॥ ५४ ॥ एते धन्याः प्रयत्नेन मोक्तव्या यदि वा वृषाः ॥ धारिताश्च
तथा मुक्ता धनधान्यविवर्धनाः ॥ ५५ ॥ चरणानि मुखं पुच्छं यस्य श्वेतानि गोपतेः ॥ लाक्षारससवर्णश्च तं नीलमिति निर्दिशेत् ॥ ५६ ॥
वृष एव स मोक्तव्यो न सन्धार्यो गृहे भवेत् ॥ यदर्थमेषा चरति गाथा लोके पुरातनी ॥ ५७ ॥ एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ॥
यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥५८॥ एवं वृषं लक्षणसंप्रयुक्तं गृहोद्भवं क्रीतमथापि राजन् ॥ मुक्त्वा न शोचेन्मरणं महात्मा मोक्षे विधिं
चाहमतो विधास्ये ॥ ५९ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे वृषलक्षणवर्णनो नाम षट्चत्वारिंशदुत्तरशततमोऽध्यायः ॥
॥ १४६ ॥ मार्कण्डेय उवाच ॥ आश्वयुक् कृष्णपक्षस्य पञ्चदश्यां नराधिप ॥ कार्तिक्यामथवा मासि वृषोत्सर्गं तु कारयेत् ॥ १ ॥ ग्रहणे द्वे महा
पुण्ये तथा चैवायनद्वयम् ॥ विषुवद्दितयं चैव मृताहो बान्धवस्य च ॥ २॥ मृताहो यस्य तस्यार्थे तस्मिन्नहनि शङ्करम् ॥ सुसमिद्धे गवां मध्ये
परिस्तीर्य हुताशनम् ॥ ३ ॥ पयसा श्रपयेद्विद्वाँश्चरुं पौष्णं समाहितः ॥ पूषा गा अन्वेतु नश्च पूष्णे हुत्वा नराधिप ॥ ४ ॥ इह रडिति हुत्वा
च जपेद्रुद्रान्समाहितः ॥ तथैव पौरुषं सूक्तं कूष्माण्डानि नराधिप ॥ ५ ॥ ततः कोष्णेन वृषभमयस्कारः सुशिल्पवान् ॥ शूलेन दक्षिणे पार्श्वे वामे
चक्रेण निर्दहेत् ॥ ६ ॥ अङ्कितं स्नापयेत्पश्चात्स्नाने तस्य तथा पठेत् ॥ हिरण्यवर्णेति ऋचश्चतस्रो मनुजेश्वर ॥ ७ ॥ आपो हि ष्ठेति तिस्रश्च शन्नो
देवीति चाप्यथ ॥ वत्सतर्यश्चतस्रश्च तं वृषं च नराधिप ॥ ८ ॥ अलङ्कुर्यात्ततः पश्चाद्गन्धमाल्यैश्च शक्तितः ॥ किङ्किणीभिश्च रम्याभिस्तथा

१ 'गौरीं वाप्युद्वहेद्भार्याम्' इति ख० ।

चीनांशुकैः शुभः ॥ ९ ॥ ततः कर्ता जपेन्मन्त्रमिमं प्रयतमानसः ॥ वृषो हि भगवान्धर्मश्चतुष्पादः प्रकीर्तितः ॥ वृणोमि तमहं भक्त्या
स मे रक्षतु सर्वतः ॥१० ॥ एवं युवानं वृषभं ददामि गवां पतिं यूथपतिं सधर्मम् ॥ अनेन सार्धं चरत प्रकामं यथा तथा प्राप्नुत वत्सतर्यः ॥
॥ ११ ॥ एवं युवानं गोपतिं वो ददामि अनेन क्रीडन्तीश्चरतीः प्रियेण ॥ सहास्माभिः प्रजया मा तनूभिर्मा वधाम द्विषतं सोमराजन् ॥ १२॥
मन्त्रं पिता वत्स इति प्रतीतं जपेत कर्णे वृषभस्य सव्ये ॥ प्रचालयेत्तं वृषभं ततस्तु पूर्वां दिशं वत्सतर्यश्च सर्वाः ॥१३॥ वासोयुगं ग्रहीतुरथ
प्रदेयं सुवर्णयुक्तं सघृतं च कांस्यम् ॥ शिल्पप्रधानस्य तथैव मूल्यं देयं यथा तुष्टिमुपैति राजन् ॥ १४ ॥ विप्रास्तथान्नं दधिसर्पिषा युतं संभोज
नीयाः पयसा च मिश्रम् ॥ उत्सृष्टमात्रे वृषभे व्रजन्ति तृप्तिं परां तस्य पितामहा ये ॥ १५ ॥ यस्मिँस्तडागे स जलं तृषार्तः पातुं समागच्छति
तत्पितॄणाम् ॥ दिव्याम्बुपूर्णं कलशं महीपते लोकं परं तृप्तिमन्तः प्रयान्ति ॥ १६ ॥ सरिद्वरां काञ्चिदथोपयाति तृष्णान्वितस्तस्य पितामहानाम् ॥
तृप्तिं विधत्ते सरितां वरिष्ठा सुदीर्घकालं विमलाम्बुवाहैः ॥ १७ ॥ दर्पेण पूर्णः सविषाणघातैर्धरां यदा धारयते नरेन्द्र ॥ पितॄंस्तदा तस्य तदन्न
कूटं ध्रुवं स यतीति न संशयोऽत्र ॥ १८ ॥ रोम्णां च तुल्यानि शतानि राजन्भोक्ता तथा तस्य दिवं प्रयाति ॥ संवत्सराणां परिपूर्णकामः
संसेव्यमानस्त्रिदशाङ्गनाभिः ॥ १९ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे वृषोत्सर्गवर्णनो नाम सप्तचत्वारिंशदुत्तरशततमो
ऽध्यायः ॥ १४७ ॥ ॥ वज्र उवाच ॥ चरितं बुधपुत्रस्य मार्कण्डेय मया श्रुतम् ॥ श्रुतः श्राद्धविधिः पुण्यः सर्वपापप्रणाशनः ॥ १ ॥ धेन्वाः
प्रसूयमानयाः फलं दाने तथा श्रुतम् ॥ कृष्णाजिनप्रदानं च वृषोत्सर्गस्तथैव च ॥ २ ॥ श्रुत्वा रूपं नरेन्द्रस्य बुधपुत्रस्य भार्गव ॥ कौतूहलं समु
त्पन्नं तन्समाचक्ष्व पृच्छतः ॥ ३ ॥ केन कर्मविपाकेन स तु राजा पुरूरवाः ॥ अवाप तादृशं रूपं सौभाग्यमपि चोत्तमम् ॥ ४ ॥ देवांस्त्रिभुवन
श्रेष्ठान्गन्धर्वांश्च मनोरमान् ॥ उर्वशी संगता त्यक्त्वा सर्वभावेन तं नृपम् ॥ ५ ॥ मार्कण्डेय उवाच ॥ शृणु कर्मविपाकेन येन राजा पुरूरवाः ॥
पुरूरवा इति ख्यातो मद्रेष्वसीन्महीपतिः ॥ ६ ॥ चाक्षुषस्यान्वये जातश्चाक्षुषस्यान्तरे मनोः ॥ सर्वैर्नृपगुणैर्युक्तः केवलं रूप
वर्जितः ॥ ७ ॥ वज्र उवाच ॥ पुरूरवा मद्रपतिः कर्मणा केन भार्गव ॥ बभूव कर्मणा केन कुरूपश्च तथा द्विज ॥ ८ ॥ 
मार्कण्डेय उवाच ॥ द्विजग्रामे द्विजश्रेष्ठो नाम्नैवाऽऽसीत्पुरूरवाः ॥ नद्याः कूले महाराज पूर्वजन्मनि पार्थिवः ॥ ९ ॥ स तु मद्रपतिर्नाम्ना योऽ
भूद्राजा पुरूरवाः ॥ अस्मिञ्जन्मन्यसौ विप्रो द्वादशीषु सदानघ ॥ १० ॥ उपोष्य पूजयामास राज्यकामो जनार्दनम् ॥ चकार सोपवासं च

स्नानमभ्यङ्गपूर्वकम् ॥ ११ ॥ उपवासफलं प्राप्य राज्यं मद्रेष्वकण्टकम् ॥ उपोषितस्तदाभ्यङ्गाद्रूपहीनोऽभ्यजायत ॥ १२ ॥ उपोषितो नरस्तस्मात्स्नानमभ्यङ्गपूर्वकम् ॥ वर्जयेत्तत्प्रयत्नेन रूपघ्नं तत्परं नृणाम् ॥ १३ ॥ एतत्ते कथितं तस्य यद्वृत्तं पूर्वजन्मनि ॥ मद्रेश्वरत्वे चरितं शृणु तस्य महीपतेः ॥ १४ ॥ तस्य राजगुणैः सर्वैः समुपेतस्य पार्थिव ॥ जनानुरागो नैवासीद्रूपहीनस्य यादव ॥ १५ ॥ रूपकामः स मद्रेशस्त पसे कृतनिश्चयः ॥ राज्यं मन्त्रिगतं कृत्वा जगाम हिमपर्वतम् ॥ १६ ॥ व्यवसायद्वितीयस्तु पद्भ्यामेव महायशाः ॥ ऊर्द्ध्वं संतीर्य स नदं विषयान्ते स्वकीं नदीम् ॥ इरावतीमिति ख्यातां ददर्शातिमनोहराम् ॥ १७ ॥ तुहिनगिरिभवां महौघवेगां तुहिनसगर्भसमानशीतलोदाम् ॥ तुहिनसदृशवर्णफेनयुक्तां तुहिनयशाः सरितं ददर्श राजा ॥ १८ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे मद्रेश्वरस्य तपोवन गमनं नामाष्टचत्त्वारिंशदुत्तरशततमोऽध्यायः ॥ १४८ ॥ मार्कण्डेय उवाच ॥ स ददर्श नदीं पुण्यां रम्यां हैमवतीं शुभाम् ॥ गन्धर्वगणसंकीर्णां नित्यं शक्रेण सेविताम् ॥ १ ॥ सुरेभमदसिंदूरैर्यस्यां राजिर्विराजते ॥ मध्येन शक्रचापाभा तस्यां मज्जति सर्वदा ॥ २ ॥ तपस्विशरणायातां मुख्यब्राह्मणसेविताम् ॥ ददर्श शीतपानीयां महाराजः पुरूरवाः ॥ ३ ॥ प्लुतहंसावलीछत्रां काशचामरवीजिताम् ॥ साभिषेकामिव स तां पश्यन्प्रीतिं परां ययौ ॥ ४ ॥ पुण्यां सुशीतलां हृद्यां मनसः प्रीतिवर्धिनीम् ॥ क्षयवृद्धियुतां सौम्यां सोममूर्तिमिवापराम् ॥ ५ ॥ सुशीतशीघ्र पानीयां द्विजपुञ्जनिषेविताम् ॥ सुतां हिमवतः श्रेष्ठां चञ्चद्वीचिविराजिताम् ॥ ६ ॥ अमृतस्वादुसलिलां तापसैरुपशोभिताम् ॥ स्वर्गारोहणनिः श्रेणीं सर्वकल्मषनाशिनीम् ॥ ७ ॥ अग्र्यां समुद्रमहिषीं महिषीगणगाहिताम् ॥ हितां सर्वस्य लोकस्य कस्य नौत्सुक्यकारिणीम् ॥ ८ ॥ गोकुलाकुलतीरां तां रम्यां शैवालवर्जिताम् ॥ हंससारससंघुष्टैर्जलजैः सेवितां शुभैः ॥ ९ ॥ आवर्तनाभिगम्भीरां द्वीपोरुजघनस्थलाम् ॥ नीलनीरजनेत्रां तामुत्फुल्लकमलाननाम् ॥ १० ॥ हिमाभफेनवसनां चक्रवाकाधरां शुभाम् ॥ बलाकापङ्क्तिदशनां चलन्मत्स्यावलिभ्रुवम् ॥ ११ ॥ स्वजलोद्धतमातङ्गरम्यकुम्भपयोधराम् ॥ हंसनूपुरसंघुष्टां मृणालवलयावलीम् ॥ १२ ॥ यस्यां रूपमदोन्मत्तगन्धर्वानुगतः सदा ॥ मध्या ह्नसमये राजन्क्रीडत्यप्सरसां गणः ॥ १३ ॥ तामप्सरोविनिर्मुक्तान्वहन्तीं कुसुमाञ्शुभान् ॥ स्वतीरद्रुमसंभूतान्नानावर्णान्सुग न्धिनः ॥ १४ ॥ तरङ्गशतसंक्रान्तसूर्यमण्डलदुर्दशम् ॥ सुरेभजनिताघातवप्रद्वयविभूषिताम् ॥ १५ ॥ शक्रेभगण्डसलिलैर्देवस्त्रीकुच चन्दनैः ॥ संयुतं सलिलं यस्याः षट्पदैरुपसेव्यते ॥ १६ ॥ यस्यास्तीरभवा वृक्षाः सुगन्धिकुसुमान्विताः ॥ तथा प्रकृष्टभ्रमरा

अमरैस्ते निराकुलाः ॥ १७ ॥ यस्यास्तीरे रतिं यान्ति सदा कामवशानुगाः ॥ तपोधनाश्च ऋषयस्तथा देवाः सवासवाः ॥ १८ ॥ लभन्ते यत्प्लुताङ्गास्तु देवेभ्यः प्रतिमाननाः ॥ स्त्रियश्च नाके बहुलाः पद्मेन्दुप्रतिमाननाः ॥ १९ ॥ या बिभर्ति सदा तोयं देवसंघैरपीडितम् ॥ पुलिन्दमृगवृन्दैश्च व्याधसंघैरपीडितम् ॥ २० ॥ सतामरसपानीयां सताराम्गगनामलाम् ॥ स तां पश्यन्ययौ राजा सतामीप्सितकामदाम् ॥ २१ ॥ यस्यास्तीररुहैः काशैः फुल्लैश्चन्द्रांशुसन्निभैः ॥ राजद्भिर्विवृताकाशे रम्यैस्तत्क्षीरसंस्थितैः ॥२२॥ या च सदा दिवि सेव्यंति देवैर्या च सदा भुवि सेव्यंति विप्रैः ॥ या च सदा सकलाघविनाशं भक्तजनस्य करोत्यचिरेण ॥२३॥ या च गता सरितां हि कदम्बैर्या च युता सततं हि महीनैः ॥ या च युता शततोयकदम्बैर्या च गता सततं हिमहीनैः ॥ २४ ॥ युक्तापि केसरिगणैः करिवृन्दयाता सन्नागयुक्तसलिलापि सुवर्णयुक्ता ॥ सूर्यांशुतापपरिवृद्धिविवृद्धिशीला शीतांशुतुल्ययशसा ददृशे नृपेण ॥ २५ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे इरावतीवर्णनो नामैकोनपञ्चाशदुत्तरशततमोऽध्यायः ॥ १४९ ॥ मार्कण्डेय उवाच ॥ आलोकयन्नदीं पुण्यां तत्समीरहतक्लमः ॥ स गच्छन्नेव ददृशे हिमवन्तं महागिरिम् ॥ १ ॥ खमुल्लिखद्भिर्बहुभिर्वृतं शृङ्गैः सुपाण्डुरैः ॥ पक्षिणामथ संचारैर्विना सिद्धगतिं शुभाम् ॥ २ ॥ नदीप्रपातसंजातमहाशब्दैः समन्ततः ॥ असंश्रुतान्यशब्दन्तं शीततोयं मनोरमम् ॥ ३ ॥ देवदारुवनैर्नीलैः कृताधोवसनं शुभम् ॥ मेघोत्तरीयं तं शैलं ददृशे स नराधिपः ॥ ४ ॥ श्वेतमेघकृतोष्णीषं चन्द्रार्कमुकुटं क्वचित् ॥ हिमानुलिप्तसर्वाङ्गं क्वचिद्धातुविचित्रितम् ॥ ५ ॥ चन्दनेनानुलिप्ताङ्गदत्तपञ्चाङ्गुलिं यथा ॥ शीतप्रदं निदाघेऽपि शिलाविषमसंकटम् ॥ ६ ॥ सालक्तकैरप्सरसां मुद्रितं चरणैः क्वचित् ॥ क्वचिदस्पृष्टसूर्यांशुं क्वचिच्च तमसा वृतम् ॥ ७ ॥ दरीमुखैः क्वचिद्भीमैः पिबन्तमनिलं बहु ॥ क्वचिद्विद्याधरगणैः क्रीडद्भिरुपशोभितम् ॥ ८ ॥ उपगीतं तथा मुख्यैः किन्नराणां गणैः क्वचित् ॥ आपानभूमौ च गणैर्गन्धर्वाप्सरसां क्वचित् ॥ ९ ॥ गीतादिभिः समाकीर्णं गन्धर्वीणां मनोहरम् ॥ निरुद्धपवनैर्देशैर्नीलशाद्वलमण्डितैः ॥ १० ॥ क्वचिच्च कुसुमैर्युक्तं चात्यन्तरुचिरैः शुभम् ॥ तपस्विशरणं शैलं कामिनामपि दुर्लभम् ॥ ११ ॥ मृगयूथानुचरितं दन्तिभिन्नमहाद्रुमम् ॥ यत्र सिंहनिनादेन त्रस्तानां भैरवं रवम् ॥ १२ ॥ श्रुत्वोत्पश्यति विश्रान्तं गजानामाकुलं कुलम् ॥ तपश्च तापसैर्यस्य कूलदेशेष्वलंकृतम् ॥ १३ ॥ रत्नैर्यतः समुत्पन्नैस्त्रैलोक्यं चाप्यलंकृतम् ॥ अहीनशरणं नित्यमहीनजनसेवितम् ॥ १४ ॥ अहीनः पश्यति गिरिमहीनं रत्नसम्पदम् ॥ अल्पेन

१, २ अत्र 'सेव्यते' इति वक्तव्ये 'सेव्यति, इति पाठश्छन्दोऽनुरोधादार्षः ।

तपसा यत्र सिद्धिः प्राप्येत तापसैः ॥ १५ ॥ यश्च दर्शनमात्रेण सर्वकल्मषनाशनः ॥ महाप्रपातसंपातप्रभीतखगबन्धुभिः ॥ १६ ॥ वायुनीत
सदावृष्टिः कृतदेशं क्वचित्क्वचित् ॥ अलब्धजलदैः शृङ्गैः क्वचिच्चातिसमुच्छ्रितैः ॥ १७ ॥ नित्यार्कतापविषमैरगम्यैर्मनसा युतम् ॥ देवदारु
महावृक्षपुञ्जशाखानिरन्तरैः ॥ १८ ॥ समस्तभुवनाकारैः प्रदेशैरुपशोभितम् ॥ हिमच्छन्नमहाशृंगं प्रपातमितनिर्झरम् ॥ शब्दलभ्याम्बुविषमं
हिमसंरुद्धकन्दरम् ॥ १९ ॥ दृष्ट्वैव तां चारुनितम्बभूमिं महानुभावः स महीन्द्रनाथः ॥ बभ्राम तत्रैव मुदा समेतः स्थानं ततः किञ्चिदथा
ससाद ॥ २० ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे हिमवद्वर्णनो नाम पञ्चाशदुत्तरशततमोऽध्यायः ॥ १५० ॥ ॥ छ ॥
॥ मार्कण्डेय उवाच ॥ तस्यैव पर्वतेन्द्रस्य प्रदेशं सुमनोहरम् ॥ अगम्यं मानुषैरन्यैर्दैवयोगादुपागतः ॥ १ ॥ इरावती सरिच्छ्रेष्ठा यस्माद्देशा
द्विनिर्गता ॥ मेघश्यामं च तं देशं द्रुमखण्डैरनेकशः ॥ २ ॥ सालैस्तालैस्तमालैश्च कर्णिकारैः सशाल्मलैः ॥ न्यग्रोधैश्च तथाश्वत्थैः शिरीषैः
शिंशपाद्रुमैः ॥ ३ ॥ श्लेष्मातकैरामलकैर्हरीतकविभीतकैः ॥ रम्यैश्चन्दनवृक्षैश्च कपित्थै रक्तचन्दनैः ॥४॥ वटमाहिषकाक्षोटैरश्वकर्णैस्तथार्जुनैः ॥
हस्तिकर्णैः सपनसैः कोविदारैः सुपुष्पितैः ॥५॥ देवदारुमहावृक्षैस्तथा कालीयकद्रुमैः ॥ पद्मकैश्चन्दनैर्बिल्वैः कुटजैर्हरिचन्दनैः ॥ ६ ॥ प्राचीनागु
रुकैश्चैव स्थूणिकैः समशण्डिकैः ॥ खर्जूरैर्नारिकेरैश्च प्रियालवाम्रातकेङ्गुदैः ॥७॥ तेरुमानैर्वटैर्भन्यैः काश्मीरैः फलिभिस्तथा ॥ जातीफलैः पूगफलैः
कदृफलैर्लवलीफलैः ॥ ८ ॥ मन्दारैः कोविदारैश्च किंशुकैः कुसुमांशुभिः ॥ पलाशैः शमिसूल्लासैर्वेतसैरम्लवेतसैः ॥ ९ ॥ रक्तातिरङ्गनारिङ्गैरिंगुदैः
सप्रियंगुभिः ॥ रक्ताशोकैस्तथाऽशोकैरारुकैः सचिरारुकैः ॥१०॥ मुचुकुन्दैस्तथा कुन्दैराटरूषपरूषकैः ॥किंकरातैः किरातैश्च केतकैश्च सकेतकैः॥११॥
शोभाञ्जनैरञ्जनैश्च मुकूलकनिकोचकैः ॥ सुपूर्णचारुवसनैर्द्रुमैः श्रेष्ठैस्तथासनैः ॥ १२ ॥ मन्मथस्य शराकारैस्सहकारैर्मनोहरैः ॥ पीतयूथिकया
राजश्वेतयूथिकया तथा ॥१३॥ जात्या चम्पकजात्या च तुम्बुरैश्चाप्युदुम्बरैः ॥ माषैश्चोच्चैस्सलकुचैस्तिलम्बलकुशम्बलैः॥ १४ ॥ तथा सुपुष्पाव
रणैर्वरणैः कामिवल्लभैः॥पुष्पाकुलैश्च वकुलैः पारिभद्रकभद्रकैः॥१५॥ धाराकदंबैः कुटजैः कदंबैर्गिरिकूटजैः॥ आक्रान्तसर्वककुभैः ककुभैः कमनीयकैः ॥
॥१६॥ कर्कन्धुबदरैर्नीपैः दीपैरिव महोज्वलैः ॥ रक्तैः पालीवतैः श्वेतैर्दाडिमैश्चण्यकद्रुमैः ॥१७ ॥ प्रतानैः पिप्पलीनां च नागवल्याश्च भागशः ॥
मरिचस्य तथा गुल्मैर्नवमल्लिकया तथा ॥ १८ ॥ मृद्वीकामण्डलैर्मुख्यैरतिमुक्तकमण्डलैः ॥ त्रपुसैर्वारुकानां च प्रतानैः सफलैः शुभैः ॥ १९ ॥
कूष्माण्डानां प्रतानैश्च अलाबूनां तथा क्वचित् ॥ चिर्भटस्य प्रतानैश्च पटोलैः कारवेल्लकैः ॥ २० ॥ कर्कोटकैः प्रतानैश्च वार्ताकैर्बृहतीफलैः ॥

कह्लारैर्मूलकैर्मुख्यैः शाकैश्च विविधैस्तथा ॥२१॥ सुवर्चलाभिः सर्वाभिः सर्षपाभिस्तथैव च ॥ काकोलीक्षीरकाकोलीछत्रया चातिच्छत्रया ॥२२ ॥
काकमाचीमहाबद्धिशशकर्दलकन्दलैः ॥ तथा क्षीरिकशाकेन कालशाकेन चाप्यथ ॥ २३ ॥ शिम्बिधान्यैस्तथा धान्यैः सर्वैर्निरवशेषतः ॥
ओषधीभिर्विचित्राभिर्दीप्यमानाभिरेव च ॥ २४ ॥ कन्दैर्विदार्या च तथा तरूटैः स्वादुसंयुतैः ॥ सुनिषण्णाशटीशेषाराजक्षयकवास्तुकैः ॥ २५ ॥
आयुष्याभिर्यशस्याभिर्वर्ण्याभिश्च नराधिप ॥ जरामृत्युभयघ्नाभिः क्षुद्भयघ्नाभिरेव च ॥ २६ ॥ सौभाग्यजननीभिश्च वृष्याभिश्चाप्यनेकशः ॥
वेत्रवेणुलताभिश्च तथा कीचकवेणुभिः ॥ २७॥ काशैः शशाङ्कसंकाशैः शरगुल्मैस्तथा क्वचित् ॥ कुशगुल्मैस्तथा रम्यैर्गुल्मैश्चेक्षुमनोहरैः ॥ २८ ॥
कार्पासया तुवर्या च दुकूलेन शुभेन च ॥ तथा च कदलीखण्डैर्मनोहारिभिरुत्तमैः ॥ २९ ॥ तथामरकतप्रख्यैः प्रदेशैः शाद्वलान्वितैः ॥
इरापुष्पसमायुक्तैः कुङ्कुमस्य च भागशः ॥ ३० ॥ तगरातिविषामांसीग्रन्थिपर्णीसुरागदैः ॥ सुवर्णपुष्पैश्च तथा भूमिपुष्पैस्तथा परैः ॥ ३१ ॥
जम्बीरिकाभूस्तृणैश्च सरसैः सुमुकैस्तथा ॥ शृङ्गवेराजमोदाभिः कुठेरकप्रियालुकैः ॥ ३२ ॥ जलजैश्च तथा पद्मैर्नानावर्णैः सुगन्धिभिः ॥
उदयादित्यसंकाशैः पूर्णचन्द्रनिभैस्तथा ॥ ३३ ॥ तपनीयसवर्णैश्च अतसीपुष्पसन्निभैः ॥ शुकपत्रनिभैश्चान्यैः स्थलपद्मैश्च भागशः ॥ ३४ ॥
पञ्चवर्णैः समाकीर्णं बहुवर्णैस्तथैव च ॥ दुष्टदष्ट्याहितमुदैः कुसुमैश्चन्द्रसन्निभैः ॥ ३५ ॥ तथा वह्निशिखाकारै राजरक्तोत्पलैः शुभैः ॥
नीलोत्पलैः सकह्लारैर्दुर्ज्जातककशेरुकैः ॥ ३६ ॥ शृङ्गाटकैर्मृणालैश्च कावाटै राक्षसोत्पलैः ॥ जलजैः स्थलजैर्मूलैः फलैः पुष्पैरशेषतः ॥ ३७ ॥
विविधैश्चैव नीवारैर्मुनिभोज्यैर्नराधिप ॥ न तद्धान्यं न तत्सस्यं न तच्छाकं न तत्फलम् ॥ ३८ ॥ न तन्मूलं न तत्कन्दं न तत्पुष्पं नराधिप ॥
नागलोकोद्भवं यच्च नाकलोकोद्भवं च यत् ॥ ३९ ॥ अनूपबन्धनोत्थं च तन्न यन्नास्ति यादव ॥ सदा पुष्पफलं सर्वमजस्रमृतुयोगतः ॥ ४० ॥
मद्रेश्वरः स ददृशे तपसोऽर्थाय यो गतः ॥ ददृशे च तथा तत्र नानारूपान्पतत्रिणः ॥ ४१ ॥ मयूराञ्शतपत्रांश्च कलवाचककोकिलान् ॥
तथा कादम्बकान्हंसान्कुक्कुटाञ्जलकुक्कुटान् ॥४२॥ कृकरान्बर्कशाञ्श्यामांस्तित्तिरान्सकपिञ्जलान् ॥ धार्तराष्ट्रान्प्लवान्मद्गून्कलविङ्कान्छुकान्ब
कान् ॥ ४३ ॥ चटकांश्चक्रवाकांश्च आटकांष्टिट्टिभान्सटान् ॥ पुत्रप्रियांल्लोहपृष्ठान्गोनन्दगिरिवर्तकान् ॥ ४४ ॥ पारावतान्कामलांश्च
शारकाञ्जीवजीवकान् ॥ लाववर्तकवर्त्तीरान्रक्तधर्मप्रभद्रकान् ॥४५॥ ताम्रचूडान्वर्णचूडान्कोयष्टीन्खञ्जरीटकान् ॥ ऋषिपुत्रान्सहारीतान्कुक्कुटान्का
ष्ठकुक्कुटान् ॥ ४६ ॥ लट्वाँल्लटेपून्गोक्ष्वेडांस्तथा कुङ्कुमचूडकान् ॥ भृङ्गराजाञ्छारपादान्भूलिङ्गान्पिण्डिमालवान् ॥४७॥ मंजूलीयकदात्यूहगोप

पुत्रान्त्सवञ्जुलान् ॥ भारद्वाजांस्तथा चाषान्सुवर्णांत्रजनीयकान् ॥४८॥ एतांश्चान्यांश्च हि बहून्पक्षिसंघान्मनोहरान् ॥ श्वापदान्विविधाकारान्मृ
गांश्चैव महामृगान् ॥ ४९ ॥ व्याघ्रान्केसरिणः सिंहान्वीचिनः शरभान्वृकान् ॥ ऋक्षांस्तरक्षून्बन्धूकान्गोलाङ्गूलान्सवानरान् ॥ ५० ॥
शशाँल्लोकाञ्छशपलान्मार्जारान्मायवः शुनः ॥ मूषिकान्नाकुलान्काचान्सिंहान्नोद्दुरोमकान् ॥ ५१ ॥ तथा मत्तांश्च मातङ्गान्महिषान्गवयान्वृ
षान् ॥ चरमान्सृमरांश्चैव तथा गोरान्नखानपि ॥५२॥ उरभ्रांश्च तथा मेषान्सारङ्गानथ कर्कशान् ॥ रुरून्नमृष्पदानृष्पान्मर्कटान्कर्कटान्मृगान् ॥
नीलांश्चैव महानीलान्करालभृगमार्दकान् ॥५३॥श्वदंष्ट्रान्रामशरभान्कोडकाकपशम्बरान् ॥५४॥ करालान्कृतमालांश्च कालपुच्छाँस्तथारुणान् ॥
उष्ट्रान्गजान्वराहांश्च तुरगान्खरगर्दभान् ॥ ५५ ॥ एतान्पश्यन्स मद्रेशो विरुद्धांश्च परस्परम् ॥ अविरुद्धान्वने तस्मिन्निर्वृतिं च परां ययौ
॥ ५६ ॥ तदाश्रमपदे मुख्यो बभूवात्रिः पुरा नृप ॥ तत्प्रसादात्सदा युक्तं स्थावरैर्जङ्गमैस्तथा ॥ ५७ ॥ हिंसन्ति न तथाऽन्योन्यं हिंसकास्तु
परस्परम् ॥ क्रव्यादाः प्राणिनस्तत्र सर्वे क्षीरफलाशनाः ॥ ५८॥ निर्मितास्तत्र रत्यर्थमत्रिणा सुमहात्मना ॥ शिलानां निम्नदेशेषु तत्र गावः स्वयं
नृप ॥ ५९ ॥ पयः क्षरन्ति तद्दिव्यममृतस्वादुसन्निभम् ॥ क्वचिद्राजमहिष्यश्च क्वचिद्राजा च भागशः ॥ ६० ॥ शिलाः क्षीरेण संपूर्णा दध्ना
चान्यत्र यादव ॥ स पश्यन्परमां प्रीतिमवाप वसुधाधिपः ॥६१॥ सरांसि तत्र दिव्यानि नद्यश्च विमलोदकाः ॥ मृणालकानि दिव्यानि शीतलानि
च भागशः ॥ ६२ ॥ कन्दराणि च शैलस्य सुखसेव्यानि यादव ॥ हिमपातो न तत्रास्ति समन्तात्पञ्चयोजनम् ॥ ६३ ॥ उपत्यकासु शैलस्य
शिखरेषु तु विद्यते ॥ तत्रापि राजञ्छिखरं पर्वतेन्द्रस्य पाण्डुरम् ॥ ६४ ॥ हिमपातं सदा तत्र घनाः कुर्वन्ति संहताः ॥ तत्रास्ति चापरं शृङ्गं
यत्र तोयं घना घनाः ॥ ६५ ॥ नित्यमेवाभिवर्षन्ति शिलाभिः शिखरं खरम् ॥ तदाश्रमं मनोहारि यत्र कामधरा धराः ॥ ६६ ॥ सुरमुख्योपभो
ग्यत्वाच्छाखिनः सफलाः सदा ॥ सदोपगीतभ्रमरं सुरस्त्रीसेवितामरम् ॥ ६७ ॥ सर्वपापक्षयकरं शैलस्येव महाकरम् ॥ वानरैः क्रीडमानैश्च देशे
देशे नराधिप ॥ ६८ ॥ हंसपुञ्जाः कृतास्तत्र चन्द्रबिम्बसमप्रभाः ॥ तदाश्रमसमन्ताच्च हिमसंरुद्धकन्दरम् ॥ ६९ ॥ शैलवाटैः परिवृतमगम्यं
मनुजैः सदा ॥ पूर्वाराधितदेवेशो महाराजः पुरूरवाः ॥ ७० ॥ तदाश्रममनुप्राप्तो देवदेवप्रसादतः ॥ तदाश्रमं श्रमशमनं मनोहरं मनोहरैः
कुसुमशतैरलंकृतम् ॥ कृतं च तत्स्वयमथ चात्रिणा शुभं शुभप्रदं तं ददृशे स मद्रराट् ॥७१॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे
महर्ष्याश्रमवर्णनन्नामैकपञ्चाशदधिकशततमोऽध्यायः॥१५१॥मार्कण्डेय उवाच ॥ तत्र यौ तौ महाशृङ्गौ महावर्षमहाहिमौ ॥ तृतीयं तु तयोर्मध्ये

शृङ्गमत्यन्तमुच्छ्रितम् ॥ १ ॥ नित्यातपं तप्तशिलं सदा भगतिवर्जितम् ॥ तस्याधस्ताद्दक्षिणे देशे भागे च पश्चिमे ॥ २ ॥ जातीलतापरिक्षिप्तं विवरं चारुदर्शनम् ॥ दृष्ट्वैव कौतुकाविष्टस्तं विवेश महीपतिः ॥३॥ तमसा चातिनिबिडं नल्वमात्रं महीपतिः ॥ नल्वमात्रमतिक्रम्य स्वप्रभाभरणोज्ज्वलम् ॥ ॥ ४ ॥ समुच्छ्रितमथात्यन्तं गम्भीरं परिवर्तुलम् ॥ न तत्र सूर्यस्तपति न विराजति चन्द्रमाः ॥ ५ ॥ तथापि दिवसाकारं प्राकाश्यं तदहर्निशम् ॥ क्रोशाधिकपरीमाणं सरसा च विराजितम् ॥६॥ समन्तात्सरसस्तस्य शैललग्ना तु वेदिका॥ सौवर्णै राजतैर्वृक्षैर्विद्रुमैरपि शोभिता ॥ ७ ॥ नाना माणिक्यकुसुमैः स्वप्रभाभरणोज्ज्वलैः ॥ तस्मिन्त्सरसि पद्मानि पद्मरागच्छदानि च ॥ ८ ॥ वज्रकेसरजालानि सुगन्धीनि तथाप्यति ॥ पत्रैर्मरकतै र्नीलैर्वैदूर्यैश्च महीपते ॥ ९ ॥ कर्णिकाश्च तथाशेषा जातरूपस्य पार्थिव ॥ तस्मिन्सरसि या भूमिर्नसा कर्दमसङ्कुला ॥ १० ॥ नानारत्नैरुपचिता जलजानां समाश्रया ॥ कपर्दकानां शुक्तीनां शङ्खानां च महीपते ॥ ११ ॥ मकराणां च मत्स्यानां पैण्डानां कच्छपैः सह ॥ तत्र मरतकखण्डानि वज्राणि च सहस्रशः ॥१२॥ पद्मरागेन्द्रनीलानि महानीलानि पार्थिव ॥ पुष्परागाणि रम्याणि तथा कर्केतकानि च ॥१३॥ तुरूकस्य च खण्डानि तथा शेषस्य भागशः ॥ राजावर्तस्य मुख्यस्य रुधिराख्यस्य चाप्यथ ॥ १४ ॥ सूर्येन्दुकान्तयोश्चैव पीलोर्भल्लातकस्य च ॥ ज्योतीरसस्य रम्यस्य शङ्खकस्य च भागशः ॥ १५ ॥ मसारगवलङ्कानां स्फटिकस्य तथैव च ॥ गोमेदपित्तकानां च धूली मरकतस्य च ॥ १६॥ वैदूर्यसौगन्धिकयोस्तथा राजमणेर्नृप ॥ खञ्जस्य चैव मुख्यस्य तथा ब्रह्ममणेरपि ॥१७॥ मुक्ताफलानां मुख्यानां ताराविग्रहधारिणाम् ॥ सुखोष्णं चैव तत्तोयं स्नानाच्छीतविनाशनम् ॥१८॥ वैदूर्यस्य शिलामध्ये सरसस्तस्य शोभना ॥ प्रमाणेन तथा सा च द्वे च राजन्धनुःशते ॥१९॥ चतुरस्रा तथा रम्या तपसा निर्मितात्रिणा ॥ बिलद्वारसमे देशे केतुस्तत्र हिरण्मयः ॥२०॥ प्रदेशः स तु राजेन्द्र द्वीपे तस्मिन्मनोहरे ॥ तथा पुष्करिणी रम्या तस्मिन्ना जन्छिलातले ॥२१॥ सुशीतामलपानीया जलजैश्च विराजिता ॥ आकाशविमला राजंश्चतुरस्रा मनोहरा ॥ २२ ॥ तस्यास्तदुदकं स्वादु लघु शीतं सुगन्धि च ॥ न क्षिणोति तथा कायं कुक्षिमापूरयत्यपि ॥२३॥ तृप्तिं विधत्ते परमां शरीरे च महत्सुखम् ॥ मध्ये च तस्याः सुकृतं प्रासादं तपसा त्रिणा ॥ २४ ॥ रुक्मसेतुप्रवेशं तत्सर्वरत्नमयं शुभम् ॥ शशाङ्करश्मिसङ्काशं प्रासादं राजतं हितम् ॥२५॥ रम्यं वैदूर्यसोपानं विद्रुमामलतारकम् ॥ इन्द्रनीलमहाचक्रजातरूपविभूषितम् ॥२६॥ पद्मरागमहास्तंभं तथा मरकतवेदिकम् ॥ वज्रांशुजालैश्छुरितं रम्यं दृष्टिमनोहरम् ॥२७॥ प्रासादे तत्र

१ 'सारकम्' इति क० ।

भगवान्देवदेवो जनार्दनः ॥ भोगिभोगावलीसुतः सर्वालङ्कारभूषितः ॥ २८ ॥ जानुमाकुञ्चितन्त्वेकं देवदेवस्य चक्रिणः ॥ फणीन्द्रसन्निविष्टांघ्रि
र्द्वितीयश्च तथा नृप ॥ २९ ॥ लक्ष्म्युत्सङ्गगतांघ्रिस्तु शेषभोगप्रसारितः ॥ फणीन्द्रभोगविन्यस्तबाहुकूर्परशोभितः ॥ ३० ॥ स्वाङ्गुलीपृष्ठविन्यस्त
देवशीर्षधरं विभुम्॥ एकं तु देवदेवस्य द्वितीयं संप्रसारितम् ॥ ३१ ॥ समाकुञ्चितजानुस्थमणिबन्धसुशोभितम् ॥ किञ्चिदाकुञ्चितं चैव नाभिदेशे
करस्थितम् ॥३२॥ तृतीयं च भुजं तस्य चतुर्थं तु तथा शृणु ॥ आत्तसन्तानकुसुमं घ्राणदेशानुसर्पिणम् ॥३३॥ लक्ष्म्या संवाह्यमानांघ्रिः फुल्लपद्म
निभैः करैः ॥ सन्तानमालामुकुटं हारकेयूरभूषितम् ॥ ३४ ॥ भूषितं च तथा देवमङ्गदैरङ्गुलीयकैः ॥ फणीन्द्रफणविन्यस्तचारुरत्नशिखोज्ज्व
लम् ॥ ३५ ॥ अज्ञातवस्तुचरितं प्रतिष्ठितमथात्रिणा ॥ सिद्धान्तपूज्यं सततं संमन्तात्कुसुमार्चितम्॥३६॥दिव्यगन्धावलिप्ताङ्गं दिव्यधूपेन धूपि
तम् ॥ गोरसैः सफलैर्हृद्यैः सिद्धैरुपहृतैः सदा ॥ ३७ ॥ संशोभितं पुरःपार्श्वं देवमुत्तमशीर्षकम् ॥ तथा पश्चान्मुखं दृष्ट्वा ववन्दे स नराधिपः ॥३८॥
जानुभ्यां शिरसा चैव गत्वा भूमिं यथाविधि ॥ नाम्नां सहस्रेण तथा तुष्टाव मधुसूदनम् ॥ ३९ ॥ प्रदक्षिणमथो चक्रे स तूत्थाय पुनःपुनः ॥
रम्यमायतनं दृष्ट्वा तत्रोवासाश्रमे नृपः ॥ ४० ॥ विशालां हि गुहां काञ्चिदाश्रित्य सुमनोहराम् ॥ तपश्चचार तत्रैव पूजयानो जनार्दनम् ॥४१॥
नानाविधैः सदा पुष्पैः फलैर्मूलैः सगोरसैः ॥ नित्यं त्रिषवणस्नायी वह्निपूजापरायणः ॥ ४२ ॥ देववापीजलैः कुर्वन्सततं प्राणधारणम् ॥ सर्वा
हारपरित्यागं स कृत्वा मनुजेश्वरः ॥ ४३ ॥ अनाश्रितगुहाशायी कालं नयति पार्थिवः ॥ त्यक्ताहारक्रियस्यास्य केवलाम्भोऽशिनस्तथा ॥ ग्लानि
स्तस्य समायाति न शरीरे तदद्भुतम् ॥४४॥ एवं स राजा तपसि प्रसक्तः सम्पूजयन्देववरं सदैव ॥ तत्राश्रमे कालमुवास कश्चित्स्वर्गोपमे दुःख
मविन्दमानः ॥ ४५ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे आश्रमवर्णनो नाम द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥
मार्कण्डेय उवाच ॥ गत्वाश्रमपदे राजा त्यक्ताहारपरिच्छदः ॥ क्रीडाविहारैर्गन्धर्वैः पश्यत्यप्सरसस्सह ॥ १ ॥ कृत्वा पुष्पोच्चयं
भूरि ग्रथयित्वा तथा स्रजः ॥ अग्रे निवेद्य देवाय गन्धर्वेभ्यस्तथा ददौ ॥ २ ॥ पुष्पोच्चयप्रसक्तानां क्रीडन्तीनां यथा
सुखम् ॥ चेष्टा नानाविधाकाराः पश्यन्नपि न पश्यति ॥ ३ ॥ काश्चित्पुष्पोच्चये सक्ता लताजालेन वेष्टिताः ॥ सखीजनेन
सन्त्यक्ताः कान्तेन परमोक्षिताः ॥ ४ ॥ मकरन्दसमाक्रान्तनयनाः काश्चिदङ्गनाः ॥ कान्तनिःश्वासवातेन नीरजस्कीकृतेक्षणाः ॥ ५ ॥

१ 'समन्तत्' इति क०।

काचिदुच्चित्य पुष्पाणि ददौ कान्तस्य भामिनी ॥ कान्तसङ्ग्रथितैस्तैश्च रराज कृतशेखरा ॥ ६ ॥ स्वयमुच्चित्य सङ्ग्रन्थ्य रमणकृतशेखरा ॥ कृतकृत्यमिवाऽऽत्मानं मेने मन्मथवर्धिनी ॥ ७ ॥ अन्यस्मिन्गहने कुञ्जे विशेषकुसुमा लता ॥ काचिदेवं रहो नीता रमणेन रिरंसुना ॥ ८ ॥ कान्तसन्नामितलताकुसुमानि विचिन्वती ॥ सर्वाभ्यः काचिदात्मानं मेने सर्वगुणाधिकम् ॥ ९ ॥ क्वचित्पश्यति भूपालो नलिनीषु पृथक्पृथक् ॥ क्रीडचमानास्तु गन्धर्वैर्देवरामा मनोरमाः ॥ १० ॥ काचिच्चाताडयत्कान्तमुदकेन शुचिस्मिता ॥ ताड्यमाना तथैवान्या कान्तेन रतिमा[1]ययौ ॥ ११ ॥ कान्ता तु ताडयामास जातखेदा वराङ्गना ॥ अदृश्यत वरारोहा श्वासनृत्यत्पयोधरा ॥ १२ ॥ कान्ताम्बुताडनभ्रष्टकेशपाशनिबन्धना ॥ श्वासाकुलमुखी भाति मधुपैरिव पद्मिनी ॥ १३ ॥ स्ववक्त्र[3]सदृशैः पुष्पैः संछन्ननलिनीवने ॥ छन्ना काचिच्चिरात्प्राप्ता कान्तेनान्विष्य यत्नतः ॥ १४ ॥ स्नाता शीतापदेशेन काचित्प्रौढाङ्गना भृशम् ॥ रमणालिङ्गनं चक्रे मनोभिऽलषितं चिरम् ॥ १५ ॥ जलार्द्रं वसनं सूक्ष्ममङ्गलीनं शुचिस्मिता ॥ धारयन्ती जनं चक्रे काचित्तत्र समन्मथम् ॥१६॥ गन्धमाल्यगुणैः काचित्कान्तेनाकृष्य चाम्भसि ॥ त्रुट्यत्स्रग्दामपतितं रमणं प्राहसच्चिरम् ॥१७॥ काचिन्मग्नसखीदत्तजानुदेशनखक्षता ॥ सम्भ्रमात्कान्तरमणमग्ना सापि न्यमज्जत ॥ १८ ॥ काचित्पृष्ठीकृतादित्या केशनिस्तोयकारिणी ॥ शिलातलगता भर्त्रा दृष्टा कामार्तचक्षुषा ॥१९॥ हृतमाल्यं सुललितं संक्रान्तकुचकुङ्कुमम् ॥ रतान्तक्लान्तकान्ताभमभवत्तत्सरोदकम् ॥२०॥ सुस्नातदेवगन्धर्वदेवरामागणेन च ॥ पूज्यमानं स ददृशे देवदेवं जनार्दनम् ॥ २१ ॥ क्वचिच्च ददृशे राजा लतागृहगताः स्त्रियः ॥ मण्डयन्त्यः स्वगात्राणि कान्तसन्न्यस्तमानसाः ॥२२॥ काचिदादर्शसुव्यग्रकरा दूतीमुखोद्गतम् ॥ शृण्वती कान्तवचनमतिक्लान्तमुखा बभौ ॥२३ ॥ काचित्सत्वरिता दूत्या भूषणानां विपर्ययम् ॥ कुर्वाणा नैव बुबुधे मन्मथाविष्टचेतना ॥ २४ ॥ वायुनुन्नां[4]तसुरभिकुसुमोत्करमण्डिते ॥ क्वचिं[5]त्पिबन्त्यो ददृशे प्रदेशे नीलशाद्वले ॥२५॥ पाययामास रमणं स्वयं काचिद्वराङ्गना ॥ काचित्पपौ वरारोहा कान्तपाणिसमर्पितम् ॥२६॥ काचित्स्वनेत्रसंक्रान्तनीलोत्पलयुतं वधूः ॥ पीत्वा पप्रच्छ रमणं क्व गते ते महोत्पले ॥ २७॥ त्वयैव पीते ते नूनमित्युक्ता रमणेन सा ॥ सत्यं विदित्वा मुग्धत्वाद्बभूव व्रीडिता चिरम् ॥२८॥ काचित्कान्तार्पितं सुभ्रूः कान्तपीतावशेषितम् ॥ सविशेषरसं पानं पपौ मन्मथवर्धनम्॥२९॥ आपानगोष्ठीषु तदा तासां स नरपुङ्गवः ॥ शुश्राव विविधं गीतं तन्त्रीस्वरविमिश्रितम् ॥ ३० ॥ प्रदोषसमये ताश्च देवदेवं जनार्दनम् ॥ राजन्स

१ 'प्रतिमा यथा' इति क० । २ 'विहारोत्थ' इति ख० । ३ 'सुवक्त्रा' इति ख० । ४ 'वारुणीं ताश्च' इति ख० । ५ 'काश्चि' इति क० ।

दोपनृत्यन्ति नानावाद्यपुरःसराः ॥ ३१॥ याममात्रे गते रात्रौ विनिर्गत्य गुहामुखात् ॥ आयान्ति संयुताः कान्तैः स्वऋद्धिरचितान्गृहान् ॥३२॥ नानागन्धार्चिततलान्नानागन्धसुगन्धिनः ॥ नानाविचित्रशयनान्कुसुमोत्करमण्डितान् ॥ ३३ ॥ एवमप्सरसां पश्यन्क्रीडितानि स पर्वते ॥ तपस्तेपे महाराजः केशवार्पितमानसः ॥ ३४ ॥ तमूचुर्नृपतिं गत्वा गन्धर्वाप्सरणां गणाः ॥ राजन्स्वर्गोपमं देशं प्राप्तस्त्वमरिमर्दन ॥ ३५॥ वयं हि ते प्रदास्यामो मनसः काङ्क्षितान्वरान् ॥ तानादाय गृहं गच्छ तिष्ठेह यदि वा पुनः ॥ ३६ ॥ पुरूरवा उवाच॥ अमोघदर्शनाः सर्वे भवन्तस्त्वमितौजसः ॥ वरं वितरताद्यैव प्रसादं मधुसूदनात् ॥ ३७ ॥ मार्कंडेय उवाच ॥ एवमस्त्वित्यथोक्तस्तैः स तु राजा पुरूरवाः ॥ तत्रोवास सुखी मासं पूजयानो जनार्दनम् ॥ ३८ ॥ प्रिय एव सदैवासीद्गन्धर्वाप्सरसां नृप ॥ तुतोष स जनो राज्ञस्तस्यालौल्येन कर्मणा ॥ ३९ ॥ मघस्य मध्ये स नृपः प्रविष्टस्तदाश्रमं रत्नसहस्रचित्रम् ॥ तोयाशनस्तत्र उवास मासं यावत्सितान्तं नृप फाल्गुनस्य ॥ ४० ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसम्वादे जलक्रीडावर्णनं नाम त्रिपञ्चाशदधिकशततमोऽध्यायः ॥१५३॥ मार्कण्डेय उवाच ॥ फाल्गुनामलपक्षान्ते राजा स्वप्ने पुरूरवाः ॥ तस्यैव देवदेवस्य शुश्राव गदितं शुभम् ॥१॥ रात्र्यामस्यां व्यतीतायां मन्त्रिणा त्वं समेष्यसि॥ तेन राजन्समागम्य कृतकृत्यो भविष्यसि ॥ २॥ स्वप्नमेवं स राजर्षिर्दृष्ट्वा विपुलविक्रमः ॥ प्रत्यूषकाले विधिवत्स्नातः प्राग्वदतन्द्रितः ॥ ३ ॥ कृतकृत्यो यथाकामं पूजयित्वा जनार्दनम् ॥ स्वप्नं तद्देवदेवस्य न्यवेदयत धार्मिकः ॥ ४ ॥ ततः शुश्राव वचनं देवतार्चासमीरितम् ॥ एवमेतन्महीपाल नात्र कार्या विचारणा ॥ ॥ ५ ॥ एवं प्रसादं संप्राप्य देवदेवाज्जनार्दनात् ॥ कृतकृत्यमिवात्मानं मेने स नरपुङ्गवः ॥ ६ ॥ कृतदेवार्चनो राजा तदा हुतहुताशनः ॥ जगाद सुहृदां तेषां प्रसादं मधुसूदनात् ॥ ७ ॥ तमूचुश्च तदा सर्वे राजानमपराजितम् ॥ विदधातु प्रसन्नस्ते देवदेवो जनार्दनः ॥ ८ ॥ अप्रसन्ने जगन्नाथे देशेऽस्मिन्नृप कस्यचित् ॥ न गतिर्विद्यते राजंस्त्वं च देशमिहागतः ॥ ९ ॥ सुखं प्राप्नुहि भद्रन्ते भूय एव हितेप्सितान् ॥ स सादयित्वा ते कामान्देवः सर्वगतः प्रभुः ॥ १० ॥ एवमुक्त्वा नरेन्द्रं तं गन्धर्वाप्सरसां गणाः ॥ जग्मुः क्रीडाविहारार्थं यथापूर्वमरिन्दम ॥ ११ ॥ अथाजगाम तं देशं ब्रह्मणो मानसः सुतः ॥ त्रिजगद्यशसां स्थानमत्रिः सुरगणार्चितः ॥ १२॥ तमागतं मुनिवरं दृष्ट्वा राजा पुरूरवाः ॥ पाद्यार्घ्याचमनीयाद्यैरासनेनाभ्यपूजयत् ॥ १३ ॥ सम्पूज्य च महाभागमिदं वचनमब्रवीत् ॥ अद्य मे सफलं जन्म अद्य मे सफलं तपः ॥ १४ ॥ यत्ते देवगणैर्वन्द्यौ वन्दितौ

१ 'समादाय तु' इति ख० 'ससादत्त' इति क० ।

चरणौ मया ॥ श्रेयः प्रसूतिवृक्षस्य प्ररोहस्तव दर्शनम् ॥ १५ ॥ सर्वपापान्तकरणं सर्वकल्याणकारणम् ॥ किं वा न लभ्यमस्तीह तेषां द्विजवरोत्तम ॥ १६ ॥ अमोघदर्शने दृष्टे भवत्यमिततेजसि ॥ एवमुक्तस्तदा राज्ञा संप्रसन्नो जगाद तम् ॥ १७ ॥ शृणु राजन्वचो मह्यं यत्ते वक्ष्यामि सुव्रत ॥ देवदेवसमादेशाद्दत्तं ते दर्शनं मया ॥ १८ ॥ सुप्रसन्नो हि भगवान्देवस्ते मधुसूदनः ॥ द्वादशीषु सदा राजन्सोपवासेन नित्यशः ॥१९॥ पूजितो भगवान्विष्णुस्त्वयातीते तु जन्मनि ॥ राजसेन तु भावेन त्वया देवः समर्चितः ॥ २० ॥ अवरं काममाश्रित्य राजन्निहतकण्टकम् ॥ सात्त्विकेन तु भावेन पूजयित्वा जनार्दनम् ॥ २१ ॥ राज्यं मद्रेषु संप्राप्तं निष्कण्टकमरिन्दम ॥ द्वादश्यर्चाप्रसन्नेन देवदेवेन चक्रिणा ॥ २२ ॥ प्रदर्शितमिदं स्थानं मदीयं स्वर्गसन्निभम् ॥ इह राजँस्तपस्तप्त्वा देवदेवं जनार्दनम् ॥२३॥ आराध्य दृष्टवानस्मि पुरा वर्षगणान्बहून् ॥ प्राप्यानुज्ञां हृषीकेशात्तत्कृते विवरे शुभे ॥२४॥ नित्यं सन्निहिता राजंस्तस्यैवार्चा विनिर्मिता ॥ नियोगाद्देवदेवस्य पूज्यते सिद्धसत्तमैः ॥ २५ ॥ नेयं दृष्टा मनुष्येन्द्र मनुष्यैर्न च राक्षसैः ॥ पिशिताशैस्तथैवान्यैर्दृष्टपूर्वा कथञ्चन ॥ २६ ॥ अस्मिन्स्वर्गोपमे देशे त्वयालौल्येन कर्मणा ॥ आराधितो जगन्नाथो देवश्चक्रगदाधरः ॥ २७ ॥ आसन्नफलमूलेऽपि बहुगोरससंयुते ॥ क्षौद्रयुक्तशिलाप्राये समाक्षिकफलैर्युते ॥ २८ ॥ केवलाम्भोशिना तप्तं यत्त्वया परमं तपः ॥ तेन तेऽहं वरं दद्मि यदभीष्टं तवानघ ॥ २९ ॥ अचिरेणैव कालेन त्वया राजन्कृतं तपः ॥ रूपार्थं रूपलाभाय प्राप्तं मे गदतः शृणु ॥ ३० ॥ तद्व्रतं ये करिष्यन्ति मनुजेश्वर मानवाः ॥ स्त्रियो वापि नरश्रेष्ठ प्राप्स्यन्ते रूपमुत्तमम् ॥ ३१ ॥ सौभाग्यमतुलं लोके लावण्यमपि चोत्तमम् ॥ धर्मिष्ठतां तथारोग्यं कुले जन्म तथोत्तमे ॥ ३२ ॥ जन्मान्तरमथासाद्य स्वर्गलोकं तथाविधम् ॥ स्वर्गलोकात्परिभ्रष्टा मानुष्ये गुणसंयुताः ॥ ३३ ॥ ब्राह्मणा धनसम्पन्ना भविष्यन्त्यथवा नृपाः ॥ जन्मान्तरमथासाद्य सर्वस्यैव फलप्रदाः ॥ ३४ ॥ रूपवंतो महाराज इहामुत्र च तेऽनघाः ॥ यस्मात्त्वया तपस्तप्तं केशवश्चाथ पूजितः ॥३५॥ मया समागतश्चापि गंधर्वैश्च सहस्रशः ॥ इहैव कृत्वा धर्मज्ञ रूपसत्रं महाफलम् ॥ दिव्यरूपधरो भूत्वा स्वराष्ट्रं गन्तुमर्हसि ॥ ३६ ॥ एतावदुक्तः स तु मद्रनाथो महात्मना तेन नरेन्द्रसिंह ॥ पप्रच्छ तं धर्मभृताम्वरिष्ठः सत्रस्य तस्यानुशयं विधानम् ॥ ३७ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे पुरूरवसोऽत्रिदर्शनं नाम चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥ पुरूरवा उवाच ॥ श्रोतुमिच्छामि भगवन्रूपसत्रं महाफलम् ॥ यत्समाप्तौ भविष्यामि दिव्यरूपधरो मुने ॥ १ ॥

१ 'पृष्ठे' इति ख० ।

अत्रिरुवाच ॥ तत्सत्रं कर्तुकामेन चान्वेष्यो ब्राह्मणो गुरुः ॥ ज्योतिषं यो विजानाति इतिहासांश्च कृत्स्नशः ॥ २ ॥ तत्प्रदिष्टेन विधिना पादर्क्षात्प्रभृति क्रमात् ॥ उपोषितव्यं नक्षत्रं प्रत्येकं तन्निबोध मे ॥ ३ ॥ फाल्गुन्यां समतीतायां कृष्णपक्षाष्टमी तु या ॥ समूलां तां तु सम्प्राप्य व्रतं गृह्णीत मानवः ॥ ४ ॥ उपोषितव्यं नक्षत्रं नक्षत्रस्य च दैवतम् ॥ वरुणं च तथा चन्द्रं पूजयेद्विधिना नरः ॥ ५ ॥ पूजयेद्देवदेवेशं भगवन्तं जनार्दनम् ॥ उपोष्य सङ्गं देवस्य प्रयत्नेन च पूजयेत् ॥ ६ ॥ ततोऽग्निहवनं कृत्वा पूजयित्वा तथा गुरुम् ॥ उपवासस्तु कर्तव्यो द्वितीयेऽहनि पार्थिव ॥ ७ ॥ उपोष्य ऋक्षे विगते स्नात्वा सम्पूज्य केशवम् ॥ कृत्वाग्निहवनं शक्त्या पूजयित्वा द्विजोत्तमान् ॥ ८ ॥ हविष्यमन्नं भोक्तव्यं शृणु चाङ्गक्रमं मम ॥ पादयोः कथितं मूलं प्राजापत्यं तु जङ्घयोः ॥ ९ ॥ आश्विनं जानुयुगलं चोरुयुग्मं च पार्थिव ॥ सहिते द्वे तथाषाढे गुह्ये च सहिते स्मृते ॥ १० ॥ पूर्वोत्तरे च फाल्गुन्यौ कृत्तिकासु कटिर्भवेत् ॥ पार्श्वयोः कुक्षियुतयोर्नक्षत्रत्रितयं मतम् ॥ ११ ॥ उभे प्रोष्ठपदे राजन्रेवती च तथा भवेत् ॥ उरोऽनुराधासु तथा पृष्ठं निष्ठयासु कीर्तितम् ॥ १२ ॥ भुजौ ज्ञेयौ विशाखासु हस्ते प्रोक्तौ तथा करौ ॥ अङ्गुल्यश्च तथा प्रोक्ता राजसिंह पुनर्वसौ ॥ १३ ॥ आश्लेषायां तथा प्रोक्ता ज्येष्ठायां नृप कन्धरा ॥ श्रवणौ श्रवणो ज्ञेये मुखं पुष्ये प्रकीर्तितम् ॥ १४ ॥ दन्ताः स्वातौ शतभिषा हनू प्रोक्तौ तथा नृप ॥ मघायां नासिका प्रोक्ता मृगशीर्षे च लोचने ॥ १५ ॥ चित्रा ललाटे विज्ञेया भरण्यश्च तथा शिरः ॥ शिरोरुहास्तथार्द्रासु व्रतस्यान्ते नराधिप ॥ १६ ॥ माघशुक्लावसाने तु सत्रं परिसमाप्यते ॥ यद्यन्तरायं न भवेत्किञ्चिच्छौचनिमित्तजम् ॥ १७ ॥ अन्तरायं महाराज यदि शौचनिमित्तजम् ॥ उपोष्यमेवोपवसेन्नक्षत्रमपरं पुनः ॥ १८ ॥ क्रमप्राप्तं हि नक्षत्रं चाशुद्ध्यामपवर्जितम् ॥ उल्लङ्घयन्महीपाल प्रत्यवायं समश्नुते ॥१९॥ अङ्गक्रमेण सकलमृक्षवर्गमुपोषितः॥ व्रतान्ते प्रयतः स्नात्वा पूजयेन्मधुसूदनम् ॥ २० ॥ चन्दनागुरुकर्पूरमृगदर्पैः सकुङ्कुमैः ॥ जातीफलैः सकंकोलैर्लवङ्गकुसुमैस्तथा ॥ २१ ॥ बोलगुग्गुलनिर्यासैः पुष्पैः कालोद्भवैः शुभैः ॥ धूपो नरेन्द्रागुरुणा चन्दनेन सुगन्धिना ॥ २२ ॥ दीपाश्च देया राजेन्द्र तिलतैलप्रपूरिताः ॥ दीपेषु वर्तयः कार्य्या महारञ्जनरञ्जिताः ॥ २३ ॥ नैवेद्यं च तथा कार्यं परमान्नेन भूरिणा ॥ दध्ना क्षीरामृताभ्यां च मधुना च गुडेन च ॥ २४ ॥ सितया च तथा भक्ष्यैः फलमूलैर्यथाविधि ॥ अपूपैः पानकैर्हृद्यैः शीतलैश्च सुगन्धिभिः ॥ २५ ॥ लवणस्य च पात्राणि कृसरं च निवे

१ 'चन्द्रे' इति क० । २ 'विचिते' इति क० ३ 'चलनम्' इति क० । ४ 'घृतेन' इति ख० ।

दयेत् ॥ सर्वबीजानि राजेन्द्र भूषणानि च शक्तितः ॥ २६ ॥ महार्हाणि च वस्त्राणि भक्त्या प्रयतमानसः ॥ तद्विष्णोः परममिति
होमः कार्यो ह्यनन्तरम् ॥ २७ ॥ द्वादशाक्षरकं मन्त्रं स्त्रीशूद्रेषु विधीयते ॥ घृतं माक्षिकसंयुक्तं जुहुयात्तिलतण्डुलम् ॥ २८ ॥
ततस्तु दक्षिणा देया गुरवे नृपसत्तम ॥ नागाश्च मदमत्ता वै ग्रामाश्च विविधास्तथा ॥ २९ ॥ तुरगाश्च तथा मुख्या रत्नानि विविधानि च ॥
ब्राह्मणश्च पिता ज्ञेयो रूपसत्रप्रदर्शकः ॥ ३० ॥ रूपसौभाग्यलावण्यजन्मभोगप्रदायकः ॥ राज्यस्य वा द्विजत्वस्य बहुवित्तस्य दायकः ॥
॥ ३१ ॥ न तस्य निष्कृतिः शक्या गन्तुं दानेन भूरिणा ॥ गुरुप्रसाद एवात्र दक्षिणानां तु कारणम् ॥ ३२ ॥ तस्मात्प्रसादमाकाङ्क्षेद्रूपसत्र
प्रदर्शकात् ॥ अवश्यं तस्य दातव्यं घृतपूर्णं तु भाजनम् ॥ ३३ ॥ चतुष्पलं तु कांस्यस्य सुवर्णं काञ्चनस्य च ॥ ततः परं भोजनीयाः
स्वशक्त्या द्विजपुङ्गवाः ॥३४॥ लवणक्षीरमध्वाज्यगुडभक्ष्यसितोत्कटम् ॥ भोजनं पानकोपेतं पश्चाद्देया च दक्षिणा ॥ ३५ ॥ वस्त्रयुग्मं प्रदातव्यं
ब्राह्मणाय नवं शुभम् ॥ ब्राह्मणार्यं च दातव्यं महाराजतरञ्जितम् ॥ ३६ ॥ सप्तबीजानि देयानि लवणं रूप्यमेव च ॥ यच्चान्यदप्यभीष्टं स्याच्छ
त्रोपानत्कमेव च ॥ ३७ ॥ वित्तशाठ्यं न कर्तव्यं सत्रदाने महीपते ॥ अवश्यदेयं सत्रेऽस्मिन्घृतपूर्णं च भाजनम् ॥ ३८ ॥ चतुष्पलं तु कांस्यस्य
सुवर्णं काञ्चनस्य च ॥ व्रतेनानेन चीर्णेन देहत्यागे दिनं गतः ॥३९॥ तत्रोष्य सुचिरं कालं मानुष्ये यदि जायते ॥ राजा भवति धर्मात्मा ब्राह्मणो
वा धनान्वितः ॥ ४० ॥ कुले महति सम्भूतो रूपेणाऽप्रतिमो भुवि ॥ आरोग्यं महदाप्नोति सौभाग्यमपि चोत्तमम् ॥ ४१ ॥ लावण्यं बुद्धिं मेधे च
मतिं धर्मे च शाश्वतीम् ॥ सम्पूर्णचन्द्रप्रतिमः सर्वसत्त्ववशङ्करः ॥ ४२ ॥ नरो भवति राजेन्द्र नारी चाप्सरसोपमा ॥ सुभगा दर्शनीया च
लावण्यगुणसंयुता ॥ ४३ ॥ बहुधान्या बहुधना बहुभूषणसंयुता ॥ भर्तुश्चात्यन्तदयिता लोके ख्याता च सद्गुणैः ॥ नित्यारोग्यवती कान्ता
सर्वदोषविवर्जिता ॥४४॥ चन्द्रानना नीलसरोजनेत्रा त्रैलोक्यकान्ता पतिवल्लभा च ॥४५॥ भवत्यवश्यं सुभगा सुशीला लावण्ययुक्ता यशसा
श्रिया च ॥ ४६ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे रूपसत्रवर्णनं नाम पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥ १५५ ॥
॥ पुरूरवा उवाच ॥ भगवन्सर्वधर्मज्ञ पितामह महाद्युते ॥ गुरुत्वं मे व्रते तस्मिन्कर्तुमर्हसि मानद ॥ १ ॥ व्रतावसाने च तथा सामग्र्यं द्विज
पुङ्गव ॥ एवं शक्योस्म्यरण्येस्मिन्कर्तुं ब्रह्मन्महद्व्रतम् ॥ २ ॥ अत्रिरुवाच ॥ तव प्रसादं भगवान्सर्वात्मा मधुसूदनः ॥ कुरुतेऽहं करिष्यामि



१ बहुमौल्यम्' इति ख० । २ 'स प्रमादो' इति ख० । ३ बुद्धिस्तात्कालिकी स्फूर्तिः इति ख० । ४ मेधा धारणावती धीः । ५ 'शक्ष्याम्य' इति ख० ।

गुरुत्वमपराजितः ॥ ३ ॥ व्रतावसाने च तथा सामग्र्यं द्विजपुङ्गवैः ॥ कामास्सन्निहिताश्चान्यैर्देशेऽस्मिन्नृप सर्वदा ॥ ४ ॥ मार्कण्डेय उवाच ॥ एवमुक्ता स धर्मात्मा सप्तमे च दिने तदा ॥ ज्येष्ठायां सप्तमीयोगे ग्राहयामास तं व्रतम् ॥ ५ ॥ पादर्क्षात्तु प्रभृत्येवमृक्षेऋक्षे नराधिपः ॥ कारयामास देवस्य कथिताङ्गादिपूजनम् ॥ ६ ॥ स्नानं नक्षत्रनिर्दिष्टं नक्षत्रस्य च पूजनम् ॥ नक्षत्रदैवतस्यापि सोमस्य वरुणस्य च ॥ ७ ॥ पूजनं च तथा विष्णोर्देवदेवस्य चक्रिणः ॥ होमं तथैव सर्वेषां यथावन्मनुजेश्वर ॥ ८ ॥ माघशुक्लमघां प्राप्य द्वादशीं च तथा तिथिम् ॥ अत्रिर्व्रतावसाने तमागतो ब्राह्मणैः सह ॥ ९ ॥ व्रतावसाने संपूज्य केशवाङ्गार्चिसोमजान् ॥ राज्यं निवेदयामास सोऽत्रेः सकलमेव हि ॥ १० ॥ प्रतिगृह्य च तद्राज्यं तस्माद्वै मन्त्रविन्नृप ॥ भूयः प्रादात्स तस्यैव वचनञ्चेदमब्रवीत् ॥ ११ ॥ न मे राज्येन कर्तव्यं किञ्चिदेवास्ति पार्थिव ॥ न धनेन न कामेन याजिता ध्रुवयाज्ञियाः ॥ १२ ॥ समत्वं राजशार्दूल स्वस्ति गच्छ गृहान्प्रति ॥ एवमुक्ता ययावत्रिरन्तर्धानमथेश्वरः ॥ १३ ॥ सर्वैर्द्विजगणैः सार्धं तदा गत्वा स पार्थिवः ॥ देवपुष्करिणीतोये स्नातमात्रो बभूव ह ॥ १४ ॥ तप्तजाम्बूनदाकारो नीलकुञ्चितमूर्धजः ॥ पृथुवक्षा महाबाहुस्तनुकुक्षिर्महाकटिः ॥ १५ ॥ गन्धर्वराजप्रतिमः सर्वसत्त्ववशङ्करः ॥ रूपं तु तादृशं तस्य दृष्ट्वा गन्धर्वसत्तमाः ॥ १६ ॥ तथैवाप्सरसो मुख्या दिष्ट्या दिष्ट्येति तेऽब्रुवन् ॥ सभाज्य पार्थिवं तेन पूजिताः प्रययुः सुखम् ॥ १७ ॥ नीत्वा संवत्सरं तत्र पूर्णे संवत्सरे नृपः ॥ देवतांश्चाप्यथामन्त्र्य पूजयित्वा यथाविधि ॥ १८ ॥ तथा पुष्करिणीं पुण्यां गुहां पद्मसरस्तथा ॥ आश्रमं शैलमुख्यं च तथैव च वनस्पतिम् ॥ १९ ॥ गन्धर्वाप्सरसश्चैव प्रययौ स्वपुरं ततः ॥ उच्चसङ्गमसम्प्राप्तौ दृष्टो वैषयिकैस्ततः ॥ २० ॥ स्तुतो देवप्रसादाच्च भक्त्या तैश्चाभिनन्दितः ॥ सत्त्वरैश्च तथा कैश्चिदमात्यानां निवेदितः ॥ २१ ॥ अमात्याश्चागतं श्रुत्वा लब्धकामं नराधिपम् ॥ निर्ययुर्नगरात्तस्माच्चतुरङ्गबलान्विताः॥२२॥ राज्ञः प्रतिग्रहार्थं ते गणमुख्यपुरःसराः ॥ तैः समेत्य स राजर्षिर्यथावन्मनुजेश्वर ॥२३॥ कल्पितेन गजेन्द्रेण पताकाध्वजशोभिना ॥ प्रविवेश पुरं हृष्टः शाकलं नाम नामतः ॥ २४ ॥ राज्ञः प्रवेशे तत्पौरैः सितचन्दनवारिणा ॥ बहुवर्णैस्तथा पुष्पैर्यथास्थाने विभूपितम् ॥ २५॥ चन्दनागुरुसाराणां धूपनैः सुरभीकृतम् ॥ महोच्छ्रितपताकाढ्यं माल्यदामपरिष्कृतम्॥ २६ ॥ माल्यमोदकहस्तैश्च पौरजानपदैर्युतम् ॥ अतीव जनसंबाधमतीव सुमनोहरम् ॥ २७ ॥ प्रासादवरसंस्थाश्च गवाक्षकगतास्तथा ॥ वेदिकास्थाश्च

१ 'दयाश्च' इति क० । 'दयाच' इति ख० । २ 'देवतार्चामथाभ्यर्च्य' इति ख० । ३ 'अभ्यमङ्गलसम्प्राप्तौ' इति क० ।

पश्यन्ति स्त्रियस्तं मन्मथार्दिताः ॥ २८ ॥ स मुष्णन्योषितां चित्तं दृशश्च मनुजाधिपः ॥ लाजाचन्दनचूर्णैश्च कीर्यमाणः समन्ततः ॥ २९ ॥ पुष्पैश्च स्त्रीकरोन्मुक्तैः पूर्यमाणो नराधिपः ॥ अभिगम्य च तत्रासौ देवतायतनांस्ततः ॥ ३० ॥ प्रविवेश गृहं श्रीमच्छारदाभ्रचयोपमम् ॥ तत्राभिगमनं कृत्वा देवतानां यथाविधि ॥ ३१ ॥ संपूज्य ब्राह्मणान्भक्त्या विविधैर्धनसञ्चयैः ॥ सभास्थं सान्त्वयामास पौरजानपदं जनम् ॥ ३२ ॥ आश्वास्य प्रेषयामास गृहान्योधजनं तथा ॥ जनानुरागसंयुक्तस्ततः प्रभृति पार्थिवः ॥ ३३ ॥ राजशास्त्रोपदेशेन पालयामास मेदिनीम् ॥ रेमे च सह रामाभिर्गन्धर्वप्रतिमो युवा ॥ ३४ ॥ स तु कालेन महता राजा पञ्चत्वमागतः ॥ उवास सुचिरं कालं पूज्यमानः सुरोत्तमैः ॥ ३५ ॥ मन्वन्तरे ह्यतीते तु चाक्षुषस्य महात्मनः ॥ वैवस्वतेऽथ सम्प्राप्ते बुधपुत्रत्वमागतः ॥ ३६ ॥ तत्र तस्य तु यद्रूपं सौभाग्यादेव विश्रुतम् ॥ सशरीरस्य च तथा स्वर्लोके गमनं नृप ॥ ३७ ॥ स्वर्गतोऽपि स राजर्षिः क्षीणे वैवस्वतेऽन्तरे ॥ प्रविश्यातिपुरं विष्णोश्चन्द्रमण्डल मध्यगम् ॥ ३८ ॥ एतत्ते सर्वमाख्यातं कर्मणा येन पार्थिवः ॥ अवाप तादृशं रूपं सौभाग्यमपि चोत्तमम् ॥ ३९ ॥ पूजयन्ति हरिं देवं सात्त्विकास्तु निराशिषः ॥ राजसाः कामकामाश्च क्रूरकामाश्च तामसाः ॥ ४० ॥ हरिं सम्पूज्य मनसा राजसेन पुरूरवाः ॥ सप्तद्वीपसमुद्रायां पृथिव्यामेकराड् बभौ ॥ ४१ ॥ स्वर्गं सुदुर्लभं प्राप्य स्थानं प्राप्स्यति शाश्वतम् ॥ नास्ति विष्णुसमो नाथो नास्ति विष्णुसमा गतिः ॥ ४२ ॥ नास्ति विष्णुसमं त्राणं नरस्यार्तस्य भेषजम् ॥ सत्कृतं पूजनं येन कृतं देवस्य चक्रिणः ॥ ४३ ॥ आरात्रिकं कृतं तेन संप्राप्तं परमं पदम् ॥ येन संकीर्तितं राजन्हरिरित्यक्षरद्वयम् ॥ ४४ ॥ बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ॥ एतत्ते बुधपुत्रस्य त्रिषु जन्मसु पार्थिव ॥ चरितं सकलं प्रोक्तं येन सम्पूजितो हरिः ॥ ४५ ॥ धन्यं यशस्यं रिपुनाशनं च सौभाग्यदं पुष्टिविवर्धनं च ॥ श्रोतव्यमेतन्नियतं च सद्भिराख्यानमूर्जस्करमृद्धिकामैः ॥ ४६ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसम्वादे पुरूरवसस्स्वपुरगमनं नाम षट्पञ्चाशदधिकशततमोऽध्यायः ॥१५६॥

॥ वज्र उवाच ॥ द्वादशीषु कथं विष्णुः सोपवासेन पूजितः ॥ राज्यप्रदः स्याद्धर्मज्ञ तन्मे त्वं ब्रूहि तत्त्वतः ॥ १ ॥ पश्य राज्यस्य माहात्म्यं यत्र धर्मसखावुभौ ॥ शृणु तस्य च धर्मस्य फलभाग्धार्मिको नृपः ॥ २ ॥ ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः ॥ राज्ञा संरक्षिताः सर्वे शक्या धर्मं निषेवितुम् ॥ ३ ॥ मानुषेण शरीरेण राजा देववपुर्धरः ॥ क्षत्त्रियोऽपि सदा पूज्यो ब्राह्मणानां महात्मनाम् ॥ ४ ॥ विना राज्यं हि या लक्ष्मीः



१ "राजा" इति क० । २ 'सतां' इति ख० ।

परतन्त्रा हि सा मता ॥ तस्माद्राज्यं प्रशंसन्ति तत्राज्ञा न विहन्यते ॥ ५ ॥ तुल्यधातुशरीराणां तुल्यावयवजीविनाम् ॥ नरेन्द्राणां नरैर्ब्रह्मन्दे ववद्धुवि[1] मन्यते ॥ ६ ॥ राज्यदां द्वादशीं तस्माद्वक्तुमर्हति मे भवान् ॥ यामुपोष्य महद्राज्यं प्राप्नुयात्स तु वै द्विजः ॥ ७ ॥ मार्कण्डेय उवाच ॥ शृणुष्वावहितो राजन्राज्यदां द्वादशीं शुभाम् ॥ यामुपोष्य नरो लोके राज्यमाप्नोत्यकण्टकम् ॥ ८ ॥ मार्गशीर्षस्य मासस्य शुक्लपक्षे नराधिप ॥ दशम्यां प्रयतः कृत्वा स्नानमभ्यङ्गपूर्वकम् ॥ ९ ॥ उपवासस्य संकल्पं श्वोभूतस्य तु कारयेत् ॥ देवागारे कुशास्तीर्णामेकवस्त्रोत्तरच्छदाम् ॥१०॥ अध्यासीत महीं तत्र तां रात्रिं प्रयतो नयेत् ॥ द्वितीयेऽह्नि ततः कुर्याद्बहिः स्नानमतन्द्रितः ॥ ११ ॥ पूजनं देवदेवस्य सर्वं शुक्लेन कारयेत् ॥ कर्पूरं चन्दनं देयं मल्लिका श्वेतयूथिका ॥१२॥ जात्या च शुक्ला राजेन्द्र धूपे कर्पूरमेव च ॥ घृतेन दीपा दातव्या शुक्लवर्तिसमन्विताः ॥ ॥ १३ ॥ घृतौदनं दधि क्षीरं परमान्नं तथैव च ॥ इक्षुमिक्षुविकारांश्च देवदेवे निवेदयेत् ॥ १४ ॥ कालोद्भवं मूलफलं वर्णं[2] तत्र न चिन्तयेत् ॥ यथालाभेन तद्देयं शुक्लं चेत्स्याद्विशेषतः ॥ १५ ॥ हवनं च ततः कार्यं परमान्नेन पार्थिव ॥ तद्विष्णोः परं[3] इत्येव होममन्त्रो विधीयते ॥ १६ ॥ द्वादशाक्षरकं मन्त्रं स्त्रीशूद्रस्य विधीयते ॥ ततोऽग्निहवनं कृत्वा शक्त्या सम्पूज्य च द्विजान् ॥ १७ ॥ सितरंगेन कर्तव्या भूमिशोभा सुरालये ॥ रात्रौ[4] जागरणं कार्यं गीत नृत्यं च पार्थिव ॥ १८ ॥ कर्मणा चैव देवस्य कर्तव्यं श्रवणं तथा ॥ द्वादश्यां विधिनाऽनेन भूयः पूज्यो जनार्दनः ॥ ॥ १९ ॥ राजलिङ्गं प्रदातव्यमेकं विप्राय दक्षिणा ॥ ततस्तु पश्चाद्भोक्तव्यं हविष्यं पार्थिवोत्तम ॥२०॥ एकादशी यथा मध्ये स्नानयोरन्तरे नृप ॥ कष्टं मौनं तु कर्तव्यं जप्यं कार्यं तु मानसम् ॥ २१ ॥ द्वादशीष्वेव शुक्लासु सर्वास्वेवाविशेषतः ॥ विधिस्तवायं निर्दिष्टः कृष्णास्वेवं च कारयेत् ॥ २२ ॥ विशेषं ते प्रवक्ष्यामि तन्मे निगदतः शृणु ॥ रक्तवर्णेन कर्तव्या देवपूजा यथाविधि ॥ २३ ॥ रक्तं च देयं नैवेद्यं पुष्पगन्धानुलेपनम् ॥ तिलतैलेन दीपाश्च महारञ्जनरञ्जिताः ॥ २४ ॥ दीपेषु वर्तयो देया होमः कार्यस्तथा तिलैः ॥ भूमिशोभा च कर्तव्या रक्तैर्भूपालवर्णकैः ॥ २५ ॥ अनेन विधिना कृत्वा राजन्संवत्सरं ततः ॥ कार्तिक्यां समतीतायां कृष्णा या द्वादशी भवेत् ॥ २६ ॥ व्रतावसाने तस्यां तु महावर्तिं तु दापयेत् ॥ वाससा च समग्रेण तुलया च घृतस्य वै ॥ २७ ॥ ब्राह्मणाय प्रदातव्या धेनुः कांस्योपदोहना ॥ हेमशृङ्गी रौप्यखुरा[5] मुक्तालांगूलभूषिता ॥ २८ ॥ वस्त्रोत्तरीया दातव्या शक्त्या द्रविणसंयुता ॥ संवत्सरेण राजा स्यान्नरः

---

१ 'वह्' इति ख० । २ 'वर्णं' इति क० । ३ 'परमं पदम्' इति क० । ४ 'रात्रि' इति ख० । ५ 'खुरै रौप्यैः' इति ख० ।

पर्वतगह्वरे ॥ २९ ॥ त्रिभिः संवत्सरैः पूर्णैर्जायते सफलं ततः ॥ तथा द्वादशभिः पूर्णै राजा भवति पार्थिवः ॥ ३० ॥ राज्यप्रदा तेऽभिहिता मयैषा शुद्धादशी पापहरा वरिष्ठा ॥ उपोष्य यां भूमितले नरेन्द्रो भवत्यजेयश्च रणेऽरिसंघैः ॥ ३१ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे राज्यप्रदद्वादशीविधिर्नाम सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥ ॥ छ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ मार्गशीर्षस्य मासस्य शुक्लपक्षाज्जनाधिप ॥ आरऽभ्याभ्यर्चयेद्देवं द्वादशीषु सदैव तु ॥ १ ॥ पक्षयोरुभयोर्नित्यं सोपवासो जितेन्द्रियः ॥ फलैः पुष्पैर्यथाकामं नैवेद्यैर्होमकर्मणा ॥ २ ॥ पूजने ब्राह्मणानां च शक्त्या दानं च पार्थिव ॥ अभीष्टनामजप्येन पूर्णात्संवत्सरान्नरः ॥ ३ ॥ तदेवाप्नोति राजेन्द्र यत्र गत्वा न शोचति ॥ अकामाः सात्त्विका देवं पूजयन्ति जनार्दनम् ॥ ४ ॥ तस्मादकामेन नरेन्द्रचन्द्र संपूजनीयो भुवनस्य गोप्ता ॥ त्यक्त्वा वणिज्यं नरदेव लोके देवेश्वरो विष्णुरुपासनीयः ॥ ५ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे कामद्वादशीवर्णनं नामाष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥ ॥ छ ॥ ॥ वज्र उवाच ॥ ॥ भगवञ्छ्रोतुमिच्छामि द्वादशीषु पृथक्पृथक् ॥ उपोष्य किं फलं लोके शुक्लपक्षे विधीयते ॥ १ ॥ अनेकजन्मसाहस्रैर्येषां पापं क्षयं गतम् ॥ अकामास्ते प्रवर्तन्ते देवदेवार्चने नराः ॥ २ ॥ मार्कण्डेय उवाच ॥ द्वादश्यां मार्गशीर्षस्य शुक्लपक्षे उपोषितः ॥ नाम्ना केशवमभ्यर्च्य वह्निष्टोमफलं लभेत् ॥ ३ ॥ नारायणं तथाभ्यर्च्य पौषे मासे जगत्पतिम् ॥ अत्यग्निष्टोममाप्नोति नात्र कार्या विचारणा ॥ ४ ॥ माघे माधवमभ्यर्च्य द्वादशाब्दफलं लभेत् ॥ गोविन्दं फाल्गुने मासि पूजयित्वा महीधर ॥ ५ ॥ अतिरात्रस्य यज्ञस्य फलं प्राप्नोत्यसंशयम् ॥ चैत्रे विष्णुमथाभ्यर्च्य वाजपेयफलं लभेत् ॥ ६ ॥ द्वादश्यां मासि वैशाखे सम्पूज्य मधुसूदनम् ॥ गोसवस्य तु यज्ञस्य फलं प्राप्नोत्यनुत्तमम् ॥ ७ ॥ ज्येष्ठे मासे तथाभ्यर्च्य देवदेवं त्रिविक्रमम् ॥ पुण्डरीकस्य यज्ञस्य फलं विन्दति मानवः ॥ ८ ॥ आषाढे वामनं देवं पूजयित्वा जगत्पतिम् ॥ क्षिप्रमेव समाप्नोति यज्ञं बहुसुवर्णकम् ॥ ९ ॥ श्रीधरं श्रावणे मासि पूजयित्वा महेश्वरम् ॥ वैष्णवस्य तु यज्ञस्य फलं विन्दत्यसंशयम् ॥ १० ॥ मासे भाद्रपदे देवं हृषीकेशं समर्चयन् ॥ अश्वमेधमवाप्नोति कुलं चैव समुद्धरेत् ॥ ११ ॥ आश्विने मासि संप्राप्ते पद्मनाभं समर्चयन् ॥ राजसूयमवाप्नोति नात्र कार्या विचारणा ॥ १२ ॥ दामोदरमथाभ्यर्च्य कार्तिके मासि यादव ॥ सर्वमेधमवाप्नोति स्वर्गलोकं च गच्छति ॥ १३ ॥ मासोक्तेन सदा नाम्ना शुक्लपक्षे ह्युपोषितः ॥ द्वादशीषु सदा कुर्या

१ 'सफलैः' इति क० 'सत्फलैः' इति ख० ।

जप्यहोमान्समाहितः ॥ १४ ॥ संवत्सरान्ते दातव्यं घृतपूर्णं च भाजनम् ॥ कांस्यस्य वैनतेयं च रुक्मपत्रनिवेशितम् ॥ १५ ॥ क्रमो
पवासतस्त्वेते प्रोक्ता यज्ञफला नृप ॥ पूर्णं संवत्सरं कृत्वा व्रतमेतन्नराधिप ॥ १६ ॥ स्वर्गलोकमवाप्नोति कुलं चैव समुद्धरेत् ॥
देवरामागणस्थेन वीणागुरुजनादिना ॥ १७ ॥ हंससारसयुक्तेन विमानेनार्कवर्चसा ॥ किङ्किणीशतघोषेण विहरत्यमरप्रभः ॥ १८ ॥
यावज्जीवं नरः कुर्याद्व्रतमेतत्समाहितः ॥ श्वेतद्वीपमवाप्नोति यत्र चन्द्रप्रभा नराः ॥ १९ ॥ चतुर्भुजा महासत्त्वा नित्यतृप्ताः सुगन्धिनः ॥
अनिष्यन्दा निराहाराः सर्वज्ञाः सर्वदर्शिनः ॥ २० ॥ तत्रोष्य कालं सुचिरं नरेन्द्र भित्त्वार्कबिम्बं सहसा प्रयाति ॥ स्थानं पुरो देववरस्य
विष्णोर्नित्यस्य तस्यानघ सर्वगम्य ॥ २१ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शुक्लपक्षद्वादशीविधिर्नामैकोनषष्ट्यधिक
शततमोऽध्यायः ॥ १५९ ॥ वज्र उवाच ॥ केवलं कृष्णपक्षस्य द्वादशीषु जनार्दनम् ॥ कदाप्रभृति धर्मज्ञ विधिना केन चार्चयेत् ॥ १ ॥
मार्कण्डेय उवाच ॥ मार्ग्यां तु समतीतायां द्वादशी या भवेन्नृप ॥ ततः प्रभृति कर्तव्यं व्रतमेवमुपोषितः ॥ २ ॥ द्वादशीषु च कृष्णासु नाम
कृष्णस्य कीर्तयेत् ॥ तेनैव नाम्ना कर्तव्यौ जपहोमौ तथैव च ॥ ३ ॥ तिलैर्निवेदनं कार्यं होमः कार्यस्तथा तिलैः ॥ पौष्यां तु समतीतायां
कृष्णा या द्वादशी भवेत् ॥ ४ ॥ तस्यां व्रतावसाने तु तिलान्दद्याद्द्विजातिषु ॥ सुवर्णं च महीपाल रक्तवस्त्रं तथैव च ॥ ५ ॥ सम्वत्सरमिदं
कृत्वा व्रतं मनुजपुङ्गव ॥ तिर्यग्योनिं न चाप्नोति स्वर्गलोकं च गच्छति ॥ ६ ॥ यावज्जीवं व्रतमिदं यः करोति समाहितः ॥ न स दुःखं
समाप्नोति नरकं न नराधिप ॥ ७ ॥ यत्र वैतरणी दुर्गा क्षुरधाराश्च पर्वताः ॥ पापानां यातना यत्र तत्रासौ न गमिष्यति ॥ ८ ॥ यस्यां
गणाः भीमबला महोग्रा दंष्ट्राकराला विकटोग्रवेषाः ॥ विद्रावणाः पापकृतां नराणां न येन तस्या नृप यन्ति मार्गम् ॥ ९ ॥ इति
श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे प्रतिकृष्णपक्षद्वादशीविधिर्नाम षष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥ वज्र उवाच ॥ उपवासा
समर्थानां शुक्लपक्षे द्विजोत्तम ॥ एका या द्वादशी पुण्या तां वदस्व ममानघ ॥१॥ मार्कण्डेय उवाच ॥ मासि भाद्रपदे शुक्ला द्वादशी श्रवणान्विता॥
महती द्वादशी ज्ञेया उपवासे महाफला ॥ २ ॥ सङ्गमे सारितोः पुण्ये द्वादशीं तामुपोषितः ॥ अयत्नादेवमाप्नोति द्वादशद्वादशीफलम् ॥ ३ ॥
बुधश्रवणसंयुक्ता सैव चेद्द्वादशी भवेत् ॥ अत्यन्तमहती यस्यां सर्वं कृतमथाक्षयम् ॥ ४ ॥ द्वादशी श्रवणोपेता यदा भवति पार्थिव ॥

१ 'प्यादयेत्' इति ख० ।

सङ्गमे तु तदा स्नात्वा सत्तीर्थस्नानजं फलम् ॥५॥ सोपवासः समाप्नोति नात्र कार्या विचारणा ॥ वारिधानीं तदा दत्त्वा जलपूर्णां द्विजातये ॥६॥ छन्नां वस्त्रयुतां राजञ्छत्रोपानहसंयुताम् ॥ स्वर्गलोकमवाप्नोति कुलमुद्धरति स्वकम् ॥ ७ ॥ स्वर्गं समासाद्य चिरं च भोगान्भुक्त्वा महेन्द्रोपम देवतुल्यान् ॥ मानुष्यमासाद्य भवत्यरोगो धनान्वितो धर्मपरो मनस्वी ॥८॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसम्वादे श्रावणीद्वादशीप्रशंसावर्णनं नामैकषष्ट्यधिकशततमोऽध्यायः ॥१६१॥ मार्कण्डेय उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम् ॥ महत्यरण्ये यद्वृत्तं भूमिपाल पुरातनम् ॥१॥ देशा दाशेरका नाम तेषां भागे तु पश्चिमे ॥ अस्ति राजन्मरुर्देशः सर्वसत्त्वभयङ्करः ॥२॥ सुतप्तसिकता भूमिर्यत्र दुष्टमहोरगा ॥ स्वल्पच्छायासमाकीर्णा मृतप्राणिसमाकुला॥३॥ शमीखदिरकुह्लासकरीराः पैलुभिः सह ॥ तत्र भीमा द्रुमगणाः कण्टकैरावृताः समम्॥४॥ चण्डप्राणिगणाकीर्णा तत्र भूमिस्तथा क्वचित् ॥ अत्यन्ततापविषमा निस्तृणा परुषोपला ॥ ५ ॥ नाश्रयस्तत्र नाहारो ज्वलिताग्निसमे भृशम् ॥ तथापि तत्र जीवन्ति जनाः कर्मनिबन्धनात् ॥ ६ ॥ नोदकं नोदकधरा राजंस्तत्र बलाहकाः ॥ कदाचिदपि दृश्यन्ते देशे निरयसन्निभे ॥ ७ ॥ तत्र पक्षान्तरगतैस्तृषितैः शिशुभिः सह ॥ उत्क्रान्तजीविता राजन्दृश्यन्तेऽथ विहङ्गमाः ॥ ८ ॥ उत्प्लुत्योत्प्लुत्य सहसा मृगाः सैकतमालयात् ॥ सैकतेष्वेव नश्यन्ति जले सैकतसेतुवत् ॥९॥ तस्मिंस्तथाविधे देशे कश्चिद्दैववशाद्वणिक् ॥ वनमातपविभ्रष्टः प्रविष्टस्तु परिभ्रमन् ॥१०॥ स तत्र ददृशे प्रेतान्क्षुत्तृष्णाव्याकुलेन्द्रियान् ॥ उत्कचान्मलिनान्रूक्षान्निर्मांसान्भीमदर्शनान् ॥ ११ ॥ स्नायुबद्धस्थिराकायान्धावमानानितस्ततः ॥ कश्चित्समांसं तत्रैकं प्रेतस्कन्धगतं तदा ॥ १२ ॥ ददर्श बहुभिः प्रेतैः समन्तात्परिवारितम् ॥ तत्स्कन्धादपरं स्कंधं नीयमानं क्रमात्क्रमात् ॥१३॥ प्रेतोऽपि दृष्ट्वा तां घोरामटवीं नरमागतम् ॥ प्रेतस्कन्धान्महीं गत्वा तस्यान्तिकमुपागमत् ॥ १४ ॥ सोऽभिवाद्य वणिकश्रेष्ठमिदं वचनमब्रवीत् ॥ अस्मिन्घोरे महारण्ये प्रवेशो भवतः कथम् ॥ १५ ॥ तमुवाच वणिग्धीमान्सार्थभ्रष्टस्य मे वने ॥ प्रवेशो दैवयोगेन पूर्वकर्मकृतेन तु ॥ १६ ॥ तृष्णा मे बाधतेऽत्यर्थं क्षुत्क्षामश्च भृशं तथा ॥ प्राणाः कण्ठमनुप्राप्ता वदनं भ्रश्यते च मे ॥ १७ ॥ अत्रोपायं न पश्यामि म्रियेऽहं येन केनचित् ॥ इत्येवमुक्तः प्रेतस्तु वणिजं वाक्यमब्रवीत् ॥ १८ ॥ पुन्नागमिममाश्रित्य प्रतीक्षस्व क्षणं मम ॥ कृतातिथ्यो मया यावद्गमिष्यसि यथासुखम् ॥ १९ ॥ एवमुक्तस्तदा चक्रे स वणिक्तृष्णयान्वितः ॥ मध्याह्नसमये प्राप्ते प्रेतस्तं देशमागमत् ॥ २० ॥ पुन्नागवृक्षाच्छीतोदां वारिधानीं मनोरमाम् ॥ दध्योदनसुयुक्तेन वर्धमानेन संयुताम् ॥ २१ ॥ अवतार्य ततस्त्वग्रं प्रददाति च यत्तदा ॥ ततोऽग्रमात्रेण वणिक्परां

तृप्तिमुपागतः ॥ २२ ॥ वितृष्णो विज्वरश्चैवं क्षणेन समपद्यत ॥ ततः प्रेतेषु सर्वेषु क्रमाद्भागं तदा ददौ ॥ २३ ॥ दध्योदनात्सपानीयात्तेऽपि तृप्तिं परां ययुः ॥ अथ सन्तर्पयित्वा तु प्रेतांस्तान्स तु सर्वशः ॥ २४ ॥ प्रेताधिपः स बुभुजे पश्चादन्नं यथासुखम् ॥ तस्य भुक्तवतस्त्वन्नं पानीयं च क्षयं ययौ ॥ २५ ॥ प्रेताधिपं ततस्तृप्तं वणिग्वचनमब्रवीत् ॥ आश्चर्यमेतत्परमं वनेऽस्मिन्प्रतिभाति मे ॥ २६ ॥ अन्नपानस्य सम्प्राप्तिः परमस्य कुतस्तव ॥ स्तोकेन च तथान्नेन बिभर्षि च बहून्कथम् ॥ २७ ॥ तृप्ता अपि कथं सर्वे निर्मांसा भिन्नकुक्षयः ॥ कश्चित्त्वमस्यां घोरायामटव्यां तु कृतालयः ॥ २८ ॥ एतन्मे संशयं छिन्धि परं कौतूहलं हि मे ॥ एवमुक्तः स वणिजा प्रेतो वचनमब्रवीत् ॥ २९ ॥ वाणिज्यसक्तस्य पुरा कालोऽतीतो ममानघ ॥ शाकले नगरे रम्ये नास्तिकस्य दुरात्मनः ॥ ३० ॥ धनलोभान्मया तत्र न कदाचिदपि प्रभो ॥ दत्तासीद्भिक्षवे भिक्षा कृपणेन कथञ्चन ॥ ३१ ॥ प्रातिवेश्यश्च[1] तत्रासीद्ब्राह्मणो गुणवान्मम ॥ श्रवणद्वादशीयोगे मासि भाद्रपदे तदा ॥ ३२ ॥ स कदाचिन्मया सार्धं तौषीं नाम नदीं ययौ॥तस्याश्च सङ्गमः पुण्यो यत्रासीच्चन्द्रभागया ॥३३॥ चन्द्रभागा सरिच्छ्रेष्ठा यत्र शीतामलोदका ॥ महादेवजटाजूटे गङ्गा निपतिता पुरा ॥३४॥चन्द्रेण भागतो न्यस्ता चन्द्रभागा स्मृता ततः ॥ तत्कालतप्तसलिला तौषी तत्रार्कनन्दिनी ॥ ३५ ॥ शीतोष्णे चोदके तस्मिन्संगमे सुमनोहरे॥तं स देशं समासाद्य प्रातिवेश्यमसौ द्विजः॥३६॥श्रवणद्वादशीयोगे स्नानार्चन उपोषितः॥चान्द्रभागस्य तोयस्य वारिधानी नवा दृढा ॥३७॥ दध्योदनयुतैः सार्धं सम्पूर्णैर्वर्धमानकैः ॥ छत्रैश्चोपानहै रम्यैर्वस्त्रैश्च विविधैर्युता॥३८॥प्रददौ विप्रमुख्येभ्यो रहस्यज्ञो महीपतिः॥चित्तसंरक्षणार्थाय तस्यापि च तदा मया ॥३९॥सोपवासेन दत्तैका वारधानी नवा दृढा॥चान्द्रभागस्य तोयस्य दध्योदनयुता तदा॥४०॥गत्वा गृहमनुप्राप्य ततः कालेन केनचित्॥पञ्चत्वमहमासाद्य नास्तिक्यात्प्रेततां गतः॥४१॥अस्यामटव्यां घोरायां यो वा ह्यकुशलस्तदा ॥ श्रवणद्वादशीयोगे दत्ता यासौ मयानघ॥ ॥४२॥दध्योदनयुतारम्या वारिधानी नवा दृढा॥सेयं मध्याह्नसमये दिवसे दिवसे मम॥४३॥ उपतिष्ठेत्सदैवेह यथा दृष्टा त्वयानघ ॥ ब्रह्मस्वहारिणस्त्वेते पापाः प्रेतत्वमागताः ॥४४॥ परदाररताः केचित्स्वामिद्रोहरताः परे॥ मित्रद्रोहरताः केचिद्देशेऽस्मिन्भृशदारुणे॥४५॥ममानुयानं कुर्वन्ति अन्नपानकृतेऽनघ ॥ अक्षयो भगवान्विष्णुः परमात्मा सनातनः ॥४६॥ तमुद्दिश्य तु यद्दत्तं तदक्षय्यं प्रकीर्तितम्॥ अक्षय्येन तथान्नेन तृप्ता अपि हि मानद ॥ ४७ ॥ प्रेतभावेन दौर्बल्यं न विमुञ्चन्ति कर्हिचित् ॥ अहं च पूजयित्वा त्वामतिथिं समुपस्थितम् ॥ ४८ ॥ प्रेतभावाद्विनिर्मुक्तो यास्यामि

१ 'प्रतिवेश्यश्च' इति क० । किंचात्र प्रकरणे सर्वत्रैव कपुस्तके प्रातिवेश्यस्थाने प्रतिवेश इत्येव लभ्यते ।

परमां गतिम् ॥ मया विहीनाः प्रेतास्तु वनेऽस्मिन्भृशदारुणे ॥ ४९ ॥ पीडामनुभविष्यन्ति दारुणां कर्मयोगजाम् ॥ एतषां त्व महाभाग मदनुग्रह
काम्यया ॥ ५० ॥ प्रत्येकं गोत्रनामानि गृह्णीष्व लिखितेन च ॥ अस्ति कक्ष्यागतैवैषा तव सा पुस्तिका शुभा ॥ ५१ ॥ हिमवन्तमथासाद्य तत्र
त्वं लप्स्यसे निधिम् ॥ गयाशीर्षे ततो गत्वा श्राद्धं कुरु महामते ॥५२॥ एकैकं त्वमथोद्दिश्य प्रेतं प्रेतं यथासुखम् ॥ ततस्तु ते विमोक्ष्यन्ति प्रेत
भावमसंशयम् ॥ ५३ ॥ इत्येवं स वदन्नेव तप्तजाम्बूनदप्रभः ॥ विमानवरमास्थाय स्वर्गलोकं ततो गतः ॥ ५४ ॥ स्वर्चिते प्रेतनाथे तु प्रेतानां स
वणिक्क्रमात् ॥ नामगोत्राणि सङ्गृह्य प्रयातः स हिमालयम् ॥ ५५ ॥ तत्र प्राप्य निधिं गत्वा निक्षिप्य च तथा गृहे ॥ धनं किञ्चिदुपादाय गया
शीर्षं ततो ययौ ॥ ५६ ॥ प्रेतानां क्रमशस्तत्र चक्रे श्राद्धं दिनेदिने ॥ यस्ययस्य यदा श्राद्धं करोति स महान्वणिक् ॥ ५७ ॥ सस तस्य तदा
स्वप्ने दर्शयत्यात्मनस्तनुम् ॥ ब्रवीति च महाभाग प्रसादेन तवानघ ॥ ५८ ॥ प्रेतभावो मया त्यक्तः प्राप्तोऽस्मि त्रिदिवं ध्रुवम् ॥ कृत्वा स धन
दानेन प्रेतानां निष्कृतिं वणिक् ॥ ५९ ॥ जगाम स्वगृहं तत्र मासि भाद्रपदे तदा ॥ श्रवणद्वादशीयोगे पूजयित्वा जनार्दनम् ॥ ६० ॥ धनं च
दत्त्वा विप्रेभ्यः सोपवासो जितेन्द्रियः ॥ पुण्येषु सततं राजन्नदीनां सङ्गमेषु च ॥६१॥ गङ्गासरय्वोर्गङ्गायाः शोणस्य च महामतिः ॥ इक्षुमत्याश्च
गङ्गाया गङ्गायमुनयोस्तथा ॥ ६२ ॥ गोमत्याश्च सरय्वाश्च कौशिकीगण्डक्योस्तथा ॥ विपाशया देवह्रदा यत्र योगं प्रपद्यते ॥ ६३ ॥
विपाशा च तथा योगं यत्र याति शतद्रुणा ॥ इरावती तथा योगं यत्र व्रजति सिन्धुना ॥ ६४ ॥ चन्द्रभागा च व्रजति यत्र योगं वितस्तया ॥
महासिन्धुश्च संयोगं यत्र याति वितस्तया ॥ ६५ ॥ प्रत्यब्दं यावदेतेषु संगमेषु महावणिक् ॥ करोति विधिवद्दानं यावद्दिष्टान्तमागतः ॥ ६६ ॥
अवाप परमं स्थानं दुर्लभं यत्तु जन्तुभिः ॥ यत्र कामफला वृक्षा नद्यः पायसकर्दमाः ॥ ६७ ॥ शीतलामलपानीयाः पुष्करिण्यो मनोहराः ॥
सुवर्णसिकता राजन्मणिसोपानभूषिताः ॥६८॥ आनन्त्याय स संप्राप्तो देशं तं भूरिदक्षिणः ॥ तं देशमासाद्य वणिङ्महात्मा सुतप्तजाम्बूनदभूपि
ताङ्गः ॥ कल्पं समग्रं मुदितो यदात्मा रेमे स रामाभियुतः कृतात्मा ॥ ६९ ॥ विमानैरप्सरोभिश्च सिद्धगन्धर्वसेवितः ॥ विष्णुलोकमवाप्नोति याव
दाभूतसंप्लवम्॥७०॥ राजसूयादिभिर्यज्ञैर्यत्फलं समवाप्यते ॥ श्रवणद्वादशीं कृत्वा तत्फलं लभते नरः॥७१॥इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्क
ण्डेयवज्रसंवादे पिशाचमोक्षणे श्रवणद्वादशीमाहात्म्यवर्णनं नाम द्विषष्ट्यधिकशततमोऽध्यायः॥१६२॥वज्र उवाच॥ एकामुपोष्य कृष्णां यां द्वादशीं

१ 'चीर्त्वा' इति क० 'प्राप्य' इति ख० ।

विधिना नरः ॥ महत्फलमवाप्नोति तां समाचक्ष्व भार्गव ॥ १ ॥ मार्कण्डेय उवाच ॥ पौष्यान्तु समतीतायां श्रवणेन तु संयुता ॥ द्वादशी या भवेत्कृष्णा प्रोक्ता सा तिलद्वादशी ॥ २ ॥ तिलैः स्नानं तिलैर्होमं नैवेद्यं तिलमोदकैः ॥ दीपाश्च तिलतैलेन तथा देयं तिलोदकम् ॥ ३ ॥ तिलाश्च देया विप्रेभ्यस्तस्मिन्नहनि पार्थिव ॥ उपवासदिने राजन्होतव्याश्च तथा तिलाः ॥ ४ ॥ उपोषितेनापरेऽह्नि होतव्याश्च विशेषतः ॥ इन्धनं च प्रदातव्यं ब्राह्मणेभ्यस्तथाऽनघ ॥५॥ तिलप्रस्थं तदा हुत्वा सोपवासो जितेन्द्रियः ॥ न दुर्गतिमवाप्नोति नात्र कार्या विचारणा ॥६ ॥ तद्विष्णोः परमं पदं होममन्त्रः प्रकीर्तितः ॥ पौरुषं च तथा सूक्तं श्रीसूक्तेन च संयुतम्॥७॥होमः कार्योऽथ राजेन्द्र सावित्र्या च यतात्मना ॥ एतत्प्रोक्तं द्विजातीनां स्त्रीशूद्रेषु तथा शृणु ॥ ८ ॥ द्वादशाष्टाक्षरो मंत्रस्तेषां प्रोक्तो महात्मनाम् ॥ हितौ तौ च द्विजातीनां मन्त्रश्रेष्ठौ नराधिप ॥ ९ ॥ ताभ्यामभ्यधिको मन्त्रो विद्यते नेह कुत्रचित् ॥ वज्र उवाच ॥ द्वादशाष्टाक्षरौ मन्त्रौ कथयस्व ममानघ ॥ १० ॥ पुण्यौ पवित्रौ मङ्गल्यौ सर्वपापप्रणाशनौ ॥ मार्कण्डेय उवाच ॥ ॐ नमो भगवते वासुदेवाय॥ ॐ नमो नारायणाय ॥ ११॥ एतौ मया ते कथितौ पवित्रौ मन्त्रोत्तमौ पापहरौ वरेण्यौ ॥ पारायणौ सर्वतपस्विनां च रहस्यभूतौ भुवनेषु नित्यम् ॥ १२ ॥ यथा तिथिस्ते श्रवणेन युक्ता माघस्य मासस्य तथा तवोक्ता ॥ कार्या तथेयं नृपते विशेषाद्योगे पवित्रे सरितोर्द्वयस्य ॥ १३ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे तिलद्वादशीप्रशंसावर्णनं नाम त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥ मार्कण्डेय उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम् ॥ मागधेषु तु यद्वृत्तं तच्छृणुष्व नराधिप ॥ १ ॥ बभूव मागधो राजा चण्डवेग इतिश्रुतः ॥ तस्यासीद्रूपसंपन्ना भार्या नयनसुन्दरी ॥ २ ॥ सर्वधर्मान्परित्यज्य प्रतिसंवत्सरं तु सा ॥ तिलान्होमयते विप्रैर्जुहोति च तथा स्वयम् ॥ ३ ॥ श्रवणद्वादशीयोगे माघे मासि हुताशने ॥ देवस्य चैव नैवेद्यं करोति तिलमोदकैः ॥ ४ ॥ अर्चनेन च वासोभिः पूजयत्यपि माधवम् ॥ महारञ्जितरक्तानि वासांसि विविधानि च ॥ ५ ॥ ब्राह्मणीनां च गेहेषु विसर्जयति तत्परा ॥ महावर्तिप्रदानं च विधत्ते केशवालये ॥ ६ ॥ तां कदाचित्सुखासीनां ब्राह्मणीं तु वसन्तिका ॥ पप्रच्छ सखिभावेन रहस्यं निर्जने स्थिता ॥ ७ ॥ वसन्तिकोवाच ॥ सर्वधर्मान्परित्यज्य माघे मासि शुभानने ॥ द्वादश्यां कृष्णपक्षस्य कस्मादर्चयसे हरिम् ॥ ८ ॥ कस्मात्तथा बहुतिलं हावयस्यनले तथा ॥ एतन्मे संशयं छिन्धि रहस्यं चेन्न ते शुभे ॥ ९ ॥ नयनसुन्दर्युवाच ॥ रहस्यमेतत्परमं न रहस्यं तथा त्वयि ॥ त्वं मे सखीश्वरी प्राणस्त्वं मे प्राणधनेश्वरी ॥ १० ॥ अस्ति वैतस्तिको नाम देशः परमधार्मिकः ॥ तत्र ग्रामवरे चासीद्वसतिर्मे सुशोभना ॥ ११ ॥

चण्डवेगश्च विप्रोऽभूद्भर्ता मे पूर्वजन्मनि ॥ नास्तिको निरनुक्रोशस्तर्कशास्त्ररतः सदा ॥१२॥ तत्रैव विषये राजा बभूव दधिवाहनः ॥ तस्य भार्या
वयस्या मे बभूव कमला शुभा ॥ १३ ॥ सा कदाचिन्मामुवाच रहस्यं वरवर्णिनी ॥ नारी भर्तृकृतादर्धं पुण्यं प्राप्नोति सुन्दरी ॥ १४ ॥ नास्ति
स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषितम् ॥ पतिं शुश्रूषते या तु तेन स्वर्गे महीयते ॥ १५ ॥ कर्तव्यं योषिता पुण्यं पृथग्वापि तदिच्छया ॥ पति
स्ते नास्तिको भद्रे किञ्चिन्नाचरते शुभम् ॥ १६ ॥ न चाचरसि धर्मं त्वं तथा च तदनुज्ञया ॥ का गतिः परलोके ते भविष्यति शुभानने ॥१७॥
इह यत्क्रियते कर्म प्रेत्य तत्रोपभुज्यते ॥ येनोप्तं फलकाले तु स एवाश्नाति भामिनि ॥ १८ ॥ मानुष्यं दुर्लभं प्राप्य विद्युत्सम्पातचञ्चलम् ॥
नाचरन्ति शुभं ये तु तेषां जन्म निरर्थकम् ॥ १९ ॥ कदाचिदपि वामोरु योनिष्वथ परिभ्रमन् ॥ मानुष्यं नाम जायेत यत्रायत्तं शुभाशुभम् ॥
॥ २० ॥ चण्डालत्वेऽपि मानुष्यं सर्वथा सखि दुर्लभम् ॥ आत्मा शक्यस्तया त्रातुं मानुष्यान्नान्यतः शुभे ॥ २१ ॥ तवोपरि तथा जाता सखी
भावेन मे[1]कृपा ॥ कदर्य्यस्यास्य भार्या त्वं सुस्वभावा पतिव्रता ॥ २२ ॥ तत्र तेऽनुग्रहं किञ्चित्कारिष्यामि निबोध तत् ॥ हरस्य दयिता भार्या
शैलेन्द्रतनया उमा ॥ २३ ॥ विस्तारितमहा[2]कूला सा वितस्ता महा नदी ॥ अवृत्तिकर्षितः पापं कृत्वैव ऋतुपञ्चकम् ॥ २४ ॥ स्नानेनैकेन सकलं
शैशिरेण व्यपोहति ॥ यस्यांयस्यां तिथौ स्नातः स्वर्गमाप्नोत्यसंशयम् ॥ २५ ॥ तस्यां सम्वत्सरं स्नात्वा मोक्षोपायं तु विन्दति ॥ या च सुस्वा
दुसलिला या च पापक्षयङ्करी ॥ २६ ॥ तस्यास्तीरे मया नित्यं प्रति सम्वत्सरं शुभे ॥ उपोष्य माघकृष्णस्य द्वादश्यां श्रवणे तथा ॥ २७ ॥
पूजितो भगवान्विष्णुर्ब्राह्मणाश्च हुताशनः ॥ तिलैस्तस्मात्तु ते ख्यातं ब्राह्ममेतद्व्रतं मम ॥२८ ॥ तस्मात्स्कन्नं तिलं यच्च यदग्नौ पतितं न च ॥ ततः
पुण्यफलं सर्वं त्वमाप्नुहि वरानने ॥ २९ ॥ इत्येवमुक्तया गत्वा भर्ता पृष्टस्तदा मया ॥ हसता तेन चास्म्युक्ता गच्छ गृह्णीष्व तत्फलम् ॥ ३० ॥
स्वयं कृत्वा शुभं कर्म कमला सा सखी मम ॥ सह भर्त्रा विशालाक्षि विष्णुलोकमितो गता ॥ ३१ ॥ तल्लोकमक्षयं तस्याः श्रुतं वैवस्वतान्मया ॥
तस्माद्दृष्टफलं भद्रे करोमि तिलद्वादशीम् ॥ ३२ ॥ एतत्ते सर्वमाख्यातं यन्मां पृच्छसि सुन्दरि ॥ मार्कण्डेय उवाच ॥ एतच्छ्रुत्वा शुभं वाक्यं
ब्राह्मण्यपि वसन्तिका ॥ ३३ ॥ श्रवणद्वादशीयोगे पूजयामास केशवम् ॥ माघकृष्णे महाभाग तिलैर्नित्यमतन्द्रिता ॥ ३४ ॥ पूजयित्वापि सा ॥१०७॥
देवं श्वेतद्वीपमितो गता ॥ सापि राज्ञो महाभागा तथा नयनसुन्दरी ॥ ३५ ॥ अमलं स्थानमासाद्य विरराज शशिप्रभा ॥ तस्मात्सर्वप्रयत्नेन तदा

१ 'रूपा' इति ख० । २ 'कूटा' इति क० ।

पूज्यो जनार्दनः ॥ ३६ ॥ तिलैर्नित्यं महाभाग होतव्याश्च तथा तिलाः ॥ तिलाश्च देया विप्रेभ्यस्तस्मिन्नहनि पार्थिव ॥ ३७ ॥ एकैकस्मात्तिला द्राजंस्तिलबीजोद्भवे यथा ॥ सुकृष्टक्षेत्रजाद्दृष्टं देवे कालप्रवर्षिणि ॥ ३८ ॥ एकैकस्मात्तिलात्तद्वत्फलमक्षय्यमश्नुते ॥ स्वर्लोके विष्णुलोके वा मानु ष्ये यदि वा नृप ॥ अक्षय्यं फलमाप्नोति एकैकस्मात्तिलात्तिलात् ॥ ३९ ॥ तस्मात्प्रयत्नेन नरेन्द्रचन्द्र तस्यां समभ्यर्चय वासुदेवम् ॥ उपोषितः प्रीतमना यथावत्त्राणं स देवः प्रथितो नराणाम् ॥ ४० ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसम्वादे चण्डवेगोपाख्याने तिलद्वाद शीमाहात्म्यवर्णनं नाम चतुःषष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥ ॥ वज्र उवाच ॥ होतव्ये विष्णुदैवत्ये सावित्री मे त्वयोदिता ॥ होमकर्मणि सन्देहो महान्मे भृगुनन्दन ॥ १ ॥ सविता दैवतं तस्याः सावित्रीत्युच्यते ततः ॥ तया कथं तु कर्तव्यं होमकर्म च वैष्णवम् ॥ २ ॥ प्रभावमार्षेश्च तथा तस्यास्त्वं मम कीर्तय ॥ वेदमाता तु सा प्रोक्ता सर्वपापप्रणाशिनी ॥३॥ मार्कण्डेय उवाच ॥ रविमध्ये स्थितः सोमः सोममध्ये हुताशनः ॥ तेजोमध्ये स्थितं सत्त्वं सत्त्वमध्ये स्थितोऽच्युतः ॥ ४ ॥ अंगुष्ठमात्रः पुरुषः पूर्वमेव मयेरितः ॥ शङ्करेण तदा दृष्टः प्रभवः सर्वतेजसाम् ॥ ५ ॥ स विष्णुर्भुवनाधारो यस्येदं सकलं जगत् ॥ वरेण्यं तच्च सवितुर्भर्गवाच्यं तु योगिनाम् ॥६॥ ध्येयं परं तदुद्दिष्टं बहिरन्तश्च यादव ॥ धीशब्दवाच्यं ब्रह्माणं प्रचोदयति यः सदा ॥ ७ ॥ सृष्ट्यर्थं भगवान्विष्णुः सविता स प्रकीर्तितः ॥ सर्वलोकप्रसवनात्सविता स तु कीर्त्यते ॥ ८ ॥ यतस्तद्देवदैव त्या सावित्रीत्युच्यते ततः ॥ गानाद्वा त्रायते यस्माद्गायत्री वा तदा स्मृता ॥ ९ ॥ एतस्मात्कारणाद्राजन्सावित्री कीर्तिता मया ॥ तव धर्मभृतां श्रेष्ठ नित्यं वैष्णवकर्मसु ॥ १० ॥ सव्याहृतीकप्रणवां[1] गायत्रीं शिरसा सह ॥ ये जपन्ति सदा तेषां न भयं विद्यते क्वचित् ॥ ११ ॥ दश कृत्वः प्रजप्ता सा रात्र्यह्ना यत्कृतं लघु ॥ तत्पापं प्रणुदत्याशु नात्र कार्या विचारणा ॥ १२ ॥ शतं जप्ता तु सा देवी पापोपशमना स्मृता ॥ सहस्रजप्ता सा देवी चोपपातकनाशिनी ॥ १३ ॥ लक्षजापेन च तथा महापातकनाशिनी ॥ १३ ॥ कोटिजाप्येन राजेन्द्र यदिच्छति तदाप्नुयात् ॥ १४ ॥ विद्याधरत्वं यक्षत्वं गन्धर्वत्वमथापि वा ॥ देवत्वमथवा राज्यं भूर्लोके हतकण्टकम् ॥ १५ ॥ कोटिसाहस्रजाप्येन निष्कामः पुरुषोत्तम ॥ विधिना राजशार्दूल प्राप्नोति परमं पदम् ॥ १६ ॥ यथा कथञ्चिज्जप्तैषा देवी परमपावनी ॥ सर्वकामप्रदा प्रोक्ता विधिना किम्पुनर्नृप ॥ १७ ॥ ॥ वज्र उवाच ॥ विधिना केन जप्तव्या गायत्री पापनाशिनी ॥ महापवित्रा परमा सर्वकल्याणकारिणी ॥ १८ ॥ मार्कण्डेय उवाच ॥ कुश

१ 'सव्याहृत्येकप्रणवाम्' इति ख० ।

शय्यां निविष्टस्तु कुशपाणिर्जितेन्द्रियः ॥ अर्कमध्यगतं ध्यायेत्पुरुषं तं महाद्युतिम् ॥ १९ ॥ अथवार्के महीपाल बहिः स्नातस्त्वतन्द्रितः ॥
अनन्यचित्तो मेधावी पूर्वाह्णे तु विशेषतः ॥ २० ॥ भैक्ष्ययावकशाकाशी पयोमूलाशनोऽथवा ॥ फलपुष्पाशनो वापि नक्तं वापि हविष्य
भुक् ॥ २१ ॥ अनेन विधिना जप्यं यः करोति महीपते ॥ स याति परमं स्थानं वायुभूतः खमूर्तिमान् ॥ २२ ॥ अकामः कामकामस्तु
काममाप्नोत्यभीप्सितम् ॥ सव्याहृतीकप्रणवाः प्राणायामास्तु षोडश ॥ २३ ॥ अपि भ्रूणहणं मासात्पुनन्त्यहरहः कृताः ॥ सव्याहृतीकप्रणवां
गायत्रीं शिरसा सह ॥ २४ ॥ त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥ प्राणायामत्रयं कार्यं कल्यमुत्थाय वै द्विजः ॥ २५ ॥ अहोरात्रकृता
त्पापात्तत्क्षणादेव मुच्यते ॥ सर्वदोषहरं प्रोक्तं प्राणायामं द्विजन्मनाम् ॥ २६ ॥ ततस्त्वभ्यधिकं नास्ति राजन्परमपावनम् ॥ प्राणसंधारणं मासं
कुशाग्रच्युतबिन्दुना ॥ २७ ॥ यः कुर्यादम्भसां पानं प्राणायामं तु तत्समम् ॥ निरोधाज्जायते वायुस्तस्मादग्निस्ततो जलम् ॥ २८ ॥ त्रिभिः
शरीरं सकलं प्राणायामैश्च शुध्यति ॥ आकेशाग्रान्नखाग्राच्च तपस्तप्येत्स उत्तमम् ॥ २९ ॥ आत्मानं शोधयेद्यस्तु पाणायामैः पुनःपुनः ॥
श्रावण्यां पौर्णमास्यां तु सोपवासो जितेन्द्रियः ॥ ३० ॥ प्राणायामशतं कृत्वा मुच्यते सर्वकिल्बिषैः ॥ अन्तर्जले त्रिरावर्त्य गायत्रीं प्रयतो
जपन् ॥ ३१ ॥ मुच्यते पातकैः सर्वैर्यदि न ब्रह्महा भवेत् ॥ नास्ति सत्यात्परो धर्मो नास्ति कृष्णसमा गतिः ॥ ३२ ॥ गायत्र्याश्च परं नास्ति
दिवि चेह च पावनम् ॥ हुता च वरदा देवी सर्वकामफलप्रदा ॥ ३३ ॥ गायत्र्याः सुतिलैर्होमः सर्वपापप्रणाशनः ॥ शान्तिकामो यवैः कुर्या
दायुष्कामो घृतेन च ॥ ३४ ॥ कर्मणां सिद्धिकामस्तु कुर्यात्सिद्धार्थकैर्नरः ॥ ब्रह्मवर्चसकामस्तु पयसा स समाचरेत् ॥ ३५ ॥ पुत्रकामस्तथा
दध्ना धान्यकामस्तु शालिभिः ॥ क्षीरवृक्षसमिद्भिश्च ग्रहपीडाप्रशान्तये ॥ ३६ ॥ धनकामस्तथा बिल्वैः श्रीकामः कमलैस्तथा ॥ आरोग्यकामः
क्षीराक्तैः कुर्याद्दूर्वाङ्कुरैः शुभैः ॥ ३७ ॥ देशोपसर्गे संप्राप्ते तदेव च विधीयते ॥ गुग्गुलोर्गुलिकाभिस्तु कृत्वा होममतन्द्रितः ॥ ३८ ॥ सौभाग्यं
महदाप्नोति नात्र कार्या विचारणा ॥ पायसेन तथा हुत्वा विद्यां समधिगच्छति ॥ येनयेन तु कामेन लक्षहोमं समाचरेत् ॥ ३९ ॥ तदेव
काममाप्नोति नात्र कार्या विचारणा ॥ कृच्छ्रेण शुद्धिमुत्पाद्य प्राणायामशतेन च ॥ ४० ॥ अन्तर्जलेन वा जप्त्वा स्नातो नित्यमतन्द्रितः ॥ ॥१०८॥
प्राणायामांस्ततः कृत्वा विधिनैव स षोडश ॥ ४१ ॥ पूर्वाह्णे जुहुयाद्वह्नौ सुसमिद्धे यथाविधि ॥ भैक्ष्ययावकशाकाशी फलमूलाशनोऽथवा ॥
॥ ४२ ॥ क्षीरसक्तुघृताहारी भवेदथ विचक्षणः ॥ आहाराणां यथोक्तानामेकाहारं समाश्रयेत् ॥ ४३ ॥ यावत्समाप्तिर्भवति लक्षहोमस्य पार्थिव ॥

लक्षहोमावसाने तु ब्राह्मणानां तु दक्षिणा ॥ ४४ ॥ देया भवति राजेन्द्र गावो वस्त्राणि काञ्चनम् ॥ सर्वोत्पातसमुत्पत्तौ ब्राह्मणैरनुपूजितैः ॥ ४५ ॥ पञ्चभिर्दशभिर्वापि लक्षहोमं समाचरेत् ॥ असङ्कीर्णैस्तथा हारैर्नृपतिस्तत्प्रशान्तये ॥ ४६ ॥ नास्ति लोके स उत्पातो यो ह्यनेन न शाम्यति ॥ मङ्गलं परमं नास्ति यत्तस्मादतिरिच्यते ॥ ४७ ॥ कोटिहोमं तु यो राजा कारयेत्पूर्ववद्द्विजैः ॥ न तस्य शत्रवः सङ्ख्ये जातु तिष्ठन्ति कर्हिचित् ॥ ४८ ॥ न तस्य मरणं देशे न व्याधिर्जायते तथा ॥ अतिवृष्टिरनावृष्टिर्मूषकाः शलभाः शुकाः ॥ ४९ ॥ राक्षसाश्च प्रशाम्यन्ति सर्वास्तत्र तथेतयः ॥ रसवन्ति च तोयानि सस्यानि स्वादुवन्ति च ॥ ५० ॥ जायन्ते तस्य देशे तु धर्मिष्ठश्च जनो भवेत् ॥ कोटिहोमे तु वरयेद्ब्राह्मणान्विंशतीन्नृप ॥ ५१ ॥ शतं वाथ सहस्रं वा य इच्छेद्भूतिमात्मनः ॥ कोटिहोमं स्वयं यस्तु कुर्याद्ब्राह्मणसत्तमः ॥ ५२ ॥ क्षत्रियो वाथवा वैश्यस्तस्य पुण्यफलं महत् ॥ यद्यदिच्छति कामानां तत्तदाप्नोत्यसंशयम् ॥ ५३ ॥ सशरीरोऽपि चेद्गन्तुं दिवमिच्छेत्तदाप्नुयात् ॥ सावित्री परमा देवी सावित्री पावनी परम् ॥ ५४ ॥ सर्वकामप्रदा देवी सावित्री कथिता तथा ॥ अभिचारेषु तां देवीं विपरीतां प्रयोजयेत् ॥५५ ॥ कार्या व्याहृतयश्चात्र विपरीताक्षरास्तथा ॥ विपरीताक्षरं कार्यं शिरश्च मनुजेश्वर ॥ ५६ ॥ आदौ शिरः प्रयोक्तव्यं प्रणवान्ते च यादव ॥ स्वाहास्थाने च फट्कारं साध्यनामसमन्वितम् ॥ ५७ ॥ गायत्रीं चिन्तयेत्तत्र दीप्तानलसमप्रभाम् ॥ घातयन्तीं च शूलेन केशेष्वाकृष्य वैरिणम् ॥ ५८ ॥ निर्दहन्तीं च तं क्रोधाद्भ्रुकुटीभीषणाननाम् ॥ उच्चाटने च तां देवीं वायुभूतां विचिन्तयेत् ॥ ५९ ॥ वहमानां तथा साध्यं तस्माद्देशात्सुदूरतः ॥ अभिचारे च होतव्या राजिका विषमिश्रिताः ॥६० ॥ स्वरक्तमिश्रं होतव्यं कटुतैलमथापि वा ॥ तत्रापि च विषं देयं होमकाले च यत्नतः॥६१ ॥ मध्ये जह्याद्यदि क्रोधं ध्रुवं नश्येत्स एव तु ॥ अनागसि न कर्तव्यमभिचारमतो बुधैः ॥ अल्पागसि न कर्तव्यमभिचारं तथैव तु ॥ ६२ ॥ महापराधं बलिनं देवब्राह्मणकण्टकम् ॥ अभिचारेण यो हन्यान्न स दोषेण लिप्यते ॥ ६३ ॥ धर्मप्रधाने तु नरे अल्पागसि तथैव च ॥ अभिचारं न कुर्वीत बहूपायं विचक्षणः ॥ ६४ ॥ बहूनां कण्टकं यं तु पापात्मानं सुदुर्मतिम् ॥ हन्यात्प्राप्तापराधं तु तस्य पुण्यफलं लभेत् ॥ ६५ ॥ ये भक्ताः पुण्डरीकाक्षं देवदेवं जनार्दनम् ॥ न तानभिचरेज्जातु तत्र तद्विफलं भवेत् ॥ ६६ ॥ न हि केशवभक्तानामभिचारेण कर्हिचित् ॥ विनाशमभिपद्येत तस्मात्तन्न समाचरेत् ॥ ६७ ॥ सेयं धात्री विधात्री च सावित्र्यघविनाशिनी ॥ प्राणायामेन जप्येन तथैवान्तर्जलेन च ॥ ६८ ॥ सव्याहृतीकप्रणवा जप्तव्या शिरसा सह ॥ प्रणवेन तथाऽभ्यस्ता वाच्या व्याहृतयः पृथक् ॥ ६९ ॥ दैवतं सविता त्वस्या

गायत्रं छन्द एव च ॥ विश्वामित्र ऋषिश्चैव प्रोच्यते वसुधाधिप ॥ ७० ॥ कर्मेन्द्रियाणि पञ्चैव पञ्च बुद्धीन्द्रियाणि च ॥ पञ्चेन्द्रियार्थान्म
हतां भूतानां चैव पञ्चकम् ॥ ७१ ॥ मनो बुद्धिस्तथैवात्मा अव्यक्तं च यदूत्तम ॥ चतुर्विंशत्यथैतानि गायत्र्या अक्षराणि तु ॥ ७२ ॥
प्रणवं पुरुषं विद्धि सर्वगं पञ्चविंशकम् ॥ सप्तलोकानि यानीह महाव्याहृतयस्तथा ॥ ७३ ॥ शिरसश्च तथा वाच्यः पुरुषः परमेश्वरः ॥
एवंविधा सा सावित्री जप्तव्या सततं बुधैः ॥ ७४ ॥ होतव्या च तथा शक्त्या सर्वकामसमृद्धिदा ॥ गायत्रीमात्रशरणो वरं
विप्रः सुयन्त्रितः ॥ ७५ ॥ नायन्त्रितश्चतुर्वेदी सर्वाशी सर्वविक्रयी ॥ गायत्रीं जपते यस्तु कल्यमुत्थाय वै द्विजः ॥ ७६ ॥
लिप्यते न स पापेभ्यः पद्मपत्रमिवाम्भसा ॥ कामकामो लभेत्कामं गतिकामस्तु सद्गतिम् ॥ अकामस्तदवाप्नोति यद्विष्णोः परमं पदम् ॥ ७७ ॥
एवं प्रभावा वरदा पवित्रा गायत्र्यथोक्ता तव राजसिंह ॥ जपन्ति ये तां परमं प्रयान्ति स्थानं परस्याऽप्रतिमस्य पुंसः ॥ ७८ ॥ इति श्रीविष्णु
धर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे गायत्रीमाहात्म्यवर्णनं नाम पञ्चषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥ ॥ छ ॥ ॥ वज्र उवाच ॥
महावर्तिप्रदानस्य यत्फलं भृगुनन्दन ॥ तन्ममाचक्ष्व तत्त्वेन विधिं कालं तथैव च ॥ १ ॥ मार्कण्डेय उवाच ॥ महावर्तिः सदा देया भूमिपाल
महाफला ॥ कृष्णपक्षे विशेषेण तत्रापि च विशेषतः ॥ २ ॥ अमावास्या च निर्दिष्टा द्वादशी च महाफला ॥ आश्वयुज्यामतीतायां कृष्णपक्षस्य
या भवेत् ॥ ३ ॥ अमावस्या तदा पुण्या द्वादशी वा विशेषतः ॥ देवस्य दक्षिणे पार्श्वे देया तैलतुला नृप ॥ ४ ॥ पलाष्टकयुतां राजन्वर्तिं
तत्र तु दापयेत् ॥ महारजनरक्तेन समग्रेण तु वाससा ॥ ५ ॥ वामपार्श्वे च देवस्य देया घृततुला नृप ॥ पलाष्टकयुतां शुक्लां वर्तिं तत्र तु
दापयेत् ॥ ६ ॥ वाससा तु समग्रेण सोपवासो जितेन्द्रियः ॥ महावर्तिद्वयमिदं सकृद्दत्त्वा महीपते ॥ ७ ॥ स्वर्लोकं सुचिरं भुक्त्वा जायते भूतले
यदा ॥ तदा भवति लक्ष्मीवान्रूपसौभाग्यमाश्रितः ॥ ८ ॥ राष्ट्रे च जायते यस्मिन्देशे च नगरेऽथवा ॥ कुले च राजशार्दूल तत्र स्याद्दीपव
त्प्रभा ॥ ९ ॥ अत्युज्ज्वलश्च भवति युद्धेषु कलहेषु च ॥ ख्यातिं याति तथा लोके सज्जनानां च सद्गुणैः ॥ १० ॥ एकामप्यथ यो दद्याद
भीष्टमनयोर्द्वयोः ॥ मातुष्ये सर्वमाप्नोति तदुक्तं ते मयाऽनघ ॥ ११ ॥ स्वर्गे तथार्धमाप्नोति भागं कालं च यादव ॥ सामान्यस्य तु दीपस्य
राजन्दाने महत्फलम् ॥ १२ ॥ किं पुनर्महतो यस्य फलस्यान्तो न विद्यते ॥ दीपदानं परं पुण्यमन्यदेवेष्वपि ध्रुवम् ॥ १३ ॥ किं पुनर्देव

१ 'दानम्' इति क० ख० ।

देवस्य त्वनन्तस्य महात्मनः ॥ गिरिशृङ्गेषु दातव्या नदीनां पुलिनेषु च ॥ १४ ॥ चतुष्पथेषु रथ्यासु ब्राह्मणानां गृहेषु च ॥ वृक्षमूलेषु गोष्ठेषु कान्तारगहनेषु च ॥ १५ ॥ दीपदानेन सर्वत्र महत्फलमुपाश्नुते ॥ यावन्त्यक्षिनिमेषाणि दीपः प्रज्वालितो नृप ॥ १६ ॥ तावन्त्येव स राजेन्द्र वर्षाणि दिवि मोदते ॥ दीपदानेन राजेन्द्र चक्षुष्मानिह जायते ॥ १७ ॥ रूपसौभाग्ययुक्ताश्च धनधान्यसमन्विताः ॥ दीपमालां प्रयच्छन्ति ये नराः शार्ङ्गिणो गृहे ॥ १८ ॥ भवन्ति ते चन्द्रसमाः स्वर्गमासाद्य मानवाः ॥ दीपागारं नरः कृत्वा कूटागारनिभं शुभम् ॥ १९ ॥ केशवालयमासाद्य नाके भाति स शक्रवत् ॥ यथोज्ज्वलः सदा दीपो दीपदातापि यादव ॥ २० ॥ तथा नित्योज्ज्वलो लोके नाकभ्रष्टोऽभिजायते ॥ समीपे तु यथा लोके चक्षूंषि फलवन्ति हि ॥ २१ ॥ तथा दीपस्य दातारो भवन्ति सफलेक्षणाः ॥ यथैवोर्ध्वगतिर्नित्यं राजन्दीपशिखा शुभा ॥ २२ ॥ दीपदातुस्तथैवोर्ध्वगतिर्भवति शोभना ॥ तस्मात्सर्वप्रयत्नेन दीपा देया नरेश्वर ॥ २३ ॥ आश्वयुज्यामतीतायां यावद्राजेन्द्र कार्तिकी ॥ तावद्दीपप्रदस्योक्तं फलं राजन्विशेषतः ॥२४॥ तावत्कालं प्रयच्छन्ति ये तु दीपं सदा निशि ॥ तुंगे देशे महत्तेषां बहिः पुण्यफलं भवेत् ॥ ॥२५॥ यस्यान्धकारे गहने प्राकाश्यं तेन जायते ॥ प्राकाश्ये यदुशार्दूल तेन यान्ति हि तत्सुखम् ॥२६॥ श्रवणे दीपकं दत्त्वा नदीद्वितयसंगमे ॥ तेजस्वी च यशस्वी च रूपवानभिजायते ॥ २७ ॥ दीपा नदीषु दातव्याः कार्तिक्यां च विशेषतः ॥ आश्वयुक्कृष्णपक्षस्य या तु पञ्चदशी भवेत् ॥ २८ ॥ बिल्वद्वारेषु दातव्यास्तथा दीपा यथाविधि ॥ अन्यत्रापि तदा दीपैर्महत्पुण्यफलं लभेत् ॥ २९ ॥ श्रवणद्वादशीयोगे कृष्णपक्षे तथैव च ॥ घृतेन दीपा दातव्यास्तिलैर्वा यदुनन्दन ॥ ३० ॥ वसामज्जादिभिर्देया न तु दीपाः कथञ्चन ॥ दत्त्वा दीपं न कर्तव्यं तेन कर्म विजानता ॥ ३१ ॥ निर्वापणं च दीपस्य हिंसनं च विगर्हितम् ॥ यः कुर्यात्तेन कर्माणि स्यादसौ पुष्पितेक्षणः ॥ ३२ ॥ दीपहर्ता भवेदन्धः काणो निर्वापको भवेत् ॥ दीपदानात्परं दानं न भूतं न भविष्यति ॥ ३३ ॥ दीपदानं तु कर्तव्यं विप्रवेश्मसु पण्डितैः ॥ द्विजवेश्मनि यो दद्यात्कार्तिके मासि दीपकम् ॥ ३४ ॥ अग्निष्टोमफलं तस्य प्रवदन्ति मनीषिणः ॥ प्राणिजां नीलरक्तां च दीपे वर्तिं विवर्जयेत् ॥ ३५ ॥ विशेषेण प्रदातव्या पद्मसूत्रभवा नृप ॥ पद्मसूत्रोद्भवां वर्तिं गन्धतैलेन दीपके ॥ ३६ ॥ विरोगः सुभगश्चैव दत्त्वा भवति मानवः ॥ दातव्यं देवदेवस्य कर्पूरेण च दीपकम् ॥ अश्वमेधमवाप्नोति कुलं चैव समुद्धरेत् ॥ ३७ ॥ एतन्मयोक्तं तव दीपदाने फलं समग्रं यदुवंशचन्द्र ॥

१ 'द्रष्टव्यम्' इति क० 'स्प्रष्टव्यम्' इति ख० ।

श्रुत्वा यथावत्सततं तु देया दीपास्त्वया विप्रसुरालयेषु ॥ ३८ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे दीपदानप्रशंसानाम
षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥ मार्कण्डेय उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम् ॥ दीपदानाल्ललितिका यदवाप
पुरा नृप ॥ १ ॥ आसीच्चित्ररथो नाम विदर्भेषु महीपतिः ॥ तस्य पुत्रशतं राज्ञो जज्ञे पञ्चदशोत्तरम् ॥ २ ॥ एकैव कन्या
तस्यासील्ललिता नाम नामतः ॥ सर्वलक्षणसम्पूर्णा रूपेणाप्रतिमा भुवि ॥ ३ ॥ तां ददौ काशिराजाय स पिता चारुधर्मिणे ॥
शतानि तस्य भार्याणां त्रीण्यासंश्चात्र धर्मिणः ॥ ४ ॥ तासां मध्येऽग्रमहिषी ललितास्य तदाऽभवत् ॥ विष्णोरायतने तस्याः
सहस्रं राजसत्तम ॥ ५ ॥ प्रदीपानां प्रज्वलति दिवारात्रमरिन्दम ॥ तामिस्रमाश्वयुक्पक्षं शुक्लपक्षं च कार्तिकात् ॥ ६ ॥ तस्याः
प्रज्वलितं दीपमुच्चस्थानकृतं तथा ॥ तस्मिन्काले तथा नित्यं ब्राह्मणावसथेषु सा ॥७॥ नित्यं भवति सायाह्ने दीपप्रेषणतत्परा ॥ चतुष्पथेषु
रथ्यासु देवतायतनेषु च ॥ ८ ॥ चैत्यवृक्षेषु गोष्ठेषु पर्वतानां च मूर्धसु ॥ पुलिनेषु नदीनां च कूपमूलेषु यादव ॥ ९ ॥ तस्मिन्भवति साकाले
दीपदानपरायणा ॥ तां सपत्न्योऽथ सङ्गम्य पप्रच्छुरिदमादृताः ॥१०॥ सपत्न्य ऊचुः ॥ सर्वान्धर्मान्परित्यज्य ललिते त्वं सदैव तु ॥ विष्णोराय
तने सुभ्रूर्दीपदानपरायणा ॥ ११ ॥ तदेतत्कथयास्माकं ललिते कौतुकं परम् ॥ मन्यामहे त्वयावश्यं दीपदानफलं श्रुतम् ॥ १२ ॥ ललितिको
वाच ॥ नाहं मत्सरिणी भद्रा न च रागादिदूषिता ॥ एकपत्याश्रया याता भवत्यो मम मानदाः ॥ १३ ॥ अपृथग्धर्मचरणाः शृण्वन्तु गदितं
मम ॥ मयैतद्दीपदानस्य यथा वै भुज्यते फलम् ॥ १४ ॥ हरस्य दयिता भार्या शैलराजसुता वरा ॥ उमादेवीति मद्रेषु देविका या सरिद्वरा ॥
॥१५॥ नराणामनुकम्पार्थं ब्राह्मणैरवतारिता ॥ तीरयोरुभयोस्तस्याः क्षेत्रं क्रोशचतुष्टयम् ॥ १६ ॥ तस्मिँस्तीर्थे तु पानीयं सर्वतीर्थप्रकल्पितम् ॥
तस्मिँस्तीर्थे मृता मर्त्याः प्राप्नुवन्ति शुभां गतिम् ॥१७॥ श्रुताभिलाषिता दृष्टा देविका पापनाशिनी ॥ तस्यां स्नात्वा सकृन्मर्त्यो गाणपत्यमवा
प्नुयात्॥१८॥तस्यास्तीर्थं नृसिंहाख्यं सर्वकल्मषनाशनम्॥ नृसिंहवपुषा स्नानं कृतं यत्र पुरा शुभा॥१९॥सौवीरराजस्य पुरा मैत्रेयोऽभूत्पुरोहितः॥
तस्मिँस्तीर्थे तदा तेन विष्णोरायतनं कृतम् ॥ २० ॥ अहन्यहनि शुश्रूषां पुष्पधूपादिलेपनैः ॥ दीपदानादिभिश्चैव चक्रे तत्र स वै द्विजः ॥२१॥
कार्तिके दीपकास्तत्र प्रदत्तास्तेन चैकदा ॥ आसीन्निर्वाणभूयिष्ठो देवार्चापुरतो निशि ॥ २२ ॥ देवतायतने चासं तथाहमपि मूषिका ॥ प्रदीप
वर्तिहरणे कृतबुद्धिर्वरानना ॥२३॥ गृहीता च मया वर्तिर्वृषदंशो रुराव च ॥ नष्टा चाहं तदा तस्य मार्जाररस्य भयात्तदा ॥ २४ ॥ वर्तिप्रान्तेन

नश्यन्त्या दीपकः प्रेरितो मया ॥ जज्वाल पूर्ववद्दीप्त्या तस्मिन्नायतने पुनः ॥ २५ ॥ मृता चाहं तदा जाता विदर्भराजकन्यका ॥ जातिस्मरा
महीपस्य महिषी चारुधर्मिणः ॥ २६ ॥ एष प्रभावो दीपस्य कार्तिके मासि शोभनाः ॥ दत्तस्यायतने विष्णोर्यस्येयं व्युष्टिरुत्तमा ॥ २७ ॥
यदि वो नास्ति मात्सर्यं दीपो देयः सदा शुभाः ॥ असङ्कल्पितमप्येतत्प्रेरणं यत्कृतं मया ॥ २८ ॥ केशवालयदीपस्य तस्येदं भुज्यते फलम् ॥
एतस्मात्कारणाद्दीपानहमेतानहर्निशम् ॥ २९ ॥ प्रयच्छामि हरेर्धाम्नि ज्ञातस्य च हि यत्फलम् ॥ मार्कण्डेय उवाच ॥ एवमुक्ताः सपत्न्यस्ता दीप
दानपरायणाः ॥ ३० ॥ बभूवुर्देवदेवस्य केशवस्य सदा गृहे ॥ ततः कालेन महता तेन राज्ञा महात्मना ॥ विष्णुलोकमनुप्राप्ताः पञ्चत्वं प्राप्य
मानद ॥ ३१ ॥ तं लोकमासाद्य नृपेण सार्धं सा राजपुत्री कमलाभरूपा ॥ रेमे महीपाल मुदा समेता दीपप्रदानाच्च्यवनाद्विमुक्ता ॥ ३२ ॥
इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसम्वादे दीपमाहात्म्ये ललितिकोपाख्यानं नाम सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥
वज्र उवाच ॥ उपवासासमर्थानां हीनानां द्रविणेन च ॥ कर्मणा केन धर्मज्ञ तोषमायाति शङ्करः ॥ १ ॥ मार्कण्डेय उवाच ॥ सन्ति पुष्पाण्यरण्येषु
मूलानि च फलानि च ॥ स्वयंग्राह्याणि राजेन्द्र यैस्तुष्यति जनार्दनः ॥ २ ॥ चन्द्रः सामान्यदीपोऽयं विभवैः किम्प्रयोजनम् ॥ यथालभ्येन
राजेन्द्र यैस्तुष्यति जनार्दनः ॥३॥ फलमूलाशनोऽरण्ये कुसुमैर्मधुसूदनम् ॥ सम्पूज्य सततं कामानभीष्टान्प्रतिपद्यते ॥ ४ ॥ अकामस्तदवाप्नोति
यद्विष्णोः परमं पदम् ॥ अरण्येषु नरः कृत्वा देवदेवस्य चार्चनम् ॥५॥ अतीतमुद्धरेद्राजन्फलेन स शतं नृणाम् ॥ भविष्याणां शतं चैव नराणां
यदुनन्दन ॥ ६ ॥ नगरेऽपि वसन्यस्तु भैक्ष्याशी संशितव्रतः ॥ अरण्यादाहृतैः पुष्पैर्मूलपत्रफलाङ्कुरैः॥७॥ यथोपपन्नैः सततमभ्यर्चयति केशवम् ॥
सर्वकामप्रदो देवस्तस्य स्यान्मधुसूदनः ॥ ८ ॥ तस्याप्यकामैकामस्य परं स्थानं प्रकीर्तितम् ॥ यत्र गत्वा न शोचन्ति तद्विष्णोः परमं पदम्॥९॥
स्वयमाहृत्य पुष्पाद्यैर्भैक्ष्याशी केशवार्चनम् ॥ कृतं येन स राजेन्द्र वंशानुद्धरते शतम् ॥ १० ॥ वंशानतीतान्पञ्चाशत्तावतश्चाप्यनागतान् ॥
उद्धरेदात्मनो राजन्नात्र कार्या विचारणा ॥ ११ ॥ (गृहस्थोऽपि नरो राजन्धर्मागतधनागमः ॥ अरण्यादाहृतैः पुष्पैर्यः कुर्यात्केशवार्चनम् ॥ १२ ॥
एतदेव समाप्नोति नात्र कार्या विचारणा ॥ धर्मार्जितधनः क्रीत्वा यः कुर्वन्केशवार्चनम् ॥ १३ ॥ ) स्वयमुप्तैश्च कुसुमैर्यः कुर्यात्केशवार्चनम् ॥
उद्धरिष्यत्यसन्देहं सप्तपूर्वापरान्नरान् ॥ १४ ॥ यथाकथञ्चिदाहृत्य कथञ्चित्पूजयेद्धरिम् ॥ नाकपृष्ठमवाप्नोति न मेऽत्रास्ति विचारणा ॥ १५ ॥

१ 'केशवः' इति ख० । २ 'तस्यापि काम' इति ख० । ३ कोष्ठान्तर्गतः पाठः कपुस्तके नास्ति ।

मानुष्ये च परां राजञ्छ्रियमाप्नोत्यसंशयम् ॥ वनादाहृत्य कुसुमैः कर्तव्यं देवतार्चनम् ॥ १६ ॥ पत्रं पुष्पं फलं तोयं दूर्वाङ्कुरमथापि वा ॥ निवेदयित्वा कृष्णाय भोक्ता नाकमवाप्नुयात् ॥ अक्षमैस्तूपवासानां तथा धनविवर्जितैः ॥ १७ ॥ वनादाहृत्य कुसुमैः कर्तव्यं देवतार्चनम् ॥ अरण्यादाहृतैः पुष्पैः सम्पूज्य मधुसूदनम् ॥१८॥ पूर्वजन्मनि सम्प्राप्तं राज्यं शृणु नराधिप ॥ नृगो ययातिर्नहुषो विष्वगश्वः करन्धमः ॥ १९ ॥ दिलीपो यवनाश्वश्च ऋतुपर्णो भगीरथः ॥ सोमकः सहदेवश्च महामालो महाहनुः ॥२०॥ रेवकः कालकाख्यश्च कृतवीर्यो गुणाकरः ॥ देवरातः ककुत्स्थश्च विनीतो विक्रमे रघुः ॥ २१ ॥ महोत्साहो वीतभयो निरमित्रः प्रभाकरः ॥ कपोतरोमा पर्जन्यश्चन्द्रसेनः परान्तकः ॥ २२ ॥ भीमसेनो दृढरथः कुशनाभः प्रभद्रकः ॥ एते चान्ये च बहवः पूर्वजन्मनि केशवम् ॥ २३ ॥ पूजयित्वा क्षितावस्यां प्रापू राज्यमकण्टकम् ॥ यक्षत्वमथ देवत्वं गन्धर्वत्वं तथैव च ॥ २४ ॥ विद्याधरत्वं नागत्वं ये गता मनुजोत्तम ॥ बहुत्वात्ते कथं शक्या मया वक्तुं तवानघ ॥ २५ ॥ तस्माद्यत्नः सदा कार्यः पुरुषैः कुसुमार्चने ॥२६॥ अरण्यजातैः कुसुमैः सदैव संपूजयित्वा स्वयमाहृतैस्तु ॥ सर्वेश्वरत्वं फलमाप्नुवन्ति राजेन्द्र तद्वर्णयितुं न शक्यम् ॥ २७ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे पुष्पाहरणफलवर्णनं नामाष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥

वज्र उवाच ॥ अटव्यो दारुणा ब्रह्मन्सिंहव्याघ्रनिषेविताः ॥ तस्कराचरिता घोराः सरीसृपविमिश्रिताः ॥ १ ॥ नित्योत्थितस्य चाध्वानं दाहक्षयकरं परम् ॥ अतः स्वल्पतरं कर्म ब्रूहि मे केशवार्चने ॥ २ ॥ मार्कण्डेय उवाच ॥ अतः स्वल्पतरं राजन्देववेश्मानुलेपनम् ॥ महाफलं विनिर्दिष्टं ब्राह्मणैर्वेदपारगैः ॥ ३ ॥ सम्मार्जनं तु यः कुर्यात्पुरुषः केशवालये ॥ रजस्तमोभ्यां निर्मुक्तः स भवेन्नात्र संशयः ॥ ४ ॥ पांसूनां यावतां राजन्कुर्यात्सम्मार्जनं नरः ॥ तावन्त्यब्दानि स सुखी नाकमासाद्य मोदते ॥५ ॥ अभ्युक्षणं तु यः कुर्यात्पानीयेन सुरालये ॥ स शान्तपापो भवति नात्र कार्या विचारणा ॥६॥ कृत्वोपलेपनं विष्णोर्नरस्त्वायतने सदा ॥ गोमयेन शुभाँल्लोकानयत्नादेव गच्छति ॥ ७ ॥ हस्तप्रमाणं भूभागमुपलिप्य नराधिप ॥ देवरामाशतं नाकं लभेत सततं नरः ॥ ८ ॥ ततोऽनुसारेण फलं विस्तृतायां क्षितौ स्मृतम् ॥ नित्यासमर्थस्तु तथा देववेश्मोपलेपने ॥ ९ ॥ त्रिः पक्षस्य तु कुर्वीत देववेश्मोपलेपनम् ॥ पञ्चमीं दशमीं चैव तथा पञ्चदशीं नृप ॥ १० ॥ त्रिः पक्षस्य सदा कृत्वा देववेश्मोपलेपनम् ॥ संवत्सरात्तदाप्नोति यत्फलं तन्निबोध मे ॥११ ॥ जन्मान्तरमथासाद्य गृहं प्राप्नोत्यनुत्तमम् ॥ सर्वोपभोगसंयुक्तं गृहप्रासादसङ्कुलम् ॥१२॥ वृक्षोद्यानलतागुल्मतोयवापीविभूषितम् ॥ गवाश्वधनधान्याढ्यं सर्वोपकरणैर्युतम् ॥ १३ ॥ प्रियंवदाभिर्हृद्याभिः स्वरूपाभिश्च पार्थिव ॥ वृतं च

बहुभिः स्त्रीभिश्चारुवंशाभिरेव च ॥ १४ ॥ गार्हस्थ्यं च दृढं तत्र स चाप्नोति महीतले ॥ न च प्रच्यवनं तस्माज्जीवन्नाप्नोति कर्हिचित् ॥ १५ ॥
तस्य ये बान्धवास्तत्र सर्वे ते दीर्घजीविनः ॥ भवन्ति न भवन्त्यस्य आधयो व्याधयस्तथा ॥१६॥ न तस्य मृतनिष्क्रान्तिर्गृहे भवति कर्हिचित्॥
यावज्जीवत्यसौ तत्र गृहे श्रीमान्मुदा युतः ॥ १७ ॥ चौरजं न भयं तस्य न च व्याधिकृतं भयम् ॥ व्यालभूपालजं वापि न च तस्य फलं
भवेत् ॥ १८ ॥ स्वरूपः सर्वसिद्धार्थो दीर्घायुर्व्याधिवर्जितः ॥ आज्ञाविधेयभृत्यश्च ध्रुवं स्यान्मनुजेश्वर ॥ १९ ॥ भुञ्जानो यः सदा कुर्यात्तस्यैत
त्कथितं फलम् ॥ नक्तभोजी तथा कृत्वा द्विगुणं फलमाप्नुयात् ॥ २० ॥ उपोषितस्तु रिक्तासु पूर्णासु तु हरेर्गृहे ॥ कृत्वोपलेपनं नित्यं चानन्त्यं
फलमश्नुते ॥ २१ ॥ उपलेपनकृद्यस्तु कृष्णस्यायतने भवेत् ॥ पापसंमार्जनं तस्य शीघ्रमेव भविष्यति ॥ २२ ॥ निष्पाद्यमेतत्ससुखं नरेन्द्र
आराधनं देववरस्य विष्णोः ॥ प्रोक्तं मया ते धनवर्जितानां धनान्वितानां सफलं विशेषम् ॥ २३ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेय
वज्रसंवादे उपलेपनफलप्रशंसनो नामैकोनसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥ मार्कण्डेय उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम् ॥
फलमासाद्य यद्गीतं देववेश्मोपलेपने ॥ १ ॥ बभूव शूद्रजातीयः कश्चिद्भाग्यविवर्जितः ॥ कृतवान्स तु वाणिज्यं धनशेषेण केनचित् ॥ २ ॥
तस्मिन्विपन्ने स कृषिं चकार नृपसत्तम ॥ तस्यामपि विपन्नायां चक्रे सेवां पुनःपुनः ॥ ३ ॥ ततोऽप्यनासाद्य फलं सिद्धिं तीरमुपाश्रितः ॥
गङ्गायाः सप्तमो भागः सिन्धुर्नरनरोत्तम ॥ ४ ॥ शीतलामलपानीयः स्वर्गलोकप्रदायकः ॥ यत्र स्नात्वा गतिं यान्ति ब्राह्मणाश्च तपस्विनः ॥५॥
तस्य तीरे वराहार्चा पुराणर्षिविनिर्मिता ॥ तां समासाद्य शूद्रस्तु नित्यं भैक्ष्यपरायणः ॥ ६ ॥ नित्योपलेपनपरस्तदर्चादेववेश्मनि ॥
उवास भार्यया सार्धं तत्र नित्यानुरक्तया ॥ ७ ॥ एतस्मिन्नेव काले तु वराहार्चादिदृक्षया ॥ सौवीरराजः सम्प्राप्तस्तं देशं चित्रवाहनः ॥ ८ ॥
सिन्धौ स्नानं समासाद्य पूजयित्वा जगत्पतिम् ॥ सभार्यः पृथिवीपालः प्रायाद्राजन्यथागतः ॥ ९ ॥ श्रियं तस्य तु तां दृष्ट्वा स शूद्रो भार्यया सह ॥
भूपालत्वस्पृहां कृत्वा कालात्कालवशङ्गतः ॥ १० ॥ वनात्काष्ठान्युपाहृत्य कृत्वा भर्तुस्ततश्चितिम् ॥ अन्वारुरोह तं भार्या शूद्रं पञ्चत्वमाग
तम् ॥ ११ ॥ स शूद्रो भार्यया सार्धं नाकपृष्ठमितो गतः ॥ सततं धर्मशीलस्तु देववेश्मोपलेपनात् ॥ १२ ॥ एतस्मिन्नेव काले तु युवनाश्वो
महीपतिः ॥ विष्णुं सम्पूजयामास पुत्रीयेण व्रतेन तु ॥ १३ ॥ राज्ञस्तस्य व्रतस्यान्ते स्वप्ने प्राह जनार्दनः ॥ भार्गवं च्यवनं गच्छ ततः
पुत्रमवाप्स्यसि ॥ १४ ॥ युवनाश्वस्तथोक्तस्तु स्वप्ने देवेन चक्रिणा ॥ प्रातः पद्भ्यां ययौ तस्य च्यवनस्याश्रमं शुभम् ॥ १५ ॥ सम्पूज

यित्वा च्यवनं च्यवनेन च पूजितः ॥ व्रतस्वप्नाबुभौ तस्य जगाद नृपसत्तमः ॥ १६ ॥ ऋषिसङ्घानुपादाय च्यवनोऽपि महातपाः ॥ अविज्ञातं
नरेन्द्रेण पुत्रीयं कृतवाञ्जलम् ॥ १७ ॥ कलशस्थं जलं तच्च स्थापयामास भार्गवः ॥ ततो निशीथे संप्राप्ते तृषार्तः स महीपतिः ॥ १८ ॥ ऋषि
मध्ये तु स सुप्तानृषीन्वाक्यमथाऽब्रवीत् ॥ तृषार्तोऽस्मि भृशं विप्राः पानीयं मे प्रयच्छत ॥१९ ॥ ऋषिस्तस्य न शुश्राव कश्चिद्वाव्यर्थचोदितः ॥
ततः खिन्नो महीपालः कलशस्थं जलं पपौ ॥ २० ॥ पीत्वा सुष्वाप ऋषयः प्रातः सर्वे समुत्थिताः ॥ अपश्यमानाः कलशं पप्रच्छुस्ते पर
स्परम् ॥ २१ ॥ पुत्रीयं कलशं राज्ञः कृतं यत्तद्गतं क्व नु ॥ तदोवाच स राजेन्द्रस्तानृषीन्संशितव्रतान् ॥ २२ ॥ तृषार्तेन मया पीतः कलश
स्त्वपवाहितः ॥ ते ह्योचुस्तं नृपश्रेष्ठं भाव्यं कर्म कृतं त्वया ॥ २३ ॥ भार्या पीत्वैव तत्तोयं पुत्रं ते जनयिष्यति ॥ इत्येवं मन्त्रकलशः सोऽस्मा
भिर्भूपते कृतः ॥ २४ ॥ पुत्रीयमुदकं तच्च त्वया पीतमबुद्धिना ॥ तस्मात्त्वमेव तनयं स्वकुक्षौ जनयिष्यसि ॥ २५ ॥ नावाप्स्यसि तथा मृत्युं
वरदानाद्द्विजन्मनाम् ॥ एवमुक्तस्तु सम्पूज्य ब्राह्मणान्स्वगृहङ्गतः ॥ २६ ॥ राज्ञः कुक्षिं विनिर्भिद्य जज्ञे बालार्कसन्निभः ॥ पुनः पुत्रवतां श्रेष्ठ
शूद्रोऽसौ नाकविच्युतः ॥ २७ ॥ जातमात्रस्य तस्येन्द्रो ददौ प्रादेशिनीं मुखे ॥ आसाद्य यां स बालत्वं शिशुस्तत्याज तत्क्षणात् ॥ २८ ॥
कुक्षिं पस्पर्श राज्ञस्तु राजसिंहशतक्रतुः ॥ राजा शक्रकरामृष्टो विज्वरश्चाव्रणोऽभवत् ॥ २९ ॥ युवनाश्वः स तस्यापि नाम चक्रे शतक्रतुः ॥
मां धास्यतीति मान्धाता ख्यातिं त्रिभुवने गतः ॥ ३० ॥ तमाविवेश भगवांस्तेजसा स्वेन माधवः ॥ सापि स्वर्गच्युता भार्या तस्य शूद्रस्य
यादव ॥ ३१ ॥ काशिराजसुता जाता भीमवेगस्य मानद ॥ नाम्ना प्रभावती सुभ्रूस्त्रैलोक्यस्यैकसुन्दरी ॥ ३२ ॥ युवनाश्वस्तु तां वव्रे मान्धा
तुर्लक्षणान्विताम् ॥ स राजा प्रददौ तां तु मान्धातुश्चित्रवाहनः ॥ ३३ ॥ एकैव भार्या सा तस्य बभूवात्यन्तसुन्दरी ॥ रूपयौवनसम्पन्ना प्राणे
भ्योऽपि गरीयसी ॥ कृत्वोद्वाहमयोध्यायामभिषिच्य स तं नृपम् ॥ ३४ ॥ युवनाश्वो वनं प्रायाद्वनादपि त्रिविष्टपम् ॥ राज्यस्थोऽपि स
मान्धाता त्रैलोक्यं सप्तभिर्दिनैः ॥ ३५ ॥ रथेनैकेन वशगं चकार खड्गदर्पितः ॥ पाताले गगने शैले समुद्रे च महात्मनः ॥ ३६ ॥ आसी
त्तस्याप्रतिहता गतिश्चक्रस्य पार्थिव ॥ चक्रवर्ती स धर्मात्मा वैष्णवश्च तथाऽभवत् ॥ ३७ ॥ समायुतानां बुभुजे स राज्यं दश मानद ॥ ब्रह्माण्ड
मण्डपं यावत्सूर्यस्तपति रश्मिभिः ॥ तावत्क्षेत्रं महीभर्तुर्युवनाश्वस्य कीर्त्यते ॥ ३८ ॥ एवं स राजा विजितारिपक्षो देवाजिरालेपनकृद्बभूव ॥
भार्या च सा तस्य बभूव भार्या लोके वरिष्ठा प्रमदावराभ्यः ॥ ३९ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे मान्धातृपाख्यानं

नाम सप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥ ॥ छ ॥ ॥ वज्र उवाच ॥ ॥ स तु राजा मया ब्रह्मन्मांधाता भुवनेश्वरः ॥ माहेश्वरेण शूलेन लवणेन हतः श्रुतः ॥ १ ॥ मार्कण्डेय उवाच ॥ अजेयं वैष्णवं तेजस्तच्च नित्यं च जन्तुषु ॥ नाशमायान्ति ते सर्वे हीना वैष्णव तेजसा ॥ २ ॥ अविनाशि जगत्यस्मिन्न किञ्चिदथ विद्यते ॥ ऋते तु महतस्तस्मात्तेजसो नृप वैष्णवात् ॥ ३ ॥ तेजस्तस्य सुदुर्वाह्यं देहि भिर्नृप सर्वदा ॥ तस्मात्तेन विहीनास्ते क्षयं गच्छन्ति मानद ॥ ४ ॥ मत्स्यः कूर्मो वराहश्च नरसिंहोऽथ वामनः ॥ ब्रह्मा शम्भुस्तथैवार्कश्चन्द्र माश्च शतक्रतुः ॥ ५ ॥ एवमाद्यास्तथैवान्ये युक्ता वैष्णवतेजसा ॥ गजच्छायानुमानेन[1] वियुज्यन्ते च तेजसा ॥ ६ ॥ वितेजसश्च ते सर्वे पञ्चत्व मुपयान्ति च ॥ पञ्चभूतात्मकं स्थूलं यत्किञ्चिज्जगतीगतम् ॥ ७ ॥ सर्वं विनाशि तज्ज्ञेयं त्वया पार्थिवसत्तम ॥ अविनाशि तु तद्विद्धि येन विश्वमिदं ततम् ॥ ८ ॥ यत्तु गन्धगुणैर्हीनं रूपस्पर्शविवर्जितम् ॥ शब्दहीनं च विरसं सर्वेशं सर्वगं च यत् ॥ ९ ॥ निर्गुणं तद्गुणातीतमन्ति कस्थं च दूरगम् ॥ सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ॥ १० ॥ सर्वतः पाणिपादान्तं सर्वतोऽक्षिशिरोमुखम् ॥ सर्वेन्द्रियगुणं देवं सर्वतः परमे श्वरम् ॥११॥ अविनाशि तदेवैकं यस्योदरगतं जगत् ॥ सदाशिवेति तं केचिदाहुर्देवं जगत्पतिम् ॥१२॥ वासुदेवेति चाप्यन्ये कालमित्येव चापरे ॥ दैवमित्यपरे तं च स्वभावमिति चापरे ॥ १३ ॥ कर्मेति चापरे प्राहुः पुरुषेति तथा परे ॥ प्रणवाख्यं तथा तं च विदुर्वेदविदो जनाः ॥ १४ ॥ तदेकमजमव्यक्तमविनाशं नराधिप ॥ ऋते तमेकमीशानमंतवत्सकलं जगत् ॥ १५ ॥ एतत्तवोक्तं भुवनस्य पत्युर्मया स्वरूपं यदुवंशचन्द्र ॥ भक्तिं विना बुद्धिमतापि यस्य शक्यं न वक्तुं ग्रहणं नरेण ॥ १६ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसम्वादे पुरुष स्वरूपवर्णनं नामैकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥ ॥ वज्र उवाच ॥ प्रादुर्भावा वराहाद्याः सर्वेशस्यामितात्मनः ॥ महाभूतचयाः सर्वे जन्ममृत्युयुताश्च ये ॥ १ ॥ यद्येवं प्राणिभिस्तेषां को विशेषो भृगूत्तम ॥ एतत्त्वं संशयं छिन्धि परं कौतूहलं हि मे ॥ २ ॥ मार्कण्डेय उवाच ॥ सर्वे जीवा महीपाल कर्मबन्धनिबन्धनाः ॥ जायन्ते च म्रियन्ते च परतन्त्राः सदैव च ॥ ३ ॥ ईश्वरप्रेरितैर्नित्यं कर्मबन्धैः शुभाशुभैः ॥ जन्मान्तरकृतैर्भूप सुखदुःखसमन्विताः ॥ ४ ॥ वासुदेवस्तु धर्मात्मा प्रादुर्भावेषु यादव ॥ आत्मनः स्वेच्छया जन्म विधत्ते मरणं तथा ॥ ५ ॥ कर्माणि न च लिम्पन्ति प्रादुर्भावेष्वपि प्रभुम् ॥ कर्मस्वपि सदा सक्तं पद्मपत्रमिवाम्भसा ॥ ६ ॥ फलानां कर्मजातानां भोगं तत्रापि यादव ॥

---

१ 'जगत्कार्यानुमानेन' इति क० ।

नृणां दर्शयते मिथ्या मर्यादाभेदभीर्नृप ॥ ७ ॥ यदायदा हि धर्मस्य ग्लानिर्भवति यादव ॥ अभ्युत्थानमधर्मस्य तदात्मानं सृजत्यसौ ॥ ८ ॥
देवतिर्यङ्मनुष्येषु गन्धर्वोरगपक्षिषु ॥ योनिष्वन्येष्वपि तथा बुद्ध्वा कार्यबलाबलम् ॥ ९ ॥ यस्यांयस्यां यदा योनौ प्रादुर्भवति कारणात् ॥
तद्योनिसदृशं तत्स तदा लोके विचेष्टते ॥ १० ॥ संहर्तुं जगदीशानः समर्थोऽपि तदा नृप ॥ तद्योनिसदृशोपायैर्वध्यान्हिंसति यादव ॥ ११ ॥
हार्दं तमस्तथा नैशं मूर्तं च पुरुषोत्तमः ॥ एक एव स लोकानां नाशयत्यमलद्युतिः ॥ १२ ॥ हार्दं ध्वस्तं तमस्तेन जगतो देवमूर्तिना ॥
ज्योतीरूपेण च ध्वस्तं तमो नैशं सुदारुणम् ॥ १३ ॥ तमो नाशयितुं मूर्तं प्रादुर्भावगतः सदा ॥ मूर्तं तमश्च राजेन्द्र दैत्यदानवराक्षसाः ॥ १४ ॥
वन्ध्यानामपि दैत्यानां देहस्थोऽपि जनार्दनः ॥ न विमुञ्चति देहानि युक्त्या तांश्च जिघांसति ॥ १५ ॥ देवतानां गुरूणां च द्विजानां च
गुरुप्रियः ॥ शास्त्रदृष्टेन विधिना भवत्याराधने रतः ॥ १६ ॥ न च तस्यास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ॥ नैवानाप्तमवाप्तव्यं वर्ततेऽथ च
कर्मसु ॥ १७ ॥ सर्वज्ञः सर्वदर्शी च सर्वशक्तिरपि प्रभुः ॥ तथाप्यधीते यजते तपस्तप्यति पार्थिव ॥ १८ ॥ मर्यादास्थापनार्थाय जगतो
हितकाम्यया ॥ करोति राजन्कर्माणि कीनाश इव दुर्बलः ॥ १९ ॥ यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ॥ स यत्प्रमाणं कुरुते लोकस्तदनु
वर्तते ॥ २० ॥ एतत्कारणमास्थाय सदा कर्मसु वर्तते ॥ प्रादुर्भावकृतो विष्णुर्यथान्यः प्राकृतस्तथा ॥ २१ ॥ देवेभ्यश्च ऋषिभ्यश्च
वरान्प्रार्थयते सदा ॥ वरांश्च वरदस्तेषां मानयत्यपि पाण्डव ॥ २२ ॥ प्रादुर्भावरतस्तस्मात्परोऽयमिति मानवाः ॥ पुरुषं नाधिगच्छन्ति
मोहितास्तस्य मायया ॥ २३ ॥ प्रादुर्भावं गतोऽप्येवं संहृत्य स चराचरम् ॥ निमेषान्तरमात्रेण शक्तिमाञ्जगतः प्रभुः ॥२४ ॥ प्रादुर्भावगतस्यापि
तस्य सर्वगता स्मृता ॥ स्वतन्त्रता च सर्वत्र नात्र कार्या विचारणा ॥ २५ ॥ महद्विशेषमेतत्ते प्राणिभिः प्राणिनां पतेः ॥ मयोक्तं तस्य देवस्य
सर्वगस्य स्वयम्भुवः ॥ २६ ॥ आक्षिप्ताः कर्मभिः पुण्यैः कैश्चिद्यदुवरोत्तम ॥ तेषामाविशते देवस्तेजसा तेन सर्वशः ॥ २७ ॥
आविष्टास्तेजसा तेन देवेन परमेष्ठिना ॥ तद्वत्कर्माणि कुर्वन्ति पूज्यमाना महर्षिभिः ॥ २८ ॥ तथा तु काले संन्यस्तास्तेन वैष्णवतेजसा ॥
दिष्टान्तवशमायान्ति तस्यैव रुचितं यथा ॥ २९ ॥ ये च केचन लोकेऽस्मिन्दृश्यन्ते तेजसान्विताः ॥ तेषां तद्वैष्णवं तेजस्त्वया ज्ञेयं
महीपते ॥ ३० ॥ यच्चन्द्रमसि यच्चाग्नौ यच्च सूर्ये जगत्पतौ ॥ तेजः पश्यति तत्सर्वं वैष्णवं विद्धि पार्थिव ॥ ३१ ॥ अगस्त्यप्रमुखानां च या च
शक्तिरतीन्द्रिया ॥ तत्स्थस्य राजन्सा ज्ञेया त्वया वैष्णवतेजसा ॥ ३२ ॥ यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ॥ तत्तदेवावगच्छ त्वं युक्तं

वैष्णवतेजसा ॥ ३३ ॥ ब्राह्मणानां सुराणां च साध्वीनां च तथा गवाम् ॥ जगतां धारिणीं शक्तिं विद्धि तां वैष्णवीं विभो ॥३४॥ राजानस्तेजसा युक्ता वैष्णवेन वसुन्धराम् ॥ पालयन्ति महीपाल वीर्योदग्रा यशस्विनः ॥ ३५ ॥ ऋषयश्च तथा विप्रा वेदवेदाङ्गपारगाः ॥ पालयन्ति जगत्कृत्स्नं युक्ता वैष्णवतेजसा ॥३६॥ त्रेतायुगादौ ये केचिज्जायन्ते चक्रवर्तिनः ॥ गुरुणा विद्धि तान्सर्वान्संयुक्तान्विष्णुतेजसा ॥३७॥ आजानुबाहवः सर्वे न्यग्रोधपरिमण्डलाः ॥ जिह्वया सकलं वक्त्रं परिमार्जन्ति ते तथा ॥३८॥ षष्ट्या दन्तैश्च संयुक्ता दंष्ट्राभिश्च तथाष्टभिः ॥ और्णेयं च शुभं तेषां भवत्यन्तर्भ्रुवोर्नृप॥३९॥चक्राङ्कितैः पादतलैः करैश्चापि शराङ्कितैः ॥ जालपादकराश्चैव तथा तुरगमेहनाः ॥४०॥ रूपवन्तः प्रभावन्तो वपुष्मन्तश्च यादव ॥ अतीन्द्रियज्ञानबलाः पृथिव्यां चक्रवर्तिनः॥४१॥तेषां तु सप्त रत्नानि भवन्तीह महीतले॥हस्त्यश्वरथरत्नानि भार्यारत्नं तथैव च ॥४२॥ तथैवायुधरत्नं च मणिरत्ननिधिस्तथा ॥ चतस्रश्चाप्रतिहतास्तेषां तु गतयस्तथा॥४३॥पाताले गगने शैले समुद्रे च महीपते॥ समुद्रः स्तम्भितजलः प्रयाणे चक्रवर्तिनाम् ॥ ४४ ॥ भूसमाश्च तथा शैला मार्गे तेषां भवन्ति तु ॥ भूमिर्ददाति विवरं पातालमुपयास्यताम् ॥ ४५ ॥ न विषीदन्ति गगने तथा तेषां तुरङ्गमाः ॥ श्रुतेन तपसा यज्ञैर्वीर्येणास्त्रबलेन च ॥ ४६ ॥ सर्वेभ्यस्तेऽतिरिच्यन्ते प्राणिभ्यो मनुजेश्वर ॥ आराधितजगन्नाथाः प्राप्नुवन्तीह तत्पदम् ॥ ४७ ॥ वर्षायुतानि जीवन्ति षडष्टौ सप्त वा नृप ॥ तेषां च तेजसा विष्णुः करोत्याप्यायनं सदा ॥ ४८ ॥ येन ते कथितं सर्वं प्राप्नुवन्ति गुणोदयम् ॥ स्थानान्तरगतेनापि तेऽपि वैष्णवतेजसा ॥ ४९ ॥ संहारमुपगच्छन्ति क्षयकाल उपस्थिते ॥ क्षयकाले च मान्धातुस्तेजस्तदतिदुःसहम् ॥ ५० ॥ वैष्णवं शूलिशूलाग्रमाश्रयामास यादव ॥ अर्जुनस्य नरेन्द्रस्य युक्तस्य हरितेजसा ॥ ५१ ॥ हरिरेवान्तकृच्चासीद्रामो भृगुकुलोद्वहः ॥ भार्गवस्य च रामस्य तेजस्तदतिदुःसहम् ॥ ५२ ॥ आदत्ते वैष्णवं घोरं रामो दशरथात्मजः ॥ काश्चित्तनुमधिष्ठाय तेन घोरेण तेजसा ॥ ५३ ॥ करोति देवकार्याणि कृतकर्मा ततः प्रभुः ॥ आदानं तेजसस्तस्य विधत्ते स स्वतेजसा ॥ ५४ ॥ नान्यः शमयिता लोके नृप वैष्णवतेजसः ॥५५॥ तस्यावतारेषु मया स्वरूपमेतत्तवोक्तं भुवनस्य पत्युः ॥ रहस्यमेतत्परमं मुनीनां ज्ञानामृतं कल्मषनाशकारि ॥ ५६॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसम्वादे प्रादुर्भावस्वरूपवर्णनं नाम द्विसप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥ वज्र उवाच ॥ युवनाश्वेन यद्राज्ञा पुत्रीयं तु कृतं व्रतम् ॥ तमहं श्रोतुमिच्छामि जनानां हितकाम्यया ॥ १ ॥ मार्कण्डेय उवाच ॥ पुत्रीयं ते प्रवक्ष्यामि व्रतं भूपाल सत्तम ॥ अनन्तव्रतमित्युक्तं सेवतां पुत्रजन्मदम् ॥ २ ॥ मासिमासि तु नक्षत्रं मासनाम्ना तु चिह्नितम् ॥ सम्प्राप्य पूजयेद्देवं सोपवासो नरो

त्तम ॥ ३ ॥ एकैकमङ्गं देवस्य प्रतिमासं विशेषतः ॥ पूजयेत्प्रयतः शुद्धः शृणु चाङ्गक्रमं मम ॥ ४ ॥ मार्गशीर्षादथारभ्य व्रतमेतत्समारभेत् ॥
देवस्य मार्गशीर्षे तु वामं जानुं समर्चयेत् ॥ ५ ॥ कटिभागं तथा वामं पौषे मासि समर्चयेत् ॥ माघे मघासु वामं च भुजं देवस्य पूजयेत् ॥६॥
उत्तराफल्गुनीऋक्षे स्कन्धं वामं प्रपूजयेत् ॥ चतुर्ष्वेतेषु वामेषु गोमूत्रस्नानमाचरेत् ॥ ७ ॥ पूजनं देवदेवस्य रक्तैः पुष्पादिभिस्तथा ॥ होमो
घृतेन कर्तव्यस्तिलदानं द्विजातिषु ॥ ८ ॥ ताम्रस्य च तथा दानं गोमूत्रप्राशनं ततः ॥ हविष्यान्नेन चाहारं ततः कार्यं विजानता ॥ ९ ॥
देवस्य दक्षिणं स्कन्धं चैत्रे चित्रासु पूजयेत् ॥ वैशाखे च विशाखासु बाहुं देवस्य दक्षिणम् ॥ १० ॥ दक्षिणं कटिभागं च ज्येष्ठे ज्येष्ठासु पूज
येत् ॥ दक्षिणं च तथा जानुमाषाढे वैश्वदेवके ॥११॥ चतुर्ष्वेतेषु मासेषु क्षीरस्नानं विधीयते ॥ पीतपुष्पादिपूजा च देवदेवस्य चक्रिणः ॥ १२ ॥
होमं च शालिभिः कुर्याद्यवा देया द्विजातिषु ॥ रजतं च तथा देयं यथान्नेन भुजिक्रिया ॥१३॥तथा कार्या मनुष्येन्द्र श्रावणेश्रवणे ततः ॥ पादादौ
पूजयेत्तस्य यस्येदं सकलं जगत् ॥ १४ ॥ गुह्यं भाद्रपदे मासि आश्विने हृदयं ततः ॥ शिरसः पूजनं कार्यं कार्तिके कृत्तिकासु च ॥ १५ ॥ चतु
र्ष्वेतेषु मासेषु दध्ना स्नानं विधीयते ॥ पूजनं देवदेवस्य शुक्लैः पुष्पादिभिस्तथा ॥ १६ ॥ क्षीरेण होमः कर्तव्यो घृतं देयं द्विजातिषु ॥
सुवर्णं तु तथा राजन्दध्ना कार्या भुजिक्रिया ॥ १७ ॥ अनन्तनाम जप्तव्यं सर्वमासेषु पार्थिव ॥ तेनैव नाम्ना देवस्य होमकर्मापि निर्दिशेत् ॥ १८ ॥
व्रतावसाने दातव्यं ब्राह्मणेभ्यस्तु भोजनम् ॥ दानं शक्त्या च दातव्यं ब्राह्मणेभ्यो नराधिप ॥ १९ ॥ संवत्सरादवाप्नोति सर्वानेव मनोरथान् ॥
पुत्रार्थिभिर्वृत्तिकामैर्भृत्यदारधनेप्सुभिः ॥ २० ॥ प्रार्थयद्भिश्च कर्तव्यं बलमारोग्यसम्पदम् ॥ एतद्व्रतं महाराज पुण्यं स्वस्त्ययनं परम् ॥ २१ ॥
अनन्तव्रतमित्युक्तं सर्वकल्मषनाशनम् ॥ व्रतमेतत्पुरा कृत्वा युवनाश्वो महीपतिः ॥२२ ॥ मान्धातारं सुतं लेभे राजानं चक्रवर्तिनम् ॥ कृतवीर्यस्य
राजेन्द्र भार्या शीलधरा तथा ॥ २३ ॥ व्रतेनानेन सा लेभे पुत्रं बाहुसहस्रिणम् ॥ कार्तवीर्यार्जुनं नाम राजानं चक्रवर्तिनम् ॥ २४ ॥ यमाविवेश
भगवांस्तेजसा स्वेन माधवः ॥ नमस्ते कार्तवीर्याय अर्जुनाय महात्मने ॥ २५ ॥ सप्तद्वीपसमुद्रायां मेदिन्यामीश्वराय च ॥ एतान्नदुक्त्वा पुण्येन
तिलप्रस्थस्य युज्यते ॥२६॥ राजन्दत्तस्य विधिवद्ब्राह्मणाय यतात्मने ॥ यस्य वै जातमात्रस्य प्रववावनिलः शुभः ॥२७॥ नीरजस्कमभूद्व्योम ॥११४॥
मुदं प्रापाखिलं जगत्॥समाश्रयार्थं नृपतिं दैत्या मानुष्यतां गताः॥२८॥आश्रयामासुरव्यग्राश्शतशोऽथ सहस्रशः ॥यस्मिन्राजन्वतीवार्ता भूमिर्भा
रावपीडिता ॥ दधार कृच्छ्रेणात्मानं जलाविलवपुर्नृप ॥२९॥ पुत्रीयमेतत्तवराजसिंह मया व्रतं ते कथितं पुराणम् ॥ कर्तव्यमेतद्भुवि पुत्रकामैः पापा

पद्दं धर्मविवर्धनं च ॥ ३० ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादेऽनन्तव्रतमाहात्म्यवर्णनो नाम त्रिसप्तत्युत्तरशततमोऽध्यायः ॥ १७३ ॥
॥ मार्कण्डेय उवाच ॥ इदमन्यत्प्रवक्ष्यामि मासनक्षत्रपूजनम् ॥ यत्फलं देवदेवस्य पुरुषः समुपाश्नुते ॥ १ ॥ आरभ्य कार्तिकादेतद्व्रतं कार्यं विजानता ॥ पारणत्रितयेनैतद्व्रतं परिसमाप्यते ॥ २ ॥ चातुर्मास्यं तथैवात्र पारणं नृप कीर्तितम् ॥ पारणेपारणे राजन्प्रतिमासविधिं शृणु ॥ ३ ॥ पञ्चगव्यजलस्नानं सदैव च समाचरेत् ॥ पुष्पादिपूजा कर्तव्या यथालाभमुपाहृतैः ॥ ४ ॥ नैवेद्यं कृसरं पूर्वमत्र मासचतुष्टयम् ॥ यावकेन तथा कार्यं मध्यमं च चतुष्टयम् ॥ ५ ॥ चतुष्टये तृतीये च नैवेद्यं पायसं भवेत् ॥ तेनैवान्नेन राजेन्द्र ब्राह्मणान्भोजयेद्बुधः ॥ ६ ॥ नक्तं नैवेद्यमश्नीयाद्वाग्यतः सुसमाहितः ॥ संयतस्तां भवेद्रात्रिं तथा स्थण्डिलशायकः ॥ ७ ॥ एवं कुर्यात्पुनस्तावद्यावत्कार्तिककृत्तिका ॥ तत्र सम्पूज्य देवेशमारम्भविधिना नृप ॥ ८ ॥ भाजनं घृतसंपूर्णं सहिरण्यं द्विजातये ॥ दातव्यं भोजनं कार्यं ब्राह्मणानां विशेषतः ॥ ९ ॥ संवत्सरमिदं कृत्वा व्रतं पुरुषसत्तमः ॥ लब्ध्वा स्थानं च मोदेत तथा नारी च यादव ॥ १० ॥ स्थिरां श्रियं धर्ममतिं बलं च सौभाग्यमोजः स्थिरसत्त्वतां च ॥ आस्थां सुदीर्घां त्रिदिवे च कुर्याद्व्रतं नृणामेतदतीव पुण्यम् ॥ ११ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे मासनक्षत्रपूजनं नाम चतुस्सप्तत्यधिकशततमोऽध्यायः ॥ १७४ ॥ ॥ मार्कण्डेय उवाच ॥ अत्र ते वर्णयिष्यामि कथां पापप्रणाशिनीम् ॥ स्वर्गे वृत्तां समाश्रित्य मासनक्षत्रपूजनम् ॥ १ ॥ पूर्वैस्तु[1] चरितं शक्र नाहं जानामि किञ्चन ॥ भवतः समकालीनं विद्धि मां सुरसत्तम ॥ २ ॥ इयं सिद्धा विजानाति प्रख्याता शाम्बरायणी ॥ एवमुक्तस्ततः शक्रः पप्रच्छ बलसूदनः ॥ ३ ॥ जगाद सा च शक्रस्य पूर्वेन्द्रचरितं महत् ॥ शक्राणां सा व्यतीतानां शतशोऽथ सहस्रशः ॥ ४ ॥ जगाद तत्र चरितं कल्पेष्वन्येष्वपि प्रभो ॥ शाम्बरायण्युवाच ॥ सर्वेषामपि शक्राणां ये तु दायादबान्धवाः ॥ ५ ॥ सर्वे विनाशितास्तेन विष्णुना प्रभविष्णुना ॥ सर्वे शक्रास्तथा युक्तास्तेन वैष्णवतेजसा ॥ ६ ॥ भूतेभ्यस्त्वतिरिच्यन्ते तेन ते गुणसम्पदः ॥ दानेन यज्ञैः शौर्येण तपसा च बलेन च ॥ ७ ॥ श्रुतेन धर्मिष्ठतया देवदैत्यमहोरगान् ॥ ऋषयश्च महाभागास्तेपि पार्थिवसत्तम ॥ ८ ॥ वरं सम्पावनं[2] तैश्च कृतं सर्वं[3] स्वयंभुवा ॥ पराजयं यतः प्राप्ता दायादेभ्यः पुनःपुनः ॥ ९ ॥ सर्वेश्वरा वीर्यबलोपपन्ना धर्मे निविष्टा जगतः प्रधानाः ॥ त्यक्ताधिकाराश्च ततः क्रमेण सर्वे गता विष्णुसहायतां च ॥ १० ॥ इति विष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शक्रचरिताख्यानं नाम पञ्चसप्तत्यधिकशततमो

१ 'फाननम्' इति ख० । २ अत्र सन्दर्भाशुद्ध्या कश्चित्पाठो भ्रष्ट इति भाति । ३ 'सर्वैः' इति ख० ।

ध्यायः ॥ १७५ ॥ ॥ इन्द्र उवाच ॥ यस्मिन्काले व्यतीता ये षडिन्द्रा भूरितेजसः ॥ तेषां चरितमिच्छामि श्रोतुं विस्तरशः शुभे ॥ १ ॥ प्रति
शक्रं मनुं भद्रे मनुपुत्रांस्तथैव च ॥ देवान्सप्त ऋषींश्चैव तथा दायादबांधवान् ॥ २ ॥ शक्रस्य तेषां च वधं तथा देवाज्जनार्दनात् ॥ त्वत्तोहं श्रोतु
मिच्छामि सर्वं त्वं वेत्सि सुन्दरि ॥३॥ शाम्बरायण्युवाच॥ ब्रह्मणो मानसः पुत्रः प्रथमस्तु मनुः स्मृतः ॥ दश पुत्राश्च तस्येमे ख्यातास्त्रिभुवनेश्वर ॥
॥४॥ अग्नीध्रश्चातिबाहुश्च मेधा मेधातिथिर्वसुः ॥ ज्योतिष्मान्द्युतिमान्हव्यः सवनः सत्र एव च ॥५॥ मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ॥
वसिष्ठश्च महातेजा ऋषयः सप्त कीर्तिताः ॥६॥ जयाख्याश्चाजिताख्याश्च शुक्रयामास्तथैव च ॥ गणा द्वादशका एते चत्वारः सोमपीथिनः ॥ ७ ॥
विश्वभुङ्नाम देवानां तेषामिन्द्रो बभूव ह ॥ आसंस्तस्यासुरा घोरास्तदा दायादबान्धवाः ॥ ८ ॥ बभूव नृपतिर्येषां बाष्कलो नाम नामतः ॥
यस्य हस्ताडुभौ लोकौ वामनेन हृतौ पुरा ॥ ९ ॥ क्रमद्वयेन तु हृतं पातालं च सुरेश्वर ॥ यस्य पुत्रवतस्त्वासीत्केशी नाम बलोत्कटः ॥ १० ॥
जहार भूयस्त्रैलोक्यं शक्रस्याक्रम्य दुर्मतिः ॥ तमाहूय रणे विष्णुस्तार्क्ष्यप्रवरवाहनः॥११॥ द्विधा चकार चक्रेण त्रैलोक्यहितकाम्यया ॥१२॥ एवं
हतस्तेन पुरारिमुख्यो महात्मना कालसमप्रभावः ॥ शक्रप्रियार्थं जगतां हितार्थं देवेश्वरेणाप्रतिमेन तेन ॥१३॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे
मार्कण्डेयवज्रसंवादे शाम्बरायणीवाक्ये प्रथममन्वन्तरवर्णनं नाम षट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥ ॥ छ ॥ ॥ शाम्बरायण्युवाच ॥
मनुः स्वारोचिषो नाम बभूव तदनन्तरम् ॥ यस्यासन्सुमहाभागाः पुत्रा भूमण्डलेश्वराः ॥ १ ॥ चैत्रः कविरुतश्चैव कृतान्तो विद्युतो रविः ॥
बृहद्ग्रहो नभश्चैव महाबलपराक्रमः ॥ २ ॥ ऊर्जस्तस्य तथा प्राण ऋषभो निश्चलस्तथा ॥ दन्तोभिः शाक्करीवांश्च ऋषयः सप्त कीर्तिताः ॥ ३ ॥
भूषिता द्वादश प्रोक्तास्तथा पारावताश्च ये ॥ तेषामिन्द्रो विपश्चिच्च महात्मा लोकविश्रुतः ॥ ४ ॥ आसंस्तस्यासुरा घोरास्तदा दायादबान्धवाः ॥
तेषामासीत्तदा राजा पुरुकुत्सो बलाधिकः ॥ ५ ॥ शक्रस्य विप्रियासक्तो मृगयायै वनङ्गतः ॥ व्यधमत्कुञ्जरान्मत्तान्बहुवीर्यसमाश्रयः ॥ हस्ती
भूपालसचिवः स जघान हरीन्वने ॥ ६ ॥ जघान सः शैल इवातिवर्ष्मा नीलाञ्जनाभो रचिताग्रहस्तः ॥ जघान तं दैत्यवरं प्रसह्य देवासुराणां
समरेष्ववध्यम् ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शक्रम्प्रतिशाम्बरायण्युपाख्याने द्वितीयमन्वन्तरकथावर्णनन्नाम
सप्तसप्तत्यधिकशततमोऽध्यायः ॥ १७७ ॥ ॥ छ ॥ ॥ शाम्बरायण्युवाच ॥ ॥ औत्तमस्य मनोः पुत्रांस्तृतीयस्य निबोध मे ॥
अजश्च परशुश्चैव देवदेवो वृधो नयः ॥ १ ॥ देवावृधश्चाप्रतिमो महोत्साहो गजस्तथा ॥ विनीतश्च सुकेतुश्च सुमित्रः सुबलः शुचिः ॥ २ ॥

अतः परं प्रवक्ष्यामि ऋषयः सप्त वै तदा ॥ रजोबाहूर्ध्वबाहू च सवनश्चानघश्च यः ॥ ३ ॥ सुतपाः शक्तिरित्येते ऋषयः सप्त कीर्तिताः ॥
वशवर्तिनः स्वधासानो वशा सत्यहा मतार्दनाः ॥ ४ ॥ पञ्च देवगणाः प्रोक्ताः सर्वे द्वादशकास्तु ते ॥ तेषां सुचित्तिर्नाम्नाऽभूच्छक्रः परपुरञ्जयः॥५॥
आसंस्तस्यासुरा घोरास्तदा दायादबान्धवाः ॥ येषामासीद्बली राजा प्रलम्बो नाम नामतः ॥ ६ ॥ शक्रस्य विप्रियासक्तं तं समुद्राम्बुवाहिनम् ॥
मत्स्यरूपधरो विष्णुर्ग्रस्तवान्बलवत्तरम् ॥ ७ ॥ कालानलाभं तु विदेशशत्रुं रूपेण मात्स्येन जगत्प्रचारः ॥ जघान तं पर्वतकूटमात्रं समुद्र
मध्ये शरदानतृप्तम् ॥ ८ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे तृतीयमन्वन्तरवर्णनन्नामाष्टसप्तत्यधिकशततमो
ऽध्यायः ॥ १७८ ॥ ॥ छ ॥ ॥ शाम्बरायण्युवाच ॥ ॥ तामसस्य मनोः पुत्रांश्चतुर्थस्य निबोध मे ॥ जानुजङ्घः शान्तभयो नरः ख्याति
नरैस्तथा ॥ १ ॥ प्रियभृत्यो ह्यविक्षिच्च प्रस्थिलश्च दृढेषुधिः ॥ कृतश्च कृतगन्धश्च तामसस्य मनोः सुताः ॥ २ ॥ ऋषिर्वनः कठीयान्वै गात्र
श्चैत्रोऽग्निरेव च ॥ ज्योतिर्वासाः पृथुः कार्य ऋषयः सप्त कीर्तिताः ॥ ३ ॥ सत्याः सुपादाः सुरिहा हरश्चेति प्रकीर्तिताः ॥ देवतानां गणा एते चत्वारः
पञ्चविंशकाः ॥४॥ सत्यानामपि भेदौ द्वौ सत्या विश्वाश्च कीर्तिताः ॥ सत्या द्वादश निर्दिष्टा विश्वाः प्रोक्तास्त्रयोदश॥५॥तेषामासीन्महातेजा शिबिरिंद्रः
प्रताप वान् ॥ आसंस्तस्यासुरा घोरास्तदा दायादबान्धवाः ॥६॥ येषामासीन्महातेजा राजा भीमरथः प्रभुः ॥ प्रसाद्य येन ब्रह्माणमवध्यत्वं स्थले वृतम् ॥
॥७॥ जलं स वर्जयामास ततः प्रभृति दुर्मतिः ॥ स ददर्श मरौ कूर्मं पर्वताकारदर्शनम् ॥ ८ ॥ तमारुरोह दुर्बुद्धिः कौतूहलसमन्वितः ॥
समारूढं महाकायमादाय भगवान्हरिः ॥ ९ ॥ कूर्मरूपधरो वेगात्पातालजलमाविशत् ॥ पातालजलमानीय मज्जयित्वा जघान तम् ॥ आक्रम्य
तं महाकायं महता कूर्मवर्ष्मणा ॥ १० ॥ एवं स कूर्मेण जले प्रसह्य देवेश्वरस्याप्रतिमस्य शत्रुः ॥ निपातितः सर्वसुरप्रधानः सर्वेश्वरेणा
प्रतिमेन तेन ॥ ११ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे चतुर्थतामसमन्वन्तरवर्णनन्नामैकोनाशीत्यधिकशततमोऽ
ध्यायः ॥ १७९ ॥ शाम्बरायण्युवाच ॥ रैवतस्य मनोः पुत्रान्पञ्चमस्य निबोध मे ॥ महापुराणः सम्भाव्यः प्रत्यङ्गः परहा शुचिः ॥ १ ॥
चलबिन्दुर्निरामित्रः केतुशृंगो दृढव्रतः ॥ रैवतस्य मनोः पुत्रा ऋषय स्तस्य वच्मि ते ॥ २ ॥ वेदश्रुतिर्वेदबाहुरूर्ध्वबाहुर्यजुस्तथा ॥ हिरण्यरोमा
पर्जन्यः सत्यनेत्रस्तथैव च ॥ ३ ॥ आभूतराजसश्चैव तथा देवाः सुमेधसः ॥ वैकुण्ठाश्चामृताश्चैव चत्वारो देवतागणाः ॥ ४ ॥ एकैकस्मिन्गणे

१ 'वसुवर्तिः सुधामानः वशाः सत्याः प्रतर्दनाः' इति ख० । २, ३ 'नय' इति ख० । ४ 'प्रियव्रतो' इति ख० । ५ 'आभूतजरस' इति ख० ।

देवाः कथितास्तु चतुर्दश ॥ तेषामिन्द्रो विभुर्नाम लोके विख्यातविक्रमः ॥ ५ ॥ आसंस्तस्यासुरा घोरास्तदा दायादबान्धवाः ॥
तेषामासीन्महातेजाः शंभुर्नाम महेश्वरः ॥ ६ ॥ ब्रह्मलोकेन मरणं वृतं येन पितामहात् ॥ स कदाचिन्महाकायं समुद्रजलचारिणम् ॥ ७ ॥
हंसं दृष्ट्वैव जग्राह तश्चारोहति दुर्मतिः ॥ आरूढमात्रमादाय ब्रह्मलोकं जगाम सः ॥ हंसरूपेण तत्रैव जघान भगवान्हरिः ॥ ८ ॥ एवं स हंसेन
हतो महात्मा सर्वेश्वरेणाप्रतिमेन तेन ॥ महाबलः पर्वतमात्रकायः सुरान्तकारी समरेष्वजेयः ॥ ९ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे
मार्कण्डेयवज्रसंवादे इन्द्रशाम्बरायणीयसंवादे पञ्चमरैवतमन्वन्तरवर्णनन्नामाशीत्यधिकशततमोऽध्यायः ॥ १८० ॥ ॥ शाम्बरायण्युवाच ॥
चाक्षुषस्य मनोः पुत्रान्षष्ठस्य शृणु वासव ॥ ऊरुः पूरुः शतद्युम्नः तपस्वी सत्यवान्धृतिः ॥ १ ॥ अग्निष्टुदतिरात्रश्च सुद्युम्नश्च तथानव ॥
हविष्मानुन्नतः श्रीमान्सुधामा विजयस्तथा ॥ २ ॥ अभिमानः सहिष्णुश्च मधुश्रीर्ऋषयः स्मृताः ॥ आद्याः प्रसूता भाव्याश्च लेखाश्च
पृथुकास्तथा ॥ ३ ॥ अष्टकाश्च गणाः पञ्च तदा प्रोक्ता दिवौकसाम् ॥ तेषां मनोजवो नाम बभूवेन्द्रः प्रतापवान् ॥ ४ ॥ आसंस्तस्यासुरा
घोरास्तदा दायादबान्धवाः ॥ येषां बभूव नृपतिर्महामालो बलाधिकः ॥ ५ ॥ स कदाचिद्वनं यातो मृगयां पापनिश्चयः ॥ तत्र चन्द्रांशुसं
काशं ददर्शाश्वं मनोहरम् ॥ ६ ॥ तमारुरोह दुर्बुद्धिर्मृगाघातचिकीर्षया ॥ तमारूढं समादाय तदा वेगात्तुरङ्गमः ॥ ७ ॥ गत्वा पारे समुद्रस्य
चिक्षेपोपरि दुर्मतिम् ॥ क्षिप्तमात्रः स दुर्बुद्धिः पवनेनापवाहितः ॥ ८ ॥ अनासादिततोयश्च पवनेन स तूह्यते ॥ अद्यापि सुमहातेजा लोका
लोकस्य बाह्यतः ॥ ९ ॥ अमृत्युवरदानेन स तु पापः स्वयम्भुवः ॥ वायुमार्गं समाश्रित्य न तु प्राणैर्वियुज्यते ॥ १० ॥ एवं स घोरो वरदानदर्पा
दमृत्युरस्तीति कृतापराधः ॥ देवद्विजानां हयरूपधारी चिक्षेप विष्णुः पवनप्रवाहे ॥ ११ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्र
संवादे षष्ठचाक्षुषमन्वन्तरवर्णनन्नामैकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥ ॥ शाम्बरायण्युवाच ॥ अथान्यस्य भविष्यस्य मनोर्वैवस्वतस्य
च ॥ सप्तमस्य प्रवक्ष्यामि तव पुत्रान्यशस्विनः ॥ १ ॥ इक्ष्वाकुरथ नाभागो विष्णुः शर्यातिरेव च ॥ अवृष्यतुस्तथा प्रांशुर्महात्मा दिष्ट एव च ॥ २ ॥
करूषश्च पृथुध्रश्च सुद्युम्नश्च मनोः सुताः ॥ अत्रिर्वसिष्ठो भगवाञ्जमदग्निश्च कश्यपः ॥ ३ ॥ गौतमश्च भरद्वाजो विश्वामित्रोऽथ सप्तमः ॥ देवा
ह्येकोनपञ्चाशन्मरुतः परिकीर्तिताः ॥ ४ ॥ द्वावश्विनौ विनिर्दिष्टौ विश्वेदेवास्तथा दश ॥ दशैवाङ्गिरसो देवा ह्येवं देवगणा नव ॥ ५ ॥ येषां
शक्रस्तु मोजवी नाम्ना शत्रुक्षयङ्करः ॥ घोरास्तथापि ये त्वासन्दैत्या दायादबान्धवाः ॥ ६ ॥ तेषां बभूव नृपतिर्हिरण्याक्षो महाबलः ॥ नृवराहेण

वपुषा तं जघान हरिः पुरा ॥७॥ दैत्येश्वरं तंसुरसंघभीमं महाबलं पर्वतमात्रकायम् ॥ जघान चक्रेण हरिः प्रसह्य रूपं समास्थाय वराहशीर्षम्॥८॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे सप्तमवैवस्वतमन्वन्तरवर्णनन्नाम द्व्यशीत्यधिकशततमोऽध्यायः ॥ ॥१८२ ॥ शक्र उवाच ॥ अस्मिन्कल्पे महाभागे भविष्या मनवस्तु ये ॥ तेषां पुत्रान्नृषीन्देवाञ्छक्रदायादबान्धवान् ॥ १ ॥ तस्य घातं तथा कृष्णात्सर्वमेतत्प्रकीर्तय ॥ सर्वज्ञकल्पा भवती दिव्यज्ञाना मता मम ॥ २ ॥ शाम्बरायण्युवाच ॥ अष्टमस्य भविष्यस्य सावर्णस्य मनोः सुतान् ॥ कथयिष्यामि ते शक्र महाबलपराक्रमान् ॥ ३ ॥ विजयश्चावरीवांश्च निर्मोहस्सत्यवाक्कृतिः ॥ चरिष्णुश्चाप्यधृष्णुश्च वाचः समतिरेव च ॥ ४ ॥ सावर्णस्य मनोः पुत्रानृषींश्चैव निबोध मे ॥ अश्वत्थामा कृपो व्यासो गालवो दीप्तिमानथ ॥ ५ ॥ ऋष्यशृङ्गस्तथा राम ऋषयः परिकीर्तिताः ॥ सुतपा अमृता भाश्च आत्रेयाश्च गणास्त्रयः ॥ ६ ॥ सर्वे विंशतिभिर्देवगणैर्युक्ता महात्मनाम् ॥ येषामिन्द्रो भविष्यस्तु बलिर्दानवसत्तमः ॥ ७॥ त्वत्कृते देवदेवेन बद्धो यस्त्रिदशेश्वरः ॥ दायादा बान्धवास्तस्य न भविष्यन्ति वासव ॥ ८ ॥ शक्रत्वं तेन कर्तव्यं मन्वन्तरमकण्टकम् ॥ देवदेवकरन्यस्तं दानमेत न्महासुरः ॥ ९ ॥ त्रैलोक्यराजा भवति सावर्णस्यान्तरे मनोः ॥ ॥ तस्मिन्मन्वन्तरे प्राप्ते हिमशैलालयो बली ॥ १० ॥ भविष्यति दुराचारो नानोली[1] नाम राक्षसः ॥ ब्रह्मलब्धवरो रौद्रस्त्रैलोक्योत्सादने रतः ॥ ११ ॥ तं वधिष्यति धर्मात्मा विष्णुर्गरुडवाहनः ॥ चक्रेण शतधारेण जगतां हितकाम्यया ॥ १२ ॥ दंष्ट्राकरालं विकटोग्रवेषं नीलाञ्जनाभं भयदं त्रिलोके ॥ चक्रेण देवः प्रविदार्य कर्ता लोकं समग्रं भयविप्रयुक्तम् ॥ १३ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शक्रशाम्बरायणीसंवादेऽष्टमसावर्णिमन्वन्तरवर्णनन्नाम त्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥ शाम्बरायण्युवाच ॥ ब्रह्मपुत्रस्य तु मनोर्नवमस्य सुताञ्छृणु ॥ धृतिकेतुर्दीप्तिकेतुः पञ्चहस्तो निराकृतिः ॥ १ ॥ पृथुश्रवा बृहद्युम्न ऋचीको बृहतां गणः ॥ ब्रह्मपुत्रस्य ते पुत्रा ऋषयश्च निबोध मे ॥ २ ॥ मेधातिथिर्द्युतिश्चैव सवनो वसुरेव च ॥ ज्योतिष्मान्हव्यसत्यौ च ऋषयः परिकीर्तिताः ॥ ३ ॥ पारा मरीचिगर्भाश्च स्वधर्माणश्च ते त्रयः ॥ गणा द्वादशकाः प्रोक्ता येषामिन्द्रो भविष्यति ॥ ४ ॥ विभुर्नाम महातेजाः सर्वदेवेश्वरो बली ॥ दायादा बान्धवास्तस्य ये भविष्यन्ति धार्मिकाः ॥ ५ ॥ कालकक्ष इति ख्यातास्तेषां राजा भविष्यति ॥ तस्मिन्मन्वन्तरे राजा वसुनाभो भविष्यति ॥ ६ ॥ पुत्रस्तु भविता तस्य वासुदेवो महीपतिः ॥ चक्रवर्ती महातेजाः पद्मनाभ इति श्रुतः ॥ ७ ॥ देवासुरे तु

[1] 'मानामो' इति ख० ।

संग्रामे कालकाक्षं रणोत्कटम् ॥ नरवध्यं महातेजाः पद्मनाभो वधिष्यति ॥ ८ ॥ शरेण जाम्बूनदभूषितेन ब्रह्मास्त्रयुक्तेन रणप्रचण्डम् ॥ हत्वासुरं
कालसमप्रभावं राजा स लोकस्य भयं निहन्ता ॥ ९ ॥ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शक्रशाम्बरायणी
संवादे नवमब्रह्मपुत्रमनन्वन्तरवर्णनन्नाम चतुरशीत्यधिकशततमोऽध्यायः॥१८४॥ शाम्बरायण्युवाच ॥ धर्मपुत्रस्य तु मनोर्दशमस्य सुताञ्छृणु ॥
सुक्षेत्र उत्तमौजाश्च भूरिशोणश्च वीर्यवान् ॥ १ ॥ शतानीको निमिर्मित्रो वृषसेनो जयद्रथः ॥ भूरिद्युम्नः सुवर्मा च धर्मपुत्रमनोः सुताः ॥ २ ॥
आपोमूर्तिर्हविष्मांश्च सृतिकिश्चाव्ययस्तथा ॥ नाभागः प्रमितश्चैव सौरभा[2] ऋषयस्तथा ॥ ३ ॥ प्राणाख्याः शतसंख्याश्च देवतानां गणास्तथा ॥
भविता तस्य भविता शान्तिरिन्द्रः प्रतापवान् ॥ ४ ॥ दायादा बान्धवास्तस्य भविष्यन्त्यसुराश्च ये ॥ तेषां च भविता राजा वाली नाम महासुरः
॥ ५ ॥ द्योतयिष्यति तं विष्णुर्गदया भीमवेगया ॥ देवासुरे तु संग्रामे देवानां हितकाम्यया ॥ ६ ॥ गदानिपाताभिहते सुरेन्द्रे महाबले देववरेण
तेन ॥ त्रैलोक्यमेतद्भविता समग्रं विनष्टदोषं सुरविप्रजुष्टम् ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शक्रशाम्बरायणीसंवादे
दशमधर्मपुत्रमन्वन्तरवर्णनं नाम पञ्चाशीत्यधिकशततमोऽध्यायः ॥ ॥ १८५ ॥ शाम्बरायण्युवाच ॥ रुद्रपुत्रस्य ते पुत्रान्वक्ष्याम्येकादशस्य तु ॥
धर्मनित्यान्महाभागांस्त्रैलोक्यस्य परायणान् ॥ १ ॥ सर्वतुंगः सुशर्मा च सेनानीकः पुरोद्धतः ॥ क्षेमधन्वा दृढेन्द्रश्च चादर्शः पुण्ड्रकस्तथा ॥२॥
मनुपुत्राः स्मृता ह्येते ऋषयश्च निबोध मे ॥ हविष्मांश्च वपुष्मांश्च वरुणाब्धिश्च[4] निस्तरः ॥३॥विष्णुश्चैवाग्नितेजाश्च ऋषयः सप्त कीर्तिताः ॥ निर्मथ्या
रथयश्चैव कामगाश्च गणास्त्रयः ॥ ४ ॥ त्रिंशत्त्रिंशत्तथा देवा एकैकस्मिन्गणे स्मृताः ॥ तेषामिन्द्रो वृषो नाम भविष्यति महाबलः ॥ ५ ॥ दायादा
बान्धवाश्चैव भविष्यन्ति सुराश्च ये ॥ तेषां तु भविता राजा दशग्रीवः प्रतापवान् ॥ ६ ॥ घातयिष्यति तं विष्णुस्त्रैणं रूपमुपाश्रितः ॥ शूलाग्रेण
विनिर्भिद्य रणे देवाऽसुरे तदा ॥ ७ ॥ तमवध्यं दुराधर्षं पुरुषाणां स्वयम्भुवा ॥ गतं तपःप्रभावे सा विष्णुस्तं घातयिष्यति ॥ ८ ॥
नीलोत्पलाभं तपनीयवर्णं सुवृत्तजानूरुयुगं स्वरूपम् ॥ रूपं स्त्रियांश्चारुतरं स कृत्वा सुरारिमुग्रं सहसाऽरिहन्ता ॥ ९॥ इति श्रीविष्णुधर्मोत्तरे प्रथम
खण्डे मार्कण्डेयवज्रसंवादे शक्रशाम्बरायणीसंवादे एकादशमन्वन्तरवर्णनन्नाम षडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥ शाम्बरायण्युवाच ॥ ॥११७॥
मनोस्त्वं दक्षपुत्रस्य द्वादशस्यात्मजाञ्छृणु ॥ देववानुपदेवश्च देवश्रेष्ठो विदूरथः ॥ १ ॥ मित्रवान्मित्रदेवश्च मित्रसेनश्च वीर्यवान् ॥ मित्रबाहुः

१ 'सत्पतिः' इति ख० । २ 'सौमरः' इति ख० । ३ 'वारी' इति ख० । ४ 'वरुणोविश्व' इति ख० ।

सुवर्चाश्च दक्षपुत्रमनोः सुताः ॥ २ ॥ सत्तमोद्यौर्द्युतिश्चैव तपनः सुतपास्तथा ॥ तपोरतिस्तपस्वी च ऋषयः सप्त कीर्तिताः ॥ ३ ॥ सुशर्माणः सुतपसो हरिता रोहितास्तथा ॥ सुताराख्या गणाः पञ्च प्रत्येकं दशको गुणः ॥ ४ ॥ ऋतधामा च धर्मात्मा तेषामिन्द्रः प्रतापवान् ॥ दायादा बान्धवास्तस्य भविष्यन्त्यसुराश्च ये ॥५॥ तेषां च भविता राजा नरको नाम नामतः ॥ स्त्रीपुंसोः सत्त्ववध्यश्च वरदानात्स्वयम्भुवः ॥६ ॥ हरिर्नपुंसको भूत्वा घातयिष्यति तं तदा ॥७॥ देवान्तकं कालसमप्रभावं महासुरं क्लीबवपुर्महात्मा ॥ निहत्य तं लोकमिदं समग्रं भीत्या विहीनं भगवान्स कर्ता ॥ ८ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे द्वदशस्य दक्षपुत्रस्य मनोर्वंशानुकीर्तनन्नाम सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥ शाम्बरायण्युवाच ॥ त्रयोदशस्य रौच्यस्य मनोः पुत्रन्निबोध मे ॥ चित्रसेनो विचित्रश्च नयो धर्मभृतो धृतिः ॥१॥ सुनेत्रो वृक्षवृद्धिश्च सुनयो धर्मयो दृढः ॥ रौच्यस्यैते मनोः पुत्राः शृणुष्व ऋषयो मम ॥२॥ धृतिमानव्ययश्चैव निःप्रकोपो निरुत्सुकः ॥ निर्माणस्तत्त्वदर्शी च दवयायत कीर्तिताः॥३॥सुत्रामाणः सुधर्माणः शुभकर्माण एव च ॥ एते शक्र तदा प्रोक्ता देवतानां गणास्त्रयः॥४॥एकैकस्मिन्गणे देवा एकादश तदा शुभाः॥ देवेन्द्रश्च तदा तेषां भविष्यति बृहस्पतिः ॥ ५ ॥ दायादा बान्धदास्तस्य ये भविष्यन्ति वासव ॥ टिट्टिभो नाम दुष्टात्मा तेषां राजा भविष्यति ॥ ६ ॥ तस्यापि भविता मृत्युर्देवदेवाज्जनार्दनात् ॥ मायूरेण च रूपेण सततं पन्नगाशिना ॥ ७ ॥ स तु देवासुरे युद्धे सर्परूपेण दुर्मतिः ॥ युद्धं कृत्वा निरुत्साहान्सर्वान्देवगणांस्तथा ॥ ८ ॥ निष्प्रयत्नेषु देवेषु मायूरं रूपमाश्रितः॥ घातयिष्यति तं दुष्टं देवदेवो जनार्दनः॥९॥ महाकलापः सशिखी महात्मा प्रवुद्धनीलोत्पलचारुकण्ठः ॥ तं दानवं तत्र रणे प्रसह्य हत्वा त्रिलोकीं मुदितां हि कर्ता ॥ १० ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे त्रयोदशरौच्यमन्वन्तरवर्णनो नामाष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥ शाम्बरायण्युवाच ॥ चतुर्दशस्य भौत्यस्य शृणु पुत्रान्मनोर्मम ॥ तरङ्गे भेदभिद्बुध्न्यस्तरस्वानुग्र एव च ॥ १ ॥ अभिमानी प्रवीरश्च जिष्णुः संक्रन्दनस्तथा ॥ तेजस्वी सुलभश्चैव भौत्यस्यैते मनोः सुताः ॥ २ ॥ अग्नीध्रश्चातिबाहुश्च मागधश्च तथा शुचिः ॥ अजितो युक्तगोशक्यं ऋषयः सप्त कीर्तिताः ॥ ३ ॥ चाक्षुपाश्च कनिष्ठाश्च पवित्रा भजिरास्तथा ॥ वयोवृद्धा देवगणाः पञ्च प्रोक्तास्तु सप्तकाः ॥ ४ ॥ तेषामिन्द्रः शुचिर्नाम तस्य दायादबान्धवाः ॥ ये भविष्यन्ति भविता राजा तेषां महासुखः ॥ ५ ॥ दिव्यं वर्षसहस्रं तु युद्धं देवासुरं तदा ॥ भविष्यति महाघोरं तस्यान्ते

१ 'तरङ्गभीरहिर्बुध्न्य' इति ख० । २ 'युक्तगोधश्च' इति क० ।

तं महासुरम् ॥ ६ ॥ आस्थितं तामसीं मायां घातयिष्यति केशवः ॥ आरूढः कुञ्जरं दिव्यं चरत्पर्वतसन्निभम् ॥ ७ ॥ उत्खातपर्वतसमं चक्रेण मधुसूदनः ॥ रथस्थं तं महादैत्यं घातयिष्यति दुर्मतिम् ॥ ८ ॥ तस्मिन्हते वासवदेवशत्रौ महाबले कालसमप्रभावे ॥ त्रैलोक्यमेतद्विरुजं समन्तात्तदा भविष्यत्यमलप्रतापम् ॥ ९ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे चतुर्दशभौत्यमनुवर्णनन्नाम नवाशीत्यधिकशततमोऽध्यायः ॥ १८९ ॥ शक्र उवाच ॥ अस्मिन्मन्वन्तरे भद्रे गरुडस्य च सम्भवः ॥ मया दृष्टमतीतेषु कथं गरुडवाहनः ॥ १ ॥ असुरान्घातयामास भविष्येषु तथैव च ॥ गरुडं तु समारुह्य घातयिष्यति तत्कथम् ॥ २ ॥ मन्वन्तरान्ते सर्वेषां क्षयो यस्मात्प्रकीर्तितः ॥ तस्मादेतन्ममाचक्ष्व कुशला ह्यसि धार्मिका ॥ ३ ॥ शाम्बरायण्युवाच ॥ देवानामसुराणां च प्रतिमन्वन्तरं यथा ॥ सम्भवस्त्रिदशश्रेष्ठ गन्धर्वाणां तथा स्मृतः ॥ ४ ॥ नागानां राक्षसानां च यक्षाणामथ पक्षिणाम् ॥ सुपर्णानां तथा शक्र प्राणिनामप्यशेषतः ॥ ५ ॥ सुपर्णानां प्रधानस्तु तत्र मन्वन्तरे तदा ॥ सदैव राजन्भवति गरुडः पततांवरः ॥ ६ ॥ वाहनत्वे तथा तस्य देवेशस्य प्रपद्यते ॥ प्रादुर्भावाण्यथोक्तानि यथा विष्णोर्मया तव ॥ ७ ॥ तथैव तस्य ज्ञेयानि गरुडस्य महात्मनः ॥ देवास्तु कृतकर्माणः शक्र मन्वन्तरक्षये ॥ ८ ॥ त्यक्ताधिकारा गच्छन्ति परलोकमितः प्रभो ॥ तल्लिङ्गाश्च तथा मन्त्रास्तैरेव सहिताः सुरैः ॥ ९ ॥ समूहश्चैव मन्त्राणां देवस्त्रिदशपूजितः ॥ शरीरी ब्रह्मसदने स तु नित्यः प्रकीर्तितः ॥ १० ॥ यावज्जीवति वै ब्रह्मा सर्वलोकनमस्कृतः ॥ तदा तु पुरुषं ब्रह्मा देवदेवं प्रपद्यते ॥ ११ ॥ त्यक्त्वा शरीरं देवोऽपि पुरुषं प्रतिपद्यते ॥ पुरुषोऽपि महासृष्टिं महाभूतगणं तथा ॥ १२ ॥ करोति तद्वदेवेह देवः प्राग्वच्छतक्रतो ॥ एवं सर्वमिदं नित्यं त्वनित्यं वा तवेरितम् ॥ १३ ॥ नासतो विद्यते भावो नाभावो विद्यते सतः ॥ उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ १४ ॥ अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ॥ विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥ १५ ॥ तस्याविनाशिनः शक्र सूक्ष्मस्यापि महात्मनः ॥ प्रादुर्भावसहस्राणि समतीतान्यनेकशः ॥ १६ ॥ भूयश्चैव भविष्यन्ति नात्र कार्या विचारणा ॥ वैवस्वतेऽस्मिन्देवेश यथा मन्वन्तरे शुभे ॥ १७ ॥ प्रादुर्भावानि दृष्टानि मया तस्य महात्मनः ॥ वराहं वामनं चैव तथा शक्र त्रिविक्रमम् ॥ १८ ॥ नारसिंहं तथा मात्स्यं कूर्मं हंसं तथैव च ॥ नृवराहं तथा रामं रामं च सुरसत्तम ॥ १९ ॥ मान्धातारं पृथुं चैव कार्तवीर्यार्जुनं तथा ॥ धातारं च तथा मित्रं चांशुमर्यमणं तथा ॥ २० ॥ पूषणं च भवन्तं च वरुणं भगमेव च ॥ त्वष्टारं च विवस्वन्तं सवितारं तथैव च ॥ २१ ॥ विष्णुं चन्द्रमसं रुद्रं ब्रह्माणं यममेव च ॥ हुताशनं वैश्रवणं

शेषं नागेश्वरं तथा ॥ २२ ॥ ग्रहमुख्यं बुधं चैव अपः खं पृथिवीं तथा ॥ वायुस्तेजश्च देवेश तथैवान्यानि वासव ॥ २३ ॥ प्रादुर्भावसहस्राणि तस्य दृष्टानि यानि ते ॥ मन्वन्तरेष्वतीतेषु तस्यातीतान्यनेकशः ॥ २४ ॥ भविष्यन्ति भविष्येषु शतशोऽथ सहस्रशः ॥ मन्वन्तरमथासाद्य चैकमेकं तथा तव॥२५॥ प्रादुर्भावमिदं प्रोक्तं द्विगुणं द्विगुणं यतः[1] ॥ प्रादुर्भावान्यशेषेण वासुदेवस्य चक्रिणः ॥ कः समर्थो भवेद्वक्तुमिह वर्षशतैरपि ॥ २६ ॥ एकः स देवो भुवनस्य गोप्ता परः पुराणः पुरुषो महात्मा ॥ तस्यांशमात्रं भुवनं समग्रं भोगास्त्रयस्तस्य न वर्णनीयाः ॥ २७ ॥ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शक्रशाबरायणीसंवादेऽनेकविष्णुप्रादुर्भाववर्णनं नाम नवत्यधिकशततमोऽध्यायः ॥ १९० ॥ ॥ छ ॥ ॥ शक्र उवाच ॥ ॥ केन कर्मविपाकेन स्वर्गता त्वं वरानने ॥ दीर्घकालमिहस्थासि तथा चैवाप्यनागतान् ॥ १ ॥ कथं मन्वन्तरान्वेत्सि तन्ममाचक्ष्व पृच्छतः ॥ त्वत्समा दिवि नैवान्या काचिदस्ति चिरन्तनी ॥२॥ एकरूपः कथं कर्ता त्वया दृष्टः सुरेश्वरि ॥ मन्वन्तराणां जानासि भविष्याणां तथा गतिम् ॥३॥ शाम्बरायण्युवाच ॥ त्रिदिवे सप्तमः कल्पो ममायं त्रिदिवेश्वर ॥ देवदेवप्रसादेन वसन्त्या वर्ततेऽनघ ॥ ४ ॥ परार्धश्च तथा ब्राह्म्यो जनलोके गतो मम ॥ एकरूपास्तथा कल्पा मया दृष्टाः सुरेश्वर ॥ ५ ॥ मन्वन्तराणां जानामि भविष्याणां तथा गतिम् ॥ मया मानुष्यमासाद्य मासनक्षत्रपूजनम् ॥ ६ ॥ प्रतिमासं कृतं विष्णोर्यावज्जीवं सुरेश्वर ॥ तेन कर्मविपाकेन त्रिदिवे वसतिश्चिरम् ॥ मयेयं समनुप्राप्ता देवदेवप्रसादजा ॥ ७ ॥ अस्मादपि महाभाग ब्रह्मलोकं नयत्युत ॥८॥ मार्कण्डेय उवाच ॥ एतदुक्त्वा महाभाग शक्रं सा शाम्बरायणी ॥ जगामादर्शनं राजंस्तत्रैव सुरपूजिता ॥९ ॥ मासर्क्षपूजामधिकृत्य विष्णोर्मया तवेदं कथितं समग्रम् ॥ तस्मात्प्रयत्नेन नरेन्द्रचन्द्र मासर्क्षपूजां प्रयतेत कर्तुम् ॥ १० ॥ श्रोतव्यमेतत्प्रयतेन वज्र पापापहं धर्मविवृद्धिदं च ॥ संवादमग्र्यं त्रिदशेश्वरस्य सिद्धाङ्गनायाश्च परं पवित्रम् ॥ ११ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शक्रशाम्बरायणीकथानकं नामैकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥ ॥ वज्र उवाच ॥ श्रुतवानस्मि धर्मज्ञ देववेश्मोपलेपने ॥ फलं गदति ते ब्रह्मञ्छ्रोतुमिच्छाम्यहं पुनः ॥ १ ॥ लेपनादपि यत्स्वर्गफलदं च यथा भवेत् ॥ तन्मे कर्म त्वमाचक्ष्व सर्वज्ञोऽसि भृगूत्तम ॥ २ ॥ मार्कण्डेय उवाच ॥ स्तुतिर्लघुतरा तस्य लेपनादपि यादव ॥ तथा बहुफला प्रोक्ता तां कुरुष्व यदीच्छसि ॥ ३ ॥ ये स्तुवन्ति महादेवं शङ्खचक्रगदाधरम् ॥ तेषां न

१ 'द्विगुणं तु यथार्थतः' इति ख० ।

दुर्लभं किञ्चिदिह लोके परत्र च ॥ ४ ॥ वासुदेवं स्तुवन्मर्त्यः सर्वपापं व्यपोहति ॥ स्वर्गं चानन्त्यमाप्नोति नात्र कार्या विचारणा ॥ ५ ॥ धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चाप्नुयाद्धनम् ॥ कामानवाप्नुयात्कामी प्रजार्थी प्राप्नुयात्प्रजाः ॥ ६ ॥ रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ॥ भयान्मुच्येत भीतश्च मुच्येदापन्न आपदः ॥ ७ ॥ दुर्गाण्यतितरत्याशु पुरुषः पुरुषोत्तमम् ॥ स्तुवन्मनुजशार्दूल नात्र कार्या विचारणा ॥ ८ ॥ तस्मात्सर्वप्रयत्नेन दिव्यैर्ऋषिकृतैः स्तवैः ॥ स्तूयान्नरेन्द्र सततं देवदेवं सुभाषितैः ॥ ९॥ कमलपत्रशुभामललोचनं हरिमरिन्नमचिन्त्यपराक्रमम् ॥ शरणमेत्य महाभयपीडिता भुवि भवन्ति नरा भयवर्जिताः ॥ १० ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे स्तुतिमाहात्म्य वर्णनो नाम द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥ ॥ मार्कण्डेय उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम् ॥ स्तुतेन देवदेवेन गजेन्द्रस्य तु यत्कृतम् ॥ १ ॥ पुरा वज्र महाबाहू गन्धर्वौ यौ हाहा हूहू ॥ गीतैः परस्परं स्पर्धां चक्रतुस्तौ परन्तप ॥२ ॥ स्पर्धमानौ परं राजंश्चक्रतुस्तौ परस्परम् ॥ आवयोः प्राश्निकः साधुः कोऽस्मिँल्लोके भविष्यति ॥ ३ ॥ तयोरथाहुर्गन्धर्वा देवलोऽयं भविष्यति ॥ एवमुक्तौ[1] ततस्तौ तु नेच्छेतां देवलं मुनिम् ॥ ४ ॥ नायं जानाति गीतस्य विशेषमिति मोहितौ ॥ तौ शशाप महाक्रुद्धो देवलः सुमहा तपाः ॥ ५ ॥ अवज्ञा जानतो यस्माद्भवद्भ्यां मम वै कृता ॥ तस्माच्छापं प्रदास्यामि युवयोर्देवगायनौ[2] ॥ ६ ॥ हाहा भविष्यति करी हूहू नक्रो भविष्यति ॥ नक्रं च देवदेवेशो गजाकर्षणतत्परम् ॥ ७ ॥ नागस्तुतस्तु चक्रेण द्विधा कर्ता तदा युवाम् ॥ उभौ स्वं लप्स्यथो रूपं शापस्यान्ते[3] तु गायनौ ॥ ८ ॥ शापेन तौ तस्य ततस्तु जातौ मया यथोक्तौ तव राजसिंह ॥ गजस्तु तेनापि जनार्दनेन सम्मोचितौ तौ द्विजवर्यशापात् ॥ ९ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे गन्धर्वयोर्गजनक्री करणं नाम त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥ ॥ छ ॥ ॥ वज्र उवाच ॥ ॥ भगवञ्छ्रोतुमिच्छामि गजेन्द्रस्य विमोक्षणम् ॥ विस्तरेण महाभाग शापान्नक्रस्य चोभयोः ॥ १ ॥ मार्कण्डेय उवाच ॥ अस्त्यस्मिञ्छृङ्गवान्नाम जम्बूद्वीपे कुलाचलः ॥ महाधातुसमुन्नद्धैर्युतः शृङ्गैर्नभङ्कषैः ॥ २ ॥ यस्य शृङ्गत्रयं मध्यं भाति राजन्विशेषवत् ॥ ब्रह्मार्कसोमनिलयं मनोहारि दिवं गतम् ॥ ३ ॥ तेषामथैकं सौवर्णमपरं राजतं महत् ॥ सर्वरत्नमयं चैकं मध्यमं ब्रह्मणः क्षयम् ॥ ४ ॥ काञ्चनं सूर्यनिलयं राजतं शशिनः क्षयम् ॥ त्रिकूटं शैलराजाभं रत्नपक्षद्रुमै

१ 'एवमुक्तौ गतौ तौ तु गच्छेताम्' इति क० 'एवमुक्तौ मतौ तौ तु गच्छेताम्' इति ख० । २ 'गानयोः' इति क० । ३ 'स्वान्तम्' इति ख० ।

र्युतम् ॥ ५॥ न तत्कृतघ्नाः पश्यन्ति न नृशंसा न नास्तिकाः ॥ नातप्ततपसः केचिन्नैव पापकृतो जनाः ॥ ६ ॥ तस्य सानुमतः पृष्ठे सरो व्याकोशपङ्कजम् ॥ कारण्डवसमाकीर्णं राजहंसोपशोभितम् ॥७॥ सचित्तमिव गम्भीरं सचित्तमिव निर्मलम् ॥ बहूपयोग्यं च तथा सतान्निष्कृति कृन्नृप ॥ ८ ॥ मीनच्छिन्नाभ्रशकलस्फुटकह्लारतारकम् ॥ महाकुमुदरात्रीशं द्वितीयमिव चाम्बरम् ॥ ९ ॥ उत्फुल्लपद्मरजसा मधुपैः परि पिञ्जरैः ॥ समन्ताद्व्याप्य सत्पद्मं तपनीयसमैरिव ॥ १० ॥ च्युतेन पद्माद्रजसा हंसैः केशरमन्थनैः ॥ वायुना भ्राम्यमाणेन दुर्विभाव्योदकोम्बु जम् ॥ ११ ॥ महान्तः पद्मिनीपत्रा वायुभ्रस्ताभ्रशीकरैः ॥ युक्ता मुक्ताफलाकारैर्यत्र भान्ति सहस्रशः ॥ १२ ॥ नृत्यन्ति कमला यत्र शफरी स्फुरणाहताः ॥ भ्रमरोद्गीतसंघोषै रसत्सारसनादिकम् ॥ १३ ॥ हसन्तमिव हंसौघैर्नृत्यन्तमिव चोर्मिभिः ॥ उद्गीथमिव कुर्वाणं कारण्डवरवैः शुभैः ॥ १४ ॥ मध्ये त्वगाधं चतुरः प्रतीहारैरिवोद्धतैः ॥ उत्सारयन्तं कल्लोलैर्वायुक्षिप्तद्रुमोद्भवान् ॥ १५ ॥ भ्रमरान्तरसंलीनकह्लारकुसुमा क्षुभिः ॥ पश्यन्तमिव शैलस्य शृङ्गाणां तन्महोच्छ्रयम् ॥ १६ ॥ यत्रातिशीतलं तोयं लघु स्वादु सुधानिभम् ॥ अन्यच्छृङ्गं[1] मनोहारि भृङ्गनाद निनादितम् ॥ १७ ॥ तस्मिन्सरसि दुष्टात्मा विरूपोऽन्तर्जलेशयः ॥ हूहूर्जगाम ग्राहत्वं शापाद्वै देवलस्य तु ॥ १८ ॥ तस्मिन्नेव तथा शैले हाहा गन्धर्वसत्तमः ॥ बभूव यूथपो हस्ती चलत्पर्वतसन्निभः ॥ १९ ॥ अथ दन्तोज्ज्वलवपुः कदाचिद्गजयूथपः ॥ आजगाम महीपाल चोत्फुल्ल कमलं सरः ॥ २० ॥ वंशदण्डैः स कलभैर्वृतश्चैव करेणुभिः ॥ वासयन्मदगन्धेन तं त्रिकूटं महीधरम् ॥ २१ ॥ स गजोऽञ्जनसंकाशो मदा कुञ्चितलोचनः ॥ सलीलं पङ्कजवने यूथमध्यगतो व्रजम् ॥ २२ ॥ गृहीतस्तेन रौद्रेण ग्राहेणाव्यक्तमूर्तिना ॥ पश्यतः सर्वयूथस्य क्रोशतश्चाति दारुणम् ॥ २३ ॥ स चकार महायत्नमात्मनः परिमोक्षणे ॥ ग्राहोऽपि यत्नमातिष्ठत्कुञ्जराकर्षणे महान् ॥ २४ ॥ ग्राहोऽपि बलिनं नागं न शशाक महाम्भसि ॥ आक्रष्टुं न च नागोऽपि तथात्मानं विमोक्षितुम् ॥ २५ ॥ विस्फूर्ज्य च यथाशक्ति विक्रुश्य च महारवान् ॥ व्यथितः स निरुद्योगः पश्चिमामागतो दशाम् ॥२६॥ स तु नागवरः श्रीमान्नारायणपरायणः ॥ जगाम शरणं विष्णुं तुष्टाव च परन्तपः ॥२७॥ गृहीत्वा स कराग्रेण सरसः कमलोत्तमम् ॥ निवेद्य भक्त्या कृष्णाय गजः स्तोत्रमुदीरयत् ॥२८॥ गज उवाच ॥ नमोनमः कारणवामनाय नारायणायासुरदारणाय ॥ श्रीशार्ङ्गचक्रासिगदाधराय नमोऽस्तु तस्मै पुरुषोत्तमाय ॥ २९ ॥ आद्याय वेदनिलयाय महोरगाय सिंहाय दैत्यनिलयाय चतुर्भुजाय ॥ ब्रह्मेन्द्र

१ 'भृङ्गराज' इति ख० ।

रुद्रमुनिचारणसंस्तुताय देवोत्तमाय वरदाय नमोऽच्युताय ॥ ३० ॥ नागेन्द्रभोगशयनासनसुप्रियाय गोक्षीरहेमशुकनीलघनोपमाय ॥ पीताम्ब
राय मधुकैटभनाशनाय भक्तप्रियाय वरदीप्तसुदर्शनाय ॥ ३१ ॥ नाभिप्रजातकमलस्थचतुर्मुखाय क्षीरोदकार्णवनिकेतयशोधराय ॥ नानाविचित्र
मुकुटाङ्गदभूषणाय सर्वेश्वराय विजयाय नमो नराय ॥ ३२ ॥ ([1] विश्वात्मने परमकारणकारणाय फुल्लारविन्दविपुलायतलोचनाय ॥ देवेन्द्रभावन
परीक्षितपौरुषाय योगीश्वराय विजयाय नमो वराय ॥३३॥) लोकायनाय त्रिदशायनाय ब्रह्मायणायात्मगुणायनाय ॥ धर्मायणायैकजनायनाय
महावराहाय सदा नतोऽस्मि॥३४॥ अचिन्त्यमव्यक्तमनन्तरूपं नारायणं कारणमादिदेवम् ॥ युगान्तशेषं पुरुषं पुराणं तं वासुदेवं शरणं प्रपद्ये ॥
॥ ३५ ॥ अदृश्यमच्छेद्यमनादिमध्यं महर्षयो ब्रह्मनिधिं सुरेशम् ॥ वदन्ति यं वै पुरुषं सनातनं तं वासुदेवं शरणं प्रपद्ये ॥ ३६ ॥ यमक्षरं ब्रह्म
वदन्ति सर्वगं निशम्य यं मृत्युमुखात्प्रमुच्यते ॥ तमीश्वरं दृप्तमनुत्तमैर्गुणैः परायणं विष्णुमुपैति शाश्वतम् ॥ ३७ ॥ कार्यक्रियाकारणमप्रमेयं हिर
ण्यनाभं कनकारविन्दम् ॥ महाबलं वेदनिधिं सुरोत्तमं व्रजामि विष्णुं शरणं जनार्दनम् ॥ ३८ ॥ विचित्रकेयूरमहार्हनिष्कं[2] रत्नोत्तमालङ्कृतसर्व
गात्रम् ॥ पीताम्बरं काञ्चनभक्तिचित्रं मालाधरं केशवमभ्युपैमि ॥ ३९ ॥ भवोद्भवं वेदविदां वरिष्ठं योगात्मनां साङ्ख्यविदां वरिष्ठम् ॥ आदित्यच
न्द्राश्विवसुप्रभावं प्रभुं प्रपद्येऽच्युतमात्मभूतम् ॥ ४० ॥ श्रीवत्साङ्कं महादेवं वेदगुह्यमनुत्तमम् ॥ प्रपद्ये सूक्ष्ममचलं भक्तानामभयप्रदम् ॥ ४१ ॥
प्रभवं सर्वलोकानां निर्गुणं च गुणात्मनाम् ॥ प्रपद्ये मुक्तसङ्गानां यतीनां परमां गतिम् ॥ ४२ ॥ भगवन्तं सुराध्यक्षमक्षरं पुष्करेक्षणम् ॥ शरण्यं
शरणं भक्त्या प्रपद्ये ब्राह्मणप्रियम् ॥ ४३ ॥ ब्रह्मादेशं त्रिलोकेशमाद्यमेकमनामयम् ॥ भूतात्मानं महात्मानं प्रपद्ये मधुसूदनम् ॥ ४४ ॥ क्षेत्रज्ञं
पुरुषं विष्णुं त्रिगुणातीतमव्ययम् ॥नारायणमणीयांसं प्रपद्ये शरणं हरिम् ॥ ४५ ॥ एकाय लोकतन्त्राय परतः परमात्मने ॥ नमः सहस्रशिरसे
अनन्ताय महात्मने ॥ ४६ ॥ वरेण्यमनघं देवमृषयो वेदपारगाः ॥ कीर्तयन्त्यभवं सर्वे तं प्रपद्ये सनातनम् ॥ ४७ ॥ नमस्ते पुण्डरीकाक्ष भक्ता
नामभयप्रद ॥ सुब्रह्मण्य नमस्तेऽस्तु त्राहि मां शरणाऽगतम् ॥ ४८ ॥ मार्कण्डेय उवाच ॥ भक्तिं तस्य तु सञ्चिन्त्य नागस्याऽमोघसंस्तवः ॥
प्रीतिमानभवद्राजन्सद्यश्चक्रगदाधरः ॥ ४९ ॥ सान्निध्यं कल्पयामास ग्राहं चक्रेण माधवः ॥ मोक्षयामास च गजं पाशेभ्यः शरणागतम् ॥ ५० ॥
स हि देवलशापेन हाहा गन्धर्वसत्तमः ॥ गजत्वमभवत्त्यक्त्वा मोक्षं प्राप्य दिवं गतः ॥५१॥ ग्राहाद्विमुक्तः सद्यस्तु गजो गन्धर्वतां गतः ॥ ग्राहो

१ कोष्ठान्तर्गतः पाठः खपुस्तके नास्ति । २ 'निष्कलम्' इति क० ।

गन्धर्वतां प्राप्तो यः कृष्णेन निपातितः ॥ ॥ ५२ ॥ तस्यापि देवलकृतः शापदोषोऽभवत्पुरा ॥ प्रीतिमांस्त्रायते विष्णुः सद्यः संसारसागरात् ॥
॥ ५३ ॥ क्रुद्धोऽपि निघ्नन्देवत्वमरातीनां प्रयच्छति ॥ तौ च स्वं स्वं वपुः प्राप्य प्रणिपत्य जनार्दनम् ॥ ५४ ॥ गन्धर्वाधिपती शीघ्रं परां
निर्वृतिमागतौ ॥ इदं चैव महाबाहो पुरा देवोऽभ्यभाषत ॥ ५५ ॥ दृष्ट्वा मुक्तौ गजग्राहौ भगवान्मधुसूदनः ॥ योऽग्रहीन्नागराजं च मां चैव
प्रणिधानवान् ॥ ५६ स्मरिष्यति सरश्चेदं युवयोर्मोक्षणं तथा ॥ गुल्मं कीचकवेणूनामिमं शैलवरं तथा ॥ ५७ ॥ अश्वत्थं भास्करं
गङ्गां नैमिषारण्यमेव च ॥ प्रयागं ब्रह्मतीर्थं च दण्डकारण्यमेव च ॥ ५८ ॥ संस्मरिष्यन्ति ये मर्त्याः सम्यक्श्रोष्यन्ति चापि ये ॥
न ते दुःस्वप्नपापस्य भोक्तारो मत्परिग्रहात् ॥ ५९ ॥ सर्वपापैर्विमोक्ष्यन्ति कल्याणानां च भागिनः ॥ भविष्यन्ति तथा पुण्यां गतिं यास्यन्ति
मानवाः ॥ ६० ॥ दुःस्वप्नं च नृणां तेषां सुस्वप्नत्वं प्रयास्यति ॥ कौर्म्यं मात्स्यं च वाराहं वामनं तार्क्ष्यमेव च ॥ ६१ ॥ नारसिंहं तथा रूपं
सृष्टिप्रलयकारकम् ॥ एतानि प्रातरुत्थाय संस्मरिष्यन्ति ये नराः ॥ ६२ ॥ सर्वपापैर्विशुद्धास्ते यास्यन्ति परमां गतिम् ॥ मार्कण्डेय उवाच ॥
एवमुक्त्वा तु राजेन्द्र देवदेवो जनार्दनः ॥ ६३ ॥ अस्पृशद्गजगन्धर्वं ग्राहगन्धर्वमेव च ॥ तेन स्पृष्टौ तु तौ सद्यो दिव्यमाल्याम्बरान्वितौ ॥ ६४ ॥
विमानेऽभिमते प्राप्ते जग्मतुस्त्रिदशालयम् ॥ तत्र देवपतिः कृष्णो मोक्षयित्वा गजोत्तमम् ॥ ६५ ॥ ऋषिभिस्तूयमानस्तु गुह्यैर्वेदपदाक्षरैः ॥
गतः स भगवान्विष्णुर्दुर्विज्ञेयगतिर्विभुः ॥ ६६ ॥ गजेन्द्रमोक्षणं दृष्ट्वा सर्वे सेन्द्रपुरोगमाः ॥ ब्राह्मणानग्रतः कृत्वा सर्वे प्राञ्जलयोऽभवन् ॥ ६७ ॥
गजेन्द्रमोक्षणं पुण्यं सर्वपापविमोचनम् ॥ श्रावयन्प्रातरुत्थाय सर्वपापैः प्रमुच्यते ॥ ६८ ॥ श्रद्धया हि यदुश्रेष्ठ स्मृतेन कथितेन च ॥ गजेन्द्र
मोक्षणेनैव दीर्घमायुरवाप्नुयात् ॥ ६९ ॥ मया ते कथितं दिव्यं पवित्रं पापनाशनम् ॥ (कीर्तयस्व महाबाहो महादुःस्वप्ननाशनम् ॥ ७० ॥)
कीर्त्यमानं च विप्रेभ्यः शृणु भक्त्या यथोदितम् ॥७१॥ वरं वरेण्यं वरपद्मनाभं नारायणं पद्मनिधिं सुरेशम् ॥ तं देवगुह्यं पुरुषं पुराणं ववन्दिरे
ब्रह्मविदां वरिष्ठाः ॥ ७२ ॥ एतत्पुण्यं यदुश्रेष्ठ नराणां पापकर्मिणाम् ॥ दुःस्वप्नदर्शने घोरे श्रुत्वा पापात्प्रमुच्यते ॥ ७३ ॥ भक्तिमान्पुण्डरीकाक्षे
गजो दुःखाद्विमोचितः ॥ तथा त्वमपि राजेन्द्र प्रपद्य शरणं हरिम् ॥ ७४ ॥ विमुक्तः सर्वपापेभ्यः प्राप्स्यसे परमां गतिम् ॥७५॥ इति श्रीविष्णुध
र्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे गजेन्द्रमोक्षणं नाम चतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥ ॥ छ ॥ ॥ वज्र उवाच ॥ भगवन्की

१ कोष्टान्तर्गतः पाठो नास्ति खपुस्तके ।

दृशीं रक्षां स चकार द्विजोत्तमः ॥ यथा निर्धूतवीर्योऽसौ निस्तरो रजनीचरः ॥ १ ॥ मार्कण्डेय उवाच ॥ एकाग्रचित्तो गोविन्दे तज्जपँस्त त्परायणः ॥ सर्वदुष्टोपशमनं प्रविष्टो विष्णुपञ्जरम् ॥ २ ॥ वज्र उवाच ॥ विष्णुपञ्जरमिच्छामि श्रोतुं धर्मभृतां वर ॥ सदा सर्वभयेभ्यस्तु रक्षा यां परमा भवेत् ॥ ३ ॥ मार्कण्डेय उवाच ॥ त्रिपुरं जघ्नुषः पूर्वं ब्रह्मणा विष्णुपञ्जरम् ॥ शङ्करस्य यदुश्रेष्ठ रक्षणाय निरूपितम् ॥ ४ ॥ वागीशेन तु शक्रस्य बलं हन्तुं प्रयास्यतः ॥ तस्य स्वरूपं वक्ष्यामि तन्निबोध महीपते ॥ ५ ॥ विष्णुः प्राच्यां स्थितश्चक्री विष्णुर्दक्षिणतो गदी ॥ प्रतीच्यां शार्ङ्गभृद्विष्णुर्विष्णुः खड्गी ममोत्तरे ॥ ६ ॥ हृषीकेशो विकोणेषु तच्छिद्रेषु जनार्दनः ॥ क्रोडरूपी हरिर्भूमौ हन्तुं प्रेतनिशाचरान् ॥७॥ गदा चेयं सहस्रांशुरुद्भ्रमत्पावकोल्वणा ॥ रक्षोभूतपिशाचानां डाकिनीनां च शातनी ॥ ८ ॥ शार्ङ्गविस्फूर्जितं चैव वासुदेवस्य मद्रिपून् ॥ तिर्यङ्मनुष्यकूष्माण्डप्रेतादीन्हन्त्वशेषतः ॥ ९ ॥ खड्गधारामलज्योत्स्ना निर्धूता ये समाहिताः ॥ ते यान्तु सौम्यतां सद्यो गरुडेनेव पन्नगाः ॥ १० ॥ ( ये कूष्माण्डास्तथा यक्षा ये दैत्या ये निशाचराः ॥ प्रेता विनायकाः क्रूरा मनुष्या जम्भुकाः खगाः ॥ ॥ ११ ॥ सिंहादयो ये पशवो दन्दशूकाश्च पन्नगाः ॥ )[1] सर्वे भवन्तु ते सौम्याः कृष्णशार्ङ्गरवाहताः ॥ १२ ॥ चित्तवृत्तिहरा ये मे ये जनाः स्मृतिहारकाः ॥ बलौजसां च हन्तारश्छायाविभ्रंशकाश्च ये ॥ १३ ॥ ये चोपभोगहर्तारो ये च लक्षणनाशकाः ॥ कूष्माण्डास्ते प्रणश्यन्तु विष्णुचक्ररयाहताः ॥ १४ ॥ बुद्धिस्वास्थ्यं मनःस्वास्थ्यं स्वास्थ्यमैन्द्रियकं तथा ॥ ममास्तु देवदेवस्य वासुदेवस्य कीर्तनात् ॥ १५ ॥ पृष्ठे पुरस्तान्मम दक्षिणोत्तरे विकोणतश्चास्तु जनार्दनो हरिः ॥ तमीड्यमीशानमनन्तविक्रमं जनार्दनं प्रणिपतितो न सीदति ॥ १६ ॥ यथा परम्ब्रह्म हरिस्तथा परं जगत्स्वरूपं च स एव केशवः ॥ सत्येन तेनाच्युतनामकीर्तनात्प्रणाशमेतु त्रिविधं ममाशुभम् ॥ १७ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे विष्णुपञ्जरस्तोत्रवर्णनं नाम पञ्चनवनवत्यधिकशततमोऽध्यायः ॥ १९९ ॥ वज्र उवाच ॥ आत्मरक्षा त्वयोक्ता मे सर्वबाधाविनाशिनी ॥ कृपान्वितैः कथं कार्या पररक्षा भृगूत्तम ॥ १ ॥ एतन्मे संशयं छिन्धि त्वं हि ज्ञानमयो निधिः ॥ वैष्णवानि रहस्यानि सर्वाणि विदितानि ते ॥ २ ॥ मार्कण्डेय उवाच ॥ स्तोत्रेणानेन धर्मज्ञ कुशाग्रैर्मार्जयन्नरम् ॥ उपस्पृश्य शुचिः कुर्याद्रक्षां पार्थिवसत्तम ॥३॥ सोपवासेन सम्पूज्य देवदेवं जनार्दनम् ॥ अमोघैषा भवेद्रक्षा कृता नास्त्यत्र संशयः ॥४॥ यथा कथञ्चित्कृत्वैनां नरो मोचयते

१ कोष्टान्तर्गतपाठः खपुस्तके नोपलभ्यते ।

रुजः ॥ आधिव्याधिगृहीतानां रक्षैषा भेषजं परम् ॥ ५ ॥ ॐ नमः परमार्थाय पुरुषाय महात्मने ॥ ६ ॥ अरूपबहुरूपाय व्यापिने परमात्मने ॥
निष्कल्मषाय शुद्धाय ध्यातृपापहराय च॥७॥ नमस्कृत्य प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ॥ वराहनारसिंहाय वामनाय महात्मने ॥ ८ ॥ वक्ष्यामि
त्वां नमस्कृत्य यत्तत्सिध्यतु मे वचः ॥ त्रिविक्रमाय रामाय वैकुण्ठाय नराय च ॥९॥ वक्ष्यामि त्वां नमस्कृत्य यत्तत्सिध्यतु मे वचः ॥ १० ॥
वराह नरसिंहेश वामनेश त्रिविक्रम ॥ ११ ॥ हयग्रीवेश सर्वेश हृषीकेश हराऽशुभम् ॥ अपराजित चक्राद्यैश्चतुर्भिः परमायुधैः ॥ १२ ॥
अखण्डितानुभावैस्त्वं सर्वदुःखहरो भव ॥ हराऽमुकस्य दुरितं दुष्कृतं दुरुपोषितम् ॥ १३ ॥ मृत्युबन्धातिभयदं दुरिष्टस्य च यत्फलम् ॥
परापध्यानसहितं प्रयुक्तं चाभिचारिकम् ॥ १४॥ गरस्पर्शमहारोगप्रयोगं जरयाजर ॥ ॐ नमो वासुदेवाय नमः कृष्णाय शार्ङ्गिणे ॥ १५ ॥ नमः
पुष्करनेत्राय केशवायादिचक्रिणे ॥ नमः कमलकिञ्जल्कपीतनिर्मलवाससे ॥ १६ ॥ महाहवरिपुस्कन्धपृष्टचक्राय चक्रिणे ॥ दंष्ट्रोद्धृतक्षितिभृते
त्रयीमूर्तिमते नमः ॥ १७ ॥ महायज्ञवराहाय शेषभोगोरुशायिने ॥ तप्तहाटककेशाय ज्वलत्पावकलोचन ॥ १८ ॥ वज्राधिकनखस्पर्श
दिव्यसिंह नमोऽस्तु ते ॥ काश्यपायातिह्रस्वाय ऋग्यजुःसामरूपिणे ॥ १९ ॥ तुभ्यं वामनरूपाय क्रमते गां नमोनमः ॥ वराहाऽशेषदुष्टानि
सर्वपापफलानि वै ॥ २० ॥ मर्दमर्द महादंष्ट्र मर्दमर्द च यत्फलम् ॥ नरसिंह करालास्य दन्तप्रान्तानलोज्ज्वल ॥ २१ ॥ भञ्जभञ्ज निनादेन
दुष्टान्भक्तार्तिनाशन ॥ ऋग्यजुःसामगर्भाभिर्वाग्भिर्वामनरूपधृक् ॥ २२ ॥ प्रशमं सर्वदुःखानि नयैतस्य जनार्दन ॥ एकाह्निकं द्व्याह्निकं च
तथा त्रिदिवसज्वरम् ॥ २३ ॥ चातुर्थिकं तथात्युग्रं तथैव सततज्वरम् ॥ दोषोत्थं सन्निपातोत्थं तथैवागन्तुकं ज्वरम् ॥ २४ ॥ शमं नयतु
गोविन्दश्छित्त्वाछित्त्वास्य वेदनाम् ॥ नेत्रदुःखं शिरोदुःखं दुःखं चोदरसम्भवम् ॥ २५ ॥ अनुच्छ्वासमतिश्वासं परितापं च वेपथुम् ॥
गुदघ्राणादिरोगांश्च कुष्ठरोगं तथा क्षयम् ॥ २६ ॥ कामलादींस्तथा रोगान्प्रमेहांश्चातिदारुणान् ॥ भगन्दरातिसारांश्च मुखरोगं सवल्गुलिम् ॥ २७॥
अश्मरीमूत्रकृच्छ्रांश्च रोगानन्यांश्च दारुणान् ॥ ये वातप्रभवा रोगा ये च पित्तसमुद्भवाः ॥ २८ ॥ कफोद्भवाश्च ये केचिद्ये केचित्सान्निपातिकाः ॥
आगन्तवश्च ये रोगा लूताविस्फोटकादयः ॥ २९॥ ते सर्वे प्रशमं यान्तु वासुदेवापमार्जिताः ॥ विलयं यान्तु ते सर्वे विष्णोरुच्चारणेन च॥३० ॥
क्षयं गच्छन्तु चाशेषास्ते चक्राभिहता हरेः॥ अच्युतानन्तगोविन्दनामोच्चारणभेषजात् ॥ ३१ ॥ नश्यन्ति सकला रोगाः सत्यंसत्यं वदाम्यहम् ॥
स्थावरं जङ्गमं चैव कृत्रिमं चापि यद्विषम् ॥ ३२ ॥ दन्तोद्भवं नखभवमाकाशप्रभवं विषम् ॥ लूतादिप्रभवं यच्च विषमत्यन्तदुःखदम् ॥ ३३ ॥

शमं नयतु तत्सर्वं कीर्तितो हि जनार्दनः ॥ ग्रहान्प्रेतग्रहांश्चैव तथा चैवार्यकग्रहान् ॥ ३४ ॥ मुखमण्डलिकान्क्रूरान्रेवतीं वृद्धरेवतीम् ॥ वृद्धि
का[1]ख्यान्ग्रहांश्चोग्रांस्तथा मातृ[2]ग्रहानपि ॥३५॥बालस्य विष्णोश्चरितं हन्तु बालग्रहानिमान्॥वृद्धानां ये ग्रहाः केचिद्ये च बालग्रहाः क्वचित् ॥३६॥
नरसिंहस्य दृष्ट्या ते दग्धा ये चापि यौवने ॥ सटाकरालवदनो नरसिंहो महारवः ॥ ३७ ॥ ग्रहानशेषान्निःशेषान्करोतु जगतो हितः ॥
नरसिंह महासिंह जिह्वाज्वालोज्ज्वलानन ॥ ३८ ॥ ग्रहानशेषान्सर्वेश खादखादाग्निलोचन ॥ ये रोगा ये महोत्पाता यद्विषं ये महाग्रहाः ॥ ३९ ॥
यानि च क्रूरभूतानि ग्रहपीडाश्च दारुणाः ॥ शस्त्रक्षतेषु ये दोषा ज्वालागर्दभिकादयः ॥ ४० ॥ तानि सर्वाणि सर्वात्मन्परमात्मञ्जनार्दन ॥
कश्चिद्रूपं समास्थाय वासुदेवाशु नाशय ॥ ४१ ॥ क्षिप्त्वा सुदर्शनं चक्रं ज्वालामालाविभीषणम् ॥ सर्वदुष्टोपशमनं कुरु देववराऽच्युत ॥ ४२ ॥
सुदर्शन महाज्वाल च्छिन्धिच्छिन्धि च मारय ॥ सर्वाणि दुष्टरक्षांसि क्षपयाऽतिविभीषण ॥ ४३ ॥ प्राच्यां प्रतीच्यां दिशि दक्षिणो
त्तरतस्तथा ॥ रक्षां करोतु सर्वस्मान्नरसिंहः स्वगर्जितैः ॥ ४४ ॥ भुव्यन्तरिक्षे च दिवि पार्श्वतः पृष्ठतोऽग्रतः ॥ रक्षां करोतु भगवान्बहुरूपी
जनार्दनः ॥ ४५ ॥ यस्माद्विष्णुर्जगत्सर्वं सदेवासुरमानुषम् ॥ तेन सत्येन दुष्टानि शममस्य व्रजन्तु वै ॥ ४६ ॥ यथा विष्णुस्मृतौ सद्यः संक्षयं
याति पातकम् ॥ सत्येन तेन सकलं दुष्टमस्य प्रशाम्यतु ॥ ४७ ॥ परमात्मा यथा विष्णुर्वेदान्तेष्वभिगीयते ॥ तेन सत्येन सकलं यन्मयोक्तं
तथाऽस्तु तत् ॥ ४८ ॥ शान्तिरस्तु शिवं चास्तु प्रणश्यत्वसुखं च यत् ॥ वासुदेवशरीरोत्थैः कुशैः संमार्जितो मया ॥ ४९ ॥ अपामार्जति
गोविन्दो नरो नारायणस्तथा ॥ तथास्तु सर्वदुःखानां प्रशमो वचनाद्धरेः ॥ ५० ॥ शान्ताः समग्ररोगास्ते ग्रहाः सर्वे विषाणि च ॥ भूतानि च
प्रशान्तानि संस्मृते मधुसूदने ॥ ५१ ॥ एतत्समस्तरोगेषु सर्वभूतभयेषु च ॥ अपामार्जनकं शस्त्रं विष्णुनामाऽभिमन्त्रितम् ॥ ५२ ॥ शान्तिरस्तु
शिवं चास्तु दुष्टमस्य प्रशाम्यतु ॥ यदस्य दुरितं किञ्चित्तत्क्षिप्तं लवणाम्भसि ॥ ५३ ॥ स्वास्थ्यमस्य सदैवाऽस्तु हृषीकेशस्य कीर्तनात् ॥ यत
एवाऽऽगतं पापं तत्रैव प्रतिगच्छतु ॥ ५४ ॥ एतद्रोगादिपीडासु जन्तूनां हितमिच्छता ॥ विष्णुभक्तेन कर्तव्यमपामार्जनकं परम् ॥ ५५ ॥
अनेन सर्वदुःखानि प्रशमं यान्त्यसंशयम् ॥ सर्वभूतहितार्थाय कुर्यात्[3]तस्मात्सदैव हि ॥ ५६ ॥ नाद्यन्तवन्तः कवयः पुराणास्सूक्ष्मा बृहन्तो
ह्यनुशासितारः ॥ सर्वज्वरान्घ्नन्तु तवानिरुद्धप्रद्युम्नसंकर्षणवासुदेवाः ॥ ५७ ॥ एते कुशा विष्णुशरीरसम्भवा जनार्दनोऽहं स्वयमेव चागतः ॥

१ 'वृश्चिकाख्यान्' इ क० । २ति 'मध्यग्रहानपि' इति ख० । ३ 'कुर्याच्छांतिमिमां शुभाम्' इति ख० ।

हतं मया दुष्टमशेषमस्य स्वस्थो भवत्वेष यथा वचो हरेः ॥ ९८ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे सत्त्वबाधाप्रशमनं नाम षण्णवत्यधिकशततमोऽध्यायः ॥१९६॥ वज्र उवाच ॥ जगत्सृष्टिप्रसंगेन चोर्वशीसम्भवस्त्वया ॥ कथितस्तु महाभाग तत्प्रसङ्गेन चापराः ॥ ॥१॥ कथिताश्च कथा ब्रह्मन्धर्मयुक्ता मनोहराः ॥ विष्णोर्माहात्म्यसंयुक्ताः सर्वपापभयापहाः ॥२॥ कश्यपस्य तु या पत्नी खशानाम्नी त्वयेरिता ॥ यस्याः पुत्रौ महात्मानौ कथितौ यक्षराक्षसौ ॥ ३ ॥ तयोरुत्पत्तिमिच्छामि श्रोतुं वंशं तथैव च ॥ प्रस्तुता जगदुत्पत्तिं निखिलेन प्रकीर्तय ॥ ४॥ मार्कण्डेय उवाच ॥ राक्षसं पूर्वसन्ध्यायां जनयामास सा खशा ॥ दंष्ट्राकरालवदनं पिङ्गलोद्वृद्धलोचनम् ॥ ५ ॥ आकर्णदारितास्यं च स्थूलनासाग्रमुल्वणम् ॥ विकचं विकटाटोपं शङ्कुकर्णं विभीषणम् ॥ ६ ॥ तथैवापरसन्ध्यायां सैव यक्षं व्यजायत ॥ तादृशेनैव रूपेण यादृशेनैव राक्षसम् ॥ ७ ॥ क्षिणोमि मातरं यक्षः क्षुभितस्तामभाषत ॥ रक्षेति मातरं तां तु यक्षं वै राक्षसोऽब्रवीत् ॥ ८ ॥ रक्षणाद्राक्षसः प्रोक्तः क्षणाद्यक्षः स उच्यते ॥ भार्या बभूव यक्षस्य देवरामा कृतस्थला ॥ ९ ॥ यक्षो राजतनाभाख्यस्तस्यास्तस्य सुतः स्मृतः ॥ अनुह्लादसुता भार्या तस्यासीन्नृप गुह्यका ॥१०॥ वीरो मणिचरश्चैव वीरभद्रस्तथैव च ॥ तस्याः पुत्रावुभौ ख्यातौ देवतुल्यौ मनीषिणौ ॥११॥ ककुत्स्थतनये भार्ये तयोरास्तां नराधिप॥ राजन्पुण्यजनीनाम प्रथमस्य बभूव सा ॥१२॥ तथा देवजनीनाम द्वितीयस्याऽपि यादव ॥ तस्याः पुण्यजना यक्षा देवं देवजनास्तथा ॥ कथिता बहुसाहस्रा महाबलपराक्रमाः ॥ १३ ॥ शुभैर्विवाहैर्नृप यक्षवंशैर्यक्षास्तु जाता बहुशीलयुक्ताः ॥ धर्मस्थिताः सत्यपरा विनीता महानुभावा वरदा वरेण्याः ॥ १४ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे यक्षोत्पत्तिर्नाम सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥ मार्कण्डेय उवाच ॥ अजः षण्डः पिशाचौ द्वौ भूपाल कपिशासुतौ ॥ पिशाची ब्रह्मधानाख्या तत्राजस्य सुता मता ॥१॥ पिशाची यातुधानाख्या षण्डस्य तनया मता ॥ अजश्च राजषण्डश्च निशीथे क्षुधितावुभौ ॥२॥ बहिर्भृत्यौ तु सहितौ दृष्टवन्तौ नरेश्वर ॥ राक्षसं क्षुधिताकारं पतन्तं क्षुधितं निशि ॥३॥ गृहीतः स पिशाचाभ्यां क्षुधिताभ्यां यदा बली ॥ पृष्टः स ताभ्यां यत्नेन दृष्ट्वा तस्य तदा बलम् ॥ ४ ॥ जगाद भूमिपश्रेष्ठ चोभयोर्जन्मकारणम् ॥ जन्म कर्म च तौ तस्य श्रुत्वा पिशितभोजनौ ॥ ५ ॥ ददतुः कन्यके तस्य राक्षसस्य नराशिनः ॥ भार्याद्वयस्य वंशौ द्वौ राक्षसस्य प्रकीर्तितौ ॥ ६ ॥ ब्रह्मधानान्वये तस्य ब्रह्मधाना निशाचराः ॥ यातुधानान्वये तस्य यातुधानाः प्रकीर्तिताः ॥ ७ ॥

१ 'वेगे' इति क० ।

ब्रह्मधानान्वये जातानादौ वक्ष्यामि राक्षसान् ॥ यज्ञहा निर्धनिक्षेपा ब्रह्मपूतोऽथ निघ्नवान् ॥ ८ ॥ श्वानकृत्कुन्तलः सर्पो
ब्रह्मधानात्मजाः स्मृताः ॥ तेषामन्वयसम्भूताः शतशोऽथ सहस्रशः ॥ ९ ॥ श्लेष्मातकवनस्थानाः कथिता ब्रह्मराक्षसाः ॥ हेतिः
प्रहेतिरुग्रश्च पौरुषादो वधस्तथा ॥ १० ॥ विद्युत्स्फूर्जश्च वातश्च नसो[1] व्याघ्रस्तथैव च ॥ सुसकृच्च करालश्च[2] यातुधानात्मजा दश ॥ ११ ॥
सूर्यस्यानुचरा ह्येते सह तेन भ्रमन्ति वै ॥ तेषामन्वयसम्भूता यातुधानाः प्रकीर्तिताः ॥ १२ ॥ [3]हेतिप्रहेतिवंशौ द्वौ तव वक्ष्यामि यादव ॥
हेतिपुत्रः स्मृतो लङ्कुर्यस्य सालकटङ्कटाः ॥ १३ ॥ सन्ध्यासुता स्मृता भार्या सुकेशस्तत्सुतः स्मृतः ॥ माली सुमाली च तथा माल्यवांश्च
महाबलः ॥ १४ ॥ सुकेशतनया ह्येते देवासुरभयङ्कराः ॥ तपसा तैः समाराध्य देवदेवं जनार्दनम् ॥ १५ ॥ वीर्यमप्रतिमं प्राप्तं लङ्का चैव
महापुरी ॥ सुमालितनया तत्र कैकसी नाम राक्षसी ॥ १६ ॥ भार्या विश्रवसः पुत्रो यस्या रावणसंज्ञकः ॥ त्रिलोकविजयी तस्य
रावणस्य दुरात्मनः ॥ १७ ॥ सुमाली वसुना युद्धे धरेण विनिपातितः ॥ माली च देवदेवेन केशवेन निपातितः ॥ १८ ॥ माल्यवांस्तत्र
वर्षात्मा जीवत्यद्यापि यादव ॥ श्राविती भ्रातरौ येन पुरा देवरणोत्सुकौ ॥ १९ ॥ हितं धर्म्यं शुभं वाक्यं न च तौ तस्य चक्रतुः ॥ तेन तौ
निधनं प्राप्तौ राक्षसौ समरद्वये ॥ २० ॥ संश्रावितस्तेन तथैव वाक्यं स रावणो नाम विरोधकाले ॥ उल्लंघ्य वाक्यं निधनं जगाम धर्मे स्थितस्या
प्रतिमप्रभावः ॥२१॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे हेतिवंशवर्णनं नामाष्टनवत्यधिकशततमोऽध्यायः ॥१९८॥ मार्कण्डेय
उवाच ॥ प्रहेतितनयो राजन्पुलोमा नाम विश्रुतः ॥ क्रोधदृष्ट्या तु यः शीघ्रं च्यवनेन विनाशितः ॥१॥ वज्र उवाच ॥ च्यवनेन किमर्थं वै पुलो
मा राक्षसो हतः ॥ कथं च भृगुशार्दूल तन्ममाचक्ष्व पृच्छतः ॥ २ ॥ मार्कण्डेय उवाच ॥ पुलोम्नो दानवेन्द्रस्य द्वे कन्ये भुवि विश्रुते ॥ पुलोमा
भृगवे दत्ता शची दत्ता च वासवे ॥ ३ ॥ कन्याभावे रुदन्ती तु कदाचिद्यदुनन्दन ॥ पुलोमासुक्तवान्राजन्पुलोमा दानवेश्वरः ॥ ४ ॥
हे रक्षः कन्यकामेतां गृह्णीष्व रुदतीं बलात् ॥ एतस्मिन्नेव काले तु पुलोम्नो भवनाजिरे ॥ ५ ॥ छिद्रान्वेषी दुराचारः पुलोमा स व्यतिष्ठत ॥
अनुसृत्य च जग्राह तां कन्यां चारुलोचनाम् ॥ ६ ॥ निर्भर्त्स्य तं दुराचारं पुलोमा दानवोत्तमः ॥ कालेन प्रददौ कन्यां भृगवे तां सुमध्य 

१ 'नभो' इति ख० । २ 'सर्पश्च विकरालश्च' इति ख० । ३ प्रकरणेऽस्मिन् सर्वत्र हेतिस्थाने 'हेतृ' इति पदं लभ्यते कपुस्तके परञ्च वाल्मीकिना स्वकाव्ये हेतिः प्रहेतिरित्येवोक्तम् ।

माम् ॥ ७ ॥ अन्तर्वत्नीं तु रहितां भृगुणा तामनिन्दिताम् ॥ अग्निहोत्रगतां दृष्ट्वा पुलोमाग्निमथाब्रवीत् ॥ ८ ॥ पौलोमी यदि मत्पूर्वा सेयं पावक शंस मे ॥ तामग्निरब्रवीत्तस्य सेयं पत्नी भृगोः शुभा ॥ ९ ॥ एवमग्नेर्भृगोः श्रुत्वा तां जहार स राक्षसः ॥ तस्यां तु दृश्यमानायां गर्भः कुक्षेस्तदा च्युतः ॥ १० ॥ च्यवनाच्च्यवनो नाम बभूव स महातपाः ॥ दृष्टमात्रस्तु तेनाऽसौ पुलोमा भस्मसाद्गतः ॥ ११ ॥ पुलोमाश्रुनिपातेन नदी जाता वधूवरा ॥ वह्निश्च सर्वभक्ष्यत्वं भृगुशापादुपागतः ॥ १२ ॥ हुताशनस्तु संक्रुद्धश्शापं प्राप्य द्विजोत्तमात् ॥ लोककार्यैरतिर्ब्रह्मा स्वयं वचनमब्रवीत् ॥ १३ ॥ वह्ने तवार्चिभिः स्पृष्टं शुचि सर्वं भविष्यति ॥ शुचिभूतं ततः पश्चाद्भक्षयिष्यत्यसंशयम् ॥ १४ ॥ एतत्तवोक्तं च्यवनस्य जन्म नाशस्तथा राक्षसपुङ्गवस्य ॥ वह्नेः शुचित्वं च तथार्चिषां वै वंशं पुलोम्नोऽथ निबोध राजन् ॥ १५ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे च्यवनोत्पत्तिवर्णनो नाम नवनवत्यधिकशततमोऽध्यायः ॥ १९९ ॥ ॥ छ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ पुलोम्नस्तनयः श्रीमान्मधुर्नाम निशाचरः ॥ विनिष्कृष्य स्वकाच्छूलाच्छूलं प्रादाद्वृषध्वजः ॥ १ ॥ तपसा तोषितो यस्य सपुत्रस्य महात्मनः ॥ त्रैलोक्यविजयासक्ते तेन राजेन्द्र रावणे ॥२ ॥ दीक्षिते मेघनादे च तथा याते निकुम्भिलाम् ॥ अन्तर्जलगते वीरे तथैव च विभीषणे ॥ ३ ॥ निद्रावशगते राजन्कुम्भकर्णे सुरद्विषि ॥ मालिनस्तनया तेन रावणस्य स्वसा हृता ॥ ४ ॥ कुम्भीनसी महाभागा रूपद्रविणसंयुता ॥ यस्यामस्य सुतो जज्ञे लवणो नाम राक्षसः ॥ ५ ॥ येन शूलप्रभावेण मान्धाता विनिपातितः ॥ न तस्य पुत्रो भार्या वा बभूवातिदुरात्मनः ॥ ६ ॥ प्राणिनां पुरुषाद्यानां सहस्रैर्दशभिर्नृप ॥ आहारमाह्निकं तस्य भवत्यौदरिकस्य तु ॥ ७ ॥ रामाज्ञया तस्य बभूव राजन्रामानुजो मृत्युरदीनसत्त्वः ॥ शत्रुघ्ननामा भुवनस्य वीरो महान्तरस्थो हरिरप्रमेयः ॥ ८ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे प्रहेतिवंशानुकीर्तनं नाम द्विशततमोऽध्यायः ॥ २०० ॥ मार्कण्डेय उवाच ॥ यक्षेन राक्षसे जाते ततः कालेन केनचित् ॥ एषा सुषाव गन्धर्वं शैलूषमिति विश्रुतम् ॥ १ ॥ कोट्यस्तिस्रस्तु पुत्राणां तस्यासन्सुदुरात्मनः ॥ एतस्मिन्नेव काले तु विसृष्टासु प्रजासु च ॥ २ ॥ ब्रह्मादिदेश राज्यानि जात्यांजात्यां यथाक्रमम् ॥ गन्धर्वाणामधिपतिं चक्रे चित्ररथं तथा ॥ ३ ॥ शैलूषपुत्रा गन्धर्वा संघशः कृतनिश्चयाः ॥ शासनेनैव तिष्ठन्ति तस्य चित्ररथस्य तु ॥ ४ ॥ सिन्धोरुभयकूलेषु देशमुत्साद्य ते तदा ॥ हत्वा च मनुजांस्तत्र निवसन्ति गतव्यथाः ॥ ५ ॥ उत्सादयन्तो राष्ट्राणि राज्ञां विप्रियका

१ 'पावकोऽब्रवीत्' इति क० । पावकोऽभवत्' इति ख० । २ 'रतो' इति ख० ।

रकाः ॥ तान्शशाप स गन्धर्वराजश्चित्ररथः प्रभुः ॥ ६ ॥ अधर्मनिरताः सर्वे मानुषाद्वधमाप्स्यथ ॥७॥ शापेन तस्याप्रतिमेन राजन्गन्धर्वराजाति
बलस्य संख्ये ॥ बभूव मृत्युर्भरतस्तु तेषां देहान्तरस्थो हरिरप्रमेयः ॥ ८ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शैलूषवंशवर्णनं
नामैकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥ वज्र उवाच ॥ शैलूषपुत्रा गन्धर्वा भरतेन कथं हताः॥किमर्थं तु महाभाग तन्ममाचक्ष्व पृच्छतः ॥१॥
मार्कण्डेय उवाच ॥ अयोध्यायामयोध्यायां रामे दशरथात्मजे ॥ केकेयाधिपतिः श्रीमान्युधाजिन्नाम पार्थिवः ॥ २॥ रामाय प्रेषयामास दूतं भरत
मातुलः ॥ वृद्धं पुरोहितं गार्ग्यं येन कार्येण तच्छृणु ॥३॥ सिन्धोरुभयकूलेषु रामदेशो मनोहरः ॥ हत्वा रणे मनुष्येन्द्रान्गन्धर्वैर्विनिवेशितः॥४॥
गन्धर्वास्ते च राजेन्द्र राज्ञां विप्रियकारकाः ॥ लक्ष्मणं भरतं वापि शत्रुघ्नमथवा नृप ॥ ५ ॥ विसर्जयित्वा गन्धर्वांस्तान्विनाशय राघव ॥
राजानो निर्भयाः सन्तु देशश्चास्तु तथा तव ॥ ६ ॥ दूतस्य वचनं श्रुत्वा चिन्तयामास राघवः ॥ मेघनादवधे कर्म लक्ष्मणेन महत्कृतम् ॥ ७ ॥
शत्रुघ्नेन कृतं कर्म लवणं च विनिघ्नता॥ प्रेषयिष्यामि भरतं गन्धर्वस्य च निग्रहे ॥८॥ इत्येवं मनसि ध्यात्वा रामो भरतमब्रवीत् ॥ गच्छ गार्ग्यं
पुरस्कृत्य वत्स राजगृहं स्वयम् ॥९॥ मातुलेन समायुक्तः कैकयेन्द्रगृहात्ततः ॥ जहि शैलूषतनयान्गन्धर्वान्पापनिश्चयान् ॥ १० ॥ एवमुक्तः स
धर्मात्मा भरतो भ्रातृवत्सलः ॥ रामस्य पादौ शिरसा चाभिवन्द्य कृताञ्जलिः ॥ ११ ॥ गृहं गत्वा चकाराथ सर्वं प्रास्थानिकं विधिम् ॥
ओषधीनां कषायेण तदोत्प्लावितविग्रहः ॥ १२ ॥ गौरसर्षपकल्केन प्रसादितशिरोरुहः ॥ तीर्थसारसनादेयैः सलिलैश्च स सागरैः ॥ १३ ॥
चन्दनस्रावसम्मिश्रैः कुंकुमाक्षोदसंयुतैः ॥ सर्वौषधिसमायुक्तैः सर्वगन्धसमन्वितैः ॥ १४ ॥ मन्त्रपूतैर्महातेजाः सस्नौ राघववर्धनः ॥ शङ्खभेरी
निनादेन पणवानां स्वनेन च ॥ १५ ॥ आनकानां च शब्देन निस्वनेन च बन्दिनाम् ॥ सूतमागधशब्देन जयकारैस्तथैव च ॥ १६ ॥ तुष्टुवुः
स्नानकाले तं स्तवैर्मङ्गलपाठकाः ॥ तथोपतस्थुर्गीतेन गन्धर्वाप्सरसां गणाः ॥ १७ ॥ स्नातः स भरतो लक्ष्म्या युवराजाभिरूपया ॥ विलिप्य
चारुसर्वाङ्गं चन्दनेन सुगन्धिना ॥ १८ ॥ अहताम्बरसंवीतः श्वेतमाल्यविभूषणः ॥ कुण्डली साङ्गदी मौली सर्वरत्नविभूषितः ॥ १९ ॥
अन्तस्थं पूजयामास देवदेवं त्रिविक्रमम् ॥ गन्धमाल्यनमस्कारधूपदीपादिकर्मणा॥२०॥ पूजयित्वा जगन्नाथमुपतस्थे हुताशनम् ॥ सुहुतं ब्राह्मणे
न्द्रेण राघवाणां पुरोधसा ॥ २१ ॥ गोभिर्वस्त्रैर्हिरण्यैश्च तुरङ्गकरिपुङ्गवैः ॥ मोदकैः सफलैर्दध्ना गन्धैर्माल्यैस्तथाक्षतैः ॥ २२ ॥ स्वस्तिवाच्यांस्तथा
विप्रान्महात्मा भूरिदक्षिणः ॥ व्याघ्रचर्मोत्तरे रम्ये सूपविष्टो वरासने ॥ २३ ॥ आयुधानन्तरं चक्रे ध्वजच्छत्राभिपूजनम् ॥ स्वस्तिकान्वर्धमानांश्च

नन्द्यावर्तास्तथैव च ॥ २४ ॥ नद्यः काञ्चनविन्यस्ताः शङ्खः सत्कमलाञ्जनम् ॥ पूर्णकुम्भं गजमदं दूर्वाः सार्द्रं च गोमयम् ॥ २५ ॥ रत्नान्या
दाय बिल्वं च चापमादाय सत्वरः ॥ सशरं राघवश्रेष्ठः पदद्वात्रिंशकं ययौ ॥ २६ ॥ श्रेष्ठमश्वं सुचन्द्राभं हेमभाण्डपरिच्छदम् ॥ आरुह्य निर्ययौ
श्रीमाञ्जयकाराभिपूजितः ॥ २७ ॥ पौरजानपदामात्यैर्वाद्यघोषेण भूरिणा ॥ ह्लादेन गजघण्टानां बृंहितेन पुनःपुनः ॥ २८॥ ह्रेषितेन तुरङ्गाणां
नराणां क्ष्वेडितेन च ॥ द्विजपुण्याहघोषेण प्रयातो भूरिदक्षिणः ॥ २९ ॥ भरतस्य प्रयाणे तु देवाः शक्रपुरोगमाः ॥ मुमुचुः पुष्पवर्षाणि
वाच ऊचुः शुभास्तथा ॥ ३० ॥ एष विग्रहवान्धर्म एष सत्यवतां वरः ॥ एष वीर्यवतां श्रेष्ठो रूपेणाप्रतिमो
भुवि ॥ ३१ ॥ अनेन यत्कृतं कर्म रामे वनमुपागते ॥ न तस्य कर्ता लोकेऽस्मिन्दिवि वा विद्यते क्वचित् ॥ ३२ ॥ अनेन राज्यं
सन्त्यक्तं गृहं दग्धमिवाऽग्निना ॥ अनेन दुःखशय्यासु शयितं सुमहात्मना ॥ ३३ ॥ नित्यमासन्नभोगेन जटावल्कलधारिणा ॥ फलमूलाशि
नानेन रामराज्यं हि पालितम् ॥ ३४ ॥ शृण्वन्सुवाक्यानि सुरेरितानि रामानुजो रामगृहं जगाम ॥ शूरार्यविद्वत्पुरुषोपकीर्णं रत्नैर्यथा सागरम
प्रमेयम् ॥ ३५ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे भरतप्रस्थानवर्णनं नाम द्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥
मार्कण्डेय उवाच ॥ गृहात्प्रयाते भरते प्रस्थानार्थिनि यादव ॥ प्रागेव लक्ष्मणं रामो नित्योद्युक्तमभाषत ॥ १ ॥ अनुयानं कुमारस्य भरतस्य
महात्मनः ॥ प्रेषयाश्वसहस्राणां शतानि त्रीणि राघव ॥ २ ॥ दश दन्तिसहस्राणि रथानां षड्गुणानि च ॥ कोटयः पञ्च पदातीनां समरेष्वनि
वर्तिनाम् ॥ ३ ॥ धनाध्यक्षास्तथा वत्समनुगच्छन्तु लक्ष्मण ॥ गोरथैश्च तथा पुष्टैर्गोभिरुष्ट्रैस्तथैव च ॥ ४ ॥ व्यायतैः पुरुषैरश्वैर्गर्दभैश्च तथा
वरैः ॥ वस्त्ररूप्यसुवर्णानां मणीनामपि भागशः ॥ ५ ॥ विसर्गाय कुमारस्य परिपूर्णा यथासुखम् ॥ ब्राह्मणाः कथया मुख्यास्तथैव
नटवर्तकाः ॥ ६ ॥ गीते नृत्ते तथा लास्ये प्रवीणाश्च वराङ्गनाः ॥ प्रास्थानिकाश्च ये केचित्पानविक्रयिणश्च ये ॥ ७ ॥ रूपाजीवाश्च वणिजो
नानापण्योपजीविनः ॥ नानारूपमुपादाय बहुपण्यं व्रजन्तु वै॥८॥विषवैद्याः शल्यवैद्यास्तथा कायचिकित्सकाः ॥ कर्मन्तिका स्थपतयो मार्गिणो
वृक्षरोपकाः ॥ ९ ॥ कूपकाराः सुधाकारा वंशकर्मकृतस्तथा ॥ वाणिकाराश्च ये केचित्कूर्चकाराश्च शोभनाः ॥ १० ॥ परिकर्मकृतश्चैव तथा
वस्त्रोपजीविनः ॥ मायूरिकास्तैत्तिरिकाश्चेतका भेदकाश्च ये ॥ ११ ॥ रञ्जका दन्तकाराश्च तथा दन्तोपजीविनः ॥ एरण्डवेत्रकाराश्च

१ 'प्रष्टमश्वम्' इति क० । २ 'कोटयर्धश्च' इति ख० ।

कटकाराश्च शोभनाः ॥ १२ ॥ आरकूटकृतश्चैव ताम्रकूटास्तथैव च ॥ भूर्जकूटाः खड्गकारा गुडसीधुप्रपाचकाः ॥ १३ ॥ औरभ्रका माहिष
कास्तुन्नवायाश्च लक्ष्मण ॥ ये चाभिष्टावकाः¹ केचित्सूतमागधबन्दिनः ॥ १४ ॥ चैलनिर्णेजकाश्चैव चर्मकारास्तथैव च ॥ अङ्गारकोराश्च तथा
लुब्धका ये च धीवराः ॥ १५ ॥ कबन्धधारिणो ये च ये च काष्ठप्रपाटकाः ॥ वस्त्रसीवनसक्ताश्च गृहकाराश्च ये नराः ॥ १६ ॥ कुम्भकाराश्च
ये केचिच्छ्मश्रुवर्धकिनश्च ये ॥ लेखका गणका ये च तथा तन्दुलकारकाः ॥ १७ ॥ सक्तुकाराश्च ये केचिच्छाकपण्योपजीविनः ॥ तैलिका
गान्धिकाश्चैव तीर्थसंशुद्धिकारकाः ॥१८॥ चित्रकर्मविदो ये च ये च लाङ्गूलिका जनाः ॥ सूताः पौरोगवाश्चैव सौविदल्लाश्च लक्ष्मण ॥ १९ ॥
गोपा वनचरा ये च नदीतीरविचारणाः ॥ गोसंघैर्महिषीसंघैस्तेऽनुयान्तु यथासुखम् ॥ २० ॥ श्रेणीमहत्तरा ये च ग्रामघोषमहत्तराः ॥
तथैवाटविका ये च ये च शैलविचारिणः ॥ २१ ॥ सौमित्रे सर्व एवैते सुभृताश्च सुपूजिताः ॥ अनुयान्तु कुमारं मे भरतं भ्रातृवत्सलम् ॥ २२ ॥
इत्येवमुक्तः स तु तान्समस्तानाज्ञापयामास नरेन्द्रवाक्यात् ॥ आमन्त्र्य रामं शिरसा च सर्वे विनिर्ययुस्ते नगरात्प्रहृष्टाः ॥२३॥ इति श्रीविष्णु
धर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे आनुयात्रिकवर्णनन्नाम त्र्यधिकद्विशततमोऽध्यायः ॥ २०३ ॥ ॥ मार्कण्डेय उवाच ॥ एतस्मिन्नेव
काले तु रामः शुश्राव तन्महत् ॥ शङ्खवाद्यरवोन्मिश्रं भरतस्यानुयात्रिकम् ॥ १ ॥ राजद्वारमुपागत्य भरतोऽपि महायशाः ॥ पद्भ्यां जगाम राजानम
वतीर्य तुरङ्गमात् ॥२॥ स ददर्श तदा रामं रत्नसिंहासनस्थितम् ॥ अनुलिप्तं परार्ध्येन चन्दनेन सुगन्धिना ॥३॥ सूक्ष्मं वसानं वसनं सर्वाभरणभूषितम् ॥
तेजसा भास्कराकारं सौन्दर्येणोडुपोपमम् ॥ ४ ॥ क्षमया पृथिवीतुल्यं क्रोधे कालानलोपमम् ॥ बृहस्पतिसमं बुद्ध्या विष्णुतुल्यं पराक्रमे ॥५॥
सत्ये दानेऽप्यनौपम्यं दमे शीले च राघवम् ॥ पुरोहितैरमात्यैश्च युतं प्रकृतिभिस्तथा ॥ ६ ॥ दृष्ट्वा तं भरतः श्रीमाञ्जगाम शिरसा महीम् ॥
भरतं युवराजानं रामाय विदितात्मने ॥ ७ ॥ न्यवेदयत धर्मात्मा प्रतीहारः सलक्ष्मणम् ॥ उत्थाय कण्ठे जग्राह रामोऽपि भरतं तदा ॥ ८ ॥
मूर्ध्नि चैनमुपाघ्राय आदिदेशास्य शासनम् ॥ भरतं तु सुखासीनं रामो वचनमब्रवीत् ॥ ९ ॥ गन्धर्वपुत्रांस्तान्हत्वा कर्तव्यं नगरद्वयम् ॥ सिन्धो
रुभयपार्श्वे तु पुत्रयोरुभयोः कृते ॥ १० ॥ अभिषिच्य तदा वत्स पुत्रौ नगरयोस्तयोः ॥ युधाजिति परीधाय क्षिप्रमागन्तुमर्हसि ॥११॥ त्वया
विना नरव्याघ्र नाहं जीवितुमुत्सहे ॥ क्षत्रधर्मं पुरस्कृत्य तत्र त्वं प्रेषितो मया ॥१२॥ स त्वं गच्छ महाभाग मा ते कालात्ययो भवेत् ॥ स्वस्त्य

१ 'चाभीष्टवशा' इति ख० ।

स्तु तेन्तरिक्षेभ्यः पार्थिवेभ्यश्च गच्छतः ॥ १३ ॥ दिव्येभ्यश्चैव भूतेभ्यः समरे च तथानघ ॥ १४ ॥ स्वांस्वां दिशमधिष्ठाय दिक्पाला दीप्तते
जसः ॥ पालयन्तु सदा तुभ्यं दीप्तविग्रहधारिणः ॥ १५ ॥ ब्रह्मा विष्णुश्च रुद्रश्च साध्याश्च समरुद्गणाः ॥ आदित्या वसवो रुद्रा अश्विनौ च
भिषग्वरौ ॥ १६ ॥ भृगवोङ्गिरसश्चैव कालस्यावयवास्तथा ॥ सरितः सागराः शैलाः समुद्राश्च सरांसि च ॥ १७ ॥ दैत्यदानवगन्धर्वा पिशाचो
रगराक्षसाः ॥ देवपत्न्यस्तथा सर्वा देवमातर एव च ॥ १८ ॥ शस्त्राण्यस्त्राणि शास्त्राणि मङ्गलाय भवन्तु ते ॥ विजयं दीर्घमायुश्च भोगांश्चा
न्यान्दिशन्तु ते ॥ १९ ॥ इति स्वस्त्ययनं श्रुत्वा राज्ञा स समुदीरितम् ॥ रामस्य पादौ शिरसा त्वभिवन्द्य धनुर्धरः ॥ २० ॥ निर्गत्य राजभ
वनाद्रामाज्ञाकल्पितं जगत् ॥ हिमाद्रिकूटसंकाशं चारुदंष्ट्रोज्ज्वलाननम् ॥ २१ ॥ मदेन सिञ्चमानं च नृपवेश्माजिरं नृप ॥ समाक्रान्तकटं चापि
पानलुब्धशिलीमुखैः ॥ २२ ॥ स्तब्धचारुमहाकर्णं मधुपक्षपर्यैव तु ॥ दीर्घाग्रमध्वक्षकृतं कृतशृङ्गावतंसकम् ॥ २३ ॥ स्वासनं व्यूढकुम्भं च
तथोदग्रं महाबलम् ॥ नक्षत्रमालां शिरसा धारयानं तु काञ्चनीम् ॥ २४ ॥ पटुस्वने तथा घण्टे दर्शनीये मनोहरे ॥ कुथं विचित्रं रम्यं च कोवि
दारं महाध्वजम् ॥ २५ ॥ वैजयन्त्यः पताकाश्च किङ्किणीजालमालिताः ॥ समारूढं नयविदा महामात्रेण धीमता ॥ २६ ॥ वैडूर्यदण्डतीक्ष्णाग्र
काञ्चनाङ्कुशधारिणा ॥ जवनस्थेन चान्येन वरतोमरधारिणा ॥ २७ ॥ तथा वैजयिकैर्मन्त्रैर्दैवज्ञेनाभिमन्त्रितम् ॥ आरुरोह महातेजा जयत्का
राभिनन्दिनः ॥२८॥ पूर्णेन्दुमण्डलाकारं रुक्मदण्डं मनोहरम् ॥ छत्रमादाय तं प्रेम्णा चारुरोह स लक्ष्मणः ॥ २९ ॥ चामरौ द्वौ समादाय
चन्द्ररश्मिसमप्रभौ ॥ आरूढं योषितोर्युग्मं रूपेणाऽप्रतिमं भुवि ॥ ३० ॥ तं समारुह्य नागेन्द्रं मदलेखाभिगामिनम् ॥ जगाम सह
गार्ग्येण रथारूढेन यादव ॥ ३१ ॥ तमन्वयौ महाभाग चतुरङ्गमहाबलम् ॥ पताकाध्वजसम्बाधं कल्पयन्तं वसुन्धराम् ॥ ३२ ॥
श्येनाः काकवहाः कङ्काः पिशाचा यक्षराक्षसाः ॥ ययुः पुरःसरास्तस्य भरतस्य महात्मन ॥ ३३ ॥ गन्धर्वपुत्रमांसानां
लुब्धा मांसोपजीविनः ॥ तूर्यघोषेण महता बन्दिनां निःस्वनेन च ॥ ३४ ॥ वायुना चानुलोमेन सेव्यमानः सुगन्धिना ॥
मङ्गलानां च मुख्यानां दर्शनाद्धृष्टमानसः ॥ ३५ ॥ निर्ययौ राजमार्गेण जनसम्बाधशालिना ॥ तेजस्विनां च तेजांसि हृदयानि च योषि
ताम् ॥ ३६ ॥ आददानो महातेजा नगरात्स विनिर्ययौ ॥ क्रोशमात्रं ततो गत्वा समे देशे च सोदके ॥ ३७ ॥ प्रशस्तद्रुमसंकीर्णे शिबिरं

१ 'क्षमयैव तु' इति ख० । २ 'दीर्घाग्रहस्तं मध्वक्षम्' इति ख० ।

प्राङ्गिषेवितम् ॥ सेनाध्यक्षैः सुनिपुणैर्विवेश भरतस्तदा ॥ ३८ ॥ स प्रविश्य महातेजाः शिबिरं स्वं निवेशनम् ॥ मङ्गलालम्भनं कृत्वा वरासनगतः प्रभुः ॥ ३९ ॥ पौरजानपदं सर्वं प्रेषयामास यादव ॥ परिष्वज्य ततः पश्चाल्लक्ष्मणं शुभलक्षणम् ॥ ४० ॥ मूर्ध्नि चैवमुपाघ्राय प्रेषयामास धर्मवित् ॥ प्रायाणकं च श्वोभूते दुन्दुभिस्ताड्यतां मम ॥ ४१ ॥ दैशिकाः पुरतो यान्तु ये च वृक्षावरोहकाः ॥ आज्ञाप्य सकलं चैव शिबिरं च तथाविधम् ॥ ४२ ॥ अवृक्षेषु तु देशेषु रोपयन्तु द्रुमाङ्गनाः ॥ द्रुमाः कण्टकिनश्चैव ये च मार्गप्ररोधकाः ॥ ४३ ॥ छिन्दन्तु गत्वा तानद्य तीक्ष्णैः शीघ्रं परश्वधैः ॥ तोयहीनेषु देशेषु कूपान्कुर्वन्तु मे तथा ॥ ४४ ॥ विषमांश्च तथा देशान्समान्कुर्वन्तु मे पथि ॥ तीराणि सरितां चैव कुर्वन्तु पुलिनानि च ॥ ४५ ॥ न भवेद्येन संघट्टो जनस्य पथि यास्यतः ॥ पुरः प्रयान्तु सैन्येन विजये रतिवर्धनाः ॥ ४६ ॥ नीलश्च नक्रदेवश्च वसुमान्सुनयस्तथा ॥ मध्यप्रयाणे गान्धारो जयनाभो रणोत्कटः ॥ ४७ ॥ सुशीलः कामपालश्च यान्तु सैन्येन दंशिताः ॥ जघनं कटकस्याहं पालयानो यथासुखम् ॥ ४८ ॥ सैन्येन सह यास्यामि विजयाय नृपस्य तु ॥ पश्यन्तु दैशिकाः स्थानं प्रभूतयवसेन्धनम् ॥ ॥ ४९ ॥ सोदकं च समं यत्र सेनावासो भवेन्मम ॥ एवमाज्ञाप्य भरतो विजहार यथासुखम् ॥ ५० ॥ सुष्वाप च निशां तत्र धर्मकाले मनोहराम् ॥५१॥ सुतस्य सा तत्र रघूद्वहस्य पुण्या ययौ रात्रिरदीनसत्त्वा ॥ सम्पूर्णचन्द्राभरणा प्रतीता ज्येष्ठस्य मासस्य रणोत्सुकस्य ॥ ५२॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे भरतनिर्याणवर्णनं नाम चतुरधिकद्विशततमोऽध्यायः ॥ २०४ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ प्रभातायां तु शर्वर्यां दुन्दुभिः समहन्यत ॥ प्रयाणिको महाराज भरतस्य महास्वनः ॥ १ ॥ तस्य शब्देन महता विबुद्धः कटके जनः ॥ अवश्यकरणीयानि कृत्वा राजंस्त्वरान्विताः ॥ २ ॥ त्वरिता गमनार्थाय समाहूयेतरेतरम् ॥ पटवेश्मानि रम्याणि संहन्तुमुपचक्रमुः ॥ ३ ॥ महान्ति सुमनोज्ञानि वर्तितोर्णाकृतानि च ॥ चक्रुस्तानि च राजेन्द्र सुखवाह्यान्ययत्नतः ॥ ४ ॥ ततस्त्वारोपयाञ्चक्रुः करभेषु खरेषु च ॥ गोरथेषु तु मुख्येषु तथा दन्तिषु सत्वराः ॥ ५ ॥ भाण्डमुच्चावचं चैव शयनानि मृदूनि च ॥ आसनानि च मुख्यानि भाण्डं यच्च महानसे ॥ ६ ॥ पेयं च यवसं चैव शस्त्राणि विविधानि च ॥ कवचानि तुरङ्गाणां शिल्पभाण्डानि यानि च ॥ ७ ॥ धनं च विविधं राजन्सर्वोपकरणानि च ॥ आरोप्यमाणे भाण्डे तु करभाणां विकूज्यताम् ॥ ८ ॥ शुश्रुवे तुमुलः शब्दः खराणां च खरस्वनः ॥ गजानां युज्यमानानां

१ 'त्राश्रु' इति ख० । २ 'सुतपा' इति ख० ।

तुरङ्गाणां रथैः सह ॥ ९ ॥ वाद्यानां हन्यमानानां शुश्रुवे तुमुलं स्वनम् ॥ नादेन गजघण्टानां बृंहितेन च पार्थिव ॥ १० ॥ ह्रेषितेन तुरङ्गाणां बभूव तुमुलः स्वनः ॥ प्रायाणिकमुपादाय ताडयन्नेव दुन्दुभिम् ॥ ११ ॥ अग्रे प्रयाणमान्येन[1] ययौ दुन्दुभिभिः सह ॥ पण्यानि च समादाय वणिजस्त्वरिता ययुः ॥ १२ ॥ ग्रहीतुकामाश्चान्यानि[2] सोदकानि समानि च ॥ स्थानानि वरमुख्यानां ययुश्चाग्रेसरा नराः ॥ १३ ॥ महानसिकमुख्यास्तु त्वरिताश्च तथा ययुः ॥ सुखयानासु रम्यासु तथैवाश्वतरीषु च ॥ १४ ॥ आरोप्य योषितो जग्मुः प्रत्यूषे मुदिता जनाः ॥ आरूढाश्चापरा नार्यः सवितानाः करेणवः ॥१५॥ कञ्चुकोष्णीषिभिर्गुप्ता गुप्ता वर्षवरैस्तथा ॥ ययुः ससैन्या राजेन्द्र गीतवाद्य पुरस्सराः ॥ १६ ॥ दीनान्धकृपणानाथांस्तर्पयन्त्यो धनेन ताः ॥ नरेन्द्रयोषितो राज्ञां दिव्यालङ्कारभूषिताः ॥ १७ ॥ तथान्ये बद्धनिस्त्रिंशाः पुरुषाश्च कलापिनः ॥ आदीप्य तृणवेश्मानि जग्मुस्त्वरितमानसाः ॥ १८ ॥ भरतोऽपि समारुह्य शिबिकां रत्नभूषिताम् ॥ विनिर्ययौ महातेजास्तूर्यघोषपुरःसरः ॥ १९ ॥ शून्यं च शिबिरस्थानं गृध्रमण्डलसंकुलम् ॥ बहुक्रव्यादसङ्कीर्णं क्षणेन समपद्यत ॥ २० ॥ गजोष्ट्रगर्दभाश्वानां शरीरावयवैर्युतम्॥भग्नभाण्डसमाकीर्णं शरीरावयवैर्युतम्॥२१॥ बहुक्रव्यादसङ्कीर्णं करीषोत्करसंयुतम् ॥ खातैर्महानसस्थानैर्दग्धमृत्तिकया युतैः ॥ ॥२२॥समण्डकर्दमोपेतैर्मक्षिकासहितैर्युतम् ॥ संत्यज्य निर्ययुः सर्वे भरतस्य तु सैनिकाः॥२३॥प्रयाणे तस्य सैन्यस्य बलीवर्दाञ्छ्रमान्वितान् ॥ नागानुत्थापयामासुरुपविष्टान्प्रयत्नतः ॥२४॥ केचिदुष्ट्रपरित्रस्तान्गार्दभेन निपातितान् ॥ भाण्डमारोपयाञ्चक्रुर्भूय एव नरोत्तमाः ॥ २५ ॥ नद्युत्तारेषु महिषान्केचित्सूर्यांशुतापितान् ॥ निषण्णान्सह भारेण ताडयाञ्चक्रिरे जनाः ॥ २६ ॥ केचिदश्वतरांस्त्रस्तान्नागबृंहितनिस्वनैः ॥ आरूढयोषितो यत्नाज्जगृहुर्नृप रश्मिषु ॥ २७ ॥ केचिदश्वैर्गजत्रस्तैराक्षिप्ता भुवि मानवाः ॥ जानुविश्रमणार्थाय वाजिग्रीवकृताङ्घ्रयः ॥ २८ ॥ तुरङ्गांश्च तदोद्भ्रान्तान्स्रस्तचर्मांश्च सादिनः ॥ केचिदाक्रम्य वेगेन जगृहुस्तत्र यादव ॥ २९ ॥ विशश्रमुस्तथा केचिद्वृक्षच्छायासु मानवाः ॥ केचिच्चोदकतीरेषु चक्रिरे भोजनक्रियाम् ॥ ३० ॥ केचित्सन्त्रस्ततुरगसन्निकृष्टसमुत्थितैः ॥ द्रुतान्कापिञ्जलैर्यत्नाज्जगृहुस्तांस्तुरङ्गमान् ॥ ३१ ॥ केचित्कटकसंत्रस्तान्मृगयूथान्प्रधावतः ॥ वेगेनाक्रम्य विशिखैर्जघ्नुर्यदुकुलोद्वह ॥ ३२ ॥ केचिच्च यवसं चक्रुः केचिच्चक्रुरथेन्धनम् ॥ तथान्यैर्द्विगुणीभूतं तथा दुन्दुभिनिस्वनम् ॥ ३३ ॥ प्रायाणिकं जहुः शीघ्रं श्रमं यदुकुलोद्वह ॥ केचिदापणवीथ्यग्रमहावंशसमुच्छ्रितम् ॥३४॥

१ 'सैन्येन' इति ख० । २ 'चाग्र्याणि' इति ख० ।

सपताकं नरा दृष्ट्वा प्राप्ताः स्म इति मेनिरे ॥ चक्रुः केचिच्च च्छन्दांसि सहायानां पुनःपुनः ॥३५॥ पुरोगतानां राजेन्द्र स्थानलब्धिचिकीर्षया ॥ केचित्पटकुटीं दृष्ट्वा स्वकीयां त्वरिता ययुः ॥ ३६ ॥ वर्तितोर्णाकृतं दृष्ट्वा गृहांश्चान्ये ययुर्द्रुतम् ॥ केषाञ्चित्तत्र वेश्मानि तीर्णानि नृपसत्तम ॥ ३७ ॥ कृतानि क्रियमाणानि ददृशुस्तत्र मानवाः ॥ द्रुमैर्विश्राम्यमाणैश्च क्रियमाणैस्तथा कटैः ॥ ३८ ॥ गृहैरारोप्यमाणैश्च पटोर्णातृणसंस्कृतैः ॥ शुशुभे तन्महाराज कटकं शुभकर्मणः ॥ ३९ ॥ शस्त्रेण संशोधयतां भुवं भूमिपते नृणाम् ॥ राजसाक्रान्तवपुषामप्रकाशं वपुर्बभौ ॥ ४० ॥ पार्श्वस्थतोयसम्पूर्णदृतयश्च तथा जनाः ॥ धावमानाः प्रदृश्यन्ते वर्धिता गृहशोधने ॥ ४१ ॥ अभ्युक्षयन्ति चाप्यन्ये तृणवेश्मानि पार्थिव ॥ तप्तानां शीतकामानां दृतिवक्त्रोद्गतैर्जलैः ॥ ४२ ॥ अभिश्रयेण धूपेन समन्तादाकुलीकृतम् ॥ बभूव तस्य कटकं नीहारेणैव संयुतम् ॥ ४३ ॥ अवरोपितभाण्डानां दान्तानां यदुनन्दन ॥ पृष्ठान्यभ्युक्षयामासुर्गोमयेन जलेन च ॥ ४४ ॥ खरोष्ट्रसबलीवर्दं चरणार्थं विनिर्गतम् ॥ ४५ ॥ ददृशे बहुसाहस्रं कटके भरतस्य तु ॥ रथेभ्यस्तुरगानन्ये विमुच्य हयकोविदाः ॥ ४६ ॥ अवरोपितभाण्डानि सान्त्वयाञ्चक्रिरे शनैः ॥ समुत्थाय रजो भौमं तुरङ्गपरिवर्तनैः ॥ ४७ ॥ खमारुरोह राजेन्द्र कपोतारुणपाण्डुरम् ॥ स्थापयाञ्चक्रिरे चान्ये जलस्थाने च वाजिनः ॥ ४८ ॥ श्रेणीं चक्रुस्तथैवान्ये कटच्छायासु पार्थिव ॥ वितानाधस्तथा केचित्स्थापयाञ्चक्रिरे हयान् ॥ ४९ ॥ हयेभ्यो यवसं दत्त्वा केचिद्बुभुजिरे जनाः ॥ कटच्छायाश्च नागानां चक्रुश्चान्ये सहस्रशः ॥५०॥ वितानानि च मुख्यानि सूर्यतापप्रशान्तये ॥ स्नाताञ्जलाशये नागाँल्लब्धतोयाञ्जनाधिप ॥ ५१॥ सञ्छन्नान्स्वपरीधानकुम्भान्निन्युः स्वमालयम् ॥ कटकाद्दूरतश्चक्रुरालानं नृप दन्तिनाम् ॥ ५२॥ आलानानि महाराज महावृक्षेषु मानवाः ॥ आदाय गोपिनस्तत्र कटकाच्च विदूरतः ॥ ५३ ॥ गोसङ्घान्महिषीसङ्घांश्चक्रुर्व्यस्तान्यथासुखम् ॥ कटके च तथा निन्युर्गोरसानि नराधिप ॥ ५४ ॥ कटकापण्यवीथीं च सर्वपण्यविभूषिताम् ॥ ददृशुः पुरुषास्तत्र अयोध्यामिव चापराम् ॥ ५५ ॥ स्थानानि सर्ववैद्यानां सध्वजानि नराधिप॥सागदानि च दृश्यन्ते कटके भरतस्य तु॥५६॥सेनाध्यक्षेण वीरेण विजयेन महात्मना॥कृतं शास्त्रानुसारेण स्कन्धावारनिवेशनम् ॥ ५७ ॥ विवेश भरतः श्रीमांश्चतुरङ्गबलान्वितः ॥ अन्वीयमानो वीराभ्यां पुत्राभ्यां यदुनन्दन ॥ ५८ ॥ पुष्करेण च वीरेण तक्षेण सुमहात्मना ॥ बलमुख्यैस्तथैवान्यैः सूतमागधबन्दिभिः ॥ ५९ ॥ शङ्खवादित्रशब्देन पटहानां स्वनेन च ॥ भरतस्य गृहद्वारतोरणान्तिकमागताः ॥ ६०॥ बभूवुर्बलमुख्यास्ते दिक्षु ये यदुनन्दन ॥ सन्त्यज्य मध्यमां वीथीं प्रवेशाय महामनाः ॥ ६१ ॥ बन्दिभिः

ख्याप्यमानांस्तान्नामकर्मावदानतः ॥ शिरःकम्पेन भरतः प्रैरयत्स्वान्निवेशनान् ॥ ६२ ॥ बलमुख्यान्विवेशाथ स्वगृहं सर्वऋद्धिमत् ॥ द्वियो जनाध्वना श्रान्ता भरतस्य तु सैनिकाः ॥ ६३ ॥ विविशुर्भवनान्स्वान्स्वान्भेजिरे शयनानि च ॥ प्रविश्य वेश्मप्रवरं भरतोऽपि यथासुखम् ॥ ॥ ६४ ॥ विजहार महाराज देवराजसमद्युतिः ॥ क्रमेणानेन धर्मात्मा भूमिपाल दिनेदिने ॥ आससाद व्रजन्नेव गङ्गां त्रिपथगां नदीम् ॥ ६५ ॥ सुराङ्गनापीनपयोधरस्थसच्चन्दनक्षालनलब्धलक्ष्मीम् ॥ ग्रीष्मार्कतापाद्विगलत्तुषारविवृद्धशीतोदपटोत्तरीयाम् ॥ ६६ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे प्रयाणवर्णनो नाम पञ्चाधिकद्विशततमोऽध्यायः ॥ २०५ ॥ ॥ छ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ निवेशमकरोद्राजन् गङ्गातीरे स राघवः ॥ भरतस्य तदा चक्रुर्गङ्गायां जलमण्डपान् ॥ १ ॥ तथैव बलमुख्यानां प्राधान्येन नराधिप ॥ सैनिकश्च जनस्तस्य प्राप्य तां सुरनिम्नगाम् ॥ २ ॥ साफल्यं जन्मनो मेने तत्याज च तथा क्लमम् ॥ सस्नौ पपौ पयः कामं हर्षेण महता युतः ॥ ३ ॥ स्नापयाञ्चक्रिरे तत्र तुरगांस्तुरगप्रियाः ॥ कुञ्जरान्स्नापयमासुर्महामात्रास्तथैव च ॥ ४ ॥ मज्जद्भिर्बहुसाहस्रैः कुञ्जरैर्जाह्नवी नदी ॥ किरातविषयैः सैव विरराज यथोपलैः ॥ ५ ॥ समुत्थितमहामात्रान्दृष्ट्वाभ्युक्षणछद्मना ॥ चिक्रीडुर्दन्तिभिः केचिद्विविशुर्बाहुभिस्तथा ॥ ६ ॥ गङ्गामासाद्य संहृष्टा भरतस्य तु सैनिकाः ॥ भरतोऽपि तथा स्नातः कृतदेवतपूजनः ॥७॥ श्राद्धं चक्रे महातेजा ददौ दानं तथैव च ॥ दत्त्वा तत्र महादानानाज्ञापयति यादव ॥८॥ शिल्पिनो मम कुर्वन्तु कूटागारान्मनोरमान् ॥ रात्रौ दीपनिवेशार्थं शतशोऽथ सहस्रशः ॥९॥ आनीयन्तां तथा नावः सैन्यस्य तरणाय मे ॥ क्रियन्तां चर्मनावश्च प्लवाश्च शतशस्तथा ॥१०॥ उत्तरं पारमासाद्य निवेशः क्रियतां तथा ॥ परं पारं जना यान्तु उदयास्तमयान्तरे ॥११॥ एवमाज्ञाप्य भरतो विजहार यथासुखम् ॥ प्रसारितकरो राजन्सर्वत्रैव दिवाकरः ॥ १२ ॥ ययावदर्शनं तत्र भरतस्यैव लज्जया ॥ पद्मपत्रदलाग्राभा प्रतीची चाभवत्क्षणात् ॥१३॥ आदित्येस्तमनुप्राप्ते सन्ध्यारागानुरञ्जिता ॥ ततस्तु तमसा व्याप्ते न प्राज्ञायत किञ्चन ॥ १४ ॥ भरताज्ञाकृतान्पूर्वं कूटागारान्सदीपकान् ॥ ध्वजमालापरिक्षिप्तांश्चिक्षिपुर्जाह्नवीजले ॥१५॥ सैनिकैश्च तथा मुख्यैर्भरतस्य पृथक्पृथक् ॥गङ्गाम्भसि परिक्षिप्ता दीपवृक्षाः सहस्रशः ॥१६॥ सा दीपमालिनी गङ्गा तीरद्योतितविग्रहा ॥ जहास फेनहासेन जिह्मेव गगनप्रिया ॥ १७ ॥ जलान्तर्गतैर्दीपैर्दीपवृक्षैर्मनोहरैः ॥ तथा कल्लोलसंक्रान्तैर्गङ्गा दीप्तेव लक्ष्यते ॥ १८ ॥ एवं हि क्रीडतां तत्र गङ्गातीरे तथा नृणाम् ॥ रात्रावेवाञ्जसा जग्मुर्नावो

१ 'चन्दनाद्यैश्च' इति ख० । २ 'जलतर्यागतैः' इति ख० । 'जलान्तायागतैः' इति क० ।

बहुविधा नृप ॥ १९ ॥ शशाङ्कराजहंसेन दृष्ट्वा खसरसीं जनाः ॥ आक्रम्यमाणा सुषुपुर्निशीथे निद्रयान्विताः ॥ २० ॥ शशाङ्कोदयसंसुप्तबलं पद्मवनोपमम् ॥ निबोधयामास तथा दिवाकरकरोत्करम् ॥ २१ ॥ चक्रुषुस्ते तदा नावः कर्णधारा यथा स्वकाः ॥ बलं च सकलं पारं तारयाञ्चक्रिरे तदा ॥ २२ ॥ नावस्तां किङ्किणीजालैः पताकाभिश्च राजिताः ॥ निन्युर्बलं परं पारं कर्णधारस्फिगाहताः ॥ २३ ॥ भाण्डैः पूर्णास्तथा काश्चित्काश्चित्पूर्णा जनेन च ॥ तुरङ्गमैस्तथा पूर्णा गोखरोष्ट्रैस्तथा पराः ॥ २४ ॥ काश्चित्सकुञ्जरा नावो ययुः पारं तदा परम् ॥ तथा पद्मदलाक्षीणां स्त्रीणां नावश्च पूरिताः ॥ २५ ॥ विमानाभाः प्रदृश्यन्ते गङ्गाम्भसि नरेश्वर ॥ कर्णधारवरोपेता दण्डिभिः पुरुषैर्वृताः ॥ २६ ॥ लोकसन्तारणार्थाय भूयो जग्मुस्तथा पराः ॥ चर्मनौभिस्तथा केचित्प्लवैः केचित्सुयन्त्रितैः ॥ २७ ॥ जग्मुरादाय भाण्डानि दृतिभिश्च तथा क्वचित् ॥ नरैर्दृतिसमारूढैः कृष्यमाणास्तुरङ्गमाः ॥ २८ ॥ जग्मुः केचित्परं पारं बाहुभिर्मनुजेश्वर ॥ जग्मुरन्ये परं पारं संगृहीताश्च रश्मिभिः ॥ ॥ २९ ॥ नौस्थैरेव परैः शीघ्रं तुरगान्नृपबाहुभिः ॥ महिषीणां च सद्मानि गवां च यदुनन्दन ॥ ३० ॥ जग्मुर्गोपालकैः सार्धं परं पारं च बाहुभिः ॥ उष्ट्रगर्दभसंघानि तार्यमाणानि बाहुभिः ॥ ३१ ॥ भूयोभूयो न्यवर्तन्त तत्र रावो महानभूत् ॥ तीर्णस्य तार्यमाणस्य नरस्य यदुसत्तम ॥ ३२ ॥ आसीत्कोलाहलो घोरस्तीरयोरुभयोरपि ॥ भरतोऽपि महातेजाः स्नातो हुतहुताशनः ॥ ३३ ॥ मत्स्यरूपधरं विष्णुं पटे सम्पूज्य यादव ॥ स्वस्तिवाच्यांस्ततो विप्रान्गोभिर्वस्त्रैर्धनेन च ॥ ३४ ॥ सम्पूज्य जाह्नवीं देवीं गन्धमाल्यानुलेपनैः ॥ सम्पूजयामास तदा भूय एव द्विजोत्तमान् ॥ ३५ ॥ गोभिरश्वैस्तथा निष्कैर्वस्त्रैर्गन्धैस्तथैव च ॥ आरुरोह तदा नावं पाण्डुकम्बलसंवृताम् ॥ ३६ ॥ किङ्किणीजालवितता पताकाध्वजमालिनीम् ॥ भरते तु समारूढे कर्णधारस्फिगाहता ॥ ३७ ॥ जगाम सा परं पारं नौर्विमानोपमा नृप ॥ सम्प्राप्य स परं पारं सम्पूर्णकटकस्तदा ॥ उवास राजंस्तत्रैव दिवि देवेश्वरो यथा ॥ ३८ ॥ देवीं महादेवजटातटस्थां शशाङ्कसंसर्गविवृद्धशीताम् ॥ उत्तीर्य राजा भरतः स चैनां निन्ये क्षयं शक्रसमप्रभावः ॥ ३९ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे गङ्गावतरणवर्णनो नाम षडुत्तरद्विशततमोऽध्यायः ॥ २०६ ॥ ॥ मार्कण्डेय उवाच ॥ भरते तु समुत्तीर्णे गङ्गां गगनमेखलाम् ॥ विवेश कटकं तस्य तमन्यः कौरवो नृप ॥ १ ॥ बलेन चतुरङ्गेण समुद्राभेन संयुतः ॥ ईश्वरश्च किरातानां दमनो नाम पार्थिवः ॥ २ ॥ गन्धिनां बहुसाहस्रैर्बलैर्युक्तो व्यदृश्यत ॥ यथार्हं पूजयित्वा तं भरतो धर्मवत्सलः ॥ ३॥ आससादार्कतनयां यमुनां पापनाशिनीम् ॥ यमस्य भगिनीं पुण्यां नील

मालां मनोहराम् ॥ ४ ॥ यत्र क्वचन नद्यां हि कृत्वा श्राद्धन्नराधिप ॥ अक्षयं फलमाप्नोति नाकपृष्ठे च मोदते ॥५॥ यत्र कृष्णचतुर्दश्यां स्नातः सम्पूज्य भानुजाम् ॥ मुच्यते पातकैः सर्वैर्नाकलोकं स गच्छति ॥ ६ ॥ अनर्काभ्युदिते काले माघकृष्णचतुर्दशीम् ॥ यस्यां स्नातस्तु सम्पूज्य धर्मराजं तिलांभसा ॥ ७ ॥ न दुर्गतिमवाप्नोति कुलं चैव समुद्धरेत् ॥ यत्र क्वचन नद्यां हि माघकृष्णचतुर्दशीम् ॥ ८ ॥ नादेयाम्भसि सर्वस्मिन्स्नातः पापैर्विमुच्यते ॥ यमुना तु विशेषेण यमस्य भगिनीति सा ॥ ९ ॥ स्नातश्च यामुने तोये सन्तर्प्य पितृदेवताः ॥ न दुर्गतिमवाप्नोति नाकलोकं च गच्छति ॥ १० ॥ तां समासाद्य यमुनां यथा गङ्गाजलं तथा ॥ विहृत्य भरतस्तद्वदुत्त तार महानदीम् ॥ ११ ॥ समुत्तीर्णस्य यमुनां भरतस्य महात्मनः ॥ विवेश कटकं राजा मत्स्यानां सुरथस्तदा ॥ १२ ॥ गोरसेनश्च साल्वानां शिबीनां च प्रभद्रकः ॥ स तैर्नृपतिभिः सार्धं कुरुक्षेत्रमुपाययौ ॥ १३ ॥ यदर्थमेषा चरति लोके गाथा पुरातनी ॥ पांसवोऽपि कुरुक्षेत्रे वायुना सममीरिताः ॥ १४ ॥ अपि दुष्कृतकर्माणो नयन्ति परमां गतिम् ॥ समन्तपञ्चके पुण्ये ये मृता मनुजेश्वर ॥ १५ ॥ ते सर्वे नाकमासाद्य राजन्ते दिवि देववत् ॥ सन्नीतिर्यत्र राजेन्द्र तीर्थं त्रैलोक्यविश्रुतम् ॥ १६ ॥ तीर्थसन्नयनादेव सन्नीतिरिति विश्रुतम् ॥ पृथिव्यां यानि तीर्थानि आसमुद्रसरांसि च ॥ १७ ॥ मासान्ते सततं तत्र नित्यमायान्ति यादव ॥ तत्र श्राद्धं तु यः कुर्याद्राहुग्रस्ते दिवाकरे ॥ १८ ॥ अश्वमेधशतस्याग्रं फलं विन्दति मानवः ॥ भरतस्तु समासाद्य तत्रोवास सुखी तदा ॥१९॥ पप्रच्छ ब्राह्मणांस्तत्र तीर्थसन्नीतिकारणम् ॥ पृष्टस्तु भरतेनाथ ब्राह्मणस्तु घटोदरः ॥ २० ॥ उवाच भरतं तत्र कथां पापप्रणाशिनीम् ॥ घटोदर उवाच ॥ शक्रे वृत्रवधाक्रान्ते त्रैलोक्ये दैत्यसाद्गते ॥ २१ ॥ सब्रह्मकाः सुराः सर्वे विष्णुं शरणमाययुः ॥ तानुवाच हरिर्देवश्च्यवनस्यात्मसम्भवः ॥ २२ ॥ भार्गवो ब्राह्मणः श्रीमान्दधीच इति विश्रुतः ॥ अस्थिभिः क्रियतां तस्य देवेन्द्रस्य वरायुधम् ॥ २३ ॥ प्रविश्य देवांस्तत्राहं हन्ता वृत्रमसंशयम् ॥ एवमुक्ताः सुराः सर्वे दधीचस्याश्रमं ययुः ॥ २४ ॥ ददृशुश्च महाभागं दधीचं तपसां निधिम् ॥ पूजयित्वा महाभागं तमूचुः संहताः सुराः ॥ २५ ॥ त्वदस्थिभिः करिष्यामो वज्रं दैत्यनिबर्हणम् ॥ अन्यानि च तथास्त्राणि सुरकार्यार्थसिद्धये ॥ २६ ॥ तत्र त्वं देवकार्यार्थं संन्यासं द्विज रोचय ॥ एवमुक्तो दधीचस्तु प्रत्युवाच स तान्सुरान् ॥ २७ ॥ तीर्थयात्रा प्रतिज्ञाता सर्वतीर्थेषु वै मया ॥ तां तु कृत्वा करिष्यामि देहन्यासं सुरोत्तमाः ॥ २८ ॥ देवा ऊचुः ॥

१ 'नीलनीलाम्' इति क० । २ 'केशवम्' इति ख० ।

शक्तस्त्वं सर्वतीर्थानामाह्वाने द्विजपुङ्गव ॥ इहाद्यैव समायान्तु सर्वतीर्थानि तेऽनघ ॥ २९ ॥ तेजसा च त्वदीयेन तथास्माकं च भार्गव ॥ घटो
दर उवाच ॥ एवमुक्तः सुरैः सर्वैस्तीर्थानि सरितस्तथा ॥ ३० ॥ सरांसि च समुद्राश्च तत्राजग्मुर्नराधिप ॥ काम्येन महता राजन्योगेन परमेण
च ॥ ३१ ॥ ज्ञात्वा च तेषां सान्निध्यं तत्र स्नातो द्विजोत्तमः ॥ तर्पणं च तथा कृत्वा सुराणां पितृभिः सह ॥ ३२ ॥ उवाच देवांस्तत्रस्थानिदं
वचनमर्थवत् ॥ दधीच उवाच ॥ अद्य प्रभृति मासान्ते भवद्भिः सततं सुराः ॥ ३३ ॥ सान्निध्यमिह कर्तव्यं तीर्थैश्चैव यथागतैः ॥ घटोदर
उवाच ॥ एवमुक्तैस्तथेत्युक्तो देवैस्तीर्थैश्च स त्वथ ॥ ३४ ॥ त्यक्त्वा देहं दिवं यातो दधीचः स्वेन तेजसा ॥ विश्वकर्मा च तस्यास्थ्नां भार्गवैर्वज्रमथा
करोत् ॥ ३५ ॥ आयुधानि च देवानां तथैव च पृथक्पृथक् ॥ तेन वज्रेण महता वृत्रं हत्वा महासुरम् ॥ ३६ ॥ जघान दैत्यमुख्यानां नवति
र्नवतिस्तथा ॥ ततः प्रभृति मासान्ते नित्यमेव रघूद्वह ॥ ३७ ॥ सान्निध्यमिह तीर्थानां देवतानां च कल्पितम् ॥ मार्कण्डेय उवाच ॥
एतच्छ्रुत्वा महातेजा दत्त्वा दानानि राघवः ॥ ३८ ॥ ययौ सैन्येन महता भरतोमरऽकण्टकम् ॥ तत्र विष्णुपदं प्राप्य पूजयित्वा च राघवः ॥३९॥
आससाद नदीं गौरीं पुण्यां पापभयापहाम् ॥ विश्वामित्राज्ञया रक्षः प्रविवेश पुरा नृपम् ॥ ४० ॥ कशाहतेन मार्गस्थं शप्तं भूपाल शक्तिना ॥
सौदासं स प्रविष्टस्तु भक्षयामास शक्तिनम् ॥ ४१ ॥ ततः पुत्रशतं राजन्वसिष्ठस्यैव सत्वरः ॥ हृते पुत्रशते दुःखाद्वसिष्ठो भगवानृषिः ॥ ४२ ॥
विवेश निम्नगां गौरीं प्राणत्यागचिकीर्षया ॥ विप्रस्य भूप स्नातस्य विद्रुता सा तदाभवत् ॥ ४३ ॥ ततः प्रभृति लोकेऽस्मिञ्छतद्रुरिति
शब्दिता ॥ सर्वपापप्रशमनी सर्वकल्याणकारिणी॥४४॥स्नातानां च तथा राजन्दशधेनुफलप्रदा ॥ तां समासाद्य तत्रापि दत्त्वा दानं स राघवः॥४५॥
उत्तीर्य तां ययौ तत्र सा चान्त्या यत्र निम्नगा ॥ यस्यां स्नात्वा विमुच्यन्ते सर्वपापभयैर्नराः ॥४६॥ यस्यां स्नानादवाप्नोति दशगोदानजं फलम् ॥
आषाढे च तथा कृत्वा गोसहस्रफलं लभेत् ॥ ४७ ॥ गौरीतोयाद्विनिर्मुक्तो वसिष्ठो भगवानृषिः ॥ पाशबन्धभरैर्यस्यां पपात सहसा
नृप ॥४८॥ विपाशश्च तथा देव्या कृत्वा तीरे विसर्जितः ॥ शक्तिपुत्रं ततो दृष्ट्वा वसिष्ठोऽपि पराशरम् ॥ ४९ ॥ अस्ति सन्तानमित्युक्त्वा
मरणाद्विनिवर्तत ॥ सा चान्त्या च तथा लोके विपाशेत्यभिधीयते ॥ ५० ॥ विपाशां च समुत्तीर्णे भरते धर्मवत्सले ॥ विवेश
कटकं तस्य कुणिदेशो महोदयः ॥ ५१ ॥ त्रैगर्तो वसुधानश्च कुलूताधिपतिर्जयः ॥ दाशेरकस्तथा राजा गोवाशन इति श्रुतः ॥ ५२ ॥
इरावतीं शीघ्रगमां भरतोऽपि तदा ययौ ॥ दशधेनुफलं यत्र स्नात एव समश्नुते ॥ ५३ ॥ षष्टितीर्थसहस्राणि वहत्येका इरावती ॥

अष्टम्यां तु विशेषेण यत्र युज्येत रेवती ॥ ५४ ॥ तत्र दत्त्वा बहुविधं दानं रघुकुलोद्वहः ॥ उत्तीर्य तां ययौ शीघ्रं देविकां पापनाशिनीम् ॥ ५५ ॥ दृष्टमात्रैव या देवी सर्वकल्मषनाशिनी ॥ शरीरबहुला सा तु हरस्य दयिता उमा ॥ ५६ ॥ तत्रापि दत्त्वा दानानि पूजयामास शङ्करम् ॥ भरते चाथ तत्रस्थे विविशुः पञ्च पार्थिवाः ॥ ५७ ॥ पार्वतीया महाराज पदातिगणसङ्कुलाः ॥ कुमारः श्रेणिमाञ्छूरो बलबन्धुः सुयोधनः ॥ ५८ ॥ मद्रराजोंऽशुमांश्चैव तथैव च महाबलः ॥ पूजितो मद्रराजेन शाकलेन नरोत्तमः ॥ ५९ ॥ त्रिरात्रमुषितः श्रीमांश्चन्द्रभागां नदीं ययौ ॥ चन्द्रांशुशीतलजलां सर्वपापप्रणाशिनीम् ॥ ६० ॥ बहुतीर्थसमायुक्तां स्नानात्सर्वप्रदां नृणाम् ॥ विशेषेण महाराज माघपुष्यत्रयोदशीम् ॥ ६१ ॥ भरते तां समुत्तीर्णे विवेश कटकं ततः ॥ एतच्छ्रुतञ्जयः श्रीमानभिचारः कृतञ्जयः ॥ ६२ ॥ काश्मीरकश्च धर्मात्मा सुबाहुरिति विश्रुतः ॥ आससाद स तैः सार्द्धं वितस्तां तु महानदीम् ॥६३॥ स्वर्गलोकप्रदां स्नाने सर्वकल्मषनाशिनीम् ॥ प्रोष्ठपादस्य मासस्य शुक्लपक्षत्रयोदशीम् ॥ ६४ ॥ विशेषेण महाराज पुण्यां परमपावनीम् ॥ भरतस्तां समुत्तीर्य सुदामां चैव निम्नगाम् ॥ ६५ ॥ आससाद महातेजाः कैकेयान्यदुनन्दन ॥ बलेन चतुरङ्गेण युधाजित्कैयाधिपः ॥ ६६ ॥ निर्ययौ भरतं प्राप्तं श्रुत्वा भरतमातुलः ॥ नागराश्च तथा मुख्या राजगृहनिवासिनः ॥ ६७ ॥ ब्राह्मणाः क्षत्रिया वैश्या ये च वर्णवरा जनाः ॥ यानैरुच्चावचैः सर्वे नगरात्तु विनिर्गताः ॥ ६८ ॥ वादित्रान्पुरतः कृत्वा गणिकाश्च विनिर्गताः ॥ प्रतिग्रहनिमित्तं तु राघवस्य महात्मनः ॥ ६९ ॥ भरतोऽपि महातेजाः स समेत्य युधाजिता ॥ अभ्यधावत तत्प्रीत्या मातुलं कैकयाधिपम् ॥७०॥ कण्ठे गृहीत्वा भरतं मूर्ध्न्युपाघ्राय चासकृत् ॥ भरतोऽपि समादाय राजगेहमुपागमत्॥७१॥ समे मनोरमे देशे प्रभूतयवसेन्धने ॥ शिबिरं भरतश्चक्रे नगरस्याविदूरतः ॥ ७२ ॥ पृथक्पृथक्तदा चक्रुः स्कन्दावारनिवेशनम् ॥ मनःप्रियेषु देशेषु नानादेश्या नराधिपाः ॥ ७३ ॥ कृत्वा निवेशान्मनुजेश्वराणामादिश्य भोगान्सकलान्स तेषाम् ॥ विवेश नागेन स मातुलस्य पुरं प्रहृष्टो रघुवंशचन्द्रः ॥ ७४ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे राजगृहगमनो नाम सप्तोत्तरद्विशततमोऽध्यायः ॥ २०७ ॥ मार्कण्डेय उवाच ॥ ततः स्वल्पपरीवारो भरतो धर्मवत्सलः ॥ अभ्यधाय ततः प्रीत्या मातुलः कैकयाधिपः ॥ १ ॥ कण्ठे गृहीत्वा भरतं मूर्ध्न्युपाघ्राय चासकृत् ॥ भरतोऽपि समादाय राजन् गृहमुपागतम् ॥ २ ॥ प्रविवेश पुरं हृष्टो मातुलस्य युधाजितः ॥ पताकाध्वजसंबाधं सिक्तं चन्दनवारिणा ॥३ ॥धूपेनाऽगुरुसाराणां समन्तादाकुलीकृतम् ॥ कृतोपहारं सर्वत्र कुसुमैः पञ्चवर्णकैः ॥ ४ ॥ सर्वैंपण्यविसंयुक्तं समालंकृतबालकम् ॥

खमुल्लिखद्भिः प्रासादैः श्वेतमेघगणैर्युतम् ॥५॥ विन्यस्तबलिपूजञ्च देवतायतनेषु च ॥ महावादित्रघोषेण समन्तात्कृतनिःस्वनम् ॥६॥ ([1]पौरैर्दिदृक्षुभिः सर्वैराकीर्णापणवीथिकम् ॥ राजमार्गे महाराज पिण्डीकृतमहाजनम् ॥७॥) राजमार्गादपाकृष्टशून्यसर्वनिवेशनम् ॥ योषिद्वृन्दसमाक्रान्तराजमार्गमहागृहम् ॥ ८ ॥ प्रविवेश पुरं श्रीमान्भरतो नागधूर्गतः ॥ तस्य कामाभवपुषः प्रवेशे भरतस्य तु ॥ ९ ॥ गृहकार्याणि संत्यज्य ययुर्नार्यो गवाक्षकान् ॥ काश्चिदर्धानुलिप्ताङ्ग्यः काश्चिदेकाञ्जितेक्षणाः ॥ १० ॥ केशैः संयमितैकार्धैः काश्चिदर्धनिवेशितैः ॥ एकस्मिंश्चरणे काश्चिद्गृहीत्वा काष्ठपादुकाः ॥११॥ त्वरिताशा ययुर्नार्यो द्वितीये चर्मपादुकाः ॥ तथा पराः समाक्षिप्य पूर्वाक्रान्तगवाक्षकाः ॥१२॥ व्रजन्तीषु तथान्यासु काश्चिन्नार्यो गदाक्षकात् ॥ वेगवत्यो ययुः शीघ्रं संत्यक्त्वा चर्मपादुकाः ॥ १३ ॥ नार्यः स्ववदनैश्चक्रुः सुवक्त्राँस्तान्गवाक्षकान् ॥ अर्धप्रविष्टसत्कम्बुपाणिवारिजकुड्मलाः ॥ १४ ॥ द्वितीयपाणिसंदर्शसमाक्रान्तैर्ययुः करैः ॥ नीवीबन्धनविश्लेषसमाकुलितचेतनाः ॥ १५ ॥ ययुरेवा परास्तत्र पाणिसंश्लिष्टनीवयः ॥कुसुमप्रकरं काश्चिदूहमानाः शिरोगतैः ॥ १६ ॥ ययुरेवांशुकैर्दीर्घैस्त्वरमाणा गवाक्षकान् ॥ सितासितेन रामाणां रमणीयेन राघवः ॥ १७ ॥ ययौ दृष्टिनिपातेन रज्यमान इवांशुमान् ॥ स चकर्ष तदा तासां पतितैर्नेत्ररश्मिभिः ॥१८॥ हृदयान्निगृहीत्वेव गच्छमानः स राघवः ॥ स तु दृग्विषये यासां यासां तस्मात्परागतः॥१९॥ न ता बुबुधिरे काश्चित्क्रियां चित्रगता इव ॥ भरते दूरयातेऽपि निश्चेष्टाः काश्चिदेव ताः ॥ २० ॥ आकृष्टास्ता ययुः क्षोणीं प्रेर्यमाणैः सखीजनैः ॥ प्रद्युम्नांशसमुत्पन्नः प्रद्युम्नसमदर्शनः ॥ २१ ॥ आदाय तासां चेतांसि ययौ राजगृहं द्रुतम् ॥ तस्मिन्राजगृहे राजन्राघवो राजमन्दिरम् ॥ २२ ॥ आससाद महातेजाः कैलासमिव चापरम् ॥ प्रविश्य स गृहं मुख्यं प्रेषयामास भूभुजम् ॥ २३ ॥ पानभोजनवासांसि सैनिकानां च यादव ॥ उवास स सुखं तत्र पूजितश्च युधाजिता ॥ जगाम चास्तं सविता जपापुष्पोत्करप्रभः ॥ २४ ॥ जाम्बूनदे रत्नसहस्रचित्रे स राजपुत्रः शयने विचित्रे ॥ सुष्वाप रात्रौ भवने विचित्रे निदाघरात्रिं पवने विचित्रे ॥ २५ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे भरतस्य राजगृहप्रवेशवर्णनो नामाष्टोत्तरद्विशततमोऽध्यायः ॥ २०८ ॥ मार्कण्डेय उवाच ॥ तस्मिन्रात्र्यवसाने तु भूमिपानां पृथक्पृथक् ॥ कटकेष्वभ्यहन्यन्त संज्ञातूर्याणि यादव ॥ १ ॥ बहूनां बलमुख्यानां नानालिङ्गानि भागशः ॥ तेषां कोलाहलः शब्दो बभूव गगनङ्गमः ॥ २ ॥ विविशुर्भरतस्यापि ततः प्राबोधिका जनाः ॥

१ कोष्ठान्तर्गतः पाठः खपुस्तके नास्ति ।

वैणिका गायना मुख्यां वंशवाद्यविदश्च ये ॥ ३ ॥ मार्दङ्गिका पाणविकाः शङ्खवादनकाश्च ये ॥ रक्तकण्ठाः सुमधुरा ये च मङ्गलपाठकाः ॥ ४ ॥
सूतमागधमुख्याश्च वन्दिनश्च नराधिप ॥ तुष्टुवुर्भरतं वीरं सुखसुप्तं महामतिम् ॥ ५ ॥ सुप्रभातं समुत्तिष्ठ प्रभाता रजनी शुभा ॥ दिक्प्राची
रघुशार्दूल वर्ततेऽरुणरञ्जिता ॥ ६ ॥ नूनमस्यां हि वेलायां मातलिस्त्रिदशाधिपम् ॥ विबोधयति राजेन्द्र सुखाय जगतां विभुम् ॥ ७ ॥ त्वयि
सुप्ते जगत्सुप्तं विबुद्धे च सुखान्वितम् ॥ तस्मादुत्तिष्ठ लोकानां शिवाय रघुनन्दन ॥ ८ ॥ त्वं हि सर्वगुणारामो यथा रामो महीपतिः ॥ गुणैः
शशाङ्करश्म्याभैस्त्वया वै रञ्जितं जगत् ॥९॥ अत्याश्चर्यं महाबाहो यशसा सुसितेन ते ॥ मुखान्यरातिवृन्दानां क्रियन्ते मलिनानि यत् ॥१०॥
कृपाणधारापानीयं दृष्ट्वाऽरातिगणस्तव ॥ तृष्णयैव भवत्याशु रञ्जितानिलयो भयात् ॥ ११ ॥ अक्षोभ्यश्चातिगम्भीरो भवान्रत्नाकरस्तथा ॥
अग्राह्यत्वात्समुद्रेण न समः प्रतिभाति नः ॥१२॥ सौम्यः कलावाँल्लक्ष्मीवान्नयनानन्दकारकः ॥(दोषाकरेण[१] क्षयिणा नौपम्यं ते नराधिप )॥१३॥
बाहुभोज्यातिविस्तीर्णा सर्वाश्रयवती दृढा ॥ नौपम्यं याति ते सम्यक् क्षोणी विन्ध्येन कम्पिना ॥ १४ ॥ यत्तेऽस्ति तदवश्यं त्वं ददासि रिपु
सूदन ॥ अविद्यमाना भीर्दत्ता भवतारिगणे कुतः ॥१५॥ निमेषमपि यो दृष्टस्त्वयापाङ्गनिरीक्षणैः ॥ समग्रदृष्टचा यं दृष्टो नित्यमेवेक्षणैः श्रियः ॥
॥ १६ ॥ क्षुरपर्यन्तधारेण चक्रेणारिगणस्य ते ॥ शिरांस्यपहरत्याजौ देवदेवो जनार्दनः ॥ १७ ॥ कपालमाली खट्वाङ्गी खशाङ्ककृतभूषणः ॥
वामार्धदयिताकारः शङ्करः शं करोतु ते ॥१८॥ पद्मासनः पद्मजन्मा सर्वलोकपितामहः ॥ ऋद्धिं मेधां धृतिं लक्ष्मीं बलं च विदधातु ते ॥ १९ ॥
नभश्चरोऽम्बुजो देवो दिग्वधूकरपूरकः ॥ ब्रह्माण्डमण्डपे दीपः सुप्रभातं करोतु ते ॥ २० ॥ केशयक्षेशदेवेशप्रेतेश्वरनिशाचराः ॥ सर्वदेवगणैः सार्धं
सुप्रभातं दिशन्तु ते ॥ २१ ॥ ऋषयः सरितः शैलाः सागराश्च दिशो दश ॥ कालस्यावयवाश्चैव सुप्रभातं दिशन्तु ते ॥ २२ ॥ इति शृण्वन्गिरं
पुण्यामेषां मङ्गलवादिनाम् ॥ महापुण्याहघोषेण तत्याज शयनं तदा ॥२३॥ आयव्ययं स शुश्राव लेखकैर्गणकैः सह ॥ वेगोत्सर्गं ततः कृत्वा ययौ
स्नानगृहं शुभम् ॥ २४ ॥ स्नानारम्भं ततश्चक्रे दन्तधावनपूर्वकम् ॥ उत्सादितः कषायेण बलवद्भिर्नरैस्तदा ॥ २५ ॥ सुखं भद्रासनासीनः सूक्ष्मा
म्बरधरः प्रभुः ॥ सस्नौ स विविधैस्तोयैर्नदीसागरजैः शुभैः ॥ २६ ॥ कुम्भैः सुवर्णमाहेयैस्ताम्रै रौप्यमयैस्तथा ॥ शताधिकैर्महाराज सर्वौषधि
समन्वितैः ॥ २७ ॥ क्षीरप्रवाहसंयुक्तैर्माल्यकण्ठैः सुपूजितैः ॥ आवर्जितैर्महीपाल सुस्नातालङ्कृतैर्नरैः ॥ २८ ॥ चन्दनस्रावसम्पूर्णैर्द्विजमन्त्रानु

१ कोष्टान्तर्गतः पाठः खपुस्तके नास्ति ।

मन्त्रितैः ॥ बभार वसनं चारु स्नानतोयौघसङ्कुलम् ॥ २९ ॥ शशाङ्कमण्डलं पूर्णं तन्वभ्रैरिव संवृतम् ॥ वाद्यपुण्याहघोषेण
तथा गीतस्वनेन च ॥ ३० ॥ स्नात्वोपस्पृश्य विधिवत्पूर्वां सन्ध्यां समाहितः ॥ ददर्श वदनं चारु दर्पणे चाथ सर्पिषि ॥ ३१ ॥
स सुवर्णे महाराज दैवज्ञेनाभिमन्त्रिते ॥ दिनेशं तिथिनक्षत्रं ततः शुश्राव राघवः ॥ ३२ ॥ सांवत्सरमुखोद्गीर्णं कलिदुःस्वप्ननाशनम् ॥
चकाराभ्यर्चनं चाथ देवदेवस्य चक्रिणः ॥ ३३ ॥ गन्धमाल्यनमस्कारधूपदीपान्नसम्पदा ॥ स्तवैर्बलिप्रदानैश्च गीतवाद्यस्वनेन च ॥ ३४ ॥
संपूज्य देवदेवेशं विवेशाग्निगृहं शुभम् ॥ तत्राग्निं[1] समुपस्थाय हुतं पूर्वं पुरोधसा ॥ ३५ ॥ दुःस्वप्ननाशनं कर्म सिद्धिवृद्धिजयप्रदम् ॥
प्रागेव तस्य कृतवान्विद्वान्नृपपुरोहितः ॥ ३६ ॥ ([2]ततस्त्वौपसमे वह्नौ भरतः प्रीतमानसः ॥) श्रीसूक्तं पौरुषं सूक्तं जुहाव प्रयतस्तदा ॥ ३७ ॥
आज्येन मन्त्रपूतेन विधिना सुसमाहितः ॥ दत्त्वा पूर्णाहुतिं चाग्नौ कृतजप्यो महामतिः ॥ ३८ ॥ उदकेनार्चनं चक्रे देवानां पितृभिः सह ॥
ततः स निर्ययौ तस्माद्भरतो वह्निवेश्मनः ॥ ३९ ॥ निष्क्रम्य पूजयामास ब्राह्मणान्वसुना तदा ॥ गोभिरश्वैः सुवर्णेन दधिपुष्पफलान्वितैः ॥ ४० ॥
मोदकैश्च तथा रत्नैर्वस्त्रैश्च रघुनन्दनः ॥ पूजितानां द्विजेन्द्राणां भरतेन महात्मना ॥ ४१ ॥ पुण्याहघोषस्त्रिदिवं जगाम मधुरस्वरः ॥
स पूजयित्वा विप्रेन्द्रान्प्रविश्य च तथा गृहम् ॥ ४२ ॥ नित्यकर्म च कृत्वेदं चन्दनेन सुगन्धिना ॥ सूक्ष्मशुक्लपरीधानो वरधूपेन धूपितः ॥ ४३ ॥
आभूष्य सर्वगात्राणां भूषणानि रघूद्वहः ॥ शुक्लं सुगन्धि माल्यं च स्रजश्च विविधास्तथा ॥ ४४ ॥ मङ्गलालम्भनं कृत्वा निश्चक्राम सभागृहम् ॥
कृतं शय्यासनं तत्र वररत्नविभूषितम् ॥ ४५ ॥ महार्घतोरणोपेतं सोत्तरच्छदमृद्धिमत् ॥ वितानश्च तथा दत्तं तस्योपरि महर्द्धिमत् ॥ ४६ ॥
आसीनमासने तस्मिन्भरतं सत्यसंगरम् ॥ प्रांशवो बद्धनिस्त्रिंशाः कवचोत्तमभूषिताः ॥ ४७ ॥ रक्ताम्बरधरा वीरा ररक्षुः पृष्ठसंस्थिताः ॥
तथैवोभयपार्श्वस्थाः पूर्णचन्द्रनिभाननाः ॥ ४८ ॥ वारमुख्याः सुवेशास्तमुपासांचक्रिरे तदा ॥ वालव्यजनधारिण्यस्तालवृन्तकराः पराः ॥ ४९ ॥
ताम्बूलभाण्डधारिण्यो नीलनीरजलोचनाः ॥ कुण्डली बद्धनिस्त्रिंशो दण्डपाणिः सुवेशवान् ॥ ५० ॥ उवाच भरतं क्षत्ता भूमिविन्यस्तजानुकः ॥
दिदृक्षवस्ते संप्राप्ता ब्राह्मणाः संशयच्छिदः ॥ ५१ ॥ श्रेणीमहत्तरा ये च बलमुख्यास्तथैव च ॥ प्रवेशयैनानित्युक्तो द्वास्थान्क्षत्ता 
ततोऽब्रवीत् ॥ ५२ ॥ ब्राह्मणान्बलमुख्यांश्च प्रवेशयत सत्वरम् ॥ आशीर्भिरभिनन्द्यैनं संप्रविष्टा द्विजोत्तमाः ॥ ५३ ॥ बृसीषु

१ 'विधाय च' इति ख० । २ कोष्ठान्तर्गतः पाठः खपुस्तके नास्ति ।

दन्तपीठेषु विविशुश्च यथासुखम् ॥ ततस्तु बलमुख्यानां नमतां भरतं तदा ॥ ५४ ॥ क्षत्ता जग्राह नामानि कण्ठारक्तस्वरान्वितः ॥ ततस्तेषूपविष्टेषु द्वारेषु विवृतेषु च ॥ ५५ ॥ प्रविवेश जनः सर्वो न न्यवार्येत कश्चन ॥ एतस्मिन्नेव काले तु शुश्रुवे तुमुलो ध्वनिः ॥ ५६ ॥ भरतं द्रष्टुकामानां भूमिपानां महात्मनाम् ॥ ह्रादेन गजघण्टानां बृंहितेन तथैव च ॥ ५७ ॥ ह्रेषितेन तुरङ्गाणां रथनेमिस्वनेन च ॥ नामभिः कीर्त्यमानैश्च वन्दिभिः पृथिवीक्षिताम् ॥ ५८ ॥ शङ्खवादित्रघोषेण पटहानां स्वनेन च ॥ ( आजग्मुर्भरतं द्रष्टुं नरेन्द्राः प्रियदर्शनाः ॥ ५९ ॥ तोरणादवतीर्यैव वाहनेभ्यो महीक्षितः )[१] ॥ सर्वे स्वल्पपरीवारा विविशुस्ते सभां शुभाम् ॥ ६० ॥ शिरःकम्पेन भरतं नमस्कृत्य निवेदिताः ॥ प्रतीहारेण दक्षेण तेन चक्रुर्वरासनम् ॥ ६१ ॥ सिंहासनस्थान्नृपतीन्भरतस्त्वनुरूपयन् ॥ गिरा पप्रच्छ कुशलं पूजयामास चाप्यथ ॥ ६२ ॥ तुष्टुवुर्वन्दिनस्तत्र नानादेश्यान्नराधिपान् ॥ निवेदयन्तः स्तुत्यन्ते भरताय महात्मने ॥ ६३ ॥ स्तुवतां भरतं तत्र बन्दिनां स महास्वनः ॥ प्रासादभोगसंरुद्धो विपुलः समपद्यत ॥ ६४ ॥ क्ष्मापालमौलिमाणिक्यमरीचिविकटोज्ज्वलम् ॥ बालातपांशुच्छुरितं बभूव च सभागृहम् ॥ ६५ ॥ ततः स भरतः श्रीमान्विससर्ज नराधिपान् ॥ स्वहस्तदत्तताम्बूलान्प्रतीहारनिवेदितान् ॥ ॥ ६६ ॥ ततः समुत्थाय ययौ द्वितीयगृहमुत्तमम् ॥ तत्र चक्रे तदा मन्त्रं मातुलेन युधाजिता ॥ ६७ ॥ पुरोधसा च गार्ग्येण स्वेन कालविदा तथा ॥ युधाजिदुवाच ॥ काले त्वमीप्सिते प्राप्तो गन्धर्वाणां वधेच्छया ॥ ६८ ॥ तत्र यावन्न जानन्ति गन्धर्वास्ते त्वदागमम् ॥ अवस्कन्देन तानद्य तावद्रात्रौ जहि प्रभो ॥ ६९ ॥ अवस्कन्देन निधनं सुखं तेषां भविष्यति ॥ कालविदुवाच ॥ सुप्ते प्रमत्ते विश्वस्ते तथा राजञ्छ्रमान्विते ॥ ७० ॥ अवतीर्णे बले चैव सरितं वहतीं तथा ॥ रात्रौ जागरणश्रान्ते छद्मयुद्धं विधीयते ॥ ७१ ॥ रात्रौ विहारशीलास्ते गन्धर्वाः सततं प्रभो ॥ न तेऽवस्कन्दमर्हन्ति रात्रौ कैकेयिनन्दन ॥ ७२ ॥ विजयश्च दिवा युद्धे भरतस्य प्रदृश्यते ॥ गार्ग्य उवाच ॥ आदौ दूतेन वक्तव्यं गन्धर्वाणां प्रयोजनम् ॥ ७३ ॥ यथा देशमिमं त्यक्त्वा व्रजध्वं तुहिनाचलम् ॥ गन्धर्वाणां निवासस्तु हिमवत्यचलोत्तमे ॥ ७४ ॥ पूर्वमेव कृतस्तेन येनेदं निर्मितं जगत् ॥ स्थानमेतन्मनुष्याणां त्यक्तुमर्हथ मा चिरम् ॥ ७५ ॥ ते च दूतवचः श्रुत्वा स्थानं दद्युर्नराधिप ॥ असंशयमुपारुह्य चैतन्मम मतं भवेत् ॥ ७६ ॥ भरत उवाच ॥ राघवाः सत्यसन्धास्तु कूटयुद्धं न शिक्षिताः ॥ तस्मात्तेषां वधः कार्यः सुयुद्धेन मया

१ कोष्ठान्तर्गतः पाठः खपुस्तके नास्ति ।

नृप ॥ ७७ ॥ गार्ग्यवाक्यं तथा बुद्ध्या रोचतेऽतिशयेन मे ॥ प्रयातु तेषां दौत्येन गार्ग्य एव महायशाः ॥ ७८ ॥ युधाजिदुवाच ॥ गच्छ गार्ग्य महाभाग गन्धर्वाधिपतिं प्रति ॥ तं च श्रावय वाक्यानि त्वयोक्तानीह यानि मे ॥ ७९ ॥ अक्रियायां तथा तेषां श्रावयाऽग्र्याणि मा चिरम् ॥ अस्यैव नाम्ना धर्मज्ञ भरतस्य महात्मनः ॥ ८० ॥ मार्कण्डेय उवाच ॥ एवमस्त्वित्यथोक्तोऽसौ ययौ गार्ग्यो महायशाः ॥ रथेन काञ्चनाङ्गेन गन्धर्वनगरं प्रति ॥ ८१ ॥ गते पुरोहिते गार्ग्ये भरतोऽपि महाशयाः ॥ हस्तिपृष्ठे रथे चाश्वे शस्त्रे शास्त्रे तथैव च ॥ ८२ ॥ व्यायामं च तथा चक्रे नियुद्धे च यदूत्तम ॥ उत्सारितस्तथा पद्भ्यां धावद्भिः कुशलैर्जनैः ॥८३॥ स्नातैः संपूजितो विष्णुर्विधिवत्सात्वतोत्तमैः ॥ नमस्कृत्य तथैवाग्निं हुतं सुष्ठु पुरोधसा ॥ ८४ ॥ तथा भुक्तवतां श्रुत्वा पूजितानां द्विजन्मनाम् ॥ पुण्याहघोषं वित्तेन भूमिपाल विसर्ज्य तान् ॥ ८५ ॥ परार्ध्यचन्दनाक्ताङ्गस्तनुचारुसिताम्बरः ॥ सर्वालङ्करणोपेतः स्रग्वी धूपेन धूपितः ॥ ८६ ॥ आसीनस्त्वासने दिव्ये बुभुजे स्वजनैर्युतः ॥ मातुलस्य महार्हाणि शुचीनि गुणवन्ति च ॥ ८७ ॥ अपरीक्षितपूर्वाणि पुरुषैराप्तकारिभिः ॥ नरपक्षिमृगाणान्तु लिङ्गैर्वह्नौ तथैव च ॥ ८८ ॥ भक्ष्यं भोज्यं च लेह्यं च पेयं चोष्यं तथैव च ॥ पात्रेषु रुक्मरौप्येषु तथा मणिमयेषु च ॥ ८९ ॥ भुक्त्वान्नं गीतशब्देन चाप्तैः कतिपयैः सह ॥ तथोपस्पृश्य धर्मात्मा दन्तधावनपूर्वकम् ॥ ९० ॥ चक्रस्य शयनं भेजे वामपार्श्वेन शत्रुहा ॥ इतिहासं स शुश्राव तत्रस्थः पुरुषोत्तमः ॥ ९१ ॥ ततः स शयनं त्यक्त्वा शास्त्राभ्यासं महायशाः ॥ चकार रघुशार्दूलः सतां मार्गमनुव्रजन् ॥ ९२ ॥ एतस्मिन्नेव काले तु सह गार्ग्यो युधाजिता ॥ विवेश भरतं द्रष्टुं रथरेणुपरिप्लुतः ॥ ९३ ॥ सुखासीनश्च भरतं वाक्यमेतत्ततोऽब्रवीत् ॥ गार्ग्य उवाच ॥ ततो वाक्यानि सर्वाणि शैलूषः श्रावितो मया ॥ ९४ ॥ न तानि तस्य रोचन्ते संग्रामस्तस्य रोचते ॥ भरतेन समागम्य श्वोभूते द्विजपुङ्गव ॥ ९५ ॥ भरतं नाशयिष्यामि नीहारं चन्द्रमा यथा ॥ इत्युक्त्वा स तु मां राजा प्रेषयामास सत्वरः ॥ ९६ ॥ आह्वानदुन्दुभिस्तत्र निष्क्रान्ते मयि चाहतः ॥ एतज्ज्ञात्वा स युद्धाय प्रातः सज्जो भवेत्तव ॥ ९७ ॥ मार्कण्डेय उवाच ॥ इति गार्ग्यवचः श्रुत्वा भरतो गार्ग्यमब्रवीत् ॥ गच्छ शीघ्रं गृहं ब्रह्मञ्छ्रान्तो रथबलाध्वतः ॥९८॥ अहमाज्ञापयिष्यामि सर्वं सांग्रामिकं विधिम् ॥ एतावदुक्त्वा विजयं सेनाध्यक्षमथाऽब्रवीत् ॥९९॥ ममोग्रवाहिभिः शीघ्रं शिबिरेषु महीक्षिताम् ॥ योधानाज्ञापयत्वद्य श्वोभूताय रणाय वै ॥ १०० ॥ युद्धावधानिकं सर्वं कर्तव्यं च तथा त्वया ॥

१ 'उत्सादितः कषायेण स्नापितः कुशलैर्जनैः' इति ख० । २ 'विप्रैः' इति ख० । ३ 'चेदिपार्थिवः' इति ख० ।

एवमाज्ञाप्य नागानां तुरगाणां तथैव च ॥ १०१ ॥ प्रत्यावेक्षां ततः कृत्वा सन्ध्यामन्वास्य पश्चिमाम् ॥ रहोगतः स शुश्राव नराणां गूढभाषितम् ॥ १०२ ॥ आरुरोह तदा श्रुत्वा प्रासादं हिमपाण्डुरम् ॥ कैलासशिखराकारं निर्वातं रजनीमुखे ॥ ॥ १०३ ॥ ततस्तु सैनिकः कश्चिच्छिबिरे भरतस्य तु ॥ तलं तलेनाभ्यहनत्पवनार्थं यदृच्छया ॥ १०४ ॥ ततस्तु सैनिकैः सर्वैस्तलतालैर्महास्वनम् ॥ चक्रिरे पुरुषव्याघ्र तस्मिन्काले दिवं गतम् ॥ १०५ ॥ प्रववौ च तदानीतो वायुर्मनुजपुङ्गव ॥ एतस्मिन्नेव काले तु मद्रराजस्तदांशुमान् ॥ १०६ ॥ प्रासादवरमारूढो ज्ञातवान्भरतं तदा ॥ दीपालोकेन लक्ष्म्या च प्रासादस्य विवृद्धया ॥ १०७ ॥ स जगाम तदा राजा प्रहसन्सैनिकं जनम् ॥ भरतस्य प्रदास्यामि युक्त्यैव बलदर्शनम् ॥ १०८ ॥ तृणमुष्टिमुपादीप्य सर्वोऽपि कटके जनः ॥ पाणावादाय मुदितः क्ष्वेडाशब्दं करोतु वै ॥ १०९ ॥ पार्थिवेनैवमुक्ते तु कटके तस्य धीमतः ॥ सोल्काहस्तो जनः सर्वः क्षणेन समपद्यत ॥ ॥ ११० ॥ शिबिरं मद्रराज्ञस्तु द्वितीयमिव चाम्बरम् ॥ बभूव तारकाचित्रमुल्काहस्तैस्तदा नरैः ॥ १११ ॥ तद्बलौघमपर्यन्तं सोल्काहस्तैर्जनैर्वृतम् ॥ दृष्ट्वा जगाम धर्मात्मा परां प्रीतिं रघूद्वहः ॥ ११२ ॥ क्ष्वेडाः किलकिलाश्चैव श्रुत्वा हर्षमुपागतः ॥ तस्मिन्प्रशान्ते ज्वलने मन्दीभूते च निःस्वने ॥ ११३ ॥ अभ्यहन्यन्त भूपानां शिबिरेषु पृथक्पृथक् ॥ संज्ञातूर्याणि रम्याणि नानालिङ्गानि चाप्यथ ॥ ११४ ॥ सुबहूनि महाराज तेन कोलाहलं महत् ॥ बभूव प्रीतिजननं भरतस्य महात्मनः ॥ ११५ ॥ मन्त्रयित्वा ततः श्रीमान्क्षणमात्रं युधाजिता ॥ तेनैव सह भुक्त्वा च सुष्वाप शयनोत्तमे ॥ मधुरेण सुगीतेन वीणावेणुरवेण च ॥ ११६ ॥ हिमावदाते वरमाल्यचित्रे वितानकाधोविहिते मनोज्ञे ॥ सुष्वाप रात्रिं स महानुभावो भोगीन्द्रभोगे मधुजिद्यथैव ॥ ११७ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे युद्धप्रसङ्गवर्णनो नाम नवोत्तरद्विशततमोऽध्यायः ॥ २०९ ॥ ॥ मार्कण्डेय उवाच ॥ आह्वानदुन्दुभिं श्रुत्वा शैलूषतनयास्ततः ॥ आसेदुः पार्थिवं सर्वे शैलूषं तं समागताः ॥ १ ॥ नमुचिः कामपालश्च गवेषणसुदर्शनौ ॥ वीरबाहुः सुबाहुश्च वायुवेगसुवर्चसौ ॥२॥ निकुम्भः कुम्भनामा च बलाको बलकस्तथा ॥ हरिकेशो महौजाश्च सूर्यरश्मिः प्रभङ्करः ॥ ३ ॥ वृन्दारको ज्यौतिषिको दृढस्युरपराजितः ॥ कुमुदः कुमुदापीडो वसुनाथः सुलोचनः ॥ ४ ॥ चन्द्रापीडो गदी मौली किन्नरोऽजगरो रुहः ॥ केसरी वरवाणश्च भानुरागावहो रयिः ॥५॥ एकलव्यो विशालश्च कलविङ्कः कलाप्रियः ॥ भीमनादो महानादो वासुकिः पनसो गदः ॥ ६ ॥ चन्द्रवर्मा महावर्मा वसुषेणोऽग्रजारकः ॥ एते चान्ये च गन्धर्वाः शैलूषस्य सुताः प्रभोः ॥ ७ ॥ दिव्यमाल्या

म्बरधरा दिव्यचन्दनभूषिताः ॥ आसनेषु महार्हेषु सभायां विविशुस्तदा ॥ ८ ॥ शैलूषस्य सुतैर्गुप्ता सभा सा रत्नचित्रिता ॥ रराज तारका
चित्रा निशेव नृप शारदी ॥ ९ ॥ तेषां समुपविष्टानां शैलूषस्तानथाब्रवीत् ॥ गार्ग्यस्य वचनं सर्वमनुमानं तथा स्वकम् ॥ १० ॥ तेऽभियोगं
तदा श्रुत्वा मानुषान्मनुजेश्वर ॥ चक्रुर्नानाविधाश्चेष्टा मन्युना क्रोधचेतसः ॥ ११ ॥ गन्धर्वराजपुत्रास्ते क्रोधादश्रुप्रवर्षिणः ॥ रेजुर्युगान्तमेघाभा
अचिराभासदृग्दशा ॥ १२ ॥ बभार नमुचिर्वक्रं क्रोधरागानुरञ्जितम् ॥ दिक्सौम्येव दिशादाहं महासंग्रामसूचकम् ॥ १३॥ कामपालललाटस्था
त्रिशिखा भ्रुकुटी बभौ ॥ त्रिभिः प्रपातैर्गङ्गेव निपतन्ती हिमाचलम् ॥ १४ ॥ कृष्णे स शुक्लपर्यन्ते क्रोधरागानुरञ्जिते॥ कुमुदापीडनेत्रे तु सन्ध्या
ताम्रे बभूवतुः ॥ १५ ॥ क्रोधाक्रान्तेन वपुषा कुमुदः कुमुदप्रभः ॥ रक्तोत्पलनिभाकारः क्षणेन समपद्यत ॥ १६ ॥ चन्द्रापीडमुखं चारु
क्रोधधूम्रानुकारितम् ॥ बभार रूपं तन्वभ्रसंभृतस्य निशाभृतः ॥ १७ ॥ क्रोधनिश्वासधूमेन भानोर्वक्रमथावृतम् ॥ बभूव भानोः
सदृशमुपरागे यदूत्तम ॥ १८ ॥ करनिष्पेषसंजातधूमधूम्रमुखाङ्ककः ॥ अन्वर्थनामतामाप तस्मिन्काले सुदर्शनः ॥ १९ ॥
गवेषणप्रवेगेन वह्निगर्भोज्ज्वलात्मना ॥ ताराभिवर्षणेनैव सूचितो भूपतिक्षयः ॥ २० ॥ वीरबाहुभुजाघातरत्ननिष्पेषरेणुना ॥ विजृम्भित
मथास्थाने क्रोधेनेव वपुष्मता ॥ २१ ॥ सुबाहुबाहुनिष्पेषो बभूवाशनिनिस्वनः ॥ निर्घात इव गम्भीरो राज्ञां निधनसूचकः ॥ २२ ॥
वायुवेगमहावेगचरणोल्लिखिता क्षितिः ॥ विदद्रे पृथिवीपाल विनाशभयशंसिनी ॥ २३ ॥ आयासजातसंस्वेदपुलकोद्गमभूषितम् ॥ सुवर्चा
धारयामास ललाटतटपट्टकम् ॥ २४ ॥ प्रस्विन्नगात्रसंक्रान्तकाञ्चनस्तम्भपिङ्गलः ॥ बभूव कुम्भनाभस्तु क्रोधो विग्रहवानिव ॥ २५ ॥
सुविनिःसृतरोमाग्निज्वालाकेसरमालिना ॥ नृसिंहवपुषश्चक्रे रविणानुकृतिर्हरेः ॥ २६ ॥ प्रस्विन्नगात्रसंक्रान्तसर्वगन्धर्वमण्डलः ॥ विश्वरूपधरं
मौलः प्रजहास जनार्दनम् ॥ २७ ॥ गन्धर्वराजपुत्रास्ते मन्युना हतचेतसः ॥ तदा बभूवुर्भूपाल सर्व एव विशेषतः ॥ २८ ॥ इत्थं सुतानां
प्रसमीक्ष्य कोपं संस्मृत्य वाक्यानि पुरोहितस्य ॥ जगाम मन्युं सुतरां स राजा सन्दष्टदन्तच्छदभीमवक्त्रः ॥ २९ ॥ इति श्रीविष्णुधर्मोत्तरे
प्रथमखण्डे मार्कण्डेयवज्रसंवादे गन्धर्वसभाक्षोभवर्णनो नाम दशोत्तरद्विशततमोऽध्यायः ॥ २१० ॥ ॥ मार्कण्डेय उवाच ॥ दृष्ट्वा गन्धर्व ॥१२३॥
राजस्य क्रोधेनाकुलितं मनः ॥ तमूचुर्नृप गन्धर्वाः स्वबाहुबलदर्पिताः ॥ १ ॥ अपराजित उवाच ॥ सर्वमालभते राजन्नशोकः शूरबाहुषु ॥
तस्माच्चौर्येण निधनं रघूणां मम रोचते ॥ २ ॥ निकुम्भ उवाच ॥ योऽयं मन्युः समुद्भूतः काकुत्स्थान्प्रति मे प्रभो ॥ अविनाशि जगत्कृत्स्नं

विनाशं समुपैष्यति ॥ ३ ॥ ॥ किन्नर उवाच ॥ या लक्ष्मीरनुलिप्ताङ्गी वैरिशोणितकुङ्कुमैः॥कान्तापि सरसां प्रीतिं न सा धत्ते मनस्विनाम्॥ ४ ॥
वसुनाभ उवाच ॥ कृपाणधाराविध्वस्तशत्रुसङ्घसमुद्भवा ॥ न या श्रीः किं तया कार्यं राजन्सत्त्ववतां नृणाम् ॥ ५ ॥ ॥ अजगर उवाच ॥
अजितारिगणोपान्तसम्पदो भूषणक्रिया ॥ विपद्गरीयसी ताभिर्या न सम्पद्भिर्भूषणा ॥ ६ ॥ ॥ रुरु उवाच ॥ शोभन्ते कर्कशाः शूराः स्तना
इव समुन्नताः ॥ शूराणां च स्तनानां च परावज्ञाकरी रतिः ॥ ७ ॥ ॥ केश उवाच ॥ तेजस्विनामभ्युदयं वन्दनीयं जगत्त्रये ॥ यथा
भास्करमुद्यन्तं जनः सर्वोऽभिनन्दति ॥ ८ ॥ ॥ परवारण उवाच ॥ सत्त्वाधिकस्य सिंहस्य लीलोन्मथितपादपाः ॥ न शक्ताः पुरतः स्थातुं
शैलकूटोपमा गजाः ॥ ९ ॥ ॥ आभावह उवाच ॥ न जातु शमनं यस्य तेजस्तेजसि तेजसाम् ॥ वृथा जातेन किं तेन मातुर्वार्द्धक्य
कारिणा ॥ १० ॥ एकलव्य उवाच ॥ नाम्नि संकीर्तिते यस्य न भवन्त्यरयो भयात् ॥ विवर्णवदनच्छायाः का दया तस्य जीवने ॥ ११ ॥
विशाल उवाच ॥ लक्ष्मीसङ्गमलुब्धानां शूराणां च रणोद्भवा ॥ कीर्तिर्भवति सैवाशु संयोगकरणा सखी ॥ १२ ॥ ॥ कलिप्रिय उवाच ॥
रिपुरक्तपरा सिक्ता रिपुस्त्रीनेत्रवारिणा ॥ न यस्य सिञ्चिता कीर्तिः का स्पृहा तस्य जीवने ॥ १३ ॥ ॥ भीमनाद उवाच ॥ तेजसैव
समाक्रान्तसमस्तभुवनो रविः ॥ करोति पदविन्यासं सर्वेषामेव मूर्धसु ॥ १४ ॥ ॥महाधर्म उवाच ॥ शत्रुमस्तकविन्यस्तपदक्रमविलासिनी ॥
कविदत्तकरालम्बा कीर्तिर्यातु दिवं तव ॥ १५ ॥ ॥ वासुकिरुवाच ॥ मायानिहतमातङ्गमध्यद्वीपविदारिताम् ॥ क्षितिं भित्त्वाविशत्कन्या कीर्तितो
वसुधातलम् ॥ १६॥ ॥ पनस उवाच ॥ हतारिलक्ष्मीसंयोगविकसद्वदनस्य ते ॥ प्रयातु त्वरिता कीर्तिः क्रोधनेव दिशो दश ॥१७॥ गद उवाच॥
सतोयतोयदाकारैर्नागैर्दानप्रवर्षिभिः ॥ आक्रान्तदिङ्मुखे युद्धे विद्युत्त्वम्मे करोत्वसिः ॥ १८ ॥ महानाद उवाच ॥ मदीयसिंहनादेन वित्रासितगजाकु
लम् ॥ बलं निपातयारीणां शरैः सन्नतपर्वभिः ॥ १९ ॥ वसुरुवाच ॥ गजाश्वरथपादातचरणोल्लिखितं रजः ॥ द्रष्टासि प्रशमं यातं परितस्त्वरि
शोणितैः ॥ २० ॥ वृन्दारक उवाच ॥ गजकुम्भसमुद्रस्थमुक्ताफलविकासिषु ॥ तिष्ठत्सु राजन्खड्गेषु कः सहेत पराभवम् ॥ २१ ॥
॥ ज्योतिपिक उवाच ॥ कापिशभ्रूलताभङ्गकुटिलद्वयकोटिषु ॥ विद्यमानेषु चापेषु कः सहेत पराभवम् ॥ २२ ॥ दृढस्युरुवाच ॥ राजंस्तीक्ष्णाः
सन्ति यस्य विशिखाः पञ्च मानिनः ॥ किमन्यैस्तस्य कर्तव्यं पक्षपातिभिराहवे ॥ २३ ॥ चन्द्रापीड उवाच ॥ किमायुधैः सत्त्ववतां चारुदोर्दण्ड
शालिनाम् ॥ सद्यः सञ्जातमन्यूनां युद्धव्याक्षेपकारकैः ॥ २४ ॥ गद्युरुवाच ॥ खड्गास्तिष्ठन्तु मे तुच्छा भुक्तभङ्गाट्टहासिनः ॥ एकदोर्दण्डशेषोऽपि

कः सहेत पराभवम् ॥ २५ ॥ कलविङ्क उवाच ॥ मद्बाहुमन्दरक्षुब्धवैरिसैन्यमहार्णवात् ॥ भुङ्क्ष्व लक्ष्मीं समुत्पन्नां चिराय जगतीपते ॥ २६ ॥
॥ गज उवाच ॥ किमायुधैः सत्त्ववतां कुपुंसां च किमायुधैः ॥ अरातिशस्त्राण्येकेषामन्येषामफलानि हि ॥ २७ ॥ बलक उवाच ॥ दुर्बलोत्खात
शक्रेभदशनाभिहते हरौ ॥ मयाद्य सुरराडस्तु भवांस्त्रिभुवनेश्वरः ॥ २८ ॥ ............ ॥ प्रनष्टदेवतापूजं बलिहीनं सुदुर्दशम् ॥ मया कृत
मथाद्यास्तु त्रैलोक्यमपि सुप्रभो ॥ २९ ॥ हरिक उवाच ॥ कीनाशमहिषेणाद्य हरस्य वृषभेण तु ॥ अयोध्यां वाहयिष्यामि शेषाहेर्लाङ्गलेन
च ॥ ३० ॥ महोदर उवाच ॥ निरस्तमयमार्तण्डे मया लोके चराचरे ॥ यमस्य महिषं पश्य क्रमन्तं सूर्यवाजिषु ॥ ३१ ॥ सूर्य उवाच ॥
निःशेषदेवतासंघे मया लोकत्रये कृते ॥ दुर्गासिंहविनिर्भिन्नं पश्याद्य मघवद्गजम् ॥ ३२ ॥ प्रभस उवाच ॥ निरस्ताम्बुपिपासेन समाकृष्ट
धनेश्वराः ॥ प्रणमन्तु तवाद्यैव देवसंघा हतत्विषः ॥ ३३ ॥ भद्रक उवाच ॥ स्कन्दशङ्करशून्येऽस्मिन्मया त्रिभुवने कृते ॥ शिखी संभक्षयत्वद्य
शर्वाभरणपन्नगान् ॥ ३४ ॥ मार्कण्डेय उवाच ॥ क्रोधान्धकारकलुषीकृतचारुवक्त्रान्गन्धर्वराजतनयान्प्रसमीक्षमाणः ॥ जगाद राजानमदीन
सत्त्वो नाडायनाख्यस्तु तदा पुरोधाः ॥ ३५ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे गन्धर्वगर्जनं नामैकादशोत्तरद्विशततमो
ऽध्यायः ॥ २११ ॥ ॥ छ ॥ ॥ नाडायन उवाच ॥ ॥ एकया द्वे विनिश्चित्य त्रींश्चतुर्भिर्वशीकुरु ॥ पञ्च जित्वा विजित्वा षट् सप्त
हित्वा सुखी भव ॥ १ ॥ एकया प्रज्ञया राजन्कार्याकार्यद्वयं नरः ॥ विनिश्चित्य तु यः कुर्यात्कार्यं तत्र स पण्डितः ॥ २ ॥ मध्यस्थं यदि वा
मित्रं शत्रुं वा कार्यगौरवात् ॥ ज्ञात्वा देशं च कालं च ह्युपायैरभ्युपक्रमेत् ॥ ३ ॥ सामभेदप्रदानाश्च उपायाः परिकीर्तिताः ॥ उपायश्च चतुर्थो
ऽत्र दण्डस्त्वगतिका गतिः ॥ ४ ॥ पञ्चेन्द्रियजयो येन कृत आदौ जिगीषुणा ॥ त्रिलोकविजयं तस्य न दूरे प्रतिभाति मे ॥ ५ ॥ पञ्चेन्द्रिय
जयं कृत्वा गुणषट्कमुपाश्रयेत् ॥ बुद्ध्वा बलाबलं सम्यगात्मनश्चापरस्य च ॥ ६ ॥ राजदोषाः परित्यक्ता येन सप्त नराधिप ॥ सिद्धिं तस्य
समायान्ति यथाकालं गुणा नृप ॥ ७ ॥ मृगयापानमुख्याश्च स्त्रियश्च पुरुषा गिरः ॥ अर्थसन्दूषणं चैव दण्डपारुष्यमेव च ॥ ८ ॥
राजदोषैः परित्यक्ता राघवास्तत्र पार्थिव ॥ गुणाश्रयविभागज्ञा विग्रहस्तैर्न रोचते ॥ ९ ॥ भरतेन वयं साम्ना बले महति तिष्ठता ॥
प्रथमं समुपाक्रान्तं तदेव तव रोचताम् ॥ १० ॥ भरतस्य वयं साम्ना यदि गच्छेम पर्वतम् ॥ हितं तत्स्यान्महाभाग सकुलस्य
तवाऽनघ ॥ ११ ॥ त्वया कृत्वा समुच्छेदं राज्ञां जननिवासिनाम् ॥ अकारणान्महद्वैरं कृतं भूपतिभिः सह ॥ १२ ॥ जने निवा

सादस्माकं केवलं लघुता भवेत् ॥ मानुष्यैः संगमश्चैव विग्रहश्च पुनःपुनः ॥ १३ ॥ न कृषिर्न च वाणिज्यं जनोऽस्माकं प्रयोजनम् ॥ ते वयं सजनां भूमिं त्यक्त्वा यामः शिलोच्चयम् ॥ १४ ॥ अपेक्ष्य देशकालौ च संधिं विग्रहमेव च ॥ फलं च बुद्ध्वा यः कुर्यात्स राजन्पण्डितो नरः ॥ १५ ॥ भूमिर्हिरण्यं मित्रं च त्रिविधं विग्रहास्पदम् ॥ स्वयंग्राहो यदस्माकं मेरुः कनकपर्वतः ॥ ॥ १६ ॥ हिरण्येन तदा कार्यं न नोऽस्ति रिपुसूदन ॥ कृषिर्नास्ति यतोऽस्माकं ततो भूर्निष्प्रयोजना ॥ १७ ॥ तस्माद्भरतमन्विच्छ मित्रं साम्ना नराधिप ॥ मित्रं रघुकुलं कृत्वा निवासस्तु हिमाचले ॥ १८ ॥ अदृश्यं देवसैन्यानां सुखं चिरमवाप्नुहि ॥ न मानुषोऽयमित्येवं भरतं मन्तुमर्हसि ॥ १९ ॥ दुष्टानां निग्रहार्थाय चतुर्मूर्तिर्जनार्दनः ॥ जातो रघुकुले राजन्पुत्रो दशरथस्य तु ॥२०॥ अंशेन वासुदेवस्य जातो रामो महा यशाः ॥ संकर्षणस्य चांशेन लक्ष्मणः परवीरहा ॥ २१ ॥ प्रद्युम्नस्य तथांशेन भरतो धर्मवत्सलः ॥ अनिरुद्धस्य चांशेन शत्रुघ्नः सुमहाबलः ॥ ॥ २२ ॥ तत्र राघवसिंहेन रामेणाक्लिष्टकर्मणा ॥ रावणोऽभिहतः संख्ये सर्वसत्त्वभयङ्करः ॥ २३ ॥ मेघनादो निरस्तश्च संग्रामे लक्ष्मणेन च ॥ शत्रुघ्नेन निरस्तश्च लवणो दुष्टराक्षसः ॥ २४ ॥ मन्ये विशिष्टभावत्वं भरतस्य महात्मनः ॥ येन माली हतः पूर्वं लङ्कावासी स राक्षसः ॥ २५ ॥ स एष भरतो विष्णुरस्ति ते तु रणंगमः॥२६॥हिते स्थितो यः सततं सुराणां दैत्येन्द्रनाशाय निविष्टबुद्धिः ॥ तेनाऽप्रमेयेण जनार्दनेन समं व्रजस्वाशु महानुभाव ॥ २७ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे नाडायनवाक्ये शैलूषं प्रति नाडायनानुशासनवर्णनो नाम द्वादशो त्तरद्विशततमोऽध्यायः ॥ २१२ ॥ ॥ शैलूष उवाच ॥ सुमाली विष्णुना पूर्वं कथं युद्धे निपातितः ॥ एतन्मे संशयं छिन्धि श्रूयते स महा बलः ॥ १ ॥ नाडायन उवाच ॥ कथेयं राजशार्दूल पुरागस्त्येन धीमता ॥ रामाय कथिता वीर तां मे निगदतः शृणु ॥२॥ पुरा विनिहते वृत्रे दैत्या विगतनायकाः ॥ अब्दुर्गं सागरं कृत्वा रात्रौ निघ्नन्ति वै प्रजाः ॥ ३ ॥ सुरैः सर्वैः समागम्य तथाऽयं न परैर्वधम् ॥ समुद्रोदकपानाय अगस्त्यश्चोदितस्तदा ॥ ४ ॥ देवकर्मप्रमुदितस्तदागस्त्यमुनिर्नृप ॥ पीत्वा चकार राजेन्द्र निस्तोयं सलिलाशयम् ॥ ५ ॥ देवैश्च निहिता दैत्या निस्तोये सलिलाशये ॥ ततः कदाचिद्विन्ध्यस्तु जगादार्कनिशाकरौ ॥ ६ ॥ मेरुं त्यक्त्वा महाभागौ मम यात प्रदक्षिणम् ॥ ऊचतुस्तौ तदा विन्ध्यमावयोस्तु वशं गिरे ॥ ७ ॥ तेन पन्थाः कृतोऽस्माकं येनेदं निर्मितं जगत् ॥ एतच्छ्रुत्वा तु विन्ध्यस्तु तपस्तप्त्वा पितामहात् ॥ ८ ॥ इषु पातमथोच्छ्रायं प्रत्यहं समवाप्तवान् ॥ ततः कतिपयाहेन दिशमावृत्य दक्षिणाम् ॥ ९ ॥ आवृत्य तस्थौ पन्थानं दिवाकरनिशाभृतोः ॥ ततोऽन्ध

मभवत्सर्वो भूर्लोकः पार्थिवोत्तम ॥ १० ॥ प्रेरितो देववाक्येन ततोऽगस्त्यो महातपाः ॥ गत्वोवाच तदा विन्ध्यं तीर्थयात्रां करोम्यहम् ॥ ११ ॥ मत्कृते ह्रस्वतां गच्छ येन यास्याम्यहं सुखी ॥ ज्ञात्वा ततः प्रभावं तु सोऽगस्त्यस्य महागिरिः ॥ १२ ॥ जगाम ह्रस्वतां शीघ्रमगस्त्योऽपि तदा ययौ ॥ दक्षिणाशां परित्यज्य न यावदहमागतः ॥ १३ ॥ सपुत्रदारस्तावत्त्वं ह्रस्व एव भवाऽचल ॥ एवमुक्त्वा स विन्ध्यन्तु सदारापत्यबान्धवम् ॥ १४ ॥ जगाम दक्षिणामाशां तमुवाच पितामहः ॥ देवकार्यं महद्ब्रह्मंस्त्वया कृतमिदं शुभम् ॥ १५ ॥ तस्मात्स्थानं च ते दद्मि वैश्वानरपथाद्बहिः ॥ दिव्यदेहो भवांस्तत्र विमानवरमास्थितः ॥ १६ ॥ दक्षिणां भूषय दिशमस्तोदयसमन्वितः ॥ प्रसादमम्भसां शैत्यं निर्विषत्वं तवोदये ॥ १७ ॥ भविष्यत्यमलप्रज्ञ मत्प्रसादात्तवैव तु ॥ शरत्समुदितो भूत्वा वसन्तेस्तमयं व्रज ॥ १८ ॥ प्राकाम्ययुक्तश्च तथा समग्रां वसुधां चर ॥ प्रधानमूर्तिर्यावत्त्वं सदारापत्यबान्धवः ॥ १९ ॥ नाक्रमिष्यति वै विन्ध्यं तावद्विन्ध्याचलः स्थितः ॥ प्राकाम्यमूर्तियुक्ते तु यत्र क्वचन संस्थिते ॥ २० ॥ त्वयि विन्ध्यो महाशैलो वृद्धिं न स गमिष्यति ॥ इल्वलश्चापि दुर्मेधा भ्रात्रा वै मेषरूपिणा ॥ ॥ २१ ॥ यदा भोजयते विप्रान्भुक्तवत्सु द्विजातिषु ॥ कुक्षिभेदन्तु वातापी कृत्वा निर्गच्छते पुनः ॥ २२ ॥ एवं विनिघ्नतस्तस्य ब्राह्मणान्यत्त्वया कृतम् ॥ शरणं तेन तुष्टोऽस्मि विन्ध्यसंस्तम्भनेन च ॥ २३ ॥ शरत्समयमासाद्य यस्माद्विप्र नवोदये ॥ पूजां त्वमाप्स्यसे लोके मत्प्रसादाद्द्विजोत्तम ॥ २४ ॥ ये च त्वां पूजयिष्यन्ति गन्धमाल्यफलाक्षतैः ॥ दधिकाञ्चनरत्नैश्च परमान्नेन भूरिणा ॥ २५ ॥ पूर्णकुम्भैः सकूष्माण्डैश्छत्रोपानहयष्टिभिः ॥ धेन्वा वृषेण भक्ष्यैश्च वासोभिः कनकेन च ॥ २६ ॥ संवत्सरं च त्यागेन फलस्यैकस्य चाप्यथ ॥ पूजनैर्ब्राह्मणेन्द्राणां त्वत्कर्मपरिकीर्तनैः॥ २७ ॥ ते प्राप्स्यन्ति सदा पुत्रान्धनमारोग्यमेव च ॥ आयुरग्र्यं तथा लोके शत्रुभिश्चापराजयम् ॥ २८॥ सौभाग्यं विपुलान्कामान्धर्मवृद्धिं तथैव च ॥ एवमुक्त्वा स भगवांस्तत्रैवान्तरधीयत ॥ २९ ॥ आससाद तथा स्थानमगस्त्योऽपि महातपाः ॥ येन क्रतुशतैरिष्टं तपस्तप्तं तथा महत् ॥ ३० ॥ तेन स्वतपसा सृष्टा लोपामुद्रा प्रियंवदा ॥ विदर्भराजतनया धर्मपत्नी तथात्मनः ॥ ३१ ॥ दृढस्युस्तनयस्तस्य तपस्वी च महातपाः ॥ प्रमुचुर्मुमुचुश्चैव तन्मुचुश्च महातपाः ॥ ३२ ॥ स्वस्त्यात्रेयस्तथा विद्वांस्तस्य शिष्यो महात्मनः ॥ अभेद्यं कवचं दत्तं तथाऽक्षय्ये महेषुधी ॥ ३३ ॥ रामलक्ष्मणयोस्तेन धनुषी च महाबले ॥ घोरेणाप्यथ संयुक्तः स च वैष्णवतेजसा ॥ ३४ ॥ कर्मणां कीर्तनं यस्य नरो वर्षशतैरपि ॥ कर्तुं शक्तो न सहते प्राकाम्ये चैव रावणे ॥ ३५ ॥ अयोध्यां राघवं द्रष्टुं जगाम त्वरितो मुनिः ॥ तमागत

मभिप्रेक्ष्य पूजयामास राघवः ॥ ३६ ॥ पाद्यार्घ्याचमनीयाद्यैः सर्वैं राज्यनिवेदनैः ॥ संपूजितस्ततश्च तेन तत्र चक्रे कथाः शुभाः ॥ ३७ ॥ ततः कथान्ते कस्मिंश्चित्तमपृच्छत्तु राघवः ॥ विष्णुना मालिनिधनं तेनोक्तं तस्य तच्छृणु ॥ ३८ ॥ यदुक्तवान्राघवनन्दनस्य चन्द्रार्कवह्निप्रतिमप्रभावः ॥ रक्षोगणेशस्य वधं सुघोरं मुनिर्महात्मा तदिदं निबोध ॥ ३९ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे नाडायनवाक्ये शैलूषं प्रति नाडायनोक्तागस्त्यमाहात्म्यवर्णनो नाम त्रयोदशोत्तरद्विशततमोऽध्यायः ॥ २१३ ॥ अगस्त्य उवाच ॥ माली सुमाली राजेन्द्र माल्यवांश्च रणोत्कटः ॥ लङ्कादुर्गमथासाद्य चित्रसूषुः परस्परम् ॥ १ ॥ माली सुमाली दुर्वृत्तौ पीडयन्तौ च देवताः ॥ वार्यमाणावपि सदा तेन माल्यवता नृप ॥ २ ॥ तयोर्भीतैः सुरैर्ब्रह्मा ज्ञापितः संप्रयोजनम् ॥ ब्रह्मणा सहितैर्गत्वा ज्ञापितस्त्रिपुरान्तकः ॥ ३ ॥ ब्रह्मेशसहिता देवा विष्णुं शरणमीयुषः ॥ जग्मुर्लवणतोयस्थं विज्ञापयितुमच्युतम् ॥ ४ ॥ ददृशुश्च रघुश्रेष्ठ समुद्रं पीतमम्भसाम् ॥ ऊर्मिवर्गैः प्रनृत्यद्भिर्वल्गन्तमिव वायुना ॥ ५ ॥ हसन्तमिव फेनौघैः स्खलन्तं कन्दरासु च ॥ अपारमिव गर्जन्तं नानायादोगणावृतम् ॥ ६ ॥ वीचिहस्तैः प्रचलितैराह्वयानमिवाऽमरान् ॥ फेनवत्यः प्रकीर्णाश्च संहताश्च समुच्छ्रिताः ॥७॥ ऊर्मयश्चास्य दृश्यन्ते चलन्त इव पर्वताः ॥ तिमिङ्गिलाः कच्छपाश्च तथा तिमितिमिङ्गिलाः ॥ ८ ॥ मकराश्चापि दृश्यन्ते जले मग्ना इवाद्रयः ॥ शङ्खानां च सहस्राणि मग्नान्यप्सु समन्ततः ॥ ९ ॥ दृश्यन्ते स्म यथा रात्रौ तारास्तन्वभ्रसंवृताः ॥ क्वचित्सुप्तः क्वचिद्गर्जन्क्वचिद्घूर्णन्क्वचित्स्खलन् ॥ १० ॥ क्षीबोपमं तं ददृशुः समुद्रं त्रिदशाधिपाः ॥ क्वचिच्चावासितैर्दैत्यैः क्वचिद्दैत्यारिणा तथा ॥ ११ ॥ क्वचिच्च भुजगैर्भीमैर्महागाम्भीर्यसंयुतम् ॥ विष्णोर्वराहवपुषा विक्षोभितजलाविलम् ॥ १२ ॥ अनासादितबाधं च वर्षाणां शतपत्रिणा ॥ तेन देवातिदेवेन विष्णुना प्रभविष्णुना ॥१३॥ नित्यमन्तरसंस्थेन निर्मलीकृतविग्रहम् ॥ शक्रवज्रभयत्रस्यमानशैलशताकुलम् ॥ १४ ॥ विद्रुमाम्बरमाप्लुष्टसदृशाकारविद्रुमम् ॥ पूर्णचन्द्रकलङ्कस्य क्षालनेप्सुरिवोद्धतैः ॥ १५ ॥ खमाक्रमति कल्लोलैः पौर्णमासीषु यः सदा ॥ असंख्यातं तरङ्गौघैः संक्रान्तशशिमण्डलम् ॥ १६ ॥ हसन्तं वान्तरिक्षस्य श्रियमेवेन्दुधारिणः ॥ दिग्भागदानकालेषु युक्तश्चन्दनवारिणा ॥ सुप्यते च यथा यत्र सततं दानवारिणा ॥ १७ ॥ तमन्तरिक्षप्रतिमं विशाललोलोर्मिमालाकुलदिग्विभागम् ॥ समुद्रमासाद्य दिवौकसस्तमातस्थुरुग्रं तपसोग्रसत्त्वाः ॥ १८॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शैलूषं प्रति नाडायनवाक्ये समुद्रवर्णनो नाम चतुर्दशोत्तरद्विशततमोऽध्यायः ॥२१४॥ अगस्त्य उवाच ॥ तपसा तोषितो देवैर्देवदेवो जनार्दनः ॥ महोदवासं संत्यज्य सुराणां दर्शनं ददौ ॥१॥ ते च

तं विष्णुमरिघ्नं धरणीपातपांसुलैः ॥ जानुपाणिललाटान्तैः प्रणेमुर्मुदिता हरिम् ॥२॥ तुष्टुवुश्च तथा वाग्भिरथोचुः स्वप्रयोजनम् ॥ यथार्थं देवदेवस्य
सुकेशतनयान्प्रति ॥ ३ ॥ प्रतिजज्ञे तदा तेषां देवो मालिवधं हरिः ॥ यूयं सुमालिनिधने शक्ताः स्थ सुरसत्तमाः ॥ ४ ॥ माल्यवानप्यवध्योऽसौ
सततं धर्मवत्सलः ॥ एवमुक्त्वा ततस्तार्क्ष्यमाह्वयामास केशवः ॥५॥ तमारुरोह सर्वात्मा काञ्चनं विनतासुतम् ॥ शंखचक्रगदापद्मलाञ्छितो मधुसूदनः ॥
॥६॥ अतसीकुसुमश्यामः काञ्चने खगमे स्थितः ॥ श्रियमूहे सतोयस्य तोयदस्य सविद्युतः ॥७॥ किरीटकौस्तुभधरं वरभूषणभूषितम् ॥ विहङ्ग
वरमारूढमनुजग्मुर्दिवौकसः ॥ ८ ॥ सुधावदातसत्पक्षैर्विततताम्बरधाविभिः ॥ हंसैस्तमन्वयाद्ब्रह्मा जटामण्डलदुर्दृशः ॥ ९ ॥ चन्द्ररश्मिप्रती
काशनिविडाङ्गककुद्मिकः ॥ हरस्तृतीयनेत्रार्चिर्विदारितनभो ययौ ॥ १० ॥ महेन्द्रनेत्रसंकाशकलापाटोपरोधिना ॥ स्कन्दस्तमन्वयौ तस्मा
न्मयूरेण षडाननः ॥ ११ ॥ विनायकान्कर्तुमना राक्षसेन्द्रान्विनायकः ॥ वायुमण्डलमारूढः प्रययावनुमाधवम् ॥ १२ ॥ वह्निज्वालावली
पुञ्जसमकेसरमालिना ॥ सिंहेनानुययौ देवी भद्रकाली जनार्दनम् ॥ १३ ॥ वरस्त्रीकुचसंकाशकुम्भैरावणपृष्ठगः ॥ किरीटी वज्रपाणिस्तमन्वयौ
त्रिदशाधिपः ॥ १४ ॥ वह्निस्तमन्वयौ देवं शुकयानेन पार्थिव ॥ सेन्द्रगोपगणाकीर्णशाद्वलस्थलशोभिना ॥ १५ ॥ गिरिकूटसमाकारं शृङ्ग
भूषितमस्तकम् ॥ वैवस्वतोऽपि महिषमारुह्यानुययौ हरिम् ॥ १६ ॥ शङ्कुकर्णो महाग्रीवो वरेभस्कन्धसंस्थितः ॥ पश्चादनुययौ देवं विरूपाक्षो
महाबलः ॥ १७ ॥ महायानेन रम्येण मनोमारुतरंहसा ॥ वरुणोऽनुययौ पश्चात्स्निग्धवैदूर्यसन्निभः ॥ १८ ॥ मनःशीघ्रगतिर्देवो वायु
मण्डलमध्यगः ॥ वायुश्चानुययौ पश्चाद्वायुपूर्णशुभांशुकः ॥ १९ ॥ धनदो नरयानेन सर्वरत्नोज्ज्वलात्मना ॥ गोविन्दमनुवव्राज श्रिया परमया
युतः ॥ २० ॥ सप्ताश्वमेकचक्रं च रथमारुह्य भानुमान् ॥ तथैवानुययौ देवं प्रभामण्डलदुर्दृशः ॥ २१ ॥ चन्द्रश्चण्डप्रभावारो दशभिस्तुरगो
त्तमैः ॥ मनोजवेन च तथा रथेनानुययौ हरिम् ॥ २२ ॥ तुरङ्गवरमारुह्य भास्करप्रतिमाकृतिः ॥ तमन्वयौ तदा राजन्प्रचण्डो रविनन्दनः ॥
॥ २३ ॥ चतुर्भिः कुञ्जरैर्युक्तं रथमास्थाय सत्वरा ॥ तमन्वयौ धरादेवी देवं त्रिदशपूजितम् ॥ २४ ॥ सङ्कल्परथमारुह्य व्यवसाय पुरःसरः ॥
मनोरथेनानुययौ कामदेवोऽपि केशवम् ॥ २५ ॥ पुष्पेषोरपि यस्याज्ञां बिभर्ति सकलं जगत् ॥ अनालस्यं समारूढा तथा देवी सरस्वती ॥ ॥१२६॥
॥ २६ ॥ अन्वयौ पुण्डरीकाक्षं शरणागतवत्सलम् ॥ भौमज्ञजीवशुक्राश्च राहुः केतुः शनैश्चरः ॥ २७ ॥ वाजियुक्तै रथैः शीघ्रमन्वयुः पुरुषो
त्तमम् ॥ देवाश्चैकोनपञ्चाशन्मरुतश्चारुमण्डलाः ॥ २८ ॥ अनुजग्मुः सुराः कृष्णं वायुमण्डलमध्यगाः ॥ अनुजग्मुस्तमादित्या रथैः काञ्चन

सुप्रभैः ॥ २९ ॥ वसवोऽङ्गिरसः साध्या विश्वेदेवास्तथाश्विनौ ॥ भृगवश्चाश्वसंयुक्ते रथैस्तं देवमन्वयुः ॥ ३० ॥ रुद्राश्चानुययुर्देवं बलोदग्रैः ककुद्मिभिः ॥ तथैवान्ये बलोदग्रा देवा देवानुयायिनः ॥ ३१ ॥ गर्दभैः शिशुमारैश्च महोग्रैर्महिषोरगैः ॥ सिंहव्याघ्रतरक्ष्वृक्षगजवानर मर्कटैः ॥ ३२ ॥ चमरैः सृमरैश्चैव गोधामार्जारशल्लकैः ॥ विविधैः पक्षियानैश्च तेऽनुजग्मुर्जनार्दनम् ॥ ३३ ॥ सिद्धमार्गेण सिद्धाश्च प्रययुर्मुनयस्तथा ॥ स्तुवन्तः पुण्डरीकाक्षं देवसंघभयापहम् ॥ ३४ ॥ गीतवाद्यैः सुमधुरैः सेवमाना जनार्दनम् ॥ प्रहृष्टाः प्रययुस्तत्र गन्धर्वाप्सरसां गणाः ॥ ३५ ॥ तपः सत्यं क्षमा दानं व्रतानि विविधानि च ॥ यज्ञाङ्गानि च सर्वाणि कालस्यावयवास्तथा ॥ ३६ ॥ संवत्सरास्तथा मासाः पक्षौ च करणैः सह ॥ युगायनमुहूर्ताश्च शास्त्राणि विविधानि च ॥ ३७ ॥ मूर्तिमन्ति तथास्त्राणि शस्त्राणि च जगत्पतेः ॥ समुद्रपर्वतद्वीपशाखिनां विग्रहाणि च ॥ ३८ ॥ वर्षाणां च शरीराणि पितॄणां च तथा गणाः ॥ नक्षत्राणि दिशश्चैव विदिशश्च महीपते ॥ ३९ ॥ देवा वनस्पतिश्चैव याश्च लोकस्य मातरः ॥ देवदैत्यगणा ये च तथा पितृगणाश्च ये ॥ ४० ॥ गन्धर्वयक्षनागानां गणा ये च नरेश्वर ॥ घोरा व्याधिगणाश्चैव कालपाशैः सुदारुणैः ॥ ४१ ॥ मृत्युर्दण्डस्तथा क्रोधो जरा च मनुजेश्वर ॥ अन्वयुः पुण्डरीकाक्षं रक्षोगणवधैषिणम् ॥ ४२ ॥ जयश्रीरग्रतस्तस्य प्रयाति रघुनन्दन ॥ सरितश्च तथा यानैः सर्वलोकस्य मातरः ॥४३॥ मकरेण ययौ गङ्गा कालिन्दी कच्छपेन तु ॥ सारसेनापि सरयूः शिशुमारेण गोमती ॥ ४४ ॥ गोदावरी च खड्गेन मयूरेण सरस्वती ॥ ककुद्मिना शतद्रुश्च विपाशा तुरगेण च ॥ ४५ ॥ चन्द्रभागा च सिंहेन दन्तिनेरावती तथा ॥ सिन्धुर्व्याघ्रेण मत्स्येन वितस्ता च तथा ययौ ॥ ४६ ॥ देविका चैव हंसेन[1] पुरुषेण च गण्डकी ॥ महिषेण पयोष्णी च कावेरी वृषभेण तु ॥ ४७ ॥ हिरण्वती सुपर्णेन चक्रेणेक्षुमती नदी ॥ भुजगेन च पार्णाशा वराहेण च कौशिकी ॥ ४८ ॥ वेदस्मृतिर्मयूरेण सारङ्गेण च नर्मदा ॥ जीवजीवकमारूढा सीतापि प्रययौ नदी ॥ ४९ ॥ ह्लादिनी च सरोरूढा[2] सृमरेण च पावनी ॥ शशकेनापि लौहित्या नदी सिन्धुर्गजेन च ॥ ५० ॥ उरभ्रेण तथा चक्षुः सीता चाजेन राघव ॥ गौतमी कुक्कुटेनापि चाषेण च दृषद्वती ॥ ५१ ॥ स्वैः स्वैर्यानैस्तथैवान्याः प्रययुर्निम्नगा हरिम् ॥ देवानुयात्राघोषेण वादित्राणां रवेण च ॥५२॥ स्तूयमानो द्विजाग्र्यैश्च प्रययौ कमलेक्षणः ॥ तद्बलो घमपर्यन्तं देवगन्धर्वसंकुलम् ॥ ५३ ॥ आतपत्रैः पताकाभिः स्वचिह्नैश्च विराजितम् ॥ किङ्किणीशतसंघोषं प्रययावनुकेशवम् ॥ ५४ ॥

---

१ 'सिंहेन' इति ख० । २ 'नरारूढा' इति ख० ।

रश्म्युत्करैर्देवविभूषणानां प्रदीप्यमानं कनकादिचित्रम् ॥ बलं ययौ तत्रिदशोत्तमानां नारायणेनाऽप्रतिमेन गुप्तम् ॥ ९९ ॥ इति श्रीविष्णु
धर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे देवप्रयाणवर्णनो नाम पञ्चदशोत्तरद्विशततमोऽध्यायः॥२१५॥ अगस्त्य उवाच ॥ देवतानां समुद्योगं श्रुत्वा
मालिसुमालिनौ ॥ चक्रतुः पृतनां घोरां त्रिदशैर्युद्धकाङ्क्षिणौ ॥ १ ॥ तौ क्रुद्धौ भ्रातरौ श्रीमान्माल्यवान्वाक्यमब्रवीत् ॥ आश्रयस्त्रिदशेन्द्राणां
सर्वात्मा मधुसूदनः ॥ २ ॥ तेन युद्धं न कर्तव्यं स तु पूज्यो जगत्पतिः ॥ अग्रे तु प्रणिपातेन तं यजामो जगत्पतिम् ॥ ३ ॥ प्रणिपातप्रसन्नो
हि कामान्दास्यति केशवः ॥ विष्णुर्हि मलिने चित्तेऽस्त्वस्माकं नृप दुर्जयः ॥४॥ जीवेम सुचिरं कालं स्थिता देवस्य शासने ॥ प्रसीद राजन्मा युद्धं
व्रज देवेन विष्णुना॥५॥यक्षाणां राक्षसानां च कुरु श्रेयस्तथात्मनः ॥ एतदुक्तं हितं भ्रात्रा रुरुचे न च तस्य तत् ॥ ६ ॥ महता च स सैन्येन
प्रययौ येन केशवः ॥ तमन्वयौ महातेजा सुमाली राक्षसाधिपः॥७॥पितृतुल्यश्च साधूनां ज्येष्ठभ्राता गुरुर्मतः॥ आदौ वाच्यं हितं तस्य कार्यं तदनुचे
ष्टितम्॥८॥ एतां बुद्धिं समास्थाय निर्यातो माल्यवानपि॥ते राक्षसा सह भ्रात्रा भीमनेत्राग्निभूषणाः ॥९॥ कोटीशतेन मुख्यानां राक्षसानां विनिर्गताः॥
नानाविधोग्रवसना नानाप्रहरणायुधाः ॥ १० ॥ नानावादित्रघोषेण प्रयाता राक्षसाधिपाः ॥ नानाप्रकारैर्विविधैः प्राणिभिर्बलवत्तरैः ॥ ११ ॥
वाहनैः प्रययुर्घोरा राक्षसास्त्रिदशाधिपम् ॥ गच्छतस्तु बलौघस्य तदा तस्योत्तरां दिशम् ॥ बभूवाऽभिमुखं घोरं वनं त्रिदशपालितम् ॥ १२ ॥
हिमाचलस्योत्तरदिग्विभागे खस्थे बले ते पुरुषौ प्रवीर ॥ जयार्थमभ्युद्यतचापदण्डौ प्रचक्रतुर्युद्धमदीनसत्त्वौ ॥ १३ ॥ इति श्रीविष्णुधर्मोत्तरे
प्रथमखण्डे मार्कण्डेयवज्रसंवादे शैलूषं प्रति नाडायनानुशासने राक्षससेनानिर्याणवर्णनो नाम षोडशोत्तरद्विशततमोऽध्यायः ॥ २१६ ॥ छ ॥
॥ अगस्त्य उवाच ॥ ततः प्रावर्तत रणं खस्थयोर्बलयोस्तयोः ॥ नानाप्रहरणोदग्रभुजयोर्जयमिच्छतोः ॥ १ ॥ तदा बलाभ्रसंच्छन्ने गगने खड्गवि
द्युति ॥ तस्मिन्नेव क्षणे जातो भानुमान्नृप विद्युतिः ॥२॥ चलत्खड्गलताविद्युत्समुद्योतितविग्रहात् ॥ रक्तवृष्टिः पपातोर्व्यां बलमेघानुविग्रहात्॥३॥
ततः शोणितवर्षेण सिच्यमाने महीतले ॥ ग्राववृष्टिर्महत्यासीच्छादितं भूतलं यया ॥ ४॥ आसीदगम्या वसुधा शोणितौघपरिप्लुता ॥ रजस्वलेव
युवतिस्तदा तत्र नराधिप ॥ ५ ॥ स्फुरमाणा विदृश्यन्ते बाहवश्चन्दनोक्षिताः ॥ खड्गप्रहारपतिताः पञ्चशीर्षा इवोरगाः ॥ ६ ॥ सुखानि दन्त ॥१३७॥
पूराणि तथा सरुधिराणि च ॥ ( विरेजुर्दाडिमानीव पाकप्रस्फुरितानि वा ॥ ७ ॥ निपतद्भिस्तथा छत्रैश्चामरैर्व्यजनैस्तथा ॥ विच्छिन्नवाहनाङ्गैश्च

१ 'रुरुधे' इति ख० । १ कोष्ठान्तर्गतः पाठः खपुस्तके नास्ति।

खमासीत्संकुलं तथा ॥ ८ ॥ ) किरीटैः कुण्डलैर्हारैः केयूरैरङ्गदैस्तथा ॥ पात्यमानैः खमभवद्रश्मिपुञ्जविराजितम् ॥ ९ ॥ क्षुरप्रविनिकृत्तानि रुधिराक्ते महीतले ॥ लुठन्ति नागहस्तानि भोगिभोगनिभानि च ॥ १० ॥ अदृष्ट्वा पतितानीह शिरांसि वसुधातले ॥ हत्वा वंशान्खमाजग्मुरन्वेषन्त इवासवः ॥११॥ शरीरैर्भूतलं प्राप्ता दिवं प्राप्ता शरीरिभिः ॥ अन्तरिक्षे विनिहिता लोकत्रयजिगीषवः॥१२॥ छिन्नराक्षसमूर्धानो गलद्रुधिरबिन्दवः ॥ न्यपतन्नुत्तरादेव श्येनैरुपहृताशयात् ॥ १३ ॥ श्येनानां भ्रमतां तत्र राक्षसामिषलिप्सया ॥ बभूव सदृशं रूपं शीर्षाणां भ्रमतां तथा ॥ ॥ १४ ॥ निकृत्ताङ्गनिपातेन पतिता बहवस्तदा ॥ सुषुपुर्गां समालिङ्ग्य क्रव्यादा रुधिराविलाः ॥ १५ ॥ निपतन्मत्तमातङ्गप्रस्फुरत्कुम्भनिर्गता ॥ मुक्ताफलैर्जहासोर्वी शूरालिङ्गननिर्वृता ॥ १६ ॥ हतकुञ्जरदन्ताग्रविनग्नाङ्गास्तुरङ्गमाः ॥ आसेदुः सुचिरेणोर्वीं नभस्येव गतासवः ॥१७ ॥ संप्राप्तरुधिरां भूमिं रक्तास्यास्तु निशाचराः ॥ ययुः शरीरैर्निहताः समरे रुधिरप्रियाः ॥ १८ ॥ वर्तमाने तथा भीमे युद्धे भीरुभयंकरे ॥ लोकपालशरव्रातनिर्भिन्ना रजनीचराः ॥ १९ ॥ दुद्रुवुर्भयसंविग्नास्तदा राम दिशो दश ॥ विप्रद्रुतं बलं दृष्ट्वा राक्षसानां दिवौकसैः ॥ २० ॥ सुमालिर्माल्यवद्भ्रातो माली देवानथाब्रवीत् ॥ किरञ्छरौघैर्विमलैस्तैलधौतैः शिलाशितैः ॥ २१ ॥ सानुजेन रणे मुक्ता शरवृष्टिर्दुरासदा ॥ संछादयामास दिशः प्रदिशश्च दिवौकसाम् ॥ २२ ॥ यथाशक्तिशरव्रातान्वारयन्तोऽपि देवताः ॥ राक्षसेन्द्रशरैर्भिन्नाः केशवं शरणं ययुः ॥ २३ ॥ स निवार्य तदा सर्वं देवसैन्यं पतत्रिणा ॥ प्रत्युद्ययौ युधो योधान्धनुषा सपतत्रिणा ॥ २४ ॥ एतस्मिन्नेव काले तु रक्षसां पीनवक्षसाम् ॥ विनिवृत्तं बलं सर्वममरैः समरोत्सुकम् ॥ २५ ॥ तद्बलं सकलं चक्रे शरैः शार्ङ्गप्रचोदितैः ॥ छादयामास समरे गोभिः सूर्यं इवानिशम् ॥ २६ ॥ नानाप्रहरणोदग्रगर्जमानो जनार्दनम् ॥ संछादयां तदा चक्रुः सर्वैः प्रहरणोत्करैः ॥ २७ ॥ संछाद्यमानैस्तैर्घोरैः केशवो रजनीचरैः ॥ जहार शीर्षाणि तदा तेषां सन्नतपर्वभिः ॥ २८ ॥ रथनीडे धनुर्न्यस्य माली राक्षसपुङ्गवः ॥ सुपर्णं ताडयामास गदया भीमवेगया ॥ २९ ॥ गदाप्रहाराभिहतस्ताक्ष्र्यः परपुरञ्जय ॥ पराङ्मुखं रणाच्चक्रे वेदनार्तो जनार्दनम् ॥ ३० ॥ पराङ्मुखे तदा ताक्ष्र्ये परिवृत्ताननो हरिः ॥ शीर्षं जहार चक्रेण राक्षसेन्द्रस्य मालिनः ॥ ३१ ॥ सकुण्डलं चारुकिरीटजुष्टं निशाचरेशस्य शिरः पृथिव्याम् ॥ निपातितं वीक्ष्य मुदान्वितास्ता नार्यो बभूवुस्त्रिदशोत्तमानाम् ॥३२॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शैलूषं प्रति नाडायनानुशासने मालिराक्षसवधवर्णनो नाम सप्तदशोत्तरद्विशततमोऽध्यायः ॥ २१७ ॥ ॥ अगस्त्य उवाच ॥ हते मालिनि

देवेन सान्त्वितः पक्षिराडसौ ॥ जहार पक्षवातेन निवृत्तो रक्षसां बलम् ॥१॥ ते तार्क्ष्यपक्षवातेन शुष्कपर्णचयो यथा ॥ द्रुता राक्षसशार्दूलास्तदा राम दिशो दश ॥ २ ॥ अविन्दमानास्ते शर्म वासुदेवभयार्दिताः ॥ पातालतलमासेदुः सर्व एव पृथक्पृथक् ॥ ३ ॥ त्रिदशान्सान्त्वयित्वा च विष्णुस्त्रिदशपूजितः ॥ अन्तर्धानं ययौ तत्र सर्वेषामेव पश्यताम् ॥ ४ ॥ लङ्कापि शून्या राजेन्द्र दत्ता वैश्रवणाय सा ॥ स्वयं विश्रवसस्तस्य रावणेन हृता बलात् ॥ ५ ॥ विभीषणाय सा दत्ता त्वया हत्वा च रावणम् ॥ राम विष्णुः समुत्पन्नस्त्वं वधायेह रक्षसाम् ॥ ६ ॥ त्वयैव युद्धे निहता ये तु मातुलसङ्कटाः ॥ पौलस्त्यराक्षसा ये तु ते हताः सम्प्रतं त्वया ॥ ७ ॥ हन्ता न विद्यते राम रक्षसां केशवं विना ॥ हृष्टोऽस्मि भाषितश्चेति प्रययौ स यथागतम् ॥ ८ ॥ ॥ नाडायन उवाच ॥ एवमुक्त्वा ततोऽगस्त्यो यथागतमरिन्दम ॥ तस्माद्युद्धं न मे राजन्नद्य वै तव रोचने ॥ ९ ॥ उत्साहशक्त्या सम्पन्नो मन्त्रशक्त्या च राघवः ॥ प्रभुशक्त्या तथा युक्तो देवशक्त्या तथैव च ॥ १० ॥ साधुसाध्येषु कार्येषु कः कुर्याद्विग्रहं बुधः ॥ केवलं कोपमास्थाय विग्रहं नृपदोषदम् ॥ ११ ॥ कामक्रोधौ जितौ येन तेनात्मा विजितस्तथा ॥ येनात्मा विजितस्तेन विजितेयं वसुन्धरा ॥ १२ ॥ राज्ञोऽविजितचित्तस्य परचक्रजयः कुतः॥ न चक्रस्य जयं कर्तुं शक्नोत्यविजितेन्द्रियः॥१३॥ नावज्ञा कस्यचित्कार्या बलो वा बहुमन्यते ॥ नित्यं लोके हि दृश्यन्ते शक्तेभ्यः शक्तिमत्तराः ॥ १४ ॥ यथाशक्ति चिकीर्षन्ति यथाशक्ति च कुर्वते ॥ न कश्चिदवमन्यन्ते नराः पण्डितबुद्धयः ॥ १५ ॥ द्वाविमौ कण्टकौ तीक्ष्णौ शरीरपरिशोषणौ ॥ यश्चाधनः कामयते यश्च कुप्यत्यनीश्वरः ॥ १६ ॥ द्वाविमौ पुरुषौ लोके स्वर्गस्योपरि तिष्ठतः ॥ प्रभुश्च क्षमया युक्तो दरिद्रश्च प्रदानवान् ॥ १७ ॥ कः कुर्याद्दुर्बले क्रोधं स्वभावादेव निर्जिते ॥ बलवत्यपि कः क्रोधं कुर्यात्प्राणहरं नरः ॥ १८ ॥ अपहारप्रवृत्तस्य कोपस्तेजस्वितोच्यते ॥ यस्मात्तस्माद्बुधैः कोपः कोपं कृत्वा विनिर्जितः ॥१९॥ त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ॥ कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत्॥२०॥ अनुबन्धं च संप्रेक्ष्य विपाकं चैव कर्मणाम् ॥ उत्थानमात्मनश्चैव ततः कर्म समारभेत् ॥ २१ ॥ न राज्यं लब्धमित्येवं वर्तितव्यं च साम्प्रतम् ॥ श्रियं ह्यविनयो हन्ति जरारूपमिवोत्तमम् ॥ २२ ॥ त्यक्त्वा जनपदे वासं याहि राजन्हिमाचलम् ॥ अविषह्यतमं हत्वा रावणं लोकरावणम् ॥ लङ्कां त्यक्त्वा धनाध्यक्षं पश्य कैलासमाश्रितम् ॥ २३ ॥ स रावणो राघवसायकार्तस्त्यक्त्वा श्रियं भूमिपते विपन्नः ॥ धनाधिपोऽद्यापि विशालकीर्तिः करोति राज्यं क्षणदाचराणाम् ॥२४॥ इति श्रीविष्णु० प्रथ० मा०सं०राक्षसपातालप्रवेशवर्णनो नामाष्टादशोत्तरद्विशततमोऽध्यायः॥२१८॥

॥ शैलूष उवाच ॥ ॥ कथं वैश्रवणे दत्ता पुरा लङ्का द्विजोत्तम ॥ कथं चापहृता तस्य रावणेन महात्मना ॥ १ ॥ चरितं रावणस्याहं श्रोतुमिच्छामि तत्त्वतः ॥ त्रैलोक्यं विजितं येन तपसा पौरुषेण च ॥ २ ॥ ॥ नाडायन उवाच ॥ ॥ ब्रह्मणो मानसः पुत्रः पुलस्त्यो विदितस्तथा ॥ तस्यासीद्विश्रवा नाम पुत्रस्त्रैलोक्यविश्रुतः ॥ ३ ॥ पौत्री बृहस्पतेः पत्नी भरद्वाजसुता शुभा ॥ बभूव तस्य राजेन्द्र नाम्ना वै देववर्णिनी ॥ ४ ॥ तस्यां स जनयामास पुत्रं वैश्रवणं प्रभुम् ॥ आराधितः सुतपसा प्रादात्तस्य पितामहः ॥ ५ ॥ यक्षेशत्वं धनेशत्वं लोकपालत्वमेव च ॥ पुष्पकं च तथा यानं कामगं कामरूपिणम् ॥ ६ ॥ पुत्रं लब्धवरं राजन्विश्रवा अभ्यभाषत ॥ त्रिकूटे पर्वतश्रेष्ठे निर्मिता विश्वकर्मणा ॥ ७ ॥ लङ्का नाम पुरी रम्या देवराजकृते पुरा ॥ हृत्वा तां देवराजस्य सुकेशतनयैः पुरा ॥ ८ ॥ आयासिता महाराज तेषां ज्येष्ठं तु मालिनम् ॥ निपात्य वासुदेवेन ते तु विद्राविताास्ततः ॥ ९ ॥ पातालतलमाश्रित्य ते वसन्तीह निर्भयाः ॥ १० ॥ तां त्वं लङ्कां समासाद्य वस यक्षसमन्वितः ॥ धर्मेण पालयन्राज्यं सततं राक्षसेश्वर ॥ ११ ॥ धर्मे ते दीयतां बुद्धिः सर्वावस्थस्य सर्वदा ॥ धर्मादर्थश्च कामश्च धर्ममूलमिदं जगत् ॥ १२ ॥ श्रुत्वा पितुर्वाक्यमदीनसत्त्वो लङ्कां समासाद्य धनाधिनाथः ॥ धर्मेण लोकं स तु रञ्जयानश्चकार राज्यं क्षणदाचराणाम् ॥ १३ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शैलूषं प्रति नाडायनानुशासने लङ्काकथायां वैश्रवणाख्यान वर्णनो नामैकोनविंशत्युत्तरद्विशततमोऽध्यायः ॥ २१९ ॥ ॥ नाडायन उवाच ॥ ॥ एतस्मिन्नेव काले तु सुमाली वसुधातलम् ॥ चचारा दाय तनयां कैकसीं नाम नामतः ॥ १ ॥ चरन्स वसुधां स्फीतां ददर्शाथ नराधिपम् ॥ पुष्पकं यानमारूढं श्रिया परमया युतम् ॥ २ ॥ तं दृष्ट्वा कैकसीं वाक्यं चोवाच रजनीचरः ॥ पुत्रि प्रदानकालस्ते न कश्चित्त्वां वृणोति माम् ॥ ३ ॥ अप्रार्थितप्रदानं च धर्षणाभयशङ्कया ॥ न करोमि विशालाक्षि तवार्थं वरवर्णिनि ॥ ४ ॥ कष्टं कन्यापितृत्वं हि नराणां मानकाङ्क्षिणाम् ॥ ध्रुवं कन्यापितृत्वं हि शक्रस्यापि प्रधर्षणम् ॥ ५ ॥ मातुः कुलं पितृकुलं यत्र कन्या प्रदीयते ॥ कुलत्रयं संशयितं कन्यां कृत्वेह तिष्ठति ॥ ६ ॥ तेनाहं त्वां न दास्यामि सा त्वं गच्छ स्वयं शुभे ॥ भर्तारं वरयस्वाशु मुनिं विश्रवसं विभुम् ॥ ७ ॥ यतः सोऽयं धनाध्यक्षः श्रिया परमया युतः ॥ तादृशं तनयं तस्माज्जनयिष्यसि भामिनि ॥ ८ ॥ जगाम कैकसी राजंस्ततो विश्रवसं मुनिम् ॥ रौद्रे मुहूर्ते संप्राप्ते सन्ध्यायां नृपसत्तम ॥ ९ ॥ साभिवन्द्य ततः पादौ तस्य विश्रवसो मुनेः ॥ बभूव पुरतस्तन्वी व्रीडमानेव लज्जया ॥ १० ॥ उवाच तां मुनिः प्रह्वां कैकसीं चारुहासिनीम् ॥

देवेन सान्त्वितः पक्षिराडसौ ॥ जहार पक्षवातेन निवृत्तो रक्षसां बलम् ॥१॥ ते तार्क्ष्यपक्षवातेन शुष्कपर्णचयो यथा ॥ द्रुता: राक्षसशार्दूलास्तदा राम दिशो दश ॥ २ ॥ अविन्दमानास्ते शर्म वासुदेवभयार्दिताः ॥ पातालतलमासेदुः सर्व एव पृथक्पृथक् ॥ ३ ॥ त्रिदशान्सान्त्वयित्वा च विष्णुस्त्रिदशपूजितः ॥ अन्तर्धानं ययौ तत्र सर्वेषामेव पश्यताम् ॥ ४ ॥ लङ्कापि शून्या राजेन्द्र दत्ता वैश्रवणाय सा ॥ स्वयं विश्रवसस्तस्य रावणेन हृता बलात् ॥ ५ ॥ विभीषणाय सा दत्ता त्वया हत्वा च रावणम् ॥ राम विष्णुः समुत्पन्नस्त्वं वधायेह रक्षसाम् ॥ ६ ॥ त्वयैव युद्धे निहता ये तु मातुलसङ्कटाः ॥ पौलस्त्यराक्षसा ये तु ते हताः सम्प्रतं त्वया ॥ ७ ॥ हन्ता न विद्यते राम रक्षसां केशवं विना ॥ दृष्टोऽस्मि भाषितश्चेति प्रययौ स यथागतम् ॥ ८ ॥ ॥ नाडायन उवाच ॥ एवमुक्त्वा ततोऽगस्त्यो यथागतमरिन्दम ॥ तस्माद्युद्धं न मे राजन्नद्य वै तव रोचते ॥ ९ ॥ उत्साहशक्त्या सम्पन्नो मन्त्रशक्त्या च राघवः ॥ प्रभुशक्त्या तथा युक्तो देवशक्त्या तथैव च ॥ १० ॥ साधुसाध्येषु कार्येषु कः कुर्याद्विग्रहं बुधः ॥ केवलं कोपमास्थाय विग्रहं नृपदोषदम् ॥ ११ ॥ कामक्रोधौ जितौ येन तेनात्मा विजितस्तथा ॥ येनात्मा विजितस्तेन विजितेयं वसुन्धरा ॥ १२ ॥ राज्ञोऽविजितचित्तस्य परचक्रजयः कुतः॥ न चक्रस्य जयं कर्तुं शक्नोत्यविजितेन्द्रियः॥१३॥ नावज्ञा कस्यचित्कार्या बलो वा बहुमन्यते ॥ नित्यं लोके हि दृश्यन्ते शक्तेभ्यः शक्तिमत्तराः ॥ १४ ॥ यथाशक्ति चिकीर्षन्ति यथाशक्ति च कुर्वते ॥ न कश्चिदवमन्यन्ते नराः पण्डितबुद्धयः ॥ १५ ॥ द्वाविमौ कण्टकौ तीक्ष्णौ शरीरपरिशोषणौ ॥ यश्चाधनः कामयते यश्च कुप्यत्यनीश्वरः ॥ १६ ॥ द्वाविमौ पुरुषौ लोके स्वर्गस्योपरि तिष्ठतः ॥ प्रभुश्च क्षमया युक्तो दरिद्रश्च प्रदानवान् ॥ १७ ॥ कः कुर्याद्दुर्बले क्रोधं स्वभावादेव निर्जिते ॥ बलवत्यपि कः क्रोधं कुर्यात्प्राणहरं नरः ॥ १८ ॥ अपहारप्रवृत्तस्य कोपस्तेजस्वितोच्यते ॥ यस्मात्तस्माद्बुधैः कोपः कोपं कृत्वा विनिर्जितः ॥१९॥ त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ॥ कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत्॥२०॥ अनुबन्धं च संप्रेक्ष्य विपाकं चैव कर्मणाम् ॥ उत्थानमात्मनश्चैव ततः कर्म समारभेत् ॥ २१ ॥ न राज्यं लब्धमित्येवं वर्तितव्यं च साम्प्रतम् ॥ श्रियं ह्यविनयो हन्ति जरारूपमिवोत्तमम् ॥ २२ ॥ त्यक्त्वा जनपदे वासं याहि राजन्हिमाचलम् ॥ अविषह्यतमं हत्वा रावणं लोकरावणम् ॥ लङ्कां त्यक्त्वा धनाध्यक्षं पश्य कैलासमाश्रितम् ॥ २३ ॥ स रावणो राघवसायकार्त्तस्त्यक्त्वा श्रियं भूमिपते विपन्नः ॥ धनाधिपोऽद्यापि विशालकीर्तिः करोति राज्यं क्षणदाचराणाम् ॥२४॥ इति श्रीविष्णु० प्रथ० मा०सं०राक्षसपातालप्रवेशवर्णनो नामाष्टादशोत्तरद्विशततमोऽध्यायः॥२१८॥

॥ शैलूष उवाच ॥ ॥ कथं वैश्रवणे दत्ता पुरा लङ्का द्विजोत्तम ॥ कथं चापहृता तस्य रावणेन महात्मना ॥ १ ॥ चरितं
रावणस्याहं श्रोतुमिच्छामि तत्त्वतः ॥ त्रैलोक्यं विजितं येन तपसा पौरुषेण च ॥ २ ॥ ॥ नाडायन उवाच ॥ ॥ ब्रह्मणो मानसः पुत्रः
पुलस्त्यो विदितस्तथा ॥ तस्यासीद्विश्रवा नाम पुत्रस्त्रैलोक्यविश्रुतः ॥ ३ ॥ पौत्री बृहस्पतेः पत्नी भरद्वाजसुता शुभा ॥ बभूव
तस्य राजेन्द्र नाम्ना वै देववर्णिनी ॥ ४ ॥ तस्यां स जनयामास पुत्रं वैश्रवणं प्रभुम् ॥ आराधितः सुतपसा प्रादात्तस्य पितामहः ॥ ५ ॥
यक्षेशत्वं धनेशत्वं लोकपालत्वमेव च ॥ पुष्पकं च तथा यानं कामगं कामरूपिणम् ॥ ६ ॥ पुत्रं लब्धवरं राजन्विश्रवा अभ्यभाषत ॥ त्रिकूटे
पर्वतश्रेष्ठे निर्मिता विश्वकर्मणा ॥ ७ ॥ लङ्का नाम पुरी रम्या देवराजकृते पुरा ॥ हृत्वा तां देवराजस्य सुकेशतनयैः पुरा ॥ ८ ॥ आयासिता
महाराज तेषां ज्येष्ठं तु मालिनम् ॥ निपात्य वासुदेवेन ते तु विद्राविताास्ततः ॥ ९ ॥ पातालतलमाश्रित्य ते वसन्तीह निर्भयाः ॥ १० ॥ तां त्वं
लङ्कां समासाद्य वस यक्षसमन्वितः ॥ धर्मेण पालयन्राज्यं सततं राक्षसेश्वर ॥ ११ ॥ धर्मे ते दीयतां बुद्धिः सर्वावस्थस्य सर्वदा ॥ धर्मादर्थश्च
कामश्च धर्ममूलमिदं जगत् ॥ १२ ॥ श्रुत्वा पितुर्वाक्यमदीनसत्त्वो लङ्कां समासाद्य धनाधिनाथः ॥ धर्मेण लोकं स तु रञ्जयानश्चकार राज्यं
क्षणदाचराणाम् ॥ १३ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शैलूषं प्रति नाडायनानुशासने लङ्काकथायां वैश्रवणाख्यान
वर्णनो नामैकोनविंशत्युत्तरद्विशततमोऽध्यायः ॥ २१९ ॥ ॥ नाडायन उवाच ॥ ॥ एतस्मिन्नेव काले तु सुमाली वसुधातलम् ॥ चचारा
दाय तनयां कैकसीं नाम नामतः ॥ १ ॥ चरन्स वसुधां स्फीतां ददर्शाथ नराधिपम् ॥ पुष्पकं यानमारूढं श्रिया परमया युतम् ॥ २ ॥ तं दृष्ट्वा
कैकसीं वाक्यं चोवाच रजनीचरः ॥ पुत्रि प्रदानकालस्ते न कश्चित्त्वां वृणोति माम् ॥ ३ ॥ अप्रार्थितप्रदानं च धर्षणाभयशङ्कया ॥
न करोमि विशालाक्षि तवार्थं वरवर्णिनि ॥ ४ ॥ कष्टं कन्यापितृत्वं हि नराणां मानकाङ्क्षिणाम् ॥ ध्रुवं कन्यापितृत्वं हि शक्रस्यापि
प्रधर्षणम् ॥ ५ ॥ मातुः कुलं पितृकुलं यत्र कन्या प्रदीयते ॥ कुलत्रयं संशयितं कन्यां कृत्वेह तिष्ठति ॥ ६ ॥ तेनाहं त्वां न
दास्यामि सा त्वं गच्छ स्वयं शुभे ॥ भर्तारं वरयस्वाशु मुनिं विश्रवसं विभुम् ॥ ७ ॥ यतः सोऽयं धनाध्यक्षः श्रिया परमया युतः ॥
तादृशं तनयं तस्माज्जनयिष्यसि भामिनि ॥ ८ ॥ जगाम कैकसी राजंस्ततो विश्रवसं मुनिम् ॥ रौद्रे मुहूर्ते संप्राप्ते सन्ध्यायां नृपसत्तम ॥ ९ ॥
साभिवन्द्य ततः पादौ तस्य विश्रवसो मुनेः ॥ बभूव पुरतस्तन्वी व्रीडमानेव लज्जया ॥ १० ॥ उवाच तां मुनिः प्रह्वां कैकसीं चारुहासिनीम् ॥

विज्ञातस्त्वदभिप्रायो मयाद्य वरवर्णिनि ॥ ११ ॥ पुत्रार्थं त्वमनुप्राप्ता मत्समीपमनिन्दिते ॥ रौद्रे काले यथा प्राप्ता तादृशं जनयिष्यसि ॥ १२ ॥ एवमस्त्वित्यथोक्ता सा तत्रोवास सुखं तदा ॥ ततः कालेन सा पुत्रं जनयामास भामिनी ॥ १३ ॥ दशास्यं विंशतिभुजमेकदेहं महाबलम् ॥ नाम तस्य पिता चक्रे दशग्रीवेति बुद्धिमान् ॥ १४ ॥ ततो द्वितीयं तनयं महाकायं सुषाव सा ॥ कुम्भकर्णेति तस्यापि नाम चक्रे तदा पिता ॥ १५ ॥ तत्र शूर्पणखां कन्यां जनयामास सा तदा ॥ ततः कदाचित्सा पुत्रं कैकसी ज्येष्ठमब्रवीत् ॥ १६ ॥ दर्शयन्ती धनाध्यक्षं सव्रीडेव परन्तप ॥ पश्य स्वीयाग्रजस्यास्य श्रियं भ्रातुर्दशानन ॥ १७ ॥ स त्वं यत्नमथास्थाय भव वैश्रवणोपमः ॥ एवमुक्तस्तु गोकर्णं प्रययौ भ्रातृभिः सह ॥ १८ ॥ शीर्णपर्णाशनस्तत्र चकार सुमहत्तपः ॥ पूर्णे वर्षसहस्रे तु शिरश्छित्त्वा दशाननः ॥ १९ ॥ जुहावाग्नौ महाभाग एकैकं तपसा कृशः ॥ ग्रीष्मे पञ्चतपा भूत्वा वर्षास्वाकाशशायिकः ॥ २० ॥ आर्द्रवासश्च शिशिरे कुम्भकर्णोऽप्यतप्यत ॥ विभीषणस्ततः काले षष्ठे षष्ठे फलाशनः ॥ २१ ॥ परिचर्यां तदा तेषां चक्रे शूर्पणखा स्वसा ॥ दशवर्षसहस्रान्ते तदा काले दशाननः ॥ २२ ॥ दशमं मस्तकं वह्नौ जुहूषति यदा प्रभो ॥ ततस्तं देशमागम्य ब्रह्मा वचनमब्रवीत् ॥ २३ ॥ ॥ ब्रह्मोवाच ॥ वरं वरय भद्रन्ते परितुष्टोऽस्मि पुत्रक ॥ तपसा ते सुतप्तेन सत्त्वेन विपुलेन च ॥ २४ ॥ ॥ नाडायन उवाच ॥ देवादीनि स भूतानि कीर्तयामास राक्षसः ॥ सर्वाण्येवाविशेषेण वर्जयित्वा तु मानुषम् ॥ २५ ॥ संकीर्त्य तेभ्योऽवध्यत्वं वरयामास भूमिप ॥ त्रैलोक्यविषयं चैव तच्च तस्य ददौ प्रभुः ॥ २६ ॥ छन्दयित्वा वरेणाऽथ दशग्रीवं निशाचरम् ॥ न्यस्त्वा सरस्वतीं वक्त्रे कुम्भकर्णं स राक्षसम् ॥ २७ ॥ वरेणच्छन्दयामास तदागत्य विभीषणम् ॥ स वव्रे नित्यकालं तु मतिं धर्मे सनातनीम् ॥२८॥ तेन तस्य तदा तुष्टस्त्वमरत्वं ददौ प्रभुः ॥ वरेणच्छन्दयित्वा तान्ब्रह्मा स्वभवनं गतः॥२९॥वरलब्धं दशग्रीवं ज्ञात्वा रक्षोगणस्तदा ॥ पातालात्तु विनिष्क्रम्य महाराज्येऽभ्यषेचयत् ॥३०॥ स तु राज्यं तदा लब्ध्वा प्रेषयामास राक्षसान् ॥ कुबेराय तदा दूतं प्रहस्तं नाम नामतः ॥३१॥ राक्षसानामधीवासो लङ्केयं निर्मिता पुरा ॥ तां त्यजस्व धनाध्यक्ष साम्नैव मम मा चिरम् ॥ ३२ ॥ प्रहस्तवचनं श्रुत्वा धनाध्यक्षो महामतिः ॥ दशग्रीवं वरोन्मत्तं ज्ञात्वा तत्याज तां पुरीम् ॥३३॥ कैलासं पर्वतं गत्वा तदा चक्रे पुरीं शुभाम् ॥अलकां नाम राजेन्द्र यत्रास्ते स सुखी सदा ॥३४॥ दशग्रीवो महाराज त्रिलोकविजयं तथा ॥ चक्रे लङ्कामथासाद्य वरदानात्स्वयम्भुवः ॥३५॥मन्दोदरीं नाम भार्यां तदा लेभे मयात्मजाम् ॥ तस्यां स जनयामास मेघनादं तथा सुतम् ॥ ३६ ॥ त्रिलोकविजयी श्रीमान्देवब्राह्मणकण्टकः ॥ निहतः स तु कालेन विष्णुना

नररूपिणा ॥ ३७ ॥ राघवेण महाराज रामेणाक्लिष्टकर्मणा ॥ लङ्कां त्यक्त्वा धनाध्यक्षः कैलासे पर्वतोत्तमे ॥ ३८ ॥ अद्यापि पालयन्नास्ते राज्यं निहतकण्टकम् ॥तस्मात्त्वमपि राजेन्द्र त्यक्त्वा देशमिमं स्वयम् ॥ हिमवन्तमथासाद्य वस वैश्रवणोपमः ॥३९॥ तस्मान्न कार्यं भरतेन वैरं महाबलास्त्रा रघवः प्रतीताः ॥ प्रसीद जीवन्तु सपुत्रपौत्राः पुत्रास्तवेमे तुहिनाद्रिसंस्थाः ॥४०॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे रावणवरप्राप्तिवर्णनो नाम विंशत्युत्तरद्विशततमोऽध्यायः ॥२२०॥ शैलूष उवाच ॥ श्रोतुमिच्छाम्यहं तस्य दशग्रीवस्य रक्षसः ॥ त्रिलोकविजयं ब्रह्मंस्तत्र मे संशयो महान् ॥ १ ॥ नाडायन उवाच ॥ वरप्रदानात्संमत्तो दशग्रीवो निशाचरः ॥ देवगन्धर्वदैत्यानां नागेन्द्रोरगरक्षसाम् ॥२॥ आक्रम्याऽक्रम्य रत्नानि स जहार तदा बलात् ॥ पत्न्यश्च राजशार्दूल तदा दुहितरः शुभाः ॥ ३ ॥ नरेन्द्रान्धर्मसंसक्तान्ब्राह्मणांश्च जिघांसति ॥ अयोध्यावासिनं वीरमनरण्यं च जघ्निवान् ॥ ४ ॥ संग्रामे निहतस्तेन दशग्रीवं स शप्तवान् ॥ उत्पत्स्यति कुले नीच पुरुषो मम वीर्यवान् ॥ ५ ॥ यस्तवादास्यति प्राणान्समरे समरप्रिय ॥ युयुधे च तथा राज्ञा मांधात्रा रणशालिना ॥ ६ ॥ तत्रैनं वारयामास नारदो मुनिसत्तमः ॥ मयूरस्य ततो यज्ञे भक्षयामास वै द्विजान् ॥ ७ ॥ इन्द्रो मयूररूपेण तस्माद्यज्ञादपाक्रमत् ॥ मयूरस्य वरं प्रादान्मेघे वर्षति सर्वदा ॥ ८ ॥ गमिष्यस्यतुलां प्रीतिं मम नेत्रगणाकृतिम् ॥ धारयिष्यसि लोकेऽस्मिन्कलापं सुमनोहरम् ॥ ९ ॥ कृकलासस्य रूपेण धनाध्यक्षोऽव्यपाक्रमत् ॥ वर्णं तस्य सुवर्णाभं सद्रव्यं च तथा शिरः ॥ १० ॥ प्रादाद्वयममेयात्मा राजराजेन दानव ॥ वरुणश्च तदा राजन्हंसरूपेण निर्गतः ॥ ११ ॥ हंसस्य च वरं प्रादात्तोये रतिमवाप्स्यसि ॥ वर्णतश्चन्द्ररश्म्याभो भविष्यसि तथैव च ॥ १२ ॥ यमो वायसरूपेण तस्माद्यज्ञादपाक्रमत् ॥ वायसस्य वरं प्रादादमरत्वं विना वधात् ॥ १३॥ युष्मद्दत्तेन चान्नेन घोरा मद्विषये स्थिताः ॥ परां तृप्तिं गमिष्यन्ति तदा पुण्येन योक्ष्यसे ॥ १४ ॥ वक्ष्यध्वं बलिदातॄणां दिग्देशगतचेष्टितैः ॥ शुभाशुभं मनुष्याणां तत्रातिथ्यं भविष्यति ॥ १५ ॥ वक्रतुण्डाश्च ये काका घोरा मद्विषये स्थिताः ॥ बलिपिण्डाँश्च दातॄणां भविष्यन्ति ततः शिवम् ॥ १६ ॥ मरुत्तयज्ञे वित्रासं जनयित्वा दिवौकसाम् ॥ बभ्राम वसुधां राजा राक्षसानां प्रतापवान् ॥ १७ ॥ ददर्श स तदा कन्यां तपस्यन्तीं महत्तपः ॥ रूपेणाप्रतिमां लोके यौवने प्रथमे स्थिताम् ॥ १८ ॥ दशग्रीवः स पप्रच्छ तां कन्यां लोकसुन्दरीम् ॥ का त्वं किमर्थं सुश्रोणि चास्थिता यौवने तपः ॥ १९ ॥ श्रुत्वा तस्य तु

१ 'मरुत्तस्य' इति ख० ।

सा कन्या सत्यं वचनमब्रवीत् ॥ बृहस्पतिसुतो विद्वान्पिता मम कुशध्वजः ॥२०॥ वेदाभ्यासप्रवृत्तस्य तस्याहं नृपबान्धवा ॥ सुतापरा समुत्पन्ना
तत्पत्न्या विदिता तथा ॥ २१ ॥ नाम्ना वेदनतीत्येवं ख्याता लोकेषु राक्षस ॥ विष्णोर्मयेयं दातव्या तस्यासीन्मे पितुर्मतिः ॥ २२ ॥ मद्याचना
निरस्तेन दैत्यनाथेन शम्भुना ॥ पिता मम हतो रात्रौ तमालिङ्गय विभावसुम् ॥ २३ ॥ प्रविष्टा जनयित्री मे यथाहं विधृता चिरम् ॥ स्वर्गस्थ
स्य पितुः कामं साहं सत्यमभीप्सती ॥ २४ ॥ आराधयामि तपसा पत्यर्थं मधुसूदनम् ॥ ततस्तामब्रवीद्रक्षो मा त्वं क्लेशे मतिं कृथाः ॥२५॥
भवस्व मे वरारोहे भार्या त्रैलोक्यसुन्दरी ॥ रूपस्य वयसश्चैव नानुरूपं तपस्तव ॥ २६ ॥ त्वां कृत्वोपरतो मन्ये रूपं कृत्वा स विश्वकृत ॥
न हि रूपोपमा त्वन्या तथास्ति सदृशी यतः ॥ २७ ॥ संपूर्णकान्तिमत्सौम्यं वदनं ते वरानने ॥ सकलंकेन चन्द्रेण कथमौपम्यमर्हति ॥
॥२८॥ भव भूषणजातानां भूषणं त्वं शुचिस्मिते ॥ वृणुष्व मां वरारोहे पतित्वे वरवर्णिनि ॥ २९ ॥ आक्रम्याक्रम्य लोकस्य प्रधाना या मया
हृताः॥ स्त्रियः कुरुष्व सर्वासां तासां स्वाम्यसनिन्दिते ॥३०॥ जटामालाजिनधरी त्वमेवं रतिवर्धिनी ॥ न जाने मण्डनां प्राप्य कथं भीरु भवि
ष्यसि ॥ ३१ ॥ रूपेण वयसा लक्ष्म्या तथैव गुणसम्पदा ॥ विक्रमे मे वरारोहे न समो हि जनार्दनः ॥ ३२ ॥ जन्म तस्य न जानन्ति परेभ्यो ये
परे जनाः ॥ तेन त्वमकुलीनेन किङ्करिष्यसि सुन्दरि ॥ ३३ ॥ अनिन्द्रं लोकमिच्छन्ती सुराणां हितकाम्यया ॥ हता येनानुवृत्तेन योषित्काव्या
रणिः पुरा ॥ ३४ ॥ पुराणा ये जगत्यस्मिँस्तेभ्यः पूर्वतराश्च ये ॥ तेभ्योऽप्यति पुराणं तं भर्तारं कथमिच्छसि ॥ ३५ ॥ ब्रह्मणो वरदानेन
यस्त्ववध्यो दिवौकसाम् ॥ ते दैत्यनाथाः सबलाश्छद्मना तेन घातिताः ॥ ३६ ॥ तत्प्रत[illegible]निविष्टेन चेतसा रक्षसां श्रियम् ॥ यो बिभ
र्त्यपि तां तेन किं करिष्यति भामिनि ॥ ३७ ॥ वृद्धेभ्यो न श्रुतं तस्य त्वया रूपमनिन्दिते ॥ विदितं सर्वलोकानां विश्वरूपधरस्त्वसौ ॥ ३८ ॥
शेषाहिभोगपर्यङ्के तेन त्वं शयिता सह ॥ सविषैर्भोगनिश्वासैः परां ग्लानिमुपैष्यसि ॥ ३९ ॥ कण्ठग्रहेण निहतौ येन तौ मधुकैटभौ ॥ कथं
कण्ठग्रहं तस्य समुपैष्यसि सुन्दरि ॥ ४० ॥ हिरण्यकशिपुर्येन नखैरुत्क्रान्तजीवितः ॥ कथं रत्यन्तरे तस्य नखाघातं सहिष्यसि ॥ ४१ ॥
तस्माद्भावं समुत्सृज्य चारुगात्रि जनार्दने ॥ भजस्व भजमानं मां चिरं प्रीतिमवाप्नुहि ॥ ४२ ॥ ॥ वेदवत्युवाच ॥ गुणा एव सुरेशस्य दोषास्ते
रजनीचर ॥ जगत्प्रकाशका भानोरुलूकस्येव रश्मयः ॥ ४३ ॥ किं त्वया सह वादेन वरणीयः स मे प्रभुः ॥ यादृशस्तादृशो वापि पतित्वे ॥१४०॥
रजनीचर ॥ ४४ ॥ इति वेदवतीवाक्यं श्रुत्वा कोपसमन्वितः ॥ कामेन राक्षसेन्द्रस्तां केशपाशे परामृशत ॥ ४५ ॥ त्वया संघर्षिता पाप

प्रवेक्ष्यामि हुताशनम् ॥ अयोनिजा भविष्यामि वधार्थं च तथा तव ॥ ४६ ॥ एवमुक्त्वा चितां कृत्वा प्रविष्टा जातवेदसम् ॥ भूयः सीता समुत्पन्ना जनकस्य महात्मनः ॥ ४७ ॥ अयोनिजा महाभागा कर्षतो यज्ञमेदिनीम् ॥ भर्तारं तपसा विष्णुं रामं लब्धवती यथा ॥ ४८ ॥ यस्या अर्थे स रामेण दशग्रीवो हतो रणे ॥ लोकापवादभीतेन दशग्रीवगृहोषिता ॥ ४९ ॥ अतः पत्नी परित्यक्ता सीता भूयो जनेश्वर ॥ वाल्मीकेराश्रमे सा तु प्रसूता दारकद्वयम् ॥ ५० ॥ कुशं लवं च विक्रान्तौ ययोः सर्वाः क्रियाः कृताः ॥ वाल्मीकिना महाभागौ वेदमध्यापितौ यथा ॥ ५१ ॥ प्रकर्षं च धनुर्वेदे पारं नीतौ तु तौ शिशू ॥ वाल्मीकिना तथा कृत्वा रामस्य चरितं शुभम् ॥ ५२ ॥ अध्यापितौ विशालाक्षौ दारकौ प्रियदर्शनौ ॥ अगायतां ततस्तौ तु रामयज्ञे कुमारकौ ॥ ५३ ॥ रामस्य चरितं कृत्स्नं रामस्य पुरतः स्थितौ ॥ तस्मात्काव्यात्तु विज्ञाय पुत्रौ तौ प्रियदर्शनौ ॥ ५४ ॥ यज्ञे तां च तथाभूतामानयामास सत्वरः ॥ उवाच च वरारोहां प्रत्ययं कुरु मे शुभे ॥ ५५ ॥ रामस्य वचनं श्रुत्वा सीता वचनमब्रवीत् ॥ यथाऽहं राघवादन्यं मनसापि न कामये ॥ ५६ ॥ तेन सत्येन मे देवी विवरं संप्रयच्छतु ॥ एतस्मिन्नेव काले तु भुवं भित्त्वा समुत्थितम् ॥ ५७ ॥ धृतं सिंहासनं नागैस्तत्रैनामुपवेशयत् ॥ स्वयं वसुमती देवी पातालं सा ततो गता ॥ ५८ ॥ अविच्छिन्नेन पतता पुष्पवर्षेण पार्थिव ॥ तस्यां भूमिप्रविष्टायां राघवं क्रोधसंयुतम् ॥ ५९ ॥ सान्त्वयामास वै ब्रह्मा सर्वलोकनमस्कृतः ॥ रामोऽपि कृत्वा सौवर्णीं सीतां पत्नीं यशस्विनीम् ॥ ६० ॥ ईजे यज्ञैर्बहुविधैः सह भ्रातृभिरच्युतः ॥ नापद्भयं न विधवा न च व्यालकृतं भयम् ॥ ६१ ॥ न च व्याधिकृतं किञ्चिद्रामे राज्यं प्रशासति ॥ आजानुबाहुर्धर्मात्मा सिंहस्कन्धो नरेश्वरः ॥ ६२ ॥ पृथ्वींससागरां रामो धर्मेणान्वशिषत्प्रभुः ॥ देवाश्च ऋषयश्चैव गन्धर्वाप्सरसां गणाः ॥ ६३ ॥ यक्षाश्च भूतानि तथा किन्नराश्चैव राक्षसाः ॥ मानुष्याणां दर्शनं ते सौम्याः सन्तो ययुस्सदा ॥ ६४ ॥ यदर्थमेषा चरति गाथा लोके पुरातनी ॥ आजानुबाहुः सिंहास्यः कम्बुग्रीवो महाबलः ॥ ६५ ॥ सर्वभूतशरण्यश्च विष्णुर्मानुष्यतां गतः ॥ सत्यवाननृशंसश्च जातो भक्तजनप्रियः ॥ ६६ ॥ धृतियुक्तो दयाशीलो धर्मयुक्तो जितेन्द्रियः ॥ मितवागपि कार्येषु वक्ता वाचस्पतेः समः ॥ ६७ ॥ वीर्यवान्न च वीर्येण महता तेन विस्मितः ॥ तेजसा भास्करसमः क्षमया पृथिवीसमः ॥ ६८ ॥ महेश्वरसमः क्रोधे नीतावुशनसा समः ॥ एवं सर्वेषु भूतेषु गुणैर्दाशरथिर्बभौ ॥ ६९ ॥ वर्णानामाश्रमाणां च न साङ्कर्यं नृपोत्तमे ॥ धर्मिष्ठाश्च जनाः सर्वे रामे राज्यं प्रशासति ॥ ७० ॥ निर्दस्युरभवल्लोको नानर्थः किञ्चिदस्पृशत् ॥ नाकालवर्षी पर्जन्यः सर्वसस्यधरा धरा ॥ जना

नुरागश्च महान्रामस्य विदितात्मनः ॥७१॥ न ते क्षमं तेन नरेन्द्रचन्द्र वैरं महात्मा स तु लोकपूज्यः ॥ तस्यास्त्रवेगस्य रणे च वेगं सोढुं न शक्तास्त्रिदशाः सशक्राः ॥७२ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शैलूषं प्रति नाडायनवाक्ये रावणस्य भूर्लोकविजयं नामैकविंशत्युत्तरद्विशततमोऽध्यायः ॥२२१॥ शैलूष उवाच ॥ वह्निप्रविष्टां संप्रेक्ष्य तदा वेदवतीं द्विज ॥ किं चकार महातेजा दशग्रीवः प्रतापवान् ॥१॥ नाडायन उवाच॥ जगाम स तदा लङ्कां पूज्यमानो निशाचरैः ॥ तत्रस्थं प्रेरयामास दूतं धनपतिः स्वयम् ॥ २ ॥ अकार्याद्विनिवर्तस्व सुरैस्ते चिन्त्यते वधः ॥ दूतस्य वचनं श्रुत्वा दूतं हत्वा निशाचरः ॥३॥ गत्वा विजिग्ये धनदं विजहाराऽस्य पुष्पकम् ॥ पुष्पकेण विमानेन कैलासं स तदा ययौ ॥ ४ ॥ पुष्पकस्य गतिं रुद्धां तत्र वीक्ष्य निशाचरः ॥ ददर्श शैलशृङ्गस्थं नन्दिनं वानराकृतिम् ॥ ५ ॥ तं दृष्ट्वा मुमुचे हासं नन्दी तं शप्तवांस्ततः ॥ गिरावस्मिन्दशग्रीव स्वयं क्रीडति शङ्करः ॥६॥ विमानेन यदा तस्य समीपमुपयास्यसि॥ करोषि चावहास्यं मां तस्माच्छप्स्याम्यहं तव ॥ ७ ॥ मद्वक्त्रसदृशा घोराः पुलहस्य प्रजापतेः ॥ उत्पत्स्यन्ति कुले भीमाः क्षयार्थं वानरास्तव ॥ ८ ॥ श्रुत्वैनं नन्दिनो वाक्यं सकैलासं त्रिलोचनम् ॥ नेतुकामस्तदा लङ्कां भुजांश्चिक्षेप पर्वते ॥ ९ ॥ पौलस्त्यभुजसंक्षुब्धकैलासचलितासना ॥ जग्राह निर्भरं कण्ठे तदोमा त्रिपुरान्तकम् ॥ १० ॥ ततो गर्जन्महादेवो देवानां प्रवरो हरः ॥ पादाङ्गुष्ठेन तं शैलं पीडयामास लीलया ॥ ११ ॥ रक्षसा तेन रोषाच्च भुजानां रुजया तथा ॥ मुक्तो विरावः सुमहांस्त्रैलोक्यं येन रावितम् ॥ १२ ॥ मेनिरे वज्रनिष्पेषं तस्यामात्या युगक्षयम् ॥ आसनेभ्यः प्रचलिता देवाः शक्रपुरोगमाः ॥ १३ ॥ तेन शब्देन वित्रस्ता सुतरां पर्वतात्मजा ॥ हरस्यालिङ्गनं चक्रे भयलोलेक्षणा भृशम् ॥ १४ ॥ अकृत्रिमालिङ्गनजां प्रीतिं प्राप्य तदा हरः ॥ मुक्त्वा चास्य भुजान्राजन्प्राह वाक्यं दशाननम् ॥ १५ ॥ प्रीतोऽस्मि तव वीर्यैश्च शौण्डीर्यैश्च दशानन ॥ यस्माद्राक्षसो रावस्त्वया मुक्तो भयङ्करः ॥ १६ ॥ तस्मात्त्वं रावणो नाम भविष्यसि जगत्त्रये ॥ ततः प्रभृति राजेन्द्र रावणो लोकरावणः ॥ १७॥ शातकुम्भमयं लिङ्गं देवदेवस्य शूलिनः ॥ सम्पूजयति राजेन्द्र नित्यं श्रद्धासमन्वितः ॥१८॥ यत्रयत्र यथा याति तत्रतत्रास्य पार्थिव ॥ सौवर्णं तस्य देवस्य लिङ्गं तदनु नीयते ॥ १९ ॥ ततस्तु रावणो राजा ययौ संयमनीं पुरीम् ॥ युयुधे कालपाशैभ्यो यामैश्च सह मृत्युना ॥२०॥ जित्वा पितृगणांश्चैव मोक्षयित्वा च नारकान् ॥ यमेन युयुधे सार्धं क्रोधाद्दैवस्ततस्ततः ॥ २१ ॥ हन्तुमिच्छन्महीपाल दण्डास्त्रेण निशाचरम् ॥ वारयामास तं ब्रह्मा वाक्यं चेदमुवाच ह ॥ २२ ॥ अमोघस्तव दण्डोयमवध्यश्चैव रावणः ॥ एकस्मिन्नपि निष्क्रान्ते भूयामनृतवागहम् ॥ २३ ॥

पितामहवचः श्रुत्वा देवस्सोऽन्तर्दधे ततः ॥ रावणः सह सैन्येन पयौ कैलासपर्वतम् ॥ २४ ॥ उवास शर्वरीं तत्र योद्धुकामो दिवालयैः ॥ स तु चन्द्रोदये रात्रौ भ्रातृपुत्राभिसारिकाम् ॥ २५ ॥ ददर्श रम्भां राजन्तीं मेघस्येव शतह्रदाम् ॥ अकामां कामसंतप्तो विध्वंस्य सुरयोषितम् ॥ २६ ॥ अद्यप्रभृति मूर्धा ते शतधा तु गमिष्यति ॥ प्रभातसमये गत्वा सुरसद्म स राक्षसः ॥ २७ ॥ मेघनादेन सहितः कुम्भकर्णेन रक्षसा ॥ देवानां कदनं चक्रे तथान्ये राक्षसोत्तमैः ॥ २८ ॥ तस्मिन्रणमुखे घोरो सावित्रेण तदाऽनघ ॥ सुमाली निहतः संख्ये रावणस्यार्भको बलात् ॥ २९ ॥ अजेयान्राक्षसाञ्ज्ञात्वा पुलोमा नाम दानवः ॥ जयन्तमिन्द्रतनयं दौहित्रं स्वं रणाजिरात् ॥ ३० ॥ रक्षार्थमनयच्छ्रीमान्स्वगृहं वसुधातले ॥ अपश्यमानं पुत्रं स्वं शक्रं विह्वलचेतसम् ॥ ३१ ॥ बबन्ध मेघनादस्तु ब्रह्मलब्धवरः शनैः ॥ अनयच्च तथा लङ्कां ततो देवः पितामहः ॥ ३२ ॥ गत्वा तं मोचयामास शक्रं त्रिभुवनेश्वरम् ॥ मेघनादस्य चास्त्राणि मायाश्च विविधास्तथा ॥ ॥ ३३ ॥ अमरत्वं तदा प्रादाद्वह्निकर्मान्तरं विना ॥ नाम चक्रे तदा चास्य शक्रजित्त्वं भविष्यसि ॥ ३४ ॥ मेघनादं सान्त्वयित्वा मोचयित्वा शतक्रतुम् ॥ उवाच भगवान्ब्रह्मा देवं दशशतेक्षणम् ॥ ३५ ॥ गौतमस्य प्रिया भार्या मनसा निर्मिता मया ॥ रूपेणाप्रतिमा शक्र त्वया विध्वंसिता यदा ॥ ३६ ॥ तदा गौतमशापेन विफलत्वं गतः स्वयम् ॥ देवैः कृतस्त्वं सम्भूय शेषस्तम्भः पुरन्दर ॥ ३७ ॥ अहल्या च तदा शप्ता गौतमेन महात्मना ॥ अदृश्या सर्वभूतानां विचरिष्यसि दुःखिता ॥ ३८ ॥ परदाररतश्चासौ द्वे पापं समवाप्स्यति ॥ तेन शापेन संयोगात्परदारैश्च वासव ॥ ३९ ॥ बन्धनं तत्त्वया प्राप्तं तस्य पापस्य कर्मणः ॥ फलात्त्रिभुवनश्रेष्ठ समरेषु पराजयम् ॥ ४० ॥ तस्माद्धर्मेण धर्मज्ञ त्पालयस्व जगत्त्रयम् ॥ धर्मो धारयते लोकान्यतो धर्मस्ततो जयः ॥ ४१ ॥ गते स्वलोकं भुवनप्रधाने पद्मोद्भवे दानवपूगहर्ता ॥ त्रिविष्टपं प्राप्य शशास राज्यं महानुभावस्त्रिदशाधिनाथः ॥ ४२ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे स्वर्गविजयो नाम द्वाविंशत्युत्तरद्विशततमोऽध्यायः ॥ २२२ ॥ ॥ छ ॥ ॥ शैलूष उवाच ॥ ॥ पातालविजयं तस्य रावणस्य महात्मनः ॥ श्रोतुमिच्छामि तत्त्वेन तत्र कौतूहलं हि मे ॥ १ ॥ नाडायन उवाच ॥ ततः स गत्वा पातालं युयुधे दैत्यसत्तमैः ॥ कालखञ्जैर्महाभागैः कालकेयैश्च दारुणैः ॥ २ ॥ निवातकवचैश्चैव संवत्सरमतन्द्रितः ॥ पतिं शूर्पणखायास्तु विद्युज्जिह्वं तु दानवम् ॥ ३ ॥ अजावक्त्रवतस्तत्र जघान रणगर्वितम् ॥ तत्रागम्य तदा

१ अत्र खण्डितः पाठो लेखकप्रमादात् ।

ब्रह्मा निवातकवचैः सह ॥ ४ ॥ चकार सख्यं सर्वात्मा दशग्रीवस्य रक्षसः ॥ ततस्तु युयुधे नागैर्घोररूपैर्विषोल्बणैः ॥ ५ ॥ वशी कृत्वा ततो
नागान्वरुणस्य पुरं ययौ ॥ ब्रह्मलोकगते राजन्वरुणे सुमहात्मनि ॥ ६ ॥ पुष्करः प्रददौ युद्धं रावणस्य दुरात्मनः ॥ वरुणस्य सुतः श्रीमाञ्ज्ञा
माता बलिनस्तथा ॥ ७ ॥ सोमपुत्र्या महाराज ज्योत्स्नया यः स्वयं वृतः ॥ अर्थशास्त्रं विजानाति यः समग्रं महायशाः ॥ ८ ॥ अस्त्रग्रामं
समग्रं च तथा शस्त्राण्यनेकशः ॥ रूपदाक्षिण्यलावण्यधर्मचर्यैः समन्विते ॥ ९ ॥ बले शौर्ये तथा दाने तुल्यो यस्य न विद्यते ॥ भ्रातृभिर्भ्रातृ
पुत्रैश्च सैन्येन महता यथा ॥ १० ॥ दत्त्वा युद्धं महाघोरं सान्त्वयामास राक्षसम् ॥ ततः स नगरं जित्वा वरुणं सुमहाबलम् ॥ ११ ॥ सैन्यै
र्विश्रवसः पुत्रो मानुष्यं पुनरागतः ॥ किष्किन्धां स ततो गत्वा पुरीं वानरपालिताम् ॥ १२ ॥ पप्रच्छ वानरांश्चैव क्वासौ वाली महाबलः ॥
तं जगाद महातेजा तारो गहनगोचरः ॥ १३ ॥ किं स्यात्ते वालिना कार्यं तन्ममाचक्ष्व पृच्छतः ॥ रावण उवाच ॥ युद्धातिथ्यमहं तस्मा
त्प्रार्थयामि वलीमुखात् ॥ १४ ॥ बलवाञ्श्रूयते राजा जिज्ञासा तस्य मे बले ॥ तार उवाच ॥ जिज्ञासितो यदा वाली
त्वत्तोऽन्यैर्बलवत्तरैः ॥ १५ ॥ निहताः शतशस्तेन त्वत्तो वीर्यबलाधिकाः ॥ इदानीमेव निहतो दुन्दुभिस्तेन राक्षसः ॥ १६ ॥ प्रविश्य
विवरं घोरं मायावी तेन घातितः ॥ बिले प्रविष्टस्य तदा राजन्संवत्सरसं गतम् ॥ १७ ॥ सुग्रीवेण तदा तस्य द्वारं पिहितमात्मना ॥
स तु संवत्सरस्यान्ते हत्वा मायाविनं रणे ॥ १८ ॥ ददर्श राजन्सुग्रीवं किष्किन्धायां तदाऽनुजम् ॥ स्वपत्न्या रुमया सार्धं वालिपत्न्या च
तारया॥१९॥ क्रीडमानं यथा शक्रं क्रोधस्य वशमन्वगात् ॥ रुमां तारां तथा हृत्वा तेन निर्वासितस्त्वसौ ॥ २० ॥ निर्वासिते तु सुग्रीवे पश्चात्ताप
समन्वितः ॥ हन्तुकामस्तु सुग्रीवं वाली पर्यचरन्महीम् ॥२१॥ तदा वालिभयत्रस्तः सुग्रीवोऽपि पलायितः ॥ न स लेभे सदा त्राणं तदा सस्मार
राक्षसम् ॥ २२ ॥ मतङ्गशापं राजेन्द्र वालिनः स तथा स्वयम् ॥ हत्वा तु दुन्दुभिं वाली पादाङ्गुष्ठेन योजयत् ॥ २३ ॥ चिक्षेप राक्षसश्रेष्ठं मतङ्ग
स्याश्रमं प्रति ॥ मतङ्गस्याश्रमं दृष्ट्वा रुधिरेण समन्वितम् ॥ २४ ॥ शशाप वालिनं रोषात्तस्यास्मिन्मे महद्वने ॥ सद्यः प्रविष्टमात्रस्य जीवितं न
भविष्यति ॥ २५ ॥ अगम्यं वालिनो ज्ञात्वा मतङ्गस्य महद्वनम् ॥ चतुर्भिः सचिवैः सार्धं सुग्रीवस्तमुपाश्रितः ॥ २६ ॥ नलेन राजन्नीलेन
तारेण च हनूमता ॥ हनूमान्सचिवस्तस्य देवानामपि निर्भयः ॥ २७ ॥ जातमात्रस्तु यो बाल्ये वीक्ष्य सूर्यं खमाप्लुतः ॥ भक्ष्यार्थी तस्य पार्श्व
स्थं राहुं दृष्ट्वा निशाचरम् ॥ २८ ॥ सूर्यमुत्सृज्य भक्ष्यार्थी तदा राहुं प्रदुद्रुवे ॥ राहुर्जगाम शरणं भयाद्भीतं च वासवम् ॥ २९ ॥ तस्यातु प्रय

यावेव स तु बालो महाबलः ॥ स ददर्श महाकायं तदा शक्रस्य दन्तिनम् ॥ ३० ॥ तं प्रदुद्राव भक्ष्यार्थी सशक्रं कुञ्जरोत्तमम् ॥ प्राहरत्त्वरया वज्रं ततस्तस्य सुराधिपः ॥ ३१ ॥ तस्य वज्रप्रहारेण वामो हनुरभज्यत ॥ हनुमानिति तेनास्य नाम चक्रे पितामहः ॥ ३२ ॥ क्रुद्धं च जगतां वायुं सान्त्वयित्वा पितामहः ॥ वरेण च्छन्दयामास हनुमन्तं महाबलम् ॥३३॥ सर्वैर्देवगणैः सार्धं लोकानां हितकाम्यया ॥ अजरामरतां तस्य अजेयत्वं तथा रणे ॥३४॥ प्रददुर्देवताः सर्वे बलं चाप्रतिमं तथा ॥ स्वयं भगवता तस्य सूर्येण सुमहात्मना ॥३५॥[1] ......विनायकं तु तुष्टाव ततः शम्भुस्त्रिलोकधृक् ॥ पुराणां सङ्गमार्थाय अविघ्नेनेति मानद ॥ १ ॥ शङ्कर उवाच ॥ नमस्यामि महाबाहुं देवदेवं गणेश्वरम् ॥ हस्तिवक्त्रं महाकायं व्याघ्रचर्माम्बरच्छदम् ॥ २ ॥ चन्द्ररश्मिप्रतीकाशं चारुदंष्ट्रोज्ज्वलाननम् ॥ भक्तानां विघ्नशमनं सुराद्यं पार्वतीसुतम् ॥३॥ परश्वधधरं वीरमक्षमालाविभूषितम् ॥ ब्रह्मण्यं वरदं सौम्यं विघ्नानां पतिमूर्जितम् ॥४॥ पीनास्यं लम्बजठरं हारभारार्पितोदरम् ॥ अष्टमी च चतुर्थी च वृता येन चतुर्दशी ॥५॥ कुल्माषोत्क्रोपिकापूपैर्मोदकैरोदनेन च ॥ पूजयन्ति जना लोके धूपमाल्याऽनुलेपनैः ॥ ६ ॥ स्वस्तिवाचनकैश्चैव तेषां नास्तीह दुर्लभम् ॥ पुत्रार्थी लभते पुत्रान्धनार्थी धनमुत्तमम् ॥ ७ ॥ व्याधितश्च तथारोग्यं बद्धो मुच्येत बन्धनात् ॥त्वां तु संपूजयित्वा वै वरदं कामरूपिणम् ॥ ८ ॥ इष्टान्कामानवाप्नोति नात्र कार्या विचारणा ॥ यश्चाधीते स्तवमिमं तव नित्यं गणेश्वर ॥ ९ ॥ तस्यापि सर्वकामानां सदा दाता भविष्यसि ॥ नाडायन उवाच ॥ इत्येव संस्तुतः श्रीमाञ्शंकरेण विनायकः ॥ १० ॥ एकस्थानगतं चक्रे विना विघ्नं पुरत्रयम् ॥ एकस्थं त्रिपुरं विष्णुः शराग्रस्थो धनुश्च्युतः ॥ शंकरप्रेरितः शीघ्रं तदा चक्रे स भस्मसात् ॥ ११ ॥ पुरत्रये देववरेण तेन विनिर्मितेऽभूज्जगतां प्रहर्षः ॥ जग्मुस्तदा देवगणाः प्रहृष्टाः स्थानानि राजेन्द्र तथा स्वकानि ॥ १२ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शैलूषं प्रति नाडायनवाक्ये त्रिपुरदाहवर्णनो नाम पंचविंशत्युत्तरद्विशततमोऽध्यायः ॥ २२५ ॥ ॥ नाडायन उवाच ॥ ॥ तस्यैव देवदेवस्य शृणु कर्मेदमुत्तमम् ॥ आसीद्दैत्योऽन्धको नाम भिन्नाञ्जनचयोपमः ॥ १ ॥ तपसा महता युक्तस्त्ववध्यश्च दिवौकसाम् ॥ स कदाचिन्महादेवं पार्वत्या सहितं प्रभुम् ॥ २ ॥ क्रीडमानं तदा दृष्ट्वा हर्तुं देवीं प्रचक्रमे ॥ तस्य युद्धं तदा घोरमभवत्सह शंभुना ॥ ३ ॥ रुद्रवर्णविनिर्भेदे रुधिरादन्धकस्य तु ॥ अंधकाश्च समुत्पन्ना शतशोथ सहस्रशः ॥ ४ ॥ तेषां च दार्यमाणानां रुधिरादपरे पुनः ॥ ५ ॥ बभूवुरंधका घोरा यैर्व्याप्तमखिलं जगत् ॥ एवं मायाविनं

[1] अत्र पाठो भ्रष्ट इति प्रतीयते ।

दृष्ट्वा देवदेवस्तदान्धकम् ॥ ६ ॥ पानार्थमंधकास्रस्य ससृजे मातरस्तथा ॥ माहेश्वरीं तथा ब्राह्मीं कौबेरीं चानलीं तथा ॥ ७ ॥ सौपर्णीमथ वायव्यां शाक्रीं वै नैर्ऋतीं तथा ॥ सौरीं सौम्यं शिवां दूतीं चामुंडामथ वारुणीम् ॥ ८ ॥ वाराहीं नारसिंहीं च वैष्णवीं च ललत्थिकाम् ॥ शतानन्दां भगानन्दां पिच्छिलां भगमालिनीम् ॥ ९ ॥ बलामतिबलां रक्तां सुरभीं मुखमुण्डिकाम् ॥ मातृनन्दां सुनन्दां च बिडालीं शाकुनीं तथा ॥ १० ॥ रेवतीं च महारक्तां तथैव पिलिपिच्छिकाम् ॥ जयां च विजयां चैव जयन्तीं चापराजिताम् ॥ ११ ॥ कालीं चैव महाकालीं कालदूतीं तथैव च ॥ सुभगां दुर्भगां चैव करालीं देहनीं तथा ॥ १२ ॥ अदितिश्च दितिश्चैव मालिनीं मृत्युमेव च ॥ कर्णमोटीं तथा याम्यां उलूकीं च घटोदरीम् ॥ १३ ॥ कपालीं वज्रहस्तां च पिशाचीं राक्षसीं तथा ॥ भुरुण्डीं हाङ्करीं चण्डां शैवां च कटकीं तथा ॥ १४ ॥ घंटां सुलोचनां धूम्रामेकवालीं कपालिनीम् ॥ विशालां दष्टिकां श्यामां त्रिजटीं कुकुहूं तथा ॥ १५ ॥ विनायकीं च वैतालीमुन्मत्तां शुभनां तथा ॥ सिद्धिश्च लेलिहानां च केकरां गर्दभीं तथा ॥ १६ ॥ तर्कटीं बहुपुत्रां च प्रेतयानां विटंपुराम् ॥ क्रौञ्चीं सूकरमुखीं च विततां सरमां दनुम् ॥ ॥ १७ ॥ उषारंभां पिनाकां च ललितां चित्ररूपिणीम् ॥ स्वधाकारां वषट्स्वाहां धृतिं ज्येष्ठां कपर्दिनीम् ॥ १८ ॥ मायाविचित्ररूपां च कामरूपां वशंगमाम् ॥ स्वकंबिलां सिञ्जिकां च महानासां महामुखीम् ॥ १९ ॥ कौमारीं रोचनां भीमां सदाहासां मदोद्धताम् ॥ आरक्ताक्षीं कालकर्णीं भर्त्तुकर्णीं महास्वनीम् ॥ २० ॥ केशिनीं शिखिनीं लम्बां पिंगाक्षीं लोहितामुखीम् ॥ घण्टारवां च दंष्ट्रालां लोचनां काचजङ्घिकाम् ॥२१ ॥ गोकर्णिकां गोमुखिकां महाग्रीवां महामुखीम्॥उल्कामुखीं धूम्रशिखां कवनां परिकंपिताम् ॥ २२ ॥ मोहिनीं कुण्डिनीं त्वेडां निर्भयां बाहुशालिनीम् ॥ शूर्पकर्णीं तथैकाक्षीं विशोकां नन्दिनीं रुचम् ॥ २३ ॥ ज्योत्स्नामुखीं वरपरां निकुम्भां रक्तकम्पनाम् ॥ अविकारां महाचित्रां चित्रसेनां मनोरमाम् ॥ २४ ॥ सुदर्शनां हरत्पापां मातङ्गीं लंबमेखलाम् ॥ सुबालां बालतर्कारीं प्रेमोदां लाङ्गलावतीम्॥२५॥ चित्तां वित्तां जडां कोणां शान्तिकां भसिताशनीम् ॥ लंबस्तनीं लंबघण्टां विसतां वामचूडिनीम् ॥२६॥ स्वलतिर्दीर्घकेशी च सुलता सुन्दरी समा ॥ अधोमुखी कटुमुखी क्रोधनी वसुवाशिनी ॥ २७ ॥ विराविणी वत्सरुता माषाभाजिनशालिनी ॥ कुटुम्बिका शुक्तिका च चण्डिका बलमोहिनी ॥ २८ ॥ मांसान्यहासिनी लम्बा गोविधारी समागधी ॥ एताश्चान्याः स देवेन्द्र ससृजे मातरस्तदा ॥ २९ ॥ अन्धकानां महाघोरं पपुस्तद्रुधिरं तदा ॥ ततोन्धकासृजा सर्वाः परां तृप्तिमुपागताः ॥३०॥ तास्तु तृप्ताः सुसम्भूता भूय एवांधकास्रजा ॥ अर्दि

तोयैर्महादेवः शूलमुद्गरपट्टिशैः ॥ ३१ ॥ ततः स शङ्करो देवस्त्वन्धकैर्व्याकुलीकृतः ॥ जगाम शरणं देवं वासुदेवमजं विभुम् ॥ ३२ ॥ ततस्तु भगवान्विष्णुः सृष्टवाञ्छुष्करेवतीम् ॥ सा पपौ सत्वरं तेषामन्धकानामसृक्क्षणात् ॥ ३३ ॥ यथायथा च रुधिरं पिबत्यन्धकसम्भवम् ॥ तथा तथाऽधिकं देवी संशुष्यति जनाधिप ॥ ३४ ॥ पीयमाने तदा तेषामन्धकानां तथासृजि ॥ अन्धकास्तु क्षयं नीताः सर्वे ते त्रिपुरारिणा ॥ ३५ ॥ मूलान्धकं तु विक्रम्य तदा सर्वत्र लोककृत् ॥ चकार वेगाञ्छूलाग्रे तदा तुष्टाव शङ्करम् ॥ ३६ ॥ अन्धकः सुमहावीर्यः तस्य तुष्टोऽभवद्भवः ॥ सामीप्यं प्रददौ नित्यं गणेशत्वं तथैव च ॥ ३७ ॥ ततो मातृगणाः सर्वे शङ्करं वाक्यमब्रुवन् ॥ भगवन् भक्षयिष्यामः सदेवासुरमानुषम् ॥ ३८ ॥ त्वत्प्रसादाज्जगत्सर्वं तदनुज्ञातुमर्हसि ॥ शङ्कर उवाच ॥ भवतीभिः प्रजाः सर्वा रक्षणीया न संशयः ॥ ३९ ॥ तस्माद्घोरादभिप्रायान्मनः शीघ्रं निवर्त्यताम् ॥ नाडायन उवाच ॥ इत्येवं शङ्करेणोक्तं त्वनादृत्य वचस्तु ताः ॥ ४० ॥ क्षोभयामासुरव्यग्रास्त्रैलोक्यं सचराचरम् ॥ त्रैलोक्ये भक्ष्यमाणे तु तदा मातृगणैर्नवैः ॥ ४१ ॥ नृसिंहमूर्तिं देवं च प्रदध्यौ भगवाञ्छिवः ॥ अनादिनिधनं देवं सर्वलोकभवोद्भवम् ॥ ४२ ॥ दैत्येन्द्रवक्षोरुधिरप्रोक्षितोरुमहानखम् ॥ विद्युज्जिह्वं महादंष्ट्रं स्फुटकेसरसङ्कटम् ॥ ४३ ॥ कल्पान्तमारुतक्षुब्धसप्तार्णवमहास्वनम् ॥ वज्राग्रतीक्ष्णनखरमाकर्णादारिताननम् ॥ ४४ ॥ मेरुशैलप्रतीकाशमुदयार्कसमेक्षणम् ॥ हिमाद्रिशिखराकारं चारुदंष्ट्रोज्ज्वलाननम् ॥ ४५ ॥ खविनिस्सृतरोमाग्नि ज्वालाकेसरमालिनम् ॥ बद्धाङ्गदं सुमुकुटं चारुकेयूरभूषणम् ॥ ४६ ॥ श्रोणीसूत्रेण महता काञ्चनेन विराजितम् ॥ नीलोत्पलदलश्यामं वासोयुगविभूषितम् ॥ ४७ ॥ तेजसाक्रान्तसकलब्रह्माण्डान्तरमण्डपम् ॥ सादरभ्राम्यमाणानां हुतहव्यवनार्चिषाम् ॥ ४८ ॥ आवर्तैः सदृशाकारैः संयुक्तं देहलोमजैः ॥ सर्वपुष्पविचित्रां च धारयानं महास्रजम् ॥ ४९ ॥ स ध्यातमात्रो भगवान्प्रददौ तस्य दर्शनम् ॥ यादृशेनैव रूपेण ध्यातो रुद्रेण भक्तितः ॥ ५० ॥ तादृशेनैव रूपेण दुर्निरीक्ष्येण दैवतैः ॥ प्रणिपत्य तु देवेशं तदा तुष्टाव शङ्करः ॥ ५१ ॥ शङ्कर उवाच ॥ नमस्तेस्तु जगन्नाथ नरसिंहवपुर्धर ॥ दैत्यनाथास्थिसंपूर्ण नखशुक्तिविराजित ॥ ५२ ॥ तदस्रकणसंलग्नहेमपिङ्गलविग्रह ॥ मेरोः सपद्मरागस्य शोभां धत्से जगद्गुरो ॥ ५३ ॥ कल्पान्ताम्भोदनिर्घोष सूर्यकोटिसमप्रभ ॥ सहस्रयमसंक्रोध सहस्रेन्द्रपराक्रम ॥ ५४ ॥ सहस्रधनदस्फीत सहस्रवरुणात्मक ॥ सहस्रकालचरित सहस्रनियतेन्द्रिय ॥ ५५ ॥ सहस्रभूमिसद्धैर्य

१ 'भूर्लोकम्' इति ख० ।

सहस्रानन्तमूर्त्तिमत् ॥ सहस्रचन्द्रप्रतिम सहस्रहरिविक्रम ॥ ५६ ॥ सहस्ररुद्रतेजस्क सहस्रब्रह्मसंस्तुत ॥ सहस्रवायुवेगोग्र सहस्रंज्योतिरीषण॥५७॥
सहस्रयन्त्रमथन सहस्राबाधमोचन ॥ अन्धकस्य विनाशाय सृष्टा या मातरो मया ॥ ५८ ॥ अनादृत्य तु मद्वाक्यं भक्षयंत्यश्च ताः प्रजाः ॥
कृत्वा ताश्च न शक्तोऽहं संहन्तुमपराजित॥५९॥स्वयं कृत्वा कथं तासां विनाशमपि रोचये ॥ नाडायन उवाच ॥ एवमुक्तः स रुद्रेण नारसिंह
वपुर्धरः ॥ ६० ॥ ससर्ज देवीं जिह्वातः तदा वागीश्वरीं हरिः ॥ हृदयाच्च तथा मायां गुह्याच्च भगमालिनीम् ॥ ६१ ॥ अस्थिभ्यश्च तथा काली
सृष्टा पूर्वं महात्मना ॥ यया तद्रुधिरं पीतमन्धकानां महात्मनाम् ॥ ६२ ॥ या त्वस्मिन्कथिता लोके नामतः शुष्करेवती ॥ द्वात्रिंशन्मातरः
सृष्टा गात्रेभ्यश्चक्रिणा ततः ॥ ६३ ॥ तासां नामानि वक्ष्यामि तानि मे गदतः शृणु ॥ सर्वक्लिष्टा महाभागा कण्ठकर्णी तथैव च ॥ ६४॥ त्रैलोक्य
मोहिनी पुण्या सर्वसत्त्ववशङ्करी ॥ तथा च चक्रहृदया पञ्चमा व्योमचारिणी ॥६५॥ शंखिनी लेखिनी चैव कालसङ्कर्षिणी तथा ॥ इति देव्यष्टकं
राजन्वागीश्यनुचरं स्मृतम् ॥ ६६ ॥ अजिता सूक्ष्महृदया वृक्षावेशाश्मदर्शना ॥ नृसिंहभैरवा चिह्ला गरुत्पक्षहृदानया ॥ ६७ ॥ भगमालिन्य
ऽनुचरा इत्यष्टौ नृप मातरः ॥ आकर्षिणी च भारूटी तथैवोत्तरमालिका ॥ ६८ ॥ ज्वालामुखी भीषणिका कामधेनुश्च बालिका ॥
तथा पद्मकरा राजन्रेवत्यनुचराः स्मृताः ॥ ६९ ॥ अष्टौ महाबलाः सर्वा देवगात्रसमुद्भवाः ॥ त्रैलोक्यसृष्टिसंहारसमर्थाः सर्वदेवताः ॥ ७० ॥
ताः सृष्टमात्रा देवेन क्रुद्धा मातृगणस्य तु ॥ प्रधाविता महाराज क्रोधविस्फूर्जितेक्षणाः ॥ ७१ ॥ अविषह्यतमं तासां दृष्ट्वा तेजः सुदारुणम् ॥
भयेन शरणं प्राप्ता देवेशं पूर्वमातरः ॥ ७२ ॥ शरणार्थमनुप्राप्ता नृसिंहो वाक्यमब्रवीत् ॥ नरसिंह उवाच ॥ यथा मनुष्याः पशवः पालयन्ति
वराननाः ॥ ७३ ॥ यजन्ति तैश्च पशुभिः तथा वै देवतागणान् ॥ भवत्यश्च तथा लोकान्पालयन्तु मयेरिताः ॥७४ ॥ मनुजैश्च तथा देवं यजध्वं
त्रिपुरान्तकम् ॥ ये च मां संस्मरंतीह ते च रक्ष्या सदा नराः ॥७५॥ बलिकर्म करिष्यंति युष्माकं ये सदा नराः ॥ सर्वकामप्रदास्तेषां भविष्यध्वं तथैव
च ॥७६॥ तत्सादनादिकं ये च करिष्यंति हरेरितम् ॥ ते च रक्ष्या सदा लोके रक्षितव्यं च शासनम् ॥७७॥ रौद्रां चैव परां मूर्तिं महादेवः प्रदास्यति॥
युष्मभ्यं समयासार्धं तेन सार्धं वरस्यथ ॥७८॥ मया मातृगणः सृष्टो योयं विगतसाध्वसः ॥ एष नित्यं विशालाक्ष्यो मयैव सह रंस्यति ॥७९॥मया ॥१४४॥
सार्धं तथा पूजां वीरेभ्यश्चैव लप्स्यसि ॥ पृथक् च पूजितो लोके सर्वान्कामान्प्रदास्यति ॥ ८० ॥ शुष्कां संपूजयिष्यन्ति ये तु पुत्रार्थिनो जनाः॥

१ 'सहस्रव्रीहिरोपण' इति ख० ।

तेषां पुत्रप्रदा देवी भविष्यति न संशयः॥८१॥नाडायन उवाच॥एतावदुक्त्वा भगवान्सह मातृगणेन च ॥ ज्वालामालाकुलवपुस्तत्रैवांतरधीयत ॥८२॥ समातृवर्गोपि हरस्य मूर्तिं सदा यजंस्तिष्ठति तत्समीपे ॥ देवेश्वरस्यापि नृसिंहमूर्तेः पूजां विधत्ते त्रिपुरान्तकारी ॥ ८३ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शैलूषं प्रति नाडायनवाक्ये अन्धकजयवर्णनो नाम षड्विंशत्युत्तरद्विशततमोऽध्यायः॥ २२६ ॥ ॥ ७ ॥ ॥ शैलूष उवाच ॥ मातृदोषप्रशमनान्महेश्वरमुखोद्गतान् ॥ प्रयोगाञ्छ्रोतुमिच्छामि वदतस्ते द्विजोत्तम ॥ १ ॥ नाडायन उवाच ॥ चोचकं तु वचा कुष्टं ब्रह्मभूतजटे शुभे ॥ कालमञ्जा हरिद्रे द्वे यवचूर्णविमिश्रितम्॥२॥उद्वर्तनमिदं प्रोक्तं मातृदोषविनाशनम् ॥ अरिष्टारिष्टपत्राणि तालजीतकयोस्तथा ॥ ३ ॥ शिंशिपामलकीबिल्वकपित्थानां तथैव च ॥ बहुकारत्वचं पूर्वां तथैव च पुनर्नवाम् ॥ ४ ॥ भार्ङ्गीक्वाथमिदं स्नानं मातृदोषविनाशनम् ॥ अरिष्टकं तथा बिल्वं पद्माक्षं फलिनीफलम् ॥ ५ ॥ वचा कुष्टं च मुस्तञ्च वालकं रजनीद्वयम् ॥ चन्दनं कुंकुमं चैव नागदानं च रोचना ॥ ६ ॥ एतानि सर्वाण्याहृत्य पूर्णकुम्भे विनिक्षिपेत् ॥ स्नानमेतत्प्रयोक्तव्यं मातृदोषविनाशनम् ॥ ७ ॥ कुसुमैः पञ्चवर्णैस्तु धूपैर्निर्यासजैस्तथा ॥ कुंकुमागुरुकर्पूरचन्दनैश्च मनोरमैः ॥ ८ ॥ दीपैर्भक्ष्यैस्तथा क्षीरैः कुल्माषोल्लोपिकागुडैः ॥ पायसैर्मधुसंमिश्रैः पललेनोदनेन च ॥ ॥९॥ बलिः सुविहितो राजन्मातृदोषविनाशनम् ॥ दूर्वाप्रवालमञ्जिष्ठानागरं नागकेशरम् ॥१०॥ रोचनाकुंकुमं चैव चन्दनं च तथा वचा ॥ विलेपनमिदं श्रेष्ठं मातृदोषविनाशनम् ॥ ११ ॥ गजाश्वकपिवाराहनखानि च घृतं तथा ॥ श्रेष्ठोऽयं कथितो धूपो मातृदोषविनाशनः ॥ १२ ॥ सिद्धं घृतं चाप्यथ पञ्चगव्यं पुराणमश्नन्ति हि ये नरेन्द्र ॥ तेषां भयं नैव हि मातृजातं भाव्यं कदाचिद्ग्रहसंभवं वा ॥ १३ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मा० सं० मातृबाधाप्रतिषेधो नाम सप्तविंशत्युत्तरद्विशततमोऽध्यायः ॥ २२७ ॥ ॥ नाडायन उवाच ॥ तस्य देवादिदेवस्य प्रभावमपरं शृणु ॥ कथ्यमानं मया राजन्सर्वकल्मषनाशनम् ॥ १ ॥ शङ्करः पार्वती चैव स्पर्धमानौ परस्परम् ॥ चक्रतुर्मैथुनं राजन्साग्रं वर्षशतं किल॥ २ ॥ तयोरन्यतरस्यासीद्यदा नैव पराजयः ॥ ततस्तु देवता खिन्नाः परस्परमथाब्रुवन् ॥ ३ ॥ अत्रोत्पत्स्यति यो गर्भस्त्रैलोक्यं सचराचरम् ॥ तेजसा मोहितं तस्य भविष्यति न संशयः ॥ ४ ॥ तस्मात्त्वमत्र प्रविश देवदेव हुताशन ॥ एवमुक्तस्तदा वह्निः प्रविवेश सुरोत्तमम् ॥ ५ ॥ तं दृष्ट्वा संभ्रमादेव समुत्तस्थौ त्रिलोचनः ॥ तेजोभिः क्षुभितं तत्र वह्नेरास्यमथाविशत् ॥६॥ शशाप पार्वती देवी भार्यासु स्वासु देवताः ॥ नैवावाप्स्यथ पुत्रान्वै मत्क्रोधकलुषीकृताः ॥ ७ ॥ हुताशनोपि शर्वस्य दह्यमानो हि तेजसा ॥ तत्याज गर्भं गङ्गायां सापि कालेन केनचित् ॥ ८ ॥ तत्याज

पर्वते श्वेते गर्भं वह्निसमप्रभम् ॥ तेन जातेन संवृत्तं सौवर्णं श्वेतपर्वतम् ॥ ९ ॥ सुवर्णरेतसस्तस्य शंकरस्य तु तेजसा ॥ ददृशुः कृत्तिका बालं संत्यक्तं तत्र गङ्गया ॥ १० ॥ स्तनानि प्रददुस्तस्य कृपया राजसत्तम ॥ षडाननस्तदा भूत्वा षण्णामेव स्तनं पपौ ॥ ११ ॥ तासां क्षीरेण धर्मात्मा विवृद्धश्चारुतेजसा ॥ कृत्तिकानां वरं प्रादाद्यत्तद्वक्ष्यामि ते नृप ॥ १२ ॥ नाडायन उवाच ॥ यदा चन्द्रसमायोगं गमिष्यथ शुभाननाः ॥ तदा पूजां करिष्यंति भवतीनां तु ये नराः ॥ १३ ॥ वह्नेश्चन्द्रमसश्चैव वरुणस्य तथा मम ॥ गन्धमाल्यैस्तथा पुष्पैर्धूपैर्दीपैस्तथैव च ॥ १४ ॥ गन्धोदकेन पुण्येन लाजाभिर्मधुना सह ॥ अपूपैः परमान्नेन दध्ना गव्येन चाप्यथ ॥ १५ ॥ कुल्माषैः सफलैर्भक्ष्यैर्मोदकैः पानकैस्तथा ॥ प्राप्स्यन्त्यभिमतान्कामानिह लोके परत्र च ॥ १६ ॥ नक्ताशनस्तथा भूत्वा युष्मत्पूजापरायणः ॥ क्रीडित्वा सुचिरं नाके मानुष्ये तु भविष्यति ॥ १७ ॥ रूपान्वितः सत्यपरो दयावान्धर्मे स्थितः सन्बहुभृत्ययुक्तः ॥ कुलेन शीलेन समन्वितश्च नारीविशेषात्सुभगा भवित्री ॥ १८ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे कृत्तिकापूजाविधिर्नामाष्टाविंशत्युत्तरद्विशततमोऽध्यायः ॥ २२८ ॥ ॥ नाडायन उवाच ॥ ततस्तु प्रययौ गङ्गा कुमारो यत्र पावकिः ॥ मया त्वं जनितः पुत्र तमुवाच सुरेश्वरम् ॥ १ ॥ असहन्त्या महातेजस्त्वदीयं पर्वतोत्तमे ॥ मया स्कन्द परित्यक्तं तदा गर्भगतं मम ॥ २ ॥ तस्यास्तद्वचनं श्रुत्वा पावकिर्वाक्यमब्रवीत् ॥ ॥ स्कन्द उवाच ॥ नाहं गृहं ते यास्यामि शम्भुर्मे दैवतं पिता ॥ ३ ॥ अनुग्रहं करिष्यामि तवाहं सुरनिम्नगे ॥ वैशाखमासशुक्लस्य तृतीयायां वरानने ॥ ४ ॥ मानुष्यमवतीर्णासि तदा पूजामवाप्स्यसि ॥ तस्मिन्नहनि यः स्नानमाचरिष्यति ते शुभे ॥ ५ ॥ राजसूयाश्वमेधाभ्यां फलेन स तु योक्ष्यति ॥ तस्मिन्नहनि यः पूजां यत्र तत्र व्यवस्थितः ॥ ६ ॥ गन्धमाल्योपहाराद्यैर्धूपदीपान्नसंपदा ॥ कर्ता तव महाभागे त्वत्तोयस्नानजं फलम् ॥ ७ ॥ ध्रुवमाप्स्यति धर्मज्ञे नात्र कार्या विचारणा ॥ तस्मिन्नहनि यत्किञ्चित्प्रदद्याच्छ्रद्धयान्वितः ॥ ८ ॥ अक्षयं तत्फलं तस्य भविष्यति न संशयः ॥ अक्षया सा तिथिर्ज्ञेया कृत्तिकाभिर्युता यदि ॥ ९ ॥ भविष्यति महाभागे विशेषेण फलप्रदा ॥ १० ॥ तस्मिन्दिने ये तव चारुगात्रि पूजां करिष्यंति तथेरितां प्राक् ॥ ते नाकलोके सुचिरं निरुष्य लोकान्गमिष्यन्ति जलाधिपस्य ॥ ११ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शैलूषं प्रति नाडायनवचने अक्षयतृतीयामहात्म्यं नामैकोनत्रिंशदुत्तरद्विशततमोऽध्यायः ॥ २२९ ॥ नाडायन उवाच ॥ ततस्तु जातकर्माद्याः क्रियास्तस्य महात्मनः ॥ विश्वामित्रस्तु कृतवान्मङ्गलानि तथैव च ॥ १ ॥ एतस्मिन्नेव काले तु

देवनाथाय वज्रिणे ॥ श्वेतजातमथाचख्युः कुमारं दीप्ततेजसम् ॥ २ ॥ निधनाय मतिं चक्रे तदा तस्य पुरन्दरः ॥ दैवतैः पितृभिर्यज्ञैः प्रसुर्दानवराक्षसैः ॥ ३ ॥ भूतनागपिशाचैश्च पितृगन्धर्वमानुषैः ॥ संमन्त्र्य निधने तस्य सृष्टवान्स महाग्रहान् ॥ ४ ॥ देवदैत्यग्रहान्घोरान्पितृदानवराक्षसान् ॥ यक्षगन्धर्वनागानां नृणां च पिशिताशिनाम् ॥ ५ ॥ ते ग्रहा बहुसाहस्रा नानाप्रहरणोद्यताः ॥ अभिजग्मुः श्वेतगिरिं कुमारवधकाम्यया ॥ ६ ॥ ते ग्रहा बहुसाहस्रा ग्रहांश्च शतशः शिवः ॥ स्कंदो ग्रहान्वै ससृजे पूर्वग्रहनिशाचरान् ॥ ७ ॥ महाबलान्महावीर्यान्कामगान्कामरूपिणः ॥ अनेकशतसाहस्रान्नानावेशान्मनोजवान् ॥ ८ ॥ तेषां प्रधानान्वक्ष्यामि तन्मे निगदतः शृणु ॥ स्कंदो विशाखश्च तथा नैगमेयस्तथैव च ॥ भीमो भीमकरः क्रव्यो निरतः क्रोश एव च ॥ ९ ॥ क्रव्यादोथ हविर्बुद्धिः कोटिमुद्गरिकः पृथुः ॥ कालश्चाप्युपकालश्च सिद्धार्थः पुष्पकस्तथा ॥ १० ॥ पुष्पमित्रः कोकिलकः सिद्धो लंबोदरस्तथा[2] ॥ खल्यूः कपोतो लम्बोष्ठः तथा नायास एव च ॥ ११ ॥ यदण्डो गृद्ध्रनासाश्च गृद्ध्रवृत्तुक एव च ॥ क्षुद्रकः कालकालश्च कालस्तत्पुरुषस्तथा ॥१२॥ विद्युद्भूतोऽथ संवर्तो वर्तश्चावर्त एव च ॥ शितिकण्ठः कपर्दी च कच्छपः परिकण्टकः ॥ १३ ॥ परिप्रकाशो मत्तश्च मातङ्गवसनस्तथा ॥ गदराक्षः पिशाचश्च वीरनाशो वलीमुखः ॥ १४ ॥ महाभूतश्च नन्दश्च सोमानन्दः प्रमोदकः ॥ आनन्दोव्यवसायश्च निश्चयोऽथ पराक्रमः ॥ १५ ॥ जयश्च विजयश्चैव सञ्जयः कल्प एव च ॥ पुष्पदन्तो दन्तवक्रो हेमुण्डिभीषणस्तथा ॥ १६ ॥ वसुभूतिर्वसुस्नातो[3] जीवकस्तापसस्तथा ॥ वीरबाहुः सुबाहुश्च सुन्दरो गण्ड एव च ॥ १७ ॥ तुण्डा विचेला गोदंतः कलशः कलशोचरः ॥ शीर्षग्राहो ललाटस्थो ग्रीवाग्राभरतो ग्रहः ॥ १८ ॥ परिलेपकजात्यन्धौ करालः कुञ्जनामनौ ॥ अन्येद्युकः सततगस्त्रैतीयकचतुर्थकौ ॥ १९ ॥ व्यरोचको नेत्ररोगः कासश्वासानुगस्तथा[4] ॥ धूतपापः पापहितः पापाचारस्तथैव च ॥ २० ॥ काण्डो धनञ्जयश्चैव शठो नैष्कृतिकस्तथा ॥ वसुधाता वसुमना गौरः शोथो गलग्रहः ॥ २१ ॥ भ्रमश्च चित्तमोहश्च तथा कार्यविघातकः ॥ सर्वकार्यकरश्चैव जृंभकश्चार्यकस्तथा ॥ २२ ॥ एते चान्ये च बलिनः कामरूपा विहङ्गमाः ॥ त्रैलोक्यसृष्टिसंहारसमर्था विविधायुधाः ॥ २३ ॥ नानारूपधरा वीरा नानाविविधवाससः ॥ प्रादुद्रवन्ग्रहान्घोरान्पूर्वदेवैर्विसर्जितान् ॥२४॥ अविषह्यतमात्मानो ग्रहाः स्कन्दग्रहास्तथा ॥ स्कन्दं देववरं सर्वे तदा शरणमागताः ॥२५॥ तांस्तु वै शरणं प्राप्तान्स्कंदो वचनमब्रवीत् ॥ स्कंद उवाच ॥ शरणं वै प्रपन्नानां वरं दास्यामहं ग्रहाः ॥२६॥

---

१ 'श्वेते जातमथाचख्युः' इति ख० । २ 'धर्मोदरस्तथा' इति ख० । ३ 'विभुस्नातो' इति ख० । ४ 'कामशासनगः' इति ख० ।

वरयध्वं यथा कामं पूज्या मे शरणार्थिनः ॥ ग्रहा ऊचुः ॥ भगवन्भक्षयिष्यामस्त्वत्प्रसादेन मानुषान् ॥२७॥ एतद्वरमभीष्टं नः सर्वेषां दीप्तविग्रह ॥ स्कंद उवाच ॥दुराचारांस्तथा लोके गन्धमाल्यानुलेपने॥२८॥ तेषां शरीरे रत्यर्थं वसध्वं नात्र संशयः॥ ये भक्तास्त्र्यम्बके देवे तथा देवे जनार्दने॥२९॥ आस्तिकाञ्छ्रद्दधानांश्च वर्जयध्वं प्रयत्नतः ॥ वरार्थमपि सङ्गृह्य न्यस्ता कर्मादिभिः क्रमैः ॥ ३० ॥ त्यक्षध्वं पुरुषाञ्शीघ्रं मम विज्ञाय शासनम् ॥ नाडायन उवाच ॥ एवमुक्ता ग्रहाः सर्वे स्वाम्ये चक्रुस्तदा शिशुम् ॥ ३१ ॥ कुमारं शर्वतनयं महाबलपराक्रमम् ॥ स्कन्देनैव यथोक्तं तु स्कन्दं स्कन्दग्रहास्तदा ॥ ३२ ॥ समेत्य सर्वे वचनमिदमूचुर्नराधिप ॥ अस्माकमपि देवेश प्रसादं कर्तुमर्हसि ॥ ३३ ॥ एवमुक्तोऽथ धर्मात्मा ग्रहा न्स्कन्दस्त्वभाषत ॥ यावत्षोडशवर्षाणि मानवानां भवन्त्युत ॥ ३४ ॥ तावद्भवन्तो बाधन्तु मनुष्याणां तथा प्रजाः ॥ तत्रापि बलिकर्माद्यैः क्षेमं तेषां करिष्यथ ॥ ततः पूर्वं ग्रहाणां तु पूज्या लोके भविष्यथ ॥ ३५ ॥ एतावदुक्त्वा भगवान्कुमारो ददौ ग्रहाणामपरं शरीरम् ॥ देहान्स्वका न्नायक उग्रसत्त्वो लोकस्य रक्षार्थमतीव हृष्टः ॥ ३६ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शैलूषं प्रति नाडायनवाक्ये त्रिंश दुत्तरद्विशततमोऽध्यायः ॥ २३० ॥ ॥ शैलूष उवाच ॥ ॥ नृणां ग्रहगृहीतानां लक्षणं कथयाशु मे ॥ प्रतिषेधं च धर्मज्ञ तत्र मे संशयो महान् ॥ ॥ १ ॥ ॥ नाडायन उवाच ॥ ॥ देवर्षिपितृभूतानां सततं चावमाननात् ॥ गुरुवृद्धद्विजाचार्यसिद्धतापसमर्दनात् ॥ २ ॥ बलिमंगलहोमा दिनियमाचारवर्जनात् ॥ व्रताध्ययनधर्मादिध्यानयोगव्यतिक्रमात् ॥ ३ ॥ गुडामिषतिलक्षौद्रमेध्यैरुच्छेषितस्य वा ॥ श्मशानायतनाभ्यासवि ण्मूत्रोत्सर्जनादपि ॥ ४ ॥ रात्रौ चतुष्पथारण्यशून्यवेश्मनिवेशनात् ॥ भोजनाद्भिन्नभाण्डेषु तथा मंत्रच्छलादपि ॥ ५ ॥ श्मशानचैत्यवृक्षादि मैथुनादिनिषेवणात् ॥ अवमानादभीघातान्मङ्गलानामदर्शनात् ॥ ६ ॥ ईर्ष्यया बन्धुशापाच्च रथ्यावस्कन्धसेवनात् ॥ ऐश्वर्यनाशाच्छोकाच्च दर्पोत्सेकातिहर्षणात् ॥ ७ ॥ निर्लज्जनास्तिकानां हि त्रासितानां विशेषतः ॥ गुरुभिः सम्परित्यागात्कार्त्तघ्न्यात्साधुनिन्दनात् ॥ ८ ॥ दुःखा त्प्रजननात्स्त्रीणां मिथ्या चैव प्रभाषणात् ॥ तुषकेशकपालास्थिकार्पासादिष्वधिष्ठितात् ॥ ९ ॥ प्राणिनां सुखदुःखेषु तथा मृतकसूतके ॥ अत्य र्थनक्तस्नानेषु ग्रहा गृह्णन्ति मानवान् ॥ १० ॥ बलैश्वर्यविसंयोगाद्देहमाविशति ग्रहः ॥ जीवः कुक्षिं यथा दृश्यः प्रविशन्नेव दृश्यते ॥ ११ ॥ वन स्पतीन्वा ऋतवो विज्ञेयाश्च तथा ग्रहाः ॥ कारणैर्नवभिर्देहं ग्रहो गृह्णाति देहिनाम् ॥१२॥ रौद्रस्वभावाद्धिंसार्थी रत्यर्थी बलिकामुकः ॥ चित्रा सार्थी बलोद्रेकाद्द्रोहात्प्राग्दैहिकाद्भयात् ॥ १३ ॥ प्रयुक्तोऽन्येन मन्त्रैश्च ग्रहो गृह्णाति मानवान् ॥ कारणानि तवोक्तानि यद्यप्येतानि पार्थि

व ॥ १४ ॥ तथापि त्रय एवात्र विज्ञेयानि विपश्चिता ॥ तेषामन्तर्भवन्त्येते यस्मात्पार्थिवसत्तम ॥ १५ ॥ बलिकामस्तु रत्यर्थी हिंसार्थी च तथा ग्रहः ॥ असाध्यं बलिकामं तु कृच्छ्रसाध्यं रतिग्रहम् ॥ १६ ॥ हन्तुकाममसाध्यन्तु विना मन्त्रबलं महत् ॥ सांत्वपूर्वं ग्रहो विष्टो मधुरं यः प्रजायते ॥ १७ ॥ ततश्चान्तरमासाद्य विचित्रं याचते बलिम् ॥ पानमाल्यानुलेपांश्च वेद्यं दृष्ट्वा नमस्यति ॥ १८ ॥ बलिकामस्य लिङ्गानि प्रोक्तान्येतानि वै मया ॥ रमते नृत्यति शुचिस्तथा हसति गायति ॥ १९ ॥ गंधमाल्याम्बरस्नानधूपोद्वर्त्तनसेवकः ॥ कथा विचित्राः कुरुते मधुरं सम्प्रभाषते ॥ २० ॥ अलंकृतं चाविशति वर्जयत्यनलंकृतम् ॥ रतिकामस्य रूपाणि ज्ञेयान्येतानि बुद्धिना ॥ २१ ॥ यश्चाविष्टो विद्रवति सिंहव्याघ्रतरक्षुपम् ॥ युद्धमारभते कर्त्तुं गजादिभिरभीतवत् ॥ २२ ॥ भृशं ताडयति स्वाङ्गं पतत्यग्नौ पतङ्गवत् ॥ राजद्वेषाणि कुरुते विजने रमतेऽधिकम् ॥ २३ ॥ करोति मरणोपायान्हन्तुं कामार्दितो नरः ॥ लोमहर्षो ङ्गमांद्यं च छायावैकृत्यमेव च ॥ २४ ॥ अमानुषोत्साहबलं विहाराहारचेष्टितम् ॥ द्वौ वा त्रयो वा नेत्रेऽस्य संपश्यन्ते कुमारकाः ॥ २५ ॥ निमीलिताक्षितात्यर्थं रक्तादिवमनं तथा ॥ सामान्यमेतदुद्दिष्टं गृहीतस्य तु लक्षणम् ॥ २६ ॥ मुक्तस्य लक्षणं चातः प्रवक्ष्यामि निबोधत ॥ भूमौ विनिपतत्याशु तथा संज्ञां प्रपद्यते ॥ २७ ॥ परामृशति केशांश्च वासांस्याभरणानि च ॥ शुभाशुभं चात्मकार्यं पृच्छतिस्म सुहज्जनम् ॥ २८ ॥ अतः परं प्रवक्ष्यामि देवादिग्रहलक्षणम् ॥ चिकित्सितेन संयुक्तं तन्निबोध जनाधिप ॥ २९ ॥ नदीकूलाद्रिशिखररुचिः प्रासादमेव च ॥ शुचिशील समाचारो ज्ञेयो देवग्रहार्दितः ॥ ३० ॥ देवानां पूजनं तस्य पुष्पधूपफलाक्षतैः ॥ गन्धदीपप्रदानैश्च वह्निसन्तर्पणैस्तथा ॥ ३१ ॥ गोरसैश्च स शाल्यन्नैर्ब्राह्मणैः स्वस्तिवाचनैः ॥ कर्त्तव्यं विदुषा नित्यं ततः संपद्यते सुखी ॥ ३२ ॥ उच्छिष्टान्भैरवान्नावान्विरसं कुरुतेऽधिकम् ॥ तस्मिंस्त थोत्सवान्यक्षान्व्रतानध्ययनानि च ॥ ३३ ॥ बहुशो वटुचाश्नाति वस्त्रं पाटयति स्वकम् ॥ असुरग्रहदुष्टस्य रूपमेतद्विनिर्दिशेत् ॥ ३४ ॥ दैत्यसंपूजनं तस्य कार्यं मांससुरासवैः ॥ रक्तैः पुष्पैर्धूपदीपैस्तथा बीजसमुद्भवैः ॥ ३५ ॥ गन्धर्ववाद्यनिर्घोषं श्रुत्वा हृष्टः प्रनृत्यति ॥ तीर्थो द्याननदीतीरगन्धमाल्यादिसेवनात् ॥ ३६ ॥ यथाकामं विचरति गन्धर्वोन्मादितो नरः ॥ गन्धैर्माल्यैश्च विविधैर्गीतवाद्यैस्तथैव च ॥ ३७ ॥ गन्धर्वपूजनं कार्यं तेन संपद्यते सुखी ॥ निद्रालुरलसो दुष्टो दर्वीवत्कुरुते करौ ॥ ३८ ॥ गर्भवासगुहासेवी नरोन्मत्तं विदुर्बुधाः ॥ नागानां पूजनं तस्य कार्यं कुल्माषपर्पटैः ॥ ३९ ॥ पायसोल्लोपिकापूपैः पद्मोत्पलबिसैस्तथा ॥ अमत्सरी मृदुर्वीरः प्रियवाग्बहुभोजनः ॥ ४० ॥ पृथुविह्वलता

म्राक्षः तथा वै गोरसप्रियः ॥ भूतोन्मादसमाविष्टो लिङ्गैरेतैर्विनिर्दिशेत् ॥ ४१ ॥ कुसुमैर्बहुवर्णैश्च गोरसैर्विविधैस्तथा ॥ भूतपूजा तु कर्त्तव्या तेन
सम्पद्यते सुखी ॥ ४२ ॥ शून्यागारश्मशानाद्रिचतुष्पथनिषेवकः ॥ रात्रौ चरति योच्छिष्टः पिशाचोन्मादितो नरः ॥ ४३ ॥ पिशाचयजनं तस्य
कर्त्तव्यं पललामिषैः ॥ कण्टकीसम्भवैः पुष्पैः कृष्णवर्णैस्तथैव च ॥ ४४ ॥ अव्यक्तभाषी रक्ताक्षो हास्ये चोच्चस्वरस्तथा ॥ रौद्रं निरीक्षतेऽत्यर्थं
यक्षेनोन्मादितो नरः ॥४५॥ कुल्माषघृतपिण्याकपललोल्लोपिकागुडैः ॥ यक्षाणां पूजनं तस्य कर्त्तव्यं दोषशान्तये ॥ ४६ ॥ उद्विग्नचेताः शीतश्च
नातिशोकपरायणः ॥ राक्षसेन गृहीतश्च भवत्योष्टविलेहकः ॥ ४७ ॥ पक्कामिषेण मांसेन रुधिरेण तथैव च ॥ राक्षसानां बलिः कार्यस्तस्य
दोषप्रशान्तये ॥ ४८ ॥ भस्मपांशुरजोध्वस्तो मलिनो मलिनाम्बरः ॥ प्रेतगृहीतो भवति विकृतो ध्वस्तमस्तकः ॥ ४९ ॥ ओदनं
मधुपानीयं सर्पिः क्षीरसमन्वितम् ॥ ५० ॥ प्रेतानां तत्र दातव्यं तेन संपद्यते सुखी ॥ शुचिः शुचिसमाचारः सन्ध्याचारी
तिलप्रियः ॥ ५१ ॥ पितृग्रहगृहीतस्य रूपमेतद्विनिर्दिशेत् ॥ तिलगोरसपुष्पान्नमधुमूलफलैः शुभैः ॥ ५२ ॥ दीपैर्दानैस्तथा
नित्यं प्रणिपातेन चाज्ञया ॥ पितॄणां पूजनं तस्य कर्त्तव्यं दोषशान्तये ॥ ५३ ॥ अधीते जपते चैव शुचिस्तिष्ठति चाप्यथ ॥
योगासक्तस्तथार्षेण गृहीतो मानवो भवेत् ॥ ५४ ॥ हविर्गोरसपुष्पाद्यैस्तथाऽध्ययनसंस्तवैः ॥ ऋषीणां पूजनं कार्यं तस्य दोषप्रशान्तये ॥ ५५ ॥
कर्मप्रसक्तो भवति न निद्रां भजते दिवा ॥ पौरुषेण गृहीतस्य लक्षणं समुदाहृतम् ॥ ५६ ॥ ब्राह्मणान्भोजयेत्तत्र मिष्टमन्नं सुसंस्कृतम् ॥
गन्धमाल्योज्वलाम्राजंस्तस्य दोषप्रशान्तये ॥ ५७ ॥ स्कन्दग्रहगृहीतानां बालानां शृणु लक्षणम् ॥ रोदिति स्तनति ध्याति भूमौ स्वपिति
चासकृत् ॥ ५८ ॥ असम्बद्धप्रलापी वा ज्ञेयः स्कन्दग्रहार्दितः ॥ रक्तैः पुष्पैः फलैर्मूलैः बालक्रीडनकैस्तथा ॥ ५९ ॥ घण्टा च कुक्कुटैः पूजा
बलिना विविधेन च ॥ पताकाभिश्च कर्त्तव्या कुमारस्य महात्मनः ॥ ६० ॥ अतः परं लोकहितं तवाद्य सर्वग्रहघ्नान्निपुणान्प्रयोगान् ॥
वक्ष्यामि येषां हि निषेवणेन ग्रहैर्विमुच्यन्ति नरा नरेन्द्रान् ॥ ६१ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शैलूषं प्रति नाडायन
वाक्ये ग्रहलिङ्गानि नामैकत्रिंदुत्तरद्विशततमोऽध्यायः ॥ २३१ ॥ ॥ नाडायन उवाच ॥ अभ्यङ्गोत्सादनं स्नानं धूपो रक्षाबलिर्घृतम् ॥ नेत्रा
ञ्जनं प्रधवनं नवग्रहहराः क्रियाः ॥ १ ॥ सर्पगन्धा वचा कुष्ठमुस्ताक्षेपणचन्दनैः ॥ सक्षीरमूत्रैर्विपचेत्तैलं सर्वग्रहापहम् ॥ २ ॥ बिल्वमध्यं ब्रह्मदत्त
गवाक्षीबृहतीफलम् ॥ उत्सादनमिदं श्रेष्ठं श्लक्ष्णपिष्टं जलेन तु ॥ ३ ॥ उशीरकुष्ठमञ्जिष्ठादेवदारुमनःशिलाः ॥ श्रीवेष्टकस्तथा कौन्ती हरितालैल

वालुके ॥ ४ ॥ एतच्चूर्णीकृतं सर्वं पञ्चगव्यांशमिश्रितम् ॥ सर्वग्रहप्रशमनं स्नानमायुष्यमुत्तमम् ॥५॥ सर्षपाश्च खुरं कुष्टं घृतं भल्लातकं वचा॥
पूतीकमजमोदा च धूपः सर्वग्रहापहः ॥६॥ शस्त्रं वा रोचनं शस्तं सुवर्णं मणिमौक्तिकम् ॥ विषं सवत्सां धेनुं च मत्तं छागं तथैव च ॥ ७ ॥ पूर्णं
कुम्भं च मंत्राश्च वीणा चन्दनमेव च ॥ मयूरपक्षात्रजतं समार्गणगुणं धनुः ॥ ८ ॥ भल्लातकानि सर्पिश्च रक्षार्थं धारयेद्गृहे ॥ पुष्पैर्धूपैस्तथा गन्धै
र्भक्ष्यैर्नानाविधैस्तथा ॥ ९ ॥ पूर्णकुम्भैः सकुल्माषैर्गोरसैश्चन्दनेन च ॥ धूपैरन्नप्रकारैश्च बलिः कार्यो विजानता ॥ १० ॥ कायस्थां ज
टिलां वीरां वयस्थां नकुलीद्वयम् ॥ जयां च विजयां चैव मानां पर्पटकम्बरीम् ॥ ११ ॥ मर्कटीं सूकरीं छत्रामतिच्छत्रां पलङ्कषाम् ॥ रामां पूत
नकां केशीं मारटां कटुकां वचाम् ॥१२॥ चौरकां विष्णुदत्तां च वृष्टिकाण्डीं च चूर्णयेत् ॥ पुराणमेभिर्विपचेद्घृतं तोये चतुर्गुणे ॥ १३ ॥ महा
पैशाचकं नाम सर्वग्रहनिवारणम् ॥ रसाञ्जनं त्रिकटुकं मञ्जिष्ठा समनःशिला ॥ १४ ॥ समानि च्छागमूत्रेण पिष्ट्वा वर्तिन्तु कारयेत् ॥ छाया
शुष्कं तु तं कुर्यादञ्जनं ग्रहनाशनम् ॥ १५ ॥ श्वेतज्योतिष्मतीं व्योषं वस्त्रसूत्रेण वेष्टितम् ॥ छायाशुष्के पुनः पिष्टं ज्ञेयं प्रशमनं हितम् ॥
॥ १६ ॥ संपूजनं देवगुरुद्विजानां भक्तिः परा चक्रगदाधरस्य ॥ येषां न तेषां प्रभवन्ति दोषा ग्रहोद्भवा भूमिपतिप्रधान ॥ १७ ॥
इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे ग्रहबाधाप्रतिषेधो नाम द्वात्रिंशदुत्तरद्विशततमोऽध्यायः ॥ २३२ ॥ ॥ छ ॥
॥ शैलूष उवाच ॥ ॥ स्कन्दस्य शरणं प्राप्तान्ग्रहाञ्श्रुत्वा शतक्रतुः ॥ यच्चकार महाभाग तन्ममाचक्ष्व पृच्छतः ॥ १ ॥ ॥ नाडायन उवाच ॥
स्कन्दस्य शरणं प्राप्ताञ्श्रुत्वा शतमखो ययौ ॥ देवदेवगणैः सार्द्धं स्कन्दो यत्र व्यवस्थितः ॥ २ ॥ स्कन्दं देवेश्वरो दृष्ट्वा दीप्ततेजःसमद्युतिम् ॥
तुष्टाव राजशार्दूल प्रयतः सुसमाहितः ॥ ३ ॥ ॥ शक्र उवाच ॥ ॥ देवदेवं नमस्यामि कुमारं वरमच्युतम् ॥ कार्तिकेयं दुराराध्यं वह्नितेजः
समुद्भवम् ॥ ४ ॥ उमाशङ्करजं भीमं गङ्गया जठरे धृतम् ॥ शक्तिहस्तं विशालाक्षं षण्मुखं दीप्ततेजसम् ॥ ५ ॥ भक्तानुकम्पिनं दांतं ब्रह्मण्यं
वरदं प्रभुम् ॥ काकपक्षधरं शांतं शिखण्डकविभूषितम् ॥ ६ ॥ रक्ताम्बरं महाबाहुं मयूरवरगामिनम् ॥ घण्टाप्रियं गणाध्यक्षं महाबलपराक्रमम् ॥
॥ ७ ॥ देवसेनापतिं देवं सर्वलोकहितेप्सया ॥ षष्ठ्यान्तु शुक्लपक्षस्य ये च त्वां भौमवासरे ॥८॥ कृत्तिकास्वर्चयिष्यन्ति यथालाभं पृथक्पृथक् ॥
न तेषां दुर्लभं किञ्चिद्भविष्यति सुरोत्तम ॥ ९ ॥ द्वियोगे द्विगुणं तेषां फलं स्कन्द भविष्यति ॥ त्रियोगे पूजनं कृत्वा भवतः सुरसत्तम ॥ १० ॥
अक्षयं फलमाप्स्यन्ति नात्र कार्या विचारणा ॥ वैशाखमासादारभ्य पञ्चम्यां य उपोषितः ॥ ११ ॥ भवन्तं पूजयेत्षष्ठ्यां संवत्सरमतन्द्रितः ॥

पुत्रार्थी लभते पुत्रान्धनकामो धनानि च ॥ १२ ॥ मृतश्च प्राप्नुयात्स्वर्गं त्वयि तुष्टे हरात्मज ॥ स्तोत्रेण च मदीयेन ये स्तोष्यन्ति तव प्रभो ॥ ॥ १३ ॥ लोकद्वयेऽपि ते कामान्प्राप्स्यन्ति मनसेप्सितान् ॥ ॥ स्कन्द उवाच ॥ ॥ पिता मे दैवतं शक्र महादेवः प्रतापवान् ॥ १४ ॥ तस्याज्ञया करिष्यामि यन्मां वक्ष्यति वासव ॥ ॥ नाडायन उवाच ॥ ॥ ततः प्रादुरभूत्तत्र देवदेवस्त्रिलोचनः ॥ १५ ॥ अभ्यषिञ्चत्कुमारं च ब्रह्मणा सहितः प्रभुः ॥ सेनापत्येन देवानां सोऽभिषिक्तस्तदा प्रभो ॥ १६ ॥ जघान महिषं नाम दानवं देवकण्टकम् ॥ महिषेन समान्वीर्ये जघानायुतशोऽपरान् ॥ १७ ॥ बहुत्वाद्दानवान्वीरः स्कन्दः परबलार्दनः ॥ यदा हन्तुं न शक्नोति तदा देवस्त्रिलोचनः ॥ १८ ॥ जघान मनसा तत्र ततः शूलवरायुधः ॥ जघान दानवानन्याञ्शतशोऽथ सहस्रशः ॥ १९ ॥ भक्ताऽनुकम्पी भगवांस्त्रिनेत्रो देवारिसंघान्विनिपात्य संघे ॥ कृत्वा त्रिलोकीं च तदा प्रहृष्टां जगाम कैलासगिरिं महात्मा ॥ २० ॥ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमकाण्डे मार्कण्डेयवज्रसंवादे महिषवधो नाम त्रयस्त्रिंशदुत्तरद्विशततमोऽध्यायः ॥ २३३ ॥ ॥ नाडायन उवाच ॥ ॥ तस्यैव देवदेवस्य प्रभावमपरं शृणु ॥ यष्टुकामैः सुरैः पूर्वं यज्ञे भागो न कल्पितः ॥ १ ॥ यदा राजंस्त्रिनेत्रस्य तदा क्रुद्धेन शंभुना ॥ यज्ञवाटं ततो गत्वा देवा वित्रासिता बलात् ॥ २ ॥ पुरोडाशं भक्षयित्वा पूष्णो दन्तानशातयत् ॥ भगस्य नयनं वामं बभञ्ज परवीरहा ॥ ३ ॥ क्रुद्धं दृष्ट्वा महादेवं मृगरूपधरस्तदा ॥ प्राद्रवत्सहसा यज्ञो नरनारायणाश्रमम् ॥ ४ ॥ तमन्वयौ महातेजा बाणचापधरो हरः ॥ यज्ञानुसारिणं प्राप्तं हरं बाणधनुर्धरम् ॥ ५ ॥ नारायणस्तु तं चक्रे विह्वलं कण्ठपीडनात् ॥ विह्वले तु महादेवे यज्ञो दिवमथाश्रितः ॥ ६ ॥ हरोऽपि लब्धसंज्ञस्तमन्वयौ दिवि सत्वरः ॥ न शशाक मृगं वेद्धुं यदा धर्मश्च तेजसा ॥ ७ ॥ ततस्तं बोधयामास ब्रह्मा शुभचतुर्मुखः ॥ भगस्य पूर्णं च तदा प्रसादमकरोत्पुनः ॥ ८ ॥ यज्ञस्य चाभयं दत्त्वा क्रीडयान्वेति तं पुनः ॥ तारामृगश्च गगने महादेवानुगः सदा ॥ ९ ॥ दृश्यते स महाभाग रात्रौ गगनभूषणः ॥१०॥ क्रुद्धेन रुद्रेण सुरा निरस्ताः स्वस्थाः प्रसन्नेन कृताश्च भूयः ॥ तस्मात्प्रसन्नास्तु भवाय लोके क्रुद्धश्च लोकान्तकरः प्रदिष्टः ॥ ११ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे यज्ञविध्वंसनो नाम चतुस्त्रिंशदुत्तरद्विशततमोऽध्यायः ॥२३४॥ ॥ नाडायन उवाच ॥ तस्यैव देवदेवस्य प्रभावमपरं शृणु ॥ तेन विध्वंसितो यज्ञो यदा दक्षस्य धीमतः ॥ १ ॥ दक्षस्य यजमानस्य गङ्गाद्वारे पुरा प्रभो ॥ अनाह्वाने च शर्वस्य देवी प्रकुपिताऽभवत् ॥ २ ॥ देव्याः प्रकोपाच्च तथा क्रुद्धः शूलधरस्तदा ॥ वीरभद्रेति विख्यातं क्रोधजं

सृष्टवान्गणम् ॥ ३ ॥ भद्रकाली स्वकादेहात्सृष्टवत्यथ पार्वती ॥ गणैरनुगतो राजन्वीरभद्रो महायशाः ॥ ४ ॥ भद्रकाली तथा गत्वा दक्षयज्ञम
शातयत् ॥ विध्वस्यमानं यज्ञन्तु पार्वत्या सहितः शिवः ॥ ५ ॥ दृष्टवांस्तत्र राजेन्द्र भद्रकर्णेश्वरः स्थितः ॥ विध्वस्यमाने यज्ञे तु दक्षो वचनम
ब्रवीत् ॥ ६ ॥ वीरभद्रं महाभागं भद्रकालीं तथैव च ॥ कौ भवन्ताविह प्राप्तौ मम यज्ञोपघातकौ ॥ ७ ॥ वीरभद्र उवाच ॥ क्रुद्धेन शङ्करे
णावां भागस्यापरिकल्पनात् ॥ यज्ञविध्वंसनार्थाय प्रेषितौ ते परन्तपौ ॥ ८ ॥ भद्रकर्णेश्वरं शर्वं गच्छ शीघ्रं प्रसादय ॥ नाडायन उवाच ॥
वीरभद्रवचः श्रुत्वा गत्वा तुष्टाव शङ्करम् ॥ ९ ॥ अश्वमेधसहस्राग्र्यं फलं लेभे त्रिलोचनात् ॥ त्रिलोचनस्तदा तुष्टो वीरभद्रमभाषत ॥ १० ॥
यत्रस्थेन त्वया यज्ञो दक्षस्याद्य विनाशितः ॥ तत्र स्थाने तु सततं सान्निध्यं त्वं करिष्यसि ॥ ११ ॥ पूजां च विपुलां तत्र प्राप्स्यसे
मत्प्रसादजाम् ॥ ये च त्वां पूजयिष्यन्ति वीरभद्र गणेश्वर ॥ १२ ॥ ते नाकपृष्ठं यास्यन्ति नात्र कार्या विचारणा ॥ दक्षेण च समाहूता
भद्रकर्णेश्वरे त्वया ॥ १३ ॥ सरस्वती महाभागा प्रविष्टा जाह्नवीजलम् ॥ सङ्गमे च तयोः स्नात्वा पूजां मम करिष्यति ॥ १४ ॥ यः पुमान्स
गणेशत्वं मम प्राप्स्यत्यसंशयम् ॥ गङ्गाद्वारं कुशावर्त्तं बिल्वकं नीलपर्वतम् ॥१५॥ तथा कनखलं तीर्थं सर्वपापप्रमोचनम् ॥ भविष्यति महाभाग
तथैव च मनोहरम् ॥ १६ ॥ प्रजापतेर्यज्ञभुवं समासाद्य यतस्ततः ॥ मोक्ष्यते पातकं सर्वं त्रिदिवं च गमिष्यति ॥ १७ ॥ भूमिष्ठमुद्धृतात्पुण्यं
तस्मात्प्रस्रवणोदकम्॥तस्मादपि तथा पुण्यं सारसं परिकीर्तितम् ॥ सारसान्नैर्झरं पुण्यं नादेयमपि नैर्झरात् ॥ १८॥ तस्मादपि च गाङ्गेयं तदिहापि
विशेषतः ॥ सर्वत्र दुर्लभा गङ्गा त्रिषु स्थानेषु दुर्लभा॥१९॥गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे ॥ गङ्गाद्वारे कुशावर्त्ते बिल्वके नीलपर्वते ॥२०॥
स्नात्वा कनखले तीर्थे न पुनर्जन्मभाग्भवेत् ॥ तीर्थपञ्चकमेतद्धि यत्रैव गणनायकः ॥ २१ ॥ तत्र सन्निहितो ब्रह्मा तत्राहं तत्र केशवः ॥ तत्र
देवगणाः सर्वे ऋषयश्च तपोधनाः ॥ २२ ॥ तत्समीपे च ते स्थानं त्विदं दत्तं मया तव ॥ तत्र त्वं सततं वत्स लोकात्पूजामवाप्स्यसि ॥ २३ ॥
एवमुक्त्वा महातेजा वीरभद्रं महेश्वरः ॥ उवाच वचनं देवो भद्रकालीं महेश्वरः ॥२४ ॥ महेश्वर उवाच ॥ नमोस्तु ते महाभागे वरदे कामरूपिणि ॥
अष्टादशभुजे स्वस्ति शूलमुद्गरधारिणि ॥ २५ ॥ पीतकौशेयवसने शशाङ्कसदृशानने ॥ नीलोत्पलदलश्यामे गजकुम्भोपमस्तनि ॥ २६ ॥ वरदे
चारुसर्वाङ्गि सर्वाभरणभूषिते ॥ कमण्डलुधरे देवि देवारिबलनाशिनि॥२७॥अदितिश्च दितिश्चैव वनिता सिद्धिरेव च॥रात्रिर्निद्रा प्रभा कान्तिर्बुद्धि
र्लक्ष्मीः सरस्वती॥२८॥ धृतिः कीर्तिः स्वधा स्वाहा त्वमेव वरवर्णिनी ॥ त्वां जनाः पूजयिष्यन्ति सर्वकामप्रदां शुभाम्॥२९॥नवम्यां शुक्लपक्षस्य

लोकात्पूजामवाप्स्यसि ॥ नवम्यां पूजयिष्यंति ये त्वां सम्यगुपोषिताः॥३०॥ तेषां त्वं काम्यदा सौम्ये भविष्यसि न संशयः ॥ कन्दरेषु च शैलानां वनानां गहनेषु च ॥ ३१ ॥ रंस्यसे त्वं विशालाक्षि तदा पूजामवाप्स्यसि ॥ ये च त्वां मत्प्रभावज्ञाः पूजयिष्यन्ति मानवाः ॥३२॥ न तेषां दुर्लभं किञ्चिदिह लोके परत्र च ॥ ये चेदं मत्कृतं स्तोत्रमभिदास्यन्ति भक्तितः॥३३॥ते सर्वे भयनिर्मुक्ता भविष्यन्ति न संशयः ॥नाडायन उवाच॥ एतावदुक्त्वा वचनं तत्रैवान्तरधीयत॥३४॥ दक्षोपि च वरं लब्ध्वा मुदं लेभे त्रिलोचनात्॥३५॥एवं प्रभावो वरदः स देवो भक्तानुकम्पी जगतो निवासः ॥ कस्यास्य वक्तुं नृपवर्य तस्य गुणान्प्रवक्तुं सकला हि शक्तिः ॥ ३६ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शैलूषं प्रति नाडायनवाक्ये दक्षयज्ञविध्वंसनो नाम पञ्चत्रिंशदुत्तरद्विशततमोऽध्यायः ॥ २३५ ॥ ॥ नाडायन उवाच ॥ प्रभावमपरं तस्य शृणु देवस्य शूलिनः॥ यथा विमोक्षितस्तेन श्वेतो मृत्युवशं गतः ॥ १ ॥ श्वेतो नाम महातेजा ऋषिः परमधार्म्मिकः॥ पूजयामास सततं लिङ्गं त्रिपुरघातिनः ॥ २ ॥ तस्य पूजाप्रसक्तस्य कदाचित्पृथिवीपते ॥ आजगाम तमुद्देशं कालः परमदारुणः ॥ ३ ॥ रक्तवृत्तत्रिनयनः सर्पवृश्चिकरोमवान् ॥ दंष्ट्राकरालो विकटः चूर्णिताञ्जनसप्रभः ॥ ४ ॥ रक्तवासा महाकायः सर्पाभरणभूषितः ॥ पाशहस्तस्तथाभ्येत्य श्वेते पाशमथासृजत् ॥ ५ ॥ कण्ठार्पितेन पाशेन श्वेतः कालमथाब्रवीत् ॥ क्षणमात्रं प्रतीक्षस्व मम त्रिभुवनान्तक ॥ ६ ॥ निवर्त्तयाम्यहं यावत्पूजनं मन्मथद्विषः ॥ तमब्रवीत्तदा कालः प्रहसन्वसुधाधिप ॥ ७ ॥ न श्रुतं तु त्वया मन्ये वृद्धानां श्वेत जल्पितम् ॥ श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिके ॥ ८ ॥ न हि प्रतीक्षते मृत्युः कृतं वास्यान्न वा कृतम् ॥ गर्भे वाप्यथ बाल्ये वा यौवने वार्धकेपि वा ॥ ९ ॥ आयुष्ये कर्मणि क्षीणे लोकोऽयं नीयते मया ॥ नौषधानि न मंत्राश्च न होमो न पुनर्जपः ॥ १० ॥ त्रायन्ति मृत्युनोपेतं जरया वापि मानवम् ॥ बहूनीन्द्रसहस्राणि पितामहशतानि च ॥ ११ ॥ मया नीतानि कर्त्तव्यो नात्र मन्युस्त्वयानघ ॥ विधत्से पूजनं यस्य महादेवस्य शूलिनः ॥ १२ ॥ देहन्यासं स बहुधा मया वै श्वेत कारितः ॥ स्वयं प्रभुर्न चैवाहं कर्मायत्ता मतिर्मम ॥ १३ ॥ कर्मणां हि तथा नाशं नास्ति भूतस्य कस्यचित् ॥ कर्ममार्गानुसारेण धात्राहं संप्रचोदितः ॥ १४ ॥ नयामि सर्वमाक्रम्य त्रैलोक्यं सचराचरम् ॥ एवमुक्तस्तु कालेन नीयमानस्त्रिलोचनम् ॥ १५ ॥ जगाम सर्वभावेन शरणं भक्तवत्सलम् ॥ श्वेते तु शरणं प्राप्ते लिङ्गस्य त्रिपुरान्तकः ॥ १६ ॥ भूतभव्यभविष्यद्भिः प्रादुर्भावैस्तु शार्ङ्गिणः ॥ आत्मनः कवचं कृत्वा कृतरक्षो महेश्वरः ॥ १७ ॥ भित्त्वा लिङ्गं समुत्तस्थौ क्रोधविस्फारितेक्षणः ॥ तृतीयलोचनज्वालाप्रकाशितजगत्त्रयः ॥१८॥

दृष्टमात्रस्तदा तस्य कालो जज्वाल तेजसा ॥ स शान्तो भस्मभूतश्च सर्वभूतविधिग्रहः ॥ १९ ॥ श्वेतस्य दत्त्वा सामीप्यं गणेशत्वं तथैव च ॥
कृत्वा विधिग्रहं कालं तत्रैवान्तरधीयत ॥ २० ॥ ततः प्रभृति राजेन्द्र कालः स कलयन्प्रजाम् ॥ न कैश्चिद्दृश्यते लोके विदेहत्वाज्जगत्त्रये ॥ २१ ॥
॥ शैलूष उवाच ॥ ॥ वैष्णवं कवचं ब्रह्मन्सर्वबाधानिवारणम् ॥ त्वत्तोहं श्रोतुमिच्छामि तत्र मे संशयो महान् ॥ २२ ॥ ॥ नाडायन उवाच ॥
अदृश्यमेतत्परमं पवित्रं पूर्वेरितं कल्मषनाशनं च ॥ दुःखापहं ते कवचं ब्रवीमि रक्षा कृता येन महेश्वरेण ॥ २३ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथम
खण्डे मार्कण्डेयवज्रसंवादे कालदारणो नाम षट्त्रिंशदुत्तरद्विशततमोऽध्यायः ॥ २३६ ॥ ॥ महेश्वर उवाच ॥ ॥ प्रणम्याजरमीशानमजं
नित्यमनामयम् ॥ देवं सर्वेश्वरं विष्णुं सर्वव्यापिनमव्ययम् ॥ १ ॥ बध्नाम्यहं प्रतिसरं नमस्कृत्य जनार्दनम् ॥ अमोघमप्रतिहतं सर्वदुःखनिवार
णम् ॥ २ ॥ विष्णुर्ममाग्रतः पातु कृष्णो रक्षतु पृष्ठतः ॥ हरिर्मे रक्षतु शिरो हृदयं च जनार्दनः ॥ ३ ॥ मनो मम हृषीकेशो जिह्वां रक्षतु केशवः॥
पातु नेत्रे वासुदेवः श्रोत्रे संकर्षणस्तथा ॥ ४ ॥ प्रद्युम्नः पातु मे घ्राणमनिरुद्धो मुखं मम ॥ वनमाली गलं पातु श्रीवक्षो रक्षतात्पुरः ॥ पार्श्वं तु
पातु मे चक्रं वामं दैत्यविदारणम् ॥ ५ ॥ दक्षिणं तु गदादेवी सर्वासुरनिवारिणी ॥ उदरं मुसली पातु पृष्ठं पातु च लाङ्गली ॥ ६ ॥ ऊरू रक्षतु
शार्ङ्गी मे जङ्घे रक्षतु चर्मकी ॥ पाणी रक्षतु शंखी च पादौ मे चरणावुभौ ॥ सर्वकार्यार्थसिद्ध्यर्थं पातु मां गरुडध्वजः ॥ ७ ॥ वराहो रक्षतु जले
विषमेषु च वामनः ॥ अटव्यां नरसिंहस्तु सर्वतः पातु केशवः ॥ ८ ॥ हिरण्यगर्भो भगवान्हिरण्यं मे प्रयच्छतु ॥ सांख्याचार्यस्तु कपिलो
धातुसाम्यं करोतु मे ॥ ९ ॥ श्वेतद्वीपनिवासी च श्वेतद्वीपं नयत्वजः ॥ सर्वान्शत्रून्सूदयतु मधुकैटभसूदनः ॥ १० ॥ विकर्षतु सदा विष्णुः
किल्बिषं मम विग्रहात ॥ हंसो मत्स्यस्तथा कूर्मः पातु मां सर्वतो दिशम् ॥ ११ ॥ त्रिविक्रमस्तु मे देवः सर्वान्पाशान्निकृन्ततु ॥ नरनारायणो
देवो बुद्धिं पालयतां मम ॥ १२ ॥ शेषो शेषामलज्ञानः करोत्वज्ञाननाशनम् ॥ वडवामुखो नाशयतु कल्मषं यन्मया कृतम् ॥ १३ ॥ विद्यां
ददातु परमामश्वमूर्द्धा मम प्रभुः ॥ दत्तात्रेयः पालयतु सपुत्रपशुबान्धवम् ॥ १४ ॥ सर्वान्रोगान्नाशयतु रामः परशुना मम ॥
रक्षोघ्नो मे दाशरथिः पातु नित्यं महाभुजः ॥ १५ ॥ रिपून्हलेन मे हन्याद्रामो यादवनन्दनः ॥ प्रलम्बकेशिचाणूरपूतनाकंसनाशनः ॥ १६ ॥
कृष्णो यो बालभावेन स मे कामान्प्रयच्छतु ॥ अन्धकारं तमो घोरं पुरुषं कृष्णपिङ्गलम् ॥ १७ ॥ पश्यामि भयसंतप्तः पाशहस्तमिवान्तकम्॥
ततोऽहं पुण्डरीकाक्षमच्युतं शरणं गतः ॥ १८ ॥ योगीशमतिरूपस्थं शुभशीतांशुनिर्मलम् ॥ धन्योऽहं विजयी नित्यं यस्य मे भगवा

न्हरिः ॥ १९ ॥ स्मृत्वा नारायणं देवं सर्वोपद्रवनाशनम् ॥ वैष्णवं कवचं बद्ध्वा विचरामि महीतले ॥ २० ॥ अप्रधृष्योस्मि भूतानां सर्वं विष्णुमयोह्यहम् ॥ स्मरणाद्देवदेवस्य विष्णोरमिततेजसः ॥ २१ ॥ सिद्धिर्भवतु मे नित्यं तथा मंत्र उदाहृतः ॥ यो मां पश्यति चक्षुर्भ्यां यं च पश्यामि चक्षुषा ॥ २२ ॥ सर्वासां समदृष्टीनां विष्णुर्बध्नातु चक्षुषा ॥ वासुदेवस्य यच्चक्रं तस्य चक्रस्य ये अराः ॥ २३ ॥ ते च च्छिन्दन्तु मे पापं मा मे हिंसन्तु हिंसकाः ॥ राक्षसेषु पिशाचेषु कान्तारेष्वटवीषु च ॥ २४ ॥ विवादे राजमार्गेषु द्यूतेषु कलहेषु च ॥ नदीसन्तरणे घोरे संप्राप्ते प्राणसंशये ॥ २५ ॥ अग्निचौरनिपाते च सर्वग्रहनिवारणे ॥ विद्युत्सर्पविषोद्योगे खातोदे रिपुसङ्कटे ॥२६॥ तथ्यमेतज्जपेन्नित्यं शारीरे भय आगते ॥ अयं भगवतो मन्त्रो मंत्राणां परमो महान् ॥२७॥ विख्यातं कवचं गुह्यं सर्वपापप्रणाशनम् ॥ स्वमायाकृतनिर्माणं कल्पांतगृहलोपकृत् ॥ अनाद्यं तज्जगद्बीजं पद्मनाभ नमोस्तु ते ॥ २८ ॥ ॐकालाय स्वाहा ॥ ॐकालपुरुषाय स्वाहा ॥ ॐप्रचण्डाय स्वाहा ॥ ॐ प्रचण्डपुरुषाय स्वाहा ॥ ॐसर्वाय स्वाहा ॥ ॐसर्वसर्वाय स्वाहा ॥ ॐनमो भुवनेशाय त्रिलोकधाम्ने इतिटिपिरिटि स्वाहा ॥ ॐउत्तमेनअवेतुमे वायुतुमे ये सत्त्वाः पापातुचारास्तेषां दैत्यदानवयक्षराक्षसभूतप्रेतपिशाचकूष्माण्डापस्मारोन्मादनज्वराणां एकाहिकद्वितीयकतार्तीयकचातुर्थिकमौहूर्त्तिकदिनज्वररात्रिज्वरसततज्वरसन्ध्याज्वरसर्वज्वरादीनामुत्सादनलूताकीटककंटककटपूतनाभुजगस्थावरविषविषमविषादीनामिदं शरीरं ममाप्रधृष्यं भवतु ॐ सुकारे प्रकरोत्कटकविकटदंष्ट्रपूर्वतो रक्ष ॥ ॐ हैं हैं हैं हैं दिनकरसहस्रकान्तसमोग्रतेजः पश्चिमतो रक्षरक्ष ॥ ॐ निरिनिरिप्रदीप्तज्वलनज्वालाकालमहाकपिलजटिल उत्तरत्तो रक्ष ॥ ॐ चिलिचिलिमिलिमिलिचेकडि गौरिगांधारि विषोहनि विषं मां मोहयतु स्वाहा ॥ दक्षिणतो रक्ष माममुकस्य सर्वभूतभयोपद्रवेभ्यः स्वाहा ॥ जयति विजयदानं जायतां रिपुपुरहासनुनवध्यते भयहृदयभयदोभयेभयं दिशतु ममायमुदारमच्युतः॥ यदुदरमखिलं विशन्ति रश्मयः ॥ आद्यन्तवन्तः कवयः पुराणाः सूक्ष्मा बृहन्तो ह्यनुशासितारः ॥ सर्वज्वरान्घ्नन्तु ममानिरुद्धप्रद्युम्नसंकर्षणवासुदेवाः॥२९॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मा०सं० शैलूषं प्रति नाडायनवाक्ये विष्णुकवचं नाम सप्तत्रिंशदुत्तरद्विशततमोऽध्यायः॥२३७॥

॥ वज्र उवाच ॥ श्रुत्वा कालाङ्गदहनं ब्राह्मणेन समीरितम् ॥ किं पप्रच्छ तदा ब्रह्मन्शैलूषो मृत्युचोदितः॥१॥ मार्कण्डेय उवाच॥ श्रुत्वा कालाङ्गदहनं ब्राह्मणेन समीरितम् ॥ रावणस्यैव चरितं भूयः पप्रच्छ तं तदा ॥ २ ॥ शैलूष उवाच ॥ चरितस्यावशेषं यद्दशग्रीवस्य रक्षसः ॥ तदहं श्रोतुमिच्छामि तत्र मे संशयो महान्॥३॥ नाडायन उवाच ॥ ततोऽस्य नगरं भूयः परिचक्राम रावणः ॥ स ददर्श तदा तत्र प्रासादं सर्वकाञ्चनम्॥४॥ ॥१६०॥

मुक्ताजालपरिक्षिप्तं तथा विद्रुमतोरणम् ॥ गारुडेन च रक्तेन समन्तात्कृतवेदिकम् ॥ ५ ॥ वैडूर्यरुचिरस्तम्भं पद्मरागप्रभोज्ज्वलम् ॥ इन्द्रनीलप्रभाच्छन्नं निर्यूहशतशोभितम् ॥ ६ ॥ महाभुवनसंबाधं महोद्यानविभूषितम् ॥ सुखारोहणसोपानं दीर्घिकाशतसंकुलम् ॥ ७ ॥ सर्वर्तुकुसुमैर्वृक्षैः समन्तादुपशोभितम् ॥ सर्वासनयुतं रम्यं महेन्द्रभवनाधिकम् ॥ ८ ॥ तन्तु दृष्ट्वा गृहं राजन्प्रहस्तं वाक्यमब्रवीत् ॥ प्रहस्त शीघ्रं जानीहि कस्येदं भवनोत्तमम् ॥ ९ ॥ एवमुक्तः प्रहस्तस्तु प्रविवेश गृहोत्तमम् ॥ संप्राप्तायां च कक्षायां भिन्नाञ्जनचयोपमम् ॥१०॥ सर्वाभरणसंवीतं सर्वलक्षणलक्षितम् ॥ गृहीत्वा लोहमुसलं द्वारदेशे व्यवस्थितम् ॥ ११ ॥ ददर्श पुरुषं भीमं ज्वालामण्डलदुर्दृशम् ॥ तं तु दृष्ट्वा तथा भूतं स विवेश दशाननः ॥ १२ ॥ समाप्तायां[1] च कक्षायां स ददर्श तमेव हि ॥ तमुवाच महातेजा निशाचरगणेश्वरः ॥ १३ ॥ युद्धार्थ्यहमनुप्राप्तो युद्धातिथ्यं प्रयच्छ मे ॥ अथ वा तस्य शंस त्वं गृहे योस्मिन्व्यवस्थितः ॥ १४ ॥ ततो राक्षसराजस्य पुरुषो वाक्यमब्रवीत् ॥ तिष्ठत्यस्मिन्गृहे राजा दानवानां बलिर्बली ॥ १५ ॥ तेन चेद्योत्स्यसे वीर प्रविशेदं गृहोत्तमम् ॥ योद्धुं नार्हसि तेन त्वं स महात्मा महाबलः ॥ १६ ॥ ब्रह्मण्यश्च शरण्यश्च शूरः सत्यपराक्रमः ॥ वीरो बहुगुणोपेतो बलवान्दृढविक्रमः ॥ बालार्क इव तेजस्वी समरेष्वनिवर्त्तकः ॥ १७ ॥ प्रियंवदः संविभागी गूढसाक्ष्याय तत्परः ॥ एवमुक्तो दशग्रीवः प्रविवेश गृहोत्तमम् ॥ १८ ॥ अथ संदर्शनादेव बलिना सुमहात्मना ॥ शीघ्रमुत्सङ्गमारोप्य पृष्टस्त्वागमनं ततः ॥ १९ ॥ तस्योवाच महातेजा रावणो राक्षसाधिपः ॥ श्रुतं मया महाभाग बद्धस्त्वं किल विष्णुना ॥ २० ॥ सोऽहं मोचयितुं शक्तो बन्धनात्त्वां न संशयः ॥ एवमुक्तस्ततो हासं बलिर्मुक्त्वेदमब्रवीत् ॥ २१ ॥ एते मे कुण्डले दिव्ये महारत्नोपशोभिते ॥ अनयोरेकमानीय चात्रोपविश मा चिरम् ॥ २२ ॥ अत्रोपविष्टस्य च ते व्याख्यास्ये विष्णुविक्रमम् ॥ एवमुक्तो दशग्रीवः कुण्डलानयने ततः ॥२३॥ चकार परमं यत्नं न शशाक च शत्रुहा ॥ यदा चालयितुं स्थानान्न शशाक स कुण्डलम् ॥ २४ ॥ प्रस्विन्नसर्वगात्रस्तु संदष्टदशनच्छदः ॥ भ्रुकुटीसंकटमुखः परं विस्मयमागतः ॥ २५ ॥ उत्सङ्गे तदवस्थे तु बलिः कृत्वेदमब्रवीत् ॥ हिरण्यकशिपुर्नामाभवन्मे प्रपितामहः ॥ २६ ॥ यदा बभूव तस्येमे कुण्डले वै बभूवतुः ॥ एताभ्यां कुण्डलाभ्यां तु सोऽभूत्पूर्वं विभूषितः ॥ २७ ॥ ऊर्वोरारोप्य नखरैः करैस्तेन विदारितः ॥ कथमद्य महाभागं तं त्वं जेतुं व्यवस्यसि ॥ २८ ॥ स एव पुरुषः श्यामो द्वारि तिष्ठति नित्यशः ॥ एतेन दानवेन्द्राश्च तथान्ये बलदर्पिताः ॥ २९ ॥

१ 'सतमायाम्' इति ख० ।

वशं नीता बलवता पूर्वपूर्वतराश्च ये ॥ बद्धश्चाहमनेनैव कालोऽयं दुरतिक्रमः ॥ ३० ॥ क एनं पुरुषं लोके वञ्चयिष्यति राक्षस ॥ लोकत्रयस्य सर्वस्य कर्ता हर्ता तथैव च ॥ ३१ ॥ संहरत्येष भूतानि स्थावराणि चराणि च ॥ पुनश्च सृजते सर्वमनाद्यन्तो महेश्वरः ॥ ३२ ॥ इष्टं चैव हुतं चैव तपस्तप्तं तथैव च ॥ सर्वस्येव हि लोकेशो धाता गोप्ता न संशयः ॥ ३३ ॥ सर्वदेवमयश्चैव सर्वभूतमयस्तथा ॥ सर्वलोकमयश्चैव सर्वज्ञानमयस्तथा ॥ ३४ ॥ सर्वरूपी महारूपी महाबालो महाभुजः ॥ स्मृत्वा स्तुत्वा तथेष्ट्वा च सर्वमस्मादवाप्नुयात् ॥ ३५ ॥ एतच्छ्रुत्वा च वचनं रावणो निर्ययौ तदा ॥ न च तं पुरुषं तत्र ददर्श रजनीचरः ॥ ३६ ॥ समेत्य रक्षोधिपतिः सहायश्चचार भूयः पृथिवीं समग्राम्॥ न चाप्यसौ कञ्चिदपश्यतान्यं लोकेषु धीरं त्रिदशारिमुख्यः ॥ ३७ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शैलूषं प्रति नाडायनवाक्ये बलिरावणसमागमो नामाष्टत्रिंशदुत्तरद्विशततमोऽध्यायः ॥ २३८ ॥ ॥ नाडायन उवाच ॥ ॥ स कदाचिन्महीं सर्वां विचरन्धनदानुजः ॥ पश्चिमे सागरद्वीपे ददर्श पुरुषं शुभम् ॥ १ ॥ जांबूनदसमप्रख्यं ज्वलितानलसुप्रभम् ॥ विश्वरूपधरं देवं वरदं कामरूपिणम् ॥ २ ॥ धर्मस्तस्य तपश्चैव जगतः सिद्धिहेतुके ॥ ऊरू चाश्रित्य तस्थाते मन्मथः शिश्नमाश्रितः ॥ ३ ॥ विश्वेदेवाः कटीभागे मरुतो बस्तिशीर्षके ॥ पादयोश्च धरा देवी पिशाचाश्च नखाश्रिताः ॥ ४ ॥ मध्येष्टौ वसवस्तस्य समुद्राः कुक्षिमाश्रिताः ॥ पार्श्वेषु च दिशः सर्वाः सर्वसन्धिषु मारुतः ॥ ५ ॥ पितरश्चाश्रिताः पृष्ठे हृदये च पितामहः ॥ गोदानानि पवित्राणि भूमिदानानि यानि च ॥ ६ ॥ सुवर्णस्य च दानानि यत्कुल्लोमान्तराणि च ॥ अस्थिभागेषु शैलाश्च शिरासु सरितस्तथा ॥ ७ ॥ मणिवक्षोऽभवत्तस्य शरीरे द्यौरवस्थिता ॥ कृकाटिकायां सन्ध्याश्च तलवाहाश्च ये घनाः ॥ ८ ॥ बाहू धाता विधाता च भगः पूषा तथा करौ ॥ नागा घोरविषाः सर्वे करजेषु व्यवस्थिताः ॥ ९ ॥ अग्निरास्यमभूत्तस्य स्कन्धौ रुद्रैरधिष्ठितौ ॥ दन्ता मासर्तवश्चैव दंष्ट्रास्तस्य तु वत्सरः॥ १०॥ नासायां चाप्यमावस्या तच्छिद्रेषु च वासराः ॥ ग्रीवा तस्याभवद्वेदी वाणी चाथ सरस्वती ॥ ११ ॥ नासत्यौ श्रवणौ चोभौ नेत्रे शशिदिवाकरौ ॥ वेदाङ्गानि च यज्ञाश्च तारारूपाणि यानि च ॥ १२ ॥ एतानि नररूपस्य तस्य देहाश्रितानि वै ॥ तेनातिकायेन तदा राक्षसः पाणिपीडितः ॥१३॥ मुमूर्च्छ सचिवाश्चास्या पलायन्त दिशो दश ॥ ऋग्वेदप्रतिमः श्रेष्ठः पद्ममालाविभूषितः ॥ १४ ॥ क्रमेण च विवेशाथ पातालं गिरिसन्निभः॥ उत्थाय च दशग्रीवश्चाहूय सचिवत्रयम् ॥ १५ ॥ क्व गतः सहसा ब्रूत प्रहस्तशुकसारणाः ॥ एवमुक्ते राक्षसेन्द्रे राक्षसास्तमथाब्रुवन् ॥१६॥ प्रविष्टः स नरोत्रैव देवदानवदर्पहा ॥

तलेन तेनैव ततः प्रविवेश निशाचरः ॥ १७ ॥ एक एव महातेजा वरदानात्स्वयंभुवः ॥ प्रविश्य ददृशे तत्र सर्वाभरणभूषितान् ॥ १८ ॥ नित्यो
त्सवाञ्छांतभयान्निष्कलान्पावकप्रभान् ॥ चतुर्भुजान्महारूपाञ्छ्रीवत्सकृतलाञ्छनान् ॥ १९ ॥ एकरूपधरान्सर्वान्रक्तमाल्यानुलेपनान् ॥
रागद्वेषविनिर्मुक्तान्सर्वशक्तीञ्जगत्प्रभून् ॥ २० ॥ नृत्येन गीतवाद्येन सेवमानाञ्जनार्दनम् ॥ मानुष्यं पूजनं कृत्वा देवदेवस्य चक्रिणः ॥ २१ ॥
समीपं समनुप्राप्तास्तस्यैव परमेष्ठिनः ॥ दृष्टाः कोट्यः सहस्राणां दृष्ट्वा च रजनीचरः ॥ २२ ॥ ऊर्ध्वरोमास्ततस्तस्माद्देशाद्देशमपासरत् ॥ जगाम
ददृशेऽप्यत्राप्यनौपम्यगुणं गृहम् ॥ २३ ॥ ददर्श च तदा तत्र पुरुषं शयने स्थितम् ॥ पाण्डुरेण महार्घेण शयनासनवाससा ॥ २४ ॥ शेते स
पुरुषव्याघ्रः पावकेनावगुण्ठितः ॥ दिव्यगन्धानुऽलिप्तांगो दिव्याभरणभूषितः ॥२५॥ दिव्याम्बरधरा साध्वी त्रैलोक्यस्यैकभूषणम् ॥ बालव्यजन
हस्ता वै रूपेणाप्रतिमा भुवि ॥ २६ ॥ पादावुत्संग आरोप्य तस्य देवस्य चक्रिणः ॥ जिघृक्षुः सहसा साध्वीं राक्षसेभ्योऽपतद्बलात् ॥ २७ ॥ अव
गुण्ठनमात्रं वै दृष्टं तेन महात्मनः ॥ जहासोच्चैस्तदा देवो दृष्ट्वा तं राक्षसेश्वरम् ॥ २८ ॥ तेजसा स तु देवस्य रावणो लोकरावणः ॥ कृन्तमूलो
यथा शाखी निपपात महीतले ॥ २९ ॥ पतितं राक्षसेन्द्रं तं देवो वचनमब्रवीत् ॥ उत्तिष्ठ मरणं नास्ति साम्प्रतं ते निशाचर ॥ ३० ॥ प्रजा
पतिवरो रक्षो येन जीवसि साम्प्रतम् ॥ तमब्रवीत्तदा राजा राक्षसानां तु विह्वलः ॥ ३१ ॥ को भवाञ्छयने शेते युगान्तानलसन्निभः ॥ एवमुक्तः
स तेनाथ प्रत्युवाच निशाचरम् ॥ ३२ ॥ किं ते मया दशग्रीव वध्योसि न चिरान्मम ॥ एवमेव च मृत्युस्ते भविष्यति दशानन ॥ ३३ ॥ यां
जिघृक्षसि मोहात्त्वं भूयश्चैनां हरिष्यसि ॥ मानुष्यमहमासाद्य त्वां वधिष्यामि रावण ॥ ३४ ॥ अस्याः कृते विशालाक्ष्याः साम्प्रतं गच्छ राक्षस ॥
श्रुत्वैतद्वचनं देवाद्रावणो वाक्यमब्रवीत् ॥ ३५ ॥ नास्ति धन्यतरो लोके मया लोकत्रये विना ॥ त्वद्धस्तान्मरणं यस्य भविष्यति जगत्प्रभो ॥
॥ ३६ ॥ यशस्यं श्लाघनीयं च त्वद्धस्तान्मरणं मम ॥ अथास्य गात्रे संपश्यद्रावणो भीमविक्रमः ॥ ३७ ॥ त्रैलोक्यं सकलं राजन्विश्वरूपधरस्य
तु ॥ दृष्ट्वैतद्रावणो राजन्विस्मयोत्फुल्ललोचनः ॥ ३८ ॥ बहुमेने तथात्मानं निर्जगाम तथैव च ॥ देवदेवाभ्यनुज्ञातः स जगाम तदा गृहम् ॥३९॥
तस्य देवो वधार्थाय चतुर्मूर्त्तिर्जनार्दनः ॥ मानुष्यमागतं राजंस्तेन मा विग्रहं कृथाः ॥ ४० ॥ रामो जनार्दनः साक्षात्सीता लक्ष्मीस्तथैव च ॥
तथा भरतशत्रुघ्नौ लक्ष्मणोऽपि महायशाः ॥ ४१ ॥ विष्णोर्भागास्त्वया ज्ञेया विष्णुतुल्यपराक्रमाः ॥ शत्रुघ्नेन महत्कर्म लवणस्य वधे कृतम् ॥
तस्मादभ्यधिकं मन्ये भरतं धर्मवत्सलम् ॥ ४२ ॥ न देवसङ्घैर्मनुजैर्न यक्षैर्न राक्षसैर्नागवरैर्न दैत्यैः ॥ रणे विजेतुं रघवस्तु शक्या येषां स नाथो

हरिरप्रमेयः ॥ ४३ ॥ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शैलूषं प्रति नाडायनवाक्ये रावणस्य महापुरुषदर्शनं नामैकोनचत्वारिंशदुत्तरद्विशततमोऽध्यायः ॥ २३९ ॥ ॥ शैलूष उवाच ॥ ॥ लवणस्य वधं ब्रह्मञ्श्रोतुमिच्छामि तत्त्वतः ॥ शत्रुघ्नेन कथं युद्धे लवणो विनिपातितः ॥१॥ ॥ नाडायन उवाच ॥ ॥ अयोध्यायामयोध्यायां राजन्दाशरथौ स्थिते ॥ अनतीते कदाचित्तु वसन्ते रतिवर्धने॥२॥ नात्युष्णशीते ससुखे सर्वप्राणिमनोहरे ॥ उत्फुल्लशाखिसंलीनचारुस्वनशिलीमुखे ॥ ३ ॥ कोकिलारावबहुले सप्रवालवनस्पतौ ॥ सुखार्ककिरणे काले विभूषितधरातले ॥ ४ ॥ पत्रचूताग्रशाखास्थपरपुष्टनिनादिते ॥ गन्तुकामाः प्रवसिताः पन्था भूयो निवर्तिताः ॥ ५ ॥ मञ्जर्यः सहकाराणां यत्र लग्ना शिलीमुखाः ॥ कामनामाङ्किता बाणाः कामस्येव शरीरिणाम् ॥ ६ ॥ कामिन्यः कामिनां कामं यत्र त्यजयतो दृढम् ॥ समीरणेन दाक्षिण्यं सर्वत्र प्रकटीकृतम् ॥ ७ ॥ मृदुप्रवातसंनुन्नप्रसूनयवशालिनी ॥ क्ष्वेडपङ्क्तिः सुरुरुचे वहमानेव निम्नगा ॥ ८ ॥ आलिङ्गितास्तु मधुना समन्ताद्वनराजयः ॥ फुल्लैः पलाशैः प्रकटं रागं बभ्रुस्तदा स्वयम् ॥ ९ ॥ समीरणेन मृदुना पुष्पपत्रार्चिता मही ॥ रात्रौ व्यभ्रस्य नभसः श्रियमूहे सशाद्वला ॥ १० ॥ वञ्चितैर्नवजातानां वत्सानां मृदुभाषिणाम् ॥ गोष्ठेषु शोभा महती यस्मिन्गधर्वसत्तम ॥ ११॥ हम्भारवविराविण्यः स्त्वरमाणपदक्रमाः ॥ यस्मिन्वत्सोत्सुका गावः प्रविशन्ति दिनक्षये ॥१२॥ स्तनं पिबद्भिर्मातॄणां वत्सैरुत्क्षिप्तपुच्छकैः ॥ मुहुर्मुदं परां यत्र मातृली ढैस्तु गोपिनः ॥१३॥ यत्र पुष्पोच्चयं चक्रुः कामिनीपाणिपल्लवाः ॥ पल्लवानां तु सादृश्याद्विज्ञाता नैव कामिभिः ॥१४॥ऋतुकोकिलसंगीतौ द्विरेफध्वनिवल्लकीम् ॥ श्रुत्वैव ननृतुर्यत्र मृदुवातहता लताः ॥१५॥ तस्मिन्व्यतीते तु मधौ नरेन्द्र संतापयामास जगत्समग्रम् ॥ निदाघकालो लवणोपमस्तु संरुद्धमार्गोऽतिबृहत्पलाशः ॥ १६ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शैलूषं प्रति नाडायनवाक्येष्वयोध्यावसन्तवर्णनं नाम चत्वारिंशदुत्तरद्विशततमोऽध्यायः ॥२४०॥ ॥ नाडायन उवाच ॥ वर्तमाने तदा ग्रीष्मे विकसन्मल्लिकाकुले ॥ निवृत्तपान्थसंचारे संतप्तसिकतोत्करे॥१॥प्रफुल्लदाडिमाक्रान्ते ज्वलिताभवनान्तरे॥ चारुचम्पकपुष्पाढ्यवनराजिविराजिते॥२॥पाटलापुष्पसंलीनद्विरेफगणमण्डिते॥ संतप्तमहिषीक्रोडलुठत्पङ्कजभूषणे ॥ ३॥ पार्वतोत्तुङ्गमातङ्गविलोडितजलाशये ॥ स्वादुगावचसलिले नीहारावृतपर्वते ॥ ४ ॥ कर्पूरचन्दनार्द्राङ्ग्यो मृणालवलयाः प्रियाः ॥ रमयन्ति प्रियान्यत्र वनमालाकृतस्रजः ॥५॥ सेव्याश्चन्द्रांशवो यत्र कामिनां कामवर्धनाः ॥ रमणीयप्रदोषाश्च सुतरां यत्र रात्रयः ॥ ६ ॥ रात्र्यन्ते शीतलान्वातान्कुसुमाशयगन्धिनः ॥ समाघ्रायाभिजायन्ते कामिनस्तु रिरंसवः ॥ ७ ॥ रात्रयः शीघ्रगामिन्यो दिवसा

मन्दगामिनः ॥ मिथुनोपगमाद्भानोः संप्रतप्ता भृशं कराः ॥ ८ ॥ विलीनहिमतोयौघफेनपुञ्जसमाकुलाः ॥ अत्यर्थशीताः सरितस्तथा हैमेन
पर्वताः ॥ ९ ॥ तथा बहुलनिर्यासमुरभीकृतचन्दनैः ॥ वर्धयन्ति तथा कामं कामिनीनां तु कामुकाः ॥ १० ॥ रत्यन्तरसमुत्पन्नमायासश्रमजं
जलम् ॥ कर्पूररजसा यत्र नाशयन्ति स्म कामिनः ॥ ११ ॥ यस्मिन्निदाघे सफलाम्रवृक्षे विभूषणाढ्यो नृप वत्सरस्य ॥ दिदृक्षवस्तं रघुवृन्द
मुख्यं तदा प्रयाता मुनयस्त्वयोध्याम् ॥ १२ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शैलूषं प्रति नाडायनवाक्येष्वयोध्या
दर्शने ग्रीष्मवर्णनं नामैकचत्वारिंशदुत्तरद्विशततमोऽध्यायः ॥ २४१ ॥ नाडायन उवाच ॥ ततः सभागतं रामं द्वाःस्थो वचनमब्रवीत् ॥ द्वारि
तिष्ठन्ति मुनयो यमुनातीरवासिनः ॥१॥ भार्गवं तु पुरस्कृत्य च्यवनं दीप्ततेजसम् ॥ महानुभावा वरदास्तपसा दग्धकिल्बिषाः ॥ २ ॥ द्वाःस्थात्तु
वचनं श्रुत्वा तदा रामः पुरोधसा ॥ सहितस्त्वरया द्रष्टुं तापसाँस्तान्विनिर्गतः ॥ ३ ॥ सोऽभिगम्य महातेजा ऋषिसङ्घांस्तपस्विनः ॥ अभि
वाद्य प्रणम्यैतान्पुरस्कृत्य तदा गृहम् ॥ ४ ॥ प्रावेशयत्ततस्तेषां पाद्यार्घ्याचमनादिकम् ॥ आसनं मधुपर्कं च तथा राज्यं न्यवेदयत् ॥ ५ ॥
प्रतिगृह्य तु ते सर्वे राज्यं तस्मै पुनर्ददुः ॥ तद्वच्च तीर्थतोयानि फलानि विविधानि च ॥ ६ ॥ प्रतिगृह्य च रामस्तान्पृष्ट्वा कुशलमव्ययम् ॥
पप्रच्छ तान्महाभागस्ततस्त्वागमनक्रियाम् ॥ ७ ॥ रामस्य वचनं श्रुत्वा च्यवनो वाक्यमब्रवीत् ॥ राक्षसो लवणो नाम राजन्मधुवने वसन् ॥८॥
लोकांस्तापयते सर्वांस्तस्य यत्नं वधे कुरु ॥ दशप्राणिसहस्राणि चाहारस्तस्य नैत्यिकः ॥ ९ ॥ वधार्थं भरतं तस्य शत्रुघ्नं सहलक्ष्मणम् ॥ समा
दिश महाभाग लोकाः सन्तु निरामयाः ॥ १० ॥ तथा मधुवने स्फीते देशं राम निवेशय ॥ नगरीञ्च यथा पुण्यां लोकानां हितकाम्यया ॥११॥
त्वया स भाज्यो रक्ष्याश्च मुनिसंघा महामते ॥ एवमुक्तस्तदा रामश्चिन्तयामास धर्मवित् ॥ १२ ॥ लक्ष्मणेन महत्कर्म कृतं निवसता वने ॥ राज्यं
पालयता कर्म भरतेन महत्कृतम् ॥ १३ ॥ शत्रुघ्नं प्रेरयाम्यद्य लवणस्य वधेप्सया ॥ इत्येवं चिन्तयित्वा तु रामः शत्रुघ्नमब्रवीत् ॥ १४ ॥
मुनींश्चैतान्पुरस्कृत्य गच्छ शत्रुघ्न मा चिरम् ॥ घातयस्व दुराचारं लवणं पापकारिणम् ॥ १५ ॥ घातयित्वा च लवणं जनांस्तत्र निवेशय ॥ नगरी
च तथा तत्र त्वया कार्या मनोरमा ॥ १६ ॥ तस्यां वस महाभाग पालयँस्त्वं वसुन्धराम् ॥ तत्राहमभिषेक्ष्यामि राज्ये त्वामृषिभिः सह ॥ १७ ॥
एतावदुक्त्वा रामस्तद्वाक्यं ऋषिगणान्वितम् ॥ अभिषेकेन दिव्येन योजयामास तं तदा ॥ १८ ॥ उवाच च महातेजा भ्रातरं दीप्ततेजसम् ॥
इमान्यश्वसहस्राणि चत्वारि भवतोऽनघ ॥ १९॥ रथानां द्वे सहस्रे च द्विपोत्तमशतं तथा ॥ अयुतं च पदातीनां सुवर्णस्य च सञ्चयम् ॥ २० ॥

अन्तरापणवीथ्यश्च नानापण्योपशोभिताः ॥ आदाय गच्छ शत्रुघ्न पर्याप्तबलवाहनः ॥ २१ ॥ बलं च सुभृतं वीर तुष्टपुष्टमनुद्धतम् ॥ वशं च सान्त्वदानाभ्यां कुरुष्व रघुनन्दन ॥ २२ ॥ न ह्यर्थास्तत्र तिष्ठन्ति न मित्राणि न बान्धवाः ॥ सुप्रीतो भृत्यवर्गस्तु यत्र तिष्ठति राघव ॥ २३ ॥ स त्वं दुष्टजनाकीर्णां संस्थाप्य महतीं चमूम् ॥ एक एव धनुष्पाणिर्योधयेथा मधोः सुतम् ॥ २४॥ यथा च त्वां न जानाति गच्छ तं युद्धकाङ्क्षिणम् ॥ लवणः स मधोः पुत्रस्तथा निःशङ्को व्रज ॥ २५ ॥ आख्यातो न च तस्यास्ति कश्चिन्मृत्युभयान्वितः ॥ दर्शनं योऽभिगच्छेत हन्यते लवणेन सः ॥ २६ ॥ माहेश्वरेण शूलेन वियुक्तं मृगयागतम् ॥ द्वारमावृत्य लवणं युध्यस्व रघुनन्दन ॥ २७ ॥ माहेश्वरममोघं तु शूलं च परिवर्जितम् ॥ गृहाणेमं शरं वत्स सर्वायुधविनाशनम् ॥ २८ ॥ अनेन लवणं युद्धे घातयिष्यस्यसंशयम् ॥ गच्छ त्वं ग्रीष्मशेषेण लवणस्य जिघांसया ॥ २९ ॥ काले तथा प्रावृषि संप्रवृत्ते विवृद्धतोयासु सरिद्वरासु ॥ मद्दत्तबाणेन निशाचरस्य व्यसुं क्षितौ पातय तस्य देहम् ॥ ३० ॥

इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शैलूषं प्रति नाडायनवाक्येषु लवणवधे शत्रुघ्नं प्रति रामानुशासनं नाम द्विचत्वारिंशदुत्तरद्विशततमोऽध्यायः ॥ २४२ ॥ राम उवाच ॥ संप्राप्य प्रावृषं वत्स भीमतोयदनिःस्वनाम् ॥ निषिद्धपान्थसंचारां विद्युत्क्षुभिततोयदाम् ॥ १ ॥ मेघैस्तोयभरानम्रैः स्थगितार्कनिशाकराम् ॥ प्रवर्षणजलाघातविकासितसरोरुहाम् ॥ २ ॥ यस्यां घनवरत्रासात्पीनोत्कम्पिपयोधराः ॥ कुर्वन्त्या लिङ्गनं कान्ताः कान्तानां मनसः प्रियम्॥३॥भूमिर्नवतृणच्छन्ना शक्रगोपाद्यभूषिता ॥ भीमौघनादविस्तीर्णा फेनवत्यश्च निम्नगाः ॥४॥ सतोयतोयदाक्रांतं स्निग्धनीलं नभस्तलम् ॥ बलाकाः शोभयन्ति स्म शारदं तारका इव ॥ ५ ॥ घना घनागमारूढा धृतवासवकार्मुकाः ॥ तोयौघबाणधाराभिः प्रववर्षुर्महीतलम् ॥ ६ ॥ धाराकदम्बबकुलकुटजार्जुनशोभिताः ॥ पक्वजम्ब्वाम्रशालिन्यो वनराज्यो मनोहराः ॥ ७ ॥ निदाघतापसंतप्ता नवतोयसमुक्षिता ॥ मही विसृजते यस्यां गन्धमाल्यगुणं स्वकम् ॥ ८ ॥ गर्जमानेषु मेघेषु मृदङ्गध्वनिसन्निभम् ॥ अस्यां मयूरा नृत्यंति विकसत्सत्कलापिनः ॥ ९ ॥ समीरणेन मृदुना नुन्नाः खे च पयोधराः ॥ महिष्यश्च विसर्पन्ति पयःपूर्णपयोधराः॥१०॥प्रत्यूषे संचरन्तीनां महिषीणां तदा समम् ॥ घण्टानिनादो मधुरः श्रूयते तृणगह्वरे॥११॥स्थलयः कृष्णसारङ्गनेत्रैरनिमिषैरिव ॥ यस्यां पश्यन्ति शत्रुघ्न जलपूर्णमहीतलम् ॥ १२ ॥ 
मेघपातेन हृद्येन पृषतोत्करशालिना ॥ कामिन्यः कामिनां सार्धं त्याजिता रघुनन्दन ॥ १३ ॥ अपारगम्याः सरितो राजानो गतविग्रहाः ॥ बलाहकगणच्छन्ना द्यौस्तथैव सविग्रहा ॥ १४ ॥ न निर्वृतसुखोद्वाहकाम्याकाम्यक्रिया मही ॥ प्रहृष्टपौरानुगतैः संवत्सरपुरोहितैः ॥ १५ ॥

व्यग्रा: भवन्ति राजनः शक्रयष्टिप्रवेशने ॥ शैलैर्नवतृणच्छन्नैस्तथा नीलाभ्रशेखरैः ॥ १६ ॥ कान्तिमद्भिर्विशेषेण विराजति वसुन्धरा ॥ तां प्रावृषं प्राप्य नदत्पयोदप्रनर्तिताशेषशिखण्डिवृन्दाम् ॥ द्वारं समाश्रित्य मधोस्तनूजं धनुर्धरस्त्वं जहि राजपुत्र ॥१७॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शैलूषं प्रति नाडायनवाक्ये प्रावृड्वर्णनं नाम त्रिचत्वारिंशदुत्तरद्विशततमोऽध्यायः ॥ २४३ ॥ राम उवाच ॥ हत्वा प्रावृषि तं पापं यमुनातीरगोचरः ॥ नय त्वं शारदं कालं यावत्सुप्तो जनार्दनः ॥ १ ॥ रमणीयतरा यत्र नद्यः प्रकटसैकताः ॥ सुस्वादुशीतसलिलास्सारसैरुपशोभिताः ॥ २ ॥ बालार्कसदृशैः पद्मैः पद्मिन्यो यत्र भूषिताः ॥ सरसां विमलं यत्र तोयं मधुरशीतलम् ॥३॥ वरस्त्रीनयनाकारचारुपत्रविभूषणैः ॥ पश्यंतीवोत्पलैर्व्योम उत्पलिन्यः सुनिर्मलम् ॥ ४ ॥ नभःसरसि विस्तीर्णे तारानुगुणचित्रिते ॥ शोभते च निशीथेषु हंसवद्विचरञ्शशी ॥ ५ ॥ आदधानो महच्चापं संदधानश्च दृश्यते ॥ यावत्संपूर इत्येव बाणैर्भूमितलं शरत् ॥६॥ जातीकुसुमहृद्यासु बन्धुजीवोज्ज्वलासु च ॥ मनः प्रसादमायाति हृद्यासु वनराजिषु ॥ ७ ॥ पक्वसस्या वसुमती परां धारयति श्रियम् ॥ कलविङ्काः प्रहृष्टाश्च पक्वकेदारपङ्क्तिषु ॥ ८ ॥ निम्नगाः काशवसनाश्चक्रवाकयुगस्तनाः ॥ सारसारावहासिन्यः सुतरां रतिवर्द्धनाः ॥ ९ ॥ हंसैः संघट्टनोपेतकह्लाररजसोत्करैः ॥ सरांसि दुर्विभाव्यानि कुशलैरपि मानवैः ॥ १० ॥ पाण्डुराभ्रकृतन्यासाः सर्व एव शिलोच्चयाः ॥ श्रियं विडम्बयंतीव तुषाराद्रेः समुज्ज्वलाम् ॥ ११ ॥ शरत्प्रभूतोत्पलचारुपद्मां विपक्वकेदारविभूषितोर्वीम्॥ नीत्वा ततः प्राप्य हिमस्य कालं कार्यस्त्वया पत्तनसन्निवेशः॥१२॥इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शैलूषं प्रति नाडायनवाक्येषु शत्रुघ्नं प्रति रामानुशासने शरद्वर्णनं नाम चतुश्चत्वारिंशदुत्तरद्विशततमोऽध्यायः ॥२४४॥ ॥ राम उवाच ॥ प्रबुद्धे पुण्डरीकाक्षे हेमन्ते वैष्णवे ऋतौ ॥ कार्यः पुरनिवेशस्ते तथा जनपदस्य वा ॥ १॥ पक्वनारङ्गसुभगे नीहारावृतनिम्नगे ॥ प्रलूनधान्यकेदारे गततुन्दशिलीमुखे ॥ २ ॥ कृतसंग्रहणे काले प्रवृत्तनृपविग्रहे ॥ विपङ्कवसुधे रम्ये स्वादुशीतजलाशये ॥ ३ ॥ विशाला यत्र यामिन्यः सुतरां सुरतक्षमाः ॥ भृशं मनोहरा यूनां पीडितालिङ्गनक्षमाः ॥ ४ ॥ यत्र शीतापदेशेन मानिनीभिरपि स्वयम् ॥ क्रियते त्यक्तमानाभिः प्रियकण्ठग्रहोत्सवः ॥ ५ ॥ सुखोष्णोदकगान्धर्वरम्यप्रस्रवणोदके ॥ प्ररूढपवनोद्धूते काले नीलधरातले ॥ ६ ॥ वासोद्गमनसंरुद्धदुर्विभाव्यनदीतटे ॥ सारसारावविज्ञेये काले कामिजनप्रिये ॥ ७ ॥ यत्रेक्षुपीडयन्त्राणां यष्टयः पुरुषचोदिताः ॥ भाग्यानीव मनुष्याणामुन्नमन्ति नमन्ति च ॥ ८ ॥ कृताग्रायणपूजाश्च हुतहव्या द्विजातयः ॥ यत्र प्रवेशहृष्टाश्च तथा यत्र च कर्षकाः ॥ ९ ॥ गृहेषु च सुखोष्णेषु गवां निःश्वास

मारुतैः ॥ स्वाध्यायघोषो विप्राणां नृणां यत्र सुखावहः ॥ १० ॥ सिताभिः पच्यमानाभिः क्रियमाणैस्तथा गुडैः ॥ रम्यः सुशीतलः कालः प्राणि
प्रियहुताशनः ॥ ११ ॥ विचरन्ति नरा यत्र गुरुप्रावरणाम्बराः ॥ कुंकुमेनानुलिप्ताङ्गा धनिनः प्रियदर्शिनः ॥ १२ ॥ अश्वायास
क्षमे काले यत्र यूनां विशेषतः ॥ मृगया दयिता वत्स मन्दरश्मौ दिवाकरे ॥ १३ ॥ रोहिताशनपुष्टानां साधुनारङ्गवासितम् ॥ महिषीणां
तु मथितं गन्धवर्णरसान्वितम् ॥ १४ ॥ इक्षवश्च विदार्यश्च तथैव मूलकानि च ॥ रसवन्ति विशेषेण यत्र पिष्टकृतानि च ॥ १५ ॥
प्रवृत्तमेखलाबन्धविवाहादिक्रिये जने ॥ प्रबुद्धे पुण्डरीकाक्षे प्रवृत्ते यज्ञसंस्तरे ॥ १६ ॥ काले प्रहृष्टाश्वकरीन्द्रमुख्ये कार्या त्वया राघव वास्तुपूजा ॥
आरम्भणीयं नगरस्य कर्म शिवाय सर्वस्य जनस्य वत्स ॥१७॥ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शैलूषं प्रति नाडा
यनवाक्येषु शत्रुघ्नं प्रति रामसमुपदेशे हेमन्तवर्णनं नाम पञ्चचत्वारिंशदुत्तरद्विशततमोऽध्यायः ॥ २४५ ॥ राम उवाच ॥ ततस्तु शैशिरे प्राप्ते काले
तपनवल्लभे ॥ हिमालीपटलच्छन्नदुर्विभाव्यदिशामुखे ॥१॥ सुपक्वमातुलुङ्गाढ्यवनराजिसुगन्धिनि ॥ प्रफुल्लवृत्तकुसुमचारुरागोज्ज्वलत्त्विषि ॥ २ ॥
हिमप्रयातसञ्जातसर्वरत्नतृणोल्बणे॥ अत्यर्थशीतकुसुमे कुङ्कुमागुरुवल्लभे ॥३॥ कामिन्यः कुङ्कुमार्द्राङ्ग्यः पीनोन्नतपयोधराः ॥आलिङ्गनेन कान्तानां
यत्र शीतभयापहाः ॥४॥ पुष्पितैरतसीवाटैर्नीलनीरजनिर्मलैः ॥ पूर्णतोयाशयाशङ्का जायते सुधियामपि ॥५॥ माध्यकुन्दकपुष्पाढ्या वनराज्यो
मनोहराः ॥ सुशीर्णपर्णसरला नमेरुकविभूषणाः ॥६॥ संत्यक्त्वा दक्षिणामाशां व्रजमाने तथोत्तराम् ॥ सूर्ये मुमोच पवनं निःश्वासमिव दक्षिणा॥७॥
रम्याश्च गंधमंजर्यः शोभयन्ति वनस्थलीः ॥ मन्मथस्य शराः कांताः कामिमन्मथवर्धनाः ॥ ८ ॥ हयानां मधुरः शब्दः श्रूयते दशनोद्भवः ॥
शब्दो यवभुजां यत्र स्वामिनां रतिवर्धनः ॥ ९ ॥ निर्मलानां तु सरसां विनिविष्टा जलेचराः ॥ ब्रुवन्तो मधुरं पांथा जनयन्ति परां मुदम्॥१०॥
जनयन्ति परां प्रीतिं कामिनीनां तु कामुकाः ॥ यत्र मेध्यैर्नवैर्वत्स मातुलुङ्गाधिवासितैः ॥ ११ ॥ वापीकूपतडागेषु ह्रदप्रस्रवणेषु च ॥ यत्र काले
रटन्त्यापः कम्पयन्त्यः पुरीं महत् ॥ १२ ॥ तस्मिंस्त्वं शिशिरे काले कृत्वा गृहवरे स्वके ॥ प्रावेशयतु विधिना शिल्पिभिर्यन्त्रनिर्मितैः ॥ १३ ॥
धर्मेण पालयन्क्षोणीं वस राजीवलोचन ॥ हृदि कार्यस्त्वया धर्मो नित्यमेव नरोत्तम ॥ १४ ॥ उत्तिष्ठ शीघ्रं विजयाय गच्छ दीप्तां श्रियं प्राप्नुहि
राजपुत्र ॥ रक्षन्तु देवास्तव सर्वकालं पदं विधत्स्वारिगणस्य मूर्ध्नि ॥ १५ ॥ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शैलूषं

१ 'कथितम्' इति क०। २'हयानामधरा राजन्' इति ख०।

प्रति नाडायनवाक्येषु शत्रुघ्नं प्रति रामानुशासने लवणं प्रति शत्रुघ्नप्रस्थानं नाम षट्चत्वारिंशदुत्तरद्विशततमोऽध्यायः ॥ २४६ ॥ ॥ नाडायन उवाच ॥ ॥ इति रामवचः श्रुत्वा बाढमुक्त्वा स सत्वरः ॥ अभिवाद्य वसिष्ठस्य पादौ रामस्य चाप्यथ ॥ १ ॥ पुरस्कृत्य महाभागान्भार्गव प्रमुखानृषीन् ॥ यथोक्तसैन्यानुगतः प्रययौ भीमविक्रमः ॥ २ ॥ वाल्मीकेराश्रमं प्राप्य तामुवास तदा निशाम् ॥ पूजयित्वा तु वाल्मीकिमृषिणा प्रतिपूजितः ॥ ३ ॥ यस्मिन्नहनि शत्रुघ्नो वाल्मीकेराश्रमं गतः ॥ उभौ प्रसूतौ तनयौ तस्मिन्नेवाह्नि जानकी ॥ ४ ॥ सीताप्रसवसंहृष्टः क्रमेण रघुनन्दनः ॥ निदाघशेषेण नदीमुत्ततार स सूर्यजाम् ॥ ५ ॥ शिबिरं समवस्थाप्य यथावद्यमुनातटे ॥ एक एव धनुष्पाणिः प्रविवेश मधोर्वनम् ॥ ॥ ६ ॥ प्रविश्य च सुधा तत्र लवणस्य निवेशनम् ॥ तस्थौ द्वारमथाश्रित्य वीरो विततकार्मुकः ॥ ७ ॥ एतस्मिन्नेव काले तु मृगान्हत्वा सह स्रशः ॥ बहुना मृगभारेण स ददर्श मधोः सुतम् ॥ ८ ॥ वृत्ताक्षमुत्कटं भीमं दन्तोत्कृत्तोत्तरच्छदम् ॥ दंष्ट्राकरालवदनं दंतिवत्परुषच्छविम् ॥ ९ ॥ स तु दृष्ट्वैव शत्रुघ्नमुवाच परुषं बहु ॥ विप्रधावत दुष्टात्मा शत्रुघ्नवधकाम्यया ॥ १० ॥ त्यक्त्वा मृगसहस्राणि द्रुमविक्षेपतत्परः ॥ द्रुमवृष्टिं सुघोरां तां लवणेन विसर्जिताम् ॥ ११ ॥ चिच्छेद बाणैः सौमित्रिः शतशोऽथ सहस्रशः ॥ छिन्ने द्रुममहावर्षे लवणः शत्रुतापनः ॥ १२ ॥ जघान सुरशत्रुघ्नं शत्रुघ्नं मुष्टिना भृशम् ॥ मुष्टिप्रहारनिश्चेष्टं शत्रुघ्नं लवणस्तदा ॥ १३ ॥ न जग्राह च तच्छूलं मृत्युपाशवशङ्कतः ॥ प्रवेशयामास गृहं मृगसंघाननेकशः ॥ १४ ॥ एतस्मिन्नेव काले तु लब्धसंज्ञः स राघवः ॥ वितत्य कार्मुकं तस्थौ द्वारमावृत्य वेश्मनः ॥ १५ ॥ ततः पादपवर्षेण च्छादयन्तं निशाचरम् ॥ चकार विमुखं बाणैश्छित्त्वाश्छित्त्वा महीरुहान् ॥ १६ ॥ रामदत्तं ततो बाणं सन्धाय वरकार्मुके ॥ निर्बि भेद महातेजा लवणं रघुनन्दनः ॥१७॥ सन्धीयमाने बाणे तु त्रस्तं त्रिभुवनं तदा ॥ आश्वासयामास विभुर्ब्रह्मा कमलसम्भवः ॥१८॥ तेन बाणप्रहा रेण निर्भिन्नहृदयः क्षितौ ॥ व्यसुः पपात मेदिन्यां शैलो वज्राहतो यथा ॥ १९ ॥ तस्मिन्निपतिते भूमौ दैत्ये देवभयङ्करे ॥ त्रैलोक्यं विगतातङ्कं क्षणेन समपद्यत ॥ २० ॥ तं च देशमथाजग्मुः सुराः सब्रह्मकास्तदा ॥ पूजितास्तेन वीरेण शत्रुघ्नं वाक्यमब्रुवन् ॥ २१ ॥ ॥ देवा ऊचुः ॥ वरं वरय शत्रुघ्न यत्ते मनसि कांक्षितम् ॥ अपनीतं त्वयास्माकं भयं शूलवरायुधात् ॥ २२ ॥ त्वया तु निहते तस्मिँल्लवणे पापराक्षसे ॥ पश्य शूलवरं यांतमेनं शार्वं विहायसा ॥ २३ ॥ ॥ शत्रुघ्न उवाच ॥ ॥ अस्मिन्देशे करिष्यामि पुरीं रामाज्ञया त्वहम् ॥ मासे समाप्यतां शीघ्रं वरमेतत्प्रदीयताम् ॥ २४ ॥ ॥ देवा ऊचुः ॥ ॥ निष्पत्तिं यास्यते धीर स्थिरा चैव भविष्यति ॥ पुण्या च रमणीया च मथुरा नामतः

शुभा ॥ २५ ॥ ॥ नाडायन उवाच ॥ ॥ एवमुक्त्वा सुराः सर्वे जग्मुर्नाकमतंद्रिताः ॥ आजगाम स तं देशं सैन्येन च्यवनः सह ॥ २६ ॥
संवर्द्धयित्वा शत्रुघ्नं जगामाश्रममंजसा ॥ सर्वं रामवचश्चक्रे शत्रुघ्नोऽपि महायशाः ॥ २७ ॥ कृत्वा पुरीनिवेशं च गृहप्रावेशनं तथा ॥ उषित्वा
द्वादश समाः सम्प्राप्ते सुरकर्मणि ॥ २८ ॥ जगाम भ्रातरं द्रष्टुं वाल्मीकेराश्रमं पुनः ॥ तत्र शुश्राव धर्मात्मा शुभां रामकथां कृताम् ॥ २९ ॥
वाल्मीकिना प्रहृष्टेन गीयमानां कुशीलवैः ॥ तत्रोष्य रजनीमेकां रामं दृष्ट्वा तथैव च ॥ ३० ॥ तत्रोष्य पञ्चरात्रं च भूयो रामविसर्जितः ॥ मथु
रायां च वसुधां पालयामास धर्मवित् ॥ ३१ ॥ एवंविधः स शत्रुघ्नो भरतोऽप्यधिकस्ततः ॥ मा तेन विग्रहं गच्छ भरतेन महात्मना ॥ अजेया
रघवो येषां सहाया वानरोत्तमाः ॥३२॥ सुग्रीवनीलाङ्गदवायुपुत्रसुषेणमैन्दद्विविदप्रधानाः ॥ महाबलाः पर्वतमात्रकायाः सुरासुरैर्युद्धगता अजेयाः ॥
॥ ३३ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शैलूषं प्रति नाडायनवाक्येषु लवणवधो नाम सप्तचत्वारिंशदुत्तरद्विशततमोऽ
ध्यायः ॥ २४७ ॥ ॥ शैलूष उवाच ॥ ॥ पुलहस्य प्रजासर्गं श्रोतुमिच्छामि तत्त्वतः ॥ यस्य वंशे समुत्पन्ना वानरा बलदर्पिताः ॥ १ ॥
नाडायन उवाच ॥ ॥ मृगा च मृगमंदा च हरिस्ताम्रा तथा इरा ॥ भूता च कपिशा दंष्ट्री सुरसा सरमा तथा ॥२॥ कश्यपो जनयामास क्रोधात्तु दश
कन्यकाः ॥ कश्यपेन च ता दत्ताः पुलहाय महात्मने ॥ ३ ॥ प्रजास्तासां प्रवक्ष्यामि सर्वासां त्वं निबोध मे ॥ मृगायास्तु मृगा जाता हरिणैणाः
शशास्तथा ॥ ४ ॥ रुरवः पृषतश्चैव न्यङ्कवः शशकास्तथा ॥ सृमरा मृगमंदाया गवया महिषास्तथा ॥५॥ चमरोष्ट्रवराहाश्च खड्गा गौरखरास्तथा ॥
हर्याश्च वानरा जाता गोलाङ्गूलाः सकिन्नराः ॥ ६ ॥ मण्डूका नकुलाश्चैव ये चाप्यन्ये बिलेशयाः ॥ पञ्च कन्याश्च ताम्रायाः [1]पत्न्यस्ता
वरुणस्य च ॥ ७ ॥ प्रादाद्धर्मभृतां श्रेष्ठः पुलहस्तपसां निधिः ॥ श्येनी भासी तथा क्रौञ्ची धृतराष्ट्री शुकी तथा ॥ ८ ॥ श्येनी तु जनयामास
पुत्रं संपातिनं तथा ॥ जटायुषं च राजानं गृध्राणां बलदर्पितम् ॥ ९ ॥ संपाती जनयामास श्येनगृध्रवटांस्तथा ॥ भासीपुत्राः स्मृता भाणाः
क्रौञ्चाः क्रौञ्चीसुताः स्मृताः ॥ १० ॥ धृतराष्ट्रीसुता हंसा धार्त्तराष्ट्रास्तथैव च ॥ चक्रवाकमुखाश्चान्ये तथा ये जलचारिणः ॥ ११ ॥ शुकीपुत्राः
शुका ज्ञेयाः पक्षिणश्चापि कीर्तिताः ॥ कश्यपस्य तु या पत्नी इरा नाम प्रकीर्तिता ॥ १२ ॥ कुञ्जरं जनयामास सुरकार्योद्यतं सदा ॥ भूतापुत्रा
स्तथा भूता महादेवमनुव्रताः ॥ १३ ॥ उपवीरोलूखलिका आस्यकर्णा कुषण्डिका ॥ पांसवः पाणिपात्राश्च चैतन्यानि पुनस्तथा ॥ १४ ॥

१ 'शम्बरास्तथा' इति ख० । २ 'तपनीयोल्खलिका आप्यकर्णा' इति ख० ।

सूचीमुखाः शोषणिकाः कुलान्येतानि षोडश ॥ कुलेष्वेतेषु जायन्ते नानाकारविचेष्टिताः ॥ १५ ॥ निष्कुटेषु प्रतोलीषु चत्वरेषु गुहासु च ॥ तेषां प्रादात्तदा स्थानमन्तर्धानं प्रतापिताः ॥ १६ ॥ अणिमा लघिमा प्राप्तिर्यत्र कामावसायिता ॥ दंष्ट्रीपुत्रास्तथा लोके दंष्ट्रिणो ये प्रकीर्तिताः ॥ १७ ॥ सरमायास्तथा सर्पाः कीटजात्यश्च सर्वशः ॥ श्यामश्च धवलश्चैव सारमेयौ तथा शुनौ ॥ १८ ॥ यमस्यानुचरौ तौ च महाबलपराक्रमौ ॥ इति क्रोधादुहितॄणां प्रजातिः कीर्तिता मया ॥ १९ ॥ कश्यपस्य तु या पत्नी सुरभिर्नाम विश्रुता ॥ कनीयसं तु शूद्राणां तस्यासीद्दुहितृद्वयम् ॥ २० ॥ रोहिणी चैव भद्रं ते गन्धर्वी च महीपते ॥ पुलहायैव ते दत्ते कश्यपेन महात्मना ॥ २१ ॥ सुरूपा हेमरूपा च सर्वकामदुघा तथा ॥ रोहिण्यां जनयामास पुलहः स महातपाः ॥ २२ ॥ ब्रह्मचर्यव्रतास्तास्तु धेनवो दश कीर्तिताः ॥ मानसी तु प्रजा तासां यथासंख्येन मे शृणु ॥ २३ ॥ गावश्चैव महिष्यश्च अजाश्चैवावयस्तथा ॥ गन्धर्वी जनयामास तुरगान्वातरंहसः ॥ २४ ॥ गरुडी च मयूरी च द्वे तु कन्ये मनोरमे ॥ पुलहेन तु ते दत्ते गरुडाय महात्मने ॥ २५ ॥ गरुडी जनयामास सुपर्णान्भीमविक्रमान् ॥ मयूरी जनयामास मयूराद्यान्विहङ्गमान् ॥ २६ ॥ गरुडान्वयसम्भूताः सर्वे पन्नगभोजिनः ॥ पक्षिणस्तु त्वया ज्ञेयाः सुपर्णान्गरुडाञ्छृणु ॥ २७ ॥ सुवर्णचूडो नागश्च दारुणश्चूडतुण्डकः ॥ अनिलश्चानलश्चैव विशालाक्षोऽथ कुण्डली ॥ २८ ॥ कर्कशो ध्वजविष्कम्भी विनतो वामनस्तथा ॥ वातवेगो दिशाचक्षुर्निमिषोऽनिमिषस्तथा ॥ २९ ॥ त्रिवारः सप्तवारश्च वाल्मीकिर्विपुकिस्तथा ॥ दैत्यद्वीपः सरिद्वीपः सारसः पद्मकेतनः ॥ ३० ॥ सुमुखश्चित्रकेतुश्च चित्रबर्हस्तथानघ ॥ मेघः सत्कुमुदो दक्षः सर्वभुक्सामभोजनः ॥ ३१ ॥ गुरुभारः कपोतश्च पूर्वनेत्रश्चिरातकः ॥ विष्णुगन्धाः कुमारश्च परिबर्हो हरस्तथा ॥ ३२ ॥ अश्वाम्बरो मधुपर्कश्च हेमवर्णस्तथैव च ॥ मलयो मातरिश्वा च निशाकरदिवाकरौ ॥ ३३ ॥ एते प्रदेशमात्रेण मयोक्ता गरुडात्मजाः ॥ कुलमेतत्सुपर्णानां धन्यानां नृपसत्तम ॥ ३४ ॥ सर्व एते श्रिया युक्ताः सर्वे श्रीवत्सलक्षणाः ॥ कुलमेतद्धि शैलूष श्लाघ्यं विष्णुपरिग्रहम् ॥ ३५ ॥ दैवतं विष्णुरेतेषां विष्णुरेव परायणम् ॥ हृदि येषां सदा विष्णुर्विष्णुर्येषां परा गतिः ॥ ॥ ३६ ॥ एतत्तवोक्तं पुलहस्य वंशं पुत्रैः सुताभिश्च समन्वितं यत् ॥ वंशे तु सर्वोत्तमवीर्ययुक्ता जाता खगेन्द्रा हरयश्च वीराः ॥ ३७ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शैलूषं प्रति नाडायनवाक्येषु पुलहवंशानुकीर्तनं नामाष्टचत्वारिंशदुत्तरद्विशततमोऽध्यायः ॥ २४८ ॥ ॥ वज्र उवाच ॥ कथाप्रसङ्गैर्बहुभिर्भवता मम कीर्तितम् ॥ सम्भवं सर्वभूतानां सर्वकल्मषनाशनम् ॥ १ ॥

तेषां विकारेष्वाचक्ष्व राजानो मम भार्गव ॥ पालयन्ति. द्विजश्रेष्ठ सकलं ये जगत्त्रयम् ॥ २ ॥ मार्कण्डेय उवाच ॥ एवं प्रजासु सृष्टासु स्वयमेव पितामहः ॥ निकायेषुनिकायेषु सोऽभ्यषिंचत पार्थिवान् ॥ ३ ॥ औषधीनां द्विजातीनां नक्षत्राणां तथैव च ॥ यज्ञानां तपसां चैव सोमं राज्येऽभिषेचयत्॥४॥ प्रजापतीनां सर्वेषां दक्षं प्राचेतसं यथा ॥ वलीमुखानां श्वेतानामृक्षाणां धूम्र एव च॥५॥मनः सर्वेन्द्रियाणां च सुरस्त्रीणां च मन्मथम् ॥ प्रह्लादं सर्वदैत्यानां पितॄणां च तथा यमम्॥६॥ अपां तु वरुणं राज्ये तथैव जलवासिनाम् ॥ यक्षाणां राक्षसानां च पार्थिवानां धनस्य च॥७॥ पुत्रं विश्रवसो ज्येष्ठं कुबेरं नरवाहनम्॥विप्रचित्तिं च राजानं दानवानां महाबलम्॥८॥सर्वभूतपिशाचानां गिरीशं शूलपाणिनम्॥ शैलानां हिमवन्तं च निम्नगानां च लावणम् ॥९॥ भारतं सर्ववर्षाणां द्वीपानामथ मध्यमम् ॥ स्वादूदकं समुद्राणामश्वत्थं सर्वशाखिनाम् ॥ १० ॥ कर्मणां व्यवसायं च मेरुं सर्वशिलाभृताम् ॥ गन्धर्वाणां चित्ररथं गरुडं च पतत्रिणाम् ॥ ११ ॥ उच्चैःश्रवसमश्वानां गोवृषं च तथा गवाम् ॥ सुवर्णं सर्वरत्नानां सौषधीनां तथा यवम् ॥ १२ ॥ सत्यलोकं च लोकानां पातालानां रसातलम् ॥ शास्त्राणां च यजुर्वेदं सर्वेषामविशेषतः ॥ १३ ॥ गायत्रीं सर्वमन्त्राणां छन्दसां च यदुत्तम ॥ मृगाणामथ शार्दूलं पन्नगानाञ्च तक्षकम् ॥ १४ ॥ ऐरावतं गजेन्द्राणां धर्मं सर्वसुखस्य च ॥ वासुकिं सर्वनागानामृषीणां च तथा भृगुम् ॥ १५ ॥ विद्याधराणां सर्वेषां तथा देवीं सरस्वतीम् ॥ उत्पातानां तथा राहुं ग्रहाणां च दिवाकरम् ॥ १६ ॥ कालस्यावयवश्चैव कालं संवत्सरं तथा ॥ व्याधीनां च ज्वरं राज्ये नृणामर्कनिशाकरौ ॥ १७ ॥ अभिषिक्तो नरेन्द्रेन्द्र ब्रह्मणा स्वयमेव हि ॥ भारतेऽस्मिन्पुरा वर्षे प्राप्ते वैवस्वतेन्तरे ॥ १८ ॥ तस्माद्यापि च तयोरंशजाताश्च पार्थिवाः ॥ ततोऽभिषिक्तो देवानां राज्ये देवः शतक्रतुः ॥ संभूय राजभिः सर्वैस्त्रैलोक्यपतिरूर्जितः॥ १९॥ वज्र उवाच ॥ राज्येऽभिषिक्तः स कथं महात्मा सम्भूय सर्वैस्त्रिदशारिहर्त्ता ॥ एतन्ममाचक्ष्व भृगुप्रधान भक्तिर्ममेयं त्रिदशेन्द्रशत्रौ॥२०॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मा० सं० शैलूषं प्रति नाडायनवाक्ये प्रतिसमूहे राजकीर्तनं नामैकोनपञ्चाशदुत्तरद्विशततमोऽध्यायः ॥ २४९ ॥ ॥ मार्कण्डेय उवाच ॥ सुमेरौ पर्वतश्रेष्ठे नानारत्नोज्ज्वलत्विषि ॥ प्रजापतिरथादाय राजसंवान्प्रकीर्तितान् ॥ १ ॥ अभ्यषिञ्चत देवानां राज्ये कश्यपनन्दनम् ॥ तेजस्विनमथादित्यं जज्ञे निर्धूतकल्मषम् ॥ २ ॥ तस्याभिषेके प्रददौ विश्वकर्मा मनोहरम् ॥ रत्नोज्ज्वलं भद्रपीठं कामरूपधरं शुभम्॥३॥ अत्रैवमुपदिश्याथ स्वयं ब्रह्मा जगद्गुरुः ॥ अभ्यषिञ्चत देवानामाधिपत्ये शतक्रतुम् ॥४॥ ब्रह्मा विष्णुश्च शम्भुश्च साध्याश्च समरुद्गणाः ॥ आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः॥ ५ ॥ भृगवोऽङ्गिरसः साध्या अश्विनौ च भिषग्वरौ ॥

ऋषयश्च महाभागास्त्रैकाल्यामलदर्शिनः॥६॥ यानि तोयान्युपादाय समुद्रः सरितस्तथा ॥ सरांसि च सतीर्थानि गन्धर्वाप्सरसस्तथा ॥७॥ तस्ये
न्दुमण्डलाकारं छत्रं जग्राह केशवः ॥ श्वेतौ च वालव्यजनौ तथा चन्द्रदिवाकरौ ॥ ८ ॥ भृङ्गारं यादसां भर्ता दण्डं दण्डधरः प्रभुः ॥ मेनका
चैव रंभा च तालवृन्तौ मनोहरौ ॥ ९ ॥ विधिवच्च जुहावाग्निं देवाचार्यो बृहस्पतिः ॥ ततस्तस्य ददौ प्रीत्या वाहनार्थं मदोत्कटम् ॥ १० ॥
ऐरावणं चतुर्दन्तं नागं च पुलहः स्वयम् ॥ पुलहः स्वसुतं प्रादाच्छ्वेतं तुरगमेव च ॥ ११ ॥ तुरगाणां सहस्रं च हरीणां वातरंहसाम् ॥
श्रिया दत्तं ततः प्रीत्या रथवाहनमुत्तमम् ॥ १२ ॥ तमग्निर्योजयामास काञ्चनेन रथेन च ॥ इन्द्रायुधसवर्णाभिः पताकाभिरनन्तरम् ॥ १३ ॥
वायुस्तं योजयामास ध्वजं नागेन शङ्करः ॥ बबन्ध मुकुटं तस्य स्वयं ब्रह्मा जगद्गुरुः ॥ १४ ॥ उपानहौ ददौ तस्य विरूपाक्षस्तथानघ ॥
खड्गश्च विमलोदत्तस्तस्य शुक्रेण यादव ॥ १५ ॥ चन्दनानि च मुख्यानि गन्धानि विविधानि च ॥ हिमालयः स्वयं तस्य प्रादाल्लोकगुरु
र्गुरुः ॥ १६ ॥ रत्नानि सुविचित्राणि समुद्रः स्वयमेव हि ॥ ददुश्च ऋतवस्तस्य पुष्पाणि च फलानि च ॥ १७ ॥ ननृतुर्देवगन्धर्वा जगुश्चाप्स
रसां गणाः ॥ हृष्टं प्रमुदितं चासीत्त्रैलोक्यं सचराचरम् ॥ १८ ॥ सर्वगन्धानुपादाय सुरभिर्मारुतो ववौ ॥ महता स वरौघेन तर्पयित्वा
बृहस्पतिम् ॥ १९ ॥ वरौघैस्तर्पयामास सर्वानेव द्विजोत्तमान् ॥ सप्ताहं मानसीं सिद्धिं प्रादात्सर्वेषु जन्तुषु ॥ २० ॥ व्याधिमृत्युजराशोकविनि
वृत्ता जगत्त्रयी ॥ सप्ताहं नरकस्थानां नैव सर्वाश्च यातनाः ॥ २१ ॥ सर्वं मुदितमेवासीत्त्रैलोक्यं सचराचरम् ॥ किरीटी स्वनुलिप्ताङ्गः
कुण्डलोत्तमभूषितः ॥ २२ ॥ कौशेयवसनस्तत्र श्वेतमाल्यविभूषणः ॥ श्रियं दधार सोमस्य श्वेतस्थस्य शतक्रतुः ॥ २३ ॥ भद्रासनगतं शक्रं
प्रणेमुः सर्वदेवताः ॥ ख्याप्यमानो महाराज तदा देवेन दण्डिना ॥ २४ ॥ ऋषयस्तुष्टुवुस्तं च गन्धर्वाप्सरसस्तथा ॥ मङ्गलालंभनं चक्रे ततः
शक्रः सुरारिहा ॥ २५ ॥ पूर्णकुम्भं सुमनसो रत्नान्याज्यं तथा दधि ॥ फलानि श्रीफलं चैव उद्धृतानि वसुंधरा ॥ २६ ॥ स्वस्तिकान्रुचिरांश्चैव
नन्द्यावर्तांश्च काञ्चनम् ॥ कांचनोल्लिखिताश्चैव याश्च मुख्याः सरिद्वराः ॥ २७ ॥ उदग्दानं तथा दूर्वां दर्पणं चाज्यमेव च ॥ धर्मः सत्यं च
शूलं च बलं च यदुनन्दन ॥ २८ ॥ उपासन्त महाभागं सशरीराः शतक्रतुम् ॥ कांतिर्लक्ष्मीर्धृतिः श्रद्धा पुष्टिर्मेधा क्रिया मतिः ॥ २९ ॥
बुद्धिर्लज्जा वपुः शान्तिरनसूया तथैव च ॥ उपासन्त तदा देवं सर्वराजेश्वरं विभुम् ॥ ३० ॥ ततो ववन्दे पितरं मातरं शङ्करं हरिम् ॥
ब्रह्माणं वरदं सौम्यमृषींश्च यदुनन्दन ॥ ३१ ॥ ततो रथेन शुक्रेण स तु मातलियंत्रिणा ॥ विनाशयामास रणे देवतानामरातयः ॥ ३२ ॥

पालयामास सकलं तथैव च जगत्त्रयम् ॥ शक्राभिषेकमेतत्ते कथितं यदुनन्दन ॥ ३३ ॥ श्रोतव्यमभिषेकं तु यात्राकालेषु चाप्यथ ॥ गृहप्रवेशे वैवाह्ये पुण्याहेषु परेषु च ॥ ३४ ॥ एतत्पवित्रं मङ्गल्यं धन्यं श्रुतिसुखावहम् ॥ पाप्मालक्ष्मीप्रशमनं दुःस्वप्नकिल्बिषापहम् ॥ ३५ ॥ पुण्याहकालेषु नरेन्द्रचन्द्र श्रुत्वाभिषेकं बलसूदनस्य ॥ धर्मार्थकामान्पुरुषा लभन्ते व्याधिप्रणाशं च यशस्तथाग्र्यम् ॥ ३६ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शक्राभिषेको नाम पञ्चाशदुत्तरद्विशततमोऽध्यायः ॥ २५० ॥ ॥ छ ॥ वज्र उवाच ॥ पुलहस्य प्रजासर्गं श्रुत्वा गन्धर्वराट् तदा ॥ पप्रच्छ किं तदा भूयस्तत्र नाडायनं द्विजम् ॥ १ ॥ श्रोत्रामृतं कथयतो नन्दस्यापि तवानघ ॥ त्वं हि ज्ञाननिधिर्विप्रैः प्रोच्यसे वेदपारगैः ॥२॥ मार्कण्डेय उवाच ॥ पुलहस्य प्रजासर्गं श्रुत्वा गन्धर्वसत्तमः ॥ भूयः पप्रच्छ तं विप्रं गजोत्पत्तिं सविस्तराम् ॥३॥ शैलूष उवाच ॥ कुञ्जराणां समुत्पत्तिं श्रोतुमिच्छामि विस्तरात् ॥ कुञ्जरा हि महाभाग भृशं च दयिता मम ॥४॥ नाडायन उवाच ॥ यदा प्रसूता मार्त्तण्डमदितिर्भास्करारणिः ॥ ५ ॥ तदा तदण्डमुत्पाद्य दृष्टवान्कश्यपः स्वयम् ॥ तेजोऽधिकत्वादंडस्थं नापश्यत यदा शिशुम् ॥ ॥ ६॥ उवाच देव्या अण्डेऽस्मिन्किमसौ बालको मृतः ॥ ततः स भासः सकलं तेजसाभासयज्जगत् ॥७॥ तेन मार्त्ताण्डताथास्य कथिता द्विजसत्तमैः ॥ ततस्त्वण्डकपाले द्वे गृहीत्वा तु प्रजापतिः॥८॥पृथक्पृथगवस्थाप्य रथन्तरमगायत ॥ मन्दः प्रवेशयामास इरायास्तौ प्रजेप्सया ॥ ९ ॥ उदरे पुलहान्तेन जनयामास सा गजान् ॥ अष्टौ महाबलान्नागांस्तेषां नामानि मे शृणु ॥ १० ॥ ऐरावणस्तथा पद्मः पुष्पदन्तश्च वामनः ॥ सप्रतीकोऽञ्जनो नीलः कुमुदश्च मतङ्गजः ॥ ११ ॥ शक्राद्यानां दिगीशानां यथासंख्येन वाहनाः ॥ चत्वारो जातयस्तेषामेकैकस्यान्वये स्मृताः ॥ १२ ॥ भद्रा मन्दा मृगा चैव संकीर्णा च जनाधिप ॥ भद्रा श्रेष्ठा भवेत्तासां मन्दा मध्या कनीयसी ॥ १३ ॥ मृगा ज्ञेया च बाहुल्यात्संकीर्णा पार्थिवोत्तम ॥ भद्रमन्दमृगाणां च तथा वक्ष्यामि लक्षणम् ॥ १४ ॥ संकीर्णानां च संकीर्णं लक्षणं भविता तथा ॥ गूढोष्ठमस्तकः[1] स्वक्षः पृथ्वायतमुखाङ्गुलिः ॥१५॥उदग्रश्चोग्रसत्त्वश्च समसाध्यो महाकरी ॥ ताम्रताल्वीक्षणः स्निग्धः सहिष्णुः स्वासनस्तथा ॥१६॥ अन्वर्थवेदी बलवान्भद्रो ज्ञेयो मतङ्गजः ॥ गम्भीरवेदी निःशङ्कस्तीक्ष्णसाध्यो महोदरः ॥ १७ ॥ दीर्घमेढ्राङ्गुलिश्चैव सुविभक्तशिरोधरः ॥ स्थिरः कचबलस्थूलो दीर्घबालधिपुष्करः ॥ १८ ॥ हर्यक्षः सूक्ष्मनाभिश्च मन्दो ज्ञेयो मतङ्गजः ॥ ह्रस्वः शुष्कावटुहनुर्भीरुर्बह्वाशनस्तथा ॥ १९ ॥ ह्रस्वोत्तनखी दुर्मेधा



१ 'व्यूढोष्ठमस्तकः' इति ख० ।

यूथस्यानुचरस्तथा ॥ दीर्घजिह्वविषाणश्च दीर्घकक्षासनस्तथा ॥ २० ॥ क्लेशाक्षमश्च दीर्घाशी मृगो ज्ञेयो मतङ्गजः ॥ संकीर्णलक्षणो नागः संकीर्णश्च निगद्यते ॥ २१ ॥ अतः परं प्रवक्ष्यामि गजानां ते वनाष्टकम् ॥ हिमवत्प्रयागलौहित्यगङ्गामध्ये महद्वनम् ॥ २२ ॥ प्राच्यामै रावणस्योक्तं वनं यत्र मतङ्गजाः ॥ किञ्चित्कमलवर्णाभाश्चपलाः पृथुमस्तकाः ॥ २३ ॥ कुनखा रूपवन्तश्च तथा मन्दमदा गजाः ॥ उन्मत्तगङ्गा त्रिपुरी दशार्णं मेकलास्तथा ॥२४॥ तेषां मध्ये करूषाख्यं वनं पद्मस्य कीर्तितम् ॥ ह्रस्वाश्चण्डास्तथा श्यामाः शीघ्रोदग्रमहास्वनाः॥२५॥ सूक्ष्म बिन्दुचितास्तत्र भवन्त्यत्यर्थवेदिनः॥बिल्वशैलं वेत्रवती दशार्णं च महागिरिम्॥२६॥तेषां दशार्णकं मध्ये पुष्पदन्तस्य काननम् ॥ सवृत्तजघनश्या माः सूक्ष्मबिन्दुविचित्रिताः॥२७॥स्थूलहस्तशिरोग्रीवास्तत्र जाता मतङ्गजाः॥ पारियात्रकवैदेश्यनर्मदाब्रह्मवर्धनम् ॥२८॥ वामनस्य वनं मध्ये तेषां वै मार्गरेयकम्॥सुप्रमाणाश्च मध्याक्षाः शीघ्रगाश्च सुविग्रहाः॥२९॥करेणुनामधेयाश्च तत्रोक्ताश्च सुगन्धिनः॥विन्ध्यसह्योत्कलानां च दक्षिणस्यार्णवस्य च॥३०॥वनं च मध्ये कालेशं सुप्रतीकस्य कीर्त्तितम् ॥ चापवंशावृतनखाः पीनह्रस्वशिरोधराः ॥ ३१ ॥ तनुत्वगुत्तरा दीर्घाः पद्माभास्तत्र दन्तिनः॥ सेवादेशः समुद्रश्च प्रेमहारं च नर्मदा ॥३२॥ तेषां मध्येऽञ्जनाख्यस्य वनं खल्वपरान्तकम् ॥ पीनायतविषाणास्या महाकाया बलाधिकाः ॥ ॥३३॥रक्तताल्वोष्ठजिह्वाश्च जायन्ते तत्र दन्तिनः ॥ कुशस्थली महीपाल अवन्त्यर्बुदनर्मदाः॥३४॥तेषां मध्ये तु सौराष्ट्रं वनं नीलस्य कीर्त्तितम्॥ तस्य वंशे तु जायन्ते चण्डाश्चैवाल्पदेहकाः ॥ ३५ ॥ सूक्ष्मरूक्षत्वचो व्यालास्तथा शिक्षात्यजा गजाः ॥ हिमवत्कालिकासिन्धकुरुजाङ्गलमेव च॥ ॥ ३६ ॥ तेषां पञ्चनदं मध्ये कुमुदस्य महद्वनम् ॥ स्फुटिताग्रद्विजास्तत्र जायन्ते मलविद्विषः ॥ ३७ ॥ दानशीलाश्च भूताश्च दुर्विधेयाश्च वारणाः ॥३८॥ एतत्तवोक्तं तु मतङ्गजानां कुलाष्टकं चैव वनाष्टकं च ॥ अतः परं किं कथयामि तुभ्यं तन्मे वदस्वायतलोहिताक्ष ॥ ३९ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शैलूषं प्रति नाडायनवाक्येषु गजोत्पत्तिर्नामैकपञ्चाशदुत्तरद्विशततमोऽध्यायः ॥ २५१ ॥ शैलूष उवाच ॥ ॥ विस्तरेण समाचक्ष्व वानराणां तु संभवम् ॥ अलंकृत इवाभाति यैर्वंशः पुलहस्य च ॥ १ ॥ नाडायन उवाच ॥ काश्यपेयी हरिर्नाम या भार्या पुलहस्य च ॥ पुलहाज्जनयामास श्वेतं नाम वलीमुखम् ॥ २ ॥ श्वेतस्तदोर्ध्वदृष्टिं च जनयामास वानरम् ॥ ऊर्ध्वदृष्टिस्तथा व्याघ्रं व्याघ्रश्च शरभं तथा॥३॥ शरभश्च तथार्क्षं च सिंहमृक्षश्च वानरम् ॥ ऋक्षी च जनयामास ऋक्षांश्चैव जनाधिप॥४॥ वानरांश्च महाकायाञ्शतशोऽथ सहस्रशः ॥ येषामन्वयसम्भूता देवपुत्रा महाबलाः ॥५॥ उत्पन्ना रामसाहाय्ये रावणस्य वधैषिणः ॥ ऋक्षस्य भगिनी ऋक्षी प्रजा

पतिसुतावुभौ ॥ ६ ॥ धूम्रं च जाम्बवन्तं च जनयामास ऋक्षजौ ॥ जाम्बवाञ्जनयामास मार्जारं भीमविक्रमम् ॥ ७ ॥ मार्जारस्य च मार्जाराः कुले जाता महाबलाः ॥ ऋक्षस्य वानरेन्द्रस्य दुहितां मानसीं स्वयम् ॥ ८ ॥ ददौ प्रजापतिः श्रीमान्रूपयौवनसंयुताम् ॥ कामयामास तां शक्र स्ततो वालिरजायत ॥ ९ ॥ तामेव कामयामास भास्करः स्वयमेव तु ॥ सुग्रीवं जनयामास भास्करात्सा सुमध्यमा ॥ १० ॥ तत्र वानरराजोऽभूद्वालिर्विक्रान्तपौरुषः ॥ यस्तु रामेण निहतः सुग्रीवस्त्वभिषेचितः ॥ ११ ॥ तस्यासन्वशगाः सर्वे वानरा देवयोनयः ॥ वालिपुत्रोऽङ्गदो नाम हनुमान्वायुनन्दनः ॥ १२ ॥ नीलो वह्निसुतः श्रीमान्विश्वकर्मसुतो नलः ॥ धर्मपुत्रः सुषेणश्च ऋषभो गरुडात्मजः ॥ १३ ॥ द्वावश्विनसुतौ वीरौ मैन्दो द्विविद एव च ॥ धूम्रश्च जाम्बवांश्चैव वेगदर्शी च वानरः ॥ १४ ॥ मृत्योः पुत्रा महावीर्या मृत्युतुल्यपराक्रमाः ॥ गजो गवाक्षो गवयः शरभो गन्धमादनः ॥ १५ ॥ यमस्य तनयाः पञ्च गोलांगूला महाबलाः ॥ श्वेतो ज्योतिर्मुखश्चान्यो भास्करस्यात्मजावुभौ ॥ १६ ॥ वरुणस्यावरः पुत्रो हेमकूटः प्रतापवान् ॥ देवपुत्रास्तथैवान्ये ऋक्षगोपुच्छवानराः ॥ १७ ॥ शतसाहस्रयूथानां राजानो भीमविक्रमाः ॥ हिमवन्मेरुनिलयाः श्वेतनीलनिवासिनः ॥ १८ ॥ शृङ्गवन्माल्यवद्विन्ध्यऋक्षवन्तनिवासिनः ॥ ये वसन्ति सदा सह्ये ऋषभे गन्धमादने ॥ १९ ॥ सागरानूपपर्यन्ते तथा द्वीपेषु सप्तसु ॥ ब्रह्मण्या बलवन्त शूरा धर्मपरायणाः ॥ २० ॥ नीतिशास्त्रेषु कुशलाः सर्वशास्त्रविशारदाः ॥ सुनीताः सत्त्ववन्तश्च दृप्ता नीतिग्रहे रताः ॥ २१ ॥ सखायो रामभद्रस्य रावणस्य वधैषिणः ॥ हस्तिवानरसंग्रामे पुरा रुधिरकर्दमे ॥ २२ ॥ गिरिकूटनिभा नागा विजिता यैः सहस्रशः ॥ सहाया रामभद्रस्य ते वीरा भरतस्य च ॥ मा गच्छ संयुगं तस्माद्भरतेन महात्मना ॥ २३ ॥ सर्वास्त्रविज्ञानविशारदेन संग्रामशौण्डेन जितेन्द्रियेण ॥ धर्माच्च रामस्य परायणेन शक्राधिकेन त्वतिपौरुषेण ॥ २४ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शैलूषं प्रति नाडायनवाक्येषु वानरोत्पत्तिर्नाम द्विपञ्चाशदुत्तरद्विशततमोऽध्यायः ॥ २५२ ॥ ॥ शैलूष उवाच ॥ किंनिमित्तमभूद्वैरं वानराणां तु कुञ्जरैः ॥ कीदृशं चाभवद्युद्धं तन्ममाचक्ष्व पृच्छतः ॥ १ ॥ नाडायन उवाच ॥ वनाध्यक्षं करीन्द्राणां यन्मयोक्तं पुरा तव ॥ तदुक्तं भारताद्वर्षाद्भागस्य नवमस्य च ॥ २ ॥ द्वीपेषु राजन्सर्वेषु वर्षेषु च पृथक्पृथक् ॥ वनेषु निवसन्त्येते करीन्द्रा वानरास्तथा ॥ ३ ॥ रक्षन्ति वानरास्तत्र काननेषु च शाखिनः ॥ पातयन्ति द्रुमान्नागा लीलयैव जनाधिप ॥ ४ ॥ द्रुमेषु पात्यमानेषु कुञ्जराणां तरस्विनाम् ॥ वानराः कदनं चक्रुः क्रोधाविष्टाः पुनः

पुनः ॥ ५ ॥ हन्यमानेषु नागेषु करीन्द्राश्च वलीमुखान् ॥ पातयन्ति महाराज शतशोऽथ सहस्रशः ॥ ६ ॥ एवं प्रवृद्धे वैरे तु वानरैः कुञ्जरै
स्तथा ॥ राज्ञे निवेदितं गत्वा ऋक्षैरावणयोस्तदा ॥७॥ ततस्तौ पार्थिवौ क्रुद्धौ चक्रतुर्यत्नमुत्तमम् ॥ वानरास्तु महाकाया वीराः परमरंहसः ॥८॥
ऋक्षाश्चैव सगोपुच्छाः किष्किन्धां पुनरागताः ॥ ऐरावणाज्ञां ये नागाः सपक्षाः पर्वतोत्तमाः ॥ ९ ॥ प्राच्यां वनमथाजग्मुः सर्वतः पृथिवीपते ॥
बलार्णवावुभौ क्षुब्धौ क्रोधाविष्टौ परस्परम् ॥ १० ॥ अन्तर्वेदीं तदा तौ तु जग्मतुर्बलदर्पितौ ॥ ततः प्रावर्तत रणं घोररूपं भयानकम् ॥ ११ ॥
भूमौ चैवान्तरिक्षे च नागानां सह वानरैः ॥ द्रुमप्रहाराभिहताः कुञ्जरा वानरोत्तमैः ॥ १२ ॥ पतन्तो गगनाद्भूमिं चालयन्ति मुहुर्मुहुः ॥ खुरेषु
वानरं गृह्य द्वौ नागौ गगने तथा ॥ १३ ॥ पातयन्ति महाराज भिन्दन्ति दशनैस्तथा ॥ ममन्थुरपरे पादैर्देहेनाताडयँस्तथा ॥ १४ ॥
वृक्षान्करैरथोन्मूल्य चुक्षुभुर्येन वानराः ॥ ऐरावणेन निहताः कोटिशस्तत्र वानराः ॥ १५ ॥ पद्मेन सुप्रतीकेन वामनेनाञ्जनेन च ॥ कुमुदेन च
नीलेन पुष्पदन्तेन चाप्यथ ॥ १६ ॥ तेषामन्वयसम्भूतैस्तथैवान्यैश्च कुञ्जरैः ॥ भद्रेण चाथ मन्देन मृगेण च महीपते ॥ १७॥ भद्रमन्देन
मिश्रेण सार्वभौमेन वेधसा ॥ राज्ञा सुमनसा राजँस्तथैव च सुवर्चसा ॥ १८ ॥ बलाहकेन मत्तेन भीमेनेन्दीवरेण च ॥ हेमकूटेन कूटेन शंखेन
निषधेन च ॥ १९ ॥ श्वेतेन राजन्नक्तेन काञ्चनेनाङ्ग सुप्रज ॥ विरूपाक्षेण चोग्रेण षड्दन्तेनासितेन च ॥ २० ॥ चतुर्दन्तेन यक्षेण रक्षसा भीममा
लिना ॥ ऋक्षेण वानरेन्द्रेण कोटिशः कुञ्जरा हताः ॥ २१ ॥ शरभेण गवाक्षेण तथा कनकबिन्दुना॥ऋक्षराजेन धूम्रेण तथा जाम्बाता नृप ॥२२ ॥
सुषेणदधिवक्त्राभ्यां तथा केसरिणा रणे ॥ रणचण्डेन वीरेण वानरेन्द्रेण जानुना ॥ २३ ॥ तथा शतबलिर्यैश्च तेनापि कदनं कृतम् ॥ पनसेन
विशालेन गजेन गवयेन च ॥२४॥ हेमकूटेन विभुना भानुरोम्णा निशाभृता ॥ गन्धमादननाम्ना च विजयेन जयेन च ॥२५॥ कुमुदेनाथ पद्मेन
कनकाक्षेण शम्भुना ॥ इत्येवं दृश्यमानेषु वानरेषु गजेषु च ॥२६॥ चचाल मेदिनी राजँस्तस्मिन्काले मुहुर्मुहुः ॥ खस्थैर्भूस्थैश्च विक्रान्तैर्वानरैः
कुञ्जरैस्तथा ॥ २७ ॥ हतैश्च हन्यमानैश्च घोरमायोधनं बभौ ॥ शरीरैर्यत्र संरुद्धाः स्रवन्तो रुधिरापगाः ॥ २८ ॥ वानराणां गजानां च महा
शैलोपमैर्नृप ॥ तस्मिंस्तथाविधे युद्धे गजवानरसंक्षये ॥ २९ ॥ आजगामाथ तं देशं स्वयं देवः शतक्रतुः ॥ अभ्येत्य वारयामास वानराँश्चैव
कुञ्जरान् ॥ ३० ॥ ततश्च वानराः सर्वे शक्रगौरवयन्त्रिताः ॥ संन्यवर्त्तन्त संग्रामात्प्रह्वाः प्राञ्जलयः स्थिताः ॥ ३१ ॥ त्यक्तयुद्धान्रणे जघ्नु
र्वानरान्कुञ्जरास्तथा ॥ क्रुद्धस्तेषां महेन्द्रस्तु वज्रेण शतपर्वणा ॥ ३२ ॥ पक्षाँश्चिच्छेद नागानां निहता यैर्वलीमुखाः ॥ छिन्नपक्षाँस्तदा नागा

न्वाहनार्थं महीतले ॥ ३३ ॥ प्रददौ लोमपादाय तदाङ्गेशाय पार्थिव ॥ लोमपादोऽपि नृपतिस्तदा तेषां चिकित्सितम् ॥ ३४ ॥ शिक्षां स्वस्त्ययनं चैव चक्रे सूत्रनिबन्धनम् ॥ ततः प्रभृति लोकेऽस्मिन्वाहनत्वं गता गजाः ॥ ३५ ॥ गुर्विणीभिर्वनस्थाभिः करिणीभिर्जनेश्वर ॥ वने विवर्धिता वंशाः कुञ्जराणां पुनःपुनः ॥ ३६ ॥ वनेष्वपि तदा जाता विपक्षाः कुञ्जरोत्तमाः ॥ छिन्नपक्षेषु जातेषु प्रभावेण शतक्रतोः ॥ ३७ ॥ वानराश्च जयं लब्ध्वा प्रणिपत्य पुरन्दरम् ॥ स्थानानि जग्मुः स्वान्येव राज्ञा ऋक्षेण पूजिताः ॥ ३८ ॥ एवंविधैरभूत्तेषां वानराणां तु कुञ्जरैः ॥ युद्धमासीन्महाघोरं विजिता यत्र कुञ्जराः ॥ ३९ ॥ वानराश्च महाभागा वानरेन्द्रप्रमर्दनाः ॥ दैवयोगेन विजिते भरतेऽपि यदृच्छया ॥ क्षिप्रमेवोद्धरिष्यन्ति त्वां समेत्य सबान्धवम् ॥ ४० ॥ तस्मान्न युद्धं मम रोचते ते रघूद्वहेनाप्रतिमेन राजन् ॥ नयात्मना च प्रतिपूरुषेण धर्माभिरामेण जनप्रियेण ॥ ४१ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शैलूषं प्रति नाडायनवाक्ये गजवानरयुद्धवर्णनं नाम त्रिपञ्चाशदुत्तरद्विशततमोऽध्यायः ॥ २५३ ॥ शैलूष उवाच ॥ श्रुतमेतन्मया सर्वं यत्त्वयोक्तं पुनःपुनः ॥ प्रणिपातमहं कर्तुं न शक्तो भरताय तु ॥१॥ उद्यच्छेदेव न नमेदुद्यमश्चैव पौरुषम् ॥ अद्य सर्वनिरुद्योगं न नमे चेह कस्यचित् ॥ २ ॥ अतिक्लेशेन येऽर्थाः स्युर्धर्मस्यातिक्रमेण च ॥ अरेर्वा प्रणिपातेन मास्म तेषु मनः कृथाः ॥ ३ ॥ आज्ञाफलं यदा राज्यं प्रणिपत्य तदा परम् ॥ किं नो राज्येन कर्त्तव्यं सामान्यजनधर्मिणा ॥ ४ ॥ प्रणिपत्य नरः शत्रुं मानी शौण्डीर्यवर्जितः ॥ कथं शक्नोत्यवस्थातुं भार्यादृग्विषयेष्वपि ॥ ५ ॥ अरेर्वा प्रणिपातस्य संग्रामे मरणस्य च ॥ यदन्तरं तद्भवति ब्रह्महत्याश्वमेधयोः ॥६॥ मार्कण्डेय उवाच ॥ शैलूषवचनं श्रुत्वा तदा नाडायनो द्विजः ॥ जगाम स्वगृहायैव हतं मत्वा जनेश्वरम् ॥७॥ नाडायने तदा याते राजा गन्धर्वसत्तमान् ॥ समाहूयाब्रवीत्कांश्चित्कांश्चित्तत्र कृताञ्जलीन् ॥ अवज्ञाय नरः शत्रुं क्षिप्रमेव विनश्यति ॥ ८ ॥ तस्मात्कार्यमवज्ञानं न कदाचिदरातिषु ॥ केचिदयोध्यां गच्छन्तु गन्धर्वा बलदर्पिताः ॥ ९ ॥ आनयन्तु स्त्रियः शीघ्रं तत्र गत्वा च मायया ॥ ये मुख्याः सैनिकास्तस्य भरतस्य समन्त्विषः ॥१०॥ सैनिकानां स्त्रियस्तेषां कृत्वा प्रमुखतो रणम् ॥ एवं विमनसां तेषां कर्तास्मि कदनं महत् ॥ ११ ॥ घातयिष्यामि भरतं हतसैन्यमनन्तरम् ॥ शिबिरं चापरे यान्तु भरतस्य सुविद्विषः ॥ १२ ॥ निघ्नन्तु योधान्संसुप्ता- ॥१६९॥
न्रात्रौ तस्य सहस्रशः ॥ हतसैन्यं हनिष्यामि ततोऽहं भरतं रणे ॥ १३ ॥ राज्ञो गृहं तथैवान्ये प्रविशन्तु महाबलाः ॥ निघ्नन्तु तत्र संसुप्तान्सैनिकाँस्तु युधाजितः ॥ १४ ॥ हतसैन्यं हनिष्यामि भरतं सयुधाजितम् ॥ अदृश्यैर्मायया गत्वा गन्धर्वैर्बलदर्पितैः ॥ १५॥ यथोक्तमेतत्कर्तव्यं वचनं

मम सत्वरैः ॥ एवमुक्तास्तु गन्धर्वाः प्रणिपत्य महीपतिम्॥१६॥ राजाज्ञां शिरसाऽऽगृह्य जग्मुस्त्वरितविक्रमाः॥दिनशेषेण संप्राप्य यथोद्दिष्टं महीक्षिता ॥ १७ ॥ व्यचेष्टन्निशि राजेन्द्र यथाज्ञप्तं चिकीर्षवः ॥ विसर्जयित्वा गन्धर्वाञ्शैलूषोऽप्यथ सत्वरः॥१८॥आज्ञापयत सैन्यानि श्वो युद्धमिति पार्थिव ॥ जगाम चास्तं सविता कमलानि विशीलयन् ॥ छादिते तमसा लोके प्रवृत्ता यामिनी तथा ॥१९॥ गन्धर्वराजोऽपि तदा विजह्रे स्त्रीभिः सहान्तःपुरमेत्य साकम् ॥ गन्धर्वपुत्राश्च तथा विजह्रुः श्वो युद्धमित्येव विवृद्धदर्पाः ॥ २० ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे गन्धर्वप्रेषणं नाम चतुष्पञ्चाशदुत्तरद्विशततमोऽध्यायः ॥ २५४ ॥ ॥ छ ॥ मार्कण्डेय उवाच ॥ आज्ञप्ता ये त्वयोध्यायां गन्धर्वास्तेन भूभुजा ॥ अयोध्यां ते समासेदुर्निशीथे लघुविक्रमाः ॥ १ ॥ मायाच्छन्नशरीराश्च विचेरुस्ते महीपते ॥ अयोध्याय महाराज पराश्च ददृशुः श्रियम् ॥ २ ॥ शशाङ्ककरशुभ्राणि बहुभौमानि यादव ॥ ददृशुर्गृहमुख्यानि शतशोऽथ सहस्रशः ॥ ३ ॥ सर्वरत्नोपपन्नानि शयनासनवन्ति च ॥ सुवर्णदामचित्राणि मुक्ताजालचितानि च ॥ ४ ॥ प्रज्वलद्भिर्महादीपैर्दीपितानि समन्ततः ॥ बहुमाल्यानि मुख्यानि दीपोद्धारेण पार्थिव ॥ ५ ॥ प्रविष्टा गृहमुख्येषु ददृशुस्तेषु मानवान् ॥ चन्दनागुरुदिग्धाङ्गान्सर्वाभरणभूषितान् ॥ ६ ॥ क्रीडमानान्सह स्त्रीभिर्दिवि देवगणानिव ॥ भरतानुगतानाञ्च सैनिकानां गृहेषु च ॥ ७ ॥ स्त्रीणां भर्तृविहीनानां ददृशुर्बलचेष्टितम् ॥ काचिन्न लेभे शयने निद्रां सुभ्रान्तलोचना ॥ ८ ॥ आकुलं शयनं चक्रे काचिद्भूयो विवर्त्तनैः ॥ मृणालशयने काचित्कदलीपर्णसंस्तरे ॥ ९ ॥ चन्दनं चन्द्रपादेषु मृणालवलयेषु च ॥ कामाग्निनाशाशक्तेषु काचिच्चक्रे तथा रुषम् ॥ १० ॥ अश्रुधारा निपतिताः कामाग्निपरीदीपिते ॥ अम्बरीषे यथा नाशं कस्याश्चिद्याति वक्षसि ॥ ११ ॥ काचिन्मुमोह शयने वर्णयन्ती सखीजने ॥ लब्धनिद्रा तदा दैवात्कान्तसम्भोगजं सुखम् ॥ १२ ॥ तालवृन्तानिलैः शीतैर्वीज्यमाना सखीजनैः ॥ दह्यताभ्यधिकं काचित्स्वनिःश्वासविनिस्सृतैः ॥ १३ ॥ स्वप्नेऽपि कान्तसंयोगकारिण्यां हि सखी मम ॥ दैवान्मयि हता निद्रा सापि काचिदभाषत ॥ १४ ॥ केयूरस्थानसंप्राप्ता वराङ्गदविभूषणा ॥ कामक्षामवपुः काचिज्जगाम सखि शोच्यताम् ॥ १५ ॥ दत्तध्यानतया कान्ते शोच्यमाना सखीजनैः ॥ अविज्ञानात्तथा काचिन्नाभाषत सखीजनम् ॥ १६॥ चित्रभित्तिगतं कान्तं काचिच्चानिमिषेक्षणा॥ बभूव चित्रन्यस्तेव पश्यन्ती विगतक्रिया ॥ १७ ॥ इति गन्धर्वमुख्यानां पश्यतां रजनीमुखे ॥ नासीत्स्त्रीहरणे शक्तिः प्रभावाद्राघवस्य च॥१८॥ हितेच्छुरासां स यदा निविष्टो देवेश्वरश्चक्रधरो नृरूपी ॥ ततः प्रभावो न बभूव तेषां हर्तुं स्त्रियश्चारुशशाङ्कवक्त्राः ॥ १९ ॥ ॥ इति श्रीविष्णुध

र्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे विरहिणीवर्णनं नाम पञ्चपञ्चाशदुत्तरद्विशततमोऽध्यायः ॥ २५५ ॥ ॥ छ ॥ ॥ मार्कण्डेय उवाच ॥
गन्धर्वाः कटकं केचिद्विविशुर्भरतस्य तु ॥ पुरस्कृत्य नृपस्याज्ञां सैनिकानां वधेप्सवः ॥ १ ॥ मायाच्छन्नशरीरास्ते ददृशुर्निशि चेष्टितम् ॥ प्रातः
समरकामानां कान्तोत्कण्ठितचेतसाम् ॥ २ ॥ मनोरथरथारूढः कश्चित्प्राणेश्वरीं व्रजन् ॥ न लेभे शयने निद्रां कल्ये रणसमुत्सुकः ॥ ३ ॥
कश्चिच्चन्द्रकरस्पर्शाद्विशेषपरिपीडितः ॥ ददर्श चन्द्रं दिव्याक्षिप्रियावदननिर्जितम् ॥ ४ ॥ कश्चिच्च चिन्तयन्नेवं प्रियां प्राणधनेश्वरीम् ॥ उत्तान
शयनं चक्रे तारकागणकं दिवि ॥ ५ ॥ पश्यन्नानिष्कृतं दिश्यं पत्रच्छेदं विसर्जितम् ॥ प्रियया स्वकृतं कश्चिन्मुदा नयति शर्वरीम् ॥ ६ ॥ निर्वेद
मतिरस्येण दह्यते चन्द्ररश्मिभिः ॥ कश्चिद्विहीनस्तन्वङ्ग्या शयनीयेऽपि खिद्यते ॥ ७ ॥ स्वप्नोपलब्धतन्वङ्गिसमागममनोरथः ॥ सुप्तोऽनुमितो
गन्धर्वैः कश्चिद्रोमाञ्चसम्भवात् ॥ ८ ॥ प्रियां संप्रेषितां प्रेष्य समालापपरायणः ॥ न वेद कश्चिद्राजेन्द्र गतामपि विभावरीम् ॥ ९ ॥ ज्वलन्तम
निशं कश्चिच्छरीरे विरहानलम् ॥ सहसा शमयामास ध्यायँश्चन्द्रमुखीं प्रियाम् ॥ १० ॥ श्यामां विकञ्चुकां तन्वीं यूनां प्राणापहारिणीम् ॥
प्रियां च खड्गयष्टिं च कश्चित्स्मरति सूत्सुकः ॥ ११ ॥ सगुणां तनुमध्यां च नवकाञ्चनभूषणाम् ॥ सस्मार दयितां कश्चिच्चापयष्टिं तथैव च ॥१२॥
विचिन्तानपि गन्धर्वा भरतस्य च सैनिकान् ॥ न शेकुराधर्षयितुं भरतस्य समाश्रयात् ॥ १३ ॥ अन्येऽपि ये देववरस्य विष्णोः स्मरंति
नित्यं यदुनाथपादौ ॥ गन्धर्वयक्षासुरराक्षसेभ्यो भयं न तेषां भवतीह किञ्चित् ॥ १४ ॥ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्र
संवादे विरहिवर्णनं नाम षट्पञ्चाशदुत्तरद्विशततमोऽध्यायः ॥ २५६ ॥ ॥ छ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ अथ राजगृहाख्यं तु नगरं
ये विसर्जिताः ॥ गंधर्वा ददृशुस्तत्र पुरश्रियमनुत्तमाम् ॥ १ ॥ चन्द्रसापत्न्यभूतानि गृहमुख्यानि सर्वशः ॥ ददृशुर्बहुरत्नानि बहुधान्यधनानि
च ॥ २ ॥ पुरोद्यानानि रम्याणि ददृशुश्च समन्ततः ॥ अलंकृतानि वापीभिर्द्रुमखण्डैश्च यादव ॥ ३ ॥ उद्यानेषु विचित्रेषु नरमुख्यानुगामिनाम् ॥
पश्यन्ति तत्र सद्मानि गंधर्वाः पानपायिनाम् ॥ ४ ॥ वल्लकीनां निनादेन गीतेन मधुरेण च ॥ एकतामिव संयातं चारुषट्पदशिञ्जितम् ॥ ५ ॥
वेश्याश्चैवोपनृत्यन्ति क्वचित्तत्र च कामुकान् ॥ क्वचित्साभरणाः सुप्ताः कान्तैः सह मदोत्कटाः ॥ ६ ॥ सुप्तानां नरनारीणां गन्धर्वास्तत्र चेष्टि
तम् ॥ ददृशुर्बहुदाराणां मायाच्छादितविग्रहाः ॥ ७ ॥ गायन्त्यन्ये रुदन्त्यन्ये हसन्त्यन्ये तथैव च ॥ आश्लिष्यन्ति तथैवान्ये मदमत्ताः पर

१ 'मत्तानाम्' इति ख० ।

स्परम् ॥ ८ ॥ भाषन्ते केचिदव्यक्तं विह्वलार्ताः पदेपदे ॥ शयने भ्रममाणैश्च क्वचिदस्थितदृष्टयः ॥ ९ ॥ कामिनीस्कन्धविन्यस्तबाहवश्च तथा परे ॥ कलहं चक्रिरे चान्ये स्तुवन्त्यन्ये निरर्थकम् ॥ १० ॥ स्खलमानपदा यान्ति स्थानं ह्यनवस्थितम् ॥ आह्वयन्ति गणान्केचित्प्रणमन्ति तथा परे ॥ ११ ॥ एवं सन्तजनाकीर्णे नगरे गीतनादिते ॥ ददृशुर्गृहमुख्येषु नरनारीविचेष्टितम् ॥ १२ ॥ सञ्चोद्यमाना दूतीभिस्त्वराकृतमृजाः स्त्रियः ॥ यान्ति कान्तासु सम्भ्रान्ता मदपानसमुत्सुकाः[1] ॥ १३ ॥ पपुः काश्चित्प्रियैः सार्धं पानं मदसमीरणम् ॥ पाययन्त्यपराः कान्तान्भोजयन्त्यपराः प्रियान् ॥ १४ ॥ प्रासादेषु विचित्रेषु तथा वातायनेषु च ॥ रतिश्रान्तास्तथा सुप्ताः काश्चित्कान्तैः सह स्त्रियः ॥ १५ ॥ काचिद्गौरी प्रियं श्याममालिङ्ग्य शयने स्थिता ॥ उत्पलस्रगिवाभाति युक्ता जातिस्रजा सह ॥१६॥ गौरीगौरसमाश्लिष्टा काचिदाभाति सुन्दरी॥ आलिङ्गिता चन्द्रकरैश्चन्द्रकान्तशिला यथा ॥ १७ ॥ श्यामा श्यामसमाश्लिष्टा काचिदाभाति पार्थिव ॥ पयोदपङ्क्तिर्गगने यथा पार्थिव सोदका ॥ १८ ॥ अलीकसुतमप्रौढा काचिच्चुम्बयते प्रियम् ॥ प्रियेण गाढमाश्लिष्टा विलक्षमुदिताभवत् ॥ १९ ॥ काचिच्च वनिता प्रौढा कर्पूररजसा स्वयम् ॥ अवाकिरति कान्ताङ्गं रतिस्वेदपरिप्लुतम् ॥ २० ॥ पश्येमां तारकां चन्द्रोह्यङ्केनालिङ्ग्य तिष्ठति ॥ इत्याह दयितं काचित्प्रौढा रतिसुखार्थिनी ॥ २१ ॥ काचिदूरुपरामर्शाद्विदित्वा सुरतार्थिनी ॥ कान्तेनालिङ्गिता गाढं मुदितेन रिरंसुना ॥ २२ ॥ कान्तेन काचिद्दष्टौष्ठी चुम्बनायार्पिते मुखे ॥ न यास्ये तव विश्वासं भूयश्चेदन्यथाकृथाः ॥ २३ ॥ काचित्प्रसुप्ता कान्तेन परामृष्टा रतार्थिनी ॥ कान्तमालिङ्ग्तात्यर्थं त्यक्तनिद्रा ससम्भ्रमा ॥ २४ ॥ इत्येवमपि विश्वस्तान्सैनिकाँस्तान्युधाजितः ॥ हतुं न शेकुर्गन्धर्वा भरतस्य समाश्रयात् ॥ २५ ॥ एषां पुरे सन्निहितः स विष्णुर्महानुभावो रघुवंशगोप्ता ॥ तेषां पुरे नास्ति भयं नरेन्द्र गन्धर्वयक्षासुरपन्नगेभ्यः ॥ २६ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे निशोपभोगवर्णनो नाम सप्तपञ्चाशदुत्तरद्विशततमोऽध्यायः ॥ २५७ ॥ ॥ मार्कण्डेय उवाच ॥ अयोध्यातस्तदाभ्येत्य गन्धर्वाः शिबिरात्तथा ॥ तथा राजगृहात्सर्वे शैलूषाय न्यवेदयन् ॥ १ ॥ न विग्रहकथा तत्र न रक्षा काचिदीदृशी ॥ केवलं तु प्रभावेण रामस्य भरतस्य च ॥ २ ॥ नास्माभिः किं कृतं राजन्प्रहर्तुं क्वचिदित्यपि ॥ यत्तत्र शेषं कर्त्तव्यं तत्करोतु महीपतिः॥३॥ एवमुक्तः स गन्धर्वैर्यामिनीविगमे तदा ॥ योगयोगमतिक्षिप्रमाज्ञापयत सत्वरः ॥४॥ भेरी सान्नाहिकी

१ 'मदालापसमुत्सुकाः' इति ख० ।

चैव ततः शीघ्रमहन्यत ॥ यस्याः शब्देन गन्धर्वा राजद्वारमुपागताः ॥ ५ ॥ गजवारेण महता तुरगाणां बलेन च ॥ रथैश्च मेघसन्नादैः पत्तिभिश्च मदोत्कटैः ॥ ६ ॥ क्ष्वेडितास्फोटितरवैः शङ्खभेरीनिनादितैः ॥ ह्रादेन गजघण्टानां गजानां चैव बृंहितैः ॥ ७ ॥ ह्रेषितैस्तुरगाणां तु बभूव तुमलं महत् ॥ शैलूषोऽपि तदा स्नात्वा हुत्वाग्निं द्विजपूजनम् ॥ ८ ॥ कृत्वा विनिर्ययौ श्रीमान्वरचन्दनभूषितः ॥ मौली वपुष्मान्सन्नद्धः स्रग्वी रुचिरभूषणः ॥ ९ ॥ आमपात्रप्रतीकाशैस्तुरगैर्योजितं रथम् ॥ आरुरोह महातेजा विमानं सुकृती यथा ॥ १० ॥ यथोक्तस्य रथस्यासीत्पुरो रणविशारदः ॥ नरकेतुरिति ख्यातस्त्रिषु लोकेषु विश्रुतः ॥ ११ ॥ केतौ तस्य रथे भाति वसन्तो मूर्तिमान्कृतः ॥ ततः स सह सैन्येन निर्ययौ नगराद्बहिः ॥ १२ ॥ व्यूहं च सर्वतोभद्रं समाधाय बलं तथा ॥ कृत्वा प्रत्यैक्षत तदा भरतागमनं रुषा ॥ १३ ॥ सैन्येन महता राजन्भास्करस्योदयं प्रति॥१४॥ आत्तायुधाः क्ष्वेडितशङ्खनादैरानन्दयन्तः सुहृदां मनांसि ॥ गन्धर्वमुख्या रणचण्डवेगाः प्रतीक्षमाणा भरतस्य तस्थुः ॥ १५ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे गन्धर्वसैन्यवर्णनं नामाष्टपञ्चाशदुत्तरद्विशततमोऽध्यायः ॥ २५८ ॥ मार्कण्डेय उवाच ॥ विबुद्धा यामिनीशेषे सर्व एव महीक्षितः ॥ निर्ययुर्नगराकारै रथैः संग्रामलालसाः ॥१॥ बलेन चतुरङ्गेण नानावादित्रवादिना ॥ बन्दिभिः स्तूयमानाश्च वन्द्यमानाश्च सैनिकैः ॥ २ ॥ पृथक्पृथक्सुसन्नद्धा नगरद्वारमागताः ॥ कृत्वा चावश्यकं सर्वं भरतोऽपि महायशाः ॥ ३ ॥ रथेन काञ्चनाङ्गेन निर्ययौ नगराद्बहिः ॥ यन्ता रथस्य तस्यासीद्युधाजिन्मातुलः स्वयम् ॥ ४ ॥ विरराज ध्वजं तस्य कोविदारमहाद्रुमम् ॥ स तेन रथमुख्येन बहिर्निर्गम्य पार्थिवः ॥ ५ ॥ समेत्य पार्थिवैः सर्वैः पूजयित्वा च तान्नृपान् ॥ वज्रं कृत्वा महाव्यूहं प्रययौ लघुविक्रमः ॥ ६ ॥ प्रयाणे तस्य सैन्यस्य कम्पन्तीव वसुन्धरा ॥ शब्देन महता तस्य दीर्यते च नभस्तलम् ॥ ७ ॥ बभूव रजसैवान्यः निशाकालः सुदारुणः ॥ नृपाभरणमाणिक्यतेजसा भुवि राजिता ॥ ८ ॥ रजोन्धकारेऽपि चमूः सा प्रयाति यथासुखम् ॥ स गत्वा दूरमध्वानं सूर्यस्योदयनं प्रति॥ ९ ॥ आससाद महत्सैन्यं गन्धर्वाणां दुरत्ययम् ॥१०॥ तौ सैन्यतोयौघमहादुरन्तौ संहारनागाविव तुल्यरूपौ ॥ बलार्णवौ गाढमथ प्रहारं प्रचक्रतुर्मन्युवशानुयातौ ॥ ११ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे भरतसैन्यनिर्याणं नामैकोनषष्ट्युत्तरद्विशततमोऽध्यायः ॥२५९॥ मार्कण्डेय उवाच ॥ ततः प्रववृते युद्धं तुमुलं लोमहर्षणम् ॥ शूराणां हर्षजननं भीतानां भयवर्धनम् ॥१॥ सेनाविनिर्गमे तत्र रजसाच्छादितं जगत्॥ न प्रज्ञायत राजेन्द्र किञ्चिदेव समन्ततः ॥ २ ॥ कूजतां धनुषां शब्दः श्रूयते तुमुलो महान् ॥ शङ्खभेरीनिनादश्च कुञ्जराणां च बृंहितम् ॥३॥ हयानां

द्वेषमाणानां शूराणां चैव गर्जताम् ॥ शस्त्राणां पात्यमानानां योधानां कवचेष्वपि ॥४॥ तिष्ठतिष्ठ न मे जीवन्गन्तासि रणमूर्धनि ॥५॥ स्थितोऽस्मि प्रहरस्वेति किं न जानाति मां भवान् ॥६ ॥ प्रहरस्व तथा छिन्धि भिन्धि घातय मा चिरम् ॥ एवमादीनि वाक्यानि श्रूयन्ते रणमूर्धनि ॥ ७ ॥ तथा तुमुलसंग्रामे वर्तमाने सुदारुणे ॥ प्रशशाम रजो भौममुत्थितं रणशोणितैः ॥ ८ ॥ पूर्वोत्थितेन रजसा मेघेनेव नभस्तलम् ॥ व्याप्तं तद्विरजस्केन तदा राजन्रणाङ्गणे ॥९॥ ततो युयुधिरे वीराः पश्यमानाः परस्परम् ॥ गोत्रापदाननामानि कीर्तयन्तः पुनःपुनः ॥ १० ॥ सेनानां भज्यमानानां सैन्यखण्डैर्बलीयसाम् ॥ भूयश्चावर्तमानानां शुश्रुवे तुमुलः स्वनः ॥११॥ चित्राणां च ध्वजानां च पताकानां च भूभुजः ॥ अदृश्यत समासिक्तं रुधिरं रणमूर्धनि ॥ १२ ॥ स्वभ्रे तदा महाराज रजोमेघे क्षयं गते ॥ निर्मलासु ततो दिक्षु प्रावर्तत महारणम् ॥ १३ ॥ तथा प्रवृत्ते संग्रामे देवगन्धर्वदानवैः ॥ सिद्धैर्विद्याधरैश्चैव मुनिसंघैः समन्ततः ॥१४॥ आवृतं सहसा व्योम वज्रयुद्धकुतूहलैः ॥ व्यदृश्यन्त विमानानि तेषां खे विमलान्यपि ॥ १५ ॥ किङ्किणीशतघुष्टानि पताकाशोभितानि च ॥ शुभं गन्धमथादाय सुरभिर्मारुतो ववौ ॥ १६ ॥ पपात पुष्पवर्षं च योधानां तत्र मूर्धनि ॥ तथा प्रवृत्ते तुमुले क्ष्वेडितोत्कृष्टनादिते ॥ १७ ॥ पदातयस्तदा जघ्नुः पदातीनि च संयुगे ॥ खड्गधारानिकृत्तानां पदातीनां पदातिभिः ॥ १८ ॥ द्विधा कृतानि गात्राणि निपतन्ति महीतले ॥ गृहीत्वा खड्गपातानि रेजुः केचिच्च वर्मिणः ॥ १९ ॥ खड्गमुद्धरतां तेषां चिच्छिदुर्नृप विग्रहान् ॥ केचिद्गदाविनिर्भिन्नमस्तका गदिभिः क्षितौ ॥ २० ॥ पतितास्तत्र दृश्यन्ते रणे शतसहस्रशः ॥ भग्नासिशेषनिक्षेपनिहतारातयस्तथा ॥ २१ ॥ सिंहनादरवांश्चक्रुः परसैन्यविदारणात् ॥ केशेष्वन्योन्यमाकृष्य खड्गैः केचित्परस्परम् ॥ २२ ॥ आसेदुर्वसुधां कृत्वा गतप्राणास्तथा परे ॥ पृष्ठविन्यस्तवर्माणः सन्नद्धांस्तुरगांस्तथा ॥ २३ ॥ कृत्वा विपादान्समरे निजघ्नुः सादिनां गणम् ॥ आरुह्य वर्मिणः केचिद्वेगाच्छत्रुरथान्रणे ॥ २४ ॥ सारथीन्विगतप्राणाँश्चक्रुर्युद्धविशारदाः ॥ चिच्छिदुर्वारणेन्द्राणां करान्केचित्पदातिनः ॥ २५ ॥ केचिद्दशनविन्यस्तपादाश्चारुरुहुर्गजान् ॥ सादिनश्च तथा केचिद्विशिरस्कान्रणाजिरे ॥ २६ ॥ चक्रुः पदातिनो ध्माताः खड्गैराकाशसन्निभैः ॥ केचिच्च सादिनः प्रासैः पञ्च सप्त तथा शरान् ॥ २७ ॥ श्रेणीकृतान्वै बिभिदुः शिक्षया रणकोविदाः ॥ केचिच्छार्ङ्गधनुर्न्यस्तबाणजालाकुलीकृतान् ॥ २८ ॥ पदातीन्समरे चक्रुर्वायुवेगैस्तुरङ्गमैः ॥ सादिनश्च तथैवान्ये सादिभिः सह संगताः ॥ ॥ २९ ॥ दर्शयन्तो रणे भिक्षां चक्रुर्युद्धमनेकधा ॥ केचित्पाशाग्रनिर्भिन्नहतसारथिनायकाः ॥ ३० ॥ विनेदुरुच्चैः सहसा सिंहनादरवान्ब

नान् ॥ कुञ्जरैराकुलीकृत्य हययानविशारदाः ॥ ३१ ॥ विपुच्छहस्तान्समरे चक्रुः सादिगणात्रणे ॥ निहतं च शरव्रातैः पादातं बहुधा रणे॥३२॥
रथिभिर्भाति भूपाल कमलोत्करसन्निभम् ॥ तुरगास्तुरगारोहा रथिभिर्विनिपातिताः ॥ ३३ ॥ आवव्रुर्वसुधां तत्र शतशोऽथ सहस्रशः ॥ रथिनां
रथिभिः सार्धं युद्धमासीत्सुदारुणम् ॥३४॥ बाणतोमरपातैश्च गदाकम्पनमुद्गरैः ॥ रथिनां च महद्युद्धमासीत्कुञ्जरधूर्गतैः ॥३५॥ प्रासबाणमहापात
दुर्निरीक्ष्यं समन्ततः ॥ निहतं बहु पादातं कुञ्जरैस्तत्र दृश्यते॥३६॥ रणे नृपतिशार्दूल विनिकीर्णं सहस्रधा ॥ सादिनां सतुरङ्गाणां सुमहत्कदनं
कृतम् ॥ ३७ ॥ महामात्रप्रमुदितैः कुञ्जरैर्बलदर्पितैः ॥ आक्रम्य रथवृन्दानि चूर्णितानि तुरङ्गमैः॥३८॥व्यदृश्यन्त महाराज विप्रकीर्णानि भूतले॥
एवं मध्याह्नसमये तीक्ष्णं तपति भास्करे ॥ ३९ ॥ बभूवाकुलसंग्रामं घोरं रुधिरकर्दमम् ॥ रथाश्वकुञ्जरैः सार्धं पत्तयश्च समागताः ॥ ४० ॥
कुञ्जराश्च महाकाया पत्त्यश्वरथिनस्तथा ॥ पत्तिभिश्च पदातीनां सादिनां सह सादिभिः ॥ ४१ ॥ रथिनां रथिभिर्युद्धं कुञ्जराणां च कुञ्जरैः ॥
बभूव राजँस्तुमुले संग्रामे शोणितोदके ॥ ४२ ॥ शूराणां रणलुब्धानाममर्षाक्रान्तचेतसाम् ॥ पत्तिना निहतः सादी गजेन निहतो नरः ॥ ४३ ॥
रथिना निहतो नागः क्वचिदासीदघातितः ॥ हताः पदातिभिश्चान्ये व्यदृश्यन्त रणाजिरे ॥ ४४ ॥ पदातिरथनागाश्च सादिभिर्विनिपातिताः ॥
रथनागहया युद्धे निहताश्च पदातिभिः ॥ ४५ ॥ नरेण च हतो हस्ती शूरेण कृतबुद्धिना ॥ सादिना च हतो हस्ती सादी चैव पदातिना ॥४६॥
रथिना च हतः पत्तिः पत्तिना च हतो रथी ॥ रथिना निहतः सादी संग्रामे लोमहर्षणे ॥ ४७ ॥ रेणुना च दिशो व्याप्तास्तुमुले भृशसंकुले ॥
व्यराजन्त महाराज समरे गतजीविताः ॥ ४८ ॥ पततां बाणजालानां धनुषां चैव कूजताम् ॥ मुद्गराणां भुशुण्डीनां तोमराणां तथैव च ॥४९॥
पट्टिशानां च ऋष्टीनां क्षेपणानां च यादव ॥ अयोगुडानां प्रासानां चर्मणामथ वर्मणाम् ॥ ५० ॥ अनिशं श्रूयते शब्दो घोरस्तस्मिन्रणाजिरे ॥
हयैश्च विगतारोहैर्धावमानैरितस्ततः ॥ ५१ ॥ भग्नेषाकूबराक्षैश्च रथैर्विगतनायकैः ॥ छिन्नदन्तैश्च मातङ्गैर्भिन्नकुम्भघटाननैः ५२ ॥ लतावेष्टित
वृक्षाभैः शोभां याति रणाजिरम् ॥ कुञ्जरैर्विगतारोहैस्त्रासितैर्दृढधन्विभिः ॥ ५३ ॥ मर्द्यमानानि सैन्यानि शतशोऽथ सहस्रशः॥ भिन्नान्सुदन्तैः
पुरुषान्दन्तासक्तांस्तथा गजाः॥५४॥ वहमाना व्यराजन्त कर्णव्यजनवीजिताः ॥ लग्नान्त्रजालैर्दशनैर्दन्तिनः पर्वतोपमाः॥५५॥लतावेष्टितवृक्षाभैः
शोभयन्ति रणाजिरम् ॥ तस्मिँस्तथाविधे रौद्रे संग्रामे घोरदर्शने ॥५६॥ नराश्वनागरुधिरैर्विसस्रुः शोणितापगाः ॥ खड्गमीना महाछत्रराजहंसविभू
षिताः ॥ योधमस्तकपाषाणाः केशशैवालभूषणाः॥५७॥महाफेनौघवत्यश्च भीतानां भयवर्धनाः॥ तास्तरन्ति तदा योधाः शूरा जयधनैषिणः॥५८॥

राजन्वाहननौभिस्ते व्यवसायपरस्परा: ॥ छिन्नानि स्वानि गात्राणि न जानन्ति रणे परैः ॥ ५९ ॥ तत्र शूरा महाभागास्त्वमर्षाक्रान्तचेतसः ॥ आयुधक्षयमासाद्य मुष्टियुद्धानि चक्रिरे ॥ ६० ॥ केशाकेशि तथा केचिद्दन्तादन्ति नखानखि ॥ चक्रुर्युद्धं महाराज ब्रह्मलोकजिगीषवः ॥ ६१ ॥ क्रन्दन्तोऽन्ये पितॄन्पुत्रान्भ्रातॄनन्ये पितामहान् ॥ मातुलान्भागिनेयांश्च स्यालान्सम्बन्धिनस्तथा ॥ ६२ ॥ पितृव्यानार्यकानन्ये दौहित्रानपरे तथा ॥ धावन्त्यन्ये पतन्त्यन्ये गर्जन्त्यन्ये जिगीषया ॥ ६३ ॥ स्वनन्त्यन्ये पतन्त्यन्ये म्रियन्ते चापरे तथा ॥ शोचन्त्यन्ये तथा बन्धूञ्शोच्यास्त्वन्ये तु बन्धुभिः ॥ ६४ ॥ याचन्तेऽन्ये महाराज तृष्णार्त्ताश्च तथा जलम् ॥ वाहनेषु समारोप्य नीयन्त्यन्ये च बन्धुभिः ॥ ६५ ॥ शिबिराय महाराज शतशोऽथ सहस्रशः ॥ अन्ये संवृत्य चात्मानं भीता जग्मुरुपह्वरम् ॥ ६६ ॥ जलार्थमन्ये च नरा बान्धवैश्च प्रचोदिताः ॥ आगम्य दृष्ट्वा च मृतं भाण्डं भङ्क्त्वा विचुक्रुशुः ॥ ६७ ॥ हतबन्धुमनादृत्य स्वामिकार्यैकतत्पराः ॥ परानभिमुखानेव तत्रायुध्यन्त मानवाः ॥ ६८ ॥ युध्यतामेव तेषां तु शतशोऽथ सहस्रशः ॥ उत्थितानि गणे यानि कबन्धानि महीपते ॥ ६९ ॥ कश्चिन्ननर्त समरे कबन्धस्तु धनुर्धरः ॥ गदापाणिस्तथैवान्यः खड्गचर्मधरोऽपरः ॥ ७० ॥ परश्वधधरः कश्चित्प्रासपाणिस्तथा परः ॥ नृत्यत्कबन्धभूयिष्ठे देवदुन्दुभिनादिते ॥ ७१ ॥ प्रवर्तमाने संग्रामे शूराणां स्वर्गलोकदे ॥ व्यदृश्यन्त महाराज पिशाचा घोरदर्शनाः ॥७२॥ राक्षसाश्च महाकायाः क्रव्यादाश्च तथा परे ॥ जगाम चास्तं सविता तदा रक्तवपुर्धरः ॥ संग्रामात्सर्वयोधानां पीत्वेव रुधिरं करैः ॥७३॥ ततोऽस्तशैलं भगवत्यथार्के गते जपापुष्पकदम्बकाभे ॥ सेनाद्वयं तच्छिबिराय यातं कृत्वावरोहं परबाणततम् ॥ ७४ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे संकुलयुद्धो नाम षष्ट्युत्तरद्विशततमोऽध्यायः ॥ २६० ॥ मार्कण्डेय उवाच ॥ निशावसाने गन्धर्वाः कृत्वा व्यूहं सुदुर्जयम् ॥ संप्रतीक्ष्यन्त भरतमायान्तं रणकोविदम् ॥ १ ॥ भरतोऽपि च रात्र्यन्ते वज्रव्यूहेन दंशितः ॥ आससाद महत्सैन्यं गन्धर्वाणां सुदुर्जयम् ॥ २ ॥ ततः प्रववृते युद्धं यमराष्ट्रविवर्द्धनम् ॥ देवासुरसमप्रख्यं त्रैलोक्यभयकारकम् ॥ ३ ॥ पत्तीनां पत्तिभिः सार्धं सादिनां चैव सादिभिः ॥ रथिनां रथिभिश्चैव कुञ्जराणां च कुञ्जरैः ॥ ४ ॥ भाषतां नामगोत्राणि शूराणां चैव गर्जताम् ॥ धनुषां कूजतां चैव शब्दः समभवत्तदा ॥ ५ ॥ ततः प्रवृत्ते संग्रामे भारतिः पुष्करो रणे ॥ आससाद विशालाक्षं गन्धर्वं रणगर्वितम् ॥ ६ ॥ तक्षश्च भारतिः श्रीमान्युयुधे वीरबाहुना ॥ सेनानीर्विजयः श्रीमान्नमुचिश्च तमागतः ॥ ७ ॥ भूमन्युः कौरवः श्रीमान्कामपालेन संगतः ॥ किरातराजो दमनश्चन्द्रापीडेन संगतः ॥ ८ ॥ प्रभद्रकेण

शिबिना तथैवाजिकरो रणे ॥ महोदयः मुनिर्देशो हरिकेशेन संगतः ॥ ९ ॥ त्रैगर्तो वसुदानश्च सूर्यरश्मिश्च संगतौ ॥ गन्धर्वैः
कुमुदापीडः कुलूताधिपतिर्जयः ॥ १० ॥ चक्रतुस्तुमुलं युद्धं देवासुरसमं तदा ॥ दाशेरकस्तथा राजा यवनो वाशनः परः ॥ ११ ॥
एकलव्यश्च संग्रामे तेनासीत्सुमहात्मना ॥ कुमुदः शोणिमा शूरो बलबन्धुः सुयोधनः ॥ १२ ॥ गन्धर्वैः पञ्चभिः पञ्च पार्वतीयाः समागताः ॥
बलाकाबलकाभ्यां तु गदिना मौलिना तथा ॥ १३ ॥ कुमुदेन तु वीरेण सदसीष्वनिवर्त्तिना ॥ मद्रराजोंऽशुमान्नाम चतुर्भिः संगतो रणे ॥ १४ ॥
भीमनादमहानादवसुषेणगजाकरैः ॥ दार्वः श्रुतञ्जनः श्रीमानभिमानः कृतञ्जयः ॥ १५ ॥ युद्धं तौ चक्रतुर्घोरं सहितौ चन्द्रवर्मणा ॥ काश्मीरकः
सुबाहुश्च गन्धर्वेण सुबाहुना ॥ १६ ॥ चकार तुमुलं युद्धं भीरूणां भयवर्द्धनम् ॥ भरतस्यापरे योधा गन्धर्वैर्भीमविक्रमैः ॥ १७ ॥ समागतास्तदा
युद्धे शतशोऽथ सहस्रशः ॥ भरतश्च महातेजाः शैलूषेण समागतः ॥ १८ ॥ चकार तुमुलं युद्धं सर्वभूतभयङ्करम् ॥ पर्वताभेन नागेन त्रिधा
प्रस्रवता मदम् ॥ १९ ॥ बाधमानमरीन्संख्ये महेन्द्रमिव दानवान् ॥ विशालो वरयामास रथेनाभ्येत्य पुष्करम् ॥२० ॥ बाणौघेन रणे भित्त्वा
वेगं पुष्करदन्तिनः ॥ पुष्करं ताडयामास नाराचैर्बहुभिस्तदा ॥ २१ ॥ रिपुभिस्ताडयमानस्तु भारतिर्भीमविक्रमः ॥ ववर्ष शरसंघातैर्विशालं
सेनया सह ॥ २२ ॥ पुष्करस्य विशालोऽथ मध्ये चिच्छेद कार्मुकम् ॥ छिन्नधन्वा विशालस्य स जघानाथ सारथिम् ॥ २३ ॥ आक्रम्य
योधयामास विशालस्य महारथम् ॥ यदा रणे महाराज पुष्करस्य रथोत्तमम् ॥ २४ ॥ हन्तुं स रथमुत्सृज्य विशालोपि महीपतेः ॥ गदया
योधयामास पुष्करस्य तु वारणम् ॥ २५ ॥ पुष्करोऽपि गदापाणिर्विशालाभिमुखं ययौ ॥ गदाभिस्तौ ततो वीरौ परस्परजिगीषया ॥ २६ ॥
सव्यदक्षिणतस्तत्र मण्डलानि विचेरतुः ॥ प्रजह्रतुस्तथान्योन्यमन्योन्यस्य वधैषिणौ ॥ २७ ॥ पुष्करेण रणे योगाद्विशालस्य गदा हता ॥
मुमोच पावकं तीक्ष्णं सस्फुलिङ्गं महीपते ॥ २८ ॥ विशालेन ततो युद्धे गदया पुष्करो हतः ॥ हिमवत्सन्निकाशस्तु न चचाल पदात्पदम् ॥२९॥
पुष्करेण महाराज विशालो गदया हतः ॥ ततः शैलूषवचनान्महामात्रप्रचोदितम् ॥ ३० ॥ आरुरोह महानागं विशालो रणदर्पितः ॥ आरुरोह
रथं श्रीमान्गन्धर्वस्य च पुष्करः ॥ ३१ ॥ तावेकरथमारूढौ तदा राजेन्द्रपुष्करौ ॥ निजघ्नतुर्विशालस्य संग्रामे वरवारणम् ॥ ३२ ॥ यस्यावर्जि
तनागस्य कुञ्जरान्निपतिष्यतः ॥ चिच्छेदाथ विशालस्य शिरो ज्वलितकुण्डलम् ॥ ३३ ॥ हत्वा विशालं संग्रामे रथमारुह्य चापरम् ॥ छादया
मास तत्सैन्यं गन्धर्वाणां शरोत्करैः ॥ ३४ ॥ विशालं निहतं दृष्ट्वा रुद्रः परमकोपनः ॥ सादी जघान प्रासेन गान्धारं रणगर्वितम् ॥ ३५ ॥

तस्य चिच्छेद गान्धारः सप्रासं तु भुजद्वयम् ॥ शिरश्च सशिरस्त्राणं क्षुरप्रेण महीपते ॥ ३६ ॥ तक्षो रथेन शुभ्रेण किङ्किणीजालमालिना ॥
आससाद महाबाहुं वीरबाहुं रणाजिरे ॥ ३७ ॥ एकच्छाय इवाकाशस्तयोरासीच्छरोत्करैः ॥ न वाति पवनस्तत्र न विभ्राजति भास्करः ॥ ३८ ॥
तक्षः सपुङ्खमाकृष्य बाणं भास्करसप्रभम् ॥ चिच्छेद सारथेस्तस्य शिरो ज्वलितकुण्डलम् ॥ ३९ ॥ निर्यन्तृणा रथेनासौ समरादपवाहितः ॥
तस्मिन्रणाजिरान्नीते तक्षं कुञ्जरधूर्गतः ॥ ४० ॥ आजगाम महाराज गन्धर्वस्तु सुदर्शनः ॥ तस्यापतितमात्रस्य शरेण नतपर्वणा ॥ ४१ ॥
चिच्छेद नागमूर्धानं भारतिर्भीमविक्रमः ॥ सेनानीर्विजयः श्रीमान्नमुचिश्च समागतौ ॥ ४२ ॥ सारथिं तुरगान्केतुमदृश्यं चक्रतुः शरैः ॥ अन्योऽ
न्यस्य महाराज समरे भीमविक्रमौ ॥ ४३ ॥ चतुर्भिः सायकैर्हत्वा नमुचेः स तुरङ्गमान् ॥ पञ्चमेन शिरः कायाज्जहार रथसारथेः ॥ ४४ ॥
नमुचिर्विरथः खड्गमादाय परवीरहा ॥ जगामाभिमुखस्तूर्णं सेनापतिमरिन्दम ॥ ४५ ॥ वेगेनापततस्तस्य चक्रमादाय भास्वरम् ॥ विवृत्ताक्षन्तु
चिच्छेद तस्य मूर्धानमञ्जसा ॥ ४६ ॥ भूमन्युः कामपालश्च चक्रतुर्युद्धमुत्तमम् ॥ यथा देवासुरे युद्धे बलशक्रौ महाबलौ ॥ ४७ ॥ तावुभौ
कुञ्जरारूढौ परस्परवधैषिणौ ॥ तोमरैश्चक्रतुर्युद्धं सूर्यांशुसदृशप्रभैः ॥ ४८ ॥ युध्यतामेवं तेषां तु भूमन्युर्वरवारणः ॥ पार्श्वे जघान दन्ताभ्यां
कामपालस्य वारणम् ॥४९॥ सहितस्तेन नागेन कृत्वा रावं भयानकम् ॥५०॥ आसीत्पराङ्मुखो युद्धे वर्त्तमानः स्वकं बलम् ॥ कामपालं रणे
जित्वा भूमन्युर्भीमविक्रमः ॥५१॥ गन्धर्वसेनां सहसा जघान निशितैः शरैः ॥ किरातराजो दमनश्चन्द्रापीडश्च संगतौ ॥ ५२ ॥ चक्रतुस्तुमुलं युद्धं
समरे रथधूर्गतौ ॥ चन्द्रापीडशरव्रातनिहतौ पार्ष्णिसारथी ॥ ५३ ॥ किरातराजस्तुरगाणां स्वयं रश्मिग्रहोऽभवत् ॥ विव्याध स शरव्रातैश्चन्द्रा
पीडं रणे तदा ॥ ५४ ॥ चन्द्रापीडशरव्रातैः कृतापीडो रणाजिरे ॥ जघान तुरगास्तस्य दमनस्य महीपतेः ॥ ५५ ॥ शक्त्या वेगाच्च विव्याध
तदा तं भीमविक्रमम् ॥ शक्त्या विभिन्नहृदयः पपात वसुधातले ॥ ५६ ॥ जघान भारतं सैन्यं चन्द्रापीडोऽपि सायकैः ॥ आरोप्य स्वरथे वीरं
मधुमान्दमनं तथा ॥ ५७ ॥ चकार विरुजं शीघ्रमव्रणं च महौषधैः ॥ युयुधे च निकुम्भेन मत्स्यराट् सरथस्तथा ॥ ५८ ॥ रथस्थितौ महावीरौ
वरचापमहाकरौ ॥ अन्योऽन्यं शरवर्षेण छादयेतां घनाविव ॥ ५९ ॥ सुरथस्तु निकुम्भस्य शरेण नतपर्वणा ॥ चापमुष्टौ प्रचिच्छेद भुजदंडं
तथाहवे ॥ ६० ॥ निकुम्भोऽपि प्रचिच्छेद सुरथस्य तु कार्मुकम् ॥ तावन्ये धनुषी सज्ये कृत्वा वीरौ परस्परम् ॥ ६१ ॥ छादयेतां तथा
न्योऽन्यं वीरौ सायकवृष्टिभिः ॥ अन्योऽन्यस्य हयान्हत्वा चिच्छेद धनुषी ततः ॥ ६२ ॥ हयान्रथाभ्यां कालस्य निर्जित्यावशमोजसा ॥

धनुषो मध्यभागे तु अन्योऽन्यस्य न्यकृन्तताम् ॥ ६३ ॥ विरथावसियुद्धाय चक्रतुर्यत्नमुत्तमम् ॥ आदाय विपुलं चर्म शतचन्द्रं च भास्व
रम् ॥ ६४ ॥ आददाते खड्गवरावन्योऽन्यवधकांक्षिणौ ॥ खड्गमाकाशसदृशमन्योऽन्यं प्रविजघ्नतुः ॥ ६५ ॥ मण्डलानि विचित्राणि गतप्रत्याग
तानि च ॥ कैशिकानि तु मार्गाणि दर्शयामासतुस्तदा ॥ ६६ ॥ भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं विसृतं सृतम् ॥ संपातं समुदीर्णं च खड्गचर्मविदार
णम् ॥ ६७ ॥ ईक्षितृप्रीतिजननं युद्धमासीत्तयोस्तदा ॥ कृत्वा तौ सुचिरं युद्धं परस्पररणे हतौ ॥ ६८ ॥ जग्मतुर्वसुधां वेगाच्छक्रचापसमावुभौ ॥
ततः स्वरथमारोप्य सुरथो रथिवर्धनः ॥ ६९ ॥ तस्माद्देशादपोवाह्य सर्वसैन्यस्य पश्यतः ॥ निकुम्भे चाथ समरे सुरथेन तदा रुषा ॥ ७० ॥
गोवासनेन साल्वेन त्वरमाणः समागतः ॥ बाणजालेन समरे चक्रुर्युद्धं सुभैरवम् ॥ ७१ ॥ तावुभौ रथगौ वीरौ रेजतुर्दिव्यधन्विनौ ॥
ततक्षतुः शरव्रातैस्तदान्योऽन्यं तथान्वितौ ॥७२॥ अन्योन्यस्य हयान्हत्वा छित्त्वा च धनुषी तथा॥ विरथौ चक्रतुर्युद्धं गदाभिरितरेतरम् ॥ ७३॥
विचेरतुस्तौ संग्रामे गदाहस्तौ मदोद्धतौ ॥ वासितार्थे वने मत्तौ कुञ्जराविव यूथपौ ॥७४॥ सुचिरं तौ तदा युद्धं कृत्वा व्यायामकर्षितौ ॥ प्रहार
वरसंतप्तौ जग्मतुर्वसुधातलम् ॥ ७५ ॥ विह्वलौ रथयोः कृत्वा नीतौ तौ स्वस्वसैनिकैः ॥ विरुजौ च कृतौ भूयो रणशीर्षमुपागतौ ॥ ७६ ॥
प्रभद्रकश्च संग्रामं चकाराजगरेण ह ॥ ईक्षितृप्रीतिजननं शरसंछादिताम्बरम् ॥ ७७ ॥ सुमुखे वर्त्तमानस्य तदा राजा प्रभद्रकः ॥ चिच्छेदाजगर
स्याजौ शिरो ज्वलितकुण्डलम् ॥ ७८ ॥ महोदयः कुणिदेशो हरिकेशस्य संयुगे ॥ गजेन पोथयामास सुरथं सरथसारथिम् ॥७९ ॥ हताश्वरथ
मुत्सृज्य गदया सुदृढं रणे ॥ हरिकेशं महाबाहुं चकार गतजीवितम् ॥ ८० ॥ त्रैगर्तो वसुधानश्च सूर्यरश्मिश्च संगतौ ॥ चक्रतुस्तुमुलं युद्धं बलि
शक्राविवापरौ ॥८१॥ कृत्वा तौ सुचिरं युद्धं परस्परसमाहतौ ॥ विचेतसौ रथोपस्थे निषेदतुररिन्दमौ ॥ ८२॥ विसंज्ञौ तु तदा नीतौ सारथिभ्यां
रणाजिरात् ॥ गन्धर्वः कुमुदापीडः कुलूताधिपतिर्जयः ॥८३॥ चक्रतुस्तुमुलं युद्धं देवासुरसमं तदा ॥ अन्योऽन्यस्य हयान्हत्वा छित्त्वा च धनुषी
दृढे ॥ ८४ ॥ खड्गयुद्धं चिरं कृत्वा छिन्नखड्गौ परस्परम् ॥ नियुद्धं चक्रतुर्वीरौ बाहुद्रविणशालिनौ ॥ ८५ ॥ नियुद्धस्यावसाने तु कुलूताधिपतिं
जयम् ॥ गन्धर्वः कुमुदापीडो निष्पिपेष महीतले ॥ ८६ ॥ ततः खड्गं रथादगृह्य शिरश्छेत्तुं समुद्यतः ॥ नृशंसं तं समालोच्य सेनापतिमरिन्दम ॥
॥ ८७ ॥ विजयस्तस्य मूर्धानं पातयामास भूतले ॥ दाशेरकस्तथा राजा यश्च गोवाशनोशनः ॥ ८८ ॥ एकलव्यस्य संग्रामं तैरासीत्सुमहा

१ 'वंशाचर्म' इति क० । २ 'च्छक्रध्वजसमावुभौ' इति ख० ।

त्मनः ॥ तस्यैकलव्यस्तुरगाञ्जघानाथ शिलीमुखैः ॥ ८९ ॥ गदया घातयामास स च तस्य तुरङ्गमान् ॥ तयोर्विरथयोर्भृत्यैरुपनीतौ तुरङ्गमौ ॥
॥ ९० ॥ पृष्ठतश्च तथा रूढौ वरप्रासधराबुभौ ॥ प्रासविभ्रामणोत्क्षेपपरिवर्त्तविवर्त्तनौ ॥ ९१ ॥ चक्रतुस्तुमुलं युद्धं चित्रं लघु च सुष्ठु च ॥ मण्ड
लानि विचित्राणि तयोश्चक्रुस्तुरङ्गमाः ॥ ९२ ॥ ईक्षितृप्रीतिजननं चिरं कृत्वा ततो रणम् ॥ अन्योन्यवेगाभिहतौ पेततुस्सतुरङ्गमौ ॥ ९३ ॥
भृत्यैश्च रथमारोप्य समरादपवाहितौ ॥ कुमारः श्रेणिमाञ्छूरो बलबन्धुः सुयोधनः ॥ ९४ ॥ गन्धर्वैः पञ्चभिः पञ्च पर्वतीयाः समागताः ॥ बला
काबलकाभ्यां तु गदिना मालिना तथा ॥९५॥ कुमुदेन च वीरेण समरेष्वनिवर्त्तिना ॥ चतुर्भिः सायकैस्तीक्ष्णैः कुमारो बलदर्पितः ॥९६॥ हयाँश्चकार
निर्जीवान्बलाकस्य महात्मनः ॥ हताश्वरथमुत्सृज्य बलाकाभ्रातुरञ्जसा ॥९७॥ आरुरोह रथं श्रीमद्बलाकस्य सुसंयुतम् ॥ तावेकरथमारूढौ भ्रातरौ
समरप्रियौ ॥९८॥ छादयामास विशिखैः कुमारो बलदर्पितः ॥ बलकस्तु कुमारस्य मध्ये चिच्छेद कार्मुकम् ॥ ९९ ॥ स च्छिन्नधन्वा वेगेन गदामादाय
वेगवान् ॥ तामादाय जघानाथ बलाकं समरप्रियम् ॥१००॥ बलाकं निहतं दृष्ट्वा रोषादश्रु निवर्तयन् ॥ कुमारं प्रति चिक्षेप बलकश्चैव तोमरम् ॥१०१॥
तोमरेण च निर्भिन्नो रथोपस्थ उपाविशत् ॥ तं विसंज्ञमथोवाह सारथिर्हययानवित् ॥ १०२ ॥ श्रेणिमानथ संक्रुद्धो बलकस्य तदा रणे ॥
क्षुरपर्यन्तधारेण चक्रेणापहरच्छिरः ॥ १०३ ॥ निपातितोऽथ तत्रैव शूरेण गदया गदी ॥ तं निहत्य तदा शूरो मौलिनः सारथिं रणे ॥१०४॥
गदया पोथयामास मेरुगौरवया तदा ॥ कुमुदस्य जघानाथ गदया स तुरङ्गमान् ॥ १०५॥ हताश्वं रथमुत्सृज्य कुमुदो गदिनो रथम् ॥ आरुरोह
तदा शीघ्रं खड्गबाणधनुर्धरः ॥ १०६ ॥ रथारूढस्य तस्याथ बलकश्च महारथः ॥ जघान चतुरो वाहांश्चतुर्भिस्सायकैस्तदा ॥ १०७ ॥
जहार पञ्चमेनाथ शिरस्तस्य सकुण्डलम् ॥ सारथिं तु रथात्तस्मान्मौलिनो रथमुत्तमम् ॥ १०८ ॥ हतसारथिनं पूर्वमारुरोह महारणे ॥ मौली
युद्धाय तस्थौ च महाबलपराक्रमः ॥ १०९॥ आरुह्य स रथं दिव्यं किङ्किणीजालनादितम् ॥ ततः स मौलिनाक्रान्तः सुयोधनरथो रणे ॥११०॥
अवाकिरदमेयात्मा शरैस्सन्नतपर्वभिः ॥ सुयोधनोऽपि विक्रम्य मौलिनं मौलिभूषितम् ॥ १११ ॥ जहार सशिरस्त्राणं शिरो ज्वलितकुण्डलम् ॥
मद्रराजोंऽशुमान्नाम चतुर्भिः सायकोत्तमैः ॥ ११२ ॥ भीमनादमहानादवसुमेघरुजाकरैः ॥ चत्वारस्ते महाराज मद्रराजस्य सायकैः ॥ ११३ ॥
निजघ्नुश्चतुरो वाहान्सारथिं च तथा रणे ॥ अंशुमान्रथमुत्सृज्य गदामादाय वीर्यवान् ॥ ११४ ॥ जघान चतुरो वाहान्भीमनादस्य संयुगे ॥
सारथिं पोथयामास महानादरथांस्तथा ॥ ११५ ॥ गताश्वं रथमुत्सृज्य गदावेगेन यादव ॥ महोदयस्य तं नागं पोथयामास वीर्यवान् ॥ ११६ ॥

सारथिर्भीमनादस्य महानादरथं ययौ ॥ भीमनादं च गदया निजघानाथ मद्रराट् ॥ ११७ ॥ स मद्रराजो गदया समरे ताडितो भृशम् ॥ जगाम
त्रिदिवं राजँस्त्यक्त्वा देहं रणप्रियः ॥ ११८ ॥ महानादोऽपि समरे सायकैर्लोमवाहिभिः ॥ बिभेद मद्रराजानं शतशोथ सहस्रशः ॥ ११९ ॥
स बाध्यमानो नाराचैर्महानादभुजच्युतैः ॥ आरुरोह रथं शीघ्रं वसुषेणस्य सत्वरः ॥ १२० ॥ रथमारुह्य वेगेन गदया भीमवेगया ॥ चकार युद्धे
निर्जीवं वसुषेणं समरप्रियम् ॥ १२१ ॥ अवरुह्य रथात्तस्माद्गदया भीमवेगया ॥ गजाकरस्य तुरगान्सारथिं चाहनद्भृशम् ॥ १२२ ॥ हतेषु तेषु
राजेन्द्र तदा वीरो गजाकरः ॥ रथं तं तु समारुह्य भूय एव तदंशुमान् ॥ १२३ ॥ चकार युद्धे निर्जीवं गान्धर्वं तं गजाकरम् ॥ उत्प्लुत्य तुरगा
त्तस्मान्महानादरथं गतः ॥ १२४ ॥ गदया पोथयामास महानादं तदा रणे ॥ रोषदीर्घांकुशं कृत्वा कुञ्जरं भरताज्ञया ॥१२५॥ आरुह्य निजघा
नाथ गन्धर्वाञ्शतशो रणे ॥ दार्वः श्रुतञ्जयः श्रीमानाभिसारः कृतञ्जयः ॥ १२६ ॥ युद्धं तौ चक्रतुर्वीरौ सहितौ चन्द्रवर्मणा ॥
चन्द्रवर्मा महातेजाः श्रुतञ्जयरथाद्ध्वजम् ॥ १२७ ॥ शरेण पातयामास वटवृक्षमिवोच्छ्रितम् ॥ श्रुतञ्जयोपि संक्रुद्धश्चन्द्रवर्मकरस्थितम् ॥ १२८ ॥
द्विधा चकार तीक्ष्णेन सायकेन महद्धनुः ॥ तं छिन्नधनुषं वीरं शरैः सन्नतपर्वभिः ॥ १२९ ॥ छादयामास समरे
पार्वतीयः कृतञ्जयः ॥ चन्द्रवर्मा समादाय ततः शक्तिं सुदारुणाम् ॥ १३० ॥ बिभेद समरे राजन्राजानं तं कृतञ्जयम् ॥
सविभिन्नस्तया शक्त्या रथोपस्थ उपाविशत् ॥ १३१ ॥ तं विसंज्ञमपोवाह संग्रामादथ सारथिः ॥ कृतञ्जयं महाराज रणे दृष्ट्वा विचेतसम्॥१३२॥
सकुण्डलं समुकुटं चारुचन्द्रसमप्रभम् ॥ शिरश्चिच्छेद तीक्ष्णेन सायकेन महात्मना ॥ १३३ ॥ समरे यतमानस्य सुभृशं चन्द्रवर्मणा ॥ काश्मी
रकः सुबाहुश्च गन्धर्वेण सुबाहुना ॥ १३४ ॥ चकार तुमुलं युद्धं भीरूणां भयवर्द्धनम् ॥ उभौ तौ तरुणौ वीरावुभौ समरदुर्मदौ ॥१३५॥ दर्शनी
यावुभौ वीरावुभौ बाणधनुर्धरौ ॥ तावुभौ सदृशौ वीर्ये शम्बरामरराजयोः ॥१३६॥ उभौ प्रकारैश्चलितौ तथोभौ दृढविक्रमौ ॥ चिच्छिदुस्ते तथा
न्योन्यं ध्वजच्छत्रे नराधिप ॥ १३७ ॥ अन्योन्यस्य हयान्हत्वा तथोभौ पार्ष्णिसारथी ॥ अन्योन्यं धनुषी छित्त्वा सुदृढे समरप्रिये॥१३८॥कृते
प्रतिकृतं चैव कुर्वाणौ भीमविक्रमौ ॥ विरथावसियुद्धाय चक्रतुर्यत्नमुत्तमम् ॥ १३९ ॥ असियुद्धं चिरं कृत्वा खड्गमाविध्य सत्वरः ॥ पातया
मास मूर्धानं गन्धर्वस्य नराधिप॥१४०॥ आरुरोह रथं चान्यं सुशीघ्रं भरताज्ञया ॥ तत्रारूढस्स गन्धर्वाञ्जघान शतशो रणे ॥ १४१ ॥ एतस्मि
न्नन्तरे क्रुद्धः शैलूषः स सहायवान् ॥ चकार युधि निर्जीवान्नरनागतुरङ्गमान् ॥ १४२ ॥ बभूव भारती सेना शैलूषेणोपमर्दिता ॥ निदाघे पुष्पश

बलद्विरदेनेव पद्मिनी ॥ १४३ ॥ एतस्मिन्भारते सैन्ये कश्चिदासीन्महारथः ॥ प्रत्युद्ययौ यः समरे शैलूषं रणकर्कशम् ॥ १४४ ॥ शैलूषशर
सम्पातरुद्धगोमण्डले र[illegible] ॥ न प्राज्ञायत राजेन्द्र तदा किञ्चिद्रणाजिरे ॥ १४५ ॥ अश्रूयत महाञ्छब्दस्तालानां पततामिव ॥ नरनागाश्वका
येभ्यो विसस्रुः शोणितापगाः ॥ १४६ ॥ एवं तु भारतं सैन्यं काल्यमानमितस्ततः ॥ शैलूषेण महाराज भरतं शरणं ययौ ॥ १४७ ॥
भरतोऽपि महातेजा दृष्ट्वा शैलूषमागतम् ॥ प्रत्युद्ययौ रथेनाजौ किङ्किणीजालमालिना ॥ १४८ ॥ ततस्तौ चक्रतुर्युद्धं घोररूपं भयानकम् ॥
त्रैलोक्यविजयासक्तौ यथोभौ बलिवासवौ ॥ १४९ ॥ गन्धर्वराट् ततः क्रुद्धः सिंहवद्विनदन्मुहुः ॥ भरतस्य रथं तूर्णं शरवर्षैरवाकिरत् ॥१५०॥
क्रमेण सरथस्तस्य सहयः सह सारथिः ॥ शरवर्षेण महता संछन्नो न प्रकाशितः ॥ १५१ ॥ युधाजित्खल्वसम्भ्रान्तो धैर्यमासाद्य वीर्यवान् ॥
चोदयामास तानश्वान्विक्षुब्धान्रिपुसायकैः ॥ १५२ ॥ भरतोऽथ धनुर्गृह्य दिव्यं जलदनिःस्वनम् ॥ शैलूषस्य द्विधा चक्रे क्षुरप्रेण महद्धनुः ॥
॥ १५३ ॥ गन्धर्वश्छिन्नधन्वा स पुनरन्यन्महद्धनुः ॥ निमेषान्तरमात्रेण सज्जं चक्रे महाबलः ॥ १५४ ॥ विचकर्ष ततो दोर्भ्यां चिक्षेप च ततः
शरान् ॥ अथास्य तदपि क्रुद्धश्चिच्छेद भरतो धनुः ॥ १५५ ॥ तस्य तत्पूजयामास लाघवं त्रिदशाधिपः ॥ शैलूषोऽपि ततः क्रुद्धः प्रगृह्यान्य
न्महद्धनुः ॥ १५६ ॥ मुमोच समरे बाणान्भरतस्य रथं प्रति ॥ युधाजिन्मातुलस्तस्य सह यानेन लाघवम् ॥ १५७ ॥ दर्शयामास समरे मोघा
न्कुर्वञ्शरव्रजान् ॥ तुरगाश्चोद्यमानास्ते मण्डलानीव बभ्रमुः ॥ १५८ ॥ यथायथा शरव्राता मोघा यान्ति महीतलम् ॥ भरतोऽपि महातेजा
मण्डलीकृतकार्मुकः ॥ १५९ ॥ वीरकेतुं शरव्रातैर्विव्याध रणमूर्धनि ॥ ताडितं सारथिं दृष्ट्वा वीरकेतुं तथा सुतम् ॥ १६० ॥ गन्धर्वस्ताडयामास
सायकैस्तु युधाजितम् ॥ युधाजिति महाबाहौ समरे भृशविक्षते ॥१६१॥ चिच्छेद च्छत्रं बाणेन शैलूषस्य तु राघवः ॥ द्वितीयेन तु बाणेन लसन्तं
ध्वजमुच्छ्रितम् ॥ १६२ ॥ तृतीयेन धनुर्मुष्टौ तथा जलदनिःस्वनम् ॥ स च्छिन्नधन्वा वेगेन शक्तिमादाय सत्वरः ॥ १६३ ॥ विव्याध भरतं
वीरं भुजे वामे नराधिप ॥ प्रहारवरभिन्नस्य भरतस्य महात्मनः ॥ १६४ ॥ करात्पपात वेगेन चापश्चापधरस्य च ॥ अथान्यद्धनुरादाय भरतो
रघुनन्दनः॥१६५॥शरैरनेकसाहस्रैर्गंधर्वं तमवाकिरत् ॥ पातयामास च तथा कवचं रत्नभूषितम्॥१६६॥ आपदं परमां प्राप्तः शैलूषोप्यथ सत्वरः॥
आग्नेयमस्त्रं चिक्षेप भरतं प्रति वीर्यवान् ॥ १६७ ॥ वारुणेन तदस्त्रं तु शमयामास राघवः ॥ वायव्यमस्त्रं शैलूषस्तदा चिक्षेप पार्थिव ॥ १६८ ॥
शैलास्त्रेणाथ भरतः शमयामास तत्पुनः ॥ शैलास्त्रमथ चिक्षेप गन्धर्वनृपतिस्तथा ॥ १६९ ॥ वज्रेणास्त्रेण तत्क्रुद्धः शमयामास राघवः ॥ उत्स

सर्ज ततो राजा ब्रह्मास्त्रं प्राणसंशये ॥ १७० ॥ काकुत्स्थः शमयामास ब्रह्मास्त्रेणैव तत्तदा ॥ अस्त्रयुद्धे व्यतिक्रान्ते क्रोधादारक्तलोचनः ॥ १७१ ॥
जघान चतुरो वाहान्भरतस्य स सायकैः ॥ वीरकेतोश्च चिच्छेद शिरो ज्वलितकुण्डलम् ॥ १७२ ॥ तस्य राज्ञश्च चिच्छेद मुकुटं रत्नभूषितम् ॥
उवाच भरतश्रेष्ठः शैलूषं प्रहसंस्तदा ॥ १७३ ॥ कृतकर्मा रणश्रांतो गच्छाद्य स्वं निवेशनम् ॥ तत्र गत्वा ततो यातः पर्वतं गन्धमादनम् ॥१७४॥
अन्यथा श्वो न मे जीवन्गन्तासि रणमूर्धनि ॥ अस्तं च सविता याति कृतकर्मा दिनक्षये ॥ १७५ ॥ वयश्च शिबिरायैव गमिष्यामो जना
धिप ॥ एतावदुक्त्वा शैलूषं चोत्सृज्य भरतस्तदा ॥ कृत्वावहारं प्रययौ शिबिरायैव यादव ॥ १७६ ॥ गन्धर्वराजोऽथ गृहं प्रविश्य
निश्चित्य कार्यं मरणाय बुद्धिम् ॥ कृत्वा रणायैव मनश्चकार रात्रिं तथोवाह गृहे नरेन्द्रः ॥ १७७ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मा० वज्रसं
वादे द्वन्द्वयुद्धवर्णनं नामैकषष्ट्युत्तरद्विशततमोऽध्यायः ॥ २६१ ॥ ॥ मार्कण्डेय उवाच ॥ ततो रजन्यां व्युष्टायां मरणे कृतनिश्चयः ॥ सन्नद्धत
विना व्यूहं भरतं प्रत्युदैक्षत ॥ १ ॥ भरतोऽपि महातेजाः कृतपूर्वाह्णिकक्रियः ॥ निर्गम्य नगरात्सर्वान्पार्थिवानिदमब्रवीत् ॥ २ ॥ गन्धर्वैर्भवतां
युद्धं मम बुद्ध्या न रोचते ॥ एक एव समर्थोऽहं युष्माकं तेजसा नृपाः ॥ ३ ॥ हन्तुं गन्धर्वसैन्यं तद्भवद्भिः परिपीडितम् ॥ युध्यमाना भवन्तश्च
रक्षितव्या मया रणे ॥ ४ ॥ सकलत्राँस्ततो भूपानेतान्शक्नोमि घातितुम् ॥ भवतामार्जवं युद्धे गन्धर्वाः कूटयोधिनः ॥ ५ ॥ अद्य तान्सायकैः
सर्वान्दिव्यास्त्रप्रतिमन्त्रितैः ॥ घातयिष्यामि भूपालांस्तदनुज्ञातुमर्हथ ॥ ६ ॥ भरतेनैवमुक्तास्तु राजानो वाक्यमब्रुवन् ॥ त्वया कलत्रमस्माकं
रक्ष्यं स्वामिन्प्रयत्नतः ॥ ७ ॥ भवतो रक्षणं कार्यं समस्तैर्वसुधाधिपैः ॥ पत्रच्छेदे फलच्छेदे वृक्षः शाखावकर्तने ॥ ८ ॥ भूयो वृद्धिमवाप्नोति
मूलच्छेदे विनश्यति ॥ ते वयं भवतां वीर्यं जानन्तोऽपि रघूद्वह ॥ ९ ॥ नैकं संत्यक्तुमिच्छामो भवन्तं रणमूर्धनि ॥ एकैकस्य तथास्माकं
गन्धर्वाणां महद्बलम् ॥ १० ॥ वयं रणे हि पर्याप्ताः किं पुनस्तव पार्थिव ॥ किन्तु भृत्येषु तिष्ठत्सु स्वामिनो गर्हितं रणम् ॥ ११ ॥ ते वयं घात
यिष्यामो गन्धर्वानद्य सत्वरम् ॥ एवमुक्तो महातेजा भरतो नृपसत्तमैः ॥ १२ ॥ वारयामास सान्त्वेन ततस्तु वसुधाधिपान् ॥ शापिताः स्थ
मम प्राणै राज्ञो रामस्य चाप्यथ ॥१३॥ अद्यैव विनिवर्तध्वं संग्रामात्पृथिवीक्षितः ॥ संयतैश्च महद्युद्धं पश्यद्भिर्मम पार्थिवैः ॥ १४ ॥ इत्येवमुक्ताः
कृच्छ्रेण रणं मुक्त्वा नराधिपाः ॥ एकान्तस्थाः सुसन्नद्धा ददृशुस्तन्महद्रणम् ॥ १५ ॥ एकस्य च बहूनां च यमराष्ट्रविवर्धनम् ॥ रथेन काञ्चनाङ्गेन
किङ्किणीजालमालिना ॥ १६ ॥ युधाजिता गृहीतेन सतोयाम्बुदचारिणा ॥ चञ्चद्बहुपताकेन कोविदारध्वजेन च ॥ १७ ॥ आससाद रणे

यक्षान्गन्धर्वान्रणकर्कशान् ॥ शरैः सञ्छादयामास गभस्तिभिरिवांशुमान् ॥ १८ ॥ एतस्मिन्नेव काले च सहसा गगनच्युता ॥ उल्का पपात मध्येन भित्त्वा सूर्यस्य मण्डलम् ॥ १९ ॥ आसीद्घोरो महीकम्पः शैलूषाङ्गविदारणः ॥ आदित्यमण्डले राजन्कबन्धश्चाप्यदृश्यत ॥ २० ॥ ववर्ष च तदा देवो गन्धर्वान्रक्तवृष्टिभिः ॥ गन्धर्वाणां च दीतायां दिश्यवाशन्त पक्षिणः॥ २१ ॥ मृगाश्च घोरा राजेन्द्र शिवाश्चाशिवनिःस्वनाः॥ प्रतिलोमस्तथैवासीद्वायुस्तेषां सुशर्क्कृत् ॥ २२ ॥ न्यलीयत तथा गृध्रः शैलूषस्य ध्वजाग्रतः ॥ समे पथि निराबाधे प्रस्खलन्तस्तुरङ्गमाः॥२३॥ शतपत्राश्च चाषाश्च हंसाश्चैव प्रदक्षिणम् ॥ भरतस्य तदा चक्रुः सव्यो बाहुरथास्फुरत् ॥ २४ ॥ दृष्ट्वा निमित्ताँस्तु शुभान्युधाजित्सुमहायशाः ॥ चोदयामास तुरगान्गन्धर्वाणां चमूं प्रति ॥ २५ ॥ भरतोऽपि शरव्रातैर्घातयामास वाहिनीम् ॥ गन्धर्वाणामुदीर्णानां घोरैः शतसहस्रशः ॥ २६ ॥ वध्यमानास्तु गन्धर्वा भरतेन महात्मना ॥ तमेवाभिमुखा जग्मुः शलभाः पावकं यथा॥२७॥ तेषामापततामेव शरैः सन्नतपर्वभिः ॥ पातयामास शीर्षाणि भरतो वाहिनीपतिः ॥ २८ ॥ भरतं कोष्ठकीकृत्वा गन्धर्वाः सुमहारथाः ॥ ववर्षुरायुधैस्तीक्ष्णैर्मेघा वृष्ट्येव पर्वतम् ॥ २९ ॥ तान्यायुधानि मुख्यानि गन्धर्वैर्भरतस्तथा ॥ चिच्छेद राजन्नाराचैर्गन्धर्वांश्चावधीद्बली ॥ ३० ॥ मस्तकान्सशिरस्त्राणान्बाहूनपि च साङ्गदान् ॥ हस्तिहस्तोपमन्रूरूंश्चिच्छेद भरतो रणे ॥ ३१ ॥ नावधानं न सन्धानं न मुञ्चन्तं च सायकान् ॥ ददर्श भरतं कश्चिल्लाघवाद्रणमूर्धनि ॥ ३२ ॥ केवलं दृश्यते युद्धे गन्धर्वाणां महाचमूः ॥ दह्यमाना शरव्रातैर्युगान्ताग्निरिव ज्वलन् ॥ ३३ ॥ बाणगोचरमायातान्भरतस्य विनिघ्नतः ॥ शात्रवान्सायकैस्तीक्ष्णैर्जगामास्तं दिवाकरः॥ ३४ ॥ रणे जयं प्राप्य ततो निवृत्तः समागतश्चापि नरेन्द्रमुख्यैः ॥ प्रायान्महात्मा शिबिराय राजन्संस्तूयमानस्त्रिदशद्विजेन्द्रैः ॥ ३५ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे तृतीययुद्धदिवसवर्णनं नाम द्विषष्ट्युत्तरद्विशततमोऽध्यायः ॥ ॥ २६२ ॥ मार्कण्डेय उवाच ॥ चतुर्थेऽहनि संप्राप्ते कृतपूर्वाह्णिकक्रियः ॥ शैलूषस्तु विनिष्क्रम्य गन्धर्वानिदमब्रवीत् ॥ १ ॥ योधयध्वं रणे सर्वे भरतं रिपुमागतम् ॥ अहं मध्ये प्रवेक्ष्यामि भरतस्य बलार्णवम् ॥ २ ॥ तत्र तान्घातयिष्यामि भरतस्यानुयायिनः ॥ एतदुक्ते तथेत्युक्त्वा संप्रतीक्षन्त राघवम् ॥ ३ ॥ भरतोऽपि महातेजा रथेनैकेन दृश्यते ॥ भरतस्यानुसैन्यं च भूभुजां समपद्यत ॥ ४ ॥ तत्सैन्यं प्राविशद्घोरं शैलूषो रणदर्पितः ॥ चकार कदनं तत्र नरवारणवाजिनाम् ॥ ५ ॥ गन्धर्वसैन्ये च तथा भरतोऽपि शरोत्करैः ॥ चकार कदनं घोरं वैश्वानरसमप्रभैः ॥ ६ ॥

१ 'सशर्करः' इति ख० ।

राजानं कोष्ठके कृत्वा शैलूषं विविधैः शरैः ॥ छादयामासुरव्यग्रा मेघा इव महीधरम् ॥ ७ ॥ गोवासनस्तु सप्तत्या बिभेद समरे शरैः ॥ द्विजि
ह्वश्च त्रिसप्तत्या राजा दाशेरकस्तु यः ॥ ८ ॥ सुबाहुस्तं चतुष्षष्ट्या दशभिस्तं सुयोधनः ॥ कुमारः सप्तसप्तत्या श्रेणिमान्दशभिस्त्रिभिः ॥ ९ ॥
शूरः षष्ट्या च निर्भिद्य बलबन्धुः शतेन च ॥ द्वाविंशत्या ततस्तक्षः पुष्करो नवभिः शरैः ॥ १० ॥ शतेन विजयश्चैनं जयो जित्वा त्रिभिः
शरैः ॥ प्रत्यविध्यत तान्सर्वाञ्छैलूषो दशभिः शरैः ॥ ११ ॥ नृत्यन्निव रथोपस्थे महाबलपराक्रमः ॥ धनुश्चिच्छेद भल्लेन सुबाहोः सुमहात्मनः ॥
॥ १२ ॥ हयाँश्चकार निर्जीवांस्तथैवांशुमतो नृप ॥ पद्मं रथस्थं चिच्छेद चिह्नं गोवासनस्य तु ॥ १३ ॥ सुयोधनरथात्क्षिप्रं पातयामास सार
थिम् ॥ बलबन्धोस्तथा छत्रं पातयामास यादव ॥ १४ ॥ तथान्यान्विमुखाँश्चक्रे शरैः सन्नतपर्वभिः ॥ ततस्तस्य क्षुरप्रेण धनुश्चिच्छेद
पुष्करः ॥ १५ ॥ अथान्यं चापमादाय पुष्करस्य रणे रुषा ॥ चकार तुरगान्सर्वान्निर्जीवान्समरप्रियः ॥ १६ ॥ पुष्करश्च समा
रुह्य तक्षस्य रथमुत्तमम् ॥ ववर्ष शरवर्षेण शैलूषं रणमूर्धनि ॥ १७ ॥ शैलूषोपि जघानाश्वान्रथात्तक्षस्य यादव ॥ विरथौ तौ
गदापाणी भ्रातरौ युद्धदुर्मदौ ॥ १८ ॥ शैलूषेण समारूढौ गदाहस्तौ तरस्विनौ ॥ अभ्याशे भ्रातरौ दृष्ट्वा जगामा
दर्शनं ततः ॥ १९ ॥ मायावी स तु गन्धर्वो रथमुत्सृज्य यादव ॥ शून्यं दृष्ट्वा रथोपस्थं विलक्षौ भ्रातरौ तदा ॥ २० ॥ आदि
त्येऽस्तमनुप्राप्ते विनिवृत्तौ रणाजिरात् ॥ भरतोऽपि तथा कृत्वा गन्धर्वाणां महाहवम् ॥ न्यवर्तत महाराज सन्ध्याकाले रणाजिरात् ॥ २१ ॥
गत्वैव राजन्स च राजवेश्म तत्रोष्य रात्रिं रघुवंशनाथः ॥ निशावसाने पुनरेव युद्धं[1] चकार युद्धं सहितो नृवीरैः ॥ २२ ॥
इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे चतुर्थदिवसयुद्धवर्णनं नाम त्रिषष्ट्युत्तरद्विशततमोऽध्यायः ॥ २६३ ॥ मार्कण्डेय
उवाच ॥ ततोऽह्नि पञ्चमे प्राप्ते भरतो युद्धदुर्मदः ॥ कल्यमुत्थाय राजेन्द्र कृतपूर्वाह्णिकक्रियः ॥ १ ॥ जगाम हन्तुं गन्धर्वान्बलमुत्सृज्य पृष्ठतः ॥
शैलूषोऽपि रणं त्यक्त्वा नरेन्द्रनिधनेप्सया ॥ २ ॥ जगामैकरथेनैव रणकर्मविशारदः ॥ तयोरासीन्महाघोरः संप्रहारः सुदारुणः ॥ ३ ॥ देवासुरर
णप्रख्यः सूर्यस्योदयनं प्रति ॥ तयोस्तु युध्यतो राजन्गन्धर्वाणां बलार्णवम् ॥ ४ ॥ छादयामास भरतः शरैः सन्नतपर्वभिः ॥ तच्च राज्ञासुदीर्णानां बलं
सागरसन्निभम् ॥ ५ ॥ छादयामास गन्धर्वैः शरैराशीविषोपमैः ॥ बलमेधे विनिर्याते शरवृष्टिसदारुणे ॥ ६ ॥ धारयेतां महाराज शैलूषभरतावुभौ ॥

[1] 'युद्धं चकार भूपः सहितो नृवीरैः' इति क० ।

अन्तरिक्षे शरव्रातांश्चिच्छिदतुररिन्दमौ ॥७॥ सैन्ययोश्च तथा चक्रुः कदनं घोरदर्शनम् ॥ तयोश्चापच्युतैर्बाणैर्निपातितहयद्विपैः ॥८॥ रणे विसस्रुर्भूपाल स्रवन्त्यो रक्तनिम्नगाः ॥ वहन्त्यो नरदेहानि यक्षराक्षससेविताः ॥ ९ ॥ ताभ्यां मुक्ते शरव्रातैर्गगने सूर्यरश्मयः ॥ न प्राकाशन्त राजेन्द्र एकच्छाये नभस्तले ॥ सैनिकान्घातयन्तौ तौ रक्षमाणौ च सारथी ॥ १० ॥ छिन्दमानौ रणे वीरौ परमुक्ताँस्तथायुधान् ॥ जनयामासतुर्वीरौ सुराणामपि विस्मयम् ॥ ११ ॥ तद्युद्धं पूजयामास पुष्पवर्षेण वासवः ॥ तौ प्रयुद्धौ दिनं सर्वं वरबाणधनुर्धरौ ॥ १२ ॥ नासीदेकतरस्यापि रणे तस्मिन्पराजयः ॥ ततोऽस्तं भगवत्यर्के प्रयाते पृथिवीपते ॥ परस्परस्यानुमते शिबिरायैव जग्मतुः ॥ १३ ॥ अथोष्यरात्रिं गृहयोः प्रविष्टौ रात्र्यन्तमासाद्य तदा रणाय ॥ भूयो महेन्द्रोपम संप्रयातौ प्रहर्षयन्तौ स्वबलानि वीरौ ॥ १४ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे भरतशैलूषयुद्धे पञ्चमदिवसयुद्धवर्णनं नाम चतुष्षष्ट्युत्तरद्विशततमोऽध्यायः ॥ २६४ ॥ मार्कण्डेय उवाच ॥ ततस्तु षष्ठे संप्राप्ते दिवसे भूरिदक्षिणे ॥ चक्रतुः समरं वीरौ शैलूषभरतावुभौ ॥ १॥ ससैन्यौ पृथिवीपाल शरैराशीविषोपमैः ॥ शैलूषेण समासक्तो भरतो वाहिनीपतिः ॥२॥ सूर्यरश्मेश्शरेणाजौ शिरश्चिच्छेद शत्रुहा ॥ सूर्यरश्मिं रणे हत्वा एकलव्यं महारथम् ॥ ३ ॥ शरेण पातयामास रथोपस्थादरिन्दमम् ॥ गन्धर्वनृपतिर्दृष्ट्वा प्रधानौ तौ सुतौ हतौ ॥ ४ ॥ शक्त्या बिभेद विजयं तथा चक्रेण पुष्करम् ॥ तोमरेण तथा तक्षं गदया च सुयोधनम् ॥ ॥ ५ ॥ विविशुस्ते रथोपस्थं विसंज्ञाः सर्व एव तु ॥ नियन्तृभिश्च समरात्सर्व एवापवाहिताः ॥ ६ ॥ ततस्तु भरतः क्रुद्धश्चतुर्भिस्तस्य सायकैः ॥ चकार युधि निर्जीवांस्तुरगांश्चैव यादव ॥ ७ ॥ चकार च शरव्रातैर्विमुखीकृतविक्रमम् ॥ ततो धैर्येण संधार्य शरवेगं महात्मनः ॥ ८ ॥ आरुरोह रथं शीघ्रं सुसन्नद्धो महाबलः ॥ रथमारुह्य विव्याध शरेणानतपर्वणा ॥ ९ ॥ भरतो हृदये गाढं मुमोह स च ताडितः ॥ एतस्मिन्नन्तरे मुक्तो हाहाकारः सुरासुरैः ॥ १० ॥ अप्रहृष्टैः प्रहृष्टैश्च विमूढे रघुनन्दने ॥ हाहाकारेण महता लब्धसंज्ञः स राघवः ॥ ११ ॥ आकृष्य बलवच्चापं शैलूषस्य महद्धनुः ॥ द्विधा चकार राजेन्द्र शैलूषं चाहनद्दृशम् ॥ १२ ॥ स छिन्नधन्वा वेगेन गदामादाय सत्वरः ॥ प्रेषयामास धर्मज्ञ भरतस्य महात्मनः ॥ १३ ॥ आपतन्तीं गदां दृष्ट्वा भरतो रणमूर्धनि ॥ द्विधा चकार चक्रेण सर्वसैन्यस्य पश्यतः ॥ १४ ॥ ततः स परिघं शीघ्रं चिक्षेप भरतं प्रति ॥ तमापतन्तं चिच्छेद चतुर्भिः सायकैर्दृढम् ॥ १५ ॥ ततोऽन्यद्धनुरादाय सायकानेकविंशतिम् ॥ चिक्षेप स महाराज भरतस्य रथं प्रति ॥ १६ ॥ छित्त्वा तान्भरतः सर्वांन्नवधीत्तस्य सारथिम् ॥ तथा च

चतुरो वाहाननयद्यमसादनम् ॥ १७ ॥ शैलूषं विरथं दृष्ट्वा गन्धर्वाणां महाचमूः ॥ ववर्षायुधवर्षेण मेघो वृष्ट्येव पर्वतम् ॥ १८ ॥ स मोहयित्वा
भरतं मोक्षयामास पार्थिव ॥ मोक्षयित्वा च राजानं गतेऽस्तं रविमण्डले ॥१९॥ कृत्वावहारं तु गतः शिबिराय नराधिपः ॥२०॥ हत्वा रथे नागर
थाश्वयोधान्संप्राप्य मध्ये निशितैः पृषत्कैः ॥ रघुप्रवीरोऽपि गृहाय यातः संपूज्यमानो भुवि मानवेन्द्रैः ॥ २१ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे
मार्कण्डेयवज्रसंवादे शैलूषभरतयुद्धे षष्ठयुद्धदिवसो नाम पञ्चषष्ठ्युत्तरद्विशततमोऽध्यायः ॥ २६५ ॥ ॥ मार्कण्डेय उवाच ॥ ततस्तु सप्तमे प्राप्ते
दिवसे युद्धदुर्मदौ ॥ समीयतुर्महात्मानौ शैलूषभरतावुभौ ॥ १ ॥ ततस्तु भरतः प्राह शैलूषं युद्धदुर्मदम् ॥ आवयोः प्रस्तुतं सैन्यं किमेतै
स्सैनिकैर्मृतैः ॥ २ ॥ निवारयस्व सैन्यं स्वं वारयिष्याम्यहं स्वकम् ॥ आवयोर्द्वैरथं युद्धं पश्यन्तु वसुधाधिपाः ॥ ३ ॥ त्वदीयाः सैनिका ये
च सुरनाथाः सहामरैः ॥ हते मयि मदीयन्तु सैन्यं कामं प्रयुध्यताम् ॥ ४ ॥ संग्रामं वा करोत्वाजौ त्वदीयन्तु हते त्वयि ॥ एवमुक्तस्तथेत्युक्त्वा
वारयामास सैनिकान् ॥ ५ ॥ गन्धर्वराट् स शैलूषो भरतोऽपि तथा स्वकान् ॥ ततः प्रववृते युद्धं तयोर्देवासुरोपमम् ॥ ६ ॥ पश्यतां सर्व
सैन्यानां देवानामपि पश्यताम् ॥ शरजालेन महता छादितार्ककरे रणे ॥ ७ ॥ ततक्षतुस्तावन्योऽन्यं शरैः सन्नतपर्वभिः ॥ परस्परशराघात
विसरच्छोणितोक्षितौ ॥ ८ ॥ विरेजतुस्तौ राजेन्द्र पुष्पिताविव किंशुकौ ॥ उभौ महारथौ वीरौ चोभौ विश्रुतपौरुषौ ॥ ९ ॥ तथोभौ वरधा
नुष्कौ चोभौ समरदुर्मदौ ॥ काञ्चनाङ्गरथस्थौ तौ चोभौ सद्ध्वजशोभितौ ॥ १० ॥ वीज्यमानौ तथैवोभौ योधाभ्यां वरचामरैः ॥ छत्रयोस्तौ
तदाधस्ताच्छुशुभाते महारथौ ॥ ११ ॥ उभावस्त्रप्रतापेन चक्रतुस्तुमुलं रणम् ॥ अस्त्रयुद्धं चिरं कृत्वा शरयुद्धं प्रचक्रतुः ॥ १२ ॥ शरयुद्धे
व्यतिक्रान्ते अस्त्रयुद्धं पुनःपुनः ॥ एवं तौ दिवसं कृत्वा युद्धं संश्रान्तवाहनौ ॥ १३ ॥ रोपयन्तौ श्रमं राजन्समरेषु जितश्रमौ ॥ ततो
गन्धर्वराजस्तु लम्बमाने दिवाकरे ॥ १४ ॥ चकार तामसीं मायां ययान्धमभवज्जगत् ॥ अन्धकारे ततो जाते वाचोऽश्रूयन्त दारुणाः ॥
॥ १५ ॥ भरतो हन्यतां शीघ्रं भक्ष्यतां पात्यतां तथा ॥ अभ्यवर्त्तन्त भरतं सर्पवृश्चिककर्कटाः ॥ १६ ॥ मर्कटा वानरा घोराः
सृगाला द्वीपिनस्तथा ॥ सिंहव्याघ्रवराहाश्च क्रव्यादा ये च जातयः ॥ १७ ॥ अर्द्यमानः स धर्मात्मा भरतस्तैः सुदुर्मुखैः ॥ 
सौरेणास्त्रेण तां मायां बभञ्ज परवीरहा ॥ १८ ॥ ततस्तु महतीं मायां स चकार महाभुजः ॥ उत्तस्थौ सुमहान्मेघश्छादयित्वा नभस्तलम् ॥१९॥
प्रववर्ष च घोराणि शस्त्रजालान्यनेकशः ॥ नाराचानर्धनाराचाँस्तथैव चषकाननान् ॥ २० ॥ वत्सदन्ताँस्तथा भल्लान्कर्णिनालीकगोमुखान् ॥

क्षुरप्रान्र्धचन्द्रांश्च वराहवदनांस्तथा ॥ २१ ॥ गदामुशुण्डीः प्रासांश्च भिण्डिपालान्परश्वधान् ॥ हुडान्गुडान्सलगुडाँश्चक्रखड्गांस्तथा परान् ॥
॥ २२ ॥ एतानन्यांश्च विविधान्ववर्ष परमायुधान् ॥ पतद्भिरायुधैर्घोरैर्बाध्यमानः स राघवः ॥ २३ ॥ वायव्यास्त्रेण तां मायां नाशयामास
शत्रुहा ॥ ततो बभूव राजेन्द्र गन्धर्वः पर्वतो महान् ॥ २४ ॥ क्षरत्प्रस्रवणो घोरः शिखरैश्च समुच्छ्रितैः ॥ मायां तां पार्वतीं श्रीमान्वज्रास्त्रेण
रघूद्वहः ॥ २५ ॥ नाशयामास राजेन्द्र सर्वसैन्यस्य पश्यतः ॥ हन्यमानासु मायासु रूपाँश्चक्रे सुदारुणान् ॥ २६ ॥ यक्षाणां राक्षसानां च पिशा
चानां पतत्रिणाम् ॥ सिंहव्याघ्रतरक्षूणां कुञ्जराणां तथैव च ॥ २७ ॥ बभञ्ज तस्य मायास्ता दिव्यास्त्रैर्भरतो रुषा ॥ हन्यमानासु मायासु लाघवाद्भ
रतं रणे ॥ २८ ॥ मोहयामास राजेन्द्र शैलूषो रणदर्पितः ॥ भरतोऽपि धनुष्कोट्यां शराग्रे च निलीयते ॥२९॥ ध्वजाग्रे च रथाग्रे च तुरगाग्रे पुनः
पुनः ॥ सायकान्भारताञ्शैघ्र्याद्ध्वंसयामास यादव ॥ ३०॥ राघवास्तुतुषुस्तस्य देवदैत्याश्च संघशः ॥ असुरा मुमुचुर्घोरमट्टहासं सुदारुणम् ॥३१॥
दैत्यानामट्टहासेन भरतः कुपितो भृशम् ॥ नारायणास्त्रं संयोज्य शरेणानतपर्वणा॥३२॥ इयेष हन्तुं तं क्रोधाद्गन्धर्वं रणगर्वितम् ॥ अस्त्रं तत्संहृतं
ज्ञात्वा जगाम स्वं रथं त्वरन् ॥३३॥ इयेष हन्तुं तं चास्त्रं रुद्रास्त्रेण तु दारुणम्॥एतस्मिन्नेव काले तु मुमोच भरतः शरम्॥३४॥कालानलसमप्रख्यं
सुपुङ्खं सफलं तथा ॥ राजितं वैनतेयस्य पक्षैः शत्रुविनाशनम् ॥ ३५ ॥ हत्वा रुद्रास्त्रवेगन्तु रथस्थस्य महीपतेः ॥ बिभेद हृदयं राजन्वर्म भित्त्वाथ
काञ्चनम् ॥ ३६ ॥ राज्ञश्च हृदयं भित्त्वा भित्त्वा च वसुधातलम् ॥ स्नात्वा रसातलाम्भःसु तूर्णं पुनरुपागमत् ॥३७॥ गन्धर्वराजोऽभिहतः शरेणा
नतपर्णा ॥ रथनीडे धनुस्त्यक्त्वा ममार परवीरहा ॥ ३८ ॥ पितरं निहतं दृष्ट्वा शैलूषतनया रणे ॥ क्रोधदुःखपरीतास्ते भरतं रणकर्कशम् ॥
॥ ३९ ॥ विव्यधुर्भूपतिश्रेष्ठं बाणैराशीविषोपमैः ॥ आयुधैर्विविधाकारैस्तदा ते वै रणाजिरे ॥ ४० ॥ मायाश्च विविधाश्चक्रुर्भरतस्य विपत्तये ॥
अन्तरिक्षं च तैर्व्याप्तं नानाहेतिप्रवर्षिभिः ॥ ४१ ॥ अस्त्रैश्च केचिद्भरतं प्रववर्षुर्महारथाः ॥ भूरिभावात्स योधानां महास्त्राणां महाबलात् ॥ ४२ ॥
प्रतापादस्त्रजालानां संशयं परमं गताः ॥ कालास्त्रमथ सांवर्तं मुमोच भरतस्तदा ॥ ४३ ॥ तस्मादस्त्रात्सहस्राणि शस्त्राणां निर्ययुस्तदा ॥ गन्धर्व
सैन्यं सकलमस्त्रैस्तैः प्रत्यहन्यत ॥ ४४ ॥ शस्त्रैः केचिद्विशिरसः कृत्वा गन्धर्वसत्तमाः ॥ विवाहाश्च कृताः केचित्केचिद्राजन्द्विधा कृताः ॥ ४५ ॥
केचिद्विबाहवश्चैव केचिद्व्यङ्गाश्च यादव ॥ गन्धर्वाणां च ताः कोट्यस्तिस्रः संग्रामशालिनाम् ॥ ४६ ॥ क्षणेनास्त्रप्रपातेन भरतेन निपा
तिताः ॥ गन्धर्वसैन्ये निहते प्रववुर्मारुताः शिवाः ॥ ४७ ॥ पुष्पवर्षं पपाताथ भरतस्य तु मूर्धनि ॥ दिशश्च निर्मलीभूता देवानां

विगतं भयम् ॥ ४८ ॥ ततो देवः सहस्राक्षः सर्वैः सुरगणैः समम् ॥ विमानस्थो बभाषेदं भरतं धर्मवत्सलम् ॥ ४९ ॥
इन्द्र उवाच ॥ ॥ पितामहवरोद्रेकादवध्यं देवतागणैः ॥ हतवानसि शैलूषं देवब्राह्मणकण्टकम् ॥ ५० ॥ यस्मात्तस्माद्वरं मत्तो गृहाण रघुन
न्दन ॥ ॥ मार्कण्डेय उवाच ॥ ॥ शतक्रतोर्निशम्यैतद्भरतो वाक्यमब्रवीत् ॥ ५१ ॥ ॥ भरत उवाच ॥ ॥ त्वमीशः सर्वदेवानां तवेदं
सकलं जगत् ॥ अचिरेणैव मरणं त्वदाज्ञाभङ्गकारिणाम् ॥ ५२ ॥ भवतीह सदा लोके निमित्तं मद्विधो जनः ॥ प्रजापतिकृतं भेदं को मोक्तुं
जगति क्षमः ॥ ५३ ॥ वरश्च यदि मे देयस्त्वया देव प्रदीयताम् ॥ सिन्धोरुभयकूलेषु करिष्यामि पुरद्वयम् ॥ ५४ ॥ गंधर्वरक्षिते देशे पुत्रयोरु
भयोः कृते ॥ निर्वेशं तदवाप्नोतु प्रसादेन शतक्रतो ॥ ५५ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ एवमस्त्वित्यथोक्त्वैव स्वर्लोकं वासवो ययौ ॥
वासवे तु गते नाकं राजा चित्ररथस्ततः ॥ ५६ ॥ गंधर्वाणां महातेजा भरतं वाक्यमब्रवीत् ॥ ॥ चित्ररथ उवाच ॥ ॥ गंधर्वा निहता वीरा
मदाज्ञाभङ्गकारिणः ॥ ५७ ॥ त्वया ते धर्मनित्येन देवब्राह्मणकण्टकाः ॥ तन्मे समुद्धृतं शल्यं देवानाञ्च प्रियं कृतम् ॥ ५८ ॥ तस्मात्सभाज
यित्वा त्वां यास्यामि त्रिदिवं पुनः ॥ ॥ मार्कण्डेय उवाच ॥ ॥ भरतस्तमुवाचाथ गन्धर्वा निहता मया ॥ ५९ ॥ तत एनं जनं तेषां स्त्रियश्च
परिपालय ॥ गन्धर्वाः परिपाल्यास्ते तेषां त्वं परिपालकः ॥ ६० ॥ मदीयेनानुरोधेन विशेषात्कर्तुमर्हसि ॥ सर्वेषाञ्च तथा स्थानं पर्वते गन्धमा
दने ॥ ६१ ॥ प्रयातास्तव तत्रस्थाः पालयिष्यन्ति शासनम् ॥ एवं करिष्य इत्युक्त्वा परिष्वज्य च पीडितम् ॥ ६२ ॥ सर्वज्ञं भरतं श्रीमान्ग
न्धर्वस्त्रिदिवं ययौ ॥ ६३ ॥ रघुप्रवीरोऽपि रणे मघोनः शत्रून्निहत्वा वरदानयुक्तम् ॥ विराजमानो यशसा परेण जगाम राजन्स्वपुरं प्रहृष्टः ॥६४॥
इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे शैलूषवधो नाम षट्षष्ट्युत्तरद्विशततमोऽध्यायः ॥ २६६ ॥ ॥ मार्कण्डेय उवाच ॥
आदित्येऽस्तमनुप्राप्ते सन्ध्याकाले सुदारुणे ॥ निवर्तयामास रथं युधाजिद्भरतस्य च ॥ १ ॥ निवर्तयानश्च रथं भरतं वाक्यमब्रवीत् ॥ संग्राममे
दिनीं पश्य स्वकृतां रघुनन्दन ॥ २ ॥ गन्धर्वाङ्गसमाकीर्णां हतकुञ्जरभूषणाम् ॥ तुरङ्गमगणाकीर्णां वरायुधधरां धराम् ॥ ३ ॥ संपूर्णचन्द्रप्रति
मैर्दष्टोष्ठैश्चारुकुण्डलैः ॥ भृकुटीतटदुष्प्रेक्ष्यैर्मस्तकैर्भाति मेदिनी ॥ ४ ॥ पञ्चशीर्षोरगाकारैर्वराङ्गदविभूषणैः ॥ बाहुभिर्भाति शूराणां वसुधा वसु
धाधिप ॥ ५ ॥ पद्मपत्रदलाकारैर्गन्धर्वाणां तथा करैः ॥ भाति सायकविच्छिन्नैः सपद्मेव वसुन्धरा ॥ ६ ॥ हस्तिहस्तसमाकारैर्गन्धर्वाणां तथा
करैः ॥ विभाति वसुधाकीर्णा वरचन्दनभूषितैः ॥ ७ ॥ त्वदेकशरनिर्भिन्नैर्गण्डशैलोपमैर्गजैः ॥ उद्भ्रान्तजीवितैः पश्य विनिकीर्णधरातलम् ॥ ८ ॥

आविष्कृतरदैश्चाश्वैर्विवृताक्षैस्तथैव च ॥ पतितैरावृतां पश्य तुरङ्गैर्मेदिनीं रणे ॥ ९ ॥ आतपत्रैः शशाङ्काभैश्चामरैश्च विराजिताम् ॥ योक्त्रैः खलीनैः पल्याणैः कुथाभिः कम्बुभिस्तथा ॥ १० ॥ केशैर्दण्डैस्तथा चापैः प्रासैः खड्गैः परश्वधैः ॥ शरैर्नानाप्रकारैश्च नानानामाङ्कितैः शुभैः ॥ ११ ॥ मुकुटैरङ्गदैर्हारैः कुण्डलैरपि शोभिताम् ॥ रघुनाथ भुवं पश्य कारुण्येऽपि मनोहराम् ॥ १२ ॥ गन्धर्वान्भक्ष्यमाणांश्च क्रव्याद्भिर्मृगपक्षिभिः ॥ पश्य त्वं चारुसर्वाङ्गं सर्वाभरणभूषितम् ॥ १३ ॥ आकृष्यमाणं निम्नेषु क्रव्याद्भिः कुणवद्रणे ॥ गात्रैश्चलद्भिर्दृश्यन्ते जीवन्तैरिव पार्थिव ॥ १४ ॥ सन्निधानं तु योधानां विवृतं करपङ्कजम् ॥ धनुर्ग्राहाज्जातकिणं भक्षितेन पतत्रिभिः ॥ १५ ॥ अर्धसम्भक्षितैर्वक्त्रैस्तथा सम्पूर्णभक्षितैः ॥ दुर्वृत्तान्पश्यगन्धर्वाञ्शापादिव महीक्षिताम् ॥ १६ ॥ अनागसां नरेन्द्राणां गन्धर्वैर्यत्पुरा कृतम् ॥ भूयस्तदेव समरे गन्धर्वाणां त्वया कृतम् ॥ रणाजिरे पिशाचानां गन्धर्वान्पश्य राघव ॥ १७ ॥ यक्षाणां राक्षसानां च शतशोऽथ सहस्रशः ॥ गन्धर्वमांसलुब्धानां सततं क्षतजाशिनाम् ॥ १८ ॥ समुद्रदाराः सम्प्राप्ताः क्रव्यादाः क्षुधिता भृशम् ॥ त्वयैतेषां परा तृप्तिः कृताद्य रणमूर्धनि ॥ १९ ॥ नानाविधानि रूपाणि पश्य क्रव्यभुजां रणे ॥ केचित्स्थूलाः कृशाः केचित्प्रांशवो लघवोऽपरे ॥ २० ॥ लम्बभ्रूजठराः केचित्तथा चिपिटनासिकाः ॥ वृत्ताक्षाः केकराक्षाश्च दन्तुराः सुविभीषणाः ॥ २१ ॥ तथा चैवोर्ध्वरो माणो महादंष्ट्रा महामुखाः ॥ पुरस्तात्पार्श्वयोर्घोराः पश्चादङ्गदयोः परे ॥ २२ ॥ नानाविधानां सत्त्वानां सदृशैश्च तथाननैः ॥ नानावे शधरा रौद्रा नानाविकृतदर्शनाः ॥ २३ ॥ सिंहचर्माम्बरधरा व्याघ्रचर्माम्बरास्तथा ॥ आहूयन्ते दशन्त्यन्ये हरन्त्यन्येऽसृगुत्तमम् ॥ २४ ॥ अन्ये स्कन्दं समारोप्य मासं रक्तं तदागमन् ॥ रक्तापगासु क्रीडन्ति त्वत्कृतासु यथासुखम् ॥ २५ ॥ स्नपयन्ति रुधिरैश्चान्ये पाययन्ति परेऽसृजम् ॥ रक्तं कृत्वा कपालेषु कृत्वोत्सङ्गे पुनःपुनः ॥ २६ ॥ भार्याभिश्च सहैवान्ये पिबन्ति रुधिरं रणे ॥ पाययन्ति तथैवान्ये रामा रामानुजः स्वयम् ॥ २७ ॥ भार्याकरधृतेष्वन्ये कपालेषु पिबन्त्यसृक् ॥ कौञ्जरेषु कपालेषु पिबन्त्यन्येऽसृगुल्वणाः ॥ २८ ॥ शिशून्स्कन्धगतान्कृत्वा तृप्ता नृत्यन्ति चापरे ॥ हस्तमादाय पत्नीनां नृत्यन्त्यन्ये तथैव च ॥ २९ ॥ नृत्यन्त्यन्ये हसन्त्यन्ये विकृतैश्च तथा स्वरैः ॥ गायन्त्यन्ये स्वपन्त्यन्ये कलहायन्ति चापरे ॥ ३० ॥ कुणपाँश्च तथैवान्ये त्यजन्त्यन्ये महीतले ॥ अन्यांश्चादातुमिच्छन्ति गृह्णन्ति च तथापरान् ॥ ३१ ॥ कुर्वन्ति कलहाँश्चान्ये कुणपार्थाय कुत्सिताः ॥ उत्कृत्य मांसान्यश्नन्ति केचिद्गात्रैर्विभूषिताः ॥ ३२ ॥ भुक्त्वा चास्थीनि मज्जाश्च केचिदश्नन्ति

राघव ॥ भरतस्य प्रसादेन तृप्ताः स्म इति चापरे ॥ ३३ ॥ परस्परश्च भाषन्ते परं हर्षमुपागताः ॥ नित्यं भवतु राज्ञाश्च युद्धं वैरं नृशंसता ॥ ॥ ३४ ॥ बलं सहायाः पुष्टिश्च येन तृप्यामहे वयम् ॥ एवमेते वदन्तश्च स्वरैश्च विविधैर्जगुः ॥ ३५ ॥ रथं तथान्ये वीक्षन्ते सस्नेहा भृशदुर्दृशाः ॥ एवं स भरतः श्रीमान्मातुलेन प्रदर्शितम् ॥ ३६ ॥ पश्यन्रणाजिरं प्रायाद्येन राजगृहं पुनः ॥ सोऽपश्यन्नगराभ्याशे वायव्यास्त्रविमोहितम् ॥ ३७ ॥ सैन्यं तत्पार्थिवेन्द्राणां व्रजन्तं समरादिमम् ॥ दृष्ट्वा ते भरतं सर्वे रणरेणुसमुक्षितम् ॥ ३८ ॥ संग्रामे जयिनं वीरमभ्यनन्दन्त पार्थिवाः ॥ स समेत्य महाभागैः परिष्वज्य च पार्थिवान् ॥ सान्त्वयित्वा च धर्मात्मा शिबिराणि व्यसर्जयत् ॥ ३९ ॥ ततः स तां मातुलराजधानीं प्रहृष्टयोधार्यजनाभिरामाम् ॥ विवेश रात्रौ रघुवंशनाथः संस्तूयमानः स्तुतिभिर्नृसिंहैः ॥ ४० ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेय वज्रसंवादे रणभूमिवर्णनो नाम सप्तषष्ट्युत्तरद्विशततमोऽध्यायः ॥ २६७ ॥ मार्कण्डेय उवाच ॥ तस्यां रात्र्यां व्यतीतायां गन्धर्वनगराज्जनाः ॥ गन्धर्वपुत्रदाराश्च राजपत्न्यस्तथैव च ॥ १ ॥ रणाजिरं तु संप्राप्य रुरुदुर्भृशदुःखिताः ॥ अहो कृतान्तो बलवान्येन नो बलदर्पिताः ॥२॥ अजेयाः सुरसंघानां संग्रामे विनिपातिताः ॥ नातिभारोऽस्ति दैवस्य नाशक्यं तस्य विद्यते ॥ ३ ॥ येन नागायुतप्राणा गन्धर्वतनया हताः ॥ ये पुरा शयनीयेषु पराध्यैषु मदोत्कटाः ॥ ४ ॥ न निद्रामभिगच्छन्ति शेरते तेऽद्य भूतले ॥ तालवृन्तानिलैर्ये तु वरस्त्रीभिश्च वीजिताः ॥५॥ वीज्यन्ते पतितास्तेऽद्य गृध्रपत्रैर्महीतले ॥ परार्ध्यचन्दनाक्ताङ्गा ये विरेजुः समागताः ॥६॥ न राजन्तेऽद्य ते सर्वे शोणिताक्ता महीतले ॥ आलिंग्य सुषुपुः पूर्वं वरोरुजघनाः स्त्रियः ॥७॥ ये तेऽद्य भूमिमालिङ्ग्य दुःखशय्यासु शेरते ॥ हा राजन्देवदर्पघ्न हा राजन्भृत्यवत्सल ॥ ८ ॥ हा राजँश्चारु सर्वाङ्ग हा राजन्सूतवत्सल ॥ बाहुच्छायामुपाश्रित्य वयं कस्य जनेश्वर ॥९॥ निर्भया देवदैत्यानां निवत्स्यामो यथासुखम् ॥ संपूर्णचन्द्रवदनं पुत्र कोटिभिरावृतम् ॥ १० ॥ विषमस्थमितो दृष्ट्वा यास्यामो यमसादनम् ॥ सभास्थं त्वामपश्यन्तो यास्यामो यमसादनम् ॥ ११ ॥ एवं जने तु शोकार्ते करुणं विलपत्यथ ॥ गन्धर्वराजपुत्राणां पत्न्यस्ताः सुमनोहराः ॥ १२ ॥ ततस्ता दुःखशोकार्ताः कारुण्ये महति स्थिताः ॥ भर्तारं शिरसा हीनं काचिद्बाहुविनाकृतम् ॥ १३॥ द्विधा कृतं तथैवान्या काचित्क्रव्यादभक्षितम् ॥ दृष्ट्वा रुरोद दुःखार्ता काचिन्नासादयत्यपि ॥ १४ ॥ कुणपेषु स्खलन्त्यस्ता बभ्रमुस्तत्र दुःखिताः ॥ उरांसि पाणिभिर्घ्नन्त्यो लूनयन्त्यः शिरोरुहान् ॥ १५ ॥ नावाप यासां भवने पुरा सूर्योऽपि दर्शनम् ॥ दुःखिता मुक्तकेशास्ता जनः सर्वोऽथ पश्यति ॥ १६ ॥ पतन्त्युपरि भर्तृणां समालिङ्गन्ति चापराः ॥ रुदन्त्यन्यास्तथा राजन्नुत्कृत्य

मधुरस्वराः ॥ १७ ॥ रुदन्तीनां तथा तासां राजपत्न्यः सुदुःखिताः ॥ रुरुदुः करुणं राजन्विप्रकीर्णशिरोरुहाः ॥ १८ ॥ हा कान्त हा महाराज हा महाजनवल्लभ ॥ हा सुरेश्वरदर्पघ्न हा शशाङ्कनिभानन ॥ १९ ॥ हे भर्तः केन ते बुद्धिर्मरणं प्रति गाहिता ॥ हा राजँस्त्वमिमां भूमिं समालिङ्ग्य प्रियामिव ॥ २० ॥ वसुधां प्रियबाहुभ्यां समाजे किं न लज्जसे ॥ किं शेषे पुरतोऽस्माकं विशेषेण रजस्वलाम् ॥२१॥ खेचरस्या पिते राजन्सततं वसुधा प्रिया ॥२२॥ नाडायनवचस्तद्धि त्वयानर्थाय न श्रुतम् ॥ प्रिया ते यद्यपि मही तथाप्यस्मासु पार्थिव॥ युक्तं हि कर्तुं दाक्षिण्यं यतस्त्वं सत्कुलोद्भवः॥२३॥ अतर्कितप्रयाणेन त्वया स्म परिपीडिताः ॥ वाङ्मात्रेण कुरुष्वास्मान्सान्त्वनं रिपुसूदन ॥२४॥ राज्ञो न युक्तं शयनं विवृते वसुधातले ॥ तस्मादुत्तिष्ठ राजेन्द्र शयनं भज मा चिरम् ॥२५॥ तुन्ना वयं महाराज मदनेन मदेन च ॥ कण्ठे नु कं गृहीष्यामस्त्वया हीना जनेश्वर ॥ २६ ॥ कृतान्तो बलवान्राजन्येनाकृष्याद्य नीयसे ॥ नाडायनस्य वचनं त्वया यदि कृतं भवेत् ॥ २७ ॥ नाभविष्यद्वियोगस्तु त्वयास्माकं जनाधिप ॥ निश्चेष्टाङ्गः कथं त्वद्य राजन्स्वपिषि भूतले ॥ २८ ॥ उत्थाय वीर चास्माकं परिष्वज्य न चुम्बसे ॥ विजित्य समरे वीरान्हत्वा च वसुधाधिपान् ॥ २९ ॥ कथमेकेन युद्धे त्वं मानुषेण निपातितः ॥ क्व ते वपुः क्व ते तेजः क्व सा लक्ष्मीः क्व ते बलम् ॥ ३० ॥ क्व ते तद्विमलं छत्रं क्व च ते वरचामरम् ॥ क्व तत्पीठश्च शृङ्गारं क्व च ते तनया विभो ॥ ३१ ॥ क्व सा लीला क्व सा लक्ष्मीः क्व च ते वरबन्दिनः ॥ वरचामरधारिण्यः क्व च ताः परमाङ्गनाः ॥ ३२ ॥ अद्यैवस्मस्त्वया हीना अद्यैव स्पृहयाम हे ॥ अद्यैव स्मरणीयस्त्वं गतोऽसिजनवल्लभ ॥ ३३ ॥ नूनं कान्ततरः स्वर्गे राजेन्द्र प्रमदाजनः ॥ यत्त्यक्त्वा स्वजनं तस्य रतिर्बद्धा त्वयानघ ॥ ३४ ॥ स्वच्छन्दचारिणा केन मतिः शूरनिषेविता ॥ त्वया प्रार्थयता लोके युद्धश्रद्धा विवर्द्धिता ॥३५॥ वल्लभस्य जनस्यास्य लालितस्य तथा त्वया ॥ दीर्घप्रयाणे कर्तव्यो वाङ्मात्रेणाप्यनुग्रहः॥३६॥ विसर्जय जनं राजन्क्रीडामः सहितास्त्वया ॥ उद्यानेषु विचित्रेषु वनेषूपवनेषु च ॥३७॥ वयमीर्ष्यां न कुरुमः सर्वलोकस्य पश्यतः ॥ वज्रसारमिदं नूनं हृदयं सुदृढं कृतम्॥३८॥ गतासुमपि दृष्ट्वा त्वां शतधा यन्न दीर्यते॥ कर्पूरचन्दनार्द्राङ्ग महार्हशयनोचित ॥३९॥ विराजसे न राजेन्द्र रुधिराक्तो महीतले ॥ क्व ते भिन्नघटा नागास्तुरगाः क्व च ते गजाः ॥ ४० ॥ क्व ते योधा गता राजञ्शक्रविस्पर्धिनो रणे ॥ सैन्ये महति तिष्ठन्तं खड्गबाणधनुर्धरम् ॥ ४१ ॥ कथं त्वामनयद्राजन्परलोकाय राघवः ॥ कृतान्तसमदृष्ट्यैव वेपथुस्ते जनेश्वर ॥ ४२ ॥ स कथं मानुषेणाद्य संग्रामे विनिपातितः ॥ तद्वयं किं करिष्यामो निराशास्तव जीविते ॥ ४३ ॥ न मेऽस्ति कल्पो दृष्टिर्वा मे नसोर्दृष्टिसङ्गतिः ॥

एवं विलपमानास्ताः शैलूषस्य तु योषितः ॥ ४४ ॥ आलिङ्ग्यालिङ्ग्य तं राजन्निपतन्ति महीतले ॥ शिरांसि च विनिघ्नन्ति ताडयन्ति भुजास्तथा ॥ ४५ ॥ पश्यन्ति भूयस्तं वीरं भूमावुत्क्रान्तजीवितम् ॥ दृष्ट्वा भूयश्च निःसंज्ञा निपतन्ति महीतले ॥ ४६ ॥ तासां रोदनशब्देन समाक्रान्तं महीतलम् ॥ तासामाश्वासनं चक्रे विद्वान्नाडायनो द्विजः ॥ ४७ ॥ एतस्मिन्नेव काले तु तं देशमपराजितः ॥ गन्धर्वेन्द्रः समभ्यागाद्भरतेन प्रचोदितः ॥ ४८ ॥ स तत्स्थानमथाभ्येत्य जनं सर्वं यथाविधि ॥ आश्वासयामास तदा राजा चित्ररथः शनैः ॥ ४९ ॥ सत्कारं लम्भयामास शैलूषं तनयैः सह ॥ राज्ञा चित्ररथेनाथ गन्धर्वास्ते प्रचोदिताः ॥ ५० ॥ राज्ञश्चक्रुश्चितां काष्ठैः सुशुष्कैर्बहुभिस्तदा ॥ पुत्राणामस्य सर्वेषां योधानामप्यशेषतः ॥ चन्दनागुरुकाष्ठैस्ते तथा कालीयकस्य तु॥५१॥ चितां गन्धैश्च तैलैश्च प्रज्वाल्य च घृतेन ते ॥ संस्कारं कृतवांस्तत्र रामपर्वतरोधसि ॥ कृत्वा निवेशनं तत्र सर्वे चित्ररथाज्ञया ॥ सुखमूषुर्महाराज पाल्यमाना महात्मना ॥ ५४ ॥ बभूव तत्रापि पुरप्रधाने शैलूषपौत्रस्तु जनस्य राजन् ॥ गन्धर्वराजस्तु चकार तस्य संरक्षणं राघवमुख्यवाक्यात् ॥ ५५ ॥ इति श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे गन्धर्वस्त्रीविलापो नामाष्टषष्ट्युत्तरद्विशततमोऽध्यायः ॥ २६८ ॥ ॥ मार्कण्डेय उवाच ॥ अथाषाढस्य मासस्य शुक्लपक्षावसानिकम् ॥ उत्सवं त्रिदशेन्द्राणां समाप्तं दिनपञ्चकम् ॥ १ ॥ क्षीरोदशेषशयने भगवान्मधुसूदनः ॥ योगनिद्रां तदा भेजे लोकानां हितकाम्यया ॥ २ ॥ भरतोऽप्युत्सवं कृत्वा पूजयित्वा जनार्दनम् ॥ महीदानं तथा कृत्वा नक्ताशी दिनपञ्चकम् ॥ ३ ॥ चातुर्मास्ये निवृत्ते च मधुमांसस्य भक्षणात् ॥ विसर्जयामास गृहात्पूजयित्वा महीपतीन् ॥ ४ ॥ उक्त्वा बहुविधैः सान्त्वैः परिष्वज्य सुपीडितम् ॥ गन्धर्वनगरावाप्तैर्विभज्य धनसंचयैः ॥ ५ ॥ संपूज्य वर्षारात्रौ तु स्वकीयं सैनिकं जनम् ॥ संमंत्र्य प्रेषयामास सोत्कण्ठं दयिताजने ॥ ६ ॥ प्रेषयित्वा जनं प्रायात्किञ्चिच्छेषस्वसैनिकैः ॥ उवास मातुलगृहे भरतो देवराजवत् ॥ ७ ॥ अवसच्चतुरो मासान्प्रीत्या राघवसत्तमः ॥ ततः कार्तिकमासाद्य शुक्लपक्षावसानिकम् ॥ ॥ ८ ॥ उत्सवं विपुलं चक्रे संप्राप्य दिनपञ्चकम् ॥ प्रबोधं देवदेवस्य त्रिदशानां महोत्सवे ॥ ९ ॥ तेषु दत्त्वा महादानं कार्तिक्यां च विशेषतः ॥ पूजयित्वा जगन्नाथं शङ्खचक्रगदाधरम् ॥ १०॥ शुभे दिने सुनक्षत्रे पूजयित्वा द्विजोत्तमान् ॥ सांवत्सरं पुरस्कृत्य स्थपतींश्च स राघवः ॥ ११ ॥ सिंधोरुभयपार्श्वे तु स चकार पुरद्वयम् ॥ पुष्करं पुष्करावत्यां तक्षं तक्षशिलां प्रति ॥ १२ ॥ आरम्भं पुरयोः कृत्वा सोभिषिच्य सुतावुभौ ॥

पुरद्वये महाराज विधिवद्भूरिदक्षिणः॥ १३ ॥ पुष्करे पुष्करं पुत्रं तदा तक्षं च यादव ॥ पुरद्वये समाकीर्णे वणिग्भिर्ब्राह्मणैस्तथा ॥ १४ ॥ शिल्पि
भिश्च महाराज नानाशिल्पोपजीविभिः ॥ गृहगुञ्जसमाकीर्णे देवायतनभूषणे ॥ १५ ॥ प्रतिष्ठिते तदा राज्ये पुत्रयोर्भरतस्तदा ॥ धनरत्नाश्वना
गैश्च विभज्य तनयावुभौ ॥ १६ ॥ युधाजिति परीदाय गते संवत्सरे तदा ॥ अतीते कार्तिके मासे नक्षत्रे तु गुणान्विते ॥ १७ ॥ जगाम भरतः
श्रीमान्रामं द्रष्टुं नराधिप ॥ सोनुयातः सुतैर्वीरो मातुलेन युधाजिता ॥ १८ ॥ तीरे स्वधाम्नस्तौ पुत्रौ मातुलं तु युधाजितम् ॥ विसर्जयामास
गृहान्परिष्वज्य च पीडितम् ॥ १९ ॥ भरतः साश्रुनयनो बलेन चतुरङ्गिणा ॥ स्तोकेन काञ्चनाङ्गेन रथेन च तथा ययौ ॥ २० ॥ संरुध्य च
रथाँस्ते तु गच्छन्तं भरतं तदा ॥ ददृशुर्दीनमनसः किंचिदागतविभ्रमाः ॥ २१ ॥ मुहुर्मुहुः परावृत्य भरतः कथमप्यगात् ॥ परस्पर
मपश्यन्तो त्वरावन्तस्तथा गताः ॥ २२ ॥ भरतोपि तथा देशान्सरांसि सरितस्तथा ॥ ग्रामपत्तनसंगाद्यान्व्यतिक्रम्य पुरीं ययौ ॥ २३ ॥
अथाससाद चायोध्यां दीर्घकालप्रवासकः ॥ प्रविश्य नगरं तत्र पताकाध्वजसङ्कुलम् ॥ २४ ॥ सुधावदातभवनं सिक्तं चन्दनवारिणा ॥
कृतं रामाज्ञया सर्वं पूजितामरबालकम् ॥ २५ ॥ निर्ययौ पुरतस्तस्य चतुरङ्गबलान्वितः ॥ रामाज्ञया महातेजा नागरैः सह लक्ष्मणः ॥ २६ ॥
भरतं लक्ष्मणो दृष्ट्वा चिरकालप्रवासकम् ॥ अभ्यवादयत प्रीत्या शिरः कृत्वा महीतले ॥ २७ ॥ भरतो मूर्ध्न्युपाघ्राय सम्परिष्वज्य पीडितम् ॥
सर्वत्र कुशलप्रश्नं तत्र कृत्वा यथाविधि ॥ २८ ॥ यथार्हं पूजयामास जनं नगरवासिनम् ॥ कुशलप्रश्नयोगेन स्मितपूर्वाभिभाषिता ॥ २९ ॥
स तेन जनवृन्देन पूज्यमानो मुहुर्मुहुः ॥ विवेश नगरं श्रीमान्भरतो नागधूर्गतः ॥ ३० ॥ विमानहर्म्यप्रासादगवाक्षकगतेन तु ॥
स्त्रीजनेन महातेजा वीक्ष्यमाणस्तु सस्पृहम् ॥ ३१ ॥ आससाद महातेजा नरेन्द्रद्वारमायतम् ॥ तत्र वादित्रनादोऽभून्महान्कलकलस्तथा ॥ ३२ ॥
राजद्वारमथासाद्य सोवरुह्य गजोत्तमात् ॥ आदाय लक्ष्मणं पाणौ प्रविवेश तदा सभाम् ॥३३ ॥ तत्र सिंहासने रामं स ददर्श महाभुजम् ॥
चन्दनेनानुलिप्ताङ्गं सर्वाभरणभूषितम् ॥ ३४ ॥ संपूर्णचन्द्रवदनं नीलोत्पलदलेक्षणम् ॥ दृष्ट्वैव रामं भरतः कृत्वा भूमिगतं शिरः ॥ ३५ ॥
निपपात महातेजा लक्ष्मणेन विशेषतः ॥ रामोपि भरतं दृष्ट्वा समुत्थाप्य महाभुजम् ॥ ३६ ॥ जग्राह पीडितं कण्ठे मूर्ध्न्युपाघ्राय चासकृत् ॥
आदिदेशासनं तस्य पृष्ट्वा कुशलमव्ययम् ॥३७॥ निवेद्य रत्नमुख्यानि गन्धर्वाणां स राघवः ॥ रामाय धर्मनित्याय यथा भेजे वरासनम् ॥ ३८ ॥
पृष्टस्स रामेण निवेदयित्वा वृत्तं यथावत्पुरुषप्रवीरः ॥ विसर्जितस्तेन गृहाय गत्वा संपूजयामास तदा स विष्णुम् ॥ ३९ ॥ स्वप्ने तथोवास स

रामपादौ चासाद्य वीरः समरेष्वजेयः ॥ रामोपि राज्यं सहितस्तु तेन चकार सम्यङ्गनिहतारिपक्षः ॥ ४० ॥ ततश्चतुर्थे परिवत्सरे तु शुश्राव रामः पुरयोः प्रतापम् ॥ कृत्वा सुताभ्यां भरतस्य विष्णोर्मुदञ्च लेभे परमां प्रहृष्टः ॥ ४१ ॥ एषोऽद्य प्रोक्तो विजयो मया ते रणाजिरे राघवनंदनस्य ॥ श्रोतव्यमेतन्नियमेन पुंसा विज्ञानधर्मार्थयशोभिरामम् ॥ ४२ ॥ इति श्रीविष्णुमहापुराणे द्वितीयभागे श्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे श्रीरामचंद्रभरतसमागमो नामैकोनसप्तत्युत्तरद्विशततमोऽध्यायः ॥ २६९ ॥ छ ॥ छ ॥ ॥



॥ समाप्तश्चायं प्रथमखण्डः ॥ छ ॥



इदं पुस्तकं क्षेमराज-श्रीकृष्णदासश्रेष्ठिना मुम्बय्यां ( खेतवाड़ी ७ वीं गली खम्बाटा लैन )
स्वकीये "श्रीवेङ्कटेश्वर" ( स्टीम ) मुद्रणयन्त्रालये मुद्रयित्वा प्रकाशितम् ॥
संवत् १९६९, शके १८३४.

॥ अथ श्रीविष्णुमहापुराणे २ भागे विष्णुधर्मोत्तरे द्वितीयखण्डप्रारम्भः ॥

श्रीगणेशाय नमः ॥ वज्र उवाच ॥ आदौ भगवता प्रोक्तो विजयो भरतस्य मे ॥ यच्छ्रुत्वा वेद्मि चात्मानं ब्रह्मन्विगतकल्मषम् ॥१ ॥ सुखश्राव्यश्च हृद्यश्च कथासारस्तु भार्गव ॥ कथाश्च विविधाः प्रोक्तास्तत्प्रसङ्गात्त्वयानघ ॥ २ ॥ रसवत्यश्च धर्मज्ञ सर्वपापक्षयङ्कराः ॥ यास्ता ब्रह्मन्प्रसङ्गेन मयापहृतचेतसा ॥ ३ ॥ प्रस्तुतास्ताः कथास्त्यक्तास्ता एव कथस्व मे ॥ भगवन्सर्वधर्मज्ञ प्रत्यक्षामलदर्शन ॥ कथानां तु प्रसङ्गेन प्रस्तुता याः कथाः पुरा ॥४॥ सुदूरमन्तरीभूत्वा रामस्य विदितात्मनः ॥ ता एव श्रोतुमिच्छामि त्वत्तो भृगुकुलोद्वह ॥५॥ लोकं वारुणमासाद्य रामो भृगुकुलोद्वहः ॥ श्रुतवान्देवदेवेशात्किन्नु भूयः प्रचेतसः ॥६॥ एतन्मे सर्वमाचक्ष्व तत्र मे संशयो महान् ॥ मार्कण्डेय उवाच ॥ कालस्य संख्यां तां श्रुत्वा रामप्रोक्तां प्रचेतसा ॥ ७ ॥ पप्रच्छ वरुणं देवं राजधर्मानतः परम् ॥ पृष्टस्तु जामदग्न्येन रामं प्राह जलेश्वरः॥८॥राजधर्माञ्छृणुष्वार्य पुष्करात्तनयान्मम ॥ राजधर्माः श्रुतास्तेन देवाद्दशशतेक्षणात् ॥ ९ ॥ स यथावद्विजानाति राजधर्मान्द्विजोत्तम ॥ एवमुक्त्वा तदा राममानाय्य च तथा सुतम् ॥ १० ॥ उवाच भार्गवस्यास्य धर्मान्कथय पुत्रक ॥ यत्रयत्रास्य सन्देहो भविष्यति महात्मनः ॥ ११ ॥ तदुपानुद भद्रन्ते मम वाक्येन पुत्रक ॥ एवमुक्तस्तथेत्युक्त्वा गृहान्निन्ये भृगूत्तमम् ॥ तत्रास्य कथयामास राजधर्मान्महोदयान् ॥ १२ ॥ रामेण पृष्टो वरुणस्य पुत्रो जगाद धर्मान्नृपसत्तमानाम् ॥ द्रव्यान्महार्थान्भुवि पालनाय लोकस्य सर्वस्य नरेन्द्रचन्द्र ॥ १३ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयकखण्डे मार्कण्डेयवज्रसंवादे रामस्य पुष्करगृहगमनं नाम प्रथमोऽध्यायः ॥ १ ॥ मार्कण्डेय उवाच ॥ सुखासीनो नरश्रेष्ठः पुष्करस्य निवेशने ॥ पप्रच्छ पुष्करं रामो धर्मनित्यो जितेन्द्रियः ॥ १ ॥ राम उवाच ॥ राष्ट्रस्य किं कृत्यतमं तन्माचक्ष्व पृच्छतः ॥ आदावेव महाभाग यादोगणनृपात्मज ॥ २ ॥ पुष्कर उवाच ॥ राष्ट्रस्य कृत्यं धर्मज्ञ राज्ञ एवाभिषेचनम् ॥ अनिन्द्रमबलं राष्ट्रं दस्यवोऽभिभवन्त्युत ॥ ३ ॥ अराजकेषु राष्ट्रेषु धर्मावस्था न विद्यते ॥ वर्णानामाश्रमाणां च व्यवस्थानं च भार्गव ॥ ४ ॥ अराजकेषु राष्ट्रेषु नैव कन्या प्रदीयते ॥ विद्यते ममता नैव तथा वित्तेषु कस्यचित् ॥ ५ ॥ स्वात्स्यो न्यायः प्रवर्तेत विश्वलोपस्तथैव च ॥ लोके न कश्चिद्विद्येत गुरोर्वचनकारकः ॥ ६ ॥ नाधीयीरँस्त्रयीं विद्यां त्रयो वर्णा द्विजातयः ॥ देवानां यजनं न स्यादनावृष्टिस्ततो भवेत् ॥ ७ ॥ नृलोकसुरलोकौ च स्यातां संशयिताबुभौ ॥ जनमारी भवेद्घोरा यदि राजा न पालयेत् ॥८॥ प्रजानां रक्षणार्थाय विष्णुतेजोपबृंहितः ॥ मानुष्ये जायते राजा देवसत्त्ववपुर्धरः ॥ ९ ॥ यस्मिन्प्रसन्ने देवस्य प्रसादस्तूपजायते ॥ यस्मिन्क्रुद्धे जनस्यास्य क्रोधः समुपजायते ॥ १० ॥ महद्भिः पुण्यसम्भारैः पार्थिवो राम जायते ॥ यस्यै

कस्य जगत्सर्वं वचने राम तिष्ठति ॥ ११ ॥ चातुर्वर्ण्यं स्वधर्मस्थं तेषु देशेषु जायते ॥ येषु देशेषु राजेन्द्र राजा भवति धार्मिकः ॥ १२ ॥
( मारकं न च दुर्भिक्षं नाग्निचौरभयं तथा ॥ न च व्यालभयं तेषां येषां धर्मपरो नृपः ) ॥ १३ ॥ आदौ विन्देत नृपतिं ततो भार्यां ततो धनम् ॥
कुराजनि जनस्यास्य कुतो भार्या कुतो धनम् ॥ १४ ॥ तस्मात्सर्वप्रयत्नेन राष्ट्रमुख्ये नरेश्वरः ॥ परीक्ष्य पूर्वैः कर्तव्यो धार्मिकः सत्य
सङ्गरः ॥ १५ ॥ येषां हि राजा भुवि धर्मनित्यस्तेषां न लोके भयमस्ति किञ्चित् ॥ तस्मात्प्रयत्नेन नरेन्द्र कार्यो राष्ट्रप्रधानैर्नृपतिर्विनीतः ॥१६॥
इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे रामं प्रति पुष्करवाक्ये राजप्रशंसा नाम द्वितीयोऽध्यायः ॥ २ ॥ पुष्कर उवाच ॥
सर्वलक्षणलक्षण्यो विनीतः प्रियदर्शनः ॥ अदीर्घसूत्री धर्मात्मा जितक्रोधो जितेन्द्रियः ॥ १ ॥ स्थूललक्षो महोत्साहः स्मितपूर्वाभिभाषकः ॥
सुरूपः कुलसंपन्नः क्षिप्रकारी महाबलः ॥ २ ॥ ब्रह्मण्यश्चाविसंवादी दृढभक्तिः प्रियंवदः ॥ अलोलुपस्संयतवाग्गंभीरः प्रियदर्शनः ॥
॥ ३ ॥ नातिदण्डो न निर्दण्डः चारचक्षुरजिह्मगः ॥ व्यवहारे समः प्राप्ते पुत्रस्य रिपुणा सह ॥ ४ ॥ रथे गजेऽश्वे धनुषि
व्यायामे च कृतश्रमः ॥ उपवासतपःशीलो यज्ञयाजी गुरुप्रियः ॥ ५ ॥ मन्त्रिसांवत्सराधीनः समरेष्वनिवर्तकः ॥ कालज्ञश्च
कृतज्ञश्च नृविशेषज्ञ एव च ॥ ६ ॥ पूज्यं पूजयिता नित्यं दण्ड्यं दण्डयिता तथा ॥ षाड्गुण्यस्य प्रयोक्ता च शक्त्युपेतस्तथैव च ॥
॥ ७ ॥ उक्तैरनुक्तैस्तु गुणैरनेकैरलङ्कृतो भूमिपतिश्च कार्यः ॥ सम्भूय राष्ट्रप्रवरैर्यथावद्राष्ट्रस्य रक्षार्थमदीनसत्त्वः ॥ ८ ॥ इति श्रीविष्णुधर्मोत्तरे
द्वितीयखण्डे मार्कण्डेयवज्रसंवादे रामं प्रति पुष्करवाक्ये राजलक्षणं नाम तृतीयोऽध्यायः ॥ ३ ॥ ॥ पुष्कर उवाच ॥ एवं गुणगणाकीर्णं
वरयेयुर्नराधिपम् ॥ सम्भूय राष्ट्रप्रवराः क्षत्रियं तु कुलोद्गतम् ॥ १ ॥ वृतश्च तैर्व्रतं राजा गृह्णीयाद्विजितेन्द्रियः ॥ पालयिष्यामि वः सर्वान्धर्म
स्थान्नात्र संशयः ॥ २ ॥ व्रतं गृहीत्वा राज्यार्थी वृणुयाद्ब्राह्मणोत्तमम् ॥ सांवत्सरं सुखायास्य सर्वस्य जगतो नृपः ॥ ३ ॥ सर्वलक्षणलक्षण्यं
विनीतं प्रियदर्शनम् ॥ सुरूपं वेशसंपन्नं नित्यमूर्जितदर्शनम् ॥ ४ ॥ अदीनवादिनं धीरं धर्मनित्यं जितेन्द्रियम् ॥ अव्यङ्गं नाधिकाङ्गं च
वेदवेदाङ्गपारगम् ॥ ५ ॥ चतुःषष्ट्यङ्गतत्त्वज्ञमूहापोहविशारदम् ॥ भूतभव्यभविष्यज्ञं गणितज्ञं विशेषतः ॥ ६ ॥ विचन्द्रा शर्वरी यद्वन्मुकुटं च ॥१७४॥
च्युतोपलम् ॥ गणितेन तथा हीनं ज्योतिषं नृपसत्तम ॥ ७ ॥ आस्तिकं श्रद्दधानं च अनुकूलं महीपतेः ॥ सांवत्सरं नृपो गत्वा वरयेत्प्रयतः

१ कोष्टान्तर्गतः पाठः खपुस्तके नास्ति ।

शुचिः ॥ ८ ॥ येनाभिषिक्तो नृपतिर्विनष्टस्तु नराधिप ॥ सांवत्सरं न तं विद्वान्वरयेन्नृपसत्तम ॥ ९ ॥ न हीनाङ्गं न वाचालं न च निष्प्रतिभं नृपः ॥ कुवेशमलिनं मुण्डं नास्तिकं पापनिश्चयम् ॥ १० ॥ भिन्नवृत्तिं च वरयेद्वरयेत्सद्गुणं सदा ॥ वरयित्वा तु वक्तव्याः स्वयमेव महीभुजा ॥ ११ ॥ यथैवाग्निमुखा देवास्तथा राजमुखाः प्रजाः ॥ यथैवाग्निमुखा मन्त्रा राज्ञां सांवत्सरास्तथा ॥ १२ ॥ त्वं मे माता पिता चैव देशिकश्च गुरुस्तथा ॥ दैवं पुरुषकारश्च ज्ञातव्यौ सततं त्वया ॥ १३ ॥ समधर्मज्ञ भद्रं ते राज्यं साधारणं हि नौ ॥ समानेयः शुभो देवस्त्वयैव मम सत्तम ॥ १४ ॥ पौरुषेण पदं कार्यं समरं च तथा मया ॥ स चेत्तदभिमन्येत पार्थिवस्य महागुणम् ॥ १५ ॥ अथवा गुणदोषेण प्रज्ञया चाशु यो नृणाम् ॥ दैवोपघातसमरे विज्ञानं पौरुषस्य च ॥ १६ ॥ वाडवं न च प्राज्ञस्तु तस्यैवानुमते तदा ॥ तेनोद्दिष्टौ तु वरयेद्राजा मन्त्रिपुरोहितौ ॥ १७ ॥ तेनोद्दिष्टां च वरयेन्महिषीं नृपसत्तमः ॥ ततोऽभिषेकसम्भारांस्तस्य कुर्यात्स दैववित् ॥ १८ ॥ कुञ्जरं तुरगं कुर्यात्तस्य राज्ञः परीक्षितौ ॥ भद्रासनं च च्छत्रं च वालव्यजनमेव च ॥ १९ ॥ खड्गरत्नं तथा चापं रत्नानि विविधानि च ॥ राज्ञो मृतस्य ये त्वासन्सर्वाणि तु नराधिप ॥ २० ॥ ते न कार्या नरेन्द्रस्य तेन दैवविदा तथा ॥ कामं संवत्सरं कार्या अलाभेऽन्यस्य भूभुजा ॥ २१ ॥ गुणाधिकस्य नो कार्या येऽन्यत्राभिहिता मया ॥२२॥ न तत्र नागाः सुभृता न योधा राज्ञो न माता न पिता न बन्धुः ॥ यत्रास्य साध्यं भवतीह विद्वान्सांवत्सरो धर्मविदः प्रमत्तः ॥ २३ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे रामं प्रति पुष्करकथासु सांवत्सरिकलक्षणं नाम चतुर्थोऽध्यायः ॥४॥ राम उवाच ॥ राज्ञा पुरोहितः कार्यस्तथा मन्त्री च कीदृशः ॥ महिषी च तथा ज्येष्ठा तन्ममाचक्ष्व पृच्छतः ॥ ॥ १ ॥ पुष्कर उवाच ॥ अव्यङ्गं लक्षणोपेतमनुकूलं प्रियंवदम् ॥ अथर्ववेदविद्वांसं यजुर्वेदविशारदम् ॥ २ ॥ द्विवेदं ब्राह्मणं राजा पुरोहितमथर्वणम् ॥ पञ्चकल्पविधानज्ञं वरयेत सुदर्शनम् ॥३॥ नक्षत्रकल्पो वैतानस्तृतीयः संहिताविधिः ॥ चतुर्थोऽङ्गिरसां कल्पः शान्तिकल्पस्तु पञ्चमः ॥४॥ पञ्चकल्पविधानज्ञमाचार्यं प्राप्य भूपतिः ॥ सर्वोत्पातप्रशान्तात्मा भुनक्ति वसुधां चिरम् ॥५॥ स च राज्ञस्तथा कुर्यान्नित्यं कर्म सदैव तु ॥ नैमित्तिकं तथा काम्यं दैवज्ञवचने रतः ॥६॥ न त्याज्यस्तु भवेद्राजा दैवज्ञेन पुरोधसा ॥ पतितस्तु भवेत्त्याज्यो नात्र कार्या विचारणा ॥७॥ तथैव पतितौ राम न त्याज्यौ तौ महीभुजा ॥ तयोस्त्यागेन राजेन्द्र राज्यभ्रंशो विनिर्दिशेत् ॥ ८ ॥ दुर्गतिः परलोके च बहुकालमसंशयम् ॥ सांवत्सरविरुद्धस्तु त्याज्यो राज्ञा पुरोहितः ॥ ९ ॥ पुरोहितोऽन्यथा राज्ञो यथा माता यथा पिता ॥ अनिष्टमस्य व्यसनं हन्याद्दैवोपघातजम् ॥ १० ॥ ब्राह्मणो

निष्कृतिस्तस्य कुत्र शक्या महीभुजा ॥ यावन्न राज्ञा विद्वांसौ सांवत्सरपुरोहितौ ॥ ११ ॥ वृत्तिच्छेदे तयो राज्ञः कुलं त्रिपुरुषं व्रजेत् ॥ नरकं वर्जयेत्तस्माद्वृत्तिच्छेदं तयोः सदा ॥ १२ ॥ स्थावरेण विभागश्च तयोः कार्यो विशेषतः ॥ अनुरूपेण धर्मज्ञ सांवत्सरपुरोहितौ ॥ १३ ॥ भाव्यं सदा भार्गववंशचन्द्र पुरोहितस्यात्मसमस्य राज्ञा ॥ राज्ञो यथापि स्वजनेन भाव्यो विद्वान्प्रभुः स्यान्नृपतेः पुरोधाः ॥ १४ ॥ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे पुरोहितलक्षणं नाम पञ्चमोऽध्यायः ॥ ५ ॥ ७ ॥ पुष्कर उवाच ॥ ॥ सर्वलक्षणलक्षण्यो मन्त्री राज्ञस्तथैव च ॥ ब्राह्मणो वेदतत्त्वज्ञो विनीतः प्रियदर्शनः ॥ १ ॥ स्थूललक्षो महोत्साहः स्वामिभक्तः प्रियंवदः ॥ बृहस्पत्युशनःप्रोक्तां नीतिं जानाति सर्वतः ॥ २ ॥ रागद्वेषेण यत्कार्यं न वदन्ति महीक्षितः ॥ लोकापवादाद्राजार्थे भयं यस्य न जायते ॥ ३ ॥ क्लेशक्षमस्तथा यश्च विजितात्मा जितेन्द्रियः ॥ गूढमन्त्रश्च दक्षश्च प्राज्ञो भक्तजनप्रियः ॥ ४ ॥ इङ्गिताकारतत्त्वज्ञ ऊहापोहविशारदः ॥ शूरश्च कृतविद्यश्च न च मानी विमत्सरः ॥ ५ ॥ चारप्रचारकुशलः प्रणिधिप्रणयात्मवान् ॥ षाड्गुण्यविधितत्त्वज्ञ उपायकुशलस्तथा ॥ ६ ॥ वक्ता विधाता कार्याणां नैव कार्यातिपातिता ॥ समश्च राजभृत्यानां तथैव च गुणप्रियः ॥ ७ ॥ कालज्ञः समयज्ञश्च कृतज्ञश्च जनप्रियः ॥ कृतानामकृतानाञ्च कर्मणां चान्ववेक्षिता ॥ ८ ॥ यथानुरूपमर्हाणां पुरुषाणां नियोजिता ॥ राज्ञः परोक्षे कार्याणि सम्पराये भृगूत्तम ॥ ९ ॥ कृत्वा निवेदिता राजन्कर्मणां गुरुलाघवम् ॥ शत्रुमित्रविभागज्ञो विग्रहास्पदतत्त्ववित् ॥ १० ॥ स राज्ञः सर्वकार्याणि कुर्याद्भृगुकुलोद्वह ॥ विदितानि यथा कुर्यान्नाज्ञातानि महीक्षिता ॥ ११ ॥ अज्ञातानि नरेन्द्रस्य कृत्वा कार्याणि भार्गव ॥ अचिरेणापि विद्वेषं स मन्त्री त्वधिगच्छति ॥१२॥ करोति यस्तु कार्याणि विविधानि महीपते ॥ भेदो नो तस्य भवति कदाचिदपि भूभुजा ॥ १३ ॥ एवंगुणो यस्य भवेच्च मन्त्री वाक्ये च तस्याभिरतस्य राज्ञः ॥ राज्यं स्थिरं स्याद्विपुला च लक्ष्मीर्वंशश्च दीप्तो भुवनत्रयेऽपि ॥ १४ ॥ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे मन्त्रिलक्षणं नाम षष्ठोऽध्यायः ॥ ६ ॥ ॥ ७ ॥ ॥ पुष्कर उवाच ॥ ॥ राज्ञाग्र्यमहिषी कार्या सर्वलक्षणपूजिता ॥ विनीता गुरुभक्ता च ईर्षाक्रोधविवर्जिता ॥ १ ॥ राज्ञः प्रियहितासक्ता चारुवेशा प्रियंवदा ॥ भृताभृतजनज्ञा च भृतानामनुवेक्षिणी ॥ २ ॥ अभृतानां जनानां च भृतिकर्मप्रवर्तिनी ॥ रागद्वेषवियुक्ता च सपत्नीनां सदैव या ॥ ३ ॥ भोजनासनपानेन सर्वेषामनुवेक्षिणी ॥ सपत्निपुत्रेष्वपि या पुत्रवत्परिवर्तते ॥ ४ ॥ मन्त्रिसंवत्सरामात्यान्या च पूजयते सदा ॥ ब्रह्मण्या च दयायुक्ता सर्वभूतानुकम्पिनी ॥ ५ ॥ कृताकृतज्ञा

राज्ञश्च विदिता मण्डलेष्वपि ॥ परराजकलत्रेषु प्रीयमाणा मुदा युता ॥६॥ दूतादिप्रेषणकरी राजद्वारेषु सर्वदा ॥ तद्द्वारेण नरेन्द्राणां कार्यज्ञा च विशेषतः ॥ ७ ॥ एवंगुणगणोपेता नरेन्द्रेण सहानघा ॥ अभिषेच्या भवेद्राज्ये राज्यस्थेन नृपेण वा ॥ ८ ॥ एवं यदा यस्य भवेच्च पत्नी नरेन्द्रचन्द्रस्य महानुभावा ॥ वृद्धिं व्रजेत्तस्य नृपस्य राष्ट्रं सचारकं नात्र विचारणास्ति ॥९॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे अग्र्यमहिषीलक्षणं नाम सप्तमोऽध्यायः ॥ ७ ॥ ॥ राम उवाच ॥ पुरुषाणां तथा स्त्रीणां गजानां तुरगैस्सह ॥ वालव्यजनच्छत्राणां तथा भद्रासनस्य च ॥ १ ॥ रत्नानां धनुषां चैव खड्गस्य च सुरात्मज ॥ लक्षणं श्रोतुमिच्छामि तन्ममाचक्ष्व पृच्छतः ॥ २ ॥ पुष्कर उवाच ॥ आदावेव प्रवक्ष्यामि पुरुषाणां तु लक्षणम् ॥ निबोध तन्मे गदतो भृगुवंशविवर्धन ॥ ३ ॥ एकाधिको द्विशुक्लश्च त्रिभिर्व्याप्नोति यस्तथा ॥ त्रिवलीवाँस्त्रिविनतः त्रिकालज्ञश्च भार्गव ॥ ४ ॥ पुरुषः स्यात्सुलक्षण्यो विपुलश्च तथा त्रिषु ॥ चतुर्लेखस्तथा यश्च तथैव च चतुःसमः ॥ ५ ॥ चतुष्किष्कुश्चतुर्दंष्ट्रश्चतुष्कृष्णस्तथैव च ॥ चतुर्गन्धश्चतुर्ह्रस्वः पञ्च सूक्ष्मस्तथैव च ॥ ६ ॥ पञ्चदीर्घो भृगुश्रेष्ठ तथैव च षडुन्नतः ॥ सप्तस्नेहोऽष्टवंशश्च नवस्थानामलस्तथा ॥ ७ ॥ दशपद्मो दशबृहन्न्यग्रोधपरिमण्डलः ॥ चतुर्दशसमद्वन्द्वः षोडशाख्यश्च शस्यते ॥ ८ ॥ राम उवाच ॥ एकाधिकाद्या ये प्रोक्ताः पुरुषस्य त्वया गुणाः ॥ तानहं श्रोतुमिच्छामि यथावद्वरुणात्मज ॥ ९ ॥ पुष्कर उवाच ॥ धर्मे चार्थे च कामे च जनः सर्वोऽभिषज्यते ॥ एकाधिकस्तु विज्ञेयो यस्तु धर्मे विशेषतः ॥ १० ॥ तारकाभ्यां विना नेत्रे शुक्लाश्च दशनास्तथा ॥ द्वात्रिंशद्राम यस्य स्युर्द्विशुक्लः स तु कीर्तितः ॥ ॥११॥ उरो नाभिस्तथा सक्थिर्गंभीरा यस्य देहिनः ॥ प्रोच्यते स तु धर्मज्ञ त्रिगम्भीरो[1] नरोत्तमः ॥ अनसूया दया क्षान्तिस्त्रिकमेकं प्रकीर्तितम् ॥ ॥१२॥ मङ्गलाचारसंस्पर्शः शौचं चेत्यपरं त्रयम् ॥ अनायासमकार्पण्यमैश्वर्यं च त्रयस्त्रिकाः ॥१३॥ त्रिप्रलम्बो भुजाभ्यां तु वृषणेन च कीर्त्यते ॥ दिग्देशजातिसर्गैश्च तेजसा यशसा श्रिया ॥ १४ ॥ व्याप्नोति यो भृगुश्रेष्ठ त्रिभिर्व्याप्नोत्यसौ स्मृतः ॥ उदरे वलयस्तिस्रो गम्भीरा यस्य देहिनः ॥ १५ ॥ स उच्यते भृगुश्रेष्ठ त्रिवलीवान्नरोत्तमः ॥ देवतानां द्विजानां च गुरूणां च तथा नतः ॥ १६ ॥ पुरुषो भार्गवश्रेष्ठ प्रोक्तस्त्रिविनतः सदा ॥ धर्मस्यार्थस्य कामस्य संपत्कालविभागवित् ॥ १७ ॥ सेवते यश्च धर्मज्ञः प्रोच्यते स त्रिकालवित् ॥ उरो ललाटं वक्त्रं च विस्तीर्णं यस्य देहिनः ॥ १८ ॥ कथितः स भृगुश्रेष्ठ विपुलस्त्रिषु मानवः ॥ द्वौ पाणी द्वौ तथा पादौ ध्वजच्छत्रादिभिर्युतौ ॥ १९ ॥ लेखा

---

१ 'त्रिगम्भीरस्तथैव च' इति ख० ।

 

भिर्यस्य निर्दिष्टश्चतुर्लेखः स मानवः ॥ अङ्गुल्यो हृदयं पृष्ठं कटिर्यस्य तथा समाः ॥२०॥ पुरुषः स भृगुश्रेष्ठ चतुस्सम उदाहृतः ॥ षण्णवत्यङ्गुलो त्सेधश्चतुष्किष्कुः प्रमाणतः ॥ २१ ॥ प्रमाणयोगाद्धर्मज्ञ चतुष्किष्कुः स कीर्तितः ॥ दंष्ट्राश्चतस्रश्चन्द्राभा दशनेभ्यः समुन्नताः ॥ २२ ॥ किञ्चि द्यस्य स धर्मज्ञ चतुर्दंष्ट्रः प्रकीर्तितः ॥ नेत्रतारे भ्रुवौ श्मश्रुः कृष्णाः केशास्तथैव च ॥ २३ ॥ यस्येह स चतुष्कृष्णः प्रोच्यते मनुजोत्तमः ॥ नासायां वदने स्वेदे कक्ष्यासु च नरोत्तम ॥ २४ ॥ गन्धस्तु सुरभिर्यस्य चतुर्गन्धः स कीर्तितः ॥ बाहू जानूरुगण्डश्च चत्वार्यस्य समानि तु ॥ ॥ २५ ॥ पुरुषस्य भृगुश्रेष्ठ चतुस्सम उदाहृतः ॥ आस्यासृङ्मध्यपद्मानां तुल्यो गन्धस्तु यस्य वै ॥ २६ ॥ कथितः स भृगुश्रेष्ठ चतुर्गन्ध इति द्विजैः ॥ ह्रस्वं लिङ्गं तथा ग्रीवा जंघे ह्रस्वे तु देहिनः ॥ २७ ॥ यस्य भार्गवशार्दूल चतुर्ह्रस्वः स कीर्तितः ॥ अङ्गुलीनां तु पर्वाणि नखकेशद्विजत्वचम् ॥ सूक्ष्माणि यस्य तं राम पञ्च सूक्ष्मं प्रचक्षते ॥ २८ ॥ हनू नेत्रे ललाटं च नासा चैव स्तनान्तरम् ॥ दीर्घाणि यस्य तं राम पञ्चदीर्घं विदुर्बुधाः ॥ २९ ॥ वक्षः कक्षौ नखा नासा मुखं चैव कृकाटिका ॥ षडुन्नतानि यस्येह तं वदंति षडुन्नतम् ॥ ३० ॥ त्वक्केशलोमदंताश्च दृष्टिर्वाणी नखास्तथा ॥ स्निग्धा यस्येह तं प्राहुः सप्त स्निग्धं बहुश्रुताः ॥ ३१ ॥ जानुवंशावुभौ राम भुजवंशौ तथाप्युभौ ॥ ऊरुवंशद्वयं चैव पृष्ठवंशं च भार्गव ॥ ३२ ॥ नासावंशः समो यस्य सोऽष्टवंशः प्रकीर्तितः ॥ नेत्रे नासापुटौ कर्णौ मेढ्रपायू मुखं तथा ॥ ३३ ॥ छिद्रा नवैते विमला यस्य तं तु नवामलम् ॥ जिह्वोष्ठताल्‌ नेत्रान्तर्हस्तपादनखाः स्तनौ ॥ ३४ ॥ शिश्नाग्रवक्षो यस्यैते पद्माभा दश देहिनाम् ॥ पाणी पादौ मुखं ग्रीवा श्रवणे हृदयं शिरः ॥ ३५ ॥ ललाट मुदरं पृष्ठं बृहन्तः पूजिता दश ॥ प्रसारितभुजस्येह मध्यमाग्रत्वयांतरात् ॥ ३६ ॥ उच्छ्रायेण समो यः स न्यग्रोधपरिमण्डलः ॥ कथितः स नृपश्रेष्ठः सर्वलक्षणपूजितः ॥ ३७ ॥ पादौ गुल्फौ स्फिचौ पार्श्वौ वृषणावीक्षणौ हनू ॥ कर्णोष्ठसक्थिनी जंघे हस्तौ बाहू तथा भ्रुवौ ॥ ३८ ॥ द्वन्द्वान्येतानि यस्य स्युः समानि तु चतुर्दश ॥ चतुर्दशसमद्वन्द्वः कथितः स नृपोत्तमः ॥ ३९ ॥ विद्यास्थानानि यानीह कथितानि चतुर्दश ॥ प्रपश्यति च यो राम नेत्राभ्यां च नरोत्तमः ॥ ४० ॥ सम्यक्स कथितो लोके षोडशाक्षो भृगूत्तम ॥ रूक्षं शिराततं गात्रं तथा मांसविवर्जितम् ॥ दुर्गन्धि चाशुभं सर्वं विपरीतं च शस्यते ॥ ४१ ॥ दृष्टिः प्रसन्ना मधुरा च वाणी मत्तेभतुल्या च गतिः प्रशस्ता ॥ एकैककूपप्रभवाश्च रोमा 

१ 'करौ' इति ख० ।

सत्त्वं प्लुतं हासमनुल्वणं च ॥ ४२ ॥ श्रान्तस्य यानमशनं च बुभुक्षितस्य पानं तृषा परिगतस्य परेषु रक्षा ॥ एतानि यस्य पुरुषस्य भवंति काले तं धन्यमाहुरधिभूमि नरं द्विजेन्द्राः ॥ ४३ ॥ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे पुरुषलक्षणं नामाष्टमो ऽध्यायः ॥८॥ पुष्कर उवाच ॥ शस्ता स्त्री चारुसर्वाङ्गी मत्तमातङ्गगामिनी ॥ गुरूरुजघना या च मत्तपारावतेक्षणा ॥ १ ॥ सुनीलकेशी तन्वङ्गी परपुष्टनिनादिनी ॥ तनुमध्या विलोमाङ्गी स्निग्धवर्णा मनोहरा ॥२॥ समग्रभूस्पृशौ यस्याश्चरणौ कमलोपमौ ॥ नाभिः प्रदक्षिणावर्ता संहतौ च तथा स्तनौ॥३॥ विभक्तमधरोष्ठं च दर्शनं मधुरं तथा ॥ गुह्यं प्रदक्षिणावर्तमश्वत्थदलसन्निभम्॥४॥ गुल्फौ निगूढौ गूढे च तथा यस्याः ककुन्दरे॥ मध्यनाभेश्च यस्याः स्याद्धस्तांगुष्ठप्रमाणतः ॥ ५॥ पिण्डिके च न सन्नद्धे न लम्बा च तथा कटिः ॥ जठरं च प्रलंबं च नयने च न केकरे ॥६॥ कचाश्च कपिशाः केशाः केशा रूक्षास्तथैव च ॥ न च वृक्षनदीनाम्नी न देवगिरिनामिका ॥ ७ ॥ न चैवोरगगन्धर्वभूतप्रेतसनामिका ॥ न वाचाला न लुब्धा च न शठा कलहप्रिया ॥८॥ न लोलुपा न दुर्भावा न वा कुण्ठकपालिका ॥ देवद्विजातिसिद्धानां साधूनां पूजने रता ॥ ९ ॥ शीलोपेता गुणोपेता न शिराला न लोमशा ॥ १० ॥ गण्डैर्मधूकपुष्पाभैः स्निग्धैश्च दशनच्छदैः ॥ न संहतभ्रूः संश्लिष्टचरणांगुलिकुड्मला ॥ ॥ ११ ॥ पतिप्रिया पतिप्राणा या नारी पतिदेवता ॥ अलक्षणापि संज्ञेया सर्वलक्षणसंयुता ॥ १२ ॥ भ्रुवं कनीनिका यस्या न स्पृशेत कथंचन ॥ न तां कुर्वीत भार्यार्थं मृत्युः सा कथिता बुधैः ॥१३॥ सरोमसुत्तरोष्ठं च गण्डौ यस्याः सकूपकौ ॥ अतिदीर्घा कषाया च चलन्मांसचया तथा ॥ १४ ॥ सा विवर्ज्या विशेषेण नरेण हितमिच्छता ॥ १५ ॥ संक्षेपतस्ते कथितं मयैतत्स्याल्लक्षणं चारु नितम्बिनीनाम् ॥ रहस्यमेत त्कथितं तु तत्र यत्राकृतिस्तत्र गुणा वसन्ति ॥ १६ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे स्त्रीलक्षणं नाम नवमोऽ ध्यायः ॥ ९ ॥ पुष्कर उवाच ॥ नागाः प्रशस्ता धर्मज्ञ प्रमाणेनाधिकास्तु ये ॥ दीर्घहस्ता महोच्छ्वासा स्वासनाश्च विशेषतः ॥ १ ॥ निगूढवंशा मध्वाक्षा गूढा गूढोष्टमस्तकाः ॥ विंशत्यष्टाधिकनखाः शीतकालमदाश्च ये ॥२॥ येषां चैव कराः पादा दीर्घा लाङ्गूलमेव च ॥ दक्षिणं चोन्नतं दीप्तं बृंहितं जलदोपमम् ॥ ३ ॥ अत्यर्थवेदना ये च शूराः शब्दसहिष्णवः ॥ कर्णौ च विपुलौ येषां सूक्ष्मबिन्दुयुतत्वचः ॥ ४ ॥ ते प्रशस्ता महाभाग ये तथा सप्तसुस्थिताः ॥ दन्तच्छदेषु दृश्यन्ते येषां स्वस्तिकलक्षणाः ॥५॥ शृङ्गारवालव्यजनं वर्द्धमानाङ्कुशास्तथा ॥ ते धार्या न तथा धार्या वामना मत्कुणादयः ॥ ६ ॥ हस्तिन्यो याश्च गर्भिण्यो ये च मूढा मतङ्गजाः ॥ अपाकलाश्च कुब्जाश्च सदन्ता ये च

भार्गव ॥ ७ ॥ कुदन्ताश्च तथा वर्ज्या वामकूटाश्च यत्नतः ॥ अम्बुस्पृशश्च कूटाश्च शठाश्च विकटाश्च ये ॥ ८ ॥ राम उवाच ॥ वामनाद्याश्च
ये नागाः प्रोक्ता निन्दितलक्षणाः ॥ तेषां तु श्रोतुमिच्छामि लक्षणं वरुणात्मज ॥ ९ ॥ ॥ पुष्कर उवाच ॥ आयामेन न संपूर्णो योतिह्रस्वो
भवेद्गजः ॥ वामनस्तु समाख्यातो मत्कुणो दन्तवर्जितः ॥ १० ॥ दशां चतुर्थीं संप्राप्य वर्धते यस्य न द्विजौ ॥ स्थूलावनायतौ स्यातां
स मूढाख्यो गजाधमः ॥ ११ ॥ अपाकलो विशालेन दन्तेनैकेन वारणः ॥ संक्षिप्तवक्षोजघनः पृष्ठमध्यसमुन्नतः ॥ १२ ॥ प्रमाणहीनतन्नाभिः स
कुब्जो वारणाधमः ॥ अत्युन्नतांसः सदन्तः कुदन्तः स्यान्नतो बहिः ॥ १३ ॥ वामदन्तोन्नतो नागो वामकूटश्च कथ्यते ॥ दन्तौ वक्रस्पृशौ
यस्य सोऽम्बुस्पृक्कथितो गजः ॥ १४ ॥ एकदन्तस्तथा नागः कूट इत्यभिधीयते ॥ पादयोः सन्निकर्षः स्याद्यस्य नागस्य गच्छतः ॥ १५ ॥
स शठोध्वनि युद्धे च लक्षणज्ञैर्न्न पूजितः ॥ अरत्न्यभ्यधिकं यस्य विस्तरेण स्तनान्तरम् ॥ १६ ॥ विकटः स विनिर्दिष्टो दुर्गतिर्निन्दितो गजः ॥
राम उवाच ॥ श्रोतुमिच्छामि धर्मज्ञ कुञ्जरं सप्तसुस्थितम् ॥ १७ ॥ यं प्राप्य किल राजानो जयन्ति वसुधां नृपाः ॥ ॥ पुष्कर उवाच ॥
वर्णं सत्त्वं बलं रूपं कान्तिस्संहननं जवम् ॥ सप्तैतानि सदा यस्य स गजः सप्तसुस्थितः ॥ १८ ॥ येषां भवेद्दक्षिणपार्श्वभागे रोम्णां च
पुंजः पिटकोऽथवापि ॥ ते नागमुख्या विजयाय युद्धे भवन्ति राज्ञां न हि संशयोऽत्र ॥ १९ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेय
वज्रसंवादे हस्तिलक्षणं नाम दशमोऽध्यायः ॥ १० ॥ ॥ पुष्कर उवाच ॥ अश्वानामृषिभिः प्रोक्ता महादोषा भृगूत्तम ॥ यैरन्विता परित्याज्यास्त
न्मे निगदतः शृणु ॥ १ ॥ हीनदन्तो द्विदन्तश्च कराली कृष्णतालुकः ॥ कृष्णजिह्वश्च यमजो जातमुष्कश्च यस्तथा ॥ २ ॥ द्विशफश्च तथा
शृङ्गी नृवर्णो व्याघ्रवर्णकः ॥ खरवर्णो भस्मवर्णो जातवर्णश्च काकुदी ॥ ३ ॥ श्वित्री च काकसादी च खरशारस्तथैव च ॥ वानराख्यः
कृष्णसटः कृष्णमुष्कस्तथैव च ॥ ४ ॥ कृष्णप्रोथश्च मूकश्च यश्च तित्तिरसन्निभः ॥ विषमश्वेतपादश्च ध्रुवावर्तविवर्जितः ॥ ५ ॥ अशुभावर्तसंयुक्तो
वर्जनीयस्तुरङ्गमः ॥ ॥ राम उवाच ॥ वाजिनां के ध्रुवावर्ताः केषु स्थानेषु शोभनाः ॥ वाजिनः के तदा शस्तास्तन्ममाचक्ष्व पृच्छतः ॥ ६ ॥
पुष्कर उवाच ॥ रन्ध्रोपरन्ध्रयोर्द्वौद्वौ द्वौद्वौ मस्तकवक्षसोः ॥ प्रमाणे च ललाटे च ध्रुवावर्ता दश स्मृताः ॥ ७ ॥ एकोपि न भवेद्यस्य ध्रुवावर्तस्तु ॥१७७॥
वाजिनः ॥ न तं शंसन्ति धर्मज्ञ तस्मात्तं परिवर्जयेत् ॥८॥ उत्तरोष्ठे भृगुश्रेष्ठ प्रमाणस्य तथोपरि ॥ नासापुटे तथा प्रोथे गण्डप्रोथाक्षिमध्यगः ॥९॥

१ 'कृष्णपुच्छः' इत्यपि पाठः ।

कथयोरश्रुपातेन भ्रुवोः कण्ठाग्रयोस्तथा ॥ नाभ्यां हनुबला कक्षास्कन्धोपस्कन्धसन्धिषु ॥ १० ॥ विदो बाहुप्रदेशे च गलमध्ये तथैवा
च ॥ आसने ककुदे प्रोथे जानुजंघासु भार्गव ॥ ११ ॥ कुष्टिकानाभिकक्षासु मुष्कयोर्मूत्रदेशजः ॥ त्रिके च मूलपुच्छे च उपरि स्थूणयोस्तथ
॥ १२ ॥ पिण्डयोर्जठरे चैव सीवनीयोपकुक्षिषु ॥ आवर्त्तैर्वर्जनीयाः स्युः प्रयत्नेन तुरङ्गमाः ॥ १३ ॥ ककुदे कर्णयोश्चैव यस्यावर्तः कुवाजिनः ॥
अत्यन्तमप्रशस्तं तं राजा राष्ट्राद्विवासयेत् ॥ १४ ॥ हस्तिदेवमणिः सर्वपूर्वकायेषु लक्षणः ॥ सुव्यक्तो रोचमानो वा न तु काकुदिनं क्वचित्॥१५॥
मेखला वाप्यधःकायाद्धन्यादावर्तसम्भवम् ॥ दोषान्सर्वांस्तुरङ्गस्य न हन्यात्काकसादिनम् ॥ १६ ॥ अतः परं प्रवक्ष्यामि शुभमावर्तलक्षणम् ॥
सृक्किण्योश्च ललाटे च तथा श्रवणमूलयोः ॥ १७ ॥ निगाले च तथा कण्ठे स्तुतकेशान्तयोस्तथा ॥ बाहुमूले तथा शस्ता रोमजातास्तुरङ्गमाः
॥ १८ ॥ आवर्तस्तु निगालस्थो ज्ञेयो देवमणिः शुभः ॥ कण्ठजो रोचमानश्च सर्वावर्त्तो जनाधिपः ॥ १९ ॥ अर्केन्द्रगोपचन्द्राभा ये च वायस
सन्निभाः ॥ सुवर्णवर्णाः स्निग्धाश्च प्रशस्यन्ते सदैव ते ॥ २० ॥ दीर्घग्रीवाक्षकूटाश्च ह्रस्ववर्णाश्च ये तथा ॥ ह्रस्वप्रोथाश्च शस्यन्ते मेघौघसदृश
स्वनाः ॥ पृथूरुपादजघना सुखपुण्ड्राश्च वै हयाः ॥२१ ॥ चन्द्रांशुशुक्लास्तुरगाः प्रशस्ताः कर्णान्तकेशैर्गवलालिवर्णैः ॥ ये रक्तवर्णाश्च समग्रपादैः
शुक्लाश्च वर्णैश्च महानुभावाः ॥ २२ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे अश्वलक्षणं नामैकादशोऽध्यायः ॥ ११ ॥
पुष्कर उवाच ॥ चमरीबालसम्भूताः शशाङ्कांशुसमप्रभाः ॥ संहताः स्निग्धदीर्घाश्च तथा स्थालिनिबन्धनाः ॥ १ ॥ दण्डश्च चामरे
कार्यो रुक्मरूप्यमयस्तथा ॥ प्रवालवैडूर्यमयस्तथैव कनकान्वितः ॥२॥ क्षीरवृक्षस्य वा कार्यो रुक्मरूप्यनिबन्धनः[1] ॥ रत्नैः प्रशस्तैश्चित्रो वा
काञ्चनस्य प्रशस्यते ॥ ३ ॥ चन्दनस्याथ दन्तस्य शार्ङ्गः कार्यो यथा भवेत् ॥ अर्धहस्तान्न चाप्यूनो मध्यर्धान्न तथाधिकः ॥ ४ ॥ कर्तव्यं चामरं
राज्ञा न च भार्गव रञ्जितम् ॥५॥ आपीतवर्णं तु भवेत्प्रशस्तं सांवत्सरामात्यपुरोहितानाम् ॥ नरेन्द्रपत्नीयुवराजसैन्यस्यालस्य शेषस्य जनस्य
कृष्णः ॥ ६ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे चामरलक्षणं नाम द्वादशोऽध्यायः ॥१२ ॥ पुष्कर उवाच ॥ हंसपक्षैर्वि
चितं मयूरस्य शुकस्य च ॥ पक्षैरथ बलच्छाया च्छत्रं राज्ञः प्रशस्यते ॥ १ ॥ मिश्रपक्षं न कर्तव्यं हीनं परिमितं तथा ॥ चतुरस्रं तु कर्तव्यं
ब्राह्मणस्य भृगूत्तम ॥ २ ॥ वृत्तं राज्ञां प्रशस्तं स्याच्छुक्लवस्त्रविभूषितम् ॥ सितं दुकूलसंच्छन्नं पताकाभिर्विभूषितम् ॥ ३ ॥ एतस्मिन्दिग्विभागे

१ 'रूप्यनिबन्धनः' इत्यपि पाठः ।

तु कार्याश्चन्द्रांशुनिर्मलाः ॥ चतस्रस्तस्य धर्मज्ञ पताका रुक्मभूषिताः ॥४॥ दण्डं चामरवत्कार्यं वैणवं च प्रशस्यते ॥ त्रिचतुःपञ्चषड्सप्तचाष्ट
पर्वः प्रशस्यते ॥ ५ ॥ दशद्वादशभिर्वापि शेषैस्तु परिवर्जयेत् ॥ छत्रं दण्डोग्रपर्वाणं दण्डः सर्वत्र शस्यते ॥ ६ ॥ धारयन्ति च दण्डं वै वैणवं
गृहमेधिनः ॥ राज्ञां प्रशस्तं षड्ढस्तं छत्रदण्डं भृगूत्तम ॥ ७॥ अथ पञ्चोनहस्तं तु महिषीयुवराजयोः ॥ सेनापतिसुराध्यक्षसांवत्सरपुरोहितैः ॥८॥
पञ्चहस्तस्तु कर्तव्यश्छत्रदण्डो भृगूत्तम ॥ चतुर्हस्तस्तु कर्तव्यो मया येऽत्र न कीर्तिताः ॥ ९ ॥ व्यासो दण्डार्धमानेन सदा छत्रस्य शस्यते ॥
छत्रं विभूषयेद्राज्ञां त्वर्धचन्द्रदिवाकरैः ॥१०॥ वज्रेन्द्रनीलैः स्फटिकैश्च राम वैदूर्यमुक्ताफलसत्प्रवालैः ॥ विभूषितं रश्मियुतं प्रशस्तं सदातपत्रं तु मही
पतीनाम् ॥ ११ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे छत्रलक्षणं नाम त्रयोदशोऽध्यायः ॥ १३ ॥ पुष्कर उवाच ॥ भद्रा
सनं नरेन्द्रस्य क्षीरवृक्षेण कारयेत् ॥ उच्छ्रायश्च तथा तस्य अध्यर्धं तु समं भवेत् ॥ १ ॥ हस्तत्रयं तथा विष्टं विस्तरेण तु कारयेत् ॥ आयाम
श्चास्य कर्तव्यो विस्तरेणार्धसम्मितः ॥ २ ॥ चतुरस्रं तु कर्तव्यं राज्ञो भद्रासनं शुभम् ॥ नाष्टास्रं न तथा वृत्तं न च दीर्घं भृगूत्तम ॥३॥ सुवर्णरू
प्यताम्रैश्च चित्रं कार्यं विशेषतः ॥ रत्नैः प्रशस्तैर्न तथा न रत्नप्रतिरूपकैः ॥ ४ ॥ चत्वारः पुरुषास्तत्र विन्यस्ता भृगुनन्दन ॥ द्विगुणाश्च तथा
सिंहास्तेभ्यस्तु द्विगुणास्तथा ॥ ५ ॥ भद्रासनं तत्र भवेन्नृपस्य तलेन पूर्णं ससुखं परार्ध्यम् ॥ वैयाघ्रचर्मास्तरणं सुखार्थं वरासनं तस्य समामन
न्ति ॥ ६ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे भद्रासनलक्षणं नाम चतुर्दशोऽध्यायः ॥ १४ ॥ पुष्कर उवाच ॥ वज्रं
मरकतं चैव पद्मरागं च मौक्तिकम् ॥ इन्द्रनीलं महानीलं वैडूर्यमथ सस्यकम् ॥ १ ॥ इन्द्रकान्तं सूर्यकान्तं स्फटिकं पुलकं तथा ॥ कर्केतनं
पुष्परागं तथा ज्योतीरसं द्विज ॥ २ ॥ स्फटिकं राजवर्तं च तथा राजमयं शुभम् ॥ सौगंधिकं तथा सख्यं शङ्खब्रह्ममयं तथा ॥ ३ ॥ गोमेदं
रुधिराक्षं च तथा बल्लातकं द्विज ॥ धूलीमरकतं चैव तुत्थकं शेषमेव च ॥ ४ ॥ पलुं प्रवालकं चैव गिरिवज्रं च भार्गव ॥ भुजगेशमणिं चैव
तथा वज्रमणिं शुभम् ॥ ५ ॥ टीटिभं च तु तापिच्छं भ्रामरं च तथोत्पलम् ॥ रत्नान्येतानि धार्याणि सर्वाण्येव महीक्षिता ॥ ६ ॥ सुवर्ण
प्रतिबद्धानि जयारोग्यसमृद्धये ॥ तेषां गुरुत्वं रागश्च स्वच्छत्वं रश्मिमालिता ॥ ७ ॥ सुजातता मसृणता सुसंस्थानत्वमेव च ॥
गुणवन्तो विनिर्दिष्टा धार्यास्ते गुणसंयुताः ॥ ८ ॥ खंडास्सशर्करा ये च निष्प्रभा मलिनास्तथा ॥ न ते धार्या नरेन्द्राणां जयश्रीजीवितैषि
णाम् ॥ ९ ॥ समस्तरत्नवर्गेऽपि वज्रधारणमिष्यते ॥ अम्भस्तरति यद्वज्रमभेद्यं विमलं च यत् ॥ १० ॥ तथा च शुद्धं षट्कोणं लघु भार्गव

नन्दन ॥ प्रभा च शक्रचापाभा यस्यार्काभिमुखी भवेत् ॥ ११ ॥ तं वज्रं धारयन्राजा सर्वाञ्जयति शात्रवान् ॥ शुकपक्षनिभः स्निग्धः कान्तिमा न्विमलस्तथा ॥ १२ ॥ सुवर्णचूर्णसंकाशैः सूक्ष्मैर्बिन्दुभिरन्वितः ॥ शस्तो मरकतो राम गम्भीरश्चोन्नतस्तथा ॥ १३ ॥ धार्यश्च पृथिवीशानां सर्वोपद्रवनाशनः ॥ कुरुविन्दाद्भवेज्जन्म तथा सौगन्धिकाद्द्विज ॥१४॥ स्फटिकात्पद्मरागाणां श्रेष्ठास्ते ह्युत्तरोत्तरम् ॥ जहरङ्गा भवन्तीह कुरुविन्द भवाश्च ये ॥१५॥ कषायरङ्गा निर्दिष्टा ये च सौगन्धिकोद्भवाः ॥ स्वच्छाश्च रागवन्तश्च विज्ञेयाः स्फटिकोद्भवाः ॥ १६ ॥ मुक्ताफलाः शुक्तिभव बहवो मत्स्यजास्तथा ॥ उत्कृष्टा न तथा तेभ्यो ये तु शङ्खोद्भवा द्विज ॥१७॥ तेभ्यः प्रशस्ता विज्ञेया नागकुम्भसमुद्भवाः ॥ निष्प्रभास्ते समुद्दिष्टाः[1] श्रेष्ठाः क्रोडिभवा द्विज ॥१८॥ तेभ्यो वेणुदलाः श्रेष्ठास्तेभ्यो भुजङ्गसम्भवाः ॥ तेभ्योऽपि भुवि दुष्प्राप्यं मौक्तिकं मेघसम्भवम् ॥ १९ ॥ धारणा त्तस्य नृपतेः सर्वसिद्धिः प्रकीर्तिता ॥ मौक्तिकानां तु सर्वेषां वृत्तत्वं गुण उच्यते ॥ २० ॥ सुष्ठुता च सुशुक्लत्वं महत्त्वं च भृगूत्तम ॥ इन्द्रनीलस्तु यः क्षीरं राजते भाजने स्थितम् ॥ २१ ॥ रञ्जयेत्स्वप्रभावेन तममूल्यं विनिर्दिशेत ॥ नीलरक्तं तु वैडूर्यं सर्वतः श्रेष्ठमुच्यते ॥ २२ ॥ सर्वेषामेव रत्नानां धार्यं कर्कतनं[2] स्मृतम् ॥ पुष्परागास्तथा राम ये चान्ये कीर्तिता मया ॥ २३ ॥ प्रशस्तरत्नैर्भूपानां मुकुटान्यङ्गदानि च ॥ हाराणि राम कार्याणि केयूराभरणानि च ॥ २४ ॥ अप्रशस्तानि रत्नानि वर्जनीयानि दूरतः ॥ सर्वरत्नोत्तमं राजा विवर्णं मलिनं तथा ॥ २५ ॥ न धारयेत धर्मज्ञः सुशुद्धं धारयेत्सदा ॥ धृतिः प्रशस्ता भृगुवंशचन्द्र रत्नोत्तमानां सततं नृपाणाम् ॥ रत्नांशुदग्धं तु नरस्य देहादनर्थमाशु प्रशमं प्रयाति ॥ २६ ॥

इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे रत्नलक्षणं नाम पञ्चदशोऽध्यायः ॥ १५ ॥

॥ पुष्कर उवाच ॥ ॥ धनुर्द्रव्यत्रयं लोहं शृङ्गं दारु च भार्गव ॥ ज्याद्रव्यत्रितयं चर्म वंशभंगं त्वचस्तथा ॥ १ ॥ वंशत्वग्वंशचापं तु कर्तव्यं भृगुनन्दन ॥ अन्येषु राम चापेषु शेषद्रव्यमिदं भवेत् ॥ २ ॥ प्रमाणं नात्र निर्दिष्टं चापयोः शार्ङ्गलोहयोः ॥ दारुचापप्रमाणं तु श्रेष्ठं हस्तचतुष्टयम् ॥ ३ ॥ तदर्धसमहीने तु प्रोक्ते मध्यकनीयसी ॥ मुष्टिग्राह्याणि वृत्तानि मध्ये सर्वाणि कारयेत् ॥ ४ ॥ स्वल्पा कोटिस्तु वार्क्षाणां शार्ङ्गलोहमयी द्विज ॥ कामिनीभ्रूलताकारा कोटिः कार्या सुसंस्कृता ॥५॥ पृथग्वा दारुमिश्रो वा लोहशार्ङ्गं तु कारयेत् ॥ शार्ङ्गं स्नायुचितं कार्यं रुक्मबिन्दुविभूषितम् ॥ ६ ॥ कुटिलस्फुटितं चापं सच्छिद्रं च न शस्यते ॥ हस्तिभग्ना द्रुमा ये च विद्युद्दग्धास्तथा च ये ॥ ७ ॥ आरामदेवतावेश्मतापसा

१ 'समुद्भवा' इत्यपि पाठः । २ 'कर्केतनम्' इति ख० ।

श्रमसंभवाः ॥ श्मशानसंभवा ये च न ते कार्याः कथंचन ॥ ८ ॥ प्राणिनां यः सजात्येन शृङ्गी युधि निपातितः ॥ तच्छृङ्गं वर्जयेच्चापे नित्यं शार्ङ्गे विचक्षणः ॥ ९ ॥ लोहानि राम चत्वारि शस्यन्ते चापकर्मणि ॥ सुवर्णं रजतं ताम्रं तथा कृष्णायसं द्विज ॥ १० ॥ काञ्चनं चापरत्नं तु सरत्नमपि कारयेत् ॥ माहिषं शारभं शार्ङ्गं रौहीजं चापि कारयेत् ॥ ११ ॥ वार्क्षं चन्दनजं श्रेष्ठं वैतसं धान्वतं तथा ॥ सालशाल्मलिकाशानां ककुभस्याञ्जनस्य च ॥ १२ ॥ वंशस्य च महाभाग सर्वश्रेष्ठतमं विदुः ॥ शरद्गृहीतैः काष्ठैस्तु चापं कार्यं प्रयत्नतः ॥ १३ ॥ वंशानामपि तच्छ्रेष्ठं यत्र गङ्गा महानदी ॥ सालानामपि तच्छ्रेष्ठं गोमती यत्र भार्गव ॥ १४ ॥ वितस्ताकूलजं श्रेष्ठं वेतसीनां तथैव च ॥ एवं द्रव्यमयं कार्यं चापं लक्षणसंयुतम् ॥१५॥ ग्रहण लक्षणं चास्य भविष्यति च खड्गवत् ॥ सुखग्राहं दृष्टिकान्तं शरमोक्षसुखं तथा ॥ १६ ॥ श्लक्ष्णं श्लिष्टं सुसंस्थानं सारवन्तं सुसंहतम् ॥ अवनामसुखं नित्यं पुंनामनवलोत्कटम् ॥१७॥ एतदीदृशकं श्रेष्ठं चापरत्नं विदुर्बुधाः ॥ राज्ञा चापस्य कर्तव्या पूजा वाणवरस्य च ॥ १८ ॥ नित्यं देवकुले राम खड्गस्य च विशेषतः ॥ अयसश्चाथ वंशस्य शरस्याथ शरो भवेत् ॥ १९ ॥ शरवंशौ ग्रहीतव्यौ शरत्काले भृगूत्तम ॥ शराः किरातजाः श्रेष्ठाः काञ्चीपुरसमीपतः ॥ २० ॥ तेभ्योऽपि ते श्रेष्ठतमाः स्कन्दजन्ममहीभवाः ॥ स्निग्धा निमग्नपर्वाणः सारवन्तः समाहिताः ॥ २१ ॥ ऋजवो मधुवर्णाभाः सुजाताः शारदा दृढाः ॥ स्नायुश्लिष्टाः सुनेत्राश्च सुपुङ्खाः कलवाससः ॥ २२ ॥ तैलधौताश्च कर्तव्या रुक्मपुङ्खविभूषणाः ॥ तथा विषमपर्वाणः फलैश्च व्रणवर्जितैः ॥ २३ ॥ एकं त्रिपुङ्खं कर्तव्यं राजहंसच्छदोत्तरम् ॥ रुक्मपुङ्खं सुवर्णाग्रमयःफलमनुत्तमम् ॥२४॥ स्नायुबद्धं बलं तस्य रुक्मबन्धं तु कारयेत् ॥ वज्रैश्च लक्षणोपेतैश्चित्रितं तं तु कारयेत्॥२५॥ग्रहणं तस्य कर्तव्यं सांवत्सरकरान्नृपैः ॥ तस्य पूजा सदा कार्या साभिषेकसमा भवेत् ॥ २६ ॥ यात्रायामभिषेके च मङ्गलेषु च कर्मसु ॥ सपताके तु तं चापं सपताकं तु कारयेत् ॥ मङ्गल्यं तन्नरेन्द्राणां कथितं भृगुनन्दन ॥ २७ ॥ ये चापरत्नं विनतं तु भूपाः सुवर्णरत्नोपचितं सदैव ॥ बाणेन साकं परिपूजयन्ति भवन्ति ते राम विपन्नदुखाः ॥ २८ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे चापशरलक्षणं नाम षोडशोऽध्यायः ॥ १६ ॥ ॥ पुष्कर उवाच ॥ पुरा सुमेरुशिखरे काञ्चने रत्नपर्वते ॥ स्वर्गङ्गायास्तटे ब्रह्मा यज्ञं यजति भार्गव ॥ १ ॥ तस्मिन्यज्ञे स ददृशे विघ्नं खे लोहदानवम् ॥ विघ्नस्य शमनं तस्य चिन्तयामास तत्त्ववित् ॥ २ ॥ तदा चिन्तयतस्तस्य पुरुषः पावकाद्बभौ ॥ नीलोत्पलदलश्यामः स्वरुचा वञ्चितेक्षणः ॥ ३॥ प्रांशुः सुवदनः श्रीमान्बलेनाप्रतिमो भुवि ॥ स ववन्दे तदा गत्वा देवं कमलसम्भवम् ॥ ४॥

अभ्यनन्दन्त जातेन तेन देवास्सवासवाः ॥ तस्मात्स नन्दको नाम खड्गरत्नमभूत्तदा ॥ ५ ॥ तं दृष्ट्वा भगवान्ब्रह्मा केशवं वाक्यमब्रवीत् ॥ खड्गं गृह्णीष्व गोप्तारं धर्मस्य जगतां पते ॥ ६ ॥ यज्ञविघ्नकरं हत्वा खड्गेनानेन केशव ॥ निपातय महाबाहो बलिनं लोहदानवम् ॥ ७ ॥ इत्येवमुक्तो जग्राह ग्रीवया तं जनार्दनः ॥ गृहीतमात्रे देवेन विकोशः समपद्यत ॥ ८ ॥ खड्गः कमलपत्राक्षो नीलोत्पलसमद्युतिः ॥ रत्नमुष्टिर्महा त्राम निर्मलाकाशसन्निभः ॥ ९ ॥ एतस्मिन्नन्तरे तत्र व्यदृश्यत तदा महान् ॥ करालः कृष्णवदनः शतबाहुर्महोदरः॥ १०॥प्रांशुः सुवृत्तदंष्ट्राग्रो बलवाँल्लोहदानवः ॥ यज्ञविघ्नार्थिनं प्राप्तं स दृष्ट्वा लोहदानवम् ॥ ११ ॥ खड्गमादाय वेगेन ययौ तं प्रति केशवः ॥ स केशवमनादृत्य देवा ञ्छक्रपुरोगमान् ॥ १२ ॥ विद्रावयामास तदा गदया भीमवेगया ॥ तदा भग्नेषु देवेषु युद्धं कृत्वा हरिश्चिरम् ॥ १३ ॥ खड्गेन तस्य गात्राणि चिच्छेद मधुहा रणे ॥ खड्गच्छिन्नानि गात्राणि नानादेशेषु भूतले ॥ १४ ॥ निपेतुस्तस्य धर्मज्ञ शतशोऽथ सहस्रशः ॥ नन्दकस्य तु संस्पर्शा त्तानि गात्राणि भार्गव ॥ १५ ॥ लोहीभूतानि सर्वाणि प्रसादात्केशवस्य तु ॥ हतायास्मै वरं प्रादाद्भगवान्मधुसूदनः ॥ १६ ॥ त्वदङ्गानि पवित्राणि भविष्यन्ति महीतले ॥ आयुधानि च त्रैलोके करिष्यन्तीह मानवाः॥१७॥ एवमुक्त्वा हरिर्देवो ब्राह्मणं वाक्यमब्रवीत् ॥ विना विघ्नं मख मिदं कुरु शीघ्रं जगद्गुरो॥१८॥ एवमुक्तस्तदा ब्रह्मा यज्ञेन मधुसूदनम् ॥ आत्मना पूजयामास सुसमिद्धमनोरथः॥१९॥उत्पत्तिरुक्ता खड्गस्य लोह स्य च मया तव ॥ अतः परं प्रवक्ष्यामि खड्गलक्षणमुत्तमम् ॥ २० ॥ प्रधानदेहसंभूतैर्दैत्यास्थिभिररिन्दम ॥ लोहं प्रधानं खड्गार्थे प्रशस्तं तद्विशेषतः ॥ २१ ॥ कटीकदूरऋषिकं वङ्गे शूर्पाकरेषु च ॥ विदेहेषु तथाङ्गेषु मध्यमं ग्रामचेदिषु ॥ २२ ॥ सहग्रामेषु नीपेषु तथा क लञ्जरेपि च ॥ लोहं प्रधानं तज्जानां खड्गानां शृणु लक्षणम् ॥२३॥ कटीकदूरजाता ये दर्शनीयास्तु ते स्मृताः ॥ कायच्छिन्नास्तु ऋषिका मर्मघ्ना गुरवस्तथा ॥ २४॥ तीक्ष्णाश्छेदसहा वाङ्गा दृढा शूर्परिकोद्भवाः ॥ सुहस्ताश्चैव विज्ञेया प्रभावन्तो विदेहजाः ॥२५ ॥ अंगदेशोद्भवास्तीक्ष्णाश्चेदि देशसमुद्भवाः ॥ कालिञ्जरा भारसहास्तथा वक्ष्यामि लक्षणम् ॥ २६ ॥ सुप्रमाणांगुलास्ते तु श्रेष्ठा खड्गाः प्रमाणतः ॥ प्रमाणं तत्र विज्ञाय ततो हीनं न धारयेत् ॥ २७ ॥ प्रमाणाभ्यधिकं चैव च्छिन्नवंशं तथैव च ॥ शीघ्रः सुमधुरः शब्दो यस्य खड्गस्य भार्गव ॥ २८ ॥ किङ्किणी सदृशस्तस्य धारणं श्रेष्ठमुच्यते ॥ खड्गः पद्मपलाशाग्रो मण्डलाग्रश्च शस्यते ॥२९॥ करवीरपलाशाग्रसदृशस्य विशेषतः ॥ महीघृतसुगन्धश्च

१ 'मध्यमग्रामसम्भवाः' इति ख० ।

पद्मोत्पलसुगन्धिकः ॥ ३० ॥ वर्णतश्चोत्पलाकारः सवर्णो गगनस्य च ॥ समाङ्कुलस्थाः शस्यन्ते व्रणाः खड्गेषु भार्गव ॥ ३१ ॥ श्रीवृक्षपर्वता
कारवंशपद्मनिभाश्च ये ॥ मङ्गल्यानां तथान्येषां सदृशा ये च भार्गव ॥ ३२ ॥ काकोलूककबन्धाभा विषमाङ्कुलसंस्थिताः ॥ वंशानुगाः
प्रसूताश्च न शस्तास्ते कदाचन ॥ ३३ ॥ न खड्गे वदनं पश्येद्वृथा विवृणुयान्न च ॥ उच्छिष्टो न स्पृशेत्खड्गं निशि कुर्याच्च शीर्षके ॥ दिवा
च पूजयेदेनं गन्धमाल्यानुसंपदा ॥३४॥ खड्गं प्रशस्तं मणिहेमचित्रं कोशे सदा चन्दनचूर्णयुक्ते ॥ संस्थापयेद्भूमिपतिः प्रयत्नाद्रक्षेत्तथैनं स्वशरीर
वच्च ॥ ३५ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे खड्गलक्षणं नाम सप्तदशोऽध्यायः ॥ १७ ॥ पुष्कर उवाच ॥ इति
सम्भृतसम्भारो राज्ञस्सांवत्सरस्तथा ॥ कालेऽभिषेचनं कुर्यात्तं कालं कथयामि ते ॥ १ ॥ मृते राज्ञि न कालस्य नियमोऽत्र विधीयते ॥
तत्रास्य स्नपनं कार्यं विधिवत्तिलसर्षपैः ॥ २ ॥ घोषयित्वा जयं चास्य सांवत्सरपुरोहितौ ॥ अन्यासनोपविष्टस्य दर्शयेतां जनं शनैः ॥ ३ ॥
स सान्त्वयित्वा स्वजनं मुक्त्वा बन्धनगांस्तथा ॥ अभयं घोषयित्वा च कालाकांक्षी तथा भवेत् ॥ ४ ॥ नाभिषेच्यो नृपश्चैत्रे नाधिमासे च
भार्गव ॥ न प्रसुप्ते तथा विष्णौ विशेषात्प्रावृषि द्विज ॥ ५ ॥ न च भौमदिने राम चतुर्थ्यां न तथैव च ॥ नवम्यां नाभिषेक्तव्यः चतुर्दश्यां च
भार्गव ॥ ६ ॥ ध्रुवाणि वैष्णवं शाक्रं हस्तपुष्ये तथैव च ॥ नक्षत्राणि प्रशस्यन्ते भूमिपालाभिषेचने ॥ ७ ॥ नागश्चतुष्पदं विष्टिः किंस्तुघ्नः
शकुनिस्तथा ॥ करणानि न शस्यन्ते व्यतीपातदिनं तथा ॥ ८ ॥ नक्षत्रमुल्काभिहतमुत्पाताभिहतं तथा ॥ सौरसूर्यकुजाक्रान्तं
परिविष्टिश्च भार्गव ॥ ९ ॥ मुहूर्ताश्चोक्तनक्षत्राः सतां मानहितप्रदाः ॥ कुजहोरा तथा नेष्टा सर्वत्र कुलिकस्तथा ॥ १० ॥ वृषोऽथ
कीटसिंहौ च कुम्भो लग्ने च शस्यते ॥ एतेषां जन्मलग्नाभ्यां यः स्यादुपचयस्थितः ॥ ११ ॥ तारा द्वितीया षष्ठी च चतुर्थी
चाष्टमी च या ॥ नवमी च तथा शस्ता अनुकूलश्च चन्द्रमाः ॥ १२ ॥ सौम्याः केन्द्रगता लग्ना शुभाश्चैव त्रिकोणयोः ॥ पापाश्चोपचय
स्थाने शस्तो लग्ने दिवाकरः ॥ १३ ॥ लग्ने नवांशः क्षितिजस्य वर्ज्यो वर्गस्तथा तस्य महानुभाव ॥ सूर्यस्य वर्गः सकलः प्रशस्तो
राज्ञोऽभिषेके सग्रहो नृपाणाम् ॥ १४ ॥ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादेऽभिषेककालनिर्णयं नामाष्टादशो
ऽध्यायः ॥ १८ ॥ पुष्कर उवाच ॥ कार्या पौरन्दरी शांतिः प्रागेवास्य पुरोधसा ॥ प्रातेभिषेकदिवसे सोपवासः पुरोहितः ॥ १ ॥ सोष्णीषः
श्वेतवसनः सितचन्दनभूषितः ॥ सितमाल्योपवीतश्च सर्वाभरणभूषितः ॥२॥ वेदिमुल्लिख्य यत्नेन कृत्वा च विधिवत्ततः ॥ जुहुयाद्वैष्णवान्मन्त्रां

स्तथा शाकान्विचक्षणः ॥ ३ ॥ सावित्रान्वैश्वदेवांश्च सौम्यां च विधिवत्ततः ॥ शर्मवर्मगणं चैव तथा स्वस्त्ययनं गणम् ॥ ४ ॥ आयुष्यमभयं चैव तथा चैवापराजितम् ॥ सपातवन्तं कलशं तथा कुर्याच्च काञ्चनम् ॥ ५ ॥ वह्नेर्दक्षिणपार्श्वस्थः श्वेतचन्दनभूषितः ॥ श्वेतानुलेपनः स्रग्वी सर्वाभरणभूषितः ॥ ६ ॥ आसनस्थस्सुखं पश्येन्निमित्तानि हुताशने ॥ ७ ॥ पश्येयुरन्ये च तथा नृसिंह दैवज्ञवाक्यान्निपुणं स्वरूपम् ॥ सांवत्सरस्याथ सदस्यमुख्याः सदस्यमुख्याश्च पुरोहितस्य ॥ ८ ॥ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे पुरंदरशांतिर्नामैकोनविंशतितमोऽध्यायः ॥१९॥ पुष्कर उवाच ॥ प्रदक्षिणावर्तशिखस्तप्तजाम्बूनदप्रभः ॥ रथौघमेघनिर्घोषो विधूमश्च हुताशनः ॥१॥ अनुलोमसुगन्धश्च स्वस्तिकाकारसन्निभः ॥ वर्धमानाकृतिश्चैव नन्द्यावर्तनिभस्तथा ॥ २ ॥ प्रसन्नार्चिर्महाज्वालः स्फुलिङ्गरहितो हितः ॥ स्वाहावसाने ज्वलनः स्वयं देवमुखं हविः ॥ ३ ॥ यदा भुङ्क्ते महाभाग तदा राज्ञो हितं भवेत् ॥ हविषस्तु यदा वह्नेर्नस्यात्सिमिसिमायितम् ॥ ४ ॥ न वर्जेयुश्च मध्येन मार्जारमृगपक्षिणः ॥ पिपीलकाश्च धर्मज्ञ तदा भूयाज्जयी नृपः ॥ ५ ॥ मुक्ताहारमृणालाभे वह्नौ राज्ञां जयो भवेत् ॥ तथैव च जयं ब्रूयात्प्रस्तरस्य प्रदायिनि ॥ ६ ॥ संक्षेपतस्तेऽभिहितं मयाद्य यल्लक्षणं चारु हुताशनस्य ॥ सर्वाग्निकर्मस्वथ तेन विद्वान्भूयात्रिलोके तु जयी द्विजेन्द्र ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे वह्निलक्षणं नाम विंशतितमोऽध्यायः ॥ २० ॥ ॥ पुष्कर उवाच ॥ ॥ स्नानं समाचरेद्राज्ञो होमकाले पुरोहितः ॥ आदौ तु स्वेच्छया स्नातः पुनर्मृद्भिः समाचरेत् ॥ १ ॥ पर्वताग्रमृदा तावन्मूर्धानं शोधयेन्नृपः ॥ वल्मीकाग्रमृदा कर्णौ चन्दनैः केशबालकान् ॥ २ ॥ चन्द्रालयमृदा ग्रीवां हृदयं तु नृपाजिरात् ॥ करिदन्तोद्धृतमृदा दक्षिणं तु तथा भुजम् ॥ ३ ॥ वृषशृङ्गोद्धृतमृदा वामं चैव तदा भुजम् ॥ ४ ॥ सरोमृदा तथा पृष्ठं चोदरं साङ्गमे मृदा ॥ नदीकूलद्वयमृदा पार्श्वे संशोधयेत्तथा ॥ ५ ॥ अश्वस्थानात्तथा जंघे राजा संशोधयेद्बुधः ॥ रथचक्रोद्धृतमृदा तथैव च करद्वयम् ॥ ६ ॥ मृत्स्नातः स्नपनीयः स्यात्पञ्चगव्यजलेन तु ॥ ततो भद्रासनगतं मुख्यामात्यचतुष्टयम् ॥ ७ ॥ वर्णप्रधानं भूपालमभिषिञ्चेद्यथाविधि ॥ पूर्वतो हेमकुम्भेन घृतपूर्णेन ब्राह्मणः ॥ ८ ॥ रूप्यकुम्भेन याम्येन क्षीरपूर्णेन क्षत्रियः ॥ दध्ना च ताम्रकुम्भेन वैश्यः पश्चिमतो द्विज ॥ ९ ॥ माहेयेन जलेनोदक्शूद्रामात्योऽभिषेचयेत् ॥ ततोऽभिषेकं नृपतेर्बह्वृचप्रवरो द्विजः ॥ १० ॥ कुर्वीत मधुना राम च्छन्दोगश्च कुशोदकैः ॥ सम्पातवन्तं कलशं

१ अत्र प्रकरणानुबद्धं पद्यमेतदधिकमुपलभ्यते खपुस्तके ' वेदमद्वारमृदा राज्ञः कटिशौचं विधीयते । गजस्थानात्तथैवोरू गोस्थानाज्जानुनी तथा ॥'

तथा नुत्वा पुरोहितः ॥ ११ ॥ विधाय वह्निरक्षां तु सदस्येषु यथाविधि ॥ राजसूयाभिषेके तु ये मन्त्राः परिकीर्तिताः ॥ १२ ॥ तैस्तु दद्यान्म हाभाग ब्राह्मणानां स्वनेन तु ॥ ततः पुरोहितो गच्छेद्वेदिमूलं तदैव तु ॥ १३ ॥ विभूषितं तु राजानं सर्वतोभद्र आसने ॥ शतच्छिद्रेण पात्रेण सौवर्णेन यथाविधि ॥१४॥ अभिषिञ्चति धर्मज्ञ यजुर्वेदविशारदः ॥ या ओषधीरौषधीभिः सर्वाभिः सुसमाहितः ॥१५॥ रथे अक्षेति गन्धैश्च आब्र ह्मन्ब्रह्मणेति च ॥ बीजैः पुष्पैस्तथा चैनं राम पुष्पवतीति च ॥१६॥ तेनैव चाभिमन्त्रेण फलैस्तमभिषेचयेत् ॥ आशुः शिशान इत्येव सर्वरत्नैश्च भार्गव ॥१७॥ ये देवाः पुरस्सदेति कुशाभिः परिमार्जयेत् ॥ ऋग्वेदकृतुतो राज्ञे रोचनाया यथाविधि ॥ १८ ॥ मूर्धानं च तथा कण्ठे गन्धद्वारेति संस्पृशेत् ॥ ततो ब्राह्मणमुख्याश्च क्षत्रियाश्च विशस्तथा ॥ १९ ॥ शूद्राश्च वारमुख्याश्च नानातीर्थसमुद्भवैः ॥ नादेयैः सारसैः कौपैर्नानाकलशसं स्थितैः ॥ २० ॥ चतुस्सागरजैर्लाभादलाभाद्द्विजकल्पितैः ॥ गङ्गायमुनयोश्चैव निर्झरैश्च तथोद्भिजैः ॥२१॥ छत्रपाणिर्भवेत्कश्चित्केचिच्चामरपाण यः ॥ अमात्यमुख्यास्तं कालं केचिद्वेत्रकरास्तथा ॥ २२॥ शंखभेरीनिनादेन बन्दीनां निस्वनेन च ॥ गीतवादित्रघोषेण द्विजकोलाहलेन च ॥ ॥ २३ ॥ राजानमभिषिञ्चेयुस्समेत्य सहिता जनाः ॥ सर्वैः स्तुतोऽभिषिक्तश्च संमिश्रजलमिश्रितम् ॥ २४ ॥ सर्वौषधियुतं पुण्यं सर्वगन्धयुतं तथा ॥ रत्नबीजसमायुक्तं फलबीजयुतं तथा ॥ २५ ॥ ऊर्जितं सितसूत्रेण वेष्टितग्रीवमेव च ॥ श्वेतवस्त्राम्रपत्रैश्च संवीतं सुविभूषितम् ॥ ॥ २६ ॥ क्षीरवृक्षलताछत्रं सुदृढं कांचनं नवम् ॥ आदाय कलशं राज्ञा स्वयं सांवत्सरस्तथा ॥ २७ ॥ मन्त्रावसाने कलशं दद्याद्भृगुकुलोद्वह ॥ ततः पश्येन्मुखं राजा दर्पणे चाथ सर्पिषि ॥ २८ ॥ सोष्णीषः सितवस्त्रश्च मङ्गलालम्भनं ततः ॥ कृत्वा सम्पूजयेद्विष्णुं ब्रह्माणं शङ्करं तथा ॥ २९ ॥ लोकपालान्ग्रहांश्चैव नक्षत्राणि च भार्गव ॥ ततः स्वपूजां कुर्वीत शयनीयं ततो व्रजेत् ॥ ॥ ३० ॥ व्याघ्रचर्मोत्तरं रम्यं सितवस्त्रोत्तरच्छदम् ॥ पुरोधा मधुपर्केण तत्रस्थं तं समर्चयेत् ॥ ३१ ॥ राजा चैवार्चयेत्तत्र सांवत्सरपुरोहितौ ॥ मधुपर्केण धर्मज्ञस्ततस्तस्य सदैव हि ॥ ३२ ॥ पट्टबन्धं प्रकुर्वीत मुकुटस्य च बन्धनम् ॥ ततः स बद्धमुकुटः काले पूर्वं मयेरितम् ॥ ३३ ॥ पराध्यास्तरणोपेते पञ्चचर्मोत्तरच्छदे ॥ ध्रुवा द्यौ इति मन्त्रेण सोपवेश्य पुरोधसा ॥ ३४ ॥ वृकस्य वृषदंशस्य द्वीपिनश्च भृगूत्तम ॥ तेषामुपरि सिंहस्य व्याघ्रस्य च ततः परम् ॥ ३५ ॥ तत्रोपविष्टस्य ततः प्रतीहारः प्रदर्शयेत् ॥ अमात्यांश्च तथा पौरान्नैगमांश्च वणिग्वरान् ॥ ३६ ॥ ततः प्रकृतयश्चान्या यथावदनुपूर्वशः ॥ ततो महावराश्वेभतुरङ्गकनकोत्तमैः ॥ ३७ ॥ गोजाविग्रहदानैश्च

सांवत्सरपुरोहितौ ॥ पूजयित्वा ततः पश्चात्पूजयेद्ब्राह्मणत्रयम् ॥ ३८ ॥ अनेनैव विधानेन येन राजाभिषेचितः ॥ ततस्त्व मात्यान्संपूज्य सांवत्सरपुरोधसः ॥ ३९ ॥ ततो ब्राह्मणमुख्यानां पूजनं तु समाचरेत् ॥ गोवस्त्रतिलरूप्यान्नफलकाञ्चनगोरसैः ॥ ॥ ४० ॥ मोदकाक्षतपुष्पैश्च महीदानैश्च पार्थिवः ॥ मङ्गलालम्भनं कृत्वा गृहीत्वा सशरं धनुः ॥ ४१ ॥ वह्निं प्रदक्षिणीकृत्य प्रणिपत्य तथा गुरुम् ॥ पृष्ठतो वृषमालभ्य गां सवत्सां च पार्थिव ॥ ४२ ॥ पूजयित्वा च तुरगं मन्त्रितं चाभिषेचितम् ॥ मन्त्रितं दक्षिणे कर्णे स्वयं वेदविदा ततः ॥ ४३ ॥ आरुह्य राजमार्गेण स्वपुरं तु परिभ्रमेत् ॥ मुख्यामात्यैश्च सामन्तैः सांवत्सरपुरोहितैः ॥ ४४ ॥ सहितः कुञ्जरारूढैरभिगच्छेच्च देवताः ॥ तासां संपूजनं कृत्वा नगरे या निवेशिताः ॥ ४५ ॥ प्रविशेत गृहं राजा प्रहृष्टनरवाहनः ॥ दानमानानि सत्कारैर्गृह्णीयात्प्रकृतीस्ततः ॥ ४६ ॥ संपूजितास्तास्तु विसर्जयित्वा गृहे स्वके स्यान्मुदितो महात्मा ॥ विधानमेतत्समवाप्य राजा कृत्स्नां स पृथ्वीं वशगां हि कुर्यात्॥४७॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे राज्याभिषेकविधिर्नामैकविंशतितमोऽध्यायः ॥ २१॥ राम उवाच ॥ मन्त्रेण येन धर्मज्ञ कुर्याद्राज्ञोऽभिषेचनम् ॥ तमहं श्रोतुमिच्छामि त्वत्तो वरुणनन्दन ॥ १ ॥ ॥ पुष्कर उवाच ॥ शृणुष्वाव हितो मन्त्रं राम कल्मषनाशनम् ॥ येनाभिषिक्तो नृपतिश्चिरं यशसि तिष्ठति ॥ २ ॥ राज्ञोऽभिषेकशब्दान्ते दैववित्कुशवारिणा ॥ कुम्भादभ्यु क्षणं कुर्यान्मन्त्रान्ते सकलं न्यसेत् ॥ ३ ॥ सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः ॥ वासुदेवो जगन्नाथस्तथा सङ्कर्षणो विभुः ॥ ४ ॥ प्रद्युम्नश्चानिरुद्धस्तु भवन्तु विजयाय ते ॥ आखण्डलोऽग्निर्भगवान्यमो वै नैर्ऋतिस्तथा ॥ ५ ॥ वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः ॥ ब्रह्मणा सहितः शेषो दिक्पालाः पान्तु ते सदा ॥ ६ ॥ भद्रो धर्मो मनुर्दक्षो रुचिः श्रद्धा च पार्थिव ॥ भृगुरत्रिर्वसिष्ठश्च सनकश्च सनन्दनः ॥ ७ ॥ सनत्कुमारश्च तथा भगवानपि चाङ्गिराः ॥ पुलहश्च पुलस्त्यश्च मरीचिः कश्यपः प्रभुः ॥ ८ ॥ एते त्वामभिषिञ्चन्तु प्रजाध्यक्षाः समागताः ॥ प्रभासुरा बर्हिषदो ह्यग्निष्वात्तास्तथैव च ॥ ९ ॥ क्रव्यादाश्चोपहूताश्च आज्यपाश्च सुकालिनः ॥ एते त्वामभिषिञ्चन्तु पितरश्चाग्निभिः सह ॥ १० ॥ लक्ष्मीर्देवी सती ख्यातिरनसूया तथा स्मृतिः ॥ संभूतिस्सन्नतिश्चैव क्षमा प्रीतिस्तथैव च ॥ ११ ॥ स्वाहा स्वधा च त्वा राजन्नभिषिञ्चन्तु मातरः ॥ कीर्तिलक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया तथा ॥ १२ ॥ बुद्धिर्लज्जा वपुः शान्तिस्तुष्टिः सिद्धिश्च पार्थिव ॥ एतास्त्वामभिषिञ्चन्तु धर्मपत्न्यः समागताः ॥ १३ ॥ अरुन्धती वसुर्जामी लम्बाभानुर्मरुत्वती ॥ संकल्पा च मुहूर्ता च

साध्या विश्वास्तथैव च ॥ १४ ॥ धर्मपत्न्यस्तथान्यास्त्वामभिषिञ्चन्तु पार्थिव ॥ अदितिश्च दितिस्ताम्रा ह्यरिष्टा सुरसा मुनिः ॥ ॥ १५ ॥ कद्रूः क्रोधवशा प्राधा विनता सुरभिस्त्रिभिः ॥ एतास्त्वामभिषिञ्चन्तु कश्यपस्य प्रियाः स्त्रियः ॥ १६ ॥ पत्नी ते बहुपुत्रस्य सुप्रभा या च भामिनी ॥ समायात्वभिषेकाय विजयाय च पार्थिव ॥ १७ ॥ कृशाश्वपत्नी च तथा सुप्रभा च जया तथा ॥ अस्त्रग्रामस्तयोः पुत्रो विजयं विदधातु ते ॥ १८ ॥ मनोरमा भानुमती विशाला या च बाहुदा ॥ आरिष्टनेमी पत्न्यस्त्वामभिषिञ्चन्तु पार्थिव ॥ १९ ॥ कृत्तिकारोहिणी देवी इल्वलाबाहुरेव च ॥ पुनर्वसुश्च तिष्यश्च तथाश्लेषा च पार्थिव ॥ २० ॥ मघा च फाल्गुनी पूर्वा तथैवोत्तरफाल्गुनी ॥ हस्तश्चित्रा तथा स्वातिर्विशाखा च नराधिप ॥ २१ ॥ अनुराधा तथा ज्येष्ठा मूलं च वसुधाधिप ॥ आषाढा च तथा पूर्वा तथैव नृप चोत्तरा ॥ २२ ॥ अभिजिच्च तथाश्वत्थो धनिष्ठा च नराधिप ॥ तथा शतभिषक्चैव पूर्वाभाद्रपदा च या ॥ २३ ॥ उत्तरा रेवती राजन्नश्विनी भरणी तथा ॥ एतास्त्वामभिषिञ्चन्तु सोमपत्न्यः समागताः ॥ २४ ॥ मृगी च मृगमन्दा च श्वेता भद्रासना हरिः ॥ भूता च कपिशा दंष्ट्री सुरसा सरमा तथा ॥ २५ ॥ एताः पुलहपत्न्यस्त्वामभिषिञ्चन्तु पार्थिव ॥ श्येनी भासी तथा क्रौञ्ची धृतराष्ट्री शुकी तथा ॥ २६ ॥ पत्न्यस्त्वामभिषिञ्चन्तु अरुणस्यार्कसारथेः ॥ आयतिर्नियतिश्चैव रात्रिर्निद्रा तथैव च ॥ २७ ॥ एतास्त्वामभिषिञ्चन्तु लोकसंस्थानहेतवः ॥ उमा मेना शची चैव धूम्रोर्णा निवृतिस्तथा ॥ २८ ॥ गौरी शिवा च सिद्धिश्च वेला चैवाथ नड्वला ॥ असिक्नी च तथा ज्योत्स्ना या च देवी वनस्पतेः॥२९॥ एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः ॥ महाकल्पश्च कल्पश्च मन्वन्तरयुगानि च ॥३०॥ संवत्सराणि सर्वाणि तथा चैवायनद्वयम् ॥ ऋतवश्च तथा मासाः पक्षौ रात्र्यहनी तथा॥३१॥ संध्याश्च तिथयश्चैव मुहूर्ताः करणानि च ॥ एते त्वामभिषिञ्चन्तु कालस्यावयवाः शुभाः ॥ ३२ ॥ आदित्यश्चन्द्रमा भौमो बुधो जीवः सितार्कजौ ॥ ग्रहास्त्वामभिषिञ्चन्तु राहुकेतू च पार्थिव ॥ ३३ ॥ स्वायम्भुवो मनुः पूर्वमनुः स्वारोचिषस्तथा ॥ औत्तमस्तामसश्चैव रैवतश्चाक्षुषस्तथा ॥ ३४ ॥ वैवस्वतो यथाकर्णो दक्षो ब्रह्मसुतावुभौ ॥ धर्मपुत्रो रुद्रपुत्रो रौच्यो भौत्यश्च यो मनुः ॥ ३५ ॥ एते त्वामभिषिञ्चन्तु मनवश्च चतुर्दश ॥ विश्वभुक्च विपश्चिच्च सुशान्तिश्च शिखी विभुः ॥ ३६ ॥ मनोजवस्तथोजस्वी बहिर्हुतशान्तिकौ ॥ वृषश्च ऋतधामा च दिवस्पाच्छुचिरेव च॥३७॥एते त्वामभिषिञ्चन्तु देवनाथाश्चतुर्दश ॥ रैवतश्च कुमारश्च तथा वर्चाविनायकः ॥ ॥ ३८ ॥ वीरभद्रश्च नन्दी च विश्वकर्मा मनोजवः ॥ एते त्वामभिषिञ्चन्तु सुरमुख्याः समागताः ॥३९॥ आत्मा चायुर्मनोदक्षो ह्यापः प्राणस्तथैव

च॥हविष्मांश्च गविष्ठश्च ऋतः सत्यश्च पार्थिव॥४०॥अभिषिञ्चन्तु राजँस्त्वां देवा ह्याङ्गिरसा दश ॥ क्रतुर्दक्षो वसुस्सत्यः कालः कामो मुनिस्तथा॥ ॥४१॥ कुरवान्मनुजश्चैव रोचमानस्तथैव च ॥ एते त्वामभिषिञ्चन्तु विश्वेदेवास्तथा दश॥४२॥अङ्गारकस्तथा सर्पो निर्ऋतिश्च तथा यसः॥ अजैक पाद् हिर्बुध्न्यो धूमकेतुस्तथा द्विजः ॥४३॥ भरतश्च तथा मृत्युः कापालिरथ किङ्किणिः ॥ एकादशैते रुद्रास्त्वामभिषिञ्चन्तु पार्थिव ॥४४॥ भुवनो भावनश्चैव सुजन्यः सुजनस्तथा ॥ क्रतुः सर्वश्च मूर्धा च त्याज्यश्चैव स्तुतस्तथा ॥ ४५ ॥ प्रसवश्चाव्ययश्चैव दक्षश्च मनुजाधिप ॥ एते त्वाम भिषिञ्चन्तु भृगवो नाम देवताः ॥ ४६ ॥ मनो मन्ता च प्राणश्च नरोऽपानश्च वीर्यवान् ॥ विनिर्भयो नयश्चैव हंसो नारायणस्तथा ॥ ४७ ॥ विभुश्चापि प्रभुश्चापि देवश्रेष्ठा जगद्धिताः ॥ एते त्वामभिषिञ्चन्तु साध्या द्वादश पार्थिव ॥ ४८ ॥ धाता मित्रोऽर्यमा पूषा शक्रेशौ वरुणो भगः ॥ त्वष्टा विवस्वान्सविता विष्णुर्द्वादशमस्तथा ॥ ४९ ॥ एते त्वामभिषिञ्चन्तु कश्यपादितिसम्भवाः ॥ एकज्योतिश्च द्विज्योतिस्त्रिचतुर्ज्योतिरेव च॥ ॥ ५० ॥ एकशक्रो द्विशक्रश्च त्रिशक्रश्च महाबलः ॥ इन्द्राश्च गत्या दृश्यन्ते ततः प्रतिसक्तया ॥ ५१ ॥ मितश्च सम्मितश्चैव अमितश्च महा बलः ॥ ऋतजित्सत्यजिच्चैव सुषेणः सत्यजित्तथा ॥ ५२ ॥ अतिमित्रो नमित्रश्च पुरुमित्रः पुरानितः ॥ ऋतश्च ऋतधाता च विधाता धार णो ध्रुवः ॥ ५३ ॥ विधारणो महातेजा वासवस्य परः सखा ॥ ईदृक्षश्चाप्यदृक्षश्च एतादृगमिताशनः ॥ ५४ ॥ क्रीतिनः प्रसदृक्षश्च सरभश्च महा यशाः ॥ धातुरुग्रोध्वनिर्भीमो ह्यतियुक्तः क्षिपः सहः ॥ ५५ ॥ द्युतिर्वपुरनाधृष्यो वासः कामो जयो विराट् ॥ एते त्वामभिषिञ्चन्तु मरुतस्ते समा गताः ॥ ५६ ॥ देवा एकोनपञ्चाशन्महाबलपराक्रमाः ॥ चित्राङ्गदश्चित्ररथश्चित्रसेनश्च वीर्यवान् ॥ ५७ ॥ ऊर्णायुरनघश्चैव उग्रसेनश्च वीर्य वान् ॥धृतराष्ट्रश्च गोपश्च सूर्यावर्तस्तथैव च ॥ ५८ ॥ युगपस्तृणयः कार्ष्णिर्नन्दश्चित्रस्तथैव च ॥ कलिः शालिः शिरा राजन्पर्जन्यो नारदस्तथा ॥ ५९ ॥ वृषपर्वा च हंसश्च तथा चैव हहा हूहूः ॥ विश्वावसुस्तुम्बुरुश्च तथा च सुरुचिश्च यः ॥ ६० ॥ एते त्वामभिषिञ्चन्तु गन्धर्वाः पृथिवी पते ॥ आहुत्यस्ता भवत्यश्च वर्गवत्यस्तथैव च ॥ ६१ ॥ आयुर्वत्यस्तथोर्जाश्च तथा वै कुरवाः स्तवाः ॥ बह्वायुश्चामृतायुश्च भुवश्चैव रुवस्तथा ॥ ६२ ॥ भीरवः शोभयंत्यश्च दिव्या याश्चाप्सरोगणाः ॥ एते त्वामभिषिञ्चन्तु समागत्य महीपते ॥ ६३ ॥ अनवद्या सत्यकामा चानूना वरुणा प्रिया ॥ अनूपा सुभगा चैव सुकेशा च मनोवती ॥ ६४ ॥ मेनका सहजन्या च पर्णाशा पुञ्जिकस्थला ॥ कृतस्थला घृताची च विश्वाची पूर्व चित्यपि ॥ ६५ ॥ प्रम्लोचा चाप्यनुम्लोचा रंभा चैवोर्वशी तथा ॥ पञ्चचूडा सानुमती चित्रलेखा च पार्थिव ॥ ६६ ॥ मिश्रकेशी मरीचिश्च

विद्युत्पर्णा तिलोत्तमा ॥ अद्रिका लक्ष्मणा क्षेपा असिता रुचिका तथा ॥६७॥ सुहेमा चाथ हेमा च शाड्वली च वपुस्तथा ॥ सुव्रता च सुबाहुश्च सुगन्धा सुवपुस्तथा ॥६८॥ पुण्डरीका सुदाना चासुदाना सुरसा तथा ॥ हेमा शारद्वती चैव सूनृता कमलालया॥६९॥सुमुखी हंसपादी च वारुणी रतिलालसा ॥ एतास्त्वामभिषिञ्चन्तु राजन्नप्सरसः शुभाः ॥ ७०॥ प्रह्लादश्च महातेजास्तथा राजन्विरोचनः ॥ बलिर्बाणस्तथान्ये च दितिपुत्राः समागताः॥७१॥ अभिषिञ्चन्तु दैत्यास्त्वां दिव्येनाप्यम्भसा स्वयम् ॥ विप्रचित्तिमुखाः सर्वे दानवास्त्वां समागताः ॥ ७२ ॥ अभिषिञ्चन्तु राजेन्द्र राजराज्येन सत्वराः ॥ हेतिश्चैव प्रहेतिश्च माली शङ्कुस्तथैव च ॥ ७३ ॥ सुकेशी पौरुषेयश्च यज्ञहा पुरुषाधमः[1] ॥ विद्युत्स्फूर्जस्तथा व्याघ्रो वधश्च रसनस्तथा ॥ ७४ ॥ एते त्वामभिषिञ्चन्तु समागम्याद्य राक्षसाः ॥ सिद्धार्थो मणिभद्रश्च सुमनो नन्दनस्तथा ॥ ७५ ॥ काण्डभिः पश्चमश्चैव मणिमानुयमाँस्तथा ॥ सर्वानुभूतः शंखश्च पिङ्गाक्षश्चस्तरस्तथा ॥ ७६ ॥ यशो मन्दरशोभी च पद्मचन्द्रप्रभङ्कराः ॥ मेघवर्णः सुभद्रश्च प्रद्योतश्च महावसः ॥७७॥ द्युतिमान्केतुमांश्चैव मौलिमांश्च सुदर्शनः ॥ श्वेतश्च विपुलश्चैव पुष्पदन्तो जयावहः ॥ ७८ ॥ पद्मवर्णो बलाकश्च कुमुदश्च बलाहकः ॥ पद्मनाभः सुगन्धश्च प्रवीरो विजयः कृतिः ॥ ७९ ॥ पूर्णमासो हिरण्याक्षः शतजिह्वश्च वीर्यवान् ॥ एते त्वामभिषिञ्चन्तु राजन्यक्षेन्द्र सत्तमाः ॥ ८० ॥ शंखपद्मस्तु राजेन्द्र मकरः कच्छपस्तथा ॥ एते त्वामभिषिञ्चन्तु निधयस्तु समागताः ॥ ८१ ॥ पलगाश्चैव[2] वक्राश्च ये च सूचीमुखा नृप ॥ दुःपूरणा विषादाश्च ज्वलनाङ्गारकास्तथा ॥ ८२ ॥ कुम्भपाताः प्रतुण्डाश्च तपवीरा उलूखलाः ॥ अकर्णाश्च कुषण्डाश्च तथा ये पात्रपाणयः ॥ ८३ ॥ पांसवश्च वितुण्डाश्च निपुणाः स्कन्दनास्तथा ॥ एते त्वामभिषिञ्चन्तु पिशाचानाश्च जातयः॥ ८४ ॥ ब्रह्मचर्ये स्थिता दान्ताः सर्वज्ञाः सर्वदर्शिनः ॥ नानाप्रकारवदना नानाबाहुशिरोधराः ॥८५॥ चतुष्पथपुराट्टालशून्यालयनिकेतनाः ॥ मधुरत्वे भवेदेवं ये गता मनुजेश्वराः ॥ ८६ ॥ ते त्वामद्याभिषिञ्चन्तु भूता भूतपतेः स्वयम् ॥ महाकालं पुरस्कृत्य नरसिंहं च मातरः ॥ ८७ ॥ सर्वास्त्वामभिषिञ्चन्तु राजराज्ये नराधिप ॥ गुहः स्कन्दो विशाखश्च नैगमेयस्तथैव च ॥ ८८ ॥ अभिषिञ्चन्तु राजँस्त्वां सर्वे स्कन्दग्रहाः शुभाः ॥ डाकिन्यो याश्च योगिन्यः खेचरीभूचरीश्च याः ॥ ८९ ॥ सर्वास्त्वामभिषिञ्चन्तु समेत्य मनुजेश्वर ॥ गरुडश्चारुणश्चैव आरुणिश्च महाखगः ॥ ९० ॥ संपाती विनतश्चैव विष्णुगन्धः कुमारकः ॥ एते त्वामभिषिञ्चन्तु सुपर्णाः पृथिवीपते ॥ ९१ ॥ अनन्तश्च महानागः शेषो वासुकितक्षकौ ॥ सपर्णीरश्च कुम्भश्च

१ 'पुरुषादकः' इति ख० । २ 'फगलाश्चैव' इति ख० ।

वामनश्चाञ्जनस्तथा ॥ ९२ ॥ ऐरावतो महानागः कम्बलाश्वतरावुभौ ॥ ऐलमन्त्रश्च शंखश्च कर्कोटकधनञ्जयौ ॥ ९३ ॥ महाकर्णमहानीलौ धृत
राष्ट्रबलाहको ॥ कुमारः पुष्पदन्तश्च सुमुखो दुर्मुखस्तथा ॥ ९४ ॥ सूचीमुखो दधिमुखः कालियः शालिपिण्डकः ॥ बिल्वपादः पाण्डुरको
नागश्चापूरणस्तथा ॥ ९५॥ कपिलश्चाम्बरीषश्च कुमारश्चाथ कश्यपः ॥ प्रह्लादः पुष्पदन्तश्च गन्धर्वश्च मनस्विकः ॥ ९६ ॥ नहुषः खररोमा च
शंखपालस्तथैव च ॥ पद्मश्च कुलिकश्चैव पाणिरित्येवमादयः ॥ ९७ ॥ नागास्त्वामभिषिञ्चन्तु राजराज्येन पार्थिव ॥ कुमुदैरावणौ पद्मः पुष्प
दन्तोऽथ वामनः ॥ ९८ ॥ सुप्रतीकोऽञ्जनो नीलः पान्तु त्वां सर्वतः सदा ॥ चक्रं त्रिशूलं वज्रश्च नन्दकोस्त्राणि चाप्यथ ॥ ९९ ॥ पैतामहास्तथा
हंसा वृषभः शङ्करस्य च ॥ दुर्गासिंहश्च पान्तु त्वां यमस्य महिषस्तथा ॥१००॥उच्चैःश्रवाश्चाश्वपतिस्तथा धन्वन्तरिर्नृप ॥ कौस्तुभः शंखराजश्च
पान्तु त्वां सर्वतः सदा ॥१०१॥ सर्वेऽभिषेकं दत्त्वा ते दिशन्तु विजयं ध्रुवम् ॥ धर्मश्च व्यवसायश्च सत्यो दानं तपस्तथा ॥ १०२ ॥ यमो यज्ञ
स्तथा वायुर्ब्रह्मचर्यं दमः शमः ॥ एते त्वामभिषिञ्चन्तु चित्रगुप्तश्च पार्थिव ॥ १०३ ॥ दण्डश्च पिङ्गलश्चैव मृत्युकालावुभौ तथा ॥ वाल
खिल्यास्तथा सर्वे भवन्तु विजयाय ते ॥१०४॥ दिग्धेनवश्चतस्रस्त्वां सुराभिश्च तथा नृप ॥ अभिषिञ्चन्तु सर्वाभिर्गोभिः सार्धं नरेश्वर ॥१०५॥
वेदव्यासश्च वाल्मीकिः कमठोऽथ पराशरः ॥ देवलः पर्वतश्चैव दुर्वासाश्च तथा मुनिः ॥ १०६ ॥ याज्ञवल्क्यश्च जाबालिः जमदग्निः शुचि
श्रवाः ॥ विश्वामित्रः स्थूलशिराश्च्यवनोऽत्रिर्विदूरथः ॥ १०७ ॥ एकतश्च द्वितश्चैव त्रितो गौतमगालवौ ॥ शाण्डिल्यश्च भरद्वाजो मौद्गल्यो
वेदवाहनः ॥ १०८॥ बृहदश्वः कुटिशठो जटाजानुर्घटोदरः ॥ यवक्रीतोऽर्थरैत्यश्च आत्मवानथ जैमिनिः ॥१०९॥ ऋषिः शार्ङ्गरवश्चैव तथागस्त्यो
महातपाः ॥ उन्मुचुर्मुमुचुश्चैव इध्मवाहुर्महोदयः ॥ ११० ॥ कात्यायनश्च कण्वश्च वल्वकाम्बोरुनन्दनः ॥ एते त्वामभिषिञ्चन्तु ऋषयः पार्थिवो
त्तम ॥ १११ ॥ पृथुर्दिलीपो भरतो दुष्यन्तः शत्रुजिद्बली ॥ मनुः ककुत्स्थश्चानेना युवनाश्वो जयद्रथः ॥ ११२ ॥ मान्धाता मुचुकुन्दश्च तथा
राजा पुरूरवाः ॥ आयुश्च नहुषश्चैव ययातिरपराजितः ॥ ११३ ॥ इक्ष्वाकुश्च यदुश्चैव पुनर्भूरिश्रवास्तथा ॥ अम्बरीषश्च नाभागो बृहदश्वो महा
हनुः ॥ ११४ ॥ प्रद्युम्नश्चाथ सुद्युम्नो भूरिद्युम्नश्च सृञ्जयः ॥ एते चान्ये च राजानस्तव राजन्दिवङ्गताः ॥११५॥ समायान्त्वभिषेकाय विजयाय
तथा श्रिये ॥ पर्जन्याद्यास्तथा सर्वे वास्तुदेवास्समासतः ॥ ११६ ॥ द्रुमाश्चौषधयो रत्नबीजानि विविधानि च ॥ सर्वे त्वामभिषिञ्चन्तु
राजन्राज्येन सत्वराः ॥ ११७ ॥ पुरुषश्चाप्रमेयात्मा महाभूतानि यानि च ॥ पृथिवीवायुराकाशमापो ज्योतिस्तथैव च ॥ ११८ ॥ मनोबुद्धिस्तथै

वात्मा अव्यक्तश्च महीपते ॥ एते त्वामभिषिञ्चन्तु समेता वसुधाधिप ॥ ११९ ॥ रुक्मभौमः शिलाभौमः पातालो नीलमृत्तिकः ॥ पीतो रक्तक्षितिश्चैव श्वेतभौमस्तथैव च ॥ १२० ॥ एते त्वामभिषिञ्चन्तु विजयाय महीपते ॥ भूलोकोऽथ भुवर्लोकः स्वर्लोकोऽथ महज्जनः ॥ १२१ ॥ तपः सत्यश्च राजेन्द्र विजयाय भवन्तु ते ॥ जम्बूशाककुशक्रौञ्चाः शाल्मलिद्वीप एव च ॥ १२२ ॥ गोमेधः पुष्करश्चैव स्वसाम्यं प्रदिशन्तु ते ॥ उत्तराः कुरवः पुण्या रम्या हैरण्वतस्तथा ॥ १२३ ॥ भद्राश्वः केतुमालश्च वर्षश्चैव इलावृतः ॥ हरिवर्षः किंपुरुषो वर्षो भारतसंज्ञिकः ॥ १२४ ॥ एते त्वामभिषिञ्चन्तु समेत्य वसुधाधिप ॥ इन्द्रद्वीपः कशेरुश्च ताम्रवर्णो गभस्तिमान् ॥ १२५ ॥ नागद्वीपस्तथा सौम्यो गान्धर्वो वारुणस्तथा ॥ अयं चरुवसस्तेषां स्वसाम्यं प्रदिशन्तु ते ॥ १२६ ॥ हिमवान्हेमकूटश्च निषधो नीलपर्वतः ॥ श्वेतश्च शृङ्गवान्मेरुर्माल्यवान्गन्धमादनः ॥१२७॥ महेन्द्रो मलयः सह्यः शुक्तिमानृक्षवांस्तथा ॥ विन्ध्यश्च पारियात्रश्च सर्व एव महीधराः ॥ १२८ ॥ समागम्याभिषिञ्चन्तु त्वामद्य वसुधाधिप ! ॥ ऋग्वेदोऽथ यजुर्वेदः सामवेदस्तथैव च ॥ १२९ ॥ अथर्ववेदो वेदास्त्वामभिषिञ्चन्तु पार्थिव ॥ इतिहासो धनुर्वेदो गन्धर्वश्चायुस्संज्ञितः ॥ १३० ॥ वेदोपवेदाश्च तथा विजयाय भवन्तु ते ॥ शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषाङ्गतिः ॥ १३१ ॥ छन्दोविचितिषष्ठानि विजयं प्रदिशन्तु ते ॥ अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ॥ १३२ ॥ धर्मशास्त्रं पुराणञ्च विद्या एताश्चतुर्दश ॥ सांख्ययोगः पञ्चरात्रं वेदाः पाशुपतं तथा ॥ १३३ ॥ कृतान्नपञ्चकं ह्येतच्छास्त्राणि विविधानि च ॥ गायत्री पापशमनी दुर्गा देवी महाशिवा ॥ १३४ ॥ गन्धारी च तथा विद्या विजयं प्रदिशन्तु ते ॥ देवदानवगन्धर्वयक्षराक्षसपन्नगाः ॥ १३५ ॥ ऋषयो मनवो गावो देवमातर एव च ॥ देवपत्न्यो द्रुमा नागाः दैत्याश्चाप्सरसाङ्गणाः ॥ १३६ ॥ शस्त्राणि सर्वशास्त्राणि राजानो वाहनानि च ॥ औषधानि च रत्नानि कालस्यावयवास्तथा ॥१३७॥ स्थानानि च समस्तानि पुण्यान्यायतनानि च ॥ जीमूतानि च सर्वाणि तद्विकाराश्च ये तथा ॥ १३८ ॥ उक्तानि चाप्यऽनुक्तानि विजयाय भवन्तु ते ॥ लवणः क्षारतोयश्च घृतमण्डोदकस्तथा ॥ १३९ ॥ दधिमण्डोदकश्चैव सुरोदश्च नराधिप ॥ तथैवेक्षुरसोदश्च तथा स्वादूदकश्च यः ॥ १४० ॥ गर्भोदश्च स्वतोयैस्त्वामभिषिञ्चन्तु पार्थिव ॥ चत्वारस्सागराश्चैव स्वेन तोयेन पार्थिव ॥ १४१ ॥ समागम्याभिषिञ्चन्तु विजयं प्रदिशन्तु ते ॥ पुष्करश्च प्रयागश्च प्रभासो नैमिषस्तथा ॥ १४२ ॥ तथा ब्रह्मसरः पुण्यं गयाशीर्षं च पार्थिव ॥ कालोदको नन्दिकुण्डः तथैवोत्तरमानसः ॥ १४३ ॥ स्वर्गमार्गप्रदश्चैव तथा पञ्चनदश्च यः ॥ भृगुतीर्थं

चौजसश्च तथैवामरकण्टकः ॥ १४४ ॥ आश्रमः कालिकायाश्च तृणबिन्दोस्तथाश्रमः ॥ गोपतीर्थं चापतीर्थं विमलः स्वर्ग एव च ॥१४५॥ जम्बूमार्गश्च राजेन्द्र पुण्यस्तण्डुलिकाश्रमः ॥ कपिलस्य तथा तीर्थं तीर्थे वाटिकषण्डिके ॥ १४६ ॥ महासरस्तथागस्त्यः कुमारी तीर्थ एव च ॥ गङ्गातीरः कुशावर्तो बिल्वको नीलपर्वतः ॥ १४७ ॥ वराहपर्वतश्चैव तीर्थः कनखलस्तथा ॥ स्वर्गन्धा वशकुम्भा च तथा शाकम्भरी च या ॥ १४८ ॥ भृगुतुङ्गः सकुब्जाम्रः कपिलस्य तथाश्रमम् ॥ १४९ ॥ चमसोद्भेदनः पुण्यस्तथा विनशनः शुभः ॥ अजतुङ्गश्च सोमश्च अजोगन्धश्च पार्थिव ॥ कालिञ्जरश्च केदारो रुद्रकोटिस्तथैव च ॥ १५० ॥ महालयश्च राजेन्द्र वदनाश्रम एव च ॥ नन्दा च सूर्यतीर्थं च सोमतीर्थं शतक्रतोः ॥ १५१ ॥ अश्विनोर्वरुणस्यापि वायोर्वैश्रवणस्य च ॥ ब्रह्मणश्चैव शर्वस्य यमस्य च्यवनस्य च ॥१५२॥ विरूपाक्षस्य धर्मस्य तथा चाप्सरसां नृप ॥ ऋषीणां च वसूनां च साध्यानां मरुतां तथा ॥ १५३ ॥ आदित्यानां च रुद्राणां तथा चाङ्गिरसां नृप ॥ विश्वेदेवभृगूणां च गन्धर्वाणां च मानद ॥ १५४ ॥ प्लक्षप्रस्रवणश्चैव सुषेणश्च नराधिप ॥ शालिग्रामसरश्चैव वाराहो वामनस्तथा ॥ १५५ ॥ कामश्रमस्त्रिकूटश्च चित्रकूटस्तथैव च ॥ सप्तर्चः क्रतुसारश्च तथा विष्णुपदं सरः ॥ १५६ ॥ कपिलस्य तथा तीर्थं वासुकेस्तीर्थमेव च ॥ सिन्धूत्तमं तपो दानं तथा शूर्पाकरः शुभः ॥ १५७ ॥ पौण्डीरकश्च राजेन्द्र गङ्गासागरसङ्गमः ॥ सिन्धुसागरयोश्चैव सङ्गमः सुमनोहरः ॥ १५८ ॥ तथा कुन्दावसुन्धश्च मानसं च महत्सरः ॥ तथा बिन्दुसरः पुण्यं सरश्चाच्छोदकं तथा ॥ १५९ ॥ धर्मारण्यं फल्गुतीर्थं सविमुक्तं तथैव च ॥ लौहित्यश्च तथा पुण्यो बदरीपावनः शिवः ॥ १६० ॥ तीर्थं सप्तऋषीणां च वह्नितीर्थं च पार्थिव ॥ वस्त्रापथस्ततो मेषश्छागलेशश्च पार्थिव ॥ ॥१६१॥ पुष्पन्यासस्सकामेशस्तीर्थो हंसपदस्तथा ॥ अश्वशीर्षः स कृष्णाख्यो मणिभद्रस्तथैव च ॥ १६२ ॥ देविका सिन्धुमार्गश्च स्वर्णबिन्दुस्तथैव च ॥ आहल्यकस्तथा तीर्थस्तीर्थश्चैरावतस्तथा॥१६३॥ऐरावतिससुद्भेदे तीर्थं भोगयशस्तथा ॥करवीराश्रमश्चैव नागमोदानिकस्तथा॥१६४॥ पापमोचनिकश्चैव ऋणमोचनिकस्तथा ॥ उद्वेजनस्तथा पुण्यः पुण्यश्च हरिशेश्वरः ॥ १६५ ॥ देवब्रह्मसरः पुण्यं सर्पिर्दर्वी च पार्थिव ॥ एते चान्ये च बहवः पुण्यसङ्कीर्तनाः शुभाः ॥ १६६ ॥ तोयैस्त्वामभिषिञ्चन्तु सर्वपातकनाशनैः ॥ गङ्गा महानदी पुण्या ह्लादिनी ह्लादिनी तथा ॥ ॥ १६७ ॥ पावनी च तथा सीता चक्षुः सिन्धुश्च नर्मदा ॥ सुप्रभा कातराक्षी च शिथिला मानसी ह्रदा ॥ १६८ ॥ सरस्वत्योघनादा च सुवेणुर्विमलोदका ॥ सिप्रा शोणः शतद्रुश्च सरयूर्गण्डकी तथा ॥ १६९ ॥ अच्छोदा च विपाशा च चन्द्रभागा इरावती ॥ वितस्ता देविका रम्भा

सीता देवह्रदा शिवा ॥ १७० ॥ तथैवेक्षुमती पुण्या कौशिकी यमुना तथा ॥ गोमती धूतपापा च बाहुदा च दृषद्वती ॥ १७१ ॥ निःशीरा
च तृतीया च लौहित्यश्च महानदः ॥ वेदस्मृतिर्वेदसिनी वेत्रघ्नी वरदा तथा ॥ १७२ ॥ वर्णा मा चन्दना चैव बहुनीरा कुमुद्वती ॥ पारा
चर्मण्वती रूपा विदिशा वेणुवत्यपि ॥ १७३ ॥ अवन्ती च तथा कुन्ती सुरसा च पलाशिनी ॥ मन्दाकिनी दशार्णा च चित्रकूटा दृषद्वती ॥
॥ १७४ ॥ तमसा पिप्पला सेनी करमोदा पिशाचिका ॥ चित्रोपला चित्रवर्णा मंजुला वालुकावती ॥ १७५ ॥ शुक्तीमती सिली रन्ध्रा
सङ्कुणात्ययकाप्ततः ॥ तापी पयोष्णी निर्विन्ध्या सिता च निषधावती ॥ १७६ ॥ वेणा वैतरणी भीमा चर्मा रामा तथा कुहूः ॥
तोया चैव महागौरी दुर्गा मतुशिला तथा ॥ १७७ ॥ गोदावरी भीमरथी कृष्णा वेणा च वंजुला ॥ तुङ्गभद्रा सुप्रकारा बाह्या
कावेरिरेव च ॥ १७८ ॥ कृतमाला ताम्रपर्णी पुष्पजा ह्युत्पलावती ॥ त्रिसमा ऋषिकुल्या च इक्षुका त्रिदिवालया ॥ १७९ ॥
लाङ्गूलिनी वंशधरा सुकुमारा कुलावती ॥ ऋषिका कारिवेगा च मन्दगा मन्दवाहिनी ॥ १८० ॥ कृपी दर्वी दया व्योमा परोष्णी कोलवा
हिनी ॥ कम्पना च विशल्या च करतोयांशुवाहिनी ॥ १८१ ॥ ताम्रारुणा वेत्रवती गोमती चाथ नद्यपि ॥ अद्रिणी त्रिकसा चैव सुप्रकारा
हिरण्वती ॥ १८२ ॥ आपगा चालका भासी सन्ध्या च मडवा नदी ॥ नन्दा चालकनन्दा च शुद्धा च वसुवाहिनी ॥ १८३ ॥ एताश्चान्याश्च
राजेन्द्र नद्यस्त्वां विमलोदकाः ॥ सर्वपापप्रशमनास्सर्वलोकस्य मातरः ॥ स्वतोयपूर्णैः कलशैरभिषिञ्चन्तु पार्थिव ॥ १८४ ॥ एतैर्यथोक्तैर्नृप
राजराज्ये दत्ताभिषेकः पृथिवीं समग्राम् ॥ ससागरां भुंक्ष्व चिरं च जीव धर्मे च ते बुद्धिरतीव चास्तु॥१८५॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे
मा० सं० भार्गवरामं प्रति पुष्करव्याख्यानेऽभिषेकमन्त्रो नाम द्वाविंशतितमोऽध्यायः॥२२॥पुष्कर उवाच ॥ मन्त्रा ये कीर्तिता राम मयास्मिंस्तव
भार्गव ॥ तेषां संकीर्तनं धन्यं सर्वपापप्रणाशनम् ॥१॥ एतेषां कल्यमुत्थाय यः कुर्यात्कीर्तनं नरः ॥ सर्वपापविनिर्मुक्तः स्वर्गलोकमवाप्नुयात्॥२॥
तिर्यग्योनिं न गच्छेत्तु नरकं संकराणि च ॥ न च दुःखं न च भयं मरणं न च मुह्यति ॥ ३ ॥ एतेषां च नमस्कारं यः कुर्यात्प्रयतो नरः ॥
न तस्य तिष्ठते पापमब्बिन्दुरिव पुष्करे ॥ ४ ॥ एतेषां तर्पणं कृत्वा स्नातः प्रयतमानसः ॥ महापातकयुक्तोऽपि त्वचेवाहिर्विमुच्यते ॥ ५ ॥ एतेषां
पुष्पदानेन महतीं श्रियमश्नुते ॥ एतेषां चार्घ्यदानेन पूज्यो भवति मानवः ॥ ६ ॥ एतेषां दीपदानेन भ्राजन्ते चन्द्रवद्दिवि ॥ एतेषामाहुतिं
दत्त्वा कामानाप्नोति पुष्कलान् ॥ ७ ॥ नैवेद्यं च बलिं दत्त्वा भोगान्प्राप्नोत्यनुत्तमान् ॥ एतानुद्दिश्य विप्रेषु दत्त्वा भार्गव भोजनम् ॥ ८ ॥

संतर्प्य दक्षिणाभिश्च त्रिदिवं प्राप्नुयाच्चिरम् ॥ अभिषेकदिने राज्ञां पुष्पस्नाने तथैव च ॥ ९ ॥ तथा संवत्सरग्रन्थौ सर्वे पूज्या हितैषिणा ॥ यानि तीर्थानि चोक्तानि सरितश्च समासतः ॥ १० ॥ तेषां गमेन पूज्यन्ते येऽपि पातकिनो जनाः ॥ स्नानं महाफलं तेषां तपः श्राद्ध क्रियास्तथा ॥ ११ ॥ दानं बहुफलं प्रोक्तं दर्शनं पापनाशनम् ॥ कीर्तनं भार्गवश्रेष्ठ न मे चास्ति विचारणा ॥ १२ ॥ तीर्थेष्वथैतेषु भृगुप्रधान स्नाता नरा यान्ति नरेन्द्र सद्यः॥ तीर्थानि गम्यानि ततः प्रयत्नात्पुण्याश्च सर्वास्सरितश्च राम ॥ १३ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे तीर्थफलवर्णनो नाम त्रयोविंशतितमोऽध्यायः ॥ २३ ॥ ॥ राम उवाच ॥ ॥ राज्ञोऽभिषिक्तमात्रस्य किन्नु कृत्यतमं भवेत् ॥ एतन्मे सर्वमाचक्ष्व सर्वं वेत्ति यतो भवान् ॥ १ ॥ ॥ पुष्कर उवाच ॥ अभिषेकार्द्रशिरसा राज्ञा राजीवलोचन ॥ सहायवरणं कार्यं तत्र राज्यं प्रतिष्ठितम् ॥ २ ॥ यदप्यल्पतरं कर्म तदप्येकेन दुष्करम् ॥ पुरुषेणासहायेन किन्नु राज्यं महत्पदम् ॥ ३ ॥ तस्मात्सहायान्वरयेत्कुलीनान्नृपतिः स्वयम् ॥ शूरानुत्तमजातीयान्बलयुक्ताञ्छ्रुतान्वितान् ॥ ४ ॥ रूपसत्त्वगुणौदार्यसंयुक्तान्क्ष मया श्रुतान् ॥ क्लेशक्षमान्महोत्साहान्धर्मज्ञांश्च प्रियंवदान् ॥ ५ ॥ हितोपदेशिकान्प्राज्ञान्स्वामिभक्तान्यशोर्थिनः ॥ एवं विधान्सहायांस्तु शुभ कर्मणि योजयेत् ॥ ६ ॥ गुणहीनानपि तथा विज्ञाय नृपतिः स्वयम् ॥ कर्मस्वेव नियुञ्जीत यथायोग्येषु भार्गव ॥ ७ ॥ कुलीनाः शीलसंपन्ना धनुर्वेदविशारदाः ॥ हस्तिशिक्षाश्वशिक्षासु कुशलाश्श्लक्ष्णभाषितैः ॥ ८ ॥ निमित्ते शकुनज्ञाने वित्तवैद्यचिकित्सके ॥ पुरुषान्तरविज्ञाने षाड्गु ण्येन विनिश्चिताः ॥ ९ ॥ कृतज्ञाः कर्मणां शूरास्तथा क्लेशसहा ऋजुः ॥ व्यूहतत्त्वविधानज्ञः फल्गुसारविशेषवित् ॥ १० ॥ राज्ञां सेनापतिः कार्यो ब्राह्मणः क्षत्रियोऽथवा ॥ प्रांशुः सुरूपो दक्षश्च प्रियवादी न चोद्धतः ॥ ११ ॥ चित्तग्राहश्च सर्वेषां प्रतीहारो विधीयते ॥ यथोक्तवादी धूर्त्तः स्याद्देशभाषाविशारदः ॥ १२ ॥ शाब्दः क्लेशसहो वाग्मी देशकालविभाषिता ॥ विज्ञाय देशं कालं वा हितं यत्स्या न्महीक्षितः ॥ १३ ॥ वक्तापि तस्यः यः काले स दूतो नृपतिर्भवेत् ॥ प्रांशवो व्यायताः शूरा दृढभक्ता निराकुलाः ॥ १४ ॥ राज्ञा तु रक्षिणः कार्यास्तदा क्लेशसहा हिताः ॥ अहार्याश्चानृशंसाश्च दृढभक्ताश्च पार्थिवे ॥ १५ ॥ ताम्बूलधारी भवति नारी चाप्यथ तद्गुणा ॥ षाड्गुण्यविधि तत्त्वज्ञो देशभाषाविशारदः ॥ १६ ॥ सन्धिविग्रहकः कार्यो राज्ञा नयविशारदः ॥ आयव्ययज्ञो लोकज्ञो देशोत्पत्तिविशारदः ॥ १७ ॥ कृताकृतज्ञो भृत्यानां ज्ञेयः स्याद्दक्षरक्षिता ॥ सुरूपस्तरुणः शूरो दृढभक्तः कुलोचितः ॥ १८ ॥ शूरः क्लेशसहश्चैव खड्गधारी प्रकीर्तितः ॥ शूरश्च

बहुयुक्तश्च गजाश्वरथकोविदः ॥ १९ ॥ कोशधारी भवेद्राज्ञः सदा क्लेशसहश्च यः ॥ निमित्तशकुनज्ञानहयशिक्षाविशारदः ॥२०॥ हयायुर्वेदतत्त्वज्ञो भूमिभागविशेषवित् ॥ बलाबलज्ञो रथिनां स्थिरदृष्टिर्विशारदः ॥ २१ ॥ शूरश्च कृतविद्यश्च सारथिः परिकीर्तितः ॥ अनाहार्यः शुचिर्दक्षः चिकित्सकवचोरतः ॥ २२ ॥ सूदशास्त्रविधानाज्ञः सूदाध्यक्षः प्रशस्यते ॥ सूदशास्त्रविधानज्ञाः पराभेद्याः कुलोद्गताः ॥ २३ ॥ सर्वे महानसे कार्या नीचकेशनखा जनाः ॥ समः शत्रौ च मित्रे च धर्मशास्त्रविशारदः ॥ २४ ॥ विप्रमुख्यः कुलीनश्च धर्माधिकरणो भवेत् ॥ कार्यास्तथाविधास्तत्र द्विजमुख्याः सभासदः॥२५॥ सर्वदेशाक्षराभिज्ञाः सर्वशास्त्रविशारदाः ॥ लेखकाः कथिता राम सर्वाधिकरणेषु वै॥२६॥ शीर्षोपेतान्सुसंपूर्णान्समद्रोणीगतान्समान् ॥ अक्षरान्विलिखेद्यस्तु लेखकः स वरः स्मृतः ॥ २७ ॥ उपायवाक्यकुशलः सर्वशास्त्रविशारदः ॥ बह्वर्थवक्ता चाल्पेन लेखकः स्याद्भृगूत्तम ॥ २८ ॥ पुरुषान्तरतत्त्वज्ञाः प्रांशवश्चाप्यलोलुपाः ॥ धर्माधिकरणे कार्या जनाह्वानकरा नराः ॥ २९ ॥ एवंविधास्तथा कार्या राज्ञो दौवारिका जनाः ॥ लोहवस्त्रादिधातूनां रत्नानां च विभागवित् ॥३०॥ विज्ञाता फल्गुसाराणां त्वनाहार्यः शुचिस्सदा ॥ निपुणश्चाप्रमत्तश्च धनाध्यक्षः प्रकीर्तितः ॥ ३१ ॥ आयद्वारेषु सर्वेषु धनाध्यक्षसमा नराः ॥ व्ययद्वारेषु सर्वेषु कर्तव्याः पृथिवीक्षिता ॥ ३२ ॥ परं पारं गतो यः स्यादष्टाङ्गेषु चिकित्सिते ॥ अनाहार्यस्स वैद्यः स्याद्धर्मात्मा च कुलोद्गतः ॥ ३३ ॥ प्राणाचार्यस्स विज्ञेयो वचनं तस्य भूभुजा ॥ राम स्नेहात्सदा कार्यं यथा कार्यं पृथग्जनैः ॥ ३४ ॥ हस्तिशिक्षाविधानज्ञो वनजातिविशारदः ॥ क्लेशक्षमस्तथा राज्ञो गजाध्यक्षः प्रशस्यते ॥ ३५ ॥ एतैरेव गुणैर्युक्तो स्वाधीनश्च विशेषतः ॥ गजारोहो नरेन्द्रस्य सर्वकर्मसु शस्यते ॥ ३६ ॥ हयशिक्षाविधानज्ञस्तच्चिकित्सितपारगः ॥ अश्वाध्यक्षो महीभर्त्तुः स्वासनश्च प्रशस्यते ॥ ३७ ॥ अनाहार्यश्च शूरश्च तथा प्राज्ञः कुलोद्गतः ॥ दुर्गाध्यक्षः स्मृतो राम उद्युक्तः सर्वकर्मसु ॥ ३८ ॥ वास्तुविद्याविधानज्ञो लघ्नहस्तो जितश्रमः ॥ दीर्घदर्शी च शूरश्च स्थपतिः परिकीर्तितः ॥ ३९ ॥ यन्त्रमुक्ते पाणिमुक्ते अमुक्ते मुक्तधारिते ॥ अस्त्राचार्यो नियुद्धे च कुशलश्च तथेष्यते ॥ ४० ॥ पञ्चाशदधिका नार्यः पुरुषाः सप्ततिस्तथा ॥ अन्तःपुरचराः कार्या राज्ञा सर्वेषु कर्मसु ॥ ४१ ॥ स्थविरा जातितत्त्वज्ञाः सततं प्रतिजाग्रतः ॥ राज्ञः स्यादायुधागारे दक्षः कर्मसु चोद्यतः ॥ ४२ ॥ कर्माण्यपरिमेयानि राज्ञां भृगुकुलोद्वह ॥ उत्तमाधममध्यानि बुद्ध्वा कर्माणि पार्थिव ॥ ४३ ॥ उत्तमाधममध्याँस्तु पुरुषान्विनियोजयेत् ॥ न कर्मणि विपर्यासाद्राजा नाशमवाप्नुयात् ॥ ४४ ॥ नियुक्तपुरुषे भक्ति श्रुतं शौर्यं बलं कुलम् ॥

ज्ञात्वा वृत्तिर्विधातव्या पुरुषाणां महीक्षिता ॥ ४५ ॥ पुरुषान्तरविज्ञाने तत्त्वमात्रनिबन्धनाः ॥ नरेन्द्रलक्ष्या धर्मज्ञास्तत्रायत्तो भवेन्नृपः ॥४६॥ स्वभृत्याश्च तथा पुष्टास्सततं प्रतिमानिताः ॥ राज्ञा सहायाः कर्तव्याः पृथिवीं जेतुमिच्छता ॥४७॥ यथार्हं चाथ सुभृतान्राजा कर्मसु योजयेत् ॥ धर्मिष्ठान्धर्मकार्येषु शूरान्संग्रामकर्मणि ॥ ४८ ॥ निपुणानर्थकृत्येषु सर्वत्र च तथा शुचीन् ॥ स्त्रीषु षण्ढान्नियुञ्जीत तीक्ष्णान्दारुणकर्मसु ॥४९॥ धर्मे चार्थे च कामे च भये च भृगुनन्दन ॥ राजा यथार्हं कुर्यात्तानुपधाभिः परीक्षितान् ॥ ५० ॥ समतीतो यथार्हायां कुर्याद्धस्तिवने चरान् ॥ उत्पादान्वेषणे यत्तानध्यक्षाँस्तत्र कारयेत् ॥ ५१ ॥ एवमादीनि कर्माणि यत्नैः कार्याणि भार्गव ॥ सर्वथा नेष्यते राज्ञस्तीक्ष्णोपकरणक्षयः ॥ ५२ ॥ पापसाध्यानि कर्माणि यानि राज्ञां भृगूत्तम ॥ सन्तस्तानि न कुर्वन्ति तस्मात्तान्बिभृयान्नृपः ॥ ५३ ॥ नेष्यते पृथिवीशानां तीक्ष्णोपकरणक्षयः ॥ यस्मिन्कर्मणि यस्य स्याद्विशेषेण च कौशलम् ॥ ५४ ॥ तस्मिन्कर्मणि तं राजा परीक्ष्य विनियोजयेत् ॥ पितृपैतामहान्भृत्यान्सर्वकर्मसु योजयेत् ॥ ५५ ॥ विना दायादकृत्येषु तत्र ते हि समासतः ॥ राजा दायादकृत्येषु परीक्ष्य स्वकृतान्नरान् ॥ ५६ ॥ नियुञ्जीत महाभागः तस्य ते हितकारिणः ॥ परराजगृहान्प्राप्ताञ्जनसंग्रहकाम्यया ॥ ५७ ॥ उष्टान्वाप्यथ वा दुष्टान्संश्रयेत प्रयत्नतः ॥ दुष्टं विज्ञाय विश्वासं न कुर्यात्तत्र भूमिपः ॥ ५८ ॥ वृत्तिं तस्यापि वर्त्तेत जनसंग्रहकाम्यया ॥ राजा देशान्तरप्राप्तं पुरुषं पूजयेद्भृशम् ॥ ५९ ॥ सहायं देशसंप्राप्तं बहुमानेन चिन्तयेत् ॥ कामं भृत्यार्जनं राजा नैव कुर्याद्भृगूत्तम ॥ ६० ॥ न वै वासं विभक्तं तु भृत्यं कुर्यात्कथञ्चन ॥ शस्त्रमग्निं विषं सर्पान्निस्त्रिंशमपि चैकतः ॥ ६१ ॥ भृत्या मनुजशार्दूल कुभृत्याश्च तथैकतः ॥ तेषां चारेण विज्ञानं राजा विज्ञाय नित्यशः ॥ ६२ ॥ गुणिनां पूजनं कुर्यान्निर्गुणानां च शासनम् ॥ कथिताः सततं राम राजानश्चारचक्षुषः ॥ ॥ ६३ ॥ स्वदेशे परदेशे च जातिशीलान्विचक्षणान् ॥ अनाहार्यान्क्लेशसहान्नियुञ्जीत सदा चरान् ॥ ६४ ॥ जनस्याविततान्सौम्याँस्तथा ज्ञातान्परस्परम् ॥ वणिजो मन्त्रकुशलान्सांवत्सरचिकित्सितान् ॥ ६५ ॥ तथा प्रव्रजिताकारान्राजा चारान्नियोजयेत् ॥ नैकस्य राजा श्रद्दध्या च्चारस्यापि च भाषितम् ॥ ६६ ॥ द्वयोस्संवादमाज्ञाय सन्दध्यान्नृपतिस्ततः ॥ परस्परस्याविदितौ यदि स्यातां न तावुभौ ॥ ६७ ॥ तस्माद्राजा प्रयत्नेन गूढांश्चारान्प्रयोजयेत ॥ राज्यस्य मूलमेतावद्यद्राज्ञश्चारदृष्टिता ॥ ६८ ॥ चाराणामपि यत्नेन राज्ञा कार्यं परीक्षणम् ॥ रागापरागौ भृत्यानां जनस्य च गुणागुणान् ॥ ६९ ॥ शुभानामशुभानां च विज्ञानं राम कर्मणाम् ॥ सर्वं राज्ञां चरायत्तं तेष्वायत्तस्सदा भवेत् ॥ ७० ॥

कर्मणा केन मे लोके जनस्सर्वोऽनुरज्यते ॥ विरज्यते तथा केन विज्ञेयं तन्महीक्षिता ॥ विरागजननं सर्वं वर्जनीयं प्रयत्नतः ॥ ७१ ॥ जनानुरागप्रभवो हि लक्ष्यो राज्ञां यतो भार्गववंशचन्द्र ॥ तस्मात्प्रयत्नेन नरेन्द्रमुख्यैः कार्योऽनुरागो भुवि मानवेषु ॥ ७२ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे सहायसम्पत्तिर्नाम चतुर्विंशोऽध्यायः ॥ २४ ॥ ॥ पुष्कर उवाच ॥ यथानुवर्तितव्यं स्याद्राम राजोपजीविभिः ॥ तथा ते कथयिष्यामि निबोध गदतो मम ॥ १ ॥ आज्ञा सर्वात्मना कार्या स्वशक्त्या भृगुनन्दन ॥ आक्षिप्य वचनं तस्य न वक्तव्यं तथा वचः ॥ २ ॥ अनुकूलं प्रियं तस्य वक्तव्यं जनसन्निधौ ॥ रहोगतस्य वक्तव्यमप्रियं यद्धितं भवेत् ॥ ३ ॥ परार्थमथ वक्तव्यं स्वस्थे चेतसि भार्गव ॥ स्वास्थ्यं सुहृद्भिर्वक्तव्यं न स्वयं तु कथंचन ॥ ४ ॥ कार्यातिपातकं कार्यं रक्षितव्यं प्रयत्नतः ॥ न च हिंस्यधनं किञ्चिन्नियुक्तेन च कर्मणि ॥ ५ ॥ नोपेक्ष्यं तस्य मानं च तथा राज्ञा प्रियो भवेत् ॥ राज्ञश्च न तथा कार्यं वेशभाषितचेष्टितम् ॥६॥ राजलीला न कर्तव्या तद्दिष्टं च विवर्जयेत् ॥ राज्ञस्समाधिकौ वेशौ न तु कार्यौ विजानता ॥ ७ ॥ द्यूतादिषु तथैवास्य कौशलं तु प्रदर्शयेत् ॥ प्रदर्श्य कौशलं चास्य राजानं न विशेषयेत् ॥ ८ ॥ अन्तःपुरधनाध्यक्षैर्वैरिदूतैर्निराकृतैः ॥ संसर्गं न व्रजेद्राम विना पार्थिवशासनम् ॥ ९ ॥ निस्नेहतां चावमानं तत्प्रयुक्तं च गोपयेत् ॥ यच्च गुह्यं भवेद्राज्ञस्तन्न लोके प्रकाशयेत् ॥ १० ॥ नृपेण श्रावितं यत्स्याद्गुह्याद्गुह्यं भृगूत्तम ॥ न तत्संश्रावयेल्लोके तथा राज्ञः प्रियो भवेत् ॥ ११ ॥ आज्ञप्यमाने चान्यस्मिन्समुत्थाय त्वरान्वितः ॥ अहं किङ्करवाणीति वाच्यो राजा विजानता ॥ १२ ॥ कार्यावस्थां च विज्ञाय कार्यमेतत्तथा भवेत् ॥ सततं क्रियमाणेस्मिल्लाँघवं तु व्रजेद्बुधः ॥ १३ ॥ राज्ञः प्रियाणि वाक्यानि न चात्यर्थं पुनःपुनः ॥ न हास्यशीलश्च भवेन्न चापि भृकुटीमुखः ॥ ॥ १४ ॥ नातिवक्ता न निर्वक्ता न च मात्सरिकस्तथा ॥ आत्मसम्भावितश्चैव न भवेत्तु कथञ्चन ॥ १५ ॥ दुष्कृतानि नरेन्द्रस्य न च संकीर्तयेत्क्वचित् ॥ वस्त्रं पत्रमलङ्कारं राज्ञा दत्तं तु धारयेत् ॥ १६ ॥ औदार्येण न तद्देयमन्यस्मिन्भूतिमिच्छता ॥ न चैवाध्यशनं राज्ञः स्वपनं चापि कारयेत् ॥ १७ ॥ नानिर्दिष्टे तथा द्वारे प्रविशेत कथञ्चन ॥ न च पश्येत राजानमयोग्यासु च भूमिषु ॥ १८ ॥ राज्ञस्तु दक्षिणे पार्श्वे वामे चोपविशेत्तदा ॥ पुरस्तात्तु यथा पश्चादासनं तु विगर्हितम् ॥ १९ ॥ जृम्भा निष्ठीवनं कामं कोपं पर्यंकिकाश्रयम् ॥ मुकुटं वातमुद्गारं तत्समीपे विवर्जयेत् ॥ २० ॥ स्वयं तथा न कुर्वीत स्वगुणाख्यापनं बुधः ॥ स्वगुणाख्यापने कुर्यात्परानेव प्रयोजकान् ॥ २१ ॥ हृदयं निर्मलं कृत्वा

परं भक्तिमुपाश्रितैः ॥ अनुजीविगणैर्भाव्यं नित्यं राज्ञामतन्द्रितैः ॥ २२ ॥ शाठ्यं लौल्यमपैशुन्यं नास्तिक्यं क्षुद्रतां तथा ॥ चापल्यं च परि
त्याज्यं नित्यं राजानुजीविना ॥ २३ ॥ श्रुतेन विद्याशिल्पैश्च संयोज्यात्मानमात्मना ॥ राजसेवां ततः कुर्याद्भूतये भीतिवर्धनः ॥ २४ ॥ नम
स्कार्यास्सदा चास्य पुत्रवल्लभमन्त्रिणः ॥ सचिवैश्चास्य विश्वासं न तु कार्यं कथञ्चन ॥ २५ ॥ अपृष्टश्चास्य न ब्रूयात्कामं ब्रूयात्तथापदि ॥ हितं
पथ्यं च वचनं हितैस्सह सुनिश्चितम् ॥ २६ ॥ चित्तं चैवास्य विज्ञेयं नित्यमेवानुजीविना ॥ भर्तुराराधनं कुर्याच्चित्तज्ञो मानवः सुखम् ॥ २७ ॥
रागापरागौ चैवास्य विज्ञेयौ भूतिमिच्छता ॥ त्यजेद्विरक्तं नृपतिं रक्ताद्वृत्तिं तु कामयेत् ॥ २८ ॥ कर्मोपकारयोर्नाशं विपक्षाभ्युदयं तथा ॥
आशासंवर्धनं कृत्वा फलनाशं करोति च ॥ २९ ॥ अकोऽपोपि प्रकोपाभः प्रसन्नोऽपि च निष्फलः ॥ वाक्यं समन्दं वदति वृत्तिच्छेदं करोति च ॥
॥ ३० ॥ प्रवेशवाक्यानुदितौ न संभावयतीत्यथ ॥ आराधनासु सर्वासु सुप्तवच्च विचेष्टते ॥ ३१ ॥ कथासु दोषैः क्षिपति वाक्यच्छेदं करोति
च ॥ लक्ष्यते विमुखश्चैव गुणसङ्कीर्तने कृते ॥ ३२ ॥ दृष्टिं क्षिपत्यथान्यत्र क्रियमाणे च कर्मणि ॥ विरक्तलक्षणं श्रुत्वा शृणु
रक्तस्य लक्षणम् ॥ ३३ ॥ दृष्ट्वा प्रसन्नो भवति वाक्यं गृह्णाति चादरात् ॥ कुशलादिपरिप्रश्ने संप्रयच्छति चासनम् ॥ ३४ ॥
विविक्तदर्शने चास्य रहस्ये न च शङ्कते ॥ जायते हृष्टवदनः श्रुत्वा तस्य तु सङ्कथाम् ॥ ३५ ॥ अप्रियाण्यपि वाक्यानि तदुक्तान्यभिनन्दति ॥
उपायनं च गृह्णाति स्तोकमप्यादरात्तथा ॥ ३६ ॥ कथान्तरेषु सरति प्रहृष्टवदनस्तथा ॥ इति रक्तस्य कर्तव्या सेवा भृगुकुलोद्वह ॥ आपत्सु न
त्यजेत्पूर्वं विरक्तमपि सेवितम्॥३७॥मित्रं न चापत्सु तथा न भृत्यं व्रजन्ति ये निर्गुणमप्रमेयम् ॥ प्रभुं विशेषेण च ते व्रजन्ति सुरेन्द्रधामासुरवृन्द
जुष्टम् ॥ ३८ ॥ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे अनुजीविवृत्तं नाम पञ्चविंशोध्यायः ॥ २५ ॥ ॥ पुष्कर
उवाच ॥ ॥ राजा सहायसंयुक्तः प्रभूतयवसेन्धनम् ॥ रम्यमानतसामन्तः पशव्यं देशमावसेत् ॥ १ ॥ वैश्यशूद्रजनप्रायमनाहार्यं तथा परैः ॥
किञ्चिद्ब्राह्मणसंयुक्तं बहुकर्मकरं तथा ॥ २ ॥ अदेवमातृकं कर्मस्वनुरक्तजनाचितम् ॥ करैरपीडितं चापि बहुपुष्पं फलं तथा ॥ ३ ॥ अगम्यं
परचक्राणां तद्वादसहमापदि ॥ समदुःखसुखं राज्ञः सततं च प्रिये स्थितम् ॥ ४ ॥ सरीसृपविहीनं च व्याधितस्करवर्जितम् ॥ एवंविधं यथालाभं
राजा विषयमावसेत् ॥ ५ ॥ तत्र दुर्गं नृपः कुर्यात्षण्णामेकतमं बुधः ॥ धन्वदुर्गं महीदुर्गं नरदुर्गं तथैव च ॥ ६ ॥ वार्क्षं चैवांबुदुर्गं च
गिरिदुर्गं च भार्गव ॥ सर्वेषामेव दुर्गाणां गिरिदुर्गं प्रशस्यते ॥ ७ ॥ दुर्गं च परिखोपेतं नृपाट्टालकसंयुतम् ॥ शतघ्नीयन्त्रमुख्यैश्च शतशश्च

तथा युतम् ॥ ८ ॥ गोपुरं सङ्कपाटं च तत्र स्यात्सुमनोहरम् ॥ सपताकगजारूढो येन राजा विशेत्पुरम् ॥ ९ ॥ चतस्रश्च तथा तत्र कार्याश्चापण
वीथयः ॥ एकस्मिँस्तत्र वीथ्यग्रे देववेश्म भवेद्दृढम् ॥ १० ॥ वीथ्यग्रे च द्वितीये वै राजवेश्माभिधीयते ॥ धर्माधिकरणं कार्यं वीथ्यग्रे च तृतीयके
॥ ११ ॥ चतुर्थे चैव वीथ्यग्रे गोपुरं च विधीयते ॥ आयतं चतुरस्रं वा वृत्तं चाकारयेत्पुरम् ॥ १२ ॥ मुक्तिहीनं त्रिकोणं च यवमध्यं तथैव च ॥
अर्धचन्द्रप्रकारं च वज्राकारं च वर्जयेत् ॥ १३ ॥ अर्धचन्द्रं प्रशंसन्ति नदीतीरे तु तद्वशात् ॥ अन्यत्र तन्न कर्तव्यं प्रयत्नेन विजानता ॥ १४ ॥
राज्ञः कोशगृहं कार्यं दक्षिणे राजवेश्मनः ॥ तस्यापि दक्षिणे भागे गजस्थानं विधीयते॥१५॥गजानां प्राङ्मुखी शाला कर्तव्या चाप्युदङ्मुखी ॥
आग्नेये च तथा भागे आयुधागार इष्यते ॥१६॥ महानसं च धर्मज्ञः कर्मशालास्तथापराः ॥ गृहं पुरोधसः कार्यं वामतो राजवेश्मनः ॥ १७ ॥
मन्त्रिदैवविदां चैव चिकित्साकर्तुरेव च ॥ तत्रैव च तथा भागे कोष्ठागारं विधीयते ॥ १८ ॥ गवां स्थानं तु कर्त्तव्यं तुरगाणां तथैव च ॥
उत्तराभिमुखी श्रेणी तुरगाणां विधीयते ॥ १९ ॥ प्राङ्मुखी चापि धर्मज्ञ परिशेषा विगर्हिता ॥ तुरगाश्च तथा धार्याः प्रशस्तैः सार्वरात्रिकैः ॥
॥ २० ॥ कुक्कुटान्वानरांश्चैव मर्कटांश्च नराधिपः ॥ धारयेदथ शालासु सवत्सां धेनुमेव च ॥ २१ ॥ अजाश्च धार्या यत्नेन तुरगाणां हितै
षिणा ॥ गोगजाश्वविशालासु तत्पुरीषस्य निष्क्रमम् ॥ २२ ॥ अस्तङ्गते न कर्तव्यं देवदेवे दिवाकरे ॥ ततस्तत्र यथान्यायं राजा विज्ञाय सार
वित् ॥ २३ ॥ दद्यादावसथस्थानं सर्वेषामनुपूर्वशः ॥ योधानां शिल्पिनां चैव सर्वेषामविशेषतः ॥ २४ ॥ दद्यादावसथान्दुर्गे मन्त्रकालविदां
सताम् ॥ गोवैद्यानश्ववैद्यांश्च गजवैद्यांस्तथैव च ॥ २५ ॥ आहरेत भृशं राजा दुर्गे परबलारुजः ॥ कुशीलवानां विप्राणां दुर्गे स्थानं विधीयते ॥
॥ २६ ॥ न बहूनां न तैर्दुर्गं विना कार्यं तथा भवेत् ॥ दुर्गे च यन्त्राः कर्तव्या नानाप्रहरणान्विताः ॥ २७ ॥ सहस्रघातिनो राम तैस्तु रक्षा
विधीयते ॥ दुर्गे द्वाराणि गुप्तानि कार्याण्यपि च भूभुजा ॥ २८ ॥ सञ्चयश्चात्र सर्वेषां चायुधानां प्रशस्यते ॥ धनुषां क्षेपणीयानां तोमराणां च
भार्गव ॥ २९ ॥ शराणामथ खड्गानां खनकानां तथैव च ॥ लगुडानां गुडानां च हुडानां परिघैः सह ॥ ३० ॥ अश्मनां च प्रभूतानां
मुद्गराणां तथैव च ॥ कणियानां त्रिशूलानां पट्टिशानां च भार्गव ॥ ३१ ॥ प्रासानां च त्सरूणां च शक्तीनां च नरोत्तम ॥ पर
श्वधानां चक्राणां चर्मणां चर्मभिः सह ॥ ३२ ॥ कुद्दालरज्जुवेत्राणां पिटिकानां तथैव च ॥ ह्रस्वकानां च पात्राणामगरस्य च संश्र
यम् ॥ ३३ ॥ सर्वेषां चित्रभाण्डानां सञ्चयश्चात्र इष्यते ॥ वादित्राणां च सर्वेषामौषधानां तथैव च ॥ ३४ ॥ यवसानां प्रभूतानां

चेन्धनस्य च सञ्चयम् ॥ गुडस्य सर्वशैलानां गोरसानां तथैव च ॥ ३५ ॥ चर्मणां च ससर्ज्जानां स्नायूनामस्थिभिः सह ॥ गोरसस्य पटानां च धान्यानां सर्वतस्तथा ॥ ३६ ॥ तथैव प्रपटानां च यवगोधूमयोरपि ॥ रत्नानां सर्ववस्त्राणां लोहानां चाप्यशेषतः ॥३७॥ कलायमुद्गमाषाणां चणकानां तिलैः सह ॥ तथा च सर्वसस्यानां पांशुगोमययोरपि ॥३८॥ सणसर्जरसं भूर्जजतुलाक्षाकटंकटाम् ॥ राजा सञ्चिनुयाद्दुर्गे यच्चान्यदपि किञ्चन ॥ ३९ ॥ कुम्भाः साषीविषा धार्या व्याघ्रसिंहादयस्तथा ॥ मृगाश्च पक्षिणश्चैव पशवश्च पृथग्विधाः ॥४०॥ सञ्चेयानि विरुद्धानां सुगुप्तानि पृथक्पृथक् ॥ कर्तव्यानि महाभाग यत्नेन पृथिवीक्षिता ॥ ४१ ॥ उक्तानि चाप्यनुक्तानि राजद्रव्याण्यशेषतः ॥ सुगुप्तानि पुरे कुर्याज्जनानां हित काम्यया ॥ ४२ ॥ जीवकर्षभकाकोलीरामलक्यः परूषकम् ॥ शालिपर्णी पृश्निपर्णी मुद्गपर्णी तथैव च ॥ ४३ ॥ माषपर्णी तथा चैव सारि वे द्वे बलाभयम् ॥ वीराश्वगन्धा वृश्चीका बृहती कण्टकारिका ॥४४॥ शृङ्गाटिका रोद्रगोधी वर्षाभूदर्भगुन्द्रका ॥ मधुपर्णीविदार्यौ द्वे महादुर्गा महा तथा ॥ ४५ ॥ धन्वना महऋग्व्याह्वा त्रिकोटी रण्डकं विषम् ॥ पर्णासनाह्वी मृद्वीका फल्गुः खर्जूरयष्टिका ॥ ४६ ॥ शुक्रातिशुक्रकाश्मर्यश्छ त्रातिच्छत्रवीरणा ॥ इक्षुरिक्षुविकारश्च फाणिताद्याश्च भार्गव ॥ ४७ ॥ सहाश्च सहदेवाश्च विश्वेदेवाढरूपकम् ॥ मधूकपुष्पं हंसाख्या शतपुष्पमधू लिका ॥ ४८ ॥ शतावरी मधूकं च प्रियालं तालमेव च ॥ आत्मगुप्ता कट्फलाख्या दरदा राजसेरुका ॥४९॥ राजर्षभकधानक्या ऋष्यप्रोक्ता तथो त्कटा ॥ कटंकटा पद्मबीजं गोवल्ली मधुवल्लिका ॥५०॥ शीतपाकी कुलिङ्गाक्षी काकजिह्वोरुपत्रिका ॥ एर्वारुत्रपसौ चोभौ मुञ्जातकपुनर्नवा ॥५१॥ काशेरुका तुगाक्षीरा बिल्वेशालूककेसरम् ॥ शूकधान्यानि सर्वाणि शम्बीधान्यानि यानि च ॥ ५२ ॥ क्षीरं क्षौद्रं तथा शुक्तं मज्जा तैलं वसा घृतम् ॥ निकोचाभिषुकाक्षोटं वातापं सोरुखाणकम् ॥ ५३ ॥ एवमादीनि चान्यानि विज्ञेयो मधुरो गणः ॥ राजा सञ्चिनुयात्सर्वं पुरे निरवशे षतः ॥ ५४ ॥ दाडिमाम्रातकां लीनं तितन्तिडीकाम्लवेतसम् ॥ भव्यकः कण्डलीकश्च मकरन्दकरूषकम् ॥५५॥ बीजपूरककाण्डीरमालती राज धन्वना ॥ कोलकद्वयपर्णानि द्वयोरह्लीकयोरपि॥५६॥ पालेवतं भागरिकं प्राचीनारूकमेव च ॥ कपित्थामलकं चुक्रं कलिन्दं च शठस्य च॥५७॥ जाम्बवं नवनीतं च सौवीरकतुषोचके ॥ सुरासवं च मद्यानि मण्डं तक्रदधीनि च ॥ ५८ ॥ शुक्तानि चैव सर्वाणि ज्ञेयान्यम्लगणानि वै ॥ सैन्धवोद्भेदनादेयपाक्यसामुद्ररोचसम् ॥ कूप्यसौवर्चलविडं वालकैलोपबाहुकम् ॥ ५९ ॥ ऊषक्षारं कालभस्म विज्ञेयो लावणो गणः ॥ एवमादीनि चान्यानि राजा सञ्चिनुयात्पुरे ॥ ६० ॥ पिप्पली पिप्पलीमूलं चव्यचित्रकनागरम् ॥ कुठेरकं समरिचं शिग्रुं भल्लात

सर्षपाः ॥ ६१ ॥ कुष्ठाजमोदकिटिभहिंगुमूलकधान्यकम् ॥ कारव्यः कुचिकादात्यः सुमुखः कालपालिका॥६२॥ फणिज्जकोऽथ लशुनं भूस्तृणं सुरसस्तथा ॥ कायस्था च वयस्था च हरितालं मनश्शिला ॥६३॥ अमृतागुरुदन्ती च रोहितं कुंकुमं तथा॥ अवल्गुजः सोमराजी कृष्णसर्पा शिला जतु ॥ ६४ ॥ कपिल्लकं तैजवती विडंगनिचुलानि च ॥ एडकाक्षी प्रकीर्या च पुण्डीरं स्वर्णयूथिका ॥ ६५ ॥ सौगन्धिकं गृंजनकं वेश्मधूमोऽथ रोचना ॥ यवा ऐरण्डकांडीरं सत्यकी हपुषा तथा॥६६॥सर्वपीतानि सूत्राणि प्रायो हरितकानि च॥ फलानि चैषां च तथा सूक्ष्मैला हिङ्गुपत्रिका ॥ ६७ ॥ एवमादीनि चान्यानि गणं कटुकसंज्ञकम् ॥ राजा संचिनुयाद्दुर्गे प्रयत्नेन भृगूत्तम ॥६८॥ मुस्तचन्दनह्रीबेरकृतमालकदारवम् ॥ हरिद्रा नलदोशीरमंक्तामलकवास्तुकम् ॥ ६९ ॥ पूर्वा पटोलकटुका पाठत्वक्पत्रतुम्बकः ॥ किराततिक्तकौ निम्बं यष्टीकातिविषा तथा ॥ ७० ॥ तालीश पत्रं तगरं सप्तपर्णं निकान्तकम् ॥ काकोदुम्बरकौदीपसुषवीकणिकासनाः ॥७१ ॥ षड्ग्रन्था च हिंणी मांसी पर्पटं मदयन्तिका ॥ रसाञ्जनं भृङ्ग रसं पतङ्गापरिपैलवम् ॥ ७२ ॥ दुःस्पर्शा गुरुणी काशो रसकं गन्धनाकुली ॥ तुषवल्ली व्याघ्रनखं शांगष्टाचतुरङ्गुलः ॥ ७३ ॥ रास्ना चैव कुशा स्फीता हरेणुरथ रेणुका ॥ वेत्राग्रं वेतसस्तुर्वी विषाणं लोहमञ्जनम् ॥ ७४ ॥ मालती वनतिक्ताख्या वृषगोजिह्वकर्कशाः ॥ पर्पटी च गुडूची च गणस्तिक्तकसंज्ञकः ॥ ७५ ॥ एवमादीनि चान्यानि राजा संचिनुयात्पुरे ॥ अभयामलके चोभे तथैव च विभीतकम् ॥ ७६ ॥ प्रियङ्गुधातकी पुष्पमोचरोघासनार्जुना ॥ अनन्ताम्रास्थिनागाह्वास्योना कङ्कफलं तथा ॥ ७७ ॥ भूर्जपत्रं शिखोद्भेदं पाटला वकुलोष्ट्रकम् ॥ समङ्गा त्रिवृतामूलं कर्पासा गैरिकाञ्जनम् ॥ ७८ ॥ विद्रुमं समधूच्छिष्टं कुम्भीककुमुदोत्पले ॥ न्यग्रोधौदुम्बराश्वत्थकिंशुकाः शिंशपा शमी ॥ ७९ ॥ प्रियाला एलु कासारं शिरीषं पद्मकं तथा ॥ बिल्वाग्निमन्थं प्लक्षश्च श्यामाकायचकौयनम् ॥ राजादनं करीरं च चम्पकप्रियकौ तथा ॥ ८० ॥ अंकोलोशीरब दराः कदम्बखदिराह्वयम् ॥ येषां पत्राणि साराणि मूलानि कुसुमानि च ॥ ८१ ॥ एवमादीनि चान्यानि कषायाख्यो गणोस्ति च ॥ प्रयत्नेन भृगुश्रेष्ठ राजा संचिनुयात्पुरे ॥ ८२ ॥ कीटाश्वमारणे योगा व्यङ्गतायां तथैव च ॥ वातधूमाम्बुमार्गाणां दूषणानि तथैव च ॥ ८३ ॥ धार्याणि पार्थिवैर्दुर्गे नाहं वक्ष्यामि तानि ते ॥ विषाणां धारणं कार्यं प्रयत्नेन महीभुजा ॥ ८४ ॥ विचित्राश्चागदा धार्या विषप्रशमनास्तथा ॥ रक्षोभूतादिशमनाः पापघ्नाः पुष्टिवर्धनाः ॥ ८५ ॥ कालाविदश्च पुरुषाः पुरे धार्याः प्रयत्नतः ॥ भीतान्प्रमत्तान्कुपिताँस्तथैव च विमानितान् ॥ ॥ ८६ ॥ कुभृत्यानकुलीनाँश्च न राजा वासयेत्पुरे॥ ८७ ॥ यन्त्रायुधाट्टालचयोपपन्नं समग्रधान्यौषधसंप्रयुक्तम् ॥ वणिग्जनैः शोभनमावसेत

दुर्गं सुगुप्तं नृपतिस्सदैव॥८८॥इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं०रामं प्रति पुष्कराख्याने दुर्गसम्पत्तिर्नाम षड्विंशतितमोऽध्यायः॥ २६॥
राम उवाच ॥ रक्षोघ्नानि विषघ्नानि यानि कार्याणि भूभुजा ॥ अगदानि समाचक्ष्व तानि धर्मभृतां वर ॥ १ ॥ पुष्कर उवाच ॥ बिल्वाढकी यवक्षारपाटलीबाह्लिकोषणाः ॥ श्रीपर्णी सल्लकीयुक्ता निष्क्वाथः प्रोक्षणं परम् ॥ २ ॥ सविषं प्रोक्षितं तेन सद्यो भवति निर्विषः ॥ यवसैन्धवपानीयवस्त्रशय्यासनौदनम् ॥ ३ ॥ कवचाभरणच्छत्रबालव्यजनमेव च ॥ शेलूपाटल्यतिविषाशिग्रुगोपीपुनर्नवाः ॥ ४ ॥ ससङ्गावृक्षमूलत्वक्कपित्थं वृक्षशोणितम् ॥ सहदन्तशठं तद्वत्प्रोक्षिणं विषनाशनम् ॥ ५ ॥ लाक्षा प्रियङ्गुमञ्जिष्ठासमङ्गाः सहरेणुका ॥ सयष्ट्याह्वमधूपेता बभ्रुपित्तेन कल्किताः ॥ ६ ॥ निखनेद्गोविषाणस्था सप्तरात्रं महीतले ॥ ततः कृत्वा मणिं हेम्ना बद्धं हस्तेन धारयेत् ॥ ॥ ७ ॥ संस्पृष्टस्सविषस्तेन सद्यो भवति निर्विषः ॥ मनोह्वालशमीपुष्पत्वङ्गनिशाश्वेतसर्षपाः ॥ ८ ॥ कपित्थकुष्ठमञ्जिष्ठाः पित्तेन श्लक्ष्णकल्किताः ॥ धनोगवः कपिच्छायाः सौम्याख्योऽयं पुरो गदः ॥ ९ ॥ विषजित्परमः प्रोक्तो मणिरत्र च पूर्ववत् ॥ मूषकाजिरका चापि हस्ते बद्धा विषापहा ॥ १० ॥ हरेणुमासी मंजिष्ठा रजनीमधुकं मधु ॥ अक्षत्वक्सुरसं.......श्वपित्तं पूर्ववर्मणि ॥ ११ ॥ वादित्राणि पताकाश्च विष्टैरेतैः प्रलेपिताः ॥ श्रुत्वा दृष्ट्वा समाघ्राय सद्यो भवति निर्विषः ॥ १२ ॥ तत्पूषणं पञ्चलवणं मञ्जिष्ठा रजनीद्वयम् ॥ सूक्ष्मैला त्रिवृतापत्रं विरुङ्गानींद्रवारुणी ॥ १३ ॥ मधुकं चेति सक्षौद्रं गोविषाणेर्निधापयेत् ॥ तस्मादुष्णाम्बुना मात्रां प्रागुक्तां योजयेत्तथा ॥ ॥१४॥ विषं भुक्तं जरां याति निर्विषोपि न दोषकृत् ॥ संतुसर्जरसोशीरसर्षपापत्रवालुकैः ॥१५॥ सवेल्लारुष्करपुरैः कुसुमैरर्जुनस्य च ॥ धूपोवासो गृहे हन्ति विषं स्थावरजङ्गमम् ॥ १६ ॥ न तत्र कीटा न विषा दर्दुरा न सरीसृपाः ॥ न कृत्याः कर्म नाऽन्यच्च धूपोयं यत्र दह्यते ॥ १७ ॥ कल्कितैश्चन्दनक्षीरपलाशद्रुमवल्कलैः ॥ पूर्वैलवालुसुरसानाकुलीतण्डुलीयकैः ॥ १८ ॥ क्वाथः सर्वोदकार्येषु काकमाचीजलैर्वृतः ॥ रोचनापत्रनैपालीकुंकुमैस्तिलकं वहन् ॥ १९ ॥ विषं न बाधते स्याच्च नरनारीनृपप्रियः ॥ चूर्णैर्हरिद्रामंजिष्ठाकिणिहीकणनिम्बकैः ॥ २० ॥ जिग्ध्रन्निर्विषतामेति गात्रं सर्वविषार्दितम् ॥ शिरीषस्य फलं पत्रं पुष्पं त्वङ्मलमेव च ॥ २१ ॥ गोमूत्रपिष्टो ह्यगदः सर्वकर्मकरः स्मृतः ॥ एता वीरमहौषध्यः शृणु चातः परं द्विज ॥ २२ ॥ वन्ध्या कर्कोटकी राम विष्णुक्रान्ता तथोत्कटा ॥ शतमूला शतानन्दा बलास्फोटा पटोलिका ॥ २३ ॥

१ 'वस्त्र' इत्यपि पाठः ।

सोमा पिण्डा निशा चैव तथा दग्धरुहा जया ॥ स्थले कमलिनी या च पिंगली शृङ्गमूलिका[1] ॥ २४ ॥ चण्डाली हस्तिचण्डाली गोचण्डाली कव
न्धिका ॥ रक्ता चैव महारक्ता तथा बर्हिशिखा च या ॥ २५ ॥ कोशातकी नक्तमालं पियालं च स्वलक्षणा ॥ चारणा च सुगन्धा च तथा वै
गन्धनाकुली ॥ २६ ॥ ईश्वरी च सलिङ्गी च सोमली वंशनालिका ॥ जतुकारी तथा श्वेता श्वेता च मधुयष्टिका ॥ २७ ॥ वज्रटः पारिभद्रश्च तथा
वै सिन्धुवारिका ॥ जीवानन्दी वसुमती न तं नागकटं कटम् ॥ २८ ॥ तालना जालपातालं तथा च वटपत्रिका ॥ करक्षीरा महानीली कह्लारं
हंसपादिका ॥ २९ ॥ मण्डूकपर्णी वाराही द्वे तथा तण्डुलीयके ॥ सर्पाक्षी लवणा ब्राह्मी विश्वरूपा सुखंकरी ॥ ३० ॥ रुजापहा शुद्धिकरी तथा
शल्यापहा च या ॥ पत्रिका रोहिणी चैव रक्तला च महौषधी ॥ ३१ ॥ तथामलकवन्दारु यावचित्रा पटोलिका ॥ काकोली क्षीरकाकोली
पीलुपर्णी मनोवती ॥ ३२ ॥ केशनी वृश्चिका काली महानागा शतावरी ॥ तथा गरुडवेगा च स्थलेकुमुदिनी च या ॥ ३३ ॥ स्थले चोत्प
लिनी या च महाभूमिलता च या ॥ उन्मादिनी सोमराजी सर्वरत्नानि भार्गव ॥ ३४ ॥ विशेषान्मरकतं तत्र कीटपक्षं विशेषतः ॥ जीवजा
ताश्च मणयस्सर्वे धार्या विशेषतः ॥ ३५ ॥ रक्षोघ्नाश्च यशस्याश्च कृत्या वेतालनाशिनः ॥ विशेषान्तरनागाश्च गोखरोष्ट्रसमु
द्भवाः ॥ ३६ ॥ सर्पतित्तिरगोमायुबभ्रुमण्डूकजाश्च ये ॥ सिंहव्याघ्रर्क्षमार्जारद्वीपवानरसम्भवाः ॥ ३७ ॥ कपिञ्जलाजगोधाविमहिषैणभवाश्च
ये ॥ ३८ ॥ इत्येवमेतैस्सकलैरुपेतं द्रव्यैः पुरं रक्षितसञ्चयं च ॥ राजा वसेत्तत्र गृहं च शुभ्रं गुणान्वितं लक्षणसंप्रयुक्तम् ॥ ३९ ॥
इति श्रीविष्णुधर्मोत्तरे मा०सं० द्वितीयखण्डे अगदङ्कराध्यायो नाम सप्तविंशतितमोऽध्यायः ॥ २७ ॥ ॥ राम उवाच ॥ राजरक्षारहस्यानि
यानि दुर्गे निधापयेत् ॥ कारयेद्वा महीभर्ता कथयस्वाशु तानि मे ॥ १ ॥ पुष्कर उवाच ॥ शिरीषोदुम्बरशमीबीजपूरं घृतप्लुतम् ॥
क्षुद्योगः कथितो राम मासार्धस्य पुरातनैः ॥ २ ॥ कषेरूत्पलमूलानि इक्षुमूलं तथा विमम्[2] ॥ दूर्वाक्षीरघृतैर्मण्डैः[3] सिद्धोऽयं मासिकः
परम् ॥ ३ ॥ शूलप्रोतं नरं प्राप्य तस्यास्थामरणी भवेत् ॥ कल्माषवीणुना तत्र जनयेत्तु विभावसुम् ॥ ४ ॥ गृहे त्रिरपसव्यं तत्क्रियते यत्र
भार्गव ॥ नान्योऽग्निर्ज्वलते तत्र नात्र कार्या विचारणा ॥ ५ ॥ कर्पासास्थि भुजङ्गस्य तथा निर्मोचनं परम् ॥ सर्पनिर्वासने धूपः प्रशस्तः
सततं गृहे ॥ ६ ॥ सान्द्रसत्त्वा च वयसा विद्युद्दग्धा च मृत्तिका ॥ तयानुलिप्तं यद्वेश्म नाग्निना दह्यते द्विज ॥ ७ ॥ दिवा च दुर्गे रक्षोऽग्निर्वाति

१ 'शंखमूलिका' इति ख० । २ 'विषम्' इति ख० । ३ 'कुण्डः' इति क० ।

याते विशेषतः ॥ विषाच्च रक्ष्यो नृपतिस्तत्र युक्तिं निबोध मे ॥ ८ ॥ क्रीडानिमित्तं नृपतेर्धार्याः स्युर्मृगपक्षिणः ॥ अन्नं च प्राक्परीक्षेत वह्नावथ नरेषु च ॥ ९ ॥ वस्त्रं पत्रमलङ्कारं भोजनाच्छादने तथा ॥ नापरीक्षितपूर्वं तु स्पृशेदपि महीपतिः ॥ १० ॥ श्यावास्यवक्त्रः सन्तप्तः सोद्वेगं च परीक्षते ॥ विषदेन विषं दत्तं यत्र तत्र निरीक्षते ॥ ११ ॥ स्रस्तोत्तरीयो विमनाः स्तम्भकुण्ड्यादिभिस्तथा ॥ प्रच्छादयति चात्मानं खिद्यते लज्जते तथा ॥ १२ ॥ भुवं विलिखते ग्रीवां तथा चालयते द्विज ॥ कण्डूयति च मूर्धानं परिलेढ्यधरं तथा ॥ १३ ॥ क्रियासु त्वरते राम विपरीतास्वपि ध्रुवम् ॥ एवमादीनि चिह्नानि विषदस्य परीक्षयेत् ॥ १४ ॥ ततो विचारयेदग्नौ तदन्नं त्वरयान्वितः ॥ इन्द्रायुधसवर्णस्तु वृक्षस्फोटसमन्वितः ॥ १५ ॥ एकावर्तोऽथ दुर्गन्धी भृशं चटचटायते ॥ तद्धूमसेवनाज्जन्तोः शिरोरोगश्च जायते ॥ १६ ॥ सविषेऽन्ने निलीयन्ते न च भार्गव मक्षिकाः ॥ निलीनाश्च विपद्यन्ते दृष्टे च सविषे तथा ॥ १७ ॥ विरज्यति चकोरस्य दृष्टिर्भार्गवसत्तम ॥ विकृतिं च स्वरो याति कोकिलस्य तथा द्विज ॥ १८ ॥ गतिः स्खलति हंसस्य भृङ्गराजश्च कूजति ॥ क्रौंचो मदमथाभ्येति कृकवाकुर्विरौति च ॥ १९ ॥ विक्रोशति चकोरश्च शारिका वाशते तथा ॥ चामीकरोऽन्यतो याति मृत्युं कारण्डवस्तथा ॥ २० ॥ मेहते वानरो राम ग्लायते जीवजीवकः ॥ हृष्टरोमा भवेद्बभ्रुः पृषतश्चैव रोदिति ॥ २१ ॥ हर्षमायाति च शिखी सविषे दर्शने द्विज ॥ अन्नं च सविषं राम चिरेण च विपच्यते ॥ २२ ॥ तथा भवत्यतिस्रावं[1] पक्कं पर्युषितोपमम् ॥ व्यापन्नरसगन्धं च चन्द्रिकाभिस्तथा युतम् ॥ २३ ॥ व्यञ्जनानां च शुष्कत्वं द्रवाणां बुद्बुदोद्भवः ॥ ससैन्धवानां द्रव्याणां जायते फेनमालिका ॥ २४ ॥ रसस्य राजी नीला स्यात्ताम्रा च पयसस्तथा ॥ कोकिलाभा च सध्यस्य तोयस्य च भृगूत्तम ॥ २५ ॥ धान्याम्लस्य तथा कृष्णा कपिला कोद्रवस्य च ॥ मधुश्यावा च तक्रस्य नीला पीता तथैव च ॥ २६ ॥ घृतस्योदकसंकाशा कपोताभा च मस्तुनः[2] ॥ हरिता माक्षिकस्यापि तैलस्य च तथारुणा ॥ २७ ॥ फलानामप्यपक्कानां पाकः क्षिप्रं प्रजायते ॥ प्रकोपश्चैव पक्कानां माल्यानां म्लानता तथा ॥२८॥ मृदुता कठिनानां स्यान्मृदूनां च विपर्ययः ॥ सूक्ष्मतन्तूपसदनं तथा चैवातिरोमता ॥२९॥ श्याममण्डलता चैव वस्त्राणामविशेषतः ॥ लोहानां च मणीनां च मलपङ्कोपदिग्धता ॥ ३० ॥ अनुलेपनगन्धानां स्नानानां च भृगूत्तम ॥ विगन्धता च विज्ञेया पर्णानां म्लानता तथा ॥ ३१ ॥ पीता नीला सिता ज्ञेया तथा रामाञ्जनस्य च ॥ दन्तकाष्ठत्वचः शान्तास्[3]तन्तुसत्त्वं तथैव

१ 'त्यनिस्राव्यम्' इति ख० । २ 'सस्तुतः' इति क० । ३ 'दन्तकाष्ठे च वक्रान्त' इति ख० ।

च ॥ ३२ ॥ एवमादीनि चिह्नानि विज्ञेयानि भृगूत्तम ॥ तस्माद्राजा सदा तिष्ठेन्मणिमन्त्रौषधीगणैः ॥ ३३ ॥ आप्तैः संरक्षितो राम प्रमाद परिवर्जकैः ॥ ३४ ॥ प्रजातरोर्मूलमिहावनीशस्तद्रक्षणाद्वृत्तिमुपैति राष्ट्रम् ॥ तस्मात्प्रयत्नेन नृपस्य रक्षा सर्वेण कार्या भृगुवंशचन्द्र ॥ ३५ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० सं० राजरक्षावर्णनन्नामाष्टाविंशतितमोऽध्यायः ॥ २८ ॥ राम उवाच ॥ ॥ वास्तुविद्यां समाचक्ष्व यादोगणनृपात्मज ॥ हिताय मानवेन्द्राणां तथान्येषां च मानद ॥ १ ॥ पुष्कर उवाच ॥ ॥ भूमिमादौ परीक्षेत शुभलक्षणलक्षिताम् ॥ पूर्वोदक्प्रवणां धन्यां तथा वै दक्षिणोन्नताम् ॥२॥ न तथा शिकटच्छिन्नां नान्यत्तोयपरिप्लुताम् ॥ वल्मीकमूषिकावासश्वभ्रकण्टकितैर्द्रुमैः ॥ ३ ॥ विहीनां मृदुसंस्पर्शां कठिनां चाप्यनूषराम् ॥ न तथा यवसंस्थानां नेभवज्रोपमां तथा ॥४॥ न शूर्पकूर्मसंस्थानां शक्तिहीनां तथैव च ॥ सम्पूर्यमाणां कृमिभिस्तथाधिकमृदं शुभाम् ॥ ५ ॥ गर्भे च कुसुमं यस्यां न म्लानिमुपगच्छति ॥ न निर्वाणमवाप्नोति यस्यां दीपश्च भार्गव ॥ ६ ॥ उदकं च तथा यस्यां शीघ्रं राम न जीर्यते ॥ सा प्रशस्ता क्षितिस्तस्यां निवेशं कारयेद्बुधः ॥ ७ ॥ श्वेता रक्ता तथा पीता कृष्णा चैव यथाक्रमम् ॥ विप्रादीनां प्रशस्ता स्यान्मृत्तिका च ततो द्विज ॥८॥ घृतासृगन्नमद्यानां तुल्यगन्धा तथैव च ॥ मधुरा च कषाया च अम्लोषणरसा तथा ॥९॥ कुशैः शरैस्तथा काशैर्दूर्वाभिर्या च सम्भृता ॥ परीक्ष्य यत्नतो भूमिं तिथिनक्षत्रसम्पदा ॥१०॥ सम्पूज्य ब्राह्मणान्पूर्वं निश्शल्यां तां तु कारयेत् ॥ खातपूर्वां ततः कृत्वा देवभागांश्च कल्पयेत् ॥ ११ ॥ चतुःषष्टिपदं कृत्वा वास्तुपूर्वं यथाविधि ॥ चतुःषष्टिविभागेन कल्पयित्वा समन्ततः ॥ ॥ १२ ॥ एकैकं तु गृहं तत्र तथैव परिकल्पयेत् ॥ यस्मात्पुरविभागेन द्वारन्यासः प्रकीर्तितः ॥ १३ ॥ अतः परं प्रवक्ष्यामि देवभागान्यथाविधि ॥ मध्ये चतुष्पदः स्वामी ब्रह्मा शुभचतुर्मुखः ॥ १४ ॥ प्राक्तथा निग्रहः स्वामी कथितश्च तथार्यमा ॥ दक्षिणेन विवस्वांश्च मित्रः पश्चिमतः स्थितः ॥ १५ ॥ उदक्पृथ्वीधरश्चैव विकोणेष्वथ मे शृणु ॥ विकोणे शिवदैवत्ये कामपक्षावुभौ सुरौ[1] ॥ १६ ॥ सावित्रीसवितारौ तु तथाग्नेये प्रकीर्तितौ ॥ तथा नैर्ऋतकोणे तु जयेन्द्रौ राम कीर्तितौ ॥ १७ ॥ भद्रव्याधी तु वायव्ये कथितौ भृगुनंदन ॥ देवतानां तथैतासां भूयो बाह्ये तु मण्डले ॥१८॥ पूर्वादिषु यथा दिक्षु देवतास्तान्निबोध मे ॥ महेन्द्रश्च रविस्सत्यो भृशः प्राग्रास कीर्तिताः ॥ १९ ॥ गृहक्षितो यमो भृङ्गो गन्धर्वश्चैव याम्यतः ॥ भल्लाटश्च तथा सोम अदितिर्धनदस्तथा ॥ २० ॥ उत्तरेण स्मृता देवा विकोणेष्वथ मे शृणु ॥ दितिरीशौ मेघजयौ शिवकोणे प्रकीर्तितौ ॥ २१ ॥

१ 'कामरक्षावुभौ मतौ' इति क० ।

व्योमाग्नी पूषवितथौ शिखिकोणे च भार्गव ॥ मृगपित्रीशदौवारिसुग्रीवाश्चैव नैर्ऋते ॥ २२ ॥ रोगानायुश्च नागश्च मुख्याश्चानिलदिक्स्थिताः ॥
ततोऽपि बाह्यतश्चाष्टौ शृणुष्व गदतो मम ॥ २३ ॥ अष्टावष्टौ विनिर्दिष्टा देवा दिक्षु विदिक्षु च ॥ आद्यन्तौ तु तयोर्देवौ प्रोक्तावथ ग्रहेश्वरौ॥२४॥
पर्जन्यः प्रथमो देवो द्वितीयश्च करग्रहः ॥ महेन्द्ररविसत्याश्च भृशोऽथ गमनस्ततः ॥ २५ ॥ पवनश्च महाभागाः पूर्वेणैते प्रकीर्तिताः ॥ पुष्योऽथ
त्रितुदश्चैव तथैव च ग्रहक्षतः ॥ २६ ॥ यमो भृशश्च गन्धर्वो मृगोऽथ पितरस्तथा ॥ दक्षिणेन विनिर्दिष्टा देवा भृगुकुलोद्वह ॥ २७ ॥ दौवारि
कश्च सुग्रीवः पुष्पदंतस्तथा सुरः ॥ वरुणस्तु तथा यक्षो रोगः शोषस्तथैव च ॥ २८ ॥ पश्चिमेन विनिर्दिष्टा देवा दानवनाशनाः ॥ नागराज
स्तथा मुख्यो भल्लाटश्च तथा शशी ॥ २९ ॥ अदितिश्च कुबेरश्च नागश्चाथ हुताशनः ॥ एते देवा विनिर्दिष्टास्तथा चोत्तरतो द्विज ॥ ३० ॥
एतेषामेव देवानां[1] भागे द्वाराणि कारयेत् ॥ शुभानि तेषु वक्ष्यामि शेषाणि परिवर्जयेत् ॥ ३१ ॥ महेन्द्रसोमदैवत्यौ पूर्वतः शुभदौ स्मृतौ ॥
गृहक्षतश्च पुष्पश्च तथा दक्षिणतः शुभौ ॥ ३२ ॥ सुग्रीवः पुष्पदन्तश्च शुभौ पश्चिमतो द्विज ॥ भल्लाटः सोमदेवश्च द्वारे श्रेष्ठौ तथा ह्युदक् ॥३३॥
द्वात्रिंशच्च बहिर्देवास्तथान्तर्द्वादश स्मृताः ॥ मध्ये ब्रह्मा तथा प्रोक्त एवं ते पिण्डदेवताः ॥ ३४ ॥ चत्वारिंशद्विनिर्दिष्टास्तथा पञ्च च भार्गव ॥
विन्यस्याजिरमेवादौ चतुष्षष्टिपदं द्विज ॥ ३५ ॥ तत्र देवविभागेन गृहकर्म विधीयते ॥ चन्द्रसुग्रीवपर्जन्यसत्येन्द्रार्यमवारुणे ॥ ३६ ॥
भगवत्संग्रहं कुर्याद्यथासंस्थानतो द्विज ॥ सूर्यान्तरिक्षसत्याग्निभागेषु च महानसम् ॥ ३७ ॥ दाय्वन्तरिक्षसुग्रीवभल्लाटपितृदैवते ॥ गंध
र्वपुष्पदन्ताख्ये भागे कूपं तु कारयेत् ॥ ३८ ॥ एकवृक्षाधिकं तत्र तथा कुर्याद्विजोत्तम ॥ अथवा दिग्विभागेन गृहकर्म विधीयते ॥ ३९ ॥
ऐशान्यां देवतावेश्म तथाग्नेय्यां महानसम् ॥ अग्न्यागारं च तत्रैव भ्रमं नैर्ऋतके तथा ॥ ४० ॥ कोष्ठागारायुधागारौ वायव्यां च तथा
स्मृतौ ॥ कूपादिस्थोदकं शस्तं दिक्षु चैवोत्तरासु च ॥ ४१ ॥ अन्यासु गर्हितं राम प्रयत्नेन विवर्जयेत् ॥ पुराणं नवमिश्रं तु
दारुवेश्मनि वर्जयेत् ॥ ४२ ॥ सकुड्यं परकुड्यं च नैव कार्यं विजानता ॥ विनार्कचन्द्रग्रहणं द्वारसम्परिवर्तनम् ॥ ४३ ॥ वृद्धिक्षयौ
न कर्तव्यौ भूयः कर्मणि वेश्मनः ॥ प्रागुत्तरेऽथवा[2] कार्यौ ब्राह्मणानुमते तथा ॥ ब्रह्मस्थानं शुचिर्नित्यं कार्यं भवति भार्गव ॥ ४४ ॥
न पीडनीयं च तथा नागदन्तादिभिर्भवेत् ॥ मर्माणि राम जानीयाद्देवतापदसन्धिषु ॥ ४५ ॥ न पीडयेत्तथा तानि नाग[3]दन्तादिभिर्द्विज ॥

१ 'द्वाराणाम्' इति क० । २ 'मन्दानि' इति क० । ३ 'राम' इति क० ।

 ये द्रुमा घटसंसिक्तास्तथा ये च सकोटराः ॥४६॥ हस्तिविधुद्धता ये च देवतावेश्मजाश्च ये ॥ वह्निस्पृष्टाः श्मशाने च ये च जाताश्चतुष्पथे॥४७॥ 
 रोकवृक्षाश्च ये केचिन्न ते शस्ताः कथञ्चन ॥ वृक्षस्य महतीं पूजां कृत्वा तद्वासकस्य च ॥ ४८ ॥ मध्वाज्यदिग्धेन तथा छिन्द्यात्परशुना द्विजः ॥ 
पूर्वोत्तरेण पतनं प्रशस्तं परिकीर्तितम् ॥४९॥ शेषासु पतनं दिक्षु गर्हितं द्विजसत्तम ॥ वटाश्वत्थौ च निर्गुण्डी कोविदारविभीतकौ ॥५०॥ पुष्यकं शाल्मलिश्चैव पलाशं च विवर्जयेत ॥ विस्ताराद्विगुणोच्छ्रायं द्वारं कार्यं तथा गृहे॥५१॥ निधिप्रथमको नागहंससारसचित्रितम् ॥ द्वारको नेत्रमद्वाश्च चतुष्पथसुरालयैः॥५२॥ कूपैकवृक्षरथ्याभिर्विद्धं द्वारं विवर्जयेत्॥द्विगुणात्तुगृहोच्छायाद्भूमिं त्यक्त्वा न दोषभाक्॥५३॥आध्मातं सकटं राम तथाम्बु प्लवि यद्भवेत्॥द्वारं न तत्प्रशंसन्ति तस्मात्तु परिवर्जयेत्॥५४॥पुरद्वाराधिकं श्रीदं भागेषु च तथा भ्रमम्॥धनदस्य तथा भागैर्धनवेश्म विधीयते॥५५॥ इन्द्रसत्येन्द्रसुग्रीवद्वारमन्यत्र कारयेत् ॥ स्तम्भं तु नवधा कृत्वा पीठे भागं तु कारयेत् ॥ ५६ ॥ भागे कुम्भस्तथा कार्यो भागे पद्मं निवेशयेत् ॥ स्तम्भं भागत्रये कार्यमष्टास्त्रमथ वर्तुलम् ॥ ५७ ॥ तस्योपरि तथा भागे भवत्यामलसारकम् ॥ भागदोषे तुला कार्या भागे कार्या तथा तुला ॥ ५८ ॥ एकशालचतुश्शालौ कर्तव्यौ स्वेच्छया सदा ॥ पूर्वोत्तराभिः शालाभिर्हीनं कार्यं द्विशालकम् ॥ ५९ ॥ अन्यथा गर्हितं राम सुतार्थक्षयदं मतम् ॥ अष्टहस्तोच्छ्रयादूर्ध्वं भूमिकां तु न कारयेत ॥ ६० ॥ वास्तूच्छ्रायं न कर्तव्यं तथा हस्तशताधिकम् ॥ आरम्भं सशिलान्यासं द्वारस्तम्भोच्छ्रयावुभौ ॥ ६१ ॥ तथारोहणनिष्पत्ती तथा वास्तुप्रवेशनम् ॥ सर्वाण्येतानि कार्याणि दिवसे राम पूजिते ॥६२॥ शेषेष्वेतेषु कर्तव्यं देवब्राह्मणपूजनम् ॥ कालज्ञपूजनं चैव स्थपतीनां च भार्गव ॥ ६३ ॥ प्रावृट्काले न कर्तव्यं वास्तुकर्म विजानता॥ कृष्णपक्षत्रिभागान्ते शुक्लाद्ये च भृगूत्तम ॥ ६४ ॥ तिथिं चतुर्थीं नवमीं वर्जयेच्च चतुर्दशीम् ॥ अङ्गारकदिनं राम करणं विष्टिसंज्ञितम् ॥ ६५ ॥ दिव्यान्तरिक्षक्षितिजैरुत्पातैर्भं च पीडितम् ॥ ग्रहोपस्पृष्टं च तथा व्यतीपातहतं च यत् ॥ ६६ ॥ चन्द्रतारानुकूले भे वास्तुकार्यं विजानता ॥ ध्रुवाणि तानि शस्तानि शाक्रं वै नैर्ऋतं तथा ॥६७॥ सौम्यं च वैष्णवं पुष्यं पौष्णं सावित्रमेव च ॥ स्थिरलग्ने स्थिरांशे च कर्तुश्चोपचयात्मके ॥६८॥ यस्य सौम्यग्रहाः 
केन्द्रे त्रिकोणे चापि भार्गव ॥ पापाश्चोपचयस्थाने तस्मिन्कार्यं प्रवेशनम् ॥ ६९ ॥ केन्द्रस्थं वर्जयेत्पापं सर्वयत्नेन कर्मसु ॥ केन्द्रं सौम्ययुतं देवं न तु शून्यं कदाचन ॥ ७० ॥ अतः परं प्रवक्ष्यामि शिलान्यासविधिं तव ॥ चतुःषष्टिपदं कृत्वा समे स्थाने तु मण्डलम् ॥७१॥ कृत्वा तु

१ 'श्रि' इति ख० । २ 'याम्यम्' इति ख० ।

देवतान्यासं तत्र मण्डलके द्विज ॥ श्रियः सम्पूजनं कृत्वा वासुदेवस्य चाप्यथ ॥ ७२ ॥ पूजनं मण्डले कार्यं वास्तुदेवगणस्य च ॥ गन्धार्घपुष्प नैवेद्यधूपदीपैर्भृगूत्तम ॥ ७३ ॥ तेषां सम्पूजनं कृत्वा समादाय हुताशनम् ॥ ॐकारपूर्वमाज्यं तु जुहुयाच्छ्रीधरस्य तु ॥ ७४ ॥ श्रियः कृत्वा ततो होमं ब्रह्मणः कारयेत्ततः ॥ ब्रह्माणं तु पुरस्कृत्य वास्तुदेवगणस्य च ॥ ७५ ॥ होतव्यमाज्यं धर्मज्ञ यस्य देवस्य हूयते ॥ तत्कालमाशु भजते लक्षणेऽग्नौ द्विजोत्तम ॥ ७६ ॥ तस्य देवस्य यत्स्थानं तत्र शल्यं विनिर्दिशेत् ॥ शल्यस्योद्धरणं कार्यं राम यत्नेन जानता ॥ ७७ ॥ मध्ये शैलमयं कुम्भं शंकुं च स्थापयेद्बुधः ॥ ऐशाने च ततः कोणे शिलां पूर्वं प्रतिष्ठयेत् ॥ ७८ ॥ प्रदक्षिणं ततो राम शिलान्यासं विधीयते ॥ कुम्भस्य च शिलानां च ततः स्नानं विधीयते ॥७९॥ वटाश्वत्थकषायेण सर्वौषधिजलैस्ततः ॥ ततोऽनुलेपनं कार्यं चन्दनेन सुगन्धिना ॥८०॥ आच्छादनं ततः कार्यं वासोभिः कुसुमैः शुभैः ॥ धूपं प्रदीपं नैवेद्यं तेषां राम निवेदयेत् ॥ ८१ ॥ दक्षिणाभिर्द्विजेन्द्राणां ततः पूजा विधीयते ॥ कालवित्स्थपती पूज्यौ ततो राम विजानता ॥ ८२ ॥ ततो मन्त्रं जपेत्कर्ता कालज्ञः स्थपतिः स्वयम् ॥ गृहं पुष्टिकरं राम मुनिवक्त्राद्विनिस्सृतम् ॥ ८३ ॥ नन्दे नन्दय वासिष्ठे वसुभिः प्रजया सह ॥ जये जयावहे देवि प्रजानां जयमावह ॥ ८४ ॥ पूर्णेऽङ्गिरसदायादे पूर्णकामं कुरुष्व माम् ॥ भद्रे कश्यपदायादे कुरु भद्रां मतिं मम ॥ ८५ ॥ सर्वबीजसमायुक्ते सर्वरत्नौषधैर्वृते ॥ रुचिरे नन्दने नन्दे वासिष्ठे रम्यतामिह ॥ ८६ ॥ प्रजापतिसुते देवि चतुरस्रे महीमये ॥ सुभगे सुव्रते भद्रे गृहे काश्यपि रम्यताम् ॥ ८७ ॥ पूजिते परमाचार्यैर्गन्धमाल्यैरलंकृते ॥ भवभूतिकरी देवि गृहे भार्गवि रम्यताम् ॥ ८८ ॥ अव्यक्ते चाकृते पूर्णे मुनेर्ऽङ्गिरसः सुते ॥ इष्टके त्वं प्रयच्छेष्टं प्रतिष्ठां कामयाम्यहम् ॥ ८९॥ देशस्वामिपुरस्वामिगृहस्वामिगृहे वस ॥ मनुष्यधनहस्त्यश्वपशुवृद्धिकरी भव ॥ ९० ॥ गृहप्रवेशेऽपि तथा शिलान्याससमो विधिः ॥ कर्तव्यः सकलो राम शिलान्यासविवर्जितः ॥ ९१ ॥ पूजितापरलक्ष्मीकं हुत्वाग्निं चाप्यलंकृतम् ॥ पञ्चरङ्गेन सूत्रेण बद्धप्रतिसरं तथा ॥ ९२ ॥ सफलेषु च बाणेषु दिशासु विदिशासु च ॥ गवाक्षकेषु कर्तव्याश्शङ्का रक्षोहणास्तथा ॥ ९३ ॥ सर्वस्यास्य तथा न्यासं मन्त्रै रक्षोहणैर्भवेत् ॥ गोपृष्ठविन्यस्तकरः प्रविशेच्च गृही गृहम् ॥ ९४ ॥ स्वऽनुलिप्तस्सुखी स्रग्वी सपत्नीकस्तथैव च ॥ द्विजपुण्याहघोषेण वीणावेणुरवेण च ॥ बन्दिनां च निनादेन पटहानां स्वनेन च ॥ ९५ ॥ काले शुभे कालविदा प्रदिष्टे सतोरणं पूर्णघटाभिरामम् ॥ प्रविश्य कालज्ञसमर्चितानां कृत्वा र्चनं तत्र सुरोत्तमानाम् ॥ ९६ ॥ सम्पूज्य वह्निं द्विजपुङ्गवांश्च माङ्गल्यमालभ्य च भोजयित्वा ॥ विप्रान्मधुक्षीरघृतोत्कटान्नैः सदक्षिणांस्तांश्च

तथा विसर्ज्य ॥ ९७ ॥ सप्ताहमग्निं परिचर्य तत्र सम्पूज्य विप्रान्विधिवच्च राम ॥ गृहे वसेत्पूजितदेवविप्रे शुचौ सदा सर्वगुणोपपन्ने ॥ ९८ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे रामं प्रति पुष्करकथासु वास्तुविद्यावर्णनन्नामैकोनत्रिंशत्तमोऽध्यायः ॥ २९ ॥ ॥ पुष्कर उवाच ॥ ॥ उत्तरेण शुभः प्लक्षो वटः प्राग्भार्गवोत्तम ॥ उदुम्बरश्च याम्येन सौम्येनाश्वत्थ एव च ॥ १ ॥ एते क्रमेण नेष्यन्ति दक्षिणादिसमु द्भवाः ॥ समीपजाताश्च तथा वर्ज्याः कण्टकिनो द्रुमाः ॥ २ ॥ वामभागे तथोद्यानं कुर्याद्वासगृहाच्छुभम् ॥ वापयेत्प्राक्तिलांस्तत्र मृन्दीयात्तांश्च पुष्पितान् ॥ ३ ॥ ततस्तु रोपयेद्वृक्षान्प्रयतः सुसमाहितः ॥ स्नातो द्रुममथाभ्यर्च्य ब्राह्मणांश्च शिवं तथा ॥ ४ ॥ ध्रुवाणि पञ्च वायव्यं हस्तः पुष्यः सवैष्णवः ॥ नक्षत्राणि तथा मूलं शस्यते द्रुमरोपणे ॥५॥ उद्यानं सजलं राम नाभिरामं यदा तदा ॥ प्रवेशयेन्न विपट ( कुरुहान् ) पुष्कारि ण्यश्च कारयेत् ॥ ६ ॥ संस्कार्यमुद्भिदं तोयं कूपाः कार्याः प्रयत्नतः ॥ हस्तं मघा तथा मैत्रं सौम्यं पुष्यं च वासवम् ॥ ७ ॥ उत्तरात्रितयं राम तथा पूर्वा च फल्गुनी ॥ जलाशयसमारंभे प्रशस्ते वारुणं तथा ॥ ८ ॥ सम्पूज्य वरुणं देवं विष्णुं पर्जन्यमेव च ॥ तर्पयित्वा द्विजान्कामैस्तदा रंभकरो भवेत् ॥ ९ ॥ अथोद्याने प्रवक्ष्यामि प्रशस्तान्पादपान्द्विज ॥ अरिष्टाशोकपुन्नागशिरीषाम्रप्रियङ्गवः ॥ १० ॥ पनसाशोकदचलीजम्बूल कुचदाडिमाः ॥ माङ्गल्याः पूर्वमारामे रोपणीया गृहेषु वा ॥ ११ ॥ कृत्वा बहुत्वमेतेषां रोप्यास्सर्वे ह्यनन्तरम् ॥ शाल्मलिं कोविदारं च वर्ज यित्वा विभीतकम् ॥ १२ ॥ असनं देवदारुं च पलाशं पुष्करं तथा ॥ न विवर्ज्यस्तथा कश्चिद्देवोद्यानेषु जानता ॥ १३ ॥ तत्रापि बहुता कार्या माङ्गल्यानां द्विजोत्तम ॥ सायं प्रातस्तु घर्मान्ते शीतकाले दिनान्तरे ॥ १४ ॥ वर्षाकाले भुवः शोषे सेक्तव्या रोपिता द्रुमाः ॥ उत्तमं विंशति र्हस्तं मध्यमं षोडशांतरम् ॥ १५ ॥ स्थानात्स्थानान्तरं कार्यं वृक्षाणां द्वादशावरम् ॥ अभ्याशजातास्तरवः संस्पृशन्तः परस्परम् ॥ १६ ॥ अव्यक्तमिश्रमूलत्वाद्भवन्ति विफला द्विज ॥ तेषां व्याधिसमुत्पत्तौ शृणु राम चिकित्सितम् ॥ १७ ॥ आदौ संशोधनं तेषां किञ्चिच्छस्त्रेण कार येत् ॥ विडङ्गघृतपङ्काक्तान्सेचयेच्छीतवारिणा ॥ १८ ॥ फलनाशे कुलुत्थैश्च माषैर्मुद्गैस्तिलैर्यवैः ॥ श्रितशीतपयस्सेकः फलपुष्पाय सर्वदा ॥ ॥ १९ ॥ आविकाजशकृच्चूर्णं यवचूर्णं तिलानि च ॥ गोमांसमुदकं चेति सप्तरात्रं निधापयेत् ॥ २० ॥ उत्सेकं सर्ववृक्षाणां फलपुष्पादिवृद्धिदम् ॥ रंगतोयोषितं बीजं रंगतोयाभिषेचितम् ॥ २१ ॥ उदंग्रपुष्पं भवति यौवने नात्र संशयः ॥ मत्स्याम्भसा

१ 'तद्रङ्गपुष्पम्' इति ख० ।

तु सिक्तेन वृद्धिर्भवति शाखिनाम् ॥ २२ ॥ ततः प्रधानतो वक्ष्ये द्रुमाणां दोहदान्यहम् ॥ मत्स्योदकेन शीतेन चाम्राणां सेक इष्यते ॥ २३ ॥ मृद्वीकानां तथा कार्यस्तेनैवं रिपुसूदन ॥ पक्वासृग्रुधिरं चैव दाडिमानां प्रशस्यते ॥ २४ ॥ तुषं देयं च भव्यानां मद्यं च बकुलद्रुमे ॥ विशेषात्कामिनीवक्त्रसंसर्गात्तु गुणं च यत् ॥ २५ ॥ प्रशस्तं चाप्यशोकानां कामिनीपादताडनम् ॥ सृगालमांसतोयं च नारङ्गाक्षोटयोर्हितम् ॥ २६ ॥ मधुयष्ट्युदकं[1] चैव बदराणां प्रशस्यते ॥ गन्धोदकं च गोमांसं कतकानां प्रशस्यते ॥ २७ ॥ क्षीरसेकेन भवति सप्तपर्णो मनोहरः ॥ मांसपूतो वसामज्जासेकः कुरबके हितः ॥ २८ ॥ पूतिमत्स्यंघृतं[2] पूतिकर्पासाफलमेव च ॥ अरिमेदस्य[3] सेकोऽयं पाटलेषु च शस्यते ॥ २९ ॥ कपित्थबिल्वयोः सेकं गुडतोयेन कारयेत् ॥ जातीनां मल्लिकायाश्च गन्धतोयं परं हितम् ॥ ३० ॥ तथा कुब्जकजातीनां कूर्ममांसं प्रशस्यते ॥ खर्जूरनारिकेराणां वंशस्य कदलस्य च ॥ ३१ ॥ लवणेन सतोयेन सेको वृद्धिकरः स्मृतः ॥ विडङ्गं तण्डुलोपेतं मत्स्यमांसं भृगूत्तम ॥ सर्वेषामविशेषेण दोहदं परिकल्पयेत् ॥ ३२ ॥ एवङ्कृते चारुपलाशपुष्पाः सुगन्धिनो व्याधिविवर्जिताश्च ॥ भवन्ति नित्यं तरवः सरस्याश्चिरायुषः साधुफलान्विताश्च ॥ ३३ ॥ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे वृक्षायुर्वेदवर्णनं नाम त्रिंशत्तमोऽध्यायः ॥ ३० ॥ ॥ पुष्कर उवाच ॥ दुर्गे सर्वगुणोपेते वास्तुलक्षणसंयुते ॥ वसन्विवर्धयेत्कोशं धर्मेण पृथिवीपतिः ॥ १ ॥ प्रजानां पालनं कार्यं तत्र स्थाने महीक्षिता ॥ स्वदेशे देवतायाश्च कृता राज्ञः पुरातनैः ॥ २ ॥ दायं वित्तं जनं तासां प्रयत्नेन च पालयेत् ॥ देवद्रव्यापहारेण राजा नरकमृच्छति ॥ ३ ॥ अस्मिन्नपि तथा लोके प्राप्नोति च पराभवम् ॥ पालयन्ति महीं देवाः पूजिताः पृथिवीक्षिता ॥ ४ ॥ दैवायत्तमिदं सर्वं भूतलं द्विजपुङ्गव ॥ धूपदीपनमस्कारपुष्पमाल्यानुलेपनैः ॥ ५ ॥ रत्नानुसम्प्रदानैश्च पूजनीयाः सुरोत्तमाः ॥ पूजिताः पूजयन्त्येते चायुषा यशसा श्रिया ॥ ६ ॥ प्राप्यते देवताभक्त्या चानुष्ठाने महत्पदम् ॥ पूजिताः संप्रयच्छन्ति कामान्नृणामभीप्सितान् ॥ ७ ॥ एकमप्याश्रितो देवं राजा भार्गवनन्दन ॥ सर्वासां पूजनं कुर्याद्देवतानामसंशयम् ॥ ८ ॥ देवतानां न चोच्छिन्द्यात्पूर्वदायं कथञ्चन ॥ प्राक्स्थितं तत्र चोच्छिंद्यान्न च च्छिंद्यात्तथा नवम् ॥ ९ ॥ तच्छेत्ता नरकं याति सह पूर्वैः पितामहैः ॥ अपि स्वल्पं न हर्तव्यं देवद्रव्यं विजानता ॥ १० ॥ स्वल्पस्यापि फलं घोरं यस्माज्जन्मान्तरे भवेत् ॥ षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ॥ ११ ॥ देवद्रव्यापह

१ 'मधुरम्' इति ख० । २ 'पूतिमज्जा' इति ख० । ३ 'अतिमेघस्य' इति ख० ।

 

रणान्नरकं प्रतिपद्यते ॥ सन्तीह देवताः सौम्याः सन्त्युग्राश्चापि भार्गव ॥ १२ ॥ दर्शयन्ति रुषं सौम्य राज्यभ्रंशादिभिर्नृणाम् ॥ अस्मिँल्लोके रुषं क्रूरां नैव कुर्वन्ति देवताः ॥ १३ ॥ तासां वित्तापहरणाद्राजा नरकमृच्छति ॥ पूर्वैः पितामहैस्सार्धं प्रागुक्तं फलमेव तु ॥ १४ ॥ देवद्रव्यापहरणं नैव जातु भवेद्वृथा ॥ सर्वस्वरहितान्कृत्वा देवद्रव्यापहारिणः ॥ १५ ॥ अङ्कयित्वा द्विजश्रेष्ठ स्वराष्ट्राद्विप्रवासयेत् ॥ त्रैविद्या वणिजो वैश्या लिङ्गिनो देवपालकाः ॥ १६ ॥ तथा तत्प्रतिबद्धाश्च न कुर्युः कलहं मिथः ॥ तेषां सहायकः स्वामी निग्रहानुग्रही भवेत् ॥ १७ ॥ रागद्वेषवियुक्तस्तु विवास्यश्चान्यथा भवेत् ॥ दण्डं च देवतागामि देवद्रव्यस्य सूचकम् ॥ १८ ॥ सर्वान्विवासयेद्राजा धार्मिको धर्मकारणात् ॥ राज्ञा सर्वप्रयत्नेन पालनीयाः सुरालयाः ॥ १९ ॥ कर्तव्याश्च महाभाग सुरलोकमभीप्सता ॥ देवतास्तु प्रतिष्ठाप्य तल्लोकं ध्रुवमाप्नुयात् ॥ २० ॥ कृत्वा देवगृहं शुभ्रं स्वर्गमाप्नोत्यनुत्तमम् ॥ तदा भोगप्रमाणेन लक्ष्मीस्तत्रापि भार्गव ॥ २१ ॥ मृत्प्रासादाद्दशगुणं स्थूलदारुकृते भवेत् ॥ फलं दशगुणं तस्मात्तथा पक्वेष्टकाकृते ॥ २२ ॥ तस्माद्दशगुणं शैले नात्र कार्या विचारणा ॥ यावत्संख्यं नरः कुर्याद्देववेश्म सुधासितम् ॥ २३ ॥ तावज्जन्मान्तराणीह यशसा स विराजते ॥ कृत्वा च चित्रविन्यासं गन्धर्वैः सह मोदते ॥ २४ ॥ कृत्वा संशोधनं तत्र विरोगः समपद्यते ॥ प्रोक्षयित्वा मनस्तापान्मानवः प्रतिमुच्यते ॥ २५ ॥ कृत्वोपलेपनं राम नाकमाप्नोत्यनुत्तमम् ॥ गन्धर्वलोकमाप्नोति कृत्वा वर्णकरञ्जितम् ॥ २६ ॥ गन्धैः समुक्षितं कृत्वा गन्धर्वैस्सह मोदते ॥ उपकारप्रदानेन श्रियमाप्नोत्यनुत्तमाम् ॥ २७ ॥ गीतवाद्यप्रदानेन सुखमाप्नोत्यनुत्तमम् ॥ प्रेक्षणीयप्रदानेन रूपवानभिजायते ॥ २८ ॥ तथा औज्वल्यमाप्नोति यत्रयत्राभिजायते ॥ स्नापयित्वा घृतेनार्चां सर्वपापैः प्रमुच्यते ॥ २९ ॥ स्नापयित्वा च तैलेन विरोगः समपद्यते ॥ अम्बुना स्नापयित्वा तु सौभाग्यमधिगच्छति ॥ ३० ॥ विरूक्षयित्वा तां राम पापं जहति मानवाः ॥ अनुलेपनदानेन रूपमाप्नोत्यनुत्तमम् ॥ ३१ ॥ तथा पुष्पप्रदानेन श्रियमाप्नोत्यनुत्तमाम् ॥ धूपदानेन धर्मज्ञ रतिमाप्नोति शोभनाम् ॥ ३२ ॥ तथा दीपप्रदानेन चक्षुष्मानभिजायते ॥ अन्नदः सर्वमाप्नोति यत्किंचिन्मनसेच्छति ॥ ३३ ॥ पानकानां प्रदानेन तृप्तिमाप्नोत्यनुत्तमाम् ॥ वसुदो रूपमाप्नोति रूपमाप्नोति रूप्यदः ॥ ३४ ॥ रुक्मदस्सर्वमाप्नोति श्रियमाप्नोति सर्वदः ॥ छत्रदः स्वर्गमाप्नोति तालवृन्तप्रदो दिवम् ॥ ३५ ॥ चामराणां प्रदानेन राजा भवति धार्मिकः ॥ पताकायाः प्रदानेन सर्वपापान्व्यपोहति ॥ ३६ ॥ ध्वजदानेन लोकेऽस्मिन्ध्वजभूतो भवेन्नरः ॥ नानाविधानां भोगानां तथा राम प्रदायकः ॥ ३७ ॥ तानेव भोगानाप्नोति सर्वमाप्नोति भूमिदः ॥

देवमाल्यापनयनाद्गोदानफलमाप्नुयात् ॥ ३८ ॥ तदाहुतिप्रदानेन तल्लोकमभिपद्यते ॥ नमस्कारप्रणामाभ्यामेनोभिः प्रतिमुच्यते ॥ ३९ ॥ प्रद
क्षिणं तथा कृत्वा भवत्याचारवान्नरः ॥ स्तुत्वा च देवतां राम मनोदुःखात्प्रमुच्यते ॥४०॥ सन्तर्पयित्वा तोयेन तृप्तिं समधिगच्छति ॥ तस्मात्सर्वं
प्रयत्नेन विशुद्धेनान्तरात्मना ॥ ४१ ॥ अर्चास्थाः पूजयेत्सर्वा देवता भूरिदर्शन ॥ तदाश्रितांश्च युञ्जीत तदा तद्विधिपारगान् ॥ ४२ ॥ तत्पूजने
तथा राम तांश्च सम्पूजयेत्सदा ॥ ब्राह्मणाश्च नियोक्तव्या वेदोक्तसुरपूजने ॥४३ ॥ यस्य राज्ञस्तु विषये देववेश्म विशीर्यते ॥ तस्य सीदति तद्राष्ट्रं
देववेश्म यथा तथा ॥ ४४ ॥ संस्कारं लम्भयेद्यस्तु देववेश्म पुरातनम् ॥ स च सौख्यमवाप्नोति यत्रयत्राभिजायते ॥ ४५ ॥ वापीकूपतडागानां
सदा त्रिदशवेश्मनाम् ॥ भूयः संस्कारकर्ता च लभते मुक्तिजं फलम् ॥ ४६ ॥ देवसम्पूजनाद्राम वृद्धिं समुपगच्छति ॥ राज्ञस्तु विषये यस्य
पूज्यन्ते सततं सुराः ॥४७ ॥ अतिवृष्टिरनावृष्टिर्मूषकाः शलभाः शुकाः ॥ राक्षसाश्च पिशाचाश्च रिपवश्च सुदारुणाः ॥४८॥ ईतयश्च तथैवान्या न
भवन्ति द्विजोत्तम॥४९॥तस्मात्प्रयत्नेन सदा नरेन्द्रैः पूजा विधेया विषये सुराणाम् ॥ सुरार्चनात्पूतसमस्तपापास्स्वर्गं क्षितीशाश्चिरमाप्नुवन्ति ॥५०॥
इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० सं० सुरपूजामाहात्म्यवर्णनं नामैकत्रिंशोऽध्यायः॥३१॥ पुष्कर उवाच ॥ ब्राह्मणान्पूजयेद्राजा ब्राह्मणान्पालये
त्सदा ॥ ब्राह्मणा हि महाभाग देवानामपि दैवतम् ॥१॥ ब्राह्मणानां क्षितिं दद्याद्भोगानन्यांश्च पार्थिवः ॥ ब्राह्मणेषु तु यद्दत्तं निधिस्तत्पारलौकि
कम् ॥ २ ॥ वेदलाङ्गलकृष्टेषु द्विजक्षेत्रेषु भारत ॥ उप्तस्य दानबीजस्य फलस्यान्तो न विद्यते ॥३॥ ब्रह्मस्वं चैव नादद्याद्ब्रह्मस्वं पालयेत्तथा ॥
ब्रह्मस्वहरणाद्राम नरकं पश्यते नरः ॥ ४ ॥ न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते ॥ विषमेकाकिनं हन्ति ब्रह्मस्वं सप्तपूरुषम् ॥ ५ ॥ ब्रह्मस्वं
प्रणयाद्भुक्तं हिनस्त्यासप्तमं कुलम् ॥ द्रोहाद्भुक्तं तदेवेह कुलानां पातयेच्छतम् ॥ ६ ॥ सुवर्णमेकं गामेकां भूमेरप्येकमङ्गुलम्[1] ॥ हरन्नरकमाप्नोति
यावदाभूतसम्प्लवम् ॥ ७ ॥ दृष्ट्वा विटं दुराचारं ब्राह्मणं न द्विषेत्क्वचित् ॥ ब्राह्मणानां परीवादान्नाशमाप्नोति मानवः ॥ ८ ॥ न जातु ब्राह्मणं हन्या
त्सर्वपापेष्ववस्थितम् ॥ नैवास्ति ब्राह्मणवधात्पापं गुरुतरं क्वचित् ॥ ९ ॥ ब्रह्महा नरकं याति यावदाभूतसम्प्लवम् ॥ वर्षाणामयुतं राम पच्यते
स्नायुपूरिते ॥ १० ॥ शोणितं यावतः पांशून्गृह्णातीह द्विजन्मनाम् ॥ कर्ता तावन्ति वर्षाणि कृतकृन्नरके वसेत् ॥ ११ ॥ उपद्रुतो द्विजो येन
त्यजेज्जीवितमात्मनः ॥ ब्रह्महत्या भवेत्तस्य नात्र कार्या विचारणा ॥ १२ ॥ देहत्यागाच्च नरकं ब्राह्मणोऽपि प्रपद्यते ॥ तेन चाधिकमाप्नोति

१ 'वायुपूरिते' इति ख० 'पश्यतैचावयूनिते' इति क० ।

राम पापं नराधमः ॥१३॥ अदैवं दैवतं कुर्युः कुर्युर्दैवमदैवतम् ॥ ब्राह्मणाश्च महाभागा नमस्यास्ते सदैव हि ॥ १४ ॥ ब्राह्मणानां तथा कार्यं
यत्नात्कुर्वीत पार्थिवः ॥ कालातिपातं च तथा विप्रकार्ये न कारयेत् ॥ १५ ॥ निष्पीडितस्तूपवसेद्येन विद्वान्निशां जनः ॥ स राम नरकं याति
वर्षाणां तु दशायुतम् ॥ १६ ॥ ब्राह्मणी रुदती हन्ति कुलं रोदायते ध्रुवम् ॥ तदश्रुवह्निर्दहति कुलं त्रिपुरुषं ध्रुवम् ॥ १७ ॥ विद्वानप्यथवाविद्वा
न्ब्राह्मणो मानमर्हति ॥ प्रणीतश्चाप्रणीतश्च यथाग्निर्द्विजपुङ्गव ॥ १८ ॥ प्रतिष्ठां प्राप्नुवन्तीह सुरा विप्रप्रतिष्ठिताः ॥ १९ ॥ तन्मुखे तु तथाश्नन्ति
देवाश्च पितृभिः सह ॥ वह्नौ हुताच्छ्रेष्ठतमं हुतं विप्रमुखाग्निषु ॥ २० ॥ अस्कन्दमविरुद्धं च प्रायश्चित्तैर्विवर्जितम् ॥ यावतो ग्रसते ग्रासान्विद्वा
न्विप्रः सुसंस्कृतः ॥ २१ ॥ अन्नप्रदस्य तावन्तः क्रतवः परिकीर्तिताः ॥ ब्राह्मणानां करान्मुक्तं तोयं शिरसि धारयेत् ॥ २२ ॥ ब्राह्मणस्य करे
यस्मात्सर्वतीर्थसमागमः ॥ ब्राह्मणेभ्यः समुत्पन्नं त्रैलोक्यं सचराचरम् ॥ २३ ॥ अमोघशापा धर्मज्ञ कथितास्ते जगत्त्रये ॥
आशीर्वादममोघं च ब्राह्मणानां प्रकीर्तितम् ॥ २४ ॥ आशीर्वादपराः कार्यास्तस्माद्राज्ञा द्विजोत्तमाः ॥ यैः कृतः सर्वभक्ष्योग्निरपेयश्च
महोदधिः ॥ २५ ॥ क्षयी सोमोऽजवृषणस्तथैव च शतक्रतुः ॥ येषां कोपाग्निरद्यापि दण्डके नोपशाम्यति ॥ २६ ॥ विपुलश्च तथा
येषां प्रसादो भृगुनन्दन ॥ येषां प्रसादात्क्षीणोऽपि वृद्धिमिच्छति चन्द्रमाः ॥ २७ ॥ येषां प्रसादाद्रक्षोभिर्नाभिभूयेत भास्करः ॥ येषां
प्रसादाद्विपुलां कार्तवीर्यः श्रियं गतः ॥ २८ ॥ येषां प्रसादाद्धनदो धनाध्यक्षत्वमागतः ॥ अस्नातः स्नानमाप्नोति व्रतमाप्नोत्यथाव्रती ॥२९॥
येषां वचनमात्रेण किम्भूतमधिकं ततः ॥ भोगं राज्यं तथा स्वर्गं येषां वाक्येन लभ्यते ॥ ३० ॥ अपावनकरः क्रोधो येषां राम सदा स्थितः ॥
ते पूज्यास्ते च सत्कार्यास्तेषां दाराणि दापयेत् ॥ ३१ ॥ धारयन्ति जगत्सर्वं ब्राह्मणा वेदपारगाः॥देवानाप्याययन्तीह ब्राह्मणा भृगुनन्दन ॥३२॥
ते तृप्तास्तर्पयन्तीह भुवनं सकलं सुराः ॥ ब्राह्मणेनाहुतिर्दत्ता वह्नौ भृगुकुलोद्वह ॥ ३३ ॥ आदित्यमाप्नोत्यादित्याद्वृष्टिर्भवति भूतले ॥ अन्नस्य
च तथोत्पत्तिरन्नाद्भूतोद्भवः स्मृतः ॥ ३४ ॥ तस्मात्त्रिभुवनं सर्वं ब्राह्मणैरेव धार्यते ॥ ब्राह्मणप्रभवा भूमिर्ब्राह्मणप्रभवो दिवः ॥ ३५ ॥ ब्राह्मणाना
मिमे लोकाः परलोकास्तथैव च ॥ इज्यास्वाध्यायतपसामुपरोधाद्यदा द्विजाः ॥ ३६ ॥ स्वाम्यं भुवि न विन्दन्ति क्षत्रियास्तु तदा कृताः ॥
ब्राह्मणानां वचः कार्यं राजभिः सततोत्थितैः ॥ ३७ ॥ धर्ममर्थं च कामं च तेषां वाचि प्रतिष्ठितम् ॥ ब्राह्मणानां तु वाक्येन निग्रहानुग्रहावुभौ ॥
॥ ३८ ॥ लोके कार्यौ भूमिभृता भूतिकामेन नित्यदा ॥ राजा ब्राह्मणवाक्येन यः कुर्याच्छासनादिकम् ॥ ३९ ॥ सम्यग्वाप्यथवासम्यक्तेन नाके

महीयते ॥ उल्लंघ्य शास्त्रं नृपतिर्यो यथारुचि वर्तते ॥ ४० ॥ स राम नरकं याति सुकृतेनापि कर्मणा ॥ यत्र ब्राह्मणवाक्यानि न करोतीह यो नरः ॥ ४१ ॥ न तत्र दोषवान्विप्रो राजा दोषेण लिप्यते ॥ ब्राह्मणं दशवर्षं च शतवर्षं च भूमिपम् ॥ ४२ ॥ पितापुत्रौ विजानीयाद्ब्राह्मणस्तु तयोः पिता ॥ यस्य राज्ञस्तु विषये ब्राह्मणः सीदति क्षुधा ॥ तस्य सीदति तद्राष्ट्रं दुर्भिक्षव्याधितस्करैः ॥ ४३ ॥ तस्मात्पूज्या नमस्कार्यास्सं विभाज्यास्तथा द्विजाः ॥ राज्ञा सर्वप्रयत्नेन लोकद्वयमभीप्सता ॥ ४४ ॥ यद्ब्राह्मणास्तुष्टतमा वदन्ति तद्देवताः प्रत्यभिनन्दयन्ति ॥ तुष्टेषु तुष्टाः सततं भवन्ति प्रत्यक्षदेवेषु परोक्षदेवाः ॥ ४५ ॥ इति श्रीविष्णुधर्मोत्तरे द्वि०खण्डे मा० सं० रामं प्रति पुष्करवाक्ये ब्राह्मणप्रशंसावर्णनन्नाम द्वात्रिंशत्तमोऽध्यायः ॥ ३२ ॥ ॥ पुष्कर उवाच ॥ साध्वीनां पालनं कुर्यात्पूजनं च महीपतिः ॥ एकपत्न्यः स्त्रियः सर्वा धारयन्ति जगत्त्रयम् ॥ १ ॥ भर्तृव्रता भर्तृपरा भर्तृपूजनतत्परा ॥ या तु स्त्री सा दिवं याति सह भर्त्रा द्विजोत्तम ॥ २ ॥ एकपत्न्यस्तु यद्दुःखं सहन्ते द्विज सानुगाः ॥ तेन ताः स्वर्गमासाद्य सुखमायान्त्यनेकधा ॥ ३ ॥ तासां प्रभावो हि महांस्तेजश्चैवातिदुःसहम् ॥ न कोपनीया नोपेक्ष्या नैव ताश्च विमानयेत् ॥ ४ ॥ नाहूयेदपराधेषु दण्डयस्तासां पतिर्भवेत् ॥ पुत्रो वाप्यथवा नीतौ नैव राजा प्रभुः क्वचित् ॥ ॥ ५ ॥ नैव साध्वी विनिर्दिष्टा केवलोपस्थरक्षणात् ॥ विप्रियं नाचरेत्किञ्चित्पत्युः साध्वीति सा स्मृता ॥ ६ ॥ कर्मणा मनसा वाचा भर्तुः प्रियहितैषिणी ॥ या नारी सा स्मृता साध्वी पतिपूजनतत्परा ॥ ७ ॥ नमस्कार्याश्च पूज्याश्च वन्दनीयाश्च भार्गव ॥ राज्ञा सर्वप्रयत्नेन तथा लोकैश्च सर्वशः ॥ ८ ॥ अनाथां च तथा साध्वीं बिभृयात्पार्थिवोत्तमः ॥ तस्यै यद्दीयते दानं तदनन्तं प्रकीर्तितम् ॥ ९ ॥ साध्वीनामपमानेन कुलं दहति पूरुषः ॥ तासां सम्पूजनाद्राम स्वकुलं चोन्नतिं नयेत् ॥ १० ॥ न धनेन न धान्येन न शीलेन न बन्धुभिः ॥ न यज्ञैर्दक्षिणावद्भिर्नाधीतेन तथैव च ॥ ११ ॥ अकुलानि कुलान्याहुः किन्तु स्त्रीणां विचेष्टितैः ॥ येषु साध्व्यः स्त्रियो राम कुलेषु कुलधूर्वहाः ॥ ॥ १२ ॥ महाकुलानि तानीह कृशान्यपि धनैर्यदि ॥ पुत्राणामपि तत्पुत्रं साध्वी यस्यारणिर्भवेत् ॥ १३ ॥ हव्येषु साध्वीतनयं तथा कव्येषु योजयेत् ॥ तत्राल्पस्यापि दानस्य महत्पुण्यं प्रकीर्तितम् ॥ १४ ॥ गायत्री तु यथा राम यथा गङ्गा सरिद्वरा ॥ पावनी कीर्तनादेव तथा साध्वी वराङ्गना ॥ १५ ॥ रामास्तु भृगुशार्दूल न प्रदुष्यन्ति कर्हिचित् ॥ मासिमासि रजस्तासां दुष्कृतान्यपकर्षति ॥ १६ ॥ सोमस्तासां ददौ शौचं गन्धर्वः शिक्षितां गिरम् ॥ अग्निश्च सर्वमेध्यत्वं तस्मान्निष्कल्मषाः स्त्रियः ॥ १७ ॥ ब्राह्मणाः पादतो मेध्या गावो मेध्यास्तु

पृष्ठतः ॥ अजाश्वौ मुखतो मेध्यौ स्त्रियो मेध्यास्तु सर्वतः ॥ १८ ॥ यामयो यानि गेहानि शपन्त्यप्रतिपूजिताः ॥ तानि कृत्याहतानीव विनश्यन्ति समन्ततः ॥ १९ ॥ स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन ॥ तस्मात्सर्वप्रयत्नेन पूजनीयाः सदा स्त्रियः ॥ २० ॥ मिथ्या न साध्वी भवतीह लोके भवत्यथास्मिन्नपरे च राम ॥ साध्व्यस्तथा पूज्यतमाः प्रदिष्टा लोकेषु सर्वेषु चराचरेषु ॥ २१ ॥ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे साध्वीमाहात्म्यं नाम त्रयस्त्रिंशोऽध्यायः ॥ ॥ ३३ ॥ राम उवाच ॥ ॥ साध्वीनां श्रोतुमिच्छामि देव धर्मानशेषतः ॥ साध्व्यो हि नार्यो लोकानामाधार इह कीर्तिताः ॥ १ ॥ ॥ पुष्कर उवाच ॥ ॥ एतदेव परं राम रामाणां धर्मकारणम् ॥ यदासां सर्वकार्येषु नित्यं हि परतन्त्रता ॥ २ ॥ बाल्ये पितुर्वशे तिष्ठेत्पाणिग्राहस्य यौवने ॥ पुत्राणां भर्तरि प्रेते न स्त्री स्वातन्त्र्यमर्हति ॥ ३ ॥ पित्रा भर्त्रा सुतेनेह नेच्छेद्विरहमात्मनः ॥ तेषां च विरहेण स्त्री गर्ह्ये कुर्यादुभे कुले ॥ ४ ॥ सदा प्रहृष्टया भाव्यं गृहकार्ये च दक्षया ॥ सुसंस्कृतोपस्करया व्यये चामुक्तहस्तया ॥ ५ ॥ यः प्रदद्यात्पिता त्वेनां तदभावेपि कारकः ॥ तं शुश्रूषेत जीवन्तं संस्थितं न तु लंघयेत् ॥ ६ ॥ मङ्गलार्थं स्वस्त्ययनं यज्ञश्चासां प्रजायते ॥ प्रयुज्यते विवाहेषु प्रदानं स्वामिकारितम् ॥ ७ ॥ अनृतावृतुकालोक्ते मन्त्रसंस्कारकृत्पतिः ॥ सुखं नित्यं ददातीह परलोके च योषितः ॥ ८ ॥ विशीलः कामवृत्तो वा गुणैर्वा परिवर्जितः ॥ उपचर्यः स्त्रिया साध्व्या सततं देववत्पतिः ॥ ९ ॥ नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषितम् ॥ पतिं शुश्रूषते यत्तु तेन स्वर्गे महीयते ॥ १० ॥ पाणिग्राहस्य साध्वी स्त्री जीवतो वा मृतस्य वा ॥ पतिलोकमभीप्सन्ती नाचरेत्किञ्चिदप्रियम् ॥११॥ कामं तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः ॥ न तु नामापि गृह्णीयात्पत्यौ प्रेते परस्य तु॥१२॥ आसीतामरणात्क्षान्ता नियता ब्रह्मचारिणी॥ यो धर्म एकपत्नीनां काङ्क्षन्ती तमनुत्तमम्॥१३॥ अनेकानि सहस्राणि कुमारब्रह्मचारिणाम् ॥ दिवङ्गतानां विप्राणामकृत्वा कुलसन्ततिम् ॥ १४ ॥ मृते भर्तरि साध्वी स्त्री ब्रह्मचर्ये व्यवस्थिता॥ स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिणः ॥ १५॥ अपत्यलोभाद्या तु स्त्री भर्तारमतिवर्त्तते ॥ सेह निन्दामवाप्नोति परलोकाच्च हीयते ॥ १६ ॥ नान्योत्पन्ना प्रजास्तीह न चाप्यन्यपरिग्रहा ॥ न द्वितीयश्च साध्वीनां कश्चिद्भर्तोपदिश्यते॥१७॥ पतिं हित्वा निकृष्टं स्वं चोत्कृष्टं या निषेवते॥ निन्द्यैव लोके भवति परपूर्वेति चोच्यते ॥ १८ ॥ व्यभिचारात्तु भर्तुः स्त्री लोकान्प्राप्नोति निन्दितान् ॥ शृगालयोनिं चाप्नोति पापरोगैश्च पी

ड्यते ॥ १९ ॥ पतिं या नाभिचरति मनोवाग्देहसंयता ॥ इहाग्र्यां कीर्त्तिमाप्नोति परलोके च शस्यते ॥ २० ॥ पत्युरभ्यधिकं नारी नोपवासव्रतं चरेत् ॥ अनायुष्यं द्विजश्रेष्ठ पत्युस्तस्यास्तदुच्यते ॥२१॥ देवताराधनं कुर्यात्कामं वा ब्राह्मणोत्तम ॥ नारी पतिव्रता राम प्राप्तानुज्ञां तु भर्तृतः ॥ २२ ॥ नारी खल्वननुज्ञाता पित्रा भर्त्रा सुतेन वा ॥ विफलं तद्भवेत्तस्या यत्करोत्यौर्ध्वदैहिकम् ॥२३॥ स्त्रीणां पूज्यतमा लोके देवतागृहवासिनाम् ॥ या स्ताः सम्पूजनीयाः स्युस्तासामेव यथाविधि ॥ २४ ॥ तासां च पूजनं कार्यं विदितं स्वामिनस्तथा ॥ अन्यथा चेत्प्रवर्त्तेत निग्राह्या सा प्रकीर्तिता ॥ २५ ॥ गत्वान्यपुरुषं नारी नरकं प्रतिपद्यते ॥ कूटशाल्मलिमित्युक्तं यावदाभूतसम्प्लवम् ॥ २६ ॥ गर्हिता च तथा पत्युर्नरकं याति भार्गव ॥ दशवर्षसहस्राणि तथैवाप्रियवादिनी ॥ २७ ॥ सर्वावस्थास्वपि स्त्रीषु न वधो विद्यते द्विज ॥ परेण शङ्किताम्ेनां संयतां वासयेद्गृहे ॥ २८ ॥ हृताधिकारां मलिनां पिण्डमात्रोपजीविनीम् ॥ परिभूतामधःशय्यां वासयेद्व्यभिचारिणीम् ॥ २९ ॥ मूलकर्म न कर्त्तव्यं कथञ्चिदपि योषिता ॥ मूलकर्मरता नारी कल्पं नरकमावसेत् ॥ ३०॥ दौर्भाग्यं महदाप्नोति तत्र यत्राभिजायते ॥ या च नारी सपत्नीनां कुर्याद्दौर्भाग्यकारणम् ॥ ३१ ॥ कुहकैः पश्यति सापि कल्पानां नरके द्विज ॥ पुंस्त्वमूलं तथा लक्ष्मीं पत्युर्हिंसति सा तथा ॥३२॥ यक्षरक्षःपिशाचानां मूलकर्मरता सदा ॥ वश्यो भवति लोकेषु भर्ता तस्यास्तथैव च ॥ ३३ ॥ नारी कृत्वा पतिं वश्यं सततं मूलकर्मणा ॥ लभतेऽन्ते तु दौर्भाग्यं भूतैर्वा भक्ष्यते ध्रुवम् ॥३४॥ तस्मात्सर्वप्रयत्नेन मूलकर्म विवर्जयेत् ॥ आत्मानमथ भर्तारं नाशयेन्मूलकर्मणा ॥ ३५ ॥ ब्राह्मणी न पिबेन्मद्यं न च विट्क्षत्रियस्त्रियः ॥ सुरां पिबेयुर्धर्मज्ञ तत्पानान्नाशमाप्नुयुः ॥ ३६ ॥ ततो भवति धर्मज्ञ जलौका रक्तपायिका ॥ कल्पावशेषं सकलं तेन घोरेण कर्मणा ॥ ३७ ॥ परवेश्मरुचिर्न स्यान्न स्यात्कलहशालिनी ॥ न च तिष्ठेत्तथा द्वारि न च राम गवाक्षके ॥३८॥ मण्डनं वर्ज्जयेन्नारी तथा प्रोषितभर्तृका ॥ देवताराधनपरा भवेद्भर्तृहिते रता ॥ ३९ ॥ धारयेन्मङ्गलार्थाय किञ्चिदाभरणं तथा ॥ न जातु विधवा वेषं कदाचिदपि कारयेत् ॥४०॥ पतिव्रता तु या नारी सह भर्त्रा दिवङ्गता ॥ कल्पावशेषं मुदिता पूज्यते त्रिदशालये ॥ ४१ ॥ पतिव्रतां सवर्णां स्त्रीं द्विजातिः पूर्वमारिणीम् ॥ दाहयेदग्निहोत्रेण यज्ञपात्रैश्च धर्मवित् ॥ ४२ ॥ भार्यायै पूर्वमारिण्यै दत्त्वाग्नीनन्त्यकर्मणि ॥ पुनर्दारक्रियां कुर्यात्पुनराधानमेव च ॥ ४३ ॥ मृते भर्तरि या साध्वी पुत्रमाश्रित्य भार्गव ॥ तपसा शातयेद्देहं तेन स्वर्गे महीयते ॥ ४४ ॥ पतिपक्षे नरं कञ्चित्पुत्राभावे समाश्रयेत् ॥ बिभृयाद्धि स चाप्येनां भोजनाच्छादनैः सदा ॥ ४५ ॥ पतिपक्षे समुच्छिन्ने पितृपक्षः प्रभुः स्त्रियः ॥ विषमस्थापि भर्त्तव्या पितृपक्षे स्वब

न्धुभिः ॥ ४६ ॥ मृतं भर्त्तारमादाय यदि वाथ पतिव्रता ॥ प्रविशेद्द्विजशार्दूल ज्वलितं जातवेदसम् ॥ ४७ ॥ तिस्रः कोट्योऽर्द्धकोटी च यानि लोमानि मानवे ॥ तावन्त्येव शताब्दानि स्वर्गलोके महीयते ॥ ४८ ॥ व्यालग्राही यथा सर्पं बिलादुद्धरते बलात् ॥ एवं भर्त्तारमादाय सह तेनैव गच्छति ॥ ४९ ॥ सद्वृत्तमध्यापयितुं गतानां स्त्रीणां वियोगक्षतकातराणाम् ॥ तासां मृते जीवितवल्लभे हि नाग्निप्रवेशादपरो हि धर्मः ॥ ५० ॥ इति विष्णुधर्मोत्तरे द्वितीयखण्डे मा० सं० रामं प्रति पुष्करोपाख्याने स्त्रीधर्मो नाम चतुस्त्रिंशत्तमोऽध्यायः ॥ ३४ ॥ राम उवाच ॥ ॥ स्त्रीणां पूज्यतमा लोके देवतास्त्वं प्रकीर्तय ॥ तासां कालं विधानं च फलं पूजनतस्तथा ॥ १ ॥ पुष्कर उवाच ॥ श्रियः सम्पूजनं कार्यं स्त्रीभिस्तु सततं गृहे ॥ पुष्पार्घमाल्यनैवेद्यधूपदीपानुलेपनैः ॥ २ ॥ गृहसम्मार्जनं राम तथा तस्योपलेपनम् ॥ पुष्पोपहारकरणं सुधाशुक्लत्वमेव च ॥ ३ ॥ सर्वमेतद्विजानीयाच्छ्रियः सम्पूजनं द्विज ॥ स्नानानुलेपनं यच्च गन्धवर्णावधारणम् ॥ ४ ॥ सुवर्णता च नारीणां श्रियः सम्पूजनाद्भवेत् ॥ अष्टमीषु च सर्वासु पूजनीयाप्यशोकिका ॥ ५ ॥ गन्धमाल्यनमस्कारधूपदीपादिभिस्तथा ॥ तस्मिन्नहनि या भुङ्क्ते नक्तं तैलविवर्जितम् ॥ ६ ॥ भवत्यथ विशोका सा यत्रयत्राभिजायते ॥ अष्टमीषु च सर्वासु न चेच्छक्नोति भार्गव ॥ ७ ॥ प्रोष्ठपद्यां व्यतीतायां या स्यात्कृष्णाष्टमी द्विज ॥ तस्यामवश्यं कर्त्तव्या देव्याः पूजा यथाविधि ॥ ८ ॥ अपामिव त्रिलोकेषु प्रकृतिः स्त्रीषु चोच्यते ॥ या प्रेरयति कर्माणि लोकेषु द्विजसत्तम ॥ ॥ ९ ॥ तस्यां सम्पूजनं कार्यं शुक्लां पञ्चदशीं तथा ॥ माल्यानुलेपनैः शुक्लैर्धूपेन च सुगन्धिना ॥ १० ॥ रक्तवस्त्रप्रदानेन दीपदानेन चाप्यथ ॥ वैदलैश्च तथा भक्ष्यैर्भोज्यैश्चोष्यैस्तथैव च ॥ ११ ॥ पूजयित्वा च तां देवीं भोक्तव्यं निशि भार्गव ॥ यदि पञ्चदशीं सर्वां न शक्नोति कदाचन ॥ ॥ १२ ॥ देव्याः सम्पूजनं कार्यमवश्यमपि कार्तिके ॥ उषार्तिं पूजयेद्या तु सा तु नारी पतिव्रता ॥ १३ ॥ सदा धर्मरता साध्वी लोके भवति भार्गव ॥ नाशुभे च मतिस्तस्याः कदाचिदपि जायते ॥ १४ ॥ एकादशीं तथा कृष्णां फाल्गुने मासि भार्गव ॥ शुद्धं देवस्य कर्त्तव्या पूजा धर्मभृतां वर ॥ १५ ॥ पूजनाच्छन्दोदेवस्य तनयं गुणवर्जितम् ॥ न प्राप्नोति तथाऽप्नोति गुणवन्तमसंशयम् ॥ १६ ॥ गन्धमाल्यादिभिर्भक्त्या तथा वै वास्तुदेवताम् ॥ एकादशीं तथा प्राप्य चैत्रशुक्लस्य पूजयेत् ॥ १७ ॥ संपूज्य तां महाभाग गृहभङ्गो न जायते ॥ शुक्लाष्टमीं तु सम्प्राप्य मासि भाद्रपदे तथा ॥ १८ ॥ दूर्वाप्रतानं लुप्येत्तदुत्तराशाभिगामिनम् ॥ पूजयेद्गृहमानीय गन्धमाल्यानुलेपनैः ॥ १९ ॥

१ 'कण्ठसूत्रैः' इति क० । २ 'छन्दो'—इति पाठान्तरम् ।

फलमूलैस्तथा राम धूपदीपौ विवर्जयेत् ॥ अग्निपक्वं तथा सर्वं न निवेद्यं कथञ्चन ॥ २० ॥ भोक्तव्यं च तथा राम वह्निपाकविवर्जितम् ॥ दूर्वांकुर
स्थां सम्पूज्य विधिना यौवनश्रियम् ॥ २१ ॥ यौवनं स्थिरमाप्नोति यत्रयत्राभिजायते ॥ सोपवासा तु या नारी कृष्णपक्षस्य कार्तिके ॥ २२ ॥
द्वादश्यां पूजयेद्विष्णुं गां सवत्सामनन्तरम् ॥ गन्धमाल्यनमस्कारधूपदीपान्नसम्पदा ॥ २३ ॥ नैवेद्यं गोरसं सर्वं वर्जनीयं प्रयत्नतः ॥ भोक्तव्यं च
न धर्मज्ञ दोग्धव्या नैव चार्जुने ॥२४॥ गावः प्राप्नोति कृत्वैवं नात्र कार्या विचारणा ॥ धेनुं तां यदि विप्राय प्रददाति यथाविधि॥२५॥स्वर्गलोक
मथासाद्य न ततो विनिवर्तते ॥ कार्तिके च तथा मासि कृत्तिकायां च पूजनम् ॥ २६ ॥ कर्तव्यं गन्धकलशैर्गन्धमाल्यानुलेपनैः ॥ भक्ष्यैश्च परमा
न्नैश्च कुल्माषैः पर्पटैस्तथा॥२७॥ शक्त्या वस्त्रैश्च धर्मज्ञ महारञ्जनरञ्जनैः ॥ गुडेन मधुना चैव सितया लवणेन च॥२८॥ आर्द्रकेणेक्षुणा चैव तथा
कालोद्भवैः फलैः॥सर्वैश्च विविधैरन्नैर्गन्धैर्नानाविधैस्तथा॥२९॥पानकैश्च तथा हृद्यैः पूजनीयाश्च कृत्तिकाः ॥ सह चन्द्रमसा राम तेन सौभाग्यमश्नु
ते ॥३०॥ नारी च रूपलावण्ये धर्मे चाग्र्यां तथा मतिम् ॥ अवैधव्यं च धर्मज्ञ यत्रयत्राभिजायते ॥३१॥ लवणस्य तुलां कृत्वा महारञ्जनरंजिते ॥
वस्त्रे वस्त्रेण तेनाथ सालङ्कारां सितच्छविम् ॥ ३२ ॥ कृत्वा पिण्डं हरिद्राक्तं कृत्तिकानां निवेदयेत् ॥ ग्राहयेद्ब्राह्मणं तां च प्राप्ते चन्द्रोदये तथा ॥
॥ ३३॥ अनेन कर्मणा नारी सौभाग्यं महदश्नुते ॥ पुरुषोऽप्यथ वै शुद्धो सौभाग्यं महदश्नुते ॥ कृत्तिकाप्रतिपादे तु तासां कृत्वैव पूजनम्॥३४॥
या भुङ्क्ते गोरसप्रायं कृत्वा ब्राह्मणपूजनम् ॥ सप्त जन्मान्तराण्येव सौभाग्यं रूपमेव च ॥३५॥ स्वर्गे तु भोगानाप्नोति सह भर्त्रा तु सा शुभा ॥
॥ ३६ ॥ प्राप्य पञ्चदशीं राम तथा शुक्लां च कार्तिकीम् ॥ कार्तिकं कार्तिकीं राम गृहभित्तौ समालिखेत् ॥ ३७ ॥ उपद्वारं गृहाद्बाह्यं नानावर्णैस्तु
वर्णकैः ॥ गृहोपकरणं शक्त्या तयोश्चैवाभितो लिखेत् ॥ ३८ ॥ पीठखड्गासनाद्यत्र शकटोलूखलादिकम् ॥ ततस्तौ पूजयेन्नारी नानाभक्तिपरा
शुचिः ॥ ३९ ॥ गन्धमाल्यनमस्कारधूपदीपान्नसम्पदा ॥ इक्षुणेक्षुविकारैर्वा विशेषेण च पूजयेत् ॥ ४० ॥ तयोस्तु पूजनं कृत्वा मत्स्यं च
सिकतायुतम् ॥ ॥ शुक्तिनेत्रं न्यसेत्क्षीरे तच्च दद्याद्द्विजातये ॥ ४१ ॥ ततश्च नक्तं भुञ्जीत तिलतैलविवर्जितम् ॥ अनयोः पूजनाद्राम गृहभङ्गं न
चाप्नुयात्॥४२॥ पतिव्रता महाभाग दीर्घमाप्नोति जीवितम् ॥ कार्तिके च तथा मासि सार्धं चन्द्रमसा सदा ॥४३॥रोहिण्यां रोहिणीपूजा कर्तव्या
विधिना द्विज ॥ सर्वैरविधवाचिह्नैर्लवणेन च भूरिणा ॥ ४४ ॥ गन्धमाल्यनमस्कारधूपदीपान्नसम्पदा ॥ तथा कुंकुमरक्तेन शक्त्या भार्गव
वाससा ॥ ४५ ॥ सौभाग्यं परमाप्नोति कृत्वैतत्परमाङ्गना ॥ शुक्लपक्षत्रयोदश्यां या च नारी पतिव्रता ॥ ४६ ॥ पूजयेत्सोपवासा च कामदेव

मतन्द्रिता ॥ पट्टवर्णकविन्यासं तस्य भार्यां तथा पतिम् ॥ ४७ ॥ गन्धमाल्यनमस्कारधूपदीपान्नसम्पदा ॥ गुडेन मधुना चैव सितया चार्द्रकेण
च ॥४८॥ लवणेन रसैश्चान्यैर्गन्धैः सस्यैः पृथक्पृथक् ॥ भक्ष्यैर्नानाविधैश्चैव कुंकुमार्द्रेण वाससा ॥४९॥ गन्धतोयाम्बुपूर्णेन द्रुमपल्लवशालिना ॥
पूर्णकुम्भेन अव्येन माल्यकण्ठेन भार्गव ॥ ५० ॥ कामदेवाय नो दद्याद्यदम्लं किञ्चिदेव तु ॥ ततश्च पश्चाद्भोक्तव्यं सर्वमम्लविवर्जितम् ॥ ५१ ॥
सर्वान्कामानवाप्नोति कामपूजाविधायिनी ॥ अथ चेन्नैव शक्नोति सर्वां राम त्रयोदशीम् ॥ ५२ ॥ चैत्रशुक्लेन सर्वासां फलमाप्नोत्यसंशयम् ॥
तस्मात्सर्वप्रयत्नेन चैत्रशुक्लत्रयोदशीम् ॥ ५३ ॥ कामस्य पूजा कर्तव्या सर्वकामप्रदायिनी ॥ कामदेवं समभ्यर्च्य कार्यमात्माभिपूजनम् ॥ ५४ ॥
कुंकुमाङ्कैस्तथा वस्त्रैर्गन्धमाल्यविभूषणैः ॥ भर्तारं पूजयेत्पश्चान्नारी तु कृतमण्डना ॥ ५५ ॥ कुंकुमांकेन वस्त्रेण गन्धमाल्यैर्मनोहरैः ॥ पुरुषोऽपि
समभ्यर्च्य कामदेवमसंशयम् ॥ ५६ ॥ सर्वान्कामानवाप्नोति नात्र कार्या विचारणा ॥ तथा शुक्लचतुर्थीषु गौरीपूजा सदा भवेत् ॥ ५७ ॥
स्नाताभिः सोपवासाभिः सूर्यस्योदयनं प्रति ॥ गन्धमाल्यनमस्कारधूपदीपान्नसम्पदा ॥ ५८ ॥ गुडेन सितया चापि मधुना चार्द्रकेण च ॥ सर्वै
श्चाविधवाचिह्नैर्लवणेन च भूरिणा ॥ ५९ ॥ चतुर्थीद्वितये पूज्या सर्वशक्त्या विशेषतः ॥ आषाढेऽप्यथवा मासि माघे चाप्यथवा द्विज ॥ ६० ॥
चतुर्णामपि कुण्डानां मध्ये सूर्यांशुसेविनी ॥ आषाढे सोपवासा तु तृतीयायां तथा वसेत् ॥ ६१ ॥ न तस्या दुर्लभं लोके किञ्चिद्भवति भार्गव ॥
माघेऽप्युपोषिता मासि रात्र्यन्ते तुहिनोत्करैः ॥६२॥ शुक्लीकृत्याखिलान्यङ्गान्यध्यास्ते शयनं यया ॥ ततश्च शीततोयेन पश्चात्स्नानं समाचरेत् ॥
॥ ६३ ॥ सापि कामानवाप्नोति यान्नाम मनसेच्छति ॥ पतिव्रता सदा लोला सुभगा रूपसंयुता ॥ ६४ ॥ धर्मप्रिया च भवति गौरीपूजनतत्परा ॥
आषाढे दाडिमं पुष्पं मधौ कर्पाससम्भवम् ॥ ६५ ॥ निवेद्य सर्वमार्यायै सौभाग्यं महदश्नुते ॥ शक्राणी च तथा पूज्या मासि भाद्रपदे भवेत् ॥
॥ ६६ ॥ स्त्रीणां गौरीविधानेन सर्वकामप्रदा हि सा ॥ प्रोष्ठपदस्य मासस्य चतुर्थ्यां द्विजसत्तम ॥ ६७ ॥ शक्राणीपूजनं कृत्वा नाकपृष्ठे
महीयते ॥ पूजातिथिषु सर्वासु राम ब्राह्मणपूजनम् ॥६८॥ कर्तव्यं यच्च नैवेद्यं देयं तत्सुभगासु च ॥ अनभ्यर्च्य तथा गौरीं गौरीदीपं प्रपश्यति ॥
॥ ६९ ॥ दौर्भाग्यं महदाप्नोति वर्जितं तस्य दर्शनम् ॥ गौरीपूजनकामा स्त्री तस्मिन्नहनि या द्विज ॥ ७० ॥ स्नानमुष्णाम्बुना कुर्यात्सापि
सौभाग्यमश्नुते ॥ सम्पूज्य विधिना गौरीं यत्रयत्राभिजायते ॥ ७१ ॥ रूपलावण्यसौभाग्ययुक्ता भवति चाप्यथ ॥ नित्यं चाविधवा राम
तथैव च पतिव्रता ॥ ७२ ॥ एताः पूज्यतमाः स्त्रीषु दैवतास्ताः प्रकीर्तिताः ॥ अतः परं तु या कुर्यात्सतीमार्गविवर्जनम् ॥ ७३ ॥

हिंसात्मकमनिर्दिष्टमशुद्धं वा द्विजोत्तम ॥ देवताराधनं सा तु चिरं नरकमृच्छति ॥ ७४ ॥ ततस्तु चाप्यनायुष्यं ग्रहभूतविवर्धनम् ॥ हिंसात्मका तु या नारी देवताराधने रता ॥ ७५ ॥ मूलकर्मरता भर्त्रा सा विवाह्या भृगूत्तम ॥ पौंश्चल्यादपि नारीणां राम हिंसा विवर्जिता ॥ ७६ ॥ स्त्रीस्वभावं शुभं राम सौम्यत्वं मार्दवं दया ॥ निर्दया राक्षसी राम पिशाची वा द्विजोत्तम ॥ ७७ ॥ अथवा सर्वमुत्सृज्य पतिपूजनतत्परा ॥ केशवाराधनं कुर्याच्छ्रियश्च पुरुषर्षभ ॥ ७८ ॥ तेनैव सर्वमाप्नोति यत्किञ्चित्परमृच्छति ॥ अफलं सर्वमेव स्याद्भर्त्रनुज्ञां विना कृतम् ॥७९॥ केशवाराधनं राम तथापि सफलं स्त्रियः ॥ सर्वभूतानि गोविन्दो भर्ता नान्यस्तु योषितः ॥ भर्त्रनुज्ञां विना तस्मात्ततः पूजा विधीयते ॥ ८० ॥ नारायणः पूज्यतमो हि लोके नारायणः सर्वगतः प्रधानः ॥ नारायणाराधनतत्परा स्त्री कामानवाप्नोति न संशयोऽत्र ॥ ८१ ॥

इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे रामं प्रति पुष्करवाक्ये स्त्रीदेवतापूजननिरूपणं नाम पञ्चत्रिंशत्तमोऽध्यायः ॥ ३५ ॥

॥ पुष्कर उवाच ॥ वैलोम्यं धर्मराजोऽपि नाचरत्यथ योषिताम् ॥ पतिव्रतानां धर्मज्ञ पूज्यास्तस्यापि तास्सदा ॥ १ ॥ अत्र ते वर्णयिष्यामि कथां पापप्रणाशिनीम् ॥ यथा विमोक्षितो भर्ता मृत्युपाशावृतः स्त्रिया ॥ २ ॥ मद्रेषु शाकले राजा बभूवाऽश्वपतिः पुरा ॥ अपुत्रस्तप्यमानोऽसौ पुत्रार्थे सर्वकामदम् ॥ ३ ॥ सावित्र्याः कारयामास लक्षहोमं द्विजोत्तमैः ॥ सिद्धार्थकैर्हूयमाना सावित्री प्रत्यहं द्विज ॥ ४ ॥ शतसंख्यैश्चतुर्थ्यां तु मासाद्दशदिने गते ॥ काले तु दर्शयामास स्वां तनुं मनुजेश्वरे ॥ ५ ॥ सावित्र्युवाच ॥ राजन्भक्तोऽसि मे नित्यं प्राप्स्यसे तनयां शुभाम् ॥ मद्दत्तां यत्प्रसादाच्च पुत्रान्प्राप्स्यसि शोभनान् ॥ ६ ॥ पुष्कर उवाच ॥ एतावदुक्त्वा सा राज्ञः प्रणतस्यैव भार्गव ॥ जगामादर्शनं देवी खे यथा राम चञ्चला ॥ ७ ॥ मालव्या नाम तस्यास्ति राज्ञः पत्नी पतिव्रता ॥ सुषाव तनयां काले सावित्रीमेव रूपतः ॥ ८ ॥ सावित्र्या हुतया दत्ता तद्रूपसदृशा ततः ॥ सावित्र्येव भवेदेषा जगाद नृपतिर्द्विजान् ॥ ९ ॥ कालेन यौवनं प्राप्तां ददौ सत्यवते पिता ॥ नारदस्तु ततः प्राह राजानं दीप्ततेजसम् ॥ १० ॥ क्षीणायुरेष वर्षेण भविष्यति नृपात्मजः ॥ प्रदीयते सकृत्कन्या चिन्तयित्वा नराधिपः ॥ ११ ॥ तथापि प्रददौ कन्यां द्युमत्सेनात्मजे शुभाम् ॥ सावित्र्यपि च भर्तारमासाद्य नृपनन्दनम् ॥ १२ ॥ नारदस्य तु वाक्येन दूयमानेन चेतसा ॥ शुश्रूषां परमां चक्रे भर्तृश्वशुरयोर्वने ॥ १३ ॥ राज्यभ्रष्टस्सभार्यस्तु नष्टचक्षुर्नराधिपः ॥ तुतोष तां समासाद्य राजपुत्रीं तदा स्नुषाम् ॥ १४ ॥ चतुर्थेऽहनि मर्तव्यं यदा सत्यवता द्विज ॥ श्वशुरेणाभ्यनुज्ञाता तदा राज्ञा तु सा स्नुषा ॥ १५ ॥

चक्रे त्रिरात्रं धर्मज्ञ प्राप्ते तस्मिंस्तदा दिने ॥ चारुपुष्पफलाहारं सत्यवान्प्रययौ वनम् ॥ १६ ॥ श्वशुरेणाभ्यनुज्ञाता याचनाभङ्गभीरुणा ॥
सावित्र्यपि जगामाशु सह भर्त्रा महद्वनम् ॥ १७ ॥ चेतसा दूयमानेन गूहमाना च तद्भयम् ॥ वने पप्रच्छ भर्तारं द्रुमांश्च समृगांस्तथा ॥ १८ ॥
आश्वासयामास स राजपुत्रीं क्लान्तां वने पद्मपलाशनेत्राम् ॥ सन्दर्शनेनाथ मृगद्विजानां तथा द्रुमाणां विपिने नृवीरः ॥ १९ ॥ ॥ इति श्रीवि
ष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे रामं प्रति पुष्करोपाख्याने सावित्र्युपाख्याने वनप्रवेशो नाम षट्त्रिंशत्तमोऽध्यायः ॥ ३६ ॥
॥ सत्यवानुवाच ॥ ॥ वनेऽस्मिन्षट्पदाकीर्णं सहकारं मनोहरम् ॥ श्रोत्रघ्राणसुखं पश्य वसन्ते रतिवर्धनम् ॥ १ ॥ वने सपुष्पं दृष्ट्वैवा रक्ता
शोकं मनोहरम् ॥ हसतीव मनः सेर्ष्यं त्वामिवायतलोचने ॥ २ ॥ दक्षिणे दक्षिणेनैतां पश्य रम्यां वनस्थलीम् ॥ पुष्पितैः किंशुकैर्युक्तां ज्वलि
तामिव सप्रभैः ॥ ३ ॥ सुगन्धिकुसुमामोदी वनराजिविनिर्गतः ॥ करोति वायुर्दाक्षिण्यादावयोः क्लमनाशनम् ॥ ४ ॥ अप्युत्पलविशालाक्षि कर्णि
कारैः सुपुष्पितैः ॥ काञ्चनैरिव भात्येषा वनराजी मनोहरा ॥ ५ ॥ अतिमुक्तलताजालरुद्धमार्गवनस्थलीः ॥ पश्योच्चैश्चारुसर्वाङ्गि कुसुमोत्कर
भूषणा ॥ ६ ॥ मधुमत्तालिझाङ्कारव्याजेन वरवर्णिनि ॥ चापयष्टिं करोतीव कामः पान्थजिघांसया ॥ ७ ॥ फुल्लचंपकसद्वक्त्रा पुंस्कोकिलविना
दिनी ॥ विभाति चारुतिलका त्वमिवैषा वनस्थली ॥ ८ ॥ कोकिलश्चूतशिखरे मञ्जरीरेणुपिञ्जरः ॥ गदितैर्व्यक्ततामेति कुलीनश्चेष्टितैरिव
॥ ९ ॥ पुष्परेण्वनुलिप्ताङ्गः प्रियामनुसरन्वने ॥ कुसुमात्कुसुमं याति कूजन्कामी शिलीमुखः ॥ १० ॥ मञ्जरीं सहकारस्य कान्ताचञ्च्वग्रखण्डि
ताम् ॥ स्वादयत्यतिपुष्पेऽपि पुंस्कोकिलयुवा द्रुमे ॥ ११ ॥ काकः प्रसूतां वृक्षाग्रे सामिषाग्रेण चञ्चुना ॥ काकीं सम्पाययत्येष पक्षाच्छादित
पुत्रकाम् ॥ १२ ॥ भूभागं निम्नमासाद्य दयितासहितो युवा ॥ नाहारमपि चादत्ते कामी कामं कपिञ्जलः ॥ १३ ॥ कलविङ्कस्तु विरुतैः सप्रियो
विटपे स्थितः ॥ मुहुर्मुहुर्विशालाक्षि उत्कण्ठयति कामिनः ॥ १४ ॥ क्षुद्रशाखां समारूढः शुकोऽयं कान्तया सह ॥ भारेण नमयञ्शाखां करोति
सफलामिव ॥ १५ ॥ वनेभपिशितास्वादतृप्तो निद्रामुपागतः ॥ शेते सिंहयुवा कान्ताचरणावरणाननः ॥ १६ ॥ व्याघ्रयोर्मिथुनं पश्य शैलकन्दर
संस्थितम् ॥ ययोर्नेत्रप्रभालोकैर्गुहा भिन्नेव लक्ष्यते ॥ १७ ॥ अथ द्वीपी प्रियां लेढि जिह्वाग्रेण पुनःपुनः ॥ प्रीतिमायाति महतीं लिह्यमानश्च
कान्तया ॥ १८ ॥ उत्सङ्गकृतमूर्धानं निद्रापहृतचेतसम् ॥ जन्तूद्धरणतः कान्तं सुखयत्येव वानरी ॥ १९ ॥ भूमौ निपतिता कान्तं मार्जारी

१ 'पश्योत्प' इति ख० ।

दर्शितोदरा ॥ नखैर्दन्तैस्तुदत्येषा न च पीडयते तथा ॥ २० ॥ शशकः शशिका चोभे संसुप्ते पीडिते इमे ॥ सँल्लीनगात्रचरणे कर्णैर्व्यक्तिमुपागते ॥ २१ ॥ स्नातं सरसि पद्माढ्ये वारणं मदमन्थरम् ॥ सम्भावयति तन्वङ्गि मृणालशकलैर्वशा ॥ २२ ॥ कान्तपोत्रसमुत्खातैः कान्ता मार्गानुसारिणी ॥ करोति कवलं मुस्तैर्वराही पोतकानने ॥ २३ ॥ दृढाङ्गसन्धिर्महिषः कर्दमार्द्रतनुर्वने ॥ अनुव्रजति धावन्तीं प्रियां बद्धचतुष्ककः ॥२४॥ पश्य चार्वङ्गि सारङ्गं त्वत्कटाक्षनिभं वने ॥ सभार्यां मां तु पश्यन्तं कौतूहलसमन्वितम् ॥ २५ ॥ पश्य पश्चिमपादेन रोही कण्डूयते मुखम् ॥ स्नेहार्द्रभावः कषति भर्ता शृङ्गाग्रकोटिना ॥ २६ ॥ दाडिमे चमरीं पश्य सितवालामगच्छतीम् ॥ अन्वास्ते चमरः कामी वीक्षते मां च गर्वितः ॥ ॥ २७ ॥ आतपे गवयः पश्य निविष्टो भार्यया सह ॥ रोमन्थमास्ये कुर्वाणः काकं ककुदि धारयन् ॥ २८ ॥ पश्याजं भार्यया सार्धं न्यस्ताग्रचरणद्वयम् ॥ विपुले बदरीस्कन्धे तच्छदग्रासकाम्यया ॥ २९ ॥ हंसं सभार्यं सरसि विचरन्तं सुनिर्मले ॥ सुशुक्लस्येन्दुबिम्बस्य पश्यैनं सदृशश्रियम् ॥ ३० ॥ सभार्यश्चक्रवाकोऽयं कमलाकरमध्यगः ॥ करोति पद्मिनीं कान्तां सपुष्पामिव सुन्दरि ॥ ३१ ॥ मया फलोच्चयः सुभ्रु त्वया पुष्पोच्चयः कृतः ॥ इन्धनं न कृतं किञ्चित्तत्करिष्यामि सांप्रतम् ॥ ३२ ॥ त्वमस्य सरसस्तीरे द्रुमच्छायामुपाश्रिता ॥ क्षणमात्रं प्रतीक्षस्व विश्रमस्व च भामिनि ॥ ३३ ॥ ॥ सावित्र्युवाच ॥ ॥ एवमेतत्करिष्यामि मम दृष्टिपथात्त्वया ॥ दूरे कान्त न गन्तव्यं बिभेमि गहने वने ॥ ३४ ॥ ॥ पुष्कर उवाच ॥ ॥ तस्य पातयतः काष्ठं जज्ञे शिरसि वेदना ॥ स वेदनार्त्तः सङ्गम्य भार्यां वचनमब्रवीत् ॥ ३५ ॥ ॥ सत्यवानुवाच ॥ ॥ आयासेन ममानेन जाता शिरसि वेदना ॥ तमश्च प्रविशामीव न च जानामि किञ्चन ॥ ३६ ॥ त्वदुत्सङ्गे शिरः कृत्वा निद्रोपहतलोचनः ॥ पुष्कर उवाच ॥ तदुत्सङ्गे शिरः कृत्वा सुष्वाप गतचेतनः ॥ ३७ ॥ पतिव्रता महाभागा ततस्सा राजकन्यका ॥ ददर्श धर्मराजं तु स्वयं तं देशमागतम् ॥ ३८॥ नीलोत्पलदलश्यामं पीताम्बरधरं प्रभुम् ॥ विद्युल्लतानिबद्धाङ्गं सतोयमिव तोयदम् ॥ ३९ ॥ किरीटेनार्कवर्णेन कुण्डलाभ्यां विराजितम् ॥ हारभारार्पितोरस्कं तथाङ्गदविभूषितम् ॥ ४० ॥ तथानुगम्यमानं च कालेन सह मृत्युना ॥ स तु संप्राप्य तं देशं देहात्सत्यवतस्तदा ॥ ४१ ॥ अङ्गुष्ठमात्रं पुरुषं पाशबध्दं वशङ्गतम् ॥ आकृष्य दक्षिणामाशां प्रययौ सत्वरं तदा ॥ ४२ ॥ सावित्र्यपि वरारोहा त्यक्त्वा तं गतजीवितम् ॥ अनुवव्राज गच्छन्तं धर्मराजमतन्द्रिता ॥ ४३ ॥ तामुवाच यमो गच्छ यथागतमनिन्दिते ॥

१ 'स्वप्स्यामीति वचो ब्रुवन्' इति पाठान्तरम् ।

और्ध्वदेहिककार्येषु युक्ता भर्तुः समाचर ॥४४ ॥ नानुगन्तुमसौ शक्यस्त्वया लोकान्तरं गतः ॥ पतिव्रतासि तेन त्वं मुहूर्तमनुपश्यसि ॥ ॥४५ ॥ गुरुशुश्रूषणाद्भद्रे तथा सत्यवतो महत् ॥ पुण्यं समार्जितं येन नयाम्येनमहं स्वयम् ॥ ४६ ॥ एतावदेव कर्तव्यं पुरुषस्य विजानतः ॥ मातुः पितुश्च शुश्रूषा गुरोश्च वरवर्णिनि ॥ ४७ ॥ गुरुत्रितयमेतच्च सदा सत्यवता वने ॥ ४८ ॥ पूजितं पूजितस्स्वर्गस्तदानेन चिरं शुभे ॥ तपसा ब्रह्मचर्येण त्वग्निशुश्रूषया तथा ॥४९॥ पुरुषाः स्वर्गमायान्ति गुरुशुश्रूषणेन च ॥ आचार्यश्च पिता चैव माता भ्राता च पूर्वजः ॥ ५० ॥ नार्तेनाप्यवमन्तव्या ब्राह्मणेन विशेषतः ॥ आचार्यो ब्रह्मणो मूर्तिः पिता मूर्तिः प्रजापतेः ॥५१॥ माता पृथिव्या मूर्तिश्च भ्राता वै मूर्तिरात्मनः ॥ यन्मातापितरौ क्लेशं सहेते सम्भवे नृणाम् ॥ ५२ ॥ न तस्य निष्कृतिः शक्या कर्तुं वर्षशतैरपि ॥ तयोर्नित्यं प्रियं कुर्यादाचार्यस्य च सर्वदा ॥ ५३ ॥ तेष्वेव त्रिषु तुष्टेषु तपः सत्यं समाप्यते ॥ तेषां त्रयाणां शुश्रूषा परमं तप उच्यते ॥ ५४ ॥ न तैरनभ्यनुज्ञातो धर्ममन्यं समाचरेत् ॥ त एव हि त्रयो लोकास्त एव त्रय आश्रमाः ॥ ५५ ॥ त एव च त्रयो वेदास्त एवोक्तास्त्रयोऽग्नयः ॥ पिता वै गार्हपत्योऽग्निर्माताग्निर्दक्षिणः स्मृतः ॥ ५६ ॥ गुरुराहवनीयस्तु अग्नित्रेता गरीयसी ॥ त्रिष्व प्रमाद्यन्नेतेषु त्रींल्लोकाञ्जयते गृही ॥ ५७ ॥ स हि दिव्येन वपुषा देववद्दिवि मोदते ॥ इमं लोकं मातृभक्तः पितृभक्तस्तु मध्यमम् ॥ ५८ ॥ गुरुशुश्रूषया त्वेवं ब्रह्मलोकं समश्नुते ॥ सर्वे तस्यादृता धर्मा यस्यैते त्रय आदृताः ॥ ५९ ॥ अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः ॥ यावत्त्रयस्ते जीवेयुस्तावन्नान्यत्समाचरेत् ॥ ६० ॥ तनुं निवेदयेत्तेभ्यो मनो वचनकर्मभिः ॥ त्रिष्वेतेष्वितिकृत्यं हि पुरुषस्य समाप्यते ॥ ६१ ॥ एष धर्मः परः साक्षादुपधर्मोऽन्य उच्यते ॥ गुरुपूजारतिर्भर्ता त्वं च साध्वी पतिव्रता ॥ ६२ ॥ विनिवर्तस्व धर्मज्ञे ग्लानिर्भवति तेऽधुना ॥ सावित्र्युवाच ॥ पतिर्हि दैवतं स्त्रीणां पतिरेव परायणम् ॥ ६३ ॥ अनुगम्यः स्त्रिया साध्व्या पतिः प्राणधनेश्वरः ॥ मितं ददाति हि पिता मितं भ्राता मितं सुतः ॥ ६४ ॥ अमितस्य हि दातरं भर्तारं का न पूजयेत् ॥ नीयते यत्र भर्ता मे स्वयं वा यत्र गच्छति ॥ ६५ ॥ मयापि तत्र गन्तव्यं यथाशक्ति सुरोत्तम ॥ पतिमादाय गच्छन्तमनुगन्तुमहं यदा ॥ ६६ ॥ त्वां देव न हि शक्ष्यामि तदा त्यक्ष्यामि जीवितम् ॥ मनस्विनी तथा का च वैधव्याक्षरदूषिता ॥ ६७ ॥ मुहूर्तमपि जीवेत मण्डनार्हाप्यमण्डिता ॥ यम उवाच ॥ पतिव्रते महाभागे परितुष्टोऽस्मि ते शुभे ॥ ६८ ॥ विना सत्यवतः प्राणान्वरं वरय मा चिरम् ॥ सावित्र्युवाच ॥ विनष्टचक्षुषो राज्यं चक्षुषा सह कामये ॥ च्युतराज्यस्य धर्मज्ञ श्वशुरस्य महात्मनः ॥ ६९ ॥

॥ यम उवाच ॥ कृतेन कामेन निवर्त भद्रे भविष्यतीदं सकलं त्वयोक्तम् ॥ ममोपरोधस्तव च क्लमः स्यात्तथाध्वना तेन तव ब्रवीमि ॥ ७० ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० सं० सावित्र्युपाख्याने सप्तत्रिंशत्तमोऽध्यायः ॥३७॥ सावित्र्युवाच ॥ कुतः क्लमः कुतो दुःखं सद्भिः सह समागमे ॥ सतां तस्मान्न मे ग्लानिस्त्वत्समीपे सुरोत्तम ॥ १ ॥ साधूनां वाप्यसाधूनां सन्त एव परा गतिः ॥ नैवासतां नैव सतामसन्तो नैव चात्मनः ॥ २ ॥ विषाग्निसर्पशस्त्रेभ्यो न तथा जायते भयम् ॥ अकारणजगद्वैरिखलेभ्यो जायते यथा ॥ ३ ॥ सन्तः प्राणानपि त्यक्त्वा परार्थं कुर्वते यथा ॥ तथाऽसन्तोऽपि मनुजाः परपीडासु तत्पराः ॥४ ॥ त्यजत्यसूनयं लोकस्तृणवद्यस्य कारणात् ॥ परोपधानसक्तास्ते परलोकं तथा सता ॥ ५ ॥ निकायेषुनिकायेषु पुरा ब्रह्मा जगद्गुरुः ॥ असतामुपघाताय राजानः कृतवान्स्वयम् ॥ ६ ॥ चारैः परीक्षयेद्राजा धूर्तान्सम्मार्जये त्सदा ॥ निग्रहं चासतां कुर्यात्स तु लोकजिदुत्तमः ॥ ७ ॥ धान्यसंरक्षणार्थाय निर्मार्ष्टि कक्षमुद्धरन् ॥ यथा वर्धयते धान्यं वर्द्धनीयास्तथा प्रजाः ॥ ८ ॥ निग्रहेणासतां राज्ञा सतां च परिपालनैः ॥ एतावदेव कर्तव्यं राज्ञा स्वर्गमभीप्सता ॥ ९ ॥ राजकृत्यं हि लोकेषु नास्त्यन्यज्जग तीपते ॥ असतां निग्रहादेव सतां च परिपालनात् ॥ १० ॥ राजानुशासिता तेषामसतां शासिता भवान् ॥ तेन त्वमधिको देव देवेभ्यः प्रति भासि मे ॥ ११ ॥ जगत्तु धार्यते सद्भिः सतामग्र्यस्तथा भवान् ॥ तेन त्वामभियान्त्या मे क्लमो देव न विद्यते ॥ १२ ॥ यम उवाच ॥ तुष्टो स्मि ते विशालाक्षि वचनैर्धर्मसंहितैः ॥ विना सत्यवतः प्राणान्वरं वरय मा चिरम् ॥ १३ ॥ सावित्र्युवाच ॥ सहोदराणां भ्रातृणां कामयामि शतं विभो ॥ अनपत्यः पिता प्रीतिं पुत्रलाभात्प्रयातु मे॥१४॥ यम उवाच ॥ कृतेन कामेन निवर्त भद्रे भविष्यतीदं सकलं तवोक्तम् ॥ ममोपरोधस्त व च क्लमः स्यात्तथाधुना तेन तव ब्रवीमि ॥१५॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं० सावित्र्युपाख्याने द्वितीयवरलाभो नामाष्टत्रिंशत्तमो ध्यायः ॥ ३८ ॥ सावित्र्युवाच ॥ धर्मो हि दैवतं स्त्रीणां पतिरेव परायणम् ॥ अनुगम्यः स्त्रिया साध्व्या पतिः प्राणधनेश्वरः ॥ १ ॥ धर्मार्जने सुर श्रेष्ठ कुतो ग्लानिः कुतः क्लमः॥ त्वत्पादमूलमेवेदं परमं धर्मकारणम् ॥ २ ॥ धर्मार्जनं सदा कार्यं पुरुषेण विजानता ॥ तल्लाभः सर्वलाभेभ्यो यतो देव विशिष्यते ॥ ३ ॥ धर्मश्चार्थश्च कामश्च त्रिवर्गं जीवतः फलम् ॥ धर्महीनस्य कामार्थौ वन्ध्यासुतसमावुभौ ॥ ४ ॥ धर्मादर्थस्तथा कामो धर्माल्लोकद्वयं तथा ॥ धर्म एकोऽनुयात्येनं यत्र कुत्र च गामिनम् ॥ ५ ॥ शरीरेण समं नाशं सर्वमन्यद्धि गच्छति ॥ एको हि जायते जन्तुरेक एव विपद्यते ॥ ६ ॥ धर्मस्तमनुयात्येको न सुहृन्न च बान्धवाः ॥ रूपसौभाग्यलावण्यं सम्पद्धर्मेण लभ्यते ॥ ७॥ ब्रह्मेन्द्रोपेन्द्रशर्वेन्द्वयमार्काग्न्यनि

लाम्भसाम् ॥ वस्वश्विधनदाद्यानां ये लोकाः सर्वकामदाः ॥ ८ ॥ धर्मेण तानवाप्नोति पुरुषः पुरुषान्तक ॥ मनोहराणि द्वीपानि वर्षाणि सुसुखानि च ॥ ९ ॥ प्रयान्ति धर्मेण नरास्तथैवामरतामिताः ॥ नन्दनादीनि मुख्यानि देवोद्यानानि यानि च ॥ १० ॥ तानि पुण्येन लभ्यन्ते नाकपृष्ठं तथा नरैः ॥ विमानानि विचित्राणि तथैवाप्सरसः शुभाः ॥ ११ ॥ तैजसानि शरीराणि सदा पुण्यवतां फलम् ॥ राज्यं नृपतिपूजा च कामसिद्धिस्तथेप्सिता ॥ १२ ॥ उपस्कराणि मुख्यानि फलं पुण्यस्य दृश्यते ॥ रुक्मवैडूर्यदण्डानि चन्द्रांशुसदृशानि च ॥ १३ ॥ चामराणि सुराध्यक्ष भवन्ति शुभकर्मणाम् ॥ (१पूर्णेन्दुमण्डलाभेन रक्तांशुकसितेन च ॥१४॥ धार्यतां यान्ति छत्रेण नरः पुण्येन कर्मणा ॥) जयशङ्खस्वनादेव सूतमागधनिःस्वनम् ॥ १५ ॥ वरासनं सभृङ्गारं फलं पुण्यस्य कर्मणः ॥ वरान्नपानं गीतं च नृत्यमाल्यानुलेपनम् ॥ १६ ॥ रत्नवस्त्राणि मुख्यानि फलं पुण्यस्य कर्मणः ॥ रूपौदार्यगुणोपेताः स्त्रियश्चातिमनोहराः ॥ १७ ॥ वासः प्रासादपृष्ठेषु भवन्ति शुभकर्मणाम् ॥ सुवर्णकिंकिणीमिश्रचामराः पीठधारिणः ॥ १८ ॥ वहन्ति तुरगा देव नरं पुण्येन कर्मणा ॥ हेमकक्षैः समातङ्गैश्चलत्पर्वतसन्निभैः ॥ १९ ॥ खेलांघ्रिपदविन्यासैर्यान्ति पुण्येन कर्मणा ॥ सर्वकामप्रदे देवे सर्वापद्धारितापहे ॥२० ॥ वहन्ति भक्तिं पुरुषास्सदा पुण्येन कर्मणा ॥ तस्य द्वाराणि यजनं तपो दानं दया क्षमा ॥ २१ ॥ ब्रह्मचर्यं च सत्यं च तीर्थानुसरणं शुभे ॥ स्वाध्यायसेवा साधूनां सहवासः सुरार्चनम् ॥२२॥ गुरूणां चैव शुश्रूषा ब्राह्मणानां च पूजनम् ॥ इन्द्रियाणां जयश्चैव मार्दवं ह्रीरमत्सरम् ॥ २३ ॥ तस्माद्धर्मः सदा कार्यो नित्यमेव विजानता ॥ न हि प्रतीक्षते मृत्युः कृतमस्य न वा कृतम् ॥ २४ ॥ बाल एवाचरेद्धर्ममनित्यं देव जीवितम् ॥ को हि जानाति कस्याद्य मृत्युः केन भविष्यति ॥२५॥ पश्यतोऽप्यस्य लोकस्य मरणं पुरतः स्थितम् ॥ अमरस्येव चरितमत्याश्चर्यं सुरोत्तम ॥ २६ ॥ युवत्वापेक्षया बालो वृद्धत्वापेक्षया युवा ॥ मृत्योरुत्सङ्गमारूढः स्थविरः किमपेक्षते ॥ २७ ॥ भुवः शैलं समारूढः ततो वृक्षाग्रमाश्रितः ॥ तत्राप्यविन्दतत्त्राणं मृत्योर्द्धीतस्य का गतिः ॥ २८ ॥ न भयं मरणाद्देव प्राणिनामधिकं क्वचित् ॥ तत्रापि निर्भयाः सन्तः सदा सुकृतकारिणः ॥२९ ॥ यम उवाच ॥ तुष्टोऽस्मि ते विशालाक्षि वचनैर्धर्मसङ्गतैः ॥ विना सत्यवतः प्राणान्वरं वरय मा चिरम् ॥ ३० ॥ सावित्र्युवाच ॥ वरयामि त्वया दत्तं पुत्राणां शतमौरसम् ॥ अनपत्यस्य लोकेषु गतिः किल न विद्यते ॥ ३१ ॥ यम उवाच ॥ कृतेन कामेन निवर्त भद्रे भविष्यतीदं सकलं त्वयोक्तम् ॥ ममोपरोधश्च तव क्रमः स्यात्तथाधुना तेन

१ कोष्ठान्तर्गतः पाठः खपुस्तके नास्ति ।

तव ब्रवीमि ॥ ३२ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं०सावित्र्युपाख्याने तृतीयवरलाभो नामैकोनचत्वारिंशोऽध्यायः ॥३९॥ सावित्र्युवाच ॥ सर्वधर्मविधानज्ञः सर्वधर्मप्रवर्तकः ॥ त्वमेव जगतां नाथः प्रजासंयमनो यमः ॥ १ ॥ कर्मणामानुरूप्येण यस्माद्यमयसि प्रजाः ॥ तस्मात्त्वमुच्यसे देव यम इत्येव नामतः ॥ २ ॥ धर्मेणेमाः प्रजाः सर्वा यथा रञ्जयसे प्रभो ॥ तस्मात्ते धर्मराजेति नाम सत्यं निगद्यते ॥ ३ ॥ सुकृतं दुष्कृतं चोभे पुरोधाय यथा जनाः ॥ त्वत्सकाशमथायान्ति तस्मात्त्वं मृत्युरुच्यसे ॥ ४ ॥ सर्वेषामथ भूतानां यस्मादन्तकरो भवान् ॥ तस्मात्वमन्तकः प्रोक्तः सर्वदेवैर्महाद्युते ॥ ५ ॥ विवस्वतस्त्वं तनयः प्रथमः परिकीर्तितः ॥ तस्माद्वैवस्वतो नाम्ना सर्वदेवेषु कथ्यसे ॥ ६ ॥ कालं कलाद्यं कलयन्सर्वेषां त्वं हि तिष्ठसि ॥ तस्मात्कालेति ते नाम प्रोच्यते तत्त्वदर्शिभिः ॥७ ॥ आयुष्ये कर्मणि क्षीणे गृह्णासि प्रसभं जनम् ॥ तस्मात्त्वं कथ्यसे लोके सर्वप्राणहरेति वै ॥ ८ ॥ तव प्रसादाद्देवेश धर्मे तिष्ठन्ति जन्तवः ॥ तव प्रसादाद्देवेश सङ्करो नैव जायते ॥ ९ ॥ सतां सदा गतिर्देव त्वमेव परिकीर्तितः ॥ जगतोऽस्य जगन्नाथ मर्यादापरिपालकः ॥१० ॥ पाहि मां त्रिदशश्रेष्ठ दुःखितां शरणागताम् ॥ पितरौ च तथैवास्य राजपुत्रस्य दुःखितौ ॥ ११ ॥ यम उवाच ॥ स्तुतेन भक्त्या धर्मज्ञे मया तुष्टेन सत्यवान् ॥ तव भर्ता विमुक्तोऽयं लब्धकामा व्रजाबले ॥ १२ ॥ राज्यं कृत्वा त्वया सार्धं वत्सराशीतिपञ्चकम् ॥ नाकपृष्ठमथारुह्य त्रिदशैस्सह रंस्यते ॥ १३ ॥ स्तोत्रेणानेन धर्मज्ञे कल्य मुत्थाय यश्च माम् ॥ कीर्तयिष्यति तस्यापि दीर्घमायुर्भविष्यति ॥ १४ ॥ पुष्कर उवाच ॥ एतावदुक्त्वा भगवान्यमस्तु विमुच्य तं राजसुतं महात्मा ॥ अदर्शनं तत्र जगाम राम कालेन सार्धं सह मृत्युना च॥१५॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं०सावित्र्युपाख्याने चत्त्वारिंशत्तमोऽध्यायः ॥ ४० ॥ ॥ पुष्कर उवाच ॥ सावित्री च ततः साध्वी जगाम वरवर्णिनी ॥ यथायथागतेनैव यत्रासौ सत्यवान्मृतः ॥ १ ॥ सा समासाद्य भर्तारं तस्योत्सङ्गगतं शिरः ॥ कृत्वा विवेश तन्वङ्गी लम्बमाने दिवाकरे ॥ २ ॥ सत्यवानपि निर्मुक्तो धर्मराज्ञा शनैःशनैः ॥ उन्मीलयति ते नेत्रे प्रस्यन्दत च भार्गव ॥ ३ ॥ ततः प्रत्यागतप्राणः प्रियां वचनमब्रवीत् ॥ क्वाऽसौ प्रयातः पुरुषो यो मामाकृष्य गच्छति ॥ ४ ॥ जानामि न वरारोहे कश्चासौ पुरुषः शुभे ॥ वनेऽस्मिँश्चारुसर्वाङ्गि सुप्तस्य च चिरं गतम् ॥ ५ ॥ उपवासपरिक्लान्ता कर्षिता भवती मया ॥ अस्मद्दुर्हृदयेनाद्य पितरौ दुःखितौ तथा ॥ ६ ॥ द्रष्टुमिच्छाम्यहं सुभ्रु गमने त्वरिता भव ॥ सावित्र्युवाच ॥ आदित्योऽस्तमनुप्राप्तो यदि ते रुचितं प्रभो ॥ ७ ॥ आश्रमन्तु प्रयास्यावः श्वशुरौ तप्यतो मम ॥ यथावृत्तं च तत्रैव तव वक्ष्याम्यथाश्रमे ॥ ८ ॥ पुष्कर उवाच ॥ एतावदुक्त्वा भर्तारं

सह भर्त्रा ययौ तदा ॥ आससादाश्रमं चैव सह भर्त्रा नृपात्मजा ॥ ९ ॥ एतस्मिन्नवकाशे तु लब्धचक्षुर्महीपतिः ॥ द्युमत्सेनः सभार्यस्तु पर्यतप्यत भार्गव ॥ १० ॥ सावित्र्यपि वरारोहा सह सत्यवता तदा ॥ ववन्दे तत्र राजानं सभार्यं भृगुनन्दन ॥ ११ ॥ परिष्वक्तस्तदा पित्रा सत्यवान्राजनन्दनः ॥ अभिवाद्य ततः सर्वान्वने तस्मिँस्तपोधनान् ॥ १२ ॥ उवास तां तदा रात्रिमृषिभिः सह धर्मवित् ॥ सावित्र्यपि जगादाथ यथा वृत्तमनिन्दिता ॥ १३ ॥ व्रतं समापयामास तस्यामेव तदा निशि ॥ ततस्तु राम रात्र्यन्ते शाल्वेभ्यस्तस्य भूपतेः ॥ १४ ॥ आजगाम जनः सर्वो राज्यार्थाय निमन्त्रणे ॥ आज्ञापयामास तदा तथा प्रकृतिशासनम् ॥ १५ ॥ विचक्षुषस्ते नृपते येन राज्यं पुरा हृतम् ॥ अमात्यैः सह भोक्तव्यं राज्यमस्तु पुरे नृप ॥ १६ ॥ एतच्छ्रुत्वा ययौ तत्र बलेन चतुरङ्गिणा ॥ लेभे च सकलं वाक्यं धर्मराज्ञो महात्मनः ॥ १७ ॥ भ्रातॄणां च शतं लेभे सावित्र्यपि वराङ्गना ॥ एवं पतिव्रता साध्वी पितृपक्षं नृपात्मजा ॥ १८ ॥ उज्जहार वरारोहा भर्तृपक्षं तथैव च ॥ मोचयामास भर्तारं मृत्युपाशवशीकृतम् ॥ १९ ॥ तस्मात्साध्व्यः स्त्रियः पूज्याः सततं देववज्जनैः ॥ तासां राम प्रसादेन धार्यते वै जगत्त्रयम् ॥ २० ॥ तासां न वाक्यं भवतीह मिथ्या न जातु लोकेषु चराचरेषु ॥ तस्मात्सदा ताः परिपूजनीयाः कामान्समग्रानभिकामयानैः ॥ २१ ॥

इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे सावित्र्युपाख्याने एकचत्वारिंशत्तमोऽध्यायः ॥ ४१ ॥ ॥ ॥ छ ॥

॥ पुष्कर उवाच ॥ गवां हि पालनं राज्ञा कर्तव्यं भृगुनन्दन ॥ गावः पवित्राः संगत्या गोषु लोकाः प्रतिष्ठिताः ॥ १ ॥ गावो वितन्वते यज्ञं गावो विश्वस्य मातरः ॥ शकृन्मूत्रं परं तासामलक्ष्मीनाशनं स्मृतम् ॥ २ ॥ तद्धि सेव्यं प्रयत्नेन तत्र लक्ष्मीः प्रतिष्ठिता ॥ उद्वेगं च न गन्तव्यं शकृन्मूत्रस्य जानता ॥ ३ ॥ गवां मूत्रपुरीषेषु ष्ठीवनाद्यं न सन्त्यजेत् ॥ गोरजः परमं पुण्यमलक्ष्मीविघ्ननाशनम् ॥ ४ ॥ गवां कण्डूयनं चैव सर्वकल्मषनाशनम् ॥ तासां शृङ्गोदकश्चैव जाह्नवीजलसन्निभम् ॥ ५ ॥ गोमूत्रं गोमयं क्षीरं दधि सर्पिश्च रोचनम् ॥ षडङ्गमेतन्माङ्गल्यं पवित्रं तु पृथक्पृथक् ॥ ६ ॥ गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ॥ पवित्रं परमं ज्ञेयं स्नाने पाने च भार्गव ॥ ७ ॥ रक्षोघ्नमेतन्माङ्गल्यं कलिदुःस्वप्ननाशनम् ॥ रोचना च तथा धन्या रक्षोरगगदापहा ॥ ८ ॥ यस्तु कल्ये समुत्थाय मुखमाज्ये निरीक्षते ॥ तस्यालक्ष्मीः क्षयं याति वर्धते न तु किल्बिषम् ॥ ९ ॥ गवां ग्रासप्रदानेन पुण्यं सुमहदश्नुते ॥ यावत्यः शक्नुयाद्गावः सुखं धारयितुं गृहे ॥ १० ॥ धारयेत्तावतीर्नित्यं क्षुधितास्तु न धारयेत् ॥ दुःखिता धेनवो यस्य वसन्ति द्विज मन्दिरे ॥ ११ ॥ नरकं समवाप्नोति नात्र कार्या विचारणा ॥

दत्त्वा परगवे ग्रासं पुण्यं सुमहदश्नुते ॥ १२ ॥ शैशिरं सकलं कालं ग्रासं परगवे तथा ॥ दत्त्वा स्वर्गमवाप्नोति संवत्सरशतानि षट् ॥ १३ ॥
अग्रभक्तं नरो दत्त्वा नित्यमेव तथा गवाम् ॥ मासषट्केन लभते नाकलोकं समायुतम् ॥ १४ ॥ सायं प्रातर्मनुष्याणामशनं देवनिर्मितम् ॥
तत्रैवमशनं दत्त्वा गवां नित्यमतन्द्रितः ॥ १५ ॥ द्वितीयं यः समश्नाति तेन संवत्सरान्नरः ॥ गवां लोकमवाप्नोति यावन्मन्वन्तरं द्विज ॥ १६ ॥
गवां प्रचारे पानीयं दत्त्वा पुरुषसत्तमः ॥ वारुणं लोकमासाद्य क्रीडत्यब्दगणायुतम् ॥ परां तृप्तिमवाप्नोति यत्रयत्राभिजायते ॥ १७ ॥
गवां प्रचारभूमिं तु वाहयित्वा हलादिना ॥ नरकं महदाप्नोति यावदिन्द्राश्चतुर्दश ॥ १८ ॥ गवां पानप्रवृत्तानां यस्तु विघ्नं समाचरेत् ॥
ब्रह्महत्या कृता तेन घोरा भवति भार्गव ॥ सिंहव्याघ्रभयत्रस्तां पङ्कमग्नां जले गताम् ॥ १९ ॥ गामुद्धृत्य नरः स्वर्गे कल्पभोगानुपाश्नुते ॥
गवां यवसदानेन रूपवानभिजायते ॥ २० ॥ सौभाग्यं महदाप्नोति लावण्यं च द्विजोत्तम ॥ औषधं च तथा दत्त्वा विरोगस्त्वभिजायते ॥
॥ २१ ॥ औषधं लवणं तोयमाहारं च प्रयच्छतः ॥ विपत्तौ पातकं नास्य भवत्युद्बन्धनादिकम् ॥ २२ ॥ वक्तव्यता दिवापाले रात्रौ स्वामी न
तद्गृहे ॥ तत्रापि तन्नियुक्तश्च कश्चिदन्यो न चेद्भवेत् ॥ २३ ॥ तासां चेदविरुद्धानां चरन्तीनां मिथो वने ॥ यामुत्पत्य वृको हन्यान्नपालस्तत्र
किल्बिषी ॥ २४ ॥ संरुद्धासु तथैवासु वृकः पाले त्वनायति ॥ यामुत्पत्य वृको हन्यात्पाले तत्किल्बिषं भवेत् ॥ २५ ॥ गोवधेन नरो याति
नरकानेकविंशतिम् ॥ तस्मात्सर्वप्रयत्नेन कार्यं तासां तु पालनम् ॥ २६ ॥ विक्रयाच्च गवां राम न भद्रं प्रतिपद्यते ॥ तासां च कीर्तनादेव नरः
पापाद्विमुच्यते ॥ २७ ॥ तासां संस्पर्शनं धन्यं सर्वकल्मषनाशनम् ॥ दानेन च तथा तासां कुलान्यपि समुद्धरेत् ॥ २८ ॥ उदक्या सूतिको
दोषो नैव तत्र गृहे भवेत् ॥ भूमिदोषास्तथान्येऽपि यत्रैका वसते तु गौः ॥ २९ ॥ गवां निश्वासवातेन परा शान्तिर्गृहे भवेत् ॥ नीराजनं तत्परमं
सर्वस्थानेषु कीर्तितम् ॥ ३० ॥ गवां संस्पर्शनाद्राम क्षीयते किल्बिषं नृणाम् ॥ गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ॥ ३१ ॥
एकरात्रोपवासं च श्वपाकमपि शोधयेत् ॥ पृथक्त्वप्रत्ययाभ्यस्तमतिसन्तपनं स्मृतम् ॥ ३२ ॥ सर्वाशुभविमोक्षाय पुरा च
रितमीश्वरैः ॥ प्रत्येकं च त्र्यहाभ्यस्तं चातिसांतपनं स्मृतम् ॥ ३३ ॥ सर्वकामप्रदं राम सर्वाशुभविनाशनम् ॥
कृच्छ्रातिकृच्छ्रं पयसा दिवसानेकविंशतिम् ॥ ३४ ॥ निर्मलास्तेन चीर्णेन भवन्ति पुरुषोत्तमाः ॥ त्र्यहमुष्णं पिबेन्मूत्रं त्र्यहमुष्णं घृतं पिबेत् ॥
॥ ३५ ॥ त्र्यहमुष्णं पयः पीत्वा वायुभक्षः परं त्र्यहम् ॥ तप्तकृच्छ्रमिदं प्रोक्तं सर्वाशुभविनाशनम् ॥ ३६ ॥ शीतकृच्छ्रस्तथैवैष क्रमाच्छीतैः

प्रकीर्तितः ॥ सर्वाशुभविनाशाय निर्मितो ब्रह्मणा स्वयम् ॥ ३७ ॥ गोमूत्रेण चरेत्स्नानं वृत्तिं कुर्यात्तु गोरसैः ॥ उत्थितास्तुत्थितस्तिष्ठेदुपविष्टासु
ना स्थितः ॥ ३८ ॥ अभुक्तवत्सु नाश्नीयादपीतासु च नो पिबेत् ॥ त्राणं तु रामाकृत्वैव तथा देवे प्रवर्षति ॥ ३९ ॥ त्राणं नैवात्मनः कार्यं भया
र्त्तांश्च समुद्धरेत् ॥ आत्मानमपि सन्त्यज्य गोव्रतं तत्प्रकीर्तितम् ॥ ४० ॥ सर्वपापप्रशमनं मासेनैकेन भार्गव ॥ व्रतेनानेन चीर्णेन गोलोकं
पुरुषो व्रजेत् ॥ ४१ ॥ अभीष्टमथ वा राम यावदिन्द्राश्चतुर्दश ॥ गवां निर्हारनिर्मुक्तानश्नन्प्रतिदिनं यवान् ॥ ४२ ॥ मासेन तदवाप्नोति यत्कि
ञ्चिन्मनसेच्छति ॥ गोमतीं च तथा विद्यां सायं प्रातस्तथा जपन् ॥ ४३ ॥ गोलोकमाप्नोति नरो नात्र कार्या विचारणा ॥ उपर्युपरि सर्वेषां
गवां लोकः प्रकीर्तितः ॥ ४४ ॥ निवसन्ति सदा यत्र गावस्त्वाकाशगा दिवि ॥ विमानेषु विचित्रेषु वृतेष्वप्सरसां गणैः ॥ ४५ ॥ किङ्किणी
जालचित्रेषु वीणामुरजनादिषु ॥ सदा कामजला नद्यः क्षीरपायसकर्दमाः ॥ ४६ ॥ शीतलामलपानीयाः सुवर्णसिकतास्तथा ॥ पुष्करिण्यः
शुभास्तत्र वैडूर्यकमलोत्पलाः ॥ ४७ ॥ मानसी च तथा सिद्धिः तत्र लोके भृगूत्तम ॥ तञ्च लोकं नरा यान्ति गवां भक्त्या न संशयः ॥ ४८ ॥
गोमतीं कीर्तयिष्यामि सर्वपापप्रणाशिनीम् ॥ तां तु मे वदतो विप्र शृणुष्व सुसमाहितः ॥ ४९ ॥ गावः सुरभयो नित्यं गावो गुग्गुलुगन्धिकाः॥
गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं परम् ॥ ५० ॥ अन्नमेव परं गावो देवानां हविरुत्तमम् ॥ पावनं सर्वभूतानां रक्षन्ति च वहन्ति च ॥५१॥
हविषा मन्त्रपूतेन तर्पयन्त्यमरान्दिवि ॥ ऋषीणामग्निहोत्रेषु गावो होमे प्रयोजिताः ॥ ५२ ॥ सर्वेषामेव भूतानां गावः शरणमुत्तमम् ॥ गावः
पवित्रं परमं गावो मङ्गलमुत्तमम् ॥ ५३ ॥ गावः स्वर्गस्य सोपानं गावो धन्यास्सनातनाः ॥ (ॐ) नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव
च ॥ ५४ ॥ नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमोनमः ॥ ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा स्थितम् ॥ ५५ ॥ एकत्र मन्त्रास्तिष्ठन्ति हविरेकत्र
तिष्ठति ॥ देवब्राह्मणगोसाधुसाध्वीभिः सकलं जगत् ॥ ५६ ॥ धार्यते वै सदा तस्मात्सर्वे पूज्यतमाः सदा ॥ यत्र तीर्थे सदा गावः पिबन्ति तृपि
ता जलम् ॥ उत्तरन्ति पथा येन स्थिता तत्र सरस्वती ॥५७॥ गवां हि तीर्थे वसतीह गङ्गा पुष्टिस्तथा तद्रजसि प्रवृद्धा ॥ लक्ष्मीः करीषे प्रणतौ
च धर्मस्तासां प्रणामं सततं च कुर्यात् ॥ ५८ ॥ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० सं० गोमाहात्म्ये गोमतीविद्या नाम द्विचत्वारिं
शत्तमोऽध्यायः ॥ ४२ ॥ ॥ पुष्कर उवाच ॥ ॥ अतः परं प्रवक्ष्यामि तव राम चिकित्सितम् ॥ संक्षेपेण गवां पुण्यं सारभूतं शृणुष्व तत् ॥
॥ १ ॥ शृङ्गमूलेषु धेनूनां तैलं दद्यात्ससैन्धवम् ॥ शृङ्गीवीरबलामांसीकल्कसिद्धं समाक्षिकम् ॥ २ ॥ सिमिचूर्णयुतं देयमथवापि तथा घृतम् ॥

कर्णमूलेषु सर्वेषु मञ्जिष्ठाहिङ्गुसैन्धवैः ॥ ३ ॥ सिद्धं तैलं प्रदातव्यं गोरसो वाथवा पुनः ॥ माक्षिकं सैन्धवं शंखं तगरीं पिप्पलीं सिहाम् ॥ ४ ॥ अजाक्षीरेण संपेष्य गुलिकां कारयेद्भिषक् ॥ एतन्नेत्राञ्जनं श्रेष्ठं घृतमाक्षिकसंयुतम् ॥ ५ ॥ बिल्वमूलमपामार्गं धातकीं च सपाटलाम् ॥ कुटजं दन्तमूलेषु लेपं तच्छूलनाशनम् ॥ ६ ॥ दन्तशूलहरैर्द्रव्यैर्घृतं राम विपाचितम् ॥ मुखरोगहरं ज्ञेयं जिह्वारोगेषु सैन्धवम् ॥ ७ ॥ शृङ्गवेरं हरिद्रे द्वे त्रिफलां च गलग्रहे ॥ शृङ्गवेरं हरिद्रे द्वे वल्कलं कुटजस्य च ॥ ८ ॥ अपामार्गविडंगांश्च लवणेन विमिश्रितम् ॥ औषधं मुखरोगघ्नं ज्वरदाहविनाशनम् ॥ ९ ॥ हृच्छूले बस्तिशूले च वातरोगे क्षते तथा ॥ त्रिफलाघृतसंमिश्रं गवां पानं प्रशस्यते ॥ १० ॥ शतपुष्पायुतं पक्वं तैलं कुटजचित्रकैः ॥ गवां राम प्रदातव्यं सर्वहृद्रोगनाशनम् ॥ ११ ॥ अतीसारे हरिद्रे द्वे पाठां चैव प्रदापयेत् ॥ आनाहे घृतसंयुक्तां दापयेत्पद्मचारिणीम् ॥ ॥ १२ ॥ सर्वेषु कुष्ठरोगेषु तथा शाखागदेषु च ॥ शृङ्गवेरं च दार्वीं च कासे श्वासे प्रदापयेत् ॥१३॥ दातव्या भग्नसन्धाने प्रियङ्गुर्लवणान्विता ॥ वातरोगेषु सर्वेषु शतपुष्पाविपाचितम् ॥ १४ ॥ गवां तैलं प्रदातव्यं सर्ववातगदापहम् ॥ त्रूषणं मधुसंमिश्रं कफरोगेषु दापयेत् ॥ १५ ॥ पित्तरोगेषु सर्वेषु मधुयष्टिविपाचितम् ॥ गव्यमाज्यं प्रदातव्यं सर्वपित्तगदापहम् ॥ १६ ॥ शाखोटकरसापानं रक्तपित्ते प्रशस्यते ॥ गोधूमानां च चूर्णानि माषांश्चैव ससर्षपाः ॥ १७ ॥ पयसा च समालोड्य गुरुमिश्राः प्रदापयेत् ॥ रक्तस्रावेषु कृच्छ्रेषु गवामेतत्प्रशस्यते ॥ १८ ॥ तिलाम्भकरुहांश्चैव हरितालं घृतं तथा ॥ भग्नक्षतानां धेनूनां लेपने तत्प्रशस्यते ॥ १९ ॥ वत्सानां च सरोगाणां पाठां तक्रेण पाययेत् ॥ हरिद्रां क्षीरसंयुक्तामथवा रोगशान्तये ॥ २० ॥ माषास्तिलाः सगोधूमाः पशुक्षीरं घृतं तथा ॥ एषां पिण्डाः प्रदातव्या लवणेन सुसँस्कृताः॥ पुष्टिप्रदा तु वत्सानां वृषभाणां बलप्रदा ॥ २१ ॥ देवदारुवचामांसीगुग्गुलुहिङ्गुसर्षपाः ॥ एष धूपः प्रदातव्यः किञ्चिद्घृतपरिप्लुतः ॥ २२ ॥ सर्वग्रहविनाशाय पलङ्कशयुतः शुभः ॥ घण्टा चापि गवां कार्या धूपेनानेन धूपिता ॥ २३ ॥ अश्वगन्धा तिलं चुक्रं वस्तियोगे प्रशस्यते ॥ अश्वगन्धायुतं तक्रं तिलान्वस्ति प्रशस्यते ॥ भवति क्षीरिणी तेन धेनुर्भृगुकुलोद्भव ॥ २४ ॥ पिण्याकमेव निर्दिष्टं गवां राम रसायनम् ॥ शीतोदपानमार्द्रञ्च यवसं च विवर्जयेत् ॥ २५ ॥ जरान्विता तथा स्थानं तच्च शीतं द्विजोत्तम ॥ धार्यं चैव गवां मध्ये मत्तोजः सर्वथा भवेत् ॥ ॥ २६ ॥ गवां वेश्मनि दीपास्तु दातव्या राम रात्रिकाः ॥ २७ ॥ गवां हि रोगोपशमाय शस्तं गतेऽर्धमासे लवणं सदैव ॥ आनाहशूलारुचिविनाशनं तदजाविकस्यापि तथा प्रशस्तम् ॥२८॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं० रामं प्रति पुष्करोपाख्याने गोचिकित्सितं नाम त्रिच

त्वारिंशत्तमोऽध्यायः ॥ ४३ ॥ पुष्कर उवाच ॥ अतः परं प्रवक्ष्यामि शान्तिकर्म गवां तव ॥ नित्यं नैमित्तिकं काम्यं तथा पुष्टिविवर्धनम् ॥ १॥
पञ्चमीषु च शुक्लासु श्रियः पूजा विधीयते ॥ गवां पुरीषे धर्मज्ञ धूपदीपान्नसम्पदा ॥ २ ॥ वन्यैः सुकुसुमैर्भक्त्या ब्राह्मणानां च पूजनम् ॥
तत्रैवाहनि कर्तव्यं वासुदेवस्य पूजनम् ॥ ३ ॥ स हि सर्वगतो देवः क्षीरोदधिनिकेतनः ॥ त्रैलोक्याधारभूतानां विशेषेण तथा गवाम् ॥ ४ ॥
आश्वयुक्शुक्लपक्षस्य पञ्चदश्यां भृगूत्तम ॥ वृत्रान्तकस्य कर्तव्यस्तदा यागस्तु गोमता ॥ ५ ॥ गन्धधूपनमस्कारपुष्पदीपान्नसम्पदा ॥
इह प्रजायाः साम्नायः पृषदश्वा तथैव च ॥ ६ ॥ घृतप्रतीकश्च तथा रौद्रीभिश्च भृगूत्तम ॥ नित्याभिश्च तथा वह्निं घृतेन जुहुयाद्बुधः ॥ ७ ॥
अरूरस्थेति च मन्त्रेण लवणं चाभिमन्त्रयेत् ॥ दध्ना संप्राशनं कार्यं दधिक्राव्णेत्यनन्तरम् ॥ ८ ॥ यजमानेन देया च धेनुः स्याच्छतधेनुना ॥
तदूनवित्तो दद्याच्च होत्रे शक्त्यैव दक्षिणाम्॥९॥गावः स्वलंकृताः पश्चाद्गन्धमाल्यफलादिभिः ॥ स्वाशिता मुक्तवत्साश्च कुर्युर्वह्निं प्रदक्षिणम् ॥ १०॥
क्ष्वेडाकिलकिलाशब्दैः शङ्खवाद्यरवैस्तथा ॥ वृषाणां योजयेद्युद्धं गोपालानां तथैव च ॥ ११ ॥ द्वितीयेऽहनि धेनूनां वृषाणां सह वत्सकैः ॥
लवणं तत्प्रदातव्यं ब्राह्मणेनाभिमन्त्रितम्॥१२॥ भोजनं गोरसप्रायं ब्राह्मणांश्चात्र भोजयेत् ॥ स्वस्ति वाच्यं ततः पश्चाद्दत्तदायान्विसर्जयेत् ॥१३॥
नित्यमेतत्तु वो दिष्टं शान्तिकर्म शुभं गवाम् ॥ अतः परं प्रवक्ष्यामि कर्म नैमित्तिकं तव ॥ १४ ॥ धेनूनां मारके प्राप्ते तथा रोगाद्युपद्रवे ॥
क्षीरक्षये तथान्यस्मिन्प्रकृतेस्तु विपर्यये ॥ १५ ॥ त्रिरात्रोपोषितो विद्वानेकरात्रोषितोऽथ वा॥ गवां मध्ये शुभे देशे स्थण्डिलं परिकल्पयेत्॥१६॥
अष्टपत्रं लिखेत्पद्मं कर्णिकाकेसरान्वितम् ॥ पूजयेत्कर्णिकामध्ये वासुदेवं श्रिया सह ॥ १७ ॥ कृसरैः पूजनं कार्यं देवतानां यथाक्रमम् ॥
यासां तासां प्रवक्ष्यामि तव नामानि भार्गव ॥ १८ ॥ सुभद्रां नाम दिग्धेनुं पूर्वभागे समर्चयेत् ॥ पूजनीयस्ततो ब्रह्मा सुरभिस्तदनन्तरम् ॥
॥ १९ ॥ ततः सूर्यस्ततो धेनुर्बहुरूपा द्विजोत्तम ॥ ततस्तु पृथिवीं देवीं ततोऽनन्तं प्रपूजयेत् ॥ २० ॥ ततश्च विश्वरूपाख्यं दिग्धेनुं तदनन्तरम् ॥
ततः सिद्धिं ततो ऋद्धिं ततः शान्तिं समर्चयेत् ॥ २१ ॥ रोहिणी नाम दिग्धेनुस्ततः पूज्या द्विजोत्तम ॥ ततश्चन्द्रमसं देवं महादेववृषं ततः
॥ २२ ॥ महादेवं ततो देवं पूजयेत्तदनन्तरम् ॥ इत्येता देवताः प्रोक्ताः कृसरे तव षोडश ॥ २३ ॥ पत्रेषु पूजनीयाश्च दिक्पालाश्च यथादिशम् ॥
गन्धमाल्यनमस्कारधूपदीपान्नसम्पदा ॥ २४ ॥ प्रत्येकां पूजयेद्राम देवतां प्रयतो द्विजः ॥ पूर्णकुम्भानि सर्वाणि प्रत्येकं विनिवेदयेत् ॥ २५ ॥
सत्त्यास्थगितवक्त्राणि वर्धमानैस्सतण्डुलैः ॥ सहिरण्यैर्यथाशक्ति ततो होमं समारभेत् ॥ २६ ॥ वेदिं कृत्वा यथाशास्त्रं समिध्य च हुताशनम् ॥

एकैकं दैवतं राम समुद्दिश्य यथाविधि ॥ २७ ॥ चतुर्थ्यन्तेन धर्मज्ञ नाम्ना तु प्रणवादिना ॥ होमद्रव्यैस्तथैकैकं शतसंख्यं तु होमयेत् ॥ २८ ॥
समिधः क्षीरवृक्षस्य अक्षतानि तिलाँस्तथा ॥ सिद्धार्थकान्यथाज्यं च प्रत्येकं जुहुयात्क्रमात् ॥ २९ ॥ ततो रक्षोहणैर्मन्त्रैर्जुहुयाद्गौरसर्षपान् ॥
ततः समापयेद्विद्वानग्निकर्म यथाविधि ॥ ३० ॥ सुवर्णं च तथा कांस्यं धेनुं वस्त्रयुगं तथा ॥ कर्तुर्देयमुपद्रष्टुर्वस्त्रयुग्मं गुरोस्तथा ॥ ३१ ॥ भोजनं
गोरसप्रायं ब्राह्मणांश्चात्र भोजयेत् ॥ स्वस्ति वाच्यं ततः पश्चाद्दत्तदाया द्विजोत्तमाः ॥ ३२ ॥ रक्षोहणैस्तथा मन्त्रैः कुर्युरभ्युक्षणं गवाम् ॥ गवां
च पूजा कर्तव्या गन्धमाल्यानुलेपनैः ॥ ३३ ॥ मोक्तव्याश्च तदा वत्सा यथाकामं द्विजोत्तम ॥ शान्तिकर्म गवामेतत्सर्वोत्पातप्रशान्तये ॥ ३४ ॥
कर्तव्यं भृगुशार्दूल परमं कर्म दारुणम् ॥ अतः परं प्रवक्ष्यामि काम्यं कर्म तवानघ ॥ ३५ ॥ कर्ता तूपवसेत्तत्र कारकैश्च तथैव च ॥ पूर्वभाद्र
पदायोगमाहिर्बुध्न्यगते तथा ॥ ३६ ॥ स्नानं निशाकरे कुर्याद्द्वितीयेऽहनि शास्त्रवित् ॥ उदुम्बरस्य पत्राणि पञ्चगव्यं कुशोदकम् ॥ ३७ ॥
रोचनां च समंगां च क्षिपेत्कुम्भद्वये ततः ॥ कुम्भद्वयं बुधः कुर्याद्गन्धमाल्योज्ज्वलं दृढम् ॥ ३८ ॥ अकालमूलं संस्थाप्य कर्ता तेन तदा भवेत् ॥
स्नात्वा गोवालचीराणि परिधाय समाहितः ॥ ३९ ॥ पूजयेच्चाप्यहिर्बुध्न्यमादित्यं च तथैव च ॥ वरुणं च शशाङ्कं च गन्धमाल्यान्नसम्पदा ॥
॥ ४० ॥ धूपदीपनमस्कारैस्तथैव बलिकर्मणा ॥ अक्षतानां च पात्राणि ततो राम चतुर्दश ॥ ४१ ॥ अहिर्बुध्न्याय रुद्राय सफलांश्च निवेदयेत्॥
खट्वांगेन तु दातव्यं तथा धूपं द्विजोत्तम ॥ ४२ ॥ ततस्तु पूजा कर्तव्या देवदेवस्य चक्रिणः ॥ ॐकारपूर्वमाज्यं च सर्वासां जुहुयात्ततः ॥ ४३ ॥
देवतानां यथोक्तानामेकैकस्य शतंशतम् ॥ गोवालशफशृङ्गैश्च त्रिवृतं कारयेन्मणिम् ॥ ४४ ॥ धारणं तस्य कर्तव्यं कण्ठे मूर्ध्न्यथवा भुजे ॥ कर्त्रे
चैवोपद्रष्ट्रे च शक्त्या देया च दक्षिणा ॥ ४५ ॥ ब्राह्मणानां च सर्वेषां यथावदनुपूर्वशः ॥ अलंघयन्भद्रपदामथान्त्यां करोति यः स्नानमिदं
सदैव ॥ भवन्ति तस्यायुतशश्च गावः परामवाप्नोति तथैव वृद्धिम् ॥ ४६ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० व० सं० रामं प्रति पुष्करो
पाख्याने गवां शान्तिकर्म नाम चतुश्चत्वारिंशत्तमोऽध्यायः ॥ ४४ ॥ पुष्कर उवाच ॥ राज्ञां तुरङ्गमायत्तो विजयो भृगुनन्दन ॥ तस्मात्सर्व
प्रयत्नेन तुरङ्गाणां समर्जनम् ॥ १ ॥ राज्ञा यत्नवता भाव्यं पालने च विशेषतः ॥ तावन्तस्तुरगा धार्या यावतां पोषणं सुखम् ॥ २ ॥ कर्तुं
शक्यं न धार्यास्ते दुःखिताः क्षुधितास्तथा ॥ दुःखितास्ते श्रियं लोके विनिघ्नन्ति जयं तथा ॥ ३ ॥ धारणीयाः सुविहिता विधिना यवसा
दिताः ॥ विधृतास्ते तथा कुर्युर्लोकद्वयजयं तथा ॥४॥ मङ्गल्यास्ते पवित्रास्ते रजस्तेषां तथैव च ॥ कैवल्यस्यैव ते भक्ता देवस्य परमेष्ठिनः ॥५॥

अन्ति मध्ये तथा तेन नानुज्ञाता दिवौकसाम् ॥ ततोऽश्वमेधतुरगस्तस्यैवैकस्य हूयते ॥ ६ ॥ सर्वरत्नाधिको जातस्तुरगोऽमृतमन्थनात् ॥
उच्चैःश्रवास्तेन हयः सर्वरत्नोत्तमः स्मृतः ॥ ७ ॥ सपक्षा देववाह्यास्ते मनुष्याणामपक्षकाः ॥ पद्मना शालिहोत्रेण वाहनार्थं पुरा कृताः ॥ ८ ॥
नीराजयन्ति ते देशान्हेषितैर्बलशालिनः ॥ गन्धर्वास्ते विनिर्दिष्टाः श्रियः पुत्रा जितश्रमाः ॥ ९ ॥ प्रधानमंगं सैन्यस्य शोभा च परमा हयाः ॥
सुदूरगमने युद्धे यानश्रेष्ठास्तुरङ्गमाः ॥ १० ॥ वल्गन्तमुच्चैस्तुरगं चामरापीडधारिणम् ॥ आरुह्य या भवेत्तुष्टिर्नसा राम त्रिविष्टपे ॥ ११ ॥
सन्नद्धपुरुषारूढैः सुसन्नद्धैस्तुरङ्गमैः ॥ दृष्टैरेवारिसैन्यस्य पतन्ति हृदयान्यलम् ॥ १२ ॥ तुरङ्गपादोद्धतधूलिदण्डं यस्यातपत्रानुकृतिं करोति ॥
नभः समग्रा वसुधा तु तस्य शैलावतंसा भवतीह वश्या ॥ १३ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० व० सं० रामं प्रति पुष्करोपाख्याने
अश्वप्रशंसा नाम पञ्चचत्वारिंशत्तमोऽध्यायः ॥ ४५ ॥ ॥ पुष्कर उवाच ॥ ॥ अतः परं प्रवक्ष्यामि शृणु तेषां चिकित्सितम् ॥ वृषो निम्ब
बृहत्यौ च गुडूची च समांसिका ॥ १ ॥ शिङ्घाणकहरा पिण्डी स्वेदस्य शिरसस्तथा ॥ यावशूकं समदनं पिप्पली विश्वभेषजम् ॥ २ ॥ सर्षपा
गृहधूमश्च निर्गुण्डी सुरसा वचा ॥ निम्बपत्रयुता पायौ वर्तिः शूलविनाशिनी ॥ ३ ॥ हिङ्गु पुष्करमूलं च नागरं साम्लवेतसम् ॥ पिप्प
लीसैन्धवयुतं शूलघ्नं तूष्णवारिणा ॥ ४ ॥ नागरातिविषौ मुस्ता सानन्ता बिल्वमालका ॥ क्वाथो मासं पिबेद्वाजी सर्वाती
सारनाशनम् ॥ ५ ॥ प्रियंगुशारिवाभ्यां च युक्तमाजं शृतं पयः ॥ पर्याप्तशर्करं पीत्वा श्रमाद्वाज्यवमुच्यते ॥ ६ ॥
द्रोणिकायां तु दातव्या तैलवस्तिस्तुरङ्गमे ॥ कोष्ठजाश्च शिरा वेध्यास्तेन तस्य सुखं भवेत् ॥ ७ ॥ दाडिमं त्रिफलां व्योषं गुडं च सम
भागिकम् ॥ पिण्डमेतत्प्रदातव्यमश्वानां कासनाशनम् ॥ ८ ॥ प्रियङ्गुरोध्रमधुभिः पिबन्ति स्म रसं हयाः ॥ क्षीरं वामं च कालोडयं कश्मला
द्विप्रमुच्यते ॥ ९ ॥ प्रस्कन्नेषु च सर्वेषु श्रेय आदौ विशोषणम् ॥ अभ्यङ्गोद्वर्तनस्नेहनस्यवर्तिक्रमस्ततः ॥ १० ॥ प्रस्कन्ने प्रशमं याति यदि
नानेन कर्मणा ॥ उरस्युपान्तपार्श्वे च ततो विस्रावयेच्छिराम् ॥ ११ ॥ ज्वलितानां तुरङ्गाणामयमेव क्रियाक्रमः ॥ नस्यमेकं विना राम सर्वमेत
त्प्रशस्यते ॥ १२ ॥ रोध्रकरञ्जयोर्मूलं मातुलुङ्गाग्निनागराः ॥ कुष्ठहिङ्गुवचारास्नालेपोऽयं शोफनाशनः ॥ १३ ॥ समासेन शिरां विध्यादेया
वापि जलौकसः ॥ त्र्यहेत्र्यहे वा धर्मज्ञ नस्यकर्म समाचरेत् ॥ १४ ॥ मञ्जिष्ठा मधुकं द्राक्षाबृहत्यौ रक्तचन्दनम् ॥ त्रपुसीबीजमूलानि शृङ्गा
टककशेरुकम् ॥ १५ ॥ अजापयःशृतमिदं सुशीतं शर्करान्वितम् ॥ पीत्वा निरशनो वाजी रक्तमेहात्प्रमुच्यते ॥ १६ ॥ मन्याहनुनिगा

लस्थः शिरःशोफो गलग्रहः ॥ अभ्यङ्गः कटुतैलेन तत्र तेष्वेव शस्यते ॥ १७ ॥ यवैः स्निग्धकुलत्थैश्च ततः स्वेदं प्रयोजयेत् ॥ मृदूकृते ततः शोफे नस्यकर्म समाचरेत् ॥१८॥ वचा.......सैन्धवं स्वरसो रसः ॥ कृष्णाहिङ्गुयुतैरेभिः कृत्वा नस्यं न सीदति ॥१९॥ निशा ज्योतिष्मती पाठा कृष्णा कुष्ठा वचा मधु ॥ जिह्वास्तम्भे च लेपोऽयं गुडमूत्रयुतो हितः ॥ २० ॥ तिलैर्युक्ता रजन्या च निम्बपत्रैश्च योजिता ॥ क्षौद्रेण शोधनी पिण्डी सर्पिषा व्रणरोपिणी ॥ २१ ॥ अभिघातेन खञ्जन्ति येनाश्वास्तीव्रवेदनाः ॥ परिषेकक्रिया तेषां तैलेनाशु रुजापहा ॥२२॥ दोषकोपाभिघाताभ्यां तिलजे जृम्भते सदा ॥ शान्तिर्मध्वाज्यबन्धाभ्यां पक्कम्भिन्ने व्रणे क्रमः ॥ २३ ॥ अश्वत्थोदुम्बरप्लक्षमधूकवटकल्ककैः॥ प्रभूतसलिलः क्वाथः सुखोष्णो व्रणशोधनः ॥ २४ ॥ शताह्वा नागरं रास्ना मञ्जिष्ठाकुष्ठसैन्धवैः ॥ देवदारुवचायुग्मरजनीरक्तचन्दनैः ॥ २५ ॥ तैलं सिद्धं कषायेण गुडूच्या पयसा सह ॥ प्रक्षीणे वस्तिनस्ये च योज्यं सर्वत्र लंघने ॥ २६ ॥ रक्तस्रावो जलौकाभिर्नेत्रान्ते नेत्ररोगिणः ॥ खदिरोदुम्बराश्वत्थकषायेण च धावनम् ॥ २७ ॥ धात्रीदुरालभातिक्ताप्रियङ्गुकुङ्कुमैः समैः ॥ गुडूच्या कृतकः कल्को हितस्तृष्णावलम्बिते ॥ ॥ २८ ॥ उपान्ते च शिरास्रावे मुष्कशोफे तथैव च ॥ क्षिप्रकारिणि दोषे च सद्यो वेधनमिष्यते ॥ २९ ॥ गोशकृत्सर्जिकाकुष्ठरजनीतिलसर्षपैः ॥ गवां मूत्रेण पिष्टैश्च मर्दनं कण्डुनाशनम् ॥ ३० ॥ सितामधुयुतः क्वाथो वाशिकायाः सशर्करः ॥ रक्तपित्तहरः पानादश्वकर्णात्तथैव च ॥ ३१ ॥ आमे परिणते पक्के पक्वमांसे जरां गते ॥ पक्वमांसयुतं नेष्टं सर्वं जीर्णं प्रशस्यते ॥ ३२ ॥ सप्तमेसप्तमे देयमश्वानां लवणं दिने ॥ तथा भुक्तवतां देया परिपाने तु वारुणी ॥ ३३ ॥ जीवनीयैः सुमधुरैर्मृद्वीकाशर्करायुतैः ॥ सपिप्पलीकैः शरदि प्रतिमानं सपद्मकम् ॥ ३४ ॥ विडङ्गपिप्पलीधान्याशताह्वारोध्रसैन्धवैः ॥ सावित्रकैस्तुरङ्गाणां प्रतिपानं हिमागमे ॥ ३५ ॥ रोध्रं प्रियङ्गुका रास्ना पिप्पलीविश्वभेषजैः ॥ सक्षौद्रैः प्रतिपानं स्याद्वसन्ते कफनाशनम् ॥ ३६ ॥ प्रियङ्गुपिप्पलीरौद्रयष्ट्याह्वैः समहौषधैः ॥ निदाघे सगुडा देया मदिरा प्रतिपानके ॥ ३७ ॥ भद्रकाष्ठा सलवणं पिप्पल्या विश्वभेषजम् ॥ भवेत्तैलयुतैरेभिः प्रतिपानं घनागमे ॥ ३८ ॥ निदाघावृतपित्तानां क्षरन्मन्दोष्णशोणिताः ॥ प्रावृड्भिन्नपुरीषाश्च पिबेयुर्वाजिनो घृतम् ॥ ३९ ॥ पिबेयुर्वाजिनस्तैलं कफवाय्वधिकास्तु ये ॥ स्नेहव्यापद्भवेद्येषां तेषां कार्यं विरूक्षणम् ॥ ४० ॥ त्र्यहं यवागू रूक्षा स्यात्सुरा च लवणान्विता ॥ भोजने तक्रसंयुक्तं ह्येष वै रूक्षणे विधिः ॥ ४१ ॥ प्रायोगिकस्तथा देयो वस्तिस्तस्य निरत्ययः ॥ ये पिबन्ति हयाः स्नेहं तेषां वस्तिं न दाप

येत् ॥ ४२ ॥ शरन्निदाघयोः सर्पिस्तैलं शीतवसन्तयोः ॥ वर्षासु शिशिरे चैव वस्तौ देयमिहेष्यते ॥ ४३ ॥ गुर्वभिष्यन्दिभक्तानि व्यायामः
स्नानमातपम् ॥ पायुर्वस्तं च वाहस्य स्नेहपीडस्य वर्जितम् ॥ ४४ ॥ स्नानं पानं सकृद्दृष्टमश्वानां सलिलागमे ॥ अत्यर्थदुर्दिने काले स्नानमेकं
प्रशस्यते ॥ ४५ ॥ युक्तशीतातपे काले द्विः पानं लवणं सकृत् ॥ ग्रीष्मे त्रिः स्नानपानं स्याच्चिरं तस्यावगाहनम् ॥ ४६ ॥ निस्तुषाणां प्रदा
तव्यं यवानां चतुराढकम् ॥ ववर्णव्रीहिमौदालाकलनां वापि दापयेत् ॥ ४७ ॥ अहोरात्रेण चान्द्रस्य यवसस्य तुला दश ॥ अष्टौ शुष्कस्य
दातव्याश्चतस्रोऽथ बुसस्य वा ॥ ४८ ॥ दूर्वा पित्तं बुसः कार्श्यं तद्बुसः श्लेष्मसञ्चयम् ॥ नाशयत्यर्जुनः श्वासं तथा माषो बलक्षयम् ॥ ४९ ॥
वातिकाः पैत्तिकाश्चैव श्लेष्मजाः सान्निपातिकाः ॥ न रोगाः पीडयिष्यन्ति दूर्वाहारं तुरङ्गमम् ॥ ५० ॥ द्वौ रज्जुबन्धौ दुष्टानां पक्षयोरुभयोरपि ॥
पश्चाद्बन्धश्च कर्तव्यो हरकीलव्यपाश्रयः ॥ ५१ ॥ केशानुरूपमास्यस्य केशपुच्छप्रकल्पनम् ॥ छेदः खुरप्रवृद्धौ च वर्जयेत्तु कनीनिकाम् ॥ ५२ ॥
यत्नोपन्यस्तयवसः कृतधूपनभूमयः ॥ वसेयुः सम्भृते स्थाने प्रदीपैः सार्वरात्रिकैः ॥ ५३ ॥ शाखामृगोजाः कृकवाकवश्च धार्याश्च शालासु तथैव
धेनुः ॥ कुर्युर्निशीथे पुरुषाः सशस्त्राः संरक्षणं राम तुरङ्गमाणाम् ॥ ५४ ॥ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० सं० रामं प्रति पुष्करो
पाख्याने अश्वचिकित्सा नाम षट्चत्वारिंशत्तमोऽध्यायः ॥ ४६ ॥ ॥ छ ॥ ॥ पुष्कर उवाच ॥ ॥ नित्यं नैमित्तिकं काम्यं शान्तिकर्म
निबोध मे ॥ पञ्चमीषु च सर्वासु श्रीधरं पूजयेद्भृशम् ॥१॥ श्रियश्च पूजनं कार्यं हयराज्ञस्तथैव च ॥ रामोच्चैःश्रवसो नित्यं गन्धमाल्यानुलेपनैः ॥
॥ २ ॥ धूपदीपनमस्कारैस्तथा चैवान्नसम्पदा ॥ शरद्वसन्तयोः कार्यमेकदन्तस्य पूजनम् ॥ ३ ॥ प्रतिपत्पञ्चमी षष्ठी सप्तमी द्वादशी तथा ॥
प्रशस्तास्तिथयो राम सूर्यवारो विशेषतः ॥ ४ ॥ कृत्तिकां रोहिणीं भाग्यं चार्यम्णमश्विनीं तथा ॥ त्वाष्ट्रं सावित्रमादित्यं वायव्यं च भृगूत्तम ॥
॥ ५ ॥ नक्षत्राणि प्रशस्तानि शुक्लपक्षस्तथैव च ॥ उद्यानेषु विचित्रेषु नदीनां पुलिनेषु च ॥ ६ ॥ देवतायतनं राम पूजनं तस्य कारयेत् ॥
अर्घधूपनमस्कारदीपपुष्पान्नसम्पदा ॥ ७ ॥ कुल्माषोल्लोपिकाभक्ष्यमद्यमांससुरासवैः ॥ ओदनैः परमान्नेन फलैः कालोद्भवैः शुभैः ॥ ८ ॥ नृत्य
गीतेन वाद्येन शङ्खशब्दैस्तथैव च ॥ सावित्रैश्च तथैवाज्यं जुहुयाज्जातवेदसि ॥ ९ ॥ ॐकारपूर्वं च तथा रेवन्ताय पुनःपुनः ॥ द्विजातिपूजनं
कार्यं माल्यमोदकचन्दनैः ॥ १० ॥ दक्षिणाभिश्च धर्मज्ञ यथावदनुपूर्वशः ॥ नारीषु वर्जयेत्सर्वं रेवन्तस्य निवेदितम् ॥ ११ ॥
एवं सम्पूजितो दद्यात्तुरङ्गमशतान्यपि ॥ बलं तेजस्तथारोग्यं तुरङ्गाणां च भार्गव ॥ १२॥ अश्वयुक्शुक्लपक्षस्य पञ्चदश्यां नरोत्तम ॥ तुरङ्गमाणां

कर्तव्यं शान्तिकं तन्निबोध मे॥१३॥ दिगीशानीं विनिष्क्रम्य ग्रामाद्देशे मनोरमे॥ प्रागुदक्प्रवणे राम स्थण्डिलं परिकल्पयेत् ॥१४॥ नासत्यौ वरुणं देवं तथैवाश्वयुजे द्विज ॥ पूजयेत्प्रयतो विद्वान्गन्धमाल्यानुलेपनैः॥१५॥ धूपैर्दीपैर्नमस्कारैस्तथा चान्नेन भूरिणा ॥ समुल्लिख्य ततो वेदिं शाखाभिः परिवारयेत् ॥१६॥ समन्ततस्तथार्द्राभिर्वस्त्रैश्चाप्यहतैस्तथा ॥ घटान्सर्वरसैः पूर्णान्दिक्षु दद्याद्यथाविधि ॥१७॥ विदिक्षु च तथा दद्याद्ध्वजच्छत्राणि बुद्धिमान् ॥ ततः समुपधायाग्निं जयप्रभृतिभिः पुनः ॥ १८॥ हुत्वोक्तदेवतालिङ्गैर्मन्त्रैश्च जुहुयाद्घृतम् ॥ ततः सम्पूजनीयास्तु गन्धमाल्यैस्तुरङ्गमाः ॥१९॥ सन्नद्धपुरुषारूढाः सुसन्नद्धास्तुरङ्गमाः ॥ सायुधैः पुरुषैः सार्धं वह्निं कुर्युः प्रदक्षिणम् ॥२०॥ त्रिः परिक्रामतो वह्निं क्ष्वेडोत्कृष्टनिनादितैः ॥ शङ्खवाद्यरवोन्मिश्रैर्नेतव्याः स्वगृहं ततः ॥ २१ ॥ रसानि तानि वासांसि गौः कांस्यं कनकं तथा ॥ दक्षिणार्थे प्रदातव्यं कर्तुर्द्विजवरोत्तम ॥ २२ ॥ कर्मणानेन भवति प्रभूतं राम वाहनम् ॥ हृष्टपुष्टं च धर्मज्ञ गदामयविवर्जितम् ॥ २३ ॥ नित्यमेतत्तवोद्दिष्टं शृणु नैमित्तिकं तथा ॥ अश्वानां मारके प्राप्ते व्याधौ वाप्यतिदारुणे ॥ २४ ॥ प्रकृतेश्च विपर्यासे तथा भृगुकुलोद्भव ॥ हयचारे शुभे देशे स्थण्डिलं परिकल्पयेत् ॥ २५ ॥ विन्यसेत्कमलं तत्र तन्मध्ये पूजयेद्धरिम् ॥ श्रियं च देवीं तत्रैव केसरेषु च देवताः ॥ २६ ॥ ब्रह्माणं शङ्करं सोममादित्यं च तथाश्विनौ ॥ रेवन्तमुच्चैःश्रवसं दिक्पालाँश्च दलेष्वपि ॥ २७ ॥ सर्वेषां पूजनं कार्यं गन्धधूपान्नसम्पदा ॥ दीपमाल्यनमस्कारपुष्पैर्मूलैः सगोरसैः॥२८॥ प्रत्येकं पूर्णकुम्भैश्च गन्धमाल्याद्यलङ्कृतैः ॥ तथा पिशितवस्त्रैश्च वर्धमानैः सतण्डुलैः ॥ २९ ॥ तथा प्रतिसरासूत्रैः पताकाभिश्च भार्गव ॥ तस्यैवोत्तरतो वेदिं कल्पयित्वा यथाविधि ॥ ३० ॥ ततः समुपधायाग्निं यथोक्तानां पृथक्पृथक् ॥ ततोऽग्निहवनस्यानु कांस्यं गां काञ्चनं तथा ॥ ३१ ॥ देयं वस्त्रयुगं कर्त्रे कारयित्रे तथैव च ॥ कर्मैतत्सर्वरोगघ्नं सर्वबाधाविनाशनम् ॥ ३२ ॥ उपोषितेन कर्तव्यं ब्राह्मणेन यथाविधि ॥ उपोषितस्तदा तिष्ठेद्यजमानोऽपि भार्गव ॥ ३३ ॥ अतः परं प्रवक्ष्यामि काम्यं कर्म तवानघ ॥ उपोषितौ सदा पौष्णे यजमानपुरोहितौ ॥३४॥ अश्विनर्क्षे सदा स्नानं कुर्युर्यन्मे निबोधत ॥ अकालमूलौ द्वौ कुम्भौ मधूककुसुमोत्कटौ ॥ ३५ ॥ अश्वगन्धायुतौ कृत्वा स्नाप्यस्ताभ्यां तदा भवेत् ॥ उत्तमं पूजयेद्विद्वान्नासत्यौ शशिनं तथा ॥ ३६ ॥ अश्विनौ वरुणं चैव शुक्लवासास्तथा हरिम् ॥ गन्धमाल्यनमस्कारधूपदीपान्नसम्पदा ॥ ३७ ॥ ततोऽश्वमिथुनं कार्यं सर्वौषधियुतं मृदा ॥ प्रणतेन ततो विद्वान्नासत्याभ्यां निवेदयेत् ॥ ३८ ॥ धूपमश्वशफं दद्याद्देवतानां तथैव च ॥ यथोक्तानां द्विजश्रेष्ठ जुहुयाच्च पृथक्पृथक् ॥ ३९ ॥ चतुर्थ्यन्तेन नाम्ना तु प्रणवाद्येन भार्गव ॥ स्वाहान्तेनाथ शतशो मन्त्रपूतं घृतं

येत् ॥ ४२ ॥ शरन्निदाघयोः सर्पिस्तैलं शीतवसन्तयोः ॥ वर्षासु शिशिरे चैव वस्तौ देयमिहेष्यते ॥ ४३ ॥ गुर्वभिष्यन्दिभक्तानि व्यायामः स्नानमातपम् ॥ पायुर्वस्तं च वाहस्य स्नेहपीडस्य वर्जितम् ॥ ४४ ॥ स्नानं पानं सकृद्द्वधमश्वानां सलिलागमे ॥ अत्यर्थदुर्दिने काले स्नानमेकं प्रशस्यते ॥ ४५ ॥ युक्तशीतातपे काले द्विः पानं लवणं सकृत् ॥ ग्रीष्मे त्रिः स्नानपानं स्याच्चिरं तस्यावगाहनम् ॥ ४६ ॥ निस्तुषाणां प्रदातव्यं यवानां चतुराढकम् ॥ ववर्णव्रीहिमौदालाकलनां वापि दापयेत् ॥ ४७ ॥ अहोरात्रेण चान्द्रस्य यवसस्य तुला दश ॥ अष्टौ शुष्कस्य दातव्याश्चतस्रोऽथ बुसस्य वा ॥ ४८ ॥ दूर्वा पित्तं बुसः कार्श्यं तद्बुसः श्लेष्मसञ्चयम् ॥ नाशयत्यर्जुनः श्वासं तथा माषो बलक्षयम् ॥ ४९ ॥ वातिकाः पैत्तिकाश्चैव श्लेष्मजाः सान्निपातिकाः ॥ न रोगाः पीडयिष्यन्ति दूर्वाहारं तुरङ्गमम् ॥ ५०॥ द्वौ रज्जुबन्धौ दुष्टानां पक्षयोरुभयोरपि ॥ पश्चाद्बन्धश्च कर्तव्यो हरकीलव्यपाश्रयः ॥ ५१ ॥ केशानुरूपमास्यस्य केशपुच्छप्रकल्पनम् ॥ छेदः खुरप्रवृद्धौ च वर्जयेत्तु कनीनिकाम् ॥ ५२ ॥ यत्नोपन्यस्तयवसः कृतधूपनभूमयः ॥ वसेयुः सम्भृते स्थाने प्रदीपैः सार्वरात्रिकैः ॥ ५३ ॥ शाखामृगोजाः कृकवाकवश्च धार्याश्च शालासु तथैव धेनुः ॥ कुर्युर्निशीथे पुरुषाः सशस्त्राः संरक्षणं राम तुरङ्गमाणाम् ॥ ५४ ॥ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० सं० रामं प्रति पुष्करोपाख्याने अश्वचिकित्सा नाम षट्चत्वारिंशत्तमोऽध्यायः ॥ ४६ ॥ ॥ छ ॥ ॥ पुष्कर उवाच ॥ ॥ नित्यं नैमित्तिकं काम्यं शान्तिकर्म निबोध मे ॥ पञ्चमीषु च सर्वासु श्रीधरं पूजयेद्भृशम् ॥१॥ श्रियश्च पूजनं कार्यं हयराज्ञस्तथैव च ॥ रामोच्चैःश्रवसो नित्यं गन्धमाल्यानुलेपनैः ॥ ॥ २ ॥ धूपदीपनमस्कारैस्तथा चैवान्नसम्पदा ॥ शरद्वसन्तयोः कार्यमेकदन्तस्य पूजनम् ॥ ३ ॥ प्रतिपत्पञ्चमी षष्ठी सप्तमी द्वादशी तथा ॥ प्रशस्तास्तिथयो राम सूर्यवारो विशेषतः ॥ ४ ॥ कृत्तिकां रोहिणीं भाग्यं चार्यम्णमश्विनीं तथा ॥ त्वाष्ट्रं सावित्रमादित्यं वायव्यं च भृगूत्तम ॥ ॥ ५ ॥ नक्षत्राणि प्रशस्तानि शुक्लपक्षस्तथैव च ॥ उद्यानेषु विचित्रेषु नदीनां पुलिनेषु च ॥ ६ ॥ देवतायतनं राम पूजनं तस्य कारयेत् ॥ अर्घधूपनमस्कारदीपपुष्पान्नसम्पदा ॥ ७ ॥ कुल्माषोल्लोपिकाभक्ष्यमद्यमांससुरासवैः ॥ ओदनैः परमान्नेन फलैः कालोद्भवैः शुभैः ॥ ८॥ नृत्यगीतेन वाद्येन शङ्खशब्दैस्तथैव च ॥ सावित्रैश्च तथैवाज्यं जुहुयाज्जातवेदसि ॥ ९ ॥ ॐकारपूर्वं च तथा रेवन्ताय पुनःपुनः ॥ द्विजातिपूजनं कार्यं माल्यमोदकचन्दनैः ॥ १० ॥ दक्षिणाभिश्च धर्मज्ञ यथावदनुपूर्वशः ॥ नारीषु वर्जयेत्सर्वं रेवन्तस्य निवेदितम् ॥ ११ ॥ एवं सम्पूजितो दद्यात्तुरङ्गमशतान्यपि ॥ बलं तेजस्तथारोग्यं तुरङ्गाणां च भार्गव ॥ १२॥ अश्वयुक्शुक्लपक्षस्य पञ्चदश्यां नरोत्तम ॥ तुरङ्गमाणां

कर्तव्यं शान्तिकं तन्निबोध मे॥१३॥ दिगीशानीं विनिष्कृष्य ग्रामादेशे मनोरमे॥ प्रागुदक्प्रवणे राम स्थण्डिलं परिकल्पयेत् ॥१४॥ नासत्यौ वरुणं देवं तथैवाश्वयुजे द्विज ॥ पूजयेत्प्रयतो विद्वान्गन्धमाल्यानुलेपनैः॥१५॥ धूपैर्दीपैर्नमस्कारैस्तथा चान्नेन भूरिणा ॥ समुल्लिख्य ततो वेदिं शाखाभिः परिवारयेत् ॥१६॥ समन्ततस्तथार्द्राभिर्वस्त्रैश्चाप्यहतैस्तथा ॥ घटान्सर्वरसैः पूर्णान्दिक्षु दद्याद्यथाविधि ॥१७॥ विदिक्षु च तथा दद्याद्ध्वजच्छत्राणि बुद्धिमान् ॥ ततः समुपधायाग्निं जयप्रभृतिभिः पुनः ॥ १८॥ हुत्वोक्तदेवतालिङ्गैर्मन्त्रैश्च जुहुयाद्घृतम् ॥ ततः सम्पूजनीयास्तु गन्धमाल्यैस्तुरङ्गमाः ॥१९॥ सन्नद्धपुरुषारूढाः सुसन्नद्धास्तुरङ्गमाः ॥ सायुधैः पुरुषैः सार्धं वह्निं कुर्युः प्रदक्षिणम् ॥२०॥ त्रिः परिक्रामतो वह्निं क्ष्वेडोत्कृष्टनिनादितैः ॥ शङ्खवाद्यरवोन्मिश्रैर्नेतव्याः स्वगृहं ततः ॥ २१ ॥ रसानि तानि वासांसि गौः कांस्यं कनकं तथा ॥ दक्षिणार्थे प्रदातव्यं कर्तुर्द्विजवरोत्तम ॥ २२ ॥ कर्मणानेन भवति प्रभूतं राम वाहनम् ॥ हृष्टपुष्टं च धर्मज्ञ गदामयविवर्जितम् ॥ २३ ॥ नित्यमेतत्तवोद्दिष्टं शृणु नैमित्तिकं तथा ॥ अश्वानां मारके प्राप्ते व्याधौ वाप्यतिदारुणे ॥ २४ ॥ प्रकृतेश्च विपर्यासे तथा भृगुकुलोद्भव ॥ हयचारे शुभे देशे स्थण्डिलं परिकल्पयेत् ॥ २५ ॥ विन्यसेत्कमलं तत्र तन्मध्ये पूजयेद्धरिम् ॥ श्रियं च देवीं तत्रैव केसरेषु च देवताः ॥ २६ ॥ ब्रह्माणं शङ्करं सोममादित्यं च तथाश्विनौ ॥ रेवन्तमुच्चैःश्रवसं दिक्पालाँश्च दलेष्वपि ॥ २७ ॥ सर्वेषां पूजनं कार्यं गन्धधूपान्नसम्पदा ॥ दीपमाल्यनमस्कारपुष्पैर्मूलैः सगोरसैः॥२८॥ प्रत्येकं पूर्णकुम्भैश्च गन्धमाल्याद्यलङ्कृतैः ॥ तथा पिशितवस्त्रैश्च वर्धमानैः सतण्डुलैः ॥ २९ ॥ तथा प्रतिसरासूत्रैः पताकाभिश्च भार्गव ॥ तस्यैवोत्तरतो वेदिं कल्पयित्वा यथाविधि ॥ ३० ॥ ततः समुपधायाग्निं यथोक्तानां पृथक्पृथक् ॥ ततोऽग्निहवनस्यानु कांस्यं गां काञ्चनं तथा ॥ ३१ ॥ देयं वस्त्रयुगं कर्त्रे कारयित्रे तथैव च ॥ कर्मैतत्सर्वरोगघ्नं सर्वबाधाविनाशनम् ॥ ३२ ॥ उपोषितेन कर्तव्यं ब्राह्मणेन यथाविधि ॥ उपोषितस्तदा तिष्ठेद्यजमानोऽपि भार्गव ॥ ३३ ॥ अतः परं प्रवक्ष्यामि काम्यं कर्म तवानघ ॥ उपोषितौ सदा पौष्णे यजमानपुरोहितौ ॥३४॥ अश्विनर्क्षे सदा स्नानं कुर्युर्यन्मे निबोधत ॥ अकालमूलौ द्वौ कुम्भौ मधूककुसुमोत्कटौ ॥ ३५ ॥ अश्वगन्धायुतौ कृत्वा स्नाप्यस्ताभ्यां तदा भवेत् ॥ उत्तमं पूजयेद्विद्वान्नासत्यौ शशिनं तथा ॥ ३६ ॥ अश्विनौ वरुणं चैव शुक्लवासास्तथा हरिम् ॥ गन्धमाल्यनमस्कारधूपदीपान्नसम्पदा ॥ ३७ ॥ ततोऽश्वमिथुनं कार्यं सर्वौषधियुतं मृदा ॥ प्रणतेन ततो विद्वान्नासत्याभ्यां निवेदयेत् ॥ ३८ ॥ धूपमश्वशफं दद्याद्देवतानां तथैव च ॥ यथोक्तानां द्विजश्रेष्ठ जुहुयाच्च पृथक्पृथक् ॥ ३९ ॥ चतुर्थ्यन्तेन नाम्ना तु प्रणवाद्येन भार्गव ॥ स्वाहान्तेनाथ शतशो मन्त्रपूतं घृतं

द्विज ॥ ४० ॥ अश्वलोम तथा धार्यं फलमूले तथैव च ॥ एकत्र त्रिवृतं कृत्वा मणिर्धार्यस्तु पूर्ववत् ॥ ४१॥ अलंघयन्नश्विनातिं सदैव स्नानं च कुर्यात्प्रयता मनुष्यः ॥ अश्वानवाप्नोति सहस्रसंख्यान्कुलोद्भवान्वीर्यबलोपपन्नान् ॥४२॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० सं० रामं प्रति पुष्करोपाख्याने अश्वानां शान्तिकर्मविधानन्नाम सप्तचत्वारिंशत्तमोऽध्यायः॥४७॥ पुष्कर उवाच ॥ कुञ्जराः परमा शोभा शिबिरस्य बलस्य च॥ आयाति कुञ्जरेष्वेव विजयः पृथिवीक्षिताम् ॥ १ ॥ तेषां संमार्जने यत्नं पालने च भृगूत्तम ॥ यथावन्नृपतिः कुर्याद्गन्धर्वाः कुञ्जरा मताः ॥२॥ जयन्ताश्च तथा धार्या यावतां पोषणं सुखम् ॥ कर्तुं शक्यं न धार्यास्ते क्षुधिता दुःखितास्तथा ॥ ३ ॥ दुःखितास्ते नृणां हन्युः कुलानि च भृगूत्तम ॥ तस्मात्तेषां सुखं कार्यं यशःश्रीविजयप्रदम् ॥ ४ ॥ सन्नद्धपुरुषारूढैः सुसन्नद्धैस्तुरङ्गमैः ॥ अनल्पैरपि यद्युक्तं बलं परबलप्रणुत् ॥ ५॥ तदेकस्यापि समरे कुञ्जरस्य सवर्मणः ॥ न शक्यं प्रमुखे स्थातुं वेगादापततो द्विज ॥६॥ अभिन्नानां तु संघानां संहतानां च भेदनम् ॥एकः क्रुद्धो रणे कुर्यात्कुञ्जरः साधु चोदितः ॥७॥ मदक्लिन्नकपोलस्य किञ्चिदञ्चितचक्षुषः॥ बृहदाभोगशुण्डस्य कः शोभां कथितुं क्षमः॥८॥ वेगेन धावमानस्य प्रसारितकरस्य च ॥ कः समर्थः पुरः स्थातुं स्तब्धकर्णस्य दन्तिनः ॥९॥ यस्य फूत्कारमात्रेण तुरङ्गमशतान्यपि॥स्वारूढान्यपि वेगेन विद्रवन्ति दिशो दश॥१०॥तत्सैन्यं कुञ्जरा यत्र स नृपो यस्य कुञ्जराः॥ मूर्तिमान्विजयो राम कुञ्जरा मदगर्विताः ॥ ११ ॥ सपक्षा देववाह्यास्ते मनुजानां त्वपक्षकाः॥ वाहनार्थं कृता राम स्वयमेव तु वेधसा ॥१२॥ दृष्ट्वा पताकाभिरलंकृतं तु नागेन्द्रसैन्यं प्रबलं यथाद्रिम्॥ पतन्ति शीघ्रं हृदयान्यरीणां तस्मात्प्रधानाः सततं गजेन्द्राः १३ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० सं० गजप्रशंसा नामाष्टचत्वारिंशत्तमोऽध्यायः ॥४८॥ पुष्कर उवाच ॥ अतः परं प्रवक्ष्यामि कुञ्जराणां चिकित्सितम् ॥ पाकलेषु तु सर्वेषु कर्तव्यमनुवासरम् ॥ १ ॥ घृततैलपरीषेकः स्थानं वातविवर्जितम् ॥ स्कन्धेषु च तथा कार्या क्रिया पाकलवद्द्विज ॥२॥ गोमूत्रं पाण्डुरोगे तु रजनीभिर्युतं हितम् ॥ आनाहे तैलसिक्तस्य निवातस्थं प्रशस्यते ॥३॥ लवणैः पञ्चभिर्मिश्रा प्रतिपानाय वारुणी ॥ विडङ्गत्रिफलाव्योषसैन्धवैः कवलाः कृताः ॥४॥ मूर्च्छास्वभोजयेन्नागं क्षौद्रतोयं तु पाययेत् ॥ अभ्यङ्गः शिरसः कार्यो नस्यश्चैव प्रशस्यते ॥ ५ ॥ नागानां स्नेहकटुकैः पादरोगानुपक्रमेत् ॥ पञ्चकल्ककषायेण शोधनं च विधीयते ॥ ६ ॥.......मन्दनं कार्यं मृदुस्निग्धं च भोजयेत् ॥ शिखितित्तिरलावानां पिप्पलीमरिचान्वितैः ॥ ७ ॥ रसैः सम्भोजयेन्नागं वेपथुर्यस्य जायते ॥ बालबिल्वं तथा रोध्रं धातुकीं वितुषा सह ॥८॥ अतीसारविनाशाय पिण्डं भुञ्जीत कुञ्जरः॥नस्यं करग्रहे देयं घृतं लवणसंयुतम् ॥९॥ मागधी मरिचाढ्या च यवागुर्मस्तु

साधितः॥ तत्कर्णके च दातव्यं वाराहं च तथा रसम् ॥१०॥ दशमूलकुलत्थाम्लकाकमाचीविपाचितम्॥ तैलमूषणसंयुक्तं गलग्रहगदापहम् ॥११॥
अष्टभिर्लवणैःपिष्टैः प्रसन्नां पाययेद्युताम् ॥ मूत्रसंघेथऽवा बीजं क्वथितं त्रपुसस्य च ॥ १२ ॥ त्वग्दोषेषु पिबेन्निम्बं वृषं वा क्वथितं द्विपः ॥
गवां मूत्रं विडङ्गानि कृमिदोषेषु शस्यते ॥ १३ ॥ शृङ्गबेरकणाद्राक्षाशर्कराभिः शृतं पयः ॥ क्षतक्षयहरं पानात्तथा मांसरसः शुभः ॥ १४ ॥
मुद्गोदनं व्योषयुतं ह्यरुचौ च प्रशस्यते ॥ द्रोणिकाशान्तये यूषं पटोलीनिम्बदुर्गजम् ॥ १५ ॥ त्रिवृद्व्योषाग्निदन्त्यर्कश्यामक्षीरेभपिप्पली ॥
एष गुल्महरः स्नेहः कृतश्चैव तथासवः ॥ १६ ॥ क्षीरवृक्षनदीजम्बुमल्लकीनां त्वचः शुभाः ॥ हृद्रोगशान्तये देया विदार्यश्च रसोदनात् ॥ १७ ॥
भेदनश्रावाणभ्यङ्गस्नेहपानानुवासनैः ॥ सर्वानेव समुत्पन्नान्विद्रवेत्समुपाचरेत् ॥ १८ ॥ यष्टिकं मुद्गयूषेण शारदेषु तथा पिबेत् ॥ बालबिल्वै
स्तथा लेपः कटिरोगेषु शस्यते ॥ १९ ॥ विडंगेन्द्रयवा हिङ्गुसरलं रजनीद्वयम् ॥ पूर्वाह्णे दापयेत्पिण्डं सर्वशूलोपशान्तये ॥ २० ॥ आरेण चलितं
दन्तं कुञ्जरस्य समुद्धरेत् ॥ प्रधाना भोजने तेषां यष्टिकाव्रीहिशालयः ॥ २१ ॥ मध्यमौ यवगोधूमौ शेषाः प्रत्यवराः स्मृताः ॥ विधौ योगे
प्रयत्नेन दग्धिकां तु विवर्जयेत् ॥ २२ ॥ यवसेषु तथैवेक्षुर्नागानां बलवर्धनम् ॥ नागानां यवसं शुष्कं कफवातप्रकोपनम् ॥ २३ ॥ मदक्षीणस्य
नागस्य पयःपानं प्रशस्यते ॥ जीवनीयैस्तथा द्रव्यैः शृतो मांसरसः शुभः ॥ २४ ॥ मदवृद्धिकरान्योगान्वक्ष्याम्यहमतः परम् ॥ रणकाले समा
पन्ने यान्राजा संप्रयोजयेत् ॥ २५ ॥ वायसः कुरवश्चोभौ काकोली नाकुली हरिः ॥ भवेत्क्षौद्रेण संयुक्तः पिण्डः सद्यः प्रभेदनः॥ २६ ॥ जाति
भंगं समूलश्च कपोतत्वक्तथेङ्गुदी ॥ अश्वसारकभङ्गश्च पिण्डोऽयमपरस्तथा ॥ २७ ॥ अजशृङ्गचर्कमूलाभ्यां सकुञ्जमधुसंयुतः ॥ मधुमिश्रोप्ययं
पिण्डः पुष्पमूलफलान्वितः ॥ २८ ॥ युद्धकालेऽत्र नागस्य कर्तव्या मदवर्धिनी ॥ कटुमत्स्या विडङ्गानि क्षारः कोशातकी पयः ॥ २९ ॥
हरिद्रा चेति धूपोऽयं कुञ्जरस्य जयावहः ॥ पिप्पलयः श्वेतलशुनं हरितालं मनःशिला ॥ ३० ॥ अश्वमूत्रोषितो धूपः स्यात्सूर्यपरिशोषितः ॥
मार्द्वीकं कटुमत्स्याश्च तथा कटुकरोहिणी॥३१॥ आभयं च त्रयः शैलं धूपोऽयमपरः शुभः ॥ अग्निकः सर्ववर्णश्च पीलुरित्येष दीपनः॥३२॥प्रदेयः
कवलो युद्धे मनुष्यास्थिप्रधूपितः ॥ जीर्णे विधानो देयः स्यात्पिण्डश्च तृट्क्षयङ्करः ॥३३॥ पिप्पली तण्डुलस्तैलं मार्द्वीकं माक्षिकं तथा ॥ नेत्रयोः
परिषेकोऽयं दीपनीयः प्रशस्यते ॥ ३४ ॥ पुरीषं वृश्चिकायाश्च तथा पारावतस्य च ॥ क्षीरवृक्षकरीराश्च प्रपन्नाविष्टमञ्जनम् ॥ ३५ ॥ अनेनाञ्जित
नेत्रस्तु करोति कदनं रणे ॥ उत्पलानि च नीलानि मुस्तं तगरमेव च ॥ ३६ ॥ तण्डुलोदकपिष्टानि नेत्रनिर्वापणं परम् ॥ प्रवृद्धये नदीजानां

पञ्चमेऽब्दे वनौकसाम् ॥ ३७ ॥ दन्तमूलपरीणाहाद्द्विगुणात्कल्पयेत्परम् ॥ वनेवृद्धैर्न्नवे च्छेदः कर्तव्यश्च तदा भवेत् ॥ ३८॥ शय्यास्थानं भवेच्चास्य करीषैः पांसुभिस्तथा ॥ तैलावसेकः शीते स्यान्मासिमासि तथैव च ॥ ३९ ॥ शरन्निदाघयोः सेकः सर्पिषा च तथेष्यते ॥ राज्यद्विपादभ्यधिकां तु शोभां नागस्य चान्यस्य न जातु कुर्यात् ॥ शोभाविधानं त्वधिकं सदैव राज्यद्विपस्यैव नृपस्तु कुर्यात् ॥ ४० ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं० रामं प्रति पुष्करोपाख्याने हस्तिचिकित्सा नामैकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥ पुष्कर उवाच ॥ अतः परं तु नागानां शान्तिकर्म निबोध मे ॥ नित्यं नैमित्तिकं काम्यं यथावदनुपूर्वशः ॥ १ ॥ पञ्चमीषु च शुक्लासु वासुदेवस्य पूजनम् ॥ श्रियश्च राम कर्तव्यं नागस्यैरावणस्य च ॥ २ ॥ गन्धमाल्यनमस्कारधूपदीपान्नसम्पदा ॥ तथा च कृष्णपक्षान्ते मासिमासि द्विजोत्तम ॥ ३ ॥ भूतेज्या सततं कार्या तिलमांसपयोगुडैः ॥ मत्स्यैः पक्कामिषैर्भक्ष्यैः सुमनोभिश्च भार्गव ॥ ४ ॥ चतुष्पथेषु रथ्यासु तथा शून्यगृहेषु च ॥ एक वृक्षश्मशानेषु गोपुराट्टालकेषु च ॥ ५ ॥ सङ्गमेषु नदीनां च पर्वतानां गुहासु च ॥ त्रिकण्टकेषु मुख्येषु शून्यदेवगृहेषु च ॥ ६ ॥ शुक्लपक्षावसानेषु देवतेज्या विधीयते ॥ गजस्थानोत्तरे भागे प्रागुदक्प्रवणे शुभे ॥ ७ ॥ ब्रह्माणं शङ्करं विष्णुं शक्रं वैश्रवणं यमम् ॥ चन्द्रार्कौ वरुणं वायुं त्वग्निं पृथ्वीं तथा खगम् ॥ ८ ॥ शेषं च नागराजं तु भूधरांश्चैव कुञ्जरान् ॥ विरूपाक्षं महापद्मं भद्रं सुमनसं तथा ॥ ९ ॥ अष्टौ च दिग्गजा ये वै ते स्मृता देवयोनयः ॥ कुमदैरावणौ पद्मः पुष्पदन्तोऽथ वामनः ॥ १० ॥ सुप्रतीकाञ्जनौ नील एतेऽष्टौ देवयोनयः ॥ यथोक्तानां सुकर्तव्यं पूजनं वै पृथक्पृथक् ॥ ११ ॥ गन्धमाल्यनमस्कारधूपदीपान्नसम्पदा ॥ ॐकारपूतेनाज्येन तथाग्निहवनं भवेत् ॥ १२ ॥ पृथक्पृथक् च सर्वेषां चतुर्थ्यन्तैश्च नामभिः ॥ दक्षिणाभिस्ततो राम ब्राह्मणान्स्वस्ति वाचयेत् ॥ १३ ॥ ततः शान्त्युदकं कृत्वा मन्त्रै रक्षोहणैर्द्विपान् ॥ अभ्युक्षयेत्कुशाग्रेण पूज्यास्ते च तथा तदा ॥ १४ ॥ अतः परं प्रवक्ष्यामि कर्म नैमित्तिकं तव ॥ गजानां मरणे प्राप्ते तथा व्याधौ च दारुणे ॥ १५ ॥ दन्तच्छेदाशुभोत्पत्तौ मृते राजद्विपे तथा ॥ दन्तभङ्गे तथा जाते वा सुपक्षमृते गजे ॥ १६ ॥ कृष्णपक्षे मृते नागे वह्निपृष्ठे मृते तथा ॥ दारुणासु च वेलासु दक्षिणापरमूर्धनि ॥ १७ ॥ हस्तिन्याथ मदे जाते प्रकृतेश्च विपर्यये ॥ पूर्वोत्तरे च दिग्भागे नगरात्सुमनोहरे ॥ १८ ॥ स्निग्धप्राशन तोयेषु द्रुमवीतवनस्पतौ ॥ प्रागुदक्प्रवणं राम स्थण्डिलं परिकल्पयेत् ॥ १९ ॥ कमलं विन्यसेत्तत्र कर्णिकाकमले हरिम् ॥ श्रियं च विन्यसे त्तत्र केसरेषु च विन्यसेत् ॥ २० ॥ ब्रह्माणं भार्गवं पृथ्वीं तथा स्कन्दं च भार्गव ॥ अनन्तं खं शिवं सोमं सर्वाण्येतानि भार्गव ॥ २१ ॥

दलेषु तत्र दिक्पालान्विन्यसेत्सह कुञ्जरैः ॥ पत्रान्तरेषु चास्त्राणि यथावदनुपूर्वशः ॥ २२ ॥ वज्रं तु विन्यसेद्धीमान्शक्रपत्रादनन्तरम् ॥ तत
श्चक्रं ततो दण्डं तोरणं तदनन्तरम् ॥ २३ ॥ ततश्च विन्यसेत्पाशं तोमरं सशरं धनुः ॥ ततो गदां महाभाग ततः शूलं च विन्यसेत् ॥ २४ ॥
पद्मश्च सान्तरदलं वृत्तया लेखया भजेत् ॥ आदित्यैः सह नासत्यौ ततः पूर्वेण विन्यसेत् ॥ २५ ॥ वसूनग्निदिशाभागे साध्यान्याम्ये च विन्य
सेत् ॥ तथा च नैर्ऋते भागे देवानङ्गिरसो न्यसेत् ॥ २६ ॥ पश्चिमे भृगवो भागे वायव्ये मरुतस्तथा ॥ विश्वेदेवास्तथोदक् च रुद्राञ्शिवदिशि
न्यसेत् ॥ २७ ॥ कृत्वैतद्देवतान्यासं वृत्तया रेखया भजेत् ॥ बाह्येन विन्यसेत्तस्याः सूत्रकारानृषीन्द्विज ॥ २८ ॥ पूर्वेण राम याम्येन तथा देवीं
सरस्वतीम् ॥ नदीः पश्चिमतः शैलांस्तथोदग्भृगुनन्दन॥२९॥ महाभूतानि वेदीषु कोणहस्तगतानि तु ॥ पद्मं चक्रं गदां शङ्खमीशान्यादिषु विन्यसेत्॥
॥ ३० ॥ चतुरस्रं तथा कार्यं चतुर्द्वारं च मण्डलम् ॥ प्रमाणं मण्डलस्यात्र भवेद्भूमिवशात्तथा ॥ विदिक्षु पूर्णकलशान्पूर्णपात्रयुतान्न्यसेत् ॥ ३१ ॥
सप्तहस्तेषु दण्डेषु पताकाश्च तथा न्यसेत् ॥ सिता रक्ताः सिताः पीता यथावदनुपूर्वशः ॥ दिक्षु तोरणविन्यासं तोरणानां च वेष्टनम् ॥ ३२ ॥
क्षीरवृक्षद्रुमदलैः कुसुमैः सफलैर्भवेत् ॥ तोरणस्य प्रमाणं च षड्ढस्तं परिकीर्तितम् ॥ ३३ ॥ उच्छ्रायेण तथा यामाज्ज्ञेयं राम समद्वयम् ॥ तार्क्ष्यं
तालं च मकरं ऋष्यं चैवानुपूर्वशः ॥ ३४ ॥ तोरणोपरि मध्ये तु दानवान्विनिवेशयेत् ॥ कर्णकैर्लक्षणोपेतान्विन्यसेद्देवतागणान् ॥ ३५ ॥
सायुधान्सपताकाँश्च सातपत्रं शतक्रतुम् ॥ दिग्गजानां च विन्यासमोषधीभिः प्रकल्पयेत् ॥ ३६ ॥ ऐरावणं दले शक्रे लाजाभिर्विन्यसेद्बुधः ॥
नागं पुष्पमयं पद्ममाग्नेये विन्यसेद्दले ॥ ३७ ॥ पुष्पदन्तस्तथा याम्ये नागः कार्यः प्रियंगुभिः ॥ तथा च नैर्ऋते भागे नागः पुष्पेण वामनः ॥
॥ ३८ ॥ वायव्ये चाञ्जनं पत्रे माषैः कुर्याद्विचक्षणः ॥ नीलश्च पत्रे कौबेरे शतपुष्पामयो भवेत् ॥ ३९ ॥ ऐशान्ये कुमुदं कुर्यान्नागेन्द्रं सितत
न्दुलैः ॥ ततस्तु पूजनं कार्यं सोपवासेन भार्गव ॥ ४० ॥ जितेन्द्रियेण दान्तेन शिरःस्नातेन चाप्यथ ॥ शुक्लवस्त्रावृतेनापि सोष्णीषेण तथैव
च ॥ ४१ ॥ काञ्चनालंकृतेनापि सपवित्रेण भार्गव ॥ सर्वासां पूजनं कुर्याद्देवतानां पृथक्पृथक् ॥ ४२ ॥ अस्त्राणां कुञ्जराणां च पद्मादीनां
तथैव च ॥ तोरणे तु निविष्टानां तार्क्ष्यादीनां पृथक्पृथक् ॥ ४३ ॥ सागराणां तु कुम्भेषु गन्धमाल्यानुलेपनैः ॥ धूपैर्दीपैर्नमस्कारैर्वासोभिश्च
पृथक्पृथक् ॥ ४४ ॥ तथा प्रतिसराभिश्च भूषणैश्च पृथक्पृथक् ॥ भूरिणा च तथान्नेन पानैश्च विविधैस्तथा ॥ ४५ ॥ कुल्माषपरमान्नाभ्यां
पूज्यास्ते कृसरेण च ॥ भूदकोल्लोपिकाभक्ष्यैः सितया गुडफाणितैः ॥ ४६ ॥ मांसौदनपयःक्षौद्रदधिपायससक्तुभिः ॥ अपूपफलमूलान्नरागख

ण्डवकैर्दलैः ॥ ४७ ॥ एवं सम्पूजनं कृत्वा शङ्खवाद्यरवैर्द्विज ॥ गीतेन च महाभाग सुभगानर्तितेन च ॥ ४८ ॥ ततस्तु पूजनं कृत्वा पूजास्था
नात्तथाप्युदक् ॥ आहिताग्निकुलादग्निं वेदिमुल्लिख्य बोधयेत् ॥ ४९ ॥ देवतानां तु सर्वासामेकैकं तु पृथक्पृथक् ॥ चतुर्थ्यन्तेन नाम्ना तु प्रण
वाद्येन भार्गव ॥ ५० ॥ शतमाज्येन जुहुयान्महाव्याहृतयस्तथा ॥ ततस्तु पूजिता नागा वह्निं देवगणान्द्विजान् ॥५१॥ कृत्वा प्रदक्षिणं सर्वे व्रजेयुः
स्वगृहाणि ते ॥ उपद्रष्ट्रे तथा कर्त्रे सर्वं तत्र निवेदयेत् ॥५२॥ भवेन्निष्कं च निष्कं च धेनुं धेनुं भुवंभुवम् ॥ अश्वमश्वं तथान्या च दक्षिणा शक्तितो
भवेत् ॥ ५३ ॥ न भवेत्सा महाद्रोणा कथञ्चिदपि कस्यचित् ॥ तथा च हस्तिभिषजा प्रवृत्तेन च भूरिणा ॥ ५४ ॥ पूजनीयौ तथैवात्र सांवत्सर
पुरोहितौ ॥ हस्तिन्यां मदमत्तायां शान्तिकेऽस्मिन्द्विजोत्तम ॥ ५५ ॥ राष्ट्रान्निर्वास्य तां कुर्याच्छान्तिमेतां द्विजोत्तम ॥ नागराज्ञि मृते कृत्वा
तत्रैवान्यं मतङ्गजम् ॥ ५६ ॥ स्नातं सर्वौषधैर्नागं सर्वगन्धैस्तथैव च ॥ सर्वबीजैश्च रत्नैश्च सर्वतीर्थजलैस्तथा ॥ ५७ ॥ आहताम्बरसंवीतदर्शनं
श्वेतलक्षणम् ॥ काञ्चनापीडिते वाद्यगीतपुण्याहनिस्वनैः ॥ ५८ ॥ अर्चितं दैवतो वह्निं कृतविप्रप्रदक्षिणम् ॥ करिणीं तु समारुह्य वदेत्कर्णे तु
कालवित् ॥ ५९ ॥ श्रीगजस्त्वत्कृते राजा भवस्वास्य गजाग्रणीः ॥ गन्धमाल्याग्रभक्तैस्त्वां पूजयिष्यति पार्थिवः ॥ ६० ॥
लोकस्तदाज्ञया पूजां करिष्यति तथानघ ॥ पालनीयस्त्वया राजा घोरयुद्धे तथाहवे ॥ ६१ ॥ तिर्यग्भावं समुत्सृज्य
दिव्यं भावमनुस्मर ॥ देवासुराणां युद्धे च श्रीगजस्त्रिदशैः कृतः ॥ ६२ ॥ ऐरावणसुतः श्रीमानरिष्टो नाम रावणः ॥
श्रीगजानां तु तत्तेजः सर्वमेवात्र तिष्ठति ॥ ६३ ॥ तत्तेजस्तव नागेन्द्र दिव्यभागसमन्वितम् ॥ उपतिष्ठतु भद्रं ते रक्ष राजान
माहवे ॥ ६४ ॥ इत्येवमभिषिक्त्वैनं शुभेऽहनि नराधिपः ॥ नित्यं चैवास्य कर्तव्यं ब्राह्मणैः स्वस्तिवाचनम् ॥ ६५ ॥ तस्यानुगमनं
कुर्युः शस्त्रहस्ताश्च मानवाः ॥सितवर्णश्च कर्तव्यो राज्ञः पुण्याहकर्मसु ॥ ६६ ॥ एतत्ते सर्वमाख्यातं गजानां शान्तिकर्मसु ॥ नक्षत्राणि प्रश
स्तानि तिथयश्च तथा शृणु ॥ ६७ ॥ चतुर्दशीं चतुर्थीं च नवमीं च विवर्जयेत् ॥ अङ्गारकदिनं राम दिनं भास्करजस्य च ॥ ६८ ॥ ऋक्षाणि
वैष्णवं त्वाष्ट्रं शस्यते शक्रदैवतम् ॥ नक्षत्राणि मुहूर्ताश्च एत एव महाबल ॥ ६९ ॥ देशकालोपसम्पन्नं विधिना च तथा कृतम् ॥ शान्तिकर्म
गजेन्द्राणां सर्वबाधाविनाशनम् ॥ ७० ॥ धन्यं यशस्यमायुष्यं राज्ञां च विजयावहम् ॥ भार्गवश्च्यवनः क्रुद्धो यथा शक्रस्य भार्गव ॥ ७१ ॥
मदो नाम समुत्पन्नस्तथा दैत्यः सुदारुणः ॥ इन्द्रनाशाय शक्रार्थी ततः पश्चात्प्रसादितः ॥ ७२ ॥ मदं स बहुधा चक्रे प्रजापतिसमो द्विज ॥

स्त्रीष्वक्षेषु तथा पाने मृगयायां धने तथा ॥ ७३ ॥ विद्यासु चैव सर्वासु सर्वशिल्पेषु चाप्यथ ॥ जीवेषु राम सर्वेषु तथा रूपे बले कुले ॥ ७४ ॥ एकोऽस्य धारणे शक्तो न कश्चिदिति चिन्तयन् ॥ यथोक्तेष्वधिकं भागं किञ्चित्पाने निवेशयेत् ॥ ७५ ॥ प्राणिनामथ सर्वेषां नागेष्वभ्यधिकं तथा ॥ मदो यदा समभ्येति नागं ब्राह्मणसत्तम ॥ ७६ ॥ राम शान्तिस्तदा कार्या यादृशी तां निबोध मे ॥ शालाप्रागुत्तरे भागे स्थण्डिलं कल्पयेद्बुधः ॥ ७७ ॥ स्थण्डिले कमलं कृत्वा दिक्पत्रेषु तथेश्वरान् ॥ केसरे च्यवनं नागान्भुवं कं च सरस्वतीम् ॥ ७८ ॥ पूजयेड्डिण्डिमं मध्ये गन्धमाल्यानुलेपनैः ॥ धूपदीपनमस्कारैर्वासोभिश्च पृथक्पृथक् ॥ ७९ ॥ सर्वासां पूजनं कृत्वा पाद्याद्यनुरतो द्विज ॥ देवतानां घृतं हुत्वा यथा श्रद्धमनिन्दितम् ॥ ८० रसपूर्णो घटो देयो दक्षिणार्थे च काञ्चनम् ॥ दत्त्वा वासांसि नागस्य गजाध्यक्षं च पूजयेत् ॥ ८१ ॥ हस्तिपं कर्मिणश्चा न्यान्दक्षिणाभिर्द्विजोत्तमान् ॥ सांवत्सरे च वित्तेन यतः सांवत्सरः स्वयम् ॥८२॥ गजाध्यक्षाय तं दद्याड्डिण्डिमं प्रयतः स्वयम् ॥ प्राङ्मुखश्च गजा ध्यक्षो वादयेत्तं यथाविधि ॥ ८३ ॥ उच्चैर्गम्भीरनिर्घोषे डिण्डिमे तु शुभं वदेत् ॥ अन्तरा पातिते तस्मिँस्तथैवाप्यशुभं वदेत् ॥ ८४ ॥ डिण्डिमे सम्यगादत्ते शुभमेव विनिर्दिशेत् ॥ तदा प्रभृति मत्तस्य तदा नागस्य वै नृप ॥ ८५ ॥ अशुभे लक्षणे जाते भूयस्तत्कर्म चाचरेत् ॥ शुभे तु लक्षणे जाते गजाध्यक्षस्य डिण्डिमम् ॥ ८६॥ जये संस्थाप्य नन्दाद्यागजपाय............................सर्वबाधाविनाशनम् ॥ ८७ ॥ अतः परं प्रवक्ष्यामि काम्यं कर्म तवानघ ॥ उपोषितस्तथा याम्ये यजमाने पुरोहितः ॥ ८८ ॥ शुभप्रदमिदं स्नानं यजमानस्य कारयेत् ॥ न्यग्रोधोदुम्बराश्वत्थमधूकोदकसंयुतैः ॥ ८९ ॥ अकालमूलैः कलशैः पञ्चभिर्गजलक्षणैः ॥ स्नातः शुक्लाम्बरो विष्णुं चन्द्रार्कौ वरुणं तथा ॥ ९० ॥ हस्तिनं पूजयेद्विद्वान्गन्धमाल्यान्नसम्पदा ॥ धूपदीपनमस्कारैर्वासोभिश्च तथैव च ॥ ९१ ॥ हस्तिदन्तेन सूर्याय दत्त्वा धूपमतः परम् ॥ चतुर्थ्यन्तेन वै नाम्ना प्रणवाद्येन भार्गव ॥ सहस्रशो गजाश्चात्र दक्षिणा काञ्चनं तथा ॥ ९२ ॥ यः स्वांसते स्नानमिदं प्रकुर्वन्गजेन्द्रमुख्यान्गिरिसन्निकाशान् ॥ बहूनवाप्नोति तथास्य नागा भवन्त्यरोगा विनिमुक्तदोषाः ॥९३ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० सं० रामं प्रति पुष्करोपाख्याने गजानां शान्तिकर्मविधानं नाम पञ्चाशत्तमोऽध्यायः ॥ ५० ॥ पुष्कर उवाच ॥ दुर्गमायुधसंघातं कुञ्जरास्तुरगास्तथा ॥ पुरुषैश्च विना राम सर्वमेतदपार्थकम् ॥ १ ॥ तस्मात्प्रयत्नं कुर्वीत पुरुषाणां समर्जने ॥ तेषां चैवान्तरज्ञाने

१ 'यश्चासते ( चरेत् ) स्नानमिदं प्रकुर्वन्' इत्यपि पाठान्तरम् ।

मूलमेतद्व्रतः श्रियः ॥२॥ सुसहायार्थसम्पन्नं बलं यस्य महीपतेः ॥ संग्रामे तुमुले राम नूनं तस्य जयो भवेत् ॥ ३ ॥ सकृद्येन कृतं पापं तस्य राजा न विश्वसेत् ॥ पापं तु सुकरं तस्य सुकृतश्चास्य दुष्करम् ॥ ४ ॥ यथा हि मलिनैर्वस्त्रैर्यत्र तत्रोपविश्यते ॥ तथा चलितवृत्तस्तु वृत्तशेषं न रक्षति ॥ ५ ॥ राजा न वेशयेत्कार्ये जनो यो नास्तिको भवेत् ॥ आस्तिका अपि तत्सङ्गात्प्राप्नुयुः संशयं द्विज ॥ ६ ॥ अनाहार्यप्रभस्यापि त्रैलोक्योद्भासितात्मनः ॥ कृष्णता राहुसंसर्गात्किन्न सूर्यस्य वा भवेत् ॥७॥ अकार्यमित्यकार्याणि कुर्यात्कार्यवशेन यः ॥ विचिकित्सुर्ध्रुवं राम पश्चादपि निवर्तते ॥ ८ ॥ कार्यं बुद्ध्वा त्वकार्याणि यः करोति नराधमः ॥ अकार्यकरणे श्रद्धा तस्य भूयोभिवर्धते ॥ ९ ॥ लोकः सर्वो महाभाग परलोकनिबन्धनः ॥ निरपेक्षस्य तत्रान्या का गतिः स्यान्निबन्धने ॥ १० ॥ महापातकिनो येऽपि तेभ्योऽपि च महत्तरः ॥ पापकृन्नास्तिको लोकस्तस्मात्तं परिवर्जयेत् ॥ ११ ॥ आस्तिकानां च साधूनां संग्रहः शस्यते सदा ॥ ते सहाया नरेन्द्राणां तथा ये राम पण्डिताः ॥ १२ ॥ न पण्डितो मतो राम बहुपुस्तकधारणात् ॥ परलोकभयं यस्य तमाहुः पण्डितं बुधाः ॥ १३ ॥ अग्निहोत्रफला वेदा दत्तभुक्तफलं धनम् ॥ रतिपुत्रफला दाराः शीलवृत्तफलं श्रुतम् ॥ १४ ॥ शीलोपपन्नो नृपतिः सहायैः शूरैस्तथाल्पैरपि सम्प्रयुक्तः ॥ प्रभूतनागाश्वबलोत्कटानां करोत्यरीणां कदनं रणेषु ॥ १५ ॥ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० सं० रामं प्रति पुष्करोपाख्याने पुरुषप्रशंसा नामैकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥ ॥ छ ॥ ॥ पुष्कर उवाच ॥ ॥ अतः परं प्रवक्ष्यामि नराणां ते चिकित्सितम् ॥ तत्राप्यादौ तथा स्त्रीणां यन्मूलं प्रजनं यतः ॥ १ ॥ महाजम्बूद्वयं रोध्रं मधुकं मधु शर्करा ॥ तण्डुलोदकसंयुक्तं शोणितप्रदरे पिबेत् ॥ २ ॥ ऊर्ध्वं संवत्सरान्नारीं रक्तगुल्मे विरेचयेत् ॥ स्निग्धस्विन्नशरीराञ्च राम तीक्ष्णैर्विरेचनैः ॥ ३ ॥ ज्वरेण च पलाशस्य संसिद्धं यावकं पिबेत् ॥ अग्निसन्धुक्षणं चास्यास्तथा कार्यं प्रयत्नतः ॥ ४ ॥ प्रस्थं वृषकमूलस्य तैलं प्रस्थं विपाचयेत् ॥ योनीनां परिकोपेषु वेदनामपकर्षति ॥५ ॥ सौराष्ट्री रोचना रोध्रं मधूकं त्रिफला मधु ॥ भद्रमुस्तानि चूर्णानि वाजीकरणमुत्तमम् ॥ ६ ॥ अश्वगन्धाविपक्वेन वराहस्य तु मेदसा ॥ ग्रन्थीकरणमभ्यङ्गं योषितां परिकीर्तितम् ॥ ७ ॥ एकमामलकं काले सलिलांजलिना पिबेत् ॥ सृष्टं कृष्णायसे भाण्डे तेन शातोदरी भवेत् ॥ ८ ॥ त्रिफलां चित्रकं शुण्ठीं मधुना तु लिहेत्सदा ॥ स्थूलानां वरनारीणां कृषीकरणमुत्तमम् ॥ ९ ॥ अश्वगन्धां पयस्यां च संसृज्य पयसा पिबेत् ॥ मासमेतत्प्रयुञ्जाना कृशा भवति मांसला ॥ १० ॥ वराहवसया कार्यमश्वगन्धाविपक्वया ॥ स्तनानां मर्दनं तेन नारी पीनस्तनी भवेत् ॥ ११ ॥ मूलकस्य च्युतं बीजं तथैव तगरस्य च ॥ सप्तरात्रं तु गोमूत्रे सिध्मनाशनमुत्तमम् ॥ १२ ॥

क्षारेण हस्तिपिण्डस्य अवल्गुजरसेन च ॥ एतेन प्रोक्षितं श्वित्रं त्रिरात्रेण विनश्यति ॥ १३ ॥ गुञ्जायाः सफलं मूलं चित्रकं तगरं तथा ॥ भल्लातकानां च फलं मूलं चैवाश्वमारकम् ॥ १४ ॥ अर्कक्षीरसमं तैलं द्रव्यैरेतैर्विपाचयेत् ॥ प्रोक्षणेन विनिर्दिष्टं रोमशातनमुत्तमम् ॥ १५ ॥ हस्तिदन्तमयीं पिष्ट्वा पयसा लेपयेच्छिरः ॥ अजातेष्वपि केशेषु रोमसञ्जननं परम् ॥ १६ ॥ भृङ्गराजरसैस्तैलं सिद्धमभ्यञ्जनाद्धुतम् ॥ दृढमूलानि केशानि कुर्यात्कृष्णासितानि च ॥ १७ ॥ कटुकं दन्तकाष्ठं तु गोमूत्रपरिभावितम् ॥ भुक्त्वा तैलेन गण्डूषं वक्त्रगन्धहरं परम् ॥ ॥१८॥ इन्दीवराणि शुष्काणि प्राश्यानि तण्डुलैस्सह ॥ सर्वरात्रं मुखे वाति सुगन्धि विशदं शुचि ॥१९॥ सर्षपोन्मथितं कृत्वा शाल्मलीनां तु कण्टकैः ॥ पयःपिष्टैर्मुखे लेपान्मुखं स्यात्कमलोपमम् ॥ २० ॥ व्यङ्गानां तिलकानां च शमनं तत्प्रकीर्तितम् ॥ यौवने पिटकानां च ये च दोषा मुखे स्मृताः ॥ २१ ॥ कषायकल्कसिद्धेन शतावर्या घृतेन च ॥ अभ्यङ्गपानैर्भवति नारी वर्णयुता परम् ॥ २२ ॥ षोडशर्तुनिशाः स्त्रीणामाद्यास्तिस्रस्तु निन्दिताः ॥ अस्पृश्या तासु नारी स्यात्स्पृष्ट्वा तां स्नानमाचरेत् ॥ २३ ॥ दिनत्रयं तु तन्नारी स्नानाभ्यङ्गौ विवर्जयेत् ॥ आहारं गोरसानां च पुष्पालङ्कारधारणम् ॥ २४ ॥ अञ्जनं कङ्कणं गन्धाः पीतं शय्याधिरोहणम् ॥ मृल्लोहभाण्डवर्ज्येषु तथा भाण्डेषु भोजनम् ॥ २५ ॥ अग्निसंस्पर्शनं चैव वर्जयेत्तु दिनत्रयम् ॥ चतुर्थेऽहनि कुर्वीत स्नानं सा तु यथाविधि ॥ २६ ॥ अभिषेकोदिताभिश्च मृद्भिरद्भिश्च मानसैः ॥ ओषध्यश्च तथा कुम्भे निक्षिप्य स्नापयेत्तु ताम् ॥२७॥ ज्योतिष्मतीं त्रायमाणामभयामपराजिताम् ॥ जीवां विश्वेश्वरीं पाठां समङ्गां विजयां तथा ॥ २८ ॥ सहां च सहदेवीं च पूर्णकोशां शतावरीम् ॥ अरिष्टकां शिवां भद्रां गोलोमीं विजयप्रदाम् ॥ २९ ॥ ब्राह्मीं क्षेत्रामजां चैव सर्वबीजानि चाञ्जनम् ॥ बिल्वं गन्धानि रत्नानि पञ्चगव्यं तथैव च ॥ ३० ॥ कुम्भे निक्षिप्य कुम्भं च गन्धमाल्यानुलेपनैः ॥ पूजयित्वा ततो देवं तस्यात्र शुभवर्धनम् ॥ ३१ ॥ मन्त्रं राजाभिषेकोक्तं पठेदत्र च कालवित् ॥ वस्त्रच्छन्नमुखी स्नाता स्नापके च विनिर्गते ॥ ॥ ३२ ॥ पश्येत्तदेव प्रतिमां वासुदेवस्य रूपिणः ॥ अथवा राम भर्तारं नान्यं कंचन सत्वरम् ॥ ३३ ॥ तत्काले वदनं तस्य पश्यत्यथ यथा विधि ॥ सा प्रसूते सुतं राम शुभं वाऽप्यथवा शुचिम् ॥ ३४ ॥ पूजनं वासुदेवस्य सा कृत्वात्मन एव च ॥ मण्डनं च यथान्यायं शुक्लवस्त्रोत्तरच्छदा ॥ ३५ ॥ षष्टिकान्नं तु पयसा समश्नीयाद्घृतेन सा ॥ घृतस्य पीत्वा प्रसृतिं नागपुष्पावचूर्णितम् ॥ ३६ ॥ ऋतुकाले समाप्नोति नारी गर्भं द्विजोत्तम ॥ उपोषितेन शुचिना शुक्लपक्षे समुद्धृतम् ॥ ३७ ॥ पुष्येण बृहतीमूलमुत्तरां वा मुखे नयेत् ॥ श्वेतपुष्पा तु बृहती द्व

मूलस्यैष निश्चयः ॥३८॥ नस्या देयाश्च चत्वार उन्मूला द्रुमबिन्दवः ॥ तस्मिन्नहनि सा तेन गर्भं धत्ते वरांगना ॥ ३९ ॥ एवमप्यभवन्ती तु पुत्रीयां राम सप्तमीम् ॥ पुत्रीयमथवा स्नानं केशवाराधनं व्रतम् ॥ ४० ॥ पुत्रीयमेव वा कुर्यात्केशवाराधनं प्रिया ॥ स्नातानुलिप्ता भर्तारं हृष्टैर्बृंहितमेव च ॥ ४१ ॥ यायाद्रात्रौ तथा नारी गन्धधूपादिवासिता ॥ आत्तगर्भां चिकित्सेत ततस्तामपराजित ॥ ४२ ॥ मधुरौषधिसिद्धेन पयसा सर्पिषा तथा ॥ इच्छाविमानगाः काश्चिन्नास्याः कार्याः कथञ्चन ॥ ४३ ॥ कटुतिक्तकषायाणि चात्युष्णलवणानि च ॥ आयासं च व्यवायं च गर्भिणी वर्जयेत्सदा ॥ ४४ ॥ विना कर्म न तिष्ठेत तथा सा राहुदर्शने ॥ प्रादुर्भावाणि वेदेस्य विष्णोरमिततेजसः ॥ ४५ ॥ शृणुयात्तन्मना भूत्वा चरितं च महात्मनः ॥ पुन्नाम्नि नामनक्षत्रे ह्यासन्नप्रसवा गृहम् ॥ ४६ ॥ प्रविशेत्सूतिकासंज्ञं कृतरक्षं समन्ततः ॥ सुभूमौ निर्मितं रम्यं वास्तुविद्याविशारदैः ॥ ४७ ॥ प्राग्द्वारमुत्तरद्वारमथवा सुदृढं शुभम् ॥ देवानां ब्राह्मणानां च गवां कृत्वा च पूजनम् ॥ ४८ ॥ विप्र पुण्याहघोषेण शंखवाद्यरवेण च ॥ प्रसूता बहुशस्तत्र तथा क्लेशक्षमाश्च याः ॥ ४९ ॥ हृद्या विश्वसनीयाश्च परिचरेयुः स्त्रियश्च ताम् ॥ वातानुलोमनैर्हृद्यैस्तत्रैनामुपचारयेत् ॥ ५० ॥ आहारैश्च विहारैश्च प्रसवाय सुखं द्विज ॥ एरण्डमूलमिश्रेण सघृतेन तथैव ताम् ॥ ५१ ॥ सुखप्रसवनार्थाय पश्चात्काये तु प्रक्षयेत् ॥ बलाकल्ककषायेण सिद्धं क्षीरं चतुर्गुणम् ॥ ५२ ॥ तैलमभ्यञ्जनार्थाय सूतायामुपकल्पयेत् ॥ अथ जातान्नपानेच्छां पञ्चकोलप्रसादिताम् ॥ ५३ ॥ पिबेद्यवागूं सस्नेहां तथा वै नीलकुञ्चिकाम् ॥ दशाहं सूतिकागारं चायुधैश्च विशेषतः ॥ ५४ ॥ वह्निकातिन्दुकालातैः पूर्णकुम्भैः प्रदीपकैः ॥ मुसलेन तथा द्वारि वर्णकैश्चित्रितेन च ॥ ५५ ॥ रक्षणीया तथा षष्ठी निशा तत्र विशेषतः ॥ राम जागरणं कार्यं जन्मदानां तथार्चनम् ॥ ५६ ॥ पुरुषाः शस्त्रहस्ताश्च नृत्यगीतैश्च योषितः ॥ रात्रौ जागरणं कुर्युर्दशमेऽहनि सूतिका ॥ ५७ ॥ स्नाता पूर्वविधानेन रक्षणीया समीरणात् ॥ बालस्य जातमात्रस्य नाभिं छित्त्वा यथाविधि ॥ ५८ ॥ तालुमुत्तापयेन्नारी पिचुना शोधयेन्मुखम् ॥ ब्राह्मी सुवर्चला सोमं सैन्धवं पिप्पली वचा ॥ ५९ ॥ कनकं सर्पिषा दद्याल्लेह्यमेतद्द्विजोत्तम ॥ लेह्येनानेन मेधावी शूरः पण्डित एव च ॥ ६० ॥ दर्शनीयो यशस्वी च सुभगः स भविष्यति ॥ बिभीतकास्थि क्षौद्रेण घृष्टं श्रेष्ठमथाञ्जनम् ॥ ६१ ॥ नेत्ररोगेषु बालानां सहरिद्रं च गोरसम् ॥ शारिवा चन्दनं कुष्ठं समभागानि कारयेत् ॥६२॥ शिरोलेपमिदं दद्यादक्षिरोगविनाशनम् ॥ आम्रास्थि सैन्धवं लाजा मधुना सह लेहयेत् ॥६३॥

१ 'तन्मूलस्य' इत्यपि पाठः ।

एष लेहवरः श्रेष्ठश्छर्दिप्रशमनः शुभः ॥ अपामार्गविडङ्गानि पिप्पली मारिचं तथा ॥ ६४ ॥ सैन्धवं तण्डुलं चैव मधुसर्पिःसमन्वितम् ॥ व्यार्घ्रीरसेन लेहोऽयं हिक्काश्वासविनाशनः ॥ ६५ ॥ बिभीतकत्वचा श्रेष्ठं हरितालं मनःशिला ॥ एतत्तैलं पचेद्दद्रुपामाकिटिभनाशनम् ॥ ६६ ॥ क्षौद्रेण लेह्या तुवरा पिप्पल्यतिविषापहा ॥ श्लेष्मरोगेषु सर्वेषु बालानां भेषजं परम् ॥ ६७ ॥ रोध्रत्वङ्मधुना सार्धमतीसारविनाशिनी ॥ सप्त पर्णत्वक् च दूर्वा तथा कटुकरोहिणी ॥ ६८ ॥ एतदुद्वर्तनं श्रेष्ठं सर्वग्रहविनाशनम् ॥ भङ्गां वचां शङ्खपुष्पीमेरण्डं सप्तपर्णकम् ॥ ६९ ॥ सम न्तपुष्पीसंयुक्तमपामार्गं च पुष्करम् ॥ क्वाथयित्वा च दातव्यं स्नानं सद्यः सुखावहम् ॥ ७० ॥ सर्पिषा निम्बपत्राणि गोविषाणं घृतं मधु ॥ एतेन धूपितो बालो ग्रहदोषैर्विमुच्यते ॥ ७१ ॥ अपामार्गस्य बीजानि बिल्वमूलफलानि च ॥ अगुरुं चन्दनं चैव सप्तपर्णस्य वल्कलम् ॥ ७२ ॥ एतदालेपनं कुर्यात्सर्वग्रहविनाशनम् ॥ मातरश्च ग्रहाश्चैव बालं तु बलिकर्मणा ॥ ७३ ॥ क्षिप्रमेव प्रमुञ्चन्ति तस्माद्यत्नेन कारयेत् ॥ तरक्ष्वर्क्ष वराहाणां दंष्ट्रा गोरोचना वचा ॥ ७४ ॥ रत्नान्ययस्तथा कृष्णं वस्त्रं धार्यं तु बालकैः ॥ जातस्य राम बालस्य हेमन्ते प्रथमेऽथवा ॥ ७५ ॥ शिशिरे वापि कर्तव्यं कर्णवेधं तथा शृणु ॥ ग्रहाणां तत्र सर्वेषां दिनवारः प्रशस्यते ॥ ७६ ॥ तिथिं चतुर्थीं नवमीं वर्जयित्वा चतुर्दशीम् ॥ सावित्रं वैष्णवं त्वाष्ट्रमादित्यं पौष्णमाश्विनम् ॥ ७७ ॥ कर्णवेधे प्रशस्यन्ते सोमदेवं तथैव च ॥ पूर्वाह्णे पूजनं कृत्वा केशवस्य हरस्य च ॥ ७८ ॥ ब्रह्मणश्चन्द्रसूर्याभ्यां दिगीशानां तथैव च ॥ नासत्ययोः सरस्वत्या ब्राह्मणानां गवां तथा ॥ ७९ ॥ गुरूणां मण्डलं कृत्वा तत्र दत्त्वा सुखासनम् ॥ दत्त्वोपवेशयेत्तत्र धात्रीं शुक्लाम्बरां तथा ॥८०॥ स्वलंकृतां तदुत्संगे बालं कृत्वा तु सान्त्वितम् ॥ धृतस्य निश्चलं सम्यग्गले कुकरसांकिते॥८१॥ विध्येद्दैवकृते छिद्रे सकृदेव तु लाघवात् ॥ प्राग्दक्षिणं कुमारस्य भिषग्वामं तु योषितः ॥ स्नेहाक्तं सूच्यनुस्यूतं सूत्रं वानुनिधापयेत् ॥ ८२ ॥ तैलाभ्यक्ते ततः कर्णे कार्यमाभरणं भवेत् ॥ कर्णवेधदिने विप्रं सांवत्सरचिकित्सकौ ॥ पूज्याश्चाविधवा नार्यः सुहृदश्च तथा द्विजाः ॥ ॥ ८३ ॥ चतुर्थे मासि कर्तव्यं शिशोर्निष्क्रमणं गृहात् ॥ सौरभौमदिनं चैव तिथिं रिक्तां च वर्जयेत् ॥ ८४ ॥ चतुर्थीं नवमीं चैव रिक्तां चैव चतुर्दशीम् ॥ आर्यम्णं वैष्णवं हस्तमादित्यं पौषमश्विनम् ॥ ८५ ॥ भाग्यं त्वाष्ट्रं च पुष्यं च तत्र कर्मणि शस्यते ॥ दिगीशानां दिशं तत्र तथा चन्द्रार्कयोर्द्विज ॥ ८६ ॥ पूजनं वासुदेवस्य गगनस्य च कारयेत् ॥ तत्र स्वलंकृता धात्री बालमादाय पूजितम् ॥ ८७ ॥

१ 'वला' इत्यपि० ।

बहिर्निष्क्रामयेद्गेहाच्छङ्खपुण्याहनिस्वनैः ॥ ततस्तत्र पठेन्मन्त्रं यं तु राम निबोध मे॥८८॥चन्द्रार्कयोर्दिगीशानां दिशां च गगनस्य च ॥ निक्षेपार्थमिदं दद्मि ते मे रक्षन्तु सर्वदा ॥८९॥ अप्रमत्तं प्रमत्तं वा दिवा रात्रावथापि वा ॥ रक्षन्तु सर्वतः सर्वे देवाः शक्रपुरोगमाः ॥ ९० ॥ स्त्रीणामविधवानां तु द्विजानां सुहृदां तथा ॥ तदा तु पूजा कर्तव्या गीतनृत्यैस्तथोत्सवैः ॥ ९१ ॥ पञ्चमे च तथा मासि भूमौ तमुपवेशयेत् ॥ तत्र सर्वे ग्रहाः शस्ता भौमो राम विशेषतः ॥ ९२ ॥ तिथिं च वर्जयेद्रिक्तामृक्षाणि शृणु भार्गव ॥ उत्तरात्रितयं सौम्यं चाश्वत्थं शक्रदैवतम् ॥ ९३ ॥ प्राजापत्यं च हस्तं च शस्तमाश्विनदैवतम् ॥ वराहं पूजयेद्देवं पृथिवीं च द्विजोत्तम ॥ ९४ ॥ पूजनं सर्वतः कृत्वा गुरुदेवद्विजन्मनाम् ॥ भूभागमुपलिप्याथ कृत्वा तत्र तु मण्डलम् ॥ ९५ ॥ शङ्खपुण्याहशब्देन भूमौ तमुपवेशयेत् ॥ मन्त्रश्चात्र भवेद्राम तन्मे निगदतः शृणु ॥ ९६ ॥ रक्षणं वसुधे देवि सदा सर्वगतं शुभे ॥ आयुःप्रमाणं सकलं निक्षेपस्ते हरिप्रिये ॥ ९७ ॥ अन्तरादायुषस्तस्य ये केचित्परिपन्थिनः ॥ जीवितारोग्यवित्तेषु निर्दहस्वाचिरेण तान् ॥ ९८ ॥ वरेण्याशेषभूतानां माता त्वमसि कामधुक् ॥ अजरा चाप्रमेया च सर्वभूतनमस्कृता ॥ ९९ ॥ चराचराणां भूतानां प्रतिष्ठात्वं त्वर्हमसि ॥ कुमारं पाहि मातस्त्वं बालं तदनुमन्यताम् ॥ १०० ॥ तस्योपवेशनं कृत्वा भूमौ ब्राह्मणभोजनम् ॥ शक्त्या कृत्वा ततः कार्यश्चोत्सवः पूर्ववद्द्विज ॥ १०१ ॥ षष्ठेऽन्नप्राशनं मासि कर्तव्यं भौमवर्जिते ॥ दिनवारे तिथिं रिक्तां वर्जनीयां तथैव च ॥ १०२ ॥ नक्षत्राणि तथैवात्र दारुणोग्राणि वर्जयेत् ॥ साधारणे तथा राम ज्येष्ठान्तेष्वपि शस्यते ॥ १०३ ॥ ब्रह्माणं शङ्करं विष्णुं चन्द्रार्कौ च दिगीश्वरान् ॥ ध्रुवं दिशश्च सम्पूज्य हुत्वा वह्नौ तथा चरुम् ॥ १०४ ॥ एतेषामेव देवानां कृत्वा ब्राह्मणपूजनम् ॥ देवतापुरतस्तस्य धात्र्युसङ्गगतस्य च ॥ १०५ ॥ अलंकृतस्य दातव्यं वीर कांस्ये तु काञ्चने ॥ मध्वाज्यकनकोपेतं प्राशयेत्पायसं ततः ॥ १०६ ॥ ततस्त्वन्नपते राम मन्त्रश्चात्र विधीयते ॥ कृतप्राशं तदोत्सङ्गाद्धात्री बालं तु विन्यसेत् ॥ १०७ ॥ देवाग्रतोऽथ विन्यस्य शिल्पभाण्डानि सर्वशः ॥ शस्त्राणि चैव शास्त्राणि ततः पश्येत लक्षणम् ॥ १०८ ॥ प्रथमं यं स्पृशेद्बालः शिल्पभाण्डं स्वयं तथा ॥ जीविका तस्य बालस्य तेनैव तु भविष्यति ॥ १०९ ॥ दन्तजन्मनि बालानां तेनैव तु भविष्यति ॥ दन्तजन्मनि बालानां लक्षणं तु निबोध मे ॥ ११० ॥ उपरि प्रथमं यस्य जायन्ते च शिशोर्द्विजाः ॥ दन्तैर्वा सह यस्य स्याज्जन्म भार्गव जायते ॥ १११ ॥ मातरं पितरं वापि खादेदात्मानमेव च ॥ तत्र शान्तिं प्रवक्ष्यामि तन्मे निगदतः शृणु ॥ ॥११२॥ गजपृष्ठगतं बालं नौस्थं वा स्थापयेद्द्विज ॥ तदभावे तु धर्मज्ञ काञ्चने तु वरासने ॥११३॥सर्वौषधैः सर्वगन्धैर्बीजैः पुष्पैः फलैस्तथा ॥

पञ्चगव्ये तु रत्नैश्च पताकाभिश्च भार्गव ॥११४॥ स्थालीपाकेन धातारं पूजयेत्तदनन्तरम् ॥ सप्ताहं चात्र कर्तव्यं तथा ब्राह्मणभोजनम् ॥ ११५ ॥
अष्टमेऽहनि विप्राणां तथा देया च दक्षिणा ॥ काञ्चनं रजतं गाश्च भुवं चात्मानमेव वा ॥ ११६ ॥ दन्तजन्मनि मासान्यसम्भवे सप्तमादपि ॥
अष्टमेऽहनि विप्राणां शृणु स्नानमतः परम् ॥११७॥भद्रासने निवेश्यैनं मृद्भिर्मूलैः फलैस्तथा ॥ सर्वौषधैः सर्वगन्धैः सर्वबीजैस्तथैव च ॥११८॥
स्नापयेत्पूजयेच्चात्र वह्निं सोमं समीरणम् ॥ पूर्वतश्च तथा ख्यातान्देवदेवं च केशवम् ॥११९॥ एतेषामेव जुहुयाद्घृतमग्नौ यथाविधि ॥ ब्राह्मणानां
च दातव्या ततः पूजा च दक्षिणा ॥ १२० ॥ ततस्त्वलंकृतं बालं चासने तूपवेशयेत् ॥ आसनं छत्रमूर्धानं बीजैस्तं स्नापयेत्ततः ॥ १२१ ॥
सुस्विन्नैर्बालकानां च तैश्च कार्यं च पूजनम् ॥ पूज्याश्चाविधवा नार्यो ब्राह्मणाः सुहृदस्तथा ॥ १२२ ॥ प्राप्तेऽथ पञ्चमे वर्षे त्वप्रसुप्ते जनार्दने ॥
प्रतिपदां तथा षष्ठीं वर्जयित्वा तथाष्टमीम् ॥१२३॥ रिक्तां पञ्चदशीं चैव सौरभौमदिने तथा ॥ ध्रुवाणि याम्यं च तथा नक्षत्राणि विवर्जयेत्॥१२४॥
सौम्यवर्गेश्वरे लग्ने हिते तत्र नवांशके ॥ त्रिकोणकेन्द्रगाः सौम्याः पापाश्चोपचये शुभाः ॥ १२५ ॥ नक्षत्राणां विवर्ज्यानां मुहूर्तांश्च विवर्जयेत् ॥
एवं सुनिश्चिते काले विद्यारम्भं च कारयेत् ॥ १२६ ॥ पूजयित्वा हरिं लक्ष्मीं तथा देवीं सरस्वतीम् ॥ सुविद्यां सूत्रकारांश्च स्वां विद्यां च
विशेषतः ॥ १२७ ॥ एतेषामेव देवानां नाम्ना तु जुहुयाद्घृतम् ॥ दक्षिणाभिर्द्विजेन्द्राणां कर्तव्यं चात्र पूजनम् ॥ १२८ ॥ धात्र्युत्सङ्गाद्यथादाय
बालं तु कृतवापनम् ॥ स्वलंकृतं प्रदातव्यमुत्सङ्गे तु तदा गुरोः ॥ १२९ ॥ गुरुश्चात्र भवेद्विद्वान्स्नातः शुक्लाम्बरः शुचिः ॥ प्रगृह्य तं तु निक्षेपं
गुरुरप्यथ भार्गव ॥ १३० ॥ प्राङ्मुखः सुमुखासीनो वारुणाशामुखं शिशुम् ॥ अध्यापयेत्तु प्रथमं कुर्याद्बालोऽपि वन्दनम् ॥ १३१ ॥ ब्राह्म
णानां गुरूणां च देवतानामनन्तरम् ॥ ततस्तु पूज्या वित्तेन धात्री राम गुरुस्तथा ॥ १३२ ॥ दक्षिणाभिर्द्विजेन्द्राणां कर्तव्यं तर्पणं तथा ॥ ततः
प्रभृत्यनध्यायान्वर्जनीयान्विवर्जयेत् ॥१३३ ॥ अष्टमीद्वितयं राम पक्षान्ते च दिनद्वयम् ॥ अशौचमिन्द्रयात्रां च भूकम्पं राहुदर्शनम् ॥ १३४ ॥
व्यतीतं चाप्यहोरात्रमुल्कापातं च भार्गव ॥ अकालस्तनितं चैव निर्ज्योतिषमथाम्बरम् ॥ १३५ ॥ तथा काले प्रचण्डश्च यदा वायुस्तदा भवेत् ॥
प्रदोषे चाप्यसंश्रद्धे चैत्यवृक्षचतुष्पथे ॥ १३६ ॥ गोयाने कुञ्जरे चाश्वे न च नावि तथा भवेत् ॥ श्वशृगालरवे घोरे तथा च खरनिस्वने॥१३७॥
तथा वादित्रशब्दे च तथैव नगरोत्सवे ॥ १३८ ॥ कालेषु देशेषु मयोदितेषु पठन्ति ये नाम न तेषु विद्या ॥ फलं प्रयच्छेत्यथवाऽरिशत्रोर्लोके परे वा
यदि वाऽपि चास्मिन् ॥ १३९ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० सं० रामं प्रति पुष्करोपाख्याने बालतन्त्रो नाम द्विपञ्चाशत्तमो

ऽध्यायः॥५२॥ श्रीपरशुराम उवाच ॥ पुत्रीयं भगवन्स्नानं पुत्रीयमथ सप्तमीम् ॥ पुत्रीयं च समाचक्ष्व तथा वै केशवव्रतम्॥१॥ पुष्कर उवाच ॥ उपोषितौ कृत्तिकासु यजमानपुरोहितौ ॥ रोहिण्यां स्नपनं कुर्युर्यजमानस्य भार्गव ॥ २ ॥ क्षीरवृक्षप्ररोहाभ्यां सितमाल्यविभूषितम् ॥ प्रियङ्गुचन्दनोपेतान्पञ्च कुम्भान्प्रपूजयेत् ॥ ३ ॥ प्राङ्मुखं व्रीहिराशिस्थं कुम्भैस्तैरभिषेचयेत् ॥ विष्णुं शशाङ्कं वरुणं रोहिणीं च प्रजापतिम् ॥ ४ ॥ पूजयेत्प्रयतः श्रद्धी गन्धमाल्यानुलेपनैः ॥ धूपः प्रजापतेर्देयस्तथैव शटकेशयाः ॥५॥ पञ्चपृष्ठवृषान्दिग्धान्दध्ना च विनिवेदयेत् ॥ प्रजाध्यक्षाय होमश्च देवतानां तु कारयेत् ॥६॥ घृतेन सर्वबीजैश्च शुक्लवासा जितेन्द्रियः ॥ दक्षिणां गुरवे देयात्काम्यं गौर्वाससी शुभे ॥ ७ ॥ सुवर्णं च महाभाग विप्राणामथ शक्तितः ॥ शुक्ला च गौर्वृषः शुक्लस्तयोर्लोम शफं तथा ॥८॥ शृङ्गाणि त्रिवृतं कृत्वा मणिर्धार्यस्ततो भवेत् ॥९॥ अलंकृतं केशमिदं सदैव स्नानं तु कुर्वन्पुरुषोऽथवा स्त्री ॥ पुत्रानवाप्नोति तथेप्सितां च पुष्टिं तथाग्र्यां विपुलां च कीर्तिम् ॥ १० ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० सं० रामं प्रति पुष्करोपाख्याने पुत्रीयरोहिणीस्नानवर्णनं नाम त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥ ॥ पुष्कर उवाच ॥ मार्गशीर्षे शुभे मासि शुक्लपक्षे द्विजोत्तम ॥ पुत्रीयां सप्तमीं राम गृह्णीयात्प्रयतः शुचिः ॥ १ ॥ अथवा पुत्रकामा स्त्री विधिना येन तच्छृणु ॥ हविष्याशी शिरःस्नातः कृत्वा ब्राह्मणपूजनम् ॥ २ ॥ अधःशायी द्वितीयेऽह्नि गोविषाणोदकेन च ॥ स्नात्वोपविश्य च तथा शुभे देशे तु मण्डलम् ॥ ३ ॥ तत्राष्टपत्रं कमलं विन्यसेद्वर्णकैः शुभैः ॥ तस्यैव कर्णिकामध्ये भास्करं चन्दनेन तु ॥ ४ ॥ रक्तेन पूजयेद्देवं गन्धमाल्यानुलेपनैः ॥ भक्ष्यैर्भोज्यैस्तथा पेयैर्धूपैर्दीपैस्तथैव च॥५॥ एवं संपूजनं कृत्वा सर्वकामप्रदस्य तु ॥ नक्तं भुञ्जीत धर्मज्ञ सर्वकर्मविवर्जितः ॥६॥ दन्तोलूखलको भूत्वा कृत्वा संवत्सरव्रतम् ॥ व्रतावसाने दातव्या शक्त्या ब्राह्मणदक्षिणा ॥७॥ तथात्रिमधुरप्रायं कर्तव्यं द्विजभोजनम् ॥ अधःशाय्यनिशं तां च भूय एव तथा भवेत् ॥ ८ ॥ पुत्रीयमेतद्व्रतमुत्तमं ते मयोदितं कल्मषनाशकारि ॥ आराधनं देववरस्य राम सर्वामयघ्नं च तथैतदुक्तम् ॥ ९ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० सं० रामं प्रति पुष्करोपाख्याने पुत्रीयासप्तमीव्रतं नाम चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥ पुष्कर उवाच ॥ प्रोष्ठपद्यामतीतायां कृष्णपक्षाष्टमी तु या ॥ सोपवासो नरस्तस्यां योषिद्वा तनयार्थिनी ॥१ ॥ स्नाता सरसि धर्मज्ञ तोये चाप्यथ सारसे ॥ पूजनं वासुदेवस्य यथा कुर्यात्तथा शृणु ॥ २ ॥ घृतप्रस्थेन गोविन्दं स्नापयित्वा जगद्गुरुम् ॥ क्षौद्रेण च ततः पश्चाद्दध्ना च स्नपयेत्ततः ॥ ३ ॥ क्षीरेण स्नपनं कृत्वा ततः पश्चाद्विवक्षितम् ॥ सर्वौषधैश्च गन्धैश्च सर्वबीजफलैस्तथा ॥ ४ ॥ स्नापयित्वानुलिप्येत चन्दनागुरुकुङ्कुमैः ॥

कर्पूरेण तथा राम तथा जातीफलैः शुभैः ॥ ५ ॥ ततः कालोद्भवैः पुष्पैः पूजयित्वा जनार्दनम् ॥ धूपं चागुरुणा दत्त्वा कृत्वा नैवेद्यमुत्तमम् ॥
॥ ६ ॥ विशेषाद्गोरसप्रायं पुन्नागैरन्वितैः फलैः ॥ पौरुषेण च सूक्तेन हुत्वा चानन्तरं घृतम् ॥ ७ ॥ शूद्रो वाप्यथवा नारी नाम्ना हुत्वा जगद्गु
रुम् ॥ यवपात्राणि दद्यात्तु फल्गूनि कनकं तथा ॥ ८ ॥ पुत्रार्थं प्राशनं कुर्यात्फलैः पुन्नामभिः शुभैः ॥ स्त्रीनामभिश्च कन्यार्थी ततो भुक्त्वा यथे
प्सितम् ॥ ९ ॥ पुत्रकामानवाप्नोति तथा सर्वमभीप्सितम् ॥ हविष्यं देवदेवस्य भूमिशोभां तु कारयेत् ॥ १० ॥ संवत्सरमिदं कृत्वा व्रतमाप्नो
त्यभीप्सितम् ॥ पुत्रकामानवाप्नोति तथा सर्वानभीप्सितान् ॥ ११ ॥ पुत्रीयमेतद्व्रतमुत्तमं ते मयेरितं यद्यपि धर्मनित्यम् ॥ तथाप्यनेनैव समस्त
कामान्कृतेन लोके पुरुषा लभन्ते ॥ १२ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे रामं प्रति पुष्करोपाख्याने पुत्रीयाष्टमीव्रतं
नाम पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥ ॥ श्रीपरशुराम उवाच ॥ भगवञ्छ्रोतुमिच्छामि पुरुषाणां चिकित्सितम् ॥ तन्ममाचक्ष्व देवेश
तत्र मे संशयो महान् ॥ १ ॥ पुष्कर उवाच ॥ रक्षन्बलं महाभाग लङ्घयेज्ज्वरितं नरम् ॥ सविश्वं लाजमण्डं तु लंघितं तत्तु भोजयेत् ॥
॥ २ ॥ मुस्तपर्पटकोशीरचन्दनोदीप्यनागरैः ॥ घृतं शीतं पयश्चात्र दातव्यं तृट्प्रशान्तये ॥ ३ ॥ षडहे च व्यतिक्रान्ते तिक्तकं पाययेद्रसम् ॥
स्नेहयेत्पाकदोषं च ततस्तं च विरेचयेत् ॥ ४ ॥ जीर्णषष्टिकनीवाररक्तशालिप्रमोदकाः ॥ तद्विधाश्चतुरः श्रेष्ठाः यवानां विकृतिस्तथा ॥ ५ ॥
मुद्गा मसूराश्चणकाः कुलत्थाः समकुण्ठकाः ॥ आढकी च फलं मूले यूषार्थं ज्वरिणां हितम् ॥ ६ ॥ कृष्णशुक्लकवन्तीर्कतित्तिरैणकपिञ्जलाः ॥
लावाद्या जाङ्गलश्रेष्ठाः ज्वरिणां तद्विधाश्च ये ॥ ७ ॥ पटोलं सफलं निम्बं कर्कोटककटिल्लकम् ॥ शाकं पर्पटकं चाद्यादम्लार्थे दाडिमं हितम् ॥
॥ ८ ॥ अयोगे वमनं शस्तमूर्द्धगे च विरेचनम् ॥ रक्तपित्ते तथा पाने षडङ्गं शुण्ठिवर्जितम् ॥ ९ ॥ लाजा सिञ्चति कामं तु यवगोधूमशा
लयः ॥ मसूरमुद्गचणकाः खण्डिताः समकुष्ठिकाः ॥ १० ॥ हृद्या गोधूमिका भक्ष्या घृतक्षीरोपसाधिताः ॥ सक्षौद्रशर्करोपेतास्तथा वृषरसो
हितः ॥ ११ ॥ अतीसारे पुराणानां शालीनां भक्षणं हितम् ॥ अनभिष्यंदि वा चान्यद्रौद्रवत्सकसंयुतम् ॥ १२ ॥ मारुतानां जये यत्नः कार्यो
गुल्मेषु सर्वथा ॥ वाट्यक्षीरेण चाश्नीयाद्वस्तुकं घृतसाधितम् ॥ १३ ॥ कुक्कुटा बर्हिणः श्रेष्ठास्तिक्ता गोधूमशालयः ॥ हिता जठरिणां भोज्ये
यवगोधूमशालयः ॥ १४ ॥ मुद्गाः कुलत्थाः कौलानि जाङ्गला मृगपक्षिणः ॥ पटोलनिम्बधान्याम्बुशुष्कमूलकसैन्धवैः ॥ १५ ॥ मातुलुङ्गरसा
जातिहिङ्गुवृक्षाम्लवेतसैः ॥ आहारं जठरे युक्त्या यथादोषं प्रकल्पयेत् ॥ १६ ॥ कुष्ठिनां च तथा शस्तं पानार्थे खदिरोदकम् ॥ मसूरमुद्गौ यूषार्थे

भोज्ये जीर्णाश्च शालयः ॥ १७ ॥ निम्बपर्पटकौ शाकौ छागलानां तथा रसः ॥ विडङ्गं मरिचं शुण्ठी कुष्ठं रोध्रं ससर्जिकम् ॥ १८ ॥ मनःशिलैः कृतो लेपः कुष्ठहा मूत्रपेषितः ॥ अपूपसक्तुकुल्माषवाज्याद्या मेहिनां हिताः ॥ १९ ॥ यवान्नविकृतिर्मुद्गाः कुलत्था जीर्णशालयः ॥ तिक्तरूक्षाणि शाकानि तिक्तानि हरितानि च ॥ २० ॥ तिलानि तिलशिग्रुर्वा बिभीतेङ्गुदजानि तु ॥ अनभिष्यन्दि यच्चान्यद्भोजने तत्प्रशस्यते ॥ २१ ॥ मुद्गाः सयवगोधूमा धान्यं वर्षस्थितं च यत् ॥ जाङ्गालस्वरसः प्रोक्तो भोजने राजयक्ष्मिणाम् ॥ २२ ॥ कुलत्थमुद्गकालाबुशुष्कमूलकजाङ्गलैः ॥ यूषैर्वा वाष्किरैः स्निग्धैर्दधिदाडिमसाधितैः ॥ २३ ॥ मातुलुङ्गरसक्षौद्रद्राक्षाव्योषादिसंस्कृतैः ॥ यवगोधूमशाल्यन्नैर्भोजयेच्छावसं परम् ॥ २४ ॥ दशमूलफलारास्नाकुलत्थैरुपसाधितैः ॥ पयोव्यूषरसक्काथः श्वासहिक्कानिवारणः ॥ २५ ॥ शुष्कमूलककौलत्थमौद्गजांगलजै रसैः ॥ यवगोधूमशाल्यन्नं जीर्णाशोऽशं समाचरेत् ॥ २६ ॥ जीर्णं पक्वरसं शीधुमार्द्वीकाँस्त्वथ वा पिबेत् ॥ शोथवान्सगुडां पथ्यां खादेद्वा गुडलावनम् ॥ ॥ २७ ॥ चित्रं विचित्रकं चोभौ ग्रहणीरोगनाशनौ ॥ पुराणयवगोधूमशालयो जाङ्गलं रसम् ॥ २८ ॥ मुद्गामलकखर्जूरमृद्वीकाबदराणि च ॥ मधुसर्पिःपयस्तक्रं निम्बपर्पटकौ वृषम् ॥ २९ ॥ तक्रवृद्ध्यानुशस्यन्ते सततं वातरोगिणाम् ॥ हृद्रोगिणे प्रदातव्यं प्रयत्नेन विरेचनम् ॥ ३० ॥ पिप्पलीनां प्रयोगश्च प्रमृते धर्मिणस्तथा ॥ चकार नाडी शीधूनि युक्ता च शिशिराम्भसा ॥ ३१ ॥ युक्तसौवर्चलाजाक्षिमथ शस्तं मदात्यये ॥ सक्षौद्रपयसा लाक्षां पिबेत क्षतवान्नरः ॥ ३२ ॥ क्षयं मांसरसाहारो वह्निसंरक्षणाज्जयेत् ॥ शालयो भोजने शस्ता नीवारकलमादयः ॥ ३३ ॥ यवान्नविकृतिर्मांसं शाकं सौवर्चलं सुधीः ॥ पथ्यं तथैव तासां च मण्डं तक्रं च वारुणी ॥ ३४ ॥ मुस्ताभ्यासस्तथा लेपः चित्रकेण हरिद्रया ॥ यवान्नविकृतिः शालिर्वास्तुकी च सुवर्चलम् ॥ ३५ ॥ त्रपुसी चारुगोधूमाः क्षीरेक्षुघृतसंयुताः ॥ मूत्रकृच्छ्रे च शस्ताः स्युः पाने मण्डसुरादयः ॥ ३६ ॥ लाजा सक्तु तथा क्षौद्रं शाल्यं मांसपरूषकम् ॥ बृन्ताकालाबुशिखिनश्छर्दिघ्नाः पानकानि च ॥ ॥ ३७ ॥ शाल्यन्नं तोयपयसी केवलोष्णश्रितेऽपि वा ॥ तृष्णाघ्ना मुस्तगुडयोर्गुलिका वा मुखे धृता ॥ ३८ ॥ यवान्नविकृतिर्यूषं शुष्कमूलकजं तथा ॥ शाकं पटोलवेत्राग्रमूरुस्तम्भविनाशनम् ॥ ३९ ॥ मुक्ताढकमसूराणामतीरैर्जाङ्गलैस्तथा ॥ ससैन्धवघृतद्राक्षाशुण्ठ्यामलककोलजैः ॥ ४० ॥ यूषैः पुराणगोधूमयवशाल्यन्नमभ्यसेत् ॥ विसर्पं ससिताक्षौद्रमृद्वीकादाडिमोदरः ॥ ४१ ॥



१ 'शफरीक्राथम्' इति खपुस्तके । २ 'शटी' इत्यपि पाठः ।

रक्तषष्टिकगोधूमयवमुद्गादिवल्लघु ॥ काचमाची च वेत्राग्रं वास्तुकं च सुवर्चला ॥ ४२ ॥ वातशोषितनाशाय तोयं शस्तं सिता मधु ॥
नासारोगे च सहितं घृतदूर्वाप्रसाधितम् ॥ ४३ ॥ भृङ्गराजरसे सिद्धे तैलं धात्रीरसोऽपि वा ॥ न स्यात्सर्वामयेष्विष्टं मूर्धजत्रूद्भवेष्वथ ॥ ४४ ॥
शीततोयान्वपतनं तिलानां राम भक्षणम् ॥ द्विजदार्ढ्यकरं प्रोक्तं तथा पुष्टिकरं शुभम् ॥ ४५ ॥ गण्डूषस्तिलतैलेन द्विजदार्ढ्यकरः परः ॥
विडङ्गचूर्णं गोमूत्रं सर्वत्र कृमिनाशनम् ॥ ४६ ॥ धात्रीफलान्यथाज्यं च शिरोलेपनमुत्तमम् ॥ शिरोरोगविनाशाय स्निग्धशीतं च भोजनम् ॥ ४७ ॥
तैलं वा वस्ति मूत्रं वा कर्णपूरणमुत्तमम् ॥ कर्णशूलविनाशाय शुद्धं तैलं निषेचयेत् ॥ ४८ ॥ गिरिभृच्चन्दनं माल्यं मालतीकालिकास्तथा ॥
संयोज्य या कृता वर्तिः क्षतचक्रहरी तु सा ॥ ४९ ॥ व्योषं त्रिफलया युक्तं सुरूकं च रसाञ्जनम् ॥ सर्वाक्षिरोगशमनं तथा चैव रसाञ्जनम् ॥ ५० ॥
आज्यभृष्टं शिलापिष्टं रोध्रं काञ्जिकसैन्धवैः ॥ आश्च्योतनविनाशाय सर्वरोगामयेषु च ॥ ५१ ॥ गिरिभृच्चन्दनैर्लेपो बहिर्लेपस्य शस्यते ॥
नेत्रामयविघातार्थं त्रिफलां शीलयेत्सदा ॥ ५२ ॥ रात्रौ तु मधुसर्पिभ्यां दीर्घमायुर्जिजीविषुः ॥ शतावरे रसे सिद्धौ वृष्यौ क्षीरघृतौ स्मृतौ ॥ ५३ ॥
कलविङ्कानि माषाश्च वृषौ क्षीरं घृतं तथा ॥ आयुष्या त्रिफला चैव पूर्ववन्मधुकान्विता ॥ ५४ ॥ मधुकायोरजोपेता वलीपलितनाशिनी ॥
वचसिद्धं घृतं राम तदा भूतविनाशनम् ॥ ५५ ॥ कण्ठे बुद्धिप्रदं चैव तथा सर्वार्थसाधकम् ॥ वल्गकल्ककषायेण सिद्धमभ्यञ्जनं हितम् ॥ ५६ ॥
रास्ना सहचरैर्वापि तैलं वातविकारिणाम् ॥ अनभिष्यन्दि यच्चान्यत्तद्व्रणेषु प्रशस्यते ॥ ५७ ॥ पक्वस्य च तथा भेदं निम्बशीलं च रोपणे ॥
तथा तस्योपचारश्च बलिकर्मार्थिशेषतः ॥ ५८ ॥ सूतिका च तथा रक्षा व्रणिनां तु सदा हिता ॥ जङ्गमे विषदंशे तु दातव्यं स्थावरं विषम् ॥
॥ ५९ ॥ स्थावरे सर्पदष्टस्य हितं मांसस्य भक्षणम् ॥ भक्षणं निम्बपत्राणां सर्पदष्टस्य भेषजम् ॥ ६० ॥ वन्ध्याकार्कोटजं मूलं छागमूत्राभिभा
वितम् ॥ नस्यं काञ्जिकसंपिष्टं विषवेगविनाशनम् ॥ ६१ ॥ बन्धनादूदूषणं छेददाहस्रावाः प्रकीर्तिताः ॥ पूर्वदष्टस्य पाने च हृदयावरण घृतम् ॥
॥ ६२ ॥ तालनिम्बदलं केशा जीर्णचैलं यवा घृतम् ॥ धूपो वृश्चिकविद्धस्य शिखिपत्रं घृतेन वा ॥ ६३ ॥ अर्कक्षीरेण संपिष्टं लेपबीजं पलाशजम् ॥
वृश्चिकार्त्तस्य कृष्णा वा शिरीषफलसंयुता ॥ ६४ ॥ तिलकास्फोटयोर्दूनं गिरिकर्ण्यास्तिलस्य च ॥ शर्करामधुसर्पींषि पानमाखुविषापहम् ॥
॥ ६५ ॥ आर्कक्षीरं तिलास्तैलं पललं च गुरु समम् ॥ पानाज्जयति दुर्वारमविषं शीघ्रमेव च ॥ ६६ ॥ पीत्वा मूलं त्रिवृत्तुल्यं तण्डुलीयस्य सर्पिषा ॥
सर्पकीटविषाण्याशु जयत्यतिबलान्यपि ॥ ६७ ॥ चन्दनं पद्मकं कुष्टं नताम्बूशीरपाटलाः ॥ निर्गुण्डीशाखिशैलूषलूताविषहरोऽगदः ॥ ६८ ॥

शिरोविरेचनं शस्तं गुडनागरकं द्विज ॥ नस्यकर्मणि वस्तौ च तथा भृङ्गे च भार्गव ॥ ६९ ॥ तैलमेव परं विद्यात्स्नेहपाने तथा घृतम् ॥
स्वेदनीयः परो वह्निः सिताम्भःस्तम्भनं परम् ॥ ७० ॥ त्रिवृद्धि रेचने श्रेष्ठा वमने मदनं तथा ॥ वस्तिर्विरेको वमनं तैलं सर्पिस्तथा मधु ॥७१॥
रक्तपित्ते बला रास्ना क्रमेण परमौषधम् ॥ शारीरमानसाग्रं तु सहजा व्याधयो मताः ॥ ७२ ॥ शारीरज्वरकुष्ठाद्याः क्रोधाद्या मानसा मताः ॥
आगन्तवोऽभिघातोत्थाः सहजाः क्षुत्तृषादयः ॥ ७३ ॥ शारीरागन्तुनाशाय सततं सूर्यवासरे ॥ गुडाज्यलवणोपेतं सहिरण्यं द्विजातये ॥७४॥
दद्याच्च धूपं धर्मज्ञ प्रीणयेच्च दिवाकरम् ॥ आरोग्यमेतेनाप्नोति कामाँश्च मनसेप्सितान् ॥ ७५ ॥ सततं दिवसे चान्द्रे स्नानमभ्यङ्गपूर्वकम् ॥
यः प्रयच्छति विप्राय सोऽपि रोगैर्विमुच्यते ॥ ७६ ॥ शनैश्चरदिने दत्त्वा तैलं विप्रेषु शक्तितः ॥ नित्यमेव महाभाग रोगनाशनमाप्नुयात् ॥ ७७ ॥
आश्विनं सकलं मासं प्रत्यहं गोरसैर्द्विजान् ॥ भोजयित्वा महाभाग रोगनाशनमाप्नुयात् ॥७८॥ स्नापयित्वा तथा लिङ्गं देवदेवस्य शूलिनः ॥
घृतेन पयसा चैव सर्वरोगैर्विमुच्यते ॥ ७९ ॥ गायत्र्यावाहयेद्विद्वान्दूर्वां त्रिमधुनाप्लुताम् ॥ पूतश्च ब्राह्मणाशीर्भिः सर्वरोगैर्विमुच्यते ॥ ८० ॥
यस्मिन्भे व्याधिमाप्नोति कृत्वा तस्य बलिक्रियाम् ॥ भपूजाविधिना राम तस्माद्रोगाद्विमुच्यते॥८१॥कर्तव्यमथवा स्नानं तथारोग्यविवर्धनम् ॥
आरोग्यदां द्वितीयां वा प्रतिपद्वा भृगूत्तम ॥ ८२ ॥ कर्तव्यं वैष्णवं वापि व्रतमारोग्यकारकम् ॥मानसानां[1] निजानां च तथा चैवाविपत्तये ॥८३ ॥
शरणं देवदेवेशं व्रजेत मधुसूदनम् ॥ सर्वगं तं जगन्नाथमजेयं पुरुषोत्तमम् ॥ ८४ ॥ स्तुवन्नामसहस्रेण व्याधीन्सर्वान्व्यपोहति ॥
दोषधातुमलाधारं शरीरं प्राणिनां द्विज ॥ ८५ ॥ वातपित्तकफा दोषा धातवश्च तथा शृणु ॥ भुक्तं पक्वाशयादन्नं द्विधा याति भृगूत्तम ॥ ८६ ॥
अंशेनैकेन किट्टत्वं रसतां चापरेण च ॥ किट्टभागो मलस्तत्र विण्मूत्रस्वेददूषकः ॥ ८७ ॥ नासामलं देहमलं तथा कर्णमलं च यत् ॥ रसभागे
रसं तत्र सम्यक्शोणिततां व्रजेत् ॥ ८८ ॥ मांसं रक्तन्ततो मेदो मेदसोस्थ्नां च सम्भवः ॥ अस्थ्नो मज्जा ततः शुक्रं शुक्राद्राम ततो रसः ॥८९ ॥
सर्वेषामेव धातूनां सारमोजः प्रकीर्तितम् ॥ देशं सात्म्यं च यां शक्तिं कालं प्रकृतिमेव च ॥९० ॥ज्ञात्वा चिकित्सितं कुर्याद्भेषजस्य तथा बलम् ॥
तिथिं रिक्तां दिनेशं च तथैव च कुजार्कजौ ॥ ९१ ॥ दारुणोग्राणि चर्क्षाणि वर्जयेद्भेषजे सदा ॥ हरिगोद्विजचन्द्रार्कसुराग्नीन्प्रतिपूज्य च॥ ९२ ॥
श्रुत्वा मन्त्रमिमं विद्वान्भेषजारम्भमाचरेत् ॥ ब्रह्मत्र्यक्षाश्विरुद्रेन्द्रभूचन्द्रार्कानलानिलाः ॥ ९३ ॥ ऋषय ओषधिग्रामा भूतसर्गाश्च पान्तु ते ॥

१ च रोगाणां इति ख० ।

रसायनमिवर्षीणां देवानाममृतं यथा ॥ ९४ ॥ स्वधेवोत्तमनागानां भैषज्यमिदमश्नुते ॥ वातश्लेष्मात्मको देशो बहुवृक्षो बहूदकः ॥ ९५ ॥
अनूप इति विख्यातो जाङ्गलस्तद्विवर्जितः ॥ किंचिद्वृक्षाधिको देशस्तथा साधारणः स्मृतः ॥९६॥ जाङ्गलः पित्तबहुलो मध्यः साधारणो मतः॥
रूक्षशीतश्चलो वातः पित्तमुष्णकटुद्रवम् ॥ ९७ ॥ स्थिराम्लस्निग्धमधुरं बलासं च प्रचक्षते ॥ वृद्धिः समानैः सर्वेषां विपरीतैर्विपर्ययः ॥ ९८ ॥
समाः स्वाद्वम्ललवणाः श्लेष्मला वायुनाशनाः ॥ कटुतिक्तकषायाश्च वातलाः श्लेष्मनाशनाः ॥ ९९ ॥ कट्वम्ललवणा ज्ञेयास्तथा पित्तविवर्धनाः ॥
तिक्ताः स्वादुकषायाश्च तथा पित्तविनाशनाः ॥ १०० ॥ स्वभावतस्तथा कर्म ते च कुर्वन्ति भार्गव ॥ शिशिरे च वसन्ते च निदाघे च तथा
क्रमात् ॥ १०१ ॥ चयप्रकोपप्रशमास्तथा पित्तस्य कीर्तिताः ॥ निदाघे वारिदा रात्रे तथा शरदि भार्गव ॥ १०२ ॥ चयप्रकोपप्रशमास्तथा
वातस्य कीर्तिताः ॥ चयप्रकोपप्रशमाः श्लेष्मणश्च प्रकीर्तिताः ॥ १०३ ॥ संवत्सरो द्वादशाङ्गो मासभेदेन कीर्तितः ॥ द्विधा तु मतभेदेन भूय
एव प्रकीर्तितः ॥ १०४ ॥ आदानश्च विसर्गश्च तत्रापि परिकीर्तितौ ॥ वर्षादयो विसर्गाश्च हेमन्ताद्याः स्मृतास्त्रयः ॥ १०५ ॥ मेघकाले च शरदि
हेमन्ते च यथाक्रमात् ॥ चयप्रकोपप्रशमस्तथा पित्तस्य कीर्तितः ॥ १०६ ॥ शिशिराद्यास्तथादानं ग्रीष्मान्ता ऋतवस्त्रयः ॥ सौम्यो विसर्ग
स्त्वादानं चाग्नेयं परिकीर्तितम् ॥ १०७ ॥ वर्षादीन्त्रीनृतूनाम चतुःपर्यायगोरसान् ॥ विवर्धयेत्तथा तिक्तकषायकटुकान्क्रमात् ॥ १०८ ॥ यथा
रजन्यो वर्धन्ते बलमेवं विवर्धते ॥ क्रमशोऽथ मनुष्याणां हीयमानासु हीयते ॥ १०९ ॥ रात्रिभुक्तं दिनान्ते तु दिवसस्य तथैव च ॥ आदिमध्या
वसानेषु कफपित्तसमीरणाः ॥ ११० ॥ प्रकोपं यान्ति कोपादौ काले येषां चयः स्मृतः ॥ प्रकोपान्तरजे काले शमस्तेषां प्रकीर्तितः ॥ १११ ॥
अतिभोजनतो राम तथा चाभोजनेन च ॥ सर्वेऽपि रोगा जायन्ते वेगोदीरणधारणैः ॥ ११२ ॥ अन्नेन कुक्षेर्द्वावंशौ पानेनैकं प्रपूरयेत् ॥ आश्रयं
पवनादीनां तथैकमवशेषयेत् ॥ ११३ ॥ व्याधेर्निदानस्य तथा विपरीतमथौषधम् ॥ कर्तव्यमेतदेवात्र मया सार्धं प्रकीर्तितम् ॥ ११४ ॥ नाभे
रूर्ध्वमधश्चैव गुदश्रोण्योस्तथैव च ॥ बलासपित्तवातानां देहे स्थानं प्रकीर्तितम् ॥ ११५ ॥ तथापि सर्वगा एते देहे वायुर्विशेषतः ॥ देहस्य मध्ये
हृदयं स्थानं तु मनसः स्मृतम् ॥ ११६ ॥ कृशोल्पकेशश्चपलो बहुवाग्विषमानलः ॥ व्योमगश्च तथा स्वप्ने वातप्रकृतिरुच्यते ॥ ११७ ॥
अकालपलितः क्रोधी प्रस्वेदी मधुरप्रियः ॥ स्वप्ने च दीप्तिमत्प्रेक्षी पित्तप्रकृतिरुच्यते ॥ ११८ ॥ दृढाङ्गः स्थिरचित्तश्च सुप्रजः स्थिरमूर्धजः ॥
शुक्लाम्बुदर्शी स्वप्ने च कफप्रकृतिको नरः ॥ ११९ ॥ तामसा राजसाश्चैव सात्त्विकाश्च तथा स्मृताः ॥ मानुषा भृगुशार्दूल वातपित्तकफा

धिकाः ॥ १२० ॥ रूक्षशीतव्यवायाध्वगुरु कर्म प्रवर्तते ॥ कदन्नभोजनाद्वायुर्देहे शोकाच्च कुप्यति ॥ १२१ ॥ विदाहिनां तथोष्णानामुच्चैर ध्वनिषेविणाम् ॥ पित्तं प्रकोपमायाति भयेन च तथा द्विज ॥ १२२ ॥ अत्यंबुपानविषमभोजिनां भुवि शायिनाम् ॥ श्लेष्मा प्रकोपमायाति तथा ये चाल्पभोजनाः ॥ १२३ ॥ वातपित्तकफोत्थानि सर्वरोगाणि देहिनाम् ॥ लक्षयेल्लक्षणं विद्वान्शमयेत्तदनन्तरम् ॥ १२४ ॥ अस्थिभङ्गः कषायित्वमास्ये शुष्कास्यता तथा ॥ जृंभणं लोमहर्षश्च वातिकव्याधिलक्षणम् ॥ १२५ ॥ नखनेत्रशिराणां च पीतता कटुता मुखे ॥ तृष्णा दाहोऽम्लता चैव पित्तव्याधिनिदर्शनम् ॥ १२६ ॥ आलस्यं च प्रसेकश्च गुरुता मधुरास्यता ॥ उष्णाभिलाषिता चेति श्लैष्मिकं व्याधि लक्षणम् ॥ १२७ ॥ स्निग्धोष्णमन्नं ससुखा च शय्या मनोऽनुकूलाः सुहृदः कथाश्च ॥ अभ्यञ्जनं चाप्यतितैलपानं वातप्रकोपप्रशमाय दृष्टम् ॥ ॥ १२८ ॥ सरांसि वाप्यः सरितः सुशीताश्चन्द्रांशवश्चन्दनपङ्कलेपाः ॥ संसेवितेनाशु शमं प्रयाति विलासमग्र्यं मनसः प्रहर्षात् ॥ १२९ ॥ सर्वामयार्तिप्रशमार्थमेकां त्वमोषधीं राम निबोध गुह्याम् ॥ भक्तिः प्रभोर्देववरस्य विष्णोर्या सर्वकामैः पुरुषं युनक्ति ॥ १३० ॥ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० सं० पुरुषचिकित्सानाम षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥ ॥ छ ॥ ॥ राम उवाच ॥ ॥ आरोग्यकरणं नाम द्वितीया प्रतिपत्तथा ॥ आरोग्यदं व्रतं चैव वैष्णवं कथयस्व मे ॥ १ ॥ ॥ पुष्कर उवाच ॥ ॥ धनिष्ठासु महाभाग यजमानपुरोहितौ ॥ उपोष्य वारुणं स्नानं यजमानस्य कारयेत ॥ २ ॥ कृत्वा कुम्भशतं साग्रं शंखमुक्ताफलोदकैः ॥ भद्रासनोपविष्टस्तैः स्नातश्चैवाहताम्बरः ॥ ३ ॥ केशवं वारुणं चन्द्रं नक्षत्रं वारुणं तथा ॥ पूजयेत्प्रयतो राम गन्धमाल्यानुलेपनैः ॥ ४ ॥ धूपदीपनमस्कारैस्तथा चैवान्नसम्पदा ॥ देवतानां यथोक्तानां कुर्वीत हवनं तथा ॥ ५ ॥ सर्वौषधैस्तथाज्येन यथाशक्ति विधानतः ॥ गुरवे वाससी देये रसकुम्भं च काञ्चनम् ॥ ६ ॥ ब्राह्मणानां प्रदातव्या वित्तशक्त्या च दक्षिणा ॥ शमीशाल्मलिजैः पत्रैर्वंशाग्रेण तथैव च ॥ ७ ॥ त्रिवृतस्तु बलिः कार्यः सर्वरोगविनाशनः ॥ शाकानि हरितं माल्यं सर्वसस्यानि वाससी ॥ वरुणायाशु निक्षिप्य गन्धैर्धूपैर्निवेदयेत् ॥ ८ ॥ अलङ्घ्यमानस्य हि वारुणं तं स्नानेन दानेन कृतेन सम्यक् ॥ रोगाः समस्ताः प्रशमं प्रयान्ति बद्धस्तथा मोक्षमवाप्नुयाच्च ॥ ९ ॥ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० सं० रामं प्रति पुष्करोपाख्याने शतभिषास्नानवर्णनं नाम सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥ ॥ छ ॥ ॥ पुष्कर उवाच ॥ ॥ पौषशुक्लद्वितीयायां गवां शृङ्गोदकेन तु ॥ स्नात्वा शुक्लाम्बरो भूत्वा सूर्येऽस्तं समुपागते ॥ १ ॥ बालेन्दोः पूजनं कृत्वा गन्धमाल्यानुलेपनैः ॥ धूपदीपनमस्कारैस्तथा चैवा

न्नसम्पदा ॥ २ ॥ दध्ना च परमान्नेन गुडेन लवणेन च ॥ पूजनैर्ब्राह्मणानां च पूजयित्वा निशाकरम् ॥ ३ ॥ यावदस्तं न यातीन्दुस्तावदेव समाचरेत् ॥ आहारं गोरसप्रायमधःशायी निशं नयेत् ॥ ४ ॥ ततः संवत्सरे पूर्णे सौम्यमासे द्विजोत्तम ॥ बालेन्दोः पूजनं कृत्वा ब्राह्मणानां च पूजनम् ॥ ५ ॥ वाससी रसकुम्भं च काञ्चनं च द्विजातये ॥ दत्त्वा च पूजयित्वा च व्रतपारङ्गतो भवेत् ॥ ६ ॥ व्रतेनानेन धर्मज्ञ रोगमेवं व्यपोहति ॥ सर्वसौख्यं तथा द्रव्यं पुष्टिं च मनुजोत्तम ॥ ७ ॥ कामं समाप्नोत्यथवैकमिष्टं येन व्रतेनाथ समस्तधर्मम् ॥ अभ्यासतस्तस्य समस्तकामान्नरः समाप्नोति किमत्र चित्रम् ॥ ८ ॥ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० सं० रामं प्रति पुष्करोपाख्याने आरोग्यद्वितीया नामाष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥ ॥ पुष्कर उवाच ॥ ॥ संवत्सरावसाने तु पञ्चदश्यामुपोषितः ॥ पूजयेद्भास्करं देवं वर्णकैः कमले कृते ॥ १ ॥ शुक्लेन गन्धमाल्येन चन्दनेन सितेन च ॥ तथा कूर्मेण धूपेन घृतदीपेन भार्गव ॥ २ ॥ अपूपैः सैकतैर्दध्ना परमान्नेन भूरिणा ॥ ओदनेन च शुक्लेन सितालवणसर्पिषा ॥ ३ ॥ क्षीरेण च फलैः शुक्लैर्वह्निब्राह्मणतर्पणैः ॥ पूजयित्वा जगद्धाम दिनभागे चतुर्थके ॥ ४ ॥ आहारं प्रथमं कुर्यात्सघृतं मनुजोत्तमः ॥ रसं च मनुजश्रेष्ठ घृतहीनं विवर्जयेत् ॥ ५ ॥ भुक्त्वा च सकृदेवान्नं नाहारं समुपाचरेत् ॥ पानीयपानं कुर्वीत ब्राह्मणानुमते पुनः ॥ ६ ॥ संवत्सरमिदं कृत्वा ततः कृत्वा त्रयोदशम् ॥ पूजनं देवदेवस्य तस्मिन्नहनि भार्गव ॥ ७ ॥ समापयेद्व्रतं पुण्यं राम कुम्भं द्विजातये ॥ सहिरण्यं सवस्त्रं च तथा दद्याद्द्विजोत्तम ॥ ८ ॥ व्रतेनानेन धर्मज्ञ रोगमेव व्यपोहति ॥ आरोग्यमाप्नोति गतिं तथाग्र्यां यशस्तथाग्र्यं विपुलांश्च भोगान् ॥ व्रतेन सम्यक्पुरुषो धनार्थी सम्पूजयेद्यश्च जगत्प्रधानम् ॥ ९ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं० रामं प्रति पुष्करोपाख्याने अरोग्यप्रतिपन्नामैकोनषष्टितमोऽध्यायः ॥ ५९ ॥ पुष्कर उवाच ॥ शुक्लपक्षावसाने तु यद्राम दिनपञ्चकम् ॥ तत्र सम्पूजयेद्विष्णुं विधिना येन तं शृणु ॥ १ ॥ गोमूत्रं गोमयं क्षीरं दधि सर्पिस्तथैव च ॥ एकैकेन चरेत्स्नानमेकादश्यादिषु क्रमात् ॥ २ ॥ कौपताडागनादेयैः पद्मिनीसारसैर्जलैः ॥ कर्तव्यं क्रमशः स्नानं स्नातः सम्पूजयेद्धरिम् ॥ ३ ॥ तैलमिक्षुरसं क्षौद्रं क्षीरं सर्पिश्च भार्गव ॥ स्नपयेद्देवदेवस्य कर्तव्यं स्याद्दिनक्रमात् ॥ ४ ॥ कालागुरूशीरं च तथा जातीफलं द्विज ॥ कर्पूरं चन्दनं चैव कल्पयेदनुलेपने ॥५॥ कुसुमेष्वम्बुजातेषु गन्धवत्सु सितेषु च ॥ एकैकं कल्पयेज्जातिं श्रद्धया दिवसक्रमात् ॥६॥ कृष्णा गौरा तथा ताम्रा कपिला च सिता तथा ॥ या धेनुस्तद्घृतं देयं दीपार्थं दिवसक्रमात् ॥ ७ माषमुद्गकलापानां चणकस्य तिलस्य च ॥ भक्ष्याणि विनिवेद्यानि तथैव दिवसक्रमात् ॥ ८ ॥

 

फाणितं च गुडं चैव तथा मत्स्यण्डिका शुभा ॥ खण्डं च शर्करां चैव क्रमशो विनिवेदयेत् ॥९॥ क्षीरवृक्षस्य समिधस्तथा दूर्वास्तिलानपि ॥ सिद्धार्थकान्यथाज्यं च भावयेद्दिवसक्रमात् ॥ १० ॥ अनिरुद्धाय देवाय प्रद्युम्नाय तथैव च ॥ संकर्षणाय देवाय वासुदेवाय चाप्यथ ॥ ११ ॥ नाम्ना तु जुहुयाद्वह्निं प्रणवेनान्तिमेऽहनि ॥ अयः सीसं तथा ताम्रं रजतं कनकं तथा ॥ १२ ॥ दक्षिणार्थं प्रदातव्यं द्विजेभ्यो दिवसक्रमात् ॥ नक्तं च गोरसप्रायं भोक्तव्यं तैलवर्जितम् ॥ १३ ॥ भूशोधनं च कर्तव्यं देवस्य पुरतस्तथा ॥ गीतवाद्यस्तवैश्चैव पूजयेद्दिनपञ्चकम् ॥ १४ ॥ एवं संवत्सरं कृत्वा सर्वान्रोगान्व्यपोहति ॥ ग्रहणे च व्रतस्यास्य न कालनियमः स्मृतः ॥ १५ ॥ नित्याभ्यासेन चैवास्य विष्णुलोके महीयते॥ व्रतं श्रेष्ठमिदं प्रोक्तं मया ते भृगुनन्दन ॥ १६ ॥ धन्यं यशस्यं रिपुनाशकारि सौभाग्यदं पापहरं पवित्रम् ॥ आयुष्यमग्र्यं सुगतिप्रदं च व्रतोत्तमं विघ्नविनाशनं च ॥१७॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं० रामं प्रति पुष्करोपाख्याने आरोग्यव्रतन्नाम षष्टितमोऽध्यायः ॥ ६० ॥

पुष्कर उवाच ॥ राजधर्मव्रतं श्रेष्ठं कृत्वा पुरुषविग्रहम् ॥ पुरुषान्विनियुञ्जीत चोत्तमाधमकर्मसु ॥ १॥ ग्रामस्याधिपतिं कुर्याद्दशग्रामाधिपं तथा ॥ शतग्रामाधिपं चापि तथैव विषयेश्वरम् ॥ २ ॥ तेषां भागविभागश्च भवेत्कर्मानुरूपतः ॥ नित्यमेव तथा कार्यं तेषां चारैः परीक्षयेत् ॥ ३ ॥ ग्रामदोषान्समुत्पन्नान्ग्रामेशः प्रशमं नयेत् ॥ अशक्तौ देशपालस्य स तु गत्वा निवेदयेत् ॥ ४ ॥ श्रुत्वा तु देशपालोपि तत्र युक्तिमुपाचरेत् ॥ सोप्यशक्तः शतेशाय यथावद्विनिवेदयेत् ॥ ५ ॥ शतेशो विषयेशाय सोपि राज्ञे निवेदयेत् ॥ अशक्तौ शक्तिमान् राम स्वयं युक्तिमुपाचरेत् ॥ ६॥ राजा सर्वात्मना कुर्याद्विषये राम रक्षणम् ॥ वित्तमाप्नोति धर्मज्ञ विषयाच्च सुरक्षितात् ॥ ७ ॥ रिपुघातसमर्थः स्याद्वित्तवानेव पार्थिवः ॥ परचक्रोपमर्देषु वित्तवानेव मुच्यते ॥ ८ ॥ वित्तवानेव सहति सुदीर्घमपि विग्रहम् ॥ बहुदण्डानपि परांस्तथा भिन्द्याद्धनाधिपः ॥ ९ ॥ अन्नप्राणाः प्रजाः सर्वा धने तच्च प्रतिष्ठितम् ॥ धनवान्धर्ममाप्नोति धनवान्काममश्नुते ॥ १० ॥ यस्यार्थस्तस्य मित्राणि यस्यार्थस्तस्य बान्धवाः ॥ यस्यार्थः स पुमाँल्लोके यस्यार्थः सोपि पण्डितः ॥ ११ ॥ अर्थेन हि विहीनस्य पुरुषस्याल्पमेधसः ॥ विच्छिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा ॥१२॥ विशेषो नास्ति लोकेषु पतितस्याधनस्य च ॥ पतितानां न गृह्णन्ति दरिद्रो न प्रयच्छति ॥१३ ॥ धनहीनस्य भार्यापि नैव स्याद्वशवर्तिनी ॥ गुणौघमपि चैवास्य नैव कश्चित्प्रकाशयेत् ॥ १४ ॥ बान्धवा विनिवर्तन्ते धनहीनात्तथा नरात् ॥ यथा पुष्पफलैर्हीनाच्छकुन्ता द्विज पादपात् ॥ ॥ १५ ॥ दारिद्र्यमरणे चोभे केषांचित्सदृशे मते ॥ सत्यं ह्रासाद्दरिद्रस्य मृतः श्रेयान्मते मम ॥ १६ ॥ कोशं राज्यतरोर्मूलं तस्माद्यत्नं तद

र्जने ॥ धर्मेणैव ततः कुर्यान्नाधर्मेण कथंचन ॥ १७ ॥ धनैरधर्मसम्प्राप्तैर्यद्धद्धं हि पिधीयते ॥ तदेव याति विस्तारं विनाशाय दुरात्मनाम् ॥१८॥
सुकृतस्य पुराणस्य बलेन बलिनां वर ॥ यद्यधर्मात्फलं शीघ्रं नाप्नुवन्ति दुरात्मनः ॥ १९ ॥ तथापि पूर्वकर्मान्ते तेन पापेन कर्मणा ॥ विन
श्यन्ति समूलास्ते सपुत्रधनबान्धवाः ॥ २० ॥ नरकेषु तथा तेषां यातना विविधाः स्मृताः ॥ बहून्यब्दसहस्राणि ये नृपा राष्ट्रपीडकाः ॥ २१॥
नित्यं राज्ञा तथा भाव्यं गर्भिणीसहधर्मिणा ॥ यथा स्वं सुखमुत्सृज्य गर्भस्य सुखमावहेत् ॥ २२ ॥ गर्भिणी तद्वदेवेह भाव्यं भूपतिना सदा ॥
प्रजासुखं तु कर्तव्यं सुखमुद्दिश्य चात्मनः॥ २३ ॥ किं यज्ञैस्तपसा तस्य प्रजा यस्य सुरक्षिताः ॥ सुरक्षिताः प्रजास्तस्य स्वर्गस्तस्य गृहोपमः॥
॥ २४ ॥ अरक्षिताः प्रजा यस्य नरकं तस्य मन्दिरम् ॥ राजा षड्भागमादत्ते सुकृताद्दुष्कृतादपि ॥ २५ ॥ धर्मो नाम महाभाग सम्यग्रक्षण
तत्परः ॥ अरक्षितस्तथा सर्वं पापमाप्नोति भार्गव ॥ २६ ॥ नैव किञ्चिदवाप्नोति पुण्यभाक्पृथिवीपतिः ॥ आपन्नमपि धर्मिष्ठं प्रजा रक्षत्यथाप
दि ॥ २७ ॥ तस्माद्धर्मार्थकामेन प्रजा रक्ष्या महीक्षिता ॥ सुभगैश्चाथ दुर्वृत्तराजवल्लभतस्करैः ॥ २८ ॥ भक्ष्यमाणाः प्रजा रक्ष्या कायस्थैश्च
विशेषतः ॥ रक्षितास्तद्भयेभ्यस्तु प्रजा राज्ञां भवन्ति ताः ॥ २९ ॥ अरक्षिता सा भवति तेषामेवेह भोजनम् ॥ साधुसंरक्षणार्थाय राजा दुष्ट
निबर्हणम् ॥ ३० ॥ तृणानामिव निर्माता सदा कुर्याज्जितेन्द्रियः ॥ शास्त्रोक्तं बलिमादद्याद्धर्मं तत्तस्य जीवितम् ॥ ३१ ॥ तस्य सन्त्यजनं
राजा न समृद्धोपि कारयेत् ॥ आकाराणि च सर्वाणि शुल्कं शास्त्रोदितो बलिः ॥ ३२ ॥ दण्डं विनयनाद्राज्ञो धर्म्यं तत्तस्य जीवितम् ॥
धर्ता कराणां सर्वेषां प्रभुरुक्तो महीपतिः ॥ ३३ ॥ निधिं पुराणं संप्राप्य केशवं तु प्रवेशयेत् ॥ अर्धं ब्राह्मणसात्कुर्याद्धर्मकामो महीपतिः ॥
॥ ३४ ॥ निधिं द्विजोत्तमः प्राप्य गृह्णीयात्सकलं तथा ॥ जगतोस्य समग्रस्य प्रभुरुक्तो द्विजोत्तमः ॥ ३५॥ निधिं ज्ञात्वा पुराणं तु क्षत्रविट्शूद्र
योनयः ॥ निवेदयेयुर्भूपाय राजा लब्ध्वापि तं निधिम् ॥ ३६ ॥ चतुर्थमष्टमं चांशं तथा षोडशमं द्विज ॥ वर्णक्रमेण विसृजेदाख्यातं धर्म
कारणम् ॥ ३७ ॥ तेऽपि लब्ध्वा तदा तेन संविभज्य द्विजोत्तमान् ॥ शेषेण कुर्युः कामार्थौ विदितौ पृथवीपतेः ॥ ३८ ॥ प्रकाशविभवो लोके
यस्य राज्ञः स भूपतिः ॥ अप्रकाशधनो यस्तु नरकं तस्य मन्दिरम् ॥ ३९ ॥ ममेदमिति यो ब्रूयान्निधिं सत्येन मानवः ॥ तस्याददीत नृप
तिर्भागमब्राह्मणस्य तु ॥ ४० ॥ चतुर्विंशतिकं राम द्वादशं षष्ठमेव च ॥ क्षत्रियाश्च तथा वैश्याः शूद्राश्च भृगुनन्दन ॥ ४१ ॥ अनृतं च वद
न्दण्ड्यः स्ववित्तस्यांशमष्टकम् ॥ प्रणष्टस्वामिकं रिक्थं राजा त्र्यब्दं निधापयेत् ॥ ४२ ॥ अर्वाक्त्र्यब्दाद्धरेत्स्वामी परेण नृपतिर्हरेत् ॥

ममेदमिति यो ब्रूयादनुयुक्तो यथाविधि ॥ ४३ ॥ संपाद्य रूपं द्रव्यादीन्स्वामी तद्द्रव्यमर्हति ॥ अवेदयानो नष्टस्य देशं कालं च तत्त्वतः ॥ ॥ ४४ ॥ वर्णरूपं प्रमाणं च तत्समं दण्डमर्हति ॥ निधिवद्भागमादद्यात्प्रनष्टाधिगतान्नृपः ॥४५॥ बालदायादिकं रिक्थं तावद्राजा तु पालयेत् ॥ यावत्स स्यात्समावृत्तो यावद्वातीतशैशवः ॥ ४६ ॥ बालपुत्रेषु चैवं स्याद्रक्षणं निष्कुलासु च ॥ पतिव्रतासु च स्त्रीषु विधवास्वातुरासु च ॥ ॥ ४७ ॥ जीवन्तीनां तु तासां ये धारयेयुः स्वबान्धवाः ॥ ताञ्छिष्याच्चौरदण्डेन धार्मिकः पृथिवीपतिः ॥ ४८ ॥ सर्वेषामेव वर्णानां चैररपहृतं धनम् ॥ तत्प्रमाणं स्वकात्कोशाद्दातव्यमविधारयन् ॥ ४९ ॥ ततस्तु पश्चात्कर्तव्यं चौरान्वेषणमञ्जसा ॥ चौररक्षाधिकारिभ्यो राजापि तदवाप्नुयात् ॥ ५० ॥ अहृते च तथा वित्ते हृतमित्येव वादिनम् ॥ निर्धनं पार्थिवः कृत्वा विषयात्स्वाद्विवासयेत् ॥ ५१ ॥ न तद्राज्ञा प्रदातव्यं गृहे यत्परिचारकैः ॥ प्रचरद्भिर्हृतं द्रव्यं कार्यं तत्रान्ववेक्षणम् ॥ ५२ ॥ स्वराष्ट्रपण्यादादद्याद्राजा विंशतिमं द्विज ॥ शुल्कांशं परदेशाच्च निबोध गदतो मम ॥ ५३ ॥ क्षयव्ययप्रवासांश्च यथायामं द्विजोत्तम ! ॥ ज्ञात्वा तु कल्पयेत्तत्र शुल्कांशं पृथवीपतिः ॥ ५४ ॥ तथा कार्यं यथा लाभं वणिजः समवाप्नुयुः ॥ पुण्यच्छेदश्च नैव स्यात्स्वदेशे पृथवीपतेः ॥ ५५ ॥ व्ययं शुल्कप्रवासादि लङ्घयित्वा तथा द्विज ॥ विंशांशभागमादद्युर्दण्डनीया अतोन्यथा ॥ ५६ ॥ दिशि दिश्येकमेव स्याच्छुल्कस्थानं नृपस्य तु ॥ तदतिक्रमतो द्रव्यं राजगामि विधीयते ॥ ५७ ॥ दूतानां ब्राह्मणानां च राजाज्ञागामिनां तथा ॥ स्त्रीणां प्रव्रजितानां च तारशुल्कं विवर्जयेत् ॥ ५८ ॥ भिन्नकर्षापणं शुल्कं न ग्राह्यं पृथिवीक्षिता ॥ तारेषु दाशदोषेण नष्टं दाशात्प्रदापयेत् ॥ ५९ ॥ दैवदोषविनष्टं च नष्टं यस्यैव तस्य तत् ॥ शूकधान्येषु षड्भागं शिंबिधान्येष्वथाष्टकम् ॥ ६० ॥ राजा बल्यर्थमादद्याद्देशकालानुरूपकम् ॥ राजांशभागमादद्याद्राजा पशुहिरण्ययोः ॥ ६१ ॥ गन्धौषधिरसानां च पुष्पमूलफलस्य च ॥ पत्रशाकतृणानां च वत्सरेण च चर्मणाम् ॥ ६२ ॥ वैदलानां च भांडानां सर्वस्याश्ममयस्य च ॥ षड्भागमेव चादद्याद्ब्राह्मणेभ्यस्तथा करम् ॥ ६३ ॥ तेभ्यस्तद्धर्मलाभेन राज्ञो लाभः परं भवेत् ॥ न च क्षुधावसीदेत श्रोत्रियो विषये वसन् ॥ ६४ ॥ यस्य राज्ञस्तु विषये श्रोत्रियः सीदति क्षुधा ॥ तस्य सीदति तद्राष्ट्रं दुर्भिक्षव्याधितस्करैः ॥ ६५ ॥ श्रुतवृत्ते तु विज्ञाय वृत्तिं तस्य प्रकल्पयेत् ॥ रक्षेच्च सर्वतस्त्वेनं पिता पुत्रमिवौरसम् ॥ ६६ ॥ संरक्ष्यमाणो राज्ञा यः कुरुते धर्मसंग्रहम् ॥ तेनायुर्वर्द्धते राज्ञो द्रविणं राष्ट्रमेव च ॥ ६७ ॥ कर्म कुर्युर्नरेन्द्रस्य मासेनैकं च शिल्पिनः ॥ भक्तमात्रेण ये चान्ये स्वशरी

रोपजीविनः ॥ ६८ ॥ स्नातानुलिप्ताश्च विभूषिताश्च वेश्याङ्गनावारविवर्तितेन ॥ संवीतगात्रः पृथिवीश्वरस्य सदाभ्युपासां परितस्त्रिकुर्युः ॥
॥६९॥ इति श्रीविष्णुधर्मोत्तरे मा०सं० द्वितीयखण्डे रामं प्रति पुष्करोपाख्याने राजधर्मवर्णनोनामैकषष्टितमोऽध्यायः ॥६१॥ पुष्कर उवाच ॥
धर्मश्चार्थश्च कामश्च पुरुषार्थः परः स्मृतः ॥ अन्योन्यरक्षणात्तेषां सेवा कार्या महीक्षिता ॥ १ ॥ धर्ममूलोर्थविटपस्तथा कामफलो महान् ॥
त्रिवर्गपादपस्तस्य रक्षणात्फलभाग्भवेत् ॥ २ ॥ धर्माविरोधिनी कार्या कामसेवा सदैव तु ॥ मूलच्छेदे भवेन्नाशो विटपस्य फलस्य च ॥३॥
कामसेवाविहीनस्य धर्मार्थावपि निष्फलौ ॥ ओषधीनां फलार्थाय कीनाशो यत्नवांस्तथा ॥४॥ कामार्थी यत्नवानेवं लोभो धर्मार्थयोर्द्विज ॥
कामस्यापि परं नार्यो धर्मरागमदोत्कटाः ॥ ५ ॥ तदर्थं रत्ननिधयो विभवाश्च तथा परे ॥ गीतं वाद्यं सुमधुरं भोज्यं पानं स्त्राज
स्तथा ॥६॥ भूषणानि सुगन्धीनि तदर्थं सर्वमेव हि ॥ तपश्चापि तपस्यन्ति दुःखं परमुपाश्रिताः ॥ ७ ॥ दुर्गमाणि च तीर्थानि व्रजन्ति पुरु
षास्तथा ॥ त्यजन्ति समरे प्रणान्प्राणेभ्योऽप्यधिकं धनम् ॥ ८ ॥ त्यजन्ति ब्राह्मणादिभ्यस्तथा स्वर्गेप्सवो जनाः ॥ स्वर्गस्यापि धनं राम
कारणं विद्धि भार्गव ॥ ९ ॥ ता एव चपलापाङ्गविक्षेपविजिताः प्रजाः ॥ क्षयमेव क्षयं तस्य यस्य नाध्यसितं सदा ॥ १० ॥ अधः
कृत्वेन्दुबिम्बाग्रवदानाभिः पुरन्ध्रिभिः ॥ तस्यैकं सफलं जन्म सम्पदश्च मनोरथाः ॥ ११ ॥ यस्यैताश्चञ्चलापाङ्ग्यस्तरुण्यो वश
मागताः ॥ सेव्यास्ता नातिसेव्याश्च भूभुजा विजिगीषुणा ॥ १२ ॥ असेवनाद्वृथा जन्म दोषग्रामोऽतिसेवनात् ॥ ऊरुस्तम्भत्रयं
प्रोक्तं शरीरेषु शरीरिणाम् ॥ १३ ॥ आहारं मैथुनं निद्रा यैर्वृतं सकलं जगत् ॥ असेवनादथैतस्य तथैवात्यन्तसेवनात् ॥ १४ ॥
रोगग्रामो नृणां देहे सम्भवत्यतिदारुणः ॥ विश्वासमतिसक्तिं च तीक्ष्णतां स्त्रीषु वर्जयेत् ॥ १५ ॥ न चाधिकारे कर्तव्या भूषणाच्छाद
नाशनैः ॥ सुविभक्ताश्च कर्तव्या लालनीयास्तथैव च ॥ १६ ॥ ज्ञेयौ रागापरागौ च तथा तासां विशेषतः ॥ नारी रागवते लोके नानृतेन
विशिष्यते ॥ १७ ॥ विरक्ताभिर्महीपाल छद्मना बहवो हताः ॥ द्विष्टान्याचरते या तु नाभिनन्दति तत्कथाम् ॥ १८ ॥ ऐक्यं द्विषद्भिर्व्रजति
गर्वं वहति चोद्धता ॥ चुम्बिता मार्ष्टि वदनं दत्तं न बहुमन्यते ॥ १९ ॥ स्वपित्यादौ प्रसुप्तापि तथा पश्चाद्विबुध्यति ॥ स्पृष्टा धुनोति
गात्राणि कान्तं चैव रुणद्धि या ॥ २० ॥ ईषत्स्मितेन वाक्यानि प्रियाण्यपि पराङ्मुखी ॥ नयत्यश्रुतवद्या तु जघनं च विगूहति ॥२१॥ दृष्टे
विवर्णवदना मित्रेष्वपि पराङ्मुखी ॥ तत्कामितासु च स्त्रीषु मध्यस्थैव च लक्ष्यते ॥ २२ ॥ ज्ञातमङ्गलकालापि न करोति

नखं कुष्ठं घनं मांसीस्पृक्का शैलेयकं जलम् ॥ २० ॥ तथैव कुङ्कुमं लाक्षा चन्दनागुरुणी नतम् ॥ सरला देवकाष्ठं च कर्पूरं कांतया सह ॥२१॥ बोलं कन्दुरकश्चैव गुग्गुलः श्रीनिवासकः ॥ सह सर्जरसेनेयं धूपद्रव्यैकविंशतिः ॥ २२ ॥ धूपद्रव्यगणादस्मादेकविंशाद्यथेच्छया ॥ द्वेद्वे द्रव्ये समादाय सर्जभागे नियोजयेत ॥ २३ ॥ नवे पिण्याकवलयैः संयोज्य मधुना तथा ॥ धूपयोग्या भवन्तीह यथावत्स्वेच्छया कृताः ॥ २४ ॥ त्वचं जातीफलं तैलं कुङ्कुमं ग्रन्थिपर्णकम् ॥ शैलेयं तगरं काष्ठं ताम्बूलं तगरं तथा ॥२५॥ मांसीसरावकुष्ठं च नव द्रव्याणि निर्दिशेत॥ एतेभ्यस्तु समादाय द्रव्यं तत्र यथेच्छया ॥ २६ ॥ मृगदर्पयुतं स्नानं कार्यं कन्दर्पवर्धनम् ॥ द्वक्सुरानलदैस्तुल्यैर्वान्यकारसमायुतैः ॥ २७ ॥ स्नानमुत्पलगन्धि स्यात्सतैलं कुङ्कुमैर्युतम् ॥ जातीपुष्पसुगन्धि स्यात्तगरार्धेन योजितम् ॥ २८ ॥ बालकाञ्चनसंयुक्तं पाटलाकुसुमायते ॥ सव्यापकं स्याद्वकुलैस्तुल्यगन्धि मनोहरम् ॥ २९ ॥ नालिकावंशसहितं कुष्टिपादेन चार्यकम् ॥ द्विकेसरं वेणुपादं कुन्दपुष्पायते तथा ॥ ३० ॥ शैलपादार्थसंयुक्तं व्यक्तं मदनकं भवेत् ॥ मञ्जिष्ठा तगरं बालं द्वयं व्याघ्रनखं नखम् ॥ ३१ ॥ गन्धपत्रं च विन्यस्य गन्धतैलं भवेच्छुभम् ॥ तैलं निष्पीडितं राम तिलैः पुष्पाधिवासितैः ॥ ३२ ॥ वासनापुष्पसदृशं गन्धने तु भवेद्धुतम् ॥ पूर्ववच्छोधयित्वा तु मुस्तं सेव्यं वचां निशाम् ॥ ३३ ॥ अभीष्टमन्यत्कलुषं यथावदनुलेपयेत् ॥ उद्धृत्य चन्दनादिं च शोधनं वमनं तथा ॥ ३४ ॥ वर्जयित्वा विरेकं च शेषकर्माणि कारयेत ॥ तद्धा भवति धर्मज्ञ वर्णकं त्रिदिवप्रियम् ॥ ३५ ॥ पटवासांसि कार्याणि वर्णकैः श्लक्ष्णचूर्णितैः ॥ एलालवङ्गकक्कोलजातीफलनिशाकराः ॥ ३६ ॥ जातिपत्रिकया सार्द्धं स्वतन्त्रं मुखवासकम् ॥ कर्पूरं कुङ्कुमं कान्तं मृगदर्पं हरेणुकम् ॥ ३७ ॥ कक्कोलैलालवङ्गं च जाती कोशकमेव च ॥ द्वक्पत्रं त्रुटिमुस्तं च लताकस्तूरिकं तथा ॥ ३८ ॥ कण्टकानि लवङ्गस्य फलपत्रैश्च जातितः ॥ कटुकं च फलं राम कर्षिकाण्डां प्रकल्पयेत् ॥३९॥ तच्चूर्णे खादिरं सारं दद्यात्तुल्यतुलार्पितम् ॥ सहकण्थारसेनास्य कर्तव्या गुलिकाः शुभाः ॥ ४० ॥ मुखे न्यस्ताः सुगंधास्ता मुखरोगविनाशनाः ॥ पूर्वं प्रक्षालितं सम्यक्पद्मपल्लववारिणा ॥ ४१ ॥ शक्त्या तु गुलिकद्रव्यैर्वासिकं मुखवासकम् ॥ कटुकं दन्तकाष्ठं च गोमूत्रे वासितं त्र्यहम् ॥ ४२ ॥ कृतं च पूगवद्राम मुखसौगन्ध्यकारकम् ॥ त्वक्पथ्ययोः समावंशौ सितभागार्धसंयुतौ ॥ ४३ ॥ नागवल्लीसमो भाति मुखवासो मनोहरः ॥४४॥ कटुकफलनताम्बुत्वक्त्रुटिव्याधिपत्रैर्नलदनतसुराभिस्तुल्यभागान्वितानि ॥ द्विगुणितकृतमात्राप्रातिकक्कोलसैन्यैः शशिरसरसमोऽयं गन्धपत्रं विदध्यात् ॥ ४५ ॥ निहितमिदमनर्घं कर्णपत्रं युवत्याः शमयति विविधानि श्रोत्रपालीगदानि ॥

अपरमपि च यावत्काममामोदमत्तुं भ्रमदलिपटलेन व्याप्यते वक्रभागः ॥४६॥ इतिश्रीविष्णुधर्मोत्तरे द्वितीयखंडे मा० सं० रामं प्रति पुष्करोपा
ख्याने गन्धयुक्तिर्नाम चतुष्षष्टितमोऽध्यायः ॥६४॥ पुष्कर उवाच ॥ एवं कुर्यात्सदा स्त्रीणां रक्षणं पृथिवीपतिः ॥ न चेमां विश्वसेज्जातु पुत्रमात्राविशेषतः ॥ १ ॥ न स्वपेत्स्त्रीगृहे रात्रौ विश्वासं कृत्रिमं भजेत् ॥ राजपुत्रस्य रक्षा च कर्तव्या पृथिवीक्षिता ॥ २ ॥ आचार्यैश्चास्य कर्तव्यं नित्यं युक्त्यैव रक्षणम् ॥ धर्मार्थकाममोक्षाणां धनुर्वेदं च शिक्षयेत् ॥ ३॥ रथेऽश्वे कुञ्जरे चैनं व्यायामं कारयेत्सदा ॥ शिल्पानि शिक्षयेच्चैवमाप्तैर्मिथ्या प्रियंवदैः ॥ ४ ॥ शरीररक्षाव्याजेन रक्षिणोऽस्य नियोजयेत् ॥ न चास्य सङ्गो दातव्यः क्रुद्धलुब्धविमानितैः ॥ ५ ॥ तथा च विनयेदेनं यथायौवनगं सुखे ॥ विषयैर्यैर्न कृष्येत सतां मार्गात्सुदुर्गमात् ॥ ६ ॥ गुणाधानं न शक्यं तु यस्य कर्तुं स्वभावतः ॥ बन्धनं तस्य कर्तव्यं गुप्तदेशे सुखान्वितम् ॥ ७ ॥ अविनीतकुमारं हि कुलमाशु विशीर्यते ॥ अधिकारेषु सर्वेषु विनीतं विनियोजयेत् ॥ ८ ॥ आदौ स्वल्पे ततः पश्चात्क्रमेणाथ महत्स्वपि ॥ मृगयापानमक्षांश्च वर्जयेच्च महीपतिः ॥ ९ ॥ एतान्संसेवमानास्तु विनष्टाः पृथिवीक्षितः ॥ बहवो भृगुशार्दूल येषां संख्या न विद्यते ॥ १० ॥ दिवास्वापं वृथा वादं विशेषेण विवर्जयेत ॥ वाक्पारुष्यं न कर्तव्यं दण्डपारुष्यमेव च ॥११॥ परोक्षनिन्दा च तथा वर्जनीया महीक्षिता ॥ अर्थस्य दूषणं राम द्विप्रकारं विवर्जयेत् ॥ १२ ॥ अर्थानां दूषणं चैकं तथा चार्थेन दूषणम् ॥ प्राकाराणां समुच्छेदो दुर्गादीनां समक्रिया ॥ १३ ॥ अर्थानां दूषणं प्रोक्तं विप्रकीर्णत्वमेव च ॥ अदेशकाले यद्दानमपात्रे दानमेव च ॥१४॥ अर्थैस्तु दूषणं प्रोक्तमसत्कर्मप्रवर्तनम् ॥ कामः क्रोधो मदो मानं लोभो हर्षस्तथैव च ॥ १५ ॥ जेतव्यमरिषड्वर्गमाहुस्तु पृथिवीक्षिताम् ॥ एतेषां विजयं कृत्वा कार्यो भृत्यजयस्ततः ॥ १६ ॥ कृत्वा भृत्यजयं राजा पौरजानपदाञ्जयेत् ॥ कृत्वा च विजयं तेषां शत्रून्बाह्यांस्ततो जयेत् ॥ १७ ॥ बाह्याश्च त्रिविधा ज्ञेयास्तुल्यानन्तरकृत्रिमाः ॥ गुरवस्ते यथापूर्वं तेषु यत्नः सदा भवेत् ॥ १८ ॥ पितृपैतामहं मित्रमाश्रितश्च तथा रिपोः ॥ कृत्रिमं च महाभाग मित्रं त्रिविधमुच्यते ॥ १९ ॥ तथापि च गुरुः पूर्वं भवेत्तत्रापि चाश्रितम् ॥ स्वाम्यमात्यजनपदा बलं दुर्गं तथैव च॥२०॥ कोशो मित्रं च धर्मज्ञ सप्ताङ्गं राज्यमुच्यते॥ सप्ताङ्गस्यापि राज्यस्य मूलं स्वामी प्रकीर्तितः ॥२१॥ तन्मूलत्वात्तथाङ्गानां स तु रक्ष्यः प्रयत्नतः ॥ षडङ्गरक्षा कर्तव्या तेन चापि प्रयत्नतः ॥ २२ ॥ ॥ अङ्गेभ्यो यस्त्वथैकस्य द्रोहमाचरतेऽल्पधीः ॥ वधस्तस्य तु कर्तव्यः शीघ्रमेव महीक्षिता ॥ २३ ॥ न राज्ञा मृदुना भाव्यं मृदुर्हि परिभूयते ॥ न भाव्यं दारुणेनापि तीक्ष्णादुद्विजते जनः ॥ २४ ॥

कालेमृदुर्यो भवति काले भवति दारुणः ॥ राजा लोकद्वयापेक्षी तस्य लोकद्वयं भवेत् ॥ २५ ॥ भृत्यैः सह महीपालः परिहासं विवर्जयेत् ॥
भृत्याः परिभवन्तीह नृपं हर्षलसत्कथम् ॥ २६ ॥ व्यसनानि च सर्वाणि भूपतिः परिवर्जयेत् ॥ लोकसंग्रहणार्थाय कृतकव्यसनी भवेत् ॥
॥ २७ ॥ शौण्डीर्यस्य नरेन्द्रस्य नित्यमुत्क्षिप्तचेतसः ॥ जनो विरागमायाति सदा दुःसेव्यभावतः ॥ २८ ॥ स्मितपूर्वाभिभाषी स्यात्सर्वस्यैव
महीपतिः ॥ वध्येष्वपि महाभागः भ्रुकुटिं न समाचरेत् ॥ २९ ॥ भाव्यं धर्मभृतां श्रेष्ठ स्थूललक्ष्येण भूभुजा ॥ स्थूललक्ष्यस्य वशगा सर्वा भ
वति मेदिनी ॥ ३० ॥ अदीर्घसूत्रश्च भवेत्सर्वकर्मसु पार्थिवः ॥ दीर्घसूत्रस्य नृपतेः कर्महानिर्ध्रुवं भवेत् ॥ ३१ ॥ रागे दर्पे च माने च द्रोहे
पापे च कर्मणि ॥ अप्रिये चैव वक्तव्ये दीर्घसूत्रः प्रशस्यते ॥ ३२ ॥ राज्ञा संवृतमन्त्रेण संभाव्यं द्विजसत्तम ॥ तस्यासंवृतमन्त्रस्य ज्ञेयाः
सर्वापदो ध्रुवाः ॥ ३३ ॥ कृतान्येव हि कर्माणि ज्ञायन्ते यस्य भूपतेः ॥ नारब्धानि महाभाग तस्य स्याद्वसुधा वशे ॥ ३४ ॥
मन्त्रमूलं सदा राज्यं तस्मान्मन्त्रः सुरक्षितः ॥ कर्तव्यः[1] पृथिवीपालैर्मन्त्रभेदभयात्सदा ॥ ३५ ॥ मन्त्रवित्साधितो मन्त्रः संयतानां सुखाव
हः ॥ मन्त्रभेदेन बहवो विनष्टाः पृथिवीक्षितः ॥ ३६ ॥ आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च ॥ नेत्रवक्त्रविकारैश्च ज्ञायतेऽन्तर्गतं म
नः ॥ ३७ ॥ न यस्य कुशलैस्तस्य वशे सर्वा वसुन्धरा ॥ भवतीह महीभर्तुः सदा भार्गवनन्दन ॥ ३८ ॥ नैकस्तु मन्त्रयेन्मन्त्रं न राजा ब
हुभिः सह ॥ बहुभिर्मन्त्रयेत्कामं राजा मन्त्रान्पृथक्पृथक् ॥ ३९ ॥ मन्त्रिणामपि नो कुर्यान्मन्त्री मन्त्रप्रकाशनम् ॥ क्वचित्कश्चिच्च वि
श्वास्यो भवतीह सदा नृणाम् ॥ ४० ॥ निश्चयश्च तथा मन्त्री कार्य एकेन सूरिणा ॥ भवेद्वा निश्चयावाप्तिः परबुद्ध्युपजीवनात् ॥ ४१ ॥
एकस्यैव महीभर्तुर्भूयः कार्ये सुनिश्चिते ॥ ब्राह्मणान्पर्युपासीत त्रय्यां राम सुनींश्च तान् ॥ ४२ ॥ नासच्छास्त्ररतान्मूढांस्ते हि लोकस्य
कण्टकाः ॥ वृद्धांश्च नित्यं सेवेत विप्रान्वेदविदः शुचीन् ॥ ४३ ॥ तेभ्यो हि शिक्षेद्विनयं विनीतात्मा हि नित्यशः ॥ समग्रां वशगां कुर्या
त्पृथिवीं नात्र संशयः ॥ ॥ ४४ ॥ बहवोऽविनयान्नष्टा राजानः सपरिच्छदाः ॥ वनस्थाश्चैव राज्यानि विनयात्प्रतिपेदिरे ॥ ४५ ॥ त्रैविद्ये
भ्यस्त्रयीं विद्याद्दण्डनीतिं च शाश्वतीम् ॥ आन्वीक्षिकीं चात्मविद्यां वार्तारम्भं च लोकतः ॥ ४६ ॥ इन्द्रियाणां जये योगं समातिष्ठेद्दिवा
निशम् ॥ जितेन्द्रियो हि शक्नोति वशे स्थापयितुं प्रजाः ॥ ४७ ॥ यजेत राजा क्रतुभिर्बहुभिश्चाप्तदक्षिणैः ॥ धर्मार्थं चैव विप्रेभ्यो दद्याद्भोगा

१ 'कर्तव्ये' इति ख० ।

न्धनानि च ॥४८॥ सांवत्सरिकैराप्तैश्च राष्ट्रादाहारयेद्बलिम् ॥स्याच्चाम्नायपरो लोके वर्तेत पितृवन्नृषु ॥ ४९॥ आवृतानां गुरुकुलाद्द्विजानां पूजनं भवेत्॥नृपाणामक्षयो ह्येष निधिर्ब्राह्मो विधीयते ॥५०॥न तं स्तेना नाप्यमित्रा हरन्ति न च नश्यति॥तस्माद्राज्ञा निधातव्यो ब्राह्मणेष्वक्षयो निधिः ॥ ५१ ॥ समोत्तमाधमै राजा ह्याहूताः पालयन्प्रजाः ॥ न निवर्तेत संग्रामात्क्षात्रं व्रतमनुस्मरन् ५२॥ संग्रामेऽष्वनिवर्तित्वं प्रजानां परिपालनम् ॥ शुश्रूषा ब्राह्मणानां च राज्ञां निश्रेयसं परम् ॥ ५३॥ कृपणानां च वृद्धानां विधवानां च योषिताम् ॥ योगं क्षेमं च वृत्तिं च तथैव परिकल्पयेत् ॥ ॥ ५४ ॥ वर्णाश्रमव्यवस्था तु तथा कार्या विशेषतः ॥ स्वधर्मप्रच्युतान्राजा स्वधर्मे विनियोजयेत् ॥ ५५ ॥ आश्रमेषु यथाकालं तैल भाजनभोजनम् ॥ स्वयमेव नयेद्राजा सत्कृतान्नवमन्य च ॥ ५६ ॥ तापसे सर्वकार्याणि राज्यमात्मानमेव च ॥ निवेदयेत्प्रयत्नेन देववच्चैन मर्चयेत् ॥ ५७ ॥ द्वे प्रज्ञे वेदितव्ये च ऋज्वी वक्रा च मानवैः ॥ शठाञ्ज्ञात्वा न सेवेत प्रतिबोधं तदा गतान् ॥ ५८ ॥ नास्यच्छिद्रं परो विद्याद्विद्याच्छिद्रं परस्य तु ॥ गूहेत्कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः ॥ ५९ ॥ न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ॥ विश्वासाद्भ यमुत्पन्नं मूलान्यपि निकृन्तति ॥ ६० ॥ विश्वासयेच्चापि परं तत्त्वभूतेन हेतुना ॥ बकवच्चिन्तयेदर्थान्सिंहवच्च पराक्रमेत् ॥ ६१ ॥ वृकवच्चा वलुम्पेत शशवच्च विनिष्पतेत् ॥ दृढप्रहारी च भवेत्तथा सूकरवन्नृपः ॥ ६२ ॥ चित्राकारश्च शिखिवद्दृढभक्तस्तथान्धवत् ॥ भवेच्च मधुरा भाषी शुककोकिलवन्नृपः ॥६३ ॥ काकशंकी भवेन्नित्यमज्ञातवसतिं वसेत् ॥ नापरीक्षितपूर्वं च भोजनं शयनं स्पृशेत् ॥ ६४ ॥ वस्त्रं पुष्पमलङ्कारं यच्चान्यन्मनुजोत्तम ॥ न गाहेज्जनसंबाधं न चाज्ञातं जलाशयम् ॥ ६५ ॥ नापरीक्षितपूर्वैस्तु पुरुषैराप्तकारिभिः ॥ नारोहेत्कुञ्जरं व्यालं नादान्तं तुरगं तथा ॥ ६६ ॥ नाविज्ञातां स्त्रियं गच्छेन्नैव चाशुभवाससम् ॥ नारोहेद्विषमां नावं नाप रीक्षितनाविकाम् ॥ ६७ ॥ ये चास्य भूमिं जयतो भवेयुः परिपन्थिनः ॥ तानानयेद्वशं सर्वान्सामादिभिरुपक्रमैः ॥ ६८॥ यथा न स्यात्कृशी भावः प्रजानामनवेक्षया ॥ तथा राज्ञा विधातव्यं स्वराष्ट्रं परिरक्षता ॥ ६९ ॥ मोहाद्राजा स्वराष्ट्रं यत्कर्षयत्यनवेक्षया ॥ सोऽचिराद्भ्रंशते राज्याज्जीविताच्च सबान्धवः ॥ ७० ॥ भृतो वत्सो जातबलः कर्मयोग्यो यथा भवेत् ॥ तथा राष्ट्रं महाभाग भृतं कर्ममहद्भवेत् ॥ ७१ ॥ यो राष्ट्रमनुगृह्णाति राजा सुपरिरक्षति ॥ तं प्रजाश्चोपजीवन्ति विन्दते सुमहत्फलम् ॥ ७२ ॥ दुह्याद्धिरण्यं धान्यं च मही राज्ञा सुरक्षिता ॥ नित्यं स्वेभ्यः परेभ्यश्च यथा माता यथा पिता ॥ ७३ ॥ गोपिनो हि सदा कार्यः संविभागः प्रियाणि च ॥ अजस्रमुपयोक्तव्यं फलं तेभ्य

स्तथैव च ॥ ७४ ॥ सर्वं कर्मेदमायत्तं विधानं चैव पौरुषम् ॥ तयोर्दैवमचिन्त्यं हि पौरुषे विद्यते क्रिया ॥ ७५ ॥ एवं महीं पालयतोऽस्य
भर्तुर्लोकानुरागः परमो भवेत्तु॥लोकानुरागप्रभवा हि लक्ष्मीर्लक्ष्म्या भवेच्चैव परश्च लोकः ॥७६॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं०राम
पुष्करसंवादे राजधर्मवर्णनन्नाम पञ्चषष्टितमोऽध्यायः ॥६५॥ राम उवाच ॥ दैवे पुरुषकारे च किंज्यायस्तद्वदस्व मे ॥ अत्र मे संशयो देव संशयच्छि
द्भवाँस्तथा ॥ १ ॥ पुष्कर उवाच ॥ स्वमेव कर्म दैवाख्यं विद्धि देहान्तरार्जितम् ॥ तस्मात्पौरुषमेवेह श्रेष्ठमाहुर्मनीषिणः ॥२॥ प्रतिकूलं तथा दैवं
पौरुषेण विहन्यते॥ मङ्गलाचारयुक्तानां नित्यमुत्थानशालिनाम् ॥३॥ येषां पूर्वकृतं कर्म सात्त्विकं मनुजोत्तम ॥ पौरुषेण विना तेषां केषाञ्चिद्दृश्य
ते फलम् ॥ ४ ॥ कर्मणा प्राप्यते लोके राजन्सम्यक्तथा फलम् ॥ पौरुषेणाप्यते राम मार्गितव्यं फलं नरैः ॥ ५ ॥ दैवमेव न जानाति
नरः पौरुषवर्जितः ॥ तस्मात्सत्कार्ययुक्तस्य दैवं तु सफलं भवेत् ॥ ६ ॥ पौरुषं चैव सम्पत्त्या काले फलति भार्गव ॥ दैवं पुरुषकारश्च
कालश्च मनुजोत्तम ॥ ७ ॥ त्रयमेतन्मनुष्यस्य पिण्डितं स्यात्फलावहम् ॥ कृषिवृष्टिसमायोगाद्दृश्यन्ते फलसिद्धयः ॥ ८ ॥ तास्तु कालेन
दृश्यन्ते नैवाकाले कथञ्चन ॥ तस्मात्सदैव कर्तव्यं सधर्मं पौरुषं नृभिः ॥ ९ ॥ विपत्तावपि यस्येह परलोके फलं ध्रुवम् ॥ नालसाः प्राप्नुवन्त्य
र्थान्न च दैवपरायणाः ॥ तस्मात्सर्वप्रयत्नेन पौरुषे यत्नमाचरेत् ॥१०॥ त्यक्त्वालसान्दैवपरान्मनुष्यानुत्थानयुक्तान्पुरुषान्हि लक्ष्मीः॥ अन्विष्य
यत्नाद्वृणुते द्विजेन्द्र तस्मात्समुत्थानवता हि भाव्यम्॥११॥इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं० रामपुष्करसंवादे पुरुषकाराध्यायो नाम
षट्षष्टितमोऽध्यायः ॥ ६६ ॥ राम उवाच ॥ उपायांस्त्वं समाचक्ष्व सामपूर्वान्महाद्युते ॥ लक्षणं च तथा तेषां प्रयोगं वरुणात्मज ॥ १ ॥
पुष्कर उवाच ॥ सामभेदौ तथा राम दण्डं च मनुजोत्तम ॥ उपेक्षा च तथा माया इन्द्रजालश्च भार्गव ॥ २ ॥ प्रयोगाः कथिताः सप्त तन्मे
निगदतः शृणु ॥ द्विविधं कथितं साम तथ्यं चातथ्यमेव च ॥ ३ ॥ तत्राप्यतथ्यं साधूनामाक्रोशायैव जायते ॥ तच्च साधुप्रियं ते च सा
मसाध्या न राम ते ॥ ४ ॥ महाकुलीना ऋजवो धर्मनिष्ठा जितेन्द्रियाः ॥ सामसाध्या न चातथ्यं तेषु साम प्रयोजयेत् ॥ ५ ॥ तथ्यं च साम
कर्तव्यं कुलशीलादिवर्णनम् ॥ तथा तदुभयं राम कृतानां चैव वर्णनम्॥६॥अनयैव तथा युक्त्या कृतज्ञख्यापनं स्वकम् ॥ एवं सान्त्वेन कर्तव्या
वशगा धर्मतत्पराः ॥ ७ ॥ साम्ना यद्यपि रक्षांसि गृह्णन्तीति परा श्रुतिः ॥ तथाप्येतदसाधूनां प्रयुक्तं नोपकारकम् ॥ ८ ॥ अतिसन्धिकमि
त्येव पुरुषं सामवादिनम् ॥ असाधवो विजानन्ति तस्मात्तत्तेषु वर्जितम्॥९॥ ये शुद्धवंशा ऋजवः प्रतीता धर्मे स्थिताः सत्यपरा विनीताः ॥

ते सामसाध्याः पुरुषाः प्रदिष्टा मानोन्नता ये सततं च राम ॥१०॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं० रामपुष्करसंवादे सामविधिर्नाम सप्तषष्टितमोऽध्यायः ॥६७॥ पुष्कर उवाच ॥ परस्परं तु ये दुष्टाः क्रुद्धा भीतावमानिताः ॥ तेषां भेदं प्रयुञ्जीत भेदसाध्या हि ते मताः ॥ १ ॥ ये तु येनैव दोषेण परस्माद्राम बिभ्यति ॥ ते तु तद्दोषपालेन भेदनीया भृशं ततः ॥ २ ॥ आत्मीयाद्दर्शयेदाशां परस्माद्दर्शयेद्भयम् ॥ एवं हि भेदयेद्भिन्नान्यथावद्वशमानयेत् ॥ ३ ॥ संहिता हि विना भेदं शक्रेणापि सुदुःसहा ॥ भेदमेव प्रशंसन्ति तस्मान्नयविशारदाः ॥४॥ स्वमुखेनाथ यद्भेदं भेदं परमुखेन च ॥ परीक्ष्य साधु मन्येऽहं भेदं परमुखाच्छ्रुतम् ॥ ५ ॥ भेद्या स्वकार्यमुद्दिश्य कुशलैर्ये हि भेदिताः ॥ भेदितास्ते विनिर्दिष्टा नैव राजार्थवादिभिः ॥ ६ ॥ अन्तःकोपबहिः कोपौ यत्र स्यातां महीक्षिताम् ॥ अन्तःकोपो महांस्तत्र नाशनः पृथिवीक्षिताम् ॥ ७ ॥ सामन्तकोपो बाह्यस्तु कोपः प्रोक्तो मनीषिभिः ॥ महिषीयुवराजाभ्यां तथा सेनापतेर्द्विज ॥ ८ ॥ अमात्यान्मन्त्रिपुत्राच्च राजपुत्रात्तथैव च ॥ अन्तःकोपो विनिर्दिष्टो दारुणः पृथिवीक्षिताम् ॥ ९ ॥ बहिःकोपे समुत्पन्ने सुमहत्यपि पार्थिवः ॥ शुद्धान्तस्तु महाभाग शीघ्रमेव जयेदरीन् ॥ १० ॥ अपि शक्रसमो राजा कोपेनान्तर्विनश्यति ॥ स्वान्तःकोपं प्रयत्नेन तस्माद्यत्नात्परीक्षता ॥ ११ ॥ परान्तःकोपमुत्पाद्य भेदेन विजिगीषुणा ॥ रक्ष्यश्चैव प्रयत्नेन ज्ञातिभेदस्तथात्मनः ॥ १२ ॥ ज्ञातयः परितप्यन्ते सततं यद्यपि श्रिया ॥ तथापि तेषां कर्तव्यं सुगम्भीरेण चेतसा ॥ १३ ॥ ग्रहणं दानमानाभ्यां भेदस्तेभ्यो भयङ्करः॥ नाज्ञातिरनुगृह्णाति नाज्ञातिः स्नेहमिच्छति ॥१४॥ ज्ञातिभिर्भेदनीयास्तु रिपवस्तेन पार्थिवैः॥१५॥भिन्ना हि शक्या रिपवः प्रभूताः स्वल्पेन सैन्येन निहन्तुमाजौ ॥ सुसंहितेनाथ ततस्तु भेदः कार्यो रिपूणां नयशास्त्रविद्भिः ॥१६॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० सं० भेदविधानन्नामाष्टषष्टितमोऽध्यायः ॥६८॥ पुष्कर उवाच ॥ सर्वेषामप्युपायानां दानं श्रेष्ठतमं मतम् ॥ सुदत्तेनैव भवति दानेनोभयलोकजित् ॥१॥ स नास्ति राम दानेन वशगो यो न जायते ॥ दानवान्गोचरं नैति तथा रामापदां क्वचित् ॥ २ ॥ दानवानेव शक्नोति संहतान्भेदितुं परान् ॥ यद्यप्यलुब्धा गम्भीराः पुरुषाः सागरोपमाः ॥३॥ न गृह्णंति तथाप्येते जायन्ते पक्षपातिनः ॥ अन्यत्रापि कृतं दानं करोत्यन्यांस्तथा परैः ॥ ॥ ४ ॥ उपायेभ्यः प्रयच्छंति दानं श्रेष्ठतमं नराः ॥ दानं संवर्धनं श्रेष्ठं दानं श्रेयस्करं परम् ॥ ५ ॥ दानवानेव लोकेषु पुत्रवत्प्रीयते सदा ॥ न केवलं दानपरा जयन्ति भूलोकमेकं पुरुषप्रवीर ॥ जयन्ति ते राम सुरेन्द्रलोकं सुदुर्जयं यद्विबुधाधिवासम् ॥ ६ ॥ इति श्रीविष्णुधर्मोत्तरे

द्वितीयखण्डे मा०सं०रामपुष्करसंवादे दानविधिर्नामैकोनसप्ततितमोऽध्यायः ॥६९॥ पुष्कर उवाच॥ न शक्या ये स्वयं कर्तुं चोपायत्रितयेन तु॥ दण्डेन तान्वशीकुर्याद्दण्डो हि वशकृत्परः ॥ १ ॥ सम्यक्प्रणयनं तस्य सदा कार्यं महीक्षिता ॥ धर्मशास्त्रानुसारेण सुसहायेन धीमता ॥ २ ॥ तस्य सम्यक्प्रणयनं त्रिदशानपि पीडयेत् ॥ वानप्रस्थांश्च धर्मज्ञ निर्देशान्निष्परिग्रहान् ॥ ३ ॥ स्वदेशे परदेशे च धर्मशास्त्रविशारदाः ॥ समीक्ष्य प्रणयेद्दण्डं सर्वं दण्डे प्रतिष्ठितम्॥४॥आश्रमी यदि वा वर्णी पूज्योऽथवा गुरुर्महान्॥ नादण्ड्यो राम राज्ञा तु यः स्वधर्मे न तिष्ठति॥५॥ अदण्ड्यान्दण्डयन्राजा दण्ड्यांश्चैवाप्यदण्डयन् ॥ इह राज्यपरिभ्रष्टो नरकं प्रतिपद्यते ॥ ६ ॥ तस्माद्राज्ञा विनीतेन धर्मशास्त्रानुसारतः ॥ दण्ड प्रणयनं कार्यं लोकानुग्रहकाम्यया ॥ ७ ॥ यत्र श्यामो लोहिताक्षो दण्डश्चरति निर्भयः ॥ प्रजास्तत्र न मुह्यन्ति नेता चेत्साधु पश्यति ॥ ८ ॥ बालवृद्धातुरयतिद्विजातिविकलाबलाः ॥ मत्स्यन्यायेन भक्षेरन्यदि दण्डो न पालयेत् ॥ ९ ॥ देवदैत्योरगनराः सिद्धभूतपत त्रिणः ॥ उत्क्रामेयुः स्वमर्यादां यदि दण्डो न पालयेत् ॥ १० ॥ एष ब्रह्माभिशापेषु सर्वप्रहरणेषु च ॥ सर्वविक्रमकोपेषु व्यवसाये च तिष्ठति ॥ ११ ॥ पूज्यन्ते दण्डिनो देवा न पूज्यन्ते त्वदण्डिनः ॥ न ब्राह्मणं न धातारं न पूषार्यमणावपि ॥ १२ ॥ यजन्ते मानवाः केचित्प्रशान्ताः सर्वकर्मसु ॥ रुद्रमग्निं च शक्रं च सूर्याचन्द्रमसौ तथा ॥ १३ ॥ विष्णुं देवगणाँश्चान्ये दण्डिनः पूजयन्ति हि ॥ दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति ॥ १४ ॥ दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः ॥ राजदण्डभयादेव पापाः पापं न कुर्वते ॥ १५ ॥ यमद ण्डभयादन्ये परस्परभयादपि ॥ एवं सांसिद्धिके लोके सर्वं दण्डे प्रतिष्ठितम् ॥ १६ ॥ अन्धे तमसि मज्जेयुर्यदि दण्डो न पालयेत् ॥ तस्माद्दम्यान्दमयति उद्दण्डान्दण्डयत्यपि ॥ १७ ॥ दमनाद्दण्डनाच्चैव तस्माद्दण्डं विदुर्बुधाः ॥ दण्डस्य भीतैस्त्रिदशैः समस्तैर्भागो धृतः शूलधर स्य यज्ञे ॥ चक्रुः कुमारं ध्वजिनीपतिं च वरं शिशूनां च भयाद्बलस्थम् ॥ १८ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं० पुष्करोपाख्यानेषु दण्डप्रशंसा नाम सप्ततितमोऽध्यायः ॥ ७० ॥ राम उवाच ॥ दण्डप्रणयनार्थाय राजा सृष्टः स्वयंभुवा ॥ देवभागानुपादाय सर्वभूताभिगुप्तये ॥ ॥ १ ॥ तेजसा यदयं कश्चिन्नैव शक्नोति वीक्षितुम् ॥ तदा भवति लोकेषु राजा भास्करवत्प्रभुः ॥ २ ॥ यदस्य दर्शने लोकः प्रसादमुपग च्छति ॥ नयनानन्दकारित्वात्तदा भवति चन्द्रमाः ॥ ३ ॥ चारैर्यदायं व्याप्नोति सर्वलोकं यदृच्छया ॥ तदा भवति लोकेषु राजा देवः समी रणः ॥ ४ ॥ यदाऽपराधिनां चैव विधत्ते निग्रहं नृपः ॥ तदा भवति लोकेषु राजा वैवस्वतः सदा ॥ ५ ॥ यदा भवति माहात्म्यात्क्रुद्ध

बुद्धान्नरान्नृपः ॥ अनिच्छन्नपि लोकेषु तदा भवति पावकः ॥ ६ ॥ करोति च यदा दानं धनानां सर्वतो नृपः ॥ विसर्गार्थं सुरश्रेष्ठ तदा भवति वित्तदः ॥ ७ ॥ यदा च धनधाराभिर्वर्षन्प्लावयते जगत् ॥ तदा स वरुणः प्रोक्तो राजा नयविशारदैः ॥ ८ ॥ क्षमाबलेन मनसा धारयन्सकलाः प्रजाः ॥ अविशेषेण धर्मज्ञ पार्थिवः पार्थिवो भवेत् ॥ ९ ॥ यदाधिपत्येन जनान्समग्रान्परिरक्षति ॥ तदा भवति देवेन्द्रः सर्वभूतानुकम्पिता ॥१०॥ उत्साहमंत्रशक्तिर्या प्रभुशक्तिश्च देविकी ॥ चतस्रः शक्तयस्तत्र वैष्णव्यः परिकीर्तिताः ॥ ११ ॥ कः समर्थः प्रजाः पातुं विना वैष्णवतेजसा ॥ तिस्रस्तु शक्तयस्तस्य वैष्णव्यः पृथिवीपते ॥ १२ ॥ दण्डप्रणयनं सम्यक् श्रोतुमिच्छामि तत्त्वतः ॥ कथं स्वविषये तस्य दण्डनीतिर्भवेद्ध्रुवा ॥ १३ ॥ कथं च दण्डं प्रणयन्नरेन्द्रो धर्मेण युज्येद्यशसा च वीर ॥ अर्थेन कामेन च स सर्वमेतद्ब्रवीहि यादोगणनाथपुत्र ॥ १४ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० सं० रामवाक्याध्यायो नामैकसप्ततितमोऽध्यायः॥७१॥

पुष्कर उवाच ॥ दण्डप्रणयनं राम स्वदेशे शृणु भूभुजाम् ॥ यस्य सम्यक्प्रणयनात्स्वर्गभाक्पार्थिवो भवेत् ॥ १ ॥ त्रियवं कृष्णलं विद्धि माषस्तत्पञ्चकं भवेत् ॥ कृष्णलानां तथा षष्ट्या कर्षार्धं राम कीर्तितम् ॥ २ ॥ सुवर्णश्च विनिर्दिष्टो राम षोडशमाषकः ॥ निष्कं सुवर्णाश्चत्वारो धरणं दशभिस्तु तैः ॥ ३ ॥ ताम्ररूप्यसुवर्णानां मानमेतत्प्रकीर्तितम् ॥ ताम्रकर्षापको राम प्रोक्तः कार्षापणो बुधैः ॥ ४ ॥ पणानां द्वे शते सार्धे प्रथमं साहसः स्मृतः ॥ मध्यमः पञ्च विज्ञेयः सहस्रमपि चोत्तमः ॥ ५ ॥ बालदायादकं रिक्थं तावद्राजानुपालयेत् ॥ यावत्स स्यात्समावृत्तोयावद्वातीतशैशवः ॥ ६ ॥ वेश्यापुत्रासु चैवं स्याद्रक्षणं निष्कुलासु च ॥ पतिव्रतासु च स्त्रीषु विधवास्वातुरासु च ॥ ७ ॥ जीवन्तीनां तु तासां ये तद्धरेयुः स्वबान्धवाः ॥ ताञ्शिष्याचौरदण्डेन धार्मिकः पृथिवीपतिः ॥ ८ ॥ प्रनष्टस्वामिकं रिक्थं राजा त्र्यब्दं निधापयेत् ॥ अर्वाक् त्र्यब्दाद्धरेत्स्वामी परेण नृपतिर्हरेत् ॥ ९ ॥ ममेदमिति यो ब्रूयात्सोऽनुयुक्तो यथाविधि ॥ सम्पाद्य रूपसंख्यादीन्स्वामी तद्द्रव्यमर्हति ॥ १० ॥ अवेदयानो नष्टस्य देशं कालं च तत्त्वतः ॥ वर्णरूपं प्रमाणं च तत्समं दण्डमर्हति ॥ ११ ॥ प्रनष्टाधिगतं रिक्थं तिष्ठेदर्थैरधिष्ठितम् ॥ यांस्तत्र चौरान्गृह्णीयाद्घातयेत्कुञ्जरेण तान् ॥ १२ ॥ ममेदमिति यो ब्रूयादसत्येन तथा निधिम् ॥ तस्य दण्डं हरेद्राजा स्ववित्तस्याष्टमांशकम् ॥ १३ ॥ चौरैरमुषितो यस्तु मुषितोऽस्मीति भाषते ॥ तत्प्रदातरि भूपाले स दण्ड्यस्तावदेव तु ॥ १४ ॥ यो यावन्निह्नुवीतार्थं मिथ्या यो वा वदेत्ततः ॥ तौ नृपेण ह्यधर्मज्ञौ दाप्यौ तद्द्विगुणं धनम् ॥ १५ ॥ कूटसाक्ष्यं तु

कुर्वाणांस्त्रीन्वर्णान्धार्मिको नृपः ॥ प्रमापयेन्महाभाग ब्राह्मणं तु विवासयेत ॥ १६ ॥ यत्स्वामिनाननुज्ञातमाधिं भुङ्क्ते विचक्षणः ॥ अवध्यमूलं कर्तव्यं तस्य दण्डं महीक्षिता ॥ वसा……………तथा धर्मो न हीयते ॥ १७ ॥ यो निक्षेपं याचयति यश्च निक्षिप्य याचते ॥ तावुभौ चौरवच्छास्यौ दाप्यौ वा द्विगुणं धनम् ॥ १८ ॥ उपदाभिश्च यः कश्चित्परद्रव्यं हरेन्नरः ॥ ससहायः स हन्तव्यः प्रकाशं विविधैर्वधैः ॥ १९ ॥ यो याचितकमादाय न तद्द्याद्यथाक्रमम् ॥ स निगृह्य बलाद्दाप्यो दण्डो वै पूर्वसाहसम् ॥ २० ॥ अज्ञानाद्यः पुमान्कुर्यात्परद्रव्यस्य विक्रयम् ॥ निर्दोषो ज्ञानपर्यन्तं चौरवद्वधमर्हति ॥ २१ ॥ मूल्यमादाय यो विद्यां शिल्पं वा न प्रयच्छति ॥ दण्ड्यः समूलं सकलं धर्मज्ञेन महीक्षिता ॥ २२ ॥ द्विजभोज्ये तु सम्प्राप्ते प्रातिवेश्यमभोजनम् ॥ हिरण्यमाषकं दण्ड्यः पापे नास्ति ह्यतिक्रमः ॥ २३ ॥ आमन्त्रितो द्विजो यस्तु वर्तमानः प्रतिग्रहे ॥ निष्कारणं न गच्छेद्यः स दाप्योऽष्टशतं दमम् ॥ २४ ॥ प्रतिश्रुत्याप्रदातारं सुवर्णं दण्डयेन्नृपः ॥ ॥ २५ ॥ भृतोऽनार्तो न कुर्याद्यो दर्पात्कर्म यथोदितम् ॥ स दण्ड्यः कृष्णलान्यष्टौ न देयं चास्य वेतनम् ॥ २६ ॥ अकाले यस्त्यजेद्भृत्यं दण्ड्यः स्यात्तावदेव तु ॥ यो ग्रामदेशसंघानां कृत्वा सत्येन संविदम् ॥ विसंवदेन्नरो लोभात्तं राष्ट्राद्विप्रवासयेत् ॥ २७ ॥ क्रीत्वा विक्रीय वा किञ्चिद्यस्येहानुशयो भवेत् ॥ सोन्तर्दशाहात्तत्साम्याद्द्याच्चैवाददीत च ॥ २८ ॥ परेण तु दशाहस्य न दद्यान्नैव दापयेत् ॥ आददद्धिददच्चैव राज्ञा दण्ड्यः शतानि षट् ॥ २९ ॥ यस्तु दोषवतीं कन्यां त्वनाख्याय प्रयच्छति ॥ तस्य कुर्यान्नृपो दण्डं स्वयं षण्णवतिः पणान् ॥ ३० ॥ अकन्येति तु यः कन्यां ब्रूयाद्द्वेषेण मानवः ॥ स शतं प्राप्नुयाद्दण्डं कन्यादोषमदर्शयन् ॥ ३१ ॥ यस्त्वन्यां दर्शयित्वान्यां वोढुः कन्यां प्रयच्छति ॥ उत्तमं तस्य कुर्वीत राजा दण्डं तु साहसम् ॥ ३२ ॥ वरो दोषानभिख्याप्य यः कन्यां वरयेदिह ॥ दत्ताप्यदत्ता सा तस्य राज्ञा दण्ड्यः शतद्वयम् ॥ ३३ ॥ प्रदाय कन्यां योऽन्यस्मै पुनस्तां सम्प्रयच्छति ॥ दण्डः कार्यो नरेन्द्रेण तस्याप्युत्तमसाहसः ॥ ३४ ॥ सत्यंकारेण वाचा च युक्तं पर्यासमं शयम् ॥ लुब्धोऽन्यत्र तु विक्रेता षट्शतं दण्डमर्हति ॥ ३५ ॥ वहेच्छुल्कं तु विक्रेता सत्यंकारं तु संत्यजेत् ॥ द्विगुणं दण्डयेदेनमिति धर्मो व्यवस्थितः ॥ ३६ ॥ मूल्यैकदेशं दत्त्वा तु यदि क्रेता धनं त्यजेत् ॥ दण्ड्यः स मध्यमं दण्डं तस्य दण्डस्य मोक्षणात् ॥ ३७ ॥ द्रुह्याद्भृतस्तु यः पालं गृहीत्वा भक्तवेतनम् ॥ स तु दण्ड्यः शतं राज्ञा सुवर्णं स्वाम्यरक्षिणा ॥ ॥ ३८ ॥ दण्डं दत्त्वा न विरमेत्स्वामिभिः कृतलक्षणः ॥ बद्धः कृत्वायसैः पाशैस्तस्य कर्मकरो भवेत् ॥ ३९ ॥ धनुश्चतुःपरीमाणं ग्रामस्य तु

समन्ततः ॥ द्विगुणं त्रिगुणं वापि नगरस्य तु कल्पयेत् ॥४० ॥ वृतिं तत्र प्रकुर्वीत यामुष्ट्रो नावलोकयेत् ॥ छिद्रं निवारयेत्सर्वं श्वसूकर मुखानुगम् ॥ ४१ ॥ तत्रापरधृतं धान्यं महिष्यः पशवो यदि ॥ न तत्र कारयेद्दण्डं नृपतिः पशुरक्षिणाम् ॥४२ ॥ अनिर्दशाहां गां सूतां वृषान्देवपशूंस्तथा ॥ सपालान्वा विपालान्वा न दण्ड्यान्मनुरब्रवीत् ॥ ४३ ॥ अतोऽन्यथा विनष्टस्य दशांशं दण्डमर्हति ॥ ४४ ॥ पालस्त्व पालकी स्वामी विनाशे क्षत्रियस्य तु ॥ भक्षयित्वोपविष्टासु द्विगुणं दण्डमर्हति ॥ ४५ ॥ वैरादशगुणं दण्डं विनाशात्क्षत्रियस्य तु ॥ गृहं तडागमारामं क्षेत्रं बुद्ध्या ह्यपाहरन् ॥ शतानि पञ्च दण्ड्यः स्यादज्ञानाद्द्विशतो दमः ॥ ४६ ॥ सीमाबन्धनकाले तु सीमाबन्धनकारिणाम् ॥ तेषां संज्ञां दधानस्तु जिह्वाच्छेदनमाप्नुयात् ॥४७॥ अर्थेनापि च यो विद्यात्संविदं वापि गच्छति ॥ उत्तमं साहसं दण्ड्य इति स्वायंभुवो ऽब्रवीत् ॥ ४८ ॥ स्थापितां चापि मर्यादां ये भिन्द्युः पापकारिणः ॥ ४९ ॥ सर्वे पृथक्पृथग्दण्ड्या राज्ञा प्रथमसाहसम् ॥ शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति ॥ ५० ॥ वैश्यश्च द्विशतं राम शूद्रश्च वधमर्हति ॥ पञ्चाशद्ब्राह्मणो दण्ड्यः क्षत्रियस्यापि शासने ॥ ५१ ॥ वैश्ये चाप्यर्धपञ्चाशच्छूद्रो द्वादशकोऽधमः ॥ क्षत्रियस्याप्नुयाद्वैश्यः साहसं पूर्वमेव तु ॥ ५२ ॥ शूद्रः क्षत्रियमात्रस्य जिह्वाच्छेदनमाप्नुया त् ॥ पञ्चाशत्क्षत्रियो दण्ड्यस्तथा वैश्याभिशासने ॥ ५३ ॥ शूद्रे चैवार्धपञ्चाशत्तथा धर्मो न हीयते ॥ वैश्यस्याक्रोशने दण्ड्यः शूद्रश्चोत्तम साहसम् ॥ ५४ ॥ शूद्राक्रोशे तथा वैश्यः शतार्धं दण्डमर्हति ॥ सवर्णाक्रोशने दण्डस्तथा द्वादशिकः स्मृतः ॥ ५५॥ वादेषु वचनीयेषु तदेव द्विगु णं भवेत् ॥ एकजातिर्द्विजातिं तु वाचा दारुणया क्षिपन् ॥ जिह्वायाः प्राप्नुयाच्छेदं जघन्यप्रभवो हि सः ॥ ५६ ॥ नामजातिग्रहं तेषा मभिद्रोहेण कुर्वतः ॥ निखन्योऽयोमयः शङ्कुर्ज्वलन्नास्ये दशाङ्गुलः ॥ ५७ ॥ धर्मोपदेशधर्मेण द्विजानामस्य कुर्वतः ॥ तप्तमासिञ्चयेत्तैलं वक्त्रे श्रोत्रे च पार्थिवः ॥५८॥ श्रुतं देशं च जातिं च कर्म शारीरमेव च ॥ वितथं तु ब्रुवन्दण्ड्यो राज्ञा द्विगुणसाहसम् ॥ ५९ ॥ यस्तु पातक संयुक्तैः क्षिपेद्वर्णान्तरो विशः ॥ उत्तमं साहसं तस्मिन्दण्डः पात्यो यथाक्रमम् ॥ ६० ॥ राज्ञो निवेश्य नियमं प्रथमं यान्ति ये मिथः ॥ ६१ ॥ सर्वे द्विगुणदण्ड्यास्ते विप्रलम्भान्नृपस्य तु ॥ प्रीत्या मयास्याभिहितं प्रमादेनाथवा वदेत् ॥ भूयो न चैवं वक्ष्यामि स तु दण्डार्धभाग्भवेत् ॥ ६२ ॥ काणं वाप्यथवा खञ्जमन्धं वापि तथाविधम् ॥ तथ्येनापि ब्रुवन्दाप्यो दण्डः कार्षापणावरम् ॥ ६३ ॥ मातरं पितरं ज्येष्ठं भ्रातरं श्वशुरं गुरुम् ॥ आक्षारयञ्छतं दण्ड्यः पन्थानं चाददद्गुरोः ॥६४ ॥ गुरुवर्ज्यं तु मार्गार्हे यो मार्गं न प्रयच्छति ॥ स राज्ञा कृष्णलं दण्ड्य

स्तस्य पापस्य शान्तये ॥६५॥ एकजातिर्द्विजातिन्तु येनाङ्गेनापराध्नुयात् ॥ तदेव च्छेदयेत्तस्य क्षिप्रमेवाविचारयन् ॥६६॥ अवनिष्ठीवतो दर्पा द्वावोष्ठौ छेदयेन्नृपः ॥ अवसेचयतो मेढ्रमवशब्दयतो गुदम् ॥ ६७ ॥ महासनमभिप्रेप्सुरुत्कृष्टस्यावकृष्टजः ॥ ६८ ॥ कृताङ्कः स विनिर्वास्यो ह्यङ्गं वास्य विकर्तयेत् ॥ केशेषु गृह्णतो हस्तौ छेदयेदविचारयन् ॥ पादयोर्दण्डिकायां तु ग्रीवायां वृषणेषु वा ॥ ६९ ॥ त्वग्भेदकः शतं दण्डचो लोहितस्य च दर्शकः ॥ ७० ॥ अस्थिभेत्ता च षण्णिष्कान्प्रमाप्यश्च प्रमापकः ॥ अङ्गभङ्गकरस्यांगं तदेवापहरेन्नृपः ॥ ७१ ॥ दण्डपारुष्यकृद्दद्यात्समुत्थानव्ययं तथा ॥ अर्धपादकराः कार्या गोगजाश्वोष्ट्रघातकाः ॥ ७२ ॥ पशुक्षुद्रमृगाणां च हिंसायां द्विगुणो दमः ॥ पञ्चाशत्तु भवेद्दण्डस्तथैव मृगपक्षिषु ॥ ७३ ॥ कृमिकीटेषु दण्डः स्याद्रजतस्य तु माषकम् ॥ तस्यानुरूपं मूल्यं च प्रदद्यात्स्वामिने तथा ॥७४॥ सस्वामिकानां मरके शेषाणां दण्डमेव तु ॥ वृक्षं तु सफलं छित्त्वा सुवर्णं दण्डमर्हति ॥ ७५ ॥ द्विगुणं दण्डयेच्चैत्ये पथि सीम्नि जलाशये ॥ छेदनादफलस्यापि मध्यमः साहसः स्मृतः ॥ ७६ ॥ गुल्मवल्लीलतानां तु सुवर्णस्य च माषकम् ॥ वृथा छेदे तृणस्यापि दण्डः कार्षापणं भवेत् ॥ ७७ ॥ त्रिभागं कृष्णलान्दण्डचः प्राणिनस्ताडने तथा ॥ देशकालानुरूपेण मूल्यं राम ! द्रुमादिषु ॥ ७८ ॥ तत्स्वामिनि तथा दद्याद्दण्डमुक्तं च पार्थिवे ॥ यत्रातिवर्तते युग्यं वैगुण्याद्रजकस्य तु ॥७९ ॥ तत्र स्वामी भवेद्दण्डचो नाप्तश्चेद्व्याजको भवेत् ॥ प्राणकश्च भवेदाप्तः प्राजको दण्डमर्हति ॥ ८०॥ नास्ति दण्डं च तस्यापि तथा त्राहीति जल्पतः ॥ ८१ ॥ द्रव्याणि यो हरेद्यस्य जानतोऽजानतोऽपि वा ॥ स तस्योत्पादयेत्तुष्टिं राज्ञो दद्यात्ततो दमम् ॥ ८२ ॥ यस्तु रज्जुं घटं कूपाद्धरेद्भिन्द्याच्च तां प्रपाम् ॥ स दण्डं प्राप्नुयान्माषं तच्च संप्रतिपादयेत् ॥ ८३ ॥ धान्यं दशभ्यः कुम्भेभ्यो हरतोऽभ्यधिकं बुधः ॥ शेषेऽप्येकादशगुणं दण्डं तस्य प्रकल्पयेत् ॥८४॥ सुवर्णरजतादीनां चोत्तमानां च वाससाम् ॥ पुरुषाणां कुलीनानां नारीणां च विशेषतः ॥ मुख्यानां चैव रत्नानां हरणे वधमर्हति॥८५॥महापशूनां हरणे वस्त्राणामौषधस्य च ॥ कालमासाद्य कार्यं च राजा दण्डं प्रकल्पयेत् ॥ ८६ ॥ गोषु ब्राह्मणसंस्थासु स्थूलकार्याविभेदने ॥ अश्वापहारकश्चैव सद्यः कार्योऽर्धपादिकः ॥ ८७ ॥ सूत्रकार्पासकिलवानां गोमयस्य गुडस्य च ॥ दध्नः क्षीरस्य तक्रस्य पानीयस्य फलस्य च ॥ ८८ ॥ वेणुवैदलभाण्डानां लवणानां तथैव च ॥ मृण्मयानां च सर्वेषां मृदो भस्मन एव च ॥८९॥ मद्यानां पक्षिणां चैव तैलस्य च घृतस्य च ॥ मांसस्य मधुनश्चैव यच्चान्यत्पशुसम्भवम्॥९०॥ अन्येषामेवमादीनां मत्स्यानामोदनस्य च ॥ पक्वान्नानां च सर्वेषां तन्मूल्याद्द्विगुणो दमः ॥ ९१ ॥ पुष्पेषु हरिते धान्ये गुल्मवल्लीलतासु च ॥

अल्पेषु परिपूर्णेषु दण्डः स्यात्पञ्चमाषकः ॥ ९२ ॥ परिपूर्णेषु धान्येषु शाकमूलफलेषु च ॥ निरन्वये शतं दण्डयः सान्वये च शतं दमः ॥ ९३ ॥ येनयेन यथाङ्गेन स्तेनो नृषु विचेष्टते ॥ तत्तदेव हरेदस्य प्रत्यादेशाय पार्थिवः ॥ ९४ ॥ द्विजोऽध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके ॥ त्रपुसोर्वारुकौ द्वौद्वौ तावन्मानं फलेषु च ॥ ९५ ॥ तथा च सर्वधान्यानां मुष्टिग्राहेण भार्गव ॥ शाकं शाकप्रमाणेन गृह्यमाणो न दुष्यति ॥ ९६ ॥ वानस्पत्यं मूलफलं दर्वर्थ्यर्थं तथैव च ॥ तृणं च गोभ्यो दानार्थमस्तेयं मनुरब्रवीत ॥ ९७ ॥ अदेववाटजं पुष्पं देवतार्थं तथैव च ॥ आददानः परक्षेत्रान्न दण्डं दातुमर्हति ॥ ९८ ॥ शृङ्गिणं नखिनं चापि दंष्ट्रिणं वा वधोद्यतम् ॥ यो हन्यान्न स पापेन लिप्यते मनुजः क्वचित् ॥ ९९ ॥ गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम् ॥ आततायिनमायान्तं हन्यादेवाविचारयन् ॥ १०० ॥ नाततायिवधे दोषः कर्तुर्भवति कश्चन ॥ प्रकाशं वाऽप्रकाशं वा मन्युस्तं मन्युमर्हति ॥ १०१ ॥ गृहक्षेत्राभिहर्तारं तथा पत्न्यभिगामिनम् ॥ अग्निदं गरदं चैव तथा हस्तोद्यतायुधम् ॥ १०२ ॥ अभिचारं च कुर्वाणं राजगामि च पैशुनम् ॥ एते हि कथिता लोके धर्मज्ञैराततायिनः ॥ १०३ ॥ परस्त्रियं न संभाषेत्तीर्थेऽरण्ये गृहेऽपि वा ॥ नदीनां चैव संभेदे संग्रहणमवाप्नुयात् ॥ १०४ ॥ न संभाषं सह स्त्रीभिः प्रतिषिद्धं समाचरेत् ॥ प्रतिषिद्धस्तु संभाषः सुवर्णं दण्डमर्हति ॥ १०५ ॥ नैष चारेणदारेषु विधिर्नात्मोपजीविषु ॥ सज्जयन्ति मनुष्यैस्ते निगूढं विचरन्त्युत ॥ १०६ ॥ किञ्चिदेव तु साम्यं स्यात्संभाषेताभिचारयन् ॥ प्रेष्यासु चैव सर्वाभिरहः प्रव्रजितासु च ॥ १०७ ॥ योऽकामां दूषयेत्कन्यां स सद्यो वधमर्हति ॥ सकामां दूषयाणस्तु प्राप्यः प्रथमसाहसम् ॥ १०८ ॥ भिक्षुकोऽप्यथवा नारी योऽपि च स्यात्कुशीलवः ॥ प्रविशेत्प्रतिषिद्धस्तु प्राप्नुयाद्विशतं दमम् ॥ १०९ ॥ यश्च संचारकस्तत्र पुरुषः स तथा भवेत् ॥ पारदारिकवद्दण्ड्यो यश्च स्यादवकाशदः ॥ ११० ॥ बलात्संदूषयन्यस्तु परभार्यां नरः क्वचित् ॥ वधदण्डो भवेत्तस्य नापराधो भवेत्स्त्रियाः ॥ १११ ॥ रजस्तृतीयं या कन्या स्वगृहे प्रतिपद्यते ॥ अदण्ड्या सा भवेद्राज्ञा वरयन्ती पतिं स्वयम् ॥ ११२ ॥ स्वदेशे कन्यकां दत्त्वा तामादाय तथा व्रजन् ॥ परदेशे भवेद्वध्यः स्त्रीचौरः स तथा भवेत् ॥ ११३ ॥ अद्रव्यां मृतपत्नीं तु संगृह्णन्नापराध्यति ॥ सार्थां वै तां च गृह्णानो दण्डमुत्तममर्हति ॥ ११४ ॥ उत्कृष्टं या भजेत्कन्या देया तस्यैव सा भवेत् ॥ जघन्यं सेवमानां च संयतां वासयेद्गृहे ॥ ११५ ॥ उत्तमां सेवमानस्तु जाघन्यो वधमर्हति ॥ जघन्यमुत्तमा नारी सेवमाना तथैव च ॥ ११६ ॥ भर्तारं लङ्घयेद्या तु स्त्री ज्ञातिबलदर्पिता ॥ तां श्वभिः खादयेद्राजा संस्थाने बहुसं

स्थिते ॥ ११७ ॥ हृताधिकारां मलिनां पिण्डमात्रोपजीविनीम् ॥ वासयेत्स्वैरिणीं नित्यं सवर्णेनाभिदूषिताम् ॥ ११८ ॥ ज्यायसा दूषिता नारी मुण्डनं समवाप्नुयात् ॥ मासं च मलिना नित्यं सा ग्रासान्प्राप्नुयाद्दश ॥ ११९ ॥ ब्राह्मणः क्षत्रियो वैश्यः क्षत्रविट्शूद्रयोनयः ॥ व्रजन्दाप्यो भवेद्राम दण्ड उत्तमसाहसम् ॥ १२० ॥ वैश्यागमे तु विप्रस्य क्षत्रियस्यान्त्यजागमे ॥ मध्यमं प्रथमं वैश्यो दण्ड्यः शूद्रागमे भवेत् ॥ १२१ ॥ शूद्रः सवर्णाऽगमने शतं दण्ड्यो महीभुजा ॥ वैश्यश्च द्विगुणं राम क्षत्रियस्त्रिगुणं तथा ॥ १२२ ॥ ब्राह्मणश्च भवेद्दण्ड्यस्तथा राम चतुर्गुणम् ॥ गुप्तास्वेव भवेद्दण्डमगुप्तास्वपि तत्स्मृतम् ॥ १२३ ॥ माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा ॥ पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी तथा ॥ १२४ ॥ भागिनेयी तथा चैव राजपत्नी तथैव च ॥ इत्यगम्यास्तु निर्दिष्टास्तासां तु गमने नरः ॥ १२५ ॥ शिश्नस्योत्कर्तनं कृत्वा ततस्तु वधमर्हति ॥ भ्रातृभार्यागमे पूर्वाद्दण्डस्तु वधमर्हति ॥ १२६ ॥ चण्डालीं वा श्वपाकीं वा गच्छन्वधमवाप्नुयात् ॥ तिर्यग्योनौ तु गोवर्ज्यं मैथुनं यो निषेवते ॥ १२७ ॥ स पणं प्राप्नुयाद्दण्डं तस्याश्च यवसोदकम् ॥ सुवर्णं च भवेद्दण्ड्यो गां व्रजन्मनुजोत्तम ॥ १२८ ॥ वेश्यागामी भवेद्दण्ड्यो वेश्याशुल्कसमं पणम् ॥ गृहीत्वा वेतनं वेश्या लोभादन्यत्र गच्छति ॥ १२९ ॥ वेतनं द्विगुणं दद्याद्दण्डं च त्रिगुणं तथा ॥ अन्यमुद्दिश्य वेश्यां यो नयेदन्यस्य कारणात् ॥ १३० ॥ तस्य दण्डं भवेद्राम सुवर्णस्य च माषकम् ॥ नीत्वा भोगं न यो दद्याद्दाप्यो द्विगुणवेतनम् ॥ १३१ ॥ राज्ञा च द्विगुणं दण्ड्यस्तथा धर्मो न हीयते ॥ बहूनां व्रजतामेकां सर्वे तद्द्विगुणं दमम् ॥ १३२ ॥ सर्वे पृथक्पृथग्राम दण्डं च द्विगुणं पणात् ॥ न माता न पिता न स्त्री ऋत्विग्याज्यस्य सूनवः ॥ १३३ ॥ अन्योन्याः पतितास्त्याज्यास्त्यागे दण्ड्यः शतानि षट् ॥ पतिता गुरवस्त्याज्या न तु माता कदाचन ॥१३४॥ गर्भधारणपोषाभ्यां तेन माता गरीयसी ॥ संदंशहीनौ कर्तव्यौ कूटाक्षोपधिदेविनौ ॥ १३५ ॥ अधीयानमनध्याये दण्डः कर्षापणत्रयम् ॥ अध्यापकश्च द्विगुणं तथाचारस्य लङ्घने ॥ १३६ ॥ अन्तं सस्यभवे दण्डः सुवर्णस्य च कृष्णलम् ॥ भार्या पुत्रश्च दासश्च शिष्यो भ्राता च सोदरः ॥ १३७ ॥ प्राप्तापराधास्ते दण्ड्या रज्वा वेणुदलेन वा ॥ पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कथंचन ॥ १३८ ॥ अतोऽन्यथा यत्प्रहरेत्प्राप्तः स्याच्चौरकिल्बिषम् ॥ द्यूतं समाह्वयं चैव यो निषिद्धं समाचरेत् ॥ १३९ ॥ प्रच्छन्नं वा प्रकाशं वा स दण्ड्यः पार्थिवेच्छया ॥ वासांसि फलके श्लक्ष्णे नेनिज्याद्रजकः शनैः ॥ १४० ॥ अतोऽन्यथा

१ 'कूटाक्षेपाभिभेदिनौ' इति ख० ।

तु कुर्वीत दण्डस्स्याद्दुक्सकृष्णलम् ॥ रक्षांस्यधिकृता राम प्रजेयं यैर्विलिप्यते ॥ १४१ ॥ कार्यिकेभ्योऽर्थमादाय हन्युः कार्याणि कार्यिणाम् ॥
तेषां सर्वस्वमादाय राजा कुर्यात्प्रवासनम् ॥ १४२ ॥ ये नियुक्ताः स्वकार्येषु हन्युः कार्याणि कार्यिणाम् ॥ निर्घृणाः क्रूरमनसः सर्वकार्योपरो
धिनः ॥ १४३ ॥ धनोष्मणा पच्यमानांस्तान्निःस्वान्कारयेन्नृपः ॥ कूटशासनर्तृंश्च प्रकृतीनां च दूषकान् ॥ १४४ ॥ स्त्रीबालब्राह्मणघ्नांश्च वध्यां
श्चासेविनस्तथा ॥ अमात्यः प्राड्विवाको वा यः कुर्यात्कार्यमन्यथा ॥ १४५ ॥ तस्य सर्वस्वमादाय तं राजा विप्रवासयेत् ॥ ब्रह्मघ्नश्च सुरापश्च
स्तेयी च गुरुतल्पगः ॥ १४६ ॥ एतान्सर्वान्पृथग्विद्यान्महापातकिनो नरान् ॥ महापातकिनो वध्या ब्राह्मणं तु विवासयेत् ॥ १४७ ॥ कृतचिह्नं
स्वकादेशाच्छृणु चिह्नक्रमं तथा ॥ गुरुतल्पे भगः कार्यः सुरापाने सुराध्वजः ॥ १४८ ॥ स्तेये तु श्वपदं विद्याद्ब्रह्महण्यशिराः पुमान् ॥ अस
म्भाष्या ह्यसंलाप्या असम्पाद्या विशेषतः ॥ १४९ ॥ त्यक्तव्याश्च तथा राम ! ज्ञातिसम्बन्धिबान्धवैः ॥ महापातकिनो वित्तमादाय नृपतिः
स्वयम् ॥ १५० ॥ अप्सु प्रवेशयेद्दण्डं वरुणायोपपादयेत् ॥ सहोढं न विना चौरं घातयेद्धार्मिको नृपः ॥ १५१ ॥ सहोढं सोपकरणं घातये
दविचारयन् ॥ ग्रामेष्वपि च ये केचिच्चौराणां भक्तदायकाः ॥ १५२ ॥ भाण्डावकाशदाश्चैव सर्वांस्तानपि घातयेत् ॥ राष्ट्रेषु राष्ट्राधिपतेः सम
न्ताच्चैव दूषकान् ॥ १५३ ॥ अभ्याघातेषु मध्यस्थाः क्षिप्रं शास्यास्तु चौरवत् ॥ दस्युप्रपीडितानां हि पथि मोहादिदर्शने ॥ १५४ ॥
शक्तितो नाभिधावन्तो निर्वास्याः सपरिच्छदाः ॥ राज्ञः कोषापहर्तृंश्च प्रतिकूलेषु च स्थितान् ॥१५५ ॥ अरीणामुपजप्तृंश्च घातयेद्विविधैर्वधैः ॥
सन्धिं भित्त्वा तु ये चौर्यं राज्ञः कुर्वंति तस्कराः ॥ १५६ ॥ तेषां छित्त्वा नृपो हस्तौ तीक्ष्णे शूले निवेशयेत् ॥ तडाकभेदकं हन्यादप्सु शुद्धवधेन
तु ॥१५७॥यस्तु पूर्वं निवृत्तस्य तडाकस्योदकं हरेत् ॥ आगमं वाप्यपां कुर्यात्स दाप्यः पूर्वसाहसम् ॥१५८॥ कोष्ठागारायुधागारदेवतागारभेदका
न् ॥ पापान्पापसमाचारान्घातयेच्छीघ्रमेव तान्॥१५९॥समुत्सृजेद्राजमार्गे यस्त्वमेध्यमनापदि ॥ स हि कार्षापणं दण्ड्यस्तममेध्यं च शोधयेत्॥
॥१६०॥ आपद्गतोऽथ वा वृद्धो गर्भिणी बाल एव वा ॥ परिभाषणमर्हन्ति तच्च शोध्यमिति स्थितिः॥१६१॥प्रथमं साहसं दण्ड्यः यश्च मिथ्याचि
कित्सकः ॥ पुरुषे मध्यमं दण्ड्यस्तूत्तमे च तथोत्तमम् ॥१६२॥ संक्रमध्वजयष्टीनां प्रतिमानां च भेदकान् ॥ प्रतिकुर्युश्च तत्सर्वं दद्युः पञ्चशतानि
च॥१६३॥ अदूषितानां द्रव्याणां दूषणे भेदने तथा ॥ मणीनामपि भेदस्य दण्डः प्रथमसाहसः ॥ १६४ ॥ समैश्च विषमं यो वै कुरुते मूल्यतोऽपि
वा ॥ समाप्नुयान्नरः पूर्वं समं वाधममेव वा ॥ १६५ ॥ बन्धनानि च सर्वाणि राजमार्गे निवेशयेत् ॥ क्लिश्यन्तो यत्र दृश्यन्ते विकृताः पापचा

रिणः ॥ १६६ ॥ प्राकारस्य तु भेत्तारं परिखानां च भेदकम् ॥ द्वाराणां चैव भेत्तारं क्षिप्रं निर्वासयेत्पुरात् ॥ १६७ ॥ मूलकर्माभिचारेषु कर्तव्यो द्विगुणो दमः ॥ अबीजविक्रयी दैवबीजोत्कृष्टस्तथैव च ॥ १६८ ॥ मर्यादाभेदकश्चैव विकृतं वधमाप्नुयात ॥ सर्वसङ्करपापिष्ठं हेमकारं नराधिपः ॥ १६९ ॥अन्याये वर्तमानं तु लवशश्छेदयेच्छरैः ॥ द्रव्यमादाय वणिजामनर्घेणावरुन्धताम् ॥ १७० ॥ राजा पृथक्पृथक्कुर्याद्दण्डमुत्तमसाहसम् ॥ द्रव्यावदूषको यश्च प्रतिच्छन्दकविक्रयी ॥ १७१ ॥ मध्यमं प्राप्नुयाद्दण्डं कूटकर्ता तथोत्तमम् ॥ शास्त्राणां यज्ञतपसां देशानां क्षेपको नरः ॥ १७२ ॥ देवतानां सतीनां वै तूत्तमं दण्डमर्हति ॥ एकस्य दण्डपारुष्ये बहूनां द्विगुणो दमः ॥१७३ ॥ कलहापहृतं देयं दण्डश्च द्विगुणस्ततः ॥ मध्यमं ब्राह्मणं राजा विषयाद्विप्रवासयेत् ॥ १७४ ॥ लशुनं च पलाण्डुं च सूकरं ग्रामकुक्कुटम् ॥ तथा पञ्चनखं सर्वं भक्ष्यादन्यत्र भक्षितम् ॥ १७५ ॥ विवासयेत्क्षिप्रमेव ब्राह्मणं विषयात्स्वकात् ॥ अभक्ष्यभक्षणे दण्ड्यः शूद्रो भवति कृष्णलम् ॥ १७६ ॥ ब्राह्मणक्षत्रियविशां चतुस्त्रिद्विगुणं हितम् ॥ यः साहसं कारयति स दद्याद्द्विगुणं दमम् ॥ १७७ ॥ यश्चैवमुक्त्वाहं दाता कारयेत्स चतुर्गुणम्[1] ॥ संदिष्टस्याप्रदातारं समुद्रगृहभेदकम् ॥ १७८ ॥ पञ्चाशत्पणिको दंडस्तयोः कार्यो महीक्षिता ॥ अस्पृश्येषु शतार्धन्तु मध्योऽधो योगकर्मकृत् ॥ १७९ ॥ पुंस्त्वहर्ता पशूनां च दासीगर्भविनाशकृत् ॥ शूद्रप्रव्रजितानां च दैवे पित्र्ये च भोजकः ॥ १८०॥ अव्रजन्बाढमुक्त्वा च तथैव च निमन्त्रणात् ॥ एते कार्षापणशतं सर्वे दण्ड्या महीक्षिता ॥ १८१ ॥ दुःखोत्पादि गृहे द्रव्यं क्षिपन् दण्ड्यस्तु कृष्णलम् ॥ पितापुत्रविरोधे तु साक्षिणां द्विशतो दमः ॥ १८२ ॥ तुलाशासनमानानां कूटकृन्नाणकस्य च ॥ एभिश्च व्यवहर्ता यः स दाप्यो दण्डमुत्तमम् ॥ १८३ ॥ विषाग्निदां पतिगुरुनिजापत्यप्रमापणीम् ॥ विकर्णकरनासौष्ठीं कृत्वा गोभिः प्रमापयेत् ॥ १८४ ॥ क्षेत्रवेश्मग्रामवननिवीतखलदाहकाः ॥ राजपत्न्यभिगामी च दग्धव्याश्च कटाग्निना ॥ १८५ ॥ ऊनं वाप्यधिकं वापि लिखेद्यो राजशासनम् ॥ पारदारिकचौरौ च मुञ्चतो दण्डमुत्तमम् ॥ १८६ ॥ अभक्ष्येण द्विजं दूष्य दण्डमुत्तमसाहसम् ॥ क्षत्रियो मध्यमं वैश्यः प्रथमं शूद्रमर्धिकम् ॥ १८७॥ मृताङ्गलग्नविक्रेतुर्गुरोस्ताडयितुस्तथा ॥ राजयानासनारोढुर्दण्ड उत्तमसाहसः ॥ ॥ १८८ ॥ यो मन्येताजितोऽस्मीति न्यायेनापि पराजितः ॥ तमायातं पुनर्जित्वा दण्डयेद्द्विगुणं दमम् ॥ १८९ ॥ आह्वानकारी वध्यः स्यादनाहूतमथाह्वयन् ॥ दण्डिकस्य च यो हस्तादभियुक्तः पलायते ॥ १९० ॥ हीनः पुरुषकारेण तद्दद्याद्दाण्डिको धनम् ॥ प्रेष्यापरा

१ 'यश्चैनमुत्साहयेत्तद्दापयेत्स चतुर्गणम्' । इति ख० ।

घात्प्रेष्यस्य स दण्डं दातुमर्हति ॥ १९१ ॥ दण्डार्थं नियमार्थं च नीयमानस्तु बन्धनम् ॥ पथि कश्चित्पलायेत दण्डमष्टगुणं भवेत् ॥ १९२ ॥
अनिश्चितविवादे तु नखरोमावतारणम् ॥ कारयेद्यः स पुरुषो मध्यमं दण्डमर्हति ॥ १९३ ॥ बन्धनं वाथवा वध्यं बलान्मोचयतोभ वेत् ॥
वध्ये विमोचिते वध्यो दण्ड्ये द्विगुणदण्डभाक् ॥ १९४ ॥ दुर्दृष्टव्यवहाराणां सभ्यानां द्विगुणो दमः ॥ ज्ञात्वा त्रिंशद्गुणं दण्डं प्रक्षेप्यमुदके भवेत् ॥
॥ १९५ ॥ अल्पे दण्डेधिकं कृत्वा विपुले चाल्पमेव च ॥ ऊनाधिकं तु तद्दण्डं सद्यो दद्यात्स्वकाद्गृहात् ॥ १९६ ॥ यावद्वध्यः स वध्येत ताव
द्वध्यस्य मोक्षणात् ॥ न जातु ब्राह्मणं हन्यात्सर्वपापेष्ववस्थितम् ॥ १९७ ॥ वध्ये विवासयेद्राष्ट्रात्समग्रधनमक्षतम् ॥ न जातु ब्राह्मणवधात्पापम
प्यधिकं क्वचित् ॥ १९८ ॥ यस्मात्तस्मात्प्रयत्नेन ब्रह्महत्यां विवर्जयेत् ॥ अदण्ड्यान्दण्डयन्राजा दण्ड्यांश्चैवाप्यदण्डयन् ॥ अयशोमहदाप्नोति
नरकं चैव गच्छति ॥ १९९ ॥ ज्ञात्वापराधं पुरुषं च राजा कालं तथा चानुमते द्विजानाम् ॥ दण्ड्येषु दण्डं परिकल्पयेत पापस्य ये तच्छमनं
न कुर्युः ॥ २०० ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० सं० परशुरामं प्रति पुष्करोपाख्यानेषु दण्डप्रणयनन्नाम द्विसप्ततितमोऽध्यायः ॥७२॥
राम उवाच ॥ कुर्याद्दण्डप्रणयनं प्रायश्चित्तमकुर्वताम् ॥ नृणां राजा ततो ब्रूहि प्रायश्चित्तविधिं मम ॥ १ ॥ पुष्कर उवाच ॥ अकामतः कृते पापे
प्रायश्चित्तं विदुर्बुधाः ॥ कामचारकृतेऽप्येतन्मतं मे श्रुतिदर्शनात् ॥ २ ॥ प्रायश्चित्तैः शमं याति पापं कृतमसंशयम् ॥ राजदण्डाच्छमं याति प्रायश्चि
त्तमकुर्वताम् ॥ ३ ॥ प्राश्चित्तविहीना ये राजभिश्चाप्यवासिताः ॥ नरकं प्रतिपद्यन्ते तिर्यग्योनिं तथैव च ॥ ४ ॥ मानुष्यमपि चासाद्य भवन्तीह
तथांकिताः ॥ प्रायश्चित्तमतः कार्यं कल्मषस्यापनुत्तये॥५॥राजक्रुद्धातुरान्नं च न भुञ्जीत कदाचन ॥ तथैवाह्वायकस्यान्नं पदा स्पृष्टं च कामतः॥६॥
महापातकिना स्पृष्टमवलीढं पतत्रिणा ॥ ऋक्षीमपक्कं[1] यश्चापि स्पृष्टं यच्चाप्युदक्यया ॥ ७ ॥ गणान्नं गणिकान्नं च विद्विषां यज्जुगुप्सितम् ॥
स्तेनस्य चैव तीक्ष्णस्य वार्धुषेर्गायनस्य च ॥८॥ दीक्षितस्य कदर्यस्य बद्धस्य निगडैरपि ॥ अभिशस्तस्य षण्ढस्य पुंश्चल्या दांभिकस्य च ॥९॥
चिकित्सकस्य मृगयोः क्रूरस्योच्छिष्टभोजिनः ॥ अनर्चितं वृथा मांसमवीरायाश्च योषितः ॥ १० ॥ द्विषदन्नं च दासान्नमुग्रान्नं चाप्यचाक्षुषम् ॥
पिशुनानृतिनोश्चान्नमस्त्रविक्रयिणस्तथा ॥ ११ ॥ रजकस्य नृशंसस्य यस्य चोपपतिर्गृहे ॥ शैलूषतुन्नवायान्नं[2] कृतघ्नस्यान्नमेव च ॥ १२ ॥
परिवित्तेश्च दुष्टस्य बन्दिनः कितवस्य च ॥ कुण्डगोलकयोश्चैव स्त्रीजितस्य तथैव च ॥ १३ ॥ कर्मारस्य निषादस्य रङ्गावतरकस्य च ॥

१ 'ऋची' इति पा० । २ 'तन्तुवायान्नं' इति ख० ।

सुवर्णकर्तुर्वेनस्य चैलनिर्णेजकस्य च ॥ १४ ॥ मिथ्याप्रव्रजितस्यान्नं तैलिकस्य तथैव च ॥ तथैव वृषलस्यान्नं ब्राह्मणेनानिमन्त्रितम् ॥ १५ ॥ एषामन्यतमस्यान्नममत्यात्त्वा त्र्यहं क्षिपेत् ॥ मत्या भुक्त्वा चरेत्कृच्छ्रं रेतोविण्मूत्रमेव च ॥ १६ ॥ महापातकयुक्तस्य सूतिकस्य तथैव च ॥ भुक्त्वान्नं चर्मकारस्य मत्या कृच्छ्रं चरेद्द्विजः ॥ १७॥ चण्डालश्वपचान्नं च भुक्त्वा चान्द्रायणं चरेत् ॥ अन्तश्चतुर्थिप्रेतान्नं गवाघ्रातं तथैव च ॥ १८ ॥ शूद्रोच्छिष्टं लघूच्छिष्टं सूतिकान्नं तथैव च ॥ तप्तकृच्छ्रं तु कुर्वीत तस्य पापस्य शान्तये ॥ १९ ॥ भुक्त्वा तु ब्राह्मणाशौचे चरेत्सान्तपनं द्विजः ॥ भुक्त्वा तु क्षत्रियाशौचे तथा कृच्छ्रं विधीयते ॥ २० ॥ वैश्याशौचे तथा भुक्त्वा तप्तकृच्छ्रं समाचरेत् ॥ शूद्राशौचे द्विजो भुक्त्वा तथा चान्द्रायणं चरेत्॥२१॥अशौचे यस्य यो भुक्त्वा सोऽप्यशुद्धस्तथा भवेत्॥तावद्यावदशौचं तु तस्य राम प्रकीर्तितम्॥२२॥तस्याशौचव्यपगमे प्रायश्चित्तं समाचरेत् ॥ भुक्त्वोत्तमस्य चाशौचे क्षपेत दिवसं तथा ॥२३॥ मृतपञ्चनखात्कूपादमेध्येन सकृद्युतात् ॥ अपः पीत्वा त्र्यहं तिष्ठेत्सोपवासो द्विजोत्तमः ॥ २४ ॥ द्विदिनं क्षत्रियस्तिष्ठेदेकाहं वैश्य एव च ॥ नक्ताशी च तथा शूद्रः पञ्चगव्येन शुध्यति ॥ २५ ॥ भुक्त्वाप्यथ कषायांश्च पीत्वामेध्यान्यपि द्विजः ॥ तावद्भवत्यप्रयतो यावदन्नं व्रजत्यधः ॥ २६ ॥ विड्वराहखरोष्ट्राणां गोमायुकपिकाद्वयोः ॥ प्राश्य मूत्रपुरीषाणि द्विजश्चान्द्रायणं चरेत् ॥ २७ ॥ शुष्काणि जग्ध्वा मांसानि भौमानि कवकानि च ॥ अज्ञातं चैव सूनास्थं चैतदेव व्रतं चरेत् ॥ २८॥ क्रव्यादसूकरोष्ट्राणां गोमायोः कपिकाकयोः॥ गोनराश्वखरोष्ट्राणां भोक्ता पञ्चनखाश्च ये ॥२९॥ मांसं च कौञ्जरं भुक्त्वा तप्तकृच्छ्रेण शुध्यति॥ग्रामकुक्कुटच्छत्राकौ भुक्त्वा चान्द्रायणं चरेत्॥३०॥ केशकीटावपन्नेऽपि पिबेद्ब्रह्मसुवर्चलाम्॥आमश्राद्धे तथा भुक्त्वा तप्तकृच्छ्रेण शुद्ध्यति॥३१॥संकल्पिते तथा भुक्त्वा त्रिरात्रोपोषणं भवेत् ॥ व्रतचारी तथा भुक्त्वा मधुमांसं च भार्गव॥३२॥लशुनं गृञ्जनं चैव पालण्डुं मद्यमेव च॥लशुनादिसमं यच्च गन्धेन मनुजोत्तम!॥३३॥भुक्त्वा चान्द्रायणं कुर्यान्मासं क्रव्यभुजस्तथा ॥ लोहितान्वृक्षनिर्यासान्कुस्थानप्रभवांस्तथा॥३४॥शेलुं गव्यं च पेयूषं विषं श्लेष्मातकं मृदम् ॥ वृथा कृसरसंयावपायसापूपशष्कुलीः॥३५॥गवां च महिषीणां च वर्जयित्वा तथाप्यजाम् ॥ सर्वक्षीराणि वर्ज्यानि तेषां चैवाप्यनिर्दशम्॥३६॥ स्यंदनेऽमेध्यभक्षाया विवत्सायाश्च वर्जयेत् ॥ दधिवर्ज्यं च शुक्तानि सर्वाण्येव विवर्जयेत् ॥३७॥ शुभैः पुष्पफलैर्यानि भक्तैरभियुतानि च ॥ विष्किराञ्जालपादांश्च रक्तपादांस्तथैव च॥३८॥ सर्वशुष्कांश्च चूडालान्प्रतोदांश्च विवर्जयेत् ॥ वर्तिको वर्तिका चेति तित्तिरश्च कपिञ्जलः ॥ ३९ ॥ भक्ष्यो मयूरश्च तथा पक्षिणां ये विवर्जिताः ॥ शशकः शल्लको गोधा खड्गः कूर्मस्तथैव च॥४०॥भक्ष्याः पञ्चनखाः प्रोक्ताः परिवेषाश्च वर्जिताः ॥ पाठीनान्रोहितान्मत्स्याँल्लोहतुण्डांश्च

भक्षयेत् ॥ ४१॥ राजीवांश्च सशल्कांश्च भक्ष्यानाहुर्मनीषिणः ॥ अतोऽन्यान्वर्जयेत्सर्वांस्तथा वै जलचारिणः ॥ ४२॥ एतेषां भक्षणाद्राम त्रिरात्रं क्षपणं भवेत् ॥ चक्रवाकं प्लवं हंसं टिट्टिभं मद्गुमेव च ॥ ४३ ॥ काकोलं च शुकं भासं दात्यूहं सारिकां तथा ॥ बकश्येनबलाकांश्च भुक्त्वा षड्रात्रमाचरेत् ॥ ४४ ॥ उपवासस्तथा कार्यः सूनामांसाशने भवेत् ॥ अजाविकानुरोहांश्च पृषतान्माहिषांस्तथा ॥ ४५ ॥ रङ्कून्यंकूंस्तथैणांश्च गवयांश्चैव भक्षयेत् ॥ भुक्त्वा मांसं ततोऽन्यस्य त्र्यहं तिष्ठेद्बुभुक्षितः ॥४६॥यवगोधूमजं सर्वं पयसश्चैव विक्रियाः ॥ रागषाडवचुक्रादीन्सस्नेहं यच्च किञ्चन ॥ ॥४७॥ एतद्विना पर्युषितं भुक्त्वा चोपवसेद्दिनम् ॥ मद्यभाण्डगता मोहात्पीत्वा वापो द्विजोत्तमः॥४८॥शङ्खपुष्पाश्रितं क्षीरं पिबेत्तु दिवसत्रयम् ॥ सुराभाण्डगता पीत्वा सत्तरात्रं तथा पिबेत्॥४९॥शूद्रोच्छिष्टात्तथा पीत्वा पञ्चरात्रं तथा पिबेत्॥स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः॥५०॥ स्नात्वाऽर्कमर्चयित्वा त्रिः पुनर्मामित्यृचं जपेत् ॥ अग्निहोत्रापविद्धाग्निर्ब्राह्मणः कामचारतः ॥५१॥ चान्द्रायणं चरेन्मासं वीरमध्यासनं हितम् ॥ ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ॥ ५२ ॥ महान्ति पातकान्याहुः संयोगश्चैव तैः सह ॥ अनृतं च समुत्कर्षे राजगामि च पैशुनम् ॥ ५३ ॥ गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया ॥ ब्रह्मोज्झता वेदनिन्दा कौटसाक्ष्यं सुहृद्वधः॥५४॥ वर्जितान्नाद्ययोर्जग्धिः सुरापानसमानि षट्॥ निक्षेपस्यापहरणं नराऽश्वरजतस्य च॥५५॥ भूमिवज्रमणीनां च रुक्मस्तेयसमं स्मृतम्॥ रेतःसेकस्स्वयोनीषु कुमारीष्वन्त्यजासु च॥५६॥सख्युः पुत्रस्य च स्त्रीषु गुरुतल्पसमं विदुः ॥ गोवधोऽयाज्यसंयाज्यपारदार्यात्मविक्रयः॥५७॥गुरुमातृपितृत्यागः स्वाध्यायाग्न्योः सुतस्य च ॥ परिवर्तितानुजेन परिवेदनमेव च ॥ ५८॥ तयोर्मानं च कन्यायास्तयोरेव च याजनम् ॥ कन्याया दूषणं चैव वार्धुष्यं व्रतलोपनम् ॥५९॥ तडागारामदाराणामपत्यस्य च विक्रयः ॥ व्रात्यता बान्धवत्यागो भृताध्यापनमेव च ॥ ६० ॥ भृताद्ध्ययनादानमविक्रेयस्य विक्रयम् ॥ सर्वाकरेष्वधीकारो महायन्त्रप्रवर्तनम् ॥ ६१ ॥ हिंस्रौषधिस्त्रियाजीवी क्रिया याचनकर्म च ॥ इन्धनार्थमशुष्काणां द्रुमाणां चैव पातनम् ॥ ६२ ॥ आत्मार्थं च क्रियारम्भो निन्दितान्नादनं तथा ॥ अनाहिताग्निता स्तेयमगम्यास्त्रीनिषेवणम् ॥ ६३॥ स्त्रीशूद्रविट्क्षत्रिवधो नास्तिक्यञ्चोपपातकम् ॥ ब्राह्मणस्य रुजाकृत्यं घ्रातिरघ्रेयमद्ययोः ॥ ६४ ॥ जैह्मं च पुंसि मैथुन्यं जातिभ्रंशकरं स्मृतम् ॥ श्वखरोष्ट्रमृगेभानामजाव्योश्चैव मारणम् ॥ ६५ ॥ संकीर्णकरणं ज्ञेयं मीनाहिनकुलस्य च ॥ निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनम् ॥ ६६ ॥ अपात्रीकरणं ज्ञेयमसत्यस्य च भाषणम् ॥ कृमि

१ 'स्वामित्यागः' इति ख० ।

कीटवयोहत्यामन्यानुगतभोजनम् ॥ ६७ ॥ फलैधकुसुमस्तेयमधैर्यं चपलात्मता ॥ एतान्येनांसि सर्वाणि यथोक्तानि पृथक्पृथक् ॥ ६८ ॥ यैर्यैर्व्रतैरपोहेत तानि सम्यङ्निबोधत ॥ ब्रह्महा द्वादशाब्दानि कुटिं कृत्वा वने वसेत् ॥ ६९ ॥ भिक्षेताथ विशुद्ध्यर्थमुपासीनो वृषध्वजम् ॥ लक्षं शस्त्रभृतां वा स्याद्विद्विषामिच्छयात्मनः ॥ ७० ॥ प्राश्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्छिराः ॥ यजेत वाश्वमेधेन स्वर्जितागोसवेन च ॥ ॥ ७१ ॥ अभिजिद्विश्वजिद्भ्यां वा त्रिवृताग्निष्टुतापि वा ॥ जपन्वान्यतमं वेदं योजनानां शतं व्रजेत् ॥ ७२ ॥ ब्रह्महत्यापनुत्त्यर्थं मितभुङ्नियतेन्द्रियः ॥ सर्वस्वं वा वेदविदे ब्राह्मणायोपपादयेत् ॥ ७३ ॥ धनं वा जीवनायालं गृहं वा सपरिच्छदम् ॥ व्रतैरेतैरपोहेत महापातकितान्द्विज ॥ ७४ ॥ उपपातकसंयुक्तो गोघ्नो मासं यवानदेत् ॥ कृतपापो वा निवसेच्चर्मणा तेन संवृतः ॥ ७५ ॥ चतुर्थकालमश्नीयादक्षारलवणं मितम् ॥ गोमूत्रेणाचरेत्स्नानं द्वौ मासौ नियतेन्द्रियः ॥ ७६ ॥ दिवाऽनुगच्छेत्ता गाश्च तिष्ठन्नूर्ध्वमपः पिबेत् ॥ शुश्रूषित्वा नमस्कृत्य रात्रौ वीरासनं चरेत् ॥ ७७ ॥ तिष्ठंतीष्वनुतिष्ठेत्तु व्रजन्तीष्वप्यनुव्रजेत् ॥ आसीनासु तथासीनो नियतो वीतमत्सरः ॥ ७८ ॥ आतुरामभिषिक्तां च चौरव्याघ्रादिभिर्भयैः ॥ पतित ङ्कलीनां वा सर्वप्राणैर्विमोक्षयेत् ॥ ७९ ॥ उष्णैर्वर्षातिशीतैर्वा मारुते वाति वा भृशम् ॥ न कुर्वीतात्मनस्त्राणं गोरकृत्वा तु शक्तितः ॥ ८० ॥ आत्मनो यदि वाऽन्येषां गृहे क्षेत्रेऽथ वा खले ॥ खादमानां न शंसेत पिबन्तं चैव वत्सकम् ॥ ८१ ॥ वृषभैकादशा गास्तु दध्याद्वि चरितव्रतः ॥ अविद्यमाने सर्वस्वं वेदविद्भ्यो निवेदयेत् ॥ ८२ ॥ बन्धने रोधने वापि योजने च गवां रुजा ॥ भवेद्वा मरणं यत्र निमित्ते तत्र लिप्यते ॥ ८३ ॥ पादमेकं चरेद्रोधे द्वौ पादौ बन्धने चरेत् ॥ योजने पादहीनं स्याच्चरेत्सर्वं निपातने ॥ ८४ ॥ कान्तारेष्वथ दुर्गेषु विषमेषु गुहासु च ॥ यदि तत्र विपत्तिः स्यादेकः पादो विधीयते ॥ ८५ ॥ बाधामरणदोषेषु तथैवार्धं विनिर्दिशेत् ॥ दमने वाहने रोधे शकटस्य च योक्त्रणे॥८६॥नद्यां शकलपाशेषु मृते पादौ समाचरेत् ॥ व्यापन्नानां बहूनां तु बन्धने रोधनेऽपि वा॥८७॥भिषङ् मिथ्याचरंश्चेह द्विगुणं गोव्रतं चरेत् ॥ शृङ्गभङ्गेऽस्थिभङ्गे वा लांगूलच्छेदनेऽथवा ॥८८॥ यावकं तु पिबेत्तावद्यावत्स्वस्था तु गौर्भवेत् ॥ एका चेद्बहुभिर्दैवाद्यत्र व्यापादिता भवेत् ॥ ८९ ॥ पादंपादं तु हत्यायां चरेयुस्ते पृथक्पृथक् ॥ यन्त्रेण गोश्चिकित्सार्थे मूढगर्भविमोक्षणे ॥ ९० ॥ यदि तत्र विपत्तिः स्याद्दोषस्तत्र न विद्यते ॥ औषधं स्नेहमाहारं दद्याच्च ब्राह्मणादिषु ॥ ९१ ॥ दीयमाने विपत्तिः स्याद्दातुर्दोषो न विद्यते ॥ एतदेव व्रतं कुर्युरुपपातकिनस्तथा ॥ ९२ ॥ अवकीर्णी विशुद्ध्यर्थं चान्द्रायणमथापि वा ॥ अव

कीर्णी तु कालेन सप्तमेन चतुष्पथे ॥ ९३ ॥ पाकयज्ञविधानेन यजते निभृतं निशि ॥ हुत्वाग्नौ विधिवद्धोमांस्ततस्तु समितित्यृचम् ॥ ९४ ॥ वाते
न्द्रगुरुवह्नीनां जुहुयात्सर्पिषाहुतीः ॥ कामतो रेतसः सेके व्रतस्थस्य द्विजन्मनः ॥ ९५ ॥ आक्रमं च व्रतस्याहुर्धर्मज्ञाः सत्यवादिनः ॥ एतस्मि
न्नेव सिद्धार्थे वसित्वा गर्दभाजिनम् ॥ ९६ ॥ सप्तागारं चरेद्भैक्ष्यं स्वकर्म परिदेवयन् ॥ तेभ्यो लब्धेन भैक्ष्येण वर्तयन्नेव कालिकम् ॥ ९७ ॥ उप
स्पृशंस्त्रिषवणमब्देन स विशुध्यति ॥ हत्वा गर्भमविज्ञातं ब्रह्महत्याव्रतं चरेत् ॥ ९८ ॥ राजन्यवैश्यौ चेजाना आत्रेयीमेव च स्त्रियम् ॥ उक्त्वा
चैवानृतं साक्ष्ये प्रतिवध्य गुरूँस्तथा॥९९॥ अपहृत्य च निक्षेपं कृत्वा च स्त्रीसुहृद्वधम् ॥ सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबेत् ॥१००॥तया
सकाये निर्दग्धे मुच्यते किल्बिषात्ततः ॥ गोमूत्रमग्निवर्णं वा पिबेदुदकमेव वा॥१०१॥पयो घृतं वा मरणाद्गोशकृद्रसमेव वा॥ कणान्वा भक्षयेदब्दं
पिण्याकं वा सकृन्निशि॥१०२॥सुरापानापनुत्त्यर्थं चीरवासा जटी ध्वजी॥सुरा वैमलमन्नानां पाप्मा चमलमुच्यते॥१०३॥तस्माद्ब्राह्मणराजन्यौ वैश्यश्च
न सुरां पिबेत् ॥ गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा ॥१०४॥ यथैवैका तथा सर्वा न पातव्या द्विजोत्तमैः ॥ यक्षरक्षःपिशाचानां मद्यं
मांसं सुराशनम् ॥१०५॥तद्ब्राह्मणेन नात्तव्यं देवानामश्नता हविः ॥ माध्वीकमैक्षवं टाकं कौलं खार्जूरपानसम् ॥१०६॥ मृद्वीकारसमार्द्वीके मैरेयं
नारिकेलजम् ॥ असेव्यानि दशैतानि मद्यानि ब्राह्मणस्य च ॥ १०७ ॥ यस्य कामगतं ब्रह्म मद्येनाप्लाव्यते सकृत् ॥ तस्य व्यपैति ब्राह्मण्यं शूद्रत्वं
च स गच्छति ॥ १०८ ॥ अत ऊर्ध्वं प्रवक्ष्यामि सुवर्णस्तेयनिर्णयम् ॥ सुवर्णस्तेयकृद्विप्रो राजानमभिशस्य तु ॥१०९॥ स्वकर्म ख्यापयन्ब्रूया
न्मां भवानपि शास्त्विति ॥ गृहीत्वा मुसलं राजा सकृद्दद्यात्तु तं स्वयम् ॥ ११० ॥ वधेन शुध्यते स्तेनो ब्राह्मणस्तपसैव वा ॥
तपसा त्वपनुत्सुस्तु सुवर्णस्तेयजं मलम् ॥ १११ ॥ चीरवासा द्विजोऽरण्ये चरेद्ब्रह्महणो व्रतम् ॥ गुरुतल्पोऽभिभाष्यैनं
तल्पे स्वप्यादयोमये ॥ ११२ ॥ सूर्मीं ज्वलंतीमाश्लिष्य मृत्युना तु विशुध्यति ॥ स्वयं वा शिश्नवृषणावुत्कृत्याधाय स्वाञ्जलौ ॥ ११३ ॥
नैर्ऋतीं दिशमातिष्ठेदानिपातादजिह्मगः ॥ खट्वाङ्गी चीरवासा वा श्मश्रुलो विजने वने ॥ ११४ ॥ प्राजापत्यं चरेत्कृच्छ्रं त्वब्दमेकं समाहितः ॥
चान्द्रायणं तु त्रीन्मासानभ्यसेन्नियतेन्द्रियः ॥ ११५ ॥ हविष्येण यवाग्वा च गुरुतल्पापनुत्तये ॥ जातिभ्रंशकरं कर्म कृत्वान्यतरमिच्छया ॥
॥ ११६ ॥ चरेत्सान्तपनं कृच्छ्रं प्राजापत्यमनिच्छया ॥ शंकरायात्र कृत्यासु चासंशोधनमैन्दवम् ॥ ११७ ॥ मलिनीकरणीयेषु तप्तः स्याद्या
वकं त्र्यहम् ॥ तुरीयं ब्रह्महत्यायाः क्षत्रियस्य वधे स्मृतम् ॥ ११८ ॥ वैश्येऽष्टमेंशो ह्यन्यत्तु शूद्रे ज्ञेयस्तु षोडश ॥ अकामतस्तु राजन्यं विनि

पात्य द्विजोत्तमः ॥ ११९ ॥ वृषभैकसहस्रं गा दद्याच्छुद्ध्यर्थमात्मनः ॥ त्र्यब्दं चरेद्वा नियतो जटी ब्रह्महणो व्रतम् ॥ १२० ॥ वसेद्दूरतरे ग्रामा द्वृक्षमूलनिकेतनम् ॥ एतदेवाचरेदब्दं प्रायश्चित्तं द्विजोत्तमः ॥ १२१ ॥ प्रमाप्य वैश्यं वृत्तस्थं दद्याच्चैकशतं गवाम् ॥ एतदेव व्रतं कृत्स्नं षण्मा सान्छूद्रहा चरेत् ॥ १२२ ॥ वृषभैकादशा वापि दद्याद्विप्राय गाः सिताः ॥ मार्जारनकुलौ हत्वा चाषं मण्डूकमेव वा ॥ १२३ ॥ श्वगोधोलूक काकांश्च शूद्रहत्याव्रतं चरेत् ॥ पयः पिबेत्त्रिरात्रं वा योजनं वाध्वनो व्रजेत् ॥ १२४ ॥ उपस्पृशेत्स्रवन्त्यां वा सूक्तं वा त्रिवृतं जपेत् ॥ अभ्रीं कालायसीं दद्यात्सर्पं हत्वा द्विजोत्तमः ॥ १२५ ॥ पलालभारकं षण्ढं सीसकं चैव माषकम् ॥ घृतकुम्भं वराहे तु तिलद्रोणं तु तित्तिरे ॥ ॥ १२६ ॥ शुके द्विहायनं वत्सं क्रौञ्चं हत्वा त्रिहायनम् ॥ हत्वा हंसं बलाकां च बकं बर्हिणमेव च ॥ १२७ ॥ वानरं श्येनभासौ वा स्पर्शयेद्ब्रा ह्मणाय गाम् ॥ वासो दद्याद्धयं हत्वा पञ्चनीलान्वृषान्गजम् ॥ १२८ ॥ अजं मेषमनड्वाहं खरं हत्वैकहायनम् ॥ क्रव्यादां[1] हरिणीं हत्वा धेनुं दद्या त्पयस्विनीम् ॥ १२९ ॥ अक्रव्यादं वत्सतरीमुष्ट्रं[2] हत्वा तु कृष्णलम् ॥ जीवकार्मुकवस्तादीन्पृथग्दद्याद्विशुद्धये ॥ १३० ॥ चतुर्णामपि वर्णानां नारीं हत्वा न रागतः ॥ वर्णानामानुपूर्व्येण त्रयाणामविशेषतः ॥ १३१ ॥ प्रमाप्य चाप्रमाप्य स्त्रीं शूद्रहत्याव्रतं चरेत् ॥ धनेन वधनि र्णेकं सर्पादीनामशक्नुवन् ॥ १३२ ॥ एकैकशश्चरेत्कृच्छ्रं द्विजः पापापनुत्तये ॥ फलदानां तु वृक्षाणां छेदने जप्यमृक्शतम् ॥ १३३ ॥ गुल्मव ल्लीलतानां च पुष्पितानां च वीरुधाम् ॥ अस्थन्वतां तु सत्त्वानां सहस्रस्य प्रमापणे ॥ १३४ ॥ पूर्णे वा तदनस्थ्नां तु शूद्रहत्याव्रतं चरेत् ॥ किञ्चिदेव तु विप्राय दद्यादस्थिमतां वधे ॥ १३५ ॥ अनस्थ्नां चैव हिंसायां प्राणायामेन शुध्यति ॥ अन्नाद्यजानां सत्त्वानां रसजानां च सर्वशः ॥ १३६ ॥ फलपुष्पोद्भवानां च घृतप्राशो विशोधनम् ॥ कृष्णजानामोषधीनां जातानां च स्वयं वने ॥ १३७ ॥ वृथारम्भेण गच्छेद्गां दिनमेकं पयोव्रतः ॥ एतैर्व्रतैरपोह्यं स्यादेनो हिंसासमुद्भवम् ॥ १३८ ॥ स्तेयदोषापहर्तॄणां व्रतानां श्रूयतां विधिः ॥ धान्यानि धनचौर्याणि कृत्वा कामा द्विजोत्तमः ॥ १३९ ॥ स्वजातीयगृहादेव कृच्छ्राब्देन विशुध्यति ॥ मनुष्याणां तु हरणे स्त्रीणां क्षेत्रगृहस्य च ॥ १४० ॥ कूपवापीजलानां तु शुद्धिश्चान्द्रायणं स्मृतम् ॥ द्रव्याणामल्पसाराणां स्तेयं कृत्वाऽन्यवेश्मतः ॥ १४१ ॥ चरेत्सान्तपनं कृच्छ्रं तं निर्यात्यात्मशुद्धये ॥ भक्ष्यभो ज्यापहरणे यानशय्यासनस्य च ॥ १४२ ॥ पुष्पमूलफलानां च पञ्चगव्यं विशोधनम् ॥ तृणकाष्ठद्रुमाणां तु शुष्कान्नस्य गुडस्य च ॥ १४३ ॥

१ 'क्रव्यादांस्तरुणान् हत्वा' इति ख० । २ 'वृद्धं हत्वा तु वत्सकम्' इति ख० ।

चैलचर्माऽमिषाणां च त्रिरात्रं स्यादभोजनम् ॥ मणिमुक्ताप्रवालानां ताम्रस्य रजतस्य च ॥ १४४ ॥ अयस्कांस्योपलानां च द्वादशाहं कणान्न
भुक् ॥ कार्पासकीटकोर्णानां द्विशफैकशफस्य च ॥ १४५ ॥ पक्षिगन्धौषधीनां च रज्वाश्चैव त्र्यहं पयः ॥ एतैर्व्रतैरपोहेत पापं स्तेयकृतं
द्विजः ॥ १४६ ॥ अगम्यगमनीयेन व्रतैरेभिरपानुदेत् ॥ गुरुतल्पव्रतं कुर्याद्रेतः सिक्त्वान्ययोनिषु ॥ १४७ ॥ सख्युः पुत्रस्य च स्त्रीषु कुमारी
ष्वन्त्यजासु च ॥ पैतृष्वसेयीं भगिनीं स्वस्त्रीयां मातुरेव च ॥ १४८ ॥ मातुश्च भ्रातुस्तनयां गत्वा चान्द्रायणं चरेत् ॥ एतास्तिस्रस्तु भार्यार्थे
नोपयच्छेत बुद्धिमान् ॥ १४९ ॥ ज्ञातयो नोपयमनाः पितुश्च ह्युपयन्नधः ॥ अमानुषीषु पुरुष उदक्यां वामयोनिषु ॥ १५० ॥ रेतः सिक्त्वा
जले चैव कृच्छ्रं सान्तपनं चरेत् ॥ मैथुनं तु समासेव्य पुंसि योषिति वा द्विजः ॥ १५१ ॥ गोयानेषु दिवा चैव सवासाः स्नानमाचरेत् ॥ चण्डा
लान्त्यजस्त्रीयोगाद्भुक्त्वा च प्रतिगृह्य च ॥ १५२ ॥ पतत्यज्ञानतो विप्रो ज्ञानात्साम्यं च गच्छति ॥ विप्रदुष्टां स्त्रियं भर्ता निरुन्ध्यादेकवे
श्मनि ॥ १५३ ॥ यत्पुंसः परदारेषु तच्चैनां चारयेद्व्रतम् ॥ सा चेत्पुनः प्रदुष्येत सदृशेनोपमन्त्रिता ॥ १५४ ॥ कृच्छ्रं चान्द्रायणं चैव तदस्याः
पावनं स्मृतम् ॥ यत्करोत्येकरात्रेण वृषलीसेवनाद्द्विजः ॥ १५५ ॥ तद्भैक्ष्यभुग्जपन्नित्यं त्रिभिर्वर्षैर्व्यपोहति ॥ एषा पापकृतामुक्ता चतुर्णामपि
निष्कृतिः ॥ १५६ ॥ पतितैः संप्रयुक्तानामिमाः शृणुत निष्कृतीः ॥ संवत्सरेण पतति पतितेन सहाचरन् ॥ १५७ ॥ याजनाध्यापनाद्याना
दुक्तिपानाशनासनात् ॥ यो येन पतितेनैषां संसर्गं याति मानवः ॥ १५८ ॥ स तस्यैव व्रतं कुर्यात्तत्संसर्गस्य शुद्धये ॥ पतितस्योदकं कार्यं सपि
ण्डैर्बान्धवैः सह ॥ १५९ ॥ निन्दितेऽहनि सायाह्ने ज्ञात्यृत्विग्गुरुसन्निधौ ॥ दासीघटमपां पूर्णं पर्यस्येत्प्रेतवत्सदा ॥ १६० ॥ अहोरात्रमुपासी
रन्न शौचं बान्धवैः सह ॥ निवर्तयेरन्तस्मात्तु संभाषणसहासने ॥ १६१ ॥ दायादस्य प्रदानं च यात्रामेव च लौकिकीम् ॥ ज्येष्ठभागं निवर्तेत
ज्येष्ठावाप्तं च यद्वसु ॥ १६२ ॥ ज्येष्ठांशं प्राप्नुयाच्चापि यवीयान्गुणतोऽधिकः ॥ प्रायश्चित्ते तु चरिते पूर्णं कुम्भमपां नवम् ॥ १६३ ॥ तेनैव
सार्धं प्राप्येयुः स्नात्वा पुण्ये जलाशये ॥ सत्स्वप्सु तं घटं प्राप्य प्रविश्य भवनं स्वकम् ॥ १६४ ॥ सर्वाणि ज्ञातिकार्याणि यथापूर्वं समाचरेत् ॥
एतमेव विधिं कुर्याद्योषित्सु पतितास्वपि ॥ १६५ ॥ वस्त्रान्नपानं देयं तु वसेयुश्च गृहान्तिके ॥ एनस्विभिरनिर्णिक्तैर्नार्थं किञ्चित्समाचरेत् ॥ १६६ ॥
कृतनिर्णेजनांश्चैतान्न जुगुप्सेत कर्हिचित् ॥ बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः ॥१६७॥ शरणागतहंतॄंश्च स्त्रीहतॄंश्च न संवसेत् ॥ येषां द्विजानां
सावित्री नानुच्येत यथाविधि ॥ १६८ ॥ तांश्चारयित्वा त्रीन्कृच्छ्रान्यथाविध्युपनाययेत् ॥ प्रायश्चित्तं चिकीर्षन्ति विकर्मस्थास्तु ये

द्विजाः ॥ १६९ ॥ ब्राह्मणाश्च परित्यक्ता येषां मध्ये तदादिशेत् ॥ यद्गर्हितेनार्जयन्ति ब्राह्मणाः कर्मणा धनम् ॥ १७० ॥ तस्योत्सर्गेण शुध्यन्ति
जप्येन तपसैव च ॥ जपित्वा त्रीणि सावित्र्याः सहस्राणि समाहितः ॥ १७१ ॥ मासं गोष्ठे पयः पीत्वा मुच्यतेऽसत्प्रतिग्रहात् ॥ उपवा
सकृशं तं तु गोव्रजात्पुनरागतम् ॥ १७२ ॥ प्रणतं परिपृच्छेयुः सौम्य सौम्येच्छसीति किम् ॥ सत्यमुक्त्वा तु विप्रेभ्यो वितरेद्यवसं गवाम् ॥१७३ ॥
गोभिः प्रवर्तिते तीर्थे कुर्युस्तस्य परिग्रहम् ॥ व्रात्यानां याजनं कृत्वा परेषामंत्यकर्म च ॥ १७४ ॥ अभिचारमहीनं च त्रिभिः कृच्छ्रैर्वि
शुध्यति ॥ शरणागतं परित्यज्य वेदं विप्लाव्य च द्विजः ॥ १७५ ॥ संवत्सरं यताहारस्तत्पापमपगच्छति ॥ श्वशृगालोरगैर्दष्टो ग्राम्यैः क्रव्याद्भि
रेव च ॥ १७६ ॥ गवाश्वोष्ट्रवराहैश्च प्राणायामेन शुद्धयति ॥ षष्ठान्नकालमशनं संहिताजाप एव च ॥१७७॥ होमश्च शाकलो नित्यमपङ्क्त्यानां
विशोधनम् ॥ उष्ट्रयानं समारुह्य खरयानं च कामतः ॥ १७८ ॥ स्नात्वा तु विप्रो दिग्वासाः प्राणायामेन शुध्यति ॥ विना भिन्नाप्सु चाप्यन्तः
शरीरं संनिवेशयेत् ॥ १७९ ॥ सचैलो बहिराप्लुत्य गामालभ्य विशुध्यति ॥ वेदोदितानां नित्यानां कर्मणां समतिक्रमे ॥ ॥ १८० ॥ स्नात
कव्रतलोपे च प्रायश्चित्तमभोजनम् ॥ हुङ्कारं ब्राह्मणस्योक्त्वा त्वंकारं तु गरीयसः ॥ १८१ ॥ स्नात्वानश्नन्नहश्चैकमभिवाद्य प्रसादयेत् ॥ ताड
यित्वा तृणेनापि कण्ठे बद्ध्वाऽपि वाससा ॥ १८२ ॥ विवादेनापि निर्जित्य प्रणिपत्य प्रसादयेत् ॥ अवगूर्य त्वब्दशतं सहस्रमभिहत्य च ॥१८३॥
जिघांसया ब्राह्मणस्य नरकं प्रतिपद्यते ॥ शोणितं यावतः पांसून्संगृह्णाति द्विजन्मनः ॥ १८४॥ तावन्त्यब्दसहस्राणि तत्कर्ता नरकं व्रजेत् ॥
अवगूर्य चरेत्कृच्छ्रमतिकृच्छ्रं निपातने ॥१८५॥ कृच्छ्रातिकृच्छ्रं कुर्वीत विप्रस्योत्पाद्य शोणितम् ॥ चण्डालादिरविज्ञातो यस्य तिष्ठेत वेश्मनि ॥
॥ १८६ ॥ सम्यग्ज्ञातस्तु कालेन तस्य कुर्वीत शोधनम् ॥ चान्द्रायणं पराकं वा द्विजानां तु विशोधनम् ॥ १८७ ॥ प्राजापत्यं तु शूद्राणां शेषं
तदनुसारतः ॥ गुडं कुसुम्भं लवणं तथा धान्यानि यानि च ॥ १८८ ॥ कृत्वा गृहे ततो द्वारि तेषां दद्याद्धुताशनम् ॥ मृण्मयानां तु भाण्डानां
त्याग एव विधीयते ॥ १८९ ॥ द्रव्याणां परिशेषाणां द्रव्यशुद्धिर्विधीयते ॥ यस्तस्य भुङ्क्ते पक्वान्नं कृच्छ्रार्धं तस्य दापयेत् ॥ १९० ॥ शुष्कान्न
भोजिनः पादमित्याह भगवान्मनुः ॥ कूपे ता नव संतार्य स्पर्शसंकल्पदूषिताः ॥ १९१ ॥ शुद्धेयुरुपवासेन पञ्चगव्येन चाप्यथ ॥ यस्तु संस्पृश्य
चाण्डालमश्नीयाद्वा त्वकामतः ॥ १९२ ॥ द्विजश्चान्द्रायणं कुर्यात्तप्तकृच्छ्रमथापि वा ॥ वर्णसंकरसंकीर्णाश्चण्डालादिजुगुप्सिताः ॥ १९३ ॥
भुक्त्वा पीत्वा तथा तेषां षड्रात्रेण विशुध्यति ॥ अन्त्यानां भुक्तशेषं तु भक्षयित्वा द्विजातयः॥१९४॥व्रतं चान्द्रायणं कुर्युस्त्रिरात्रं शूद्र एव च ॥

चण्डालकूपभाण्डेषु अज्ञानाद्यः पिबेज्जलम् ॥ १९५ ॥ द्विजः सान्तपनं कुर्याच्छूद्रश्चोपवसेद्दिनम् ॥ उच्छिष्टो यदि संस्पृष्टः शुना शूद्रेण वा द्विजः ॥ १९६ ॥ उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ॥ उच्छिष्टेन यदि स्पृष्ट उच्छिष्टो ब्राह्मणोत्तमः ॥ १९७ ॥ त्रिकालमाचरेत्स्नानं नक्तं भुंजीत वाग्यतः ॥ क्षत्रियेण तथा स्पृष्टः स्नानं नक्तं समाचरेत् ॥ १९८ ॥ स्पृष्टः सवर्णेनाचामेदमेध्यं स्पृशते यदि ॥ अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति ॥१९९॥ अध्वानं प्रस्थितो विप्रः कान्तारे यद्यनूदके ॥ पक्वान्नेन गृहीतेन मूत्रोच्चारं करोति वै ॥ २०० ॥ अनिधायैव तद्द्रव्यं कृत्वांगे उत्तमे स्थितम् ॥ शौचं कृत्वा यथान्यायमुपविश्य यथाविधि॥२०१॥ अन्नमभ्युक्षयेच्चापि उद्धृत्यार्कस्य दर्शयेत् ॥ अर्काभावेऽप्यथाग्नेश्च वस्तस्याथ प्रदर्शयेत् ॥२०२ ॥ त्यक्त्वा ग्रासत्रयं तस्माच्छेषं शुद्धिमवाप्नुयात् ॥ म्लेच्छैर्हृतानां चौरैर्वा कान्तारे वा प्रवासिनाम्॥२०३॥ भक्ष्याभक्ष्यविशुद्ध्यर्थं तेषां वक्ष्यामि निष्कृतिम् ॥ पुनः प्राप्य स्वदेशं च वर्णानामनुपूर्वशः ॥ २०४ ॥ कृच्छ्रस्यार्धे ब्राह्मणस्तु पुनः संस्कारमर्हति ॥ पादोनान्ते क्षत्रियस्तु अर्धार्धे वैश्य एव च ॥ २०५ ॥ पादं कृत्वा तथा शूद्रो दानं दत्त्वा विशुध्यति ॥ उदक्या तु सवर्णा या स्पृष्टा चेत्स्यादुदक्यया ॥ २०६ ॥ अहोरात्रोषिता सा च शुद्धा स्नानेन शुध्यति ॥ मूत्रं कृत्वा व्रजेन्मार्गं स्मृतिभ्रंशाज्जलं पिबेत् ॥ २०७ ॥ अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥ ( मूत्रोच्चारं द्विजः कृत्वाऽप्यकृत्वा शौचमात्मनः ॥ २०८ ॥ मोहाद्भुक्त्वा त्रिरात्रं तु यवान् पीत्वा विशुध्यति ॥) परित्यक्तमहायज्ञा प्रव्रज्याविच्युताश्च ये ॥२०९॥ अनाशकनिवृत्ताश्च तेषां शुद्धिः प्रवक्ष्यते ॥ चारयेत्त्रीणि कृच्छ्राणि चान्द्रायणमथापि वा ॥ २१० ॥ जातकर्मादिसंस्कारैः संस्कुर्यात्तं तथा पुनः ॥ उपानहममेध्यं वा चास्य संस्पृशते मुखम् ॥ २११ ॥ पुत्रिकागोमयौ तस्य पञ्चगव्यं विशोधनम् ॥ वापन विक्रयं चैव नीलवृत्त्युपजीवनम् ॥ २१२ ॥ पतनीयं हि विप्रस्य नीलसूत्रस्य धारणात् ॥ ( स्नानं दानं तपो होमः स्वाध्यायः पितृतर्पणम् ॥ २१३ ॥ वृथा तस्य महायज्ञा सूत्रसूत्रस्य धारणात् ॥ ) नीलरक्तं यदा वस्त्रं द्विजोंगेषु हि धारयेत् ॥ २१४ ॥ उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ॥ नीलदारु यदा भज्येद्ब्राह्मणस्य तु पादयोः ॥ २१५ ॥ शोणितं दृश्यते चास्य द्विजश्चान्द्रायणं चरेत् ॥ वापितं यत्र नीलं तु तावदेवाशुचिर्मही ॥ २१६ ॥ प्रमाणं द्वादशाब्दानि अत ऊर्ध्वं शुचिर्भवेत् ॥ अन्त्यजातिः श्वपाकेन संस्पृष्टा स्त्री रजस्वला ॥ २१७ ॥ चतुर्थेऽहनि शुद्धायाः प्रायश्चित्तं विशोधनम् ॥ त्रिरात्रमुपवासः स्यात्पञ्चगव्यं तथैव च ॥ २१८ ॥ उच्छिष्टेन तु संस्पृष्टा कदाचित्स्त्री रजस्वला ॥ यावन्न शुद्धिमाप्नोति नाश्नीयात्तावदेव तु ॥ २१९ ॥ चण्डालश्वपचौ स्पृष्ट्वा शवधूमञ्च सूतिकाम् ॥ शवं स्पर्शयिता श्वानं सद्यः स्नानेन

शुध्यति ॥२२०॥ ना स्पृष्ट्वाऽस्थि तु सस्नेहं स्नात्वा विप्रो विशुध्यति ॥ आचम्यैव तु निःस्नेहं गामालभ्यार्कमीक्ष्य वा॥२२१॥ रथ्याकर्दमतोयेन नाभिस्पृष्टो भवत्यधः ॥ मृत्तोयैश्चर्चयेदङ्गं ततः शुद्धिमवाप्नुयात् ॥ २२२ ॥ वान्तं विविक्तः स्नात्वा तु घृतं पीत्वा विशुध्यति ॥ क्षुरकर्म ततः कृत्वा स्नानेनैव विशुध्यति॥२२३॥ अपाङ्क्तेयैस्तु यः पङ्क्त्यां भुंक्ते कश्चिद्द्विजोत्तमः ॥ अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥२२४ ॥ चन्द्रार्कग्रहणे भुक्त्वा द्विजश्चान्द्रायणं चरेत् ॥ ब्रह्मचारी शुना दष्टस्त्र्यहं सायं पयः पिबेत् ॥ २२५ ॥ गृहस्थो वा त्रिरात्रं तु चैकाहं त्वग्निहोत्रवान् ॥ नाभेरूर्ध्वं तु दष्टस्य तदेव द्विगुणं भवेत् ॥ २२६॥ बाह्वोश्च त्रिगुणं ज्ञेयं मूर्धनि स्याच्चतुर्गुणम् ॥ उद्बन्धमृतकं प्रेतं यः स्पृशेद्ब्राह्मणः क्वचित् ॥ २२७ ॥ तस्य शुद्धिं विजानीयात्तप्तकृच्छ्रेण नित्यशः ॥ आत्मानं घातयेद्यस्तु रज्ज्वादिभिरुपक्रमैः ॥ २२८ ॥ तस्य प्रेतक्रियां कृत्वा तप्तकृच्छ्रेण शुध्यति ॥ इन्द्रियेषु प्रविष्टं स्यादमेध्यं यस्य कस्य चित् ॥ २२९ ॥ अहोरात्रोषितः स्नात्वा पञ्चगव्येन शुध्यति ॥ एतैर्द्विजातयः शोध्या व्रतैराविष्कृतैर्मया ॥ २३० ॥ अनाविष्कृतपापांश्च मन्त्रैर्होमैश्च साधयेत् ॥ ख्यापनेनानुतापेन तपसाऽध्ययनेन च ॥ २३१ ॥ पापकृन्मुच्यते पापात्तथा दानेन चापरे ॥ यथा यथा नरो धर्मं स्वयं कृत्वा न भाषते ॥ २३२ ॥ तथा तथा च येनैव तस्मात्पापात्प्रमुच्यते ॥ कृत्वा पापं हि स्मर्तव्यं तस्मात्पापात्प्रमुच्यते ॥ २३३ ॥ यथायथा मनस्तस्य दुष्कृतं कर्म गर्हति ॥ तथातथा शरीरं तत्तेनाधर्मेण मुच्यते ॥ २३४ ॥ नैतत्कुर्यां पुनरिति निवृत्त्यां प्रयतेन्नरः ॥ एवं संचिन्त्य मनसा प्रेत्य कर्मफलोदयम् ॥ २३५॥ मनोवाक्कर्मभिर्नित्यं शुभं कर्म समाचरेत् ॥ अज्ञानाद्यदि वा ज्ञानात्कृत्वा कर्म विगर्हितम् ॥ २३६ ॥ तस्माद्धि मुच्यते नित्यं द्वितीयं न समाचरेत् ॥ यस्मिन्कर्मण्यस्य कृते मनसः स्यादलाघवम् ॥ तस्मिंस्तावत्तपः कुर्याद्यावत्तुष्टिकरं भवेत् ॥२३७॥ गुरुलघुतां तु विचार्य यथावद्येषु मयागमनं च तवोक्तम् ॥ तेषु न चेत्सहनिश्चितबुद्धिर्विप्रवरैः कुशलैः सुधिया वा॥२३८॥इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० सं० प्राश्चित्ताध्यायो नाम त्रिसप्ततितमोऽध्यायः॥७३॥ पुष्कर उवाच ॥ इत्येतदेनसामुक्तं प्रायश्चित्तं यथाविधि ॥ अत ऊर्ध्वं रहस्यानां प्रायश्चित्तं निबोध मे॥१॥पौरुषेण तु सूक्तेन जप्यहोमैर्द्विजोत्तमाः ॥ मासेनैकेन मुच्यन्ते पातकैः संयतेन्द्रियाः ॥ २ ॥ सव्याहृतीकप्रणवाः प्राणायामास्तु षोडश ॥ अपि भ्रूणहनं मासात्पुनन्त्यहरहः कृताः ॥ ३ ॥ कौत्सं जप्त्वाप इत्येतद्वसिष्ठं प्रति च त्र्यृचम् ॥ माहेशं शुद्धवत्यश्च सुरापोऽपि विशुध्यति ॥४॥ सकृज्जप्त्वास्य वामीयं शिवसंकल्पमेव च ॥ अपहृत्य सुवर्णं तु क्षणाद्भवति निर्मलः ॥ ५ ॥ हविष्मतीयमस्येति नतः संहा इतीति च ॥ जप्त्वा च पौरुषं सूक्तं

मुच्यते गुरुतल्पगः ॥ ६ ॥ एनसां स्थूलसूक्ष्माणां चिकीर्षन्नपनोदनम् ॥ अवेत्यृचं जपेदब्दं यत्किञ्चिदपि तानि चेत् ॥ ७ ॥ प्रतिगृह्याप्रतिगृह्यं
भुक्त्वा चान्नं विगर्हितम् ॥ जपंस्तरत्समंदीयं प्रयतो मानवस्त्र्यहम् ॥ ८ ॥ सोमारौद्रं तु वह्वीनां जपन्सत्यस्य शुध्यति ॥ स्रवन्त्यामाचरेत्स्नानं
पर्यस्यमिति वा त्र्यृचम् ॥ ९ ॥ अद्धा रसानमित्येतदेनस्वी सप्तकं जपेत् ॥ अप्रकाशं तु कृत्वैनो मासमासीत भैक्ष्यभुक् ॥ १० ॥
मन्त्रैः शाकलहोमीयैरब्दं हुत्वा घृतं द्विजः ॥ सुगुर्वप्यपहन्त्येनो जप्त्वा वामन इष्यते ॥ ११ ॥द्रुपदा नाम सा देवी यजुर्वेदे प्रतिष्ठिता ॥
अन्तर्जले त्रिरावृत्य मुच्यते सर्वकिल्बिषैः ॥ १२ ॥ महापातकसंयुक्तो न गच्छेद्गाः समाहितः ॥ स्वभ्यस्य पावमानीयं भैक्ष्याहारो विशुध्यति ॥
॥१३॥ अरण्ये वा त्रिरभ्यस्य प्रयतो वेदसंहिताम् ॥ मुच्यते पातकैः सर्वैः पराकैः शोधितस्त्रिभिः ॥ १४॥ त्र्यहं तूपवसेद्युक्तस्त्रिरह्नोऽभ्युपयन्नपः ॥
मुच्यते पातकैः सर्वैर्जप्त्वा त्रिरघमर्षणम् ॥ १५ ॥ यथाश्वमेधः सुतरां सर्वपापापनोदनः ॥ तथाघमर्षणं सूक्तं सर्वपापापनोदनम् ॥१६॥ हत्वा लोका
नपीमांस्त्रीनश्नन्नपि यतस्ततः ॥ ऋग्वेदं धारयन्विप्रो नैनः प्राप्नोति किञ्चन ॥१७॥ ऋक्संहितां समभ्यस्य यजुषां वा समाहितः ॥ साम्नां वा सरह
स्यानां सर्वपापैः प्रमुच्यते॥१८॥ यथा महाह्रदं प्राप्य क्षिप्रं लोष्टो विनश्यति ॥ तथा दुश्चरितं सर्वं वेदे त्रिवृति मज्जति ॥१९॥ ऋचो यजूंषि चान्यानि
सामानि विविधानि च ॥ एष ज्ञेयस्त्रिवृद्वेदो यो वै वेद स वेदवित् ॥२०॥ आद्यं वै त्र्यक्षरं ब्रह्म त्रयी यस्मिन्प्रतिष्ठिता ॥ स गुह्योऽन्यस्त्रिवृद्वेदो यो
वेदैनं स वेदवित्॥२१॥वेदाभ्यासोऽन्वहं शक्त्या महायज्ञक्रियासमः॥ नाशयन्त्याशु पापानि महापातकजान्यपि ॥२२॥ यथैधांसि समिद्धोऽग्निर्भ
स्मसात्कुरुते क्षणात् ॥ तथा ज्ञानाग्निना पापं क्षिप्रं दहति वेदवित्॥२३॥ ये वासुदेवं जगतामधीशं भक्त्या गताः सर्वजगत्प्रधानम् ॥ ते पातकान्याशु
विधूय लोके भवन्ति चन्द्रार्कसमप्रभावाः॥२४॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं० रहस्यप्रायश्चित्तो नाम चतुःसप्ततितमोऽध्यायः ॥७४॥
राम उवाच ॥ प्रेतशुद्धिं समाचक्ष्व सूतिकाशुद्धिमेव च ॥ द्रव्यशुद्धिं च भगवंस्त्वं हि वेत्सि यथा तथा ॥ १ ॥ पुष्कर उवाच ॥ दशाहं शावमा
शौचं सपिण्डेषु विधीयते ॥ जनने च तथाप्येवं ब्राह्मणानां भृगूत्तम ॥ २ ॥ द्वादशाहेन राजन्यः पक्षाद्वैश्यो विशुध्यति ॥ मासेन शुद्धिमाप्नोति
तथा शूद्रोऽपि भार्गव ॥ ३ ॥ आनुलोम्येन पत्नीनां दासीनां च भृगूत्तम ॥ स्वामितुल्यं भवेच्छौचं मृते स्वामिनि यौतुकम् ॥ ४ ॥ षड्भिस्त्रि
भिरथैकेन क्षत्रविट्शूद्रयोनिषु ॥ ब्राह्मणः शुद्धिमाप्नोति नात्र कार्या विचारणा ॥ ५ ॥ विट्शूद्रयोर्नौ शुद्धिः स्यात्क्षत्रियस्य तथैव च ॥ षड्रात्रेण
त्रिरात्रेण षड्भिः शूद्रस्तथा विशः ॥ ६ ॥ अदन्तजातबाले तु सद्यः शौचं विधीयते ॥ बाले त्वकृतचूडे च विशुद्धिर्नैशिकी स्मृता ॥ ७ ॥

तथा चानुपनीते तु त्रिरात्राच्छु शुद्धिरिष्यते ॥ ततः परं दशाहेन शुद्धेयुस्तस्य बान्धवाः॥८॥ ऊनत्रिवार्षिके शुद्धे पश्चाद्दा शुद्धिरिष्यते ॥ द्वादशाहेन शुद्धिः स्यादतीते वत्सरत्रये ॥ ९ ॥ गतैः संवत्सरैः षड्भिः शुद्धिर्मासेन कीर्तिता ॥ स्त्रीणामकृतचूडानां विशुद्धिर्नैशिकी स्मृता ॥ १० ॥ तथा हि कृतचूडानां त्र्यहाच्छुध्यन्ति बान्धवाः ॥ विवाहितासु नाशौचं पितृपक्षे विधीयते ॥ ११ ॥ पितृगृहे प्रसूतायां विशुद्धिर्नैशिकी स्मृता ॥ सूतिका दशरात्रेण शुद्धिमाप्नोति नान्यथा ॥ १२ ॥ विवाहिताऽपि चेत्कन्या म्रियते पितृवेश्मनि ॥ तस्यास्त्रिरात्राच्छुध्यन्ति बान्धवा नात्र संशयः ॥ १३ ॥ पितृवेश्मनि या कन्या रजः पश्यत्यसंस्कृता ॥ तस्यां मृतायां नाशौचं कदाचिदपि शाम्यति ॥ १४ ॥ सस्नानं खलु शौचं च प्रथमेन समापयेत् ॥ असमानं द्वितीयेन धर्मराजवचो यथा ॥ १५ ॥ देशान्तरस्थाः श्रुत्वा तु कुल्यानां मरणोद्भवौ ॥ यच्छेषं दशरात्रस्य तावदेव शुचिर्भवेत् ॥ १६ ॥ अतीते दशरात्रे तु त्रिरात्रमशुचिर्भवेत् ॥ तथा संवत्सरेऽतीते स्नात एव च शुद्ध्यति ॥ १७ ॥ मातामहे तथातीते आचार्ये च तथा मृते ॥ अनौरसेषु पुत्रेषु भर्यास्वन्यगतासु च ॥ १८ ॥ परपूर्वासु भार्यासु त्रिरात्राच्छुद्धिरिष्यते ॥ निवासे राजनि प्रेते मातुले श्वशुरे तथा ॥ १९ ॥आचार्यपत्नीपुत्रेषु शिष्ये सब्रह्मचारिणि ॥ एकरात्रमशौचं स्यादन्नदाने तथा मृते ॥ २० ॥ रात्रिभिर्मासतुल्याभिर्गर्भस्रावे विशोधनम् ॥ सपिण्डे ब्राह्मणे वर्णाः सर्वं एवाविशेषतः॥ २१ ॥ दशरात्रेण शुद्ध्यन्ति द्वादशाहेन भूमिपाः ॥ वैश्यः पञ्चदशाहेन शूद्रो मासेन भार्गव ॥२२॥ भृग्वग्न्यनाशनांभोभिर्मृतानामात्मघातिनाम् ॥ पतितानां च नाशौचं विद्युच्छस्त्रहताश्च ये ॥ २३ ॥ सती व्रती ब्रह्मचारी नृपकारकदीक्षिताः ॥ नाशौचभाजः कथिता राजकार्यकराश्च ये ॥२४॥ अनुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेव वा ॥ सवासा जलमाप्लुत्य घृतं प्राश्य विशुध्यति॥ मैथुने कटधूमे च सद्यः स्नानं विधीयते ॥ २५ ॥ जननमरणयोः शुचिर्दशाहेन भवति शौचविधेर्न विप्रयोज्यम् ॥ न च भवति प्रतिग्रहेषु दोषो द्विपदचतुष्पदधान्यदक्षिणासु॥२६॥इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० सं० रामं प्रति पुष्करोपाख्याने शौचविधिर्नाम पञ्चसप्ततितमोऽध्यायः ॥७५॥

पुष्कर उवाच ॥ द्विजं न निर्हरेत्प्रेतं शूद्रेण तु कथंचन ॥ न च शूद्रं द्विजेनापि तयोर्दोषोऽभिजायते ॥ १ ॥ अनाथं ब्राह्मणप्रेतं ये वहन्ति द्विजातयः ॥ पदेपदे क्रतुफलं चानुपूर्वाल्लभन्तिते॥२॥ संस्कारार्थमनाथस्य यस्तु काष्ठं प्रयच्छति ॥ काष्ठाग्निदाता प्राकाश्यं संग्रामे लभते जयम् ॥३॥ संज्वाल्य बान्धवं प्रेतमपसव्येन तां चितिम् ॥ परिक्रम्य ततः स्नानं कुर्युः सर्वे स्वबान्धवाः ॥४॥ प्रेताय च तथा दद्युस्तिस्रो वै चोदकाञ्जलीः ॥

१ अत्र परस्मैपदमार्षम् ।

द्वार्यश्मनि पदं दत्त्वा प्रविशेयुस्तथा गृहम् ॥ ॥५॥ अक्षता निक्षिपेयुश्च तथा वह्नौ समाहिताः॥ विदश्य निम्बपत्राणि शयीरंश्च पृथक् क्षितौ॥६॥ क्रीतलब्धाशनाश्चैव भवेयुः सुसमाहिताः ॥ न चैव मांसमश्नीयुर्व्रजेयुर्न च योषितम् ॥ ७ ॥ निवर्तयेयुस्तथैवैकं पिण्डं प्रेतस्य नित्यदा ॥ अशौचं यावदेव स्यात्तस्मिन्व्यपगते पुनः ॥८॥ श्मश्रुकर्म तदा कृत्वा स्नाताः सिद्धार्थकैस्तिलैः ॥ पूजयेयुर्द्विजात्राम परिवर्तितवाससः ॥९॥ अदन्तजाते स्तनये शिशौ गर्भच्युते तथा ॥ कार्यो नैवाऽग्निसंस्कारो नैव चास्योदकक्रिया ॥१०॥ चतुर्थे च दिने कार्यश्चैवास्थ्नां राम संचयः ॥ अस्थिसंचय नादूर्ध्वं कुलस्पर्शो विधीयते ॥ ११ ॥ मृतस्य बान्धवैः सार्धं कृत्वाश्रुपतनं नरः ॥ अस्थिसंचयनादर्वाक् सचैलं स्नानमाचरेत् ॥१२॥ स्नातश्च शुद्धिमाप्नोति ततः परमिति श्रुतिः ॥ अस्थ्नां गङ्गाम्भसि क्षेपात्प्रेतस्याभ्युदयो भवेत् ॥ १३ ॥ अस्थ्नां हि प्लावनार्थाय सागराणां महात्मनाम् ॥ गगनाद्भुवमानीता गङ्गा गगनमेखला ॥ १४ ॥ भगीरथेन धर्मज्ञ तपसा महता पुरा ॥ सगरस्य सुताः सर्वे नरकस्था भृगूत्तम ॥ १५ ॥ गङ्गातोयाप्लुता राम दिवमक्षय्यमागताः॥ गङ्गातोयेन यस्यास्थि यावत्संख्यं निमज्जति ॥ १६ ॥ तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ आत्मनस्त्यागिनां नास्ति पतितानां तथा क्रिया ॥ १७ ॥ तेषामपि तथा गङ्गातोये स्यात्पतनं हितम् ॥ पतितानां तु यद्दत्तं श्राद्धं चाथ जलाञ्जलिः ॥ १८ ॥ न तत्प्रेतः समाप्नोति गगने प्रविलीयते ॥ अनुग्रहेण सहिता प्रेतस्य पतितस्य तु ॥ १९ ॥ नारायणबलिः कायर्स्तेनानुग्रहमश्नुते ॥ अनादिनिधनो देवः शंखचक्रगदाधरः ॥ २० ॥ अक्षयः पुण्डरीकाक्षस्तत्र दत्तं न नश्यति ॥ यथाकथंचिद्यद्दत्तं देवदेवे जनार्दने ॥ २१ ॥ अविनाशि तु तद्विद्धि पात्रमेको जनार्दनः ॥ परस्मात्त्रायते यस्मात्तस्मात्पात्रं प्रकीर्तितम् ॥ पततां त्राणदस्त्वेको देवो मधुनिषूदनः ॥२२॥ अमितबलपराक्रमो महौजा दुरितभयापहरो हरिर्महात्मा ॥ अघशतमलिनैश्च सेव्यमानो भवति नृणां त्रिदिवाय वासुदेवः॥२३॥इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं० रामं प्रति पुष्करोपाख्याने प्रेतनिर्हरणो नाम षट्सप्ततितमोऽध्यायः ॥ ७६ ॥ ॥ पुष्कर उवाच ॥ अशौचे तु व्यतिक्रान्ते स्नातः प्रयतमानसः ॥ स्नातानलङ्कृतान्भक्त्या गन्धवस्त्रोज्ज्वलान्द्विजान् ॥१॥ उदङ्मुखान्भोजयीत स्वासीनान्सुसमाहितान् ॥ मन्त्रोहाश्चात्र कर्तव्यास्तथैकवचनेन च ॥ २ ॥ उच्छिष्टसन्निधावेकं तथा पिण्डं निवेशयेत् ॥ कीर्तयेच्च तथा तस्य नामगोत्रे समाहितः ॥ ३ ॥ भुक्तवत्सु च विप्रेषु पूजितेषु तथा धनैः ॥ विसृष्टाक्षयतोयेषु गोत्रनामानुकीर्तनैः ॥ ४ ॥ चतुरङ्गुलविस्तारमुत्खातं तावदन्तरम् ॥ वितस्तिदीर्घं कर्तव्यं कर्षूणां च तथा त्रयम् ॥ ५ ॥ कर्षूणां तु समीपे च ज्वालयेज्ज्वलनत्रयम् ॥ सोमाय

वह्नये राम यमाय च समाहितः ॥ ६ ॥ जुहुयादाहुतीः सम्यक् तथैव च त्रयस्त्रयः ॥ पिण्डनिर्वपणं कुर्यात्प्राग्वदेव पृथक्पृथक् ॥ ७ ॥ अन्नेन
दध्ना मधुना तथा मांसेन पूरयेत् ॥ मध्ये चेदधिवासः स्यात्कुर्यादभ्यधिकं ततः ॥ ८ ॥ अथवा द्वादशाहेन सर्वमेतत्समापयेत् ॥
संवत्सरस्य मध्ये चेद्यदि स्यादधिमासकः ॥ ९ ॥ ततो द्वादशके श्राद्धे कार्यं तदधिमासिकम् ॥ ततो द्वादशके श्राद्धे कार्यं तदधिकं भवेत् ॥१०॥
संवत्सरे समाप्ते तु श्राद्धं श्राद्धवदाचरेत् ॥ प्रेताय तस्मादूर्ध्वं च तस्यैव पुरुषत्रये ॥ ११ ॥ पिण्डान्विनिर्वपेच्चात्र चतुरः सुसमाहितः ॥
संसृजं पृथिवीं दत्त्वा समाना वेति चाप्यथ ॥ १२ ॥ योजयेत्प्रेतपिण्डं तु पिण्डेष्वन्येषु भार्गव ॥ प्रेतपात्रं च पात्रेषु तथैव विनियोजयेत् ॥ १३॥
पृथक्पृथक् च कर्तव्यं कर्मैतत्कर्मणां त्रये ॥ मन्त्रवर्जमिदं कर्म शूद्रस्यापि विधीयते ॥ १४ ॥ अमन्त्रोच्चारणं स्त्रीणां कार्यमेतत्तथा भवेत् ॥
यावज्जीवं तथा कुर्याच्छ्राद्धं तु प्रतिवत्सरम् ॥ अनेनैव विधानेन भक्त्या प्रयतमानसः॥१५॥ प्रेतायान्नं सोदकुम्भं प्रदेयं नित्यं भक्त्या यावद्द्वावसा
नम् ॥ एतत्कार्यं बान्धवैर्नैव कार्यः शोकः शोचन्नैव किञ्चित्प्रकुर्यात् ॥१६॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० सं० रामं प्रति पुष्करवाक्ये प्रेत
क्रिया नाम सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥ पुष्कर उवाच ॥ बुधैराश्वसनीयाश्च बान्धवैर्मृतबान्धवाः ॥ वचनैर्धर्मसंयुक्तैस्तानि चान्यानि मे
शृणु ॥ १ ॥ नित्यमस्मिन्निरालम्बे काले सततयायिनि ॥ न तद्भूतं प्रपश्यामि स्थितिर्यस्य भवेद्ध्रुवा ॥ २ ॥ गङ्गायाः सिकताधारास्तथा
वर्षति वासवे ॥ शक्या गणयितुं लोके न व्यतीताः पितामहाः ॥ ३ ॥ चतुर्दश विनश्यन्ति कल्पेकल्पे सुरेश्वराः ॥ सर्वलोकप्रधानाश्च मनवश्च
चतुर्दश ॥ ४ ॥ बहूनीन्द्रसहस्राणि दैत्येन्द्रनियुतानि च ॥ विनष्टानीह कालेन मनुजेष्वथ का कथा ॥ ५ ॥ राजर्षयश्च बहवः सर्वे समुदिता
गुणैः ॥ देवा ब्रह्मर्षयश्चैव कालेन निधनं गताः ॥ ६ ॥ ये समर्था जगत्यस्मिन्सृष्टिसंहारकारणे॥तेऽपि कालेन नीयन्ते कालो हि दुरतिक्रमः॥७॥
आक्रम्य सर्वं कालेन परलोकाय नीयते ॥ कर्म पश्यति नो जन्तुस्तत्र का परिदेवना ॥८॥ जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ॥ अस्मि
न्दुष्परिहार्येऽर्थे नास्ति लोके सहायता ॥ ९ ॥ शोचन्तो नोपकुर्वन्ति मृतस्य हि जना यदा ॥ अतो न शोचितव्यं स्यात्क्रिया कार्या सुय
त्नतः ॥ १० ॥ सुकृतं दुष्कृतं चोभौ सहायौ यस्य गच्छतः ॥ बान्धवैस्तस्य किं कार्यं शोचद्भिरथ वा न वा ॥ ११ ॥ बान्धवानामशौचे तु
स्थितिं प्रेतो न विन्दति ॥ अतस्त्वभ्येति तानेव पिण्डतोयप्रदायिनः ॥ १२ ॥ अर्वाक् सपिण्डीकरणात्प्रेतो भवति यो मृतः ॥ प्रेतलोकगतस्यान्नं
सोदकुम्भं प्रयच्छत ॥ १३ ॥ पितृलोकगतश्चान्नं श्राद्धं भुङ्क्ते सुधासमम् ॥ पितृलोकगतस्यास्य तस्माच्छ्राद्धं प्रयत्नतः ॥ १४ ॥ देवत्वे

॥२३४॥

यातनास्थाने तिर्यग्योनौ तथैव च ॥ मानुष्ये च तथाऽप्नोति श्राद्धे दत्ते स्वबान्धवैः ॥ १५ ॥ प्रेतस्य श्राद्धकर्तुश्च पुष्टिः श्राद्धे कृते ध्रुवम् ॥ तस्माच्छ्राद्धं सदा कार्यं शोकं त्यक्त्वा निरर्थकम् ॥१६॥ एतावदेव कर्तव्यं सदा प्रेतस्य बन्धुभिः॥ नोपकुर्यान्नरः शोचन्प्रेतस्यात्मन एव च॥१७॥ दृष्ट्वा लोकमनाक्रन्दं म्रियमाणांश्च बान्धवान् ॥ धर्ममेकं सहायार्थे कारयध्वं सदा नराः ॥ १८ ॥ मृतोऽपि बान्धवः शक्तो नानुगन्तुं नरैर्यतः ॥ जायावर्ज्यं हि सर्वस्य यस्या भर्ता विभिद्यते ॥ १९ ॥ धर्म एकोऽनुयात्येनं यत्र कुत्र च गामिनम् ॥ नन्वसारे त्रिलोकेऽस्मिन्धर्मं कुरुत मा चिरम् ॥ २० ॥ श्वः कार्यमद्य कुर्वीत पूर्वाह्णे त्वपराह्णिकम् ॥ न हि प्रतीक्षते मृत्युः कृतमस्य न वा कृतम् ॥ २१ ॥ क्षेत्रापणगृहासक्तमन्यत्र गतमानसम् ॥ वृकीवाऽरण्यमासाद्य मृत्युरादाय गच्छति॥२२॥न कालस्य प्रियः कश्चिद्द्वेष्यश्चास्य न विद्यते ॥ आयुष्ये कर्मणि क्षीणे प्रसह्य हरते जनम्॥२३॥नाप्राप्तकालो म्रियते विद्धः शरशतैरपि ॥ कुशाग्रेणापि संस्पृष्टः प्राप्तकालो न जीवति ॥२४॥नौषधानि न मन्त्राश्च न होमा न पुनर्जपाः ॥ त्रायन्ते मृत्युनोपेतं जरया वापि मानवम्॥२५॥आगामिनमनर्थं तु प्रतिघातशतैरपि॥ न निवारयितुं शक्तास्तत्र का परिदेवना ॥२६॥ यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ॥ तथा पूर्वकृतं कर्म कर्तारं विन्दते ध्रुवम् ॥२७॥अव्यक्तादीनि सर्वाणि व्यक्तमध्यानि चाप्यथ ॥ अव्यक्तनिधनान्येव तत्र का परिदेवना ॥२८॥ देहिनोस्मिन्यथा देहे कौमारं यौवनं जरा ॥ तथा जन्मान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ २९ ॥ गृह्णातीव यथा वस्त्रं त्यक्त्वा पूर्वधृतं नरः ॥ गृह्णात्येवं नवं देहं देही कर्मनिबन्धनः ॥ ३० ॥ नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ॥ न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ ३१ ॥ अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ॥ नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ ३२ ॥ अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमेव च ॥ तस्मादेवं विदित्वैनं नानुशोचितुमर्हथ ॥ ३३ ॥ आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः ॥ आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेद न चैव कश्चित् ॥३४॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं० रामं प्रति पुष्करोपाख्याने बान्धवसमाश्वासनं नामाष्टसप्ततितमोऽध्यायः ॥७८॥ ॥ पुष्कर उवाच ॥ मृन्मयं भाजनं सर्वं पुनःपाकेन शुध्यति ॥ मद्यैर्मूत्रपुरीषैर्वा ष्ठीवनैः पूयशोणितैः ॥ १ ॥ संस्पृष्टं नैव शुध्येत पुनःपाकेन मृन्मयम् ॥ एतैरेव तथा स्पृष्टं ताम्रसौवर्णराजतम् ॥ २ ॥ शुध्यत्यातापितं पश्चादन्यथा केवलाम्भसा ॥ अम्लोदकेन ताम्रस्य सीसस्य त्रपुसस्तथा ॥ ३ ॥ क्षारेण शुद्धिं कांस्यस्य लोहस्य च विनिर्दिशेत् ॥ मुक्तामणिप्रवालानां शुद्धिः प्रक्षालनेन तु ॥४॥ अन्येषां चैव भाण्डानां सर्वस्याश्ममयस्य च ॥ शाकरज्जुमूलफलवैदलानां तथैव च ॥ ५ ॥ माज

नाद्यङ्गभाण्डानां पाणिना चाग्निकर्मणि ॥ उष्णाम्भसा तथा शुद्धिः सस्नेहानां विनिर्दिशेत् ॥ ६ ॥ शयनासनयानानां स्फ्यशूर्पशकटस्य च ॥ शुद्धिः संक्षेपणाज्ज्ञेया पलालेन्धनयोस्तथा ॥ ७ ॥ मार्जनाद्वेश्मनां शुद्धिः क्षितौ शोधनतः क्षणात् ॥ संमार्जितेन तोयेन वाससां शुद्धिरिष्यते ॥ ॥ ८ ॥ बहूनां प्रोक्षणाच्छुद्धिः धान्यानां च विनिर्दिशेत् ॥ शुद्धिर्दुभाणां विज्ञेया नित्यसत्पवनेन तु ॥ ९ ॥ प्रोक्षणात्संहतानां तु दारवाणां च तक्षणात् ॥ सिद्धार्थकाणां कल्केन शृङ्गदन्तमयस्य च ॥ १० ॥ गोवालैः फलपत्राणामस्थ्नां स्याच्छृङ्गवस्तथा ॥ निर्यासानां गुडानां च लवणानां तथैव च ॥ ११ ॥ कुसुम्भकुंकुमानां च ऊर्णाकार्पासयोस्तथा ॥ प्रोक्षणात्कथिता शुद्धिरित्याह भगवान् हि सः ॥ १२ ॥ भूमिष्ठमुदकं शुद्धं तथैव च शिलागतम् ॥ वर्णगन्धरसैर्दुष्टैर्वर्जितं यदि तद्भवेत् ॥ १३ ॥ शुद्धं नदीगतं तोयं सर्व एव तथाकराः ॥ शुद्धं प्रसारितं पण्यं शुद्धे चाश्वाजयोर्मुखे ॥ १४ ॥ मुखवर्जं च गौः शुद्धा मार्जारः श्वा च नो शुचिः ॥ शय्या भार्या शिशुर्वस्त्रमुपवीतं कमण्डलुः ॥ ॥ १५ ॥ आत्मनः कथितं शुद्धं न परस्य कथञ्चन ॥ नारीणां चैव वत्सानां शकुनीनां शुनां मुखम् ॥ १६ ॥ रतौ प्रस्रवणे वृक्षे मृगयायां सदा शुचिः ॥ शुद्धा भर्तुश्चतुर्थेऽह्नि स्नाता नारी रजस्वला ॥ १७ ॥ दैवकर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति ॥ कृत्वा मूत्रपुरीषं वा स्नात्वा भोक्तुमनास्तथा ॥ १८ ॥ भुक्त्वा क्षुत्वा तथा सुप्त्वा पीत्वा चाम्भोऽवगाह्य च ॥ रथ्यामाक्रम्य चाचामेद्वासो विपरि धाय च ॥ १९ ॥ कृत्वा मूत्रपुरीषं च लेपगन्धापहं बुधः ॥ उद्धृतेनाम्भसा शौचं मृदा शौचं समाचरेत् ॥ २० ॥ मेहने मृत्तिकाः पञ्च लिङ्गे द्वे परिकीर्तिते ॥ एकस्मिन्विंशतिर्हस्ते द्वयोर्ज्ञेयाश्चतुर्दश ॥ २१ ॥ तिस्रस्तु मृत्तिका ज्ञेयाः कृत्वा तु नखशोधनम् ॥ तिस्रस्तिस्रः पादयोश्च शौच कामैस्तु नित्यदा ॥ २२ ॥ शौचमेतद्गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ॥ त्रिगुणं तु वनस्थानां यतीनां च चतुर्गुणम् ॥ २३ ॥ मृत्तिका च विनि र्दिष्टा त्रिपूर्वं पूर्यते यया ॥ शुद्धिश्च काचभाण्डानां केवलेन तथाम्भसा ॥ २४ ॥ श्रीफलैरंशुपट्टानां क्षौमाणां गौरसर्षपैः ॥ शुद्धिः पद्माक्षतोयेन मृगलोम्नां प्रकीर्तिता ॥ पुष्पाणां चन्दनानां च प्रोक्षणाच्छुद्धिरिष्यते ॥ २५ ॥ सिद्धार्थकैः शुद्धिमुदाहरन्ति लोम्नां तथा भार्गववंशमुख्य ॥ सर्वस्य जीवस्य विशुद्धिरुक्ता मृदा च तोयेन विगन्धलेपात् ॥२६॥इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं० रामं प्रति पुष्करोपाख्याने द्रव्यशु द्धिर्नामैकोनाशीतितमोऽध्यायः ॥ ७९ ॥ राम उवाच ॥ वर्णानामाश्रमाणां च वेत्ति सर्वमिदं भवान् ॥ पुष्कर उवाच ॥ अहिंसा सत्यवचनं तेस्या द्भूतेष्वनुग्रहः ॥ १ ॥ तीर्थानुसरणं दानं ब्रह्मचर्यममत्सरम् ॥ देवद्विजातिशुश्रूषा गुरूणां च भृगूत्तम ॥ २ ॥ श्रवणं सर्वधर्माणां पितृणां पूजनं

तथा ॥ भक्तिश्च भूपतौ नित्यं तथा सच्छास्त्रनेत्रता ॥ ३ ॥ आनृशंस्यन्तितिक्षा च तथा चास्तिक्यमेव हि ॥ धर्मसामान्यमेतत्ते कथितं भृगु
सत्तम ॥ ४ ॥ यजनं याजनं दानं तथैवाध्यापनक्रिया ॥ प्रतिग्रहं चाध्ययनं विप्रकर्माणि निर्दिशेत् ॥५॥ दानमध्ययनं चैव यजनं च यथाविधि ॥
क्षत्रियस्य च वैश्यस्य कर्मेदं परिकीर्तितम् ॥ ६ ॥ क्षत्रियस्य विशेषस्तु प्रजानां परिपालनम् ॥ कृषिगोरक्षवाणिज्यं वैश्यस्य परिकीर्तितम् ॥ ७ ॥
शूद्रस्य द्विजशुश्रूषा सर्वशिल्पानि चाप्यथ ॥ ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः ॥ ८ ॥ तेषां जन्माद्वितीयं तु विज्ञेयं मौञ्जिबन्धनम् ॥
आचार्यस्तु पिता तत्र सावित्री जननी तथा ॥ ब्राह्मणक्षत्रियविशां मौञ्जीबन्धनजन्मनि ॥ ९ ॥ वृत्त्या द्विजाः शूद्रसमा भवन्ति यावन्न वेदे प्रभ
वन्ति राम ॥ ततः परं ते द्विजतां लभन्ते समस्तकार्येष्वधिदैवतं च ॥१०॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं० रामं प्रति पुष्करोपाख्याने
वर्णधर्माध्यायो नामाशीतितमोऽध्यायः ॥ ८० ॥ पुष्कर उवाच ॥ आनुलोम्येन वर्णानां जातिर्मातृसमा स्मृता ॥ चण्डालो ब्राह्मणीपुत्रः शूद्रः
स्यात्प्रतिलोमजः ॥ १ ॥ मागधश्च तथा वैश्याच्छूद्रादायोगवो भवेत् ॥ वैश्यायाः प्रातिलोम्येन प्रतिलोमात्सहस्रशः ॥ २ ॥ विवाहसदृशैस्तेषां
नोत्तमैर्नाधमैस्तथा ॥ चण्डालकर्म निर्दिष्टं वध्यानां घातनं तथा ॥ ३ ॥ स्त्रीजीवनं च तद्रक्षा प्रोक्तं वैदेहकस्य च ॥ सूतानामश्वसारथ्यं पुक्कसानां
च व्याधता ॥ ४ ॥ स्तुतिक्रिया मागधानां तथा चायोगवस्य च ॥ रङ्गावतरणं प्रोक्तं तथा शिल्पैश्च जीवनम् ॥ ५ ॥ सूतानामस्ति संस्कार
स्तथा वै याजनक्रिया ॥ बहिर्ग्रामनिवासश्च मृतचैलस्य धारणम् ॥ ६ ॥ असंस्पर्शस्तथैवान्यैश्चण्डालस्य विधीयते ॥ ब्राह्मणार्थे गवार्थे वा देह
त्यागानुपस्कृतः ॥ ७ ॥ स्त्रीबालाद्युपपत्तौ च बाह्यानां शुद्धिकारणम् ॥ संकरे जातयस्त्वेताः पितृमातृप्रदर्शिताः ॥ ८ ॥ प्रच्छन्ना
वा प्रकाशा वा वेदितव्याः स्वकर्मभिः ॥ अनार्यता निष्ठुरता पुरतो निष्क्रियात्मता ॥ ९ ॥ पुरुषं व्यञ्जयन्तीह लोके कलुषयोनिजम् ॥
पितुर्वा भजते शीलं मातुर्वोभयमेव वा ॥ १० ॥ न कथंचन दुर्योनिः प्रकृतिं स्वां न गच्छति ॥ कुले मुख्येऽपि जातस्य यस्य स्याद्योनिस
ङ्करः ॥ ११ ॥ स श्रयत्येव तच्छीलं नरोऽल्पमपि वा बहु ॥ यत्र त्वेते परिध्वंसा जायन्ते वर्णसङ्कराः ॥ १२ ॥ राष्ट्रियैः सह तद्राष्ट्रं क्षिप्रमेव
विनश्यति ॥ शूद्रायां ब्राह्मणाज्जातः श्रेयसा चेत्प्रजायते ॥ अश्रेयाञ्श्रेयसीं जातिं गच्छत्यासप्तमाद्युगात्॥१३॥ राज्ञा स्वकालं परिरक्षणीयं घोरं
नृणां सङ्करमेतदेव ॥ आसाद्य घोराणि हि सङ्कराणि नश्यन्ति राष्ट्राणि सराजकानि ॥ १४ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं० रामं
प्रति पुष्करोपाख्याने सङ्करधर्मोनामैकाशीतितमोऽध्यायः ॥ ८१ ॥ पुष्कर उवाच ॥ आजीवं तु यथोक्तेन ब्राह्मणः स्वेन कर्मणा ॥ जीवेत्क्षत्रिय

धर्मेण सा ह्यस्य वृत्त्यनन्तरा ॥ १ ॥ उभाभ्यामप्यजीवन्वै वैश्यवृत्तिं समाचरेत् ॥ ब्राह्मणः क्षत्रियो वैश्यः शूद्रवृत्तिं विवर्जयेत् ॥ ॥ २ ॥ शूद्रो ब्राह्मणवृत्तिं च विशेषेण विवर्जयेत् ॥ आजीवंस्तु स वृत्त्या च मध्यवृत्तिं समाचरेत् ॥ ३ ॥ ब्राह्मणः क्षत्रियो वापि वैश्यवृत्त्या तु वर्तयन् ॥ अयः शस्त्रं विषं मांसं सोमं गन्धांश्च सर्वशः ॥ ४ ॥ क्षीरं क्षौद्रं दधि घृतं तैलं मज्जां गुडं कुशम् ॥ मद्यं नीलं च लाक्षां च लवणं प्राणिनोऽपि च ॥ ५ ॥ विक्रीणीत तिलांश्चैव पक्वान्नं गोरसांस्तथा ॥ रसा रसैर्निहन्तव्या गन्धेन लवणं रसैः ॥ ६ ॥ कृतान्नं च कृतान्नेन तिलधान्येन तत्समम् ॥ वैश्यो वा क्षत्रियो वापि वर्जयेद्द्विजजीविकाम् ॥७ ॥ सद्यः पतति मांसेन लाक्षया लवणेन च ॥ त्र्यहाच्च शूद्रो भवति ब्राह्मणः क्षीरविक्रयी ॥ ८ ॥ इतरेषां पण्यानां विक्रयां मनुजोत्तम ॥ ब्राह्मणः सप्तरात्रेण वैश्यभावं हि गच्छति ॥९॥ क्षिप्राणि यानि रूक्षाणि चराणि च मृदूनि च ॥ वाणिज्ये तानि शस्यन्ते तिथिं रिक्तां विवर्जयेत् ॥१० ॥ द्विकं शतं तु गृह्णीयात्कुसीदेनापि वर्धयन् ॥ ततोऽधिकं तु गृह्णानश्चौरस्याप्नोति किल्बिषम् ॥ ११ ॥ प्रतिपद्द्वादशी षष्ठी नक्षत्राणि ध्रुवाणि च ॥ कुसीदे वर्जनीयानि नित्यं सूर्यसुतस्य च॥१२॥कृषिभूमिपतेर्भागं दत्त्वा कुर्याद्यथोदितम् ॥ ध्रुवाणि सौम्यं मैत्रं च वायव्यं पौष्णमाश्विनम्॥ ॥१३॥वासवं श्रवणं चित्रा विशाखा मूलमेव च ॥ कृष्यारम्भे प्रशस्यन्ते तथा पुष्यपुनर्वसू॥१४॥ कृष्यारम्भे प्रयत्नेन तिथिं रिक्तां विवर्जयेत्॥ अङ्गारकदिनं वर्ज्यं दिवसं सूर्यजस्य च ॥ १५ ॥ नक्षत्राणां यथोक्तानां मुहूर्तेषु च कारयेत् ॥ मुहूर्ते यदि वा ब्राह्मे सर्वकर्मसु पूजिते॥१६॥ वराहं पूजयेद्देवं शेषं पृथ्वीं तथैव च ॥ पर्जन्यं भास्करं वायुं देवेशं शशिनं तथा ॥ १७ ॥ फालं च गोयुगं चैव गन्धमाल्यान्नसम्पदा ॥ ततोऽग्निहवनं कुर्यात्सुसमिद्धे हुताशने ॥ १८ ॥ देवतानां यथोक्तानां जुहुयाच्च घृताहुतीः ॥ गावो भग इति द्वाभ्यां सीरां युञ्जन्त्यतस्त्रिभिः ॥ १९ ॥ फालं शुनां सुफालेति लाङ्गलं च तथेति वै ॥ हुत्वा विप्रान्समभ्यर्च्य दक्षिणाभिर्यथाविधि ॥ २० ॥ पूर्वोदक्प्रवणां भूमिं वाहयेत्प्राग्बलेन तु ॥ सीरायुञ्जन्त इत्येतदृक्त्रयं कीर्तयेद्बुधः ॥ २१ ॥ या ओषधय इत्येवं बीजं तदनु मन्त्रयेत् ॥ कृत्वा सुवर्णतोयाक्तं लक्षण्यो वापयेत्पुमान् ॥ २२ ॥ प्राङ्मुखैर्वाहयेद्गोभिः प्राङ्मुखैश्चैव वापयेत् ॥ शंखपुण्याहघोषेण बीजवापः प्रशस्यते ॥ २३ ॥ बीजवापे तथा मन्त्रं निबोध गदतो मम ॥ प्रजापते कश्यपाय देवलाय नमः सदा ॥ २४ ॥ सदा मे ऋद्धतां देवी बीजेषु च धनेषु च ॥ भोजयेद्ब्राह्मणांश्चात्र तथैव च कृषीवलान् ॥ २५ ॥ कालश्च सर्वः पूर्वोक्तः संग्रहेऽपि प्रशस्यते ॥ देवतानां पितॄणां च कृत्वा तत्रापि पूजनम् ॥ २६ ॥

नववस्त्रपरीधानः श्वेतमाल्यानुलेपनः ॥ प्राङ्मुखः प्राशनं कुर्यात्पात्रे सौवर्णराजते ॥ २७ ॥ तत्रापि भोजयेद्विप्रांस्तथैव च कृषीवलान् ॥ कृष्ये
विशेषतः कार्यं फलयज्ञं भृगूद्वह ॥ २८॥ यूपोयं निहितो मध्ये पेषीवासैषकार्षकैः ॥ तस्मादतन्द्रितो दद्यादन्नं धान्यार्थदक्षिणा ॥२९॥ भूमिं भित्त्वौ
षधीश्छित्त्वा हत्वा कीटपिपीलिकम् ॥ पुनन्ति खलु यज्ञेन कर्षिका नात्र संशयः ॥ ३० ॥ अष्टागवं धर्महलं षड्गवं जीवितार्थिनाम् ॥ चतुर्गवं
नृशंसानां द्विगवं ब्रह्मघातिनाम् ॥ ३१ ॥ आपदं च समुत्तीर्य त्यक्त्वा वित्तं च कर्मणा ॥ यदर्जितं ततः कुर्यात्प्रायश्चित्तं विचक्षणः ॥ ३२ ॥
श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्॥स्वधर्मे निधनं श्रेयः परधर्मो भयावहः॥३३॥ऋतेन जीवेदनृतेन जीवेन्मितेन जिवेत्प्रमितेन जीवेत्॥सत्या
नृताभ्यामथवापि जीवेच्छ्ववृत्तिमेकां परिवर्जयेत्तु ॥ ३४ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं० रामं प्रति पुष्करोपाख्याने आपद्धर्मो नाम
द्व्यशीतितमोऽध्यायः ॥ ८२ ॥ राम उवाच ॥ काम्यं कर्म समाचक्ष्व वाणिज्यं येन शुध्यति ॥ कृषिं च बहुलां चैव कर्मणा केन चाश्नुते ॥१॥
॥ पुष्कर उवाच ॥ मूलेनोपोषितः कुर्यादिदं कर्म पुरोहितः ॥ उपोषितस्य धर्मज्ञ जयमानस्य नित्यशः ॥ २ ॥ प्रातास्तूत्तरषाढासु प्राङ्मुखं स्नापये
न्नरम् ॥ युक्तैर्वेतसमूलेन शङ्खमुक्ताफलैस्तथा ॥ ३ ॥ मणिभिश्च यथालाभं कनकेन तथैव च ॥ अकालमूलैः कलशैश्चतुर्भिर्भृगुनन्दन ॥ ४ ॥
नवैस्तु पूजयेद्देवं शङ्खचक्रगदाधरम् ॥ पूर्वाषाढां तथैवाऽपो वरुणं च निशाकरम् ॥ ५ ॥ गन्धमाल्यनमस्कारधूपदीपान्नसम्पदा ॥ एतेषामेव
जुहुयात्तथा नाम्ना घृतं द्विज ॥ ६॥ नीलवासावृतो भूत्वा क्षिपेदप्सु समाहितः ॥ नीलानि राम वासांसि पयांसि विविधानि च ॥ ७ ॥ तदा
मंथं सुरां चैव मैरेयं विविधं तथा ॥ शुक्लानि चैव माल्यानि धूपं दद्यात्तु कम्बुना ॥ ८ ॥ तिम्यस्थि मकरादस्थि शङ्खमुक्ताफले तथा ॥ सुवर्णा
न्तरितं कृत्वा धारयेच्च तथा मणिम् ॥ ९ ॥ कृत्वैतत्सिद्धिमाप्नोति वाणिज्ये नात्र संशयः ॥ समुद्रयाने च तथा कान्तारे न विषीदति ॥ १० ॥
नीलानि राम वासांसि दक्षिणा चात्र शस्यते ॥ शङ्खं सुवर्णं रूप्यं च तथा मुक्ताफलानि च ॥ ११ ॥ होत्रे कर्त्रे द्विजेभ्यश्च सर्वमेतद्विधीयते ॥
ब्राह्मणान्भोजयेच्चात्र परमान्नं तु संस्कृतम् १२ ॥ अलंघयन्नित्यमथाप्यमृक्षं करोति कर्मैतदतन्द्रितात्मा ॥ न जातु लाभाद्विनिवर्ततेऽसौ समुद्र
मार्गादिव निम्नगा वै॥१३॥इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं०रामं प्रति पुष्करोपाख्याने पूर्वाषाढास्नानवर्णनो नाम त्र्यशीतितमोऽध्यायः॥
॥ ८३ ॥ पुष्कर उवाच ॥ स्वयं सूपोषितो विद्वान्यजमानमुपोषितम् ॥ मूलेन स्नापयेन्नित्यं तथाप्याशामुखस्थितम् ॥ १ ॥ दूर्वाङ्कुश
शमीपत्रपूर्णेन सुदृढेन च ॥ कुम्भद्वयेन स्नातस्तु पूजयेन्मधुसूदनम् ॥ २ ॥ विरूपाक्षं सवरुणं चन्द्रं मूलं तथैव च ॥ गन्धमाल्य

नमस्कारधूपदीपान्नसम्पदा ॥ ३ ॥ एतेषामेव जुहुयात्तथा नाम्ना घृतं द्विज ॥ पीतवासास्ततो भूत्वा मत्स्यकुल्माषसूकरैः ॥ ४ ॥
सुराक्तसरसंयुक्तैः स्नानोक्ताशासुखस्थितः ॥ बलिं निर्ऋतये दद्याज्जानु कृत्वा ततः क्षितौ ॥ ५ ॥ ततोष्टादशभिः पुष्पैर्मूलैः पञ्चभिरेव च ॥
सुवर्णगर्भं च मणिं विद्वाञ्छिरसि धारयेत् ॥ ६ ॥ कृत्वैतत्सकलं कर्म कृषिं बहुफलां लभेत् ॥ दक्षिणा चात्र दातव्या मूलानि च फलानि च ॥७॥
पीतानि चैव वस्त्राणि कनकं रजतं तथा ॥ भोजनं चात्र दातव्यं ब्राह्मणानामभीप्सितम् ॥ ८ ॥ अलंवयन्मूलमिदं हि कुर्वन्स्नानं सदा भार्गव
वंशमुख्य ॥ कृषिं समाप्नोति सदैव विद्वान्यथेप्सितं नात्र विचारमस्ति॥९॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं०रामं प्रति पुष्करोपाख्या
ने मूलस्नानवर्णनो नाम चतुरशीतितमोऽध्यायः ॥ ८४ ॥ राम उवाच ॥ धर्ममार्गमहं त्वत्तः श्रोतुमिच्छामि मे वद ॥ त्वं हि वेत्थ महाभाग सर्व
धर्मान्यथाविधि ॥ १ ॥ पुष्कर उवाच ॥ षोडशर्तु निशाः स्त्रीणामाद्यास्तिस्रस्तु गर्हिताः ॥ व्रजेद्युग्मासु पुत्रार्थी ततः परमिति श्रुतिः ॥ २ ॥
अयुग्मासु तथा राम दुहितार्थी स्त्रियं व्रजेत् ॥ विकृष्टयुग्मासुत ये प्रशस्ताः प्रियदर्शनाः ॥ ३ ॥ दीर्घायुषो धर्मपरा भवन्तीह धनान्विताः ॥
गर्भस्य स्पष्टताधाने गर्भाधानिकमिष्यते ॥ ४ ॥ पुरा तु स्पर्शनं कार्यं सेवनं तु विचक्षणैः ॥ षष्ठेऽष्टमे वा सीमन्तकर्मस्वेतेषु च त्रिषु ॥ ५ ॥
पुन्नामधेयं नक्षत्रं पुत्रकामस्य शस्यते ॥ आदित्यपुष्यसावित्रसौम्यमूलाः सवैष्णवाः ॥ ६ ॥ पुन्नामधेया निर्दिष्टाः स्वातिश्चैवात्र सप्तमम् ॥
अङ्गारकदिनं वर्ज्यं तिथिं रिक्तां च वर्जयेत् ॥ ७ ॥ अच्छिन्ननाभ्यां कर्तव्यं जातकर्म विचक्षणैः ॥ आशौचे तु व्यतिक्रान्ते नामकर्म
विधीयते ॥ ८ ॥ अथवा भार्गवश्रेष्ठ दिने पूजितलक्षणे ॥ मृदुध्रुवेषु ऋक्षेषु नामकर्म विधीयते ॥९॥ तत्राप्यङ्गारकदिनं तिथिं रिक्तां च वर्जयेत् ॥
नामधेयं तु वर्णानां कर्तव्यं तु समाक्षरम् ॥१०॥ माङ्गल्यं ब्राह्मणस्योक्तं क्षत्रियस्य बलान्वितम् ॥ वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम्॥११॥
शर्म वर्म धनार्थं तु दासान्तं चानुपूर्वशः ॥ नामधेयं तु कर्तव्यं स्वकुलानुगमेन वा ॥ १२ ॥ स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थं मनोहरम् ॥
नाम कार्यं महाभाग न कार्यं विषमाक्षरम् ॥ १३ ॥ बालं तु कृतनामानं पूजितस्य गदाभृतः ॥ निवेदयेन्महाभाग तव पुत्रोऽयमित्युत ॥ १४ ॥
शिष्यः प्रेष्यश्च दासश्च संविभाज्यश्च केशवः ॥ नित्यं सन्ति विभागेन शुभेन मधुसूदनः ॥ १५ ॥ ततस्तु पूजनं कार्यं ब्राह्मणानां यथाविधि ॥
भोजयेद्ब्राह्मणांश्चात्र परमान्नं सदक्षिणम् ॥ १६ ॥ चूडाकर्म ततः कार्यं भृगुपुत्र यथाकुलम् ॥ नक्षत्राण्यत्र शस्यन्ते मृदुक्षिप्रचराणि च ॥ १७ ॥
तिथिं विवर्जयेद्रिक्तां सूर्यारार्किदिनान्यपि ॥ तत्रापि वासुदेवस्य पूजां कृत्वा विशेषतः ॥ १८ ॥ गर्भाष्टमेऽब्दे कर्तव्यं ब्राह्मणस्योपनायनम् ॥

गर्भादेकादशे राज्ञः गर्भाच्च द्वादशे विशः ॥ १९ ॥ चूडाकर्मणि यः प्रोक्तः कालः सोऽत्रापि शस्यते ॥ नक्षत्राणां यथोक्तानां मुहूर्ताश्च
शुभप्रदाः ॥ २० ॥ षोडशाऽब्दे हि विप्रस्य राजन्यस्य द्विविंशतिः ॥ विंशतेश्च चतुष्कं तु वैश्यस्य परिकीर्तितम् ॥ २१ ॥ सावित्री
नातिवर्तेत अत ऊर्ध्वं निवर्तते ॥ विज्ञातव्यास्त्रयोऽप्येते यथाकालमसंस्कृताः ॥ २२ ॥ सावित्रीपतिता व्रात्या व्रात्यस्तोमक्रमादृते ॥ मुञ्जस्य
बिल्वजानां च क्रमान्मौञ्जः प्रकीर्तितः ॥ २३ ॥ मार्गवैयाघ्रचर्माणि वस्त्राणि व्रतचारिणाम् ॥ पर्णपिप्पलबिल्वानां क्रमाद्दण्डाः प्रकीर्तिताः॥२४॥
कच्चदेशललाटांसतुल्याः प्रोक्ताः क्रमेण तु ॥ अवक्राः सत्वचः सर्वे नाग्निशुष्कास्तथैव च ॥ २५ ॥ वासोपवीतकार्पासक्षौमोर्णानां यथाक्रमम् ॥
आदिमध्यावसानेषु भवच्छब्दोपलक्षितम् ॥ २६॥ प्रथमं तत्र भिक्षेत यत्र भिक्षा ध्रुवं भवेत् ॥ पूजयेद्वासुदेवं च तत्र देवं विशेषतः ॥ २७ ॥ हृषी
केशं व्रतेशं च सर्वविघ्नेश्वरं प्रभुम् ॥ यथोक्तेषु च ऋक्षेषु त्रैविद्यां कारयेद्गुरुः ॥ २८ ॥ नैवाधिकारी वेदे स्याद्विना त्रैविद्यकेन तु ॥ स्त्रीणां संस्कार
मन्त्रोक्तं सकृत्कार्यं विजानता ॥ २९ ॥ क्षेत्रसंस्कारमेतद्धि सकृदेव विजायते ॥ संस्काराणि पिता कुर्यान्मेखलाबन्धनात्मनः ॥ मेखला बन्ध
नाद्यानि कार्याणि गुरुणा तथा ॥३०॥ सर्वाणि कार्याणि हि लौकिकेऽग्नौ स्वकल्पमालोक्य भृगुप्रधान ॥ सर्वेषु पूजा च तथा विधेया तस्याप्रमे
यस्य जनार्दनस्य॥३१॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं०रामं प्रति पुष्करोपाख्याने संस्कारवर्णनो नाम पञ्चाशीतितमोऽध्यायः॥८५॥
पुष्कर उवाच ॥ उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः ॥ आचारमग्निकार्यं च सन्ध्योपासनमेव च ॥ १ ॥ प्रयतः कल्यमुत्थाय स्नातो हुत
हुताशनः ॥ भक्त्या गुरोस्तु कुर्वीत अभिगम्याभिवादनम् ॥२॥ गुरोस्तु वामं चरणं वामहस्तेन संस्पृशेत् ॥ दक्षिणं दक्षिणेनैव स्वनाम परिकीर्त
यन् ॥ ३ ॥ अनुज्ञातस्तु गुरुणा ततोऽध्ययनमाचरेत् ॥ कृत्वा ब्रह्माञ्जलिं पश्यन्गुरोर्वदनमानतः ॥ ४ ॥ ब्रह्मावसाने प्रारम्भे प्रणवं चैव
कीर्तयेत् ॥ अनध्यायेष्वध्ययनं वर्जयेत्तु प्रयत्नतः ॥ ५ ॥ भैक्ष्यचर्यां ततः कुर्याद्ब्राह्मणेषु यथाविधि ॥ गुरोः कुले न भिक्षेत भुञ्जीत तदनु
ज्ञया ॥ ६ ॥ आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः ॥ श्रियः प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते ह्युदङ्मुखः ॥ ७ ॥ हितं प्रियं गुरोः
कुर्याद्भक्त्याहंकारवर्जितः ॥ अन्वास्य पश्चिमां सन्ध्यां पूजयित्वा हुताशनम् ॥ ८ ॥ अभिवाद्य गुरुं पश्चाद्गुरोर्वचनकृद्भवेत् ॥ मधुमां
साञ्जनं श्राद्धं गीतं नृत्यं च वर्जयेत् ॥ ९ ॥ हिंसां परापवादं च अश्लीलं च विशेषतः ॥ मेखलामजिनं दण्डं धारयेत्प्रयतः सदा ॥ १० ॥
विनष्टानप्सु निक्षिप्य तथान्यान्धारयेत्पुनः ॥ आदिष्टी नोदकं कुर्यादाव्रतस्य समापनात् ॥ ११ ॥ समाप्ते तु व्रतं कुर्यात्त्रिरात्रेणैव शुद्ध्यति ॥

अधःशायी भवेन्नित्यं ब्रह्मचारी समाहितः ॥ १२ ॥ एवं व्रतं तु कुर्वीत वेदस्वीकरणं द्विजः ॥ गुरवे दक्षिणां दत्त्वा स्नायाच्च तदनन्तरम् ॥१३॥ आशरीरविमोक्षाद्वा वसेद्गुरुकुले सदा ॥ नैष्ठिको ब्रह्मचारी च वायुभूतः खमूर्तिमान् ॥१४॥ तत्पदं समवाप्नोति यत्र गत्वा न शोचति ॥ स्नाने चैव सगोदाने कालः पूर्वो विधीयते ॥ पूजनं वासुदेवस्य सर्वत्र च विधीयते॥१५॥ संपूज्य देवं गुरवे च दत्त्वा धनं यथावत्परिपूर्णविद्यः ॥ गृहाश्रमी स्याद्विधिवन्नृसिंह यत्रास्य लोकद्वितयं प्रदिष्टम् ॥ १६ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० सं० रामं प्रति पुष्करोपाख्याने ब्रह्मचर्यवर्णनो नाम षडशीतितमोऽध्यायः ॥ ८६ ॥ पुष्कर उवाच ॥ विप्रश्चतस्रो विन्देत भार्यास्तिस्रस्तु भूमिपः ॥ द्वे च वैश्यस्तथा कामं भार्यैकामपि चान्त्यजः ॥ १ ॥ ब्राह्मणी क्षत्रिया वैश्या शूद्री विप्रस्य कीर्तिताः ॥ क्रमेण कामसक्तस्य विवाहाः परिकीर्तिताः ॥२॥ विवाहमुत्क्रमात्कृत्वा नरकं प्रतिपद्यते ॥ धर्मकार्याणि सर्वाणि न कार्याण्यसवर्णया ॥३ ॥ असवर्णा तु या नारी रत्यर्थे सा प्रकीर्तिता ॥ आधानं तस्य धर्मार्थं न प्रशंसन्ति साधवः ॥ ४ ॥ पाणिर्ग्राह्यः सवर्णासु गृह्णीयात्क्षत्रिया शरम् ॥ वैश्या प्रतोदमादद्याद्दशां चैवान्त्यजा तथा॥५॥उत्कृष्टवेदनेऽप्येतद्विधानं परिकीर्तितम् ॥ सकृत्कन्या प्रदातव्या हरंस्तां चौरदण्डभाक् ॥ ६ ॥ न कन्याविक्रयं कार्यं कदाचिदपि केनचित् ॥ केशविक्रयिणो यान्ति नरकानेकविंशतीन्॥७॥अपत्यविक्रयात्तस्य निष्कृतिर्न विधीयते ॥ कन्याप्रजीवनात्किंचिन्नोपजीवति यः पुमान् ॥ ८ ॥ न तच्छुल्कं समुद्दिष्टमानृशंस्यं हि तत्स्मृतम् ॥ कन्यादानं शचीयागो विवाहोऽथ चतुर्थिका ॥ ९ ॥ विवाहमेतत्कथितं राम कर्मचतुष्टयम् ॥ दत्तामपि हरेत्कन्यां वरश्चेद्दोषभाग्भवेत् ॥ १० ॥ नष्टे मृते प्रव्रजिते क्लीबेऽथ पतितेऽपतौ ॥ पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥ ११ ॥ मृते तु देवरे देया तदभावे यदृच्छया ॥ पूर्वात्रितयमाग्नेयं वायव्यं चोत्तरात्रयम् ॥ १२ ॥ रोहिणी चेति वरुणं भगणः शस्यते सदा ॥ नौकगोत्रां च वरयेन्नैकार्षीयां च भार्गव ॥ १३ ॥ पितृतः सप्तमादूर्ध्वं मातृतः पञ्चमात्तथा ॥ वरयेल्लक्षणोपेतां सदा लोकद्वयेच्छया ॥ १४ ॥ ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः ॥ गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमः स्मृतः ॥ १५ ॥ आहुः प्रदानं ब्राह्मेण कुलशीलयुताय तु ॥ तज्जः पुनात्युभयतः पुरुषानेकविंशतीन् ॥१६॥ दैवश्च ऋत्विजे दानं स तु यज्ञः प्रकीर्तितः ॥ तज्जः पुनाति धर्मज्ञ स्वकुले पुरुषत्रयान्॥१७॥ शुल्केन चासुरं विद्यात्स तु धर्माद्दते मतः ॥ परस्परेच्छया राम कन्यकावरयोस्तथा ॥ १८ ॥गान्धर्वो नाम निर्दिष्टः स तु मन्मथलक्षणः ॥ राक्षसो युद्धहरणात्पैशाचः कन्यकाछलात् ॥ १९ ॥ प्राजापत्यस्तथा ब्राह्मः समवर्णेषु पूज्यते ॥ दैवस्तु ब्राह्मणस्यैव नैव चान्यस्य कस्यचित् ॥ २० ॥

गान्धर्वराक्षसौ श्रेष्ठौ क्षत्रियस्यैव भार्गव ॥ पूर्वं विवाहात्कर्तव्यः शचीयागो भृगूत्तम ॥ २१ ॥ वैवाहिकेन्दौ कुर्वीत कुम्भकारमृदा शचीम् ॥ सर्वलक्षणसंयुक्तां कुशलेन च शिल्पिना ॥ २२ ॥ तां नयेत्सरसस्तीरं नदीतीरमथापि वा ॥ सर्वभूषणसंपन्ना सर्वास्त्वविधवाः स्त्रियः ॥ २३ ॥ कौसुंभरक्तवसनाः सर्वाः स्युः शस्त्रपाणयः ॥ माल्यानुलेपनैर्भक्ष्यैर्दीपैर्धूपैस्तथैव च ॥ २४ ॥ कौसुंभरक्तैर्वस्त्रैश्च भूषणैश्चैव शक्तितः ॥ ततः शूर्पेण ताः साध्व्यो दिक्षु दत्त्वा बलिं शुभम् ॥ २५ ॥ संयम्य केशान्प्रयता गृहीत्वा च तथा शचीम् ॥ वाद्यगीतेन महता द्विजवाचनकेन च ॥ २६ ॥ गृहे प्रवेशयेत्पुंसां शक्रपत्नीमनिंदिताम् ॥ त्रिसन्ध्यं तत्र सा पूज्या गन्धमाल्यान्नसम्पदा ॥ २७ ॥ वन्दनीयोद्वाहसमये तत्र कालं निबोध मे ॥ प्रसुप्ते केशवे राम न तु कार्यं कथञ्चन ॥ २८ ॥ न पौषे न तथा चैत्रे न चार्ककुजवासरे ॥ कृष्णत्रिभागे नैवान्त्ये नाद्ये शुक्लस्य भार्गव॥२९॥तथा रिक्ततिथौ[1] नैव न विष्टौ करणे तथा ॥ न शुक्रेऽस्तमनं प्राप्ते तथा चास्ते बृहस्पतौ ॥३०॥ शशांकेऽन्यग्रहाश्चैव विवाहो न प्रशस्यते ॥ अर्कार्किभौमयुक्ते भे व्यतीपातहते तथा ॥३१॥ दिव्यान्तरिक्षभौमेन तथोत्पातेन घातिते ॥ तथा शिखिशिखाध्वस्ते सैंहिकेययुते तथा ॥३२॥ वैवाहिकान्यतो वक्ष्ये नक्षत्राणि भृगूत्तम ॥ सौम्यं पित्र्यं च वायव्यं सावित्रं रौहिणं तथा॥३३॥ उत्तरात्रितयं मूलं मैत्रं पौष्णं तथैव च ॥ मुहूर्ताश्च तथैतेषां शुभा अभिजिता सह ॥३४॥ मानुष्याख्यस्तथा लग्नो मानुष्याख्यस्तथांशकः ॥ अमानुष्याख्ये लग्नेऽपि मानुष्याख्येंशको हितः ॥३५॥ तृतीये च तथा षष्ठे दशमैकादशाष्टमे ॥ अर्कार्किभौमतनयाः प्रशस्ता न कुजोऽष्टमः ॥ ३६ ॥ सप्तान्त्याष्टमवर्ज्येषु शेषाः शस्ता ग्रहोत्तमाः ॥ तेषामपि तथा सूर्यश्चन्द्रः षष्ठो न शस्यते ॥ ३७ संकल्पविधिना कार्यो विवाहस्तदनन्तरम् ॥ वैवाहिकेऽह्नि कर्तव्यास्तथैव च चतुर्थिके ॥ ॥ ३८ ॥ न दातव्या ग्रहास्तत्र चतुराद्यास्तथैकगाः ॥ अतः परं गृहे गच्छेदृतुकाले सदा स्त्रियम् ॥ ३९ ॥ पर्ववर्ज्यं सदा गच्छेत्स्त्रीणां वा संस्मरन्वरम् ॥ सर्वकालं रतिर्दत्ता तासां सत्यं भृगूत्तम ॥४० ॥ परस्परातिक्रमणं दंपत्योः परिवर्जयेत् ॥ निष्कारणं तथा राम न कार्यमधिवेदनम् ॥४१॥ अप्रजा रोगिणी मूढा तथा च कलहप्रिया ॥ कन्याप्रजा तथा या च या चैवाप्रियवादिनी ॥ ४२ ॥ एताः खल्वधिवेत्तव्या गृहकार्यपराङ्मुखीः ॥ अधिविन्ना विशेषेण पालनीया सुतं भवेत् ॥४३॥ धर्मकार्येषु सर्वेषु तथा ज्येष्ठां नियोजयेत् ॥ धर्माधर्मौ समौ राम दम्पत्योरुभयात्मकौ ॥ ४४॥ पोष्या च नित्यं परिपालनीया भार्या भवेद्धर्मपरायणस्य ॥ धर्मार्थकामान्सततं द्विजेन्द्र तान्रक्षयेत्सम्यगथानया स्वान्॥ ४५ ॥

---

१ 'तिथावमे तथारिक्ते' इति ख० ।

इतिश्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० सं० रामं प्रति पुष्करोपाख्याने धर्मवर्णनन्नाम सप्ताशीतितमोध्यायः ॥ ८७॥ पुष्कर उवाच ॥
निद्रां जह्याद् गृही राम नित्यमेवारुणोदये ॥ वेगोत्सर्गं ततः कृत्वा दन्तधावनपूर्वकम् ॥ १ ॥ स्नानं समाचरेत्प्रातः सर्वकल्मषनाशनम् ॥
वेगोत्सर्गं न कुर्वीत फालकृष्टे तथा शुचौ ॥ २ ॥ गोष्ठे न चाग्नौ न तटे द्रुमच्छायासु शाद्वले ॥ पथि भस्मनि तोये च नांगणे न च
गोपथे ॥ ३ ॥ नाग्न्यर्कानागतोयेषु प्रतिवाते तथैव च ॥ न वेगितो न कार्यस्थो वेगोत्सर्गं समाचरेत् ॥ ४ ॥ उदङ्मुखस्तु
सन्ध्यासु दिवा च भृगुनन्दन ॥ दक्षिणाभिमुखो रात्रौ नाकाशे तु कथञ्चन ॥ ५ ॥ कर्णस्थब्रह्मसूत्रस्तु वस्त्राच्छादितमस्तकः ॥
अभ्युद्धृताभिरद्भिस्तु मृद्भिः शौचं समाचरेत् ॥ ६ ॥ कृतशौचः शुचौ देशे प्राङ्मुखः सुसमाहितः ॥ उदङ्मुखस्तु धर्मज्ञ तथान्तर्जानुरेव
च ॥ ७ ॥ उपस्पृशेच्च धर्मज्ञ शुद्धपादकरः सदा ॥ एकहस्तार्पितेनाऽथ फेणबुद्बुदिना तथा ॥ ८ ॥ अग्निपक्केन तोयेन ननु नोपस्पृशेद्बुधः ॥
अङ्गुल्यग्रे भवेदैवं ब्राह्ममङ्गुलिमूलके ॥९॥ पैत्र्यं तर्जनिमूले स्यात्कनिष्ठायाश्च मानुषम् ॥ ब्राह्मेण त्रिः पिबेदापः प्रमृज्यात्तु ततो मुखम् ॥१० ॥
खान्यद्भिः संस्पृशेत्पश्चान्मूर्धानं नाभिमेव च ॥ उपस्पृश्य ततः पश्चाद्भक्षयेद्दन्तधावनम् ॥ ११ ॥ भुक्त्वा च निक्षिपेद्धाम नित्यमेव समाहितः ॥
उदङ्मुखः प्राङ्मुखो वा न याम्याशापराङ्मुखः॥१२॥मांसन्न भक्षयेच्चैव नोर्ध्वशुष्कं न पिच्छिलम्॥सुशिरं मधुरं चाम्लं वित्वचं पत्रसंयुतम्॥१३॥
समपूर्वमतिस्थूलं कुब्जकीटविनाशितम् ॥ शाल्मल्यश्वत्थभव्यानां धवकिंशुकयोरपि ॥ १४॥ कोविदारशमीपीलुश्लेष्मातकविभीतकान् ॥ वर्जयेद्द
न्तकाष्ठेषु गुग्गुलं क्रमुकं तथा ॥१५॥ वटासनार्कखदिरकरवीरांश्च भक्षयेत् ॥जात्यश्वबिल्वबदरं मूलं च ककुभस्य च ॥ १६॥ अरिमेदं प्रियङ्गुं च
कण्टकिन्याश्च भार्गव ॥ प्रक्षाल्य भक्षयेत्पूर्वं प्रक्षाल्यैव च संत्यजेत् ॥१७॥ पतितेऽभिमुखं शस्तं शान्ताशाभिमुखे दिनम् ॥ सौभाग्यकामो वामेन
भक्षयेत्प्राक् सुसंयतः ॥१८॥ मुखभागेन धर्मज्ञ वाग्यतश्चैव भक्षयेत् ॥ मलशौचं ततः कृत्वा सम्यक् स्नानमथाचरेत् ॥ १९ ॥ न स्नानमाच
रेद्भुक्त्वा नाविज्ञाते जलाशये ॥ नातुरो नारुणकरैरनाक्रान्ते नभस्तले ॥ २०॥ अप्रशस्तं निशि स्नानं राहोरन्यत्र दर्शनात् ॥ परांभसि तथैवाल्पे
नासिरस्कः कथञ्चन ॥२१॥ नित्यं नैमित्तिकं काम्यं क्रियाङ्गं मलकर्षणम् ॥ क्रियास्नानं तथा षष्ठं षोढा स्नानं प्रकीर्तितम् ॥ २२ ॥ खानि रात्रौ
शयानस्य स्रवन्ति पुरुषस्य च॥तस्मात्सर्वप्रयत्नेन प्रातःस्नानं समाचरेत्॥२३॥प्रातःस्नायी सदा राम नरकं न च पश्यति ॥ यः करोति सदा
राम स्नानं तु सवनद्वयम् ॥२४॥ स तु स्वर्गमनुप्राप्य त्रिदशैरपि पूज्यते ॥ तथा त्रिषवणस्नायी स्वर्गलोके महीयते ॥ २५ ॥ मानुष्यं

प्राप्य भवति रूपयौवनसंयुतः ॥ धनधान्यवति स्फीते कुले चैव प्रसूयते ॥ २६॥ रूपौदार्यगुणोपेताः स्त्रियश्चाप्नोत्यनिन्दिताः ॥ धर्मे मतिश्चास्य भवेद्यशसा च विराजते ॥ २७ ॥ तस्मात्सदा धर्मपरेण राम तीर्थेषु मुख्येषु सरस्सु चैव ॥ स्नानं च कार्यं सुमलापहर्तृ नाकप्रदं कामकरं सुखाय ॥२८॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं० रामं प्रति पुष्करोपाख्याने स्नानवर्णनो नामाष्टाशीतितमोऽध्यायः ॥ ८८॥ पुष्कर उवाच॥ माल्यं लक्ष्मीकरं नाम नित्यं शिरसि धारयेत् ॥ नान्यत्र धारयेत्प्राज्ञो बहिर्गन्धं न धारयेत् ॥ १॥ यश्च कण्टकिसम्भूतं कृष्णं रक्तं च भार्गव ॥ कण्टकिभ्योऽपि यज्जातं शुक्लं धार्यं तु तद्भवेत् ॥२ ॥ कृष्णरक्ते तथा धार्ये यदि स्यातां जलोद्भवे ॥ चन्दनेनानुलिम्पेन कुंकुमागुरुभिस्तथा ॥३ ॥ कर्पूरेण तथाङ्गानि शुभेन च प्रियङ्गुना ॥ वस्त्रं नान्यधृतं धार्यं न रक्तं मलिनं तथा ॥ ४ ॥ जीर्णं नापदशं चैव श्वेतं धार्यं प्रयत्नतः ॥ उपानहं नान्यधृतं ब्रह्मसूत्रं च धारयेत् ॥ ५ ॥ हीनाङ्गैरधिकाङ्गैश्च बालैर्वृद्धैर्बुभुक्षितैः ॥ व्यालैरदान्तैर्वाहैश्च न व्रजेच्च कदाचन ॥ ६ ॥ स्नानभोजनपानादि तेषामादौ न वाचरेत् ॥ नैकः प्रपद्येदध्वानं नाधार्मिकसहायवान् ॥ ७ ॥ न रात्रौ न च मध्याह्ने न च देवे प्रवर्षति ॥ न चातिविषमे वाते सन्ध्ययोश्च तथा द्विज ॥ ८ ॥ नासन्निहितपाने वा न वेगान्न च सन्ततम् ॥ सातपत्रपदत्राणः सोष्णीषश्च तथा चरेत् ॥ ९ ॥ चतुष्पथं न सः कुर्याद्विख्यातांश्च वनस्पतीन् ॥ मङ्गल्यानि च सर्वाणि पथि कुर्यात्प्रदक्षिणम् ॥ १० ॥ अमङ्गल्यानि वामानि कर्तव्यानि विजानता ॥ वरस्य भूमिपालस्य स्नातकस्याथ चक्रिणः ॥ ११॥ भाराक्रान्तस्य गुर्विण्याः पन्था देयः प्रयत्नतः ॥ व्यालयुद्धं न चेक्षेत विना विषममास्थितः ॥१२॥ न पश्येच्चार्कमुद्यन्तं नास्तं यान्तं न चाम्भसि ॥ तिरस्कृतं तु वस्त्रेण न क्रुद्धस्य गुरोर्मुखम् ॥१३॥ न स्त्रीं स्रवन्तीं नोदक्यां न नग्नां नान्यसङ्गताम् ॥ न पत्नीं भोजनस्वप्नस्नानासक्तां विभूषणाम् ॥ १४ ॥ नाञ्जयन्तीं स्वके नेत्रे नाश्लीलं किञ्चिदेव तु ॥ नानास्थानं न पश्येच्च न पश्येच्च महानसम् ॥ १५ ॥ जलाशयतटस्थांश्च न पश्येत्तु कदाचन ॥ हीनाङ्गैरधिकाङ्गैश्च बालैर्वृद्धैर्बुभुक्षितैः ॥ १६ ॥ व्यालैरदान्तैर्वाहैश्च न व्रजेत्तु कदाचन ॥ स्नानभोजनपानादि तेषामादौ न चाचरेत् ॥ १७ ॥ चतुष्पथस्तुषाङ्गारशून्यवेश्माटवीस्तथा ॥ १८ ॥ कार्पासास्थि तथा भस्म नाक्रमेद्यश्च कुत्सितम् ॥ अन्तःपुरं ऋतुगृहं परदूतगृहं तथा ॥ १९ ॥ नारोहेद्विषमां नावं न वृक्षं न च पर्वतम् ॥ न लोष्टेन न काष्ठेन नाश्मना च फलद्रुमान् ॥ २० ॥ न पातयेन्न कुर्वीत सर्वत्र च कुतूहलम् ॥ अर्थायतनशास्त्रेषु सर्वत्र स्यात्कुतूहली ॥ २१ ॥ दण्डेन करपातैर्वा न कुर्यादम्बुवादनम् ॥ तृणच्छेदं न कुर्वीत न च लोष्टाभिमर्दनम् ॥ २२ ॥ नखानां भक्षणं चैव दन्तानां कुट्टनं तथा ॥ छेदनं च

नखैर्लोम्नां वृथा चेष्टां विवर्जयेत् ॥ २३ ॥ मुखाङ्गवादनं चैव क्ष्वेडोत्कुष्टं तथा वृथा ॥ अवगुंठ्य शिरो रात्रौ न शयीत कदाचन ॥ ॥ २४ ॥ पर्यटेन्न तथा रात्रौ विना राम प्रदीपिकाम् ॥ नाद्वारेण पशुगृहे नाद्वारेण रिपोर्गृहम् ॥ २५ ॥ प्रविशेन्न च तिष्ठेच्च निद्रितं न च बोधयेत् ॥ नाक्षिपेत्परवाक्यं तु न च रक्तं विरागयेत् ॥ २६ ॥ कथाभङ्गं न कुर्वीत न च वासोविपर्ययम् ॥ नोर्ध्वजानुश्चिरं तिष्ठेदुत्पतन्तीं न लङ्घयेत् ॥ २७ ॥ परक्षेत्रे चरन्तीं गां पाययन्तीं च वत्सकम् ॥ नाचक्षीत तथान्यस्य शक्रचापं न दर्शयेत् ॥ २८ ॥ भद्रं भद्रमिति ब्रूयान्नानिष्टं वर्तयेत्कचित् ॥ पालाशमासनं वर्ज्यं पादपीठं च पादुके ॥ २९ ॥ सुरार्चा गुरुभूपानां ब्राह्मणानां विशेषतः ॥ नाक्रमेच्च तथा छायां श्वपचस्य च भार्गव ॥ ३० ॥ द्विजयोश्चैव दम्पत्योर्भूपयोर्युध्यमानयोः ॥ अग्निब्राह्मणयोश्चैव द्विजभूपालयोस्तथा ॥ ३१ ॥ शिष्योपाध्याययोश्चैव न च मध्ये न पूज्ययोः ॥ तैले जले तथा वक्रमादर्शे च मलान्विते ॥ ३२ ॥ न पश्येन्न तथा पश्येदुपरक्तं दिवाकरम् ॥ नोच्छिष्टस्तारकाराहुः स्तुतिनाशं हुताशनम् ॥ ३३ ॥ न तिष्ठेत्प्रतिवातं च तथा च प्रतिभास्करम् ॥ न संहताभ्यां पाणिभ्यां कण्डूयेदात्मनः शिरः ॥ ३४ ॥ रोदनं च तथा नग्नः कुर्यात्तोयावगाहनम् ॥ निष्कारणं नदीपारं बाहुभ्यां न तरेत्तथा ॥ ३५ ॥ न प्रशंसेन्नदीतोये नदीमन्यां कथंचन ॥ न गिरौ पर्वतं राम न राज्ञः पुरतो नृपम् ॥३६॥ असंतर्प्य पितुर्देयं नदीपारं न च व्रजेत् ॥ भोजनं वर्जयेन्नावि ष्ठीवनं च तथांभसि ॥ ३७ ॥ नैवाप्सु प्रक्षिपेद्विद्वानमेध्यं रुधिरं विषम् ॥ समाल्यो नाचरेत्स्नानं न द्विवासा विकारणम् ॥३८॥ आत्मनश्च तथा राम नैव त्वपनयेत्स्रजम् ॥ स्नातः शिरो नावधुनेन्नांगेभ्यस्तोयमुद्धरेत् ॥ ३९ ॥ तद्दिने चानुलिप्तांगं तथा स्नानं विवर्जयेत् ॥ शिरःस्नातश्च तैलेन स्पृशेदंगं न किञ्चन ॥ ४० ॥ वाससा वामभागस्य रजसा पूर्ववाससा ॥ संमार्जनं रजोवर्ज्यः खराश्वादेस्तथैव च ॥ ४१ ॥ मेध्यानि च तथा राम गोगजाश्वरजांसि च ॥ नाधः कुर्वीत दहनं न च पादौ प्रतापयेत् ॥ ४२ ॥ दर्भैर्न मार्जयेत्पादौ न च कांस्ये प्रधापयेत् ॥ गोगजाश्वाजपुच्छेषु खरस्य च विशेषतः ॥ ४३ ॥ यद्धग्नमुदकं तस्माद्विप्रुषो दूरतस्त्यजेत् ॥ अकस्मादप्यशस्तास्ताः खत्रांगस्पर्शनं तथा ॥ ४४ ॥ हीनं वा न वदेद्राम श्रुतरूपधनादिभिः ॥ हीनैर्न च वसेत्सार्धं न देशे वैद्यवर्जिते ॥ ४५ ॥ न भूपालविहीने च न सांवत्सरवर्जिते ॥ दुष्टकूपान्विते राम तथा च बहुनायके ॥ ४६ ॥ स्त्रीनायके बालपतौ शूद्रराज्ये तथैव च ॥ म्लेच्छवेषो न कर्तव्यो म्लेच्छभाषा तथैव च ॥ ४७ ॥ चण्डालैः पतितैर्म्लेच्छैर्भाषणं न कदाचन ॥ नकारं कायतः कृत्वा कीर्तयेत्केशवं विभुम् ॥ ४८ ॥ नासंवृतमुखः कुर्याद्धासं जृम्भां तथा क्षुतम् ॥

गोपयेज्जन्मनक्षत्रमृणसारं गृहे मलम् ॥ ४९ ॥ प्रभोरप्यवमानं स्वं तस्य दुश्चरितं च यत् ॥ नानुकूल्यं तथा कार्यमिन्द्रियाणां
सुखेप्सुना ॥ ५० ॥ युक्त्या च कामसेवी स्यान्नाकस्मान्निःसुखी भवेत् ॥ वेगरोधं न कर्तव्यमन्यत्र क्रोधवेगतः ॥ ५१ ॥
नोपेक्षितव्यो व्याधिः स्याद्रिपुरल्पोऽपि भार्गव ॥ स्नात्वा भुक्त्वा च धर्मज्ञ भक्तिकामः सुरार्चने ॥ ५२ ॥
मलायनानां संस्पर्शे मलानां चैव भार्गव ॥ वाससश्च परीधाने रथ्याचंक्रमणे तथा ॥ ५३ ॥ आचमेच्च तथा राम तथा स्वप्नोत्थितो नरः ॥
न हुंकुर्याच्छिवं पूज्यं बिभृयान्नाग्निचारिणीम् ॥५४॥ न भुक्तमात्रं प्रायस्येन्नीचसेवां विवर्जयेत् ॥ पादेन नाक्रमेत्पादं न कण्डूयेन्न शौचयेत् ॥५५ ॥
वर्जयेच्छवधूमं च गिरं चाश्लीलसंयुताम् ॥ प्रत्यक्षं वा परोक्षं वा कस्यचिन्नाप्रियं वदेत् ॥ ५६ ॥ वेदशास्त्रनरेन्द्रर्षिदेवनिन्दां विवर्जयेत् ॥ नास्ति
क्षयमनृतं चैव चेतसो दूषणं तथा ॥ ५७ ॥ स्त्रीणामीर्ष्या न कर्तव्या विश्वासं तासु वर्जयेत् ॥ लाडितास्ताडिताः कार्या देहे स्वे स्त्रीकुमारिकाः ॥
॥ ५८ ॥ सर्वेषामेव धर्माणां कर्तव्यं श्रवणं तथा ॥ नमस्कारं च देवानां सर्वेषामेव कारयेत् ॥ ५९ ॥ सर्वेषां चरितं राम धर्मतो न विकुत्सयेत् ॥
न चाचरेच्च धर्मज्ञ ते हि तेजोपहाहताः ॥६०॥ धर्मस्यार्थस्य कामस्य पीडा वर्ज्या परस्परम् ॥ देवस्य वयसश्चैव शिल्पस्य स्वकुलस्य च ॥६१॥
आचरेत्सदृशं वेषं व्यवसायानुरूपतः ॥ स्नात एवाशु बिभृयात्सोष्णीषे धौतवाससी ॥ ६२ ॥ अनुलिप्येत्तथांगानि सितं माल्यं च धारयेत् ॥
नासंस्कृतं च बिभृयात्काञ्चनं पुरुषोत्तम ॥६३॥ निराशनस्य सुप्तस्य शयानस्य तथैव च ॥ तथा भुक्तवतो राम स्नातस्य भाषितस्य च ॥६४॥
यात्रायुद्धोत्सुकस्यापि श्मश्रुकर्म विवर्जयेत् ॥ वैष्णवं वारुणं त्वाष्ट्रं सावित्रं वासवं तथा ॥ ६५ ॥ वायव्यमिन्द्रिकं पौष्णं शाक्रमाश्विनमेव च ॥
मैत्रादित्ये तथा पुष्यः शंखचक्रगणं भवेत् ॥ ६६ ॥ नक्षत्राणामथैतेषां मुहूर्ताश्च हितप्रदाः ॥ अर्कार्किभौमवाराश्च रिक्ताश्च तिथयस्तथा ॥ ६७ ॥
प्रतिपच्च तथा षष्ठी वर्जयेत्क्षौरकर्मणि ॥ वर्जयेज्जन्मनक्षत्रं नानुकूलं तथैव च ॥ ६८ ॥ जन्मनक्षत्रगे सौम्ये शिरःस्नानेन यत्नतः ॥ पूजा
सोमस्य कर्तव्या नक्षत्रस्य तथात्मनः ॥ ६९ ॥ श्राद्धं कुर्यात्प्रयत्नेन वह्निब्राह्मणपूजनम् ॥ वाहनायुधच्छत्राद्यं पूजनीयं प्रयत्नतः ॥ ७० ॥
सुराणामर्चनं कार्यं केशवस्य विशेषतः ॥ समं स्वलंकृतस्तिष्ठेच्छिरस्नातश्च मानवः ॥ ७१ ॥ निर्मलानि च कार्याणि दन्तकेशनखानि च ॥
अष्टमीं च तथा षष्ठीं नवमीं च चतुर्दशीम् ॥ ७२ ॥ शिरोभ्यङ्गं न कुर्वीत पर्वसन्धौ तथैव च ॥ तथैवामलकस्नानं सप्तमीषु विवर्जयेत् ॥७३॥
विना तु सततं स्नानं न स्नायादशमीषु च ॥ अमावस्यां सुरार्चासु नववस्त्रं न धारयेत् ॥ ७४ ॥ न च भौमदिने राम तेष्वनक्तेषु चाप्यथ ॥

सावित्र रौहिणं मैत्रमादित्यं तिष्यमाश्विनम् ॥ ७५ ॥ उत्तरात्रितयं चित्रा वायव्यं वसुदैवतम् ॥ इन्द्राग्निदैवतं पौष्णं तानि शस्तानि निर्दिशेत् ॥ ७६ ॥ नक्षत्राणामथैतेषां मुहूर्ताश्च हितप्रदाः ॥ परद्रोहं तथा हिंसां प्रयत्नेन विवर्जयेत् ॥ ७७ ॥ केशग्रहान्प्रहारांश्च शिरस्येतां तथैव च ॥ दूरादावसन्थामूत्रं पूरीषं च समुत्सृजेत् ॥ ७८ ॥ पादप्रक्षालनं चैव भिन्नभाण्डादिकं च यत् ॥ सर्वमेतत्त्यजेत्प्राज्ञो येन स्यादरिमर्दनम् ॥ ७९ ॥ तण्डुलोदकनिक्षेपं विपरीतं तु कारयेत् ॥ तथैकमनसा कार्यं देवतानां च पूजनम् ॥ ८० ॥ वह्निसंपूजनं चैव न चास्नातेन भार्गव ॥ माल्यानुलेपनादीनि न प्रपद्यात्तु कस्यचित् ॥ ८१ ॥ अन्ये च देवताविप्रगुरूणां भृगुनन्दन ॥ कोविदारगणाशाकं चतुर्थीं पिप्पली तथा ॥ ८२ ॥ वर्जये...न्मांसं सुखार्थी सर्वमेव तु ॥ राजद्विष्टं न कर्तव्यं विरोधं च महाजनैः ॥८३॥ शुष्कवैरं विवादं च प्रयत्नेन विवर्जयेत् ॥ न वसेच्च तथा वासं वास्तुविद्याविगर्हितम् ॥८४॥ आगाराद्याखुघातां च परोच्छिष्टां तथैव च ॥ ऊषराच्चैव वल्मीकान्मृदं शौचे विवर्जयेत् ॥८५॥ येनेच्छेद्विपुलां प्रीतिं तेन सार्धमरिन्दम ॥ न कुर्यादर्थसंबन्धं दारसंदर्शनं तथा॥८६॥आत्माभिष्टवनं निन्दां परस्य च विवर्जयेत्॥ दृढभक्तो भवेन्नित्यं कृतज्ञश्च विशेषतः ॥८७॥इन्द्रियाणां जये योगमातिष्ठेच्च सदा नरः ॥ इन्द्रियाणां जयाच्चैव लोकयोः सुखमाप्नुयात् ॥८८॥ अभिगत्वा तु धर्मज्ञो योगक्षेमार्थमीश्वरम् ॥ गृहं प्रविश्य कुर्वीत स्वाध्यायं सततं बुधः ॥८९॥ अर्थलाभेऽपि महति स्वाध्यायं न समुत्सृजेत् ॥ कुलान्यकुलतां यान्ति स्वाध्यायस्य विवर्जनात् ॥ ९० ॥ यस्तु वर्षशतं पूर्णं त्वरण्ये तपते तपः ॥ ऋचमेकां च योध्येति समौ स्यातां न चाधिकः ॥ स्वाध्यायाऽनन्तरं स्नातः कृतजप्यः समाहितः॥९१॥संपूजनं देववरस्य कुर्यात्तस्याप्रमेयस्य जनार्दनस्य ॥ संपूजनाद्यस्य समस्तयज्ञैः कृतैः फलं शीघ्रमवाप्नुवन्ति ॥ ९२ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं०रामं प्रति पुष्करोपाख्याने आचाराध्यायो नामैकोननवतितमोध्यायः ॥ ८९ ॥

पुष्कर उवाच॥स्वाचान्तः प्रयतः स्नातः प्रविशेद्देवतागृहम् ॥ नमस्कारं तु कुर्वीत तत्र भक्त्या समाहितः॥१॥आपोहिष्ठेति तिसृभिस्ततोऽर्घ्यं विनिवेदयेत् ॥ हिरण्यवर्णा इति च पाद्यं च तिसृभिर्द्विजः ॥ २ ॥ शन्न आप इत्यनेन देयं सौदामनं भवेत् ॥ इदमापः प्रवहत स्नानमन्त्रः प्रकीर्तितः ॥ ॥ ३ ॥ रथे अक्षेषु च तथा चतस्रस्त्वनुलेपने ॥ युवासुवास इति च मन्त्रो वासस ईरितः ॥ ४ ॥ पुष्पं पुष्पवतीत्येव धूपं धूरसि चाप्यथ ॥ तेजोसि शुक्रमसि दीपं दद्याद्विचक्षणः ॥ ५ ॥ दधिक्राव्णो इति तथा मधुपर्कं निवेदयेत् ॥ हिरण्यगर्भ इत्यष्टौ ऋचः प्रोक्ता निवेदने ॥ ६ ॥ अन्नस्य मनुजश्रेष्ठ पानस्य च सुगन्धिनः ॥ चामरव्यजने मात्रां छत्रं यानासने तथा ॥७॥ यत्किञ्चिद्देवमादिः स्यात्सावित्रेण निवेदयेत् ॥ पौरुषं

च जयेत्सूक्तं तदेव जुहुयात्तथा ॥ ८ ॥ अर्चाभावे तथा वेद्यां स्थले पूर्णघटे तथा ॥ नदीतीरेऽथ कमले केशवं पूजयेन्नरः ॥ ९ ॥ सर्वाशुभानां परिघातकारि संपूजनं देववरस्य विष्णोः ॥ कृत्वानघान्क्षिप्रमनुप्रयाति यत्रैक्यतां याति पितामहस्य ॥१०॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० सं० रामं प्रति पुष्करोपाख्याने देवकर्माध्यायो नाम नवतितमोध्यायः ॥९०॥ पुष्कर उवाच॥ नक्तं गृहीतमुदकं देवकर्मणि वर्जयेत् ॥ चन्दनागरुकर्पूरं मृगदर्पं तथैव च ॥ १ ॥ जातीफलं तथा दद्यादनुलेपस्य कारणात् ॥ अतोन्यं नैव दातव्यं किञ्चिदेवानुलेपनम् ॥ २ ॥ दारिद्र्यं पद्मकः कुर्यादस्वास्थ्यं रक्तचन्दनम् ॥ उशीरश्च तु विभ्रंशं मन्ये कुर्युरुपद्रवम् ॥ ३ ॥ न वस्त्रं मलिनं देयं नीलं रक्तं तु यद्भवेत् ॥ तौ दत्त्वा देवदेवाय शोकमाप्नोत्यसंशयम् ॥ ४ ॥ कृत्रिमं तु न दातव्यं तथैवाभरणं द्विज ॥ प्रतिरूपकृतं दत्त्वा क्षिप्रं पुष्टया वियुज्यते ॥ ५ ॥ पुष्पं कण्टकिसंजातं तथा गन्धविवर्जितम् ॥ उग्रगन्धं न दातव्यं त्वन्यदेवगृहोद्भवम् ॥ ६ ॥ श्मशानचैत्यद्रुमजं भूमावशनिपातितम् ॥ कलिका न तु दातव्या देवदेवस्य चक्रिणः ॥ ७ ॥ शुक्लान्यवर्णं कुसुमं न देयं च तथा भवेत् ॥ सुगन्धि शुक्लं देयं स्याज्जातं कण्टकिते द्रुमे॥८॥ दत्त्वा कण्टकिसंभूतं कुसुमं परिभूयते ॥ शुक्लान्यवर्णं दातव्यं कुसुमं कुंकुमस्य यत् ॥ ९ ॥ पद्मोत्पले च धर्मज्ञ तथा वै पीतयूथिकाम् ॥ तथा च वन्यकं दद्याच्चूतकेतकिजं च यत् ॥ १० ॥ रक्ताशोकस्य कुसुममतसीकुसुमं तथा ॥ वृक्षायुर्वेदविद्भिश्च शुक्लं रक्तीकृतं च यत् ॥११॥तद्रक्तमपि दातव्यं बिल्वपत्रं तथैव च ॥ दूर्वाग्रं च तथा देयं पत्रं भृङ्गिरजस्य तु ॥ १२ ॥ पत्राणि च सुगन्धीनि तथा देयानि चक्रिणः ॥ मध्योऽन्यवर्णो यस्य स्याच्छुक्लस्य कुसुमस्य च ॥ १३ ॥ पुष्पं शुक्लं तु तद्विद्यान्मनोज्ञं केशवप्रियम् ॥ बन्धुजीवकपुष्पाणि रक्तान्यपि च दापयेत् ॥ १४ ॥ अनुक्तरक्तकुसुमदानाद्दौर्भाग्यमाप्नुयात् ॥ सुगन्धि दत्त्वा नाप्नोति शुभं वा यदि वाशुभम् ॥ १५ ॥ मृगदर्पं विना किञ्चिदथ चेज्जीवसंभवम् ॥ देवदेवस्य दातव्यं दीपे मज्जानमेव वा ॥ १६ ॥ नीलां रक्तां दशां दीपे प्रयत्नेन विवर्जयेत् ॥ अन्या च दीपमात्रं तु तथा वर्ज्यं प्रयत्नतः ॥१७॥ कृष्णागरुस्तथा देवधूपं देवस्य यत्नतः ॥ अभक्षं चाप्यहृद्यं च नैवेद्यं न निवेदयेत् ॥ १८ ॥ केशकीटावपन्नं च नखांशविहितं च यत् ॥ मूषिकालांगलोपेतमवधूतमवक्षतम्॥१९॥ न भक्ष्यमन्नमक्षीरं माहिषं क्षीरमेव च ॥ वराहमत्स्यमांसं च मांसं पञ्चनखस्य च ॥ दुरामोदौ तथा वर्ज्यौ देवकर्मणि पंडितैः॥२०॥ निवेश्य चित्तं पुरुषोत्तमस्य भक्तिं समास्थाय तथा विशुद्धाम् ॥ करोति श्रद्धां सततं यथोक्तां स याति लोकं मधुसूदनस्य ॥२१॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं० रामं प्रति पुष्करोपाख्याने पुष्पादिदेयादेयकथनन्नामैकनवतितमोऽध्यायः ॥ ९१ ॥ पुष्कर उवाच ॥

ततोऽग्निशरणं गत्वा स्मार्तेऽग्नौ विधिपूर्वकम् ॥ वैश्वदेवं तु कर्तव्यं हुतोत्सृष्टं तु लौकिके ॥ १ ॥ यत्र क्वचन वा राम दीप्यमानेऽथ चोदके ॥ परिसमूह्य पर्युक्ष्य परिस्तीर्य परिस्तरेत् ॥ २ ॥ सर्वान्नमग्नावुद्धृत्य जुहुयात्प्रयतस्ततः ॥ वासुदेवाय देवाय प्रभवे नाप्ययेन च ॥ ३ ॥ अग्नये चैव सोमाय मित्राय वरुणाय च ॥ इन्द्राय च महाभाग इन्द्राग्निभ्यां तथैव च ॥ ४ ॥ विश्वेभ्यश्चैव देवेभ्यः प्रजानां पतये तथा ॥ अनुमत्यै तथा राम धन्वंतरिण एव च ॥ ५ ॥ वास्तोष्पत्यै तथा देव्यै ततः स्विष्टिकृतेऽग्नये ॥ चतुर्थ्यन्तेन नत्वा च हुत्वैतेभ्यो बलिं हरेत् ॥ ६ ॥ तक्षोपतक्षावभितः पूर्वेणाग्निमतः परम् ॥ अम्बानामासि धर्मज्ञ दुर्गा नामानि चाप्यथ ॥ ७ ॥ निवन्ती च पनीका च प्रभवन्ती तथैव च ॥ मेघवन्ती च नामासि सर्वेषामेव भार्गव॥८॥आग्नेयाद्या क्रमेणाथ ततः सूक्तिषु निक्षिपेत् ॥ निर्दित्यै वसुभाग्यै च सुमङ्गल्यै च भार्गव ॥ ९॥ भद्रंकर्यै ततो दत्त्वा स्थूणायै च तथा श्रियै ॥ हिरण्यकेश्यै च तथा वनस्पतय एव च ॥१०॥धर्माधर्माभ्यां च द्वारे गृहमध्ये ध्रुवाय च ॥ मृत्यवे च बहिर्दद्याद्वरुणायोदकाशये॥११॥ भूतेभ्यश्च बहिर्दद्याच्छरणे धनदाय च ॥ इन्द्रायेन्द्रपुरुषेभ्यो दद्यात्पूर्वेण मानवः ॥ १२ ॥ यमाय तत्पुरुषेभ्यो दद्याद्दक्षिणतस्ततः ॥ वरुणाय तत्पुरुषेभ्यो दद्यात्पश्चिमतस्ततः ॥ १३ ॥ सोमाय सोमपुरुषेभ्य उदग्दद्यादनन्तरम् ॥ ब्रह्मणे ब्रह्मपुरुषेभ्यो मध्ये दद्यात्तथैव च ॥ १४ ॥ आकाशे च तथैवोर्ध्वं स्थण्डिले च तथा क्षितौ ॥ दिवाचरेभ्यश्च दिवा रात्रौ रात्रिंचराय च ॥ १५ ॥ बलिं बहिस्तथा दद्यात्सायं प्रातस्तु प्रत्यहम् ॥ पिण्डनिर्वापणं कार्यं सायं प्रातर्न कारयेत् ॥ १६ ॥ पित्रे तु प्रथमं पिण्डं तत्पित्रे तदनन्तरम् ॥ ततो दद्याच्च तत्पित्रे मात्रे च तदनन्तरम् ॥ १७ ॥ पितृमात्रे ततो दद्याच्छ्वश्रवै तदनन्तरम् ॥ दक्षिणाग्रेषु दर्भेषु सलिलेषु विशेषतः ॥ १८ ॥ यत्किञ्चित्पच्यते गेहे भक्ष्यं वा भोज्यमेव वा ॥ निवेदयेच्च तत्सर्वं शुभं पानं विशेषतः ॥ १९ ॥ पुष्पैर्धूपेन दीपेन पूजयेत्सततं पितॄन् ॥ नामगोत्रे सदा वाच्ये पिण्डनिर्वापणे तथा ॥ २० ॥ पिण्डं दद्याच्च काकानां तत्र मन्त्रमिमं पठेत् ॥ ऐन्द्रा वरुणवायव्या याम्या वै नैर्ऋतास्तथा ॥ २१ ॥ ते काकाः प्रतिगृह्णन्तु इमं पिण्डं मयोद्धृतम् ॥ ततः पिण्डं शुनां दद्यान्मन्त्रं तत्र निबोध मे ॥२२ ॥ वैवस्वतकुले जातौ द्वौ श्यामशबलौ शुनौ ॥ ताभ्यां पिण्डं प्रदास्यामि पथि रक्षन्तु मां सदा ॥ २३ ॥ ततो ग्रासं गवां दद्यादत्र मन्त्रं निबोध मे ॥ सौरभेय्यः सर्वहिताः पवित्राः पापनाशिनीः ॥२४॥ प्रतिगृह्णन्तु मे ग्रासं गावस्त्रैलोक्यमातरः ॥ ततः स्वस्त्ययनं कार्यं भिक्षा देया च भिक्षवे ॥२५॥ दत्त्वा तु

१ आर्षत्वात्साधुः ।

संस्कृतां भिक्षां गोदानफलमाप्नुयात् ॥ बालः सुवासिनी वृद्धा गर्भिण्यातुरकन्यकाः॥२६॥ भृत्याँश्च भोजयेद्राम पूजयित्वा तथातिथीन् ॥ नैकग्रा मीणमतिथिं विद्यान्नाब्राह्मणं तथा ॥२७॥ अतिथिं भोजयेत्पूर्वं ततो भृत्यांश्च पूजयेत् ॥ राजन्यमथवा वैश्यं शूद्रं वा द्विजसत्तम ॥२८॥ वैश्वदेवे च संप्राप्ते भृत्यैः सह च भोजयेत्॥ वयोभ्यश्च तथा दद्याच्चण्डालेभ्यस्तथा भुवि॥२९॥ साधारणं तत्सर्वेषां शेषकं गृहिणां गृहे ॥ वैश्वदेवे च संप्राप्ते न कथंचिदवमानयेत् ॥३०॥आदाय सुकृतं याति भग्नाशश्चातिथिर्गतः ॥ अध्वना यस्तु भग्नाय ब्राह्मणाय तथा दिवि॥३१॥ सत्कृत्य भोजनं दद्यात्तेन स्वर्गे महीयते ॥ देवा ब्राह्मणरूपेण चरन्ति पृथिवीमिमाम् ॥ ३२ ॥ तस्मात्संप्राप्तमतिथिं प्रयत्नेन तु पूजयेत् ॥ अतिथिं पूजयेच्चाग्रे दशगोदफलं लभेत्॥३३॥ पादशौचं ततो दत्त्वा प्राप्तायातिथये गृहे ॥ गोदानफलमाप्नोति दत्त्वा चैव तथासनम् ॥३४॥ प्रतिश्रयप्रदानेन नाकपृष्ठे महीयते ॥ तालवृन्तानिलं कृत्वा तथा प्राप्ताय मानवः ॥३५॥ गोदानफलमाप्नोति वायुलोकं स गच्छति ॥ तालव्यजनहस्तस्तु कृत्वा तदभिचारणम्॥३६॥ अतिथिर्भोजने प्राप्ते गोदानफलमाप्नुयात् ॥ शीताहतातिथिं प्राप्य काष्ठान्प्रज्वालयेन्नरः ॥ ३७ ॥ प्रतापयेन्महाभाग दशधेनुफलं लभेत् ॥ काया ग्निदीप्तिमाप्नोति प्राकाश्यं परमं तथा ॥ ३८ ॥ तृष्णार्तायोदकं दत्त्वा पाने गोदानमाप्नुयात् ॥ श्रान्तसंवाहनं कृत्वा धेनुदानफल लभेत् ॥ ३९ ॥ रोगिणः परिचर्यां च कृत्वा दशगुणं लभेत् ॥ पादाभ्यंगं नरः कृत्वा प्राप्तायातिथये गृहे ॥४०॥गोदानफलमाप्नोति नागलोकं च गच्छति॥प्रतिश्रयं तथा दीनं दत्त्वा चातिथये नरः॥४१॥ धेनुदानफलं प्राप्य सूर्यलोके महीयते ॥ चक्षुष्मांश्च प्रकाशांश्च विरोधश्चैव जायते ॥४२॥ शयनीयप्रदानेन वसुदानफलं लभेत् ॥ दन्तकाष्ठप्रदानेन सौभाग्यं महदाप्नुयात्॥४३॥शौचोदकप्रदानेन गोदानफलमाप्नुयात् ॥ मृत्प्रदानेन धर्मज्ञ विरोधो नाभिजायते॥४४॥दत्त्वानुलेपनं मालां परां लक्ष्मीमुपासते ॥ तथौषधिप्रदानेन विरोगस्त्वभिजायते ॥ ४५ ॥ स्नानाभ्यङ्गप्रदानेन रूपवानभिजायते ॥ तथा स्नानीयदानेन गन्धर्वैः सह मोदते ॥ ४६ ॥ स्नानोदकप्रदानेन वारुणं लोकमाप्नुयात् ॥ उपानहः प्रदानेन विमानमधिरोहति ॥ ४७ ॥ तथा छत्रप्रदानेन गाणपत्यमवाप्नुयात् ॥ वस्त्रप्रदानाद्भवति रूपवान्सुभगस्तथा ॥ ४८ ॥ अश्वमेधमवाप्नोति तथा भूमिप्रदो नरः ॥ यानदः स्वर्गमाप्नोति पौण्डरीकपदं तथा ॥४९॥ वारिधानीस्तथा दत्त्वा पूर्णाः शीतेन वारिणा ॥ सर्वा सभक्षाः प्राप्नोति गोलोकं मानुषोत्तम ॥ ५० ॥ त्रपुषैर्वारुकायुक्तैः शर्कराघृतसंयुतैः ॥ सक्तुभिर्लवणोपेतैर्घृतैर्हरितसंयुतैः ॥ ५१ ॥ तर्पयित्वातिथिं सम्यग्वारिधान्यैश्च गोरसैः ॥ गोलोकं चिरमाप्नोति नात्र कार्या विचारणा ॥ ५२ ॥ तृप्तिमाप्नोति च तथा यत्रयत्राभिजायते ॥ किमिच्छकेन संयोज्य चाश्वमेधफलं लभेत् ॥ ५३ ॥ तांबूलस्य

प्रदानेन गन्धर्वैः सह मोदते ॥ उतिमासावृतं कृत्वा स्वर्गलोके महीयते ॥ ५४ ॥ इतिहासानथाश्राव्य गोदानफलमाप्नुयात् ॥ गोप्रदानेन वित्तेन तोषयित्वा तथातिथिम् ॥ ५५ ॥ महत्फलमवाप्नोति गन्धर्वैः सह मोदते ॥ अनुव्रज्यातिथिं राम गोदानफलमाप्नुयात् ॥ ५६ ॥ तस्मात्सर्वप्रयत्नेन पूजयेदतिथिं सदा ॥ राजन्या विप्रदैवत्या नार्यश्च पतिदेवताः ॥ गृहस्थोऽतिथिदैवत्यस्तस्मात्तं पूजयेत्सदा ॥५७॥ सततमिह नरो यः पूजनं चातिथीनां तृणजलमृदुवाक्यैः सारशक्त्या विदध्यात् ॥ सुरसदसि स पूज्यो देवतानां तथा स्याद्भवति च नरलोके जायमानः समृद्धः ॥ ॥ ५८ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० सं० रामं प्रति पुष्करवाक्ये वैश्वदेवकथनन्नाम द्विनवतितमोऽध्यायः ॥ ९२ ॥ छ ॥

पुष्कर उवाच ॥ चन्द्रस्य यदि वा भानोर्यस्मिन्नहनि भार्गव ॥ ग्रहणं तु भवेत्तत्र न पूर्वं भोजनक्रिया ॥ १ ॥ नाचरेत्सग्रहे तस्मिंस्तथैवास्तमुपागते ॥ यावत्स्यादुदयं तस्य नाश्नीयात्तावदेव तु ॥२॥ गोब्राह्मणश्चोपरागे न चाश्नीयात्प्रयत्नतः ॥ न राज्ञो विप्लवेऽश्नीयात्सुरार्चाविप्लवे तथा ॥ ॥ ३ ॥ न हुत्वा न च दत्त्वा च नाशौचे न च गर्हितम् ॥ नापथ्यं न च बालानां तथा भार्गव पश्यताम् ॥ ४ ॥ प्रार्थितं बालकानां च दातव्यं स्यात्प्रयत्नतः ॥ बालानां प्रार्थितं दत्त्वा नाकलोके महीयते ॥ ५ ॥ बालका लालनीयाश्च धर्मकामैः सदा नरैः ॥ तेषां भोज्यप्रदानेन गोदानफलमाप्नुयात् ॥ ६ ॥ तेषां क्रीडनकं दत्त्वा मोदते नन्दने चिरम् ॥ आह्लादं यान्ति सततं यस्मिन्दृष्ट्वा तु बालकाः ॥ ७ ॥ सौभाग्यं महदाप्नोति यत्रयत्राभिजायते ॥ तस्मात्सर्वप्रयत्नेन बालानग्रे तु भोजयेत् ॥८॥ अभुक्तवत्सु बालेषु न चाश्नीयात्कथञ्चन ॥ यो न दद्यान्न चाश्नीयात्कदाचिदपि तन्मयम् ॥ ९ ॥ य एको मिष्टमश्नाति न ततोऽन्योऽस्ति पातकी ॥ नैकवासास्तथाश्नीयाद्भिन्नभाण्डे न मानवः ॥ १० ॥ भिन्नासनोपविष्टश्च शयनीयगतस्तथा ॥ अनार्द्रपाणिपादान्तस्तथा चैवार्द्रमस्तकः ॥ ११ ॥ नोत्सङ्गे भक्षयेद्भक्ष्यान्न पाणौ लवणं तथा ॥ सक्तुदानं पृथक्पानं मांसेन पयसा निशि ॥ १२ ॥ दन्तच्छेदनमुष्णं च सप्तकन्तु सुवर्जयेत् ॥ दधि रात्रौ न चाश्नीयाज्जलन्नाञ्जलिना पिबेत् ॥ ॥ १३ ॥ सर्वं तैलसमृद्धं च नाद्यादस्तमिते रवौ ॥ वर्जनीया दिवा धानाः कोविदारः सदैव तु ॥ १४ ॥ दिवा धानाः स्वरं हन्ति रात्रौ च दधिसक्तुषु ॥ अलक्ष्मीः कोविदारेषु नित्यमेव कृतालया ॥ १५ ॥ निःशेषकृत्तथा राम न स्यादन्यत्र माक्षिकात् ॥ क्षीरस्य राम सक्तूनां पाथसस्योदकस्य च ॥ १६ ॥ शेषं तु कार्यमन्यस्य न तु निःशेषकृद्भवेत् ॥ शूद्राय दद्यान्नोच्छिष्टं नोच्छिष्टश्च घृतं स्पृशेत् ॥ १७ ॥ मूर्धानं न स्पृशेद्राम न स्पृशेच्च हुताशनम् ॥ नानुकुत्सा च कर्तव्या सुमनास्तन्मनास्तथा ॥ १८ ॥ भुञ्जीत प्रयतो भूत्वा दिशश्चानवलोकयन् ॥ वामहस्तेन पानीयं

पीतोच्छिष्टं तथैव च ॥ १९ ॥ न पिबेन्न तथाश्नीयात्कृत्वा पर्यस्तिकं नरः ॥ पादप्रसारणं कृत्वा न च वेष्टितमस्तकः ॥ २० ॥ आचम्य तु ततः कार्यं दन्तकाष्ठस्य भक्षणम् ॥ भूयोऽप्याचम्य कर्तव्यं ततस्ताम्बूलधारणम् ॥२१ ॥ श्रवणं चेतिहासस्य ततः कुर्यात्समाहितः ॥ शास्त्रान्वेषा च कर्तव्या ततः सम्यग्भृगूत्तम ॥ २२ ॥ शास्त्रान्ववेक्षणं कृत्वा कृत्वा चंक्रमणं ततः ॥ उपास्य पश्चिमां सन्ध्यां तिष्ठेत्प्रयतमानसः ॥ २३ ॥ पूर्वां सन्ध्यां जपंस्तिष्ठेदुपविष्टश्च पश्चिमाम् ॥ अर्क्कस्योदयनात्तावद्यावद्भास्करदर्शनम् ॥ २४ ॥ पूर्वां सन्ध्यां जपेत्स्नातः पश्चिमां सति भास्करे ॥ उपविष्टो जपेत्तावद्यावत्तारकदर्शनम् ॥ २५ ॥ सम्पूजनं देववरस्य कृत्वा ततश्च कुर्यात्खलु वैश्वदेवम् ॥ भुक्त्वा ततोऽन्नं लघु यच्च हृद्यं ततः स्वपेद्भार्गववंशमुख्य॥२६ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं०रामं प्रति पुष्करोपाख्याने भोजनविधिर्नाम त्रिनवतितमोध्यायः ॥९३॥ पुष्कर उवाच॥शून्यालये श्मशाने वानेकवृक्षे चतुष्पथे ॥ महादेवगृहे वापि मातृवेश्मनि वा स्वपेत्॥१॥न यक्षनागायतने स्कन्दस्यायतने तथा॥ कूलच्छायासु च तथा शर्करालोष्टपांसुषु ॥२॥ प्रस्वपेच्च तथा दर्भे विना दीक्षां व्रतं न च ॥धान्यगोदेवविप्राणां गुरूणां च तथोपरि ॥ ३ ॥ न चापि भिन्नविषये नाशुचौ नाशुचिस्तथा ॥ नार्द्रपादश्च नग्नश्च नोत्तरापरमस्तकः ॥४॥ नाकाशे सर्वतः शून्ये न च चैत्यद्रुमे तथा ॥ न गच्छेद्गुर्विणीं नारीं न गच्छेत्सितमूर्धजाम् ॥५॥ रजस्वलां रोगवतीं नायोनौ न बुभुक्षितः ॥ नाभ्यक्तो न तथाभ्यक्तां न च पर्वणि भार्गव ॥ शुक्रमोक्षमथाकाशे तिर्यग्योनौ च वर्जयेत् ॥६॥एवं सदा यः कुरुते नृवीर सम्यग्यथोक्तं सुमनास्तरस्वी ॥ तस्याशु पापं विलयं प्रयाति श्रियं च मुख्यां लभते सुखं च ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं० रामं प्रति पुष्करोपाख्याने आचारकथनन्नाम चतुर्नवतितमोऽध्यायः ॥९४॥ पुष्कर उवाच ॥ वैवाहिकेऽग्नौ कुर्वीत कर्म स्मार्तं सदा गृही ॥ दायकालाहृते वापि पितुर्मरणकालिके ॥ १ ॥ मातुर्वा भृगुजश्रेष्ठ श्रौतं वैतानिकाग्निषु ॥ देवतानां पितॄणां च ऋषीणां च तथा नरः ॥ २ ॥ ऋणवाञ्जायते यस्मात्तन्मोक्षे प्रयतेत्सदा ॥ देवानामनृणो जन्तुर्यज्ञैर्भवति मानद ॥ ३ ॥ स्वल्पवित्तश्च पूजाभिरुपवासैर्व्रतैस्तथा ॥ श्राद्धेन पूजया चैव पितॄणामनृणो भवेत् ॥ ४ ॥ ऋषीणां ब्रह्मचर्येण श्रुतेन तपसा तथा ॥ हुतं चैवाहुतं चैव निर्वाप्यं प्रहुतं तथा ॥ ५ ॥ प्राशितं च महाभाग पञ्चयज्ञान्न हापयेत् ॥ हुतमग्नौ विजानीयादहुतं बलिकर्म यत् ॥६ ॥ पिण्डनिर्वापणं राम निर्वाप्यं परिकीर्तितम् ॥ प्रहुतं च यथायज्ञं पितृयज्ञं तथैव च ॥ ७ ॥ प्राशनं च तथा प्रोक्तं यद्भुक्तं तदनन्तरम् ॥ पञ्चयज्ञान्सदा कुर्याद् गृही पापापनुत्तये ॥ ८ ॥ देवयज्ञं भूतयज्ञं पितृयज्ञं तथैव च ॥ मानुष्यमृषियज्ञं च कुर्यान्नित्यमतन्द्रितः ॥ ९ ॥

देवयज्ञं हुतं विद्याद्भूतयज्ञं बलिक्रिया ॥ पितृयज्ञं तथा पिण्डैर्ऋषियज्ञं च भार्गव ॥ १० ॥ स्वाध्यायसेवा विज्ञेया तथै
वातिथिपूजनम् ॥ मनुष्ययज्ञो विज्ञेयः पञ्चयज्ञान्न हापयेत् ॥ ११ ॥ विष्णुं यजेत्तथा देवं हविर्यज्ञैश्च सप्तभिः ॥ अग्न्याधानं
महाभाग तथाग्निहवनक्रिया ॥ १२ ॥ दर्शं च पौर्णमासं च चातुर्मास्यं तथैव च ॥ द्विराग्रहायणेष्टिश्च पाके च यवधान्ययोः ॥१३॥ विरूढा
पशुबन्धश्च तथा सौत्रामणिर्द्विजः ॥ सप्तभिः सोमसंस्थाभिर्यजेद्देवं सनातनम् ॥ १४ ॥ अग्निष्टोमं महाभाग चात्यग्निष्टोममेव च ॥ उक्थं च
पावनीं चैव प्रतिरात्रं तथैव च ॥ १५ ॥ वाजपेयश्च धर्मज्ञ आप्तोर्यामं तथैव च ॥ अन्यैश्च विविधैर्यज्ञैः पौण्डरीकादिभिस्तथा ॥ १६ ॥
गोसवेनाश्वमेधेन राजसूयेन वा पुनः ॥ तथा पुरुषमेधेन सर्वमेधेन भार्गव ॥ १७ ॥ अन्यैश्च विविधैर्यज्ञैर्नामकल्पोचितैस्तथा ॥ यजनं
देवदेवस्य वासुदेवस्य कारयेत् ॥ १८ ॥ यज्ञो विष्णुर्महातेजा यजमानः स एव हि ॥ त एव यज्ञपात्राणि यज्ञद्रव्याणि यानि च ॥ १९ ॥ तं
यजेत्सततं राम सर्वदेवमयं हरिम् ॥ सत्येन वै यजेद्देवं प्रत्यब्दं मुनिपुङ्गव ॥ २० ॥ पशुप्रत्ययनं कुर्याच्चातुर्मासिकमेव च ॥ इष्टिं वैश्वा
नरीं कुर्यात्तथा स्वल्पधनो नरः ॥ २१ ॥ अत्येवाल्पे धने सोमं पिबेद्भार्गवसत्तम ॥ आयुः पुत्रान्यशो मेधां धनमन्त्रगणं तथा ॥ २२ ॥
हन्त्यल्पदक्षिणो यज्ञस्तस्मान्नाल्पधनो यजेत् ॥ यस्य त्रैवार्षिकं भक्तं पर्याप्तं भृत्यतृप्तये ॥ २३ ॥ अधिकं वापि विद्येत स सोमं पातुमर्हति ॥
प्राजापत्यमदत्त्वा च अग्न्याधेयस्य दक्षिणा ॥ २४ ॥ अनाहिताग्निर्भवति ब्राह्मणो विभवे सति ॥ सर्वदेवमयो विष्णुः प्रत्यहं तस्य पूजनम् ॥ २५ ॥
प्रतिमायामपि तथा कर्तव्यं भृगुसत्तम ॥ विष्णुमेवाभिजानन्ति सर्वयज्ञेषु वै द्विजाः ॥ २६ ॥ पायसैः सुमनोभिश्च तस्यापि यजनं स्मृतम् ॥
तत्तद्देवनिकायेषु तथैव स्वयमेव वा ॥ २७ ॥ पूजा कार्या बहिर्वेदौ श्रद्धया भृगुनन्दन ॥ नत्वल्पदक्षिणैर्यज्ञैर्यजेतेह कदाचन ॥ २८ ॥ विष्णु
देवनिकायस्थं यथाश्रद्धमरिन्दम ॥ तपसा पूजयेन्नित्यं तस्मादल्पधनो नरः ॥ २९ ॥ संपूज्य देवं परमान्नगन्धैर्धूपैः सुगन्धैश्च फलैश्च मुख्यैः ॥
तस्मादवाप्नोति स सर्वयज्ञांस्तस्मात्प्रपूज्यः सततं महात्मा ॥३०॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं०रामं प्रति पुष्करोपाख्याने गृहस्थधर्म
वर्णनन्नाम पञ्चनवतितमोऽध्यायः ॥ ९५ ॥ राम उवाच ॥ कर्माणि श्रोतुमिच्छामि काम्यानि गृहिणामहम् ॥ त्वत्तः समस्तधर्मज्ञ यादोगण
नृपात्मज ॥ १ ॥ पुष्कर उवाच ॥ कृतोपवासो याम्यर्क्षे सोपवासस्य भार्गव ॥ पुरोधाः स्नपनं कुर्यात्कृत्तिकासु यथाविधि ॥२॥ अकालमूलैः कल
शैर्मृन्मयैरथ काञ्चनैः ॥ उज्ज्वलैर्लक्षणैः पूर्णैस्तथा तीर्थोदकैः शुभैः ॥ ३ ॥ अग्निमन्थशिरीषाणां न्यग्रोधाश्वत्थयोरपि ॥ पत्रपूर्णैस्तथा

युक्तैस्तिलैः कृष्णैर्द्विजोत्तम ॥ ४ ॥ वह्निं कुमारं शशिनं खङ्गं वरुणमेव च ॥ पूजयेत्कृत्तिकाश्चैव गन्धमाल्यान्नसम्पदा ॥ ५ ॥ पीतरक्तैस्तथा वर्णैर्वृतदीपैस्तथैव च ॥ दध्ना गव्येन लाजाभिरग्निमन्थेन चाप्यथ ॥ ६ ॥ कृसरोल्लोपिकाभिश्च अपूपैश्च पृथग्विधैः ॥ देवतानां यथोक्तानां प्रियङ्गुं जुहुयात्ततः ॥ ७ ॥ चन्दनञ्च मयूराणां लोमानि मनुजोत्तम ॥ अग्निमन्थगृहाद्धूमं कृत्वा रुक्माङ्गदं मणिम् ॥ ८ ॥ धारये द्दक्षिणां दद्याच्छक्त्या कनकमेव च ॥ श्वेतवासास्ततः पश्चात्पूजयेन्मधुसूदनम् ॥ ९ ॥ कर्मैतत्सततं कृत्वा वह्न्याधानमथाप्नुयात् ॥ कर्मैतदुक्तं रिपुनाशकारि सर्वाग्निकर्मप्रसमृद्धिदं च ॥ धन्यं यशस्यं च तथैव काम्यं नित्यं कृतं धर्मविदां वरिष्ठ ॥ १० ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयकाण्डे मा० सं० रामं प्रति पुष्करोपाख्याने कृत्तिकास्नानवर्णनन्नाम षण्णवतितमोऽध्यायः ॥ ९६ ॥ राम उवाच ॥ अग्न्याधानमथाप्नोति शत्रुनाशमथापि वा ॥ स्वेच्छया कर्मणा केन सदा यादोनृपात्मज ॥ १ ॥ शत्रुनाशकरं कर्म कथयस्व ततः परम् ॥ तदहं श्रोतुमिच्छामि तत्र श्रद्धा सदा मम ॥ २ ॥ पुष्कर उवाच ॥ कृतोपवासो याम्यर्क्षे कृत्तिकासु सदैव तु ॥ पूजयेद्वासुदेवं तु कुङ्कुमेन सुगन्धिना ॥३॥ रक्तैश्च कुसुमैर्हृद्यैर्धूपं दद्याच्च गुग्गुलम् ॥ घृतेन दीपं दद्याच्च रक्तवर्णं तथैव च॥४॥ निवेदनीयं देवाय तथा सर्वं निवेदयेत् ॥ होतव्यं सुसमिद्धेऽग्नौ तथैवात्र शुभं हविः ॥ आयुधानि च देयानि ब्राह्मणेभ्यश्च दक्षिणा ॥५ ॥ कर्मैतदुक्तं रिपुनाशकारि धार्यं सदा शत्रुगणप्रमाथि ॥ कृत्वैतदग्र्यं रिपुनाशमाशु प्राप्नोति मर्त्यो न हि संशयोऽत्र ॥ ६ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं० रामं प्रति पुष्करोपाख्याने शत्रुनाशकर्मवर्णनन्नाम सप्तनवतितमोऽध्यायः ॥ ९७ ॥ राम उवाच ॥ काम्यानि त्वं समाचक्ष्व स्नानान्यन्यानि देवज ॥ केन स्नानेन धर्मज्ञ कं कं काममवाप्नुयात् ॥१॥ पुष्कर उवाच ॥ पुरोधाः सोपवासस्तु सर्वस्नानानि कारयेत् ॥ सोपवासस्य धर्मज्ञ तथा सर्वत्र मानवः ॥ २ ॥ अकालमूलाः कलशाः कार्याः सर्वेषु भार्गव ॥ पूजा चन्द्रमसः कार्या वरुणस्य तथैव च ॥ ३ ॥ नक्षत्रदेवतानां च नक्षत्रस्य तथैव च ॥ सर्वगस्याप्रमेयस्य वासुदेवस्य चाप्यथा॥४॥येषां च पूजा कर्तव्या तेषां च जुहुयाद्धविः ॥ काम्यं स्नानं सदा कुर्यान्नक्षत्रं तु न लंघयेत् ॥ मन्त्रयेत्स्नानकलशं मन्त्रेणानेन भार्गव ॥५ ॥ मन्त्रः—"आपः सोमाद्याः संबभूवुः पवित्राग्निः पावनः सोमसूर्यसंस्थिता वायुना नष्टदोषाश्च यो नित्यमच्छ्रेयसे सत्कृत्याप्सु स्युः स्वाहा शान्तिः श्रीर्नवपुष्टिर्मह्यं भूयासं सर्वशिरः ॥ साधुस्वाहेति सूर्यः संस्थिता वायुनामाष्टदोषा ॥" कर्मैतदुक्तं रिपुनाशकारि साधारणं स्नानमिदं पवित्रम् ॥ अतः परं ते कथयामि राम स्नानानि काम्यानि सुखप्रदानि ॥ ६ ॥ इति श्रीविष्णुधर्मोत्तरे

द्वितीयखण्डे मा०सं० रामं प्रति पुष्करोपाख्याने साधारणस्नानवर्णनन्नामाष्टनवतितमोऽध्यायः ॥ ९८ ॥ पुष्कर उवाच ॥ कृत्तिकास्नान सुक्तं ते वह्निकर्मप्रसाधनम् ॥ तथारिनाशनं मुख्यं वह्नचाध्येयप्रदं तथा ॥ १॥ रोहिणीषु तथा स्नानं प्रोक्तं पुत्रप्रदं तव ॥ ब्रह्मवर्चसकामस्य स्नानं सौम्यमिदं शृणु ॥ २ ॥ पूर्णमौदुम्बरैः पत्रैः कृत्वा राम घटत्रयम् ॥ पूर्णचन्द्राङ्कितैः शुक्लैः सूत्रमाल्यैरलंकृतम् ॥ ३ ॥ तेन संस्नापितः पश्चात्क्षौम वासा यथाविधि ॥ देवतापूजनं कृत्वा घृतं हुत्वा हुताशने ॥ ४ ॥ ओङ्कारपूतं सोमाय क्षीरं हुत्वा तथा जले ॥ निवेदनीयं सोमाय तथा पिष्टमृग त्रयम् ॥ ५ ॥ मृगशृङ्गेण धूपं च तथा दद्यादनन्तरम् ॥ सोमेन च मणिर्धार्यो जातरूपपरिष्कृतः ॥ ६ ॥ दक्षिणा चात्र दातव्या शुभधेनुः पयस्वि नी ॥ कृत्वा तन्नित्यमाप्नोति ब्रह्मवर्चसमुत्तमम् ॥ ७ ॥ घृताभ्रमधुपूर्णेन स्नातः कुम्भेन मानवः ॥ पद्विशालंकृतेनाथ रक्तचन्दनवारिणा ॥ ८ ॥ रुद्राय मांसं रुधिरं तथा च मधु पायसम् ॥ कृष्णानि वासांसि तथा धूपं गुग्गुलमेव च ॥९॥ दद्याद्घृतेन च तथा होमो मन्त्रैर्विधीयते ॥ कृष्णानि वासांसि तथा दातव्या दक्षिणा भवेत् ॥ १० ॥ मेषाश्वनरलोमानि गर्दभस्य विशेषतः ॥ आयसी तु मणौ कृत्वा द्वारि शत्रोर्निधापयेत् ॥ ११ ॥ आर्द्रास्नानमिदं राम सर्वशत्रुविनाशनम् ॥ सर्वगन्धैः फलैर्बीजैः पूर्णं कृत्वा घटत्रयम् ॥ १२ ॥ स्नापनं तेन कर्तव्यमादित्यैस्तदनन्तरम् ॥ नव नीतं च कुल्माषं मत्स्यांश्चैव स्वरांस्तथा ॥ १३ ॥ निवेदयेच्चैव तथा मत्स्यानि सुरभीणि च ॥ घृताक्षताभ्यां धूपेन होमश्चैव विधीयते ॥ १४ ॥ तद्दिने तु नदी यत्र योगे गच्छतु तां मुदा ॥ सुवर्णरूप्यगन्धश्च धारणीयस्तथा मणिः ॥ १५ ॥ दक्षिणा चात्र दातव्या राम धेनुः पयस्विनी ॥ स्नातः पुनर्वसावेव ज्ञातिश्रैष्ठ्यमवाप्नुयात् ॥ १६ ॥ पुत्रान्वा सुमहाभाग यदीच्छति तदाप्नुयात् ॥ गौरसर्षपकल्केन रामोत्सादितविग्रहः ॥१७॥ गव्याज्यपूर्णकुम्भेन स्नातः स्नातस्तथौषधैः ॥ अहताम्बरसंवीतः पायसं विनिवेदयेत् ॥ १८ ॥ शुक्लानि चैव माल्यानि वासांस्यपहतानि च ॥ होमश्च पायसेनात्र धूपं गन्धैश्च दापयेत् ॥ १९ ॥ मणिः शिरसि धार्यश्च दण्डाग्रे ब्रह्मचारिणः ॥ सुवर्णगर्भं पुष्पेण स्नानं पुष्टिकरं भवेत् ॥२०॥ दक्षिणा चात्र दातव्या घृतं कनकसंयुतम् ॥ षड्ध्वजां नीलसूत्रेण नीलपुष्पैश्च वेष्टिताम् ॥ २१ ॥ सर्षपान्वेष्टयेद्राम नागपुष्पेण भूरिणा ॥ वल्मीकानां सहस्तस्य तथैवाग्रमृदा द्विजः॥२२॥तैः स्नातः सर्वनागेभ्यो मधुलाजां निवेदयेत्॥गन्धोदकं तथा धानाः षट्कृत्वाथ पुनःपुनः॥२३॥ क्षीरेण होमः कर्तव्यो धूपः सर्वत्वचा तथा ॥ सर्पत्वङ् नागपुष्पं च सुवर्णं च मणिर्भवेत् ॥ २४ ॥ दक्षिणा चात्र दातव्या शयनीयं मनोहरम् ॥ स्नानं सार्पेण ते प्रोक्तं भोग्यं सिद्धिकरं भवेत् ॥२५॥ श्रीप्रदं वा महाभाग कथितं कामतस्तव ॥ प्लक्षपत्रैस्तिलैः कृष्णैर्वटषट्कं तु पूरयेत् ॥२६॥

वेष्टयेत्कृष्णमाल्यैश्च तेन स्नातोऽहताम्बरः ॥ दक्षिणाग्रेषु दर्भेषु सप्तपिण्डानुपाहरेत् ॥ २७ ॥ सुभास्वरो बर्हिषदो ह्यग्निष्वात्तास्तथैव च ॥ क्रव्याद श्चोपहूताश्च आज्यपाश्च सुकालिनः ॥ २८ ॥ पितरः कथितास्तेषां पिण्डं दद्यात्क्रमेण च ॥ धूपं व्रीहियवैर्दद्यात्तिलैर्होमं तु कारयेत् ॥ २९ ॥ दातव्या दक्षिणा चात्र तिलान्नजंतमेव च ॥ वचा च कोरकं चैव त्रिवृतं धारयेन्मणिम् ॥ ३० ॥ पितृप्रसादं प्राप्नोति कर्मसिद्धिमथापि च ॥ मघास्नानमिदं कृत्वा नित्यमेव समाहितः ॥ ३१ ॥ माक्षिकं च मधूकं च तथैव मधुयष्टिकाम् ॥ कृत्वा कुम्भद्वयं पूर्णं भग्नाङ्गः स्नापयेन्न रम् ॥ ३२ ॥ शालिपिष्टं ततः स्नातो घृतेन मधुना युतम् ॥ गन्धमाल्यं बहुविधं बहु कृत्वा भगाय तु ॥ ३३ ॥ निवेदयित्वा देयानि चित्रसां सानि चाप्यथ ॥ घृतेन धूपो दातव्यो होमः कार्यः प्रियङ्गुना ॥ ३४ ॥ दक्षिणा चात्र दातव्या चित्रवासांसि चाप्यथ ॥ पारावतस्य पक्षाणि चक्र वाकस्य मानद ॥ ३५ ॥त्रिवृतानि तथा कृत्वा मणिं शिरसि धारयेत् ॥ सौभाग्यं महदाप्नोति स्नात्वैव भगदैवते ॥ ३६ ॥ तिलमाक्षिकपूर्णेन स्नातः कुम्भद्वयेन तु ॥ आर्यर्क्षे पायसं दद्यात्पीतरक्ते च वाससी ॥ ३७ ॥ धूपे शतावरी देया होमः कार्यस्तथाक्षतैः ॥ तेजोवन्ती प्रियङ्गुश्च त्रिवृतं धारयेन्मणिम् ॥ ३८ ॥ दक्षिणा चात्र दातव्या तथा रक्ते च वाससी ॥ उत्तराफल्गुनीस्नानं सर्वारम्भप्रसिद्धिदम् ॥ ३९ ॥ वीर्यस्य वर्धनं चापि कर्तव्यमनुसूनुना ॥ गजकामस्य ते स्नानं हस्ते पूर्वं मयोदितम् ॥ ४० ॥ परसैन्यजयार्थाय स्नानं तदपि शस्यते ॥ मंजिष्ठां च समङ्गां च मिसिकान्तां च भार्गव ॥ ४१ ॥ कनकं रजतं चैव पूर्णकुम्भे विनिक्षिपेत् ॥ तेनाभिषिक्तश्चित्राणि माल्यवासांस्यनन्तरम् ॥ ४२ ॥ त्वाष्ट्रे निवे दयेद्भक्त्या होमं क्षीरेण कारयेत् ॥ दक्षिणा चात्र दातव्या चित्रवस्त्राणि मानद ॥ ४३ ॥ सर्वगन्धैस्तथा धूपं बलिं चित्रं तथैव च ॥ पृथक्स्रुतिप्रसूतानां पुष्पानां कनकैर्वृतम् ॥ ४४ ॥ अष्टादशानां च तथा मणिं शिरसि धारयेत् ॥ एवं स्नातस्तु चित्रासु सौभाग्यं महदश्नुते ॥ ४५ ॥ सर्वभूतेषु चाधिक्यं यदिच्छति तदाप्नुयात् ॥ रुक्ममश्वत्थपत्रं च खड्गशृङ्गं तथैव च ॥ ४६ ॥ पूर्णकुम्भे विनिक्षिप्य स्नातः शीधुसुरासवम् ॥ वायव्ये प्रयतो दद्यात्क्षीरं सपललं दधि ॥ ४७ ॥ गन्धं धूपं तथा दद्याद्धोमे कार्यं तथा घृतम् ॥ दक्षिणा चात्र दातव्या वासांसि विविधानि च ॥ ४८ ॥ द्रष्टाश्वश्यामहारीतहंसपक्षैः पयोऽन्वितम् ॥ धारयेच्च मणिं विद्वान्स्वातावेवं समाचरेत् ॥ ॥ ४९ ॥ वाणिज्ये सम्यगाप्नोति सिद्धिं च महतीं नरः ॥ विशाखासु तथा स्नानं कार्यं कुम्भद्वयेन तु ॥ ५० ॥ कृत्तिकासु महाभाग ततः शाकं

१ व्यञ्जनमिति पाठान्तरम् ।

निवेदयेत् ॥ इन्द्राग्निभ्यां च वासांसि पीतरक्तानि चाप्यथ ॥ ९१ ॥ माल्यानि च महाभाग धूपं च घृतगुग्गुलम् ॥ होमार्थे च घृतं कुर्याद्दक्षिणा कनकं तथा ॥ ९२ ॥ गणाधिपत्यमाप्नोति कृत्वैवं नात्र संशयः ॥ सहस्रवीर्यं चानन्तां मधूकं च तथा मिसिम् ॥ ९३ ॥ पूर्णकुम्भत्रये कृत्वा कृतस्वस्तिकलक्षणे ॥ अहताम्बरसंवीतः सर्वगन्धफलाक्षतैः ॥ ९४ ॥ मधुना च बलिं दद्यान्मित्राय च महात्मने ॥ वृश्चिकेन तथा धूपं यवैर्होमं च मानद ॥ ९५ ॥ पुरद्वारं कटाहाश्च चूडाकाष्ठं सकाञ्चनम् ॥ धारयेद्दक्षिणां दद्यात्तथा च कनकं द्विज ॥ ९६ ॥ एवं मैत्रे सदा स्नातः सर्वभूतैः समाप्नुयात् ॥ मैत्रीं मनुजशार्दूल पुरं वा कुरुते वशे ॥ ९७ ॥ तडागपद्मिनीकूलनदीनदसमुद्भवैः ॥ तोयैः पूर्णं घटान्कृत्वा सर्वबीजसमन्वितान् ॥ ९८ ॥ सर्वरत्नौषधीपूर्णान्स्त्रीस्नानं तैः समाचरेत् ॥ क्षौमवासास्तु रत्नानि माल्यानि च फलानि च ॥ ॥ ९९ ॥ रत्नानि दद्याच्छक्राय प्राङ्मुखः सुसमाहितः ॥ धूपं दद्याच्च शीर्षेण विशाखावन्मणिर्भवेत् ॥ ६० ॥ छत्रं च दक्षिणा देया ज्येष्ठायां भृगुनन्दन ॥ स्नानमेव सदा कृत्वा राज्यमाप्नोत्यकण्टकम् ॥ ६१ ॥ कृषिकामस्य मूलेन स्नानमुक्तं मया पुरा ॥ तथा वाणिज्यकामस्य प्राग षाढासु भार्गव ॥ ६२ ॥ अथोत्तरासु षाढासु कुर्याद्घटचतुष्टयम् ॥ पुष्पबीजफलोपेतं तेन स्नातस्तु मानवः ॥ ६३ ॥ क्षौमवासाः सुरां चैव पायसं च निवेदयेत् ॥ मुद्गमिश्रं च धर्मज्ञ माल्यवासांसि चेच्छया ॥ ६४ ॥ होमे च पायसं कुर्याद्धूपे गोशृङ्गमेव च ॥ धात्रीपुष्पशमीबिल्वै र्मणिर्धार्यः सकाञ्चनैः ॥ ६५ ॥ दक्षिणा चात्र दातव्या सुवर्णं रौप्यमेव च ॥ राजश्रेष्ठत्वमाप्नोति विवादेषु जयं तथा ॥ ६६ ॥ बिल्वं च तगरं चैव चन्दनं मधुयष्टिकाम् ॥ प्रियङ्गुं च मधूकं च त्रिषु कुम्भेषु निक्षिपेत् ॥ ६७ ॥ संगमादाहृतं तोयं तन्मृदं च भृगूत्तम ॥ तेन स्नातस्ततः स्नानं कुर्यात्सर्वौषधैर्द्विज ॥ ६८ ॥ कुलत्थाऽन्नं सशाल्यन्नं मुख्यानि च फलानि च ॥ बलिं च विष्णवे दद्यान्मुद्गैर्धूपं तथैव च ॥ ६९ ॥ राजच्छत्रस्य दण्डाग्रात्काष्ठं शक्रध्वजात्तथा ॥ सिंहदंष्ट्रामणिश्चात्र सरुक्मः शिरसि स्मृतः ॥ ७० ॥ दक्षिणा चात्र दातव्या धेनुः कांस्योपदोहिनी ॥ एवं तु श्रवणस्नायी राज्यमाप्नोत्यकण्टकम् ॥ ७१ ॥ अन्यदेशाधिपत्यं वा राज्यमाप्नोति भार्गव ॥ अतिमुक्तकपत्राणि बिल्वस्य च तथा क्षिपेत् ॥ ७२ ॥ कुम्भेषु पञ्चसु ततः स्नानं तैस्तु समाचरेत् ॥ वास्तुभ्यस्तु बलिं दद्यात्सुवर्णं माक्षिके ततः ॥ ७३ ॥ धूपं वायसपक्षैस्तु होमः कार्यो घृतेन तु ॥ ब्रह्मचारिशिलालोपकाकपक्षं तथैव च ॥ ७४ ॥ काकमाचीं रुक्मयुतां मणिं शिरसि धारयेत् ॥ दक्षिणा चात्र दातव्या धेनु

१ आमिषम् पाठान्तरम् ।

कांस्योपदोहिनी ॥ ७५ ॥ धनं प्राप्नोति सुमहद्विवाहे वापि कन्यकाम् ॥ एवं स्नातो धनिष्ठासु नित्यमेव भृगूत्तम ॥ ७६ ॥ आरोग्यकारकं स्नानं पूर्वमुक्तं तु वारुणम् ॥ रत्नोदकेन स्नातस्तु नरः कुम्भद्वयेन तु ॥ ७७ ॥ अजैकपादाय बलिं छागं दद्यात्तु पायसम् ॥ शुक्लानि चैव माल्यानि फलानि विविधानि च ॥ ७८ ॥ खट्वाङ्गश्च तथा धूपं होमं च पयसा तथा ॥ व्याघ्रदंष्ट्रा तथा लोमनखं कनकमेव च ॥ ७९ ॥ मणि र्धार्यो भवेद्राम छागो देया च दक्षिणा ॥ अजैकपादे स्नातस्तु नित्यमेव समाहितः ॥ ८० ॥ उद्धरेत्तु निधिं राम शत्रून्वा विजयेद्ध्रुवम् ॥ आहिर्बुध्न्यं तथा स्नानं गोदमुक्तं पुरा तव ॥ ८१॥ चन्दनं च हरिद्रा च दर्भमूलं तथैव च॥ कृत्वा कुम्भे नरः स्नायात्कृत्वा पिधेन कन्यकाम्॥ ॥ ८२ ॥ स्नानालङ्कारवस्त्राद्यान्पूष्णे दद्याद्बलिं ततः ॥ मधुलाजास्तथैवात्र धूपं दद्याद्घृतेन च ॥ ८३॥ होमं घृतेन कर्तव्यं दक्षिणा कनकं भवेत् ॥ ब्राह्मीं सुवर्चलां होमं होमगर्भो मणिर्भवेत् ॥ ८४ ॥ एवं पौष्णे सदा स्नातो यः सदा शुज्यते नरः ॥ आश्विने सुप्रदं स्नानं पूर्वमुक्तं मया तव ॥ ॥ ८५ ॥ वैजयन्तीं बलां चैव समङ्गां च भृगूत्तम ॥ इन्द्रहस्तां मधूकं च कुर्याद्राम घटत्रये ॥ ८६ ॥ तेन स्नातो यमायाथ प्रपद्यात्तिलतण्डुलम् ॥ माल्यानि चैव चित्राणि पीतानि वसनानि च ॥ ८७ ॥ उरभ्रशृङ्गं धूपार्थे होमार्थे च तथा तिलम् ॥ दक्षिणा चात्र दातव्या तिलं कनकमेव च ॥ ८८ ॥ दर्भमूलैर्मणिः कार्यः कनकेन च वेष्टितः ॥ एवं स्नातो नरो याम्ये दीर्घं जीवितमाप्नु यात् ॥ ८९ ॥ स्नानानि मुख्यानि तवोदितानि काम्यानि पापप्रशमाय राम ॥ एतानि कार्याणि सदा द्विजेन्द्र धरान्वितेनाथ विचक्ष णेन ॥९०॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं० रामं प्रति पुष्करोपाख्याने नक्षत्रस्नानकथनन्नाम नवनवतितमोऽध्यायः ॥ ९९ ॥ पुष्कर उवाच ॥ उपोष्य चोत्तराषाढां ब्रह्मस्नानं विधीयते ॥ सूर्ये मध्यमनुप्राप्ते नरेन्द्रो द्विजसत्तम ॥ १ ॥ सर्वैर्बीजैस्तथा रत्नैः फलैः पुष्पैस्तथौ षधैः ॥ स्नातश्च सोदकैः कुर्यात्ततः पूजां स्वयंभुवः ॥ २ ॥ धूपं च दद्याद्धर्मज्ञ कुशमूलघृताक्षतैः ॥ होमं घृताक्षतैः कुर्याद्दद्यात्कनकमेव च ॥ ३ ॥ क्रियमाणे स्रुवे चूर्णं तथा चैव रणो द्विजः ॥ सोमं चूर्णं च त्रिवृतं मणिं शिरसि धारयेत् ॥ ४ ॥ स्नानं तु राज्यकामस्य प्रोक्तमेतन्मया तव ॥ ब्रह्मवर्चसकामस्य स्वेच्छया च यथोदितम् ॥ ५ ॥ ब्राह्मं तव स्नानमिदं प्रदिष्टं सर्वाधिनाशाय भृगुप्रधान ॥ कार्यं सदा वा दिनमध्ययाते दिवाकरे कामकरं प्रशस्तम् ॥ ६ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० सं० रामं प्रति पुष्करोपाख्याने अभिजित्स्नानवर्णनन्नाम शततमोऽध्यायः ॥ १०० ॥ राम उवाच ॥ स्नानमन्यत्समाचक्ष्व भगवन्पुष्टिकारकम् ॥ येन नित्यंकृतेनेह पुरुषः

पुष्टिमाप्नुयात् ॥ १ ॥ पुष्कर उवाच ॥ श्रवणर्क्षमनुप्राप्ते देवदेवे निशाकरे ॥ भक्त्या समाचरेत्स्नानं नदीद्वितयसङ्गमे ॥२ ॥ निम्नगायां सरसि वा नदीसागरसङ्गमे ॥ स्नातः संपूजयेद्देवं विष्णुं माल्यानुलेपनैः ॥ ३ ॥ धूपदीपनमस्कारैस्तथा चैवान्नसम्पदा ॥ शाल्यन्नं दधिसंयुक्तं विष्णवे विनिवेदयेत् ॥ ४ ॥ पौरुषेण च सूक्तेन पायसं जुहुयात्ततः ॥ रजतं दक्षिणां दद्याद्ब्राह्मणाय भृगूत्तम ॥ उपवास विनाप्येतत्स्नानं पुष्टिप्रदं परम् ॥ ५ ॥ स्नातः समाप्नोति सदा मनुष्यः कामानभीष्टाञ्छ्रवणर्क्षयोगे ॥ पापं समस्तं विजहाति राम धर्मं समाप्नोति यशश्च मुख्यम् ॥६॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं० रामं प्रति पुष्करोपाख्याने पुष्टिकारकश्रवणस्नानकथनन्नामैकोत्तरशततमोऽध्यायः ॥ १०१ ॥

पुष्कर उवाच ॥ जन्मनक्षत्रगे सोमे सर्वौषधिसमन्वितम् ॥ कुम्भं सुपूजितं कृत्वा स्नपनं तेन कारयेत् ॥ १ ॥ स्नातश्चै र्चयेद्देवं वासुदेवं जगत्प्रतिम् ॥ नक्षत्रदैवतं चन्द्रं नक्षत्रं वारुणं तथा ॥२॥ वायुं चायुधपीठाद्यं छत्रं संपूजयेत्तथा ॥ यथोक्तदेवतालिङ्गैर्मन्त्रैश्च जुहुयाद्घृतम् ॥ ३ ॥ शक्त्या च दक्षिणा देया ब्राह्मणेभ्यो भृगूत्तम ॥ ततोनुलिप्तः सुरभिः स्रग्वी विविधभूषणः ॥ ४ ॥ तिष्ठन्मनुजशार्दूल हविष्याशी जितेन्द्रियः ॥ उपवासं विनाप्येतत्पवित्रं पापनाशम् ॥ ५ ॥ मातृस्थाने तु जगतां जन्मतारा विधीयते ॥ चन्द्ररूपी च भगवान्पिता विष्णुः प्रकीर्तितः ॥ ६ ॥ तस्मात्सर्वप्रयत्नेन जन्मनक्षत्रसंस्थितम् ॥ भक्त्या तं पूजयेच्चन्द्रं जन्मर्क्षं च विशेषतः ॥७॥ पूजां सदा चन्द्रमसस्तु कृत्वा जन्मर्क्षसंस्थस्य भृगुप्रधान ॥ कामानवाप्नोति नरस्तु सर्वान्सुखी सदा स्याद्भुवि नष्टपाप्मा॥८॥इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं० रामं प्रति पुष्करोपाख्याने जन्मर्क्षस्नानवर्णनन्नाम द्व्युत्तरशततमोऽध्यायः ॥१०२॥

पुष्कर उवाच ॥ चन्द्रमंडलवृद्धौ तु तथा चैवोत्तरायणे ॥ शुभे दिवसनक्षत्रे मुहूर्ते च तथा शुभे ॥ १ ॥ तिष्याश्विनगते चन्द्रे हस्तश्रवणगेऽपि च ॥ प्राचीं वाप्यथवोदीचीं निष्क्रम्य नगराद्दिशम् ॥ २ ॥ वास्तुविद्याविनिर्दिष्टे भूमिभागे मनोहरे ॥ अष्टहस्तं शुभ कुर्याच्चतुरस्रं च मण्डलम् ॥ ३ ॥ बल्यर्थमपरं कुर्याद्वह्निवेद्यर्थमेव च ॥ गोमयेनोपलिप्ते तु सुधालेखासमन्विते ॥ ४ ॥ ध्वजातपत्रव्यजनमाल्यदामकुशाक्षतैः ॥ लाजागन्धादिभिर्मुख्यैर्मङ्गल्यैस्तं समर्चयेत् ॥५॥ लाजालाजोपकरणैस्तथैव च विभूषयेत् ॥ ततः प्रस्रवणेभ्यस्तु चतुर्भ्यस्तु घटान्नवान् ॥ ६ ॥ प्रत्येकं कल्पयेद्विद्वान्कल्पिते मण्डलद्वये ॥ सूक्तिष्वथ महाभाग बीजमात्रसमन्वितान् ॥ ७ ॥ ततस्तु कल्पयेत्कुम्भान्सप्त मुख्यान्नदीजलैः ॥ सर्वौषधियुतः कार्यः कुम्भ एको द्विजन्मना ॥ ८ ॥ सर्वबीजयुतो धान्यरत्नोपेतस्तथा परः ॥ तथा चैवापरं युक्तं कार्यं वृक्षाग्रपल्लवैः ॥ ९ ॥ पुष्पैश्चैवापरं युक्तं फलैश्चैवापरं तथा ॥ सर्वगन्धयुतं

चान्यं सर्वानेव समर्चयेत् ॥ १० ॥ पूर्वमन्त्रेण च तथा सर्वानेवाभिमन्त्रयेत् ॥ ततो भद्रासनं दत्त्वा तत्र चर्मास्तरेद् बुधः ॥ ११ ॥ विप्रस्य स्नातुकामस्य सौरमार्षभकं शुभम् ॥ क्षत्रियस्य तथा सैंहं वैयाघ्रं च तथा विशः॥१२॥ द्वीपिचर्म च वैश्यस्य स्नाप्यस्तत्रोपवेशयेत् ॥ प्रशस्त लक्षणां भार्यां वामभागे तथैव च ॥१३॥ उपोषितः शिरःस्नातः सिद्धार्थैः कङ्कतं विना ॥ स्नापयेद्ब्राह्मणो विद्वान्बहुभिर्ब्राह्मणैः सह ॥ १४॥ शङ्खपुण्याहघोषेण वीणावेणुरवेण च ॥ जयशब्देन महता बन्दिनां निस्वनेन च ॥१५॥ सौवर्णं च शतच्छिद्रं पात्रं शिरसि धारयेत् ॥ तत्र दद्याद्घटैस्तोयं क्रमेणानेन शास्त्रवित् ॥ १६ ॥ या औषधय इत्येष मन्त्रः स्यादौषधीघटे ॥ आब्रह्मन् ब्रह्मणेत्येष बीजकुम्भे प्रकीर्तितः ॥ १७ ॥ आशुः शिशान इति च तथा रत्नघटे भवेत् ॥ मन्त्रः पुष्पवतीत्येष पुष्पकुम्भे प्रकीर्तितः ॥ १८ ॥ एष एव तथा मन्त्रः फलकुम्भे प्रकीर्तितः ॥ गन्धद्वारेण च तथा गन्धकुम्भे विधीयते ॥ १९ ॥ एवं स्नातः परीधाय सुशुक्ले वाससी शुभे ॥ मङ्गल्यानि स्पृशेद्राम संपश्येद्वदनं घृते ॥ २० ॥ विमले च तथादर्शे ततः संपूजयेद्धरिम् ॥ वैष्णवांश्च तथा मन्त्राञ्जुहुयाज्जातवेदसि ॥ २१ ॥ ततस्तूत्तरदिग्भागे वह्निं तस्योपकल्पयेत ॥ भद्रासनं शुभे देशे युक्तं पूर्वोक्तचर्मणा ॥ २२ ॥ श्वेतानुलेपनः स्रग्वी मङ्गल्याभरणस्तथा ॥ निविशेतासने तस्मिन्सभार्यो भृगुनन्दन ॥ २३ ॥ गन्धद्वारेतिमन्त्रेण तस्य रोचनया ततः ॥ कण्ठे मूर्ध्नि ततः कुर्यात्तिलकं ब्राह्मणः स्वयम् ॥ २४ ॥ येन देवा ज्योतिषेति दर्भाग्रैर्ब्राह्मणस्ततः ॥ पादतस्तु प्रभृत्येनं सर्वाङ्गेषु प्रमार्जयेत् ॥ २५ ॥ गुरवे दक्षिणां दद्याद्ब्राह्मणेभ्यश्च शक्तितः ॥ गन्धरत्नाज्यमाल्यानि कनकं रजतं तथा ॥ २६ ॥ शतच्छिद्रं च तत्पात्रं गुरवे विनिवेदयेत् ॥ मङ्गलालम्भनं कृत्वा गतपापो द्विजाशिषा ॥२७॥ शङ्खपुण्याहघोषेण प्रविशेच्च गृहं स्वकम् ॥ विनापि भार्यया राम स्नानं कार्यमिदं तथा ॥२८॥ सप्तरात्रमिदं स्नानं सर्वकल्मषनाशनम् ॥ मधु मांसं तथा क्षौद्रं मैथुनं च विवर्जयेत् ॥२९॥ अलक्ष्मीशमनं पुण्यं रक्षोघ्नं बुद्धिवर्धनम् ॥ आरोग्यदं दीप्तिकरं यशस्यं शत्रुसूदनम् ॥ ३० ॥ मङ्गल्यं पापशमनं कलिदुस्स्वप्ननाशनम् ॥ बृहस्पतिरिदं चक्रे स्नानं मघवतः स्वयम् ॥ ब्रह्महत्याभिभूतस्य वृत्ते वृत्रवधे पुरा ॥३१॥ ततोऽस्य दत्तः स्वयमेव वज्रिणा वरो नृलोकेपि वरोऽस्य कारकः ॥ कामानभीष्टान्समवाप्य पूजितो महेन्द्रलोकं स सुखी प्रयास्यति ॥ ३२ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० सं० रामं प्रति पुष्करोपाख्याने बार्हस्पत्यस्नानवर्णनन्नाम त्र्युत्तरशततमोऽध्यायः ॥ १०३ ॥ ॥ राम उवाच ॥ स्नानमन्यत्समाचक्ष्व भगवन्दुरितापहम् ॥ सकृदेव कृतं यत्तु पापेभ्यो विप्रमोचयेत् ॥ १ ॥ पुष्कर उवाच ॥ राजयक्ष्माभिभूतेषु विषमज्वरितेषु च ॥ छायोन्मादोपतप्तेषु विषमज्वरितेषु च ॥ २ ॥

विनायकग्रहार्त्तेषु मूढचित्तेष्वतीव हि ॥ येषां [1]न सिध्यते विद्या सस्यं येषां न रोहति ॥ ३ ॥ सीदेद्यस्य कुटुम्बं च पण्यं नायाति विक्र
यम् ॥ न लभेत्तु जयं युद्धे बलवानपि यो नरः ॥ ४ ॥ युक्तान्यपि च कार्याणि विपद्यन्ते पुनःपुनः ॥ कलहश्च भवेद्येषां सुहृत्स्वजनबान्धवैः॥
॥ ५ ॥ गर्भः प्रस्रवते यस्या जातो वापि विनश्यति ॥ पुष्पं यस्याः क्षयं याति न च किञ्चित्प्रजायते ॥ ६ ॥ गृह्णाति या न बीजं च जनयेद्वाप्य
मानुषान् ॥ नाप्नोति च पतिं कन्या तस्मात्स्नेहमथापि वा ॥ ७ ॥ सौभाग्यं च न चायाति सुहृत्स्वजनबन्धुषु ॥ एवमुक्तेषु चान्येषु त्वनुक्तेषु
च भार्गव ॥ ८ ॥ प्रसमीक्ष्य विधानज्ञः स्नानमेतत्समाचरेत् ॥ स्नापयेत्सरितस्तीरे ग्रहाविद्यान्विचक्षणः ॥ ९ ॥ राजयक्ष्माभिभूता ये विषम
ज्वरिताश्च ये ॥ तेषां देवालये स्नानं कुर्याद्वा सिद्धसेविते ॥ १० ॥ छायोन्मादोपतप्ता ये ये चापस्मारशोषिणः ॥ तेषां मुनिगणावासे तीर्थे वा
स्नानमिष्यते ॥ ११ ॥ विनायकग्रहार्ता ये ये च मूढा विचेतसः ॥ सज्जनाचरिते देशे तेषां स्नानं विधीयते ॥ १२ ॥ त्रैविद्या येन सिध्यन्ति
गुणा येषां प्रपूजिताः ॥ तेषां स्नानमिहोद्दिष्टं सिद्धदेवस्य मन्दिरे ॥ १३ ॥ येषां नास्ति जयो युद्धे येषां स्वजनसंक्षयः ॥ कान्तारे वा वने
तीर्थे तेषां स्नानं प्रशस्यते ॥ १४ ॥ सततं कलहो येषां जायते च यतस्ततः ॥ त्रिपथे वा तडागे वा स्नानं तेषां प्रकल्पयेत् ॥ १५ ॥ पद्मिन्यां
स्नपयेन्नारीं गर्भो यस्याः स्रवेत्तथा ॥ अशोकसन्निधौ स्नाप्या जातो यस्याः विनश्यति ॥ १६ ॥ न च गृह्णाति या शुक्रं स्नाप्या सा सफले
तरौ ॥ महोदधितटे स्नाप्या यदापत्यं विनश्यति ॥ १७ ॥ अमानुषान्या जनयेत्स्नापयेत्तां चतुष्पथे ॥ यादृशं या च भर्तारं न लभेत वरा
ङ्गना ॥ १८ ॥ स्नापयेदेकलिङ्गे तां स्थाने वा वृक्षसंकुले ॥ रूपलावण्ययुक्ता या सौभाग्यं या न विन्दति ॥ १९ ॥ स्नानं वृद्धिकरं तस्या
वेश्यागारे प्रकल्पयेत् ॥ अन्येषामथ कर्तव्यं सदा स्नानं मनोहरम् ॥ २० ॥ समे सज्जनसंकीर्णे शुचौ देशे विकण्टके ॥ सहायैः प्रयतैः सार्ध
महोरात्रोषितो द्विजः ॥ २१ ॥ स्नानकर्म प्रयुञ्जीत सोपवासस्य मानद ॥ अहोरात्रासमर्थस्य कार्यं वा हविषाशनम् ॥ २२ ॥ शरद्वसन्तयोः
कार्यं स्नानं स्वस्थस्य भार्गव ॥ सर्वकालेष्वथार्त्तस्य ग्रहव्याधिनिबर्हणम् ॥ २३ ॥ मुहूर्ते तत्र सावित्रे ब्राह्मणः स्नापयेद्द्विज ॥ मैत्रेऽथ विजये
चैव राजन्यं स्नापयेत्तथा ॥ २४ ॥ वैश्यं पैतामहे शूद्रं शेषेषु स्नापयेत्तथा ॥ पञ्चमी सप्तमी श्रेष्ठा स्नपने ब्राह्मणस्य च ॥ २५ ॥ त्रयोदशी
तृतीया च क्षत्रियस्य विशिष्यते ॥ द्वितीया दशमी चैव तथा वैश्यस्य मानद ॥ २६ ॥ षष्ठी चतुर्दशी चैव शूद्राणां स्नानकर्मणि ॥ एकादशी

[1] कूप इति पाठान्तरम् ।

द्वादशी च तथा कृष्णचतुर्दशी ॥ २७ ॥ सर्वेषामेव वर्णानां स्नानकर्मणि पूजिता ॥ ध्रुवेषु वैष्णवे पुष्ये रेवत्यां भगदैवते ॥ २८ ॥ हस्ते पुनर्वसौ सौम्ये ज्येष्ठायामथ वारुणे ॥ धनिष्ठायां तथा स्नानं सर्वेषामेव पूजितम् ॥ २९ ॥ वेत्रासनं भद्रपीठं वैदलं दारवं तथा ॥ वर्णाना मानुपूर्व्येण परिकीर्तितमासनम् ॥ ३० ॥ कृष्णाजिनं च वैयाघ्रं रौरवं बास्तमेव च ॥ पादोपधानं वर्णानामानुपूर्व्येण कल्पयेत ॥ ३१ ॥ वृषाश्वरथ पृष्ठे च गजपृष्ठे तथैव च ॥ ॥ नरस्कन्धेङ्गनाङ्के वा प्रायशः स्नापयेच्छिशून् ॥ ३२ ॥ स्नातुकामस्य तस्याथ पूर्वमुत्सारसः[1] स्मृतम् ॥ यैर्द्रव्यैर्भृ गुशार्दूल तानि वक्ष्याम्यतः परम् ॥ ३३ ॥ पुनर्नवां रोचनां च शताह्वागुरुणीं त्वचम् ॥ मधूकं च रजन्यौ द्वे तगरं नागकेसरम् ॥ ३४ ॥ आसुरीं सर्जिकां चैव मांसीं रामठ चन्दनम् ॥ प्रियङ्गुं सर्षपान्कुष्ठं कुंकुमं बहुपुत्रिकाम् ॥ ३५ ॥ बलेन्द्रहस्तीं ब्राह्मीं च पञ्चगव्यं तथैव च ॥ सक्तुना मिश्रयित्वा च कार्यमुद्वर्तनं भवेत् ॥ ३६ ॥ ततः स्नानदिने प्राप्ते प्राग्वदुत्सादयेत्पुनः ॥ ततो मनोहरे देशे मण्डलं कल्पयेद् बुधः ॥ ३७ ॥ चतुरस्रं गोमयेन सर्वतोऽष्टदिशं समम्[2] ॥ सतोरणं चतुर्द्वारं प्राकारैरुपशोभितम् ॥ ३८ ॥ तत्र मध्ये लिखेत्पद्ममष्टपत्रं सुशोभितम् ॥ कर्णिकायां लिखेद्विष्णुं मेघाभं पीतवाससम् ॥ ३९ ॥ कौस्तुभोद्भासितोरस्कं शङ्खचक्रगदाधरम् ॥ ब्रह्माणं दक्षिणे न्यस्य पद्मवर्णं समालिखेत् ॥ ४० ॥ अजिनाम्बरसंयुक्तं श्वेतयज्ञोपवीतिनम् ॥ रजताभ्रनिभं वामे भागे रुद्रं समालिखेत् ॥ ४१ ॥ व्याघ्रचर्माम्बरधरं त्रिनेत्रं शूलधारिणम् ॥ पूर्वपत्रे लिखेच्छक्रं सवज्रं च सुदर्शनम् ॥ ४२ ॥ गजपृष्ठाधिरूढं तु स्वर्णाभं पीतवाससम् ॥ प्राग्दक्षिणे तथा पत्रे लिखेद्वह्निं महाप्रभम् ॥ ४३ ॥ धूम्राभवसनं देवं शुकयानगतं प्रभुम् ॥ अतसीपुष्पसंकाशं पीताम्बरधरं शुभम् ॥ ४४ ॥ सदण्डं महिषारूढं लिखेत्पत्रे तु दक्षिणे ॥ उष्ट्रारूढं विरूपाक्षं लिखेद्दक्षिणपश्चिमे ॥ ४५ ॥ रक्ताम्बरधरं कृष्णं खड्गपाणिं विभीषणम् ॥ पश्चिमे वरुणं देवं सपाशं हंसवाहनम् ॥ ४६ ॥ सशुक्लवसनं देवं स्वच्छवैडूर्यसन्निभम् ॥ पश्चिमोत्तरतो वायुं वायुमण्डलमध्यगम् ॥ ४७ ॥ लिखेच्छुभ्राम्बरं श्वेतं सर्वाभरणभूषितम् ॥ कुबेरमुत्तरे पत्रे व्योमयानगतं लिखेत् ॥ ४८ ॥ कवचोत्तमसंयुक्तं गदिनं कमलप्रभम्[3] ॥ वृषारूढमथेशानं पत्रे पूर्वोत्तरे लिखेत् ॥ ४९ ॥ व्याघ्रचर्माम्बरधरं भालचन्द्रं विभूषितम् ॥ चतुर्भिः सागरैः पद्मं चतुरस्रं समन्ततः ॥ ५० ॥ यादोगणयुतैश्चैव क्रमेण परिवारयेत् ॥ सागराणां तु पूर्वेण लिखेत्पद्मं मनोहरम् ॥ ५१ ॥ ततश्चक्रं तथा दण्डं वज्रं मकरमेव च ॥ शक्तिं ध्वजं त्रिशूलं तु क्रमेणैव तु विन्यसेत् ॥ ५२ ॥ ततः प्राकारसंलग्नानिषून्द्वादश विन्यसेत् ॥ चतुरः

१ 'उत्सादनम्' इति पुस्तकान्तरे। २ 'यमम्' इति पाठान्तरम्। ३ 'चन्द्राभं वै' इति पाठान्तरम्।

सूक्तिषु तथा द्वारेष्वष्टौ भृगूत्तम ॥ ९३ ॥ सुसंहतान्समाञ्श्लक्ष्णान्दुरङ्गान्पत्रनिर्गतान् ॥ व्यामार्धसम्मितांस्तीक्ष्णान्पार्श्वे तक्षविभूषि
तान् ॥ ९४ ॥पञ्चरङ्गं ततः सूत्रं बध्नीयात्तेषु भार्गव ॥ अरुन्धन्द्वारमार्गांस्तु सुदृढं सुमनोहरम् ॥ ९५ ॥ वितानं मण्डलीकुर्याच्छ्वेतवर्णं मनो
हरम् ॥ ध्वजं छत्राणि खड्गांश्च घण्टादर्शांश्चतुर्दिशम् ॥ ९६ ॥ प्राकारोपरि दण्डेषु सुदृढेष्वनिरोधयेत् ॥ स्नाने मण्डलकान्कुर्यात्प्राकारस्य ततो
बहिः ॥ ९७ ॥ त्रिसमान्भृगुशार्दूल चतुरस्रान्मनोहरान् ॥ ज्वालामाल्याधरचितान्दिशासु विदिशासु च ॥ ९८ ॥ स्नानमण्डलकानां तु समीपे
सुसमन्ततः ॥ गावः सवत्साः संस्थाप्या वृषभाश्च सुपूजिताः ॥ ५९ ॥ अजाश्चार्भकसम्पन्ना जीवमोक्षाश्च पक्षिणः ॥ प्राकारस्योत्तरे भागे वेदिं
कुर्यात्सुशोभिताम् ॥ ६० ॥ दर्भैराच्छाद्य तान्सर्वान्सलिलेन समुक्षयेत् ॥ तत्राग्निं जुहुयान्मन्त्रैर्महाव्याहृतिपूर्वकम् ॥ ६१ ॥ यथोक्तदेवतालिं
गैस्तथा मन्त्रैश्च भार्गव ॥ ॐकारेण तथान्त्राणां नामयुक्तेन वै पृथक् ॥ ६२ ॥ अश्वत्थोदुम्बरप्लक्षबिल्वार्कखदिराः शमी ॥ स्वराह्वयमपामार्गं
पलाशयवकान्यपि ॥ ६३ ॥ वंशिका चाश्वगन्धा च कदम्बश्चार्जुनासनौ ॥ एतेषां समिधः शस्ताः किष्कुमात्रा घृतप्लुताः ॥ ६४ ॥ एकै
कमप्यष्टशतं हव्यं सर्षपसंयुतम् ॥ तिलान्यवांस्तथाक्षोटाँल्लाजाश्चाग्नौ समावपेत् ॥ ६५ ॥ ततश्चावपयेच्छान्तिं ब्राह्मणान्गुणसंयुतान् ॥ अभ्य
र्च्य दक्षिणाभिश्च पुष्पाक्षतफलैस्तथा ॥६६॥ ततस्तु स्थापयेत्कुम्भान्मण्डले सागरोपरि ॥ यथा दिग्देवनामाङ्कान्दिशासु विदिशासु च ॥ ६७ ॥
काञ्चनान्राजतांस्ताम्रानथ वापि महीमयान् ॥ नामान्यथैषां वक्ष्यामि तानि मे गदतः शृणु ॥ ६८ ॥ भद्रः सुभद्रः सिद्धार्थश्चतुर्थः पुष्टिवर्धनः ॥
अमोकश्चित्रभानुश्च पर्जन्योऽथ सुदर्शनः ॥६९ ॥ वापीकूपसरिद्भ्यश्च पूजयित्वा जलेन तान् ॥ वनस्पतिसमायुक्तानर्घ्यमाल्यादिपूजितान् ॥७०॥
मन्त्रानुमन्त्रितानेतांस्तत्र मन्त्रं निबोध मे ॥ स्थापयन्तु घटानेतान्साश्विरुद्रमरुद्गणाः ॥ ७१॥ विश्वेदेवास्तथादित्या वसवो मुनयस्तथा ॥ अधिश्र
यन्तु सुप्रीतास्तथान्या अपि देवताः ॥७२॥ एवं संस्थाप्य तान्कुम्भान्स्थाप्या मण्डलकेष्वथ ॥ ऐन्द्रादिक्रमशः स्थाप्यास्त्वासने पूर्वचोदिते ॥ ७३॥
पूर्वे मण्डलके स्थाप्यः शुक्लपुष्पाम्बरान्वितः ॥ सर्वत्र ग्राहयेद्विप्रैर्वक्ष्यमाणगुणान्घटान् ॥ ७४ ॥ प्रत्येकं स्याच्चतुर्भिस्तु द्वारस्योपरि
भार्गव ॥ अपां पूर्णं घटं तत्र यथाशं च यथास्वकम् ॥ ७५ ॥ तथा दद्याद्यथास्नानं सम्यक्स्नाप्यस्य जायते ॥ ओषधीश्चात्र वक्ष्यामि
यास्तु कुम्भेषु निक्षिपेत् ॥ ७६ ॥ अस्थापितेषु धर्मज्ञ ततः संस्थापनं भवेत् ॥ जयां जयन्तीं विजयां सूकरीं मर्कटीं वचाम् ॥ ७७ ॥

१ 'क्रमोदिताम्' इति पाठान्तरम् । २ 'रक्ष्यथाशोकम्' इति पाठान्तरम् । ३ 'पाठयेत्' इति पाठान्तरम् ।

कायस्थां च वयस्थां च बृहतीं बहुपुत्रिकाम् ॥ सहस्तशतवीर्यें च त्रायमाणां कटुम्बराम् ॥ ७८ ॥ अतिच्छत्रां तथा च्छत्रां जीवन्तीमपराजिताम् ॥ जटिलां पूतनां कीशां सुरां यक्षसुरां तथा ॥ ७९ ॥ अवीतराक्षसीं वीरां स्थिरां भद्रां यशोबलाम् ॥ शङ्खपुष्पीं विष्णुदत्तां नाकुलीं गन्धनाकुलीम् ॥ ८० ॥ गोलोम्यतिबले चैव व्याघ्रीमश्ववतीं तथा ॥ श्यामां ज्योतिष्मतीं चैव तेषु कुम्भेषु निक्षिपेत् ॥ ८१ ॥ चन्दनोशीरतगरकुम्भयागुरुकेसरान् ॥ त्वक्पत्रमुस्तह्रीबेरप्रियङ्ग्वेलारसांस्तथा ॥८२॥ गन्धमांसीं तथा स्पृक्कां रोचनं रामकं त्रुटिम् ॥ कशीरुकामृतानं च ककुभं पद्मकं तथा ॥ ८३ ॥ कस्तूरिकां तरुष्कं च कर्पूरं नाडिकं तथा ॥ जातीफलं लवङ्गाश्च कक्कोलैः सह चूर्णिताः ॥ ८४ ॥ गन्धद्रव्याणि चान्यानि यथालाभं विनिक्षिपेत् ॥ श्वेता रक्ता तथा पीता कृष्णा चैव हि मृत्तिका ॥ ८५ ॥ याश्चान्या विविधाः शस्ता मृत्तिकास्ता निबोध मे ॥ वृषाग्रशृङ्गाद्वल्मीकाद्देवतायतनाद्व्रजात् ॥ ८६ ॥ अग्न्यागाराद्धस्तिदन्तात्सुभगागणिकागृहात् ॥ राजद्वारात्पुरद्वारात्कूपाद्दानगृहात्तथा ॥ ८७ ॥ कुम्भकारगृहान्नद्याः पद्मिन्याः श्रोत्रियालयात् ॥ इन्द्रनीलतडागाच्च ह्रदात्प्रस्रवणादपि ॥ ८८ ॥ चतुष्पथात्सप्तपथान्मृत्तिकाशकटात्तथा ॥ गजाश्वगणशालाभ्यस्तथाथर्वणवेश्मनः ॥ ८९ ॥ अजाविकान्वितागाराद्राजकोशान्महासनात् ॥ अशोकात्क्षीरवृक्षाणां समीपात्सफलस्य च ॥ ९० ॥ सदाध्ययनशालातो यज्ञभूमेश्च मृत्तिकाः ॥ प्रगृह्य सर्वाः सम्भृत्य पञ्चगव्यसमन्विताः ॥ ॥ ९१ ॥ सर्वबीजैः समायोज्य स्नानकुम्भेषु निक्षिपेत् ॥ ततः कुम्भान्प्रतिष्ठाप्य स्नाप्यं संस्थापयेद्द्विजः ॥ ९२ ॥ मण्डलेषु क्रमेणैव दिशासु विदिशासु च ॥ पूर्वे मण्डलके स्नाप्यः श्वेतमाल्यानुलेपनः ॥ ९३ ॥ श्वेतश्चैव पटो धार्यश्चतुर्भिर्ब्राह्मणैर्भवेत् ॥ एवं दक्षिणतस्तस्य सर्वं नीलं प्रकल्पयेत् ॥ ९४ ॥ कृष्णं च कल्पयेत्सर्वं तथा दक्षिणपश्चिमे ॥ ( पीतं[1] प्रकल्पयेत्सर्वं तथा भागे तु पश्चिमे ॥ ) पश्चिमोत्तरयोः सर्वं शुक्लवर्णं प्रकल्पयेत् ॥ ९५ ॥ तथैवोत्तरदिग्भागे पद्मवर्णं प्रकल्पयेत् ॥ प्रागुत्तरे तथा भागे चित्रं सर्वं प्रकल्पयेत् ॥ ९६ ॥ राज्याभिषेकविहितो मन्त्रश्चात्र विधीयते ॥ प्रत्येकमथ कुम्भेषु दिशासु विदिशासु च ॥ ९७ ॥ एवं स्नाप्यो महाभाग शङ्खपुण्याहनिस्वनैः ॥ स्नातः शुक्लाम्बरधरः श्वेतमाल्यानुलेपनः ॥ ९८ ॥ मण्डले तु निविष्टानां सुराणां पूजनं ततः ॥ कुर्वीत प्रयतः शुद्धिं गन्धमाल्यार्घसम्पदा ॥ ९९ ॥ दीपैर्धूपैर्नमस्कारैर्वस्त्रैराभरणैस्तथा ॥ अपूपान्पायसं भक्ष्याञ्शुक्लमाल्यानुलेपनम् ॥ १०० ॥ विविधं च फलं क्षीरं ब्रह्मणेभ्यो निवेदयेत् ॥ दध्ना च

[1] खपुस्तके पाठान्तरम् ।

परमान्नेन श्वेतमाल्यानुलेपनैः ॥ १०१ ॥ फलैः प्रसूनैश्च तथा केशवाय हरेद्बलिम् ॥ क्षीरेण परमान्नेन दध्ना सकृसरेण च ॥ १०२ ॥ फलैः का
लोद्भवैः पुष्पैः शङ्कराय हरेद्बलिम् ॥ अपूपैः परमान्नेन भक्ष्यैः क्षीरेण सर्पिषा ॥ १०३ ॥ माल्यानुलेपनैः शुक्लैर्महेन्द्राय हरेद्बलिम् ॥ यवानां
च तिलानां च गोधूमानां तथा सक्तुत ॥१०४॥ भक्ष्यैः सगुडसर्पिष्कैर्बलिं कुर्यात्तु वह्नये ॥ गुडोदनगुडापूपान्पक्वमांसं तथामिषम् ॥ १०५ ॥
यमाय च बलिं दद्याद्रक्तमाल्यानुलेपनम् ॥ पक्वमांसं तथा मांसं कृष्णमाल्यानुलेपनम् ॥ १०६ ॥ विरूपाक्षाय तु सुरां दद्यात्सौवीरकं तथा ॥
मुद्गापूपांस्तिलापूपाञ्जलजान्मन्दिरांस्तथा ॥ १०७ ॥ वरुणाय बलिं दद्यात्पीतं माल्यादिकं तथा ॥ यवगोधूमचणकमाषसक्तून्सगोरसान् ॥
॥ १०८ ॥ कुल्माषघृतसंयुक्तान्बलिं दद्यात्तु वायवे ॥ भक्ष्यांश्च मधुसंयुक्तान्मुद्गमिश्रांस्तथामिषम् ॥ १०९ ॥ चित्रं माल्यं कुंकुमं च कुबेराय
हरेद्बलिम् ॥ शिम्बिधान्यभवान्भक्ष्याञ्शाल्यन्नं सगुडं दधि ॥११०॥ईशानाय बलिं दद्याच्छुक्लमाल्यानुलेपनैः ॥ शुक्लौदनं शुक्लमाल्यं शूलायो
पहरेद्बलिम् ॥१११॥ तथा पञ्चरसैः सिद्धं दद्याद्विघ्नाय बुद्धिमान् ॥ कृसरं गन्धपुष्पाढ्यं दद्याच्छुक्राय पायसम्॥११२॥ फलोदनं रक्तमाल्यं दद्या
च्छक्त्यै तथा बलिम् ॥ स्नानमण्डलकेभ्योऽपि बलिं दद्यात्ततो बलिम्॥११३॥बालक्रीडनकान्भक्ष्यान्फलानि विविधानि च ॥ मत्स्यामिषं सरु
धिरं पायसं तिलतण्डुलम् ॥ ११४ ॥ सक्तुदन्त्राणि हृदयं भूतेभ्यो बलिमाहरेत् ॥ ॐकाराद्यैश्चतुर्थ्यन्तैः स्वाहाकारसमन्वितैः ॥११५॥ राज्याभि
षेकमन्त्रोक्तदेवतानां पृथक्पृथक् ॥ नामभिर्जुहुयाद्वह्नौ यथाश्रद्धं यथाघृतम् ॥ ११६॥ पूर्णाहुतिं ततो दत्त्वा देया विप्रेषु दक्षिणा ॥ कनकं रजतं
गावो वासांसि विविधानि च ॥ ११७ ॥ कर्त्रे च दक्षिणा देया तथा राम विशेषतः ॥ दत्तं वस्त्रादि देवेभ्यस्तथा स्नानघटादिकम् ॥ ११८ ॥
कर्ता यथेष्टं विभजेत्तस्य भागो हि स स्मृतः ॥घृतेऽथ वदनं दृष्ट्वा नमस्कृत्य च देवताः ॥११९ ॥ मङ्गल्यालम्भनं कृत्वा फलपाणिरुदङ्मुखः ॥
तस्माद्देशाद्विनिर्गत्य गृहं यायात्ततः स्वकम् ॥ १२० ॥ तत्र तिष्ठेद्धविष्याशी ब्रह्मचारी च तां निशाम् ॥ स्नापितो ब्रह्मपूतेन स्नानेनायं यथा
भवेत् ॥ १२१ ॥ सर्वान्कामानवाप्नोति स्वर्गलोकं च गच्छति ॥ पुरा देवासुरे युद्धे शक्रायैतद् बृहस्पतिः ॥ १२२॥ कृतवान्पुरुहूताय ततः शक्रः
सुराधिपः ॥ जघान दैत्यमुख्यानां नवतीर्नव भार्गव ॥ १२३ ॥ धन्यं यशस्यं रिपुनाशकारि रक्षोहणं पापहरं पवित्रम् ॥ रोगापहं विघ्नविनाशकारि
स्नानं मया ते विहितं यथार्थम्॥१२४॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखंडे मा०सं० रामं प्रति पुष्करोपाख्याने दिक्पालस्नानवर्णनन्नाम चतुरुत्तर

१ 'वज्राय' पाठान्तरमेतत् । २ 'यक्षदन्त्राणि' इति पाठान्तरम् ।

शततमोऽध्यायः ॥ १०४ ॥ राम उवाच ॥ स्नानमन्यत्समाचक्ष्व भगवन्दुरितापहम् ॥ विनायकोपसृष्टानां सर्वकर्मप्रसाधकम् ॥ १ ॥
पुष्कर उवाच ॥ विनायकः कर्मविघ्नसिध्यर्थं विनियोजितः ॥ गणानामाधिपत्ये च केशवेन पितामहैः ॥ २ ॥ तेनोपसृष्टो यस्तस्य लक्षणानि
निबोध मे ॥ स्वप्नेऽवगाहतेऽत्यर्थं जलं मुण्डं च पश्यति ॥ ३ ॥ काषायवाससश्चैव क्रव्यादांश्चाधिरोहति ॥ अन्त्यजैर्गर्दभैरुष्ट्रैः
सहैकत्रावतिष्ठते ॥ ४ ॥ व्रजमानस्तथात्मानं मन्यतेऽनुगतं परैः ॥ विमना विफलारम्भः संसीदत्यनिमित्ततः ॥ ५ ॥ तेनोपसृष्टो लभते न
राज्यं राजनन्दनः ॥ या कुमारी च भर्तारमपत्यं गर्भमङ्गना ॥ ६ ॥ आचार्यत्वं श्रोत्रियश्च न शिष्योऽध्ययनं तथा ॥ वणिङ् न
लाभमाप्नोति न कृषिं तु कृषीवलः ॥ ७ ॥ स्नपनं तस्य कर्तव्यं पुण्येह्नि विधिपूर्वकम् ॥ हस्तपुष्याश्वयुक्सौम्यवैष्णवान्यतमे शुभे ॥ ८ ॥
नक्षत्रे च मुहूर्ते च मैत्रे वा ब्रह्मदैवते ॥ चर्मण्यानुडुहे रक्ते स्थाप्यं भद्रासनं भवेत् ॥ ९ ॥ भद्रासनोपविष्टस्य स्वस्ति वाच्यं द्विजोत्तमान् ॥ गौर
सर्षपकल्केन मेध्येनोत्सादितस्य च ॥ १० ॥ सर्वौषधैः सर्वगन्धैः प्रलिप्तशिरसस्तथा ॥ चतुर्भिः कलशैः कार्यं स्नपनं मन्त्रसंयुतम् ॥ ११ ॥ तथै
कवर्णाः कलशाः कर्तव्यास्ते ह्रदाम्भसा ॥ अश्वस्थानाद्गजस्थानाद्वल्मीकात्सङ्गमाद्ध्रदात् ॥ १२ ॥ मृत्तिकां रोचनं गन्धान्गुग्गुलं तेषु निक्षि
पेत् ॥ सर्वौषधीश्च बीजानि स्नानमन्त्रानतः शृणु ॥ १३ ॥ सहस्राक्षं शतधारमृषिभिः पावनं कृतम् ॥ तेन त्वामभिषिञ्चामः पावमानीः पुनन्तु
ते ॥ १४ ॥ भगं ते वरुणो राजा भगं शुक्रो बृहस्पतिः ॥ भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो ददुः ॥ १५ ॥ यत्ते केशेषु दौर्भाग्यं सीमन्ते
यच्च मूर्धनि ॥ ललाटकर्णयोरक्ष्णोरापस्तद्घ्नन्तु ते सदा ॥ १६ ॥ दर्भपिञ्जलमादाय वामहस्ते ततो गुरुः ॥ स्नातस्य सार्षपं तैलं स्रुवेणौदुम्ब
रेण तु ॥ १७ ॥ जुहुयान्मूर्ध्नि धर्मज्ञ चतुर्थ्यन्तैश्च नामभिः ॥ ॐकारपूतैर्धर्मज्ञ स्वाहाकारसमन्वितैः ॥ १८ ॥ मिताय संमितायाथ सालङ्कटकटाय
च ॥ कूष्माण्डराजपुत्राय तथैव च महात्मने ॥ १९ ॥ नामभिर्बलिमन्त्रैश्च वषट्कारसमन्वितैः॥दद्याच्चतुष्पथे शीर्षे कुशानास्तीर्य सर्वतः ॥२०॥
कृतरक्तांस्तण्डुलांश्च पललौदनमेव च ॥ मत्स्यान्पक्वांस्तथैवामान्मांसमेतावदेव तु ॥ २१ ॥ पुष्पं चित्रं सुगन्धं तु सुरां च त्रिविधामपि ॥ मूलकं
पूरिकापूपास्तथैवैण्डर्यकाणि च ॥ २२ ॥ एतान्सर्वानुपाहृत्य भूमौ कृत्वा ततः शिरः ॥ विनायकस्य जननीमुपतिष्ठेत्ततोऽम्बिकाम् ॥ २३ ॥
रूपं देहि यशो देहि सौभाग्यं सुभगे मम ॥ पुत्रान्देहि धनं देहि सर्वान्कामांश्च देहि मे॥२४॥ ततः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः ॥ भोज

१ 'ह्रदगोकुलात्' इति ख० । २ 'पूजाकर्पूरिकापुष्पास्तत्रैवैरण्डिकानि च' इति पाठान्तरम् ।

येद्ब्राह्मणान्दद्याद्वस्त्रयुग्मं गुरोरपि ॥ २५ ॥ विनायकस्नानमिदं यशस्यं रक्षोहणं विघ्नविनाशकारि ॥ सर्वामयघ्नं रिपुनाशकं च कर्तव्यमेतन्नियमेन राम॥२६॥इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं० रामं प्रति पुष्करोपाख्याने विनायकस्नानवर्णनन्नाम पञ्चोत्तरशततमोऽध्यायः ॥ १०५ ॥ पुष्कर उवाच ॥ स्नानमन्यत्प्रवक्ष्यामि तवाहं दुरितापहम् ॥ दानवेन्द्राय भुवने यज्जगादोशनाः पुरा ॥ १ ॥ धन्यं यशस्यमायुष्यं सर्वशत्रुक्षयंकरम् ॥ प्रभातायां तु शर्वर्यां भास्करेऽनुदिते तथा ॥ २ ॥ स्नायीत भार्गवश्रेष्ठ विधिदृष्टेन कर्मणा ॥ सौवर्णं राजतं कुम्भमथवापि महीमयम् ॥ ३ ॥ नादेयैः सागरैस्तोयैः कल्पयित्वा यथाविधि ॥ ओषधीर्विन्यसेत्तत्र समभागाः सुचूर्णिताः ॥ ४ ॥ जया च विजया चैव तथा सूक्ष्मफलानि च ॥ प्रसन्नमुखबीजानि भाण्डीरकुसुमानि च ॥ ५ ॥ क्षीरजापत्रनिर्माल्यं देवीनिस्सारमेव च ॥ कल्लीवराङ्गना चैव गजेन्द्रस्य च मञ्जरी ॥ ६ ॥ क्षुद्रजं करजं चैव धने द्वेद्वे विभावरी ॥ महौघं पूर्तगं चैव भुवं यक्षभुवं तथा ॥ ७ ॥ शशाङ्कमृगदर्पं च दानं च करिणस्तथा ॥ ओषध्यः कथितास्तुभ्यं दाने मन्त्रमतः शृणु ॥ ८ ॥ ( ॐनमो भगवते रुद्राय धवलपाण्डुरोपचितभस्मानुलिप्तगात्राय ॥ तद्यथा ॥ जय जय विजयविजय सर्वाञ्छत्रूनमुकस्य कलहविग्रहविवादेषु भञ्जभञ्ज मथमथ सर्वत्र प्रत्यक्षिकां योऽसौ युगान्तकाले दध्यक्षतैरिमां पूजां रौद्रीं मूर्तिसहस्तां सुसत्वां रक्षतु जीविकां संवर्तकाग्नितुल्यश्च त्रिपुरार्तिकरः यः सर्वदेवमयः सोऽपि तव रक्षतु जीवितं निखि निखि निखि स्वाहा ॥ ) एवं स्नातस्त्वनेनैव गात्रेण तिलतण्डुलम् ॥ घृताक्तं ज्वलिते वह्नौ जुहुयात्प्रयतः सदा ॥९ ॥ ततः सम्पूजनं कुर्याद्देवदेवस्य शूलिनः ॥ घृतक्षीराभिषेकेण गन्धपुष्पफलाक्षतैः ॥ १० ॥ दीपधूपनमस्कारैस्तथा वान्नेन भूरिणा ॥ गीतवाद्यैः सुमधुरैर्ब्राह्मणान्स्वस्तिवाचनैः ॥ ११ ॥ माहेश्वरस्नानमिदं हि कृत्वा रक्षोहणं शत्रुनिबर्हणं च ॥ कामानवाप्नोति नरस्तु सर्वान्यान्नाम कांश्चिन्मनसेच्छतीति ॥ १२ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं० रामं प्रति पुष्करोपाख्याने माहेश्वरस्नानवर्णनन्नाम षडुत्तरशततमोऽध्यायः ॥ १०६ ॥ पुष्कर उवाच ॥ स्नानान्यन्यानि ते वच्मि निबोध गदतो मम ॥ रक्षोघ्नानि यशस्यानि मङ्गल्यानि विशेषतः ॥ १ ॥ स्नानं घृतेन कथितं चायुषो वर्धनं परम् ॥ राम गोशकृता स्नानं परं लक्ष्मीविवर्धनम् ॥ २ ॥ स्नानं च कथितं दध्ना परं लक्ष्मीविवर्धनम् ॥ तथा दर्भोदकस्नानं सर्वपापनिबर्हणम् ॥ ३ ॥ पलाशबिल्वकमलकुशस्नानं पुरो हितम् ॥ वचा हरिद्रा मञ्जिष्ठा तगरं चारकं तथा ॥ ४॥ स्नानमेतद्विनिर्दिष्टं रक्षोघ्नं पापसूदनम् ॥ वचाहरिद्रया युक्तं स्नानं रक्षोहणं परम् ॥ ५ ॥ आयुष्यं च यशस्यं च धन्यं मेधाविवर्धनम् ॥ स्नानं पवित्रं मङ्गल्यं तथा काञ्चनवारिणा ॥ ६ ॥ क्रमादूनतरे किञ्चिद्रूप्य

ताम्रोदकैस्ततः ॥ तथा रत्नोदकस्नानं सङ्ग्रामविजयावहम् ॥ ७ ॥ वैडूर्यं मध्यतः कृत्वा प्रवालैः परिवारयेत् ॥ तेन पात्रेण यत्स्नानं सर्वकामकरं हितम् ॥ ८ ॥ स्नानं सर्वौषधैर्मुख्यं विवादे विजयप्रदम् ॥ सर्वगन्धोदकस्नानं सौभाग्यारोग्यकारकम् ॥ ९ ॥ तथा बीजोदकस्नानं सर्वकर्मप्रसाधकम् ॥ तथैवामलकस्नानमलक्ष्मीनाशनं परम् ॥ १० ॥ तिलसिद्धार्थकैः स्नानममङ्गल्यप्रणाशनम् ॥ केवलैर्वा तिलैः स्नानमथवा गौरसर्षपैः ॥ ११ ॥ स्नानं प्रियङ्गुना प्रोक्तं तथा सौभाग्यवर्धनम् ॥ सौभाग्यकं तथा स्नानं नागकान्ताप्रियङ्गुभिः ॥ १२ ॥ पुरोचारुककुष्ठैश्च तथैव च विनिर्दिशेत् ॥ धात्रीफलेन पद्मैश्च तथामलकवारिणा ॥ १३ ॥ लक्ष्मीवृद्धिकरं स्नानं कथितं भार्गवोत्तम ॥ पद्मोत्पलकदम्बैश्च तथा लक्ष्मीविवर्धनम् ॥ १४ ॥ बलामतिबलां चैव तथा नागबलामपि ॥ बलां मोटां चतुर्थीं तु स्नानं वै बलवर्धनम् ॥ १५ ॥ ब्रह्माककर्कोटकीमूलं कुमारी पद्मचारिणी ॥ स्नाने रोगविनाशाय स्मृताः प्रत्येकशो द्विज ॥ १६ ॥ मांसीमुराचोरकनागपुष्पैः सेनागदानैरतिनाशकारि ॥ तुरुष्ककक्कोलकजातिपूगैः फलैः समस्तैः सुतरां प्रदद्यात् ॥ १७ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं० रामं प्रति पुष्करोपाख्याने नानाविधस्नानवर्णनन्नाम सप्तोत्तरशततमोऽध्यायः ॥ १०७॥ राम उवाच ॥ स्नानानामिह सर्वेषां यत्स्नानमतिरिच्यते ॥ तन्समाचक्ष्व सकलं सर्वकल्मषनाशनम् ॥१॥ पुष्कर उवाच ॥ शृणु पादोदकस्नानं सर्वकिल्बिषनाशनम् ॥ श्रवणर्क्षं विना ह्येतद्भवत्यर्धफल यतः ॥ २ ॥ ततः कार्यं प्रयत्नेन श्रवणर्क्षे विशेषतः ॥ अथोत्तरासु षाढासु निराहारो जितेन्द्रियः ॥ ३ ॥ सर्वौषधैः सर्वगन्धैर्देवदेवस्य चक्रिणः ॥ पादं प्रलेपयेद्विद्वान्क्रमेण चतुरात्मनः ॥ ४ ॥ ततस्तु कलशान्कुर्याच्चतुरः सुदृढान्नवान् ॥ सौवर्णान्राजतान्ताम्रानथ वापि महीमयान् ॥ ५ ॥ ततोऽनिरुद्धचरणौ कूपाद्भिः क्षालयेत्ततः ॥ ताभिस्तु कलशं पूर्णं स्थापनीयं तदग्रतः ॥ ६ ॥ ततः प्रद्युम्नचरणौ क्षाल्यौ प्रस्रवणोदकैः ॥ कलशं पूरितं तच्च भवेत्स्थाप्यं तदग्रतः ॥ ७ ॥ संकर्षणस्य चरणौ क्षाल्यौ तोयैश्च सारसैः ॥ तैस्तु संपूर्णकलशं स्थाप्यं तस्याग्रतो भवेत् ॥ ८ ॥ वासुदेवस्य चरणौ नादेयैः क्षालयद्बुधः ॥ कलशं पूरितं तैश्च स्थापनीयं तदग्रतः ॥ ९ ॥ ततः पूजा तु कर्तव्या यथावच्चतुरात्मनः ॥ कलशान्पूजयेत्तांश्च गन्धमाल्यफलाक्षतैः ॥ १० ॥ ततः प्राप्ते द्वितीयेऽह्नि स्नातः पूर्वमुपोषितः ॥ सम्मुखश्चानिरुद्धस्य स्नाप्यश्च कटुको भवेत् ॥ ११ ॥ प्रद्युम्नस्य च देवस्य ततः संकर्षणस्य च ॥ ततश्च वासुदेवस्य यथा रामस्य चक्रिणः ॥ १२ ॥ ( पवित्रमन्त्रैः

१ 'स्नानं समस्ताशुभनाशकारि' इति ख० । २ 'कलशे' इति पाठान्तरम् ।

सर्वेषां घण्टानामभिमन्त्रणम्॥कर्तव्यं सात्त्वतेनाथ शुचिना भार्गवोत्तम ॥१३॥ अथ मन्त्रान्प्रवक्ष्यामि कलशेषु चतुर्षु ते॥) मङ्गल्यांश्च यशस्यांश्च सर्वाघविनिषूदनान् ॥ १४ ॥ अरुद्धमार्गाः सर्वत्र सर्वशश्चापराजिताः ॥ वायुमूर्तिरचिन्त्यात्मा सोऽनिरुद्धः स्वयं प्रभुः ॥ १५ ॥ पादोदकेन दिव्येन शिवेनाघविनाशिना ॥ तथाघमपहत्याशु शिवं वर्धयतां प्रभुः ॥ १६ ॥ लोकान्प्रद्योतयति यः प्रद्युम्नो भास्करप्रभः ॥ हुताशनः स तेजस्वी मङ्गलं विदधातु मे ॥ १७ ॥ कामदेवो जगद्योनिः सर्वशः प्रभुरीश्वरः ॥ दुःखहर्ता जगन्नाथो मङ्गलानि ददातु ते ॥ १८ ॥ जगतां कर्षणाद्देवो यः स सङ्कर्षणः प्रभुः ॥ रुद्रमूर्तिरचिन्त्यात्मा सर्वगः सर्वहारकः ॥ १९ ॥ कामपालोऽरिदमनः सर्वभूतस्य शङ्करः ॥ विश्वयोनिर्महातेजा मङ्गलानि ददातु ते ॥ २० ॥ सर्वावासो वासुदेवो भूतात्मा भूतभावनः ॥ सर्वगश्चाप्रमेयश्च पुरुषः परमेश्वरः ॥ २१ ॥ अनन्तः सर्वदेवेशो जगदाधारकारणः ॥ अघापहारी वरदो विदधातु श्रियं तव ॥ २२ ॥ एवं स्नातस्ततस्त्यक्त्वा तत्रैव स्नानवाससी ॥ शुक्लवासा उपस्पृश्य पूजां कुर्यात्क्रमेण तु ॥ २३ ॥ गन्धैः पुष्पैः फलैर्मुख्यैर्दीपैर्धूपैः सुगन्धिभिः ॥ नैवेद्यैर्विविधैश्चैव सात्त्वतानां च पूजनैः ॥२४॥ एवं देवार्चनं कृत्वा सात्त्वतां शान्तिदं शुभम् ॥ भोजनं गोरसप्रायं कृत्वा तिष्ठेत्सुयन्त्रितम् ॥ २५ ॥ प्रादुर्भावाणि मुख्यानि शृणुयात्केशवस्य च ॥ पाखण्डिपतितानां च वर्जयेद्दर्शनं तथा ॥ २६ ॥ इति पादोदकस्नानं प्रोक्तं रक्षोहणं तव ॥ मङ्गल्यं पापशमनमलक्ष्मीनाशनं परम् ॥ २७ ॥ सर्वविघ्नप्रशमनं सर्वबाधाविनाशनम् ॥ दुःस्वप्नारिष्टशमनं सर्वव्याधिहरं शिवम् ॥ २८ ॥ यात्रासिद्धिकरं धन्यं कर्मणां सिद्धिकारकम् ॥ शत्रुघ्नं बुद्धिदं मेध्यं बलायुःस्मृतिवर्धनम् ॥ सौभाग्यदं कामपरं यशःपुत्रविवर्धनम् ॥ २९ ॥ अमोघवीर्यं पुरुषोत्तमस्य पादोदकस्नानमिदं प्रदिष्टम् ॥ स्नानोत्तरं ते रणचण्डवेग भूयस्तु ते किं कथयामि राम ॥ ३० ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं० रामं प्रति पुष्करोपाख्याने पुरुषोत्तमपादोदकस्नानवर्णनन्नामाष्टोत्तरशततमोऽध्यायः॥ १०८ ॥ राम उवाच ॥ मणीनामथ काम्यानां श्रोतुमिच्छाम्यहं विधिम् ॥ सर्वकामकरं मुख्यं तथा च दुरितापहम् ॥ १ ॥ पुष्कर उवाच ॥ आथर्वणेन विधिना मणिकर्म निबोध मे ॥ ध्रुवस्तिष्ठेत्यृचा वृक्षं प्रत्यक्षमनुमन्त्रयेत् ॥ २ ॥ पादोनया मणिस्थानं प्रोक्षयेत्तु द्वितीयया ॥ अस्याः पादेनोत्तरेण निर्मिमीत मणिं ततः ॥ ३ ॥ सबन्धुश्चेति तमृचा तस्माच्छिन्द्यादिति श्रुतिः ॥ आहरेत मणिं तस्मात्सूक्तादस्मात्तृतीयया ॥ ४ ॥ सर्वत्र तु मणीनां च निर्माणं केवलं भवेत् ॥ उपयुक्तास्तु केवाक्षा द्रव्यास्ते परिकीर्तिताः ॥५॥ अङ्गुष्ठपर्वमात्रास्ते कर्तव्यास्तु समन्ततः॥ सम्यगुत्पादयेत्तेषां सम्यग्ग्रन्थिचतुष्ट

यम् ॥ ६ ॥ अग्रतो मूलतो वापि कल्पमानेऽतिरिच्यते ॥ अरातीयोरित्यनया छिन्द्याच्छस्त्रेण तत्त्ववित् ॥ ७ ॥ अर्थं च सुशिरः कृत्वा ततः प्रक्षाल्य वारिणा ॥ पात्रं तमग्नौ कृत्वा तु सम्यगेव यथाविधि ॥ ८ ॥ यत्राचक्रुरित्यनया ससूत्रमत उत्तरम् ॥ कुर्यात्तदग्निकुण्डं च प्रबोध्य जुहुयाद् घृतम् ॥ ९ ॥ प्रत्यृचा स्वेन मन्त्रेण सम्पातानयनं भवेत् ॥ कृतशान्त्युदके पात्रे रम्ये लोहमये दृढे ॥ १० ॥ स्वलिङ्गोद्धृतमन्त्रेण दर्विदण्डाद्ततः परम् ॥ विमुच्य सर्वं तेनैव मन्त्रेण भ्रामयेन्मणिम् ॥ ११ ॥ पात्रे तस्मिंस्ततस्तस्मादुद्धृत्या बन्धनं भवेत् ॥ सकलेनैव मन्त्रेण मन्त्रयेच्च तथोद्धृतम् ॥ १२ ॥ सामान्यमिदमुक्तं ते शृणु वैशेषिकं द्विज ॥ अभीवर्तमणौ कर्म तव वक्ष्याम्यतः परम् ॥ १३ ॥ अभीवर्त्तेन मणिने त्याद्याभिस्तिसृभिर्मणौ ॥ अत्रायं वासवं पात्रं द्वेभ्यश्च प्रत्यृचं पुनः १४ ॥ दत्त्वा सर्वेण सूक्तेन मणेराधन्वनं भवेत् ॥ अभीवर्तमणिः प्रोक्तो नो वा काष्ठान्भृगूत्तम ॥ १५ ॥ अयं योनिरत इति तस्य होमो विधीयते ॥ शशकेष्विह ये श्रान्तवत्सभैषज्यभाजनम् ॥ १६ ॥ क्षुद्रेषु यदपामार्गे मणिः शान्तविसंज्ञकः ॥ इत्येते यावदुक्ताः स्युर्विवाहमधुराश्च ये ॥ १७ ॥ पूर्वोक्तेन भवेद्धर्म एतेषामिति मे मतिः ॥ द्रव्यौषधिमणीनां च सभार्याणां तथैव च ॥ १८ ॥ दाक्षायणमणीनां च भवेद्धोमाधिको विधिः ॥ ओषधीनामिहेदानीं विधानं शृणु भार्गव ॥ १९ ॥ व्रीहीणां वा यवानां वा मूले तु परितः किरेत् ॥ यदि सौम्य सुमन्त्रेण फलकान्येकविंशतिः ॥ २० ॥ अमुष्मिन्स्था नरूढासु यथाभिलषितां बुधः ॥ योजयेन्नाम सम्भूतामस्मुकस्य विभूतये ॥ २१ ॥ घृताहुतेति च द्वाभ्यां घृतेन प्रोक्षयेत्ततः ॥ माते रिषसीत्यनया ज्ञात्वा तमभिमन्त्रयेत् ॥ २२ ॥ गन्धं संछादयेच्चैव ततो भूमेत्यनन्तरम् ॥ इत्यौषधीनां सर्वासां सामान्योऽयं विधिः स्मृतः ॥ २३ ॥ एकक्काद्यास्तु मणयः सलिङ्गं निखनेद् बुधः ॥ मन्त्रेण तान्प्रवक्ष्यामि यथावदनुपूर्वशः ॥ २४ ॥ एकाङ्क एककामायेत्येकांके विधिवत्खनेत् ॥ आक्रन्दयति सूक्तेन प्रदध्नां यथ्यथाविधि ॥ २५ ॥ इयं वीरुदित्यनया विधिवन्मधुघः खनेत् ॥ सूक्तेन सुकलेनास्य मणेराब न्धनं भवेत् ॥ २६ ॥ इमां खनामीत्यनया नितनीलिङ्ग्या खनिम् ॥ प्रतीची सोममसितां बध्नीयात्तु यथाविधि ॥ २७ ॥ यात्वा गन्धर्व इन्द्रा भ्यां कपिकच्छुं खनेद्बुधः ॥ सूक्तेनानेन तन्मेढ्रे प्रबध्नीयादिति स्थितः ॥ २८ ॥ इमां खनामीत्यनया दशधास्तुतया खनेत् ॥ पाठासूक्तेन बध्नी यादेकाराज्ञीमिति श्रुतिः ॥ २९ ॥ दशशीर्ष इति द्वाभ्यां महाख्यं विधिवत्खनेत् ॥ आपः पुनन्त्वित्यनेन बध्नीयात्तां यथाविधि ॥ ३० ॥ इमां खनाम्यौषधीं त्वां ढबीं नाम तथोत्खनेत् ॥ काण्डीयाऋक्तया त्वेते बध्नीयात्तु यथाविधि ॥ ३१ ॥ य आत्मजा इत्यनया खन्यादिति तथैव

ताम् ॥ अनेनैव प्रबध्नीयाद्विद्वान्सूक्तेन तं मणिम् ॥ ३२ ॥ अरिष्टस्त्वा खनतु वै पिप्पलं तु खनेत्तथा ॥ यावद्द्यौरिति सूक्तेन तस्य चाबन्धनं भवेत् ॥ ३३ ॥ साहसीनावचेत्येवं सैधकं च तथा खनेत् ॥ अनेनैव प्रबध्नीयात्सूत्रेण तु यथाविधि ॥ ३४ ॥ पयोऽसीत्यथवा हन्यात्स्वर्गपत्रीं यथाविधि ॥ सूक्तेन तां प्रबध्नीयादनेनैव यथाक्रमम् ॥ ३५ ॥ इमां खनामीत्यनया माषपर्णीं तथा खनेत् ॥ द्वाभ्यां चानर्थसक्तत्वप्रबध्नीया दिति श्रुतिः ॥३६॥ ततः खण्डारिकां खन्याद्राजा त्वां वरुणः खनेत्॥ऋचानया समस्तेन सूक्तेनाबन्धनं भवेत् ॥३७॥ एकार्कप्रभृतीनां तु लिङ्गः कल्प्यं फलं बुधैः ॥ सामीयात्वाह वरुणेत्येवमादिषु संश्रिताः ॥ ३८ ॥ सामीदयः पदार्थास्ते उपकृप्तास्तथा स्मृताः ॥ द्रव्यैस्तैस्तु मणिं कुर्या दाम्नायोक्तैर्यथाविधि ॥ ३९ ॥ तल्लिङ्गेन तु मन्त्रेण यथावदनुपूर्वशः ॥ कुष्ठस्य मणयः पञ्च उदपात्रे विदुर्बुधाः ॥ ४० ॥ प्रत्येकपाठसंस्कार शुद्धये वेति नः श्रुतम् ॥ चतुरस्रं प्रबध्नीयान्मणिमञ्जनवत्तथा ॥ ४१ ॥ सैन्धवं लवणं सिद्धमुभयत्र परिग्रहात् ॥ कुर्याद्वाक्ष्यं च संस्कारं व्याघ्र त्यपमणौ तथा॥४२ ॥ चतुरस्रौ तु कर्तव्यौ मणी कारणकालजौ ॥ नैमित्तिकाश्च मणयो मणयः संविदुश्च ये ॥ ४३ ॥ स्वंस्वं मन्त्रं भवेत्तेषा मिति मे निश्चिता मतिः ॥ नैमित्तिकानां घोरास्ते तेषां नैमित्तिकं भवेत् ॥ ४४ ॥ सम्पदानां तथा मध्ये साम्पदं नात्र संशयः ॥ सीमात्र्यात्वाहे त्यनेन सीमसं जनवद्भवेत् ॥ ४५ ॥ पिशाचशातनः पुंसां यातुधानविनाशनः ॥ मन्त्रलिङ्गादयं ज्ञेयो मन्त्रश्चास्य प्रवक्ष्यते ॥ ४६ ॥ शरकाष्ठे तु संयोज्य सीसं कृत्वेति बुद्धिमान् ॥ भार्ङ्गीं ज्यां धनुषः कृत्वा बाधकेनाथ तेन तत् ॥ ४७ ॥ भूमौ पिशाचमालिख्य भगवेन तु ताडयेत् ॥ उत्तरेण शरेणैव पिशाचो नाशमाप्नुयात् ॥ ४८ ॥ शंकुधारमणेर्मन्त्र अनुसूर्यमिति स्मृतिः ॥ अज्ञातवर्णशाब्दाश्च रोहितस्य परिग्रहः ॥ ४९ ॥ चर्मणः स्यात्तथा वर्गो रोहितासाभवेच्च गाः ॥ शंकुर्निधीयते यत्र विस्तरार्थं तु चर्मणः ॥ ५० ॥ तस्माद्देशान्मणिः कार्यः शंकुर्धनपरिग्रहः ॥ मणिर्धनं च दुग्धं स्यादुपविष्टाय चर्मणि ॥ ५१ ॥ यजमानाय धर्मज्ञ उदपात्रं तथामया ॥ अतिकामल रोगघ्नमायुष्यश्च तथा मणिः ॥ ५२ ॥ इमं मे कुष्ठेत्यनेन पञ्चानां स्यात्परिग्रहः ॥ अत्यर्थमेव नैतेषां जलं कुष्ठेन संयुतम् ॥ ५३ ॥ सत्कृत्य पानयोगत्वाद्यजमानः पिबेत्ततः ॥ मणयः पञ्चकुष्ठे द्वौ मणिशब्दपरिग्रहम् ॥ ५४ ॥ तुल्येन विधिना कार्याः फलं तेषां पृथक्पृथक् ॥ शिरोर्तिनाशनः पूर्वो द्वितीयो विषदूषकः ॥ ५५ ॥ तृतीयश्च तथा प्रोक्तो विषमज्वरनाशनः ॥ चतुर्थश्च तथा प्रोक्तः सततज्वरनाशनः ॥ ५६ ॥ चक्षुष्यः पञ्चमः प्रोक्तो मणिर्भार्गवनन्दन ॥ कृत्वोदपात्रं कुष्ठाम्भो नवनीतविमिश्रितम् ॥ ५७ ॥ भूयः कुष्ठं क्षिपेत्तत्र मणिं तत्रावतारयेत् ॥ मणि

बन्धं ततः कृत्वा तोयं तत्पाययेन्नरम् ॥ ५८ ॥ लिप्येच्च सरुजं देशमुदपात्रजलेन तु ॥ याः पुरस्तादित्यनेन मणिः स्याल्लवणस्य तु ॥ ५९ ॥
पितुर्वस्त्रपुटे बद्धा लवणस्य तु तन्मणिम् ॥ आबन्धे कुष्ठवत्स्याच्च यातुधानविनाशनः ॥ ६० ॥ व्याघ्ररूप इत्यनेन खंतव्यं बाटरूषकम् ॥
व्याघ्ररूप इति द्वाभ्यामृग्भ्यामाबन्धनं भवेत् ॥ ६१ ॥ पिशाचनाशकस्त्वेवं स मणिः स्यादसंशयम् ॥ एवमेवोत्तराभ्यां च भवेप्रत्यभिचारकः ॥
॥ ६२ ॥ विष्कन्दस्येत्यनेनाह त्रिपर्णी विश्वभेषजी ॥ स्कन्दस्योपरि यः स्कन्दो भवेत्तस्य विनाशिनी ॥ ६३ ॥ यस्मादङ्गादिति भवेद्गणादि
त्वात्परिग्रहः ॥ गणस्य कर्म सामान्यं प्रतिसूक्तं न कारयेत् ॥ ६४ ॥ गोराचवारि कर्माणि हन्तव्यानीवमादिभिः ॥ पतङ्गाद्याश्च चत्वारः संस्कृ
त्य प्राणिनो बुधः ॥ ६५ ॥ तृष्णत्वतैश्च मन्त्रेण गात्रं प्रक्षालयेत्खिलम् ॥ प्रथमेन तु सूक्तेन वेणुपौत्रे द्रवो मणिः ॥ ६६ ॥ वेणुः कुर्याद्भवेद्धर्मो
वाक्षवद्देवदारुणः ॥ संस्कृत्य पूर्वमन्त्रेण माषकादीन्प्रमर्दयेत् ॥ ६७ ॥ गात्रसंस्कारसहितैः पिष्टैर्वा प्रकृतिभृशम् ॥ केवलेनैव मन्त्रेण मर्दयेत्तु
विनश्यति ॥ ६८ ॥ तथा स्वलोमप्रभृती विघूलो धूशिरो युतिः ॥ देवप्रवेशं जतुना स्थगयित्वा तु रक्तिका ॥ ६९ ॥ दूष्या इति प्रतीकेन कुर्या
त्प्रतिसरं मणिम्॥ कृत्वा दूषणमायुष्यं तदा प्रत्यभिवादकः॥७०॥अयं प्रतिसरः पाणौ यात्राकाले सपत्नहा ॥ सूत्रेणानेन बध्नीयाल्लिङ्गात्प्रतिसरो
परः॥७१॥ अनेन विधिना वृत्रं निजघान शतक्रतुः ॥ अशंस इति मन्त्रेण प्रबध्नीयाद्यथाविधि॥७२॥भूतिश्रीप्रभृतीनां च विघ्नमेवं करोति यः ॥
विनाशनं तस्य भवेदाबन्धाद्यक्षनाशनम्॥७३॥ज्यासूत्रप्रोथिताः सप्त वंशप्राप्ताः समुद्भवाः ॥ रत्तयान्तरव्यवहिता गर्भिण्या उद्धरेद् बुधः ॥ ७४॥
मासे चतुर्थे बधनीयान्मन्त्रेणानेन बुद्धिमान् ॥ एकैकस्मिन्नतीते तु मासे सूत्रान्तरे मणिः ॥ ७५॥ एकैकं प्रक्षिपेद्धीमान्ससूत्रं पश्चिमं तथा ॥ प्राची
दिगिति मन्त्रेण उदीची भयनाशनी ॥७६ ॥ अक्षीयाभ्यामित्यनेन दाप्यः स्याद्यक्ष्मनाशनः ॥ सन्धानार्थं शीतमग्ने रात्रीमातेत मोहनः ॥ मयू
रगोसुरवृद्धौ द्वौ वेतीति प्रकीर्तितम् ॥७७॥ प्रोक्तास्तथैते मणयो नृवीर काम्या मया सर्वहिताय पुण्याः ॥ येषां हि बन्धो दुरितापहारी भयापहः
केवलवृद्धिकारी ॥७८॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं० रामं प्रति पुष्करोपाख्याने मणिबन्धवर्णनन्नाम नवोत्तरशततमोऽध्यायः ॥
॥ १०९॥ राम उवाच ॥ भगवञ्छ्रोतुमिच्छामि कर्म काम्यमहं नृणाम् ॥ कृतेन येन कामानां नरो भवति भाजनम् ॥ १॥ पुष्कर उवाच ॥ सर्वे
षामेव कामानामीश्वरो भगवान्हरिः ॥ तस्य सम्पूजनादेव सर्वान्कामानुपाश्नुते ॥ २ ॥ स्नापयित्वा घृतक्षीरैश्चन्दनेनानुलेपयेत् ॥
शुक्लैः सम्पूज्य पुष्पैश्च सप्तमस्य बलिं हरेत् ॥ ३ ॥ रक्तपित्तान्नरो घोरान्मुच्यते नात्र संशयः ॥ तैलक्षौद्रघृतैर्देवं स्नापयित्वा जनार्दनम् ॥ ४ ॥

 

भस्मत्रयेणानुलिप्य सम्पूज्य कुसुमैः सितैः ॥ पञ्चमुद्गबलिं दद्यादतीसारात्प्रमुच्यते ॥ ५ ॥ संस्नाप्य पञ्चगव्येन दत्त्वा पञ्चानुलेपनम् ॥ पञ्चसस्यबलिं दत्त्वा सुखं कुष्ठात्प्रमुच्यते ॥ ६ ॥ त्रिरसस्नापितं देवं त्रिसुगन्धेन लेपितम् ॥ कृत्वा दत्त्वा त्रिसूत्रं च बलिं कामाद्वि मुच्यते ॥ ७ ॥ स्नापयित्वा तु तैलेन त्रिभिरुष्णैर्विलेपयेत् ॥ पञ्चमाषबलिं दत्त्वा वातव्याधिं विमुञ्चति ॥ ८ ॥ द्विस्नेहस्नपितं देवं शीतोष्णेनानुलेपितम् ॥ पञ्चभिः स्नापयित्वा च रसैर्देवं जनार्दनम् ॥ ९ ॥ अनुलिप्य च धर्मज्ञ तथा पञ्चसुगन्धिना ॥ पञ्चवर्णानि पुष्पाणि तथा दत्त्वा यथाविधि ॥ १० ॥ धूपं च पञ्चनिर्यासं दत्त्वा चैवाप्यनुत्तरम् ॥ ततश्च पञ्चमधुरं बलिं सम्यङ् निवेदयेत् ॥ ११ ॥ अनेन रोगतः शीघ्रं मुच्यते नात्र संशयः ॥ विष्णुं सहस्रमूर्धानं चराचरगुरुं हरिम् ॥ १२ ॥ स्तुवन्नामसहस्रेण ज्वरान्सर्वान्व्यपोहति ॥ घृतेन स्नापितं देवं चन्दनेनानुलेपयेत् ॥ १३ ॥ पञ्चभिर्जलजैः पुष्पैस्ततः सम्पूजयेद्विभुम् ॥ धूपं दद्यात्रिवारं च पञ्चगव्यं तथा बलिम् ॥ ॥ १४ ॥ पञ्चगौडं तथा राम बद्धो मुच्येत बन्धनात् ॥ त्रिशीतस्नापितं देवं त्रिशीतेनानुलेपयेत् ॥ १५ ॥ त्रिशीतैः कुसुमैः पूज्यं धूपं दद्यात्रिशीतलम् ॥ त्रिशीतं च बलिं दत्त्वा राजकोपाद्विमुच्यते १६ ॥ शीतोष्णस्नापितं देवं त्रिशीतैरनुलेपयेत् ॥ धूपं दत्त्वा च शीतोष्णं शीतोष्णं च तथा बलिम् ॥ १७ ॥ गुरुप्रसादमाप्नोति नात्र कार्या विचारणा ॥ यमलस्नापितं देवं यमलेनानुलेपितम् ॥ १८ ॥ अभ्यर्च्य यमलैः पुष्पैर्धूपं च यमलं दहेत् ॥ यमलं च बलिं दत्त्वा सौभाग्यं प्राप्नुयान्नरः ॥ १९ ॥ सौभाग्यकामा नारी च सौभाग्यं महदाप्नुयात् ॥ सौभाग्यकामोऽपि नरः सौभाग्यं महदश्नुते ॥ २० ॥ त्रिभिः संस्नापितं देवं सौभाग्यं महदाप्नुयात् ॥ त्रिभिः फलैः स्नापयित्वा त्रिसारेणानुलेपयेत् ॥ २१ ॥ त्रिशीतं च बलिं दद्याद्यशः प्राप्नोत्यनुत्तमम् ॥ त्रितैलस्नापितं देवं त्रिरक्तेनानुलेपितम् ॥ २२ ॥ धूपयेन्महिषाक्षेण त्रिरक्तं च बलिं हरेत् ॥ रौद्रकर्म तु प्राप्नोति सिद्धिरस्ति न संशयः ॥ २३ ॥ त्रिगन्धस्नापितं देवं त्रिशीतेनानुलेपितम् ॥ पूजयेच्छ्वेतपद्मानां सहस्रेण महाभुजम् ॥ ॥ २४ ॥ निवेद्य परमान्नं च श्रियं प्राप्नोत्यनुत्तमाम् ॥ घृतेन स्नापितं देवं चन्दनेनानुलेपितम् ॥ २५ ॥ परमान्नं बलिं दत्त्वा यथेष्टं काममाप्नुयात् ॥ घृतेन स्नापितं देवं चन्दनेनानुलेपितम् ॥ २६ ॥ अपूपैः परमान्नेन कुल्माषेण च पूजयेत् ॥ आम्रातकानां मुख्यानां ततस्त्वष्टाधिकं शतम् ॥ २७ ॥ क्षौद्रन्त्रिवृत्तं देवाय यथावद्विनिवेदयेत् ॥ सौभाग्यं महदाप्नोति नात्र कार्या विचारणा ॥ २८ ॥ पञ्चगव्यबलिं दत्त्वा धनमाप्नोत्यनुत्तमम् ॥ त्रिरक्तस्नापितं देवं त्रिरक्तेनानुलेपितम् ॥ २९ ॥ रक्तपुष्पैः समभ्यर्च्य त्रिभिरेव यथाविधि ॥ त्रिरक्तं च बलिं दत्त्वा हुत्वा वै सर्षपत्रयम् ॥ ३० ॥

त्रिलोहं दक्षिणां दत्त्वा शत्रुनाशमवाप्नुयात् ॥ त्रिफलस्नापितं देवं त्रिरक्तेनानुलेपितम् ॥ ३१ ॥ त्रिशीतं च बलिं दत्त्वा पुन्नामकुसुमानि च ॥ पुन्नामकानि मुख्यानि फलानि विविधानि च॥३२॥ पुत्रजन्म समाप्नोति नात्र कार्या विचारणा ॥ घृतेन स्नापितं देवं त्रिरक्तेनानुलेपितम्॥३३॥ कृत्वा तदेव धूपं तु दत्त्वा क्षीरं निवेदयेत् ॥ घृतपूरं बलिं दत्त्वा नरः प्राप्नोति जीविकाम् ॥ ३४ ॥ क्षीराज्यस्नापितं देवं चन्दनेनानुलेपितम् ॥ तदेव धूपं दातव्यं जातीपुष्पाणि चाप्यथ ॥ ३५ ॥ पञ्चगव्यबलिं दत्त्वा हुत्वा वह्नौ तथा घृतम् ॥ गां च दत्त्वा महाभाग गाः समाप्नोति मानवः ॥ ३६ ॥ यमलस्नापितं देवं यमलेनानुलेपितम् ॥ अभ्यर्च्य यमलैः पुष्पैर्धूपं च यमलं दहेत् ॥ ३७ ॥ यमलं च बलिं दत्त्वा जुहुयादक्षतांस्तथा ॥ तिलसिद्धार्थकयुतान्सर्पिः क्षीरं घृतं तथा ॥ ३८ ॥ अश्वं च दक्षिणां दत्त्वा हयान्प्राप्नोत्यनुत्तमान् ॥ घृतेन स्नापितं देवं तथैव घृतलेपितम् ॥ ३९ ॥ पुष्पैश्चतुर्भिः सम्पूज्य धूपं दत्त्वा चतुःसमम् ॥ त्रिशुकं च तथा दत्त्वा तथैव पानकत्रयम् ॥ ४० ॥ त्रिशुकं च तथा हुत्वा त्रिस्नेहेन समन्वितम् ॥ त्रिलोहं दक्षिणां दत्त्वा गाणपत्यमवाप्नुयात् ॥ ४१ ॥ मधुरत्रितयेनाथ स्नापयित्वा जनार्दनम् ॥ अनुलिम्पेत्त्रिशीतेन पूजयेच्चमकैस्तथा ॥ ४२ ॥ धूपं दहेत्त्रिशीतेन दद्यात्त्रिमधुरं बलिम् ॥ मधूकपुष्पाणि तथा द्राक्षां खर्जूरमेव च ॥ ४३ ॥ सर्वभूतैः सहाप्नोपि सख्यमेव न संशयः ॥ घृतेन स्नापितं देवं वचया निशया तथा ॥ ४४॥ चन्दनेनानुलिम्पेत्तु जातीपुष्पैरथार्चयेत् ॥ घृतक्षौद्रयुतं दत्त्वा तथा धूपं च गुग्गुलम् ॥ ४५ ॥ त्रिशूकं च बलिं दत्त्वा तथा त्रिलवणं नरः ॥ कनकं दक्षिणां दत्त्वा विद्यामाप्नोत्यभीप्सिताम् ॥ ४६ ॥ चन्दनमाज्यं जाती परमान्नं गुग्गुलुं च देवाय॥ दत्त्वा भक्त्या पुरुषः सर्वान्कामानवाप्नोति॥४७॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं०रामं प्रति पुष्करोपाख्याने भगवदनुलेपनस्नानवर्णनन्नाम दशोत्तरशततमोऽध्यायः ॥११०॥ राम उवाच ॥ भगवञ्छ्रोतुमिच्छामि पापानां कर्मणां फलम् ॥ त्वत्तः कमलपत्राक्ष तन्ममाचक्ष्व पृच्छतः ॥१॥ पुष्कर उवाच ॥ भुक्त्वैवान्नमभोज्यं तु नरकं याति मानवः ॥ व्रतलोपे तदर्धं च प्रकीर्णे तु दशाहकम् ॥ २ ॥ अग्निहोत्रसमिद्यादीन्सहस्रं याति वत्सरान् ॥ महापातकिनः सर्वे कल्पं पश्यन्ति भार्गव ॥ ३ ॥ मन्वन्तरं तु तां कृत्वा नरकं प्रतिपद्यते ॥ चतुर्युगं क्षत्रियहा वैश्यहा त्रियुगं तथा॥४॥शूद्रं हत्वा महाभाग युगं तु नरकं व्रजेत् ॥ यावन्ति पशुरोमाणि तावत्कृत्वेह मानवः ॥५॥ वृथापशुघ्नः प्राप्नोति वर्षाणि नरकं नरः ॥ द्रव्याणामल्पसाराणां स्तेयं कृत्वान्यवेश्मतः ॥ ६ ॥ याति संवत्सरशतं गुरुब्राह्मणताडनात् ॥ तच्छत्रवर्ती नृपतिः कल्पं पश्यति मानद ॥ ७ ॥ पक्षपाती तथा सभ्यस्तावदेव भृगूत्तम ॥ ब्राह्मणस्य च शूद्रस्य सहस्रं भृगुसत्तम ॥ ८ ॥

शोणितं यावतः पांसून्निगृह्णाति महीतले ॥ तावद्वर्षसहस्राणि नरकं प्रतिपद्यते ॥ ९ ॥ राजनि प्रहरेद्यस्तु कृतगाम्याति दुर्मतिः ॥ अराजा नरकं याति स तु कल्पशतं नरः ॥ १० ॥ नित्यान्यकुर्वन्धर्माणि तथा वर्षशतं व्रजेत् ॥ द्रुमाणां छेदने राम पञ्चाशद्वर्षमेव तु ॥ ॥ ११ ॥ गुल्मवल्लीलतानां तु दशवर्षाणि भार्गव ॥ अनागसामथाक्रोशे तिरश्चामथ ताडने ॥ १२ ॥ तावदेव यथाकालं नरकं प्रतिपद्यते ॥ अगम्यागामिनः सर्वे महापातकिभिः समाः ॥ १३ ॥ अनिविष्टां भृतिं भुक्त्वा द्वे शते प्रतिपद्यते ॥ तथा पुस्तकहारी च सहस्रं याति वत्सरान् ॥ १४ ॥ सस्यानां नाशकारी च नरकं प्रतिपद्यते ॥ अगारवनदाही च नास्तिकश्च तथा नरः ॥ १५ ॥ कल्पमेकं प्रपद्यन्ते नरकं नात्र संशयः॥ देवतानां द्विजातीनां शास्त्राणां निन्दकस्तथा॥१६॥श्रुतीनां दूषकश्चैव तावदेव द्विजोत्तम॥ प्रतिश्रुत्य तथा चार्थं यो न दद्यान्महाभुज ॥ १७ ॥ आश्रितस्य परित्यागं वृथा कुर्याद्द्विजोत्तम ॥ अपराधं तथा राम वृथा भार्यावमन्तकः ॥ १८ ॥ क्रतुहा चैव धर्मज्ञ सहस्रं पतिपद्यते ॥ बहूनि राम पापानि पापेषूक्तेषु भार्गव ॥ अन्तर्भावं प्रपद्यन्ते तानि चिन्त्यानि धर्मतः ॥१९ ॥ नरकाणां गणनमुदितं पापानां ते मया राम ॥ एतच्च भवति घोरं त्वनुबन्धकृतं मनुष्याणाम्॥२०॥इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं०रामं प्रति पुष्करोपाख्याने पापनिश्चयो नामैकादशोत्तरशततमोऽध्यायः ॥१११॥ राम उवाच ॥ जन्तुः कथं सम्भवति कथं चैव विपद्यते ॥ कथं देहान्तरं याति तन्ममाचक्ष्व पृच्छतः ॥ १ ॥ पुष्कर उवाच ॥ विश्वस्यावरणं राम तथैवाण्डं न हेम यत् ॥ तथा प्राणिशरीरस्य पार्थिवत्वं महाभुज ॥ २ ॥ आकाशे नरशार्दूल यथैवाण्डं व्यवस्थितम् ॥ सुषिरं तद्वदेवेह पुरुषस्य शरीरगम् ॥ ३ ॥ धारयन्ति यथा विश्वमण्डस्याभ्यन्तरे स्थिताः ॥ वाय्वग्निसोमाः सततं तथा देहं शरीरिणाम् ॥ ४ ॥ आधारभूते द्वे भूते आद्यन्ते सर्वदेहिनाम् ॥ प्रपद्यन्ते महाभाग कललत्वं हि तत्क्षणात् ॥ ५ ॥ करोति तत्र च ततः प्रवेशं कर्मचोदितः ॥ वायुभूतस्तथा जीवस्त्यक्त्वा भोगविवर्धनम् ॥ स्वर्गाद्वा नरकाद्देहं तिर्यग्योनावथापि वा ॥ ६ ॥ एवं प्रवेशं स करोति गर्भे जीवस्तदा कर्मवशानुबन्धात् ॥ ततः प्रविष्टस्तु तथा स मूढो मासांश्च षट् तिष्ठति वेद नित्यः॥७॥इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं०रामं प्रति पुष्करोपाख्याने गर्भसंक्रान्तिवर्णनन्नाम द्वादशोत्तरशततमोऽध्यायः ॥ ११२ ॥ राम उवाच ॥ भोगदेहं कथं त्यक्त्वा जीवो गर्भं प्रपद्यते ॥ भोगदेहश्च कः प्रोक्तस्तं ममाचक्ष्व पृच्छतः ॥ १ ॥ पुष्कर उवाच ॥ आतिवाहिकगर्भस्य देहो भवति भार्गव ॥ केवलं तं मनुष्याणां मृत्युकाल उपस्थिते ॥ २ ॥ याम्यैर्नरैर्मनुष्याणां तच्छरीरं भृगूत्तम ॥ नीयते याम्यमार्गेण

नान्येषां प्राणिनां द्विज ॥ ३ ॥ मनुष्याः प्रतिपद्यन्ते स्वर्गं नरकमेव वा ॥ नैवाऽन्ये प्राणिनः केचित्सर्वं ते फलभोगिनः ॥ ४ ॥ शुभानामशु
भानां वा कर्मणां भृगुनन्दन ॥ संचयः क्रियते लोके मनुष्यैरेव केवलम् ॥ ५ ॥ तस्मान्मनुष्यस्तु मृतो यमलोकं प्रपद्यते ॥ नान्यः प्राणी महा
भाग फलयोनौ व्यवस्थितः॥६॥गच्छँल्लोके प्रपन्नस्य पुरुषस्य तथा यमः॥योनीश्च नरकांश्चैव निरूपयति कर्मणाम्॥७॥ पूजनीयाश्च ते तेन वैवस्व
तमपश्यत॥ मरणानन्तरं प्रोक्तं तिरश्चां गर्भसम्भवम् ॥८॥ वायुभूताश्च ते गर्भं प्रपद्यन्ते न संशयः ॥ मनुष्यस्तु मृतो राम नीयते यममन्दिरम्॥९॥
तथा कर्मानुरूपेण यमं पश्यत्यसौ ततः ॥ घोरं पापस्तथा धर्मे निविष्टः सौम्यदर्शनम् ॥ १० ॥ धर्मिष्ठः पूज्यते तत्र ह्यासनेनोदकेन च ॥
पाशबद्धगलः पापः पीड्यते वै यमाग्रतः ॥ ११ ॥ चित्रगुप्तास्ततस्तस्य स्वर्गं नरकमेव च ॥ निवेदयन्ति धर्मज्ञ स तु पिण्डाशनस्ततः ॥ १२ ॥
तदा त्यक्त्वा तु तद्देहं प्रेतदेहं प्रपद्यते ॥ प्रेतलोके तु वसतिर्वर्षं तस्य तु कीर्तिता ॥ १३ ॥ क्षुत्तृष्णे प्रत्यहं तत्र भवतो भृगुनन्दन ॥
अहोरात्रं तु तत्रापि मानुष्यं परिकीर्तितम् ॥ १४ ॥ आमश्राद्धास्तथा दत्ता भुज्यंते तत्र मानवैः ॥ अतिवाहिकदेहात्तु प्रेतपिण्डैर्विना नरः ॥ १५॥
न हि मोक्षमवाप्नोति पिण्डांस्तत्रैव सोऽश्नुते ॥ कृते सपिण्डीकरणे नरः संवत्सरात्परम् ॥ १६ ॥ प्रेतदेहं समुत्सृज्य भोगदेहं प्रपद्यते ॥
तदादौ भुज्यते तत्र यत्स्तोकं भृगुनन्दन ॥ १७ ॥ भोगदेहावुभौ प्रोक्तौ शुभाशुभकसंज्ञकौ ॥ भोगदेहं शुभं तस्य देवरूपस्य जायते ॥ १८ ॥
नानाप्रकारमशुभं नीरूपं घोरदर्शनम् ॥ यादृशं तस्य मानुष्यं रूपमासीत्पुरातनम् ॥ १९ ॥ किञ्चित्तस्य तु सादृश्यं तत्रापि प्रतिपद्यते ॥
भुक्त्वा स भोगदेहेन यथाकालं त्रिविष्टपम् ॥ २० ॥ कर्मण्यल्पावशेषे तु त्रिदिवाद्विनिपात्यते ॥ त्रिदिवात्पतितं तस्य भोगदेहं तु
राक्षसाः ॥ २१ ॥ भक्षयन्ति तदा भूमौ विकृता भीमदर्शनाः ॥ पापे तिष्ठति चेत्स्वर्गे तेन भुक्तं तथा द्विज ॥ २२ ॥ तदा द्वितीयं गृह्णाति
भोगदेहं तु पापिनम् ॥ भुक्त्वा पापं तु ते पश्चात्तेन भुक्तं त्रिविष्टपम् ॥ २३ ॥ शुचीनां श्रीमतां गेहे स्वर्गभ्रष्टोऽभिजायते ॥ पुण्ये
तिष्ठति चेत्पापं तेन भुक्तं तदा भवेत् ॥ २४ ॥ तस्मिन्सम्भक्षिते देहे शुभं गृह्णाति विग्रहम् ॥ कर्मण्यल्पावशेषे तु नरकादपि मुच्यते ॥ २५ ॥
मुक्तस्तु नरकाद्याति तिर्यग्योनिमसंशयम् ॥ तत्राप्यशेषतः पापं न तदश्नाति भार्गव ॥ ततोऽवशेषं मानुष्यं भुंक्तेऽसौ कृतलक्षणः ॥२६॥ रज्जुर्यथा
स्याद्बहुतन्तुबद्धा विकर्षणं शक्तिमती गुरूणाम् ॥ स्वर्गाय पुण्यं नरकाय पापं तथा नृणां स्यादिह भार्गवाग्र्य ॥ २७ ॥ इति श्रीविष्णुधर्मोत्तरे
द्वितीयखण्डे मा०सं०रामं प्रति पुष्करोपाख्याने भोगदेहवर्णनन्नाम त्रयोदशोत्तरशततमोऽध्यायः ॥ ११३ ॥ पुष्कर उवाच ॥ जीवः प्रविष्टो गर्भे

तु कललं प्रति तिष्ठति ॥ मूढस्तु कलले तस्मिन्मासमात्रं हि तिष्ठति ॥१॥ द्वितीयं तु तदा मासं घनीभूतः स तिष्ठति ॥ तस्यावयवनिर्माणं तृतीये मासि जायते ॥ २ ॥ त्वक्चर्म पञ्चमे मासि षष्ठे रोम्णां समुद्भवः ॥ सप्तमे च तथा मासि प्रबोधश्चास्य जायते ॥ ३ ॥ स जीवोऽपि हि माण्डूकः शीते शीतादितोभ्यसुः ॥ मूढस्तिष्ठति धर्मज्ञ षण्मासान्गर्भगस्तथा ॥ ४ ॥ मातुराहारपीतं तु सप्तमे मास्युपाश्नुते ॥ अष्टमे नवमे मासि भृशमुद्विजते तदा ॥ ५ ॥ जरायुवेष्टितो देहो मूर्ध्नि बद्धाञ्जलिः सदा ॥ मध्ये क्लीबस्तु वामे स्त्री दक्षिणे पुरुषस्तथा ॥ ६ ॥ तिष्ठत्युत्तरभागे तु पृष्ठस्याभिमुखस्तथा ॥ यस्यां तिष्ठति सा योनौ तां तु वेत्ति न संशयम् ॥ ७ ॥ सर्वं स्मरति वृत्तान्तं त्वारभ्य जन्मतस्तथा ॥ अन्धकारे च महति पीडां विन्दति भार्गव ॥ ८ ॥ कीटगन्धेन महता कल्मषं विन्दते परम् ॥ मात्रानीते जले पीते परं शीतमुपाश्नुते ॥ ९ ॥ उष्णे भुक्ते तदा दाहं परमाप्नोति भार्गव ॥ व्याधिभिः परमां पीडां तीव्रां प्राप्नोति दुःसहाम् ॥ १० ॥ व्यायामे च तथा मातुः क्लमं महदुपाश्नुते ॥ व्याधितायां तथा तीव्रां वेदनां समुपाश्नुते ॥ ११ ॥ भवन्ति व्याधयश्चास्य तत्र घोराः पुनःपुनः ॥ न च माता पिता वेत्ति तदा कश्चिच्चिकित्सकः ॥ १२ ॥ सौकुमार्याद्रुजं तीव्रां जनयन्ति तु तस्य ताः ॥ आधिभिर्व्याधिभिश्चैव पीड्यमानस्य दारुणैः ॥ १३ ॥ स्वल्पमध्येऽथ तत्कालं याति वर्षशतोपमम् ॥ सन्तप्यते तथा गर्भे कर्मभिश्च पुरातनैः ॥ १४ ॥ मनोरथानि कुरुते सुकृतार्थं पुनःपुनः ॥ जन्म चेदहमाप्स्यामि मानुष्ये दैवयोगतः ॥ १५ ॥ ततः कर्म करिष्यामि येन मोक्षो भवेन्मम ॥ नास्ति मोक्षं विना सौख्यं गर्भवासे कथञ्चन ॥ १६ ॥ गर्भवासश्च सुमहल्लोके दुःखैककारणम् ॥ एवं विचिन्तयानस्य तस्य वर्षशतोपमम् ॥ १७ ॥ मासत्रयं तद्भवति गर्भस्थस्य प्रपीडयतः ॥ ततस्तु काले सम्पूर्णे प्रबलैः सूतिमारुतैः ॥ १८ ॥ भवत्यवाङ्मुखो जन्तुः पीडामनुभवन्पराम् ॥ अधोमुखः संकटेन योनिद्वारेण वायुना ॥ १९ ॥ निःसार्यते बाण इव यन्त्रच्छिद्रेण सज्वरः ॥ योनिनिष्क्रमणात्पीडां चर्मोत्कर्तनसन्निभाम् ॥ २० ॥ प्राप्नोति च ततो जातः तीव्रं शीतमसंशयम् ॥ जन्मज्वराभिभूतस्य विज्ञानं तस्य नश्यति ॥ २१ ॥ करसंस्पर्शनान्मातुर्न च जानात्यसौ तदा ॥ करपत्रस्य संस्पर्शान्मासमात्रं विमोहितः ॥ २२ ॥ संभवमेतद्गर्भे प्रोक्तं जन्तोर्मया तुभ्यम् ॥ क्रमतो वच्मि तवाहं तत्सत्यं ब्रूहि धर्मज्ञ ॥ २३ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं०रामं प्रति पुष्करोपाख्याने सम्भववर्णनन्नाम चतुर्दशोत्तरशततमोऽध्यायः ॥ ११४ ॥ ॥ राम उवाच ॥ शरीरं सकलं देव तन्ममाख्यातुमर्हसि ॥ एतदेव परं ज्ञानं त्वं हि वेत्सि महाभुज ॥ १ ॥ पुष्कर उवाच ॥ भूमिः पञ्चगुणा ज्ञेया जलं ज्ञेयं चतुर्गुणम् ॥ तेजस्तु त्रिगुणं राम पवनो द्विगुणो मतः ॥ २ ॥

तत्रैकगुणमाकाशं नित्यं ज्ञेयं मनीषिभिः ॥ शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः ॥ ३ ॥ भूमेर्गुणं विजानीयादुपान्ते गन्धवर्जिताः ॥ रसगन्धविहीनास्तु तेजसः परिकीर्तिताः ॥ ४ ॥ गन्धो रसस्तथा रूपं नास्ति वायोर्भृगूत्तम ॥ गन्धो रसस्तथा रूपं स्पर्शः खे न च विद्यते ॥ ५ ॥ रसो गन्धस्तथा रूपं स्पर्शनं शब्द एव च ॥ भूम्यादीनां गुणाः प्रोक्ताः प्रधाना भृगुनन्दन ॥ ६ ॥ आकाशजानि स्रोतांसि तथा श्रोत्रं विविक्तता ॥ श्वासोच्छ्वासौ परिस्पन्दो वाक् च संस्पर्शनं तथा ॥ ७ ॥ वायवीयानि जानीयात्सर्वाण्येतानि पण्डितः ॥ रूपं संदर्शनं पक्तिं पित्तमूष्माणमेव च ॥ ८ ॥ मेधा वर्णं बलं छाया तेजः शौर्यं तथैव च ॥ सर्वाण्येतानि जानीयात्तैजसानि शरीरिणाम् ॥ ९ ॥ अम्भसानीह रसनं स्वेदः क्लेदो वसा तथा ॥ रसासृक्छुक्रमूत्रादि देहे द्रवचय स्तथा ॥ १० ॥ शैत्यं स्नेहश्च धर्मज्ञ तथा श्लेष्माणमेव च ॥ पार्थिवानीह जानीहि घ्राणकेशनखादि च ॥ ११ ॥ अस्थ्नां समूहो धैर्यं च गौरवं स्थिरता तथा ॥ मातृजानि मृदून्यत्र त्वक् च मांसं च भार्गव ॥ १२ ॥ हृदयं च तथा नाभिः स्वेदो मज्जा यकृत्तथा ॥ क्लोमान्तं च गुदं राम आमस्याशयमेव च ॥ १३ ॥ पितृजानि स्थिराण्यत्रभूमिजानीह यानि तु ॥ स्नायुशुक्रशिराश्चैव आत्मजानि निबोध मे ॥ १४ ॥ कामः क्रोधो भयो हर्षो धर्माधर्मात्मता तथा ॥ आकृतिः स्वरवर्णौ च चेतनाद्यं तथा वयः ॥ १५ ॥ तामसानि तथा ज्ञानप्रमादालस्यतृट्क्षुधः ॥ मोहमात्सर्यवैगुण्यशोकायासभयानि च ॥ १६ ॥ कामक्रोधौ तथा शौर्यं यज्ञेप्सा बहुभाषिता ॥ अहङ्कारः परावज्ञा राजसानि महाभुज ॥ ॥ १७ ॥ धर्मेच्छा मोक्षकामित्वं परा भक्तिश्च केशवे ॥ दाक्षिण्यं व्यवसायश्च सात्त्विकानि विनिर्दिशेत् ॥ १८ ॥ चतुरः क्रोधनो भीरुर्बहुभाषी कलिप्रियः ॥ स्वप्ने गगनगश्चैव बहुवातो नरो भवेत् ॥ १९ ॥ अकालपलितः क्रोधी महाप्राज्ञो रणप्रियः ॥ स्वप्ने च दीप्तिमत्प्रेक्षी बहुपित्तो नरो भवेत् ॥ २० ॥ स्थिरचित्तः स्थिरोत्साहः स्थिराङ्गरचनान्वितः ॥ स्वप्ने जलसितालोकी बहुश्लेष्मा नरो भवेत् ॥ २१ ॥ रसस्तु प्रीणनो देहे जीवनो रुधिरस्तथा ॥ लेपनं च तथा मांसं मेदः स्नेहकरं च तत् ॥ २२ ॥ धारणं त्वस्थि कथितं मज्जा भवति पूरणी ॥ गर्भोत्पादकरं शुक्रं तथा वीर्यविवर्धनम् ॥ २३ ॥ तेजः प्राणकरं नित्यं तत्र जीवो व्यवस्थितः ॥ शुक्रादपि परं सारमपीतं हृदयोपमम् ॥ २४ ॥ षडङ्गानि प्रधानानि कथयिष्यामि ते शृणु ॥ द्वौ बाहू सक्थिनी द्वे च मूर्धा जठरमेव च ॥ २५ ॥ षट्त्वचश्च शरीरेऽस्मिन्कीर्त्यमाना निबोध मे ॥ बाह्यतो ह्यधरा राम त्वचा रुधिरधारिणी ॥ २६ ॥ विलासकारिणी चान्या चतुर्थी कुष्ठकारिणी ॥ पञ्चमी विद्रधिस्थानं षष्ठी प्राणधरा मता ॥ २७ ॥

कलाः सत्यस्भृता देहे तासां वक्ष्यामि लक्षणम्॥ एका मांसधरा राम धमन्यो यत्र संस्थिताः ॥ २८ ॥ असृग्धरा द्वितीया तु यकृत्प्लीहाश्रया मता ॥ मेदोधरा तृतीया स्यात्सूक्ष्मस्थूलाश्रया तु या ॥ २९ ॥ मज्जाश्रया चतुर्थी तु तथा श्लेष्मपरा मता ॥ पुरीषधारिणी चान्या यथा पक्वाशये स्थितेः ॥ ३० ॥ षष्ठी पित्तधरा नाम जठराग्नौ समाश्रिता ॥ शुक्राशया शुक्रधरा तथा ज्ञेया च सप्तमी ॥ ३१ ॥ बुद्धीन्द्रियाणि पञ्चात्र श्रोत्रं घ्राणं च चक्षुषी ॥ त्वक् तथा रसना चैव महाभूताश्रयाणि तु ॥ ३२ ॥ इन्द्रियार्थास्तथा पञ्च तेषां नामानि मे शृणु ॥ श्रोत्रस्य शब्दः कथितो गन्धो घ्राणस्य पार्थिवः ॥ ३३ ॥ रूपं च चक्षुषो ज्ञेयं त्वक् च संस्पर्शनं तथा ॥ रसनस्य रसश्चैव महाभूताश्रयास्तु ते ॥ ३४ ॥ कर्मेन्द्रियाणि पञ्चात्र तेषां नामानि मे शृणु ॥ पायूपस्थं हस्तपादौ जिह्वा चैवात्र पञ्चमी ॥ ३५ ॥ तेषामर्थास्तथा पञ्च तान्प्रवक्ष्याम्यतः परम् ॥ उत्सर्गं च तथानन्द आदानगमने तथा ॥ ३६ ॥ इन्द्रियाणि दशैतानि तेषां वै नायकं मनः ॥ पञ्च कर्मेन्द्रियाण्यत्र पञ्च बुद्धीन्द्रियाणि च ॥ ३७॥ इन्द्रियार्थाश्च पञ्चात्र महाभूतानि पञ्च च ॥ इन्द्रियेभ्यः पराः प्रोक्ताश्चत्वारो भृगुनन्दन ॥ ३८ ॥ मनो बुद्धिस्तथैवात्मा अव्यक्तश्च महाभुज ॥ तदाश्रयाणीन्द्रियाणि इन्द्रियेभ्यः पराश्च ते ॥ ३९ ॥ तत्त्वान्येतानि जानीहि चतुर्विंशतिसंख्यया ॥ येषामैक्यं महाभाग पुरुषः पञ्चविंशकः ॥ ४० ॥ संयुक्तस्तैर्वियुक्तश्च तथा मत्स्योदके उभे ॥ मनः संशयकृन्नित्यं तथा बुद्धिर्विवेचनी ॥ ४१ ॥ आत्मा जीवः स्मृतो राम यो भोक्ता सुखदुःखयोः ॥ अव्यक्तो मिश्रितानीह रजःसत्त्वतमांसि च ॥ ४२ ॥ पुरुषस्त्वपरो ज्ञेयो यश्च सर्वगतो महान् ॥ चतुर्विंशतिकात्संख्याद्यः स नित्यः पृथक् स्थितः ॥ ४३ ॥ एकत्रितानि तत्त्वानि पुरुषस्य तथैकतः ॥ न चैव व्यतिरिक्तानि तत्त्वानि पुरुषात्परम् ॥ ४४ ॥ प्रकृतिः पुरुषो राम निष्फलः पञ्चविंशकः ॥ विकृतिस्तस्य विज्ञेया शेषस्तत्त्वगणो बुधः॥ ४५ ॥ सर्वतः पाणिपादोऽसौ सर्वतोक्षिशिरोमुखः ॥ पुरुषः स परो ज्ञेयः सर्वशक्तिस्तु सर्वतः॥४६॥नादिर्न मध्यो नैवान्तो व्याप्तिसम्भवयोर्द्वयोः ॥ यस्य जानन्ति मुनयो यस्तं वेद स वेदवित् ॥ ४७॥स याति परमं स्थानं यो वेत्ति पुरुषं परम् ॥ एतदेव च विज्ञानं प्रस्तुतं शृणु भार्गव ॥ ४८ ॥ सप्ताशयाः स्मृता देहे शृणु तानपि भार्गव ॥ आशयो रुधिरस्यैकः कफस्य च तथा परः ॥ ४९॥ आमपित्ताशयौ चान्यौ ज्ञेयः पक्वाशयोऽपरः ॥ वायुमात्राशयौ चान्यौ आशयाः सप्त कीर्तिताः॥५०॥ स्त्रीणां गर्भाशयो राम पित्तपक्वाशयान्तरे ॥ अष्टमः स भवेत्तासां यत्र गर्भः स तिष्ठति ॥ ५१ ॥ ऋतौ विकोशा भवति योनिः कमलवत्सदा ॥ गर्भाशये ततः शुक्र धत्ते रक्तसमन्वितम् ॥ ५२ ॥ अन्यत्र काले मुकुला योनिर्भवति योषिताम् ॥ न्यस्तं शुक्रमतो योनौ नैति गर्भाशयं

मुने ॥ ९३ ॥ ऋतावपि च योनिश्चेद्वातपित्तकफावृता ॥ भवेत्तस्या विशौचार्थं नैव तस्याः प्रजायते ॥ ९४ ॥ वृक्का तु पुष्पसप्लीहं हृत्कोष्ठाङ्गयकृद्घनाः ॥ तण्डुलश्च महाभाग निबद्धान्याशये तु ते ॥ ९५ ॥ रसस्य पच्यमानस्य साराद्भवति देहिनाम् ॥ प्लीहा यकृच्च धर्मज्ञ रक्तफेनाच्च पुप्फसः ॥ ९६ ॥ रक्तकिट्टाच्च भवति तथा दण्डकसंज्ञकः ॥ मेदो रक्तप्रसादाच्च वृक्कयोः सम्भवः स्मृतः ॥ ९७ ॥ रक्तमांसप्रसादाच्च भवन्त्यन्त्राणि देहिनाम् ॥ सार्धत्रिव्योमसंख्यानि तानि स्त्रीणां विनिर्दिशेत् ॥ ९८ ॥ त्रिव्योमानि तथा स्त्रीणां प्राहुर्वेदविदो जनाः ॥ रक्तवायुसमायोगात्कालो यस्योद्भवः स्मृतः ॥ ९९ ॥ कफप्रसादाद्भवति हृदयं पद्मसन्निभम् ॥ अधोमुखं तत्सुषिरं यत्र जीवो व्यवस्थितः ॥ ६० ॥ चैतन्यानुगता भावाः सर्वे तत्र व्यवस्थिताः ॥ तस्य वामे तथा प्लीहा दक्षिणे च तथा यकृत् ॥ ६१ ॥ दक्षिणे च तथा क्लोम पद्मस्यैव प्रकीर्तितम् ॥ स्रोतांसि यानि देहेऽस्मिन्कफरक्तवहानि तु ॥६२॥ तेषां भूतानुगानां तु भवतीन्द्रियसम्भवः ॥ नेत्रयोर्मण्डलं शुक्लं कफाद्भवति पैत्तिकम् ॥ ६३ ॥ कृष्णं च मण्डलं वातात्तथा भवति मातृकम् ॥ सर्वदृन्मण्डलं ज्ञेयं मातापितृसमुद्भवम् ॥ ६४ ॥ पक्ष्ममण्डलमेकं तु द्वितीयं वर्त्ममण्डलम् ॥ शुक्लं तृतीयं कथितं चतुर्थं कृष्णमण्डलम्॥६५॥दृङ्मण्डलं पञ्चमं तु नेत्रं स्यात्पञ्चमण्डलम् ॥ अन्ये तु नेत्रभागे द्वे तथाऽपाङ्गकनीनिके॥६६॥ याभ्यां नेत्रस्य जनिता मत्स्यसंस्थानता द्विज ॥ नासासमीपे कथितं तदपाङ्गेतिसंज्ञितम् ॥ ६७ ॥ कपोलयोः समीपे तु तथा प्रोक्ता कनीनिका ॥ मांसासृक्कफजा जिह्वा मेदोऽसृक्कफमांसजा ॥ ६८ ॥ वृषणौ च तथा ज्ञेयौ सर्वेषामेव देहिनाम् ॥ प्राणस्यायतनान्यत्र दशैतानि निबोध मे ॥६९॥ मूर्धा च हृदयं नाभि कण्ठोः जिह्वानिबन्धनम् ॥ रक्तं शुक्रं गुदो वस्तिस्तथा गुल्फौ च भार्गव ॥७०॥ कण्डराः षोडश प्रोक्तास्तथा देहे शरीरिणाम् ॥ द्वे करस्थे तथा द्वे च चरणस्थे पृथक्पृथक् ॥ ७१ ॥ चतस्रः पृष्ठगा ज्ञेया ग्रीवायां तावदेव तु ॥ जलानि षोडशैवात्र विभागस्तेषु कथ्यते ॥ ७२ ॥ मांसस्नायुशिरास्थिभ्यः चत्वारस्तु पृथक्पृथक् ॥ मणिबन्धानि गुल्फेषु निबद्धानि परस्परम् ॥ ७३ ॥ शंकूनि च स्मृतानीह हस्तयोः पादयोस्तथा ॥ ग्रीवायां च तथा मेढ्रे कथितानि मनीषिभिः ॥ ७४ ॥ देहेऽस्मिंश्च तथा ज्ञेयाश्चतस्रो मांसरज्जवः॥ पृष्ठवंशोभयगते द्वे द्वे तत्र प्रकीर्तिते ॥ ७५ ॥ तावन्त्यश्च तथाप्येतास्तासां बन्धनकारकाः ॥ सीवन्यश्च तथा सप्त पञ्च मूर्धानमाश्रिताः ॥ ७६॥ एका मेढ्रगता चैका तथा जिह्वागता परा ॥ अस्थ्नामत्र शतानि स्युस्त्रीणि षष्ट्यधिकानि तु॥७७॥ सूक्ष्मैः सह चतुःषष्टिं दशना विंशतिर्नखाः ॥ पाणिपादशलाकाश्च तासां स्थानचतुष्टयम् ॥ ७८ ॥ चत्वारिंशत्तथास्थीनि जंघयोस्तावदेव तु ॥ द्वेद्वे जानुकपोलौष्ठफलकांससमुद्भवे ॥ ७९ ॥

अक्षिस्थलेऽष्टकं श्रोणिफलके चैवमादिशेत् ॥ भगास्थ्येकं तथा पृष्ठे चत्वारिंशच्च पञ्च च ॥ ८० ॥ ग्रीवापञ्चदशास्थीनि जत्र्वेकं च तथा हनुः ॥
भ्रूमूलं द्वे ललाटाक्षिगण्डनासा तथास्थिका ॥ ८१ ॥ सर्जुकास्थालकैः सार्धमर्बुदैश्च द्विसप्ततिः ॥ द्वौ शङ्कौ कपालानि चत्वार्येव शिर
स्तथा ॥ ८२ ॥ उरः सप्तदशास्थीनि पुरुषस्यास्थिसंग्रहः ॥ तथा चैवात्र सन्धीनां द्वे शते तु शताधिके ॥ ८३ ॥ अष्टषष्टिश्च शाखासु षष्टिश्चै
कविवर्जिता ॥ अन्तराधौ त्वशीतिश्च कथिता भृगुनन्दन ॥ ८४ ॥ न च स्नायुशतान्यत्र द्वे तु त्रिंशाधिके मते ॥ अन्तराधौ तु कथिता ह्यूर्ध्वगा
श्चैव सप्ततिः ॥ ८५ ॥ षट्कृतानि च शाखासु कथितानि मनीषिभिः ॥ पञ्चपेशीशतान्यत्र चत्वारिंशत्तथोर्ध्वगाः ॥ ८६ ॥ चत्वारिंशच्छतान्यत्र
तथा शाखासु पण्डितैः ॥ अन्तराधौ तथा षष्टिः पेश्यस्तु कथिता बुधैः॥८७॥ स्त्रीणां चैवाधिका ज्ञेया त्रिंशतिश्चतुरुत्तरा ॥ स्तनयोर्दश विज्ञेया
योनौ राम तथा दश ॥ ८८ ॥ गर्भाशये तथा ज्ञेयाश्चतस्रो गर्भचिन्तकैः ॥ त्रिंशच्छतसहस्राणि तथान्यानि दशैव तु ॥ ८९ ॥ षट्पञ्चाशत्सह
स्राणि शिराणां कथितानि तु ॥ ता वहन्ति रसं देहे केदारमिव कुल्यकाः ॥ ९० ॥ अभ्यंगादि तथा सर्वं स्वेदलेपादिकं च यत् ॥ द्विसप्तति
स्तथा कोट्यो रोम्णां विद्धि महाभुज ॥ ९१ ॥ मज्जाया मेदसश्चैव वसायाश्च तथा द्विज ॥ मूत्रस्य चैव पित्तस्य श्लेष्मणः शकृतस्तथा ॥ ९२ ॥
रक्तस्य च रसस्याथ क्रमशोऽञ्जलयः स्मृताः ॥ अर्धार्धाभ्यधिकाः सर्वाः पूर्वार्धाञ्जलितः स्मृताः ॥९३॥ अर्धाञ्जलिश्च शुक्रस्य तथार्धा च
तथौजसः ॥ रजसस्तु तथा स्त्रीणां चतस्रः कथिता बुधैः ॥९४॥ समधातोरिदं प्रोक्तं प्रमाणं देहचिन्तकैः ॥ विलक्षणानि देहानि नित्यमेव शरीरि
णाम् ॥ तेषां भेदेन भिद्यन्ते मलदोषानुरूपतः ॥ ९५ ॥ एतच्छरीरं मलदोषपिण्डं धात्वाश्रयं कर्मवशानुबद्धम् ॥ मोक्षाय यस्येह भवेत्स धन्यो
मोक्षे च हेतुः परमो हि विष्णुः ॥९६॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं० रामं प्रति पुष्करोपाख्याने शरीरविषयवर्णनन्नाम पञ्चदशो
त्तरशततमोऽध्यायः ॥ ११५ ॥ पुष्कर उवाच ॥ आयुषि कर्मणि क्षीणे संप्राप्ते मरणे नृणाम् ॥ ऊष्मा प्रकुपितः काये तीव्रवायुसमीरितः ॥ १ ॥
शरीरमुपरुध्याथ कृत्स्नान्दोषान्रुणद्धि वै ॥ भिनत्ति प्राणस्थानानि पुनर्मर्माणि चैव हि ॥ २ ॥ शैत्यात्प्रकुपितो वायुश्छिद्रमन्विष्यते
ततः ॥ द्वे नेत्रे च तथा कर्णौ द्वौ तु नासापुटौ तथा ॥३॥ ऊर्ध्वं तु सप्त च्छिद्राणि सप्तकं वदनं तथा ॥ एतैः प्राणो विनिर्याति प्रायशः शुभक
र्मणाम् ॥ ४ ॥ अधः पायुरुपस्थं च छिद्रद्वयमुदाहृतम् ॥ छिद्रद्वयेन तेनाथ म्रियन्तेऽशुभकारिणः ॥ ५ ॥ मूर्धानं योगिनां भित्त्वा जीवो व्रजति
भार्गव ॥ अथवा स्वेच्छया राम येन चेच्छन्ति योगिनः ॥ ६ ॥ अन्तकाले तु संप्राप्ते प्राणापानेष्ववस्थितः ॥ तमसा संवृते ज्ञाने संवृतेषु च

मर्मसु ॥ ७ ॥ स जीवो नाभ्यधिष्ठानश्चाल्यते मातरिश्वना ॥ स जीवश्चाल्यमानस्तु कर्मभिस्तैः पुरातनैः ॥ ८ ॥ अष्टाङ्गां प्राणवृत्तिं तां शनै श्च्यावयते द्विज ॥ शरीरं प्रजहात्यस्मान्निश्वासस्तु भवेत्ततः ॥ ९ ॥ च्यवन्तं जायमानं वा प्रविशन्तं च योनिषु ॥ पश्यन्त्येवंविधं सिद्धा जीवं दिव्येन चक्षुषा ॥ १० ॥ स तु देहपरित्यागकाले प्राप्ते तदानघ ॥ तत्क्षणादेव गृह्णाति शरीरमतिवाहिकम् ॥ ११ ॥ ऊर्ध्वं भजन्ति भूतानि त्रीण्यस्मात्तस्य विग्रहात् ॥ आकाशवायुतेजांसि द्वे चाधो भृगुनन्दन ॥ १२ ॥ सलिलं च महाभाग तथैव च वसुन्धरा ॥ एवं पञ्चत्वमापन्नः पुरुषस्त्वभिधीयते ॥ १३ ॥ एवं पञ्चत्वमापन्ने तद्देहमतिवाहिकम् ॥ भयानकैर्महाघोरैर्नानावेषधरैस्तथा ॥ १४ ॥ उच्चैस्तस्य तदा बद्धं कालपाशेन सत्वरम् ॥ नीयते कालपुरुषैर्याम्यं मार्गं सुदुस्तरम् ॥ १५ ॥ तप्ताम्बरीषसंकाशं त्वयोगुणनिभं महत् ॥ संतप्तसिकतं घोरं ताम्रपर्णनिभं तथा ॥ १६ ॥ षडशीतिसहस्राणि योजनानां महीतलम् ॥ यमस्य तु पुरी राम घोरा संयमनी स्मृता ॥ १७ ॥ नीयते तेन मार्गेण तादृशेन तु तां पुरीम् ॥ आकृष्यमाणः पुरुषैर्याम्यैर्घोरैर्महीतले ॥ १८ ॥ पीडामनुभवँस्तत्र म्रियते न च मानद ॥ अत्यर्थविषमः प्रोक्तः स मार्गो घोरदर्शनः॥१९॥ विश्वरूपधरो राम भुवि शीतावृतो महान् ॥ हिमप्रपातबहुलश्चातिशीतः सुदुस्तरः॥२०॥ अन्धकारवृते दुर्गे गर्भवासोपमस्तथा॥ अग्निसंस्पर्शवदनैः काककाकोलजम्बुकैः ॥ २१ ॥ मक्षिकादंशमशकैरावृतः सर्पवृश्चिकैः ॥ भक्ष्यमाणोऽपि तैर्जन्तुर्भक्ष्यते चापि राक्षसैः ॥ २२ ॥ उत्कृन्त्योत्कृत्य सहसा न च प्राणैर्वियुज्यते ॥ क्षुद्रैश्चूर्ण्यते घोरैस्तुद्यते लोहकण्टकैः ॥ २३ ॥ क्षुधया तृषया चैव घोरया चापि पीड्यते ॥ दह्यमानोऽतिघोरेण सैकतेन च नीयते ॥ २४ ॥ एवं संताप्यमानस्तु प्राप्यते यममन्दिरम् ॥ दशभिः स मुहूर्तैस्तु पन्थानमतिदुस्तरम् ॥ २५ ॥ प्राप्नोति भीमनिर्घोषं दुर्गन्धिभयदर्शनम् ॥ तत्कालं सुमहद्वेत्ति पुरुषो देवमायया ॥ २६ ॥ पापानुरूपं तत्कालं तस्य तत्राभिजायते ॥ कस्यचि द्विशतं कालं कस्यचिच्छतसम्भवम् ॥ २७ ॥ क्षुत्तृष्णासम्भवाश्चैव भवन्त्यथ महाभयाः ॥ दण्डपिण्डस्य धर्मज्ञ प्रेतत्वमुपजायते ॥ २८ ॥ प्रेत लोके स वसति ततः संवत्सरं नरः ॥ सोदकुम्भमतोन्नाद्यं बान्धवैस्तस्य दीयते ॥ २९ ॥ दिनेदिने यद्धर्मज्ञ तद्भुङ्क्ते नात्र संशयः ॥ न दीयते तु यस्यैतत्स तु तत्र यथा स्वयम् ॥ ३० ॥ पूर्वदत्तमथान्नाद्यं प्राप्नोति स्वयमेव तु ॥ स्वयमेव न दत्तं तु तथा दाता न विद्यते ॥ ३१ ॥ न चास्त्युदकदाता च स तु तत्परितप्यते ॥ बान्धवैस्तूदकं दत्त तत्र तत्रास्य जायते ॥ ३२ ॥ नदी शीतजला नाम बहुपानीयसंयुता ॥ मासि

१ 'मयमन्दिरम्' इति पुस्तकान्तरे पाठः ।

मासि च यच्छ्राद्धं तस्य तत्र प्रदीयते ॥ ३३ ॥ तेन तृप्तिमवाप्नोति परमां नात्र संशयः ॥ मानुष्येण तु मासेन पितृलोके दिनं स्मृतम् ॥ ३४ ॥
प्रेतलोके तु दिवसो मानुष्येण विधीयते ॥ तस्माद्दिनेदिने देयं प्रेतायान्नं तु वत्सरम् ॥ ३५ ॥ एवं स याप्यमानस्तु प्राप्नोति यममन्दिरम् ॥ ततः
पश्यत्यसौ देवं पापात्मा घोरदर्शनम् ॥ ३६ ॥ चित्रगुप्तस्ततस्तस्य ज्ञात्वा कर्म यथाविधम् ॥ आज्ञापयति धर्मज्ञ शुभं वा यदि वाशुभम् ॥३७॥
ततः श्मशानिका नाम देवा याम्या भयावहाः ॥ शीतवातातपोपेतं तदा रक्षन्ति मानवम् ॥ ३८ ॥ यथेह बन्धने कश्चिद्रक्ष्यते विषमैर्नरैः ॥ प्रेत
पिण्डैस्ततो दत्तैर्देहमाप्नोति भार्गव ॥ ३९ ॥ भोगदेहमिति प्रोक्तं क्रमादेव न संशयः ॥ प्रेतपिण्डा न दीयन्ते यस्य तस्य विमोक्षणम् ॥ ४० ॥ श्म
शानिकेभ्यो देवेभ्य आकल्पं नैव विद्यते ॥ तत्रास्य यातना घोराः शीतवातातपोद्भवाः ॥ ४१ ॥ ततः सपिण्डीकरणे बान्धवैश्च कृते नरः ॥
पूर्णे संवत्सरे देहमतोऽन्यं प्रतिपद्यते ॥ ४२ ॥ ततः स नरकं याति स्वर्गं वा स्वेन कर्मणा ॥ ततः स कालं वसति कर्मणामनुरूपतः ॥ ४३ ॥
अर्वाक् सपिण्डीकरणं यस्य संवत्सरात्कृतम् ॥ प्रेतत्वमपि तस्यापि प्रोक्तं संवत्सरं ध्रुवम् ॥ ४४ ॥ यैरिष्टं विविधैर्यज्ञैः पूजितो यैश्च केशवः ॥
प्रेतलोकं न ते यान्ति तथा ये समरे हताः ॥ ४५॥ श्मशानिकानां देवानां भवन्ति वशगा न ते ॥ प्रेतलोकं प्रपद्यन्ते तथा घोरं भयावहम् ॥ ४६ ॥
एवं याम्येन मार्गेण यान्ति पापा नराधमाः ॥ आरामसदनं यान्ति तथैव द्रुमरोपकाः ॥४७॥ शीतलेन तु मार्गेण फलपुष्पवता सुखम् ॥ छत्रदाश्च
सुखं यान्ति मार्गेण ससुखेन ते ॥ ४८ ॥ यानमश्वतरीयुक्तमास्थायोपानहप्रदाः ॥ विमानैर्यानदा यान्ति तथा शय्यासनप्रदाः ॥ ४९ ॥ गृहदाः
सविहारन्तु यान्ति तृप्ता जलप्रदाः ॥ भक्ष्यैर्भोज्यैस्तथा तृप्ता यान्ति भोजनदायिनः ॥ ५० ॥ दीपप्रदाः प्रकाशेन यान्ति मार्गेण ते सुखम् ॥
पूज्यमाना यमभटैर्यान्ति भक्ता जनार्दनम् ॥ ५१ ॥ नास्ति तेषां भयं किञ्चिदिहलोके परत्र च ॥ ते तृप्ताः सर्वकामैश्च तरसा यान्ति मानवाः ॥
॥ ५२ ॥ बुद्धिं समास्थाय तु सात्त्विकीं ये भक्ताः सुरेशस्य जनार्दनस्य ॥ तेषां गतिस्तत्र तु यत्र राम श्वेताः पुमांसो गतसर्वपापाः ॥ ५३ ॥ इति
श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं० रामं प्रति पुष्करोपाख्याने यममार्गवर्णनन्नाम षोडशोत्तरशततमोध्यायः ॥११६॥राम उवाच ॥ भगवञ्छ्रोतु
मिच्छामि ये नराः स्वर्गगामिनः ॥ केन धर्मभृतां श्रेष्ठ तथा निरयगामिनः ॥ १ ॥ पुष्कर उवाच ॥ आश्रमेषु यथोक्तेषु वर्तन्ते ये द्विजोत्तमाः ॥
स्वधर्मसक्ताः सततं ते नराः स्वर्गगामिनः॥२॥वर्तन्ते ये महीपाल राजधर्मानुसारतः ॥ पुरोहितमते युक्ता राजानः स्वर्गगामिनः ॥ ३ ॥ प्रजासुखे
सुखं येषां तद्दुःखे ये च दुःखिताः ॥ दुष्टनिग्रहकर्तारो ज्ञेयास्ते स्वर्गगामिनः ॥४॥ स्वाम्यर्थे ब्राह्मणार्थे वा मित्रकार्ये च ये हताः ॥ गोग्रहे निहता

ये च ते नराः स्वर्गगामिनः ॥ ५ ॥ देहधातून्परित्यज्य सलिलारण्यवह्निषु ॥ अनाशने वा धर्मज्ञ मृताः स्युः स्वर्गगामिनः ॥ ६ ॥ तीर्थयात्रा
प्रसक्ताश्च नित्यमध्वनि कर्षिताः ॥ तपसा कर्षिता ये च ते ज्ञेयाः स्वर्गगामिनः ॥ ७ ॥ मधुमांसनिवृत्ताश्च निवृत्ता मधुपानतः ॥ काममैथुनत
श्चापि विज्ञेयाः स्वर्गगामिनः ॥ ८ ॥ मातापितृपरा दान्ता गुरुभक्ताः प्रियंवदाः ॥ सत्यार्जवरता ये च ते नराः स्वर्गगामिनः ॥ ९ ॥ वैवाहि
कानां वस्त्राणां प्रपाणां ये प्रदायिनः ॥ उद्यानारामकर्तारस्ते नराः स्वर्गगामिनः ॥ १० ॥ तडागकूपकर्तारस्तथा कन्याप्रदायकाः ॥ छत्रोपानहदा
तारस्ते नराः स्वर्गगामिनः ॥ ११ ॥ इन्धनानां प्रदातारस्तथा गोग्रामदायिनः ॥ गवां शुश्रूषका ये च ते नराः स्वर्गगामिनः ॥ १२ ॥ परोपकार
सक्ताश्च परबन्धविवर्जकाः ॥ पूज्यपूजयितारश्च ते नराः स्वर्गगामिनः ॥ १३ ॥ स्वाध्यायसक्ता धीमन्तो गुरुशुश्रूषणे रताः ॥ उपासकाश्च वृद्धा
नां ते ज्ञेयाः स्वर्गगामिनः ॥१४॥ प्रतिश्रयप्रदातारस्तथा ये सत्रदायकाः ॥ भक्ता गोदेवविप्राणां ते नराः स्वर्गगामिनः ॥ १५ ॥ श्रोतारो ये च
धर्माणां ये तथा यज्ञयाजिनः ॥ उपवासरता ये च ते ज्ञेयाः स्वर्गगामिनः ॥ १६ ॥ क्लेशाननुभवन्तीह शास्त्राध्ययनतत्पराः ॥
शास्त्राणां च हिते युक्तास्ते ज्ञेयाः स्वर्गगामिनः ॥१७॥ आर्तप्राणप्रदा ये च ये च हिंसाविवर्जकाः ॥ अपीडकाश्च भूतानां ते नराः स्वर्गगामिनः॥
॥१८॥दरिद्राय च दातारः प्रभवश्च क्षमान्विताः ॥ यौवनस्थाश्च ये शान्तास्ते नराः स्वर्गगामिनः ॥१९॥ पौत्रदौहित्रसंयुक्ता ये तथा चिरजीवि
नः॥प्रियङ्कराश्च बालानां ते नराः स्वर्गगामिनः॥२०॥ पोषकाणामनाथानां ये चैवोद्वाहकारिणः॥द्विरागमनदा ये च ते नराः स्वर्गगामिनः॥२१॥
ग्रहाणां पूजका ये च ये तथा श्राद्धकारिणः ॥ संविभागकरा ये च ते नराः स्वर्गगामिनः ॥ २२ ॥ सर्वासां देवतानां च ये च पूजारताः सदा ॥
सर्वदानरता ये च ते नराः स्वर्गगामिनः ॥ २३ ॥ अहताश्च तथा तत्र कृत्वा कर्मातिदुष्करम् ॥ कालेनापि मृता राम ते नराः स्वर्ग
गामिनः ॥२४॥ ये भक्तिमन्तो मधुसूदनस्य देवेश्वरस्याप्रतिमस्य नित्यम् ॥ सत्त्वेन हीना रजसा वियुक्तास्ते यान्ति नाकं सुरसंघपूज्याः॥२५॥
इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं० रामं प्रति पुष्करोपाख्याने स्वर्गभाग्वर्णनन्नाम सप्तदशोत्तरशततमोऽध्यायः॥११७॥ पुष्कर उवाच ॥
महापातकिनो ये च ये च पातकिनो जनाः ॥ मांसाशिनो नरा ये च तथा येऽगम्यागामिनः ॥ परदाररता ये च ते वै निरयगामिनः ॥ १ ॥
अतिक्रामन्ति ये भार्यां पीडयन्ति च ये नरान् ॥ ये सभास्ववमन्यन्ते ते वै निरयगामिनः ॥ २ ॥ बहुभार्याश्च भार्यासु वर्तन्ते न समं च
ये ॥ ऋतुकालहरा ये च ते वै निरयगामिनः॥३॥ सम्यग्भर्तृषु या नार्यो वर्तन्ते नावलेपतः ॥ अप्रिये च तथा सक्ता ज्ञेयास्ता निरयङ्गमाः॥४॥

भर्तारमवमन्यन्ते भाषन्ते विप्रियाणि च ॥ स्वातन्त्र्येण च वर्तन्ते ज्ञातव्या निरयङ्गमाः ॥ ५ ॥ राजशास्त्रोपदेशं ये संत्यज्य वसुधाधिपाः ॥
वर्तन्ते सर्वकार्येषु ते वै निरयगामिनः ॥ ६ ॥ वर्णाश्रमोक्तं वर्तन्ते धर्मं त्यक्त्वा तु ये नराः ॥ बहिःशास्त्रान्महाभाग ते वै निरयगामिनः ॥ ७ ॥
अयाज्ययाजिनो ये च कूटसाक्ष्यप्रदाश्च ये ॥ तथानृतरता ये च ते वै निरयगामिनः ॥ ८ ॥ व्यवहारेषु ये सक्ताः पक्षपाताभिधायिनः ॥ असम्य
ग्दर्शिनो ये च ते वै निरयगामिनः ॥ ९ ॥ प्रेक्ष्यमाणे परिजने मिष्टमश्नन्ति ये नराः ॥ असंविभज्य धर्मज्ञ ते वै निरयगामिनः ॥ १० ॥
भृतकास्तु महाभाग कुर्वन्ते नैव ये भृतम् ॥ अनिर्दिष्टभुजश्चैव ते वै निरयगामिनः ॥११ ॥ वञ्चका भृतकानां च तथैवाश्रितवञ्चकाः ॥ वञ्चकाश्च
तथाऽन्येषां ज्ञेया निरयगामिनः ॥ १२ ॥ कृतघ्ना निर्घृणा ये च परस्वादायिनश्च ये ॥ शठाचाराश्च मित्राणां ते वै निरयगामिनः ॥ १३ ॥
गवां पानप्रवृत्तानां ये तथा विघ्नकारिणः ॥ तथाऽन्येषां च भूतानां ते वै निरयगामिनः ॥ १४ ॥ धर्मकार्यप्रवृत्तस्य ये नरा विघ्नकारिणः ॥
पापप्रोत्साहकाश्चैव ते वै निरयगामिनः ॥१५॥ त्यागिनस्त्वाश्रितानां ये ऋत्विजां त्यागिनश्च ये ॥ याज्यानां च गुरूणां च ते वै निरय
गामिनः ॥ १६ ॥ त्यागिनो देवतानां च वह्नीनां त्यागिनश्च ये ॥ शास्त्राणां त्यागिनो ये च ते वै निरयगामिनः ॥ १७ ॥
बालकातिथिविप्राणां सुराणां चैव मानद ॥ ये च पूर्वभुजो नित्यं ते वै निरयगामिनः ॥ १८ ॥ रजस्वलां च ये
यान्ति ये च प्रेष्यकरां स्त्रियम् ॥ वियोनिं ये च गच्छन्ति ते वै निरयगामिनः ॥ १९ ॥ शुक्रं त्यजन्त्ययोनौ ये तथाकाशे च निर्घृणाः ॥
पर्वस्वपि च धर्मज्ञ ते वै निरयगामिनः ॥२०॥ अनध्यायेषु ये राम स्वाध्यायमिह कुर्वते ॥ निन्दति च गुरून्ये वै ते वै निरयगामिनः ॥२१॥
देवतानां च वेदानां ब्राह्मणानां च निन्दकाः ॥ पुराणचरितानां च ते वै निरयगामिनः ॥ २२ ॥ ये नास्तिका नरा राम ये च श्रद्धाविव
र्जिताः ॥ अहङ्कारगृहीताश्च ते वै निरयगामिनः॥२३॥कुकर्मसक्ता मनुजाः सुकर्मपरिवर्जकाः ॥ स्वामिमित्रद्रुहो ये च ते वै निरयगामिनः ॥२४॥
ये च द्रोहरता राज्ञां ब्राह्मणानां गवामपि ॥ सुहृदामपि धर्मज्ञ ते वै निरयगामिनः ॥२५ ॥ ये तु पैशुन्यसंसक्ताः परमर्मस्पृशोऽपि च ॥ अशुचश्च
तथा मर्त्यास्ते वै निरयगामिनः ॥ २६ ॥ सोमविक्रयिणो ये च बीजविक्रयिणस्तथा ॥ आत्मविक्रयिणो ये च ज्ञेया निरयगामिनः ॥ २७ ॥
रजः पश्यन्ति धर्मज्ञ येषां वेश्मनि कन्यकाः ॥ शुल्के च दत्ता सा यैश्च ते वै निरयगामिनः ॥ २८ ॥ ब्रह्मेशकेशवानां च ये नरा भेदवादिनः ॥
तमोऽभिभूताः परितस्ते वै निरयगामिनः॥२९॥ कुलजानां सपिण्डानां ये च पिण्डविलोपकाः ॥ अश्राद्धदाश्च पूर्वेषां ते वै निरयगामिनः ॥३०॥

कामात्मानो नरा ये च ये तथार्थपरायणाः ॥ ये च धर्मद्विषो लोके ते वै निरयगामिनः ॥ २१ ॥ नाभिपश्यन्ति ये शक्त्या
दीनमातुरमाश्रितम् ॥ आर्तं च नाभिधावन्ति ते वै निरयगामिनः ॥३२॥ ये चावहासं कुर्वन्ति दीनानां मानगर्विताः ॥ अनागसं परिभवन्त्येते
निरयगामिनः ॥ ३३ ॥ पीडामथोत्पाद्य नरस्य राम यथाकथंचिन्नरकं प्रयाति ॥ तस्मात्प्रयत्नेन विवर्जनीया परस्य पीडा मनुजेन राम ॥
॥ ३४ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं० रामं प्रति पुष्करोपाख्याने निरयगामिवर्णनन्नामाष्टादशोत्तरशततमोऽध्यायः ॥ ११८ ॥
॥ राम उवाच ॥ नामानि नरकाणां च यातना विविधास्तथा ॥ भगवञ्छ्रोतुमिच्छामि पुंसां नरकगामिनाम् ॥ १ ॥ पुष्कर उवाच ॥ तामिस्र
मन्धतामिस्रं महारौरवरौरवौ ॥ नरकं कालसूत्रं च महानरकमेव च ॥२॥ संजीवनं महावीचिं तपनं संप्रतापनम् ॥ संघातं च सकाकोलं कश्मलं
पूतिमृत्तिकम् ॥ ३ ॥ लोहशंकुं नृभीमं च मन्थानं शाल्मलिं नदीम् ॥ असिपत्रवनं चैव लोहकारं तथैव च ॥ ४ ॥ पातालेषु महाबाहो त्रींस्त्री
न्वृद्धिक्रमेण तु ॥ एकैकस्य तथैवाष्टौ दिक्षु चापि विदिक्ष्वपि ॥ ५॥ स्थितास्तथा ये विज्ञेया नरका घोरदर्शनाः ॥ यान्त्येते पापकर्माणो नरा येषु
भृगूत्तम॥६॥एकस्मिन्नरके केचित्क्रमादन्ये बहुष्वपि ॥ यांत्येते मानवा राम पीड्यमानाः पुनःपुनः॥७॥ नरकाणां नराणां तु यातनाकारिणश्च ये॥
घोररूपास्तु ते प्रोक्ता दृष्टमात्रभयावहाः ॥ ८ ॥ मार्जारोलूकगोमायुगृध्रश्येनखराननाः ॥ गजाश्वोष्ट्रवराहाणां सिंहानां च तथा परे ॥ ९॥ गोधाम
हिषकाकानां मद्गुसारसयोस्तथा ॥ उरभ्राजपतङ्गानां सर्पमूषकयोस्तथा ॥ १० ॥ अन्येषां चैव सत्त्वानां तथान्ये जठरा नराः ॥ स्कन्दाननास्तथै
वान्ये कबन्धाकारदर्शनाः ॥ ११ ॥ भीमानना भयकरा नानायुधधरास्तथा ॥ उग्रवाचो दुराधर्षाः सर्पवृश्चिकवेष्टिताः ॥ १२ ॥ तैलद्रोण्यां
नरान्क्षिप्त्वा ज्वालयित्वा हुताशनम् ॥ सुसमिद्धं नरान्कांश्चित्क्वाथयन्ति पुनःपुनः ॥ १३॥ अम्बरीषेषु चैवान्यांस्ताम्रपात्रेषु चापरान् ॥ अयः
पात्रेषु चैवान्यान्द्रवद्वह्निकणेष्वपि ॥१४॥ शूलेषु रोपितानन्याञ्शुष्काश्चावपरांस्तथा ॥ उत्कृत्य विपचन्त्येतानन्यांश्छित्वा तथा परान् ॥ १५ ॥
कशाभिस्ताडयन्त्यन्यांस्तथान्यानपि मानवान् ॥ भोजयन्ति महाभाग वह्नितप्तानयोगुडान् ॥१६॥ पांसूनपि तथैवान्यान्वान्तमन्यत्र चापरम् ॥
विष्ठामन्यत्र च कफं तथान्यत्र च कण्टकान् ॥ १७ ॥ अन्यत्र वह्निसंकाशास्तथा भार्गव वालुकाः ॥ पाययन्ति तथान्यत्र वह्निवर्णां
च वारुणीम् ॥ १८ ॥ अन्यत्र नारकाणां ते छिन्दन्त्यङ्गानि भागशः ॥ पाटयन्ति तथान्यत्र करपत्रैः पुनःपुनः ॥ १९ ॥ पीडयन्ति तथान्यत्र
कृत्वा यन्त्रेषु नारकान् ॥ उलूखलकृतानन्यान्मुसलैस्ताडयन्ति च ॥ २० ॥ कुम्भीगतांस्तथान्यत्र कुम्भीतः किञ्चिदुद्धृतान् ॥ घ्नन्ति मुद्गरकू

टेन महतीं वेदनां गतान् ॥ २१ ॥ त्वचमुत्कृत्य चान्यत्र शुनां नरकवासिनः ॥ त्यजन्ति ते च भक्ष्यन्ते तीक्ष्णदन्तैर्मुहुर्मुहुः ॥ २२ ॥ अन्धकारे
तथान्यत्र भीमगन्धे भयावहे ॥ अत्युष्णे तैश्च पात्यन्ते गर्भवाससमे जनाः ॥ २३ ॥ काकैर्गोमायुभिः सर्पैर्वृश्चिकैर्मूषकैरपि ॥ मक्षिकाभिश्च
भक्ष्यन्ते तेषामन्यत्र शासनात् ॥ २४ ॥ अन्यत्र शाल्मलिं घोरं संतप्तं तीक्ष्णकण्टकम् ॥ सर्पकीटादिबहुलमारोप्यन्ते नराधमाः ॥ २५ ॥
अन्यत्र च तथा घोरां सन्तप्तामयसः शिलाम् ॥ आलिङ्गन्ते सुदुःस्पर्शां तेषामेव तु शासनात् ॥२६॥अन्यत्रासेव्यवसतौ वसन्ति भयपीडिताः॥
तत्र तेषां तु नासाक्षिकर्णवक्त्रेषु मानद ॥ २७ ॥ प्रविशन्ति महाभोगाः कृमयो मांसभोजिनः ॥ क्षारनद्यां तथैवान्ये पात्यन्ते नारकान्मुहुः ॥२८॥
बहुशीतान्धकारे च पात्यन्ते नरके परे ॥ रक्ततोयवहामन्ये प्रपद्यन्ते महानदीम् ॥२९॥ असिपत्रवने चान्ये कृष्यन्ते भीमदर्शनाः ॥ तृष्णया
क्षुधया चान्ये बाध्यन्ते तत्र मानवाः ॥ ३० ॥ परान्नपानं लिप्सन्तस्ताडयन्ते कूटमुद्गरैः ॥ पाययन्ति तथान्यत्र परान्यमभटास्तथा ॥ ३१ ॥
तीव्रधूममधोवक्त्रान्बद्ध्वा वृक्षेषु मानद ॥ त्वचोत्कर्तनमन्यत्र तिलशः क्रियते भटैः ॥३२॥ काष्ठान्यन्यत्र बध्यन्ते नारकाणां तथास्थिषु ॥ कूटाग
रप्रमाणैश्च तथा देहैर्भयार्दिताः ॥३३॥ सूचीवक्त्रांस्तथान्यत्र याप्यन्ते क्षुधया भृशम् ॥ सिच्यन्ते च तथान्यत्र तैलेन च गुडेन च ॥३४॥ सन्तप्ते
न महाभाग भृशं दुःखप्रदायिनाम् ॥ अन्यत्र जातपिटकाः स्रस्तजिह्वाः सुविह्वलाः॥३५॥ घोरातपविनिक्षिप्ता भक्ष्यन्ते च पिपीलकैः॥ सूत्रेणान्यत्र
छिद्यन्ते पादतः प्रभृति क्रमात् ॥ ३६ ॥ तिलशो भृगुशार्दूल नारकाः पर्वतोपमाः ॥ यावच्च तेषां मूर्धानं तावदेव पुनःपुनः ॥ ३७ ॥ कृत्वा
च पिष्टं पचनं पच्यन्तेऽन्ये तथा भृशम् ॥ अयःपात्रेषु चान्यत्र तीक्ष्णशङ्कुभिरायसैः ॥ ३८ ॥ क्रियन्ते संयता घोरैः सन्तप्तेषु महाभुज ॥
आपोथ्यन्ते तथान्यत्र विनिगृह्य शिलासु ते ॥ ३९ ॥ गर्तेषु ते भृदं दत्त्वा पूर्यन्ते मुसलैर्भृशम् ॥ बद्धास्तम्भे तथान्यत्र क्षिप्यन्ते सायकैर्नराः ॥
॥ ४० ॥ शृङ्खलाभिश्च बध्यन्ते लोठ्यन्ते कण्टकेषु च ॥ गन्धेनान्यत्र बोध्यन्ते विषमेण पुनःपुनः ॥ ४१ ॥ नारकैश्च तथा सत्त्वैर्नाना
वेषैर्भयानकैः ॥ यातनाभिश्च बह्वीभिर्याप्यन्ते नरके भृशम् ॥ ४२ ॥ अन्योन्यस्य च मांसानि भक्षयन्त्यपरे तथा ॥ हा तात मातेति
तथा क्रन्दमानाः पुनःपुनः ॥ ४३ ॥ निन्दन्तः स्वानि कर्माणि ताड्यमानाश्च तैर्भटैः ॥ यातनाभिश्च बह्वीभिर्याप्यन्ते भृगु
नन्दन ॥ ४४ ॥ विमुक्तनारका ह्यन्ये वह्निमन्ये सुशीतलम् ॥ विजानन्ति महाभाग सुखस्पर्शतमं तथा ॥ ४५ ॥
विमुक्तो नारकाच्छीतात्सुखोष्णं हिमसंचयम् ॥ मन्यते सर्वमेवान्यत्सुखस्पर्शतमं तथा ॥ ४६ ॥ नरकेभ्यश्च शस्त्रेभ्यो विमुक्तो यो नराधमः ॥

शस्त्राण्यन्यानि जातानि सुखस्पर्शसमानि च ॥४७॥ सुखदुःखे तु मानुष्ये त्रिदिवे केवलं सुखम् ॥ नरके दुःखमेवोग्रं सततं भृगुनन्दन ॥ ४८॥ तृष्णा तत्र क्षुधा तत्र गन्धस्तीव्रो भयङ्करः ॥ यातना विविधाः प्रोक्ता भयं तत्रातिदारुणम् ॥ ४९ ॥ दुर्गन्धिकंटकाकीर्णं तथा कुणपसंकुलम् ॥ केशास्थिबहुलं भीमं नरकं दुःखमेव तु ॥ ५० ॥ आर्तनादमहानादकाकक्रव्यादसंकुलम् ॥ कृमिकीटपतङ्गाढ्यं पूयासृग्बहुलं तथा ॥ ५१ ॥ अन्योऽन्यक्लेशसंयुक्तमन्योऽन्यकर्षकारकम् ॥ अन्योऽन्यताडकं घोरं तथाऽन्योन्यभयङ्करम् ॥ ५२ ॥ एवमेतेषु ते पापा नरकेषु समागताः ॥ बहवः खलु याप्यन्ते मानवाः पापकारिणः ॥ ५३ ॥ यावत्तेषां न पापानि क्षयं यान्ति भृगूत्तम ॥ तावत्ते न विमुच्यन्ते नरकाद् घोरदर्शनात् ॥ ५४ ॥ अत्यन्तभीमा नरकाः सुघोरा भयावहव्यालगणावकीर्णाः ॥ भक्तिं वहन्तः पुरुषोत्तमस्य न यान्ति ते भार्गववंशमुख्य ॥ ५५ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं०रामं प्रति पुष्करोपाख्याने नरकयातनावर्णनन्नामैकोनविंशत्युत्तरशततमोऽध्यायः॥११९॥राम उवाच ॥ कर्मणा केन धर्मज्ञ नरा नरकवासिनः ॥ कांकां योनिं प्रपद्यन्ते तिरश्चो ब्रूहि तन्मम ॥ १ ॥ पुष्कर उवाच ॥ अमेध्यमध्ये कृमयो महापातकिनो जनाः ॥ भवन्ति बहुधा भूम्यां ततश्चैव शिलासु ते ॥ २ ॥ तृणगुच्छलतागुल्मद्रुमत्वं प्राप्यते क्रमात् ॥ भवन्ति च मृगाः पश्चान्नित्यं व्याधभयार्दिताः ॥ ३ ॥ ब्रह्मस्वहारिणो हिंस्रा रौद्राचाराः सदैव तु ॥ अटव्यां घोररूपायां जायन्ते ब्रह्मराक्षसाः ॥ ४ ॥ परदाररता मूढाः सन्तप्तायां तथा भुवि ॥ कृकलासा हि जायन्ते पिशाचाश्चाप्यनन्तरम् ॥ ५ ॥ अटव्यां घोररूपायां संशुष्कद्रुमकोटरे ॥ कृष्णाहयो हि जायन्ते ततः पश्चान्न संशयः ॥ ६ ॥ कूटसाक्षिप्रदाः पापास्त्वमेध्ये कृमयश्चिरम् ॥ कृत्वा भवन्ति सर्पास्ते पिशाचास्तदनन्तरम् ॥ ७ ॥ गुरुमित्रद्रुहः पापा ये च स्वामिद्रुहो जनाः ॥ द्विजशिष्यद्रुहश्चैव कृतघ्ना नास्तिकास्तथा ॥ ८ ॥ त्यागिनो बान्धवानां च त्यागिनः शरणार्थिनाम् ॥ निक्षेपहारिणो ये च कन्यकाक्रयिणश्च ये ॥ ९ ॥ अमेध्ये कृमयः सर्पा मृगा व्यालमृगास्तथा ॥ ततो घोरगणोपेता जायन्ते जम्बुकाः खलाः ॥ १० ॥ परस्वहारिणः पापाः कुञ्जरास्तुरगाः खराः ॥ बलीवर्दास्तथैवोष्ट्रा जायन्ते नात्र संशयः ॥ ११ ॥ हृतं यस्य तु तैर्द्रव्यं तस्य भाग्यानुरूपतः ॥ आत्मदोषानुसारेण जायन्ते धनिनस्तु ते ॥ १२ ॥ चन्द्रार्कग्रहणे भुक्त्वा जायन्ते कुञ्जरा नराः ॥ आमश्राद्धं तथा भुक्त्वा जायन्ते गृध्रयोनिषु ॥ १३ ॥ असत्प्रतिग्रहं राम गृहीत्वा वानरास्तथा ॥ आशाभङ्गं तथा कृत्वा शृगालाश्च तथाधमाः ॥ १४ ॥ सूचकस्तु दुराचारो वागुरिर्नाम जायते ॥ बहुकालं महाभाग भूयोभूय इति श्रुतिः ॥१५ ॥ मांसभुग्यावतां राम मांसमश्नाति देहिनाम् ॥ तावतां योनिमाप्नोति भूयोभूयो न संशयः ॥ १६ ॥

भोक्तव्यानि च तैस्तस्य राम मांसान्यसंशयम् ॥ यावन्तः प्राणिनो येन बहिर्वेद्यां निपातिताः ॥ १७॥ तावत्यो योनयस्तेन गन्तव्या भृगुसत्तम ॥
योनौयोनौ च हन्तव्यस्तेनासौ नात्र संशयः ॥ १८॥ वान्ताशी गुणपाशी च पूयभुग्रुधिराशिनः ॥ स्वकर्मविच्युता वर्णा जायन्ते प्रेतयोनिषु॥ १९॥
धान्यं हत्वा भवत्याखुः कांस्यं हंसो जलंप्लवः ॥ मधु दंशः पयः काको रसं श्वा नकुलो घृतम् ॥ २० ॥ मांसं गृध्रो वसां मद्गुस्तैलं
तैलापगः खगः ॥ चीरीवाकस्तु लवणं बलाका शकुनिर्दधि ॥ २१ ॥ कौशेयं तित्तिरिर्हत्वा क्षौमं हत्वा च दर्दुरः ॥ कर्पासं तान्तवं क्रौञ्चं गां
गोधा वाग्गुदो गुडम् ॥ २२ ॥ छुच्छुन्दरिः शुभान्गन्धान्पत्रशाकं शिखी तथा ॥ मक्षिकास्तु तथैवान्नमकृतान्नं तु शल्यकः ॥ २३ ॥ भेको
भवति हत्वाग्निं गृहहारी च तस्करः ॥ रक्तानि हत्वा वासांसि जायते जीवजीवकः ॥ २४ ॥ वृको मृगेभं व्याघ्राश्वं फलपुष्पं तु मर्कटः ॥
स्त्रियं हत्वा भवेदृक्षो यानमुष्ट्रः पशूनजः ॥ २५ ॥ यद्वा तद्वा परद्रव्यमपहृत्य बलान्नरः ॥ अवश्यं याति तिर्यक्त्वं जग्ध्वा चैवाहुतं हविः ॥
॥ २६ ॥ तिर्यक्षु दुःखं परमं विदित्वा पापानि वर्ज्यानि नरेण नित्यम् ॥ भक्तिश्च कार्या मधुसूदनस्य तया स दुःखं सकलं जहाति ॥ २७ ॥
इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं० रामं प्रति पुष्करोपाख्याने तिर्यग्योनिवर्णनन्नाम विंशत्युत्तरशततमोऽध्यायः ॥ १२० ॥ राम
उवाच ॥ नरकाद्यान्ति तिर्यक्त्वं ततो मानुष्यमेव च ॥ तेषां चिह्नानि मे ब्रूहि मानुष्ये वरुणात्मज ॥१॥ पुष्कर उवाच ॥ मणिमुक्ताप्रवालानि
रत्नानि विविधानि च ॥ अपहृत्य नरो राम जायते हेमकर्त्तृषु ॥ २ ॥ यद्वा तद्वा परद्रव्यमपहृत्य नरो बलात् ॥ प्राप्नोति भृगुशार्दूल मानुष्ये
भारवाहिताम् ॥ ३ ॥ यं कश्चिद् घातयित्वापि प्राणिनं भृगुनन्दन ॥ मांसं भुक्त्वा तु धर्मज्ञ भवतीह गदातुरः ॥ ४ ॥ सुवर्णचोरः कुनखी
सुरापः श्यावदन्तकः ॥ ब्रह्महा क्षयरोगी स्याद्दुश्चर्मा गुरुतल्पगः ॥ ५ ॥ पिशुनः पूतिनासः स्यात्सूचकः पूतिवक्त्रकः ॥ धान्यचौरोऽङ्गहीनः
स्याद्व्यङ्गो मिश्रहृद्भवेत् ॥ ६ ॥ व्याधितश्चान्नहर्ता स्यान्मूको वागपहारकः ॥ वस्त्रापहारकः श्वित्री पङ्गुश्चाश्वापहारकः ॥ ७ ॥ खल्वाटो
मत्सरी राम नास्तिको वेदनिन्दकः ॥ भूय एव समाप्नोति तथा नास्तिकतां द्विज ॥ ८॥ अन्धो दीपापहारी स्यात्काणो निर्वापकस्तथा ॥
अन्धो भवति गोघ्नस्तु वाण्टिकस्तैलिकस्तथा ॥ ९ ॥ दरिद्रः परवित्तघ्नो उन्मत्तश्च तथाग्निदः ॥ प्रतिकूलो गुरोर्यस्तु सोऽपस्मारी प्रजायते ॥२६२॥
॥ १० ॥ मिष्टाश्येको महाभाग वातगुल्मी भवेन्नरः ॥ खगभक्ष्यंस्तु कुण्डाशी दीर्घरोगी च पीडकः ॥ ११ ॥ भवतीह मृगव्याधस्त्वविक्रे
यस्य विक्रयात् ॥ श्लीपदी चावकीर्णी स्यान्मूर्खश्चाक्रोशको भवेत् ॥१२॥ उक्तास्तु मुख्या हि मया तिरश्चां या योनयो यानि च लक्षणानि ॥

शक्यं न कार्त्स्न्येन मया प्रवक्तुं या यातनाश्चैव नराधमानाम् ॥१३॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० सं० नारकिचिह्नवर्णनन्नामैकविंश त्युत्तरशततमोऽध्यायः ॥ १२१ ॥ मार्कण्डेय उवाच ॥ एतच्छ्रुत्वा यदुश्रेष्ठ रामो रतिकरः पितुः ॥ पपात भुवि निश्चेष्टश्छिन्नमूल इव द्रुमः ॥ ॥ १ ॥ तं विसंज्ञं महाभाग पीनोन्नतपयोधराः ॥ सचन्दनैः शीतजलैः सिषिचुर्देवयोषितः ॥ २ ॥ वारुणेराज्ञया चान्यास्तालवृन्तैर्मनोरमैः ॥ वीजयन्ति महाभाग रामं धर्मभृतां वरम् ॥ ३ ॥ लब्धसंज्ञं मुहूर्तेन भार्गवं चित्तविह्वलम् ॥ आश्वासयामास तदा वारुणिः परवीरहा ॥ ४ ॥ समाश्वस्तस्ततो रामः पप्रच्छ वरुणात्मजम् ॥ दुर्गातितरणं वीरो रामो धर्मभृतां वरः ॥ ५ ॥ राम उवाच ॥ ॥ क्लिश्य मानेषु भूतेषु तैस्तैर्भावैस्ततस्ततः ॥ दुर्गाण्यतितरेद्येन ब्रूहि मे वरुणात्मज ॥ ६ ॥ पुष्कर उवाच ॥ आश्रमेषु यथोक्तेषु यथोक्तं ते द्विजा तयः ॥ वर्तन्ते संयतात्मानो दुर्गाण्यतितरन्ति ते ॥ ७ ॥ ये दम्भान्न जहतीह येषां वृत्तिश्च संवृता ॥ विषयाँश्च न गृह्णन्ति दुर्गाण्यतितरन्ति ते ॥ ८ ॥ वासयन्त्यतिथीन्नित्यं नित्यं ये चानसूयकाः ॥ नित्यं स्वाध्यायशीलाश्च दुर्गाण्यतितरन्ति ते ॥ ९ ॥ मातापित्रोश्च ये वृत्तिं वर्तन्ते धर्मकोविदाः ॥ वर्जयन्ति दिवास्वापं दुर्गाण्यतितरन्ति ते ॥ १० ॥ स्वेषु दारेषु वर्तन्ते न्यायवृत्तिभृतावृतौ ॥ अग्निहोत्रपराः सन्तो दुर्गाण्यति तरन्ति ते ॥ ११ ॥ आहवेषु च ये शूरास्त्यक्त्वा मरणजं भयम् ॥ धर्मेण जयमिच्छन्ति दुर्गाण्यतितरन्ति ते ॥ १२ ॥ ये पापानि न कुर्वन्ति कर्मणा मनसा गिरा ॥ निक्षिप्तदण्डा भूतानां दुर्गाण्यतितरन्ति ते ॥ १३ ॥ कर्माण्यकुहकार्थानि येषां वाचश्च सूनृताः ॥ येषामर्थश्च साध्वर्थो दुर्गाण्यतितरन्ति ते ॥ १४ ॥ ये तपश्च तपस्यन्ति कौमारब्रह्मचारिणः ॥ विद्यावेदव्रतस्नाता दुर्गाण्यतितरन्ति ते ॥ १५ ॥ येषां न कश्चित्त्रसति त्रस्यन्ति न च कस्यचित् ॥ येषामात्मसमो लोको दुर्गाण्यतितरन्ति ते॥१६॥ परश्रिया न तप्यन्ते सन्तः पुरुषसत्तमाः ॥ ग्राम्यास्वाद निवृत्ताश्च[1] दुर्गाण्यतितरन्ति ते॥१७॥ सर्वान्देवान्नमस्यन्ति सर्वान्धर्मांश्च शृण्वते ॥ ये श्रद्दधानाः पुरुषा दुर्गाण्यतितरन्ति ते॥१८॥ ये न लोभान्नयन्त्यर्थान्रा जानो रजसा वृताः ॥ विषयान्परिरक्षन्तो दुर्गाण्यतितरन्ति ते॥१९॥ये न मानितुमिच्छन्ति मानयन्ति च ये नरान् ॥ मान्यमानान्नमस्यन्ति दुर्गा ण्यतितरन्ति ते ॥२०॥ ये च श्राद्धानि कुर्वन्ति तिथ्यांतिथ्यां प्रजार्थिनः ॥ सुविशुद्धेन मनसा दुर्गाण्यतितरन्ति ते॥२१॥ ये क्रोधं नैव कुर्वन्ति क्रोधार्तं शमयन्ति च ॥ न च कुप्यन्ति भृत्यानां दुर्गाण्यतितरन्ति ते॥२२॥मधु मांसं च ये नित्यं वर्जयन्तीह मानवाः॥ जन्मप्रभृति मद्यं च दुर्गा

१ 'ग्राम्यादनान्निवृत्ताश्च' इति ख० ।

ण्यतितरन्ति ते॥२३॥यात्रार्थं भोजनं येषां सन्तानार्थं च मैथुनम् ॥ वाक् सत्यवचनार्थाय दुर्गाण्यतितरन्ति ते ॥२४॥तडागारामकर्तारस्तथान्ये वृक्षरोपकाः ॥ कूपानां ये च कर्तारो दुर्गाण्यतितरन्ति ते ॥ २५ ॥ गवां ग्रासप्रदातारो गवां कण्डूयकाश्च ये ॥ भक्तिमन्तो गवां ये च दुर्गाण्यतितरन्ति ते ॥ २६ ॥ पूजयन्ति सदा विप्रान्साधूनपि गुरूँस्तथा ॥ तपस्विनश्च धर्मज्ञ दुर्गाण्यतितरन्ति ते ॥ २७॥ गायत्रीजापनिरतास्तीर्थयात्रारताश्च ये ॥ ये चैकमाश्रितास्तीर्थं दुर्गाण्यतितरन्ति ते ॥ २८ ॥ ये चैकमाश्रिता देवं सर्वभावेन भार्गव ॥ धर्मज्ञाश्च विनीताश्च दुर्गाण्यतितरन्ति ते ॥ २९ ॥ सायं प्रातश्च भुञ्जानाः पिबन्त्यापस्तु ये नराः ॥ सदोपवासिनो राम दुर्गाण्यतितरन्ति ते ॥ ३० ॥ उपवासरता नित्यं नित्यं व्रतपरायणाः॥नित्यं संयतचित्ताश्च दुर्गाण्यतितरन्ति ते॥३१॥दुर्गातितरणं ये च पठन्ति श्रावयन्ति च ॥ कथयन्ति च विप्रेभ्यो दुर्गाण्यतितरन्ति ते ॥ ३२ ॥ ईश्वरः सर्वभूतानां जगतां प्रभवोऽप्ययः ॥ भक्ता नारायणे चैव दुर्गाण्यतितरन्ति ते ॥ ३३ ॥ भक्तानां केशवे राम न भयं विद्यते क्वचित् ॥ तथा गीतश्च श्लोकोऽयं यमेन शृणु भार्गव ॥ ३४ ॥ पृथ्वीशतस्करभुजङ्गहुताशविग्रहदुःस्वप्नदुष्टगतमृत्युसपत्नजातम् ॥ संविद्यते न हि भयं भुवनैकभर्तुर्भक्ताश्च ये मधुरिपोर्मनुजेषु तेषु ॥ ३५ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं० रामं प्रति पुष्करोपाख्याने दुर्गातितरणवर्णनन्नाम द्वाविंशत्युत्तरशततमोऽध्यायः॥ १२२ ॥ राम उवाच ॥ भूय एव समाचक्ष्व कर्मणा येन मानवाः ॥ दुर्गाण्यतितरन्त्याशु सर्वधर्मभृतां वर ॥ १ ॥ पुष्कर उवाच ॥ दुर्गाण्यतितरन्त्याशु ये नराः कृच्छ्रकारिणः ॥ प्राप्नुवन्ति तथा कामान्सर्वान्वै मनसेप्सितान् ॥ २ ॥ राम उवाच ॥ कृच्छ्राणां श्रोतुमिच्छामि नामानि च विधींस्तथा॥ एवं मे ब्रूहि धर्मज्ञ त्वं हि वेत्सि यथातथम् ॥ ३ ॥ पुष्कर उवाच ॥ कृच्छ्राण्येतानि कार्याणि राम वर्णत्रयेण च ॥ कृच्छ्रेष्वेतेषु शूद्रस्य नाधिकारो विधीयते ॥ ४ ॥ आदौ तु मुण्डनं कार्यं सर्वकृच्छ्रे भार्गव ॥ नित्यं त्रिषवणस्नानं केशवस्य च पूजनम् ॥ ५ ॥ होमः पवित्रमन्त्रैश्च तथान्ते जाप्य एव च ॥ स्त्रीशूद्रपतितानां च तथालापं विवर्जयेत् ॥ ६॥ एतत्कृच्छ्रेषु सर्वेषु कर्तव्यं चाविशेषतः ॥ वीरासनं च कर्तव्यं कामतोऽप्यथवा न वा ॥७॥ वीरासनेन सहितं कृच्छ्रं बहुगुणं भवेत् ॥ वीरासनेन रहितं विधिहीनं प्रकीर्तितम् ॥ ८ ॥ राम उवाच ॥ वीरासनमहं त्वत्तः श्रोतुमिच्छामि सुव्रत ॥ वीरासनेन सहितं कृच्छ्रं बहुगुणं यतः ॥ ९ ॥ पुष्कर उवाच ॥ उत्थितस्तु दिवा तिष्ठेदुपविष्टस्तथा निशि ॥ एतद्वीरासनं प्रोक्तं महापातकनाशनम् ॥ १० ॥ आमिक्षया तु द्वौ मासौ पक्षं तु पयसा तथा ॥ अष्टरात्रं तथा दध्ना त्रिरात्रमथ सर्पिषा ॥ ११ ॥ निराहारस्त्रिरात्रं तु कुर्याद्वा बालकव्रतम् ॥ सर्वपापप्रशमनं

सर्वकामप्रदं तथा ॥ १२ ॥ स्नपयेद्दात्मनोऽर्थाय पावकं भृगुनन्दन ॥ वह्नौ ततोऽनुजुहुयाद्द्यादन्नञ्च कस्यचित् ॥ १३ ॥
ब्रह्मा देवेति मन्त्रेण साध्यमाने विचक्षणः ॥ दर्भांस्तु खलु बध्नीयाद्रक्षार्थमिति नः श्रुतिः ॥ १४ ॥ श्रितं च श्राप्यमाणं च भाण्डे न्यस्त तथा
पुनः ॥ अनेन राम मन्त्रेण नरस्त्रिरभिमन्त्रयेत् ॥ १५ ॥ यवोऽसि धान्यराजोऽसि वारुणो मधुसंयुतः ॥ निर्णोदः सर्वपापानां पवित्रमृषिभिः
स्मृतम् ॥ १६ ॥ घृतं यवा मधु यवा आपो वा अमृतं यवाः ॥ सर्वं पुनीत मे पापं यन्मया दुष्कृतं कृतम् ॥ १७ ॥ वाचा कृतं कर्मकृतं दुःस्वप्नं
दुर्विचिन्तितम् ॥ अलक्ष्मीं नाशय तथा सर्वं पुनीत मे यवाः ॥ १८ ॥ श्वसूकरावलीढं च ह्युच्छिष्टोपहतं च यत् ॥ मातुर्गुरोरशुश्रूषां सर्वं
पुनीत मे यवाः ॥ १९ ॥ गणान्नं गणिकान्नं च शूद्रान्नं च तथा विशाम् ॥ चौरस्यान्नं नवश्राद्धं सर्वं पुनीत मे यवाः ॥ २० ॥ बालवृत्तमधर्मं च
राजधर्मकृतं च यत् ॥ सुवर्णस्तेयमव्रात्यमयाज्यस्य च याजनम् ॥ २१ ॥ ब्राह्मणानां परीवादं सर्वं पुनीत मे यवाः ॥ भाण्डेन्यस्तस्य मन्त्रोऽयं
ततस्तु परिकीर्तयेत् ॥२२॥ (ये देवा मनोजाता मनोयुजः सुदक्षा दक्षपितरस्ते नः पान्तु ते नोऽवन्तु तेभ्यः स्वाहा) अनेनात्मनि धर्मज्ञ जुहुयात्प्रयतः
सदा ॥ नकुर्यादतिसौहित्यं व्रतमेतद्धि यावकम् ॥ २३ ॥ मेधार्थिनस्त्रिरात्रं तु षड्रात्रमतिपापिनः ॥ उपपातकिनः प्रोक्तं सप्तरात्रमरिन्दम ॥२४॥
महापातकिनश्चैव षड्रात्रं द्विगुणं स्मृतम् ॥ एकविंशतिरात्रेण कामानाप्नोत्यभीप्सितान् ॥ २५ ॥ मासेन सर्वपापेभ्यो मोक्षमाप्नोत्यसंशयम् ॥
गवां निर्हारमुक्तैस्तु यवैः कृत्वैतदेव हि ॥२६ ॥ फलं प्राप्नोति धर्मज्ञ तथा दशगुणं ध्रुवम् ॥ मासेन साक्षाञ्चिदशान्वेदान्विद्याश्च पश्यति ॥ २७ ॥
वरशापसमर्थस्तु तथा भवति भार्गव ॥ शुक्लपक्षसमारम्भादारभेत्प्रत्यहं नरः ॥ २८ ॥ एकैकवृद्ध्या अश्नीयात्पिण्डाञ्श्रीखण्डसंयुतान् ॥ एकैकं
ह्रासयेत्कृष्णे प्रतिपत्प्रभृति क्रमात् ॥ २९ ॥ हविष्यस्य महाभाग नाश्नीयाच्चन्द्रसंक्षये ॥ एतच्चान्द्रायणं प्रोक्तं यवमध्यं महात्मभिः ॥ ३० ॥
एतदेव विपर्यस्तं वज्रमध्यं प्रकीर्तितम् ॥ अष्टभिः प्रत्यहं ग्रासैर्यतिचान्द्रायणं स्मृतम् ॥ ३१ ॥ प्रातश्चतुर्भिः सायं च शिशुचान्द्रायणं स्मृतम् ॥
यथाकथंचित्पिण्डानां चत्वारिंशच्छतद्वयम् ॥ ३२ ॥ मासेन भक्षयेदेतत्सुरचान्द्रायणं स्मृतम् ॥ गोक्षीरं सप्तरात्रं तु पिबेत्स्तनचतुष्टयम् ॥३३॥
स्तनत्रयात्सप्तरात्रं सप्तरात्रं स्तनद्वयात् ॥ स्तनात्तथैव षड्रात्रं त्रिरात्रं वायुभुग्भवेत् ॥ ३४ ॥ एतत्सोमायनं नाम व्रतं कल्मषनाशनम् ॥ त्र्यहं पिबे
दपस्तूष्णास्त्र्यहमुष्णं पयः पिबेत् ॥ ३५ ॥ त्र्यहमुष्णं घृतं पीत्वा वायुभक्ष्यो भवेत्त्र्यहम् ॥ तप्तकृच्छ्रमिदं प्रोक्तं शीतैः शीतं प्रकीर्तितम् ॥ ३६ ॥
कृच्छ्रातिकृच्छ्रं पयसा दिवसानेकविंशतीन् ॥ गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ॥ ३७ ॥ एकरात्रोपवासश्च कृच्छ्रं सान्तपनं स्मृतम् ॥

एतच्च प्रत्यहाभ्यस्तं महासान्तपनं स्मृतम् ॥ ३८ ॥ कृच्छ्रं पराकसंज्ञं स्याद्द्वादशाहमभोजनम् ॥ एकभुक्तेन नक्तेन तथैवायाचितेन च ॥ ३९ ॥ उपवासेन चैकेन कृच्छ्रपादः प्रकीर्तितः ॥ एतदेव त्रिरभ्यस्तं शिशुकृच्छ्रं प्रकीर्तितम् ॥ ४० ॥ त्र्यहं सायं त्र्यहं प्रातस्त्र्यहमद्यादयाचितम् ॥ त्र्यहं परं च नाश्नीयात्प्राजापत्यं चरन्द्विजः ॥ ४१ ॥ पिण्याकाचामतक्राम्बुसक्तूनां प्रतिवासरम् ॥ एकैकमुपवासं च सौम्यकृच्छ्रं प्रकीर्तितम् ॥ ४२ ॥ अम्बुसिद्धैस्तथा मासः केवलैर्वारुणं स ॥ फलैर्मासेन कथितं फलकृच्छ्रं मनीषिभिः ॥ ४३ ॥ श्रीकृच्छ्रं श्रीफलैः प्रोक्तं पद्माक्षैरपरं तथा ॥ माससामलकैरेव श्रीकृच्छ्रमपरं स्मृतम् ४४ ॥ पत्रैर्मतं पत्रकृच्छ्रं पुष्पैस्तत्कृच्छ्रमुच्यते ॥ मूलकृच्छ्रं तथा मूलैस्तोयकृच्छ्रं जलेन तु ॥ ४५ ॥ दध्ना क्षीरेण तक्रेण पिण्याकेन कणैस्तथा ॥ शाकैर्मासं कार्याणि सुनामानि विचक्षणैः ॥ ४६ ॥ सायं प्रातस्तु भुञ्जानो नरो यो नान्तरा पिबेत् ॥ षड्भिर्वर्षैरिदं प्रोक्तं कृच्छ्रं नित्योपवासिता ॥ ४७ एकभक्तेन मासेन कथितं चैकभक्तकम् ॥ न तु कृच्छ्रं तु नक्तेन महत्संवत्सराद्भवेत् ॥ ४८ ॥ नक्ताशिनस्तु धर्मज्ञ एकभुक्तस्य वा पुनः ॥ त्र्यहं वोपवसेद्युक्तः स्नायीत सवनत्रयम्॥४९॥निमग्नस्तु तथैवाप्सु त्रिः पठेदघमर्षणम् ॥ देवताभाववृत्तस्तुच्छन्दश्चैवाप्यनुष्टुभम् ॥ ५० ॥ संस्मरेत्तस्य च तथा ऋषिं चैवाघमर्षणम् ॥ चतुर्थेऽहनि दातव्या ब्राह्मणाय तपस्विने ॥ ५१ ॥ त्र्यहं जपेद्यथाशक्ति शुचिश्चैवाघमर्षणम् ॥ भाववृत्तस्तथा देवस्तथा च पुरुषः परः ॥ ५२ ॥ तद्दैवत्यं विजानीयात्सूक्तं तदघमर्षणम् ॥ यथाश्वमेधः क्रतुराट् सर्वपापापनोदनः ॥ ५३ ॥ तथाघमर्षणं सूक्तं सर्वकल्मषनाशनम् ॥ कृष्णाजिनं वा कुतपं परिधायाथ वल्कलम्॥५४॥ संवत्सरं व्रतं कुर्यात्सम्मितं नाम भार्गव ॥ गृहं न प्रविशेत्तत्र भवेदाकाशशायकः ॥ ५५ ॥ अशक्तौ वा भवेद्ग्राम तथा शैलगुहाशयः ॥ नित्यं त्रिषवणस्नायी तथा स्याद्द्विजसत्तम॥५६॥भैक्ष्यशाकफलाहारः कामं स्याद्द्विजपुङ्गव ॥ वीरासनं तथा कुर्यात्काष्ठमौनं तथैव च॥५७॥ सर्वकामप्रदं ह्येतत्सर्वकल्मषनाशनम् ॥ वायव्यं कृच्छ्रमुक्तं तु पाणिपूरान्नभोजिनः ॥ ५८ ॥ मासेनैकेन धर्मज्ञ सर्वकल्मषनाशनम् ॥ तिलैर्द्वादशरात्रेण कृच्छ्रमाग्नेयमुच्यते ॥ ५९ ॥ लाजाप्रसृतिमप्येकां कनकेन समन्विताम् ॥ भुञ्जानस्य तथा मासं कृच्छ्रं धनददैवतम् ॥ ६० ॥ गवां निर्हारनिर्मुक्तैर्यवैः सक्तून्समन्ततः ॥ याम्यं कृच्छ्रं विनिर्दिष्टं मासेन भृगुनन्दन ॥ ६१ ॥ गोमूत्रेण चरेत्स्नानं वृत्तिं गोमयमाचरेत् ॥ गवां मध्ये सदा तिष्ठेद्गोपुरीषे च संवसेत्॥६२॥ गोष्वतृप्तासु न पिबेदुदकं भृगुनन्दन ॥ अभुक्तासु तु नाश्नीयादुत्थितासूत्थितो भवेत्॥६३॥तथा चैवोपविष्टासु सर्वासूपविशेन्नरः ॥ मासेनैकेन कथितं गोमूत्रं कल्मषापहम् ॥ ६४ ॥ अजाकृच्छ्रं तथैवैतदजामध्ये तु वर्ततः ॥ तृणानां भक्षणेनेह समतुल्यफले उभे ॥ ६५ ॥ द्वाद

शाहेन कथितं सर्वपातकनाशनम् ॥ उपोषितश्चतुर्दश्यां पञ्चदश्यामनन्तरम् ॥ ६६ ॥ पञ्चगव्यं समश्नीयाद्धविष्याशी त्वनन्तरम् ॥ ब्रह्मकूर्च
मिदं कुर्यादुक्तप्रशमनाय वै ॥ ६७ ॥ पक्षान्ते त्वथ वा कार्यं मासमध्ये तु वा पुनः ॥ ब्रह्मकूर्चं नरः कुर्यात्पौर्णमासेषु यः सदा ॥६८॥ तस्य पापं
क्षयं याति दुर्भुक्तादि न संशयः ॥ मासाभ्यां च नरः कृत्वा ब्रह्मकूर्चं समाहितः ॥ ६९ ॥ सर्वपापविनिर्मुक्तो यथेष्टां गतिमाप्नुयात् ॥ ब्रह्मभूतम
मावस्यां पौर्णमास्यां तथैव च ॥ ७० ॥ योगभूतं परिचरेत्केशवं महदाप्नुयात् ॥ एवमेतानि कृच्छ्राणि कथितानि मया तव ॥७१ ॥ शासना
नीह पापानां दुरितानां च भार्गव ॥ संवत्सरस्यैकमपि चरेत्कृच्छ्रं द्विजोत्तमः ॥ ७२ ॥ अज्ञातभुक्तशुद्ध्यर्थं ज्ञातस्य तु विशे
षतः ॥ अज्ञातं यदि वा ज्ञातं कृच्छ्रं पापं विशोधयेत् ॥ ७३ ॥ कृच्छ्रसंशुद्धपापानां नरकं न विधीयते ॥ श्रीकामः पुष्टिकामश्च स्वर्ग
कामस्तथैव च ॥ ७४ ॥ देवताराधनपरस्तथा कृच्छ्रं समाचरेत् ॥ रसायनानि मन्त्राश्च तथा चैवौषधाश्च ये ॥ ७५ ॥
तस्य सर्वे हि सिध्यन्ति यो नरः कृच्छ्रकृद्भवेत् ॥ वैदिकानि च कर्माणि यानि काम्यानि कानिचित् ॥ ७६ ॥ सिध्यन्ति सर्वाणि सदा
कृच्छ्रकर्तुर्भृगूत्तम ॥ तेजसा तस्य संयोगो महता चैव जायते ॥ ७७ ॥ वाञ्छितान्मानसान्कामान्स चाप्नोति न संशयः ॥ ज्ञातो
भवति देवेषु तथा चर्षिगणेषु च ॥ विपाप्मा वितमस्कश्च संशुद्धश्च विशेषतः ॥७८॥ आराधनार्थं पुरुषोत्तमस्य कृच्छ्राणि कृत्वा मधुसूदनस्य ॥
सुरोत्तमानां समतीतलब्धं तल्लोकमाप्नोति जनार्दनस्य ॥ ७९ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० सं० रामं प्रति पुष्करोपाख्याने
कृच्छ्रप्रायश्चित्तवर्णनन्नाम त्रयोविंशत्युत्तरशततमोऽध्यायः ॥ १२३ ॥ ॥ राम उवाच ॥ वैदिकानि समाचक्ष्व कर्माणि सुरसत्तम ॥ अधि
कारी भवेद्येषां कृच्छ्रकारी त्वनन्तरम् ॥ १ ॥ पुष्कर उवाच ॥ शृणु काम्यानि कर्माणि पुष्कलानि ममानघ ॥ प्रतिवेदं महाभाग गदतो भृगुन
न्दन ॥ २ ॥ अन्तर्जले तथा होमे जपेच्च मानसेप्सितम् ॥ कामं करोति गायत्री प्राणायामाद्विशेषतः ॥ ३ ॥ गायत्र्या दशसाहस्रो जपो नक्ता
शिनो द्विज ॥ बहिः स्नातस्य तत्रैव सर्वकल्मषनाशनः ॥ ४ ॥ दशायुतानि जप्त्वा च हविष्याशी सुसंयतः ॥ वायुभूतस्तदाप्नोति यद्विष्णोः परमं
पदम् ॥५॥ परस्य ब्रह्मणो राम वाचकः प्रणवः स्मृतः ॥ पुरुषस्याप्रमेयस्य सर्वगस्याविनाशिनः ॥ ६॥ तज्जपेनेह पूयन्ते येऽपि दुष्कृतकारिणः ॥
ॐकारपूतं सलिलं नाभिमात्रोदकस्थितः ॥ ७ ॥ शतजप्तं पिबेद्यस्तु स पापैर्विप्रमुच्यते ॥ अकारश्चाप्युकारश्च मकारश्च भृगूत्तम ॥ ८ ॥ यजुर्वेदः
सामवेद ऋग्वेदश्च विचक्षणैः ॥ कथितस्तु त्रिमात्रश्च प्रणवः परिकीर्तितः ॥९॥ मात्रात्रयं तु प्रणवस्त्रयो देवाः सनातनाः ॥ एत एव त्रयो लोकास्त्रय

श्चैवाग्नयस्तथा ॥ १० ॥ महाव्याहृतिभिर्होमात्सर्वपापैः प्रमुच्यते ॥ महाव्याहृतयो ज्ञेयाः सप्तलोका विचक्षणैः ॥ ११ ॥ गायत्री परमा जप्ये होमे व्याहृतयस्तथा ॥ अन्तर्जले तथा राम प्रोक्तश्चैवाघमर्षणः ॥ १२ ॥ अग्निमीळे पुरोहित सूक्तोऽयं वह्निदेवतः ॥ शिरसा धारयेद्वह्निं यो जपे त्परिवत्सरम् ॥ १३ ॥ होमं त्रिषवणं चैव तथा तेन समाचरत् ॥ अनग्निज्वलनं कुर्याद्भैक्षाहारस्तु वत्सरान् ॥ १४ ॥ अतः परमृचः सप्त चाग्नेय्यः परिकीर्तिताः ॥ ता जपन्प्रयतो नित्यमिष्टान्कामान्समश्नुते ॥ १५ ॥ मेधाकामो जपेन्नित्यं सदसत्पदमित्यृचम् ॥ अम्बयो यान्ति याः प्रोक्ता न बन्धोमृत्युनाशिनी ॥ १६ ॥ शुनःशेफमृषिं तद्वत्संनिरुद्धोऽथ वा जपेत् ॥ मुच्यते सर्वपापेभ्यो गदाचापगदी गदन् ॥ १७ ॥ यदीच्छेच्छा श्वतं काममिन्द्रात्प्राप्तुं पुरन्दरात् ॥ ऋग्भिः षोडशभिः स्तूयादिन्द्रमेति दिनेदिने ॥ १८ ॥ हिरण्यस्तूपमित्येतज्जपञ्शत्रून्प्रबाधते ॥ क्षेमी भवति चाध्माने ये ते पक्वा जपन्नरः ॥ १९ ॥ रौद्रीभिः षड्भिरीशानं स्तूयाद्यो वै दिनेदिने ॥ चरुं वा कल्पयेद्रौद्रं तस्य शान्तिः परा भवेत् ॥ २० ॥ उदित्युद्यन्तमादित्यमुपतिष्ठेद्दिनेदिने ॥ क्षिपेज्जलाञ्जलीन्सप्त मनोदुःखविनाशनम् ॥ २१ ॥ द्विषन्तमित्यथानर्च्य द्विष्यन्तं च जपन्स्मरेत् ॥ अगच्छन्सप्तरात्रेण विद्वेषमधिगच्छति ॥२२॥ आरोग्यकामो रोगी च प्रस्कन्नस्योत्तमं जपेत् ॥ उत्तमस्तस्य चाव--जपेद्वैरविनाशने ॥ २३ ॥ ॥ उदयत्यायुरक्षय्यं तेजोमध्यन्दिने जपेत् ॥ अस्तं व्रजति सूर्ये च द्विषन्तं प्रतिपादितम् ॥ ॥ २४ ॥ नवपद्येति सूक्तानि जपञ्शत्रून्नियच्छति ॥ एकादश सुवर्णस्य सर्वकामांस्तु निर्दिशेत् ॥ २५ ॥ आध्यात्मिकैः क इत्येतज्जपन्मोक्षमवा प्नुयात् ॥ आसनो रुद्रमित्येतद्दीर्घमायुरवाप्नुयात् ॥ २६ ॥ त्वं सोमेति च सूक्तेन नवं पश्येन्निशाकरम् ॥ उपतिष्ठेत्समित्पाणिर्वासांस्याप्नोत्यसं शयम् ॥ २७ ॥ आयुरिप्सन्निदमिति कौत्ससूक्तं यदाभ्यसेत् ॥ अपनः शोशुचदिति स्तुत्वा मध्ये दिवाकरम् ॥ २८ ॥ यथा मुञ्जादिवेषीका तथा पापं प्रमुञ्चति ॥ जातवेदस इत्येतज्जपेत्स्वस्त्ययनं पथि ॥ २९ ॥ भयैर्विमुच्यते सर्वैः स्वस्तिमानाप्नुयाद्गृहम् ॥ व्युष्टायां च तथा रात्रावेत द्दुःस्वप्ननाशनम् ॥ ३० ॥ प्रमन्दितेति सूर्यस्य जपेद्गर्भविमोचनम् ॥ जपन्निन्द्रमिति स्नातो वैश्वदेवं तु सप्तकम् ॥ ३१ ॥ मुञ्चत्याज्यं तथा जुह्वत्सकलं किल्बिषं नरः ॥ इमामिति जपञ्शश्वत्कामानाप्नोत्यभीप्सितान् ॥ ३२ ॥ मानस्तोक इति द्वाभ्यां त्रिरात्रोपोषितः शुचि ॥ औदु म्बरीस्तु जुहुयाद्दधिमध्वाज्यसंस्कृताः ॥ ३३ ॥ छित्त्वा सर्वान्मृत्युपाशाञ्जीवेद्रोगविवर्जितः ॥ ऊर्ध्वबाहुरनेनैव स्तुत्वा शस्त्रं तथैव च ॥ ३४ ॥

१ 'येन पन्था' इति ख० ।

मानस्तोकेति च ऋचा शिखाबन्धे कृते नरः ॥ अदृश्यः सर्वभूतानां जायते संशयं विना ॥ ३५ ॥ चित्रमित्युपतिष्ठेत त्रिसन्ध्यं भास्करं तथा ॥ समित्पाणिर्नरो नित्यं प्राप्नुयात्तु धनायुषी ॥ ३६ ॥ एतद् दुःस्वप्नस्येति च जपन्प्रातर्दिनेदिने ॥ दुःस्वप्नं दहते कृत्स्नं भोजनं चाप्नुयाच्छुभम् ॥ ३७ ॥ उभेपुनामीति तथा रक्षा च परिकीर्तिता ॥ निर्वर्त्य पञ्चयज्ञांश्च हुत्वा चाग्निं कृताह्निकः ॥ ३८ ॥ देवासाविति देव्येदं जपन्कामानवाप्नुयात् ॥ आततायिनमायान्तं दृष्ट्वा व्याघ्रादिकं नरः ॥ ३९ ॥ न मागिरन्निति जपंस्तेभ्य एव प्रमुच्यते ॥ कया शुभेति च जपञ्ज्ञातिश्रैष्ठ्यमवाप्नुयात् ॥ ४० ॥ इमं नु सोममित्येतत्सर्वान्कामानवाप्नुयात् ॥ पित्रन्न्वित्युपतिष्ठेत नित्यमन्नमुपस्थितम् ॥ ४१ ॥ नास्य स्यादन्नतो व्याधिर्विषमप्यन्नतामियात् ॥ अग्ने नयेति सूक्तेन प्रत्यृचं जुहुयाद् घृतम् ॥ ४२ ॥ पक्वान्नं प्रतिपद्येत कृत्वा चाकर्म गर्हितम् ॥ वीरान्वयं समाप्नोति सश्लोकं यो जपेत्सदा॥४३॥ कं कता चेति सूक्तेन विघ्नान्सर्वानपोहति ॥ यो जात इति सूक्तेन सुखमाप्नोत्यनुत्तमम् ॥ ४४॥ ये पराजन्नितीमां तु दुःस्वप्नशमनामृचम् ॥ एकामाहमितीयां तु विज्ञेया श्रीकरी तथा ॥ ४५ ॥ चतुर्दशीमुपोष्यैकां कृष्णासु जुहुयाद् घृतम् ॥ आत्तसूक्तेन रौद्रेण व्याधिमेकं विमुञ्चति ॥ ४६॥ स्नात्वानश्नञ्जपेदप्सु शीतत्रयमतन्द्रितः ॥ आमिषस्येतयोर्मोहात्कृत्वा वा कर्म गर्हितम् ॥४७॥ अध्वनि प्रस्थितो यस्तु पश्येच्छकुनमुत्थितम् ॥ अप्रशस्ते प्रशस्ते वा कनिक्रदमिदं जपेत् ॥ ४८ ॥ अस्पृष्टैव च जप्तव्यमेतत्तस्करमोहनम् ॥ ॐष्वित्यृचमपां मध्ये जपेद्यो वै नदीं तरेत् ॥४९॥ उद्धौर्मिभिरितीमां तु जपेद्रथगतस्तरन् ॥ अध्वानं प्रस्थितश्चैव मन्त्रैरिति च संस्मरेत् ॥ ५० ॥ सुदातारं सुपुष्ट्यर्थं सर्ववेदे स्थितं नरम् ॥ नास्ति विद्यागमो यस्य सुयुक्तस्यापि भार्गव ॥ ५१ ॥ स सर्पीरिति च जपन्मासात्तं प्रतिपद्यते ॥ यानाक्षं समभज्यन्तं दृष्ट्वा दुर्गेऽध्वनि द्विज ॥ ५२ ॥ अभित्यवस्येतिजपेदक्षमक्षबलं दधत् ॥ कृष्णपक्षचतुर्दश्यां त्रिरात्रोपोषितः शुचिः ॥ ५३ ॥ दक्षिणाप्रवणे देशे श्मशानस्थः समाहितः ॥ रक्तोष्णीष्यसिपाणिश्च तौलाकीभ्योऽनिलाशनः ॥ ५४ ॥ सप्ताहं जुहुयात्तैलं सार्षपं लवणान्वितम् ॥ समिधो राजवृक्षस्य वसिष्ठे द्वेषिणीः पठन् ॥ ५५ ॥ यं द्विष्यात्तस्य कृत्वा तु शम्याकेनाहतं निशि ॥ अधिष्ठाय च तं कुर्यादृग्भिश्च तिसृभिर्द्विजः ॥ ५६ ॥ उद्दिश्य राम होमोऽयं सप्तरात्रं न जीवति ॥ द्वाविंशकं जपन्सूक्तमध्यात्मिकमनुत्तमम् ॥ ५७ ॥ पर्वसु प्रयतो नित्यमिष्टान्कामानुपाश्नुते ॥ बृहस्पतिमजाश्वं च सतारं बभ्रुमेव च ॥ ५८ ॥ पञ्चर्चेन स्तुवन्नेतान्पञ्चकामानवाप्नुयात् ॥ कृणुष्वेति जपन्सूक्तं जुह्वदाज्यं समाहितः॥५९॥अरातीनां हरेत्प्राणान्रक्षांस्यपि च नाशयेत्॥उपतिष्ठेत यो वह्निं परीत्य च दिने

दिने॥६०॥तं रक्षति स्वयं वह्निर्विश्वतो विश्वतोमुखः॥को अद्येति च सूक्तेन वासांसि लभते परम्॥६१॥कायेति वामदेवेन कुर्यात्स्वस्त्ययनं निशि॥ हंसःशुचिषदित्येतच्छुचिरीक्षन्दिवाकरम् ॥ ६२॥ कृषिं प्रपद्यमानस्तु स्थालीपाकं यथाविधि ॥ जुहुयात्क्षेत्रमध्ये तु शुना वाहस्तु पञ्चभिः ॥६३॥ इन्द्राय च मरुद्भ्यश्च पर्जन्याय भगाय च ॥ यथालिङ्गं तु विहरेल्लाङ्गलं तु कृषीवलः ॥ ६४ ॥ पूष्णे धान्याय सीतायै शुनासीरमथोत्तरम् ॥ गन्धमाल्योपहारैश्च यजेदेताश्च देवताः ॥ ६५ ॥ प्रवापणे प्रलपने खलसीतोपहारयोः ॥ अमोघं कर्म भवति वर्धते सर्वदा कृषिः ॥ ६६ ॥ क्षेत्रस्य पत्ये तत्क्षेत्रं सूर्यदृग्विन्दते ध्रुवम् ॥ आखूत्करेषु चरणौ यजेदेतेन मूषिकाम् ॥ ६७ ॥ चित्रा इन्द्रेति च स्तूयान्नास्य वृष्टिभयं भवेत् ॥ विज्येतिष्येति ज्वलयेद्यत्रेच्छेज्जातवेदसम्॥६८॥ समुद्रादिति सूक्तेन कामानाप्नोति पावकात्॥विश्वानि च इति द्वाभ्यामृग्भ्यां यो वह्निमर्चति॥ ॥६९॥स तरत्यापदः सर्वाः यशः प्राप्नोति चाक्षयम् ॥ अग्ने त्वमिति च स्तुत्वा धनमाप्नोति वाञ्छितम्॥७०॥उरोष्ट इति सूक्तेन वित्तमाप्नोत्यसं शयम् ॥ प्रजाकामो जपेन्नित्यं वरुणादेवसन्नया ॥ ७१ ॥ स्वस्त्यात्रेयं जपेत्प्रातः सदा स्वस्त्ययनं जपेत् ॥ स्वस्तिपन्थामिति प्रोच्य स्वस्तिमा न्व्रजतेऽध्वनि ॥७२॥ विजहीषुर्वनस्यान्ते शत्रूणां बाधनं भवेत् ॥ स्त्रियो गर्भप्रमूढाया गर्भमोक्षणमुत्तमम्॥७३॥अवंच्छादिति सूक्तेन वृष्टिकामः प्रयोजयेत्॥निराहारः क्लिन्नवासा न चिरेण प्रवर्षति॥७४॥श्रियः पञ्चदशर्चं तु जपञ्जुहुयाद् घृतेन वा॥उपैतु मां देवसख इति सर्वौषधीजलैः॥७५॥ सदा स्नातः श्रियं दीप्तां कुले प्राप्नोत्यसंशयम् ॥ मनसः काम इत्येतां पशुकामो नरो जपेत् ॥ ७६ ॥ कर्दमेनेति च स्नायात्प्रजाकामः शुचि व्रतः॥अश्वपूर्वामिति स्नायाद्राज्यकामस्तु मानवः॥७७॥ रोहिते चर्मणि स्नायाद्ब्राह्मणस्तु यथाविधि ॥ राजा चर्मणि वैयाघ्रे छागे वैश्यस्तथैव च ॥७८॥ दशसाहस्रिको होमः प्रत्येकं परिकीर्तितः ॥ अप्सु वा जुहुयाद्ग्राम पद्मान्ययुतशोऽग्निषु॥७९ ॥इष्टान इत्यृचा वह्निं स्तुवञ्शत्रून्विनाशयेत्॥ आचार इति सूक्तेन गोष्ठे गां लोकमातरम्॥८०॥उपतिष्ठेद्व्रजेच्चैव य इच्छेद्गाः सदाक्षयाः॥वाक्सिद्धिं तु स्तुवञ्शक्रं महद्धनमवाप्नुयात् ॥ ८१ ॥ उपैतेति मृती राज्ञो दुन्दुभीनभिमन्त्रयेत् ॥ तेजो बलं च प्राप्नोति शत्रूंश्चैव नियच्छति ॥ ८२ ॥ तृणपाणिर्जपेत्सूक्तं रक्षोघ्नं दस्युभिर्वृतः ॥ ये के च मेत्यृचं जप्त्वा दीर्घमायुरवाप्नुयात् ॥८३॥ यस्य नष्टं भवेद्द्रव्य सम्पूज्य स जपेन्निशि ॥ सौमारौद्रं जपन्सूक्तं सर्वपापैः प्रमुच्यते ॥ ८४॥ जीमूतसूक्तेन तथा सेनाङ्गानभिमन्त्रयेत् ॥ यथालिङ्गं ततो राजा विनिहन्ति रणे रिपून् ॥ ८५ ॥ अग्निं नरेति सूक्तेन स्तुवन्नग्निं सुखी भवेत् ॥

१ 'भवितव्यं च अच्छावदिति' इति पर्जन्यसूक्ते अच्छावदित्येवोक्तेः । २ 'श्रियः पञ्चशतं जुहुपञ्चजुहु' इति ख० । 'श्रियायापञ्च पूर्वन्तु जपञ्जुहुयाद् घृतेन तु' इति क० । ३'मृते' इति ख० ।

प्राणपेति त्रिभिः सूक्तैर्धनमाप्नोति चाक्षयम् ॥ ८६ ॥ अभीतयः प्रगाथेन स्तुत्वा शक्रं धनी भवेत् ॥ शंवतीः शन्न इन्द्राग्नी जपेद्व्याधिविना
शनम् ॥ ८७ ॥ समुद्रज्येष्ठेति जपेत्सूक्तमेतज्जयावहम् ॥ वास्तोष्पते प्रतीत्येतत्सूक्तं वातोष्पतेर्जपेत् ॥ ८८ ॥ अनीवहेति सूक्तेन भूतान्निःस्वाप
येन्निशि ॥ सम्बाधे विषमे दुर्गे बन्धे वा निगडैः क्वचित् ॥ ८९ ॥ पलायित्वा गृहीतो वा सूक्तमेतत्तथा जपेत् ॥ त्रिरात्रं नियतोपोष्य श्रपयेत्पा
यसं चरुम् ॥ ९० ॥ तेनायुतशतं पूर्णं जुहुयाद्त्र्यम्बकेत्यृचा ॥ समुद्दिश्य महादेवं जीवेदब्दशतं सुखी ॥ ९१॥ तच्चक्षुरित्यृचा स्नात उपतिष्ठेद्दिवा
करम् ॥ उद्यन्तं मध्यमं चैव दीर्घमायुर्जिजीविषुः ॥ ९२ ॥ व्युषा इत्युपतिष्ठेत यः प्रातः प्रयतः शुचिः ॥ प्राप्नुयात्सहिरण्यादि नानारूपधरं
बहु ॥ ९३ ॥ ध्रुवं सन्ध्यासु क्षितिषु जपन्बद्धः प्रमुच्यते ॥ इदमापः प्रवहत यत्किंचिद्दुरितं पुनः ॥ ९४ ॥ अपः प्रविश्य तु जपन्सर्वपापैः प्रमु
च्यते ॥ सूक्ताभ्यां पर एताभ्यां हुताभ्यां भूतिमाप्नुयात् ॥ ९५ ॥ सूक्ताभ्यां तिस्र एताभ्यामास्यदल्पोदकस्थितः ॥ उपतिष्ठन्रविं देवं पञ्चरात्रे
गते नरः ॥ ९६ ॥ अनश्नन्भार्गवश्रेष्ठ महद्वर्षमवाप्नुयात् ॥ इन्द्रासोमेति सूक्तं तु कथितं शत्रुनाशनम् ॥ ९७ ॥ यस्य लुप्येद्व्रतं मोहाद्व्रा
त्यैर्वा संसृजेत्सह ॥ उपोष्याज्यस्य जुहुयात्त्वमग्ने व्रतपा इति ॥ ९८ ॥ आदित्यदक्षप्रमाद्वौजं जप्त्वा वादी जयी भवेत् ॥ समग्निरग्निभिश्चेति प्रपद्ये
द्वायुभास्करौ ॥ ९९ ॥ अग्निं प्रथमतः स्तुत्वा महत्कष्टात्प्रमुच्यते ॥ न हीति च चतुष्केण मुच्यते महतो भयात् ॥ १०० ॥ ऋचं जप्त्वा य इत्येत
त्सर्वान्कामानवाप्नुयात् ॥ प्राग्भोजनमिदं ब्रह्म मानवानां महर्षिणाम् ॥ १०१ ॥ पूर्वाह्णे जपतो नित्यं त्वर्थसिद्धिः परा भवेत् ॥ अग्निनेत्याश्विनं
सूक्तं मृजाकरमुदाहृतम् ॥ १०२ ॥ समिधेति जुहोत्यग्नौ प्राप्नुयात्कीर्तिमुत्तमाम् ॥ द्विचत्वारिंशकं चैन्द्रं जप्त्वा नाशयते रिपून् ॥ १०३ ॥ नाशं
महीति जप्त्वा च प्राप्नोत्यारोग्यमेव च ॥ दुःस्वप्नघ्नाः परा जप्या नरः पापैः प्रमुच्यते ॥ १०४ ॥ शन्नो भवेति द्वाभ्यां तु भुक्त्वान्नं प्रयतः शुचिः ॥
हृदयं पाणिना स्पृष्ट्वा व्याधिभिर्नाभिभूयते ॥ १०५ ॥ अहोरात्रोषितः स्नात्वा शक्रं सम्पूज्य मानवः ॥ इत इत्याज्यमुत्पूय जुहुयादिन्द्रम
र्चयेत् ॥ १०६ ॥ घृतं तिलं वा धर्मज्ञ भयेभ्यो विप्रमुच्यते ॥ तत्त्वामन्दमिति स्नातो हुत्वा शत्रून्प्रमापयेत् ॥१०७॥ तान्विद्यादित्यदैवत्यं[1] जप्त्वा
मुच्येत बन्धनात् ॥ यद्याव इति जप्त्वा च सर्वान्कामान्समश्नुते ॥ १०८ ॥ पवित्राणां पवित्रं तु पावमानऋचः स्मृताः ॥ वैखानसऋचास्त्रिंशत्प
वित्राः परमाः स्मृताः ॥ १०९ ॥ ऋचां द्विषष्टिः[2] प्रोक्तं चोपवसेदृषिसत्तमैः ॥ सर्वकल्पषनाशाय पावनाय शिवाय च ॥ ११० ॥ स्वादि

१ 'तान्दित्यदिति' इति ख० । २ 'त्रिषष्टिः' ख० ।

घृयेति सूक्तानां सतषष्टिरुदाहृताः ॥ दशोत्तरा ऋचश्चैताः पावमान्यः शतानि षट् ॥ १११ ॥ एतज्जुह्वञ्जपंश्चैव घोरं मृत्युभयं जयेत् ॥ आध्यात्मिकं पवित्रं च सूक्तं जप्त्वाल्पतः क्वचित् ॥ ११२ ॥ गतिमिष्टामवाप्नोति विन्दते महतीं श्रियम् ॥ आपोहिष्ठेति महतः प्रयुञ्जीतोदकस्थितः ॥ ११३ ॥ सर्वपापविनिर्मुक्तस्त्वशेषफलमश्नुते ॥ उपतिष्ठेत राजानं यमसूक्तेन वै द्विज ॥ ॥ ११४ ॥ चतुर्दश्यां तु कुर्वीत स्थालीपाकं यथाविधि ॥ परेयवांसमित्येतत्सूक्तमत्र प्रयोजयेत् ॥ ११५ ॥ परायुषः प्रमीयेत न स जातु कथञ्चन ॥ मृत्युमेव प्रपद्येत परं मृत्योरिव द्विज ॥ ११६ ॥ वैशाख्यां पौर्णमास्यां तु नक्तभोजी सदा नरः ॥ परायुषः प्रमीयेत न स जा तु कथञ्चन ॥ ११७ ॥ फलाहारो जयेन्मृत्युं त्रिभिर्वर्षैः सदा नरः ॥ दशाक्षरं तु शान्त्यर्थं भद्रं न इति संस्मरन् ॥ ११८ ॥ फलाहारो भवेन्मासं मासान्मासं पयः पिबेत् ॥ वायुभक्ष्यो भवेन्मासं जपन्नेतत्सहस्रशः ॥ ११९ ॥ अन्तर्धानमवाप्नोति सिद्धान्पश्यति चारणान् ॥ प्रदेवतेति नियतो जपेत मरुधन्वसु ॥ १२० ॥ प्राणान्तिके भये प्राप्ते क्षिप्रमायुस्तु विन्दति ॥ वैभीतकांस्तु त्रीनक्षान्गन्धैः समधिवासयेत् ॥ १२१ ॥ पुष्पैरव किरेच्चैव स्थापयित्वा विहायसि ॥ संहृत्य पादौ तौ तत्र तिष्ठेद्दक्षस्तुतिं जपेत् ॥ १२२ ॥ प्रावे मासेत्यृचामेकां जपेच्च मनसा निशि ॥ व्युष्टाया मुदिते सूर्ये द्यूते जयमवाप्नुयात् ॥ १२३ ॥ अब्रध्नमुषसानक्तेत्येतत्स्वस्त्ययनं जपेत् ॥ नमो मित्रस्य वरुणस्य चक्षुषेति च नित्यशः ॥ १२४ ॥ तथाज्यं जुहुयान्नित्यं भीतिभ्यो विप्रमुच्यते ॥ देवस्यरीति नित्यं तु जपेदेवं समश्नुते ॥ १२५ ॥ मा प्रगामीति मूढस्तु पन्थानं पथि विन्दति ॥ क्षीणायुरिति मन्येत यं कंचित्सुहृदं प्रियम् ॥१२६॥ यत्तेयमिति तु स्नातस्तस्य मूर्धानमालभेत् ॥ सहस्रकृत्वा पञ्चाहं तेनायुर्विन्दते पुनः॥१२७॥ स्रुक्स्रुवे दशमेनैव इध्ममौदुम्बरं भवेत् ॥ इदमिध्मेति जुहुयाद् घृतं प्राज्ञः सहस्रशः ॥ १२८॥ पशुकामो गवां गोष्ठे अन्नकामश्चतुष्पथे ॥ पारावतः स्वस्त्ययनं स्नातकस्य विधीयते ॥ १२९ ॥ बृहस्पते प्रथममिति ज्ञानकामस्य भार्गव ॥ वयः सुपर्णमित्येतां जपन्वै विन्दते श्रियम् ॥१३०॥ यस्ते मन्यो इति सदा मयत्नघ्नं विधीयते ॥ हविष्मतीयमभ्यस्य सर्वपापैः प्रमुच्यते ॥ १३१ ॥ या ओषधीः स्वस्त्ययनं सर्वपापविनाशनम् ॥ तस्य माया विनश्येत कायाग्निर्वर्धते तथा ॥ १३२ ॥ बृहस्पतिः प्रतीत्येतद् वृष्टिकामः प्रयोजयेत् ॥ सर्वत्र तु परा शक्तिर्ज्ञेयाप्रतिरथा तथा ॥ ॥ १३३ ॥ भूतांशः काश्यपं नित्यं प्रजाकामस्य कीर्तितम् ॥ अहं रुद्रेभिरित्येतद्वाग्ग्मी भवति मानवः ॥ १३४ ॥ न योनौ जायते विद्वा ञ्जपन्नत्रीति रात्रिषु ॥ रात्रिसूक्तं जपन्रात्रौ रात्रिक्षेमी भवेन्नरः ॥ १३५ ॥ या कल्पयतीति जपेन्नित्यं कृत्वा विनाशनम् ॥ आयुष्यं चैव वर्चस्यं

सूक्तं दाक्षायणं महत् ॥ १३६ ॥ उत देवा इति जपेदामयघ्नं धृतव्रतः ॥ अग्ने अग्नाव इत्येद्धनकामः प्रयोजयेत् ॥ १३७ ॥ वैभीतकेऽब्दं
हुत्वाग्निं द्विषद्द्वेषं ततो जपेत् ॥ द्विषन्तु धन्विनं हुत्वा द्विषतो विन्दते धनम् ॥ १३८ ॥ अयमग्ने जनितेति जपेदग्नि भये सति ॥
द्विमार्जन्निति पाठं तु जपन्नुत्थापयेद्द्विजः ॥ १३९ ॥ प्रातश्च पाठयेदेनं संसदि ब्रह्मचारिणाम् ॥ इमामिति च सूक्तेन शत
कृत्वोऽभिमन्त्रितम् ॥ १४० ॥ घृतेन पीत्वा तं प्रातः सपत्नीभिर्विमुच्यते ॥ अरण्यानीत्यरण्येषु जपेत्तद्भयनाशनम् ॥ १४१ ॥
श्रद्धासूक्तं जपेन्नित्यं श्रद्धाकामविवर्धनम् ॥ ब्राह्मी यद्यस्य सूक्ते द्वे जपेत नियतः सदा ॥ १४२॥ शंखपुष्पीं तु पयसा ब्राह्मीपुष्पाणि सर्पिषा ॥
शतावरी तु पयसा वचामद्भिर्घृतेन वा ॥ १४३ ॥ सूक्ताभ्यां मनुमन्त्राभ्यां चैकैकं तु त्र्यहं पिबेत् ॥ श्रद्धां मेधां स्मृतिं पुष्टिं वर्णं लक्ष्मीं च विन्द
ति ॥ १४४ ॥ शासन्नर्थाञ्जपन्नित्यं संग्रामे विजिगीषतः ॥ गृहीतदक्षिणादर्भान्गृहीत्वा संस्पृशेज्जपेत् ॥ १४५ ॥ मुञ्चामि त्वा हविषेति
यक्ष्माणमपकर्षति ॥ ब्रह्मणाग्निः संविदानं गर्भमृत्युविनाशनम् ॥ १४६ ॥ अपेहीति जपेत्सूक्तं शुचिर्दुःस्वप्ननाशनम् ॥ देवाः कपोत इति तु
कपोतस्योपवेशने ॥ १४७ ॥ कौशिकस्य जपेत्सूक्तं घृतेन जुहुयात्तथा ॥ सपत्नघ्नं प्रयुञ्जीत ऋषभं जपहोमयोः ॥ १४८ ॥ येनेदमिति जप्त्वा
वै समाधिं विन्दते पराम् ॥ मयोभूर्वात इति तु गवां स्वस्त्ययनं परम् ॥ १४९ ॥ यवानां च घृताक्तानां गोमयाग्नौ समाहितः ॥ जुहुयाद्गोष्ठ
मध्ये तु दधिमध्वाज्यसंस्कृतम् ॥ १५० ॥ पतन्तमिति नित्यं तु जपेत विजने वने ॥ शाम्बरीमिन्द्रजालं वा मालामेतेन धारयेत् ॥ १५१ ॥
अदृश्यानां च सत्त्वानां मायामेतेन बाधते ॥ न प्रतिष्ठेति स्वस्त्ययनं नारीगर्भविवर्धनम् ॥ १५२ ॥ विष्णुर्योनिमितीमं च तथैवापरमुच्यते ॥
महित्यृणां मवोस्विति परिस्वस्त्ययनं जपेत् ॥ १५३ ॥ प्रापयेद्द्विद्विषद्द्वेषं जपेच्च रिपुनाशनम् ॥ आयङ्गौः सप्तराज्ञस्तु सर्पानेतैः प्रसाधयेत् ॥
॥ १५४ ॥ संसमिद्युवसेच्चैतत्सौभ्रातृकरणं महत् ॥ तच्छंयोरावृणीमहे जपेत्स्वस्त्ययनं सदा ॥ १५५ ॥ पितॄणां संहितां विद्यात्पितॄन्प्रीणाति वै
तथा ॥ वास्तोष्पतेन मन्त्रेण यजेत गृहदेवताम् ॥ १५६ ॥ तल्लिङ्गैर्दैवतामन्त्रैर्देवाराधनमुच्यते ॥ जपस्यैष विधिः प्रोक्तो हुते यज्ञे विशेषतः ॥
॥१५७॥ होमान्ते दक्षिणा देया यथाशक्त्या च भार्गव ॥ हुतेन शम्यते पापं हुतमन्नेन शम्यते ॥१५८॥अन्नं हिरण्यदानेन अमोघा ब्राह्मणाशिषः॥
सिद्धार्थका यवा धान्यं पयो दधि घृतं तथा॥१५९॥क्षीरवृक्षास्तथेध्माश्च सर्वकामप्रदाः स्मृताः ॥ समिधः कण्टकिन्यश्च राजिका रुधिरं विषम् ॥
॥१६०॥ तैलं च भृगुशार्दूल विज्ञेयमभिचारकम् ॥ सक्तवः फलमूलानि शाकानि विविधानि च ॥ १६१ ॥ पयो दधि सुवर्णं च भैक्ष्यं नाशनमु

च्यते ॥ हविःस्नानं च कर्तव्यं सर्वत्र भृगुसत्तम॥१६२॥ऋचां विधानं कथितं तवैतत्समासतः कर्मकरं द्विजानाम् ॥ ततो विधानं यजुषां निबोध समासतो धर्मभृतां वरिष्ठ ॥ १६३ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० सं० ऋग्विधानं नाम चतुर्विंशत्युत्तरशततमोऽध्यायः ॥ १२४ ॥ पुष्कर उवाच ॥ ॐकारपूर्विका नाम महाव्याहृतयः स्मृताः ॥ सर्वकल्मषनाशिन्यः सर्वकर्मप्रदास्तथा॥१॥ आज्याहुतिसहस्रेण देवमाराधयेद्द्विज॥ मनसः कांक्षितं राम मनसेप्सितकामदम् ॥ २ ॥ शान्तिकामो यवैः कुर्यात्तिलैः पापापनुत्तये ॥ धान्यैः सिद्धार्थकैश्चैव सर्वकामकरं तथा ॥ ३ ॥ औदुम्बरीभिरिध्माभिः पशुकामस्य शस्यते ॥ दध्ना चैवान्नकामस्य पयसा शान्तिमिच्छतः ॥ ४ ॥ अपामार्गसमिद्भिश्च कामयन्कनकं बहु ॥ कन्याकामो घृताक्तानि युग्मशो ग्रथितानि च॥५॥ जातीपुष्पाणि जुहुयाद्ग्रामार्थी तिलतण्डुलम् ॥ वशीकर्मणि शाखोटवाशापामार्गमेव च ॥ ६ ॥ वसासृङ्मिश्रसमिधो व्याधिघातस्य भार्गव ॥ क्रुद्धस्तु जुहुयात्सम्यक् शत्रूणां वधकाम्यया ॥ ७ ॥ सर्वव्रीहिमयीं कृत्वा राज्ञः प्रतिकृतिं द्विजः ॥ सहस्रशस्तु जुहुयात्प्रजावशगतो भवेत् ॥ ८ ॥ वस्त्रकामस्य पुष्पाणि दूर्वा व्याधिविनाशनी ॥ ब्रह्मवर्चसकामस्य वासाग्रं च विधीयते ॥ ९ ॥ प्रत्यङ्गिरेष्वपि जुहुयात्तुषकण्टकभस्मभिः ॥ विद्वेषणे च पक्षाणि काककौशिकयोस्तथा ॥ १० ॥ कापिलं तु घृतं हुत्वा तथा चन्द्रग्रहे द्विज ॥ वचाचूर्णेन संपीतांस्तानानीय च तां वचाम् ॥ ११ ॥ सहस्रमन्त्रितां भुक्त्वा मेधावी जायते नरः ॥ सूर्योदयेऽर्काभिमुखं पुत्रकामो जपेन्नरः ॥ १२॥ एकादश्यां गुग्गुलं लौहं बैल्वं खादिरमेव वा ॥ द्विषन्तन्त्वां बधानीति निखनेद्रिपुवेश्मनि ॥ १३ ॥ उच्चाटनमिदं कर्म शत्रूणां कथितं तव ॥ शकं ध्रुवं भूपतये महाव्याहृतिभिर्भवेत् ॥ १४ ॥ सूर्यस्त्वेति तथा मन्त्रं ज्ञेया प्रत्यङ्गिरा परा ॥ एतेनौदुम्बरैरिध्मैर्देवं वर्षापयेद्ध्रुवम् ॥ १५ ॥ अहोरात्रं जले जप्त्वा चक्षुष्मानित्ययं द्विज ॥ प्रणष्टचक्षुर्धर्मज्ञ योगमाप्नोति चक्षुषः ॥१६॥ उपप्रयन्तमित्येतद्धुत्वा विप्रो महानसे ॥ अनुवाकं महाभाग नित्यसन्नेन युज्यते ॥ १७ ॥ तनूपाग्नेऽसि इति च दूर्वा हुत्वा रुजान्वितः ॥ व्याधिमोक्षमवाप्नोति नात्र कार्या विचारणा ॥ १८ ॥ इहैव तेभ्यः पतितं गृहीत्वा गोमयं द्विज ॥ घृताज्यमधुसंयुक्तं हुत्वा धेनुं तु तां लभेत् ॥ १९ ॥ एष ते रुद्रभागेति हुत्वा राम गवेधुकाम् ॥ अर्धर्चेन तथाप्नोति धनं नास्त्यत्र संशयः ॥ २० ॥ अर्धर्चेन द्वितीयेन क्षेत्रमध्ये बलिं हरेत् ॥ मूषिकाशलभोत्पाते सुरामांसासवादिभिः॥२१॥ भेषजमिति मन्त्रेण दध्याज्यमधुहोमकः ॥ चतुष्पदानां सर्वेषामुपसर्गं विनाशयेत् ॥ २२ ॥ त्र्यम्बकं यजामहेति होमः सर्वार्थसाधकः ॥

१ 'वाशासं' इति क० । २ 'भैषज्य' इति क० ख० ।

कन्यानाम गृहीत्वा च कन्यालाभकरः परः ॥ २३ ॥ भयेषु च जपेन्नित्यं भयेभ्यो विप्रमुच्यते ॥ धत्तूरपुष्पं सघृतं तथा हुत्वा चतुष्पथे ॥ २४ ॥ शून्ये शिवालये वापि शिवात्कामानवाप्नुयात् ॥ हुत्वा च गुग्गुलं राम स्वयं पश्यति शङ्करम् ॥ २५ ॥ अकृत्या इति चैवाष्टौ ऋचो हुत्वा घृतादिभिः ॥ अन्वहं त्वापदां नाशं स्वकुले कुरुते ध्रुवम् ॥ २६ ॥ भवत्युत्तरवादी च जप्त्वा च विदसीत्यृचम् ॥ अग्नेस्तनोरिति तथा हुत्वा च तिलतण्डुलैः ॥ २७ ॥ सहस्रशस्तु धर्मज्ञ भवेत्सर्वातिथिर्नरः ॥ युञ्जते मन इत्येतदनुवाकं तु वैष्णवम् ॥ २८ ॥ सायं प्रातः समासीत दीर्घमायुरवाप्नुयात् ॥ दिवो वा विष्ण इत्यस्य कर्म व्याहृतिवद्भवेत् ॥ २९ ॥ विष्णोरराटमित्येतत्सर्वबाधाविनाशनम् ॥ रक्षोघ्नं च यशस्यं च तथैव विवरप्रदम् ॥ ३० ॥ अयन्नो यज्ञ इत्येतत्संग्रामे विजयप्रदम् ॥ इदमापः प्रवहत स्नाने पापापनोदनम् ॥ ३१ ॥ देवांश इति दैवेतदभिचारेषु योजयेत् ॥ व्याधिघातः समिद्भिस्तु राजिकासृग्विषैस्तथ ॥ ३२ ॥ यक्ष्माहीति तथा हुत्वा बहिर्निर्गम्य मानवः ॥ उपश्रुतिं तु गृह्णीयात्सा तस्याव[1]ितथा भवेत् ॥ ३३ ॥ अग्ने पवस्वेति हुतं ब्रह्मवर्चसकारकम् ॥ उदुत्यं चित्रमित्यस्य कर्म व्याहृतिवद्भवेत् ॥ ३४ ॥ यस्मान्नरादभ्यधिको नरो भवितुमिच्छति ॥ स्वस्तिनेन्द्रेति तु जपेत्तस्य नामान्तसंयुतम् ॥ ३५ ॥ भवत्यभ्यधिकस्तस्माद्विद्यया यशसा श्रिया ॥ तथा होमादनेनैव दासलाभमवाप्नुयात् ॥ ३६ ॥ विश्वकर्म हविष्यं च सूचीं लौहीं दशाङ्गुलीम् ॥ कन्याग्रे निखनेद्द्वारि ततस्सास्मै[2] प्रदीयते ॥ ३७ ॥ देवस्येति तरीतेन हुतेनैवान्नवान्भवेत् ॥ वाजस्यसं[3]ति चैतेन हुत्वाज्यं सप्तभिर्द्विजः ॥ ३८ ॥ यदेव जुहुयात्पश्चात्तदेवाक्षयमाप्नुयात् ॥ अग्ने अच्छेति जुहुयाद्धनकामो द्विजोत्तमः ॥ ॥ ३९ ॥ तिलैर्यवैश्च धर्मज्ञस्तथापामार्गतण्डुलैः ॥ सहस्रमन्त्रितां कृत्वा तथा गोरोचनां द्विजः ॥ ४० ॥ तिलकं च तथा कृत्वा जनस्य प्रियतां व्रजेत् ॥ पौर्णमास्यां तथा हुत्वा मेघं राजानमित्यपि ॥ ४१ ॥ उपस्थानं तथा कृत्वा दत्त्वा चान्नं द्विजन्मने ॥ सोमयाजी भवेद्राम नात्र कार्या विचारणा ॥ ४२ ॥ एष ते निर्ऋतेत्याभिरभिचारककर्मणा ॥ गृहान्नैर्ऋत्यके भागे हुत्वा स्नात्वा नदीजले ॥ ४३ ॥ कापिलाद्धोमयान्नित्यं पञ्चगव्याभिषेचितम् ॥ कृत्वा रुद्रांस्तथा जप्त्वा सैन्यमाप्नोति गुह्यकैः ॥ ४४ ॥ रुद्राणां च तथा जप्यं सर्वाघविनिषूदनम् ॥ सर्वकर्मकरं होमं तथा सर्वत्र शान्तिदम् ॥ ४५ ॥ अजाविकानामश्वानां कुञ्जराणां तथा गवाम् ॥ मनुष्याणां नरेन्द्राणां बालानां योषितामपि ॥ ४६ ॥ ग्रामाणां नगराणां च देशानामपि भार्गव ॥ अनिद्रुतानां धर्मज्ञ व्याधितानां तथैव च ॥ ४७ ॥ मरणे समनुप्राप्ते रिपुजे च तथा भये ॥ रुद्रहोमः

१ 'तस्य वितथा' इति ख० । २ 'ततो वास्मै' इति ख० । ३ 'ता सोवास्मै' इति क० । ४ 'वाजस्यमति' इति क० । 'निर्ऋते' इति क० । ५ 'तुरगाणाम्' इति ख० ।

परा शान्तिः पायसेन घृतेन च ॥ ४८ ॥ कूष्माण्डैर्घृतहोमेन सर्वान्पापानपोहति ॥ सक्तुयावकभैक्ष्याशी नक्तं मनुजसत्तम ॥ ४९ ॥ बहिः स्नानरतो मासान्मुच्यते ब्रह्महत्यया ॥ मधुवातेति मन्त्रेण हुत्वैवाज्यमतन्द्रितः ॥ ५० ॥ सहस्रशस्तु धर्मज्ञ दीर्घमाप्नोति जीवितम् ॥ हुत्वा दध्ना तथा पुत्रान्प्राप्नोति मनसेप्सितान् ॥ ५१ ॥ गुग्गुलोः कणिकाभिस्तु सौभाग्यं विन्दते ध्रुवम् ॥ कृत्वाष्टपत्रं कमलं तन्मध्ये शशिनं लिखेत् ॥ ५२ ॥ लवणेन ततस्तस्य पूजां कृत्वा यथाविधि ॥ सौभाग्यं महदाप्नोति मधुवातेति वै जपन् ॥५३ ॥ जप्त्वा पुष्पवतीत्येवं मन्त्रं राम सहस्रशः ॥ देवतायै निवेद्यैव कुसुमानि शिवं भवेत् ॥ ५४ ॥ जीमूतस्यैव भवति मन्त्रं जयकरं द्विज ॥ पयस्वतीति पयसा तथा हुत्वा सहस्रशः ॥ ५५ ॥ ब्रह्मवर्चसमाप्नोति दध्ना वा भृगुनन्दन ॥ दधिक्राव्णेति हुत्वा तु पुत्रान्प्राप्नोत्यसंशयम् ॥ ५६ ॥ तथा घृतवतीत्येतदायुष्यं स्याद् घृतेन तु ॥ बोधश्च मेति कथितं तथा स्वस्त्ययनं परम् ॥ ५७ ॥ स्वस्ति न इन्द्रेत्येतं च सर्वबाधाविनाशनम् ॥ इह गावः प्रजायध्वमिति पुष्टिविवर्धनम् ॥ ५८ ॥ स्रुवेण देवस्य त्वेति हुत्वापामार्गतण्डुलम् ॥ मुच्यते विकृताच्छीघ्रमभिचारान्न संशयः ॥ ५९ ॥ बहित्वदन्यदित्येतत्कर्म व्याहतिवद्भवेत् ॥ भद्रयन्ते पलाशस्य समिद्भिः कनकं लभेत् ॥६० ॥ हंसः शुचिषदित्येतज्जपंस्तोयेऽघनाशनम् ॥ चत्वारि शृङ्गेत्येतच्च सर्वपापहरं जले ॥६१॥ देव यज्ञेति जप्त्वा तु ब्रह्मलोके महीयते॥ जप्त्वा पितृभ्य इत्येतत्तत्तृप्तिं प्राप्नुयान्नरः ॥ ६२ ॥ वसन्तेति च हुत्वाज्यमादित्याद्धनमाप्नुयात् ॥ शिवोभवस्वाग्न्युत्पाते व्रीहिभिर्जुहुयान्नरः ॥ ६३ ॥ याम्येन इति चैतच्च तस्करेभ्यो भयावहम् ॥ दंष्ट्राभ्यामिति चैतच्च व्रीहिभिर्जुहुयान्नरः ॥ ६४ ॥ यो अस्मभ्यमरातीयान्हुत्वा कृष्णतिलैर्नरः ॥ सहस्रशोऽभिचारात्तु मुच्यते विकृतिं द्विजः ॥ ६५ ॥ अन्नेनान्नपतेत्वेतद्धुत्वा चान्नमवाप्नुयात् ॥ सुपर्णोऽसीति दैत्यस्य कर्म व्याहतिवद्भवेत् ॥ ६६ ॥ मनः स्वतीति जप्त्वा च बन्धनान्मोक्षमाप्नुयात् ॥ रोपयेत वचां राजां चन्द्रे ग्रस्ते जलाशये ॥ ६७ ॥ या ओषधय इत्येतज्जपंस्तामुद्धरेत्पुनः ॥ तिरात्रोपोषितः कूर्चां कृत्वा तां ताम्रभाजने ॥ ६८ ॥ तेनैव मन्त्रितां चन्द्रं दृष्ट्वा मासं सदा जपेत् ॥ सकापिलघृतक्षीरे पीत्वा श्रुतिधरो भवेत् ॥ ॥ ६९ ॥ एतमेवौषधीपाने सदा मन्त्रं जपेद्द्विज ॥ सिद्धा भवन्त्योषधयो मन्त्रेणानेन मन्त्रिताः ॥ ७० ॥ द्रुपदा नाम सा देवी यजुर्वेदे प्रतिष्ठिता ॥ अन्तर्जले त्रिरावृत्य मुच्यते सर्वकिल्बिषैः ॥ ७१ ॥ इह गावः प्रजायध्वं मन्त्रोऽयं पुष्टिवर्धनः ॥ हुतस्तु सर्पिषा दध्ना पयसा

१ 'नोपये' इति क० ख० । २ 'राज्ञः' इति ख० ।

पायसेन वा ॥ ७२ ॥ शतं व इति चैतेन हुत्वा पर्णफलानि वै ॥ आरोग्यं चिरमाप्नोति दीर्घमाप्नोति जीवितम् ॥ ७३ ॥ ओषधीः प्रतिमोदध्वं जपेत्कर्मकवत्सदा ॥ लवने बीजवापे वा विशेषात्सिद्धिमाप्नुयात् ॥ ७४ ॥ सर्वौषधीः समानीय सर्वव्रीहियुतास्ततः ॥ क्षेत्रमध्ये द्विजो हुत्वा कृषिमाप्नोति पुष्टिदाम् ॥ ७५ ॥ अपामार्गं यवं धान्यमोषधीरिति मातरः ॥ गोकामश्चाश्वकामो वा तं कामं शीघ्रमाप्नुयात् ॥ ७६ ॥ ओषधीः समजन्तेति हुत्वा चाज्येन मानवः ॥ भयमाप्नोति नैवेह यातुधानभवं क्वचित् ॥ ७७ ॥ अन्यावतीति चैतेन पायसं जुहुयाद्द्विज ॥ सर्वत्र शान्तिमाप्नोति नात्र कार्या विचारणा ॥ ७८ ॥ सीरां युञ्जति इत्येतद्धुत्वा कृषिमवाप्नुयात् ॥ उच्छुष्मा इति चैतेन बन्धनस्थो विमुच्यते ॥ ७९ ॥ युवा सुवासा एतेन वासांस्याप्नोत्यसंशयम् ॥ यस्मिँश्चापः स्थितः काष्ठे तद्गृहीत्वा विचक्षणः ॥ ८० ॥ सायं यक्ष्मेति मन्त्रेण शत्रोस्तु निखनेत्पदे ॥ कुष्ठी भवति चाषस्य पक्षं गृध्रस्य वा पुनः ॥ ८१ ॥ सहस्रमन्त्रितं कृत्वा शत्रोः प्रतिकृतिं ततः ॥ तेन बद्ध्वा ततो मृत्युं शत्रुः प्राप्नोत्यसंशयम् ॥ ८२ ॥ शत्रुं तु नाशयत्याशु सर्वातङ्कविनाशनम् ॥ प्रपतन्तीति च ऋचा जुहुयादोषधीर्द्विज ॥ ८३ ॥ मिष्टान्नभागी भवति भाण्डानां चैव रक्षिता ॥ मा मा हिंसीति चाज्येन हुतं रिपुविनाशनम् ॥ ८४ ॥ कान्तारमध्वरस्येति मधुसैन्धवसंयुताम् ॥ सौभाग्यकामो जुहुयात्स्त्रियो वा पुरुषस्य वा ॥ ८५ ॥ होमो द्रप्सश्च स्कन्देति वश्यकामस्य शस्यते ॥ नमोस्तु सर्पेभ्य इति पायसं सघृतं नरः ॥ ८६ ॥ नागस्थानेति जुहुयात्सुवर्णं प्राप्नुयाद्बहु ॥ कृणुष्व पाज इत्येतदभिचारविनाशनम् ॥ ८७ ॥ अग्ने तिष्ठेति जुहुयाद्द्रव्याः खल्वभिचारकाः ॥ शत्रोर्नाम गृहीत्वा तु शत्रुं कुर्यात्तदा वशे ॥ ८८ ॥ दूर्वाकाण्डायुतं हुत्वा काण्डात्काण्डेति मन्त्रतः ॥ ग्रामे जनपदे वापि मरकं तु शमं नयेत् ॥ ८९ ॥ रोगार्तो मुच्यते रोगात्तथा दुःखात्तु दुःखितः ॥ औदुम्बर्यस्तु समिधो मधुमान्नो वनस्पतिः ॥ ९० ॥ हुत्वा सहस्रशो राम धनमाप्नोति मानवः ॥ सौभाग्यं महदाप्नोति व्यवहारे तथा जयम् ॥ ९१ ॥ योगादिति तथा हुत्वा देवं वर्षापयेद्ध्रुवम् ॥ अपः पिबन्निति तथा हुत्वा दधिघृतं मधु ॥ ९२ ॥ प्रवर्तयति धर्मज्ञ महावृष्टिमनन्तरम् ॥ अग्निर्देवतेति तथा यवमुष्टयुतं द्विज ॥ ९३ ॥ हुत्वा श्रद्धेयवाक्यस्तु सर्वत्रैवाभिजायते ॥ अयं पुरेति जुहुयादनुवाकेन मानवः ॥ ९४ ॥ घृतपूर्णानि पद्मानि सहस्रं भृगुनन्दन ॥ कन्यां तां समवाप्नोति यामसौ मनसेप्सति ॥ ९५॥ श्रियमाप्नोति च तथा धनमाप्नोत्यनुत्तमम् ॥ नमस्ते रुद्र इत्येतत्सर्वोपद्रवनाशनम् ॥ ९६ ॥ सर्वशान्तिकरं प्रोक्तं महापातकनाशनम् ॥ रक्षोघ्नं च यशस्यं च श्रीरायुःपुष्टिवर्धनम् ॥ ९७ ॥ अभ्यवोचदित्यनेन रक्षा स्याद्व्याधितस्य तु ॥ सिद्धार्थकानां क्षेपेण पथि चैतत्सदा पठेत् ॥ ९८ ॥

क्षेमेण स्वगृहानेति सर्वबाधाविवर्जितः ॥ असौ यस्ताम्र इत्येतत्पठेन्नित्यं दिवाकरम् ॥ ९९ ॥ उपतिष्ठेत धर्मज्ञ सायंप्रातरतन्द्रितः ॥ अन्नमक्षय्य माप्नोति दीर्घमायुश्च विन्दति ॥ १०० ॥ प्रमुञ्चन्तो न इत्येतत्षड्भिरायुधमन्त्रणम् ॥ रिपूणां भञ्जदं युद्धे नात्र कार्या विचारणा ॥ १०१ ॥ मानो महान्त इत्येतद्बालानां शान्तिकारकम् ॥ नमो हिरण्यबाहवे इत्यनुवाक हर्षकारकम् ॥ राजिकां तिलतैलाक्तां जुहुयाच्छत्रुनाशनम् ॥ १०२ ॥ नमो वः किरिकेभ्यश्च पद्मलक्षे हुते नरः ॥ राजलक्ष्मीमवाप्नोति नात्र कार्या विचारणा ॥ बिल्वानां च तथा हुत्वा कनकं बहु विन्दति ॥१०३॥ इमा रुद्रायेति तिलैः कृत्वा होमं विचक्षणः ॥ शीघ्रमेव महाभाग धनमाप्नोति चिन्तितम् ॥ १०४ ॥ अनेनैव तु मन्त्रेण दूर्वाहोमेन मानवः ॥ सर्वव्याधिविनिर्मुक्तो भयान्सर्वान्व्यपोहति ॥ १०५ ॥ वरारोहेण इध्मानां याते रुद्रशिवा तनूः ॥ हुत्वाऽयुतं तु धर्मज्ञ पुत्रमाप्नोत्यभीप्सितम् ॥ १०६ ॥ असंख्याताः सहस्राणि मन्त्रैस्तदभिचारकम् ॥ नमोऽस्तु रुद्रेभ्य इति प्रोक्ता प्रत्यङ्गिरा परा ॥ १०७॥ रक्तोष्णीषो रक्तवासा रक्तमाल्यानुलेपनः ॥ अनेनैव श्मशाने तु लोहशङ्कुं नरोत्तम ॥१०८॥ प्रादेशमात्रं जुहुयात्सहस्रं भृगुनन्दन ॥ कृत्यामुत्थापयेज्जातां रक्तकुम्भेन पूजयेत् ॥१०९॥ पूर्णपात्रेण च तथा सर्वकर्मकरो भवेत् ॥ आशुः शिशान इत्येतदायुधानां च रक्षणम् ॥११०॥ संग्रामे कथितं राम सर्वशत्रुविनाशनम् ॥ इमं सोममित्येतन्नदीं गत्वा समुद्रगाम् ॥ १११ ॥ स्नातस्तोयेऽयुतं जप्त्वा हुत्वा दशशतं ततः ॥ साष्टं मनुजशार्दूल ग्राममाप्नोत्यभीप्सितम् ॥११२॥वाजश्च मेति जुहुयात्सहस्रं पञ्चभिर्द्विज ॥ आज्याहुतीनां धर्मज्ञ चक्षूरोगाद्विमुच्यते ॥ ११३ ॥ मनोभवस्वेति गृहे तथा हुत्वा विचक्षणः ॥ वास्तुदोषांस्ततः सर्वान्क्षिप्रमेव व्यपोहति ॥ ११४ ॥ अग्न आयूंषि चैतेन हुत्वैवाज्यमतन्द्रितः ॥ सहस्रशस्तु धर्मज्ञ वशं नाप्नोति केनचित्॥११५॥ अपाम्फेनेति लाजाभिर्हुताभिर्जयमाप्नुयात् ॥ भद्रा इतीन्द्रियैर्हीनो जपन्स्यात्सकलेन्द्रियः ॥ ११६ ॥ अग्निश्च पृथिवी चेति वशीकरणमुत्तमम् ॥ अध्वनीति जपन्मन्त्रं व्यवहारे जयी भवेत् ॥ ११७ ॥ ब्रह्मराजभ्यामिति च कर्मारम्भेषु वै जपेत् ॥ सर्वेषु सर्वधर्मज्ञ तेषां सिद्धिमुपाश्नुते ॥ ११८ ॥ नूनपादोसुर इति न्यग्रोधे द्विजसत्तम ॥ अशोकपुष्पान्सघृताञ्जुहुयाल्लक्षसंमितान् ॥११९ ॥ ततोदानवकन्यां तु स्वयमेवेह पश्यति ॥ अनुवाकस्य शेषेण तस्यान्नं विनिवेदयेत् ॥ १२० ॥ ददाति सा ततो रुक्मं तूष्णीं तत्रेच्छया भवेत् ॥ अनुगच्छेत्ततस्तूष्णीं पाणौ सङ्गृह्य सा नरम् ॥ १२१ ॥ बिलं प्रवेशयेद्राम नात्र कार्या विचारणा ॥ शून्यायतनमासाद्य माषमिश्रमथौदनम् ॥ १२२ ॥ कया

१ 'भक्षम्' इति ख० ।

नश्चित्र इत्येतज्जपस्तु जुहुयान्नरः ॥ हुते शतसहस्रे तु तस्य विद्याधरः स्वकाम् ॥ १२३ ॥ सुवर्णराशिं धर्मज्ञ शीघ्रमेव प्रयच्छति ॥ संवत्सरोशी त्यनया घृतं हुत्वा विचक्षणः ॥ १२४ ॥ यावज्जीवमरोगी स्याल्लक्षहोमेन पण्डितः ॥ केतुं कृण्वन्नित्येतत्संग्रामे जयवर्धनम् ॥१२५॥ ऐन्द्राग्नं वर्म इत्येतद्रणे सन्नाहबन्धनम् ॥ धननागेति मन्त्रश्च धनुर्ग्रहणिकः परः ॥ १२६ ॥ वक्ष्यन्तीति तथा मन्त्रो विज्ञेयो ज्याभिम न्त्रणे ॥ मन्त्रश्चाहिरिवेत्येतत्तूणमन्त्रः प्रकीर्तितः ॥ १२७ ॥ युञ्जन्तीति तथाश्वानां योजने मन्त्र उच्यते ॥ आशुः शिशान इत्येतद्यात्रालम्भनमुच्यते ॥ १२८ ॥ विष्णोः क्रमेण मन्त्रश्च रथारोहणिकः परः ॥ आजंघन्तीति चाश्वानां ताड नीय उदाहृतः ॥ १२९ ॥ यः सेनाअभीत्वरीति परसैन्यमुखो जपेत् ॥ दुन्दुभ इति वाप्येतद् दुन्दुभीताडने भवेत् ॥१३० ॥ एतैः पूर्वहुतैर्मन्त्रैः कृत्वैवं विजयो भवेत् ॥ यमेन दत्तमित्यस्य कोटिहोमाद्विचक्षणः ॥ १३१ ॥ रथमुत्पादयेच्छीघ्रं संग्रामे विजयप्रदम् ॥ आकृष्णेति तथैतस्य कर्म व्याहृतिवद्भवेत् ॥ १३२ ॥ शुवं च्यवानमेतच्च भयेषु भयनाशनम् ॥ घृताहुतिसहस्रेण नात्र कार्या विचारणा॥१३३॥ मित्रं हुवेत इत्येतन्मेधाकामस्य शस्यते ॥ स राज इति चैतेन देवताराधनं नरः ॥ १३४ ॥ कुर्याद्भार्गव सर्वत्र होमजप्यैर्यथेप्सितम् ॥ शिवसङ्कल्पजप्येन समाधिं मनसो लभेत्॥१३५॥पञ्च नद्य इत्यनेन पद्मलक्षं घृताप्लुतम्॥हुत्वा शीघ्रमवाप्नोति श्रियं वै पद्ममालिनीम् ॥१३६॥ उभावपि त इत्येतद्रूपकामस्य शस्यते ॥ यदाबध्नन्दाक्षायणा मन्त्रेणानेन मन्त्रितम् ॥१३७ ॥ सहस्रकृत्वः कनकं धारयेद्रिपुनाशनम्॥गुह्यकानां च सर्वेषां तथा निर्वहणं परम् ॥ १३८ ॥ इमं जीवेभ्य इति च सीतालोष्टं चतुर्दिशम् ॥ क्षिपेद्गृहे तदा तस्य न स्याच्चोरभयं निशि ॥ १३९ ॥ परीमेगामनेषतेति वशीकरणमुत्तमम् ॥ हर्तुमप्यागतस्तस्य वशीभवति मानवः॥१४०॥ भक्ष्यताम्बूलपुष्पाद्यं मन्त्रितं तु प्रयच्छति ॥ यस्य धर्मस्य वशगः सोऽस्य शीघ्रं भविष्यति ॥ १४१ ॥ शन्नोमिति त इत्येतत्सदा सर्वत्र शान्तिदम् ॥ मनसः काममाकूतिः पुष्टिकामस्य शस्यते ॥ १४२ ॥ चमषट्कं च धर्मज्ञ सर्वकामकरं स्मृतम् ॥ षट्केन च तथा होमः सर्वदेवप्रसादनः ॥ १४३ ॥ औदार्येणोदकं स्पृष्ट्वा तद्दोषाद्विप्रमुच्यते ॥ विवृतं चैतदाज्येन हुतं शूलापहं भवेत् ॥ १४४ ॥ गणानां त्वा गणपतिं होम कृत्वा चतुष्पथे ॥ वशे कुर्याज्जगत्सर्वं सर्वधान्यैरसंशयम् ॥ १४५ ॥ वैकङ्कतेध्महोमे च समास्त्वाग्न इतीत्यपि ॥ यशसा योगमाप्नोति विपुलं नात्र संशयः ॥ १४६ ॥ अग्निर्मूर्धेतिमन्त्रेण हुत्वैवाज्यं हुताशने ॥

१ 'कटकम्' इति ख० । २ 'पत्न्यर्द्धे' इति पाठोऽपि ।

तत्प्रसादमवाप्नोति नात्र कार्या विचारणा॥१४७॥एवं हि देवतालिङ्गैस्तथा राम यथा स्वकैः ॥ हुतैः प्रसादयेदिष्टां देवतां नात्र संशयः ॥ १४८ ॥ हिरण्यवर्णाः शुचयो मन्त्रोऽयमभिषेचने ॥ शन्न आपश्च धन्वन्याः सर्वपापहराः स्मृताः ॥ १४९ ॥ शन्नो देवीरभिष्टये चेति शान्तिकरः परः ॥ एकचक्रेति मन्त्रेण हुतेनाज्येन भार्गव ॥ १५० ॥ ग्रहेभ्यः शीघ्रमाप्नोति प्रसादं नात्र संशयः ॥ याज्यानुवाकौ वृक्षाणां समाग्ने वर्च इत्यपि॥१५१॥ तत्प्रसादमवाप्नोति नात्र कार्या विचारणा ॥ गावो भग इति द्वाभ्यां हुत्वैवाज्यं सहस्रशः ॥ १५२ ॥ गाः समाप्नोति धर्मज्ञ नात्र कार्या विचारणा ॥ उदुत्तमं वरुण इति जुहुयाद्भृगुनन्दन ॥ १५३ ॥ नदीवाहतडागेषु सुकृतेषु द्विजोत्तम ॥ संवदत्तां हिरण्यकोशं रूपं कृत्वा तथैव च ॥ १५४॥ प्रवादसां सेति चैव गृहे यज्ञो विधीयते ॥ देवेभ्यो वनस्पत इति ब्रह्मयज्ञो विधीयते॥१५५॥रात्रीयख्य इति द्वाभ्यां रात्रियज्ञाः प्रकीर्तिताः॥ शमे शमीकं शम्याकामश्वत्थं प्लक्षमेव च ॥१५६॥ उदुम्बरं च न्यग्रोधमपामार्गं च गोमयम्॥यां कुर्याद्दर्भपिंजूलां दूर्वां प्राचीनगामिनीम् ॥१५७॥ सीतां लोष्टं सुवर्णं च तथा वल्मीकमृत्तिकाम् ॥ सं वः सृजामीति द्वाभ्यां बीजान्यप्सु विनिक्षिपेत् ॥ १५८ ॥ या ओषधय इत्येतदनुवाकं ततो जपेत् ॥ अपामिवेद्विति ततः प्रोक्षणं तु विधीयते॥१५९॥ इन्द्रोभयमितीत्येतच्चाष्टर्चं जुहुयाद्द्विजः ॥ यद्देवादेवहेडनमृचस्तिस्रस्तथैव च ॥ १६० ॥ हुत्वा सम्प्रोक्षणं कुर्याद्भूयः सर्वत्र मानवः ॥ सर्वोत्पातप्रशमनं कर्मैतत्परिकीर्तितम् ॥ १६१ ॥ गायत्री वैष्णवी ज्ञेया तद्विष्णोः परमं पदम् ॥ सर्वपापप्रशमनी सर्वकर्मकरी तथा ॥ १६२ ॥ एतावदुक्तं यजुषां विधानं मया हि किञ्चित्तव धर्मनिष्ठ ॥ अतः परं वच्मि नृवीर साम्नां तन्मे शृणुष्वायतलोहिताक्ष ॥१६३ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेय वज्रसंवादे रामं प्रति पुष्करोपाख्याने तन्त्रविधानन्नाम पञ्चविंशत्युत्तरशततमोऽध्यायः ॥१२५॥ पुष्कर उवाच ॥ संहितां वैष्णवीं जप्त्वा विष्णुं प्रीणाति मानवः ॥ सर्वकाममवाप्नोति तथा हुत्वा च भार्गव ॥१॥ स्कन्दस्य संहितां जप्त्वा स्कन्दात्कामानुपाश्नुते ॥ आस्यदघ्ने जले तिष्ठन्नघेनाकीर्णमानसः ॥२ ॥ त्रिःसप्तकृत्वो जप्त्वा च सर्वान्कामानुपाश्नुते ॥ तथा च संहितां पित्र्यां तत्प्रसादमुपाश्नुते ॥ ३ ॥ गुरुगोब्राह्मणादीनामुक्त्वा नाम प्रियं नरः ॥ सोपवासो जपेत्तोये त्विदं विष्णुर्विचक्रमे ॥ ४ ॥ सदा गावश्च शुचयः प्रयाज्ययजने जपेत् ॥ अमेध्यदर्शने जापोः पन्था अमे दिवः ॥ ५ ॥ एतदिन्द्रस्तवामीति सर्वपापहरं जपेत् ॥ शुक्रं तेऽन्यद्यजतं जप्त्वा स्तेयाद्विमुच्यते ॥ ६ ॥ चक्रानिति तथा जप्त्वा पारयायी विशुच्यते ॥ सहन्तः सोममित्येतज्जप्त्वा मुच्येत्प्रतिग्रहात् ॥ ७ ॥ यत्त्सोम इन्द्र इति हिंसादोषविनाशनम् ॥ अग्नेर्भयात्प्रमुच्येत अग्निस्तिग्मेति वै जपन् ॥ ८ ॥ सर्वपापहरं ज्ञेयं परितो षिञ्चतामिति ॥ पर्वासुसोमे

ति जपेज्जीवितुं तु सुकर्मणा ॥ ९ ॥ अविक्रेयं च विक्रेयं जपेद् घृतवतीत्विति ॥ अप्यानो देवसवितो ज्ञेयं दुःस्वप्ननाशनम् ॥ १० ॥ त्रातारमिन्द्रमित्येव महित्रीणामवोस्त्विति ॥ उदुत्तमं वरुणपाशेत्याद्युष्याणि जपेत्सदा ॥ ११ ॥ शुक्रचन्द्रेति जाप्येन पूतो भवति मानवः ॥ शुद्धाशुद्धीयमे[1] तच्च तंवचोसूक्तमेव च ॥ १२ ॥ न्यग्रोधश्रृङ्गमादाय शरमूलं तथैव च ॥ त्रिवृतं तु मणिं कृत्वा जुहुयाच्च सहस्रशः ॥ १३ ॥ बोध्यांसिरिति[2] मन्त्रेण घृतं राम यथाविधि ॥ अभ्यज्य घृतशेषेण मेखलाबन्ध इष्यते ॥ १४ ॥ स्त्रीणां यासां तु गर्भाणि पतन्ति भृगुसत्तम ॥ वणिग्जातस्य[3] बालस्य बध्नीयात्तदनन्तरम् ॥ १५ ॥ गोर्वै स्वरूपवत्सायाः शुक्लाया जुहुयाद्घृतम् ॥ उग्रप्रिया तु शरणं मन्त्रेणानेन मन्त्रवित् ॥ १६ ॥ रक्षसा मुच्यते जन्तुर्मणिं शिरसि धारयेत् ॥ कौत्स्यं घृतं तु प्राश्नीयान्नित्यमेव विचक्षणः ॥ १७ ॥ विश्वापृतन्निति मन्त्रेण व्याधिभिर्विप्रमुच्यते ॥ चर्षणीवृतमेतेन घृतं हुत्वा यथाविधि ॥ १८ ॥ शतायारिर्मणिं[4] बद्ध्वा न सर्पैः परिभूयते ॥ समत्यायन्तीति जपेन्न म्रियेत पिपासया ॥ १९ ॥ इष्टयाहोत्रितयं जप्त्वा सलिले नाप्नुयाद्भयम् ॥ त्वमेमा ओषधीत्येतज्जप्त्वा व्याधिं न चाप्नुयात् ॥ २० ॥ यत्ते पयांसि पूर्वेण ग्रासं वै प्रक्षिपेन्मुखे ॥ निगिरेदुत्तरेणैतन्नित्यमारोग्यमाप्नुयात् ॥ २१ ॥ देवव्रतेन हुत्वाज्यमुच्छेषेण विचक्षणः ॥ करवीरकमभ्यज्य दण्डहस्तगतेन तु ॥ २२ ॥ स्वस्तिमांस्तेन भवति यत्र क्वचन गच्छति ॥ पथि देवव्रतं जप्त्वा भयेभ्यो विप्रमुच्यते ॥ २३ ॥ यदिन्द्रो अनयत्वेति हुतं सौभाग्यवर्धनम् ॥ भद्राह्नो अग्निरिति च दन्तकाष्ठं च भक्षयेत् ॥ २४ ॥ संवत्सरमनिष्ठीवन्मध्वाज्यसहितं सदा ॥ सौभाग्यं महदाप्नोति यत्र क्वचन गच्छति ॥ २५ ॥ भगो न चित्र एतेन नेत्रयोरञ्जनं स्मृतम् ॥ सौभाग्यवर्धनं राम नात्र कार्या विचारणा ॥ २६ ॥ जपन्निन्द्रेति वर्गं च तथा सौभाग्यमाप्नुयात् ॥ करिप्रियो दिवः कविः काम्यां संश्रावयेत्स्त्रियम् ॥ २७ ॥ सा तं कामयते राम नात्र कार्या विचारणा ॥ रथन्तरं वामदेव्यं ब्रह्मवर्चसवर्धनम् ॥ २८ ॥ यशसामेति जुहुयात्पुष्पेण तु प्रियङ्गुकम् ॥ यशसा योगमाप्नोति कर्मणानेन मानवः ॥ २९ ॥ प्राशयेद्बालकं नित्यं वचाचूर्णं घृताप्लुतम् ॥ इन्द्रमिद्गाथिनं जप्त्वा भवेच्छ्रुतिधरस्त्वसौ ॥ ३० ॥ हुत्वा रथन्तरं जप्त्वा पुत्रमाप्नोत्यसंशयम् ॥ गीर्वाणः पाहि सततं जप्तं स्यादघतारकम् ॥ ३१ ॥ मयि श्रीरिति मन्त्रेण जप्तव्यं श्रीविवर्धनम् ॥ दानाविशति देवोऽपि मन्त्रेणानेन धर्मवित् ॥ ३२ ॥ क्रीत्वा घृतं तु पुष्पेण सुषुमाणीत्यतः पिबेत् ॥ अलक्ष्मीनाशनं कर्म

१ 'शुद्धाशुद्धीं इमे तश्च' इति क० । २ 'बोध्यस्त्रिगिति' इति ख० । ३ 'पाणौ' इति ख० । ४ 'शतषारम्' इति ख० ।

मयैतत्ते प्रकीर्तितम् ॥ ३३ ॥ पुष्पेण सर्षपान्गौरांश्चूर्णयित्वा विचक्षणः ॥ इन्द्रे हिमत्स्यं धर्मेति कुर्यादुत्सादनं बुधः ॥ ३४ ॥ घृतस्नानं बुधः कृत्वा सर्षपाञ्जुहुयात्ततः ॥ अद्येत्वीडाविन्द्रियेति मन्त्रेणानेन मन्त्रितम् ॥ ३५ ॥ पुष्टिदं कर्म कथितं मयैतत्तव भार्गव ॥ मिश्रान्व्रीहि यवानग्नौ हुत्वा भृगुकुलोद्भव ॥ ३६ ॥ मुनीशो धाम एतेन धान्यभागी भवेत्सदा ॥ मध्वाज्यदधिमिश्राणि विप्राणीति जुहोति यः ॥ ३७ ॥ सार्धं सहस्रं धर्मज्ञ श्रावयन्तीह मानवाः ॥ मासोपवासी लभते कनकं बहु भार्गव ॥ ३८ ॥ गव्येषुणेति च द्वाभ्यां यस्तु संवत्सरं नरः ॥ न्यग्रोधजपनिष्ठीवं भक्षयेद्दन्तधावनम् ॥ ३९ ॥ सहस्रसङ्ख्यं स धनं लभते नात्र संशयः ॥ भद्रो न अग्न इत्येतत्तथा हुत्वा सहस्रशः ॥ ४० ॥ औदुम्बरेध्महोमेन मन्त्रेणानेन गां लभेत् ॥ हुत्वा व्रीहियवानग्नौ धान्यमाप्नोति मानवः ॥ ४१ ॥ एवासिवीरेयुरिति द्वादशाहमुपोषितः ॥ सर्पिषा त्वयुतं हुत्वा ग्राममाप्नोति मानवः ॥ ४२ ॥ वैरूपाष्टकवन्नित्यं प्रयुञ्जानः श्रियं लभेत् ॥ श्रान्ताष्टकं प्रयुञ्जानः सर्वान्कामानवाप्नुयात् ॥ ४३ ॥ गव्येषुणेति यो नित्यं सायं प्रातरतन्द्रितः ॥ उपस्थानं गवां कुर्यात्तस्य स्युस्ताः सदा गृहे ॥ ४४ ॥ अग्ने विवस्वदुषसा मन्त्रेणानेन मन्त्रवित् ॥ भाजनस्योपनीतस्य यस्त्वग्रं जुहुयात्सदा ॥ ४५ ॥ उत्तरेण बलिं दत्त्वा सर्वान्कामानवाप्नुयात् ॥ क्षीरैकवृक्षमासाद्य मणिभद्राय मानवः ॥ ४६ ॥ अष्टरात्रोषितः पूजां कृत्वा दद्यात्ततो बलिम् ॥ सुसंस्कृतेन मांसेन कृष्णपक्षं क्षपेद्बुधः ॥ ४७ ॥ एषस्यतेति मधुमन्निन्द्र एतेन भार्गव ॥ सुवर्णमाप्नोति नरो यावदिच्छति शत्रुहन् ॥ ४८ ॥ शुक्लपक्षचतुर्दश्यां त्रिरात्रोपोषितो नरः ॥ मौनं मासं पायसं च रसत्रय समन्वितम् ॥ ४९ ॥ सप्तधेनवो दुदुहुर्मन्त्रेणानेन मन्त्रवित् ॥ कृष्णपक्षचतुर्दश्यां त्रिरात्रोपोषितस्तथा ॥ ५० ॥ मत्स्यानुपहरेद्रात्रावासुरीमाप्नुयाच्छ्रियम् ॥ बलयुक्तश्च भवति दीप्ततेजास्तथैव च ॥ ५१ ॥ धानावन्तं करम्भिणं मन्त्रेणानेन पायसम् ॥ हुत्वा दिगष्टके दद्याद्दिक्पालानां ततो बलिम् ॥ ५२ ॥ वास्तुदोषहरं कर्म मयैतत्परिकीर्तितम् ॥ राजा समाचरेत्स्नानं पुष्येण श्रवणेन च ॥ ५३ ॥ आभ्रातृव्य इति सदा रहस्यं स्नानमाचरेत् ॥ स्वेच्छापतितजीवन्तीगवां शृङ्गसमुद्भवैः ॥ ५४ ॥ काशैर्मध्वाज्यसम्पूर्णैर्दधिक्षीरयुतैस्तथा ॥ निःसपत्नमवाप्नोति राज्यं निर्गतकण्टकम् ॥ ५५ ॥ घृताक्तं तु यवद्रोणं वात आवतभेषजम् ॥ अनेन हुत्वा विधिवत्सर्वान्दोषान्व्यपोहति ॥५६॥ प्रादेवो दास एतेन कृष्णान्हुत्वा तथा तिलान् ॥ कृत्वा कर्माणि तीर्थादैः स्तैन्यात्क्षिप्रं विमुच्यते ॥५७॥

१ 'इन्द्रसिद्धार्थिनो' इति ख० । २ 'तिलानि च' इति ख० । ३ 'वैरूप्यमाप्नुवन्ति' इति ख० । ४ 'अग्निर्वै' इति ख० । ५ 'रत्नत्रय' इति ख० । ६ 'अन्नं द्रव्यम्' इति ख० ।

अग्नि त्वा पूर्वपीतं ये वषट्कारसमन्वितम्[१] ॥ बाधकेध्म सहस्रं तु हुतं युद्धे जयप्रदम् ॥ ५८ ॥ हस्त्यश्वपुरुषान्कुर्याद् बुधः पिष्टमया न्छुभान् ॥ परकीयानथोद्दिश्य प्रधानपुरुषाँस्तथा ॥ ५९॥ स्वस्त्यन्नापिष्टपचने क्षुरेणोत्कृत्य भागशः ॥ अभित्वा शूर नो नुमो मन्त्रेणानेन मन्त्र वित् ॥ ६० ॥ कृत्वा सर्षपतैलाक्तान्क्रोधेन जुहुयात्ततः ॥ एतत्कृत्वा बुधः कर्म संग्रामे जयमाप्नुयात् ॥ ६१ ॥ आषाढ्यां पौर्णमास्यां तु सोप वासो विचक्षणः ॥ सायं धान्यानि वस्त्राणि सस्यानि तोलयेद् बुधः ॥६२ ॥ इध्ममिद्देवतामन्त्रे[२] मन्त्रेणामन्त्रयेत्तु ताम् ॥ पूजितां वासयेद्रात्रौ देशे परमपूजिते ॥ ६३ ॥ देशानां भूमिपालानां तथा देवचतुष्पदाम् ॥ मृन्मयानां तु कर्तव्यं तथा रात्र्याधिवासनम् ॥ ६४ ॥ तुलितानां द्वितीयेह्नि तत्तद्दवृद्धि प्रवर्धने ॥ हीनस्य क्षयमादेश्यं समस्य समता तथा॥६५॥ गोव्रतं तु बुधः कुर्यादादौ मासचतुष्टयम् ॥ ततस्त्वरण्यं प्रविशेत्तत्र कुर्याज्जपं शुभम् ॥६६॥ तपः सदृशमासाद्य जास्वैतदिति वै सदा ॥ सहस्रकृत्वस्तु जपेत्सप्तरात्रत्रये गते॥६७॥मनसा कांक्षितान्कामान्ध्रुवमाप्नोति मानवः॥ अन्तरिक्षेण वा याति रूपान्यत्वं करोति वा ॥६८॥ अदृश्यत्वमवाप्नोति दैत्यत्वमथ वा पुनः ॥ तंतं काममवाप्नोति यंयं वा मनसेच्छति ॥६९॥ साम्नस्तु देवतां ज्ञात्वा तेन साम्ना तु देवताम् ॥ आराधयेत्सुप्रसन्ना साम्ना स्यात्संशयं विना॥७०॥अमूषु पूर्वं तु सदा मन्त्रमावर्तयेच्छुचिः ॥ चन्दने नानुलिप्तांगो जातिपुष्पधरस्तथा ॥ ७१ ॥ श्वेतोष्णीषः श्वेतवासाः सर्वान्कामानवाप्नुयात् ॥ एवं दुदुहकेत्येतत्सोपवासस्तु यो जपेत् ॥ ७२ ॥ अक्षतैः सुमनोभिश्च तथा वा गौरसर्षपैः ॥ अवकीर्य शुभं देशं त्वेकाकी प्रस्वपेन्निशि ॥ ७३ ॥ वाग्यतस्तु तथा स्वप्ने पश्यतीति शुभंशुभम् ॥ यथावद्भृगुशार्दूल भविष्यद्भूतमेव वा ॥ ७४ ॥ भारुण्डं वामदेव्यं च रथन्तरबृहद्रथौ ॥ सर्वपापप्रशमनाः कथिताः संशयं विना ॥ ७५ ॥ साम्नां विधिस्ते कथितो नृवीर संक्षेपतः कर्मकरो मयैषः ॥ आथर्वणं वच्मि निबोध तन्मे चेतः समाधाय महानुभाव ॥ ७६ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे रामं प्रति पुष्करोपाख्याने सामविधिकथनन्नाम षड्विंशत्युत्तरशततमोऽध्ययः ॥ १२६ ॥ ॥ पुष्कर उवाच ॥ शान्तातीतं गणं हुत्वा शान्तिमाप्नोति मानवः ॥ भैषज्यं च गणं हुत्वा सर्वान्रोगान्व्यपोहति ॥ १ ॥ त्रिषप्तीयं गणं हुत्वा सर्वपापैः प्रमुच्यते ॥ क्वचिन्नाप्नोति च भयं हुत्वा चैवाभयं गणम् ॥ २ ॥ न क्वचिज्जायते राम गणं हुत्वा पराजयः ॥ आयुष्यं च गणं हुत्वा चापमृत्यून्व्यपोहति ॥ ३॥ एते दशगुणाश्चैव होतव्याः स्युर्यथाक्रमम् ॥ अष्टादशसु धर्मज्ञ दशशान्तिषु भार्गव ॥ ४ ॥ वैष्णवी च तथा चैन्द्री ब्राह्मी रौद्री तथैव च ॥

---

१ 'तः' इति क० ख० । २ 'मिर्दैवताम्' इति ख० ।

वायव्या वारुणी चैव कौबेरी भार्गवी तथा ॥ ५ ॥ प्राजापत्या तथा त्वाष्ट्री कौमारी वह्निदेवता ॥ मारुद्गणी च गान्धारी शान्तिर्वै रुदती तथा॥६॥
शान्तिरांगिरसी याम्या पार्थिवी च भृगूत्तम ॥ एतास्तु शान्तयः प्रोक्ताः सर्वकर्महिताः सदा ॥ ७ ॥ यस्त्वामृत्युरितीत्येतज्जप्तं मृत्युविनाशनम् ॥
हुत्वा च मातृनामानि कामानेवमवाप्नुयात् ॥ ८ ॥ सुपर्णस्त्विति हुत्वा च भुजगैर्नैव बाध्यते ॥ यस्येदं भूमिमिति च भूमिकामो जपेत्सदा ॥ ९ ॥
पृथिव्यामुत्तमोसीति हुतं श्रेष्ठ्यप्रदं सदा ॥ औदुम्बरं यो न इति तथा वीर्यविवर्धनम् ॥ १० ॥ इन्द्रेण दत्तमित्येतत्सर्वबाधाविनाशनम् ॥
हिरण्यवर्ण इति च स्नानं पापहरं भवेत् ॥ ११ ॥ असितस्येति सर्वाणि विषघ्नानि भृगूत्तम ॥ सारस्वतीति मन्त्रांश्च विषघ्नान्निर्विशेद्बुधः ॥१२ ॥
शरभादीनि सर्वाणि पिशाचक्षपणानि च ॥ यमस्य लोकादित्येतद्दुःस्वप्नशमनं परम् ॥ १३ ॥ अग्नेर्व इति चाप्येतत्कथितं मन्युनाशनम् ॥
ऊर्ध्वो भवति विज्ञेयः कृत्वा स्थानकरः परः॥१४॥इन्द्रं वयं वणिजमिति पण्यलाभकरं परम् ॥ कामो मे राज्ञीति हुतं स्त्रीणां सौभाग्यवर्धनम्॥१५॥
भद्राय कर्णमित्येतत्कर्णप्रस्यन्दने जपेत् ॥ भद्रासाक्षिवधे जाता कर्णप्रस्यन्दने तथा ॥ १६ ॥ तुभ्यमेवाजिरिति आयुष्यं तु हुतं भवेत् ॥
आयातु पितमित्येतन्मित्रलब्धिकरं हुतम् ॥ १७ ॥ आशासानमिदं जना मिश्रधान्येन होमयेत् ॥ आधिपत्यमवाप्नोति सर्वत्र मनुजोत्तम ॥१८॥
अग्निरीशेभिरित्येतद्गवां वृद्धिकरं परम् ॥ द्वादशाहं तु जुहुयात्पराकेण विशेषतः ॥ १९ ॥ शातो हविरितीत्येतद्ग्रामस्वास्थ्यकरं भवेत् ॥ तस्मा
द्ग्रामान्मृदा कृत्वा वेदिसाम्यं समश्नुते ॥ २० ॥ विधाय स्वेति सर्वाणि राष्ट्रस्वीकरणानि तु ॥ त्रिभ्यो भद्रेभ्य इत्येतद्वास्तोष्पतमुदाहृतम् ॥ २१ ॥
ध्रुवं ध्रुवेणेति हुतं स्थानलाभकरं भवेत् ॥ अच्युतापोस्तथा राम कथितं स्थानलाभदम् ॥२२॥ पयो देवेष्विति हुतं रायस्पोषकरं परम् ॥ युनक्त
सीरेति शुना कृषिलाभकरं भवेत् ॥ २३ ॥ अयं ते योनिरित्येतत्पुत्रलाभकरं भवेत् ॥ शुने वत्सा तथा ह्येतद्गवां वृद्धिकरं हुतम् ॥ २४ ॥ ...
....... मेति कथितं सर्वत्र श्रेष्ठ्यकारकम् ॥ यूदग्न इति चाप्येतद्बन्धनान्मोक्षकारकम् ॥ २५ ॥ यो न स्व इति चाप्येतच्छत्रुनाशकरं परम् ॥
सवन्नहन्निति तथा नात्र कार्या विचारणा॥२६॥ ( त्वमत्वसमितीत्येतद्यशसो वर्धनं परम् ॥ यथा वृषिमितीत्येतत्स्त्रीणां सौभाग्यवर्धनम् ॥
॥ २७ ॥ आनो अग्न इत्येतच्च कथितं पतिलाभदम् ॥ येन वेहेति मां चैव गर्भलाभकरं भवेत् ॥ २८ ॥ इमं तपस्विन्निति तथा भवेत्सौभाग्य
वर्धनम् ॥ यत्पृथिव्यामनावृत्तं हुतमेतद्यथाविधि ॥२९ ॥ कृत्वा तु संशनं ज्ञेयं नात्र कार्या विचारणा ॥............................॥३०॥)
शिवं शिवाभिरित्येतद्भवेच्छ्रेयस्करं परम् ॥ दूत्या दूषणमित्येतत्कृत्यादूषणमुच्यते ॥ ३१ ॥ बृहस्पतिः परिपातु पथि स्वस्त्ययनं भवेत् ॥

मनो विवन्न भयदं पथि स्वस्त्ययनं भवेत् ॥ ३२ ॥ अयन्नो अग्निरध्यक्षो भवेदग्निप्रसादतः ॥ संवत्सरं तु शिरसा धारयेद्यो हुताशनम् ॥ ३३ ॥ मन्त्रमेतज्जपेन्नित्यमाग्नेयाशासुखः स्थितः ॥ अनग्निज्वलनं कुर्याद्ग्रामसंवत्सरे गते॥३४॥ दूत्या दूतिरसीत्येतज्जपेन्मन्त्रमनुत्तमम् ॥ कुर्यात्प्रदिसराबन्धं सर्वदोषनिबर्हणम्॥३५॥प्राणसूक्तश्च कथितं तथा प्राणविवर्धनम् ॥ मुञ्चामि त्वेति कथितमपमृत्युविमोक्षणम् ॥३६॥ अथर्वशिरसोऽध्येता सर्वपापैः प्रमुच्यते ॥ परमं पावनं तद्धि सर्वकल्मषनाशनम्॥३७॥ एवमेते शुभा मन्त्राः प्रतिवेदं मया तव ॥ समासात्कथिता राम समुद्धृत्य प्रधानतः ॥ ३८ ॥ एकैकस्य च मन्त्रस्य विनियोगाः सहस्रशः ॥ कथिता भृगुशार्दूल पुराणैः सुमहात्मभिः ॥ ३९ ॥ न ते शक्या महाभाग वक्तुं वर्षशतैरपि ॥ प्राधान्येन तु मन्त्राणां किञ्चित्कर्म तवेरितम् ॥ ४० ॥ होमे यत्र न निर्दिष्टं मया द्रव्यं पुरा तव ॥हवींषि तत्र वक्ष्यामि तानि मे गदतः शृणु ॥ ४१ ॥ वृक्षाणां यज्ञियानान्तु समिधः प्रथमं हविः ॥ आज्यञ्च व्रीहयश्चैव तथा वै गौरसर्षपाः ॥ ४२ ॥ अक्षतानि तिलाश्चैव दधि क्षीरञ्च भार्गव ॥ दर्भास्तथैव दूर्वाश्च बिल्वानि कमलानि च ॥ ४३ ॥ शान्तिपुष्टिकराण्याहुर्द्रव्याण्येतानि भार्गव ॥ तैलेन्धनानि धर्मज्ञ राजिकां रुधिरं विषम् ॥ ४४ ॥ समिधः कण्टकोपेता अभिचारेषु योजयेत् ॥ आर्षं वै दैवतं छन्दस्त्वविज्ञाय भृगूत्तम ॥ ॥ ४५ ॥ मन्त्रस्य तेन मन्त्रेण जप्यहोमौ न कारयेत् ॥ छन्दसि ब्राह्मणे सूक्ते यदव्यक्तं प्रदृश्यते ॥ ४६ ॥ विद्वद्भिः सह निश्चित्य तद्यज्ञमवतारयेत् ॥ सम्भारा ये यथा यत्र यानि द्रव्याणि यो विधिः ॥ ४७ ॥ शाखां प्रति तथा तत्र तत्प्रमाणमिति स्थितिः ॥ यः स्वसूत्रमतिक्रम्य परसूत्रेण वर्तते ॥ ४८ ॥ अप्रमाणमृषिं कृत्वा सोऽप्यधर्मेण युज्यते ॥ तस्मात्सर्वप्रयत्नेन स्वसूत्रं न विलंघयेत् ॥ ४९ ॥ प्राक्तन्त्रोत्तरतन्त्रे द्वे स्वशाखाप्रत्यया द्विज ॥ सर्वकर्मसु कर्तव्ये मध्ये कर्म विधीयते ॥ ५० ॥ अथर्वणोऽयं कथितो विधिस्ते संक्षेपतो भार्ग वंशमुख्य ॥ अतः परं किं कथयामि तुभ्यं तन्मे वदस्वायतलोहिताक्ष ॥ ५१ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे रामं प्रति पुष्करोपाख्यानेऽथर्वविधिकथनन्नाम सप्तविंशत्युत्तरशततमोऽध्यायः ॥ १२७ ॥ राम उवाच ॥ एकं मन्त्रं समाचक्ष्व देव लक्ष्मीविवर्धनम् ॥ प्रतिवेदं जगन्नाथ यादोगणनृपात्मज ॥ १ ॥ पुष्कर उवाच ॥ श्रीसूक्तं प्रतिवेदञ्च ज्ञेयं लक्ष्मीविवर्धनम् ॥ अस्मिँल्लोके परे वापि यथाकामं द्विजस्य तु॥२॥राम उवाच ॥ प्रतिवेदं समाचक्ष्व श्रीसूक्तं पुष्टिवर्धनम् ॥ श्रीसूक्तस्य तथा कर्म सर्वधर्मभृतां वर॥ ॥३॥ पुष्कर उवाच ॥ हिरण्यवर्णां हरिणीमृचः पञ्चदश द्विज ॥ श्रीसूक्तं कथितं पुण्यमृग्वेदे पुष्टिवर्धनम् ॥४॥रथे अक्षेषु वाजेति चतस्रस्तु तथा

ऋचः ॥ श्रीसूक्तं तु यजुर्वेदे कथितं पुष्टिवर्धनम् ॥५॥ श्रायन्तीयं तथा मासं सामवेदे प्रकीर्तितम् ॥ श्रियं दातुर्मयि देहि प्रोक्तमाथर्वणे तथा ॥६॥
श्रीसूक्तं योजपेद्भक्त्या तस्यालक्ष्मीर्विनश्यति ॥ जुहुयाद्यश्च, धर्मज्ञ हविष्येण विशेषतः॥७॥श्रीसूक्तेन तु पद्मानां घृताक्तानां भृगूत्तम ॥ अयुतं होमये
द्यस्तु वह्नौ भक्तियुतो नरः ॥८॥ पद्महस्तद्वया लक्ष्मीस्तं नरं तूपतिष्ठति ॥ दशायुतं तु पद्मानां जुहुयाद्यस्तथा जले ॥९॥ नापैति तत्कुलाल्लक्ष्मी
र्विष्णोर्वक्षोगता यथा ॥ घृताक्तानान्तु बिल्वानां हुत्वा रामायुतं तथा ॥ १० ॥ बहुवित्तमवाप्नोति स यावन्मनसेच्छति ॥ बिल्वानां लक्षहोमेन
कुले लक्ष्मीमुपाश्नुते ॥११॥ पद्मानामथ बिल्वानां कोटिहोमं समाचरेत् ॥ श्रद्दधानः समाप्नोति देवेन्द्रत्वमपि ध्रुवम् ॥ १२ ॥ संपूज्य देवीं वरदां
यथावत्पद्मैः सितैर्वा कुसुमैस्तथान्यैः ॥ क्षीरेण धूपैः परमान्नभक्ष्यैर्लक्ष्मीमवाप्नोति विधानतश्च ॥ १३ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे
मार्कण्डेयवज्रसंवादे रामं प्रति पुष्करोपाख्याने श्रीसूक्तमाहात्म्यकथनन्नामाष्टाविंशत्युत्तरशततमोऽध्यायः ॥ १२८ ॥ राम उवाच ॥ एकं मन्त्रं
समाचक्ष्व सर्वकर्मकरं शिवम् ॥ ऐहिकं सर्वधर्मज्ञ पारलौकिकमेव च ॥ १ ॥ पुष्कर उवाच ॥ प्रतिवेदं महाभाग यत्सूक्तं पौरुषं स्मृतम् ॥ सर्वकर्म
करं ज्ञेयं पवित्रं माधुसूदनम् ॥ २ ॥ एकैकया ऋचा राम स्नातो दत्त्वा जलाञ्जलीः ॥ पौरुषेण च सूक्तेन मुच्यते सर्वकिल्बिषैः ॥३॥ अन्तर्जलगतो
जप्त्वा तथा सूक्तं तु पौरुषम् ॥ सर्वकल्मषनिर्मुक्तो यथेष्टां लभते गतिम् ॥ ४ ॥ एकैकया ऋचा स्नातः पुष्पं पुष्पं निवेदयेत ॥ पुरुषाय जले राम
सर्वपापैर्विमुच्यते ॥ ५ ॥ एकैकया ऋचा स्नातो दत्त्वा राम फलंफलम् ॥ सर्वान्कामानवाप्नोति यान्कांश्चिन्मनसेच्छति ॥ ६ ॥ पौरुषेण च
सूक्तेन प्राणायामो महाफलः ॥ जपहोमौ तथा राम सर्वकल्मषनाशनौ ॥७॥ सुरापो ब्रह्महा स्तेनस्तथैव गुरुतल्पगः ॥ पापेभ्यो विप्रमुच्येत जप्त्वा
सूक्तं तु पौरुषम् ॥ ८ ॥ कृच्छ्रैर्विशोधितः पूर्वं मध्याह्ने सलिलापगः ॥ स्नातस्तु पौरुषं सूक्तं जपेन्नित्यमतन्द्रितः ॥ ९ ॥ संवत्सरेण देवेशं वासु
देवं प्रपश्यति ॥ स्वयमेव महाभाग शाकमूलफलाशनः ॥१०॥ तस्मात्काममवाप्नोति यद्राम मनसेच्छति ॥ श्रियमग्र्यां तथा रूपं जीवितं दीर्घ
मेव च॥११॥ अणिमां लघिमां प्राप्तिं महिमां च भृगूत्तम ॥ ईशित्वञ्च वशित्वञ्च प्राकाम्यञ्च भृगूत्तम ॥ १२॥ यत्र कामावसायित्वं तस्मात्प्राप्नोति
मानद ॥ दुरवापमथान्यद्वा यत्किञ्चिन्मनसेच्छति ॥ १३॥ अकामः पौरुषं सूक्तं जप्त्वा नित्यमतन्द्रितः ॥ तत्र याति महाभाग यद्विष्णोः परमं
पदम् ॥ १४ ॥ मांगल्यमेतत्परमं पवित्रं संसारदुःखौघविनाशकारि ॥ सुखप्रदं धर्मविधं नराणां मनोरमावाप्तिकरं प्रदिष्टम् ॥ १५ ॥ इति श्रीविष्णु

१ अणिमामित्यादिष्वाबन्तताऽऽर्षत्वात् ।

धर्मोत्तरे द्वितीयखण्डे मा०सं० रामं प्रति पुष्करोपाख्याने पुरुषसूक्तमाहात्म्यवर्णनन्नामैकोनत्रिंशदुत्तरशततमोऽध्यायः ॥ १२९ ॥ राम उवाच ॥ पुरा धर्माणि प्रोक्तानि ब्रह्मचारिगृहस्थयोः ॥ कर्माण्युक्तानि च ब्रूहि शिष्टमप्याश्रमद्वयम् ॥ १ ॥ ( गृहस्थधर्मानाश्रित्य काम्यानि सुरसत्तम ॥ कर्माणि तानि मे ब्रूहि शिष्टान्यप्याश्रमद्वये ॥ २ ॥ पुष्कर उवाच ॥ सुखं गृहाश्रमे स्थित्वा विधिवत्स्नातको द्विजः ॥ वने वसेत्तु नियतो यथावद्विजितेन्द्रियः ॥ ३ ॥ ) गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः ॥ अपत्यस्यैव चापत्यं तदारण्यं समाश्रयेत् ॥ ४ ॥ संत्यज्य ग्राम्यमाहारं सर्वञ्चैव परिच्छदम् ॥ पुत्रेषु भार्यां निक्षिप्य वनं गच्छेत्सहैव वा ॥ ५ ॥ अग्निहोत्रं समादाय गृह्यं चाग्निं परिच्छदम् ॥ ग्रामादरण्यं निःसृत्य निवसेद्विजितेन्द्रियः ॥ ६ ॥ मुन्यन्नैर्विविधैर्मेध्यैः शाकमूलफलेन वा ॥ सर्वानेव महायज्ञान्निर्वपेद्विधिपूर्वकम् ॥ ७ ॥ वसीत चर्म चीरं वा सायं स्नायात्प्रगे तथा ॥ जटाश्च बिभृयान्नित्यं श्मश्रुलोमनखांस्तथा ॥८॥ यद्भक्ष्यं स्यात्ततो दद्याद्बलिं भिक्षाञ्च शक्तितः ॥ समूलफलभिक्षाभिरर्चयेदाश्रमागतान् ॥ ९ ॥ स्वाध्यायनित्ययुक्तः स्याद्दान्तो मैत्रः समाहितः ॥ दाता नित्यमनादाता सर्वभूतानुकम्पकः ॥ १० ॥ वैतानिकञ्च जुहुयादग्निहोत्रं यथाविधि ॥ दर्शयन्स्कन्दयन्पर्वं पौर्णमासीञ्च योगतः ॥ ११ ॥ ऋक्षेष्ट्याग्रयणञ्चैव चातुर्मास्यानि चाहरेत् ॥ उत्तरायणञ्च क्रमशो दक्षिणायनमेव च ॥ १२ ॥ वासन्तैः शारदैर्मेध्यैर्मुन्यन्नैः सुसमाहृतैः ॥ पुरोडाशांश्चरूँश्चैव विधिवन्निर्वपेत्पृथक् ॥ १३ ॥ देवताभ्यस्तु तद्धुत्वा वन्यं मेध्यतरं हविः ॥ शेषमात्मनि युञ्जीत लवणञ्च स्वयं कृतम्॥१४॥ स्थलजोदकशाकानि पुष्पमूलफलानि च ॥ मध्यवृक्षोद्भवान्यद्यात्स्नेहांश्च फलसंयुतान् ॥ १५ ॥ वर्जयेन्मधुमांसानि भौमानि कवकानि च ॥ भूस्तृणं शिग्रुकञ्चैव भल्लातकफलानि च ॥१६॥ त्यजेदाश्वयुजे मासि मुन्यन्नं पूर्वसञ्चितम् ॥ जीर्णानि चैव वासांसि पुष्पमूलफलानि च ॥ १७ ॥ न फालकृष्टमश्नीयादुत्सृष्टमपि केनचित् ॥ न ग्रामजातमन्नञ्च पुष्पाणि च फलानि च ॥ १८ ॥ अग्निपक्वाशनो वा स्यात्कालपक्वभुगेव वा ॥ अश्मकुट्टो भवेद्वापि दन्तोलूखलिकस्तथा ॥ १९ ॥ सद्यः प्रक्षालिको वा स्यान्मासस्ञ्चयिकोऽपि वा ॥ षण्मासनिचयो वा स्यात्समानिचय एव वा॥२०॥नक्तं वान्नं समश्नीयाद्दिवा चाहृत्य शक्तितः॥ चतुर्थकालिको वा स्यात्स्याद्वा चाष्टमकालिकः ॥ २१ ॥ चान्द्रायणविधानैर्वा शुक्ले कृष्णे च वर्तयेत् ॥ पक्षान्तयोर्वाप्यश्नीयाद्यवागूं क्वथितां सकृत् ॥ २२ ॥ पुष्पमूलफलैर्वापि केवलैर्वर्तयेत्सदा ॥ कालपक्वैः स्वयं शीर्णैर्वैखानसपथि स्थितः ॥ २३ ॥ भूमौ विपरिवर्तेत तिष्ठेद्वा प्रपदैर्दिनम् ॥ स्थानासनाभ्यां विहरेत्सवनेषूपयन्नपः ॥ २४ ॥ ग्रीष्मे पञ्चतपास्तु स्याद्वर्षासु भावकाशकः ॥ आर्द्रवासास्तु हेमन्ते क्रमशो वर्धयंस्तपः ॥ २५ ॥

१ 'स्वासारमात्मभवेत्' इति पुस्तकान्तरे पाठः ।

उपस्पृशंस्त्रिषवणं पितॄन्देवांश्च तर्पयेत् ॥ तपश्चरंश्चोग्रतरं शोषयेद्देहमात्मनः ॥ २६ ॥ अग्नीनात्मनि वैतानान्समारोप्य यथाविधि ॥
अनग्निरनिकेतश्च मुनिर्मूलफलाशनः ॥ २७ ॥ अप्रयत्नः सुखार्थेषु ब्रह्मचारी धराश्रयः ॥ शरणेषु समश्चैव वृक्षमूलनिकेतनः ॥ २८ ॥
तापसेष्वेव विप्रेषु यात्रिकं भैक्षमाहरेत् ॥ गृहमेध्येषु चान्येषु द्विजेषु वनवासिषु ॥ २९ ॥ ग्रामादाहृत्य नाश्नीयादष्टौ ग्रासान्वने वसन् ॥
विविधाश्चोपनिषदो ह्यात्मसंशुद्धये श्रुतीः ॥ ३० ॥ ऋषिभिर्ब्राह्मणैश्चैव गृहस्थैरेव सेविताः ॥ विद्यातपोभिवृद्ध्यर्थं शरीरस्य च शुद्धये ॥ ३१ ॥
अपराजितां वास्थाय व्रजेद्दिशमजिह्मगः ॥ आनिपाताच्छरीरस्य युक्तो वार्यनिलाशनम् ॥ ३२ ॥ त्यक्त्वा तनुं सम्यगथोदितस्य
विधेरथैकस्य वने निवासी ॥ प्राप्नोति लोकं स पितामहस्य त्यक्त्वा भयं नात्र विचारमस्ति ॥ ३३ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे
मार्कण्डेयवज्रसंवादे रामं प्रति पुष्करोपाख्याने वानप्रस्थाश्रमकथनन्नाम त्रिंशदुत्तरशततमोऽध्यायः ॥ १३० ॥ ॥ छ ॥
पुष्कर उवाच ॥ वनेषु च विहृत्यैवं तृतीयं भागमायुषः ॥ चतुर्थमायुषो भागं त्यक्तसङ्गः परिव्रजेत् ॥ १ ॥ आश्रमादाश्रमं गत्वा हुतहोमो जि
तेन्द्रियः ॥ भिक्षाबलपरिश्रान्तः प्रव्रजेद्व्रतवर्जितः ॥ २ ॥ ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ॥ ॥ अनपाकृत्य च ऋणं मोक्षमिच्छ
न्व्रजत्यधः ॥ ३ ॥ अधीत्य विधिवद्वेदान्पुत्रांश्चोत्पाद्य धर्मतः ॥ इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत् ॥ ४ ॥ अनधीत्य द्विजो वेदान
नुत्पाद्य तथा सुतान् ॥ अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन्व्रजत्यधः ॥ ५ ॥ प्राजापत्यां निरूप्येष्टिं सर्ववेदां सदक्षिणाम् ॥ आत्मन्यग्नीन्समारोप्य
प्रव्रजत्यभयं गृही ॥ ६ ॥ तस्य तेजोमया लोका भवन्ति ब्रह्मवादिनः ॥ यस्मादण्वपि भूतानां द्विज नोत्पद्यते भयम् ॥ तस्य देहाद्विमुक्तस्य
भयं नास्ति कथञ्चन ॥ ७ ॥ अगारादभिनिष्क्रान्तः पवित्रोपचितो मुनिः ॥ समुपोढेषु काम्येषु निरपेक्षः परिव्रजेत् ॥ ८ ॥ एक एव चरे
न्नित्यं सिद्ध्यर्थमसहायवान् ॥ सिद्धिमेकस्य तां पश्यन्न जहाति न हीयते ॥ ९ ॥ अनग्निरनिकेतः स्याद्ग्राममन्नार्थमाश्रयेत् ॥ १० ॥
उपेक्षकोऽसञ्चयको मुनिर्भावसमाहितः ॥ कपालं वृक्षमूलानि कुचैलमसहायता ॥ ममता नैव सर्वस्मिन्नेतन्मुक्तस्य लक्षणम् ॥ ११ ॥
नाभिनन्देत मरणं नाभिनन्देत जीवितम् ॥ कालमेव प्रतीक्षेत निर्देशभृतको यथा ॥ १२ ॥ (दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं जलं पिबेत् ॥ सत्य
पूतां वदेद्वाचं मनःपूतं समाचरेत् ॥१३॥ अतिजडांस्तितिक्षेत नावमन्येत कञ्चन ॥ १४ ॥ ) न चैनं गृहमाश्रित्य वैरं कुर्वीत केनचित् ॥
क्रुध्यन्तं न प्रतिक्रुध्येदाकृष्टः कुशलं वदेत् ॥ १५ ॥ सप्तद्वारावकीर्णां च न वाचमनृतां वदेत् ॥ अध्यात्मरतिरासीनो निरपेक्षो निरामिषः ॥ १६ ॥

आत्मनैव सहायेन तरेद्दुर्गतिमात्मनः ॥ १७ ॥ न चोत्पातनिमित्ताभ्यां न नक्षत्राङ्गविद्यया ॥ नानृतस्वनवादाभ्यां भिक्षां लिप्सेत कर्हि
चित् ॥ १८॥ न तापसैर्ब्राह्मणैर्वा न योगिभिरथाश्रमैः ॥ आकीर्णौर्भिक्षुकैर्वर्णैरागारमुपसंव्रजेत् ॥१९॥ कृतकेशनखश्मश्रुः पात्री दण्डी कुसुम्भ
वान् ॥ विरचेन्नियतो नित्यं सर्वभूतान्यपीडयन् ॥ २०॥ अतैजसानि पात्राणि तस्य स्युर्निर्व्रणानि च ॥ तेषामद्भिः स्मृतं शौचं
चमसानामिवाध्वरे ॥ २१ ॥ अलाबुं दारुपात्रञ्च मृन्मयं वैदलं तथा ॥ एतानि यतिपात्राणि विज्ञेयानि मनीषिभिः ॥ २२ ॥
सौवर्णमणिपात्रेषु कांस्यरौप्यायसेषु च ॥ भिक्षां दद्यान्न धर्मज्ञ ग्रहीता नरकं व्रजेत् ॥ २३ ॥ एककालं चरेद्भैक्ष्यं न प्रसज्येत विस्तरे ॥
भैक्ष्ये प्रसक्तस्य मतिर्विषयेष्वपि सज्जते ॥ २४॥ विधूमे न्यस्तमुसले व्यङ्गारे भुक्तवज्जने ॥ वृत्ते शरावसम्पाते भिक्षां नित्यं यतिश्चरेत् ॥ २५ ॥
अलाभी न विषादी स्याल्लाभे चापि न हर्षयेत् ॥ प्राणयात्रिकमात्रः स्यान्मात्रासंगाद्विनिर्गतः ॥ अभिपूजितलाभाँस्तु यदि मुक्तोऽपि
बध्यते ॥ २६ ॥ अल्पान्नाभ्यवहारेण रहः स्थानासनेन च ॥ ह्रियमाणानि विषयैरिन्द्रियाणि निवर्तयेत् ॥ २७ ॥ इन्द्रियाणां निरोधेन राग
द्वेषभयेन च ॥ अहिंसया च भूतानाममृतत्वाय कल्पते ॥ २८ ॥ अवेक्षेत गतिं नृणां कर्मदोषसमुद्भवाम् ॥ निरये चैव पतनं व्याधिभिश्चोप
पीडनम् ॥ २९ ॥ देहात्क्रमणं चास्मात्पुनर्गर्भे च सम्भवम् ॥ योनिकोटिसहस्रेषु मृतौ[1] चास्यान्तरात्मनः ॥ ३० ॥ अधर्मप्रभवं चैवः कर्मयोगं
शरीरिणाम् ॥ धर्मार्थप्रभवं चैव सुखसंयोगमक्षयम् ॥ ३१ ॥ सूक्ष्मतां चानुवीक्षेत योगेन परमात्मनः ॥ देहेषु चैव पतितमुत्तमेष्वधमेषु च ॥ ३२॥
दूषितोऽपि चरेद्धर्मं यत्रयत्राश्रमे रतः ॥ समः सर्वेषु भूतेषु न लिङ्गं धर्मकारणम् ॥ ३३ ॥ फलं कतकवृक्षस्य यद्यप्यम्बुप्रसादकम् ॥ न नामग्रह
णादेव तस्य वारि प्रसीदति ॥ ३४ ॥ संरक्षणार्थं जन्तूनां रात्रावहनि वा सदा ॥ शरीरस्यात्यये वापि समीक्ष्य वसुधां चरेत ॥ ३५॥ अहोरात्रच
याज्जन्तून्हिनस्त्यज्ञानतो यदि ॥ तेषां स्नात्वा विशुद्ध्यर्थं प्राणायामान्षडाचरेत् ॥ ३६ ॥ प्राणायामा ब्राह्मणस्य त्रयोऽपि विधिवत्कृताः ॥
व्याहृतिप्रणवैर्युक्ता विज्ञेयं परमं तपः ॥ ३७ ॥ दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः ॥ तथेन्द्रियकृता दोषा दह्यन्ते प्राणनिग्रहात् ॥
॥ ३८ ॥ प्राणायामैर्दहेद्दोषान्धारणाभिस्तु किल्बिषम् ॥ प्रत्याहारेण संसर्गान्ध्यानेनानीश्वरान्गुणान् ॥ ३९ ॥ उच्चावचेषु भूतेषु दुर्ज्ञेयमकृता
त्मभिः ॥ ज्ञानयोगेन सम्पश्येद्गतिमस्यान्तरामनः ॥४०॥ सम्यग्दर्शनसंपन्नः कर्मभिर्न निबध्यते ॥ दर्शनेन विहीनस्तु संसारं प्रतिपद्यते ॥ ४१ ॥

१ 'मृतीश्चास्यान्तरात्मन' इति ख० ।

अहिंसयेन्द्रियासङ्गैर्वैदिकैश्चैव कर्मभिः ॥ तपसश्चरणैश्चोग्रैः साधयन्तीह तत्पदम् ॥ ४२ ॥ अस्थिस्थूणं स्नायुयुतं मांसशोणितलेपितम् ॥ चर्मावनद्धं दुर्गन्धि पात्रं मूत्रपुरीषयोः ॥ ४३ ॥ जराशोकसमाविष्टं रोगायतनमातुरम् ॥ रजस्वलमनित्यञ्च भूतावासमिदं त्यजेत् ॥ ४४ ॥ नदीकूले यथा वृक्षो वृक्षे वा शकुनिर्यथा ॥ तथा त्यजन्निमं देहं कृच्छ्राद्ग्राहाद्विमुच्यते ॥ ४५ ॥ प्रियेषु स्वेषु सुकृतं चाप्रियेषु च दुष्कृतम् ॥ विसृज्य ध्यानयोगेन ब्रह्माभ्येति सनातनम्॥४६॥ यदा भावेन भवति सर्वभावेषु निःस्पृहः ॥ तदा सुखमवाप्नोति प्रेत्य चेह च शाश्वतम्॥४७॥ अनेन विधिना सर्वान्कामांस्त्यक्त्वा शनैःशनैः ॥ सर्वद्वन्द्वैर्विनिर्मुक्तो ब्रह्मण्येवावतिष्ठति ॥ ४८ ॥ ध्यानिकं सर्वमेवैतद्यदेतदतिशाब्दिकम् ॥ न ह्यध्यात्मकविः कश्चित्क्रियाफलमुपाश्नुते ॥ ४९ ॥ अधियज्ञं ब्रह्म जपेत्साधिदैविकमेव च ॥ आध्यात्मिकं च सततं वेदान्ताभिहितं फलम् ॥ ५० ॥ इदं शरणमज्ञानामिदं देवं विजानताम् ॥ इदमन्विच्छतां स्वर्गमिदमानन्त्यमिच्छताम् ॥ ५१ ॥ अनेन क्रमयोगेण परिव्रजति यो द्विजः ॥ स विधूयेह पाप्मानं परं ब्रह्माधिगच्छति ॥ ५२ ॥ एष धर्मोऽनुशिष्टस्ते यतीनां नियतात्मनाम् ॥ एवं संन्यासकानान्तु कर्मयोगं निबोध मे ॥ ५३ ॥ ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा ॥ एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः ॥ ५४ ॥ सर्वेऽपि क्रमशस्त्वेते यथाशास्त्रं निषेविताः ॥ यथोक्तकारिणं विप्रं नयन्ति परमां गतिम् ॥ ५५ ॥ सर्वेषामेव चैतेषां वेदश्रुतिविधानतः ॥ गृहस्थ उच्यते श्रेष्ठः स त्रीनेतान्बिभर्ति हि ॥ ५६ ॥ यथा नदीनदाः सर्वे सागरे यान्ति संस्थितिम् ॥ तथैवाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम्॥५७॥चतुर्भिरपि तत्त्वज्ञैर्नित्यमाश्रमिभिर्द्विजैः ॥ दशलाक्षणिको धर्मः सेवितव्यः प्रयत्नतः ॥५८॥ धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ॥ धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्॥५९॥ दश चिह्नानि धर्मस्य ये विप्राः समधीयते ॥ अधीत्य चानुवर्तन्ते ते यान्ति परमां गतिम् ॥ ६० ॥ दशलाक्षणिकं धर्ममनुतिष्ठन्समाहितः ॥ वेदान्तं विधिवच्छ्रुत्वा सन्न्यसेदनृणो द्विजः ॥६१॥ सन्न्यस्य सर्वकर्माणि सर्वान्दोषानुपानुदेत ॥ नियतो धर्ममभ्यस्य पुत्रैः सह सुखं वसेत् ॥६२॥ एवं सन्न्यस्य कर्माणि स्वकार्ये परमोऽस्पृहः ॥ संन्यासेनापहत्यैनं प्राप्नोति परमां गतिम् ॥ एष तेऽभिहितो धर्मो द्विजातीनां चतुर्विधः ॥ ६३ ॥ स्वल्पोऽपि धर्मश्चरितो यथायं महाफलः स्यात्सततं द्विजानाम् ॥ तस्मात्प्रयत्नादयमेव कार्यः सर्वं समुत्सृज्य महानुभावः ॥ ६४ ॥

इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे रामं प्रति पुष्करोपाख्याने चतुर्थाश्रमवर्णनन्नामैकत्रिंशदुत्तरशततमोऽध्यायः ॥ १३१ ॥

राम उवाच ॥ अष्टादशभ्यः शान्तिभ्यः शान्तयो याः सुरोत्तम ॥ भिद्यन्ते वा न भिद्यन्ते तन्ममाचक्ष्व पृच्छतः ॥ १ ॥ पुष्कर उवाच ॥

अमृता चाभया सौम्यास्तिस्रोऽन्याः सन्ति भार्गव ॥ एकापि तासां विज्ञेया सर्वकर्मफलप्रदा ॥ २ ॥ सर्वोत्पातप्रशमनी मङ्गल्या सिद्धिकारिका ॥ पूर्वोक्ताः कथितेष्वेव कर्तव्या अद्भुतेषु च ॥ ३ ॥ राम उवाच ॥ शान्तीनां मे त्वमाचक्ष्व स्वरूपाणि महाभुज ॥ पितामहसमो लोके सर्वज्ञोऽपि मतो मम॥४॥ पुष्कर उवाच ॥ अमृता शर्वदैवत्या अभया ब्रह्मदैवता ॥ सौम्या च सोमदैवत्या कथिता भृगुनन्दन ॥ ५ ॥ अन्यासां देवता ज्ञानं नाम्नैव कथितं तव ॥ आथर्वणानां शान्तीनां निबोध गदतो मम ॥ ६ ॥ अमृता चित्रवर्णा स्यादभया तु शशिप्रभा ॥ सौम्या शुक्लैव विज्ञेया नीला भवति वैष्णवी ॥ ७ ॥ बालार्कसदृशा रौद्री ब्राह्मी शंखसमप्रभा ॥ रुक्मवर्णा तथैवैन्द्री वायव्या हरिता भवेत् ॥ ८ ॥ शुक्ला च वारुणी ज्ञेया कौबेरी पद्मसुप्रभा ॥ भार्गवी शुक्लवर्णा स्यात्प्राजापत्या च पीतिका ॥ ९ ॥ त्वाष्ट्री शुक्ला च विज्ञेया कौमारी ताम्रसुप्रभा ॥ आग्नेय्यग्निसुवर्णा स्याच्छुक्ला मातङ्गिनी भवेत् ॥ १० ॥ प्रवालाभा च गान्धर्वी कृष्णा वै नैऋता तथा॥रोचनाभा चाङ्गिरसी याम्या कृष्णा तथा भवेत् ॥ ११॥ पार्थिवी च मयूराभा वर्णतः कथितास्तव ॥ अतः परं प्रवक्ष्यामि स्थानान्यासां यथाविधि ॥ १२ ॥ अमृता चाभया सौम्या तिस्रस्तु भृगुनन्दन ॥ तासां सर्वत्र संस्थानं कथितन्तु पुरातनैः ॥ १३ ॥ प्राजापत्या तथाग्नेयी याम्या वै नैर्ऋती तथा ॥ कौबेरी पार्थिवी चेति पृथिव्यां परिकीर्तिताः ॥ १४ ॥ वायव्या चैव कौमारी वैष्णवी रुद्रदैवता ॥ अन्तरिक्षे विनिर्दिष्टाः शान्तयो द्विजसत्तम ॥ १५ ॥ ऐन्द्री मातङ्गिनी त्वाष्ट्री दिव्या ब्राह्मी तथेरिता ॥ वारुणी चैव गान्धारी भार्गव्याङ्गिरसी तथा ॥ १६ ॥ आद्यास्तु कथितास्तुभ्यं कर्तव्याश्च विजानता ॥ यथा स्वदेशजातेषु चाद्भुतेषु यथाविधि ॥ १७ ॥ तद्दैवत्यास्तथा मन्त्राः सर्वासां गर्भ उच्यते ॥ मणीनाञ्च तथा गर्भाः सर्वासां मन्त्र उच्यते ॥ १८ ॥ मणीनाञ्च तथा मन्त्रा ज्ञातव्या मन्त्रलिङ्गतः ॥ सर्वासाञ्चैव शान्तीनां होतव्याश्च गणा दश ॥ १९ ॥ शान्त्यातीतन्तु भैषज्यं त्रिसप्तीयं तथैव च ॥ अभया च तथा राम तथा चैवापराजिता ॥ २० ॥ आयुष्यं च स्वस्त्ययनं सर्ववर्मगणं तथा ॥ वास्तोष्पत्यं तथा रौद्रं गणाः प्रोक्तास्तथा दश ॥ २१ ॥ होमस्तथैषां मन्तव्यः सर्वशान्तिषु भार्गव ॥ पृथक्प्रधानतः कल्पास्तिस्रः पूर्वाः प्रकीर्तिताः॥२२॥गणेगणे तु गां दद्याद्गां गर्भे गां तथा मणौ ॥ अराजा भूमिपालस्तु दद्याद्दश दशैव तु ॥२३॥ निष्कामः संभुवं चैव तथा दद्यात्पुरोधसे ॥ अभयाया मणिः कार्यो वरुणस्य भृगूत्तम ॥२४॥ शतकाण्डोऽमृतायाश्च सौम्यायाः शङ्खजो मणिः॥ वैष्णव्यास्त्रिवृतः प्रोक्तः स्नातो रौद्र्यास्तथा मणिः ॥ २५ ॥ ब्रह्मरक्षस्तथा ब्रह्म्या मैत्र्याः स्यात्कनको मणिः ॥ वायव्याश्चाङ्गिरः प्रोक्तो वायव्यः

शङ्खजो भवेत् ॥ २६ ॥ औदुम्बरश्च कौबेर्यां भार्गव्यायाः शतावरीम् ॥ प्राजापत्या बिल्वमणिस्त्वाष्ट्र्याः संस्कृतको मणिः ॥ २७ ॥ दाक्षायणश्च कौमार्य्यां आग्नेय्याश्च तदेव तु ॥ मातङ्गिन्या जिगितजं गान्धर्व्यां अजशृङ्गजम् ॥ २८ ॥ नैर्ऋत्यामायसं चैव आङ्गिरस्यास्तथाञ्जनम् ॥ शतकाण्डश्च याम्यायाः पार्थिव्या अपि पार्थिवम् ॥ २९ ॥ अद्भुतस्य बलं ज्ञात्वा कृच्छ्रं कुर्यात्पुरोहितः ॥ प्रागेव कुर्याच्छमनमादावेवाद्भुतस्य तु ॥ ३० ॥ कृतकृच्छ्रस्तु कुर्वीत ततः शान्तिमुपोषितः ॥ अरण्यां पातयेद्वह्निं सर्वास्वेतासु शान्तिषु ॥ ३१ ॥ उपवासदिनस्यान्ते वह्निमुत्पाद्य यत्नतः ॥ उत्पन्नमन्नं विभजेत्क्रव्यादं सौम्यमेव च ॥ ३२ ॥ कृत्वा कपाले क्रव्यादं ध्रुवेण नैर्ऋतीं दिशम् ॥ शान्त्यागारे स्थापयेच्च शान्त्यर्थे सौम्यमेव वा ॥ ३३ ॥ कृष्णोष्णीषः कृष्णवासाः कृष्णमाल्यानुलेपनः ॥ पुरोहितः प्रदेशं तु गत्वा वै नैर्ऋतीं यजेत् ॥ ३४ ॥ मृन्मयं जीर्णशीर्षं तु गन्धमाल्यानुसम्पदा ॥ कृष्णवस्त्रैस्तु संच्छाद्य ततस्तूपहरेद्बलिम् ॥ ३५ ॥ वाद्यघोषेण महता तथा कोलाहलैः शुभैः ॥ ततोऽग्नौ जुहुयात्सम्यङ्मेदःप्रभृति वै द्विज ॥ ३६ ॥ ये पिशाचाश्चतुर्भिस्तु इषीका शर्करी ततः ॥ केवले जुहुयाद्वह्नौ करशुक्त्या अवामया ॥ ३७॥ फलीकरणमग्नौ च हुत्वा भुक्त्वा च पावकम् ॥ अपश्यन्स्वगृहं यायात्स्नात्वा श्वेताम्बरस्ततः ॥ ॥ ३८ ॥ अहोमुचं शान्तिकं च जप्त्वा तिष्ठेत्सुयन्त्रितः ॥ रात्रौ त्रिभागशेषायां शान्तिकर्म समारभेत् ॥ ३९ ॥ शान्तिकल्पविधानज्ञः सदस्यैः सहितस्ततः ॥ एकः कर्मणि युक्तः स्यादेको मन्त्रस्य निश्चये ॥४०॥ एष शान्तिविधिः प्रोक्तः समासात्सर्वशान्तिषु ॥ विस्तरे विस्तरः प्रोक्तः शान्तिकर्म ह्यथर्वणः ॥४१॥धनेन पूज्योऽथ पुरोहितः स्यात्तथोपदेष्टा गुरुरप्रमत्तः ॥ सांवत्सरो यस्तु ततः सदस्याः पूज्यास्ततो विप्रवराश्च सर्वे॥४२॥इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० सं० रामं प्रति पुष्करोपाख्याने शान्तिकर्मवर्णनन्नाम द्वात्रिंशदुत्तरशततमोऽध्यायः ॥ १३२ ॥ ॥ राम उवाच ॥ काका शान्तिर्भवेत्का वा कस्मिन्कस्मिंस्तथाद्भुते ॥ एतन्मे संशयं छिन्धि देवारिबलसूदन ॥१॥ पुष्कर उवाच ॥ सर्वोत्पातप्रशमनी ह्यमृता चाभया स्मृता ॥ सौम्या चैव महाशांतिः सर्वकर्मफलप्रदा ॥ २ ॥ विशेषेण तु भौमेषु शान्तिः कार्यामृता भवेत् ॥ अभया चान्तरिक्षेषु सौम्या दिव्येषु भार्गव ॥ ३ ॥ विजिगीषुः परान्राजा भूमिकामश्च योजयेत् ॥ आरोग्यधनकामश्च सौम्यां तां कारयेत्सदा ॥ ४ ॥ विजिगीषुः परानेवमभियुक्तस्तथा परैः ॥ तथाभिचारशङ्कायां शत्रूणामपि शासने ॥ ५ ॥ भये महति च प्राप्ते त्वभया शान्तिरिष्यते ॥ राजयक्ष्माभिभूतस्य क्षतक्षीणस्य चाप्यथ ॥ ६ ॥ सौम्या प्रशस्यते शान्तिर्यज्ञकामस्य चैव हि ॥ भूमिकम्पे समुत्पन्ने प्राप्ते चान्नक्षये तथा ॥ ७ ॥ अति

वृष्ट्यामनावृष्ट्यां शलभाखुभयेषु च ॥ प्रपन्नेषु च चौरेषु वैष्णवीशान्तिरिष्यते ॥ ८ ॥ पशूनां मरणे प्राप्ते नराणामपि दारुणे ॥ भूतेषु दृश्यमानेषु रौद्री शान्तिस्तथेष्यते ॥ ९ ॥ भविष्यत्यभिषेके च परचक्रभयेषु च ॥ स्वराष्ट्रभेदेऽरिवधे शान्तिरैन्द्री प्रशस्यते ॥ १० ॥ त्र्यहातिरिक्ते पवने रूक्षे सर्वदिशुत्थिते ॥ वैकृते वातजे व्याधौ वायवी शान्तिरिष्यते ॥ ११ ॥ अनावृष्टिभये जाते जाते विकृतवर्षणे ॥ जलाशयविकारे च वारुणी शांतिरिष्यते ॥ १२ ॥ अभिशापभये प्राप्ते भार्गवी च तथा द्विज ॥ जाते प्रसववैकृत्यं प्राजापत्या महाभुज ॥ १३ ॥ उपस्कराणां वैकृत्यं त्वाष्ट्री भार्गवनन्दन ॥ बालानां शान्तिकामस्य कौमारी च तथा शुभा ॥ १४ ॥ आग्नेयीं कारयेच्छान्तिं सम्प्राप्ते वह्निवैकृते ॥ कार्या मारुद्गणी शान्तिर्दुर्बलेन महीक्षिता ॥ १५ ॥ आज्ञाभंगे तथा जाते जाते भृत्यादिसंक्षये ॥ अश्वानां शांतिकामस्य तद्विकारे तथोत्थिते ॥ १६ ॥ गजान्कामयमानस्य गान्धर्वी शांतिरिष्यते ॥ गजानां शांतिकामस्य तद्विकारे तथोत्थिते ॥ १७ ॥ गजान्कामयमानस्य शान्तिराङ्गिरसी भवेत् ॥ पिशाचाधिभये जाते शान्तिर्वै नैर्ऋती मता ॥ १८ ॥ अपमृत्युभये जाते दुःस्वप्ने च तथा द्विज ॥ काम्यां तु कारयेच्छांतिं प्राप्ते तु मरके तथा ॥ १९ ॥ धननाशे समुत्पन्ने कौबेरी शांतिरिष्यते ॥ वृक्षाणां च तथार्चानां वैकृते समुपस्थिते ॥ २० ॥ भूमिकामस्तथा शांतिं पार्थिवीं संप्रयोजयेत् ॥ प्रथमे दिनयामे च रात्रौ च मनुजोत्तम ॥ २१ ॥ हस्ते स्वातौ च चित्रायामादित्ये चाश्विने तथा ॥ अर्यम्णे सौम्यजातेषु वायव्या त्वद्भुतेषु च ॥ २२ ॥ द्वितीये दिनयामे च रात्रौ च भृगुनन्दन ॥ पुष्याग्नेयविशाखासु पित्र्यासु भरणीषु च ॥ २३ ॥ उत्पातेषु तथा भाग्ये त्वाग्नेयी शान्तिरिष्यते ॥ तृतीयदिनयामे च रात्रौ च भृगुनन्दन ॥ २४ ॥ रोहिण्यां वैष्णवे ब्राह्मे वासवे विश्वदैवते ॥ ज्येष्ठायां च तथा मैत्रे ये भवंत्यद्भुताः क्वचित् ॥ २५ ॥ ऐन्द्री तेषु प्रयोक्तव्या शान्तिर्भृगुकुलोद्भव ॥ चतुर्थे दिनयामे वा रात्रौ च भृगुनन्दन ॥ २६ ॥ सार्पे पौष्णे तथार्द्रायां त्वाहिर्बुध्न्ये च दारुणे ॥ मूले वरुणदैवत्ये ये भवन्त्यद्भुतास्तथा ॥ २७ ॥ वारुणी तेषु कर्तव्या महाशांतिर्महीक्षिता ॥ भिन्नमण्डलवेलासु ये भवन्त्यद्भुताः क्वचित् ॥ २८ ॥ तेषु शांतिद्वयं कार्यं निमित्ते सति नान्यथा ॥ निर्निमित्ता कृता शांतिर्निमित्तायोपजायते ॥२९॥ बाणप्रहारा न भवंति यद्वन्नृणां रणे सन्नहनैर्युतानाम् ॥ दैवोपघाता न भवंति तद्वद्धर्मात्मनां शांतिपरायणानाम् ॥३०॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं० रामं प्रति पुष्करोपाख्याने अद्भुतेषु शान्तिकर्मवर्णनो नाम त्रयस्त्रिंशदुत्तरशततमोऽध्यायः ॥ १३३॥

राम उवाच ॥ अद्भुतानां फलं देव शमनं च तथा वद ॥ त्वं हि वेत्सि विशालाक्ष ज्ञेयं सर्वमशेषतः॥१॥पुष्कर उवाच ॥ अत्र ते वर्णयिष्यामि यदु

वाच महातपाः॥अत्र यो वृद्धगर्गस्तु सर्वधर्मभृतां वरः॥२॥सरस्वत्यां सुखासीनं गर्गं स्रोतसि भार्गव ॥ पप्रच्छात्रिर्महातेजा गर्गं मुनिजनप्रियम्॥३॥ अत्रिरुवाच ॥ नश्यतां पूर्वरूपाणि जनानां कथयस्व मे ॥ नगराणां तथा राज्ञां त्वं हि सर्वविदुच्यसे ॥४॥ गर्ग उवाच॥ पुरुषापचाराान्नियतमपर ज्यन्ति देवताः ॥ ततोपरागादेवानामुपसर्गः प्रवर्तते ॥ ५ ॥ दिव्यान्तरिक्षभौमं तन्निविधं परिकीर्तितम् ॥ गृहर्क्ष वैकृतं दिव्यमांतारिक्षं निबोध मे ॥ ६ ॥ उल्कापातो दिशां दाहः परिवेषस्तथैव च ॥ गन्धर्वनगरं चैव वृष्टिस्तु विकृता च या ॥ ७ ॥ एवमादीनि लोकेस्मिन्नाभसानि विनि र्दिशेत् ॥ चरस्थिरभयं भूमौ भूकलामपि भूमिजम् ॥ ८ ॥ जलाशयानां वैकृत्यं भूमौ तदपि कीर्तितम् ॥ भौमं याम्यफलं ज्ञेयं चिरेण भुवि पश्यते ॥ ९ ॥ नाभसं मध्यफलदं मध्यकालफलप्रदम् ॥ दिव्यं तीव्रफलं ज्ञेयं शीघ्रकारि तथैव च ॥ १० ॥ अद्भुते तु समुत्पन्ने यदि वृष्टिः शिवा भवेत् ॥ सप्ताहाभ्यन्तरे ज्ञेयमद्भुतं निष्फलं हि तत् ॥ ११ ॥ अद्भुतस्य विपाकश्चेद्विना शान्तेर्न दृश्यते ॥ त्रिभिर्वर्षैस्तथा ज्ञेयं सुमहद्भयकार कम् ॥ १२ ॥ राज्ञः शरीरे लोके च पुरदारे पुरोहिते ॥ पाकमायाति पुत्रेषु तथा वै कोशवाहने ॥ १३ ॥ दत्तस्वभावजा ये च भवन्त्यद्भुतसं ज्ञकाः ॥ शुभावहास्ते विज्ञेयास्तांश्च मे गदतः शृणु ॥ १४ ॥ वज्राशनिमहीकम्पसन्ध्यानिर्घातनिस्वनाः ॥ परिवेषं रजो धूमं रक्तार्कोस्तमनो दये ॥ १५ ॥ द्रुमेभ्यो वरयश्चेह बहुपुष्पफलापगाः ॥ गोपक्षमधुवृद्धिश्च शुभानि मधुमाधवे ॥ १६ ॥ तारोल्कापातकलुषं कपिलार्कं तु मण्ड लम् ॥ अनग्निज्वलनास्फोटधूमरेष्वनिलावहम् ॥ १७ ॥ रक्तपद्मारुणं सान्ध्यं नभः क्षुब्धार्णवोपमम् ॥ सरितां चाम्बुसंशोषं दृष्ट्वा ग्रीष्मे शुभं वदेत् ॥ १८ ॥ शक्रायुधं परीवेशं विद्युशुष्कविरोहणम् ॥ कम्पोद्वेलनवैकृत्यं त्रसनं दारुणं क्षितेः ॥ १९ ॥ नद्योदपानसरसां वृद्ध्यश्वतरण प्लवाः ॥ शीर्णता चाह्नि गेहानां वर्षासु च भविष्यति॥२०॥ दिव्यस्त्रीभूतगन्धर्वविमानाद्भुतदर्शनम् ॥ ग्रहनक्षत्रता राणां दर्शनं च दिवाकरे॥२१॥ गीतवादित्रनिर्घोषो वनपर्वतसानुषु ॥ रसवृद्धीरसोत्पत्तिः शरत्काले शुभाः स्मृताः ॥ २२ ॥ शीतालुलत्तुषारत्वं नन्दनं गृहपक्षिणाम् ॥ रक्षोय क्षादिसत्त्वानां दर्शनं वागमानुषी ॥२३॥ दिशो धूमान्धकारश्च शरभोधनपर्वताः ॥ उच्चैः सूर्योदयास्तौ च हेमन्ते शोभनाः स्मृताः ॥२४॥ हिमपा तानिलोत्पातौ विरूपाद्भुतदर्शनम् ॥ कृष्णाञ्जनाभमाकाशं तारोल्कापातपिञ्जरम्॥२५॥ चित्रगर्भोद्भवं स्त्रीषु गोजाश्वमृगपक्षिषु ॥ पत्राङ्कुरलतानां च विकाराः शिशिरे शुभाः॥२६॥ऋतुस्वभावेन विनाद्भुतस्य जातस्य दृष्टस्य तु शीघ्रमेव॥ कृत्वा शमं शान्तिरनन्तरं तु कार्या यथोक्ता वसुधाधिपे न॥२७॥इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं०रामं प्रति पुष्करोपाख्याने नानाविधोत्पातकथनो नाम चतुस्त्रिंशदुत्तरशततमोऽध्यायः॥१३४॥

गर्ग उवाच ॥ देवतार्चाः प्रनृत्यन्ति वेपन्ते प्रज्वलन्ति च ॥ आरटन्ति च रोदन्ति प्रस्विद्यन्ति हसन्ति च ॥१॥उत्तिष्ठन्ति निषीदन्ति प्रधावन्ति वसन्ति च ॥ भुञ्जते विक्षिपन्ते वा गात्रप्रहरणाध्वजान् ॥२॥ अवाङ्मुखावतिष्ठन्ति स्थानात्स्थानं भ्रमन्ति च ॥ वमन्त्यग्निं तथा धूमं स्नेहरक्ते तथा वसाम्॥३॥एवमादीनि दृश्यन्ते विकारा सहसोत्थिताः॥लिङ्गायतनचित्रेषु तत्र वासं न रोचयेत्॥४॥राज्ञो वा व्यसनं तत्र सर्वादेशो विनश्यति॥ देवयात्रां सचोत्पातां दृष्ट्वा देशभयं वदेत् ॥ ५ ॥ पितामहर्षिधर्मेषु यन्निमित्तं द्विजेषु तत् ॥ गुरुशुक्राग्निजातानि यानि तानि पुरोहिते ॥६॥ पशूनां रुद्रजं ज्ञेयं नृपाणां लोकपालजम्॥ ज्ञेयं सेनापतीनां तु यत्स्यात्स्कन्दविनायकम् ॥७॥ लोकानां विष्णुवाय्विन्द्रविश्वकर्मसमुद्भवम् ॥ विनायको द्भवं ज्ञेयं गणानां ये तु नायकाः ॥ ८ ॥ देवप्रेष्यनृपप्रेष्यदेव स्त्रीषु नृपस्त्रियः ॥ वास्तुदेवेषु विज्ञेयं गृहिणामेव नान्यथा ॥ ९ ॥ देवतार्चाविकारेषु श्रुतिवेत्ता पुरोहितः ॥ देवतार्चां ततो गत्वा स्नातामाच्छाद्य भूषयेत् ॥ १० ॥ पूजयेच्च महाभाग गन्धमाल्यान्नसम्पदा ॥ मधुपर्केण विधि वदुपतिष्ठेदनन्तरम् ॥ ११ ॥ तल्लिङ्गेन च मन्त्रेण स्थालीपाकं यथाविधि ॥ पुरोधा जुहुयाद्वह्नौ सप्तरात्रमतन्द्रितः ॥ १२ ॥ विप्राश्च पूज्या मधुरा न्नपानैः सदक्षिणैः सप्तदिनं द्विजेन्द्र॥प्राप्तेऽष्टमेऽह्नि क्षितिगोप्रदानैः सकाञ्चनैः शांतिमुपैति पापम् ॥१३॥इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे रामं प्रति पुष्करोपाख्याने अर्चाविकारोपशमनवर्णनो नाम पञ्चत्रिंशदुत्तरशततमोऽध्यायः॥१३५॥गर्ग उवाच॥अनग्निर्दीप्यते यत्र राष्ट्रे भृशसमन्वितः ॥ न दीप्यते चेन्धनं वा सराष्ट्रः पीडयते नृपः ॥१॥प्रजलादम्बुनाशं च तथार्द्रं वाति किञ्चन ॥ प्रसादस्तोरणं द्वारं नृपवे श्म सुरालयम् ॥२ ॥ एतानि यत्र दह्यन्ते तत्र राजभयं भवेत् ॥ विद्युता वा प्रदह्यन्ते तथापि नृपतेर्भयम् ॥३॥ अनैश्यानि तमांसि स्युर्दिश ॥सुर जांसि च ॥ धूमश्चानग्निजो यत्र तत्र विद्यान्महद्भयम् ॥ ४ रात्रावनभ्रे गगने भयं स्यादृक्षवर्जिते ॥ दिवा सतारे गगने तथैव भयमादिशेत् ॥ ५ ॥ ग्रहनक्षत्रवैकृत्ये ताराविकृतदर्शने ॥ पुरवाहनयानेषु चतुष्पान्मृगपक्षिषु ॥ ६ ॥ आयुधेषु च दीप्तेषु धूमायत्सु तथैव च ॥ निर्यत्सु कोशाश्च तथा संग्रामस्तुमुलो भवेत् ॥ ७ ॥ विनाग्निं विस्फुलिङ्गाश्च दृश्यन्ते यत्र कर्हिचित् ॥ स्वभावाच्चापि पूर्यन्ते धनूंषि विकृतानि च ॥ ८ ॥ विकाराश्चायुधानां स्युस्तत्र संग्राममादिशेत् ॥ त्रिरात्रोऽपोषितस्तत्र पुरोधाः सुसमाहितः ॥ ९ ॥ समिद्भिः क्षीरवृक्षाणां सर्षपैश्च घृतेन च ॥ अग्निलिङ्गैश्च जुहुयाद्वह्निं श्वेताम्बरः शुचिः ॥ १० ॥ दद्यात्सुवर्णं च तथा द्विजेभ्यो गाश्चैव वस्त्राणि तथा भुवं च ॥ एवं कृते पापमुपैति नाशं यद्वह्निवैकृत्यभवं द्विजेन्द्र ॥ ११ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे रामं प्रति पुष्करोपाख्याने

औत्पातिकाग्निवर्णनो नाम षट्त्रिंशदुत्तरशततमोऽध्यायः ॥ १३६ ॥ गर्ग उवाच ॥ पुरेषु येषु दृश्यन्ते पादपा दैवचोदिताः ॥ रुदन्तो वा हसन्तो वा स्रुवन्तो वा बहूनसान् ॥ १ ॥ पुरोगवा विना वासं शाखां मुञ्चन्त्यसंश्रमात् ॥ फलपुष्पं तथा बाला दर्शयन्ति त्रिहायनाः ॥ २ ॥ सर्वावस्थां दर्शयन्ति फलपुष्पमथाभवम् ॥ क्षीरं स्नेहं सुरां रक्तं मधु तोयं स्रवन्ति च ॥ ३ ॥ शुष्यन्त्यरोगाः सहसा शुष्का रोहन्ति वा पुनः ॥ उत्तिष्ठन्तीह पतिताः पतन्ति च तथोत्थिताः ॥४॥ तत्र वक्ष्यामि ते ब्रह्मन्विपाके फलमेव च ॥ रोदने व्याधिमाख्याति हसने देशविप्लवम् ॥ ५॥ शाखाप्रपतने कुर्यात्संग्रामे योऽधपातनम् ॥ बालानां मरणे कुर्याद्बालानां फलपुष्पता ॥ ६ ॥ स्वराष्ट्रभेदं कुरुते फलपुष्पसनातनम् ॥ क्षयं सर्वत्रगे क्षीरे स्नेहे दुर्भिक्षलक्षणम् ॥ ७ ॥ वाहनापचयं मध्ये रक्ते संग्राममादिशेत् ॥ मधुस्रावे भवे द्व्याधिर्जलस्रावेण वर्षति ॥ ८ ॥ अरोगशोषणाज्ज्ञेयं ब्रह्मन्दुर्भिक्षलक्षणम् ॥ शुष्केषु संप्ररोहत्सु वीर्यमन्नं च हीयते ॥ ९ ॥ उत्थाने पतितानां च भयं भेदकरं भवेत् ॥ स्थानात्स्थानात्तुरंगाणां देशभङ्गं तथादिशेत्॥१०॥ जल्पत्स्वपि च वृक्षेषु रुदत्स्वपि धनक्षयम् ॥ एतत्पूजितवृक्षेषु सर्वं राज्ञो विपच्यते॥११॥पुष्पे फले वा विकृते राज्ञो मृत्युं तदादिशेत् ॥ अन्येषु चैवं युक्तेषु वृक्षोत्पातेष्वतन्द्रितः ॥१२॥आच्छादयित्वा तं वृक्षं गन्धमाल्यै र्विभूषयेत् ॥ वृक्षोपरि तथा छत्रं कुर्यात्तापप्रशान्तये ॥ १३ ॥ शिवमभ्यर्चयेद्देवं पशुं चास्मै निवेदयेत् ॥ मूलेभ्य इति षण्माषान्हुत्वा रुद्रीं जपे त्तथा ॥ १४ ॥ मध्वाज्ययुक्तेन तु पायसेन संपूज्य विप्रांश्च भुवं च दद्यात् ॥ गीतेन नृत्येन तथार्चयेत देवं भवं पापविनाशहेतोः ॥ १५ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं०रामं प्रति पुष्करोपाख्याने औत्पातिके वृक्षवैकृत्यवर्णनो नाम सप्तत्रिंशदुत्तरशततमोऽध्यायः॥१३७॥ ॥ गर्ग उवाच ॥ अतिवृष्टिरनावृष्टिर्दुर्भिक्षायोभयं मतम् ॥ अनृते भदिने रिक्ता वृष्टिर्ज्ञेया भयावहा ॥ १ ॥ अनभ्रे विकृता चैव विज्ञेया राजमृत्यवे ॥ शीतोष्णताविपर्यासे जन्तूनां रिपुजं भयम् ॥ २ ॥ शोणितं वर्षते यत्र तत्र शस्त्रभयं भवेत् ॥ अङ्गारपांसुवर्षेण नगरं तद्विनश्यति ॥ ३ ॥ मज्जास्थिस्नेहमांसानां जनमारभयं भवेत् ॥ फलपुष्पे तथा धान्यं हिरण्यादि भयाय तु ॥ ४ ॥ पांसुजन्तूपलानां तु वर्षणे रोगजं भयम् ॥ छिद्राणां तु प्रवर्षे च सस्यानामीतिवर्धनम् ॥ ५ ॥ विरजस्के रवौ व्यभ्रे यदा छाया न दृश्यते ॥ दृश्यते तु प्रतीपा वा तत्र देश भयं भवेत् ॥ ६ ॥ निरभ्रे चाथ रात्रौ वा श्वेतं याम्योत्तरेण तु ॥ इन्द्रायुधं तदा दृष्ट्वा उल्कापातांस्तथैव च ॥ ७ ॥ दिग्दाहपरिवेषौ वा गन्धर्वनगरं तथा ॥ परचक्रभयं ब्रूयाद्देशोपद्रवमेव वा ॥ ८ ॥ सूर्येन्दुपर्जन्यसमीरणानां यागस्तु कार्यो विधिवद्द्विजेन्द्र ॥ धान्यान्नगोकाञ्चनदक्षिणाश्च देया

द्विजानां भयनाशहेतोः ॥ ९ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० सं० रामं प्रति पुष्करोपाख्याने औत्पातिकेषु वृष्टिवैकृत्यवर्णनो नामाष्टत्रिंशदुत्तरशततमोऽध्यायः ॥ १३८ ॥ गर्ग उवाच ॥ नगरादपसर्पन्ति समीपमुपयान्ति वा ॥ अशोष्या अपि शुष्यन्ति सम्रीपं प्रव हन्ति वा ॥ १ ॥ नद्यो ह्रदप्रस्रवणा विसराश्च भवन्ति चेत् ॥ विवर्णं कलुषं तप्तं फेनवक्त्रं तु संकुलम् ॥ २ ॥ क्षीरं स्नेहं सुरां रक्तं वहन्ते वा कुलोदकाः ॥ षण्मासाभ्यन्तरं तत्र परचक्रभयं भवेत् ॥ ३ ॥ जलाशया नदन्ते वा प्रजल्पन्ति क्वथन्ति वा ॥ विमुञ्चतेऽथ वा ब्रह्मज्वालान्धूमर जांसि च ॥ ४ ॥ अखाते वा जलोत्पत्तिः ससत्त्वा वा जलाशयाः ॥ संगीतशब्दा दृश्यन्ते जनमारभयं वदेत् ॥ ५ ॥ जलाशयानां वैकृत्ये संयतस्तु जलाशये ॥ स्थालीपाकेन पशुना वरुणं पूजयेद्द्विज ॥ ६ ॥ दिव्यमम्भः पयः सर्पिर्मधु चात्रावसेचनम् ॥ जप्तव्या वारुणा मन्त्रा स्तैश्च होमो जले भवेत् ॥ ७ ॥ मध्वाज्ययुक्तं परमान्नमत्र देयं द्विजानां द्विज भोजनार्थे ॥ गावश्च देया द्विज वस्त्रयुक्तास्तथोदकुम्भाः सकलाङ्गशान्त्यै ॥ ८ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे रामं प्रति पुष्करोपाख्याने जलवैकृ त्यवर्णनो नामैकोनचत्वारिंशदुत्तरशततमोऽध्यायः ॥ १३९ ॥ ॥ छ ॥ गर्ग उवाच ॥ ॥ कालप्रसवना नार्यः कालातीताः प्रजास्तथा ॥ विकृतप्रसवाश्चैव युग्मप्रसविकास्तथा ॥ १ ॥ अमानुषा अरुण्डाश्च सञ्जातव्यसनास्तथा ॥ हीनाङ्गा अधिकाङ्गाश्च जायन्ते यदि वा स्त्रियः ॥ ॥ २ ॥ पशवः पक्षिणश्चैव तथा चैव सरीसृपाः ॥ विनाशं तस्य देशस्य कुलस्यापि विनिर्दिशेत् ॥ ३ ॥ विवासयेत्तान्नृपतिः स्वराष्ट्रात्स्त्रियं च पूज्याश्च ततो द्विजेन्द्राः ॥ किमिच्छकैर्ब्राह्मणतर्पणं च कार्यं ततः शान्तिमुपैति पापम् ॥ ४ ॥ इतिश्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्र संवादे रामं प्रति पुष्करोपाख्याने स्त्रीप्रसववैकृत्यवर्णनो नाम चत्वारिंशदुत्तरशततमोऽध्यायः ॥१४०॥ गर्ग उवाच ॥ वडवा हस्तिनी गौर्वा यदि युग्मं प्रसूयते ॥ विजातं विकृतं वापि षड्भिर्मासैर्म्रियेत वै ॥ १ ॥ वियोनिषु च गच्छन्तो मैथुनं देशनाशनाः ॥ अन्यत्र वेसरोत्पत्तेर्नृणां चाजा तिमैथुनम् ॥ २ ॥ सर्पमूषकमार्जारमत्स्यश्वानो विवर्जिताः ॥ ज्ञेया दुर्भिक्ष्यकर्तारः स्वजातिपिशिताशिनः ॥ ३ ॥ अकालजं मदं घोरं चतुष्पान्मृगपक्षिणाम् ॥ अन्यजातिवदेतच्च धैन्वं श्वानं विशेषतः ॥ ४ ॥ अमानुषा मानुषवज्जल्पन्ति प्राणिनो यदि ॥ विकृता वा प्रसूय न्ति परचक्रागमं वदेत् ॥ ५ ॥ त्यागो विवासनं दानं तेषां कार्यं विजानता ॥ तर्पयेद्ब्राह्मणांश्चात्र जपहोमांश्च कारयेत् ॥ ६ ॥ मृदंगवाद्यैः पटहैः सगीतैः पूजा च कार्या त्रिदिवौकसां वै ॥ धातुस्तथेज्या विधिना च कार्या देयं तथान्नं बहुशो द्विजेभ्यः ॥ ७ ॥ इति

श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे रामं प्रति पुष्करोपाख्याने वैकृतोपशमनवर्णनो नामैकचत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४१ ॥ गर्ग उवाच ॥ ॥ यान्ति यानान्ययुक्तानि युक्तानि न हि यान्ति चेत् ॥ चोद्यमानानि तस्य स्यान्महद्दुःखमुपस्थितम् ॥ १॥ वाद्यमाना न वाद्यन्ते वाद्यन्ते चाप्यनाहताः ॥ अचलाश्च चलन्त्येव न चलन्ति चलास्तथा ॥ २ ॥ आकाशे तूर्यनादाश्च गीतगन्धर्वनिस्वनाः ॥ काष्ठं दार्वीविकारादि कुठारं कुरुते यदि ॥ ३ ॥ गवां लांगूलसंगश्चेत्स्त्रियं तु यदि पातयेत् ॥ उपरागा दिव्यकृता घोरं शस्त्रभयं वदेत् ॥ ४॥ वायोस्तु पूजा द्विज सक्तुभिश्च कृत्वा तदुक्तांस्तु जपेच्च मन्त्रान् ॥ दद्यात्प्रभूतं परमान्नमत्र प्रदक्षिणान्तेन शमोस्य भूयात् ॥५॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० वज्रसंवादे रामं प्रति पुष्करोपाख्याने उपस्करवैकृतवर्णनो नाम द्विचत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४२ ॥ गर्ग उवाच ॥ प्रविशन्ति यदा ग्राममरण्या मृगपक्षिणः ॥ अरण्यं यान्ति वा ग्राम्याः स्थलं यान्ति जलोद्भवाः ॥ १ ॥ जलं वा स्थलजा यान्ति घोरं वाशन्ति निर्भयाः ॥ राजद्वारे पुरद्वारे शिवाश्चाप्यशिवप्रदाः ॥ २ ॥ दिवा रात्रिश्चरा वापि रात्रौ वापि दिवाचराः ॥ ग्राम्यास्त्यजन्ति ग्रामं वा शून्यतां तस्य निर्दिशेत् ॥ ३ ॥ दीप्ता वाशन्ति सन्ध्यासु मण्डलानि च कुर्वते ॥ वाशन्ते विस्वरं यत्र तदाप्येतत्फलं वदेत् ॥ ४ ॥ प्रदोषे कुक्कुटो वाशेद्धेमन्ते वापि कोकिलः ॥ अर्कोदयेऽर्काभिमुखः श्वा वा नृपभयं भवेत् ॥ ५ ॥ गृहं कपोतः प्रविशेत्क्रव्यादो मूर्ध्नि लीयते ॥ मधु वा मक्षिका कुर्यान्मृत्युं गृहपतेर्वदेत् ॥ ६ ॥ प्राकारद्वारगेहेषु तोरणापणवीथिषु ॥ केतुच्छत्रायुधाद्येषु क्रव्यात्सन्निपतेद्यदि ॥ ७ ॥ जायते वाथ वल्मीको मधु वा दृश्यते यदि ॥ स देशो नाशमायाति राजा च म्रियतेऽथ वा ॥८॥ मूषकाञ्छलभान्दृष्ट्वा प्रभूतान्क्षुद्भयं भवेत् ॥ काष्ठोल्मुकास्थिशृङ्गाद्याः श्वानो मर्कटकैर्जिताः ॥ ९ ॥ श्मशानं निर्गता ग्रामाद्ग्रामश्रेष्ठविनाशनाः ॥ एकाण्डता तु काकानां यदि चैवाप्यनण्डता ॥ १० ॥ निम्नेषु च निवेशश्च देशनाशकरः स्मृतः ॥ अपसव्यं भ्रमन्तश्च मण्डले रणवेदिनः ॥ ११ ॥ दुर्भिक्षवेदिनो ज्ञेयाः काका धान्यमुषो यदि ॥ जनानभिभवन्तश्च निर्भया रणवेदिनः ॥ १२ ॥ काको मैथुनसक्तश्च श्वेतश्च यदि दृश्यते ॥ राजा वा म्रियते तत्र स वा देशो विनश्यति ॥ १३ ॥ उलूको वाशते यत्र विपतेद्वा तथा गृहे ॥ ज्ञेयो गृहपतेर्मृत्युर्धननाशस्तथैव च ॥ १४ ॥ मृगपक्षिविकारेषु कुर्याद्धोमान्सदक्षिणान् ॥ देवाः कपोत इति च जप्तव्याः पञ्चभिर्द्विजैः ॥ १५ ॥ गावश्च देया विधिवद्द्विजानां सकाञ्चना वस्त्रयुगोत्तरीयाः ॥ एवं कृते शान्तिमुपैति पापं मृगैर्द्विजैर्वा विनिवेदितं यत् ॥ १६ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं० रामं प्रति पुष्करोपाख्याने औत्पातिके मृगपक्षिवैकृतवर्णनो नाम त्रिचत्वारिंशदु

त्तरशततमोऽध्यायः ॥ १४३ ॥ गर्ग उवाच ॥ प्रासादतोरणाट्टालद्वारप्राकारवेश्मनाम् ॥ अनिमित्तं तु पतनं दृढानां राजमृत्यवे ॥ १ ॥ रजसा
वाथ धूमेन दिशो यत्र समाकुलाः ॥ आदित्यचन्द्रताराश्च विवर्णा भयवृद्धये ॥२॥ राक्षसा यत्र दृश्यन्ते ब्राह्मणाश्च विधर्मिणः ॥ ऋतवश्च विपर्य
स्ता अपूज्यः पूज्यते जनैः ॥ ३ ॥ नक्षत्राणि वियोगीनि तन्महद्भयलक्षणम् ॥ केतूदयोपरागौ च च्छिद्रता शशिसूर्ययोः ॥ ४ ॥ ग्रहर्क्षविकृति
र्यत्र तत्रापि भयमादिशेत् ॥ स्त्रियश्च कलहायन्ते बाला निघ्नन्ति बालकान्॥ ५ ॥ शीलाचारविहीनाश्च मद्यमांसानृतप्रियाः ॥ तथा पाषाणभूयि
ष्ठास्त्रयीमार्गच्युता द्विजाः ॥६॥ यत्र देशे विजायन्ते तत्र विद्यादुपद्रवम् ॥ उचितैर्नाभिपूज्यन्ते यूपान्नबलिभिः सदा ॥ ७॥ क्रियाणामुचितानां च
विच्छित्तिर्यत्र जायते ॥ अग्निर्यत्र न दीप्येत हूयमानासु शान्तिषु ॥ ८ ॥ पिपीलिकास्तु क्रव्यादो यान्ति चातुरतस्तथा ॥ पूर्णकुम्भाः स्रवन्ते
च हविर्वा विप्रलुप्यते ॥ ९॥ मङ्गल्याश्च गिरो यत्र न श्रूयन्ते समन्ततः ॥ क्षवथुर्धावती चाथ प्रहसन्ति रुदन्ति च॥१०॥न च देवेषु वर्तन्ते यथा
वद्ब्राह्मणेषु च ॥ मर्मदोषाणि चोच्यन्ते वाद्यन्ते विसुराणि च ॥ ११ ॥ गुरुमित्रद्रुहो यत्र शत्रुपूजारता जनाः ॥ ब्राह्मणान्सुहृदोऽमात्याञ्नो यत्राव
मन्यते॥१२॥ शान्तिमङ्गलहोमेषु नास्तिक्यं यत्र जायते ॥ राजा वा म्रियते तत्र स वा देशो विनश्यति॥१३॥राज्ञो विनाशे सम्प्राप्ते निमित्तानि
निबोध मे ॥ ब्राह्मणान्प्रथमं द्वेष्टि ब्राह्मणैश्च विरुध्यते ॥१४॥ ब्राह्मणैर्निन्द्यते चापि ब्राह्मणांश्च जिघांसति ॥ न तान्स्मरति कृत्येषु याचितश्चाभि
भूयते ॥ १५॥ रमते निर्दयश्चैषां प्रशंसां नाभिनन्दति ॥ अपूर्वं तु करं लोभात्तथा पातयते जने ॥ १६ ॥ एतेष्वभ्यर्च्ययेच्छक्रं सपत्नीकं द्विजो
त्तम ॥ भोज्यानि चैव कार्याणि सुराणां बलयस्तथा॥१७॥ गावश्च देया द्विजपुङ्गवेभ्यो भुवं तथा काञ्चनमम्बरञ्च॥ होमश्च कार्यः सुरपूजनं च एवं
कृते शान्तिमुपैति पापम् ॥१८॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे रामं प्रति पुष्करोपाख्याने उत्पातप्रशमनं नाम चतुश्च
त्वारिंशदुत्तरशततमोऽध्यायः॥१४४॥ राम उवाच ॥ किं नु कृत्यतमं राज्ञस्तन्ममाचक्ष्व पृच्छतः॥ राज्यतन्त्रं कथं राज्ञा पालनीयं विपश्चिता॥१॥
॥ पुष्कर उवाच ॥ सप्तांगस्य च राज्यस्य भावयुक्तेन भूभृता ॥ एतावदेव कर्तव्यं राज्ञा तन्त्रं भृगूत्तम ॥ २ ॥ साम दानं तथा दुर्गं कोशो दण्ड
स्तथैव च ॥ मित्रं जनपदश्चैव राज्यं सप्ताङ्गमुच्यते ॥ ३ ॥ सप्ताङ्गस्य च राज्यस्य विघ्नकर्तॄन्विवासयेत् ॥ अहितान्घातयेद्राजा क्षिप्रमेवाविचा
रयन् ॥ ४ ॥ सप्ताङ्गस्य च राज्यस्य वृद्धिः कार्या सुमण्डले ॥ मण्डलेषु च सर्वेषु कर्षणीया महीक्षिता ॥ ५ ॥ राम उवाच ॥ मण्डलानि समा
चक्ष्व विजिगीषोर्यथाविधि ॥ यान्याश्रित्य नृपैः कार्यं सन्धिविग्रहचिन्तनम् ॥ ६ ॥ पुष्कर उवाच ॥ आत्ममण्डलमेवात्र प्रथमं मण्डलं

भवेत् ॥ समन्तात्तस्य विज्ञेया रिपवो मण्डलस्य तु ॥ ७ ॥ अधिकृत्याऽभियोज्यं तु तत्रापि शृणु कल्पनम् ॥ अभियोज्यः स्मृतः शत्रुस्तत्रापि च प्रतीक्षिता ॥ ८ ॥ तत्परस्तु सुहृज्ज्ञेयो मित्रं मित्रारिपुस्तथा ॥ एतत्पुरस्तात्कथितं पश्चादपि निबोध मे ॥ ९ ॥ पार्ष्णिग्राहस्ततः पश्चात्त तस्त्वाक्रन्द उच्यते ॥ आसारस्तु ततोप्यन्यस्त्वाक्रन्दासार उच्यते ॥ १० ॥ जिगीषोः शत्रुयुक्तस्य वियुक्तस्य तथा द्विज ॥ निग्रहानुग्रहे शक्तो मध्यस्थः परिकीर्तितः ॥ ११ ॥ निग्रहानुग्रहे शक्तः सर्वेषामपि यो भवेत् ॥ उदासीनः स कथितो बलवान्पृथिवीपतिः ॥ १२ ॥ एतावदेव ते राम प्रोक्तं द्वादशराजकम् ॥ नात्रापि निश्चयः शक्यो वक्तुं मनुजपुङ्गव ॥ १३ ॥ नास्ति जात्या रिपुर्नाम मित्रं नाम न विद्यते ॥ सामर्थ्ययोगाज्जायन्ते मित्राणि रिपवस्तथा ॥ १४ ॥ त्रिविधा रिपवः प्रोक्ताः कुल्यानन्तर कृत्रिमाः ॥ पूर्वः पूर्वो गुरुस्तेषां दुश्चिकित्स्यतमो मतः ॥१५॥ अनन्तरोऽपि यः शत्रुः सोऽपि मे कृत्रिमो मतः॥ पार्ष्णिग्राहो भवेद्राजा शत्रोर्मित्रा भियोगिनः ॥ १६ ॥ पार्ष्णिग्राहमुपायैस्तु शमयेच्च तथा स्वकम् ॥ मित्रेण शत्रोरुच्छेदं न शंसन्ति पुरातनाः ॥ १७ ॥ मित्रं हि शत्रुतामेति सामन्तत्वादनन्तरम् ॥ शत्रुं जिगीषुरुच्छिन्द्यात्स्वयं शक्नोति चेद्यदि ॥ १८ ॥ प्रतापवृद्धौ तेनास्य न मित्राज्जायते भयम् ॥ नान्यथा पृथिवीं जेतुं शक्या राम जिगीषुणा ॥ १९ ॥ प्रतापवृद्धिः कर्तव्या तस्माद्राज्ञा यथा तथा ॥ तथास्य नोद्विजेल्लोको विश्वास्यश्च यथा भवेत् ॥ २० ॥ जिगीषुर्धर्मविजयी तथा लोकं वशं नयेत् ॥ यः स्यादधर्मविजयी तस्मादुद्विजते जनः ॥ प्राप्यापि वसुधां कृत्स्नां न चिरं श्रियमश्नुते ॥ ॥ २१॥ धर्मेण यज्ञो भवतीह वृद्धिर्धर्मेण वृद्धिश्च तथापरत्र ॥ धर्मेण लब्धा वसुधा जितारिर्भुक्त्वा चिरं नाकमनुप्रयाति ॥२२॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे रामं प्रति पुष्करोपाख्याने राज्यमण्डलवर्णनं नाम पञ्चचत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४५ ॥

॥ राम उवाच ॥ ॥ सामभेदौ तथा प्रोक्तौ दानदण्डौ तथैव च ॥ दण्डः सुदेशे कथितः परदेशे ब्रवीहि मे ॥ १ ॥ पुष्कर उवाच ॥ द्विविधः कथितो दण्डः परदेशे पुरातनैः ॥ प्रकाशश्चाप्रकाशश्च तं निबोध द्विजोत्तम ॥२॥ लुण्ठनं ग्रामघातश्च सस्यघातस्तथैव च ॥ चतुरङ्गेण दण्डेन परेषां च तथा वधः ॥ ३॥ प्रकाशः कथितो दण्डः प्रत्यक्षं वह्निदीपनम् ॥ अप्रकाशो विषं वह्निर्गूढैश्च पुरुषैर्वधः ॥ ४ ॥ दूषणं यवसादीनामुदकानां च दूषणम् ॥ रसक्रियाश्च विविधाः सुभगा भेदनादिकम् ॥ ५ ॥ एवमादीनि कार्याणि परचक्रे महीक्षिता ॥ स्वराष्ट्रे च द्विजश्रेष्ठ दूषणं बलिनामपि ॥ ६ ॥ चत्वार एते कथिताभ्युपायाः प्राधानभूता भुवि पार्थिवानाम् ॥ अतः परं ते कथयामि राम शेषास्त्रयस्ते न

मयेरिता ये ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० सं० दण्डप्रणयनवर्णनो नाम षट्चत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४६ ॥
पुष्कर उवाच ॥ अभिमन्येत नृपतिरनेन मम विग्रहे ॥ अनर्थायानुबन्धः स्यात्सन्धिना च तथा भवेत् ॥ १ ॥ साम लज्जास्पदं चात्र दानं
चात्र क्षयार्थकम् ॥ भेदे दण्डेऽनुबन्धः स्यात्तदा पक्षं समाश्रयेत् ॥ २ ॥ अवज्ञोपहतस्तत्र राज्ञा कार्यो रिपुर्भवेत् ॥ उपेक्षैव धर्मज्ञ श्रेयसे तत्र
सा स्मृता ॥ ३ ॥ उपेक्षया यत्र तु शक्यमर्थं क्षयव्यवाया समता न तत्र ॥ कार्यं भवेद्ब्राह्मणविग्रहेण लज्जास्पदेनाप्यथ सन्धिना वा ॥ ४ ॥
इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे रामं प्रतिपुष्करोपाख्याने उपेक्षावर्णनो नाम सप्तचत्वारिंशदुत्तरशततमोऽध्यायः ॥१४७॥
पुष्कर उवाच ॥ उत्पातैरनृतैः कार्यं परस्योद्वेजनं नृपैः ॥ अरातिशिबिरस्यात्र वसतिर्यस्य पक्षिणः ॥ १ ॥ स्थूलस्य तस्य पुच्छस्थां कृत्वोल्कां
विपुलां द्विज ॥ विसृज्यैनं ततस्तीरमुल्कापातं प्रदर्शयेत् ॥ २ ॥ अनेनैवात्र सारेण बुद्ध्या निश्चित्य यत्नतः ॥ उत्पातानि तथान्यानि
दर्शनीयानि पार्थिवैः ॥ ३ ॥ उद्वेजनं तथा कुर्यात्कुहकैर्विविधैर्द्विषाम् ॥ संवत्सरानहार्षश्च नाशं ब्रूयुः परस्य च ॥ ४ ॥ जिगीषुः पृथिवी राज्ये
तेन चोद्वेजयेत्परान् ॥ देवतानां प्रसादानि कीर्तनीयानि तस्य तु ॥ ५ ॥ स स्वप्नलाभांश्च तथा जिगीषुः प्रतिकीर्तयेत् ॥
दुःस्वप्नलाभं च तथा परेषामिति निश्चयः ॥ ६ ॥ आगतं नो मित्र बलं प्रहरध्वमभीतवत् ॥ एवं ब्रूयाद्रणे प्राप्ते मया भग्नाः परे इति ॥ ७ ॥
क्ष्वेडाः किलकिलाशब्दं मम शत्रुर्हतस्तथा ॥ देवाज्ञाबृंहितो राजा सन्नद्धः समरं प्रति ॥८॥ एवं प्रकारा द्विजवर्य मायाः कार्या नरेन्द्रैररिषु प्रहृष्टैः ॥
मायाहतः शत्रुरथ प्रसह्य शक्यः सुखं हन्तुमदीनसत्त्वः ॥ ९ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे रामं प्रति पुष्करोपाख्या
ने उपाधिवर्णनं नामाष्टचत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४८ ॥ पुष्कर उवाच ॥ चतुरङ्गं बलं राजा मायाजालेन दर्शयेत् ॥ सहायार्थमनु
प्राप्तान्दर्शयेत्त्रिदिवौकसः ॥ १ ॥ रक्तवृष्टिश्च संदर्श्या परेषां शिबिरं प्रति ॥ छिन्नानि रिपुशीर्षाणि प्रासादाग्रेषु दर्शयेत् ॥ २ ॥ आधित्सता
सन्धिमहीनसत्व कार्यं भवेद्राम महेन्द्रजालम् ॥ वक्ष्यामि तच्चोपनिषत्सु तुभ्यं योगानि चान्यानि जयावहानि ॥ ३ ॥ इति श्रीविष्णुधर्मोत्तरे
मार्कण्डेयवज्रसंवादे इन्द्रजालवर्णनो नामैकोनपञ्चाशदुत्तरशततमोऽध्यायः ॥ १४९ ॥ पुष्कर उवाच ॥ सन्धिश्च विग्रहश्चैव वैगुण्यं कथितं
बुधैः ॥ यदाश्रित्य तथैवान्यैः षाड्गुण्यं परिकीर्तितम् ॥१॥ सन्धिश्च विग्रहश्चैव यानमासनमेव च ॥ द्वैधीभावं संश्रयं च षाड्गुण्यं परिकीर्ति
तम् ॥ २ ॥ पणबन्धः स्मृतः सन्धिरपकारस्तु विग्रहः ॥ जिगीषोः शत्रुविषये यानं यात्रा विधीयते ॥ ३ ॥ विग्रहेऽपि स्वके देशे स्थितिरासन

मुच्यते ॥ बलार्धेन प्रमाणं तु द्वैधीभावं तदुच्यते ॥४॥ उदासीने मध्यमे वा संश्रयात्संश्रयः स्मृतः ॥ समेन सन्धिरन्वेष्यो हीनेन च बलीयसः ॥
॥ ५ ॥ हीनेन विग्रहः कार्यः स्वयं राज्ञा बलीयसा ॥ तत्रापि तस्य पार्ष्णिस्तु बलीयान्न समाश्रयेत् ॥ ६ ॥ आसीनः कर्मविच्छेदं शक्तः कर्तुं
रिपुर्यदा ॥अशुद्धपार्ष्णिर्बलवान्द्वैधीभावं समाश्रयेत् ॥ ७॥ बलिना निगृहीतस्तु यो मन्येद्येन पार्थिवः ॥ संश्रयस्तेन कर्तव्यो गुणानामधमो
गुणः ॥८॥ बहुक्षयव्ययायासं तेषां यानं प्रकीर्तितम् ॥ बहुलाभकरम्भः स्यात्तदा राम समाश्रयेत् ॥ ९ ॥ सर्वशक्तिविहीनस्तु तदा कुर्यात्तु संश्र
यम् ॥१०॥ एवं च बुद्ध्वा नृपतिर्गुणानां काले च देशे च तथा विभागे ॥ समाश्रयेद्भार्गववंशमुख्यं चैतावदुक्तं नृपतेस्तु कार्यम् ॥ ११ ॥
इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे रामं प्रति पुष्करोपाख्याने षाड्गुण्यवर्णनो नाम पञ्चाशदुत्तरशततमोऽध्यायः ॥ १५०॥
॥ राम उवाच ॥ ॥ अजस्रं कर्म मे ब्रूहि राज्ञां राजीवलोचन ॥ यच्च कार्यं नरेन्द्राणां तथा च प्रतिवत्सरम् ॥ १ ॥ ॥ पुष्कर उवाच ॥ ॥
द्विमुहूर्तावशेषायां रात्रौ निद्रां त्यजेन्नृपः ॥ वेणुवीणामृदङ्गानां पटहानां च निःस्वनैः ॥ २ ॥ बन्दिनां निःस्वनैश्चैव तथा मङ्गलवादिनाम् ॥
ततः पश्येन्महीपालो गूढांश्च पुरुषान्निशि ॥ ३ ॥ विज्ञायन्ते न ये लोके तदीया इति केनचित् ॥ आयव्ययस्य श्रवणं ततः कार्यं यथाविधि ॥
॥ ४ ॥ वेगोत्सर्गं ततः कृत्वा राजा स्नानगृहं व्रजेत्॥दत्ताभ्यङ्गः प्रदोषे तु कल्पमुत्सादितस्ततः ॥५॥ स्नानं कुर्यात्ततः पश्चाद्दन्तधावनपूर्वकम् ॥
सौषधैर्मन्त्रपूतैस्तु पानीयैर्विविधैः शुभैः ॥ ६ ॥ सन्ध्यामुपास्य प्रयतः कृतजप्यः समाहितः ॥ अग्न्यागारं प्रविश्याथ वह्नीन् पश्येत्पुरो
धसा ॥ ७ ॥ हुतान् सम्यक्ततः कुर्याद्वासुदेवस्य चार्चनम् ॥ दुःस्वप्नशमनं कर्म तत्र कुर्यात्पुरोहितः ॥८॥ स्वयं चौपसदे वह्नौ पवित्रां जुहुया
न्नृपः ॥ तर्पयेदुदकैर्देवान्पितॄनथ यथाविधि॥९॥दद्याद्द्विजातये धेनुं सवत्सां च सकाञ्चनाम्॥शक्त्या धनैः पूजयित्वा दत्ताशीः सततं द्विजैः॥१०॥
अनुलिप्तस्ततः स्रग्वी सुवासाश्चाप्यलंकृतः ॥ दर्पणे च मुखं पश्येत्ससुवर्णे च सर्पिषि ॥ ११ ॥ आज्यं प्रसन्नं सुरभि यदि स्याद्विजयो भवेत् ॥
दीयमाने च दुर्गन्धे पतिते च भयं भवेत्॥१२॥ विकृतं चेन्मुखं पश्येद्राजा मृत्युमवाप्नुयात ॥ सुप्रभं च यदा पश्येत्तदा तस्य शुभं भवेत् ॥१३॥
ततस्तु शृणुयाद्राजा सांवत्सरमुखोद्गतम् ॥ दिवसे तिथिनक्षत्रे सर्वाशुभविनाशनम् ॥१४॥ भिषजां च वचः कुर्यात्ततस्त्वारोग्यवर्धनम् ॥ मङ्गला ॥२८२॥
लम्भनं कृत्वा ततः पश्येद्गुरून्नृपः ॥१५॥ कृत्वाशीर्गुरुभिः पश्चाद्राजा गच्छेत्समन्ततः ॥ तत्रस्थान्ब्राह्मणान्पश्येदमात्यान्मन्त्रिणस्तथा ॥१६॥
प्रकृतीश्च महाभाग प्रतीहारनिबोधतः ॥ तत्रेतिहासश्रवणं कुर्यात्किञ्चिदतन्द्रितः ॥ १७ ॥ ततः कार्यार्थिनां कुर्याद्यथाधीः कार्यनिर्णयम् ॥१८॥

व्यवहारांस्ततः पश्येत्समो भूत्वारिमित्रयोः ॥ त्यक्त्वा सभां ततः कुर्यान्मन्त्रं तु सह मन्त्रिभिः ॥ १९ ॥ यत्रास्य कश्चित्तं मन्त्रं शृणुयान्न कथञ्चन॥ एकेन सह तं कुर्यान्न कुर्याद्बहुभिः सह ॥ २० ॥ न च मूर्खैर्न चानाप्तैस्तथा नाधार्मिकैर्नृपः ॥ मन्त्रं स्वधिष्ठितं कुर्याद्येनराष्ट्रं न धावति ॥२१॥ राज्ञां विनाशमूलस्तु कथितो मन्त्रविभ्रमः ॥ नाशहेतुर्भवेन्मन्त्रः कुप्रयुक्तस्त्वमन्त्रवत् ॥ २२ ॥ मंत्रे सुनिश्चिते सिद्धिः कथिता पृथिवीक्षिताम् ॥ क्रियमाणानि कर्माणि यस्य वेत्ति न कश्चन ॥ २३ ॥ कृतान्येव विजानाति स राजा पृथिवीपतिः ॥ पृथक् च मन्त्रिभिर्मन्त्रं कृतं वै संहितैः पुनः ॥ २४ ॥ विचार्यसात्मनः साधु पश्चात्तत्र समाश्रयेत् ॥ प्रज्ञाभिमानी नृपतिर्न मन्त्रिवचने रतः ॥ २५ ॥ क्षिप्रं विनाशमायाति तडागमिव काजलम् ॥ आकारगूहने राज्ञो मन्त्ररक्षा परा मता ॥ २६ ॥ आकारैरिङ्गितैः प्राज्ञा मन्त्रं जानन्ति पण्डिताः ॥ सांवत्सराणां वैद्यानां मन्त्रिणां वचने रतः॥२७॥ राजा विभूतिमाप्नोति चिरं यशसि तिष्ठति ॥ त एनं मृगयासक्तं धारयन्ति विपश्चितः॥२८॥ स्त्रीषु माने तथाक्षेषु वृथा ज्यायांश्च भार्गव ॥ करप्रणयने सक्तं हिंसायां च नराधिपम् ॥ २९ ॥ तथा परोक्षनिन्दायां बलवद्विग्रहेऽपि च ॥ अन्येषु चाप्यनर्थेषु प्रसक्तं वारयन्ति तम् ॥ ३० ॥ मन्त्रं कृत्वा ततः कुर्याद्व्यायामं पृथिवीपतिः ॥ रथे नागे तथैवाश्वे खड्गे धनुषि चाप्यथ ॥ ३१ ॥ अन्येषु चैव शस्त्रेषु नियुद्धेषु ततः परम् ॥ पश्चात्सुद्वर्तितः स्नातः पश्येद्विष्णुं सुपूजितम्॥३२॥हुतं च पावकं पश्येद्विप्रान्पश्येत्सुपूजितान्॥स्वामिनो दक्षिणाभिश्च पूजितान्भृगुनन्दन ॥ ३३॥ ततोऽनुलिप्तः सुरभिः स्रग्वी रुचिरभूषणः ॥ सुवासा भोजनं कुर्याद्गीतं च शृणुयात्तदा ॥३४॥ आप्तं परीक्षितं वह्नौ मृगपक्षीङ्गितैस्तथा॥ पूर्वं परीक्षितं चान्यैर्जांगुल्या चाभिमन्त्रितम्॥३५॥ विषघ्नांश्च मणीन्राजा धारयन्नौषधींस्तथा ॥ भुक्त्वा गृहीतताम्बूलः परिक्रम्य विशेषतः ॥ ३६॥ शयने वामपार्श्वेन ततः शास्त्राणि चिन्तयेत् ॥ कोष्ठागारायुधागारान्प्रति चाग्र्यं च वाहनम् ॥ ३७ ॥ योधांश्च दृष्ट्वा चान्वास्या ततः सन्ध्या च पश्चिमा ॥ कार्याणि चिन्तयित्वा च प्रेषयित्वा ततश्चरान् ॥ अन्तःपुरचरो भूत्वा लघु भुक्त्वा तथा हितम् ॥ ३८ ॥ सवेणुवीणापटहस्वनेन सेवेत निद्रां कृतपूर्वरक्षाम् ॥ एतद्यशस्यं हि नराधिपानामाजस्रिकं ते कथितं विधानम् ॥ ३९ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्र संवादे रामं प्रति पुष्करोपाख्याने आजस्रिको नामैकपञ्चाशदुत्तरशततमोऽध्यायः ॥ १५१ ॥ ॥ पुष्कर उवाच ॥ राजा तु जन्मनक्षत्रे प्रति मासं समाचरेत् ॥ जन्मनः क्षालनं कर्म यत्तत्पूर्वं मयेरितम् ॥ १ ॥ पुष्पस्नानं ततः कुर्यात्प्रतिमासं नराधिपः ॥ संक्रान्तौ पूजयेत्सूर्यं बाल मिन्दुं तथैव च ॥२ ॥ ग्रहं सम्पूजयेद्राजा निर्गतं रविमण्डलात् ॥ अगस्त्यस्योदये कार्या तथा पूजा नराधिपैः ॥ ३ ॥ पूजयेच्चतुरो मासान्प्रसुप्तं

मधुसूदनम् ॥ प्रोष्ठपादामले रक्षेत्पूजयेच्च शतक्रतुम् ॥४॥ नवम्यामाश्वयुच्छुक्के भद्रकालीं च पूजयेत् ॥ रवौ स्वातिमनुप्राप्ते कुर्यान्नीराजनं तथा ॥५॥
संवत्सरात्कोटिहोमं कुर्याच्च घृतकेवलम् ॥ राज्यसंवत्सरग्रन्थौ कुर्यात्तद्रुद्रपूजनम् ॥६॥ कर्माण्यथैतानि नराधिपस्य नित्यानि ते राम मयोदितानि ॥
एतानि कृत्वा विधिवन्नरेन्द्रश्चिरं समाग्रां वसुधां प्रशास्ति ॥७॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं०रामं प्रति पुष्करोपाख्याने सांवत्सरिक
वर्णनो नाम द्विपञ्चाशदुत्तरशततमोऽध्यायः ॥१५२॥ राम उवाच ॥ कथं हि चतुरो मासान्कार्यं केशवपूजनम् ॥ पार्थिवेन सुरश्रेष्ठ तन्ममाचक्ष्व
पृच्छतः ॥ १ ॥ पुष्कर उवाच ॥ उद्युक्तेन सदा भाव्यं राज्ञा भृगुकुलोद्वह ॥ आषाढशुक्लपक्षान्ते राजा स्थानमुपाश्रयेत् ॥ २ ॥ अधृष्यं परश
त्रूणां प्रभूतयवसेन्धनम् ॥ तोयोपेतं विपङ्कं च प्रावृट्कालहतं तथा ॥३॥ यत्रस्थश्च स्वविषयं सर्वं शक्नोति रक्षितुम् ॥ तत्रस्थश्चतुरो मासानजांश्च
पोषयेन्नृपः ॥ ४ ॥ स्नेहपानैर्बहुविधैः प्रतिपानैश्च भार्गव ॥ आषाढशुक्लपक्षान्ते दशम्यूर्द्ध्वं नराधिपः ॥ ५ ॥ उत्सवन्तु महत्कुर्याद्देवस्य चार्चने
रतः ॥ अर्चायां वा पटे वापि कृतं देवमथार्चयेत् ॥ ६ ॥ देवभोगसयं विष्णुं श्रीसहायमरिन्दमम् ॥ बलिभिर्विविधाभिस्तु पुष्पैर्धूपैः सुग
न्धिभिः ॥ ७ ॥ उत्सवं तु महत्कुर्यात्ततः पञ्चदिनं नृपः ॥ ततः प्रभृति नित्यं स्याद्वासुदेवस्य पूजनम् ॥८॥ सात्त्वतैर्भार्गवश्रेष्ठ सांवत्सरपुरोहितैः ॥
गीतनृत्यैस्तथा देवं विशेषेणात्र पूजयेत् ॥९॥ अस्मिन्नेव तथा काले कोटिहोमं समाचरेत् ॥ कार्तिक्यां तत्समाप्तिस्तु यथा भवति भार्गव ॥१०॥
शुक्लपक्षत्रिभागेन्त्ये कार्तिकस्य ततो नृपः ॥ उत्सवं सुमहत्कुर्याद्देवदेवार्चनं तथा ॥ ११ ॥ वैकुण्ठं पूजयेद्देवमर्चायामथवा पटे ॥ महादानं ततो
दद्यात्प्रेक्ष्यां दद्यात्तथैव च ॥ १२ ॥ मल्लानामथ झल्लानां नटानां नर्तकैः सह ॥ यात्राविधानं सकलं तथा कुर्यान्महीपतिः ॥ १३ ॥ एतत्कृत्वा
ततो यात्रा देया भवति पार्थिवैः ॥ शरत्काले गतातंकैः पुष्टाश्वरथकुञ्जरैः ॥ १४ ॥ एवं च राज्ञा चतुरो हि मासान्पूज्यो भवेद्देववरो हि हर्ता ॥
सन्त्यक्तचिह्नं मधुसूदनं च संपूज्य यात्राभिमतप्रदा स्यात् ॥ १५ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे रामं प्रति पुष्करो
पाख्याने चातुर्मास्यविधिकथनो नाम त्रिपञ्चाशदुत्तरशततमोऽध्यायः ॥ १५३ ॥ ॥ राम उवाच ॥ शक्रसम्पूजनं कार्यं कथं राज्ञा सुरोत्तम ॥
सम्यग्भाद्रपदे मासि तन्ममाचक्ष्व पृच्छतः ॥ १ ॥ पुष्कर उवाच ॥ असुरैस्तु सुरा भग्नाः पुरा युद्धे भृगूत्तम ॥ ब्रह्माणं शरणं
जग्मुः सर्वभूतहिते रतम् ॥ २ ॥ ते तु मूढाः सुराः सर्वे निर्जिता दानवैर्वधम् ॥ तानुवाच ततो ब्रह्मा क्षीरोदे मधुसूदनम् ॥ ३ ॥
गच्छध्वं सहिताः सर्वे स वः श्रेयः करिष्यति ॥ एवमुक्ता सुराः सर्वे क्षीरोदे केशवं ययुः ॥ ४ ॥ ददृशुश्च तदा देवं वासुदेवं जगद्गुरुम् ॥

अमृताध्मातमेघाभं शङ्खचक्रगदाधरम् ॥ ५ ॥ तुष्टुवुश्च महाभागं त्रिदशास्तं पुनःपुनः ॥ सर्वेषामीश्वरं देवं भुवनस्यैककारणम् ॥ ६ ॥ देवा ऊचुः ॥ नमस्ते पुण्डरीकाक्ष शरणागतवत्सल ॥ देवारिबलदर्पघ्न त्रिदशेन्द्रसुखप्रद ॥७॥ चामीकराभवसन तार्क्ष्यप्रवरकेतन ॥ शेषपर्यङ्कशयन लक्ष्मीहृदयवल्लभ ॥ ८ ॥ सुरासुरशिरोरत्ननिघृष्टचरणाम्बुज ॥ उन्निद्रचारुकमलविराजितकराम्बुज ॥ ९ ॥ स चैकदेव भग्नानामस्माकमसुरैर्भवान् ॥ गतिस्तेन स्म सम्प्राप्ता दैत्यभग्नास्त्वदन्तिकम् ॥ १० ॥ प्रसीद देवदेवेश जहि तानसुराधमान् ॥ येऽस्माकं देवदेवेश पीडयन्ति सदैव तु ॥ ११ ॥ भगवानुवाच ॥ ध्वजमेतं प्रदास्यामि भवतामरिनाशनम् ॥ दृष्टमात्रेण येनेह विद्रविष्यन्ति दानवाः ॥ १२ ॥ श्रीपुष्कर उवाच ॥ एवमुक्त्वा ध्वजं तेषां ददौ विष्णुरनुत्तमम् ॥ सौवर्णमुच्छ्रितं दिव्यं शक्रध्वजमिति श्रुतम् ॥१३॥ तमादाय सुराः सर्वे प्रययुर्दानवालयम्॥ देवानुपगताञ्छ्रुत्वा दानवा निर्ययुस्ततः ॥ १४ ॥ सुसन्नद्धबलाः सर्वे प्रगृहीतायुधास्तथा ॥ दृष्ट्वा देवबलं ते च शक्रकेतुविराजितम् ॥ १५ ॥ तत्तेजसा महाभाग मूर्च्छीभूताः क्षणेन तु ॥ मूर्च्छितास्तु ततो दैत्यास्त्रिदशैर्विनिपातिताः ॥१६ ॥ केचिद्भग्ना दिशो जग्मुस्समुद्रं विविशुस्ततः ॥ ततो लब्धजयः शक्रः पूजयामास तं ध्वजम् ॥ १७॥ पूजयित्वा नृपतये वसवे प्रददौ तदा ॥ गर्गोक्तेन विधानेन तं च पूजितवान्वसुः ॥ १८॥ तेनास्य तुष्टो मघवानिदं वचनमब्रवीत् ॥ इन्द्र उवाच ॥ येप्यन्ये भूमिपाः श्रेष्ठाः शक्रध्वजमहोत्सवम् ॥१९॥ अद्य प्रभृति धर्मज्ञ करिष्यन्ति समाहिताः ॥ तेषां तु विविधा वृद्धिर्भविष्यति सदा द्विज ॥ २० ॥ दुर्भिक्षं मरको व्याधिः परचक्रभयं तथा ॥ सर्वाण्येतानि नश्यन्ति कृते शक्रध्वजोत्सवे ॥ ॥२१॥ पुष्कर उवाच ॥ ततः प्रभृति राजानो राम शक्रमहोत्सवम् ॥ कुर्वन्ति गर्गकथितं सर्वाभयविनाशनम् ॥२२॥ धन्यं यशस्यं रिपुनाशकारि कीर्तिप्रदं धर्मफलप्रदं च ॥ कार्यं नरेन्द्रैर्विजयाय यत्नाच्छक्रोत्सवं तत्कथयामि तुभ्यम् ॥ २३ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे रामं प्रति पुष्करोपाख्याने शक्रध्वजोत्पत्तिवर्णनो नाम चतुःपञ्चाशदुत्तरशततमोऽध्यायः ॥ १५४ ॥ पुष्कर उवाच ॥ शिबिरात्पूर्वदिग्भागे भूमिभागे तथा शुभे ॥ प्रागुदक्प्रवणे देशे शक्रार्थं भवनं शुभम् ॥ १ ॥ वासोभिः शयनैः शुद्धैर्नानारागैस्तथैव च ॥ ततः शक्रध्वजस्थानं मध्ये संस्थाप्य यत्नतः ॥ २ ॥ मघवन्तं पटं कुर्यात्तस्य भागे तु दक्षिणे ॥ ३ ॥ वामभागे पटे कुर्याच्छचीं देवीं तथैव च ॥ प्रोष्ठपादसिते पक्षे प्रतिपत्प्रभृति क्रमात् ॥ ४ ॥ तयोस्तु पूजा कर्तव्या सततं वसुधाधिपैः ॥ वनप्रवेशविधिना शक्रयष्टिं ततो नृप ॥ ५ ॥ आनयेद्गोरथेनाथ वायवैः

१ 'घटम्' इत्यपि पुस्तकान्तरे पाठः ।

पुरुषैरथ ॥ अर्जुनस्याजकर्णस्य प्रियकस्य वचस्य च ॥ ६ ॥ सुरदारुणश्च तथा तथैवोदुम्बरस्य च ॥ चन्दनस्याथ वा राम पद्मकस्याथ वा यदि ॥ ७ ॥ अलाभे सर्वकाष्ठानां यष्टिं कुर्वीत वैणवीम् ॥ सुवर्णनद्धां धर्मज्ञ तां च सम्यक्प्रदेशयेत् ॥८॥ प्रोष्ठपादसिते पक्षे अष्टम्यां रिपुसूदन ॥ क्रमप्रमाणा विज्ञेया शक्रयष्टिस्ततो नृप ॥९॥ चतुर्भिरङ्गुलैर्हीना साग्रे भवति शर्मदा ॥ अष्टाभिश्च तथा मूले छित्त्वा तोये यथा क्षिपेत् ॥ १० ॥ यायादुद्धृत्य नगरं सम्यगेव प्रवर्तते ॥ तस्याः प्रवेशे नगरं पताकाध्वजमालि च ॥ ११ ॥ सिक्तराजपथं कुर्यात्तथालंकृतबालकम् ॥ नटनर्तकसङ्कीर्णं तथा पूजितदैवतम् ॥ १२ ॥ सम्पूजितगृहं राम तथा पूजितवानयम् ॥ पौरैरनुगतो राजा सुवेशैः फलपाणिभिः ॥१३॥ अष्टम्यां वाद्यघोषेण तां तु यष्टिं प्रवेशयेत् ॥ प्राक्छिरास्तां ततः कुर्याद्वस्त्रैः संच्छादितां शुभैः ॥ १४ ॥ पूजितां पूजयेत्तान्तु यावत्सा द्वादशीफलम् ॥ एकादश्यां सोपवासो नृपः कुर्यात्प्रजागरम् ॥ १५ ॥ सांवत्सरेण सहितो मन्त्रिणा सपुरोधसा ॥ रात्रौ जागरणं कार्यं नागरेण जनेन तु ॥ १६ ॥ स्थानेस्थाने महाभाग देया प्रेक्ष्या तथा मधु ॥ पूजयेन्नृत्यगीतेन रात्रौ शक्रं नराधिपः ॥ १७ ॥ द्वादश्यां तु शिरःस्नातो नृपतिः प्रयतस्ततः ॥ यन्त्रेणोत्थापनं कुर्याच्छक्रकेतोः समाहितः ॥ १८ ॥ सुयंत्रितं तु तं कुर्याद्दृढं स्तम्भचतुष्टयम् ॥ पूजयेत्तन्महाभाग गन्धमाल्यान्नसम्पदा ॥ १९ ॥ नित्यं च पट्योः पूजां यष्टिपूजां च कारयेत् ॥ बलिभिस्तु विचित्राभिस्तथा ब्राह्मणपूजनैः ॥२०॥ नित्यं च जुहुयान्मन्त्रान्पुरोधाः शाक्रवैष्णवान् ॥ नित्यं नृत्येन गीतेन तथा शक्रं च पूजयेत् ॥ २१ ॥ द्वादश्यां पूजयेद्राजा ब्राह्मणान्धनसञ्चयैः ॥ विशेषेण च धर्मज्ञ सांवत्सरपुरोहितौ ॥ २२ ॥ उत्थाने च प्रवेशे च शक्रभूयान्नराधिपः ॥ वक्ष्यमाणेन मन्त्रेण कालवित्सपुरोहितः ॥ २३ ॥ पूजयेदुत्थितं केतुं भूषणैर्विविधैरपि ॥ छत्रेण च तथा वस्त्रैर्माल्यदामैस्तथैव च ॥ २४ ॥ एवं सम्पूजयेद्राम तदा दिनचतुष्टयम् ॥ पञ्चमे दिवसे प्राप्ते शक्रकेतुं विसर्जयेत् ॥ २५॥ पूजयित्वा महाभाग बलेन चतुरङ्गिणा ॥ नीत्वा करीन्द्रैस्त्रितयं ततो नद्यां प्रवाहयेत् ॥ २६ ॥ वाद्यघोषेण महता संगीतं तत्र कीर्तितम् ॥ पौरा जानपदास्तत्र :क्रीडां कुर्युस्तदाम्भसि ॥ उत्सवं च तथा कार्यं जलतीरगतैर्महत् ॥ २७ ॥ एतद्विधानं नृपतिस्तु कृत्वा प्राप्नोति वृद्धिं धनवाहनानाम् ॥ नाशं तथा शत्रुगणस्य राम महत्प्रसादं त्रिदशाधिनाथम् ॥ २८ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे रामं प्रति पुष्करोपाख्याने शक्रध्वजोत्सववर्णनो नाम पञ्चपञ्चाशदुत्तरशततमोऽध्यायः ॥ १५५ ॥ ॥ छ ॥

पुष्कर उवाच ॥ इन्द्रध्वजशिरो भज्येत्पतेदिन्द्रध्वजो यदि ॥ भज्यते शक्रयष्टिर्वा नृपतेर्नियतं वधः ॥ १ ॥ यन्त्रभङ्गे तथा ज्ञेयं रज्जुच्छेदे तथैव

च ॥ मातृकायास्तथा भङ्गे परचक्रे भयं द्विज ॥ २ ॥ दिव्यान्तरिक्षभौमाः स्युरुत्पातास्तत्र वै यथा ॥ तेषां तीव्रतमं ज्ञेयं फलमत्यन्तदारुणम् ॥ ३ ॥ निलीयते चेत्क्रव्यादः शक्रयष्टौ यदा द्विज ॥ राजा वा म्रियते तत्र स वा देशो विनश्यति ॥ ४ ॥ इंद्रध्वजोपकरणं यत्किंचिद्विजसत्तम ॥ विनश्यति तदा ज्ञेया पीडा नगरवासिनाम् ॥ ५ ॥ इंद्रवाजिनिमित्ते तु प्रायश्चित्तमिदं स्मृतम् ॥ इन्द्रयागं पुनः कुर्यात्सौवर्णेनेन्द्रकेतुना ॥ ६ ॥ राज्यं दत्त्वा च गुरवे बन्धनानि प्रमोचयेत् ॥ सप्ताहं पूजयित्वा च ध्वजं दद्याद्विजातिषु ॥ ७ ॥ शान्तिरैन्द्री भवेत्कार्या यष्टव्यश्च पुरन्दरः ॥ महाभोज्यानि कार्याणि ब्राह्मणानां दिनेदिने ॥ ८ ॥ गावश्च देया द्विजपुङ्गवेभ्यो हिरण्यवासोरजतैः समेताः ॥ एवं कृते शान्तिमुपैति पापं वृद्धिस्तथा स्यान्मनुजाधिपस्य ॥ ९ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे इन्द्रध्वजनिमित्तशमनवर्णनो नाम षट्पञ्चाशदुत्तरशततमोऽध्यायः ॥१५६॥ राम उवाच ॥ शक्रोच्छ्राये तु यान्मन्त्रान्सोपवासो नृपः पठेत् ॥ तानहं श्रोतुमिच्छामि सर्वधर्मभृतां वर ॥१॥ पुष्कर उवाच ॥ शृणु मन्त्रानिमान्सम्यक्सर्वकल्बिषनाशनान् ॥ प्राप्ते शक्रध्वजोच्छ्राये यः पठेत्प्रयतो नृपः ॥२॥ वरस्त्विन्द्रजिता मित्रवृत्रहन्पाकशासन ॥ देवदेव महाभाग त्वं हि वर्धिष्णुतां गतः॥३॥त्वं प्रभुः शाश्वतश्चैव सर्वभूतहिते रतः॥ अनन्ततेजो विरजो यशोविजयवर्धनः ॥ अप्रभुस्त्वं प्रभुर्नित्यमुत्तिष्ठ सुरपूजित ॥ ४॥ ब्रह्मा स्वयंभूर्भगवान्सर्वलोकपितामहः ॥ रुद्रः पिनाकभृद्दृप्तश्चतसृद्रयसंस्तुतः ॥ ५ ॥ योगस्य नेता कर्ता च तथा विष्णुरुरुक्रमः ॥ तेजस्ते वर्धयन्त्वेते नित्यमेव महाबलाः ॥ ६ ॥ अनादिनिधनो देवो ब्रह्मा स्रष्टा सनातनः ॥ अग्निस्तेजोमयो भागो रुद्रात्मा पार्वतीसुतः ॥ ७ ॥ कार्तिकेयः शक्तिधरः षड्वक्त्रश्च गदाधरः ॥ शतं वरेण्यो वरदस्तेजो वर्धयतां विभुः ॥ ८ ॥ देवः सेनापतिः स्कन्दः सुरप्रवरपूजितः ॥ आदित्या वसवो रुद्राः साध्या देवास्तथाश्विनौ ॥ ९ ॥ भृगुरङ्गिरसश्चैव विश्वेदेवा मरुद्गणाः ॥ लोकपालास्त्रयश्चैव चन्द्रः सूर्योऽनलोऽनिलः ॥ १० ॥ देवाश्च ऋषयश्चैव यक्षगन्धर्वराक्षसाः ॥ समुद्रा गिरयश्चैव नद्यो भूतानि यानि च ॥ ११ ॥ तेजस्तपांसि सत्यं च लक्ष्मीः श्रीः कीर्तिरेव च ॥ प्रवर्धयतु तत्तेजो जय शक्र शचीपते॥१२॥ तव चापि जयान्नित्यं त्विह संपद्यते शुभम् ॥ प्रसीद राज्ञां विप्राणां प्रजानामपि सर्वशः ॥ १३ ॥ तव प्रसादात्पृथिवी नित्यं सस्यवती भवेत् ॥ शिवं भवतु निर्विघ्नं शम्यंतामीतयो भृशम् ॥१४ ॥ नमस्ते देवदेवेश नमस्ते बलसूदन ॥ नमुचिघ्न नमस्तेऽस्तु सहस्राक्ष शचीपते ॥ १५ ॥ सर्वेषामेव लोकानां त्वमेका परमा गतिः ॥ त्वमेव परमः प्राणः सर्वस्यास्य जगत्पते ॥ १६ ॥ पाशो ह्यसि पथः स्रष्टुं त्वमनल्पं पुरन्दर ॥ त्वमेव मेघस्त्वं वायुस्त्वमग्निर्वैद्युतोम्बरे ॥ १७॥

त्वमत्र मेधाविक्षिप्ता त्वम्मे बाहुः प्रतर्दनम्॥त्वं वज्रमतुलं घोरं घोषवांस्त्वं बलाहकः ॥ १८ ॥ स्रष्टा त्वमेव लोकानां संहर्ता चापराजितः ॥
त्वं ज्योतिः सर्वलोकानां त्वमादित्यो विभावसुः॥१९॥त्वं महद्भूतमाश्चर्यं त्वं राजा त्वं सुरोत्तमः ॥ त्वं विष्णुस्त्वं सहस्राक्षस्त्वं देवस्त्वं परायणम्॥
॥ २०॥ त्वमेव चामृतं देवस्त्वं मोक्षः परमार्चितः ॥ त्वं मुहूर्तः स्थितिस्त्वं च लवस्त्वं च पुनः क्षणः॥२१॥ शुक्लस्त्वं बहुलश्चैव कला काष्ठा त्रुटि
स्तथा ॥ संवत्सरर्तवो मासा रजन्यश्च दिनानि च ॥२२॥ त्वमुत्तमा सगिरिचरा वसुंधरा सभास्करं तिमिरमम्बरं तथा ॥ सहोदधिः सतिमिङ्गिल
स्तथा सहोर्मिवान्बहुमकरो झषाकुलः ॥२३॥ महद्यशास्त्वमिह सदा च पूज्यसे महर्षिभिर्मुदितमना महर्षिभिः ॥ अभिष्टुतः पिबसि च सोममध्वरे
हुतान्यपि च हवींषि भूतये ॥ २४ ॥ त्वं विप्रैः सततमिहेज्यसे फलार्थं भेदार्थेष्वष्टसु बलौघ गीयसे त्वम् ॥ त्वद्धेतोर्यजनपारायणा द्विजेन्द्रा
वेदाङ्गान्यधिगमयन्ति सर्ववेदैः ॥ २५ ॥ वज्रस्य भर्ता भुवनस्य गोप्ता वृत्रस्य हर्ता नमुचेर्निहन्ता ॥ कृष्णे वसानो वसने महात्मा सत्यानृते यो
विविनक्ति लोके ॥२६॥ यं वाजिनं गर्भमपां सुराणां वैश्वानरं वाहनमभ्युपैति ॥ नमः सदाऽस्मै त्रिदिवेश्वराय लोकत्रयेशाय पुरन्दराय ॥ २७ ॥
अजोऽव्ययः शाश्वत एकरूपो विष्णुर्वराहः पुरुषः पुराणः ॥ त्वमन्तकः सर्वहरः कृशानुः सहस्रशीर्षा शतमन्युरीड्यः ॥ २८ ॥ कविं सप्तजिह्वं
त्रातारमिन्द्रं सवितारं सुरेशम् ॥ हृदयाभिशक्रं वृत्रहणं सुषेणमस्माकं वीरा उत्तरे भवन्तु ॥ २९ ॥ त्रातारमिन्द्रेन्द्रियकारणात्मञ्जगत्प्रधानं च
हिरण्यगर्भम् ॥ लोकेश्वरं देववरं वरेण्यं चानन्दरूपं प्रणतोस्मि नित्यम् ॥ ३० ॥ इमं स्तवं देववरस्य कीर्तयेन्महात्मनस्त्रिदशपतेः सुसंयतः ॥
अवाप्य कामान्मनसोभिरामान्स्वर्लोकमायाति च देहभेदे ॥ ३१ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा०सं० शक्रस्तववर्णनो नाम सप्तपञ्चा
शदुत्तरशततमोऽध्यायः ॥ १६७ ॥ राम उवाच ॥ विधिना पूजयेत्केन भद्रकालीं नराधिपः ॥ नवम्यामाश्विने मासि शुक्लपक्षे नरोत्तम ॥ १ ॥
पुष्कर उवाच ॥ पूर्वोत्तरे तु दिग्भागे शिबिरात्सुमनोहरे ॥ भद्रकालीगृहं कुर्याच्चित्रवस्त्रैरलंकृतम् ॥ २॥ भद्रकालीं पटे कृत्वा तत्र सम्पूजयेद्द्विज॥
आश्विने शुक्लपक्षे तु अष्टम्यां प्रयतस्ततः॥३॥तत्रैवायुधवर्माद्यं छत्रं केतुं च पूजयेत् ॥ राजलिङ्गानि सर्वाणि तथास्त्राणि च पूजयेत् ॥४॥पुष्पैर्गन्धैः
फलैर्भक्ष्यैर्भोज्यैश्च सुमनोहरैः ॥ बहुभिश्च विचित्राभिः प्रेक्षादानैस्तथैव च ॥५॥ रात्रौ जागरणं कुर्यात्तत्रैव वसुधाधिपः ॥ एवं संपूजयेद्देवीं वरदां भक्त
वत्सलाम् ॥६॥ कात्यायनीं कामगमां वररूपां वरप्रदाम् ॥ पूजितां सर्वकामैश्च सा युङ्क्ते वसुधाधिपम् ॥७॥ एवं[1]हि सम्पूज्य जगत्प्रधानं यात्रा तु देया

१ 'कार्य्या' इति पाठान्तरं पुस्तकान्तरे ।

वसुधाधिपेन ॥ प्राप्नोति सिद्धिं परमां महेशो जनस्तथान्योऽपि हि वित्तशक्त्या ॥ ८ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० सं० रामं प्रति पुष्करोपाख्याने भद्रकालीपूजा नामाष्टपञ्चाशदुत्तरशततमोऽध्यायः॥१५८॥राम उवाच ॥ नीराजनविधिं त्वत्तः श्रोतुमिच्छामि सत्तम ॥ कथं कार्या नरेन्द्रस्य शान्ति नीराजने प्रभो ॥ १ ॥ पुष्कर उवाच ॥ पूर्वोत्तरे तु दिग्भागे नगरात्सुमनोहरे ॥ विस्तीर्णं कारयेद्राजा सुमनोहरमाश्रयम् ॥ २ ॥ कटैर्युतं कुशास्तीर्णं पताकाध्वजशोभितम् ॥ तोरणत्रितयं तत्र प्राङ्मुखं कारयेच्छुभम् ॥ ३ ॥ कार्यं षोडशहस्तं तु तोरणं तु समुच्छ्रितम् ॥ वैपुल्यं दशहस्तं तु तत्र कार्यं भृगूत्तम ॥ ४ ॥ तोरणाद्दक्षिणे भागे तत्र कार्यं समाश्रयम् ॥ देवतार्चा भवेद्यत्र तथाग्निहवन क्रिया ॥ ५ ॥ अष्टहस्तायतोत्सेधमुल्मुकानां तु वामतः ॥ कार्यं भवति शुष्काणां कूटं भृगुकुलोद्वह ॥ ६ ॥ पञ्चरङ्गकसूत्रेण शतग्रन्थि मनोरमाम् ॥ मध्यमे तोरणे कुर्याच्छतपाशीं तु मध्यगाम् ॥ ७ ॥ छादयित्वा कुशैस्तां तु मुदा संछादयेत्पुनः ॥ तस्याश्च लंघनं वर्ज्यं प्रयत्नात्सर्वजन्तुभिः ॥ ८ ॥ न लंघिता सा यावत्स्यात्प्रथमं राजहस्तिना ॥ चित्रां त्यक्त्वा यदा स्वातिं सविता प्रतिपद्यते ॥ ९ ॥ ततः प्रभृति कर्तव्या यावत्स्वातौ रविः स्थितः ॥ आश्रमे प्रत्यहं देवाः पूजनीया द्विजोत्तम ॥ १० ॥ ब्रह्मा विष्णुश्च शम्भुश्च शक्रश्चैवानलानिलौ ॥ विनायकः कुमारश्च वरुणो धनदो यमः ॥ ११ ॥ विश्वान्देवान्महाभाग उच्चैःश्रवसमेव च ॥ अष्टौ महागजाः पूज्यास्तेषां नामानि मे शृणु ॥ १२ ॥ कुमुदैरावणौ पद्मः पुष्पदन्तोऽथ वामनः ॥ सुप्रतीकाञ्जनौ नील एतेऽष्टौ देवयोनयः ॥ ॥ १३ ॥ पूजा कार्या ग्रहर्क्षाणां तथैव च पुरोधसा ॥ ततस्तु जुहुयाद्वह्नौ पुरोधाः सुसमाहितः ॥ १४ ॥ यथाभिमतदेवानां मन्त्रैस्तल्लिङ्गसंज्ञकम्॥ तथा च मन्त्रहीनानां प्रणवेन महाभुज ॥ १५ ॥ समिधः क्षीरवृक्षाणां तथा सिद्धार्थकानि च ॥ घृतं तिलांश्च धर्मज्ञ तथा चैवाक्षतानि च ॥ १६॥ हुत्वा च कलशान्कुर्यात्सोदकान्गन्धसंयुतान् ॥ पूजितान्माल्यगन्धैश्च वनस्पतिविभूषितान् ॥ १७ ॥ पञ्चरङ्गकसूत्रेण कुर्याद्ब्रह्मगतांस्तथा ॥ भल्लातशालिसिद्धार्था वचाकुष्ठप्रियङ्गवः ॥ १८ ॥ तोरणात्पश्चिमे भागे कलशैः पूर्वकल्पितैः ॥ ततः संस्नापनीयाः स्युर्मन्त्रपूतैर्गजोत्तमैः ॥ १९ ॥ तुरगांश्च महाभाग चालङ्कृत्य ततस्तु तान् ॥ ततोभिषेकनागस्य तथा तत्तुरगस्य च ॥२०॥ अन्नपिण्डं ततो देयमभिमन्त्र्य पुरोधसा ॥ तस्याभिनन्दने राज्ञो विनयः परिकीर्तितः ॥ २१ ॥ त्यागे च तस्य विज्ञेयं महद्भयमुपस्थितम् ॥ निष्क्रामयेत्तोरणैस्तु ततो हि प्रथमं गजान् ॥ २२ ॥ तत्रापि प्रथमं राम अभिषिच्य गजोत्तमम् ॥ तस्यादौ शतपाशीं तु नरः पञ्चनखोऽपि वा ॥ २३ ॥ अथ ह्यन्यो लंघयेत्तां राज्ञो मरणमादि

शेत् ॥ दुर्भिक्षं तत्र विज्ञेयं गोखरोष्ट्रैश्च लंघने ॥ २४ ॥ लंघयेद्ग्रामपादेन यदि तां नृपकुञ्जरः ॥ राजा पुरोहितामात्यराजपुत्रहितं भवेत् ॥२५ ॥ राज्ञस्तु मरणं ब्रूयादाक्रमेत्तं यदापरः ॥ राज्ञोपि जयमाचष्टे लंघयन्दक्षिणेन ताम् ॥ २६ ॥ राजहस्तिनि निष्क्रान्ते सा त्वया स्यात्तदा भवेत् ॥ निष्कामेयुस्ततः सर्वे प्राङ्मुखास्तोरणैर्गजाः ॥ २७ ॥ ततोश्वाः सुमहाभाग ततस्तु नरसत्तम ॥ ततश्छत्रं ध्वजं चैव राजलिङ्गानि यानि च ॥ ॥ २८ ॥ आश्रमे तानि संस्थाप्य पूजयेदायुधानि च ॥ पञ्चरङ्गकसूत्रेण यास्ताः प्रतिसराः कृताः ॥ २९ ॥ दूष्याद्दूष्येतिमन्त्रेण निबध्नीयात्पुरोहितः ॥ सर्वेषां नृपनागानां तुरगाणां च भार्गव ॥ ३० ॥ स्वगृहेषु ततो नेया कुञ्जरास्तुरगैः सह ॥ स्वातिस्थः सविता यावत्तावच्छायासु संस्थितान् ॥ ३१ ॥ पूजयेत्सततं राम नाक्रोशेन्न च ताडयेत् ॥ राजचिह्नानि सर्वाणि पूजयेदाश्रमे सदा ॥ ३२ ॥ पूजयेद्वरुणं नित्यं तथाप्सु विधिवद्द्विज ॥ भूतेज्या च तथा कार्या रात्रौ बलिभिरुत्तमैः ॥ ३३ ॥ आश्रमं रक्षणीयं स्यात्पुरुषैः शस्त्रपाणिभिः ॥ वसेतामाश्रमे नित्यं सांवत्सपुरोहितौ॥३४॥ अश्ववैद्यप्रधानश्च तथा नागभिषग्वरः ॥ दीक्षितैस्तैस्तथा भाव्यं ब्रह्मचारिभिरेव च॥३५॥स्वातिं त्यक्त्वा यदा सूर्यो विशाखां प्रतिपद्यते॥अलंकुर्याद्दिने तस्मिन्वाहनांश्च विशेषतः॥३६॥पूजिता राजलिङ्गाश्च कर्तव्या नरहस्तगाः॥हस्तिनं तुरगं छत्रं खड्गं वा पञ्चदुन्दुभिम् ॥३७॥ ध्वजं पताकां धर्मज्ञ कालज्ञस्त्वभिमंत्रयेत् ॥ अभिमन्त्र्य ततः सर्वान्कुर्यात्कुञ्जरधूर्गताम्॥३८॥कुञ्जरोपरिगौ स्यातां सांवत्सरपुरोहितौ ॥ अश्ववैद्यप्रधानश्च तथा नागभिषग्वरः ॥ ३९ ॥ ततोऽभिमन्त्रितं राजा समारुह्य तुरङ्गमम् ॥ निष्क्रम्य तोरणे नागमभिमन्त्र्य समारुहेत् ॥ ४० ॥ तोरणेन विनिष्क्रम्य कुर्यात्सुरविसर्जनम् ॥ बलिं विसृज्य विधिवद्राजा कुञ्जरधूर्गतः ॥४१॥ रत्नैरलङ्कृतः सर्वैर्वीज्यमानश्च चामरैः ॥ उल्मुकानां च निचयमादीपितमनन्तरम् ॥ ४२ ॥ राजा प्रदक्षिणं कुर्यात्त्रीन्वारान्सुसमाहितः ॥ ४३ ॥ चतुरङ्गबलोपेतः सर्वसैन्यसमन्वितः ॥ क्ष्वेडाकिलकिलाशब्दैः सर्ववादित्रनिःस्वनैः ॥ ४४ ॥ वल्गितैश्च पदातीनां हृष्टानां मनुजोत्तम ॥ एवं कृत्वा गृहं गच्छेद्राजा सैन्यपुरःसरः ॥ ४५ ॥ जनं सम्पूज्य च गृहात्सर्वमेव विसर्जयेत् ॥ शान्तिर्नीराजनाख्येयं कर्तव्या वसुधाधिपैः ॥ क्षेम्या वृद्धिकरी राम नरकुञ्जरवाजिनाम् ॥ ४६ ॥ धन्या यशस्या रिपुनाशनी च सुखावहा शान्तिरनुत्तमा च ॥ कार्या नृपै राष्ट्रविवृद्धिहेतोः सर्वप्रयत्नेन भृगुप्रवीर ॥ ४७ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे रामं प्रति पुष्करोपाख्याने नीराजनशान्तिवर्णनो नामैकोनषष्ट्युत्तरशततमोऽध्यायः ॥ १५९ ॥ ॥ छ ॥

राम उवाच ॥ छत्राश्च केतुकरिणां पताका खड्गचर्मणाम् ॥ तथा दुन्दुभिचापानां ब्रूहि मन्त्रान्समानघ ॥ १ ॥ पुष्कर उवाच ॥ शृणु मन्त्रान्महा

भाग भगवान्यत्पराशरः ॥ गालवाय पुरोवाच सर्वधर्मभृतां वरः ॥ २ ॥ पराशर उवाच ॥ यथाम्बुदश्छादयति शिवायेमां वसुन्धराम् ॥ तथाच्छा
दय राजानं विजयारोग्यवृद्धये ॥ ३ ॥ इति च्छत्रमन्त्रः ॥ पराशर उवाच ॥ गन्धर्वकुलराजस्त्वं मा भूयाः कुलदूषकः ॥ ब्रह्मणः सत्यवाक्येन
सोमस्य वरुणस्य च ॥ ४ ॥ प्रभावश्च हुताशस्य भवस्य त्वं तुरङ्गम ॥ तेजसा चैव सूर्यस्य मुनीनां तपसां तथा ॥ ५ ॥ रुद्रस्य ब्रह्मचर्येण
पवनस्य बलेन च ॥ स्मर त्वं राजपुत्रोऽसि कौस्तुभं च मणिं स्मर ॥६॥ यां गतिं ब्रह्महा गच्छेत्पितृहा मातृहा तथा ॥ भूम्यर्थेऽनृतवादी च क्षत्रि
यश्च पराङ्मुखः ॥ ७ ॥ सूर्याचन्द्रमसौ वायुर्यावत्पश्यन्ति दुष्कृतम् ॥ व्रजेस्त्वेतां गतिं क्षिप्रं तच्च पापं भवेत्तव ॥ ८ ॥ विकृतिं यदि गच्छेन्नो
युद्धेऽध्वनि तुरङ्गम ॥ रिपून्विजित्य समरे सहभर्त्रा सुखी भव ॥ ९ ॥ इत्यश्वमन्त्रः ॥ पराशर उवाच ॥ शक्रकेतो महावीर सुपर्णस्त्वत्सुताश्रितः ॥
पतत्रिराड् वैनतेयस्तथा नारायणध्वजः ॥ १० ॥ काश्यपेयोऽमृताहर्ता नागारिर्विष्णुवाहनः ॥ अप्रमेयो दुराधर्षो रणे चैवारिसूदनः ॥ ११ ॥
गरुत्मान्मारुतगतिः त्वयि सन्निहितः स्थितः ॥ साश्ववर्मायुधान्योधान्रक्षास्माकं महद्रिपून् ॥१२॥ इति ध्वजमन्त्रः ॥ पराशर उवाच ॥ कुमुदै
रावणौ पद्मः पुष्पदन्तोथ वामनः ॥ सुप्रतीकोऽञ्जनो नील एतेष्टौ देवयोनयः ॥ १३ ॥ तेषां पुत्राश्च पौत्राश्च धनान्यष्टौ समाश्रिताः ॥ भद्रो
मन्दो मृगश्चैव गजः संकीर्ण एव च ॥ १४ ॥ वनेवने प्रसूतास्ते स्मर योनिं महागज ॥ पान्तु त्वां वसवो रुद्रा आदित्याः समरुद्गणाः ॥ १५ ॥
भर्तारं रक्ष नागेन्द्र समयः प्रतिपाल्यताम् ॥ अवाप्नुहि जयं युद्धे गमने स्वस्ति नो व्रज ॥ १६ ॥ श्रीस्ते सोमाद्बलं विष्णोस्तेजः सूर्याज्जवोऽनि
लात् ॥ स्थैर्यं मेरोर्जयं रुद्राद्यशो देवात्पुरन्दरात् ॥ १७ ॥ युद्धे रक्षन्तु नागास्त्वां दिशश्च सह दैवतैः ॥ अश्विभ्यां सह गन्धर्वा पान्तु त्वां सर्वतः
सदा ॥ १८ ॥ इति हस्तिमंत्रः ॥ पराशर उवाच ॥ हुतभुग्वसवो रुद्रा वायुः सोमो महर्षयः ॥ नागकिन्नरगन्धर्वयक्षभूतगणग्रहाः ॥ १९ ॥
प्रमथास्तु सहादित्यैर्भूतेशो मातृभिः सहः ॥ शक्रसेनापतिः स्कन्दो वरुणश्चाश्रितस्त्वयि ॥ २० ॥ प्रदहन्तु रिपून्सर्वान्राजा विजयमिच्छतु ॥
यानि प्रयुक्तान्यरिभिर्दूषणानि समन्ततः ॥ २१ ॥ पतन्तूपरिशत्रूणां हतानि तव तेजसा ॥ कालनेमिवधे यद्वद्यच्च त्रिपुरपातने ॥ २२ ॥ हिरण्य
कशिपोर्यद्वद्वधे सर्वासुरेषु च ॥ शोभितासि तथैवाद्य शोभस्व समयं स्मर ॥ २३ ॥ नीलाञ्श्वेतानिमान्दृष्ट्वा नश्यंत्वाशु नृपारयः ॥ व्याधिभिर्वि
विधैर्घोरैः शस्त्रैश्च युधि निर्जिताः ॥ २४ ॥ पूतना रेवती नाम्ना कालरात्रीति पठ्यते ॥ दहत्वाशु रिपून्सर्वान्पताके त्वामुपाश्रिता ॥ २५ ॥ इति
पताकामन्त्रः ॥ पराशर उवाच ॥ असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः ॥ श्रीगर्भो विजयश्चैव धर्माचारस्तथैव च ॥ २६ ॥ इत्यष्टौ तव

नामानि स्वयमुक्तानि वेधसा ॥ नक्षत्रं कृत्तिका तुभ्यं गुरुर्देवो महेश्वरः ॥ २७ ॥ रोहिण्याश्च शरीरं ते दैवतं तु जनार्दनः ॥ पिता पितामहो देवः
स त्वं पालय सर्वदा ॥ २८ ॥ इति खड्गमन्त्रः ॥ पराशर उवाच ॥ वर्मप्रदस्त्वं समरे धर्मसैन्याय मानद ॥ रक्ष मां रक्षणीयोऽहं तवानघ नमोस्तु
ते ॥ २९ ॥ इति वर्ममन्त्रः ॥ पराशर उवाच ॥ दुन्दुभे त्वं सपत्नानां घोषाद्धृदयकंपनः ॥ ३० ॥ तव भूमिपसैन्यानां तथा विजयवर्धनः ॥
यथा जीमूतघोषेण हृष्यन्ति शरवारणाः ॥ तथा च तव शब्देन त्रस्यन्त्वस्मद्विषो रणे ॥ ३१ ॥ इति दुन्दुभिमंत्रः ॥ पराशर उवाच ॥
सर्वायुधमहामात्र सर्वदेवारिसूदन ॥ चापस्त्वं सर्वदा रक्ष साकं शरवरैः सदा ॥ ३२ ॥ इति चापमन्त्रः ॥ पुष्कर उवाच ॥ मंत्रास्तवैतेऽभिहिता
नृवीर सम्मंत्रणे वैजयिका यथावत् ॥ एतैस्तु मंत्रैरभिमन्त्रितानां चलत्यमोघं बलमप्रमृष्यम् ॥ ३३ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे
मार्कण्डेयवज्रसंवादे रामं प्रति पुष्करोपाख्याने मन्त्राध्यायवर्णनो नाम षष्ट्युत्तरशततमोध्यायः ॥ १६० ॥ परशुराम उवाच ॥ शान्तिमा
चक्ष्व मां देव घृतकम्बलसंज्ञिताम् ॥ कार्या या पार्थिवेन्द्राणां विजयाय पुरोधसा ॥ १ ॥ पुष्कर उवाच ॥ पूर्वोत्तरे तु दिग्भागे नगरात्सुमनो
हरे ॥ प्रागुदक्प्रवणे देशे शान्त्यागारं तु कारयेत् ॥ २ ॥ तं तमत्यन्तविस्तीर्णं नानावस्त्रविभूषितम् ॥ पुनर्वसौ गते चन्द्रे तत्र यायान्नराधिपः
॥ ३ ॥ पुरस्कृत्य महाभाग सांवत्सरपुरोहितौ ॥ अभिषेचनिका मन्त्रा ये मयाभिहिताः पुरा ॥ ४ ॥ देवादयस्तु तेषां वै स्थानं तत्र प्रकल्पयेत् ॥
गन्धमण्डलकैर्मुख्यैर्यथास्थानं पुरोहितः ॥ ५ ॥ आवाहनं ततः कुर्यात्स्नातास्तत्र च येऽपि ते ॥ देवादीनां तु सर्वेषां ब्राह्मणैः सहिता द्विज ॥६॥
आवाहितानां सर्वेषां गन्धमाल्यान्नसम्पदा ॥ देववत्पूजनं कुर्यात्तथा नृपपुरोहितौ ॥ ७ ॥ एवं संपूजनं कृत्वा सोपवासास्तु ते त्रयः ॥ स्वप्युश्च
तां निशां तत्र सर्व एव समाहिताः ॥ ८ ॥ ततो नैर्ऋतकं कर्म प्रदेशे तु पुरोहितः ॥ कृत्वा त्रिभागशेषायां रात्रौ कुर्यात्तु शान्तिकम् ॥ ९ ॥
श्रुत्वा दशगुणानत्र स्नापयेत्तं नराधिपम् ॥ पूर्वमेव तथा स्नानं सिद्धार्थोत्साधितं तथा ॥ १० ॥ पूर्णेन घृतकुम्भेन मन्त्रेणानेन कालवित् ॥
आज्यं तेजः समुद्दिष्टमाज्यं तेजोहरं परम् ॥ ११ ॥ आज्यं सुराणामाहारमाज्ये लोकः प्रतिष्ठितः ॥ तेनान्तरिक्षं दिव्यं वा धत्ते कल्मषनाश
नम् ॥ १२ ॥ सर्वे तदाज्यसंस्पर्शात्प्रणाशमुपगच्छतु ॥ ततो विरूक्षितं स्नातं स्नानवेद्यां नराधिपम् ॥ १३ ॥ गच्छेत्तं तु पुरस्कृत्य
सांवत्सरपुरोहितौ ॥ स्नानवेदी तु कर्तव्या लाजाकुसुममण्डिता ॥ १४ ॥ चतुर्भिः पूर्णकुम्भैस्तु विदिक्षु ह्युपशोभिता ॥ चत्वारि तस्याश्चर्माणि
प्राग्ग्रीवाणि समास्तरेत् ॥ १५ ॥ वृषस्य द्वीपिनश्चैव सिंहशार्दूलयोस्तथा ॥ भद्रासनं न्यसेद्राम तेषामुपरि चर्मणाम् ॥ १६ ॥ स्वासीनं

नृपतिं तत्र वस्त्रैराच्छादयेन्नृपैः ॥ कार्पासिकैस्ततः पश्चादाविकैः कृमिजैस्ततः ॥ १७ ॥ ततस्तु सर्पिषः कुम्भैः पूर्णैस्तमभिषेचयेत् ॥ कुम्भा
ष्टकं तु कर्तव्यमष्टाविंशतिरेव वा ॥१८ ॥ अथ वाष्टशतं राम वृद्धिरेषा गुणोत्तरा ॥ ततोपनीय वस्त्राणि तस्यां वेद्यां पुरोहितः ॥ १९ ॥ शूलेन
मृन्मयं भिंद्याच्छत्रुं क्रोधसमन्वितः ॥ राज्ञस्तु कलशं दत्त्वा स्वयं सांवत्सरस्ततः ॥ २० ॥ अभिषेचनमन्त्रेण स्वर्चितं कल्पितं दृढम् ॥
ज्योतिष्मतीं त्रायमाणामभयामपराजिताम् ॥२१॥ जीवां विश्वेश्वरीं पाठां समंगामभयां तथा ॥ सहां च सहदेवां च पूर्णकोशां शतावरीम् ॥२२॥
अरिष्टिकां शिवां भद्रां कलशं तत्र विन्यसेत् ॥ ब्राह्मी क्षेमामजां चैव सर्वबीजानि काञ्चनम् ॥ २३ ॥ मङ्गल्याश्च यथालाभं सर्वौषध्यो रसस्त
था ॥ रत्नानि सर्वगन्धाश्च बिल्वं च सविकङ्कतम् ॥ २४ ॥ एवं स्नातो घृते-दृष्ट्वा वदनं तर्पणं तथा ॥ मङ्गलालभनं कृत्वा धौतवासाः
समाहितः ॥ २५ ॥ अभ्यर्चनं ततः कुर्याद्देवादीनां पृथक्पृथक् ॥ तेषामेव ततो वह्नौ चतुर्थ्यन्तैस्तु नामभिः ॥ २६ ॥ ओङ्कारपूतं जुहुयाद् घृतं
बहु पुरोहितः ॥ आयुधाभ्यर्चनं कार्यं वाहनाभ्यर्चनं ततः ॥२७ ॥ राजचिह्नार्चनं कृत्वा ह्यलङ्कृत्य स्वकां तनुम् ॥ अनुलेपनमादद्याद्गन्धद्वारेति
मन्त्रतः ॥ २८ ॥ शुभं वसनमादद्याच्छ्रीसूक्तेनाभिमंत्रितम् ॥ श्रियं धातर्मयि देहि मंत्रः सुमनसां भवेत् ॥ २९ ॥ रायस्पोषेति च तथा मन्त्रे
लङ्करणे स्मृतः ॥ ततोनुलिप्तः सुरभिः स्रग्वी रुचिरभूषणः ॥ ३० ॥ केशवाभ्यर्चनं कृत्वा वह्निस्थानं ततो व्रजेत् ॥ वह्नेरुत्तरदिग्भागे
ततः प्रागुक्तकर्मणाम् ॥ ३१ ॥ सिंहासनं न्यसेत्पृष्ठे भव्यास्तरणसंयुतम् ॥ ततस्तु राम चर्माणि प्राग्ग्रीवाणि तु विन्यसेत् ॥ ३२ ॥ वृषस्य
वृषदंशस्य करेश्च पृषतस्य च ॥ तेषामुपरि सिंहस्य व्याघ्रस्य च ततः परम् ॥ ३३ ॥ ध्रुवा द्यौरिति मन्त्रेण नृपं तत्रोपवेशयेत् ॥ दर्भपाणिस्ततो
राजा तथैव च पुरोहितः ॥ ३४ ॥ तयोर्हस्तगतावग्रे दर्भौ संग्रथयेद्द्विजः ॥ ततः पुरोधा जुहुयाद्ब्राह्मैर्मन्त्रैर्घृतं शुचिः ॥ ३५ ॥ रौद्रवैष्णव
वायव्यशाक्रसौम्यैः सवारुणैः ॥ बार्हस्पत्यैस्ततः कुर्यात्तंत्रमुत्तरसंज्ञकम् ॥ ३६ ॥ दैवज्ञः प्रयतः कुर्याद्देवतानां विसर्जनम् ॥ यान्तु देवगणाः
सर्वे सानुगाः सपरिच्छदाः ॥ ३७ ॥ आदाय पार्थिवात्पूजां नगरागमनाय च ॥ ततस्तु पूजयेद्राजा सांवत्सरपुरोहितौ ॥ ३८ ॥ धनेन
ब्राह्मणानां च ततो दद्याच्च दक्षिणाम् ॥ मङ्गलालभनं कृत्वा खड्गपाणिर्गृहाद्व्रजेत् ॥ शान्तिघोषेण महता राजा कुञ्जरगस्ततः ॥ ३९ ॥
शांतिर्मया तेऽभिहिता नृवीर धन्या यशस्या रिपुनाशनी च ॥ सुखावहा राष्ट्रविवृद्धिकर्त्री कार्या नृपैर्धर्मविवृद्धिदा च ॥ ४० ॥ इति श्रीवि
ष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे रामं प्रति पुष्करोपाख्याने घृतकम्बलशान्तिकथनो नामैकषष्ट्युत्तरशततमोऽध्यायः ॥ १६१ ॥

॥ रम उवाच ॥ ॥ संवत्सराभिषेकं च कथयस्व महीभृतः ॥ तत्र मे संशयं देव त्वं हि सव विपश्यसि ॥ १ ॥
पुष्कर उवाच ॥ राजाभिषेकनक्षत्रे प्रतिसंवत्सरं द्विजः ॥ पूर्वाभिषेकविधिना कर्तव्यमभिषेचनम् ॥ २ ॥ धन्यं यशस्यं रिपुनाशनं च सौभाग्यदं
पुष्टिविवर्धनं च ॥ वर्षाभिषेकं नृपतेः प्रदिष्टं सौख्यावहं राज्यविवृद्धिदं च ॥३॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० सं० रामं प्रति पुष्करो
पाख्याने संवत्सराभिषेकाध्यायो नाम द्विषष्ट्युत्तरशततमोऽध्यायः॥१६२॥ राम उवाच ॥ भगवन्सर्वधर्मज्ञ सर्वशास्त्रविदां वर ॥ यात्राकालवि
धानं मे कथयस्व महीक्षिताम् ॥ १ ॥ पुष्कर उवाच ॥ यदा मन्येत नृपतिराक्रन्देन बलीयसा ॥ पार्ष्णिग्राहेभिभूणा तं तदा यात्रां प्रयोजयेत्॥
॥२॥पुष्टा मेद्य भृता भृत्या प्रभूतश्च बलं मम ॥ मूलरक्षासमर्थोऽस्मि तदा यात्रां प्रयोजयेत् ॥३॥ पार्ष्णिग्राहाधिकं सैन्यं मूले निक्षिप्य वा व्रजेत्॥
चैत्रं वा मार्गशीर्षं वा यात्रां यायान्नराधिपः ॥ ४ ॥ चैत्र्यां सस्यं हि नंदाद्यं हन्ति पुष्टिं च शारदम् ॥ एतदेव विपर्यस्तं मार्गशीर्ष्यां नराधिपः ॥
॥ ५ ॥ शत्रोर्वा व्यसने यायात्काल एव सुदुर्लभः ॥ दिव्यान्तरिक्षक्षितिजैरुत्पातैः पीडितं भृशम् ॥ ६ ॥ षड्नृक्षपीडनात्तृप्तं पीडितं च तथा
ग्रहैः ॥ प्रज्वलन्ति तथैवोल्का दिशं यस्य प्रपद्यते ॥ ७ ॥ भूकम्पो यां दिशं याति यां च केतुः प्रधूमयेत् ॥ निर्घातः श्रूयते यत्र तां यायाद्वसु
धाधिपः ॥ ८ ॥ स्वबलव्यसनोपेतं तथा दुर्भिक्षपीडितम् ॥ सम्भूतान्तरकोपं च क्षिप्रं यायादरिं नृपः ॥ ९ ॥ यूकामक्षिकबहुलं बहुविघ्नं तथा
बिलम् ॥ नास्तिकं भिन्नमर्यादं तथा मङ्गलवादि च ॥ १० ॥ अपेतप्रकृतिं चैव निराशं च तथा जयेत् ॥ विष्टिनायककं सैन्यं तथा भिन्नपरस्प
रम् ॥ ११ ॥ व्यसनासक्तनृपतिं बलं राजा नियोजयेत ॥ गच्छेत्तु पश्चाद्धर्मज्ञ पुरस्तात्तु विगर्हितैः ॥ १२ ॥ क्व यासि तिष्ठ मागच्छ किं तत्र
गमनस्य च ॥ अन्ये शब्दाश्च ये दृष्टास्ते विपत्तिकरा अपि ॥ १३ ॥ ध्वजादिषु तथा स्नानं क्रव्यादानां विगर्हितम् ॥ स्खलनं वाहनानां च
वस्त्रसङ्गस्तथैव च ॥ १४ ॥ विनिर्गतश्च द्वाराद्यैः शिरसश्चाभिघातनम् ॥ छत्रध्वजादिवस्त्राणां पतनं च तथाशुभम् ॥ १५ ॥ दृष्ट्वा निमित्तं
प्रथममङ्गल्यं विनाशनम् ॥ केशवं पूजयेद्विद्वांस्तथैव मधुसूदनम् ॥ १६ ॥ द्वितीये तु ततो दृष्टे प्रतीपे प्रविशेद्गृहम् ॥ अथेष्टानि प्रवक्ष्यामि
मङ्गल्यानि तथानघ ॥ १७ ॥ श्वेताः सुमनसः श्रेष्ठाः पूर्णकुम्भं तथैव च ॥ जलजानि च मत्स्यानि मांसं मत्स्याश्च भार्गव ॥ १८ ॥ गावस्तु
रङ्गमा नागा बद्ध एकः पशुस्ततः ॥ त्रिदशाः सुहृदो विप्रा ज्वलितश्च हुताशनः ॥ १९ ॥ गणिकाश्च महाभागाः पूर्वाचार्यादिगोमयम् ॥ रुक्मं

१ 'स्वनते' इति ख० । २ 'स्त्रबाल' इति क० । ३ 'यूकामल्लक' इति क० । ४ 'पुरस्तात्त्वविगर्हितम्' इति ख० । ५ 'शस्त्रभङ्गः इति ख० । ६ स्वर्गम' इति ख० ।

रौप्यं तथा ताम्रं सर्वरत्नानि चाप्यथ ॥ २० ॥ औषधानि च सर्वज्ञ वचासिद्धार्थके तथा ॥ नृर्वर्धमानं यानं च भद्रपीठं तथैव च ॥ २१ ॥
खड्गं छत्रं पताकां च मृदमायुधमेव च ॥ राजलिङ्गानि सर्वाणि शवं रुदितवर्जितम् ॥ २२ ॥ घृतं दधि पयश्चैव फलानि विविधानि च ॥
स्वस्तिकं वर्धमानं च नन्द्यावर्तं सकौस्तुभम्॥२३॥ नद्यश्च चित्रविन्यस्ता मङ्गल्यान्यपराणि च॥ अक्षताश्च तथा मुख्यास्तथा दर्पणमेव च ॥२४॥
अञ्जनं रोचनं चैव शृङ्गारो माक्षिकं तथा ॥ शङ्ख इक्षुस्तथा भक्ष्या वाचश्चैव तथा शुभाः ॥ २५ ॥ वादित्राणां सुखः शब्दो गम्भीरश्च मनोहरः ॥
गान्धारषड्जऋषभा याने शस्तास्तथा स्वराः॥ २६॥ वायुः सशर्करो रूक्षः स च दिग्भ्यः समर्थितः॥ प्रतिलोमस्तथा नीचो विज्ञेयो भयकृद्द्वि
ज ॥ २७ ॥ अनुकूलो मृदुस्निग्धः सुखस्पर्शः सुखावहः ॥ ऋक्षा ऋक्षस्वराः खड्गाः क्रव्यादाश्च विगर्हिताः ॥ २८ ॥ मेघाः शस्ता
घनाः स्निग्धा गजबृंहितसन्निभाः ॥ अनुलोमा तडिच्छस्ता शक्रश्चापं तथैव च ॥ २९ ॥ अप्रशस्ते तथाज्ञेये परिवेशप्र
वर्षणे ॥ अनुलोमा ग्रहः शस्ता दिक्पतिस्तु विशेषतः ॥ ३० ॥ आस्तिक्यं श्रद्दधानत्वं तथा पूज्याभिपूजनम् ॥ शस्तान्ये
तानि धर्मज्ञ यच्च स्यान्मनसः प्रियम् ॥ ३१ ॥ मनसस्तुष्टिरेवात्र परमं जयलक्षणम् ॥ एकतः सर्वलिङ्गानि मनस्तुष्टिरथैकतः ॥ ३२ ॥
यानोत्सुकत्वं मनसः प्रहर्षः सुस्वप्नलाभो मनसः प्रसादः ॥ माङ्गल्यलब्धिश्रवणं च राम ज्ञेयानि नित्यं विजयावहानि ॥ ३३ ॥ इति श्रीविष्णुध
र्मोत्तरे द्वितीयखण्डे मा० सं० यात्राशकुनवर्णनं नाम त्रिषष्ट्युत्तरशततमोध्यायः ॥ १६३ ॥ पुष्कर उवाच ॥ तिष्ठतो गमने प्रश्ने पुरुषस्य
शुभाशुभम् ॥ निवेदयन्ति शकुना देशस्य नगरस्य च ॥१॥ पथि पान्थो नृपः सैन्ये मरीचोद्दिश्य देवताम् ॥ सार्थे प्रधानः साम्ये च ज्ञातिविद्याव
योधिकः ॥ २ ॥ सर्वपापफलो दीप्तः शान्तः शुभफलो मतः ॥ षट्प्रकारा विनिर्दिष्टाः शकुनानां च दीप्तता ॥ ३ ॥ वेला दिग्देशकरणं स तु
जातिविभेदकः ॥ पूर्वापूर्वा च विज्ञेया सा तेषां बलवत्तरा ॥ ४ ॥ दिवाचरो रात्रिचरस्तथा रात्रौ दिवाचरः ॥ क्रूरस्य वेलादीप्तस्य खलर्क्षनिग्र
हादिषु ॥ ५ ॥ धूमितासा तु विज्ञेया यां गमिष्यति भास्करः ॥ यस्यां स्थितः सा ज्वलिता मुक्ता चाङ्गारिणी मता ॥ ६ ॥ एतास्तिस्रः स्मृता
दीप्ताः पञ्च शान्तास्तथा पराः ॥ दीप्तायां दिशि दिग्दीप्तः शकुनः परिकीर्तितः ॥ ७ ॥ ग्राम्ये वन्यो वने ग्राम्यस्तथा निन्दितपादपे ॥ देशे
चैवाशुभे ज्ञेयो देशदीप्तो द्विजोत्तम ॥ ८ ॥ क्रियादीप्तो विनिर्दिष्टः स्वजात्यनुचितक्रियः ॥ ततो दीप्तश्च कथितो भिन्नभैरवनिःस्वनः ॥ ९ ॥

१ 'निवद्धयानम' इति ख० । २ 'अक्षताश्च' इति ख० । ३ 'भृगारो' इति ख० । ४ 'सर्वदिग्भ्यः समुत्थितः'इत्यपि पाठः। ५ 'भूक्षा' इति ख० । ६ 'रूक्षस्वराः' इति ख० । ७'सुखलाभी' इति ख० ।

प्रतिदीप्तस्तथा ज्ञेयः केवलं मांसभोजनः ॥ दीप्तशान्तो विनिर्दिष्टः सर्वैर्भेदैः प्रकीर्तितः ॥ १० ॥ मिश्रैर्मिश्रो विनिर्दिष्टस्ततो वाच्यं बलात्फ
लम् ॥ गोश्वोष्ट्रगर्दभश्वानः शारिकागृहगोधिके ॥ नटिकेषांसचर्माद्ये कथिता ग्रामवासिनः ॥ ११ ॥ अजाविशुकनागेन्द्रखरा महिषवायसौ ॥
ग्राम्यारण्या विनिर्दिष्टाः सर्वेऽन्ये वनगोचराः ॥ १२ ॥ मार्जरक्तकृषो ग्राम्यस्तथान्यो वनगोचरे ॥ सर्वेऽप्येवेति विज्ञेया नित्यं रूपविभे
दतः ॥ १३ ॥ श्रीकण्ठशिखिचक्राह्वा ये च हारीतवायसाः ॥ कुलालकुक्कुटश्येनफांटवं जलवानराः ॥ १४ ॥ शशघ्नचटकश्यामाश्वापभास
कपिञ्जलाः ॥ तित्तिरिः शतपत्रश्च कपोताश्च तथा त्रयः ॥ १५ ॥ खञ्जरीटकदात्यूहशुकाण्डीवहतिक्तकाः ॥ भारद्वाजश्च सारङ्ग इति ज्ञेया दिवा
चराः ॥ १६ ॥ वल्गुल्युलूकः शशका शरभोत्क्रोशपिच्छलौ ॥ माषिका पिंङ्गली काकः कथिता रात्रिचारिणः ॥ १७ ॥ हंसाजमृगमार्जारनकुलर्क्ष
भुजङ्गमाः ॥ वृकश्च सिंहव्याघ्रोष्ट्रश्वसूकरतुरङ्गमाः ॥ १८ ॥ श्वावित्पृथुतगोमायुघृतकोकिलसारसाः ॥ तुरङ्गभो द्वीपिनराश्चोरा उभयचा
रिणः ॥१९॥ रणप्रस्थानयोः सर्वे पुरस्तात्सङ्गचारिणः ॥ जयावहा विनिर्दिष्टाः पश्चाद्विजयकारिणः ॥२०॥ गृहे गम्यो यदा चायं व्याहरेत्पुरतः
स्थितः ॥ नृपावमानं वदति वामः कलहभोजने ॥२१॥ याने तद्दर्शनं धन्यं सपतङ्गस्य चाप्यथ ॥ चौरैर्दोषमथाख्याति मयूरो भिन्ननिःस्वनः ॥
॥२२॥ वमते कपिलः श्रेष्ठः तथा दक्षिणसंस्थितः ॥ पृष्ठतो निन्दितफलः तित्तिरिस्तत्र शस्यते ॥ २३ ॥ एणा वराहाः पृषतो वामा भूत्वा तु दक्षि
णाः॥भवन्त्यर्थकरा नित्यं विपरीता विगर्हिताः ॥२४॥ वृकाश्च जम्बुकव्याघ्रसिंहमार्जारगर्दभाः ॥ वाञ्छितार्थकरा ज्ञेया दक्षिणाद्वामभागगाः ॥२५॥
शिवा श्यामा रला च्छुच्छुः पिङ्गला गृहगोधिकाः ॥ सूकरी परपुष्टा च पुंनामानश्च वामतः ॥ २६ ॥ श्रीसंज्ञा चाषभषककपिश्रीकर्णछिक्कराः ॥
कपिश्रीकर्णपिप्पीका रुरुश्येनाश्च दक्षिणाः ॥२७॥ जाहकाहिशशक्रोडगोधानां कीर्तनं शुभम् ॥ ततः सन्दर्शनं नेष्टं प्रतीपं वानरर्क्षयोः ॥ २८ ॥
फलकृत्पूर्वशकुनः प्रस्थितस्य च योन्वहम् ॥ भवेत्तस्य फलं वान्यत्तदेव दिवसं बुधैः ॥ २९ ॥ मत्ता भिक्षार्थिनो बाला विरक्ताभास्तथैव च ॥
सीमान्तनद्यन्तारिता विज्ञेया निष्फला द्विज ॥ ३० ॥ एकद्वित्रिचतुर्भिस्तु शिवा धन्या ततो भवेत् ॥ पञ्चभिश्च तथा षड्भिरधन्याः परिकी
र्तिताः ॥ ३१ ॥ सप्तभिश्च तथा धन्या निष्फला परतो भवेत् ॥ नृणां रोमाञ्चजननी वाहनानां भयप्रदा ॥ ३२ ॥ ज्वालानना सूर्यमुखी
विज्ञेया भयवर्धिनी ॥ प्रथमं शार्ङ्गके दृष्टे शुभे देशे शुभं वदेत् ॥ ३३ ॥ संवत्सरं मनुष्यस्य ह्यशुभे चाशुभं तथा ॥ यथाविधि नरः पश्यञ्छकुनं
प्रथमेहनि ॥ ३४ ॥ आत्मनश्च तथा तेन ज्ञातव्यं वत्सरं फलम् ॥ शार्ङ्गकं च नरो दृष्ट्वा भुजङ्गमशिरोगतः ॥ ३५ ॥ अवश्यं तदवाप्नोति यत्कि

श्चिन्मनसेच्छति ॥ विशन्ति येन मार्गेण वायसा बहवः परम् ॥ ३६ ॥ तेन मार्गेण वै तस्य पुरस्य ग्रहणं भवेत् ॥ सेनायां यदि वासार्थे विनिष्टो वायसो भवेत् ॥ ३७ ॥ वासो भयाय रात्रस्थो भयं वदति दुस्तरम् ॥ छायाङ्गवाहनोपानच्छत्रवस्त्रादिकुण्ठनैः ॥ ३८ ॥ मृत्युस्तत्पूजने पूजा तद्विष्टाकरणे शुभम् ॥ प्रोषितागमकृत्काकः कुर्वन्द्वारि गतागतम् ॥ ३९ ॥ रक्तं दग्धं गृहे द्रव्यं विक्षपन्वह्निवेदकः ॥ न्यसेद्रजं पुरस्ताच्चेन्निवेदयति बन्धनम् ॥ ४० ॥ पीतद्रव्यं तथा रुक्मं रूप्यं श्वेतं तु भार्गव ॥ यश्चैवोपलभेद्द्रव्यं तस्य लब्धिविनिर्दिशेत् ॥ ४१ ॥ द्रव्यं चोपनयेद्यत्तु तस्य हानिं द्विजोत्तम ॥ परतो धनलब्धिः स्याद्राम मांसस्य भक्षणे ॥ ४२ ॥ श्रीलब्धिः स्यान्मृगक्षेपे राज्यं रत्नार्पणे महत् ॥ यातुः काकोनुकूलस्थः क्षेप्यः कर्णसमो भवेत् ॥ ४३ ॥ नन्वर्थसाधको ज्ञेयः प्रतिकूलो भयावहः ॥ ४४ ॥ सम्मुखोऽभ्येति विततः यात्राघातकरो भवेत् ॥ वामः काकः स्मृतो धन्यो दक्षिणस्तु विनाशकृत् ॥ ४५ ॥ वामोऽनुलोमगः श्रेष्ठो मध्यमो दक्षिणः स्मृतः ॥ प्रतिलोमकृतिर्वामो गमनप्रतिषेधकृत् ॥ ॥ ४६ ॥ निवेदयति यात्रार्थमभिप्रेतं गृहे रतः ॥ एकाक्षिचरणस्त्वर्कं वक्ष्यमाणो भयावहः ॥ ४७ ॥ कोटरे वासमानस्तु महानर्थकरो भवेत् ॥ न शुभः सूकरे काकः पङ्कान्तः स तु दृश्यते ॥ ४८ ॥ अमेध्यपूर्णवदनः काकः सर्वार्थसाधकः ॥ ज्ञेयाः पतत्रिणोऽन्येमी काकवद्भृगुनन्दन ॥ ॥ ४९॥ स्कन्दादौ राम सव्यस्थाः श्वानो रिपुविनाशकाः ॥ इन्द्रस्थाने नरेन्द्रस्य पुरेशस्य तु गोपुरे ॥ ५० ॥ अन्तर्गृहे गृहेशस्य मरणाय भवेद् भृशम् ॥ यस्य व्रजति वामाङ्गं तस्य स्यादीर्थसिद्धये ॥ ५१ ॥ भयाय दक्षिणं चांगं तथा भुजमदक्षिणम् ॥ यात्राघातकरो यस्तु हर्षं प्रतिमुखागतः ॥ ५२ ॥ मार्गावरोधको मार्गे चौरस्तुदति भार्गव ॥ अलातास्थिमुखः पापो रज्जुमीरमुखस्तथा ॥ ५३ ॥ सोपानत्कमुखो धन्यो मांसपूर्णमुखोऽपि च ॥ अमङ्गल्यमथ द्रव्यं देशं चैवाशुभं तथा ॥ ५४ ॥ अवमूल्याग्रतो याति यातस्य न भयं भवेत् ॥ तथावमूत्त्यां व्रजति शुभं देशं तथा क्रमम् ॥ ५५ ॥ मङ्गल्यं च तथा द्रव्यं तस्य स्यादर्थसिद्धये ॥ एवञ्च राम विज्ञेयास्तथा वै जम्बुकादयः ॥ ५६ ॥ भयाय स्वामिनो ज्ञेया अनिमित्तभयं गवाम् ॥ निशि चौरभयाय स्याद्विकृतं मृत्यवे तथा ॥ ५७ ॥ शिवाय स्वामिनो रात्रौ बलीवर्दो नदन्भवेत् ॥ उत्सृष्टवृषभो राज्ञो विजयं संप्रयच्छति ॥५८॥ अभक्ष्यं भक्ष्ययन्तश्च गावो न्यासस्तथाम्बकान् ॥ त्यक्तस्नेहाश्च वत्सेषु गवां क्षयकरो मतः ॥ ५९ ॥ भूमिं पादैर्विनिर्हत्य दीना भूता विकारणात् ॥ अन्योन्यलग्नपुच्छाश्च गावो भयकरा मताः॥६०॥ आर्द्राङ्गा हृष्टरोमाश्च प्रविशन्त्यस्तथा गृहम् ॥ शृङ्गलग्नमृदो वापि विज्ञेयाः स्वामिवृद्धये ॥ ६१ ॥ महिष्यादिषु चाप्येतत्सर्वं वाच्यं विजानता ॥ नेत्रनासापुटप्रोथस्कंधस्यास

नमूर्धसु ॥ ६२ ॥ हयानां ज्वलनं शस्तमतोन्यत्र प्रशस्यते ॥ सर्वाङ्गज्वलनं नेष्टं तथा धूमसमुद्भवः ॥ ६३ ॥ विस्फुलिङ्गोद्भवश्चैव शकृत्यां स्वशनं तथा ॥ आरोहणं तथान्येन सपर्याणस्य वाजिनः ॥ ६४ ॥ जलोपवेशनं नेष्टं भूमौ च परिवर्तनम् ॥ विपत्कल्पतरङ्गस्य स्वतो वाप्यनिमित्ततः ॥ ६५ ॥ यवसोदकयोर्द्वेषस्त्वकस्माच्चैव शस्यते ॥ क्रीतः काकैः कपोतैर्वा शारिकाभिस्तुरङ्गमः ॥ ६६ ॥ आत्मनः स्वामिनो वापि तदा मरणवेदकः ॥ दुःखार्तध्यानशीलश्च साश्रुनेत्रो भयावहः ॥ ६७ ॥ जिह्वया लेढि चरणमसावपि भयङ्करः ॥ निर्निमित्तं पतति वा तदा स्यान्नृषु वृद्धये ॥ ६८ ॥ वामपादेन च तथा विलिखंश्च वसुन्धराम् ॥ स्वैनैव वामपार्श्वेन दिवा वा न शुभप्रदः ॥ ६९ ॥ प्रवेपमाना ह्वेषन्ते रोदन्ते च मुहुर्मुहुः ॥ शकृन्मूत्रे विमुञ्चन्तो वेदयन्ति महद्भयम् ॥ ७० ॥ उत्तिष्ठन्तो निषीदन्तः सन्ध्यायां दीनमानसाः ॥ स्रस्ताः सास्राश्च दीनाश्च ह्वेषमाणा भयावहाः ॥ ७१ ॥ ह्वेषतस्तु यदा ज्वाला ज्योत्स्ना वा मुखतो भवेत् ॥ तदा विजयमाख्याति स्वामिनो ध्रुवमेव हि ॥ ७२ ॥ दक्षिणेन पदा भूमिं विकिरञ्जयवर्धनः ॥ रात्रौ दक्षिणपार्श्वेन प्रस्वपंश्च नरोत्तम ॥ ७३ ॥ आरोहणं नवे दद्यात्प्रतीपं वा गृहं व्रजेत् ॥ यात्राविघातमाचष्टे वामं पादं तथा स्पृशन् ॥ ७४ ॥ अनुलोमं यदा याति पुरस्तात्प्रतिह्वेषिते ॥ दक्षिणं वा तथा पार्श्वं मुखेनोपरि मार्जति ॥७५॥ प्रेरितस्त्वनुकूलेन पवनेन रणे हयः ॥ ह्वेषमाणः परान्याति तदा स्याद्विजयावहः ॥ ७६ ॥ ग्रामे व्रजति नागश्चेन्मैथुनं देशहा भवेत् ॥ प्रसूता नागवनिता मत्ता चान्ताय भूपतेः ॥ ७७ ॥ दन्तभङ्गे शुभे देशे द्रुमे वा भयवर्धनः ॥ क्रूरेषु वेलालग्नेषु तथा राम विशेषतः ॥ ७८ ॥ गण्डूषधारणं कृत्वा वक्त्रभागे तु दक्षिणे ॥ हस्तं गृहीत्वा हस्तेन नागस्यान्यस्य वा पुनः ॥ ७९ ॥ उच्चैर्वा करमुन्नम्य विषाणे वाथ दक्षिणे ॥ गम्भीरं श्रोत्रमधुरं राज्ञस्तद्विजयावहम् ॥ ८० ॥ अतोन्यथा विपर्यस्तं त्वशुभं परिकीर्तितम् ॥ अरोहणं न चेद्दद्यात्प्रतीपं वा गृहं व्रजेत् ॥८१॥ मदं वा वारणो जह्याद्यात्राघातकरो भवेत् ॥ ग्राहगृहीतो द्विरदः सग्राहः सलिलाशयात् ॥ ८२ ॥ उत्तरन्विजयाय स्यात्सग्राहो भयवर्धनः ॥ शस्त्राङ्कुशपताकानां भूमौ निपतनं गजात् ॥ ८३॥ लोष्टकाष्ठकरीषाणां क्षेपणे चापि यद्भवेत् ॥ अनुयात्रं जयायैतत्प्रतियात्रं न शस्यते ॥ ॥ ८४ ॥ वार्यमाणो यदा नागः शत्रुणाभिमुखो व्रजेत् ॥ तरन्प्रसुततारं च यदा तेजः प्रशङ्कितः ॥ ८५ ॥ इष्टांस्तु यस्तु भक्ष्यांश्च तथा स्पृशति हस्तिनीम् ॥ राम बृंहितघण्टानां प्रतिशब्देन कुप्यते ॥ ८६ ॥ कक्षायां बद्ध्यमानायां यदा वोच्चैर्नदत्यपि ॥ यात्रानुगश्च भवति प्रहृष्टश्चैव वारणः ॥ ८७ ॥ वामं दक्षिणपादेन पादमाक्रमते तथा ॥ दक्षिणं च तथा दन्ते परिमार्ष्टि करेण

चेत् ॥ ८८ ॥ वेष्टयत्यथ वा कर्णौ तथा स्तब्धौ करोति च ॥ जयाय राज्ञो भवति जनयन्नपि शीकरम् ॥ ८९ ॥
वामं तु वेष्टयेद्दन्तं पादं वामेन दक्षिणम् ॥ पादमाक्रममाणश्च प्रस्खलन्निपतन्नपि ॥ ९० ॥ अग्रहस्तं नोद्धरति यदा च वसुधातलात् ॥ सास्रुश्च
कवलद्वेषी दीनो भयविवर्धनः ॥ ९१ ॥ निःश्वासं परमं कुर्वञ्छान्तं विकृतमेव च ॥ भयावहो विनिर्दिष्टः प्रतिलोमगतिस्तथा ॥ ९२ ॥
क्षीरपादपगुल्मानां निहन्ता विजयावहः ॥ तथा विकासिताक्षश्च राम लब्धपदोऽपि च ॥९३॥ वृषोश्वः कुञ्जरो वापि रिपुसैन्यं यदा व्रजेत् ॥
पराजयस्ततो ज्ञेयं लक्षणं भृगुनन्दन ॥ ९४ ॥ खण्डमेघाभिवृष्ट्या च सेनानाशमवाप्नुवान् ॥ प्रतिकूलग्रहर्क्षी च तथा संमुखमासता ॥ ९५ ॥
यात्राकाले रणे वापि च्छत्रादिपतनाद्भयम् ॥ विज्ञेयं भूमिपालस्य योधानां दीनता तथा ॥९६॥ नराश्वनागा हृष्टाश्च विधूमोऽग्निस्तथा ज्वलन् ॥
अनुलोमा ग्रहाश्चैव विज्ञेयञ्जयलक्षणम् ९७ ॥ आयुधानां प्रज्वलनं कोशादपि विनिर्गमः ॥ संग्रामकाले विज्ञेयं विजयस्य तु लक्षणम् ॥९८॥
काकैर्योधाभिभवनं क्रव्यादैर्मण्डलक्रिया ॥ सैन्योपर्युपसैन्येन विज्ञेयं भयलक्षणम् ॥ ९९ ॥ कण्डूतिर्दक्षिणे हस्ते छाया च शुभलक्षणा ॥
शोभा मनुजशार्दूल तत्कालं विजयावहा ॥ १०० ॥ सेनाङ्गसंस्थो भयकृद्द्विजेन्द्र क्रव्याद्भवेद्वाप्यथ मक्षिका च ॥ शुभावहाः स्युः शतपत्रचाषम
यूरहंसाश्च सजीवजीवाः ॥ १०१ ॥ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे रामं प्रति पुष्करोपाख्याने
शकुनवर्णनो नाम चतुःषष्ट्युत्तरशततमोऽध्यायः ॥ १६४ ॥ ॥ छ ॥ पुष्कर उवाच ॥ प्रष्टुर्देशे शुभे वेद्यं शुभं भवति
भार्गव ॥ अशुभे वाशुभं राम तन्मे निगदतः शृणु ॥ १ ॥ श्मशानसूनाभवनबन्धनागारवेश्मसु ॥ रथ्याकर्दमदुर्गेषु
शून्येषु भवनेषु च ॥ २ ॥ कण्टकिद्रुमयुक्तेषु शीर्णप्राकारवेश्मसु ॥ वल्मीकमूषिकासर्पसकीटेष्वशुभं वदेत् ॥ ३ ॥ मांसस्पृष्टोपलि
प्तेषु सुपुष्पेषु विशेषतः ॥ प्रशस्तद्रुमयुक्तेषु विद्याद्विजयलक्षणम् ॥ ४ ॥ सशाद्वलेषु तीरेषु सरितां सरसामपि ॥ भवनेषु विचित्रेषु शुभं वाच्यं
विजानता ॥ ५ ॥ अभ्यक्तं शोच्यमानं च मुक्तकेशं तथैव च ॥ भूमिष्ठमुपसर्पन्ति तेषां विद्यादशोभनम् ॥ ६ ॥ हृष्टशुक्लाम्बरोपेता सुमनस्कास्त
थैव च ॥ दैवज्ञमुपसर्पन्ति तेषां विद्याच्छुभं द्विजाः ॥७॥ बहवो दण्डहस्ताश्च काषायवसनास्तथा ॥ अभ्यक्तमुण्डपतितास्तथा क्लीबाश्च योषि
तः ॥८॥ शृङ्खलारज्जुहस्ताश्च संछिन्नफलपाणयः ॥ पृच्छन्तस्ते तु विज्ञेया नृपवशेषभयावहाः ॥९॥ शुक्लाम्बरा सपुष्पाश्च तथैव फलपाणयः॥
रत्नहस्ताः शुभा ज्ञेयास्तथा मङ्गलवादिनः ॥१०॥ वेलाः सर्वाः प्रपश्येत पूर्वाह्णे परिपृच्छतः ॥ सन्ध्ययोरपराह्णे च निशायां च विगर्हिताः॥११॥

शान्तां दिशमथास्थाय पृच्छतः सिद्धिमादिशेत् ॥ उदीचीं प्रागुदीचीं च पूर्वां चैव विशेषतः ॥ १२ ॥ अङ्गुष्ठनखपादोरुगुल्फमुष्कमुरस्तनाः ॥ गण्डशृङ्गाक्षिकौ कर्णौ दन्तोष्ठभुजमस्तकम् ॥ १३ ॥ गुरुर्लघुर्गुरुर्वस्तिश्च वक्षः कक्षोरुसन्धयः ॥ पुन्नामान्येवमादीनि स्पृशतः पृच्छतः शुभम् ॥ १४ ॥ कर्णपालिर्भ्रुवौ नासाजिह्वाग्रीवाकृकाटिकाः ॥ नाभिश्रोणी स्फिचे जंघे पिण्डिकाङ्गुलयोऽपि च ॥ १५ ॥ पाणिपादाश्रया रेखा वलयः सर्वसन्धिषु ॥ पार्ष्णिरित्येवमादीनि स्त्रीनामान्यभिनिर्दिशेत् ॥ १६ ॥ शिरो ललाटं चिबुकं मुखं पृष्ठोदरं त्रिकम् ॥ जठरं वस्तिशीर्षं च मेहनं जानुनी तथा ॥ १७ ॥ कर्णपीठेऽक्षिकूटे च पार्श्वे च हृदयं तथा ॥ नपुंसकानि जानीयुरंगविद्याविशारदाः ॥ १८ ॥ पुंनामानं दृढं स्निग्धमविभग्नमपीडितम् ॥ समं समाहितं चांगं वीरुजं च यदा स्पृशेत् ॥ १९ ॥ यमर्थमभिपृच्छेत तस्य सिद्धिं विनिर्दिशेत् ॥ शत्रुणाप्युदये प्रष्टुस्तल्लग्नस्य तथोदये ॥२०॥ शत्रुराश्युदये प्रष्टुस्तेषां वाप्यधिपोदये ॥ पराजयं तु वक्तव्यं स्वलग्नस्याष्टमोदये ॥ २१ ॥ स्वराशेश्च महाभाग तथा विद्यादशोभनम् ॥ स्वलग्नस्योदये राम शत्रुराश्युदये तथा ॥ २२ ॥ लग्नाद्वा राशितो वापि त्रिषष्ठदशमोदये ॥ एकादशोदये वापि तेषां वाप्यधिपोदये ॥ २३ ॥ प्रष्टुः सर्वार्थसंपत्तिर्विज्ञेया भृगुनन्दन ॥ लग्ने वा तच्चतुर्थे वा सप्तमे दशमेऽपि वा ॥ २४ ॥ पञ्चमे नवमे वापि शस्ताः सौम्यग्रहाः स्मृताः ॥ त्रिषड्दशसमं स्थाने पापाश्चैकादशे शुभाः॥२५॥सर्वार्थसाधका ज्ञेयाः प्रष्टुर्भृगुकुलोद्वह ॥ सौम्या बलाधिका ज्ञेयाः पापा हीनबलास्तथा ॥ २६ ॥ बलवच्च तथा लग्नं प्रश्नकाले शुभप्रदम् ॥ एवं तु प्रश्नकालेन शुभं विज्ञाय भूपतिः॥२७॥ यात्रा राम शुभा ज्ञेया नान्यथा तु कदाचन ॥ जातकं चाथ विज्ञाय दशाकाले सुशोभने ॥ अष्टवर्गबले शुद्धे यात्राकालः प्रशस्यते ॥ २८ ॥ परस्य दैवे त्वशुभे द्विजेन्द्र यात्रा च देया स्वशुभाय नित्यम् ॥ ग्रहादिपाकेषु शुभेषु चैव दत्ता भवेत्कार्यकरी यथावत् ॥ २९ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० वज्रसंवादे श्रीपरशुरामं प्रति पुष्करोपाख्याने अंगविद्यायोगो नाम पञ्चषष्ट्युत्तरशततमोऽध्यायः ॥ १६५ ॥ श्रीमार्कण्डेय उवाच ॥ अथ भार्गवो रामो वरुणनन्दनं पुष्करं नाम पप्रच्छ ॥ भगवञ्ज्योतिश्शास्त्रं श्रोतुमिच्छामि ॥ तमुवाच वारुणिः ॥ पुरा सुरर्षिगणमध्यगतं भगवन्तमतिशयं सर्वजगत्पालनसंहारकरं श्रीब्रह्माणं भृगुर्विज्ञापयामास ॥ भगवञ्ज्योतिषामयनं श्रोतुमिच्छामि तमुवाच भगवान्पितामहः ॥ यदा मे त्वं कल्पादौ हृदयाज्जातस्तदा मया ते श्लोकानां चतुर्विंशतिलक्षं ज्योतिरयनमुक्तं तदेवास्मिन्वारुणे यज्ञे महादेव शापेन ज्वालां भित्त्वा विनिर्गतस्य जन्मान्तरोत्पन्नस्यातिसंक्षिप्तं वक्ष्यामि ॥ तच्छ्रुत्वा सर्वमेव ते पूर्वजन्माभिहितं ज्योतिर्ज्ञानमाविर्भविष्यति ॥ अथ भगवान्सहस्ररश्मिर्विमलो

विमलमयूखः क्षेमाय शिखिपत्राकारः स्तवग्रहाय चन्द्र इव दृष्टिगम्यो राज्यस्याप्तये चन्द्रमाः समागमे ग्रहाणामुदङ्मध्यगतश्च दृश्यते । यथासं
भवं च नक्षत्राणां समागमे नक्षत्रादीन्यपि शस्यन्ते ॥ अथ यस्मिन्नक्षत्रे भौम उदयं प्रतिपद्यते तस्मात्सप्ताष्टनवमर्क्षे पूष्णोमुखं नाम वक्रं करोति
येनाग्निमन्तो ब्राह्मणा अग्निजीविनश्च पीडयन्ते । दशमैकादशद्वादशेऽश्वमुखं नाम मरककारकं करोति । त्रयोदशचतुर्दशयोर्व्यालाख्यं व्यालवृ
द्धिकरम् । पञ्चदशषोडशयो रुधिरमुखं संग्रामसूचकम् । सप्तदशाष्टादशयोरसिमुखं चौरप्राबल्यकरम् ॥ अथ बुधो भरणीकृत्तिकारोहिणीषु विच
रन्प्राकृतां गतिं सुभिक्षजननीं विचरति । आश्लेषारौद्रपित्र्येषु मिश्रां मिश्रफलदां पुनर्वसुपुष्यभाग्यार्यम्णेषु संक्षिप्तं मिश्रफलदामेव ॥ अहिर्बु
ध्न्याजपौष्णशक्राग्निनाम्नि तीक्ष्णां नाम विग्रहकारिणीं मूलादित्रितयसंयोगात्कान्तिकीर्त्यादिप्रदाम् । श्रवणधनिष्ठावारुणीत्वाष्ट्राणि, घोरां
घोरफलाम्॥जीवस्त्रयोदशभिर्मासै राशिं विचरञ्शुभो भवति,अन्यथा कष्टफलः । अथोदयास्तमयचारैः शुक्रस्य यमाद्यं नक्षत्रचतुष्टयमाद्यं मण्डलं
सुभिक्षजननं, रौद्राद्यमपि चतुष्टयं द्विजभयप्रदं, शक्राद्यं पञ्चर्क्षं रोगजननं, धनिष्ठाद्यं षण्णक्षत्रमतिवृष्टिकरमिति॥यद्देशद्रव्यपुरुषनक्षत्रेषु सौरो विच
रति, तत्पीडा बह्व्यो भवन्ति ॥ यस्यां दिशि केतोः शिखा दीप्ता भवति तं देशं नृपतिरभियुञ्ज्यात् । उपरागः श्वेतरक्तपीतकृष्णो राहोर्ब्राह्मणक्षत्रि
यविट्शूद्रपीडां करोति। अगस्त्यः स्फुरुणो[1] रूक्षतयोपहूतः शिखिशिखास्तोभयाय ।एवंविधा सप्तर्षयश्च ।एवंविधे त्रैलोक्यमपि पीडयते ऐशान्यां
दिशि कृत्तिकाभिः सहोदेति कुमारस्तस्मिन्नेवंविधे बालपीडा ॥ जीवज्ञसौराः पौराः । कुजशुक्रौ यायिग्रहौ । चन्द्रार्कौ मध्यमौ । तत्रार्केण सह ग्रहा
णामस्तमयो भवति । चन्द्रेण सह समागमः परस्परं युद्धम् । उदङ्मार्गगतः सुप्रभो विजयी भवति ।यायिग्रहे विजयिनि सबले च राजा परान
भियुञ्जीत, अन्यथा पौरेषु बलवत्सु यायिनां नाशः स्यात् । अगस्त्यवदुपहते नक्षत्रे तद्देशद्रव्यतज्जातपुरुषपीडा । वा यस्यां दिशि भूचलो
याति तां दिशं राजा यायात् । सनिर्घाते दीर्घे राजमरणं स्यात् । यां दिशमुल्का याति तां दिशं नृपो यायात् ।दिवोल्का चन्द्रार्कविनिर्गता उद्धाति
न्यतिस्थूला सस्फुलिङ्गा ततोर्ध्वगा राजमृत्यवे स्यात् । बहुवर्णे परिवेषे प्रजापीडा स्यात्, यतः खण्डः परिवेपः स्यात्, तां दिशं नृपतिर्यायात् ।
अतिभीमनिर्घातो राजमृत्यवे । यां च दिशं याति तां दिशं राजा यायात् । गन्धर्वनगरं शक्योद्भूतं महाभयाय । रात्राविन्द्रधनुः श्वेतं
व्यभ्रे च महाभयाय । प्रतिसूर्यं उदग्दक्षिणेनार्काद्वातकृत् । उभयस्थितो महावर्षाय उपरि राजमृत्यवे ॥ तथाधस्ताज्जनवि

१ 'स्फुरणो' इति क० ।

नाशाय । उभयथा महाभयाय सर्वतः त्रिभुवनपीडावहो भवति । या दिग्दाहेन दीप्ता स्यात्तां दिशं राजा यायात् । अति दीप्ते छायाव्यञ्जके राजमरणं विन्द्यात् ॥ अथ वा ध्रुवदारुणोग्रक्षिप्रचरसाधारणेषु यथा स्वकर्म ध्रुवादिकर्म क्रियमाणं सिद्धिमुपैति ॥ व्यतीपातविष्टिवैधृतास्तमितनक्षत्रेषु न किञ्चिदपि। तथा चार्कानलराहुधूमितज्वलितदग्धविद्धेषु नक्षत्रेषु तथा च विविधोत्पाताभिहतेषु यत्र यस्मिन्नक्षत्रे पुरुषस्य जन्म तन्नक्षत्रं तस्मान्नक्षत्राच्च दशमं तत एकोनविंशज्जन्मनक्षत्रमिति विन्द्यात् । ( सर्वस्माज्जन्मनक्षत्राद्द्वितीयं संपत्करम्। तृतीयं विपत्करं । चतुर्थं क्षेम्यम् । पञ्चमं प्रत्यरि । षष्ठं साधकम् । सप्तमं नैधनम् । अष्टमं मैत्रम् । नवमं परमं मैत्रं चेति)॥ तत्र सम्पत्करक्षेमसाधक मैत्रातिमैत्रेषु सर्वाणि कर्माणि कुर्यात् । दशमर्क्षे च ॥ यथा कर्मसु नक्षत्रे तिथिं रिक्तां विना कृतम्॥सौम्ये दिनकृते वत्स सिद्धिमायात्यसंशयम् ॥ इति श्रीविष्णुध० मा० व० सं० द्वि० खण्डे रामं प्रति पुष्करोपाख्याने ज्योतिःशास्त्रे शास्त्रशाखावर्णनो नाम षट्षष्ट्युत्तरशततमोऽध्यायः ॥ ॥ १६६ ॥ पुष्कर उवाच ॥ अथ ब्रह्माणं भगवंतं भृगुर्विज्ञापयामास भगवञ्ज्ञातुमुडुचक्रमिच्छामि । तमुवाच भगवान् । वत्स द्वादशराशयो भचक्रम् । त्रिंशद्भागाश्च राशेः । षष्टिः लिप्तश्च भागः । षष्टिर्विलिप्ताश्च लिप्ता षष्टिः परा विलिप्ता । षष्टिश्च नाडिका अहोरात्रम् । षष्टि र्विनाडिका। नाडिका तत्र यः काले प्राणः सा क्षेत्रे लिप्ता । तस्माद्यावता कालेन प्राणो भवति । दशगुर्वक्षरलक्षणस्तावता कालेन भचक्रस्यैका कलाभ्युदेति । सकलं भचक्रं नाडिकाषष्ट्येति ।तत्रादावेव राशिरजो रक्तवर्णः कालस्य मूर्धा (पूर्वावन्यो) दिवारात्रौ ग्राम्यः प्राग्द्वारः च तुष्पात् रात्रौ दक्षिणस्यां दिशि बली चरः पृष्ठोदयः क्रूरो विषमः पुमान् शनैश्चरस्य नीचः। विंशतिस्तथागतस्यैवातिनीचः। आदित्यस्योच्चः, तस्यैव दशमे भागेऽत्युच्चः अङ्गारक्षेत्रम् । तस्यैव त्रिकोणमिति ॥ वृषः श्वेतवर्णो मुखं कालस्यारण्यो दिवारात्रौ ग्राम्यो दक्षिणद्वारः चतुष्पाद्रात्रौ दक्षिणस्यां दिशिबली स्थिरः पृष्ठोदयः समः सौम्यः स्त्रीराशिः शुक्रक्षेत्रं चन्द्रमसस्त्रिकोणं तस्यैव च तृतीये भागे चात्युच्चमिति ॥ मिथुनः पुरुषो गदाधारी वीणाकरा नारी च हरितवर्णः कालस्य बाहू ग्राम्यः पश्चिमद्वारो द्विपात् पूर्वस्यां दिशि दिवा बली द्विस्वभावः शीर्षोदयः क्रूरो विषमः पुरुषराशिः बुधक्षेत्रमिति ॥ बली चरः पृष्ठोदयः कीटः सौम्यः समः स्त्रीराशिः चन्द्रक्षेत्रं भौमनीचः तस्याष्टविंशत्तमे भागेऽतिनीचो जीवोच्चस्तस्य पञ्चमे भागेऽत्युच्च इति ॥ सिंहः सिंहाकारः पाण्डुवर्णः कालस्योदरमारण्यः प्राग्द्वारः चतुष्पात् दक्षिणस्यां दिशि रात्रौ बली स्थिरः शीर्षोदयः



१ कोष्टान्तरगतः पाठः खपुस्तके नास्ति । कोष्टान्तरगतपाठे यत्र यत्र "क्लीवत्वं तत्र सर्वत्र खपुस्तके स्त्रीत्वम् । यथा—द्वितीया संपत्करा"—इत्यादि तदपि सुष्ठु ।

क्रूरो विषमः पुमान् आदित्यक्षेत्रं तत्रिकोणमिति ॥ कन्याराशिः कुमारी नौस्था दीपिकाहस्ता विचित्रवर्णा कालस्य कटिः ग्राम्यो दक्षिणद्वारः पूर्वस्यां दिशि बली स्थिरः शीर्षोदयः समः सौम्यः स्त्रीराशिः शुक्रस्य नीचः सप्तविंशतितमे भागे तस्यैवातिनीचो बुधस्योच्चस्तस्य पञ्चदशे भागेऽत्युच्चो बुधक्षेत्रं तत्रिकोणमिति ॥ तुला वणिक् पुरुषः तुलाधरापणवीथीगतः कृष्णवर्णः कालस्य[१] वस्तिस्थितो ग्राम्यः पश्चिमद्वारो द्विधा पूर्वस्यां दिशि बली चरः शीर्षोदयः क्रूरो विषमः पुरुषराशिः शुक्रक्षेत्रम् आदित्यनीचस्तस्यैव दशमे भागेऽतिनीचः शनैश्चरस्योच्चश्चोर्ध्वः तस्यैव विंशतितमे भागेऽत्युच्चः तस्यैवातिनीचो भौमक्षेत्रमिति ॥ धन्वीनाम धनुर्धरः पुरुषो हयपश्चिमार्धः पिङ्गलः कालस्योरू ग्राम्यः प्राग्द्वारः तस्य प्रागर्धो द्विपात्, द्वितीयमर्धं चतुष्पात् तस्य प्रथममर्धं पूर्वस्यां दिशि, दिवाबली पश्चिमान्तमर्धं रात्रौ दक्षिणस्यां दिशि बलवान्, द्विस्वभावः पृष्ठोदयः क्रूरः पुमान्विषमो जीवक्षेत्रं तत्रिकोणमिति ॥ मकरो नाम मृगः पूर्वार्धो मकरः, पश्चार्धो मृगः, प्रागर्धेनारण्यो द्वितीयार्धेनाम्बुचरः ( कर्बुरैः ) कालस्य जानुनी पूर्वार्धोर्धचतुष्पात्, पश्चार्धेन कीटो, दक्षिणद्वारः, प्रागर्धेन रात्रौ दक्षिणस्यां दिशि बली पश्चिमार्धेन, सन्ध्यायां पश्चिमायां दिशि चरः, नीचं बृहस्पतेः तस्यैव पश्चिमे भागेऽतिनीचं, भौमस्योच्चस्तस्यै वाष्टाविंशतितमे भागेऽत्युच्चः, सौरक्षेत्रमिति ॥ कुम्भो नाम पुरुषः स्कन्धेन रिक्तकुम्भधरः पिङ्गलः कालस्य जंघे द्विपाद्ग्राम्यः पश्चिमद्वारः पूर्वेण च दिवा बली शीर्षोदयः स्थिरः क्रूरः पुमान्विषमः शनैश्चरक्षेत्रं तत्रिकोणमिति ॥ मीनो नाम द्वौ मत्स्यावन्योन्यपुच्छादिमुखौ मत्स्यवर्णौ कालपादौ कीट उदीचः पश्चिमस्यां दिशि सन्ध्यायां बली पृष्ठपुच्छोदयो दूस्वभावः सौम्यः समः स्त्रीराशिः बुधस्य नीचं तस्यैव बुधस्य पञ्चदशभागेऽतिनीचं शुक्रस्योच्चं तस्यैव सप्तविंशतितमे भागेऽत्युच्चं जीवक्षेत्रमिति ॥ सर्वस्यैव राशेरर्धं होरा तत्र विषमराशिषु प्रथमा प्रथमा सौरी द्वितीया चान्द्री समराशिषु चान्द्री द्वितीया सौरी सर्वराशिषु द्रेष्काणत्रयम् । ते प्रथमपञ्चमनवमराशिनाथाः । प्राग्द्वाराणां राशीनां मेषाद्या न वांशकाः दक्षिणद्वाराणां मकराद्याः पश्चिमद्वाराणां तुलाद्याः उत्तरद्वाराणां कुलीराद्याः "सर्वादियो नवांशको"वर्गोत्तमः कर्कटवृश्चिकमीनानां चर मांशा गण्डान्ताः॥"राशौ राशौ द्वाभ्यां द्वाभ्यां द्वादशद्वादशभागाः" । त्रिंशांशकाः पञ्च भौमस्य,ततः पञ्च सौरस्य, ततोऽष्टौ जीवस्य,सप्त बुधस्या ष्टौ भृगोर्विषमे राशौ, समराशौ तु अष्टौ शुक्रस्य ततः सप्त बुधस्य ततोऽष्टौ जीवस्य पञ्च सौरस्य पञ्च भौमस्येति॥ एवं षट्पदार्थो लग्नः स स्वस्वा

१ अत्र पुस्तद्वयेऽपि त्रुटिरस्ति । २ बन्धान्तर्गतः पाठः खपुस्तके नास्ति ।

मिना जीवेन बुधेन शुक्रेण वा युक्तो दृष्टो बलवान्भवति। शेषैर्युक्तो दृष्टो हीनबलः स्यात्। एवं च राशिं सप्तमस्थो ग्रहः सर्वदृष्ट्या पश्यति चतुर्थाष्टमयोश्च स्थिताः पादा नेया दृष्ट्या पञ्चमनवमयोश्चार्धदृष्ट्या। तृतीयदशमयोश्च पाददृष्ट्या एक, द्वि, अष्ट,द्वादशे स्थितो न पश्यतीति, तत्रस्थं गृहमध्येर्धलग्नमुदयं विलग्नकेन्द्रं त्रिकोणम्। शरीरमिति लग्नस्याख्या,धान्यकुटुम्बं च द्वितीयस्य, उपचयं योधभ्रातृदुश्चिक्याख्यं तृतीयस्य, मित्रगृहं हिबुकं सुखवाहनकेन्द्रपालकाख्याश्चतुर्थस्य, पुत्रत्रिकोणबुद्धिसंज्ञाः पञ्चमस्य, उपचयारिसंज्ञे षष्ठस्य, जायाजामित्रास्तमार्गश्च्यवनद्यूनसंज्ञाः सप्तमस्य, छिद्रायुसंज्ञे चाष्टस्य, धर्मत्रिकोणत्रित्रिकोणच्छिद्रसंज्ञा नवमस्य, कर्मकेन्द्राकाशमेषूरणोपचयाख्यापनया दशमस्य, उपचयायलाभद्रव्याख्या एकादशस्य, रिष्फ 'घून' सव्ययाख्या द्वादशस्येति ॥ सर्वेभ्यः केन्द्रसंज्ञेभ्यो द्वितीयः पणफरः सर्वस्मात्पणफरात् द्वितीय आपोक्लिम इति ॥ आदित्याक्रान्तराशेः[1] द्वितीयो वेशि, द्वादशे बोसि, उभये उभयचरी चन्द्रात् द्वितीयः सुनफा। द्वादशश्चानफा। उभयोरपि लग्नश्च स्वामिनदुरुधरासंज्ञासमेतौ अत्र सहस्ररश्मिरादित्यः नात्युच्चो न्यग्रोधपरिमण्डलः पैत्तिकोऽस्थिसारो रक्तश्यामः पापः पुरुषः क्षत्रियः कालात्मा राजा प्राग्द्वारो दक्षिणस्यां वा दिशि उदगयने कृष्णपक्षे च बली ॥ चन्द्रमाः सहस्ररश्मिः तत्र वर्तुलाङ्गः दर्शनीयः स्वक्षः कफवातात्मा रुधिरसारः गौरः क्षीणः पापः पूर्णः सौम्यः स्त्रीग्रहः वैश्यः कालशमनः राजा पूर्वोत्तराभिमुखः उत्तरस्यां दिशि रात्रावुदगयने शुक्लपक्षे च बलवानिति ॥ भौमो नवरश्मिः ह्रस्वः पिङ्गाक्षः कपिलः पैत्तिको मज्जासारो रक्तगौरः पापः पुरुषग्रहः क्षत्रियः कालस्य सत्त्वं सेनानीः दक्षिणाभिमुखो वक्रे दक्षिणस्यां दिशि कृष्णपक्षे रात्रौ च बलवानिति ॥ बुधोष्टरश्मिर्मध्यमरूपः प्रमाणप्रकृतिः त्वक्सारः दूर्वाश्यामः सौम्यो न्यग्रोधसमेतप्रकृतिर्भवति नपुंसकः शूद्रः कालस्य वाक् युवराजः उदङ्मुखः उत्तरस्यां दिशि सर्वकालं वक्रे शुक्लपक्षे च बलवानिति ॥ सौरः सप्तरश्मिः कृष्णो दीर्घः वातप्रकृतिः पापो नपुंसकः कालस्य दुःखः प्रेष्यः पार्थिवाभिमुखः तस्यामेव दिशि रात्रौ वक्रे शुक्लपक्षे च बलवानिति॥ सर्वे च ग्रहाः स्वसंवत्सरे स्वायने स्वर्तौ स्वमासे स्वपक्षे स्वदिने स्वहोरायां स्ववर्गे बलवन्तो भवन्ति वर्गोत्तमस्थः स्वोच्चस्थः स्वत्रिकोणस्थश्च ग्रहयुद्धे च जयी रश्मिवपुर्धरश्च बलवान्भवति ॥ आदित्यस्य चन्द्राङ्गारकजीवा मित्राणि बुधस्समः शुक्रसौरावरी ॥ चन्द्रस्य ॥२९३॥
सूर्यबुधौ मित्रे शेषाः समाः ॥ भौमस्य जीवेन्दूष्णकराः सुहृदः, ज्ञोऽरिः, सितार्कजौ समौ ॥ बुधस्य सूर्यसितौ मित्रे, हिमगुः शत्रुः, भौमजीवशनै

१ 'क्रान्ततद्राशेः' इति०क०ख०।

श्चराः समाः ॥ जीवस्य सूर्येन्दुभौमा मित्राणि, रविसुतो मध्यः, सौम्यसितावरी ॥ शुक्रस्य बुधसौरौ मित्रे भौमजीवौ मध्यस्थौ सूर्येन्दू अरी ॥ सौरस्य बुधशुक्रौ मित्रे जीवो मध्यस्थः आदित्येन्दुकुजा रिपवः ॥ तत्काले च ग्रहाद्ग्रहो द्वितीयतृतीयतामेति मध्यश्चारितामारिरमित्रताम् ॥ तत्र गर्भः प्रथममासि कललं भवति द्वितीये घनीभवति ॥ तृतीयेऽवयवाश्चास्य भवन्ति चतुर्थेऽस्थीनि पञ्चमे त्वक् षष्ठे बलं सप्तमे लोमानि अष्टमे क्षुद् नवमे उद्वेगः दशमे प्रसवः तत्रास्य मासक्रमेण शुक्राङ्गारकबृहस्पतिदिवाकरचन्द्रसौरबुधा वा ॥ लग्नाधिपतिचन्द्रार्काः पतयः आधानकाले यः कलुषो भवति स स्वमासे गर्भपीडां करोति योऽन्यग्रहविजितः केतूल्काभिहतः स स्वमासे गर्भपाताय भवति जन्मलग्न पञ्चमषष्ठसप्तमाष्टमनवमेषु चन्द्रमाः पापयुतः सौम्यदृग्योगवर्जितो वा तस्य मरणाय भवति लग्नचतुर्थसप्तमाष्टमेषु पापद्वयम ध्यगतश्च षष्ठाष्टमयोः पापदृष्टोऽपि षष्ठाष्टमैरन्यतमे बुधजीवशुक्राणामन्यतमो वक्रिणा पापेन दृष्टः सौम्यग्रहेण चादृष्टो मरणाय लग्नप श्चान्ते पापयुतश्च यत्र तत्र राशौ नवमांशः पापसन्ध्यायां चन्द्रहोरा च चत्वार्यपि च केन्द्राणि यमार्कचन्द्रभौमसौरावेतरे भचक्र पूर्वार्धे पापाः पश्चार्धे सौम्याः कर्कटवृश्चिकान्यतमोदये च केन्द्राष्टमेनेति। पापैः क्षीणचन्द्रोदये च लग्नान्यधर्माष्टमस्थैः चन्द्रशनैश्चरार्कभौमैः जीवे च बलहीने चन्द्रग्रहेण कालः सक्रूरे चन्द्रे लग्नगे भौमेष्टमे मात्रा सह म्रियते ऐवंविधेर्के शस्त्रेण। एवमरिष्टान्यष्टवर्षान्तरे विद्यात्। अथ तात्कालिकस्य ग्रहस्य राशिभागलिप्ता अष्टाधिकशतार्द्धगणना कार्या भगणानां द्वादशावशेषे वर्षमासदिनघटिका भवन्ति। लग्नाद्द्वादशस्थः सर्वमपहरति एकादशगो अर्द्धम् दशमस्थस्त्र्यांशं नवमस्थश्च चतुर्थमष्टमस्थः पञ्चमम्। सप्तमस्थः षष्ठमेवं पापः सौम्यस्तदर्द्धं बहुष्वेकर्क्षगेषु बल वानेवैकोङ्गारकवर्जं शत्रुक्षेत्रस्थस्त्र्यांशं हरति शुक्रसौरवर्जितावस्तमिताश्च सर्वेश्वरीवेधम्। वर्गोत्तमस्वराशिद्रेष्काणांशगतश्च द्विगुणं हानिवृद्धी वा एकामेव महतीं प्रयच्छति एवं निर्णीतमायुर्यावद्येन ग्रहेण दत्तं तावत्कालं तदंशा ज्ञेया लग्नाद्दशा च ग्रहवद्लवांश्च लग्नो भक्तराशितुल्यानि वर्षाण्यन्यानि प्रयच्छति। दशा च लग्नार्कचन्द्राणां बलवतः प्रथमा भवति ततस्तत्कण्टकस्थानां बलवत्क्रमेणैव ततः पणफरगतानां तत आपो क्लिमगतानामिति। तत्रोच्चत्रिकोणस्वक्षेत्रवर्गोत्तमगतस्य शुभा विपरीतस्य चाशुभा लग्नदशा लग्नपग्रहवशेनागतस्यैकराशिगोग्रहोवमाननिदम्यस्व गुणानसापतिनवमपञ्चमगस्तृतीयेन चतुर्थगश्चतुर्थेन सप्तमगः सप्तमगेन बहुष्वेकोऽवयवो अथान्यदशायामष्टमग्रहवशेन म्रियते तत्रार्केणा ग्निना, चन्द्रमसा सलिलेन, भौमेन शस्त्रेण, बुधेन ज्वरेण, जीवेनामयेन, शुक्रेण तृष्णया, सौरेण क्षुधा, अष्टमं ग्रहरहितं यो ग्रहो बलवान्पश्यति

तद्धातुकायेन म्रियते अष्टमे ग्रहयोगदृग्रहिते द्वाविंशः द्रेष्काणाधिपतिकथितमृत्युना म्रियते । जन्मकाले यत्र स्थानेऽर्को व्यवस्थितस्तस्मात्स्थाना
त्तृतीयषष्ठदशमैकादशेषु भौमस्थानात्प्रथमद्वितीयचतुर्थसप्तमाष्टमनवमदशमैकादशेषु बुधात्तृतीयपञ्चमषष्ठनवमदशैकादशद्वादशेषु जीवात्पञ्चमषष्ठ
नवमैकादशेषु शुक्रात्षट्सप्तद्वादशेषु शनैश्चरात्प्रथमद्वितीयचतुर्थसप्तमाष्टमनवमदशैकादशेषु लग्नात्तृतीयचतुर्थषष्ठदशमैकादशद्वादशेषु चन्द्रार्क
स्थानात्तृतीयसप्तमाष्टमदशमैकादशेषु स्वात्प्रथमतृतीयषष्ठसप्तमदशमैकादशेषु शुक्रात्तृतीयचतुर्थपञ्चमसप्तमनवमैकादशेषु भौमार्कात्तृतीयपञ्चमषष्ठ
दशमैकादशेषु स्वात्प्रथमद्वितीयचतुर्थसप्तमाष्टमदशमैकादशेषु बुधात्तृतीयपञ्चमषष्ठदशमैकादशद्वादशेषु शुक्रात्षष्ठाष्टमैकादशद्वादशेषु सौरात्प्रथ
मचतुर्थसप्तमाष्टमदशमैकादशेषु लग्नात्प्रथमतृतीयषष्ठदशमैकादशेषु बुधार्कात्पञ्चमषष्ठाष्टमनवमैकादशेषु चन्द्राद्द्वितीयचतुर्थषष्ठाष्टमदशमैकादशेषु
भौमात्प्रथमद्वितीयचतुर्थसप्तमाष्टमनवमैकादशेषु स्वात्प्रथमतृतीयपञ्चमषष्ठनवमैकादशद्वादशेषु शुभः । जीवात्षष्ठाष्टमैकादशद्वादशेषु शुभः ।
शुक्रात्प्रथमतृतीयचतुर्थपञ्चमाष्टमनवमैकादशेषु सौरात्प्रथमद्वितीयचतुर्थसप्तमाष्टमनवमदशमैकादशेषु लग्नात्प्रथमद्वितीयचतुर्थषष्ठाष्टमदशमैका
दशेषु जीवोऽर्कात्प्रथमद्वित्रिचतुर्थसप्तमाष्टमदशमैकादशेषु धर्माद्द्वितीयपञ्चमसप्तमनवमैकादशेषु भौमात्प्रथमद्वित्रिचतुःसप्ताष्टदशमैकादशेषु बुधात्
प्रथमद्विचतुःपञ्चषड्दशैकादशेषु जीवात् प्रथमद्वित्रिचतुःसप्ताष्टदशमैकादशेषु ॥ शुक्राद्द्विपञ्चषण्णवदशैकादशेषु सौरात्त्रिपञ्चसप्तदशैकादशेषु लग्नात्प्र
थमद्विचतुःपञ्चषट्सप्तदशैकादशेषु जीवात्पञ्चाष्टनवमैकादशेषु स्वात्प्रथमद्विचतुःपंचाष्टनवमैकादशेषु सौरात्त्रिचतुःपञ्चाष्टनवमैकादशेषु लग्नात्प्रथम
द्वित्रिचतुःपञ्चाष्टनवमैकादशेषु सौरोऽर्कात्प्रथमद्विचतुःसप्ताष्टदशमैकादशेषु चन्द्राद्द्विषडेकादशेषु भौमात्त्रिपञ्चषड्दशैकादशेषु बुधात्षष्ठनवदशैकादश
द्वादशेषु जीवात्पञ्चषष्ठैकादशद्वादशेषु शुक्रात्षडेकादशद्वादशेषु स्वात्त्रिपञ्चषडेकादशेषु लग्नात्प्रथमद्विचतुर्दशमेषु येषु नोक्तः शुभस्तेषु सर्व एवा
शुभो भवति । शुभाशुभविशेषश्च चारवशात्फलं प्रयच्छति दशाफलमव्यभिचारि अष्टवर्गफलमशुभं शान्त्यादिभिरुपहतं भवति चात्र--अनफासु
नफास्थाने न शस्ते ग्रहवर्जिते ॥ सर्वेषां चैव केन्द्राणां शून्यता न प्रशस्यते ॥ कर्किणीच झषाणां च चरमोंऽशस्तथैव च ॥ शत्रुक्षेत्रस्तथा
नीचो ग्रहाणां गर्हणा स्थितिः ॥ सूर्यमण्डलगाश्चैव न प्रशस्तास्तथा ग्रहाः ॥ जन्मपो लग्नपश्चैव श्रेष्ठौ बलसमन्वितौ ॥ तावेतौ विबलौ यस्य
तमधन्यं विनिर्दिशेत् ॥ एकोऽपि परमोच्चस्थो मित्रदृष्टस्तथा ग्रहः ॥ जनयत्यवनीशत्वं शत्रुपक्षक्षयङ्करम् ॥ अतीव स्वस्थो विज्ञेयः स्वोच्चे
लग्नगते ग्रहः ॥ भावमानं न प्रशस्तं तथा जन्मनि कीर्तितम् ॥ चन्द्रः शस्तो हि विज्ञेयो दृष्टे क्षेत्राधिपेन तु ॥ तं मित्रेण तथा ग्रहान्

प्रशस्तं तदरातिभिः ॥ चत्वारोऽपि यदा केन्द्रा युक्ताः स्वोच्चगतैर्ग्रहैः ॥ तदा जातो विनिर्दिष्टः समस्तवसुधाधिपः ॥ त्रयो वा तस्य यस्य स्युर्वशे पृथ्वी ससागरा ॥ द्वौ तु केन्द्रगतौ यस्य ग्रहौ कर्किणि चन्द्रमाः ॥ सोऽपि राजा विनिर्दिष्ट एकेनापि तथा द्विज ॥ सर्वैस्तु परमोच्चस्थै स्त्रैलोक्याधिपतिर्भवेत् ॥ मित्रक्षेत्रे तथात्मीये तथा वर्गोत्तमेष्वपि ॥ स्वोच्चे वा स्वत्रिकोणे वा ग्रहाणां शस्यते स्थितिः ॥ ग्रहाणां चतुरादीनां तथा योगो विगर्हितः ॥ राजवंशे तथा भूपारुयाद्यैः स्वस्वग्रहोपगैः ॥ अन्यवंशभवा भूपाः पञ्चाढयैरपि च द्विज ॥ त्रिकोणोच्च गतैरेव विशेषेण द्विजोत्तम ॥ भावे विकारकाः सौम्याः पापा भावविनाशनाः ॥ तृतीये च तथा षष्ठे दशमैकादशेऽपि च ॥ स्थितिः पापग्रहाणां च प्रशस्ता परिकीर्तिता ॥ षष्ठाः सर्वग्रहाः शस्ता न शस्ता द्वादशाष्टमाः ॥ चन्द्रे लग्नगते मूर्खा विना वृषकुलीरके ॥ सूर्ये लग्नगते ज्ञेयास्तथा जयबलाननाः ॥ बलवद्ग्रहयुक्तैश्च विज्ञेया ईश(रूप)चेष्टितैः ॥ चन्द्रयुग्रा (पुष्पा) विशीलाश्च विज्ञातव्यास्तथैव च॥ पापाः पापबला ज्ञेयाः सौम्याः सौम्यबलास्तथा ॥ चन्द्रादुपचयर्क्षस्थैर्ग्रहा ज्ञेया धनान्विताः ॥ एतावदुक्तं सारं ते होरासंग्रहमुत्तमम् ॥ इति श्रीवि० मा० वं० सं० द्वि० ख० रामं प्रति पुष्करोपाख्याने जातकाध्यायो नाम सप्तषष्ट्युत्तरशततमोऽध्यायः ॥ १६७ ॥ पुष्कर उवाच ॥ अथ भगवन्तं भुवनोत्पत्तिस्थितिसंहा रकारकं चराचरगुरुमतियशसमभिगम्य भृगुर्विज्ञापयामास । भगवञ्ज्योतिःशास्त्रं विना गणितेन दुःखगाहमतो गणितविधिमाचक्ष्व । तमुवाच श्रीभगवाञ्छृणु वत्स गणितज्ञानम् । अनादिनिधनः कालः प्रजापतिर्विष्णुस्तस्य ग्रहगत्यनुसारेण ज्ञानं गणितम् । तत्रार्कभागभोगः सौराहोरात्रा स्तिथिश्च चान्द्रः अर्कोदयात्तदुदयात्सावनः । चन्द्रनक्षत्रभोगो नक्षत्रम् । सावनोऽहोरात्रा नराणाम् । तेषामार्कं दिनं व्यर्का रात्रिः चन्द्रमसः पितृ णामहोरात्रम् । तेषां कृष्णाष्टम्यामर्कोदयः । अमावस्यायां मध्याह्नः । शुक्लाष्टम्यामर्कास्तमयः । पौर्णमास्यामर्धरात्रम् । अर्कभगणभोगो दिव्योऽ होरात्रः । तेषामर्कस्य मेषप्रवेशे सूर्योदयः, कर्कटप्रवेशे मध्याह्नः । तुलाप्रवेशेऽस्तमयः मकरप्रवेशेऽर्धरात्रः ॥ मेषादिस्थे मध्यमे जीवे जीवमानैराश्वयु जादयो वत्सरा भवन्ति । लङ्कायामर्कोदये चैत्रशुक्लप्रतिपदारम्भेऽर्कदिनादावश्विन्यादौ किंस्तुघ्नादौ रात्रावथार्कोदये काले प्रवृत्तिः। होरादिप्रवृत्तिश्च । लङ्कातश्च यावन्मेरोर्याम्योत्तरदेशान्तरे रेखा तत्पूर्वेणापरेण बलकालार्कोदयकालप्रवृत्तिः लङ्कार्योदयकालं तन्मण्डलम् । स्वदेशविषुवादर्कोदयविषु वन्मण्डलत्वं प्रतिदिनं चरदलवशेनार्कोदयः । क्षितिजं मण्डलम् । तत्रार्कभगणभोगेन सौराब्दः । येषामब्दानां वै त्रयेण गुणसेकं वेदः कलियुगम्, द्विगुणं द्वापरम्, त्रिगुणं त्रेता, चतुर्गुणं कृतम्, शून्यचतुष्टयं यमाग्निवेगाश्चतुर्युगम् । एकसप्ततिश्चतुर्युगानि मन्वन्तरम् । चतुर्दश मन्वन्तराणि कल्पः ।

मन्वन्तराणां चाद्यान्तरालेषु कृतयुगप्रमाणं सन्धिः॥ एवं चतुर्युगः स कल्पः । कल्पेन सप्त शून्यानि वसाग्निवेदाश्चारुभगणपरिवर्तना भवन्ति । पञ्च शून्यानि गुणाग्निपञ्चसप्तमार्थचन्द्राश्चंद्रमसः। भौमस्य द्वितीयपञ्चाष्टनवाष्टं तनवयमयमलाः।बुधस्याष्टनवाष्टनवनवरामाश्विनवसमचन्द्राः ।जीवस्य पञ्च पञ्चद्विषट्पञ्चद्विषडक्षद्विकृतरसगुणाः । शुक्रस्य यमनवाश्विनवाष्टाग्नियमखगिरयः । सौरस्याष्टनवयमगिरिरसपञ्चमनवः[1] । आदित्यमन्दगगनाष्टावुदयः । चन्द्रमसोप्यष्टार्थवस्वर्थदिक्स्वष्टवेदाः । कुजमन्दयमनरपक्षाः बुधमन्दस्य द्वित्रिगुणाः। जीवस्य पञ्चपञ्चद्विषडक्षद्विकृतरसगुणाः। शुक्रस्य यमनवाश्विनवाष्टाग्नियमखगिरयः। सौरस्याष्टनवयमा गिरिरसपञ्चमनवः । आदित्यमन्दगगनाष्टावुदयः। चन्द्रमसोप्यष्टार्थवस्वर्थदिक्स्वष्टवेदाः । कुजमन्दयमनरपक्षाः । बुधमन्दस्य द्वित्रिगुणाः। जीवजीवमन्दस्य बाणशरवसवः । शुक्रमन्दस्य गुणशरवसवः। सौरमन्दस्य शशिवेदाः । चन्द्रपातस्य वसुरसशशिरुद्राग्निदशनयमलाः । भौमपातस्य महीध्ररन्ध्रयमलाः । बुधपातस्य चन्द्राद्यर्थयमलाः । जीवपातस्य गुणरसाः। सौरपातस्य त्रिनववसवः । अष्टशून्यो विलयमरसखरविमुनिवसुनिशाकराः । सनवग्रहाणां प्राग्यापमानां कल्पाष्टककल्पाधनो यस्य भगणभागोपक्रियते तस्यैव कक्षायोजनानि लभ्यन्ते । यस्य बहवो भगणपरिवर्तास्तस्योपरि तस्य कक्षा । यस्यालपाः कक्षा वर्गदशभागमूलकक्षा कर्णस्तदर्धेनोपरिभवो ग्रहावस्थानं कर्णवर्गस्य दशगुणितस्य मूलकक्षा । एवं सर्ववृत्तानां परिधिव्यासानयनम् । यत्र च सर्वग्रहाणामेकत्वमेव दृश्यते सा खरसेन्दुयमकक्षा । तस्या योजनतलिप्ते मध्यमखखरसेन्दुयज्ञैर्यस्यैव कक्षा विभज्यन्ते तस्यैव लिप्तयोजनानि लभ्यन्ते । कल्पाद्ययोजनसभा वै कक्षाः । यदनन्तरं वितिमिरं रविः करोति पक्षपक्षेश्वतवोदार्कमण्डलप्रमाणम् । वेदावेदाश्चन्द्रमसः । पञ्चदश भौमस्य । षष्टिर्बुधस्य । खार्का जीवस्य । खखयमाः शुक्रस्य । त्रिंशत्सौरस्य । द्वादश दृश्यादृश्यांशाश्चन्द्रमसः । सप्त दश भौमस्य। त्रयोदश बुधस्य । एकादश जीवस्य । नव च शुक्रस्य । पञ्चदश सौरस्य । त्रिभागोनाश्चतुर्दशभागाः सूर्यस्य । एकात्रिंशद्भागाः षट्त्रिंशल्लिप्ताश्चन्द्रमसः । सप्ततिर्भौमस्य । वसुरामा बुधस्य । गुणरामा जीवस्य । भवाः शुक्रस्य । त्रिंशच्छनैश्चरस्य । एवं परिधयो भौमस्य । शीघ्रपरिधिगुणवेराश्च संभागालिमाः चत्वारिंशद्बुधस्य । भागा यमाग्निचन्द्राः अष्टगुणा जीवस्य । वस्वर्थपक्षाः शुक्रस्य । पञ्चविंशतिः सौरस्य । परिवेशेनोर्द्धमधश्च ग्रहगतिर्ज्ञेया । खखरसेन्दुयमलानां षण्णवतिभागः प्रथमा ज्या । तदेवं प्रथमं ज्यान्तरा तस्य प्रथमजीव

१ 'यमबाणशरवसवः' इति पाठः ।

तया भागमुपहृत्याप्तं प्रथमज्यान्तरात्संशोध्य द्वितीयं ज्यान्तरं द्वितीयप्रथमज्यान्तरयोगे द्वितीयप्रथमं ज्यान्तरयोगो जीवा । ततः प्रथमं जीवाप्तं सद्वितीयज्यान्तरात्संशोध्य तृतीयं ज्यान्तरम् । ततः द्वितीयजीवयोगस्तृतीया । ततः प्रथमजीवात्संशोध्य चतुर्थं ज्यान्तरम् ॥ एवं तृतीयजीवायां दत्त्वा चतुर्थी ज्या । तस्याः प्रथमजीवायां भागमपहृत्याप्तं चतुर्थाज्यान्तरात्संशोध्य पञ्चमज्यान्तरम् । ततश्चतुर्थजीवायां दत्त्वा षष्ठी ज्या । ततः प्रथमजीवाप्तं पञ्चमे ज्यान्तरं संशोध्य षष्ठं ज्यान्तरं पञ्चमजीवायां दत्त्वा सप्तमी ज्या । ततः प्रथमजीवाप्तं सप्तमज्यान्तरात्संशोध्याष्टमम् । तत्सप्तमजीवायां दत्त्वा नवमी ज्या । ततः प्रथमजीवान्तरेणाप्तं दशमज्यान्तरात्संशोध्य नवमं ज्यान्तरम् । तं नवमजीवायां दत्त्वा दशमी ज्या । ततः प्रथमज्यावाप्तम् । एकादशाज्ज्यान्तरात्संशोध्य द्वादशं ज्यान्तरम् । तदेकादशजीवायां दत्त्वा द्वादशी ज्या । ततः प्रथमज्यावाप्तं द्वादशज्यान्तरात्संशोध्य त्रयोदशं ज्यान्तरम् । तत्त्रयोदशजीवायां दत्त्वा चतुर्दशी ज्या । ततः प्रथमज्यावाप्तं चतुर्दशज्यान्तरात्संशोध्य पञ्चदशज्यान्तरम् । ततश्चतुर्दशजीवायां दत्त्वा पञ्चदशी ज्या । ततः प्रथमज्यावाप्तं पञ्चदशाज्ज्यान्तरात्संशोध्य षोडशं ज्यान्तरम् । तत्पञ्चदशजीवायां संशोध्य षोडशी ज्या । ततः प्रथमज्यावाप्तं षोडशज्यान्तरात्संशोध्य सप्तदशं ज्यान्तरम् । तत्षोडशजीवायां दत्त्वा सप्तदशी ज्या । ततः प्रथमज्यावाप्तं सप्तदशज्यान्तरात्संशोध्याष्टादशमं ज्यान्तरम् ॥ तत्सप्तदश जीवायां दत्त्वाष्टादशी ज्या । ततः प्रथमज्यावाप्तम् । अष्टादशाज्ज्यान्तरात्संशोध्य एकोनविंशं ज्यान्तरम् । तदष्टादशजीवायां दत्त्वैकोनविंशी ज्या । ततः प्रथमज्यावाप्तमेकोनविंशाज्ज्यान्तरात्संशोध्य विंशतितमं ज्यान्तरम् । तदेकोनविंशजीवायां दत्त्वा विंशतितमी ज्या । ततः प्रथमज्यावाप्तं विंशाज्ज्यान्तरात्संशोध्यैकविंशं ज्यान्तरम् । तद्विंशतिजीवायां दत्त्वा एकविंशी ज्या। ततः प्रथमज्यावाप्तं एकविंशाज्ज्यान्तरात्संशोध्य द्वाविंशं ज्यान्तरम् । तदेकविंशजीवायां दत्त्वा द्वाविंशी ज्या । ततः प्रथमज्यावाप्तं द्वाविंशाज्ज्यान्तरात्संशोध्य त्रयोविंशं ज्यान्तरम् ॥ तद्द्वाविंशजीवायां दत्त्वा त्रयोविंशी ज्या । ततः प्रथमं ज्यावाप्तं त्रयोविंशाज्ज्यान्तरात्संशोध्य चतुर्विंशं ज्यान्तरम् । तत्त्रयोविंशजीवायां दत्त्वा चतुर्विंशी ज्या । ततः प्रथमज्यावाप्तं चतुर्विंशाज्ज्यान्तरात्संशोध्य पञ्चविंशं ज्यान्तरम् । तच्चतुर्विंशजीवायां दत्त्वा पञ्चविंशी ज्या । खखरसेन्दुकक्षायां च व्यासार्धं तदेवानुपदन्यासायाम् । ज्यान्तरव्यस्तानामन्तरालयोगे चतुर्विंशतिः शरा भवन्ति । क्रमज्याकृतिजीवाभिस्तस्तत्क्रमज्याकृतिः शरे यासां लिप्तानां जीवा क्रियते तत्केन्द्रस्तस्य च राशित्रये पदाख्या प्रथमपदस्थे तद्गमं चतुर्थपदस्थे चक्रादूनम् । ज्याकेन्द्रलिप्ता राशिलिप्ताष्टविभा

गेन विभाज्या। लब्धाङ्कसमाश्च स्थाप्याः। अवशेषं तदनन्तरं ज्यान्तरेण गुणयेत्। राशिलिप्ताष्टभागेन विभजेत्। लब्धं स्थापितजीवायां दत्त्वेष्ट ज्यासिद्धिः। कालक्षणेभ्यो लिप्तत्वेन परिकल्पितेभ्यो जीवा कार्या। लिप्ताभ्यो यावन्ति ज्यान्तराणि संशुद्ध्यन्ति तावन्ति संशोध्यावशिष्टभागलिप्ताष्टभागाहतमशुद्धज्यान्तरेण विभजेत्। लब्धहतासु आद्यष्टकभागलिप्तासु क्षिपेत्। शरान्तरैरेवं शरचापः भागचतुर्विंशतिज्यापरमापक्रमज्या मेषादिस्थो विषुवल्लेखास्थो ग्रहो भवति। कुलीरादिस्थश्चान्तरेण। परमापक्रमान्तस्थो भवति। तुलादिस्थो विषुवल्लेखास्थः मकरादिस्थो दक्षिणेन परमापक्रमहतां व्यासार्धेन विभजेत्। लब्धं चन्द्रस्फुटविक्षेपः। तात्कालिकशीघ्रं स्फुटं सुपाते योज्यं बुधशुक्रयोः स्वमदाविक्षेपहतां स्फुटान्त्यकर्णेन विभजेत्, लब्धं तयोः स्फुटविक्षेपः। तात्कालिकस्फुटग्रहस्फुटपातयोगज्यां भौमजीवसौराणां मध्यविक्षेपहतां स्फुटान्त्यकर्णेन विभजेत्, लब्धं तेषां स्फुटविक्षेपः। उत्क्रान्तिचापस्फुटविक्षेपयोर्दिशैको योगः तज्जीवस्यक्रान्तिः, तस्या नियोगः शिष्यते सा दिक् तद्गोलस्थश्च ग्रहो भवति। एवं ग्रहाणामुत्तरेण दक्षिणेन गतिर्ज्ञेया। भचक्रवशेनोदयास्तमयौ कुर्वतः पश्चिमेन यान्ति। पूर्वां व्रजन्तो भगणपरिवर्तान्कुर्वन्ति तत्र च सूर्याश्चपातैः सममेव लङ्कादक्षिणोत्तररेखायाः फाल्गुनान्ते सर्व एव कल्पादावर्कोदये मीनमेषसन्धिगा भवन्ति। कल्पावसाने च मेषप्रवेशे वा भानोर्गगनमध्यवर्तिन्यादित्ये द्वादशाङ्गुलेन शंकुना समावनौ छाया ग्राह्या, तद्वर्गं व्यासार्धवर्गहते च्छायाशंकुवर्गयोगेन विभजेत्, लब्धमक्षज्यावर्गः। तत्पदमक्षज्या तच्चापं स्वदेशाक्षः तं राशित्रयादपास्य स्वदेशावलम्बको भवति। तज्ज्यावलम्बकज्या त्रिज्या वर्गस्य स्वक्रान्तिवर्गोनस्य पदं स्वाहर्व्यासार्धस्तस्य च स्वक्रान्तिवशेन दिक्। स्वक्रान्तिविषुवच्छायाहता शंकुहता क्षितिजा, सा त्रिज्याहता स्वाहर्न्यासार्धभाजिता क्षये वृद्धिज्या। तद्धनुश्चरार्धं वा प्राणास्तद्घटिकाभिः पञ्चदशघटिकायुता दिनार्धम्। ऊना रात्र्यर्धगा एवमुत्तरगोलस्था दक्षिणकारः स्वस्वभागापहारः अवामधनुषामबोधः। शोधनं व्यक्षराश्युदयप्राणाः मेषवृषमिथुनानां क्रमेण कर्कटसिंहकन्यानामुत्क्रमेण। मेषवृषमिथुनजीवादिः प्राग्वच्चरप्राणाः कर्तव्याः। तेषामवबोधः शोधनं च तेनैकद्वित्र्याक्षरप्राणाः तैः क्रमेण मेषवृषमिथुनाः प्राणहीनाः उत्क्रमेण कुलीरसिंहकन्यानाम्। युक्तस्वदेशे चराः व्युदयप्राणा भवन्ति त एवोत्क्रमेण तुलादीनां मीनादीनामपि अर्धदिनमध्याह्नच्छायाग्रमूलयाम्योत्तराग्रमूलाग्रपरिलेखमत्स्यमुखपुच्छरेखा प्राच्यापरा आदित्यचन्द्रयोरन्यतमस्य देशान्तरकर्म विना ग्रहणं न कार्यम्। तद्यथागते काले यदि भवति तदा रेखामध्ये स्वदेशो ज्ञेयः। अथादौ रेखा पश्चाच्चेत्प्राक् तत्कालान्तरं षष्टिहतं पञ्चभिः सहस्रैर्विभजेत्। लब्धदेशान्तरयोजनानि ग्रहस्यार्धं रात्रान्मध्याह्नं यावत्पूर्वः

कालो मध्याह्नादपररात्रं यावदपरस्तत्रार्कस्य कालमविलङ्घयन् छायाद्वयं गृह्णीयात् । तत्कर्णौ व्यत्यासेन शंकुप्राच्यपरान्ते रहितौ तदनन्तरं विषुवच्छायाग्रहणमिष्टेऽह्नि इष्टदिनाक्षवैषुवताक्षान्तमेकदिगभिमुखीभ्यश्छायाभ्यो युक्तं स्वरापक्रमः तेन त्रिज्याहता परमापक्रमज्याया विभजेत् । लब्धचापमर्कः प्रथमे पदे द्वितीयाद्भावाच्छुद्धः । तृतीयेन युक्तः चतुर्थे चक्राच्छुद्धः । विषुवच्छाया तरुणा च हीयमाना च च्छाया प्रथमपदस्थेऽर्के भवति, ऊना वृद्धिमती द्वितीयस्थे, वृद्धिमत्यधिका तृतीयस्थे, हीयमानाधिका चतुर्थस्थे, एवमतीतदिवसार्कस्य तदर्कस्य च विवरं स्फुटभुक्तिः । आदित्योदयास्तमयाद्वा चन्द्रोदयं दृष्ट्वा नग्रदद्धरितोऽर्कस्तेन कालेन चन्द्रमा भवति चन्द्रान्नक्षत्रज्ञानम्, चन्द्रार्कविवरात्तिथिज्ञानं तस्मादहर्गणः । स्फुटार्काद्विपरीतकर्मणा मध्यमार्कः । सौरजीवयोश्चारात्संवत्सरः । चन्द्रवत्सर्वग्रहक्रिया, ग्रहेभ्यो वा कल्पगतकालज्ञानम्, एवं कालपरिच्छेदः । अश्विन्यादीनां ध्रुवका राश्याद्याः, खमष्टौ खंखंखयमाः खंशशीमुनयोष्टयमाः शशीनवेन्दवोऽश्वयमाः पक्षौ गुणाः खपक्षौ शैलाः खंगुणा गुणाः खं गुणा षोडशखं त्रीण्यष्टादशखं वेदा रन्ध्राणि खं वेदाः सप्तयमाः खं शरा नखाः खं रसा पुष्करा खं रसा नवेन्दवः खं सप्त पक्षौ शरा मुनयो मनवो भूतानि च सप्त नवेन्दवः पञ्च अष्टौ च खं अष्टौ जनखं अष्टौ नखः खं अष्टौ चत्वारि खं नव वसवः खं सूर्यमुनयः खम् । अथैतेषां विक्षेपांशाः दश द्वादश पञ्चदश एकादश षड् खं सप्त खं द्वादश त्रयोदश एकादश द्वावष्टात्रिंशत्सार्धं त्रीणि चत्वारि सार्धान्यष्टौ पञ्चविभागाः पञ्च द्विषष्टिः त्रिंशत् अंशविभागः चतुर्विंशतिः षड्विंशतिः शून्यं चाश्विनी भरणी कृत्तिकापुनर्वसुपुष्यमघाभाग्यार्यमाणः ॥ स्वातिवैश्वदेवाभिजिच्छ्रवणधनिष्ठाजाहिर्बुध्न्यरेवतीनाम्। उत्तरा रोहिणी सौम्यार्द्रासार्पहस्ताचित्राविशाखामैत्रेन्द्रमूलाप्यवारुणाना याम्याः । रेवत्युदयः प्राची सर्वस्य महती योगतारा राशिद्वयं सप्तविंशतिर्भागाः अगस्त्यध्रुवकः सप्तभिर्भागैस्तस्य याम्यो विक्षेपः । अथ भौमादीनां वक्रकेन्द्राणि राश्याद्यानि पञ्च मनवः खं वेदाः षडयमाः खं पञ्च वेदाः खं पञ्च पञ्चदश खं वेदास्त्रयोदश खम् । अथानुवक्रकेन्द्राणि षड्षोडश खं सप्त वेदाः खं षडयमाः खं ( षट्पञ्चविंशतिः खंखं मनवः खं षड्गुणाः खं ) सप्तदश खम् । अथ पूर्वाद्धारोदयकेन्द्राणि खमष्टयमाः खं षट्पञ्चविंशतिः खं खं मनः खं षड्गुणाः खं खं सप्तदश खम् । अथ पश्चार्धास्तमयकेन्द्राणि एकादश द्वौ खं पञ्चपञ्च खं एकादशषोडश खं पञ्चसप्तविंशतिखं एकादश त्रयोदश खम् । अथ बुधशुक्रयोः पूर्वार्धास्तमयकेन्द्रे दशदश खं एकादश षोडश खं चत्वारि शून्यानि चत्वारि शून्यानि पंचवेदरसाग्नियमपक्षाष्टशरेन्दवः कल्पनप्रतिनक्षत्रोदयः त एवार्कभगणोना दिवसाः । अर्कभगणा द्वादशहतास्तं मासास्तैस्त्रिंशद्धतास्तद्दिवसाश्चन्द्रभगणाः सप्तविंशति

हता नक्षत्रदिवसाः भगणांतरमर्केन्द्रोश्चन्द्रमसस्ते त्रिंशद्गुणास्तद्दिवसाश्चन्द्रमासः । सूर्यमासोनाधिमासाश्चन्द्रदिवसस्तु दिवसान्तरमवमानीति । इति श्रीविष्णुधर्मोत्तरे मा०व० सं० द्वि० खं० रामं प्रति पुष्करोपाख्याने उपकरणविवरणं नामष्टषष्ट्युत्तरशततमोध्यायः ॥१६८॥ अथ यथाकालं गतमनवस्त्वेकसप्ततिहताश्चतुर्युगाब्दहताः कार्याः । तेषु कृतप्रमाणं क्षेप्यम् । तमेव तत्र भूयो गतसंख्याहतं च ततो वर्तमानमन्वन्तराद्गतचतुर्युगसंख्याहतानि चतुर्युगाब्दानि युगानि च वर्तमानयुगाचैत्रप्रभवगताब्दानि च एवमिष्टकालाब्दगणो भवति । स द्वादशहतश्चैत्रसितादिमासयुक्तस्त्रिंशद्धतोवमानमितादितिथिसहितः कार्यः । एवं सौरो दिनगणो भवति । तं पृथक्कल्पाधिमासकहतं कल्पनविदिनैर्विभजेत् । लब्धं गताधिमासाः । तैस्त्रिंशदब्दैरर्काहर्गणोयुक्ते चन्द्राहर्गणो भवति। तं पृथक्कल्पावमहतं कल्पचन्द्रदिनैर्विभजेत् । लब्धं गतोनरात्रिः तैश्चन्द्राहर्गणाद्धनं साधनाहर्गणो भवति। अधिमासशेषस्य कल्पाधिमासकैर्भागे हते एष्याधिमासकैर्भागे हते गताधिमासकस्य दिनादिः कालो लभ्यते। अधिमासशेषं कल्परविदिवसेभ्यः संशोध्यावशेषस्य कल्पाधिमासकैर्भागे हते एष्येधिमासेकतास्य कालो लभ्यते। अवमशेषस्य कल्पेन रात्रेर्भागे हते एष्योनरात्रकालः अवमशेषकल्पचन्द्रदिवसेभ्यः संशोध्यावशेषस्य कल्पोनरात्रेनरात्रेर्भागे हते एष्योनरात्रपातकालः संवत्सरगणात्पंचहतावशेषे संवत्सराद्योब्दः आदित्यः, चन्द्रः, भौमः,बुधः, जीवः, सितः, सौरश्चेति क्रमेण ग्रहणं संवत्सराः सप्तहतावशेषे चतुर्थक्रमेण संवत्सराधिपः सावनादिनगणात्सप्तहतात्क्रमेणैव दिवसाधिपः चान्द्राः दिनगणा दशात्यधिकशतहताल्लब्धं सप्तहतं तदवशेषं पर्व ब्रह्मचन्द्रेंद्रवैश्रवणवरुणाग्नियमाश्च पर्वपतयः दिनगणमिष्टग्रहभगणगुणभूदिनैर्विभजेत् । लब्धं भगणादिः लेखार्कोदयो ग्रहो भवति । एवंरूपेणाहर्गणेन ग्रहभुक्तिः । इष्टां कालाद्यावताकालेनार्कोदयो भविष्यति तावता कालेन ग्रहस्यैकदिवसभुक्तिं संगुण्य षष्ट्या विभजेत् । अवाप्तं रव्युदये ग्रहस्य धनमस्तमये ऋणम् । एवमुत्तरगोले दक्षिणेन विपरीत दिशान्तरयोजनानि षष्ट्यासङ्गुण्य पञ्चभिः सहस्रैर्विभजेत् । लब्धं लेखाप्राग्भावे संशोध्यमपरस्मिन्देयमेवमिष्टे देशे । इष्टे च काले ग्रहो मध्यमो भवति ।तत्कालार्कचन्द्रमन्दकर्मणैव स्फुटे कार्यो भौमः कर्मचतुष्टयेन तस्य मन्दं शीघ्रं मंदं शीघ्रमिति च कर्माणि । अन्येषां मन्दशीघ्रे कर्मणी तत्र भौममर्दः संस्कार्यः तच्छीघ्रपरिधिश्च शुक्रस्य परिधिद्वमयपि तत्र भौमजीवसौराणामर्कः शीघ्रः । स्वयं मध्यमो बुधशुक्रयोरर्को मध्यमः । स्वयं शीघ्रोशीघ्रो ग्रहोनं केन्द्रः ग्रहश्च मन्दोनः भौमशीघ्रकेन्द्रपदभुक्ताभुक्तयोरल्पस्य जीवं चतुर्भिः शतैः ग्रहैश्च मन्दोनः भाणितं द्वादश्या.जीवया विभजेत्।लब्धेन केन्द्रे मकरादिगे भौममन्दयुतं कार्यं कर्कटादिगे चोनमिति शुक्रमदं केन्द्रज्यां न्यासार्धावहृतां

लब्धेन तं मदं परिधिरूनः स्पष्टो भवति। तस्यैव शीघ्रकेन्द्रज्यां व्यासार्धं पञ्चमेन विभजेत्। लब्धे युतः शुक्रशीघ्रपरिधिः स्पष्टो भवतीति मन्दकेन्द्रात् जीवा भुजज्या त्रिराशिसहिताकोंटिज्याकोटिभुजज्ये स्वमर्दवारिधिहते खरसाभिर्भिर्विभजेत् । लब्धं भुजकोटिपाते मकरादिकेन्द्रे कोटिफलं व्यासार्थे दद्यात। कुलीरादिके शोधयेत्कोटिर्भवति । भुजाफलं भुजा कोटिभुजावर्गयोगमूलं कर्णः व्यासार्धहतां भुजज्यां स्फुटकर्णेन विभजेत्। लब्धचापं फलकलाः मेषादिकेन्द्रे ग्रहे शोध्यास्तुलादौ देयाः। भौमस्य प्रथममन्दकर्मण्यधिकृताः एवं स्पन्दस्फुटं ग्रहं शीघ्रा दपास्य केन्द्रं कृतैतदेव शीघ्रपरिधिना कर्म कुर्यात्। तत्फलं मन्दस्फुटे ग्रहे मेषादिकेन्द्रे धनं तुलाद्दणमिति। भौमस्य प्रथमे शीघ्रकर्मणि तदूनीकृतं एवं ग्रहः स्फुटो भवति। बुधसितपातौ विपरीतेन अब्दफलेन स्फुटौ कार्यौ भौमजीवसौराणां शीघ्रान्त्यफलेनानुलोमेनानीतवर्तमानस्फुटं ग्रहान्तरं स्फुटभुक्तिः अर्कफलम्। स्फुभक्तिहतं भवनकलाभिर्विभजेत् लब्धमर्ककेन्द्रवशे तद्वदेव ग्रहस्य धनर्णे योज्ये। अन्त्यशीघ्रकर्माविशेषं केन्द्रस्य वक्रादिकेन्द्रस्य वान्तरं स्फुटभुक्तिशीघ्रभुत्संतरेण विभजेत्। लब्धो वक्रादेर्दिनादिः कालः ध्रुवककेन्द्रेधिक एष्यः शीघ्रकेन्द्रेधिकेतीतः॥ इति श्रीवि॰ मा॰ वज्रसं॰ द्वितीयखण्डे रामं प्रति पुष्करोपाख्याने ज्योतिःशास्त्रे ग्रहगतिर्नामैकोनसप्तत्युत्तरशततमोऽध्यायः॥ १६९॥ स्फुटग्रहं लितीकृतम् अष्टभिः शतैर्विभजेत्। लब्धं ग्रहेण भुक्तान्यश्विन्याद्यानि नक्षत्राणि शेषं स्फुटभुक्त्या विभजेत्। लब्धं दिनादिः कालो नक्षत्रप्रविष्टस्य अवशेषमष्टभ्यः शतेभ्यः संशोध्यावमेषात् प्राग्वतकालो नक्षत्रस्थितेः राशौ भुक्ता अभुक्ता वा स्फुटभुक्ता विभजेत्। लब्धं दिनादिः संक्रान्तेर्गतैष्यः कालः अथ योजनकर्णान्तं सर्वांत्याविशेषकर्णाद्यन्तं व्यस्तं व्यसार्धेन विभजेत्। लब्धं स्फुटयोजनकर्णार्थां ग्रहाः प्रमाणविष्कंभयोजनानि व्यासार्धहतानि स्फुटयोजनकर्णार्धेन विभजेत्। लब्धं स्फुटग्रहाप्रमाणव्यासकलाः स्फुटान्यर्ककर्णार्धयोजनानि पांच साहस्रिकस्य परिधेः कर्णोनानि तेनैव गुणितानि रविन्यासे न तद्गुणेन विभजेत्। लब्धं भूच्छाया स्फुटराशिकर्णार्धोनपाञ्चसाहस्रिकस्य। परिधेः कर्णहतां भूच्छायया विभजेत्। लब्धं व्यासार्धगुणं चन्द्रस्फुटयोजनकर्णार्धेन विभजेत् लब्धं राहुमानकलाः। ग्रहमानार्धकलाः षष्टिगुणा भुक्त्या विभजेत्। लब्धं संक्रांतिकालात्प्रागपरेण च पुण्यकालः। अर्कोनाच्चन्द्राल्लितीकृतात् वयमागतभक्ताच्छुक्लप्रतिपदाद्या तिथिः। शेषात्षष्टिगुण्याद्भुक्तान्तरहताद्घटिकादिः कालः कृष्णचतुर्दशांतः सदैव शकुनिः अमाया आद्यर्धे चतुष्पात् द्वितीये नागः प्रतिपदाद्यर्धे किंस्तुघ्नम अर्कोनचन्द्रलिप्ताः खरदाग्निभिर्विभजेत्।अवशेषात्तिथिवत्कालः लब्धादेकोनात्सप्तमहतादवशेषं बवाद्यं करणं चन्द्रार्कयोगे चन्द्रार्धयोरासनेघातवै

धृते तेन चन्द्रार्कयोः क्रान्तिसाम्ये। तत्र व्यतीपातौर्भिन्ननयने गोलैकत्वे च वैधृतः समायने गोलभेदे च ध्रुवकार्कचन्द्रयोगान्तरं चन्द्रार्कभुक्तियोगेन विभजेत्। लब्धेन ध्रुवकादित्ये चन्द्रार्कयोगाधिकाविति । ततोर्कात्क्रान्तिस्तात्कालिकपातेन चन्द्रात्स्वक्रान्तिः प्रथमतृतीयपादान्तस्थे चन्द्रस्य क्रान्तेः चन्द्रक्रान्तिर्यदोना भवति तदा क्रांतिसाम्याराबाः प्रथमतृतीयपदस्थे चन्द्रमसि तदपक्रममर्कापक्रमादूने एष्यः क्रान्तिसाम्यकालोन्यथातीतः। द्वितीयचतुर्थपदस्थान्यथाविक्षेपेण स्वक्रान्तिदिगुत्पत्तौ चन्द्रापक्रममधिकृतं कल्पयेत्। क्रांतेर्युतिरन्यदिशोरेकदिशोरन्तरं व्यतीपातेन्यथा वैधृतिप्रथमाख्यः। एवमिष्टकालिकैरर्कचन्द्रपातैर्द्वितीयादयस्ततः प्रथमद्वितीयकालयोः द्वयोरेष्योतीतो वा पातस्तदा तयोरन्तरम्। अन्यथा योगो भागापहारः प्रथमगुणितस्येष्टकालस्य ते कालस्य तेन कालेनासकृत् द्वितीयं कृत्वा विशेषकर्मणा स्फुटकालः साध्यः स व्यतीपातपातमध्यकालः। आदित्यचन्द्रमानयोगः षष्टिगुणो भुक्त्यन्तरेण हतो लब्धा स्थितिरिति ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखंडे मार्कण्डेयवज्रसंवादे तिथिनक्षत्रप्रकरणं नाम सप्तत्युत्तरशततमोऽध्यायः ॥ १७० ॥ दिनगतशेषाल्पकालस्योत्तरगोलेर्धरात्राद्धीनस्य दक्षिणे युक्तस्य जीवासाहोरात्रावहतात्रिज्याहतो गोलविपर्ययेण त्रिज्यायुतोन्यच्छेदः। छेदोवलम्बकव्याहतः त्रिज्याविभाजितः शंकुः। शंकुवर्गहीनस्य त्रिज्यावर्गस्य पदं दृश्यद्वादशहता शंकुहता छाया मध्याह्निकार्कक्रान्त्या साक्षसंयोगविवरो दक्षिणोत्तरगोलयोरनिष्ट तद्राशित्रयादपास्य तज्ज्याभागापहारः द्वादशहताया अनष्टजीवाया लब्धं साध्याह्निकी च्छाया त्रिद्यार्कघातमध्याह्नच्छायाभागापहारविभक्तस्तत्कर्णः विषुवकर्णहतां त्रिद्यां स्वेष्टकायाकर्णेन विभजेत्। लब्धमुत्तरदक्षिणगोलयोः क्षितिज्यया युतोनव्यासार्धताडितं स्वाहोरात्रार्धेन विभजेत्। लब्धा चायं गोलविपर्ययाश्चरदलोनयुतं दिवसस्य गतं शेषं वा भवति ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे ज्योतिःशास्त्रे छायाप्रकरणं नामैकसप्तत्युत्तरशततमोऽध्यायः ॥ १७१ ॥ इष्टकालस्फुटार्कराशिभुक्तलितास्तदा क्रान्तिराश्युदयप्राणाहताग्रहताग्रहलिप्ताभिर्विभजेत्। लब्धमर्कक्रान्तिराशेर्दिनभागकालः तदिष्टकालप्राणेभ्योण स्यादित्ये चाभुक्तलिप्ता देयाः काले चानन्तरराश्युदयाश्रयास्याः अर्क..................चराच्युदयो देयः शेषादशुद्धराश्युदयैर्भावाद्याः। एवं राशिगत काललग्नोदयः षड्राशियुतार्का अर्कभुक्तकालाद्याः कालाः लग्नाश्च भुक्तकलाभ्यस्तद्योगे तदन्तरा व्युदये युते लग्नोदयः कालः ॥ इति श्रीवि० मा० व० सं० द्वि० लग्नप्रकरणं नाम द्विसप्तत्युत्तरशततमोऽध्यायः ॥ १७२ ॥ भौमजीवमंदाः केन्द्रः शीघ्रः बुधसितौ वक्रे मंदावत्यथाशीघ्रौ मन्दग्रहर्कांतरगाः कालदृश्यादृश्यांशेन यदा तदा पूर्वार्धोदयास्तमययोरार्कोदयिको ग्रहः पश्चार्धेन तदास्तमयिकः तात्कालिकग्रहस्फुटविक्षेपमदाज्याह

तव्यासार्धेन विभजेत् । लब्धग्रह औदयिके ऋणमास्तमयिकवनउत्तरविक्षेपपरमापक्रमेण विभजेत्। लब्धमयनविक्षेपैन्ये शोध्यमन्यथादेयम् । एवं ग्रहोदयास्तलग्नौ भवतः । ततो ग्रहान्तराल्लग्नवत्कालः कलांशग्रहान्तरांशानां भुजान्तरेण भागमपहरेत् । ग्रहे वक्रिणि भुक्तियोगेन लब्धो दिनादिः कालमुपास्तमयस्य एव नक्षत्राणां तेषां द्वादश दृश्यादृश्यांशः अगस्त्यध्रुवकदिक्कर्मद्वयकं कृत्वा तद्घटिकाद्वयेन स्वदेशराश्युदये वर्धयेत् । तादृशेर्केगस्त्योदयः वक्रोनेस्तमयः प्रतिदैवसिक उदयो ग्रहान्तं लग्नवशेनेति ॥ इति श्रीवि० ध० द्वि० खं० मा०सं० उदयास्तमयप्रकरणं नाम त्रिसप्तत्युत्तरशततमोऽध्यायः ॥ १७३ ॥ स्वोदयास्तविलग्नौ चन्द्रार्कयोः ततश्चन्द्रोदयास्तकालौ साध्यौ इष्टकालिकचन्द्रार्कस्वक्रान्ति त्रिज्यागुणे विलस्वज्यया विभजेत् । लब्धेग्रे क्रान्तिदिष्टेशेन ततोर्कचन्द्रशंकुकार्यौ पृथक्च्छंकुहताक्षज्यावलम्बकेन विभजेत् । लब्धे शङ्कुतले तौ चोत्तरे स्वरात्रौ दिवसयाम्ये द्वादशशंकुतलयोर्दिशैको योगो दिग्भेदवियोगः पृथग्बाहुः तयोर्दिगैको वियोगोन्यथा योगः स्फुटबाहुः स्वदृगर्ण्य वर्जभुजावर्गविश्लेषपदयोगः कपालभेदे साम्ये वियोगः प्रथमांशजां दिगैवातिश्लेषो दिग्भेदो युतिर्द्वितीयः प्रथमद्वितीयवर्गयोगपदं कोटिः कोटि बाहुवर्गयोगमूलकर्णः अर्कोनाश्चन्द्रार्केर्द्धं तस्माज्ज्याकेन्द्रलिप्ताश्चन्द्रमासलिप्ताः तस्माज्ज्याकेन्द्रलिप्ताश्चन्द्रमानघ्नाः नवत्याहतास्मिन् केन्द्र प्रथमचतुर्थपदस्थे द्वितीयस्थे कृष्णम् इन्दुमानचतुर्भागकृतास्मितेर्कमानभुजककर्णकोटिसूत्राण्यङ्गुलतां यान्ति पूर्वापराशाभिमुखार्केन्द्राण्याद्य पदगे मितशृङ्गं परिलिखेत् । एवं द्वितीयतृतीयगे कृष्णं बिन्दुमर्कं परिकल्प्य ततोर्काद्यथा शशी तथा भुजा देया तदग्रात्स्वाभिमुख्येन कोटिः ततः तदंतलग्नेन पूर्वान्तं पुनःपुनः सत्कुलम् । यावदविशेषं लब्धोनं स्यात् इति लम्बनं संस्कृते तिथ्यन्ते ग्रहणमध्यश्चन्द्रश्चन्द्रवत्कलिपताद्वित्रि भात्स्वक्रान्तिः अक्षे सौम्या शोध्या याम्या देया तज्ज्यामध्यमचन्द्रार्कभुक्त्यंतरहता शरेर्कहतया त्रिज्यया विभजेत् । लब्धभवनतिः स्वक्रान्ति तोक्षेधिके सौम्यान्यथा याम्या तात्कालिकचन्द्रविक्षेपावनन्यादिगैक्ये योगो दिग्भेदो वियोगः स्फुटविक्षेपः तेन स्थिते मन्दभदलोनयुतैर्ग्रहैः स्पर्शनिमीलोन्मीलनमोक्षकालिकैर्लम्बनमानि कार्याणि मध्यलम्बनस्येष्टलंबनस्य धनर्णैकोन्तरे भेदयोगः फलम् । तेन मध्यस्थित्यरविमन्दावेव युते स्वकालिके स्फुटे भवतः पञ्चदशं घटिकाकालिकं लंबने फलेन हीने विमंदार्धे कार्ये शेषं परिलेखाद्ये चंद्रग्रहणवद्भवति ॥ धन्यं यशस्यमायुष्यं स्वर्गलोकप्रदं तथा ॥ इदं ग्रहाणां गणितं सर्वकामप्रदं शिवम् ॥ गतिमेकस्य विज्ञाय ग्रहस्य सुसमाहितः ॥ तस्य लोकमवाप्नोति नात्र कार्या विचारणा ॥ सर्वग्रहगतिं ज्ञात्वा ब्रह्मलोकं प्रपद्यते ॥ धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात् ॥ कामानवाप्नुयात्कामी मोक्षार्थी परमं

पदम् ॥ सम्यग्ग्रहगतिं ज्ञात्वा पात्रतां याति वै द्विजः॥न चेद् वृत्तिं तथा कुर्यात्तथा वृत्तिं विवर्जयेत्॥ पात्राणामपि तत्पात्रं ग्रहाणां वेत्ति यो गतिम्॥ वेदास्तु यज्ञार्थमभिप्रवृत्ताः कालानुपूर्व्या विहिताश्च यज्ञाः ॥ तस्मादिदं कालविधानशास्त्रं यो ज्योतिषं वेद स वेद सर्वम् ॥ इति श्रीवि० ध० द्वि० ख० मा० सं० पैतामहसिद्धान्तो नाम चतुःसप्तत्युत्तरशततमोऽध्यायः ॥ १७४ ॥ ॥ छ ॥ समाप्तं पैतामहसिद्धान्तम्। श्रीपरशुराम उवाच ॥ भगवन्सर्वधर्मज्ञ सर्वशास्त्रविशारद ॥ जिगीषूणां समाचक्ष्व यात्राकालं महीक्षिताम् ॥ १ ॥ पुष्कर उवाच ॥ सर्वेषामेव वर्णानां यात्राकालं निबोध मे ॥ अधिकृत्य महीनाथं विजिगीषोर्गुणान्वितम् ॥ २ ॥ पूर्वे कपाले पौरोऽर्के यायी भवति चापरे ॥ यायिग्रहौ शुक्रकुजौ शेषाः पौराः प्रकीर्तिताः ॥ ३ ॥ पौरग्रहैर्बलोपेतैर्न यात्रां सम्प्रयोजयेत् ॥ यायिग्रहबले राजा नित्यं यात्रां प्रयोजयेत् ॥ ४ ॥ ( अस्तं गते नीचगते विवशे रिपुराशिगे ॥ प्रतिलोमं च विध्वस्ते शुक्रे यात्रां विवर्जयेत् ॥ ५ ॥ ) प्रतिलोमे बुधे यात्रा दिक्पतौ च तथा ग्रहे ॥ विष्टौ वृष्ट्यां वाति वाते वात्यायाश्च विवर्जयेत् ॥ ६ ॥ वैधृते च व्यतीपाते नागे च शकुनौ तथा ॥ चतुष्पदे च किंस्तुघ्ने तथा यात्रां विवर्जयेत् ॥ ॥ ७ ॥ विपत्करे नैधने च प्रत्यरौ भे च जन्मनि ॥ गणे विवर्जयेद्यात्रां रिक्तायां च तिथावपि ॥ ८ ॥ उदीची च तथा प्राची तयोरैक्यं प्रकीर्तितम् ॥ पश्चिमा दक्षिणा या दिक्तयोरैक्यं तथैव च ॥ ९ ॥ वाय्वग्निदिक्समुद्भूतं परिधिन्तु न लंघयेत् ॥ राम संवत्सराद्येषु सर्वेष्वेव महीपतिः ॥ १० ॥ संवत्सरमदिक्प्राची परिपूर्वस्य दक्षिणा ॥ तत्पूर्वस्यापरा ज्ञेया चानुपूर्वस्य दक्षिणा ॥ ११ ॥ अद्वारस्तु विनिर्दिष्टस्तथा वत्सरसंज्ञितः ॥ उत्तरायणगे सूर्ये प्राचीं यायादिशं नृपः ॥ १२ ॥ चन्द्रे च ब्राह्मणश्रेष्ठ पश्चिमां दक्षिणस्थिते ॥ तयोरयनभेदेन यायात्सूर्यायनं दिवा ॥ १३ ॥ रात्रौ चान्द्रायणं यायाद्या दिगुक्ता मया तव ॥ वसन्त उत्तरद्वारे ग्रीष्मः प्राग्द्वारिकस्तथा ॥ १४ ॥ शरच्च पश्चिमद्वारः शिशिरश्चोत्तरामुखः ॥ हेमन्तः सर्वतोद्वारः प्रावृडद्वारिका स्मृता ॥ १५ ॥ नक्षत्रवद्देवताभिर्या यस्य तु दिगुच्यते ॥ मासार्धेऽस्य महाभाग तथैव परिकीर्तिता ॥ १६ ॥ आदित्यचन्द्रसौरार्कदिवसास्तु न शोभनाः॥ त एव चातुकूलस्य दिवसो न प्रशस्यते ॥ १७ ॥ प्राग्द्वारो भास्करो ज्ञेयो दक्षिणेन तथा कुजः ॥ पश्चिमेन शनैश्चारी उदग्द्वारस्तु चन्द्रमाः ॥ १८ ॥ सर्वद्वाराः स्मृता राम जीवशुक्रेन्दुनन्दनाः ॥ तेषां हि दिवसाः शस्ता विशेषेण गमिष्यताम् ॥१९॥ समागमे जितो यस्तु जीवो मित्रगृहे स्थितः॥ स्फुरणो रश्मिहीनश्च न प्रशंसन्ति तद्दिनम् ॥२०॥उच्चस्थो मित्रगृहगः स्वक्षेत्रस्थश्च यो ग्रहः ॥ विजयी रश्मिवांस्थूलो दिनं तस्य प्रशस्यते॥२१॥

कृत्तिकाद्यानि पूर्वेण मघाद्यानि च याम्यतः॥ मैत्राद्याः पश्चिमेनाथ वासवाद्यानि चाप्युदक् ॥ २२ ॥ सर्वद्वाराणि तत्रापि दिवाद्यानि विनिर्दिशेत् ॥ भवन्ति स्तम्भसंज्ञानि तानि दिङ्मध्यगानि च ॥ २३ ॥ स्तम्भर्क्षाद्यानि पूर्वाणि तानि प्रावेशिकानि तु ॥ निर्गमर्क्षाणि जानीयात्स्तम्भर्क्षाद्युत्तराणि तु॥२४॥ प्रवेशभेषु दुष्टेषु यायिनां विजयं वदेत् ॥ स्तम्भभेषु तु दुष्टेषु दुर्गाणां ग्रहणे तदा ॥२५॥ निर्गमर्क्षेषु दुष्टेषु नागराणां जयं वदेत् ॥ ऋक्षे पापग्रहाक्रान्ते तथा चास्तमिते द्विज ॥ २६ ॥ दग्धे च धूमिते वापि रजसोपहतेऽथ वा ॥ केतुना धूमिते वापि परिविष्टेऽथ वा पुनः ॥ ॥ २७ ॥ उत्पातदर्शनं च स्याद्येन चर्क्षेण भार्गव ॥ संक्रान्तिर्वा ग्रहस्य स्याद्येन चास्तोदयौ तथा ॥ २८ ॥ भिन्नश्चन्द्रमसा यश्च ग्रहेणान्येन वा पुनः ॥ यन्नक्षत्रगतौ ग्रस्तौ स्यातां वा शशिभास्करौ ॥ २९ ॥ न तेन नृपतिर्यायान्नक्षत्रेण कदाचन ॥ अष्टवर्गानुकूलस्थ चन्द्रे यात्रां प्रयोजयेत् ॥ ३० ॥ पूर्वद्वारस्थितानन्दा भद्रा दक्षिणतः स्थिता ॥ जया च पश्चिमद्वारा रिक्ता चोदक्प्रकीर्तिता ॥ ३१ ॥ पूर्णा तु सर्वतोद्वारा तिथिरुक्ता महाभुज ॥ नक्षत्रदेवतातुल्या मुहूर्तानां तु दिग्भवेत् ॥ ३२ ॥ त्रिदिग्द्वाराभिजिज्ज्ञेया दक्षिणेन विगर्हिता ॥ प्रग्द्वाराः कथिता राम मेषसिंहधनुर्धराः ॥ ३३ ॥ तथा च पश्चिमद्वाराः कन्यामकरगोवृषाः ॥ तुलामकरकुम्भाश्च ज्ञेयाः पश्चिमदिङ्मुखाः ॥ ३४ ॥ कीटवृश्चिकमीनाश्च तथा चोदक्प्रकीर्तिताः ॥ लग्नेन दिङ्मुखं यत्नाज्ज्ञेयं प्राङ्मुखमंशकम् ॥ ३५ ॥ सौराः सर्वे प्रशस्यन्ते कालरोधं विवर्जयेत् ॥ विशाखाद्यं भत्रितयं दीने सूर्ये विवर्जयेत् ॥ ३६ ॥ आषाढात्रितयं चन्द्रे तथा ब्राह्मणसंज्ञकम् ॥ धनिष्ठाद्यत्रयं भौमे पौष्णाद्यत्रितयं बुधे ॥ ३७ ॥ रोहिण्याद्यं तथा जीवे पुष्याद्यं च तथा सिते ॥ अर्यम्णाद्यं तथा सौरे प्रयत्नेन महाभुज ॥ ३८ ॥ मूलं च श्रवणं चैव आहिर्बुध्न्यं तथैव च ॥ आग्नेयमथ चादित्यं भाग्यं वायव्यमेव वा ॥ ३९ ॥ आदित्यादिदिनेष्वेते सिद्धियोगाः प्रकीर्तिताः ॥ सिद्धियोगान्विशेषेण तिथिष्वपि निबोध मे ॥ ४० ॥ ग्रहक्रमेण धर्मज्ञ सर्वकर्मसु सिद्धिदान् ॥ द्वितीया च तृतीया च प्रतिपच्चाष्टमी तथा ॥ ४१ ॥ सप्तमी च चतुर्थी च पञ्चमी च तथा तिथिः ॥ अन्याश्च सिद्धयोगेषु तिथयस्त्वं शृणु क्रमात ॥ ४२ ॥ एकादशी च दशमी नवमी पञ्चदश्यपि ॥ चतुर्दशी द्वादशी च तथा राम त्रयोदशी ॥ ४३ ॥ छायाप्रमाणं वक्ष्यामि सिद्धियोगेष्वतः क्रमात् ॥ तत्र काले कृतं कर्म सकृत्संपश्यते ध्रुवम् ॥ ४४ ॥ आदित्ये विंशतिर्ज्ञेयाश्चन्द्रे षोडश कीर्तिताः ॥ भौमे पञ्चदशैवोक्ताश्चतुर्दश तथा बुधे ॥ ४५ ॥ त्रयोदश तथा जीवे शुक्रे द्वादश कीर्तिताः ॥ उदितेनोत्तरां गच्छेत्प्राचीं मध्यस्थिते रवौ ॥ ४६ ॥ दक्षिणामपराह्णे तु अर्धरात्रे तु पश्चिमाम् ॥ जन्मराश्युदये यात्रा न प्रशस्ता

महाभुज ॥ ४७ ॥ ताभ्यामुपचयर्क्षे तु यात्रा शस्ता तथा भवेत् ॥ शेषेषु वर्जयेद्यात्रां भूतिकामो नराधिपः ॥ ४८ ॥ यात्रा शुभफला ज्ञेया सौम्यग्रहनवांशके ॥ पापग्रहांशके यात्रां प्रयत्नेन विवर्जयेत् ॥ ४९ ॥ जन्मभे नैधने चैव तथाधाने विपत्करे ॥ प्रत्यरौ भगणे यात्रां प्रयत्नेन विवर्जयेत् ॥ ५० ॥ क्षेमे संपत्करे मैत्रे साधके चातिमैत्रके ॥ कर्मभे च तथा यात्रा प्रशस्ता मनुजोत्तम ॥ ५१ ॥ दिव्यान्तरिक्षक्षितिजे दृष्टे राम महाद्भुते ॥ सप्ताहं वर्जयेद्यात्रां प्रयत्नेन महाभुज ॥ ५२ ॥ लग्ने तु विबले यात्रां शून्ये केन्द्रे च वर्जयेत् ॥ जन्मपे लग्नपे राम बलहीने विशेषतः ॥ ५३ ॥ दिक्पतावनुकूले तु शुभा यात्रा प्रकीर्तिता ॥ सम्मुखे शक्रचापे तु यात्रां यत्नेन वर्जयेत् ॥ ५४ ॥ न च गच्छेत्तथा राम द्वाराभिहतमस्तकः ॥ दृष्ट्वा द्रव्यममङ्गल्यं खिन्नचेतास्तथैव च ॥ तुष्टे मनसि गन्तव्यं प्रयत्नेन महीभुजा ॥ ५५ ॥ त्रिकोणकेन्द्रोपगतास्तु सौम्याः पापास्तथा चोपचयर्क्षसंस्थाः ॥ भवन्ति लग्नस्य तु यस्य तेन यात्रा प्रयुक्ता तु शुभावहा स्यात् ॥ ५६ ॥ इति श्रीविष्णु० द्वि० मा० सं० रामं प्रति पुष्करोपाख्याने ज्योतिःशास्त्रमते यात्राधिकारो नाम पञ्चसप्तत्युत्तरशततमोऽध्यायः ॥ १७५ ॥

॥ राम उवाच ॥ ॥ यात्राविधानमाचक्ष्व सर्वधर्मभृतांवर ॥ जिगीषूणां नरेन्द्राणां सिद्धिकारणमुत्तमम् ॥ १ ॥ पुष्कर उवाच ॥ सप्ताहेन यदा यात्रा भविष्यति महीपतेः ॥ तदा दिने तु प्रथमे पूजनीयो विनायकः ॥ २ ॥ मोदकैरक्षतैर्दध्ना कुसुमैश्च तथा फलैः ॥ गन्धर्वास्त्रैरलङ्कारैर्धूपैर्दीपैर्मनोहरैः ॥ ३ ॥ द्वितीयेऽह्नि ततः कार्यं सर्वदिक्पालपूजनम् ॥ दिक्पालपूजनं कृत्वा तेषां च पुरतः स्थितः ॥ ४ ॥ शय्यां कुशाभिः कुर्वीत सितवस्त्रोत्तरच्छदाम् ॥ विकिरेन्नागपुष्पैस्तां तथा सिद्धार्थकैः शुभैः ॥ ५ ॥ तच्छीर्षके तु पूज्या श्रीर्भद्रकाली च पादयोः ॥ हरं दक्षिणपार्श्वे तु वामे ब्रह्माणमेव च ॥ ६ ॥ पूजितं कलशं हृद्यं कुर्यादुष्णीषके दृढम् ॥ नीलपल्लवसंछन्नं चारुपुष्पोज्ज्वलं शुभम् ॥ ७ ॥ एककालं हविष्यान्नं लघु भुक्त्वा महीपतिः ॥ स्वयं दक्षिणपार्श्वे च मन्त्रमेतदुदीरयेत् ॥ ८ ॥ नमः शम्भो त्रिनेत्राय रुद्राय वरदाय च ॥ वामनाय विरूपाय स्वप्नाधिपतये नमः ॥९॥ भगवन्देवदेवेश शूलभृद्वृषवाहन ॥ इष्टानिष्टं समाचक्ष्व स्वप्ने सुप्तस्य शाश्वतम्॥१०॥ यज्जाग्रतो दूरमिति मन्त्रमावर्तयेत्ततः ॥ हृदि न्यस्य कुशाग्राञ्ज्ञः प्रयतस्तु पुरोहितः ॥११॥ ततः स्वप्ने शुभे दृष्टे यात्रा देया तु नान्यथा ॥ तृतीयेऽहनि संप्राप्ते देवं दिङ्नाथमर्चयेत्॥१२॥एकमेव महाभाग दिननाथं तथा ग्रहम् ॥ यां दिशं नृपतिर्गच्छेन्नाथं तस्यास्तथैव ताम्॥१३॥ चतुर्थेऽहनि संप्राप्ते ग्रहयागो विधीयते॥ पञ्चमेऽहनि संप्राप्ते सर्वयागस्तथैव च ॥ देवतानां स्वनगरे कृता यासां तथालयाः ॥१४॥ तासां संपूजनं कार्यं स्वपुरे ये तथा स्थिताः ॥ तत्रैव

रात्रौ भूतानां कर्तव्यं च तथार्चनम् ॥ १५ ॥ एकवृक्षेषु चैत्येषु चत्वराट्टालकेषु च ॥ चतुष्पथेषु रथ्यासु पर्वतानां गुहासु च ॥ १६ ॥ नदीतीरेषु शैलेषु देवतायतनेषु च ॥ तेषां संपूजनं कृत्वा स्वगृहे तान्समर्चयेत् ॥ १७ ॥ तत्र कृत्वा ततो वाच्याः प्रमथा भूभुजा स्वयम् ॥ वासुदेवस्य देवस्य तथा संकर्षणस्य च ॥ १८ ॥ प्रद्युम्नस्यानिरुद्धस्य ब्रह्मणः शङ्करस्य च ॥ कीनाशशक्रवरुणधनेशानां तु ये गणाः ॥ १९ ॥ वायोश्च निर्ऋतेर्वह्नेस्तथा चन्द्रार्कयोश्च ये ॥ ग्रहाणामथ ऋक्षाणां स्कन्दस्य च महाबलाः ॥ २० ॥ विनायकस्य देवस्य देवतानां गणाश्च ये ॥ दैत्यानां राक्षसानां च सर्वेषामनुगाश्च ये ॥ २१ ॥ महाबला महाकाया महासत्त्वा महाव्रताः॥अणिमा महिमा प्राप्तिः प्राकाम्येन च संश्रुताः॥२२॥ ईशित्वेन वशित्वेन प्राप्तिनाम्ना तथोदये ॥ यत्र कामावसायित्वात्तथा येषां च विद्यते ॥ २३ ॥ एवमष्टगुणैश्वर्यसंयुता भीमविक्रमाः ॥ नानासत्त्वशिरोग्रीवा नानाप्रहरणायुधाः ॥ २४ ॥ नानाविरागवसना नानासत्त्ववपुर्धराः ॥ तथा नानाविधाहारा महाचेष्टा महाबलाः ॥ २५ ॥ भक्तानुकम्पिनो वीरा वरदाः कामरूपिणः ॥ प्रमथाः परिगृह्णन्तु उपकारं नमोऽस्तु वः ॥ सपुत्रामात्यभृत्योऽहं सदारः शरणं गतः ॥ २६ ॥ रक्षन्तु मां महाभागा गृहे युद्धे तथाध्वनि ॥ चमूनां पृष्ठतो गत्वा नाशयध्वं तथा रिपून् ॥ २७ ॥ स्वप्ने शुभाशुभं वापि कथयध्वं समाहिताः ॥ विनिवृत्तश्च दास्यामि दत्तादभ्यधिकं बलिम् ॥ २८ ॥ विनिवृत्तेन दातव्यः स च यत्नेन भूभुजा ॥ पूर्ववच्च तथा रात्रौ स्वप्नप्रार्थनमिष्यते ॥ ॥ २९ ॥ षष्ठेऽहनि जयस्नानं कर्तव्यं च तथा भवेत् ॥ विधिरस्याभिषेकार्थः सर्व एव विधीयते ॥ ३० ॥ ततो यात्रादिने प्राप्ते क्षौरकर्म विवर्जयेत् ॥ मुद्रणं भेदनं चैव तथा च नखकृन्तनम् ॥ ३१ ॥ अभ्यङ्गं गृहकार्यं च क्रोधशोकौ च कङ्कतम् ॥ यातव्यं येन तेनाथ तदुक्तं स्नानमाचरेत् ॥ ३२ ॥ स्नातः शुक्लाम्बरः स्रग्वी तथा श्वेतानुलेपनः ॥ चित्राभरणवान्राजा दूर्वापल्लवलाञ्छनः ॥ ३३ ॥ पूजयित्वा महाभागं देवदेवं त्रिविक्रमम् ॥ जुहुयाच्च तथा वह्नौ सुसमिद्धे पुरोहितः ॥ ३४ ॥ आयुष्यमभयं चैव तथा स्वस्त्ययनं गणम् ॥ शर्मवर्मगणं चैव तथा प्रतिरथं शुभम् ॥ ३५ ॥ शकुनं च तथा सूक्तं सूक्तं वैष्णवमेव च ॥ तथाग्निलक्षणोत्पत्तौ शुभे यायान्महीपतिः ॥ ३६ ॥ नक्षत्रस्य दिशश्चैव नैवेद्यं यत्प्रकीर्तितम् ॥ तदेव नृपतिः प्राश्य यात्रां विद्याद्यथाविधि ॥ ३७ ॥ अहद्यं मक्षिकाकेशकीटयुक्तं विवर्जयेत् ॥ दग्धे च वर्जयेद्यात्रां देया भवति चान्यथा ॥ ३८ ॥ ततस्तु राजलिङ्गानां चायुधानां तथैव च ॥ नीराजनोक्तमन्त्रैस्तु सर्वांस्तानभिमन्त्रयेत् ॥ ३९ ॥ दैववित्प्रयतो भूत्वा राजा

१ 'गोपुराट्टलकेषु' इत्यपिपाठः ।

वाथ पुरोहितः ॥ तेषां संपूजनं कृत्वा दैवज्ञं सपुरोहितम् ॥ ४० ॥ धनेन पूजयेद्राजा दक्षिणाभिर्द्विजोत्तमान् ॥ ततः पुण्याहघोषेण द्विजानां हतकल्मषः ॥ ४१ ॥ मङ्गलालम्भनं कृत्वा मन्त्रमेतं निशामयन् ॥ आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः ॥ ४२ ॥ लोकपालाः सगन्धर्वा नद्यः शैला मही द्विजाः ॥ अग्निः स्वाहा स्वधा होमः स्कन्दो ब्रह्मा प्रजापतिः ॥ ४३ ॥ मुहूर्तास्तिथयो भानि वेदाः सायनवत्सराः ॥ गावः सरस्वती देवी दीर्घमायुर्दिशन्तु ते ॥४४ ॥ जगत्सृजोऽथ या सिद्धिर्बभूव ब्रह्मणः पुरा ॥ जगज्जिष्णोश्च या विष्णोः सिद्धिर्यासीत्त्रिविक्रमे ॥ ४५ ॥ असुरैश्वर्यनाशे च बभूव त्र्यम्बकस्य या ॥ सिद्धिस्त्रिदशवृद्ध्यर्थं त्रिपुरान्तकृतः पुरा ॥ ४६ ॥ शक्रे वृत्रवधे यावत्स्कन्दे देवारिसंक्षये ॥ तां प्राप्नुहि सदा सिद्धिं सा च यात्रास्तु ते सदा ॥ ४७ ॥ रक्षन्तु सर्वतः सर्वे देवाः शक्रपुरोगमाः ॥ इति चोक्त्वा शुभां वाचं गृहीत्वा सशरं धनुः ॥ ॥ ४८ ॥ धन्वनागेतिमन्त्रेण दैवज्ञस्य करात्स्वयम् ॥ तद्विष्णोः परमित्येव शृण्वन्मन्त्रमनुत्तमम् ॥ ४९ ॥ पैष्टे रिपुमुखे दद्यात्प्रथमं दक्षिणपदम् ॥ पदद्वात्रिंशक गत्वा विष्णुप्राच्यादिषु त्वथ ॥ ५० ॥ नागं रथं हयं चैव युञ्जाने चारुहेत्क्रमात् ॥ आरुह्य सुमना गच्छेद्वाद्यघोषेण भूरिणा ॥ ५१ ॥ स निष्क्रम्य महानीशो न पृष्ठमवलोकयेत ॥ मङ्गलानि ततः पश्यन्स्पृशञ्छृण्वञ्शनैर्व्रजेत् ॥ ५२ ॥ क्रोशमात्रं ततो गच्छेन्नाधिकं तु कदाचन ॥ गत्वा देशे शुभे तिष्ठेत्पूजयित्वा सुरद्विजान् ॥ ५३ ॥ ततः क्रमेण गच्छेच्च परदेशं महीपतिः ॥ आत्मसैन्यानुरूपेण कृतरक्षः पथा द्विज ॥ ५४ ॥ त्रिरात्रमुषितो गच्छेद्भूयो नक्षत्रसम्पदा ॥ यवसैन्धवतोयानां रक्षको विषदूषणात् ॥ ५५ ॥ परानभिमुखो गच्छेत्प्रभूतयवसैन्धवः ॥ स्वैरचंक्रमणं शय्यां भाण्डप्रक्षेपणं तथा ॥ ५६ ॥ भोजनं तं सुखं कुर्यात्प्रतिलोमं न चाचरेत् ॥ राजाप्यमित्रदेशे तु देशाचारं न लंघयेत् ॥ ५७ ॥ देवतापूजनं कुर्यान्नोच्छिद्याद्दावमत्र तु ॥ कुलस्त्रियं च तन्वीं च वृद्धां नैवापमानयेत् ॥ ५८ ॥ कुलीनमभिनिन्देत्तु न वै नृपतिवंशजम् ॥ न कर्णनासाच्छेदांश्च न तथा नेत्रभेदनम् ॥ कालविन्मन्त्रिभिषजोर्वाक्यं कुर्यान्महीपतिः ॥ ५९ ॥ ततः क्रमात्प्राप्य पुरीं स्वकीयां बलिं तु दद्यादधिकां पुरोक्ताम् ॥ कुर्यान्महीं यूपसुरालयांकां स्वलोकमिच्छन्पृथिवीं समग्राम् ॥ ६० ॥ इति श्रीविष्णु० द्वि० मा० व० स० यात्राविधिनाम षट्सप्तत्युत्तरशततमोऽध्यायः ॥ १७६ ॥ राम उवाच ॥ सांग्रामिकमहं त्वत्तः श्रोतुमिच्छामि भूभुजः ॥ सर्वं वेत्सि महाभाग त्वं देव परमेष्ठिवत् ॥ १ ॥ पुष्कर उवाच ॥ द्वितीयेऽहनि संग्रामो भविष्यति



१ 'पुंयातम्' इति पुस्तकान्तरे पाठः ।

यदा तदा ॥ गजाश्वान्स्नापयेद्राजा सर्वौषधिजलैः शुभैः ॥ २ ॥ गन्धमाल्यैरलंकुर्यात्पूजयेच्च यथाविधि ॥ नृसिंहं पूजयेद्विष्णुं स्वजलिङ्गान्यशेषतः ॥ ३ ॥ छत्रं ध्वजं पताकाश्च धर्मांश्चैव महाभुज ॥ आयुधानि च सर्वाणि तथा पूज्यानि भूभुजा ॥ ४ ॥ तेषां सम्पूजनं कृत्वा रात्रौ प्रमथपूजनम् ॥ कृत्वा तु प्रार्थयेद्राजा विजयायेतरो यथा ॥ ५ ॥ प्रमथांश्च सहायार्थे धरणीं च महाभुज ॥ भिषक्पुरोहितामात्यमन्त्रिमध्ये तथा स्वपेत् ॥ ६ ॥ संयतो ब्रह्मचारी च नृसिंहं संस्मरन्हरिम् ॥ रात्रौ दृष्टे शुभे स्वप्ने समरारम्भमाचरेत् ॥ ७ ॥ रात्रिशेषे समुत्थाय स्नातः सर्वौषधीजलैः ॥ पूजयित्वा नृसिंहं तु वाहनाढ्यमशेषतः ॥ ८ ॥ पुरोधसा हुतं पश्येज्ज्वलितं जातवेदसम् ॥ पुरोधाः पूर्ववत्तत्र मन्त्रांस्तु जुहुयात्ततः ॥ ९ ॥ दक्षिणाभिः शुचिर्विप्रान्पूजयेत्पृथिवीपतिः ॥ ततोनुलिम्पेद्गात्राणि गन्धद्वारेति पार्थिवः ॥ १० ॥ चन्दनागुरुकर्पूरकान्ताकालीयकैः शुभैः ॥ मूर्ति कण्ठे समालभ्य रोचनां च तथा शुभाम् ॥ ११ ॥ आयुष्यं वर्चसं चैव मन्त्रेणानेन मन्त्रितम् ॥ अलङ्करणमाबद्ध्याच्छ्रियं धातुरिति स्रजम् ॥ १२ ॥ या ओषधय इत्येवं धारयेदोषधीः शुभाः ॥ नवो नवेति वस्त्रं च कार्पासं बिभृयाच्छुभम् ॥ १३ ॥ ऐन्द्राग्नेति ततो चर्म धन्वनागेति वै धनुः ॥ ततो राज्ञः समादद्यात्सशरन्त्वभिमन्त्रितम् ॥ १४ ॥ कुञ्जरं वा रथं चाश्वमारुहेदभिमन्त्रितम् ॥ आरुह्य शिबिराद्राजा निष्क्रम्य समये शुभे ॥ १५ ॥ देशे त्वदृश्यः शत्रूणां कुर्यात्प्रकृतिकल्पनाम् ॥ संहतान्योधयेदल्पान्कामं विस्तारयेद्बहून् ॥ १६ ॥ सूचीमुखमनीकं स्यादल्पानां बहुभिः सह ॥ व्यूहाः प्राण्यङ्गरूपाश्च द्रव्यरूपाश्च कल्पिताः ॥ १७ ॥ गारुडो मकरव्यूहश्चक्रं श्येनस्तथैव च ॥ अर्धचन्द्रश्च चन्द्रश्च शकटव्यूह एव च ॥ १८ ॥ व्यूहश्च सर्वतोभद्रः सूचीव्यूहस्तथैव च ॥ पद्मश्च मण्डलव्यूहः प्राधान्येन प्रकीर्तिताः ॥ १९ ॥ व्यूहानामथ सर्वेषां पञ्चधा सैन्यकल्पना ॥ द्वौ पक्षौ बन्धपक्षौ द्वावौरस्यः पञ्चमो भवेत् ॥ २० ॥ अनेन यदि वा द्वाभ्यां भागाभ्यां युद्धमाचरेत् ॥ भागत्रयं स्थापयेत्तु तेषां रक्षार्थमेव च ॥ २१ ॥ न व्यूहे कल्पना कार्या राज्ञो भवति कर्हिचित् ॥ पत्रच्छेदे फलच्छेदे वृक्षच्छेदावकल्पने ॥ २२ ॥ पुनः प्ररोहमायाति मूलच्छेदे विनश्यति ॥ स्वयं राज्ञा न योद्धव्यमपि सर्वास्त्रशालिना ॥ २३ ॥ नित्यं लोके हि दृश्यन्ते शक्तेभ्यः शक्तिमात्तराः ॥ सैन्यस्य पश्चात्तिष्ठेत्तु क्रोशमात्रे महीपतिः ॥ २४ ॥ भग्नसन्धारणं तत्र योधानां परिकीर्तितम् ॥ प्रधानभङ्गे सैन्यस्य नावस्थानं विधीयते ॥ २५ ॥ न भग्नान्पीडयेच्छत्रूनेकायनगता हि ते ॥ मरणे निश्चिताः सर्वे हन्युः शत्रूंश्चमूरपि ॥ २६ ॥ शटाभङ्गच्छलेनापि नयति स्वभुवं पराम् ॥ तेषां स्वभूमिसंस्थानां वधः स्यात्सुकरस्तदा ॥ २७ ॥ न संहतान्विरलान्योधान्व्यूहे प्रकल्पयेत् ॥

१ 'एकेन इति' पुस्तकान्तरे पाठः ।

आयुधानां तु संमर्दो यथा न स्यात्परस्परम् ॥ २८ ॥ तथा तु कल्पना कार्या योधानां भृगुनन्दन ॥ भेत्तुकामः परानीकं संहतैरेव भेदयेत्॥२९॥
भेदरक्षापरेणापि कर्तव्या संहता तथा ॥ स्वेच्छया कल्पयेद्व्यूहं ज्ञात्वा वा रिपुकल्पितम् ॥३०॥ व्यूहे भेदावहं कुर्याद्रिपुव्यूहस्य पार्थिवः ॥ गजस्य
देया रक्षार्थं चत्वारस्तु रथा द्विज॥३१॥रथस्य चाश्वाश्चत्वारोऽश्वस्य तस्य च वर्मिणः ॥ वर्मिभिश्च समास्तत्र धन्विनः परिकीर्तिताः॥३२॥पुरस्ता
च्चर्मिणो देया देयास्तदनु धन्विनः ॥ धन्विनामनु चाश्वीयं रथांस्तदनु योजयेत् ॥३३॥ रथानां कुञ्जराश्चानु दातव्याः पृथिवीक्षिता ॥ पदातिकु
ञ्जराश्वानां वर्म कार्यं प्रयत्नतः ॥३४॥ अवर्मयित्वा यो वाहं चात्मानं वर्मयेन्नरः ॥ स राम नरकं याति स्वकृतेनापि कर्मणा ॥ ३५ ॥ शूराः
प्रमुखतो देया न देया भीरवः क्वचित् ॥ शूरान्वा मुखतो दत्त्वा स्कन्दमात्रप्रदर्शनम् ॥ ३६॥ कर्तव्यं भीरुसंघेन शत्रुविद्रावकारकम् ॥ दारयन्ति
पुरस्तात्तु विद्रुता भीरवः पुरः ॥ ३७ ॥ प्रोत्सारयन्ते वरुणी भीरूञ्शूरान्पुनः स्थिताः ॥ प्रांशवः शुकनासाश्च ये च जिह्मेक्षणा नराः ॥ ३८ ॥
संहतभ्रूयुगाश्चैव क्रोधनाः कलहप्रियाः ॥ नित्यं हृष्टाश्च ह्रस्वाश्च शूरा ज्ञेयाश्च कामिनः ॥ ३९ ॥ दाक्षिणात्याश्च विज्ञेयाः कुशलाः खड्गवर्मिणः ॥
वङ्गला धान्विनो ज्ञेयाः पार्वतीयास्तथैव च ॥ ४० ॥ पाषाणयुद्धकुशलास्तथा पर्वतवासिनः ॥ पांचालाः शूरसेनाश्च रथेषु कुशला नराः ॥४१॥
काम्बोजा ये च गांधाराः कुशलास्ते हयेषु च ॥ प्रायशश्च तथा म्लेच्छा विज्ञेयाः पाशयोधिनः ॥ ४२ ॥ अङ्गा वङ्गा कलिङ्गाश्च ज्ञेया मातङ्गयोधि
नः ॥ आहतानां हतानां च रणापनयनक्रिया ॥ ४३ ॥ पत्तियोधगजानाञ्च तोयदानादिकं च यत् ॥ आयुधानयनं चैव पत्तिकर्म विधीयते ॥
॥ ४४ ॥ रिपूणां भेदकामानां स्वसैन्यस्य तु रक्षणम् ॥ भेदनं संहतानां च कर्मणां चर्म कीर्तितम् ॥ ४५ ॥ विमुखीकरणं युद्धे धन्विनां च तथो
च्यते ॥ चर्मिभिः क्रियते शूरैर्भिन्नानामपि संहतिः ॥ ४६ ॥ शूरापसरणं यावत्साश्वीयस्य तथोच्यते ॥ त्रासनं रिपुसैन्यानां रथकर्म तथोच्य
ते ॥ ४७ ॥ प्राकारगोपुरखाट्टालद्रुमभंगाश्च भार्गव ॥ गजानां कर्म निर्दिष्टं यदसह्यं तथा परैः ॥ ४८॥ पत्तिभूर्विषमाजेया रथाश्वस्य तथा समा॥
शर्माद्रुमा च नागानां युद्धभूमिरुदाहृता ॥ ४९ ॥ एवं विरचितव्यूहः कृतपृष्ठदिवाकरः ॥ तथानुलोमशुक्रो वा दिक्पालबुधमारुताः ॥ ५० ॥
योधानुत्तेजयेत्सर्वान्नामगोत्रापदानतः ॥ भोगप्राप्तिश्च विजये स्वर्गप्राप्तिर्मृतस्य च ॥ ५१ ॥ धन्यानि तु निमित्तानि वदन्ति विजयं द्विज ॥
स्पन्दनं शुभगात्राणां शुभस्वप्ननिदर्शनम् ॥ ५२ ॥ निमित्तं च गजाश्वस्य सर्वतो दृश्यते शुभम् ॥ शकुना मङ्गलाश्चैव दृश्यन्ते हि मनोऽनुगाः ॥२०२॥
॥ ५३ ॥ विपरीतसरीसर्पान्मृत्युः स्पृशति नान्यथा ॥ भवन्तोऽपि कुले जाताः सर्वशास्त्रास्त्रपारगाः ॥ ५४ ॥ गान्धर्वे च परा नित्यं

नित्यं सन्मार्गमाश्रिताः ॥ अनाहार्याः परैर्नित्यं कथं न स्याज्जयो मम ॥ ५५ ॥ राजश्रीर्भवतामेव भवद्भिः केवलं मम ॥ द्वे चामरेऽधिके शूराच्छत्रं चर्माभमेव च ॥ ५६ ॥ जित्वारीन्भोगसंप्राप्तिर्मृतस्य च परा गतिः ॥ निष्कृतिः स्वामिपिण्डस्य नास्ति युद्धसमा गतिः ॥ ५७ ॥ शूराणां यद्विनिर्याति रक्तमाबाधतः क्वचित् ॥ तेनैव सह पाप्मानं सर्वं त्यजति धार्मिक ॥ ५८ ॥ तथा बाधचिकित्सायां वेदनासहिते तथा ॥ ततो नास्त्यधिकं लोके किञ्चित्परमदारुणम् ॥ ५९ ॥ मृतस्य नाग्निसंस्कारो नाशौचन्नोदकक्रिया ॥ कर्तुमिच्छंति यस्येह संग्रामादधिकं नु किम् ॥ ६० ॥ तपस्विनो दानपरा यज्वानो बहुदक्षिणाः ॥ शूराणां गतिमिच्छन्ति दृष्ट्वा भोगाननुत्तमान् ॥६१ ॥ वराप्सरःसहस्राणि शूरमायोधने हतम् ॥ अभिद्रवन्ति कामार्ता मम भर्ता भविष्यति ॥ ६२ ॥ स्वामी सुकृतमादत्ते भग्नानां विनिवर्तताम् ॥ ब्रह्महत्याफलं तेषां तथा प्रोक्तं पदेपदे ॥ ६३ ॥ यः सहायान्परित्यज्य स्वस्तिमान्गन्तुमिच्छति ॥ अस्वस्ति तस्य कुर्वन्ति देवाः शक्रपुरोगमाः ॥ ६४ ॥ अश्वमेधफलं प्रोक्तं भग्नानामनिवर्तताम् ॥ पदेपदे महाभागा संमुखानां महात्मनाम् ॥ ६५ ॥ देवस्त्रियस्तथा लक्ष्मीः पाप्मानमयशस्तथा ॥ प्रतीक्षन्ते महाभाग संग्रामे समुपस्थिते ॥ ६६ ॥ पराङ्मुखा मया ग्राह्या जीवन्तोप्यभवा मृताः ॥ इत्येवमयशस्तस्य पाप्मना सह तिष्ठति ॥ ६७ ॥ लक्ष्मीः सन्तिष्ठते तस्य जीवतः कृतकर्मणः ॥ ६८ ॥ मृतस्य चापि तिष्ठन्ति विमानस्थाः सुरस्त्रियः ॥ एवमुद्घोषणं कृत्वा धर्मेणेच्छेज्जयं रणे ॥ ६९ ॥ अधर्मविजयो राज्ञो नृपलोके भयावहः ॥ अधर्मविजयादर्थैर्यच्छिद्रमुपधीयते ॥ ७० ॥ छिद्रादेव परं छिद्रं तस्य स्यान्नात्र संशयः ॥ न कर्णी न तथा दिग्धः शरः स्याद्धर्मयोधिनाम् ॥ ७१ ॥ नास्थिशल्यः शरः कार्यो दारुशल्यश्च भार्गव ॥ समः समेन योद्धव्यो नापचारो रणे द्विज ॥ ७२ ॥ सन्नद्धेन च सन्नद्धः साश्वश्चाश्वगतेन तु ॥ रथी च रथिना राम पदातिश्च पदातिना ॥ ७३ ॥ कुञ्जरस्थो गजस्थेन योद्धव्यो भृगुनन्दन ॥ विमुखो भग्नशस्त्रश्च स्त्रीबालपरिरक्षिता ॥ ७४ ॥ व्यायुधो भग्नगात्रश्च तथैव शरणागतः ॥ परेण युद्धयमानश्च युद्धप्रेक्षक एव च ॥ ७५ ॥ आर्तस्तोयप्रदाता च दण्डपाणिस्तथैव च ॥ एते रणे न हन्तव्या क्षत्रधर्ममभीप्सता ॥ ७६ ॥ पापिष्ठो कूटयुद्धे च कर्तव्यमपि चाहवे ॥ श्रान्तेन वाभिभूतेन अधोत्तीर्णबलेन च ॥ ७७ ॥ दुर्दिने न च युद्धानि कर्तव्यानि महाबल ॥ ७८ ॥ प्रवृत्ते समरे राम परेषां नामकारणात ॥ बाहू प्रगृह्य विक्रोशेद्भग्ना भग्नाः परे त्विति ॥ प्राप्तं मित्रबलं भूरि नायकोऽत्र निपातितः ॥ ७९ ॥ सेनानीर्निहतश्चायं

सर्वा सेनापि विद्रुता ॥ एवं चित्रासनं कुर्यात्परेषां भृगुनन्दन ॥ ८० ॥ विद्रुतानां तु योधानां सुविघातो विधीयते ॥ धनुर्वेदविधानेन कल्पना
च तथा भवेत् ॥ ८१ ॥ पापाश्च देया धर्मज्ञ तथैव परमोहनाः ॥ पताकाभ्युच्छ्रयः कार्यः स्वबले च तथा शुभः ॥ ८२ ॥ संस्कारश्चैव कर्तव्यो
वादित्राणां भयावहः ॥ एतस्य वर्षं वक्ष्यामि तवोपनिषदि द्विज ॥ ८३ ॥ संप्राप्य विजयं युद्धे कार्यं दैवतपूजनम् ॥ पूजयेद्ब्राह्मणांश्चात्र गुरू
नपि च पूजयेत् ॥ ८४ ॥ रत्नानि राजगामीनि चर्म वाहनमायुधम् ॥ सर्वमन्यद्भवेत्तस्य यद्येनैव रणे हतम् ॥ ८५ ॥ कुलस्त्रियस्तु विज्ञेयास्तथा
राम न कस्य चित् ॥ स्वदेशे परदेशे वा साध्वीं यत्नान्न दूषयेत् ॥ ८६ ॥ अन्यथा संकरो घोरो भवतीह क्षयावहः ॥ शक्रः प्राप्य रणे मुक्तः
पुत्रस्तस्य प्रकीर्तितः ॥ ८७ ॥ पुरस्तेनास्य योद्धव्यं तस्य धर्मं विजानता ॥ देशेदेशे य आचारः पारम्पर्यक्रमागतः ॥ ८८ ॥ स एव परि
पाल्यः स्यात्प्राप्य देशं महीक्षिता ॥ नृणां प्रदर्शयेद्राजा समरेऽपि हते रिपौ ॥ ८९ ॥ न मे प्रियं कृतं तेन येनायं समरे हतः ॥ किन्तु
पूजां करोम्यस्य स्वच्छन्दमविजानतः ॥ ९० ॥ हतोऽयं मद्धितार्थाय प्रियं यद्यपि नो मम ॥ अपुत्राश्च स्त्रियश्चैव नृपतिः परिपालयेत् ॥ ९१ ॥
ततस्तु स्वपुरं प्राप्य नृपतिः प्रविशेद्गृहम् ॥ यात्राविधानविहितं भूयो दैवतपूजनम् ॥ ९२ ॥ पितॄणां पूजनं चैव तथा कुर्याद्विशेषवत् ॥ संवि
भागं परावाप्तैः कुर्याद्भृत्यजनस्य तु ॥ ९३ ॥ अवाप्य धर्मेण नृपस्तु पृथ्वीमारामयूपादिसुरालयाङ्काम् ॥ कृत्वा तथान्यां द्विजसाच्च शक्त्या
लोकं जयंत्यस्य नराधिपस्य ॥ ९४ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मा० व० सं० रामं प्रति पुष्करोपाख्याने शत्रुप्रत्यभिगमनो नाम
सप्तसप्तत्युत्तरशततमोऽध्यायः ॥ १७७ ॥ राम उवाच ॥ धनुर्वेदं समाचक्ष्व संक्षेपात्सुरनन्दन ॥ सर्वं त्वमेव जानासि यथा देवः पितामहः ॥
॥ १ ॥ पुष्कर उवाच ॥ चतुष्पादो धनुर्वेदस्तथा पञ्चविधो द्विज ॥ रथनागाश्वपत्तीनां पादानाश्रित्य कीर्तितः ॥ २ ॥ यन्त्रमुक्तं पाणिमुक्तं
मुक्तसन्धारितं तथा ॥ अमुक्तं बाहुयुद्धं च पञ्चधा तत्प्रकीर्तितम् ॥ ३ ॥ तच्च शस्त्रास्त्रसंपत्त्या द्विविधं परिकीर्तितम् ॥ दण्डमायाविभेदेन भूयो
द्विविधमुच्यते ॥ ऋजुमायाविभेदेन भूयो द्विविधमुच्यते ॥ ४ ॥ क्षेपणीचापयन्त्राद्यं यन्त्रमुक्तं प्रकीर्तितम् ॥ ५ ॥ शिलातोमरचक्राद्यं पाणिमुक्तं
तथैव च ॥ मुक्तसन्धारितं ज्ञेयं पाशाद्यमपि यद्भवेत् ॥ ६ ॥ खड्गादिकममुक्तं च तथा ज्ञेयं महाभुज ॥ नियुद्धं व्यायुधं ज्ञेयं पाणिप्रहरणादि
कम् ॥ ७ ॥ तत्रादावेव योग्यत्वं गात्राणां तु विधीयते ॥ तथा व्यायामचारित्वं भारकर्षणमेव च ॥ ८ ॥ जितश्रमो हि युद्धेषु कर्मयोग्यत्वमा
प्नुयात् ॥ रथाश्वगजपृष्ठेषु तानि शस्त्राणि चाभ्यसेत् ॥ ९ ॥ तानि वै खड्गमुख्यानि बाहुप्रत्यवराणि च ॥ धनुर्वेदे गुरुर्विप्रः प्रोक्तो वर्णद्वयस्य च ॥ १० ॥

वैश्यस्य गुरुतां कुर्यान्न वा कुर्यात्तथा द्विजम् ॥ धनुर्वेदे न गुरुतां शूद्रः कुर्यात्कदाचन ॥ ११ ॥ स्वयमेव तु शूद्रं च कर्तव्या कर्मयोग्यता ॥ तस्माद्युद्धाधिकारोस्ति शूद्रस्यापि विशां पते ॥ १२ ॥ सङ्कराणामपि तथा हितः स्यात्स स्वयं प्रभोः ॥ सर्वरत्नैर्महाराज राजा रक्ष्यः प्रयत्नतः ॥ १३ ॥ श्रद्धावतो भक्तिमतः सुशीलान्नरान्विनीतान्क्षमयोपपन्नान् ॥ स्निग्धान्नरेशान्सुदृढान्मनोज्ञानध्यापनीयांस्तु वदन्ति सन्तः ॥ ॥ १४ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे धनुर्वेदवर्णनो नामाष्टसप्तत्युत्तरशततमोऽध्यायः ॥ १७८ ॥ ॥ पुष्कर उवाच ॥ पाणिपादतले पृष्ठं सर्वे स्युः संहिता यदि ॥ दृष्टं सामपदं स्थानमेतल्लक्षणतस्तथा ॥ १ ॥ बाह्यांगुलिः स्फिचौ पादौ स्तब्धजानुबलावुभौ ॥ त्रिवितस्त्यन्तरायाममेवं वैशाखमुच्यते ॥ २ ॥ मण्डलाकारपादाभ्यामुद्यते यत्र जानुनी ॥ चतुर्विधं त्रिविच्छिन्नं तदेवं मण्डलं स्मृतम् ॥ ॥३॥फलाकृतिसमं यच्च स्तब्धजानूरुदक्षिणम्॥वितस्तिपञ्चविस्तारन्तदालीढं प्रकीर्तितम्॥४॥नमिता पूर्वजङ्घा च सदालीढे विधीयते॥तिर्यग्गतो भवेद्वामो दक्षिणोऽपि भवेदृजुः ॥ ५॥ गुल्फौ पार्ष्णिस्थितावेव स्थिरौ पञ्चाङ्गुलान्तरौ ॥ स्थानजातं भवेदेतद्द्वादशाङ्गुलमायतम् ॥ ६ ॥ एतदेव विपर्यस्तं प्रत्याख्यातं प्रकीर्तितम् ॥ कुब्जजानुर्भवेद्वामो दक्षिणस्तु प्रसारितः ॥७॥ अथ वा दक्षिणं जानुं कुब्जं भवति निश्चलम् ॥ भवेद्दण्डायतो वामश्चरणः सह जानुना ॥ ८ ॥ एवं विकच्छमुद्दिष्टं द्विहस्तान्तरमायतम् ॥ जानुनी द्विगुणौ स्यातां ह्युत्तानौ चरणावपि ॥ ९ ॥ अनेन विनियोगेन सम्पुटं परिकीर्तितम् ॥ किञ्चिद्विवर्तितौ पादौ समदण्डायतौ स्थिरौ ॥ १० ॥ दृष्टिमेव यथान्यायं षोडशाङ्गुलमायतम् ॥ स्वस्तिकेनात्र कुर्वीत प्रणामं प्रथमं द्विजः ॥ ११ ॥ कार्मुकं भृगुवामेन वामं दक्षिणकेन वा ॥ वैशाखेप्यथ वा जाते स्थितो वा प्यथ वायते ॥ १२ ॥ गुणाग्रं तु ततः कृत्वा कार्मुके प्रियकार्मुकः॥ अधःकोटिं तु धनुषः फलदेशे च पत्रिणः ॥१३॥ धरण्यां स्थापयित्वा तु लालयित्वा तथैव च॥भुजाभ्यामत्र कुब्जाभ्यां प्रकोष्ठाभ्यामरिंदम॥१४॥ न्यस्य बाणं धनुःश्रेष्ठं पुङ्खदेशे च पत्रिणः ॥ विन्यासो धनुषश्चैव द्वादशाङ्गुलमन्तरः॥१५॥तयोर्भागेव कर्तव्यो नातो हीनो न चाधिकः ॥ निवेश्य कार्मुकं कण्ठे नितम्बे शरसङ्करम्॥१६॥उत्क्षिपेदस्थिरंहस्तमन्तरेणाक्षिकर्णयोः ॥ पूर्वेण मुष्टिना ग्राह्यः स्तनाग्रं दक्षिणः शरः ॥ १७ ॥ हरणं तु ततः कृत्वा शीघ्रं पूर्वां प्रसारयेत्॥ नात्यन्तरा नैव बाह्या नोर्ध्वगा नाधरास्तथा ॥ १८ ॥ न च कुब्जा न चोत्ताना न चला नातिवेष्टिताः ॥ समाः स्थैर्यगुणोपेताः पूर्वे दण्डमिव स्थिताः ॥ १९ ॥ छादयित्वा ततो लक्ष्यं पूर्वेणानेन मुष्टिना ॥ तरसा तूत्थितो यत्नात्त्रिकोणविनतिस्थितः ॥२०॥ स्रस्तांसो निश्चलग्रीवो मयूरांचितमस्तकः ॥ ललाटनासावक्त्रांसः कूर्परश्च समं भवेत ॥ २१ ॥

अन्तरं त्वङ्गुलं ज्ञेयं चिबुकस्यांसकस्य च ॥ प्रथमे त्र्यङ्गुले विन्द्या द्वितीये द्व्यङ्गुलं स्मृतम् ॥ २२॥ तृतीयेऽङ्गुलमुद्दिष्टं चायतं चिबुकांसयोः ॥
गृहीत्वा सायकं तत्र तर्जन्यङ्गुष्ठमेव च ॥ २३ ॥ अनामया ततो गृह्य पुनर्मध्यमयापि च ॥ तावदाकर्षयेद्योगाद्यावद्बाणः सुपूरितः ॥ २४ ॥एवं
विधमुपक्रम्य मोक्तव्यो विधिवत्खगः ॥ दृष्टिमुष्टिहतं लक्ष्यं भिन्द्याद्बाणेन भार्गव॥२५॥मुक्त्वा चापं वामहस्तं क्षिपेद्वेगेन पृच्छतः॥ एतदुच्छेदमिच्छ
न्ति ज्ञातव्यं हि त्वया द्विज ॥ २६ ॥ कूर्परं त्रिविधं कार्यमाकृष्टन्तु धनुष्मता ॥ तत्रापि मुक्तके कार्यमक्षश्लिष्टस्तु मध्यमम् ॥ २७ ॥ ज्येष्ठं प्रकृष्टं
विज्ञेयं धनुःशास्त्रविशारदाः ॥ ज्येष्ठस्तु पावको ज्ञेयो भवेद्द्वादशमुष्टयः ॥ २८ ॥ एकादश तथा साध्यः कनीयान्दशमुष्टयः ॥ चतुर्हस्तं धनुःश्रेष्ठं
प्रयोगं चास्य मध्यमम् ॥ २९ ॥ कनीयसं त्रयः प्रोक्तं नित्यमेव पदातिना ॥ अश्वे रथे गजे ज्येष्ठं तदेव परिकीर्तितम् ॥ ३० ॥ तदेव हीनं खलु
मध्यमं स्यात्तदेव हीनं च तथा कनीयः ॥ पूर्णायुधस्यैष विधिर्मया ते प्रोक्तः समासाद् भृगुवंशमुख्य ॥३१॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे
मा० वज्रसं० रामं प्रति पुष्करोपाख्याने धनुर्वेदो नामैकोनाशीत्युत्तरशततमोऽध्यायः ॥१७९॥ पुष्कर उवाच ॥ पूर्णायुधो भृतिं कृत्वा ततो मांसे
र्गतायुषाम् ॥ वराहमृगमेषाणां माहिषाद्यैस्तथा द्विज ॥ १ ॥ सुनिधौतं ततः कुर्याद्युग्यं भूपैर्विधानवित् ॥ मृदुसंस्तरणोपेतं मृदु वल्गु च योज
येत् ॥ २ ॥ ततो वाहं समारुह्य दंशितः सुसमाहितः ॥ तूर्णमारुह्य बध्नीयाद्दृढां कक्षां च दक्षिणाम् ॥३॥ वैकक्ष्यमपि तच्चापं धारयेद्यन्त्रसंस्थि
तम् ॥ ततो समुद्धरेद्बाणं क्रमाद्दक्षिणपाणिना ॥ ४ ॥ तज्जवः सहितं सर्वं मध्ये संगृह्य धारयेत् ॥ वामहस्तेन वै कक्ष्याद्धनुस्तस्मात्समुद्ध
रेत् ॥ ५ ॥ सुनिषण्णमणिर्भूत्वा गुणे पुङ्खं निवेशयेत् ॥ संपीडय सिंहकर्णेन पुंखेनापि समे दृढम् ॥ ६ ॥ वामकर्णोपरिस्थं च फलं व्यामस्य
धारणात् ॥ बलामध्यमया तत्र वामांगुल्या च धारयेत् ॥ ७ ॥ मनोलक्ष्यगतं कृत्वा दृष्टिं च सुविधानवित् ॥ दक्षिणे गात्रभागे तु
बलामाशु विमोक्षयेत् ॥ ८॥ ललाटपुटसंस्थानं दार्णीं लक्ष्ये निवेशयेत् ॥ ९ ॥ आकृष्य ताडयेत्तत्र दण्डकं षोडशांगुलम् ॥
मुक्त्वा बाणं ततः पश्चाद्बलां शिक्षेत्तदातदा ॥ १० ॥ विगृह्णीयान्मध्यमया ततोंगुल्या पुनःपुनः ॥ अभिलक्ष्याक्षिपेत्तूणांश्च
तुरस्रं च दक्षिणम् ॥ ११ ॥ चतुरस्रगतं वेध्यमभ्यसेदादितः स्थितः ॥ तस्मादनन्तरं तीक्ष्णं परावृत्तगतं च यत् ॥ १२ ॥ निश्नमु
न्नतवेध्यन्तमभ्यसेत्तुष्यकं ततः ॥ वेध्यस्थानेष्वथैतेषु सन्यस्तपुटकं धनुः ॥ १३ ॥ हस्तावापगतैः स्रस्तैर्जपेद्धस्तकरैरपि ॥ तस्मिन्वे
ध्यगते राम द्वे वेध्ये दृढसंज्ञिते ॥ १४ ॥ द्वे वेध्ये पुष्करे विद्धि द्वे तथा चित्रपुष्करे ॥ चतुरस्रं च तीक्ष्णं च दृढवेध्ये प्रकीर्तिते॥ १५ ॥

चतुरस्रं स्थूलतीक्ष्णं....... ॥ निम्नं पुष्करमुद्दिष्टं वेध्यमूर्ध्वगतं च यत् ॥ १६ ॥ पुष्करेऽधमवेध्ये तु चित्रपुष्करसंज्ञके ॥ एवं वेध्यगणं कृत्वा दक्षिणेनेतरेण च ॥ १७ ॥ आरोहेत्प्रथमं धीरो जितलक्ष्यस्ततो नरः ॥ एष एव विधिः प्रोक्तस्तत्र दृष्टः प्रयोक्तृभिः ॥ १८ ॥ आदिकं भ्रमणं तस्य तस्माद्विद्धिन्प्रकीर्तितम् ॥ लक्ष्यं संयोजयेत्तत्र प्रतियन्त्रगतं दृढम् ॥ १९ ॥ भ्रान्तं प्रचलितं चैव स्थितं यच्च भवेदिति ॥ समन्ता च्छादयेत्पश्चाच्छेदयेच्छ्लथयेदपि ॥ २० ॥ कर्मयोगविधानज्ञो ज्ञात्वैवं विधिमाचरेत् ॥ मनसा चक्षुषा दृष्ट्या योगं शिक्षन्न्यसंजयेत् ॥ २१ ॥ दत्त्वा प्रयुक्तं सुकृतं प्रमाणान्न्यसेत्समन्तात्पुटकान्विचित्रान् ॥ अप्यङ्गुलीयप्रतिमां जपेच्च वालङ्गताः काष्ठगतं प्रलम्बम् ॥ २२ ॥ सिद्धार्थ कान्गुञ्जयवांश्च तस्मिन्न्यसेद्विधिज्ञो भ्रमरीरिकाश्च ॥ मृत्पिण्डसंस्थान्फलकांक्षितांश्च कबन्धनिष्पावकपेलवाश्च ॥ २३ ॥ हंसान्मयूरान्कुररांस्तथा च कारण्डवांश्चैव शिलीमुखांश्च ॥ गृध्रानुलूकानथ वापि चाषान्कपोतगोधाशुकसारिकाश्च ॥ २४ ॥ पलाशमूलोर्णवपूर्ण देहांश्चर्मावबद्धां मृदुचित्रगात्राम् ॥ वरत्रयन्त्रैर्विविधैः सुयुक्तां काष्ठावसक्तैर्बहुभिः प्रकारैः ॥ २५ ॥ चलान्स्थिरांश्चाग्रगतांश्च विद्वान्न्यसेद्यथान्यायमथोर्ध्वसंस्थान् ॥ व्याघ्रान्मृगेन्द्रान्पृषतान्रुरूंश्च मृगान्सगोकर्णवराहवक्त्रान् ॥ २६ ॥ गोमायुमार्जारशशांस्तथा न्यानृक्षान्मृगाश्चन्द्रमयेन्दुपूर्णान् ॥ अन्यान्समीपोपगतान्मृगांश्च विधानवित्तान्प्रतियन्त्रसंस्थान् ॥ २७ ॥ जातांस्तथान्यांश्च बहुप्रका राननेकसंस्थानविबद्धदेहान् ॥ नानाविधैस्तैर्विशिखभ्रमस्थः सन्धानयोगैस्त्रिविधैश्च हन्यात्॥२८॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेय वज्रसंवादे रामं प्रति पुष्करोपाख्याने धनुर्वेदो नामाशीत्युत्तरशततमोऽध्यायः ॥१८०॥ पुष्कर उवाच ॥ जितहस्तो जितमतिर्जितदृग्लक्ष्यसाधकः ॥ नियतां सिद्धिमासाद्य ततो वाहनमारुहेत् ॥ १ ॥ एष तत्रैव च विधिः कार्त्स्न्येन परिकीर्तितः ॥ अधिकं भ्रमतस्तस्य भागे ग्रहणमेव च ॥ २ ॥ एतेषां चैव योगानां विधिर्यस्त्वैषुकस्य च ॥ वाहाश्रितस्य वक्ष्यामि सविशेषेण लक्षणम् ॥ ३ ॥ पाशासियष्टिदण्डानां विधिर्यः परिनिष्ठितः ॥ क्षेप एव यथान्यायं तस्य वक्ष्यामि या क्रिया ॥ ४ ॥ दशहस्तो भवेत्पाशो वृतः करमुखस्तथा ॥ शणकार्पासमुञ्जानां भङ्ग स्नाय्वस्थिचर्मणाम् ॥ ५ ॥ अन्येषां सुदृढानां च सुकृतं परिवेष्टितम् ॥ त्रयस्त्रिंशत्समं चापं बुधः कुर्यात्सुवर्तितम् ॥ ६ ॥ कर्तव्या शिबिकैस्तस्य स्थानं कक्ष्यासु वै तदा ॥ वामहस्तेन संगृह्य दक्षिणेनोद्धरेत्तु सः ॥ ७ ॥ कुण्डलस्याकृतिं कृत्वा भ्रामैकं मस्तकोपरि ॥ क्षिपेत्तृणमये तूर्णं पुरुषे चर्मवेष्टिते ॥ ८ ॥ चलिते च प्लुते चैव तथा प्रजवितेषु च ॥ समायोगविधिं ज्ञात्वा प्रयुञ्जीत सुशिक्षितः ॥ ९॥

विजित्य तु यथान्यायं ततो बन्धं समाचरेत् ॥ कट्यां बद्धा ततः खड्गं वामपार्श्वावलम्बिनम् ॥ १० ॥ दृढं विगृह्य
वामेन विकर्षे दक्षिणेन तु ॥ षडङ्गुलपरीणाहं [1]समहस्तं समुच्छ्रितम् ॥ ११ ॥ अयोमयशलाकाश्च चर्माणि विविधानि च ॥ अपहस्तं
समं चैव तिर्यगूर्द्धहतं तथा ॥ १२ ॥ शोधयेद्विधिना येन तथा मे गदतः शृणु ॥ तार्णं चर्मावनद्धाङ्गं स्थापयित्वा नरं दृढम् ॥ १३ ॥ करेणादाय
लगुडं दक्षिणाङ्गुष्ठकान्नरः ॥ उद्यम्य घातयेद्यस्य नाम्नस्तं शिरसो दृढम् ॥ उभाभ्यामपि हस्ताभ्यां कुर्यात्तस्य निपातनम् ॥ १४॥ बिम्बोयं विधि
सहितो हितः सुमुक्तिः शिष्याणां हितमतिकुर्वता मया ते ॥ वाहानां श्रमरणप्रधारणार्थं योग्याहं प्रथमतरं बुधेन बध्यम् ॥ १५ ॥
इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे रामं प्रति पुष्करोपाख्याने धनुर्वेदविद्याकथनो नामैकाशीत्युत्तरशततमोऽध्यायः
॥ १८१ ॥ पुष्कर उवाच ॥ भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं निःसृतं सृतम् ॥ संपातं समुदीर्णं च सेनापातमनाकुलम् ॥ १ ॥ उद्धातमवधूतं च
सव्यदक्षिणमेव च ॥ अनालक्षितविस्फोटौ करालेन्द्रमहामुखौ ॥ २ ॥ विकरालविपातौ च विभीषणभयङ्करौ ॥ समग्रां वा तृतीयां वा पादपादा
वजारिजाः ॥ ३ ॥ प्रत्यालीढमनालीढं वराहलुलितं तथा ॥ इति द्वात्रिंशधा ज्ञेया खड्गाश्चर्मविधारणाः ॥ ४ ॥ ऋज्वायतविशालं च तिर्यङ्नमित
मेव च ॥ पञ्चकर्म विनिर्दिष्टं व्यस्त्रे प्रासं महात्मभिः ॥ ५ ॥ छेदनं तर्जनं पातो भ्रमणं भ्रामणं तथा ॥ विकर्तनं कर्तनं च चक्रभ्रमणमेव च ॥ ६॥
आस्फोटक्ष्वेडनं भेदस्त्रासोल्लासितकौ तथा ॥ शूलकर्माणि जानीहि षष्ठमाघ्रातसंज्ञकम् ॥ ७ ॥ दृष्टिघातं भुजाघातं पार्श्वघातं च भार्गव ॥
ऋज्वावक्षोपसाघातं तोमरस्य प्रकीर्तितम् ॥ ८ ॥ संहतावितत वामं गोमूत्रं कमलाविलम् ॥ ततोऽर्धभागनमितं वामदक्षिणमेव च ॥ ९ ॥
व्यावृत्तं च परावृत्तं पादोद्धूतमविप्लुतम् ॥ हंसमार्गविमार्गे च गदाकर्म प्रकीर्तितम् ॥ १० ॥ करालमठपातं च दशोपप्लवमेव च ॥ क्षिप्तं हस्त
स्थितं शून्यं परशोस्तु विनिर्दिशेत् ॥ ११ ॥ ताडनं छेदनं राम तथा चूर्णनमेव च ॥ मुद्गरस्य तु कर्माणि लगुडस्य च तान्यपि ॥ १२ ॥
अन्त्यमध्यं परावृत्तं निदेशार्द्धं तथैव च ॥ वज्रस्यैतानि कर्माणि पट्टिशस्य तथैव हि ॥ १३ ॥ हरणं छेदनं घातो भेदनं रक्षणं तथा ॥
कृपाणीकर्म निर्दिष्टं पातनं स्फोटनं तथा ॥ १४ ॥ त्रासनं रक्षणं घातं तलोद्धरणमायतम् ॥ क्षेपणीकर्म निर्दिष्टं यन्त्रकर्मैतदेव तु ॥ १५ ॥ सन्त्या
गमङ्गमर्दश्च वराहोद्धूतकं तथा ॥ हस्तार्धहस्तपालीनमेकहस्तार्धहस्तकम् ॥ १६ ॥ द्विहस्तबाहुपाशे च कोटिरेचितकोद्धते ॥ उरो ललाटघाते

१ 'सतहस्तम्' इति ख० ।

च भुजादिवसनं तथा ॥ १७ ॥ करोद्धूतविमार्गं च पादाहति विपादकम् ॥ गात्रसंश्लेषणं कान्तं तथा गोविधिपर्ययम् ॥ १८ ॥ ऊर्ध्वप्रहारं घातं च गोमूत्रं सव्यदक्षिणम् ॥ पादसञ्चारकं गण्डं कबरीबन्धमाकुलम् ॥ १९ ॥ तिर्यग्गतमपामार्गं भीमवेगं सुदर्शनम् ॥ सिंहक्रान्तं गजक्रांतं वृषभाक्रान्तमेव च ॥ २० ॥ गदाकर्म विजानीयाद्धनुर्वेदविशारदः ॥ आकर्षणं विकर्षं च बाहुनामनमेव च ॥ २१ ॥ ग्रीवाविपरिवर्तं च पृष्ठभङ्गं सुदारुणम् ॥ पर्णासनं विपर्यासः पशुपारमजाविकम् ॥ २२ ॥ पादप्रहारमास्फोटं कविरेचितकं तथा ॥ गात्रश्लेषं कण्ठगतं महीत्याजनमेव च ॥ २३ ॥ उरोललाटघातं च विस्पष्टकरणं तथा ॥ उद्धूतमवधूतं च तिर्यग्मार्गगतं तथा ॥२४॥ गजस्कन्धमवक्षेपमवाङ्मुखकमेव च ॥ देवमार्गमधोमार्गममार्गगमनाकुलम्॥२५॥ मुष्टिघातमवक्षेपो वसुधादारणं तथा ॥ जानुबन्धं भुजाबन्धं ऊरुबन्धं सुदारुणम् ॥ २६ ॥ संसृष्टं सोदरं शुभ्रं भुजावेष्टितमेव च ॥ नियुद्धकर्म जानीयान्नियुद्धकुशलो जनः ॥ २७ ॥ प्रधानकर्माणि तवेरितानि न्यस्तप्रधाने पुरुषप्रवीर ॥ नामानि रूपाणि भवन्ति तानि ज्ञेयानि सर्वाणि यथानुरूपम् ॥२८ ॥ इति श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे रामं प्रति पुष्करोपाख्याने धनुर्वेदविद्यावर्णनो नाम द्व्यशीत्युत्तरशततमोऽध्यायः ॥ १८२ ॥ ॥ पुष्कर उवाच ॥ सन्नद्धैश्चर्मिभिर्भाव्यं तथा बद्धकृपाणिभिः ॥ चर्माणि तत्र वैयाघ्रमाहिषाण्यृषभाणि च ॥ १ ॥ खेटकाद्यथ वा राम चर्माणि प्रभवन्ति तु ॥ तथा वरणमुख्यानि खड्गानि विविधानि च ॥ २ ॥ बद्धादिभिः सतूणीरैस्तथा राम सतोमरैः ॥ बद्धगोधाङ्गुलित्राणैर्बद्धादर्शैर्विभीषणैः ॥ ३ ॥ तथा परश्वधोपेतै राम स्वासनयोधिभिः ॥ ४ ॥ गदाधरास्तथैवात्र सकृत्पाणिपरिच्छदाः ॥ सुसंनद्धाः सुमनसो भवेयुर्विपुलौजसः ॥ ५ ॥ यत्र यस्य विशेषेण शस्त्रास्त्रैर्घातकौशलम् ॥ तदेव तस्य निर्दिष्टं यथावन्मनुजोत्तम ॥ ६ ॥ सखलीनाः सपर्याणास्तथा सास्तरणा हयाः॥ कार्याः सकवचा युद्धे चामरापीडधारिणः ॥ ७ ॥ अश्वी भवेत्सुसन्नद्धो रश्मिप्रग्रहकोविदः ॥ तथा सावरणो राम सकृपाणी परिच्छदः ॥ ८ ॥ बद्धासिर्बद्धजीवश्च तुरगारूढपिण्डकः ॥ ससुप्रासो भवेद्राम नानायुधधरस्तथा ॥ ९ ॥ रथः कार्यस्तथा युक्तः ईषादण्डकबन्धुरैः ॥ सुचक्रोपस्करयुतः सर्वरूपः पताकराट् ॥ १० ॥ त्रिवेणुसंततश्चैव वैयाघ्रपरिवारणः ॥ किंकिणीजालनिर्घोषस्तथा वै सुप्रतिष्ठितः ॥ ११ ॥ उपासङ्गैर्निषङ्गैश्च तूणीरैर्वरकार्मुकैः ॥ सर्वायुधैरुपेतश्च तथा वृक्षादनीयुतः ॥१२॥ तोयजीरकपिण्डीभिर्युक्तः शृङ्गैस्तथैव च ॥ सन्नद्धः सारथिस्तत्र भवेद्राम प्रतोदवान् ॥ १३ ॥ रश्मिग्रहणविच्चापि तथा मण्डलकोविदः ॥ तथाश्वहृदयज्ञश्च दूरदृष्टिः सुयन्त्रितः ॥ १४ ॥ स्वासनः कालविच्चैव बद्धासिः पाशसंयुतः ॥ पार्ष्णिः स्यादायुधज्ञस्य तथैवायुधकोविदः ॥ १५ ॥

चिरेण मूले यस्य स्यादवस्थानं महाभुजः ॥ पताकावरणं यस्य आयुधानां समर्पणम् ॥ १६ ॥ समायान्तं महाभागं तथा सारथिरक्षणम् ॥ स्यातां धनुर्धरौ तत्र तथा च रथिनावुभौ ॥ १७ ॥ योधौ धनुर्भृतां श्रेष्ठ सर्वायुधविशारदौ ॥ तुरगाश्च सुसंनद्धा दान्ताः कार्यास्तथा रथे ॥ ॥ १८ ॥ तुल्यवेगबलाश्चैव तथा लघुपरिच्छदाः ॥ अतः परं प्रवक्ष्यामि तव नागेन्द्रकल्पनम् ॥ १९ ॥ कुञ्जरः स्यात्सुसन्नद्धः सपर्याणः कुथावृतः ॥ सर्वायुधधरश्चैव तथा योधा वरायुधाः ॥२०॥ परश्वधकराश्चैव तोयजीरकसंयुताः ॥ सम्यग्विभाज्याश्च तथा शृङ्खलावततास्तथा ॥ २१ ॥ पताका च तथा कार्या कुञ्जरस्य सुशोभना ॥ वराङ्कशधरौ तत्र स्यातां मनुजपुङ्गवौ ॥ २२ ॥ एकः पृष्ठस्थितस्तत्र द्वितीयः स्कन्धगो भवेत् ॥ योधौ द्वौ वरधानुष्कौ द्वौ च खड्गधरौ वरौ ॥ २३ ॥ तयोरनुभवेतां वै तथा रक्षापरायणौ ॥ एकः पार्ष्णिस्थितस्तत्र वरशक्तिपताकधृक् ॥ २४ ॥ पालयेज्जघनं यद्वत्कुञ्जरस्य महामते ॥ एवं परस्परायत्ता रक्षा तेषां यथा भवेत् ॥ २५ ॥ महामात्रस्य धर्मज्ञ तथा च गजयोधिनः ॥ एवमेव तथा रक्ष्यो रथिनः स रथी भवेत् ॥ २६ ॥ कुञ्जरस्य तु रक्षार्थं भवेद्रथचतुष्टयम् ॥ रथेरथे गजे वापि तुरगाणां त्रयं भवेत् ॥ २७ ॥ धानुष्काणां त्रयं प्रोक्तं रक्षार्थं तुरगस्य च ॥ धन्विनो रक्षणार्थाय वर्मिणोऽपि नियोजयेत् ॥ २८ ॥ कार्यं सर्वं सुसंबाधं तथा तोरणरक्षणम् ॥ योजना च तथा कार्या यथा तु स्याद्व्यतिक्रमः ॥ २९ ॥ संबाधश्च तथा राम न भवेच्च परस्परम् ॥ ३० ॥ नागेन्द्रकल्पं तव सर्वयुक्तं संक्षेपतो भार्गववंशमुख्य ॥ एतत्तु कृत्वापि नरः सयुद्धे जयत्यवश्यं समुपार्जने च ॥ ३१ ॥ इति श्रीविष्णुमहापुराणे द्वितीयभागे श्रीविष्णुधर्मोत्तरे द्वितीयखण्डे मार्कण्डेयवज्रसंवादे रामं प्रति पुष्करोपाख्याने धनुर्वेदे वाहनसज्जीकरणो नाम त्र्यशीत्युत्तरशततमोऽध्यायः ॥ १८३ ॥ ॥ ॥ छ ॥

समाप्तोऽयं विष्णुधर्मोत्तरद्वितीयखण्डः ।



॥ अथ श्रीविष्णुमहापुराणे २ भागे विष्णुधर्मोत्तरे तृतीयखण्डप्रारम्भः ॥

ॐ श्रीगणेशाय नमः ॥ ॥ ॐ नमो नारायणाय ॥ ॥ अथ श्रीविष्णुमहापुराणे विष्णुधर्मोत्तरतृतीयखण्डप्रारम्भः ॥ ॥ वज्र उवाच ॥ किं कर्तव्यं मनुष्येण किं कुर्वन्सुखमेधते ॥ अस्मिँल्लोके परे चैव केनाप्नोति महत्सुखम् ॥ १ ॥ मार्कण्डेय उवाच ॥ ॥ अन्तर्वेदि बहिर्वेदि पुरुषेण विजानता ॥ देवतापूजनं कार्यं लोकद्वयमभीप्सता ॥ २ ॥ यज्ञेषु देवयजनमन्तर्वेदि प्रकीर्तितम् ॥ बहिर्वेदि तथैवोक्तमुपवासव्रतादिकम् ॥ इष्टापूर्तेन लभ्यन्ते ये लोकास्तान्बुभूषता ॥ ३ ॥ देवानामालयः कार्यो द्वयमप्यत्र दृश्यते ॥ विशेषेण कलौ काले कर्तव्यं देवतागृहम् ॥ ४ ॥ कृतत्रेताद्वापरेषु नराः पश्यन्ति देवताम् ॥ तिष्यं प्राप्य न पश्यन्ति पूजास्त्वर्चागता यतः ॥ ५ ॥ कृतादिष्वपि दृष्ट्वा च देवान्मनुजसत्तम ॥ अर्चागतविशेषेण पूजयन्ति विधानतः ॥ ६ ॥ चित्रसूत्रविधानेन देवतार्चां विनिर्मिताम् ॥ सुरूपां पूजयेद्विद्वांस्तत्र संनिहिता भवेत् ॥ ७॥ स्वाकारां लक्षणोपेतां यस्तां संपूजयेन्नरः ॥ स सर्वकामानाप्नोति नात्र कार्या विचारणा ॥ अस्मिँल्लोके परे चैव सुखवान्स भवेत्सदा ॥ ८ ॥ अथार्चां लक्षणैर्हीनां यस्तु पूजयते नरः ॥ तस्यानर्था विवर्धन्ते तस्मात्तां च विवर्जयेत् ॥ ९ ॥ प्रासादकरणं पुण्यं देवार्चाकरणं तथा ॥ सुरार्चापूजनं पुण्यं तत्र पुण्या नमस्क्रिया ॥ १० ॥ तस्मात्सर्वप्रत्नेन सुरार्चां लक्षणान्विताम् ॥ कारयेत्पूजनं विद्वान्नत्वलक्षणसंयुताम् ॥११ ॥ धर्ममर्थं तथा कामं मोक्षं च यदुनन्दन ॥ प्रयच्छन्ति महाराज नराणामिह देवताः ॥ १२ ॥ कामानिष्टान्प्रयच्छन्ति स्वर्गमत्यन्तमेव च ॥ तस्मात्सर्वप्रयत्नेन नृणां पूज्या दिवौकसः ॥ १३ ॥ नित्यं नराणां सुरपूजकानां लोका मनोज्ञाः सुलभा भवन्ति ॥ लोके तथास्मिन्धनधान्ययुक्ताः समृद्धिभाजश्च नरा भन्ति ॥ १४ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेववज्रसंवादे चित्रसूत्रे प्रथमोऽध्यायः ॥१॥ वज्र उवाच ॥ देवतारूपनिर्माणं कथयस्व ममानघ ॥ यस्मात्सन्निहिता नित्यं शास्त्रवत्साकृतिर्भवेत्॥१॥ मार्कण्डेय उवाच॥ चित्रसूत्रं न जानाति यस्तु सम्यङ् नराधिप ॥ प्रतिमालक्षणं वेत्तुं न शक्यन्तेन कर्हिचित् ॥ २॥ वज्र उवाच ॥ चित्रसूत्रं समाचक्ष्व भृगुवंशविवर्धन ॥ चित्रसूत्रविदेवाथ वेत्ति वाग्लक्षणं यतः ॥ मार्कण्डेय उवाच॥विना तु नृत्यशास्त्रेण । त्रसूत्रं सुदुर्विदम्॥३॥जगतो न क्रिया कार्या द्वयोरपि यतो नृप ॥ वज्र उवाच ॥ नृत्यशास्त्रं समाचक्ष्व चित्रसूत्रं वदिष्यसि॥ नृत्यशास्त्रविधान च चित्रं वेत्ति यतो द्विज॥४॥मार्कण्डेय उवाच॥ आतोद्यं यो न जानाति तस्य वृत्तं हि दुर्विदम् ॥ आतोद्येन विना नृत्तं विद्यते न कथंचन ॥ ५ ॥ वज्र उवाच ॥ आतोद्यं त्वं हि धर्मज्ञ नृत्यशास्त्रं वदिष्यसि ॥ तस्मिन्सुविदिते वेत्ति नृत्यं भार्गवसत्तम॥६॥ मार्कण्डेय उवाच ॥ न गीतेन विना शक्यं ज्ञातुमातोद्यमप्युत ॥ गीतशास्त्रविधानज्ञः सर्वं

वेत्ति यथाविधि ॥ ७ ॥ वज्र उवाच ॥ गीतशास्त्रं समाचक्ष्व सर्वधर्मभृतां वर ॥ गीतशास्त्रविदेवाथ सर्वज्ञः पुरुषोत्तमः ॥ ८ ॥ मार्कण्डेय उवाच ॥ संस्कृतं प्राकृतं चैव गीतं द्विविधमुच्यते ॥ अपभ्रष्टं तृतीयं च तदनन्तं नराधिप ॥ ९ ॥ देशभाषाविशेषेण तस्यान्तो नेह विद्यते ॥ गीतं पाठवशाज्ज्ञेयं स च पाठो द्विधा मतः॥१०॥ गद्यं पद्यं च धर्मज्ञ गद्यं संकथया स्मृतम् ॥ पद्यं छन्दोविशेषेण च्छन्दश्च बहुधा भवेत् ॥११ ॥ गद्यपद्यानुभावेन ज्ञेयौ लक्षणसंयुतौ ॥ पद्यं च द्विविधं तत्र सुवृत्तमतिमुक्तकम् ॥ १२ ॥ एकविंशतिसंख्याः स्युः सुपः सुप्तिङ्पदं स्मृतम् ॥ प्रथमः पुरुषस्त्वेको द्वितीयो मध्यमो मतः ॥ १३ ॥ उत्तमाख्यस्तृतीयस्तु तत्क्रियावचनं त्रिकम् ॥ तिङश्च नवकं तत्र परस्मैपदसंज्ञकम् ॥ ॥ १४ ॥ आत्मनेपदसंज्ञं च नवकं परिकीर्तितम् ॥ युष्मद्युपपदे तत्र मध्यमः पुरुषो भवेत् ॥ १५ ॥ अस्मद्युपपदे चैव स्यात्तथोत्तमसंज्ञकः ॥ शेषे प्रथममिच्छन्ति पुरुषं यदुसत्तम ॥१६॥ अर्थे प्रातिपदिकस्य स्वादौ वचनमन्त्रणे ॥ परिमाणे च कथिता विभक्तिः प्रथमा बुधैः ॥ १७ ॥ द्वितीया कर्मणि मता तृतीया करणे स्मृता ॥ कारके कर्मणि तथा सैव चान्यैः प्रकीर्तिता ॥ १८ ॥ चतुर्थी संप्रदाने स्यादपादाने च पञ्चमी ॥ संबन्धे च तथा षष्ठी सप्तम्याधारभावयोः ॥१९॥ तेषां तु पूर्वमेवोक्तं व्याख्यानं रिपुसूदन॥ द्वितीयं तव धर्मज्ञ मया तत्परिकीर्तितम्॥२०॥ प्रातिपदिकमिह स्वं प्रकृतिः स्यात्तत्प्रकृतिमपि धातुमिच्छन्ति ॥ वाङ्मयमखिलमनेन निबद्धं गद्यमपि यदथ पद्यसमेतम् ॥२१ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे शब्दाध्यायो नाम द्वितीयोऽध्यायः ॥ २ ॥ मार्कण्डेय उवाच ॥ षडक्षरेण पादेन गायत्रं छन्द उच्यते ॥ उष्णिक् सप्ताक्षरं चैव अष्टाक्षरमनुष्टुभम् ॥ १॥ नवाक्षरा च बृहती पंक्तिसंज्ञं दशाक्षरम् ॥ एकादशाक्षरं त्रिष्टुब्जगती द्वादशाक्षरम्॥२॥ त्रयोदशाक्षरं ज्ञेयमतिपूर्वं तथैव हि ॥ चतुर्दशाक्षरा चैव शक्करी यदुनन्दन॥३॥अतिशक्करी च कथिता तथा पञ्चदशाक्षरा ॥ षोडशाक्षरमिच्छन्ति च्छन्दोऽष्टिरिति यत्स्मृतम्॥४॥अत्यष्टिसंज्ञं छन्दश्च तथा सप्तदशाक्षरम्॥अष्टादशाक्षरं चैव वृत्तिसंज्ञं प्रकीर्तितम् ॥ ५ ॥ तथातिवृत्तिसंज्ञं च विंशतिस्त्वेकवर्जिता ॥ विंशतिश्चाक्षराणि स्युः कृतिसंज्ञं यदूत्तम॥६॥विंशतिस्त्वेकसंयुक्ता प्रकृतिः परिकीर्तिता॥ द्वाविंशतिश्च कथितं तथैवाकृतिसंज्ञकम् ॥७॥ त्रयोविंशतिश्च विकृतिः सा चैकात्संकृतिर्मता ॥ संकृतिश्चैकसंयुक्ता कथिता विकृतिर्नृप ॥८॥ षड्विंशतिश्चातिकृतिश्छन्दश्चोक्तं मनीषिभिः॥ यथायथं चतुर्भिः स्वैः पादैरेतानि निर्दिशेत् ॥ ९ ॥ मात्रकस्तु लघुर्वर्णः स्पष्टलेखाभिचिह्नितः ॥ संस्थाप्यः स्याद्द्विमात्रस्तु गुरुर्वक्रस्तथा भवेत् ॥ १० ॥ लघुश्चान्त्यश्च यो वर्णः स गुरुश्च भवेन्नृप ॥ दीर्घप्लुतौ च कथितौ तथैव गुरुसंज्ञकौ ॥११ ॥ संयोगाद्याः परे यस्मात्स लघुश्च

गुरुः स्मृतः ॥ लघुगुरुविभागेन प्रस्तारोनेन यादव ॥ १२ ॥ सर्वे छन्दोविकल्पाश्च भवन्ति बहुशो नृप ॥ स्याद्यथानयनं तेषां तथा वक्ष्यामि तच्छृणु ॥ १३ ॥ यावत्संख्याक्षरं च्छंदस्तावन्तो गुरुवो नृप ॥ स्थाप्या अधश्च पूर्वाणां लघु पूर्वस्य विन्यसेत् ॥ १४ ॥ अतोऽन्येषु त्ववस्थाप्यं नृपमुख्य यथास्थितम् ॥ एवमेव विधिं कुर्यादादिश्च गुरुभिः पुनः ॥ १५ ॥ पूरयेदक्षरैस्तावत्कुर्यादेतं नृपोत्तम ॥ यावदक्षरसंख्याः स्युः सर्वे हि लघवो नृप ॥ १६ ॥ एतत्स्यादक्षरैच्छन्दो मात्राश्छन्दास्तथैव हि ॥ उक्तवर्णाक्षरं छन्दो भवेदेकविवर्जितः ॥ १७ ॥ यदा तदा निवृत्संज्ञो ह्यधिकेन तमत्तथा ॥ वर्णद्वयेन रहितं विराडिति हि शब्दितम् ॥ १८ ॥ अधिकं च सुरासंज्ञं कथितं यदुसत्तम ॥ तेभ्यो भवन्ति सर्वाणि मात्राच्छन्दांसि यादव ॥ १९ ॥ दिङ्मात्रमेतत्कथितं नरेन्द्र विस्तारजिज्ञासुरतो मनुष्यः ॥ संसाधयेत्तत्स्वधिया यथावत्सुदुस्तरं विस्तरशो हि वक्तुम् ॥ २० ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे छन्दोविधिर्नाम तृतीयोऽध्यायः ॥ ३ ॥ मार्कण्डेय उवाच ॥ तत्राज्ञायुक्तमद्वैधं दीप्तं गम्भीरशब्दवत् ॥ क्वचिन्निरुक्तसंयुक्तं वाक्यमेतत्स्वयंभुवः ॥ १ ॥ यत्किंचिन्मिश्रसंयुक्तं युक्तं नाम विभक्तिभिः ॥ प्रत्यक्षाभिहितं यच्च तादृशीनां वचः स्मृतम् ॥ २ ॥ नैगमैर्विविधैः शब्दैर्निपातं बहुलं च यत् ॥ न चापि सुमहद्वाक्यमृचीकानां वचः स्मृतम् ॥ ३ ॥ अविस्पष्टपदं ज्ञेयमृषिपुत्रवचो नृप ॥ भूतभव्यभवज्ञानं जन्मदुःखविकुत्सनम् ॥ ४ ॥ मित्राणां तद्भवेद्वाक्यं गर्भेषु च प्रवर्तनम् ॥ आज्ञायुक्तं च वचनं तथा हेतुविवर्जितम् ॥ ५ ॥ राजर्षीणां तु विज्ञेयं बह्वर्थं बहुविस्तरम् ॥ बह्वभिधानं बह्वर्थं देवतानां प्रकीर्तितम् ॥ ६ ॥ बह्वभिधानमल्पार्थं दानवानां प्रकीर्तितम् ॥ अल्पाभिधानमल्पार्थं गन्धर्वाणां तथा भवेत् ॥ ७ ॥ दुर्बोधं विषमं चैव राक्षसानां प्रकीर्तितम् ॥ गूढाक्षरं तु यक्षाणां किन्नरैरुक्तवत्तथा ॥ ८ ॥ नागानामतिविस्पष्टं पुनरुक्तसमन्वितम् ॥ रागद्वेषसमायुक्तं हेतुमत्पौरुषं भवेत् ॥ ९ ॥ मन्त्रा नवविधाः प्रोक्ताः ऋग्यजुःसामलक्षणाः ॥ स्तुतिर्निन्दा प्रशंसा च आक्रोशः प्रेष्य एव च ॥ १० ॥ प्रश्नोऽनुज्ञा तथाख्यानमाशास्तिर्विषया मताः ॥ एवं ते सर्वविद्यानां विहितं सर्वलक्षणम् ॥ ११ ॥ पौरुषे विद्यते तच्च नान्यत्रेति विनिश्चयः ॥ स्वभावान्न च्यवन्त्येव ये प्रोक्ता नरवर्जिताः ॥ १२ ॥ दृश्यते हि पुमान्कश्चित्कश्चिच्छ्रेष्ठतमो धिया ॥ तस्मात्तत्रैव तस्योक्ता बुद्धिः श्रेष्ठतमा नृप ॥ १३ ॥ एतन्मयोक्तं सुपरीक्षणं ते वाक्यस्य भो वाक्यविदां वरिष्ठ ॥ विचक्षणैरत्र च रागतस्तु ज्ञेयं तथा द्वेषसमागमाच्च ॥ १४ ॥ दिव्येन तुल्यं यदि वार्षवाक्यं वाक्येन तुल्यं यदि वा परेण ॥ वाक्यं नाराणां नृपरागतस्तु ज्ञेयं यथाद्वेषसमागमत्वात् ॥ १५ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे वाक्यप

रीक्षाध्यायो नाम चतुर्थोऽध्यायः ॥ ४ ॥ अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम् ॥ अस्तोभमनवद्यश्च सूत्रं सूत्रविदो विदुः ॥ १ ॥ उत्सर्गेणाप वादेन द्विविधं तत्प्रकीर्तितम् ॥ सूत्रं व्युदासश्च तथा तथोदाहरणं नृप ॥२॥ प्रत्युदाहरणं चैव चतुरङ्गं प्रकीर्तितम् ॥ वाक्यं चैवार्थवाक्यार्थं . पदार्थः पदमेव च ॥ ३ ॥ चतुरङ्गमिदं चेति तथैवान्यत्प्रकीर्तितम् ॥ प्रतिज्ञा हेतुदृष्टान्तावुपसंहार एव च ॥ ४ ॥ तथा निगमनं चैव पञ्चावयवमिष्यते ॥ आरम्भोऽथापि संबन्धः सूत्रार्थस्तद्विशेषणम् ॥ ५ ॥ चोदना परिहारश्च व्याख्या सूत्रस्य षड्विधा ॥ सूत्रेष्वेव हि तत्सर्वं यद्वृत्तं समुदाहृतम्॥६॥ विस्तरोक्तं मतिं हन्ति समासोक्तं न गृह्यते॥ समासविस्तरौ हित्वा वक्तव्यं यद्विवक्षितम् ॥७॥ अपार्थं व्याहत चैव पुनरुक्तं तथैव च ॥ तथा विभिन्न संस्थानं युक्तिहीनं विवर्जयेत् ॥८॥ क्रमभेदो विभक्तश्च गुरुसूत्रं तथैव च ॥ अभिधानस्य चान्यत्वं नैतानि स्युरकारणात् ॥९॥ सर्वं कृत्वा पदच्छेदं समासं तदनन्तरम् ॥ समासे तु कृते पश्चादर्थं ब्रूयाद्विचक्षणः ॥ १० ॥ सूत्रार्थश्च पदार्थश्च हेतुश्च क्रमशस्तथा ॥ निरुक्तमथ विन्यासो व्याख्या योगस्य षड्विधा॥ ११ ॥ प्रत्यक्षमनुमानं च तथाप्तवचनं भवेत् ॥ त्रिभिः प्रमाणैः संयुक्तैस्तन्त्री प्रामाण्यमर्हति ॥ १२ ॥ प्रत्यक्षाभास मप्युक्तं तथा वै मृगतृष्णिका ॥ आभासमनुमानस्य बाष्परेणुचयौ यथा ॥ १३ ॥ धूमशंकाञ्जनयतो न च वह्न्युपलब्धये ॥ आप्तत्वं दर्शयित्वा तु यदनाप्तेन भाषितम् ॥ १४॥ तदाप्तवचनाभासं वदन्ति नृपसत्तम ॥ रागद्वेषविनिर्मुक्त आप्त इत्यभिधीयते ॥ १५ ॥ नैरुक्तं द्विविधं विद्धि सिद्ध मौत्पातिकं तथा ॥ निर्वक्तव्यं तु तत्सिद्धमर्थसिद्धिस्तु सर्वदा॥१६॥ तत्र त्वौत्पत्तिकं सर्वं गौरश्वः पुरुषो यथा ॥ दशधा तु गणो द्दीतं तद्वक्ष्यामि यथाग तम् ॥१७॥गणो नैमित्तिकोभ्यक्तः संवादः कार्त्तिकस्तथा ॥ उपचारश्च सम्बन्धः गौणिको यौगिकस्तथा॥१८॥गुणात्तु गौणं पश्यामो महदित्येव मादयः ॥ निमित्ततस्तु नैमित्तं खण्डमुण्डादिकं यथा॥१९॥भक्त्या भक्तं नृसिंहास्यादमातरि च मातृवत् ॥ समं वदन्ति यस्मिँश्च संवादश्चित्वरी यथा ॥२० ॥ कार्तकः स्यात्तु कृतको देवदत्तादिको यथा ॥ उपचारस्तूपचारात्तैलपाशं तुला यथा॥२१॥ संबन्धतस्तु साबन्धश्छत्री मीमांसको यथा ॥ संयोगादपि संयोगः क्रियायाः क्रयिकः स्मृतः॥२२॥ पटकृच्छ्रगुडच्छेद्यो ज्ञेयः शाकटिकस्तथा ॥ एवं परेषां च परं स्यान्नैगमनिचण्वकम् ॥ ॥ २३ ॥ सुखार्थो न प्रसिद्धश्चेत्साधनानां विधिं शृणु ॥ यद्विपन्नं तु दृश्येत तत्साध्यं साधनैरिमैः ॥ २४ ॥ आत्मेन्द्रियमनोर्थानां संयोग उपदिश्यते ॥ ज्ञानदेशादिसंविष्टं प्रत्यक्षमिति तद्भवेत् ॥ २५ ॥ बुद्ध्या शरीरभूतात्मा यश्च युक्तोऽनुमीयते ॥ सोग्निर्धूमाद्यथा विद्यादनुमानं तदि ष्यते ॥ २६ ॥ वेदविद्याविरुद्धं यत्सा स्मृतिः शिष्टसंमता ॥ अप्रत्यक्षफलं विद्यात्साधनं शास्त्रसंज्ञितम् ॥ २७ ॥ द्वयोः सदृशयोरेकं निर्दिष्टं

साधयेत्परम् ॥ गवयादिव गोः सिद्धिरुपमानं तदिष्यते ॥ २८ ॥ साध्योर्थश्चेदतत्कार्यो वाक्ये यस्मिन्प्रकल्प्यते ॥ सार्थापत्तिर्दिवा भुङ्क्ते देवरात इतीति यत ॥ २९ ॥ निपातनाद्योगविभागदर्शनाद्बहुरूपदेशादनुवार्तिकादपि ॥ स्वतन्त्रसिद्धेः परतन्त्रदर्शनात्प्रसाधयेल्लक्षणतश्च षड्विधम् ॥३०॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे तन्त्रगुणदोषवर्णनो नाम पञ्चमोऽध्यायः ॥ ५ ॥ मार्कण्डेय उवाच ॥ अथ तन्त्रयुक्तयो भवन्ति अधिकरणं योगः पदार्थः हेत्वर्थ उद्देशो निर्देशः प्रदेशोतिदेशः अपवर्गो वाक्यविशेषोर्थापत्तिः प्रसंग एकान्तोनैकान्तः पूर्वपक्षो निर्णयो विधानपर्यायोतिक्रान्तावेक्षणं संशयो व्याख्यानमनुमतिस्वसंज्ञानिर्वचनं दृष्टान्तो वियोगो विकल्पः समुच्चयोर्थ इति। तदधिकरणं येन वाक्यार्थो युज्यते संयोगो योर्थो विकृतसूत्रपदं स पदार्थो यदन्यत युक्तिमदर्थस्य साधनं स हेत्वर्थः। समासवचनमुद्देशो विस्तरवचनं निर्देश एवमेवेत्युपदेशो नेन कारणेनेत्यपदेशः ॥ प्रकृतस्यानागतेन साधनं प्रदेशोतिक्रामणेन सति देशोभिप्रायानुकर्षणमपवर्गो येनार्थः परिसमाप्यते। पदेनाहार्येण स वाक्यशेषो यदकीर्तितमर्यादामापद्यते सार्थापत्तिः। प्रकरणाभिहितोक्तः केनचिदुपोद्घातेन पुनरुदिश्यमानः प्रसंगः सर्वत्र यत्तथा स एकान्तः क्वचित्तथा क्वचिदन्यथासावनेकान्तः प्रतिषेधवचनं निर्णयः प्रकरणानुपूर्वं विधानं तस्य प्रातिलोम्यं विपर्यय इत्युक्तम्॥अतिक्रान्ताय क्षणं परत्र वक्ष्यामि इत्यनागतावेक्षणमुभयतो हेतुदर्शनं संशयः तत्रातिशयवर्णनातिव्याख्यानं परमतमप्रतिषिद्धमनुमतं परैरसंमतः शब्दः स्वसंज्ञा लोके प्रतीतमुदाहरणं निर्वचनं तद्युक्तिनिदर्शनं दृष्टान्त एवेति नियोग इदं वेदं वेति विकल्प इदं चेदं चेति समुश्चयोत्र यदनिर्दिष्टं युक्तिगम्यं तदूह्यमिति ॥ प्रयोजनं संशयनिर्णयौ च व्याख्याविशेषो गुणलाघवश्च ॥ कृतव्युदासो कृतशासनं च सांवर्तिको धर्मगुणोष्टकश्च ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे तन्त्रशुद्धिर्नाम षष्ठोऽध्यायः ॥ ६ ॥ ॥ मार्कण्डेय उवाच ॥ अथातः संप्रवक्ष्यामि तव प्राकृतलक्षणम् ॥ ऋ ॠ ऌ ॡ न संत्यत्र नष्मा न च मषावुभौ ॥ १ ॥ सकारहीना च तथा नासिक्याश्च तथा नृप ॥ रेफश्च शयवा राजन् संयोगे नास्ति कर्हिचित् ॥ २ ॥ एकारश्च तथौकारः पदमध्ये महाबलः ॥ ढयोगे वकारोत्र डगयोगे तथैव च ॥३॥ गययोगे गकारोऽत्र लोपमायाति नित्यदा ॥ दमौ युक्तौ पृथक् कृत्वा दुमौ कार्यौ तथैव च ॥ ४ ॥ ऋतयोगे दकारस्यात्तकारस्त्वभिधीते ॥ ककारः पदमध्योत्र वक्तव्यो हलिवर्जितः ॥ ५ ॥ नकारस्य णकारः स्यात्क्षकारस्य ख इष्यते ॥ तकारश्च थकारश्च ञकारश्च ण एव च ॥ ६ ॥ क्वचित्क्वचित्स्यात्तदा हकारश्च तथा क्वचित् ॥ क्षकारस्य तु वक्तव्यं वांकारस्य ह इष्यते ॥ ७॥ चकारस्य छकारः स्यात्युकरे हल् च लुप्यते ॥ युक्ते षकारे तद्वीभे

हकारोऽपि विधीयते ॥ ८ ॥ चतुर्थी नात्र विज्ञेया न च द्विवचनं क्वचित् ॥ पदादौ यो गुरुः सोत्र लघुरेव विधीयते ॥ ९ ॥ द्विमात्रमेतदुद्दिष्टं मध्या प्राकृतलक्षणम् ॥ प्रयोगादनुकर्तव्यो विस्तरो ह्यतिविस्तरः ॥१०॥ देशेषु देशेषु पृथग्विभिन्नं न शक्यते लक्षणतस्तु वक्तुम् ॥ लोकेषु यत्स्या दपभ्रष्टसंज्ञं ज्ञेयं हि तद्देशविदोधिकारम् ॥ ११ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे प्राकृतभाषालक्षणं नाम सप्तमोऽध्यायः ॥ ७ ॥ मार्कण्डेय उवाच ॥ देवा दिवौकसो दिव्या गीर्वाणास्त्रिदशाः सुराः ॥ हरिर्जनार्दनो विष्णुर्वासुदेवस्त्वधोक्षजः ॥ १ ॥ नारायणो हृषीकेशश्चक्री गरुडवाहनः ॥ बलः संकर्षणोऽनन्तः शेषस्तालध्वजो हली ॥ २ ॥ प्रद्युम्नः कामदेवश्च चापी मकरकेतनः ॥ खड्गायुधोऽनिरुद्धश्च तथा वै ऋष्यकेतनः ॥३॥ लक्ष्मीः करीषिणी श्रीश्च तथा देवी विभावरी ॥ चक्रः सुदर्शनःप्रोक्तः शार्ङ्गं चापस्तु वैष्णवम् ॥४॥ माहेश्वरं पिनाकाख्यं वारुणं गण्डिवं भवेत् ॥ शाक्रमाजगवं प्रोक्तं वज्रः कुलिश उच्यते ॥ ५ ॥ वैष्णवी तु गदा प्रोक्ता तथा कौमोदकी नृप ॥ हलो ललाम इत्युक्तः सानन्दं मुसलं स्मृतम् ॥ ६ ॥ पाञ्चजन्यः स्मृतः शङ्खः यं बिभर्ति जनार्दनः ॥ करेऽस्य कमलं प्रोक्तं तथाह्यालोक्यसंज्ञितम् ॥ ७ ॥ भूमिर्वसुंधरा पृथ्वी क्षमा क्षोणी धरा मही ॥ नभः खं गगनं चैव तथाकाशं हरेः क्रमम् ॥ ८ ॥ तार्क्ष्यः सुपर्णो गरुडो हरिकेतनवाहनः ॥ नागानंतो हलधरः शेषः तालध्वजी हली ॥ ९ ॥ ब्रह्मा पितामहः शंभुः स्वयंभूर्भूतभावनः ॥ महादेवो भवः शंभुस्त्र्यंबकः पार्वतीपतिः ॥ १० ॥ उमा सती पर्वतजा मेनकाजा तथोच्यते ॥ भद्रकाली स्मृता दुर्गा गणाश्च प्रमथाः स्मृताः ॥ ११ ॥ विनायको गणपतिः कुमारः स्कन्द इष्यते ॥ इन्द्रः शक्रः कौशिकश्च पुरुहूतः पुरन्दरः ॥ १२ ॥ अग्निर्वैश्वानरो वह्निर्जातवेदो हुताशनः ॥ विवस्वतो यमश्चैव कीनाशः प्रेतनायकः ॥ १३ ॥ विरूपाक्षो निर्ऋतिश्च तथा रात्रिंचराधिपः ॥ यादसामीश्वरो देवः प्रचेता वरुणोंबुपः ॥१४॥ तोयमंबु जलं चापः पानीयं सलिलं पयः ॥ वायुः समीरणो वातः पावनः सर्वगोऽनिलः ॥ १५ ॥ राजराजो धनाध्यक्षस्तथैवैडविडः स्मृतः ॥ ईशानः शङ्करः शर्वः तथा पशुपतिः शिवः ॥ १६ ॥ नासत्यावश्विनौ प्रोक्तौ वसवो वसुसंज्ञिताः ॥ तथैवांगिरसो नागा विश्वेसत्राग्रभोजिनः ॥ १७ ॥ वृषभावगमारुद्ध भृगवो मरुतो मताः ॥ साध्या धर्मसुताः प्रोक्ता आदित्या कश्यपात्मजाः ॥ १८ ॥ मारुतो मातरिश्वानो ग्रहास्त्रिभुवनेश्वराः ॥ नक्षत्राणि तथा तानि ऋक्षाणि च उडूनि च ॥ १९ ॥ आदित्यो भास्करः सूर्यः सविता रविरर्यमा ॥ चन्द्रः शीतकरः सोमः शशांको मृगलाञ्छनः ॥ २० ॥ वक्रः क्षितिसुतो भौमो बुधो ज्ञः सोमनन्दनः ॥ बृहस्पतिर्गुरुर्जीवः शुक्र आस्फुजिरेव च ॥ २१ ॥ सारणः पञ्चमः प्रोक्तो ग्रम

न्थेषु विचक्षणः ॥ असुरा दानवा दैत्या गंधर्वा देवनायकाः ॥ २२ ॥ यक्षाः पुण्यजनाः प्रोक्ता यातुधानाश्च राक्षसाः ॥ अदृश्याश्च तथा भूताः पिशाचाः पिशिताशनाः ॥ २३ ॥ किन्नराख्याः किंपुरुषा नागाः कद्रुसुता मताः ॥ सिद्धा विद्याधरा प्रोक्ता देवरामास्तथाप्सराः ॥ २४॥ महर्षयो भूतकृतः तथा ब्रह्मर्षयोमलाः ॥ प्रोक्ताः सप्तर्षयो लोके तथा चित्रशिखंडिनः ॥ २५ ॥ ध्रुवः स्थास्नुस्तथा प्रोक्तः कृकलासस्तथैव च ॥ आशा दिशस्तथा काष्ठा भचक्रं भगणं स्मृतम् ॥ २६ ॥ कृतानि शास्त्राणि नरेन्द्र पूर्वैः स्मृतिस्तथोक्ता श्रुतिरेव वेदः ॥ सम्यग्यदाचारमिति प्रदिष्टं वृत्तं हि यच्छास्त्रविदां नरेन्द्र ॥ २७ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे देवादिशब्दपर्यायिवर्णनं नामा ऽष्टमोऽध्यायः ॥ ८ ॥ संवत्सरोऽब्दो वर्षं च समा हायन एव च ॥ दिवसो वासरश्चैव दिनं चाहस्तथैव च ॥ १ ॥ दोषा विभावरी रात्रिः शर्वरी यामिनी क्षपा ॥ संधिः प्रोक्ता तथा सन्ध्या अन्धकारं तमः स्मृतम् ॥ २ ॥ चन्द्रिका च तथा ज्योत्स्ना चैत्रो मधुरिति स्मृतः ॥ वैशाखो माधवः प्रोक्तः शुचिर्ज्येष्ठ उदाहृतः ॥ ३ ॥ शुक्रः प्रोक्तस्तथाषाढो नभः श्रावण इष्यते ॥ प्रौष्ठपादो नभस्यश्च इषश्चाश्वयुजः स्मृतः ॥ ४ ॥ ऊर्जाख्यः कार्तिकः प्रोक्तो मार्गशीर्षः सहस्तथा ॥ सहस्यः पौष इत्युक्तो माघः स्यात्तप एव च ॥ ५ ॥ फाल्गुनश्च तपस्याख्यो मासो यदु कुलोद्वह ॥ तुलामेषगते भानौ विषुवद्दिनमुच्यते ॥ ६ ॥ धन्वतो मिथुनान्तश्च अयने सोस्य दक्षिणे ॥ मेषान्ते च तुलान्ते च युगादिदिवसौ स्मृतौ ॥ ७ ॥ तथा विष्णुपदं प्रोक्तं कुलीरमकरान्तयोः ॥ कन्या मिथुनमीनानां प्रवेशे धनुषस्तथा ॥ ८ ॥ षडशीतिमुखं नाम ज्ञेयं दिन चतुष्टयम् ॥ रश्मिर्गभस्तिर्भद्रा च करो दीधितिरेव च ॥ ९ ॥ सूर्योदयास्तमययोः स दीर्घः परिधिर्भवेत् ॥ तिर्यग्गतां मेघराजीं तदेव परिघो भवेत् ॥ १० ॥ तदेव दण्डसंस्थानो मेघो दण्डोभिधीयते ॥ शक्रचापं शक्रधनुः तद्दीर्घं रोहितं भवेत् ॥११॥ तदेव दण्डसंस्थानो मेघो दण्डोऽभि धीयते ॥ शक्रं चापं शक्रधनुः तद्दीर्घं रोहितं मतम्॥१२॥ तत्पीतःमथाल्पं क दुपास्यं प्रतिसूर्यकम्॥ चन्द्रार्कयोर्मेघराजितपरिवेषस्तुमण्डलात् ॥१३॥ स्वर्गाच्छुभफले क्षीणे पतन्नुल्केति कथ्यते ॥ अनित्यः सशिखो दृष्टः तारकः केतुरिष्यते ॥१४॥अग्निवर्णा तु दिङ्मृष्टा दिग्दाह इति विश्रुतः ॥ नगरं शून्यतो दृष्टं गन्धर्वनगरं स्मृतम् ॥ १५॥ निर्घातं स्तनितं प्रोक्तं विना मेघनिदर्शनात् ॥ यतोयतो यवं दृष्टिः कथितामृगतृष्णिका ॥ १६॥ मेघो घनं वारिदं च जीमूतं च बलाहकम् ॥ स्तनितं गर्जितं विद्याद् वृष्टिः प्रोक्ताः प्रवर्षणे ॥ १७ ॥ आसारो वेगवद्वर्षं पृषतो मंद उच्यते ॥ दृश्यमाने तथा सूर्ये दिव्यं प्रोक्तं च वर्षणम्॥१८॥ दृश्यमाने तथा चन्द्रे सामृतं परिकीर्तितम् ॥ वात्या वातसमुत्था स्यान्नीहारं तम उच्यते ॥१९॥

शीकराख्यमवश्यायं तुषारस्तुहिनं हिमम् ॥ विद्युत्तडित्तथा लोला चञ्चला च शतह्रदा ॥ २० ॥ समुद्राश्चाम्बुनिधयः सागरा लवणोदकाः ॥ नद्यः कुटिलगामिन्यो निम्नगाः सरितस्तथा ॥ २१ ॥ गङ्गाविष्णुपदी प्रोक्ता जाह्नवी त्रिपथा तथा ॥ कालिन्दी यमुना प्रोक्ता रेवा प्रोक्ता च नर्मदा ॥ विपाशा च सनन्दाख्या शतद्रुः शौरिसंज्ञिका ॥ २२॥ बुद्धिस्तथा सूर्य इति प्रदिष्टो भूतानि चोक्तानि तथेन्द्रियाणि ॥ वाणी तथोक्ता च सरस्वती च मनस्तथोक्तं नृप चन्द्रसंज्ञम् ॥ २३ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे अभिधानकोशो नाम नवमोऽध्यायः ॥ ९ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ मनुष्यो मनुजश्चैव पुरुषः पूरुषस्तथा ॥ रामा योषित्तथा स्त्री च ललना च तथा स्मृता ॥ १ ॥ वरारोहा पुरन्ध्रिश्च श्रेष्ठा सा मत्तकाशिनी ॥ ब्राह्मणश्च तथा विप्रो राजन्यः क्षत्रियो मतः ॥ २ ॥ कीनाशश्च स्मृतो वैश्यः शूद्रश्चान्त्यज उच्यते ॥ चण्डालः पुक्ककः प्रोक्तो मातङ्गश्च तथोच्यते ॥ ३ ॥ हस्ती द्विप इभो दन्ती मातङ्गः कुञ्जरो गजः ॥ अश्वश्च तुरगः सप्तिर्हयो वाजी हरिस्तथा ॥ ४ ॥ गौरुक्षाच्छागलोऽजश्च उरभ्रोऽविस्तथोच्यते ॥ ५ ॥ असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः ॥ श्रीगर्भो विजयश्चैव धर्माधारस्तथाष्टमः ॥ ६ ॥ सुवर्णं कनकं रुक्मं हेमं कार्त्तस्वरं तथा ॥ जाम्बूनदं तदेवानां रूप्यं रजतमिष्यते ॥ ७ ॥ उदुम्बरं स्मृतं ताम्रमयोलोहं प्रकीर्तितम् ॥ आरकूटं तथा रीती रत्नं माणिक्यमुच्यते ॥ ८ ॥ आतपत्रं स्मृतं छत्रं कम्बुः शंख उदाहृतः ॥ पङ्कजं कमलं पद्मं पुण्डरीकं प्रकीर्तितम् ॥९॥ तथा तामरसं चैव शतपत्रं तु दैवतम् ॥ इन्दीवरं चोत्पलं स्यात्कह्लारं शुक्लमेव तत्॥१०॥ संग्राममाजिर्युद्धं च जन्यमाहव एव च ॥ दानं संवननं प्रोक्तं विवाहो विनिवेशनम् ॥११॥ पत्नी भार्या तथा जाया सुतः पुत्रस्तनूद्भवः ॥ माता जनित्री जननी जनिता जनकः पिता ॥ १२ ॥ क्षयं च भवनं प्रोक्तं मन्दिरं गृहमेव च ॥ भाण्डागारः स्मृतः कोशो धन्वनं गुप्तिरिष्यते ॥ १३॥ वाहनं पत्रसंज्ञं स्यादमत्रं पात्रमुच्यते ॥ वर्धमानं शरावं स्याच्चापं च धनुरुच्यते॥१४॥ सायकश्च शरः प्रोक्त इषुर्बाणः शिलीमुखः ॥ हस्तमोच्यः स एवोक्तो बृहन्तश्चैव तोवरः॥१५॥पुष्पप्रकरमित्युक्तमुपकारं नराधिप ॥ वालव्यजनमप्युक्तं तथा चारमसंज्ञितम्॥१६॥ मृजा शोभा विनिर्दिष्टा अलङ्कारो विभूषणम् ॥ प्रसाधन मण्डनं स्याद्बलः सार उदाहृतः ॥१७॥ अर्भकश्च स्मृतो बालो बालश्चाश्वः किशोरकः॥ हस्ती कलभ इत्युक्तो वत्सश्चोक्षा प्रकीर्तितः ॥ १८ ॥ सर्वथा केशरी सिंहः शार्दूलो व्याघ्र उच्यते ॥ विपिनं निर्जनं प्रोक्तमजिरं स्याद्गृहाङ्गणम् ॥ ॥ १९ ॥ उपनीय ददद्वेदमाचार्यः स उदाहृतः ॥ एकदेशमुपाध्यायो ऋत्विग्यज्ञकृदुच्यते ॥ २०॥ सांवत्सरो ज्यौतिषविद् वृतो भवति भूभुजा ॥

तस्यैव यज्ञकृद्यस्तु स पुरोहित इष्यते ॥ २१॥ अमात्यश्च स्मृतो मन्त्री देशो निचय उच्यते ॥ राजा नरेन्द्रो नृपतिस्तथैव सिंहासनं तस्य तथा
सनं स्यात् ॥ क्षत्ता प्रतीहार इति प्रदिष्टस्तद्धस्तदण्डः कथितं तु वेत्रम् ॥ २२ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीखण्डे मार्कण्डेयवज्रसंवादे अभिधान
कोशे चण्डालादिपर्य्यायवर्णनो नाम दशमोऽध्यायः ॥ १० ॥ मार्कण्डेय उवाच ॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधा मतिः पुष्टिः सरस्वती ॥
स्मृतिः श्रद्धा रतिश्चैव धृतिर्नीतिः स्थितिः श्रुतिः ॥ १ ॥ रात्रिः प्रभा क्षपा दीप्तिः शाला माला निशा स्पृहा ॥ दोला हेला तथा लीला
यामिनी क्षणदाचरा ॥ २ ॥ यात्रा भस्त्रा द्युतिर्मात्रा दंष्ट्रा सेना वचा तथा ॥ कुटिः खोरी दया ज्योत्स्ना सीमा वेणिस्तथैव वाक् ॥३ ॥ तनुर्धूलिः
शलाका च ग्रीवा भ्रूश्च शरत्तथा॥दरः प्रावृट् चाचमनी स्थूणा चूडा सिरा वसा ॥४॥ कक्ष्या सत्ता सुरा जंघा जटा घण्टा कशा तथा ॥ विद्युत्कक्षा
सरिद्वल्लीरिषीका रज्जुरिष्टका ॥ ५ ॥ दिग्भूर्भूमिर्मही क्षोणी क्षपा चैव वसुन्धरा ॥ छाया चमूर्वालुका च तथा विद्युद्विपत्सरित् ॥६॥ इरा सम्पदवा
पश्च लीला वेला तला शिला ॥ कला च मेखला ज्वाला सेना दर्द्रुर्वली समा ॥७॥ ज्या च म्लानिस्तथा हानिः शाटी स्वाहा तथैव गीः ॥
धीर्वृद्धिर्धूः क्षमा बुद्धिः क्षुत्क्षमाशीः सवालुका॥८॥ विंशतेर्नवतिर्यावत्क्रोडास्वदुशिरोधरा ॥ माया च शष्कुली जिह्वा घटोत्का स्नायुरेव च ॥९॥
लेखा जरा तथा पङ्क्तिस्त्रेता प्रावृडरोचका ॥ लाक्षा कण्डूः प्रियंगुश्च माण्डिका कटिरौषधिः ॥ १० ॥ ऋक्स्फुलिङ्गा कलिः शय्या कोटिः
कन्था च नालिका ॥ निःश्रेणिः पृतना दीप्तिर्निद्रा तन्द्रा गुहा रुचिः ॥ ११ ॥ साम्ना दाम्ना तथा वीथी नीविर्धारा तथा कृषिः ॥ मंजूषा
पर्षदश्चैव पताका काकिनी कृपा ॥ १२ ॥ पेला चैव समंजिष्ठा भेरी नेमिर्मनःशिला ॥ दर्वी स्थाली सभा वीचिः स्थली चैव समञ्जरी ॥१३॥
वल्लरी मन्दुरा लाक्षा सूची चाधिषणा शमी ॥ मक्षिका विकृतिर्यूका शिखा शाखा तथाटवी ॥ १४ ॥ स्त्रीवृत्तयस्ते कथिता मयैते शब्दाः समा
सस्त्वयमत्र राजन् ॥ इदं तमानन्त्यमुशंति सर्वं स्त्रीवाचकं शब्दमुशन्ति धीराः ॥ १५ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मा० व० सं०
अभिधानकोशे स्त्रीलिङ्गनिर्देशो नामैकादशोऽध्यायः ॥ ११ ॥ मार्कण्डेय उवाच ॥ अतः परं प्रवक्ष्यामि यदुवंशविवर्धन ॥ तव
पुंवाचकाञ्शब्दाञ्शृणु तान्गदतो मम ॥ १ ॥ राजा कृताक्षमूर्धात्मा पायुश्लेष्माश्मपूरणः ॥ मज्जा प्लीहा च कथिता नाताद्यस्काः पुम
र्थकाः ॥ २ ॥ वृत्रः पुत्रस्तथा मन्त्रस्तथैवामन्त्र इष्यते ॥ पुंसि राशिर्मुहूर्तश्च मासः पक्षोऽब्दवत्सरौ ॥ ३ ॥ ऋतुः कालो गिरिः शैलः शिलोच्च
यनगाचलाः ॥ सुरासुराणां संज्ञाश्च याश्च प्रोक्ता महोदधेः ॥ ४ ॥ संवत्सरश्च दिवसो ग्रहो वासर एव च ॥ पर्यायः पङ्कशरयोररिनिस्त्रिंशयो

रपि ॥ ५ ॥ पुत्रपर्यायशब्दाश्च पितृपर्यायसंयुताः ॥ कण्ठबाह्वोस्तथा संज्ञाः स्तनकेशरदस्य च ॥६॥ गुल्फनामानि कर्णश्च हनुः प्रश्नो विधि
र्निधिः ॥ कपोलनामानि तथा निर्घोकेक्षुककेलयः ॥ ७ ॥ कलिर्विघ्नो घटो जूटः पटः पायुः कुशोऽकुशः ॥ बिन्दुः स्वरः कुठारश्च पण
शाणौ च पर्पटः ॥ ८ ॥ वटो बन्धः पुटो मृत्युर्मन्युः शोणः किणः फणः ॥ गुणश्चूर्णो गणः पन्था अध्वाङ्कः पूग एव च ॥९॥ कमण्डलुः पलां
डुश्च गण्डः स्थूलश्च कङ्कटः ॥ प्रस्थः शङ्खो रथश्चैव रसो वर्गस्तुषो बुधः ॥ १० ॥ यवो माषस्तथा शब्दः स्पर्शो गन्धः शठो वणिक् ॥ करीषस्त
रलो मेद्रो रथो मण्डप एव च ॥ ११ ॥ नरको नूपुरश्चैव समुद्रो लोक एव च ॥ कापार्पयः कोणमुसलौ कुसूलः शूर्पदर्दुरौ ॥ पञ्च पिण्याकशूर्पाश्च
वातदण्डांकुरांकुशाः ॥ १२ ॥ कुणयः प्रोथयूथौ च कुन्तदर्पणवेणुकाः ॥ ध्वजो वंशस्तथा वेणुः क्रिमिकल्कर्षिकर्दराः ॥ १३ ॥ पुस्तकश्चाध्वरो
व्रीहिरम्बुदोऽञ्जन एव च ॥ १४ ॥ स्तंभः पशुर्धर्मनिदाघकुम्भाः कटाहयूपस्तबकाः सफेनाः ॥ नितम्बषण्ढक्षुपसूपप्लपाः पुंसि स्मृता
यादववंशमुख्य ॥ १५ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादेऽभिधानकोशे पुंवर्गनिर्देशो नाम द्वादशोऽ
ध्यायः ॥ १२ ॥ मार्कण्डेय उवाच ॥ अन्त्यलिङ्गेऽथ वर्तन्ते ये शब्दा नृपसत्तम ॥ तानहं संप्रवक्ष्यामि शृणुष्व गदतो मम ॥ १ ॥ जलनामानि
सर्वाणि विनापो यदुसत्तम ॥ भ्रान्ताश्च पूर्वं येनोक्तास्ते नपुंसकवृत्तयः ॥ २ ॥ द्व्यचो नान्तास्तथा ये च नोक्तास्ते यदुसत्तम ॥ असत्यं च धनं
सर्वं जरसोऽन्यत्र यादव ॥ ३ ॥ नपुंसके च वर्तन्ते शब्दा लोचनवाचकाः ॥ ४ ॥ सर्वाणि पुष्पनामानि कथितानि नपुंसके ॥ शरीरमस्थि
दधि च सक्थि वा गुदजानुनी॥५॥ श्मश्रुकूले कुलं पर्णं लोहनामानि यानि च ॥ अहर्निशं शकृत्सक्थि धनुः शोणितदारुणी ॥६॥ क्षीरं विषामृते
षण्डं फलमूलमलानि च ॥ पुरं मधु खलं नालं चीवरं चीरमम्बरम् ॥ ७॥ गगनं घनमाकाशं सुखदुःखपदानि च ॥ कूपबीजेऽथ पललं तल्पसद्म
शवानि च॥८॥निमित्तचित्तपित्तौघतक्रशुक्रभयानि च॥तीर्थपञ्जरचेलानि फलद्वन्द्वाक्षराणि च ॥ ९ ॥ धान्यश्मशानरत्नाग्रतल्परत्नयुगानि च ॥
गोपपत्तनसैन्यार्धमङ्गलायुधखानि च ॥ १० ॥ नगरं हरितालं च तिमिरं पलितं विषम् ॥ श्मशानं मिथुनं तत्त्वं किल्बिषं विदलं हिमम् ॥११॥
वृन्दं कुतूहलं शीधु शरावं शिखरं पलम् ॥ वृत्तं च मुकुटं पण्यं मलमंशुकमेव च ॥ १२ ॥ इंद्रियं युगलं कूटं कपालं शूलशेखरे ॥ पातालं विवरं ॥३१२॥
रन्ध्रं छिद्रमाकाशमेव च ॥ १३ ॥ तृणं शुभ्रमिरं चैव कुङ्कुमं शुष्कचीवरम् ॥ मृणालमजितं खड्गं तुहिनं द्वारमास्पदम् ॥ १४ ॥ राष्ट्रं तलं
किट्टकफे तथायुः स्थूलं खलीनं पललं पलालम् ॥ काष्ठं रणं पार्श्वकुकुन्दरे च सन्देहके चैव नपुंसकं स्यात् ॥१५॥ इति श्रीविष्णुधर्मोत्तरे तृतीय

खण्डे मार्कण्डेयवज्रसंवादे अभिधानकोशे नपुंसकविधौ त्रयोदशोऽध्यायः ॥ १३ ॥ मार्कण्डेय उवाच ॥ एकैकस्य तु वर्णस्य विन्यासो यः पुनःपुनः ॥ अर्थगत्या तु संख्यातमनुप्रासं पुरातनैः ॥ १ ॥ अत्यर्थं तत्कृतं राजन्ग्राम्यतामुपगच्छति ॥ शब्दाः समानानुपूर्व्या यमकं कीर्तितं पुनः ॥ २ ॥ आदौ मध्ये तथैवान्ते पादस्य तु तदिष्यते ॥ संदष्टकसमुद्राख्यौ तथैव यमकौ मतौ ॥ ३ ॥ समस्तपादयमकं दुष्करं परिकीर्तितम् ॥ उपमानेन तुल्यत्त्वमुपमेयस्य रूपकम् ॥ ४ ॥ रूपकाभ्यधिकं नाम तदेवैकगुणाधिकम् ॥ गुणानां व्यतिरेकेण व्यतिरेकमुदाहृतम् ॥ ५ ॥ उपमानविरुद्धैश्च गुणैस्तदपरं मतम् ॥ द्विर्त्र्यर्थं वाचकैः शब्दैः श्लेष इत्यभिधीयते ॥ ६ ॥ अन्यरूपस्य चार्थस्य कल्पना यान्यथा भवेत् ॥ उत्प्रेक्षाख्यो ह्यलङ्कारः कथितः स पुरातनैः॥७॥उपन्यासस्तथान्यः स्यात्प्रस्तुताद्यः क्वचिद्भवेत्॥ ज्ञेयः सोर्थान्तरन्यासः पूर्वार्थानुगतो यदि ॥ ८ ॥ उपन्यासेन वान्यस्य यदन्यः परिकीर्त्यते ॥ उपन्यासमलङ्कारं तं नरेन्द्र प्रचक्षते ॥ ९ ॥ हेतुं विना विततता प्राप्ता सा तु विभावना ॥ प्रोक्ता चातिशयोक्तिस्तु ह्यतुलैरुपमागुणैः ॥ १० ॥ यथा स्वरूपकथनं स्वभावोक्तिः प्रकीर्तिता ॥ भूयसामुपदिष्टानां निर्देशः क्रमशस्तथा ॥ ११ ॥ यथासंख्यमिति प्रोक्तमलङ्कारः पुरातनैः ॥ विशेषप्रापणादुक्ता विशेषोक्तिस्तथा नृप ॥ १२ ॥ या क्रिया चान्यफलदा विरोधस्तु स इष्यते ॥ स्तुतिरूपेण या निन्दा निन्दास्तुतिरिहोच्यते ॥ १३ ॥ निन्दास्तुतिस्तथैवोक्ता निन्दारूपेण या स्तुतिः ॥ वस्तुना रूप्यमाणेन दर्शनं तन्निदर्शनम् ॥ १४ ॥ विना तथा स्यादुपमा तु यत्र तेनैव तस्यैव भवेन्नृवीर ॥ अनन्वयाख्यं कथितं पुराणैरेतावदुक्तं तव लेशमात्रम् ॥ १५ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे अलङ्काराध्यायो नाम चतुर्दशोऽध्यायः ॥ १४ ॥ मार्कण्डेय उवाच ॥ धर्मार्थकाममोक्षाणां शास्त्रं स्यादुपदेशकम् ॥ पूर्वैराचरितं सद्भिर्धर्मकामार्थसाधकम् ॥ १ ॥ मोक्षस्य यत्रोपन्यास इतिहासः स उच्यते ॥ तदेव काव्यमित्युक्तं चोपदेशं विना कृतम् ॥ २ ॥ एकस्य चरितादेव तथा काव्यं प्रकीर्तितम् ॥ निबद्धो यत्र राजेन्द्र नायकप्रतिनायकौ ॥३॥ प्रयाणोद्यतसंप्रेषयुद्धयुक्तं तदेव तु ॥ नायकाभ्युदयोपेतं महाकाव्यं तदिष्यते ॥४॥ वर्णयेच्च महाकाव्ये देशपत्तनपार्थिवान् ॥ ऋत्वद्रिनिम्नगाश्चैव तथा नारीश्च पार्थिव ॥५॥वर्णनीयौ तथैवात्र नायकप्रतिनायकौ ॥ नायको धर्मविजयी सताम्पन्थानमाश्रितः॥६॥ तथा च लोकविजयी विज्ञेयः प्रतिनायकः ॥ प्रतिनायकघातस्तु वक्तव्यो नेतरस्य तु ॥ ७ ॥ नायकस्य महाराज मरणं नैव वर्णयेत् ॥ सशरीरस्य यस्य स्यात्संप्राप्तिस्तस्य वर्णयेत् ॥ ८ ॥ छन्दोविरहितं गद्यं शब्दशास्त्रविरोधि च ॥ कष्टाक्षरपदन्यासमश्लीलवचनान्वितम् ॥ ९॥ तस्मा

दुर्लक्ष्यवाक्यार्थमप्रसिद्धाभिधानवत् ॥ काव्यबन्धं न कर्तव्यं पुनरुक्तं च यद्भवेत् ॥ १० ॥ विस्मये वाभ्यसूयायां भयशोकत्वरासु च ॥ हर्षे च वीप्सा कर्तव्या पुनरुक्तं न तद्विदुः ॥११॥ दूतवाक्ये तथा स्वप्ने कार्यगत्या तथागते ॥ पुनर्वचननिर्देशे पुनरुक्तं च तद्विदुः ॥ १२ ॥ ससंशयं न वक्तव्यं प्रतिज्ञारहितं तथा ॥ पूर्वापरविरुद्धं च यच्च लोकविगर्हितम् ॥ १३ ॥ शृङ्गारहास्यकरुणारौद्रवीरभयानकैः ॥ बीभत्साद्भुतशान्ताख्यै रसैः कार्यं समन्वितम् ॥ १४ ॥ काव्यं कलाकौशलसंप्रयुक्तं धर्मेण चार्थेन तथोपपन्नम् ॥ धर्मेण युक्तस्य च नायकस्य कार्यं तथा चाभ्युदयान्तमेव ॥ १५ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे महाकाव्यलक्षणं नाम पञ्चदशोऽध्यायः ॥ १५ ॥ ॥ मार्कण्डेय उवाच ॥ काव्ये येऽभिहिता दोषाः कैश्चित्तेभ्यः प्रहेलिकाः ॥ कर्तव्याश्च तथैवान्यास्तासां वक्ष्यामि लक्षणम् ॥ १ ॥ श्लोकेनैकेन वा द्वाभ्यां कर्तव्या तु नरोत्तम ॥ न कर्तव्याश्च ता राजन्बहुश्लोकनिबन्धनाः ॥ २ ॥ तस्यां मात्रावशादर्थो गोप्यते सा समागता ॥ पर्यायवचनाद्यस्यां वन्दिता सा प्रकीर्तिता ॥ ३ ॥ वृत्तान्तगोपिकान्ताया पदैर्व्यवहितैर्भवेत् ॥ अप्रसिद्धैस्तु पर्यायैर्दुःखिता नाम सा स्मृता ॥ ४ ॥ कल्पनागोपितार्थात्तु कथिता परिहासिका ॥ समानरूपतुल्यार्थो शब्दैरन्यैः प्रकीर्तिता ॥ ५ ॥ दुर्बोधाक्षरबन्धा च परुषा नामतः स्मृता ॥ संख्यामात्रसमानत्वात्संख्याताख्या तथोच्यते ॥ ६ ॥ अर्थान्तरान्कल्पनया कल्पिता च तथोच्यते ॥ अन्यस्य संज्ञाव्यामोहान्नमान्तारितसंज्ञिता ॥७॥ अर्थव्यामोहतः प्रोक्ता निभृता च महानृप ॥ समानशब्दा कथिता तुल्यशब्दनिबन्धना ॥८॥ अर्थानुलोमदुर्बोधा व्यामूढेति तथोच्यते ॥ गुच्छाख्या कथिता वृत्ते नानाबन्धनिबन्धना ॥ ९ ॥ एकोभयबहुच्छन्ने यथार्थपरिगोपिते ॥ संकीर्णा सम्भवोपेता या तदर्थकरी भवेत् ॥ १० ॥ तदर्थकारी यत्रार्थो ज्ञायतेऽन्यार्थकामुकः ॥ राजञ्शब्दवशात्सा च कथिता व्यभिचारिणी ॥ ११ ॥ उक्तेर्थे वृत्तबन्धेन मात्राभिः स्थापिता तथा ॥ नष्टार्था वा च सा प्रोक्ता वृत्तबन्धनिदर्शिता ॥ १२ ॥ नष्टाक्षरा तु कथिता विनैकेन तदार्थदा ॥ अन्यार्थता तथैवोक्ता वर्णभ्रष्टा नरेश्वर ॥ १३ ॥ कालस्य रूपरूपाणां व्याख्यानेन तदार्थदा ॥ बीजमात्रेण लेशाख्या भूमिपाल प्रकीर्तिता ॥ १४ ॥ अश्लीलमेतास्वपि नैव कार्यं तद्वर्ज्यमाहुः कवयो नरेन्द्र ॥ उद्वेजनीयं तु सतां तदुक्तमश्लीलबन्धं सुखदं न काव्यम् ॥ १५ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे प्रहेलिकालक्षणो नाम षोडशोऽध्यायः ॥ १६ ॥ ॥ वज्र उवाच ॥ ॥ मन्त्राः सब्राह्मणाः प्रोक्तास्तदर्थं ब्राह्मणं स्मृतम् ॥ कल्पना च तथा कल्पः कल्पश्च ब्राह्मणस्तथा ॥ १ ॥ कथितानि तथार्थानि पुराणं च तथा द्विज ॥ प्रक्रिया प्रथमः पादः कथावस्तुपरिग्रहः ॥ २ ॥

उपोद्घातानुषङ्गौ च तथा संहार एव च ॥ चतुष्पादं हि कथितं पुराणं भृगुनन्दन ॥ ३ ॥ सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ॥ वंशानु
चरितं चैव पुराणं पञ्चलक्षणम् ॥ ४ ॥ तत्र वा विदितं सर्वं तत्रोक्तं गीतलक्षणम् ॥ वृत्तस्य लक्षलं चैव नाटकाख्यानलक्षणम् ॥ ५ ॥
तस्मादहं त्वां पृच्छामि द्विज नाट्यस्य लक्षणम् ॥ सभेदं तन्ममाचक्ष्व सर्वज्ञोऽसि यतः प्रभो॥६॥ मार्कण्डेय उवाच ॥ इतिहासानुसारेण पुराणा
नां समीक्षितम् ॥ चरितं त्रिदशानां वा नाटकं तत्र कीर्तितम्॥७॥एकनायकसंयुक्तं नायकप्रतिनायकैः॥ संयुक्तमथवा कार्यः काव्ये वै तत्र नायकः
॥८॥ सर्वास्तु वृत्तयस्तत्र तत्र सर्वे तथा रसाः ॥ कालप्रयोगं च तथा युक्त्या संदर्शयेन्नृप ॥९॥ पञ्चावराङ्कं तत्प्रोक्तं तथादशपरं शुभम् ॥ एकदै
वतिकं वृत्तमङ्के राजन्प्रदर्शयेत् ॥ १० ॥ तदन्ते सर्वपात्राणां निष्क्रमश्च विधीयते ॥ युक्त्युपन्याससंयुक्तं तथा निष्क्रमणं मतम् ॥११॥ मरणं
राज्यविभ्रंशो नगरस्योपरोधनम् ॥ एतानि दर्शयेन्नांके तथा युद्धं च पार्थिव ॥ १२ ॥ प्रवेशकेन कर्तव्यं तेषामाख्यानकं बुधैः ॥ पात्रद्वयेन कर्तव्यं
तथा नित्यं प्रवेशकम् ॥ १३ ॥ पात्रे परिजने तत्र कर्तव्यं नायकेन तु ॥ भिन्नं पात्रद्वयं यत्र तत्र विष्कम्भकं स्मृतम् ॥१४॥ तयोरन्ते तु कर्तव्या
तथा रङ्गस्य शून्यता ॥ अङ्कान्ते च तथा कार्या न कार्या सान्यथा भवेत् ॥ १५ ॥ बहुदैवतिकं वृत्तं कर्तव्यं तु प्रवेशकम् ॥ संक्षेपोक्तिश्च
कर्तव्या कर्तव्यो नहि विस्तरः ॥ १६ ॥ प्रख्यातनायकवधं न च तत्र प्रवेशयेत्॥ तस्य प्रकाशनं कार्यमङ्केष्वेव नराधिप ॥ १७ ॥ नायकाभ्युदयः
कार्यो नाटकान्ते तथैव च ॥ बह्वयोऽपि नायिका यत्र तासामपि तथा भवेत् ॥ १८ ॥ एवंविधा सशृङ्गारा चतुरङ्का तु नाटिका ॥ कृतं प्रकरणं
तद्वत्स्वयमुत्पाद्य वस्तुना ॥ १९ ॥ ब्राह्मणो नायकस्तत्र वणिक्च नृपसत्तम ॥ एवं प्रकरणी कार्या चतुरङ्कापि सा भवेत् ॥ २० ॥ इतिहासानुब
न्धो वा स्वयमुत्पाद्य वा कृतः ॥ भारतीकरुणप्रायो निवृत्तं समनन्तरम् ॥ २१ ॥ चतुष्टयाङ्कः कर्तव्यो दिव्यनायकवर्तितः ॥ इतिहासानुसारेण
प्राणश्चैकाहिकः स्मृतः ॥ २२ ॥ एकांको युद्धबहुलस्वात्मशंसापरस्तथा ॥ आकाशकथनैर्युक्तस्त्वेकपात्रकृतक्रियः ॥ २३ ॥ प्रोक्तः समवतारा
ख्यस्त्रिदशासुरनायकः ॥ त्रिशृङ्गारस्त्रिकपटस्तथा द्वादशनायकः ॥ २४ ॥ ईहामृगोऽथ बह्वङ्कस्तथा गन्धर्वनायकः ॥ शृङ्गारबहुलः कार्योऽतृप्त
योनिरसाश्रयः ॥ २५ ॥ ऐकाहिको दृप्तरसो व्यायोगश्चैकनायकः ॥ वीथी त्रयोदशाङ्का स्यात्तथा नायकवर्जिता ॥२६ ॥ डिमाख्यश्च तथा प्रोक्तो
रसस्तु सुरनायकः ॥ तथा रौद्ररसप्रायः प्रख्यातविषयान्वितः ॥ २७ ॥ एकाङ्को हास्यबहुलस्तथैवोदात्तनायकः ॥ कार्यः प्रहसनाख्यस्तु वेश्यावि
टसमन्वितः ॥ २८ ॥ सूत्रधारस्य वाक्येन काव्यवस्तुनिबन्धनम् ॥ सर्वं प्रकाशयेदादौ सर्वेष्वेतेषु वस्तु यत् ॥ २९ ॥ संस्कृतं नायकवचो

लिङ्गिश्रोत्रियभूभुजाम् ॥ द्विजन्मनां सुराणां च दैत्यगन्धर्वभोगिनाम् ॥ ३० ॥ नायिकादेवरामाणां व्याजलिङ्गवतां तथा ॥ विदूषकाणां च भवेत्प्राकृतं वचनं नृप ॥ ३१ ॥ बालस्त्रीनीचषण्ढानां ये चान्ये नानुकीर्तिताः ॥ तेषां वाक्यमपभ्रष्टं तच्च ज्ञात्वा प्रयोजयेत् ॥ ३२ ॥ स्वयमुत्पादितानां मे नानात्वं शृणु लक्षणम् ॥ शर्म वर्मधनान्यन्ते वर्णानां दासवत्तथा ॥ ३३ ॥ राज्ञां विक्रमसंयुक्तममात्यानां तथा भवेत् ॥ स्त्रीणां सुखोद्यमक्रूरं नायिकानां मनोहरम् ॥ ३४ ॥ राज्ञीपरिजनस्त्रीणां कलाकौशलसंयुतम् ॥ राज्ञः परिजनस्त्रीणां विजयोत्तरमिष्यते ॥ ३५ ॥ सांवत्सराणां माङ्गल्यं शान्तिप्रायं पुरोधसाम् ॥ शूरप्रायममात्यानामायुष्यं भिषजामपि ॥ ३६ ॥ विटानां भूषणप्रायं दासीनां कुसुमादिकम् ॥ ऋषिगोत्रधरौ कार्यौ कञ्चुकीयविदूषकौ ॥ ३७ ॥ दत्ता मित्रा तथा सेना वैश्या नाम ततो भवेत् ॥ अधिकारानुरूपाणि तथा चैवाधिकारिणाम् ॥ ३८ ॥ अतः परं प्रवक्ष्यामि येन वाच्यस्तु यो यथा ॥ देवेति राजा वक्तव्यो भृत्यैः प्रकृतिभिस्तथा ॥ ३९ ॥ राजेति विप्रैर्वक्तव्यो ऋषिभिर्नामगोत्रतः ॥ अपत्यप्रत्ययाद्दैवैर्वयस्येति समो जनः ॥ ४० ॥ विदूषकोऽपि वक्तव्यो वयस्य इति नायकैः ॥ आयुष्मानिति सूतेन रथी वाच्यस्तथा भवेत् ॥४१ ॥ भगवन्निति वक्तव्या ऋषयो गुरुवः सुराः ॥ पुत्र वत्सेति शिष्यस्य तथा वा नामगोत्रतः ॥ ४२ ॥ आर्यपुत्रेति वक्तव्यः स्त्रिया भर्ता नराधिप ॥ नाम्ना भार्या तु वक्तव्या राज्ञी देवीति नायिका ॥ ४३ ॥ पिता तातस्तथा वाच्यो मातुश्चैवार्यकः पिता ॥ युवराजः कुमारः स्यान्मान्यो भावः समीरितः ॥ ४४ ॥ मान्यमानस्तथा भामो भर्तृदारः कुमारकः ॥ हलेति तु समाना स्त्री वक्तव्या समया तथा ॥ ४५ ॥ हञ्जेत्यामन्त्रयेन्नारीं हण्डे परिजनेऽवके ॥ स्वसेति भगिनी वाच्या लिङ्गस्था व्रतिनी तथा ॥ ४६ ॥ आर्येति ब्राह्मणी वाच्या शेषा लिङ्गार्थतस्तथा ॥ अन्तःपुरचरो यस्तु स्त्रीभोगपरिवर्जितः ॥ ४७ ॥ स तु वर्षधरो ज्ञेयस्तदध्यक्षस्तु कञ्चुकिः ॥ ब्राह्मणः स भवेद्वृद्धो मान्यश्च वसुधाधिपैः ॥ ४८ ॥ विदूषको ब्राह्मणः स्यान्नायकस्य रहस्यवित् ॥ नटः प्रधानः स भवेत्सूत्रधारो नराधिप ॥ ४९ ॥ ज्ञेया बीजसमुत्पत्तिर्मुखं नानारसोद्भवः ॥ मुखोत्थबीजोद्घटनं तथा प्रतिमुखं स्मृतम् ॥ ५० ॥ प्राप्त्याप्राप्तियुतो गर्भस्तस्यैवोद्भेदसंज्ञितः ॥ तदेवोद्भिन्नबीजार्थो विसर्गो व्यसनान्वितः ॥ ५१ ॥ मुखादीनां निर्वहणं तथा निर्वहतं भवेत् ॥ नाटके सप्रकरणे कर्तव्याः पात्रसन्धयः ॥ ५२ ॥ डिमे समवकारे च विसर्गं नैव कारयेत् ॥ व्यायोगेहामृगौ कार्यौ तथा गर्भविवर्जितौ ॥ ५३ ॥ उत्सृष्टाङ्क प्रहसनं वीथी भाणकमेव च ॥ एतेषां नावकर्तव्यं तथा

प्रतिमुखं नृप ॥ ५४ ॥ औदार्यं सत्पथं शौर्यं नायकस्तु न संत्यजेत् ॥ नायिकापि तथा राजन्यजेद्वा प्रतिनायकः ॥ ५५ ॥ अतः परं प्रवक्ष्यामि नायिकाष्टकलक्षणम् ॥ निजापराधात्स्वगृहे वाससज्जा तु नायिका ॥ ५६ ॥ विरहोत्कण्ठिता सैव या त्वनागतनायिका ॥ स्वाधीन भर्तृका प्रोक्ता या स्यात्स्वाधीनभर्तृका ॥ ५७ ॥ कलहान्तरिता प्रोक्ता कलहाहतनायका ॥ खण्डिता या च नखरैर्युतमेति प्रगोपतिम् ॥ ५८ ॥ विप्रलब्धा तु सा ज्ञेया संकेते कान्तवर्जिता ॥ प्रवासगतकान्ता तु तथा प्रोषितभर्तृका ॥ ५९ ॥ एतासामुचिताकारलीलाभिर्बन्धनं घनम् ॥ नाटकादिषु रूपेषु कर्तव्यं द्वादशस्वपि ॥ ६० ॥ शृङ्गारहास्यकरुणवीररौद्रभयानकाः ॥ बीभत्साद्भुतशान्ताख्या नव नाट्यरसाः स्मृताः ॥ ६१ ॥ बन्धो रसानुगः कार्यः सर्वेष्वेतेषु यत्नतः ॥ रसप्रधानमेवैतत्सर्वनाट्यं नराधिपः ॥ ६२ ॥ एते कलाकौशलशीलयुक्ताः कार्यास्तथा लोक विधानयुक्ताः ॥ धर्मार्थकामाद्युपदेशगाश्च हिताय लोकस्य नरेन्द्रचन्द्र ॥ ६३ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयव ज्रसंवादे द्वादशरूपकवर्णनो नाम सप्तदशोऽध्यायः ॥ १७ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ अथ गीतलक्षणं भवति तस्य त्रीणि स्थानानि उरः कण्ठः शिरश्च, तेभ्यो मन्द्रमध्यतारोत्पत्तिः । त्रयो ग्रामाः । षड्जमध्यमगान्धाराः। सप्त स्वराः । षड्जर्षभ गान्धारमध्यमपञ्चमनिषादधैवताः एकविंशतिमूर्च्छनाः सप्त सप्त प्रतिग्रामाश्रिताः । तद्यथासां नामानि सौवीरी हारिणाश्वा कलोप नता शुद्धमध्यमा मार्गी पौरवी ऋष्यका चेति ॥ एताः सप्त मध्यमग्रामिण्यः उत्तरासंज्ञाः । प्राञ्चिनी उत्तरायता शुद्धषड्जमत्सरीकृता अश्वक्रान्ता उद्गता च एताः सप्त षड्जग्रामिकाः । आलापी कुन्तिमा श्रद्धा उत्तरा षड्जा पञ्चायता................एताः सप्त गान्धारग्रामिकाः । अथैकोनपञ्चाशत्तानाः । अग्निष्टोमिकः अत्यग्निष्टोमिकः पौण्डरिकः आश्वमेधिकः राजसूयिकः बहुसुवर्णिकः गोसविकः महाव्रतिकः ब्रह्म तानः प्राजापत्यः नगाश्रयः यज्ञाश्रयः गोदानिकः हयक्रान्तः अजक्रान्तः विष्णुक्रान्तः अरण्यः मत्तकोकिलः उज्जीविकश्चेति एते विंशतिर्म ध्यमग्रामिकाः । प्रस्वापनं पैशाचः जीवनः सावित्रः अर्धसावित्रः सर्वतोभद्रः सुवर्णः विष्णुः जिष्णुर्विष्णुवरः शारदः विजयः हंसः ज्येष्ठ इति एते चतुर्दश षड्जग्रामिकाः । तुम्बुरुप्रियः महालक्ष्मणः गन्धर्वानुमतः अलम्बुसप्रियः नारदप्रियः भीमसेनप्रियः वितानः मातङ्गः भार्गवप्रियः अभिरामः संश्राव्यः किन्नरप्रियः पुण्यः मनोहरः कल्याणकरश्चेति एते पञ्चदश गान्धारमाश्रिताः एतच्चतुर्विधं स्वरपदलयावधानयोगात् । मूर्च्छनास्वादिमध्यान्ते वादिसंवाद्यन्त्यवादिसञ्ज्ञास्तिस्रो वृत्तयः। पूर्वोक्ताश्च नव रसाः तत्र हास्यशृङ्गारयोर्मध्यमपञ्चमौ। वीररौद्राद्भुतेषु षड्जपञ्चमौ ।

करुणे निषादगान्धारौ । बीभत्सभयानकयोर्धैवतम् । शान्ते मध्यमम् । तथा लयाः हास्यशृङ्गारयोर्मध्यमाः । बीभत्सभयानकयोर्विलम्बितः । वीररौद्राद्भुतेषु द्रुतः । चोक्षाप्रयोगः स्वरोराधने रूपकेषु प्रकरणानुगतः मन्युव्यपदेशेन ते भवन्ति॥ भवन्ति चात्र श्लोकाः ॥ ग्रहांशस्तारमन्द्रे च न्यासोपन्यास एव च॥अल्पत्वं च बहुत्वं च षाडवौडविते तथा॥एवमेव बुधैर्ज्ञेया जातयो दशलक्षणाः॥अलङ्काराश्च चत्वारो भवन्ति वसुधाधिप ॥ प्रसन्नादिः प्रसन्नान्तः प्रसन्नाद्यन्त एव च ॥ प्रसन्नमध्यश्च तथा क्रमेणैवं विनिर्दिशेत् ॥ अपरान्तकमुल्लोप्यं मन्द्रकः मकरी तथा ॥ उवेणकं सरो बिन्दुमुत्तमं गीतकानि तु ॥ ऋग्गाथा पाणिका दक्षविहिता ब्रह्मगीतिका॥गीतमेतत्तदाभ्यासः कारणाच्चोक्षसंज्ञः ॥ संक्षेपेण मया प्रोक्तं सुराराधन कारणात् ॥ गीतज्ञो यदि गीतेन नाप्नोति परमं पदम् ॥ देवस्यानुचरो भूत्वा तेनैव सह मोदते ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मा० व० सं० गीतलक्षणो नामाष्टादशोऽध्यायः ॥ १८ ॥ मार्कण्डेय उवाच ॥ अथातोद्यविधानम् ॥ चतुर्विधमातोद्यं ततं सुषिरं घनमवनद्धं च । ततं वीणादि, शुषिरं वंशादि, घनं तालादि, अवनद्धं मुरजादि, तत्र स्वरास्तुल्याः शारीरा वैणवाश्च। तद्वद्वंशा किन्तु यथा शरीराणामारोहावरोहणे तथा वैणवानां वंशानां विपर्ययात् तालः कालप्रयोज्यः । पञ्चलघ्वक्षरोच्चारणकलामात्रास्तिस्रो वृत्तयः । चित्रा वृत्तिर्दक्षिणा द्विधा । मात्राकलाचित्रे चतुर्मात्रावृत्तौ अष्टमात्रा दक्षिणाया । अष्टमात्रादक्षिणे अवया निष्क्रयो विक्षेपः प्रवेशः शम्पातालः संनिपातभेदः । कलासमूहो युक्तः । चपुटस्थः अयुक् चश्चत्पुटलः प्लुतान्तः पञ्चपाणिः ख इति तापुत्रा यथाक्षरस्थः । तत्र लयाः द्रुतमध्यविलम्बिताः । लयवत्तालः । प्रकरणं द्विविधम् । कुलकं च्छेद्यकं च । अथावनद्धं तत्र पौष्करवत्कणान्वितं करुणान्वितम् । तत्र षोडशाक्षराणि क ख ग घ ट ठ ड ण त थ द ध य र ल व इति, तत्र कटरथउगादिदक्षिणमुखे, घधमा वामे, गदकारा मूर्ध्निः टणलहा आलिङ्गे अआइउएओ अइ च ओ यथायोगं खगधानां रेफेण योगः । कहभदानां णलथवः । समहस्तनिपातादङ्गुलीप्रचलनोर्ध्ववामैकयोः समहस्तनिपातप्रदेशिनी तद्वद् डह्लानां योगः समपाण्यर्धपाणिरदीर्घपाणिरेकपाणिः द्विहस्तप्रदेशिनीप्रहतानि समपाणिप्रहतोपकारः घथगडराअध्यर्धपाणौ कथकारा। अध्यर्धपाणौ ठणलहास्नहाद्विहस्तेन तलप्रदेशिनीप्रहते अहितवितस्तालिप्तगोमुखीमार्गाः शृङ्गारहास्ययोरंघितः । वीररौद्राद्भुतेषु वितस्तः करुणाशान्तयोरालिप्तः । बीभत्सभयानकयो गोमुखदर्दुरपणवयोर्मृदङ्गानुगमनं भवति । भवन्ति चात्र नेपथ्यभवनद्वारासमानरङ्गाभिवीक्षणम् । मुरजाः पृष्ठतस्तेषां तद्वन्मार्जनिका भवेत् ॥ याम्यतस्तस्य विज्ञेयो दर्दुरः पणवस्तथा ॥ उत्तराभिमुखो गाता तथा दक्षिणतो भवेत् ॥ वामतो गैरिकस्तस्य दक्षिणे वंशवादकौ ॥ गातुरेवाभिमु

ख्येन गायकानां निवेशनम् ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे आतोद्यविधिर्नामैकोनविंशोऽध्यायः ॥१९ ॥ परस्यानुकृति र्नाट्यं नाट्यज्ञैः कथितं नृप ॥ तस्य संस्कारकं नृत्तं भवेच्छोभाविवर्धनम् ॥ १ ॥ नृत्यं तु द्विविधं प्रोक्तं नाट्यलास्याश्रयं सदा ॥ द्वैविध्यं द्विविधस्यापि पुनरुक्तं नराधिप ॥ २ ॥ अभ्यन्तरश्च बाह्यं च बाह्यं लक्षणवर्जितम् ॥ अभ्यन्तरं लक्षणवन्मङ्गल्यं तत्प्रयोगतः ॥ ३ ॥ लास्यं स्वच्छन्दतः कार्यं मण्डपे यदि वा बहिः ॥ नाट्यं मण्डप एव स्यान्मण्डपं द्विविधं भवेत् ॥ ४ ॥ आयतं चतुरस्रं तु द्वात्रिंशद्धस्तसम्मितम् ॥ चतुरस्रं न कर्तव्यमायतं द्विगुणायतम् ॥ ५॥ हीनाधिकं न कर्तव्यं दृष्टादृष्टशुभप्रदम् ॥ हीने भवति सम्मर्दो विस्तीर्णे नाट्यगेययोः ॥ ६ ॥ व्यक्तिर्नैवोपपद्येत तस्मात्तौ परिवर्जयेत् ॥ आदावेव तु कर्तव्यं त्रिदशानां तु पूजनम् ॥ ७ ॥ पूजनं जर्जरस्यापि वास्तुदैवतपूजनम् ॥ एवं कृत्वा ततो नाट्यं नान्दीपूर्वकमिष्यते ॥ ८ ॥ ततो जवनिकाक्षेपैः प्रतिपात्रप्रवेशनम् ॥ प्रवेशनिर्गमौ कार्यौ कृत्वा कार्यस्य सूचनम् ॥ ९ ॥ पुष्पाञ्जलिः प्रदातव्या नाट्यान्ते वास्तुपूजनम् ॥ पाठ्ये गीते समासक्तः पात्रतुल्यः परिक्रमः ॥१०॥ चतुष्कलो नायकानां मध्यानां त्रिकलो भवेत् ॥ द्विकलश्चाधमानां स्यान्मध्यमे नृपकर्मणि ॥ ११ ॥ एकाधिकोनं सर्वेषां कर्तव्यं कार्ययोगतः ॥ देवा वीरोद्धता ज्ञेया उद्धता दानवादयः ॥ १२ ॥ नृपाश्च धीरललिता धीरास्तदनुजीविनः ॥ प्रशान्तधीरा ऋषयः प्रशान्तास्तत्पदानुगाः ॥ १३ ॥ धीरोदात्तास्तथा विप्रा उदात्ता वणिजो मताः ॥ एवंविधाश्च कथिता एतेषामेव योगतः ॥ १४ ॥ आहर्यः सात्त्विकश्चैव याचिकोंगिक एव च ॥ चतुष्प्रकारोऽभिनयः कर्तव्यो नाट्यकर्मणि ॥ १५ ॥ आहार्यः प्रतिशीर्षादिर्द्विक्तो वेश उच्यते ॥ धीरोद्धतानां वेशः स्यान्न चात्यर्थसमुल्वणः ॥ १६ ॥ उद्धतश्चोद्धतानां स्याद्राज्ञां ललित इष्यते ॥ प्रतिनायकवेशस्तु कर्तव्यश्च तथोद्धतः ॥ १७ ॥ अन्येषां सदृशो वेशो देशकर्माश्रयो भवेत् ॥ अश्वादयश्च कर्तव्याश्चर्मकाष्ठादिभिः समाः ॥ १८ ॥ अतः परं प्रवक्ष्यामि सात्त्विकाभिनयं तव ॥ अश्रुप्रपातरोमाञ्चस्वेदनं स्पन्दनं तथा॥१९॥तथा च वर्णविन्यासैः सात्त्विकाभिनयो भवेत्॥वाचिको वाचया प्रोक्तो वक्ष्याम्यंगिकमुत्तरे ॥२०॥ नाट्यवृत्तं तु कर्तव्यं हर्षस्थाने सदा बहु ॥ शोकस्थाने न कर्तव्यं किञ्चिद्वा कारयेत्ततः ॥२१॥ चतुर्धा रेचकं प्रोक्तं कटिपादांघ्रिकाश्रयम् ॥ चातकान्या महाचारी चारी च द्विविधा मता ॥ २२ ॥ सुकुमाराङ्गवाक्चेष्टा चारी भवति यादव ॥ एतैरभ्यर्थितैर्ज्ञेया महाचारी नरेश्वर ॥ २३ ॥ मण्डलानि दशैवास्य चारीसंयोगजानि तु ॥ अतिक्रान्तं विचित्रं च तथा ललितसञ्चरम्॥ ॥ २४ ॥ सूचीविद्धं दण्डपादं विकृतालातसंज्ञिते ॥ वामबद्धं सललितं क्रान्तं चाकाशगानि तु ॥ २५ ॥ मण्डलानि दशान्यानि शृणु भौमानि

पार्थिव ॥ भ्रमरास्कन्दिते स्यातां मार्दवं च ततः परम् ॥ २६ ॥ समा सरितमित्याहुरेडकाक्रीडितं यथा ॥ अङ्कितं शकटाव्यं च तथाहार्यमिति स्मृतम् ॥ २७ ॥ पिष्टकुब्जं च विज्ञेयं तथा चापगतं पुनः ॥ अथाङ्गहारान्वक्ष्यामि नामतस्तान्निबोध मे ॥ २८ ॥ स्थिरहस्तोऽङ्गहारस्तु तथैवा क्षिप्तकः स्मृतः ॥ उद्घाटितस्तृतीयः स्यात्तथा चान्योऽपराजितः ॥ २९ ॥ मत्ताक्रीडोऽथ विष्कम्भः तथा स्वस्तिकरेचितः ॥ वृश्चिकापसृतश्चैव तलमन्दा च सर्पितः ॥ ३० ॥ मतल्लीस्खलितश्चैवं भ्रमरः पार्श्वस्वस्तिकः ॥ मदाद्विलसितश्चैव विक्षिप्तो गतिमण्डलः ॥ ३१ ॥ वैशाखरेचितश्चैव परिवृत्तकरेचितः ॥ उद्वर्तकः परिच्छिन्नो रेचकोऽथ बलाहकः ॥ ३२ ॥ सम्भ्रान्तो वाङ्गिकश्चैव इति क्रीडो ह्यलातकः ॥ विद्युद्भ्रान्तः परावृत्तः पार्श्वच्छेदसमन्वितः ॥ ३३ ॥ आक्षिप्तो रेचितश्चैव सौम्योऽथ करितस्तथा ॥ सूचीविद्धोऽपविद्धश्च विलापोव निकुट्टितः ॥ ३४ ॥ षट्त्रिंशदेते संप्रोक्ता ह्यङ्गहारा यदूत्तम ॥ एतेषां संप्रवक्ष्यामि कारणानि यथाक्रमम् ॥ हस्तपाद प्रचारश्च यथा योज्यः प्रयोक्तृभिः ॥ ३५ ॥ सर्वेषामङ्गहाराणां निष्पत्तिः कारणं भवेत् ॥ तान्यहं संप्रवक्ष्यामि नामभिः कर्मभिस्तथा ॥ ३६ ॥ हस्तपादसमायुक्तो नृत्तस्य करणं भवेत् ॥ द्वे नृत्यकरणे चैव भवेतां नृप मातृका ॥ ३७ ॥ त्रिभिः कलापकश्चैव चतुर्भिः खण्डकः स्मृतः ॥ पञ्चैव करणानि स्युः संज्ञाघात इति स्मृतः ॥ ३८ ॥ षड्भिर्वा सप्तभिर्वापि अष्टभिर्नवभिस्तथा ॥ करणैरिह संयुक्ता अङ्गहारा इति स्मृताः ॥ ३९ ॥ एतेषां चैव वक्ष्यामि नामान्यहमतः परम् ॥ तालपुष्पापविद्धे द्वे लीनस्वस्तिकरेचितम् ॥ ४० ॥ मण्डलं स्वस्तिकं चैव ऊरु वृत्तं निकुण्डकम् ॥ सूचीविद्धं कटिच्छिन्नमर्धरेचितमेव च ॥ ४१ ॥ वक्षः स्वस्तिकमुत्पन्नं स्वस्तिकं पृष्ठगं पुनः ॥ दिक्स्वस्तिकमलाताख्यम र्धसूचीकटीसमम्॥४२॥आक्षिप्तरेचितं क्षिप्रमर्धस्वस्तिकसंश्रितम् ॥ भुजङ्गत्रासितं चैव ऊर्ध्वजानु निकुञ्चितम्॥४३॥मतल्ली त्वर्धमतल्ली स्याद्रेचकनि कुण्टकम् ॥ पारविद्धं तडिद्भ्रान्तं वलितं चूर्णितं तथा ॥४४॥ ललितं दण्डपक्षं च भुजङ्गत्रस्तरेचितम्॥ नूपुरं रेचितं चैव भ्रमरं चतुरं तथा॥४५॥ भुजङ्गाञ्चितमन्यत्स्याच्छिन्नं वृश्चिकरेचितम् ॥ लतावृश्चिकमन्यत्स्याच्छिन्नं वृश्चिकरेचितम् ॥४६॥ वृश्चिकं व्यंसितं चैव सूचीविद्धकमेव च ॥ ललाटतिलकं चैव कुण्डलं चक्रमंडलम् ॥४७॥ तरोर्मण्डलमाक्षिप्तं लतालसितमार्गलम् ॥ विक्षिप्तं भ्रमितं चैव विलासं वानरप्लुतम्॥४८॥परिवृत्तं निवृत्तं च पार्श्वाक्रान्तं निकुञ्चितम् ॥ अतिक्रान्तसवक्रान्तं दोलापादविवर्जितम् ॥४९॥ नागप्रक्रीडितं चैव विप्लुतं गरुडप्लुतम् ॥ गण्डसूची परिक्षिप्तं पार्श्वजानुकमेव च ॥ ५० ॥ गृहावलीनकं लीनं विष्णुक्रान्तमजप्लुतम् ॥ आक्रान्तं मण्डितं चैव मयूरलसितं नसम् ॥ ५१ ॥ स

र्पितं चोलपादं च हरिणप्लुतमेव च ॥ प्रेङ्खालितं नितम्बं च स्खलितं परिहस्तकम् ॥ ५२ ॥ असर्पिततलं चैव सिंहविक्रीडितं तथा ॥ वृषभ क्रीडितं चैव गङ्गावतरणं तथा ॥ ५३ ॥ अष्टोत्तरशतं चैव करणानां प्रकीर्तितम् ॥ सुकुमारं तथा विद्धं वृत्तं द्विविधमुच्यते ॥ ५४ ॥ उद्धूतं पुरुषप्रायं स्त्रीप्रायं सुकुमारकम् ॥ देवचिह्नकृताकारा पिण्डी भवति पार्थिव ॥ ५५॥ भारती सात्त्वती चैव कौशिक्यारभटी तथा ॥ चतस्रो वृत्तयः प्रोक्ता वाक्प्रधाना तु भारती ॥ ५६ ॥ तथा वीररसप्राया विज्ञेया सात्त्वती नृप ॥ तथा रौद्रप्रचारा च भवत्यारभटी सदा ॥ ५७ ॥ शृङ्गारहास्यबहुला तथा भवति कौशिकी ॥ आवन्ती दाक्षिणात्या च तथा चैवात्र मागधी ॥ ५८ ॥ पञ्चाली मध्यमा चेति वृत्तिः सा तु चतुर्विधा ॥ वेषभाषानुकरणं तथाचारप्रवर्तनम् ॥ ५९ ॥ प्रवृत्तिरिति विख्याता वृत्तीनामाश्रयास्तु ताः॥ नाट्यलोकाश्रया धर्मिधर्माश्च द्विविधा मता ॥ ६० ॥ सिद्धिश्च द्विविधा नाट्ये दैविकी मानुषी तथा ॥ व्यायामान्मानुषी तत्र दैवी देवप्रसादजा ॥ ६१ ॥ रसेन भावेन समन्वितं च तालानुगं काव्यरसानुगं च ॥ गीतानुगं नृत्तमुशन्ति धन्यं सुखप्रदं धर्मविवर्धनं च ॥ ६२ ॥ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे सामान्यवर्णनो नाम विंशोऽध्यायः ॥ २० ॥ ॥ छ ॥ ॥ छ ॥ मार्कण्डेय उवाच ॥ समाकुञ्चितकं चैव प्रसारितविवर्तिते ॥ उद्वाहितं नतं षोढा शय्यास्थानानि निर्दिशेत् ॥ १ ॥ उत्तानितं मुखं चैव सास्तमुक्तकरं तथा ॥ समं वामप्रसुतस्य स्थानकं तु विधीयते ॥ २ ॥ स वैराकुञ्चितैरङ्गैः शय्याविद्धे च जानुनी ॥ स्थानमाकुञ्चितं नाम गीतान्तानां प्रयोजयेत् ॥३॥ एकं भुजं समाधाय संप्रसारितजानुकम् ॥ स्थानं प्रसारितं नाम सुखसुप्तस्य कारयेत् ॥ ४ ॥ अधोमुखे स्थितं चैव विवर्तितमिति स्मृतम् ॥ शस्त्रक्षते मृते क्षिप्तं मत्तोन्मत्तेषु तद्भवेत् ॥ ५ ॥ अंसोपरि शिरः कृत्वा कुर्युरक्षोभमेव च ॥ उद्वाहितं तु विज्ञेयं लीलायाः शंसने प्रभो ॥ ६ ॥ तस्या यदेतत्प्रसृतं तु जंघे स्रस्तौ करौ तं नतमुद्दिशन्ति ॥ आलस्यखेदश्रममोक्षणेषु कार्यस्तु तस्याभिनयप्रयोगः ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मा० वज्रसंवादे शय्यासनस्थानवर्णनो नामैकविंशतितमोऽध्यायः ॥ २१ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ स्वस्थमन्दालसक्रान्तं प्रस्थालसमथापि च ॥ विष्कुम्भितं तत्कटुकं मुक्तजानु तथा समम् ॥ १ ॥ जानूगतं विमुक्तं च स्थानकान्युपवेशने ॥ विष्कुम्भिताञ्चितौ पादौ वक्षः किञ्चित्समुन्नतम् ॥ २ ॥ हस्तौ कट्यूरुविन्यस्तौ स्वस्थौ स्वस्थोपवेशने ॥ एकः प्रसारितः पादस्त्वन्यश्चैवासनाश्रितः ॥ ३ ॥ पार्श्वं नतं तथा कार्यं स्थानं मन्दालसं तु तत् ॥ चिन्तायां तु तथौत्सुक्ये निर्वेदे विरहे तथा ॥ ४ ॥ विषादेषु सदा

देयं स्थानमेतत्प्रयोक्तृभिः ॥ चिबुकापाश्रितौ हस्तौ बाहुशीर्षांचितं शिरः ॥ ५ ॥ सर्वाभिनयनं चैव विज्ञेयं क्रान्तनायकम् ॥ बलिना निगृ
हीतस्य रिपुणा खण्डितस्य च ॥ ६ ॥ शोकग्लानस्य च तथा स्थानमेतद्विनिर्दिशेत् ॥ ग्रहौ हस्तौ विमुक्तं च शरीरमलसं तथा ॥ ७ ॥
खेदालसं तथा चक्षुर्यत्र स्वस्थालसं तु तत् ॥ श्रमे ग्लानौ मदे चैव मूर्च्छायां व्यथिते तथा॥८॥ मोहे प्राणभये चैव स्थानमेतत्प्रयोजयेत् ॥ विष्कु
म्भिताञ्चितौ पादौ कुरु विष्कुम्भितौ भुजौ ॥ ९ ॥ निमीलितं तथा चक्षुः स्थाने विष्कुम्भिता सति ॥ स्ववक्षोगतया दृष्ट्या योगे ध्याने
विधीयते ॥ १० ॥ स्वभावसंस्थया चैव सभ्यानामुपवेशने ॥ समौ पादौ समाधाय समं यदुपदिश्यते ॥ ११ ॥ अस्पष्टभूतलं चैव ज्ञेयं
मुकुटकासनम् ॥ पित्र्ये समाधौ जप्ये च होमादिकरणेषु च ॥ १२ ॥ एतत्स्थानं विधातव्यं यथागमनकर्मणि ॥ एकं जानु यदास्ये च
महीपृष्ठे विधीयते ॥ १३ ॥ ज्ञातव्यं भूमिपश्रेष्ठ ! मुक्तजानुकमासनम् ॥ एतत्कृतव्यलीकानां प्रियाणां सम्प्रसादने ॥ १४ ॥ मज्जने कुटि
लानां च तथा भूम्यनुलेपने ॥ महीगताभ्यां जानुभ्यां स्थानं जानुगतं भवेत् ॥ १५ ॥ राज्ञां विज्ञापने कार्यं सुराणां चैव पूजने ॥ भूमौ यदूर्ध्वं
पतनं तद्विमुक्तमिति स्मृतम् ॥ १६ ॥ प्रहारतः प्रयोक्तव्यमावेशे क्रन्दने तथा ॥ भद्रासनं तु देवानां राज्ञां सिंहासनं भवेत् ॥ १७ ॥ रूप्या
सनं तु दातव्यं सांवत्सरपुरोधसोः ॥ वेत्रासनममात्यानां मन्त्रिणां तु तथा भवेत् ॥ १८ ॥ मन्दासनं तु दातव्यं सेनानीयुवराजयोः ॥ मुनीनां
च द्विजानां च तथा सब्रह्मचारिणाम् ॥ १९ ॥ वृसी देया महाराज ये चान्ये नियमे स्थिताः ॥ स्थानीयाः पुरुषा ये च मुख्याः पौराश्च ये
तथा ॥ २० ॥ वणिजश्च तथा मुख्यास्तेषां भवति पीठिका ॥ वेशस्त्रीणां कुमाराणां तथा भृत्यजनस्य च ॥ २१ ॥ मसूरकं तु दातव्यं शेषे
भूम्यासनं भवेत् ॥ सिंहासनं विना राजन्गृहे स्वच्छन्दमानसम् ॥ २२ ॥ नैकासनं स्याद्गुरुणा तु राजन्रथे गजे वापि शिलातले च ॥ नैका
सने स्याद्गुरुणा तु दोषोऽथ वातिदीर्घे फलके च नित्यम् ॥ २३ ॥ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे
आसनवर्णनो नाम द्वाविंशतितमोऽध्यायः ॥ २२ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ वैष्णवं समपादं च वैशाखं मण्डलं तथा ॥ प्रत्यालीढ
मथालीढं षट् पुंसां स्थानकानि तु ॥ १ ॥ स्वभावसंश्रितः पादरूपंशः पक्षगतोऽपरः ॥ किञ्चिदञ्चितजंघश्च वैष्णवं स्थानमुच्यते ॥ २ ॥ स्थाने
नानेन कर्तव्यः संलापस्तु स्वभावतः ॥ समपादं तु विज्ञेयं समैस्तालान्तरैः पदैः ॥ ३ ॥ स्वस्वभासौष्ठवोपेतं रुद्रब्रह्मादिदैवतम् ॥ अनेन कार्यं
स्थानेन विप्रमण्डलकारणम् ॥ ४ ॥ बलानां पक्षिणां चैव वरकौतुकमेव च ॥ स्वस्थानं स्यन्दनस्थानां विमानस्थायिनामपि ॥ ५ ॥ लिङ्ग

स्थानां व्रतस्थानां स्थानमेतत्प्रयोजयेत् ॥ द्वौ तालावर्धतालं च पादयोरंतरं भवेत् ॥ ६ ॥ अञ्चिते यत्र जंघे तु पदौ पक्षस्थितौ तथा ॥ वैशाखं नाम तत्स्थानं स्कन्दश्चैवात्र देवता ॥ ७ ॥ स्थानेनानेन कर्तव्यमश्वानां वाहनं बुधैः ॥ व्यायामो निर्गमश्चैव प्रवेशो धनुषस्तथा ॥ ८ ॥ अतः परं मण्डलं स्यात्रींस्तालान्तरमेव च ॥ कटी जानुसमा यत्र पादौ पक्षस्थितौ यथा ॥ ९ ॥ धनुर्वज्रप्रहरणं मण्डलेन प्रयोजयेत् ॥ वाहनं कुञ्जराणां तु नृत्ते चोद्वहनक्रिया ॥ १० ॥ आदौ च दक्षिणं पादं पञ्चतालं प्रसारयेत् ॥ आलीढं नाम तत्स्थानं रुद्रकाल्यत्र दैवतम् ॥ ११ ॥ अनेन कार्या स्थानेन सर्वत्रोद्धरणक्रिया ॥ रौद्रपादप्रचारस्तु संग्रामस्य निरूपणम् ॥ १२ ॥ सिंहाद्यभिनयं चैव शक्तसन्धानमेव च ॥ खड्गयुद्धे नियुद्धे च मण्डलभ्रमणे तथा ॥ १३ ॥ उत्तरोत्तरसंजल्पे रोषामर्षसमुद्भवे ॥ मल्लानां चैव संस्फोटे शत्रूणां च निरूपणे ॥ १४ ॥ तथाभिद्रवणं चैव शास्त्राणां च विमोक्षणम् ॥ अञ्चितं दक्षिणं कृत्वा वामं पादं प्रसार्य च ॥ १५ ॥ आलीढं परिवर्तन्ते प्रत्यालीढमिति स्मृतम् ॥ प्रत्यालीढं तु विज्ञेयं स्थानं च नवदैवतम् ॥ १६ ॥ आलीढेनोदितं शस्तं प्रत्यालीढं न मोचयेत् ॥ अतः परं प्रवक्ष्यामि स्त्रीणां स्थानत्रयं नृप ॥ १७ ॥ आयतं वावहित्थं च हयक्रान्तमथापि च ॥ एकश्चानुधुतो यत्र पादौ विरचितः समः ॥ १८ ॥ तालमात्रान्तरन्यस्तः त्र्यक्षः पक्षगतोऽपरः ॥ प्रसन्नमाननमुरः समं यत्र समुन्नतम् ॥ १९ ॥ लतानितम्बगौ हस्तौ स्थानं ज्ञेयं तदायतम् ॥ रङ्गावतरणे ह्येतत्तथा पुष्पाञ्जलौ भवेत् ॥ २० ॥ पादो विरचितस्त्व ( श्र ) स्रस्तदन्योपसृतः समः ॥ पादास्तलान्तरन्यस्तास्त्रिकर्मीपत्समुन्नतम् ॥ २१ ॥ अवहित्थं समाख्यातं स्थानमेतन्नरोत्तम ॥ विलासलीलालावण्यशृङ्गारात्मनिरूपणे ॥ २२ ॥ स्थानमेतत्प्रयोक्तव्यं वरमार्गावलोकने ॥ समस्थितो यत्र पादस्त्वन्यः पादस्तलाञ्चितः ॥ २३ ॥ तालैरनियतैरेष स्थानको हि विधीयते ॥ सूचीविद्धमविद्धं वा तदश्वक्रान्तमिष्यते ॥ २४ ॥ शाखावलम्बस्तबकोच्चये च विघूर्णनेत्रासनसम्प्रलापे ॥ स्वभावसंलापविधौ च कार्यं स्थानं त्विदं यादववंशमुख्य ॥ २५ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मा० व० सं० उत्थितादिस्थानकवर्णनो नाम त्रयोविंशतितमोऽध्यायः ॥ २३ ॥ मार्कण्डेय उवाच ॥ शिरसः प्रथमं कर्म गदतो मे निबोध तत् ॥ स्वभावादृजुनोर्वामक्षेपेणाकस्मिकं सकृत् ॥ १ ॥ संज्ञोपदेशपृच्छासु स्वभावाभाषणे भवेत् ॥ बहुशः कथितं यच्च तदा कम्पितमिष्यते ॥ २ ॥ ( रोषतर्जनतर्केषु प्रतिज्ञासु च दृश्यते ॥ शिरसो रेचनं यत्तु शनैस्तद्धुतमिष्यते ॥ ३ ॥ ) विषादे विस्मये चैव प्रतिषेधे तदिष्यते ॥ विधुतं नामतः प्रोक्तं तथा पार्श्वविकम्पनैः ॥ ४ ॥ शीतग्रस्ते ज्वरार्ते च मत्ते च ज्वारिते भवेत् ॥ मण्डलारम्भणे चैव भवेत्तु परिग

हिंतम् ॥ ५॥ साधने विस्मये हर्षे लीलायां च तदिष्यते ॥ सकृदुद्वाहितं चोर्ध्वं तदुद्वाहितमिष्यते ॥६॥ उच्छ्राये दर्शने गर्वे तत्तथोर्ध्वनिरीक्षणे ॥
आक्षिप्तं सकृदेव स्यादवनतमधोगतम् ॥ ७ ॥ सन्देहालापसंज्ञासु तत्तथा वाहनादिषु ॥ किञ्चित्पार्श्वनतग्रीवं शिरो विज्ञेयमञ्चितम् ॥ ८ ॥
मूर्च्छिते व्यथिते चैव सञ्चिते दुःखिते भवेत् ॥ ( उत्क्षिप्तबाहुशिखरं तथाचितशिरोधरम् ॥ ९ ॥ निकुञ्चितं च तद्गर्वे विलासे च प्रयोजयेत् ॥
परावृत्तपरावृत्तं कार्यं पृष्ठनिरीक्षणे ॥ १० ॥ ) उत्क्षिप्तं चापि विज्ञेयमुन्मुखावस्थितं शिरः ॥ आशु दिव्यार्थयोगे च कार्यं तच्च प्रयो
क्तृभिः ॥ ११ ॥ अधोमुखस्थितं चापि बुधाः प्राहुरधोगतम् ॥ लज्जायां च प्रमाणे च दुःखे तच्च प्रयोजयेत् ॥ १२ ॥ सर्वतो लोलनाच्चैव
परिलोलितमुच्यते ॥ व्याधिते मूर्च्छिते मत्ते भवेत्तु परिलोलितम् ॥ १३ ॥ एतत्तु शिरसः कर्म कथितं ते नराधिप ॥ अञ्चितं रेचितं मुक्तं विवृतं
चतुरं तथा ॥ १४ ॥ प्रसारितं तथा स्तब्धं ग्रीवाकर्मणि निर्दिशेत् ॥ अञ्चितं किञ्चिदेकांशं लोलनाद्रेचितं तु तत् ॥ १५ ॥ रेचितं भ्रमणान्मुक्तं
विवृतं चलितं च तत् ॥ मधुरं चतुरं प्रोक्तमायतं स्यात्प्रसारितम् ॥ १६ ॥ स्तब्धं स्तब्धं तथा प्रोक्तं शिरःकर्मानुगामि च ॥ अञ्चितं स्याद्वि
लासादौ रेचितं मण्डलेक्षणे ॥ १७॥ मुक्तं मूर्च्छादियोगेषु विवृत्तं ललितादिषु ॥ सौम्यभावे तु चतुरं दृष्टौ कार्यं प्रसारितम् ॥ १८ ॥
स्तब्धं शीतेऽथ वा व्याधावविकारि स्वभावतः ॥ विबुद्धं विनिवृत्तं च निर्भुग्नं भुग्नमेव च ॥ १९ ॥ विवृत्तं च तथैवर्जुकर्मण्यस्य विनिर्दिशेत् ॥
व्यावृत्तं स्याद्विबुद्धाख्यं निवृत्तं पिहितं भवेत् ॥२०॥ अवाङ्मुखमवाभुग्नं निभुग्नं चोर्ध्वगं तु तत् ॥ भुग्नं स्यादानतं किञ्चिन्निवृत्तं विवृतं भवेत्॥
॥२१॥ऋजुस्वभावसंस्थं च तयोः कर्माणि चक्षते ॥ विरुद्धवारणे कार्यं मैवमित्येवमादिषु॥२२॥ विनिवृत्तमसूयायामीर्ष्याकोपकृतेषु च ॥ विभुग्नं
चापि विज्ञेयं गम्भीरालोकनादिषु ॥ २३ ॥ भुग्नं तु लज्जिते योज्यं यतीनां तु स्वभावतः ॥ निवृत्तं चापि कर्तव्यं हास्यशोकभयादिषु ॥ २४ ॥
ऋजुस्वभावसंस्थाने कर्तव्यं यदुनन्दन ॥ आभुग्नमथ निर्भुग्नं तथा चैव प्रकंपितम् ॥ २५ ॥ उद्वाहितं समं चैव पञ्चरोधः प्रकीर्तितम् ॥ धार्यते
यच्च निर्भुग्नं तदा भुग्नं प्रकीर्तितम् ॥ २६ ॥ शल्यक्षते विघाते च हृद्रोगे च तदिष्यते ॥ स्तब्धं च निम्नपृष्ठं च निर्भुग्नं नाम तत्स्मृतम् ॥ २७ ॥
स्तम्भे सविस्मये माने विषादे च तथेष्यते ॥ उरसस्तूर्ध्वविक्षेपः प्रकम्पितमिहोच्यते ॥ २८ ॥ हसिते रुचिते कार्यं श्रमे व्याधिभये तथा ॥
उद्वाहितं यदूर्ध्वं तु तदुद्वाहितमुच्यते ॥ २९ ॥ ऊर्ध्वं निगमिते कार्यं जृम्भितेषु प्रयोगतः ॥ चतुरस्रं समं नाम विज्ञेयं सौष्ठवेषु तत् ॥ ३० ॥
समुन्नतं नतं चैव प्रसारितविवर्तिते ॥ तथापसृतमेवं हि पार्श्वयोः कर्म पञ्चधा ॥ ३१ ॥ कटिपार्श्वभुजांसान्तैरुन्नतैः स्यात्समुन्नतम् ॥ कटी यत्र

सुनिर्भुग्ना पार्श्वं तद्विनतं भवेत् ॥ ३२ ॥ प्रसारणादुभयतः पार्श्वयोः स्यात्प्रसारितम् ॥ परिवर्तनात्त्रिकस्यापि विवर्तितमिहेष्यते ॥ ३३ ॥
अस्य चैवोपगमनाद्भवेदपसृतं पुनः ॥ नतं त्वपसृते कार्यं चोन्नतं तूपसर्पिते ॥ ३४ ॥ प्रसारिते प्रहर्षादौ त्रासे चापसृते पुनः ॥ विवर्तितं विवर्ते
च कारणं पार्श्वमुच्यते ॥ ३५ ॥ क्षामं निम्नं च पूर्णं च संप्रोक्तमुदरं त्रिधा ॥ क्षामं तु हसिते कार्यं तथा चैव विजृम्भिते ॥ ३६ ॥ व्याधिते
तपसि श्रान्ते क्षुधार्ते निम्नमेव च ॥ पूर्णं निःश्वसिते चैव ह्यारोग्ये ललितं तथा ॥ ३७ ॥ प्रकम्पिता च च्छिन्ना च निवृत्ता रेचिता तथा ॥
उद्वाहिता चैव कटिर्नृत्ते पञ्चविधा स्मृता ॥ ३८ ॥ तिर्यग्गता गता क्षिप्रं विज्ञेया वप्रकम्पिता ॥ मध्यस्थवलनाच्चैव च्छिन्ना संपरिकीर्तिता ॥ ३९ ॥
पराङ्मुखस्याभिमुखी निवृत्ता परिकीर्तिता ॥ सर्वतोभ्रमणाच्चैव रेचितेत्यभिधीयते ॥ ४० ॥ निश्चितोद्वाहनाच्चैव तथैवोद्वाहिता मता ॥ नीच
वामनकुब्जानां गतौ कार्या प्रकम्पिता ॥ ४१ ॥ व्यायामे त्वथ संभ्रान्ते व्यावृत्तप्रेक्षितेषु च ॥ छिन्ना कार्या कटिस्तज्ज्ञैर्निवृत्ता वर्तितेषु च ॥ ४२ ॥
रेचिता रेचिते कार्या अन्या लीलागते त्रिधा ॥ कम्पनं वलनं चैव स्तम्भनोद्वर्तने तथा ॥४३ ॥ विवर्तनं च पञ्चैव ऊर्वोः कर्माणि निर्दिशेत् ॥
नमनोन्नमने पारन्त्योर्महीपृष्ठेद्धुते यदा ॥ ४४ ॥ स्थिता पादतलाग्रेण कम्पितं तत्तदिष्यते ॥ गच्छेदभ्यन्तरं जानु शनैर्यद्वलितं तु तत् ॥ ४५ ॥
स्तम्भनं चापि विज्ञेयमपवृत्तक्रियाकुलम् ॥ वलिताविद्धभावं स्यादुद्वर्तनमथापि च ॥ ४६ ॥ पार्ष्णिरभ्यन्तरं गच्छेद्यत्र तत्र निवर्तितम् ॥
गतिष्वधमपात्राणां कम्पितं संप्रयोजयेत् ॥ ४७ ॥ वलनं चैव कर्तव्यं स्त्रीणां स्वैरपरिक्रमे ॥ भीमोर्धसविषादेषु स्तम्भनं संप्रयोजयेत् ॥ ४८ ॥
व्यायामे ताण्डवे चैव कार्यमुद्वर्तनं तथा ॥ विवर्तनं च कर्तव्यं संक्रमादिपरिक्रमे ॥ ४९ ॥ आवर्तितं नतं क्षिप्तं चोद्वाहितमथापि च ॥
परिवृत्तं तथा पञ्च जङ्घाकर्माणि निर्दिशेत् ॥ ५० ॥ आवर्तितं तु व्यत्यासाद्वामदक्षिणजङ्घयोः ॥ जान्वोराकुञ्चनाच्चैव नतं ज्ञेयं प्रयोक्तृभिः॥५१॥
विक्षेपाच्चैव जंघायाः क्षिप्तमित्यभिधीयते ॥ उद्वाहितं तु विज्ञेयमूरूद्वाहनकर्मणा ॥ ५२ ॥ प्रतीपनयनं यत्र परिवृत्तं तदिष्यते ॥
आवर्तनं प्रयोक्तव्यं विदूषकपरिक्रमे ॥ ५३ ॥ नतं चापि हि कर्तव्यं स्थानासनगतादिषु ॥ क्षिप्तं व्यायामयोगेषु ताण्डवेषु प्रयोजयेत् ॥ ५४ ॥
तथा चोद्वाहितं कार्यमाविद्धगमनादिषु ॥ ताण्डवादौ प्रयोक्तव्यं परिवृत्तं प्रयोक्तृभिः ॥ ५५ ॥ उद्घाटितसमश्चैव..............संचरः ॥
अञ्चितः कुञ्चितश्चैव पादः पञ्चविधः स्मृतः ॥ ५६ ॥ स्थित्वा पादतलाग्रेण पार्ष्णिर्भूमौ निपात्यते ॥ यस्य पादस्य करणात्स तद्घटित उच्यते ॥
॥ ५७ ॥ कार्योऽनुरक्तकरणे ( चैव ) प्रचारे ललिते तथा ॥ ( स्वभावरचितो भूमौ समस्थानः समः स्मृतः ॥ ५८ ॥ एष कार्यः सदा पादः

स्वभावाभिनयाश्रयः ॥ ) उत्क्षिप्ता तु भवेत्पार्ष्णिः पादेऽग्रतलसंचरे ॥ ५९ ॥ निक्षिप्तरेचिते भ्रान्ते पादे यस्ताडितो भवेत् ॥ ललितश्चायमे
व स्यात्पादो रेचितसंज्ञितः ॥ ६० ॥ एष प्रदानसंचारे ललितोद्वहितं भवेत् ॥ उक्षिप्ताग्रतलः पादः कथितस्तु तथाञ्चितः ॥ ६१ ॥
नानाभ्रमणकालेषु कार्यः पादोऽयमञ्चितः ॥ पादः कुञ्चितमध्योऽयं भवेत्कुञ्चितसंज्ञितः ॥ ६२ ॥ अतिक्रान्ताभिगमने पादमेतत्प्रयोजयेत् ॥
एकपादप्रचारो यः स चारीत्येव संज्ञितः ॥ ६३ ॥ द्विपादक्रमणं यत्र करणं नाम तद्भवेत् ॥ करणानां समायोगः खण्ड इत्यभिधीयते ॥ ६४ ॥
द्वाभ्यां त्रिभिर्वा यदि वा चतुर्भिर्युक्तं भवेन्मण्डलमेव नाम्ना ॥ इत्यङ्गकर्माभिहितं ब्रवीमि निबोध राजंस्त्वमुपाङ्गकर्म ॥ ६५ ॥
इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे अङ्गवर्णनं नाम चतुर्विंशतितमोऽध्यायः ॥ २४ ॥ ॥ छ ॥ छ ॥
मार्कण्डेय उवाच ॥ क्षान्ता भयानका हास्या करुणा ह्यद्भुता तथा ॥ रौद्रा वीरा च बीभत्सा विज्ञेया रसदृष्टयः ॥ १॥ स्निग्धा हृष्टा च जिह्मा च
क्रुद्धा भीता च लज्जिता ॥ तृप्ताथ विस्मिता सौम्या स्थायिभावेषु दृष्टयः ॥ २ ॥ मलिना केकरा श्रान्ता चाभितप्ताथ विप्लुता ॥
॥ ३ ॥ विषण्णा शङ्किता चैव त्रस्ता शोका निमीलिता ॥ विभ्रान्ता कुञ्चिता शून्या मुकुला च वितर्किता ॥ मदिरा ललिता ग्लाना
इत्येवं दृष्टिसंग्रहः ॥ ४ ॥ षड्त्रिंशद्दृष्टयो ह्येता नामतोऽभिहिता मया ॥ सभ्रूक्षेपकटाक्षा तु कान्ता ज्ञेया समञ्जसी ॥ ५ ॥
उद्वृत्तपुटपक्ष्माग्रा चलत्तारा भयानका ॥ किञ्चिदाकुञ्चितपुटा हास्यविभ्रान्ततारका ॥ ६ ॥ पतितोर्ध्वपुटा सास्रा करुणा नष्टतारका ॥
किञ्चित्कुञ्चितपक्ष्माग्रा किञ्चिदुद्वृत्ततारका ॥ ७ ॥ समा विकसिता चैव साद्भुता दृष्टिरिष्यते ॥ उद्भूता कथिता रौद्रा भ्रुकुटी कुटिला
तथा ॥ ८ ॥ उत्फुल्लमध्या वीरा तु कथिता समतारका ॥ बीभत्सा कथिता दृष्टिरपाङ्गाक्षिप्ततारका ॥९॥ ध्यानादनिमिषा शान्ता ह्यधोमार्गविचा
रिणी ॥ व्याकोशमध्या मधुरा स्निग्धा प्रहसिता मता ॥ १० ॥ उत्फुल्लमध्या प्रचला हृष्टा पर्यन्तवीक्षिणी ॥ जिह्माधोगततारा च गूढा मग्ना
निरीक्षिणी ॥ ११ ॥ भ्रुकुटीकुटिला क्रुद्धा तथा निष्टब्धतारका ॥ आकुंचिता लज्जिता स्यात्तथा निश्चलतारका ॥ १२ ॥
सत्त्वमद्भिरतीवेद्धा दृप्ता विकसिता भवेत् ॥ समा विकसितापाङ्गा विस्मिता सा निगद्यते ॥ १३ ॥ समा सौम्या विनिर्दिष्टा तथा च समता
रका ॥ आकुञ्चितपुटा भीता रूक्षा व्यावृत्ततारका ॥ १४ ॥ पुटौ प्रस्फुरितौ यस्या मलिना सा निगद्यते ॥ आकुञ्चितपुटा या तु दृष्टिराकेकरा
भवेत् ॥ १५ ॥ किञ्चिदुन्नामितपुटा शान्ता सा तु विधीयते ॥ अभितप्ता तथा मन्दा मन्दतारापुटा तु या ॥ १६ ॥ विप्लुताविप्लुता प्रोक्ता

स्रस्ता विस्फुरिता च या ॥ किञ्चिन्निष्टब्धतारा तु विषण्णा दृष्टिरुच्यते ॥ १७ ॥ अनवस्थिततारा च शङ्किता परिकीर्तिता ॥ रूक्षा ललित तारा च प्रताख्या सभया भवेत् ॥ १८ ॥ उत्फुल्ला तु विशोकाख्या तथा च निमिषेक्षणा ॥ अनवस्थितनेत्रा च विभ्रान्ता भ्रान्ततारका ॥ १९ ॥ कुंचिता कुंचिता दृष्टिः किञ्चिदञ्चिततारका ॥ स्थिततारापुटा शून्या संक्षुब्धा समदर्शना ॥ २० ॥ प्रस्पन्दमानपक्ष्माग्रा मुकुला मुकुला भवेत् ॥ उद्वृत्तपुटपक्ष्मा तु वितर्का स्तब्धतारका ॥ २१ ॥ उत्फुल्ला मदिरा नाम तथा वलिततारका ॥ फुल्लितान्ता सलावण्या सस्मिता ललिता मता ॥ २२ ॥ प्रलूनपक्ष्मा सा साग्रा ग्लानाख्या मुकुलीकृता ॥ कान्ता दृष्टिः कटाक्षे तु घातने तु भयानका ॥ २३ ॥ हास्या हास्ये च विज्ञेया करुणा करुणे रसे ॥ स्वद्भुते चाद्भुता कार्या रौद्री रौद्रे विधीयते ॥ २४ ॥ वीरा वीरे च कर्तव्या बीभत्सा च जुगुप्सिते ॥ शान्ता शान्ते तु निर्दिष्टा स्निग्धा स्निग्धावलोकने ॥ २५ ॥ हृष्टा हृष्टे तु कर्तव्या जिह्मा कार्याभ्यसूयिते ॥ क्रुद्धा क्रुद्धे तु निर्दिष्टा भीता भीते तथा भवेत् ॥ २६ ॥ लज्जिता लज्जिताख्या स्याद्दृप्तोत्साहगतेषु च ॥ विस्मिता विस्मये दृष्टिः सौम्या सौम्यावलोकने ॥ २७ ॥ मलिना विरहे कार्या सम्भोगे केकरा भवेत् ॥ श्रान्ता श्रान्तस्य कर्तव्या निर्वेदे त्वभितप्तका ॥ २८ ॥ विप्लुताख्या तु दैन्ये स्याद्विषादे तु विषण्णिका ॥ शंकिते शंकिता चैव त्रस्ते त्रस्ता विधीयते ॥ २९ ॥ ज्ञाने विशोका च तथा स्पर्शे कार्या निमीलिता ॥ विभ्रान्ता विभ्रमे कार्या कुंचिता सूक्ष्मदर्शने ॥ ३० ॥ चिन्तान्वितस्य शून्या स्यान्मुकुला घ्राणकर्मणि ॥ वितर्के तु वितर्कास्यान्मदे तु मदिरा भवेत् ॥ ३१ ॥ स्त्रीणां हेलासु ललिता ग्लाने ग्लाना विधीयते ॥ उत्सेधश्च निमेषश्च प्रसारितविवर्तिते ॥ ३२ ॥ आकुञ्चितं समं चैव स्फुरितं विहतं ततः ॥ ताडितं पुटयोः कर्म नवधा परिकीर्तितम् ॥ ३३ ॥ समागमः पुटानां यः स निमेष इति स्मृतः ॥ विश्लेषश्चैव यस्ताभ्यां स उन्मेषः प्रकीर्तितः ॥ ३४ ॥ प्रसारितौ पुटौ यत्र भवेत्तद्धि विवर्तितम् ॥ आकुञ्चिताभ्यां ताभ्यां तु ज्ञेयमाकुञ्चितं बुधैः ॥ ३५ ॥ स्वभावपुटसंस्थानं समं तद्धि प्रकीर्तितम् ॥ पुटौ प्रस्फुरितौ यत्र स्फुरितं तदिहोच्यते ॥ ३६ ॥ पुटावभिहितौ यत्र पिहितं नाम तद्भवेत् ॥ स्रस्तमूलौ पुटौ यत्र तद्धि ताडितमुच्यते ॥ ३७ ॥ गन्धस्पर्शे तथानिष्टे ज्ञेयमाकुञ्चितं बुधैः ॥ विस्मयार्थे तथा वीरे तच्च कार्यं प्रसाधितम् ॥ ३८ ॥ शृङ्गारे तु समं कार्यमभिघातेऽवताडितम् ॥ स्त्रीणां प्रणयरोषेषु स्फुरितं तदिहेष्यते ॥ ३९ ॥ शीते वातोष्णवर्षेषु विहितं कार्यमेव तु ॥ क्रोधे विवर्तितं कार्यं निमेषोन्मेषयोः समम् ॥ ॥ ४० ॥ वलनं भ्रमणं चैव चलनं संप्रणाशनम् ॥ विवर्तितं पाटनं तु विज्ञेयं विस्मितं तथा ॥ ४१ ॥ उद्वर्तः प्राकृतं चैव तारकाकर्म चेष्यते ॥

मण्डलावर्तनं मध्य पुटयोर्भ्रमणं स्मृतम् ॥ ४२ ॥ वलनं गमनं तिर्यग्वलनाच्चलितं भवेत् ॥ आभ्यन्तरत आकर्षः प्रवेशात्संप्रवेशनम् ॥ ४३ ॥ तथा चापाङ्गसंचारादुद्धर्षितमुदाहृतम् ॥ पातनं स्रस्तभावश्च निष्कामान्निष्क्रमं तथा ॥ ४४ ॥ उद्वर्तनात्परावृत्तिः प्राकृतं तु स्वभावतः ॥ हास्ये तु वलनं कार्यं मदे भ्रमणमेव च ॥ ४५ ॥ वीरे रसे स्याच्चलनं बीभत्से संप्रवेशनम् ॥ विवर्तितं तु शृङ्गारे पातनं करुणे रसे ॥ ४६ ॥ भयानके निष्क्रमणं वीरे चोद्धर्तनं तथा ॥ प्राकृतं शेषभावे तु यथायोगं प्रयोजयेत्॥४७॥समं साचीकृतं च स्यादनुवृत्तमतः परम् ॥ आलोकितं चोल्लोकितमवलोकितमेव च ॥४८॥समतारं च सौम्यं च दृष्टिकर्म समं भवेत् ॥ पक्ष्मान्तर्गततारं च साचीकृतमिहोच्यते ॥४९॥ रूपनिर्वर्तनायुक्तमनुवृत्तमिति स्मृतम् ॥ सहसा दर्शनं यत्स्यात्तदालोकितमिष्यते॥५०॥ऊर्ध्वमुल्लोकितं ज्ञेयं सर्वतो लोकितं तथा ॥ विलोकितं तु पार्श्वाभ्यां पृष्ठतश्चावलोकितम् ॥५१॥ दृष्टीनामनुगं चैव भ्रुवोः कर्म प्रयोजयेत् ॥ यथा नेत्रं प्रसर्पेद्धि नानाभावरसाश्रयम् ॥५२॥ नेत्रस्यानुक्रमेणैव भ्रुवोस्तु चलनं भवेत् ॥ उत्क्षेपः पतनं चैव भ्रुकुटीचतुरं तथा ॥ ५३ ॥ निकुञ्चितं कुञ्चितं च तथा स्वाभाविकं भवेत् ॥ भ्रुवोरुद्गममुत्क्षेपः पातनं पतनं भवेत् ॥ ५४ ॥ द्वयोर्मूलोर्धविक्षेपाद्भ्रुकुटी परिकीर्तिता ॥ चतुरः किञ्चिदुच्छ्वासान्मधुरायतया भ्रुवा ॥ ५५ ॥ एकस्या उभयोर्वापि स्यादुद्भ्रमं त्रिकुञ्चितम् ॥ एकस्या ललितोद्योगाद्रेचितं नाम कीर्तितम् ॥ ५६ ॥ यथास्थिते स्वभावस्थे भ्रुवोः कर्म निबोध मे ॥ समुत्क्षेपस्तु लीलायाः कारुण्यात्पातनं भवेत् ॥ ५७ ॥ क्रोधे च भ्रुकुटी ज्ञेया शृङ्गारचतुरं तथा ॥ क्षामं कृशं तु विज्ञेयं फुल्लं विकसितं भवेत् ॥ ५८ ॥ सम्पूर्णं पूर्णमित्युक्तं कम्पितं परिधूनितम् ॥ शृङ्गभिन्नं कुञ्चितकं सरोमाञ्चं तथाविधम् ॥ ५९ ॥ प्राकृतं तु स्वभावस्थं मन्दं प्रोक्तं मनीषिभिः ॥ क्षामं दुःखे तु कर्तव्यं फुल्लं हर्षे प्रयोजयेत् ॥ ६० ॥ पूर्णं तुष्टे तु कर्तव्यं तथा रोषे च कम्पितम् ॥ हास्ये त्वाकुञ्चितं स्पर्शे सरोमाञ्चं विधीयते ॥ ६१ ॥ प्राकृतं तु स्वभावस्थं त्वर्थयोगेन योजयेत् ॥ नता मन्दा विकृष्टा च सोच्छ्वासा कूणितानता ॥ ६२ ॥ स्वाभाविके च कर्तव्या प्रयोगे नासिका बुधैः ॥ नतानता तु विज्ञेया मन्दा नतपुटा भवेत् ॥ ६३ ॥ विकृष्टा कुञ्चिता चोर्ध्वं सोच्छ्वासा वायुपूरिता ॥ संकूणनात्कूणिता स्यात्स्वभावस्था स्वनासिका ॥ ६४ ॥ नता तु रुचिते कार्या मन्दा शोके विधीयते ॥ तीव्रगन्धे विकृष्टा तु सोच्छ्वासा तु तथा प्रिये ॥ ६५ ॥ विकूणिता जुगुप्सायां शेषा स्वाभाविकी मता ॥ कूणनं खण्डनं छिन्नं शुक्कितं समता तथा ॥ ६६ ॥ जिह्वाधरोष्ठमर्दं च दन्तकर्मणि कारयेत् ॥ कुट्टनं भक्तवच्छेदं खण्डनं तु विघट्टनम् ॥ ६७ ॥ छिन्नं निकृतमेव स्याच्छुक्कितं विद्धमेव च ॥ व्याधौ तु कुट्टनं कार्यमुत्साहे खण्डनं भवेत् ॥ ६८ ॥

छिन्नं क्रोधे परं हास्ये समं शेषेषु कारयेत् ॥ विवर्तनं तथा कम्पो विसर्गोऽथ विगूहनम् ॥ ६९ ॥ संदष्टश्च समुद्गश्च कर्माण्यधरजानि च ॥ सृक्का सुवक्रकरणं विवर्तितमिति स्मृतम् ॥ ७० ॥ वेपनं चापि विज्ञेयमधरस्य तु कम्पने ॥ यो निष्क्रमोऽधरस्याथ स विसर्ग इति स्मृतः ॥ ७१ ॥ अन्तःप्रवेशनं चैव विनिगूहितमुच्यते ॥ दन्तोष्ठपीडनाच्चैव संदष्टकमिति स्मृतम् ॥ ७२ ॥ पिण्डिताभ्युद्गतश्चैव समुद्गक इति स्मृतः ॥ विवार्तितमसूयायां रोषे कम्पितमिष्यते ॥ भयानके विसर्गश्च कर्षणेऽथ निगूहनम् ॥ ७३ ॥ ततोन्मादविकारेषु सन्दष्टं वीररौद्रयोः ॥ समुद्गमनकम्पायां शेषे कार्यं स्वभावजम् ॥ ७४ ॥ उपाङ्गकर्माभिहितं तथैतं मया समासेन नरेन्द्रचन्द्र ॥ कार्यः प्रयत्नोऽत्र सदा बुधेन यस्मादुपाङ्गाश्रयमेव नृत्यम् ॥ ७५ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे उपाङ्गिकवर्णनो नाम पञ्चविंशतितमोऽध्यायः ॥ २५ ॥

॥ मार्कण्डेय उवाच ॥ ॥ पताकस्त्रिपताकश्च तथा वैकर्तरेमुखः ॥ अर्धचन्द्रो ह्यराटलश्च गुरुतुण्डस्तथापरः [1] ॥ १ ॥ मुष्टिश्च शिखिराख्यश्च कपित्थः खटकामुखः ॥ सूच्यर्धः पद्मकोशश्च मृगशीर्षो मृगस्य च ॥ २ ॥ लाङ्गूलः कालपद्मश्च चतुरो भ्रमरस्तथा ॥ हसास्यो हंसपक्षश्च संदंशो मुकुलस्तथा ॥ ३ ॥ असंयुताः करा ह्येते द्वाविंशतिरुदाहृताः ॥ अथ संयुक्तो हस्तान्गदतस्तान्निबोध मे ॥ ४ ॥ अंजलिश्च कपोतश्च कर्कटः स्वस्तिकस्तथा ॥ खटको वर्धमानश्च उत्सङ्गो निषिधस्तथा ॥ ५ ॥ दोलः पुष्पपुटश्चैव तथा मकर एव च ॥ गजदन्तोऽवहित्थश्च वर्धमानस्तथैव च ॥ ६ ॥ एते वै संयुता हस्ता मया प्रोक्तास्त्रयोदश ॥ नृत्तहस्तांर्युपश्चैव भूयो नाम्नि निबोधत ॥ ७ ॥ चतुरस्रस्तथा वृत्तस्तथा लघुमुखौ स्मृतौ ॥ तथा चैव तु विज्ञेयौ ह्यरालखटकामुखौ ॥ ८ ॥ आविद्धवक्रसंज्ञ्यास्वौ रेचितावर्द्धरेचितौ ॥ अवहित्थः पल्लवितो नितम्बः केशवर्धनौ ॥ ९ ॥ लताख्यौ करिहस्तौ च पक्षोद्योताऽर्थवर्धितौ ॥ ज्ञेयौ गरुडपक्षौ च दण्डपक्षौ तथैव च ॥ १० ॥ ऊर्ध्वमण्डलजौ चैव पार्श्वमंडलाजावपि ॥ पाश्वार्धमण्डलौ चैव उरोमण्डलकौ तथा ॥ ११ ॥ इष्टस्वस्तिककावन्यौ तथा वै पद्मकोशिकौ ॥ अह्लिपल्लवसंज्ञौ च तथा चोल्वनसंज्ञितौ ॥ १२ ॥ ललितौ वलितौ चैव ज्ञेया नृत्यकराः सदा ॥ अतः परं प्रवक्ष्यामि कराणां कर्मलक्षणम् ॥ १३ ॥ प्रसारिताग्रा सहिता यस्याङ्गुल्यो भवन्ति हि ॥ कुञ्चितश्च तथाङ्गुष्ठः स पताक इति स्मृतः ॥ १४ ॥ एष प्रहारग्रहणे रोधने स्यात्प्रतापने ॥ चलिताङ्गुलिरप्येष वायुवृष्टिनिरूपणे ॥ १५ ॥ ऊर्ध्वगश्च तथोत्साहे छत्रादिष्वप्यधोमुखः ॥ पुष्करप्रहितस्ताले समः प्रचलिताङ्गुलिः ॥ १६ ॥

१ कपुस्तके यत्रयत्र 'अविहितः' स्तत्रतत्र ख० पुस्तके 'अवहित्थ' इति वर्तते ।

पक्ष्मोत्क्षेपे रेचितक उत्क्षिप्तश्चैव धारणे ॥ अस्यैकानामिका वक्रा त्रिपताका तथा भवेत् ॥ १७ ॥ आवाहने प्रयुञ्जीत मुकुटाभिनयेऽप्युत ॥ अचलाङ्गुलिरप्येष लघुपक्षिनिरूपणे ॥ १८ ॥ तयानासिकया कार्यं तथैवाश्रुप्रमार्जनम् ॥ मङ्गलस्पर्शनं कार्यं शिरसश्च निवेशनम् ॥ १९ ॥ श्रोत्रसंवरणं चैव कार्यं भूमिमुखेन तु ॥ भुजङ्गानामभिनयं भ्रमराणां तथैव च ॥ २० ॥ त्रिपताका यदा हस्ते भवेत्पृष्ठावलोकिनी ॥ तर्जनी तु तदा ज्ञेयः कर्तरीमुखसंज्ञकः ॥ २१ ॥ कार्योऽयं परिवारेषु भिन्नश्च पतनेषु च ॥ अनामिका तु साङ्गुष्ठा अर्धचन्द्रे करे भवेत् ॥ २२ ॥ बालचन्द्राभिनयने बालस्यात्तरवस्तथा ॥ मेखलां जघनं चैव कुर्याच्चानेन कुण्डलम् ॥ २३ ॥ खण्डप्रदेशिनी कार्या अङ्गुल्यः कुंचितास्तथा ॥ शेषा भिन्नोर्ध्ववलिता अरालेङ्गुलयः करे ॥ २४ ॥ गाम्भीर्यसत्त्वशौंडीर्यकेशसंग्रहणादिषु ॥ स्वेदस्य चापनयने शेषे चैष करो भवेत् ॥ २५ ॥ अरालः शुकतुण्डश्च वक्रितानामिकाङ्गुलिः ॥ नाहन्त्वमित्यथैतेन नित्यं चाभिनयेद् बुधः ॥ २६ ॥ अङ्गुल्यो यस्य हस्तस्य तलमध्येऽग्रसंस्थिताः ॥ तासामुपरिताङ्गुष्ठः स मुष्टिरिति संज्ञितः ॥ २७ ॥ एष प्रहारे व्यायामे निर्दयस्तनपीडने ॥ सन्धारणेऽसियष्ट्योश्च ग्रहणे कुन्तदण्डयोः ॥ २८ ॥ ऊर्ध्वाङ्गुष्ठोऽयमेव स्यात्करः शिखरसंज्ञितः ॥ एष रश्मिग्रहे कार्यश्चापाङ्कुशधनुर्ग्रहे ॥२९॥ मुष्टिमध्यगताङ्गुष्ठः कपित्थ इति कीर्तितः ॥ अनेनाभिनयः कार्यो मध्ये चक्रे शरे तथा ॥ ३० ॥ उत्क्षिप्तवक्रा तु यदानामिका सकनीयसी ॥ अस्यैव तु कपित्थस्य ततः स्यात्खटकामुखः ॥३१॥ होत्रे छत्रग्रहे चैव कर्षणे व्यजने तथा ॥ स्रग्दामधारणे कार्योंह्यसङ्कोचोस्यसंग्रहः ॥३२॥ प्रसृता तर्जनी चात्र यदा सूचीमुखस्तदा ॥ निष्पादने चाभिनयेन्नेत्रशक्रमहेशयोः ॥ ३३ ॥ अस्याङ्गुल्यस्तु विपुलाः सहाङ्गुष्ठेन कुञ्चिताः ॥ ऊर्ध्वाहंसनखस्यैव स भवेत्पद्मकोशकः ॥ ३४ ॥ शिलष्टोङ्गुष्ठो निम्नमध्यः [1]पताकोहिशिरो भवेत् ॥ सलिलस्य प्रदाने तु कार्या तेन च सूचनम् ॥ ३५ ॥ अधोमुखीनां सर्वासामङ्गुलीनां यदा भवेत् ॥ कनिष्ठाङ्गुष्ठका चोर्ध्वा तदा स्यान्मृगशीर्षकः ॥ ३६ ॥ सूचिते च्छेदिते कार्यं शक्या स्वोच्चालने तथा ॥ त्रेताग्निसंस्थिता मध्या तर्जन्यङ्गुष्ठयोर्यदा ॥ ३७ ॥ काङ्गुले नामिका वक्रा तथा चोर्ध्वा कनीयसी ॥ अनेन खलु कर्तव्यं फलानां तु निरूपणम् ॥ ३८ ॥ आवर्त्यन्ते करतले यस्याङ्गुल्यः करस्य वै ॥ पार्श्वागतविकीर्णाश्च कोलपद्म इति स्मृतः ॥ ३९ ॥ प्रतिषेध कृते योज्यो नास्ति शून्येषु चाप्यथ ॥ तिस्रः प्रसारिताङ्गुल्यस्तथा चोर्ध्वा कनीयसी ॥ ४० ॥ तस्या मध्याश्रितोङ्गुष्ठः करः स चतुरः स्मृतः ॥

१ 'कले पद्म' इति ख० ।

वचसां विनियोगे च माध्ये चैव प्रयोजयेत्॥४१॥अनेनैव तथा कार्यं वर्णानां तु निरूपणम् ॥ ऊर्ध्वस्थे च नवे च श्वेतं रक्ते स्यादर्धमण्डलम् ॥४२॥
मण्डलं न भवेत्पीतं नीलं च मृदितं भवेत् ॥ स्वभावस्थेन कृत्स्नं च शेषा वर्णास्तथैव च ॥ ४३ ॥ मध्यमाङ्गुष्ठसन्देशो वक्रा चैव प्रदेशिनी ॥
ऊर्ध्वमन्याः प्रकीर्णाश्च भ्रमरश्च तदा भवेत् ॥ ४४ ॥ पद्मादिग्रहणे कार्यं कर्णपूरे तथाप्ययम् ॥ तर्जनीमध्यमाङ्गुष्ठा त्रेताग्निस्था निरन्तरम् ॥
॥ ४५ ॥ भवेयुर्हंसवक्रस्य शेषा ह्यन्याः प्रसारिताः ॥ श्लक्ष्णलाघवनिःसारमार्दवेषु प्रयोजयेत् ॥ ४६ ॥ तिर्यक् पिण्डीकृता यस्मिनुन्नता च
कनिष्ठिका ॥ अङ्गुष्ठः कुञ्चितस्त्वेवं हंसपक्ष इति स्मृतः ॥ ४७ ॥ गण्डसंश्रयमेतेन भोजनः सपरिग्रहः ॥ स्पर्शे चैवानुलापार्थे कार्ये संवाहने
तथा ॥ ४८ ॥ तर्जन्यङ्गुष्ठसंदंशस्त्वरालस्य यदा भवेत् ॥ निर्भुग्नतलमध्यश्च ससन्दंश इति स्मृतः ॥ ४९ ॥ संदंशस्त्रिविधो ज्ञेयस्त्वग्रहो मुखज
स्तथा ॥ तथा पार्श्वकृतश्चैव तस्य कर्माणि मे शृणु ॥ ५० ॥ सन्दंशग्रहणे कार्यः शल्योद्धारे तथाग्रजः ॥ आलेखारञ्जने चैव तर्जनीपीडने तथा
॥ ५१ ॥ यज्ञोपवीती पार्श्वस्थः शिरःसंदर्शने तथा ॥ समागताग्राङ्गुलिको मुकुलः पद्मकोशकः ॥ ५२ ॥ देवार्चाकरणे कार्यो बलौ
पद्मनिरूपणे ॥ असंयुताः करा ह्येते यथावत्कीर्तिता मया ॥ ५३ ॥ पताकाभ्यां तु हस्ताभ्यां संस्फुटोऽञ्जलिरुच्यते ॥ देवतानां गुरूणां
च पितृणां चेष्यते पुनः ॥ ५४ ॥ अन्योन्यपार्श्वसक्ताभ्यां कराभ्यां स्यात्कपोतकः ॥ शीते भये च कार्योऽयं विनि
योगगमे तथा ॥ ५५ ॥ अङ्गुल्यो यस्य हस्तस्य अङ्गुल्यन्तरनिःसृताः ॥ स कर्कट इति ज्ञेयः कर्तव्यस्तु विजृम्भिते ॥ ५६ ॥ मणिबन्धन
विन्यस्तावरालौ वर्धमानकः ॥ उत्तानौ नतपार्श्वस्थौ स्वस्तिकः परिकीर्तितः ॥ ५७ ॥ विस्तीर्णं सर्वमेतेन ऋतवो गगनं घनम् ॥ समुद्र
श्चाभिनेयः स्याद्भूमिश्च मनुजेश्वर ॥ ५८ ॥ खटकः खटके न्यस्य खटका वर्धमानकः ॥ शृङ्गारार्थे प्रयोक्तव्यः प्रणामकरणेषु च ॥ ५९ ॥
अरालौ तु विपर्यस्तावुत्तानौ वर्धमानकौ ॥ उत्सङ्ग इति विज्ञेयः स्पर्शस्य ग्रहणे परः ॥ ६० ॥ मुकुलं तु यदा हस्तं कपित्थं परिवेष्टयेत् ॥
स विज्ञेयस्तदा हस्तो निषधो नाम नामतः ॥ ६१॥ संक्षिप्ते चैव निक्षिप्ते तथा कार्यः प्रपीडिते ॥ पताकौ लम्बितौ हस्तौ दोलेति परिकीर्तितौ ॥
॥ ६२ ॥ ध्यानादिदाने कर्तव्यो भक्ष्यादिकरणेषु च ॥ द्वितीयपार्श्वसंश्लिष्टः पूर्वः पुष्पपुटः स्मृतः ॥ ६३ ॥ पूर्वाणि चाभिनेयानि करणानेव
पार्थिव ॥ पताकौ तु यदा हस्तौ मृतहस्तावधोमुखौ ॥ ६४ ॥ उपर्युपरि विन्यस्तौ तदा समकरः करः ॥ सिंहव्याघ्रमृगाद्यानां कर्तव्योऽभिनयो
भवेत् ॥६५॥ अञ्चितौ कूर्परासा तु यदा स्यात्सर्पशीर्षके ॥ गजदन्तस्तथा नाम्ना कार्यः शैलनिबर्हणे ॥६६॥ शुकतुण्डौ करौ कृत्वा वक्षस्यभि

मुखाञ्चितौ ॥ शनैरधोमुखौ विद्धाववहित्थ इति स्मृतः॥६७॥दौर्बल्यश्च सिते कार्यो गात्राणां च निदर्शने॥ ज्ञेयो वै वर्धमानस्तु हंसपक्षौ पराङ्मुखौ ॥ ६८ ॥ जालवातायनादीनां प्रयोगस्तेन चेष्यते ॥ संयुतानां कराणां तु लक्षणं कथितं मया ॥ ६९ ॥ एवं ज्ञेयाः कराः सर्वे नानारससमुद्भवाः ॥ अत ऊर्ध्वं प्रवक्ष्यामि नृत्तहस्तमपाश्रयम् ॥ ७० ॥ वक्षसोऽष्टांगुलस्थौ तु प्राङ्मुखौ खटकामुखौ ॥ समानकूर्परासौ तु चतुरस्रौ प्रकीर्तितौ॥७१॥ हंसपक्षौ स्मृतौ हस्तौ व्यावृत्तौ तालवृन्तवत् ॥ उद्वृत्ताविति विज्ञेयावथ वा तालवृन्तकौ ॥ ७२ ॥ चतुरस्रीकृतौ हस्तौ हंसपक्षीकृतौ तथा ॥ तिर्यङ्मुखावूर्ध्वतलौ ज्ञेयौ लघुमुखाविति ॥ ७३ ॥ तावेव मणिधन्वांतावरालकचितौ करौ ॥ ज्ञेयावभिनये त्वेतौ ह्यरालखटकामुखौ ॥ ७४ ॥ भुजौ सकूर्पराग्रौ तु कुटिलावर्तितौ करौ ॥ अधोमुखतलाविद्धावाविद्धाविति कीर्तितौ ॥ ७५ ॥ सर्पशीर्षौ यदा हस्तौ भवतां स्वस्तिक स्थितौ ॥ तिर्यक्प्रसारितास्यौ च ज्ञेयौ सूचीमुखाविति ॥ ७६ ॥ रेचितौ चापि विज्ञेयौ हंसपक्षाद्भुतभ्रमौ ॥ प्रसारितोत्तानतलौ रचितावेव सं ज्ञितौ ॥ ७७ ॥ चतुरस्रो भवेद्वामः सव्यहस्तश्च रेचितः ॥ विज्ञेयो नाट्यतत्त्वज्ञैरेवं रेचितसंज्ञितः ॥ ७८ ॥ अञ्चितौ कूर्पराभ्यां तु त्रि पताकौ यदा करौ ॥ किंचित्तिर्यग्गतावेतावावहित्थः प्रकीर्तितः ॥ ७९ ॥ मणिबन्धननिर्मुक्तौ शिथिलौ पल्लवौ स्मृतौ ॥ बाहू शीर्षविनिष्क्रान्तौ नितम्बौ परिकीर्तितौ ॥ ८० ॥ अंसदेशे प्रवृत्तौ तु परिपार्श्वोत्थितौ तथा ॥ विज्ञेयौ केशबंधाख्यौ करावाचार्यसम्मतौ ॥ ८१ ॥ तिर्यक्प्रसा रितावेव पार्श्वसंस्थौ तथैव च ॥ लताख्यौ तु करौ ज्ञेयौ नृत्ताभिनयनं प्रति ॥ ८२ ॥ समुन्नता लताहस्तः पार्श्वात्पार्श्वविलोडितः ॥ द्वितीयः खटकाख्यश्च करिहस्तः प्रकीर्तितः ॥ ८३ ॥ कटिशीर्षनिविष्टाग्रौ त्रिपताकौ यदा करौ ॥ पक्षावञ्चितकौ वामे तदा ज्ञेयौ प्रयोक्तृभिः ॥ ८४ ॥ तावेव तु परावृत्तौ पक्षाघातौ कराविति ॥ अधोमुखतलाविद्धौ ज्ञेयौ गरुडपक्षकौ ॥ ८५ ॥ तथा प्रसारितभुजौ दण्डपक्षाविति स्मृतौ ॥ तौ चोर्ध्वमण्डलौ ज्ञेयौ गुरुदेशविवर्तनात् ॥ ८६ ॥ तावेव पार्श्वविन्यस्तौ विज्ञेयौ पार्श्वमण्डलौ ॥ वेष्टितावेष्टितौ हस्तौ तयोर्मण्डलकौ स्मृतौ ॥ ८७ ॥ तावेव मणिबन्धान्तौ स्वस्तिकाकृतिसंज्ञितौ ॥ स्वस्तिकाविति विख्यातौ विख्यातौ च प्रकी र्णकौ ॥ ८८ ॥ द्वावेव पद्मकोशाभौ पद्मकोशाविति स्मृतौ ॥ करौबुद्धे जिताग्रौ तु विज्ञेयावलिपल्लवौ ॥ ८९ ॥ ऊर्ध्वप्रसारितौ विद्धौ विज्ञेयावुल्व णाविति ॥ पल्लवौ तु शिरोदेशे सम्प्राप्तौ ललिताविति ॥ ९० ॥ कूर्परस्वस्तिकन्यस्तौ ललितावलितौ स्मृतौ ॥ संयुता वियुताश्चैव नृत्तहस्ताः

१ 'बुद्धेजिताग्रौ' इति क० 'उद्धजिनाग्रौ' इति ख० ।

प्रकीर्तिताः ॥ ९१ ॥ नानार्थरससंयुक्तं प्रयोगं कालसंश्रयम् ॥ विज्ञेयं नृत्तहस्तानां तेन नाभिहितं मया ॥ ९२॥ आधिग्रस्ते जरान्ते च नियमस्थे जरार्दिते ॥ मत्ते प्रमत्ते चिन्तायां नाभिनेयः करो भवेत् ॥ ९३ ॥ उद्वेष्टं समवेष्टं च विचेष्टितविवर्तिते ॥ कर्मेदं नृत्तहस्तानां विज्ञेयं च चतुर्विधम् ॥ ९४ ॥ कार्या ललितसंचारा नृत्तहस्तापरा बुधैः॥ लालित्यमेव विज्ञेयं नृत्तस्य प्रतिबोधनम् ॥९५॥ देशं कालं प्रयोगं च ह्यर्थयुक्तिमवेक्ष्य च ॥ हस्ता एते प्रयोक्तव्या स्त्रीणां नृणां च नर्तके ॥ ९६ ॥ हस्ता मयैते कथिता नृवीर सर्वं करायत्तमिदं हि नृत्तम् ॥ यत्नश्च कार्यस्तु करेषु तस्माच्चातुर्यलास्याभिनयोपपन्नम् ॥९७॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे नृत्तहस्तव्यवस्थावर्णनो नाम षड्विंशतितमोऽध्यायः ॥ २६ ॥ मार्कण्डेय उवाच ॥ वाचिकश्च तथा हार्यस्त्वाङ्गिकस्सात्त्विकस्तथा ॥ चतुष्प्रकारोऽभिनयः कीर्तितो नाटचकोविदैः ॥ ॥ १ ॥ वाचिको वचसा प्रोक्तः शृणु हार्यं नराधिप ॥ चतुर्विधं तु विज्ञेयं प्रस्तोलङ्कार एव च ॥ २ ॥ तथाङ्गरचना चैव ज्ञेया सञ्जीवमेव च ॥ मृदा वा दारुणा वापि वस्त्रेणाप्यथ चर्मणा ॥ ३ ॥ लोहैरनुकृतिर्वापि प्रस्त इत्यभिधीयते ॥ देवदानवयक्षाणां गजाश्वमृगपक्षिणाम् ॥ ४ ॥ कार्याणि प्रतिशीर्षाणि नाटचज्ञैः प्रस्तकर्मणा ॥ अलङ्कारस्तु विज्ञेयो माल्याभरणवाससाम् ॥ ५ ॥ नानाविधः समायोगे ह्यङ्गोपाङ्गविनिर्गतः ॥ तच्च कार्यो नयो बुद्धा नियोगं जातिमेव च ॥ ६ ॥ आधिपत्यं तथा स्थानं देशे च नृपसत्तम ॥ अतोङ्गरचनां तुभ्यं वक्ष्यामि नृप वर्णजाम् ॥ ७ ॥ श्वेतो रक्तस्तथा पीतः कृष्णो हरितमेव च ॥ मूलवर्णाः समाख्याताः पञ्च पार्थिवसत्तम॥ ८ ॥ एकद्वित्रिसमायोगाद्भावकल्पनया तथा ॥ सङ्ख्यैवांतरवर्णानां लोके कर्तुं न शक्यते ॥ ९ ॥ अत्यर्थसमयोगित्वाल्लोकेऽहं नृपपुंगव ॥ विभागं सम्प्रवक्ष्यामि वर्णयोः श्यामगौरयोः ॥ १० ॥ द्विप्रकारा छविर्यस्मात्सर्वस्येह प्रकीर्तिता ॥ गौरी पञ्चविधा तत्र श्यामा द्वादशधा भवेत् ॥ ॥ ११ ॥ रुक्मगौरी दन्तगौरी स्फुटचन्दनगौर्यपि ॥ शरद्घनचन्द्रकवद्गौरी पञ्चविधा स्मृता ॥१२॥ रक्तश्याम्या भवेत्पूर्वं सुद्गश्यामा निरन्तरा॥ ततो दूर्वांकुरश्यामा पाण्डुश्यामा च पार्थिव ॥१३ ॥ ततश्च हरितश्यामा पीतश्यामा ततो भवेत् ॥ ततः प्रियङ्गुकश्यामा कपिश्यामा च पार्थिव ॥ ॥१४॥ततो नीलोत्पलश्यामा चाषश्यामा ततः परम्॥ततो रक्तोत्पलश्यामा घनश्यामा तथा परा॥१५॥ द्रव्यानुरूपवर्णैस्तु तासां व्यक्तिरुदाहृता ॥ रङ्गव्यतिकरैः शोभामधिकृत्य महीयते ॥१६॥ वक्ष्यामि वर्णान्देवानां मत्वापतु विनिश्चयम् ॥ तत्र येषां न वक्ष्यामि ते कार्या गौरवर्णकाः ॥१७॥ श्यामस्तु वासुकिः कार्यो नागा गौरास्तु द्वापरे॥ दैत्याश्च दानवाश्चैव राक्षसा गुह्यकानुगाः ॥१८ ॥ पिशाचा जलसङ्काशा सम्मितानि तु वर्णतः॥

षट्सु द्वीपेषु पुरुषाः कर्तव्याः कनकप्रभाः ॥ ॥ १९ ॥ जम्बूद्वीपस्य वर्षेषु मुक्त्वैकं भारतं नृप ॥ भारतेषु तथा कार्या नानादेशभवास्तथा ॥ ॥ २० ॥ पुलिन्दा दाक्षिणात्याश्च प्रायशो वर्णतोऽसिताः ॥ शकाश्च यवनाश्चैव पह्लवा बाह्लिकाश्च ये ॥ २१ ॥ प्रायेण गौराः कर्तव्याः उत्तरापथसम्भवाः ॥ पाञ्चालाः शूरसेनाश्च तथा ये चात्र मागधाः ॥ २२ ॥ अङ्गा वङ्गाः कलिङ्गाश्च प्रायशो वर्णतोऽसिताः ॥ चन्द्रवर्णा द्विजाः कार्या राजन्याः पद्मसन्निभाः ॥ २३ ॥ आपाण्डुरास्तथा वैश्याः श्यामा शूद्राश्च वर्णतः ॥ नानावर्णाः स्मृता भूता गन्धर्वाप्सरसस्तथा ॥ २४ ॥ राजानः पद्मवर्णाभा ये चापि सुखिनो जनाः ॥ कुकर्माणो ग्रहग्रस्ता व्याधितास्तप आश्रिताः ॥ २५ ॥ आयस्तकर्मणश्चैव असिताः कुलजालयः ॥ वर्णः प्रत्यक्षदृष्टस्य कर्तव्यः सदृशस्तथा ॥ २६ ॥ देवगन्धर्वसिद्धानां कुमाराणां च पार्थिव ॥ श्मश्रु तेषां न कर्तव्यं ये च दीक्षां समाश्रिताः ॥ २७ ॥ दिव्या ये पुरुषाश्चैव तथा विद्याधराश्च ये ॥ शृङ्गारिणो नरेन्द्राश्च चित्रश्मश्रुधरास्तथा ॥ २८ ॥ शुद्धं तु लिङ्गिनां कार्यं तथामात्यपुरोधसाम् ॥ मध्यस्था ये च पुरुषा ये च दीक्षां समाश्रिताः ॥ २९ ॥ अनिर्णीतप्रतिज्ञानां दुःखितानां तपस्विनाम् ॥ मुनीनां चिरबद्धानां दीर्घं श्मश्रु प्रकीर्तितम् ॥ ३० ॥ धर्मप्रवृत्तेर्नशश्च भवेच्छूद्रो नराधिप ॥ वणिजां कंचुकीयानां ब्राह्मणानां तथैव च ॥ ३१ ॥ राज्ञां विचित्रो वेशः स्याद्वेश्यास्त्रीणां च यादव ॥ यथालिङ्गं भवेद्वेशस्तथान्येषां तु लोकतः ॥ ३२ ॥ त्रिविधा मुकुटा ज्ञेया देवपार्थिवसंश्रयाः ॥ देवानां पार्थिवानां च कर्तव्यास्तु किरीटकाः ॥ ३३ ॥ देवानां सप्तशिखराः पञ्चभिर्भूभृतां तथा ॥ त्रिभिश्च शिखरैः कार्या महिषीयुवराजयोः ॥ ३४ ॥ सेनाध्यक्षस्य कर्तव्यस्तथैकशिखरो नृप ॥ दैत्यदानवयक्षाणां पन्नगानां सरक्षसाम् ॥ ३५ ॥ एकपट्टास्तु विस्तीर्णा कर्तव्या मुकुटाः शुभाः ॥ विद्याधराणां सिद्धानां वानराणां तथैव च ॥३६॥ ग्रन्थिमन्तस्तु कर्तव्या मुकुटास्तु प्रयोक्तृभिः ॥ देवदानवगन्धर्वाः कृष्णपक्षाः प्रकीर्तिताः ॥ ३७ ॥ दैत्यदानवयक्षाश्च पिशाचनागराक्षसाः ॥ हरिश्मश्रुकचाः कार्यास्तथा पिङ्गेक्षणा नृप ॥ ३८ ॥ कञ्चुकीयाश्च कर्तव्यास्तथा शुक्लशिरोरुहाः ॥ अमात्यकञ्चुकीयानां तथा श्रेष्ठपुरोधसाम्॥३९॥वेष्टनापट्टबद्धानि प्रतिशीर्षाणि कारयेत्॥पिशाचोन्मत्तभूतानां तापसानां तथैव च॥४०॥अनिस्तीर्णप्रतिज्ञानां लम्बकेशं भवेच्छिरः॥ बालानामपि कर्त्तव्यं शिखिण्डकविभूषणम् ॥४१॥ जटाजूटयुतं कार्यं मुनीनामपि पार्थिव ॥ चेटानामपि कर्त्तव्यं त्रिशिरः खण्डमेव च॥४२॥विदूषकस्य खलतिः स्यात्काकपदमेव च॥शेषाणामुक्तयोगेन शेषजा

१ 'पिशाचो मतु' –इति क० । पिशाचोर्म्मतु–इति ख० । २ 'खण्ड'– इति ख० ।

तिसमाश्रयम्॥४३॥सज्जीव इति यत्प्रोक्तं तस्य वक्ष्यामि लक्षणम्॥प्रवेशस्तु तिरश्चां वै सज्जीव इति संज्ञितः॥४४॥तेषां प्रस्तेन कर्तव्या प्रकृतिः पुरुषांतरा॥तथैवायुधहस्तानां कर्तव्या हेतयः शुभाः ॥४५॥ एवं लोकोपचारेण स्वबुद्ध्या विभवेन च ॥ नाट्योपकरणानीह यथावत्परिकल्पयेत् ॥ ४६ ॥ हेतिप्रमोक्षो न तु रङ्गमध्ये कार्यो भवेत्पार्थिववंशमुख्य ॥ आहार्यमेतत्कथितं समासाद्वक्ष्याम्यतश्चाङ्गिकमेव तुभ्यम् ॥ ४७ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कंडेयवज्रसंवादे आहार्याभिनयो नाम सप्तविंशोऽध्यायः ॥ २७ ॥ मार्कण्डेय उवाच ॥ अतः परं प्रवक्ष्यामि सामान्याभिनयं तव ॥ तस्मिन्कार्यः प्रयत्नस्तु नाट्यान्तरप्रतिष्ठितम् ॥ १ ॥ शब्दं स्पर्शश्च रूपं च रसो गन्धस्तथैव च ॥ इन्द्रिया णींद्रियार्थांस्तु भावेनाभिनयेद् बुधः ॥ २ ॥ कृत्वा साचीकृतां दृष्टिं शिरः किंचिन्नतं भवेत् ॥ तर्जनीकर्णदेशे तु शब्दन्त्वभिनयेद्बुधः ॥ ३ ॥ किञ्चिदाकुञ्चिते नेत्रे कृत्वोत्फुल्लां त्वनासिकाम् ॥ एकश्वासो भवेच्चापि गन्धमेवं विनिर्दिशेत् ॥४॥ इन्द्रियार्थास्तु पञ्चैते त्रिविधाः परिकीर्त्तिताः ॥ इष्टास्तथा ह्यनिष्टाश्च मध्यस्था नृपसत्तम ॥ ५ ॥ गात्रप्रह्लादनेनेह तथा पुलकितेन च ॥ नितान्तासक्तक्रियाभिश्च सर्वमिष्टं निरूपयेत् ॥ ६ ॥ परावृत्तेन शिरसा तथा चानेन चक्षुषाः ॥ नेत्रनासाञ्चितत्वेन ह्यनिष्टमिति निर्दिशेत् ॥ ७ ॥ मध्यस्थेनैव भावेन मध्यस्थकरणं भवेत् ॥ आत्मानुभावी योऽर्थः स्यादात्मस्थ इति संज्ञितः ॥ ८ ॥ परार्थवर्णनं यच्च परस्थेति च कीर्तितम् ॥ उत्तानौ तु करौ कृत्वा स्वस्तिकौ पार्श्वसंस्थितौ ॥ ९ ॥ उद्वाहितेन शिरसा तथा चोर्ध्वनिरीक्षणम् ॥ प्रभातं गगनं रात्रिः प्रदोषं दिवसं तथा ॥ १० ॥ ऋतून्घनान्धरां चैव विस्तीर्णांश्च जलाशयान् ॥ दिशोग्रहान्सुनक्षत्राद्यच्चान्यत्स्वगतं नृप ॥ ११ ॥ तस्य त्वभिनयः कार्यो नानादृष्टिसमन्वितः ॥ एभिरेव करैर्भूयः स्तनैश्च शिरसा तथा ॥ १२ ॥ अधोनिरीक्षितेनाथ भूमिष्ठान्सम्प्रयोजयेत् ॥ चन्द्रं ज्योत्स्नां सुखं वायुं स्पर्शेनाभिनयेद्बुधः ॥ १३ ॥ वस्त्रावगुंण्ठनात्सूर्यं[1] रजोधूमानलांस्तथा ॥ भूमितापमथोष्णं च कुर्याच्छासाभिलापतः ॥ १४ ॥ ऊर्ध्वकेकरदृष्ट्या तु मध्या ह्नस्थं दिवाकरम् ॥ उदयास्तगतं चैव विस्मयार्थे प्रदर्शयेत् ॥ १५ ॥ चन्द्रं विस्मितया दृष्ट्या तथा ताराश्च दर्शयेत् ॥ सुख स्पृश्यानि सर्वाणि रोमांचं न तु दर्शयेत् ॥ १६ ॥ दुःखानि च तथोद्वेगं मुखस्य तु विकूणनैः ॥ गम्भीरोदात्त संयुक्तानर्थान्सौष्ठवसंयुतान्॥१७॥ यज्ञोपवीतदेशस्थमबालं हस्तमादिशेत् ॥ हारावहारयागेषु स्रग्दामस्य च दर्शने ॥ १८ ॥ भ्रमरेण प्रदेशिन्या दृष्टेः परिगमेन च ॥ अलंपञ्चाक

१ 'ण्ठनात्पूर्वं' इति क० ।

पीडायाः सर्वार्थग्रहणं भवेत् ॥ १९ ॥ श्रव्यं श्रवणयोगेन दृश्यं दृष्टिविलोकनैः ॥ आत्मसंस्थं परस्थं वा मध्यस्थं वा विनिर्दिशेत् ॥ २० ॥
विद्युदुल्काघनरवो विस्फुलिङ्गविषस्तथा ॥ प्रतोदोऽक्षिनिमेषश्च तेभिनेयाः प्रयोक्तृभिः ॥ २१ ॥ मुखावगुण्ठनं कार्यं भ्रमरादिनिवारणे ॥
कृत्वा स्वस्तिकसंस्थानौ पद्मकोशावधोमुखौ ॥ २२ ॥ सिंहर्क्षवानरादीनां कर्तव्यं तु निरूपणम् ॥ स्वस्तिकौ त्रिपताकौ तु गुरूणां पादव
न्दने ॥ २३ ॥ खटकास्वस्तिकौ चापि प्रतोदग्रहणे भवेत् ॥ एकाद्यानां दशान्तानां संख्या त्वंगुलिभिर्भवेत् ॥ २४ ॥ दशाख्या च शताख्या
च स्थानसंख्या ततः परम् ॥ पताकाभ्यां तु हस्ताभ्यां वाचा चाभिनयो भवेत् ॥ २५ ॥ छत्रध्वजपताकाश्च विज्ञेया दण्डधारणात् ॥ नाना
प्रहरणं चैव विज्ञेयमिह वारणैः ॥ २६ ॥ एकचित्तो ह्यधोदृष्टिः शिरः किञ्चिन्नतं भवेत् ॥ सव्यहस्तश्च संदंशस्मिते व्याने वितङ्क्ति ॥ २७ ॥
उद्वाहितं शिरः कृत्वा हंसपक्षं प्रदक्षिणम् ॥ अपत्यरूपणे कार्यमुश्वायं च प्रयोक्तृभिः ॥ २८ ॥ अरालं च शिरः स्थाने समुद्वाह्या च वामतः ॥
गते निवृत्ते ध्वस्ते च श्रान्तं वाक्यं नियोजयेत् ॥ २९ ॥ जितेन्द्रियतया युक्तं प्रसन्नवदनं तथा ॥ विचित्रकुसुमालोकां शरदं तु निरूपयेत् ॥
॥ ३० ॥ गात्रस्य कम्पनात्तज्ज्ञैस्तथा चान्याभिलाषितः ॥ हेमन्तस्त्वभिधेयः स्यात्पुरुषैर्मध्यमाधमैः ॥३१॥ शिरोदन्तौष्ठकम्पेन गात्रसंकोचकेन
च ॥ कूजितैश्च ससीत्कारैः शीतस्याभिनयो भवेत् ॥ ३२ ॥ प्रसादजननारम्भैरुपभोगैः ससम्भ्रमैः ॥ वसन्तस्त्वभिनेतव्यो नानापुष्पप्रदर्शनात् ॥
॥ ३३ ॥ स्वेदापमार्जनाच्चापि भूमिपातोपजीविनः ॥ उष्णस्य वायोः स्पर्शश्च ग्रीष्मस्याभिनयो भवेत् ॥ ३४ ॥ गम्भीरनादश्रवणात्प्रावृष्यभि
नयो भवेत् ॥ वचसाभिनयः कार्यो ऋतूनां सुखदुःखयोः ॥ ३५ ॥ स्वभावाभिनये स्थानं पुंभिः कार्यं तु वैष्णवम् ॥ आयुतं चावहित्यं च
स्त्रीभिः कार्यं स्वभावतः ॥ ३६ ॥ धैर्यशीलाङ्गसम्पन्नं पुरुषाणां विचेष्टितम् ॥ मृतशीलाङ्गहारैस्तु स्त्रीणां कार्यं विचेष्टितम् ॥ ३७ ॥ आलि
ङ्गनं तु कर्तव्यं स्मितरोमाञ्चसंयुतम् ॥ रोमाञ्चेन तु हर्षः स्यात्क्रोधमुद्वृत्तचक्षुषा ॥ ३८ ॥ ईर्ष्या क्रोधस्तु कर्तव्यो माल्याभरणवर्जितम् ॥
शिरसः कम्पनं चैव मर्मभंगैस्तथैव च ॥ ३९ ॥ अधोमुखः सनिःश्वासो दुःखं सन्दर्शयेन्नरः ॥ भूमिहस्ताभिघातेन स्त्रीणां स्याद्रुदितेन तत
॥ ४० ॥ आनन्देतिसमुद्भूतं रुदितं द्विविधं स्मृतम् ॥ हृष्टेन चाप्यहृष्टेन तं मुखेन निरूपयेत् ॥ ४१ ॥ सम्भ्रमावेगचेष्टाभिः पुरुषाणां भयं
भवेत् ॥ त्रातुरन्वेषणादेव उच्चैराक्रन्दितेन च ॥ ४२ ॥ नरालिङ्गनतश्चैवं भयं कार्यं भवेत्स्त्रियः ॥ त्रिपताकांगुलीभ्यां तु चलिताभ्यां प्रयोज

१ 'सस्ताङ्गाक्षिनिमेषश्च' इति ख० । २ 'मुञ्छायाम्' इति ख० । ३ 'द्वाप्या तु' इति ख० । ४ 'तु ज्ञैः'—इति क० 'त्यज्ञैः' इति ख० । ५ 'सीत्करै' इति क० ख० ।

येत ॥ ४३ ॥ शुकश्च शारिका चैव सूक्ष्मा ये चैव पक्षिणः ॥ शिखिसारसहंसाद्याः स्थला ये च स्वभावतः ॥ ४४ ॥ पक्षाङ्गहारैर्द्विविधै स्तेषामभिनयो भवेत् ॥ भूताः पिशाचा यक्षाश्च दानवा राक्षसास्तथा ॥ ४५ ॥ अङ्गहारैर्विनिर्देश्याः प्रत्यक्षा न भवन्ति ये ॥ प्रत्यक्षा अभिनेयाः स्युस्तथोद्वेगैः सविस्मयैः ॥ ४६ ॥ देवान्प्रणामकरणैः प्रत्यक्षे तु नराधिप ॥ परोक्षे विविधैश्चिह्नैस्तथानुकरणैः शुभैः ॥ ४७ ॥ सव्योत्थितेन हस्तेन त्वरालेन शिरः स्पृशेत् ॥ नरेभिवादनं ह्येतत्कपोलेन तथा स्त्रियाः ॥ ४८ ॥ महाजनं सखिवरं विटधूर्तजनं तथा ॥ परिमण्डलसंज्ञेन हस्तेनाभिनयेद्बुधः ॥ ४९ ॥ प्रवृत्तान्प्रांशुयोगेन वृक्षांश्चैव समुत्थितान् ॥ प्रसारिताभ्यां बाहुभ्यामुत्क्षिप्ताभ्यां प्रदर्शयेत ॥ ५० ॥ ( समूहं सुमहत्सेनां बहुविस्तीर्णमेव च ॥ पताकाभ्यां तु हस्ताभ्यां चोत्क्षिप्ताभ्यां प्रदर्शयेत् ॥ ) शौर्यं च धैर्यदर्पं च गर्वमौदार्यमुच्छ्रयम् ॥ ललाटस्थानसंस्थेन त्वरालेन प्रदर्शयेत ॥ ५१ ॥ प्रज्ञो देहामदाविद्धौ करौ तु मृगशीर्षकौ ॥ विस्तीर्णप्रद्रुतोत्क्षेपौ योज्यौ यत्स्यादुपावृतम् ॥ ॥ ५२ ॥ अधोमुखोत्तानतलं हस्तं किंचित्प्रसारितम् ॥ कृत्वा चाभिनयो द्वे च बिलग्राहं गृहं गृहम् ॥ ५३ ॥ कामार्तान्ज्वरितांश्चैव शापोपहतचेतसः ॥ तेषामभिनयः कार्य उच्छ्वासैः कम्पनैस्तथा ॥ ५४ ॥ प्रत्यक्षाभिनयः कार्यो दोलायाः परिदोलने ॥ आकाशरचनानीह वक्ष्याम्यात्मगतानि च ॥ ५५ ॥ अपवारितकं चैव जनान्तिकमथापि च ॥ परसम्भाषणं यत्स्यात्तदाकाशवचः स्मृतम् ॥ ५६ ॥ अन्यैरश्रवणीयं तु जनान्तिकमिहोच्यते ॥ अपवारितकं कर्णे पुनरुक्तं प्रचक्षते ॥ ५७ ॥ हस्तमन्तरितं कृत्वा त्रिपताकं प्रयोक्तृभिः ॥ जनांतिकं प्रयोक्तव्यमपवारितकं तथा ॥ ५८ ॥ स्वप्नायते चाभिनये वाचा गद्गदया भवेत् ॥ वृद्धानां योजयेत्पाठ्यं गद्गदस्खलिताक्षरम् ॥ ५९ ॥ असमाप्ताक्षरं चैव बालानां तु कलस्वनम् ॥ दीर्घोच्छ्वासयुतं ग्लानं व्याधितानां तु योजयेत ॥ ६० ॥ उच्छ्वासेन तु दीर्घेण मृत्युकालं तु नाटयेत् ॥ गात्रनिस्पंदभावेन मृतस्याभिनयो भवेत् ॥ सात्त्विकाभिनयं वक्ष्ये रसभावेषु पार्थिव ॥ ६१ ॥ एतावदेवाभिनये तु तुभ्यं शक्यं मया पार्थिवमुख्य वक्तुम् ॥ नाट्यं हि विश्वस्य यतोऽनुकारं कृत्स्नं ततो वक्तुमशक्यमीश ॥ ६२ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे सामान्याभिनयो नामाष्टाविंशतितमोऽध्यायः ॥ २८ ॥ मार्कण्डेय उवाच ॥ अतः परं प्रवक्ष्यामि गीतानां लक्षणं तव ॥ स्वभावेनोत्तुङ्गगतौ कार्यं जानुकटीसमम् ॥ १ ॥ युद्धचारी प्रचारेषु जानुस्तनसमं न्यसेत् ॥ ज्वरान्ते च क्षुधान्ते च तपःश्रान्ते रुजान्विते ॥ २ ॥ विकृते चावहित्थे च तथौत्सुक्यसमन्विते ॥ शृङ्गारे चैव शोके च स्वच्छन्द

१ कोष्ठान्तर्गतः पाठः खपुस्तके नास्ति। २ 'पाठ्यम्'—इति क०।

गमने तथा ॥ ३ ॥ एतेष्वेव तु सर्वत्र स्थिरा कार्या गतिर्बुधैः ॥ अस्वस्थे कम्पिते चैव भये वित्रासिते तथा ॥ ४ ॥ आवेगे चैव हर्षे च कार्यं यच्च त्वरान्वितम् ॥ अनिष्टश्रवणे चैव क्षेपे चाद्भुतदर्शने ॥ ५॥ अपि चात्ययिके कार्ये तथा चैवारिमार्गणे ॥ अपराधानुसारेण श्वापदानुगतौ तथा ॥ ६ ॥ एवंविधेषु कार्येषु गतिं शीघ्रां प्रयोजयेत् ॥ गतिः शृङ्गारिणी कार्या स्वस्थकामितसम्भवे ॥ ७ ॥ दूतीदर्शितमार्गस्तु ह्यंग्यवेशपरिक्रमे ॥ ससौष्ठवसमायुक्तैर्लयतालवशोनुगैः ॥ ८ ॥ पादयोरनुगौ चापि हस्तौ कार्यौ प्रयोक्तृभिः ॥ प्रच्छन्नकामिते गच्छन्न चात्यर्थं विभूषितः ॥ ९ ॥ कृष्णवासाः पदैर्मंदैः शब्दाशङ्की मुहुर्मुहुः ॥ वेपमानशरीरश्च शङ्कितः प्रस्खलन्मुहुः ॥ १० ॥ अङ्गस्वभावनेपथ्यो रौद्रस्तु त्रिविधो मतः ॥ रुधिरक्लिन्नदेहस्तु पद्मांत्राङ्गधरस्तथा ॥ ११ ॥ बह्वायुधधरो रौद्रनेपथ्येन प्रकीर्तितः ॥ रूक्षो निर्भर्त्सनकथो निर्घृणस्तु स्वभावतः ॥ १२ ॥ विविधस्यापि रौद्रस्य चतुस्तालान्तरा गतिः ॥ अहृद्या तु मही यत्र श्मशानरणसंकुला ॥१३॥ आसन्ना च विकृष्टा च तत्र बीभत्सिका गतिः ॥ गतिर्वीरे च कर्त्तव्या पादविक्षिप्तसंयुता ॥ १४ ॥ विस्मये चैव हर्षे च विक्षिप्तपदविक्रमा ॥ गतिः स्थिरपदा प्रोक्ता तथैव करुणारसे ॥ १५ ॥ न तत्र सौष्ठवं कार्यं न प्रमाणं तथाविधम् ॥ विघूर्णितशरीरा च स्तब्धा च शिथिला गतिः ॥ १६ ॥ गाढप्रहारिते कार्या गतिः पिण्डितविग्रहा ॥ द्रुता भयानके कार्या स्तब्धा कार्यवशादथ ॥ १७ ॥ सत्त्वे तु विकृते दृष्टे गतिर्विस्फुरितेक्षणा ॥ तापसानां भवेन्मन्दा युगमात्रेक्षणा गतिः ॥ १८ ॥ हस्तसंस्पर्शनान्मन्दाप्यन्धकारे गतिर्भवेत् ॥ रथस्थस्यापि कर्त्तव्या गतिर्मन्दपदैरथ ॥१९॥ समपादं ध्रुवस्थानं कृत्वा रथगतिं व्रजेत्॥ धनुर्गृहीत्वा हस्तेन तथा चैकेन कूबरम् ॥ २० ॥ सूतश्चास्य भवेदेव प्रतोदग्रहणाकृतिः ॥ विमानस्थस्य कर्तव्या गतिरानंदिनी भवेत् ॥ २१ ॥ आरोहाश्चावरोहाश्च ऊर्ध्वाधोवीक्षणैर्गतैः ॥ मण्डलावर्तनैः कार्यमाकाशगमनं तथा ॥ २२ ॥ ऋज्वागतोन्नतैः पादैर्भ्रश्यमानस्तु खाद्भवेत् ॥ उच्छ्रितारोहणं कार्यमपक्रान्तपदैरथ ॥ २३ ॥ तथावतरणं कार्यं शंकितैरिव संहितैः ॥ उत्क्षिप्तपदसञ्चारा सलिले च गतिर्भवेत् ॥ २४ ॥ उत्क्षिप्तहस्तसञ्चारा पादपारोहणे भवेत् ॥ सूचीविद्धैरपक्रान्तैः पदैः पार्श्वगतैरथ ॥ २५ ॥ अङ्कुशग्रहणान्नागं खलीनग्रहणाद्धयम् ॥ प्रग्रहग्रहणादेव अन्येषां कारयेद्गतिम् ॥ २६ ॥ अश्वयाने गतिः कार्या वैशाखस्थानकेन ह ॥ पन्नगानां गतिः कार्या पदैः स्वस्तिकसंयुतैः ॥ ॥ २७ ॥ विटस्यापि तु कर्तव्या गतिर्ललितविक्रमा ॥ कंचुकीयस्य कर्तव्या कम्पिता स्खलिता गतिः ॥२८॥ विष्टम्भनगतिप्राणा कृशस्यापि

१ 'युद्धवेषपरिक्रमे' इति ख० । २ 'संह्रतैः इति क० ।

गतिर्भवेत् ॥ व्याधिग्रस्तस्य च तथा तपःश्रान्तस्य चैव हि ॥ २९ ॥ दीर्घाध्वनि गतस्यापि शनैर्मन्दपरिक्रमा ॥ मत्तस्य तु गतिः
कार्या स्खलिता पार्श्वयोर्द्वयोः ॥ ३० ॥ उन्मत्तस्यापि कर्तव्या गतिस्त्वभिनयक्रमा ॥ असम्बद्धप्रलापी स्यान्मलिनो लोमशस्तथा ॥ ३१ ॥
विकलानां गतिः कार्या यथा कार्यानुरूपतः ॥ स्थूलदेहस्य कर्तव्या गतिर्देहानुकर्षिणी ॥ ३२ ॥ विदूषकस्य कर्तव्या गतिर्हास्यप्रदा तथा ॥
स्वभावजातं विन्यस्य कुटिलं वामके करे ॥ ३३॥ गतौ रमेत चेटानां दृष्टिश्चार्थविचारिणी ॥ नानादेशसमुद्भूता पुरुषाणां स्वभावतः ॥ ३४ ॥
श्वापदानां पशूनां च गतिः कार्या नराधिप ॥ शेषाणामर्थयोगेन स्थानकानि प्रयोजयेत् ॥ ३५ ॥ धैर्योपपन्ना गतिरुत्तमानां मध्या गतिर्मध्य
मसंमितानाम् ॥ द्रुता गतिश्च प्रचुराधमानां लयत्रयं सत्त्ववशेन योज्यम् ॥ ३६ ॥ रंगे विकृत्ता तु नृपप्रधान गतागतैः पादगतिप्रचारः ॥
कार्यो वशादेव गृहस्य नित्यं समीक्ष्य रङ्गं तु यथानुरूपम् ॥ ३७ ॥ स्त्रीणां गतिः स्याल्ललितप्रचारा धीरा नराणां च तथोद्धता स्यात् ॥ गति
प्रचारोऽर्थवशेन योज्यश्चैतावदुक्तं तव राजसिंह॥३८॥ वयोनुरूपः प्रथमस्तु वेशो वेशानुरूपश्च गतिप्रचारः ॥ गतिप्रचारानुगतं च नाट्यं नाट्यानु
रूपोऽभिनयश्च कार्यः ॥ ३९ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे गतिप्रचारवर्णनो नमैकोनत्रिंशत्तमोऽध्यायः ॥ २९ ॥
मार्कण्डेय उवाच ॥ हास्यशृंगारकरुणारौद्रवीरभयानकाः ॥ बीभत्साद्भुतशान्ताख्या नव नाट्ये रसाः स्मृताः ॥ १ ॥ शान्तो रसः स्वतन्त्रोऽत्र
पृथगेव व्यवस्थितः ॥ शृङ्गाराद्धि भवेद्धास्यो रौद्राच्च करुणोदयः ॥२॥ वीराच्चैवाद्भुतोत्पत्तिर्बीभत्साच्च भयानकः ॥ एतेषामङ्गवर्णाश्च सात्त्विकोभि
नयः स्मृतः ॥ ३ ॥ शान्तस्वभाववर्णस्तु रसः प्रोक्तो नराधिप ॥ शृङ्गारस्तु भवेच्छ्यामो रक्तो रौद्रः प्रकीर्तितः ॥ ४ ॥ सितो हास्यश्च
विज्ञेयः कृष्णश्चैव भयानकः ॥ गौरो वीरस्तु विज्ञेयः पीतश्चैवाद्भुतः स्मृतः ॥ ५ ॥ कापोतः करुणश्चैव नीलो बीभत्समेव च ॥ हास्यः
प्रमथदेवस्तु शृङ्गारो विष्णुदैवतः ॥ ६ ॥ रौद्रो रौद्राधिदेवश्च करुणो यमदैवतः ॥ बीभत्सस्य महाकालः कालदेवो भयानकः ॥ ७ ॥ वीरो
महेन्द्रदेवः स्यादद्भुतो ब्रह्मदैवतः ॥ शान्तस्य देवो विज्ञेयः परः पुरुष एव तु ॥ ८ ॥ शान्तस्य तु समुत्पत्तिर्नृप वैराग्यतः स्मृता ॥ स चाभि
नेयो भवति लिङ्गग्रहणतस्तथा ॥ ९ ॥ सर्वभूतदयाध्यानमोक्षमार्गप्रवर्तनैः ॥ नास्ति यत्र सुखं दुःखं न द्वेषो नापि मत्सरः ॥ १० ॥
समः सर्वेषु भूतेषु स शान्तः प्रथितो रसः॥हास्यस्य तु समुत्पत्तिरसम्बद्धप्रलापतः ॥ ११ ॥ असम्बद्धात्तथा वेशाद्भवतीति विनिश्चयः ॥
आत्मस्थश्च परस्थश्च द्विविधः स च कीर्तितः ॥ १२ ॥ आत्मस्थश्च स्वयं हासात्परस्थः परहासनात् ॥ उत्तमाधमसुख्यानां त्रिविधः

स भवेत्तदा ॥ १३ ॥ ईषद्विकम्पितैर्गण्डैः कटाक्षैस्सौष्ठवान्वितैः ॥ अलक्षितद्विजं चैव उत्तमानां स्मितं भवेत् ॥ १४ ॥
तथा दर्शितदन्तन्तु मध्यमानां प्रकीर्तितम् ॥ सास्रं तदधमानां स्यात्सस्वनं च महीभुजाम् ॥ १५ ॥ शृङ्गारो द्विविधः प्रोक्तः सम्भोगाद्विरह
त्तथा ॥ विप्रलम्भकृतस्यात्र निर्वेदोऽभिनयक्रियः ॥ १६ ॥ विप्रलम्भे तु निर्दिष्टाः कामावस्थास्तथा दश ॥ चक्षुःप्रीतिर्विनिर्दिष्टा प्रथमायां
नराधिप ॥ १७ ॥ मनसश्च तथा सङ्गो द्वितीयायां प्रकीर्तितः ॥ स्मरणं च तथा प्रोक्तं तृतीयायां निरन्तरम् ॥ १८ ॥ निद्राभेदश्चतुर्थ्यां तु
पंचम्यां तनुता तथा ॥ व्यावृत्तिर्विषयेभ्यस्तु षष्ट्यां प्रोक्ता नराधिप ॥ १९ ॥ लज्जाप्रणाशः सप्तम्यामुन्मादस्तदनन्तरम् ॥
नवम्यां तु तथा मूर्च्छा दशम्यां मरणं भवेत् ॥२०॥ द्वयोरुज्ज्वलयोस्तत्र सम्भोगाभिनयो भवेत् ॥सुखप्रायेष्टसंपन्नो यत्र माल्यानुलेपकः ॥ २१॥
पुरुषप्रमदायुग्मं शृंगार इति संज्ञितः ॥ शोकाद्भवति राजेन्द्र तथैव करुणो रसः ॥ २२ ॥ त्रस्तगात्राद्विनिःश्वासपरिदेवितरोदनैः ॥ मुखवैवर्ण्य
शोषैश्च तस्येहाभिनयो भवेत् ॥ २३ ॥ क्रोधाद्भवति रौद्रस्य रसस्य तु समुद्भवः ॥ रक्तत्वनेत्रभ्रुकुटिक्रोधामर्षैः ससाहसैः ॥ २४ ॥ पीडनैः
शस्त्रसङ्घातैस्तस्येहाभिनयो भवेत् ॥ जुगुप्सया च भवति बीभत्सस्य समुद्भवः ॥ २५ ॥ नासाविघूर्णनात्तस्य चोद्वेगेन तथैव च ॥ आश्चर्येण स
मुत्पत्तिरद्भुतं तत्प्रकीर्तितम् ॥ २६ ॥ प्रस्फारिताक्षिरोमाञ्चैरङ्गुलीभ्रमणादिभिः ॥ स्वेदेन चाभिनेयः स्यादद्भुतस्तु तथा रसः ॥ २७ ॥
नाट्यस्य मूलं तु रसः प्रदिष्टो रसेन हीनं न हि वृत्तमस्ति ॥ तस्मात्प्रयत्नेन रसाश्रयस्य वृत्तस्य यत्नं पुरुषेण कार्यम् ॥ २८ ॥ इति श्रीविष्णुध
र्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे रसवर्णनो नाम त्रिंशत्तमोऽध्यायः ॥ ३० ॥ मार्कण्डेय उवाच ॥ भावाध्यायमतो वच्मि तन्मे निगद
तः शृणु ॥ हासाद्याः कथिता भावाः पञ्चाशत्त्वेकवर्जिताः ॥ १ ॥ परचेष्टानुकरणाद्धास्यमुपजायते ॥ स्मितहासाभिहसितैरभिनेयस्य
पण्डितैः ॥ २ ॥ इष्टार्थविषयप्राप्तौ रतिरित्युपजायते ॥ सौम्यत्वादभिनेया सा वाङ्माधुर्यादिभिस्तथा ॥ ३ ॥ इष्टबन्धुवियोगेन धननाशेन
पार्थिव ॥ शोको भवति तस्य स्याद्रुदिताभिनयक्रिया ॥ ४ ॥ क्रोधश्चतुःप्रकारश्च कर्तव्यो नाट्ययोक्तृभिः ॥ रिपुजो गुरुजश्चैव भृत्यजः
प्रणयोद्भवः ॥ ५ ॥ निर्यन्त्रितः स शत्रूणां गुरूणां स्वेदसंयुतः ॥ भृत्यानां च दयालुः स्यात्स्त्रीणां च प्रणयोद्भवः ॥ ६ ॥ कर्मातिशयनिर्वृत्तौ
विस्मयो हर्षसंभवः ॥ सिद्धिस्थाने त्वसौ साध्यो रोमाञ्चहसनादिभिः ॥७॥ असौ मोहाभिनिर्वृत्तौ व्यवसायनयात्मकः॥उत्साहस्त्वभिनेयः स्यादप्र
मादक्रियादिभिः॥८॥स्वापराधसमुद्भूतं भयं नामेह जायते ॥ वेपथुत्रासपतनैरभिनेयस्य सम्भ्रमैः॥९॥बीभत्सदर्शनाद्यैस्तु जुगुप्सा नाम जायते॥१०॥

उद्वेजनैस्सहृल्लेखैरभिनेयो विकूणनैः॥ दारिद्र्येष्टविनाशे च निर्वेदो नाम जायते॥११॥परस्परविनिःश्वासैस्तस्याभिनयनक्रिया॥वान्ते विरक्ते श्रान्ते च ग्लानिः स्यात्तपसा तथा॥१२॥ मन्दाक्रमणकम्पाद्यैः क्षामत्वेन च दर्शयेत् ॥१३॥ चौर्यादिभिर्गृहीतस्य शङ्का नामेह जायते ॥ आकारावरणं तस्याः कार्यं दिगवलोकनम् ॥ परापराधसम्भूता असूया नाम जायते ॥ १४ ॥ गुणनाशनविद्वेषैः साभिनेया तथा बुधैः ॥ मद्योपयोगेन मदो जायते च त्रिभिस्तथा ॥ १५ ॥ उत्तमाधममध्यत्वात्पुरुषाणां स्वभावतः ॥ दृग्भ्रमेणोत्तमानां स्यान्मध्यानां वाक्प्रलापतः ॥ १६ ॥ अधमानां च पतनैरसम्बद्धपरिक्रमैः ॥ आयासेनाधमनाञ्च श्रमो नामेह जायते॥१७॥ गात्रमर्दनविश्वासजृम्भणैस्तत्प्रयोजयेत् ॥ गर्वेण खेदाद्रागेण ह्यालस्यं स्यात्स्वभावतः ॥ १८ ॥ तस्य प्रयोगः कर्तव्यः शयनासनसेवनात् ॥ दौर्गत्येन मनस्तापाद्दैन्यं नामेह जायते ॥ १९ ॥ हृदयस्य वितर्केण तस्य त्वभिनयो भवेत् ॥ अस्थाने[1] तस्करान्दृष्ट्वा त्रासनैर्विविधैस्तथा॥ २० ॥ तत्प्रतीकारशून्यस्य मोहः समुपजायते ॥ व्यसनेनाभिघातेन वैरानुस्मरणेन च ॥२१॥ सर्वेन्द्रियाणां मोहेन स तु कार्यः प्रयोक्तृभिः ॥ स्मरणात्पूर्ववृत्तानां स्मृतिर्नामेह जायते ॥ २२ ॥ भृशमुत्क्षेपणात्तस्याः प्रयोगः कार्यलोलनात् ॥ लोके वृत्तान्तविज्ञानाद् वृत्तिर्नामेह जायते ॥२३॥ प्रयोज्यो लब्धभोगेन अलब्धस्य विवर्जितम् ॥ क्रीडा नामेह भवति चापल्याद्धर्षसंभवा ॥ २४ ॥ क्रीडनेन प्रयोज्या सा गुरुवाक्यप्रतिक्रमैः ॥ कृताकार्यस्य राजेन्द्र व्रीडा नामेह जायते ॥२५॥ अधोमुखेन सा कार्या मूले स्वीकरणेन च ॥ ज्ञेया चपलता राजन्न विचार्या क्रियावता ॥ २६ ॥ अयमेव प्रयोगस्य तथैव समुदाहृतः ॥ मनोरथानां लाभे तु हर्षो नामेह जायते ॥२७॥ सुखप्रसादरोमाञ्चप्रस्वेदैर्दर्शयेद् बुधः ॥ सम्भ्रमाज्जायते राजन्नावेग इति सर्वदा ॥२८॥ आःशब्दैः सहसानर्थो दर्शनीया बुधैस्तु ते ॥ विषादस्य समुत्पत्तिः कार्यनाशेन जायते ॥ २९ ॥ निद्रानिःश्वसितव्याजैः साभिनेया तथा भवेत् ॥ उत्कण्ठाकरणैः सर्वैरौत्सुक्यं नाम जायते ॥ ३० ॥ आलस्यगुरुगात्रत्वे ध्यानेनाभिनवेश्च तत् ॥ रात्रिजागरणालस्यमदैर्निद्रेह जायते ॥ ३१ ॥ नेत्राभिमर्दनात्कार्या जृम्भणा गात्रगौरवात् ॥ अपस्मारस्तु भवति देवादीनां प्रकोपतः ॥ ३२ ॥ निःसंज्ञत्वं समूर्द्धानं तस्येहाभिनयो भवेत् ॥ निद्रासमर्थं सुप्तत्वं स्वपनं तत्र योजयेत् ॥ ३३ ॥ निद्रोच्छेदाद्धि बोधन्तु जृम्भणं तत्र योजयेत् ॥ विद्याशौर्यधनादिर्यैरमर्षो[2] नाम जायते ॥ ३४ ॥ शिरसः कम्पनैस्तस्य कार्यस्त्वभिनयो बुधैः ॥ धाष्टर्यजैह्म्यादिसम्भूतो ह्यवहित्थोभयात्मकः ॥ ३५॥ सर्वांगगोपनात्कार्योऽभिनयो नर्तनस्य च ॥

१ 'आस्थाने' इति क० खपुस्तके तु नास्त्येव । २ 'विद्याशौर्यधनैश्वर्यैः' इति पुस्तकान्तरे पाठः ।

 

चौर्यादिजातसर्वस्य ग्लानिः कार्या प्रयोक्तृभिः ॥ ३६॥ वातप्रायस्तथोन्मादो यथा ज्ञेयो वियोगजः ॥ असच्चेष्टाप्रलापेन तस्याभिनयकारणम्॥ ॥ ३७ ॥ व्याधिभिर्वा प्रहारैर्वा मरणं नाम जायते ॥ कर्तव्योभिनयस्तस्य मूढेन्द्रियविचेष्टनैः ॥ ३८ ॥ महाभैरवनादाद्यैस्त्रासः समुपजायते ॥ संक्षिप्ताङ्गप्रकम्पाद्यैस्तस्य त्वभिनयो भवेत् ॥ ३९ ॥ विचारणार्थे संदेहः कार्यो भ्रूक्षेपकम्पनैः ॥ क्रोधोऽपराधाद्भवति क्रोधाभिनयदर्शनः ॥ ४०॥ भयोपराधजो ज्ञेयो दृग्भयाभिनयात्मकः ॥ मनोरथाप्तिजो हर्षो रोमाञ्चेन प्रदर्शयेत् ॥ ४१ ॥ भीतक्रोधश्च उभये रोमाञ्चस्य समुद्भवः ॥ स्वरभेदो भयाद्रौक्ष्यात्स्वरभेदेन दर्शयेत् ॥ ४२ ॥ शोकानन्दसमुद्भूतमश्रु स्याद्रोदनेन तु ॥वर्णावरत्वाद्विज्ञेयं वैवर्ण्यं नाट्ययोक्तृभिः ॥४३॥ वैवर्ण्यं नाभिनेतव्यं प्रयत्नात्तद्धि दुष्करम् ॥ ग्लानिः शङ्काभ्यसूया च श्रमश्चपलता तथा ॥ ४४ ॥ रोमाञ्चहर्षे निद्रा च उन्मादो मद एव च॥ स्वेदश्चैव वहित्थश्च भावा हास्यरसे स्मृताः ॥ ४५ ॥ आलस्योग्र्यजुगुप्साभिर्भावा हि परिवर्जिताः ॥ उद्भावयन्ति शृङ्गारं रसमास्वाद्यसंज्ञकम् ॥ ४६ ॥ वेदस्यैव च चिन्ता च दैन्यग्लान्यश्रुपातनम् ॥ जडता मरणं चैव व्याधिश्च करुणारसे ॥ ४७ ॥ असम्मोहस्तथोन्मादो विषादो मद एव च ॥ मृत्युर्व्याधिर्भयं चैव भावा बीभत्ससंश्रयाः ॥ ४८ ॥ स्तम्भः स्वेदश्च रोमाञ्चो जुगुप्सा विस्मयस्तथा ॥ प्रवेगो जडता हर्षोऽसूया दैवाद्भुते रसे ॥ ॥ ४९ ॥ स्वेदश्च वेपथुश्चैव रोमाञ्चो गद्गदस्तथा ॥ मतिश्चैव तथोग्रत्वममर्षो मद एव च ॥ ५० ॥ रोमाञ्चः स्वरभेदश्च[1]क्रोधोऽसूया धृतिस्तथा ॥ गर्वश्चैव वितर्कश्च वीरे भावा भवन्ति वै॥५१॥ये चान्ये सात्त्विका भावा नानाभिनययोनिजाः ॥ रसेष्वेतेषु ते सर्वे विज्ञेया नाट्यकोविदैः ॥५२॥ बहूनां समवेतानां रूपं यस्य भवेद्बहु ॥ स मन्तव्यो रसः स्थायी शेषाः सञ्चारिणः स्मृताः ॥ ५३ ॥ शृङ्गारं त्रिविधं विन्द्याद्वा नेपथ्यक्रियात्मकम् ॥ अङ्गनेपथ्यभावश्च हास्यरौद्रौ प्रकीर्तितौ ॥५४॥ धर्मार्थबन्धुघातेन करुणस्त्रिविधः स्मृतः ॥ युद्धवीरं दयावीरं दानवीरं तथैव च ॥ ५५ ॥ रसं वीरमिति प्राहुस्तज्ज्ञास्त्रिविधमेवं च ॥ व्याजत्रासापराधैश्च त्रिधा विद्याद्भयानकम् ॥ ५६ ॥ न ह्येकरसजं काव्यं किञ्चिदस्ति प्रयोगजम् ॥ भावो वापि रसो वापि प्रवृत्तिर्वृत्तिरेव च ॥५७॥ एकोनपञ्चाशदिमे समग्रा भावव्यवस्था गदिता मया ते ॥ युक्त्या च ये यत्र रसे नियुक्ताः प्रोक्तं तदप्यत्र नरेन्द्रचन्द्र ॥ ५८॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे एकोनपञ्चाशद्भावनिरूपणो नामैकत्रिंशत्तमोऽध्यायः ॥३१॥ श्रीमार्कण्डेय उवाच ॥ अथातो मुद्राहस्तान् व्याख्यास्यामः ॥ वामस्य प्रसारिताङ्गुष्ठस्योपरि यदा कुब्जतर्जनी भवति तदोङ्कारः ॥ करमध्य

१ 'एव च' इति क० २खपुस्तके तु नास्त्येव ।

गतासु सर्वास्वंगुलीषु क्रमात्कुब्जीकृतास्वङ्गुष्ठाद्यासु अ इ उ ए ओ प्रसारितासु अ इ उ ऊ ऐ औ अं मुकुलः अः मुकुलविशेषः अङ्गुष्ठमूलगतया परहस्ततर्जन्या क्रमात्कवर्गः। सर्वाधःपरं रेखागतया तवर्गः। तदुपरि बवशतयैः पवर्गः। तर्जन्याद्यस्तु प्रथमपर्वगतया पवर्गः। अग्रेषु शवर्गः। मध्यमा नखस्पर्शे र क्ष इति। अ वासुदेवः। आ सङ्कर्षणः। अं प्रद्युम्नः। अः अनिरुद्धः। अञ्जलिपुरुषः करयोः परस्परपृष्ठलग्नयोः। कनीयस्या कनीयसी चेति, तर्जन्या तर्जनी अङ्गुष्ठेनाङ्गुष्ठ इति तार्क्ष्यमुद्रा। पताकः कुञ्चिताग्रस्तालः तिर्यक्प्रसारिताङ्गुष्ठो मकरः। कुञ्चिताङ्गुलिरर्धचन्द्रः। द्वयशिखरौ कनीयस्यङ्गुल्यग्रलग्नौ। संहताङ्गुष्ठः शंखः। अः कारौ संहतौ स्पष्टाङ्गुलौ पद्मः॥कुब्जाङ्गुष्ठो लक्ष्मीः। मकरः प्रसारिताङ्गुलिः। शेषस्तदुपरि शिखरे भोगशयनः। अः कार एव प्रसारितमध्यमाङ्गुलिर्ग ऊउः। तत्रैव मध्यमाङ्गुलिः शिखरगृहीता गरुडवाहनम्। मध्यमाना मिकयोरङ्गुष्ठयोश्चाग्रयोगे चक्रः। उपर्युपरि कपित्थयोरुपरि चिबुके गदा। कपित्थकुब्जमध्यमिको हलः। कर्कटके सुमूलम्। कपित्थमध्यप्रष्टाङ्गुलिः। चर्म कपित्थं पृष्ठतलाङ्गुलिः खड्गः।शिखरो मध्यप्रष्टाङ्गुलिर्धनुः।तर्जनीमध्यमिकोङ्गुष्ठानां संहतानां वियोगाच्छरः।मुकुलसञ्चितकनीनिकः कौस्तुभः। द्वौ शिखरौ पृथक् वनमाला। अः कारो पृथग्लग्नो नृसिंहः। शिखरप्रसारितकनीनिकाधो वराहः। इ हयशिरः। ओं वामनः। वितलि त्रिविक्रमः। अर्धचन्द्रो मत्स्यः।अधोमुखः कुब्जपताकः कूर्मः।शिखरप्रसारितकनीयानूर्ध्वमुखाङ्गुष्ठो हंसः।पताकः कुब्जकरमध्यो दत्तात्रेयः॥कपित्थः परशुरामः।द्वौ शिखरौ युक्तौ दाशरथी। पताकः कृष्णः।त्रिपताको बलदेवः।शिखरो विष्णुः।उत्तानपताकः पृथिवी। कुब्जः पताकः प्रसारितोङ्गुष्ठस्तोयः। अङ्गुष्ठाग्राङ्गुलिर्नखपरिमार्जितोऽग्निः। चलत्पताको वायुः। तिर्यङ्मुष्टिप्रसारिततर्जनीकोऽन्तरिक्षम्। वितस्तिद्वययोगो वर्तुलीकृतोऽर्कः अनामिकार्धेन वक्रश्चन्द्रः। सर्वासुमुकुलितासु प्रसारिते मध्यमा तर्जनी नरनारायणौ। तत्रैव प्रसारिताग्रनासिका गुणाः ब्रह्मविष्णुमहेश्वराः। वामस्य प्रसारिताङ्गुलेस्तदुपरि तथाविध एव दक्षिणः कपिलः। चतस्रोप्यंगुल्यः प्रसारितस्तन्मूले कुञ्चिताङ्गुष्ठश्चान्तरात्मा तोयः। प्रसारितकनिष्ठिको ऋग्वेदः। सैवानामिकया सह प्रसारितो यजुर्वेदः॥ चतुरात्मा प्रसारितांगुष्ठः सामवेदः। वेष्टयमानास्वंगुलीषु करमध्यगमनेन गायत्री। सामवेदोऽधोमुखांगुलिः शिक्षा। सैव दक्षिणदिशि नीता कल्पः। तर्जन्यंगुष्ठयोगे व्याकरणम्। शिखरेंगुष्ठेन तर्जनीमध्यगेन निरुक्तम्। खटकामुखाभ्यां ज्योतिषम्। अधोमुखश्छन्दोविचितिः॥ एता रहस्यमुद्रास्ते मयोक्ता नृपसत्तम॥ अतः परं प्रवक्ष्यामि सामान्या

१ 'मध्यमिकयोः'—इति क०।

स्तान्निबोध मे ॥ इति श्रीवि०मा०व०सं०तृतीयखण्डे रहस्यमुद्रावर्णनो नाम द्वात्रिंशत्तमोऽध्यायः॥ ३२॥ मार्कण्डेय उवाच॥ उत्तानं तु करं कृत्वा चतुरांगुलिकुञ्चितम् ॥ अंगुष्ठपार्श्वतो योज्यौ भस्ममुद्रा प्रकीर्तिता ॥१॥ सा तिर्यगुच्छ्रितांगुलिर्लिङ्गमुद्रा प्रकीर्तिता ॥ अंगुल्यस्त्रयः सकौऽस्या ग्रांगुष्ठपरिसंचिताः ॥ २ ॥ तर्जनीं प्रसृतां कृत्वा जटामुद्रा प्रकीर्तिता ॥ वेत्रमुद्रा यदा तस्यां नेत्रान्ते तर्जनी भवेत् ॥ ३ ॥ बन्धस्थां तु प्रकुर्वीत चांगुष्ठं प्रसृतं तथा ॥ उत्तानं मूर्ध्नि संयोज्यं शशाङ्कं तु विनिर्दिशेत् ॥४ ॥ अंगुल्यः प्रसृताः सर्वा वर्तुलाः शृङ्गरूपकाः ॥ मूर्ध्नि कृत्वा तु तां मुद्रां गोवृषं तु विनिर्दिशेत् ॥ ५ ॥ तिर्यक्कृत्वा तु तं हस्तं सर्वसङ्कुचितांगुलिम् ॥ अंगुष्ठं मध्यमावेष्ट्यपर्यस्तं तु विनिर्दिशेत् ॥ ६ ॥ कनिष्ठिकां सङ्कुचितामंगुष्ठोपरि विन्यसेत् ॥ कनिष्ठानामिकामध्ये दक्षांगुष्ठं प्रकीर्तितम् ॥ ७ ॥ उत्तानौ तु करौ कृत्वा अन्योन्यान्तरितांगुली ॥ कनिष्ठिकान्ते चांगुष्ठमनन्तेति प्रकीर्तिता ॥ ८ ॥ उत्तानं दक्षिणं हस्तं त्वधो वामं तथोपरि ॥ करजान्योन्यसंयोगाद्धर्मस्य परिकीर्तिता ॥ ९ ॥ सा चैव विपरीता तु ज्ञानस्य परिकीर्तितम् ॥ कनिष्ठिके द्वे चांगुष्ठौ युग्मीकृत्वा प्रसारयेत् ॥ १० ॥ वैराग्यस्य भवेन्मुद्रा सर्वकर्मकरी शुभा ॥ पृष्ठे पृष्ठं तु संयोज्यं करयोरुभयोरपि ॥ ११ ॥ कनीन्यंगुष्ठयोगेन भवत्यैश्वर्यमेव च ॥ पद्माकारो भवेद्धस्तः कनिष्ठातर्जनीयुतः ॥ १२ ॥ चतस्र उच्छ्रिताः कृत्वा पृष्ठेन्योन्यं तु योजयेत् ॥ अंगुष्ठावेकतः कृत्वा प्रणालं चैव कारयेत् ॥ १३ ॥ सकलस्य भवेन्मुद्रा दुष्टानां शमनी शुभा ॥ त्रयः सङ्कुचिता यत्र कनिष्ठांगुष्ठकेकलाः ॥ १४ ॥ उत्तानं दक्षिणांगुष्ठं वामांगुष्ठेन वेष्टयेत् ॥ दक्षिणांगुलिभिश्चात्र वामांगुष्ठं तु वेष्टयेत् ॥ १५ ॥ वामस्थांगुलिभिश्चात्र त्वंगुली परिवेष्टयेत् ॥ तर्जन्यौ कुञ्चितौ कृत्वा मुद्रा निष्कलरूपिणी ॥१६॥ उत्तानौ तु करौ कृत्वा अंगुष्ठांगुलिकुञ्चितौ ॥ करमध्यस्थिता ह्येता नखाँस्तासां तु गोपयेत् ॥ १७ ॥ पृष्ठं पृष्ठे तु संयोज्य त्वंगुष्ठौ विन्यसेत्समम् ॥ मालाकारं ततः कृत्वा देव्या मुद्रा प्रकीर्तिता ॥ १८ ॥ अंगुष्ठोंगुष्ठके योज्यः कनिष्ठायां कनिष्ठिका ॥ करमध्ये तु तां कृत्वा षडाभ्यासेकतः कुरु ॥ १९ ॥ संकुच्य तु षडेतानि शक्त्याकारं तु कारयेत् ॥ स्कंदस्य तु स्मृता मुद्रा अभेद्या त्रिदशैरपि ॥ २० ॥ अधोमुखं करं कृत्वा तिस्रोंगुल्यस्तु कुञ्चिताः ॥ त्रिताला मध्यमा तत्र किंचित्सङ्कुचिता भवेत् ॥ २१ ॥ तर्जन्यां योजयांगुष्ठे दन्ताकारं तु दर्शयेत् ॥ विघ्नराजस्य मुद्रैषा सर्वविघ्नप्रणाशिनी ॥ २२ ॥ उत्तानौ प्रसृतौ हस्तौ तर्जन्यंगुष्ठसंवृतौ ॥ अस्य वामौ तु संयोज्य शक्रमुद्रा प्रकीर्तिता ॥ २३ ॥ संकोच्य करजां मध्यां हस्तयोरुभयोरपि ॥ प्रसृतांगुष्ठमुत्तानां योज्या मुद्रा हुताशने ॥ २४ ॥ अधोमुखं करं कृत्वा यस्य स्यात्कुंचितांगुलिः॥

१ 'कनीयास्यांगुष्ठ' इति ख० । २ 'योजयोंगुष्ठे' इति ख० । ३ 'संयुतौ'–इति ख० । ४ 'सङ्कोशां' इति क० 'सकोश' इति ख० ।

विरूपाक्षस्य मुद्रैषा भवेन्मध्या प्रसारिता ॥ २५ ॥ उत्ताने प्रसृतांगुलयः करे भवति वारुणी ॥ तामेव तु यदा तिर्यक्कदा भवति मारुती ॥ २६॥ निकुंचिताश्च ताः सर्वाः कौबेरी तु प्रकीर्तिता ॥ मध्ये प्रसारितास्तिस्रो मुद्रेशानी प्रकीर्तिता ॥ २७॥ ब्रह्मजा पद्ममुद्रा स्याद्भोगोऽनंतस्य कीर्तिता ॥ वामासक्तस्य वामां तु दक्षिणानामपक्रमे ॥ २८ ॥ तयोरग्राणि गृह्णीत तर्जन्यग्रद्वयेन तु ॥ संकोचयेत्षडेतानि स्वांगुष्ठे तर्जनीं न्यसेत् ॥ २९ ॥ वज्र एषः समाख्यातः शक्तिः पूर्वमुदाहृता ॥ करौ बाहुद्वयं चैवं दण्डमुद्रा प्रसारिता ॥ ३० ॥ कनिष्ठानामिके द्वेद्वे अन्तर्यांगुष्ठकुंचितौ ॥ चत्वारः प्रसृता युग्मः खड्गमुद्रा प्रकीर्तिता ॥ ३१ ॥ वर्तुलां तर्जनीं कृत्वा अंगुष्ठोपरि विन्यसेत् ॥ दक्षिणं तर्जनी चैव तस्यास्ये तु नियोजयेत् ॥ ३२ ॥ दक्षिणं कुंचितं कृत्वा तिस्रो वामाः प्रसारिताः ॥ मुष्टिं कृत्वा तु वामेन त्वंगुष्ठं तु समुच्छ्रयेत् ॥ ३३ ॥ अंगुष्ठेन तु संगृह्य पताका प्रसृता करा ॥ तिर्यक्करं तु कृत्वा वै सङ्कुच्य चतुरंगुलीः ॥ ३४ ॥ अंगुष्ठं प्रसृतं कृत्वा गदामुद्रा तथा परा ॥ अन्योन्यं योजयेद्धस्तौ कनिष्ठांगुष्ठयोजितौ ॥ ३५ ॥ तदेव युग्मं प्रसृता शूलमुद्रा प्रकीर्तिता ॥ नित्यं प्रसारयेद्धस्तं स्वल्पाकारं तु योजयेत् ॥ ३६ ॥ मध्यमेकन्यसेद्वेद्वे प्रसृताग्रे नियोजयेत् ॥ तर्जनीद्वयं संकुच्य मध्यमापृष्ठसंस्थिता ॥ ३७ ॥ द्रव्यरूपा स्मृता ह्येषा आत्मभावे नियोजयेत् ॥ उत्तानौ तु करौ कृत्वा षडेतेंगुलयः स्मृताः ॥ ३८ ॥ समानाः सुसमानाश्च योजिता वैष्णवी भवेत् ॥ तर्जन्यौ कुंचिते कृत्वा मध्यमा पृष्ठतो न्यसेत् ॥ ३९ ॥ कनिष्ठोपरि चांगुष्ठौ वृंतमुद्रा प्रकीर्तिता ॥ उत्तानं वामहस्तं च दक्षिणं चाप्यधोमुखम् ॥ ४० ॥ मध्यमानामिके द्वे द्वे संकुच्यांगुष्ठसंस्थिते ॥ तर्जनीकन्यका चैव मध्यमाभ्यां समाक्रमेत् ॥ ४१ ॥ द्वितीया द्रव्यरूपी च गन्धमुद्रा प्रकीर्तिता ॥ उत्तानौ तु करौ कृत्वा कनिष्ठानामिका तथा ॥ ४२ ॥ संकोचयित्वा चत्वारो मध्यमे द्वे प्रसारयेत् ॥ अंगुष्ठगे च तर्जन्यौ पुष्पमुद्रा प्रकीर्तिता ॥ ४३ ॥ उत्तानौ तु करौ कृत्वा षडंगुलिनिकुंचितौ ॥ प्रसृते तर्जनीं कृत्वा चाग्रमग्रे नियोजयेत् ॥ ४४ ॥ तयोर्मूले तथांगुष्ठौ धूममुद्रा प्रकीर्तिता ॥ तर्जन्या तर्जनी यत्र कनीयस्या कनीयसी ॥ ४५ ॥ चतस्र उच्छ्रिताः कृत्वा पृष्ठं पृष्ठे नियोजयेत् ॥ अंगुष्ठावुच्छ्रितौ कृत्वा दीपमुद्रा प्रकीर्तिता ॥ ४६ ॥ उच्छ्रितांगुलयः सर्वाः कनीयोरुभयोरपि ॥ पृष्ठं पृष्ठे तु संयोज्य अंगुष्ठाग्रे नियोजयेत् ॥ ४७ ॥ नैवेद्यमुद्रा कथिता फलकारकरा शुभा ॥ अंगुल्यः संहताः सर्वास्तथा संकुचिताश्च याः ॥ ४८ ॥ पुष्पमुद्रा विनिर्दिष्टा द्वितीया यदुनन्दन ॥ अंगुष्ठौ चैकतः कृत्वा अनामा च कनीयसी ॥४९॥

१ 'ब्रह्मणा'–इति ख० । २ 'घृतमुद्रा' इति ख० । ३ 'कन्यसीनामिका' इति ख० ।

मध्यमे द्वे च संकोच्य अनामा पृष्ठतो न्यसेत् ॥ दत्त्वा चैव तु तर्जन्यौ मध्यमाः परिविन्यसेत् ॥ ५० ॥ महामुद्रा भवत्येषा सर्वद्रव्यप्रपूरणी ॥
अनामा मध्यमे द्वे तु अन्योन्यान्तारिते कृते ॥ ५१ ॥ संयोज्य मध्यमे स्वाग्रं तर्जनीद्वयमेव च ॥ कनिष्ठाद्ये तथा द्वेद्वे स्वाग्रे नाम्नि
नियोजयेत् ॥ ५२ ॥ अर्धस्थितौ तथांगुष्ठौ अमृताख्या प्रकीर्तिता ॥ चण्डीशमुद्रा कथिता अञ्जलिः कुञ्जतर्जनी ॥
॥ ५३ ॥ अस्त्रमुद्रा भवेद्राजन् पद्मः स्यात्संहताञ्जलिः ॥ दक्षिणेन तु हस्तेन मुष्टिं बद्ध्वा प्रयत्नतः ॥ ५४ ॥ अङ्गुष्ठमु
न्नतं कृत्वा वामाङ्गुष्ठे तु निक्षिपेत् ॥ दक्षिणां च तथा मुष्टिं वामाङ्गुल्या तु वेष्टयेत् ॥ ५५ ॥ सद्योजातस्य मुद्रैषा कथिता
पापनाशिनी ॥ इयमेव विपर्यस्ता वामदेवस्य कीर्तिता ॥ ५६ ॥ करसम्पुटकं कृत्वा वामां नासां तु कारयेत् ॥ दक्षिणे मध्यमाकुंच्य अङ्गुष्ठौ
कुञ्चयेत्तथा ॥ ५७ ॥ शूलाकारं ततः कृत्वा हृदयं परिवर्तयेत् ॥ अघोरस्य स्मृता मुद्रा सर्वविघ्नविनाशिनी ॥ ५८ ॥ उत्तानौ तु करौ कृत्वा
अनामाद्वयकुञ्चितौ ॥ तस्यामुपरि चाङ्गुष्ठौ तर्जन्यौ द्वे च कुञ्चिते ॥ ५९ ॥ मध्यानामे तु ते द्वे तु कनिष्ठामेकतो न्यसेत् ॥ मुद्रैषा वज्रसं
ज्ञस्य सर्वदुष्टनिवारणी ॥ ६० ॥ कनिष्ठानामिके द्वेद्वे अन्तरान्तरयोजिते ॥ आकुञ्च्यान्तरिते योज्ये शेषे चैव प्रसारिते ॥ ६१ ॥ ईशानस्य
भवेन्मुद्रा सर्वकर्मकरी शुभा ॥ तर्जन्यौ कुञ्चिते कृत्वा तथैव च कनीयसी ॥ ६२ ॥ अधोमुखां स्पृष्टनखां स्थितां मध्ये करस्य तु ॥ चतस्रश्चो
च्छ्रिताः पृष्ठे त्वङ्गुष्ठावेकतः कुरु ॥ ६३ ॥ नालव्यवसितौ द्वौ तु मुद्रा व्योम्नः प्रकीर्तिता ॥ मुष्टिं बद्ध्वा तु वामेन तर्जनीं सम्प्रसारयेत ॥ ६४ ॥
ग्राह्या दक्षिणमुष्ट्या तु मुद्रा सर्वात्मना भवेत् ॥ वाममुष्टौ तथाङ्गुष्ठं दक्षिणं प्रक्षिपेद्बुधः ॥ ६५ ॥ करजा पृष्ठतो योज्या मुद्रैषा शिवसंज्ञिता ॥
अङ्गुल्योन्तर्हिताः सर्वा वर्तुला गर्भसंस्थिता ॥ ६६ ॥ प्रसृता मध्यमा युक्ता शिखामुद्रा प्रकीर्तिता ॥ अधोमुखास्तु वै तिस्रः तिर्यक्ताश्च सुसंस्थि
ताः ॥ ६७ ॥ कनीयस्युपरि त्वासां ताश्च सर्वा अधोमुखाः ॥ तासामुपरि चाङ्गुष्ठे दक्षिणं सम्प्रयोजयेत् ॥ ६८ ॥ वामे धर्मज्ञमुद्रैषा कथिता लाङ्ग
लस्य तु ॥ बन्धे त्वनामिका त्वस्मिन्मुद्रा ह्यस्त्रस्य कीर्तिता ॥ ६९ ॥ उत्तानौ तु करौ कृत्वा उभावेकत्र योजयेत् ॥ करजास्तु स्मृताः सर्वा मुद्रा
गायत्रसंज्ञिताः ॥ ७० ॥ मुष्टौ प्रसारयेदेकामंगुलीं तु क्रमान्नृप ॥ तर्जन्यन्तां कनिष्ठाद्यां शक्तिमुद्रा प्रकीर्तिता ॥ ७१ ॥ हृदि न्यस्तोऽञ्जलिर्ज्ञेयो
नमस्कारो नराधिप ॥ कपित्थयजनीं गृह्य शिखरेण ध्वजो भवेत् ॥ ७२ ॥ अङ्गुष्ठे योज्य तर्जन्यौ हस्तोत्तानौ स्मृताङ्गुली ॥ मणिबन्धौ
निपीड्यैव शशिकर्णी भवेन्नृप ॥ ७३ ॥ सम्पुटीकृत्य हस्तौ द्वौ किञ्चित्सङ्कुचिताङ्गुलिः ॥ मुकुला तु समाख्याता पङ्कजं प्रसृतैव सा ॥ ७४ ॥

उत्तानो तु सृतौ हस्तौ कृत्वाङ्गुष्ठौ तु कुञ्चितौ ॥ मध्यसंस्थौ करौ कृत्वा आवाहन्यास्तु लक्षणम् ॥ ७५ ॥ अङ्गुष्ठौ कुञ्चितौ द्वौ तु स्वकीयाङ्गुलिवेष्टितौ [1] उभौ चाभिमुखौ हस्तौ योजयित्वा तु रिप्नरा ॥ ७६ ॥ उत्तानं दक्षिणाङ्गुष्ठं वामाङ्गुष्ठेन वेष्टयेत् ॥ भ्रामयेद्वर्तुलाङ्गुष्ठा मुद्रा प्रोक्ता विसर्जने ॥ ७७ ॥वितस्तिद्वयसंयोगाद्रुद्रमुद्रा प्रकीर्तिता ॥ मुष्टिः प्रमार्जिता ज्ञेया लिङ्गमुद्रा तथैव च ॥ ७८॥ सन्दष्टे मार्जितावोष्ठौ जीर्णमुद्रा प्रकीर्तिता ॥ प्रसारितौ भुजौ कृत्वा भुजाग्रौ कुञ्चितौ तथा ॥ ७९ ॥ अग्राग्रौ कुञ्चितांशेन करपल्लवसन्निभौ ॥ तर्जनीं कुञ्चितां कृत्वा अङ्गुष्ठोपरि विन्यसेत् ॥ ८० ॥ निकुब्जौ बाहुदण्डौ तु बध्नीयाच्च पृथक्पृथक् ॥ कैरिणी नाम मुद्रैषा कथिता सूर्यदेवता ॥ ८१ ॥ पद्माकारौ करौ कृत्वा संश्लिष्टौ ग्रथिताङ्गुलीः ॥ अङ्गुल्या कारयेत्तस्मिन्विश्वमुद्रेति कीर्तिता ॥ ८२ ॥ सम्मुखौ तु करौ कृत्वा संश्लिष्टौ ग्रथिताङ्गुलीः ॥ कनिष्ठामध्यमे योज्यौ तर्जन्यौ मध्यमे तथा ॥ ८३ ॥ हृदि मूर्ध्नि शिखाबन्धे मुद्रेयं व्योमसंज्ञिता ॥ मुष्टिबन्धोच्छ्रितां कृत्वा सव्यहस्तस्य तर्जनीम् ॥ ८४ ॥ तालशब्दकृतासौ तु मुद्रा चास्त्रस्य कीर्तिता ॥ मध्यमा तर्जनी चैव सव्यहस्तस्य चोच्छ्रिते ॥ ८५ ॥ कनिष्ठानामिके कुब्जे साङ्गुष्ठेनैव संज्ञिता ॥ नेत्रप्रदर्शिता ज्ञेया गोवृषागमने तथा ॥ ८६ ॥ उत्तानौ तु करौ कृत्वा सर्वाङ्गुल्यो विकुञ्चिताः ॥ कृत्वा चोपरि चाङ्गुष्ठं चालयेत पुनः पुनः ॥ ८७ ॥ सर्वासामेव शक्तीनां मुद्रैषा सम्प्रकीर्तिता ॥ दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमला तथा ८८ ॥ अमोघा विद्युता चैव नवमा सर्वतोमुखी ॥ इति नामानि शक्तीनां सरहस्यानि निर्दिशेत् ॥ ८९ ॥ सम्मुखौ तु करौ कृत्वा श्लिष्टौ चैव प्रसारितौ ॥ इयं मुद्रा नमस्कारे रविसान्निध्यकारिणी ॥ ९० ॥ अनामिकायाः सन्देशो रविमुद्रा प्रकीर्तिता ॥ सोममुद्रा मध्यमया भौममुद्रा ह्यनामया ॥ ९१ ॥ कनीयस्या बुधे मुद्रा उन्मूले जीवसंज्ञिता ॥ अनामिकामूलगा तु शुक्रमुद्रा प्रकीर्तिता ॥९२ ॥ मध्यमामूलगांगुष्ठा शनिमुद्रा प्रकीर्तिता ॥ तर्जनीमूलगांगुष्ठे राहुमुद्रा प्रकीर्तिता ॥ ९३ ॥ तर्जनी चलनाज्ज्ञेया केतुमुद्रा नराधिप ॥ वामहस्तेन शिखराः क्रोधमुद्रा प्रकीर्तिता ॥ ९४ ॥ सम्पुटौ तु करौ कृत्वा वामोच्छ्रायां नराधिप ॥ एषा वराहमुद्रा तु सर्वकर्मकरी शुभा ॥ ९५ ॥ वामेन वेष्टितौ हस्तौ दक्षिणा भैरवी भवेत् ॥ हस्तावधोमुखौ यत्र दृष्टिश्चाधस्तथा भवेत् ॥ ९६ ॥ पातालभञ्जिनी नाम मुद्रैषा कथिता नृप ॥ कपित्थानामिका दीर्घास्तम्भनी तु निगद्यते ॥ ९७ ॥ करमध्यात्तु संग्राह्यमिव मध्येन चाहतम् ॥ एवं मध्येन संयुक्ता क्रोधिनी परिकीर्तिता ॥ ९८ ॥ सहमध्या तु संग्राह्या खतमध्ये द्विधाहतम् ॥

१ 'श्लिष्टमध्यमिकांगुली' इति ख० ।

एवमध्येन संयुक्ता वीर्यमुद्रा प्रकीर्तिता ॥ ९९ ॥ एवमध्येन संयुक्तं भैरवी चापरा भवेत् ॥ क्षेत्रमध्या तु संग्राह्या इरमध्येन संयुतम् ॥ १०० ॥ एवमध्येन च क्रान्तं स्तम्भनी चापरा भवेत् ॥ लसन्मध्या तु संग्राह्यमेकमध्येन चाहतम् ॥ १०१ ॥ पातालभञ्जनी नाम मुद्रेयमपरा भवेत् ॥ तर्जनी मध्यमा चैव तथा चैव त्वनामिकाम् ॥ १०२ ॥ मध्यपर्वसु संयुक्तां पृष्ठतः कारयेत्करे ॥ शङ्खमुद्रेयमुद्दिष्टा पूर्वमुक्ता तथापरा ॥ १०३ ॥ प्रसार्य सर्वाश्चाङ्गुल्यः करपृष्ठे च योजयेत् ॥ चक्रमुद्रा भवेत्तेषां पूर्वमुक्ता तथापरा ॥ १०४ ॥ कटिभागप्रदेशे तु मुष्टिस्तु त्रिशिरा भवेत् ॥ गदा मुद्रा भवत्येषा सर्वविघ्नप्रणाशिनी ॥ १०५ ॥ अन्योन्याभिमुखौ कृत्वा करौ संवेष्टिताङ्गुली ॥ सहाङ्गुष्ठेन निर्दिष्टा मुद्रा कौस्तुभसंज्ञिता ॥ १०६ ॥ संस्पृश्य वह्निशिखिरां[1] वामचक्रिणकं स्पृशेत् ॥ इयं मुद्रा विनिर्दिष्टा वनमालेति पार्थिव ॥ १०७ ॥ अनामीनांशने[2] द्रव्ये स्रजं द्रव्य करद्वये ॥ जंघामध्यगतौ कृत्वा चिबुकोऽर्धसमायुतौ ॥ १०८ ॥ मुखं विवृतकं कुर्याज्ज्वलज्जिह्वा[3] तु लेलिहाँ[4] ॥ एषा मुद्रा महामुद्रा नारसिंहीति कीर्तिता ॥ १०९ ॥ अङ्गुष्ठं मुष्टिना ग्राह्यं ह्यमुद्रां[5] परिकीर्तिता ॥ मुष्टिं बद्ध्वैव चाङ्गुष्ठे तिर्यग्गं कारयेच्छिरः ॥ ११० ॥ स्पष्टा तु तर्जनीमुष्टौ शिखामुद्रा प्रकीर्तिता ॥ तर्जनीप्रान्तसंलग्ने द्वे मुष्टी कवचं भवेत् ॥ १११ ॥ मुष्टी बद्धा तु हस्तौ द्वे उभयांगुलियोजितौ ॥ गदामुद्रा समाख्याता सर्वकर्मकरी शुभा ॥ ११२ ॥ तर्जनी तु तथाङ्गुष्ठं प्रतिश्लिष्टौ तु कारयेत् ॥ शेषाः प्रसारिताङ्गुल्यो नेत्रमुद्रा भवेन्नृप ॥ ११३ ॥ अनाम्योऽर्धेलिंनौ[6] कृत्वा तर्जन्यानां समँ श्रयात् ॥ मध्यमौ चोन्नतौ कृत्वा अङ्गुष्ठौ श्लेषितौ समौ ॥ ११४ ॥ एषा मुद्रा समाख्याता दिव्या च शिरसो नृप ॥ अञ्जलिः प्रमदा मुद्रा क्षिप्रं देवप्रसारितम् ॥ ११५ ॥ वन्दने हृदया मत्ता पूर्वदक्षिणतोऽपरा ॥ ऊर्ध्वोऽङ्गुष्ठो वाममुष्टिर्दक्षिणोऽङ्गुष्ठबन्धनः ॥ ११६ ॥ संन्यस्य तस्य चाङ्गुष्ठौ यस्या ऊर्ध्वं प्रतिष्ठितम् ॥ वासुदेवस्य मुद्रैषा बद्धा स्यात्पापनाशिनी ॥ ११७ ॥ हस्तयोरुभयोरेव कनिष्ठाङ्गुष्ठगर्भकौ ॥ शेषाः प्रसारितः श्लिष्टा मुद्रा सङ्कर्षणस्य तु ॥ ११८ ॥ तर्जन्यावर्धतः श्लिष्टौ समाङ्गुष्ठौ तु श्लेषितौ ॥ एषा मुष्टिं ततः कृत्वा मुद्रा प्रद्युम्नसंज्ञिका ॥ ११९ ॥ अङ्गुल्यौ वलितौ यत्र सूर्पाकारौ तु कारयेत् ॥ वेष्टयाङ्गुष्ठावधः कार्यावनिरुद्धे तु कारयेत् ॥ १२० ॥ इत्युद्देशे तु ते प्रोक्ता मुद्राहस्ता मया नृप ॥ दर्शयेन्मन्त्रयुक्तानां परां सिद्धिमभीप्सिताम् ॥ १२१ ॥ यथामन्त्रं यथादेवं यथाविधिरतंद्रितः ॥ मन्त्रेषु[7] देवतायुक्ता बह्व्यो मुद्राः प्रकीर्तिताः ॥ १२२ ॥ तासां मन्त्रं

१ 'शिखरं वामदक्षिणकम्' इति ख० । २ 'अनामे नामने' इति ख० । ३ 'उज्ज्वल' इति 'कर्जुलौ' इति ०ख। ४ 'लोहिता' इति ख० । ५ 'ह्रन्मुद्रा' इति ख० । ६ 'अनाम्यौ वलिनौ' इति ख० । ७ 'तर्जन्यानम'--इति ख० ।

तु विज्ञेयं नियोगो नृप इष्यते ॥ १२३ ॥ एतावदुक्तं नृप नृत्तशास्त्रं समासतः पार्थिववंशमुख्य ॥ निःशेषमेतद्गदितं महार्थं विस्तारतः सर्वजग
त्प्रधानम् ॥१२४॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे ॥ नृत्तशास्त्रमुद्रा नाम त्रयस्त्रिंशत्तमोऽध्यायः ॥ ३३ ॥ वज्र उवाच ॥
नृत्तमुत्पादितं केन ऋषिणा दैवतेन वा ॥ एतन्मे संशयं छिन्धि त्वं हि सर्वविदुच्यसे ॥ १ ॥ मार्कण्डेय उवाच ॥ एकार्णवे पुरा लोके नष्टस्थाव
रजंगमे ॥ शेषपर्यङ्कशयने सुप्ते मधुनिषूदने ॥ २ ॥ संवाह्यमानचरणे लक्ष्म्या यदुकुलोद्वह ॥ नाभ्यां तस्य समुत्पन्नं पद्मं पद्मनिभेक्षण ॥
॥ ३ ॥ तत्र जातः स्वयं ब्रह्मा देवः शुभचतुर्मुखः ॥ देवैः सह महाभाग सशरीरैर्नराधिप ॥ ४ ॥ पद्मोदबिन्दु
सम्भूतौ तत्रैव मधुकैटभौ ॥ रजस्तमोमयौ चोरौ दानवौ तौ भयानकौ ॥ ५ ॥ ततो जगृहतुर्वेदान्ब्रह्मणस्तौ नराधिप ॥ हत
वेदस्ततो ब्रह्मा तुष्टाव मधुसूदनम् ॥ ६ ॥ वेदा मे परमं चक्षुर्वेदा मे परमं बलम् ॥ दानवापहृता वेदा अन्धो जातोस्मि शत्रुहन् ॥ ७ ॥
एवमुक्तस्तदा विष्णुर्ब्रह्मणा पुरुषोत्तमः ॥ उत्थाय सलिलात्तस्माद्बभ्राम सलिलाशये ॥ ८ ॥ अङ्गहारैः सुललितैस्तथा पदपरिक्रमैः ॥ तथा
भ्रमन्तन्तं देवं ददर्शायतलोचना ॥ ९ ॥ अतीव ललितं लक्ष्मीर्जातरागा विशेषतः ॥ देवोप्यश्वशिरो भूत्वा पातालतलगः क्षणात् ॥ १० ॥
स दैत्यान्दृष्टवान्वेदांस्त्यक्त्वाश्वशिरसस्तनुम् ॥ जघान तौ महाकायौ दानवौ मधुकैटभौ ॥ ११ ॥ हत्वा वेदसहायस्तु सम्प्राप्तो ब्रह्मणोऽन्तिके ॥
ददौ वेदांस्ततस्तस्मै देवदेवः स्वयम्भुवे ॥ १२ ॥ दत्त्वा वेदांस्ततः प्राह सृष्टिं कुरु पितामह॥ वेदग्रामयुतो ब्रह्मा सर्गं चक्रे ततः प्रभुः ॥ १३ ॥
शेषस्याङ्कगतं देवं लक्ष्मीःपप्रच्छ पार्थिव॥ लक्ष्म्युवाच ॥ देवदेव जगन्नाथ शङ्खचक्रगदाधर ॥ १४ ॥परिक्रमं मया तोये दृष्टः सललितः प्रभो ॥
अतीव रमणीयाङ्ग किं तत्प्रब्रूहि मे प्रभो॥१५॥श्रीभगवानुवाच॥ नृत्तमुत्पादितं ह्येतन्मया पद्मनिभेक्षणे॥अङ्गहारैः सकरणैः संयुक्तं सपरिक्रमैः१६॥
नृत्तेनाराधयिष्यन्ति भक्तिमन्तस्तु मां शुभे ॥ त्रैलोक्यस्यानुकरणं नृत्ते देवि प्रतिष्ठितम् ॥ १७ ॥ एतावदुक्त्वा तां देवो ब्रह्माणं वाक्यमब्रवीत् ॥
गृहाण नृत्तं धर्मज्ञ लक्ष्यलक्षणसंयुतम् ॥ १८ ॥ एतावदुक्त्वा ब्रह्माणं ग्राहयामास केशवः ॥ तद्गृहीत्वा ततो ब्रह्मा ददौ रुद्राय वेधसे ॥ गृहीत्वा
तच्च रुद्रोपि तोषयामास केशवम् ॥ तेन नृत्तेन सततं देवेशं भक्तवत्सलम् ॥ २० ॥ एवमुत्पादितं नृत्तं वासुदेवेन पार्थिव ॥ एकार्णवे पुरा
लोके नष्टस्थावरजङ्गमे ॥ २१ ॥ ततः प्रभृति देवेशः शङ्करः शङ्करो नृणाम् ॥ नृत्तेनाराधयन्नास्ते देवं चक्रगदाधरम् ॥ २२ ॥ नृत्तेश्वरत्वं
चावाप तुष्टाव मधुसूदनम् ॥ सोऽपि तुष्यति नृत्तेन सम्यगाराधितो हरः ॥ २३ ॥ अन्ये च देवास्तुष्यन्ति सम्यङ् नृत्तेन तोषिताः ॥

आप्यायनं परं ह्येतत्कथितं तु दिवौकसाम् ॥२४॥ एतदेव हि देवत्वं दीव्यतां सततं दिवि ॥ पुष्पनैवेद्यदानेभ्यो नृत्तदानं विशिष्यते ॥ २५ ॥
स्वयं नृत्तेन यः कुर्याद्देवदेवस्य पूजनम् ॥ विशेषेण महाभाग तस्य तुष्यति केशवः ॥ २६ ॥ नृत्तं गीतं तथा वाद्यं दत्त्वा देवाय विष्णवे ॥
सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥ २७ ॥ नृत्तेन वृत्तिं यः कुर्यात्स तु वर्ज्यः प्रयत्नतः ॥ कुशीलवाद्यैर्यः कुर्यान्नृत्तविक्रयकारकः ॥ २८ ॥
देवताराधनं कुर्याद्यस्तु नृत्तेन धर्मवित् ॥ स सर्वकामानाप्नोति मोक्षोपायं च विन्दति ॥ २९ ॥ धन्यं यशस्यमायुष्यं स्वर्गलोकप्रदं तथा ॥
ईश्वराणां विलासं तु चार्तानां दुःखनाशनम् ॥ ३० ॥ मूढानामुपदेशं तत्स्त्रीणां सौभाग्यवर्धनम् ॥ शान्तिकं पौष्टिकं काम्यं वासुदेवेन
निर्मितम् ॥३१॥ एतावदुक्तं तव नृत्तशास्त्रं समासतो लोकहिताय राजन् ॥ नृत्तेन यत्नः पुरुषेण कार्यो लोकद्वयञ्जेतुमभीप्सता वै ॥ ३२ ॥ इति
श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे नृत्तशास्त्रवर्णनो नाम चतुस्त्रिंशत्तमोऽध्यायः॥३४॥मार्कण्डेय उवाच ॥ अतः परं प्रवक्ष्यामि चित्र
सूत्रं तवानघ॥उर्वशीं सृजतः पूर्वं चित्रसूत्रं नृपात्मज ॥ १ ॥ नारायणेन मुनिना लोकानां हितकाम्यया ॥ प्राप्तानां वञ्चनार्थाय देवस्त्रीणां महामुनिः ॥ २ ॥
सहकाररसं गृह्य उर्व्यां चक्रे वरस्त्रियम् ॥ चित्रेण सा ततो जाता रूपयुक्ता वराप्सराः ॥ ३ ॥ यां दृष्ट्वा व्रीडिताः सर्वा जग्मुस्ता देवयोषितः ॥
एवं महामुनिः कृत्वा चित्रं लक्षणसंयुतम् ॥ ४ ॥ ग्राहयामास स तदा विश्वकर्माणमच्युतम् ॥ यथा नृत्ते तथा चित्रे त्रैलोक्यानुकृतिः स्मृता
॥ ५ ॥ दृष्टयश्च तथा भावा अङ्गोपाङ्गानि सर्वशः ॥ कराश्च ये महानृत्ते पूर्वोक्ता नृपसत्तम ॥ ६ ॥ त एव चित्रे विज्ञेया नृत्तं चित्रं परं मतम् ॥
नृत्ते प्रमाणं येनोक्तं तत्प्रवक्ष्याम्यतः शृणु ॥ ७ ॥ हंसो भद्रोऽथ मालव्यो रुचकः शशकस्तथा ॥ विज्ञेयाः पुरुषाः पञ्च तेषां वक्ष्यामि लक्षण
म् ॥ ८ ॥ उच्छ्रायायामतुल्यास्ते सर्वे ज्ञेयाः प्रमाणतः ॥ स्वेनैवाङ्गुलमानेन शतमष्टाधिकं भवेत् ॥९ ॥ प्रमाणं नृप हंसस्य भद्रस्य तु षडुत्तरम् ॥
चतुर्भिरधिकं ज्ञेयं मालव्यस्य तथा नृप ॥ १० ॥ शतं च रुचकस्योक्तं दशोनं शशकस्य च ॥ द्वादशाङ्गुलविस्तारस्ताल इत्यभिधीयते ॥ ११ ॥
अङ्गुलफन्तच्चतुर्भागं पादोच्छ्रायः प्रकीर्तितः ॥ द्वौ च तालौ तथा जङ्घे पादतुल्ये च जानुनी ॥ १२ ॥ जंघातुल्यौ तथा चोरू नाभिस्तालं तु
मेढ्रतः ॥ तावच्च नाभिहृदयं हृदयात्कण्ठ एव च ॥ १३ ॥ कण्ठस्तालत्रिभागः स्यात्तालं च वदनं भवेत् ॥ तालषड्भागमप्युक्तं ललाटोपरि
मस्तकम् ॥ १४ ॥ मध्ये मेढ्रं तु विज्ञेयमिति दैर्घ्यं प्रकीर्तितम् ॥ तालः प्रोक्तः करो राजन्बाहू सप्तदशाङ्गुलौ ॥ १५ ॥ प्रबाहू तावदेवोक्तौ वक्षसो
र्धमथाष्टकम् ॥ एतदायामतः प्रोक्तं मानं हंसस्य पार्थिव ॥ १६॥अनेनैवानुसारेण शेषाणामपि कल्पयेत्॥आयामपरिणाहाभ्यां समाः सर्वे नराधिप॥ १७॥

सामान्यतस्ते नृपवर्य मानं प्रोक्तं मया हंसनराधिपस्य ॥ प्रत्यङ्गमानं च मयोच्यमानं समासतस्त्वं शृणु राजसिंह ॥ १८॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे चित्रसूत्रे आयामोच्छ्रायमानवर्णनो नाम पञ्चत्रिंशत्तमोऽध्यायः ॥ ३५ ॥ मार्कण्डेय उवाच ॥ अथ प्रत्यङ्गविभागो भवति तत्र द्वादशाङ्गुलपरीणाहो मूर्धा । चतुरंगुलोच्छ्रायं अष्टाङ्गुलं ललाटम् । शङ्खौ चतुरङ्गुलौ द्व्यङ्गुलोच्छ्रायौ पञ्चाङ्गुलौ गण्डौ चतुरङ्गुलो हनुः । द्व्यङ्गुलौ कर्णौ चतुरङ्गुलोच्छ्रायौ । कर्णमध्याङ्गुलं तद्रन्ध्रमुदकम् ॥ पालिरनियमेन ।(कर्णस्य लुटिकापालिः) नासा चतुरङ्गुला अग्रे द्व्यङ्गुलोच्छ्राया त्रिकायामा च नासापुटावंगुलीविस्तारौ द्विगुणद्विगुणायामौ । नासौष्ठमध्यमर्धाङ्गुलम् । ओष्ठश्चाङ्गुलः । चतुरङ्गुलायाममास्यम् । अधरोङ्गुलं द्व्यंगुलं चिबुकम् । चत्वारिंशद्दन्ताः । तेष्वष्टौ दंष्ट्राः । अधार्ङ्गुलोच्छ्रिता दन्ताः । अङ्गुलद्वादशभागिका दंष्ट्रा । अङ्गुलविस्तृता त्र्यङ्गुलायामे नेत्रे । नेत्रत्रिभागं कृष्णमंडलम्।पञ्चभागास्तारा । अर्धाङ्गुलिविस्तृतेत्र्यङ्गुलायामे भ्रुवौ । तयोर्द्व्यंगुलमन्तरम् । चतुरङ्गुलं नेत्रान्तकर्णविवरम् । दशाङ्गुलविस्तृता ग्रीवा। एकविंशत्यङ्गुलपरिणाहा षोडशाङ्गुलं स्तनान्तरम् । षडङ्गुलं स्तनजत्र्वन्तरम् । षोडश बाहुमूलपरिणाहः। द्वादशाग्रे सप्ताङ्गुलं करतलम् । पंचाङ्गुलं विस्तृतं पचाङ्गुलप्रमाणा मध्यमिका । तत्पूर्वदलहीना प्रदेशिनी । तत्तुल्या चानामिका । तत्परिहीना कनिष्ठिका सर्वाः समत्रिभागपर्वाः । पर्वार्धा नखाः । त्र्यङ्गुलमङ्गुष्ठं द्विपर्वः। जठरपरिणाहो द्वाचत्वारिंशांगुलः । वेध्यप्रमाणाभ्यामङ्गुलं नाभिः । कटिरष्टादशांगुला विपुला । तत्परिधिश्चतुश्चत्वारिंशत् । चतुरंगुलविस्तृतौ वृषणौ । षडङ्गुलं तावत्परिणाहं मेढ्रम् । तन्मध्यत ऊरू चतुरङ्गुलौ । तद्द्विगुणपरिणाहाङ्गुलविपुले जानुनी । तत्त्रिगुणपरिणाहं जङ्घाग्रम् । पञ्चाङ्गुलं चतुर्दशपरिणाहं द्वादश दीर्घौ षडङ्गुलविस्तृतौ पदौ त्रिकायताङ्गुष्ठौ । अङ्गुष्ठतुल्या प्रदेशिनी । तदष्टांशोनाः शेषाः । अङ्गुलचतुर्भागहीनोऽङ्गुष्ठनखः । तदर्धप्रमाणं प्रदेशिन्याः । तदष्टभागः शेषाणाम् । सर्वपादमङ्गुलमष्टाङ्गुलोत्सेधः । त्र्यङ्गुले पार्ष्णी। चतुरङ्गुलोच्छ्रायौ इति हंसप्रमाणं भवति । भवंति चात्र ॥ शेषाणां पार्थिवेन्द्राणां मानं युक्त्या प्रकल्पयेत्॥ अनेनैवानुसारेण स्वमानस्यानुसारतः॥ १॥मधक्षश्चन्द्रगौरस्तु नागराजभुजो बली॥हंसगामी सुमध्यश्च हंसश्च सुमुखो भवेत् ॥ ॥२॥रोमरुद्धकपोलस्तु गजगामी महामतिः ॥ वृत्तोपचितबाहुस्तु भद्रः पद्मनिभो भवेत् ॥३॥ मुद्गश्यामस्तु मालव्यः कृशमध्यस्तनुच्छविः ॥ आजानुबाहुः पीनांसो दन्तिघोणो महाहनुः ॥ ४ ॥ शरद्गौरस्तु रुचकः कम्बुग्रीवो महामतिः ॥ सत्यस्तु सिकतश्चैव बलवांश्च प्रकीर्तितः ॥ ५ ॥

---

१ कोष्ठान्तर्गतः पाठो नास्ति खपुस्तके २ 'चतुरंगुलायामे'इति ख० । ३'मध्यकृचन्द्र'इति ख० । ४ 'कृशमध्यतनुच्छविः'इति ख० ।

रक्तश्यामस्तु शशकः किंचित्[1]कर्बुरकस्तथा ॥ पूर्णगण्डश्च चतुरो मध्वक्षश्च प्रकीर्तितः ॥ ६ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे चित्रसूत्रे प्रमाणवर्णनो नाम षट्त्रिंशत्तमोऽध्यायः ॥ ३६ ॥ मर्कण्डेय उवाच ॥ अङ्गप्रत्यङ्गमानेन यथा पञ्च नराः स्मृताः ॥ स्त्रियः पञ्च तथा ज्ञेयास्ता एव मनुजोत्तम ॥ १ ॥ पुरुषस्य समीपस्था कर्तव्या योषिदीश्वर ॥ नरस्कन्धप्रमाणेन कार्यैका सा यथामिति ॥ २ ॥ अङ्गुलौ द्वौ नरात्क्षामं स्त्रियो मध्यं विधीयते ॥ अधिका च कटिः कार्या तथैव चतुरङ्गुलम् ॥ ३ ॥ उरःप्रमाणतः कार्यौ स्तनौ नृप मनोहरौ ॥ नृपाश्च सर्वे कर्तव्या महापुरुषलक्षणाः ॥ ४ ॥ जालपादकराः कार्यास्तथा वै चक्रवर्तिनः ॥ ऊर्णेयं च भ्रुवोर्मध्ये तेषां कार्यं तथा शुभम् ॥ ॥ ५ ॥ रेखाश्च करयोः कार्यास्तिस्रो राज्ञां मनोहराः ॥ शशक्षतजसङ्काशाः शस्त्रा वै क्षामकोटकाः ॥ ६ ॥ तदङ्गभङ्गिनः सूक्ष्मा निजस्नेहाभ्यलंकृताः ॥ घनेन्द्रनीलसदृशाः केशाः कार्यास्तथा शुभाः ॥ ७ ॥ कुन्तला दक्षिणावर्तास्तरङ्गा सिंहकेसराः ॥ वर्धरा जूटटसरा इत्येताः केशजातयः ॥ ८ ॥ चापाकारं भवेन्नेत्रं मत्स्योदरमथापि वा ॥ नेत्रमुत्पलपत्राभं पद्मपत्रनिभं तथा ॥ ९ ॥ शानाकृतिर्महाराज पञ्चमं परिकीर्तितम् ॥ चापाकारं भवेन्नेत्रं प्रमाणेन यथा स्त्रियः ॥ १० ॥ मत्स्योदराख्यं कथितं तथा यवचतुष्टयम् ॥ नेत्रमुत्पलपत्राख्यं प्रमाणात्षड्यवं स्मृतम् ॥ ११ ॥ पद्मपत्रनिभं नेत्रं प्रमाणेन यवा नव ॥ शशाकृतिं च विज्ञेयं तथैव च यवा दश ॥ १२ ॥ स्वमानाङ्गुलमानस्य यवमानं प्रकल्पयेत् ॥ चापाकारं भवेन्नेत्रं योगभूमिनिरीक्षणात् ॥ १३ ॥ मत्स्योदराकृति कार्यं नारीणां कामिनां तथा ॥ नेत्रमुत्पलपत्राभं निर्विकारस्य शस्यते ॥ १४ ॥ त्रस्तस्य रुदतश्चैव पद्मपत्रनिभं भवेत् ॥ क्रुद्धस्य वेदनान्तस्य नेत्रं शाराकृतिर्भवेत् ॥ १५ ॥ ऋषयः पितरश्चैव देवताश्च नराधिप ॥ स्वप्रभाभरणाः कार्या द्युतिमन्तस्तथैव च ॥ मुष्णन्तस्तेजसा तेजः परेषां नृपसत्तम ॥ १६॥ सम्यग्विचार्य नृपतिः स्वधिया यथोक्तं ह्येतत्प्रमाणमनुरूपमनिन्दितं च ॥ स्थानैरनेककिरणैः स्थिरभूमिलम्भैः कार्यं तदेव सकुमारमजिह्मरेखम् ॥ १७ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मा० व० सं० सामान्यमानवर्णनो नाम सप्तत्रिंशत्तमोऽध्यायः ॥ ३७॥

॥ मार्कण्डेय उवाच॥ नेत्रमुत्पलपत्राभं रक्तान्तं कृष्णतारकम्॥ प्रसन्नं दीर्घपक्ष्मान्तं मनोज्ञं मृदु सत्तम॥१॥ देवतानां करं राजन्प्रजाहितकरं भवेत्॥ समे गोक्षीरवर्णाभे स्निग्धे जिह्माग्रपक्ष्मले ॥ २ ॥ प्रसन्ने पद्मनेत्रान्ते मनोज्ञे प्रियदर्शने ॥ कृष्णतारे विशाले च नयने श्रीसुखप्रदे ॥ ३ ॥

१ किञ्चिः रन्तुरकस्तथा' इति क० । किंचिद्भुरकस्तथा' इति ख० । - २ 'चारा' इति ख० ।

चतुरस्रं सुसम्पूर्णं प्रसन्नं शुभलक्षणम् ॥ अत्रिकोणमवक्रं च अधिकारमुखं भवेत् ॥ ४ ॥ दीर्घमण्डलचक्राणि त्रिकोणादीनि यानि च ॥
वर्ज्यानि तानि देवानां प्रजासु शिवमिच्छता ॥ ५ ॥ कार्या हंसप्रमाणेन देवा यदुकुलोद्वह ॥ तेषां च लोम कर्त्तव्यमक्षिपक्ष्मसु च भ्रुवोः ॥ ६ ॥
अतः शेषेषु गात्रेषु देवाः स्युर्लोमवर्जिताः ॥ द्विरष्टवर्षाकाराश्च तथा कार्या दिवौकसः ॥ ७ ॥ प्रसन्नवदना नित्यं तथा च स्मितदृष्टयः ॥ मुकुटैः
कुण्डलैर्हारैः केयूरैरङ्गदैस्तथा ॥ ८ ॥ भूषितास्तेऽथ कर्तव्याः शुभस्रग्दामधारिणः ॥ श्रोणीसूत्रेण महता पादाभरणचारिणा ॥ ९ ॥ यज्ञोपवी
तवंतश्च सावतंसास्तथैव च ॥ जान्वधोलम्बिना कार्याः शोभिना कटिवाससा ॥ १०॥ वामे मनुजशार्दूल दक्षिणं जानु दर्शयेत् ॥ अंशुकं च
तथा कार्यं देवतानां मनोहरम् ॥ ११ ॥ प्रभा च तेषां कर्तव्या मूर्ध्नि मूर्ध्नः प्रमाणतः ॥ मण्डलाभा महाराज देवतातोऽनुकारिणी ॥ १२ ॥
ऊर्ध्वा दृष्टिरधोदृष्टिस्तिर्यक् तेषां विवर्जयेत् ॥ हीनाधिका वा दीना वा क्रुद्धा रूक्षा तथैव च ॥ १३ ॥ ऊर्ध्वा तु मरणायोक्ता शोकायाधः प्रकी
र्तिता ॥ तिर्यग्धनविनाशाय हीना भवति मृत्यवे ॥ १४ ॥ अधिका शोकजननी दीना च नृपसत्तम ॥ रूक्षा धनक्षयाय स्यात्क्रुद्धा भयविव
र्धिनी ॥ १५ ॥ शातोदरी न कर्तव्या न कार्या चाधिकोदरी ॥ सुक्षता च न कर्तव्या तथा यदुकुलोद्वह ॥ १६ ॥ हीनाधिकप्रमाणा च रूक्ष
वर्णा तथैव च ॥ विवृतेन च वक्त्रेण नता च यदुनन्दन ॥ १७ ॥ प्रमाणहीनैरङ्गैश्च त्वधिकैरपि पार्थिव ॥ शातोदरी क्षुद्भयदा मरणायाधिको
दरी ॥ १८ ॥ सक्षता मरणायोक्ता हीना धनविनाशिनी ॥ अधिका शोकजननी रूक्षवर्णा भयप्रदा ॥ १९ ॥ विवृत्तेन च वक्रेण कुलनाशकरी
भवेत् ॥ प्राच्याभा धननाशाय दक्षिणेन च मृत्यवे ॥ २० ॥ पश्चिमेन सुतघ्नी च चोदग्भयविवृद्धये ॥ प्रमाणहीना नाशाय अधिका देशनाशि
नी ॥ २१ ॥ अश्लक्ष्णा मरणायोक्ता क्रुद्धा रूपविनाशिनी ॥ प्रमाणहीनां प्रतिमां तथा लक्षणवर्जिताम् ॥ २२ ॥ आवाहिताश्च विप्रेन्द्रैर्नावि
शन्ति दिवौकसः ॥२३॥ आविशंति तु तां नित्यं पिशाचा दैत्यदानवाः ॥ तस्मात्सर्वप्रयत्नेन मानहीनां विवर्जयेत् ॥ २४ ॥ चित्रलक्षणसंयुक्तं
प्रशस्तं सर्वमुच्यते ॥ आयुष्यं च यशस्यं च धनधान्यविवर्धनम् ॥ २५ ॥ तदेव लक्षणापेतं धनधान्यविनाशनम् ॥ देवा नरेन्द्र कर्त्तव्याः शोभा
वन्तः सदैव तु ॥ मृगेन्द्रवृषनागानां हंसानां गतिभिः समाः ॥ २६ ॥ सलक्षणं चित्रमुशन्ति धन्यं देशस्य कर्तुर्वसुधाधिपस्य ॥ तस्मात्प्रयत्नेन
सलक्षणं तत्कार्यं नरैर्यत्नपरैर्यथावत् ॥ २७ ॥ ॥इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे प्रतिमालक्षणवर्णनन्नामाष्टत्रिंशत्तमो
ऽध्यायः ॥ ३८ ॥ मार्कण्डेय उवाच ॥ शुभाकारविहाराणि नानावर्णधराणि च ॥ नव स्थानानि रूपाणां शृणु तान्यनुपूर्वशः ॥ १ ॥

ऋज्वागतं भवेत्पूर्वमनृजु तदनन्तरम् ॥ साचीकृतशरीरं च भवत्यर्धविलोचनम् ॥ २ ॥ ततः पार्श्वागतं नाम पुरावृत्तमनन्तरम् ॥ पृष्ठागतमधः कार्यं पुरावृत्तं[1] समानतम् ॥ ३ ॥ एतान्यनेकभेदानि नव स्थानानि भूषिते ॥ एकैकस्येह भवतः शृणु मे नृप लक्षणम् ॥ ४ ॥ तत्राभिमुखमेवादौ स्पष्टमानगुणान्वितम् ॥ सुसम्पूर्णं सुचार्वङ्गं सुश्लक्ष्णमलवर्तकम् ॥ ५ ॥ सुशुद्धं मधुरं स्पष्टरेखासंस्कारभूषितम् ॥ यद्भवेत्स्थानमक्षीणगात्रं पृष्ठगतं तु तत् ॥ ६ ॥ मुखस्यादावतोऽक्षीणं वक्षस उदरं तथा ॥ कट्या च स्कन्धदेशाच्च ऊरुतश्च क्षयं गता ॥ ७ ॥ नासापुटाधरोष्ठानां चतुर्थांशं च बुद्धिमत् ॥ क्षयं नीतं त्रिभागं च यस्य गात्रेभ्य एव च ॥ ८ ॥ कान्तारूपं परं स्थानं स्थानलम्भोपपादितम् ॥ एतदेवर्जुनामोक्तमनेककरणान्वितम् ॥ ९॥ यत्तिर्यग्भूमिलम्भेन नेत्रहारि सुवर्तनम्॥ सुकुमारं चतुर्भागं क्षीणं सर्वांगशोभनम् ॥ १० ॥ अध्यर्धभ्रूललाटे चाप्यध्यर्धघ्राणमुत्कटम् ॥ भागक्षयावशेषार्धं कलापक्षीणलोचनम् ॥ ११ ॥ कलावलुप्तभ्रूलेखं लिखितं स्निग्धलेखया ॥ न च च्छायागतं कालं न चावक्रजुकोपनम् ॥ १२ ॥ खेकारिकत्वाच्च नृप साचीकृतमिहोच्यते ॥ अर्धं नेत्रं मुखे यस्य लुप्तम वभ्रुवे तथा ॥ १३ ॥ भङ्गो ललाटमात्रश्च दृश्यानां सारमेव तु ॥ मात्रार्धा चैकतो गण्डं दृश्यमर्धकृतक्षयम् ॥ १४ ॥ मात्रार्धं कण्डरेखाया यव माविष्कृतं हनोः ॥ उरसोऽर्धं मुखं लिप्तं नाभ्यास्याच्छिष्टमंगुलम् ॥ १५ ॥ अध्यर्धशेषा च कटी अन्यच्च दर्शनीकृतम् ॥ अध्यर्धाक्षं परिज्ञेयमाकारेणैवमादिना ॥ १६ ॥ च्छायागतमिति प्रोक्तं पर्यायेणैतदेव तु ॥ यस्यावलोक्यते पार्श्वं दक्षिणं सव्यमेव वा ॥ १७ ॥ कृत्स्नमन्यक्षयातं तदङ्गमङ्गगतिस्तथा ॥ एकाक्षमेकभ्रूलेखमरनामा ललाटवत् ॥ १८ ॥ एकं श्रोत्रं यदर्धं स्याच्चिबुकार्धं शिरोरुहम् ॥ गृहीतमानलावण्यमाधुर्यादिगुणान्वितम् ॥ १९ ॥ पार्श्वागतमिति प्रोक्तं तत्स्याद्भित्तिकसंज्ञितम् ॥ अपाकुक्षे कलक्षीणे कण्ठदेशे तथैव च ॥ २० ॥ बाहुगण्डललाटेषु कालाख्यं क्षयमागतम् ॥ बाहुवक्षःकटितटस्थितिषु................ ॥ २१ ॥ द्विकलं द्विकलं ज्ञात्वा यथाभागं कृषीकृतम् ॥ अनुरूपप्रमाणेन नातितीक्ष्णाङ्गमेव च ॥ २२ ॥ एतद्गण्डपरावृत्तं स्थानं च परिकीर्तितम् ॥ पृष्ठतो यदपि व्यक्तं देहबन्धं मनोहरम् ॥ २३ ॥ वक्रभ्रुकुटिसर्वाङ्गसन्धिबन्धनमेव च ॥ ईषच्च दर्शितापाङ्गकपोलजठरे पुनः ॥ २४ ॥ प्रकाशितैकपार्श्वेन सुस्थिरं दृष्टिहारि च ॥ स्वहीनमानलावण्यमाधुर्यादिगुणान्वितम् ॥ २५ ॥ लेखेषु पुस्तदेशेषु पृष्ठागतमिति स्मृतम् ॥ यस्योर्धमङ्गपत्येन भागेन समवस्थितम् ॥ २६ ॥



१ 'शरावृत्तम्' इति ख० ।

स्थितेर्ष्याभमुखेर्धाङ्के परिवृत्तिवशाद्भवेत ॥ किञ्चिच्छायागतौ कार्याबुपरिष्टादधः पुरः ॥ २७ ॥ अर्धार्धगतसारूप्यं चिरसग्राम्यसंस्थितम् ॥ मध्येन नेत्ररम्येन यथायोगविलोपिना ॥ २८ ॥ विज्ञेयं दधतः कार्यं परिवृत्तं नरेश्वर ॥ समग्रदृष्टिस्फिग्देशं दृष्टपादतलं तु यत् ॥ २९ ॥ ऊर्ध्वतः क्षीणदृष्टार्धं दृश्या शेषं कटिस्थलम् ॥ लुप्तपादाङ्गुलितलं दृश्याशेषतलद्वयम् ॥ ३० ॥ चतुरस्रं सुसम्पूर्णमभयानकदर्शनम् ॥ प्रकाशीकृतबाहुश्च सुदृष्टमुखकन्धरम् ॥ ३१॥ लुप्तं जङ्कैकतो ज्ञेयं नाम्ना स्थानं समानतः ॥ नीचान्येतानि सर्वाणि तथोक्तैरभिराजितम् ॥ ३२ ॥ लक्षितैर्लक्षितव्यानि त्वयानुक्रमशो नव ॥ एषां प्रज्ञावशेषेण विकाराणि बहून्यपि ॥ ३३ ॥ एकैकशश्च भूभागैः कर्तव्यानि यथावधि ॥ त्वया सन्तः समासाद्य सम्यङ् मानं तु भूतले ॥ ३४ ॥स्थानानीमानि मानाद्यैर्गुणैर्लेख्यानि यत्नतः ॥ नवैवैतानि दृष्टानि सर्वभावेष्वनिन्दित ॥ ३५ ॥ स्थानानि नाधिकमतः परमस्ति हि किंचन ॥ जीवलोकं परिक्रम्य सततं स्थाणुजङ्गमम् ॥३६॥ उत्तमाधममध्येषु प्रमाणगुणतः सदा॥ चित्रं विचित्रं त्रिविधं प्रमाणं त्रयमेव च ॥३७ ॥ क्षयवृद्धी च कार्त्स्येन मया तेऽभिहितेऽनघ॥ अतः परं प्रवक्ष्यामि क्षयवृद्धिविधिं क्रमात्॥३८॥ चित्रविद्भिरसंज्ञेयं समासेनेतरेण च ॥ त्रयोदशविधैवात्र क्षयवृद्धिरुदाहृता ॥ ३९ ॥ स्थानानां बहुसंस्थत्वादङ्गावयवसम्भवा ॥ स्थानं पृष्ठगतं पूर्वमवर्जुगतमेव च ॥ ४० ॥ मध्यार्धार्धं तथार्धार्धं साचीकृतमुखं तथा ॥ नतं गण्डपरावृत्तं पृष्ठागतमथापि च॥ ४१॥ पार्श्वागतं च विज्ञेय मुल्लेपं चलितं तथा ॥ उत्तानं वलितं चेति स्थानानि तु त्रयोदश ॥ ४२ ॥ कार्याण्येतानि सर्वाणि नामसंस्थानतो नृप ॥ मण्डलानीह वैशाखप्रत्यालीढक्रियाक्रमैः ॥ ४३ ॥समाश्चार्द्धसमाः पादाः सुस्थितानि चलानि च ॥ समासमपदस्थं च द्विविधं स्थानकं भवेत् ॥ ४४ ॥ तद्गत्वा पदभूयिष्ठं स्थानं समपदं स्मृतम् ॥ मण्डलश्च द्वितीयं स्यात्स्थानान्यन्यानि यानि च ॥ ४५ ॥ तान्येकसमपादानि विचित्राणि चलानि च ॥ तत्र वैशाखमालीढं प्रत्यालीढं च धन्विनाम् ॥ ४६ ॥ चित्रगोमूत्रकगतं विषमं खड्गचर्मिणाम् ॥ चलितं खलितायस्तमालीढैकपदक्रमम् ॥ ४७ ॥ शक्तितोमरपाषाणभिन्दिपालादिधारिणाम् ॥ सवल्गितं चक्रशूलगदाकुणपधारिणाम् ॥ ४८ ॥ एकपादसमस्थानं द्वितीयेन तु विह्वलम् ॥ शरीरं च सलीलं स्यात्सावष्टंभैः क्वचिद्द्रुतम् ॥ ४९ ॥ लीलाविलासविभ्रान्तं विशालजघनस्थलम् ॥ स्थिरैकपादविन्यासं स्त्रीरूपं विलिखेद्बुधः ॥ ५० ॥ प्रमाणहीनस्तु जनोऽनुभूयात्कालस्य भावस्य बलात्पृथिव्याम् ॥ इति प्रचिन्त्यात्मधिया बुधेन कार्यं प्रमाणं क्षयवृद्धियोगे ॥ ५१ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेय

वज्रसंवादे चित्रसूत्रे क्षयवृद्धिर्नामैकोनचत्वारिंशत्तमोऽध्यायः ॥ ३९ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ त्रिप्रकारेष्टिकाचूर्णं त्र्यंशं क्षिप्त्वा मृदस्ततः ॥
गुग्गुलं समधूच्छिष्टं मधुकं सुरुकं गुडम् ॥ १ ॥ कुसुम्भं तैलसंयुक्तं कृत्वा दध्यात्समांशकम्॥ त्रिभागमग्निदग्धाया सुधायास्तत्र चूर्णयेत्॥२॥
बिल्वजं द्व्यंशमिश्रं तत्प्रक्षिप्य मषकं कषम्॥वालुकांशं ततो दद्यात्स्वानुरूपेण बुद्धिमान्॥३॥ततः शकलतोयेन प्लावयेत्पिच्छिलेन तम्॥परिक्लिन्नं
समग्रं तन्मासमात्रं निधापयेत्॥४॥मार्दवं मासमात्रेण गतमुद्धृत्य यत्नतः ॥ दद्यात्प्रलेपं निपुणः शुष्कं कुडचे विमृश्य तु ॥५ ॥ श्लक्ष्णं समं
स्ववष्टब्धं निम्नोन्नतविना कृतम् ॥ न चातिघनतां यातं न चातितनुताङ्गतम् ॥ ६ ॥ यदा शुष्कं भवेत्कुडचं तत्प्रलिप्तमसत्कृतम् ॥
तया मृदा सर्जरसा तैलभागाावियुक्तया ॥ ७ ॥ श्लक्ष्णीकुर्यात्प्रयत्नेन लेपनैः श्लक्ष्णमञ्जनैः ॥ मुहुर्मुहुश्च क्षीरेण सिक्ता मार्जनयत्नतः ॥ ८ ॥
सद्यः शोषमुपायातं कुडचं तन्मनुजेश्वर ॥ अपि वर्षशतस्यान्ते न प्रणश्येत्तु कर्हिचित् ॥ ९ ॥ अनेनैव प्रकारेण द्विविधैर्वर्णकैर्युताः ॥
कर्तव्याश्चित्रवपुषा विविधा मणिभूमयः ॥ १० ॥ कुड्ये शुष्के तिथौ शस्ते ऋक्षे च गुणसंयुते ॥ चित्रायोगे विशेषेण श्वेतवासा यतात्मवान्॥
॥ ११ ॥ ब्राह्मणान्पूजयित्वा तु स्वस्ति वाच्य प्रणम्य च ॥ तद्विदश्च यथान्यायं गुरूँश्च गुरुवत्सलः ॥ १२ ॥ प्राङ्मुखो देवताध्यायी चित्रकर्म
समाचरेत् ॥ श्वेतकाद्रवकृष्णाभिर्वार्तिकाभिर्यथाक्रमम् ॥ १३ ॥ आलिख्य स्थापयेद्विद्वान्प्रमाणे स्थानके तथा ॥ ततस्तु रञ्जयेद्रङ्गैर्यथास्थाना
नुरूपतः ॥ १४ ॥ श्यामा गौरी तथा तस्य च्छविः स्यात्तां प्रदर्शयेत् ॥ तस्याश्च लक्षणं प्रोक्तं प्राप्ताया नृप विस्तरे ॥ १५ ॥ मूलरङ्गाः स्मृताः
पञ्च श्वेतः पीतो विलोमतः ॥कृष्णो नीलश्च राजेन्द्र शतशोन्तरतः स्मृताः ॥ १६॥ पूर्णरङ्गविभागेन भावकल्पनया तथा॥स्वबुद्धया कारयेद्रङ्गा
ञ्शतशोऽथ सहस्रशः ॥ १७ ॥ नीलेष्वतिव्यतिकृ[1]तिः पालाश इति शस्यते ॥ स शुद्धः श्वेतमिश्रश्च नीलाभ्यधिक एव च ॥ १८ ॥ एकाधिकं
च भवति च्छवीनामनुरूपतः ॥ श्वेताधिको वा न्यूनो वा समांशश्चेति स त्रिधा ॥१९॥ स एकस्तम्भनायुक्तो बहुधैवं विकल्पते ॥ तेन दूर्वांकुरा
पीतः कपित्थहरितः शुभाः ॥ २० ॥ मुद्गश्यामप्रकृतयः कर्तव्याश्छवयो नृप ! ॥ नीलः पाण्डुरसम्पृक्तो विरङ्गः सोऽप्यनेकधा ॥ २१ ॥ अन्यो
न्याभ्यधिकं न्यूनं समांशवशकल्पना ॥ तेन नीलोत्पलनिभा माषसच्छायसुप्रभा ॥ २२ ॥ क्रियते च्छवयो रम्या यथायोगविनिश्चयात् ॥
लाक्षया श्वेतया युक्ता लाक्षारोध्रपिनद्धया॥२३॥रक्ता रक्तोत्पलश्यामा च्छविर्भवति शोभना॥ सापि नानाविधानन्यान्वर्णान्विकुरुते बहून् ॥२४॥

१ 'नीलपीतकृतिर्वृतिः'—इति ख० ।

रङ्गद्रव्याणि कनकं रजतं ताम्रमेव च ॥ अभ्रकं राजवन्तं च सिन्दूरं त्रपुरेव च ॥ २५ ॥ हरितालं सुधा लाक्षा तथा हिङ्गुलकं नृप ॥ नीलं च मनुजश्रेष्ठ तथान्ये सन्त्यनेकशः ॥ २६ ॥ देशेदेशे महाराज कार्यास्ते स्तम्भनायुताः ॥ लोहानां पत्रविन्यासं भवेद्वापि रसक्रिया ॥ २७ ॥ संकटं लोहविन्यस्तमभ्रकं[१] द्रावणं भवेत् ॥ एवं भवति लोहानां लेखने कर्मयोग्यता ॥ २८ ॥ अभ्रकद्रावणं प्रोक्तं सुरसेन्द्रजभूमिजे ॥ चर्म्मांकुथोऽथ[२] बकुला निर्यासस्तम्भनाद्भवेत् ॥ सर्वेषामेव रङ्गाणां सिन्दूरक्षीर इष्यते ॥ २९ ॥ मातङ्गदूर्वारसपट्टबद्धैः संस्तम्भितं चित्रमुदारपुच्छैः ॥ धौतं जलेनापि न नाशयेत तिष्ठत्यनेकान्यपि वत्सराणि ॥ ३० ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे रङ्गव्यतिकरो नाम चत्वारिंशत्तमोऽध्यायः ॥ ४० ॥ मार्कण्डेय उवाच ॥ सत्यं च वैणिकं चैव नागरं मिश्रमेव च ॥ चित्रं चतुर्विधं प्रोक्तं तस्य वक्ष्यामि लक्षणम् ॥ १ ॥ यत्किञ्चिल्लोकसादृश्यं चित्रं तत्सत्यमुच्यते ॥ दीर्घाङ्गं सप्रमाणं च सुकुमारं सुभूमिकम्॥२॥चतुरस्रं सुसम्पूर्णं न दीर्घं नोल्वणाकृतिम्॥ प्रमाणं स्थानलम्भाढ्यं वैणिकं तन्निगद्यते॥३॥ दृढोपचितसर्वाङ्गं वर्तुलं नघनोल्वणम् ॥ चित्रं तं नागरं ज्ञेयं स्वल्पमाल्यविभूषणम् ॥ ४ ॥ चित्रमिश्रं समाख्यातं समासान्मनुजोत्तम ॥ तिस्रश्च वर्तनाः प्रोक्ताः पत्राहैविकबिन्दुजाः ॥ ५ ॥ पत्राकृतिभी रेखाभिः कथितात्र च वर्तना ॥ अतीव कथिता सूक्ष्मा तथाहैरिकवर्तना ॥ ६ ॥ तथा च स्तम्भनायुक्ता कथिता बिन्दुवर्तना ॥ दौर्बल्यांबिंदुरेखत्वमविभक्तत्वमेव च ॥ ७ ॥ बृहद्दण्डौष्ठनेत्रत्वमविरुद्धत्वमेव च ॥ मानवाकारता चेति चित्रदोषाः प्रकीर्तिताः ॥ ८ ॥ स्थानप्रमाणभूलम्बो मधुरत्वं विभक्तता ॥ सादृश्यं पक्षवृद्धिश्च गुणाश्चित्रस्य कीर्तिताः ॥ ९ ॥ रेखा च वर्तना चैव भूषणं वर्णमेव च ॥ विज्ञेया मनुजश्रेष्ठ चित्रकर्मसु भूषणम् ॥ १० ॥ रेखां प्रशंसन्त्याचार्या वर्तनां च विचक्षणाः ॥ स्त्रियो भूषणमिच्छन्ति वर्णाढ्यमितरे जनाः ॥ ११ ॥ इति मत्वा तथा यत्नः कर्तव्यश्चित्रकर्मणि ॥ सर्वस्य चित्तग्रहणं यथा स्यान्मनुजोत्तम ॥ १२ ॥ दुरासनं दुरानीतं पिपासा चान्यचित्तता ॥ एते चित्रविनाशस्य हेतवः परिकीर्तिताः ॥ १३ ॥ स्वानुलिप्तावकाशा च निदेशं मधुका शुभा ॥ सुप्रसन्नाभिगुप्ता च भूमिः स्याच्चित्रकर्मणि ॥ १४ ॥ सुस्निग्धविस्पष्टसुवर्णरेखं विद्वान्यथादेशविशेषवेशम् ॥ प्रमाणशोभाभिरहीयमानं कृतं भवेच्चित्रमतीव चित्रम् ॥ १५ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० मा० सं० वर्तनो नामैकचत्वारिंशत्तमोऽध्यायः ॥ ४१ ॥

१ 'स्तं शुद्रकम्' इति ख० । २'चर्म्मकाथोऽथ'–इति ख० ।

मार्कंडेय उवाच ॥ यथा देवस्तथाचित्रे कर्तव्यः पृथिवीश्वर ॥ एकैकं रूपके लोम कर्तव्यं पृथिवीक्षिताम् ॥ १ ॥ ऋषयश्च सगन्धर्वा दैत्याश्च सह दानवाः ॥ मन्त्रिणश्च महाराज संवत्सरपुरोहितौ ॥ २ ॥ कार्या भद्रप्रमाणेन ब्राह्मणाश्च नरेश्वर ॥ ऋषयस्तत्र कर्तव्या जटाजूटोपशोभिताः ॥ ३ ॥ कृष्णाजिनोत्तरासङ्गा दुर्बलास्तेजसा युताः ॥ देवताश्चापि गन्धर्वा मुकुटेन विवर्जिताः ॥ ४ ॥ कर्तव्यास्ते महाराज शिखरैरुपशोभिताः ॥ ब्रह्मवर्चस्विनो विप्राः शुक्लाम्बरधरास्तथा ॥ ५ ॥ मन्त्रिणश्च महाराज सांवत्सरपुरोहितौ ॥ सर्वालङ्कारसंयुक्तानेवोल्वणविभूषणान् ॥ ६ ॥ मुकुटेन विहीनांस्तु सोष्णीषान्कारयेच्च तान् ॥ दैत्याश्च दानवाश्चैव कर्तव्या भ्रुकुटीमुखाः ॥ ७ ॥ वर्तुलाक्षास्तथा कार्या भीमवक्त्रास्तथैव च ॥ तेषामभ्युद्धतो वेषः कर्तव्यः पृथिवीपते ॥ ८ ॥ रुद्रप्रमाणाः कर्तव्यास्तथा विद्याधरा नृप ॥ सपत्नीकाश्च ते कार्या माल्यालङ्कारधारिणः ॥ ९ ॥ खड्गहस्ताश्च ते कार्या गगने वाथ वा भुवि ॥ मालव्यपरिमाणेन किन्नरोरगराक्षसाः ॥ १० ॥ रुचकस्य प्रमाणेन यक्षाः कार्या नराधिप ॥ शशकस्य प्रमाणेन प्रधानं मानवं लिखेत् ॥ ११ ॥ पिशाचा वामनाः कुब्जाः प्रमथाश्च महीभुजः ॥ मानन्नियमतः कार्यं रूपन्नियमतस्तथा ॥ १२ ॥ स्वानुरूपप्रमाणाश्च सर्वेषां योषितः स्मृताः ॥ किन्नरा द्विविधाः प्रोक्ता नृवक्त्रा हयविग्रहाः ॥ १३ ॥ नृदेहाश्चाश्ववक्त्राश्च तथान्ये परिकीर्तिताः ॥ अश्ववक्त्रास्तु कर्तव्याः सर्वालङ्कारधारिणः ॥ १४ ॥ गीतवाद्यसमायुक्ता द्युतिमन्तस्तथैव च ॥ उत्कचा राक्षसाः कार्या विकलाक्षा विभीषणाः ॥ १५ ॥ देवकाराश्च कर्तव्या नागाः फणविराजिताः ॥ सालंकाराः स्मृताः सर्वे यक्षास्तेऽभिहिता मया ॥ १६ ॥ सुराणां प्रमथाः कार्याः प्रमाणेन विवर्जिताः ॥ पिशाचाश्च तथा कार्या प्रमाणेन विवर्जिताः ॥ १७ ॥ नानासत्त्वमुखाः कार्या देवतानां तथा गणाः ॥ नानावेशा महाराज नानायुधधरास्तथा ॥ १८ ॥ नानाक्रीडाप्रसक्ताश्च नानाकर्मकरास्तथा ॥ एकरूपास्तु कर्तव्या वैष्णवानान्तथा गणाः ॥ १९ ॥ तत्रापि तेषां कर्तव्या भेदाश्चत्वार एव च ॥ वासुदेवसमाः कार्या वासुदेवगणाः शुभाः ॥ २० ॥ संकर्षणेन सदृशास्तद्गणाश्च तथा स्मृताः ॥ प्रद्युम्नेनानिरुद्धेन तद्गणाः सदृशास्तथा ॥ २१ ॥ तत्प्रभावाः स्मृताः सर्वे तदायुधधरास्तथा ॥ नीलोत्पलदलश्यामाश्चन्द्रशुभ्रास्तथैव च ॥ २२ ॥ तथा मरकताकाराः सिन्दूरसदृशप्रभाः ॥ रुचकस्य तु मानेन वेश्याः कार्यास्तथा स्त्रियः ॥ २३ ॥ वेश्यानामुद्धतं वेशं कार्यं शृङ्गारसम्मतम् ॥ मालव्यामानतः कार्या लज्जावत्यः कुलस्त्रियः ॥ २४ ॥ नात्युन्नतेन वेशेन सालंकारास्तथैव च ॥ दैत्यदानवयक्षाणां राक्षसानां तथैव च ॥ २५ ॥ रूपवत्यस्तथा कार्याः पत्न्यो मनुजसत्तम ॥

मातरः स्वेन रूपेण तथा कार्या नराधिप ॥ २६ ॥ पिशाचानां च पत्न्योऽपि कार्यास्तद्रूपसंयुताः ॥ विभर्तृकास्तु कर्तव्यास्त्रियः पलितसंयुताः ॥ २७ ॥ शुक्लवस्त्रपरीधानाः सर्वालङ्कारवर्जिताः ॥ कुब्जा वामनिका वृद्धा तथा रूपवती भवेत् ॥ २८ ॥ राजस्त्रीणां परीवारे वृद्धः स्यात्कञ्चुकी पुनः ॥ रुचकस्य तु मानेन वैश्यमानं विधीयते ॥ २९ ॥ शशकस्य तु मानेन शूद्रमानं तथैव च ॥ यथा जात्यनुरूपेण वेषेण मनुजेश्वर ॥ ३० ॥ दैत्यादियोषितां कार्याः परिचारस्त्रियः सदा ॥ महाशिरा महोरस्को महानासो महाहनुः ॥ ३१ ॥ पीनस्कन्धभुजग्रीवः परिमाणेन चोच्छ्रितः ॥ त्रितरङ्गललाटश्च व्योमदृष्टिर्महाकटिः ॥ ३२ ॥ हतश्चित्रविदा कार्यः सेनायाः पतिरूर्जितः ॥ योधाः कार्या महाराज प्रायशो भ्रुकुटीमुखाः ॥ ३३ ॥ किंचिदुद्धतवेशाश्च कार्याश्चोद्धतदर्शनाः ॥ अभ्युद्गताश्च कर्तव्या आयुधीयाः पदातयः ॥ ३४ ॥ खड्गचर्मधराः कार्याः कर्णाटकवपुर्धराः ॥ वरबाणधराः कार्या नग्नजङ्घाश्च धन्विनः ॥ ३५ ॥ नात्युद्धतेन वेषेण सोपालत्कास्तथैव ते ॥ यथोक्तलक्षणाः कार्याः कुञ्जरास्तुरगादयः ॥ ३६ ॥ हस्त्यारोहास्तु कर्तव्या मुहुः श्यामास्तु वर्णतः ॥ केशैश्च जूटमरैः सालंकारास्तथैव च ॥ ३७ ॥ उदीच्यवेशाः कर्तव्यास्तुरगाणां तु सादिनः ॥ उद्धतेन तु वेषेण कर्तव्या बन्दिनस्तथा ॥३८॥ सिरादर्शितकण्ठाश्च तथैवोन्मुखदृष्टयः॥ आह्वानकास्तु कर्तव्याः कपिलाः केकरेक्षणाः ॥ ३९ ॥ किंचिद्दानवसङ्काशाः प्रायशो दण्डपाणयः ॥ न केकरान्न कपिलान्युद्धे द्वंद्वान्समालिखेत् ॥ ४० ॥ नात्युन्नतेन वेषेण न च शान्तेन शस्यते ॥ पार्श्वबद्धेन खड्गेन प्रतीहारस्तु दण्डवान् ॥ ४१ ॥ संवेष्टितशिरस्काश्च कर्तव्या वणिजस्तथा ॥ गायना नर्तका ये वा वाद्यवादविशुद्धये ॥ ४२ ॥ उद्धतेन तु वेषेण कार्यास्ते मनुजोत्तम ॥ आसन्नपलिताः कार्याः स्वभूषणविभूषिताः ॥ ४३ ॥ पौरजानपदाः श्रेष्ठाः शुभवस्त्रविभूषणाः ॥ प्रसृतप्रवणाः प्रह्वाः स्वभावप्रियदर्शिनः ॥ ४४ ॥ स्वकर्मोपस्करव्यग्रः कार्यः कर्मकरो जनः॥ प्रांशवः पीनगात्राश्च पीनग्रीवशिरोधराः ॥ ४५ ॥ उग्राश्च नीचकेशाश्च मल्लाः कार्यास्तथोद्धताः ॥ वृषाः केसरिणश्चैव याश्चान्याः सत्त्वजातयः ॥ ४६ ॥ यथाभूमिनिवेशास्ते लोकं दृष्ट्वा नराधिप ॥ एतद्रूपसमुद्देशमदृष्टानां तवेरितम् ॥ ४७ ॥ दृष्टं सुसदृशं कार्यं सर्वेषामविशेषतः ॥ चित्रे सादृश्यकरणं प्रधानं परिकीर्तितम् ॥ ४८ ॥ बुद्ध्या रूपं यथावेशं वर्णं च मनुजोत्तम ॥ देशेदेशे नराः कार्या यथावत्तत्समुद्भवाः ॥४९॥ देशं नियोगं स्थानं च कर्म बुद्ध्वा च यत्नतः ॥ आसनं शयनं यानं वेशं कार्यं नराधिप ॥ ५० ॥ सरितां सशरीराणां वाहनानि प्रदर्शयेत् ॥ पूर्णकुम्भकराः कार्यास्तथा नामितजानवः ॥ ५१ ॥ शैलानां शिखरं मूर्ध्नि दर्शयेन्मनुजोत्तम ॥

द्वीपानां च करैः कार्यं तथा भूमण्डलं शुभम् ॥ ५२ ॥ ❀........................राजंस्तथा शिखरपाणयः ॥ रत्नपात्रकराः कार्याः सागरा मनुजोत्तम ॥ ५३ ॥ समुद्राणां प्रभास्थाने सलिलं तु प्रदर्शयेत् ॥ आयुधानां च तच्चिह्नं किञ्चिन्मूर्धनि दर्शयेत् ॥ ५४ ॥ निधीनां दर्शयेत्कुम्भं शंखं शंखस्य दर्शयेत् ॥ पद्मं पद्मस्य राजेन्द्र शेषाणामनुरूपतः ॥ ५५ ॥ कार्यस्यावयवाः कार्याः स्वदेहसदृशाः पृथक् ॥ दिव्यानां दर्शयेच्चिह्न मक्षमालां च पुस्तकम् ॥ ५६ ॥ अतः परं प्रवक्ष्यामि रूपं यद्यस्य दृश्यते ॥ आकाशं दर्शयेद्विद्वान्विवर्णं खगमाकुलम् ॥ ५७ ॥ तथैव दर्शयेद्राजं स्तारकामण्डितं दिवम् ॥भूमिं च जाङ्गलानूपमिश्रां स्वैःस्वैस्तथा गुणैः ॥ ५८ ॥ पर्वतं तु शिलाजालैः शिखरैर्धातुभिर्द्रुमैः ॥ निर्झरैर्भुजगैश्चैव दर्शयेन्नृपसत्तम ॥ ५९ ॥ वनं नानाविधैर्वृक्षैर्विहङ्गैः श्वापदैस्तथा ॥ तोयं च दर्शयेद्विद्वाननन्तैर्मत्स्यकच्छपैः ॥ ६० ॥ पद्माक्षैश्च महाराज तथान्यैर्जलजैर्गुणैः ॥ देवतावेश्मभिश्चित्रैः प्रासादापणवेश्मभिः ॥ ६१ ॥ नगरं दर्शयेद्विद्वान् राजमार्गैश्च शोभनैः ॥ वमत्या दर्शयेद्ग्रामं किञ्चि दुद्यानभूषितम् ॥ ६२ ॥ सर्वेषामथ दुर्गाणां कर्तव्यं दर्शनं तथा ॥ स्वभूमिविनिवेशेन वप्राट्टालकपर्वतैः ॥ ६३ ॥ पण्ययुक्तास्तु कर्तव्यास्तथै वापणभूमयः ॥ आधानभूमिः कर्तव्या पानयुक्ता नराकुला ॥ ६४ ॥ उत्तरीयविहीनांश्च द्यूतसक्तान्प्रदर्शयेत् ॥ जिताञ्शोकसमायुक्तान्हृष्टां ल्लब्धजयांस्तथा ॥ ६५ ॥ चतुरङ्गबलोपेतां प्रहरद्भिर्नरैर्युताम् ॥ मृतावयवरक्ताढ्यां रणभूमिं प्रदर्शयेत् ॥ ६६ ॥ चिताकुणपसंयुक्तं श्मशानं च तथा नृप ॥ युक्तं सभारैरुष्ट्राद्यैर्मार्गं सार्थं प्रदर्शयेत् ॥ ६७ ॥ सचन्द्रग्रहनक्षत्रां तथा दर्शितलौकिकाम् ॥ आसन्नतस्करां रात्रिं दर्शयेत्सुप्तमान वाम् ॥ ६८ प्रात्रात्रे दर्शयेत्तत्र तथा चैवाभिसारिकाम् ॥ सारुणो म्लानदीपश्च प्रत्यूषो रुतकुक्कुटः ॥६९॥ कर्मव्यग्रजनप्रायः कर्तव्यो वानरस्त था ॥ द्विजैर्नियमभिर्युक्तां रक्तां सन्ध्यां प्रदर्शयेत् ॥ ७० ॥ तमसो दर्शनं कार्यं वासे संसर्पकैर्नरैः ॥ कुमुदानां विकाशे च ज्योत्स्नां चन्द्रे प्रदर्शयेत् ॥७१॥दर्शयेत्सरजस्यं च शय्यां कर्णोत्करावृताम् ॥ सद्वृत्तमानवप्रायां वृष्टिं वृष्ट्याम्प्रदर्शयेत्॥७२॥प्राणिनां क्लेशतप्तानामादित्येन निदर्शनम् ॥ वृक्षैर्वसन्तजैः फुल्लैः कोकिलामधुपोत्कटैः ॥ ७३ ॥ प्रहृष्टनरनारीकं वसन्तं च प्रदर्शयेत ॥ क्लान्तैः कार्यं नरैर्ग्रीष्मं मृगैश्छायागतैस्तथा ॥ ७४ ॥ महिषैः पङ्कमलिनैस्तथा शुष्कजलाशयम् ॥ विहङ्गैर्द्रुमसंलीनैः सिंहव्याघ्रैर्गुहागतैः ॥ ७५॥ तोयनम्रघनैर्युक्तं सेन्द्रचापविभूषणैः ॥ विद्युद्विद्योतनै र्युक्तां प्रावृषं दर्शयेत्तथा ॥ ७६ ॥ सफलद्रुमसंयुक्तां पक्वसस्यां वसुन्धराम् ॥ सहंसपद्मसलिलां शरदं तु तथा लिखेत् ॥ ७७ ॥ सबाष्पसलिल

❀ पुस्तकद्वये त्रुटिः । १ 'आयुधानां च तद्वद्भिः'-इति ख० ।

स्थानं तथा लूनवसुन्धरम् ॥ सनीहारदिगन्तं च हेमन्तं दर्शयेद्बुधः ॥ ७८ ॥ हृष्टवायसमातङ्गं शीतार्तजनसङ्कुलम् ॥ शिशिरं तु लिखेद्विद्वान्हिमच्छन्नदिगन्तरम् ॥ ७९ ॥ वृक्षाणां पुष्पफलतः प्राणिनां मदतस्तथा ॥ ऋतूनां दर्शनं कार्यं लोकान्दृष्ट्वा नराधिप ॥ ८० ॥ रसभावाश्च कर्तव्या यथापूर्वमुदाहृताः ॥ यथायोगं तु युञ्जीत नृत्ताभिहितमत्र च ॥८१॥ शुष्कं वर्तनया वस्तु चित्रं तन्मध्यमं स्मृतम् ॥ शुष्कार्द्रमधमं प्रोक्तं चार्द्रमेव तथोत्तमम् ॥ ८२ ॥ यथादेयं यथाकालं यथादेशं यथावयः ॥ क्रियमाणं भवेद्धन्यं विपरीतमतोऽन्यथा ॥ ८३ ॥ इति विचक्षणबुद्धिविकल्पितैः करणकान्तिविलासरसादिभिः ॥ लिखितमीक्षणलोचनमादराद्भवति चित्रमभीप्सितकामदम् ॥ ८४ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मा० व० सं० रूपनिर्माणं नाम द्विचत्वारिंशत्तमोऽध्यायः ॥ ४२ ॥ मार्कण्डेय उवाच ॥ शृङ्गारहासकरुणवीररौद्रभयानकाः ॥ बीभत्साद्भुतशान्ताश्च नव चित्ररसाः स्मृताः ॥ १ ॥ तत्र यत्कांतिलावण्यलेखामाधुर्यसुन्दरम् ॥ विदग्धवेशाभरणं शृङ्गारे तु रसे भवेत् ॥ २ ॥ यत्कुब्जवामनप्रायमीषद्विकटदर्शनम् ॥ वृथा च हस्तं संकोच्य तत्स्याद्धास्यकरं रसे ॥ ३ ॥ याच्ञाविरहासन्त्यागविक्रयव्यसनादिषु ॥ अनुकम्पितकं यत्स्याल्लिखेत्तत्करुणारसे ॥४॥ पारुष्यविकृतिक्रोधविषस्त्यर्था न दूषणम् ॥ दीप्रशस्त्राभरणवत्कृतं रौद्ररसे भवेत् ॥ ५ ॥ प्रतिज्ञागर्भशौर्यादिष्वर्थेष्वौदार्यदर्शनम् ॥ सस्मयं सभ्रुकुटिवद्वीरं वीररसेऽद्भुतम् ॥६॥ दुष्टदुर्दर्शनोन्मत्ताहिंस्रव्यापादकादि यत् ॥ तत्स्याद्भयानकरसे प्रयोगे चित्रकर्मणः ॥७॥ श्मशानगर्हितं घातकरणं स्थानदारुणम्॥यच्चित्रं चित्रवच्छ्रेष्ठं[1] तद्बीभत्सरसे भवेत् ॥८॥ यदा विनीतरोमाञ्चचिन्तां तार्क्ष्यमुखानतम् ॥ प्रदर्शयति चान्योऽन्यं तदद्भुतरसाश्रयम् ॥९ ॥ यद्यत्सौम्याकृतिध्यानधारणासनबन्धनम् ॥ तपस्विजनभूयिष्ठं तत्तु शान्ते रसे भवेत् ॥ १० ॥ शृङ्गारहास्यशान्त्याख्या लेखनीया गृहेषु ते ॥ ११ ॥ परशेषा न कर्तव्या कदाचिदपि कस्यचित् ॥ देववेश्मनि कर्तव्या रसाः सर्वे नृपालये ॥ १२ ॥ राजवेश्मनि नो कार्या राज्ञां वासगृहेषु ते ॥ सभावेश्मसु कर्तव्या राज्ञां सर्वरसा गृहे ॥ १३ ॥ वर्जयित्वा सभां राज्ञो देववेश्म तथैव च ॥ युद्धश्मशानकरुणामृतदुःखार्तकुत्सितान् ॥ १४ ॥ अमङ्गल्यांश्च न लिखेत्कदाचिदपि वेश्मसु ॥ निधिशृंगान्वृषान्राजन्निधिहस्तान्नताङ्गजान् ॥ १५ ॥ निधिविंद्याधरा राजनृषयो गरुडस्तथा ॥ हनूमांश्च सुमङ्गल्या ये च लोके प्रकीर्तिताः ॥ १६ ॥ लिखितव्या महाराज गृहेषु सततं नृणाम् ॥ चित्रकर्म न कर्तव्यमात्मना स्वगृहे नृप ॥ १७ ॥ दौर्बल्यं स्थूलरेखत्वमविभक्तत्वमेव च ॥ वर्णानां सङ्करश्चात्र चित्रदोषाः प्रकीर्तिताः ॥१८॥

१ 'दुष्टके दर्शनोच्छ्रम' इति क० 'दुष्टदुर्दर्शनाप्लुत्य' इति ख० ।

स्थानप्रमाणं भूलम्भो मधुरत्वं विभक्तता ॥ सादृश्यं क्षयवृद्धी च गुणाष्टकमिदं स्मृतम् ॥ १९ ॥ स्थानहीनं गतरसं शून्यदृष्टिमलीमसम् ॥ चेतनारहितं वा स्यात्तदशस्तं प्रकीर्तितम् ॥ २० ॥ लसतीव च भूलम्बो बिभ्यतीव तथा नृप॥ हसतीव च माधुर्यं सजीव इव दृश्यते ॥ २१ ॥ सश्वास इव यच्चित्रं तच्चित्रं शुभलक्षणम् ॥ हीनाङ्गं मलिनं शून्यं बद्धव्याधिभयाकुलैः ॥ २२ ॥ वृत्तं प्रकीर्णकेशैश्च सुमंगलयैर्विवर्जयेत् ॥ प्रतीतं च लिखेद्धीमान्नाप्रतीतः कथंचन ॥ २३ ॥ शास्त्रज्ञैः सुकृतैर्दक्षैश्चित्रं हि मनुजाधिप ॥ श्रियमावहति क्षिप्रमलक्ष्मीं चापकर्षति ॥ २४ ॥ निर्णेजयति चोत्कण्ठां निरुणद्ध्यागतं शुभम् ॥ शुद्धां प्रथयति प्रीतिं जनयत्यतुलामपि ॥ २५ ॥ दुःस्वप्नदर्शनं हन्ति प्रीणाति गृहदैवतम् ॥ न तु शून्यमिवाभाति यत्र चित्रं प्रतिष्ठितम् ॥ २६ ॥❀..................दकर्णं चाप्यनलंकृतम् ॥ शल्यविद्धं च वृद्धं च यः करोति स चित्र वित् ॥ २७ ॥ तरङ्गाग्निशिखाधूमं वैजयन्त्यम्बरादिकम् ॥ वायुगत्या लिखेद्यस्तु विज्ञेयो मत्तचित्रवित् ॥ २८ ॥ सुप्तं च चेतनायुक्तं मृतं चैतन्यवर्जितम् ॥ निम्नोन्नतविभागं च यः करोति स चित्रवित् ॥ २९ ॥ एतेषां खलु सर्वेषामानुलोम्यं प्रशस्यते ॥ सम्मुखत्वमथैतेषां चित्रे यत्नाद्विवर्जयेत् ॥ ३० ॥ यथाचित्रं तथैवोक्तं खातपूर्वं नराधिप ॥ सुवर्णरूप्यताम्रादि तच्च लोहेषु दर्शयेत् ॥ ३१ ॥ शिलादारुषु लोहेषु प्रतिमा करणं भवेत् ॥ अनेनैव विधानेन यथा चित्रमुदाहृतम्॥३२॥ तथानेन विधानेन पुस्तकर्म विधीयते ॥ द्विविधं तच्च कथितं घनं सुषिरमेव च॥३३॥ घनैर्लोहैः शिलाभिश्च दारुमृद्भिः सदा भवेत् ॥ चर्मणा सुषिरः कार्यो दारुलोहैस्तथैव च ॥ ३४ ॥ देयो मृत्तिकया लेपः पुस्ते चर्मकृते दृढः ॥ सूत्रेऽनेन विधानेन चित्रवस्त्रे तथा लिखेत् ॥ ३५ ॥ एतदुद्देशमात्रेण यदा ते कथितं नृप ॥ अशक्यो विस्तराद्वक्तुं बहुवर्षशतैरपि ॥ ॥ ३६ ॥ यदत्र नोक्तं तन्नृत्ताद्विज्ञेयं वसुधाधिप ॥ नृतेऽपि नोक्तं तच्चित्रं नात्र योज्यं नराधिप ॥ ३७ ॥ कलानां प्रवरं चित्रं धर्मकामार्थ मोक्षदम् ॥ मङ्गल्यं प्रथमं चैतद्गृहे यत्र प्रतिष्ठितम् ॥ ३८ ॥ यथा सुमेरुः प्रवरो नगानां यथाण्डजानां गरुडः प्रधानः ॥ यथा नराणां प्रवरः क्षितीशस्तथा कलानामिह चित्रकल्पः ॥ ३९ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे शृङ्गारादिभावकथनं नाम त्रिचत्वारिंशत्तमोऽध्यायः ॥ ४३ ॥ समाप्तं चित्रसूत्रम् ॥ वज्र उवाच ॥ देवतारूपनिर्माणं कथयस्व ममानघ ॥ यस्मात्सन्निहिता नित्यं शास्त्रवत्सा कृता भवेत् ॥ १ ॥ मार्कण्डेय उवाच ॥ देवतारूपनिर्माणं वदतः शृणु पार्थिव ॥ आदावेव प्रवक्ष्यामि

❀ पुस्तकद्वये पाठो न । १ 'तच्चित्रात्ततो' इति ख० ।

त्रिमूर्तेस्तव पार्थिव ॥ २ ॥ विष्णोरमितवीर्यस्य प्रतिमालक्षणं शुभम् ॥ ब्राह्मी तु राजसी मूर्तिस्तस्य सर्वप्रवर्तिनी ॥ ३ ॥ सात्त्विकी वैष्णवी ज्ञेया संसारपरिपालिनी ॥ तामसी च तथा रौद्री ज्ञेया संहारकारिणी ॥ ४ ॥ ब्रह्माणं कारयेद्विद्वान्देवं सौम्यं चतुर्मुखम् ॥ बद्धपद्मासनं तोष्यं तथा कृष्णाजिनाम्बरम् ॥ ५ ॥ जटाधरं चतुर्बाहुं सप्तहंसे रथे स्थितम् ॥ वामे न्यस्तं करतले तस्यैकं दोर्युगं भवेत् ॥ ६ ॥ एकस्मिन्दक्षिणे पाणावक्षमाला तथा शुभा ॥ कमण्डलुर्द्वितीये च सर्वाभरणधारिणः ॥ ७ ॥ सर्वलक्षणयुक्तस्य शान्तरूपस्य पार्थिव ॥ पद्मपत्रद लाग्राभं ध्यानसम्मीलितेक्षणम् ॥ ८ ॥ अर्चायां कारयेद्देवं चित्रे वा पुस्तकर्मणि ॥ देवदेवं तथा विष्णुं कारयेद्गरुडस्थितम् ॥ ९ ॥ कौस्तुभो द्भासितोरस्कं सर्वाभरणधारिणम् ॥ सजलाम्बुदसच्छायं पीतदिव्याम्बरं तथा ॥ १० ॥ मुखाश्च कार्याश्चत्वारो बाहवो द्विगुणास्तथा ॥ सौम्यं तु वदनं पूर्वं नारसिंहं तु दक्षिणम् ॥११॥ कापिलं पश्चिमं वक्त्रं तथा वाराहमुत्तरम् ॥ तस्य दक्षिणहस्तेषु बाणाक्षमुसलादयः ॥१२ ॥ चर्म चीरं धनुश्चेन्द्रचापेषु वनमालिनः ॥ कार्याणि विष्णोर्धर्मज्ञ शृणु रूपं पिनाकिनः ॥१३॥ देवदेवं महादेवं वृषारूढं तु कारयेत् ॥ तस्य वक्त्राणि कार्याणि पञ्च यादवनन्दन ॥ १४ ॥ सर्वाणि सौम्यरूपाणि दक्षिणं विकटं मुखम् ॥ कपालमालिनं भीमं जगत्संहारकारकम् ॥ १५॥ त्रिनेत्राणि च सर्वाणि वदनं ह्युत्तरं विना ॥ जटाकलापे महति तस्य चन्द्रकला भवेत् ॥ १६ ॥ तस्योपरिष्टाद्वदनं पञ्चमं तु विधीयते ॥ यज्ञोपवीतं च तथा वासुकिं तस्य कारयेत ॥:१७ ॥ दशबाहुस्तथा कार्यो देवदेवो महेश्वरः ॥ अक्षमालां त्रिशूलं च शरदण्डमथोत्पलम् ॥ १८ ॥ तस्य दक्षिणहस्तेषु कर्त व्यानि महाभुज ॥ वामेषु मातुलिङ्गं च चापादर्शौ कमण्डलुम् ॥ १९ ॥ तथा चर्म च कर्तव्यं देवदेवस्य शूलिनः ॥ वर्णास्तथा च कर्तव्या श्चन्द्रांशुसदृशप्रभाः ॥२०॥एतत्त्रिमूर्तेस्तव रूपमुक्तं माहानुभावस्य जनार्दनस्य॥पद्मस्वरूपं तव वच्मि राजन्यत्रार्चनं कार्यमथेश्वराणाम् ॥२१॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मा० व० सं० त्रिमूर्तिनिर्माणन्नाम चतुश्चत्वारिंशत्तमोऽध्यायः ॥ ४४ ॥ मार्कण्डेय उवाच ॥ सौवर्णं राजतं ताम्रमारकूटमयं तथा ॥ द्विहस्तमात्रं कर्तव्यं कमलं चारुकेसरम् ॥ १ ॥ तस्याष्टभागाः कर्तव्याः कर्णिका नृप वर्तुला ॥ अष्टभागोच्छ्रिता चैव पत्रे न्यस्ता तु कारयेत् ॥२॥ एकतोनत्रिपञ्चाशत्कर्णिकायां तु कारयेत ॥ वर्तुला कर्णिकाच्छेदा यवमात्रसमन्विताः ॥ ३ ॥ षोडशांशेन कर्तव्यं तद्धि विस्तरतस्तथा ॥ शेषं पत्रैस्तु सुस्निग्धैः पूरयेदष्टभिस्तथा ॥ ४ ॥ तस्य प्रतिष्ठा कर्तव्या तत्र देवांस्तु पूजयेत् ॥ ब्रह्माणं पूजयेत्तत्र तत्र सम्पूजयेद्धरिम् ॥ ५ ॥ तत्र सम्पूजयेद्रुद्रं तत्र सम्पूजयेच्छ्रियम् ॥ तत्र सम्पूजयेच्छक्रं देवराजं जगत्पतिम् ॥ ६ ॥ तत्र सम्पूजयेत्सूर्यं शशिनं

तत्र पूजयेत् ॥ यमेव मनसोदिश्य देवं पद्मं प्रतिष्ठितम् ॥ तमेव पूजयेत्तत्र नान्यं देवं कथञ्चन ॥ ७ ॥ पद्मस्य रूपं कथितं तवैतत्पद्मं समग्रा
वसुधा निरुक्ता ॥ तत्रार्चनं कार्यमथेश्वराणां तत्रार्चितास्ते वरदा भवन्ति ॥ ८ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे
पद्मरूपनिरूपणो नाम पञ्चचत्वारिंशत्तमोऽध्यायः ॥ ४५ ॥ ॥ वज्र उवाच ॥ ॥ रूपगन्धरसैर्हीनः शब्दस्पर्शविवर्जितः ॥ पुरुषस्तु त्वया प्रोक्त
स्तस्य रूपमिदं कथम् ॥ १ ॥ मार्कण्डेय उवाच ॥ प्रकृतिर्विकृतिस्तस्य रूपेण परमात्मनः ॥ अलक्ष्यं तस्य तद्रूपं प्रकृतिस्सा प्रकीर्तिता ॥
॥ २ ॥ साकारा विकृतिर्ज्ञेया तस्य सर्वं जगत्स्मृतम् ॥ पूजाध्यानादिकं कर्तुं साकारस्यैव शक्यते ॥ ३ ॥ स्वतस्तु देवस्याकारः पूजनीयो
यथाविधि ॥ अव्यक्ता हि गतिर्दुःखं देहभृद्भिरवाप्यते ॥ ४ ॥ अतो भगवतानेन स्वेच्छया तत्प्रदर्शितम् ॥ प्रादुर्भावेष्व
थाकारं तं दिशन्ति दिवौकसः ॥ ५ ॥ एतस्मात्कारणात्पूजा साकारस्य विधीयते ॥ हेतुमच्च तदाकारं तन्मे निगदतः
शृणु ॥ ६ ॥ अरुणं रजसा वर्णं तेन पद्माग्रसन्निभः ॥ ब्रह्मा देववरो ज्ञेयस्सर्वभूतनमस्कृतः ॥ ७ ॥ ऋग्वेदः पूर्ववदनं
यजुर्वेदस्तु दक्षिणम् ॥ पश्चिमं सामवेदः स्यादाथर्वणमथोत्तरम् ॥ ८ ॥ ये वेदास्ते मुखा ज्ञेयाश्चतस्रो बाहवो दिशः ॥
आप एव जगत्सर्वं स्थावरं जङ्गमं तथा ॥ ९ ॥ ताश्च धारयते ब्रह्मा तेन हस्ते कमण्डलुः ॥ अक्षमाला विनिर्दिष्टा कालस्तु ब्रह्मणः करे ॥ १० ॥
कलनात्सर्वभूतानां काल इत्यभिधीयते ॥ यज्ञो विस्तीर्यते सर्वः शुक्लाशुक्लेन कर्मणा ॥ ११ ॥ शुक्लाशुक्लमतो ज्ञेयं वासः कृष्णाजिनं विभोः ॥
भूलोकश्च भुवो लोकः स्वर्लोकोऽथ महत्तथा ॥ १२ ॥ जनस्तपश्च सत्यं च सप्त लोकाः प्रकीर्तिताः ॥ ये लोकास्ते रथे हंसा ब्रह्मणः परमेष्ठिनः ॥ १३ ॥
विष्णुनाभौ समुत्पन्नं यत्पद्मं सा महीभुजः ॥ मेरुस्तु कर्णिका तस्य विज्ञेया राजसत्तम ॥ १४ ॥ सर्वत्र पार्थिव स्थैर्यं ध्यानबन्धमतः स्थितम् ॥
पद्मासनेन भगवान्विधत्ते पार्थिवेन तु ॥ १५ ॥ आत्मनः परमं धाम रूपहीनं विचिन्तयेत् ॥ दृष्ट्यर्थं जगतामास्ते ध्यानसम्मीलितेक्षणः ॥ १६ ॥
तथैवोषधयो राजञ्जगद्धारणकारणाः ॥ ब्रह्मणस्ता जटा ज्ञेयाः सर्वगस्य महात्मनः ॥ १७ ॥ प्रकाशकानि लोकस्य विद्यास्थानानि यानि च ॥
तस्याभरणजातानि ज्ञेयानि परमेष्ठिनः ॥ १८ ॥ एतद्धि तस्याप्रतिमस्य रूपं तवेरितं सर्वजगन्मयस्य ॥ एवं शरीरेण जगत्समग्रं सन्धारयत्येव
जगत्प्रधानः ॥ १९ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मा०सं० ब्रह्मरूपनिर्माणो नाम षट्चत्वारिंशत्तमोऽध्यायः ॥ ४६ ॥ मार्कण्डेय उवाच ॥

१ 'पर्वतं पार्थिव स्थैर्यं ध्यानमन्धमतः परम्' इति ख० ।

परस्य पुरुषस्यैषा संसारे विकृतिर्मता ॥ सर्वा च विकृतिः कृष्णा तेन संसारपालनम् ॥ १ ॥ कृष्णरूपं स भगवान्विधत्ते भूतभावनः ॥ ब्रह्मणैव हरेः प्रोक्तं सर्वाभरणधारणम् ॥ २ ॥ बिभर्ति वक्षसा ज्ञानं कौस्तुभं विमलं हरिः ॥कृष्णा दीर्घा विचित्रा च वनमाला प्रकीर्तिता ॥ ३ ॥ यथा सर्वमिदं बद्धं जगद्राजंश्चराचरम् ॥ अविद्या वसनं तस्य संसारपरिपालिनी ॥ ४ ॥ विद्या शुक्ला विनिर्दिष्टा कृष्णमज्ञानमुच्यते ॥ अज्ञानविद्या मध्यस्था त्वविद्या परिकीर्तिता ॥ ५ ॥ न कृष्णा न तथा शुक्ला तेन विद्येयमुत्तमा ॥ अन्तरालं बिभर्त्येव सुवर्णकनकोपमम् ॥ ६॥ मनस्तु गरुडो ज्ञेयः सर्वभूतशरीरगम् ॥ तस्माच्छीघ्रतरं नास्ति तथैव बलवत्तरम् ॥ ७ ॥ दिशश्चतस्रो धर्मज्ञ तावत्यो विदिशस्तथा ॥ बाहवोऽष्टौ विनिर्दिष्टास्तस्य देवस्य शार्ङ्गिणः ॥ ८ ॥ बलं ज्ञानं तथैश्वर्यं शक्तिश्च यदुनन्दन ॥ विज्ञेयं देवदेवस्य तस्य वक्त्रचतुष्टयम् ॥ ९ ॥ वासुदेवश्च भगवांस्तथा सङ्कर्षणः प्रभुः ॥ प्रद्युम्नश्चानिरुद्धश्च बलाद्याः परिकीर्तिताः ॥ १०॥ द्वौद्वौ भुजौ तु विज्ञेयौ प्रतिवक्त्रं महात्मनः ॥ वासुदेवस्य करयोर्ज्ञातव्यौ सूर्यरात्रिपौ ॥ ११ ॥ सङ्कर्षणस्य कार्योस्तथा मुसललाङ्गले ॥ प्रद्युम्नस्य तथा ज्ञेयौ चापबाणौ महाभुज ॥ १२ ॥ आनिरुद्धस्य विज्ञेयौ चर्मखड्गौ विचक्षणैः ॥ पुरुषप्रकृती ज्ञेयौ सूर्याचन्द्रमसावुभौ[1] ॥ १३ ॥ एते च वासुदेवस्य करे चक्रगदे मते ॥ कालं च लाङ्गलं विद्धि मृत्युं च मुसलं तथा॥१४॥ताभ्यां संकर्षणो रुद्रः कर्षतीदं चराचरम्॥प्रद्युम्नस्य करे वह्नेः शार्ङ्गं चापं च यत्स्मृतम्॥१५॥ ध्येयं तु परमं लक्ष्यं ताभ्यां छिन्दन्ति योगिनः ॥ ब्रह्मणस्त्वनिरुद्धस्य करे चर्म महाभुज ॥ १६ ॥ अज्ञानावरणं ज्ञेयं जगत्सृष्टिप्रयोजनम् ॥ वैराग्यं नन्दकं खड्गं छित्त्वा वै तेन बन्धनम् ॥ नदन्ति योगिनो यस्मात्तस्मात्तन्नन्दकं स्मृतम् ॥ १७ ॥ एतद्धि तस्याप्रतिमस्य रूपं तवेरितं सर्वजगन्मयस्य ॥ एवं शरीरेण जगत्समग्रं बिभर्ति देवः स जगत्प्रधानः ॥ १८ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे विष्णुरूपनिर्माणो नाम सप्तचत्वारिंशत्तमोऽध्यायः ॥ ४७ ॥ ॥ छ ॥ मार्कण्डेय उवाच ॥ सद्योजातं वामदेवमघोरं च महाभुज ॥ तथा तं पुरुषं ज्ञेयमीशानं पञ्चमं मुखम् ॥ १ ॥ सद्योजातं मही प्रोक्ता वामदेवं तथा जलम् ॥ तेजस्त्वघोरं विद्यात्तं वायुस्तत्पुरुषं मतम् ॥ २ ॥ ईशाने च तथाकाशमूर्द्धस्थं पञ्चमं मुखम् ॥ विभागेनाथ वक्ष्यामि शम्भोर्वदनपञ्चकम् ॥ ३ ॥ महादेवमुखं ज्ञेयं पूर्वं शम्भोर्महात्मनः ॥ नेत्राणि त्रीणि तस्याङ्ग सोमसूर्यहुताशनाः ॥ ४ ॥ दक्षिणं तु मुखं रौद्रं भैरवं तत्प्रकीर्तितम् ॥ पश्चिमं यन्मुखं तस्य नन्दिवक्त्रं तदुच्यते ॥ ५ ॥ उमा

१ 'चन्द्रभास्करौ' इति पुस्तकान्तरे पाठः ।

वक्त्रं च विज्ञेयं तस्य देवस्य चोत्तरम् ॥ सदाशिवाख्यं विज्ञेयं पावनं तस्य पञ्चमम् ॥ ६ ॥ त्रिलोचनानि सर्वाणि वामदेवं द्विलोचनम् ॥
महादेवमुखं भूमिस्ततः स्याद्भैरवं मुखम् ॥ ७ ॥ नन्दिवक्त्रं तथा वायुरौद्रेयं चाप उच्यते ॥ सदाशिवमुखं ज्ञेयमाकाशं यदुनन्दन ॥ ८ ॥
दिशो दश भुजास्तस्य विज्ञेयं वदनं प्रति ॥ महादेवकरे ज्ञेया त्वक्षमालाकमण्डलू ॥ ९ ॥ सदाशिवमुखे ज्ञेयौ चापबाणौ महाभुज ॥ माहेश्वरं
ततश्चापं पिनाकमिति शब्दितम् ॥ १० ॥ तेषां तु पूर्वमेवोक्तं व्याख्यानं रिपुसूदन ॥ दण्डश्च मातुलुङ्गश्च करयोर्भैरवस्य तु ॥ ११ ॥ मृत्यु
दण्डौ विनिर्दिष्टौ मातुलुङ्गस्तथा करे ॥ जगद्बीजस्य सर्वस्य ये राजन्परमाणवः ॥ १२ ॥ तैः पूर्णं बीजरत्नं तु भैरवस्य करे स्मृतम् ॥ चर्मशूले
करे ज्ञेये नन्दिनो यदुनन्दन ॥ १३ ॥ पूर्वमेव च ते प्रोक्तं धर्मव्याकरणं मया ॥ त्रिशूलदण्डमव्यक्तं शूलेषु व्यक्ततां गतम् ॥ १४ ॥ सत्त्वं रज
स्तमश्चैव विज्ञातव्यं नृपोत्तम ॥ दर्पणेन्दीवरे ज्ञेये तथा देव्याः करद्वये ॥ १५॥ आदर्शं निर्मलं ज्ञानं वैराग्यं च तथोत्पलम् ॥ महादेवस्य देवस्य
व्याख्याता ब्राह्मणा जटाः ॥ १६॥ ऐश्वर्यं तु कला चान्द्री मूर्ध्नि शम्भोः प्रकीर्तिता ॥ त्रैलोक्यशमनः क्रोधो वासुकिर्नामतः स्मृतः ॥ १७ ॥
तृष्णा विशाला चित्रा च व्याघ्रचर्म प्रकीर्तितम् ॥ वृषो हि भगवान्धर्मश्चतुष्पादः प्रकीर्तितः ॥१८॥ जगदुत्पादकं वस्तु प्रकृतिः सा प्रकीर्तिता ॥
शुक्ला च प्रकृतिः सर्वा तेन शुक्लो महेश्वरः ॥१९॥ एतद्धि तस्याप्रतिमस्य रूपं तवेरितं सर्वजगन्मयस्य ॥ एवं शरीरेण जगत्समग्रं सधारयत्येव
जगत्प्रधानः ॥ २० ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे महादेवरूपनिर्माणो नामाष्टाचत्वारिंशत्तमोऽध्यायः ॥ ४८ ॥ वज्र
उवाच ॥ नासत्ययोर्ममाचक्ष्व रूपनिर्माणमच्युत ॥ नासत्यरूपयोश्चैव त्वं हि सर्वविदुच्यसे ॥ १ ॥ मार्कण्डेय उवाच ॥ पद्मपत्रसवर्णाभौ पद्मप
त्रसमाम्बरौ ॥ द्विभुजौ देवभिषजौ कर्तव्यौ देवसंयुतौ ॥२॥सर्वाभरणसंपन्नौ विशेषाच्चारुलोचनौ ॥ तयोरोषधयः कार्या दिव्या दक्षिणहस्तयोः
॥ ३ ॥ वामयोः पुस्तकौ कार्यौ दर्शनीयौ तथा द्विज ॥ एकस्य दक्षिणे पार्श्वे वामे चान्यस्य यादव ॥ ४ ॥ नारीयुगं तु कर्तव्यं सुरूपं चारुदर्श
नम् ॥ तयोश्च नामनी प्रोक्ते रूपसंपत्तथाकृतिः ॥ ५ ॥ मधूकपुष्पसंकाशा रूपसंपत्प्रकीर्तिता ॥ प्राकृतिः कथिता लोके शरकाण्डनिभा तथा ॥
न तु भाण्डकरे कार्ये चन्द्रशुक्लाम्बरे तथा ॥६॥ नासत्ययो रूपमिदं तवोक्तं मयाद्य मुख्यं यदुवंशमुख्य ॥ ध्यानेन सर्वामयनाशकारि सम्पूजितं
वा भुवि मानवानाम् ॥७॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे नासत्यरूपनिर्माणो नामैकोनपञ्चाशत्तमोऽध्यायः ॥४९॥ वज्र
उवाच॥शक्रकीनाशवरुणधनदानां भृगूत्तम ॥ सहेतुकं समाचक्ष्व रूपनिर्माणमच्युत ॥१॥ मार्कण्डेय उवाच॥ चतुर्दन्ते गजे शक्रः श्वेतः कार्यः

सुरेश्वरः ॥ वामोत्सङ्गगता कार्या रक्षमाणा तथा शची ॥२॥ नीलवस्त्रः सुवर्णाभः सर्वाभरणवाँस्तथा ॥ तिर्यग्ललाटगेनाक्ष्णा कर्तव्यश्च विभूषि
तः॥३॥शक्रश्चतुर्भुजः कार्यो द्विभुजा च तथा शची ॥ पद्माङ्कुशौ तु कर्तव्यौ शक्रदक्षिणहस्तयोः ॥४॥ वामं शचीपृष्ठगतं द्वितीयं वज्रसंयुतम् ॥
वामे शच्याः करे कार्या रम्या सन्तानमञ्जरी ॥५॥ दक्षिणं पृष्ठविन्यस्तं देवनाथस्य कारयेत् ॥ ब्रह्मणैव विनिर्दिष्टं तस्याभरणधारणम् ॥ ६ ॥
तेनैव तस्य कथितं तथा बाहुचतुष्टयम् ॥ त्रिनेत्रता च तस्योक्ता देवदेवेन शम्भुना ॥ ७ ॥ रुक्माभवर्णता तस्य तेजसां धामकारणात् ॥ यन्नीलं
वसनं तस्य तदाकाशं प्रकीर्तितम् ॥ ८ ॥ आज्ञा तस्याङ्कुशो हस्ते सर्वभूतवशङ्करी ॥ पद्मस्थां सहपद्मेन विभूतिं भुवनाधिप ॥ ९ ॥ करेण
धारयञ्छ्रीमान्मघवान् सुरसत्तमः ॥ दुष्टसंशमनं क्रोधो वज्रः शक्रकरः स्मृतः ॥ १० ॥ वासुदेवः स्मृतः शक्रस्तेन लक्ष्मीः शची मता ॥ तस्याः
करे च सन्तानं ज्ञेया सन्तानमञ्जरी ॥ ११ ॥ अर्थस्त्वैरावणो ज्ञेयो दन्तास्तस्य तु कीर्तिताः ॥ दैवमन्त्रप्रभूत्साहशक्तयस्तु महाबलाः ॥ १२ ॥
एतद्रूपं वासुदेवस्य शाक्रं तुभ्यं प्रोक्तं देवराजस्य राजन् ॥ याम्यं रूपं तेऽधुनाहं ब्रवीमि यस्यायत्ते सुख दुःखे नराणाम् ॥ १३ ॥
इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसम्वादे शक्ररूपनिर्माणो नाम पञ्चाशत्तमोऽध्यायः ॥ ५० ॥ मार्कण्डेय उवाच ॥
सजलाम्बुदसच्छायस्तप्तचामीकराम्बरः ॥ महिषस्थश्च कर्तव्यः सर्वाभरणवान्यतः ॥ १ ॥ नीलोत्पलाभा धूमोर्णा वामोत्सङ्गे च कारयेत् ॥
धूमोर्णा द्विभुजा कार्या यमः कार्यश्चतुर्भुजः ॥ २ ॥ दण्डखड्गावुभौ कार्यौ यमदक्षिणहस्तयोः ॥ दण्डोपरि मुखं कार्यं ज्वालमालाविभूषणम् ॥३॥
धूम्रोर्णापृष्ठगं वामं चर्मयुक्तं तथापरम् ॥ धूमोर्णादक्षिणं हस्तं यमपृष्ठगतं भवेत् ॥ ४ ॥ वामे तस्याः करे कार्यं मातुलुङ्गं सुदर्शनम् ॥ पार्श्वे तु
दक्षिणे तस्य चित्रगुप्तं च कारयेत् ॥ ५ ॥ उद्दिश्य वेशं स्वाकारं द्विभुजं सौम्यदर्शनम् ॥ दक्षिणे लेखिनी तस्य वामे पत्रं तु कारयेत् ॥ ६ ॥
वामे पाशधरः कार्यः कालो विकटदर्शनः ॥ यमं सङ्कर्षणं विद्धि तामसीं तनुमाश्रितम् ॥ ७ ॥ मर्यादापालनार्थाय लोकसंहारकारणम् ॥ नीलो
त्पलदलच्छायस्तामसत्वात्प्रकीर्तितः ॥ ८ ॥ वसनं तस्य विख्यातं वासुदेवेन शत्रुहन् ॥ चतुर्भुजत्वं विख्यातं ब्रह्मणा परमात्मनः ॥ ९ ॥
ब्रह्मणा तस्य निर्दिष्टं सर्वाभरणधारणम् ॥ यो मोहो मरणं नृणां विज्ञेयो महिषस्तु सः ॥१०॥ अमोघं तु करे दण्डं मृत्युं धारयते यमः ॥ अनि
रुद्धेन तस्योक्तं धारणं खड्गचर्मणोः ॥ ११ ॥ कालरात्री तु विज्ञेया धूमोर्णा यदुनन्दन ॥ तस्यास्तु शूलिना प्रोक्तं बीजपूरकधारणम् ॥ १२ ॥
चित्रगुप्तो विनिर्दिष्टस्तथात्मा सर्वदेहगः ॥ पत्रं धर्ममधर्मं च करस्था तस्य लेखिनी ॥ १३ ॥ काल एव स्वरूपेण कालो यमसमीपगः ॥

तस्य पाशः करे घोरो यममार्गः सुदुष्करः ॥ १४ ॥ वज्र उवाच ॥ संहारहेतुकी मूर्तिर्विष्णोः सङ्कर्षणो मतः ॥ स तु देवस्त्वया प्रोक्तश्चन्द्रशुक्लवपुर्महान् ॥ १५ ॥ तल्पे संहारकर्तृत्वे कृष्णमूर्तिः कथं यमः ॥ एतं मे संशयं छिन्धि भृगुवंशविवर्धन ॥१६॥ मार्कंडेय उवाच ॥ मूर्तिः साङ्कर्षिणी विष्णो रुद्रः संहारकारकः ॥ कल्पक्षये तु संहारं करोति जगतां हि सा ॥ १७ ॥ प्रकृतौ याति धर्मज्ञ संहृतं तु तदा जगत् ॥ तेन प्रकृतिवर्णस्थः करोति जगतां क्षयम् ॥ १८ ॥ कृत्वापि प्राणिसंहारं यमरूपी पुनःपुनः ॥ प्राणिनां प्रकृतौ योगं न विधत्ते कदाचन ॥ १९ ॥ विकारे योजयत्येव सुखदुःखात्मके तदा ॥ विकाररूपवर्णं तु तेन संहरते जगत् ॥ २० ॥ रूपमिदं कथितं तव याम्यं पापविनाशकरं विबुधानाम् ॥ रूपमतः कथयामि महात्मंस्तोयपतेर्वरुणस्य तवाहम् ॥ २१ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे यमरूपनिर्माणो नामैकपञ्चाशत्तमोऽध्यायः ॥ ५१॥

मार्कण्डेय उवाच ॥ सप्तहंसे रथे कार्यो वरुणो यादसाम्पतिः ॥ स्निग्धवैडूर्यसङ्काशः श्वेताम्बरधरस्तथा ॥१॥ किञ्चित्प्रलम्बजठरो मुक्ताहारविभूषणः ॥ सर्वाभरणवान्राजा तथा देवश्चतुर्भुजः ॥ २ ॥ वामभागगतं केतुं मकरस्य तु कारयेत् ॥ छत्रं च सुसितं मूर्ध्नि भार्या सर्वाङ्गसुन्दरी ॥ ३ ॥ वामोत्संगगता कार्या गौरी तद्विभुजा नृप ॥ उत्पलं तु करे वामे दक्षिणं देवपृष्ठगम् ॥ ४ ॥ पद्मपाशौ करे कार्यौ देवदक्षिणहस्तयोः ॥ शङ्खं च रत्नपात्रं च वामयोस्तस्य कारयेत् ॥ ५ ॥ भागे तु दक्षिणे गङ्गा मकरस्था सचामरा ॥ देवी पद्मकरा कार्या चन्द्रगौरी वरानना ॥ ६ ॥ वामे तु यमुना कार्या कूर्मसंस्था सचामरा ॥ नीलोत्पलकरा सौम्या नीलनीरजसन्निभा ॥ ७ ॥ स्निग्धवैडूर्यसङ्काशस्त्वापोवर्णो यतो नृप ॥ तयोरनुग्रहार्थाय तद्वर्णो वरुणस्ततः ॥ ८ ॥ स्वरूपवर्णाः सुसितास्ता एव द्विजपुंगव ॥ वसनं तस्य कथितं ता एव सुसितं नृप ॥९॥ वज्र उवाच ॥अम्भसस्तु कथं वर्णः सत्यासत्ये त्वयेरिते ॥ एतत्तु श्रोतुमिच्छामि परं कौतूहलं हि मे ॥१०॥ मार्कण्डेय उवाच ॥ वैडूर्याभमपां वर्णमतथ्यं यदुनन्दन ॥ छायागतस्य नभसस्तद्रूपं तासु दृश्यते ॥ ११॥ प्रपातपातैर्यद्रूपमंभसां नृप दृश्यते ॥ शशाङ्कांशुप्रतीकाशं तत्स्वरूपे प्रतिष्ठितम् ॥ १२ ॥ प्रद्युम्नो वासुदेवस्तु वरुणो यादसां पतिः ॥ तस्य भार्या रतिर्ज्ञेया गौरी यादवनन्दन ॥१३॥ सौभाग्यमुत्पलं तस्याः करे सुरतगं विभो ॥ वरुणस्य करे पद्मं विधिधर्मे महाभुज ॥ १४ ॥ शङ्खमर्थं विजानीहि पाशं संसारबन्धनम् ॥ रत्नपात्रं करे ज्ञेयं सर्वरत्नधरा धरा ॥ १५ ॥ यशश्च सुसितं छत्रं सौख्यं मकर एव च ॥ ब्रह्मणा कथितं तस्य भुजाभरणधारणम् ॥ १६ ॥

१ 'तासाम' इति क० ख० । २ 'वर्णे' इति ख० ।

लवणक्षीरआज्यादि दधिमण्डसुरोदकाः ॥ तथैवेक्षुरसोदश्च सुरोदश्च तथापरः ॥ १७ ॥ समुद्रास्ते तु विख्याता लोके नरवरोत्तम ॥ सप्तहंसा रथे तस्य वरुणस्य महात्मनः ॥ १८ ॥ जाया तु यमुना ज्ञेया सिद्धिर्भागीरथी द्विज ॥ वीर्यकालौ विनिर्दिष्टौ तथा मकरकच्छपौ ॥ १९ ॥ स्वर्गगङ्गाकरे पद्मं वृद्ध्यामुनमुत्पलम् ॥ २० ॥ रूपं जलेशस्य तवैतदुक्तं मया शिरःपाशधरस्य तस्य ॥ अतः परं वित्तपतेर्ब्रवीमि रूपं तवाहं यदुवंशचन्द्र ॥ २१ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे वरुणरूपनिर्माणो नाम द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥ मार्कण्डेय उवाच ॥ कर्तव्यः पद्मपत्राभो धनदो नरवाहनः ॥ चामीकराभो धनदः सर्वाभरणभूषणः ॥ १ ॥ लम्बोदरश्चतुर्बाहुर्वामपिङ्गललोचनः ॥ अपीच्यवेशः[1] कवची हारभारार्पितोदरः ॥ २ ॥ द्वे च दंष्ट्रे मुखे तस्य कर्तव्ये श्मश्रुधारिणः ॥ वामेन विनता कार्या मौलिस्तस्यारिमर्दिनी ॥ ३ ॥ वामोत्संगगता कार्या ऋद्धिर्देवी वरप्रदा ॥ देवपृष्ठगतं पाणिं द्विभुजायास्तु दक्षिणम् ॥ ४ ॥ रत्नपात्रकरं कार्यं वामं रिपुनिषूदन ॥ गदाशक्ती च कर्तव्ये तस्य दक्षिणहस्तयोः ॥ ५ ॥ सिंहाङ्कलक्षणं वृन्तं[2] शिबिकामपि पादयोः ॥ शङ्खपद्मौ निधी कार्यौ स्वरूपौ निधिसंस्थितौ ॥ ६ ॥ शङ्खपद्मान्तनिष्क्रान्तं वदनं तस्य पार्श्वतः ॥ अनिरुद्धस्तु विज्ञेयस्त्वया देवो धनाधिपः ॥ ७ ॥ ब्रह्मणा कथितं तस्य सर्वाभरणसाधनम् ॥ सुवर्णं नाम विख्यातं धनानामुत्तमं धनम् ॥ तस्यानुग्रहतो धत्ते वासः कनकसन्निभम् ॥ शक्तिरेव स्मृता शक्तिर्दण्डनीतिस्तथा गदा ॥ ९ ॥ लोकयात्रा च कथिता ऋद्धिर्ज्ञेया स्वभावतः ॥ ८ ॥ तत्करे रत्नपात्रं तु गुणाधारं प्रचक्षते ॥ १० ॥ नरं राज्यं विजानीहि यत्रस्थस्तु सदा विभुः ॥ स्वरूपतस्तु विज्ञेयौ शङ्खपद्मौ तथा निधी ॥ ११ ॥ वित्ततोंशो जयत्यस्मिंस्ताभ्यां प्रसवतेऽच्युतः ॥ अर्थः सक्षमया ज्ञेयः केतुः सिंहाङ्कलक्षणः ॥ निग्रहानुग्रहे दंष्ट्रे तस्य तात महात्मनः ॥ १२ ॥ यक्षाधिपस्येतदनन्तदंष्ट्र नामे वने यक्षनदस्य राजन् ॥ अतः परं किं कथयामि तुभ्यं तन्मे वदस्वायतलोहिताक्ष ॥ १३ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे वैश्रवणरूपनिर्माणो नाम त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥ वज्र उवाच ॥ सुपर्णस्य च तालस्य मकरस्य मृगस्य च ॥ मरुतां रूपनिर्माणं श्रोतुमिच्छामि भार्गव ॥ १ ॥ मार्कण्डेय उवाच ॥ तार्क्ष्यो मारकतप्रख्यः कौशिकाकारनासिकः ॥ चतुर्भुजस्तु कर्तव्यो वृत्तनेत्रमुखस्ततः ॥ २ ॥ गृध्रोरुजानुचरणः पक्षद्वयविभूषणः ॥ ३ ॥ प्रभासंस्थानसौवर्णः कलापेन विवर्जितः ॥ छत्रं च पूर्णकुम्भं च करयोस्तस्य कारयेत् ॥ ४ ॥

१ अपीच्यमतिसुन्दरम् । २ 'केतुम्' इति ख० ।

करद्वये तु कर्तव्यं तथास्य रचिताञ्जलिः ॥ तथास्य भगवान्पृष्ठे छत्रकुम्भधरौ करौ ॥ ५ ॥ न कर्तव्यौ तु कर्तव्यौ देवपादवरावुभौ ॥
किञ्चिल्लम्बोदरः कार्यः सर्वाभरणभूषितः ॥ ६ ॥ तालस्तालाकृतिः कार्यो मकरो मकराकृतिः ॥ उपरिष्टात्तथैवास्य कार्यो ऋंग्यवदच्युतः ॥७ ॥
मनो जगत्तथा कामं कर्म चैते क्रमात्स्मृताः ॥ वासुदेवोच्युतश्चैव प्रद्युम्नश्च महाभुजः ॥ तथा चैवानिरुद्धश्च क्रमेणैते प्रकीर्तिताः ॥ ८ ॥
तार्क्ष्यः सतालो मकरस्तथार्च्यो देवेशकीनाशजलार्थनाथः ॥ अग्न्यर्कतोयाधिपपत्रिनाथस्त एव लोकेषु बुधैः प्रदिष्टाः ॥ ९ ॥ इति श्रीविष्णुधर्मो
त्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे गरुडरूपनिर्माणो नाम चतुःपञ्चाशत्तमोऽध्यायः ॥५४ ॥ वज्र उवाच ॥ शिवस्य रूपनिर्माणं वह्नेर्वै नि
र्ऋतेस्तथा ॥ वायोश्च ब्रूहि धर्मज्ञ तत्र मे संशयो महान् ॥१॥ मार्कंडेय उवाच ॥ वामार्धे पार्वती कार्या शिवः कार्यश्चतुर्भुजः ॥ अक्षमालां त्रिशूलं
च तस्य दक्षिणहस्तयोः ॥ २ ॥ दर्पणेन्दीवरौ कार्यौ वामयोर्यदुनन्दन ॥ एकवक्त्रो भवेच्छम्भुर्वामा च दयिता तनुः ॥ ३ ॥ द्विनेत्रश्च महाभाग
सर्वाभरणभूषितः ॥ अभेदभिन्ना प्रकृतिः पुरुषेण महाभुज ॥ ४ ॥ गौरीशर्वेति विख्याता सर्वलोकनमस्कृता ॥ कारणं कथितं पूर्वं शूलादीनां
मया तव ॥ ५ ॥ ईशानरूपं कथितं तवेदं रूपं तथाग्नेः शृणु धर्मनित्यम् ॥ वेदा यदर्थं जगति प्रवृत्ता मुखं च यत्सर्वसुराऽसुराणाम् ॥ ६ ॥
इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे गौरीशर्ववर्णनो नाम पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥ मार्कण्डेय उवाच ॥
रक्तं जटाधरं वह्निं कुर्याद्वै धूम्रवाससम् ॥ ज्वालामालाकुलं सौम्यं त्रिनेत्रं श्मश्रुधारिणम् ॥ १ ॥ चतुर्बाहुं चतुर्दंष्ट्रं देवेशं वातसार
थिम् ॥ चतुर्भिश्च शुकैर्युक्तं धूमचिह्नरथे स्थितम् ॥ २ ॥ वामोत्सङ्गगता स्वाहा शक्रस्येव शची भवेत् ॥ रत्नपात्रकरा देवी वह्नेर्दक्षिणहस्तयोः
॥ ३ ॥ ज्वालात्रिशूलौ कर्तव्यौ चाक्षमाला तु वामके ॥ रक्तं हि तेजसो रूपं रक्तवर्णं ततः स्मृतम् ॥ ४ ॥ वातसारथिता तस्य प्रत्यक्षं धूम्र
क्षेत्रता ॥ प्रत्यक्षा च तथा प्रोक्ता यागधूम्राभवस्त्रता ॥ ५ ॥ अक्षमालां त्रिशूलं च जटाजूटत्रिनेत्रता ॥ सर्वाभरणधारित्वं व्याख्यातं तस्य
शम्भुना ॥ ६ ॥ ज्वालाकारं परं धाम हुतं तेन प्रतीच्छति ॥ गृहीत्वा सर्वदेवेभ्यो ततो नयति शत्रुहन् ॥ ७ ॥ वाग्दण्डमथ धिग्दण्डं धनदण्डं
तथैव च ॥ चतुर्थं वधदण्डं च दंष्ट्रास्तस्य प्रकीर्तिताः ॥ ८ ॥ श्मश्रु तस्य विनिर्दिष्टं दर्भाः परमपावनम् ॥ ये वेदास्ते शुकास्तस्य रथयुक्ता महा
त्मनः ॥ ९ ॥ आग्नेयमेतत्तव रूपमुक्तं पापापहं सिद्धिकरं नराणाम् ॥ ध्येयं तवैतन्नृप होमकाले सर्वाग्निकर्मण्यपराजितेन ॥ १० ॥ इति श्रीवि

१ 'यदा' इति क० ख० । २ 'ऋक्षेवदच्युतः' इति ख० ।

ष्णुधर्मोत्तरे तृतीयखण्डे मा० व० सं० अग्निरूपनिर्माणो नाम षट्पञ्चाशत्तमोऽध्यायः ॥५६॥ मार्कण्डेय उवाच ॥ ॥ विरूपाक्षो विवृत्ताक्षः प्रांशुदण्डोज्ज्वलाननः ॥ ऊर्ध्वकेशो हरिश्छमश्रुर्द्विबाहुर्भीषणाननः ॥१॥ वर्णेन रक्तकृष्णाङ्गः कृष्णाम्बरधरस्तथा ॥ सर्वाभरणधारी च दण्डरश्मिकरस्तथा ॥ २ ॥ भार्या च तस्य कर्तव्या देवी निर्ऋतिस्तथा ॥ कृष्णाङ्गी कृष्णवदना पाशहस्ता तु वामतः ॥ ३ ॥ कालः प्रोक्तो विरूपाक्षो मृत्युर्हि निर्ऋतिस्तथा ॥ बिभर्ति तामसं रूपं वासांसि च ततो नृप ॥ ४ ॥ मारणं तत्करे दण्डं बन्धनं चोग्ररश्मयः ॥ महामोहस्तथैवोग्रः कथितस्तस्य वामतः ॥५॥ वपुर्विरूपाक्षमिदं प्रदिष्टं रक्षोधिपस्याप्रतिमस्य तस्य ॥ अतः परं वच्मि तवाद्य राजन्वायोस्तु रूपं परमस्य धाम्नः ॥ ६ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मा० व० सं० विरूपाक्षरूपनिर्माणो नाम सप्तपञ्चाशत्तमोऽध्यायः ॥५७॥ मार्कण्डेय उवाच ॥ वायुरम्बरवर्णस्तु तदाकारोम्बरो भवेत् ॥ वाय्वापूरितवस्त्रश्च द्विभुजो रूपसंयुतः ॥ १ ॥ गमनेच्छा शिवा भार्या[1] तस्य कार्या च वामतः ॥ कार्यो गृहीतवस्त्रान्तः कराभ्यां पवनो द्विज ॥ २ ॥ तथैव देवी कर्तव्या शिवा परमसुन्दरी ॥ व्याधितास्यस्तथा कार्यो देवो व्याकुलमूर्धजः ॥ ३ ॥ वायुराश्रयतो धत्ते गन्धवर्णादिकं यतः ॥ तस्मादञ्जनवर्णस्तु गमनस्य समाश्रयात् ॥ ४ ॥ तदेव वसनं तस्य गगनं परिकीर्तितम् ॥ या गतिः सा शिवा देवी योऽनिरुद्धश्च सोऽनिलः ॥ ५ ॥ एतद्धि रूपं पवनस्य राजँस्तवोदितं सर्वजगन्मयस्य ॥ देव्याः शिवायाश्च महानुभाव[2] परं पवित्रं विदितं द्विजानाम् ॥६॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मा० व० सं० वायुरूपनिर्माणोनामाष्टपञ्चाशत्तमोऽध्यायः॥५८॥ मार्कण्डेय उवाच ॥ अथातो रूपनिर्माणं वच्म्यहं भैरवस्य ते ॥ लम्बोदरं तथा कुर्याद्वृत्तपिङ्गललोचनम् ॥ १ ॥ दंष्ट्राकरालवदनं फुल्लनासापुटं तथा ॥ कपालमालिनं रौद्रं सर्वतः सर्पभूषणम् ॥ २ ॥ व्यालेन त्रासयन्तं च देवीं पर्वतनन्दिनीम् ॥ सजलाम्बुदसंकाशं गजचर्मोत्तरच्छदम् ॥ ३ ॥ बाहुभिर्बहुभिर्व्याप्तं सर्वायुधविभूषणैः ॥ बृहत्सालप्रतीकाशैस्तथा तीक्ष्णनखैः शुभैः ॥ ४ ॥ साचीकृतमिदं रूपं भैरवस्य प्रकीर्तितम् ॥ महाकालस्य कथितमेतदेव च सन्मुखम् ॥ ५ ॥ देवी तु वामतः कार्या करे कार्यस्तु पन्नगः ॥ न चास्य पुरतः कार्या देवी पर्वतनन्दिनी ॥ ॥ ६ ॥ शुक्ला न कार्या न तथास्य रक्ता समीपतो मातृगणप्रधाने ॥ कार्यस्त्वथान्यः परिबर्हमस्य गणाश्च कार्या बहुरूपरूपाः ॥ ७ ॥ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे भैरवरूपनिर्माणो नामैकोनषष्टितमोऽध्यायः ॥ ५९ ॥ ॥ वज्र उवाच ॥

१ 'वाहनः' इति क० । २ 'देवी त्रासनका' इति ख० ।

विष्णुभूम्यम्बराणां त्वं ब्रह्मणश्च तथा विभो ॥ रूपनिर्माणमाचक्ष्व भृगुवंशविवर्धन ॥ १ ॥ मार्कंडेय उवाच ॥ एकवक्त्रो द्विबाहुश्च गदाचक्रधरः प्रभुः ॥ देहविन्यासमपरं प्रागुक्तं कीर्तितं हरेः ॥ २ ॥ गान्धारी तु स्मृता माया जगद्बन्धाय वैष्णवी ॥ गदा देवकरे नित्यं सर्वभूतवशङ्करी ॥ ३ ॥ सैव लक्ष्मीर्धृतिः कीर्तिः पुष्टिः श्रद्धा सरस्वती ॥ गायत्री वेदजननी कालरात्रिस्तथैव सा ॥ ४ ॥ संसारभ्रमणं चक्रं चक्रं विष्णुकरे स्थितम् ॥ धर्मचक्रं कालचक्रं भचक्रं च महाभुज ॥ ५ ॥ ध्रुवो हि विष्णुर्भगवान्प्रदिष्टचक्रं सदा भ्रामयते स वीरः ॥ एतेन कर्येण जगत्प्रधानः स चक्रहस्तो भगवान्प्रदिष्टः॥६॥इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे विष्णुरूपनिर्माणो नाम षष्टितमोऽध्यायः ॥६०॥ मार्कंडेय उवाच ॥ शुक्लवर्णा मही कार्या दिव्याभरणभूषिता ॥ चतुर्भुजा सौम्यवपुश्चन्द्रांशुसदृशाम्बरा ॥१॥ रत्नपात्रं सस्यपात्रं पात्रमोषधिसंयुतम् ॥ पद्मं करे च कर्तव्यं भुवो यादवनन्दन ॥ २ ॥ दिङ्नागानां चतुर्णां सा कार्या पृष्ठगता तथा ॥ सर्वौषधियुता देवी शुक्लवर्णा ततः स्मृता॥३॥ धर्मं वस्त्रं सितं तस्याः पद्ममर्थं तथा करे ॥४॥ हेतुश्च शेषो विदितो बुधानामतो मया ते कथितोऽद्य राजन् ॥ रूपं त्वरूपस्य तु वक्ष्यतोहं प्रकर्षितं यद्गगनस्य सिद्धैः ॥ ५ ॥ इति विष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे भूमिरूपनिर्माणो नामैकषष्टितमोऽध्यायः ॥ ६१ ॥ मार्कंडेय उवाच ॥ नीलोत्पलाभं गगनं तद्वर्णाम्बरधारिणम् ॥ चन्द्रार्कहस्तं कर्तव्यं द्विभुजं सौम्यदर्शनम् ॥१॥ एतद्धि रूपं गगनस्य राजन्प्रोक्तं मया ते परिकल्पितं यत् ॥ रूपं प्रवक्ष्याम्यथ ते निबोध पितामहस्याप्रतिमस्य तस्य ॥ २ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे गगनरूपवर्णनो नाम द्विषष्टितमोऽध्यायः ॥ ६२ ॥ मार्कंडेय उवाच ॥ पद्मपत्रासनस्थस्तु ब्रह्मा कार्यश्चतुर्मुखः ॥ सावित्री तस्य कर्तव्या वामोत्सङ्गगता तथा ॥ १ ॥ आदित्यवर्णा धर्मज्ञ साक्षमालाकरा तथा ॥ रूपं पूर्वोदितं कार्यं सर्वमन्यज्जगत्पते ॥ २ ॥ एतद्धि रूपं वरदस्य कार्यं पितामहस्याप्रतिमस्य सौम्य ॥ पूर्वोदितं वा वरदस्य तस्य लोकं समग्रं वशगं हि यस्य ॥ ३ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे ब्रह्मरूपनिर्माणो नाम त्रिषष्टितमोऽध्यायः ॥ ६३ ॥ मार्कंडेय उवाच ॥ देवी सरस्वती कार्या सर्वाभरणभूषिता ॥ चतुर्भुजा सा कर्तव्या तथैव च समुत्थिता ॥ १ ॥ पुस्तकं चाक्षमालां च तस्या दक्षिणहस्तयोः ॥ वामयोश्च तथा कार्या वैष्णवी च कमण्डलुः ॥ २ ॥ समपादप्रतिष्ठा च कार्या सोममुखी तथा ॥ वेदास्तस्य भुजा ज्ञेयाः सर्वशास्त्राणि पुस्तकम् ॥ ३ ॥ सर्वशास्त्रामृतरसो देव्या ज्ञेयः कमण्डलुः ॥ अक्षमाला करे तस्याः कालो भवति पार्थिव ॥ ४ ॥ सिद्धिर्मूर्तिमती ज्ञेया वैष्णवी नात्र संशयः ॥ सावित्री वदनं तस्याः सर्वाद्या

परिकीर्तिता ॥ ५ ॥ चन्द्रार्कलोचना ज्ञेया सा च राजीवलोचना ॥ ६ ॥ सारस्वतं ते कथितं मयैतद्रूपं पवित्रं परमं मनोज्ञम् ॥ ध्येयं च कार्यं च महीपमुख्य सर्वार्थसिद्धिं समभीप्समानैः ॥ ७॥ इति विष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे सरस्वतीरूपनिर्माणो नाम चतुःषष्टितमोऽध्यायः ॥ ६४ ॥ वज्र उवाच ॥ आचक्ष्व रूपनिर्माणं ममानन्तस्य देवज्ञ ॥ विष्णोरमितवीर्यस्य शेषस्य धरणीभृतः ॥ १ ॥ मार्कंडेय उवाच ॥ कुर्याच्छशाङ्कसङ्काशं रत्नोज्ज्वलफणान्वितम्॥ नीलवस्त्रं चतुर्बाहुं सर्वाभरणधारिणम् ॥२॥ फणाश्च बहवः कार्या यत्फणं तस्य मध्यमम्॥ तत्र रूपवती कार्या वसुधा यदुनन्दन॥३॥ पद्मं समुसलं कार्यं देवदक्षिणहस्तयोः ॥ वामयोस्सीरशंखे च करे तस्य सुराम्बुधिः ॥४॥ तालवृक्षं जगत्सर्वं कथितं तु महाभुज ॥ विख्यातौ सीरमुसलौ पूर्वमेव मया तव ॥ ५ ॥ वनमाला च विख्याता तथा यदुकुलोद्वह ॥ पृथिवी धार्यते तेन सशैलवनकानना ॥ ६ ॥ पृथिवी तेन कर्तव्या फणे तस्य तु मध्यमे ॥ ७ ॥ फणावलिप्तस्य तया प्रतिष्ठा कामास्तु ते यादववंशमुख्य ॥ एतद्धि रूपं परमेश्वरस्य विष्णोरचिन्त्यस्य मयेरितं ते ॥ ८ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादेऽनन्तरूपनिरूपणो नाम पञ्चषष्टितमोऽध्यायः ॥६५॥ मार्कंडेय उवाच ॥ कर्तव्यस्तुम्बुरुर्देवो मातृमध्यगतः प्रभुः ॥ उपविष्टो वृषे कार्यः शर्ववत्स चतुर्मुखः ॥ १ ॥ उपविष्टस्तु कर्तव्यः स तु पार्थिवसत्तम ॥ महादेवेन तस्योक्तं रूपं ते सकलं मया ॥ २ ॥ कपालं तस्य कर्तव्यं मातुलुङ्गधरे करे ॥ मातुलुङ्गं च कर्तव्यं त्र्यम्बकेण तदीरितम् ॥ ३ ॥ तस्य दक्षिणतः कार्यं तथा मातृद्वयं भवेत् ॥ वामतस्तस्य कर्तव्यं मातृद्वितयमेव च ॥ ४ ॥ जया च विजया चैव कर्तव्या दक्षिणेन तु ॥ जयन्ती वामतः कार्या तथा चैवापराजिता ॥ ५ ॥ सर्वाश्च द्विभुजाः कार्याश्चतुर्वक्त्रास्तथैव च ॥ सर्वासां वामहस्तेषु कपालानि तु कारयेत् ॥ ६ ॥ दण्डः कार्यो महाराज दक्षिणे तु जयाकरे ॥ विजयायाः करे खड्गः कार्यो भिन्नाञ्जनप्रभः ॥ ७ ॥ अक्षमालाधरकरां जयन्तीं नृप कारयेत् ॥ भिन्दिपालकरा कार्या तथा देव्यपराजिता ॥ ८ ॥ पादपीठगतं पादं सर्वासामेव कारयेत् ॥ दक्षिणं यानगं वामं कर्तव्यं नृप कुञ्चितम् ॥ ९ ॥ जया पुरुषगा कार्या विजया कौशिकोपमा ॥ जयन्ती तुरगारूढा मेघगा चापराजिता ॥ ॥ १० ॥ चन्द्रांशुगौरः कर्तव्यो महादेवस्तु तुम्बुरुः ॥ ११ ॥ देवीप्रियार्थं भुवनस्य गोप्ता तासां स मध्ये भगवानथेशः ॥ भक्तेषु कामान्विदधन्नथास्ते स पूजनीयस्त्रिदशारिहन्ता ॥ १२ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे देवीचतुष्टयसहिततुंबुरूपनिर्माणन्नाम षट्षष्टितमोऽध्यायः ॥ ६६ ॥ वज्र उवाच ॥ प्रागुक्तं रूपनिर्माणं त्वया चन्द्राम्बुनाथयोः ॥ तयोरेवापरं ब्रूहि रूपमर्केन्दुरूपयोः ॥ १ ॥ मार्कण्डेय उवाच ॥ रविः कार्यः शुभश्मश्रुः सिन्दूराभरणप्रभः ॥ सुदीप्तवेशः स्वाकारः सर्वाभरणसंयुतः ॥ २ ॥

१ 'वह्नयम्बुनाथयोः' इति ख० ।

चतुर्बाहुर्महातेजाः कवचेनाभिसंवृतः ॥ कर्तव्या रशना चास्य याविय़ाङ्केति संज्ञिता ॥ ३ ॥ रश्मयस्तस्य कर्तव्या वामदक्षिणहस्तयोः ॥ ऊर्ध्वस्रग्दामसंस्थानाः सर्वपुष्पाञ्चिताः शुभाः॥४॥सुरूपरूपः स्वाकारो दण्डी कार्योऽस्य वामतः॥दक्षिणे पिङ्गलो भागे कर्तव्यश्चातिपिङ्गलः॥५॥ उद्दीप्तवेशौ कर्तव्यौ तावुभावपि यादव ॥ तयोर्मूर्धनि विन्यस्तौ करौ कार्यौ विभावसोः ॥ ६ ॥ लेखनीपत्रककरः कार्यो भवति पिङ्गलः ॥ चर्मशूलधरो देवस्तथा यत्नाद्विधीयते ॥ ७ ॥ सिंहो ध्वजश्च कर्तव्यस्तथा सूर्यस्य वामतः ॥ चत्वारश्चास्य कर्तव्यास्तनयास्तस्य पार्श्वयोः ॥८॥ रेवन्तश्च यमश्चैव मनुद्वितयमेव च ॥ ग्रहराजो रविः कार्यो ग्रहैर्वा परिवारितः ॥ ९ ॥ राज्ञी च रिक्षुभा च्छाया तथा देवी सुवर्चसा ॥ चतस्रश्चास्य कर्तव्याः पत्न्यश्च परिपार्श्वयोः ॥ १० ॥ एकचक्रेऽथ सप्ताश्वे षड्रेखाङ्के रथोत्तमे ॥ उपविष्टस्तु कर्तव्यो देवो वारुणसारथिः॥ ११॥ गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ॥ त्रिष्टुप् च जगती सप्त छन्दांस्यर्करथे हयाः ॥ १२ ॥ रश्मिभिः करसंस्थैस्तु धारयत्यखिलं जगत् ॥ सिंहो ध्वजगतश्चास्य साक्षाद्धर्मः प्रकीर्तितः ॥ १३ ॥ रशनास्थं जगत्सर्वं देवो धारयते तथा ॥ राज्ञी भूरिक्षुभा द्यौश्च च्छाया छाया प्रकीर्तिता ॥१४॥ प्रभा सुवर्चसा प्रोक्तास्तस्य देवस्य पत्नयः ॥ रक्तवर्णः स भगवांस्तेजसां धाम कारणात्॥१५॥ असह्यतेजोधारित्वाद् गूढगात्रस्तथैव च ॥ एवं सर्वमयं धाम सूर्य एव प्रकीर्तितः ॥ १६ ॥ रूपं तथैतद्दिवसस्य भर्तुर्मयेरितं सर्वजगन्मयस्य ॥ तेजोनिधानस्य परोज्ज्वलस्य सर्वाधिनाथस्य सनातनस्य ॥ १७ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मा० व० सं० आदित्यरूपवर्णनं नाम सप्तषष्टितमोऽध्यायः ॥६७ ॥ मार्कंडेय उवाच॥ चन्द्रः श्वेतवपुः कार्यस्तथा श्वेताम्बरः प्रभुः ॥ चतुर्बाहुर्महातेजाः सर्वाभरणवांस्तथा ॥ १ ॥ कुमुदौ च सितौ कार्यौ तस्य देवस्य हस्तयोः ॥ कान्तिर्मूर्तिमती कार्या तस्य पार्श्वे तु दक्षिणे ॥ २ ॥ वामे शोभा तथा कार्या रूपेणाप्रतिमा भुवि ॥ चिह्नं तथास्य सिंहांकं वामपार्श्वैकवद्भवेत ॥ ३ ॥ दशाश्वो वा रथः कार्यो द्विचक्रोम्बरसारथी ॥ स्रजश्च त्रिमनाश्चैव वृषो वादी नरो हयः ॥ ४ ॥ अथो वाक्सप्तधातुश्च हंसो व्योमो मृग स्तथा ॥ एते ते वामतः सर्वे दश चन्द्रमसो हयाः ॥५॥ अथ वैवास्य कर्तव्या अष्टाविंशतिसङ्ख्यकाः॥अत्यर्थं रूपसंयुक्ताः पत्न्यो नक्षत्रसंज्ञिताः ॥ ६ ॥ अशीतिव्द्यधिकाः कार्या भावा वा देहभेदयोः ॥ पुरा देवासुरे युद्धे प्राकाम्येन नृपोडुभिः ॥ ७ ॥ कृतानि स्वशरीराणि बहूनि यदुन न्दन ॥ स्वनाथदेवरूपाणि ततस्ते दानवा हताः ॥ ८ ॥ नक्षत्रेण कृतं रूपं यस्य यस्य सुरस्य तु ॥ सा चैव देवता तस्य नक्षत्रस्य प्रकीर्तिता ॥ ९ ॥ देवासुरे ततो वृत्ते प्राकाम्येनैव यादव ॥ स्त्रीरूपधारिणो देवास्तावन्तस्तु ततः कृताः ॥ १० ॥ सर्वलोकस्य धर्मज्ञ चन्द्रमा वै पिता

स्मृतः ॥ तस्मिन्सृष्टे जगत्सर्वं परं हर्षमुपैति च ॥ ११॥ सौम्यमूर्तिः परा ज्ञेया सा च विष्णोर्महात्मनः ॥ हर्षप्रसादौ विज्ञेयौ कुमुदौ चन्द्रहस्तयोः ॥ १२ ॥ शोभाकान्ती विनिर्दिष्टे स्वरूपं भृगुनन्दन ॥ अपां सारमयत्वाद्धि शुक्लवर्णस्तु चन्द्रमाः ॥ १३ ॥ अपां हि धामामृतमाहुराद्या मवा स्तु तच्चन्द्रसमः प्रदिष्टम् ॥ सिंहध्वजं धर्ममुशन्ति राजन्दिशस्तुरङ्गाः शशिनः प्रदिष्टाः ॥ १४ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डे यवज्रसंवादे शशिरूपनिरूपणो नामाष्टषष्टितमोऽध्यायः ॥ ६८ ॥ वज्र उवाच ॥ ग्रहाणां रूपनिर्माणं समाचक्ष्व महाभुज ॥ अनेनैव प्रसङ्गेन सर्वज्ञस्त्वं मतो मम ॥ १ ॥ मार्कण्डेय उवाच ॥ भौमोऽग्नितल्पः कर्तव्यश्चाष्टाश्वे काञ्चने रथे ॥ विष्णुतल्पो बुधः कार्यो भौमतल्पे तथा रथे ॥ २ ॥ तत्तजाम्बूनदः कार्यो द्विभुजश्च बृहस्पतिः ॥ पुस्तकं चाक्षमालां च करयोस्तस्य कारयेत् ॥ ३ ॥ सर्वाभरणयुक्तश्च तथा पीताम्बरो गुरुः ॥ अष्टाश्वे काञ्चने दिव्ये रथे दृष्टिमनोहरे ॥ ४ ॥ शुक्रः श्वेतवपुः कार्यः श्वेताम्बरधरस्तथा ॥ द्वौ करौ कथितौ तस्य निधिपुस्तकसंयुतौ ॥ ५ ॥ दशाश्वे च रथे कार्यो राजते भृगुनन्दन ॥ कृष्णवासास्तथा कृष्णः शनिः कार्यस्सिराततः ॥६॥ दण्डाक्षमालासंयुक्तः करद्वितयभूषितः॥ कार्ष्णायसे रथे कार्यस्तथैवाष्टभुजङ्गमे ॥ ७ ॥ रौप्ये रथे तथाष्टाश्वे राहुः कार्यो विचक्षणः ॥ केवलं मस्तकं कार्यं भुजेनैकेन संयुतम् ॥ ८ ॥ करमेकं तु कर्तव्यं तस्य शून्यं तु दक्षिणम् ॥ भौमस्य च तथा कार्यं केतो रूपं विजानता ॥ ९ ॥ केवलं चास्य कर्तव्या दशराजं स्तुरङ्गमाः ॥१०॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे भौमादिग्रहरूपनिर्माणो नामैकोनसप्ततितमोऽध्यायः ॥ ६९ ॥ वज्र उवाच ॥ मनुद्वयस्य मे रूपं कथयस्वामितद्युते ॥ देवेन्द्रस्य च धर्मज्ञ यमस्याभिहितं त्वया ॥१॥ मार्कंडेय उवाच ॥ वर्तमानो मनुः कार्यो राजलक्षणसंयुतः ॥ भविष्यस्तु तथा कार्यः सर्वाभरणवार्जितः ॥ २ ॥ जटाधरोऽक्षमाली च कमण्डलुधरस्तथा ॥ कृशोऽपि तेजसा युक्त स्तपस्यभिरतस्तथा ॥ ३ ॥ कार्या योगेन चान्येऽपि भविष्या मनवश्च ये ॥ सावर्णमनुतुल्येन कार्यो रूपेण यादव ॥ ४ ॥ अतीता मनवः कार्या राजलक्षणलक्षिताः ॥ पृष्ठेऽश्वे सूर्यवत्कार्यो रेवन्तश्च तथा प्रभुः ॥ ५ ॥ इति श्रीवि० तृ० ख० मा० सं० मनुरूपनिरूपणो नाम सप्ततित मोऽध्यायः ॥ ७० ॥ वज्र उवाच ॥ ग्रहाणां देवता प्रोक्ता यास्त्वया पूर्वमेव तु ॥ तासां स्वरूपनिर्माणं कथयस्वामितद्युते ॥ १ ॥ मार्कण्डेय उवाच ॥ पूर्वमेव मया प्रोक्तं रूपं वह्न्यम्बुनाथयोः ॥ तथा च कथितं तुभ्यं विष्णुदेवेन्द्रयोः पुरा॥२॥चतुर्मूर्तेः कुमारस्य रूपं ते वच्मि यादव ॥ कुमारश्च तथा स्कन्दो विशाखश्च गुरुस्तथा ॥ ३ ॥ कुमारः षण्मुखः कार्यः शिखण्डकविभूषणः ॥ रक्ताम्बरधरः कार्यो मयूरव

रवाहनः ॥ ४ ॥ कुक्कुटश्च तथा घण्टा तस्य दक्षिणहस्तयोः ॥ पताका वैजयन्ती च शक्तिः कार्या च वामयोः ॥ ५ ॥ स्कन्दो विशाखश्च गुहः कर्तव्यश्च कुमारवत् ॥ षण्मुखास्ते न कर्तव्या न मयूरगतास्तथा ॥ ६ ॥ चतुरात्मा हि भगवान्वासुदेवः सनातनः ॥ प्रादुर्भूतः कुमारस्तु देवसेनानिनीषया ॥ ७ ॥ अष्टादशभुजा कार्या भद्रकाली मनोहरा ॥ आलीढस्थानसंस्थाना चतुःसिंहे रथे स्थिता ॥ ८ ॥ अक्षमाला त्रिशूलं च खड्गं चर्म च यादव ॥ बाणचापे च कर्तव्ये शङ्खपद्मौ तथैव च ॥ ९ ॥ स्रुक्स्रुचौ च तथा कार्यौ तथा वेदीकमण्डलू ॥ दण्डशक्ती च कर्तव्ये कृष्णाजिनहुताशनौ ॥ १० ॥ हस्तानां भद्रकाल्यास्तु भवेच्छान्तिकरः करः ॥ एकश्चैव महाभाग रत्नपात्रधरो भवेत् ॥ ११ ॥ हंसयानेन कर्तव्यो न च कार्यश्चतुर्मुखः ॥ ब्रह्मोक्तमपरं रूपं सर्वं कार्यं प्रजापतेः ॥ १२ ॥ विनायकस्तु कर्तव्यो गजवक्त्रश्चतुर्भुजः ॥ शूलकं चाक्षमालां च तस्य दक्षिणहस्तयोः ॥ १३ ॥ पात्रं मोदकपूर्णं तु परशुश्चैव वामतः ॥ दन्तश्चास्य न कर्तव्यो वामो रिपुनिषूदन ॥ १४ ॥ पादपीठकृतः पाद एक आसनगो भवेत् ॥ पूर्णमोदकपात्रं तु कराग्रे तस्य कारयेत् ॥ १५ ॥ लम्बोदरस्तथा कार्यः स्तब्धकर्णश्च यादव ॥ व्याघ्रचर्माम्बरधरः सर्पयज्ञोपवीतिवान् ॥ १६ ॥ विश्वकर्मा तु कर्तव्यः सूर्यरूपधरः प्रभुः ॥ स दशपाणिर्द्विभुजस्तेजोमूर्तिधरो भवेत् ॥ १७ ॥ विश्वं करोति वै यस्माद्विश्वकर्मा ततः स्मृतः ॥ विश्वकृद्भगवान्विष्णुर्विश्वकर्मा स उच्यते ॥ १८ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे कुमारभद्रकालीचतुर्वक्त्रगजवक्त्रविश्वकर्मरूपनिरूपणो नामैकसप्ततितमोऽध्यायः ॥ ७१ ॥

॥ वज्र उवाच ॥ ॥ वसूनां देव रूपं तथैवाङ्गिरसं शुभम् ॥ विश्वेषां चैव देवानां रुद्राणामपि देवताः ॥ १ ॥ भृगूणामथ साध्यानां चादित्यानां तथैव च ॥ मरुतां च तथा रूपमाचक्ष्व सुरपूजित ॥ २ ॥ मार्कंडेय उवाच ॥ प्राजापत्येन रूपेण धरो नाम वसुर्भवेत् ॥ वैष्णवेन च रूपेण ध्रुवो नाम प्रकीर्तितः ॥ ३ ॥ सोमश्चान्द्रेण रूपेण वायव्येन तथाऽनिलः ॥ आग्नेयेनानलः कार्यः प्रभासो वारुणेन च ॥ ४ ॥ विश्वेदेवास्तथा कार्याः शक्ररूपधराः सुराः ॥ तिर्यग्ललाटेनाक्ष्णा च नागराजो विवर्जितः ॥ ५ ॥ जीवरूपेण कर्तव्या देवाश्चाङ्गिरसस्तथा ॥ माहेश्वरेण रुद्राश्च साध्याक्षा वैष्णवेन तु ॥ ६ ॥ आदित्याः सूर्यरूपेण चेति द्वादश यादव ॥ पृथक्क्रियायां तेषां तु नवार्कसदृशाः स्मृताः ॥ ७ ॥ विष्ण्वन्द्रवरुणाः कार्याः यथा पूर्वं मयेरिताः ॥ कर्तव्याः शुक्ररूपेण मरुतो नाम देवताः ॥ ८ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे वसुरूपनिर्माणो नाम द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

॥ वज्र उवाच ॥ अन्येषामपि देवानां रूपनिर्माणमेव च ॥ कथयस्व महाभाग त्वं हि सर्वविदुच्यसे ॥ १ ॥ मार्कंडेय

उवाच ॥ प्राजापत्येन रूपेण कर्तव्यः कश्यपः प्रभुः ॥ अदितिर्दितिर्दनुः काष्ठा दनायुः सिंहिका मुनिः॥२॥ कद्रूः क्रोधा दरा प्राधा विनता सुरभिः
खशा ॥ सर्वाः सुरूपाः कर्तव्या द्विभुजाः पूर्वमातरः ॥ ३ ॥ अदितिश्च दितिश्चैव विनता सुरभिस्तथा ॥ दृष्टिरासां तु कर्तव्या सौम्या याद
वनन्दन ॥ ४ ॥ अनेनैव तु रूपेण सर्वा वै देवमातरः ॥ कर्तव्या यादवश्रेष्ठ रूपनिर्माणकर्मणा ॥ ५ ॥ कश्यपस्यापराः पत्न्यः कार्या व्याकुल
लोचनाः ॥ विष्णुरूपधरः कार्यो ध्रुवो ग्रहगणेश्वरः ॥ ६ ॥ चक्ररश्मिकरः श्रीमान्द्विभुजः सौम्यदर्शनः ॥ भविष्यमनुरूपेण कार्योऽगस्त्यो
महामुनिः ॥ ७ ॥ रूपं तदेवं कथितं भृग्वादीनां महात्मनाम् ॥ शुक्रपुत्रो जयन्तश्च कर्तव्यो रूपसंयुतः ॥ ८ ॥ चापबाणकरः श्रीमान्द्विभुजः
सौम्यदर्शनः ॥ बलो यमसुतः कार्यश्चर्मशूलधरः प्रभुः ॥ ९ ॥ पुष्करश्च तथा कार्यः पद्मपत्रसमप्रभः ॥ खड्गं च पुस्तकं चोभौ करयोस्तस्य
कारयेत् ॥ १० ॥ चन्द्रपुत्री तथा ज्योत्स्ना रूपेणाप्रतिमा भुवि ॥ वामपार्श्वे तु कर्तव्या सर्वाभरणभूषणा ॥ ११ ॥ सुरूपरूपः कर्तव्यो रत्नपात्र
करो विभुः ॥ द्विदंष्ट्रायुक्तवदनो धनादिर्नलकूबरः ॥१२॥ धनदस्य तु रूपेण मणिभद्रं विदुर्बुधाः ॥ न कार्या शिबिका तस्य सभार्यो नरवाहनः
॥ १३ ॥ वायुपुत्रस्तु कर्तव्यो वायुरूपः पुरोजवः ॥ अतीव रूपवान्कार्यो वर्चाः सोमसुतः प्रभुः ॥ १४ ॥ लीलाकमलपाणिस्तु वर्चस्वी येन
जायते ॥ नन्दी कार्यस्त्रिनेत्रस्तु चतुर्बाहुर्महाभुजः ॥ १५ ॥ सिन्दूरारुणसङ्काशो व्याघ्रचर्माम्बरच्छदः ॥ त्रिशूलभिन्दिपालौ च करयोस्तस्य
कारयेत् ॥ १६ ॥ शिरोगतं तृतीयन्तु तर्जयन्तं तथा परम् ॥ आलोकमानं कर्तव्यं दूरादागामिकं जनम् ॥ १७ ॥ अनेनैव च रूपेण वीरभद्रं
विदुर्बुधाः ॥ उपरिष्टात्प्रवक्ष्यामि धर्मरूपमहं तव ॥ १८ ॥ अर्थः कार्यस्तु रूपेण धनदस्य महात्मनः ॥ कामदेवस्तु कर्तव्यो रूपेणाप्रतिमो
भुवि ॥ १९ ॥ अष्टबाहुः स कर्तव्यः शङ्खपद्मविभूषणः ॥ चापबाणकरश्चैव मदादञ्चितलोचनः ॥ २० ॥ रतिः प्रीतिस्तथा शक्तिर्मदशक्तिस्तथो
ज्ज्वला ॥ चतस्रस्तस्य कर्तव्याः पत्न्यो रूपमनोहराः ॥ २१ ॥ चत्वारश्च करास्तस्य कार्या भार्यास्तनोपगाः ॥ केतुश्च मकरः कार्यः पञ्चबाण
मुखो महान् ॥ २२ ॥ करेण कटिगेनाथ निद्रां वामेन कारयेत ॥ दक्षिणे तु तथा पार्श्वे तस्याः सङ्कर्षणो भवेत् ॥ २३ ॥ वासुदेवस्तथा वामे
मैकानेशा तथा सुतः ॥ रूपं लक्ष्म्याः प्रवक्ष्यामि उपरिष्टात्तवानघ ॥ २४ ॥ चतुर्भुजा च कर्तव्या तथा देवी सरस्वती ॥ अक्षमाला त्रिशूलं
च पुस्तकं च कमण्डलुम् ॥ २५ ॥ तस्या करेषु कार्याणि यथावद्यदुनन्दन ॥ कार्या सकलशा देवी वारुणी चातिसुन्दरी ॥ २६ ॥
लम्बोदरी तु कर्तव्या रक्ताम्बरपयोधरा ॥ शूलहस्ता महाभागा भुजप्रहरणा तथा ॥ २७ ॥ बृहद्रथा च कर्तव्या बहुबाहुस्तथैव सा ॥ चामुण्डा

कथिता सैव सर्वसत्त्ववशङ्करी ॥ २८ ॥ तथैवान्त्रमुखी[1] शुष्का शुष्का कार्या विशेषतः ॥ बहुबाहुयुता देवी भुजगैः परिवेष्टिता ॥ २९ ॥
कपालमालिनी भीमा तथा खट्वाङ्गधारिणी ॥ शिवा दूती तु कर्तव्या शृगालवदना शुभा ॥ ३० ॥ आलीढस्थानसंस्थाना तथा राजंश्चतुर्भुजा ॥
असृक्पात्रधरा देवी खड्गशूलधरा तथा ॥ ३१ ॥ चतुर्थं तु करं तस्यास्तथा कार्यं तु सामिषम् ॥ देवतुल्येन चिह्नेन यथारूपेण मातरः ॥ ३२ ॥
कर्तव्या देवनामाङ्का या मया ते पुरोदिताः ॥ असृक्पात्रकराः कार्याः सामिषैश्च तथा करैः ॥ ३३ ॥ नृत्यमाना महाभागा यासां रूपं तु
नोदितम् ॥ पूर्वा गजगता बाला रक्तवर्णा तु दिग्भवेत् ॥ ३४ ॥ करेणुगा बृहत्कन्या पद्माभा पूर्वदक्षिणा ॥ रथस्था दक्षिणा पीता तथा स्यात्प्रा
प्तयौवना ॥ ३५ ॥ उष्ट्रगा कृष्णपीता च वरुणा याम्यपश्चिमा ॥ यौवनाद्विच्युता कृष्णा पश्चिमा तुरगस्थिता ॥ ३६ ॥ आसन्नपलिता
नीला वडवा यदुनन्दन ॥ श्वेता नरभृता वृद्धा तथा भवति चोत्तरा ॥ ३७ ॥ अतिवृद्धा वृषस्था च शुक्ला पूर्वोत्तरा भवेत् ॥ अधस्तात्पृथिवी
तुल्या चोर्ध्वा गगनसंस्थिता ॥ ३८ ॥ कालः करालवदनो नित्यगश्च विभीषणः ॥ पाशहस्तश्च कर्तव्यः सर्पवृश्चिकरोमवान् ॥ ३९ ॥
ज्वरस्त्रिपादः कर्तव्यस्त्रिनेत्रैर्वदनैस्त्रिभिः ॥ भस्मप्रहरणो रौद्रस्त्रिबाहुर्व्याकुलेक्षणः ॥ ४० ॥ धन्वन्तरिश्च कर्तव्यः सुरूपः प्रियदर्शनः ॥
करद्वयगतं चास्य साम्रुतं कलशं भवेत् ॥ ४१ ॥ सामवेदस्तु कर्तव्यः किं तु श्ववदनः प्रभुः ॥ अथ वा देवरूपेण
वेदाः कार्या विचक्षणैः ॥ ४२ ॥ ऋग्वेदस्तु स्मृतो ब्रह्मा यजुर्वेदस्तु वासवः ॥ सामवेदस्तथा विष्णुः शम्भुश्चाथर्वणो
भवेत् ॥ ४३ ॥ शिक्षा प्रजापतिर्ज्ञेया कल्पो ब्रह्मा प्रकीर्तितः ॥ सरस्वती व्याकरणं निरुक्तं वरुणः प्रभुः ॥ ४४ ॥ छन्दो क्षिति
स्तथैवाग्निज्योतिषं भगवान्नविः ॥ मीमांसा भगवान्सोमो न्यायमार्गः समीरणः ॥ ४५ ॥ धर्मश्च धर्मशास्त्राणि पुराणं च तथा मनुः ॥
इतिहासं प्रजाध्यक्षो धनुर्वेदं शतक्रतुः ॥ ४६ ॥ आयुर्वेदस्तथा साक्षाद्देवो धान्वन्तरिः प्रभुः ॥ फलवेदं मही देवी नृत्यशास्त्रं महे
श्वरः ॥ ४७ ॥ सङ्कर्षणः पाञ्चरात्रं रुद्रः पाशुपतं तथा ॥ पातञ्जलमनन्तश्च सांख्यश्च कपिलो मुनिः ॥ ४८ ॥ अर्थशास्त्राणि सर्वाणि धनाध्यक्षः
प्रकीर्तितः ॥ कलाशास्त्राणि सर्वाणि कामदेवो जगद्गुरुः ॥ ४९ ॥ अन्यानि यानि शास्त्राणि यत्कर्तॄणि प्रचक्षते ॥ स चैव देवता तस्य शास्त्र ॥२४९॥
काव्यस्य देहवत् ॥ ५० ॥ रूपं तु कालावयवस्य कार्यं स्वदेवतारूपसमं रिपुघ्न ॥ एतं तवोक्तं सुरसत्तमानां रूपं मया ते यदुवंशचन्द्र ॥ ५१ ॥

[1] 'तथैव त्रिमुखी' इति ख० ।

इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे देवतारूपनिर्माणो नाम त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥ वज्र उवाच ॥ लिङ्गस्य रूपनिर्माणं कथयस्व ममानघ ॥ १ ॥ मार्कण्डेय उवाच ॥ लिङ्गे हि पूजिते पूजा कृता तु जगतो भवेत् ॥ भोगोस्य वृत्तः कर्तव्यो भागमष्टास्रमेव तु ॥ २ ॥ चतुरस्रं तथा भागं कर्तव्यं भूरिदक्षिणम् ॥ वृत्तं दृश्यं तु कर्तव्यं अष्टास्रं पिण्डिकागतम् ॥ ३ ॥ चतुरस्रं तु कर्तव्यं ब्रह्मपीठगतं तथा ॥ अधस्ताद्रुद्रपीठस्य ब्रह्मपीठं विदुर्बुधाः ॥ ४ ॥ लिङ्गोपरिष्टात्तु गता पुरस्ताल्लेखा सुवृत्ता तु तथैव कार्या ॥ ऊर्ध्वायता बुद्धिगुणा तथान्या या ब्रह्मसूत्रे विबुधैः प्रदिष्टा॥५॥इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे लिङ्गरूपनिर्माणो नाम चतुःसप्ततितमोऽध्यायः ॥७४॥ वज्र उवाच ॥ व्योमरूपं समाचक्ष्व सर्वधर्मभृतां वर॥ व्योम्नि तु पूजिते पूजा कृता स्याज्जगतो भवेत॥१॥ मार्कण्डेय उवाच ॥ चतुरस्रं भवेन्मूले ततो वृत्तं महाभुज ॥ ततोल्पचतुरस्रं च चतुरस्रं ततो भवेत् ॥ २ ॥ ततोल्पचतुरस्रं च मेरुवत्संस्थितं ततः ॥ भद्रपीठमिदं प्रोक्तं व्योमभागं तृतीयकम् ॥ ३ ॥ सर्वेषां भद्रपीठानामेतल्लक्षणमुच्यते ॥ सम्भवश्चतुरस्रं तु मध्यभागं प्रकीर्तितम् ॥ ४ ॥ भद्रपीठं ततो भागं तत्र पद्मं निवेशयेत ॥ शुभाष्टपत्रं तन्मध्ये कर्णिकायां दिवाकरम् ॥५॥ पत्रेषु कल्पयेत्तत्र दिक्पालाँश्च यथादिशम् ॥ भद्रपीठमधस्तात्तु पृथिवीं परिकल्पयेत् ॥ ६ ॥ अन्तरिक्षं तथा स्तम्भमूर्द्धभागं ततो विदुः ॥ तत्र सन्निहिताः सर्वे भवन्ति त्रिदशोत्तमाः ॥ ७ ॥ सर्वदेवमयं व्योम कथितं ते महाभुज ॥ तस्य सम्पूजनं कृत्वा सर्वान्कामानवाप्नुयात् ॥ ८ ॥ व्योम्नः स्वरूपं कथितं मयैतद्व्योम्नस्तु पूजाकरणात्समग्रम् ॥ सम्पूजितं स्याज्जगदेकवीर चराचरं यादववंशमुख्य॥९॥इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे व्योमरूपनिर्माणो नाम पञ्चसप्ततितमोऽध्यायः॥७५॥ वज्र उवाच॥ नरनारायणौ कार्यौ केन रूपेण संयुतौ॥हरिः कृष्णश्च कर्तव्यः कथं वा भृगुनन्दन॥१॥मार्कण्डेय उवाच ॥ दूर्वाश्यामो नरः कार्यो द्विभुजश्च महाभुज ॥ नारायणश्चतुर्बाहुर्नीलोत्पलदलच्छविः ॥ २॥ तयोर्मध्ये च बदरी कार्या फलविभूषणा ॥ बदर्यामनु तौ कार्यावक्षमालाधराबुभौ ॥ ३ ॥ अष्टचक्रे स्थितौ याने भूतियुक्ते मनोहरे ॥ कृष्णाजिनधरौ दान्तौ जटामण्डलधारिणौ ॥ ४ ॥ पादेन चैकेन रथस्थितेन पादेन चैकेन च जानुगेन ॥ कार्यो हरिश्चात्र नरेण तुल्यः कृष्णोऽपि नारायणतुल्यमूर्तिः ॥ ५ ॥ इति श्रीविष्णुध० तृ० ख०मा० सं०नरनारायणरूपनिर्माणो नाम षट्सप्ततितमोऽध्यायः ॥७६॥ वज्र उवाच ॥ धर्मस्य रूपनिर्माणं ज्ञानस्य च परन्तप ॥ वैरा

१ 'पद्मं' इति क० । २ 'धूतयुक्ते' इति क० 'भूतयुक्ते' इति ख० ।

ग्यस्य च धर्मज्ञ तथैश्वर्यस्य मे वद ॥ १ ॥ मार्कंडेय उवाच ॥ चतुर्वक्त्रश्चतुष्पादश्चतुर्बाहुस्सिताम्बरः ॥ सर्वाभरणवान्श्वेतो धर्मः कार्यो विजानता ॥ २ ॥ दक्षिणे चाक्षमालां च तस्य वामे तु पुस्तकम् ॥ मूर्तिमान्व्यवसायस्तु कार्यो दक्षिणभागगः ॥ ३ ॥ वामभागगतः कार्यः सुखः परमरूपवान् ॥ कार्यौ धर्मकरौ मूर्ध्नि विन्यस्तौ च तथा तयोः ॥ ४ ॥ अक्षमालास्मृतः कालः पुस्तकं चागमं स्मृतम् ॥ यज्ञः सत्यं तपो दानं तस्य वक्त्रचतुष्टयम् ॥ ५ ॥ देशकालौ तथा शौचं शुद्धिश्चास्य भुजः स्मृतः ॥ श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ॥ ६ ॥ तस्य देवस्य धर्मज्ञ ज्ञेयं पादचतुष्टयम् ॥ सत्त्वाधिकत्वाच्छुक्लस्तु ज्ञानवासश्च कीर्त्यते ॥ ७ ॥ अथवा चास्य कर्तव्याः पत्न्यश्चैव चतुर्दश ॥ कीर्तिर्लक्ष्मी धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः ॥ ८॥ बुद्धिर्लज्जा वपुः शान्तिः सिद्धिस्तुष्टिश्चतुर्दशी ॥ द्वाराण्येतानि धर्मस्य सर्वाणि कथितानि ते ॥ ९ ॥ कार्याः सरूपा द्विभुजाश्च सर्वास्तेजोन्वितास्ताश्च सुभूषणाश्च ॥ धर्मः स्थितः स्याद्यदि चैक एव भार्यान्वितश्चेदथ चोपदिष्टः ॥ १० ॥ इति श्रीविष्णुध० तृ० ख० मा० सं० धर्मरूपनिर्माणो नाम सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥ मार्कण्डेय उवाच ॥ य एव भगवान्विष्णुर्नरसिंहवपुर्धरः ॥ ध्यानविद्भिः स एवोक्तो ज्ञानः पलबरार्दनः ॥ १ ॥ पीनस्कन्दकटिग्रीवः कृशमध्यः कृशोदरः ॥ सिंहासने नृदेहस्तु नीलवासाः प्रभान्वितः ॥ २ ॥ आलीढस्थानसंस्थानः सर्वाभरणभूषितः ॥ ज्वालामालाकुलमुखो ज्वालाकेसरमण्डलः ॥ ३ ॥ हिरण्यकशिपोर्वक्षः पाटयन्नखरैः खरैः ॥ नीलोत्पलाभः कर्तव्यो देवजानुगतस्तथा ॥ ४ ॥ हिरण्यकशिपुर्दैत्यस्तमज्ञानं विदुर्बुधाः ॥ सङ्कर्षणात्मा भगवानज्ञानस्य विनाशनः ॥ ५ ॥ वाङ्मनःकायसम्भूतं त्रिविधं जगतां मलम् ॥ एतत्सङ्कर्षणो देवः सदा पाटयति द्विज ॥ ६॥ हरिः सङ्कर्षणांशेन नरसिंहवपुर्धरः ॥ तमसस्त्रिविधस्यापि नाशनो जगतां हरिः ॥ ७ ॥ हार्दमूर्तिनिभस्तस्य नान्यो जगति विद्यते ॥ नृसिंहमूर्तिर्देवस्य सर्वाज्ञानविनाशिनी ॥ ८ ॥ सिंहासने सुखासीनः कार्यो वा भगवान्हरिः ॥ गदामस्तकविन्यस्तकरद्वितयभूषणः ॥ ९ ॥ ज्वालामालाकुलवपुः शङ्खपद्मधरः प्रभुः ॥ मूर्तिमत्पृथिवीहस्तन्यस्तपादोऽथ वोत्थितः[1] ॥ १० ॥ शङ्खचक्रगदापद्मलाञ्छनैः शोभितः करैः ॥ अग्निज्वालाकुलावर्तविभूषिततनूरुहः ॥ ११ ॥ नरसिंहोऽथ वा कार्यः प्रभामण्डलदुर्दृशः ॥ सर्वाभरणसम्पन्नः कार्यो भूषणवर्जितः ॥ १२ ॥ ज्ञानं नृसिंहो जगतामधीशस्तेजोनिवासोम्बरसन्निकाशः ॥ रूपं मयैतत्त्रिविधं प्रदिष्टं तस्याप्रमेयस्य जनार्दनस्य १३ ॥ इति श्रीवि० ध० तृ०

१ 'दोऽथवार्थिनः' इति क० ।

ख० मा० सं० नृसिंहरूपनिर्माणो नामाष्टसप्ततितमोऽध्यायः ॥ ७८ ॥ मार्कंडेय उवाच ॥ ऐश्वर्यमनिरुद्धस्तु वराहो भगवान्हरिः ॥ ऐश्वर्यशक्त्या दंष्ट्राग्रसमुद्धृतवसुन्धरः ॥ १ ॥ नृवराहोऽथ वा कार्यः शेषोपरिगतः प्रभुः ॥ शेषश्चतुर्भुजः कार्यश्चारुरत्नफणान्वितः ॥ २॥ आश्चर्योत्फुल्लनयनो देवीवीक्षणतत्परः ॥ कर्तव्यौ सीरमुसलौ करयोस्तस्य यादव ॥ ३ ॥ सर्पभूषश्च कर्तव्यस्तथैव रचिताञ्जलिः ॥ आलीढस्थानसंस्थानस्तत्पृष्ठे भगवान्भवेत् ॥ ४ ॥ सव्येऽरत्निगता तस्य योषिद्रूपा वसुन्धरा ॥ नमस्कारपरा तस्य कर्तव्या द्विभुजा शुभा ॥ ५ ॥ यस्मिन्भुजे धरा देवी तत्र शङ्खः करे भवेत् ॥ अन्ये तस्य कराः कार्याः पद्मचक्रगदाधराः ॥ ६ ॥ हिरण्याक्षशिरच्छेदश्चक्रोद्यतकरोऽथ वा ॥ शूलोद्यतहिरण्याक्षसम्मुखो भगवान्भवेत् ॥ ७ ॥ मूर्तिमन्तमनैश्वर्यं हिरण्याक्षं विदुर्बुधाः ॥ऐश्वर्येण वराहेण स निरस्तोऽरिमर्दनः ॥ ८ ॥ नृवराहोऽथ वा कार्यो ध्याने कपिलवत्स्थितः ॥ द्विभुजस्त्वथ वा कार्यः पिण्डनिर्वहणोद्यतः ॥ ९ ॥ समग्रक्रोडरूपो वा बहुदानवमध्यगः ॥ नृवराहो वराहो वा कर्तव्यः क्ष्माविधारणे ॥ १० ॥ ऐश्वर्ययोगोद्धृतसर्वलोकः कार्योऽनिरुद्धो भगवान्वराहः ॥ रुद्धा न यस्य क्वचिदेव शक्तिः समस्तपापापहरस्य राजन् ॥ ११ ॥ इति श्रीवि० ध० तृ० ख० मा० व० सं० वराहरूपनिर्माणो नामैकोनाशीतितमोऽध्यायः ॥ ७९ ॥ वज्र उवाच ॥ अथाश्वशिरसो रूपं विष्णोरमिततेजसः ॥ श्रोतुमिच्छाम्यनेनैव प्रसङ्गेन महाभुज॥ १॥ मार्कंडेय उवाच ॥ मूर्तिमत्पृथिवीपाल हस्तपादस्मितच्छविः ॥ नीलाम्बरधरः कार्यो देवो हयशिरोधरः ॥ २ ॥ विद्धि सङ्कर्षणाङ्गं वै देवं हयशिरोधरम् ॥ कर्तव्योऽष्टभुजो देवस्तत्करेषु चतुर्ष्वथ ॥ ३ ॥ शङ्खचक्रगदापद्मान्साकारान्कारयेद्बुधः ॥ चत्वारश्च कराः कार्या वेदानां देहधारिणाम् ॥ ४ ॥ देवेन मूर्ध्नि विन्यस्ता सर्वाभरणधारिणा ॥ अश्वग्रीवेन देवेन पुरा वेदाः समुद्धृताः ॥ ५ ॥ वेदा हृता दानवपुङ्गवाभ्यां रसातलादेव वरेण तेन॥ समुद्धृता यादववंशमुख्य तुरङ्गमूर्ध्ना पुरुषोत्तमेन ॥ ६ ॥ इति श्रीवि० ध० तृ० ख० मा० व० सं० हयग्रीवरूपनिर्माणो नामाशीतितमोऽध्यायः ॥ ८० ॥ वज्र उवाच ॥ पद्मनाभस्य मे रूपं प्रब्रूहि जगताम्पतेः ॥ यत्रास्यपद्मसम्भूतो देवदेवः पितामहः॥१॥ मार्कंडेय उवाच॥ जलमध्यगतः कार्यः शेषः पन्नगदर्शनः॥ फणपुञ्जमहारत्नदुर्निरीक्ष्यशिरोधरः ॥ २ ॥ देवदेवस्तु कर्तव्यस्तत्र सुप्तश्चतुर्भुजः ॥ एकः पादोऽस्य कर्तव्यो लक्ष्म्युत्सङ्गगतः प्रभो ॥ ३ ॥ तथापरश्च कर्तव्यः शेषभोगाङ्कसंस्थितः ॥ एको भुजोऽस्य कर्तव्यस्तत्र जानौ प्रसारितः ॥ ४ ॥ कर्तव्यो नाभिदेशस्थस्तथा तस्यापरः करः ॥ तथा चान्यः करः कार्यो देवस्य तु शिरोधरे ॥ ५ ॥ सन्तानमञ्जरीधारी तथैवास्यापरो भवेत् ॥ नाभीसरसि सम्भूते कमले तस्य यादव ॥६॥

सर्वपृथ्वीमये देव्याः प्राग्वत्कार्यः पितामहः ॥ नाललग्नौ च कर्तव्यौ पद्मस्य मधुकैटभौ ॥ ७ ॥ नृरूपधारीणि भुजङ्गमस्य कार्याण्यथास्त्राणि तथा समीपे ॥ एतत्तवोक्तं यदुपुङ्गवाग्र्य देवस्य रूपं परमस्य तस्य ॥ ८ ॥ इति श्रीविष्णुध० तृ० ख० मा० व० सं पद्मनाभरूपनिर्माणो नामैकाशीतितमोऽध्यायः ॥ ८१ ॥ वज्र उवाच ॥ आचक्ष्व रूपं लक्ष्म्या मे भृगुवंशविवर्धन ॥ या माता सर्वलोकस्य पत्नी विष्णोर्महात्मनः ॥ ॥ १ ॥ मार्कण्डेय उवाच ॥ हरेः समीपे कर्तव्या लक्ष्मीस्तु द्विभुजा नृप ॥ दिव्यरूपाम्बुजकरा सर्वाभरणभूषिता ॥ २ ॥ गौरी शुक्लाम्बरा देवी रूपेणाप्रतिमा भुवि ॥ पृथक्चतुर्भुजा कार्या देवी सिंहासने शुभे ॥ ३ ॥ सिंहासनेऽस्याः कर्तव्यं कमलं चारुकर्णिकम् ॥ अष्टपत्रं महाभाग कर्णिकायान्तु संस्थिता ॥ ४ ॥ विनायकवदासीना देवी कार्या महाभुज ॥ बृहन्नालं करे कार्यं तस्याश्च कमलं शुभम् ॥ ५ ॥ दक्षिणे यादव श्रेष्ठ केयूरप्रान्तसंस्थितम् ॥ वामेऽमृतघटः कार्यस्तथा राजन्मनोहरः ॥ ६ ॥ तथैवान्यौ करौ कार्यौ बिल्वशङ्खधरौ नृप ॥ आवर्जितघटं कार्यं तत्पृष्ठे कुञ्जरद्वयम् ॥ ७ ॥ देव्याश्च मस्तके पद्मं तथा कार्यं मनोहरम् ॥ सौभाग्यं तद्विजानीहि शङ्खमृद्धिं तथा परम् ॥ ८ ॥ बिल्वं च सकलं लोकमपां सारामृतं तथा ॥ पद्मं लक्ष्मीकरे विद्धि विभवं द्विजपुङ्गव ॥ ९ ॥ हस्तिद्वयं विजानीहि शंखपद्मावुभौ निधी ॥ समुत्थिता वा कर्तव्या शंखाम्बुजकरा तथा॥१०॥ समुक्षिता महाभागा पद्मे पद्मान्तरप्रभा ॥ द्विभुजा चारुसर्वांगी सर्वाभरणभूषणा ॥ ११ ॥ द्वौ च मौलिचरौ मूर्ध्नि कार्यौ विद्याधरौ शुभौ ॥ १२ ॥ कराभ्यां मौलिलग्नाभ्यां दक्षिणाभ्यां विराजितौ ॥ कराभ्यां खड्गधारिभ्यां देवीवीक्षणतत्परौ ॥ १३ ॥ राजश्रीः स्वर्गलक्ष्मीश्च ब्राह्मी लक्ष्मीस्तथैव च ॥ जयलक्ष्मीश्च कर्तव्या तस्या देव्याः समीपगाः ॥ १४ ॥ सर्वाः सुरूपाः कर्तव्यास्तथा च सुविभूषणाः ॥ १५ ॥ लक्ष्मीः स्थिता सा कमले तु यस्मिँस्तां केशवं विद्धि महानुभाव ॥ विना कृता सा मधुसूदनेन क्षणं न सन्तिष्ठति लोकमाता ॥ १६ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे लक्ष्मीरूपनिर्माणो नाम द्व्यशीतितमोऽध्यायः ॥८२॥ वज्र उवाच ॥ रूपेण केन कर्तव्यो विश्वरूपधरो हरिः ॥ एतं मे संशयं छिन्धि त्वं हि सर्वविदुच्यसे ॥ १ ॥ मार्कण्डेय उवाच ॥ आदौ देवस्य कर्तव्याश्चत्वारो वै स्तवोन्मुखाः ॥ तेषामुपरि कर्तव्यास्तथा माहेश्वराः पुनः ॥ २ ॥ ईशानं वक्त्रहीनास्ते तथा प्रोक्ता मया पुरा ॥ तेषामुपरि कर्तव्या मुख्या ब्राह्मी यथेरिता ॥ ३ ॥ ततश्चान्यैर्मुखाः कार्यास्तिर्यगूर्ध्वे तथैव च ॥ सर्वेषामपि देवानां तथान्यानपि कारयेत ॥ ४ ॥ ये मुखाः सत्त्वजातानां

१ 'मप्यनालकृतम्' इति ख० ।

नानारूपा विभागशः ॥ यावन्तो दृष्टयः प्रोक्ताश्चित्रसूत्रे महात्मभिः ॥ ५ ॥ दर्शनीयास्तु ताः सर्वास्तस्य मूर्धसु भागशः ॥ नानाविधानि सत्त्वानि मुखैरन्यैस्तथैव च ॥ ६ ॥ ग्रसमानः स कर्तव्यः सर्वैः सत्त्वभयङ्करैः ॥ कार्याण्युद्धूयमानानि मुखाः केचन ते शुभाः ॥ ७ ॥ यथा शक्त्या च कर्तव्यास्तस्य देवस्य बाहवः ॥ हस्तानि यानि दृष्टानि नृत्तशास्त्रे महात्मभिः ॥ ८ ॥ तानि सर्वाणि कार्याणि तस्य देवस्य बाहुषु ॥ हस्ताः कार्यास्तथैवान्ये सर्वायुधविभूषणाः ॥ ९ ॥ यज्ञदण्डधराश्चान्ये शिल्पभाण्डधरास्तथा ॥ कालभाण्डधराश्चान्ये वाद्यभाण्डधराः परे ॥ १० ॥रूपमन्यत्प्रकर्तव्यं वैकुण्ठवदतोऽच्युते ॥ तत्रापि गात्रगास्तस्य दर्शयेच्चित्रकर्मणा ॥ ११ ॥ त्रैलोक्यं सकलं राजन्यथाशास्त्रानुसारतः ॥ दर्शनीयानि वर्णानि सर्वाण्येव महात्मनः ॥ १२ ॥ बहुरूपस्य देवस्य बहुमस्तकगानि तु ॥ १३ ॥ एवं हि शक्त्या जगतां प्रधानः समग्ररूपो भगवान्हि कार्यः ॥ कार्त्स्न्येन रूपं पुरुषोत्तमस्य वक्तुं न शक्यं कुत एव कर्तुम् ॥ १४ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मा० व० सं० विश्वरूपनिर्माणो नाम त्र्यशीतितमोऽध्यायः ॥ ८३ ॥ मार्कण्डेय उवाच ॥ ऐडूकरूपनिर्माणं शृणुष्व गदतो मम ॥ ऐडूकपूजनात्पूजा कृतास्य जगतो भवेत् ॥ १ ॥ भद्रपीठं बुधः कुर्यात्सोपानैः शोभनैर्युतम् ॥ चतुर्भिर्यादवश्रेष्ठ यथादिशमरिन्दम ॥ २ ॥ तस्योपरिष्टादपरं भद्रपीठं तु कारयेत् ॥ तस्योपरिष्टादपरं तादृग्विधमरिन्दम ॥ ३ ॥ तस्योपरिष्टात्कर्तव्यं लिङ्गरूपं विजानता ॥ तत्तु तत्रापि कर्तव्यं लिंगरेखाविराजितम् ॥ ४ ॥ तस्य मध्ये ध्रुवां यष्टिं चतुरस्रां तु कारयेत् ॥ तस्योपरिष्टात्कर्तव्या भूमिकास्तु त्रयोदश ॥ ५ ॥ तस्योपरिष्टात्कर्तव्यं तथैवामलतारकम् ॥ तस्योपरि पुनर्यष्टिः कार्या राजन्सुवर्तुला ॥ ६ ॥ समाधचन्द्रमध्यस्थचन्द्रकेण विराजिता ॥ भूमिका या मया प्रोक्ता तथैवामलतारकम् ॥ ७ ॥ भुवनास्ते त्वया ज्ञेयास्तथा राजँश्चतुर्दश॥ लिंगे महेश्वरो देवो वृत्ता यष्टिः पितामहः ॥ ८ ॥ चतुरस्रा तु या यष्टिः स च देवो जनार्दनः ॥ गुणरूपेण विज्ञेयं भद्रपीठत्रयं तथा ॥ ९ ॥ गुणाधानमिति प्रोक्तं त्रैलोक्यं सचराचरम् ॥ अधस्ताद्भुवनानां तु लिङ्गोपरि तथा नृप ॥ १० ॥ लोकपालाश्च कर्तव्याः शूलहस्ताश्चतुर्दिशम् ॥ विरूढो धृतराष्ट्रश्च विरूपाक्षश्च यादवः ॥ ॥ ११ ॥ कुबेरश्च महातेजाः सूर्यवेशधराः शुभाः ॥ सर्वे कवचिनः कार्याः शुभाभरणभूषिताः ॥ १२ ॥ विरूपाक्षं विजानीहि शक्रदेव गणेश्वरम् ॥ धृतराष्ट्रं विजानीहि यमं भुवननायकम् ॥ १३ ॥ विरूपाक्षं विजानीहि वरुणं यादसाम्पतिम् ॥ राजराजं विजानीहि कुबेरं धनदं प्रभुम् ॥ १४ ॥ ऐडूकरूपं कथितं मयैतत्प्रजाहिताख्यं यदुवंशमुख्य ॥१५॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे

ऐडूकरूपनिर्माणो नाम चतुरशीतितमोऽध्यायः ॥ ८४ ॥ वज्र उवाच ॥ वासुदेवस्य देवस्य बहुरूपस्य भार्गव ॥ ब्रूहि मे रूपनिर्माणं शाश्वतस्य महात्मनः ॥ १ ॥ मार्कण्डेय उवाच ॥ एकवक्त्रश्चतुर्बाहुः सौम्यरूपः सुदर्शनः ॥ सलिलाध्मातमेघाभस्सर्वाभरणभूषितः ॥ २ ॥ कण्ठेन शुभरेखेण कम्बुतुल्येन राजता ॥ वराभरणयुक्तेन कुण्डलोत्तमभूषिणा ॥ ३ ॥ अङ्गदी बद्धकेयूरो वनमालाविभूषणः ॥ उरसा कौस्तुभं बिभ्रत्किरीटं शिरसा तथा ॥ ४ ॥ शिरःपद्मस्तथैवास्य कर्तव्यश्चारुकर्णिकः ॥ सुश्लिष्टायतभुजस्तनुस्ताम्रनखाङ्गुलिः ॥ ५ ॥ मध्येन त्रिवलीभङ्गशोभितेन सुचारुणा ॥ स्त्रीरूपधारिणी क्षोणी कार्या तत्पादमध्यगा ॥ ६ ॥ तत्करस्थांघ्रियुगुलो देवः कार्यो जनार्दनः ॥ ताला न्तरपदन्यासः किञ्चिन्निष्क्रान्तदक्षिणः ॥ ७ ॥ अन्तर्दृशा मही कार्या देवदर्शनविस्मिता ॥ देवश्च कटिवासेन कार्यो जान्ववलम्बिना ॥ ८ ॥ वनमाला च कर्तव्या देवजान्ववलम्बिनी ॥ यज्ञोपवीतः कर्तव्यो नाभिदेशमुपागतः ॥ ९ ॥ उत्फुल्लकमलं पाणौ कुर्याद्देवस्य दक्षिणे ॥ वाम पाणिगतं शङ्खं शङ्खाकारं तु कारयेत् ॥ १० ॥ दक्षिणे तु गदा देवी तनुमध्या सुलोचना ॥ स्त्रीरूपधारिणी मुग्धा सर्वाभरणभूषणा ॥ ११ ॥ पश्यन्ती देवदेवेशं कार्या चामरधारिणी ॥ कार्यं तन्मूर्ध्निविन्यस्तं देवहस्तं तु दक्षिणम् ॥ १२ ॥ वामभागगतश्चक्रः कार्यो लम्बोदरस्तथा ॥ सर्वाभरण संयुक्तो नृत्तविस्फारितेक्षणः ॥ १३ ॥ कर्तव्यश्चामरकरो देववीक्षणतत्परः ॥ कार्यो देवकरो वामो विन्यस्तस्तस्य मूर्धनि ॥ १४ ॥ वज्र उवाच ॥ किं भयं तस्य देवस्य नित्यं सर्वायुधोद्यतः ॥ यतस्तिष्ठति सर्वात्मा भयहा त्रिदिवौकसाम् ॥ १५ ॥ मार्कण्डेय उवाच ॥ नैतान्यायुधजातानि परमा र्थेन यादव ॥ महाभूतान्यथैतानि हरिर्धारयते प्रभुः ॥ १६ ॥ खं विजानीहि देवस्य करे शंखो महाभुजः ॥ चक्रं जानीहि पवनं गदां तेजस्तथा विभोः ॥ १७ ॥ आपः पद्मं विजानीहि पादमध्ये व्यवस्थितम् ॥ महाभूतान्यथैतानि त्यक्तानि हरिणा नृप ॥ १८ ॥ क्षिप्रमेव विशीर्यन्ते तेन धारयते हरिः ॥ विष्णुर्जीवः समाख्यातस्तेन त्यक्ताः शरीरगाः ॥ १९ ॥ भूतानि पश्य प्रत्यक्षं शीर्यमाणानि सर्वशः ॥ भूतैर्देवधृतैर्लोको धार्यते यदुनन्दन ॥ तेषां धारणशक्तिर्या सा ज्ञेया विष्णुकारिता ॥ २० ॥ वासुदेवस्य रूपेण कार्यः सङ्कर्षणः प्रभुः ॥ स तु शुक्लवपुः कार्यो नीलवासा यदूत्तम ॥ ॥ २१ ॥ गदास्थाने च मुसलं चक्रस्थाने च लाङ्गलम् ॥ कर्तव्यौ तनुमध्यौ तौ नृरूपौ रूपसंयुतौ ॥ २२ ॥ वासुदेवस्य रूपेण प्रद्युम्नश्च तथा भवेत् ॥ 
स तु दूर्वाङ्कुरश्यामस्सितवासा विधीयते ॥ २३ ॥ चक्रस्थाने भवेच्चापं गदास्थाने तथा शरम् ॥ तथाविधौ तु कर्तव्यौ तथा मुससलाङ्गलौ ॥ २४ ॥ एतदेव तथा रूपमनिरुद्धस्य कारयेत् ॥ पद्मपत्राभवपुषो रक्ताम्बरधरस्य तु ॥ २५ ॥ चक्रस्थाने भवेच्चर्म गदास्थानेऽसिरेव च ॥ चर्म स्याच्चक्र

रूपेण प्रांशुः खड्गो विधीयते ॥ २६ ॥ चक्रादीनां स्वरूपाणि किञ्चिन्मूर्धसु दर्शयेत् ॥ रम्याण्यायुधरूपाणि चक्रादीन्येव यादव ॥ २७ ॥ वामपार्श्वगताः कार्या देवानां प्रवरा ध्वजाः ॥ स्वपताकायुता राजन्यष्टिस्थास्ते यथेरिताः ॥ २८ ॥ पीतवर्णं प्रतीहारं वासुदेवस्य कारयेत् ॥ सुभद्रवसुभद्राख्यौ वीरौ प्रासकरावुभौ ॥ २९ ॥ आषाढो यज्ञतातश्च कार्यः सङ्कर्षणस्य तु ॥ नीलवर्णौ महाभागौ तथा मुद्गरधारिणौ ॥ ३० ॥ प्रद्युम्नस्य प्रतीहारौ जयो विजय एव च ॥ श्वेतवर्णौ महाभाग तथा खड्गधरावुभौ ॥ ३१ ॥ आमोदश्च प्रमोदश्च महाबलपराक्रमौ ॥ अनिरुद्धस्य विज्ञेयौ प्रतीहारौ सुरेश्वरौ ॥ ३२ ॥ रक्तवर्णौ महाभाग तथोभौ शक्तिधारिणौ ॥ सर्वे सुरूपाः कर्तव्याः सर्वाभरणधारिणः ॥ ३३ ॥ द्विबाहवस्तु कर्तव्यास्तर्जन्युच्छ्रितपाणयः ॥ दृष्टिस्तेषां तु कर्तव्या द्वारन्यस्ता महाभुज ॥ ३४ ॥ शक्रं सुभद्रं जानीहि वसुभद्रं हुताशनम् ॥ आषाढं देवदेवेशं यमं जानीहि यादव ॥ ३५ ॥ यज्ञतातं विरूपाक्षं विद्धि देवमनिन्दितम् ॥ जयं जानीहि वरुणं यादोगणमहेश्वरम् ॥ ३६ ॥ पवनं च विजानीहि विजयं यदुनन्दन ॥ आमोदं धनदं विद्धि प्रमोदं शिवमेव च ॥ ३७ ॥ एते कार्याश्च वा सर्वे दिनगोक्तवपुर्धराः[1] ॥ एत एव तथा प्रोक्ता भूय एव महात्मभिः ॥ ३८ ॥ अष्टौ देवगणा राजँस्तन्मे निगदतः शृणु ॥ वासुदेवप्रतीहारावणिमा लघिमा स्मृतौ ॥ ३९ ॥ संकर्षणप्रतीहारौ महिमाप्राप्तिसंज्ञितौ ॥ प्राकाम्यं च तथैशित्वं प्रद्युम्ने कथितावुभौ ॥ ४० ॥ वशित्वं विद्धि चामोदं यत्र कामावसायिता ॥ प्रमोदमथ जानीहि सर्वलोकनमस्कृतम् ॥ ४१ ॥ एतत्ते रूपनिर्माणं चतुर्मूर्तेर्मयेरितम् ॥ एकमूर्तिधरः कार्यो वैकुण्ठेत्यभिशब्दिताः ॥ ४२ ॥ चतुर्मुखः स कर्तव्यः प्रागुक्तवदनः प्रभुः ॥ चतुर्मूर्तिः स भवति कृते मुखचतुष्टये ॥ ४३ ॥ पूर्वं सौम्यमुखं कार्यं यत्तु मुख्यतमं विदुः ॥ कर्तव्यं सिंहवक्त्राभं ज्ञानवक्त्रं तु दक्षिणम् ॥ ४४ ॥ पश्चिमं वदनं रौद्रं यत्तदैश्वर्यमुच्यते ॥ चतुर्वक्त्रस्य कर्तव्यं रूपमन्यत्तथेरितम् ॥ ४५ ॥ चतुर्भुजो वा कर्तव्यस्तार्क्ष्यो यादवनन्दन ॥ गारुडश्च तथा कार्यो धर्मज्ञ रचिताञ्जलिः ॥ ४६ ॥ सुखोपविष्टस्तत्पृष्ठे तत्करस्थो हि पङ्कजः ॥ उपविष्टौ गदाचक्रौ कर्तव्यौ तार्क्ष्यपक्षयोः ॥ ४७ ॥ तार्क्ष्यासनस्था श्रीः कार्या वामोत्सङ्गगतापि वा ॥ शेषभोगोपविष्टो वा कार्यो देवो मनोहरः ॥ ४८ ॥ तत्फणैरेव रचितं दुर्निरीक्ष्यं प्रभोर्मुखम् ॥ शेषभोगोपविष्टस्य शून्यं करचतुष्टयम् ॥ ४९ ॥ कार्यं चक्रं गदा कार्या सदेहा तत्समीपगा ॥ लक्ष्मीः कार्या तथा तस्य शेषभोगगतापि वा ॥ ५० ॥ शेषपर्यङ्कशयने कार्यो वा भगवान्हरिः ॥ ऐरावती समुद्भूते यथारूपो मयेरितः ॥ ५१ ॥ नृसिंह

१ 'दिङ्नगोक्त'इति ख० ।

रूपं कथितं वाराहं कापिलं तथा ॥ विश्वरूपं हयग्रीवं पद्मनाभं तथैव च ॥ ५२ ॥ ब्राह्मयं रौद्रं च रामीयं पुष्करेण महात्मना ॥ कर्तव्यो वामनो देवः सङ्क्षिप्तैर्गात्रपर्वभिः ॥ ५३ ॥ पीनगात्रश्च कर्तव्यो दण्डी चाध्ययनोद्यतः ॥ दूर्वाश्यामश्च कर्तव्यः कृष्णाजिनधरस्तथा ॥ ५४ ॥ सजलाम्बुदसङ्काशस्तथा कार्यस्त्रिविक्रमः ॥ दण्डपाशधरः कार्यः शङ्खसञ्चुम्बिताधरः ॥ ५५ ॥ शङ्खचक्रगदापद्माः कार्यास्तस्य स्वरूपिणः ॥ नृदेहास्ते न कर्तव्या शेषं कार्यं तु पूर्ववत् ॥ ५६ ॥ एकोर्ध्ववदनः कार्यो देवो विस्फारितेक्षणः ॥ रूपं नरस्य कथितं तथा नारायणस्य ते ॥ ५७ ॥ कृष्णस्य हरिणा सार्धं पूर्वं वरुणसूनुना ॥ हंसो मत्स्यस्तथा कूर्मः कार्यास्तद्रूपधारिणः ॥ ५८ ॥ शृङ्गमत्स्यस्तु कर्तव्यो देवदेवो जनार्दनः ॥ स्त्रीरूपश्च तथा कार्यः सर्वाभरणभूषितः ॥ ५९ ॥ करेऽमृतघटश्चास्य कर्तव्यो भूरिदक्षिणः ॥ पृथुः कार्यस्तथा राजा चक्रवत्यन्त लक्षणः ॥ ६० ॥ कार्यस्तु भार्गवो रामो जटामण्डलदुर्दृशः ॥ हस्तेऽस्य परशुः कार्यः कृष्णाजिनधरस्य तु ॥ ६१ ॥ रामो दाशरथिः कार्यो राजलक्षणलक्षितः ॥ भरतो लक्ष्मणश्चैव शत्रुघ्नश्च महायशाः ॥६२ ॥ तथैव सर्वे कर्तव्याः किन्तु मौलिविवर्जिताः ॥ गौरस्तु कार्यो वाल्मीकिर्जटामण्डलदुर्दृशः ॥ ६३ ॥ तपस्यभिरतः शान्तो न कृशो न च पीवरः ॥ वाल्मीकिरूपं सकलं दत्तात्रेयस्य कारयेत् ॥ ६४ ॥ कृष्णशान्ततनुर्व्यासः पिङ्गलोऽतिजटाधरः ॥ सुमन्तुर्जैमिनिः पैलो वैशम्पायन एव च ॥ ६५ ॥ तस्य शिष्यास्तु कर्तव्याश्चत्वारः परिपार्श्वयोः ॥ युधिष्ठिरोऽथ कर्त्तव्यो राजलक्षणलक्षितः ॥ ६६ ॥ श्मश्रुहीनोऽतिपीनाङ्गः क्षाममध्यो वृकोदरः ॥ तिर्यक्प्रेक्षी संहतभ्रुः कर्तव्यश्च तथा गदी ॥ ६७ ॥ दूर्वाश्यामोऽर्जुनः कार्यः किरीटी लोहिताङ्गदः ॥ बाणचापधरः श्रीमान्सर्वाभरणभूषितः ॥ ६८ ॥ नकुलः सहदेवश्च कार्यावश्विसमावुभौ ॥ खड्गचर्मधरौ कार्यौ न त्वेवौषधिपाणिनौ ॥ ६९ ॥ नीलनीरजपत्राभा कृष्णा कार्यातिरूपिणी ॥ पद्मपत्राग्रगौरा तु कर्त्तव्या देवकी तथा ॥ ७० ॥ मधूकपुष्पसच्छाया यशोदापि तथा भवेत् ॥ एकानंशापि कर्तव्या देवी पद्मकरा तथा ॥ ७१ ॥ कटिस्थवामहस्ता सा मध्यस्था रामकृष्णयोः ॥सीरपाणिर्बलः कार्यो मुसली चैव कुण्डली ॥ ७२ ॥ श्वेतोऽतिनीलवसनो मदादञ्चितलोचनः ॥ कृष्णश्चक्रधरः कार्यो नीलोत्पलदलच्छविः ॥ ७३ ॥ इन्दीवरकरा कार्या तथा श्यामा च रुक्मिणी ॥ तार्क्ष्यस्थासा च कर्तव्या सत्यभामा सुरूपिणी ॥ ७४ ॥ अन्याश्च देव्यः कर्तव्याः सुरूपाः सुमनोहराः ॥ चापबाणधरः कार्यः प्रद्युम्नश्च सुदर्शनः ॥ ७५ ॥ राजन्दूर्वादलश्यामः श्वेतवासा मदोत्कटः ॥ कर्तव्यश्चानिरुद्धोऽपि खड्गचर्मधरः प्रभुः ॥ ७६ ॥ साम्बः कार्यो गदाहस्तः सुरूपश्च

विशेषतः ॥ साम्बानिरुद्धौ कर्तव्यौ पद्माभौ रक्तवाससौ ॥ खड्गहस्तौ च कर्तव्यौ स्त्रियो वेषौ तु पार्श्वयोः ॥ ७७ ॥ युयुधानस्तथा प्रांशुर्बाणचापधरो भवेत् ॥ वर्णेनोत्पलगर्भाभो दीर्घबाहुः सुलोचनः॥७८॥ प्रादुर्भावा देवदेवस्य विष्णोर्वक्तुं शक्या विस्तरान्नैव राजन् ॥ बुद्ध्या तेषां कर्मयोगं यथा वच्छास्त्रं दृष्ट्वा ते तु कार्या बुधेन॥७९॥इति श्रीविष्णुधर्मो०तृ०ख०मा०व० सं०देवोद्यानरूपनिर्माणो नाम पञ्चाशीतितमोऽध्यायः ॥८५॥वज्र उवाच॥ प्रोक्तं त्वया द्विजश्रेष्ठ प्रतिमालक्षणं शुभम् ॥ प्रासादलक्षणं सम्यक्कथयस्वामितद्युते ॥१॥ मार्कण्डेय उवाच ॥ हस्तप्रमाणन्तत्प्रोक्तं प्रासादानां तु लक्षणम् ॥ संस्थानतो विनिर्दिष्टं हस्तमानानुकीर्तनम् ॥२॥ तदहं ते प्रवक्ष्यामि तन्मे निगदतः शृणु ॥ प्रासादलक्षणं श्रेष्ठं विजयारोग्यवर्धनम् ॥३॥ भागं तु जगती कार्या प्रासादो भागमेव च ॥ कर्तव्या जगती मात्रतलपोच्छ्रायत्रिभूमिका ॥४ ॥ उच्छ्राया तेन कर्तव्या ह्येकैका भूमिका गतिः ॥ भद्रपीठाकृतिः कार्या भूमिका भूमिका पुनः ॥ ५ ॥ प्रसादार्धं कटिः कार्या कूटमेवं तथैव च ॥ कटिमूलाष्टभागेन सोपानविस्तरा भवेत् ॥ ६ ॥ समसंख्यं तु कर्तव्यं सोपानं भूमिकां प्रति ॥ कूटः कार्यस्त्रिधोच्छेदः शुभामलकसारकः ॥ ७ ॥ चतुरस्रस्तथा राजन्क्रमोपचयसंयुतः ॥ विच्छेदाश्चात्र कर्तव्याः सिंहमालाविभूषिताः ॥ ८ ॥ द्वारोच्छ्रायाश्च कर्तव्या देवाश्चाष्टांशसंयुताः ॥ विस्तारं द्विगुणं चात्र द्वारोच्छ्रायं तु कारयेत् ॥ ९ ॥ द्वारशोभावती कार्या चन्द्रशाला समुच्छ्रिता ॥ कूटप्रथमविच्छेदे शुभामलकसारकैः ॥ १० ॥ द्वारैश्चतुर्भिर्भग्नैस्तु न भग्नैर्वा महीपते ॥ प्रासादमेतत्कर्तव्यं कूटच्छेदद्वये तथा ॥ ११ ॥ विच्छिन्नचन्द्रशालाभिश्चतसृभिरिवावृतम् ॥ हिमवान्नाम विख्यातः प्रासादोऽयं मनोहरः ॥ १२ ॥ कूटच्छेदद्वयोपेतो माल्यवानभिधीयते ॥ एककूटस्तथैवायं शृङ्गवानिति कीर्तितः ॥ १३ ॥ आगाराख्यो भवत्येष द्वारेणैकेन शृङ्गवान् ॥ अगारो भवनाख्यः स्यात्प्रासादस्तु द्विमेखलः ॥ १४ ॥ गृहाख्यश्चैष निर्दिष्टः प्रासादश्चैकमेखलः ॥ शृङ्गवान्निषधाख्यः स्यात्प्रासादस्तु द्विमेखलः ॥ १५ ॥ स एव नीलो भवति तथा चैवैकमेखलः ॥ माल्यवाञ्श्वेतसंज्ञः स्यात्प्रासादस्तु द्विमेखलः ॥ १६ विन्ध्यनामा भवत्येष तथा चैवैकमेखलः ॥ अगारभेदरहितः सर्वः सर्वदिवौकसाम् ॥१७ ॥ राजन्देवगृहाः कार्या यथेष्टाशामुखाः शुभा॥ आगारभेदाः कर्तव्याः पूर्वपश्चिमदिङ्मुखाः ॥१८॥ तेषां लिङ्गप्रतिष्ठैका शस्ता भवति पार्थिव ॥ द्विमेखला ये कथितास्तथा चैवैकमेखलाः ॥ १९ ॥ भागस्तेषां तु जगती भागस्तेषां तथा कटिः ॥ भागमेकं तथा कार्यं कूटं प्राग्वन्महीपते ॥ ॥ २० ॥ वलभीसंस्थितं रम्यं प्रासादं तु चतुर्दिशम् ॥ विस्तारत्रिगुणायामं तथा चैवैकमेखलम्॥२१॥पार्श्वयोर्वलभीपृष्ठे चन्द्रशालायुतं भवेत् ॥

प्रासादे तत्र कर्तव्यस्त्रयाश्चामलसारकाः ॥ २२ ॥ भागस्तु मेखला तत्र कटिभागस्तथा भवेत् ॥ भाग एकस्तु वलभी तथा तत्र प्रकीर्तिता ॥ २३॥ प्रासादस्याष्टमो भागः कर्तव्यो मेखलागतिः ॥ कष्टयष्टभागौ द्वौ हित्वा सोपानं विस्तराद्भवेत् ॥ २४ ॥ एकस्यां दिशि चैवात्र द्वारः कार्यः समुच्छ्रयः ॥ स्वेच्छाशाभिमुखः कार्यो वलभीसंज्ञितस्त्वयम् ॥ २५ ॥ प्रासादेऽस्मिँस्तु कर्तव्या ब्रह्मविष्णुमहेश्वराः ॥ एकानंशाथ वा कार्या मध्यगा रामकृष्णयोः॥२६॥गणेशस्कन्दयोर्मध्ये कर्तव्यो वा त्रिलोचनः ॥ मध्येऽर्कचन्द्रयोः कार्यस्त्वष्टा वापि जनार्दनः॥२७॥ एकैव दुर्गा कर्तव्या बहुबाहुविभूषिता ॥ तत्र कार्याथ वा लक्ष्मीर्जगत्रितयभूषणा ॥२८॥ विष्णुर्भोगशयः कार्यः प्रासादे तत्र वा नृप ॥ चतुरात्माथ वा कार्यो देवदेवो जनार्दनः ॥ २९ ॥ शक्रकीनाशवरुणैः सहितो वा धनेश्वरः ॥ अन्ये देवा न कर्तव्या ये मया नानुकीर्तिताः ॥ ३० ॥ एकाशाभिमुखैर्द्वारैश्चतुर्भिः संयुतस्त्वयम् ॥ ब्रह्मणा वृद्धिदो नाम प्रासादः परिकीर्तितः ॥३१ ॥ कर्तव्यस्तत्र लोकेशश्चतुरात्मा हरिस्त्वथ ॥ विस्तारत्रिगुणैश्छायां द्वारांस्तत्र निवेशयेत् ॥ ३२ ॥ विस्तारत्रिगुणोच्छ्रायैर्द्वारैर्वा संयुतस्त्रिभिः ॥ प्रासादोऽयं भवेद्राजँस्त्रिगुणो नामतः शुभः ॥ ३३ ॥ एकाशाभिमुखद्वारगर्भभित्तिसमन्वितः ॥ ब्रह्मा विष्णुश्च रुद्रश्च प्रासादेऽत्र निवेशयेत् ॥ ३४ ॥ आदित्यविष्णुचन्द्रार्काः पृथग्भूपालसत्तम ॥ गणेशरुद्रस्कन्दान्वा प्रासादेऽस्मिन्निवेशयेत्॥३५॥पार्श्वस्थवलभीहीनो वलभीसंज्ञितो भवेत् ॥ प्रासादः पार्श्वसंयुक्तः शिखरो नामतो नृप ॥३६॥ पार्श्वस्थवलभीहीनं वृत्तिदं कामदं भवेत् ॥ पार्श्वस्थवलभीहीनं त्रिगुणं नृगृहं भवेत् ॥ ३७ ॥ कृतविस्तृतदिग्द्वारं प्रासादं वलभीगतम्॥तुरगाख्यं विनिर्दिष्टं रेतोमन्दगृहं हितम् ॥ ३८ ॥ विनायकस्य तत्कार्यं भद्रकाल्यास्तथैव च ॥ स्कन्दस्य कार्यं तद्राजँल्लक्ष्म्याः कार्यमथापि वा ॥ ३९ ॥ नागानां प्रमथानां वा नान्यस्य तु विधीयते ॥ कृतविस्तृतदिग्द्वारं तुरगं कुञ्जरं स्मृतम् ॥ ४० ॥ तुरगाभिहतानां च देवानां तत्प्रशस्यते ॥ शक्रस्य च महाभाग नान्येषां तद्विधीयते ॥ ४१ ॥ यथेष्टसंख्यागर्भं तु प्रासादं वलभीगतम् ॥ यथेष्टन्नाम विख्यातं यथेष्टायामसंज्ञितम् ॥ ४२ ॥ यथेष्टमानं द्वारन्तद् द्वारेणैकेन संयुतम् ॥ एकगर्भं तदेवोक्तं विशालं नाम पार्थिव ॥४३ ॥ यथेष्टे च विशाले च कर्तव्या मातरो नृप ॥ ग्रहा वा राजशार्दूल नक्षत्राण्यथ वा पुनः ॥ ४४ ॥ आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः ॥ भृगवोऽङ्गिरसः साध्या देवौ वा यदि वाश्विनौ ॥ ४५ ॥ अष्टौ वाथ दिशां पाला यदि वा भूतपञ्चकम् ॥ एवं देवगणः कार्यो राजन्प्रासादयोस्तयोः॥४६ ॥ आयता माल्यवत्पृष्ठे वलभी तु यदा भवेत् ॥ कर्तव्यो भद्रकाल्यर्थे प्रासादो भद्रसंज्ञितः ॥ ४७ ॥ तिर्यक्स्था माल्यवत्पृष्ठे वलभी तु यदा भवेत् ॥ द्वारपालेति स प्रोक्तः प्रासादो विबुधप्रियः ॥ ४८ ॥ सुभद्राख्यस्स निर्दिष्टः

श्वेताख्यो भद्रवत्कृतः ॥ कृतस्तु द्वारशालावत्सौम्यः स्याद्गन्धमादनः ॥ ४९ ॥ सौम्यः सुभद्रश्च तथा सर्वेषामेव शस्यते ॥ अष्टत्रिकूटं त्रिच्छेदं शुभामलकसारकम् ॥ ५० ॥ अष्टांशजगतीबन्धं तथा चैवैकमेखलम् ॥ अष्टगर्भाष्टदिग्द्वारं कमलं परिकीर्तितम् ॥ ५१ ॥ अष्टौ तत्र तु कर्तव्या ग्रहाः केतुविवर्जिताः ॥ सूर्यः शुक्रः कुजो राहुः सौरश्चन्द्रो बुधो गुरुः ॥ ५२ ॥ क्रमेणानेन कर्तव्यं तत्र राजन्गृहाष्टकम् ॥ भूजलाकाशवह्नीन्दुदीक्षितार्कमरुत्तनुः ॥ ५३ ॥ महादेवोऽथ वा कार्यस्तत्र देवो जगद्गुरुः ॥ अष्टात्मा वासुदेवो वा प्रभवे यापनेन च ॥५४ ॥ प्रासादेऽस्मिंस्तु कर्तव्यो विधिनानेन वा हरिः ॥ चतुरात्मा तु कर्तव्यो दिग्द्वारेष्वत्र केशवः ॥ ५५ ॥ अश्वशीर्षं वराहं च नरसिंहं त्रिविक्रमम् ॥ ईशानादिषु कोणेषु कार्या देवा नरोत्तम ॥ ५६ ॥ उच्छ्रिता जगती कार्या भद्रपीठाकृतिं विना ॥ प्राग्भागवलभीहीनं तुरगं तत्र कारयेत् ॥ ५७ ॥ प्रशस्तः सर्वदेवानां प्रासादस्त्वरुणोदयः ॥ पूर्वापराशाभिमुखः कार्योयं नान्यदिङ्मुखः ॥ ५८ ॥ अयमेवातिदीर्घस्तु प्रासादो गृहसंज्ञितः ॥ प्रासादे त्वरुणे लग्नावल्यप्रासादकावुभौ ॥ ५९ ॥ याम्योत्तराशाभिमुखौ तद्वज्जगति बन्धनौ ॥ सम्मुखौ तौ तु जगति वलभीच्छन्दकौ भवेत्॥६०॥ शुभा जालप्रतिच्छन्ना सौभद्रारमुखा तथा ॥ तत्र स्याद्गरुडो नाम प्रासादः सुमनोहरः ॥ ६१ ॥ आदित्यस्य प्रतिष्ठानं प्रासादे तत्र शस्यते ॥ दण्डपिङ्गलकौ कार्यौ तत्र प्रासादयोर्द्वयोः ॥ ६२ ॥ तयोर्वा नृप कर्तव्यौ रतौ मन्दयमावुभौ ॥ कर्तव्यौ वा महाराज तथा केशवशङ्करौ ॥ ६३ ॥ प्रासादे गरुडो वापि कर्तव्यश्चन्द्रमा बुधैः ॥ पार्श्वप्रासादयोस्तस्य कर्तव्यौ शिशिराम्बुपौ ॥ ६४ ॥ प्रासादे गारुडे वापि कामदेवं तु कारयेत् ॥ पार्श्वप्रासादयोस्तस्य कर्तव्यौ वनमालिनौ ॥ ६५ ॥ प्रासादे गारुडे वापि कर्तव्यो देवराड् बुधैः ॥ पार्श्वप्रासादयोस्तस्य कर्तव्यौ वनमालिनौ॥६६॥ प्रासादे गारुडे वापि कर्तव्यश्च तथा यमः ॥ पार्श्वप्रासादयोस्तस्य मृत्युकालौ निवेशयेत् ॥ ६७ ॥ प्रासादे गारुडे वापि कर्तव्यो वरुणो भवेत् ॥ पार्श्वप्रासादयोः कार्या गङ्गा कालिन्दिरेव च ॥ ६८ ॥ प्रासादे गारुडे वापि धनाध्यक्षं तु कारयेत् ॥ पार्श्वप्रासादयोस्तस्य शङ्खपद्मौ निवेशयेत् ॥ ६९ ॥ प्रासादे गारुडे वापि ब्रह्माणं विनिवेशयेत् ॥ पार्श्वप्रासादयोस्तस्य कर्तव्यौ केशवेश्वरौ ॥ ७० ॥ प्रासादे गारुडे वापि महादेवं निवेशयेत् ॥ पार्श्वप्रासादयोस्तस्य कार्यौ विष्णुपितामहौ ॥ ७१ ॥ विनायकः कुमारो वा कर्तव्यो यदुनन्दन ॥ वीरभद्रश्च नन्दी च कर्तव्यौ वा मनोहरौ ॥ ७२ ॥ प्रासादे गारुडे वापि गरुडं विनिवेशयेत् ॥

१ 'अष्टांश कूटं' इति ख०। २ 'पितृपितामहौ' इति क०।

पार्श्वप्रासादयोः कार्यः कश्यपो विनता तथा ॥७३॥ प्रासादे गारुडे वापि वासुदेवं निवेशयेत् ॥ पार्श्वप्रासादयोस्तस्य कार्यौ रुद्रपितामहौ॥७४॥ चन्द्रार्कौ वा महाराज यदि वा वरुणानिलौ ॥ लक्ष्मीं च कालरात्रीं च यदि वाप्यनलानिलौ ॥ ७५ ॥ तार्क्ष्यानन्तौ महाराज यदि वा गरुडारुणौ ॥ प्रासादे गारुडे वापि धर्मः कार्यो महीपते ॥ ७६ ॥ पार्श्वप्रासादयोस्तस्य कार्योऽर्थः काम एव च ॥ लिङ्गाकारं तु कर्तव्यं देववेश्म त्रिमेखलम् ॥ ७७ ॥ तस्य नाम भवेल्लोके शर्वेति नरपुङ्गव ॥ द्विमेखलस्य तस्यैव त्रैलोक्यमिति निर्दिशेत् ॥ ७८ ॥ स एव लिङ्गनामास्यात्प्रासादस्त्वेकमेखलः ॥ कूटवद्वलभीयुक्तं सर्वकीटं प्रकीर्तितम् ॥ ७९ ॥ ब्रह्माण्डमिति विज्ञेयं त्रैलोक्यं वलभीयुतम् ॥ लिङ्गाख्यं वलभीयुक्तं सारमित्यभिधीयते ॥ ८० ॥ शर्वाद्याः षडिमे कार्याः पूर्वपश्चिमदिङ्मुखाः ॥ लिङ्गसंस्थापनं कार्यं नित्यमेतेषु पण्डितैः ॥ ८१ ॥ प्रासादं वलभीसंज्ञं चतुरस्रं विमेखलम् ॥ चतुरस्रमिति ख्यातं कार्यं तत्सुमनोहरम् ॥ ८२ ॥ विद्वारं स्तंभसंयुक्तं पुरस्ताद्भित्तिवर्जितम् ॥ शाक्रं देवगणैर्युक्तं यमं वा पितृसंयुतम् ॥ ८३ ॥ मातृयुक्तं महाकालं नृसिंहमथ वा पुनः ॥ दुर्गां देवीं तथा राजन्नक्षत्रं शशिनं तथा ॥ ८४ ॥ ग्रहैर्दिवाकरं युक्तं नागैर्वा नृप वासुकिम् ॥ सुमेखलं तन्निर्दिष्टं तथा नृप समेखलम् ॥ ८५ ॥ विमेखलं तत्कथितं राजन्द्वारं द्विमेखलम् ॥ त्रिमेखलं तत्कथितं मेखलाढ्यं महीपते ॥ ८६ ॥ सर्वेष्वेतेषु कर्तव्याः सभास्थाः सर्वकीर्तिताः ॥ अन्येप्यनुक्ताः कर्तव्याः सभास्था नरपुङ्गव ॥ ॥ ८७ ॥ चतुरस्रादयस्त्वेते द्वारवन्तो महीपते ॥ धिष्ण्यशल्यबुधेन्द्राख्या[1] नामतः परिकीर्तिताः ॥ ८८ ॥ चतुरस्रो गृहः कार्यः प्रासादस्त्वेकभूमिकः॥गृह इत्येव विख्यातो लक्ष्मीं तत्र निवेशयेत॥८९॥ स एव कार्यो देवानां यथेष्टो बहुभूमिकः ॥ बहुभूमिकसंज्ञस्तु यथेष्टं नृपपुङ्गव॥९०॥ भूमिकाद्वादशोपेतः षडस्रो मेरुरुच्यते ॥ चतुर्द्वारस्तु कर्तव्यः सर्वेषां त्रिदिवौकसाम् ॥ ९१ ॥ शुक्तिमान्नामतः सर्वः स चैकादशभूमिकः ॥ मन्दरो नामतः प्रोक्तः स तद्वादशभूमिकः ॥ ९२ ॥ नवभिर्भूमिकाभिस्तु पारियात्रः प्रकीर्तितः ॥ अलको नाम विख्यातस्तथा चैवाष्टभूमिकः ॥ ॥ ९३ ॥ विमानः सप्तभौमः स्यात्षड्भौमो नन्दनः स्मृतः ॥ पञ्चतः पञ्चभौमः स्याच्चतुर्भौमश्चतुष्ककः ॥ ९४ ॥ त्रिभूमिस्तु त्रिभूमिः स्याद्द्विभूम्याख्यो द्विभूमिकः ॥ एकभौमस्तु निर्दिष्टस्तथा चैवैकभूमिकः ॥९५॥ वृत्तः प्रोक्तः समुद्राख्यस्तथा वृत्तैकमेखलः ॥मेखला चतुरस्रा तु भद्रपीठाकृतिर्भवेत् ॥९६॥कृतस्त्वष्टपरिच्छेदैः सर्वस्वामलसारकैः॥वृत्त एव तथा नन्दी प्रासादः परिकीर्तितः॥९७॥दीर्घराजगुहाकारो गुहाराजः प्रकीर्तितः॥

१ 'धिष्ण्यशिल्पविदैर्दुर्याख्या' इति ख० ।

भद्रकोल्यास्तथा कार्या विष्णोर्भोगशयस्य वा ॥ ९८ ॥ एकशृङ्गस्तथा वृत्तो वृषाख्यः स्याद्विमेखलः ॥ हंसाकारस्तथा हंसो घटाकारस्तथा घटः ॥९९॥ सिंहाकारः स्मृतः सिंहो मण्डपो मण्डपाकृतिः ॥ द्वादशास्त्रिः षडस्रिस्तु तथाष्टास्त्रिर्महीपते ॥ १०० ॥ प्रासादास्तु मया प्रोक्तास्तथा प्रोक्ताश्रयस्थितिः ॥ पञ्चभिः शिखरैर्जुष्टश्चतुर्भिरपि मण्डपैः ॥१०१॥ द्वारैश्चतुर्भिः संयुक्तः कैलाशः परिकीर्तितः ॥ त्रिमेखलस्त्रिशृङ्गश्च त्रिकूटो नाम विश्रुतः ॥१०२॥ शृङ्गेणैकेन संयुक्तश्चतुर्भिरपि मण्डपैः॥ चतुर्द्वारः स्मृतः सौम्यः प्रासादः सुमनोहरः॥१०३॥प्राकारे जानुदघ्ना स्याद्यस्यैका जगती भवेत्॥ प्रासादतुल्या त्र्यंशा तु त्र्यंशतुल्या तथा कटिः॥१०४॥शिखरः कुहरोपेतो नानारूपकभूषितः॥एकमण्डपसंयुक्तस्तादृशैः सुरमन्दिरैः ॥१०५॥ स्वल्पैर्विदिक्षु संयुक्तश्चतुर्भिर्भुवि मण्डपैः॥सोपानमूले संयुक्तो द्वाभ्यामेव नराधिप॥१०६॥प्रासादो राजराजाख्यो मुख्योऽयं परिकीर्तितः॥ प्रासादे राजराजाख्ये चत्वारो यदि मण्डपाः॥१०७॥सर्वे शिखरहीनाः स्युस्तथा सोपानमूलगाः॥अष्टौ देवगृहाणि स्युः स भवेद्धरणीधरः॥१०८॥ मण्डपैः शिखरोपेतैर्विमानाख्यः स वै भवेत् ॥ विदिक्षु यत्र प्रासादाश्चत्वारो मण्डपान्तरे ॥ १०९ ॥ मण्डपाः शिखरोपेता मध्यमंजारिसंयुताः[3] ॥ नवभिः शिखरैरेष प्रासादः सुरराड् भवेत् ॥ ११० ॥ बहुवातायनोपेतो बहुजालगवाक्षकः ॥ चतुरस्रोऽथ वा वृत्तस्तथैवोच्छ्रितमेखलः ॥ १११॥ आनन्दनामा भवति प्रासादः सर्वतोमुखः ॥ मेखलापृष्ठभूभागात्क्रमेणामलसारकैः ॥ ११२ ॥ अविच्छिन्नैः क्रमाद्वारैर्बहुभिर्यो विनिर्मितः ॥ न मुण्डो न च शूलाग्रः प्रासादः सुसमः स्मृतः ॥ ११३ ॥ मुण्डमण्डलसंयुक्तः स एवोक्तः प्रभञ्जनः ॥ चतुर्भिर्मण्डपैर्युक्तो विश्वकर्मेति कीर्त्यते ॥ ॥ ११४ ॥ मण्डपैः सुसमाकारैश्चतुर्भिरपि संयुतः ॥ महासुमन इत्येष प्रासादः परिकीर्तितः ॥ ११५ ॥ भद्राकारः स्मृतश्छत्रो मृदङ्गः स्यात्तदाकृतिः ॥विपरीतो मृदङ्गस्तु वज्र इत्यभिधीयते ॥११६ ॥ एका कटिर्भवेद्यस्य तथैका जगती नृप ॥ शिखराः श्रेणिगाः पञ्च द्वाराः पञ्च तथा नृप ॥ ११७ ॥ प्रासादो लोकपालाख्यो लोकपालेषु शस्यते ॥ शंसन्त्यथान्यं प्रासादं महाभूतगणस्य च ॥ ११८ ॥ प्रासादो वर्तुलकटिस्तथा वर्तुलमेखलः ॥ अष्टास्त्रिः शिखरोपेतो द्वाराष्टकभूषितः ॥ ११९॥ दिग्बन्ध इति विख्यातः प्रासादः सर्वदैवतः ॥ पश्चाद्भविटकोपेतो जगती मानमण्डलः ॥ १२० ॥ प्रासादस्त्वेकशिखरः सामान्यः परिकीर्तितः ॥ मण्डपे जालकोपेते पश्चाद्भागे गुहा भवेत् ॥ १२१ ॥ त्रिमेखलोऽयं प्रासादः सुगुहः परिकीर्तितः ॥ स एव त्रिगुणोपेतस्त्रिगुणः परिकीर्तितः ॥ १२२ ॥ हिमवान्बहुभिस्तम्भैर्युतो भवति नन्दकः ॥ स्तम्भवान्व

१ 'भद्राकारः स कर्तव्यो' इति ख० । २ 'भोगशयस्य' इति ख० । ३ 'मध्यमांजलि' इति ख० ।

लभीयुक्तः प्रासादो भित्तिवर्जितः ॥ १२३ ॥ आकाशनी सा भवति तत्राकाशं प्रकल्पयेत् ॥ षोडशस्त्रिस्तु कथितः प्रासादस्तावदस्त्रिकः ॥ ॥ १२४ ॥ प्रासादः शङ्खसंज्ञः स्याच्छङ्खाकारः सुशोभनः ॥ पद्माभशिखरोपेतो वैजयन्तो महीपते ॥ १२५ ॥ अनास्त्रिः शिखरोपेतो भवेदम्बुद संज्ञितः ॥ शिखरैः कुहरोपेतैर्भवेन्मङ्गलसंज्ञितः ॥ १२६ ॥ प्रासादानां शतं चैतत्समासात्कथितं मया ॥यथेच्छाशामुखाः कार्या येषां दिङ् न प्रयोजिताः ॥ १२७ ॥ सर्वे देवगणाः कार्या येषां देवो न कीर्तितः॥ विष्णोर्देवस्य कर्तव्यः सर्व एव विशेषतः ॥ १२८ ॥ अन्यमिश्रौ न कर्तव्यौ चन्द्रार्कावेकवेश्मगौ ॥ सूर्येण संयुतश्चन्द्रः क्षीणः केतुः क्षयावहः ॥ १२९ ॥ परस्पराशाभिमुखौ कर्तव्यौ सूर्यरात्रिपौ ॥ पूर्वापराशाभिमुखौ न तु याम्योत्तरामुखौ ॥ १३० ॥ पूर्वापराशाभिमुखौ यदा स्यातां तदा शशी ॥ पूज्यो भवति धर्मज्ञ कर्तुः कल्याणकारकः ॥ १३१ ॥ नैकवेश्मगतौ कार्यौ ग्रहौ स्कन्दविनायकौ ॥ न नागगरुडौ कार्यौ न चान्तकमहेश्वरौ ॥ १३२ ॥ महाकालनृसिंहौ च रक्तां शुष्कां तथैव च ॥ ब्रह्मरुद्रकृतान्तैस्तु भद्रकाल्याथ वा सह ॥ १३३ ॥ कामदेवो न कर्तव्यस्तथैव वरुणानलौ ॥ देवस्यैकस्य नो कार्ये द्वे तथार्चे तथा नृप ॥ १३४ ॥ प्रादुर्भावगते कार्ये ते च विष्णोर्महात्मनः ॥ येषामपि च देवानां द्वन्द्वयोगो विगर्हितः ॥ १३५ ॥ तेषामप्यन्यसहितः प्रशस्तो नृपसत्तम ॥ ग्रहसंख्यासुसहितौ कर्तव्यौ सूर्यरात्रिपौ ॥ १३६ ॥ महादेवसमीपस्थौ तथा स्कन्दविनायकौ ॥ वासुदेवसमीपस्थौ शेषतार्क्ष्यौ तथैव च ॥ १३७ ॥ एवमन्यसमेतानां यथायोगैः पृथग्विधैः ॥ कर्तव्यस्तु विरुद्धानां देवानां चापि सङ्गमः ॥ १३८ ॥ प्रासादलक्षणमिदं कथितं समासादालोक्य पूर्वचरितं हि पितामहोक्तम् ॥ शास्त्रं हिताय नरसत्तम मानुषाणां धार्यं त्वया तदतियत्नपरेण नित्यम् ॥ १३९ ॥

इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे प्रासादलक्षणो नाम षडशीतितमोऽध्यायः ॥ ८६ ॥

मार्कण्डेय उवाच ॥ ॥ प्रासादमथ वक्ष्यामि सर्वतोभद्रसंज्ञितम् ॥ चतुरात्मा हरिर्यत्र कर्तव्यो जगतीपते ॥ १ ॥ एकत्र जगती कार्या चतुरस्रा मनोरमा ॥ तस्यां गर्भगृहाः कार्या विंशतिश्चतुरुत्तराः ॥ २ ॥ येषां पृष्ठे जगत्यूर्द्धं प्राकारं विनिवेशयेत् ॥ सर्वत्र मेखलाकारं तत्रापि विनिवेशयेत् ॥ ३ ॥ प्रासादका महाराज चतुर्विंशतिरेव च ॥ चतुर्षु दिक्षु सोपानं मेखलायां निवेशयेत् ॥ ४ ॥ सोपानत्र्यंशविस्तारो मेखलायाः प्रकीर्तितः ॥ सोपानोभयतो राजन्प्रासादास्ते त्रयस्त्रयः ॥ ५ ॥ भवन्ति मेखलापृष्ठे तदादौ गर्भमन्दिरम् ॥ विमेखलं तु सामान्यं मध्ये तेषां विमण्डपम् ॥ ६ ॥ हिमवत्संज्ञितौ कार्यौ तस्य पार्श्वे विमेखलौ ॥ सोपानमूले प्रासादे द्वेद्वे कार्ये मनोरमे ॥ ७ ॥ दंष्ट्रे देवकुलाख्ये ते

सामान्याख्ये विमण्डपे ॥ तथैव जगतीपृष्ठे कोणे देवकुलं न्यसेत् ॥ ८॥ प्रासादो मध्यमश्चात्र कर्तव्यो मण्डपान्वितः ॥ चत्वारो मण्डपाश्चात्र कार्याः शिखरसंज्ञिताः ॥ ९ ॥ मध्यप्रासादकोणेषु तथा मण्डपसन्धिषु ॥ द्विद्विगर्भगृहान्रम्यान्प्रासादान्विनिवेशयेत् ॥ १० ॥ एकैकं मण्डपं चात्र द्वारत्रितयभूषितम् ॥ चतुर्थे च तथा द्वारे देवगर्भगृहं भवेत् ॥ ११ ॥ मण्डपस्य च ये द्वाराः कार्यास्ते स्तम्भभूषिताः ॥ प्रासादस्यास्य शिखरा भवन्त्येव नवैव तु ॥ १२ ॥ उच्छ्रितं नवमं शृङ्गं तुल्यं स्याच्छिखराष्टकम् ॥ मध्यमं शिखरं तत्र कार्यं शिखरवर्जितम् ॥ १३ ॥ रूपकैर्विविधैर्युक्तं न मण्डं न च शूलवत् ॥ अष्टौ तु शिखरास्तत्र कर्तव्याः कुहरान्विताः ॥ १४ ॥ जालागवाक्षकोपेतैः कुहरैर्नृप भूषिताः ॥ सर्वत्र शिखराः कार्याः शुभामलकसारकाः ॥ १५ ॥ सचक्राः सपताकाश्च सध्वजाश्च नराधिप ॥ खेऽभिषक्त इवाभाति प्रासादोऽयं समुच्छ्रितः ॥ १६ ॥ क्रमतो देवतान्यासं प्रासादेऽस्मिन्निबोध मे ॥ वासुदेवोऽत्र कर्तव्यः पूर्वाशाभिमुखो नृप ॥ १७ ॥ पश्चिमाशामुखो वापि न कार्यश्चान्यदिङ्मुखः ॥ वासुदेवदिशं चात्र पूर्वां राजन्प्रकल्पयेत् ॥ १८ ॥ तस्याश्चैवानुसारेण दिशः स्यात्परिकल्पना ॥ दक्षिणाशामुखः कार्यो देवः सङ्कर्षणः प्रभुः ॥ १९ ॥ पश्चिमाशामुखः कार्यः प्रद्युम्नश्चाप्यनन्तरम् ॥ उत्तराशामुखो राजन्ननिरुद्धो विधीयते ॥ २० ॥ दिग्गर्भा ये मया प्रोक्ता गृहा मण्डलसन्धिगाः ॥ प्राङ्मण्डपाद्दक्षिणतो लक्ष्मीं तत्र तु कारयेत् ॥ २१ ॥ दक्षिणाद्वामतो निद्रां कालरात्रीं तु दक्षिणे ॥ पश्चिमाद्वामतः सिद्धिं रतिं तस्यैव दक्षिणे ॥ २२ ॥ उत्तराद्वामतः कीर्तिं दक्षिणेन सरस्वतीम् ॥ पूर्वस्यां वामभागे तु तथा पुष्टिं निवेशयेत् ॥ २३ ॥ ऐशान्यादिक्रमाः कार्याः कोणप्रासादगास्त्विमे ॥ अश्वशीर्षं वराहं च नरसिंहं त्रिविक्रमम् ॥ २४ ॥ प्रासादकेषु कर्तव्या मेखला बन्धकेषु च ॥ चतुर्विंशतिरित्येते विबुधा विबुधोत्तम ॥ २५ ॥ तार्क्ष्यं शङ्खं तथा पद्मं चक्रं लाङ्गलमेव च ॥ मुसलं चाप्यनन्तं च गदां तालं तथैव च ॥ २६ ॥ त्रिशूलं च तथा शार्ङ्गं शरं मकरमेव च ॥ परशुं मुद्गरं चैव चर्म पाशं च पार्थिव ॥ २७ ॥ पट्टिशं नन्दकं चैव शक्तिं मृष्टिंतथैव च ॥ वज्रं च कौस्तुभं चैव वनमालां च यादव ॥ २८ ॥ दंष्ट्रां देवगृहाणां मे त्वं विन्यासमिदं शृणु ॥ इन्द्राग्नी पूर्वतः कार्यौ दक्षिणेन तथा नृप ॥ २९॥ यमश्चनिर्ऋतिश्चैव पश्चिमे वरुणानिलौ ॥ उत्तरेण च कर्तव्यौ धनेश्वरमहेश्वरौ ॥ ३० ॥ ग्रहाष्टकं वा कर्तव्यं दंष्ट्रा देवगृहेषु च ॥ आदित्यशुक्रौ पूर्वेण याम्येन च कुजासुरौ ॥ ३१ ॥ शनैश्चरशशांकौ च तथा पश्चिमतो नृप॥ उत्तरेण च कर्तव्यौ चन्द्रपुत्रबृहस्पती ॥ ३२ ॥ दंष्ट्रादेवगृहावत्र वासुदेवस्य यावुभौ ॥ वासुदेवप्रतीहारौ तयोर्वा कारयेन्नृप ॥ ३३ ॥ सुभद्रवसुभद्राख्यौ त्रैलोक्यस्येश्वरावुभौ ॥ आषाढयज्ञताताख्यौ कार्यौ

सङ्कर्षणस्य तु ॥ ३४ ॥ जयं च विजयं चैव प्रद्युम्नस्य तु कारयेत् ॥ आमोदं च प्रमोदं च अनिरुद्धस्य पार्थिव ॥ ३५ ॥ प्रागुक्तं देवतान्यासा
दंष्ट्रा देवकुलेष्वथ ॥ प्रतीहारप्रतिष्ठानं शस्यते बहुभिर्गुणैः ॥ ३६ ॥ त एव ज्ञेया दिक्पालास्त एव च तथा ग्रहाः ॥ एतत्त्वं जगतीबन्धे शृणु
देवान्यथाक्रमम् ॥ ३७ ॥ गायत्रीं चतुरो वेदान्वैष्णवीं चापराजिताम् ॥ मृत्युं कालं यमं दण्डं कवचं शरमेव च ॥ ३८ ॥ सांख्यं योगं
पञ्चरात्रं ज्ञानं पाशुपतं तथा ॥ व्यासवाल्मीकिमार्कण्डं महाभूताननन्तरम् ॥ ३९ ॥ एवंविधेऽत्र प्रासादे विस्तीर्णमजिरं भवेत् ॥ तोयैरकृत्रिमैर्दि
व्यैः सम्बद्धैरुपशोभितम् ॥ ४० ॥ द्वारपालाश्चतस्रस्तु ततः कार्या विजानता ॥ प्रासादो द्वारशालाख्यः समरूपो मनोहरः ॥ ४१ ॥ श्रेणी[1]
गताश्च प्राकाराः कार्या गर्भगृहाः शुभाः ॥ प्रादुर्भावं न्यसेत्तेषु विष्णोरमिततेजसः ॥ ४२ ॥ अथ वा पार्थिवश्रेष्ठ सर्वान्देवगणान्क्रमात् ॥
प्रासादमेतद्विधिवद्यः करोति महीपते ॥ ४३ ॥ सर्वेषां देवतानां तु नित्यं विहितपूजनम् ॥ कल्पं त्रेतायुगस्यादौ चक्रवर्त्यभिधीयते ॥ ४४ ॥
परिवेशस्तथा कार्यः स्वर्गे वसति कामतः ॥ ततः सायुज्यतामेति देवदेवस्य चक्रिणः ॥ ४५ ॥ फलं त्रैलोक्यदानस्य ध्रुवमाप्नोति
मानवः ॥ प्रासादेस्मिन्सकृत्कृत्वा सर्वेषामेव पूजनम् ॥ ४६ ॥ गन्धमाल्यनमस्कारधूपदीपान्नसम्पदा ॥ यथेष्टं कामम्
प्नोति नात्र कार्या विचारणा ॥ ४७ ॥ सचक्रः सपताकोऽयं प्रासादोऽतिमनोहरः ॥ यावद्दर्शनमायाति तावन्नश्यन्त्युपद्रवाः ॥ ४८ ॥
व्याधिश्चैवापमृत्युश्च ईतयश्च तथा नृप ॥ नाशमायान्त्यसन्देहं तत्प्रविष्टस्य यादव ॥ ४९ ॥ नाकालमृत्यवो राजन्योगिन्यो यक्षराक्षसाः ॥
प्रेता विनायका वापि प्रभवन्त्यपि कस्यचित् ॥५० ॥ अत्र सात्त्वतमुख्या ये सायुज्यं यान्ति ते ध्रुवम् ॥ ये देवग्रहगाश्चात्र दासीदासगणाश्च ये॥
॥ ५१ ॥ सर्वे ते स्वर्गमायान्ति यावदिन्द्राश्चतुर्दश ॥ यस्य राज्ञस्तु विषये प्रासादोऽयं भवत्यपि ॥५२॥ स चापि शक्रलोकस्थश्चिरं मोदति
पार्थिवः ॥ तस्मिन्पताकां यो दद्यात्तया पापं विधूयते ॥ ५३ ॥ ईतयश्च शमं यान्ति पुण्यमाप्नोत्यनुत्तमम् ॥ कृत्वा सितं तं प्रासादं चक्रवर्त्य
भिधीयते ॥ ५४ ॥ एवं विधानविहिते मया देवा यथोदिताः ॥ सर्वे सन्निहितास्तत्र भवन्ति वसुधाधिप ॥५५ ॥ तत्र यत्सलिलं तिष्ठेत्तत्तीर्थं सततं
भवेत् ॥ तत्र यात्राविधाने तु सर्वे देवाः सवासवाः ॥ ५६ ॥ ऋषयश्च महाभागास्त्रैकाल्यामलदर्शिनः ॥ राजर्षयः पुराणाश्च सर्वैः समुदिता
गणैः ॥५७॥ दिविष्ठाः सुमहात्मानः शक्रतुल्यपराक्रमाः॥गन्धर्वाप्सरसश्चैव शुभा भूतगणाश्च ये॥५८॥सशरीराः समायान्ति इष्टं देवमहोत्सवम्॥



१ 'श्रेणीमन्तश्च' इति ख० ।

तत्रोत्सवं नरः पश्यन्ध्रुवं कल्याणभाग्भवेत् ॥ ५९ ॥ तत्र हिंसा न कर्तव्या देवद्रव्यस्य कर्हिचित् ॥ राजा वा तन्नियुक्तो वा तत्रास्याधिकृतस्तु यः ॥ ६० ॥ स याति नरकं घोरं सपुत्रपशुबान्धवः ॥ अस्मिँल्लोके ध्रुवं तस्य स्थाननाशो भविष्यति ॥ ६१ ॥ ये तत्र भक्ता मनुजाः सपशुद्रव्यसञ्चयाः ॥ नित्यं वृद्धिमुपायान्ति देवदेवप्रसादतः ॥ ६२ ॥ द्रष्टव्यमेतत्त्रिदिवेशवेश्म कृतं यदन्येन नरेन्द्रचन्द्र ॥ दृष्ट्वा हि पापैः सकलैर्मनुष्यो विमुच्यते पुण्यमवाप्नुयाच्च ॥६३॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे सर्वतोभद्रप्रासादलक्षणं नाम सप्ताशीतितमोऽध्यायः ॥८७॥ मार्कण्डेय उवाच ॥ सामान्यमथ वक्ष्यामि प्रासादानां तु लक्षणम् ॥ चतुःषष्टिपदं कार्यं देवतायतनं सदा॥१॥ द्वारं च मध्यमं तस्य समदिक्स्थं प्रशस्यते ॥ द्वारं विस्तरतः कार्यं भूपाल द्विगुणोच्छ्रयम्॥२॥ गृहस्थस्य तु द्वारेण[1] द्वारदेवकुलद्रुमैः॥ अविद्धं तच्च कर्तव्यं नाम्बुस्राविन कुक्षिमत्[2]॥३॥ वज्रमध्यं नतं चैव द्वारं यत्नाद्विवर्जयेत्॥ मङ्गल्यं रूपकोपेतं तच्च कार्यं प्रयत्नतः॥४॥ द्वारमानाष्टभागानां प्रतिमां तु सपिण्डिकाम्॥ द्वौ भागौ प्रतिमा तत्र तृतीयांशश्च पिण्डिका॥५॥ कटिरष्टमभागोनं द्वारे कार्यं विजानता॥ तृतीयमंशं वसुधा तृतीयांशः कटिर्भवेत् ॥ ६ ॥ मंजरी च तृतीयांशः प्रासादस्य महाभुज ॥ गर्भं पादेन विस्तीर्णं तथा द्वारं प्रशस्यते ॥ ७ ॥ भित्तिर्गर्भाष्टभागोना तथा कार्या विजानता ॥ प्रासादोच्छ्रायभागेन चतुर्थेन च शस्यते ॥ ८ ॥ वसुधासञ्चरो राजन्कट्यंशद्वितयेन तु॥ नात्यर्थं सङ्कटं कार्यं नाविस्तीर्णं तथैव च ॥९ ॥ मूलक्रमाद्यथा चोर्ध्वं तथा विस्तारवर्जितम् ॥ सोपानं कारयेद्राजन्पार्श्वयोः सिंहभूषणम्॥१०॥ न मुण्डं न च शूलाग्रं नानतं कारयेत्तथा॥ समं मनोहरं[3] कार्यं तथा माङ्गल्यरूपवत् ॥ ११ ॥ सुधासुसितशृङ्गं च विचित्रकटिभूषणम् ॥ द्वारयोः सप्रतीहारं समगर्भगृहं समम् ॥ भद्रपीठनिभं सौम्यं श्लक्ष्णं वातविवर्जितम् ॥ १२ ॥ एवंविधे देवगृहे निविष्टा शुभावहा स्यात्प्रतिमा सदैव नित्यं तथा सन्निहिता नृवीर तस्मात्प्रयत्नादिदमेव चिन्त्यम् ॥ १३ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे सामान्यप्रासादलक्षणो नामाष्टाशीतितमोऽध्यायः ॥ ८८ ॥ मार्कण्डेय उवाच ॥ वनप्रवेशं धर्मज्ञ निबोध गदतो मम ॥ शुभे दिवसनक्षत्रे मुहूर्ते चाभिपूजिते ॥ १ ॥ दैवज्ञं पुरतः कृत्वा स्थपतिः प्रविशेद्वनम् ॥ ततस्तत्र परीक्षेत च्छिन्द्याद्भिन्द्याद्वनस्पतीन् ॥ २ ॥ सकोटरां लताबद्धां कृमिजग्धां विवर्जयेत् ॥ वह्निना च तथा स्पृष्टां पातितां पवनेन[3] च ॥ ३ ॥ कुञ्जरेण तथा भग्नां पक्षिणां निलयाश्च ये ॥ तापसानां समीपे च सिक्ताश्च घटवारिणा ॥४॥

---

१ 'गृहस्तंभशुभद्वार' इतिक० । 'गृहस्थद्रुमद्वारेण' इति ख० । २ 'विनिष्क्रमत्' इति ख० । ३ 'पार्वतेन' इति ख० ।

सत्त्वानामाश्रया ये च ये च कुब्जा नराधिप ॥ सुषिरा ऊर्ध्वशुष्काश्च बालवृद्धास्तथैव च ॥ ५ ॥ श्मशानचैत्यवल्मीकदेवतायतनोद्भवाः ॥
उद्यानजानेकवृक्षान्सीमावृक्षांस्तथैव च ॥ ६ ॥ मार्गवृक्षान्महाराज प्रयत्नेन विवर्जयेत् ॥ पलाशं कोविदारं च शाल्मलिं पिप्पलं वटम् ॥ ७॥
आम्रं च पुष्पकं चैव कपित्थं च विभीतकम् ॥ वर्जयेद्वेतसं चैव ये चारामास्तथा द्रुमाः ॥८॥नन्दनं स्यन्दनं सालं शिंशपं खदिरं धवम् ॥किंशुकं
पद्मकं चैव हरिद्रं चीनकद्रुमम्॥९॥अर्जुनं च कदम्बं च मधूकं चाञ्जनं तथा॥देववृक्षाँश्च जात्याँश्च तथा वै रक्तचन्दनम्॥१०॥एतेऽ प्रशस्ता विज्ञेया
ये च सारा महीरुहाः ॥ शस्ताशस्ता न ये प्रोक्तास्ते तु मध्यफलाः स्मृताः॥११॥रक्तसारा नरेन्द्राणां शुक्लसारा द्विजन्मनाम् ॥ पीतसारा विशां
शस्ताः शूद्राणां कृष्णमध्यकाः॥१२॥ छेत्तव्यं तु द्रुमं गत्वा सन्ध्याकाले तु पश्चिमे॥ द्रुमस्याग्रे बलिः कार्यो भूतानां तन्निवासिनाम्॥१३॥कुल्मा
षोल्लोपिकाभक्ष्यपुष्पधूपादिभिर्नृप ॥ कृत्वा चास्ये ततो मन्त्रमिदं यदुकुलोद्वह॥१४॥ वसन्ति यत्र भूतानि तेभ्यः स्वस्ति नमोऽस्तु वः ॥ उपहारं
गृहीत्वेमं क्रियतां वासपर्ययः ॥ १५ ॥ भवद्भिश्चाभ्यनुज्ञातः पूजितैः प्रमथेश्वराः ॥ देवागारे नियोक्ष्यामि द्रुममेतमसंशयम् ॥ १६ ॥ न चेद्भवन्त
स्त्यक्ष्यन्ति द्रुममेतं ततो मम ॥ स्वप्ने भवद्भिर्वक्तव्यं यथातथ्यमनुग्रहात् ॥ १७ ॥ एवमुक्त्वा तथा तत्र प्रस्वपेत्स्थपतिर्नृप ॥ दैवज्ञश्च महाभाग
रक्षितौ शस्त्रपाणिभिः ॥ १८ ॥ ततः स्वप्नं शुभं रात्रौ तयोरेकोऽपि चेद्यदि ॥ पश्येद्राजन्न वा पश्येच्छिन्द्याद् वृक्षमसंशयम् ॥ १९ ॥ स्वप्नं
वाप्यशुभं पश्येन्न तं भिन्द्यात्कथञ्चन ॥ छेत्तव्यं छेदयेद् वृक्षं कल्यमुत्थाय बुद्धिमान् ॥ २० ॥ मध्वाज्याक्तेन राजेन्द्र ततः परशुना शुचिः ॥
रेखां प्रदक्षिणं कृत्वा पातयेत्प्रयतस्ततः ॥ २१ ॥ पूर्वाग्रमुत्तराग्रं वा पतनं तस्य शस्यते ॥ ऐशान्यां च महाराज दिक्षु शेषासु गर्हितम् ॥ २२ ॥
वामे प्रभग्ने न ग्राह्यं प्राणिहिंसाकरं तथा ॥ प्रशस्तं पतितं वृक्षं ग्राह्यं भवति यत्नतः ॥ २३ ॥ अग्रं मूलं प्रयत्नेन कर्तव्यं तस्य चिह्नितम् ॥ अग्रं
देवस्य मूर्धानं पादं मूलं तु कारयेत् ॥ २४ ॥ अर्चाकृता विपर्यस्ता तिर्यग्वा मरणावहा ॥ अग्रमूलविपर्यासं स्तम्भानां च विवर्जयेत् ॥ २५ ॥
अग्रमूलविपर्यासे कृते वेश्म क्षयं व्रजेत् ॥ पूर्वाग्रा चोत्तराग्रा वा द्रुमा योज्या गृहेषु च ॥ २६ ॥ महावंशेषु वंशेषु विपर्यस्ता विगर्हिताः ॥ दक्षि
णाग्राः पराग्रा वा गृहस्वामिविपत्तिदाः ॥ २७ ॥ तस्मात्सर्वप्रयत्नेन चिह्नैस्तं कारयेद्द्रुमम् ॥ अग्रे मूले च धर्मज्ञ ततः सम्यक्प्रवेशयेत् ॥ २८ ॥
शकटेन महाराज नरैर्वाप्यथ गोवृषैः ॥ आप्ते दिवसनक्षत्रे मुहूर्ते चाभिपूजिते ॥ २९ ॥ प्रविश्य सम्यक्तं विद्वान्यथायोगं नियोजयेत् ॥ यथोद्देशं
महाराज स्थपतिर्लक्षणान्वितम् ॥ ३० ॥ एवं हि कृत्वा वनसम्प्रवेशं यः काष्ठमानीय गृहाणि कुर्यात् ॥ वृद्धिर्भवेत्तस्य सदैव राजन्धनेन

धान्येन सुतैश्च सुख्या ॥ २१ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे दारुपरीक्षा नामैकोननवतितमोऽध्यायः ॥ ८९ ॥
मार्कण्डेय उवाच ॥ पूर्वोक्तविधिना गत्वा शिलां वाथ परीक्षयेत् ॥ शैलं गत्वा महाराज दैवज्ञः स्थपतिस्तथा ॥ १ ॥ शुक्ला शस्ता द्विजातीनां क्षत्रियाणां च लोहिता ॥ विशां पीता हिता कृष्णा शूद्राणां च हितप्रदा ॥ २ ॥ एकवर्णां समां स्निग्धां निमग्नां च तथा क्षितौ ॥ घातातिमात्रस्फुटनां दृढां मृद्वीं मनोरमाम् ॥ ३ ॥ कोमलां सिकताहीनां प्रियां दृङ्मनसोरपि ॥ सरित्सलिलनिर्धूतां पवित्रां तु जलोषिताम् ॥ ४ ॥ द्रुमच्छायोपगूढां च तीर्थाश्रयसमन्विताम् ॥ आयामपरिणाहाढ्यां ग्राह्यां प्राहुर्मनीषिणः ॥ ५ ॥ अग्राह्यां ज्वलनालीढां तप्तां भास्कररश्मिभिः ॥ अन्यकर्मोपयुक्तां च तथा क्षाराम्बुसंयुताम् ॥ ६॥ अत्यन्तोपहतां रूक्षामपुण्यजनसेविताम् ॥ तिलैः संम्भूषिता या तु विचित्रैर्बिन्दुभिश्चिता ॥७॥ रेखामण्डलसङ्कीर्णां विद्धां विमलसंयुताम् ॥ विमलं त्रिविधं ज्ञेयं लोहं कास्यं च हेमजम् ॥ ८ ॥ या लोहविमलैर्जुष्टा सा जनक्षयकारिणी ॥ कांस्याभविमलोपेता जनमानविनाशिनी ॥ ९ ॥ हैमेन युक्ता दुर्भिक्षं तथा कुर्यादवग्रहम् ॥ घर्षणे च्छेदने चैव मण्डलं यत्प्रदृश्यते ॥ १० ॥ सगर्भां तां विजानीयाद् यत्नेन च विवर्जयेत् ॥ मांजिष्ठवर्णसंकाशे गर्भे भवति दर्दुरः ॥ ११ ॥ पीतके मण्डले गोधा कृष्णे विद्याद्भुजङ्गमम् ॥ कपिले मूषकं विद्यात्कृकलासं तथारुणे ॥ १२ ॥ गुडवर्णे तु पाषाणं कापोते गृहगोधिका ॥ आपो निस्त्रिंशवर्णाभे भस्मवर्णे तु वालुका ॥ १३ ॥ अतस्त्वेकतमेनापि युक्ता कर्तुर्विपर्यये ॥ एवं गर्भास्तु विज्ञेया बाह्यलक्षणलक्षिताः ॥ १४ ॥ बाह्यतो लक्षणं नास्ति तेषां लेपानि दापयेत् ॥ ब्राह्मीं माहेश्वरीं शाक्रीं वैष्णवीं तंक्षणोचिताम् ॥ १५ ॥ अजास्तन्येन संयोज्य शिलालेपं तु दापयेत् ॥ अहोरात्रे गते यत्र शिलालेपो न जायते ॥ १६ ॥ सगर्भां तां विजानीयात्प्रयत्नेन विवर्जयेत् ॥ कासीसं पीतकासीसं गव्यक्षीरेण पेषयेत् ॥ १७ ॥ पाषाणं लेपितं तेन बहुवर्णं यदा भवेत् ॥ सा शिला न प्रशस्ता स्यात्प्राणिगर्भा तु सा स्मृता ॥ १८ ॥ मुस्तकं करवीरं च कुष्ठं तालीशपत्रकम् ॥ स्त्रीस्तन्यपिष्टैरेतैस्तु पाषाणं लेपयेद्बुधः ॥ १९ ॥ एभिर्लेपितमश्मानं यदा सिसिमायते ॥ कालकूटं विषं तत्र न तं हस्तेन संस्पृशेत् ॥ २० ॥ श्वेतश्च पद्मवर्णश्च कुसुमोषणसन्निभः ॥ पाण्डुरो मुद्गवर्णश्च कापोतो भृङ्गसन्निभः ॥ २१ ॥ ज्ञेयाः प्रशस्ताः पाषाणाः अद्यावेते न संशयः ॥ कृष्णवर्णा शिला या तु शुक्ला हीरकसंयुता ॥ २२ ॥ सा शिला श्रीकरी

१ 'त्रिलैः सन्दूपिता' इति ख० । २ 'श्लक्ष्णवेष्टिताम्' इति पा० । ३ 'दृष्टे द्वे शोभनेः' इति क० 'न त्वदृष्टे च शोभने' इति ख० ।

ज्ञेया पुत्रपौत्रविवर्धिनी ॥ सितवर्णा तु या कृष्णैर्हीरकैः सवलीकृता ॥ २३ ॥ बहुदोषकरी सा तु कृष्णा वा रक्तहीरकैः ॥ सर्ववर्णेषु शुक्लेषु प्रशस्तं हीरकं विदुः ॥ २४ ॥ सर्वेषामेव वर्णानामन्यवर्णं विगर्हितम् ॥ ब्राह्मीं शिलां दिने गत्वा शोभने धूपयेद्बुधः ॥ २५ ॥ क्षीरेण नृप गव्येन सकषायैस्तथा जलैः ॥ आच्छाद्य कुसुमैर्दर्भैः प्राग्वत्कुर्यात्तथा बलिम् ॥२६॥ स्वप्नार्थं च स्वपेत्तत्र दैवज्ञः स्थपतिस्तथा ॥ प्राग्वद्दृष्टे शुभे स्वप्ने शिला नेया तु सा भवेत् ॥ २७ ॥ अदृष्टे तु तथा स्वप्ने न दुष्टे शोभनं भवेत् ॥ पूजनं तु द्वितीयेऽह्नि कृत्वा भाण्डगणस्य तु ॥ २८ ॥ च्छेदकस्य ततः कृत्वा संवाह्यं तं प्रवेशयेत् ॥ प्राग्वदेव महीपाल यथा वृक्षेषु कीर्तितम् ॥ २९ ॥ शिलानां गर्भविज्ञानं यदुक्तं नृपसत्तम ॥ तदेव सर्वं जानीहि द्रुमाणामपि यत्नतः ॥ ३० ॥ अनेन सम्यग्विधिना गृहीता शिला भवेत्सर्वसुखावहा सा ॥ तस्मात्प्रयत्नेन यथोक्तमेतद्भनप्रवेशं सकलं हि कुर्यात् ॥ ३१ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे शिलापरीक्षा नाम नवतितमोऽध्यायः ॥९०॥

मार्कण्डेय उवाच ॥ अतः परं प्रवक्ष्यामि पक्वेष्टनिचयं तव ॥ ब्राह्मणानां शुभा श्वेता क्षत्रियाणां तु लोहिता ॥ १ ॥ मृत्पीता वैश्यजातीनां कृष्णा चैवान्त्यजन्मनाम् ॥ यस्य वर्णस्य या शस्ता तां मृदं ग्राहयेद्बुधः ॥ २ ॥ असङ्कीर्णाच्छुभादेशा द्गृहीत्वा शोषयेन्मृदम् ॥ शोषितां तां विमृद्नीयात्सशैवालेन चाम्भसा ॥३॥ हस्तदीर्घेण यन्त्रेण तदर्धविस्तृतेन च ॥ तदर्धसुच्छ्रितेनाथ कर्तव्या वेष्टका मताः ॥ ४ ॥ आतपे तास्तथा शुष्का विपचेन्नृपसत्तम ॥ काष्ठैरसारैर्भूपाल गोकरीषैस्तृणैस्तथा ॥ ५ ॥ मृदुना नृप पाकेन न शान्त्यर्थं पचेच्च ताः ॥ अपक्वाश्च न संग्राह्या न विलीनाः कथञ्चन ॥ ६ ॥ तासामत्यर्थपक्वानां भङ्गो भवति रूपके ॥ भवन्त्यसाराश्चापक्वा विलीनाः कर्दनाशदाः[1] ॥ ७ ॥ इष्टकानिचये वह्निं यो नरः संप्रयच्छति ॥ सोमविक्रयिणा तुल्यः स तु पापः प्रकीर्तितः ॥ ८ ॥ तस्माच्छुद्धेन मूलेन तत्राग्निं दापयेन्नरः ॥ वर्तमानसुखः सत्यं संविभज्य प्रयत्नतः ॥ ९ ॥ पक्वास्तु शीतलीभूताः स्वानुरूपैस्त्वरूपकैः ॥ सम्यक्संयोजिता योज्या यथास्थाने नराधिप[2] ॥ १० ॥ इष्टकासञ्चये नैवमेकैकं रूपकं बुधः ॥ दर्शयेत्तु सुयुक्तेन यमस्याज्ञां विजानता ॥ ११ ॥ एवं रूपकविन्यासं शिलास्वपि विधीयते॥एवं सुयुक्त्या कुर्वंति काष्ठसंघातकं तथा ॥ १२ ॥ काष्ठानामायसं बन्धं सम्यक्कार्यं विजानता ॥ इष्टकानामपक्वानां पङ्कबन्धो विधीयते ॥१३॥ इष्टकानां तु पक्वानां[3] शिलानां च नराधिप ॥ बन्धः कार्यः प्रयत्नेन वज्रलेपकृतः शुभः ॥ १४ ॥ पक्वेष्टकानां रचना मयोक्ता सुधान्विता सैव भवेन्नरेन्द्र ॥ सुधाशिलानां

१ 'कर्दनाशनाः' इति ख० । २ 'यथास्थानमरिन्दम' इति ख० । ३ 'पक्व' इति ख० ।

त्रिदशाधिवासे सुधाशिला नैव गृहेषु देया ॥१५॥इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मा०व० सं०इष्टकापरीक्षा नामैकनवतितमोऽध्यायः ॥ ९१ ॥
मार्कण्डेय उवाच ॥ अतः परं प्रवक्ष्यामि वज्रलेपविधिं तव ॥ बिन्दुकांश्च कपित्थांश्च आम्रान्संहृत्य यत्नतः ॥ १ ॥ शाल्मलीनां तथा पुष्पं सल्लकीबीजमेव च ॥ धनुषश्च तथा कल्कं वचां च मनुजेश्वर ॥ २ ॥ एतेषां समवेतानां समानां मनुजोत्तम ॥ तोयमष्टगुणं क्वाथमष्टभागावशेषितम् ॥ ३ ॥ ततस्तत्र क्षिपेद्द्रव्यं शृणु तच्च समासतः ॥ मल्लकीनां तु विन्यासं वत्सलस्य च गुग्गुलम्॥४॥भल्लातकानि बिल्वानि कुन्दुरुं सर्जमेव च ॥ अतसीं वसुतत्तोऽयं वज्रलेपः प्रकीर्तितः ॥ ५ ॥ लाक्षां च कुन्दुरुं चैव गृहधूमं तथैव च ॥ कपित्थबिल्वमध्यानि तथा नागफलं नृप ॥ ६ ॥ बलां च मधुकं चैव किंजापं मदनं तथा ॥ मञ्जिष्ठासल्लकं सर्जं वज्रलेपः प्रकीर्तितः ॥ ७ ॥ विषाणानि गवां राजन्महिषाणां तथैव च ॥ अजानां च तथा चर्म माहिष्यं गव्यमेव च ॥ ८ ॥ रसबिंबकपित्थास्तु वज्रलेपः प्रकीर्तितः ॥ अष्टौ भागास्तु नागस्य कांस्यभागद्वयं तथा ॥ ९ ॥ रीतिभागं च कथितो वज्रलेपस्तथैव च ॥ सुधापक्का ततः क्लिन्ना गव्यचर्मसमन्विता ॥ १० ॥ खररोमयुता राजन्वज्रलेपस्तथैव च ॥ तेषामेकैकसंयुक्ताः कार्याः शैलगृहा नृप ॥ ११ ॥ पक्केष्टकगताश्चैव स्थायिनो मनुजोत्तम ॥ वज्रलेपयुता ह्येते भवन्त्यपि दृढास्तथा ॥ १२ ॥ तिष्ठन्ति सुमहाराज संवत्सरशतान्यपि ॥ सहस्राणि च धर्मज्ञ चायुतान्यर्बुदानि च ॥ १३ ॥ सुधावर्णेन सर्वत्र लेपं दद्यात्तथा बहिः ॥ ततश्च तां सुधां दद्याच्छोभार्थमरिमर्दन ॥ १४ ॥ वज्रलेपविधानं तु प्रोक्तं सम्यक्तया तव ॥ देवायतनमुख्येषु तथा च भवनेषु च ॥ १५ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे वज्रलेपनिरूपणन्नाम द्विनवतितमोऽध्यायः ॥ ९२ ॥ ॥ छ ॥ ॥ छ ॥

॥ मार्कण्डेय उवाच ॥ ॥ कृते तु देवायतने विधानं नाभवत्क्षितौ ॥ केवलंहि तदा ह्यासीत्प्रत्यक्षेण नराधिप ॥ १ ॥ प्रत्यक्षेणापि दृश्यन्ते त्रेताद्वापरयोर्जनाः ॥ देवानां प्रतिमाः कृत्वा पूजयन्ति यथाविधिम् ॥ २ ॥ गृहे प्रतिष्ठा तत्रापि त्रेतायां तु प्रवर्तिता ॥ द्वापरे चाप्यरण्येषु ऋषिभिस्तु ततः कृता ॥ ३ ॥ तेषां सम्पूजनं नित्यं सिद्धैस्तु क्रियते नृप ॥ प्रतिष्ठामात्रकरणान्निर्वृता ऋषयस्तु ते ॥४॥ कलौ प्रवृत्तः सर्वोऽयं प्रतिष्ठाकरणो जनः ॥ ज्ञानं परं कृतयुगे त्रेतायां च तपः परम् ॥ ५ ॥ द्वापरे तु तथा ज्ञेयं प्रतिष्ठा तु कलौ युगे ॥ देवतावेश्मपूर्वाणि नगराणि कलौ युगे ॥ ६ ॥ कर्तव्यानि महीपालैः स्वर्गलोकमभीप्सुभिः ॥ राजा तु सर्वनगरं न कुर्यान्नृपसत्तम ॥ ७ ॥ यो न राजा हतो युद्धे स पुरं कर्तुम

१ 'सलकीनाम्' इति ख० । २ 'रसबिंबार्कस्तु' इति क० 'रसनिम्बकपित्थाज्जि' इति ख० ।

हेति ॥ रूपकं च सुनामाख्यं कुर्याद्राजा तथाप्यसौ ॥ ८ ॥ दुर्गं सर्वेण कर्तव्यं राज्ञा भूपतिसत्तम ॥ भूमिदानादिभिर्यस्तु कुर्यात्सुविहितं मुदा ॥ ९ ॥ प्रतिष्ठां सकलां कुर्यादन्यथा पापभाग्भवेत् ॥ तत्कृतायां सुरार्चायामनिष्टं स्यात्कलौ युगे ॥ १० ॥ कृतं तु तदनिष्टं स्याज्जन्मान्तरशतेष्वपि ॥ कृतत्रेताद्वापरेषु प्रतिष्ठाकरणात्फलम् ॥ ११ ॥ यस्मात्तेषु कृतामर्चां सिद्धाः सम्पूजयन्त्यलम् ॥ कलौ कृतायामर्चायां सिद्धपूजा न विद्यते ॥ १२ ॥ तस्मात्सुविहितां कुर्याद्भूमिदानादिभिः कलौ ॥ येन राज्ञा हतो राजा नान्यो युधि भवेत्कलौ ॥ १३ ॥ प्रतिष्ठा तेन कर्तव्या नगरे पूर्वनिर्मिते ॥ अनुज्ञां नृपतेः प्राप्य कुर्यादन्योऽपि यादव ॥ १४ ॥ स्थिरां प्रतिष्ठां गृह्णायां नृपानुज्ञानकारणम् ॥ परप्रणीतां यस्त्वर्चां स कुर्यात्पुनरेव तु ॥ १५ ॥ विधानं भूमिदानाद्यं कुर्यात्तत्र न शक्तितः ॥ द्विगुणं फलमाप्नोति कुलं चैव समुद्धरेत् ॥ १६ ॥ कृत्वा सुविहितामर्चां प्रतिष्ठाप्य यथाविधि ॥ इष्टापूर्तेन धर्मेण नरो युज्यत्यसंशयम् ॥ १७ ॥ राजसूयाश्वमेधानां फलेन च नराधिप ॥ कृते त्रेतायुगे राजन्द्वापरे च नरोत्तमाः ॥ १८ ॥ आगच्छन्ति नृलोकेऽस्मिन्सशरीरा दिवौकसः ॥ नागच्छन्ति कलौ यस्मात्सशरीराः कथंचन ॥ १९ ॥ आगच्छन्ति प्रतिष्ठासु द्विजैरावाहितास्ततः ॥ तस्मात्कलौ प्रयत्नेन प्रतिष्ठां कारयेद्बुधः ॥ २० ॥ अर्चास्थैस्त्रिदशैर्लोकः कलौ सर्वो हि पाल्यते॥ अर्चागताश्च गृह्णन्ति कृतदेवप्रतिष्ठिताः ॥ २१ ॥ तस्मात्कलौ प्रयत्नेन प्रतिष्ठाकरणं हितम् ॥ यत्नात्सुविहितं कुर्याद्भूमिदानादिभिस्सदा ॥ २२ ॥ इष्ट्वा यज्ञैर्यथा यान्ति मानवास्त्रिदिवालयम् ॥ तथैव राजन् गच्छन्ति कृतदेवप्रतिष्ठकाः ॥ २३ ॥ तस्मात्कलौ प्रतिष्ठानं कर्तव्यं भूरिदक्षिणम् ॥ यत्नात्सुविहितं कृत्वा भूमिदानादिभिः शुभा ॥ २४ ॥ दुर्गे प्रतिष्ठा कर्तव्या नगरे च तथा शुभे ॥ नित्यमापणवीथ्यग्रे नान्यत्रेति नराधिप ॥ २५ ॥ ग्रामे वा यदि वा घोषे नास्ति यत्रापणं नृप ॥ तत्रोद्याने बहिः कार्या ग्राममध्ये न कारयेत् ॥ २६ ॥ नदीतीरेषु कर्तव्या वनेषूपवनेषु च ॥ सरसां चैव तीरेषु गिरीणां शिखरेषु च ॥ २७ ॥ उपत्यकासु रम्यासु गुहासु च विशेषतः ॥ एतेषु यान्ति सान्निध्यं स्थानेषु त्रिदिवौकसः ॥ २८ ॥ जलाशयविहीनेषु देशेषु मनुजोत्तम ॥ सान्निध्यं नैव कुर्वन्ति कदाचित्त्रिदिवौकसः ॥ २९ ॥ तथा सुरगृहं कार्यं यथा वामे जलाशयम् ॥ पुरस्ताद्वा भवेत्तस्य नान्यथा मनुजाधिप ॥ ३० ॥ समंतात्तु जलं शस्तं द्वीपे देवगृहे कृते ॥ यत्र देवगृहं कार्यं तत्र भूमिं परीक्षयेत् ॥ ३१ ॥ श्वेता रक्ता तथा पीता कृष्णा वर्णक्रमान्विता ॥ कुशाभिश्च शरैः काशैर्दूर्वाभिश्च तथा युता ॥ ३२ ॥ मधुरा च कषाया च तथा तु लवणा च या ॥ वर्णक्रमाद्धिता भूमिः सर्वेषां शृण्वतः परम् ॥ ३३ ॥ कण्टकिद्रुमसङ्कीर्णा शर्करालोष्टसंयुता ॥

अशुभ्रा विषमा दुर्गा सवल्मीका तथा च या ॥ ३४ ॥ मूषिकावासबहुला पिपीलकगुणान्विता ॥ नित्यं च शकटच्छिन्ना प्लुता या च पुरोदकैः ॥ ३५ ॥ अघातसूना भूमिश्च बन्धनागारसंयुता ॥ वसतिर्यत्र दग्धा च विद्युता वह्निनापि वा ॥ ३६ ॥ वसतां दृष्टिदोषा च कूर्मपृष्ठा तथैव च ॥ त्रिकोणा स्रग्विहीना च शूर्पाकारा तथा च या ॥३७॥ दक्षिणेन तथा निम्ना निम्ना पृष्ठत एव च ॥पुराम्बुग्राहिणी या च सुशिरा च तथा नृप ॥ ३८ ॥ खातं च सुमृदा यत्र पूर्यते न पुनस्तथा ॥ खाते यत्र कृतं दीपं प्रम्लानिमुपगच्छति ॥ ३९ ॥ माल्यं च म्लायते खाते तां भूमिं परिवर्जयेत् ॥ खाते तोयेन पूर्णे च यत्र तोयं न तिष्ठति ॥ ४० ॥ तां भूमिं वर्जयेद्यत्नाद्दुर्गन्धा च तथापि या ॥ प्रागुदक्प्रवणा शस्ता स्निग्धा च सुदृढा तथा ॥ ४१ ॥ खातेऽधिकां च मृद्यत्र पूर्यमाणे भवेन्नृप ॥ दीपो न म्लायते यत्र न्यस्तं च कुसुमं तथा ॥ ४२[1] ॥ तोयं सन्तिष्ठते खाते यत्र कालान्तरं बहु ॥ सा प्रशस्ता मही ज्ञेया सुगन्धा सुस्वना तथा ॥ ४३ ॥ भुवः परीक्षणं कुर्याद्दिवसेऽतिशुभे तथा ॥ भुवः परीक्षणे यत्र मङ्गल्यद्रव्यदर्शनम् ॥ ४४ ॥ श्रवणं वा तथैव स्यात्सा शुभा स्याद्वसुन्धरा ॥ न तां राजन्परीक्षेत प्रशस्ता सा प्रकीर्तिता ॥ ४५ ॥ अमङ्गल्यं तथा दृष्ट्वा श्रुतं वा नृपसत्तम ॥ भुवः परीक्षणं तत्र न कार्यमशुभा हि सा ॥ ४६ ॥ शुभा मही यत्र भवेन्नृवीर कार्या प्रतिष्ठा भवतीह तत्र ॥ कृता भवेत्तत्र नरेन्द्रचन्द्र हिताय कर्तुः स्वविवृद्धये च ॥ ४७ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे भूमिपरीक्षा नाम त्रिनवतिमोऽध्यायः ॥ ९३ ॥ ॥ मार्कण्डेय उवाच ॥ शुभां परीक्ष्य वसुधां तत्र कुर्यात्सुरालयम् ॥ आदौ तां शोधयेद्विद्वान्दिवसे गुणसंयुते ॥ १ ॥ तत्र देशं शुभं विद्वान्गोमयेनोपलेपयेत् ॥ ततः सम्पूजयेत्तत्र देवदेवं विनायकम् ॥ २ ॥ तथा च विश्वकर्माणं भाण्डं तदुपयोगि च ॥ पललोल्लूपिकाभक्ष्यकुल्माषौदनपर्पटैः ॥ ३ ॥ परमान्नेन सत्यैश्च[1] पुष्पधूपानुलेपनैः ॥ पूजयित्वा च दैवज्ञं सात्त्वतं स्थपतिं तथा ॥ ४ ॥ भुवः संशोधनं कुर्याद्यथावत्पृथिवीपतिः ॥ तावत्संशोधयेद्भूमिं निजा यावत्प्रदृश्यते ॥ ५ ॥ तदा संशोधयेद्विद्वान्यावत्स्याच्छल्यवर्जिता ॥ ततस्तु पूरयेत्पश्चाद्दृढं मृत्तिकया पुनः ॥ ६ ॥ तद्वर्णया तया शस्ता यस्य वर्णस्य कीर्तिता ॥ अशल्यया मृत्तिकया पूरयेत्सुदृढं पुनः ॥ ७ ॥ कृत्वा तु पूरितं देशं सुदृढं सुसमन्ततः ॥ सुसूक्ष्मशल्यज्ञानार्थं कुर्याच्छल्यपरीक्षणम् ॥ ८ ॥ यथा वक्ष्याम्यहं राजंस्तथा यत्नेन बुद्धिमान् ॥ यदि स्याच्छल्यसंयुक्ता शल्यमुद्धृत्य यत्नतः ॥ ९ ॥ पुनः सम्पूरयेद्विद्वान्यत्नाच्छुभमृदा नृप ॥ एवं संशोध्य भूमिं तु कुम्भं

१ 'मत्स्यैश्च' इति ख० ।

संस्थापयेत्ततः ॥ १० ॥ शिलान्यासं तु कुर्वीत तत्रैवाऽह्नि चतुर्दिशम् ॥ पक्वेष्टारचिते कार्यास्ता एव तु चतुर्दिशम् ॥ ११ ॥ मृन्मये चेष्टकान्यासं कर्तव्यं न च दारुणे ॥ शुभे दिवसनक्षत्रे मुहूर्ते चाभिपूजिते ॥ १२ ॥ कुम्भाकारां शिलां कुर्याच्छैलदेवगृहे शुभम् ॥ अन्यत्र ताम्रकलशं सुदृढं यत्र संयुतम् ॥ १३ ॥ चतुःषष्टिपदं कृत्वा समे स्थाने तु मण्डलम् ॥ कृत्वा तु देवतान्यासं तत्र मण्डलके द्विज ॥ १४ ॥ सर्वेषां वास्तुविद्योक्ता देवतानां यथाविधि ॥ श्रियाः सम्पूजनं कृत्वा वासुदेवस्य चाप्यथ ॥ १५ ॥ पूजनं मण्डले कार्यं वास्तुदेवगणस्य च ॥ विनायकस्य देवस्य विश्वकर्मण एव च ॥ १६ ॥ भाण्डानां च महाराज तथा तदुपयोगिनाम् ॥ गन्धार्घपुष्पनैवेद्यधूपदीपैर्यथाविधि ॥ १७ ॥ ॐकारपूतमाज्यं च जुहुयाच्छ्रीधरस्य च ॥ श्रियाः कृत्वा ततो होमं ब्रह्मणः कारयेत्तदा ॥ १८ ॥ ब्रह्माणं पुरतः कृत्वा वासुदेवगणस्य च ॥ मध्ये कृत्वा ततः कुम्भं शिलान्यासं तु कारयेत् ॥ १९ ॥ ऐशाने तु ततः कोणे शिलां पूर्वं प्रतिष्ठिताम् ॥ प्रदक्षिणं ततो राजञ्छिलान्यासं विधीयते ॥ २० ॥ सूत्रन्यासं तु कुर्वीत तस्मिन्नेव तथाऽहनि ॥ यथानिवेशं कर्तव्यं प्रासादस्य सुनिश्चितम् ॥ २१ ॥ कृत्वा तु सूत्रविन्यासं नाधिकं तं तु कारयेत् ॥ नूनं मनुजशार्दूल कर्तुर्दोषकरावुभौ ॥ २२ ॥ कुम्भस्य च शिलानां च ततः स्थानं विधीयते ॥ वटाश्वत्थकषायेण सर्वौषधिजलैस्ततः ॥ २३ ॥ ततोऽनुलेपनं कुर्याच्चन्दनेन सुगन्धिना ॥ आच्छादनं ततः कार्यं वासोभिः कुसुमैस्तथा ॥ २४ ॥ धूपं दीपं सुनैवेद्यं तेषां नाम्ना निवेदयेत् ॥ दक्षिणाभिर्द्विजेन्द्राणां ततः पूजा विधीयते ॥ २५ ॥ कालवित्स्थपतिः पूज्यो ततो राम विजानता ॥ ततः कर्ता जपेन्मन्त्रं स्थपतिं वाथ कालवित् ॥ २६ ॥ नन्दे नन्दय वासिष्ठे वसुभिः पूजया सह ॥ जये भार्गवदायादे प्रजाभ्यो जयमावह ॥ २७ ॥ पूर्णेऽङ्गिरसदायादे पूर्णकामं कुरुष्व माम् ॥ भद्रे कश्यपदायादे कुरु भद्रां गतिं मम ॥ २८ ॥ सर्वबीजसमायुक्ते सर्वरत्नौषधैर्वृते ॥ रुचिरे नन्दिते नन्दे वासिष्ठे रम्यतामिह ॥ २९ ॥ प्रजापतिसुते देवि चतुरस्रे महीमयि[1] ॥ सुभगे सुव्रते भद्रे इह काश्यपि रम्यताम् ॥ ३० ॥ अव्यङ्गे चाक्षते पूर्णे मुनेरंगिरसः सुते ॥ इष्टके त्वं प्रयच्छेष्टं प्रतिष्ठां कामयाम्यहम् ॥ ३१ ॥ देशस्वामिपुरस्वामिपशुस्वामिपरिग्रहे ॥ मनुष्यपशुहस्त्यश्वधनवृद्धिकरी भव ॥ ३२ ॥ अनेनैव विधानेन कार्या भूमिः समक्रिया ॥ द्वारन्यासं महाराज द्वारोच्छ्रायस्तथैव च ॥ ३३ ॥ स्तम्भोच्छ्रायं तथा वंशविन्यासं च यदूत्तम ॥ तथामलकसारस्य चिह्नस्य तु समुच्छ्रयम् ॥३४॥ आयुधं वाहनं चिह्नं यस्य देवस्य यद्भवेत्॥ तस्मादेकतमं चिह्नं कार्यं

१ 'सहे' इति क 'यये' इति ख० ।

चामलसारके ॥ ३५ ॥ सुधासिते समाप्ते तु चित्रकर्म विधीयते ॥ कटिः सुचित्रिता कार्या पृष्ठं कार्यं सुधासितम् ॥ ३६ ॥ चित्रलक्षणवत्कार्यं सर्वकामसमृद्धिदम् ॥ आश्चर्याणि तथान्यानि तत्र यत्नान्निवेशयेत ॥ ३७ ॥ चिह्नं विष्णुगृहे तत्र गरुडं वापि कारयेत् ॥ दुर्गागृहे तथा सिंहं त्रिशूलं हरवेश्मनि ॥ ३८ ॥ पद्मं लक्ष्मीगृहे चिह्नं हंसं स्याद्ब्रह्मणो गृहे ॥ मकरं कामदेवस्य तालं सङ्कर्षणस्य तु ॥ ३९ ॥ अर्धचन्द्रस्थितं सिंहमादित्यस्य गृहे भवेत् ॥ वृत्तमण्डलमध्यस्थं मृगं चन्द्रसमो भवेत् ॥ ४० ॥ वज्रं शक्रस्य कुर्वीत दण्डं वैवस्वतस्य च ॥ वरुणस्य तथा पाशं गदां च धनदस्य वै ॥ ४१ ॥ स्कन्दस्य शक्तिः कर्तव्या गणाध्यक्षस्य पार्थिव ॥ कर्तव्यं परशोश्चिह्नं वह्नेर्ज्वाला विधीयते ॥ ४२ ॥ वायोरम्बरभङ्गन्तु उग्रं निर्ऋतये तथा ॥ अन्येषामपि देवानां चिह्नं स्यादायुधं स्वकम् ॥ ४३ ॥ ततो ध्वजस्य विन्यासः कर्तव्यः पृथिवीपते ॥ असुरा वासमिच्छन्ति ध्वजहीने सुरालये ॥ ४४ ॥ ध्वजेन सकलं पापं ध्वजदस्य विनश्यति ॥ तस्मात्सर्वप्रयत्नेन दद्याद्देवगृहे ध्वजम् ॥ ४५ ॥ एवं कृते देवगृहे नरेन्द्र वृद्धिः सदा स्यान्न हि संशयोऽत्र ॥ तस्मात्प्रयत्नेन विधानयुक्तं देवालयं कार्यमदीसनत्त्व ॥ ४६ ॥ इति श्रीवि० ध० तृ० ख० मा०व० सं० ब्रह्मशिल्पध्वजविधिर्नाम चतुर्णवतितमोऽध्यायः ॥ ९४ ॥ एवं वादिनं श्रीभगवन्तममलतपसमतियश सश्चिरजीविनं श्रीमार्कण्डेयं राजा वज्रः पप्रच्छ । भगवन्नष्टशल्यज्ञानं कथं भवति तमुवाच श्रीभगवान्मार्कण्डेयः । कदाचित्कमपि महद्भूतं त्रैलोक्यनाशायार्थितमभवत् । तद्भूतं ससंभ्रमैस्त्रिदशैर्निगृह्य वेगेनाधोमुखं न्यस्तम् ॥ तस्य चोत्थानभीता देवा अङ्गेषूपविष्टाः । तस्य पर्जन्याद्याः क्रमेण दक्षिणेऽङ्गभागे, व्युत्क्रमेण नागाद्या वामे, पर्जन्यहुताशनौ शिरसि, करग्रहौ वदने, दृशोश्च यज्ञकामौ, स्तनयोर्महेन्द्रादिती, श्रवणयोः रव्यदिती, उरःस्थले अंसयोश्च सत्यभृशान्तरिक्षपवनाः । भुजे चन्द्रभल्लाटमुख्या नागराजानः, द्वितीये भुजे सावित्रसवितारौ करौ रुद्रव्याधी द्वितीये करे, अर्यमा पृथिवीधरश्च करस्य कक्ष्ययोः, पुष्पवितथबहक्षताः पार्श्वे, शोषशोकयक्षाश्च द्वितीये पार्श्वे, हृदि ब्रह्मा, विवस्वान्मित्रश्च जठरे, जयेन्द्रौ मेढ्रे, वृषणयोश्च यमवरुणौ, स्फिजि[1] वृषासुरौ, ऊर्वोः गन्धर्वपुष्पदन्तौ, जान्वोः मृगग्रीवौ, जङ्घयोः, पितृदौवारिकौ चरणयोः, एवमयमैशानी दिक् शिरः नैर्ऋती दिगादौ वास्तुपुरुषः ॥ तत्र च यत्स्वाङ्गं स्पृशप्रष्टा प्रयच्छति तत्रैव वास्त्व ङ्गे शल्यं विद्यात् । अथवा यत्रैवाङ्गे गृहपतेः भूयोभूयो रुग्भवति ॥ अथ वास्तुदेवतामेकैकामुद्दिश्य घृतं जुहुयात् । यद्वाज्यं हूयमाने अग्निलक्षण

१ 'फिजो' इति क० ख० ।

मशुभं भवेत्तद्देवदेशे वा ॥ अथैतद्देवताभागे सुखेन शल्यज्ञानमहं चतुष्षष्टिपदविभागेन वक्ष्यामि । तत्र बहिः पूर्वेणार्धपदेश्वरः । पर्जन्यः अध्यर्धपदेश्वरः, पर्जन्यः अध्यर्धपदेश्वरकरग्रहः, महेन्द्ररविसत्यवृषाः यथाक्रमं द्विद्विग्रहेशाः; अन्तारिक्षोध्यर्धपदेशः । पवनोऽर्धपदेशश्च दक्षिणेन पुष्पोऽर्धपदेशः । वितथोऽध्यर्धपदेशः । गृहक्षतयवभृङ्गगन्धर्वा द्विपदेशाः, कोशोऽध्यर्धपदेशः । शेषोऽर्धपदेशश्चात्र दिङ्नगराजेनार्धपदेशाः । मुख्योऽर्धपदेशः । भल्लाटचन्द्रादिदितयो द्विपदेशाः। रागोऽध्यर्धपदेशः । तदाशनोऽर्धपदेशश्च तदन्तरः पूर्वेणार्धपदनाथः । यक्षो द्विपदनाथोऽर्यमा अर्धपदनाथः, सावित्रो दक्षिणतोऽर्धपदनाथः, सविता द्विपदनाथो मित्रः अर्धपदनाथो रुद्रः । उदगर्धपदनाथो व्याधिः । द्विपदनाथो महीश्वरः। अर्धपादनाथः कामः । मध्ये चतुष्पदेश्वरो ब्रह्मा एवं बहिर्द्वात्रिंशद्देवताः । अन्तस्त्रयोदश । एवं पञ्चचत्वारिंशत् । तत्र प्रश्नकाले । यस्य नाम श्रूयते रुतं वा तदस्ति विद्यात् पृच्छकवचनप्रथमाक्षराद्वा अकारादिवर्गे वाजिनराः श्वगोमायुमेषरासभाजम् । वस्तुतो नवधा विभक्तस्य मध्ये वकारः अकनत एवं संग इत्येते क्रमेण प्राच्यादिषु वर्णाः । वर्णप्रथमश्रवणाद्वास्तुनि तद्दिशि शल्यम् । लग्नाच्छून्येषु केन्द्रेषु निःशल्यं दृढं भवति । पापयुक्तेषु सशल्यं च केन्द्रे राशिवशा दिग्भवति बलिनिग्रहे अस्थिशल्यम् । बलहीने शर्कराङ्गारकाष्ठतुषभस्मादि तत्र सर्वेष्वस्थिषु कर्तुर्मरणं भवति शर्करातुषकेशाङ्गारभस्मशल्येषु शोकानर्थव्याधिमरणचौरोपद्रवाः सशल्ये च देवतायतने देवतासन्निधानं न भवति । तस्मात्सर्वप्रयत्नेन निःशल्यं वास्तुदेवतायतनं कुर्यात् । देवतायतनदक्षिणे भागे देवताकोशभवनम् । तस्याग्नेये महानसम् । दक्षिणेन स्नानभवनम् । नैर्ऋते कुप्यगृहम् ॥ । पश्चिमेन तोयगृहम् । वायव्येन भाण्डगृहम् । उदक्प्रेक्ष्यागारम् । ऐशानेनेज्यागृहम् । प्राक्सर्वकर्मकारगृहमिति॥ एतान्यपि शल्यवर्जितानि कुर्यात् सर्वत्र द्रविणशल्येन वृद्धिर्भवति । तद्विज्ञानं भवति। भवति चात्र—ऊर्द्धस्थे केन्द्रगे सौम्ये शल्यं द्रविणसंज्ञितम्॥दिक्तत्राप्यवगन्तव्या केन्द्रराशिवशेन च॥१॥ ऊष्मा प्रदृश्यते यत्र च्छत्राकारः क्षितौ क्वचित् । तत्र वित्तं विजानीयात्सुषिरं यदि भूतलम्॥२॥ नीलाभिः श्वेतपक्ष्माभिर्मक्षिकाभिः समन्विता ॥ दुर्गन्धा च तथा भूमिस्तत्राधस्ताद्धनं भवेत् ॥ ३ ॥ एकनालसमर्थे द्वे दृश्येते यत्र पुष्करे ॥ भूयोभूयश्च तत्राधः कथयन्ति धनं बहु ॥ ४ ॥ अक्षीराः क्षीरिणो वृक्षास्तन्तुभिर्यदि वेष्टिताः ॥ अकण्टकाः कण्टकिनस्तत्रापि द्रविणं वदेत् ॥५॥ द्रुमे भवति वंशाकं यत्र चान्यं नराधिप ॥ ॥ तत्रापि द्रविणं वाच्यं श्वेतं यत्र च किंशुकम् ॥ ६ ॥ हिमाम्भसी न ध्रियते न प्ररोहन्ति पादपाः ॥ अकाले पुष्पदा वृक्षास्तत्राधो धनमादिशेत् ॥ ७ ॥ शाङ्गको मैथुनं यत्र भुजगश्चित्रमस्तकः ॥ दृश्यते यत्र राजेन्द्र तत्राधो धनमादिशेत् ॥ ८ ॥

१ 'सन' इति ख० ।

इति श्रीवि० ध० तृ०मा०व० सं० प्रतिष्ठाकल्पशल्योद्धारो नाम पञ्चनवतितमोऽध्यायः॥९५॥ वज्र उवाच ॥ कस्मिन्काले तु कर्तव्या प्रतिष्ठा भृगुनन्दन ॥ कस्मिन्कस्मिन्कृता काले तदा भवति कीदृशी ॥ १ ॥ मार्कण्डेय उवाच ॥ शृणु कालं प्रवक्ष्यामि प्रतिष्ठाकरणे तव ॥ यस्मिन्यस्मिन्कृता काले यथा भवति यादव ॥ २ ॥ नित्यं सन्निहिता लोके वैष्णवे तु युगे कृता ॥ धनधान्यवती स्फीता वरदा च तथा भवेत् ॥ ३ ॥ हृष्टा भवति विख्याता त्रिदशेशगुरोर्युगे ॥ ऐन्द्रे तेजोवती स्फीता भूतनिग्रहकारिणी ॥४॥ तथाविधा तथाग्नेये भूतदाहमवाप्नुयात् ॥ नित्याश्चर्ययुता त्वाष्ट्रे गम्या लोकैस्तथैव च ॥ ५ ॥ आहिर्बुध्न्ये दृढा नित्यं लोकानुग्रहकारिणी ॥ पित्र्ये विनाशमाप्नोति कर्तुश्च मरणावहा ॥६॥ वैश्वे लोकहिता कर्तुर्लोकगम्या कृता भवेत् ॥ सौम्या सौम्ये तथा कान्ता वरदा च तथा भवेत् ॥ ७ ॥ ऐन्द्राग्ने नाशमाप्नोति कर्तुः कृत्वा विनाशनम् ॥ अश्विनी श्रीमती भूत्वा शीघ्रं नाशमवाप्नुयात् ॥ ८ ॥ लोकाभिगम्या भाग्ये स्यात्कर्तुर्दोषवती भवेत् ॥ अशुभोऽपि युगे कार्या प्रतिष्ठा मनुजोत्तम ॥ ९ ॥ यस्मिन्यस्मिन्युगे नाथो योयो देवः प्रकीर्तितः ॥ धनधान्यवती स्फीता कर्तुः श्रेयोवहा तथा ॥ १० ॥ संवत्सराख्ये कर्तव्या नित्यमाज्ञायुता भवेत् ॥ परिपूर्वे तु भूतघ्नी लोकख्याता तथैव च॥११॥इडापूर्वे तथा सौम्या वरदा लोकसुन्दरी ॥अनुपूर्वे तु वरदा धनधान्यवती भवेत्॥१२॥तत्पूर्वे नाशमाप्नोति कर्तुर्नाशावहा भवेत्॥तत्रापि शंभोर्मृत्योश्च यमस्य च हिता भवेत्॥१३॥उत्तरे ह्ययने सौम्या धनवृद्धिकरी भवेत्॥धनधान्ययुता स्फीता लोकानन्दकरी भवेत्॥१४॥दक्षिणे त्वयने कर्तुः पापवृद्धिकरी भवेत्॥तत्रापि सुप्ते देवेशे सर्वानर्थविवर्द्धिनी ॥१५॥ शिशिरे लोककान्ता स्याद् दृढा च वसुधाधिप ॥ स्फीता वसन्ते सौम्या च वरदा च तथा भवेत् ॥ १६ ॥ ग्रीष्मे तेजस्विनी कान्ता भूतनिग्रहकारिणी॥ प्रावृट्काले कृता नाशं कर्त्रा सह समाप्नुयात् ॥१७॥शरत्काले कृता नाशं शीघ्रमेव प्रपद्यते॥हेमन्ते वरदा सौम्या धर्मवृद्धिकरी भवेत् ॥ ॥ १८ ॥ माघे कर्तुर्विनाशाय फाल्गुने सुभगा भवेत् ॥ लोकानन्दकरी चैत्रे वैशाखे धनसंयुता ॥ १९ ॥ आज्ञायुता तथा ज्येष्ठे आषाढे कर्तृवृद्धिदा ॥ श्रावणे धनहीना स्यात्प्रोष्ठपादे विनश्यति ॥ २०॥ आश्विने नाशमाप्नोति वह्निना कार्तिके तथा ॥ सौम्ये सौभाग्यमतुल्यं पौषे पुष्टिरनुत्तमा ॥२१॥दोषावहाधिमासे स्यात्कर्तुरात्मन एव च ॥ कृष्णपक्षत्रिभागे तु प्रथमे स्याच्छुभावहा ॥२२॥ मध्या द्वितीये भवति तृतीये कर्तृनाशिनी॥ शुक्ले त्रिभागे प्रथमे देशनाशाय कीर्तिता ॥२३॥ द्वितीये मध्यफलदा तृतीये च शुभावहा ॥ धनधान्यवती स्फीता वरदा च तथा भवेत् ॥ २४ ॥

१ 'वर्षे तु' इति क० ।

यस्य पक्षस्य वृद्धिः स्यात्तस्मिञ्छुभवहा भवेत् ॥ तेजस्विनी सूर्यदेवे चन्द्रे क्षमावहा भवेत् ॥ २५ ॥ भौमेऽग्निना प्रदह्येत बुधेन धनदा
भवेत् ॥ गुरुणा च दृढा नित्यं लोकानन्दकरी सिते ॥ २६ ॥ आचन्द्रार्कस्थिरा सौरे प्रतिष्ठा समुदाहृता ॥ तेजस्विनी कृत्तिकासु भूतनिग्रहकारिणी॥
॥२७॥ किञ्चिद्भूता ततः काले पुनर्दह्यति वह्निना ॥ वह्नेः सूर्यस्य भौमस्य कुमारस्य च मानद॥२८॥ गङ्गायां च कृता तत्र न दह्यति च वह्निना ॥
प्राजापत्ये दृढा नित्यं लोकानुग्रहकारिणी ॥ २९ ॥ सौम्ये तु वरदा प्रोक्ता मूषकैस्तु विनाश्यते ॥ आर्द्रायां कर्तृमरणं क्षिप्रमेव प्रयच्छति ॥३०॥
पुनर्वसौ विनाशश्च संस्कारं चाप्नुयात्पुनः ॥ पुष्टिं पुष्ये समाप्नोति धनेन यशसा तथा ॥ ३१ ॥ सार्प्ये कर्तृविनाशः स्यान्नागानां च हिता भवेत् ॥
पित्र्ये मरणदा कर्तुस्तथा नाशं च गच्छति ॥ ३२ ॥ लोकगम्या भवेद्भाग्ये कर्तुर्नाशावहा तथा ॥ तत्रापि कामदेवस्य कर्तुः सौख्यावहा भवेत् ॥३३॥
अर्यम्णे सदृढा स्फीता लोकानुग्रहकारिणी ॥ आज्ञायुता कृता हस्ते चिरान्नाशमवाप्नुयात् ॥ ३४ ॥ नित्याश्चर्ययुता लोके चित्रायां च हितप्रदा ॥
स्वातौ तु वरदा सौम्या लोकानुग्रहकारिणी ॥ ३५ ॥ ऐन्द्राग्ने कर्तृनाशाय मैत्रे मैत्राभिवृद्धये[1] ॥ ज्येष्ठायां तेजसा युक्ता धनधान्यवती भवेत् ॥ ३६ ॥
तथाविधा तथा मूले किन्तु भूतसमाश्रया ॥ आप्ये क्लेशमवाप्नोति वैश्वदेवे सुखप्रदा ॥ ३७ ॥ श्रवणे धनधान्याढ्या वासवे वसुसंयुता ॥ वारुणे
शीघ्रनाशाय तथाजे मनुजोत्तम ॥ ३८ ॥ आहिर्बुध्न्ये दृढा स्फीता कर्तुस्सौख्यप्रदा तथा ॥ धनधान्ययुता पौष्णे आश्विने रोगनाशिनी ॥ ३९ ॥
याम्ये मरणदा कर्तुर्यमस्य तु हितप्रदा ॥ नक्षत्रे सव्यतीपाते तथैव च सवैधृते ॥ ४० ॥ ज्ञेया मरणदा कर्तुरात्मनाशकरी तथा ॥ सार्के
स्याच्छोकजननी ससौरे मृत्युदायिनी ॥४१॥ सभौमे वह्निभयदा सतमस्के स्थिरा न तु ॥ केतुना भूषिते ऋक्षे वह्निदाहमवाप्नुयात् ॥ ४२ ॥
केतूदयं भवेद्येन तेन दुर्भिक्षमाप्नुयात् ॥ भौमोदयो भवेद्येन तेन दह्यति वह्निना ॥ ४३ ॥ सौरोदयो भवेद्येन तेन कल्पं विनश्यति ॥
नक्षत्रे सपरीवेशे परचक्रभयं वदेत् ॥ ४४ ॥ उल्काहते विनाशाय सभूकम्पे भयप्रदा ॥ उल्कापातो भवेद्यत्र तत्र व्याधिकरी भवेत् ॥ ४५ ॥
त्रिविधोत्पातयुक्ते भे न शुभा तु प्रकीर्तिता ॥ दिव्ये कर्तृविनाशाय भौमे चात्मविनाशिनी ॥ ४६ ॥ अन्तरिक्षे च विज्ञेया लोकनाशकरी तथा ॥
सवैधृतव्यतीपातमृक्षमेकं विवर्जयेत् ॥ ४७ ॥ शेषैर्दोषैस्तथा युक्तं यावदागमनाद्रवेः ॥ जन्मनक्षत्रविहिता कर्तुः श्रेयस्करी भवेत् ॥ ४८ ॥ सम्प
त्करी द्वितीये स्यात्तृतीयेऽरिभयप्रदा ॥ क्षेम्या चतुर्थे भवति पञ्चमे व्याधिवर्धिनी ॥ ४९ ॥ कार्यवृद्धिकरी षष्ठे सप्तमे निधनप्रदा ॥ अष्टमे वरदा

१ मित्राणां समूहो मैत्रम्, तद्विवृद्धये ।

सौम्या नवमे श्रीविवर्धिनी ॥ ५० ॥ कर्मणां साधकी प्रोक्ता जन्मभाद्दशमे तु भे ॥ एकादशे भूतिकरी द्वादशेऽरिभयप्रदा ॥ ५१ ॥ ज्ञेया त्रयोदशे क्षेम्या रोगदा तु चतुर्दशे ॥ वृद्धिदा पञ्चदशके षोडशे निधनप्रदा ॥ ५२ ॥ सप्तदशे भूतिकरी श्रीदा चाष्टदशे भवेत् ॥ एकोनविंशतितमे कर्त्तु र्मरणदायिनी ॥ ५३ ॥ ततो द्वितीये धनदा तृतीयेऽरिभयप्रदा ॥ चतुर्थे क्षेमजननी पञ्चमे रोगवर्धिनी ॥ ५४ ॥ षष्ठे लक्ष्मीकरी ज्ञेया धनधान्य विवर्धिनी ॥ द्वितीये च चतुर्थे च पञ्चमे च तथाष्टमे ॥ ५५ ॥ द्वादशे नवमे चन्द्रे कर्तुर्दोषकरी भवेत् ॥ जन्मस्थश्च तृतीयश्च षष्ठश्चैकादश स्तथा ॥ ५६ ॥ दशमः सप्तमश्चैव यदा विद्धो भवेद्ग्रहैः[1] ॥ पञ्चमैर्नवमैश्चैव द्वादशैश्च तथाष्टमैः ॥ ५७ ॥ चतुर्थे वा द्वितीये वा क्रमात्पादफलो भवेत् ॥ विपर्ययेण वेधस्थो पापोऽपि शुभकृत्स्मृतः ॥ ५८ ॥ चन्द्राद्द्वादशमः सूर्यो द्वितीये वा भयप्रदः ॥ द्वादशेऽथ द्वितीये च भौमे दाहम वाप्नुयात् ॥ ५९ ॥ द्वादशे षट्[2]द्वितीये वा सौरे मरणदा भवेत् ॥ पापमध्यगते चन्द्रे ध्रुवं मरणदा भवेत् ॥ ६० ॥ एकस्मिंस्तु यदा केन्द्रे चन्द्रः सम्यग्व्यवस्थितः ॥ केन्द्रत्रयमथान्यं स्याद्युक्तं सूर्यारसूर्यजैः ॥ ६१ ॥ तदा कर्त्तुर्विनाशाय प्रतिष्ठा स्यान्नराधिप ॥ चन्द्रे सार्के विनाशाय भौमे दाहमवाप्नुयात् ॥ ६२॥ ससौरे मृत्युदा ज्ञेया सराहौ निधनप्रदा ॥ नक्षत्रे सोपरागे तु कर्तुर्मरणदायिनी ॥ ६३ ॥ परिवेष्टे तथा चन्द्रे मरणं तु प्रयच्छति ॥ सार्पान्त्यपादगे चन्द्रे तथा ज्येष्ठान्तपादगे ॥ ६४ ॥ पौष्णान्तपादगे चैव कर्तुर्निधनकारिणी ॥ यस्मिन्नृक्षे यदेवोक्तं फलं भूपति सत्तम ॥ ६५ ॥ तदेवेह फलं प्रोक्तं तन्मुहूर्तेऽपि यादव ॥ दिनमध्यगते सूर्ये मुहूर्तेऽभिजितेऽष्टमे ॥ ६६ ॥ सर्वकामसमृद्धा स्यात्सर्वोपद्र वर्जिता ॥ गुरावस्तमयं प्राप्ते नीचस्थे कर्तृघातिनी ॥ ६७ ॥ तस्माद्बलस्थे जीवे तु धनधान्यकरी भवेत् ॥ ब्राह्मे राश्ये दृढा ज्ञेया प्राजापत्ये सुखावहा ॥ ६८ ॥ स्वर्गलोकप्रदा स्वर्ग्ये चक्रे चक्रप्रवर्तिनी ॥ वानस्पत्ये तु वरदा ह्यान्ने चान्नविवर्धिनी ॥ ६९ ॥ वासे[3] भवति वस्त्राढ्या काले मृत्युप्रदायिनी ॥ आग्नेये दाहमाप्नोति क्लेदमब्दैवते तथा ॥ ७० ॥ सौरे भवति सुस्फीता चान्द्रे च वरदा तथा ॥ नश्यते शम्भुदैवत्ये गोदेवे[4] वृद्धिमाप्नुयात् ॥ ७१ ॥ वैष्णवे पुष्टिदा प्रोक्ता तथा भवति पूजिता ॥ कामारे वृद्धिमाप्नोति पित्र्ये नाशं तथैव च ॥ ७२ ॥ वारुणे रोगदा प्रोक्ता शुभा चानन्तदैवते ॥ चला पवनदैवत्ये याम्ये मृत्युप्रदा भवेत् ॥ ७३ ॥ वाग्दैवते सदा कान्ता श्रीरोधे श्रीयुता भवेत् ॥ धनदे धनसंयुक्ता सुदृढा शैलदैवते ॥७४॥ पृथ्वी देवी दृढा सौम्या शुभा स्याद्वेददैवते ॥ पौरुषे तु तथा रौचे बहुधर्मविवर्धिनी॥७५॥कर्तुः सुखावहा चैव तथा चाज्ञा

१ 'ग्रहैः' इति ख० । २ 'द्वादशे वा' इति ख० । ३ 'वामे' इति ख० । ४ 'गोदेव्ये' इति ख० ।

युता भवेत्॥दृढा धनयुता स्फीता तथा प्रतिपदि स्मृता॥७६॥द्वितीयायां धनोपेता तृतीयायां वरप्रदा॥ चतुर्थ्यां नाशमाप्नोति यमस्य स्यात्सुखा
वहा॥७७॥ विनायकस्य देवस्य तथा तत्र हितप्रदा ॥ पञ्चम्यां श्रीयुता कान्ता वरदा च तथा भवेत् ॥ ७८ ॥ षष्ठ्यां लक्ष्मीयुता नित्यं सप्तम्यां
रोगनाशिनी ॥ अष्टम्यां धान्यबहुला नवम्यां तु विनश्यति ॥ ७९ ॥ भद्रा काल्या कृता तत्र कर्तुर्भवति पुष्टिदा ॥ धर्मवृद्धिकरी ज्ञेया
दशम्यां तु तथा कृता ॥ ८० ॥ एकादश्यां तथा युक्ता द्वादश्यां सर्वकामदा ॥ त्रयोदश्यां तथा ज्ञेया चतुर्दश्यां विनश्यति ॥ ८१ ॥ कृष्ण
पक्षे पञ्चदश्यां कर्तुः क्षयकरी भवेत् ॥ पञ्चदश्यां तथा शुक्ले सर्वकामकरी भवेत् ॥ ८२ ॥ ऊनरात्रे महाराज कर्तुर्मरणदा भवेत् ॥ बृहत्स्पृशा
च विज्ञेया तथा दोषवती नृप ॥ ८३ ॥ दिव्यान्तरिक्षभौमेन चोत्पातेन तु या युता ॥ कर्तव्या विप्रयोगान्ता प्रतिष्ठा तु कृता भवेत् ॥ ८४ ॥
तिथिहानौ क्षयं प्रोक्तं वृद्धौ वृद्धिः प्रकीर्तिता ॥ शकुनौ दोषजननी चतुष्पदि तथावहा ॥ ८५ ॥ नागे भवति शून्या च किंस्तुघ्ने तु शुभप्रदा ॥
बवे दृढा तथा ज्ञेया बालवे तु शुभप्रदा ॥ ८६ ॥ कौलवे वरदा प्रोक्ता तैतले रोगनाशिनी ॥ गरादौ रोगजननी तथा वणिजि पुष्टिदा ॥ ८७ ॥
विष्टौ मरणदा कर्तुरात्मदोषवती तथा ॥ जन्मराश्युदये केतुः क्षिप्रं नाशवती भवेत् ॥ ८८ ॥ द्वितीये धननाशाय तृतीये कर्तृवृद्धिदा ॥ चतुर्थे
गृहनाशाय पञ्चमे व्याधिदा भवेत् ॥ ८९ ॥ षष्ठे शत्रुविनाशाय सप्तमे धननाशनी ॥ अष्टमे मृत्युदा ज्ञेया नवमे धर्मनाशनी ॥ ९० ॥ दशमे
कर्मणां वृद्ध्यै लाभे लाभकरी भवेत् ॥ द्वादशे तु व्ययाय स्यात्प्रतिष्ठा तु तथा कृता ॥९१॥ जन्मलग्नोदये श्रेष्ठा धनधान्यवती भवेत् ॥ जन्म
राशिफलं सर्वं शेषस्थाने तु निर्दिशेत् ॥ ९२ ॥ मेषोदये कृता क्षिप्रं नाशमाप्नोति पार्थिव ॥ वृषोदये स्थिरा प्रोक्ता धनधान्यवती तथा ॥ ९३ ॥
लोककान्ता च मिथुने बहुकल्याणकारिणी ॥ कुलीरे क्षिप्रनाशः स्यात्सिंहे वसुदृढा भवेत् ॥ ९४ ॥ कन्यायां लोककान्ता स्यात्तुले भवति
चास्थिरा ॥ वृश्चिके तु स्थिरा प्रोक्ता कल्याणाय धनुर्धरे ॥ ९५ ॥ मकरे क्षिप्रनाशा स्यात्कुम्भलग्ने दृढा भवेत् ॥ मीने पुण्यवहा कर्तुः
कल्पाशून्या तथा भवेत् ॥ ९६ ॥ उग्रा स्यात्सूर्यहोरायां सौम्या सोमस्य कीर्तिता ॥ पापग्रहस्य द्रेष्काणे कर्तुर्नाशाय कीर्तिता ॥ ९७ ॥
सौम्यग्रहस्य सुशुभा कर्तुर्भवति वृद्धिदा ॥ फलं यदेव लग्नेषु नवांशेषु तदेव तु ॥ ९८ ॥ द्वादशांशेषु विज्ञेयस्तदेव मनुजोत्तम ॥ कर्तुर्ना
शाय विज्ञेया त्रिंशांशे भौमसौरयोः ॥ ९९ ॥ सितजीवेन्दुपुत्राणां कर्तुः कल्याणदा भवेत् ॥ शुभमंशं महाराज लग्ने पापफले शुभम् ॥ १०० ॥
लग्ने शुभतरे ज्ञेयः पापांशः पापदो नृणाम् ॥ लग्नस्थे शङ्करा कर्तुः कृता भवति भास्करे ॥ १०१ ॥ द्वितीयेऽर्थस्य हानिः स्यात्तृतीये

धनसंयुता ॥ आयुःक्षयं चतुर्थस्थे पञ्चमे स्वत्वनाशनम् ॥१०२॥ षष्ठे शत्रुविघातं तु दारिद्र्यं सप्तमे भवेत् ॥ मरणं चाष्टमे भानौ नवमे धर्मपीडनम् ॥ ॥१०३॥ दशमे सुतवृद्धिश्च लाभे लाभयुता भवेत् ॥ द्वादशे व्ययसंयुक्ता निर्धना तु तथा भवेत् ॥१०४॥ चन्द्रे लग्नगते ज्ञेया सुदृढा मनुजोत्तम ॥ धनान्विता द्वितीये तु तृतीये लाभसंयुता ॥१०५॥ चतुर्थे बान्धवहिता पञ्चमे सुतवृद्धिदा ॥ षष्ठे रिपुविनाशाय सप्तमे च धनावहा ॥ १०६ ॥ अष्टमे मरणायोक्ता नवमे धर्मपीडनम् ॥ दशमे कर्मदा प्रोक्ता लाभे लाभप्रदा भवेत् ॥ १०७ ॥ व्यये व्ययवती राजंस्तथा धनविवर्जिता ॥ अर्धबिम्बाधिके क्षीणे क्रमादथ निबोध मे ॥ १०८ ॥ चन्द्रे लग्नगते ज्ञेया क्षिप्रनाशा महाभुज ॥ द्वितीये च दरिद्रा स्यात्तृतीये धनसंयुता ॥ १०९ ॥ बह्वनर्था चतुर्थे स्यात्पुत्रनाशाय पञ्चमे ॥ षष्ठे रिपुविनाशाय भार्यानाशाय सप्तमे ॥ ११० ॥ अष्टमे मरणायोक्ता नवमे धर्मघातिनी ॥ धनान्विता स्याद्दशमे लाभे लाभवती भवेत् ॥ १११ ॥ व्यये व्ययवती नित्ये दरिद्रा च तथा भवेत् ॥ लग्ने मृत्युकरो भौमस्तथा दारिद्र्यदो धने ॥ ११२ ॥ कीर्तिं त्रिभुवने शुभ्रां तृतीयस्थः करोत्यसौ ॥ चतुर्थे बन्धुनाशः स्यात्सुतनाशस्तथा सुते ॥ ११३ ॥ अरिनाशस्तथा षष्ठे सप्तमेऽग्नौ विनश्यति ॥ अष्टमे कर्तृमरणं नवमे देशविच्युतिः ॥ ११४ ॥ दशमे कर्मसिद्धिः स्याल्लाभे लाभवती भवेत् ॥ धनजायात्मजैर्नित्यं वियोगो व्ययगे भवेत् ॥ ११५ ॥ बुधो लग्ने धनयुतो द्वितीये च तथा भवेत् ॥ तृतीये वरदा प्रोक्ता चतुर्थे धनसंयुता ॥ ११६ ॥ कीर्तिश्च पञ्चमे ज्ञेया षष्ठे रिपुविनाशिनी ॥ सुखदा सप्तमे ज्ञेया हर्षदा च तथाष्टमे ॥ ११७ ॥ सौख्यदा नवमे राजन्दशमे कर्मवृद्धिदा ॥ स्थिरा लाभगते ज्ञेया व्यये धनसमन्विता ॥११८॥ जीवे धनाढ्या लग्नस्थे द्वितीये च तथा भवेत् ॥ दृढास्पदा तृतीये स्याच्चतुर्थे धनसंयुता ॥ ११९ ॥ पञ्चमे सुतदा प्रोक्ता षष्ठे शत्रुविनाशिनी ॥ सप्तमे राज्यदा कर्तुरष्टमे च समृद्धिदा ॥ १२० ॥ कीर्तिदा नवमे ज्ञेया दशमे च समृद्धिदा ॥ लाभस्थे लाभदा ज्ञेया व्यये लाभसमन्विता ॥ १२१ ॥ लग्नस्थे निश्चला शुक्रे सर्वकामप्रदा भवेत् ॥ धनगे च धनं दद्यात्तृतीये भ्रातृवृद्धिदा ॥ १२२ ॥ चतुर्थे सुभगा ज्ञेया पञ्चमे सुतवृद्धिदा ॥ षष्ठे पूज्या तथा लोके सप्तमे धनवृद्धिदा ॥ १२३ ॥ अष्टमे सुखदा प्रोक्ता नवमे च सुखार्थदा ॥ दशमे लोककान्ता स्यादरिनाशस्तथायुगे ॥ १२४ ॥ तथा व्ययस्थे विज्ञेया सव्यया सधना तथा ॥ मृत्युदा लग्नगे सौरौ दरिद्रा स्याद्द्वितीयगे ॥ १२५ ॥ तृतीये धनलाभाय चतुर्थे कर्तृमृत्युदा ॥ सुतगे सुतनाशः स्यादरिनाशस्तथारिगे ॥ १२६ ॥ जायानाशस्तु जायास्थे मृत्युर्मृत्युगृहोपगे ॥ धर्मगे धर्महानिः स्यात्कर्मवृद्धिस्तु कर्मगे ॥ १२७ ॥ महीलाभस्तु लाभस्थे व्ययगे च व्ययो भवेत् ॥ शून्यं विवर्जयेत्केन्द्रं शुभा

न्केन्द्रे नियोजयेत् ॥ १२८ ॥ एवं ज्ञात्वा शुभं कालं प्रयत्नेन तु दैववित् ॥ छायाम्बुभिः प्रयत्नेन गृह्णीयादवधानतः ॥ १२९ ॥ शुभेऽह्नि पूर्वं यन्त्रस्थं तत्कालं प्रतिमां स्वयम् ॥ समां तु पीठिकां गर्ते स्थपतिर्विनिवेशयेत् ॥ १३० ॥ तत्कालमेव कुर्वीत नाम चास्याः समाहितः ॥ स्वस्थां तां तु स्वनां नान्ते वैष्णवी प्रतिमा भवेत् ॥ १३१ ॥ केशवान्ताः स्त्रियः कार्या नाथान्तो ब्राह्मणो भवेत् ॥ ईश्वरान्ता हरस्योक्ता मिहिरान्ता रवेः स्मृता ॥ १३२ ॥ अन्येषां देवनामान्ताः सुराणां प्रतिमाः स्मृताः ॥ सूक्ष्मा तु प्रतिमा कार्या द्वितीया चाधिवासने ॥ १३३ ॥ चित्रकर्मकरा या च मृन्मयी या तथा भवेत् ॥ तस्याः पवित्रके कार्यं तथा चैवाधिवासनम् ॥ १३४ ॥ संवत्सरं तु कर्तव्यं षण्मासानथ वा पुनः ॥ पक्षं द्वादशरात्रं वा सप्ताहं त्र्यहमेव वा ॥ १३५ ॥ एकाहमेकरात्रं वा यथावदधिवासनम् ॥ विभवेनातिमहता गीतैर्नृत्यैः सुशोभनैः ॥ १३६ ॥ नित्यमम्बुप्रदानैश्च वह्निपूजाभिरेव च ॥ निजपुण्याहघोषेण कर्तव्यमधिवासनम् ॥ १३७ ॥ ततः प्रतिष्ठा कर्तव्या काले संवत्सरोचिते ॥ शुभे काले कृता सा तु परा वृद्धिकरी भवेत् ॥ १३८ ॥ राज्ञां प्रजानां कर्तुश्च तथा कालविदो नृप ॥ ऋत्विजां च महाराज शुभकालकृता हिता ॥ १३९ ॥ सुलक्षणा लक्षणसंयुता च देशे कृता शास्त्रविदा तु सम्यक् ॥ काले शुभे लोकसुखावहा स्यात्कर्तुः प्रशस्ता वरदानसौम्या ॥ १४० ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मा० सं० प्रतिष्ठाप्रतिमालक्षणकालनिर्देशो नाम षण्णवतितमोऽध्यायः ॥ ९६ ॥

वज्र उवाच ॥ भगवन्केन विधिना प्रतिष्ठा कृता भवति ॥ मार्कण्डेय उवाच ॥ अथ सुरप्रतिष्ठापने षोडशर्त्विजो भवन्ति ॥ एतद्यथा दैववित्स्थपतिः कल्पकः वाचकः यजुर्वेदविदर्थबाहुः यजुर्वेदविद्देवहोता यजुर्वेदविद्देवद्रव्यरक्षिता ऋग्वेदविद्यजुर्वेदवित्सामवेदविदथर्ववेदविदिति चत्वारः कलशाधाराः चत्वारः सात्त्वताः तेषामेको मूर्तिधरः द्वितीयो देवकर्मवित् ॥ तृतीयो मन्त्ररक्षिता चतुर्थो द्रव्यरक्षितेति । तत्र कलशाधाराणां शक्त्या सहायाः कर्तव्याः । सर्व एव ऋत्विजोऽव्यंगा अकपिला अकेकरा अनधिकाङ्गाः स्वशास्त्रपरिनिष्ठिताः श्लक्ष्णाः अपौनर्भवाश्चेति ॥ ततः प्रशस्तेऽह्नि तैः सहायैः सुस्नातैः स्वनुलिप्ताङ्गैर्माल्यवद्भिर्हविष्याशिभिश्च अहतास्वरसंवीतैः पवित्रपाणिभिः सह दीक्षां यजमानो गृह्णीयात् ॥ तस्य स्नातस्याहतवसनसंवीतस्य गोमयेनोपलिप्ते देशे ब्राह्मणाः स्वस्तिवाचनपूर्वकवचनेन कल्पकः सितसूत्रेण सितवस्त्रेण सिद्धार्थकवचान् बद्ध्वा दक्षिणपाणौ प्रतिसरं कङ्कणं बध्नीयात् । ततः प्रभृति यावत्प्रतिष्ठाकालं प्रतिष्ठाकालादुपरि च सप्तरात्रं तावन्मांसमद्यक्षाराब्रह्मचर्यक्रोधेर्ष्यामानानार्यत्ववर्जनीयानि भवन्ति ॥ भवति चात्र ॥ दीक्षादिनात्प्रभृत्येवं प्रतिष्ठा सप्तमे दिने ॥

यावत्तावद्भवान्नित्यं यजमानः सुयन्त्रितः ॥ १ ॥ ब्रह्मचारी हविष्याशी जितक्रोधो विमत्सरः ॥ अधःशायी च राजेन्द्र नित्यस्नायी तथैव च ॥ २ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे प्रतिष्ठाकल्पे दीक्षाध्यायो नाम सप्तनवतितमोऽध्यायः ॥ ९७ ॥ मार्कण्डेय उवाच ॥ अथ प्रासादलक्षणम् ॥ पुरतो वा सुशुद्धे भूभागे स्थण्डिलत्रयं परिकल्पयेत् । यथावर्णोक्तमृदा ससिकतया । ततः स्थंडिलत्रयमपतितगोमयेनोपलेपयेत् । तत्र मध्येऽधिवासनस्थण्डिलम् । तद्दक्षिण इज्यास्थण्डिलम् । तदुदग्घोमस्थण्डिलम् । तत्राधिवासनास्थण्डिले चत्वारस्तोरणाः परिकल्प्यन्ते । सर्वे स्थण्डिलाः चतुरस्राश्चतुर्हस्तोच्छ्रायास्तोरणत्रिभागविस्तीर्णाः ॥ स्थण्डिलद्वयमार्द्राभिः पताकाभिः प्रतिसराभिश्च परिवारयेत् । वनप्रवेशोक्तेन विधिना प्रशस्तवृक्षाणामन्यतमस्य वृक्षस्य तोरणार्थं काष्ठान्यानीय स्थण्डिलेभ्य उपस्थापयेत् । न तोरणं काष्ठद्वयजं कुर्यात् । न कुब्जम् । तोरणाश्च सर्वे समप्रमाणाः । आदावेवाधिवासनस्थण्डिलस्य पश्चिमभागे। प्राङ्मुखः कल्पकः [स्वामी न स्यात्।][1]कल्पकाद्दक्षिणे भागे प्राङ्मुख एव सात्त्वतः स्यात्। तस्यापि दक्षिणे भागे प्राङ्मुख एव ऋग्वेदविद्भवेत् ॥ कल्पकाद्वामभागे प्राङ्मुख एव यजमानः। तस्य वामतः प्राङ्मुख एव अर्घबाहुः स्थण्डिलाश्रितो दक्षिणाभिमुखो यजुर्वेदवित् । स्थण्डिले पूर्वतः पश्चिमाभिमुखः सामवेदवित् । तस्य दक्षिणतो वंशवादकः । तस्यापि दक्षिणतो वाचकः । तस्योदग्गायनः। पृष्ठे वादनकतन्तकाः । स्थण्डिलाद्दक्षिणतः उत्तराभिमुखोथर्ववेदवित् । होमस्थण्डिले प्राङ्मुख अगारात्पश्चिमतो होता । चतुरस्रः । समन्ताद्धस्तमानश्चागारः समेखलः । तस्योदङ्मन्त्ररक्षिता द्रव्यरक्षिता च । इज्यास्थण्डिले इज्याकृत्सात्त्वतः । तद्दक्षिणतः उत्तराभिमुखो मन्त्ररक्षिता द्रव्यरक्षिता च । संवत्सरो न्यत्रैकवित्तकालग्रहणावहितः स्यात् । स्थपतेरनियमः । ततः सौवर्णं राजतं ताम्रं मृन्मयमकालमूलं वा कलशं सुदृढं तीर्थोदकपूर्णं सर्वौषधिभिः सर्वगन्धैः सर्वबीजैः सर्वरत्नैर्हिरण्येन चन्दनेन फलैश्च संयुतं कृत्वा अनुलेपनार्घनिर्मितपवित्रमुखे सति सूत्रमाल्यग्रीवं कल्पकः पुरतः प्रतिष्ठापयेत् । कलशः पूर्वेण । स्थण्डिलमध्ये अष्टपत्रं कमलमालिखेत् ॥ ततः कर्म्मारम्भं कुर्यात् । प्रणवव्याहृतिपूर्विकां गायत्रीं सशिरस्कां जपेत् । ॐकारं नमस्कारं कर्म्मारम्भं पवित्रं चेति । ततस्तोत्रं कश्चिद्वाचयेत् । ततो रक्षोघ्नैर्म्मन्त्रैर्दिक्षु विदिक्षु च सिद्धार्थकान्न्यसेत् । ततो द्वादशाङ्गुले खाते वनस्पते वीड्वङ्ग इति प्राच्यादिक्रमेण तोरणन्यासं कुर्यात् ॥ तोरणाश्चत्वारो युगा भवन्ति । पूर्वतः कृतयुगः,

१ कोष्ठान्तर्गतः पाठः खपुस्तके नास्ति ।

दक्षिणतस्त्रेता, पश्चिमे द्वापरः, उत्तरे कलिरिति । एवं तोरणन्यासं कृत्वा युवा सुवास इति दर्भैरशुष्कपत्रैः स्रग्दामभिश्च तोरणचतुष्कं चापि वेष्टयेत् । ततस्तोरणानामुपरि ध्वजाः कर्तव्याः । पूर्वेण पीतपताको गरुडः, दक्षिणेन नीलपताकस्तालः, पश्चिमेन श्वेतपताको मकरः, उदग्रक्तपताको ऋष्यः । गरुडस्य पार्श्वयोर्गदाचक्रे, तालस्य हलमुसलौ, मकरस्य धनुर्बाणौ, ऋष्यस्य खड्गचर्म । तोरणान्तराले आग्नेये दिग्भागे च्छत्रम् । नैर्ऋत्यां वैजयन्तीं पाताकाम् । वायव्यां ध्वजम् । ऐशान्यां दण्डम् । स्थण्डिलोपरि वितानकम् । तोरणं प्रतिघण्टामादर्शं च । इज्यास्थण्डिले वितानकम् । तत्र च पटिलिखिताः प्रतीहाराः सुभद्रभद्रौ पूर्वेण । आषाढयज्ञतातौ दक्षिणेन । जयविजयौ पश्चिमेन । मोदप्रमोदौ उत्तरेण । एतत्कृत्वा ध्रुवाद्यावित्युदाहरेत् । माथुरं च मन्त्रं व्याचक्षेति । ततः कलशोदकेन पवित्रमन्त्रेण यजमानऋत्विजां भोगांश्चाभ्युक्ष्य गायत्रीं जपेत् । या ओषधयश्चेति तत्रैशानीदिक्प्रभृतिषु सपुंखान्सफलान्दृढाञ्छरांश्चत्वारो निखनेत्। तेषां नामानि । कन्दर्पः, सोमलः, दुर्धरः, शिखरः ॥ तेषां चत्वारो लोकपालाः इन्द्रयमवरुणधनदाः । तेषां च निवेशने काण्डात्काण्डादित्युदीरयेत् ॥ ततः पञ्चरङ्गं सूत्रं काण्डात्काण्डेति बध्नीयात् । तेनैव दिशः परिवारयेत् । पञ्चरङ्गत्वात्पञ्चसूत्रं पञ्चमहाभूतमयं संसारसूत्रम् । नीलं पृथ्वी, श्वेतमापः, रक्तमग्निः, पीतं वायुः, कृष्णमन्तरिक्षम् । तद्बन्धेन दूष्यादूष्येति मन्त्रो भवति । इन्द्राण्या कीर्तितं सूत्रमिति च ततः कण्डे मूलेषु स्थण्डिलाभ्यन्तरेण चतुर्षु दिक्षु चत्वारः पूर्णकुम्भान् प्रतिष्ठापयेत् । ते चत्वारः सागरा ज्ञेयाः तत्राप्यैशान्यां दिशि प्रथमं कुम्भं प्रतिष्ठापयेत् । ततः क्रमेणान्यान् ॥ तेषां नामानि सहस्रवीर्यः, विमलः, शतधारः, प्रमन्दनः ॥ तांश्च सहिरण्यान्सचन्दनान्सकुसुमान्सवनस्पतिकलापान्कुर्यात् । तत्र शन्न आप इति प्रथममभिमन्त्रयेत् । शन्नो देवीरिति द्वितीयम् ॥ आपोहिष्ठेति तृतीयम् । इदमापः प्रवहत इति चतुर्थम् ॥ ततः पूर्वेण लाजापूर्णं पात्रं स्थापयेत् । दक्षिणेन तिलपात्रम् । पश्चिमेन सिद्धार्थपात्रम् । उदगक्षतपात्रम् । पात्रविशेषेण आब्रन्ब्राह्मण इत्युदीरयेत् । ततश्चतसृषु विदिक्षु कुम्भानामभ्यन्तरे चत्वारो दीपा देयाः । ते च वेदा ऐशानीप्रभृति ऋग्यजुस्सामाथर्वाणः। तेषां च निवेशने तेजोसिशुक्रमित्युदीरयेत् । ततः पुनरपि रक्षोघ्नैर्मन्त्रैः सिद्धार्थविकिरणं कुर्यात् । ये देवाः पुरः सदोमिति जपेत्॥वाराहं प्रादुर्भावं च वाचयेत् । श्रीसूक्तमुदीरयेत् । ततस्तेन पञ्चगव्येन भुवनमभ्युक्षयेत्।तोरणानि च ( अर्चां शौचार्थं च स्थापयेत् । बृहत्स्नपने तदेवं स्यादन्यं नावकल्पयेत्।)अथार्घ्यः।एवं तोरणविन्यासे कृते भूपतिसत्तम॥सर्वे विघ्नाः क्षयं यान्ति परा वृद्धिश्च जायते॥ १॥इति श्रीविष्णु०ध०तृ०ख०मा०सं०

प्रतिष्ठाकल्पे तोरणवर्णनो नामाष्टनवतितमोऽध्यायः ॥९८॥ मार्कण्डेय उवाच॥ अथ पञ्चगव्यानि। तत्र कपिलाया गोः क्षीरम्। कृष्णायाश्च दधि। नीलायाश्च घृतम्। श्वेताया गोमयम्। ताम्रवर्णाया गोमूत्रम्।गायत्र्या गोमूत्रं गृह्णीयात्। गन्धद्वारेति गोमयम्। आप्यायस्वेति क्षीरम्। दधिक्राव्णेति दधि।घृतवती भुवनानामिति घृतम्। देवस्यत्वेति कुशोदकम्।अघमर्षणेन संयोज्य गायत्रीमुदीरयेत्। ततस्तेन पञ्चगव्येन भवनमभ्युक्षयेत्॥तोरणानि च, अर्चाशौचार्थमवस्थापयेत् ॥ बृहत्स्नपने तदेव स्यादन्यं वा कल्पयेत् ॥ अथार्घ्यकल्पना। भवति तत्र राजते पात्रे शङ्खबिल्वपद्मोशीर दर्भमूलदूर्वाक्षीराक्षतसिद्धार्थकतण्डुलानुपकल्पयेत्। तीर्थोदकेन प्लावयेत्। रथ अक्षेति मंत्रमुदीरयेत्। द्रविणं पापमन्यः द्रुपदं पवित्रं शङ्खमणिं श्रीसूक्तं काण्डात्काण्डेति पवित्रं च ततः शुभे दृढे स्वर्चिते भाण्डे पाद्यं कुर्यात् ॥ हिरण्यवर्णेत्यारभ्य ऋक्त्रयेण च पार्थिव ॥ आपोहिष्ठेति तिसृभिः शन्नोदेवीति चाप्यथ ॥ १ ॥ ब्रह्मशुक्रेन सूत्रेण पवित्रेण तथैव च ॥ वाचको वाचयेत्तत्र तीर्थमाहात्म्यमुत्तमम् ॥ २ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख० मा० व० सं० प्रतिष्ठाकल्पे पञ्चगव्यवर्णनो नामानवनवतितमोऽध्यायः ॥ ९९[1]॥ मार्कण्डेय उवाच ॥ अथार्चाशौचं भवति। तत्र मृन्मयाश्चित्रकर्मकृतां च शौचयेत्। उभयोर्दर्भपवित्रके शौचं कुर्यादधिवासनं च यद्द्रव्यं तद्द्रव्योक्तशौचं चादावेव कुर्यात्। ततोम्बुना गायत्र्या कुर्यात । आक्राम्येति द्वितीया मृदा अयं चात्रापरो मंत्रो भवति। अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे ॥ मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम् ॥ १ ॥ उद्धृतासि वराहेण कृष्णेन शतबाहुना ॥ मृत्तिके त्वं प्रयच्छेष्टं सर्वकामप्रदा भव ॥ तृतीयं भूतिस्त्वमिति भस्मना। इह गाव इति चतुर्थं गोमयेन। विष्णोः पृष्ठमसीति पञ्चमं गौरसर्षपैः ॥ बृहत्साम्ना षष्ठं त्रेताग्निभस्मना ॥ शाक्वरेणेति सप्तमं पञ्चगव्येन ॥ मनसः काममाकूतिरित्यष्टमं कुष्ठेन। हिरण्यवर्णेति नवमं सुवर्णोदकेन ॥ तरसमन्दीति दर्भपिञ्जलैर्दशमम् ॥ पावमानीभिस्तीर्थमृत्तिकाभिरेकादशम्। नदीमृदा द्वादशम् ॥ गिरयस्ते पर्वताग्रमृदा त्रयोदशम्। ऋषभेण जातशृङ्गेणोद्धृतमृदा चतुर्दशम् ॥ अश्वक्रान्तेति लाङ्गलोद्धृतमृदा पञ्चदशम् ॥ कूष्माण्डीति वल्मीकाग्रमृदा षोडशम् ॥ पृथ्वीदेवीति मन्त्रेण तीर्थमृदा सप्तदशम् ॥ सरोमृदा ब्रह्मजज्ञानेत्यष्टादशम् ॥ दधिक्राव्णेति दध्ना एकोनविंशम्। घृतवती घृतेन विंशतितमम् ॥ अघमर्षणेन रत्नैरेकविंशम् ॥ एवमेकविंशत्यात्मकेन सोमेन तां शौचयित्वा परमपावना मन्त्रा जप्तव्याः ॥ अघमर्षणं देवकृतं शुद्धवत्यस्तरत्समाः ॥ कूष्माण्डाः पावमान्यश्च दुर्गा देवी सरस्वती ॥ १ ॥ चान्द्रायणं च ऋषभं वामदेवं रथन्तरम् ॥ पौरुषं

१. 'वृषभम्' इति ख० ।

च तथा सूक्तं श्रीसूक्तमथवाप्सरम् ॥ २ ॥ अभिज्ञां च पवित्रं च चरितं वैष्णवं तथा ॥ वादित्रशब्दैर्जयशब्दमिश्रैर्वृतैस्तथा भूपवराङ्गनानाम् । शौचे निवृत्ते त्वधिवासनं वै कार्यं सुरार्चासु यथाभिधास्ये ॥ ३ ॥ इति श्रीविष्णु०ध० तृ० ख० मा० व०सं० अर्चाशौचकथनं नाम शततमोऽध्यायः ॥ १०० ॥ मार्कण्डेय उवाच ॥ अथार्चाशौचानन्तरं पवित्रकस्याचार्यायाः पश्चादधिवासनं कुर्यात् ॥ तत्र कमलकर्णिकायां ध्रुवा द्यौरिति मन्त्रेण दक्षिणशिरस्कं प्राक्छिरसं वा शय्यायां स्थापयेत्॥अतः पञ्चवर्णैः पञ्चभिरास्तरणैरास्तरयेत्। शुद्धावत्यश्चोदीरयेत्। ततो युवा सुवासा इति प्रच्छादनपटं दद्यात् ॥ गण्डोपधानं च । ततो गर्भमयं सप्तशीर्षमनन्तं नागं कुर्यात् । तं च शयने स्थापयेत् ॥ ततो जीवस्यावाहनं कुर्यात् शिवसंकल्पं चोदीरयेत् । ततस्त्वनन्तस्यावाहनं प्रयोजयेत् । ततोऽर्घ्यपाद्यमाचमनीयमनुलेपनमाल्यदीपधूपमधुपर्कप्रापणकमात्राभिः प्रत्येकं सावित्रेणानन्तरमर्चयेत् ॥ ततः सर्पसाम । नमोस्तु सर्पेभ्य इति योगेयोगेति मन्त्रं चोदीरयेत् ॥ अनन्तमाहात्म्यं च वा वदेत् ॥ ततो ध्रुवा द्यौरिति मंत्रेणानन्तोपरि श्रीभगवदर्चां पवित्रके स्थापयेत् ॥ ततो जीवस्यावाहनं कुर्यात् । शिवसङ्कल्पं जपेत् । ततो भगवन्तमावाहयेत् । ततः सर्वे भून्यस्तजानवः प्रणामं कुर्युः आगतश्च भगवानिति ब्रूयुः । ततः शङ्खपटहभेरीजयशब्दैः पूजयेयुः । ततोऽर्घ्यपाद्याचमनीयस्नानीयानुलेपनमाल्यधूपदीपमधुपर्कप्रापणकमात्रादानैः श्रीभगवन्तं प्रत्येकं सवित्रेणार्चयेत् । ततः स्वस्ति न इन्द्र इति जपेत् । ततो युवासुवासा इति श्रीभगवन्तं महता वासोयुगेनाच्छादयेत् युञ्जते मन इति पुष्पैरवकिरेत् । बोधश्चमा प्रतिबोधश्चेति सिद्धार्थैरवकिरेत् । प्रादुरभावानिति वाचयेत् । एवमधिवासनं कार्यम् ॥ अधिवासिते च भगवति अर्चास्थण्डिले वेदिं प्रतिष्ठाप्य आसनानि पादपीठानि च अर्चाशौचविधानेन वेदिमासनानि च शोधयेत् । ततः शङ्करगीतोक्तविधिना इज्यां सात्त्वतः कुर्यात् । इज्यासमकालमेव होमस्थण्डिले होता होमं वेदीशौचमासनानां सकृदेव विधत्ते ॥ इज्याहोमौ तु कर्तव्यौ प्रत्यहं त्वधिवासिते । पूजनं गीतनृत्यैश्च प्रतिष्ठा यावदागता । अधिवासनमेतत्ते मया सम्यगुदाहृतम् ॥ १ ॥ इति श्रीविष्णु० ध० तृ० ख० मा० व० सं० अधिवासनवर्णनो नामैकाधिकशततमोऽध्यायः ॥१०१॥छ ॥ मार्कण्डेय उवाच ॥ आवाहयाम्यहं जीवं बीजं सर्वगतं प्रभुम् ॥ पञ्चभावस्थितं देहे पञ्चधा च स्थितं पुनः ॥ १ ॥ वायव्येन तु भावेन पञ्चधावस्थितं पुनः ॥ आग्नेयेन तु भावेन पञ्चधावस्थितं तथा ॥ २ ॥ वारुणेन च भावेन पञ्चधावस्थितं प्रभुम् ॥ भूतात्मकत्वेन तथा पञ्चधावस्थितं पुनः ॥ ३ ॥ परमात्मानमत्युग्रमनुग्रं[1] जगदीश्वरम् ॥ सर्वगं सर्वधातारं सर्वेशमपराजितम् ॥ ४ ॥ अत्यर्थसूक्ष्मं वरदं क्षेत्रज्ञं प्रभुमीश्वरम् ॥

१ 'अनुजम्' इति ख० ।

भूतभव्यभविष्यस्य प्रभुं लोकनमस्कृतम् ॥ ५ ॥ गुणाधारं जगद्योनिं महद्भ्योपि महत्तरम् ॥ जीवदेव त्वमभ्येहि प्रविशार्चामिमां स्वयम् ॥ ६ ॥ कुरुष्व देवदेवेश सजीवं च तथानघ ॥ इदमर्घ्यमिदं पाद्यं धूपोऽयं प्रतिगृह्यताम् ॥ ७ ॥ इति श्रीवि०ध०तृ०ख०मा०व०सं० जीवावाहनं नाम द्व्युत्तरशततमोऽध्यायः ॥ १०२ ॥ वज्र उवाच ॥ आवाहनानि मे ब्रूहि देवतानां भृगूत्तम ॥ भवन्त्यावाहिता मन्त्रैर्यस्मात्सन्निहिताः सुराः ॥ १ ॥ मार्कण्डेय उवाच ॥ आवाहनानि ते वच्मि देवानां यदुनन्दन ॥ अथोक्तवर्जं केषांचित्केषांचित्पुनरेव ते ॥ २ ॥ सर्वस्यावाहनस्यान्ते श्लोकार्धं परिकीर्तितम् ॥ इदमर्घ्यं च पाद्यं च धूपोऽयं प्रतिगृह्यताम् ॥ ३ ॥ आवाहयाम्यहं देवौ नासत्यौ सूर्यनन्दनौ ॥ आगच्छेतां महाभागौ वरदौ चाश्विनौ शुभौ ॥ ४ ॥ वसूनावाहयिष्यामि देवानष्टौ वरप्रदान् ॥ आयान्तु वरदा देवा वसवः पापनाशनाः ॥ ५ ॥ विश्वानावाहयिष्यामि देवानद्भुततेजसः ॥ आयान्तु वरदाः सर्वे विश्वेदेवा महाबलाः ॥ ६ ॥ आवाहयाम्यङ्गिरसो देवानद्भुततेजसः ॥ आयान्त्वङ्गिरसो देवा महाबल पराक्रमाः ॥ ७ ॥ रुद्रानावाहयिष्यामि त्रिनेत्रान्वृषवाहनान् ॥ आयान्तु वरदा रुद्रास्त्रैलोक्यवरदाः शुभाः ॥ ८ ॥ आवाहयिष्याम्यादित्यान्वरदान्दीप्ततेजसः ॥ आयान्तु वरदाः सूर्याः सर्वे ते तेजसोल्वणाः ॥ ९ ॥ भृगूनावाहयिष्यामि देवान्दीप्ततपोधनान् ॥ आयान्तु भृगवो देवा वरदा दीप्ततेजसः ॥ १० ॥ सुरानावाहयिष्यामि मरुतस्तेजसाधिकाः ॥ आयान्तु मरुतो देवा वरदा भुवनेश्वराः ॥ ११ ॥ सुरानावाहयिष्यामि सर्वानेव दिवौकसः ॥ आगच्छन्तु सुराः सर्वे मन्त्रपूजाभिलाषिणः ॥ १२ ॥ दैत्यानावाहयिष्यामि महाबलपराक्रमान् ॥ आयान्तु दैत्या धर्मिष्ठा देवदेवानुगा मम ॥ १३ ॥ आवाहयिष्ये गन्धर्वान्रूपद्रविणसंयुतान् ॥ आयान्तु सर्वगन्धर्वा वरदाः कामरूपिणः ॥ १४ ॥ यक्षानावाहयिष्यामि धनाध्यक्षसमन्वितान् ॥ आयान्तु वरदा यक्षास्त्रैलोक्यविदिता मम ॥ १५॥ आवाहयिष्यामि तथा राक्षसान्विविधायुधान्॥ आयान्तु राक्षसा वीरा देवदेवानुयायिनः ॥ १६ ॥ आवाहयिष्यामि तथा विद्याधरगणानहम् ॥ विद्याधराः समायान्तु विविधा गगनङ्गमाः॥१७॥ आवाहयिष्यामि तथा किन्नरान्देवगायनान्॥ आयान्तु किन्नराः सर्वे सुस्वरास्तु सुलोचनाः ॥ १८॥ नागानावाहयिष्यामि भुजगान्सर्पगोचरान्॥ आयान्तु वरदा नागास्त्रैलोक्यविदिता मम ॥ १९ ॥ अहमावाहयिष्यामि तथैवाप्सरसः शुभाः ॥ समायान्तु महाभागा देवयोषा ममोज्ज्वलाः ॥ ॥ २० ॥ अहमावाहयिष्यामि सर्वास्त्रिदशपत्नयः ॥ आयान्तु वरदाः सर्वास्तप्तचामीकरप्रभाः ॥ २१ ॥ आवाहयिष्यामि तथा वरदा देवमातरः ॥ आयान्तु वरदाः सर्वा सुकेशाः सुखदाः शिवाः ॥ २२ ॥ पितॄनावाहयिष्यामि सूक्ष्मरूपधरानहम् ॥ आयान्तु पितरः

सर्वे गणस्थास्तु पृथक्पृथक् ॥ २३ ॥ आवाहयिष्यामि तथा सुपर्णान्बलवत्तरान् ॥ सुपर्णास्तु समायान्तु विष्णुतेजो
पबृंहिताः ॥ २४ ॥ आवाहयामि वरदान्सर्वानेव प्रजापतीन् ॥ प्रजाध्यक्षाः समायान्तु त्रैलोक्यपरिपालकाः ॥ २५ ॥ आवाह
यामि देवेन्द्रान्देवान्भुवननायकान् ॥ आयान्तु देवनाथा मे वरदाः कामरूपिणः ॥ २६ ॥ मनूनावाहयिष्यामि प्रभुत्वे जगतः
स्थितान् ॥ आयान्तु मनवः सर्वे तपसा नष्टकिल्बिषाः ॥ २७ ॥ आवाहयिष्याम्योषध्यः सर्वप्राणिधराः शुभाः ॥ ओषध्यश्च समा
यान्तु सर्वाः कामप्रदाः शुभाः ॥ २८ ॥ ऋषीनावाहयिष्यामि तपसा द्योतितप्रभान् ॥ आयान्तु ऋषयः सिद्धाः सर्वे मे दीप्ततेजसः ॥
शैलानावहायिष्यामि सर्वौषधिसमन्वितान् ॥ २९ ॥ आयान्तु भूधराः शैलाः सर्वे मे स्थावरेश्वराः ॥ द्रुमानावाहयिष्यामि नानारूपधरानहम्
॥ ३० ॥ द्रुमाः सर्वे समायान्तु मनोमारुतरंहसः ॥ आवाहयिष्यामि तथा पातालान्सर्वगोचरान् ॥ ३१॥ आयान्तु सर्वे पाताला दैत्यस्थाना ह्य
विन्दिताः ॥ द्वीपानावाहयिष्यामि सर्वानद्भुतधारिणः ॥ ३२ ॥ आयान्तु द्वीपा लोकानां स्थानभूता जगत्प्रियाः ॥ लोकानावाहयिष्यामि
स्थानभूतान्मनोहरान् ॥ ३३ ॥ आयान्तु लोकाः सकलाः सर्वे मे भूतभावनाः ॥ आवाहयिष्यामि तथा समुद्राञ्जगतः प्रियान् ॥ ३४ ॥
समुद्रा मे समायान्तु रसाधारा जगत्प्रियाः ॥ वर्षानावाहयिष्यामि सर्वभूताश्रयानिह ॥ ३५ ॥ आगच्छन्तु तथा चेह वर्षाः सर्वमनोहराः ॥
आवाहयिष्यामि तथा चतुरः सागरानहम् ॥ ३६ ॥ सागराः शीघ्रमायान्तु सर्वे तोयधरा मम ॥ नदीस्त्वावाहयिष्यामि वरदा लोकमातरः
॥ ३७ ॥ आयान्तु वरदा नद्यः सर्वपापहराः शुभाः ॥ आवाहयिष्यामि तथा सर्वानभ्रगणानहम् ॥ ३८ ॥ आयान्त्वभ्रा महाभागाः सर्वे चाशु
चरा मम ॥ आवाहयिष्यामि तथा पिशाचान्सर्वगानहम्॥ पिशाचास्तु समायान्तु सर्वे मे कामरूपिणः॥३९॥ आवाहयिष्यामि तथा स्कन्दस्य
पार्श्वगानहम् ॥ ४० ॥ नानारूपाः समायान्तु स्कन्दस्य पार्श्वगा मम ॥ आवाहयिष्यामि तथा देवानां पार्षदानहम् ॥ ४१ ॥
नानारूपाः समायान्तु देवानां पार्षदा मम ॥ आवाहयिष्यामि तथा हरस्य पार्षदानहम् ॥ नानारूपाः समायान्तु हरस्य पा
र्षदा मम ॥ ४२ ॥ आवाहयिष्यामि तथा मातरो लोकमातरः ॥ ४३ ॥ आयान्तु मातरो देव्यो वरदाः सर्वगाः शुभाः ॥ ग्रहाना
वाहयिष्यामि सर्वलोकेश्वरानहम् ॥ ४४ ॥ ग्रहाः सर्वे समायान्तु दीप्ता भुवननायकाः ॥ आवाहयिष्यामि तथा नक्षत्रान्वरदानहम् ॥ ४५ ॥
आयान्तु सर्वे नक्षत्राः सर्वे भुवननायकाः ॥ दिशस्त्वावाहयिष्यामि प्रागाद्याः सुमनोहराः ॥ ४६॥ आगच्छन्तु दिशः सर्वाः सर्वभूतसुखावहाः॥

वीथ्यस्त्वावाहयिष्यामि दिव्या नवग्रहाश्रयाः ॥ ४७ ॥ आयान्तु वीथ्यः सकला ग्रहनक्षत्रमण्डिताः ॥ अहमावाहयिष्यामि मुहूर्तान्सूक्ष्मरूपिणः ॥ ४८ ॥ मुहूर्ताः शीघ्रमायान्तु कालस्यावयवाः शुभाः ॥ ऋतूनावाहयिष्यामि षडहं भुवनेश्वरान् ॥ ४९ ॥ आयान्तु ऋतवः सर्वे जगच्चक्रप्रवर्तकाः ॥ आवाहयिष्यामि तथा पञ्चसंवत्सरानहम्॥५०॥आयान्तु वत्सराः सर्वे कालचक्रप्रवर्तकाः ॥युगानावाहयिष्यामि चतुरो दीप्ततेजसः॥५१॥ आगच्छन्तु युगाः सर्वे चतुर्मूर्तिव्यवस्थिताः ॥ अहमावाहयिष्यामि मनूंश्चैव चतुर्दश॥५२॥ मन्वन्तराः समायान्तु त्रिदशावधिसंस्थिताः ॥ कालमावाहयिष्यामि देवं सावयवं शुभम् ॥५३॥ आगच्छ भगवन्काल देवदेव जनार्दन ॥ देवानावाहयिष्यामि यज्ञमूर्तिधरानहम् ॥५४॥ देवा सर्वैः समायान्तु वरदा बहुरूपिणः ॥ अहमावाहयिष्यामि विद्यास्थानान्यशेषतः॥५५॥सर्वाणीह समायान्तु लोकानां हितकाम्यया॥शास्त्रानावाहयिष्यामि शान्तान्दर्शनवस्थितान्॥५६॥शस्त्राणि शीघ्रमायान्तु चमूनां मण्डनं परम्॥अस्त्राण्यावाहयिष्यामि त्रैलोक्यस्य हितानि वै॥५७॥ सर्वे चेह समायान्तु धर्मसेतुप्रवर्तकाः ॥ अहमावाहयिष्यामि वेदशास्त्राण्यनेकशः ॥ ५८ ॥ वेदशास्त्राः समायान्तु जगद्रक्षणतत्पराः ॥ अहमावाहयिष्यामि सर्वांस्त्रिदशवाहनान् ॥ ५९ ॥ इह सर्वे समायान्तु सर्वे त्रिदशवाहनाः ॥ नागानावाहयिष्यामि देवपुत्रान्महाबलान् ॥ ६० ॥ देवोपवाह्या नागेन्द्राः शीघ्रमायान्तु सत्वराः ॥ निधीनावाहयिष्यामि शङ्खपद्मपुरोगमान् ॥ आयान्तु निधयः सर्वे सर्वलोकैकभावनाः ॥६१ ॥ आह्वानकार्यं यदि सङ्गमध्यादेकस्य कार्यं यदुवंशनाथ ॥ कार्यादथेहा तु तदेकवत्स्यादाह्वानमन्त्रस्य यथानुरूपाः ॥ ६२ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे प्रतिष्ठाकल्पे देवसंवाह्वानं नाम त्र्युत्तरशततमोऽध्यायः ॥ १०३ ॥ मार्कण्डेय उवाच ॥ आवाहयाम्यहं देवं ब्रह्माणं परमेष्ठिनम् ॥ जगतोऽस्य समुत्पत्तिस्थितिसंहारकारणम् ॥ १ ॥ चतुर्वेदं चतुर्वक्त्रं चातुर्वर्ण्यप्रभुं प्रभुम् ॥ चतुराश्रमगोप्तारं वरदं भूतभावनम् ॥ २ ॥ पद्मयोनिं जगद्योनिं यज्ञयोनिं जगत्पतिम् ॥ आत्मयोनिमनाधृष्यं यज्ञवाहं जगत्पतिम् ॥ ३ ॥ यज्ञेशं यज्ञमूर्तिं च त्रैलोक्यस्यैककारणम् ॥ सर्वगं नारदं सौम्यं परमं परमेश्वरम् ॥ ४ ॥ भूतभव्यभवन्नाथं योगज्ञेयं सनातनम् ॥ आगच्छ भगवन्ब्रह्मन्यजमानस्य वृद्धये ॥ ५ ॥ इदमर्घ्यमिदं पाद्यं धूपं चेदं प्रगृह्यताम् ॥ आवाहयाम्यहं देवं देवदेवं हुताशनम् ॥६ ॥ जगतोऽस्य समुत्पत्तिस्थितिसंहारकारकम् ॥ देवमूर्तिं तदाधारं सर्वदेवमुखं प्रभुम् ॥ ७ ॥ पिङ्गेक्षणं पिङ्गजटं धूमकेतुं विभावसुम् ॥ शुकयानगमं देवं सर्वाभरणभूषितम् ॥ ८ ॥ सर्वगं वरदं भानुं जठरस्थं च देहिनाम् ॥ तेजोमूर्तिं दुराधर्षं सप्तजिह्वं महाबलम् ॥ ९ ॥ सप्तार्चिषं सप्तमुनिं समित्सप्तकमच्युतम् ॥

विष्णोरंशमनिर्देश्यं भानवं जातवेदसम् ॥ १० ॥ पावनं पुष्टिदं सौम्यं भक्तानां भूतिवर्धनम् ॥ याजकं यजमानं च पुष्ट्या विभज सर्वशः ॥ ११ ॥ इदमर्घ्यमिदं पाद्यं धूपं चेदं प्रगृह्यताम् ॥ आवाहनान्यतो वक्ष्ये सर्वेषां पार्थिवोत्तम ॥ १२ ॥ सर्वस्यावाहनस्यान्ते श्लोकोऽयं परिकीर्तितः ॥ प्रविश्यार्चामिमां सम्यङ् मया भक्त्या विनिर्मिताम् ॥ १३ ॥ इदमर्घ्यमिदं पाद्यं धूपं चेदं प्रगृह्यताम् ॥ ध्रुवमावाहयिष्यामि सर्वदेवगणेश्वरम् ॥ १४ ॥ निबद्धं भ्राम्यते येन भचक्रं वातरज्जुभिः ॥ एहि मे ध्रुव देवेश केशवाचिन्त्यविक्रम ॥ १५ ॥ सर्वग्रहगणाध्यक्ष सर्वलोकनमस्कृत ॥ आवाहयिष्याम्याकाशं विमानशतमण्डितम् ॥ १६ ॥ तृतीयं देवदेवस्य पदं विष्णोर्महात्मनः ॥ एहि मे भगवन्सौम्य निरालम्ब नभस्तल ॥ १७॥ अप्रमेयातिगम्भीर विमानशतमण्डित ॥ ऊर्ध्वमावाहयिष्यामि चानन्तां महतीं दिशम् ॥ १८ ॥ अप्रमेयां निरालम्बां चन्द्रसूर्यांशुवर्जिताम् ॥ आगच्छेह महाभागे सततं सिद्धसेविते ॥ १९ ॥ अनन्ते विपुले देवि निर्मले हितकारिणि ॥ आवाहयाम्यधस्तात्तु दिशं शेषेण पालिताम् ॥ २० ॥ नागदैत्योरगगणैः सततं च निषेविताम् ॥ गम्भीरे विपुले भीमे बहुस्थानातिमण्डिते ॥ २१ ॥ एहि मे रत्नबहुले बहुरूपे महाबले ॥ आवाहयिष्ये वरदं सहस्रांशुं दिवाकरम् ॥ २२ ॥ तेजोमूर्तिं दुराधर्षं भक्तानामभयप्रदम् ॥ एहि देव जगन्नाथ ऋक्सामयजुषां पते ॥ २३ ॥ त्रैलोक्यमण्डले दीप सर्वव्याधिविनाशन ॥ आवाहयाम्यहं देवमादित्यमुदकेशयम् ॥ २४ ॥ स्निग्धवैदूर्यसङ्काशं वरुणं सुमहाद्युतिम् ॥ एहि देव जलाध्यक्ष यादोगणमहेश्वर ॥ २५ ॥ नागदैत्योरगगणैः सततं सेविताच्युत ॥ आवाहयाम्यहं चन्द्रं शीतांशुममृतप्रभम् ॥ २६ ॥ ओषधीशं द्विजाध्यक्षं नयनानन्दकारकम् ॥ एहि मे भगवञ्चन्द्र शशाङ्क मृगलाञ्छन ॥ २७ ॥ भक्तानुकम्पिन्सततं सर्वनक्षत्रपूजित ॥ भौममावाहयिष्यामि तेजोमूर्तिं दुरासदम् ॥ २८ ॥ भद्रमूर्तिमनिर्देश्यं वक्रं रुधिरसप्रभम् ॥ एहि मे भगवन्भौम अङ्गारकसमप्रभ ॥ २९ ॥ त्वयि सर्वं समायत्तं भूतलेऽस्मिञ्छुभाशुभम् ॥ स्कन्दमावाहयिष्यामि षण्मुखं वरदं शिशुम् ॥ ३० ॥ देवारिसेनामथनं पार्वत्यानन्दवर्धनम् ॥ एहि देव कुमाराद्य महिषासुरतस्कर ॥ ३१ ॥ कार्तिकेय जगन्नाथ मयूरवरवाहन ॥ बुधमावाहयिष्यामि बोधनं जगदीश्वरम् ॥ ३२ ॥ चान्द्रिं ग्रहगणाध्यक्षं तेजोमूर्तिं दुरासदम् ॥ एहि शीतांशुजाचिन्त्य जगज्जिष्णो जनार्दन ॥ ३३ ॥ महाबल महाभाग महाबाहो महाद्युते ॥ विष्णुमावाहयिष्यामि शङ्खचक्रगदाधरम् ॥ ३४ ॥ अतसीकुसुमश्यामं पीतवाससमच्युतम् ॥ एहि मे देवदेवेश प्रजानिर्माणकारक ॥ ३५ ॥ नारायण सुदुष्पार महेष्वास धनुर्धर ॥ शक्रमावाहयिष्यामि देवं सुरगणेश्वरम् ॥ ३६ ॥ वज्रपाणिं महाबाहुं गोब्राह्मणहिते रतम् ॥ एहि देव सहस्राक्ष देवारिबलसूदन ॥ ३७ ॥

ऐरावतग धर्मज्ञ शचीहृदयनन्दन ॥ जीवमावाहयिष्यामि देवेश्वरपुरोहितम् ॥ ३८ ॥ बृहस्पतिं बृहद्वाक्यं वेदवेदांगपारगम् ॥ एहि जीव महाभाग जीवभूत महीतले॥३९॥सम्यग्वृद्धिस्तवायत्ता सततं भूमिवर्धन ॥ देवीमावाहयिष्यामि पार्वतीं वरदाशुभाम् ॥४०॥ हरस्य दयितां भार्यां चार्वङ्गीं भूतिवर्धिनीम्॥एहि देवि जगन्मातर्मेनाहृदयनन्दिनि॥४१॥पवित्रे वरदे सौम्ये नित्यं भक्तजनप्रिये॥शुक्रमावाहयिष्यामि भार्गवं जगदीश्वरम्॥४२॥ नित्यं सर्वधनाध्यक्षं तपसा द्योतितप्रभम् ॥ एहि शुक्र महाभाग षोडशार्चे वरप्रद॥४३॥प्रभुस्त्वं वरदो नित्यं वर्षावर्षस्य निग्रहे॥ आवाहयाम्यहं देवं प्रजाध्यक्षमकल्मषम् ॥ ४४ ॥ भक्तानुकम्पिनं देवं प्रजानिर्माणकारकम् ॥ एहि देव प्रजाध्यक्ष प्रजानिर्माणकारक ॥४५॥ त्वयि देव समायत्तं प्रजानामभवोद्भवम् ॥ सौरिमावाहयिष्यामि शनैश्चारिणमच्युतम् ॥ ४६ ॥ तपस्विनमनाधृष्यं भक्तानामभयप्रदम् ॥ एहि तीक्ष्णांशुजाचिन्त्य भावाभावप्रदर्शक ॥४७॥ त्वयि सर्वं समायत्तं राज्ञां भूमौ शुभाशुभम् ॥ आवाहयाम्यहं देवं गजवक्त्रं गणेश्वरम् ॥४८॥ विघ्नेशं विघ्नहर्तारं पार्वती हृदयप्रियम् ॥ एहि देव गणाध्यक्ष लम्बोदर महाभुज ॥ ४९ ॥ कार्यसिद्धिः समायत्ता त्वयि सर्वेश देहिनाम्॥ राहुमावाहयिष्यामि दैत्येंद्रं ग्रहतां गतम् ॥५०॥ केशवात्तवरं वीरं तपसा दग्धकिल्बिषम् ॥ एह्येहि दैत्यप्रवर वरदाचिन्त्यविक्रम ॥ ५१ ॥ तमोमूर्ते दुराधर्ष विपरीताम्बराम्बर ॥ आवाह याम्यहं देवं विश्वकर्माणमच्युतम् ॥ ५२ ॥ सर्वासां देवतानां तु सदा शिल्पप्रवर्तकम् ॥ एहि देववराचिन्त्य सर्वशिल्पप्रवर्तक ॥ ५३ ॥ एहि देववराचिन्त्य सदा शिल्पप्रवर्तक ॥ त्वयि सर्वेश सर्वेषां कर्मणामाश्रिता गतिः ॥ ५४ ॥ केतुमावाहयिष्यामि केतुं सर्वदिवौकसाम् ॥ब्राह्मण्यं सर्वधर्मज्ञं भक्तानामभयप्रदम् ॥ ५५ ॥ धूमकेतो इहाभ्येहि हुताशनसमप्रभ॥ शिखाकरालविकच पूजकार्तिविनाशन॥५६॥आवाहयिष्यामि शुभां कृत्तिकां देवपूजिताम् ॥ एहि साधारणे देवि ज्येष्ठे दक्षसुते शुभे॥५७॥ आवाहयामि वरदां रोहिणीं चन्द्रावल्लभाम् ॥ एहि रोहिणि धर्मज्ञे ध्रुवकर्मसु शोभने॥५८॥आवाहयामि वरदामिल्विलां शशिवल्लभाम् ॥ एहि मे इल्विले देवि मृदुकर्मसु शोभने॥५९॥ रुद्रमावाहयिष्यामि त्रिनेत्रं शूलपाणिनम् ॥ एहि शङ्कर सर्वात्मन्महागणगणेश्वर ॥६०॥ आर्द्रामावाहयिष्यामि नक्षत्रं बाहुसंज्ञितम् ॥ एह्यार्द्रे चारुसर्वाङ्गि दारुणे रुद्रसम्मिते ॥६१ ॥ आवाहयिष्यामि दितिं तपसा दग्धकिल्बिषाम् ॥ आदित्यागणि धर्मज्ञे एहि देवि महाव्रते ॥ ६२ ॥ ऋक्षमावाहयिष्यामि धर्मज्ञं तु पुनर्वसुम् ॥ पुनर्वसो इहागच्छ चरकर्मप्रसाधक ॥ ६३ ॥ तिष्यमावाहयिष्यामि नक्षत्रं क्षिप्रसंज्ञितम ॥ एहि पुष्य महाभाग पोषं वर्धय सर्वतः ॥ ६४ ॥ सर्पानावाहयिष्यामि त्रैलोक्यानन्तगोचरान् ॥ आयान्तु सर्वतः सर्पाः सौम्यरूपा भवन्तु ते ॥ ६५ ॥ आवाहयामि चाश्लेषां भक्तानां श्रीविव

धिनीम् ॥ आश्लेषे त्वमिहाभ्येहि दारुणे विजयप्रदे ॥ ६६ ॥ पितॄनावाहयिष्यामि मर्त्यमूर्तिधरानहम् ॥ आयान्तु पितरः शीघ्रं सुधाकव्यभुजोऽव्य
याः ॥ ६७ ॥ मघामावाहयिष्यामि उग्रनक्षत्रमञ्जसा ॥ एहि मे सुभगे देवि सर्वाघविनिषूदनि ॥ ६८ ॥ भगमावाहयिष्यामि भक्तसौभाग्यवर्धनम् ॥
एहि देववराचिन्त्य भक्तसंकटनाशक ॥ ६९ ॥ ऋक्षमावाहयिष्यामि पूर्वफल्गुनसंज्ञकम् ॥ एहि भागि महाभाग उग्रकर्मप्रसाधक ॥ ७० ॥
आवाहयिष्याम्यर्यमणमादित्यं तेजसां निधिम् ॥ अर्यमंस्त्वं समभ्येहि भक्तसङ्कटनाशन ॥ ७१ ॥ ऋक्षमावाहयिष्यामि उत्तराफल्गुनीं शुभाम् ॥
एहि त्वं सुभगे देवि ध्रुवे सर्वाङ्गसुन्दरि ॥ ७२ ॥ हस्तमावाहयिष्यामि सावित्रं क्षिप्रमञ्जसा ॥ एहि सावित्र धर्मज्ञ भक्तानां पापनाशक ॥ ७३ ॥
आवाहयाम्यहं देवं त्वष्टारमसितद्युतिम् ॥ एहि मे भगवंस्त्वष्टः प्रजापालनतत्पर ॥ ७४ ॥ चित्रामावाहयिष्यामि चित्रमूर्तिं मनोहराम् ॥ एहि
मे वरदे देवि मृदुकर्मप्रसाधिके ॥ ७५ ॥ वायुमावाहयिष्यामि सर्वगं दीप्ततेजसम् ॥ देव वायो त्वमभ्येहि सर्वभूतजगत्प्रिय ॥ ७६ ॥ स्वाति
मावाहयिष्यामि नित्यमुत्तरसर्वगाम् ॥ देवि स्वाति त्वमभ्येहि चरकर्मसु शोभने ॥ ७७ ॥ आवाहयिष्यामीन्द्राग्नी सहितौ दीप्ततेजसौ ॥ इंद्रा
ग्नेहि जगन्नाथ एह्यग्ने विजयप्रद ॥ ७८ ॥ ऋक्षमावाहयिष्यामि विशाखामग्रतेजसम् ॥ विशाखे त्वमिहाभ्येहि देवि साधारणे शुभे ॥ ७९ ॥ मित्र
मावाहयिष्यामि देवं दीप्तांशुतेजसम् ॥ एहि मित्र महाभाग भक्तानामभयं कुरु ॥ ८० ॥ ऋक्षमावाहयिष्यामि त्वनुराधां वरप्रदाम् ॥ अनुराधे
त्वमभ्येहि मृदुकर्मसु शोभने ॥ ८१ ॥ शक्रोस्यावाहनं प्रोक्तं ज्येष्ठायाः शृणु पार्थिव ॥ ज्येष्ठामावाहयिष्यामि नक्षत्रं शक्रदैवतम् ॥ ८२ ॥ ज्येष्ठे
देवि त्वमभ्येहि दारुणे चारुलोचने ॥ देवमावाहयिष्यामि निर्ऋतिं वीरवन्दितम् ॥ ८३ ॥ एहि देव विरूपाक्ष महाबल सदाश्रय ॥
मूलमावाहयिष्यामि नक्षत्रं दारुणं महत् ॥ ८४ ॥ एहि मूल महाभाग भक्तानामभयप्रद ॥ आपस्त्वावाहयिष्यामि सर्वगा वरदाः शुभाः ॥८५॥
आपस्त्वावाहयिष्यामि पूर्वाषाढेति संज्ञितम् ॥ एहि त्वमुग्रे वरदे पूर्वाषाढेतिसंज्ञिते ॥ ८६ ॥ ऋक्षमावाहयिष्यामि यत्तदभिजिदुच्यते ॥ एहि
धिष्ण्यवरिष्ठाद्य क्षिप्रकर्मप्रसाधक ॥ ८७ ॥ ऋक्षमावाहयिष्यामि श्रवणं सर्वकामदम् ॥ प्रसन्नस्त्वं समभ्येहि चरकर्मप्रसाधक ॥ ८८ ॥ धनिष्ठे
त्वमिहाभ्येहि चरकर्मप्रसाधिके ॥ ८९ ॥ ऋक्षमावाहयिष्यामि नाम्ना शतभिषां शुभाम् ॥ आगच्छ त्वं शतभिषे चरकर्मसु शोभने ॥ ९० ॥
अजैकपादं वरदं रुद्रमावाहयाम्यहम् ॥ आगच्छ रुद्र वरद त्रिशूलपरमायुध ॥ ९१ ॥ ऋक्षमावाहयिष्यामि पूर्वभद्रपदामहम् ॥ एहि भद्रपदे पूर्वे
उग्रकर्मप्रसाधनि ॥ ९२ ॥ आहिर्बुध्न्यं महाभागं रुद्रमावाहयाम्यहम् ॥ आहिर्बुध्न्य समभ्येहि जटाजूटोपशोभित ॥९३॥ ध्रुवमावाहयिष्यामि

देशे भद्रपदोत्तराम् ॥ एहि त्वं सुमहाभागे मम भद्रपदोत्तरे ॥ ९४ ॥ आवाहयाम्यहं देवं पूषणं पापनाशकम् ॥ पूषन्सम्यगिहाभ्येहि सर्वकल्मष नाशक ॥ ९५ ॥ ऋक्षमावाहयिष्यामि रेवतीं भीरुदर्शनाम् ॥ एहि रेवति धर्मज्ञे मृदुकर्मप्रसाधके ॥ ९६ ॥ ऋक्षमावाहयिष्यामि क्षिप्रमश्विनि संज्ञकम् ॥ एह्यश्विनि महाभागे वरदे कामदायिनि ॥ ९७ ॥ यममावाहयिष्यामि धर्मराजमथाच्युतम् ॥ एहि धर्मभृतां श्रेष्ठ वैवस्वत महाभुज ॥ ९८ ॥ ऋक्षमावाहयिष्यामि उग्रं भरणिसंज्ञकम् ॥ एहि त्वं देवि भरणि सुभगे चारुदर्शने ॥९९॥ प्राचीमावाहयिष्यामि सूर्योदयविभूषणाम् ॥ एहि त्वं वरदे पूर्वे शुभकर्मप्रसाधनि ॥ १०० ॥ दिशमावाहयिष्यामि वरदां पूर्वदक्षिणाम् ॥ वह्निप्रिये समभ्येहि वरदे पूर्वदक्षिणे ॥ १०१ ॥ अहमावाहयिष्यामि दक्षिणां दक्षिणां दिशम् ॥ दक्षिणे त्वं समभ्येहि सर्वकर्मशुभप्रदे ॥ १०२ ॥ दिशमावाहयिष्यामि शुभां दक्षिणपश्चिमाम् ॥ एहि त्वं नैर्ऋते देवि सततं भूतिवर्धिनि ॥ १०३ ॥ दिशमावाहयिष्यामि वारुणीं वरदां सदा ॥ आगच्छ पश्चिमे देवि वरदे वरुणप्रिये ॥१०४॥ आवाहयिष्यामि दिशं वायवीं पश्चिमोत्तराम् ॥ वरदे त्वं समभ्येहि वायव्ये पश्चिमोत्तरे ॥ १०५ ॥ आवाहयामि धनदं देवं वैश्रवणं प्रभुम् ॥ राजराज समभ्येहि सर्वयज्ञेश्वराधिप ॥ १०६ ॥ दिशमावाहयिष्यामि सौम्यां धनदपालिताम् ॥ उत्तरे त्वं समभ्येहि सर्वधर्मफलप्रदे ॥ १०७ ॥ दिशमावाहयिष्यामि शुभां प्रागुत्तरामहम् ॥ एहि त्वं सुभगे देवि सततं शिवपालिते ॥ १०८ ॥ सर्वानावाहयिष्यामि पूर्णकुम्भेषु सागरान् ॥ रत्नाध्यक्षाः समायान्तु चत्वार इह सागराः ॥ १०९ ॥ ऐशान्यां दिशि यः कुम्भः पूर्वस्तस्यां तु सागरः ॥ आयातु शीघ्रमेवेह तरङ्गोर्मिसमाकुलः ॥ ११० ॥ शीघ्रमभ्येहि निलय यादसां पूर्वसागर ॥ तरङ्गशतसंक्रांत बालभास्करमण्डल ॥ १११ ॥ आग्नेये च समायात दक्षिणे दक्षिणः शिवः ॥ बहुरत्नप्रभापुञ्जविमिश्र सलिलाशय ॥ ११२ ॥ यादसां निलयाभ्येहि क्षिप्रं दक्षिणसागर ॥ तरङ्गधौत पादाग्र त्रिकूटशिखराच्युत ॥ ११३ ॥ पश्चिमायाः समायातु कुम्भे दक्षिणपश्चिमे ॥ रत्नपुञ्जमहाज्वालाविराजितमहोदक ॥ ११४ ॥ तरङ्गमण्डिताभ्येहि क्षिप्रं पश्चिमसागर ॥ अस्तार्कबिम्बसंक्रान्तगतमण्डलदुर्दृश ॥ ११५ ॥ उत्तरश्च तथाभ्येतु कुम्भे वै पश्चिमोत्तरे ॥ हिमाद्रिशिखरच्छायाक्षीरोदसदृशः प्रभुः ॥ ११६ ॥ महापवित्रसलिल शीघ्रमुत्तरसागर ॥ इहाभ्येहि महाभाग यजमानाभिवृद्धये ॥ ११७ ॥ आवाहितानां कर्तव्यं भूमौ कृत्वा ततः शिरः ॥ प्रणाममभिवादं च ततो मन्त्रमुदीरयेत् ॥ ११८ ॥ भवतां हि प्रसादेन भवतां प्रतिपूजने ॥ प्रयतिष्ये यथाशक्त्या तन्मेऽनुज्ञातुमर्हथ ॥ ११९ ॥ युष्माकं पूजनं कर्तुं केन शक्यं यथाविधि ॥ युष्मत्पूजाविहीनेन केन लभ्यं महत्फ

लम् ॥१२०॥ ततः कर्तुं यथाशक्त्या भवतां प्रतिपूजनम् ॥ वरदाः प्रयतिष्यामि तन्मेऽनुज्ञातुमर्हथ ॥१२१॥ स्वांस्वां दिशमधिष्ठाय दिक्पाला
दीप्ततेजसः ॥ उत्सादयन्तु सकलान्विघ्नान्यान्समुपस्थितान् ॥ १२२ ॥ विनायका विघ्नकराः समोग्रा यज्ञद्विषो ये पिशिताशनाश्च ॥
सिद्धार्थकैर्वज्रसमानकल्पैर्मया निरस्ता विदिशः प्रयान्तु ॥ १२३ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे ब्रह्मादिदेवाह्वान
वर्णनो नाम चतुरुत्तरशततमोऽध्यायः ॥१०४॥ मार्कण्डेय उवाच ॥ लोकानावाहयिष्यामि हंसरूपान्मनोहरान्॥ आयान्तु वाहनत्वेन ये स्थिताः
परमेष्ठिनः ॥१॥ वृषमावाहयिष्यामि चतुष्पादं ककुद्मिनम् ॥ वृषाभ्येहि महाभाग धर्ममूर्ते वरप्रद॥२॥शूलमावाहयिष्यामि गुणाधारं महाद्युतिम्॥
एहि शूल महाभाग दैत्यनाथगणान्तक ॥ ३ ॥ अहमावाहयिष्यामि देवं नन्दीश्वरं प्रभुम् ॥ अभ्येहि नन्दिन्भगवन् सर्वलोकनमस्कृत ॥ ४ ॥
आवाहयामि वरदं वीरभद्रं महाबलम् ॥ अभ्येहि वीरभद्राद्य महागणगणेश्वर ॥ ५ ॥ ज्वरमावाहयिष्यामि त्रिपादं त्रिभुजं प्रभुम् ॥ ज्वराभ्येहि
महाभाग सततं चरणोज्ज्वल ॥ ६ ॥ देवीमावाहयिष्यामि भद्रकालीं सुखप्रदाम् ॥ आगच्छ वरदे दुर्गे सर्वलोकनमस्कृते ॥ ७ ॥ आवाहयामि
पौलोमीं वरदां नित्यनन्दिनीम् ॥ शक्रपत्नि त्वमभ्येहि वरदे कामरूपिणि ॥ ८ ॥ नागमावाहयिष्यामि तथैरावणसंज्ञितम् ॥ इहाभ्येहि महाभाग
शक्रनाग जयावह ॥ ९ ॥ वज्रमावाहयिष्यामि सर्वभेदकमाशुगम् ॥ शीघ्रं वज्र त्वमभ्येहि सर्वदुष्टनिबर्हण ॥ १० ॥ हयानावाहयिष्यामि छन्दोरू
पान्मनोहरान् ॥ आगच्छन्तु ममाद्येह तुरगा व्योमगोचराः ॥ ११ ॥ अहमावाहयिष्यामि दण्डसंज्ञं बलोत्कटम् ॥ दण्ड शीघ्रमिहाभ्येहि महाबलपरा
क्रम ॥१२॥ अहमावाहयिष्यामि पिङ्गलं सुमहाबलम् ॥ लोकसाक्षिंस्त्वमभ्येहि पिङ्गलाय महाबल ॥१३॥ ध्वजमावाहयिष्यामि चित्रं सूर्यसमप्रभ
म् ॥ धर्म शीघ्रं त्वमभ्येहि सूर्यध्वजगताच्युत ॥ १४ ॥ देवीमावाहयिष्यामि सूर्यभां कामरूपिणीम् ॥ देवि त्वं तूर्णमागच्छ सर्वलोकनमस्कृते ॥
॥ १५ ॥ राज्ञीमावाहयिष्यामि सूर्यपत्नीं सुरूपिणीम् ॥ आगच्छ वरदे राज्ञि जगद्धारिणि पूजिते ॥१६॥ अहमावाहयिष्यामि सूर्यपत्नीं सुवर्चसाम्॥
ध्याये देवि त्वमागच्छ कृताकृतविचारिणि ॥१७॥ अहमावाहयिष्यामि दशचन्द्रमसो हयान् ॥ सर्वे शीघ्रमिहायान्तु चन्द्राश्वाः कामरूपिणः॥१८॥
अहमावाहयिष्यामि कान्तिं त्रिदशवल्लभाम् ॥ कान्ते शीघ्रं त्वमभ्येहि शशाङ्कदयिते शुभे ॥१९॥ शोभामावाहयिष्यामि काङ्क्षितां भुवनेश्वरीम् ॥
शोभे शीघ्रं त्वमभ्येहि सर्वलोकैकसुन्दरि ॥ २० ॥ दिनमावाहयिष्यामि समस्तध्वान्तनाशकम् ॥ दिन शीघ्रं त्वमभ्येहि दर्शिताखिलमण्डल ॥
॥ २१ ॥ रात्रिमावाहयिष्यामि सर्वभूतसुखावहाम् ॥ रात्रि देवि त्वमभ्येहि सर्वभूतवरप्रदे ॥२२॥ सन्ध्यामावाहयिष्यामि देवीं ब्राह्मणपूजिताम् ॥

आगच्छ वरदे सन्ध्ये सर्वभूतनमस्कृते ॥ २३ ॥ स्वाहामावाहयिष्यामि वह्नेर्भागं विभावरीम् ॥ स्वाहेऽभ्येहि महाभागे वरदे कामरूपिणि ॥ २४॥
वेदानावाहयिष्यामि शुभरूपधरानहम् ॥ आयान्तु वाहनत्वेन धूम्रकेतुव्यवस्थिताः ॥ २५ ॥ आवाहयिष्ये महिषं महाबलपराक्रमम् ॥ आगच्छे
ह महाभाग सर्वदुष्टनिबर्हण ॥ २६ ॥ दण्डमावाहयिष्यामि सर्ववाहनपूजितम् ॥ एहि दण्ड महाभाग सर्वसत्त्वविनाशन ॥ २७ ॥ देवीमावाहयि
ष्यामि धूम्रोर्णां चारुलोचनाम् ॥ आगच्छ देवि धूम्रोर्णे सर्वलोकनमस्कृते ॥ २८ ॥ कालमावाहयिष्यामि सर्वत्राहतपूजितम् ॥ कालाभ्येहि
महाभाग सर्वसत्त्वभयङ्कर ॥ २९ ॥ मृत्युमावाहयिष्यामि देवीं सर्वहरामहम् ॥ देवि मृत्यो त्वमभ्येहि सर्वगे कामरूपिणि ॥ ३० ॥ आवाहयामि
वरदं चित्रगुप्तं सुखप्रदम् ॥ चित्रगुप्त समभ्येहि सर्वत्र समदर्शन ॥ ३१ ॥ अहमावाहयिष्यामि विरूपाक्षं महाबलम् ॥ विरूपाक्ष समभ्येहि निशा
चरगणेश्वर ॥ ३२ ॥ उग्रमावाहयिष्यामि महामोहमिति श्रुतम् ॥ उग्राभ्येहि महाभाग महाग्रीव महागते ॥ ३३ ॥ गौरीमावाहयिष्यामि
जलाधिपतिसुन्दरीम् ॥ एहि गौरि महादेवि वरदे कामरूपिणि ॥३४॥ हंसानावाहयिष्यामि समुद्रेण सुपूजितान्॥ आयान्तु वरदा हंसा रसाचारा
विहङ्गमाः ॥ ३५ ॥ पाशमावाहयिष्यामि सर्वाकर्षणतत्परम् ॥ पाशाभ्येहि महाभाग सर्वसत्त्ववशङ्कर ॥ ३६ ॥ गङ्गामावाहयिष्यामि सर्वकल्मष
नाशिनीम् ॥ गङ्गे शीघ्रं त्वमभ्येहि पीयूषसदृशोदके ॥ ३७ ॥ अहमावाहयिष्यामि यमुनां च यमानुजाम् ॥ आगच्छ यमुने देवि सर्वकल्मष
नाशिनि ॥ ३८ ॥ शिवामावाहयिष्यामि वायोः पत्नीं प्रभावतीम् ॥ शिवेऽभ्येहि महाभागे वरदे कामरूपिणि ॥ ३९ ॥ अहमावाहयिष्यामि
शिबिकां परमायताम् ॥ शिबिके त्वमिहाभ्येहि सर्वसत्त्वसुखङ्करि ॥ ४० ॥ नरमावाहयिष्यामि नराधिपतिवाहनम् ॥ नर शीघ्रं त्वमभ्येहि तथा
नृपतिनायक ॥ ४१ ॥ शङ्खमावाहयिष्यामि निधिप्रवरमुत्तमम् ॥ शीघ्रं शङ्ख त्वमभ्येहि धनाधिपतिवल्लभ॥ ४२ ॥ पद्ममावाहयिष्यामि निधि
प्रवरमुत्तमम् ॥ पद्म शीघ्रं त्वमभ्येहि महाविभवकारक ॥ ४३ ॥ देवीमावाहयिष्यामि पार्वतीं हरवल्लभाम् ॥ देवि शीघ्रं त्वमभ्येहि महाविभव
कारिके ॥ ४४ ॥ अहमावाहयिष्यामि जयन्तं शक्रनन्दनम् ॥ जयन्त शीघ्रमभ्येहि सर्वासुरविमर्दन ॥ ४५ ॥ आवाहयिष्ये वरदं पुष्करं कामगं
शुभम ॥ पुष्कर त्वमिहाभ्येहि सर्वज्ञानप्रकाशक॥४६॥ ज्योत्स्नामावाहयिष्यामि त्रैलोक्यस्यैकसुन्दरि ॥ आगच्छ वरदे ज्योत्स्ने सर्वभूतसुखङ्करि
॥४७॥ अहमावाहयिष्यामि त्वामेव नलकूबरम् ॥ समभ्येहि महाभाग धनदस्यात्मसम्भव ॥ ४८॥ आवाहयिष्यामि तथा रविपुत्रं यमाग्रजम् ॥
सूर्यपुत्र समभ्येहि भक्तकल्याणकारक ॥४९॥ धर्ममावाहयिष्यामि सर्वलोकसुखावहम् ॥ धर्माभ्येहि महाभाग जगतां परिपालक ॥५०॥ अर्यमा

वाहयिष्यामि सर्वलोकसुखावहम् ॥ अर्थभ्येहि महाभाग सर्वबाधाविनाशक॥५१॥ काममावाहयिष्यामि फलं सर्वस्य कारण ॥ काम शीघ्रं त्वमभ्येहि सर्वप्राणिहृदि स्थित ॥५२॥ रात्रिमावाहयिष्यामि देवीं सर्वजगत्प्रियाम् ॥ अभ्येहि वरदे देवि रति त्वमपराजिते ॥५३ ॥ निद्रामावाहयिष्यामि सर्वलोकसुखप्रदाम् ॥ आगच्छ वरदे निद्रे त्रैलोक्यपरिमोहिनि॥५४॥आवाहयिष्ये वरदां महादेवीं सरस्वतीम्॥शीघ्रं देवि त्वमभ्येहि सर्वकामवरप्रदे ॥ ५५ ॥ अहमावाहयिष्यामि तथा धन्वंतारिं प्रभुम् ॥ धन्वन्तरे त्वमभ्येहि क्षीरोदार्णवसम्भव ॥५६॥ अहमावाहयिष्यामि उच्चैःश्रवसमश्वपम् ॥ हयराज समभ्येहि क्षीरोदार्णवसंभव ॥ ५७॥ येषामावाहनं प्रोक्तं तेषां मन्त्रमिदं पठेत् ॥ अश्विनौ प्रणतः स्तौमि दर्भपाणिरतन्द्रितः ॥ ५८ ॥ आवाहनानां च गणं तथोक्तं महाशुभं पापहरं पवित्रम् ॥ आवाहिताः सन्निहितास्त्ववश्यं देवा भवन्त्युत्तमवंशजाताः ॥ ५९ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीये खण्डे मार्कण्डेयवज्रसंवादे लोकाद्यावाहनवर्णनो नाम पञ्चोत्तरशततमोऽध्यायः ॥ १०५॥ मार्कण्डेय उवाच ॥ आवाहनान्यतो वच्मि यान्यहं यदुनन्दन ॥ तेषामन्ते पठेच्छ्लोकं प्रत्येकस्य महाभुज ॥ १ ॥ याजकं यजमानं च श्रेयसाभ्येत्य योजय ॥ इदमर्घ्यमिदं पाद्यं धूपोयं प्रतिगृह्यताम् ॥ २ ॥ आवाहयाम्यहं देवं वासुदेवं जगत्पतिम् ॥ अमृताध्मातमेघाभं विद्युद्दृशवसाससम्³ ॥ ३ ॥ चतुर्वक्रं महाबाहुं चतुर्वेदधरं प्रभुम् ॥ चतुराश्रमगोतारं चातुर्वण्यधरं तथा ॥ ४ ॥ चतुर्युगं चतुष्केतुं चतुर्मूर्तिधरं परम् ॥ चतुरंघ्रितनुं नाथं चतुर्विधविभावनम् ॥ ५ ॥ जरायुजस्य कर्त्तव्यं तथा चाण्डोद्भवस्य च ॥ सर्वगं वरदं नित्यं सूक्ष्मं स्थूलमजं विभुम् ॥ ६ ॥ आत्मस्थं च बहिस्थं च दूरस्थं चान्तिकं च तम् ॥ गुणाधारं गुणैर्हीनं गुणातीतं गुणोत्तरम् ॥ ७ ॥ सगुणं निर्गुणात्मानं चाजेयं जगतः परम् ॥ एहि मे पुण्डरीकाक्ष शरणागतवत्सल ॥८॥ क्षरपर्यन्तवक्रान्तनिरस्तासुरमण्डल ॥ गदावेगनिरस्तोग्रदैत्यनाथगणेश्वर ॥९॥ उत्फुल्लचारुकमलविराजितकराम्बुज ॥ शङ्खनादोद्भवश्वासमूढीकृतमहासुर ॥ १० ॥ महीकराम्बुजन्यस्तचरणद्वयराजित ॥ कौस्तुभोद्भूतगोजालहतासुरविलोचन ॥ ११ ॥ वनमालाङ्कितोरस्क किरीटोद्भासिताननं ॥ यज्ञ यज्ञोपयज्ञाङ्गयज्ञयोने जगद्गुरो ॥ १२ ॥ सर्वकामप्रदाचिन्त्य सर्वशक्तिबलान्वित ॥ आवाहयाम्यहं देवं सङ्कर्षणमयोनिजम् ॥ १३ ॥ शशाङ्कशतसङ्काशं सजलाम्बुदवाससम् ॥ क्रोधाग्निशमिताशेषकल्पांतभुवनत्रयम् ॥ १४ ॥ वाङ्मनःकायसम्भूतमलत्रितयनाशनम् ॥ एहि संकर्षणाचिन्त्य देव भक्तजनप्रिय ॥ १५ ॥ लाङ्गूलाकृष्टदैत्येन्द्र दीनेक्षणनिरीक्षण ॥ मुसलाग्रविनिर्भिन्नतमोमूर्तिविना

१ 'रतिम्' इति पुस्तकान्तरे । २ 'सर्वामयविनाशन' इति पाठान्तरम् । ३ 'भास्वरारम्' इत्यपि पाठान्तरम् ।

शन ॥ १६ ॥ हार्दमूर्ते निशीथस्य तमसश्च विनाशक ॥ देवमावाहयिष्यामि प्रद्युम्नमपराजितम् ॥ १७ ॥ दूर्वाङ्कुरदलश्यामं शशाङ्कांशुसमाम्बरम् ॥ कामं कामप्रदं शान्तं कमनीयं सुशोभितम् ॥ १८ ॥ सर्वमानभृतां देवं मनोविषयगोचरम् ॥ प्रद्युम्नाभ्येहि देवेश प्रद्योतितचराचर ॥ १९ ॥ तेजोमूर्ते दुराधर्ष सूर्यकोटिसमप्रभ ॥ अज्ञातमध्यपर्यन्त देवारिगणनाशन ॥ २० ॥ चापकृष्टिविनिर्मुक्तशराहतजगत्त्रय ॥ आवाहयाम्यहं देवं चानिरुद्धं जगद्गुरुम् ॥२१॥ पद्मपत्राग्रसङ्काशं रक्ताम्बरविभूषणम् ॥ अरुद्धमार्गं सर्वत्र दीप्तानलसमप्रभम् ॥२२॥ कार्यं परममीशानं जगत्कारणकारणम् ॥ अनिरुद्ध त्वमभ्येहि व्याप्ताशेषचराचर ॥ २३॥ आकाशतुल्यसद्धस्त्रविदारितसुराहित ॥ चर्मसञ्छादिताशेषभुवनादित्यविक्रम॥२४॥ (सर्वेषां प्राणिनां कर्म्म संसारपरिपालक ॥२४॥ ) आवाहयिष्ये वरदं चानन्त दीप्ततेजसम् ॥ फणावलिगताशीर्षमहीमण्डलधारिणम् ॥२५॥लांगलालिङ्गितकरं मुसलासक्तविग्रहम् ॥ महोच्छ्रितेन तालेन तथा चिह्नेन राजितम्॥२६॥एह्यनन्त महाभाग शेष[illegible] धरणीधर ॥ शशाङ्कशतसङ्काश तथाम्बरसुशोभित ॥ २७ ॥ आधारः सर्वभूतानां त्वमेको भूतभावनः ॥ त्वयेदं धार्यते विश्वं त्रैलोक्यं च जगत्पते ॥ २८ ॥ लक्ष्मीमावाहयिष्यामि विष्णोर्वक्षसि संस्थिताम् ॥ पद्माननां पद्मकरां शशांकसदृशाम्बराम् ॥ २९ ॥ हितस्थां सर्वलोकस्य वरदां कामरूपिणीम् ॥ सर्वगां सर्वजननीं देवीं त्रिभुवनेश्वरीम् ॥ ३० ॥ आगच्छ वरदे लक्ष्मि दुर्धरे भूतभावने ॥ हरिप्रिये विशालाक्षि सर्वलोकनमस्कृते ॥ ३१ ॥ यत्र त्वं तत्र सकलं त्रैलोक्यं वरवर्णिनि ॥ युनक्षि भोगैः सकलं स्मृतिप्राप्तं जनं शुभम् ॥ ३२ ॥ तार्क्ष्यमावाहयिष्यामि मनोमारुतरंहसम् ॥ पक्षवातसमुद्धूतसमस्तभुवनत्रयम् ॥ ३३ ॥ गरुडेहि समभ्येहि दीप्तानलचयोपम ॥ महाविषतमोग्रस्तनिर्विषीकरणाच्युत ॥ ३४ ॥ तालमावाहयिष्यामि केतुं संकर्षणस्य तु ॥ एहि मे भगवँस्ताल समस्तभुवनेश्वर ॥ ३५ ॥ झषमावाहयिष्यामि कामकेतुं वरप्रदम् ॥ एहि मे मकराग्र्येह समस्तभुवनेश्वर ॥ ३६ ॥ ऋष्यमावाहयिष्यामि ऋषिराजं महाबलम् ॥ एहि ऋष्य महाभाग कर्ममूर्ते दुरासद ॥३७॥ देवमावाहयिष्यामि नृसिंहं ज्ञानरूपिणम् ॥ दंष्ट्राकरालवदनमलातमसितेक्षणम् ॥ ३८ ॥ सहस्रयमसक्रोधं सहस्रेन्द्रपराक्रमम् ॥ सहस्रधनदं स्फीतं मनसोप्यतिशीघ्रगम् ॥ ॥ ३९ ॥ विद्युज्जिह्वं व्यादितास्यं भ्रुकुटीकुटिलाननम् ॥ वह्निज्वालावलीपुञ्जदुर्निरीक्ष्यमुखश्रियम् ॥४० ॥ आगच्छेह नृसिंहाद्य महाबलपराक्रम ॥ वज्रतीक्ष्णनखाक्रान्तमहादैत्येन्द्रजीवित ॥ ४१ ॥ अज्ञानध्वान्तमातङ्गभङ्गविस्पष्टकेसर ॥ महामन्त्रकपाटोग्रदारुणाचिन्त्यविक्रम ॥ ४२ ॥

१ कोष्टान्तर्गतः पाठः खपुस्तके नास्ति ।

देवमावाहयिष्यामि कापिलीं तनुमाश्रितम् ॥ तेजोनिधानमजितं सागरात्मजवाडवम् ॥ ४३ ॥ एहि मे कपिलाद्येह परमात्मन्सनातन ॥
ध्यानवीक्षितसद्भाव सांख्यमार्गप्रवर्तक ॥ ४४ ॥ देवमावाहयिष्यामि नृवराहं महाबलम् ॥ भिन्नाञ्जनचयश्याम लीलोद्धृतवसुन्धर ॥ ४५ ॥
आगच्छ नृवराहेह हिरण्याक्षविनाशन ॥ शेषाभभोगविन्यस्तमहाचरणपङ्कज ॥ ४६ ॥ शङ्खनादोद्भव त्राहि नियन्ता सुरनायकम् ॥ देवमा
वाहयिष्यामि वराहं वरदर्पितम् ॥ ४७ ॥ बालेन्दुलेखादंष्ट्राग्रविभासितजगत्त्रय ॥ विस्मयोत्फुल्लनयन भूमिवीक्षितविग्रह ॥ ४८ ॥ बाले
न्दुतुल्यदंष्ट्राग्र लीलोद्धृतवसुन्धर ॥ एहि मे भगवन्देव वराहामितविक्रम ॥ ४९ ॥ निरस्ताशेषदैत्येंद्र दीनभक्तजनोद्धर ॥ धर्ममावा
हयिष्यामि सर्वभूतसुखावहम् ॥ ५० ॥ दुर्विज्ञेयं बहुद्वारं खलमूर्तिदुरासदम् ॥ एहि धर्म ममाभ्येहि भुवनत्रयपालक ॥ ५१ ॥ समस्तपापशमन
सर्वबाधाविनाशन ॥ रुद्रमावाहयिष्यामि तेजोमूर्तिं दुरासदम् ॥ ५२ ॥ ऐश्वर्यमतिगम्भीरं सर्वसंहारकारकम् ॥ एहि मे भगवन्रुद्र जटामण्डल
दुर्दृश ॥ ५३ ॥ निर्दग्धाशेषभुवन तृतीयेक्षणतेजसा ॥ देवमावाहयिष्यामि ब्राह्मणं दीप्ततेजसम् ॥ ५४ ॥ चतुर्मुखं चतुर्बाहुं गुणाधीनं गुणोत्तरम् ॥
देवदेव त्वमभ्येहि पितामह सुरेश्वर ॥ ५५ ॥ समस्तभुवनाध्यक्ष जगत्कारणकारण ॥ भूमिमावाहयिष्यामि धारिणीं सर्वदेहिनाम् ॥ ५६ ॥
सर्वभूतप्रतिष्ठां च क्षितिं क्षोणीं सरस्वतीम् ॥ एहि मे वरदे देवि वसुधे भूतभाविनि ॥ ५७ ॥ सर्वाश्रये महाभागे देववद्भयहारिणि ॥ ५८ ॥
शङ्खमावाहयिष्यामि नभोमूर्तिमथाव्ययम् ॥ ५९ ॥ शब्दयोनिं निरालम्बं समस्तभुवनाश्रयम् ॥ एह्येहि शङ्खप्रवर पाञ्चजन्य महास्वन ॥ ६० ॥
शब्दमात्रहताशेषमहादानवमण्डल ॥ पद्ममावाहयिष्यामि समस्तभुवनाश्रयम् ॥ ६१ ॥ अपां मूर्तिमयं सौम्यं पुण्डरीकमिति स्मृतम् ॥
एहि पद्म महाभाग भूतभव्यभवप्रभो ॥ ६२ ॥ लक्ष्मीनिलय विस्तीर्ण ब्रह्मयोने जगन्मय ॥ चक्रमावाहयिष्यामि क्षरत्पर्यन्तमण्डलम् ॥ ६३ ॥
वज्रनाभं विशालाक्षं वायुमूर्जितमव्ययम् ॥ कालचक्रं जगच्चक्रं धर्मचक्रं सुदर्शनम् ॥ ६४ ॥ नित्यं सततगं देवं तृप्तं दानवशोणितैः ॥
एहि चक्रामितशित जगत्पालनतत्पर ॥ ६५ ॥ देवेन्द्रहृदयत्रासतमोनाशनतत्पर ॥ गदामावाहयिष्यामि तेजोमूर्तिं दुरासदाम् ॥ ६६ ॥
गायत्रीं देवजननीं कालरात्रीं भयङ्करीम् ॥ एहि कौमोदकि गदे समस्तासुरनाशिनि ॥ ६७ ॥ यासां त्वं गह्वरा प्रोक्ता वैष्णवी तु सुदुर्धरा ॥
अहमावाहयिष्यामि सावन्तं नाम लाङ्गलम् ॥६८॥ आगच्छ लाङ्गलास्येह व्याहर्तिं भुवनत्रयम् ॥ अहमावाहयिष्यामि सौधन्वं मुसलं प्रभुम् ॥
॥ ६९ ॥ आगच्छ मुसलाद्येह देवारिगणसूदन ॥ चापमावाहयिष्यामि शार्ङ्गं रिपुनिषूदनम् ॥ ७० ॥ आगच्छ चाप वरद देवासुरगणप्रिय ॥

शरमावाहयिष्यामि मोहनं रिपुमोहनम् ॥ ७१ ॥ एहि विद्धारिबलज गच्छारिस्त्रिभुवनेश्वर ॥ चर्म चावाहयिष्यामि ख्यातमावरणेति यत् ॥७२॥
चर्माभ्येहि विशाल त्वं सर्वस्यावरणं स्मृतम् ॥ खड्गमावाहयिष्यामि नन्दकं नाम नामतः ॥ ७३ ॥ एहि खड्ग ममाशेषदैत्यनाथकुलान्तक ॥
अहमावाहयिष्यामि वनमालां सुखावहाम् ॥ ७४ ॥ वनमाले त्वमभ्येहि बुद्धाशेषजगत्त्रये ॥ मणिमावाहयिष्यामि कौस्तुभं केशवाङ्गगम् ॥७५॥
कौस्तुभ त्वमिहाभ्येहि मरीचिविकचोद्भव ॥ देवमावाहयिष्यामि हरिं हयशिरोधरम् ॥ ७६ ॥ शशाङ्कशतसङ्काश वेदोद्धरणनिश्चित ॥
हयग्रीव त्वमभ्येहि शङ्खचक्रगदाधर ॥ ७७ ॥ वेदाहरणदुःखार्तसमाश्वासितपद्मज ॥ अहमावाहयिष्यामि ऋग्वेदं पदभूषितम् ॥ ७८ ॥
ऋग्वेद त्वमिहाभ्येहि ब्रह्ममूर्ते वरप्रद ॥ अहमावाहयिष्यामि यजुर्वेदमतिप्रियम् ॥ ७९ ॥ यजुर्वेद त्वमभ्येहि देवेशगणनायक ॥
अहमावाहयिष्यामि देवमाथर्वणं शुभम् ॥ ८० ॥ आगच्छाथर्ववेदेह सर्वकर्मफलप्रद ॥ देवमावाहयिष्यामि भोगिभोगासनस्थितम् ॥ ८१ ॥
भोगिभोगासनासीन समागच्छ जगद्गुरो ॥ देवमावाहयिष्यामि भोगिभोगशयं प्रभुम् ॥ ८२ ॥ लक्ष्मीसहायं वरदं लोकसाक्षिणमव्ययम् ॥
एह्येहि पुण्डरीकाक्ष भोगिभोगाशयाच्युत ॥ ८३ ॥ त्रैलोक्यनाथ गोविन्द मधुकैटभसूदन ॥ देवमावाहयिष्यामि विष्णुदेवं त्रिविक्रमम् ॥ ८४ ॥
समस्तभुवनातीत पादाक्रान्तजगत्त्रय ॥ त्रिविक्रम त्वमभ्येहि दैत्यदीनाक्षिवीक्षित ॥ ८५ ॥ विकचोत्फुल्लनयन त्रिदशैः शतमीक्षित ॥
अहमावाहयिष्यामि विश्वरूपधरं विभुम् ॥ ८६ ॥ श्वसन्तमनिशं वक्त्रैर्भूतग्राममशेषतः ॥ सृजंति च महाराज सर्वभूतान्यनेकशः ॥ ८७ ॥
धारयन्तं शरीरेण सर्वं जगदिदं तथा ॥ विश्वरूप त्वमभ्येहि सर्वायुधविभूषित ॥ ८८ ॥ सर्वभूतेन तातेन नानावर्णधरापह ॥ देहस्थाशेषभुवन
जगत्कारणकारण॥८९॥दुर्निरीक्ष्यातिगम्भीर मायादर्शितविग्रह ॥ देवमावाहयिष्यामि मत्स्यं सलिलगोचरम्॥९०॥मत्स्यदेव त्वमभ्येहि लोकजी
वधराच्युत ॥ हंसमावाहयिष्यामि देवं ज्ञानप्रदं विभुम्॥९१॥हंस शीघ्रं त्वमभ्येहि सर्वज्ञानविनाशन॥कूर्ममावाहयिष्यामि धृतमन्दरपर्वतम्॥९२॥
एह्येहि भगवन्कूर्म श्यामोत्पत्तिकराच्युत ॥ देवमावाहयिष्यामि स्त्रीरूपं धर्ममीश्वरम् ॥ ९३ ॥ स्त्रीरूपधारिन्नभ्येहि सुरसोमप्रदायक ॥ नरमा
वाहयिष्यामि देवं तपसि निष्ठितम् ॥ ९४ ॥ नराभ्येहि महाभाग धर्ममूर्ते जगत्पते ॥ देवमावाहयिष्यामि तथा नारायणं प्रभुम् ॥ ९५ ॥
नारायण समभ्येहि सर्वपापहराव्यय ॥ हरिमावाहयिष्यामि देवेशं कनकप्रभम् ॥ ९६ ॥ हरे देव त्वमभ्येहि परदर्पविनाशक ॥ कृष्णमावा
हयिष्यामि सजलाम्बुदसन्निभम् ॥ ९७ ॥ कृष्णाभ्येहि महाभाग देवदेव जगत्प्रिय ॥ देवमावाहयिष्यामि दत्तात्रेयं तपोन्वितम् ॥ ९८ ॥ दत्तात्रेय

त्वमभ्येहि वेदोद्धरणतत्पर ॥ अहमावाहयिष्यामि वाल्मीकिं तपसां निधिम् ॥ ९९ ॥ वाल्मीके त्वमिहाभ्येहि वेदोद्धरणतत्पर ॥ राममावाहयि
ष्यामि हतक्षत्रियमण्डलम् ॥ १०० ॥ भार्गवाभ्येहि मे नाथ जटामण्डलदुर्दृश ॥ आवाहनं करिष्यामि परशुं दीप्ततेजसम् ॥ १०१ ॥ आगच्छ
परशो शीघ्रं लक्षीकृतवसुन्धर ॥ पृथुमावाहयिष्यामि चक्रवर्तिनमूर्जितम् ॥ १०२ ॥ पृथो शीघ्रं त्वमभ्येहि पृथ्वीनाथ महाबल ॥ राममावाह
यिष्यामि कृतराक्षसनिग्रहम् ॥ १०३ ॥ राम शीघ्रं त्वमभ्येहि धर्मसेतो दुरासद ॥ अहमावाहयिष्यामि प्रद्युम्नं भरतं विभुम् ॥ १०४ ॥ भरत त्व
मिहाभ्येहि कृतगन्धर्वनिग्रह ॥ अहमावाहयिष्यामि लक्ष्मणं रिपुनाशनम् ॥ १०५ ॥ लक्ष्मण त्वमिहाभ्येहि मेघनादास्त्रभास्कर ॥ अहमावा
हयिष्यामि शत्रुघ्नं दीप्ततेजसम् ॥ १०६ ॥ शत्रुघ्न शीघ्रमभ्येहि लवणासुरमर्दन ॥ व्यासमावाहयिष्यामि वेदव्यासं जगद्गुरुम् ॥ १०७ ॥
वेदव्यास त्वमभ्येहि सर्वधर्मप्रदर्शक ॥ अहमावाहयिष्यामि धर्मपुत्रं युधिष्ठिरम् ॥ १०८ ॥ युधिष्ठिर त्वमभ्येहि सर्वधर्मभृतांवर ॥ अहमावाहयि
ष्यामि भीमं मारुतपुत्रकम् ॥ १०९ ॥ भीमसेन त्वमभ्येहि शत्रुनाश तमोहर ॥ अहमावाहयिष्यामि पार्थं रिपुनिषूदनम् ॥ ११० ॥ अर्जुनाभ्ये
हि मे शीघ्रं लघ्वीकृतवसुन्धर ॥ अहमावाहयिष्यामि नकुलं रूपशोभितम् ॥ १११ ॥ नकुल त्वमिहाभ्येहि शङ्खचर्मधराच्युत ॥ अहमावाहयि
ष्यामि सहदेवं रणप्रियम् ॥ ११२ ॥ सहदेव त्वमभ्येहि रूपद्रविणसंयुत ॥ कृष्णामावाहयिष्यामि स्वर्गलक्ष्मीं मनोहराम् ॥ ११३ ॥ याज्ञसे
नि त्वमभ्येहि लक्षीकृतवसुन्धरे ॥ सीतामावाहयिष्यामि रामपत्नीं यशस्विनीम् ॥ ११४ ॥ सीते देवि त्वमभ्येहि महीतलसमुक्षिते ॥ अह
मावाहयिष्यामि देवकीं कृष्णमातरम् ॥११५॥ देवकि त्वं समभ्येहि देवमातर्जगत्प्रिये ॥ अहमावाहयिष्यामि यशोदां जगतः प्रियाम् ॥११६॥
यशोदे त्वमिहाभ्येहि संवर्धितजनार्दने ॥ देवीमावाहयिष्यामि एकानाशीति विश्रुताम्॥११७॥एकानाशे त्वमभ्येहि कृष्णरक्षार्थमुद्यते ॥ देवीमावाह
यिष्यामि रुक्मिणीं कृष्णवल्लभाम् ॥ ११८ ॥ रुक्मिणि त्वमिहाभ्येहि जगतामेकसुन्दरि ॥ देवीमावाहयिष्यामि सत्यभामां मनोहराम् ॥११९ ॥
सत्यभामे त्वमभ्येहि देवि केशववल्लभे ॥ देवीस्त्वावाहयिष्यामि कृष्णपत्नीरहं शुभाः ॥१२०॥ देव्यः सर्वाः समायान्तु गान्धारीप्रमुखास्त्विह ॥
राममावाहयिष्यामि मदविभ्रान्तलोचनम् ॥ १२१ ॥ कुण्डलैकधरं शान्तं वनमालाविभूषितम् ॥ एहि राम महाभाग रेवतीदयिताच्युत ॥१२२॥
हतप्रलम्बसीराग्रव्याकृष्टयमुनोदक ॥ कृष्णमावाहयिष्यामि तोयपूर्णाम्बुदच्छविम् ॥ १२३ ॥ चाणूरबलदर्पघ्नं कंसासुरविनाशनम् ॥ एहि कृष्ण
महाभाग लक्षीकृतवसुन्धर ॥ १२४ ॥ निरस्तदानवश्रेष्ठ धृतगोवर्धनाचल ॥ अहमावाहयिष्यामि प्रद्युम्नं मकरच्छविम् ॥ १२५ ॥ देवारिशम्बर

प्राणतस्करं रतिवल्लभम् ॥ प्रद्युम्न त्वमिहाभ्येहि परसैन्यविनाशन ॥ १२६ ॥ अहमावाहयिष्यामि अनिरुद्धं जगद्गुरुम् ॥ बाणासुरमहासैन्यसमुद्र वडवानल ॥ १२७ ॥ अनिरुद्ध त्वमभ्येहि महाबलपराक्रम ॥ खड्गपाणे महाभाग ऊषाहृदयवर्द्धन ॥ १२८ ॥ साम्बमावाहयिष्यामि गदापाणिं महाबलम् ॥ एहि साम्ब महाभाग नाशिताशेषदानव ॥ १२९ ॥ अहमावाहयिष्यामि युयुधानं बलोत्कटम् ॥ युयुधान त्वमभ्येहि दीर्घबाहोऽरिमर्दन ॥ १३० ॥ अहमावाहयिष्यामि सौभद्रमपराजितम् ॥ वसुभद्रं च धर्मज्ञं नीलाम्बरधरावुभौ ॥ १३१ ॥ वासुदेवप्रतीहारौ प्राप्तहस्तौ सुलोचनौ ॥ तप्तजाम्बूनदाकारौ महाबलपराक्रमौ ॥ १३२ ॥ सुभद्र शीघ्रमागच्छ पूर्वद्वारस्य वामतः ॥ गणैः सानुचरैः सार्द्धं भव सन्निहितः सदा ॥ १३३ ॥ अहमावाहयिष्यामि तथाषाढं बलान्वितम् ॥ यज्ञतातं च धर्मज्ञं पीताम्बरधरावुभौ ॥ १३४ ॥ नीलजीमूतसङ्काशौ तथा मुद्गरधारिणौ ॥ सङ्कर्षणप्रतीहारौ चारुरूपौ मनोहरौ ॥ १३५ ॥ आषाढ त्वमिहागच्छ दक्षिणद्वारवामतः ॥ गणैः सानुचरैः सार्धं भव सन्निहितः सदा ॥ १३६ ॥ यज्ञतात त्वमभ्येहि द्वारदक्षिणतो भव ॥ गणैः सानुचरैः सार्धं भव सन्निहितः सदा ॥ १३७ ॥ (जयमावाहयिष्यामि दीप्ततेजसमच्युतम् ॥ विजयं च विशालं च पाटलाम्बरधारिणौ ॥ १३८ ॥ शशांकांशुप्रतीकाशौ तथोभौ खड्गधारिणौ ॥ ) प्रद्युम्नस्य प्रतीहारौ कामदेवौ सुवर्चसौ ॥ १३९ ॥ जय शीघ्रं त्वमभ्येहि पश्चिमद्वारवामतः ॥ गणैः सानुचरैः सार्धं भव संनिहितः सदा ॥ १४० ॥ विजय त्वमिहाभ्येहि द्वारदक्षिणतो भव ॥ गणैः सानुचरैः सार्धं भव सन्निहितः सदा ॥ १४१ ॥ अहमावाहयिष्यामि तथा मोदं जगत्प्रियम् ॥ प्रमोदं च महावीर्यं श्वेताम्बरधरावुभौ ॥ १४२ ॥ सिन्दूरारुणसङ्काशौ शक्तिहस्तौ बलोत्कटौ ॥ अनिरुद्धप्रतीहारौ महाबलपराक्रमौ ॥ १४३ ॥ आमोद शीघ्रमभ्येहि द्वारदक्षिणतो भव ॥ गणैः सानुचरैः सार्धं भव सन्निहितः सदा ॥ १४४ ॥ सर्वानावाहयिष्यामि वासुदेवगणानहम् ॥ वासुदेवसमाकारान्वासुदेवपराक्रमान् ॥ १४५ ॥ प्रद्युम्नस्य समाकारान्प्रद्युम्नाभपराक्रमान् ॥ प्रद्युम्नस्य गणाः शीघ्रमायांतु भुवनेश्वराः ॥ १४६ ॥ सर्वकामप्रदा वीरा सर्वेशाः सर्वशक्तयः ॥ सर्वानावाहयिष्यामि अनिरुद्धगणानहम् ॥ १४७ ॥ अनिरुद्धसमाकाराननिरुद्धपराक्रमान् ॥ अनिरुद्धगणाः शीघ्रमायान्तु भुवनेश्वराः ॥ १४८ ॥ सर्वकामप्रदा वीरा सर्वेशाः सर्वशक्तयः ॥ प्रादुर्भावगतस्यैव विष्णोरमिततेजसः ॥ १४९ ॥ नोक्तमावाहनं यत्र वासुदेवोक्तमञ्जसा ॥ कार्यमावाहनं तत्र सर्वगस्य महात्मनः ॥ अथ वा विष्णु रूपोक्तमेतत्सारं तवेरितम् ॥ १५० ॥ आवाहने ये कथितास्तु मन्त्रा ज्ञेयास्त एवेह विबोधनेऽपि ॥ आवाहने तत्र विबोधने तु बुधैः प्रयोज्यं यदुवंश

नाथ॥ १६१ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे शेषसर्वदेवावाहनवर्णनो नाम षड्त्तरशततमोऽध्यायः ॥ १०६ ॥
मार्कण्डेय उवाच ॥ प्रोक्तो विबोधने वीर मंत्रो हि न दिवौकसाम् ॥ वासुदेवस्य वक्ष्यामि तव राजन्निबोधनम् ॥ १ ॥ देवं विबोधयिष्यामि वासुदेवमजं विभुम् ॥ अनादिमध्यपर्यन्तं महाबलपराक्रमम् ॥ २ ॥ अनन्तं सर्वगं नाथं महद्भ्योपि महत्तरम् ॥सूक्ष्मातिसूक्ष्मं दूरस्थं सन्निकर्षगतं तथा ॥ ३ ॥ नारायणं मृदुकरं देवं शार्ङ्गधनुर्धरम् ॥ अतसीकुसुमश्यामं पीतवाससमच्युतम् ॥ ४ ॥ विबुद्धः पुण्डरीकाक्षः शरणागतवत्सलः ॥ संसारसरसीमग्नभग्ननागकृतकृप ॥ ५ ॥ चक्रपर्यन्तच्छिन्नाग्र दुःस्वप्नग्राहदुर्धर ॥ संसेवितमहायोगनिद्रासम्मीलितेक्षण ॥ ६ ॥ शेषाहिभोगपर्यन्तविस्तीर्णशयनाच्युत ॥ तत्फणावलिरत्नांशुवितानकृतोत्तर ॥ ७ ॥ लक्ष्मीसंवाह्यमानांघ्रिकमलद्वयराजित ॥ निर्णाशितमहादैत्य कृतक्षेमजगत्त्रय ॥ ८ ॥ शीतांशुरश्मिजालाभ दुग्धाम्भोधिशयाच्युत ॥ भक्तानां नरकश्वभ्रनिपातभयनाशन ॥ ९ ॥ तेषां स्वर्लोकगमनदत्तहस्तावलम्बन ॥ संसारसागरोत्तारमहापोत जनार्दन ॥ १० ॥ नामग्रहणमात्रेण घनावक्षयकारक ॥ स्वतिमात्रकृताशेषमनोरथमहाफल ॥ ११ ॥ त्रिविक्रमक्रमाक्रान्तब्रह्माण्डोत्तरमण्डप ॥ बालेन्दुकल्पदंष्ट्राग्र लीलोद्धृतवसुन्धर ॥ १२ ॥ एते विबोधयन्ति त्वां देवाः सेन्द्रपुरोगमाः ॥ ऋषयश्च महाभागाः त्रैलोक्यामलदर्शिनः ॥ १३ ॥ विबोधयति देव त्वां ब्रह्माशुभचतुर्मुखः ॥ यजुर्वेदो गदाभिस्तु गीर्भिर्देववराच्युत ॥ १४ ॥ त्यज विबुधगणारिसूदनाद्य निद्रां भव भुवनपतेघसंचयापहो मे ॥ त्वयि भवति हि यस्य नाथ भक्तिरुग्रा गतिरतिशयनी तु तस्य दैवतेभ्यः ॥ १५ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० खण्डे मार्कण्डेयवज्रसंवादे वासुदेवविबोधनो नाम सप्तोत्तरशततमोऽध्यायः ॥ १०७ ॥ ॥ छ ॥ ॥ वज्र उवाच ॥ ॥ भगवन्सर्वदेवानां मूर्तयः परिकीर्तिताः ॥ पञ्चभूतयुता यस्मात्तस्मात्तेषां भृगूत्तम ॥ १ ॥ आवाहनविधिःप्रोक्तो यत्तद्युक्ततमं मतम् ॥ आवाहिताः समायान्ति यत्र कामावसायिताम् ॥ २ ॥ आश्रित्य महिमां प्राप्तिं लघिमां च तथा सुराः ॥ विष्णुः सर्वगतो देवो महद्भ्योपि महत्तरः ॥ ३ ॥ सूक्ष्मेभ्यश्चातिसूक्ष्मश्च सर्वव्यापी जगन्मयः ॥ नास्ति किञ्चिज्जगत्यस्मिन्यत्र नास्ति जनार्दनः ॥ ४ ॥ सदसच्च महाभाग तेन व्याप्तं महात्मना ॥ आवाहनेन किं कार्यं तस्य सर्वगतस्य तु ॥ ५ ॥ महेंद्रिय महाभाग सर्वत्र परिपच्यते ॥ एतन्मे संशयं छिन्धि त्वं हि सर्वविदुच्यसे ॥ ६ ॥ मार्कण्डेय उवाच ॥ सर्वदेवगणा यद्वद्वज्र पिण्डितमूर्तयः ॥ प्रादुर्भावगतोप्येवं देवो मधुनिषूदनः ॥ ७ ॥ पञ्चभूतयुता मूर्तिः सर्वा भवति मण्डिता ॥ आद्यन्तमध्यसंयुक्ता सर्वस्यैव यद्

त्तम॥८॥ प्रादुर्भावगतो विष्णुर्यथा देवगणास्तथा ॥ आहितः सन्निहितो भवतीति विनिश्चयः ॥९॥ देवस्य द्विविधा मूर्तिः परा चैव तथापरा ॥ परायाः पौरुषी मूर्तिः पञ्चभूतविराजिता ॥ १० ॥ तया समूर्तिर्भवति सर्वगः परमेश्वरः ॥ पुरुषेण विना लोके न किञ्चिदिह विद्यते ॥ ११ ॥ अनादिमध्यनिधनस्त्वप्रमेयतनुस्तथा ॥ सर्वेन्द्रियमनाः शक्तिः सर्वतः स तथा नृप ॥१२॥ प्रादुर्भावगतस्यापि तस्य या सर्वशक्तिता ॥ इच्छतः सा विनिर्दिष्टा न त्वेषानिच्छतो नृप ॥ १३ ॥ पुरुषत्वे ह्यनन्तस्य याः राजन्सर्वशक्तिता ॥ निसर्गसिद्धा सा ज्ञेया सदा सर्वत्र यादव ॥ ॥ १४ ॥ आवाहनमथात्रापि क्रियते यज्जगत्पतेः ॥ नित्यं संनिहितस्यापि सर्वत्र परमेष्ठिनः ॥ १५ ॥ केवलं कारणं तत्र मनसस्तुष्टिकारणम् ॥ आवाहितो मया देवः स्थाने सन्निहितोऽपि च ॥ १६ ॥ आवाहनं स्वतृप्त्यर्थं पुरुषस्य यथा स्थितम् ॥ तथाप्यर्चा महाभाग स्वतुष्ट्यर्थं प्रयोजनम् ॥ १७ ॥ नित्यतृप्तस्य किं तस्य कार्यं भवति चार्चया ॥ १८ ॥ केवलं भक्तितुष्ट्यर्थं स भक्तेभ्यः प्रतीच्छति ॥ योसावर्चयते देवो यत्र देवोर्च्यते बुधैः ॥ १९ ॥ अभ्यर्च्यते च यैर्भावैः सर्वे तद्विद्धि तन्मयम् ॥ तस्यार्चाकरणं विद्धि कर्तृप्रीतिप्रयोजनम् ॥ २० ॥ ज्ञेयं तथैव चात्मानं तस्य सर्वगतस्य तु ॥ अनादिकारणं तेन नित्यतृप्तेन यादव ॥ २१ ॥ अनुग्रहार्थं भक्तानां चात्मनः संप्रवर्तितम् ॥ अशरीरः शरीरस्थो यथा भवति भूपते ॥ २२ ॥ भक्तलक्षणबोधार्थं तथैवावाह्यते त्वसौ ॥ अनाकारं महाराज लक्ष्यबन्धस्तु दुष्करः॥२३॥साकारैर्लक्षबन्धस्तु कर्तुं वै शक्यते सुखम्॥विधिवच्च तथाकारः प्रादुर्भावगतस्यहि॥२४॥ मयोक्तो राजशार्दूल पुरस्तादेव शास्त्रतः ॥ भावो भवतु यो यस्मिन्भावनायां भवेन्नरः ॥ २५ ॥ तत्रैव भावनानेन कार्या चार्चा च यादव ॥ आदौ कृत्वा महाभाग साकारे लक्षबन्धनम् ॥ २६ ॥ ततः समर्थो भवति शून्ये ध्याने नरोत्तम॥ एवमावाहनं तस्य तथा पूजा च यादव ॥ २७॥ प्रबुद्धैः क्रियते यत्नादात्मानुग्रहकारणम् ॥ नित्यतृप्तो न तृप्त्यर्थमुपहारं प्रयच्छति ॥ २८॥ प्रतीच्छति महाराज भक्तानुग्रहकारकः ॥ मोक्षप्राप्तावुभावेतौ त्वया ज्ञेयौ महाभुज ॥ २९ ॥ ज्ञानमार्गः क्रियामार्गः कृतो यश्च निराशिषः ॥ वज्रबन्धाय भवति सकामेन क्रिया कृता॥ निष्कामेन कृता सैव मोक्षायैव विधीयते॥३० ॥आवाहिताः सन्निहितास्तदेव भवन्त्यवश्यं नृप मन्त्रयुक्ताः॥स्वतुष्टये देव वरस्य विष्णोरावाहनं वज्र बुधैः प्रदिष्टम् ॥ ३१ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे आवाहनप्रयोजनवर्णनो नामाष्टोत्तरशततमोऽध्यायः ॥ १०८ ॥ वज्र उवाच ॥ भगवन्होमविधिमाचक्ष्व । तमुवाच भगवान्मार्कण्डेयः। अधिवासितो भगवानग्निं प्रज्वाल्य परिसमूह्याज्येन विलीनेनोत्सवेन

रक्षोघ्नमंत्राज्यभागान्तरं प्रागुक्तं हुत्वा वक्ष्यमाणैर्नामभिः स्वाहान्तैश्चतुर्थीप्रयुक्तैः यवतिलसिद्धार्थैरेकैकेन नाम्ना अष्टौ वा अष्टाविंशति अष्टोत्तरशतं वाज्याहूतीर्जुहुयात् ॥ ॐनमो भगवते वासुदेवाय ॥ ॐनमो भगवते संकर्षणाय ॥ ॐनमो भगवते प्रद्युम्नाय ॥ ॐनमो भगवते अनिरुद्धाय ॥ ॐनमो भगवते पुरुषाय ॥ ॐनमो भगवते सत्याय ॥ ॐनमो भगवते अच्युताय ॥ ॐनमः श्रियै ॥ ॐनमः कालरात्र्यै ॥ ॐनमः सृष्ट्यै ॥ ॐनमो गरुडाय ॥ ॐनमस्तालाय ॥ ॐनमो मकराय ॥ ॐ नमो ऋष्याय ॥ ॐनमोऽनन्ताय ॥ ॐनमः कौस्तुभाय ॥ ॐनमो वनमालायै ॥ ॐनमः पृथिव्यै ॥ ॐनमः शङ्खाय ॥ ॐनमः पद्माय ॥ ॐनमो गदायै ॥ ॐनमश्चक्राय ॥ ॐनमो हलाय ॥ ॐनमो मुसलाय ॥ ॐनमश्चापाय ॥ ॐनमश्चर्मणे ॥ ॐनमः खड्गाय ॥ ॐनमो सुभद्राय ॥ ॐनमो वसुभद्राय ॥ ॐनमो आषाढाय ॥ ॐनमो यज्ञताताय ॥ ॐनमो जयाय ॥ ॐनमो विजयाय ॥ ॐनमो आमोदाय ॥ ॐनमः प्रमोदाय ॥ ततो व्याहृतिहोमः कार्यः । ततो गायत्र्या होमं कुर्यात् । ततस्तद्विष्णोः परमं पदमित्यनया ततो वैष्णवगायत्र्या ॥ ततो युञ्जते मन इति अनुवाकेन ॥ ततः पुरुषसूक्तेन ॥ ततो रथो अक्षेष्विति ऋक्चतुष्टयेन ॥ ततश्चमकषट्केन ॥ ततस्त्वाज्येन ॥ संवत्सरादेवादिहोमपूर्वकेण कर्मणोत्तरतंत्रं समापयेत् ॥ विष्णोः प्रतिष्ठाकरणे होम एष प्रकीर्तितः ॥ अन्यासां देवतानां च तल्लिङ्गैर्जुहुयाद्धविः ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे होमविधिवर्णनो नाम नवोत्तरशततमोऽध्यायः॥१०९॥ मार्कण्डेय उवाच ॥ अथ प्रतिष्ठादिदिवसे प्राप्ते शङ्खपटहतूर्यैः श्रीभगवन्तं विबोधयेत् ॥ विबोधनमन्त्रं पठेत् ॥ ततः कल्पकोटिमूर्तिधरोर्ध्वबाहुः कलशधरस्थपतिश्चात्र भगवान् यश्चेह भगवानिति मन्त्रेण देवागारं प्रविशेयुः॥ ततः पञ्चगव्यमिश्रसर्वौषधिः सर्वगन्धान् सर्वरत्नानि सुवर्णं च पिण्डिकाश्वभ्रे निखनेत्॥ तत्र च मन्त्रा भवंति॥ महाभागः॥१॥ भासः॥ त्रिसुपर्णः॥ भारुण्डम् ॥ मृत्युलांगूलम् ॥ स्वस्तिन इंद्रः द्वादशाध्यात्मम् ॥ आत्मव्यूहं च ततः सांवत्सरोद्दिष्टे काले भगवन्तं सुसमं सदृष्टिपीठिकायाम् ॥ ध्रुवा द्यौरिति निश्चलमनेनैव मन्त्रेण कुर्यात् ॥ नामचास्योदीरयेत्॥ प्रतिष्ठासाम च पठेत् । सर्वश्च जनो लाजाकुसुमोत्करेण जयशब्देन कोलाहलं कुर्यात् ॥ वादित्राणि वादयेत् ॥ ॐ नमो भगवते वासुदेवायेत्युदीरयेत् ॥ ब्रह्मसूक्तं च पठेत् ॥ अग्नेरायुरसीति जीवादानं कुर्यात् ॥ कल्पकश्च कलशपाणिः पठेत् ॥ ॐप्रतिष्ठितोसि भगवन् सुप्रतिष्ठा भवत्वियम् ॥ सान्निध्यं प्रतिपद्यस्व यजमानाभिवृद्धये ॥ शन्नोस्तु द्विपदे नित्यं शन्नश्चास्तु चतुष्पदे ॥ शन्नोस्तु सर्वलोकस्य शन्नो राज्ञस्तथैव च ॥ यजमानः सभृत्यो यो सपुत्रपशुबान्धवः ॥ रक्ष्यो भगवता नित्यं देशश्चायं नमोस्तु ते ॥

इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे भगवद्विबोधनमन्त्रवर्णनो नाम दशोत्तरशततमोऽध्यायः ॥ ११० ॥ मार्कण्डेय उवाच ॥ अथ प्रतिष्ठितस्य भगवतो बृहत्स्नपनमारभेत् ततो गायत्रीं पठेत् ॥ इषेत्वेत्यनेन पतद्ग्रहं दद्यात् ॥ वैष्णवगायत्र्या पादुके । भूम्यावृत्वा यनोसीति मृदम् ॥ शन्न आप इत्यर्हणम् । देवेभ्यो वनस्पत इति दन्तकाष्ठम् ॥ यामालिखेति जिह्वानिर्लेखनम् ॥ आपोहिष्ठेत्याचमनम् ॥ पात्रेणार्घ्यम् ॥ युवासुवासा इति स्नानशाटकम् ॥ ध्रुवा द्यौरित्यासनम् । प्रतिष्ठासाम्ना पादपीठम् ॥ कनिक्रदेति बीजपात्रम् ॥ तेजोशुक्रमसीति दीपम् ॥ मुखादिन्द्रेत्यादर्शम् ॥ तथैव मुखालेपः ॥ रोध्रम् ॥ त्वक् कोलमज्जा ॥ वचा ॥ कुष्ठम् ॥ नीलोत्पलानि कुंकुमं चेति मुखालेपः ॥ सहस्रशीर्षेति तैलम् ॥ भद्रं कर्णेत्यनेनोद्वर्तनम् ॥ सुप्रतीकेन चमसा स्नानम्॥ ऋषभेन निष्पुंसनस्नानम् ॥ घृतवतीति घृतस्नानम्॥ दधिक्राव्ण इति दध्ना ॥ पयस्वतीति पयसा ॥ गंधद्वारेति गोमयेन ॥ गायत्र्या गोमूत्रेण॥ अघमर्षणेन पञ्चगव्येन । ध्रुवा द्यौरिति ध्रुवं निष्पुंसनेन ॥ मधुवा ताऋतायते इति मधुना ॥ सुप्रतीकेनेति इक्षुरसेन। भौमेन गुडोदकेन॥ अथर्वशिरसा शर्करोदकेन॥ वामदेवेनेति नद्युभयकूलमृदा ॥ शांता द्यौरिति संगममृदा ॥ प्राणसूक्तेन सरोमृदा ॥ वाराहेणेति वराहोद्धृतमृदा॥वामदेवेनेति गजदन्तमृदा ॥ वृषभेणेति वृषभशृंगोद्धवमृदा ॥ अश्वक्रान्तेति सर्वाभिः ॥ भारुन्देनेत्यामलकैः ॥ विकर्णेनेति रोध्रेण । ज्येष्ठसाम्नेति कालेयकेन ॥ बृहत्साम्नेति बीजपूरकेण ॥ कृष्णाजिनेनेति वर्णकस्नानीयेन । अग्न आयुरसीति तगरेण । श्रीसूक्तेनेति प्रियङ्गुना॥ विष्णोरराटमिति सिद्धार्थकैः ॥कृष्णमणिनेति कुष्टेन ॥ शिरिंभिटेनेति कुशोदकेन । या ओषधय इति सर्वौषधीभिः ॥ आब्रह्मन्ब्राह्मण इति बीजैः ॥ पुष्पवतीति पुष्पैः ॥ वनस्पतेवीड्वंग इति वनस्पतिकलापैः ॥ पुष्पवतीति फलैः॥आशुः शिशान इति रत्नैः ॥ गन्धद्वारेति गन्धैः । ॐकारनमस्कारपवित्रैः शिरःस्नानौषधीभिः यथा कुष्ठम्, रोध्रम्, मुस्ताः, वचा, सर्षपाः, जयन्ती, विष्णुक्रान्ता, पुनर्नवा, ब्राह्मी,तगरम्, अतिबला, नवबला, नागबला, त्वक्पत्रम्,अगुरुवालकम्, हरेणुकम्, लवङ्गम्, अगुरम्, उशीरम्, नालिकाचूरकम्, द्वे हरिद्रे चेति ॥ एवं स्नानस्य कलशदानं भवति ॥ तत्रादावेवोङ्कारनमस्कारपवित्राभिर्ज्ञात्वा दशाध्यात्ममृत्पिण्डमाधुरैः सात्त्वतो दद्यात् ॥ ततः सामविन्महावामदेवलक्षरथन्तरशाक्करभारुण्डबृहत्सामभिः ॥ अथर्वविदथर्वशिराः प्रत्यङ्गिरः शङ्खमणिप्राणसूक्तमणिप्रतिसरमणिभिः ॥ ऋग्वेदवित् गायत्रीसावित्रीगोसूक्ताश्च ॥ सूर्यसूक्तपुरुषसूक्तश्रीसूक्तैर्यजुर्वेदवित् ॥ कृष्णाजिनचमसषट्कषड्ऋतुकूष्माण्डरुद्रद्रविणैः । ततः स्वशक्त्या कलशसहस्रकलशाष्टशत पञ्च वा शतानि चत्वारि वा शतमष्टाधिकं वा अष्टाविंशतिर्वाष्टौ वा स्वर्चितान्वनस्पति

कालापगर्भशङ्खध्वनिस्वनेन वाद्यशब्देन जयजयकारवंदिशब्देन प्रसुभगानार्तितेन देयाः ॥ ततः पवित्रेणोपकलशान्विश्राम्य देव्यां क्षिपेत् ॥ घृतवतीति घृतावेक्षं दर्शयेत् ॥ सहस्रशीर्षेण शिखण्डोदग्रहणशाटकं दद्यात् ॥ युवासुवास इति प्रतिनिर्वसनशाटकम् ॥ इदमापः प्रवहत इत्याचमनीयं ततो जानुभ्यां पाणिभ्यां शिरसा च नमस्कारं कुर्यात् ॥ बृहत्स्नपनमेतद्धि यः करोति नरो हरेः॥ सर्वपापविनिर्मुक्तो विष्णुलोके महीयते॥ न केवलं प्रतिष्ठायां सर्वदैवं समाचरेत् ॥ शान्तिदं पौष्टिकं काम्यं बृहत्स्नपनमुत्तमम् ॥ दिव्यान्तरिक्षभौमानामुत्पातानां समुद्भवे ॥ देवदेवस्य राजेन्द्र बृहत्स्नपनमाचरेत् ॥ नास्ति लोके समुत्पातो यो ह्यनेन न शाम्यति ॥ आरोग्यकामः श्रीकामो मोक्षकामश्च बन्धनात् ॥ सौभाग्यशन्तिकामश्च बृहत्स्नपनमाचरेत् ॥ विद्यार्थी प्राप्नुयाद्विद्यां पुत्रकामस्तथात्मजान् ॥ प्रियाश्च मुख्याः प्राप्नोति याश्च कामयते यदि ॥ अकामकामः प्राप्नोति तद्विष्णोः परमं पदम् ॥ इतिश्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे बृहत्स्नपनप्रशंसावर्णनो नामैकादशोत्तरशततमोऽध्यायः ॥ १११ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ स्नातं श्रीभगवन्तं समर्चयेत् ॥ चन्दनबहुलनिर्यासजातीफलमृगमदकर्पूराणि समस्तानि व्यस्तानि वानुलेपनं कुर्यात् ॥ गन्धद्वारेति श्रीभगवन्तमनुलिम्पेत् ॥ वायुरग्रेगा इति तालवृन्तं निवेदयेत् ॥ वात आवातभेषजमिति वीजयेत् ॥ सावित्राणि सावित्रस्येति चामरं निवेदयेत् ॥ श्रीविष्णुगायत्र्या बीजानि निवेदयेत् ॥ युवासुवास इति महार्हैर्वस्त्रैः श्रीभगवन्तं आच्छादयेत् ॥ नोपभुक्तैर्न नीलैः हिरण्यवर्णैराभरणैरर्चयेत् । कङ्कतो न कङ्कत इति कङ्कतेन इन्द्राविश्वेति कङ्कतेन दूष्याद्दूशिरसि प्रतिसंख्या अञ्जनमणिना प्रैजनेन आत्मव्यूहेन कूर्चप्रसादनेन पुष्पवतीति पुष्पैः प्रथितैरग्रास्थितैश्च ॥ प्रजापतेन त्वदेतान्यन्य इति पटवासेन॥अग्निमूर्धेति दीपेन॥ धूरसि धूर्वमिति धूपेन ॥ अभित्वा शूरनोनुम इति च्छत्रेण॥ विष्णुगायत्र्या उपानद्भ्याम् ॥ इदं विष्णुर्विचक्रमे इति यानेन तेनैव प्रवहणेन । केतुं कृण्वन्निति ध्वजैः तेनैव पताकादिभिः । ततः स्तोत्रैः श्रीभगवन्तमर्चयेत् ॥ ततो अग्निर्मूर्धेति सर्वभोगपूरणार्थीयमात्रया ॥ ततस्तन्त्रीवाद्यैः ततः शंखपटहभेरीनिनादैः सुभगातेनवेति ॥ अनेन विधिना भोगैः समभ्यर्च्य जनार्दनम् ॥ सर्वान्कामानवाप्नोति विष्णुलोकं च गच्छति ॥ १ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे भोगदानवर्णनो नाम द्वादशोत्तरशततमोऽध्यायः ॥ ११२ ॥ मार्कण्डेय उवाच ॥ अथ मधुपर्केण श्रीभगवन्तमभ्यर्चयेत् ॥ हिरण्यवर्णेत्यर्हणां दद्यात् । दधिक्राव्णेति दधि । घृतवतीति घृतम् ॥ मधुवाताऋतायते इति मधु ॥ त्रिसुवर्णेन संयोज्य सावित्रेण नियोजयेत् ॥ आपोहिष्ठेति तर्पणं दद्यात्॥ वाता आवातु भेषजमिति निष्पुंसनम्॥शन्न आप इति आचमनीयम्॥

अष्टकविधिना पशुम् । हिरण्यवर्णेति वा मात्राम् । तेन बिम्बशंखपद्माद्यानि मङ्गल्यानि निवेदयेत् ॥ मधुपर्कविधिस्त्वेष कथितस्ते मयानघ ॥ एतत्कृत्वा महाराज विष्णुलोके महीयते ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मधुपर्कनिवेदनो नाम त्रयोदशोत्तरशततमोऽध्यायः ॥ ११३ ॥ मार्कण्डेय उवाच ॥ हिरण्यवर्णेत्यर्हणां दद्यात् ॥ ततः सभक्ष्यं सव्यञ्जनं सहचारितकं सावदंशं सफलं सावित्रेण निवेदयेत्॥शक्त्या सुगन्धीनि सुस्वादूनि अम्बुपानानि च आपोहिष्ठेतिच तर्पणेन, वात आवातु भेषजमिति निष्पुंसनेन, शन्न आप इत्याचमनीयेन, अग्निर्मूर्धेति पुनरनेनैव विधानेन, संविभागार्थीयेन अनुयज्ञेन श्रीभगवन्तमर्चयेत् ॥ मुखादिन्द्रश्च तांबूलं दद्यात् ॥ तेनैव सुगन्धीनि, मुखवासांसि, तेनैव दर्पणम् ॥ पुनरपि श्रीभगवन्तं गीतवादित्रनृत्तैः समभ्यर्चयेत् ॥ अन्नयज्ञेन संपूज्य देवदेवं सनातनम् ॥ सर्वान्कामानवाप्नोति विष्णुलोकं च गच्छति ॥ इति श्रीविष्णुधर्मोत्तरे तृ० खण्डे मार्कण्डेयवज्रसंवादे इज्यावर्णनो नाम चतुर्दशोत्तरशततमोऽध्यायः ॥ ११४॥ मार्कण्डेय उवाच ॥ ततः शङ्करगीतोक्तेन विधानेनेज्यां सात्त्वतः कुर्यात् ॥ कारिणश्च भोगैः शंचि भजेत् ॥ देवपुरत एवर्त्विजां प्रत्येकं सुवर्णं महत्वं वासो गोवत्सकृतं कांस्यं दद्यात् ॥ स्वशक्त्या च तानभ्यर्चयेत् ॥ ततो ब्राह्मणान्भोजयेत् ॥ भुञ्जानांश्च श्रीभगवन्माहात्म्यं श्रावयेत् ॥ ततो हविष्यं यजमानस्त्वश्नीयात् ॥ ततो देवागारे गीतनृत्यवाद्यपुस्तकश्रवणे तिष्ठेत् ॥ अनेन विधिना कृत्वा प्रतिष्ठां शार्ङ्गिणो नरः ॥सर्वान्कामानवाप्नोति विष्णुलोकं च गच्छति ॥ इति श्रीविष्णुधर्मोत्तरे तृ०ख०मार्कण्डेयवज्रसंवादे सात्त्वतेज्यावर्णनो नाम पञ्चदशोत्तरशततमोऽध्यायः ॥ ॥ ११५ ॥ मार्कण्डेय उवाच ॥ वैदिकेनेज्याविधानेन सात्त्वतोक्तेन दर्शनविधिहोमेन सप्ताहं प्रत्यहमर्चां कुर्यात् । ततः सप्तमेह्नि बृहत्स्नपनं कृत्वा कल्पकः कलशपाणिः या ओषधय इति तोरणान्यभिषिंचेत् ॥ गन्धद्वारेणेत्यनुलेपनेनार्चयेत् । पुष्पवतीति पुष्पैः ॥ अग्निर्मूर्धेति दीपेन । धूरसीति धूपेन । सावित्राणि सावित्रस्येति नैवेद्येन ॥ ततः प्रागुत्तरं ततः पूर्वं ततो दक्षिणतः पश्चिमे श्रीविष्णुगायत्र्या तोरणान्युद्धरेत् ॥ सर्व एष ऋत्विजतोरणान्यादाय गजपृष्ठगा अश्वरथपृष्ठगा गोरथपृष्ठगाः शिबिकागता वा नदीं गच्छेयुः । तत्र च स्वस्तिन इन्द्र इति मन्त्रेणाक्षिपेयुः ॥ भद्रङ्कर्णेति श्रीदेवतागृहं व्रजेयुः यश्चेह भगवानिति प्रविशेयुः ॥ ततो भोगविधिपूर्वकेण सर्वेण प्रतिष्ठोक्तेन विधिना श्रीभगवन्तमन्वयेयुः । ततो भुक्तवत्सु विप्रेषु मुञ्चामि त्वेति मन्त्रेण यजमानस्य दीक्षाकरणं बद्धं मुञ्चेत् ॥ कवचेन च रक्षणं

१ 'रात्रिम्' इति ख० ।

कुर्यात् ॥ तोरणोद्धरणवर्जं मासिमासि सप्ताहोक्तं विधिं कुर्यात् ॥ यावत्संवत्सरं नित्यमेवं सर्वकामदं कर्म तत् ॥ प्रतिष्ठाकल्पमेतत्ते मयोक्तं पार्थिवोत्तम ॥ सर्वपापहरं ज्ञेयमायुष्यमपराजितम् ॥अनेन विधिना कृत्वा स्थापनं शार्ङ्गिणो नरः॥ सर्वकामानवाप्नोति विष्णुलोकं च गच्छति ॥ ओषध्यः पवनं वृक्षा यत्किंचिदुपयुज्यते ॥ प्रतिष्ठायां हि तत्सर्वं विष्णुलोके महीयते ॥ प्रतिष्ठां येऽपि पश्यन्ति क्रियमाणां नराधिप ॥ अभिनन्दन्ति ये भक्तास्तेपि स्वर्गार्जिनो नराः ॥ सात्त्वतोक्तेन विधिना नित्यमेव प्रतिष्ठितम् ॥ पूजयेद्देवदेवेशं य इच्छेच्छाश्वतं पदम् ॥ १ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे तोरणोद्धारविधिवर्णनो नाम षोडशोत्तरशततमोऽध्यायः ॥ ११६ ॥ मार्कण्डेय उवाच ॥ अथ देवयात्राविधिर्भवति । यस्य देवस्य या तिथिः स्वकीया उक्ता तस्य तस्यां तिथौ यात्रां कुर्यात् ॥ यस्य तिथिर्न ज्ञायते तस्य पौर्णमास्यां कुर्यात् ॥ श्रीभगवतो वासुदेवस्य सर्वा एव तिथयः नास्य तिथिर्नाम तत्रादावेव सुधावदातं सुचित्रितं देवकुलं कृत्वा शुभेह्नि विनायकपूजनं कुर्यात् ॥ द्वितीयेह्नि ग्रहर्क्षपूजनं, तृतीयेह्नि नागपूजनम्, चतुर्थेह्नि प्रमथपूजनम्, पञ्चमेह्नि ब्राह्मणपूजनम्, दीनानाथदानं च षष्ठेह्नि, स्नपनम् ॥ तत्र बृहत्स्नपनं कृत्वा सर्वे एव नागरजनाः सुशुक्लवाससः पवित्रकृतपाणयः महता वाद्यघोषेण सुभगानर्तितेन सरःसरित्प्रस्रवणागारं नगरसंनिकर्षमासन्नतमं गच्छेयुः । तस्मादुदककलशानादाय गजपृष्ठगतान् वा वाससा शुभेनाच्छादितान्प्रवेशयेत् । प्रवेश्य श्रीभगवन्तं स्नापयेत्, भोगविधिपूर्वकेन प्रतिष्ठोक्तेन विधिना पूजयेत्, नृत्यवाद्यगीतैश्च श्रीभगवन्तमर्चयेत्, ततो यात्रादिने प्राप्ते स्वल्पार्चां प्रतिमाख्याम् । कूटागारे मनोहरे नानाप्रकारवसनाच्छादिते सकिङ्किणीके रत्नमाल्यपताकोपशोभिते रथे दृढीकृत्वा अश्वैर्दान्तैर्व्यायतैर्वा पुरुषैर्नगरं भ्रामयेत् । नागरेण च जनेन सुवेशेन चापमात्रपाणिना कूटागारस्य पुरस्ताद्भ्रमणं कर्तव्यम् ॥ अन्यैश्च कुसुममालाविकिरणं कर्तव्यम् । स्तुतीश्च कुर्युः । वन्दिनो मङ्गलपाठकाश्च पुरतो भवेयुः । वादित्राणि वादयंश्चतुरङ्गबलानुयातो राजा चानुगमनं कुर्यात् ॥ नगराधिकृतो वा तदधिकृतो वा गजपृष्ठगतश्च सांवत्सरेणानुगमनं कुर्यात् ॥ निमित्तानि च पश्येत् । विनावातं ध्वजभङ्गे राज्ञां मरणमादिशेत् । छत्रभङ्गे जनपदविनाशः । ईषद्भङ्गे राजपत्नीमरणम् ॥ रज्जुच्छेदे बालपीडा ॥ अश्वदान्तनरविपत्तौ जनपदपीडा, मातृकाच्छेदे राजमातुः पीडा ॥ अर्चाभङ्गपतने लोकनाशः, समग्रकूटागारस्य पतने सराजकस्य राष्ट्रस्य विनाशः, विस्वरेषु वादित्रेषु परचक्रागमः, ध्वजस्थो गव्यादेः समरभयम् । अपुष्टजनपदे दुर्भिक्षभयम् ॥ शुभमे शुभं बालका यत्र कुर्युः तत् तथाविधमेव भवति । यस्य च

पुरुषस्य तस्मिन्नहनि यादृशे सुखदुःखे भवेताम् ॥ तादृशेपि संवत्सरे तस्य ज्ञेये । तस्मात्तत्राह्नि स्वाशितेन सुवाससा प्रकृष्टेन नागरेण भवितव्यम् ॥ एवं नगरे संभ्राम्य चिह्नागसं ज्ञात्वा प्रविष्टायां प्रतिमार्चायां महदुत्सवं कुर्यात् । द्वितीयदिवसादारभ्य यावत्सामर्थ्यं प्रत्यहं नटनर्तकनर्तकीमल्लेन्द्रजालिकादीनां प्रेक्षापूर्वकं धनं दद्यात् ॥ प्रेक्षाकाले च प्रेक्षकं जनं माल्यताम्बूलानुलेपनादिदानेनार्चयेत् । अदृश्यानां प्रेक्षकाणां भूतानां रङ्गादिदिग्विदिक्षु सोदकमन्नाद्यं फलानि पुष्पाणि पललोल्लोपिकामोदकानि विकिरेत् ॥ प्रेक्षकाणां यथागतानां च श्रेयश्चाऽस्त्वित्युदीरयेत् । यथागताश्च प्रेक्षका आगामिनीं यात्रां पश्यंत्वित्युदीरयेत् ॥ अशुभनिमित्तोत्पत्तौ तदुपशमनायानेन विधिना पुनर्यात्रां सम्यक्कुर्यात् ॥ अनेन विधिना यस्तु यात्रां कुर्यात्सुरालये ॥ स सर्वकामानाप्नोति विष्णुलोकं च गच्छति ॥ धन्यं यशस्यमायुष्यं राज्ञां च विजयप्रदम् ॥नागराणां हितकरं यात्राकर्म प्रकीर्तितम् ॥ तुष्ट्यर्थं त्रिदशेन्द्राणां हितार्थं नगरस्य च॥जनस्य राजन्कर्तव्यं यात्राकर्म जयावहम्॥अतिवृष्टिकरं प्रोक्तं त्वनावृष्टिविनाशनम् ॥यात्राकर्म त्विदं कार्यं देवतायतने सदा॥ प्रतिसंवत्सरे राजन्राज्ञा विजयमिच्छता ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे यात्राविधिवर्णनो नाम सप्तदशोत्तरशततमोध्यायः ॥ ११७ ॥ वज्र उवाच ॥ कांकां विष्णोस्तनुं भक्तः केन कामेन पूजयेत् ॥ एतन्मे संशयं छिन्धि त्वं हि सर्वं विजानसे ॥ १ ॥ ॥ मार्कण्डेय उवाच ॥ सर्वकामप्रदं देवं चतुर्मूर्तिं तु पूजयेत् ॥ पूजयेदनिरुद्धन्तु धर्मकामो नरः सदा॥२॥तथा सङ्कर्षणं देवमर्थकामस्तु पूजयेत्॥ कामकामोऽपि राजेन्द्र प्रद्युम्नं पूजयेद्विभुम्॥३॥पूजयेन्मोक्षकामस्तु वासुदेवं जगत्प्रभुम् ॥ पुत्रकामस्तथा राजन्पद्मनाभं च पूजयेत्॥४॥तथाश्वशिरसं देवं विद्याकामस्तु पूजयेत्॥भोगानामातकामस्तु पूजयेद्भोगशायिनम्॥५॥भोगिभोगासनासीनं स्थानकामस्तु पूजयेत् ॥ मत्स्यं संपूजयेद्देवं धान्यकामो नरः सदा ॥ ६ ॥ तथैवारोग्यकामस्तु कूर्मदेवं च पूजयेत् ॥ ज्ञानकामस्तथा हंसं नृसिंहमथ वा विभुम्॥७॥विद्याकामोऽथ वाल्मीकिं व्यासं वाप्यथ पूजयेत्॥सांख्यज्ञानपरिज्ञानहेतवे कपिलं तथा॥८॥ भूतिकामो वराहं तु नृवराहमथार्चयेत्॥ व्यवहारे रणे द्यूते जयकामस्तथा पृथक् ॥ ९ ॥ धर्मकामस्तथा धर्मं ब्रह्माणं चापि पूजयेत् ॥ शत्रूणां नाशकामस्तु महादेवं तु पूजयेत् ॥ १० ॥ पूजयेद्भार्गवं रामं प्रतिज्ञापारणेच्छया ॥ अथ वा राजशार्दूलं रामं दशरथात्मजम् ॥ ११ ॥ श्रीकामस्तु महाराज श्रीसहायं च पूजयेत् ॥ बलकामस्तथा देवं बलभद्रं प्रपूजयेत् ॥ १२ ॥ तमेव राजशार्दूलं कृषिकर्मप्रसिद्धये ॥ सर्वकामप्रदं देवं यथेष्टां तनुमास्थितम् ॥ १३ ॥ पूजयेत्सर्वशक्तित्वात्सर्वकामफलप्रदान् ॥

निराशिषः पूजयितो वरेण्यं देवेश्वरं वासुदेवं पुराणम् ॥ यथेष्टदेहोपगतं नृवीरं स्थानं तदुक्तं परमं हि यत्स्यात् ॥ १४ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे तत्तत्कामपूजनवर्णनो नामाष्टादशोत्तरशततमोऽध्यायः ॥ ११८ ॥ वज्र उवाच ॥ कस्मिन्कर्मणि संप्राप्ते कांकां संपूजयेत्तनुम् ॥ कार्यसिद्धिमभिप्रेप्सुस्तन्मे वद महामुने ॥ १ ॥ मार्कण्डेय उवाच ॥ समुद्रपोतयात्रायां मत्स्यं संपूजयेद्विभुम् ॥ वराहं वा महाभाग नद्युत्तारे तथैव च ॥ २ ॥ संपूजयेदश्वशिरो विद्यारम्भे तु मानवः ॥ त्रिविक्रमं तथा देवं यात्राकाले तु पूजयेत् ॥ ३ ॥ विवाहकाले संप्राप्ते प्रद्युम्नं पूजयेन्नृप ॥ संस्कारेषु च सर्वेषु दत्तात्रेयं च पूजयेत् ॥ ४ ॥ काव्यारम्भे तु कर्तव्यं वाल्मीकिं व्यासमेव च ॥ अभिषेके तथा राज्ञां मृत्युं वैन्यं च पूजयेत् ॥ ५ ॥ अवश्यं व्यवहारे च संग्रामे द्यूत एव वा ॥ वराहं पूजयेद्देवं प्रारम्भे कृषिकर्मणि ॥ ६ ॥ अथ वापि महाराज देवं सङ्कर्षणं विभुम् ॥ नृसिंहं पूजयेदेव कर्मण्यरिविनाशने ॥ ७ ॥ प्रतिज्ञापारणे रामं भार्गवं वाथ राघवम् ॥ औषधस्य समारम्भे कूर्मं स्त्रीरूपमेव वा ॥ ८ ॥ तीर्थयात्रासमारम्भे हंसं संपूजयेद्विभुम् ॥ वाणिज्यस्य समारम्भे तथैव गरुडध्वजम् ॥ ९ ॥ शिल्पकर्मसमारम्भे विश्वरूपं समर्चयेत् ॥ तपसश्च समारम्भे नरनारायणावुभौ ॥ १० ॥ गृहप्रवेशे च तथा देवं भोगिशयं विभुम् ॥ धर्मं संपूजयेद्देवं धर्मकार्यप्रवर्तने ॥ ११ ॥ वराहं पूजयेच्छ्राद्धे दानवान्यज्ञकर्मणि ॥ व्यालकुञ्जरदुर्गेषु रिपुचौरभयेषु च ॥ १२ ॥ पूजयेन्नरसिंहं तु सर्वबाधाविनाशनम् ॥ यथेष्टरूपं धर्मज्ञ सर्वकार्येषु चार्चयेत् ॥ १३ ॥ येनयेनेह कामेन यांयां संपूजयेत्तनुम् ॥ सासा तस्य ध्रुवं दद्यात्तंतं काममसंशयम् ॥१४॥ संपूजितो देववरस्सकामैर्यथेप्सितं वज्र ददाति कामम् ॥ सर्वास्वथार्चासु यथेष्टसंस्थास्त्वकामकामैर्विदधाति मोक्षम् ॥ १५ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे कार्यारम्भप्रादुर्भावपूजनं नामैकोनविंशशततमोऽध्यायः ॥ ११९ ॥ वज्र उवाच ॥ ॥ कस्मिन्काले तु देवस्य प्रादुर्भावं कमर्चयेत् ॥ एतन्मे संशयं छिन्धि भृगुवंशविवर्धन ॥ १ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ नृहयं नृवराहं च नरसिंहं च वामनम् ॥ त्रिविक्रमं तु धर्मज्ञ पञ्चस्वब्देषु पूजयेत् ॥ २ ॥ वासुदेवं हलधरं पूजयेदयनद्वये ॥ प्रद्युम्नमनिरुद्धं च तथा भोगशयं प्रभुम् ॥ ३ ॥ पद्मनाभं दाशरथिं रामं भार्गवमेव च ॥ ४ ॥ वसन्तादिषु धर्मज्ञ पूजयेदृतुषु क्रमात् ॥ गजेन्द्रमोक्षणं चैवं पृथुं वाल्मीकिमेव च ॥ ५ ॥ व्यासं च कृष्णं च नरं नरनारायणौ तथा ॥ रामं रामं तथा रामं हरिं चैत्रादिषु क्रमात् ॥ ६ ॥ वह्निं प्रजापतिं सोमं रुद्रं स्त्रीरूपिणं तथा व्यासं शेषं वराहं च प्रद्युम्नं चार्जुनं नृप ॥ ७ ॥ आदित्यं विश्वकर्माणं चक्रं देवं नृकेसरिम् ॥ गरुडं पुरुहूतं च कपिलं पद्ममेव च ॥ ८ ॥

विश्वरूपं च ब्रह्माणं तथा देवं त्रिविक्रम् ॥ गवां कूर्मं नरं चैव तथा नारायणं हरिम् ॥ ९ ॥ रामं कृष्णं च वरदं कृत्तिकादिषु पूजयेत् ॥
नृहयं नृवराहं च तथा देवं त्रिविक्रमम् ॥ १० ॥ कपिलं भोगिशयनं वराहं मत्स्यमेव च ॥ रामं रामं च धर्मज्ञ कूर्मं हंसं च यादव ॥ ११ ॥
प्रद्युम्नं बलदेवं च वराहं च तथा क्रमात् ॥ तिथिषु प्रथमाद्यासु क्रमेणैव समर्चयेत् ॥ १२ ॥ यथेष्टमूर्तिगं देवं सर्वकालमथार्चयेत् ॥ तस्य
सर्वातिथिर्यस्मान्महाशक्तेर्जगद्गुरोः ॥ १३ ॥ स सर्वशक्तिर्भगवान्महात्मा पूज्यः सदा भक्तिमुपेत्य राजन् ॥ संपूजनं देववरस्य तस्य भक्तिः
प्रधाना न हि कालयोगः ॥ १४ ॥ इति विष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे कालनियमपूजावर्णनो नाम विंशत्युत्तरशततमो
ऽध्यायः ॥ १२० ॥ वज्र उवाच ॥ कस्मिन्देशे महाभाग प्रादुर्भावं कमर्चयेत् ॥ एतन्मे संशयं छिन्धि त्वं हि सर्वं विजानसे ॥ १ ॥ मार्कण्डेय
उवाच ॥ ब्रह्माणं पुष्करे देवं प्रयागे योगशायिनम् ॥ कालंजरे महादेवं शक्रतीर्थे शतक्रतुम् ॥ २ ॥ सिन्धुकूले वराहं च शालिग्रामे
त्रिविक्रमम् ॥ काश्मीरेषु तथा मत्स्यं सागरे वडवानलम् ॥ ३ ॥ अयोध्यायां तथा रामं नैमिषे धर्ममेव च ॥ कर्णाटे चाश्वशिरसं मद्रदेशे
नृकेसरिम् ॥ ४ ॥ शत्रुघ्नं मथुरायां च दण्डकेषु च लक्ष्मणम् ॥ भरतं केकयेष्वेव यमुनायां तथा बलिम् ॥ ५ ॥
प्राग्ज्योतिषेऽनिरुद्धं च प्रद्युम्नं दक्षिणापथे ॥ तथा भार्गवरामं च मलये यदुनन्दनम् ॥ ६ ॥ पाञ्चालविषये राजन्पृथुं
वैन्यं च पूजयेत् ॥ तमसातीरमासाद्य वाल्मीकिं पूजयेन्नरः ॥ ७ ॥ वाराणस्याः परे पारे व्यासं यदुकुलोद्वह ॥ गङ्गाकूले
महाराज वासुदेवं च पूजयेत् ॥ ८ ॥ गजेन्द्रमोक्षणं देवमङ्गेषु यदुनन्दन ॥ द्वारवत्यां तथा कृष्णं नरनारायणावुभौ ॥ ९ ॥
बदर्याश्रममासाद्य पूजयेत्तु विचक्षणः ॥ कुरुक्षेत्रेपि धर्मज्ञ रामं भृगुकुलोद्वहम् ॥ १० ॥ अथ वा यादवश्रेष्ठ रथस्थौ कृष्णफाल्गुनौ ॥ हंसप्रपतने
हंसं मत्स्यं मत्स्येषु यादव ॥ ११ ॥ गयाशीर्षे वराहं तु मूलस्थाने दिवाकरम् ॥ प्रभासे च तथा सोमं हिमवत्यलकाधिपम् ॥ १२ ॥
ऐरावत्यां भोगमयं सरय्वां राममेव च ॥ भोगिभोगासनासीनं सरयूतटसंस्थितम् ॥ १३ ॥ सर्वमूर्तिधरं देवं सर्वत्राप्यथ वार्चयेत् ॥ सर्वत्र सर्व
शक्तिर्हि सर्वात्मा स निगद्यते ॥ १४ ॥ सर्वत्र देवः स तु सर्वशक्तिः सर्वेश्वरः सर्वशरीरसंस्थः ॥ पूज्यः सदा सर्वफलप्रदाता लोके सकामान्वि
धाति राजन् ॥ १५ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० खण्डे मार्कण्डेयवज्रसंवादे श्रीविष्णुदेशाधिदेशप्रादुर्भावपूजावर्णनो नामैकविंशत्युत्तरशतत
मोऽध्यायः ॥ १२१ ॥ वज्र उवाच ॥ केन कार्येण देवस्य किंकिं नाम प्रकीर्तयेत् ॥ एतन्मे संशयं छिन्धि भृगुवंशविवर्धन ॥ १ ॥

मार्कण्डेय उवाच ॥ वासुदेवाच्युतानन्तसत्याजपुरुषोत्तम ॥ परमात्मेश्वराद्यैश्च ततो मोक्षं प्रयच्छति ॥ २ ॥ धर्मविद्धर्मकृद्धर्मी विश्वात्मा विश्वकृच्छुचिः ॥ शुचिमद्विष्णुरब्जाख्यो पुष्कराख्यो ह्यधोक्षजः ॥ ३ ॥ शुचिःश्रवा शिपिविष्टो यज्ञेशो यज्ञभावनः ॥ नाम्नामित्येवमादीनां समुच्चारणतो नरः ॥ ४ ॥ धर्मं महान्तमाप्नोति पापबन्धक्षयं तथा ॥ श्रीदः श्रीशः श्रीनिवासः श्रीधरः श्रीनिकेतनः ॥ ५ ॥ श्रियः पतिः श्रीपरमः श्रीमाञ्छ्रीवत्सलाञ्छनः ॥ नृसिंहो दुष्टदमनो जयो विष्णुस्त्रिविक्रमः ॥ ६ ॥ स्तुतः प्रयच्छते चाथ अणिमादिभिरच्युतः ॥ काम्यः कामप्रदः कान्तः कामयात्मा तथा हरिः ॥ ७ ॥ आनन्दो माधवश्चैव कामसंवृद्धये जपेत् ॥ रामः परशुरामश्च नृसिंहो विष्णुरेव च ॥ ८ ॥ विक्रमश्चैवमादीनि जप्यान्यरिजिगीषुभिः ॥ दामोदरानिरुद्धौ च ज्ञेयौ बन्धनमोक्षदौ ॥ ९ ॥ जप्तव्योऽभ्यसता विद्यां महापुरुष इत्यपि ॥ विद्यार्थिना वा जप्तव्यं तथाश्वशिरसेति च ॥ १० ॥ बलार्थी बलभद्रेति सौख्यार्थी सुखदेति च ॥ अश्वार्थी चाश्वशिरसं गजार्थी नागमोक्षणम् ॥ ११ ॥ गोभिरर्थी जपेन्नाम वासुदेवेति कीर्तितम् ॥ यज्ञार्थी यज्ञपुरुषं कीर्तयेत्प्रयतो नरः ॥१२॥ नारायणेति च तथा विष्णवेति यदूद्वह॥ यद्वाभिरोचतो रामं सर्वार्थेषु ह्युदीरयेत् ॥ सर्वाण्येतानि नामानि परस्य ब्रह्मणो यतः ॥१३॥ सर्वाणि नामानि हितस्य राजन् भवन्ति कामाखिलदायकानि ॥ यदैव संकीर्तयते स शक्त्या तस्मादवाप्नोति हि कामसिद्धिम् ॥ १४ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० खण्डे मार्कण्डेयवज्रसंवादे कामप्राप्तिवर्णनो नाम द्वाविंशत्युत्तरशततमोऽध्यायः ॥ १२२ ॥ वज्र उवाच ॥ कार्यारम्भे तथा कस्मिन्को नाम द्विज कीर्तयेत् ॥ एतन्मे संशयं छिन्धि त्वं हि सर्वं विजानसे ॥ १ ॥ मार्कण्डेय उवाच ॥ चक्रिणं हलिनं चैव शार्ङ्गिणं खड्गिनं तथा ॥ क्षेमार्थी प्रवसन्राजन्दिक्षु प्राच्यादिषु स्मरेत् ॥ २ ॥ अर्चितं चाधिकं चैव सर्वं सर्वेश्वरं प्रभुम् ॥ संस्मरेत्पुरुषं भक्त्या व्यवहारेषु सर्वदा ॥ ३ ॥ कूर्मं वराहं मत्स्यं च जलप्रतरणे स्मरेत ॥ भ्राजिष्णुमग्निजनने जपेद्रामममतन्द्रितः ॥ ४॥ सङ्ग्रामाभिमुखे गच्छन्संस्मरेदपराजितम् ॥ केशवं पुण्डरीकाक्षं पुष्करार्थं तथा जपेत्॥५॥ नेत्रबाधासु सर्वासु हृषीकेशं तथैव च ॥ अच्युतं चामृतं चैव जपेदौषधकर्मणि ॥ ६ ॥ गरुडध्वजानुस्मरणादापदो मुच्यते नरः ॥ ज्वरदुष्टशिरोरोगविषवीर्यं प्रशाम्यति ॥ ७ ॥ ग्रहनक्षत्रपीडासु देवबाधाटवीषु च ॥ दस्युवैरिनिरोधेषु व्याघ्रसिंहादिसंकटे ॥ ८ ॥ अन्धकारे तथा तीव्रे नरसिंहेति कीर्तयेत् ॥ वित्तस्थापनकाले च धान्यसंस्थापने तथा ॥ ९ ॥ कुर्वीत तन्मना भूत्वा अनन्ताच्युतकीर्तनम् ॥ नारायणं शार्ङ्गधरं श्रीधरं गजमोक्षणम् ॥ १० ॥ वामनं खड्गिनं चैव दुःस्वप्नेषु तु संस्मरेत् ॥ अग्निदाहे समुत्पन्ने संस्मरेज्जलशायिनम्॥११॥बलभद्रं समृद्धार्थे कृष्यारंभे

हलायुधम् ॥ उत्तारणं वणिज्यार्थी श्रीशमभ्युदये नृप ॥१२॥ मङ्गल्यं मङ्गले विष्णुममङ्गल्येषु कीर्तयेत् ॥ अरिष्टान्तेषु शेषेषु विशोकेषु तथा
जपेत् ॥ १३ ॥ उत्तिष्ठन् कीर्तयेद्विष्णुं प्रसुप्तो माधवं नरः ॥ भोजने चैव गोविन्दं सर्वत्र मधुसूदनम् ॥ १४ ॥ नारायणं सर्वकाले क्षुतप्रस्खल
नादिषु ॥ स्नाने देवार्चने होमे प्रणिपाते प्रदक्षिणे ॥ १५ ॥ कीर्तयेद्वासुदेवेति अनुक्तेष्वपि यादव ॥ कार्यारम्भेऽथ वा राजन्यथेष्टं नाम कीर्तयेत् ॥
॥ १६ ॥ सर्वाणि नामानि हि तस्य राजन्सर्वार्थसिद्धानि भवन्ति पुंसः ॥ तस्माद्यथेष्टं खलु देवनाम सर्वेषु कार्येषु जपेत्तु भक्त्या ॥ १७ ॥
इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे तत्तत्कार्यप्राप्तितत्तन्नामकीर्तनवर्णनो नाम त्रयोविंशत्युत्तरशततमोऽध्यायः ॥ १२३ ॥
वज्र उवाच ॥ कस्मिन्काले तु देवस्य किंकिं नाम प्रकीर्तयेत् ॥ एतन्मे संशयं छिन्धि त्वं हि सर्वं विजानसे ॥ १ ॥ मार्कण्डेय उवाच ॥ पुरुषं
वामदेवं च तथा सङ्कर्षणं प्रभुम् ॥ प्रद्युम्नमनिरुद्धं च क्रमाच्छब्देषु वर्जयेत् ॥ २॥ विष्णुं मधुनिहन्तारं तथा देवं त्रिविक्रमम् ॥ वामनं श्रीधरं
चैव हृषीकेशं तथैव च॥३॥दामोदरं पद्मनाभं केशवं च यदूत्तम॥नारायणं माधवं च गोविन्दं च तथा क्रमात् ॥४॥चैत्रादिषु तु मासेषु देवदेवमनुस्म
रेत् ॥प्रद्युम्नमनिरुद्धं च पक्षयोः शुक्लकृष्णयोः॥५॥सर्वः शर्वः शिवः स्थाणुर्भूतानां निधिरव्ययः॥आदित्यादिषु वारेषु क्रमादेवमनुस्मरेत् ॥ ६ ॥
विश्वं विष्णुर्वषट्कारो भूतभव्यभवः प्रभुः॥ भूतकृत् भूतभृद्भावो भूतात्मा भूतभावनः॥७॥अव्यक्तः पुंडरीकाक्षो विश्वकर्मा शुचिश्रवाः ॥ सम्भवो
भावनो भर्ता प्रभवः प्रभुरीश्वरः ॥ ८ ॥ अप्रमेयो हृषीकेशः पद्मनाभः परः प्रभुः ॥ अग्राह्यः शाश्वतो धाता कृष्णश्चैतान्यनुस्मरेत्॥९॥ देवदेवस्य
नामानि कृत्तिकादिषु यादव ॥ ब्रह्माणं श्रीपतिं विष्णुं कपिलं श्रीधरं प्रभुम् ॥ १० ॥ दामोदरं हृषीकेशं गोविन्दं मधुसूदनम् ॥ भूधरं गदिनं
चैव शिखिनं पद्मिनं तथा ॥ ११ ॥ चक्रिणं च महाराज प्रथमादिषु संस्मरेत् ॥ सर्वं वा सर्वदा राम देवदेवस्य यादव ॥ १२ ॥ नामानि सर्वाणि
जनार्दनस्य कालश्च सर्वः पुरुषप्रवीर ॥ तस्मात्सदा सर्वगतस्य नाम ग्राह्यं यथेष्टं वरदस्य राजन् ॥ १३ ॥ इति श्रीविष्णुधर्मोत्तरे
तृतीयखण्डे मार्कण्डेयवज्रसंवादे कालनामाख्यानो नाम चतुर्विंशत्युत्तरशततमोऽध्यायः ॥ १२४ ॥ वज्र उवाच ॥ कस्मि
न्क्षेत्रे तु देवस्य किंकिं नाम प्रकीर्तयेत् ॥ एतन्मे संशयं छिन्धि भृगुवंशविवर्धन ॥ १ ॥ मार्कण्डेय उवाच ॥ अत्राप्युदाहरन्तीममितिहासं
पुरातनम् ॥ वासुदेवस्य संवादमर्जुनस्य च यादव ॥ २ ॥ वृत्ते भारतसंग्रामे राज्यं प्राप्ते युधिष्ठिरे॥ अस्मिन्नेव सभोद्देशे विजह्राते यथासुखम् ॥३॥
वासुदेवार्जुनौ वीरौ लक्षीकृतवसुन्धरौ ॥ ततः कथान्ते कस्मिंश्चित्कृष्णं पप्रच्छ फाल्गुनः ॥ ४ ॥ अर्जुन उवाच ॥ क्षेत्रेषु येषुयेषु त्वं कीर्त

नीयो मयाच्युत ॥ चेतसा प्रणिधानार्थं त्वं ममाख्यातुमर्हसि ॥ ५ ॥ श्रीभगवानुवाच ॥ सर्वगः सर्वभूतोऽहं न हि किञ्चिन्मया विना ॥ चरा
चरे जगत्यस्मिन्विद्यते कुरुसत्तम ॥ ६ ॥ तथापि येषु स्थानेषु चिन्तनीयोहमर्जुन ॥ स्तोतव्यो नामभिर्यैश्च शृणु त्वं तद्वदामि ते ॥ ७ ॥
पुष्करे पुण्डरीकाक्षं गयायां च गदाधरम् ॥ लोहदण्डे तथा विष्णुं स्तुवंस्तरति दुष्कृतम् ॥ ८ ॥ राघवं चित्रकूटे तु प्रभासे दैत्यसूदनम् ॥
वृन्दावने च गोविन्दं मां स्तुवन्पुण्यभाग्भवेत् ॥ ९ ॥ जयं जयन्त्यां स्तुन्वंश्च जयन्तं हस्तिनापुरे ॥ वराहं कन्दमाले च कश्मीरेषु च चक्रिणम्
॥ १० ॥ जनार्दनं तु कुब्जाम्रे मथुरायां च केशवम् ॥ श्रीकुब्जे श्रीधरं तद्वद्गङ्गाद्वारे सुरोत्तमम् ॥ ११ ॥ शालिग्रामे महायोग्यं हरिं गोवर्धना
चले ॥ पिण्डारके चतुर्बाहुं शंखद्वारे च शंखिनम् ॥ १२ ॥ वामनं तु कुरुक्षेत्रे यमुनायां त्रिविक्रमम् ॥ विश्वेश्वरं तथा शोणे कपिलं पूर्वसागरे
॥ १३ ॥ श्वेतद्वीपपतिं चापि गङ्गासागरसंगमे ॥ भूधरं देविकातीरे प्रयागे योगशायिनम् ॥ १४ ॥ नरनारणायाख्यौ च तथा बदरिकाश्रमे ॥
समुद्रे दक्षिणे नाम पद्मनाभेति फाल्गुन ॥ १५ ॥ द्वारकायां तथा कृष्णं स्तुवंस्तरति दुर्गतिम् ॥ एवं रामं महेन्द्राद्रौ हृषीकेशं तथा बुध
॥ १६ ॥ अश्वतीर्थे हयग्रीवं विश्वरूपं हिमाचले ॥ नृसिंहं कृतशौचे तु विपाशायां द्विजप्रियम् ॥ १७ ॥ नैमिषे यज्ञपुरुषं जम्बुमाले तथाच्यु
तम् ॥ अनन्तं सैन्धवारण्ये दण्डके शार्ङ्गधारिणम् ॥ १८ ॥ उत्पलावर्तके शौरिं नर्मदायां श्रियः पतिम् ॥ दामोदरं रैवतके नन्दायां जलशायि
नम् ॥ १९ ॥ सर्वयोगेश्वरं चैव सिन्धुसागरसंगमे ॥ सह्याद्रौ देवदेवेशं वैकुण्ठं माधवे वने ॥२० ॥ सर्वपापहरं विंध्ये चोड्रेषु पुरुषोत्तमम् ॥ हृदये
चापि कौन्तेय परमात्मा सनातनः ॥ २१ ॥ वटेवटे वैश्रवणं चत्वरेचत्वरे शिवम् ॥ पर्वतेपर्वते रामं सर्वत्र मधुसूदनम् ॥ २२ ॥ नरं भूमौ
तथा व्योम्नि कौन्तेय गरुडध्वजम् ॥ वासुदेवं च सर्वत्र संस्मरेज्ज्योतिषां पतिम् ॥ २३ ॥ अर्चयन्प्रणमन्स्तुन्वन्संस्मरेश्च धन
ञ्जय ॥ एतेष्वेतानि नामानि नरः पापात्प्रमुच्यते ॥ २४ ॥ स्थानेष्वेतेषु मन्नाम्नामेतेषां प्रीणयेन्नरः ॥ द्विजानां प्रीणनं
कृत्वा स्वर्गलोके महीयते ॥ २५ ॥ नामान्येतानि कौन्तेय स्थानान्येतानि चात्मवान् ॥ जपन्वै पञ्च पञ्चाशत्त्रिसन्ध्यं मत्प
रायणाः ॥ २६ ॥ त्रीणि जन्मानि यत्पापं चावस्थात्रितये कृतम् ॥ तत्क्षालयत्यसन्दिग्धं जायते च सतां कुले ॥ २७ ॥
द्विकालं वा जपन्वैतद्दिवारात्रौ च यत्कृतम् ॥ तस्माद्विमुच्यते पापात्संस्तुवन्परमो नरः ॥ २८ ॥ जप्तान्येतानि कौन्तेय सकृच्छ्रद्धासमन्वितम् ॥
मोचयन्ति नरं पापाद्यत्तत्रैव दिने कृतम् ॥ २९ ॥ धन्यो यशस्यः शत्रुघ्नो जयः कुरुकुलोद्वह ॥ ग्रहानुकूलतां चैव करोत्याशु न संशयः ॥ ३० ॥

उपोषिताश्च मनसः स्थानेष्वेतेषु मानवः ॥ कृतायतनवासश्च प्राप्नोत्यभिमतं फलम् ॥ ३१ ॥ उत्क्रान्तिरप्यशेषेषु स्थानेष्वेतेषु शस्यते ॥ अन्यस्थानाच्छतगुणमेतेष्वनशनादिकम् ॥ ३२ ॥ ॥ यस्तु मत्परमः कालं करोत्येतेषु मानवः॥देवानामपि पूज्योऽसौ मम लोके महीयते॥३३॥ स्थानेष्वथैतेषु च ये वसन्ति संपूजयन्ते मम सर्वकालम् ॥ तदेह चान्ते त्रिदिवं प्रयान्ति नाकं च लोकं समवाप्नुवन्ति॥३४॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे अर्जुनं प्रति कृष्णोपदेशे स्थानविशेषकीर्तनमाहात्म्यवर्णनो नाम पञ्चविंशत्युत्तरशततमोऽध्यायः ॥ १२५ ॥ ॥ वज्र उवाच ॥ ॥ नाम्नां संपूजनं विष्णोस्त्वया कार्यं प्रकीर्तितम् ॥ प्रादुर्भावेषु काम्यं च पूजनं च त्वयेरितम् ॥ १ ॥ कालनामानि च तथा स्थाननामानि चाप्यथ ॥ काम्यानि चैव नामानि त्वया प्रोक्तानि भार्गव ॥ २ ॥ तस्यैव देवदेवस्य विष्णोरमिततेजसः ॥ सर्वदेवमयस्येह सर्वरूपधरस्य च ॥ ३ ॥ आराधनविधानानि कथयस्व ममानघ ॥ त्वं हि सर्वकथारामो यथा देवः पितामहः ॥ ४ ॥ भूय एव समाचक्ष्व उपवासफलं विभो ॥ देवतापूजनार्थाय विधिना पूजनस्य च ॥ ५॥ मार्कण्डेय उवाच ॥ अष्टपत्रं तु कमलं विन्यसेद्वर्णकैः शुभैः॥ ब्रह्माणं कर्णिकायां तु तस्य संपूजयेद्विभुम् ॥ ६ ॥ ऋग्वेदं पूर्वपत्रे तु यजुर्वेदं तु दक्षिणे ॥ पश्चिमे सामवेदं तु उत्तरेऽथर्वणं तथा ॥ ७ ॥ आग्नेये च तथाङ्गानि धर्मशास्त्राणि नैर्ऋते ॥ पुराणान्येव वायव्ये चैशान्यां न्यायविस्तरम् ॥ ८ ॥ एवं विन्यस्य धर्मज्ञ सोपवासस्तु पूजयेत् ॥ चैत्रशुक्लादथारभ्य सोपवासो जितेन्द्रियः ॥ ९ ॥ सदा प्रतिपदं प्राप्य शुक्लपक्षस्य यादव ॥ संवत्सरं महाभाग शुक्लगन्धानुलेपनैः ॥ १० ॥ भूरिणा परमान्नेन धूपदीपैरतन्द्रितः ॥ संवत्सरान्ते गां दद्याद्धुते चीर्णे नरोत्तम ॥११॥ इदं व्रतं यस्तु करोति राजन्स वेदवित्स्याद्भुवि धर्मनित्यः ॥ कृत्वा तदा द्वादशवत्सराणि विधेश्च लोकं पुरुषः प्रयाति ॥ १२ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयकाण्डे मार्कण्डेयवज्रसंवादे ब्राह्मीप्रतिपल्लाभो नाम षड्विंशत्युत्तरशततमोऽध्यायः ॥ १२६ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ आराधनं त्रिदेवस्य तस्य वक्ष्यामि यादव ॥ विष्णोरमितवीर्यस्य द्वितीयमरिमर्दन ॥ १ ॥ ब्राह्मी तु राजसी मूर्तिस्तस्य वर्गप्रवर्तिनी ॥ सात्त्विकी वैष्णवी ज्ञेया संसारपरिपालिनी ॥ २ ॥ तामसी च तथा रौद्री ज्ञेया संहारकारिणी ॥ चैत्रशुक्लप्रतिपदि ब्रह्माणं पूजयेन्नरः ॥ ३ ॥ गन्धमाल्यनमस्कारधूपदीपान्नसम्पदा ॥ क्षीरं ब्राह्मैस्ततो मन्त्रैर्जुहुयाज्जातवेदसि ॥ ४ ॥ लोहभाण्डं द्विजे दद्यात्क्षीरपूर्णं सकाञ्चनम् ॥ दध्ना च भोजनं कार्यं मध्यं प्राप्ते दिवाकरे ॥ ५ ॥ एकवस्त्रांचिते देशे तथा स्वप्यात्कुशास्तृते ॥ ततश्चतुर्थे दिवसे कूपनादेयसारसैः ॥ त्रिभिरेकगतैस्तोयैः सम्यक्स्नानं समाचरेत् ॥ ६ ॥ पूजयेत्पूर्ववत्सम्यक्पुरत्रितय

मेव तत् ॥ लोहत्रयं द्विजे दद्यात्समाल्यं नृप दक्षिणाम् ॥ ७ ॥ तृतीयेह्नि ततः पूजा कार्या रुद्रस्य पार्थिव ॥ गन्धमाल्यनमस्कारधूपदीपैस्तथैव च ॥ मानस्तोकेति मंत्रेण घृतहोमो विधीयते ॥८॥ सघृतं लोहपात्रं च सहिरण्यं सदक्षिणम् ॥ तृतीये दिनभागे तु वाताहारं समाचरेत् ॥ ९ ॥ तथा त्रिमधुरं दद्याद्भोजनं तच्च भक्षयेत् ॥ व्रतमेतन्नरः कृत्वा मासिमासि दिनत्रयम् ॥ संवत्सरेण धर्मज्ञ गतिमिष्टामवाप्नुयात् ॥ १० ॥ मानुष्यमासाद्य भवत्यरोगो जितेन्द्रियः सत्यपरो विनीतः॥ सौभाग्यरूपद्रविणोपपन्नः साक्षाच्छिवो लोकधुरन्धरः स्यात्॥११॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे त्रिमूर्तिव्रतं नाम सप्तविंशत्युत्तरशततमोऽध्यायः ॥ १२७॥ मार्कण्डेय उवाच ॥ एकमेव जगत्सर्वं प्रकृतिः पुरुषः स्मृतः ॥ चैत्रशुक्लसमारंभे सोपवासो जितेन्द्रियः॥१॥ पुरुषं पूजयेद्विष्णुं स्थले वा यदि वा जले ॥ गन्धमाल्यनमस्कारधूपदीपान्नसंपदा॥२॥ पौरुषं तु तथा सूक्तं जपेदन्तर्जले नरः ॥ तथा चैनं च प्रत्यर्घं बुधो दद्याज्जलाञ्जलिम् ॥३ ॥ तथा पुष्पाणि धर्मज्ञः फलानि च महाभुज ॥ धूपं दद्यात्सनैवेद्यं जपेच्छक्त्या तथा च तम् ॥ ४ ॥ जुहुयाच्च तथाऽऽज्येन द्विजे दद्याच्च काञ्चनम् ॥ आहारं पयसा कुर्यान्निशाकाले च भार्गव॥ ॥ ५ ॥ एतत्संवत्सरं कृत्वा नित्यव्रतमतन्द्रितः ॥ पक्षयोरुभयोर्वीर सर्वपापैः प्रमुच्यते ॥ ६ ॥ प्रसादमासाद्य स वासुदेवात्सर्वेश्वरात्सर्वगणादचिन्त्यात् ॥ लोकेश्वरान्मोक्षपदं प्रयाति ये यान्ति सिद्धा मनुयः प्रतीताः ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० खण्डे मार्कण्डेयवज्रसंवादे पौरुषीप्रतिपद्वर्णनो नामाष्टाविंशत्युत्तरशततमोऽध्यायः ॥ १२८ ॥ मार्कण्डेय उवाच ॥ पुरुषः प्रकृतिश्चोभौ जगत्सर्वं प्रकीर्तितम् ॥ अग्नीषोमात्मकं सर्वं तथा तस्य प्रकीर्तितम् ॥१॥ वासुदेवश्च लक्ष्मीश्च तावेव परिकीर्तितौ ॥ चैत्रशुक्लसमायां च सोपवासो जितेन्द्रियः ॥२॥ पौरुषेण स सूक्तेन वह्निं संपूजयेन्नरः ॥ गन्धमाल्यनमस्कारधूपदीपान्नसम्प्रदा ॥ ३ ॥ लक्ष्मीं च वरदां देवीं पूजयेदुदकेन तु ॥श्रीसूक्तेन च धर्मज्ञ यथावन्मनुजेश्वर ॥ ४ ॥ काञ्चनं राजतं चोभौ दद्याद्विप्रेषु दक्षिणाम् ॥ प्राणयात्रां बुधः कुर्यात्क्षीरेण सघृतेन च ॥ ५ ॥ संवत्सरमिदं कृत्वा व्रतं सम्यगुपोषितः ॥ मुच्यते पातकैः सर्वैर्मोक्षोपायांश्च विन्दति ॥ ६॥ कामानवाप्नोत्यथ वा विचित्राँल्लोकांश्च मुख्यान्वसुधां समग्राम् ॥ विरूपतो रूपमथापि चाग्र्यं यशस्तथाग्र्यं तनयांश्च मुख्यान् ॥७॥ इति श्रीविष्णुधर्मोत्तरे तृ०खण्डे मार्कण्डेयवज्रसंवादे प्रकृतिपुरुषनिरूपणो नामैकोनत्रिंशदुत्तरशततमोऽध्यायः ॥ १२९ ॥ मार्कण्डेय उवाच ॥ नासत्यौ देवभिषजावश्विनौ परिकीर्तितौ ॥ तावेव कथितौ लोके सूर्यताराधिपौ नृप ॥ १ ॥ अश्वयानरतौ यस्मादश्विनौ परिकीर्तितौ ॥ चैत्रशुक्लद्वितीयायां सोपवासो जितेन्द्रियः ॥ २ ॥

नासत्यौ देवभिषजौ पूजयेत्प्रयतः शुचिः ॥ गन्धमाल्यनमस्कारधूपदीपान्नसम्पदा ॥ ३ ॥ कृत्वा च रूपनिर्माणं नासत्यौ पूजयेन्नरः ॥ दीपमालां ततो दद्यात्तयोर्निशि विशेषतः ॥ ४ ॥ कनकं रजतं चोभे दद्याद्विप्रेषु दक्षिणाम् ॥ संमील्य नेत्रयुगलं विष्णुं च संस्मरेन्नरः ॥ ५ ॥ प्रदीप्ततेजा भवति चक्षुष्मांश्चैव जायते ॥ प्राणयात्रां तु कुर्वीत दध्ना घृतयुतेन च ॥ ६ ॥ नेत्रव्रतं द्वादशवत्सराणि कृत्वा भवेद्भूमिपतिः प्रतीतः ॥ सरूपरूपोरिगणप्रमाथी धर्माभिरामो नृपवर्यमुख्यः ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख० मार्कण्डेयवज्रसंवादे नासत्यपूजाचक्षुर्व्रतं नाम त्रिंशदुत्तरशततमोऽध्यायः ॥ १३० ॥ ॥ मार्कण्डेय उवाच ॥ इमां तथान्यां वक्ष्यामि द्वितीयां सर्वकामदाम् ॥ यामुपोष्य नरः कामान्सर्वानाप्नोत्यभीप्सितान् ॥ १ ॥ चैत्रद्वितीयां संप्राप्य शुक्लपक्षस्य मानवः ॥ दिनावसाने कुर्वीत सम्यक् स्नानं नदीजले ॥ २ ॥ बालेन्दुमण्डलं कृत्वा पूजयेच्छ्वेतवर्णकैः ॥ श्वेतैः पुष्पैः फलैश्चैव परमान्नेन भूरिणा ॥ ३ ॥ ईक्षुनेक्षुविकारैर्वा गुडेन लवणेन वा ॥ दिनावसाने देवेशं पूजयित्वा निशाकरम् ॥४॥ घृतेन हवनं कृत्वा नक्तं भुञ्जीत वाग्यतः ॥ ततस्तैलेन हरितं भक्षयेत्सकृदेव च ॥५॥ एतद्व्रतं नरः कृत्वा सम्यक् संवत्सरं शुचिः ॥ सौभाग्यं महदाप्नोति स्वर्गलोकं च गच्छति ॥६॥ एतत्पवित्रं रिपुनाशकारि सौभाग्यदं रोगहरं च राजन्॥प्रोक्तं व्रतं यादववंशमुख्य कार्यं प्रयत्नेन तथा स्त्रियापि॥७॥इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे बालेन्दुद्वितीयाव्रतवर्णनो नामैकत्रिंशदुत्तरशततमोऽध्यायः ॥ १३१ ॥ मार्कण्डेय उवाच ॥ अशून्यशयनां राजन्द्वितीयां शृण्वतो मम ॥ यामुपोष्य न वैधव्यं प्रयाति स्त्री कथञ्चन ॥ १ ॥ पत्नीवियोगं च नरो नासादयति कर्हिचित् ॥ कृष्णपक्षद्वितीयायां ग्राह्या सा श्रवणे तिथिः ॥ २ ॥ स्वास्तीर्णे शयने विष्णुं लक्ष्मीं देवीं तथैव च ॥ संपूजयेत्फलैः पुष्पैर्गन्धैर्वस्त्रैश्च भार्गव ॥ ३ ॥ नैवेद्यं च ततो दद्याद्दीपं धूपं च शक्तितः ॥ ततः संपूज्य देवेशं जपेन्मन्त्रमिमं शुचिः ॥४॥ श्रीवत्सधारिञ्छ्रीकान्त श्रीवास श्रीपतेऽच्युत ॥ गार्हस्थं मा प्रणाशं मे यातु धर्मार्थकामदम् ॥ ५ ॥ अग्नयो मा प्रणश्यन्तु मा प्रणश्यन्तु देवताः ॥ पितरो मा प्रणश्यन्तु मत्तो दांपत्यभेदतः ॥ ६ ॥ लक्ष्म्या वियुज्यते देव न कदाचिद्यथा भवान् ॥ तथा कलत्रसंबन्धो देव मा मे विनश्यतु ॥ ७ ॥ लक्ष्म्या न शून्यं वरद यथा ते शयनं सदा ॥ शय्या ममाप्यशून्यास्तु तथैव मधुसूदन ॥ ८ ॥ एवं प्रसाद्य देवेशं नक्तं भुञ्जीत वाग्यतः ॥ ब्राह्मणाय द्वितीयेह्नि प्रदद्याच्चैव दक्षिणाम्॥९॥शयने च द्विजेन्द्राय गते मासचतुष्टये ॥तस्य जन्मत्रयं राजन्गृहभङ्गो न जायते॥१०॥अशून्यशयनश्चासौ धर्मकर्मार्थसाधकः ॥ भवत्यव्याहतैश्वर्यः पुरुषो नात्र संशयः॥११॥

वैधव्यहीना सुभगा विरोगा पतिव्रता धर्मपरा च साध्वी ॥ रूपेण युक्ता न भयान्विता च नारी भवेत्सर्वगुणोपपन्ना ॥१२॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे अशून्यशयनद्वितीयाव्रतकथनो नाम द्वात्रिंशदुत्तरशततमोऽध्यायः ॥ १३२ ॥ मार्कण्डेय उवाच ॥ शुक्लपक्ष तृतीयायां सोपवासो जितेन्द्रियः ॥ मण्डलत्रितयं कुर्याद्वर्णकेन पृथक्पृथक् ॥ १ ॥ मण्डलं दक्षिणे भागे श्वेतं कुर्यान्नरो भवेत् ॥ रक्तं मध्येऽप्यधः कुर्यादुदक्छ्वेतं ध्रुवस्य तु ॥ २ ॥ विष्णोः पदत्रयं तेषु पूज्यं स्यान्मण्डलेषु च ॥ भूमौ च प्रथमं पादं द्वितीयं सूर्यमण्डले ॥ ३ ॥ तृतीयं तु ध्रुवे देवे पूजयेत्प्रयतः शुचिः ॥ यथा मण्डलवर्णाङ्को गन्धमाल्यादिभिर्द्विज ॥ ४ ॥ तद्विष्णोः परमित्येव होममन्त्रो विधीयते ॥ त्रिविक्रमायेति तथा स्त्रीशूद्रस्य द्विजोत्तम ॥ ५ ॥ अक्षतानि तिलान्याज्यं होमयेत्संयुतं त्रयम् ॥ ताम्ररौप्यसुवर्णानि शक्त्या दद्यात्तु दक्षिणाम् ॥ ६ ॥ भोजनं च त्रिमधुरं भोजयेद्ब्राह्मणोत्तमम् ॥ प्राणयात्रां च कुर्वीत त्रिगव्येन च तद्दिनम् ॥ ७ ॥ एवं वर्षत्रयं कृत्वा व्रतान्ते वै त्रिहायनम् ॥ ब्राह्मणाय तु गां दत्त्वा सर्वान्कामानवाप्नुयात् ॥ ८ ॥ भूमौ तथान्तरिक्षे च दिवि चैव नरोत्तम ॥ गतिस्तस्या प्रतिहता भवत्यरिनिषूदन ॥ ९ ॥ त्रीणि वर्षसहस्राणि सर्वगस्याविचारिणः ॥ मानसं वाचिकं चैव कायिकं च विमुञ्चति ॥ १० ॥ सर्वपापं महा भाग मनुष्यो जायते तथा ॥ कुले धनाढ्यो भवति रूपद्रविणसंयुते ॥ ११ ॥ विरोगः सर्वसिद्धार्थस्त्रिवर्गस्य च साधकः ॥ कृत्वा द्वादशवर्षाणि विष्णुलोके महीयते ॥ १२ ॥ तत्रापि नित्यं वरदं वरेण्यं लक्ष्मीसहायं पुरुषं पुराणम् ॥ पश्यत्यमोघं विभुमप्रतर्क्यं सनातनं दुःखविनाशहेतुम्॥ ॥ १३ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे त्रिविक्रमव्रतवर्णनो नाम त्रयस्त्रिंशदुत्तरशततमोऽध्यायः ॥ १३३ ॥

॥ मार्कण्डेय उवाच ॥ द्वितीयं तव वक्ष्यामि शृणु त्रैविक्रमं व्रतम् ॥ भूमिस्तु प्रथमः पादो ह्यन्तरिक्षं तथा परम् ॥ १ ॥ तृतीयश्च दिवं ज्ञेयो देव देवस्य चक्रिणः ॥ भुवः पतिः स्मृतो वह्निरन्तरिक्षं तथापरम् ॥ २ ॥ दिवः पतिस्तथा सूर्यस्तच्च विष्णोः पदत्रयम् ॥ ज्येष्ठशुक्लतृतीयायां सोप वासो जितेन्द्रियः ॥ ३ ॥ कल्ये कूपजलस्नातो वह्निं सम्पूजयेन्नरः ॥ गन्धमाल्यनमस्कारधूपदीपान्नसंपदा ॥ ४ ॥ नदीजले ततः स्नात्वा मध्यं प्राप्ते दिवाकरे ॥ वायोः संपूजनं कृत्वा सक्तून्दद्याद्द्विजातये ॥ ५ ॥ स्नात्वा च सरसीतोये सायं सूर्यं समर्चयेत् ॥ ततश्च नक्तं चाश्नीयाद्धविष्यं वाग्यतः शुचिः ॥ ६ ॥ एवं संवत्सरे राजन्कृत्वा व्रतमतन्द्रितः ॥ समापयित्वा वैशाखे दद्याद्विप्रेषु दक्षिणाम् ॥ ७ ॥ ताम्रं रूप्यं सुवर्णं च त्रीणि लोहानि यादव ॥ वासोयुगं च सोष्णीषं त्रीणि वासांसि चाप्यथ ॥ ८ ॥ उपानहौ युगं छत्रं त्रीणि चेमानि भक्तितः ॥ एतत्संवत्सरं कृत्वा नर

स्त्रैविक्रमं व्रतम् ॥ ९ ॥ सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥ विमानेनार्कवर्णेन किङ्किणीजालमालिना ॥ १० ॥ देवराजगणाढ्येन वीणासुर
जनादिना ॥ अन्नमायुः सुताश्चैव प्रसन्ने गरुडध्वजे ॥११॥ आक्रान्तलोकत्रितयस्य तस्य पदत्रयं धर्मभृतां वरिष्ठ ॥ संपूज्य कामान्मनुजा लभन्ते
गतिं यथेष्टां पुरुषप्रवीर ॥ १२ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे द्वितीयत्रैविक्रमव्रतकथनो नाम चतुस्त्रिंशदुत्तरशततमोऽ
ध्यायः ॥ १३४ ॥ मार्कण्डेय उवाच ॥ व्याख्यातं ते महाभाग तव त्रैविक्रमं व्रतम् ॥ तृतीयं नृपशार्दूल तन्मे निगदतः शृणु ॥ १ ॥ ज्यैष्ठ
शुक्लतृतीयायां नरः सम्यगुपोषितः ॥ भुवस्संपूजनं कुर्याद्धूपमाल्यानुलेपनैः ॥ २ ॥ दीपैरन्नैश्च विविधैर्दद्याद्विप्रेषु दक्षिणाम् ॥ बीजपूर्णानि
पात्राणि सहिरण्यानि शक्तितः ॥ ३ ॥ पूजैवमन्तरिक्षस्य ह्याषाढेति विधीयते ॥ दक्षिणा तत्र दातव्या वासोयुग्मं द्विजातये ॥ ४ ॥ दिवः
पूजा च कर्तव्या श्रावणे प्राग्वदेव तु ॥ छत्रं चोपानहो युग्मं दक्षिणां तत्र दापयेत् ॥ ५ ॥ एवं मासत्रयेणेह पारणं प्रथमं भवेत् ॥ मासत्रयेण
चान्यत्तु मासत्रय्यं पुनस्ततः ॥ ६ ॥ ततो मासत्रयेणान्यमेनमब्देन चानघ ॥ विज्ञेयं धर्मनित्यस्य पारणानां चतुष्टयम् ॥ ७ ॥ प्रथमं पारणं
कृत्वा अग्निष्टोमफलं लभेत् ॥ अतिरात्रफलं राजन्द्वितीये पारणे तथा ॥ ८ ॥ तृतीये पारणे विद्वान्वाजपेयफलं लभेत् ॥ चतुर्थे पारणे प्रोक्तं
राजसूयस्य यत्फलम् ॥ ९ ॥ विमानेनार्कवर्णेन किङ्किणीजालमालिना ॥ हंसयुक्तेन दिव्येन वीणासुरजनादिना ॥ १० ॥ वराप्सरोगणाढ्येन
कामुकेनापि चारुणा ॥ यथेष्टगामी भवति बहुकालमसंशयम् ॥ ११ ॥ मानुष्ये जन्म चासाद्य त्रिशुक्लत्वमवाप्नुयात् ॥ विद्या जन्म तथा कर्म
नात्र कार्या विचारणा ॥ १२ ॥ त्रिविक्रमस्याप्रतिमस्य तस्य चराचरेशस्य पदत्रयं च ॥ यः पूजयेत्तस्य भवन्ति कामाः सर्वे समृद्धा न हि
संशयोऽत्र ॥ १३ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे तृतीयत्रैविक्रमव्रतवर्णनो नाम पञ्चत्रिंशदुत्तरशततमोऽध्यायः
॥ १३५ ॥ मार्कण्डेय उवाच ॥ आराधनं हि देवस्य तस्य वक्ष्यामि यादव ॥ विष्णोरमितवीर्यस्य तन्निबोध नराधिप ॥ १ ॥ वाय्वर्क
चन्द्रदेहस्तु त्रिमूर्तिर्भगवान्हरिः ॥ अग्निष्टोमो जगत्यस्मिँश्चन्द्रार्कौ परिकीर्तितौ ॥ २ ॥ सर्वाधारश्च भगवान्वायुः सर्वगतस्तथा ॥ पञ्च
भूतात्मकं सर्वं जगदेतच्चराचरम् ॥ ३ ॥ आधारभूतौ द्वावेतौ पृथिवी गगनं तथा ॥ आधेयो विद्धि धर्मज्ञ तथा भूतत्रयं सदा ॥ ४ ॥
चन्द्रादित्यौ च वायुश्च सर्वस्य जगतो द्विज ॥ आधाराधेयभावेन भूतैर्वृतमिदं जगत् ॥ ५ ॥ नैव चास्ति जगत्यस्मिन्किञ्चिद्भूतविवर्जितम् ॥
तस्माद्वा यादवश्रेष्ठ भूतैर्वृतमिदं जगत ॥ ब्रह्माणं विद्धि भूमिं च गगनं तदनन्तरम् ॥ अण्डस्यान्तः स्थिता देवा वाय्वर्कतुहिनांशवः ॥ ६ ॥

पालयन्ति जगत्सर्वं सदेवासुरमानुषम् ॥ तथैवाण्डस्थिताः सर्वे पालयन्ति जगत्त्रयम् ॥ ७ ॥ तथैव देहिनां देहे पालयन्ति शरीरगाः ॥ वातपित्त
कफत्वेन वाय्वर्कशिशिरांशवः ॥ ८ ॥ आधारं जगतो यद्वद् ब्रह्माण्डं परिकीर्तितम् ॥ तथा देहे शरीरस्था देहिनां हि त्वगुच्यते ॥ ९ ॥ ब्रह्माण्डे
देहिदेहेऽपि गगनं दृश्यते द्वयोः ॥ ब्रह्माण्डवच्छरीराणि वाय्वर्कशिशिरांशवः ॥ १० ॥ पालयन्ति महीपाल वातपित्तकफांशकाः ॥ वाय्वर्कचन्द्र
देहस्तु तस्माद्विष्णुस्त्रिमूर्तिधृत् ॥ ११ ॥ तस्य संपूजनं कार्यं यथावच्छृणु भार्गव ॥ ज्येष्ठशुक्लतृतीयायां निराहारो नरः शुचिः ॥ १२ ॥
त्रिमूर्तिपूजनं कुर्याद्द्वितीयायां यथाविधि ॥ कूपनादेयताडाकमिश्रैः स्नातः शुचिर्जलैः ॥ १३ ॥ प्रत्यूषे पूजयेद्वायुमनुलिप्ते शुभे स्थले ॥ गन्ध
माल्यनमस्कारधूपदीपान्नसंपदा ॥ १४ ॥ होमं कुर्याद्यवैर्मुख्यैर्वस्त्रं दद्याद्द्विजातये ॥ मध्याह्ने पूजयेद्वह्नौ तथा सूर्यमतन्द्रितः ॥ १५ ॥ तिलांश्च
जुहुयाद्वह्नौ दद्याद्विप्रेषु दक्षिणाम् ॥ सूर्यास्तमनवेलायां जले चन्द्रं च पूजयेत् ॥ १६ ॥ घृतेन होमं कुर्वीत रजतं दक्षिणा स्मृता ॥ नक्तं भुञ्जीत
धर्मज्ञ तैलहीनं ततो नरः ॥ १७ ॥ पूर्णं संवत्सरं कृत्वा व्रतमेतदतन्द्रितः ॥ स्वर्गलोकमवाप्नोति सहस्रपरिवत्सरान् ॥ १८ ॥ मानुष्यमासाद्य
ततो राजा भवति गह्वरे ॥ व्रतं कृत्वा महाराज पूर्णं संवत्सरत्रयम् ॥ १९ ॥ पञ्चवर्षसहस्राणि स्वर्गलोके महीयते ॥ मानुष्यं च समासाद्य राजा
भवति धार्मिकः ॥ २० ॥ वीरो माण्डलिकः शूरः परचक्रभयंकरः ॥ विरोगो दर्शनीयश्च सुभगो जनवल्लभः ॥ २१ ॥ कृत्वा द्वादशवर्षाणि
व्रतमेतदनुत्तमम् ॥ व्रतावसाने विप्राणां सहस्रं भोजयेत्ततः ॥ २२ ॥ भोज्यं त्रिमधुरं पेयं दद्याच्छक्त्या च दक्षिणाम् ॥ ततः स्वर्गमवाप्नोति
वर्षाणां च शतं व्रती ॥ २३ ॥ ततो मानुष्यमासाद्य राजा भवति पार्थिवः ॥ प्रदीप्तचक्रो बलवान्धर्मराजो जनप्रियः ॥ २४ ॥ जन्मान्तरं
समासाद्य ततो विप्रत्वमाप्नुयात् ॥ ततो ब्राह्मण्यमासाद्य मोक्षोपायं च विन्दति ॥ २५ ॥ आराधनं ते कथितं मयैतद्विष्णोस्त्रिदेहस्य महानु
भाव ॥ आराधितो येन जगत्प्रधान कामानभीष्टान्विदुषोददाति ॥ २६ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे श्रीविष्णुत्रि
मूर्तिव्रतवर्णनो नाम षड्त्रिंशदुत्तरशततमोऽध्यायः ॥ १३६ ॥ ॥ मार्कण्डेय उवाच ॥ अतः परं प्रवक्ष्यामि विष्णुमूर्तिव्रतं तव ॥ द्विधा तु
देवदेवस्य मूर्तिर्भवति यादव ॥ १ ॥ घोरा चान्या शिवा चान्या घोरा भवति पावकः ॥ शिवा चाम्बुपतिर्यस्मादग्नीषोमात्मकं जगत् ॥ २ ॥
द्विधा घोरा विनिर्दिष्टा द्विधा सौम्या ततः पुनः ॥ घोरा वह्निश्च सूर्यश्च सौम्या सोमजलाधिपौ ॥ ३ ॥ तेषां च पूजनं कार्यं प्रतिवत्प्रभृति
क्रमात् ॥ शुक्लपक्षादथारभ्य फाल्गुनस्य द्विजोत्तम ॥४॥ आदित्यं पूजयेद्राजा प्रथमेह्नि परः शुचिः ॥ द्वितीयेह्नि तथा वह्निं तृतीयेह्नि जला

धिपम्॥ ५॥ चतुर्थेह्नि शशांकं च यथावन्मानवोत्तम ॥ तेषां तु रूपनिर्माणं कृत्वा तानर्चयेद्बुधः ॥६॥ गन्धमाल्यनमस्कारधूपदीपान्नसंपदा ॥
वचाहरिद्रया स्नानं प्रथमेह्नि समाचरेत् ॥ ७ ॥ द्वितीये यदुशार्दूल स्नानमामलकैः शुभम् ॥ प्रियङ्गुणा तृतीये च चतुर्थे गौरसर्षपैः ॥ ८॥
गोधूमतिलधान्यैश्च यवैश्च दिवसं क्रमात् ॥ होमश्च कार्यो धर्मज्ञ दक्षिणां शृणु चाप्यथ ॥ ९ ॥ कुंकुमं रक्तवस्त्रं च चन्दनं छत्रमेव च ॥ क्षीरेण
चात्र कर्तव्यं प्रत्यहं प्राणधारणम् ॥ १० ॥ एतत्संवत्सरं कृत्वा व्रतं पूर्णं नरोत्तम ॥ सर्वकामसमृद्धस्य यज्ञस्थं फलमश्नुते ॥ ११ ॥ विमानेना
र्कवर्णेन स्वर्गलोकं च गच्छति ॥ तत्रोष्य सुचिरं कालं कुले महति जायते ॥ १२ ॥ मानुष्यमासाद्य भवत्यरोगो वसुन्धरेशो विजितारिपक्षः ॥
धर्मे स्थितः सत्यपरो विनीतो जितेन्द्रियः सर्वजनाभिरामः॥१३॥इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे चतुर्मूर्तिव्रतवर्णनो नाम
सप्तत्रिंशदुत्तरशततमोऽध्यायः ॥ १३७ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ इदमन्यत्प्रवक्ष्यामि चतुर्मूर्तिव्रतं तव ॥ शक्रकीनाशवरुणधनाध्यक्षान्य
दूत्तम ॥ १ ॥ चतुरात्मा विनिर्दिष्टो वासुदेवो जगत्पतिः ॥ तेषां तु रूपनिर्माणं कृत्वा तानर्चयेद्बुधः ॥ २॥ गन्धमाल्यनमस्कारधूपदीपान्नसंपदा ॥
आद्येह्नि चैत्रशुक्लस्य यजेत त्रिदशेश्वरम् ॥ ३ ॥ द्वितीयेह्नि यमं देवं तृतीये सलिलाधिपम् ॥ चतुर्थेह्नि धनाध्यक्षं प्रत्यहं स्नानमाचरेत् ॥ ४ ॥
नदीप्रदेशमासाद्य देवदृक् प्रत्यहं क्रमात् ॥ यवैस्तिलैस्तथाज्येन होमः स्यात्तिलतण्डुलैः ॥ ५ ॥ रक्तं पीतं तथा कृष्णं श्वेतं वस्त्रं दिनक्रमात् ॥
शुभमेतद्व्रतं कृत्वा पूर्णं संवत्सरं नरः ॥ नाकलोकमवाप्नोति यावदिन्द्राश्चतुर्दश ॥ ६ ॥ मानुष्यमासाद्य भवत्यरोगो वसुन्धरेशो विजितारिपक्षः ॥
जनाभिरामः सुभगः प्रकृत्या ततोपि विप्रत्वमुपैति भूयः ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेवज्रसंवादे चतुर्मूर्तिव्रतवर्णनो नामा
ष्टात्रिंशदुत्तरशततमोऽध्यायः ॥ १३८ ॥ ॥ छ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ इदमन्यत्प्रवक्ष्यामि चतुर्मूर्तिव्रतं तव ॥ विष्णुर्भूमिर्नभो ब्रह्मा
तस्य रूपचतुष्टयम् ॥ १॥तेषां तु रूपनिर्माणं कृत्वा तानर्चयेत्ततः ॥ गन्धमाल्यनमस्कारधूपदीपान्नसंपदा ॥२॥ आद्येह्नि चैत्रशुक्लस्य विष्णुं देवं
समर्चयेत ॥ द्वितीयादिषु धर्मज्ञ भुवं त्वां च पितामहम् ॥ ३ ॥ पूर्वव्रतोक्तं सकलं विधानमपरं भवेत् ॥ व्रतमेतं नरः कृत्वा स्वर्गलोकमवाप्नुयात्
॥ ४ ॥ मानुष्यमासाद्य भवत्यरोगो धर्माभिरामो द्रविणोपपन्नः ॥ धनेन रूपेण सुखेन युक्तो जनाभिरामो विजितारिपक्षः ॥ ५ ॥ इति श्रीविष्णु
धर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे तार्तीयकचतुर्मूर्तिव्रतवर्णनो नामैकोनचत्वारिंशदुत्तरशततमोऽध्यायः ॥ १३९ ॥ मार्कण्डेय उवाच ॥
इदमन्यत्प्रवक्ष्यामि चतुर्मूर्तिव्रतं तव ॥ बलं ज्ञानं तथैश्वर्यं शक्तिश्च यदुनन्दन ॥ १ ॥ विख्यातं देवदेवस्य तस्य मूर्तिचतुष्टयम् ॥ यदेव

रूपं धर्मस्य बलस्योक्तं तदेव तु ॥ २ ॥ रूपं ज्ञानस्य ते प्रोक्तं नरसिंहं तथा नृप ॥ रुद्ररूपमथैश्वर्यं कथितं ते मया नृप ॥ ३ ॥ शक्तिर्वराहः कथितो देवो मधुनिषूदनः ॥ एवमेतन्मुखात्प्रोक्तं चतुर्मूर्तिधरस्य ते ॥ ४ ॥ पूर्वं बलमुखं तस्य वासुदेवमुखं भवेत् ॥ दक्षिणं वदनं ज्ञानं देवं संकर्षणं विदुः ॥ ५ ॥ ऐश्वर्यं पश्चिमं वक्त्रं रौद्रं पापहरं तथा ॥ वराहमुत्तरं वक्त्रमनिरुद्धं प्रकीर्तितम् ॥६॥ त्रिरात्रोपोषितश्चैत्रे पूर्वं संपूजयेन्मुखम् ॥ तथा वैशाखमासे तु पूजयेद्दक्षिणामुखम् ॥ ज्येष्ठे च पश्चिमं वक्त्रमाषाढेति तथोत्तरम् ॥७॥गृहोपयोगि दातव्यं चैत्रे मासि द्विजातये ॥ रणोपयोगि दातव्यं वैशाखे यादवोत्तम॥८॥योगोपयोगि दातव्यं तथा ज्येष्ठे द्विजातये॥यज्ञोपयोगि दातव्यं मास्याषाढे तथैव च॥९॥ व्रतमेतन्नरः कृत्वा पूर्णं मासचतुष्टयम् ॥पारणे प्रथमे प्राप्ते भवतीति विनिश्चयः॥१०॥पारणं प्रथमं कृत्वा स्वर्गलोके महीयते॥ दशवर्षसहस्राणि स्वर्गं भुक्त्वा यथोदितम् ॥११॥सौम्यादिषु च मासेषु द्वितीयं पारणं भवेत् ॥ द्वितीयं पारणं कृत्वा भोजयेद्ब्राह्मणाञ्शुचिः ॥ भोजनं गोरसप्रायं मृद्वीकाशर्करायुतम्॥१२॥ प्राप्ते तृतीये द्विजपारणे च प्राप्नोति देवस्य स लोकतां सः ॥ स्वर्गेन्दुलोकौ च तथोक्तकालं भुक्त्वा सुखी सर्वसमृद्धिकामः ॥ १३ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख० मार्कण्डेयवज्रसंवादे चतुर्थः चतुर्मूर्तिव्रतवर्णनो नाम चत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४० ॥ मार्कण्डेय उवाच ॥ इदमन्यत्प्रवक्ष्यामि चतुर्मूर्तिव्रतं तव ॥ विद्याकामेन कर्तव्यं नरेण सुविपश्चिता ॥ १ ॥ बहिः स्नानं नरः कृत्वा कृतऋग्वेदपूजनः ॥ ऋग्वेदं शृणुयान्नित्यं मासमात्रमतन्द्रितः ॥ २ ॥ चैत्रादारभ्य धर्मज्ञः नित्यं नक्ताशनो द्विजः ॥ यस्माच्छ्रुतं द्विजात्तस्य ज्येष्ठस्य चरमेऽहनि ॥ ३ ॥ वासोयुगं हिरण्यं च तथा धेनुं पयस्विनीम् ॥ घृतपूर्णं कांस्यपात्रं सहिरण्यं च दक्षिणा ॥ ४ ॥ आषाढादिषु मासेषु यजुर्वेदव्रतं भवेत् ॥ आश्विनादिषु मासेषु सामवेदव्रतं भवेत् ॥ ५ ॥ तथा सर्वव्रतं नाम पौषादिषु विधीयते ॥ सर्वेषु सर्वं कर्तव्यमृग्वेदव्रतकीर्तितम् ॥ ६ ॥ वेदात्मनो वासुदेवस्य पूजां कृत्वा नरो द्वादशवत्सराणि ॥ विष्णोर्लोकं याति लोकैर्विशिष्टं यस्तं प्राप्तः सर्वदुःखं जहाति ॥ ७ ॥इति श्रीविष्णुधर्मोत्तरे तृ० ख० मार्कण्डेयवज्रसंवादे पञ्चमचतुर्मूर्तिकल्पे वेदव्रतो नामैकचत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४१ ॥ मार्कण्डेय उवाच ॥ इदमन्यत्प्रवक्ष्यामि चतुर्मूर्तिव्रतं तव ॥ सर्वात्मनां तु कर्तव्या यथा पूजा जगद्गुरोः॥ चैत्रशुक्लचतुर्थ्यां तु सोपवासो जितेन्द्रियः॥ १ ॥ चतुर्थ्यां वासुदेवस्य कृत्वा संपूजनं शुभम् ॥ काञ्चनं दक्षिणां दद्याद्द्विजाय ब्रह्मचारिणे ॥ २ ॥ तथा सङ्कर्षणं देवं पूजयित्वा जगद्गुरुम् ॥ वैशाखे तु गृहस्थाय दद्याच्छय्यां सुसंस्कृताम् ॥ ३ ॥ संपूज्य देवं प्रद्युम्नं ज्येष्ठे मासि यथाविधि ॥ वनस्थाय तथा दद्यात्फलमूलं सगोरसम् ॥ ४ ॥ अनिरुद्धं तथाषाढे

पूजयित्वा जगद्गुरुम् ॥ दद्यादलाबुपात्रं च योगस्थाय द्विजातये ॥ ५ ॥ इत्येवं पारणं प्रोक्तं स्वर्गलोके महीयते ॥ द्वितीये पारणे प्राप्ते शक्रलोके महीयते ॥ ६ ॥ सालोक्यमायात्यथ केशवस्य प्राप्ते तृतीये त्वथ पारणे च ॥ इत्याश्रमाख्यं व्रतमुत्तमं ते मयेरितं कल्मषनाशकारि ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे चतुर्मूर्तिकल्पे आश्रमव्रतवर्णनो नाम द्विचत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४२ ॥ मार्कण्डेय उवाच ॥ इदमन्यत्प्रवक्ष्यामि चतुर्मूर्तिव्रतं तव ॥ चतुरात्मा हरिः प्रोक्तश्चत्वारस्तु हुताशनाः ॥ १ ॥ आहिताग्निर्द्विजो यस्य विद्य तेऽग्निचतुष्टयम् ॥ सोपवासश्चतुर्थ्यां तु शुक्लपक्षस्य फाल्गुने ॥ २॥ अभ्यर्च्य चतुरात्मानं वासुदेवमतन्द्रितः ॥ तस्मै दद्याद्विजेन्द्राय तिलप्रस्थानि षोडश ॥ ३ ॥ सुवर्णस्य सुवर्णं च वस्त्रं घृततुलामपि ॥ एवं संवत्सरं कृत्वा व्रतमेतदतन्द्रितः ॥४ ॥ सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥ विमानेनार्कवर्णेन स्वर्गलोकं च गच्छति ॥ ५ ॥ मानुषो दीप्ततेजाः स्याद्दीप्ताग्निः प्रमदाप्रियः ॥ रिपूञ्जयति संग्रामे धनवांश्च तथा भवेत् ॥ ६ ॥ ये त्वग्नयो वै चतुरः प्रदिष्टाः स वासुदेवः कथितश्चतुर्धा ॥ यः पूजयेद्ब्राह्मणमाहिताऽग्निं देवः स तेनाप्यथ पूजितः स्यात् ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख०मार्कण्डेयवज्रसंवादे सप्तमचतुर्मूर्तिकल्पे अग्निव्रतवर्णनो नाम त्रिचत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४३ ॥ मार्कण्डेय उवाच ॥ इदमन्यत्प्रवक्ष्यामि चतुर्मूर्तिव्रतं तव ॥ चैत्रशुक्लसमारम्भे प्रथमेहनि पूजयेत् ॥ १ ॥ कृतं शुक्लेन सर्वेण गन्धमाल्यादिना द्विजः ॥ द्वितीयेहनि रक्तेन तथा त्रेतां तु पूजयेत् ॥ २ ॥ तृतीयेहनि पीतेन द्वापरं पूजयेद्बुधः ॥ चतुर्थेहनि कृष्णेन तिष्यं संपूजयेद्युगम् ॥ ३ ॥ सिद्धार्थकैः कुंकुमेन तथैव च हरिद्रया ॥ तथैवामलकस्नानमाचरेद्दिवसक्रमात् ॥ ४ ॥ सिद्धार्थकाक्षततिलैर्घृतेन जुहुयात्तथा ॥ मुक्ताफलं तथा वज्रं पद्मरागं च यादव ॥ ॥ ५ ॥ इन्द्रनीलं तथा दद्याद्विप्रेषु दिवसक्रमात् ॥ क्षीरेण प्राणयात्रां तु कुर्यात्प्रत्यहमेव तु ॥ ६ ॥ कृत्वा व्रतं वत्सरमेतदेकं चतुर्युगं मोदति नाकपृष्ठे ॥ संपूज्य देवं युगमूर्तिसंज्ञं चतुर्युगं शास्ति महीं समग्राम् ॥७॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख० मार्कण्डेयवज्रसंवादे अष्टमचतुर्मूर्तिकल्पे चतुर्युगव्रतवर्णनो नाम चतुश्चत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४४ ॥ मार्कण्डेय उवाच ॥ इदमन्यत्प्रवक्ष्यामि चतुर्मूर्तिव्रतं तव ॥ नित्यं चतुर्षु मासेषु श्रावणाद्येषु यादव ॥ १ ॥ चतुः सागरचिह्नानि पूर्णकुम्भानि पूजयेत् ॥ चतुरात्मा हरिर्ज्ञेयः सागरात्मा विचक्षणैः ॥ स्नानं समाचरेन्नित्यं नदीतोयेषु यादव ॥ २ ॥ होमं च प्रत्यहं कुर्याद् गव्येन पयसा तथा ॥ तानि कुम्भानि विप्रेभ्यः प्रत्यहं विनिवेदयेत् ॥ ३ ॥ सोपहाराणि धर्मज्ञ भक्त्या शक्त्या तथैव च ॥ नक्तं च प्राशनं कुर्य्यात्सततं तैलवर्जितम् ॥ ४ ॥ कार्तिकस्यावसानेऽह्नि भोजयित्वा द्विजोत्त

मान् ॥ धेनुं दत्त्वा च विप्राय नाकपृष्ठे महीयते ॥ सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥५॥ मानुष्यमासाद्य महीपतिः स्याद्भुक्त्वा महीं साग
रमेखलान्ताम् ॥ तत्रापि धर्मस्य पतिर्निविष्टो भवत्यरोगश्च बलेन युक्तः ॥ ६ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे विष्णुच
तुर्मूर्तिकल्पे सागरव्रतवर्णनो नाम पञ्चचत्वारिंशदुत्तरशततमोऽध्यायः॥१४५॥ मार्कण्डेय उवाच ॥ इदमन्यत्प्रवक्ष्यामि चतुर्मूर्तिव्रतं तव ॥ वासुदे
वस्य गरुडस्तालः सङ्कर्षणस्य च॥१॥ प्रद्युम्नस्य तथा चिह्नं मकरो व्यादिताननः॥देवोऽनिरुद्धो धर्मज्ञ ऋष्यकेतुः प्रकीर्तितः॥२॥पीतं नीलं तथा
श्वेतं रक्तं च यदुनन्दन॥तेषां तु कथितं वासः पताका तादृगिष्यते॥३॥यस्य देवस्य यच्चिह्नं स चात्मा नाम कीर्तितः॥ पताका यादृशी यस्य वसनं
तस्य तादृशम् ॥ ४ ॥ चैत्रे तु प्रत्यहं मासि गरुडं पूजयेन्नरः ॥ पीतेन गंधनैवेद्यमाल्यवस्त्रादिना द्विजः॥५॥वैशाखे च तथा मासि तालं संपूजये
त्सदा ॥ नीलेन गंधनैवेद्यमाल्यवस्त्रादिना द्विजः॥६॥ऋष्यं संपूजयेद्देवं मास्याषाढे यथाविधि ॥रक्तेन गन्धनैवेद्यमाल्यवस्त्रादिना द्विजः॥७॥
बहिः स्नानं तथा कुर्याद्वह्निसंपूजनं ततः ॥ नित्यं च कुर्याद्धर्मज्ञ तथा ब्राह्मणतर्पणम् ॥ ८ ॥ प्राणयात्रा तथा कुर्यादुक्तं तैलविवर्जितम् ॥ अधः
शायी तथा च स्याद् ब्रह्मचारी तथा भवेत् ॥ ९ ॥ व्रतमेत्तथा कुर्यान्नित्यं मासचतुष्टयम् ॥ ब्राह्मणान्पूजयेच्छक्त्या चाषाढचरमेहनि ॥ १० ॥
वस्त्राण्यर्थानि धर्मज्ञ दद्याद्विप्रेषु दक्षिणाम् ॥ कृत्वैकं पारणं राजन्स्वर्गलोके महीयते ॥ ११ ॥ द्वितीयं पारणं कृत्वा शक्रलोके महीयते ॥ तृतीयं
पारणं कृत्वा ब्रह्मलोके महीयते ॥ १२ ॥ कृत्वा पारणषट्कं तु रुद्रलोके महीयते ॥ विष्णुलोकमवाप्नोति कृत्वा द्वादशपारणम् ॥ १३ ॥ ध्वज
व्रतं द्वादशवत्सराणि कृत्वा नरो भार्गववंशमुख्य ॥ सायुज्यमायाति जनार्दनस्य देवस्य विष्णोः परमेश्वरस्य ॥ १४ ॥ इति श्रीविष्णुधर्मोत्तरे
तृतीयखण्डे मार्कण्डेयवज्रसंवादे चतुर्मूर्तिकल्पे ध्वजव्रतवर्णनो नाम षट्चत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४६ ॥ मार्कण्डेय उवाच ॥ इद
मन्यत्प्रवक्ष्यामि चतुर्मूर्तिव्रतं तव ॥ ईशानं च तथा वह्निं विरूपाक्षं समीरणम् ॥ १॥ विज्ञेयं यदुशार्दूल देवमूर्तिचतुष्टयम् ॥ तेषां तु रूपनिर्माणं
कृत्वा तानर्चयेद्बुधः ॥ २ ॥ गन्धमाल्यनमस्कारधूपदीपान्नसंपदा ॥ चैत्रशुक्ले महाभागं प्रतिपत्प्रभृति क्रमात् ॥ ३ ॥ भौमनादेयताडाकसारसैः
स्नानमाचरेत् ॥ दध्ना तिलैर्यवैर्होमो घृतेन च तथा भवेत् ॥ ४ ॥ कर्पूरकुङ्कुमं चैव तथैवागुरुचंदने ॥ ब्राह्मणेषु प्रदातव्यं तथा राजन्दिन
क्रमात् ॥ ५ ॥ दिनत्रयं तथाश्नीयात्सायंप्रातरयाचितम् ॥ दिनमेकं तथाश्नीयाद्ब्रह्मचारी नरोत्तम ॥ ६ ॥ एवं संवत्सरं कृत्वा व्रतं पुरुषसत्तम ॥
सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥ ७ ॥ मानुष्यमासाद्य भवत्यरोगो वसुन्धरेशो विजितारिपक्षः ॥ जन्मान्तरे स्याद्द्विजवर्यमुख्यो वेदप्रसक्तो

बहुयज्ञयाजी॥८॥इति श्रीष्णुधर्मोत्तरे तृ०ख०मार्कण्डेयवज्रसंवादे चतुर्मूर्तिकल्पे देवमूर्तिव्रतवर्णनो नाम सप्तचत्वारिंशदुत्तरशततमोऽध्यायः॥१४७॥
मार्कण्डेय उवाच ॥ इदमन्यत्प्रवक्ष्यामि चतुर्मूर्तिव्रतं तव ॥ शङ्खचक्रगदापद्मश्चतुरात्मा प्रकीर्तितः॥१॥वासुदेवः स्मृतः शङ्खश्चक्रं संकर्षणस्तथा ॥
प्रद्युम्नश्च गदा पद्ममनिरुद्धो जगद्गुरुः॥२॥श्रावणादिषु मासेषु बहिः स्नानस्तु भक्तभुक् ॥तेषां संपूजनं कुर्यात्प्रतिमासमतः क्रमात्॥३॥गन्धमाल्य
नमस्कारधूपदीपान्नसंपदा ॥ ततस्तु कार्तिकस्यान्ते समाप्ते तु तथा व्रते॥४॥ब्राह्मणान्भोजयेद्भक्त्या दद्याच्छक्त्या च दक्षिणाम्॥ कांस्यपात्रं च
सघृतं ससुवर्णं तथैव च॥५॥कृत्वा व्रतं मासचतुष्टयं तु प्राप्नोति लोकं त्रिदशेश्वरस्य॥ मानुष्यमासाद्य तथेह पश्चाद्वसुन्धरेशो भवतीह वीरः ॥६॥
इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे चतुर्मूर्तिव्रतकल्पे आयुधव्रतवर्णनो नामाष्टाचत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४८ ॥
मार्कण्डेय उवाच ॥ इदमन्यत्प्रवक्ष्यामि चतुर्मूर्तिव्रतं तव ॥ त्रिरात्रोपोषितः सम्यग्वसन्ते विषुवद्दिने ॥ १ ॥ पूजां कृत्वा यथाशक्ति वासुदेवस्य
शत्रुहन् ॥ ततो मासत्रयं नित्यं वासुदेवं तु पूजयेत् ॥ २ ॥ तच्च मासत्रयं तिष्ठेत्फलाहारो विचक्षणः ॥ ततः शारदमासाद्य धर्मज्ञ विषुवद्दिनम् ॥
॥ ३ ॥ त्रिरात्रोपोषितः स्नात्वा प्रद्युम्नं पूजयेत्प्रियम् ॥ होमं कृत्वा ततोऽश्नीयाद्दत्त्वा दानं च शक्तितः ॥ ४ ॥ प्राणयात्रां तु कुर्वीत यावकेन
महामते॥ व्रतावसानमासाद्य वासन्तं विषुवद्दिनम् ॥ ब्राह्मणं भोजयेच्छक्त्या दद्याद्विप्रेषु दक्षिणाम् ॥५॥ काञ्चनं रजतं वस्त्रं गां च यादवनन्दन ॥
एतत्संवत्सरं कृत्वा व्रतं नाम हरिप्रियम् ॥ ६ ॥ स्वर्गलोकमवाप्नोति बहुकालमसंशयम् ॥ ततोऽश्विलोकान्प्राप्नोति वसुलोकं ततो द्विजः ॥ ७ ॥
विश्वेषां चैव देवानां तथैवाङ्गिरसां द्विजः ॥ रुद्राणामथ साध्यानां भृगूणां सवितुस्तथा ॥८ ॥ मरुतामपि धर्मज्ञ शिशिरांशोस्तथैव च ॥ प्राप्नोति
देवलोकं च कामचारी विहङ्गमः ॥ ९ ॥ प्राप्नोति लोकं स हुताशनस्य शक्रस्य देवस्य तथा हरस्य ॥ लोकं समासाद्य पितामहस्य ततः स
विष्णोः पुरुषः प्रयाति ॥ १०॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे चतुर्मूर्तिव्रतकल्पे फलाहारहरिप्रियव्रतवर्णनो नामैकोनपञ्चा
शदुत्तरशततमोऽध्यायः ॥ १४९ ॥ मार्कण्डेय उवाच ॥ इदमन्यत्प्रवक्ष्यामि चतुर्मूर्तिव्रतं तव ॥ तस्मिन्नेव व्रते राजन्मया पूर्वोदिते शुभे ॥१॥
विष्णोः स्थाने त्वनन्तस्य पूजा कार्या विजानता ॥ तस्य संपूजनं कृत्वा महीगगनवेधसाम् ॥ २ ॥ द्वितीयादिषु कुर्वीत यथावद्विजितेन्द्रियः ॥
अनन्तं पूजयेद्विद्वान्प्रथमेह्नि यथाविधि ॥ ३ ॥ व्रतमेतन्नरः कृत्वा पूर्णं संवत्सरं ततः॥विष्णुलोकमवाप्नोति यावदिन्द्राश्चतुर्दश ॥ ४ ॥ मानुष्य
मासाद्य भवत्यरोगो जितेन्द्रियः सत्यपरो विनीतः ॥ धनेन रूपेण सुखेन युक्तो जनाभिरामः प्रमदाप्रियश्च ॥ ५ ॥ इति श्रीविष्णुधर्मोत्तरे

तृतीयखण्डे मार्कण्डेयवज्रसंवादे चतुर्मूर्तिकल्पेऽनन्तव्रतवर्णनो नाम पञ्चाशदुत्तरशततमोऽध्यायः ॥ १५० ॥ मार्कण्डेय उवाच ॥ इदमन्यत्प्रव क्ष्यामि चतुर्मूर्तिव्रतं तव ॥ वासुदेवांशकाज्जाताः सर्वे देवगणा नृप ॥ १ ॥ अधिकेन तदंशेन साध्या जातास्तथासुराः ॥ तत्रापि चाधिकांशेन चतुरात्मा हरिः स्मृतः ॥ २ ॥ नरो नारायणश्चैव हयो हंसश्च वीर्यवान् ॥ हयो हरिरिति ख्यातो हंसः कृष्णश्च कीर्तितः ॥ ३ ॥ चतुरात्मा हरि र्जातो गृहे धर्मस्य यादव ॥ आदित्येषु तथा युक्तो मित्रावरुणसंज्ञकौ ॥ ४ ॥ तावेव साध्यौ जानीहि हरिं कृष्णं च यादव ॥ आदित्येषु तु या वुक्तौ शक्रविष्णू सुरोत्तमौ ॥ ५ ॥ तावेव सिद्धसाध्येषु नरनारायणौ पुनः ॥ चैत्रशुक्लचतुर्थ्यां तु सोपवासस्तु पूजयेत् ॥ ६ ॥ देवेशं चतुरा त्मानं वित्तशक्त्या नराधिप ॥ व्रतमेतन्नरः कृत्वा पूर्णं द्वादशवत्सरम्॥न दुर्गतिमवाप्नोति मोक्षोपायं च विन्दति॥७॥ततः समासाद्य च निष्कलत्वं परेण पुंसा च समत्वमेति ॥ सर्वेश्वरश्चाप्रतिमप्रभावो विमुक्तदुःखो भुवनस्य गोप्ता ॥ ८ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे चतुर्मूर्तिव्रते श्रीविष्णुव्रतवर्णनो नामैकपञ्चाशदुत्तरशततमोऽध्यायः ॥१५१ ॥ समाप्तं चतुर्मूर्तिव्रतम् ॥ मार्कण्डेय उवाच ॥ अतः परं प्रवक्ष्यामि पञ्चमूर्तेस्तथार्चनम् ॥ पृथिव्यापस्तथा तेजो वायुराकाशमेव च ॥ १ ॥ वासुदेवस्य देवस्य कथिताः पञ्चमूर्तयः ॥ चैत्रे तु पञ्चमीं शुक्लां समासाद्य विचक्षणः ॥ २ ॥ सोपवासो हरिं देवं पञ्चात्मानं समर्चयेत् ॥ पञ्चमण्डलगाः कार्याः पञ्चभिर्वर्णकैः पृथक् ॥ ३ ॥ पार्थिवं मण्डलं कार्यं शुक्ल वर्णं महीपते ॥ वारुणं च तथा श्वेतं रक्तमाग्नेयमिष्यते ॥ ४ ॥ पीतं भवति वायव्यं कृष्णमाकाशदैवतम् ॥ समानवर्णैर्गन्धैस्तु पुष्पैस्तानर्चयेत्पृथक् ॥ ५ ॥ शक्त्या च धूपदीपाद्यैर्यथालाभमरिन्दम ॥ यवैर्वान्यैस्तिलैश्चैव सर्षपैश्च घृतेन च ॥ ६ ॥ पञ्चभिर्जुहुयान्मिश्रैः सर्वेषां च पृथक्पृथक् ॥ तल्लिङ्गैरथ मन्त्रैर्वा त्वथ वा नृप नामभिः ॥ ७ ॥ ॐकारपूर्वकैर्हुत्वा शक्त्या विप्रांस्तु पूजयेत् ॥ एवं संवत्सरं कृत्वा पूर्णे संवत्सरे ततः ॥ ८ ॥ दत्त्वा विप्रेषु वस्त्राणि देवरङ्गसमानि च ॥ महाभूतव्रतमिदं यः करोत्यथ पञ्चकम् ॥ ९ ॥ पञ्चयज्ञमवाप्नोति क्रमशो येऽनुकीर्तिताः ॥ बहून्यब्द सहस्राणि स्वर्गलोके महीयते ॥ १० ॥ मानुष्यमासाद्य भवत्यरोगो बलान्वितो वैरिगणापहर्ता ॥ श्रुतेन रूपेण गुणेन युक्तो जनाभिरामः प्रमदा प्रियश्च ॥ ११ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे पञ्चमूर्तिपञ्चमहाभूतव्रतवर्णनो नाम द्विपञ्चाशदुत्तरशततमोऽध्यायः ॥ १५२ ॥ मार्कण्डेय उवाच ॥ इदमन्यत्प्रवक्ष्यामि पञ्चमूर्तिव्रतं तव ॥ संवत्सरः स्मृतो वह्निस्तथार्कः परिवत्सरः ॥ १ ॥ इडापूर्वस्तथा सोम अनुपूर्वः प्रजापतिः ॥ तत्पूर्वश्च तथा प्रोक्तो देवदेवो महेश्वरः ॥ २ ॥ तेषां मण्डलविन्यासैः प्राग्वदेव विधीयते ॥ प्राग्वच्च पूजनं कार्यं होमः

कार्यस्तथाविधः ॥ ३ ॥ तिलव्रीहियवैश्चैव घृतेन सितसर्षपैः ॥ तल्लिङ्गैरथ वा मन्त्रैर्नामभिः प्रत्यहं क्रमात् ॥ ४ ॥ नक्ताशनस्तथा तिष्ठेत्प्राग्व द्दिवसपञ्चकम् ॥ संवत्सराख्ये वर्षे तु व्रतमेतत्समारभेत् ॥ ५ ॥ व्रतावसाने दातव्यं सुवर्णं पञ्च यादव ॥ चतुर्वेदविदां देयं शाखाभेदेन यादव ॥ ६ ॥ एकैकं पञ्चमं देयं तथा कालविदे भवेत ॥ अश्वमेधफलं ह्येतद्व्रतं तव मयेरितम् ॥ ७ ॥ यथेष्टं लोकमाप्नोति कामचारी विहङ्गमः ॥ कृते नानेन धर्मज्ञ पूज्यमानः सुरासुरैः॥८॥ मानुष्यमासाद्य भवत्यरोगो वर्णेन रूपेण बलेन युक्तः ॥ नृपः प्रतापानतशत्रुसंघो देवोत्तमो वा बहुयज्ञयाजी ॥ ९ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे पञ्चव्रतविधौ संवत्सरपूजायामश्वमेधफलवर्णनो नाम त्रिष्पञ्चाशदुत्तरैकशत तमोऽध्यायः ॥ १५३ ॥ मार्कण्डेय उवाच ॥ अथातः संप्रवक्ष्यामि श्रीव्रतं नाम ते व्रतम् ॥ चैत्रशुक्लतृतीयायां स्नानमभ्यङ्गपूर्वकम् ॥ १ ॥ कृत्वा शुक्लाम्बरो राजञ्शुक्लमाल्यानुलेपनः ॥ तिष्ठेद् घृतौदनाहारो भूमौ स्वप्याच्च तां निशाम्॥२॥चतुर्थ्यां च तथा स्नानं बहिर्गत्वा समाचरेत॥ पद्मिन्यां च विशेषेण ततः शुक्लाम्बरः शुचिः ॥ ३ ॥ लक्ष्मीं सम्पूजयेत्पद्मे कृतकेऽकृतकेऽपि वा ॥ शुक्लेन गन्धमाल्येन घृतदीपेन चा प्यथ ॥ ४ ॥ दध्ना च परमान्नेन आर्द्रकेण गुडेन च ॥ इक्षुणेक्षुविकारैश्च लवणेन च भूरिणा ॥ ५ ॥ स्वशक्त्या च महाराज भूयसा बलिक र्मणा ॥श्रीसूक्तेन ततो वह्नौ पद्मानि जुहुयाच्छुचिः ॥ ६ ॥ तदलाभे च बिल्वानि तदलाभे तथा घृतम्॥ ब्राह्मणान्गोरसप्रायं घृतं भूयिष्ठमाशयेत ॥ ७ ॥ सुवर्णमाषकं दद्याद्ब्राह्मणेभ्यश्च दक्षिणाम् ॥ अनाहारस्ततः स्वप्याच्छुचौ देशे यथाविधि ॥ ८ ॥ ततस्तु पञ्चमीं प्राप्य पूर्वाह्णे पद्मिनी जले ॥ स्नात्वा सम्पूजनं कुर्यात्प्राग्वदेव तथा प्रियः ॥ ९ ॥ भूय एव द्विजे दद्यात्पूर्वं कनकमाषकम् ॥ पद्माक्षमथ वा बिल्वं प्राश्नीयात्तदनन्तरम् ॥ १० ॥ ततो हविष्यमश्नीयाद्वाग्यतो मानवोत्तमः ॥ संवत्सरमिदं बिल्वं प्राश्नीयात्तदनन्तरम् ॥ संवत्सरमिदं कृत्वा व्रतं पार्थिवसत्तम॥११॥ फलमाप्नोति विपुलं राजसूयाश्वमेधयोः ॥ विना कनकदानेन व्रतमेतत्समाचरेत् ॥ १२ ॥ व्रतान्ते माषकं दद्याद्वह्निष्टोमफलं लभेत् ॥ सम्पूज्य सोपवासस्तु शुक्लपक्षस्य पञ्चमीम् ॥ १३ ॥ नित्यमेव श्रियं देवीं श्रियमाप्नोत्यनुत्तमाम् ॥ बलमुत्तममाप्नोति रूपमारोग्यमेव च ॥ १४ ॥ जगत्प्रधाना वरदा वरेण्या विभावरी सर्वगता नरेन्द्र ॥ श्रद्धान्वितः पूजयतीह यस्तु कामानवाप्नोति स सर्वकालम् ॥ १५ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे पञ्चमूर्तिविधौ लक्ष्मीव्रतवर्णनो नाम चतुष्पञ्चाशदुत्तरशततमोऽध्यायः ॥ १५४ ॥ मार्कण्डेय उवाच ॥ अथापरं प्रवक्ष्यामि पञ्चमूर्तिव्रतं तव ॥शङ्खं चक्रं गदां पद्मं पृथिवीं च महाभुज ॥ १ ॥ गन्धैर्मण्डलकान्कृत्वा पञ्चपञ्चसु

पूजयेत् ॥ चैत्रशुक्लान्तमारभ्य पञ्चमीप्रभृतीर्नृप॥२॥ सोपवासो बहिः स्नातस्तथा शुक्लाम्बरः शुचिः ॥ गन्धमाल्यनमस्कारधूपदीपान्नसंपदा॥३॥ सर्वेषां पूजनं कृत्वा जुहुयाज्जातवेदसि ॥ सर्वेषामेव देवानां नामभिस्तु तथा घृतम् ॥ ४ ॥ ब्राह्मणान्भोजयेच्चात्र तदा मधुरभोजनम् ॥ संवत्सरमिदं कृत्वा व्रतान्ते वस्त्र पञ्चकम् ॥ ५ ॥ अश्वमेधमवाप्नोति पञ्चरात्रविदे ददत् ॥ पञ्चवर्णं च राजेन्द्र राजसूयफलं लभेत् ॥ ६ ॥ मानुष्यमासाद्य भवत्यरोगो बलान्वितो धर्मपरो विनीतः ॥ धनेन रूपेण सुखेन युक्तो राजाधिराजोऽप्यथ वानरेन्द्रः ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे पञ्चमूर्तिव्रते आयुधादिव्रतनिरूपणो नाम पञ्चपञ्चाशदुत्तरशततमोऽध्यायः ॥ १५५ ॥ मार्कण्डेय उवाच ॥ अथातः संप्रवक्ष्यामि षण्मूर्तेरर्चनं तव ॥ वसन्ते पूजयेन्नित्यं द्वौ मासौ मधुमाधवौ ॥ १ ॥ फलैः पुष्पैः कषायैस्तु ग्रीष्मेग्रीष्मे च पूजयेत् ॥ मधुरेण महाराज प्रावृट्काले हिते च तम् ॥२ ॥ अम्लेन पूजयेन्नित्यं शरदं लवणेन च॥बटुकेन च हेमन्ते तिक्तेन शिशिरे तथा ॥३॥ नक्ताशनस्तथा तिष्ठेदृतूक्तं वर्जयेद्रसम् ॥ ब्राह्मणान्भोजयेच्चात्र ऋतूक्तं रसभोजनम् ॥ ॥ ४ ॥ संवत्सरमिदं कृत्वा व्रतं परमपावनम् ॥ अश्वमेधमवाप्नोति राजसूयं च विन्दति ॥५॥ सर्वान्कामानवाप्नोति नात्र कार्या विचारणा ॥ फलमक्षय्यमाप्नोति व्रतस्यास्य नरोत्तम ॥ ६ ॥ चैत्रादथारभ्यसिते च षष्ठीं संपूजयेद्यो ऋतुषट्कमेवम् ॥ कृतोपवासस्तु यथोक्तमेतत्फलं लभेत्पूर्णमितीदमुक्तम् ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे षण्मूर्तिव्रतवर्णनो नाम षट्पञ्चाशदुत्तरशततमोऽध्यायः ॥ १५६॥ मार्कण्डेय उवाच ॥ अतः परं प्रवक्ष्यामि सप्तमूर्तिव्रतं तव ॥ चैत्रमासादथारभ्य प्रतिपत्प्रभृति क्रमात् ॥ १ ॥ सुभास्वरा बर्हिषदो ह्यग्निष्वात्तास्तथैव च ॥ क्रव्यादानुपहूतांश्च आज्यपांश्च सुकालिनः ॥ २ ॥ पूजयेत्प्रत्यहं राजन्गन्धमाल्यानुलेपनैः ॥ नैवेद्यं कृसरं कुर्यात्तिलानग्नौ च होमयेत् ॥ ३ ॥ कृसरं भोजयेद्विप्रांस्तिलान्दद्याच्च दक्षिणाम् ॥ नक्ताशनस्तथा तिष्ठेद्धविष्याशी नराधिप ॥४॥ संवत्सरमिदं कृत्वा व्रतं पुरुषसत्तम ॥ व्रतावसाने दद्याच्च रजतस्य पलं द्विजे ॥५॥ व्रतेनानेन चीर्णेन सूर्यलोकगतिर्भवेत् ॥ त्रिदशैः पूज्यमानस्तु कामचारी विहङ्गमः ॥ ६॥ वर्षं समग्रं पुरुषस्तु कृत्वा संसारमोक्षं लभते नरेन्द्र॥कृत्वा तथा द्वादशवत्सराणि मानुष्यमासाद्य महीपतिः स्यात् ॥७॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मा० संवादे सुभासुरादिपितृव्रतवर्णनो नाम सप्तपञ्चाशदुत्तरशततमोऽध्यायः ॥ १५७ ॥ मार्कण्डेय उवाच ॥ चैत्रमासादथारभ्य कृष्णपक्षदिने दिने ॥ पातालपूजनं कुर्यात्प्रतिपत्प्रभृति क्रमात् ॥१॥ रुक्मभौमं तथा भौमं पातालं नीलमृत्तिकम् ॥ रक्तभौमं पीतभौमं श्वेतकृष्णमृदावपि॥२॥

सुवर्णैर्गन्धमाल्यैश्च नैवेद्येन च भूरिणा ॥ घृतदीपप्रदानेन वह्निसन्तर्पणेन च ॥ ३ ॥ एवं नक्ताशनं कृत्वा व्रतं संवत्सरं तदा ॥ व्रतावसाने दद्याच्च दीपकं द्विजवेश्मसु ॥ ४ ॥ स तु वस्त्राणि राजेन्द्र यथावर्णानि चाप्यथ ॥ व्रतमेतन्नरः कृत्वा नृणामधिपतिर्भवेत् ॥५॥ पतिं लभन्ते नर देवकन्याः शतसहस्रशः ॥ रमयन्ति महाराज यथैवेडविडस्तथा॥६॥कालेन चासाद्य मनुष्यलोकं राजा भवेच्छत्रुगणप्रमाथी॥ बलेन रूपेण धनेन युक्तो महामतिः सर्वजगत्प्रधानः॥७॥इति श्रीविष्णुध० तृ०खण्डे मा० सं०पातालानां व्रतवर्णनो नामाष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥ मार्कण्डेय उवाच ॥ अथातः संप्रवक्ष्यामि सप्तद्वीपव्रतं शुभम् ॥ चैत्रशुक्लादथारभ्य प्रत्यहं दिनसप्तकम् ॥ १ ॥ जम्बूशाककुशक्रौञ्चशाल्मलिद्वीपसंज्ञितम् ॥ गोमेदं पुष्करं चैव प्रत्यहं पूजयेत्क्रमात् ॥२॥ नित्यमेव तथा स्नानं बहिरेव समाचरेत् ॥ घृतेन होमं कुर्वीत सप्तसस्यं च दापयेत् ॥ ३॥ एकमन्नं तथा नक्तं सकृदेव समाचरेत् ॥ अधःशायी भवेन्नित्यं तद्देवे दिवसत्रयम् ॥४॥ पूर्णे संवत्सरे दद्याद्रजतस्य विनिर्मितम् ॥ पलानान्तु शतेनैव संस्थानं द्वीपवत्कृतम् ॥ ५ ॥ व्रतमेतन्नरः कृत्वा पूर्णं संवत्सरं शुचिः ॥ स्वर्गलोकमवाप्नोति यावदाभूतसंप्लवम् ॥ ६ ॥ मानुष्यमासाद्य समस्तद्वीपान्भुनक्ति भूमिं विजितारिपक्षः ॥ संपूज्यमानस्त्रिदशैः सदैव महर्षिभिर्ब्राह्मणपुङ्गवैश्च ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख० मार्कण्डेयवज्रसंवादे जम्बूद्वीपादिसप्तद्वीपव्रतवर्णनो नामैकोनषष्ट्युत्तरशततमोऽध्यायः॥१५९॥ मार्कण्डेय उवाच ॥ अथातः संप्रवक्ष्यामि समुद्रव्रतमेव ते ॥ चैत्रशुक्लादथारभ्य प्रत्यहं दिवसत्रयम् ॥ १ ॥ लवणक्षीरआज्यौघदधिमण्डसुरोदकम् ॥ तथैवेक्षुसुरोदं च स्वादूदं चैव पूजयेत् ॥ २ ॥ आचरेत्प्रत्यहं स्नानं नित्यमेव गृहाद्बहिः ॥ घृतेन होमं कुर्वीत सप्तसस्यं च दापयेत् ॥ ३ ॥ हविष्याशी भवेन्नक्तं कुर्यात्संवत्सरं व्रतम् ॥ संवत्सरान्ते दद्याच्च तथा धेनुं पयस्विनीम् ॥ ४ ॥ व्रतेनानेन चीर्णेन सप्तसागरमेखलाम् ॥ भुनक्ति वसुधां राजा सप्तजन्मान्तराणि च ॥ ५ ॥ आरोग्यकामः कुर्वीत व्रतमेतत्तथोत्तमम् ॥ धर्मकामो यशःकामः श्रीकामश्च तथापरः ॥ ६ ॥ मङ्गल्यमेतत्परमं पवित्रं श्रीवर्धनं धर्मविवृद्धिकारि ॥ कर्तव्यमेतत्प्रयतैर्मनुष्यैर्ये राज्यकामास्तु विशेषतस्तैः ॥७॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख० मार्कण्डेयवज्रसंवादे लवणसमुद्रादिसप्तसमुद्रव्रतवर्णनो नाम षष्ट्युत्तरशततमोऽध्यायः ॥ १६० ॥ मार्कण्डेय उवाच ॥ अथातः संप्रवक्ष्यामि तव शैलव्रतं शुभम् ॥ महेन्द्रो मलयः सह्यः शुक्तिमानृक्षवानपि ॥ १ ॥ विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः ॥ चैत्रशुक्लसमारम्भात्प्रत्यहं दिनसप्तकम्॥२॥ तेषां संपूजनं कुर्याद्बहिः स्नानं समाचरेत् ॥ गन्धमाल्यनमस्कारधूपदीपान्नसंपदा ॥ ३ ॥ यवैर्होमस्तथा कार्यो दद्याद्विप्रेषु दक्षिणाम् ॥ नक्तं यवान्नमश्नीयात्कुर्यात्संवत्सरं

व्रतम् ॥ ४॥ व्रतावसाने दद्याच्च यवस्थालीश्च विंशतिम् ॥ वाचकाय द्विजेन्द्राय सुवर्णं गां च तस्य तु॥ ५ ॥ व्रतेनानेन चीर्णेन सर्वां सागरमेख
लाम् ॥ भुनक्ति वसुधां राजा वशीकृत्वा रिपून्नृप ॥ ६ ॥ भोगांश्च भुक्त्वा त्रिदिवे च राजन्मानुष्यमासाद्य यथोक्तमेतत् ॥ प्राप्नोति सर्वं
हि मयेरितं यज्जन्मान्तराण्येव नरेन्द्र सप्त ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख० मार्कण्डेयवज्रसंवादे सप्तशैलव्रतवर्णनो नामैकषष्ट्युत्तरशततमो
ऽध्यायः ॥ १६१ ॥ मार्कण्डेय उवाच ॥ अतः परं प्रवक्ष्यामि तव लोकव्रतं शुभम् ॥ यास्तु व्याहृतयः सप्त त्रैलोक्यां तु प्रकीर्तिताः ॥
॥ १ ॥ आचरेत्प्रत्यहं स्नानं बहिर्नित्यमतन्द्रितः ॥ चैत्रशुक्लादथारभ्य क्रमेण दिनसप्तकम् ॥ २ ॥ गोमूत्रं गोमयं
क्षीरं दधि सर्पिः कुशोदकम् ॥ एकरात्रोपवासश्च क्रमेणैवं समाचरेत् ॥ ३ ॥ महाव्याहृतिभिर्होमस्तिलैः कार्यो दिनेदिने ॥ संवत्स
रान्ते दद्याच्च तथा विप्रेषु दक्षिणाम् ॥ ४ ॥ सुवर्णमहतं वासः कांस्यं धेनुं पयस्विनीम् ॥ संवत्सरमिदं कृत्वा व्रतं पुरुषसत्तम ॥ ५ ॥ सर्व
लोकचरः श्रीमान्स्वेच्छया स्यान्नराधिप ॥ यावत्कल्पावसानं तु कल्पादौ पार्थिवो भवेत् ॥ ६ ॥ स चक्रवर्ती नृपवर्यपूज्यः सुरासुराणामधिक
प्रभावः ॥ संवत्सराणामयुतं शतानां सम्पाति पृथ्वीं सकलाभिरामः ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे सप्तव्याहृ
तिसप्तलोकव्रतवर्णनो नाम द्वाषष्ट्युत्तरशततमोऽध्यायः ॥ १६२ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ चैत्रशुक्लादथारभ्य प्रत्यहं दिनसप्तकम् ॥
ह्लादिनीं ह्लादिनीं चैव पावनीं चैव पूजयेत् ॥ १ ॥ सीतां रामं तथा सिन्धुं तथा भागीरथीं क्रमात् ॥ बहिःस्नानं ततः कुर्यान्नित्यं नक्ताशनो
भवेत् ॥ २ ॥ जले तु जुहुयात्क्षीरं तासां नाम्ना दिनेदिने ॥ क्षीरपूर्णा च दातव्या वारिधान्यो द्विजातिषु ॥ ३ ॥ क्षीराशनस्तु तिष्ठेत्तु तत्तथा
दिनसप्तकम् ॥ एवं संवत्सरं कृत्वा पूर्णे संवत्सरे नरः ॥ ४॥ द्विजातिषु ततो दद्याद्रजतस्य पलं पलम् ॥ फाल्गुनस्य सिते पक्षे सप्तम्यां दिवस
क्रमात् ॥ ५ ॥ तल्लोकमाप्नोति नरो यत्र पायसकर्दमम् ॥ नद्यः क्षीरवहा दिव्याः सर्वकामफलप्रदाः ॥६॥ तत्रोष्य कालं सुचिरं महात्मा मानुष्यमासा
द्य भवत्यरोगः॥रूपेण शीलेन धनेन युक्तो राजाथ वा ब्राह्मणपुङ्गवश्च॥७॥इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे नदीव्रतवर्णनो नाम
त्रिषष्ट्युत्तरशततमोऽध्यायः ॥ १६३ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ चैत्रशुक्लादथारभ्य प्रत्यहं दिनसप्तकम् ॥ सुप्रभां काञ्चनाक्षीं च
विशालां मानसं ह्रदम् ॥ १ ॥ तां त्रिनादां सुवेणुं च तथैव विमलोदकाम् ॥ नित्यं संपूजयेद्भक्त्या बहिः स्नानं समाचरेत् ॥ २ ॥ तासां च
प्रत्यहं नाम्ना दध्ना होमं समाचरेत् ॥ ब्राह्मणान्भोजयेच्चात्र दध्ना मिश्रं च भोजनम् ॥ ३ ॥ घृतौदनं तथाश्नीयात्सकृदेव तथा निशि ॥

एवं संवत्सरं कृत्वा पूर्णे संवत्सरे नरः ॥ ४ ॥ फाल्गुनामलपक्षे तु प्रत्यहं दिवसक्रमात् ॥ वस्त्राणां सप्तकं दद्यात्तीर्थस्नाते द्विजोत्तमे ॥ ५ ॥ एवं संवत्सरं कृत्वा व्रतं सारस्वतं जपेत् ॥ तत्रोष्य सुचिरं कालं मनुष्यो जायते तदा ॥ ६ ॥ तदा नरेन्द्रो विजितारिपक्षो द्विजोत्तमो वा बहु यज्ञयाजी ॥ रूपेण शीलेन धनेन युक्तः श्रुतान्वितः स्याच्च जनाभिरामः ॥७॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे सारस्वत व्रतवर्णनो नाम चतुःषष्ट्युत्तरशततमोऽध्यायः ॥ १६४ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ चैत्रशुक्लादथारभ्य प्रत्यहं दिनसप्तकम् ॥ मरीचि मत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ॥ १ ॥ वसिष्ठं च महाभाग पूजयेद्दिवसक्रमात् ॥ कालोद्भवैः फलैः पुष्पैर्गोरसैश्च पृथक्पृथक् ॥ २ ॥ आचरेत्प्रत्यहं स्नानं बहिर्नक्ताशनो भवेत् ॥ महाव्याहृतिभिर्होमं फलैर्मूलैः सगोरसैः ॥ ३ ॥ वारिधान्यश्च दातव्याः क्षीरपूर्णा द्विजातिषु ॥ एवं संवत्सरं कृत्वा व्रतान्ते चाहिताग्नये ॥४॥ दद्यात्कृष्णाजिनं राजन्यथा पूर्वं मयेरितम् ॥ व्रतमेतन्नरः कृत्वा मोक्षोपायं च विन्दति ॥ ५ ॥ मोक्षो पायं समासाद्य मोक्षं प्राप्नोत्यसंशयम् ॥६॥ प्राप्नोति लोकं यदि वा मुनीनां देवस्य विष्णोर्यदि वेश्वरस्य ॥ पितामहस्याप्रतिमस्य वापि व्रतेन चीर्णेन महानुभाव ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे सप्तर्षिव्रतवर्णनो नाम पञ्चषष्ट्युत्तरशततमोऽध्यायः ॥१६५॥ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ चैत्रशुक्लस्य पक्षे तु सम्यक्षष्ठ्यामुपोषितः ॥ सप्तम्यामर्चनं कुर्यान्मरुतां पार्थिवोत्तम ॥ १ ॥ सप्तश्रेणीगतं सप्तमण्डलं नृप कारयेत् ॥ श्रेणीश्रेणी तथा कार्या सप्तमण्डलकान्विता ॥ २ ॥ गन्धैर्मण्डलकाः कार्या नामचिह्नाः पृथक्पृथक् ॥ एकज्योति श्च द्विज्योतिस्त्रिज्योतिश्च महाबल ॥ ३ ॥ एकद्वित्रिचतुःशक्तिक्रमेण च तथा नृप ॥ विन्यसेत्प्रथमं श्रेण्यां यथावन्नृपसत्तम ॥ ४ ॥ इन्द्रश्च गत्या दृश्यश्च ततः प्रतिशक्रस्तथा ॥ मितश्च सम्मितश्चैव अमितश्च महाबलः ॥ ५ ॥ द्वितीयायां तथा श्रेण्यां देवानेतांश्च विन्यसेत् ॥ ऋतजि त्सत्यजिच्चैव सुषेणश्चैव वीर्यवान् ॥ ६ ॥ अतिमित्रोनमित्रश्च पुरुमित्रस्तथैव च ॥ तृतीयायां तथा श्रेण्यां देवानेतांश्च विन्यसेत् ॥ ७ ॥ ऋतश्च ऋतवान्धर्ता विधर्ता वरुणो ध्रुवः ॥ विधारणं चतुर्थ्यां तु श्रेण्या पार्थिव विन्यसेत् ॥ ८ ॥ ईदृक्षश्च सदृक्षश्च एतादृगमिताशनः ॥ कीर्तितः प्रसदृक्षश्च शरभश्च महायशाः ॥ ९ ॥ विन्यसेत्पञ्चमश्रेण्यां सप्तदेवान्नराधिप ॥ धर्ता दुम्रो ध्वनिर्भीमो अतियुक्तः क्षमासहः ॥ १० ॥ षष्ठ्यां च विन्यसेच्छ्रेण्यां सप्तदेवान्यथाक्रमम् ॥ द्युतिर्वसुरनाधृष्यो वासः कामो जयो विराट् ॥ ११ ॥ सप्तम्यां च तथा श्रेण्यां विन्यसेत्सप्त पार्थिवान् ॥ प्रथमा तु भवेच्छ्रेणी शुक्ला पार्थिवसत्तम ॥ १२ ॥ द्वितीया पद्मपत्राभा तृतीया रुधिरोपमा ॥ पीतवर्णा चतुर्थी स्यात्पञ्चमा शुक

सन्निभा ॥ १३ ॥ आकाशसन्निभा षष्ठी कृष्णवर्णा च सप्तमी ॥ माल्यानुलेपनं देयं तासां वर्णसमं नृप ॥ १४ ॥ एकोनास्तत्र दातव्या दीपाः पञ्चाशदेव तु ॥ पृथक्पृथक्तु देवानां नैवेद्यं विनिवेदयेत् ॥ १५ ॥ घृतं च जुहुयाद्वह्नौ नामभिश्च पृथक्पृथक् ॥ भोजयेद्ब्राह्मणाँश्चात्र सुरसंख्या समन्वितान् ॥ १६ ॥ संवत्सरमिदं कृत्वा व्रतं पुरुषसत्तम ॥ सुवर्णसहितं वासो गां च दद्यात्तथैव च ॥ १७ ॥ पौराणिकाय विप्राय व्रतान्ते विनिवेदयेत् ॥ व्रतस्यास्य तु राजेन्द्र सम्यग्विप्रो विधानवित् ॥ १८ ॥ आरोग्यकामः कुर्वीत व्रतमेतन्नरोत्तम ॥ पुत्रकामोर्थकामश्च धनकामोथ वा पुनः ॥ १९ ॥ सर्वकामप्रदं ह्येतत्पवित्रं पापनाशनम् ॥ मङ्गल्यं स्वर्गदं प्रोक्तं व्रतानामुत्तमं व्रतम् ॥२० ॥ व्रतेनानेन चीर्णेन चिरं स्वर्गं समश्नुते ॥ मानुष्यमासाद्य भवेत्स्वर्गभ्रष्टस्तथाचिरात् ॥ २१ ॥ धनेन रूपेण बलेन युक्तो जनाभिरामः प्रमदाप्रियश्च ॥ विरोगदेहः क्षतशत्रुपक्षो वाग्मी तथा शास्त्रधरश्च लोके ॥ २२ ॥ इति श्रीवि०ध० तृ०ख० मा०व०सं० मरुद्व्रतवर्णनो नाम षट्षष्ट्युत्तरशततमोऽध्यायः ॥ १६६ ॥

॥ मार्कण्डेय उवाच ॥ चैत्रशुक्लस्य पक्षे तु सम्यक्षष्ठ्यामुपोषितः ॥ सप्तम्यामर्चनं कुर्याद्देवदेवस्य गोपतेः ॥ १ ॥ बहिः स्नानं नरः कृत्वा गोमयेनोपलेपितम् ॥ लेपयेत्स्थण्डिलं सम्यक्कृतो गौरमृदा नृप ॥ २ ॥ तत्राष्टपत्रं कमलं वर्णकैस्तु समालिखेत् ॥ कर्णिकायां न्यसेत्तत्र देवदेवं विभावसुम् ॥ ३ ॥ पूर्वपक्षे न्यसेद्देवौ द्वौ राजन्नुत्तरे दले ॥ आग्नेये च न्यसेत्पत्रे गन्धर्वौ ऋतुकारिकौ ॥ ४॥ दक्षिणे च न्यसेत्पत्रे तथैवाप्सरसो द्वयम् ॥ राक्षसौ द्वौ महाराज पत्रे नैर्ऋतके न्यसेत् ॥ ५ ॥ काद्रवेयौ महानागौ पश्चिमे ऋतवारिकौ ॥ वायव्ये यातुधानौ द्वौ तथैव नृपसत्तम ॥ ६ ॥ उत्तरे च तथा पत्रे विन्यसेच्च ऋषिद्वयम् ॥ ऐशान्ये विन्यसेत्पत्रे ग्रहमेकं नरोत्तम ॥ ७ ॥ तेषां संपूजनं कार्यं गन्धमाल्यानुलेपनैः ॥ धूपैर्दीपैश्च नैवेद्यैः पृथक्पृथगरिन्दम ॥ ८ ॥ एवं सम्पूजनं कृत्वा सर्वेषां तदनन्तरम् ॥ घृतेन होमं कुर्वीत सूर्यस्याष्टशतेन च ॥ ९ ॥ अन्येषां च तथा दद्यादष्टावष्टौ नरेश्वर ॥ नाम्ना तथैव सर्वेषां चैकैकं भोजयेद्द्विजम् ॥ १० ॥ शक्त्या च दक्षिणा देया तेषामेव यदूत्तम ॥ एवं संवत्सरं कृत्वा व्रतमेतन्नरोत्तम ॥ ११ ॥ पौराणिकाय विप्राय व्रतस्यान्ते पयस्विनीम् ॥ विधिवच्च ततो दद्यात्सुवर्णं च यदूत्तम ॥१२॥ सर्वकामप्रदं चैव व्रतमुक्तं स्वयम्भुवा ॥ व्रतेनानेन चीर्णेन सूर्यलोकमवाप्नुयात् ॥१३॥ अथ द्वादशवर्षाणि करोत्येतन्महाव्रतम् ॥ भित्त्वार्कमण्डलं राजा विष्णोः सायुज्यतां व्रजेत् ॥१४॥ एतद्व्रतं पापविनाशकारि धन्यं यशस्यं रिपुनाशकारि॥लोके तथास्मिंश्च परे च राजन्स्वर्गप्रदं मोक्षकरं तथैव॥१५॥इति श्रीविष्णुधर्मोत्तरे तृ०ख०मा०संवादे सूर्यव्रतवर्णनो नाम सप्तषष्ट्यु

त्तरशततमोऽध्यायः ॥ १६७ ॥ वज्र उवाच ॥ यस्मिन्यस्मिन्कृतौ ब्रह्मन्ननुयान्ति रविं प्रभुम् ॥ येये देवप्रभृतयस्तन्मे त्वं वक्तुमर्हसि ॥ १ ॥
मार्कण्डेय उवाच ॥ धातार्यमा च राजेन्द्र वसन्ते देवताद्वयम् ॥ तुम्बुरुर्नारदश्चैव गन्धर्वौ गायनौ वरौ ॥ २ ॥ कृतस्थलाप्सराश्चैव तथा या
पुञ्जिकस्थला ॥ होता प्रहोता च तथा रक्षोघ्नौ मणिपुङ्गवौ ॥३॥ उरगो वासुकिश्चैव वाष्टकर्णी च तावुभौ ॥ रथकृत्स्ना रथौजाश्च यातुधानवरौ
तथा ॥ ४ ॥मित्रश्च पुलहश्चैव तथैवमृषिसत्तमौ ॥ अनुयाति सितश्चैव वसन्ते च यथा ग्रहः ॥ ५ ॥ येनुयान्ति रविं देवं निदाघेतान्निबोधसे ॥
मित्रश्च वरुणश्चैव ग्रीष्मे देवौ वसन्ति च ॥ ६ ॥ ऋषिरत्रिर्वसिष्ठश्च नागौ रंभकतक्षकौ ॥ मेनका सहजन्या च गन्धर्वौ च हहाहूहू ॥ ७ ॥
रथस्वनप्रमाणश्च रथकृत्स्नश्च तावुभौ ॥ पौरुषादो वधश्चैव यातुधानौ तु तौ स्मृतौ ॥ ८ ॥ अनुयाति कुजश्चैव निदाघे च तथा ग्रहः ॥ येनुया
न्ति रविं देवं प्रावृट्काले निबोध मे ॥ ९ ॥ इन्द्रश्चैव विवस्वांश्च अङ्गिरा भृगुरेव च ॥ एलपत्रस्तथा सर्पः शङ्खपालश्च पन्नगः ॥ १० ॥
शुचिसेनोग्रसेनौ च व्रातश्चैवारुणश्च वै ॥ प्रम्लोचेत्यप्सराश्चैव निम्लोचन्ती च ते उभे ॥ ११ ॥ यातुधानस्तथा सर्पो व्याघ्रश्च मनुजेश्वर ॥
प्रावृट्काले तु यात्येनं ग्रहो देवपुरोहितः ॥ १२ ॥ अतः परं निबोधस्व शरत्काले नराधिप ॥ पर्जन्यश्चैव पूषा च भरद्वाजश्च गौतमः ॥ १३ ॥
चित्रसेनश्च गंधर्वस्तथा वसुरुचिश्च वै ॥ विश्वाची च घृताची च तथा चैवाप्सरोद्वयम् ॥ १४ ॥ नागश्चैरावतश्चैव विश्रुतश्च धनञ्जयः ॥ सेन
जिच्च सुषेणश्च राक्षसौ भीमविक्रमौ ॥ १५ ॥ वातोद्वातौ च तथा यातुधानौ महाबलौ ॥ ग्रहः शनैश्चरश्चैवमनुयान्ति दिवाकरम् ॥ १६ ॥
अतः परं प्रवक्ष्यामि हेमन्ते तव पार्थिव ॥ अंशो भगश्च द्वावेतौ कश्यपश्च क्रतुश्च वै ॥ १७ ॥ भुजगश्च महापद्मः सर्पः कर्कोटकस्तथा ॥
चित्रसेनश्च गन्धर्व ऊर्णायुश्च महाबलः ॥ १८ ॥ अप्सराः पूर्वचित्तिश्च गन्धर्वी उर्वशी तथा ॥ तार्क्ष्यश्चारिष्टनेमिश्च राक्षसौ भीमविक्रमौ॥ १९ ॥
विद्युत्स्फूर्जस्तथैवोग्रौ यातुधानौ महाबलौ ॥ अनुयाति ग्रहश्चैव बुधो राजन्दिवाकरम् ॥२०॥अतः परं च धर्मज्ञ शिशिरे गदतः शृणु ॥त्वष्टा विष्णु
र्जमदग्निर्विश्वामित्रस्तथैव च॥२१॥काद्रवेयौ तथा नागौ कंबलाश्वतरावुभौ॥तिलोत्तमाप्सराश्चैव देवी रम्भा मनोरमा॥२२॥कारणी शितिशश्चैव सत्य
जिच्च महायशाः॥ब्रह्मोपेतश्च रक्षो वै यज्ञोपेतस्तथैव च ॥२३॥गन्धर्वो धृतराष्ट्रश्च सूर्यवर्चास्तथापरः॥चन्द्रमा ग्रहराजश्च अनुयाति दिवाकरम्॥२४॥
एवं हि शिशिरे राजन्ननुयानं प्रकुर्वते ॥ स्थानाभिमानिनो ह्येते सप्तद्वादशका गणाः ॥ २५ ॥ गणषट्कस्तथैवैकमनुयाति दिवाकरम् ॥
सूर्यमाप्याययन्त्येते तेजसा तेज उत्तमम् ॥ २६ ॥ ग्रथितैस्तवचोभिश्च कुर्वन्ति ऋषयस्तवम् ॥ गन्धर्वाप्सरसश्चैव गीतैर्नृत्यैरुपासते ॥ २७ ॥

विद्याग्रामणिनश्चैव कुर्वन्त्यत्राभिषुग्रहम ॥ सर्पा वहन्ति वै सूर्यं यातुधानोऽनुयाति च ॥ २८ ॥ परिवार्य ग्रहश्चैव नयत्यस्तं यथाविधि ॥ एतेषामेव देवानां यथावीर्यं यथातपः ॥ २९ ॥ यथासत्वमसौ सूर्यस्तेषां सिद्धस्तु तेजसा ॥ भूतानामशुभं कर्म विनाशयति तेजसा ॥ ३० ॥ ग्रीष्मे हिमे च वर्षासु जनयंन् स दिवाकरः ॥ धर्मं हिमं च वर्षं च दिनं च निशया सह ॥ ३१ ॥ इति श्रीविष्णुधर्मो तृ० ख० मार्कण्डेयवज्रसंवादे आदित्यानुचरवर्णनो नामैकोनसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥ मार्कण्डेय उवाच ॥ चैत्रमासस्य सप्तम्यां शुक्लपक्षे नराधिप ॥ गोमयेनोपलिप्ते तु मृदा कुर्यात्तु मण्डलम् ॥ १ ॥ तत्राष्टपत्रं कमलं कर्तव्यं वर्णकैः शुभैः ॥ कृतोपवासस्तन्मध्ये भास्करं पूजयेन्नरः ॥ २ ॥ अरुणं चैव दन्ताकं माठरं च तथा दमम् ॥ यमुनां च यमं कालं द्वितीयं मनुमेव च ॥ ३ ॥ शनैश्चरं तथा राज्ञीं छायां रेवन्तमेव च ॥ सप्तच्छन्दांसि वर्षं च द्यां च पिङ्गलमेव च ॥ ४ ॥ केशरेषुयजेद्वाथ पत्रेषूक्ताश्च देवता ॥ दिक्कालपूजनं कार्यं बहिः पद्मस्य पार्थिव ॥ ५ ॥ गन्धमाल्यनमस्कारधूपदीपान्नसम्पदा ॥ व्रते समाप्ते दातव्यस्तुरगो ब्राह्मणाय च ॥ ६ ॥ प्राप्याश्वमेधस्य फलं यथावल्लोकानवाप्याथ पुरन्दरस्य ॥ तत्रोष्य राजन्सुचिरं च कालं सायुज्यमायाति दिवाकरस्य ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे सप्तव्रतकल्पे सप्तमीपूजाप्रशंसा नामैकोनसप्तत्युत्तरशततमोऽध्यायः ॥ १६९ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ मार्गशीर्षस्य मासस्य कृष्णपक्षे नराधिप ॥ सोपवासस्तु सप्तम्यां कमले पूजयेद्रविम् ॥ १ ॥ अर्चायां वा स्थले वापि शुक्लैः पुष्पैर्यथाविधि ॥ चन्दनेन तु रक्तेन वटकैः कृसरेण च ॥२॥ दद्याद्व्रतान्ते द्विजपुङ्गवाय वस्त्रे तु रक्ते रिपुनाशनेप्सुः ॥ सौभाग्यकामश्च तथैव राज्यं प्राप्नोति लोकान्सवितुस्तथान्ते ॥ ३ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे रक्तसप्तमीव्रतवर्णनो नाम सप्तत्युत्तरशततमोऽध्यायः॥१७०॥ ॥ मार्कण्डेय उवाच ॥ ॥ अनेन च विधानेन प्रतिमासं तु यो नरः ॥ सप्तमीद्वितयं कुर्याद्यावत्संवत्सरो भवेत् ॥ १ ॥ सोश्वमेधमवाप्नोति सूर्यलोकं च गच्छति ॥ कुलमुद्धरते राजन्सर्वान्कामानुपाश्नुते ॥ २ ॥ शिरसो वपनं कृत्वा योर्चयेत्तु दिवाकरम् ॥ तस्यार्कस्तोषमायाति वह्निष्टोमं च विन्दति ॥ ३ ॥ अपूपैः सगुडैर्भक्त्या तथा च लवणान्वितैः ॥ सहिरण्यैस्समभ्यर्च्य वह्निष्टोमफल लभेत् ॥ ४ ॥ सूर्याह्ने यस्तु नक्ताशी संपूजयति भास्करम् ॥ इष्टान्कामानवाप्नोति सूर्यलोकं च गच्छति ॥ ५ ॥ अर्कोदये सदा यस्तु पूजयेच्च दिवाकरम् ॥ इष्टान्कामानवाप्नोति सूर्यलोकं च गच्छति ॥ ६ ॥ यथायथा पूजयते तु सूर्यं कामाः समग्राः सफला भवन्ति ॥ आरोग्यमग्र्यं च तथा नृवीर

भूतस्य लोकः सवितुस्तथैव ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे सूर्यपूजाप्रशंसावर्णनो नामैकसतत्युत्तरशततमो ऽध्यायः ॥ १७१ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ वरो ध्रुवश्च सोमश्च आपश्चैवानिलोनलः ॥ प्रत्यूषश्च प्रभासश्च वसवोष्टौ प्रकीर्तिताः ॥ १ ॥ अष्टात्मा वासुदेवोऽयं प्रभवेनाप्ययेन च ॥ अष्टम्यां पूजयेद्यस्तु सोपवासो नराधिप॥२॥ चैत्रमासादथारभ्य शुक्लपक्षे च यादव ॥ मण्डलेष्वथ वार्चासु यथावन्मनुजाधिप ॥ ३ ॥ गन्धमाल्यनमस्कारधूपदीपान्नसंपदा ॥ बहिःस्नानेन राजेन्द्र तथाधःशयनेन च ॥ ४ ॥ व्रतान्ते च तथा दद्याद्धेनुं विप्राय भक्तितः ॥ व्रतमेतन्नरः कृत्वा सर्वान्कामानुपाश्नुते ॥ ५ ॥ पुण्डरीकमवाप्नोति कुलमुद्धरति स्वकम् ॥ वसूनां लोकमासाद्य मोदतेमरसन्निभः ॥ ६ ॥ मानुष्यमासाद्य भवत्यरोगो जितेन्द्रियः सत्यपरो विनीतः ॥ धनेन धान्येन तथान्वितः स्यात्स्त्रीणामभीष्टश्च तथा सुवेशः ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे सुव्रतवर्णनो नाम द्विसप्तत्युत्तरशततमोऽध्यायः ॥ १७२ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ शुक्लपक्षादथारभ्य सोमाष्टम्यां नराधिप ॥ पूजयेत्सोपवासस्तु देवदेवं त्रिलोचनम् ॥ १ ॥ लिङ्गे वाप्यथ वार्चायां कमले यदि वा स्थले ॥ घृतक्षीराभिषेकेण स्नानेन विविधेन च ॥ २ ॥ गन्धमाल्यनमस्कारधूपदीपान्नसंपदा ॥ गीतेन नृत्यवाद्येन वह्निसंतर्पणेन च ॥ ३ ॥ ब्राह्मणानां च पूजाभिर्यथावन्मनुजोत्तम ॥ व्रतावसाने दद्याच्च तथा धेनुं पयस्विनीम् ॥४॥ पुण्डरीकफलावाप्तिः स्वर्गलोकं च गच्छति ॥ कृष्णाष्टमीषु चाप्येवं पूजयित्वा महेश्वरम् ॥ ५ ॥ ॥वह्निष्टोममवाप्नोति स्वर्गलोकं च गच्छति ॥ अष्टमीद्वितयं कृत्वा तथा संवत्सरं नरः ॥ ६ ॥ प्राप्याश्वमेधस्य फलं यथावद्भुक्त्वा भोगान्सुरनाथस्य लोके ॥ लोकानवाप्याथ महेश्वरस्य सायुज्यमायात्यचिरेण तस्य ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे महेश्वराष्टमीव्रतवर्णनो नाम त्रिसप्तत्युत्तरशततमोऽध्यायः ॥ १७३ ॥ मार्कण्डेय उवाच ॥ हिमवान्हेमकूटश्च निषधो नील एव च ॥ श्वेतश्च शृङ्गवान्मेरुर्माल्यवान्गन्धमादनः ॥ १ ॥ नवैतान्शैलनृपतीन्नवम्यां पूजयेन्नरः ॥ उत्तराः कुरवः पुण्या रम्यो हैरण्वतस्तथा ॥ २ ॥ भद्राश्वः केतुमालश्च तथैव च इलावृतः ॥ हरिवर्षः किंपुरुषो वर्षो भारत एव च ॥ ३ ॥ पूजनीयास्तथैवैते यथा संस्थानतो नृप ॥ शुक्लपक्षनवम्यां तु चैत्रादारभ्य पार्थिव ॥ ४ ॥ सोपवासेन धर्मज्ञ गन्धमाल्यान्नसंपदा ॥ जम्बूद्वीपस्थ संस्थानं व्रतान्ते रजतं नरः ॥ ५ ॥ तुलाप्रमाणं दद्यात्तु सर्वान्कामानुपाश्नुते ॥ अश्वमेधमवाप्नोति स्वर्गलोकं च गच्छति ॥ ६ ॥ मानुष्यमासाद्य तु चक्रवर्ती नृपो भवेद्देवगणाभिरामः ॥ चिरं च कालं वसुधां प्रशास्य लोकानवाप्नोति ततोपि कामान् ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे

तृतीयखण्डे मार्कण्डेयवज्रसंवादे पर्वताष्टमीव्रतवर्णनो नाम चतुस्सप्तत्युत्तरशततमोऽध्यायः ॥ १७४ ॥ मार्कण्डेय उवाच ॥ नवम्यां सोपवासस्तु भद्रकालीं तु पूजयेत्॥ शुक्लपक्षे महाराज कार्तिकप्रभृति क्रमात्॥१॥गन्धमाल्यनमस्कारधूपदीपान्नसंपदा॥संवत्सरान्ते संपूज्य व्रतान्ते ब्राह्मणाय च ॥ २ ॥ वस्त्रयुग्मं नरो दत्त्वा यथेष्टं काममाप्नुयात् ॥ रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ॥ ३ ॥ राजकार्याभियुक्तश्च मुच्यते महतो भयात् ॥ न चौरेभ्यो भयं तस्य नारण्येभ्यः कदाचन ॥ ४ ॥ पुत्रानवाप्नोति धनं यथेष्टं स्त्रियश्च मुख्या विविधं च कुप्यम् ॥ पूजां तु कृत्वा विधिवद्भवान्या कामानवाप्नोति तथा यथेष्टान् ॥ ५ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे भद्रकालीपूजावर्णनो नाम पञ्चसप्तत्युत्तरशततमोऽध्यायः ॥ १७५ ॥ मार्कण्डेय उवाच ॥ क्रतुर्दक्षो रिपुः सत्यः कालकामौ ध्वनिस्तथा ॥ कुलवान्मनुजो विश्वो रोचमानश्च ते दश ॥ १ ॥ विश्वेदेवा समाख्याता दशात्मा केशवो विभुः ॥ तस्य संपूजनं कार्यं सितपक्षे नराधिप ॥ २ ॥ आरभ्य कार्तिकान्मासाद्दशम्यां नृपपुङ्गव ॥ मण्डलेषु च मुख्येषु यदि वार्चासु यादव ॥ ३ ॥ गन्धमाल्यनमस्कारधूपदीपान्नसंपदा ॥ व्रतान्ते कनकं दद्याद्यथाशक्ति द्विजातये ॥ ४ ॥ कृत्वा व्रतं वत्सरमेतदिष्टं प्राप्नोति तेषां सुचिरं च लोकान् ॥ तत्रोष्य लोके पुरुषत्वमेत्य राजा भवेद्ब्राह्मणपुङ्गवो वा ॥ ५ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे विश्वेदेवदशमीपूजावर्णनो नाम षट्सप्तत्युत्तरशततमोऽध्यायः ॥१७६॥ मार्कण्डेय उवाच॥ आत्मा ह्यायुर्मनो दक्षो मदः प्राणस्तथैव च ॥ हविष्मांश्च गतीष्टश्च ऋतः सत्यश्च ते दश ॥१॥ देवस्त्वङ्गिरसो नाम दशम्यां पूजयेन्नरः॥ सोपवासः कृष्णपक्षे पूर्वोक्तविधिना नरः ॥२ ॥ कृत्वा व्रतं वत्सरमेतदिष्टान्प्राप्नोति तेषां सुचिरं च लोकान् ॥ तत्रोष्य लोके पुरुषत्वमेत्य राजा भवेद्ब्राह्मणपुङ्गवो वा॥३॥इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मा०वज्रसंवादे अङ्गिराव्रतवर्णनो नाम सप्तसप्तत्युत्तरशततमोऽध्यायः॥१७७॥ मार्कण्डेय उवाच ॥ शुक्लपक्षे दशम्यां तु सोपवासस्तथा नरः ॥ मार्गशीर्षादथारभ्य नित्यमेतदरिन्दम ॥ १ ॥ गन्धमाल्यनमस्कारधूपदीपान्नसंपदा ॥ घृतेन जुहुयाद्वह्निं ब्राह्मणाँश्चात्र च पूजयेत् ॥ २ ॥ व्रतावसाने दद्याच्च तथा धेनुं पयस्विनीम् ॥ व्रतमेतद्विनिर्दिष्टमश्वमेधफलप्रदम् ॥ ३॥ कृष्णपक्षे तथाप्येतत्कृत्वा संवत्सरं व्रतम्॥राजसूयमवाप्नोति फलमुद्धरति स्वकम्॥४॥कृत्वा पक्षद्वयेप्येतद्व्रतं मनुजसत्तम॥राजसूयाश्वमेधानां फलं प्राप्नोत्यसंशयम्॥५॥स्वर्गलोकमवाप्नोति कुलमुद्धरति स्वकम्॥धर्मे मतिर्भवेत्तस्य धर्ममाप्नोत्यसंशयम्॥६॥यत्रयत्राभिजायेत तत्र धर्मपरो भवेत्॥प्रधानं तं तया राजन्यत्र धर्मपरो भवेत् ॥७॥ आरोग्यमायुष्यकरं यशस्यं स्थानप्रदं पापविनाशकारि ॥ कर्तव्यमेतत्पुरुषैर्यथावत्पूज्यो हि विष्णुर्भगवान्सधर्मः ॥८॥इति श्रीविष्णुधर्मोत्तरे

तृतीयखण्डे मार्कण्डेयवज्रसंवादे धर्मव्रतवर्णनो नामाष्टसप्तत्युत्तरशततमोऽध्यायः ॥१७८॥ मार्कण्डेय उवाच ॥ अङ्गारकं तथा सूर्यं निर्ऋतिं वाय
शस्तथा ॥ हवनं चेश्वरं मृत्युं कपालिमथ किंकिणम् ॥ १ ॥ तत्र चैकादशांशैस्तु देवांस्त्रिभुवनेश्वरान् ॥ एकादश्यां सोपवासः सोमं संपूजयेत्तथा
॥ २ ॥ गन्धमाल्यनमस्कारधूपदीपान्नसम्पदा ॥ मार्गशीर्षादथारभ्य यावत्संवत्सरं भवेत् ॥ ३ ॥ संवत्सरान्ते दद्याच्च तथा धेनुं पयस्विनीम् ॥
कृत्वा व्रतं वत्सरमेतदिष्टं भद्रत्वमाप्नोति नरस्तु राजन् ॥ रुद्रेण सार्धं सुचिरं रमित्वा कामानवाप्याथ मनोभिरामान् ॥ ४ ॥ इति श्रीविष्णुधर्मो
त्तरे तृ० ख० मा०व०सं० रुद्रव्रतवर्णनो नामैकोनाशीत्युत्तरशततमोऽध्यायः॥१७९॥मार्कण्डेय उवाच ॥ भुवनो भानवश्चैव सुजन्यः सुजन
स्तथा ॥ क्रतुः सर्वश्च मूर्धा च त्याजश्च व्यम्नकस्तथा ॥ १ ॥ प्रसवश्चाप्ययश्चैव दक्षो द्वादशकस्तथा ॥ भृगवो नाम निर्दिष्टा देवा द्वादश या
ज्ञियाः ॥ २ ॥ तेषां सम्पूजनं कुर्याद्द्वादश्यां नित्यमेव तु ॥ मार्गशीर्षादथारभ्य कृष्णपक्षे सदैव तु ॥ ३ ॥ गन्धमाल्यनमस्कारधूपदीपान्नस
म्पदा ॥ संवत्सरान्ते दद्याच्च ब्राह्मणाय पयस्विनीम् ॥ ४ ॥ कृत्वा व्रतं वत्सरमेतदिष्टं प्राप्नोति तेषां च सलोकमेव ॥ तत्रोष्य कालं सुचिरं
मनुष्यो राजा भवेद्वा द्विजपुङ्गवो वा ॥ ५ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मा० व० सं० भृगुव्रतवर्णनो नामाशीत्युत्तरशततमोऽध्यायः
॥ १८० ॥ मार्कण्डेय उवाच ॥ मनो मन्तस्तथा प्राणो नरो यानश्च वीर्यवान् ॥ चितिर्हयो नयश्चैव हंसो नारायणस्तथा ॥ १ ॥ विभुश्चापि
प्रभुश्चैव साध्या द्वादश कीर्तिताः ॥ पूजयेच्छुक्लपक्षे तान्द्वादश्यां मार्गशीर्षतः ॥ २ ॥ कृत्वा व्रतं वत्सरमेतदिष्टं प्राप्नोति तेषां तु सलोकमेव ॥
तत्रोष्य कालं सुचिरं नरेन्द्र राजा भवेद्ब्राह्मणपुङ्गवो वा ॥ ३ ॥ इति श्रीविष्णु०ध० तृतीयखण्डे मा०व०सं० साध्यव्रतवर्णनो नामैकाशीत्युत्तर
शततमोऽध्यायः ॥ १८१ ॥ मार्कण्डेय उवाच ॥ धाता मित्रोर्यमा पूषा शक्रेशो वरुणो भगः ॥ त्वष्टा विवस्वान्सविता विष्णुर्द्वादशकस्तथा
॥ १ ॥ पूजयेद्द्वादशादित्याञ्छुक्लपक्षे ह्युपोषितः ॥ मार्गशीर्षादथारभ्य गन्धमाल्यान्नसम्पदा ॥ २ ॥ दत्त्वा व्रतान्ते पुरुषः सुवर्णमाप्नोति लोका
न्सवितुर्नृवीर ॥ मानुष्यमासाद्य भवत्यरोगो जितेन्द्रियश्चैव धनान्वितश्च ॥ ३ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे काम
देवव्रतवर्णनो नाम द्व्यशीत्युत्तरशततमोऽध्यायः ॥ १८२ ॥ मार्कण्डेय उवाच ॥ शुक्लपक्षे महाराज त्रयोदश्यामुपोषितः ॥ पूजयेत्कामदेवन्तु
वैशाखात्प्रभृति प्रभो ॥ १ ॥ गन्धमाल्यनमस्कारधूपदीपान्नसम्पदा ॥ दद्याद्व्रतान्ते विप्राय गन्धवस्त्रयुगं तथा ॥ २ ॥ कृत्वा व्रतं वत्सरमेतदिष्ट
मासाद्य लोकं सुचिरं मनुष्यः ॥ मानुष्यमासाद्य भवत्यरोगो सुखान्वितो रूपसरूपता च ॥ ३ ॥ इति श्रीवि०ध० तृ०ख० मा०व०सं०

कामदेवव्रतवर्णनो नाम त्र्यशीत्युत्तरशततमोध्यायः ॥ १८३ ॥ मार्कण्डेय उवाच ॥ शुक्लपक्षे महाराज त्रयोदश्यामुपोषितः ॥ फाल्गुनात्तु समारभ्य नित्यं संपूजयेन्नरः ॥ १ ॥ गन्धमाल्यनमस्कारधूपदीपान्नसम्पदा ॥ सुवर्णं ब्राह्मणेन्द्राय व्रतान्ते प्रतिपादयेत् ॥ २ ॥ कृत्वा व्रतं वत्सरमेतदिष्टं यक्षेषु राजन्सुचिरं तथोष्य ॥ मानुष्यमासाद्य धनान्वितः स्यात्सौभाग्ययुक्तश्च तथा विरोगः ॥ ३ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे धनव्रतवर्णनो नाम चतुरशीत्युत्तरशततमोऽध्यायः ॥ १८४ ॥ शुक्लपक्षचतुर्दश्यां ज्येष्ठादारभ्य यादव॥वायुं संपूयेदेवं सोपवासो जितेन्द्रियः ॥१॥ गन्धमाल्यनमस्कारधूपदीपान्नसंपदा॥ संवत्सरान्ते दातव्यं वस्त्रयुग्मं द्विजातये ॥ २॥ कृत्वा व्रतं वत्सरमेतदिष्टं चासाद्य लोकं मरुतां मनुष्यः ॥सुखानि भुक्त्वा सुचिरं महीप मानुष्यमासाद्य भवत्यरोगः ॥ ३ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे वायुव्रतवर्णनो नाम पञ्चाशीत्युत्तराशीतितमोऽध्यायः॥१८५॥मार्कण्डेय उवाच ॥ कृष्णपक्षचतुर्दश्यां विरूपाक्षं तु पूजयेत्॥पौषमासादथारभ्य यावत्संवत्सरं व्रतम् ॥१॥ गन्धमाल्यनमस्कारधूपदीपान्नसम्पदा॥उष्ट्रं द्विजातये दद्याद्व्रतान्ते च परन्तप ॥२॥कृत्वा व्रतं वत्सरमेतदिष्टं भयं न चाप्नोति स राक्षसेभ्यः ॥ कामानवाप्नोति भवत्यरोगो भयं च राजन्न च वेत्ति किंचित् ॥ ३ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे विरूपाक्षव्रतवर्णनो नाम षडशीत्युत्तरशततमोऽध्यायः ॥ १८६ ॥ मार्कण्डेय उवाच॥ यत्र क्वचन नद्यां च यत्र कृष्णचतुर्दशी ॥ अनर्काभ्युदिते काले देवं संपूजयेद्यमम् ॥१॥ धूम्रोर्णं चित्रगुप्तं च कालपाशौ च यादव ॥ मृत्युं स्वर्गं च धर्मज्ञं गन्धमाल्यान्नसम्पदा ॥ २॥ यमो दधार इत्यर्चा तिलाँश्च जुहुयात्ततः ॥ नमो यमायेति तथा स्त्रीशूद्रस्य विधीयते ॥ ३ ॥ कृसरं भोजनं विप्रान्यथाशक्ति नरोत्तम ॥ दद्याद्व्रतान्ते विप्राय तथैव च पयस्विनीम् ॥ ४ ॥ कृत्वा व्रतं वत्सरमेतदिष्टं न याति राजन्नरकं मनुष्यः ॥ प्राणक्षयं प्राप्य स याति नाकं मानुष्यमासाद्य च धर्मवान्स्यात् ॥ ५ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे यमव्रतवर्णनो नाम सप्ताशीत्युत्तरशततमोऽध्यायः ॥ १८७ ॥ शुक्लपक्षादथारभ्य फाल्गुनस्य नराधिप ॥ पूजयेत्तु चतुर्दश्यां सोपवासो महेश्वरम् ॥१॥ गन्धमाल्यनमस्कारधूपदीपान्नसंपदा ॥ व्रतान्ते गां तथा दद्यादग्निष्टोमफलं लभेत् ॥ २ ॥एतदेव व्रतं कृत्वा शुक्लपक्षे तु वत्सरम् ॥ पुण्डरीकमवाप्नोति कुलमुद्धरति स्वकम् ॥ ३ ॥ चतुर्दशीद्वयं चैतत्कृत्वा संवत्सरं नरः ॥ मासिमासि तथा भक्त्या सर्वान्कामानवाप्नुयात् ॥ ४ ॥ आसाद्य कामांश्च महेश्वरस्य तत्रोष्य कालं सुचिरं च राजन् ॥ सायुज्यमायाति महेश्वरस्य सर्वेश्वरस्याप्रतिमस्य तस्य ॥ ५ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेय

वज्रसंवादे महेश्वरव्रतवर्णनो नामाष्टाशीत्युत्तरशततमोऽध्यायः ॥ १८८ ॥ मार्कण्डेय उवाच ॥ प्रभास्वरा बर्हिषद अग्निष्वात्तास्तथैव च ॥ क्रव्यादश्चोपहूताश्च आज्यपाश्च सुकालिनः ॥ १ ॥ पूज्याः पितृगणा राजन्नुपवासेन नित्यशः ॥ चैत्रशुक्लादथारभ्य पञ्चदश्यां नराधिप ॥२ ॥ श्राद्धं तदह्नि कुर्वीत यावत्संवत्सरं भवेत् ॥ गन्धमाल्यनमस्कारधूपदीपान्नसम्पदा ॥ ३ ॥ संवत्सरान्ते दद्याच्च तथा धेनुं पयस्विनीम् ॥ ब्राह्मणाय महाभाग पितृभक्ताय भक्तितः ॥ ४ ॥ कृत्वा व्रतं वत्सरसेतदिष्टं प्राप्नोति लोकं च तथा स तेषाम् ॥ तत्रोष्य राजन्सुचिरं सुकालं प्राप्नोति मोक्षं पुरुषप्रधान ॥५॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे पितृव्रतवर्णनो नामैकोननवत्युत्तरशततमोऽध्यायः ॥१८९॥ मार्कण्डेय उवाच ॥कृष्णपक्षे पञ्चदश्यां चैत्रादारभ्य यादव ॥ वह्निसम्पूजनं कृत्वा गन्धमाल्यान्नसम्पदा ॥ १ ॥ तिलैर्होमस्ततः कुर्यान्नाम्ना वह्नेर्नराधिप ॥ संवत्सरान्ते दद्याच्च सुवर्णं ब्राह्मणाय च ॥ २ ॥ कृत्वा व्रतं वत्सरमेतदिष्टं प्राप्नोति वित्तं सततं यशश्च ॥ धर्मे मतिं रूपमनुत्तमं च कामान्यथेष्टान्पुरुषप्रधान ॥ ३ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख० मार्कण्डेयवज्रसंवादे वह्निव्रतवर्णनो नाम नवत्युत्तरशततमोऽध्यायः ॥ १९० ॥ मार्कण्डेय उवाच ॥ अमावास्यां तु वेलायां सोपवासो नरोत्तम ॥ पद्मद्वयं पूजयेत चंद्रार्कावेकराशिगौ ॥ ॥ १ ॥ आदित्यमष्टकमले चन्द्रं षोडशके तथा ॥ आदित्यं सर्वरक्तेन चन्द्रं शुक्लेन यादव ॥ २ ॥ माल्यादिना महाभाग होमयेत्तिलतण्डुलैः ॥ घृतक्षीरयुतो राजन्तयोर्नाम्ना यथाविधि ॥ ३॥ व्रतान्ते ब्राह्मणेन्द्राय कनकं प्रतिपादयेत ॥ रजतं च महाभाग य इच्छेद्भूतिमात्मनः ॥ ४ ॥ कृत्वा व्रतं वत्सरमेतदिष्टं दत्त्वा च दीपान्विधिवत्प्रभूतान् ॥ चक्षुः परं प्राप्य विवृद्धतेजा धनान्वितः स्यात्त्रिदिवादिहस्थः ॥ ५ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख० मार्कण्डेयवज्रसंवादे चन्द्रव्रतवर्णनो नामैकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥ मार्कण्डेय उवाच ॥ कार्तिकात्तु तथारभ्य सम्पूर्णशशलक्षणम् ॥ पूजयेदुदरे राजन्सदा नक्ताशनो भवेत् ॥ १ ॥ लावणं मण्डलं कृत्वा चन्दनेनानुलेपिते ॥ दशनक्षत्रसहितं तत्र सोमं तु पूजयेत् ॥ २ ॥ कृत्तिकारोहिणीयुक्तं कार्तिके मासि पूजयेत् ॥ सौम्यार्द्रासहितं राजन्मासि सौम्ये तथैव च ॥ ३ ॥ आदित्यपुष्यसहितं मासि पौषे च यादव ॥ मघासर्पयुतं माघे फाल्गुने शृणु पार्थिव ॥ ४ ॥ अर्यम्णभाग्यसावित्रैः सहितं पूजयेद्विभुम् ॥ चित्रास्वातियुतं चैत्रे वैशाखे शृणु पार्थिव ॥ ५ ॥ विशाखया च मैत्रेण युतं संपूजयेत्तथा॥ ज्येष्ठामूलयुतं ज्येष्ठे आषाढाद्यामनन्तरम् ॥ ६ ॥ श्रावणे श्रवणोपेतं सहितं च श्रविष्ठया ॥ तथा भाद्रपदे पौष्णमाजाहिर्बुध्न्यसंयुतम् ॥७॥ अश्विनीभरणीयुक्तं तथा चाश्वयुजे विभुम् ॥ गन्धमाल्यनमस्कारधूपदीपान्नसंपदा ॥ ८ ॥

गुडेन परमान्नेन लवणन घृतेन च॥ इक्षुणेक्षुविकारैश्च पयसा पायसेन च ॥९॥ पूज्याश्चाविधवानार्यस्तथा तल्लक्षणैः शुभैः ॥ ततोऽनन्तरमश्री
याद्धविष्यं प्रयतो नरः ॥ १० ॥ ब्राह्मणानां व्रतान्ते तु महारजतरंजितम् ॥ शक्त्या च वसनं दद्यान्नारी वा यदि वा नरः ॥ ११ ॥ रूपसौ
भाग्यलावण्यधनयुक्तो भवेन्नरः ॥ व्रतेनानेन चीर्णेन स्वर्गलोकं च गच्छति ॥ १२ ॥ सोपवासस्तु यः कुर्याद्व्रतमेतदनुत्तमम् ॥ अश्वमेधसहस्र
स्य फलं प्राप्नोति मानवः ॥ १३ ॥ सौभाग्यादि च यत्प्रोक्तं तदाप्नोति विशेषवत् ॥ मनसा कांक्षितान्कामान्सर्वान्प्राप्नोत्यसंशयम् ॥ १४ ॥
जनाभिरामश्च शशाङ्कवत्स्याद्धनादिलाभश्च तथैव लक्ष्म्या ॥ शक्रेण तुल्यश्च तथैव शक्त्या मानुष्यमासाद्य भवेच्च राजन् ॥ १५ ॥ इति श्री
विष्णुधर्मोत्तरे तृ०ख० मार्कण्डेयवज्रसंवादे मासर्क्षपौर्णमासीव्रतवर्णनो नाम द्विनवत्युत्तरशततमोऽध्यायः ॥ १९२ ॥ मार्कण्डेय उवाच ॥ कार्तिक
के पौर्णमास्यां तु पूर्णं शिशिरदीधितिम्॥पद्मे षोडशपत्रेषु कर्णिकायां तु पूजयेत् ॥ १ ॥ केसरे पूजयेत्तत्र नक्षत्राण्यष्टविंशतिः ॥ पत्रेषु ति
थिदेवांश्च तथा ज्योत्स्नां च पूजयेत् ॥ २ ॥ गन्धमाल्यनमस्कारधूपदीपान्नसंपदा ॥ गुडेन परमान्नेन दध्ना च लवणेन च ॥ ३ ॥ अपूपैश्च
महाभाग फलैः कालोद्भवैस्तथा॥ व्रतावसाने दद्याच्च वासोयुग्मं द्विजातये ॥ ४ ॥ ब्राह्मण्यै च महाभाग महारजतरञ्जितम् ॥ पूज्यौच विधि
ना शक्त्या कालविद्वाचकावुभौ ॥ ५ ॥ सोपवासोऽथ नक्ताशी व्रतमेतत्समाचरेत् ॥ नक्ताशनो वा धर्मज्ञ तथैव च हविष्यभुक् ॥ ६ ॥ सौ
भाग्यदं रूपविवर्धनं च लावण्यदं स्त्रीरतिभोगदं च ॥ कार्यं प्रयत्नेन नरेन्द्र पुंसा कार्यं तथा स्त्रीभिरदीनसत्त्व ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृ०
ख० मार्कण्डेयवज्रसंवादे पौर्णमासीव्रतवर्णनो नाम त्रिनवत्युत्तरशततमोऽध्यायः ॥ १९३ ॥ मार्कण्डेय उवाच ॥ मार्गशीर्षादथारभ्य चन्द्रमण्डल
के नरः ॥ सोपवासस्तु संपूज्य पौण्डरीकफलं लभेत् ॥ १ ॥ कृत्वा व्रतं वत्सरमेतदिष्टं प्राप्नोति लोकं स निशाकरस्य ॥ तत्रोष्य राजन्सुचिरं
च कालं सायुज्यमाप्नोति ततश्च तस्य ॥ २ ॥ इति श्रीविष्णुधर्मोत्तरे तृ०ख० मार्कण्डेयवज्रसंवादे चन्द्रव्रतवर्णनो नाम चतुर्नवत्युत्तरशततमो
ऽध्यायः ॥ १९४ ॥ मार्कण्डेय उवाच ॥ प्रोष्ठपादादथारभ्य संपूर्णे शशलाञ्छने ॥ संपूज्य वरुणं देवं गन्धमाल्यान्नसंपदा ॥ १ ॥ दत्त्वा व्रताव
साने तु जलधेनुं द्विजातये ॥ छत्रोपानहसंयुक्तां वासोयुगविभूषिताम् ॥ २ ॥ प्राप्नोति लोकं वरुणस्य राजंस्तत्रोष्य कालं सुचिरं मनुष्यः ॥
मानुष्यमासाद्य भवत्यरोगी रूपान्वितो वित्तयुतस्तथैव ॥ ३ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख० मार्कण्डेयवज्रसंवादे वरुणव्रतवर्णनो नाम
पञ्चनवत्युत्तरशततमोऽध्यायः ॥ १९५ ॥ ॥ छ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ अश्वयुङ्मासि शुक्ले तु पौर्णमास्यां नरः शुचिः ॥

सोपवासो नरेन्द्रस्तु देवं सम्पूजयेत्तथा ॥ १ ॥ शचीमैरावतं वज्रं मातलिं च नराधिप ॥ गन्धमाल्यनमस्कारधूप दीपान्नसंपदा ॥ २ ॥ संवत्सरान्ते कनकं तु दत्त्वा प्राप्नोति लोकं स पुरन्दरस्य ॥ मानुष्यमासाद्य नरेन्द्रपूज्यो राजा भवेद्वा द्विजपुङ्गवो वा ॥ ३ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे शक्रव्रतवर्णनो नाम षण्णवत्युत्तरशततमोऽध्यायः ॥ १९६ ॥ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ उपोषितश्चतुर्दश्यां पौर्णमास्यां नरोत्तमः ॥ पञ्चगव्यं पिबेत्पश्चाद्धविष्याशी तथा भवेत् ॥ १ ॥ संवत्सरं तथा कृत्वा मासपापात्प्रमुच्यते ॥ तस्मात्सर्वप्रयत्नेन मासिमासि समाचरेत् ॥२॥ संवत्सरं प्राप्य नरेन्द्रलोकं तत्रोष्य राजन्सुचिरं द्विजेन्द्रः ॥ मानुष्यमासाद्य नरेन्द्रपूज्यो राजा भवेद्वा द्विजपुङ्गवो वा ॥ ३ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे ब्रह्मकूर्चवर्णनो नाम सप्तनवत्युत्तरशततमोऽध्यायः ॥ १९७ ॥ ॥ छ ॥ ॥ छ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ योगभूतं हरिं देवं चतुर्दश्यामुपोषितः ॥ अर्चयेत्पौर्णमास्यां तु सोऽश्वमेधफलं लभेत् ॥ १ ॥ ब्रह्मभूतममावस्यां पौर्णमास्यां तथैव च ॥ राजसूयमवाप्नोति कुलमुद्धरति स्वकम् ॥ २ ॥ ब्रह्मभूतममावस्यां पौर्णमास्यां च पूजयेत् ॥ योगभूतं परिचरन्केशवं महदाप्नुयात् ॥ ३ ॥ अत्यर्थं प्रीतिमायाति मासपक्षान्तयोः सदा ॥ पूजितः सोपवासेन भक्त्या देववरो हरिः ॥ ४ ॥ महाव्रतमिदं ख्यातं सर्वकल्मषनाशनम् ॥ संवत्सरमिदं कृत्वा नाकपृष्ठे महीयते ॥ ५ ॥ सर्वपापप्रशमनं व्रतमेतत्प्रकीर्तितम् ॥ स्ववित्तशक्तिरेवात्र सर्वकर्मसु कारणम् ॥ ६ ॥ कृत्वा व्रतं द्वादशवत्सराणि प्राप्नोति लोकं पुरुषोत्तमस्य ॥ तत्रोष्य राजन्सुचिरं सुकालं प्राप्नोति मोक्षं पुरुषस्ततोन्ते ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे महाव्रतं नामाष्टनवत्युत्तरशततमोऽध्यायः ॥ १९८ ॥ वज्र उवाच ॥ भगवन्कर्मणा केन तिर्यग्योनौ न जायते ॥ म्लेच्छदेशे च पुरुषस्तं ममाचक्ष्व पृच्छतः ॥ १ ॥ मार्कण्डेय उवाच ॥ मेषसंक्रमणे भानोः सोपवासो नरोत्तमः ॥ पूजयेद्भार्गवं रामं देवं शक्त्या यथाविधि ॥ २ ॥ कन्यासंक्रमणे प्राप्ते तथा कृष्णं च पूजयेत् ॥ तथा मिथुनसंक्रान्तौ पूजयेद्भोगशायिनम् ॥ ३ ॥ तथा कुलीरसंक्रान्तौ वराहमपराजितम् ॥ नरसिंहं तथा देवं सिंहसंक्रमणे विभुम् ॥ कन्यासंक्रमणे देवं स्त्रीरूपं पूजयेन्नरः ॥ ४ ॥ तुलासंक्रमणे प्राप्ते वामनं नृप पूजयेत् ॥ तथा वृश्चिकसंक्रान्तौ देवदेवं त्रिविक्रमम् ॥ ५ ॥ धनुःसंक्रमणे देवं तथाश्वशिरसं नृप ॥ तथा मकरसंक्रान्तौ रामं दशरथात्मजम् ॥ ६ ॥ कुंभसंक्रमणे राजन्रामं यादवनन्दनम् ॥ मीनसंक्रणे मत्स्यं वासुदेवं तु पूजयेत् ॥७॥ पटे वा यदि वार्चायां गन्धमाल्यान्नसंपदा ॥ प्रादुर्भावस्य नाम्नाञ्च होमं कुर्वीत पार्थिव॥८॥

व्रतान्ते जलधेनुं च च्छत्रोपानत्समन्विताम्॥ वस्त्रयुग्मयुतां दद्यात्प्रतिमासं च काञ्चनम् ॥ रात्रौ च दीपमालाभिर्देवदेवं तु पूजयेत् ॥ ९ ॥
कृत्वा व्रतं वत्सरमेतदिष्टं म्लेच्छेषु तिर्यक्षु न चापि जन्म ॥ प्राप्नोत्यवाप्नोति चिरं च नाकं कामं तथाप्नोति मनोभिरामम् ॥ १० ॥ इति
श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे सुदेशजन्मावाप्तिव्रतवर्णनो नाम नवनवत्युत्तरशततमोऽध्यायः॥१९९॥वज्र उवाच ॥इष्टां जाति
मवाप्नोति कर्मणा येन मानवः ॥ तन्ममाचक्ष्व धर्मज्ञ त्वं हि सर्वविदुच्यसे ॥ १ ॥ मार्कण्डेय उवाच ॥ पौरुषेषु सदा ते वै त्रिरात्रोपोषितो
नरः ॥ चैत्रमासादथारभ्य कार्तिके पूजयेद्धरिम् ॥ २ ॥ पौरुषेण च सूक्तेन ऋग्भिः पुष्पैः फलैस्तथा ॥ धूपैर्दीपैस्तथान्नेन घृताहुतिभिरेव च
॥ ३ ॥ धेनुर्व्रतान्ते दातव्या कृत्वा संवत्सरं व्रतम् ॥ यथेष्टां जातिमाप्नोति नात्र कार्या विचारणा ॥ ४ ॥ न केवलं जातिकरं प्रदिष्टं व्रतोत्तमं
यावददीनसत्त्व ॥ कामानभीष्टान्पुरुषस्य दद्यान्मोक्षं च दद्यात्पुरुषप्रधान ॥ ५ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे
इष्टजात्यवाप्तिव्रतवर्णनो नाम द्विशततमोऽध्यायः ॥ २०० ॥ वज्र उवाच ॥ भगवन्कर्मणा केन कुले जन्म समश्नुते ॥ एतन्मे संशयं
छिन्धि त्वं हि सर्वविदुच्यसे ॥ १ ॥ मार्कण्डेय उवाच ॥ बृहद्दिशि तु संप्राप्य त्रिरात्रोपोषितो नरः ॥ मार्गशीर्षादथारभ्य पूजयेत्तु त्रिविक्रमम्
॥ २ ॥ त्रिवर्णैः कुसुमैर्देवं त्रिभिः प्रयतमानसः ॥ त्रयोऽनुलेपना देया त्रिसारं धूपमेव तु ॥ ३ ॥ बलिं त्रिमधुरं दद्यात्रींश्च दीपान्नृपोत्तम ॥
यवैस्तिलैस्तथा होमः कर्तव्यः सर्षपाप्लुतैः ॥ ४ ॥ दद्यात्त्रिलोहं च तथा द्विजेभ्यस्ताम्रं सुवर्णं रजतं च राजन् ॥ न केवलं सत्कुलदं व्रतं तु
यथेष्टकामाप्तिकरं प्रदिष्टम् ॥ ५ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे सत्कुलावाप्तिव्रतवर्णनो नामैकोत्तरद्विशततमोऽध्यायः
॥ २०१ ॥ वज्र उवाच ॥ भवन्कर्मणा केन रूपवाञ्जायते नरः ॥ एतन्मे संशयं छिन्धि त्वं हि सर्वविदुच्यसे ॥ १ ॥ मार्कण्डेय उवाच ॥
फाल्गुन्यां समतीतायां प्रतिपत्प्रभृति क्रमात् ॥ यावच्चैत्री महाराज तावत्स्नातो दिनेदिने॥२॥ बहिः सम्पूजयेद्देवं केशवं भोगशायिनम् ॥ एकभक्ता
शनो नक्तमधःशायी तथा भवेत् ॥ ३ ॥ त्रिरात्रोपोषितः कुर्यात्पूजां चैत्र्यां तथैव च ॥ स्वशक्त्या रजतं दद्याद्वस्त्रयुग्मं तथैव च ॥ ४ ॥ रूपा
र्थिनो मासमिदं मयोक्तं व्रतोत्तमं नित्यमदीनसत्त्व ॥ कृत्वा च नाकं मनुजस्त्ववाप्य मानुष्यमासाद्य च रूपवान्स्यात् ॥ ५ ॥ इति श्रीविष्णु०
ध०तृ०ख०मा० वं० सं० रूपावाप्तिव्रतवर्णनो नाम द्व्युत्तरद्विशततमोऽध्यायः ॥२०२॥वज्र उवाच ॥ भगवन्कर्मणा केन नरो लावण्यमाप्नुयात् ॥
लावण्यरहितं रूपं निष्फलं प्रतिभाति मे ॥१॥ मार्कण्डेय उवाच ॥ कार्तिक्यां समतीयां प्रतिपत्प्रभृति क्रमात् ॥ पटे वा यदि वार्चायां प्रद्युम्नं

पूजयेत्प्रभुम्॥२॥बहिः स्नानं सदा कुर्यान्नक्तमश्नीत वाग्यतः ॥ एकभुक्तं महाराज हविष्यं प्रयतः सदा॥३॥मार्गशीर्षं तथा प्राप्य त्रिरात्रोपोषितः शुचिः ॥ संपूज्य देव प्रद्युम्नं हुत्वाग्नौ घृतमेव च ॥४॥ भोजयेद्ब्राह्मणांश्चात्र भोजनं लवणोत्कटम् ॥ चूर्णितस्य ततः प्रस्थं लवणस्य द्विजातये॥५॥ महारजतरक्तं च वस्त्रयुग्मं तथा गुरोः ॥ दद्याच्च कनकं राजन्कांस्यपात्रं रसैर्युतम् ॥६॥ एतद्धि लावण्यकरं प्रदिष्टं व्रतोत्तमं नाकगतिप्रदं च ॥ न केवलं यादववीर कामान्नराय दद्यात्पुरुषप्रधानः ॥७॥ इति श्रीविष्णुधर्मोत्तरे तृतीयकाण्डे मा० व०सं० लावण्यव्रतवर्णनो नाम त्र्युत्तरद्विशततमोऽध्यायः॥२०३॥वज्र उवाच ॥ भगवन्कर्मणा केन सौभाग्यं महदाप्नुयात्॥ लावण्यरूपे सौभाग्यं विना ज्ञेयं निरर्थकम् ॥१॥ मार्कण्डेय उवाच॥ माघ्यां तु समतीतायां प्रतिपत्प्रभृति क्रमात् ॥ पटे वा यदि वार्चायां कृष्णं सम्पूजयेत्सदा ॥ २ ॥ पूर्वोक्तं सकलं कुर्याद्धविष्यं च धराधिप ॥ नित्यं समाचरेत्स्नानं तथा गन्धप्रियङ्गुना ॥ ३ ॥ फाल्गुन्यां तां ततो दद्यात्त्रिरापोषितः शुचिः॥४॥वस्त्रे च देये नृप कुंकुमाक्ते क्षौद्रस्य पात्रं च तथैव कांस्यम् ॥ सौभाग्यदं चैतदनुत्तमं ते व्रतं मयैतत्कथितं नृवीर ॥५॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे सौभाग्यावाप्तिव्रतवर्णनो नाम चतुरुत्तरद्विशततमोऽध्यायः॥२०४॥वज्र उवाच॥भगवन्कर्मणा केन नरस्त्वारोग्यमाप्नुयात्॥रूपसौभाग्यलावण्याः सरोगस्य निरर्थकाः ॥ १ ॥ ॥ मार्कण्डेय उवाच ॥ प्रोष्ठपद्यामतीतायां प्रतिपत्प्रभृति क्रमात् ॥ पटे वा यदि वार्चायामनिरुद्धं तु पूजयेत् ॥ २ ॥ पूर्वोक्तेन विधानेन यावदाश्वयुजी भवेत् ॥ सारसैरर्चयेद्देवं जातीपुष्पैर्दिनेदिने ॥ ३ ॥ घृतेन जुहुयाद्वह्निं घृतं दद्याद्द्विजातये ॥ भोजनं गोरसप्रायं तथा विप्रांश्च भोजयेत् ॥ ४ ॥ त्रिरात्रोपोषितः सम्यगाश्वयुज्यां ततो नरः ॥ सघृतं ससुवर्णं च कांस्यपात्रं द्विजातये ॥ ५ ॥ दद्यान्नृपतिशार्दूल नरस्त्वारोग्यवृद्धये ॥ व्रतमेतद्विनिर्दिष्टं स्वर्गलोकप्रदं नृणाम् ॥ ६ ॥ न केवलं रोगहरं प्रदिष्टमाज्ञाकरं रूपविवृद्धिदं च ॥ व्रतोत्तमं ते कथितं नृवीर तथेष्टकामाप्तिकरं नृलोके ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे आरोग्यव्रतवर्णनो नाम पञ्चोत्तरद्विशततमोऽध्यायः ॥ २०५ ॥ वज्र उवाच॥भगवन्कर्मणा केन प्रज्ञायुक्तो भवेन्नरः ॥ एतदेव मनुष्याणां मनुष्यत्वमुदाहृतम्॥१॥मार्कण्डेय उवाच ॥ चैत्र्यां तु समतीतायां यावन्मासं दिनेदिने ॥ पूर्ववत्पूजयेद्देवं नृसिंहमपराजितम् ॥ २ ॥ होमं च प्रत्यहं कुर्यात्तथा सिद्धार्थकैर्नृप ॥ ब्राह्मणान्भोजयेच्चात्र तथा त्रिमधुरं सदा॥ ३ ॥ वैशाख्यां कनकं दद्यात्त्रिरात्रोपोषितो नरः ॥ ज्ञानावाप्तिप्रदं ह्येतद्व्रतं बुद्धिविवर्धनम् ॥ ४ ॥ कृत्वा व्रतं मासमिदं मयोक्तमासाद्य नाकं सुचिरं मनुष्यः ॥ मानुष्यमासाद्य च बुद्धियुक्तो ज्ञानेन युक्तश्च तथा भवेत्तु ॥ ५ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे

मार्कण्डेयवज्रसंवादे बुद्ध्यावाप्तिव्रतवर्णनो नाम षडुत्तरद्विशततमोऽध्यायः ॥ २०६ ॥ वज्र उवाच ॥ भगवन्कर्मणा केन विद्यावान्पुरुषो भवेत् ॥
सुविद्य एव विज्ञेयः पुरुषः पशुरन्यथा ॥ १ ॥ मार्कण्डेय उवाच ॥ पौष्यान्तु समतीतायां प्रतिपत्प्रभृति क्रमात् ॥ प्राग्वत्संपूजयेद्देवं तुरंगशिरसं
हरिम्॥२॥तिलाँश्च जुहुयाद्वह्नौ तिलैर्देवं समर्चयेत्॥त्रिरात्रोपोषितो माघ्यां तिलान्कनकमेव च॥३॥ दद्याद्ब्राह्मणमुख्याय सम्यक्प्रयतमानसः॥मुख्यं
यज्ञोपवीतञ्च प्रभूतमपि चेन्धनम्॥४॥कृत्वा व्रतं मासमिदं मयोक्तं विद्यान्वितः स्यात्पुरुषः सदैव॥स्वर्लोकमासाद्य सुखानि भुक्त्वा कामानभीष्टान्पु
रुषोश्नुते च॥५॥इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मा० वज्रसंवादे विद्यावाप्तिव्रतवर्णनो नाम सप्तोत्तरद्विशततमोऽध्यायः॥२०७॥ वज्र उवाच॥
भगवन्कर्मणा केन शीलवान्पुरुषो भवेत् ॥ कुलजातिश्रुतिभ्यश्च शीलमेव विशिष्यते ॥ १ ॥ मार्कण्डेय उवाच ॥ आग्रायण्यामतीतायां
मासमेकं दिनेदिने ॥ पूर्ववत्पूजयेद्देवं वराहमपराजितम्॥२॥घृतेन स्नापयेद्देवं घृतेन जुहुयाद्धविः ॥ घृतं द्विजेभ्यो दद्याच्च घृतमेव निवेदयेत् ॥३॥
त्रिरात्रोपोषितः पौष्यां घृतपात्रेण च द्विजान् ॥पूजयेत्ससुवर्णेन यथाशक्ति नराधिप ॥ ४ ॥ कृत्वा व्रतं मासमिदं मयोक्तं चासाद्य नाकं सुचिरं
मनुष्यः ॥ मानुष्यमासाद्य च शीलवान्स्यात्प्राप्नोति पुष्टिं चिरजीवितं च ॥५॥ इति श्रीविष्णुधर्मोत्तरे तृ०ख० मार्कण्डेयवज्रसंवादे शीलावाप्ति
व्रतवर्णनो नामाष्टोत्तरद्विशततमोऽध्यायः ॥ २०८ ॥ वज्र उवाच ॥ भगवन्कर्मणा केन नित्यं धर्म्मपरो भवेत् ॥ धर्म्मविच्च महाराज धर्म्मस
फल्यकारणात् ॥ १ ॥ मार्कण्डेय उवाच ॥ आषाढ्यां समतीतायां प्रतिपत्प्रभृति क्रमात् ॥ पूर्ववत्पूजयेद्देवं धर्म्मविग्रहधारिणम् ॥२॥ मासस्य
चान्ते नृप पौर्णमास्यां कृत्वा त्रिरात्रं कनकञ्च दद्यात् ॥ व्रतोत्तमं धर्म्मकरं तवोक्तं सर्व्वार्थदं नात्र विचारणास्ति ॥ ३ ॥ इति श्रीविष्णुधर्म्मोत्तरे
तृ० ख० मार्कण्डेयवज्रसंवादे धर्म्मप्राप्तिव्रतवर्णनो नाम नवोत्तरद्विशततमोऽध्यायः ॥ २०९ ॥ वज्र उवाच ॥ भगवन्कर्मणा केन धनवान्पुरुषो
भवेत् ॥ धनवानेव लोकेषु पूज्यो भवति मानवः ॥ १ ॥ मार्कण्डेय उवाच ॥ श्रावण्यां समतीतायां प्रतिपत्प्रभृति क्रमात् ॥ पूर्ववत्पूजयेद्विष्णुं
देवं सङ्कर्षणं प्रभुम् ॥ २ ॥ नीलोत्पलैस्तथा पत्रैर्नृप भृंगिरजस्य च ॥ घृतेन परमान्नेन तथा बिल्वैश्च शक्तितः ॥ ३ ॥ त्रिरात्रोपोषितः सम्यक्
प्रोष्ठपद्यां ततो नरः ॥ गां च दद्याद्द्विजेन्द्राय व्रतान्ते मनुजोत्तमः ॥ ४ ॥ कृत्वा व्रतं मासमिदं यथोक्तं चासाद्य नाकं सुचिरं मनुष्यः ॥ मानुष्य
मासाद्य धनान्वितः स्याद्व्रतेन चीर्णेन नरेन्द्रसिंह ॥ ५ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख० मार्कण्डेयवज्रसंवादे धनावाप्तिव्रतवर्णनो नाम दशोत्तर
द्विशततमोऽध्यायः ॥ २१० ॥ वज्र उवाच ॥ श्रीविहीनस्य लोकेस्मिन्किं धनेन महाद्युते ॥ तस्माद्व्रतं समाचक्ष्व येन स्याच्छ्रीयुतो

नरः ॥ १ ॥ मार्कण्डेय उवाच ॥ वैशाख्यां समतीतायां प्रतिपत्प्रभृति क्रमात् ॥ पूर्ववत्पूजयेद्देवं श्रीसहायं दिनेदिने ॥ २ ॥ पुष्पैर्मूलैः फलैश्चैव जुहुयादक्षतांस्तथा ॥ बिल्वांश्च वह्नौ सततं गोरसैर्भोजयेद्द्विजान् ॥ ३ ॥ त्रिरात्रोपोषितो ज्येष्ठे कनकं प्रतिपादयेत् ॥ वस्त्रयुग्मं च राजेन्द्र तेन साफल्यमश्नुते॥४॥कृत्वा व्रतं मासमिदं यथोक्तं चासाद्य नाकं सुचिरं मनुष्यः॥ मानुष्यमासाद्य विवृद्धतेजाः श्रिया युतः स्याज्जगति प्रधानः॥५॥ इति श्रीविष्णुधर्मोत्तरे तृ०ख० मार्कण्डेयवज्रसंवादे श्रीलब्धिव्रतवर्णनो नामैकादशोत्तरद्विशततमोऽध्यायः ॥२११ ॥ वज्र उवाच ॥ भगवन्कर्मणा केन भोगानाप्नोति मानवः ॥ किन्तु भोगविहीनस्य कार्यमस्ति धनैर्द्विज ॥१॥ मार्कण्डेय उवाच ॥ ज्येष्ठायां समतीतायां प्रतिपत्प्रभृति क्रमात्॥ पूर्ववत्पूजयेद्देवं विश्वरूपधरं हरिम् ॥२॥ कृत्वा व्रतान्ते च तथा त्रिरात्रं दत्त्वा सुयुक्तं शयनं द्विजाय॥स्वर्लोकमासाद्य चिरं तथोष्य मानुष्यमासाद्य च भोगवान्स्यात् ॥ ३ ॥ इति श्रीविष्णुधर्मोत्तरे तृ०ख० मार्कण्डेयवज्रसंवादे भोगावाप्तिव्रतवर्णनो नाम द्वादशोत्तरद्विशततमोऽध्यायः ॥ २१२ ॥ वज्र उवाच ॥ भगवन्कर्मणा केन सर्वत्र जयमाप्नुयात् ॥ व्यवहारे रणे द्यूते विवादे च द्विजोत्तम ॥१॥ जयावाप्तेः परं नास्ति सौख्यं लोकेषु सत्तम ॥ जयावाप्तिः परं सौख्यं तदाप्तिव्रतमुच्यताम् ॥ २ ॥ मार्कण्डेय उवाच ॥ आश्वयुज्यामतीतायां प्रतिपत्प्रभृति क्रमात् ॥ पूर्ववत्पूजयेद्विष्णुं देवदेवं त्रिविक्रमम् ॥ ३ ॥ त्रिरात्रान्ते तु कार्तिक्यां दद्यादुक्षाणमुत्तमम् ॥ सर्वसस्यधरं कृत्वा शक्त्या रत्नैरलङ्कृतम् ॥ ४ ॥ कृत्वा व्रतं मासमिदं यथोक्तं प्राप्नोति नाकं सुचिरं नृवीरः॥ तत्रोष्य कालं सुचिरं मनुष्यः प्राप्नोति सर्वत्र जयं नृलोके ॥ ५ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख० मार्कण्डेयवज्रसंवादे जयावाप्तिव्रतवर्णनो नाम त्रयोदशोत्तरद्विशततमोऽध्यायः॥२१३॥ वज्र उवाच ॥ व्रतान्यन्यानि मे ब्रूहि काम्यानि द्विज पुङ्गव ॥ नारीणां पुरुषाणां वा सर्वज्ञस्त्वं मतो मम ॥ १ ॥ मार्कण्डेय उवाच ॥ कृत्तिकास्वर्चयेद्देवं कार्तिकीप्रभृतिक्रमात् ॥ यावत्स्यात्कार्तिकं भूयो नरसिंहमुपोषितः ॥२ ॥ अनुलेपनपुष्पाद्यैः सर्वदोक्तैस्सदैव तु ॥ व्रतावसाने दत्त्वा च चन्दनं तगरं द्विजे ॥ ३ ॥ चर्म चैवायुधं मुख्यं वासांसि विविधानि च ॥ सर्वत्र जयमाप्नोति यत्रयत्राभिजायते ॥ ४ ॥ मार्गशीर्षादथारभ्य मृगशीर्षे तथार्चयेत् ॥ यावदाग्रायणी भूयो रामं दशरथात्मजम् ॥ ५ ॥ अनुलेपनपुष्पाद्यैः सर्वरत्नैः सदैव तु ॥ व्रतावसाने दद्याद्गां तथा श्वेतां द्विजातये ॥ ६ ॥ श्वेतं वस्त्रयुगं चैव रजतं च तथा नृप ॥ उपोषितः सदा कृत्वा व्रतं स्याच्छत्रुवर्जितः ॥ ७ ॥ पौषमासादथारभ्य पुष्पैर्नित्यमुपोषितः ॥ यावत्पौषी भवेद्भूयो बलभद्रमथार्चयेत् ॥ ८ ॥ अनुलेपनपुष्पान्नैः सर्वरत्नैस्तथैव च ॥ व्रतावसाने सघृतं कांस्यं कनकमेव च ॥ ९ ॥ दत्त्वा विप्राय भवति नित्यं पुष्टि

मार्कण्डेयवज्रसंवादे बुद्ध्यावाप्तिव्रतवर्णनो नाम षडुत्तरद्विशततमोऽध्यायः ॥ २०६ ॥ वज्र उवाच ॥ भगवन्कर्मणा केन विद्यावान्पुरुषो भवेत् ॥ सुविद्य एव विज्ञेयः पुरुषः पशुरन्यथा ॥ १ ॥ मार्कण्डेय उवाच ॥ पौष्यान्तु समतीतायां प्रतिपत्प्रभृति क्रमात् ॥ प्राग्वत्संपूजयेद्देवं तुरंगशिरसं हरिम्॥२॥तिलाँश्च जुहुयाद्वह्नौ तिलैर्देवं समर्चयेत्॥त्रिरात्रोपोषितो माघ्यां तिलान्कनकमेव च॥३॥ दद्याद्ब्राह्मणमुख्याय सम्यक्प्रयतमानसः॥मुख्यं यज्ञोपवीतञ्च प्रभूतमपि चेन्धनम्॥४॥कृत्वा व्रतं मासमिदं मयोक्तं विद्यान्वितः स्यात्पुरुषः सदैव॥स्वर्लोकमासाद्य सुखानि भुक्त्वा कामानभीष्टान्पुरुषोश्नुते च॥५॥इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मा० वज्रसंवादे विद्यावाप्तिव्रतवर्णनो नाम सप्तोत्तरद्विशततमोऽध्यायः॥२०७॥ वज्र उवाच॥ भगवन्कर्मणा केन शीलवान्पुरुषो भवेत् ॥ कुलजातिश्रुतिभ्यश्च शीलमेव विशिष्यते ॥ १ ॥ मार्कण्डेय उवाच ॥ आग्रायण्यामतीतायां मासमेकं दिनेदिने ॥ पूर्ववत्पूजयेद्देवं वराहमपराजितम्॥२॥घृतेन स्नापयेद्देवं घृतेन जुहुयाद्धविः ॥ घृतं द्विजेभ्यो दद्याच्च घृतमेव निवेदयेत् ॥३॥ त्रिरात्रोपोषितः पौष्यां घृतपात्रेण च द्विजान् ॥पूजयेत्ससुवर्णेन यथाशक्ति नराधिप ॥ ४ ॥ कृत्वा व्रतं मासमिदं मयोक्तं चासाद्य नाकं सुचिरं मनुष्यः ॥ मानुष्यमासाद्य च शीलवान्स्यात्प्राप्नोति पुष्टिं चिरजीवितं च ॥५॥ इति श्रीविष्णुधर्मोत्तरे तृ०ख० मार्कण्डेयवज्रसंवादे शीलावाप्तिव्रतवर्णनो नामाष्टोत्तरद्विशततमोऽध्यायः ॥ २०८ ॥ वज्र उवाच ॥ भगवन्कर्मणा केन नित्यं धर्म्मपरो भवेत् ॥ धर्म्मविच्च, महाराज धर्म्मसफल्यकारणात् ॥ १ ॥ मार्कण्डेय उवाच ॥ आषाढ्यां समतीतायां प्रतिपत्प्रभृति क्रमात् ॥ पूर्ववत्पूजयेद्देवं धर्म्मविग्रहधारिणम् ॥२॥ मासस्य चान्ते नृप पौर्णमास्यां कृत्वा त्रिरात्रं कनकञ्च दद्यात् ॥ व्रतोत्तमं धर्म्मकरं तवोक्तं सर्व्वार्थदं नात्र विचारणास्ति ॥ ३ ॥ इति श्रीविष्णुधर्म्मोत्तरे तृ० ख० मार्कण्डेयवज्रसंवादे धर्म्मप्राप्तिव्रतवर्णनो नाम नवोत्तरद्विशततमोऽध्यायः ॥ २०९ ॥ वज्र उवाच ॥ भगवन्कर्मणा केन धनवान्पुरुषो भवेत् ॥ धनवानेव लोकेषु पूज्यो भवति मानवः ॥ १ ॥ मार्कण्डेय उवाच ॥ श्रावण्यां समतीतायां प्रतिपत्प्रभृति क्रमात् ॥ पूर्ववत्पूजयेद्विष्णुं देवं सङ्कर्षणं प्रभुम् ॥ २ ॥ नीलोत्पलैस्तथा पत्रैर्नृप भृंगिरजस्य च ॥ घृतेन परमान्नेन तथा बिल्वैश्च शक्तितः ॥ ३ ॥ त्रिरात्रोपोषितः सम्यक् प्रोष्ठपद्यां ततो नरः ॥ गां च दद्याद्द्विजेन्द्राय व्रतान्ते मनुजोत्तमः ॥ ४ ॥ कृत्वा व्रतं मासमिदं यथोक्तं चासाद्य नाकं सुचिरं मनुष्यः ॥ मानुष्यमासाद्य धनान्वितः स्याद्व्रतेन चीर्णेन नरेन्द्रसिंह ॥ ५ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख० मार्कण्डेयवज्रसंवादे धनावाप्तिव्रतवर्णनो नाम दशोत्तरद्विशततमोऽध्यायः ॥ २१० ॥ वज्र उवाच ॥ श्रीविहीनस्य लोकेस्मिन्किं धनेन महाद्युते ॥ तस्माद्व्रतं समाचक्ष्व येन स्याच्छ्रीयुतो

नरः ॥ १ ॥ मार्कण्डेय उवाच ॥ वैशाख्यां समतीतायां प्रतिपत्प्रभृति क्रमात् ॥ पूर्ववत्पूजयेद्देवं श्रीसहायं दिनेदिने ॥ २ ॥ पुष्पैर्मूलैः फलैश्चैव जुहुयादक्षतांस्तथा ॥ बिल्वांश्च वह्नौ सततं गोरसैर्भोजयेद्द्विजान् ॥ ३ ॥ त्रिरात्रोपोषितो ज्येष्ठे कनकं प्रतिपादयेत् ॥ वस्त्रयुग्मं च राजेन्द्र तेन साफल्यमश्नुते॥४॥कृत्वा व्रतं मासमिदं यथोक्तं चासाद्य नाकं सुचिरं मनुष्यः॥ मानुष्यमासाद्य विवृद्धतेजाः श्रिया युतः स्याज्जगति प्रधानः॥५॥ इति श्रीविष्णुधर्मोत्तरे तृ०ख० मार्कण्डेयवज्रसंवादे श्रीलब्धिव्रतवर्णनो नामैकादशोत्तरद्विशततमोऽध्यायः ॥२११ ॥ वज्र उवाच ॥ भगवन्कर्मणा केन भोगानाप्नोति मानवः ॥ किन्नु भोगविहीनस्य कार्यमस्ति धनैर्द्विज ॥१॥ मार्कण्डेय उवाच ॥ ज्येष्ठायां समतीतायां प्रतिपत्प्रभृति क्रमात्॥ पूर्ववत्पूजयेद्देवं विश्वरूपधरं हरिम् ॥२॥ कृत्वा व्रतान्ते च तथा त्रिरात्रं दत्त्वा सुयुक्तं शयनं द्विजाय॥स्वर्लोकमासाद्य चिरं तथोष्य मानुष्यमासाद्य च भोगवान्स्यात् ॥ ३ ॥ इति श्रीविष्णुधर्मोत्तरे तृ०ख० मार्कण्डेयवज्रसंवादे भोगावाप्तिव्रतवर्णनो नाम द्वादशोत्तरद्विशततमोऽध्यायः ॥ २१२ ॥ वज्र उवाच ॥ भगवन्कर्मणा केन सर्वत्र जयमाप्नुयात् ॥ व्यवहारे रणे द्यूते विवादे च द्विजोत्तम ॥१॥ जयावाप्तेः परं नास्ति सौख्यं लोकेषु सत्तम ॥ जयावाप्तिः परं सौख्यं तदाप्तिव्रतमुच्यताम् ॥ २ ॥ मार्कण्डेय उवाच ॥ आश्वयुज्यामतीतायां प्रतिपत्प्रभृति क्रमात् ॥ पूर्ववत्पूजयेद्विष्णुं देवदेवं त्रिविक्रमम् ॥ ३ ॥ त्रिरात्रान्ते तु कार्तिक्यां दद्यादुक्षाणमुत्तमम् ॥ सर्वसस्यधरं कृत्वा शक्त्या रत्नैरलङ्कृतम् ॥ ४ ॥ कृत्वा व्रतं मासमिदं यथोक्तं प्राप्नोति नाकं सुचिरं नृवीरः॥ तत्रोष्य कालं सुचिरं मनुष्यः प्राप्नोति सर्वत्र जयं नृलोके ॥ ५ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख० मार्कण्डेयवज्रसंवादे जयावाप्तिव्रतवर्णनो नाम त्रयोदशोत्तरद्विशततमोऽध्यायः॥२१३॥ वज्र उवाच ॥ व्रतान्यन्यानि मे ब्रूहि काम्यानि द्विज पुङ्गव ॥ नारीणां पुरुषाणां वा सर्वज्ञस्त्वं मतो मम ॥ १ ॥ मार्कण्डेय उवाच ॥ कृत्तिकास्वर्चयेद्देवं कार्तिकीप्रभृतिक्रमात् ॥ यावत्स्यात्कार्तिकं भूयो नरसिंहमुपोषितः ॥२ ॥ अनुलेपनपुष्पाद्यैः सर्वदोक्तैस्सदैव तु ॥ व्रतावसाने दत्त्वा च चन्दनं तगरं द्विजे ॥ ३ ॥ चर्म चैवायुधं मुख्यं वासांसि विविधानि च ॥ सर्वत्र जयमाप्नोति यत्रयत्राभिजायते ॥ ४ ॥ मार्गशीर्षादथारभ्य मृगशीर्षे तथार्चयेत् ॥ यावदाग्रायणी भूयो रामं दशरथात्मजम् ॥ ५ ॥ अनुलेपनपुष्पाद्यैः सर्वरत्नैः सदैव तु ॥ व्रतावसाने दद्याद्गां तथा श्वेतां द्विजातये ॥ ६ ॥ श्वेतं वस्त्रयुगं चैव रजतं च तथा नृप ॥ उपोषितः सदा कृत्वा व्रतं स्याच्छत्रुवर्जितः ॥ ७ ॥ पौषमासादथारभ्य पुष्यैर्नित्यमुपोषितः ॥ यावत्पौषी भवेद्भूयो बल भद्रमथार्चयेत् ॥ ८ ॥ अनुलेपनपुष्पान्नैः सर्वरत्नैस्तथैव च ॥ व्रतावसाने सघृतं कांस्यं कनकमेव च ॥ ९ ॥ दत्त्वा विप्राय भवति नित्यं पुष्टि

युतो नरः ॥ माघमासादथारभ्य मघासु सततं नरः ॥ १० ॥ वाराहमर्चयेद्देवं तथा नित्यमुपोषितः ॥ घृताभ्यङ्गेन विधिवच्चन्दनेन सुगन्धिना ॥ ११ ॥ तथा च परमान्नेन घृतहोमेन चाप्यथ ॥ दद्याद्व्रतावसाने च क्षितिं गां वा नराधिप ॥ १२ ॥ पितृप्रसादमाप्नोति कृत्वैतद्व्रतमुत्तमम् ॥ फाल्गुनात्तु तथारभ्य फाल्गुनीषु समर्चयेत् ॥ १३ ॥ नरनारायणौ देवौ यावत्स्यात्फाल्गुनी पुनः ॥ व्रतावसाने शयनं स्वास्तीर्णं प्रतिपादयेत् ॥ १४ ॥ व्रतावसाने नारी स्यात्सुभर्त्रा समलंकृता ॥ भार्यां नरस्तथाप्नोति रूपद्रविणसंयुताम् ॥१५॥ अनुकूलां श्रियं नित्यं तथा पक्षवतीं नृप ॥ अवियोगमवैधव्यं करोत्येतन्महाव्रतम् ॥१६॥ चैत्रमासादथारभ्य नित्यं चित्रास्वथार्चयेत् ॥ व्रतावसाने दद्याच्च चित्रं वस्त्रं द्विजन्मने ॥ १७ ॥ व्रतेनानेन पुरुषः पुत्रानाप्नोत्यथेप्सितान्॥ नारी वा पुरुषव्याघ्र नात्र कार्या विचारणा ॥१८॥ वैशाखीतस्तथारभ्य विशाखासु तथार्चयेत् ॥ यावद्भूयस्तु वैशाखी सोपवासः पृथुं विभुम्॥१९॥दत्त्वा व्रतान्ते कनकं ज्ञातिश्रैष्ठ्यमवाप्नुयात्॥ ज्येष्ठमासादथारभ्य ज्येष्ठासु सततं नरः॥२०॥अर्चयेद्भार्गवं रामं यावज्ज्येष्ठं पुनर्भवेत् ॥ व्रतावसाने दद्याच्च च्छत्रोपानहमेव च ॥२१॥ व्रतेनानेन भवति सर्वश्रेष्ठो नरोत्तम ॥ आषाढीतस्तथारभ्य दिनद्वयमुपोषितः ॥ २२ ॥ आषाढ्यां त्वर्चयेद्देवं प्रद्युम्नमपराजितम् ॥ भूयः स्याद्यावदाषाढी दद्याच्च शयनं ततः ॥ २३ ॥ स्वास्तीर्णं तेन चाप्नोति नित्यं रूपयुताः स्त्रियः ॥ श्रावणीतस्तथारभ्य श्रवणे सततं हरिम् ॥ २४ ॥ अर्चयेत्सोपवासं तं यावत्स्याच्छ्रावणी पुनः ॥ व्रतावसाने दद्याच्च कांस्यं रूप्यं घृतं तथा॥२५॥व्रतान्यथैतानि मया नरेन्द्र प्रोक्तानि ते पापहराणि नित्यम् ॥ नाकप्रदान्युत्तमपूर्यमाणान्कामान्प्रदातॄणि यथेष्टमत्र॥२६॥ इति श्रीविष्णुधर्मोत्तरे तृ०ख०मार्कण्डेयवज्रसंवादे द्वादशमासर्क्षव्रतवर्णनो नाम चतुर्दशोत्तरद्विशततमोऽध्यायः ॥ २१४ ॥ वज्र उवाच ॥ आराधनार्थं देवस्य विष्णोरमिततेजसः ॥ व्रतान्यन्यानि मे ब्रूहि भृगुवंशविवर्धन ॥ १ ॥ मार्कण्डेय उवाच ॥ गङ्गाद्वारे सुखासीनः पुलस्त्यऋषिसत्तमः ॥ व्रतानि यानि दाल्भ्याय जगाद शृणु तानि मे ॥ २ ॥ दाल्भ्य उवाच ॥ आराधनार्थं देवस्य विष्णोरमिततेजसः ॥ व्रतानि त्वं समाचक्ष्व सर्वधर्मभृतां वर ॥ ३ ॥पुलस्त्य उवाच ॥ एकादश्यां शुक्लपक्षे फाल्गुने मासि यो नरः ॥ जपन्कृष्णेति देवस्य नाम भक्त्या पुनःपुनः ॥ ४ ॥ देवार्चने चाष्टशतं कृत्वैतत्तु जपेच्छुचिः ॥ स्नातः प्रस्थानकाले च उत्थाने स्खलिते क्षुते ॥ ५ ॥ पाषण्डान्पतितांश्चैव तथैवान्तावसायिनः ॥ नालपेत तथा कृष्णमर्चयेच्छ्रद्धयान्वितः ॥ ६ ॥ इदं चोदाहरेत्कृष्णे मनः सन्धाय तत्परः ॥ कृष्णकृष्ण कृपालुस्त्वमगतीनां गतिर्भव ॥ ७ ॥ संसारार्णवमग्नानां प्रसीद मधुसूदन ॥ एवं

प्रसाद्योपवसेत्कृत्वा नियतमानसः ॥ ८ ॥ पूर्वेह्नि चान्येद्युश्चापि गव्यं संप्राश्य वै सकृत् ॥ स्नातोर्चयित्वा कृष्णेति पुनर्नाम प्रकीर्तयेत् ॥ ९ ॥
वारिधाराव्रते चैव विक्षिपेद्देवपादयोः ॥ चैत्रवैशाखयोश्चैव तद्वज्ज्येष्ठे च पूजयेत् ॥ १० ॥ मर्त्यलोके गतिं श्रेष्ठां दाल्भ्य प्राप्नोति वै नरः ॥
उत्क्रान्तिकाले कृष्णस्य स्मरणं च तथाश्नुते ॥ ११ ॥ आषाढे श्रावणे चैव मासि भाद्रपदे तथा ॥ तथैवाश्वयुजे मासि अनेन विधिना नरः
॥ १२ ॥ उपोष्य संपूज्य तथा केशवेति च पूजयेत् ॥ गोमूत्रप्राशनात्पूतः स्वर्गलोकगतिं व्रजेत् ॥ १३ ॥ आराधितस्य जगतामीश्वरस्याव्यय
स्य च ॥ उत्क्रान्तिकाले स्मरणं केशवस्य तथाप्नुयात् ॥ १४ ॥ क्षीरस्य प्राशनं यस्तु विधिं चेमं यथोदितम् ॥ कार्तिकादि यथान्यायं कुर्या
न्मासचतुष्टयम् ॥ १५ ॥ तेनैव विधिना ब्रह्मन्विष्णोर्नाम प्रकीर्तयेत् ॥ स याति विष्णुसालोक्यं विष्णुं स्मरति चाक्षयम् ॥ १६ ॥ प्रतिमासं
द्विजातिभ्यो दद्याद्दानं यथाविधि ॥ चातुर्मास्ये च संपूर्णे पुण्यश्रवणकीर्तनम् ॥ १७ ॥ अथ वा वासुदेवस्य तद्गीतं चापि कारयेत् ॥ एवमेति
गतिं श्रेष्ठां देवमानुष्यकीर्तनात् ॥ १८ ॥ कथितं पारणं यत्ते कार्यं मासचतुष्टयम् ॥ आधिपत्यं तथा भोगांस्तेन प्राप्नोति चाक्षयान् ॥ १९ ॥
द्वितीयेन तथा भोगानैन्द्रानाप्नोति मानवः ॥ विष्णुलोकं तृतीयेन पारणेन तथाप्नुयात् ॥ २० ॥ एवमेतत्समाख्यातं गतिप्रापकमुत्तमम् ॥
विधानं द्विजशार्दूल कृष्णतुष्टिप्रदं नृणाम् ॥ २१ ॥ सुगतिद्वादशीमेतां श्रद्दधानस्तु यो नरः ॥ उपोष्यति तथा नारी प्राप्नोति विविधां गतिम्
॥ २२ ॥ एषा तिथिः पापहरातिधन्या नाकप्रदा नाककरी तथोक्ता ॥ आराधनार्थं त्रिदशेश्वरस्य देवस्य विष्णोर्द्विजसंघपूज्य ॥ २३ ॥ इति
श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे सुगतिद्वादशीव्रतवर्णनो नाम पञ्चदशोत्तरद्विशततमोऽध्यायः ॥ २१५ ॥ पुलस्त्य उवाच ॥
पञ्चदश्यां तु शुक्लस्य फाल्गुनस्यैव सत्तम ॥ पाषण्डान्पतितांश्चैव तथैवान्त्यावसायिनः ॥ १ ॥ नास्तिकाञ्चित्रवृत्तींश्च पापानन्यांश्च नालपेत् ॥
नारायणं त्वेकमनाः पुरुषो नियतेन्द्रियः ॥२॥ तिष्ठन्व्रजन्प्रस्खलिते क्षुते चापि जनार्दनम् ॥ कीर्तनं तत्क्रियाकाले सप्तकृत्वः प्रकीर्तयेत् ॥३ ॥
लक्ष्म्या समन्वितं देवं त्वर्चयेच्च जनार्दनम् ॥ सन्ध्याद्युपरमे चेन्दुस्वरूपं हरिमीश्वरम् ॥ ४ ॥ रात्रीं लक्ष्मीं च संचिन्त्य सम्यगर्घ्येण पूजयेत् ॥
नक्तं च भुञ्जीत नरस्तैलक्षारविवर्जितम् ॥ ५ ॥ तथैव चैत्रवैशाखज्येष्ठेषु मुनिसत्तम ॥ अर्चयेत्तु तथा प्रोक्तं प्राप्तेप्राप्ते तु तद्दिने ॥ ६ ॥
निष्पादितं भवेदेकं पारणं दाल्भ्य भक्तितः ॥ द्वितीयं चापि वक्ष्यामि पारणं द्विजसत्तम ॥ ७ ॥ आषाढे श्रावणे चापि प्राप्ते
भाद्रपदे तथा ॥ तथैवाश्वयुजेभ्यर्च्य श्रीधरं वै श्रिया सह ॥ सम्यक्चन्द्रमसो दत्त्वा भुञ्जीतार्घं यथाविधि ॥ ८ ॥ द्वितीयमेतदा

ख्यातं तृतीयं पारणं शृणु ॥ कार्तिकादिषु मासेषु तथैवाभ्यर्च्य केशवम् ॥ ९ ॥ भूम्या समन्वितं दद्याच्छशाङ्कायार्हणं निशि ॥ भुञ्जीत च यथाख्यातं तृतीयमिति पारणम् ॥ १० ॥ प्रतिपूजासु दद्याच्च ब्राह्मणेभ्यश्च दक्षिणाम् ॥ प्रतिमासं च वक्ष्यामि प्राशनं कायशुद्धये ॥ ॥ ११ ॥ प्रथमांश्चतुरो मासान्पञ्चगव्यमुदाहृतम् ॥ कुशोदकं तथैवान्यदुक्तं मासचतुष्टयम् ॥ १२ ॥ सूर्यांशुततं तद्वच्च जलं मासचतुष्टयम् ॥ गीतवाद्यादिकं पाठ्यं तथा कृष्णस्य वा कथाम् ॥ १३ ॥ कारयेत्तु च देवस्य पारणं पारणे गते ॥ एवं संपूज्य विधिवत्सपत्नीकं जनार्दनम् ॥ ॥ १४ ॥ नाप्नोतीष्टवियोगार्तिं पुमान्योषित्तथापि वा ॥ जनार्दनं सलक्ष्मीकमर्चयेत्प्रथमं ततः ॥ १५ ॥ सश्रीकं श्रीधरं भक्त्या तृतीये भूतिकेशवौ ॥ यावन्त्येतद्विधानेन पारणान्यर्चयेत्प्रभुम् ॥ तावन्ति जन्मानि सुखं प्राप्नोतीष्टवियोगजम् ॥ १६ ॥ प्राप्नोति देवस्मरणे च मृत्यौ तदापि चाप्नोति मनोनुकूलाम् ॥ गतिं द्विजश्रेष्ठ ततोपि काले सायुज्यमायाति जनार्दनस्य ॥ १७ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे सुगतिपौषमासीकल्पवर्णनो नाम षोडशोत्तरद्विशततमोऽध्यायः ॥२१६॥ ॥ छ ॥

॥ पुलस्त्य उवाच ॥ शृणु दाल्भ्य परं कामं व्रतं सन्ततिदं नृणाम् ॥ यदुपोष्य न विच्छेदः पितृपिण्डस्य जायते ॥ १ ॥ कृष्णाष्टम्यां चैत्रमासे स्नातो नियतमानसः ॥ कृष्णमभ्यर्च्य पूजां च देवक्याः कुरुते नरः ॥ २ ॥ निराहारो जपन्नाम कृष्णस्य जगतः पतेः॥ उपविष्टो व्रजन्स्नातः क्षुतप्रस्खलनादिषु ॥ ३ ॥ पूजायां चापि कृष्णस्य सप्तवारान्प्रकीर्तयेत् ॥ पाषण्डिनो विकर्मस्थान्नालपेच्चैव नास्तिकान् ॥ ४ ॥ प्रभाते च ततः स्नातो दत्त्वा विप्राय दक्षिणाम् ॥ भुञ्जीत कृतपूजस्तु कृष्णस्यैव जगत्पतेः ॥ ५॥ वैशाखज्येष्ठयोश्चैवं पारणं हि त्रिमासिकम् ॥ उपोष्य देवदेवेशं घृतेन स्नापयेद्धरिम् ॥ ६ ॥ आषाढे श्रावणे चैव मासि भाद्रपदे तथा ॥ उपोष्यते द्वितीयं वै घृतेन स्नपयेद्धरिम् ॥७ ॥ आषाढे श्रावणे चैव मासि भाद्रपदे तथा ॥ उपोष्यते द्वितीयं वै पारणं पूर्ववद्भवेत् ॥ ८ ॥ आश्विने कार्तिके सौम्ये तृतीयं पारणं तथा ॥ पौषे माघे फाल्गुने च चतुर्थं द्विजसत्तम ॥ ९ ॥ पारणे पारणे पूर्णे घृतेन स्नापयेद्धरिम् ॥ ब्राह्मणेभ्यो घृतं दद्यात्तथैव प्रतिपारणम् ॥ १० ॥ कृत्वा व्रतं नाकमनुप्रयाति मानुष्यमासाद्य च निर्वृतः स्यात्॥सन्तानवृद्धिश्च तथाप्नुतेऽसौ यावन्मही सागरमेखलान्ता॥११॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे सन्तानाष्टमीव्रतवर्णनो नाम सप्तदशोत्तरद्विशततमोऽध्यायः ॥ २१७ ॥ पुलस्त्य उवाच॥आषाढशुक्लपक्षे तु भगवान्मधुसूदनः ॥ भोगिभागे निजां मायां योगनिद्रां च मानयेत्॥१॥शेतेऽसौ चतुरो मासान्यावद्भवति कार्तिकम् ॥विशिष्टा न प्रवर्तन्ते तदा

यज्ञादिकाः क्रियाः॥२॥तत्राषाढसितान्ते च यो नरो दिनपञ्चकम् ॥ अधःशायी बहिः स्नायी मांसाभ्यङ्गविवर्जितः ॥ ३ ॥ वृन्ताकालाबुकूष्माण्डमधुक्षारविवर्जितः ॥समस्तमदिरावर्जी सक्नन्नक्ताशनो भवेत् ॥४॥ब्रह्मचारी जितक्रोधो जपहोमपरायणः॥हरिं संपूजयेन्नित्यं गन्धमाल्यान्नसंपदा ॥ ५ ॥गीतैर्वाद्यैस्तथा नृत्तैर्दीपमालाभिरेव च ॥ सान्नानां जलधेनूनां प्रदानेन तथैव च ॥ ६ ॥ तथा कार्तिकशुक्लान्ते तृतीयं पारणं भवेत् ॥७॥ हिंसात्मकैस्तु किं तस्य यज्ञैः कार्यं महात्मनः ॥ प्रस्वापे च प्रबोधे च पूजितो येन केशवः ॥ ८ ॥ दशाहमेतत्कृत्वा तु व्रतं विष्णुपरो नरः ॥ अग्निष्टोममवाप्नोति कुलं चैव समुद्धरेत् ॥ ९ ॥ कार्तिकश्चाग्निदैवत्यो मासो देवमुखः स्मृतः ॥ आश्वयुज्यामतीतायां यावत्स्याद्द्विज कार्तिकी ॥ १० ॥ व्रतं दशाहाभिहितं कृत्वा स्वर्गे महीयते ॥ ॥ पौण्डरीकमवाप्नोति कुलमुद्धरति स्वकम् ॥ ११ ॥ प्रत्यहं दीपदानेन कार्तिकाभिमुखो भवेत् ॥ चक्षुष्मान्ब्राह्मणश्रेष्ठ तथा सर्वत्र पूजितः ॥ १२ ॥ एतावन्तं तथा कालं सर्वमांसविवर्जितः ॥ स्वर्गलोकात्परिभ्रष्टो मानुष्ये सुखमाप्नुयात् ॥ १३ ॥ आरोग्यसुखसम्पत्त्या युक्तश्च सुभगो भवेत् ॥ प्रसुप्ते देवदेवेशे सर्वान्कामानवाप्नुयात् ॥ १४ ॥ दशाहमुदितं कृत्वा खड्गधाराव्रतं नरः ॥ सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥ १५ ॥ मासं च कार्तिकं कृत्वा पौण्डरीकमवाप्नुयात् ॥ कृत्वा मासं यथेष्टं च वह्निष्टोममवाप्नुयात् ॥ १६ ॥ कृत्वा च चतुरो मासान्सुप्ते मधुनिषूदने ॥ अश्वमेधफलं प्राप्य नाकपृष्ठे महीयते ॥ १७ ॥ असिधाराव्रतं कृत्वा तथा संवत्सरं नरः ॥ सर्वयज्ञफलं प्राप्य विष्णुलोके च गच्छति ॥ १८ ॥ येनयेन तु कामेन खड्गधाराव्रतं चरेत् ॥ तंतं काममवाप्नोति विष्णुलोके महीयते ॥ १९ ॥ तथा समर्थो भवति दाने च वरशापयोः ॥ आदित्यतेजा भवति नात्र कार्या विचारणा ॥२०॥ दाल्भ्य उवाच ॥ असिधाराव्रतविधिः समाचक्ष्व महाद्युते ॥ एतन्मे संशयं च्छिन्धि त्वं हि सर्वविदुच्यसे ॥ २१ ॥ पुलस्त्य उवाच ॥ स्नातः स्वलंकृतः स्रग्वी भुक्तवान्मांसवर्जितम् ॥ कृतदैवतपूजस्तु स्त्रीसहायः स्वपेन्निशि ॥ २२ ॥ ब्रह्मचारी द्विजश्रेष्ठ खड्गाधाराव्रतं चरन् ॥ अपूर्वां चास्यपूर्वांश्च समालिंग्य स्वपेन्निशि ॥ २३ ॥ ब्रह्मचारी शतगुणं फलमाप्नोत्यसंशयम् ॥ अतीव दुष्करमिदं खड्गाधाराव्रतं स्मृतम् ॥ २४ ॥ कृत्वा व्रतं द्वादशवत्सराणि त्रैलोक्यराज्यं ध्रुवमाप्नुयाच्च ॥ भुक्त्वा चिरं तद्द्विजमुख्य चान्ते सायुज्यमायाति जनार्दनस्य ॥२५॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखडे मा० व०सं० दाल्भ्यं प्रति पुलस्त्यकथास्वधाराव्रतवर्णनो नामाष्टादशोत्तरद्विशततमोऽध्यायः ॥ २१८ ॥ पुलस्त्य उवाच ॥ मासि प्रोष्ठपपदे शुक्ले द्वादश्यां जलशायिनम् ॥ प्रणम्यानन्तमभ्यर्च्य पुष्पधूपादिभिः शुचिः ॥ १ ॥ पाषण्डादिभिरालापमकुर्वन्नियमात्मवान् ॥ जलधेनुं द्विजे दत्त्वा नक्तं भुञ्जीत वाग्यतः ॥ २ ॥

तिष्ठंस्थितो ब्रजंश्चैव क्षुतप्रस्खलनादिषु ॥ अनन्तनामस्मरणं कुर्वन्नुच्चारणं नरः ॥ ३ ॥ अनेनैव विधानेन मासद्वादश वै क्रमात् ॥ उपोष्य पारणे पूर्णे दद्याद्विप्रेषु दक्षिणाम् ॥ ४ ॥ कृत्वा व्रतं द्वादशमेतदिष्टं प्राप्नोत्यनंतानि फलानि विप्र ॥ सम्यक्कृतानां नियमव्रतानां चानन्तमाराध्य न संशयोत्र ॥ ५ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे दाल्भ्यं प्रति पुलस्त्यवाक्येष्वनन्तद्वादशीव्रतवर्णनो नामैकोनविंशत्युत्तरद्विशततमोध्यायः॥२१९॥पुलस्त्य उवाच ॥ पौषमासे सिते पक्षे द्वादश्यां शक्रदैवतम् ॥ नक्षत्रयोगं विष्णुं च प्रथमं तु समर्चयेत् ॥१॥ ततः प्रभृति विप्रेन्द्र मासिमासि जनार्दनम् ॥ उपोषितः पूजयते यावत्संवत्सरं गतम् ॥ २ ॥ मासेथ मासे विधिनोदितेन रम्यां तिथौ दानमथ ब्रवीमि ॥ प्राच्यं यथावद्विधिवत्क्रमेण तदुच्यमानं निखिलं निबोध ॥ ३॥घृतं यथा व्रीहियवं हिरण्यं यवान्नमंभः कनकानुपानम् ॥ छत्रं पयोन्नं गुडफाणिताढ्यं स्रक्चन्दने वस्त्रमनुक्रमेण ॥ ४ ॥गोमूत्रमंभो घृतमांसशाकं दूर्वादधिव्रीहियवं तिलांश्च ॥ सूर्यांशुतप्तं जलमाशु दर्भं क्षीरं च मासं क्रमशः प्रयुञ्ज्यात्॥५॥कुले प्रधाने धनधान्यपूर्णे विवेकवान्थस्तु समस्तदुःखे॥प्राप्नोति जन्माविकलेन्द्रियश्च भवत्यरोगो मतिमान्सुखी च ॥ ६ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे दाल्भ्यं प्रति पुलस्त्यवाक्येषु ब्रह्मद्वादशीव्रतवर्णनो नाम विंशत्युत्तरद्विशततमोऽध्यायः ॥ २२० ॥ समाप्तः पुलस्त्यदाल्भ्यसंवादः ॥ ॥ वज्र उवाच ॥ किं तु कृत्यतमं लोके मनुष्याणां प्रकीर्तितम् ॥ एतत्पृष्टो ममाचक्ष्व सर्वधर्मभृतां वर ॥ १॥ मार्कण्डेय उवाच ॥ अन्तर्वेदि बहिर्वेदि पूजा कार्या दिवौकसाम् ॥ एतत्कृत्यतमं लोके पुरुषस्य विपश्चितः ॥ ॥ २ ॥ अन्तर्वेद्यां च यजनं बहुवित्तस्य कीर्तितम् ॥ स्वल्पवित्तस्य धर्मज्ञ बहिर्वेदि प्रकीर्तितम् ॥ ३॥ पुष्पान्नगन्धनैवेद्यस्तोत्राध्ययनकर्मणा ॥ धूपदीपनमस्कारैर्नित्यं पूज्या दिवौकसः ॥ ४॥ ततोऽपि नियमैश्चैव ब्राह्मणानां च तर्पणैः ॥ बहिः शुश्रूषया चैव दानेन विविधेन च॥ ५ ॥ सदैव पूजिता देवास्तुष्टिमायान्ति यादव ॥ स्वेस्वे कालविशेषेण कालः पूर्वोदितो मया ॥ ६ ॥ वज्र उवाच ॥ देवताः काश्च कस्मिन्तु काले संपूजयेत्सदा ॥ देवतापूजने कार्यं विशेषान्मम कीर्तय ॥ ७ ॥ मार्कण्डेय उवाच ॥ कालं तथाहं वक्ष्यामि देवतापूजने पृथक् ॥ संवत्सरेण धर्मज्ञ सोपवासस्य सर्वदा ॥ ८ ॥ ब्रह्माणं पूजयेद्देवं सततं प्रथमेहनि ॥ पक्षद्वये महाभाग पञ्चदश्यामुपोषितः ॥ ९ ॥ संवत्सरेण धर्मज्ञ विंद्याद्बहुसुवर्णकम् ॥ हंसयुक्तेन यानेन ब्रह्मलोके च गच्छति॥१०॥चैत्रमासस्य या शुक्ले प्रथमा प्रतिपद्भवेत्॥तदह्नि ब्रह्मणः कृत्वा सोपवासस्तु पूजनम्॥११॥ संवत्सरमवाप्नोति सौख्यानि भृगुनन्दन ॥ कालस्यावयवाः सर्वे तस्मिन्नहनि पूजिताः॥१२॥ग्रहर्क्षाणि च धर्मज्ञ सौख्यं दद्यादनुत्तमम् ॥ संवत्सराधिपं नागं

तस्मिन्नहनि पूजयेत्॥१३॥ग्रहेभ्यः सौख्यमाप्नोति स्वास्थ्यमग्र्यं तथैव च॥तत्राह्नि ब्रह्मणा सृष्टं त्रैलोक्यं प्रथमं द्विज॥१४॥दक्षं प्रजापतिं नित्यं द्विती
यायामथार्चयेत् ॥ फलमाप्नोति धर्मज्ञ गोसवस्य न संशयः ॥१५॥ तथा नासत्ययोः कृत्वा तस्मिन्नहनि पूजनम् ॥नित्यमारोग्यमाप्नोति तथा रूपं
च भार्गव॥१६॥ शुक्लपक्षद्वितीयायां बालचन्द्रस्य पूजनम्॥कृत्वा दत्त्वा च लवणं प्राग्रात्रौ सुभगो भवेत्॥१७॥साध्या द्वादश ये प्रोक्ता स्तषां कृत्वा
तु पूजनम्॥तृतीयस्यां महाभाग द्वादशाहफलं लभेत्॥१८॥तृतीयायां तथाभ्यर्च्य ब्रह्मविष्णुमहेश्वरान्॥ पृथक्पृथङ्महाभाग त्रिवर्गफलभाग्भवेत् ॥
॥ १९॥ त्रींल्लोकांश्च तदा राम सम्यक्संपूजयेन्नरः ॥ ऐश्वर्यं महदाप्नोति गतिमग्र्यां च विन्दति ॥२०॥ तृतीया श्रावणे कृष्णा या स्याच्छ्रवणसंयु
ता ॥ तस्यां संपूज्य गोविन्दं पुष्टिमग्र्यामवाप्नुयात् ॥२१॥ वैशाखशुक्लपक्षे तु तृतीयायामुपोषितः॥अक्षयं फलमाप्नोति सर्वस्य सुकृतस्य तु ॥ २२॥
सा तथा कृत्तिकोपेता विशेषेण च पूजिता ॥ तत्र दत्तं हुतं तप्तं सर्वं सफलमुच्यते ॥ २३ ॥ अक्षया सा तिथिर्यस्मात्तस्मात्सुकृतमक्षयम् ॥
अक्षतैः पूज्यते विष्णुस्तेन साप्यक्षता स्मृता ॥२४॥ अक्षतैस्तु नरः स्नातो विष्णोर्दत्त्वा तथाक्षतान् ॥ सक्तून्सुसंस्कृताँश्चैव हुत्वा चैव तथाक्षतान्
॥ २५॥ विप्रेषु दत्त्वा तानेव तथा सक्तुं सुसंस्कृतम् ॥ यवान्नभुङ् महाराज फलमक्षय्यमश्नुते ॥२६ ॥ एकामप्युक्तवत्कृत्वा तृतीयां भृगुनन्दन ॥
एषामब्दतृतीयानां सर्वासां तत्फलं भवेत् ॥२७॥ प्रोक्तास्तु भृगवो नाम देवा द्वादश ये पुरा ॥ चतुर्थ्यां पूजनं तेषां कृत्वा दिवमवाप्नुयात्
॥ २८ ॥ यमस्य पूजनं कृत्वा चतुर्थ्यामेव धार्मिकः ॥ नाप्नोति नारकं दुःखं तुष्टे रविसुते नरः ॥ २९ ॥ विनायकमथाभ्यर्च्य चतुर्थ्यां यदु
नन्दन ॥ सर्वविघ्नविनिर्मुक्तः कार्यसिद्धिमवाप्नुयात् ॥ ३० ॥ निद्रां रतिं तथा श्रद्धां कीर्तिं मेधां सरस्वतीम् ॥ प्रज्ञां तुष्टिं तथा कान्तिं तस्मि
न्नहति पूजयेत् ॥ ३१ ॥ तत्प्रसादमवाप्नोति यथेष्टं मनुजोत्तम ॥ विद्याकामो विशेषेण पूजयेत्तु सरस्वतीम् ॥ ३२ ॥ देवानां मातरः सर्वास्तथा
तत्राह्नि पूजिताः ॥ सर्वकामप्रदा ज्ञेयाः पुरुषस्य विपश्चितः ॥ ३३ ॥ पञ्चम्यां पूजनं कृत्वा तथा चन्द्रमसो नरः ॥ सौभाग्यं महदाप्नोति
यशश्चाग्र्यं च विन्दति ॥ ३४ ॥ पञ्चम्यां पृथिवीं देवीं तथा सम्पूजयेन्नरः ॥ तामेवाप्नोत्ययत्नेन नात्र कार्या विचारणा ॥ ३५ ॥ विश्वेदेवास्तु
ये प्रोक्ताः पूर्वमेव मया दश ॥ तेषां सम्पूजनं कृत्वा पञ्चम्यां दिवमाप्नुयात् ॥ ३६ ॥ इष्टगन्धर्वमभ्यर्च्य पञ्चम्यां सुभगो भवेत् ॥ तथा चित्ररथं
तेषां राजानं च विशेषतः ॥ ३७ ॥ देवभार्यां तथा भार्यां सम्पूज्य सुभगो भवेत् ॥ इष्टमप्सरसं चैव तथा रूपमवाप्नुयात् ॥ ३८ ॥ इष्टं नागं
तथाभ्यर्च्य श्रियमाप्नोत्यनुत्तमाम् ॥ वारुणैः पुष्करस्यार्चां पञ्चम्यां यः समाचरेत् ॥ ३९ ॥ सर्वकामसमृद्धस्य सोमयज्ञफलं भवेत् ॥ तथा च

पूजयन्राजंस्तथा वै नलकूबरम् ॥ ४० ॥ श्रियः सम्पूजनं कृत्वा पञ्चम्यां प्रयतः सदा ॥ श्रियमाप्नोति विपुलां मतिमग्र्यां च विन्दति ॥ ४१॥
चैत्रशुक्लस्य पञ्चम्यां पूजयित्वा तथा श्रियम्॥४२॥सकृदेवाप्नुयाद्राजन्फलं संवत्सरोदितम् ॥ सर्वस्यां नृप पञ्चम्यां रतिं प्रीतिं सरस्वतीम्॥४३॥
उमां मेनां भद्रकालीं तथा कात्यायनीमपि ॥ धृतिं स्वाहां सुधामृद्धिमनुसूयां तथा क्षमाम्॥४४॥सुभीमां देवसेनां च वेलां ज्योत्स्नां तथा शचीम्॥
गौरीं वरुणपत्नीं च यमपत्नीं तथैव च ॥ ४५ ॥ धूमोर्णां सुमहाभागां मृत्युच्छायां तथैव च ॥ ४६ ॥ अभीष्टां देवजननीं देवपत्नीं तथैव च ॥
पूजयन्काममाप्नोति तस्या ह्येकमसंशयम् ॥ ऐरावतं वा गरुडमुच्चैःश्रवसमेव वा॥४७॥हरस्य वृषभं चैव शस्त्राण्यस्त्राणि यानि च॥ तदा सम्पूजयन्राजा
विजयं समुपाश्नुते ॥४८॥ तथा भाद्रपदे मासि शुक्लपक्षस्य पञ्चमीम् ॥ नागसंपूजनं कृत्वा धनभागी भवेन्नरः ॥ ४९ ॥ कुमारश्च तथा स्कन्दो
विशाखश्च गुहस्तथा ॥ चतुरात्मा विनिर्दिष्टो भगवान्क्रौञ्चदारणः॥ ५० ॥ तमभ्यर्च्य नरः षष्ठ्यां पुत्रानाप्नोत्यभीप्सितान् ॥ बालकानां गृहे
श्रेयो नरः प्राप्नोत्यसंशयम् ॥ ५१ ॥ ऋतूनां पूजनं कृत्वा तत्र क्षेममवाप्नुयात् ॥ स्कन्दपार्श्वचरान्राजन्भीमपार्श्वचरांस्तथा ॥ ५२ ॥
यमपार्श्वचरांश्चैव रोगमुक्तिमवाप्नुयात् ॥ कालपाशौ तथाभ्यर्च्य ज्वरव्याधीशमेव च ॥ ५३ ॥ रोगमोक्षमवाप्नोति वायुवह्नीन्दवस्तथा ॥
चैत्रषष्ठ्यां विशेषेण स्कन्दमभ्यर्चयेन्नरः॥५४॥पूर्वोक्तफलमाप्नोति स्वर्गलोकं च गच्छति ॥ सप्तम्यां च समभ्यर्च्य सूर्यपत्नीं सुवर्चलाम्[1] ॥५५॥
इष्टान्कामानवाप्नोति नात्र कार्या विचारणा ॥ देवा एकोनपञ्चाशन्मरुतो नाम कीर्तिताः ॥ ५६ ॥ तेषां संपूजनं कृत्वा सप्तम्यां दिवमाप्नुयात् ॥
इष्टपूजां च शैलस्य तदा कृत्वा सुखी भवेत् ॥ ५७ ॥ पूजयित्वा तथाभीष्टां सरितं पुण्यभाग्भवेत् ॥ वह्निसंपूजनं कृत्वा वह्निष्टोमफलं लभेत्
॥ ५८ ॥ वायोः संपूजनं कृत्वा प्राप्नोति परमाङ्गतिम् ॥ संपूज्य च ऋषीन्सप्त सोमसंस्थास्तु ये स्मृताः ॥ ५९ ॥ सप्त प्राप्नोति लोकान्वै
गतिमग्र्यां च विन्दति ॥ सप्तम्यां यदुशार्दूल इष्टमभ्यर्चयन्मुनिम् ॥ ६० ॥ स्वाध्यायफलमाप्नोति तद्वत्साफल्यमश्नुते ॥ पूजयित्वा समुद्रांश्च
द्वीपानथ तथा नरः ॥ ६१ ॥ पातालान्वा महाभाग भुवमाप्नोत्यभीप्सिताम् ॥ सप्तलोकांस्तथा तत्र पूजयित्वा सुखी भवेत् ॥ ६२ ॥
तेष्वेव च तथैवाग्र्यां गतिमप्रतिमां लभेत् ॥ गङ्गां सप्तप्रकारां च तथा देवीं सरस्वतीम् ॥ ६३ ॥ सप्तयज्ञानवाप्नोति नरः संपूजयन्ध्रुवम् ॥
आदित्यं पूजयेद्देवं शीघ्रं रोगैर्विमुच्यते ॥ ६४ ॥ सप्तम्यां यादवश्रेष्ठ गतिमग्र्यां च विन्दति ॥ एवं सुपूजनं कृत्वा गतिमग्र्यां तथा लभेत् ॥ ६५ ॥

१ 'सुवर्चसाम्' इति ख० ।

जयन्तं शक्रतनयं पूजयित्वा सुखी भवेत् ॥ अष्टम्यां पूजनं कृत्वा वसूनां धर्मसत्तम ॥ ६६ ॥ नाकलोकमवाप्नोति गतिमग्र्यां च
विन्दति ॥ एकानंशां तदा देवीं तथा संपूजयेन्नरः ॥ ६७ ॥ सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥ महादेवं समभ्यर्च्य सर्वान्कामानवाप्नुयात्
॥ ६८ ॥ वीरभद्रं सनंदीशं लगुडेशं तथैव च ॥ भद्रकालीं तथाभ्यर्च्य नवम्यां यदुनन्दन ॥ ६९ ॥ काममेकमवाप्नोति यं कञ्चिन्मनसेप्सितम् ॥
चतुष्पथेषु रम्येषु तथैवाट्टालकेषु च ॥ ७० ॥ गिरिशृङ्गेषु रम्येषु नदीतीरेषु चाप्यथ ॥ गुहासु चैव रम्यासु पिशाचानां बलिं हरेत् ॥ ७१ ॥
शक्रादीनां च देवानां ये च पार्श्वचराः सुराः ॥ तेषां बलिमुपाकुर्वन्क्षेममाप्नोति मानवः ॥ ७२ ॥ आयुधं पूजयित्वा च तथा विजयमाप्नुयात् ॥
विद्यामाप्नोति विपुलां पूजयित्वा सरस्वतीम् ॥ ७३ ॥ विद्याकामस्तु कुर्वीत तदा पुस्तकपूजनम् ॥ तथैवाश्वयुजे शुक्ले भद्रकालीं विशेषतः
॥ ७४ ॥ नवम्यां पूजयित्वा तु सर्वान्कामानवाप्नुयात् ॥ दशम्यां पूजयन्राजन्विश्वेदेवांस्तथा दश ॥ ७५ ॥ सर्वकामसमृद्धस्य यज्ञस्य
फलमश्नुते ॥ तदा संपूजयन्राजंस्तथैव च दिशो दश ॥ ७६ ॥ क्रियासाफल्यमाप्नोति यत्र यत्राभिजायते ॥ धर्मं संपूज्य देवेशं सर्वसत्त्वसुखा
वहम् ॥ ७७ ॥ धर्मे मतिमवाप्नोति धर्मसाफल्यमेव च ॥ एकादश्यां तु संपूज्य रुद्रानेकादशैव च ॥ ७८ ॥ सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥
तथा सर्वगताञ्छ्रुद्रांस्तदा सर्वत्र पूजयेत् ॥ ७९ ॥ सर्वान्कामानवाप्नोति सर्वगानपराजितान् ॥ तथा च द्वादशादित्यान्द्वादश्यां पूजयेन्नरः
॥ ८० ॥ द्वादशाहमवाप्नोति गतिमग्र्यां च विन्दति ॥ द्वादश्यां देवदेवेशं पूजयित्वा जलाधिपम् ॥ ८१ ॥ पौण्डरीकमवाप्नोति वरुणं यादसां
पतिम् ॥ सर्वदेवेश्वरं शक्रं पूजयित्वा तथा नरः ॥ ८२ ॥ सर्वान्कामानवाप्नोति स्वर्गलोकं च गच्छति ॥ विष्णोः संपूजनं कृत्वा कामानाप्नोत्य
भीप्सितान् ॥ ८३ ॥ इष्टयज्ञफलं प्राप्य गतिमग्र्यां च विन्दति ॥ त्रयोदश्यामथाभ्यर्च्य कामदेवं समर्चयेत् ॥ ८४ ॥ अयत्नात्सर्व
माप्नोति फलं संवत्सरोदितम् ॥ यक्षाणां राक्षसानां च चतुर्दश्यां तु पूजनम् ॥ ८५ ॥ कृत्वा क्षेममवाप्नोति क्रिया
साफल्यमेव च ॥ पूजयित्वा धनाध्यक्षं तदा वैश्रवणं प्रभुम् ॥ ८६ ॥ बहुवित्तमवाप्नोति फलं संवत्सरोदितम् ॥ शंख
पद्मौ तथाभ्यर्च्य निधानौ यक्षपूजितौ ॥ ८७ ॥ मणिभद्रं तथाभ्यर्च्य धनमाप्नोत्यसंशयम् ॥ पूजयित्वा महादेवं सर्वान्कामानवाप्नुयात् ॥
॥ ८८ ॥ माघमासचतुर्दश्यां कृष्णपक्षे विशेषतः ॥ तथा पितृगणान्राजन्क्षीणे चन्द्रे च पूजयेत् ॥ ८९ ॥ सर्वकामसमृद्धस्य यज्ञस्य फलम
श्नुते ॥ श्राद्धं कृत्वा तथा राजन्सर्वान्कामानवाप्नुयात् ॥ ९० ॥ पूर्णमिन्दुं तथाभ्यर्च्य सौभाग्यं महदाप्नुयात् ॥ इष्टग्रहमथाभ्यर्च्य नक्षत्रमथ

वार्चयेत् ॥ ९१ ॥ तस्मात्क्षेममवाप्नोति कामं च यदुनन्दन ॥ मासनाम सनक्षत्र पूर्णिमायोगि यश्च वा॥९२॥पूजयित्वा तथा राजन्सौभाग्यं
महदाप्नुयात् ॥ सोपवासस्तु नक्षत्रं नक्षत्रेशमथार्चयेत् ॥ ९३ ॥ नक्षत्रं वा महाभाग तस्मात्काममवाप्नुयात् ॥ कार्तिकेयं महाभाग कृत्तिका
स्वर्चयेन्नरः ॥ ९४ ॥ वह्निष्टोममवाप्नोति कुलं चैव समुद्धरेत् ॥ कृत्तिकासु तथाभ्यर्च्य खड्गं विजयमाप्नुयात् ॥ ९५ ॥ भौजङ्गे नागमभ्यर्च्य
श्रियं प्राप्नोत्यनुत्तमाम् ॥ कामदेवसथाभ्यर्च्य भाग्ये सौभाग्यवान्भवेत् ॥ ९६ ॥ सावित्रं च तथा हस्ते श्रियं प्राप्नोत्यनुत्तमाम् ॥ इष्टग्रहा
भितदेहं तन्नामाध्यक्षसेवया ॥ ९७ ॥ गन्धर्वं वा ग्रहं वापि तस्मात्कामानवाप्नुयात् ॥ कृष्णपक्षचतुर्दश्यां महाकालमथार्चयेत् ॥ ९८ ॥ तस्मा
त्काममवाप्नोति यथेष्टं नात्र संशयः ॥ माहेश्वरं मातृगणं तथा तत्राग्निपूजनम् ॥ ९९ ॥ एकवासान्तरं राजन्काममाप्नोत्यभीप्सितम् ॥ १०० ॥
तथा तुम्बरुसम्बद्धं पञ्चकं पूजयेन्नरः ॥ सर्वत्र जयमाप्नोति नात्र कार्या विचारणा ॥ १०१ ॥ कृत्तिकासु नरोऽभ्यर्च्य स्कन्दपार्श्वचराँस्तथा ॥
आरोग्यं महदाप्नोति सदा वा मनसेप्सितम्॥१०२॥नृसिंहप्रतिबद्धां तु पूर्णे चन्द्रे समर्चयेत्॥नरो मातृगणं चार्च्य सर्वान्कामानवाप्नुयात्॥१०३॥
एकां वा मातरं राजन्कामानाप्नोत्यभीप्सितान् ॥ वानस्पत्यमवाप्नोति पूजयित्वा वनस्पतीन् ॥ १०४ ॥ दैत्यानां दानवानां वा तत्पक्षा ये
तथापरे ॥ तेषां संपूजनं कृत्वा चतुर्दश्यां सुखी भवेत् ॥ १०५ ॥ करणे वा मुहूर्ते वा यथावद्देवमर्चयेत् ॥ तस्मात्काममवाप्नोति गतिमग्र्यां
च विन्दति ॥ १०६ ॥ चैत्रमासादथारभ्य यथोक्तेन नरः सदा ॥ इष्टं देवमथाभ्यर्च्य यथोक्तं फलमश्नुते ॥ १०७ ॥ संवत्सरेण धर्मज्ञ नक्षत्रे य
दि वा तिथौ ॥ ग्रहे वा सर्वधर्मज्ञ सोपवासस्समाहितः ॥ १०८ ॥ संवत्सरे वाप्ययने ऋतौ मासे च तद्दले ॥ नक्ताशी सततं पूजां कृत्वा
तत्स्वामिनः सदा ॥ तावत्कालं महाभाग तस्मात्काममवाप्नुयात् ॥ १०९ ॥ चैत्रात्समारभ्य महानुभाव रोचेत रोचेशमथार्चयानः ॥ रोचेशतो
पात्परमं स कामं प्राप्नोत्ययत्नाद्यदुवंशचन्द्र ॥ ११० ॥ इति श्रीविष्णुध० तृ० ख० मा० सं० तिथ्युपवासदेवतार्चनवर्णनो नामैकविंशत्युत्तरद्वि
शततमोऽध्यायः ॥ २२१ ॥ वज्र उवाच ॥ भगवन्श्रोतुमिच्छामि रोचेषु च पृथक्पृथक् ॥ उपोषितेन किं कार्यं किं फलं च तथा भवेत् ॥
॥ १ ॥ मार्कण्डेय उवाच ॥ इतिहासं तथात्रेमं निबोध गदतो मम ॥ धनाध्यक्षस्य संवादमष्टावक्रस्य चाप्यथ ॥ २ ॥
अष्टावक्रः पुरा कन्यां प्रार्थयामास धर्मवित् ॥ ऋषेर्भार्गवमुख्यस्य वदान्यस्य तु सुप्रभाम् ॥ ३ ॥ रूपद्रविणसम्पन्नां स चोवाच मुनिं मुनिः ॥

१ 'माघे' इति ख० ।

स्त्रीस्वभावो यदि ज्ञातस्त्वया धर्मविदां वर ॥ ४ ॥ ततेऽहं तव दास्यामि कन्यां बालमृगेक्षणाम् ॥ ॥ अष्टावक्र उवाच ॥ ॥ स्त्रीस्वभावो न विज्ञातो मया ब्राह्मणसत्तम ॥ ५ ॥ कुतश्च तन्मया ज्ञातस्तन्ममाचक्ष्व पृच्छतः ॥ ॥ भार्गव उवाच ॥ ॥ उत्तरां त्वं दिशं पश्य सा ते वक्ष्यति तत्त्वतः ॥ ६ ॥ स्त्रीस्वभावं महाभाग गच्छ शीघ्रमतन्द्रितः ॥ ॥ मार्कण्डेय उवाच ॥ ॥ एवमुक्तः स धर्मात्मा प्रययावुत्तरां दिशम् ॥ ७ ॥ गङ्गाद्वारात्क्रमेणाथ त्वरितो मुनिपुङ्गवः ॥ तीर्थानि सरितश्चैव शैलानि नगराणि च ॥८॥ विलङ्घ्य धनदावासमाससाद महातपाः ॥ कैलासे पर्वतश्रेष्ठे सर्वकामसमृद्धिमत् ॥ ९ ॥ तत्रासीनं महाभागं स ददर्श धनाधिपम् ॥ वरासनगतं वीरं हारभाराश्चितोदरम् ॥ १० ॥ वाम भागे किरीटेन विनीतेन विराजितम् ॥ कुण्डलाभ्यां विचित्राभ्यां केयूरैरंगदैस्तथा ॥ ११ ॥ गदाधरं महाकायमेकलोचनपिङ्गलम् ॥ तथा च शङ्खपद्माभ्यां निधिभ्यां च विराजितम् ॥ १२ ॥ यक्षैश्च सुमहाभागैर्भीमरूपपराक्रमैः ॥ दीर्घभद्रेण वीरेण पूर्णभद्रेण चाप्यथ ॥१३॥ मणिभद्रेण वीरेण यक्षभद्रेण चाप्यथ ॥ दीर्घबाहुमहाबाहुपद्मकिंजल्कसृञ्जयैः ॥ १४ ॥ स्वभद्रेण सुपार्श्वेन तथा मणिधरेण च ॥ यक्षैश्चान्यैश्च धर्मज्ञ महा बलपराक्रमैः ॥ १५ ॥ नानावेशैश्च गन्धर्वैर्महासत्त्वैर्महाबलैः ॥ चित्राङ्गदश्चित्ररथश्चित्रसेनोऽथ तुम्बुरुः ॥ १६ ॥ पूर्णायुरनघश्चैव तथा शालि शिराः प्रभुः ॥ शृङ्गारकर्णोऽतिबलो भीमो भीमपराक्रमः ॥ १७ ॥ एते चान्ये च गन्धर्वास्तथैवाप्सरसः शुभाः ॥ उर्वशी मेनका रम्भा मिश्रकेशी ह्यलम्बुसा १८ ॥ विश्वाची च घृताची च पञ्चचूडा मनोरमा ॥ एताभिश्च तथान्याभिर्देवस्त्रीभिः सहस्रशः ॥ १९ ॥ स ददर्श धनाध्यक्षं सम न्तात्परिवारितम् ॥ पादार्घ्याचमनीयाद्यैर्धनाध्यक्षेण पूजितः ॥ २० ॥ वरासनगतो राजंस्तुष्टाव धनदं प्रभुम् ॥ ॥ अष्टावक्र उवाच ॥ ॥ नमोऽस्तु ते धनाध्यक्ष यज्ञाध्यक्ष नमोऽस्तु ते ॥ २१ ॥ महाबाहो महासत्त्व राजराजामरप्रभो ॥ ऋषिसङ्घस्तुताचिन्त्य वाममौले वरप्रद ॥ ॥ २२ ॥ पिङ्गाक्ष विपुलग्रीव देवेश नरवाहन ॥ गदाधर विशालांस सूर्यतेजःसमप्रभ ॥ २३ ॥ भवाञ्छर्वसखो नित्यं विष्णोरंशस्तथा भवान् ॥ देवासुरेऽथ संग्रामे भवता विनिपातिताः ॥ २४ ॥ बहवो दानवा वीरा महाबलपराक्रमाः ॥ लोकान्धारयसे सर्वांस्त्वमेको यक्षपार्थिवः ॥ २५ ॥ भक्तानुकम्पी सततं चोत्तराशाप्रभुः प्रभुः ॥ धर्मसेतुर्जगत्यस्मिंस्त्वयि सर्वं प्रतिष्ठितम् ॥ २६ ॥ * मार्कण्डेय उवाच ॥ एवं धनाधि

---

* "एवं स्तुतस्तु मुनिना प्रीत्या प्रोवाच वित्तपः ॥ यदस्ति कार्यं कृपया तन्मे वद महामुने" एतादृशमेकपद्यमत्रापेक्षितमस्ति ।

पेनोक्तः प्रत्युवाच महामुनिः ॥ धर्मं महाफलं त्वत्तः श्रोतुमिच्छामि वित्तप ॥ २७॥ ॥ वैश्रवण उवाच ॥ ॥ ब्रह्मन्स्वीयस्य च रुचौ देवतायाश्च पूजनम् ॥ धर्मं महाफलं विप्र तन्मे निगदतः शृणु ॥ २८ ॥ सर्वेषु विप्र रोचेषु सोपवासो जितेन्द्रियः ॥ देवतापूजनं कृत्वा यथोक्तं फलमश्नुते ॥ ॥ २९ ॥ चैत्रशुक्लसमारंभाद्रोचे व्रतमनुत्तमम् ॥ रोचे यथेष्टं गृह्णीयात्संवत्सरमतन्द्रितः ॥ ३० ॥ त्रिंशद्रोचानि विप्रेंद्र मासमेकं समाहितः ॥ संवत्सरेण नक्ताशी पूजयेद्रोचदेवताम् ॥ ३१ ॥ प्रत्यहं सुमहाभाग तेन काममवाप्नुयात् ॥ आषाढमासे यः कुर्याद्रोचव्रतमनुत्तमम् ॥ ३२ ॥ नक्तभोजी प्रतिदिनं चैककालाशनो द्विजः ॥ आहारकालादन्यत्र तोयपानं विवर्जयेत् ॥ ३३ ॥ ब्राह्मरोचादथारभ्य यावद्रोचं तु पौरुषम् ॥ रोचे तु पौरुषे प्राप्ते कृत्वा ब्राह्मणतर्पणम् ॥ ३४ ॥ वासांसि दत्त्वा विप्रेभ्यः सुवर्णं रजतं तथा ॥ स्वर्गलोकमवाप्नोति दीर्घकालं द्विजोत्तम ॥ ३५ ॥ जन्म चासाद्य मानुष्यं रूपवानभिजायते ॥ विरोगो बलवान्नित्यं शत्रुजिद्बलवानपि ॥ ३६ ॥ स्त्रियश्च मुख्याः प्राप्नोति कुले जन्म तथोत्तमे ॥ सौभाग्यं महदाप्नोति लावण्यमपि चोत्तमम् ॥ ३७ ॥ सद्भिर्मैत्रीं तथा विद्यां धर्मे चैवोत्तमां गतिम् ॥ वाहनान्यपि मुख्यानि यच्चान्य दभिवाञ्छति ॥ ३८ ॥ रोचेषु मासे सफलं तवोक्तं नक्ताशिनो देववरस्य विप्र ॥ अतः परं ते कथयामि रोचे पृथक्फलं सम्यगुपोषितस्य ॥ ॥ ३९ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे रोचेषु मासोपवासफलनिरूपणो नाम द्वाविंशत्युत्तरशततमोऽध्यायः ॥ २२२ ॥

॥ ॥ वैश्रवण उवाच ॥ ॥ ब्राह्मे ब्रह्माणमभ्यर्च्य ब्रह्मलोकं प्रपद्यते ॥ अश्वमेधमवाप्नोति प्राजापत्ये प्रजापतिम् ॥ १ ॥ स्वर्गरोचे तथा स्वर्गं स्वर्गलोकं प्रपद्यते ॥ चक्ररोचे तथा चक्रं वैष्णवन्तु सुदर्शनम् ॥ २ ॥ द्वादशारं नरः कृत्वा वर्णकैः ससुगन्धिभिः ॥ सम्पूज्य वत्सरस्या न्ते सौवर्णं विनिवेदयेत् ॥ ३ ॥ वासुदेवाय देवाय द्वितीयं ब्राह्मणाय च ॥ रिपून्स जयते सर्वान्बाह्यानाभ्यन्तरानपि ॥ ४ ॥ चक्रप्रतिमं तस्य सर्वगं च तथा भवेत् ॥ नाप्नोति नारकं दुःखं स्वर्गलोकं च गच्छति ॥ ५ ॥ वानस्पत्ये तथा रोचे पूजयित्वा वनस्पतिम् ॥ ६ ॥ उद्यानफल माप्नोति वाजपेयस्य मानवः ॥ वानस्पत्यं च सफलं तथा सर्वत्र विन्दति ॥ ७ ॥ अन्नरोचे तथैवान्नं वासुदेवं समर्चयेत् ॥ क्षेत्रमध्यगतस्त्वन्नं प्राप्नोति बहु मानवः ॥ ८ ॥ परलोके तथा तृप्तिं स्वर्गलोके तथैव च ॥ अहते वासरे चाह्नि वासरं पूज्य मानवः ॥ ९ ॥ निवेद्य वासुदेवाय देवं सङ्कर्षणं विभुम् ॥ आरोग्यरूपलावण्यसौभाग्यानि समश्नुते ॥ १० ॥ कालरोचे नरः कालं सम्यक्सम्पूज्य धर्मवित् ॥ मरणे स्मृति

१ 'स्वेस्वे रोचे महाभाग' इति क० ख० । २ 'योगेषु' इति ख० ।

माप्नोति मृतश्च परमां गतिम् ॥ ११ ॥ आग्नेये पूजयेद्वह्निं सर्वांल्लोकान्समाप्नुयात् ॥ सर्वाणि वाह्निकर्माणि सिध्यन्त्यस्य न संशयः ॥१२॥अपः संपूजयन्नाथे रत्नमाप्नोत्यथाम्बुजम् ॥ जलकर्माणि सर्वाणि सिद्ध्यन्त्यस्य न संशयः ॥ १३ ॥ सौरे सूर्यमथाभ्यर्च्य विरोगत्वमवाप्नुयात् ॥ चन्द्रे चन्द्रं समभ्यर्च्य परमां निर्वृतिं लभेत्॥१४॥गोरोचे गां समभ्यर्च्य सुरभिं लोकमातरम् ॥ गाः समाप्नोति धर्मज्ञ तथा तल्लोकमेव च॥१५॥ रोचभं नियतः प्राप्य नियतिं तु समर्चयन् ॥ दीर्घजीवितमाप्नोति यत्रयत्राभिजायते ॥१६॥वैष्णवे विष्णुमभ्यर्च्य विष्णुलोकं प्रपद्यते ॥ रौद्रे रुद्र मथाभ्यर्च्य तल्लोकं प्रतिपद्यते॥१७॥ पुत्रानाप्नोति कौमारे कुमारं चार्चयन्नरः॥ पितॄणामर्चनं कृत्वा पितृरोचे समाहितः॥१८॥ पूजामभीष्टामाप्नोति पितृलोकं च गच्छति ॥ वारुणे वरुणं देवमश्वानाप्नोति पूजयन् ॥ १९ ॥ अनन्ते च तथानन्तं पूजयित्वा महीधरम् ॥ अनन्तं फलमाप्नोति कर्मणः सुकृतस्य च ॥ २० ॥ वायव्ये वायुमभ्यर्च्य वाणिज्ये लाभमाप्नुयात् ॥ याम्ये यममथाभ्यर्च्य नाप्नोति नरकाद्भयम् ॥ २१ ॥ सारस्वतेन चाभ्यर्च्य द्विज देवीं सरस्वतीम्॥ विद्यां यथेष्टामाप्नोति तया वाग्मी च जायते॥२२॥श्रीरोचे श्रियमभ्यर्च्य श्रियं विन्दति शोभनाम्॥ मदीये च तथा रोचे मां च सम्पूजयन्नरः ॥ २३ ॥ धनभाग्भवते सो हि यत्रयत्राभिजायते ॥ शैलरोचे तथा शैलं पूजयित्वा सुखी भवेत् ॥ ॥ २४ ॥ भूरोचे भुवमभ्यर्च्य भुवमाप्नोत्यनुत्तमाम् ॥ वेदानामर्चनं कृत्वा वेदरोचे समाहितः ॥ २५ ॥ वेदानाप्नोति पुरुषो यज्ञानपि नराधिपः ॥ पौरुषे च तथा रोचे जले पुरुषमर्चयन् ॥ २६ ॥ सर्वान्कामानवाप्नोति मोक्षोपायं च विन्दति ॥ रूपेण हीनं स्पर्शेन हीनं गन्धेन हीनं च रसेन हीनम् ॥ शब्देन हीनं पुरुषं पुराणं सम्पूजयन्मोक्षपथं प्रयाति ॥ २७ ॥ इति श्रीविष्णुधर्मोत्तरे तृ०ख० मार्कण्डेयवज्रसंवादे प्रतिरोचफलनिरूपणो नाम त्रयोविंशत्युत्तरद्विशततमोऽध्यायः ॥ २२३ ॥ मार्कण्डेय उवाच ॥ इति रोचव्रतं श्रुत्वा भुक्त्वा धनदवेश्मनि ॥ श्रुत्वा गीतं च वाद्यं च दृष्ट्वा नृत्तं मनोहरम् ॥ १ ॥ तत्रोष्य रजनीमेकां धनाध्यक्षेण पूजितः ॥ उदग्जगाम धर्मात्मा हिमशैलस्य स द्विजः ॥ २ ॥ स शैलदेशे कस्मिंश्चिद्ददर्श रुचिरं गृहम् ॥ शीतांशुरश्मिजालाभं सर्वकामसमृद्धिमत् ॥ ३ ॥ तस्मिन्गृहे ददर्शाथ वृद्धां रूपवतीं स्त्रियम् ॥ सर्वाभरणसम्पन्नां बह्वीभिः परिवारिताम् ॥ ४ ॥ तरुणीभिर्वरस्त्रीभिश्चारुवेशाभिरेव च ॥ सा च तं पूजयामास पाद्यादिभिरनुक्रमात् ॥ ५ ॥ गन्धतैलेन चाभ्यर्च्य स्नापयामास यादव ॥ सुखस्पर्शैश्च पवनैर्गन्धैश्च विविधैस्तथा ॥ ६ ॥ लिलेप चास्य गात्राणि चन्दनेन सुगन्धिना ॥ वस्त्रालङ्कारमाल्यैश्च पूजयामास तं तथा ॥ ७ ॥ भोजयामास चान्नेन सर्वकामसमृद्धिना ॥ ताम्बूलं प्रददौ चास्मै सुगन्धि सुमनोहरम् ॥ ८ ॥

श्वेतोत्तरच्छदं चित्रं स्वास्तीर्णं परमर्द्धिमत् ॥ गृहे विचित्रे शयनं प्रददौ सुमनोहरम् ॥ ९ ॥ तादृग्विधे परे तत्र सा च सुष्वाप भामिनी ॥
विसर्जयित्वा नारीस्ताः सर्वा बालमृगेक्षणाः ॥ १० ॥ शीतापदेशेन ततो विरात्रे शयनात्स्वकात् ॥ अष्टावक्रस्य शयनं जगाम वरवर्णिनी ॥ ११ ॥
दृष्ट्वा शयनसम्प्राप्तां किमेतदिति सोऽब्रवीत् ॥ नानुरूपमिदं तत्ते वयसश्चारुहासिनि ॥ १२ ॥ अभग्नब्रह्मचर्योऽस्मि परदारविवर्जकः ॥
स्वच्छन्दं मामवज्ञाय किमिदं कर्तुमीहसे ॥ १३ ॥ दिशुवाच॥ न वयं द्विज तारुण्ये चपलाः केवलं स्त्रियः ॥ वयसोन्तेऽपि चापल्यं भजामः
कामचोदिताः ॥ १४ ॥ न श्रुतं तत्त्वया मन्ये स्त्रीशीलं द्विजसत्तम ॥ नैता वयसि रज्यन्ते न रूपे न कुले श्रुते ॥ १५ ॥ शीले वेशे धने
शौर्ये रज्यन्ते क्वचिदेव तु ॥ कामयन्त्येव पुरुषं यथालाभमिति श्रुतिः ॥ १६ ॥ यासां हि रक्षा महती तास्त्रियः कुब्जवामनैः ॥ प्रेष्यैर्वापीह
सज्जन्ते पुमांसमिति भार्गव ॥ १७ ॥ नाग्निस्तृप्यति काष्ठैर्वा नापगाभिर्महोदधिः ॥ नान्तकः सर्वभूतैर्वा न पुंभिर्वामलोचनाः ॥ १८ ॥
लीलयैव कुलं घ्नन्ति स्मयमानास्तु योषितः ॥ दुर्लभा हि स्त्रीरमणात्स्वभावेन भृगूत्तम ॥ १९ ॥ रहो नास्ति क्षणो नास्ति नास्ति चोपनिमन्त्र
कः ॥ तेन धर्मज्ञ नारीणां सतीत्वमुपजायते ॥ २० ॥ प्रेषितस्त्वं महाभाग मत्समीपं महात्मना ॥ स्त्रीणां शीलमिह ज्ञातुमस्मद्दृष्टं तथा श्रुतम् ॥
॥ २१ ॥ एतज्ज्ञात्वा जुगुप्सा च स्त्रीणां कार्या न च त्वया ॥ मूलं धर्मार्थकामानां यतस्ता एव योषितः ॥ २२ ॥ वह्निरन्नं जलं चैव
नराणां धृतिहेतवः ॥ घातकाश्च त एवोक्तास्तथा ज्ञेयाश्च योषितः ॥ २३ ॥ वृत्तिर्लोके यथा नास्ति वह्न्यन्नसलिलैर्विना ॥
गृहाश्रमस्तथा नास्ति विना स्त्रीभिः कथञ्चन ॥ २४ ॥ तस्मात्ताः प्रज्ञया रक्ष्या नोग्रेण मृदुना न च ॥ स्त्रियो मूलमनर्थानां त्रिवर्गस्य च
साधनम् ॥ २५ ॥ तासां न गच्छेद्विश्वासं मणिवद्गोपयेत्तु ताः ॥ गृहकार्योद्यताः कृत्वा रक्ष्यास्ता भूतिमिच्छता ॥ २६ ॥ एतच्छ्रुत्वा द्विती
येह्नि पूजितः स तया स्त्रिया ॥ जगाम धनदावासं ततोऽपि श्वशुरालयम् ॥ २७ ॥ ततः श्वशुरमासाद्य सर्वं तस्मै न्यवेदयत् ॥ स च पप्रच्छ
तं विप्रं श्रुत्वा स्त्रीणां विचेष्टितम् ॥ २८ ॥ बुद्धिर्निवेष्टुं सञ्जाता न वा जाता वदस्व तत् ॥ एतच्छ्रुत्वोत्तरं वाक्यमष्टावक्रोऽब्रवीन्मुनिम् ॥२९॥
न चाप्येषा गतिः क्षेम्या न चान्या विद्यते गतिः ॥ तस्मात्प्रयच्छ धर्मज्ञ पत्न्यर्थं स्वसुतां मम ॥ ३० ॥ एतच्छ्रुत्वा ददौ तस्मै स्वसुतां भार्ग
वो मुनिः ॥ तिथौ दिवसनक्षत्रे मुहूर्ते चाभिपूजिते ॥ ३१ ॥ त्रिवर्गमूलं सम्प्राप्य तां भार्यामसितेक्षणाम् ॥ जगाम परमां तुष्टिं मुमुदे च तया
सह ॥३२॥ ररक्ष चैनां स ततो महात्मा कृत्वा च नित्यं गृहकार्ययुक्ताम् ॥ आराधयामास च सा द्विजेन्द्रं धर्मे निविष्टा परमा च साध्वी ॥ ३३ ॥

इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे अष्टावक्रदिक्संवादो नाम चतुर्विंशत्युत्तरद्विशततमोऽध्यायः ॥ २२४ ॥ मार्कण्डेय उवाच ॥ व्रतं कंचिन्ममाचक्ष्व सर्वकल्मषनाशनम् ॥ व्रतानामुत्तमं ब्रह्मन्पवित्रं पुण्यवर्धनम् ॥ १ ॥ मार्कण्डेय उवाच ॥ रोचं तु पौरुषं प्राप्य सोपवासो जितेन्द्रियः ॥ २ ॥ पौरुषेण च सूक्तेन स्नातः प्रयतमानसः ॥ तेनैव तर्पणं कृत्वा जाप्यं च मनुजोत्तम ॥ ३ ॥ अष्टपत्रस्य पद्मस्य मध्ये हंसं जनार्दनम् ॥ पौरुषेण च सूक्तेन सत्कृतं पूजयेन्नरः ॥ ४ ॥ पुष्पैर्भूयस्तथा धूपैः फलैश्च तदनन्तरम् ॥ दीपेन च ततो राजन्नैवेद्येन ततः परम् ॥ ५ ॥ पौरुषेण च सूक्तेन ततो वह्निं समर्चयेत् ॥ ततस्तु धेनुर्दातव्या कर्मान्ते च पयस्विनी ॥ ६ ॥ संवत्सरमिदं कृत्वा व्रतं परम पावनम् ॥ सर्वान्कामानवाप्नोति ये दिव्या ये च मानुषाः ॥ ७ ॥ अश्वमेधमवाप्नोति राजसूयं च विन्दति ॥ भुक्त्वा भोगांस्ततः पश्चान्मोक्षमाप्नोत्यसंशयम् ॥ ८ ॥ माङ्गल्यमेतत्परमं पवित्रं श्रीवर्धनं धर्मविवर्धनं च ॥ व्रतोत्तमं पापहरं नृलोके हंसव्रताख्यं पुरुषेण कार्यम् ॥ ९ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० खण्डे मार्कण्डेयवज्रसंवादे हंसव्रतनिरूपणो नाम पञ्चविंशत्युत्तरद्विशततमोऽध्यायः ॥ २२५ ॥ वज्र उवाच ॥ विष्णुना देवदेवेन हंसरूपेण किं कृतम् ॥ एनं मे संशयं छिन्धि मार्कण्डेय महामुने ॥१॥ मार्कण्डेय उवाच ॥ आसीत्प्रजा ज्ञाननिष्ठा पूर्वं कृत युगे नृप ॥ जनानां ज्ञाननिष्ठत्वात्तदा यदुकुलोद्वह ॥ २ ॥ स्वयं प्रभुत्वमभवत्तथा देवगणानि च ॥ तथा कृतयुगस्यान्ते प्रावर्तन्त परिग्रहे ॥३॥ परिग्रहात्ततो लोभो लोभाद्द्वेषोऽभवत्ततः ॥ रागद्वेषाभिभूतानां ज्ञानमन्तरधीयत ॥ ४ ॥ नष्टज्ञाने तथा लोके धर्मो नाशमुपागमत् ॥ धर्मे नष्टे तु नश्यन्तं दृष्ट्वा लोकं जनार्दनः ॥ ५ ॥ भूत्वा हंसस्[1]समो वर्गे विजहार महीमिमाम् ॥ सुपक्षो देवचरणः सुचञ्चुः स्वायतेक्षणः ॥ ६॥ स सदर्श तदा देशे कस्मिंश्चित्संस्थितानृषीन् ॥ ध्यायन्तो मूढविज्ञानाः किंकर्तव्यपरायणाः ॥७॥ स तान्दृष्ट्वा तु पप्रच्छ तेषां कुशलमव्ययम् ॥ ते तमूचुः कुतो नष्टे ज्ञाने नः कुशलं द्विज ॥ ८ ॥ तानब्रवीन्मुनीन्सर्वान्स हंसः पक्षिराट् ततः ॥ ज्ञानं प्रकाशयिष्यामि तं निबोधत सत्तमाः ॥ ९ ॥ एतच्छ्रुत्वा शुभं वाक्यं हंसेनोक्तं महात्मना ॥ हंसमूचुर्महात्मानो भव त्राता द्विजोत्तम ॥ १० ॥ ज्ञाननाशेन सकलं मा नश्यत्वखिलं जगत् ॥ आदावेव त्वमात्मानं ब्रूह्यस्माकं महाखग ॥ ११ ॥ वयं हि भ्रष्टविज्ञानास्त्वां न विद्मो महाद्युते ॥ तानब्रवीद्द्विजान्हंसो विष्णुरस्मि द्विजोत्तमाः ॥ ॥ १२ ॥ तं ते ज्ञात्वा तदा विष्णुं पूजयामासुरञ्जसा ॥ अब्रुवंश्च तथा ज्ञानं यथोक्तं तेन यादव ॥ १३ ॥ ददुश्च गूढं शिष्येभ्यो नाशभीतास्त

१ 'हंससमो' इति पाठः ।

था परम् ॥ ततः प्रभृति लोकोऽस्मिञ्ज्ञानिनः केचिदेव तु ॥ १४ ॥ एवं कृत्वा विष्णुना हंसरूपं ज्ञानं नष्टं विप्रमुख्येषु दत्तम् ॥ ज्ञाने प्राप्ते भूतले नष्टशोकाः सर्वे चासन्विप्रमुख्या नृवीर ॥ १५ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख० मार्कण्डेयवज्रसंवादे हंसगीतायां हंसप्रादुर्भाववर्णनो नाम षड्विंशत्युत्तरद्विशततमोऽध्यायः ॥ २२६ ॥ वज्र उवाच ॥ किमुक्तं तेन हंसेन ऋषीणां भावितात्मनाम् ॥ एतं मे संशयं छिन्धि भृगुवंशविवर्धन ॥ १ ॥ मार्कण्डेय उवाच ॥ बहूक्तं तेन हंसेन चर्षीणां भावितात्मनाम् ॥ तस्मात्किञ्चिदहं वक्ष्ये तन्मे निगदतः शृणु ॥ २ ॥ ऋषय ऊचुः ॥ वर्णानामाश्रमाणां च ब्रूहि धर्मं द्विजोत्तम ॥ तथा भक्ष्यमभक्ष्यं च शौचाशौचे तथैव च ॥ ३ ॥ हंस उवाच ॥ यजनं याजनं दानं विशिष्टश्च प्रतिग्रहः ॥ अध्यापनमध्ययनं विप्रकर्म प्रकीर्तितम् ॥ ४ ॥ दानमध्ययनं यज्ञः पाशुपाल्यं वणिक्क्रिया ॥ अमात्सर्यं च धर्मज्ञ धर्मस्साधारणो मतः ॥ ५ ॥ आनुलोम्येन वर्णानां जातिर्मातृसमा भवेत् ॥ प्रतिलोमोद्भवाः सर्वे भवन्त्यार्यविगर्हिताः ॥ ६ ॥ सूतो वैदेहकश्चैव चाण्डालश्च द्विजोत्तमाः ॥ विज्ञेया ब्राह्मणीपुत्राः क्षत्रविट्शूद्रयोनितः ॥ ७ ॥ मागधः पुक्कसश्चैव विट्शूद्रैः क्षत्रियासुतौ ॥ आयोगवश्च वैश्यायां शूद्रपुत्रः प्रकीर्तितः ॥ ८ ॥ अन्ये वक्तुं न शक्यन्ते सङ्करात्सङ्करोद्भवाः ॥ विवाहः सदृशश्चैषां नोत्तमैर्नाधमैः सह ॥ ९ ॥ सूतानामश्वसारथ्यं मागधानां स्तुतिक्रिया ॥ वैदेहः स्यात्तन्त्रिजीवः[1] पुक्कसानां च व्याधता ॥ १० ॥ आयोगवस्य शिल्पानि रंगावतरणं तथा ॥ चण्डालानामसंस्पर्शस्तथा वैधव्यगामिता ॥ ॥ ११ ॥ गोब्राह्मणार्थे समरे हतानां स्त्रीबालहेतोर्यदि वाप्यशेषम् ॥ स्वाम्यर्थकार्यं यदि वा प्रकुर्वतां सिद्धिः प्रदिष्टा न हि संशयोऽत्र ॥ १२ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख० मार्कण्डेयवज्रसंवादे हंसगीतायां वर्णधर्मवर्णनो नाम सप्तविंशत्युत्तरद्विशततमोऽध्यायः ॥ २२७ ॥ हंस उवाच ॥ उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः ॥ आचारमग्निकार्यं च सन्ध्योपासनमेव च ॥ १ ॥ प्रयतः कल्यमुत्थाय स्नातो हुतहुताशनः ॥ अभिगम्य गुरोः कुर्यात्प्रयतस्त्वभिवादनम् ॥ २ ॥ अनुज्ञातस्तु गुरुणा ततोऽध्ययनमाचरेत् ॥ भैक्ष्यचर्यां ततः कुर्याद्ब्राह्मणेषु यथाविधि ॥ ३ ॥ गुरोः कुले न भिक्षेत भुञ्जीत तदनुज्ञया ॥ हितप्रिये गुरोः कार्ये भक्त्याहङ्कारवर्जितः ॥ ४ ॥ मधुमांसाञ्जनं श्राद्धं नृत्तं गीतं च साहसम् ॥ हिंसा परापवादं च मण्डनं च विवर्जयेत् ॥ ५ ॥ मेखलामजिनं दण्डं धारयेत्प्रयतः सदा ॥ विनष्टान्यप्सु विक्षिप्य तथान्यानपि धारयेत् ॥ ६ ॥ अधःशायी भवेन्नित्यं ब्रह्मचारी समाहितः ॥ एवं व्रतस्तु कुर्वीत वेदस्वीकरणं बुधः ॥ ७ ॥ गुरवे वचनं दत्त्वा स्नायाच्च तदनुज्ञया ॥

१ 'स्त्याजीव' इति ख० 'तन त्याजीव' इति क० ।

आशरीरविमोक्षाद्वा वसेद्गुरुकुले द्विजाः॥८॥एवं व्रतान्ते गुरवे च दत्त्वा वरं यथावत्परिपूर्णविद्यः॥गृहाश्रमी स्याद्विधिवद्द्विजेन्द्रो यात्रास्य लोकद्वितीयं प्रदिष्टम् ॥ ९ ॥ इति श्रीविष्णुधर्मोत्तरे तृ०ख० मार्कण्डेयवज्रसंवादे हंसगीतायां ब्रह्मचारिव्रतवर्णनो नामाष्टाविंशदुत्तरद्विशततमोऽध्यायः ॥२२८॥ ॥ ॥ हंस उवाच ॥ ॥ ततो गृहाश्रमे तिष्ठन्नग्नीनाधाय धर्मवित् ॥ कृत्वा विवाहं विधिवद्धर्मेण च धनागमम् ॥ १ ॥ त्रिवर्गं तत्र सेवेत यज्ञैश्च विविधैर्यजेत् ॥ आचारपालनं कुर्याद्वेदाध्ययनमेव च ॥ २ ॥ उत्सर्गं छन्दसां कुर्याच्छुक्लान्ते श्रावणस्य च ॥ पौषमासस्य रोहिण्यामुपाकर्म विधीयते ॥ ३ ॥ उत्सर्गानन्तरं वेदं नाधीयीत कदाचन ॥ तत्रापि शास्त्राध्ययनं द्विजातीनां विधीयते ॥ ४ ॥ यत्नः कार्यः पूजने चातिथीनां चैतत्कार्यं सर्वकालं गृहस्थैः ॥ नान्यो धर्मो विद्यते तस्य विप्राश्चैतद्धर्मं तस्य श्रेष्ठं प्रदिष्टम् ॥५॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे हंसगीतायां गृहस्थधर्मवर्णनो नामैकोनत्रिंशदुत्तरद्विशततमोऽध्यायः ॥ २२९ ॥ हंस उवाच ॥ कीनाशबद्धचौराणां क्लीबरङ्गावतारिणाम् ॥ पतितव्रात्यदुष्टानां तथा बन्धनरक्षिणाम् ॥ १ ॥ उदक्याविधवावापपाषण्डवधजीविनाम् ॥ चिकित्सा[illegible]वकव्याधपुंश्चलीनृपविद्विषाम् ॥ २ ॥ चर्मकारायुधाजीविशस्त्रविक्रयकारिणाम् ॥ चैलधावनृशंसार्तस्त्रीजितग्रामयाजिनाम् ॥ ३ ॥ तुन्नवायकदम्बस्य कूटकृच्छूद्रयाजिनाम् ॥ एषामन्नं न भोक्तव्यं यश्च दद्यादनर्चितम् ॥ ४ ॥ पर्यायान्नं क्षुतं चैव संघुष्टं पतितेक्षितम् ॥ शुल्कं पर्युषितोच्छिष्टं तथा चोच्छिष्टजीविनः ॥ ५ ॥ उदक्यया तथा स्पृष्टं यच्च घ्रातं गवा शुना ॥ केशकीटावपन्नं च पक्षिजग्धं तथैव च ॥ ६ ॥ दासार्धसीरिगोपालनापितान्नं तथाविनाम् ॥ शूद्रस्यान्नं तथा श्राद्धमात्मविक्रयिणस्तथा ॥ ७ ॥ अन्नं पर्युषितं भोज्यं स्नेहाक्तं रागषाण्डवत् ॥ निस्स्नेहा अपि गोधूमयवपौराणनिम्बकाः ॥ ८ ॥ अजागो महिषीवर्ज्यं सर्वाण्यपि पयांसि च ॥ अनिर्दशाहं तेषां वै विवत्सायाश्च गोस्तथा ॥ ९ ॥ कपिञ्जलस्तित्तिरिश्च मयूरो लावकस्तथा ॥ एते हि पक्षिणो भक्ष्या न तु शेषाः कथञ्चन ॥ १० ॥ शशकः शल्यको गोधा खड्गः कूर्मस्तथैव च ॥ भक्ष्याः पञ्चनखेष्वाहुरभक्ष्याश्चोभयादतः ॥ ११ ॥ सर्वे चैकशफा वर्ज्यास्तथाज्ञाता मृगद्विजाः ॥ लशुनं गृञ्जनं चैव पलाण्डुकवकानि च ॥ १२ ॥ लोहितान्वृक्षनिर्यासाञ्शिग्रुश्लेष्मांतकं तथा ॥ अभक्ष्याणि द्विजातीनां खुर्खण्डानि तथैव च ॥ १३ ॥ वृथा कृसरसंयावपायसापूपशष्कुलीः ॥ अनुपाकृतमांसानि देवान्नानि हवींषि च ॥ १४ ॥ मांसाशनं नैव बुधस्तु कुर्याद्वृथा द्विजेन्द्रा नरकस्य हेतुम् ॥ मांसं हि यो नात्ति स याति नाकं लोके तथास्मिन्सुखसङ्गतिः स्यात् ॥ १५ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे हंसगीतायां भक्ष्याभक्ष्यवर्जनं नाम त्रिंशदुत्तरद्विशततमोऽध्यायः ॥ २३० ॥

॥ ॥ हंस उवाच ॥ ॥ पाषाणरुक्मरजतसन्नतोयाजवर्मणाम् ॥ पत्रमूलफलानां च तृणानां च तथा द्विजाः ॥ १ ॥ वैदलानां च रज्जूनां वारिणा शुद्धिरिष्यते ॥ उष्णेन पात्रचमसस्रुक्स्रुवाणां विधीयते ॥ २ ॥ भूशुद्धिर्मार्जनाद्दाहात्कालाङ्गोक्रमाणात्तथा ॥ अम्लोदकेन ताम्रस्य तथा कांस्यस्य भस्मना ॥ ३ ॥ निर्मलीकरणाच्छुद्धिः सर्वलोहस्य चच्यते ॥ स्फ्यशूर्पाजिनधान्यानां मुसलोलूखलाश्मनाम् ॥ ४ ॥ प्रोक्षणं संहतानां च बहूनां धान्यवाससाम् ॥ गोमूत्रेण च शृङ्गास्थां तक्षणाद्दारवस्य च ॥ ५ ॥ द्रवाणामपि द्रव्याणां शुद्धिरुत्प्लवनात्स्मृता ॥ सोष्णैरुदकगोमूत्रैः शुद्ध्यन्त्याविककौशिकाः ॥ ६ ॥ सश्रीफलैरंशुपट्टं माञ्जिष्ठैः कुतपं तथा ॥ सगौरसर्षपैः क्षौमाः पुनः पाकैर्महीमयम् ॥ ७ ॥ मलैर्मद्यैः सुराभिश्च स्पृष्टं पाकान्न शुद्ध्यति ॥ वसाशुक्रमसृङ्मज्जामूत्रविट्कर्णविण्णखाः ॥ ८ ॥ श्लेष्माश्रुदूषिकाः स्वेदो द्वादशैते नृणां मलाः॥ खार्जूरमैक्षवण्टाङ्कं मृद्वीकारसमेव च ॥ ९ ॥ मद्यान्येतानि जानीयाच्छुक्तमासवमेव च ॥ गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा ॥ १० ॥ अमेध्याक्तस्य मृत्तोयशुद्धिर्गन्धापकर्षणात् ॥ कृत्वा मूत्रपुरीषं च भुक्त्वा सुप्तोत्थितस्तथा ॥ ११ ॥ रथ्यामाक्रम्य चाचामेदुपविष्ट उदङ्मुखः ॥ शावं तदङ्गधूपं च चाण्डालं सूतिकां तथा ॥ १२ ॥ शवस्पृशं तथा स्पृष्ट्वा कटधूमे समैथुने ॥ स्नानमेतेषु कर्तव्यमश्रुपाते च दुःस्वप्ने ॥ १३ ॥ सर्वेषां वायुना शुद्धिर्गृहाणां लेपनेन च ॥ आकराः शुचयः सर्वे मुखजा याश्च विप्लुषः ॥ १४ ॥ राजा न दुष्टो न तथा च वायुर्दुष्टा द्विजेन्द्रा न च मक्षिका वै ॥ अदुष्टमुक्तं च तथाप्यदृष्टसदृष्टमुक्तं च तथांशुजालम् ॥ १५ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे हंसगीतायां द्रव्यशुद्धिवर्णनो नामैकत्रिंशदुत्तरद्विशततमोऽध्यायः ॥ २३१ ॥ हंस उवाच ॥ दशाहं शावमाशौचं सपिण्डेषु विधीयते ॥ ब्राह्मणस्य द्विजश्रेष्ठ द्वादशाहं महीभुजः ॥ १ ॥ पक्षं वैश्यस्य शूद्रस्य मासं चैव विधीयते ॥ जनने चैव मरणे नैपुण्याच्छुद्धिमिच्छताम् ॥ २ ॥ प्रथमान्ते विशुद्धिः स्यात्समानस्य द्विजोत्तमाः ॥ द्वितीयान्ते तथा ज्ञेया असमानस्य नित्यदा ॥ ३ ॥ अव्यतीते दशाहे तु श्रुत्वा मरणजन्मनी ॥ यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत् ॥ ४ ॥ अतीते दशरात्रे तु वर्षस्याभ्यन्तरे तथा ॥ त्रिरात्राच्छुद्धिरुद्दिष्टा स्नातस्य तु ततः परम् ॥ ५ ॥ रात्रिभिर्मासतुल्याभिर्गर्भस्रावे विशोधनम् ॥ आदन्तजन्मनः सद्य आचूडस्याप्यहर्निशम् ॥ ६ ॥ त्रिरात्रमाव्रतादेशाद्दशरात्रमतः परम् ॥ कन्यानां तु व्रतस्थाने विवाहः परिकीर्तितः ॥ ७ ॥ विवाहितासु नाशौचं पितृपक्षे विधीयते ॥ मातामहे त्रिरात्रं स्याद्भार्यास्वन्यगतासु च ॥ ८ ॥ परपूर्वासु च स्वासु पुत्रेष्वन्यगतेषु च ॥ आचार्ये च तथा प्रेते निवासवसुधाधिपे ॥ ९ ॥ आचार्य

पतिपुत्रेषु शिष्ये सब्रह्मचारिषु ॥ एकरात्रमशौचं स्यादन्नदे तु तथा मृते ॥ १० ॥ भृग्वग्निनाशकाम्भोभिर्हतानामात्मघातिनाम् ॥ पतितानां च
नाशौचं विद्युच्छस्त्रहताश्च ये ॥ ११ ॥ छत्रिव्रतिब्रह्मचारिनृपकोशकदीक्षिताः ॥ नाशौचभाजः कथिता राजाज्ञाकारिणश्च ये ॥ १२ ॥ अतीत
वार्षिके शूद्रे पश्चाहाच्छुद्धिरिष्यते ॥ द्वादशाहेन शुद्धिः स्यादतीते वत्सरत्रये ॥ १३ ॥ गतैः संवत्सरैः षड्भिर्मासेन परिकीर्तिता ॥ प्रेतानुगमने
स्नानं घृतप्राशश्च शोधनम् ॥१४॥ जननमरणयोर्दशाहेन भवति न शौचविधिर्न विप्रभोज्यम्॥न च भवति प्रतिग्रहेपि दोषो द्विपदचतुष्पदधान्य
दक्षिणासु ॥ १५ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे हंसगीतायामाशौचविधिवर्णनो नाम द्वात्रिंशदुत्तरद्विशततमोऽ
ध्यायः ॥ २३२ ॥ हंस उवाच ॥ अङ्गुल्यग्रेस्मृतं दैवं पित्र्यं तर्जनिमूलगम् ॥ अङ्गुष्ठमूले ब्राह्मं तु कनिष्ठायाश्च मानुषम् ॥ १ ॥ उपस्पृशेत्तु
ब्राह्मेण देवा दिव्येन तर्पयेत् ॥ पितॄन्पित्र्येण धर्मज्ञ मानुष्येण तथा पिबेत्॥२॥ अविकार्ये तथा जप्ये यजने याजने तथा ॥ अध्यापने चाध्ययने
भवेन्नान्यमना नरः॥३॥एतेष्वेव तु कार्येषु गुरूणामपि सन्निधौ ॥ उद्धरेद्दक्षिणं पाणिं गृह्णीयान्न च पादुके ॥४॥ अग्निकार्यं देवकार्यमुपस्पर्शनमेव
च ॥ भोजनं पितृकार्यं च बहिर्जानु न कारयेत् ॥५॥ न नाम दीक्षितस्येह गृह्णीयाद् बुध्यः क्वचित् ॥ गुरोर्न केवलं नाम गृहीतव्यमथापि च ॥६॥
याचमानं यथाशक्त्या न कुर्याद्विमुखं क्वचित् ॥ दैवं पूर्वाह्णिकं कार्यं त्वपराह्णे तु पैतृकम् ॥ ७ ॥ अतिथीनां तथा पूजा सर्वकालं विधीयते ॥
यद्विशिष्टतमं लोके यच्चास्ति दयितं गृहे ॥ ८ ॥ तत्तद्गुणवते देयं तदेवाक्षयमिच्छता ॥ प्रियाणि लभते लोके प्रियदः प्रियकृत्तथा ॥ ९ ॥
प्रतिश्रुतं प्रयत्नेन दातव्यमृषिसत्तमाः ॥ अप्रयच्छंस्तदाप्नोति मूर्तीष्टकृतसंशयम् ॥ १० ॥ नरकं महदाप्नोति शृगालश्चैव जायते ॥
माता पिता गुरुश्चैव ज्येष्ठो भ्राता तथा स्वसा ॥ ११ ॥ पितृव्यो मातुलश्चैव तथा मातृष्वसा द्विजाः ॥ पितृष्वसा तथा श्वश्रूर्गुरुभार्या तथैव च ॥
॥ १२ ॥ मातामहश्च श्वशुरः पूजनीयाः प्रयत्नतः ॥ प्रत्युत्थानञ्च कर्तव्यं तेषां पूर्वाभिवादनम् ॥ १३ ॥ मातुलश्च पितृव्यश्च यदा स्यातां कनी
यसौ ॥ नाभिवाद्यास्तु ते पूर्वं प्रत्युत्थानं तु कारयेत् ॥ १४ ॥ उच्छिष्टो न स्पृशेच्छीर्षं सर्वे प्राणास्तदाश्रयाः ॥ पूर्वां सन्ध्यां जपंस्तिष्ठेदासीन
श्चैव पश्चिमाम् ॥ १५ ॥ मध्यन्दिने निशाकाले त्वर्धरात्रे विशेषतः ॥ चतुष्पथं न सेवेत उपसन्ध्ये तथैव च ॥ १६ ॥ नास्तिक्यं वेदनिन्दा
ञ्च देवतानाञ्च कुत्सनम् ॥ द्वेषस्तम्भातिमानौ च तैक्ष्ण्यं चैव विवर्जयेत् ॥ १७ ॥ परस्य दण्डं नोद्यच्छेत्क्रुद्धो नैनं निपातयेत् ॥ अन्यत्र पुत्रा
च्छिष्याद्वा शिष्ट्यर्थं ताडनं स्मृतम् ॥ १८ ॥ न ब्राह्मणं परिवदेन्नक्षत्राणि न निर्दिशेत् ॥ तिथिं पक्षस्य न ब्रूयात्तथास्यायुर्न रिष्यते ॥ १९ ॥

प्रागस्तशायी न भवेन्न चाप्युदयशायिकः ॥ अवलोक्यो न चादर्शो मलिनो बुद्धिमत्तरैः ॥ २० ॥ अकृत्वा देवतापूजां नान्यं गच्छेत्कदाचन ॥
अन्यत्र तु गुरुं वृद्धं धर्मिकं वा विचक्षणम्॥२१॥ वर्जयेच्च तथा प्राज्ञाश्वासनाकर्षणं सदा ॥ स्नात्वा तु नावमार्जेत गात्राणि तु विचक्षणः ॥ २२॥
विपर्ययं न कुर्वीत वाससो बुद्धिमान्नरः ॥ तथा नान्यधृतं धार्यं न चापदशमेव च ॥ २३ ॥ अन्यदेव भवेद्वासः शयनीये द्विजोत्तमाः ॥ अन्य
द्रथ्यासु देवानां त्वर्चायामन्यदेव तु ॥ २४ ॥ उपवासं तु कुर्वीत स्नातः शुचिरलंकृतः ॥ पर्वकालेषु सर्वेषु ब्रह्मचारी तथा भवेत् ॥ २५ ॥
पिप्पलं च वटश्चैव शणशाकं तथैव च ॥ उदुम्बरं न खादेत भव्यार्थी पुरुषः सदा ॥ २६ ॥ पुत्रमांसोपमं मांसं पृष्ठमांसं च वर्जयेत् ॥ पाणौ च
लवणं रात्रौ दधिसक्तूंस्तथैव च ॥ २७ ॥ सायं प्रातश्च भुञ्जीत नान्तराले कदाचन ॥ सायं प्रातर्मनुष्याणामशनं देवनिर्मितम् ॥ २८ ॥ भूमौ
सदैव चाश्नीयान्न चासीनो च शब्दवत् ॥ तोयपूर्णं यदा पानमतिथिभ्यो द्विजोत्तमाः ॥ २९ ॥ पश्चाद्भुञ्जीत मेधावी न चाप्यन्यमना नरः ॥
न धावेद्वर्षमाणे तु नदीं मत्तां न लङ्घयेत् ॥३०॥गां चरन्तीं पिबन्तश्च वत्सकं न निषेधयेत् ॥ समानमेकपङ्क्त्यां तु देयमन्नं तथा भवेत्॥३१॥
पङ्क्त्यान्तु विषमं दत्त्वा नरकं प्रति पद्यते ॥ विषं हालाहलं भुङ्क्ते यो प्रदाय सुहृज्जने ॥ ३२ ॥ लोष्टमर्दी तृणच्छेदी नखखादी च यो नरः ॥
नित्योच्छिष्टो भवेद्यः स नेहायुर्विन्दते महत् ॥ ३३ ॥ परं ज्ञेयमनायुष्यं परदाराभिमर्शनम् ॥ उदक्यागमनं ज्ञेयमलंघ्यं परमं सुखम् ॥ ३४ ॥
पुरीषमूत्रे नोदीक्षेन्नाधितिष्ठेत्कदाचन ॥ उदक्यया तु संभाषां न तु कुर्वीत कर्हिचित् ॥ ३५ ॥ नाधितिष्ठेत्तुषं जातु केशभस्मकपालिकाः ॥
अन्यस्य चाप्युपस्थानं दूरतः परिवर्जयेत् ॥ ३६ ॥ त्रीणि तेजांसि नोच्छिष्टो नालभेत कदाचन ॥ अग्निं गां ब्राह्मणं चैव तथा ह्यायुर्न
रिष्यते ॥ ३७ ॥ त्रीणि तेजांसि चोच्छिष्टो नोदीक्षेत कदाचन ॥ सूर्याचन्द्रमसौ चैव नक्षत्राणि च सर्वशः ॥ ३८ ॥
नावमन्येत धर्मज्ञ त्रीणि तेजांसि पण्डितः ॥ अग्निं च कुलपुत्रं च ब्राह्मणश्च द्विजोत्तमाः ॥ ३९ ॥ त्रीन्कृशान्नावजानीयादीर्घमायुर्जिजीविषुः ॥
ब्राह्मणं क्षत्रियं सर्पं सर्वे ह्याशीविषास्त्रयः ॥ ४० ॥ नाध्यापयेदथोच्छिष्टो नाधीयीत कदाचन ॥ सर्वं च तिलसंबद्धन्नाद्यादस्तमिते रवौ ॥ ४१ ॥
ऊर्ध्वप्राणा ह्युत्क्रमन्ति यूनः स्थविर आयति ॥ प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते ॥ ४२ ॥ अभिवादयेत वृद्धांश्च आसनं चैव दाप
येत् ॥ कृताञ्जलिरुपासीत गच्छतः पृष्ठतोऽन्वियात् ॥ ४३ ॥ नासीत चासने भिन्ने भिन्नं कांस्यं च वर्जयेत् ॥ नैकवस्त्रेण भोक्तव्यं न नग्नः स्नान
मर्हति ॥ ४४ ॥ गुरुणा वैरनिर्बन्धो न कर्त्तव्यः कदाचन ॥ अनुमान्यः प्रसाद्यश्च गुरुः क्रुद्धो विजानता ॥ ४५ ॥ दूरादावसथान्मूत्रं दूरादात्मा

वसेचनम् ॥ उच्छिष्टोन्मार्जनं चैव दूरात्कार्यं विजानता ॥ ४६ ॥ उपानहौ च वस्त्रं च धृतमन्यैर्न धारयेत् ॥ पादं पादेन नाक्रामेन्न कण्डूयेन्न शौचयेत् ॥ ४७ ॥ हीनाङ्गानतिरिक्ताङ्गान्विद्याहीनान्विगर्हितान् ॥ रूपद्रविणहीनांश्च सत्त्वहीनांश्च नाक्षिपेत् ॥ ४८ ॥ भुञ्जानो ब्राह्मणश्रेष्ठो नैव शङ्कां समाचरेत् ॥ दधि चाप्यनुपानं च न कर्त्तव्यं भवार्थिना ॥ ४९ ॥ आचम्य चैव हस्तेन परिस्राव्यं तथोदकम् ॥ अङ्गुष्ठचरणस्याग्रे दक्षिणस्य तथोपरि ॥ ५० ॥ परापवादं न ब्रूयान्नाप्रियञ्च कदाचन ॥ न मन्युः कस्यचित्कार्यः कदाचिदपि वै द्विजः ॥ ५१ ॥ होमश्चानुदिते सूर्ये दातव्यो द्विजपुङ्गवाः ॥ तावद्भवति वह्निस्थो यावन्नोदेति भास्करः ॥ ५२ ॥ परीप्सितं च वह्निस्थः सम्यग्दत्तामथाहुतिम् ॥ तदा भासयते सर्वं त्रैलोक्यं सचराचरम् ॥ ५३ ॥ पतितैस्तु कथां नेच्छेद्दर्शनं चापि वर्जयेत् ॥ संसर्गं न च गच्छेत्तु तथास्यायुर्न रिष्यते ॥ ५४ ॥ वृद्धो ज्ञातिस्तथा मित्रं दरिद्रं च कुलोद्गतम् ॥ गृहे वासयितव्यानि धन्यानि मुनिसत्तमाः ॥ ५५ ॥ ब्राह्मणस्य पदाभ्यां तु वसेत्पूजितमालयम् ॥ सन्ध्यास्वध्ययनं वर्ज्यं भोजनं स्वपनक्रिया ॥ ५६ ॥ नक्तं न कुर्यात्पित्र्याणि भुक्त्वा चैव प्रसाधनम् ॥ पानीयस्य क्रिया नक्तं न कार्या भूतिमिच्छता ॥ ५७ ॥ अनिमन्त्रितो न गच्छेत्तु यज्ञं गच्छेत्तु दर्शकः ॥ ५८॥ चरितानि पुराणानां श्रोतव्यानि पुनःपुनः ॥ श्रुतिस्मृत्युदितं धर्मं त्वनुतिष्ठेत्तथा सदा ॥ ५९ ॥ सुखी स्यात्तत्प्रसक्तस्तु इह लोके परत्र च ॥ ६० ॥ श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तथा स्मृतिः ॥ ते सर्वार्थेषु मीमांस्ये ताभ्यां धर्मो हि निर्बभौ ॥ ६१ ॥ योऽवमन्येत भूतेभ्यो हेतुशास्त्राश्रयाद्द्विजाः ॥ साधुभिः स बहिष्कार्यो नरकाग्रेस्तु भाजनम् ॥ ६२॥ वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ॥ एतच्चतुर्विधं प्राहुः साधूनां धर्मलक्षणम् ॥६३॥ चातुर्वर्ण्यव्यवस्थानं यस्मिन्देशे न विद्यते ॥ स म्लेच्छविषयो ज्ञेय आर्यावर्त्तमतः परम् ॥६४॥ सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् ॥ तं देवविहितं देशं ब्रह्मावर्तं प्रचक्षते ॥ ६५ ॥ यस्मिन्देशे य आचारः पारम्पर्यक्रमागतः ॥ वर्णानां सान्तरालानां स सदाचार उच्यते ॥ ६६ ॥ वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम् ॥ कार्याः शरीरसंस्काराः पावनाः प्रेत्य चेह च॥६७॥ गार्भैः कृत्यैर्जातकर्मचौलमौञ्जीनिबंधनैः ॥ बैजिकं गार्भिकं चैनो द्विजानामपहन्यते ॥ ६८ ॥ स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः ॥ महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः॥६९॥गर्भाष्टमेब्दे कुर्वीत ब्राह्मणस्योपनायनम् ॥ गर्भादेक दशे राज्ञो गर्भात्तु द्वादशे विशः॥७०॥आषोडशाद्ब्राह्मणस्य सावित्री नातिवर्तते॥आद्द्वाविंशात्क्षत्रबन्धोराचतुर्विंजतेर्विशः॥७१॥अत ऊर्ध्वं त्रयोप्येते यथाकालमसंस्कृताः॥सावित्रीपतिता व्रात्या भवन्ति च विगर्हिताः॥७२॥ ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा॥ स्रवत्यनोंकृतं पूर्वं परस्ताच्च विशीर्यते ॥ ७३ ॥

इन्द्रियाणां विचरतां विषयेष्वपहारिषु ॥ संशये यत्नमातिष्ठेद्विद्वान्यन्तेव वाजिनाम् ॥ ७४ ॥ वशीकृत्वेन्द्रियग्रामं संयम्य च मनस्तथा ॥
सर्वान्संसाधयत्यर्थानक्षिण्वन्योगतस्तनुम् ॥ ७५ ॥ न जातु कामः कामानामुपभोगेन शाम्यति ॥ हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥७६॥
या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ॥ यासौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम् ॥७७॥ त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः॥
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ ७८ ॥ इन्द्रियाणां प्रसङ्गेन दोषमन्वेत्यसंशयम् ॥ संनियम्य तु तान्येव ततः सिद्धिं
स गच्छति ॥ ७९ ॥ अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ॥ चत्वारि संप्रवर्धन्ते ह्यायुर्मेधा यशो बलम् ॥ ८० ॥ ब्राह्मणं कुशलं
पृच्छेत्क्षत्त्रबन्धुमनामयम् ॥ वैश्यं क्षेमं समागम्य शूद्रं त्वारोग्यमेव च ॥ ८१ ॥ वित्तं बन्धुर्वयः कर्म विद्या भवति पञ्चमी ॥ एतानि
मान्यस्थानानि गरीयो यद्यदुत्तरम् ॥ ८२ ॥ न हायनैर्न पलितैर्न वित्तेन न बन्धुभिः ॥ ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान्
॥ ८३ ॥ विप्राणां ज्ञानतो ज्यैष्ठ्यं क्षत्रियाणां च वीर्यतः ॥ वैश्यानां धान्यधनतः शूद्राणामेव जन्मतः ॥ ८४ ॥ अहिंसयैव भूतानां
कार्यं श्रेयोऽनुपालनम् ॥ वाक् चैव मधुरा ह्यस्याः प्रयोज्या धर्मकांक्षिणा ॥ ८५ ॥ यस्य वाऽङ्मनसी शुद्धे सम्यग्गुप्ते च सर्वदा ॥
स वै सर्वमवाप्नोति वेदान्तगमनात्फलम् ॥८६॥ वेदमेव सदाभ्यस्येत्तपस्तप्तुं द्विजोत्तमाः ॥ वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते ॥ ८७ ॥
योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम् ॥ स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ ८८ ॥ मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धनम् ॥
तृतीयं यज्ञदीक्षायां द्विजस्य श्रुतिचोदनात् ॥ ८९ ॥ न ह्यस्मिन्सज्जते कर्म किञ्चिदामौञ्जिबन्धनात ॥ नाभिव्याहारयेद्ब्रह्म स्वधानियमनादृते
॥ ९० ॥ शूद्रेण हि समस्तावद्यावद्वेदं न जानते ॥ कृतोपनयनस्यास्य व्रतादेशनमिष्यते ॥ ९१ ॥ गुरोर्यत्र परीवादो निन्दा चापि प्रवर्तते ॥
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥९२॥ खरो भवेत्परीवादी श्वा वै भवति निन्दकः ॥ परिभोक्ता क्रिमिर्भवति कीटो भवति मत्सरी
॥९३॥ दूरस्थों नार्चयेदेनं न क्रुद्धो नान्तिके स्त्रियाः ॥ एकासनस्थो न भवेदापन्नोऽपि कदाचन॥ ९४॥ गोश्वोष्ट्रयानप्रासादस्वस्तरेषु कटेषु च ॥
नासीत गुरुणा सार्धं शिलाफलकनौषु च ॥ ९५ ॥ गुरोर्गुरौ सन्निहिते गुरुवद्वृत्तिमाचरेत् ॥ अध्यापयन्गुरुसुतो गुरुवन्मानमर्हति ॥ ९६ ॥ 
न कुर्याद्गुरुपुत्रस्य पादयोश्चावनेजनम् ॥ गुरुवत्प्रतिपूज्यास्तु सवर्णा गुरुयोषितः॥९७॥असवर्णास्तु सम्पूज्याः प्रत्युत्थानाभिवादनैः ॥ अभ्यञ्जनं
स्थापनं च गात्रोत्सादनमेव च॥९८॥गुरुपत्न्या न कार्याणि केशानां च प्रसाधनम्॥गुरुपत्नी च युवतिर्नाभिवाद्येह पादयोः॥९९॥पूर्णा विंशतिवर्षेण

गुणदोषौ विजानता ॥ मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत् ॥१००॥बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥ विप्रोष्य पादग्रहणं त्वन्वहञ्चा भिवादनम् ॥१०१॥गुरुदारेषु कुर्वीत सतां धर्ममनुस्मरन् ॥ स्त्रियो रत्नान्यथो विद्या धर्मस्सत्यं सुभाषितम्॥१०२॥शिल्पानि चाप्यदुष्टानि समादेयानि सर्वतः॥अब्राह्मणादध्ययनं चापत्काले विधीयते॥१०३॥अनुव्रज्या च शुश्रूषा यावदध्ययनं गुरौ ॥ नाब्राह्मणगुरौ शिष्यो वासमात्यन्तिकं वसेत् ॥ १०४ ॥ ब्राह्मणे वाननूचाने काङ्क्षन्गतिमनुत्तमात् ॥ पितृभिर्मातृभिर्नार्यः पतिभिर्देवरैस्तथा॥१०५॥ भूष्या भूषयितव्याश्च बहुकल्याणमीप्सुभिः ॥ यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः ॥ १०६ ॥ यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः ॥ सन्तुष्टो भार्यया भर्ता भार्या भर्त्रा तथैव च ॥ १०७ ॥ यस्मिन्नेतत्कुले नित्यं कल्याणं तत्र वै ध्रुवम् ॥ कुविवाहैः क्रियालोपैर्वेदानध्ययनेन च ॥ १०८ ॥ कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥ शिल्पेन व्यवहारेण शूद्रापुत्रैश्च केवलैः ॥१०९ ॥ गोभिरश्वैश्च यानैश्च कृष्या राजोपसेवया ॥ अयाज्ययाजनाच्चैव नास्तिक्येन च कर्मणा ॥ ११० कुलान्यकुलतां यान्ति यानि हीनानि मन्त्रतः ॥ मन्त्रतस्तु समृद्धानि कुलान्यल्पधनान्यपि ॥ ॥ १११ ॥ कुलसंख्यान्तु गच्छन्ति कर्षन्ति च महद्यशः ॥ ऋषयः पितरो देवा भूतान्यतिथयस्तथा ॥ ११२ ॥ आशासते कुटुम्बिभ्यस्तेभ्यः कार्यं विजानता ॥ स्वाध्यायेनार्चयेतर्षीन्होमैर्देवान्यथाविधि ॥ ११३ ॥ पितॄञ्छ्राद्धेन नॄनन्नैर्भूतानि बलिकर्मणा ॥ दद्यादहरहः श्राद्धमन्नाद्येनोदकेन च ॥ ११४ ॥ पयोमूलफलैर्वापि पितृभ्यः प्रीतिमाहरन् ॥ एकमप्याशयेद्विप्रं पित्रर्थे पाञ्चयज्ञिके ॥ ११५ ॥ न चैवात्राशयेत्कञ्चिद्वैश्वदेवं प्रति द्विजम् ॥ वैश्वदेवस्य सिद्धस्य गृह्येऽग्नौ विधिपूर्वकम् ॥ ११६ ॥ स्वसूत्रविहितं कुर्याद्वैश्वदेवमतन्द्रितः ॥ प्रणीते वाप्रणीते वा हुतोत्सृष्टे जलेऽपि वा ॥ ११७ ॥ वैश्वदेवं ध्रुवं कार्यं ब्राह्मणेन विपश्चिता ॥ परं स्थानमवाप्नोति कृत्वैवं सततं गृही ॥ भोजयेदतिथिं पश्चाद्भिक्षां दद्याच्च भिक्षवे ॥ ११८ ॥ यत्पुण्यफलमाप्नोति गां दत्त्वा विधिवद्गुरौ ॥ तत्पुण्यफलमाप्नोति भिक्षां दत्त्वा यथार्चिताम् ॥ ११९॥ विद्यातपःसमृद्धेषु हुतं विप्रमुखाग्निषु ॥ निस्तारयति दुर्गेषु भवत्यक्षयमेव च ॥ १२० ॥ संप्राप्ताय त्वतिथये प्रदद्यादासनोदकम् ॥ अन्नं चैव यथाशक्ति सत्कृत्य विधिपूर्वकम् ॥ १२१ ॥ शिलान्यप्युञ्छतो नित्यं पञ्चाग्नीनपि जुह्वतः ॥ सर्वं सुकृतमादत्ते ब्राह्मणोऽनर्चितो वसन् ॥ १२२ ॥ तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता ॥ एतान्यपि सतां गेहे नोच्छिद्यंते कदाचन ॥ १२३ ॥ एकरात्रन्तु निवसन्नतिथिर्ब्राह्मणः स्मृतः ॥ नैकग्रामीणमतिथिं विप्रं साङ्गतिकं तथा॥१२४॥ उपासते ये गृहस्थाः परपाकमबुद्धयः ॥

तेन ते प्रेत्य पशुतां व्रजन्त्यन्नाद्यदायिनाम् ॥१२५॥ अप्रीणन्योतिथिः सायं सूर्यान्ते गृहमेधिना ॥ काले प्राप्तस्त्वकाले वा नास्यानश्नन्गृहे वसेत ॥ १२६ ॥ न वै स्वयं तदश्नीयादतिथिं यन्न भोजयेत् ॥ धन्यं यशस्यमायुष्यं स्वर्ग्यश्चातिथिपूजनम् ॥१२७ ॥ वैश्वदेवे तु निर्वृत्ते यद्यन्योऽतिथिरात्रजेत् ॥ तथा चान्नं यथाशक्ति प्रदद्यान्न बलिं हरेत् ॥ १२८ ॥ न भोजनार्थं स्वे विप्रः कुलगोत्रे निवेदयेत् ॥ भोजनार्थं तु शंसन्वा वान्ताशीत्युच्यते बुधैः ॥ १२९ ॥ यदि त्वतिथिधर्मेण क्षत्रियो गृहमाव्रजेत् ॥ भुक्तवत्सु च विप्रेषु कामं तमपि पूजयेत् ॥१३०॥ वैश्यशूद्रावपि प्राप्तौ कुटुम्बेऽतिथिधर्मिणौ ॥ भोजयेत्सह भृत्यैस्तानानृशंस्यं प्रयोजयन् ॥१३१॥ सख्यादीन्भार्यया सार्धं भोजयेद्गृहमागतान् ॥ पतितश्वपचेभ्यस्तु श्वभ्यस्तु भुवि निर्वपेत् ॥ १३२ ॥ सुवासिनीः कुमारांश्च रोगिणो गार्भिणीस्तथा ॥ अतिथिभ्योऽग्र एवैनान्भोजयेदविचारयन् ॥ १३३ ॥ अदत्त्वा तु य एतेभ्यः पूर्वं भुंक्ते विचक्षणः ॥ स भुञ्जानो न जानाति श्वगृध्रैर्जग्धमात्मनः ॥१३४॥ भुक्तवत्सु तु विप्रेषु स्वेषु भृत्येषु चैव हि ॥ भुञ्जीयातां ततः पश्चादवशिष्टं तु दम्पती ॥ १३५॥ गृहस्थैर्धार्यते विप्रास्त्रैलोक्यं सचराचरम् ॥ पाकः कार्यो गृहस्थेन भूतोद्धरणकाम्यया ॥ १३६ ॥ अघं स केवलं भुंक्ते यः पचत्यात्मकारणात् ॥ विघसाशी भवेन्नित्यं नित्यं चामृतभोजनः ॥१३७॥ विघसं भुक्तशेषं तु यज्ञशेषं तथामृतम् ॥ राजर्षिस्नातकाचार्यप्रियश्वशुरमातुलान् ॥१३८॥ अर्हयेन्मधुपर्केण परिसंवत्सरोषितान् ॥ द्वौ कालौ गृहिणः पाको वैश्वदेवश्च कीर्त्यते ॥ १३९ ॥ वेदोदितं स्वकं कर्म नित्यं कुर्यादतंद्रितः ॥ सर्वान्समुत्सृजेदर्थान्स्वाध्यायस्य विरोधिनः ॥१४०॥ बुद्धिवृद्धिकराण्याशु धन्यानि च हितानि च ॥ नित्यं शास्त्राण्यवेक्षेत निगमांश्चैव वैदिकान् ॥१४१॥ ऋषियज्ञं देवयज्ञं भूतयज्ञं तथैव च ॥ नृयज्ञं पितृयज्ञं च पञ्चयज्ञान्न हापयेत् ॥१४२॥ अग्निहोत्रं च जुहुयादाद्यंते द्युनिशोः सदा ॥ दर्शेन चार्धमासांते पौर्णमासे तथैव च ॥१४३॥तयोः कालः स्मृतः क्षीणे पूर्णे च शशलक्षणे ॥ पशुनाप्यायनान्ते च मासान्ते सौमिकैर्मखैः॥१४४॥ नानिष्ट्वा नवसस्येष्ट्या पशुना वाग्निमान्द्विजः॥नवान्नमद्यान्मासं वा दीर्घमायुर्जिजीविषुः॥१४५॥नवेनानर्चितो ह्यस्य पशुहव्येन चाग्नयः॥प्राणानेवात्तुमिच्छन्ति नवान्नामिषगर्द्धिनः॥१४६॥आसनाशनशय्याभिरद्भिर्मूलफलेन वा॥नास्य कश्चिद्वसेद्गेहे शक्तितोऽनर्चितोऽतिथिः॥१४७॥पाषण्डिनो विकर्मस्थान्बैडालव्रतिकाञ्शठान्॥हैतुकान्बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत्॥१४८॥न दानं यशसे दद्यान्नो भयान्नोपकारिणे ॥ न नृत्तगीतशीलेभ्यो हासकेभ्यश्च धार्मिकः ॥ १४९ ॥ वेदविद्याव्रतस्नाताञ्श्रोत्रियान्गृहमेधिनः ॥ पूजयेद्धव्यकव्येषु विपरीतांस्तु वर्जयेत् ॥ १५० ॥ शक्तितो यजमानस्य दातव्यो गृहमेधिनः ॥ संविभागश्च भूतेभ्यः कर्तव्योऽनुपरोधतः ॥ १५१ ॥ राजतो धनमन्वि

च्छेत्सर्सीदन्स्नातकः क्षुधा ॥ याज्यान्तेवासिनो वापि न त्वन्यत इति स्थितिः ॥ १५२ ॥ न जीर्णमलवद्वासा भवेच्च विभवे सति ॥ स्वाध्याये नित्ययुक्तः स्यान्नित्यमात्महितेषु च॥१५३॥ वैणवीं धारयेद्यष्टिं सोदकं च कमण्डलुम् ॥ यज्ञोपवीतं वेदं च शुभे रौक्मे च कुण्डले ॥ १५४ ॥ शुक्लवासा भवेन्नित्यं परिमृष्टपरिच्छदः ॥ न चैव प्रलिखेद्भूमिं नात्मनोपहरेत्स्रजम् ॥ १५५ ॥ नाप्सु मूत्रं पुरीषं वा ष्ठीवनं वा समुत्सृजेत् ॥ अमेध्यलिप्तमन्यद्वा लोहितं वा विषाणि वा ॥ १५६ ॥ एतान्येव तथा वह्नौ निक्षिपेन्नैव च द्विजः ॥ नैकः शून्यगृहे स्वप्याच्छयानं नैव बोधयेत् ॥ १५७ ॥ न दिवीन्द्रायुधं दृष्ट्वा कस्यचिद्दर्शयेद्बुधः ॥ न शूद्रराज्ये निवसेन्नाधार्मिकजनावृते ॥ १५८ ॥ न पाषण्डिजनाकीर्णे नोपसृष्टे न पर्वते ॥ वैद्यसांवत्सरैर्हीने तथा प्रबलनायके ॥ १५९ ॥ न कुर्वीत वृथा चेष्टां न वार्यञ्जलिना पिबेत् ॥ नोत्सङ्गे भक्षयेद्भक्ष्यान्न जातु स्यात्कुतूहली ॥ १६० ॥ न नृत्येदथ वा गायेद्वादित्राणि न वादयेत् ॥ नास्फोटयेन्न च क्ष्वेडेन्न च रक्तां विरागयेत्॥१६१॥ न पादौ धावयेत्कांस्ये न च पादौ प्रतापयेत् ॥ न च्छिन्द्यान्नखरोमाणि दन्तैर्नोत्पाटयेन्नखान् ॥ १६२ ॥ पादयोर्नैव कुर्वीत दर्भेषु परिमार्जनम् ॥ पालाशमासनं वर्ज्यं पादुके दन्तधावनम् ॥ १६३ ॥ न कर्म विफलं कुर्यादायत्यां वा सुखोदयम् ॥ न विगर्ह्यकथाः कुर्याद्बहिर्माल्यं न धारयेत्॥१६४॥अद्वारेण न चातीयाद्ग्रामं वा वेश्म चैव वा॥रात्रौ च वृक्षमूलानि दूरतः परिवर्जयेत्॥१६५॥आर्द्रपादस्तु भुञ्जीत नार्द्रपादस्तु संविशेत् ॥न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविष्कृतम् ॥१६६॥न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत् ॥ न राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छास्त्रवर्तिनः॥१६७॥नरकाणि च सर्वाणि दद्याद्राजप्रतिग्रहः ॥ दशसूनासमश्चक्री दशचक्रसमो ध्वजी॥१६८॥दशध्वजसमा वेश्या दशवेश्यासमो नृपः ॥ एतद्विज्ञाय वै राज्ञां न प्रगृह्णन्ति साधवः ॥ १६९ ॥ उपाकर्मणि चोत्सर्गे त्रिरात्रं न पठेद् द्विजः ॥ वेदाङ्गानि पठेत्कृष्णे शुक्ले वेदमतन्द्रितः ॥ ॥ १७० ॥ नाविस्पष्टमधीयीत न शूद्रजनसन्निधौ॥ न निशान्ते परिश्रान्तो ब्रह्माधीत्य पुनः स्वपेत्॥१७१॥ सायं निशीथे नाध्ययनं वादित्रे न च वाद्यति॥अतिथिश्चाननुज्ञाप्य मारुते वाति वा भृशम्॥१७२॥पशुमण्डूकमार्जारश्वसर्पनकुलादिभिः॥कृतेऽन्तरालगमने रुधिरे च तथा स्रुते॥१७३॥ द्वावेतौ वर्जयेन्नित्यमनध्यायौ द्विजोत्तमः ॥ स्वाध्यायभूमिं चाशुद्धां चात्मानमशुचिं द्विजाः ॥१७४॥ देवतानां गुरो राज्ञः स्नातकाचार्ययोस्तथा॥ नाक्रमेत्कामतश्छायां बभ्रुणो दीक्षितस्य च॥१७५॥नात्मानमवमन्येत पूर्वाभिरसमृद्धिभिः॥आमृत्योः श्रियमन्विच्छेन्न तां मन्येत दुर्लभाम्॥१७६॥ सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् ॥ प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः ॥ १७७ ॥ भद्रं भद्रमिति ब्रूयाद्भद्रमित्येव वा

वदेत् ॥ शुष्कवैरं विवादं च न कुर्यात्केनचित्सह ॥ १७८ ॥ अनातुरः स्वानि खानि न स्पृशेदनिमित्ततः ॥ गणान्नं गणिकान्नं च सूतकान्नं च वर्जयेत् ॥ सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् ॥१७९॥ सावित्रशान्तिहोमांश्च कुर्यात्सर्वत्र नित्यशः ॥ पितॄंश्चैवाष्टकास्वर्चेन्नित्यमन्वष्टकासु च ॥ १८० ॥ मङ्गलाचारयुक्तानां नित्यञ्च प्रयतात्मनाम् ॥ जपतां जुह्वतां चैव विनिपातो न विद्यते ॥ १८१ ॥ न पादपाणिचपलो न नेत्रचपलो द्विजः ॥ न स्याद्वाक्च पलश्चैव न परद्रोहकर्मधीः ॥ १८२ ॥ येनास्य पितरो याता येन याताः पितामहाः ॥ तेन यायात्सतां मार्गं तेन गच्छन्न रिष्यते ॥ १८३ ॥ ऋत्विक्पुरोहिताचार्यमातुलातिथिसंश्रितैः ॥ बालवृद्धातुरैर्वैद्यैर्ज्ञातिसम्बन्धिबान्धवैः ॥ १८४ ॥ मातापितृभ्यां जामीभिर्भ्रात्रा पुत्रेण भार्यया ॥ दुहित्रा दासवर्गेण विवादं न समाचरेत् ॥ १८५ ॥ एतैर्विवादं सन्त्यज्य सर्वांल्लोकाञ्जयेद् गृही ॥ तस्मादेतैरधिक्षिप्तः सहेतासंज्वरं सदा ॥ १८६ ॥ प्रतिग्रहणसमर्थोऽपि प्रसंगं तत्र वर्जयेत् ॥ प्रतिग्रहेण विप्राणां ब्राह्मं तेजो विनश्यति ॥ १८७ ॥ न च द्रव्यमविज्ञाय विधिं धर्म्यं प्रतिग्रहे ॥ प्राज्ञः प्रतिग्रहं कुर्यादवसीदन्नपि क्षुधा ॥ १८८॥ अतपास्त्वनधीयानः प्रतिग्रहरुचिर्द्विजः ॥ अम्भस्य संप्लवेनैव सह तेनैव मज्जति ॥ १८९ ॥ तस्मान्न विद्वान्गृह्णीयाद्यस्मात्तस्मात्प्रतिग्रहम् ॥ अल्पकेनाप्यविद्वांस्तु पङ्के गौरिव सीदति ॥ १९० ॥ प्रतिग्रहसमर्थोऽपि नादत्ते यः प्रतिग्रहम् ॥ ये लोका दानशीलानां स तानाप्नोति शाश्वतान् ॥ १९१ ॥ गुरून्भृत्यानुज्जिहीर्षुरर्चिष्यन्देवतातिथीन् ॥ सर्वतः प्रतिगृह्णीयान्न तु तृप्येत्स्वयं ततः ॥ १९२ ॥ गुरुष्वभ्यवतीतेषु विना वातैर्गृहे वसन् ॥ आत्मनो वृत्तिमन्विच्छन्गृह्णीयात्साधुतः सदा ॥ १९३ ॥ धर्मध्वजोऽथ वा लुब्धश्छद्मस्थो लोकनिन्दकः ॥ बैडालव्रतिको ज्ञेयो हिंस्रः सर्वातिसाधकः ॥ १९४ ॥ अधोदृष्टिर्नैकृतिकः स्वार्थसाधनतत्परः ॥ शठो मिथ्याविनीतश्च बकव्रतचरो द्विजः ॥ १९५ ॥ ये बकव्रतिनो विप्रा ये च मार्जारलिङ्गिनः ॥ ते पतन्त्यन्धतामिस्रं सह पापेन कर्मणा ॥ १९६ ॥ न धर्मस्यापदेशेन पापं कृत्वा व्रतं चरेत् ॥ व्रतेन पापं प्रच्छाद्य कुर्वन्स्त्रीशूद्रदम्भनम् ॥ प्रेत्येह तादृशो विप्रो गृह्यते ब्रह्मवादिभिः ॥ १९७ ॥ छद्मना चरितं तच्च व्रतं रक्षांसि गच्छति ॥ अलिङ्गो लिङ्गिवेशेन यो वृत्तिमुपजीवति ॥ १९८ ॥ स लिङ्गिनां हरत्येनस्तिर्यग्योनौ च जायते ॥ परकीयनिपानेषु न स्नायाद्धि कदाचन ॥ निपानकर्त्तुः स्नात्वा तु दुष्कृतांशेन लिप्यते ॥ १९९ ॥ यानं शय्यासनं वस्त्रं कूपोद्यानगृहाणि तु ॥ अदत्तान्युपभुञ्जानो ह्येनसः स्यात्तुरीयभाक् ॥२००॥ यमान्सेवेत सततं न नित्यं नियमान्बुधः ॥ यमान्संत्यज्य कुर्वाणो नियमान्केवलान्भजन् ॥२०१॥ शौचमिज्या तपो दानं स्वाध्यायोपस्थनिग्रहः ॥ व्रतोपवासौ मौनं च स्नानं च नियमा दश ॥२०२ ॥

आनृशंस्यं क्षमा सत्यमहिंसा च दमः स्पृहा ॥ ध्यानं प्रसादो माधुर्यं चार्जवं च यमा दश ॥२०३॥ नाश्रोत्रियतते यज्ञे ग्रामयाजिहुते तथा ॥ स्त्रिया
क्लीबेन च हुते भुञ्जीयाद्ब्राह्मणः क्वचित् ॥२०४॥ यज्ञोऽनृतेन क्षरति तपः क्षरति विस्मयात् ॥२०५॥ आयुर्विप्रापवादेन दानं च परिकीर्त्तनात् ॥
धर्मं शनैः सञ्चिनुयाद्वल्मीकमिव पुत्तिकाः ॥ २०६ ॥ परलोकसहायार्थं परपीडां विवर्जयेत् ॥ उत्तमैरुत्तमैर्नित्यं सम्बन्धानाचरेत्सह ॥२०७ ॥
निनीषुः कुलमुत्कर्षमधमानधमाँस्त्यजेत् ॥ एधोदकं मूलफलमन्नमभ्युद्धृतं च यत् ॥ २०८ ॥ सर्वतः प्रतिगृह्णीयान्मध्वथाभयदक्षिणाम् ॥
आहृत्याभ्युद्यतां भिक्षां गृह्णीयादप्रचोदिताम् ॥ अन्यत्र कुलटाषण्ढपतितस्तेनविद्विषः ॥ २०९ ॥ शय्यां गृहान्शुभान्गन्धानापः
पुष्पमणीर्दधि ॥ धाना मत्स्याः पयो मांसं शाकं चैव तु निर्णुदेत् ॥ २१० ॥ योऽन्यथासन्तमात्मानमन्यथा सत्सु भाषते ॥ किं तेन
न कृतं पापं चौरेणात्मापहारिणा ॥ २११ ॥ वाच्यर्था नियतास्सर्वे वाङ्मूला वाग्विनिस्सृताः ॥ तां तु यः स्तेनयेद्वाचं स सर्वस्तेयकृन्नरः ॥
॥ २१२ ॥ सन्तानिकं यक्ष्यमाणमध्वगं सर्ववेदगम् ॥ गुर्वर्थं पितृमात्रर्थं स्वाध्यायार्थमतापिनः ॥ २१३ ॥ न चैतान्स्नातकान्विन्द्याद्ब्रा
ह्मणान्धर्मभैक्षुकान् ॥ निःस्वेभ्यो देयमेतेभ्यो दानं विद्या विशेषतः ॥ २१४ ॥ एतेभ्यो हि द्विजाग्रेभ्यो देयमन्नं सदक्षिणम् ॥ इतरेभ्यो बहि
र्वेद्यां कृतान्नं देयमुच्यते ॥ २१५ ॥ कृतदारोऽपरान्दारान्भिक्षित्वा योऽधिगच्छति ॥ रतिमात्रं फलं तस्य द्रव्यदातुस्तु सन्ततिः ॥ २१६ ॥
यस्य त्रैवार्षिकं भक्तं पर्याप्तं भृत्यवृत्तये ॥ अधिकं वापि विद्येत स सोमं पातुमर्हति ॥ २१७ ॥ अतः स्वल्पीयसि द्रव्ये यः सोमं पिबति
द्विजः ॥ स पीतसोमपूर्वोऽपि तस्य नाप्नोति तत्फलम् ॥ २१८ ॥ सक्तः परजने दाता स्वजने दुःखजीविनि ॥ मध्वापीतौ विषास्वादः स
धर्मप्रतिरूपकः ॥ २१९ ॥ भृत्यानामुपरोधेन यः करोत्यौर्ध्वदैहिकम् ॥ तद्भवत्यसुखोदर्कं जीवतोऽस्य मृतस्य वा ॥ २२० ॥ न यज्ञार्थं द्विजः
शूद्राद्भिक्षां लिप्सेत धर्मवित् ॥ यजमानो हि भिक्षित्वा चण्डालः प्रेत्य जायते ॥ २२१ ॥ यज्ञार्थमर्थं भिक्षित्वा यो न सर्वं प्रयच्छति ॥ स
याति भासतां विप्रः काकतां वा शतं समाः ॥ २२२ ॥ देवस्वं ब्राह्मणस्वं च यो लोभान्नोपजीवति ॥ स पापात्मा परे लोके गृध्रोच्छिष्टेन
जीवति ॥ २२३ ॥ इष्टिं वैश्वानरीं विप्रो निर्वपेदब्दपर्यये ॥ कृतानां पशुसोमानां निष्कृत्यर्थमसम्भवे ॥ २२४ ॥ आपत्कल्पेन यो धर्मं
कुरुतेऽनापदि द्विजः ॥ समाप्नोति फलं तस्य परत्रेति विचारितम् ॥ २२५ ॥ प्रभुः प्रथमकल्पस्य योऽनुकल्पेषु वर्तते ॥ धर्मेण योगं
नाप्नोति नरकं चैव गच्छति ॥ २२६ ॥ क्षत्रियो बाहुवीर्येण तरेदापदमात्मनः ॥ धनेन वैश्यशूद्रौ तु जपहोमैर्द्विजातयः ॥ २२७ ॥

न वै कन्या न युवतिर्नाल्पविद्यो न बालिशः ॥ होता स्यादग्निहोत्रेषु नार्तो नासंस्कृतस्तथा ॥ २२८ ॥ प्राजापत्यमदत्त्वाश्वमग्न्याधेयस्य दक्षिणाम् ॥ अनाहिताग्निर्भवति ब्राह्मणो विभवे सति ॥२२९॥ पुण्यान्यन्यानि कुर्वीत श्रद्दधानो जितेन्द्रियः ॥ न त्वल्पदक्षिणैर्यज्ञैर्यजेतेह कथंचन ॥ २३० ॥ हन्त्यल्पदक्षिणो यज्ञस्तस्मान्नाल्पधनो यजेत् ॥ बालातपं न सेवेत न दिवा मैथुनं व्रजेत् ॥ २३१ ॥ प्रायश्चित्तीयतां प्राप्य प्रायश्चित्तं समाचरेत् ॥ मातुः स्वसारं वा पुत्रीं परभार्यां प्रकीर्तयेत् ॥२३२॥ नदीं तरेन्न बाहुभ्यां वर्जयेत्कूपलङ्घनम् ॥ यथाकथंचि न्नोदीक्षेदादित्यं तेजसां निधिम् ॥ २३३ ॥ न क्रुद्धस्य गुरोर्वक्त्रं नैवादर्शममार्जितम् ॥ स्नानभोजनपानानि वाहेभ्यो नाचरेत्पुनः ॥ २३४ ॥ यत्नेन बिभ्रियाद्दारान्वाग्मिनोऽकृपणान्द्विजान् ॥ २३५ ॥ बद्धङ्गवादिकं यस्तु यवसेनोदकेन च॥ प्रतिजागर्तिनो विप्रः स याति नरकं महत् ॥ २३६ ॥ नारोहेद्विषमं शलं नावं संशयितांस्तरून् ॥ न पातयेत लोष्टेन न काष्ठेन फलं द्रुमात् ॥ २३७ ॥ शिरःस्नातस्तु तैलेन नाङ्गं किञ्चिदपि स्पृशेत ॥ वहेन्न भारं शिरसा युगपन्नाग्निवारिणी ॥ २३८ ॥ न तोयं प्रक्षिपेद्वह्नौ वह्निं तोये तथैव च ॥ वर्जयेदतिसौहार्दं भोज्यान्नस्य च कुत्सनम् ॥ २३९ ॥ राजद्विष्टं गणद्विष्टं लोकद्विष्टं विवर्जयेत् ॥ सायं प्रातश्च विदुषां शृणुवात्पुष्कला गिरः ॥ २४० ॥ संस्कृतं पायसं नित्यं यवाग्वां कृसरं वदेत् ॥ श्मश्रुकर्मणि चायुष्यं जीवितेन तथा कृतिः ॥ २४१ ॥ व्याधितानां तु सर्वेषामायुषः प्रतिनन्दनम् ॥ श्रान्तस्य विश्रमश्चेति चाध्यतां सीरिणस्तथा ॥ २४२ ॥ आसीनस्य सुखं चापि पुण्याहमपि गच्छतः ॥ देवकर्मप्रवृत्तस्य प्रासादं परिकीर्तयेत् ॥ २४३ ॥ न जातु त्वमिति ब्रूयादापन्नोपि महत्तरम् ॥ त्वंकारो वा वधो वेति विद्वत्सु न विशिष्यते ॥ २४४ ॥ अवराणां समानानां शिष्याणाञ्चैतदिष्यते ॥ एक एव चरेद्धर्मं न धर्मध्वजिको भवेत् ॥ २४५ ॥ अर्चेद्देवान्न दम्भेन सेवेतामायया गुरून् ॥ निधिं विदध्यात्पारक्यं यत्रार्थः शब्दवानिति ॥ २४६ ॥कर्म वै सफलं कृत्वा गुरूणां प्रतिपादयेत् ॥ वृद्धान्नाति वदेज्जातु न तु सम्प्रेषयेत्क्वचित् ॥२४७॥ न वेगितोऽन्यकार्यः स्यान्नादित्वान्नानि कुत्सयेत् ॥ मुक्तकेशो न गच्छेत्तु स्वप्नाहारसभास्त्रियः॥२४८॥ पाणिनालभ्य निष्क्रामेद्रत्नपूज्याज्यमण्डलम् ॥ प्रदक्षिणन्तु कुर्वीत मंगल्यं सर्वदा यतिः॥२४९॥ सूनाश्च बन्धनागारं नृपनृत्यगृहे तथा ॥ अन्तः पुरं च ऋषयो दूरतः परिवर्जयेत् ॥ २५० ॥ त्रिः पक्षस्य कृतश्मश्रुर्नखलोमानि कल्पयेत् ॥ न प्रतिस्फालयेदम्बु पाणिना चरणेन वा ॥ २५१ ॥ नासंवृतमुखः कुर्यात्क्षुतमंगविजृम्भणम् ॥ नाद्वारेण सुहृद्वेश्म न द्वारेण रिपोर्विशेत् ॥ २५२ ॥ न सर्पशस्त्रैः क्रीडेत्तु नदीवेगं विवर्जयेत् ॥

विद्यात्प्रतिक्षणं मृत्योरयथातथचेष्टितम् ॥ २५३ ॥ आहरेज्ज्ञानमर्थांश्च नरो ह्यमरवत्सदा ॥ केशैरिव गृहीतस्तु मृत्युना धर्ममाचरेत् ॥ २५४ ॥ प्रविशेज्जनसंबाधं तथातिगहनं न च ॥हेम नासंस्कृतं धार्यं निशि लोष्टं न च क्षिपेत् ॥२५५॥ आदौ पङ्क्त्यां न चाश्नीयाद्वर्जयेद्भूमिताडनम् ॥ वर्जयेच्छात्रशबलं दिवा निद्रां तथैव च ॥ २५६ ॥ कामः क्रोधो भयो हर्षं लोभो दर्पस्तथैव च ॥ रिपवः षड् विजेतव्याः पुरुषेण विपश्चिता ॥ २५७ ॥ अग्निष्वङ्गसंन्यासात्कुर्यादिन्द्रियनिग्रहम् ॥ योगक्षेमं सदोत्थानात्प्रज्ञां वृद्धोपसेवनात् ॥ २५८ ॥ प्रश्रयेण जयेन्मानं दैन्यं दृष्टांत संश्रयात् ॥ अक्रोधेन जयेत्क्रोधं विनयेन त्वनार्यताम् ॥ २५९ ॥ शीघ्रत्वाद्धस्तपादं च वाचमुच्चारणाज्जयेत् ॥ अज्ञानं ज्ञानसंयोगात्कामं कामांगवर्जनात् ॥ २६० ॥ धर्मिष्ठैरागमैर्लोभं क्रोधं मैत्र्याद्विवर्जयेत् ॥ कारुण्येन जयेन्मानं कालं कार्योपपत्तिभिः ॥ २६१ ॥ आत्मानं सुखदुःखाद्यं त्वनभिज्ञाय योजयेत् ॥ धृत्या शिश्नोदरं रक्षेत्पाणिपादं च चक्षुषा ॥ २६२ ॥ चक्षुःश्रोत्रे च मनसा मनो वाचं च कर्मणा ॥ देशकालानुबन्धार्थं धर्माणामविरोधि यत् ॥ २६३ ॥ तत्तत्सुखं निषेवेत नाकस्मान्निःसुखी भवेत् ॥ रूपसंदर्शनश्रव्यरसगन्धान्सदा जयेत्॥२६४॥ वसन्नपि सदोमध्ये ह्यसक्तो मनसा भवेत् ॥ परेषान्तन्न संदध्यात्प्रतिकूलं यदात्मनः ॥ २६५ ॥ कृच्छ्रेष्वपि न तत्कुर्यात्साधूनां यद सम्मतम् ॥ जीर्णाशी च मिताशी च हिताशी च तथा भवेत् ॥२६६॥ शस्यते यैर्गुणैरन्यैर्यैरन्यैरर्जितं यशः ॥ उञ्छवृत्तिर्भवत्येवं विपरीतमतस्त्यजेत् ॥ २६७ ॥ सुकारुणिकमात्मानं ख्यापयेन्नापि निर्घृणम् ॥ देशकालौ च शक्तिं च जनताश्चावलोकयेत् ॥ २६८ ॥ न मृदुः स्यान्न च क्रूरो ह्युभावेव समाश्रयेत् ॥ मृदुर्भवत्यवज्ञातः तीक्ष्णादुद्विजते जनः ॥ २६९ ॥ अनालक्षितचित्तः स्यान्नैकान्ते किञ्चिदाचरेत् ॥ विद्यात्परस्य रन्ध्राणि स्वरंध्रं छादयेत्पुनः ॥ २७० ॥ गूहेत्कूर्म इवाङ्गानि रक्षेदात्मानमात्मना ॥ वागादीनि सहायानि कृत्वा प्रज्ञां च मन्त्रिणम् ॥ २७१ ॥ धर्मकामसमृद्ध्यर्थं दासाद्यर्थः पुमान्भवेत् ॥ अर्थानर्थौ समासाद्य हर्षदैन्ये विवर्जयेत्॥२७२॥दुःखे दुःखाधिकान्पश्येत्सुखे पश्येत्सुखाधिकान् ॥ नत्वेवं मूढवद्ध्यादात्मानं सुखदुःखयोः॥२७३॥हर्षस्थानसहस्राणि शोकस्थानशतानि च ॥ दिवसेदिवसे मूढमाविशन्ति न पण्डितम्॥२७४ ॥ न तत्कुर्वीत यस्यान्ते हर्षोपालम्भमाप्नुयात् ॥ अज्ञानप्रभवो मोहस्तस्माद्रागः प्रवर्तते ॥२७५॥ रागाद्द्वेषस्ततः क्रोधः क्रोधान्मानोऽभिजायते ॥ मानादपार्थकं कर्म कर्मतोऽशुभलक्षणम् ॥ २७६ ॥ जन्ममृत्युजराव्याधिदुःखशोकप्रवर्त्तनम् ॥ अप्रमादो वृद्धसेवा तत्प्रज्ञामूलमिष्यते ॥ २७७ ॥ ज्ञानाद्धर्मः सुखं धर्मान्निःश्रेयोऽभ्युदयात्मकम् ॥ इष्टेन्द्रियार्थसंयोगो भवेदुदयलक्षणम् ॥ २७८ ॥ नारुन्तुदः स्यादनृशंसवादी नहीनतः परम

ऽभ्याददीत ॥ ययास्य वाचा पर उद्विजेत न तां वदेदुषतीं पापलोकाम् ॥ २७९ ॥ वाक्सायका वदनान्निष्पतन्ति यैराहतः शोचति रात्र्यहानि ॥ परस्य नुर्मर्मसु ते पतन्ति न तान्धीरोऽवसृजेद्वै परेषु॥२८०॥प्रियाणि लोके शृणुते प्रियंवदः प्रियाणि चाप्नोति प्रियाणि चाश्नुते ॥ प्रियश्च सर्वस्य जनस्य जायते जनानुरागप्रभवा हि संपदः ॥ २८१॥ आचारयुक्तस्त्रिदिवं प्रयाति आचारवानेव भवत्यरोगः ॥ आचारवानेव चिरन्तु जीवे दाचारवानेव भुनक्ति लक्षणम् ॥ २८२ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे हंसगीतासु आचारवर्णनो नाम त्रयस्त्रिंश दधिकद्विशततमोऽध्यायः ॥ २३३॥ हंस उवाच ॥ प्रायश्चित्तीयतां प्राप्य दैवात्पूर्वकृतेन वा ॥ न संसर्गं व्रजेत्सद्भिः प्रायश्चित्तेऽकृते नरः ॥ १ ॥ ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ॥ महान्ति पातकान्याहुः संयोगमपि तैः सह ॥ २ ॥ अनृतं च समुत्कर्षे राजगामि च पैशुनम् ॥ गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया॥३॥ब्रह्मोज्झता वेदनिन्दा कौटसाक्ष्यं सुहृद्वधः॥ गर्हितान्नाद्ययोर्जग्धिः सुरापानसमानि षट् ॥४॥ निक्षेपस्यापहरणं नराश्वरजतस्य च॥भूमिवज्रमणीनां च रुक्मस्तेयसमं स्मृतम्॥५॥रेतःसेकः सयोनीषु कुमारीष्वन्त्यजासु च॥ सख्युः पुत्रस्य च स्त्रीषु गुरुतल्पसमं विदुः ॥ ६ ॥ गोवधोऽयाज्यसंयाज्यं पारदार्यात्मविक्रयः ॥ गुरुमातृपरित्यागः स्वाध्यायाग्न्योः सुतस्य च ॥७॥ परिवित्तितानुजेनूढे परिवेदनमेव च ॥ तयोर्दानं च कन्यायास्तयोरेव च याजनम् ॥ ८ ॥ कन्याया दूषणं चैव वार्धुष्यं व्रतलोपनम् ॥ तडागारामदाराणामपत्यस्य च विक्रयः॥ ९ ॥ व्रात्यता बान्धवत्यागो भृताध्यापनमेव च ॥ भृताच्चाध्ययनादानमपण्यानां च विक्रयः॥१०॥ सर्वकार्येष्वधीकारो महायन्त्रप्रवर्तनम् ॥ हिंस्रौषधिस्त्रियाजीवोऽभिचारो मूलकर्म च॥११॥इन्धनार्थमशुष्काणां द्रुमाणामवपातनम् ॥ आत्मार्थं च क्रियारम्भो निन्दितान्नादनं तथा ॥१२॥ अनाहिताग्निता स्तेयमृणानां चानपाक्रिया ॥ असच्छास्त्राभिगमनं कौशीलव्यस्य च क्रिया ॥ १३॥ धान्यकुप्यपशुस्तेयं मद्यपस्त्रीनिषेवणम् ॥ स्त्रीशूद्रविट्क्षत्रवधो नास्तिक्यं चोपपातकम् ॥ १४ ॥ ब्राह्मणस्य रुजःकृत्यं घ्रातिरघ्रेयमद्ययोः ॥ जैह्म्यं पुंसि च मैथुन्यं जातिभ्रंशकरं स्मृतम्॥१५॥ खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा ॥ संकरीकरणं ज्ञेयं मीनाहिमहिषस्य च ॥ १६ ॥ निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनम् ॥ अपात्रीकरणं ज्ञेयमसत्यस्य च भाषणम् ॥ १७ ॥ कृमिकीटवयोहत्या मद्यानुगतभोजनम् ॥ फलैधःकुसुमस्तेयमधैर्यं च मलापहम् ॥ ॥ १८ ॥एतान्यन्यानि सर्वाणि यथोक्तानि पृथक्पृथक् ॥ धैर्यव्रतैरपोह्यन्ते तानि मे सन्निबोधत ॥ १९ ॥ ब्रह्महा द्वादशसमाः कुटिं कृत्वा वने वसेत् ॥ भैक्ष्याश्यात्मविशुद्ध्यर्थं कृत्वा शवशिरोध्वजम् ॥ २० ॥ लक्षं शस्त्रभृतां वा स्याद्विदुषामिच्छयात्मनः ॥

प्राश्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिराः ॥ २१ ॥ यजेत वाश्वमेधेन स्वर्जिता गोसवेन वा ॥ अभिजिद्विश्वजिद्भ्यां वा त्रिवृताग्निष्टु
तापि वा ॥ २२ ॥ जपन्वान्यतमं वेदं योजनानां शतं व्रजेत ॥ ब्रह्महत्यापनोदाय मितभुङ् नियतेन्द्रियः ॥ २३ ॥ सर्वस्वं वा वेदविदे ब्राह्मणायो
पपादयेत् ॥ धनं हि जीवनायालं गृहं वा सपरिच्छदम् ॥ २४ ॥ हविष्यभुग्वानुसरेत्प्रतिस्रोतः सरस्वतीम् ॥ जपेद्वा नियताहारस्त्रिर्वै वेदस्य संहि
ताम् ॥ २५ ॥ कृतवापनो निवसेद्ग्रामान्ते गोव्रजेऽपि वा ॥ आश्रमे वृक्षमूले वा गोब्राह्मणहिते रतः ॥ २६ ॥ ब्राह्मणार्थे गवार्थे वा सम्यक्
प्राणान्परित्यजेत् ॥ मुच्यते ब्रह्महत्याया गोब्राह्मणहिते रतः ॥ २७ ॥ त्रिवारं प्रतिरोद्धा वा सर्वस्वमवजित्य वा ॥ विप्रस्य तन्निमित्ते वा प्राणा
लाभे विमुच्यते ॥ २८ ॥ एवं दृढव्रतो नित्यं ब्रह्मचारी समाहितः ॥ समाप्ते द्वादशे वर्षे ब्रह्महत्यां विमुञ्चति ॥ २९ ॥ शिष्ट्वा वा भूमि
देवानां नरदेवसमागमे ॥ स्वमेनोऽवभृथस्नातो हयमेधे विमुच्यते ॥ ३० ॥ धर्मस्य ब्राह्मणो मूलमग्रं राजन्य उच्यते ॥ तस्मा
त्समागमे तेषामेनो विख्याप्य शुध्यति ॥ ३१ ॥ ब्राह्मणः सम्भवेनैव देवानामपि दैवतम् ॥ प्रमाणं चैव लोकस्य ब्रह्मात्रैव हि कारणम् ॥ ३२ ॥
तेषां वेदविदो ब्रूयुस्त्रयोऽप्येनःसु निष्कृतिम् ॥ स तेषां पावनाय स्यात्पवित्रा विदुषां हि वाक् ॥ ३३ ॥ अतोऽन्यतममास्थाय विधिं विप्रः समा
हितः ॥ ब्रह्महत्याकृतं पापं व्यपोहत्यात्मवत्तया ॥३४॥हत्वा गर्भमविज्ञातं चैतदेवव्रतं चरेत्॥ राजन्यवैश्यौ चेज्जानावात्रेयीमेव च स्त्रियम् ॥३५॥
उक्त्वा चैवानृतं साक्ष्ये प्रतिरुध्य गुरूंस्तथा ॥ अपहृत्य च निक्षेपं कृत्वा च स्त्रीसुहृद्वधम् ॥ ३६ ॥ इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम् ॥
कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते ॥ ३७ ॥ सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबेत् ॥ तया स काये निर्दग्धे मुच्यते किल्बिषात्ततः॥
॥३८॥गोमूत्रमग्निवर्णं वा पिबेदुदकमेव वा ॥ पयो घृतं वा मरणाद्गोशकृद्रसमेव वा ॥ ३९ ॥ कणान्वा भक्षयेदब्दं पिण्याकं वा सकृन्निशि ॥ सुरा
पानापनोदार्थं वालवासा जटी ध्वजी ॥ ४० ॥ सुरा वै मलमन्नानां पाप्मा च मलमुच्यते ॥ तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत्
॥ ४१ ॥ गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा ॥ यथैवैका तथैवान्या न पातव्या द्विजातिभिः ॥ ४२ ॥ यक्षरक्षःपिशाचान्नं मद्यं
मांसं सुरासवम् ॥ तद्ब्राह्मणेन नात्तव्यं देवानामश्नता हविः ॥ ४३ ॥ अमेध्ये वा पतेन्मत्तो वैदिकं वाप्युदाहरेत् ॥ अकार्यमन्यत्कुर्याद्वा ब्राह्मणो
मदमोहितः ॥ ४४ ॥ यस्य कायगतं ब्रह्म मद्येनाप्लाव्यते सकृत् ॥ तस्य व्यपैति ब्राह्मण्यं शूद्रत्वं च स गच्छति ॥ ४५ ॥ एषा विचित्राभि
हिता सुरापानस्य निष्कृतिः ॥अत ऊर्ध्वं प्रवक्ष्यामि सुवर्णस्तेयनिष्कृतिम् ॥ ४६ ॥ सुवर्णस्तेयवान्विप्रो राजानमभिगम्य तु ॥ स्वकर्म ख्यापय

न्ब्रूयाद्भवान्मामनुशास्त्विति ॥ ४७ ॥ गृहीत्वा मुसलं राजा सकृद्धन्यात्तु तं स्वयम् ॥ वधेन शुध्यति स्तेनो ब्राह्मणस्तपसैव वा ॥ ४८ ॥ तपसा पनुनुत्सुस्तु सुवर्णस्तेयजं मलम् ॥ चीरवासा द्विजोरण्ये चरेद्ब्रह्महणो व्रतम् ॥ ४९ ॥ एतैर्व्रतैरपोहेत पापं स्तेयकृतं द्विजः ॥ गुरुस्त्रीगमनीयं तु व्रतैरेतैरपानुदेत् ॥ ५० ॥ गुरुतल्प्यभिभाष्यैनः कुंभे स्वप्यादयोमये ॥ सूर्मीं ज्वलन्तीं वाश्लिष्य मृत्युना स विशुध्यति ॥ ५१ ॥ स्वयं वा शिश्नवृषणावुत्कृत्याधाय चाञ्जलौ ॥ नैर्ऋतीं दिशमातिष्ठेदानिपातादजिह्मगः ॥ ५२ ॥ खट्वांगी चीरवासा वा श्मश्रुलो विजने वने ॥ प्राजापत्यं चरेत्कृच्छ्रं त्वब्दमेकं समाहितः ॥ ५३ ॥ चान्द्रायणं वा त्रीन्मासानभ्यसेन्नियतेन्द्रियः ॥ हविष्येण यवाग्वा वा गुरुतल्पापनुत्तये ॥ ५४ ॥ एभिर्व्रतैरपोहेयुर्महापातकिनो मलान् ॥ उपपातकिनस्त्वेवं विविधैर्नियमैरपि ॥ ५५ ॥ उपपातकसंयुक्तो गोघ्नो मासं यवान्पिबेत् ॥ कृतवापो वसेद्गोष्ठे चर्मणा तेन संवृतः ॥ ५६ ॥ चतुर्थकालमश्नीयादक्षारलवणं मितम् ॥ गोमूत्रेणाचरेत्स्नानं द्वौ मासौ नियतेन्द्रियः ॥ ५७ ॥ दिवानुगच्छेत्ता गास्तु तिष्ठन्नूर्ध्वं रजः पिबेत् ॥ शुश्रूषित्वा नमस्कृत्य रात्रौ वीरासनं वसेत् ॥ ५८ ॥ तिष्ठन्तीष्वेव तिष्ठेत चरन्तीष्वप्यनुव्रजेत् ॥ आसीनासु तथासीत नियतो वीतमत्सरः ॥ ५९ ॥ आतुरामभिशस्तां वा सिंहव्याघ्रादिभिर्भयैः ॥ पतितां पंकमग्नां च सर्वप्राणैर्विमोचयेत् ॥ ६० ॥ उष्णे वर्षति शीते वा मारुते वाति वा भृशम् ॥ न कुर्वीतात्मनस्त्राणं गोरकृत्वा तु शक्तितः ॥६१॥ आत्मनो यदि वान्येषां गेहे क्षेत्रेऽथ वा खले ॥ भक्षयन्तीं न कथयेत्पिबन्तीं चैव वत्सकम् ॥ ६२ ॥ अनेन विधिना यस्तु गोघ्नो गा अनुगच्छति ॥ स गोहत्याकृतं पापं त्रिभिर्मासैर्व्यपोहति ॥ ६३ ॥ वृषभैकादशा गाश्च दद्यात्सुचरितव्रतः ॥ अविद्यमाने सर्वस्वं वेदविद्भ्यो निवेदयेत् ॥ ६४ ॥ एतदेव व्रतं कुर्युरुपपातकिनो द्विजाः ॥ अवकीर्णिविशुद्ध्यर्थं चान्द्रायणमथापि वा॥६५॥अवकीर्णी तु काणेन गर्दभेन चतुष्पथे॥पाकयज्ञविधानेन यजेत निर्ऋतिं निशि॥६६॥ हुत्वाग्नौ विधिवद्धोमानन्ततश्च समेत्यृचा ॥ वातेन्द्रगुरुवह्नीनां जुहुयात्सर्पिषाहुतीः ॥६७॥ कामतो रेतसस्सेकं व्रतस्थस्य द्विजन्मनः ॥ अतिक्रमं व्रतस्याहुर्धर्मज्ञा ब्रह्मवादिनः ॥ ६८ ॥ मरुतः पुरुहूतं च गुरुं पावकमेव च ॥ चतुरो व्रतिऽनोभ्येति ब्राह्मं तेजोऽवकीर्णिनः ॥ ६९ ॥ एतस्मिन्नेनसि प्राप्ते वसित्वा गर्दभाजिनम् ॥ सप्तागारांश्चरेद्भैक्ष्यं स्वकर्म परिकीर्तयेत्॥ ७० ॥ तेभ्यो लब्धेन भैक्ष्येण वर्तयन्नेककालिकम् ॥ उपस्पृशंस्त्रिषवणं चाब्देन स विशुद्ध्यति ॥७१॥ जातिभ्रंशकरं कर्म कृत्वान्यतममिच्छया ॥ चरेत्सान्तपनं कृच्छ्रं प्राजापत्यमनिच्छया ॥७२॥ सङ्करापात्रकृत्यासु मासं शोधनमैन्दवम् ॥ मलिनीकरणीयेषु तप्तः स्याद्यावकस्त्र्यहम् ॥ ७३ ॥ तुरीयं ब्रह्महत्यायाः क्षत्रियस्य वधे स्मृतम् ॥ वैश्येऽष्टमांशं वृत्तस्थे

शूद्रे ज्ञेयं तु षोडशम्॥ ७४ ॥ अकामतस्तु राजन्यं विनिपात्य द्विजोत्तमः ॥ वृषभैकं सहस्रं गा दद्याच्छुद्ध्यर्थमात्मनः॥७५॥त्र्यब्दं चरेद्वा नियतो जटी ब्रह्महणो व्रतम् ॥वसन्दूरतरे ग्रामे वृक्षमूलनिकेतनः ॥७६॥ एतदेव चरेदब्दं प्रायश्चित्तं द्विजोत्तमः ॥ प्रमाप्य वैश्यं वृत्तस्थं दद्याद्वै शतकं गवाम् ॥ ७७॥ एतदेव व्रतं कृत्स्नं षण्मासाञ्छूद्रहा चरेत् ॥ वृषभैकादशा वापि दद्याद्विप्राय गाः सिताः ॥७८॥ मार्जारनकुलं हत्वा चाषं मण्डूकमेव च॥ श्वगोधोलूककाकांश्च शूद्रहत्याव्रतं चरेत् ॥७९॥ पयः पिबेत्त्रिरात्रं वा योजनं वाध्वनो व्रजेत् ॥ उपस्पृशेत्स्रवन्त्यां वा सूक्तं वाब्दैवतं जपेत् ॥८०॥ अभ्रिं कार्ष्णायसीं दद्यात्सर्पं हत्वा द्विजोत्तमः ॥ पलालभारकं शण्ढे सैसकं चैकमाषकम् ॥ ८१ ॥ घृतकुम्भं वराहे तु तिलद्रोणन्तु तित्तिरौ ॥ शुके द्विहायनं वत्सं क्रौञ्चं हत्वा त्रिहायणम्॥८२॥हत्वा हंसं बलाकां च बकं बर्हिणमेव च ॥ वानरं श्येनभासौ च स्पर्शयेद्ब्राह्मणाय गाम् ॥८३॥ वासो दद्याद्धयं हत्वा पञ्च नीलान्वृषाँश्च वा ॥ अजमेषावनड्वाहं खरं हत्वैकहायनम् ॥ ८४ ॥ क्रव्यादं तु मृगं हत्वा धेनुं दद्यात्पयस्विनीम् ॥ अक्रव्यादं वत्सतरीमुष्ट्रं हत्वा तु कृष्णलम् ॥८५॥ जीनाकार्मुकबस्तावीन्पृथग्दद्याद्विशुद्धये ॥ चतुर्णामपि वर्णानां नारीं हत्वावनस्थिताम् ॥८६॥ दानेन वधनिर्णेकः सर्पादीनामशक्नुवन् ॥ एकैकशश्चरेत्कृच्छ्रं द्विजः पापापनुत्तये ॥८७॥अस्थिमतां तु सत्त्वानां सहस्रस्य प्रमापणे॥पूर्णे चान स्यनस्थ्नां तु शूद्रहत्याव्रतं चरेत्॥८८॥किञ्चिदेव तु विप्राय दद्यादस्थिमतां वधे ॥ अनस्थ्नां चैव सत्त्वानां प्राणायामो विशोधनम् ॥८९॥फलदानां तु वृक्षाणां च्छेदने जप्यमृक्शतम् ॥ गुल्मवल्लीलतानां च पुष्पितानां च वीरुधाम् ॥९०॥ अन्नाद्यजातसत्त्वानां रसजानां च सर्वशः॥फलपुष्पोद्भवानां च घृतप्राशो विशोधनम्॥९१॥ कृष्टजानामोषधानां जातानाञ्च स्वयं वने ॥ वृथालम्भेनुगच्छेद्गां दिनमेकं पयोव्रतम् ॥९२॥ एतैर्व्रतैरपोह्यं स्यादेनो हिंसासमुद्भवम्॥ ज्ञानाज्ञानकृतं कृत्स्नं शृणुतान्नाद्यभक्षणे ॥९३॥अज्ञानाद्वारुणीं पीत्वा संस्कारेणैव शुद्ध्यति॥मतिपूर्वमनिर्देश्यं प्राणान्तिकमिति स्थितिः ॥९४॥अपः सुराभाजनस्था मद्यभाण्डस्थितास्तथा ॥ पञ्चरात्रं वसेत्पीत्वा शङ्खपुष्पीशृतं पयः ॥९५ ॥ स्पृष्ट्वा दत्त्वा च मदिरां विधिवत्प्रतिगृह्य च ॥ शूद्रोच्छिष्टाश्च पीत्वापः कुशवारिपिबेत्त्र्यहम्॥९६॥ब्राह्मणस्तु सुरापस्य गन्धमाघ्राय सोमपः ॥प्राणानप्सु त्रिराचम्य घृतं प्राश्य विशुद्ध्यति ॥९७॥ अज्ञानात्प्राश्य विण्मूत्रं सुरासंस्पृष्टमेव च ॥ पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः॥९८॥वसनं मेखला दण्डं भैक्ष्यचर्या व्रतानि च ॥ निवर्तन्ते द्विजातीनां पुनःसंस्कारकर्मणि ॥९९॥ अभोज्यानान्तु भुक्त्वान्नं स्त्रीशूद्रोच्छिष्टमेव च ॥ जग्ध्वा मांसमभोज्यं च सप्तरात्रं पयः पिबेत् ॥ १०० ॥ शुक्तानि च कषायाँश्च पीत्वामेध्यानपि द्विजः ॥ तावद्भवत्यप्रयतो यावत्तन्न व्रजत्यधः ॥ १०१ ॥ विड्वराह

खरोष्ट्राणां गोमायोः कपिकाकयोः ॥ प्राश्य मूत्रपुरीषाणि द्विजश्चान्द्रायणं चरेत् ॥ १०२ ॥ शुष्काणि भुक्त्वा मांसानि भौमानि कवकानि वा ॥ अज्ञातं चैव सूपस्थं चैतदेव व्रतं चरेत् ॥ १०३ ॥ क्रव्यादसूकराणां च कुक्कुटानां च भक्षणे ॥ नरकाकखराणाञ्च तप्तकृच्छ्रं विशोधनम् ॥ ॥ १०४ ॥ मासिकान्नञ्च योऽश्नीयादवृत्त्या कर्षितो द्विजः ॥ स त्रीण्यहान्युपवसेदेकाहं चोदके वसेत् ॥ १०५ ॥ व्रतचारी तु योऽश्नीयान्मधुमांसे कथञ्चन ॥ स कृत्वा प्राकृतं कृच्छ्रं व्रतशेषं समापयेत् ॥ १०६ ॥ बिडालकाकाखूच्छिष्टं जग्ध्वा श्वनकुलस्य च॥केशकीटावपन्नञ्च पिबेद्ब्राह्मसुवर्चलम् ॥ १०७ ॥ अभोज्यमन्नं नात्तव्यं चात्मनः शुद्धिमिच्छता॥ अज्ञानभुक्तं तूत्तार्यं शोध्यं वाप्याशु शोधनैः ॥ १०८ ॥ एषोऽनाद्यादनस्योक्तो व्रतानां विविधो विधिः ॥ स्तेयदोषापहर्तॄणां व्रतानां श्रूयतां विधिः ॥ १०९ ॥ धान्यान्नधनचौर्याणि कृत्वा कामाद्द्विजोत्तमः ॥ स्वजातीयगृहादेव कृच्छ्राब्देन विशुद्ध्यति ॥ ११० ॥ मनुष्याणान्तु हरणे स्त्रीणां क्षेत्रगृहस्य च ॥ कूपवापीजलानाञ्च शुद्धिश्चान्द्रायणं स्मृतम् ॥ १११ ॥ द्रव्याणामल्पसाराणां स्तेयं कृत्वान्यवेश्मतः ॥ चरेत्सान्तपनं कृच्छ्रन्तन्निर्यात्यात्मशुद्धये ॥ ११२ ॥ भक्ष्यभोज्यापहरणे यानशय्यासनस्य च ॥ पुष्पमूलफलानाञ्च पञ्चगव्यं विशोधनम् ॥ ११३ ॥ तृणकाष्ठद्रुमाणाञ्च शुष्कान्नस्य गुडस्य च ॥ चैलचर्मामिषाणाञ्च त्रिरात्रं स्यादभोजनम् ॥ ११४ ॥ मणिमुक्ताप्रवालानां ताम्रस्य रजतस्य च ॥ अयःकांस्योपलानाञ्च द्वादशाहं कणान्नतः ॥ ११५ ॥ कार्पासकीटजीर्णानां द्विशफैकशफस्य च ॥ पक्षिगन्धौषधीनाञ्च रज्ज्वाश्चैव त्र्यहं पयः ॥ ११६ ॥ एभिर्व्रतैरपोह्येत पापं स्तेयकृतं द्विजः ॥ अगम्यगमनीयन्तु व्रतैरेभिरपानुदेत् ॥ ११७ ॥ गुरुतल्पव्रतं कुर्याद्रेतः सिक्त्वा स्वयोनिषु ॥ सख्युः पुत्रस्य च स्त्रीषु कुमारीष्वन्त्यजासु च॥ ११८॥ पैतृष्वस्रेयीं भगिनीं स्वस्रीयां मातुरेव च॥मातुश्च भ्रातुरात्तस्य गत्वा चान्द्रायणं चरेत् ॥११९॥एताः स्त्रियस्तु भार्यार्थे नोपयच्छेत्तु बुद्धिमान्॥ज्ञातित्वेनानुपेयास्ताः पतन्ति ह्युपयन्नधः ॥१२०॥ अमानुषीषु पुरुष उदक्यायामयोनिषु ॥रेतः सिक्त्वा जले चैव कृच्छ्रं सान्तपनं चरेत् ॥ १२१ ॥ मैथुनं तु समासेव्य पुंसि योषिति वा द्विजः ॥ गोयानेप्सु दिवा चैव सवासा स्नानमाचरेत् ॥ १२२ ॥ चाण्डालान्त्यस्त्रियं गत्वा भुक्त्वा च प्रतिगृह्य च ॥ पतत्यज्ञानतो विप्रो ज्ञानात्साम्यन्तु गच्छति ॥ १२३ ॥ विप्रदुष्टां स्त्रियं भर्ता निरुन्ध्यादेकवेश्मनि ॥ यत्पुंसः परदारेषु तच्चैनां चारयेद्व्रतम्॥१२४॥सा चेत्पुनः प्रदुष्येत सदृशेनोपयन्त्रिता॥ कृच्छ्रं चान्द्रायणं चैव तदस्याः पावनं स्मृतम् ॥१२५॥ यत्करोत्येकरात्रेण वृषलीसेवनं द्विजः ॥ तद्भैक्ष्यभुग्जपन्नित्यं त्रिभिर्वर्षैर्व्यपोहति ॥१२६॥ एषा पापकृतामुक्ता चतुर्णामपि निष्कृतिः ॥ पतितैः

संप्रयुक्तानां चेमाः शृणुत निष्कृतीः ॥ १२७ ॥ संवत्सरेण पतति पतितेन सहाचरन् ॥ याजनाध्यापनाद्यौनान्न तु यानासनाशनात् ॥ १२८ ॥
यो येन पतितेनैवं संसर्गं याति मानवः ॥ स तस्यैव व्रतं कुर्यात्तत्संसर्गस्य शुद्धये ॥ १२९॥ पतितस्योदकं कार्यं सपिण्डैर्बान्धवैर्बहिः ॥ निन्दिते
ऽहनि सायाह्ने ज्ञात्यृत्विग्गुरुसन्निधौ ॥ १३० ॥ दासीघटमपां पूर्णं पर्यस्येत्प्रेतवत्सदा ॥ अहोरात्रमुपासीरन्नशौचं बान्धवैः सह ॥ १३१ ॥
निवर्तयेरंस्तस्माच्तु सम्भाषणसहाशने ॥ दायादस्य प्रदानञ्च यात्रामेव च लौकिके ॥१३२॥ ज्येष्ठता च निवर्त्तेत ज्येष्ठं वापि च यद्वसु ॥ ज्येष्ठांशं
प्राप्नुयाच्चास्य यवीयान्गुणतोऽधिकः ॥ १३३॥ प्रायश्चित्ते तु चरिते पूर्णकुम्भमपां नवम् ॥ तेनैव सार्धं प्राश्येयुः स्नात्वा पुण्यजलाशये ॥१३४ ॥
स त्वप्सु तं घटं प्रास्य प्रविश्य भवनं स्वकम् ॥ सर्वाणि ज्ञातिकार्याणि यथापूर्वं समाचरेत् ॥ १३५ ॥ एतमेव विधिं कुर्याद्योषित्सु पतिता
स्वपि ॥ वस्त्रान्नपानं देयं तु वसेयुश्च गृहान्तिके ॥ १३६ ॥ एनस्विभिरनिर्णिक्तैर्नार्थं कश्चित्समाचरेत् ॥ कृतनिर्णेजनाश्चैनान्न जुगुप्सेत कर्हि
चित् ॥१३७॥ बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः ॥ शरणागतहन्तॄंश्च स्त्रीहन्तॄंश्च न संवसेत्॥१३८॥येषां द्विजानां सावित्री नानूच्येत यथा
विधि ॥ ताँश्चारयित्वा त्रीन्कृच्छ्रान्यथाविध्युपनाययेत् ॥ १३९ ॥प्रायश्चित्तं चिकीर्षन्ति विकर्मस्थास्तु ये द्विजाः ॥ ब्रह्मणा च परित्यक्ता
स्तेषामप्येतदादिशेत् ॥ १४० ॥ यद्गर्हितेनार्जयन्ति कर्मणा ब्राह्मणा धनम् ॥ तस्योत्सर्गेण शुद्ध्यन्ति जप्येन तपसैव च ॥ १४१ ॥ जपित्वा
त्रीणि सावित्र्याः सहस्राणि समाहितः ॥ मासं गोष्ठे पयः पीत्वा मुच्यतेऽसत्प्रतिग्रहात् ॥ १४२ ॥ उपवासकृशन्तं तु गोव्रजात्पुनरागतम् ॥
प्रणतं परिपृच्छेयुः साम्यं सौम्येच्छसीति किम् ॥ १४३ ॥ सत्यमुक्त्वा तु विप्रेभ्यो विकिरेद्यवसङ्गवाम् ॥गोभिः प्रवर्तिते तीर्थे कुर्युस्तेऽस्य परि
ग्रहम् ॥ १४४ ॥ व्रात्यानां याजनं कृत्वा परेषामन्त्यकर्म च ॥ अभिचारमहीनं च त्रिभिः कृच्छ्रैर्विशुद्ध्यति ॥ १४५ ॥ शरणागतं परित्यज्य
वेदं विप्लाव्य च द्विजः ॥ संवत्सरं यवाहारस्तत्पापमपसेधति ॥ १४६ ॥ श्वसृगालखरैर्दष्टो ग्राम्यैः क्रव्याद्भिरेव च ॥ खराश्वोष्ट्रवराहैश्च प्राणा
यामेन शुद्ध्यति ॥ १४७॥ षष्ठान्नकालता मासं संहिताजप एव वा ॥ होमाश्च सकला नित्यमपाङ्क्त्यानां विशोधनम् ॥ १४८ ॥ उष्ट्रयानं
समारुह्य खरयानञ्च कामतः ॥ स्नात्वा च विप्रो दिग्वासाः प्राणायामेन शुद्ध्यति ॥ १४९ ॥ विनाद्भिरप्सु वाप्यन्तः शरीरे संनिवेश्य तु ॥
सचैलो बहिराप्लुत्य गामालभ्य विशुद्ध्यति ॥ १५० ॥ वेदोदितानां नित्यानां कर्मणां समतिक्रमे ॥ स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम् ॥
॥ १५१ ॥ हुङ्कारं ब्राह्मणस्योक्त्वा त्वङ्कारं तु गरीयसः ॥ स्नात्वानश्नन्नहःशेषं चाभिवाद्य प्रसादयेत् ॥ १५२ ॥ ताडयित्वा तृणेनापि कण्ठे

बद्ध्वा च वाससा ॥ विवादे वापि निर्जित्य प्रणिपत्य प्रसादयेत् ॥ १६३ ॥ अवगूर्य त्वब्दशतं सहस्रमभिहन्य तु ॥ जिघांसया ब्राह्मणस्य नरकं प्रतिपद्यते ॥ १६४ ॥ शोणितं यावतः पांसून्संगृह्णाति द्विजन्मनः ॥ तावन्त्यब्दसहस्राणि तत्कर्त्ता नरकं वसेत् ॥ १६५ ॥ अवगूर्य्या चरेत्कृच्छ्रमतिकृच्छ्रं निपातने ॥ कृच्छ्रातिकृच्छ्रं कुर्वीत विप्रस्योत्पाद्य शोणितम् ॥ १६६ ॥ वेदाभ्यासोन्वहं शक्त्या महायज्ञक्रिया क्षमा ॥ नाशयन्त्याशु पापानि महापातकजान्यपि ॥ १६७ ॥ यथैव तेजसा वह्निः प्राप्तान्निर्दहति क्षणात् ॥ तथा ज्ञानाग्निना पापं कृत्स्नं दहति वेद वित् ॥ १६८ ॥ पापानुबन्धं पुरुषस्य शक्तिं देशं च कालं च तथा विदित्वा ॥ अनुक्तशुद्धिः प्रविचार्य देया उक्ते तथैतच्च निरूपणीयम् ॥ १६९ ॥ इति श्रीविष्णुधर्मोत्तरे तृ॰ ख॰ मार्कण्डेयवज्रसंवादे हंसगीतासु प्रायश्चित्तवर्णनो नाम चतुस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३४ ॥ हंस उवाच ॥ इत्येतदेनसामुक्तं प्रायश्चित्तं यथाविधि ॥ अत ऊर्ध्वं रहस्यानां प्रायश्चित्तं निबोधत ॥ १ ॥ सव्याहृतीकाप्रणवाः प्राणाया मास्तु षोडश ॥ अपि भ्रूणहनं मासात्पुनन्त्यहरहः कृताः ॥ २ ॥ कौत्सं जप्त्वाज इत्येतद्वासिष्ठं च त्र्यृचं प्रति ॥ माहित्रं शुद्धवत्यश्च सुरा पोऽपि विशुध्यति ॥ ३ ॥ सकृज्जप्त्वास्य वामीयं शिवसंकल्पमेव च ॥ अपहृत्य सुवर्णं तु क्षणाद्भवति निर्मलः ॥ ४ ॥ हविष्मन्तीयमभ्यस्य नतमंह इतीति च ॥ जप्त्वा तु पौरुषं सूक्तं मुच्यते गुरुतल्पगः ॥ ५ ॥ एनसां स्थूलसूक्ष्माणां चिकीर्षन्नपनोदनम् ॥ अपे त्यृचं जपेदब्दं यत्किञ्चेदमितीति च ॥ ६ ॥ प्रतिगृह्याप्रतिग्राह्यं भुक्त्वा चान्नं विगर्हितम् ॥ जपंस्तरत्समन्दीयं पूयते मानवस्त्र्यहात् ॥ ७ ॥ सोमारौद्रं तु बह्वेना मासमभ्यस्य शुध्यति ॥ स्रवन्त्यामाचरन्स्नानमर्यम्णमिति च त्र्यृचम् ॥ ८ ॥ अब्दार्धमिन्द्रमित्येतदेनस्वी सप्तकं जपेत् ॥ अप्रशस्तन्तु कृत्वाप्सु मासमासीत भैक्ष्यभुक् ॥ ९ ॥ मन्त्रैः शाकलहोमीयैरब्दं हुत्वा घृतं द्विजः ॥ सुगुर्वप्यपहन्त्येनो जप्त्वा वा नम इत्यृचम् ॥ १० ॥ उपपातकसंयुक्तोनुगच्छेद्गाः समाहितः ॥ अभ्यस्याब्दं पावमानीर्भैक्ष्याहारो विशुध्यति ॥ ११ ॥ अरण्ये वा त्रिरभ्यस्य प्रयतो वेदसंहिताम् ॥ मुच्यते पातकैः सर्वैः पराकैः शोधितस्त्रिभिः ॥ १२ ॥ त्र्यहं तूपवसेद्यस्तु त्रिरह्नोभ्युपयन्नपः ॥ मुच्यते पातकैः सर्वैस्त्रिजपित्वाघमर्षणम् ॥ १३ ॥ ऋक्संहितां त्रिरभ्यस्य यजुषां वा समाहितः ॥ साम्नां वा सरहस्यानां सर्वपापैः प्रमुच्यते ॥ १४ ॥ यद्वाचिकं तस्य परस्य पुंसो यस्मिन्नि बद्धं भुवनं समग्रम् ॥ जपन्तमोङ्कारमतन्द्रितात्मा पापानि शीघ्रं प्रजहाति मर्त्यः ॥ १५ ॥ इति श्रीविष्णुधर्मोत्तरे तृ॰ ख॰ मार्कण्डेय वज्रसंवादे हंसगीतासु रहस्यप्रायश्चित्तवर्णनो नाम पञ्चत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३५ ॥ ऋषय ऊचुः ॥ कर्माणि श्रोतुमिच्छा

मो यैः पापं विप्रणश्यति ॥ प्राप्नोत्यभ्युदयं चैव पुरुषः पक्षिसत्तम ॥ १ ॥ हंस उवाच ॥ त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम् ॥ त्र्यहं परञ्च नाश्नीयात्प्राजापत्यं चरन्द्विजः ॥ २ ॥ गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ॥ एकरात्रोपवासश्च कृच्छ्रं सान्तपनं स्मृतम् ॥ ३ ॥ एकैकं ग्रासमश्नीयात्त्र्यहाणि त्रीणि पूर्ववत् ॥ त्र्यहं चोपवसेदन्यदतिकृच्छ्रं चरन्द्विजः ॥ ४ ॥ तप्तकृच्छ्रं चरन्विप्रो दधिक्षीरघृतानिलान् ॥ प्रतित्र्यहं पिबेदुष्णं सकृत्स्नायी समाहितः ॥ ५ ॥ यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम् ॥ पराको नाम कृच्छ्रोऽयं सर्वपापापनोदनः ॥ ६ ॥ यथाकथञ्चित्पिण्डानां तिस्रोऽशीतिः समाहितः ॥ मासेनाश्नन्हविष्यस्य चन्द्रस्यैति सलोकताम् ॥ ७ ॥ महाव्याहृतिभिर्होमः कर्तव्यः स्वयमन्वहम् ॥ अहिंसासत्यमक्रोधमार्जवं च समाचरेत् ॥ ८ ॥ त्रिरह्नि त्रिर्निशायाञ्च सवासा जलमाविशेत् ॥ स्त्रीशूद्रपतितांश्चैव नाभिभाषेत कर्हिचित् ॥ ९ ॥ स्थानासनाभ्यां विहरेदशक्तोऽधःशयीतवा ॥ ब्रह्मचारी व्रती च स्याद्गुरुदेवद्विजार्चकः ॥ ॥ १० ॥ सावित्रीं च जपेन्नित्यं पवित्राणि च शक्तितः ॥ सर्वेष्वेव व्रतेष्वेवं प्रायश्चित्तार्थमादितः ॥ ११ ॥ कृत्वा पापं हि संतप्य तस्मात्पापात्प्रमुच्यते ॥ नैनं कुर्यात्पुनरिति निवृत्त्या पूयते तु सः ॥ १२ ॥ ख्यापनेनानुतापेन तपसाध्ययनेन च ॥ पापकृन्मुच्यते पापात्तथा दानेन चापरः॥१३॥यस्मिन्कर्मण्यपि कृते मनसः स्यादलाघवम् ॥ तस्मिँस्तावत्तपः कुर्याद्यावत्तुष्टिकरं भवेत्॥१४॥ पापस्य नाशस्तपसा विधेयो धर्मस्य वृद्धिस्तपसा विधेया ॥ पापप्रणाशे त्वथ धर्मवृद्धौ कामाः समृध्यन्ति नरस्य विप्राः ॥ १५ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु कृच्छ्रसान्तपनादिप्रायश्चित्तवर्णनो नाम षट्त्रिंशदधिकद्विशततमोऽध्यायः ॥२३६॥

॥ ऋषय ऊचुः ॥ ॥ कर्मणा केन पुरुषः किमाप्नोति महामते ॥ एतन्नः संशयं छिन्धि द्विजानां द्विजसत्तम ॥ १ ॥ ॥ हंस उवाच ॥ दानेन भोगी भवति तपसा विन्दते महः ॥ वृद्धोपसेवया विप्राः प्राज्ञो भवति मानवः ॥ २ ॥ यज्ञेन लोकानाप्नोति पापनाशं हुतेन च ॥ जप्येन कामानाप्नोति सत्येन च परां गतिम् ॥३ ॥ स्नानेन शुद्धिमाप्नोति प्राणायामाद्विशेषतः ॥ ध्यानेन धारणाभिश्च पदमाप्नोत्यनुत्तमम् ॥ ४ ॥ दमेन सर्वमाप्नोति यत्किञ्चिन्मनसेच्छति ॥ शौचेन देवाः प्रीयन्ते प्रीयन्ते चोपवासतः ॥ ५॥ उपवासप्रतप्तानां कामावाप्तिर्ध्रुवं भवेत् ॥ ददाति विपुलान्भोगान्संग्रामेष्वपलायिनाम् ॥ ६ ॥ मधुमांसनिवृत्तोऽपि परं सौख्यमुपाश्नुते ॥ अहिंसया त्वरोगी स्याद्दीर्घायुश्चाप्यहिंसया॥७॥ रूपलावण्यसौभाग्यधनधान्ययुतः सदा ॥ तीर्थानुसरणाद्विप्राः पापनाशमवाप्नुयात्॥८॥ सर्वकल्मषहीनश्च याँल्लोकान्मनसेच्छति ॥ प्रतिश्रयप्रदा

नेन स्थानमाप्नोत्युत्तमम् ॥९॥ पूज्यपूजयिता विप्रा यशसा युज्यते नरः ॥ अभिवादनशीलस्य नित्यं वृद्धोपसेविनः॥१०॥समं कृत्वा विवर्धन्ते
कीर्तिरायुर्यशो बलम् ॥ ११ ॥ ऋतुकालादृते भार्यां तथैव परिवर्जयेत् ॥ सर्वकामानवाप्नोति ब्रह्मलोकं च गच्छति ॥ १२ ॥ उभौ कालौ तु
भुञ्जानस्त्वन्तरा परिवर्जयेत् ॥ पानीयमपि विप्रेन्द्रा ब्राह्मं लोकं प्रपद्यते ॥ १३ ॥ अनेनैव विधानेन देशकालाशनो नरः ॥ सर्वान्कामानवा
प्नोति गतिमाप्नोत्यभीप्सिताम् ॥ १४ ॥ तथा भोजनकाले तु मौनं यस्तु समाचरेत् ॥ उपवासफलन्तस्य प्रत्यहं भोजने स्मृतम् ॥ १५ ॥
सर्वान्कामानवाप्नोति मौनी नक्ताशनस्सकृत् ॥ नाप्नोति नारकं दुःखं नित्यस्नायी नरो बहिः ॥१६॥ यो दद्यादपरिक्लिष्टमन्नमध्वनि वर्तते ॥
श्रान्तायादृष्टपूर्वाय तस्य पुण्यफलं महत् ॥ १७ ॥ पाद्यमासनमेवाथ दीपमन्नं प्रतिश्रयम् ॥ दद्यादतिथिपूजार्थं यज्ञाः पञ्च सुदक्षिणाः॥ १८ ॥
चक्षुर्दद्यान्मनो दद्याद्वाचं दद्याच्च सूनृताम् ॥ अनुव्रजेदुपासीत यज्ञाः पञ्च सुदक्षिणाः ॥१९॥ स्थण्डिलेषु शयानानां गृहाणि शयनानि च ॥ चीर
वल्कलसंवीतवासांस्याभरणानि च ॥२०॥ वाहनासनयानानि योगात्मनि तपोधने ॥ अग्नीनुपशयानस्य राजपौरुषमुच्यते ॥ २१॥ रसानां प्रति
संहारे सौभाग्यमधिगच्छति ॥ आमिषप्रतिसंहारे सर्वान्कामानवाप्नुयात् ॥२२॥ अर्वाक्शिरास्तु यो लम्बेत्तोयवासं च यो वसेत् ॥ सततं चैक
शायी च लभते चेप्सितां गतिम् ॥२३॥ वीरासनं वीरशय्यां वीरस्थानमुपासतः ॥ अक्षयास्तस्य वै लोकाः सर्वकामप्रदाः स्मृताः ॥ २४ ॥ धनं
भवति दानेन मौनेनाज्ञां प्रयच्छति ॥ उपभोगाँश्च तपसा ब्रह्मचर्येण जीवितम् ॥ २५ ॥ रूपमैश्वर्यमारोग्यमहिंसाफलमश्नुते ॥ फलं फलाशिनां
राज्यं स्वर्गः पर्णाशिनां फलम् ॥२६॥ पुष्पाशिनां तथैश्वर्यं धनं शाकाशिनां महत् ॥पयोभक्ष्या दिवं यांति अब्भक्ष्याश्चामितां गतिम् ॥२७॥
दंतोलूखलिको विप्रो यश्चाप्युञ्छेन जीवति ॥ कापोतीश्चाश्रितो वृत्तिं यथेष्टाङ्गतिमाप्नुयात् ॥ २८ ॥ प्रायोपवेशनाद्राज्यं सर्वत्र फलमश्नुते॥ स्वर्गं
सत्येन लभते दीक्षया कुलमुत्तमम् ॥ २९ ॥ गवोढाः शाकदीक्षायाः स्वर्गकामी तृणाशनः ॥३०॥त्र्यहस्त्रिषवणं स्नात्वा वायुं पीत्वा क्रतुं लभेत् ॥
यज्ञयाजी तथाप्नोति याँल्लोकान्मनसेच्छति ॥ ३१ ॥ उपवासं च दीक्षां चाप्यभिषेकं च वै द्विजाः ॥ कृत्वा द्वादशवर्षाणि वीरस्थानाद्विशिष्यते
॥३२॥ अधीत्य सर्वान्वेदान्वै सर्वदुःखैर्विमुच्यते ॥ मानसं हि धनं धर्मः स्वर्गलोकमवाप्नुयात् ॥३३॥येन प्रीणाति पितरं तेन प्रीतः प्रजापतिः॥
प्रीणाति मातरं येन पृथिवी तेन पूजिता ॥ ३४॥ येन प्रीणात्युपाध्यायन्तेन स्याद्ब्रह्म पूजितम्॥ सर्वे तस्यादृता धर्मा यस्यैते त्रय आदृताः॥३५॥
अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः ॥ गुरुशुश्रूषया विद्या नित्यं श्राद्धेषु सन्ततिः॥३६॥ नित्यस्नायी भवेद्दक्षः संध्ये तु द्वे जपन्सदा॥

द्विजशुश्रूषया राज्यं द्विजत्वं वापि पुष्कलम् ॥३७॥ देवशुश्रूषया कामान्यथेष्टान्प्राप्नुयान्नरः ॥ सान्त्वदः सर्वभूतानां सर्वशोकैः प्रमुच्यते ॥ ३८ ॥ केशश्मश्रून्वारयतः त्वग्र्या भवति सन्ततिः ॥ गन्धमाल्यान्निवृत्त्या तु कीर्तिर्भवति पुष्कला ॥ ३९ ॥ परिचर्यारतः सम्यङ् न रोगै स्त्वभिभूयते ॥ गोलोकमाप्नोति तथा गवाञ्च परिचर्यया ॥ ४० ॥ देवमाल्यापनयनात्पादशौचाद्द्विजस्य तु ॥ श्रान्तसंवाहनाद्विप्राः सुखम त्यन्तमश्नुते ॥ ४१ ॥ जले सप्तसहस्राणि एकादश हुताशने ॥ भृगुप्रपाते च दश संग्रामे विंशतिस्तथा ॥ ४२ ॥ नरो वर्षस हस्राणि तनुं त्यक्त्वा तु मोदते ॥ अनाशके तु धर्मज्ञाः परिसंख्या न विद्यते ॥ ४३ ॥ मेरौ साधयते राज्यं यथेष्टं भुवि जायते ॥ महाप्रस्थानमाविश्य यथेष्टां गतिमाप्नुयात् ॥ ४४ ॥ वह्निप्रवेशनियतंमभीष्टं लोकमश्नुते ॥ वारुणं लोकमा प्नोति त्यक्त्वाम्भसि ततुं नरः॥४५॥अनार्तो व्याधिरहितो न त्यजेदात्मनस्तनुम् ॥ असूर्या नाम ते लोका अन्धेन तमसा वृताः ॥ ताँस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥४६॥अनिष्टैरात्मनो ज्ञात्वा मृत्युकालमुपस्थितम् ॥ व्याधितो भिषजा त्यक्तः पूर्णे चायुषि वासके ॥ ॥४७॥यथागमानुसारेण संत्यजेदात्मनस्तनुम् ॥ तस्मिन्काले तनुत्यागाद्यथोक्तं फलमाप्नुयात् ॥४८॥ आयुषस्तु परं दृष्टं मरणं ब्राह्मण द्वयोः ॥ क्षत्रियस्य तु सङ्ग्रामे मृते भर्तरि योषितः ॥४९॥ ब्राह्मणार्थे गवार्थे वा यस्त्यजेदात्मनस्तनुम् ॥ आत्मानं यूपमुत्सृज्य स यज्ञोऽनन्तदक्षिणः ॥ ॥ ५० ॥ शष्पं मृगखरोत्सृष्टं यो मृगैः सह सेवते ॥ दीक्षितो वै मुदा युक्तः स गच्छत्यमरावतीम् ॥ ५१ ॥ शेवलं शीर्णपर्णं वा तद्व्रतं यो निषे वते ॥ शान्तो यो मनसा नित्यं स गच्छेत्परमाङ्गतिम् ॥ ५२ ॥ वायुभक्ष्योम्बुभक्ष्यो वा फलमूलाशनोपि वा ॥ यक्षेश्वैर्यमादाय मोदतेऽप्स रसाङ्गणैः ॥ ५३ ॥ अग्नियोगवहो ग्रीष्मे विधिदृष्टेन कर्मणा ॥ तीर्त्वा द्वादशवर्षाणि राजा भवति पार्थिवः ॥ ५४ ॥ आहारनियमं कृत्वा मुनि र्द्वादशवार्षिकम् ॥ व्रतं संसाध्य काले तु राजा भवति पार्थिवः ॥ ५५ ॥ स्थण्डिले शुद्धमाकाशं परिगृह्य समन्ततः ॥ प्रविश्य च मुदा युक्तो दीक्षां द्वादशवार्षिकीम् ॥ ५६ ॥ स्थण्डिलस्य फलान्याहुर्यानानि शयनानि च ॥ गृहाणि शयनार्हाणि चन्द्रशुभ्राणि ब्राह्मणः ॥ ५७ ॥ आत्मानमुपजीवन्यो नियतो नियताशनः ॥ देहं चानशने त्यक्त्वा स स्वर्गं समुपाश्नुते ॥ ५८ ॥ आत्मानमुपजीवन्यो दीक्षां द्वादशवा र्षिकीम् ॥ अश्मना चरणौ हत्वा गुह्यकेषु च मोदते ॥ ५९ ॥ साधयित्वात्मनात्मानं निर्द्वन्द्वो निष्परिग्रहः ॥ तीर्त्वा द्वादशवर्षाणि दीक्षामेकां

१ 'निर्घातम्' इति ख० पा० ।

मनोगताम् ॥ स्वर्गलोकमवाप्नोति देवैश्च सह मोदते ॥ ६० ॥ आत्मानमुपजीवन्यो दीक्षां द्वादशवार्षिकीम् ॥ हुत्वाग्नौ देहमुत्सृज्य वह्निलोके महीयते ॥ ६१ ॥ यस्तु विप्रो यथान्यायं दीक्षितो नियतेन्द्रियः ॥ आत्मन्यात्मानमादाय निर्द्वन्द्वो धर्मलालसः ॥ ६२ ॥ चीर्त्वा द्वादश वर्षाणि दीक्षामेतां मनोगताम् ॥ अरणीसहितः स्कन्धे बद्धा गच्छत्यनावृतम् ॥ ६३ ॥ वीराध्वानमनानीत्य वीरासनरतस्सदा ॥ वीरस्थायी च सततं स वीरगतिमाप्नुयात् ॥ ६४ ॥ धीरलोकगतो वीरो वीरयोगवहः सदा ॥ सत्वस्थः सर्वमुत्सृज्य दीक्षितो नियतः शुचिः ॥ शक्रलोकगतः श्रीमान्मोदते दिवि देववत् ॥ ६५ ॥ उपवासव्रतैर्दान्ता अहिंसासत्यवादिनः ॥ संसिद्धाः प्रेत्य गन्धर्वैः सह मोदन्त्यनामयाः ॥ ६६ ॥ मण्डूकयोगशयना यथास्थानं यथाविधि ॥ दीक्षां चरति धर्मात्मा स नागैः सह मोदते ॥ ६७ ॥ आर्द्रवासास्तु शिशिरे व्रतं वहति यो नरः ॥ द्वादशाब्दानि नियतं राजा भवति पार्थिवः ॥६८॥ वर्षरात्रे तथा यश्च भवत्याकाशसाधकः ॥ अनपस्तीर्थशायी च राजा भवति पार्थिवः॥६९ ॥ त्यक्त्वा वनगताः प्राणान्सप्तपूर्वांस्तथा परान् ॥ नरांस्तारयिता दुःखादात्मानं च विशेषतः ॥ ७० ॥ येनयेन शरीरेण यद्यत्कर्म करोति यः ॥ तेनतेन शरीरेण तत्तत्फलमुपाश्नुते ॥ ७१ ॥ यस्यांयस्यामवस्थायां यत्करोति शुभाशुभम् ॥ तस्यांतस्यामवस्थायां तत्फलमुपाश्नुते ॥ ७२ ॥ नरेण हि कृतं कर्म सदा पञ्चेन्द्रियैरिह ॥ ते ह्यस्य साक्षिणो नित्यं षष्ठ आत्मा तथैव च ॥ ७३ ॥ यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ॥ एवमेतत्कृतं कर्म कर्त्तारमनुविन्दति॥७४॥ अवश्यं हि कृतं कर्म भोक्तव्यं द्विजपुङ्गवाः ॥ सुकृतं दुष्कृतं वापि तस्मात्सुकृतमाचरेत् ॥ ७५॥ अचोद्यमानानि यथा पुष्पाणि च फलानि च ॥ स्वकालं नातिवर्तन्ते तथा कर्म पुरा कृतम् ॥ ७६ ॥ यन्मन्त्रे भवति वृथाभियुज्यमाने यत्सत्ये भवति वृथाभिपूयमाने ॥ यच्चाग्नौ भवति वृथाभिहूयमाने तत्सर्वं भवति वृथाभिधीयमाने ॥ ७७॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु कर्मफलविवेको नाम सप्तात्रिंशदुत्तरद्विशततमोऽध्यायः ॥२३७॥ ऋषय ऊचुः ॥ दृष्टारिष्टस्य भवता देहत्यागः प्रकीर्त्तितः ॥ तस्मादस्माकमाचक्ष्व त्वरिष्टानि महामते ॥ १ ॥ हंस उवाच ॥ प्रवृत्तेर्विकृतिर्नॄणां बुद्धीन्द्रियशरीरजा ॥ अकस्माद्दृश्यते येषां तेषां मरणमादिशेत ॥ २॥ एतत्समासात्कथितं विस्तरोऽयमतः परम् ॥ सूक्ष्मारिष्टावबोधार्थं तथा स्पष्टार्थमेव च ॥३॥ न तु कर्मणि यो व्यभ्रे प्रभाकर्म निशाभृतः ॥ छायां चन्द्रार्कयोर्वापि तयोश्च गमनं तथा ॥ ४॥ देवमार्गे प्रभा वह्नेर्ध्रुवं तारामरुन्धतीम् ॥ पश्यत्यदृष्टामन्यैर्वा मृत्युः स्यात्तस्य वत्सरात् ॥५ ॥ सप्रभानामथान्येषां प्रभां यस्तु न पश्यति ॥ तस्यैकादशमे मासे मरणं परिकीर्तितम् ॥ ६ ॥ सुवर्णं रजतं मूत्रं पुरीषं वमते निशि ॥ स्वप्ने स



१ 'वसते' इति पाठान्तरम् ।

कालं न संशयः ॥६॥ नास्तिक्यमेकं पुरुषस्य लोके विनाशनं विप्रवराः प्रदिष्टम् ॥ तस्मात्प्रयत्नेन विवर्जनीयो नास्तिक्यभावः सुखमीप्समानैः॥७॥
इति श्रीविष्णुधर्मोत्तरे तृ० ख० मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु नास्तिक्यदोषवर्णनो नाम सप्तचत्वारिंशदुत्तरद्विशततमोऽध्यायः
॥ २४७ ॥ हंस उवाच ॥ अहङ्कारात्परं नास्ति लोके किञ्चिद्विनाशनम् ॥ अहङ्कारेण भूपालाः शतशो निधनङ्गताः ॥ १ ॥ अहंकृतास्तथा
नष्टा ब्राह्मणाश्च सहस्रशः ॥ मान्यामान्यन्न जानन्ति कार्याकार्यं त्वहंकृताः ॥ २ ॥ अहंकृतस्तथा लोके न विद्यामधिगच्छति ॥ विपन्नकार्यश्च
तथा न प्राज्ञान्परिपृच्छति ॥ ३ ॥ न शृणोति तथान्येषां दर्पपूर्णो विचक्षणः ॥ पातादन्यन्नभैषज्यं दर्पान्नास्त्येह कीर्तनम् ॥ ४ ॥
बलाधिकैस्तथा वीरैर्गुरुभिश्च तथैव च ॥ मरणे संनिकृष्टेपि मरणस्य विचक्षणः ॥ ५ ॥ हेतुभूतानि कर्माणि निन्दितानि निषेवते ॥ स्थिते
स्थितांस्तथा प्राज्ञान्भाषमाणान्विनिन्दति ॥ ६ ॥ अहंकृतानां नरके प्रदिष्टा गतिर्ध्रुवं लोकविनिन्दितानाम् ॥ प्राज्ञेन तस्मात्परिवर्जनीयो
दर्पो विनाशैककरः सदैव ॥७॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख० मार्कण्डेयवज्रसंवादे हंसगीतास्वहंकारदोषवर्णनो नामाष्टचत्वारिंशदुत्तरद्विशतत
मोऽध्यायः ॥ २४८ ॥ हंस उवाच ॥ दत्तं यच्छौचहीनेन न तद्गृह्णन्ति देवताः ॥ बुबुत्सवश्च धर्मज्ञाः शुचिकामाश्च देवताः ॥ १ ॥ यक्षैश्च
राक्षसैश्चैव पिशाचैश्च निशाचरैः ॥ डाकिनीभिश्च धर्मज्ञाः शौचहीनोऽभिभूयते ॥ २ ॥ शौचहीनमथाभ्येति स्वयं निन्दति कं द्विजाः ॥ व्याधि
हीनो ह्यशौचश्च सर्वैरेवाभिभूयते ॥ ३ ॥ वर्धते च तथानर्थाः समर्थाश्च व्रजन्ति च ॥ शौचहीनस्य रिपवो यान्ति वृद्धिं परां द्विजाः
॥ ४ ॥ स्त्रीशौचमर्थशौचं च वाक्छौचमपि च द्विजाः ॥ एतानि यस्य शौचानि स शुचिः परिकीर्तितः ॥ ५ ॥ योर्थे शुचिः स हि
शुचिर्न मृद्वारिशुचिः शुचिः ॥ ततश्चाप्यधिकं शौचमहिंसा परिकीर्तिता ॥ ६ ॥ शौचेन हीना नरकं व्रजन्ति शौचेन हीना विभजन्त्य
नर्थान् ॥ शौचेन हीनाश्च भवन्ति निन्द्यास्तस्मादशौचं परिवर्जनीयम् ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख० मार्कण्डेयवज्रसंवादे मुनीन्प्र
ति हंसगीतासु शौचवर्णनो नामैकोनपञ्चाशदुत्तरद्विशततमोऽध्यायः ॥ २४९ ॥ हंस उवाच ॥ आचारहीनाः पुरुषा भवन्त्यल्पायुषो द्विजाः ॥
आचारहीनश्च तथा राक्षसैरभिभूयते ॥ १ ॥ यक्षैः पिशाचैर्गन्धर्वैस्तथा चान्यैर्निशाचरैः ॥ डाकिनीभिः सुराणां च तथा पार्षगणाः पृथक् ॥२ ॥
दत्तमाचारहीनेन न प्रतीच्छन्ति देवताः ॥ पितरश्च महाभाग ऋषयश्च तपोधनाः ॥ ३ ॥ सर्वलक्षणयुक्तोऽपि नरस्त्वाचारवर्जितः ॥ न
प्राप्नोति तथा विद्यां न च किञ्चिदभीप्सितम् ॥ आचारहीनः पुरुषो नरकं प्रतिपद्यते ॥ ४ ॥ आचारहीनं न पुनन्ति वेदा यद्यप्यधीताः सह

षड्भिरङ्गैः ॥ आचारहीनेन तु धर्मकार्यं कृतं हि सर्वं भवतीह मिथ्या ॥ ५ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख० मा
र्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतास्वनाचारदोषवर्णनो नाम पञ्चाशदुत्तरद्विशततमोऽध्यायः ॥ २५० ॥ हंस उवाच ॥
अनृतं वर्जयेन्नित्यमनृतं पातकं परम् ॥ अनृताद्धि परं नास्ति द्वारं नाशनमात्मनः ॥ १ ॥ सर्वे निबद्धा वाच्यार्था
वाङ्मूला वाग्विनिस्सृताः॥ तस्मान्न स्तेनयेद्वाचं य इच्छेद्धितमात्मनः ॥ २ ॥ अनृतं न क्वचिद्वाच्यं तथा साक्ष्ये विशेषतः ॥ अनृतं हि
वदन्साक्ष्ये पितृभिः सह मज्जति ॥ ३ ॥ पञ्च पश्वनृते हन्ति दश हन्ति गवानृते ॥ शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥ ४ ॥ हन्ति
जातानजातांश्च हिरण्यार्थेऽनृतं वदन् ॥ सर्वं भूम्यनृतं हन्ति मास्म भूम्यनृतं वदेत् ॥ ५ ॥ अप्सु भूमिवदित्याहुः स्त्रीणां भोगे च मैथुने ॥
अब्जेषु चैव रत्नेषु सर्वेष्वश्ममयेषु च ॥ ६ ॥ एतान्दोषानवेक्ष्यैव सर्वाननृतभाषणे ॥ यथाश्रुतं यथादृष्टं सर्वमेवाञ्जसा वदेत् ॥ ७ ॥ नग्नो
मुण्डः कपाली च भिक्षार्थी क्षुत्पिपासितः ॥ अन्धः शत्रुगृहं गच्छेन्न साक्ष्यमनृतं वदेत् ॥ ८ ॥ साक्ष्येऽनृतं वदन्पाशैर्बध्यते वारुणैर्भृशम् ॥
निविशन्ते तमाजातीस्तस्मात्साक्ष्ये वदेदृतम् ॥ ९ ॥ यन्मया गदितं पापं द्विजेन कूटसाक्षिणः ॥ ततोऽधिकमवाप्नोति सद्यो मिथ्याऽभिशं
सने ॥ १० ॥ यथा क्रोधाद्भयाल्लोभादज्ञानाद्वा द्विजोत्तमाः ॥ योऽनृतं भाषते सभ्यः स याति नरकं ध्रुवम् ॥ ११ ॥ अवाक्छिरास्तमस्यन्धे
किल्बिषी नरके पतेत् ॥ यः प्रश्नं वितथं ब्रूयात्पृष्टः सद्धर्मनिश्चये ॥ १२ ॥ अन्धो मत्स्यानिवाश्नाति निरपेक्षं सकण्टकान् ॥ यो भाषतेऽर्थ
वैकल्यमप्रत्यक्षं सभाङ्गतः ॥१३॥ कूटकर्मतुलामाने रसानां भेदने तथा ॥ विश्वासन्यासहरणे रहस्यसमभेदने ॥ १४ ॥ भृतिं कल्पयते यश्च मधु
मांसेन पातकम् ॥ द्विजस्य सुरया वापि लोभेन च विशेषतः ॥ १५ ॥ गोब्राह्मणवधे वापि गुरुपितृवधे तथा ॥ वयस्यदारगमने गुरुदारप्रदर्शने
॥ १६ ॥ व्युत्पादने च शस्त्राणां शस्त्रोत्सादे तथैव च ॥ भर्तृपिण्डापहरणे संग्रामाच्च पलायने ॥१७॥ शरणागतसंत्यागे गच्छतश्च दिवा स्त्रियम् ॥
प्रेष्यां च गच्छतः पापं राजद्रोहे तथैव च ॥ १८ ॥ पङ्क्त्यां विषमदातुश्च श्राद्धं मित्रस्य यत्तथा ॥ शुल्केन ददतः कन्यां केशविक्रयिकस्य
च ॥ १९ ॥ विप्रस्य पातकं यच्च प्राणिनां विक्रये भवेत् ॥ आमश्राद्धभुजः पापमयाज्यस्य च याजने ॥ २० ॥ मिथ्या राज्यस्य करणे पर
द्रव्यापहारिणः ॥ सर्वाण्येतानि पापानि द्विजः सभ्यः समाप्नुयात् ॥ २१ ॥ यद्यन्यथा वदेत्तस्माद्धर्म्यं सभ्यः सदा वदेत् ॥ एतदेव तथा पापं
विज्ञेयं कूटसाक्षिणाम् ॥ २२ ॥ कूटकर्मा तु नरकं पितृभिः सह मज्जति ॥ दशवर्षसहस्राणि दशवर्षशतानि च ॥२३॥ ततो दशगुणं कालं सभ्यो

मिथ्याभिभाषिता ॥ रागद्वेषप्रवृत्तस्तु व्यवहारेऽपि पार्थिवः ॥ २४ ॥ ततो दशगुणं कालं नरके वसति ध्रुवम् ॥ उक्ते वचसि धर्म्ये तु सद्यः पापात्प्रमुच्यते ॥ २५ ॥ राजा नरकमाप्नोति सत्यवाक्यं विलंघयन् ॥ शूद्रविट्क्षत्रविप्राणां यत्रोक्ते प्राप्नुयाद्वधः ॥ २६ ॥ तत्र वक्तव्यमनृतं तद्धि सत्याद्विशिष्यते ॥ वाग्दैवतैश्च चरुभिर्यजनैश्च सरस्वतीम् ॥२७॥ कूष्माण्डैर्वापि जुहुयाद्घृतमग्नौ यथाविधि ॥ उदुत्यृचे वा वारुण्ये ऋचा वाग्दैवतेन वा ॥२८॥ अनृतस्य वशस्तस्य कुर्वाणो निष्कृतिं पराम्॥ बहवः सुखमेधन्ते यस्मिन्विप्रा निपातिते ॥ वाच्यं तस्य वधे प्राप्ते यथाभूत मिति श्रुतिः ॥ २९ ॥ न नर्मयुक्तं वचनं हिनस्ति न स्त्रीषु विप्रा न विवाहकाले ॥ प्राणात्यये सर्वधनापहारे पञ्चानृतान्याहुरपातकानि ॥ ३० ॥

इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतास्वनृतदोषवर्णनो नामैकपञ्चाशदुत्तरद्विशततमोऽध्यायः ॥ २५१ ॥

हंस उवाच ॥ सर्वेषामेव पापानां हिंसा परमिहोच्यते ॥ हिंसा बलमसाधूनां हिंसा लोकद्वयापहा ॥ १ ॥ अपि कीटः पतङ्गो वा न हन्तव्यः कथञ्चन ॥ महद्दुःखमवाप्नोति पुरुषः प्राणिनाशनात् ॥ २ ॥ आततायिनमायान्तं पुरुषं यदि वा पशुम् ॥ उपायहीनस्तं हत्वा न तु पापेन बाध्यते ॥ ३ ॥ गुरुं वा बालवृद्धौ वा मान्यं वाप्यथ वा जनम् ॥ आततायिनमायान्तं हन्यादेवाविचारयन् ॥ ४ ॥ आततायिन मायान्तमपि वेदान्तगं रणे ॥ जिघांसन्तं जिघांसीयात्तेन पापं न विद्यते ॥ ५ ॥ रणे प्रहाराभिहते शत्रौ नैवास्ति पातकम् ॥ जित्वा गृहीते निहते तस्मिन्नेवास्ति पातकम् ॥ ६ ॥ रणे जितन्तु यः शक्तः पश्चात्पातयते नरः ॥ स याति नरकं घोरं बहून्यब्दशतानि च ॥ ७ ॥ मुक्तश्च नारकाद्दुःखाद्बहून्यब्दशतानि तु ॥ आमगर्भेषु सिच्यन्ते ये नरा नरघातकाः ॥ ८ ॥ यावन्ति पशुरोमाणि तावत्कृत्वेह मारणम् ॥ वृथापशुघ्नः प्राप्नोति प्रेत्य चेह च निष्कृतिम् ॥ ९ ॥ अपि कीटं नरो हत्वा छित्त्वा तृणमथापि वा ॥ नरकं याति धर्मज्ञाः पुरुषः स्वेन कर्मणा ॥ १० ॥ स्त्रीहिंसा धनहिंसा च प्राणिहिंसा च दारुणा ॥ हिंसा च त्रिविधा प्रोक्ता वर्जिता पण्डितैर्नरैः ॥ ॥ ११ ॥ अहिंसकस्तु यत्नेन वर्जयेत्तु परस्त्रियम् ॥ विजनेऽपि तथा न्यस्तं परद्रव्यं प्रयत्नतः ॥ १२ ॥ अतो वै नैव कर्तव्या प्राणि हिंसा भयावहा ॥ वियोज्य प्राणिनं प्राणैस्तथैकमपि निर्घृणः ॥ १३ ॥ नरकाद्धि विनिर्मुक्तो न किञ्चित्सुखमेधते ॥ यां रात्रिमधिविन्नां स्त्रीं यां चैवाक्षपराजिताम् ॥ १४ ॥ यां च राज्यच्युतो रात्रिं यां च सर्वस्वविच्युतः ॥ इष्टबन्धुवियुक्तश्च यां रात्रिं दुःखमश्नुते ॥ १५ ॥ व्यवहारे जितश्चैव यद् दुःखं कूटसाक्षिभिः ॥ तत्सर्वं दुःखमाप्नोति हत्वैकमपि तु द्विजाः ॥ १६ ॥ नास्ति पापतरं लोके मनुष्या मांस

भोजिनः ॥ बहिर्मांसं तृणात्काष्ठादुपलाद्वापि जायते ॥ १७ ॥ घोरात्प्राणिवधाज्जातं पुरुषः परिवर्जयेत् ॥ यदि चेत्खादको न स्यान्न
भवेद्घातकस्तथा ॥ १८ ॥ एतस्मात्कारणान्निन्द्यो घातकादपि खादकः ॥ यावतां प्राणिनां येन मांसं भुक्तं भवेदिह ॥ १९ ॥ ता एव ते
न तावत्यो गन्तव्या योनयो ध्रुवम् ॥ येषान्तु प्राणिनां भुक्तं तेन मांसं द्विजोत्तमाः ॥ २० ॥ भोक्तव्यं तस्य तैर्मांसं ध्रुवं जन्मनिजन्मनि ॥
मांसभक्षयिताऽमुत्र यस्य मांस मिहाद्म्यहम् ॥२१॥ एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः ॥ समुत्पत्तिं च मांसस्य वधबन्धौ च देहिनाम् ॥
॥ २२ ॥ प्रसमीक्ष्य निवर्त्तेत सर्वमांसस्य भक्षणात् ॥ अनुमन्ता विशसिता निहन्ता क्रियविक्रयी ॥ २३ ॥ संस्कर्ता चोपहर्ता च खाद
काश्च विघातकाः ॥ स्वमांसं परमांसेन यो वर्धयितुमिच्छति ॥ २४ ॥ न पापकृत्तमो लोके तस्मादन्यो हि विद्यते ॥ असंस्कृतान्पशून्मन्त्रैर्ना
द्याद्विप्रः कथञ्चन ॥ २५ ॥ मन्त्रैस्तु संस्कृतानद्याच्छाश्वतं विधिमास्थितः ॥ या वेदविहिता हिंसा न सा हिंसा मता यतः ॥ २६ ॥ ओषध्यः
पशवो वृक्षास्तिर्यञ्चः पक्षिणस्तथा ॥ यज्ञार्थं निधनं प्राप्ता प्राप्नुवन्त्युच्छ्रिताः पुनः ॥ २७ ॥ मधुपर्के च यज्ञे च पितृदैवतकर्मणि ॥
अत्रैव पशवो हिंस्या नान्यत्रेति कदाचन ॥ २८ ॥ एष्वर्थेषु पशून्हन्ति वेदतत्त्वार्थविद्द्विजाः ॥ आत्मानं च पशूँश्चैव गमयन्त्युत्तमां
गतिम् ॥ २९ ॥ यज्ञार्थं पशवः सृष्टाः पूर्वमेव स्वयम्भुवा ॥ यज्ञाश्च भूतैः सर्वस्य तस्माद्यज्ञे वधोऽवधः ॥ ३० ॥
वृथा तु मांसं पुरुषः समश्नन्प्रयाति विप्रा नरकं सुघोरम् ॥ निबर्हणं गर्हितमेव जन्तोर्मांसञ्च तस्मात्परिवर्जनीयम् ॥ ३१॥ इति श्रीविष्णुधर्मोत्तरे
तृतीयखण्डे मार्कण्डेयवज्रसंवादे हंसगीतासु हिंसादोषवर्णनो नाम द्विपञ्चाशदुत्तरद्विशततमोऽध्यायः ॥ २५२ ॥ ऋषय ऊचुः ॥ ब्रूह्यस्माकं द्विज
श्रेष्ठ नरः पापेन कर्मणा ॥ किंकिमाप्नोति धर्मज्ञ विहगेन्द्र महामते ॥ १ ॥ ॥ हंस उवाच ॥ ॥ पापं कृत्वा नरो विप्रा नरकं प्रतिपद्यते ॥
नरकाच्च विनिर्मुक्तस्तिर्यग्योनौ तथा व्रजेत् ॥ २॥ शरीरजैः कर्मदोषैर्याति स्थावरतां नरः ॥ वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् ॥ ३॥
कर्मजा गतयो नृणामुत्तमाधममध्यमाः ॥ त्रिविधास्तु विनिर्दिष्टा दशलक्षणलक्षिताः ॥ ४ ॥ परद्रव्येष्वभिध्यानं मनसा दुष्टचिन्तनम् ॥ वितथा
भिनिवेशश्च त्रिविधं कर्म मानसम् ॥ ५ ॥ पारुष्यमनृतं चैव पैशुन्यं चैव सर्वशः ॥ अनिबद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ॥ ६ ॥ अदत्ता ॥४१६॥
नामुपादानं हिंसा चैवाविधानतः ॥ परदारोपसेवा च शारीरं त्रिविधं स्मृतम् ॥ ७ ॥ एकस्मिन्नप्यतो विप्राः सेवते दशलक्षणम् ॥ अधर्मात्प्राप्य
मानुष्यं यदा भवति दुःखितः ॥ ८ ॥ इह दुश्चरितैः केचित्केचित्पूर्वकृतैस्तथा ॥ प्राप्नुवन्ति दुरात्मानो नरा रूपविपर्ययम् ॥ ९ ॥ ब्रह्महा क्षय

रोगी स्याद्दुश्चर्मा गुरुतल्पगः ॥ श्यावदन्तः सुरापश्च कुनखी कनकापहः ॥ १० ॥ वस्त्रापहारकः शिवत्री पङ्गुरश्वापहारकः ॥ पङ्गुरेव तथा ज्ञेयः सर्वयानापहारकः ॥ ११ ॥ अंधश्च जायते लोके गां हत्वा मानवाधमः ॥ धान्यचौरोऽतिरिक्ताङ्गो मूको वागपहारकः ॥ १२ ॥ गुरुस्वामि द्विजान्क्रोशन्वेदनिन्दां तथैव च ॥ श्रुत्वा भवति दुर्बुद्धिर्बधिरो मानवाधमः ॥ १३ ॥ नित्यामयावी भवति तथा चान्नापहारकः ॥ वियोज्यैक मपि प्राणैः प्राणिनं व्याधितस्तथा ॥ १४ ॥ वस्त्रभोज्यापहर्तारौ तथा नग्नबुभुक्षितौ ॥ अग्निमान्द्याभिभूतश्च तथा भवति दुर्मतिः ॥ १५ ॥ जुहोति यो द्विजश्रेष्ठा असमिद्धे हुताशने ॥ रत्नापहारी भवति तथा कुष्ठी नराधमः ॥ १६ ॥ पिशुनः पूतिनासश्च पूतिवक्त्रश्च सूचकः ॥ षण्ढश्च जायते लोके दारातिक्रमकारकः ॥ १७ ॥ परपुंसि प्रदाता वा तस्य भार्या तथा भवेत् ॥ कुष्ठी भवति धर्मज्ञास्त्वपहृत्य तथा स्त्रियम् ॥ १८ ॥ लिङ्गव्याधिमवाप्नोति वियोनौ मैथुनं गतः ॥ गां च गत्वा द्विजश्रेष्ठा लिङ्गनाशमवाप्नुयात् ॥ १९ ॥ पूज्यावमन्ता खल्वाटो पूज्यताडयिता कुणिः ॥ मार्गार्हाय च यो मार्गं न प्रयच्छति दुर्मतिः ॥ २० ॥ खञ्जो भवति दुर्बुद्धिरासनार्हस्य चासनम् ॥ दुर्नामा संयतो नित्यं मत्सरी जायते शठः ॥ २१ ॥ दीपहर्ता भवत्यन्धः काणो निर्वापको भवेत् ॥ दैवदत्तेन ज्ञानेन कृत्वा कर्म सुदुर्मतिः ॥ जायते बुद्बुदाक्षो वा नेत्ररोग युतोऽथवा ॥ २२ ॥ दृष्ट्वा परस्त्रियं नग्नां नरो दुष्टेन चक्षुषा ॥ जात्यन्धतामवाप्नोति परलोके न संशयः ॥ २३ ॥ वर्णाधिकस्य जीवित्वा वर्ण हीनेन कर्मणा ॥ तस्यैव योनिमाप्नोति नात्र कार्या विचारणा ॥ २४ ॥ तथैवाधिकवर्णस्य यदि जीवति कर्मणा ॥ हीनवर्णस्तथा लोके भवत्यन्धः स दुर्मतिः ॥ २५ ॥ यस्यान्नेनोदरस्थेन मृत्युमेति द्विजः क्वचित् ॥ तस्यैव योनिमाप्नोति स्वकृतेनापि कर्मणा ॥ २६ ॥ आमश्राद्धं तथा भुक्त्वा विरूपो जायते नरः ॥ विरूप एव भवति तथाविक्रेयविक्रयात् ॥ २७ ॥ विनापराधेन तथा कृत्वा पत्न्य धिवेदनम् ॥ पराजयमवाप्नोति व्यवहारे तथा रणे ॥ २८ ॥ मूलकर्म तथा कृत्वा वशीकरणकारणात् ॥ द्वेष्यो भवति लोके ऽस्मिञ्जगतो नात्र संशयः ॥ २९ ॥ अवकीर्णी च भवति लिङ्गव्याधिसमन्वितः ॥ परिवेत्ता तथा लोके सर्वव्याधिसमन्वितः ॥ ३० ॥ अयाज्ययाजकः पापो जायते वर्णसंकरः ॥ वेदविक्रयको मूर्खः कितवश्चैव जायते ॥ ३१ ॥ विद्यानर्थश्च भवति तथाविक्रेयविक्रयी ॥ एकः स्वादृशनो लोके जायते परतर्पकः ॥ ३२ ॥ परिव्राड् कामवृत्तस्तु नित्यं भवति दुःखितः ॥ हिंसारतस्तथाल्पायुर्यस्तु मांसाशनो नरः ॥ ३३॥ नास्तिकस्तु दरिद्रः स्यात्सर्वभोगविवर्जितः ॥ अतिमानप्रवृत्तस्तु जायते कुत्सिते कुले ॥ ३४ ॥ श्वपाकपुक्कसादीनां कुत्सितानामचेतसाम् ॥

कुलेषु तेषु जायन्ते गुरुवृद्धावचायकाः ॥ ३५ ॥ परोद्वेगरतिर्नित्यं बहुबाधश्च जायते ॥ प्रकीर्णमैथुनो जन्तुः क्लीबो भवति वै द्विजाः ॥३६॥
नरः पापसमाचारो मृत्युमभ्येति कुत्सितम् ॥ श्वभ्रे तु मरणं लोके विषैः स्थावरजङ्गमैः ॥ ३७ ॥ दंष्ट्रिभ्यश्च नखिभ्यश्च चण्डालाद्ब्राह्मणात्तथा॥
गृहावपतनाच्चैव द्रुमाश्वपतितैस्तथा ॥ ३८ ॥ नौभंगादग्निदाहाच्च तथोद्बन्धनकर्मणा ॥ गोभ्यश्च मरणं लोके विज्ञेयं पापकर्मणः ॥ ३९ ॥ एषा
मन्यतमं मृत्युमासाद्य नरकं व्रजेत् ॥ नवापि तैश्च युज्यन्ते ये नराः शुभकारिणः ॥ ४० ॥ ताडिता ताड्यते लोके बद्धा वै बध्यते तथा ॥
हन्ता वधमवाप्नोति नात्र कार्या विचारणा ॥ ४१ ॥ यद्यत्परस्याचरति तत्तदस्योपजायते ॥ ४२ ॥ प्राप्नोति यादृशीं बाधां यत्कर्मणि
कृते परः ॥ तस्यापि तादृशी बाधा ज्ञेया जन्मनिजन्मनि ॥ ४३ ॥ तस्मात्सर्वप्रयत्नेन पापबाधां विवर्जयेत् ॥ श्रूयतां धर्मसर्वस्वं श्रुत्वा
चाप्यवधार्यताम् ॥ आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥ ४४ ॥ परोपतापक्रियया न कार्यं धनार्जनं दोषसमूहकारि ॥ परोपतापप्रभवो
हि दोषः शक्यो न हन्तुं विबुधालयेऽपि ॥ ४५ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु पापकर्मफल
निरूपणो नाम त्रिपञ्चाशदुत्तरद्विशततमोऽध्यायः ॥ २५३ ॥ ॥ हंस उवाच ॥ ॥ ज्ञानं सुखावहं लोके ज्ञानं चक्षुः परं मतम् ॥ ज्ञानाद्धर्म
मवाप्नोति ज्ञानादर्थं च मानवः ॥ १ ॥ ज्ञानात्काममवाप्नोति ज्ञानान्मोक्षं च गच्छति ॥ तस्मात्सर्वप्रयत्नेन ज्ञाने यत्नं समाचरेत् ॥ २ ॥
ज्ञानेन सर्वमाप्नोति यत्किञ्चिन्मनसेच्छति ॥ ज्ञानैकहेतुश्च तथा नित्यं शास्त्रान्ववेक्षणम् ॥ ३ ॥ आचार्यगुरुशुश्रूषा वृद्धानां चैव सेवनम् ॥
अनालस्यमकार्पण्यं दिवा निद्राविवर्जनम् ॥ ४ ॥ ज्ञानमेष परो बन्धुर्ज्ञानं मार्गस्य देशकम् ॥ संसारबन्धनक्लेशाँस्तथा ज्ञानेन मुञ्चति ॥५॥
ज्ञानेन पुरुषो वेत्ति ज्ञानाद्वैराग्यमृच्छति ॥ ज्ञानेन तदवाप्नोति यद्‌ गत्वा नानुशोचति ॥ ६ ॥ एतद्विदित्वा पुरुषेण कार्यं ज्ञाने सदा यत्नमदी
नसत्त्वाः ॥ ज्ञानं समासाद्य महानुभावा विमुक्तदुःखाः सुखिनो भवन्ति ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनी
न्प्रति हंसगीतासु ज्ञानवर्णनो नाम चतुष्पञ्चाशदुत्तरद्विशततमोऽध्यायः ॥ २५४ ॥ ॥ हंस उवाच ॥ धर्मे यत्नः सदा कार्यो धर्म एकः सुखावहः ॥
धर्मेण पाल्यते सर्वं त्रैलोक्यं सचराचरम् ॥ १ ॥ धारणाद्धर्ममित्याहुर्धर्मो धारयति प्रजाः ॥ धर्मे संसेविते कामान्प्राप्नोति मनसेप्सितान्
॥ २ ॥ धर्मेणार्थं तथा लोके प्राप्नोति मनसेप्सितम् ॥ मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं क्षितौ ॥ ३ ॥ विमुखा बान्धवा यान्ति धर्म
स्त्वेकोनुगच्छति ॥ एकस्मिन्नप्यतिक्रान्ते दिने धर्मविवर्जिते ॥ ४ ॥ दस्युभिर्मुषितस्येव युक्तमाक्रन्दितं चिरम् ॥ बलादेव चरेद्धर्ममनित्यं

जीवितं यतः ॥ ५ ॥ नास्ति धर्मविहीनस्य सुखमण्वपि वै द्विजाः ॥ धर्मेण देवैर्देवत्वमृषित्वमृषिभिस्तथा ॥ ६ ॥ प्राप्तं धर्मेण सकलं
ब्रह्मणा च कृतं जगत् ॥ येन सर्वमिदं सृष्टं स वै धर्मे हरिः स्थितः ॥ ७ ॥ कृतस्य धर्मस्य न चास्ति नाश स्तस्मात्तु धर्मः पुरुषेण कार्यः ॥
धर्मे कृते नास्ति भयं नराणां लोके परे चेह तथा द्विजेन्द्राः ॥ ८ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख० मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु
धर्मप्रशंसावर्णनो नाम पञ्चपञ्चाशदुत्तरद्विशततमोऽध्यायः ॥ २५५ ॥ हंस उवाच ॥ ज्ञातव्या गुरुशुश्रूषा परमं धर्मकारणम् ॥ गुरुशुश्रूषया
विद्यां नरः समधिगच्छति ॥ १ ॥ विद्यया तदवाप्नोति यत्र गत्वा न शोचति ॥ सुवर्णपुष्पां पृथिवीं विचिन्वन्ति नरास्त्रयः ॥ २ ॥ शूरश्च
कृविद्यश्च यश्च जानाति सेवितुम् ॥ सर्वधर्मविहीनोऽपि गुरुशुश्रूषणे रतः ॥ ३ ॥ स्वर्गलोकमवाप्नोति पुरुषोऽपि सुदारुणः ॥ मातरं पितरं वापि
ज्येष्ठं भ्रातरमेव च ॥४॥ गुरुं विद्याप्रदं वापि यश्च शुश्रूषते नरः ॥ स्वर्गलोकमवाप्नोति यावदिन्द्राश्चतुर्दश ॥५॥ यदेव पुण्यमाप्नोति गुरुशुश्रूषया
द्विजः ॥ द्विजशुश्रूषया शूद्रस्तदेव फलमश्नुते ॥६॥ प्राप्नोति पुण्यं परमं च सध्वी शुश्रूषते या पतिमप्रमत्ता ॥ शुश्रूषया भूमिपतेः प्रजानां पुण्यं
प्रदिष्टं परमं नृलोके ॥७॥ इति श्रीविष्णुधर्मोत्तरे तृ०ख० मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु गुरुशुश्रूषाप्रशंसावर्णनो नाम षट्पञ्चाशदुत्तर
द्विशततमोऽध्यायः ॥ २५६॥ हंस उवाच ॥ स्वाध्यायसेवा कर्त्तव्या नित्यमेव विजानता ॥ स्वाध्यायेन तदाप्नोति यत्किञ्चिन्मनसेच्छति ॥ १ ॥
पयसा मधुना दध्ना मांसेन च यथाक्रमम् ॥ ऋचो यजूंषि सामानि तथैवाथर्वणं पठेत् ॥२॥ पितॄणां तर्पणं कुर्याद्वेदाङ्गेन च सर्पिषा ॥ उपवेदानपि
पठँस्तर्पयत्योदनेन तान् ॥ ३ ॥ विना स्थानानि सर्वाणि स्वैरेयेण तथा नरः ॥ सांख्ययोगं पाञ्चरात्रं तथा पाशुपतं पठन् ॥ ४ ॥ क्षीरेण मधु
मिश्रेण पितॄंस्तर्पयते तथा ॥ वाकोवाक्यं पुराणञ्च नाराशंस्योऽथ गाथिकाः ॥५॥ स्तोत्राणि च पठन्नित्यं दध्ना च मधुना तथा ॥ तस्मात्सर्व
प्रयत्नेन द्विजः स्वाध्यायमाचरेत् ॥ ६ ॥ स्वाध्याय एवेह तपः पवित्रं स्वाध्याय एवेह तथैव यज्ञः ॥ स्वाध्यायवानेव नरः प्रयाति त्रिविष्टपं
मोक्षमथाप्यभीष्टम्॥७॥इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसं० मुनीन्प्रति हंसगीतासु स्वाध्यायप्रशंसावर्णनो नाम सप्तपञ्चाशदुत्तर
द्विशततमोऽध्यायः ॥ २५७ ॥ हंस उवाच ॥ ब्रह्मचर्येऽभिसंयुक्तो द्विजः स्वर्गमुपाश्नुते ॥ ब्रह्मचर्यं परं धाम ब्रह्मचर्यं परं तपः ॥ १ ॥
ब्रह्मचर्यं परं यज्ञो ब्रह्मचर्यं परं यशः ॥ ब्रह्मचर्येण संयुक्तः सर्वान्कामानवाप्नुयात् ॥ २ ॥ अदैवं दैवतं कुर्याद्दैवतं चाप्यदैवतम् ॥
कुर्याल्लोकाँस्तथैवान्यान्ब्रह्मचर्येण मानवः ॥ ३ ॥ कृतानपि तथा पूर्वान्क्षिप्रमेव प्रणाशयेत् ॥ यथाभीष्टमवाप्नोति ब्रह्मचर्येण मानवः ॥ ४ ॥

प्रजापतीनां या शक्तिः प्रजाः कर्तुं द्विजोत्तमाः ॥ सा ज्ञेया ब्रह्मचर्येण ऋषीणामपि च द्विजाः ॥ ५॥ अनेकानि सहस्राणि कुमारब्रह्मचारिणाम् ॥
दिवं गतानि विप्राणामकृत्वा कुलसन्ततिम् ॥६॥ यो ब्रह्मचर्यान्न परिच्युतः स्यात्पुत्रेण हीनोऽपि दिवं स याति ॥ परिच्युता ये तनयैर्विहीना
स्तेषां न लोकेषु गतिः प्रदिष्टा ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे हंसगीतासु ब्रह्मचर्यप्रशंसावर्णनो नामाष्टपञ्चाश
दुत्तरद्विशततमोऽध्यायः ॥ २५८ ॥ ॥ हंस उवाच ॥ ॥ ब्रह्मचर्याच्च्युतो यस्तु नरस्सन्तानवर्जितः ॥ सुतप्ततपसोप्यस्य गतिर्लोके न
विद्यते ॥ १ ॥ पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते ॥ तथा पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम् ॥ २ ॥ नाकलोकमवाप्नोति दुहित्रा
द्विजसत्तमाः ॥ दौहित्रेण तथा लोकान्नरो याति प्रजापतेः ॥ ३ ॥ पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः ॥ तस्मात्पुत्र इति प्रोक्तः स्वयमेव
स्वयम्भुवा ॥ ४ ॥ पुत्रदौहित्रयोर्लोके विशेषो नोपपद्यते ॥ दौहित्रोऽपि ह्यमुत्रैनं सन्तारयति पौत्रवत् ॥ ५ ॥ तस्माच्छेत्ता कुलस्य स्यात्स
याति नरकं ध्रुवम् ॥ पुत्रपौत्रैः परिवृतो नाकलोके महीयते ॥ ६ ॥ सन्तानवानेव नरस्तु कीर्त्या युक्तस्तथा स्यात्परया द्विजेन्द्राः ॥ कीर्त्या
युतः स्वर्गमथ प्रयाति सन्तानवान्यः पुरुषः प्रधानः ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे हंसगीतासु सन्तानप्रशंसा
वर्णनो नामैकोनषष्ट्युत्तरद्विशततमोऽध्यायः ॥ २५९ ॥ ॥ हंस उवाच ॥ ॥ कीर्तिप्रधानः पुरुषश्चिरं स्वर्गे महीयते ॥ कीर्तिः शरीरं निर्दिष्टा
मृतस्यापि शरीरिणः ॥ १ ॥ कीर्तियुक्तं न जानाति परत्रेह च मानवः ॥ कीर्तियुक्ता भवन्तीह श्रेयसो भाजनं परम् ॥ २ ॥ दिवं स्पृशति भूमिं
च शब्दः पुण्यस्य कर्मणः ॥ यावत्स शब्दो भवति तावत्पुरुष उच्यते ॥ ३ ॥ तावदेव तथा लोकान्सर्वकामदुघोऽक्षयान् ॥ पुरुषः समुपाश्नाति
दिवि चेह च शाश्वतम् ॥ ४ ॥ यस्याकीर्तिर्मनुष्यस्य नरकं स तु गच्छति ॥ यावल्लोकेषु धर्मज्ञास्तस्य कीर्तिस्तु गीयते ॥ ५ ॥ तावत्समश्नुते
स्वर्गे देवभोगाननुत्तमान् ॥ कीर्तिः पुण्या पुण्यलोके नैव पापं प्रयच्छति ॥ कीर्त्यमाना मनुष्यस्य तस्मात्पुण्यं समाचरेत् ॥ ६॥ ये कीर्तियुक्ताः
पुरुषप्रधानास्ते नाकपृष्ठं सुचिरं प्रयान्ति ॥ अकीर्तियुक्ता नरकं व्रजंति कीर्तिः प्रधाना पुरुषस्य तस्मात् ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीय
खण्डे मार्कण्डेयवज्रसंवादे हंसगीतासु कीर्तिप्रशंसावर्णनो नाम षष्ट्युत्तरद्विशततमोऽध्यायः ॥ २६० ॥ ॥ हंस उवाच ॥ ॥ यशसा संयुतो
जन्तुः श्रेयसो भाजनं भवेत् ॥ यशसा संयुतो जन्तुस्त्रिदिवं प्रतिपद्यते ॥ १ ॥ यशसा संयुतो जन्तुः सम्पदामेति पात्रताम् ॥ यशसा संयुतो
जन्तुः सर्वकामानुपाश्नुते ॥ २ ॥ स एकः पुरुषो लोके यशसा यो हि संयुतः ॥ येषां साधु समावाप्तं गीयते सुमहद्यशः ॥ ३ ॥ तेषां

पानं परिवर्जनीयम् ॥ ५ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु मददोषवर्णनो नाम चतुश्चत्वारिंशदु
त्तरद्विशततमोऽध्यायः ॥ २४४ ॥ ॥ हंस उवाच ॥ ॥ लुब्धो दोषान्न जानाति लुब्धः पापं न बुध्यते ॥ नरो लोभसमाविष्टो वशमेति
तथापदाम् ॥ १ ॥ जीर्यन्ति जीर्यतः केशा नखा जीर्यन्ति जीर्यतः ॥ जीर्यन्ति जीर्यतो दन्तास्तृष्णा त्वेका न जीर्यते ॥ २ ॥ तृष्णाखनिरगाधे
यमपूर्वा द्विजपुङ्गवाः॥ पूर्यमाणापि सततं खन्यतेऽभ्यधिकं तया ॥ ३ ॥ न तां पूरयितुं शक्तः कदाचिदपि कश्चन ॥ न तां पूरयितुं शक्ताः सर्वे
सन्तोषमाश्रिताः ॥ ४ ॥ यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ॥ नालमेकस्य पर्याप्तमिति मत्वा शमं व्रजेत् ॥ ५ ॥ या दुस्त्यजा दुर्मति
भिर्या न जीर्यति जीर्यतः ॥ योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम् ॥ ६ ॥ लुब्धस्य बन्धुर्न सुतो गुरुर्वा लुब्धस्य लोका न च
लोकयात्रा ॥ लुब्धस्य दोषाः सकलाः प्रदिष्टा लोकद्वये दुःखकराः सुरौघाः ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे
मुनीन्प्रति हंसगीतासु लोभदोषवर्णनो नाम पञ्चचत्वारिंशदुत्तरद्विशततमोऽध्यायः ॥ २४५ ॥ हंस उवाच ॥ क्रोध एकः परः शत्रुः क्रोध एको
विनाशकृत् ॥ क्रोधाभिभूतः पुरुषस्त्वात्मानमपि घातयेत् ॥ १ ॥ अर्थानर्थौ न जानाति कार्याकार्यौ तथैव च ॥ नरः क्रोधसमाविष्टो नान्यं
मित्रमपि द्विजान् ॥ २ ॥ गुरूनाक्षिपति क्रोधान्नैनं हि नमते जनः ॥ अनर्थैः सह संसर्गस्तस्मात्क्रोधं विवर्जयेत् ॥ ३ ॥ क्रोधं मूलमनर्थानां
द्वारं हि नरकस्य च ॥ आपदामास्पदं घोरन्तं प्रयत्नेन वर्जयेत् ॥ ४ ॥ क्रोधेन विजितो यस्तु कथमन्यं स जेष्यति ॥ क्रोधे जिते जितं विद्धि
त्रैलोक्यं सचराचरम् ॥ ५ ॥ अनर्थकारिणं क्रोधं यदा तेजस्विता मता ॥ क्रोधे दोषमतः कृत्वा जितः क्रोधो महात्मभिः ॥ ६ ॥ यज्ञश्च दानानि
तपः पवित्रं तीर्थोपसेवा च तथैव वेदाः ॥ क्रोधाभिभूतस्य भवन्ति मिथ्या नरस्य तस्मात्परिवर्जयेत्तम् ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीय
खण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु क्रोधदोषवर्णनो नाम षट्चत्वारिंशदुत्तरद्विशततमोऽध्यायः ॥ २४६ ॥ ॥ हंस उवाच ॥ ॥
सर्वेषामेव पापानां नास्तिक्यं पातकं परम् ॥ नास्तिक्याद्धि परं नास्ति किञ्चित्पापं द्विजोत्तमाः ॥ १ ॥ अकार्यमिति कार्याणि कृत्वा कार्यैव ॥४१४॥
शान्नरः ॥ पश्चात्तापेन संयुक्तः क्षिप्रं पापं व्यपोहति ॥ २ ॥ कार्यबुद्ध्या त्वकार्याणि यः करोति नराधमः ॥ कथं निवर्त्तनं तेभ्यो जायते तस्य
वै द्विजाः ॥ ३॥ नास्तिक्यस्य तथा मूलं त्वसच्छास्त्रावगाहनम् ॥ तस्मात्सर्वप्रयत्नेन तद्विवर्ज्यं विजानता ॥४॥ सर्वो हि मानवो लोके परलो
कनिबन्धनः ॥ तत्रापि निरपेक्षस्य किन्नु लोके निबन्धनम् ॥५॥ ये तु वै नास्तिका लोके नरा लोकं प्रति द्विजाः ॥ नरके ते हि पच्यन्ते बहु

प्रजापतीनां या शक्तिः प्रजाः कर्तुं द्विजोत्तमाः ॥ सा ज्ञेया ब्रह्मचर्येण ऋषीणामपि च द्विजाः ॥ ५॥ अनेकानि सहस्राणि कुमारब्रह्मचारिणाम् ॥ दिवं गतानि विप्राणामकृत्वा कुलसन्ततिम् ॥६॥ यो ब्रह्मचर्यान्न परिच्युतः स्यात्पुत्रेण हीनोऽपि दिवं स याति ॥ परिच्युता ये तनयैर्विहीना स्तेषां न लोकेषु गतिः प्रदिष्टा ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे हंसगीतासु ब्रह्मचर्यप्रशंसावर्णनो नामाष्टपञ्चाश दुत्तरद्विशततमोऽध्यायः ॥ २५८ ॥ ॥ हंस उवाच ॥ ॥ ब्रह्मचर्याच्च्युतो यस्तु नरस्सन्तानवर्जितः ॥ सुतप्ततपसोप्यस्य गतिर्लोके न विद्यते ॥ १ ॥ पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते ॥ तथा पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम् ॥ २ ॥ नाकलोकमवाप्नोति दुहित्रा द्विजसत्तमाः ॥ दौहित्रेण तथा लोकान्नरो याति प्रजापतेः ॥ ३ ॥ पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः ॥ तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा ॥ ४ ॥ पुत्रदौहित्रयोर्लोके विशेषो नोपपद्यते ॥ दौहित्रोऽपि ह्यमुत्रैनं सन्तारयति पौत्रवत् ॥ ५ ॥ तस्माच्छेत्ता कुलस्य स्यात्स याति नरकं ध्रुवम् ॥ पुत्रपौत्रैः परिवृतो नाकलोके महीयते ॥ ६ ॥ सन्तानवानेव नरस्तु कीर्त्या युक्तस्तथा स्यात्परया द्विजेन्द्राः ॥ कीर्त्या युतः स्वर्गमथ प्रयाति सन्तानवान्यः पुरुषः प्रधानः ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे हंसगीतासु सन्तानप्रशंसा वर्णनो नामैकोनषष्ट्युत्तरद्विशततमोऽध्यायः ॥ २५९ ॥ ॥ हंस उवाच ॥ ॥ कीर्तिप्रधानः पुरुषश्चिरं स्वर्गे महीयते ॥ कीर्तिः शरीरं निर्दिष्टा मृतस्यापि शरीरिणः ॥ १ ॥ कीर्तियुक्तं न जानाति परत्रेह च मानवः ॥ कीर्तियुक्ता भवन्तीह श्रेयसो भाजनं परम् ॥ २ ॥ दिवं स्पृशति भूमिं च शब्दः पुण्यस्य कर्मणः ॥ यावत्स शब्दो भवति तावत्पुरुष उच्यते ॥ ३ ॥ तावदेव तथा लोकान्सर्वकामदुघोऽक्षयान् ॥ पुरुषः समुपाश्नाति दिवि चेह च शाश्वतम् ॥ ४ ॥ यस्याकीर्तिर्मनुष्यस्य नरकं स तु गच्छति ॥ यावल्लोकेषु धर्मज्ञास्तस्य कीर्तिस्तु गीयते ॥ ५ ॥ तावत्समश्नुते स्वर्गे देवभोगाननुत्तमान् ॥ कीर्तिः पुण्या पुण्यलोके नैव पापं प्रयच्छति ॥ कीर्त्यमाना मनुष्यस्य तस्मात्पुण्यं समाचरेत् ॥ ६॥ ये कीर्तियुक्ताः पुरुषप्रधानास्ते नाकपृष्ठं सुचिरं प्रयान्ति ॥ अकीर्तियुक्ता नरकं व्रजंति कीर्तिः प्रधाना पुरुषस्य तस्मात् ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीय खण्डे मार्कण्डेयवज्रसंवादे हंसगीतासु कीर्तिप्रशंसावणनो नाम षष्ट्युत्तरद्विशततमोऽध्यायः ॥ २६० ॥ ॥ हंस उवाच ॥ ॥ यशसा संयुतो जन्तुः श्रेयसो भाजनं भवेत् ॥ यशसा संयुतो जन्तुस्त्रिदिवं प्रतिपद्यते ॥ १ ॥ यशसा संयुतो जन्तुः सम्पदामेति पात्रताम् ॥ यशसा संयुतो जन्तुः सर्वकामानुपाश्नुते ॥ २ ॥ स एकः पुरुषो लोके यशसा यो हि संयुतः ॥ येषां साधु समावाप्तं गीयते सुमहद्यशः ॥ ३ ॥ तेषां

मासे दशमे प्रयाति यममन्दिरम् ॥ ७ ॥ रक्षःप्रेतपिशाचानां यक्षाणामपि दर्शनात् ॥ अतीन्द्रियाणामन्येषां नवमे मरणं ध्रुवम् ॥ ८ ॥
दौर्बल्यं जायते यस्य बहुसम्पन्नभोजिनः ॥ अनश्नन्तोऽपि पीनत्वमष्टमे स्यात्स मृत्युभाक् ॥ ९॥ पदं चासकलं यस्य खण्डं विकृतमेव वा ॥
पांसुकर्दमयोर्दृश्येत्सप्तमे मासि मृत्युभाक् ॥१०॥ क्रव्यादाः पक्षिणो यस्य मूर्ध्नि लीयन्ति वै द्विजाः॥ काकश्येनादयस्तस्य षष्ठे मरणमादिशेत्॥
॥ ११॥ यस्य गोमयचूर्णाभं शरीरान्मृज्यते रजः ॥ स्वदेहच्छायाविकृतिः पञ्चमे स तु मृत्युभाक्॥ १२ ॥अनभ्रे विद्युतं दृष्ट्वा चतुर्थे म्रियते ध्रुवम् ॥
॥ १३ ॥ शक्रचापं जले दृष्ट्वा गगनं वा द्विजोत्तमाः ॥ अविद्यमानं धर्मज्ञस्तृतीये म्रियते ध्रुवम् ॥ १४ ॥ अवघट्टनं नेत्रस्य विना रोगं यदा
भवेत् ॥एकस्य यदि वा दृश्येत्स्थानभ्रंशो विधीयते ॥ १५ ॥ मासेन विकृता नासा वक्रा च मरणप्रदा ॥ १६ ॥ अर्धमासेन दुर्गन्धप्रभवं स्वश
रीरतः ॥ परचक्षुषि यश्छायामात्मनस्तु न पश्यति॥ स पश्यति महाभागा द्वादशाहेन वै यमम्॥ १७॥निर्वाणदीपगन्धं तु यस्तु नाघ्राति मानवः ॥
सप्ताहेन तु धर्मज्ञाः पश्यत्यर्कसुतं ध्रुवम् ॥१८॥ सद्यः स्नातानुलिप्तस्य हृत्पादशिरसां भवेत् ॥ क्षिप्रं संशोषणं तस्य त्र्यहान्मरणमादिशेत् ॥१९॥
गण्डयोस्तिलकान्रक्तान्वर्णवैकृतमेव च ॥ अहोरात्रेण मरणं पुरुषस्य समादिशेत् ॥२०॥ अङ्गुलिभ्यान्तु पिहिते श्रोत्रे तु न शृणोति यः ॥ २१ ॥
शब्दं न पश्येत्तु मुखं निर्मले दर्पणे तथा ॥ पश्येच्च पुरुषान्प्राप्तान्सद्यो मरणमादिशेत् ॥ २२ ॥ मूर्धधूमविनाशे तु जलार्द्राद्वा तदुद्भवेत् ॥
नासाभङ्गेन धर्मज्ञा द्व्यहान्मरणमादिशेत् ॥ २३ ॥ स्पर्शदृष्टिरसघ्राणशब्दचेष्टाविपर्ययः ॥ दृश्यते तु मुमूर्षूणां स्वस्थातुरशरीरिणाम् ॥ २४ ॥
श्लक्ष्णं खगं वरं लक्ष्म शीतोष्णस्य विपर्ययः ॥ अकस्माद्वेत्ति यो देही दुर्लभं तस्य जीवितम् ॥२५॥तोयवन्मेदिनीं तोयं मेदिनीमिव पश्यति ॥
अतीन्द्रियं निरीक्षेत न वीक्षेत करस्थितम् ॥ २६ ॥ पृथिवीमिव चाकाशं चाकाशमिव मेदिनीम् ॥ आकाशमिव चात्मानं पूर्णमिन्दुमथातिथौ
॥ २७ ॥ शुक्लकृष्णविपर्यासं स्थूलसूक्ष्मविपर्ययम् ॥ विपर्यासं सदसतां दृश्यते जीवितक्षये ॥ २८ ॥ षण्णां रसानां पर्यास इष्टानिष्टविपर्ययः॥
सर्वथा ग्रहणं पश्यन्निग्रहातीन्द्रियग्रहः ॥ २९ ॥ अभक्ष्यलौल्यमत्यर्थं मरणायोपजायते ॥ शोभनाशोभनज्ञेयग्रहणे तु विपर्ययः ॥ ३० ॥ इष्टै
रनिष्टैः संयोगोऽनिष्टैरिष्टसमागमः ॥ भयधैर्यविपर्यासो जायते प्राणसंक्षये ॥ ३१ ॥ अतिदीर्घोऽतिह्रस्वो वा सतमस्कोऽतिशीतलः ॥ उच्छ्वास
प्राणसन्त्यागे गतासूनां प्रजायते ॥ ३२ ॥ अनाहतानां शब्दः स्यादाहतानामशब्दता ॥ आहतानामशब्दत्वं मुमूर्षूणां नृणां गृहे ॥ ३३ ॥ उदक्
प्रवृत्ते दिवसस्य नाथे पुण्ये दिने मोहविवर्जितस्य ॥ नारायणे चेतसि संस्थिते वा मृत्युर्भवेत्पुण्यवतो द्विजेन्द्राः ॥ ३४ ॥ इति श्रीविष्णुधर्मो

त्तरे तृतीयकाण्डे मार्कण्डेयवज्रसंवादे ऋषीन्प्रति हंसगीतास्वरिष्टयोगवर्णनो नामाष्टत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३८ ॥ ऋषय ऊचुः ॥
के दोषाः पापशमना मनुष्याणां विनाशकाः ॥ के गुणाश्च महादेव नित्यमभ्युदयात्मकाः ॥ १ ॥ हंस उवाच ॥ सर्वेषामेव दोषाणा
मज्ञानः परमो मतः ॥ अज्ञश्चाश्रद्धधानश्च संशयात्मा विनश्यति ॥ २ ॥ कामः क्रोधस्तथा लोभो हर्षो मानः सदैव च ॥ अज्ञानेना
वृतं जन्तुं निविशन्ते द्विजोत्तमाः ॥ ३ ॥ अज्ञानादेव पापानि विचिनोत्यविचक्षणः ॥ अज्ञानादुत्पथं गत्वा नरकं प्रतिपद्यते ॥ ४ ॥ अज्ञाने
नावृतो जन्तुः शुभे मार्गे न तिष्ठति ॥ अज्ञानशमने यत्नस्ततः कार्यो विजानता ॥ ५ ॥ शास्त्रान्ववेक्षणं तस्य वृद्धसेवा तथैव च ॥
तथा च गुरुशुश्रूषा त्वज्ञानशमनी मता ॥ ६ ॥ लोकद्वये नास्ति महानुभावा अज्ञानतुल्यः पुरुषस्य शत्रुः ॥ अतो हि लोकद्वितयं सुखार्थी
ज्ञाने तु कुर्यात्पुरुषः प्रयत्नम् ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे हंसगीतासु ज्ञानवर्णनो नामैकोनचत्वारिंशदुत्तरद्वि
शततमोऽध्यायः ॥ २३९ ॥ ॥ हंस उवाच ॥ ॥ पापेन सर्वदुःखानां नरो भवति भाजनम् ॥ पापेन नरकं याति द्वेष्यश्चेह तथा भवेत् ॥
॥ १ ॥ नरः पापसमाचारः पापादपि विनश्यति ॥ पापमेकं परं दुःखं सर्वेषां द्विजपुङ्गवाः ॥२॥ कृतपुण्योऽपि यः पापं करोति पुरुषः क्वचित् ॥
स्वर्गेऽपि न सुखं तस्य तद्भयादुपजायते ॥ ३ ॥ स एकः पुरुषो लोके यस्य पापं न विद्यते ॥ दीनान्धकृपणानाथास्तथा च परमार्भकाः ॥ ४॥
तिर्यग्योनिगताश्चान्ये नरकेषु तथा परे ॥ स्थावरासु च योनीषु तिर्यग्योनिषु चाप्यथ ॥ ५ ॥ व्याधिबन्धवधक्लेशताडनान्यप्यनेकशः ॥
नरः प्राप्नोति धर्मज्ञस्तथा पापेन कर्मणा ॥ ६ ॥ ये पापहीनाः पुरुषाः प्रधानास्तेषां न दुःखं भवतीह किञ्चित् ॥ तस्मात्प्रयत्नेन विवर्जनीयं
पापं बुधैः पुण्यचयश्च कार्यः ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु पापनिदर्शनवर्णनो नाम
चत्वारिंदुत्तरद्विशततमोऽध्यायः ॥ २४० ॥ ॥ हंस उवाच ॥ ॥ कामानुसारी पुरुषः कामादनु विनश्यति ॥ यस्तु केवलकामात्मा सोऽचि
राद्भ्रश्यते श्रियः ॥ १ ॥ कामानुसारी धर्मार्थौ न तिष्ठति चिरं नरः ॥ तस्मात्कामं न सेवेत नरो धर्मार्थवर्जितम् ॥ २ ॥
क्षयो धर्मार्थयोः कामे ध्रुवं भवति सेविते ॥ कामान्धेन विजानाति कर्तव्यं किञ्चिदेव तु ॥ ३ ॥ परदारे त्वगम्ये वा प्रपातं नावबुध्यते ॥
ध्रुवं प्राणवियोगेऽपि क्रीडामीत्येव मन्यते ॥ ४ ॥ यस्तु केवलकामात्मा धर्मार्थपरिवर्जितम् ॥ काममासेवते नित्यं विज्ञेयः पुरुषाधमः ॥ ५ ॥
धर्मे क्षीणे तथैवार्थे काममासेविते द्विजः ॥ ध्रुवं नरकपातः स्यान्नात्र कार्या विचारणा ॥ ६ ॥ धर्मार्थयुक्तं पुरुषस्तु कामं संसेवमानो हि

॥४१३॥

न जातु कामैः ॥ वियोगमाप्नोति ततस्तु विद्वान्धर्मार्थयुक्ते सततं निषेवेत् ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख० मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु कामकृत्यवर्णनो नामैकचत्वारिंशदुत्तरद्विशततमोऽध्यायः ॥ २४१॥ हंस उवाच ॥ नात्यर्थहर्षः कार्यस्तु कदाचिदपि पण्डितैः॥ अत्यर्थहृष्टः पुरुषः कार्यं वेत्ति न किञ्चन ॥ १ ॥ सम्पदश्चञ्चलां प्राप्य हर्षं प्राज्ञो विवर्जयेत ॥ दृष्टा हि बहवो नष्टा लोके सम्पत्प्रलम्बिताः ॥ ॥ २ ॥ सम्पत्तौ वा विपत्तौ वा स्वभावं न त्यजेद्बुधः ॥ चञ्चलाः सम्पदः सर्वाः स्वभावादेव वै द्विजाः ॥ ३ ॥ कस्तासां विश्वसेत्प्राज्ञो वेश्यास्त्रीणां यथा तथा ॥ संसर्गान्मोहमाप्नोति तासां प्राप्नोति मानवः ॥ ४ ॥ सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ॥ संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् ॥ ५ ॥ न प्रज्ञा धनलाभाय न जाड्यमसमृद्धये ॥ लोकपर्यायवृत्तान्तं प्राज्ञो जानाति नेतरः ॥ ६ ॥ प्राज्ञस्तु सम्यक्चपलां विदित्वा तां प्राप्य हर्षं परिवर्जयेत ॥ सम्पद्विनाशे न च दुःखमीयाद्यद्भावि तद्भावि न तस्य नाशः ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृ०ख०मार्कण्डेयवज्रसंवादे हंसगीतासु प्रहर्षदोषवर्णनो नाम द्विचत्वारिंशदुत्तरद्विशततमोऽध्यायः॥२४२॥ हंस उवाच॥मानं विवर्जितं सद्भिर्वर्जनीयं सदा बुधैः॥मानेन नष्टा बहवो राजानः सपरिच्छदाः॥१॥ ब्राह्मण्याच्च परिभ्रष्टा ब्राह्मणा बहवो द्विजाः॥ सर्वदोषास्पदं मानं लोकद्वयविघातकम् ॥ २ ॥ युक्तायुक्तं न जानाति मानेन पुरुषाधमः ॥ मानग्रस्तो नरो लोके गुरूनप्यवमन्यते ॥ ॥ ३ ॥ करोत्यकार्यं पुरुषो मानेन च तथा ध्रुवम् ॥ मानग्राहगृहीतस्य नास्ति मोक्षः कथञ्चन ॥ ४ ॥ कामः क्रोधश्च लोभश्च सर्वजन्तुविनाशकाः ॥ मानग्रस्तं तु पुरुषमाविशन्ति द्विजोत्तमाः ॥ ५ ॥ मानाभिभूतश्च तथा नरकं प्रतिपद्यते ॥ अप्रतिष्ठन्नरश्रेष्ठास्तस्मात्तं परिवर्जयेत् ॥ ६ ॥ शत्रुर्न मानेन समोऽस्ति पुंसो मानेन नाशं व्रजतीह जन्तुः ॥ मानो हि तस्मात्परिवर्जनीयो बुधैस्तु नित्यं नकरस्य मार्गः ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख० मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु मानदोषवर्णनो नाम त्रिचत्वारिंशदुत्तरद्विशततमोऽध्यायः ॥ २४३ ॥ हंस उवाच ॥ मदो विवर्जितः सद्भिर्वर्जनीयः प्रयत्नतः ॥ मदे तु बहवो दोषा लोकद्वयविघातकाः ॥ १ ॥ मत्तः कार्यं न जानाति गुरूनप्यवमन्यते ॥ मत्तस्य नरकद्वारं नित्यं विप्रास्त्वपावृतम् ॥ २ ॥ मत्तो भयं न जानाति मरणेऽप्यतिकुत्सिते ॥मत्तो मोहसमापन्नो न विजानाति किञ्चन ॥ ३ ॥ मदानामपि सर्वेषां ज्ञेयः पानमदोऽधमः ॥ तेनाभिभूतः पुरुषो न मृतादतिरिच्यते ॥ ४ ॥ अज्ञानतुल्यं न हि दोषमस्ति हेतुश्चतस्येह परो मदः स्यात् ॥ तस्मात्प्रयत्नेन मदस्य हेतुर्नरेण

पानं परिवर्जनीयम् ॥ ५ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु मददोषवर्णनो नाम चतुश्चत्वारिंशदुत्तरद्विशततमोऽध्यायः ॥ २४४ ॥ ॥ हंस उवाच ॥ ॥ लुब्धो दोषान्न जानाति लुब्धः पापं न बुध्यते ॥ नरो लोभसमाविष्टो वशमेति तथापदाम् ॥ १ ॥ जीर्यन्ति जीर्यतः केशा नखा जीर्यन्ति जीर्यतः ॥ जीर्यन्ति जीर्यतो दन्तास्तृष्णा त्वेका न जीर्यते ॥ २ ॥ तृष्णाखनिरगाधेयमपूर्वा द्विजपुङ्गवाः॥ पूर्यमाणापि सततं खन्यतेऽभ्यधिकं तया ॥ ३ ॥ न तां पूरयितुं शक्तः कदाचिदपि कश्चन ॥ न तां पूरयितुं शक्ताः सर्वे सन्तोषमाश्रिताः ॥ ४ ॥ यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ॥ नालमेकस्य पर्याप्तमिति मत्वा शमं व्रजेत् ॥ ५ ॥ या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ॥ योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम् ॥ ६ ॥ लुब्धस्य बन्धुर्न सुतो गुरुर्वा लुब्धस्य लोका न च लोकयात्रा ॥ लुब्धस्य दोषाः सकलाः प्रदिष्टा लोकद्वये दुःखकराः सुरौघाः ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु लोभदोषवर्णनो नाम पञ्चचत्वारिंशदुत्तरद्विशततमोऽध्यायः ॥ २४५ ॥ हंस उवाच ॥ क्रोध एकः परः शत्रुः क्रोध एको विनाशकृत् ॥ क्रोधाभिभूतः पुरुषस्त्वात्मानमपि घातयेत् ॥ १ ॥ अर्थानर्थौ न जानाति कार्याकार्यौ तथैव च ॥ नरः क्रोधसमाविष्टो नान्यं मित्रमपि द्विजान् ॥ २ ॥ गुरूनाक्षिपति क्रोधान्नैनं हि नमते जनः ॥ अनर्थैः सह संसर्गस्तस्मात्क्रोधं विवर्जयेत् ॥ ३ ॥ क्रोधं मूलमनर्थानां द्वारं हि नरकस्य च ॥ आपदामास्पदं घोरन्तं प्रयत्नेन वर्जयेत् ॥ ४ ॥ क्रोधेन विजितो यस्तु कथमन्यं स जेष्यति ॥ क्रोधे जिते जितं विद्धि त्रैलोक्यं सचराचरम् ॥ ५ ॥ अनर्थकारिणं क्रोधं यदा तेजस्विता मता ॥ क्रोधे दोषमतः कृत्वा जितः क्रोधो महात्मभिः ॥ ६ ॥ यज्ञश्च दानानि तपः पवित्रं तीर्थोपसेवा च तथैव वेदाः ॥ क्रोधाभिभूतस्य भवन्ति मिथ्या नरस्य तस्मात्परिवर्जयेत्तम् ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु क्रोधदोषवर्णनो नाम षट्चत्वारिंशदुत्तरद्विशततमोऽध्यायः ॥ २४६ ॥ ॥ हंस उवाच ॥ ॥ सर्वेषामेव पापानां नास्तिक्यं पातकं परम् ॥ नास्तिक्याद्धि परं नास्ति किञ्चित्पापं द्विजोत्तमाः ॥ १ ॥ अकार्यमिति कार्याणि कृत्वा कार्यव शान्नरः ॥ पश्चात्तापेन संयुक्तः क्षिप्रं पापं व्यपोहति ॥ २ ॥ कार्यबुद्ध्या त्वकार्याणि यः करोति नराधमः ॥ कथं निवर्त्तनं तेभ्यो जायते तस्य वै द्विजाः ॥ ३॥ नास्तिक्यस्य तथा मूलं त्वसच्छास्त्रावगाहनम् ॥ तस्मात्सर्वप्रयत्नेन तद्विवर्ज्यं विजानता ॥४॥ सर्वो हि मानवो लोके परलोकनिबन्धनः ॥ तत्रापि निरपेक्षस्य किन्तु लोके निबन्धनम् ॥५॥ ये तु वै नास्तिका लोके नरा लोकं प्रति द्विजाः ॥ नरके ते हि पच्यन्ते बहु

यशस्तथा पुण्यं नाकपृष्ठेऽपि गीयते ॥ देवता यं विजानंति तस्य नाके गतिर्ध्रुवा ॥ ४ ॥ कीर्त्यमानं तथा सद्भिर्यः शृणोति यशः स्वकम् ॥
सुखमाप्नोति धर्मज्ञाः स्वर्गादपि परं नरः ॥ ५ ॥ यशः शोभा मनुष्यस्य परमं तस्य मण्डनम् ॥ यशसा वर्जितस्येह मण्डनं लाञ्छनं
परम् ॥ ६ ॥ यशः प्रधानं पुरुषस्य लोके यशःप्रधानास्त्रिदिवं प्रयान्ति ॥ लोकद्वये चापि यशोऽन्वितानां भवन्ति कामा मनसा त्वभी
ष्टाः ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख० मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु यशःप्रशंसावर्णनो नामैकषष्ट्युत्तरद्विशततमो
ऽध्यायः ॥ २६१ ॥ हंस उवाच ॥ यज्ञेन देवा जीवन्ति यज्ञेन पितरस्तथा ॥ देवाधीनाः प्रजा सर्वा यज्ञाधीनाश्च देवताः ॥ १ ॥
यज्ञो हि भगवान्विष्णुर्यत्र सर्वं प्रतिष्ठितम् ॥ यज्ञार्थं पशवः सृष्टा देवास्त्वौषधयस्तथा ॥ २ ॥ यज्ञार्थं पुरुषाः सृष्टाः स्वयमेव स्वयंभुवा ॥
यज्ञश्च भूत्यै सर्वस्य तस्माद्यज्ञपरो भवेत् ॥ ३ ॥ यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ॥ धनं यद्यज्ञशीलानां देवस्वं तं विदुर्बु
धाः ॥ ४ ॥ ओषधीनां पशूनाञ्च यज्ञ एव परायणम् ॥ सयूथ्यश्च सकुल्यश्च नाकपृष्ठे महीयते ॥ ५ ॥ पशुस्तु प्रोक्षितो यज्ञे तथैवौ
षधयो द्विजाः ॥ यज्ञोपयुक्ता मोदन्ते त्रिदिवे नात्र संशयः ॥ ६ ॥ यज्ञेन सम्यक्पुरुषस्तु नाके सम्पूज्यमानस्त्रिदशैर्महात्मा ॥
प्राप्नोति सौख्यानि महानुभावास्तस्मात्प्रयत्नेन यजेत यज्ञैः ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख० मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंस
गीतासु यज्ञप्रशंसावर्णनो नाम द्विषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६२ ॥ हंस उवाच ॥ शीलं प्रधानं लोकेऽस्मिंस्तस्मिन्सर्वं प्रतिष्ठितम् ॥
शीलेन सर्वमाप्नोति यत्किञ्चिन्मनसेच्छति ॥ १ ॥ क्रियाः शीलविहीनस्य भवन्ति विफलाः कृताः ॥ तस्माच्छीलवता भाव्यं पुरुषेण
विजानता ॥ २ ॥ शीलेन देवराट्छक्रः सुरैश्वर्यमवाप्तवान् ॥ शीलेन धर्मराजोऽपि धर्मराजत्वमाप्तवान् ॥३॥ शीलेन वरुणो देवो राजराजत्व
माप्तवान् ॥ शीलेन च कुबेरोऽपि धनाध्यक्षत्वमाप्तवान् ॥ ४ ॥ शीलेन सुखमाप्नोति स्वर्गं च मनुजोत्तमाः ॥ शीलेन तदवाप्नोति
यत्र गत्वा न शोचति ॥ ५ ॥ शीलं समासाद्य समस्तकामान्प्राप्नोति मुख्यान्पुरुषः प्रधानः ॥ तस्मात्प्रयत्नेन नरेण शीलं समर्जनीयं सुखदं
सदैव ॥ ६ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख० मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु शीलप्रशंसावर्णनो नाम त्रिषष्ट्युत्तरद्विशततमो
ऽध्यायः ॥ २६३ ॥ हंस उवाच ॥ दमेन युक्तः पुरुषः सर्वान्कामानवाप्नुयात् ॥ तस्मात्सर्वप्रयत्नेन दमः कार्यो विजानता ॥ १ ॥
इन्द्रियाणां जयो लोके दम इत्यभिधीयते ॥ नादान्तस्य क्रियाः काश्चिद्भवन्तीह द्विजोत्तमाः ॥ २ ॥ नादान्तः सिद्धिमाप्नोति नादान्तो

गतिमीप्सिताम् ॥ नादान्तः श्रियमाप्नोति नादान्तः किञ्चिदेव तु ॥ ३ ॥ पञ्चेन्द्रियस्य मर्त्यस्य यद्येकं छिद्रमिन्द्रियम् ॥ ततोऽस्य क्षरति प्रज्ञा दृतेः पात्रादिवोदकम् ॥ ४ ॥ पुरुषार्थं परित्यज्य स्वार्थे च सततोत्थितः ॥ इन्द्रियाणां बुधस्तेषाङ्कः स्वार्थे प्रयतेन्नरः ॥ ५ ॥इन्द्रियाणां प्रसङ्गेन गतिं गच्छति दारुणाम् ॥ विजित्य तान्येव नरः सर्वान्कामानवाप्नुयात् ॥ ६ ॥ दान्तः पुमान्नाकमनुप्रयाति दान्तः पुमान्मोक्षपथं प्रयाति ॥ दान्तस्य दुःखं न हि किञ्चिदस्ति दान्तः समाप्नोत्यखिलान्हि कामान् ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु दमप्रशंसावर्णनो नाम चतुःषष्ट्युत्तरद्विशततमोऽध्यायः ॥२६४॥

॥ ॥ हंस उवाच ॥ ॥ सत्यमेव परं ब्रह्म सत्यमेव परं तपः ॥ सत्यमेव परो यज्ञः सत्यमेव परं श्रुतम् ॥ १ ॥ सत्यं वेदेषु जागर्ति मुक्तिः सत्यतरोः फलम् ॥ तपो यशश्च पुण्यश्च पितृदेवर्षिपूजनम्॥२॥आद्यो विधिश्च विद्या च सर्वं सत्ये प्रतिष्ठितम्॥ सत्यं यज्ञास्तथा वेदा मन्त्रा देवी सरस्वती ॥ ३ ॥ व्रतचर्या तथा सत्यमोङ्कारः सत्यमेव च ॥ सत्येन वायुरभ्येति सत्येनाभासते रविः ॥ ४ ॥ सत्येन चाग्निर्दहति स्वर्गं सत्येन गच्छति ॥ सत्येन चापः क्षिपति पर्जन्यः पृथिवीतले ॥ ५ ॥ पारणं सर्ववेदानां सर्वतीर्थावगाहनम् ॥ सत्यं च वदतो लोके समं स्याद्वा न वा समम् ॥ ६ ॥ अश्वमेधसहस्रं तु सत्यं च तुलया धृतम् ॥ अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥ ७ ॥ सत्येन देवाः प्रीयन्ते पितरो ब्राह्मणास्तथा ॥ सत्यमाहुः परं धर्मं तस्मात्सत्यं न लोपयेत् ॥ ८ ॥ मुनयः सत्यनिरताः सत्यस्थास्त्रिदशोत्तमाः ॥ स्वर्गे सत्यपरा नित्यं मोदन्ते देवता इव ॥ ९ ॥ अप्सरोगणसंकीर्णैर्विमानैरुपयान्ति च ॥ वक्तव्यं हि सदा सत्यं न सत्याद्विद्यते परम् ॥ १० ॥ अगाधे विमले शुद्धे सत्यतोये शुचिह्रदे ॥ स्नातव्यं मानसे तीर्थे स्नानं तत्परमं स्मृतम् ॥ ११ ॥ आत्मार्थे वा परार्थे वा पुत्रार्थे वा रिपोः कृते ॥ ये नृतं नाभिभाषन्ते ते नराः स्वर्गगामिनः ॥ १२ ॥ यद्भूतहितमत्यन्तं तत्सत्यमिति धारणा ॥ हितं स्याद्येन भूतानां तत्तद्वाच्यं विजानता॥१३॥ आदित्यचन्द्रावनिलानलौ च द्यौर्भूमिरापो हृदयं यमश्च ॥ अहश्च रात्रिश्च शुभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम् ॥ १४ ॥ न सा सभा यत्र न सन्ति वृद्धा वृद्धा न ते ये न वदन्ति धर्मम् ॥ नासौ धर्मो यत्र नो सत्यमस्ति न तत्सत्यं यच्छलेनानुविद्धम् ॥ १५ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु सत्यप्रशंसावर्णनो नाम पञ्चषष्ट्युत्तरद्विशततमोऽध्यायः ॥ २६५ ॥

॥ ॥ हंस उवाच ॥ ॥ तपसो हि परं नास्ति तपसा विदन्ते महत् ॥ प्रजापतीनां या शक्तिः प्रजाः कर्तुं द्विजोत्तमाः ॥ १ ॥ तपसा संप्र

दाने न ऋषीणां ज्ञानमेव च ॥ बहवो दिवि मोदन्ते प्रसादात्तपसो जनाः ॥ २ ॥ तपसा प्राप्यते स्वर्गस्तपसा प्राप्यते यशः ॥ आयुःप्रकर्षं
भोगांस्तु तपसा विन्दते महत् ॥ ३ ॥ ज्ञानं विज्ञानमास्तिक्यं सौभाग्यं रूपमुत्तमम् ॥ तपसा प्राप्यते सर्वं यत्किञ्चिन्मनसेप्सितम् ॥ ४ ॥
रसायनानि मन्त्राश्च विद्यास्त्वौषधयस्तथा ॥ नातप्ततपसः सिद्धिं प्रयान्ति द्विजपुङ्गवाः ॥ ५ ॥ यत्कार्यं किञ्चिदास्थाय पुरुषैस्तप्यते तपः ॥
सर्वं तस्मादवाप्नोति परत्रेह च मानवः ॥ ६ ॥ ब्रह्महा च सुरापश्च स्तेनश्च गुरुतल्पगः ॥ तपसा मुच्यते जन्तुः सर्वतश्चापि मुच्यते ॥ ७ ॥
तपसैव सुतप्तेन मोक्षमाप्नोति मानवः ॥ शक्रवैवस्वताऽम्भोपधनाधिपहुताशनैः ॥ ८ ॥ स्थानं महत्तरं प्राप्तं तथा रुद्रार्करात्रिपैः ॥ न
चास्ति तत्सुखं लोके यद्विना तपसा भवेत् ॥ ९ ॥ तपसैव सुखं सर्वमिति धर्मविदो विदुः ॥ अष्टाशीतिसहस्राणां मुनीनामूर्ध्वरेतसाम् ॥ १० ॥
तपसा दिवि मोदन्ते त्रिदशैः सहिता द्विजाः ॥ पुरुषस्तु समारम्भान्निष्फलान्वीक्ष्य चात्मनः ॥ ११ ॥ तपः कुर्यात्प्रयत्नेन न ह्यनुप्तं प्ररोहति ॥
कीटाः पतङ्गाः पशवो वयांसि च तथा द्विजाः ॥ १२ ॥ स्थावराणि च भूतानि दिवं यान्ति तपोबलात् ॥ यद्दुस्तरं यद्दुरापं यद्दुर्गं यच्च
दुष्करम् ॥ १३ ॥ सर्वं तत्तपसा साध्यं तपो हि दुरतिक्रमः ॥ यस्मिन्कर्मण्यपि कृते मनसः स्यादलाघवम् ॥ १४ ॥ तस्मिंस्तावत्तपः कुर्याद्या
वत्तुष्टिकरं भवेत्॥यत्किञ्चिदेनः कुर्वन्ति मनोवाक्कर्मभिर्जनाः॥१५॥तत्सर्वं विनुदन्त्याशु तपसैव तपोधनाः॥ तपसैव विशुद्धस्य ब्राह्मणस्य दिवौ
कसः॥ १६ ॥ सत्याच्च प्रतिगृह्णन्ति कामान्संवर्धयन्ति च ॥ ब्रह्मा प्रजेश्वरो देवो महादेवस्तथा द्विजाः ॥ १७ ॥ नित्यमेव तपस्यन्ति तपः परम्
दुस्तरम् ॥ यस्येदं भुवनं सर्वं यश्च सर्वमयोऽच्युतः ॥ १८ ॥ यश्च धाता जयत्यस्मिन्स विष्णुः परमेश्वरः ॥ नित्यमेव महाभागास्तपश्चरति
दुश्चरम् ॥१९ ॥ भगवान्वासुदेवस्तु तपः परमिहोच्यते ॥ अष्टौ देवगणांल्लोके प्राप्नोति तपसा नरः ॥ २० ॥ त्रैलोक्यकरणस्यापि शक्तश्च तपसा
भवेत् ॥ दिव्यानाश्च तथास्त्राणां शक्तो भवति धारणात् ॥ २१ ॥ लोके सुराणां भुवि वा द्विजेन्द्रा न विद्यते तत्पुरुषस्य किञ्चित् ॥ तपः
प्रकर्षेण परेण लब्धिर्न विद्यते यस्य महानुभावाः ॥२२ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु तपःप्रशं
सावर्णनोनाम षट्षष्ट्युत्तरद्विशततमोऽध्यायः ॥ २६६ ॥ हंस उवाच ॥ वशे जगदिदं प्राहुः शूरबाहुषु लम्बते ॥ शूराणामथ सर्वेषां शौर्यमेव
विशिष्यते ॥१॥ ब्राह्मणार्थे गवार्थे वा स्वाम्यर्थे मित्रकारणे ॥ आहतौ ये प्रपद्यन्ते नाकपृष्ठं व्रजंति ते ॥२॥धनापहारे संप्राप्ते संप्राप्ते दारविप्लवे ॥
( आत्मनश्च परित्राणे युध्यमानो दिवं व्रजेत् ॥ ३ ॥ क्षत्रविट्छूद्रविप्राणां युद्धमेव परायणम् ॥ ) आत्मनश्च परित्राणे संप्राप्ते देशविप्लवे ॥४॥

दारनाशे तु संप्राप्ते दक्षिणानां च सङ्करे ॥ विप्रस्तु शस्त्रं गृह्णीयात्संकरे चाप्युपस्थिते ॥ ५ ॥ वृत्तिन्तु कल्पयेद्विप्रः क्षत्रधर्मेण वा न
वा ॥ संग्रामान्न निवर्त्तेत तस्य धर्मं हितं तदा ॥ ६ ॥ एकपुत्रं तृणमुखं तवास्मीति च वादिनम् ॥ स्त्रीबालरक्षकम्भीरुं पलायनपरायणम् ॥ ७ ॥
व्यायुधं व्यसनस्थं च परेण सह संगतम् ॥ धुर्यं च धुर्यवाहं च युद्धप्रेक्षकमेव च ॥८॥ न हन्तव्या द्विजश्रेष्ठा युद्धधर्मं विजानता ॥ युद्धं न कुर्याद्या
नस्थः पुरुषेण पदातिना॥९॥समेन युद्धमाकाङ्क्षंस्तथैवाभ्यधिकेन वा॥नरः प्राप्नोति नरकं हीनहा तद्धतोऽपि वा ॥१०॥अवर्मयित्वा यो वाहं चात्मा
नं वर्मयेन्नरः ॥ स शीघ्रं नरकं याति सुकृतेनापि कर्मणा ॥ ११॥ कथितो युद्धधर्मोऽयं फलं चातो निबोधत ॥ धर्मलाभोऽर्थलाभश्च यशोलाभश्च
तस्य वै॥१२॥यः शूरो युद्धयते युद्धे विसृन्दन्परवाहिनीम्॥तस्य धर्मार्थकामाश्च यज्ञाश्चैवाप्तदक्षिणाः॥१३॥अग्निष्टोमादिभिर्यज्ञैरिष्ट्वा विपुलदक्षणैः॥
न तत्फलमवाप्नोति संग्रामे यदवाप्यते ॥ १४ ॥ असृग्यदास्य गात्रेभ्यो विनिर्याति रणाजिरे ॥ तेनैव सार्धं निर्याति तस्य पापं शरीरतः ॥१५॥
सहते च परं क्लेशं प्रहाराणां च रोपणे ॥ यद्वीरः समवाप्नोति तपो नास्त्यधिकं ततः ॥ १६ ॥ यस्य युद्धे प्रहारा ये किन्तु स्याद्दैवयोगतः ॥
युध्यमानस्य धर्मज्ञाः सोऽपि नाके महीयते ॥ १७ ॥ रणे यथाधिकवधं कृत्वा फलमुपाश्नुते ॥ परं ह्यभिमुखं हत्वा तद्यानं योऽधिरोहति॥१८॥
विष्णुक्रान्तं स जयति चैवं युध्यन्रणाजिरे ॥ यस्तु सेनापतिं हत्वा तद्यानमधिरोहति ॥ १९ ॥ अश्वमेधानवाप्नोति चतुरस्तेन कर्मणा ॥
यावन्ति तस्य शस्त्राणि भिंदन्ति त्वचमाहवे ॥ २० ॥ तावतो लभते लोकान्सर्वकामदुघाक्षयान् ॥ यत्रयत्र हतः शूरः शत्रुभिर्विनिपातितः ॥
॥ २१ ॥ अक्षयांल्लभते लोकान्निर्वृतिं दीनतां विना ॥ स्वामी सुकृतमादत्ते हतानां विपलायिनाम् ॥ २२ ॥ स्वामिनो दुष्कृतं सर्वं तदा च प्रति
पद्यते ॥ पलायमानः पुरुषस्तथा प्राप्नोति वै द्विजाः ॥ २३ ॥ पदेपदे दुराचारो गोवधस्य फलं नरः ॥ जीवँल्लक्ष्मीं समाप्नोति मृतश्च त्रिदिवं
नरः ॥ २४ ॥ यशश्चोभयथा विप्रा नास्ति युद्धे निरर्थता ॥ परानभिमुखः शूरो यावद्व्रजति वै द्विजाः ॥ २५ ॥ पदेपदे यज्ञफलमानुपूर्व्यात्स
माप्नुयात् ॥ अभग्नश्च परं हन्याद्भग्नं च परिरक्षति ॥ २६ ॥ पलायन्ते स्थिता यस्मिन्स याति परमां गतिम् ॥ ऊर्ध्वं तिर्यक् च यश्चार्वाक् प्राणा
न्संत्यज्य युध्यति ॥ २७ ॥ हतासुश्च पतेद्युद्धे स स्वर्गान्न निवर्तते ॥ यस्य युद्धे प्रविष्टस्य देहं चिह्नीकृतं परैः ॥ २८ ॥ आत्मानं यूपमुत्सृज्य
स यज्ञोऽनन्तदक्षिणः ॥ नाशौचभाजस्तस्य स्युर्बान्धवा द्विजसत्तमाः ॥ २९ ॥ श्राद्धश्चैवाग्निसंस्कारस्तथैवाप्युदकक्रिया ॥ मृतस्य नोपयुज्यन्ते
संग्रामेऽभिमुखस्य तु ॥३०॥ क्रियन्ते तस्य धर्मज्ञा आनृण्यार्थं स्वबन्धुभिः ॥ यस्य चिह्नीकृतं गात्रं शरशक्त्यृष्टितोमरैः ॥ ३१ ॥ देवकन्यास्तु

तं वीर रमयन्ते रमन्ति च ॥ वराप्सरःसहस्राणि शूरमायोधने हतम् ॥ ३२ ॥ त्वरितास्त्वभिधावन्ति मम भर्ता ममेति च ॥ हतस्याभिमुखस्याजौ पतितस्यानिवर्तिनः ॥ ३३ ॥ ह्रियते यत्परैर्द्रव्यं नरमेधफलं तु तत् ॥ शक्यं त्विह समृद्धैस्तु यष्टुं क्रतुशतैर्नरैः ॥ ३४ ॥ आत्मदेहं तु संग्रामे त्यक्तुं विप्राः सुदुष्करम् ॥ यां यज्ञसंघैस्तपसा च विप्राः स्वर्गैषिणः सत्त्वचयैः प्रयान्ति ॥ क्षणेन तामेव गतिं प्रयान्ति महाहवे स्वां तनुमुत्सृजन्तः ॥ ३५ ॥ सर्वे च वेदाः सह षड्भिरंगैः सांख्यं च योगं च वने च वासः ॥ एतान्गुणानेक एवातिदेशेत्संग्रामधाम्ना स्वतनुं त्यजेद्यः ॥ ३६ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे हंसगीतासु शूरगुणवर्णनो नाम सप्तषष्ट्युत्तरद्विशततमोऽध्यायः ॥ ॥ २६७ ॥ हंस उवाच ॥ अहिंसा सर्वधर्माणां धर्मः पर इहोच्यते ॥ अहिंसया तदाप्नोति यत्किञ्चिन्मनसेप्सितम् ॥ १ ॥ स्त्रीहिंसा धनहिंसा च प्राणिहिंसा तथैव च ॥ त्रिविधां वर्जयन्हिंसां ब्रह्मलोकं प्रपद्यते ॥ २ ॥ दाक्षिण्यं रूपलावण्यं सौभाग्यमपि चोत्तमम् ॥ धनं धान्यमथारोग्यं धर्मं विद्यां तथा स्त्रियः ॥ ३ ॥ राज्यं भोगाँश्च विपुलान्ब्राह्मण्यमपि चेप्सितम् ॥ अष्टौ चैव गुणान्वापि दीर्घं जीवितमेव च ॥४ ॥ अहिंसकाः प्रपद्यंते यदन्यदपि दुर्लभम्॥अहिंसकस्तथा जन्तुर्मांसवर्जयिता भवेत्॥५॥मासि मास्यश्वमेधेन यो यजेत शतं समाः॥मांसानि च न खादेद्यः सम वा स्यान्न वा समम्॥६॥सदा यजति सत्रेण सदा दानं प्रयच्छति ॥ सदा तपस्वी भवति मधुमांसस्य वर्जनात्॥७॥सर्ववेदा नतत्कुर्युः सर्वदानानि चैव हि ॥ यो मांसरसमास्वाद्य सर्वमांसानि वर्जयेत् ॥ ८ ॥ दुष्करं हि रसज्ञेन मांसस्य परिवर्जनम् ॥ चतुर्व्रतमिदं श्रेष्ठं प्राणिनां मृत्युभीरुणाम् ॥ ९ ॥ तदा भवति लोकेऽस्मिन्प्राणिनां जीवितैषिणाम् ॥ विश्वास्यश्चोपगम्यश्च नहि हिंसारुचिर्यथा ॥ १० ॥ प्राणा यथात्मनोऽभीष्टा भूतानामपि ते तथा ॥ आत्मौपम्येन गन्तव्यमात्मविद्भिर्महात्मभिः ॥ ११ ॥ अहिंसा परमो धर्मः सत्यमेव द्विजोत्तमाः ॥ लोभाद्वा मोहतो वापि यो मांसान्यत्ति मानवः ॥ १२ ॥ निर्घृणः स तु मन्तव्यः सर्वधर्मविवर्जितः ॥ स्वमांसं परमांसेन यो वर्धयितुमिच्छति ॥ १३ ॥ उद्विग्नवासे वसति यत्रयत्राभिजायते ॥ धनेन क्रयिको हन्ति उपभोगेन खादकः ॥ १४ ॥ घातको वधबन्धाभ्यामित्येष त्रिविधो वधः ॥ भक्षयित्वा तु यो मांसं पश्चादपि निवर्त्तते ॥ १५ ॥ तस्यापि सुमहान्धर्मो यः पापाद्विनिवर्त्तते ॥ राक्षसैर्वा पिशाचैर्वा डाकिनीभिर्निशाचरैः ॥ १६ ॥ तथान्यैर्नाभिभूयेत यो मांसं परिवर्जयेत् ॥ खेचराश्चावगच्छन्ति जीवतोऽस्य मृतस्य वा ॥ १७ ॥ पृष्ठतो द्विजशार्दूल यो मांसं परिवर्जयेत् ॥ तथान्यैर्नाभिभूयेत यो मांसं परिवर्जयेत् ॥ १८ ॥ चिताधूमस्य गन्धेऽपि मृतस्यापि निशाचराः ॥ क्रव्यादे विप्रणश्यन्ति यो मांसं परिवर्जयेत् ॥१९॥

शस्त्राग्निनृपचौरेभ्यः सलिलाच्च तथा विषात् ॥ भयं न विद्यते तस्य तथान्यदपि किञ्चन ॥ २० ॥ न ताँल्लोकान्प्रपद्यंते ये लोका मांसवर्जिनाम् ॥ स दण्डी स च विक्रान्तः स यज्वा स तपस्यति ॥ २१ ॥ स सर्वलोकानाप्नोति यो मांसं परिवर्जयेत् ॥ न तस्य दुर्लभं किञ्चित्तथा लोकद्वये भवेत् ॥ वरशापसमर्थश्च तथा स्यान्मांसवर्जकः ॥ २२ ॥ विमानमारुह्य शशाङ्कतुल्यं देवाङ्गनाभिः सहितो नृवीरः ॥ सुखानि भुक्त्वा सुचिरं हि नाके लोकानवाप्नोति पितामहस्य ॥ २३ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे हंसगीतासु हिंसादोषवर्णनो नामाष्टषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६८ ॥ हंस उवाच ॥ क्षमा धर्मः क्षमा सत्यं क्षमा शौचं क्षमा बलम् ॥ क्षमा यज्ञाः क्षमा दानं क्षमा च परमं तपः ॥ १ ॥ आक्रुष्टस्ताडितो वापि परेषां यस्तितिक्षते ॥ तस्मात्सुकृतमादत्ते दुष्कृतं च प्रयच्छति ॥ २ ॥ यः क्षमावान्स धर्मात्मा क्षमयैव द्विजोत्तमाः ॥ आक्रोष्टारं निर्दहति स्वर्गलोकं च गच्छति ॥ ३ ॥ एकः क्षमावतां दोषो द्वितीयो नोपलभ्यते ॥ यदेनं क्षमया युक्तं त्वशक्तं मन्यते जनः ॥ ४ ॥ विज्ञेयः सोऽपि दोषोऽस्य द्विजेन्द्राः स महान् गुणः ॥ तस्मात्पुण्यसमादानाद् दुष्कृतस्य समर्पणात् ॥ ५ ॥ मृतः क्षमावान्पुरुषो ब्रह्मलोकं प्रपद्यते ॥ विमानेनार्कवर्णेन हंसयुक्तेन भास्वता ॥ ६ ॥ प्राप्नोति कामान्दिवि चेह मुख्या न्संवत्सराणां नियुतानि विप्राः ॥ सर्वंसहः क्षान्तिपरो मनुष्यस्त्वतः क्षमावान्सततं नरः स्यात् ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु क्षमागुणवर्णनो नामैकोनसप्तत्यधिकद्विशततमोऽध्यायः ॥ २६९ ॥ हंस उवाच ॥ आनृशंस्यं परो धर्मो लोकेऽस्मिन्द्विजसत्तमाः ॥ तस्मादात्मवता भाव्यं कृतज्ञेन नरेण तु ॥ १ ॥ ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते तथा ॥ निष्कृतिर्विहिता राजन्कृतघ्ने नास्ति निष्कृतिः ॥ २ ॥ नरकान्न विमुच्यन्ते ये कृतघ्ना नराधमाः ॥ आभूतसंप्लवं घोरा नात्र कार्या विचारणा ॥ ३ ॥ तिर्यग्योनौ हि जायन्ते दुःखावासं वसन्ति च ॥ लभन्ते न क्वचित्त्राणं तथा प्राप्ते भये नराः ॥ ४ ॥ एतावानेव पुरुषः कृतं यस्मिन्न नश्यति ॥ कृतज्ञः स्वर्गमाप्नोति कृतघ्नो विन्दते महत् ॥ ५ ॥ प्रभुं वा यदि वा भृत्यं विप्रं गुरुमथापि वा ॥ आपन्नं न त्यजेद्यस्तु स तु नाके महीयते ॥ ६ ॥ समृद्धं यस्तु संसेव्य दरिद्रं यो विमुञ्चति ॥ स नृशंसतमो लोके नरो नरकभाजनम् ॥ ७ ॥ न त्यजेत नरो भृत्यं स्वगेहे गतयौवनम् ॥ असमर्थं तु वार्धक्ये त्यक्त्वा नरकमाप्नुयात् ॥ ८ ॥ कुञ्जरन्तुरगं वृद्धं धेनुं दान्तमथापि वा ॥ यस्त्यजेत्स सुदुर्बुद्धिर्नरकं प्रतिपद्यते ॥ ९ ॥ नाद्रियन्ते पशून्बद्धा यवसेनोदकेन वा ॥ यथावद् द्विजशार्दूलास्ते नरा निरयङ्गताः ॥ १० ॥ अचिकित्स्येन रोगेण गृहीतं स्वगृहे पशुम् ॥

चिकित्स्यं न त्यजेदेनं यावज्जीवं द्विजोत्तमाः ॥ ११ ॥ तस्य त्यागादवाप्नोति मानवो नरकं ध्रुवम् ॥ समृद्धं स्वामिनं यस्तु सेवित्वा पुरुषाधमः ॥
असमृद्धं त्यजेत्पश्चाद् ध्रुवं नरकमृच्छति ॥ १२ ॥ यो नरः क्लेशमाप्नोति हीनार्थस्वामिसेवनात् ॥ तत्तपोऽस्य विनिर्दिष्टं ब्रह्मलोकाय वै द्विजाः ॥
॥ १३ ॥ कृतज्ञः पुरुषो लोके कृतज्ञः सर्वभाक्तथा ॥ कृतज्ञः सर्वमाप्नोति यत्किञ्चिन्मनसेच्छति ॥ १४ ॥ मातरं पितरं पुत्रं याज्यमृत्विज
मेव च ॥ स्वामिनं च गुरुं भृत्यं बान्धवं पशुमेव च ॥ १५ ॥ भार्यां वापि द्विजश्रेष्ठा न त्यजेन्मनसा क्वचित् ॥ एषां तु पतति त्यागे ध्रुवं
नरकमृच्छति ॥१६॥ न त्यजेत तथैवाग्निं नाग्निमुत्सादयेत्तथा ॥ देवतार्चां तथा विप्रास्त्यक्त्वा नरकमृच्छति॥१७॥छायायां यस्य विश्रान्तो नरः
स्यात्पादपस्य तु ॥ तस्मात्पत्रं न हिंसेत कृतज्ञत्वमनुस्मरन् ॥ १८ ॥ कृतज्ञो भूतिमाप्नोति कृतज्ञश्च तथा यशः ॥ कृतज्ञो नाकमाप्नोति ब्रह्मलो
कमथापि वा ॥१९ ॥ कृतज्ञैर्वसुधा सर्वा धार्यते सुमहात्मभिः ॥ २० ॥ कृतज्ञ एव यजते कृतज्ञस्तप्यते तपः ॥ यज्वा दाता तथा शूरः कृतज्ञश्च
तथा भवेत् ॥ कृतज्ञस्त्यजते प्राणान्मित्रकार्ये तथा ध्रुवम् ॥ २१ ॥ यो ब्रह्मलोकस्तपसा न शक्यः प्राप्तुं द्विजेन्द्रा महतः सुकृच्छ्रात् ॥ तं ब्रह्म
लोकं हि नरः कृतज्ञः प्राप्नोति शीघ्रं न हि संशयोऽत्र ॥ २२ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु
कृतज्ञतागुणनिरूपणो नाम सप्तत्यधिकद्विशततमोऽध्यायः ॥२७०॥ हंस उवाच॥ आचारः स्वर्गजनन आचारः कीर्तिवर्धनः ॥ आचारश्च तथायु
ष्यो धन्यो लोकसुखावहः ॥ १ ॥ सर्वलक्षणहीनोऽपि स सदाचारवान्नरः ॥ सर्वलक्षणलक्षण्यैर्विज्ञेयः पुरुषो वरः ॥२॥ आचारस्त्रिविधो लोके
सेवितव्यो विचक्षणैः ॥ श्रुतिस्मृत्युदितश्चैव सदाचारस्तथा परः ॥ आचारप्रभवं सौख्यं धनं च द्विजसत्तमाः ॥३॥ आचारयुक्तस्त्रिदिवं प्रयाति
आचारवानेव भवत्यरोगः ॥ आचारवानेव चिरन्तु जीवेदाचारवानेव भुनक्ति लक्ष्मीम् ॥ ४ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेय
वज्रसंवादे मुनीन्प्रति हंसगीतास्वाचारवर्णनो नामैकसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७१ ॥ हंस उवाच ॥ शौचं देवाः प्रशंसन्ति शौचं ब्रह्मर्ष
यस्तथा॥ शौचयुक्तेन यद्दत्तं तदश्नन्ति दिवौकसः॥१॥ सर्वेषामेव धर्माणां शौचं वा फलभाग्भवेत् ॥ शौचवानेव पुरुषो यथेष्टाङ्गतिमाप्नुयात्
॥ २ ॥ शरीरशौचं जलमृद्भिरुक्तमलोभशौचन्तु मनः प्रमार्ष्टि ॥ मनो विशुद्धं पुरुषस्य यस्य स लोकमाप्नोति पितामहस्य ॥ ३ ॥ इति श्री
विष्णुधर्मोत्तरे तृ० ख० मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु शौचवर्णनो नाम द्विसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७२ ॥

॥ हंस उवाच ॥ तीर्थानुसरणं शौचं तीर्थानुसरणं तपः ॥ तीर्थाम्भोभिर्नराः पूता यान्ति नाकमसंशयम् ॥ १ ॥ तीर्थानुसरणं पुण्यं चाध्वना
प्राप्नुयान्नरः ॥ अध्वना क्षीणपापस्तु त्रिदिवं प्रतिपद्यते ॥ २ ॥ पाप्मनां पापशमनं विधत्ते तपसा विना ॥ विपाप्मना तथा तुल्यं
विधत्ते यत्प्रकीर्तितम् ॥ ३ ॥ बहूपकरणा यज्ञा नानासम्भारविस्तराः ॥ न ते शक्या दरिद्रेण प्राप्तुं धर्मभृतांवराः ॥ ४ ॥ दरिद्रैरन्यथा
प्राप्तुं शक्यं यज्ञफलं द्विजाः ॥ तीर्थानुसरणं कृत्वा तस्मात्तीर्थपरो भवेत् ॥ ५ ॥ यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ॥ विद्या तपश्च
कीर्तिश्च स तीर्थफलमश्नुते ॥ ६ ॥ पापानां पापशमनं धर्मवृद्धिस्तथा सताम् ॥ विज्ञेयं सेवितं तीर्थं तस्मात्तीर्थपरो भवेत् ॥ ७ ॥
ये साग्नयो धनोपेतास्तीर्थानुसरणे रताः ॥ तेषां यज्ञफलावाप्तिर्विनापि धनसंचयैः ॥ ८ ॥ सर्वेषामेव वर्णानां सर्वाश्रमनिवासिनाम् ॥
तीर्थं फलप्रदं ज्ञेयं नात्र कार्या विचारणा ॥ ९ ॥ कार्यान्तरेण यो गत्वा स्नानं तीर्थे समाचरेत् ॥ तीर्थयात्राफलं तस्य नास्ति
स्नानफलं ततः ॥ १० ॥ अध्वनां क्लेशदुःखेन तीर्थयात्राफलं भवेत् ॥ तीर्थानुसरणं पद्भ्यां तपः परमिहोच्यते ॥ ११ ॥ तदेव कृत्वा यानेन
स्नानमात्रफलं लभेत् ॥ यस्यान्ये कुर्वते शक्त्या तीर्थयात्रां तथा नरः ॥ १२ ॥ यानासनाभ्यां च तथा फलं तस्य चतुर्गुणम् ॥
तीर्थानुसरणं कृत्वा क्षेत्रभुग्विजितेन्द्रियः ॥ १३ ॥ फलं प्राप्नोति विप्रेन्द्रास्तीर्थाद्दशगुणं भवेत् ॥ छत्रोपानहहीनस्तु तथा शतगुणं लभेत्
॥ १४ ॥ छत्रोपानहहीनस्तु भैक्ष्याशी विजितेन्द्रियः ॥ महापातकजैर्घोरैः क्षिप्रं पापैर्विमुच्यते ॥ १५ ॥ न भैक्ष्यं परपाकं तु न च
भैक्ष्यं प्रतिग्रहः ॥ सोमपानसमं भैक्ष्यं तस्माद्भैक्ष्यं समाचरेत् ॥ १६ ॥ लोकेऽस्मिन्द्विविधस्तीर्थैः स्वच्छन्दो निन्दितस्तथा ॥ पुष्क
राद्यास्तु ये तीर्थाः स्वप्रभावमहत्तराः ॥ १७ ॥ तेषां तीर्थप्रभावेण कृतः पूर्वैः प्रतिग्रहः ॥ कण्वाश्रमाद्या ये तीर्थाः कण्वादीनां प्रभावतः ॥ १८ ॥
पुण्यास्ते कथिता लोके पापघ्नाः पुण्यवृद्धिदाः ॥ द्विप्रकारस्य तीर्थस्य सेवा ज्ञेया महाफला ॥ १९ ॥ ये तीर्थसेवानिरता द्विजेंद्रास्ते
पापहीना दिवमाप्नुवन्ति ॥ तत्रोष्य कालं सुचिरं सुखन्ते मानुष्यलोके सुखमाप्नुवन्ति ॥ २० ॥ इति श्रीधर्मोत्तरे तृ०ख०मार्कण्डेयवज्रसंवादे
मुनीन्प्रति हंसगीतासु तीर्थफलवर्णनो नाम त्रिसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७३ ॥ हंस उवाच ॥ बहूपकरणा यज्ञा नानासम्भा
रविस्तराः ॥ न ते शक्या दरिद्रेण प्राप्तुं धर्मभृतांवराः ॥ १ ॥ दरिद्रैरप्यथवाप्तुं शक्यं यज्ञफलं द्विजाः ॥ सदोपवासनिरतैस्तस्मा
दुपवसेन्नरः ॥ २ ॥ यावन्मासोपवासन्तु तावत्तप इहोच्यते ॥ अनाशकमत ऊर्ध्वं द्विजातीनां प्रकीर्तितम् ॥ ३ ॥ षष्ठकाला

शनं शूद्रे तपः परमिहोच्यते ॥ वर्णसंकरजातीनां दिनमेकं प्रकीर्तितम् ॥ ४ ॥ षष्ठकालात्परं शूद्रस्तपः कुर्याद्यथा क्वचित् ॥ राष्ट्रे हानिस्तदा ज्ञेया राज्ञश्चोपद्रवो महान् ॥ ५ ॥ शूद्रस्तु षष्ठकालाशी यावच्छक्त्या तपश्चरेत् ॥ मासोपवासादर्वाग्वातथा शक्त्या द्विजश्चरेत् ॥ ६ ॥ नास्ति गङ्गासमं तीर्थं नास्ति कृष्णसमा गतिः ॥ गायत्रीसदृशं जप्यं होमं व्याहृतिभिः समम् ॥ ७ ॥ अन्तर्जले तथार्वातिः पापघ्नमघमर्षणात् ॥ अहिंसासदृशं पुण्यं दानात्संसवनं परम् ॥ ८ ॥ एवमेव द्विजा नास्ति तपो नानशनात्परम् ॥ उपवासैः प्रतप्तानां दीर्घं सुखमनन्तरम् ॥ ९ ॥ उपवासतपःशीला नाकलोकमुपागताः ॥ मोदन्ते त्रिदशैः सार्धं यथा देवगणास्तथा ॥ १० ॥ पापानां पापशमनं सताभीप्सितकामदम् ॥ उपवासो विनिर्दिष्टो विशेषाद्देवताश्रयः ॥ ११ ॥ उपवासप्रसक्तानां प्रसादसुमुखाः सुराः ॥ यथेच्छमपि जायन्ते नात्र कार्या विचारणा ॥ १२ ॥ वासुदेवमथाश्रित्य नरः सम्यगुपोषितः ॥ अनन्तफलमाप्नोति त्वनन्तः संयतो हरिः ॥ १३ ॥ वासुदेवमथाश्रित्य ब्राह्मणैर्यैरुपोषितम् ॥ तेद्यापि न निवर्तन्ते समुद्रेभ्य इवापगाः ॥ १४ ॥ उपोषिता ये विधिवन्मनुष्यास्ते नाकमासाद्य सुरोपमानाः ॥ देवाङ्गनाभिः सहिता मनुष्या भवन्ति लोके गतसर्वदुःखाः ॥ १५ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख० मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासूपवासफलवर्णनो नाम चतुःसप्तत्युत्तरद्विशततमोऽध्यायः ॥ २७४ ॥ हंस उवाच ॥ मनःसमाधिसंयुक्तस्तीर्थानुसारणात्फलम् ॥ प्राप्नोति सुमहद्विप्रास्तथा सम्यगुपोषितः॥१॥सर्व एव मनुष्यस्य सर्वकर्मसु साधकम् ॥ मनसा तु विशुद्धेन यद्यदाचरते नरः ॥२॥ न तद्बहुफलं तस्य प्रेत्य चेह च जायते॥ मनो हि परमं भूतं तच्छौचे प्रयतेत्सदा॥३॥मनःशौचयुतो जन्तुर्नरकं न प्रपद्यते॥ नाकलोकमवाप्नोति त्वथ वा परमं पदम्॥४॥गुणैस्तु सह योवासो गतदोषस्य मानदाः॥उपवासस्स विज्ञेयो न शरीरस्य शोषणम्॥५॥ निर्मले सुमुखे शुद्धे सत्यकूले महाह्रदे ॥ स्नातव्यं मानसे तीर्थे तद्धि तीर्थमनुत्तमम् ॥६॥ अत्राप्युदाहरन्तीमं श्लोकं पौराणमच्युताः ॥ यमो वैवस्वतो देवो यस्तवैष हृदि स्थितः ॥ आत्मनश्चाविवादश्चेन्मा गङ्गां मा कुरून्गमः॥७॥मनो लाघवदं कर्म सततं तु समाचरेत् ॥ सर्वाणि तस्य पुण्यानि भवन्त्यभ्यधिकानि तु ॥८॥ मनःशौचसमायुक्तो यानि मर्त्यो निषेवते॥मन एव मनुष्यस्य पूर्वरूपाणि शंसति॥९॥मन एव विजानाति कर्मणो गुरुलाघवम्॥सत्यं शौचं दमः शौचं शौचं शारीरमेव च॥१०॥ सर्वाणि तस्य शौचानि यस्य शुद्धं मनः सदा ॥ मनःशुद्धिविहीनस्य सर्वे शौचा निरर्थकाः ॥११॥ न तु सा कृत्रिमा शक्या कर्तुं नास्तिक्यवर्जितैः ॥ यस्य दोषपरित्यक्तं गुणाधीनं सदा मनः ॥ १२ ॥ स एव यजते यज्ञैः स एकस्तपते तपः ॥ स एकः सर्वमाप्नोति यत्किञ्चिन्मनसे

च्छति॥तस्माद्धि सर्वशौचानां मनःशौचं परं स्मृतम् ॥१३॥ आत्मा नदी पुण्यतटा सुतीर्था सत्योदका धृतिकूला दयोर्मिः॥ यस्यां स्नातः पूयते पुण्यकर्मा तीर्थं ह्यात्मा नित्यसंभोग एव ॥१४॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख०मा० सं०मुनीन्प्रति हंसगीतासु मनःशौचनिरूपणो नाम पञ्चसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७५ ॥ हंस उवाच ॥ श्रद्धान्वितेन मनसा यद्यत्किञ्चित्समाचरेत् ॥ तत्तद्बहुफलं तस्य जायते लोकयोर्द्वयोः ॥ ॥ १ ॥ श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः॥ देवश्रद्धा नरा देवाः कथिता देवयाजिनः॥२॥पितृश्रद्धाश्च पितरो दैत्ये श्रद्धा दितेः सुताः॥ पापश्रद्धास्तथा पापा विज्ञेया नरकङ्गमाः ॥ ३ ॥ तस्माच्छ्रद्धां समास्थाय धर्मं धर्मी समाचरेत् ॥ बहुद्वारस्य धर्मस्य नेहास्ति विफला क्रिया ॥ आस्तिक्यभावमास्थाय नरः श्रद्धासमन्वितः ॥ ४ ॥ नित्यं पुण्यानि कुर्वीत पापानि परिवर्जयेत् ॥ पुण्यं बहुफलं तस्य श्रद्धामास्थाय यत्कृतम् ॥५ ॥ श्रद्धा पवित्रं परमं हि लोके श्रद्धा शरीरं पुरुषस्य चोक्तम् ॥ श्रद्धां समास्थाय नरश्च कृत्वा पुण्यानि पुण्यां गतिमाप्नुवन्ति ॥ ६ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु श्रद्धाफलवर्णनो नाम षट्सप्तत्युत्तरद्विशततमोऽध्यायः ॥ २७६ ॥ हंस उवाच ॥ नित्यं नैमित्तिकं काम्यं क्रियाङ्गं मलकर्षणम् ॥ क्रियास्नानं तथा षष्ठं षोढा स्नानं प्रकीर्त्तितम् ॥१॥ नित्यनैमित्तिकौ कार्यौ उष्णोदकपरोदकैः ॥ तृतीयं च परस्नानं यदुक्तं मलकर्षणम् ॥ २ ॥ पञ्च पिण्डान्समुद्धृत्य स्नातव्यं परवारिणि ॥ अतोऽन्यथा नरः स्नातो दुष्कृतांशेन लिप्यते ॥ ३ ॥ स्नातः शुद्धिमवाप्नोति न तु स्नानफलं नरः ॥ उद्धृत्य पञ्च पिण्डानि स्नातोऽपि परवारिणा ॥ ॥४॥ वह्नितप्ताम्बुना स्नातो नाप्नोति स्नानजं फलम् ॥ स्नातः शुद्धिमवाप्नोति कर्मण्यश्चैव जायते ॥५॥तस्मात्पुण्येषु तीर्थेषु सागरेषु सरःसु च ॥ सरित्स्वपि च दिव्यासु तथा प्रस्रवणेष्वपि ॥ ६ ॥ धर्मार्थमाचरेत्स्नानं तेन नाके महीयते ॥ तोयालाभे तथालस्ये नित्यनैमित्तिकावुभौ ॥ ७ ॥ मलापकर्षणं स्नानं तृतीयं च समाचरेत् ॥ शुद्धिमात्रमवाप्नोति तप्तोदकपरोदकैः ॥ ८ ॥ स्रवन्ति रात्रौ छिद्राणि सुप्तस्य पुरुषस्य तु ॥ तस्मात्कल्यमथोत्थाय स्नानं नित्यं समाचरेत् ॥९॥ क्रियावैफल्यमाप्नोति स्नानहीनः समाचरन् ॥ यथाकथञ्चित्कुर्वीत स्नानं नित्यमतो बुधः ॥ १० ॥ स्नातस्तु तर्पणं कृत्वा देवानां पितृभिः सह ॥ स्नातो भवति धर्मात्मा नान्यथा स्नात उच्यते ॥ ११ ॥ सूतके मृतके स्नातो न कुर्यात्तर्पणक्रियाम् ॥ मृतके तर्पणं कुर्यान्मृतस्यैकस्य पण्डितः ॥ १२ ॥ स्नातः शौचमवाप्नोति स्नानं तुष्टिकरं परम् ॥ बाह्यमाभ्यन्तरं दोषं स्नानेन प्रणुदत्यपि ॥ १३ ॥ दुःस्वप्नशमनं स्नानं चामङ्गल्यप्रणाशनम् ॥ मङ्गल्यजननं मुख्यं मनःशौचकरं परम् ॥ १४ ॥ नाप्नोति नारकं दुःखं

नित्यस्नायी नरोत्तमः ॥ वह्निवृद्धिकरं स्नानं स्नानं सौभाग्यवर्धनम् ॥ १५ ॥ अलक्ष्म्याः शमनं स्नानं स्नानं दुरितनाशनम् ॥ स्नातः क्रियासमर्थश्च तथा भवति मानवः ॥ १६ ॥ शिरसा तु विना स्नातो न स्नातः परिकीर्तितः ॥ कल्येऽसमर्थः स्नाने तु प्राप्ते भोजनकर्मणि ॥ १७ ॥ ध्रुवं समाचरेत्स्नानं स्वर्गमार्गप्रदर्शकम् ॥ शिरःस्नातस्तु कुर्वीत दिव्यं पित्र्यं द्विजोत्तम ॥ १८ ॥ दिव्यपित्र्याणि कर्माणि नाह्नातस्तु समाचरेत् ॥ विनापि तीर्थसलिलाद्दैवे पैत्र्ये च कर्मणि ॥ १९ ॥ सदा समाचरेत्स्नानं देहशुद्धिकरं परम् ॥ स्नानादेव परं पुण्यं तीर्थस्नातः समश्नुते ॥ २० ॥ भूमिष्ठन्तूद्धृतात्पुण्यं तस्मात्प्रस्रवणोदकम् ॥ तस्माच्च नैर्झरन्तोयं नैर्झरादपि सारसम् ॥ २१ ॥ सारसादपि नादेयं तस्मात्साधुपरिग्रहम् ॥ सर्वेभ्यश्च तथा पुण्यं कथितं जाह्नवीजलम् ॥ २२ ॥ गङ्गाप्लुताङ्गा दिवि देवभोगान्भुक्त्वा चिरं प्राप्य मनुष्यभावम् ॥ भवन्ति लोके सुखिनः समृद्धा यशोन्विता धर्मपरा विदुखाः ॥ २३ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख० मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु स्नानवर्णनो नाम सप्तसप्तत्युत्तरद्विशततमोऽध्यायः ॥ २७७ ॥ हंस उवाच ॥ जप्यं सिद्धिकरं लोके द्विजानां परिकीर्तितम् ॥ जप्येन सिद्धिमाप्नोति विशेषेण द्विजोत्तमाः ॥ १ ॥ जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः ॥ कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥ २ ॥ दार्वासने[1] सुखासीनस्त्वथ वापि कुशासने ॥ जप्यं समाहितः कुर्यादथ वापि समुत्थितः ॥ ३ ॥ पूर्वोत्तराशाभिमुखः सूर्यस्याभिमुखोऽपि वा ॥ दर्भपाणिर्द्विजश्रेष्ठा ज्ञात्वा धर्मस्य निश्चयम् ॥ ४ ॥ ऋषिं मन्त्रस्य विज्ञाय च्छन्दो दैवतमेव च ॥ विनियोगं जपं कुर्याद्ध्यायन्वै मन्त्रदेवताम् ॥ ५ ॥ नातिद्रुतेन कर्तव्यं न चैवातिविलम्बितम् ॥ वर्णानुच्चारयेत्सर्वाञ्जप्यकाले द्विजोत्तमाः ॥ ६ ॥ मन्त्रमावर्तयेद्विद्वान्यथाशक्ति ह्यतन्द्रितः ॥ स्वाध्यायस्तु भवत्युच्चैरुपांशुर्जप्य उच्यते ॥ ७ ॥ मनसा तु तथा जाप्यं तस्माद्बहुफलं स्मृतम् ॥ अक्षसूत्रस्तु कर्तव्यो रुद्राक्षैर्द्विजसत्तमाः ॥ ८ ॥ पद्माक्षैर्वा महाभागास्त्वथ वा पुत्रजीवकैः ॥ मुक्ताफलैर्विद्रुमेण रुक्मेण स्फटिकेन वा ॥ ९ ॥ कुशाग्रुणेन वा विप्राः सम्यग्ग्रंथिमता सता ॥ गणनं वा तथा कुर्यात्सम्यगङ्गुलिपर्वभिः ॥ १० ॥ एवं कृत्वा द्विजा जप्यमवश्यं मन्त्रदेवताम् ॥ आराध्य तु तदाप्नोति यद्यद्वाञ्छति चेतसा ॥ ११ ॥ जप्येन सिद्धिमासाद्य ब्रह्मलोकमवाप्नुयात् ॥ जप्येन मुच्यते पापाज्जप्येन त्रिदिवं व्रजेत् ॥ १२ ॥ जप्येन मोक्षमाप्नोति तस्माज्जप्यपरो भवेत् ॥ अकामकामं जप्येन ध्रुवं मोक्षमवाप्नुयात् ॥ १३ ॥ कामकामस्तदाप्नोति यं कामं मनसेच्छति ॥ संसिद्धा ऋषयः सर्वे जप्येनैव द्विजोत्तमाः ॥ १४ ॥

---

१ 'दिव्यासने' इति ख० पुस्तके ।

जप्यं पवित्रं परमं द्विजानां जप्येन पापं सकलं जहाति ॥ जप्येन लोकाँल्लभते त्वभीष्टाञ्जप्येन मोक्षं लभते द्विजातिः ॥ १९ ॥ इति श्रीविष्णु धर्मोत्तरे तृतीय खण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु जप्यवर्णनो नामाष्टसप्तत्युत्तरद्विशततमोऽध्यायः ॥ २७८ ॥ हंस उवाच ॥ कृत्वा जलनिमग्नस्तु मन्त्रजापं द्विजोत्तमाः ॥ फलमक्षयमाप्नोति मुच्यते सर्वकिल्बिषैः ॥ १ ॥ मन्त्रमन्तर्जले जप्यं ध्यायता मन्त्रदेवताम् ॥ नरं मोचयते पापान्महापातकजादपि ॥ २ ॥ अन्तर्जलेनाथ विधूतपापा द्विजास्तु नाकं ध्रुवमेव यान्ति ॥ जले निमग्नेन ततस्तु यत्नान्मन्त्रस्य जापः पुरुषेण कार्यः ॥ ३ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतास्वन्तर्जले जप्य वर्णनो नामैकोनाशीत्युत्तरद्विशततमोऽध्यायः ॥ २७९ ॥ ॥ हंस उवाच ॥ ॥ रेचकं पूरकं चैव कुम्भकं च तथा द्विजाः ॥ एकत्र्यवस्थो विज्ञेयः प्राणायामो महाफलः ॥ १ ॥ आददानस्तु यः श्वासं मंत्राध्ययनमाचरेत् ॥ मनसा ब्राह्मणश्रेष्ठा रेचकं तत्प्रकीर्तितम् ॥ २ ॥ श्वास सन्धारणं कुर्वन्नाददानो न च त्यजन् ॥ पूरकं तद्विनिर्दिष्टं सर्वकल्मषनाशनम् ॥ ३ ॥ मंत्रस्य देवताध्यानं प्राणायामं तथा चरेत् ॥ प्राणायामा त्परं नास्ति द्विजातीनां तथा तपः ॥ ४ ॥ निरोधाज्जायते वायुस्ततस्त्वग्निः प्रजायते ॥ ततस्तु सलिलं देहे पूयते तैस्त्रिभिर्नरः ॥ ५ ॥ आके शाग्रं नखाग्रं स्वं तप्स्यते परमं तपः ॥ यस्तु कुर्याद् द्विजश्रेष्ठाः प्राणायाममतन्द्रितः ॥ ६ ॥ न तत्पुण्यमवाप्नोति तीर्थानुसरणाद्विजाः ॥ न यज्ञेन तथा कृच्छ्रैः प्राणायामाद्यदाप्नुयात् ॥ ७ ॥ प्राणायामपरा विप्राः सर्वनिर्धौतकल्मषाः ॥ त्रिदिवं प्रतिपद्यन्ते मोक्षं वा मनसेप्सितम् ॥८॥ प्राणायामेन नश्यन्ति महापातकजान्यपि ॥ घोराण्येनांसि धर्मज्ञाः प्राणायाममतश्चरेत् ॥ ९ ॥ एतत्तपस्तत्परमं द्विजानां पापापहं पुण्यविवृद्धि कारि ॥ मोक्षप्रदं वा पुरुषोत्तमानां तस्मात्प्रयत्नेन समाचरेत्तत् ॥ १० ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु प्राणायामवर्णनो नामाशीत्युत्तरद्विशततमोऽध्यायः ॥२८०॥ हंस उवाच ॥ विषयेभ्यः प्रवृत्तस्य चेतसो विनिवर्तनम् ॥ प्रत्याहारं विनिर्दिष्टं परमन्तत्तपः स्मृतम् ॥१॥ अत्यन्तचञ्चलं चित्तं तस्य संयमनं द्विजाः ॥ प्रत्याहारेण कर्तव्यं पुरुषेण विपश्चिता ॥२॥ प्रत्याहृत्य नर श्चेतः कामेभ्यो द्विजसत्तमाः ॥ कामानां भाजनं लोके मोक्षस्य च तथा भवेत् ॥३॥ विहाय कामान्यः सर्वान्पुमाँश्चरति निस्पृहः॥निर्ममो निरहं कारः स शान्तिमधिगच्छति ॥४॥ प्रत्याहारं यथा कुर्यात्कामेभ्यश्चेतसो नरः ॥ यथाकाममवाप्नोति मोक्षोपायं च विन्दति॥५॥ चञ्चलं हि मनो विप्राः प्रमाथि बलवद्दृढम् ॥ तस्य यत्नं समास्थाय कर्तव्यो निग्रहो बुधैः॥६॥यावन्न चेत आयाति वैराग्यं परमं नरः॥तावन्न शक्तो भवति प्रत्या

हारस्य वै द्विजाः ॥७॥ जन्ममृत्युजराव्याधिदुःखशोकार्दितं जगत् ॥ पश्यन्खिन्नस्तदा विप्रा वैराग्यात्सिद्धिमाप्नुयात् ॥ ८ ॥ अनित्यतां तथा पश्यञ्जगतोऽस्य पुनःपुनः॥ वैराग्यभावमास्थाय ततः सिद्धिमवाप्नुयात्॥ ९॥देवतानामृषीणां च राज्ञां भूतगणस्य च॥दृष्ट्वा क्षयं महाभागा विरक्तो विप्रमुच्यते॥१०॥गर्भवासे महद्दुःखं नरके च पुनःपुनः॥ तिर्यग्योनौ च मानुष्ये तिर्यक्कामो विमुच्यते ॥११॥ दिवसेदिवसे खिन्नो परान्नेषु च यो द्विजाः ॥ वैराग्यमाप्नोति तथा खिन्नो मूत्रपुरीषयोः॥१२॥दुःखानां तु प्रतीघाते सुखमित्येव भाविते ॥ दुःखेभ्यः स्वल्पकालेन यः खिन्नः स विरज्यते ॥ १३ ॥ विरागमास्थाय ततः प्रत्याहारमतन्द्रितः ॥ कामेभ्यश्चेतसः कुर्यात्तेन सर्वं समश्नुते ॥१४॥ आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् ॥ तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी ॥ १५ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु प्रत्याहारवर्णनो नामैकाशीत्युत्तरद्विशततमोऽध्यायः ॥ २८१॥ ॥ हंस उवाच ॥ ॥ एकत्र समवस्थानं बाह्ये द्रव्ये तु चेतसः ॥ धारणा सा विनिर्दिष्टा मनसो बन्धकारिका ॥ १ ॥ सा कार्या देवतार्चायां यत्रास्य स्यात्स्थिरा मतिः ॥ एकत्र लब्ध्वा लक्ष्यं तु मनसश्चञ्चलस्य तु ॥ २ ॥ तुर्यन्निवारणं यत्नान्मनोऽनुग्रहकारणात् ॥ अथ वा लक्ष्यबन्धन्तु भुवि कार्यं विजानता ॥ ३ ॥ लब्धलक्षस्तु भूयोगे महीयोगं समुत्सृजेत् ॥ लब्धलक्ष्यो नरः कुर्यान्नरास्तेजसि सत्तमाः ॥ ४ ॥ समुत्सृज्य ततो वायौ ततो नभसि कारयेत् ॥ क्रमशस्त्वेवमारुह्य लक्ष्यं लक्ष्यतया नरः ॥ ५ ॥ बाह्येषु धारणां कृत्वा मनसः सिद्धिमश्नुते ॥ मनसश्चञ्चलस्यास्य यावद्बन्धनधारणा ॥६ ॥ तावद्ध्यानमथारूढं न शक्यं केनचिद्द्विजाः ॥ धारणां निश्चलां प्राप्य ततो ध्यानमवाप्नुयात् ॥ ७ ॥ शरीरं विजहात्येनं यत्र बद्धा तु धारणा ॥ प्राप्नोति तन्मयीभावं नात्र कार्या विचारणा ॥ ८ ॥ संप्राप्य धारणां मुक्त्वा शरीरं मनुजोत्तमः ॥ कालान्मोक्षमवाप्नोति ध्यानाच्छीघ्रमिति स्थितिः ॥ ९ ॥ प्रातस्तु यन्मयीभावं धारणास्थः पुमांस्ततः ॥ स यदा पुरुषं याति तदा स प्रतिपद्यते ॥ १० ॥ ध्रुवं मोक्षमवाप्नोति धारणां प्राप्य मानवः ॥ किन्तु कालेन महता ध्यानाच्छीघ्रमिति स्थितिः ॥ ११ ॥ सर्वलोके तथा ज्ञेया बाह्यद्रव्यविनाशनाः ॥ तेषान्तु धारणा कार्या मनोग्रहणकारणम् ॥ १२ ॥ संप्राप्य मनसो बन्धं निश्चलं पुरुषोत्तमः ॥ धारणायोगतस्तस्माद्ध्रुवं मोक्षमुपाश्नुते ॥ १३ ॥ यदस्य नित्यं हृदि संस्थितं स्यात्तस्यात्तदेवास्य हि मृत्युकाले ॥ यद्भावयत्येव हि मृत्युकाले भवत्यवश्यं स हि तन्मयस्तु ॥ १४ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु धारणावर्णनो नाम द्व्यशीत्युत्तरद्विशततमोऽध्यायः॥२८२॥हंस उवाच ॥ द्रव्ये तु धारणा बाह्ये

धारणा परिकीर्तिता ॥ सैव चेतसि निर्दिष्टा ध्यानेति मनुजोत्तमाः॥१॥अधोमुखं हृत्कमले कर्णिकायां द्विजोत्तमाः॥ ध्यानं सूर्यस्य कुर्वीत तेजोराशेर्विचक्षणः॥२॥रविमध्ये स्थितः सोमो सोममध्ये हुताशनः॥तेजोममध्ये स्थितं सत्त्वं तेजसोप्यतितैजसम्॥ ३॥ तन्मध्ये भगवान्विष्णुः परमात्मा सनातनः ॥ अच्युतः पुरुषो नित्यं सर्वव्यापी महेश्वरः ॥४॥सूक्ष्मातिसूक्ष्मन्तं पश्येत्तेजोमूर्तिं दुरासदम्॥ ध्यानयोगेन तं दृष्ट्वा सिद्धिमाप्नोति मानवः ॥ ५ ॥ स्वस्तिकं सर्वतोभद्रं पर्यंकं कमलासनम् ॥ तेषामेकतमं बद्धा योगासनमतन्द्रितः ॥६॥ ऊरुमूले तथानीय तिर्यग्गौ च समौ करौ ॥ कृत्वोत्तानौ द्विजश्रेष्ठा वामस्योपरि दक्षिणम् ॥७॥ किञ्चिदाकुञ्चिताङ्गुष्ठौ कर्त्तव्यौ च तथा करौ ॥ तेन चोन्नाम्य वितथं कृत्वा बाहू परिश्लथौ ॥ ॥ ८ ॥ पृष्ठकां योजयेत्स्कन्धे देहमुन्नामयेत्सुधीः ॥ निष्कम्पां सुदृढां ग्रीवां शिरः कार्यं समं तदा ॥ ९ ॥ स पश्यन्नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ किञ्चिन्निमील्य नयने सर्वं बाह्यं समुत्सृजेत् ॥ बाह्यं सर्वं परित्यज्य परमात्मानमात्मना ॥ १० ॥ हृत्पद्मं कर्णिकामध्ये तेजस्तेजसि चार्पितम् ॥ दृष्ट्वा पुरुषमीशानं सर्वबन्धैः प्रमुच्यते ॥ ११ ॥ प्रत्याहारेण मनसः कृत्वा नियमनं पुरा ॥ धारणाल्लब्धलक्षस्तु ध्यानमारोहते नरः ॥ १२ ॥ इन्द्रियाणां जयं कृत्वा मनः संयम्य चाप्यथ ॥ विजित्य च तथा वायुं ध्यानमारोहते नरः ॥ ध्यानारूढस्तदाप्नोति यत्र गत्वा न शोचति ॥ १३ ॥ निशावसाने च तथा प्रदोषे ध्यानेन यत्नः पुरुषेण कार्यः ॥ ध्यानेन दृष्ट्वा पुरुषं परं तु विमुक्तदेहः सकलत्वमेति ॥ १४ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु ध्यानवर्णनो नाम त्र्यशीत्युत्तरद्विशततमोऽध्यायः ॥ २८३ ॥ ॥ हंस उवाच ॥ ॥ अथ ध्यानमुपारूढो समाधिं मनसो लभेत् ॥ न किञ्चिच्चिन्तयेत्पश्चात्समाधिं प्राप्य मानवः ॥ १ ॥ शब्दस्पर्शरसैर्हीनं गन्धरूपविवर्जितम् ॥ तं परं पुरुषं विद्याद्यत्र गत्वा न शोचति ॥ २ ॥ शून्यं ध्यानपरं विप्राः समाधिरिति कीर्त्यते ॥ तन्तु प्राप्य नरैश्चान्यैर्नाभिभूयेत कर्हिचित् ॥ ३ ॥ समाधितः परं नास्ति सुखं किञ्चिज्जगत्त्रये ॥ समाधिस्थश्च दुःखेन गुरुणापि न चाल्यते ॥ ४ ॥ शङ्खानि शतशस्त्वस्य वाद्यन्ते यदि कर्णयोः ॥ भेर्यश्च यदि हन्यन्ते शब्दं बाह्यं न विन्दति ॥ ५ ॥ तथा प्रहाराभिहतो वह्निदग्धतनुस्तथा ॥ शीते स्थितोऽतिघोरेऽपि स्पर्शं बाह्यं न विन्दति ॥ ६ ॥ जये गन्धे रसे बाह्ये तादृशस्य तु का कथा ॥ दृष्ट्वा य आत्मनात्मानं समाधिं लभते पुनः ॥ ७ ॥ तृष्णा वाथ बुभुक्षा वा न तं धावति कर्हिचित् ॥ अपि सन्त्यजतस्तृष्णामभुञ्जानस्य पश्यतः ॥ ८ ॥ एकमेव स निर्वेदं विजानाति नरोत्तमः ॥ समाधितः समुत्थानं तेन तप्यत्यसौ भृशम् ॥ ९ ॥ न स्वर्गे न च पाताले

मानुष्ये च न तत्सुखम् ॥ समाधिं निश्चलं प्राप्य यत्सुखं विन्दते नरः ॥१०॥ समाधिं पुरुषः प्राप्य त्यक्त्वा देहनिबन्धनम् ॥ व्याप्नोति सकलाँ ल्लोकांस्त्रैलोक्यं सचराचरम् ॥११॥ तच्च व्याप्नोति पुरुषस्त्रैलोक्यादपि यद्बहिः ॥ अनन्तत्वमवाप्नोति समाधिं प्राप्य मानवः ॥१२॥ जन्ममृत्युजराव्याधिशोकदुःखविवर्जितः ॥ सर्वगः सर्वसंहारी सर्वेन्द्रियगुणात्मकः ॥१३॥ सर्वत्र सर्वदा विप्राः स तस्यां नात्र संशयः ॥ पुरुषत्वमथाभ्येति सर्वशक्तित्वमेति च ॥ १४ ॥ संयम्य चेतः खलु धारणासु ध्यानं समारुह्य ततस्तु पश्चात् ॥ समाधिमास्थाय परेण पुंसा तुल्यत्वमायाति महानुभावः॥१५॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु समाधिवर्णनो नाम चतुरशीत्युत्तरद्विशततमोऽध्यायः ॥ २८४ ॥ ऋषय ऊचुः ॥ स्थानस्य महतः प्राप्तौ यन्मूलं द्विजसत्तम ॥ तदस्माकं समाचक्ष्व सर्वं प्रत्यक्षलक्षणम् ॥ १ ॥ ॥ हंस उवाच ॥ प्राप्नुवंति नराः सर्वे व्यवसायपुरःसराः ॥ व्यवसायद्वितीयानां नास्ति लोके सुदुर्लभम् ॥ २ ॥ व्यवसायः परो बन्धुः सहायस्तदनंतरम् ॥ तेन युक्तः पुमान्सम्यक्प्राप्नोतीति विनिश्चितम् ॥ ३ ॥ धर्मे चार्थे च कामे च मोक्षे च ऋषिसत्तमाः ॥ भाजनन्तु सदा ज्ञेयो नरस्तु व्यवसायवान् ॥ ४ ॥ व्यवसायविहीनानां स्वल्पोप्यर्थोऽस्ति दुर्लभः ॥ व्यवसायविहीनानामलसानां दुरात्मनाम् ॥ ५ ॥ करप्राप्तोऽपि सहसा क्षिप्रमर्थो विनश्यति ॥ व्यवसायविहीनस्तु स्थाणुना नातिरिच्यते ॥ ६॥ तस्मान्नरा ये व्यसनाय युक्तास्ते कामभाजः कथितास्तु लोके ॥ तेषामयं चैव परश्च लोकस्तेषां तथा मोक्षपथो न दूरे ॥७॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु व्यवसायवर्णनो नाम पञ्चाशीत्युत्तरद्विशततमोऽध्यायः ॥२८५॥ हंस उवाच ॥ सर्वकर्मप्रधानस्य व्यवसायस्य मानदाः ॥ मूलमेकं विनिर्दिष्टं संकल्पो नात्र संशयः ॥१ ॥ संकल्पमूलः कामो वै ज्ञानं संकल्पबन्धनम् ॥ संकल्पबन्धना वेदा धर्मः सङ्कल्पबन्धनः ॥ २ ॥ संकल्पबन्धनश्चार्थो मोक्षः संकल्पबन्धनः ॥ संकल्पबन्धनं सर्वं जगदेतच्चराचरम् ॥ ३ ॥ आदौ निश्चित्य यत्कर्म मनसा बुद्धिमान्नरः ॥ युनक्ति व्यवसायेन पश्चाज्ज्ञेयः स पंडितः ॥ ४ ॥ यावन्तो निश्चितास्त्वर्था मनसा केनचित्क्वचित् ॥ तावन्न शक्यते कर्तुं संकल्पोऽतः परो मतः ॥ ५ ॥ संकल्पितानां मनसा तु पूर्वं सिद्धिः प्रदिष्टा व्यवसाययुक्ता ॥ कार्याणि सर्वाणि ततस्तु लोके संकल्पमूलानि वदंति सन्तः ॥ ६ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखंडे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु संकल्पनिर्वचनो नाम षडशीत्युत्तरद्विशततमोऽध्यायः ॥ २८६ ॥ ऋषय ऊचुः ॥ नैःश्रेयसपदावाप्तौ प्रत्याहारस्त्वयेरितः ॥ धारणाध्यानयोगश्च समाधिरपि चोत्तमा ॥ १ ॥ भूय एव त्वमाचक्ष्व नृणां संसारसारिणाम् ॥

हितार्थमुत्तमं मार्गं लोकद्वयसुखावहम् ॥ २ ॥ ॥ हंस उवाच ॥ ॥ अग्निर्मुखं देवतानां सर्वभूतपरायणम् ॥ तस्य शुश्रूषणादेव सर्वान्कामान्समश्नुते ॥ ३ ॥ सा मूर्तिः परमा विष्णोस्तद्दत्तं प्राप्नुते रविः ॥ सूर्याद्वृष्टिस्ततस्त्वन्नमन्नात्प्रभवते जगत् ॥ ४ ॥ अधःप्रवर्षिणो देवा भौमास्तूर्ध्वं प्रवर्षिणः ॥ ऊर्ध्वप्रवर्षिणं मुख्यं भौमं दत्तं हुताशने ॥ ५ ॥ ॐकारं पूर्वमुद्दिश्य यांयां विप्रस्तु देवताम् ॥ हविर्जुहोति सा तस्य प्रीता भवति नित्यदा ॥ ६ ॥ वह्निदत्तेन हविषा तृप्तिमायान्ति देवताः ॥ तास्तृप्तास्तर्पयन्त्येनं नरं कामसमृद्धिभिः ॥ ७ ॥ सूर्ये होमः परः पुण्यस्तेन स्वर्गे महीयते ॥ तस्मादष्टगुणं पुण्यमिध्मभिः प्राप्नुयाद्धुते ॥ ८ ॥ तस्माद्दशगुणं सस्यैर्व्रीहिभिर्द्विगुणं ततः ॥ तावदेव तथा पुण्यं होमे सिद्धार्थकैः स्मृतम् ॥ ९ ॥ यवैश्चतुर्गुणं तस्मात्तिलैर्दशगुणं ततः ॥ तावदेव फलं ज्ञेयं बिल्वैर्दशगुणं ततः ॥ ॥ १० ॥ पद्मैश्च तावदेवोक्तं दध्ना क्षीरेण च द्विजाः ॥ परमान्नेन धर्मज्ञा घृतेनाष्टगुणं ततः ॥ ११ ॥ मन्त्रेणोङ्कारपूतेन स्वाहान्तेन विचक्षणः ॥ स्वाहावसाने जुहुयाद्ध्यायन्वै मन्त्रदेवताम् ॥ १२ ॥ यया त्वङ्गुलिपर्वाणि पूर्यन्ते तावदाहुतिः ॥ अङ्गुष्ठमात्रं स्थौल्येन वितस्तिश्चेध्म इष्यते ॥ १३ ॥ दुःस्वप्ने च दुरिष्टे च दुर्निमित्ते तथैव च ॥ नास्ति होमसमन्त्राणं तथा पापविनाशनम् ॥ १४ ॥ होमेन पापं पुरुषो जहाति होमेन नाकं च तथा प्रयाति ॥ होमस्तु लोके दुरितं समग्रं विनाशयत्येव न संशयोऽत्र ॥ १५ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेय वज्रसंवादे मुनीन्प्रति हंसगीतासु होमविधिवर्णनो नाम सप्ताशीत्युत्तरद्विशततमोऽध्यायः ॥ २८७ ॥ हंस उवाच ॥ देवाधीनाः प्रजाः सर्वा देवायत्तमिदं जगत् ॥ सुखदुःखे मानुषाणां देवायत्ते तथैव च ॥ १ ॥ देवैर्विहितमश्नन्ति मनुष्यास्तु शुभाशुभम् ॥ तस्मात्सर्वप्रयत्नेन देवपूजा परो भवेत् ॥ २ ॥ देवाश्च भक्त्या तुष्यन्ति श्रद्धया परया तथा ॥ पूजिताः शुचिना चैव देवास्तुष्यन्ति नान्यथा ॥ ३ ॥ देवशुश्रूषया स्वर्गो देवशुश्रूषया सुखम् ॥ देवशुश्रूषया राज्यं मोक्षं चाप्यथ वाप्यते ॥ ४ ॥ देवताः कामयन्तीह तथा भक्तं जनं सदा ॥ भक्तानुकम्पिनो देवाः परत्रेह तथा ध्रुवम् ॥ ५ ॥ त्राणं कुर्वन्ति भक्तस्य ध्रुवं देवा द्विजोत्तमाः ॥ देवतोषादवाप्नोति यान्कमान्मनसेच्छति ॥ ६ ॥ जातप्रभृति यं देवं भक्त्या नित्यमथार्चयेत् ॥ अन्तकाले तु संप्राप्ते सोऽपि त्राता भवेद् ध्रुवम् ॥७॥ किं वा पापविहीनस्य क्षिप्रं तुष्यन्ति देवताः ॥ तस्मात्पापं न कर्त्तव्यं नरेण त्रिदशाश्रयात् ॥ ८ ॥ देवाश्रितानां पापानां क्षिप्रं पापं विनश्यति ॥ नत्वेव पातकं कर्म वृथा तेषां प्रजायते ॥ ९ ॥ तथा बहु फलं लोके कथितं त्रिदशाश्रयम् ॥ सर्वान्समर्चयेद्देवानेकं वा देवमाश्रयेत् ॥ १० ॥ देवार्चां श्रद्धया कृत्वा ध्रुवं तल्लोकमाप्नुयात् ॥ कृत्वा देव

गृहं विप्रा नरस्तल्लोकमाप्नुयात् ॥ ११ ॥ परमाणूनि यावन्ति भवन्ति सुरवेश्मनः ॥ तावतोऽब्दानवाप्नोति तल्लोकान्नात्र संशयः ॥ १२ ॥ या वद्वारं करोतीह देववेश्म सुधासितम् ॥ जन्मान्तराणि तावन्ति यशसा स विराजते ॥ १३ ॥ प्रतिपाद्य तथा भक्त्या ध्वजं त्रिदशवेश्मनि ॥ निर्णुदत्याशु पापानि महापातकजान्यपि ॥ १४ ॥ चित्रकर्म तथा कृत्वा गन्धर्वैः सह मोदते ॥ देवमाल्यापनयनाद्गोदानफलमाप्नुयात ॥ १५ ॥ पापैर्विमुच्यते सर्वैः प्रोक्षणाद्देववेश्मनः ॥ सम्मार्जनात्तथा पापं व्यपोहति न संशयः ॥ १६ ॥ कामानभीष्टानाप्नोति देववेश्मोपलेपनात् ॥ सुधारेखान्वितं कृत्वा मर्यादां नातिवर्तते ॥ १७ ॥ वर्णकैश्चित्रितं कृत्वा सौभाग्यं महदाप्नुयात् ॥ गन्धर्वत्वमवाप्नोति गन्धैरभ्युक्ष्य मानवाः ॥ १८ ॥ पुष्पैर्विकिरणं कृत्वा रूपवानभिजायते ॥ अभ्यज्य देवप्रतिमां सर्वदुःखैर्विमुच्यते ॥ १९ ॥ विरूक्षयित्वा तामेव पापेभ्यो विप्रमुच्यते ॥ ओषधीभिस्तथा स्नाप्य नासत्यैः सह मोदते ॥ २० ॥ लोके प्रजापतेर्याति वेदैः संस्नाप्य देवताम् ॥ पुष्पोदकेन स्नपनात्सौभाग्यं महदश्नुते ॥ २१ ॥ फलोदकेन[1] संस्नाप्य सफलां विन्दते क्रियाम् ॥ नागवल्लीजलैः स्नाप्य नागलोकं स गच्छति ॥ २२ ॥ रत्नोदकेन स्नपनाद्धानदं लोकमाप्नुयात् ॥ गन्धोदकेन मुख्येन गन्धर्वैः सह मोदते ॥ २३ ॥ तीर्थोदकेन पुण्येन स्वर्गलोकमवाप्नुयात् ॥ तथानुलिप्य गन्धैश्च शक्रलोके महीयते ॥ २४ ॥ विभूषणप्रदानेन राजा भवति भूतले ॥ राजलिङ्गप्रदानेन राजा भवति हि क्षितौ ॥ २५ ॥ वस्त्रदानेन लोकेऽस्मिन्सुवेशस्त्वभिजायते ॥ देवे माल्यप्रदानेन परां लक्ष्मीं समश्नुते ॥ २६ ॥ धूपप्रदानेन तथा गतिमग्र्यामवाप्नुयात् ॥ दीपदानेन चक्षुष्मान्प्रकाशश्चैव जायते ॥ २७ ॥ ऊर्ध्वां गतिमवाप्नोति सर्वत्र च तथाग्र्यताम् ॥ देवताभ्यस्तथा विप्रा निवेद्यान्नमतन्द्रितः ॥ २८ ॥ सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥ परितोषमथायाति देवता बलिकर्मणा ॥ २९ ॥ तास्तुष्टास्तर्पयन्त्येनं सर्वकामसमृद्धिभिः ॥ हव्यपानप्रदानेन तृप्तिमाप्नोति शाश्वतीम् ॥ ३० ॥ देवतानां नमस्कारात्किञ्चित्पापं प्रणश्यति ॥ तथैवाभ्यधिकं पापं प्रणिपातेन नश्यति ॥ ३१ ॥ ततोऽप्यभ्यधिकं किञ्चित्कृत्वा देवे प्रदक्षिणाम् ॥ स्तुतिक्रिया देवतानां सर्वकामफलप्रदा ॥ ३२ ॥ गीतेन देवतास्तोषमुपयान्ति द्विजोत्तमाः ॥ तथा वाद्येन नृत्येन पुरुषस्य विशेषतः ॥ ३३ ॥ नृत्तं गीतं तथा वाद्यं स्वयमाचरते द्विजाः ॥ देवसालोक्यमाप्नोति पुरुषस्य विपश्चितः ॥ ३४ ॥ वाचनादितिहासानां पापमोक्षमवाप्नुयात् ॥ मूल्येन कारयेद्गीतं गन्धर्वत्वमथाप्नुयात् ॥ ३५ ॥

१ 'नागलोकमवाप्नोति तथा पल्लववारिणा, इति ख० पा० ।

वाद्यं दत्त्वाथ धर्मज्ञं वसूनां लोकमश्नुते ॥ नृत्तेन लोकमाप्नोति शङ्करस्य महात्मनः ॥ ३६ ॥ इतिहासप्रदानेन बुद्धिमाञ्जायते नरः ॥ आहुतिं देवमुद्दिश्य यो ददाति हुताशने ॥ ३७ ॥ स देवस्तर्पयत्येनं कामैर्वा तेन तर्पितः ॥ देवमुद्दिश्य विप्राणां यो ददातीह भोजनम् ॥ ३८ ॥ स देवः प्रीतिमानस्य कामानिष्टान्प्रयच्छति ॥ देवमुद्दिश्य यत्किञ्चिद्ब्राह्मणेभ्यः प्रदीयते ॥३९॥ तदेव प्राप्यते लोके प्रसन्ने त्रिदशे बहु ॥ यानं शय्यासनं छत्रं पादुके चाप्युपानहौ ॥ ४० ॥ वाहनं गां च धर्मज्ञास्त्रिदशेभ्यो ददाति यः ॥ एकैकस्मादवाप्नोति वह्निष्टोमफलं नरः ॥ ४१ ॥ दत्त्वा फलानि देवेभ्यः सफलां विन्दते क्रियाम् ॥ निवेद्य सस्यानि तथा गतिमाप्नोत्यनुत्तमाम् ॥ ४२ ॥ नैति देवस्तथा प्रीतिं दानैर्नृत्यैस्तथा फलैः ॥ प्रीतिमेति यथा विप्राः स्वाश्रितानान्तु पूजनैः ॥ ४३ ॥ देवता नैव तुष्यन्ति दानेन बहुधा द्विजाः ॥ यथा भक्त्या तु तुष्यन्ति तस्माद्भक्तिं समाश्रयेत् ॥ ४४ ॥ घृतपूर्णानि पात्राणि दत्त्वा श्राद्धे तथा नरः ॥ दीर्घं जीवितमाप्नोति न रोगैश्चाभिभूयते ॥ ४५ ॥ मधुपूर्णानि पात्राणि दत्त्वा सौभाग्यमाप्नुयात ॥ यथाकथञ्चित्पात्राणां दानाद्भवति सत्तमाः ॥४६॥ पात्रं तु सर्वकामानां नात्र कार्या विचारणा ॥ पुष्पवृक्षप्रदानेन गृहमाप्नोति मानवः ॥ ४७ ॥ फलवृक्षप्रदानेन ग्रामस्याधिपतिर्भवेत् ॥ गृहप्रदानाद्भवति खेटकाधिपतिस्तथा ॥ ४८ ॥ गृहं शय्यासनोपेतं यानवाहनसंयुतम् ॥ धनधान्ययुतं स्फीतं दासीदाससमाकुलम् ॥ ४९ ॥ सर्वकामयुतं रम्यं प्रदाय श्राद्धकर्मणि ॥ स्वर्गलोकात्परिभ्रष्टो राजा भवति पार्थिवः ॥ ५० ॥ पितॄनुद्दिश्य यद्दानं किञ्चिदेव प्रयच्छति ॥ तस्याभ्यधिकमाप्नोति पुण्यं तेषां प्रसादतः ॥ ५१ ॥ तस्माच्छ्राद्धानि कार्याणि तीर्थेष्वायतनेषु च ॥ दानानि चैव देयानि पितॄनुद्दिश्य शक्तितः ॥५२॥ श्राद्धेषु पुष्टिं मनुजा लभन्ते श्राद्धेन विप्रास्त्रिदिवे च वासः ॥ श्राद्धं प्रयत्नेन ततश्च कुर्यात्स्वकल्पसूत्राभिहितं यथावत् ॥५३॥ इति श्रीविष्णुधर्मोत्तरे तृ०खं० मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु पितृपूजाविधानं नामाष्टाशीत्युत्तरद्विशततमोऽध्यायः ॥ २८८ ॥ हंस उवाच ॥ शूद्राणां दैवतं वैश्या वैश्यानां क्षत्रियास्तथा ॥ ब्राह्मणाः क्षत्रियाणां च तेषामपि हुताशनः ॥ १ ॥ गुरुर्देवो ब्रह्मचारी नार्यश्च पतिदेवताः ॥ गृहस्थोऽतिथिदैवत्यस्तस्मात्तं पूजयेत्सदा ॥ २ ॥ वैश्वदेवं गृहे कृत्वा सायं प्रातः समाहितः ॥ पिण्डनिर्वपणं कृत्वा भिक्षां दत्त्वा तु भिक्षवे ॥३ ॥ सत्कृत्य भिक्षादानेन गोदानफलमाप्नुयात् ॥ श्वभ्यश्च श्वपचेभ्यश्च वयोभ्यश्चावपेद्भुवि ॥ ४ ॥ गृहस्थमुपजीवन्ति प्रजाः स्थावरजङ्गमाः ॥ गृहस्थः पोषणं कुर्यान्मृतानां जीवतामपि ॥ ५ ॥ पोषणान्नित्यमेवेह तेन स्वर्गे महीयते ॥ कीटाः पतङ्गाः पतिताः शत्रवो द्विजपुङ्गवाः॥६॥ गृहिणा नावमन्तव्या वैश्वदेवे ह्युपस्थिते ॥ अतिथिं पूजयेद्यत्ना

द्गृहस्थो गृहमागतम् ॥ ७ ॥ उत्थायास्य व्रजन्पूर्वे गोदानफलमाप्नुयात् ॥ आसनं च तथा दत्त्वा स्थानलाभं नरोत्तमः ॥ ८ ॥ कृत्वा च कुशल प्रश्नं बुद्धिमाञ्जायते नरः ॥ पादशौचेन तस्याथ श्रान्तसंवाहनेन च ॥ ९ ॥ वीजनाच्चामरेणापि तालवृन्तेन वीजनात् ॥ पादाभ्यङ्गप्रदानेन दीपदानेन वाप्यथ ॥ १० ॥ रात्रौ शयनदानेन तथा संवाहनेन च ॥ एकैकस्मादवाप्नोति गोदानफलमुत्तमम् ॥ ११ ॥ उपास्यैनं कथाभिश्च यशसा भोगमाप्नुयात् ॥ संश्राव्य चेतिहासानि तथैनं च तदिच्छया ॥ १२ ॥ नाकलोकमवाप्नोति गीतनृत्योत्सवादिभिः ॥ पूजयित्वा तथाप्नोति गन्धर्वत्वमसंशयम् ॥ १३ ॥ प्रतिश्रयप्रदानेन सर्वान्कामान्समश्नुते ॥ मृदं च दन्तकाष्ठं च दत्त्वा शौचोदकं तथा ॥ १४ ॥ काले यथासुखं दत्त्वा सौभाग्यं महदाप्नुयात् ॥ प्रताप्य चैनं शीतार्तं सर्वत्र सुखमश्नुते ॥ १५ ॥ अभ्यङ्गपूर्वकं दत्त्वा तस्य स्नानमतन्द्रितः ॥ आरोग्यरूपलावण्यधनधान्यमुपाश्नुते ॥ १६ ॥ दत्त्वा सलकमुख्यानि स्नानानि द्विजसत्तमाः ॥ नासत्यलोकमाप्नोति नात्र कार्या विचारणा ॥१७॥ सुगन्धीनि तथा दत्त्वा गन्धर्वैः सह मोदते ॥ कंकणस्य प्रदानेन सौभाग्यं महदश्नुते ॥ १८॥ अतिथिस्नापनात्पुण्यं दशगोदानजं भवेत् ॥ किमिच्छुकेन संयोज्य वाजपेयफलं लभेत ॥ १९ ॥ स्वेच्छितं च प्रदायास्य तदेवाक्षयमश्नुते ॥ सर्वशक्त्या नरस्तस्मादतिथिं पूजयेत्सदा ॥ २० ॥ तृप्तोऽतिथिर्यत्पुरुषस्य किञ्चिद्विचिन्तयत्येव महानुभावः ॥ तत्सर्वमाप्नोत्यचिरेण तस्मात्पूज्योऽतिथिर्धर्मपरेण नित्यम् ॥ २१ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतास्वतिथिपूजा नामैकोननवत्यधिकद्विशततमोऽध्यायः ॥ २८९ ॥ ॥ हंस उवाच ॥ ॥ ब्राह्मणा दैवतं भूमौ ब्राह्मणा दिवि दैवतम् ॥ ब्राह्मणेभ्यः परं नास्ति भूतं किञ्चिज्जगत्त्रये ॥ १ ॥ अदेवं दैवतं कुर्युः कुर्युर्दैवमदेवतम् ॥ ब्राह्मणा हि महाभागाः पूज्यन्ते सततं द्विजाः ॥ २ ॥ ब्राह्मणेभ्यः समुत्पन्ना देवाः पूर्वमिति श्रुतिः ॥ ब्राह्मणेभ्यो जगत्सर्वं तस्मात्पूज्यतमाः सदा ॥ ३ ॥ एषामश्नन्ति वक्त्रेण देवताः पितरस्तथा ॥ ऋषयश्च महाभागाः किम्भूतमधिकं ततः ॥ ४ ॥ यदेव मनुजो भक्त्या ब्राह्मणेभ्यः प्रयच्छति ॥ तदेवाप्नोति धर्मज्ञा बहु जन्मनिजन्मनि ॥ ५ ॥ तालवृन्तानिलेनैवं श्रान्तसंवाहनेन च ॥ उन्मार्जनेन गात्राणां तथाप्यञ्जनकर्मणा ॥ ६ ॥ पादशौचप्रदानेन पादयोः शौचनेन च ॥ परिचर्यया यथाकाममेकेनैव द्विजोत्तमाः ॥ ७ ॥ अग्निष्टोममवाप्नोति स्वर्गलोकं च गच्छति ॥ ब्राह्मणाज्ञां शुभां कृत्वा नाकलोके महीयते ॥८॥ यद्ब्राह्मणास्तुष्टतमा वदन्ति तद्देवताः प्रत्यभिनन्दयन्ति ॥ तुष्टेषु तुष्टाः सततं भवन्ति प्रत्यक्षदेवेषु परोक्षदेवाः॥९॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु ब्राह्मणशुश्रूषा नाम नव

त्यधिकद्विशततमोऽध्यायः ॥ २९० ॥ ॥ हंस उवाच ॥ गावः पवित्रा मङ्गल्या गोषु लोकाः प्रतिष्ठिताः ॥ यथा देवा यथा वेदा ब्राह्मणाश्च यथा द्विजाः ॥ १ ॥ तथा गावो विनिर्दिष्टाः सर्वलोकसुखावहाः ॥ एकैकं ब्राह्मणं ज्ञेयं तयोर्यज्ञः प्रतिष्ठितः ॥ २ ॥ विप्रेषु मन्त्रास्तिष्ठन्ति गोषु सन्तिष्ठते हविः ॥ गवां दानं द्विजश्रेष्ठा दुष्कृतान्यपकर्षति ॥३॥ गोमूत्रं गोमयं क्षीरं दधि सर्पिश्च पञ्चमम् ॥ पवित्रमेतन्निर्दिष्टं नराणां शोधनं परम् ॥ ४ ॥ मङ्गल्याश्च पवित्राश्च रक्षोघ्ना रोचनास्तथा ॥ तासां शृङ्गोदकं विप्रा जाह्नवीसलिलोपमम् ॥ ५ ॥ गवां काण्डूयनान्मर्त्यः सर्वं पापं व्यपोहति ॥ तासां ग्रासप्रदानेन महत्पुण्यमवाप्नुयात् ॥ ६ ॥ तासां च प्रचरं कृत्वा तथैव सलिलाशयम् ॥ स्वर्गलोकमुपाश्नन्ति बहून्यब्दगणानि तु ॥ ७ ॥ तासां प्रचारभूमिं तु कृत्वा प्राप्नोति मानवः ॥ अश्वमेधस्य यज्ञस्य फलं प्राप्नोत्यसंशयम् ॥ ८ ॥ तासामावसथं कृत्वा नगराधिपतिर्भवेत् ॥ तथा लवणदानेन सौभाग्यं महदश्नुते ॥ ९ ॥ आतुरां पङ्कलग्नां वा चौरव्याघ्रभयार्दिताम् ॥ मोक्षयित्वा द्विजश्रेष्ठास्त्वश्वमेधफलं लभेत् ॥ १० ॥ तासामौषधदानेन विरोगस्त्वभिजायते ॥ विप्रमोच्य भयेभ्यश्च न भयं विद्यते क्वचित् ॥ ११ ॥ क्रीत्वा चण्डालहस्ताच्च गोमेधस्य फलं लभेत् ॥ गोपकस्त्वस्य चान्यस्य क्रीत्वा हस्तात्तथैव च ॥ १२ ॥ कृत्वा शीतातपत्राणं तासां स्वर्गमवाप्नुयात् ॥ उत्थितासूत्थितस्तिष्ठेद्विष्ठितासु च विष्ठितः ॥ १३ ॥ भुक्तवत्सु तु चाश्नीयाज्जले पीते पिबेत्तु च ॥ गोमूत्रेणाचरेत्स्नानं गोपुरीषात्तथा यवैः ॥ १४ ॥ शरीरयात्रां कुर्वीत गोरसैरथ वा द्विजाः ॥ एतद्धि गोव्रतं मासात्सर्वकल्मषनाशनम् ॥ १५ ॥ एकां गां धारयेन्मासं दद्यात्तस्यास्तथा यवान् ॥ गोमयात्तान्समश्नीयान्मासमेकमतः शुचिः ॥ १६ ॥ मासान्ते तां तथा धेनुं दद्याद्विप्राय भक्तिमान् ॥ व्रतमेतत्समुद्दिष्टं सर्वकल्मषनाशनम् ॥ ॥ १७ ॥ राजसूयाश्वमेधाभ्यां व्रतमेतत्तथाधिकम् ॥ व्रतेनानेन चीर्णेन कामानिष्टानवाप्नुयात् ॥ १८ ॥ विमानेनार्कवर्णेन ब्रह्मलोकं च गच्छति ॥ विनापि गोप्रदानेन व्रतमेतन्महाफलम्॥१९॥त्रिरात्रं सप्तरात्रं वा शक्तिं ज्ञात्वा तथा स्वकाम्॥गवां निर्हारनिर्मुक्तैर्वृत्तिं कृत्वा तथा यवैः॥२०॥पापमोक्षमवाप्नोति पुण्यं च महदश्नुते ॥ रजश्च गोखुरोद्धूतं सर्वकल्मषनाशनम् ॥२१॥यादृशात्तादृशाद्देशान्नात्र कार्या विचारणा ॥ मङ्गल्यं च पवित्रं च तदलक्ष्मीविनाशनम् ॥२२॥ गवां हि परिवासेन भूमिः शुद्धिमवाप्नुयात् ॥ तद्धि शुद्धं यदा वेश्म यत्र तिष्ठन्ति धेनवः ॥२३॥ तासान्निःश्वासवातेन परं नीराजनं भवेत् ॥तासां संस्पर्शनं पुण्यं दुःस्वप्नाघविनाशनम्॥२४॥ ग्रीवामस्तकसन्धौ तु तासां गङ्गा प्रतिष्ठिता ॥ सर्वदेवमया गावः सर्वतीर्थमयास्तथा॥२५॥ तासां लोमानि पुण्यानि पवित्राणि तथा द्विजाः ॥ गोमयेनोपलिप्तं तु शुचि स्थानं प्रकीर्तितम् ॥ २६ ॥ अग्न्यागारसुरा

गारान्गोमयेनोपलेपयेत् ॥ गोमये तु सदा लक्ष्मीः स्वयमेव व्यस्थिता ॥२७॥ गोमूत्रे च तथा गङ्गा दधिक्षीरघृतेषु च ॥ सदा व्यवस्थितं सोमं
रोचनायां सरस्वती॥२८॥विष्णुर्यज्ञः समाख्यातः स च गोषु प्रतिष्ठितः ॥ तस्माद्गावो विनिर्दिष्टा विष्णुरेव पुरातनैः ॥ २९ ॥ पूज्यास्तास्तु नम
स्कार्याः कीर्तनीयाश्च तास्तथा ॥ तासामाहारदानं च कार्यं शुश्रूषणं तथा॥३०॥ शुश्रूषणेनेह गवां द्विजेन्द्राः प्राप्नोति लोकानमलान्विशोकान् ॥
तस्मात्प्रयत्नेन गवां हि कार्यं शुश्रूषणं धर्मपरैर्मनुष्यैः॥३१॥इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मा० सं० मुनीन्प्रति हंसगीतासु गोशुश्रूषा नामै
कनवत्यधिकद्विशततमोऽध्यायः॥२९१॥हंस उवाच ॥ यो दयावान्स पुरुषो निर्घृणो राक्षसो मतः ॥ राक्षसानामपि घृणा विद्यते द्विजसत्तमाः ॥
॥१॥ निर्घृणाः प्रतिपद्यन्ते घोरं नरकमञ्जसा ॥ वधबन्धपरिक्लेशान्मानुष्येऽथ लभन्ति ते ॥२॥ व्याध्यार्ता दुःखिता दीना दरिद्राश्च भवन्ति ते ॥
दयान्विता विराजन्ते नाकमासाद्य मानवाः ॥३॥ तस्माद्दयावता भाव्यं तृणेष्वपि विपश्चिता ॥ तृणान्यपि सजीवानि तेषां कुर्यान्न पीडनम् ॥
॥ ४ ॥ कीटे पतङ्गे च पशौ दया कार्या तथा मृगे ॥ वर्णोत्तमे वर्णहीने पतिते वर्णसङ्करे ॥ ५ ॥ सर्वत्रैव दया कार्या सर्वकामफलप्रदा ॥ व्रताना
मपि सर्वेषां श्रेष्ठमेकं दयाव्रतम् ॥ ६ ॥ दुःखार्तं प्राणिनं किञ्चिद्दुःखान्मोक्षयते द्विजाः ॥ वह्निष्टोमफलं प्रोक्तं नात्र कार्या विचारणा ॥ ७ ॥
परिचर्यां तथा कृत्वा सान्त्वयेत्प्राणिनो द्विजाः॥ब्रह्मलोकमवाप्नोति दयावान्तेन कर्मणा ॥ ८ ॥ श्लेष्ममूत्रपुरीषाणां व्याधितस्याजुगुप्सकः ॥
सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥९॥ मृतस्य वाप्यनाथस्य न जुगुप्सन्ति ये नराः ॥ कुर्वन्ति चैव संस्कारान्ते नराः स्वर्गगामिनः ॥१०॥
अग्निदाहाज्जलाच्छस्त्रात्तथान्यस्मादुपद्रवात् ॥ प्राणिनो मोक्षणं कृत्वा स्वर्गलोके महीयते ॥ ११ ॥ बन्धनात्प्राणिनः कृत्वा मोक्षणं च तथा
द्विजाः॥सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते॥१२॥यस्माद्धि प्राणिनं दुःखात्पुरुषो मोक्षयेत्क्वचित्॥नतद्दुःखमवाप्नोति यत्रयत्राभिजायते॥१३॥
सर्वभूतेषु यो दानं चैकसत्त्वे च या दया ॥ सर्वसत्त्वप्रदानाद्धि दया ज्ञेया महाफला॥१४॥ दयान्वितानां त्रिदशेन्द्रलोका दयान्वितानां च पिताम
हस्य ॥ दयान्वितानां च समस्तकामा लोकद्वये विप्रवरा प्रदिष्टाः॥१५॥इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंस
गीतासु दयावर्णनो नाम द्विनवत्यधिकद्विशततमोऽध्यायः ॥ २९२ ॥ ॥ हंस उवाच ॥ ॥ दाक्षिण्यं परमं लोके नृणां संवननं परम् ॥
दाक्षिण्ययुक्तस्य तथा परेषां प्रियकारिता ॥ १ ॥ प्रियाण्याचरते यस्तु परेषां मनुजोत्तमः ॥ समाप्नोति प्रियाण्येव लोकयोरुभयोर्द्विजाः ॥ २ ॥
प्रत्यक्षं च परोक्षं च परेषामाचरेत्प्रियम् ॥ प्रियेण विप्रियं हंति प्रियेण प्रियमाप्नुयात् ॥ ३ ॥ मृदुना दारुणं हन्ति मृदुना हंति मार्दवम् ॥ सर्वं

हि मृदुना हन्ति तस्मात्तीक्ष्णतरो मृदुः ॥ ४ ॥ मृदोरिह वदान्यस्य देवा निघ्नन्ति शात्रवान् ॥ अभिचारः स शत्रूणां नरस्य मृदुता तथा ॥५॥ नरेण मृदुना दग्धा मार्दवेनाभितस्तु ये ॥ न प्ररोहंति ते विप्रा बीजा दग्धा यथा तथा ॥ ६ ॥ दाक्षिण्यमेकं सुभगत्वहेतुर्दाक्षिण्यमेकं त्रिदिवस्य हेतुः ॥ दाक्षिण्यमास्थाय जयेदरातीन्दाक्षिण्ययुक्तस्तु सदा भवेच्च॥७॥इति श्रीविष्णुधर्मोत्तरे तृतीयखंडे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु दाक्षिण्यवर्णनो नाम त्रिनवत्यधिकद्विशततमोऽध्यायः ॥ २९३ ॥ ॥ हंस उवाच ॥ ॥ संरोहतीषुणाविद्धं वनं परशुना हतम् ॥ वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम् ॥ १ ॥ मित्राणि यांति शत्रुत्वं नरस्याप्रियवादिनः ॥ अनर्थाः स्वयमायांति मृतो नरकमृच्छति ॥ २ ॥ तस्माद्वाव्यं मनुष्येण स्मितपूर्वाभिभाषिणा ॥ प्रत्यक्षं च परोक्षं च सर्वेषां प्रियभाषिणाम् ॥ ३ ॥ मित्रतां यांति रिपवो नराणां प्रियभाषिणाम् ॥ रक्षांस्यपि निगृह्यन्ते पुरुषैः सान्त्ववादिभिः ॥ ४ ॥ प्रियवाक्यात्परं लोके नास्ति संवननं परम् ॥ प्रियो भवति लोकानां प्रियवादी तथा नरः ॥ ५ ॥ प्रियंवदानां सकलं जगदेतत्स्थितं वशे ॥ प्रियंवदानां शत्रुत्वे नास्ति कश्चिज्जगत्त्रये ॥ ६ ॥ प्रियंवदाः सौख्यमिहाप्नुवंति प्रियंवदा नाकमथ प्रयांति ॥ प्रियंवदाः सर्वमथाप्नुवंति प्रियंवदः स्यादत एव नित्यम् ॥७॥इति श्रीविष्णुधर्मोत्तरे तृ०खंडे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु प्रियंवदप्रशंसा नाम चतुर्नवत्यधिकद्विशततमोऽध्यायः ॥ २९४ ॥ ॥ हंस उवाच ॥ अलसानां मनुष्याणां सदा दुःखं दरिद्रता ॥ आलस्यं पातकं लोके आलस्यं भूतिनाशनम् ॥ १ ॥ नाधिगच्छन्ति भोक्तव्यमलसा ये नराधमाः ॥ अलसानां मनुष्याणां प्राप्तोप्यर्थो विनश्यति ॥२॥ तस्मान्नित्यं मनुष्येण दाक्ष्यं कार्यं विजानता ॥ दक्षः सर्वमवाप्नोति यत्किञ्चिन्मनसेच्छति ॥ ३ ॥ धर्मे चार्थे च कामे च मोक्षे च द्विजसत्तमाः ॥ भाजनं सर्वकालेषु दक्ष एव सदा नरः॥४॥ आकृष्य दक्षः केशेषु विमुखामपि च श्रियम् ॥ स्वीकरोति महाभागा दक्षे सर्वं प्रतिष्ठितम् ॥ ५ ॥ उत्थानधीरः पुरुषो वाग्वीरानधितिष्ठति ॥ उत्थानधीरं वाग्धीरा रमयन्त उपासते ॥ ६ ॥ उत्थानवानेव दिवं प्रयाति उत्थानवानेव परं पदञ्च ॥ उत्थानवानेव नरो जयी स्यात्तस्मात्सदोत्थानपरेण भाव्यम् ॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख० मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु उत्थानप्रशंसा नाम पञ्चनवत्यधिकद्विशततमोऽध्यायः ॥ २९५ ॥ ऋषय ऊचुः ॥ बर्हिर्वेदि त्वमाचक्ष्व पुण्यान्यस्माकमच्युत ॥ त्वया हि ज्ञानदानेन भूय एव स्म वर्धिताः ॥ १ ॥ हंस उवाच ॥ पानीयमेतत्सकलं त्रैलोक्यं सचराचरम् ॥ विकारः सलिलस्येदं स्थावरं जङ्गमं तथा ॥२॥ पानीयेन विना वृत्तिर्लोके नास्तीह कर्हिचित् ॥ क्रिमिकीटपतङ्गानां जलमेव परायणम् ॥ ३ ॥

यत्रोदकं तत्र सुराः सर्व एव प्रतिष्ठिताः ॥ यत्रोदकं तत्र तथा ऋषयश्च महाव्रताः ॥ ४ ॥ दुर्लभं तच्च लोकानां परलोके द्विजोत्तमाः ॥ उदकेन विना वृत्तिर्नास्ति लोकद्वये सदा ॥ ५ ॥ तदा जलाशयाः कार्याः पुरुषेण विपश्चिता ॥ अग्निष्टोमसमाः कूपास्त्वश्वमेधसमं सरः ॥ ६ ॥ कूपः प्रवृत्तपानीयस्त्वर्धं हरति दुष्कृतम् ॥ कूपकृत्स्वर्गमासाद्य देवभोगान्समश्नुते ॥ ७ ॥ तत्रापि भोगवैकल्यं स्थानाभ्यासाच्च कीर्तितम् ॥ दशकूपसमा वापी तथा च परिकीर्तिता ॥ ८ ॥ कृत्वा तडागं च तथा वारुणं लोकमश्नुते ॥ दशवर्षसहस्राणि नल्वमात्रे द्विजोत्तमाः ॥९ ॥ तत्रापि पुण्यमाप्नोति स्थानत्यागात्तथा बहु ॥ गवां प्रचारे तत्कृत्वा गोलोकं प्राप्नुयाद् ध्रुवम् ॥ १०॥ शक्रलोकमवाप्नोति तडागकरणात्पथि ॥ मरौ तडागे पानीयं यस्य तिष्ठति वै द्विजाः ॥११॥ विमानेनार्कवर्णेन ब्रह्मलोकं स गच्छति ॥ प्रावृट्काले तु पानीयं तडागे यस्य तिष्ठति ॥ १२ ॥ अग्निष्टोमफलं तस्य पुरुषस्य प्रकीर्तितम् ॥ द्वादशाहे फलं तस्य शरत्काले तु यस्य वै ॥ १३ ॥ गोसवस्य तु हेमन्ते फलं प्राप्नोति मानवः ॥ पौण्डरीकफलं तस्य शिशिरे यस्य तिष्ठति॥१४॥वाजपेयफलं तस्य वसन्ते यत्र च द्विजाः ॥ अश्वमेधफलं तस्य निदाघे यस्य तिष्ठति ॥ १५ ॥ सस्यानां सेचनार्थाय नदीवाहे तथा कृते ॥ अन्नदः प्राणदश्चैव त्राणदश्च तथा भवेत् ॥१६॥ भगीरथस्य लोकांस्तान्समवाप्नोत्यसंशयम् ॥ पानीयशोधनं कृत्वा प्रदेशे देवनिर्मिते॥१७॥ पुरुषः फलमाप्नोति दशगोदानजं द्विजाः ॥ दानपाषाणरचितं सुखसेव्यञ्जलाशयम् ॥ १८ ॥ पुराणं मानवः कृत्वा नाकलोके महीयते ॥ प्रणालकानां करणात्तृप्तिमाप्नोत्यनुत्तमाम् ॥ १९ ॥ महत्पुण्यमवाप्नोति तथा कृत्वामलं जलम् ॥ तृष्णापनोदनं कृत्वा चैकस्यापीह देहिनः ॥ २० ॥ महत्फलमवाप्नोति नाकलोके च मोदते ॥ स्वबाहुखातं यः कुर्यात्तडागं मतिमान्नरः ॥ २१ ॥ नल्वात्फलमवाप्नोति राजसूयाश्वमेधयोः ॥ नदीस्नानमवाप्नोति स्नानसेतुर्जलाशये ॥२२॥ बहुखाते ततः (नरः) स्नातो गङ्गास्नानमवाप्नुयात्॥ सरस्तु पुण्यं यः कुर्यात्किञ्चित्तस्य जलाशये॥पुण्यांशभागी भवति यस्य तद्धि जलाशयम्॥२३॥प्राप्नोति तृप्तिं परमां मनुष्यो लोकांस्तथाग्र्यान्सलिलाधिपस्य ॥ जलाशयेऽल्पेऽपि कृते द्विजेन्द्रास्तस्मात्तु कार्यं सलिलं नृलोके ॥ २४ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखंडे मा० संवादे मुनीन्प्रति हंसगीतासु जलाशयनिर्माणो नाम षण्णवत्यधिकद्विशततमोऽध्यायः ॥ २९६ ॥ हंस उवाच ॥ वृक्षसंरोपणान्मर्त्यो महत्फलमुपाश्नुते ॥ गुल्मवल्लीलतानां च रोपणात्पुरुषो द्विजाः ॥१॥ प्रत्येकं फलमाप्नोति गोदाने यत्प्रकीर्तितम् ॥ अग्निष्टोममवाप्नोति पुष्पवृक्षस्य रोपणात् ॥ २॥ पौण्डरीकमवाप्नोति फलवृक्षस्य रोपणात् ॥ आराममपि यः कुर्यात्परेषां नामकारणात् ॥ ३ ॥ तथा हरितकार्थं च सोऽग्निष्टोमफलं लभेत् ॥

पुष्पारामं नरः कृत्वा देवतार्थं मनोहरम् ॥ ४ ॥ देवोद्यानेषु सर्वेषु नन्दनादिषु मोदते ॥ यथाकामं विहारी स्यान्नात्र कार्या विचारणा ॥ ५ ॥ फलारामं ततः कृत्वा विन्दत्यभ्यधिकं फलम् ॥ कृत्वा द्रुमशतारामं सोऽश्वमेधफलं लभेत् ॥ ६ ॥ फलं दशशतारामे लक्षारामे च कल्पयेत् ॥ चम्पकं मल्लिकां जातीं श्रेष्ठाः पुष्पाकरा मताः ॥ ७ ॥ अन्योऽधिकमवाप्नोति दत्त्वैतान्नात्र संशयः ॥ गुल्मेषु कथितौ श्रेष्ठौ तथोभौ भव्यदाडिमौ ॥ ८ ॥ पथि श्रेष्ठतमौ विप्रा वटाश्वत्थौ प्रकीर्तितौ ॥ नारङ्गदानाद्भवति नरो रूपसमन्वितः ॥ ९ ॥ बीजपूरकदानेन सौभाग्यं महदाप्नुयात् ॥ दत्त्वा पालेवताम्रौ तु तृप्तिमाप्नोत्यनुत्तमाम् ॥ १० ॥ आम्राक्षोटप्रदानेन सर्वकामानवाप्नुयात् ॥ लक्षारामं तु यः कुर्यादाम्राणामिह मानवः ॥ ११ ॥ देवोद्यानेषु रम्येषु क्रीडत्यमरसन्निभः ॥ अप्सरोभिः परिवृतो न च तस्मान्निवर्तते ॥ १२ ॥ एकोऽपि रोपितो वृक्षः पुत्रकार्यकरो भवेत् ॥ देवान्प्रसूनैः प्रीणाति छायया चातिथींस्तथा ॥ १३ ॥ फलैर्मनुष्यान्प्रीणाति नारक्यं नास्ति पादपे ॥ अपि पुष्पफलैर्हीने द्रुमे पान्थस्य विश्रमः ॥ १४ ॥ छायायां स्तोककालेन बहुपुण्यं प्रयच्छति ॥ देवे वर्षति यद्वृक्षात्पत्रेभ्यः स्रवते जलम् ॥ १५ ॥ तेन तृप्तिमवाप्नोति परलोकगतो ध्रुवम् ॥ तेन नाकमवाप्नोति वृक्षरोपयिता नरः ॥ १६ ॥ सेचनादपि वृक्षस्य रोपितस्य परेण तु ॥ महत्फलमवाप्नोति नात्र कार्या विचारणा ॥ १७ ॥ वृक्षायुर्वेदविधिना व्याधितन्तु यथाक्रमम् ॥ नीरुजं मानवः कृत्वा स्वर्गलोकमवाप्नुयात् ॥ १८ ॥ शीतवातातपक्लेशं तथा च्छेदनभेदने ॥ सहन्ते परमं वृक्षास्तद्धि तेषां महत्तपः ॥ १९ ॥ पत्रपुष्पफलैर्नित्यं छायया चैव शाखिनः ॥ परेषामुपयुज्यन्ते तद्धि तेषां महत्तपः ॥ २० ॥ तेषां सदा दया कार्या भक्तिः कार्या तथैव च ॥ यस्तेषां भक्तिमान्नित्यं तस्य सा वनदेवता ॥ २१ ॥ तोषमायाति परमं तथा कामान्प्रयच्छति ॥ वानस्पत्यं तथा लोकं देहभेदे समश्नुते ॥ २२ ॥ वानस्पत्ये शुभे लोके सर्वेषामेव शाखिनाम् ॥ शरीरवत्प्रतिष्ठन्ति देवता नात्र संशयः ॥ २३ ॥ याः प्रोक्तास्त्वभिमानिन्यः परां शोभामथास्थिताः ॥ याम्यलोके तथा लोकं वानस्पत्यं प्रकीर्तितम् ॥ २४ ॥ यमलोकमुपासन्ते सर्वास्ता द्रुमदेवताः ॥ द्रुमरोपयितारं च परलोकमुपागतम् ॥ २५ ॥ दिव्येन गीतनृत्येन रमयन्त उपासते ॥ रोपितस्य द्रुमस्येह यथा भवति देवता ॥२६॥ याम्ये तु फलदा लोके तथा लोके तु वारुणे ॥ देवता स्यान्महाभागाः कृते पुण्ये जलाशये ॥ २७ ॥ कृते शास्त्रे तथा सम्यग्ब्रह्मलोके तथा द्विजाः ॥ क्षिप्रमेव महाभागा जायन्ते शास्त्रदेवताः ॥ २८ ॥ शास्त्रं जलाशयं वृक्षं सुरवेश्म तथैव च ॥ मृतस्यापि मनुष्यस्य शरीरमिह कीर्तितम्॥२९॥ कीर्त्यते येन चान्येन मानवः स्वर्गमाप्नुयात् ॥ तत्तत्कार्यं मनुष्येण स्वर्गमक्षय्यमिच्छता॥३०॥

पुत्राः प्रदिष्टाः पुरुषस्य वृक्षाः स्वयंकृतास्तेषु नरेण भाव्यम् ॥ स्नेहेन नित्यं पुरुषं मृतन्ते कामैस्तु दिव्यैः परितर्पयन्ति ॥ ३१ ॥
इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मा०सं० मुनीन्प्रति हंसगीतासु वृक्षारोपणफलनिरूपणो नाम सप्तनवत्यधिकद्विशततमोऽध्यायः ॥ २९७ ॥
हंस उवाच ॥ जलेन नाशमायाति यत्र सम्यग्द्विजोत्तमाः ॥ जलौघवारणार्थाय तत्र सेतुं करोति यः ॥ १ ॥ भूमिदाने तु ये लोकाः स
तान्प्राप्नोति शाश्वतान् ॥ मार्गसेतुं सुखं कृत्वा वह्निष्टोमफलं लभेत् ॥ २ ॥ जलप्रतरणे सेतुं यः करोति नरोत्तमः ॥ स तीर्णः सुखदुःखेभ्यः स्वर्गे
लोकं प्रपद्यते ॥ ३ ॥ प्रपां पथि तथा कृत्वा नाकलोके महीयते ॥ प्रपास्थानं शुभं कृत्वा स्थानमाप्नोति शाश्वतम् ॥ ४ ॥ तस्य स्थानात्तथा
त्यागात्फलवृद्धिः प्रकीर्तिता ॥ तस्योपलेपनं कृत्वा सर्वपापैः प्रमुच्यते ॥ ५ ॥ दत्त्वा रज्जुमपां स्थाने गोदो भवति मानवः ॥ वारिधानीं तथा
दत्त्वा तदेव फलमाप्नुयात् ॥ ६ ॥ कुम्भप्रदानाद्भवति सदा पूर्णमनोरथः ॥ प्रपायाश्च तथा कृत्वा पुरुषं परिचारकम् ॥ ७ ॥ सर्वकामसमृद्धस्य यज्ञस्य
फलमश्नुते ॥ वर्धमानानि यो दद्यात्प्रपायां द्विजसत्तमाः ॥ ८ ॥ त्रिविधां वृद्धिमाप्नोति तेजसा यशसा श्रिया ॥ लवणस्य प्रदानेन रसानाप्नोति
शाश्वतान् ॥ ९ ॥ तत्र हरितदानेन गवां लोकमवाप्नुयात् ॥ फलप्रदानेन तथा वह्निष्टोमफलं लभेत् ॥ १० ॥ सक्तूनां च प्रदानेन गोसवस्य
फलं नरः ॥ गोरसानां प्रदानेन गवां लोकमवाप्नुयात् ॥ ११ ॥ शय्याश्च विविधाः कृत्वा प्रपायामासनानि च ॥ स्वर्गलोकमवाप्नोति मातु
ष्ये स्थानमेव च ॥ १२ ॥ कृत्वा निवातं शरणं प्रपास्थाने मनोहरम् ॥ स्वारक्षं लोकमाप्नोति वसूनां नात्र संशयः ॥ १३ ॥ तत्र वह्निं तथा
कृत्वा शीतत्राणाय मानवाः ॥ कायाग्निदीप्तिं प्राकाश्यं सौभाग्यं च तथाप्नुयात् ॥ १४ ॥ इन्धनानां प्रदानेन रिपुभिर्नाभिभूयते ॥ तत्रापि
योग्यभाण्डानां दानात्स्वर्गमवाप्नुयात ॥ १५ ॥ चन्द्रलोकमवाप्नोति स्थापनात्तुहिनस्य तु ॥ शर्करालोष्टपाषाणकण्टकाँश्च तथा नरः ॥
॥ १६ ॥ मार्गादपास्य यत्नेन गोदानफलमाप्नुयात् ॥ श्रान्तसंवाहनं कृत्वा तदेव फलमश्नुते ॥ १७ ॥ वीजयित्वा परिश्रान्तं तालवृन्तेन
मानवः ॥ स्कन्धेन श्रान्तमूढ्वापि वाजपेयफलं लभेत् ॥ १८ ॥ वाहनेनाथ यानेन स्वेन श्रान्तं तथा नयन् ॥ साध्यानां लोकमासाद्य
देवभोगानुपाश्नुते ॥ १९ ॥ श्रान्तस्य भोजनं दत्त्वा कामानाप्नोति शाश्वतान् ॥ श्रान्तस्तु तर्पितस्तोयैस्तृप्तिमाप्नोति मानवः ॥
॥ २० ॥ उपानहाभ्यां छत्रेण श्रान्तं संयोज्य मानवः ॥ स्वाभ्यां विषमदेशेषु क्षणाद्बहुफलं लभेत् ॥ २१ ॥ भारश्रान्तात्तथा भारं गृही
त्वा वहते च यः ॥ कर्मणा तेन विप्रेन्द्राः स्वर्गलोकमुपाश्नुते ॥ २२ ॥ मूल्येन वाहयित्वापि परभारं विचक्षणः ॥ तस्य मूल्यस्य दानेन

फलं दशगुणं लभेत् ॥ २३ ॥ रक्षणं पथि यः कुर्यात्पान्थानां मानवोत्तमः ॥ प्राप्ताद्वृत्तिमयाद् घोराद्रुद्रलोके महीयते ॥ २४ ॥ नदीतीरेषु सन्तार्य पान्थान्पथि तथा नरः ॥ शीघ्रं तरति दुर्गाणि क्षुरधारांश्च पर्वतान् ॥ २५ ॥ सदा शौचं तथा नावं यः करोति नदीतटे ॥ अश्वमेधफलं तेन नरः प्राप्नोति कर्मणा ॥ २६ ॥ सभास्थानानि रम्याणि यः करोति विचक्षणः ॥ उद्यानानि विचित्राणि शक्रलोके महीयते ॥२७ ॥ प्रेक्षणीयप्रदानेन स्मृतिं मेधां च विन्दति॥पान्थानां हि दया कार्या कर्मणा येन केनचित्॥२८॥कूपास्थानं परं पान्थः स्वगृहाद्यो विनिस्सृतः॥लिङ्गी चाप्यथ वा वर्णी पान्थं प्रति विचक्षणैः॥अपेक्षा नैव कर्तव्या पान्थाः पूज्यास्तु सर्वशः॥२९॥पान्थस्य पूजां पुरुषस्तु कृत्वा स्थानं समासाद्य पुरंदरस्य॥ प्राप्नोति पुण्यान्दिवि देवभोगान्पान्थास्ततः पूज्यतमा नृलोके ॥३०॥इति श्रीविष्णुधर्मोत्तरे तृ०ख० मा०सं० मुनीन्प्रति हंसगीतासु प्रपाप्रशंसानामाष्टनवत्युत्तरद्विशततमोऽध्यायः ॥ २९८ ॥ ॥ हंस उवाच ॥ ॥ चतुर्धा सर्वपुण्यानां फलमुक्तं मनीषिभिः ॥ कृतानि विधिहीनानि वञ्चनार्थं परस्य वा ॥ १ ॥ क्रोधलोभाभिभूतेन तामसानि विनिर्दिशेत् ॥ कृतानि परमानेन राजसानि भवन्ति तु ॥ २ ॥ सात्त्विकानि भवन्तीह श्रद्धया परया द्विजाः ॥ गुणान्तराणि विज्ञाय विधिकामं कृतानि तु ॥ ३॥ तामसानां फलं भुंक्ते तिर्यक्त्वे मानवः सदा ॥ वर्णसंकरभावेन वार्धक्ये यदि वा पुनः ॥ ४ ॥ बाल्ये वा दासभावे वा नात्र कार्या विचारणा ॥ अतोऽन्यथा तु मानुष्ये राजसानां फलं लभेत् ॥ ५ ॥ सात्त्विकानां फलं भुंक्ते देवत्वे नात्र संशयः ॥ गुणोत्तरकृतानाञ्च फलमोक्ष उदाहृतः ॥ ६ ॥ कर्मणां धनसाध्यानां धनञ्च त्रिविधं स्मृतम् ॥ कृष्णश्च शबलश्चैव शुक्लश्च द्विजसत्तमाः ॥ ७ ॥ त्रिविधस्य फलं तस्य त्रिविधं परिकीर्तितम् ॥ कृष्णेन यत्कृतं किञ्चित्तिर्यक्त्वे तद्धि भुज्यते ॥ ८ ॥ वर्णानां हि धनं शुक्लमर्जितं यत्स्वकर्मणा ॥ शबलन्तु समुद्दिष्टं तथानन्तरकर्मणा ॥ ९ ॥ वर्णोत्तमस्य हीनस्य कर्मणा कृष्णमुच्यते ॥ तथापि शुक्लं वक्ष्यामि वर्णानान्तु द्विजोत्तमाः ॥१०॥ प्रतिग्रहेण यल्लब्धं याज्यतः शिष्यतस्तथा ॥ गुणान्वितेभ्यो विप्रस्य शुक्लं तत्त्रिविधं धनम् ॥ ११ ॥ युद्धोपलब्धं कारञ्च दण्डाच्च व्यवहारतः ॥ क्षत्रियस्य धनं शुक्लं त्रिविधं परिकीर्तितम् ॥ १२ ॥ कृषिवाणिज्यगोरक्षाः कृत्वा शुक्लं तथा विशः ॥ द्विजशुश्रूषया लब्धं शुक्लं शूद्रस्य कीर्तितम् ॥१३॥ न कथञ्चन कुर्वीत ब्राह्मणः कर्म वार्षलम् ॥ वृषलः कर्म वा ब्राह्मं पतनीयेत्तरेतरम् ॥ १४ ॥ (उत्कृष्टं चापकृष्टं च तयोः कर्म न विद्यते ॥ मध्यमे कर्मणी हित्वा सर्वसाधारणे हिते॥१५॥सर्वेषामेव वर्णानां वक्ष्यामि विविधं धनम्॥) पार्श्विकद्यूतचौर्यात्तु प्रतिरूपकसाहसैः ॥ १६ ॥ व्याजेनोपार्जितं यत्तत्सर्वेषां कृष्णमुच्यते ॥ शिल्पानुवृत्त्या यत्प्राप्तं कुसीदेन तथा धनम् ॥ १७ ॥ कृतो

पकारादातं च शबलं समुदाहृतम् ॥ क्रमागतं प्रीतिदायं प्राप्तं च सह भार्यया ॥ १८ ॥ अविशेषेण सर्वेषां धनं शुक्लमुदाहृतम् ॥ शुक्लेन वित्तेन कृतं पुण्यं बहुफलं भवेत् ॥१९॥ न्यायागतेनाथ धनेन विद्वान्पुण्यानि कृत्वा दिवि देवभोगान् ॥ चिरं समश्नाति महानुभावो न्यायेन तस्माद्ध नमर्जनीयम् ॥२०॥ इति श्रीविष्णुधर्मोत्तरे तृ०ख० मा०सं० मुनीन्प्रति हंसगीतासु धनविचारो नाम नवनवत्युत्तरद्विशततमोऽध्यायः ॥२९९॥

हंस उवाच ॥ दानं देवाः प्रशंसन्ति मनुष्याश्च तथा द्विजः ॥ दानेन कामानाप्नोति यान्काँश्चिन्मनसेच्छति ॥ १ ॥ अदत्तदानात्कृपणा दृष्ट्वेह परतन्त्रकान् ॥ पारत्रिकं धनं कुर्याद्दानं विप्रेषु मानवः॥२॥अमनुष्ये समं दानं गोषु ज्ञेयं महाफलम् ॥ द्विगुणं च तदेवोक्तं तथा वै वर्णसङ्करे ॥ ॥ ३ ॥ शूद्रे चतुर्गुणं प्रोक्तं विशि चाष्टगुणं भवेत् ॥ क्षत्रिये षोडशगुणं ब्रह्मबन्धौ तदेव तु ॥ ४ ॥ द्वात्रिंशता स्मृतं दानं वेदाध्ययनतत्परे ॥ शतधा तद्विशिष्टं तु प्राधीते लक्षसम्मितम् ॥ ५ ॥ अनन्तं च तदेवोक्तं ब्राह्मणे वेदपारगे ॥ आत्मनस्तु भवेत्पात्रं नान्यस्य तु पुरोहितः ॥ ६ ॥ पुरोहिते तु स्वं दत्तं दानमक्षयमुच्यते ॥ याजके ऋत्विजे चैव गुरावपि च मानवः ॥ ७ ॥ वर्णापेक्षा न कर्तव्या मातरं पितरं प्रति ॥ मातृष्वसां स्वसां चैव तथैव च पितृष्वसाम् ॥ ८ ॥ मातामहीं भागिनेयीं भागिनेयं तथैव च ॥ दौहित्रं विट्पतिं चैव तेषु दत्तमथाक्षयम् ॥ ९ ॥ श्रीभ्रष्टे यत्तथा दत्तं तदप्यक्षयमुच्यते ॥ स्थानभ्रष्टस्य यः कुर्याद्भूयस्त्वारोपणं नरः ॥ १० ॥ नाकलोकमवाप्नोति चिरन्तेनेह कर्मणा ॥ भूपालं यश्च्युतं राज्यात्स्वराज्ये स्थापयेत्पुनः ॥ ११ ॥ स याति शक्रसालोक्यं यावच्छक्राश्चतुर्दश ॥ ततो मानुष्यमासाद्य राजा भवति धार्मिकः ॥ १२ ॥ तस्माद् दानं श्रीविहीनं दातव्यं भूतिमिच्छता ॥ श्रीविहीनेषु यद्दत्तं तदनन्तं प्रकीर्तितम् ॥ १३ ॥ काले पात्रे तथा देशे धनं न्यायागतं तथा ॥ यद्दत्तं ब्राह्मणश्रेष्ठास्तदनन्तं प्रकीर्तितम् ॥ १४ ॥ द्वादशीषु तु यद्दत्तं शुक्लासु तु विशेषतः ॥ श्रवणेन तु युक्तासु तत्रापि द्विजसत्तमाः ॥ १५ ॥ विशेषाद्बुधयुक्तासु पक्षान्तेषु च यत्तथा ॥ तृतीयासु तु शुक्लासु सर्वासु च विशेषतः ॥ १६ ॥ वैशाखशुक्लपक्षे तु विशेषेण च मानदाः ॥ आषाढे कार्तिके चैव फाल्गुने च विशेषतः ॥ १७ ॥ तिस्रस्त्वेताः पौर्णमास्यो दाने विप्रा महाफलाः ॥ व्यतीपातेषु यद्दत्तं जन्मर्क्षे तु द्विजोत्तमाः ॥ १८ ॥ ग्रहसंक्रमकाले तु त्यागे च मिथुनस्य तु ॥ रव्रेर्महाफलं दत्तन्तेभ्योऽपि स्यान्महाफलम् ॥ १९ ॥ यदा प्रविशते भानुर्मकरं द्विजसत्तमाः ॥ आषाढेऽश्वयुजे पौषे चैत्रे शुक्ले तथैव च ॥ २० ॥ द्वादशीप्रभृति प्रोक्तं पुण्यं दिनचतुष्टयम् ॥ मिथुनं च तथा कन्या धन्विनं मीनमेव च ॥ २१ ॥ प्रविष्टेभास्करे पुण्यं प्रत्येकं कथितं द्विजाः ॥ षडशीतिमुखं नाम दाने दिनचतु

ष्टयम् ॥ २२॥ अच्छिन्ननाड्यां यद्दत्तं पुत्रे जाते द्विजोत्तमाः ॥ संस्कारेषु च पुत्रस्य तदक्षय्यं प्रकीर्तितम् ॥ २३ ॥ चन्द्रे वा यदि वा सूर्ये दृष्टे राहौ महाग्रहे ॥ अक्षयं कथितं दत्तं तत्राप्येके विशेषतः ॥ २४ ॥ पुष्करेषु प्रयागे च प्रभासे नैमिषे तथा ॥ धर्मारण्ये गयायाञ्च तथैवामरकण्टके ॥ २५ ॥ गङ्गाद्वारे कुशावर्त्ते बिल्वके नीलपर्वते ॥ तथा कनखले तीर्थे शालिग्रमे तथैव च ॥ २६ ॥ वाराणस्यां सरस्वत्यां गङ्गासागरसङ्गमे ॥ सिन्धुसागरसन्धौ च त्रितकूपे तथानघाः ॥ २७ ॥ प्लक्षप्रस्रवणे पुण्ये चमसोन्मज्जने तथा ॥ महालयेऽथ केदारे भृगुतुङ्गे तथैव च ॥ २८ ॥ मानसे च तथा पुण्ये तथैवोत्तरमानसे ॥ एतेष्वन्येषु च तथा दधितीर्थेषु यद्भवेत् ॥ २९ ॥ निम्नगानां च तीरेषु ज्ञेयं बहुफलं हि तत् ॥ दीनान्धकृपणानाथवाग्विहीनेषु यत्तथा ॥ ३० ॥ विकलेषु तथान्येषु जडवामनपङ्गुषु ॥ रोगार्त्तेषु च यद्दत्तं तत्स्याद्बहुफलं धनम् ॥ ३१ ॥ यद्दत्तं धर्मसाहाय्ये क्रियमाणे तथा क्रतौ ॥ विवाहकरणार्थाय तदक्षय्यं प्रकीर्तितम् ॥ ३२ ॥ यत्प्राप्तेन तु वित्तेन नरः स्यादुत्सवे सुखे ॥ उत्सवानां स भागी स्याद्यत्र तत्राभिजायते ॥ ३३ ॥ यद्दत्तेन च वित्तेन व्यसनादुत्तरेत्पुरः ॥ न स किञ्चिदवाप्नोति व्यसनं मनुजोत्तमः ॥ ३४ ॥ स्त्रियं मेषमजं चैव गामश्वं तुरगन्नरम् ॥ एकमेकं तु दातव्यमेकस्य बहवोऽपि वा ३५॥ एकं बहूनां तद्दत्तं ध्रुवं नरकमृच्छति ॥ आदातुर्नरकाय स्यात्तदा दातुर्द्विजोत्तमाः ॥ ३६ ॥ विक्रयं तु समापन्नो यो दत्त्वा जीवदक्षिणाम् ॥ एवं काले च पात्रे च देशे शुद्धागमं धनम् ॥ ३७ ॥ दत्त्वा धनमवाप्नोति देवब्राह्मणक्षत्रियान् ॥ धनं बहिश्चराः प्राणा धने सर्वं प्रतिष्ठितम् ॥ ३८ ॥ धनादन्नं तथान्नेन सर्वो जीवति वै जनः ॥ यावन्ति लोके पुण्यानि तेभ्यो दाता विशिष्यते ॥ दानेन तदवाप्नोति यत्किञ्चिन्मनसेप्सितम् ॥ ३९ ॥ दानेन लोके प्रियतामुपैति दानेन नाकं पुरुषः प्रयाति ॥ मानुष्यमासाद्य च दानशीलो भोगानवाप्नोति मनोभिरामान् ॥ ४० ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखंडे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु दानप्रशंसा नाम त्रिशततमोऽध्यायः ॥ ३०० ॥ ऋषय ऊचुः ॥ सर्वधर्मभृतां श्रेष्ठ विधिं धर्म्यं प्रतिग्रहे ॥ ब्राह्मणानां समाचक्ष्व त्वं हि वेदमयो निधिः ॥ १ ॥ ॥ हंस उवाच ॥ ॥ मृतके सूतके विप्रा न तु देयः प्रतिग्रहः ॥ तत्रापि च तथा देया या स्यादभयदक्षिणा ॥ २ ॥ रात्रौ दानं न शंसन्ति विना त्वभयदक्षिणाम् ॥ विद्यां कान्यां द्विजश्रेष्ठा दीपमन्नं प्रतिश्रयम् ॥ ३ ॥ रात्रावपि हितं देयं यच्चान्यत्कथितं पुरा ॥ पूजने त्वतिथीनां च पान्थानामपि पूजने ॥ ४ ॥ तच्च रात्रौ तथा ज्ञेयं गवामुक्तं च पूजने ॥ कालः सर्वो विनिर्दिष्टः पात्रः सर्वश्च मानदाः ॥ ५ ॥ अभयस्य प्रदाने तु नात्र कार्या विचारणा ॥ शुचिर्वाप्यशुचिर्वापि दद्यादभयदक्षिणाम् ॥ ६ ॥ शुचिनाऽशुचिना

वापि ग्राह्या त्वभयदक्षिणा ॥ कालः स एव ग्रहणे यदा भयमुपस्थितम् ॥ ७ ॥ प्रतिग्रहाण्यथान्यानि ग्राह्याणि शुचिना सदा॥ मृतके सूतके चैव न ग्राह्याणि द्विजोत्तमाः ॥ ८ ॥ अभ्यक्तेन च धर्मज्ञास्तथा मुक्तशिखेन च ॥ स्नातः सम्यगुपस्पृश्य गृह्णीयात्प्रयतः शुचिः ॥ ९ ॥ तोयं दद्यात्तथा दाता दाने विधिरयं स्मृतः ॥ प्रतिग्रहीता सावित्रं सर्वत्रैव तु कीर्तयेत् ॥ १० ॥ ततस्तु कीर्तयेत्सार्धं द्रव्येण द्रव्यदेवताम् ॥ समापयेत्ततः पश्चात्कामस्तुत्या प्रतिग्रहम् ॥ ११ ॥ प्रतिग्रहं पठेदुच्चैः प्रतिगृह्य द्विजोत्तमः ॥ मन्दं पठेत्तु राजन्यादुपांशु च तथा विशः ॥ १२ ॥ मनसा तु तथा शूद्रात्स्वस्तिवाचनिकं तथा ॥ सोंकारं ब्राह्मणे कुर्यान्निरोंकारं महीपतौ ॥ १३ ॥ उपांशु च तथा वैश्ये स्वस्ति शूद्रे प्रकीर्तितम् ॥ अभयं सर्वदैवत्यं भूमिर्वै विष्णुदेवता ॥ १४ ॥ कन्यादानं तथा दासी प्राजापत्याः प्रकीर्तिताः ॥ तथा चैकशफं सर्वं कथितं यमदैवतम् ॥ १५ ॥ माहिषं च तथा साम्यं चोष्ट्रं वै नैर्ऋतं भवेत् ॥ रौद्री धेनुर्विनिर्दिष्टा च्छागमाग्नेयमुच्यते ॥ १६॥ मेषं तु वारुणं विद्याद्वराहो वैष्णवः स्मृतः॥ आरण्याः पशवः सर्वे कथिता वायुदैवताः ॥ १७ ॥ जलाशयानि सर्वाणि वारिधानी कमण्डलुः ॥कुम्भं च करकं चैव वारुणानि द्विजोत्तमाः ॥ १८ ॥ समुद्रजानि रत्नानि वारुणानि द्विजोत्तमाः ॥ आग्नेयं कनकं प्रोक्तं सर्वलोहानि चाप्यथ ॥ १९ ॥ प्राजापत्यानि सस्यानि पक्वान्नमपि च द्विजाः ॥ ज्ञेयानि सर्वगन्धानि गान्धर्वाणि विचक्षणैः ॥ २० ॥ बार्हस्पत्यं स्मृतं वासः सौम्यान्यथ रसानि च ॥ पक्षिणश्च तथा सर्वे वायव्याः परिकीर्तिताः ॥ २१ ॥ विद्या ब्राह्मी विनिर्दिष्टा विद्योपकरणानि च ॥ सारस्वतानि ज्ञेयानि पुस्तकाद्यानि पंडितैः ॥२२॥ सर्वेषां शिल्पभाण्डाना विश्वकर्मा तु देवता ॥ द्रुमाणामथ पुष्पाणां शाकहारितकैः सह ॥ २३ ॥ फलानामपि सर्वेषां तथा ज्ञेयो वनस्पतिः ॥ मत्स्यमांसं विनिर्दिष्टं प्राजापत्यं तथैव च ॥ २४ ॥ छत्रं कृष्णाजिनं शय्या रथमासनमेव च ॥ उपानहौ तथा यानं यच्चान्यत्प्राणिवर्जितम् ॥२५॥ उत्तानाङ्गिरसे त्वेतत्प्रतिगृह्णीत मानवः ॥ पर्जन्याय तथा सीरं शस्त्रवर्मध्वजादिकम् ॥ २६ ॥ रणोपकरणं सर्वं कथितं चक्रदैवतम् ॥ ग्रहन्तु सर्वदैवत्यं यद्यदुक्तं द्विजोत्तमाः ॥ २७ ॥ तज्ज्ञेयं विष्णुदैवत्यं सर्वं वा द्विजसत्तमाः ॥ भूमेः प्रतिग्रहं कुर्याद्भूमिं कृत्वा प्रदक्षिणम् ॥ २८ ॥ करे गृह्य तथा कन्यां दासीदासौ द्विजोत्तमाः ॥ करन्तु हृदि विन्यस्य धर्म्यो ज्ञेयः प्रतिग्रहः ॥ २९ ॥ आरुह्य च गजस्योक्तः कर्णे चाश्वस्य कीर्तितः ॥ तथा चैकशफानां च सर्वेषामविशेषतः ॥ ३० ॥ प्रतिगृह्णीत गां पुच्छे ह्यन्ते कृष्णाजिनं तथा ॥ कर्णेऽजाः पशवश्चान्ये ग्राह्याः पुच्छे विचक्षणैः ॥ ३१ ॥ प्रतिग्रहस्त्वथोष्ट्रस्य आरुह्यैव तथा भवेत् ॥ बीजानां मुष्टिमादाय रत्नान्यादाय सर्वतः ॥ ३२ ॥ वस्त्रं दशान्तादादद्यात्परिधायाथ वा पुनः ॥

आरुह्योपानहौ मन्त्रमारुह्यैव च पादुके ॥ ३३ ॥ ईषाधस्तु रथं ग्राह्यं छत्रं दंडे तु वाचयेत् ॥ द्रुमाणामथ सर्वेषां मूले न्यस्तकरो द्विजाः ॥ ३४ ॥ आयुधानि समादाय तथोन्मुच्य विभूषणम् ॥ वर्मध्वजौ तथा स्पृष्ट्वा प्रविश्य च तथा गृहम् ॥३५॥ अवतीर्य तु सर्वाणि जलस्थानानि वै द्विजाः॥ द्रव्याण्यन्यान्यथादाय स्पृष्ट्वा तु ब्राह्मणः पठेत ॥ ३६ ॥ कन्यादाने तु च पठेद्द्रव्याणान्तु पृथक्पृथक् ॥ प्रतिग्रहे द्विजश्रेष्ठास्तत्रैवान्तर्भवन्ति ते ॥ ३७ ॥ द्रव्याणामथ सर्वेषां द्रव्यसंश्रवणान्नराः ॥ वाचयेज्जलमादाय करेणाथ प्रतिग्रहम् ॥ ३८ ॥ प्रतिग्रहस्य यो धर्मं न जानाति द्विजो विधिम् ॥ द्रव्यस्तैन्यसमायुक्तो नरकं प्रतिपद्यते ॥ ३९ ॥ निष्क्रीणाति तु तद्द्रव्यं ब्राह्मणस्तु प्रतिग्रहात् ॥ विधिं तु धर्म्यं विज्ञाय ब्राह्मणस्तु प्रतिग्रहे ॥ ४० ॥ आत्मनः श्रेयसा योगं कुर्याद्दाता तथैव च ॥ भुवं धेनुमथाश्वं च रत्नानि कनकं तथा ॥ ४१ ॥ तिलानि कुञ्जरं दद्यान्नाविज्ञाय गुणागुणान् ॥ आनृशंस्येन सर्वस्य दद्यादन्नं विचक्षणः ॥४२॥ वासश्च दद्यात्सर्वस्य सर्वसाधारणे हिते ॥ विधिं धर्म्यमविज्ञाय यस्तु कुर्यात्प्रतिग्रहम् ॥ ४३ ॥ दात्रा सह तरत्येव नैव दुर्गाण्यसौ द्विजाः ॥ तस्मात्सर्वप्रयत्नेन विधिर्ज्ञेयः प्रतिग्रहे ॥ ४४ ॥ प्रतिग्रहो यो विधिना गृहीतो द्वयोस्तु योगं परमेण कुर्यात् ॥ परत्र संभृत्य तथेह लोके स श्रेयसे नात्र विचारमस्ति ॥ ॥ ४५ ॥ इति श्रीविष्णुधर्मोत्तरे तृ०खं मा०सं०मुनीन्प्रति हंसगीतासु प्रतिग्रहविधिवर्णनो नामैकोत्तरत्रिशततमोऽध्यायः ॥ ३०१ ॥ ऋषय ऊचुः ॥ पृथक्पृथक् त्वमाचक्ष्व दानानां फलमुत्तमम् ॥ सर्वधर्मभृतां श्रेष्ठ सर्वज्ञस्त्वं मतो हि नः ॥ १ ॥ ॥ हंस उवाच ॥ ॥ अभयस्य प्रदानाद्धि नान्यद्दानं विशिष्यते ॥ सर्वेषामेव दानानां प्राणदानं विशिष्यते ॥ २ ॥ ग्राह्यं प्राणप्रदानन्तु चण्डालात्पुक्कसादपि ॥ जीवन्सर्वमवाप्नोति जीवन्धर्मं करोति च ॥ ३ ॥ जीवमानस्तु पुरुषः कामानां भाजनं भवेत ॥ भाजनेन तु सर्वं वै भाजनत्वं विनश्यति ॥ ४ ॥ शरीरधर्मसर्वस्वं रक्षणाय प्रयत्नतः ॥ शरीरात्स्रवते धर्मं पर्वतात्सलिलं यथा ॥ ५ ॥ अभयस्य प्रदानेन नरः स्यात्सर्वकामदः ॥ अश्वमेधफलं तस्य यो रक्षेच्छरणागतम् ॥ ६ ॥ शरणागतं तु सन्त्यज्य यो नरः पुरुषाधमः ॥ बहून्यब्दसहस्राणि नरकं प्रतिपद्यते ॥ ७ ॥ नरकाच्च तथा मुक्तस्तिर्यग्योनिषु जायते ॥ तत्रापि च तथाप्नोति वधबन्धान्यनेकशः ॥ ८ ॥ दैवान्मानुष्यमासाद्य चण्डालत्वमवाप्नुयात् ॥ व्याधिबन्धवधैर्घोरैस्तत्रापि सच युज्यते ॥ ९ ॥ परित्राणं तु यः कुर्याद्भीतस्य शरणैषिणः ॥ स एकः पुरुषो लोके सर्वधर्मभृतां वरः ॥ १० ॥ वधभीतस्य यः कुर्यात्परित्राणं नरोत्तमः ॥ शक्रलोकः स्मृतस्तस्य यावदिन्द्राश्चतुर्दश ॥ ११ ॥ तमःप्रवेशभीतस्य परित्राणेन मानवः ॥

ब्रह्मलोकमवाप्नोति नात्र कार्या विचारणा ॥ १२ ॥ वधादपि परं पापं चक्षुषा तु वियोजयेत् ॥ पार्थिवेन न तत्कार्यं कदाचिदपि कस्यचित् ॥
॥ १३ ॥ तमःप्रवेशनं कृत्वा परेषां पुरुषाधमः ॥ अन्धत्वं ध्रुवमाप्नोति यत्रयत्राभिजायते ॥ १४ ॥ अपि कल्पसहस्राणि तमसा न
वियुज्यते ॥ अङ्गच्छेदनभीतस्य कृत्वा त्राणमनिन्दिताः ॥ १५ ॥ रुद्रलोकमवाप्नोति कल्पशेषमिति श्रुतिः ॥ कल्पादिसर्गे भवति ज्ञान
युक्तो नरस्ततः ॥ १६ ॥ कृत्वा बन्धनभीतस्य परित्राणन्नरोत्तमः ॥ सर्वबन्धविनिर्मुक्तो वायुलोके महीयते ॥ १७ ॥ आसेवनाद्धि भीतस्य
त्राणं कृत्वा तथा नरः ॥ सर्वदुःखविनिर्मुक्तः साध्यानां लोकमाप्नुयात् ॥ १८ ॥ ताडनाद्यस्तु भीतस्य परित्राणं समाचरेत् ॥
सर्वबन्धविनिर्मुक्तो भृगूणां लोकमश्नुते ॥ १९ ॥ विवासनाच्च भीतस्य त्राणं कृत्वा तथा नरः ॥ स्वर्गलोकमवाप्नोति मानुष्ये स्थानमुत्तमम् ॥
॥ २० ॥ धनापहारभीतस्य त्राणं कृत्वा नरोत्तमः ॥ स्वर्गलोकमवाप्नोति पूजां देवगणात्तथा ॥ २१ ॥ नरः कृतपरित्राणः पुण्यं किञ्चि
द्यदाचरेत् ॥ भागी तस्य परित्राता नरः पुण्यस्य कर्मणः ॥ २२ ॥ पशूनाञ्च मृगाणाञ्च पक्षिणाञ्च तथा द्विजाः ॥ तृणद्रुमलतानाञ्च त्राणा
द्भवति नाकभाक् ॥ २३ ॥ वधकस्य हस्तगतं पशुं क्रीत्वा नरोत्तमः ॥ नाकलोकमवाप्नोति सुखी सर्वत्र जायते ॥ २४ ॥ यावन्ति पशु
रोमाणि तावद्वर्षाणि मानवः ॥ स्वर्गलोकमवाप्नोति यश्च त्राणं करोत्यसौ ॥२५॥ अपि कीटपतङ्गस्य त्राणात्सर्वमुपाश्नुते ॥ बहून्यब्दसहस्राणि
नात्र कार्या विचारणा ॥२६॥ चौरग्रस्तं नृपग्रस्तं रिपुग्रस्तं तु मोक्षयेत् ॥ व्यालग्रस्तं तथा विप्राः सोऽश्वमेधफलं लभेत्॥२७॥विषमे तु तथा दुर्गे
सलिले वा हुताशने॥निमग्नं यः परित्रायेत्सोऽश्वमेधफलं लभेत्॥२८॥व्याधितस्यौषधं दत्त्वा प्राणदानफलं लभेत्॥रोगार्तं परिचर्याथ प्राणदानफलं
लभेत् ॥ २९ ॥ उपचारं तथा कृत्वा भिषङ् मूल्यं विना द्विजाः ॥ प्राणदानफलं तस्य नाकलोके महीयते॥३०॥ये रक्ष्यमाणा निहता मनुष्या
भीरुङ्गतास्ते त्रिदशेन्द्रलोकम् ॥ च्यवन्ति नाद्यापि च ते नृवीराः कालेऽपि तेषां च्यवनं न चास्ति ॥ ३१ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख०
मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतास्वभयदानप्रशंसावर्णनो नाम द्व्यधिकत्रिशततमोऽध्यायः ॥ ३०२ ॥ ॥ हंस उवाच ॥
विद्या कामदुघा धेनुर्विद्या चक्षुरनुत्तमम् ॥ विद्यादानात्परं दानं न भूतं न भविष्यति ॥ १ ॥ विद्यावान्सर्वकामानां भाजनं पुरुषो भवेत् ॥
तस्माद्विद्यां हि ददता सर्वं दत्तं भवेदिह ॥ २ ॥ पराध्यापनतः क्लेशं पुरुषस्तु यदश्नुते ॥ तपस्तत्परमं तस्य ब्रह्मलोकं परं स्मृतम् ॥ ३ ॥
दानानामुत्तमं लोके तपसा च तथोत्तमम् ॥ विद्यादानं महाभागाः सर्वकामफलप्रदम् ॥ ४ ॥ वेददानादवाप्नोति सर्वं

यज्ञफलं नरः ॥ उपवेदप्रदानेन गन्धर्वैः सह मोदते ॥ ५ ॥ वेदाङ्गानां च दानेन शक्रलोकमवाप्नुयात् ॥ धर्मशास्त्रप्रदानेन धर्मेण सह मोदते ॥ ६ ॥ सिद्धान्तानां प्रदानेन मोक्षमाप्नोत्यसंशयम् ॥ शास्त्राणि दत्त्वा चान्यानि नरो नाके महीयते ॥ ७ ॥ विद्यादानादवाप्नोति प्रदानात्पुस्तकस्य च ॥ शिल्पानि शिक्षयेद्यस्तु पौण्डरीकफलं लभेत् ॥ ८ ॥ शिक्षयित्वा धनुर्वेदमश्वमेधफलं लभेत् ॥ शिल्पभाण्डप्रदानेन शिल्पदानफलं लभेत् ॥९ ॥ अहितेषु प्रवृत्तस्य तथा कृत्वा निवारणम् ॥ विद्यादानफलं प्रोक्तं नात्र कार्या विचारणा॥१०॥ पापप्रवृत्तस्य तथा नरः कृत्वा निवारणम् ॥ विद्यादानफलं प्राप्य स्वर्गलोके महीयते ॥ ११ ॥ शिक्षयेत्पुरुषः कर्म कर्मणा येन जीवति ॥ शिक्षयित्वा महाभागाः स्वर्गलोके महीयते ॥ १२ ॥ येन जीवति भाण्डेन तस्य भाण्डस्य दायकः ॥ सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥ १३॥ अन्तर्वन्तीह दानानि सर्वाण्येव द्विजोत्तमाः ॥ एकं महाफलं ज्ञेयं विद्यादानमनन्तकम् ॥ १४ ॥ विद्यां यथेष्टां पुरुषस्य दत्त्वा मन्त्रं शुभं वाप्यथ वापि शिल्पम् ॥ शिल्पस्य भाण्डं यदि वा द्विजेन्द्राः प्राप्नोति लोकं मनसा त्वभीष्टम्॥१५॥इति श्रीविष्णुधर्मोत्तरे तृ० ख० मा०सं० मुनीन्प्रति हंसगीतासु विद्यादानफलनिरूपणो नाम त्र्यधिकत्रिशततमोऽध्यायः॥३०३॥ हंस उवाच ॥ ब्रह्मदेयां तु यः कन्यां पुरुषस्य प्रयच्छति ॥ सप्तातीतान्भविष्याँश्च स्वकुले सप्त मानवान् ॥१॥ तेन कन्याप्रदानेन तारयिष्यत्यसंशयम् ॥ लोकमाप्नोति च तथा दक्षस्येह प्रजापतेः ॥ २ ॥ दत्त्वा दैवेन विधिना कुलं त्रिपुरुषं नरः ॥ समुद्धरति दुर्गेभ्यो दक्षलोकं च गच्छति ॥३ ॥ प्राजापत्येन विधिना दत्त्वात्मानं समुद्धरेत् ॥ महत्पुण्यमवाप्नोति स्वर्गलोकं च गच्छति ॥ ४ ॥ भूकरीन्द्राश्वदानानि गोदानञ्च तथैव च ॥ अन्तर्भवन्ति वै यस्मिन्किं दानमधिकं ततः ॥ ५ ॥ दत्त्वा तां वर्णहीनाय घोरे तमसि मज्जति ॥ बहून्यब्दसहस्राणि तथैवाशुचिभुङ्नरः॥६॥ समवर्णाय यो दद्यात्स तूक्तफलभाग्भवेत् ॥ दत्त्वा चाधिकवर्णाय द्विगुणां त्रिगुणां तथा ॥ ७ ॥ द्विजपुत्रमनाथं यः संस्कुर्याद्यश्च कर्मभिः ॥ चूडोपनयनाद्यैश्च सोऽश्वमेधफलं लभेत् ॥ ८ ॥ अनाथां कन्यकां दत्त्वा सदृशे वाधिके वरे ॥ द्विगुणं फलमाप्नोति कन्यादाने यदीरितम् ॥ ९ ॥ विवाहे समनुप्राप्ते कृत्वोपकरणानि च ॥ नाकलोकमवाप्नोति कर्मस्वन्येष्वपि द्विजाः ॥ १० ॥ वस्त्रं पत्रमलङ्कारं विवाहार्थं प्रयच्छति ॥ महत्फलमवाप्नोति नाकलोके महीयते ॥ ११ ॥ कन्यया सह यद्दत्तं द्रविणं वह्निमूलके ॥ सफलाद्द्विगुणं तस्य फलमुक्तं पुरातनैः ॥ १२ ॥ कन्यादानादवाप्नोति दक्षलोकं नरोत्तमः ॥ विष्णुपूजासमं पुण्यं तत्पत्युः पूजया भवेत् ॥ १३ ॥ विमानमारुह्य मनोभिरामं सुराङ्गनागीतविलासहृद्यम् ॥ प्राप्नोति लोकांस्त्रिदशोत्तमानां कन्याप्रदो नात्र विचारणास्ति ॥१४ ॥

इति श्रीविष्णुधर्मोत्तरे तृ० ख० मा० सं० मुनीन्प्रति हंसगीतासु कन्यादानफलनिरूपणो नाम चतुरधिकत्रिशततमोऽध्यायः ॥ ३०४ ॥
हंस उवाच ॥ भूमिर्धात्री विधात्री च भूमौ सर्वं प्रतिष्ठितम् ॥ भूमिर्हि माता सर्वस्य सर्वकामप्रदा वरा ॥ १ ॥ तदुद्भूतेन हविषा तृप्तिमायान्ति देवताः ॥ भूमिर्हि धारणी विप्रास्त्रैलोक्यस्य निगद्यते ॥ २ ॥ भूमौ हि सर्वं भवति भूमौ सर्वं प्रतिष्ठितम् ॥ सर्वकामप्रदं ज्ञेयं भूमिदानं नरोत्तम ॥ ३ ॥ हस्तमात्रां तु यो दद्याद्भुवं पुरुषसत्तम ॥ तेनैव ध्रुवमाप्नोति भूमिदानफलं नरः ॥ ४ ॥ यदुत्पन्नमथाश्नाति नरः संवत्सरं द्विजाः ॥ एकं गोचर्ममात्रं तु भुवः प्रोक्तं विचक्षणैः ॥ ५ ॥ ब्राह्मणाय ततो दत्त्वा वसूनां लोकमाप्नुयात् ॥ शाकभूमिं ततो दत्त्वा लोकमाङ्गिरसं व्रजेत ॥ ६ ॥ आरामभूमिं दत्त्वा च मारुतं लोकमश्नुते ॥ जलाशयार्थं यो दद्याद्वारुणं लोकमाप्नुयात् ॥ ७ ॥ यस्य दत्त्वा तु वेश्मार्थं तस्य देवस्य सोऽश्नुते ॥ यस्तत्र विद्यते नित्यं लोको द्विजवरा ध्रुवम् ॥ ८ ॥ उद्यानभूमिं दत्त्वा च गन्धर्वैः सह मोदते ॥ रत्नाकरं तु वै दत्त्वा शक्रलोके महीयते ॥९॥ दत्त्वा कनकभूमिं च वह्निलोके महीयते ॥ अन्येषामाकरभुवं लोहानां यः प्रयच्छति ॥ १० ॥ तस्यापि मतिरुद्दिष्टा लोके हौताशने द्विजाः ॥ धान्याकरभुवं दत्त्वा नाकलोके महीयते ॥ ११ ॥ अञ्जनाकरभूमिं तु यः प्रयच्छति वै द्विजाः ॥ पितृभिर्यमलोकस्थः पूज्यतेऽसौ नरोत्तमः ॥ १२ ॥ लवणाकरभूमिं च सोमलोके महीयते ॥ शिम्बिसस्यप्ररोहां तु भुवं दत्त्वा नरोत्तमः ॥ १३ ॥ साध्यानां लोकमाप्नोति नात्र कार्या विचारणा ॥ इन्धनाकरभूमिं तु नासत्यैः सहितस्तथा॥१४॥शूकधान्यभुवं दत्त्वा रुद्रलोके महीयते ॥ केदारभूमिं धर्मज्ञा यः प्रयच्छति धर्मतः ॥ १५ ॥ स महत्पुण्यमाप्नोति ब्रह्मलोकं च गच्छति ॥ इक्षुभूमिं नरो दत्त्वा द्राक्षाभूमिमथापि च ॥ १६ ॥ सोमलोकमवाप्नोति सर्वकामाँश्च विन्दति ॥ सोषरा तस्कराकीर्णा तथा व्याडवती च भूः॥१७॥न दातव्या द्विजश्रेष्ठा या च सन्धिषु वै द्विजाः ॥ गुल्मपुष्पप्रदां यस्तु लतां वा संप्रयच्छति॥१८॥विमाने नन्दने सोऽथ क्रीडत्यप्सरसां गणैः॥पुष्पदं फलदं वृक्षं दत्त्वा विप्राय भक्तितः॥१९॥ स्वर्गलोकपरिभ्रष्टो नगराधिपतिर्भवेत्॥ब्राह्मणाय गृहं दत्त्वा वसूनां लोकमश्नुते॥२०॥आराममथ सोद्यानं नन्दने क्रीडते वने॥धनधान्ययुतं स्फीतं गृहोपकरणैर्युतम्॥२१॥शय्यासनयुतं रम्यं गोजाश्वावियुतं तथा॥गृहं दत्त्वा द्विजेन्द्राय तावत्स्वर्गमुपाश्नुते ॥२२॥ यावत्कल्पावसाने तु कल्पादौ पार्थिवो भवेत्॥ग्रामप्रदः स्यान्नृपतिस्तथा ह्यशनदो नृपः ॥ २३ ॥ समग्रवसुधेशः स्याच्चक्रवर्ती च राज्यदः ॥ स्वदत्तां परदत्तां वा न हरेत वसुन्धराम् ॥ २४ ॥ भूमेरङ्गुलमात्रं तु हृत्वा नरकमृच्छति ॥ बहून्यब्दसहस्राणि धर्मेऽपि पुरुषो रतः ॥ २५ ॥ विष्ठाकृमित्वमाप्नोति पितृभिः सहित

स्तथा ॥ तस्माद्भूमिं न हिंसेत दद्यादेव विचक्षणः ॥ २६ ॥ भूमिदानात्परं दानं नान्यल्लोकेषु विद्यते ॥ भूमिं युद्धजितां दद्याद्ब्राह्मणेषु महीपतिः ॥ २७ ॥ परं राष्ट्रं समासाद्य प्राग्दत्तं नैव हिंसयेत् ॥ स्वराष्ट्रे परराष्ट्रे वा देवब्राह्मणसात्कृतम् ॥ २८ ॥ चिरं नरकमाप्नोति हृत्वा भूमिपतिर्ध्रुवम् ॥ दत्ता न हिंसनीया स्याद्रिपुणापि वसुन्धरा ॥ २९ ॥ भूमिहर्ता परं दुःखं प्रेत्य चेह तथाश्नुते ॥ भूमिं क्रीत्वा तु यः कुर्याद्देवब्राह्मणसान्नरः ॥ ३० ॥ स्वर्गलोकमवाप्नोति पुरुषोऽपि सुदारुणः ॥ षष्टिं वर्षसहस्राणि स्वर्गे वसति भूमिदः ॥ ३१ ॥ आच्छेत्ता चानुमन्ता च तावन्ति नरके वसेत् ॥ पक्वसस्यां वसुमतीं योऽलङ्कृत्य प्रयच्छति ॥ ३२ ॥ कामगेन विमानेन ब्रह्मलोकं स गच्छति ॥ यथा भवति विप्रेन्द्राः फलं भूमौ पुनःपुनः ॥ ३३ ॥ तथा भूमिकृतं दानं सस्यैरिव विवर्धते ॥ यस्तु राजा द्विजातिभ्यः सम्यग्भूमिं प्रयच्छति ॥ पुनस्तु जननं प्राप्य राजैव भुवि जायते ॥ ३४ ॥ शस्त्रं भद्रासनं वस्त्रं नराश्ववरवारणाः ॥ भूमिदानस्य पुष्पाणि फलं स्वर्गः प्रकीर्तितः ॥ ३५ ॥ संग्रामे ये हताः शूरास्तथा ये यज्ञयाजिनः ॥ वनेषु ये मृतास्ते च नातिक्रामन्ति भूमिदम् ॥ ३६ ॥ नास्ति विष्णुसमस्त्राता नास्ति गङ्गासमा नदी ॥ ३७॥ होममन्त्रस्तथा नास्ति महाव्याहृतिभिः समः ॥ गायत्रीसदृशो जप्यो यथा नास्ति द्विजोत्तमाः॥३८॥ अन्तर्जले तथा नास्ति मन्त्रोऽन्योऽप्यघमर्षणात् ॥ विधिर्मानसमो नास्ति तपो नानशनात्परम् ॥३९॥गुरुर्मातृसमो नास्ति नास्ति भार्यासमः सखा ॥ नीचावमाननाद्दुःखाद्दुःखं नास्ति यथा परम् ॥ ४० ॥ यथा च नास्ति लोकेषु सुखं शत्रुजयाधिकम्॥ चक्षुर्ज्ञानसमं नास्ति सुहृद्धर्मसमस्तथा ॥ ४१ ॥ भूमिदानात्परं दानं तथा नास्ति द्विजोत्तमाः ॥भूमिदानात्परं नास्ति विमानैः कामगैरिह ॥ ४२ ॥ देवस्त्रीनृत्यबहुले वीणासुरजनादिते ॥ किंकिणीजालनिर्घोषे मनोरथफलद्रुमे ॥४३॥ मुख्याभिर्देवरामाभिर्वीज्यमानास्तु चामरैः॥ संगीयमाना गन्धर्वैः स्तूयमानास्तथैव च ॥४४॥ बहून्यब्दसहस्राणि देवभोगांस्तु ते नराः ॥ स्वर्गे भुक्त्वा यदा यान्ति मानुष्यं कालपर्ययात् ॥भवन्ति सर्वभोगाढ्याः सर्वदुःखविवर्जिताः॥४५॥विख्यातशब्दाश्च जनाभिरामाः प्रतप्तचामीकरभूषिताङ्गाः ॥ सुगन्धिगन्धैश्च तथानुलिप्ता भवन्ति लोके च सुखैरुपेताः ॥४६॥ इति श्रीविष्णुधर्मोत्तरे तृ०खं०मा०सं०मुनीन्प्रति हंसगीतासु भूमिदानवर्णनो नाम पञ्चाधिकत्रिशततमोऽध्यायः॥३०५॥हंस उवाच॥ गावः पवित्रा मङ्गल्या गोषु लोकाः प्रतिष्ठिताः॥ तास्वायत्तानि यज्ञानि देवतातिथिपूजनम्॥१॥बलन्तुष्टिश्च पुष्टिश्च तथा श्राद्धक्रिया द्विजाः॥नासौ सम्पन्नमश्नाति यस्य धेनुर्न विद्यते॥२॥ तस्मात्सर्वप्रदानानां गवां दानमनुत्तमम् ॥ हीनाङ्गीं क्षीरपां वृद्धां दुग्धदोहां निरिन्द्रियाम्॥३॥व्याधितां विषमां व्यालां

तथैव प्रपलायिनीम् ॥ मूल्यैस्तथाप्यसंशुद्धैर्हताश्च द्विजपुङ्गवात्॥४॥न दातव्या स्मृता धेनुर्दत्त्वा नरकमाप्नुयात् ॥ ब्राह्मणो यस्तु कुरुते गोरसानां
तु विक्रयम्॥५॥गवां च विक्रयं विप्रा विषमो यस्तथा गवाम्॥अपात्रदोषयुक्तश्च न देया तस्य चाप्यथ॥६॥नैका बहूनां दातव्या न द्वयोर्द्विजपुङ्ग
वाः॥सा तु विक्रयमापन्ना दातुर्नरकदायिनी॥७॥ एकं पात्रमथासाद्य देयास्तु बहवः स्मृताः ॥ गवां प्रदाने यत्नेन परीक्ष्यो ब्राह्मणो भवेत् ॥ ८ ॥
यथाकथञ्चिद् दत्त्वा गां धेनुं वाऽधेनुमेव वा ॥ अरोगामपरिक्लिष्टां दाता स्वर्गे महीयते ॥९॥ दत्त्वा वत्सतरीं विप्राः स्वर्गलोके महीयते ॥ गुर्विणीं
च तथा दत्त्वा वसूनां लोकमश्नुते ॥ १० ॥ प्रसूयमानां तां दत्त्वा भूमिदानफलं लभेत् ॥ स्रवंत्यां च तथा दत्त्वा नन्दने मोदते नरः ॥११॥
श्वेतां दत्त्वा सोमलोके रक्तां दत्त्वा विभावसोः ॥ कृष्णां दत्त्वा तथा याम्ये नीलां दत्त्वा च वारुणे ॥ १२ ॥ इन्द्रलोके तु शबलामिन्द्रलोके तु
रोहिणीम् ॥ वातरेणुसवर्णां तु वायुलोके महीयते ॥ १३ ॥ धूम्रवर्णां तथा दत्त्वा वसूनां लोकमश्नुते ॥ आषाढेन सवर्णान्तु लोकं वारुणमाप्नु
यात् ॥ १४ ॥ सुवर्णवर्णां कौबेरं ताम्रामाङ्गिरसं तथा ॥ पलालधूम्रवर्णाभां पितृलोकं तथैव च॥१५॥शितिकण्ठाप्रदानेन वैश्वदेवमवाप्नुयात् ॥
गौरीं दत्त्वा भृगूणाञ्च वैराटाभां प्रजापतेः ॥ १६ ॥ पाण्डुकम्बलवर्णाभां रुद्राणां लोकमाप्नुयात् ॥ शुक्लबिन्दुचितां कृष्णां गन्धर्वैः सह
मोदते ॥ १७ ॥ (कपिलाञ्च तथा दत्त्वा यथेष्टं लोकमाप्नुयात् ॥ ) गावः प्रकृतिवर्णास्तु कपिलाः परिकीर्तिताः ॥ १८ ॥ कृतन्तु वर्णवैचित्र्यं
पूर्वं तासान्तु शम्भुना ॥ यथा तु गङ्गा सरितां धेनूनां कपिला तथा ॥ १९ ॥ सायं प्रातश्च सततं होमकाले द्विजोत्तमाः ॥ गावो ददति वै
हौम्यमृषिभ्यो नात्र संशयः ॥ २० ॥ दुष्कृतानि दुरिष्टानि दुर्गाणि विषमाणि च ॥ तरन्ति चैव पापेभ्यो धेनुदानेन मानवाः ॥ २१ ॥ एकां
गां दशगुर्दद्याद्दश दद्याच्च गोशती ॥ शतं सहस्रगुर्दद्यात्सर्वे तुल्यफला हि ते ॥ २२ ॥ शतवर्षसहस्राणि तपस्तप्तं सुदुश्चरम् ॥ गोभिः पूर्वविसृष्टा
भिर्गच्छेम श्रेष्ठतामिति ॥ २३ ॥ लोकेऽस्मिन्दक्षिणानाञ्च सर्वा गा वयसोत्तराः ॥ भवे तानि च लिंप्येम दोषेणातिपरन्तपाः ॥ २४ ॥ शकृत्तासां
पवित्रार्थं कुर्वीरन्देवमानुषाः ॥ तथा सर्वाणि भूतानि स्थावराणि चराणि च ॥ ॥ २५ ॥ प्रदातारश्च गोलोकान्गच्छेयुरिति मानदाः ॥ एतद्वरं
ददौ तासां सर्वमेव पितामहः ॥ २६ ॥ सुरभिर्देवधेनुर्या तस्याः पुत्रत्वमागताः ॥ धर्मो वृषभरूपेण महादेवध्वजः स्मृतः ॥ २७ ॥ दशधेनुप्र
दानेन यथेष्टाङ्गतिमाप्नुयात् ॥ शतञ्च दत्त्वा धर्मज्ञः शक्रलोकमुपागतः ॥ २८ ॥ कल्पावशेषं स सुखी मोदत्यप्सरसां गणैः ॥ दत्त्वा सहस्रं
धेनूनां सर्वपापैर्विमुच्यते ॥ २९ ॥ उक्ष्णां च ये प्रयच्छन्ति शतेन सह यूथपम् ॥ सर्वपापविनिर्मुक्तास्ते प्रयान्त्यमरावतीम् ॥ ३० ॥ कल्पाव

शेषं त्रिदिवे सुखमुष्य नरोत्तमाः ॥ मानुष्ये धनसंयुक्ता भवन्ति सुखिनस्ततः ॥ ३१ ॥ सहस्रेण गवां सार्धं ये प्रयच्छन्ति यूथपम् ॥ अलंकृतं यथाशक्त्या गोलोकं यान्ति ते नराः ॥ ३२ ॥ उक्षाणमिन्द्रियोपेतं यस्तु दद्याद्द्विजातये ॥ दशधेनुफलं तस्य नात्र कार्या विचारणा ॥ ३३ ॥ गोयुगं ये प्रयच्छन्ति सीरयूपयुतं द्विजाः ॥ सर्वकामसमृद्धस्य प्राप्नुवन्ति फलं नराः ॥ ३४ ॥ गोभिश्चतुर्भिः संयुक्तं रथं दत्त्वा द्विजातये ॥ धान्यैर्वस्त्रैर्युतं शक्त्या शक्रलोकं व्रजन्ति ते ॥ ३५ ॥ मानुष्यमासाद्य तथा भवन्ति वसुधाधिपाः ॥ शकटस्य प्रदानन्तु विना गोभिर्महाफलम् ॥ ॥ ३६ ॥ विशेषेण महाभागास्तस्य गोभिर्युतस्य च ॥ ससस्यं शकटं दत्त्वा नाकलोके महीयते ॥ ३७ ॥ दत्त्वा तु धेनुं होमार्थे ब्राह्मणायाहिताग्नये ॥ गोदानफलमाप्नोति होमदानफलं तथा ॥ ३८ ॥ स्नपनार्थं तथा दत्त्वा धेनुं रुद्रसुरालये ॥ रुद्रलोकमवाप्नोति कुलञ्चैव समुद्धरेत् ॥ ॥ ३९ ॥ दत्त्वा सचैलं वृषभं महादेवालये नरः ॥ रुद्रलोकमवाप्नोति कुलमुद्धरते तथा ॥ ४० ॥ धेनूनां कपिला श्रेष्ठा वृषभः श्वेत उच्यते ॥ श्वेतन्तु वृषभं दत्त्वा फलस्यानन्त्यमश्नुते ॥ ४१ ॥ दधिक्षीरहितार्थाय वासुदेवसुरालये ॥ दत्त्वा गां मधुपर्कार्थं चानन्तं फलमाप्नुयात् ॥ ४२ ॥ गोप्रदानरता यान्ति गोलोकं मानवोत्तमाः ॥ सहाप्सरोभिर्मुदिता विमानवरमास्थिताः ॥ ४३ ॥ अपामधस्ताल्लोको यो तस्योपरि महीधराः ॥ नागानामुपरिष्टाद्भूः पृथिव्युपरि मानवाः ॥ ४४ ॥ मनुष्यलोकादूर्ध्वन्तु खगानां गतिरुच्यते ॥ आकाशस्योपरि रविर्द्वारं स्वर्गस्य तत्स्मृतम् ॥ ॥ ४५ ॥ देवलोकः परस्तस्माद्ब्रह्मलोकस्ततः परम् ॥ तत्रोपरि गवां लोको विष्णुलोकस्ततः परम् ॥ ४६ ॥ एकस्त्वधो दुष्कृतिनां कर्मिणां पृथिवी मता ॥ ब्राह्मे तपसि युक्तानां ब्रह्मलोकः सनातनः ॥ ४७ ॥ गवामेव हि गोलोको दुरारोहा हि सा गतिः ॥ एकान्तिनो विष्णुभक्ता विष्णुलोकं व्रजन्ति ते ॥ ४८ ॥ गोप्रदानरता यांति गोलोकं सर्वकामदम् ॥ तत्र कामफला वृक्षा नद्यः पायसकर्दमाः ॥ ४९ ॥ सुवर्णसिकताश्चान्या विमलाम्बुयुताः शुभाः ॥ यथाकामेप्सितास्तत्र भवन्ति शुभकर्मिणाम् ॥ ५० ॥ देशा मनोहराः शुभ्रा देवारामविभूषणाः ॥ दिव्येन नृत्यगीतेन वादित्रेण मनोहराः ॥ ५१ ॥ तत्रेप्सितानां कामानामाप्तिर्भवति नित्यदा ॥ हेमशृङ्गीं रूप्यखुरां मुक्तालांगूलभूषणाम् ॥ ५२ ॥ अहताम्बरसंवीतां तथा कांस्योपदोहिनीम् ॥ त्रिरात्रं स्थंडिले सुप्त्वा त्रिरात्रं गोरसाशनः ॥ ५३ ॥ तृप्तान्तु तर्पिते दत्त्वा वाससा संवृतां द्विजाः ॥ सदक्षिणां महाभागा स्त्रिरात्रं गोरसैस्ततः ॥ ५४ ॥ प्राणसंधारणं कृत्वा गवां लोके महीयते ॥ यावन्ति धेनुरोमाणि तावद्वर्षाणि मानवः ॥ ५५ ॥ दत्त्वैवं कपिलां विप्राः प्राप्नोत्यभ्यधिकं फलम् ॥ सायं प्रातर्मनुष्याणामशनं देवनिर्मितम् ॥ ५६ ॥ तत्रैककालमश्नन्तो द्वितीयादशनान्नरः ॥ यथोक्त

विधिना दद्यात्क्रीत्वा तु कपिलां नरः ॥ ५७ ॥ सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥ गवां लोकमवाप्नोति कुलमुद्धरति स्वकम् ॥ ५८ ॥
अलंकृतां ततो दत्त्वा गोदानफलमाप्नुयात् ॥ अजामलंकृतां दत्त्वा वह्निलोके महीयते ॥ ५९ ॥ तदेव लोकमाप्नोति दत्त्वाजं विधिवन्नरः ॥
वारुणं लोकमाप्नोति दत्त्वा च महिषीं नरः॥६०॥ महिषस्य प्रदानेन याम्ये लोके महीयते ॥ वारुणं लोकमाप्नोति दत्त्वोरभ्रं नरोत्तमः ॥ ६१॥
अविप्रदाता शतधा तदेव फलमश्नुते ॥ आरण्यपशुदानेन वायुलोके महीयते ॥ ६२ ॥ एतदेव फलं प्रोक्तं प्रदानेन च पक्षिणाम् ॥ शस्त्रपिण्डकि
जालादिरुदकादानतस्तथा ॥ ६३ ॥ गोरसानां प्रदानेन तृप्तिमाप्नोत्यनुत्तमाम् ॥ तत्र वाश्वयुजे मासे यस्तु दद्याद्द्विजातिषु ॥ ६४ ॥ आरोग्यं
महदाप्नोति यत्रयत्राभिजायते ॥ तथा दध्नः प्रदानेन मङ्गलान्याप्नुते सदा ॥ ६५ ॥ क्षीरदस्तृप्तिमाप्नोति सर्वदुःखैर्विमुच्यते ॥ क्षीरेण
स्नपनं कृत्वा हरस्य प्रयतो नरः ॥ ६६ ॥ मनोऽभितापनिर्मुक्तो रुद्रलोके महीयते ॥ परमान्नप्रदानेन कामानाप्नोति शाश्वतान् ॥ ६७ ॥ मासि
मासि तु रेवत्यां ब्राह्मणान्घृतपायसम् ॥ सदक्षिणं भोजयित्वा रूपमाप्नोत्यनुत्तमम् ॥ ६८ ॥ आज्यन्तेजः समुद्दिष्टं चाज्यं पापहरं परम् ॥
आज्यं सुराणामाहारश्चाज्ये लोकाः प्रतिष्ठिताः ॥ ६९ ॥ आज्येन लिङ्गस्नपनं नरः कृत्वा तु शूलिनः ॥ सर्वदुःखविनिर्मुक्तो रुद्रलोके महीयते
॥ ७० ॥ अलक्ष्मीशमनं प्रोक्तं घृतस्नानं तथा द्विजाः ॥ कल्यमुत्थाय यो गव्यघृते मुखमथात्मनः ॥ ७१ ॥ पश्यते स जहात्येव
कृत्वा पापमहर्निशम् ॥ अलक्ष्मीर्नश्यते चास्य क्षिप्रमेषा करीषिणी ॥ ७२ ॥ घृतदानान्नरो याति स्वर्गलोकमसंशयम् ॥ मासे चाश्वयुजे
नित्यं घृतं यस्तु प्रयच्छति ॥ ७३ ॥ कल्यमुत्थाय विप्रेभ्यः प्रीणयेच्च तथाश्विनौ ॥ स रूपं महदाप्नोति तथा रोगैश्च मुच्यते ॥ एवं महाफलं
दानं गोरसानां तथा गवाम् ॥ ७४ ॥ प्रयच्छते यः कपिलां सचैलां कांस्योपदोहां कनकाग्रशृङ्गीम् ॥ तैस्तैर्गुणैः कामदुघा च भूत्वा नरं
प्रदातारमुपैति सा गौः ॥ ७५ ॥ यावन्ति रोमाणि भवन्ति धेन्वास्तावत्फलं प्राप्नुते गोप्रदाता ॥ पुत्रांश्च पौत्रांश्च कुलञ्च सर्वमासप्तमं तारयते
परत्र॥७६॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु गोदानफलनिरूपणो नाम षडधिकत्रिशततमोऽ
ध्यायः ॥ ३०६ ॥ हंस उवाच ॥ घृतधेनुप्रदानञ्च निबोधत द्विजोत्तमाः ॥ गव्यस्य सर्पिषः कुम्भं पूर्णन्तु परिकल्पयेत् ॥१॥ कलशञ्च तथा पूर्ण
न्तस्या वत्सं प्रकल्पयेत ॥ कांस्यापिधानसच्छन्नसितवस्त्रयुतन्तथा ॥ २ ॥ हिरण्यगर्भौ कर्तव्यावनुलिप्तौ च बाह्यतः ॥ इक्षुयष्टिमया
न्पादान्खुरान्रूप्यमयाँस्तथा ॥ ३ ॥ सौवर्णे चाक्षिणी कार्ये शृङ्गे चागुरुकाष्ठजे ॥ सप्तधान्यश्च कर्तव्ये तस्य पार्श्वे पृथक्कृते ॥ ४ ॥ तस्य

पट्टं च कर्तव्यं कम्बलं च द्विजोत्तमाः ॥ कुर्यात्तुरुष्करं दूरे प्राणे हेममयांस्तनान् ॥ ५ ॥ तद्वच्छर्करया जिह्वां गुडक्षीरमयं मुखम् ॥ क्षौमसूत्रेण लांगूलं रोमाणि सितसर्षपैः ॥ ६ ॥ ताम्रपत्रमयं पृष्ठं कुर्याच्छ्रद्धासमन्वितः ॥ एतद्विरचनं कृत्वा घृतक्षीराभिषेचनैः ॥ ७ ॥ हरिर्घृतार्चिषेत्येवं नाम्ना सम्पूजयेद्विभुम् ॥ ततस्तु गन्धपुष्पान्नधूपवस्त्रादिभिर्नरः ॥ ८ ॥ घृतेन दीपं दद्याच्च तथैव च घृतं दिशः ॥ होमं विप्रा यदा धेनुं दद्याद्विप्राय शक्तितः ॥ ९ ॥ घृताची प्रीयते विप्रं कल्पयित्वा घृतार्चिषम् ॥ एकरात्रञ्च तां दत्त्वा घृताहारी भवेन्नरः ॥ ॥ १० ॥ विमुक्तः सर्वपापेभ्यो लोकमाप्नोति शाश्वतम् ॥ अनेन विधिना स्नात्वा सोपवासो नरः शुचिः ॥ ११ ॥ सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥ विमानेनार्कवर्णेन गवां लोके महीयते ॥ १२॥ घृतक्षीरवहा नद्यो यत्र पायसकर्दमाः ॥ यत्र कामफला वृक्षा यत्र सिद्धिस्तु मानसी ॥ १३ ॥ गन्धर्वाप्सरसां यत्र सततं गीतनर्तनम् ॥ तत्रास्ते सुचिरं लोके यावदिन्द्राश्चतुर्दश ॥ १४ ॥ मानुष्यमासाद्य भवत्यरोगः शीलेन रूपेण धनेन युक्तः ॥ मनोभिरामः प्रमदाप्रियश्च धनान्वितः सर्वसुखोपपन्नः ॥ १५ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख० मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु घृतधेनुकल्पवर्णनो नाम सप्ताधिकत्रिशततमोऽध्यायः ॥ ३०७ ॥ ॥ हंस उवाच ॥ तिलधेनुं प्रवक्ष्यामि सर्वपापभयापहाम् ॥ धेन्वाकारान्तु तां कुर्यादाविके कम्बले बुधः ॥ १ ॥ तिलषोडशभिः प्रस्थैश्चतुर्भिर्वत्समेव तु ॥ तिलप्रसारणं कुर्याद्धेन्वा धेनुप्रमाणतः ॥ २ ॥ ततस्तु रचयेद्धेनुं रत्नैर्वक्ष्याम्यहं द्विजाः ॥ हेमशृङ्गीं रूप्यखुरां गन्धघ्राणवतीं शुभाम् ॥ ३ ॥ मिष्टान्नजिह्वां कुर्वीत गुडास्यां सूत्रकम्बलाम् ॥ इक्षुपादां ताम्रपृष्ठां कुर्यान्मुक्ताफलेक्षणाम् ॥ ४ ॥ प्रशस्तपत्रश्रवणां फलदन्तवतीं शुभाम् ॥ स्रग्दामपुष्पां कुर्वीत नवनीतस्तनान्विताम् ॥ ५ ॥ फलैर्मनोहरैर्भक्ष्यैर्मणिमुक्ताफलान्विताम् ॥ शुभ्रवस्त्रयुगच्छन्नां चारुच्छत्रसमन्विताम् ॥ ६ ॥ कांस्योपदोहनां कृत्वा वासुदेवन्तु पूजयेत् ॥ गन्धमाल्यनमस्कारधूपदीपान्नसम्पदा ॥ ७ ॥ जुहुयाच्च तिलानेव नाम्ना तस्यैव मानवः ॥ तमेव प्रीणयेद्दद्याद्धेनुन्तामाहिताग्नये ॥ ८ ॥ त्रिरात्रं यस्तिलाहारस्तिलधेनुं प्रयच्छति ॥ दत्त्वैकरात्रञ्च पुनस्तिलानत्ति द्विजोत्तमाः ॥ ९ ॥ चान्द्रायणादभ्यधिकं शस्तन्तत्तिलभक्षणम् ॥ सर्वपापविनिर्मुक्तः पितरं सपितामहम् ॥ १० ॥ तस्यापि पितरं चैव तारयेद् दुष्कृतान्नरः ॥ आत्मानं पुत्रपौत्रांश्च प्रपौत्रमपि तारयेत् ॥ ११ ॥ सुहृदं वाप्यथोदिश्य तिलधेनुप्रदो नरः ॥ तारयेद् दुष्कृतात्तञ्च यमुद्दिश्य प्रयच्छति ॥ १२ ॥ यश्च गृह्णाति विधिवद्दीयमानाञ्च पश्यति ॥ सोऽपि पापविनिर्मुक्तः स्वर्गलोके महीयते ॥ १३ ॥ महापातकसंयुक्तो युक्तो यश्चोपपातकैः ॥ तिल

धेनुप्रदानेन सोऽपि पावनमाप्नुयात् ॥ १४ ॥ सलोकमासाद्य नरो वसूनान्तत्रापि भुक्त्वा त्रिदशेन्द्रभोगान् ॥ मानुष्यमासाद्य भवत्यरोगो धनान्वितो रूपसुखोपपन्नः ॥१५॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख० मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु तिलधेनुदानविधिवर्णनो नामा ष्टोत्तरत्रिशततमोऽध्यायः ॥ ३०८ ॥ हंस उवाच ॥ जलधेनुं प्रवक्ष्यामि प्रीतये जलशायिनः ॥ जलकुम्भं द्विजश्रेष्ठाः सुवर्णरजतान्वि तम् ॥ १ ॥ कल्पयेद्रत्नगर्भञ्च स्थापयेत्तं यवोपरि ॥ सर्वधान्यैस्तथा ग्राम्यैः समन्तात्परिवारयेत् ॥ २ ॥ सितवस्त्रयुगच्छन्नं दूर्वापल्लव शोभितम् ॥ कुष्ठमांसीमुरोशीरवालुकामलकैर्युतम् ॥ ३ ॥ प्रियङ्गुपत्रसहितं सितयज्ञोपवीतिनम् ॥ सच्छत्रोपानहञ्चैव सोष्णीषं परिकल्प येत् ॥ ४ ॥ तिलपात्रैर्युतं कृत्वा सहिरण्यैश्चतुर्दिशम् ॥ दध्योदनयुतेनाथ पात्रेण स्थगितं मुखे ॥ ५ ॥ कल्पयेदेवमेवन्तु वारिधानीं तु वत्सकम् ॥ उपोषितः समभ्यर्च्य देवेशं जलशायिनम् ॥ ६ ॥ पुष्पधूपोपहारैस्तु यथाविभवमाश्रितः ॥ अहताम्बरवीताय दद्याद्विप्राय भक्तिमान् ॥ ७ ॥ जल शायी जगद्योनिः प्रीयतां मम केशवः ॥ इति चोच्चार्य तं दद्यात्प्रीणयेच्च द्विजोऽपि तम्॥८॥ अहोरात्रोषितो दद्याद्यथाविधि मयेरितम् ॥ अपक्वान्ना शिना स्थेयमहोरात्रमतः परम् ॥ ९ ॥ अनेन विधिना दत्त्वा जलधेनुं द्विजोत्तमान् ॥ सर्वाह्लादमवाप्नोति कामानाप्नोति शाश्वतान् ॥१०॥ मोक्षमाप्नोति सर्वेभ्यस्तपोभ्यः स तथा नरः ॥ सौभाग्यं महदाप्नोति रूपञ्च परमं तथा ॥११॥ पुरुषः स तथा याति यस्य यस्य च दर्शनम् ॥ करोति परमाह्लादं तस्यतस्य द्विजोत्तमाः ॥ १२ ॥ नित्याभितृप्तो भवति तथैव च निरामयः ॥ सर्वबाधाप्रशमनं प्राप्नोति गतकल्मषः ॥ ॥ १३ ॥ वारुणं लोकमाप्नोति सकृद्दाता द्विजोत्तमः ॥ दत्त्वा तामसकृद्विप्रा लोकमाप्नोति वैष्णवम् ॥ १४ ॥ आह्लादहेतोः परमं पवित्रं दानं मयेदं कथितं द्विजेंद्राः ।' धन्यं यशस्यं दुरितापहारि कामप्रदं लोकहितं प्रशस्तम्॥१५॥ इति श्रीविष्णुधर्मोत्तरे तृ०ख०मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु जलधेनुवर्णनो नाम नवोत्तरत्रिशततमोऽध्यायः॥३०९॥ हंस उवाच ॥ सुवर्णमुत्तमं रत्नं धनानामपि चोत्तमम्॥लोहानामुत्त मञ्चैव सर्वेषामपि चोत्तमम्॥१॥ अग्नेरपत्यं प्रथमं पवित्रं मङ्गलं परम्॥ धारणात्सर्वपापघ्नं दातुस्त्रिदशलोकदम्॥२॥मुकुटैः कुण्डलैर्हारैः केयूरैरङ्गदै स्तथा॥धार्यते यत्सदा देवैः पवित्रत्वाद्द्विजोत्तमाः॥३॥जाम्बूनदं तद्देवानामिन्द्रगोपकसन्निभम् ॥ पितॄणाञ्चन्द्ररश्म्याभं दैत्यानां शबलोपमम् ॥ ४॥ नागानां तच्छुकाभं स्यान्नारीणां पीतमुच्यते ॥दत्त्वा कृष्णलमात्रन्तु नरः पापात्प्रमुच्यते॥५॥ दत्त्वा च माषकं तस्य पुण्यं फलमुपाश्नुते ॥ सुवर्णमाषकं दत्त्वा सूर्यस्योदयनं प्रति ॥ ६ ॥ हुत्वाग्निं सर्वपापेभ्यो मोक्षमाप्नोत्यसंशयम् ॥ त्रेताग्निव्रतमेतत्तु कीर्तितं तस्य नित्यदा ॥ ७ ॥

दिनमध्यगते सूर्ये हुत्वाग्निं यः प्रयच्छति ॥ तस्याग्निनित्यदाने च महत्फलमुदाहृतम् ॥ ८ ॥ सूर्यस्यास्तमये वह्निं हुत्वा तद्वै प्रयच्छति ॥ पुण्यं महत्समाप्नोति नित्यदानेन वै द्विजाः ॥ ९ ॥ त्रिसन्ध्यं कनकं यस्तु हुत्वा वह्निं प्रयच्छति ॥ न स लिप्येत पापेन पद्मपत्रमिवाम्भसा ॥ १० ॥ सकृत्कृष्णलदानेन स्वर्गे वर्षं सुखी वसेत् ॥ तथा च पञ्चवर्षाणि स्वर्गे दत्त्वैव माषकम् ॥ ११ ॥ यः सुवर्णं सुवर्णस्य ब्राह्मणाय प्रयच्छति ॥ निर्दोषः स्यात्स नाके तु मोदत्यब्दशतं ध्रुवम् ॥ १२ ॥ आत्मतुल्यं सुवर्णस्य यः प्रयच्छति वै द्विजाः ॥ सर्वपापविनिर्मुक्तो यथेष्टा ङ्गतिमाप्नुयात् ॥ १३ ॥ ब्रह्मघ्नो वा सुरापो वा स्तेनो वा गुरुतल्पगः ॥ सर्वपातकयुक्तोऽपि तेन दानेन मुच्यते ॥ १४ ॥ श्रद्धानामुत्तमञ्चैत द्दानानामुत्तमोत्तमम् ॥ रुक्मं दत्त्वा ब्राह्मणाय सुखी सर्वत्र जायते ॥ १५ ॥ चिरान्नाकपरिभ्रष्टो रूपसौभाग्यसंयुतः ॥ तासां कुले तु सुस्फीते गुणैः सर्वैर्युतो नरः ॥ १६ ॥ रुक्मपात्रप्रदानेन पुत्री भवति मानवः ॥ सर्वेषामेव कामानां यशसस्त्रिदिवस्य च ॥ १७ ॥ रूप्यदो रूपमाप्नोति भोगमाप्नोति ताम्रदः ॥ लोहारकूटयोर्दानात्कुप्यमाप्नोत्यसंशयम् ॥ १८ ॥ त्रपुसीसकयोर्दानाद्वह्निवृद्धिमवाप्नुयात् ॥ यथेष्टं लोहपात्रञ्च यः प्रदद्याद्द्विजातये ॥ १९ ॥ पात्रं भवति कामानां विशेषश्चास्य लोहतः ॥ शिल्पभाण्डानि यो दद्याल्लोहानि विधिवद्द्विजाः ॥ २० ॥ विद्यादानफलं तस्य कथितं नात्र संशयः ॥ चर्मदाता नरो नित्यं रक्षां समधिगच्छति ॥ २१ ॥ आयुधानां प्रदानेन रिपुनाशमवाप्नुयात् ॥ राजलिङ्गप्रदानेन राजा भवति भूतले ॥ २२ ॥ रत्नानां च प्रदानेन राजैवेह प्रजायते ॥ रत्नदानस्य यल्लोकं तद्भुक्त्वा सुचिरं द्विजाः ॥ २३ ॥ वज्रदः शक्रलोकन्तु पद्मरागप्रदो रवेः ॥ सद्यो मरकतं दत्त्वा विष्णुलोके महीयते ॥ २४ ॥ मुक्ताफलप्रदानेन वारुणं लोकमश्नुते ॥ वैदूर्यस्य प्रदानेन द्वीपानां सप्त मोदते ॥ २५ ॥ रत्नान्यन्यानि दत्त्वा च राजराजस्य च द्विजाः ॥ सर्वेषामेव रत्नानां कनकं श्रेष्ठमुच्यते ॥ २६ ॥ धारणं कीर्तनं दानं कनकस्य प्रशस्यते ॥ दुःस्वप्नशमनं दानं दुरिष्टस्य च नाशनम् ॥ २७ ॥ परं पापहरं ज्ञेयमलक्ष्मीशमनं तथा ॥ दत्त्वा सुवर्णं लोकेषु यथेष्टेषु च मोदते ॥ २८ ॥ विमानेनार्कवर्णेन हंसयुक्तेन भास्वता ॥ देवराजाप्सरोगणाढ्येन कामगेन विहायसा ॥ २९ ॥ भुक्त्वा दिवि चिरं भोगान्मानुष्ये सुखमाप्नुयात् ॥ अग्नेरपत्यं प्रथमं सुवर्णं भूर्वैष्णवी ब्रह्मसुताश्च गावः ॥ सर्वं हि दत्तं भवतीह तेन यः काञ्चनं गाञ्च महीञ्च दद्यात् ॥ ३० ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु सुवर्णदानविधिनिरूपणो नाम दशाधिकत्रिशततमोऽध्यायः ॥ ३१० ॥ हंस उवाच ॥ नरस्त्वासनदानेन स्थानं सर्वत्र विन्दति ॥ शय्यादानेन चाप्नोति भार्यां ब्राह्मणसत्तमाः ॥ १ ॥ दत्त्वा द्विजाय शयनं स्वास्तीर्णं सोत्तरच्छदम् ॥

कुले महति सम्भूतां रूपद्रविणसंयुताम् ॥२॥ तथा पक्षवतीं भार्यां प्राप्नोति वशगां तथा ॥ अनेनैव प्रदानेन भार्या पतिमवाप्नुयात् ॥ ३ ॥ वितानकप्रदानेन सर्वपापैः प्रमुच्यते ॥ छत्रदश्च तथा विप्रा नात्र कार्या विचारणा ॥ ४॥ छत्रं शतशलाकं तु दत्त्वैवातपवारणम् ॥ सर्वतापविनिर्मुक्तः स्वर्गलोके महीयते ॥ ५ ॥ याम्यं मार्गं तथा याति सुखेन द्विजसत्तमाः ॥ उपानहे तथा दत्त्वा श्लक्ष्णे स्नेहसमन्विते ॥ ६ ॥ रथमश्वतरीयुक्तं त्रिदिवं प्रतिपद्यते ॥ सर्वपापविनिर्मुक्तो याम्यमार्गं सुखं व्रजेत् ॥ ७ ॥ तालवृन्तप्रदानेन सर्वपापैः प्रमुच्यते ॥ पादुकानां प्रदानेन गतिमाप्नोति शोभनाम् ॥ ८ ॥ पादपीठप्रदानेन स्थानं सर्वत्र विन्दति ॥ स्थानमेव तथाप्नोति दण्डं दत्त्वा द्विजातये ॥ ९ ॥ यज्ञोपवीतदानेन वस्त्रदानफलं लभेत् ॥ उष्णीषदानस्य तथा फलमेतदुदाहृतम् ॥ १० ॥ दन्तकाष्ठप्रदानेन सौभाग्यं महदाप्नुयात् ॥ मृत्तिकायाः प्रदानेन शुचिः सर्वत्र जायते ॥ ११ ॥ शौचस्नानोदकं दत्त्वा विरोगस्त्वभिजायते ॥ रोगनाशमवाप्नोति तथाभ्यङ्गप्रदः सदा ॥ १२ ॥ तथैवौषधदानेन रोगनाशमुपाश्नुते ॥ स्थानीयानि सुगन्धीनि दत्त्वा सौभाग्यमश्नुते ॥ १३ ॥ अनुलेपनदानेन रूपवानभिजायते ॥ कायाग्निदीप्तं प्राकाश्यं गतिञ्चैव तथोत्तमाम् ॥ १४ ॥ यस्तु संसाधनार्थाय ब्राह्मणाय प्रयच्छति ॥ स याति वह्निसालोक्यं शत्रुनाशं च विन्दति ॥ १५ ॥ तैजसानि तु पात्राणि दत्त्वा सलवणानि च ॥ पात्रतामेति कामानां लावण्यं चाप्नुयान्महत् ॥ १६ ॥ तैजसानि तु पात्राणि सतैलानि प्रयच्छतः ॥ आरोग्यमुत्तमं प्रोक्तं लावण्यमपि चोत्तमम् ॥ १७ ॥ तैजसानि तु पात्राणि समधूनि प्रयच्छतः ॥ लावण्यमुत्तमं प्रोक्तं सौभाग्यमपि चोत्तमम् ॥ ॥ १८ ॥ नरश्चन्दनदानेन सर्वपापैः प्रमुच्यते ॥ तथैवागुरुदानेन यशसा भुवि राजते ॥ १९ ॥ सौभाग्यकारकं प्रोक्तं प्रदानं कुङ्कुमस्य तु ॥ तथा कर्पूरदानेन सर्वान्कामानवाप्नुयात् ॥ २० ॥ मृगचर्मप्रदानेन यशसा भुवि राजते ॥ दत्त्वा जातीफलं विप्राः सफलां विन्दते क्रियाम् ॥ ॥ २१ ॥ स्नानानां सुखवासानां धूपानां च प्रदायकाः ॥ लोके प्रयान्ति प्रियतां भवन्ति च सुगन्धिनः ॥ २२ ॥ दत्त्वा पूगफलान्विप्राः सफलां विन्दते क्रियाम् ॥ ताम्बूलस्य प्रदानेन सौभाग्यमपि विन्दति ॥ २३ ॥ समुद्रजानां भाण्डानां शङ्खादीनां प्रदायकः ॥ पात्री भवति कामानां यशसश्च न संशयः ॥ २४ ॥ कङ्कतस्य प्रदानेन परां वाचं प्रमुञ्चति ॥ शय्याप्रदानो लोकेषु तथा स्थानकरं परम् ॥ २५ ॥ अर्थिने यदभीष्टं स्यात्स्वल्पं वा यदि वा बहु ॥ तदत्त्वा पुण्यमाप्नोति राजसूयाश्वमेधयोः ॥ २६ ॥ किमिच्छकैः पूजकैर्ब्राह्मणानां लोकं गत्वा ब्रह्मणो ब्राह्मणेभ्यः ॥ देवैर्विप्रैः पूज्यमानः सुखी स्यात्तस्मादेयं प्रार्थितं ब्राह्मणेभ्यः ॥ २७ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे

मुनीन्प्रति हंसगीतास्वनेकवस्तुदानप्रशंसावर्णनो नामैकादशाधिकत्रिशततमोऽध्यायः ॥ ३११ ॥ ॥ हंस उवाच ॥ ॥ नृवाहान्पुरुषो यस्तु द्विजे सम्यक्प्रयच्छति ॥ अश्वमेधफलं तस्य कथितं द्विजसत्तमाः ॥ १ ॥ शिबिकायाः प्रदानेन वह्निष्टोमफलं तथा ॥ दासं कर्मकरं दत्त्वा गोसवस्य फलं लभेत् ॥ २ ॥ स याति शक्रसालोक्यं यस्तु योधं प्रयच्छति ॥ यस्तु कर्मकरीं दासीं ब्राह्मणाय प्रयच्छति ॥ ३ ॥ लोकास्तु सुभगास्तस्य वसूनां समुदाहृताः ॥ तरुणीं रूपसम्पन्नां दासीं यस्तु प्रयच्छति ॥ ४ ॥ सोप्सरोभिर्मुदा युक्तः क्रीडते नन्दने वने ॥ उष्ट्रं वा गर्दभं विप्रा यो यच्छति द्विजातये ॥५॥ अलकां स समासाद्य यक्षेन्द्रैः सह मोदते ॥ दानानामुत्तमं प्रोक्तं प्रदानं तुरगस्य तु ॥६ ॥ वडवायाः प्रदानेन तथा बहुफलं स्मृतम् ॥ तुरङ्गं ये प्रयच्छंति सूर्यलोकं व्रजन्ति ते ॥ ७ ॥ यावन्ति तस्य रोमाणि तावद्वर्षशतानि च ॥ शुक्लं तुरङ्गमं दत्त्वा फलं दशगुणं लभेत् ॥ ८ ॥ गौर्यथा कपिला श्रेष्ठा तथैव तुरगस्य तु ॥ तुरङ्गमं सपर्याणं सालङ्कारं प्रयच्छति ॥ ९ ॥ पुण्डरीकफलं प्रोक्तं नात्र कार्या विचारणा ॥ चतुर्भिस्तुरगैर्युक्तं सर्वोपकरणैर्युतम् ॥ १० ॥ रथं द्विजाये दत्त्वा राजसूयफलं लभेत् ॥ प्रदाय कारिणीं सम्यगेतदेव फलं लभेत् ॥ ११ ॥ कुञ्जरस्य प्रदानेन स्वर्गलोके महीयते ॥ राजा भवति लोकेस्मिन्यशोविक्रमसंयुतः ॥ १२ ॥ सुवर्णकक्ष्यं मातङ्गं दत्त्वा विप्राय वै द्विजाः ॥ राजसूयाश्वमेधाभ्यां फलं विन्दत्यसंशयम् ॥ १३ ॥ चतुर्भिः कुञ्जरैर्युक्तं रथं दत्त्वा द्विजातये ॥ समग्रभूमिदानस्य फलं प्राप्नोत्यसंशयम् ॥ १४ ॥ भूमिः सशैला सवना सतोया दत्ता हि लोके भवतीह तेन ॥ इष्टाँश्च लोकान्पुरुषः प्रयाति सम्पूज्यमानस्त्रिदशैर्महात्मा ॥ १५ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु वाहनदानविधिवर्णनो नामद्वादशाधिकत्रिशततमोऽध्यायः ॥ ३१२ ॥ हंस उवाच ॥ दानानामुत्तमं लोके वस्त्रदानं प्रकीर्तितम् ॥ वासो हि सर्वदैवत्यं सर्वप्रायोज्यमश्नुते ॥ १ ॥ वस्त्रदाता सुवेशः स्याद्रूपद्रविणसंयुतः ॥ युक्तो लावण्यसौभाग्यैर्विरोगश्च तथा द्विजाः ॥ २ ॥ नीलं रक्तं तथा जीर्णं न देयं ब्राह्मणस्य तु ॥ देयं वरश्चाङ्गिरसं क्षौमं दत्त्वा बृहस्पतेः ॥३॥ दत्त्वा कार्पासिकं वस्त्रं स्वर्गलोके महीयते ॥ दत्त्वा सरोमं तदपि फलं दशगुणं भवेत् ॥ ४॥ आविकं वसनं दत्त्वा भृगूणां लोकमाप्नुयात् ॥ छागं दत्त्वा चाङ्गिरसं क्षौमं दत्त्वा बृहस्पतेः ॥ ५ ॥ वसूनां लोकमाप्नोति कुशकौशेयवाससी ॥ क्रिमिजञ्च ततो दत्त्वा सोमलोके महीयते ॥ ६ ॥ अग्निष्टोममवाप्नोति दत्त्वैव मृगलोमिकाम् ॥ दत्त्वा वल्कलजं वासो वसूनां लोकमाप्नुयात् ॥ ७ ॥ सुमेरकदल्यादीनां दत्त्वा चैव तथाजिनम् ॥ वारवाणं शिरस्त्राणं हस्तत्राणं तथैव च ॥ ८ ॥ पादत्राणं च ददतः पृथग्यफलं स्मृतम् ॥ वस्त्र

दानं पवित्रन्तु पितॄणामपि तारणम् ॥९॥कौसुंभरक्तं दत्त्वा तु सौभाग्यं महदाप्नुयात् ॥ दानात्कुङ्कुमरक्तस्य लावण्यं महदाप्नुयात ॥१० ॥ रङ्गै रन्यैरनीलैश्च रक्तं दत्त्वा सुखी भवेत् ॥ यथायथा तु वस्त्रस्य भवतीह महर्घता ॥ ११ ॥ यथायथा शुभ्रता च तथा पुण्यफलं लभेत्॥ अन्येषा मपि दानानामेतदेव प्रकीर्तितम् ॥ १२ ॥ सर्वदो वस्त्रदः प्रोक्तो यतः सर्वत्र वस्त्रवान् ॥ पूजामाप्नोति धर्मज्ञास्तद्धि तस्माद्विशिष्यते ॥ १३ ॥ वस्त्रदः सुचिरं कालं भुक्त्वा देवसुखान्दिवि ॥ विमानेनार्कवर्णेन हंसयुक्तेन भास्वता ॥ १४ ॥ मानुष्यमासाद्य भवत्यरोगः शौचान्वितः सौख्यपरो विनीतः ॥ जनाभिरामश्च तथा सुवेशः पूज्यश्च लोके विदुषां सदैव ॥ १५ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्र संवादे मुनीन्प्रति हंसगीतासु वस्त्रदानप्रशंसावर्णनो नाम त्रयोदशाधिकत्रिशततमोऽध्यायः ॥ ३१३ ॥ हंस उवाच ॥ धान्याना मुत्तमं दानं कथितं द्विजपुङ्गवाः ॥ धान्येभ्योऽपि परं धान्यं रक्तशालिः प्रकीर्तितः ॥ १ ॥ रक्तशालिं नरो दत्त्वा सूर्यलोके महीयते ॥ दत्त्वा तथा सुगन्धाँश्च गन्धर्वैः सह मोदते ॥ २ ॥ कलमानां प्रदानेन शक्रलोके महीयते ॥ महाशालेः प्रदानेन वसूनां लोकमाप्नुयात् ॥ ३ ॥ काष्ठशालिं तथा दत्त्वा अलकायां प्रसीदति ॥ व्रीहीनां चान्यधान्यानां दानात्स्वर्गमवाप्नुयात् ॥ ४ ॥ यव प्रदानेन नरः शक्रलोके महीयते ॥ तथा गोधूमदानेन वसूनां लोकमाप्नुयात् ॥ ५ ॥ प्रियो भवति लोकस्य प्रियङ्गुं यः प्रयच्छति ॥ ददाति यस्तु श्यामाकं तस्य प्रीयन्ति देवताः ॥ ६ ॥ अन्येषां शूकधान्यानां प्रदानाभिरतो नरः ॥ स्वर्गलोकमवाप्नोति नात्र कार्या विचारणा ॥ ७ ॥ मुद्गदः शक्रलोकन्तु यमलोकन्तु माषदः ॥ यथेष्टं लोकमाप्नोति तथा विप्रास्तिलप्रदः ॥ ८ ॥ षष्टिकानां प्रदानेन लोकं नैर्ऋतकं लभेत् ॥ सचीणचणकं दत्त्वा लोकं वारुणमाप्नुयात् ॥ ९ ॥ वायव्यश्च मसूराणि राजमाषाणि धानदम् ॥ अन्येषां शिंबिधान्यानां दानात्स्वर्गमवाप्नु यात ॥ १० ॥ इक्षुमृद्वीकयोर्दानात्परं सौभाग्यमाप्नुयात् ॥ गुडप्रदस्तथारोग्यं सितादः काममीप्सितम् ॥ ११ ॥ फाणितस्य प्रदानेन परां तृप्ति मवाप्नुयात् ॥ खण्डप्रदश्च सौभाग्यं सर्वान्कामान्मधुप्रदः ॥ १२ ॥ घृतदो जीवितं दीर्घं चारोग्यं तैलदस्तथा ॥ सर्वान्कामानवाप्नोति लवणं यः प्रयच्छति ॥ १३ ॥ सक्तुदस्तृप्तिमाप्नोति सिकतादस्तथा श्रियम् ॥ अकीर्तितानामन्येषां दानात्स्वर्गमवाप्नुयात् ॥ १४ ॥ पक्वान्नदानात्फलदं नृलोके शुष्कान्नमुक्तं हि तदाप्य यस्मात्॥ यजन्ति यज्ञैः सततं द्विजेन्द्रास्तस्माच्च तत्पुण्यतमं प्रदिष्टम् ॥ १५ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु धान्यदानप्रशंसा नाम चतुर्दशाधिकत्रिशततमोऽध्यायः ॥ ३१४ ॥ ॥ हंस उवाच ॥

सर्वेषामेव दानानामन्नदानं विशिष्यते ॥ अन्नदानात्परं दानं न भूतं न भविष्यति ॥१॥ नात्र पात्रपरीक्षा स्यान्न कालनियमस्तथा ॥ न च देशः परीक्ष्योऽत्र देयमन्नं सदैव तत्॥२॥श्वभ्यश्च श्वपचेभ्यश्च पतितेभ्यस्तथैव च ॥ क्रिमिकीटपतङ्गानां देयमन्नं सदैव तु ॥३॥ अन्नं हि जीवितं लोके प्राणाश्चान्ननिबन्धनाः ॥ अन्नदः प्राणदो लोके सर्वदश्च तथान्नदः ॥ ४॥ भुक्त्वा तथा च यस्यान्नं सन्ततिः स्याद्द्विजोत्तमाः ॥ ज्ञातव्यं ब्राह्मणश्रेष्ठा यस्यान्नं तस्य सन्ततिः॥५॥ दातव्यं सर्ववर्णेभ्यो भोक्तव्यं ब्राह्मणस्य च ॥ यस्यान्नेनोदरस्थेन ब्राह्मणो म्रियते द्विजाः ॥६॥ तान्तु योनिमवाप्नोति नात्र कार्या विचारणा ॥ भक्ष्यदः स्वर्गमाप्नोति शक्रलोकन्तु भोज्यदः ॥ ७ ॥ लेह्यदोऽप्सरसां लोकं वसूनामपि चोष्यदः ॥ वारुणं लोकमाप्नोति तथा पानप्रदो नरः ॥ ८ ॥ पानकानि सुगन्धीनि शीतलानि प्रयच्छतः ॥ सर्वकामसमृद्धः स्यान्नात्र कार्या विचारणा ॥ ९ ॥ परमान्नप्रदानेन तृप्तिर्भवति शाश्वती ॥ पिपासमानो म्रियते गवां लोके महीयते ॥१०॥ यो दद्यादपरिक्लिष्टमन्नमध्वनि वर्तते ॥ श्रान्तायादृष्टपूर्वाय तस्य पुण्य फलं महत् ॥ ११ ॥ सहस्रपरिवेष्यन्तु नरकं स न गच्छति ॥ विमानेनार्कवर्णेन स्वर्गलोके महीयते ॥ १२॥ अपहन्यात्तथा विप्रा एकस्यात्तस्य यत्क्षुधा ॥ तेनासौ कर्मणा प्रेत्य महत्फलमुपाश्नुते॥१३॥ यद्यदिष्टतमं लोके यच्चास्य दयितं गृहे॥ तत्तद्गुणवते देयं तदेवाक्षय्यमिच्छता ॥ १४ ॥ दानान्यनेकानि फलञ्च तेषां बहुप्रकारं पुरुषः समीक्ष्य ॥ श्रद्धान्वितो ब्राह्मणसात्प्रकुर्याद्भूयस्तदेवात्मना नृलोके ॥ १५ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० खण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतास्वन्नदानप्रशंसा नाम पञ्चदशाधिकत्रिशततमोऽध्यायः ॥ ३१५ ॥ ॥ ऋषय ऊचुः ॥ कस्य दानस्य कः पात्रं तद्वदस्व महामते ॥ कस्मिन्देशे तथा काले किञ्चिद् दत्तं महाफलम् ॥ १ ॥ ॥ हंस उवाच ॥ ॥ न दानं यशसे दद्यान्नदद्यान्नोपकारिणे ॥ न नृत्यगीतशीलेभ्यो नास्तिकेभ्यश्च धार्मिकः ॥ २ ॥ पापशीले न दातव्यं कदाचिदपि किञ्चन ॥ पापशीले तु यद्दत्तं तद्दातुर्दोषमावहेत् ॥ ३ ॥ धनदस्तेन पापेन शीघ्रमेवेह युज्यते ॥ तस्मात्प्राप्य धनं पुण्यं पुण्यशीलं समाचरेत् ॥ ४ ॥ धनदस्तेन पुण्येन योगमाप्नोत्यसंशयम् ॥ अन्नदानेन कर्तव्यं पात्रावेक्षणमण्वपि ॥ ५ ॥ अन्नं सर्वत्र दातव्यं धर्मकामेन वै द्विजाः ॥ सदोषेपि तु निर्दोषं सगुणेतिगुणावहम् ॥ ६ ॥ तस्मात्सर्वप्रयत्नेन देयमन्नं सदैव तु ॥ विद्याध्ययनसक्तानामन्नदानं महाफलम् ॥ ७ ॥ शुभानामप्यथान्येषां कर्मणां द्विजपुङ्गवाः ॥ यस्यान्नमुपभुञ्जानो नरः कर्माणि साधयेत् ॥ ८ ॥ कर्म साधयतः पुण्यमन्नदाता तथाश्नुते ॥ दत्त्वा नृपतिभीतानां धनिनाञ्च तथा धनम् ॥ ९ ॥ तस्करेभ्यश्च भीतानां फलमक्षयमश्नुते ॥ यियक्षता तथा दत्तं व्यसने हंतुमिच्छता ॥ १० ॥ दुःखान्वितानां दीना

नाश्वाक्षयं तत्प्रकीर्तितम् ॥ विवाहमेखलाबन्धप्रतिष्ठादिषु कर्मसु ॥११॥ आपन्नेषु च यद्दत्तं तदक्षय्यमुदाहृतम् ॥ यज्ञोपकरणं द्रव्यं क्षत्रिये द्विज पुङ्गवाः ॥ १२ ॥ पुण्योपयोगि तद्वैश्ये शूद्रे शिल्पोपजीविनम् ॥ यस्योपयोगि यद्द्रव्यं देयं तस्यैव तद्भवेत् ॥ १३ ॥ येनयेन च भाण्डेन यस्य वृत्तिरुदाहृता ॥ तत्तु तस्यैव दातव्यं पुण्यकामेन धीमता ॥ १४ ॥ दण्डं कृष्णाजिनश्चैव तथा विप्राः कमण्डलुम् ॥ चीरं पुण्यमवाप्नोति दत्त्वैतां ब्रह्मचारिणे ॥ १५ ॥ वस्त्रं शय्यासनं धान्यं द्रव्यं वेश्म परिच्छदम् ॥ गृहस्थाय तु तद्दत्तं ज्ञेयं बहुफलं सदा ॥ १६ ॥ नीवारवल्कलं शाकं फलमूलं च गोरसम् ॥ वानप्रस्थाय तद्दत्तमनन्तं परिकीर्तितम् ॥ १७ ॥ भिक्षाप्रदानं यतये पात्रदानं तथा हितम् ॥ सौभाग्यद्रव्य ताम्बूलरक्तवस्त्रादिकं स्त्रियः ॥ १८ ॥ स्त्रीणां प्रदानं दातव्यं भर्तृहस्ते तु नान्यथा ॥ प्रोक्तं संग्रहणं ह्येतद्धुतं भर्तुः प्रयच्छतः ॥ १९ ॥ अन्नं प्रतिश्रयं चोभौ पान्थे दत्तं महाफलम् ॥ विवाहादिक्रियाकाले तत्क्रियासिद्धिकारकम् ॥ २० ॥ यः प्रयच्छति धर्मज्ञाः सोऽश्वमेधमवाप्नुयात् ॥ आतुरेभ्यो धनं दत्त्वा दानं बहुफलं लभेत् ॥ २१ ॥ बाले क्रीडनकं दत्त्वा मिष्टमन्नं तथैव च ॥ फलं मनोहरं वापि अग्निष्टोमफलं लभेत् ॥२२॥ मिष्टान्नं मानवो दत्त्वा मिष्टान्नानि तु कांक्षताम् ॥ अक्षयं फलमाप्नोति स्वर्गलोकं च गच्छति ॥ २३ ॥ श्रीविहीने तथा दत्त्वा भोजनं द्विजसत्तमाः ॥ वस्त्रं शुभं वा धर्मज्ञाः पुण्यं महदुपाश्नुते ॥ २४ ॥ कूपास्थानपरो विप्रा विस्रुतः पुरुषः श्रिया ॥ तस्यानुकम्पा कर्तव्या सतां वर्त्मनि तिष्ठतः ॥ २५ ॥ कार्ये समुद्यमं कृत्वा परेषां समुपस्थिते ॥ अक्षयं फलमाप्नोति नात्र कार्या विचारणा ॥ २६ ॥ यवसानां प्रदानेन धेनुमत्सु द्विजातिषु ॥ लवणानाश्च धर्मज्ञा फलमक्षयमश्नुते ॥२७॥ प्रसवेषु तदा दत्तं व्यसनान्युभये ततः ॥ तद्दानमक्षयं प्रोक्तं पुरुषस्य विपश्चितः ॥२८॥ दत्त्वा ब्राह्मण शार्दूला जलमात्रमथार्थिने ॥ फलमक्षयमाप्नोति नात्र कार्या विचारणा ॥२९॥ क्लेशं विना दत्तमथार्थिने तु दानं हि लोके फलदं निरुक्तम् ॥ अभ्यर्थितेनाथ ततो न कार्या विमानना त्वर्थिजनस्य शक्त्या॥३०॥इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु पात्रविशेषेण दानविशेषवर्णनो नाम षोडशाधिकत्रिशततमोऽध्यायः ॥३१६॥ ऋषय ऊचुः ॥ दानं बहुफलं काले यस्मिन्यत्परिकीर्तितम् ॥ तत्त्व मस्माकमाचक्ष्व त्वं हि सर्वविदुच्यसे ॥ १॥ हंस उवाच ॥ संवत्सरे तथा दानं तिलस्य च महाफलम् ॥ परिपूर्वे तथा दानं यवानां द्विजसत्तमाः ॥ २ ॥ इडापूर्वेन्नवस्त्राणां धान्यानां चानुपूर्वके ॥ उदासंवत्सरे दानं रजतस्य महाफलम् ॥३॥ उत्तरे त्वयने प्रोक्तं वस्त्रदानं फलप्रदम् ॥ स्नानानु लेपनादीनां वसन्ते द्विजपुङ्गवाः॥४॥पानकानां तथा ग्रीष्मे छत्राणां तदनन्तरे ॥ शरद्यन्नस्य धर्मज्ञा वस्त्राणामपि हैमने॥५॥वह्निदानं नरः कृत्वा

सूर्यस्योदयनं प्रति ॥ शिशिरे सततं वह्निं तर्पयित्वा तथा तिलैः ॥६॥ कुल्माषं सघृतं दत्त्वा यथाशक्त्या द्विजातिषु ॥ कायाग्निदीप्तिं प्राकाश्यं शत्रुनाशञ्च विन्दति ॥७॥ सक्तून्सिताखण्डयुतांस्त्रपुसोर्वारुकान्वितान् ॥ जलकुम्भोपरिकृतानक्षयं फलमश्नुते ॥८॥ मध्याह्ने प्रावृषि स्नातः सततं द्विजपुङ्गवाः ॥ तिलप्रदानान्माघे तु प्राप्यलोकं स गच्छति ॥ ९॥ प्रियङ्गुं फाल्गुने दत्त्वा प्रियो भवति भूतले ॥ चैत्रे चित्राणि वस्त्राणि सौभाग्यं महदश्नुते॥१०॥अपूपानां प्रदानेन वैशाखे स्वर्गमश्नुते ॥ छत्रदानं तथा ज्येष्ठे सर्वान्कामानुपाश्नुते ॥ दत्त्वा चोपानहौ स्वर्गञ्चाषाढे ध्रुवमश्नुते ॥११॥श्रावणे वस्त्रदानस्य कीर्तितं सुमहत्फलम् ॥ प्रोष्ठपादे तथा मासि प्रदानात्फाणितस्य च ॥ १२ ॥ आश्विने घृतदानेन रूपवानभिजायते ॥ कार्तिके दीपदानेन सर्वत्रौजस्यमश्नुयात् ॥ १३ ॥ लवणं मार्गशीर्षे तु दत्त्वा सौभाग्यमश्नुते ॥ पौषे कनकदानेन परां पुष्टिं तथैव च ॥ १४ ॥ पुष्पाणां च सिते पक्षे दानं लक्ष्मीकरं स्मृतम् ॥ फलानां च तथा दानं कृष्णपक्षे महाफलम्॥१५॥लवणाज्यगुडोपेतमपूपं सूर्यवासरे ॥ सहिरण्यं नरो दत्त्वा न रोगैस्त्वभिभूयते ॥१६ ॥ एवंविधं चेन्दुदिने ददत्सौभाग्यमाप्नुयात् ॥ काष्ठदानं भौमदिने शत्रुनाशमवाप्नुयात् ॥ १७ ॥ बोधे क्रीडनकानाञ्च दानं बालेषु शस्यते ॥ जीवाह्नि वस्त्रदानेन परां पुष्टिं समश्नुते ॥ १८ ॥ सर्वत्र रतिमाप्नोति शुक्रे दत्त्वा रतिस्त्रियम् ॥ अभ्यङ्गं सौरदिवसे दत्त्वा जीवितमाप्नुयात् ॥१९॥ कृत्तिकासु सुवर्णस्य दानं बहुफलं स्मृतम् ॥ रक्तवस्त्रस्य रोहिण्यां सौम्यभे लवणस्य च॥२०॥ कृसरस्य तथार्द्रायां चादित्ये रजतस्य च ॥ घृतस्य च तथा पुष्ये गन्धानामथ सर्पभे ॥ २१ ॥ तिलानाञ्च मघायोगे प्रियङ्गोर्भगदैवते ॥ आर्यम्णे चाप्यपूपानां सावित्रे पायसस्य च ॥ २२ ॥ चित्रायां चित्रवस्त्राणां सक्तूनां वायुदैवते ॥ ऐन्द्राग्ने चैव लोहानां मैत्रे माल्यफलस्य च ॥२३॥छत्रस्य च तथा शाक्रे मूले मूलफलस्य च ॥ हिमस्य मधुयुक्तस्य दानमाप्ये महाफलम् ॥ २४ ॥ विश्वेश्वरेऽन्नदानस्य श्रवणे वसनस्य च ॥ धान्यस्य वासवे विप्रा वारुणे चौषधस्य च ॥२५॥ अजपादे च बीजानां सस्यानां तदनन्तरे ॥ गोरसानां तथा पौष्णे स्नानानामथ चाश्विने ॥ ॥ २६ ॥ तिलानाञ्च तथा दानं भरणीषु महाफलम् ॥ प्रतिपद्यथ पुष्पाणां द्वितीयायां घृतस्य च ॥ २७ ॥ तृतीयायां तु वस्त्राणां चतुर्थ्यां कनकस्य तु ॥ पञ्चम्यान्तु फलानां वै षष्ठ्यां स्नानस्य मानदाः ॥२८॥ सप्तम्यां चाप्यपूपानामष्टम्याञ्च गुडस्य च ॥ कुल्माषस्य नवम्यान्तु दशम्यां रजतस्य च ॥ २९ ॥ एकादश्यां सुवर्णस्य द्वादश्यां वसनस्य च ॥ त्रयोदश्यां सुगन्धानां सितायास्तदनन्तरम् ॥ ३० ॥ दानञ्च परमान्नस्य पञ्चदश्यां महाफलम् ॥ वैशाखशुक्लपक्षे तु तृतीयायां द्विजोत्तमाः ॥ ३१ ॥ यद्ददाति नरश्रेष्ठास्तत्तदक्षय्यमश्नुते ॥ विशेषेण

तथा दानमक्षतानां महाफलम् ॥ ३२ ॥ माघे श्रवणसंयुक्ता शुक्ला स्याद्द्वादशी यदा ॥ तिलदानं महत्पुण्यं विनापि श्रवणेन तु ॥ ३३ ॥ मासि भाद्रपदे शुक्ले नवम्यां द्विजपुङ्गवाः ॥ गोधूमभक्तां सगुडां दत्त्वा पुण्यमवाप्नुयात् ॥ ३४ ॥ एतानि दानानि च कालयोगे प्रोक्तानि पुण्यानि मया द्विजेन्द्राः ॥ देयानि सर्वाणि विनापि योगाद्योगेन पुण्यं त्वधिकं निरुक्तम् ॥ ३५ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख० मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु कालयोगे दानविधिवर्णनो नाम सप्तदशाधिकत्रिशततमोऽध्यायः ॥ ३१७ ॥ ऋषय ऊचुः ॥ व्रतं नक्षत्रसत्राख्यं सदानं कथयस्व नः ॥ सर्वधर्मभृतां श्रेष्ठ प्रत्यक्षामलदर्शन ॥ १ ॥ हंस उवाच ॥ कृत्तिकासु महाभागाः पायसेन ससर्पिषा ॥ संतर्प्य ब्राह्मणान्साधूँल्लोकान्प्राप्नोत्यनुत्तमान् ॥ २ ॥ रोहिण्यां प्रथितैर्मांसैर्माषैरन्नेन सर्पिषा ॥ पयोनुपानं दातव्यं चानृणार्थं द्विजातये ॥ ३ ॥ दोग्ध्रीं दत्त्वा सवत्सां तु नक्षत्रे सोमदैवते ॥ गच्छेत मानुषाँल्लोकान्स्वर्गवासमनुत्तमम् ॥ ४ ॥ आर्द्रायां कृसरं दत्त्वा तैलमिश्रमुपोषितः ॥ नरस्तरति दुर्गाणि क्षुरधारांस्तु पर्वतान् ॥ ५ ॥ पूपान्पुनर्वसौ दत्त्वा तथैवान्नञ्च शोभनम् ॥ यशस्वी रूपसंपन्नो बह्वन्नो जायते कुले ॥ ६ ॥ पुष्ये तु कनकं दत्त्वा कृतं चाकृतमेव च ॥ अनालोकेषु लोकेषु सोमवत्स विराजते ॥ ७ ॥ अश्लेषासु च यो रूप्यं वृषभं वा प्रयच्छति ॥ स सर्वभयनिर्मुक्तः शुभं चाप्यधिगच्छति ॥ ८ ॥ मघासु तिलपूर्णानि वर्णमानानि मानवः ॥ प्रदाय पुत्रपशुमानिह प्रेत्य च मोदते ॥ ९ ॥ फाल्गुनीपूर्वसमये ब्राह्मणानामुपोषितः ॥ भक्ष्यं फाणितसंयुक्तं दत्त्वा सौभाग्यमृच्छति ॥१०॥ घृतक्षीरसमायुक्तं विधिवत्षाष्टिकौदनम् ॥ उत्तराविषये दत्त्वा स्वर्गलोके महीयते ॥ ११ ॥ यद्यत्प्रदीयते दानं चोत्तराविषये नरैः ॥ महाफलमतीतञ्च भवतीति विनिश्चयः ॥ १२ ॥ हस्ते हस्तिरथं दत्त्वा चतुर्युक्तमुपोषितः ॥ नरस्तरति दुर्गाणि क्षुरधारांश्च पर्वतान् ॥ १३ ॥ चित्रायां वृषभं दत्त्वा पुण्यगन्धांश्च मानवः ॥ चरत्यप्सरसां लोके रमते नन्दने वने ॥ १४ ॥ स्वातीष्वथ धनं दत्त्वा यदिष्टतममात्मनः प्राप्नोति लोकान्स शुभानिहैव च महद्यशः ॥ १५ ॥ विशाखायामनड्वाहं धेनुं दत्त्वा च दुग्धदाम् ॥ सप्रासङ्गं च शकटं सधान्यं वस्त्रसंमितम् ॥ १६ ॥ पितॄंश्च देवान्प्रीणाति प्राप्य चानन्त्यमश्नुते ॥ न च दुर्गाण्यवाप्नोति स्वर्गलोकं च गच्छति ॥ १७ ॥ दत्त्वा यथोक्तं विप्रेभ्यो वृत्तिमिष्टां स विन्दति ॥ नरकादींश्च स क्लेशान्न प्राप्नोतीति निश्चयः ॥ १८ ॥ अनुराधासु प्रावारं वस्त्रान्तरमुपोषितः ॥ दत्त्वा युगशतं चापि नरः स्वर्गे महीयते ॥ १९ ॥ कालशाकं तु विप्रेभ्यो दत्त्वा मर्त्यः समूलकम् ॥ ज्येष्ठायामृद्धिमिष्टाञ्च गतिमिष्टाञ्च गच्छति॥२०॥ मूले मूलफलं दत्त्वा ब्राह्मणेभ्यः समाहितः॥

स पितॄन्प्रीणयत्येव गतिमिष्टाञ्च गच्छति ॥ २१ ॥ अथ पूर्वास्वाषाढासु दधिपात्राण्युपोषितः ॥ कुले वृत्तोपसम्पन्ने ब्राह्मणे वेदपारगे ॥ २२ ॥ प्रदाय जायते प्रेत्य कुले स बहुगोकुले ॥ उदकुम्भं ससर्पिष्कं प्रभूतं मधुफाणितम् ॥ २३ ॥ दत्त्वोत्तरास्वाषाढासु सर्वाँल्लोकान्समश्नुते ॥ दुग्धं त्वभिजिते योगे दत्त्वा मधुघृताप्लुतम् ॥२४ ॥ वर्म नित्यं मनीषिभ्यः स्वर्गलोके महीयते ॥ श्रवणे कम्बलं दत्त्वा वस्त्रान्तारितमेव च ॥ २५ ॥ श्वेतेन याति यानेन स्वर्गलोकानसंवृतान् ॥ गोप्रयुक्तं धनिष्ठासु यानं दत्त्वा समाहितः ॥२६ ॥ वस्त्ररश्मिनवं सद्यः प्रेत्य राज्यं प्रपद्यते ॥ गन्धा ञ्छतभिषग्योगे दत्त्वा सागुरुचन्दनान् ॥ २७ ॥ प्राप्नोत्यप्सरसां लोकान्प्रेत्य गन्धांश्च शाश्वतान् ॥ पूर्वाभाद्रपदायोगे राजमाषान्प्रदाय च ॥ ॥ २८॥ सर्वभक्ष्यफलोपेतं स वै प्रेत्य सुखी भवेत् ॥ औरभ्रं तूत्तरायोगे यस्तु मांसं प्रयच्छति ॥२९॥ स पितॄन्प्रीणयत्येव प्रेत्य चानन्त्यमश्नुते कांस्योपदोहनां धेनुं रेवत्यां यः प्रयच्छति ॥ ३० ॥ स प्रेत्य कामानादाय दातारमुपतिष्ठते ॥ रथमश्वसमायुक्तं दत्त्वाश्विन्यां नरोत्तमः ॥ ३१ ॥ हस्त्यश्वरथसम्पन्ने वर्चस्वी जायते कुले ॥ भरणीषु द्विजातिभ्यस्तिलधेनुं प्रदाय वै ॥ गाः सुप्रसूताश्चाप्नोति नरः प्रेत्य यशस्तथा ॥ ३२ ॥ नक्षत्रसत्रं कथितं मयैतद्यथेष्टलोकाभिगमाय पुंसाम् ॥ कृत्वा सकृन्नाकगतस्तु कल्पमास्ते सुखं देवपतिर्यथासौ ॥ ३३ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु नक्षत्रसत्रविधानं नामाष्टादशाधिकत्रिशततमोऽध्यायः ॥ ३१८ ॥ ॥ ऋषय ऊचुः ॥ भूय एव त्वमाचक्ष्व दानानां कालयोगतः ॥ फलं द्विजवरास्माकं प्रत्यक्षामलदर्शन ॥ १ ॥ ॥ हंस उवाच ॥ ॥ संप्राप्य चैत्रमासस्य शुक्लां पञ्चदशीं नरः ॥ चित्रं वस्त्रयुगं दत्त्वा सोपवासो द्विजातये ॥ २ ॥ ब्राह्मणांश्चापरं विप्राः सौभाग्यं महदाप्नुयात् ॥ वैशाख्यां पौर्णमास्यान्तु ब्राह्मणान्सप्त पञ्च वा ॥ ३ ॥ क्षौद्रयुक्तैस्तिलैः कृष्णैर्वाचयेद्यदि वेतरैः ॥ प्रीयतां धर्मराजेति यद्वा मनसि वर्त्तते ॥ ४ ॥ यावज्जीवकृतात्पापात्त त्क्षणादेव मुच्यते ॥ तस्मिन्नेव तथा काले सखुरं कृष्णमार्गणम् ॥ ५ ॥ तिलैः प्रच्छाद्य वासोभिः सर्वरत्नैरलंकृतम् ॥ तपस्यन्ते च दातव्या मही सवनकानना ॥ ६ ॥ कृष्णाजिने तिलान्कृत्वा हिरण्यमधुसर्पिषा ॥ ददाति यस्तु विप्राय सर्वं तरति दुष्कृतम् ॥ ७ ॥ सोपवासस्तथा ज्येष्ठे पूर्णे तु शशलक्ष्मणे ॥ उपानहौ तथा च्छत्रं दत्त्वात्यन्तसुखी भवेत् ॥ ८ ॥ आषाढ्यामन्नदानस्य प्राप्नोत्यन्नं नरो बहु ॥ जलधेनुप्रदानेन श्रावण्यां स्वर्गमाप्नुयात् ॥ ९ ॥ गोदानं प्रोष्ठपादे तु पौर्णमास्यां महाफलम् ॥ आश्वयुज्यं कांस्यपात्रीं घृतपूर्णं द्विजातये ॥ १० ॥ सुवर्णञ्च तथा दत्त्वा दीप्तिमांस्त्वभिजायते ॥ कार्त्तिक्यां चन्द्रवर्णाभमन्यवर्णमथापि वा ॥ ११ ॥ रत्नैर्गन्धैस्तथा धान्यैर्बीजैर्वस्त्रैस्तथैव च ॥

कृत्वा युक्तमथोक्षाणं दत्त्वा दीपान्समन्त्रतः ॥ १२ ॥ चन्द्रोदये नरो दत्त्वा सर्वपापैः प्रमुच्यते ॥ कान्तारे यममार्गे तु तेनासौ व्रजते सुखम् ॥ १३ ॥ सर्वाणि चास्य भोगानि तत्र चासौ प्रयच्छति ॥ मार्गशीर्षे तथा मासे पूर्णे शिशिरदीधितौ ॥ १४ ॥ महारजतयुक्तेन वाससा द्विज पुङ्गवान् ॥ आच्छाद्य कांस्यपात्रस्थं प्रस्थं कृत्वा समाहितः ॥१५॥ लवणस्य तु मुख्यस्य चूर्णितस्य द्विजोत्तमाः ॥ दत्त्वा सुवर्णनाभन्तु तस्मिन्नेव द्विजातये ॥ १६ ॥ सौभाग्यरूपलावण्ययुक्तो भवति मानवः ॥ गौरसर्षपकल्केन पौष्यामुत्साहितो नरः ॥ १७ ॥ गव्यस्याज्यस्य कुम्भेन सोभिषिक्तस्त्वनन्तरम् ॥ विरूक्षितस्तथा स्नातः सर्वबीजौषधीजलैः ॥ १८ ॥ गन्धरत्नफलोपेतैर्घृतेन तदनन्तरम् ॥ स सुवर्णं मुखं दृष्ट्वा तत्प्रदद्याद्द्विजातये ॥ १९ ॥ घृतेन स्नपितं विष्णुं शक्त्या सम्पूजयेत्ततः ॥ घृतञ्च जुहुयाद्वह्नौ घृतं दद्याद्द्विजातये ॥ २० ॥ कर्त्रे वस्त्रयुगं दद्यात्सोपवासः समाहितः ॥ कर्मणानेन धर्मज्ञाः पुष्टिमाप्नोत्यनुत्तमाम् ॥ २१ ॥ माघ्यां कृत्वा तिलैः श्राद्धं सर्वपापैः प्रमुच्यते ॥ स्वास्तीर्णं शयनं दत्त्वा फाल्गुन्यां ब्राह्मणस्य तु ॥ २२ ॥ रूपद्रविणसंयुक्तां भार्यां पक्षवतीं तथा ॥ नरः प्राप्नोति धर्मज्ञः पुष्टिमाप्नोत्यनुत्तमाम् ॥ २३ ॥ तथा नार्यपि भर्तारं नात्र कार्या विचारणा ॥ पौर्णमासीषु चैतासु मासर्क्षसहितासु च ॥ २४ ॥ एतेषामेव दानानां फलं दशगुणं भवेत् ॥ महत्पूर्वासु चैतासु फलमक्षय्यमश्नुते ॥ २५ ॥ द्वादश्यां चैत्रशुक्लस्य चित्रवस्त्रप्रदो नरः ॥ अक्षयं फलमाप्नोति नाकलोके च गच्छति ॥ २६ ॥ वैशाखमासे द्वादश्यां रुक्मदानात्तथैव च ॥ छत्रोपानहयोर्दानाज्ज्येष्ठे मासि द्विजोत्तमाः ॥ २७ ॥ स्वास्तीर्णं शयनं दत्त्वा प्रीणयेद्योगिशायिनम् ॥ आषाढ शुक्लद्वादश्यां श्वेतद्वीपे महीयते ॥ २८ ॥ श्रावणे वस्त्रदानेन विष्णुलोके महीयते ॥ गोदः प्रयाति गोलोकं मासि भाद्रपदे द्विजाः ॥ २९ ॥ प्रीणयेदश्वशिरसश्चाश्वं दत्त्वा तथाश्विने ॥ विष्णुलोकमवाप्नोति कुलमुद्धरति स्वकम् ॥ ३० ॥ सरोमवस्त्रदानेन कार्तिके दिवमाप्नुयात् ॥ प्रदानं लवणानान्तु मार्गशीर्षे महत्फलम् ॥ ३१ ॥ धान्यानाञ्च तथा पौषे दारुणं चाप्यनन्तरे ॥ फाल्गुने सर्वगन्धानां नात्र कार्या विचारणा ॥३२॥ भाग्यर्क्षसंयुता चैत्री द्वादशी स्यान्महाफला ॥ हस्तयुक्ताथ वैशाखी ज्येष्ठे तु स्वातिना तथा ॥ ३३ ॥ ज्येष्ठायाञ्च तथाषाढे मूलोपेता च वैष्णवे ॥ तथा भाद्रपदे मासि श्रवणेन तु संयुता ॥ ३४ ॥ आश्विने द्वादशी पुण्या भवत्याजर्क्षसंयुता ॥ कार्तिके रेवतीयुक्ता सौम्ये कृत्तिकया तथा ॥ ३५ ॥ पौषे मृगशिरोपेता माघे चादित्यसंयुता ॥ फाल्गुने पुष्यसहिता द्वादशी पावना परा ॥ ३६ ॥ नक्षत्रयुक्तास्वेतासु तथा दानमुपोषितः ॥ सर्वकामफलं ज्ञेयमनन्तं द्विजसत्तमाः ॥ ३७ ॥ मेषसंक्रमणे भानोर्मेषदानं महाफलम् ॥ वृषसंक्रमणे दानं गवां प्रोक्तं तथैव च ॥ ३८ ॥

शयनासनदानञ्च मिथुनोपगते रवौ ॥ कर्कप्रवेशे सक्तूनां सितया च तथव च ॥ ३९ ॥ गुडफाणितखण्डानां सितायाश्च तथा द्विजाः ॥ लवणा
ज्यफलानाञ्च तथा हरितकस्य च ॥ ४० ॥ तथा चैवोदकुंभानां दानं ज्ञेयं महाफलम् ॥ सिंहप्रवेशे पात्राणां तैजसानां तथैव च ॥ ४१ ॥
कन्याप्रवेशे वस्त्राणां सुरभीणां तथैव च ॥ तुलाप्रवेशे धान्यानां बीजानामपि चोत्तमे ॥ ४२ ॥ कीटप्रवेशे वस्त्राणां वेश्मनां दानमेव च ॥
धन्विप्रवेशे वस्त्राणां यानानाञ्च महाफलम् ॥ ४३ ॥ मृगप्रवेशे दारूणां दानमग्नेस्तथैव च ॥ कुम्भप्रवेशे दानं तु गवामर्थे तृणस्य तु ॥ मीनप्रवेशे
स्थानानां माल्यानामपि चोत्तमम् ॥ ४४ ॥ दानान्यथैतानि मया द्विजेन्द्राः प्रोक्तानि काले तु नरश्च दत्त्वा ॥ प्राप्नोति कामान्मनसा त्व
भीप्सांस्तस्मात्प्रशंसन्ति महाप्रदानम्॥४५॥इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु द्वादशपौर्णमासीदानफल
निरूपणं नामैकोनविंशाधिकत्रिशततमोऽध्यायः ॥ ३१९ ॥ ऋषय ऊचुः ॥ पुण्ययज्ञक्रियाः प्रोक्ता ये नराधनसंयुताः ॥ तथा मध्यमवृत्तानां
दानानि विविधानि च ॥ १ ॥ कथितान्यल्पवृत्तानां दानानि विविधानि च ॥ ये नरा वित्तरहितास्तेषां धर्मक्रियां वद ॥ २ ॥ हंस उवाच ॥
उपवासक्रिया तेषां परमं धर्मकारणम् ॥ वित्तान्वितानाञ्च तथा प्रशस्ता सा महाफला ॥ ३ ॥ सायं प्रातस्तु भुञ्जानो नान्तरातूदकम्पिबन् ॥
षड्भिर्वर्षैर्नरो लोकं प्राप्नोति मनसेप्सितम् ॥ ४॥ शुभानामुत्तमं चैतद्धन्यं नित्यकृतं भवेत् ॥ यथेष्टलोकदं पुण्यं मानुष्येपि महाफलम् ॥ ५॥ उप
वासं नरः कुर्वन्मासिमासि द्विजोत्तमाः ॥ उषित्वा सुचिरं लोके मानुष्ये जायते यदा ॥ ६ ॥ तदा भवति दीर्घायुर्धनवान्रूपसंयुतः ॥ पक्षेपक्षे
तथा कुर्वन्द्विगुणं फलमश्नुते ॥ ७ ॥ मासेमासे त्रिरात्रन्तु यः कुर्यान्मानवोत्तमः ॥ गाणपत्यमवाप्नोति स्वर्गलोकपरिच्युतः ॥ ८ ॥ पक्षेपक्षे
त्रिरात्रन्तु कृत्वा भवति पार्थिवः ॥ स्वर्गलोकात्परिभ्रष्टः सुचिरेण महाबलः ॥ ९ ॥ द्विजस्त्रिरात्रं कुर्वीत न तु शूद्रः कथञ्चन ॥ षष्ठकाला
शनं तस्य तपः परमिहोच्यते ॥ १० ॥ शूद्रस्त्रिरात्रं कुरुते विषये यस्य भूपतेः ॥ तस्य सीदति तद्राष्ट्रं व्याधिदुर्भिक्षतस्करैः ॥ ११ ॥ तपः
कुर्वीत शूद्रस्तु चैकाद्विदिवसान्तरम् ॥ यथाशक्ति द्विजश्रेष्ठास्तेन कामानुपाश्नुते ॥ १२ ॥ अतः परन्तु वर्णानां मासेमासे द्विजोत्तमाः ॥ एक
कालाशनानान्तु शृणुध्वं फलमुत्तमम् ॥ १३ ॥ चैत्रन्तु नियतो मासं चैकभक्तेन यः क्षिपेत् ॥ सुवर्णमणिमुक्ताढ्ये कुले महति जायते ॥ १४ ॥
निरस्येदेकभक्तेन वैशाखं यो द्विजोत्तमः ॥ नरो वा यदि वा नारी ज्ञातीनां श्रेष्ठतां व्रजेत् ॥ १५ ॥ ज्येष्ठामूलं तु यो मासमेकभक्तेन वर्तयेत ॥
ऐश्वर्यमतुलं श्रेष्ठं पुमांस्त्री वाभिजायते ॥ १६ ॥ आषाढमेकभक्तेन स्थित्वा मासमतन्द्रितः ॥ बहुधान्यो बहुधनो बहुपुत्रश्च जायते ॥ १७ ॥

श्रावणं नियतो मासमेकभक्तेन यः क्षिपेत् ॥ यत्र तत्राभिषेकेन युज्यते ज्ञातिवर्धनः ॥ १८ ॥ प्रोष्ठपादन्तु यो मासं यः कुर्यादेकभोजनम् ॥ धनाढ्यः स्फीतमतुलं चैश्वर्यं प्रतिपद्यते ॥ १९ ॥ तथैवाश्वयुजं मासमेकभक्तेन यः क्षिपेत् ॥ मेधावी वाहनाढ्यश्च बहुपुत्रश्च जायते ॥ २० ॥ कार्तिकन्तु नरो मासं यः कुर्यादेकभोजनम् ॥ शूरश्च बहुभार्यश्च कीर्तिमांश्चैव जायते ॥ २१ ॥ मार्गशीर्षन्तु वै मासमेकभक्तेन यः क्षिपेत् ॥ कृषिभागी बहुधनो बहुधान्यश्च जायते ॥ २२ ॥ पौषमासन्तु विप्रेन्द्रा भक्तेनैकेन यः क्षिपेत्॥सुभगो दर्शनीयश्च यशोभागी च जायते॥ २३ ॥ माघन्तु नियतं मासमेकभक्तेन यः क्षिपेत् ॥ कृषिभागी बहुधनो धान्यवानभिजायते ॥ २४ ॥ भगदैवन्तु यो मासमेकभक्तेन यः क्षिपेत् ॥ श्रीसत्कुले ज्ञातिमध्ये स महत्त्वं प्रपद्यते ॥२५॥ स्त्रीषु वल्लभतां याति वश्याश्चास्य भवन्ति ताः ॥ यथोक्तफलदाश्चैते वर्षैर्द्वादशभिः स्मृताः ॥२६॥ यस्तु संवत्सरं पूर्णं चैकाहारो भवेत्सदा ॥ अतिरात्रस्य यज्ञस्य फलं प्राप्नोति मानवः॥२७॥तथा संवत्सरं पूर्णमेकान्तरितभोजनः ॥ यज्ञं बहुसुवर्णाख्यं ध्रुवमाप्नोति वै द्विजाः ॥२८॥ अब्दमेकं तृतीयेह्नि भुंजानश्च तथा नरः ॥ वाजपेयस्य यज्ञस्य कथितं द्विजसत्तमाः ॥ २९ ॥ एककालं तु भुञ्जानस्त्वब्दमेकं तु पञ्चमे ॥ स्वर्गे द्वादशपद्मानि वर्षाणां स च मोदते॥३०॥षष्ठेषष्ठे तथैवाब्दं त्वश्नानः प्रयतो नरः ॥अष्टादशैव पद्मानि वर्षाणां दिवि मोदते ॥ ३१ ॥ दिवसे सप्तमे चाब्दं भुञ्जानस्त्वेकभोजनम् ॥ षट्त्रिंशत्स तु पद्मानि वर्षाणां दिवि मोदते ॥ ३२ ॥ अष्टमे दिवसे चाब्दं भुञ्जानः प्रयतः सदा ॥ पद्मानि नाके पञ्चाशद्वर्षाणां दिवि मोदते ॥ ३३ ॥ यस्तु संवत्सरं भुङ्क्ते दशमे दशमेऽहनि ॥ कल्पमेकं स विप्रेन्द्र देववद्दिवि मोदते ॥ ३४ ॥ एकादशे तु दिवसे यः प्राप्ते प्राश्नुते हविः ॥ शतकल्पद्वयं नाके मोदते देववद्दिवि ॥ ३५ ॥ दिवसे द्वादशे यस्तु प्राप्ते वै प्राश्नुते हविः ॥ त्रीणि कल्पान्यसौ नाके भुङ्क्ते देवसुखान्वितः ॥ ३६ ॥ त्रयोदशे तु दिवसे यः प्राप्ते प्राश्नुते हविः ॥ तस्य कल्पानि चत्वारि गतिर्नाके प्रकीर्तिता ॥ ३७ ॥ चतुर्दशे तु दिवसे यः प्राप्ते प्राश्नुते हविः ॥ सप्त तस्य तु कल्पानि गतिर्नाके प्राकीर्तिता ॥ ३८ ॥ संवत्सरं तु भुञ्जानो नरः पञ्चदशे हविः ॥ नाके वसति धर्मात्मा देशे कल्पान्यसंशयम् ॥ ३९ ॥ अब्दमेकं तथाऽश्नानः पक्षे दिनयुतेन यः ॥ स तु कल्पशतं विप्रा देववद्दिवि मोदते ॥ ४० ॥ दिने सप्तदशे प्राप्ते यः प्राशेदेकभोजनम् ॥ स्वर्गे स मोदते विप्राः पञ्च कल्पशतानि च ॥ ४१ ॥ अष्टादशे च दिवसे यः प्राशेदेकभोजनम् ॥ नाके कल्पे सहस्रं तु नरः कर्ताभिमोदते ॥ ४२ ॥ एकोनविंशे दिवसे यो भुंक्ते चैकभोजनम् ॥ स तु कल्पसहस्रन्तु सार्धं नाके च मोदते ॥४३॥ एककालं च भुञ्जानः प्राप्ते विंशतमे दिने ॥ कल्पानां तु सहस्रे द्वे नाकस्थः पूज्यते सुरैः ॥४४॥

एकविंशे तु दिवसे यः कुर्यादेकभोजनम् ॥ त्रीणि कल्पसहस्राणि तस्य नाके गतिर्भवेत् ॥ ४५ ॥ द्वाविंशे दिवसे प्राप्ते यो भुंक्ते चैकभोजनम् ॥ चत्वारि स च कल्पानां सहस्रं प्राप्नुयाद्दिवि ॥ ४६ ॥ त्रयोविंशे च दिवसे यः प्राशेदेकभोजनम् ॥ पञ्च कल्पसहस्राणि स्वर्गस्थः स तु मोदते ॥ ॥ ४७ ॥ चतुर्विंशे तु दिवसे यः प्राशेदेकभोजनम् ॥ सप्त कल्पसहस्राणि नाकस्थः स तु मोदते ॥ ४८ ॥ पञ्चविंशतमे चाह्नि यः प्राशेदेकभोजनम् ॥ दश कल्पसहस्राणि स्वर्गस्थः स तु मोदते ॥ ४९ ॥ षड्विंशे दिवसे यस्तु प्राश्नीयादेकभोजनम् ॥ स तु कल्पसहस्राणि चतुर्विंशः रो भवेत् ॥ ५० ॥ सप्तविंशे तु दिवसे यः प्राशेदेकभोजनम् ॥ स तु कल्पसहस्राणि नाकस्थोपि च मोदते ॥ ५१ ॥ अष्टाविंशे तु दिवसे यः प्राशेदेकभोजनम् ॥ स तु कल्पसहस्राणि चत्वारिंशत्तु मोदते ॥ ५२ ॥ एकोनविंशे दिवसे यः प्राशेदेकभोजनम् ॥ स तु कल्पसहस्राणां पञ्चाशन्नाकगो भवेत् ॥ ५३ ॥ यस्तु त्रिंशद्दिने प्राप्ते चाश्नीयादेकभोजनम् ॥ स तु कल्पसहस्राणां नाकस्थः पूज्यते शतम् ॥ ५४ ॥ मासेमासे गते प्रायः प्राश्नीयादेकभोजनम् ॥ पौरुषं स दिनं नाके देववन्मोदते सदा ॥ ५५ ॥ सर्वे व्रतास्तु कव्याय वर्षमेकं सुखावहाः ॥ वर्षे तु फलदाः प्रोक्ता नात्र कार्या विचारणा ॥ ५६ ॥ स्नानं सर्वेषु कर्तव्यं कार्यो होमस्तथैव च ॥ न भोक्तव्यं तथा मासं व्रतस्य फलमश्नुते ॥ ५७ ॥ आश्रित्य तीर्थं यदि वापि देवं व्रतान्यथैतानि महाफलानि ॥ कार्याणि नैतान्यधिकास्तु मासास्ततः परं नानशनं प्रदिष्टम् ॥ ५८ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासूपवासविधिवर्णनं नाम विंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२० ॥ ॥ ऋषय ऊचुः ॥ ॥ क्व काले कर्मणा केन प्राप्नुवन्ति नरोत्तमाः ॥ तत्त्वमस्माकमाचक्ष्व त्वं हि सर्वविदर्हसि ॥ १ ॥ ॥ हंस उवाच ॥ ॥ ज्येष्ठस्वसारं पितरं मातरं गुरुमेव च ॥ नित्यं सम्पूजयेद्भक्त्या याम्यलोके महीयते ॥ २ ॥ भोजनाच्छादनाद्येन त्वतिथिं चैव पूजयेत् ॥ राजराजस्य लोकेषु मोदते नात्र संशयः ॥ ३ ॥ मेरोः समीपं गच्छन्वै नित्याध्ययनतत्परः ॥ सुदर्शना यत्र च सा जम्बूः ख्याता द्विजातयः ॥ ४ ॥ नृत्ते गीते च कुशलं नन्दनं यान्ति ते वनम् ॥ हिमानि वृत्ता गच्छन्ति तथा चैवोत्तरान्कुरून् ॥ ५ ॥ नित्यं दानपराः सन्तो लोकं गच्छन्ति शाश्वतम् ॥ आदित्यलोकं गच्छन्ति तथा ये तपसि स्थिताः ॥ ६ ॥ तीर्थयात्रापरा यान्ति तथा लोकं प्रचेतसः ॥ संग्रामे निहता यान्ति शक्रलोकमसंशयम् ॥ ७ ॥ प्राजापत्यं तथा यांति सम्यग्वृत्वा महीक्षितः ॥ गवां पत्या तथा यांति गोलोकं मानवोत्तमाः ॥ ८ ॥ यान्ति लोकं च सूर्यस्य नित्यं ये सत्यभाषिणः ॥

प्रतिग्रहान्निवृत्ताश्च वसूनामपि मानवाः ॥ ९ ॥ वायुलोके महीयन्ते रोगिणां परिचारकाः ॥ लोकं गच्छन्त्यथाग्नेयं वह्निशुश्रूषणे रताः ॥ १० ॥ यांति ते नैर्ऋतं लोकं प्रपारक्षणतत्पराः ॥ भृगूणामपि लोकेषु मोदन्त्याकाशशायिनः ॥ ११ ॥ यांति चाङ्गिरसं लोकं व्रतेनानेन मानवाः ॥ मरुतां च तथा लोकं यांति यानप्रदा नराः ॥ १२ ॥ नासत्यलोके मोदन्ते तथैवौषधदायिनः ॥ रुद्रलोकं प्रपद्यन्ते गोविप्रनरवत्सलाः ॥१३ ॥ स्वाचारनिरता यांति वैश्वदेवमसंशयम् ॥ आदित्यैः सह मोदंते दयावन्तस्तु ये नराः ॥ १४ ॥ ब्रह्मलोकं विष्णुलोकं रुद्रलोकं तथैव च ॥ तद्भक्तैरेव लभ्यन्ते नान्यथा द्विजसत्तमाः॥१५॥यस्य देवस्य यो भक्तिं सदा वहति मानवः॥सम्पदस्तस्य सालोक्यं यांति नास्त्यत्र संशयः॥१६॥ लोकेषु दिव्येषु गतिर्मयोक्ता कर्मानुरूपा पुरुषस्य विप्राः ॥ अतः परं किं कथयाम्यहं वै तन्मे गदध्वं तपसि प्रधानाः ॥ १७ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु लोकविभागवर्णनो नामैकविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२१ ॥

॥ ऋषय ऊचुः ॥ कथयस्वामितप्राज्ञ स्त्रीणां धर्ममतः परम् ॥ तद्वयं श्रोतुमिच्छामस्त्वं हि सर्वविदुच्यसे ॥ १ ॥ ॥ हंस उवाच ॥ स्त्रीधर्मः पूर्व एवायं विवाहे बन्धुभिः कृतः ॥ सधर्मचारिणी भर्तुर्भवेदग्निसमीपतः॥२॥सुस्वभावा सुविमना सुविभक्ता सुदर्शना ॥ अनन्यचित्ता सुमुखी भर्तुस्सा धर्मचारिणी ॥ ३ ॥ पुत्रवक्त्रमिवाभीक्ष्णं भर्तुर्वदनमीक्षती ॥ या साध्वी नियताचारा सा भवेद्धर्मचारिणी ॥ ४ ॥ श्रुत्वेदं पतिधर्मं वै महाश्रमकृतं शिवम् ॥ या भवेद्धर्मपरमा नारी भर्तृसमव्रता॥५॥ देववत्सततं साध्वी भर्तारमनुपश्यति॥शुश्रूषां परिचर्यांश्च देवतुल्यं प्रकुर्वती ॥६॥ वश्याभावेन सुमनाः सुव्रता सुसमाहिता ॥ अनन्यचित्ता सुमना भर्तुः सा धर्मभागिनी॥७॥ पारुष्यमपि वोक्ता या दृष्टा वा क्रूरचक्षुषा ॥ सुप्रसन्नमुखी भर्तुर्यानारी सा पतिव्रता॥८॥न चन्द्रसूर्यौ तद्रूपं नेनौ या च निरीक्षते॥भर्तृवर्जं वरारोहा सा भवेद्धर्मभागिनी॥९॥दरिद्रं व्याधितं दीनं चाधिना परिकीर्तितम् ॥ पतिम्पुत्रमिवारक्षेत्सा नारी धर्मभागिनी ॥ १० ॥ या नारी प्रयता दक्षा या नारी पुत्रिणी भवेत् ॥ पतिव्रता पतिप्राणा सा नारी धर्मभागिनी ॥ ११ ॥ शुश्रूषां परिचर्यांश्च करोत्यविमनाः सदा ॥ सुप्रतीता सुमनाः सा नारी धर्मभागिनी ॥ १२ ॥ न कामेषु न भोगेषु नैश्वर्ये न सुखे तथा ॥ स्पृहा यस्या यथा भर्तुः सा नारी धर्मभागिनी ॥ १३ ॥ कामार्था न व्रता नित्यं गृहशुश्रूषणे रता ॥ सुसम्मृष्टक्षया चैव गोशकृत्कृतलेपना ॥ १४ ॥ अग्निकार्यपरा नित्यं सदा पुष्पबलिप्रदा ॥ देवतातिथिभृत्यानां निरूप्य पतिना सह ॥ १५ ॥ शेषान्नमुपभुञ्जाना यथान्यायं यथाविधि ॥ तुष्टभृत्यजना नित्यं नारी धर्मेण युज्यते ॥ १६ ॥ श्वश्रूश्वशुरयोः पादाँस्तोषयन्ती गुणान्विता ॥ माता

पितृरता नित्यं या नारी सा तपोधना ॥ १७ ॥ ब्राह्मणान्दुर्बलानाथदीनान्धकृपणाँस्तथा ॥ बिभर्त्त्येनेन या नारी सा पतिव्रतभागिनी ॥ १८ ॥ व्रतश्चरति या नित्यं दुश्चरं स्पष्टमानसा ॥ पतिचित्ता पतिरता सा पतिव्रतभागिनी ॥ १९ ॥ पुण्यमेतत्तपश्चैव स्वर्गश्चैव सनातनः ॥ या नारी भर्तृपरमा भवेद्भर्तृव्रता शिवा ॥२०॥ पतिर्हि देवो नारीणां पतिर्बन्धुः पतिर्गतिः ॥ पत्या गतिः समा नास्ति दैवतं वा यथा पतिः ॥२१॥ पतिः स्वर्गप्रदो नार्या यदा तल्पमना भवेत् ॥ यद्यत्कार्यमकार्यं वा यदि वा प्राणनाशनम् ॥ २२ ॥ पतिः पातकयुक्तो वा व्याधितो वा कथञ्चन ॥ आपन्नो रिपुसंस्थो वा ब्रह्मशापार्दितोऽपि वा ॥ २३ ॥ आपद्धर्मानतुप्रेक्ष्य तत्कार्यमविशङ्कया ॥ स्वातंत्र्यमुक्तम्परमं हि पापं स्त्रीणां सदा तेन सदैव नारी ॥ स्वातन्त्र्यहीना सततम्भवेद्धि या कामयेन्नाकमितश्चिराय ॥ २४ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसं० मुनीन्प्रति हंसगीतासु स्त्रीधर्मनिरूपणो नाम द्वाविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२२ ॥ ॥ हंस उवाच ॥ ॥ ॥ स्वेस्वे धर्मे व्यवस्थानं वर्णानां पृथिवीपतेः ॥ परो धर्मः सदा प्रोक्तस्तत्र यत्र भवेन्नरः ॥ १ ॥ देवब्राह्मणगोसाध्वीसाधूनामपि पूजनम् ॥ निग्रहश्चैव दुष्टानान्नृपतेर्धर्मकारणम् ॥ २ ॥ समता व्यवहारेषु स्वयश्चैवान्ववेक्षणम् ॥ राज्ञां धर्मं परं विद्यात्तथा वै चारदृष्टिता ॥ ३ ॥ स्वदेशपालनं धर्मः परराष्ट्राभिमर्दनम् ॥ यज्ञदानक्रिया चैव संग्रामे चापलायनम् ॥ ४ ॥ मृगयाक्षा तथा पानं गर्हितानि महीभुजाम् ॥ वाग्दण्डयोस्तु पारुष्यन्तथैवार्थस्य दूषणम् ॥ ५ ॥ सन्धिविग्रहदानानामासनस्य तथैव च ॥ द्वैधीभावस्य चाप्युक्ता सेवा वै संश्रयस्य च ॥ ६ ॥ ज्ञात्वा कालश्चलं राजा षाड्गुण्यस्य हि निश्चये ॥ इन्द्रियाणाञ्जये यत्नः सदा स्याद्द्विजपुङ्गवाः ॥ ७ ॥ ततो भृत्यजयः कार्यः समस्तविजयस्ततः ॥ कामः क्रोधो मदो लोभो मानो हर्षस्तथैव च ॥ ८ ॥ आभ्यन्तरा विजेतव्या रिपवः षण्महीभुजा ॥ ततस्तु शत्रवो जेयाः कुल्याश्चेतरकृत्रिमाः ॥९॥ भूमिमित्रहिरण्यानामर्ज्जने यत्नवान्भवेत् ॥ धर्मार्थकामसेवा च सदा कार्या महीक्षिता ॥ १० ॥ स्वाम्यमात्यञ्जनं दुर्गं कोशो दण्डः सुहृत्तथा ॥ राज्ये प्रकृतयः सप्त रक्ष्या यत्नेन भूभुजा ॥ ११ ॥ दैवमन्त्रप्रभूत्साहशक्तियुक्तस्तथा भवेत् ॥ मङ्गलाचारयुक्तानां सिध्यन्ते देवशक्तयः ॥ १२ ॥ चतुरङ्गबलं कुर्यात्सुभृतञ्च तथा नृपः ॥ कर्मणा मनसा वाचा सदा लोकं प्रसादयेत् ॥ १३ ॥ महच्चावरणं कार्यन्नित्यमेव समृद्धये ॥ राजा सहायसम्पन्नः पशव्यञ्जाङ्गलं शिवम् ॥ १४ ॥ वैश्यशूद्रजनप्रायमरोगं देशमावसेत् ॥ तत्र दुर्गाणि कुर्वीत स्वदुर्गञ्च विशेषवत् ॥ १५ ॥ धन्वदुर्गम्महीदुर्गं गिरिदुर्गन्तथैव च ॥ अदुर्गं वृक्षदुर्गञ्च नरदुर्गन्तथैव च ॥ १६ ॥ एषामन्यतमे दुर्गे

धनधान्यसमायुते ॥ हस्त्यश्वरथसम्पन्ने मणिभीरूपशोभिते ॥ १७ ॥ पत्त्याढ्ये योधबहुले युद्धोपकरणैर्युते ॥ सुसञ्चिते धनाढ्ये च बहुपेये बहूदके ॥ १८ ॥ हस्त्यश्वनरगोवैद्यसांवत्सरयुते शुभे ॥ घृततैलौषधियुते सर्वोपकरणैस्तथा ॥ १९ ॥ प्राकारपरिखावप्रगोपुराट्टालकैर्युते ॥ पापतस्करदुर्वृत्तकुद्धलुब्धादिवर्जिते॥२०॥ दैवज्ञस्थपतिभ्यान्तु संमत्या शुभलक्षणम् ॥ तत्रावसेत्स्वयं राजा सर्वोपकरणैर्युतम् ॥ २१ ॥ कुलीनां रूपसम्पन्नां सवर्णाञ्च नराधिपः ॥ कुर्याद्भार्यां सुशीलाञ्च विनीतां धर्मवत्सलाम् ॥ २२ ॥ तया सह सदा राजा गृहस्थाश्रमचोदितम् ॥ पञ्चयज्ञविधानन्तु कारयेत पुरोहितम् ॥ २३ ॥ यजेच्च विविधैर्यज्ञैः पूजयेद्देवतास्तथा ॥ देवतायतनान्कूपांस्तडागांश्चैव कारयेत् ॥ ॥ २४ ॥ उद्यानानि विचित्राणि गोब्राह्मणगृहाणि च ॥ दुष्टदण्डः सताम्पूजा धर्मेण च धनार्जनम् ॥ २५ ॥ राष्ट्ररक्षा समत्वञ्च व्यवहारेषु पञ्चकम् ॥ भूमिपानाम्महायज्ञाः सर्वकल्मषनाशनाः ॥ २६ ॥ गणं लक्षणसंयुक्तं तुरगञ्चाभिषेचयेत् ॥ सलक्षणं तथा रत्नं खड्गकम्बिभृया न्नृपः ॥ २७ ॥ दुर्गस्थश्च नियुञ्जीत ग्रामेग्रामे च पालकान् ॥ दशग्रामाधिपांश्चान्यं शतग्रामाधिपांस्तथा ॥ २८ ॥ देशेश्वरांस्तथा कुर्या न्नगरस्थान्विशेषतः ॥ ग्रामदोषान्समुत्पन्नान् ग्रामपालः शमं नयेत् ॥ २९ ॥ अशक्तश्च दशेशाय स तु गत्वा निवेदयेत् ॥ शतेशाय दशेशस्तु शतेशो देशपाय च ॥३०॥ ग्रामादिपालकानां तु शौचाशौचं नराधिपः ॥ चारैः सुविदितं कुर्याज्ज्ञात्वा दुष्टांश्च घातयेत् ॥ ३१ ॥ राज्ञो हि रक्षा धिकृताः परस्वादायिनः शठाः ॥ भृत्या भवन्ति प्रायेण तेभ्यो रक्षेद्वसुन्धराम् ॥३२॥ तथा च रक्षाधिकृतानानुरूपेण योजयेत् ॥ विभवेन द्विज श्रेष्ठाः परीक्ष्य च पुनःपुनः ॥३३॥ राजा कर्मनियुक्तानां स्त्रीणां प्रेष्यजनस्य च ॥ प्रत्यहं कल्पयेद् वृत्तिं स्थानकर्मानुरूपतः ॥३४॥ आयद्वारांश्च नोच्छिन्द्याद्विशेषद्वारकानपि ॥ सम्यग्बलिञ्च गृह्णीयान्मालाकारोपमां नृपः ॥ ३५ ॥ क्रयविक्रयमध्वानं भक्तञ्चासपरिव्ययम् ॥ योगक्षेमञ्च सम्प्रेक्ष्य वणिजो दापयेत्करम् ॥ ३६ ॥ यथा फलेन युज्येत राजा कर्त्ता च कर्मणाम् ॥ तथावेक्ष्य नरो राष्ट्रे कल्प येत्सततं करम् ॥ ३७ ॥ पञ्चाशद्भाग आदायो राज्ञाम्पशुहिरण्ययोः ॥ धान्यानाञ्च तथा षष्ठं सस्यानाञ्च महीक्षिता ॥ ३८ ॥ षष्ठमेव तथा भागं माषाणां मधुसर्पिषाम् ॥ गन्धौषधिरसानाञ्च पुष्पमूलफलस्य च ॥ ३९ ॥ पत्रशाकतृणानाञ्च चर्मणां द्वैदलस्य च ॥ मृन्मयानाञ्च भाण्डानां सर्वस्याश्ममयस्य च ॥ ४० ॥ यत्किञ्चिदपि वर्षस्य दापयेत्करसंज्ञितम् ॥ व्यवहारेण जीवन्तं राष्ट्रे राज्यं पृथक्पृथक् ॥ ४१ ॥ राजदूतकरेभ्यश्च गृह्णीयात्पञ्चकं शतम् ॥ पञ्चपञ्चशतन्तत्र सभिकः प्राप्तुमर्हति ॥ ४२ ॥ कारुकाञ्शिल्पिनश्चैव शूद्रा

धर्मोपजीविनः ॥ एकैकं कारयेत्कर्म मासिमासि महीपतिः ॥ ४३ ॥ स्वदेशपण्याच्छुल्कांशं गृह्णीयाद्दशमं नृपः ॥ विदेशपण्याच्च तथा
देयम्पञ्चशतं समम् ॥ ४४ ॥ शुल्कस्थानम्भवेदेकं न द्वितीयं कथञ्चन ॥ शुल्कं भूयस्तु गृह्णीतश्चौरस्याप्नोति किल्बिषम् ॥४५॥ न भिन्नका
र्षापणमस्ति शुल्कं न शिल्पवृत्तौ न शिशौ न दूते ॥ न भैक्ष्यलब्धेन हृतावशेषे न श्रोत्रिये प्रव्रजिते न यज्ञे ॥ ४६ ॥ इति श्रीविष्णुधर्मोत्तरे
तृ० ख० मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु राजधर्म्मनिरूपणो नाम त्रयोविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२३ ॥ ऋषय ऊचुः ॥
राज्ञो धर्मस्त्वया प्रोक्तो व्यवहारान्ववेक्षणम् ॥ तदस्माकं त्वमाचक्ष्व त्वं हि सर्वविदुच्यसे ॥१॥ हंस उवाच ॥ आसीत्कृतयुगे पूर्वं प्रजाधर्मनिबन्ध
नः ॥ ततस्त्रेतायुगे तेषां धर्मो नाशमुपागमत् ॥ २ ॥ धर्मे नष्टे मनुष्याणां व्यवहारः प्रवर्तितः ॥ द्रष्टा च व्यवहाराणां राजा दण्डधरः कृतः ॥
॥ ३ ॥ कुलानि श्रेणयश्चैव गणाश्चाधिकृतो नृपः ॥ द्रष्टारो व्यवहाराणां गुरवो ह्युत्तरोत्तरम् ॥ ४ ॥ व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह ॥
धर्मशास्त्रानुसारेण रागद्वेषविवर्जितः ॥ ५ ॥ कुलोद्गता स्थिता धर्मे मृजायुक्ताः श्रुतान्विताः ॥ राज्ञा सभासदः कार्या रिपौ मित्रे च ये समाः ॥
॥ ६ ॥ अपश्यता कार्यवशाद्व्यवहारान्नृपेण तु ॥ ॥ सभ्यैः सह नियोक्तव्यो ब्राह्मणः सर्वधर्मवित् ॥ ७ ॥ क्षत्रियस्त्वथ वा वैश्यो न तु शूद्रः
कदाचन ॥ यस्य राज्ञस्तु विषये शूद्रो धर्मविवेचकः ॥ ८ ॥ तस्य सीदति तद्राष्ट्रं दुर्भिक्षव्याधितस्करैः ॥ विवादाद् द्विगुणं दंडं कूटकृत्साक्षि
णस्तथा ॥ ९ ॥ द्विगुणं च तथा सभ्या रागद्वेषव्यवस्थिताः ॥ दुर्दृष्टव्यवहारेण राज्ञा वित्तं यदर्जितम् ॥ १० ॥ त्रिंशद्गुणं तु दातव्यं ब्राह्म
णेष्वथ वांभसि ॥ स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः ॥ ११ ॥ आवेदयति चेद्राज्ञे व्यवहारपदं हि तत् ॥ प्रत्यर्थिनस्तथा कुर्या
दाह्वानं पृथिवीपतिः ॥ १२ ॥ अनागच्छन्नितो राज्ञा विनेयः पुरुषो भृशम्॥ नदीसन्तारकारण्यदुर्देशोपप्लवादिषु ॥१३॥ नागस्थो न स दंड्यः
स्यान्नासौ राज्ञोपराध्यति ॥ निवेष्टुकामो रोगार्तो यियक्षुर्व्यसने स्थितः॥१४॥ अभियुक्तस्तथान्येन राजकार्यरतस्तथा ॥ गवां प्रचारे गोपालाः
सम्पत्काले कृषीवलाः ॥१५॥ शिल्पिनश्चैव तत्कालं चायुधेयाश्च विग्रहे ॥ अपास्तव्यवहाराश्च दूतदानो सुखी व्रते ॥ १६ ॥ विषमस्थश्च
नासाध्या नचैनांश्चाह्वयेन्नृपः ॥ प्रत्यर्थिनोऽग्रतो लेख्यं यथावेदितमर्थिनः ॥ १७ ॥ समामासतदर्धाहर्ज्ञातिनामादिचिह्नितम् ॥
श्रुतार्थस्योत्तरं लेख्यं पूर्वावेदकसंनिधौ ॥१८॥ ततोर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम् ॥ चतुर्धा तच्च कथितं मुनिभिस्तत्त्वदर्शिभिः ॥१९॥
लिखितं साक्षिणो भुक्तिश्चतुर्थी वैदिकी क्रिया ॥ सारस्तु व्यवहाराणां प्रतिष्ठा समुदाहृता ॥२० ॥ तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतोन्यथा ॥

अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत् ॥ २१ ॥ कुर्यात्प्रत्यभियोगं च कलहे साहसेषु च ॥ उभयोः प्रतिभुवौ ग्राह्यौ समर्थौ कार्यनिर्णये ॥ ॥ २२ ॥ साहसस्तेयपारुष्ये ह्यभिशापात्यये स्त्रियम् ॥ विवादयेत्सद्य एव कालोऽन्यत्रेच्छया स्मृतः ॥ २३ ॥ देशाद्देशान्तरं याति सृक्किणी परिलेढि च ॥ ललाटं स्विद्यते चास्य मुखं वैवर्ण्यमेति च ॥२४॥ परिशुष्यत्स्खलद्वाक्यो विरुद्धं बहु भाषते ॥ अभियोगेथ वा साक्ष्ये दुष्टः स परिकीर्त्यते ॥ २५ ॥ आकारैरिङ्गितैर्गत्या चेष्टितैर्भाषितेन च ॥ नेत्रवक्त्रविकाराभ्यां गृह्यतेऽतर्गतं मनः ॥ २६ ॥ त्रिपक्षाद्विजितो ज्ञेयस्तूत्तरस्याप्रयच्छतः ॥ सर्वेष्वेव विवादेषु बलवत्युत्तरा क्रिया॥२७॥आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा ॥ सर्वोपद्रवकर्तारमेकदेशविभाविनम् ॥२८॥ सर्वस्माद्धीयते चार्थादिति धर्मविदो विदुः ॥ बलोपधिनिवृत्ताँस्तु व्यवहारान्निवर्त्तयेत् ॥२९॥ स्त्रीनक्तमन्तरागारबहुशत्रुकृताँस्तथा ॥ रोगार्त्तभीतव्यसनिबालशिष्यकृतानि तु ॥ ३० ॥ अकृतानि विजानीयात्तथा दासकृतानि तु॥ गुरोर्वाक्येन शिष्यस्य पितृवाक्यात्सुतस्य च ॥ ३१ ॥ दासस्य स्वामिवाक्येन व्यवहारस्तु सिद्ध्यति ॥ स्त्रीकृतान्यप्रमाणानि कार्याण्याहुरनापदि ॥३२ ॥ विशेषतो धनक्षेत्रे दायादधनविक्रमाः ॥ एतान्येव प्रमाणानि भर्ता यद्यनुमन्यते ॥ ३३ ॥ पुरः पत्युरभावेन राजा वा पितृपुत्रयोः ॥ बाल आषोडशाद्वर्षात्पौगण्डश्चाभिशस्यते ॥ ३४ ॥ परतो व्यवहारज्ञः स्वतन्त्रः पितरं विना ॥ अप्राप्तव्यवहारस्य स्वातंत्र्यं मातुरुच्यते ॥ ३५ ॥ अस्वतन्त्रकृतान्याहुरप्रमाणानि पंडिताः ॥ नानियुक्तेन वक्तव्यं व्यवहारे कथंचन ॥ ३६ ॥ अनियुक्तवचो दण्ड्यो राज्ञा रुक्मस्य कृष्णलम् ॥ नियुक्तो न नियुक्तो वा विद्वा वाक्यमुदाहरन् ॥ ३७ ॥ सर्वस्वरहितः कार्यो लेखकोऽनृतलेखकः ॥ लेखकस्य च सभ्यानां साक्षिणां यश्च दूषकः ॥३८॥ अनाहूतस्य चाह्वाने आहूतस्य च मोक्षणे ॥ अजितोऽस्मीति मन्वानो ब्रूयात्तं तु पराजितम् ॥ ३९ ॥ राजा तान्विनयेद्विप्रान्दंडेन द्विगुणेन च ॥ सभा वा न प्रवेष्टव्या वक्तव्यं वा समंजसम् ॥ ४० ॥ अब्रुवन्विब्रुवन्वापि नरो भवति किल्बिषी ॥ पादो धर्मस्य कर्तारं पादः साक्षिणमेव च ॥ ४१ ॥ पादः सभासदः सर्वान्पादो राजानमृच्छति ॥ राजा भवत्यनेनास्तु निन्दार्हो यत्र निन्द्यते ॥ ४२ ॥ एनो गच्छति कर्तारं मुच्यन्ते च सभासदः ॥ छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः॥४३॥भूतमप्यनुपन्यस्तं व्यवहारेण हीयते।।सपणश्चेद्विवादः स्यात्तद्धनं दापयेन्नरः॥दण्डं च स्वपणं चैव धनिके धनमेव च॥४४॥न सा सभा यत्र न संति वृद्धा न ते वृद्धा ये न वदंति धर्मम्॥न तद्धर्मं यत्र न सत्यमस्ति न तत्सत्यं यच्छलेनानुविद्धम्॥४५॥इति श्रीविष्णुधर्मोत्तरे तृ०ख० मा० संवादे मुनीन्प्रति हंसगीतासु व्यवहारनिरूपणो नाम चतुर्विंशत्युत्तरत्रिशततमोऽध्यायः ॥३२४॥

हंस उवाच ॥ सभोगो दृश्यते यत्र न दृश्येतागमः क्वचित् ॥ आगमः कारणं तत्र न भोगस्तत्र कारणम्॥१॥आगमेन विशुद्धेन भोगो याति प्रमा
णताम् ॥ अविशुद्धागमो भोगः प्रामाण्यं नैव गच्छति ॥ २ ॥ आहर्तैवाभियुक्तः सन्नर्थानामुद्धरेत्पदम् ॥ भुक्तिरेव विशुद्धा स्यात्प्राप्तानां
पितृतः क्रमात्॥३॥अन्वाहितः....हेले विस्पष्टयाचितम् ॥ अप्रत्यक्षं च यद्भुक्तं न चेद्भोगेन जीर्यते॥४॥पश्यतोऽब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी ॥
परेण भुज्यमानाया धनस्य दशवार्षकी ॥ ५ ॥ त्रिभिरेव तु यद्भुक्तं पुरुषैस्तु यथाविधि ॥ लेख्याभावेपि तं तत्र चतुर्थः समवाप्नुयात् ॥ ६ ॥
आगमोप्यधिको भुक्तेर्विनापूर्वक्रमागतात् ॥ आगमोपि बली नैव भुक्तिस्तत्रापि यत्र न॥७॥आध्याभिहस्ता स भृशं विनेया दण्डेन विप्रा द्विगु
णेन राज्ञा ॥लोके न दुष्टः स तु कंटकः स्यात्पापात्मनां मूर्धनि तिष्ठतीति॥८॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति
हंसगीतासु भोगलक्षणवर्णनो नाम पञ्चविंशत्युत्तरत्रिशततमोऽध्यायः ॥ ३२५ ॥ हंस उवाच ॥ पौरुषश्चैव दिव्यश्च निर्णयो द्विविधः स्मृतः ॥
द्विविधः पौरुषस्तत्र लिखितं साक्षिणस्तथा ॥ १ ॥ त्रिविधं लिखितं तत्र तस्य वक्ष्यामि लक्षणम् ॥ राजसाक्षिकमेकं तु द्वितीयं तु स
साक्षिकम् ॥२ ॥ स्वहस्तलिखितं नाम तृतीयं परिकीर्तितम्॥ नियुक्तकार्यस्य कृतं राजाधिकरणेतरम् ॥ ३ ॥ तदध्यक्ष्येण मत्यैश्च स्वहस्त
परिचिह्नितम् ॥ तल्लेख्यं कथितं लोके राजसाक्षिकमित्युत॥४॥ यत्र क्वचन विप्रेंद्रा लिखितं येन केनचित् ॥ चिह्नितं यत्स्वहस्तेन साक्षिभिश्च
गुणान्वितैः ॥५॥ द्वाभ्यामूर्ध्वं तु तज्ज्ञेयं लिखितश्च ससाक्षिकम् ॥ साक्षी स्वहस्तलिखिते भवेद्वापि न वा भवेत्॥६॥ विनापि साक्षिभिस्तस्य
प्रामाण्यमुपपद्यते ॥स्वहस्तलिखितं पत्रं बलात्कारेण कारितम्॥७॥हस्तप्रमाणं सर्वैर्वा तथोपधिकृतं द्विजाः ॥ मत्तोन्मत्तकृतं लेख्यमस्वतन्त्रकृतं
च यत्॥८॥लेख्यं विना नास्ति सिद्धिः स्थावरस्य तु कर्हिचित् ॥ भुक्तिस्तत्र प्रमाणं वा भवेत्रिपुरुषागता॥९॥हस्तेन द्विपदं देयं साम्ना दद्याच्च
तुष्पदम् ॥ स्थावराणां च सर्वेषां सिद्धिर्लेख्ये प्रतिष्ठिता ॥१०॥ देशाचाराद्विरुद्धं यद्व्यक्ताववधिलक्षणम् ॥ तत्प्रमाणं स्मृतं लेख्यं विलुप्तध
नमक्षयम् ॥ ११ ॥ प्राक्प्रसादाः प्रदीयन्ते पश्चाद्वापि न पार्थिवाः ॥ देवद्विजातिवित्तेषु न स्यात्स्वामी नृपः क्वचित् ॥ १२ ॥ समूहार्थे
न भोगोऽस्ति लेख्यं तत्रापहारकम् ॥ उभयोरपि तत्र स्याद्भुक्तं येन स वै प्रभुः ॥ १३ ॥ चिरन्तनमविज्ञातं भुक्तं भोगान्न चालयेत् ॥ एकार्हे
लिखिते तत्स्यात्सम्भोगो यस्य तस्य तु ॥ १४ ॥ अर्वाक्कालिकलब्धं तु लेख्येनैव विशोधयेत् ॥ मुद्राशुद्धं क्रियाशुद्धं पारंपर्यानुमोदितम् ॥१५ ॥
अदूषितं च स्पष्टं च सिद्धिमाप्नोति नान्यथा ॥ स्ववेशात्कीर्तयेद्राजा आत्मानं तदनन्तरम्॥१६॥ दायादेयप्रमाणं च सहसीमापरिच्छदैः ॥ ततस्तु

लेखयेत्तत्र दानच्छेदोपवर्णनम् ॥ १७ ॥ तल्लेख्यं सिद्धिमाप्नोति मुद्रितं राजमुद्रया ॥ मतान्तरे तु लेख्यस्य श्रावणाच्छ्रवणे तथा ॥ १८ ॥ नैव सिद्धिर्विनिर्दिष्टा भावनान्या न चेद्भवेत् ॥ स्वहस्तलिखितं पत्रं निह्नुके तु विभावयेत् ॥ १९ ॥ वर्णैश्च तत्कृतैश्चिह्नैः प्राप्यैरेव च युक्तिभिः ॥ यत्रर्णलेखको वापि साक्षी वापि मृतो भवेत् ॥ २० ॥ लिखितान्ते प्रविष्टे तु धनी लेख्यं तु पाटयेत् ॥ असमग्रे प्रविष्टे तु लेख्ये दूरगते तथा ॥ ॥ २१॥ धनिकस्य धनी दद्याल्लिखितं स्वमथापरम् ॥ दैवदोषनिविष्टं तु लेख्यं लेख्यं तु कारयेत् ॥ २२ ॥ अन्यमेवाधमर्णास्तु लेख्यं यत्स्मर्यते यदि ॥ समुद्रे तु यदा लेख्ये मृताः सर्वे तु तत्स्थिताः ॥ २३ ॥ लिखितं तत्प्रमाणं तु मृतेष्वपि हि साक्षिषु ॥ सोपध्यं यद्भवेल्लेख्यं दिव्याद्यैस्त त्प्रसाधयेत् ॥ २४ ॥ बलात्कारबलैर्लेख्यैः सत्यश्चेच्छ्रावणाद्भवेत् ॥ ज्ञापितेनाप्यसिद्धिः स्यात्सिद्धिस्तस्माद्यथा स्मृता ॥ पैतामहानां रिक्थानां प्रभुः पौत्रोऽपि गीयते ॥ २५ ॥ ये कूटकारा वसुधाधिपेन भृशं विनेयास्त्रिदशेप्सुना वै ॥ ते कण्टकाः सर्वजनस्य विप्रास्तेषां निषेद्धा नृपति र्भवेद्वै ॥ २६ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु लेख्यलक्षणवर्णनो नाम षड्विंशत्युत्तरत्रिशततमो ऽध्यायः ॥ ३२६ ॥ ॥ हंस उवाच ॥ ॥ एकादशविधः साक्षी शास्त्रदृष्टो मनीषिभिः ॥ कृतः पञ्चविधस्तत्र षड्विधोऽकृत उच्यते ॥ १ ॥ लिखितः स्मारितश्चैव यदृच्छाभिज्ञ एव च ॥ गूढश्चोत्तरसाक्षी च कृतः पञ्चविधः स्मृतः ॥ २ ॥ ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारिणाम् ॥ कार्येष्वभ्यन्तरो यः स्यादर्थिना प्रहितः सदा ॥ ३ ॥ कुलं कुलविवादेषु षड्विधस्त्वकृतः स्मृतः ॥ द्वयोर्विवदतोरर्थे द्वयोः सत्सु च साक्षिषु ॥४॥ पूर्वपक्षो भवेद्यस्य भवेयुस्तस्य साक्षिणः ॥ आधार्यः पूर्वपक्षस्य यस्मिन्नर्थवशाद्भवेत् ॥ ५ ॥ विवादे साक्षिणस्तत्र प्रष्टव्याः प्रतिवादिनः ॥ न परेण समुद्दिष्टमुपेयात्साक्षिणं प्रति ॥ ६ ॥ भेदयेत्तु न वान्योन्यं हीयत्येवं समाचरेत् ॥ साक्षिद्दिष्टो यदि प्रेयाद्गच्छेद्वापि दिगन्तरम् ॥ ७ ॥ तच्छ्रोभयोः प्रमाणं तु प्रमाणे ह्यन्तरा क्रिया ॥ अनिर्दिष्टस्तु साक्षित्वे स्वयमेवेत्य यो वदेत् ॥ ८ ॥ सूचीत्युक्तः स साक्षी तु न स साक्षित्वम र्हति ॥ न साक्षी नृपतिः कार्यो न कारुककुशीलवौ ॥ ९ ॥ न श्रोत्रियो न लिङ्गस्थो न सर्वेभ्यो विनिर्गतः ॥ न व्याधितो न वक्तव्यो न दस्युर्न विकर्मकृत् ॥ १० ॥ न वृद्धो न शिशुर्नैको नान्धो न विकलेन्द्रियः ॥ नार्तो न मत्तो नोन्मत्तो न क्षुत्तृष्णोपपीडितः ॥ ११ ॥ न श्रमार्तो न कामार्तो न क्रुद्धो नापि तस्करः ॥ नार्थसम्बन्धिनोराप्तो न हायनविचारिणः ॥ १२ ॥ न दृष्टदोषाः कर्तव्या न व्याध्यार्ता न दूषिताः ॥ स्त्रीणां साक्ष्यं स्त्रियः कुर्युर्द्विजानां सदृशा द्विजाः ॥ १३ ॥ शूद्राश्च साधुशूद्राणां मर्त्यानां मर्त्ययोनयः ॥ अनुभावी तु यः कश्चित्कु

यत्साक्ष्यं विवादिनाम् ॥ १४ ॥ अन्तर्वेश्मन्यरण्ये वा शरीरस्य तथात्यये ॥ स्त्रियोऽपि सम्भवे कार्या बालेन स्थविरेण वा ॥ १५ ॥
शिष्येण बन्धुना वापि दासेन भृतकेन वा ॥ बालवृद्धातुराणां तु साक्ष्ये तु वदतां मृषा ॥१६॥ जानीयादधिवाचश्रुतिसिक्तमनसां तथा ॥ गृहिणः
पुत्रिणो मौलाः शूद्रा विट्क्षत्रयोनयः ॥१७॥ अत्युक्ताः साक्ष्यमर्हन्ति नये कूटधनापदि ॥ आप्ताः सर्वेषु वर्णेषु कार्याः कार्येषु साक्षिणः ॥१८॥
बहुत्वे परिगृह्णीयात्साक्षित्वे वेतनाधिपम् ॥ समेषु त्वगुणोत्कृष्टं गुणित्वे वै द्विजोत्तमान् ॥१९॥ समक्षदर्शनात्साक्ष्यं श्रवणाच्चैव सिध्यति ॥ तत्र
सत्यं ब्रुवन्साक्षी धर्मार्थाभ्यां न हीयते ॥ २० ॥ साक्षी दृष्टश्रुतादन्यद्विब्रुवन्नरकं व्रजेत् ॥ पृष्टानि बद्धोऽपि वदेद्यथा दृष्टं यथाश्रुतम् ॥ २१ ॥ एको
लुब्धस्त्वसाक्षी स्याद्बहवोऽपि न वा क्वचित् ॥ स्वभावेनैव यद्ब्रूयुस्तद्ग्राह्यं व्यावहारिकम् ॥ २२॥ न जातु साक्षिणः प्राप्तानर्थिप्रत्यर्थिसन्निधौ ॥
प्राड्विवाको नियुंजीत विधिनानेन सान्त्वयन् ॥ २३ ॥ यत्तयोरनयोर्वेत्थ कार्येऽस्मिश्चेष्टितेऽपि वा ॥ तद्ब्रूत सर्वं सत्येन युष्माकं ह्यत्र
साक्षितम् ॥ २४ ॥ देवब्राह्मणसान्निध्ये साक्ष्यं पृच्छेत्ततो द्विजाः ॥ उदङ्मुखः प्राङ्मुखो वा पूर्वाह्णे वै शुचिः शुचीन् ॥ २५ ॥
ब्रूहीति ब्राह्मणं पृच्छेत्सत्यं ब्रूहीति पार्थिवम् ॥ गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥ २६ ॥ ब्रह्मणे च स्मृता लोका ये च स्त्रीबाल
घातिनः ॥ मित्रद्रुहः कृतघ्नस्य तत्ते स्युर्ब्रुवतां मृषा ॥ २७ ॥ जन्मप्रभृति यत्किञ्चित्किञ्चित्पुण्यं त्वया कृतम् ॥ तत्सर्वं तस्य जानीहि
यं पराजयसे मृषा ॥ २८ ॥ नग्नो मुण्डः कपाली च भिक्षार्थी क्षुत्पिपासितः ॥ अन्धः शत्रुगृहं गच्छेद्यत्साक्ष्यमनृतं वदेत् ॥ २९ ॥
एतांस्तु दोषान्वीक्ष्य त्वं सर्वाननृतभाषणात् ॥ यथाश्रुतं यथादृष्टं सर्वमेवाञ्जसा वद ॥ ३० ॥ सत्यं साक्ष्यं ब्रुवन्साक्षी लोकान्प्राप्नोत्य
नुत्तमान् ॥ इह वानुत्तमां कीर्तिं वाग्येषां ब्रह्मपूजिता ॥ ३१ ॥ मन्यन्ते वै पापकृतो न कश्चित्पश्यतीति नः ॥ तांश्च देवाः प्रपश्यन्ति
स्वस्यैवान्तरपूरुषः ॥ ३२ ॥ आदित्यचन्द्रावनलानिलौ च द्यौर्भूमिरापो हृदयं यमश्च ॥ अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति
नरस्य वृत्तम् ॥ ३३ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मा० वज्रसंवादे मुनीन्प्रति हंसगीतासु साक्षिनिर्णयो नाम सप्तविंशत्युत्तरत्रिशत
तमोऽध्यायः ॥३२७॥ हंस उवाच ॥ पौरुषो निर्णयः प्रोक्तो दिव्यं वक्ष्याम्यतः परम् ॥ असाक्षिकेषु त्वर्थेषु मिथो विवदमानयोः ॥ १ ॥
राजद्रोहाभिशापेषु साहसेषु तथैव च ॥ विवादे तत्त्वतः सत्यं शपथेनापि लम्भयेत् ॥ २ ॥ महर्षिभिश्च देवैश्च कार्यार्थं शपथाः कृताः ॥
वसिष्ठोऽदत्त शपथं समये जवने नृपे ॥ ३ ॥ न मृषा शपथं कुर्यात्स्वल्पेऽप्यर्थे नरो बुधः ॥ वृथा हि शपथं कुर्वन्प्रेत्य चेह च नश्यति ॥ ४ ॥

स्थावरेषु तु दिव्यानि वर्जनीयानि पार्थिवैः ॥ लिखितेन तथा श्रुत्या तेषां भवति साधनम् ॥ ५ ॥ कोशं-घटं विषं चाग्नि मुदकं तप्तमाषकम् ॥ फालं च तण्डुलं चैव दिव्यान्यष्टौ विदुर्बुधाः ॥ ६ ॥ कोशवर्जन्तु दिव्यानि सशिरस्कानि दापयेत् ॥ अशिरस्कः स्मृतः कोशः कालान्तरविभावनात् ॥ ७ ॥ अशिरस्कानि दिव्यानि राज्ञा कण्टकशोधनैः ॥ राज्ञा सर्वाणि देयानि स्वयं च परिमार्गिणा ॥ ॥ ८ ॥ लोभान्मोहाद्भयाद्वापि भिद्यन्ते साक्षिणः परैः ॥ अज्ञानाद्बालभावाच्च भेदे धर्मो व्यवस्थितः ॥ ९ ॥ सर्वद्रव्येषु कनकं मूल्यं तु परि कल्पयेत् ॥ माषकेण सुवर्णस्य......काल्यमसुखे द्विजम् ॥ १० ॥ सत्यं वदामीति शपेन्नान्यत्किञ्चन पार्थिव ॥ शस्त्रमादाय वक्तव्यं क्षत्रियेण तथैव च ॥ ११ ॥ धेनुं संस्पृशता सत्यं वाच्यं वैश्येन वै द्विजाः ॥ शूद्रः कुर्वीत शपथं तथा सर्वैस्तु पातकैः ॥ १२ ॥ कृष्णलेन सुवर्णस्य तिलवृद्ध्या तु शापयेत् ॥ शूद्रान्न शापयेद्राजा कदाचिदपि वै द्विजाः ॥१३॥ विप्रवर्जं तथा कोशं वर्णिनां दापयेन्नृपः ॥ सुवर्णमाषकादूर्ध्वमर्वागप्यम्भ्य एव च ॥ १४ ॥ विप्रवर्जं तु विप्रोऽपि वर्णिनां पूरसंयुतम् ॥ कोशस्थाने तु शपथं कारयेदविधारयन् ॥ १५ ॥ अतः परं तु दिव्यानां कुर्यादन्यतमं नरः ॥ यथा तथा महीपालः शृणुध्वं गदतो मम ॥ १६ ॥ न शीते तु घटं देयमुष्णकाले हुताशनम् ॥ वर्णिनां न तथा फालं तण्डुलं मुखरोगिणाम् ॥ १७ ॥ श्वासकासार्दितानां च ब्राह्मणानां च नो विषम् ॥ तप्तमाषकमर्हन्ति सर्वे वर्णा निरत्ययम् ॥ १८ ॥ न व्याधिमरकाक्रान्ते देशे कोशं तु पातयेत् ॥ मन्त्रैरस्वरदिव्यानि सञ्चयन्तीह मानवाः ॥१९॥ प्रतिमन्त्रविदः स्तम्भनानां विनाशने ॥ निगृह्णीत नरेन्द्रोपि निभृतां धनवत्सलाम् ॥ २० ॥ दिव्यानां स्तम्भकं ज्ञात्वा पापान्नित्यं महीपतिः ॥ विवासयेत्स्वकाद्राष्ट्रात्ते हि लोकस्य कण्टकाः ॥ २१ ॥ तेषामन्वेषणे यत्नं राजा नित्यं समाचरेत् ॥ ते हि पापसमाचारास्तस्करेभ्योपि तस्कराः ॥ २२ ॥ दृग्दृष्टिदोषास्त्वल्पेपि दिव्येषु विनियोजयेत् ॥ महत्स्वपि न चार्थेषु धर्मज्ञान्धर्मवत्सलान् ॥ २३ ॥ ज्ञात्वा धर्मिष्ठतां राजा पुरुषस्य विचक्षणः ॥ स्वल्पे वाप्यथ वास्वल्पे शपथे तान्नियोजयेत् ॥ २४ ॥ न मिथ्यावचनं येषां जन्मप्रभृति विद्यते ॥ श्रद्दध्यात्पार्थिवस्तेषां वचने धर्मदर्शिनाम् ॥२५॥ अत्यन्तोपहताः पापा नास्तिका भिन्नसेतवः ॥ दिव्यान्यर्हन्ति सर्वाणि स्वल्पदोषा अपि द्विजाः ॥ २६ ॥ आदौ भूमिं परीक्षेत घटस्यार्थे विचक्षणः ॥ इन्द्रस्थाने सभायां वा दिग्भागे पूर्वदक्षिणे ॥ २७ ॥ घटं निवेशयेत्तत्र सुसमायां तथा भुवि ॥ यज्ञियस्य तु वृक्षस्य कर्तव्यं मण्डपद्वयम् ॥ २८ ॥ मण्डपस्य प्रमाणं तु सप्तहस्तं प्रकीर्तितम् ॥ द्वौ हस्तौ निखनेत्काष्ठं दृश्यं स्याद्धस्तपञ्चकम् ॥ २९ ॥ अन्तरञ्च तयोः कार्यं

तथा हस्तचतुष्टयम् ॥ मण्डपोपरि काष्ठं च दृढं कुर्याद्विचक्षणः ॥ ३० ॥ चतुर्हस्तं तुलाकाष्ठं त्वव्रणं कारयेत्स्थिरम् ॥ खदिरार्जुनवृक्षाणां
शिंशिपासालजं तथा ॥ ३१ ॥ तुलाकाष्ठं तु कर्तव्यं तथा वै शिक्यकद्वयम् ॥ प्राङ्मुखो निश्चलः कार्यः शुचौ देशे घटस्तथा ॥ ३२ ॥ वणि
क्सुवर्णकारौ च कुलालः कांस्यकारकः ॥ तुलाधरे घटः कार्यो रिपौ मित्रे तथा समः ॥ ३३ ॥ श्रावयेत्प्राड्विवाकोपि तुलाधारं विचक्षणः ॥
ब्रह्मघ्नो ये स्मृता लोका ये च स्त्रीबालघातिनाम् ॥ ३४ ॥ तुलाधरस्य ते लोकास्तुलां धारयतो मृषा ॥ एकस्मिँस्तोलयेच्छिक्ये स्नातं सूपो
षितं नरम् ॥ ३५ ॥ द्वितीये मृत्तिकां शुभ्रां गौरीं तु तुलयेद्बुधः ॥ इष्टकाभस्मपाषाणकपालास्थीनि वर्जयेत् ॥ ३६ ॥ तुलयित्वा ततः पूर्वं
तस्मात्तमवतारयेत् ॥ मूर्ध्नि पत्रं ततस्तस्य न्यस्तपत्रं निवेशयेत् ॥ ३७ ॥ मन्त्रश्चायं पुरा प्रोक्तः स्वयमेव स्वयम्भुवा ॥ ब्रह्मणस्त्वं सुता देवि
तुलानाम्नीति कथ्यसे ॥ ३८ ॥ तुकारो गौरवो नित्यं लकारो लघुनि स्मृतः ॥ गुरुलाघवसंयोगात्तुला तेन निगद्यसे ॥ ३९ ॥ संशयान्मोचय
स्वैनं चाभिशस्तं नरं शुभे ॥ भूय आरोपयेत्तं तु नरं तस्यां सपत्रकम् ॥ ४० ॥ तुलितो यदि वर्धेत शुभो भवति धर्मतः ॥ हीयमाने न शुद्धः
स्यादिति धर्मविदो विदुः ॥ ४१ ॥ शिक्यच्छेदे तुलाभङ्गे पुनरारोपयेन्नरम् ॥ तथा निःसंशयं ज्ञानं भवतीति विनिश्चयः ॥ ४२ ॥ अग्नेर्विधिं
प्रवक्ष्यामि शृणुध्वं गदतो मम ॥ सप्तमण्डलकान्कुर्याद्देवब्राह्मणसन्निधौ ॥ ४३ ॥ प्रत्यक्षं कारयेद्दिव्यं राज्ञो वाधिकृतस्य वा ॥ ब्राह्मणानां
श्रुतवतां प्रकृतीनां तथैव च ॥ ४४ ॥ पश्चिमे मण्डले तिष्ठेत्प्राङ्मुखः प्राञ्जलिः शुचिः ॥ चरतुरस्रे यथा अस्मिन्कृत्वा चैव समौ करौ ॥ ४५ ॥
लक्षयेयुः क्षतादीनि हस्तयोस्तस्य कारिणः ॥ सप्ताश्वत्थस्य पत्राणि बध्नीयुः करयोस्ततः ॥ ४६ ॥ नवेन सितसूत्रेण कार्पासेन द्विजोत्तमाः ॥
ततस्तु सुसमं कृत्वा अङ्गुलं त्वेकमायसम् ॥४७॥ पिण्डं हुताशसन्तप्तं पञ्चाशत्पलिकं दृढम् ॥ आदौ पूजां हुताशस्य कारयेद्वसुधाधिपः ॥४८॥
रक्तचन्दनधूमाभ्यां रक्तपुष्पैस्तथैव च ॥ अभिशस्तस्य मन्त्रं च बध्नीयात्तस्य मूर्धनि ॥ ४९ ॥ मन्त्रेणानेन संयुक्तं ब्राह्मणाभिहितेन तु ॥
त्वमग्ने वेदाश्चत्वारस्त्वं च यज्ञेषु हूयसे॥५०॥त्वं मुखं सर्वदेवानां त्वं मुखं ब्रह्मवादिनाम्॥जठरस्थोपि भूतानां त्वं च वेत्सि शुभाशुभम्॥पापेषु दर्श
यात्मानमर्चिष्मान्भव पावक ॥ ५१ ॥ अथ वा शुद्धभावेषु शीतो भव महाबल ॥ ततोभिशस्तः शनकैर्मण्डलानि परिक्रमेत् ॥ ५२ ॥ परिक्रम्य
शनैर्जह्याल्लोहपिण्डं तथा क्षितौ ॥ विमुक्तहस्तं तं पश्चात्कारयेद्व्रीहिमर्दनम् ॥ ५३ ॥ निर्विकारौ करौ दृष्ट्वा शुद्धो भवति धर्मतः ॥ भयाद्वा
पातयेद्यस्तु दग्धो वा न विभाव्यते ॥५४॥ पुनस्तु चाहरेल्लोहं विधिरेष प्रकीर्तितः ॥ तोयस्याथ प्रवक्ष्यामि विधिं धर्म्यं सनातनम् ॥ ५५ ॥

शैवालनक्रमत्स्याद्यैर्वर्जिते स्थावरे जले ॥ धर्मस्थूणा तत्र कार्या पुरुषं धर्मवत्सलम् ॥ ५६ ॥ नाभिदघ्नोदकस्थस्य गृहीत्वोत्तंसमाविशेत् ॥ मध्य मेनाथ धनुषा मध्यस्थः पुरुषोऽपरः ॥ ५७॥ इषुमोक्षं तदा कुर्याद्देशे तृणविवर्जिते ॥ शरमोक्षे समे काले निमज्जेत्पुरुषोप्यसौ ॥ ५८ ॥ मूर्ध्नि विन्यस्तपत्रस्तु पेत्रे चैतान्निवेशयेत् ॥ आदिदेवोऽसि देवानां शौचस्याप्यायनं परम् ॥ ५९ ॥ पञ्चानां लोकपालानां त्वं वरिष्ठं जगत्पते ॥ त्रायस्वैनं नरं पापात्पश्यसि त्वं शुभाशुभम् ॥ ६० ॥ अन्तश्चरसि भूतानां सर्वेषां मोक्षवत्स्थितः ॥ इषुप्रक्षेपणस्थानाद्युवा च बलवान्नरः ॥ ॥ ६१ ॥ धावन्स परया शक्त्या शरं तत्समुपातयेत् ॥ आगते तु शरग्राहे तोयस्थश्चेन्न दृश्यते ॥ ६२ ॥ शुद्धो भवति धर्मेण यश्चाप्यङ्गं न दर्श येत् ॥ विषस्यातः प्रवक्ष्यामि विधिं धर्म्यं सनातनम् ॥६३॥ शृङ्गिणो वत्सनाभस्य हिमशैलोद्भवस्य च ॥ यवास्सप्त प्रदातव्या अथ वा यद्घृता प्लुताः ॥ ६४ ॥ मूर्ध्नि विन्यस्तपत्रस्य पत्रे चैतन्निवेशयेत् ॥ त्वं विष ब्रह्मणः पुत्रः सत्ये धर्मे व्यवस्थितः ॥ ६५ ॥ त्रायस्वैनं नरं पापात्सत्ये नास्य भवामृतम् ॥ येन वेगैर्विना जीर्णं छर्दिमूर्च्छाविवर्जितम् ॥ ६६ ॥ तं तु शुद्धं विजानीयादिति धर्मविदो विदुः ॥ तण्डुलानां प्रवक्ष्यामि विधिं धर्म्यं सनातनम् ॥ ६७ ॥ चौर्ये तु तण्डुला देया न चान्यत्र कथंचन ॥ तण्डुलानुदके सिक्त्वा रात्रौ तत्रैव स्थापयेत् ॥ ६८ ॥ तण्डुलान्कारयेच्छुद्धान्शालीनां पृथिवीपतिः ॥ मृन्मयं भाजनं कृत्वा सवितुः पुरतः स्थितः ॥ ६९ ॥ तण्डुलान्मन्त्रयेच्छुद्धान्मंत्रेणानेन धर्मतः ॥ दीयते सत्त्वधर्मज्ञैर्मानुषाणां विशोधनम् ॥ ७०॥ ततस्तण्डुल सत्येन धर्मतस्त्रातुमर्हसि ॥ प्रभाते कारयेदेव भक्षणाय न संशयः ॥७१॥ त्रिविधः प्राङ्मुखस्येह पत्रे निष्ठीवयेत्ततः ॥ पिप्पलस्याथ भूर्जस्य न त्वन्यस्य कथंचन ॥ ७२ ॥ शोणितं दृश्यते यस्य तमशुद्धं विनिर्दिशेत् ॥ अथातः संप्रवक्ष्यामि तप्तमाषकनिर्णयम् ॥ ७३ ॥ कारयेदायसं पात्रं ताम्रं वा षोडशाङ्गुलम् ॥ चतुरङ्गुलखातं तु मृन्मयं वापि कारयेत् ॥ ॥ ७४ ॥ पूरयेद्घृततैलाभ्यां पलैर्विंशतिभिस्ततः ॥ सुतप्ते निक्षिपेत्तत्र सुवर्णस्य तु माषकम् ॥ ७५ ॥ वह्नचक्रं विन्यसेन्मन्त्रमभिशस्तस्य मूर्धनि ॥ अङ्गुष्ठाङ्गुलियोगेन तप्तमाषं समुद्धरेत् ॥ ७६ ॥ शुद्धं ज्ञेयमदग्धं तु विस्फोटादिविवर्जितम् ॥ फालशुद्धिं प्रवक्ष्यामि शृणुध्वं द्विजपुङ्गवाः ॥ ७७ ॥ आयसं द्वादशपलं घटितं फालमुच्यते ॥ अष्टाङ्गुलं समं दीर्घं चतुरंगुलविस्तृतम् ॥ ७८ ॥ वह्नचक्रं विन्यसेत्पत्र मभिशस्तस्य मूर्धनि ॥ त्रिः परावर्तयेज्जिह्वां लिहतस्सार्धमङ्गुलम् ॥ ७९ ॥ गवां क्षीरं प्रदातव्यं जिह्वाशोधनमुत्तमम् ॥ जिह्वापरीक्षणं कुर्याद्दग्धां चेन्न विभाव्यते॥८०॥ तं विशुद्धं विजानीयाद्विशुद्धं चैव मोक्षयेत् ॥ कोषस्याथ प्रवक्ष्यामि विधिं धर्म्यं सनातनम् ॥ ८१॥ योयो

यां देवताभक्तः पाययेत्तस्य तृत्तरम् ॥ समभक्तं तु देवानामादित्यस्यैव कारयेत् ॥८२॥ उग्राणामपि देवानां वधस्यैव तु दापयेत ॥ सर्वेषामेव देवानां स्नापयेदायुधं स्वकम् ॥८३॥ स्नानोदकं वा सकलमाहरेत विचक्षणः ॥ उन्मुखं करणं कृत्वा पाययेत्प्रसृतित्रयम् ॥८४॥ इदं मया नैव कृतं कृतं वाप्यथ शायिना॥८५॥पीते तु कोशे पुरुषस्य दृष्टा देवोपघातं नृपसंभवं वा ॥ त्रिःसप्तरात्रांतरतो नृपेण भृशं विनेयः पुरुषः स विप्राः॥८६॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु दिव्यप्रमाणनिरूपणं नामाष्टाविंशत्युत्तरत्रिशततमोऽध्यायः ॥ ॥ ३२८ ॥ हंस उवाच ॥ एका द्वे च तथा तिस्रश्चतस्रश्च यथाक्रमम् ॥ शूद्रविट्क्षत्रविप्राणां भार्याः प्रोक्ता मनीषिभिः ॥ १ ॥ शूद्रैव भार्या शूद्रस्य सा च स्वा च विशः स्मृते ॥ ते च स्वा च तथा राज्ञस्ताश्च स्वा चाग्रजन्मनः ॥ २ ॥ न विवर्णा भवेद्भार्या कदाचिदपि कस्यचित् ॥ सवर्णैव भवेज्ज्येष्ठा असवर्णासु सत्स्वपि ॥ ३ ॥ अष्टौ विवाहा निर्दिष्टास्तेषां वक्ष्यामि लक्षणम् ॥ आहूय दानाद्ब्राह्मस्तु ऋत्विजेदैव उच्यते ॥ ॥ ४ ॥ गोयुगग्रहणादार्षः प्राजापत्योर्थिते तथा ॥ आसुरो द्रविणादानाद्गान्धर्वस्तु मताद्वयोः ॥ ५ ॥ राक्षसो युद्धहरणात्पैशाचः कन्यकाच्छलात् ॥ प्राजापत्यस्तथा दैवो ब्राह्मश्चापि शुभास्त्रयः ॥ ६ ॥ गान्धर्वो राक्षसश्चैव मध्यमौ परिकीर्तितौ ॥ आसुरश्चैव पैशाच आर्षश्चैव तथाधमः ॥ ॥ ७ ॥ न ते कार्याः प्रयत्नेन कदाचिदपि केनचित् ॥ आसुरस्य तथार्षस्य विशेषो नैव विद्यते ॥ ८ ॥ शुल्कमेव ततो ज्ञेयमल्पं वा यदि वा बहु॥ प्राणिविक्रयिणः सर्वे नरकं यान्ति मानवाः॥९॥ विशेषेण च यः पुत्रं विक्रीणाति स्वकं नरः ॥ नरके वसतिं तस्य बहूनब्दगणान्विदुः ॥ १०॥ मृते भर्तरि या कन्या केवलं हस्तदूषिता ॥ सा चेदक्षतयोनिः स्यात्पुनः संस्कारमर्हति ॥ ११॥ इत्येवं केचिदिच्छन्ति न तन्मम मतं द्विजाः ॥ सप्तमे हि पदे वृत्ते नान्यमर्हति सा पतिम्॥१२॥वाचा दत्ता तु या कन्या मन्त्रैश्चैव न संस्कृता॥ अन्यस्य सा भवेद्देया सति भर्तरि दोषिणी॥१३॥ नष्टे मृते प्रव्रजिते क्लीबेऽथ पतिते पतौ॥पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते॥१४॥ पिता पितामहो भ्राता सकुल्यो जननी तथा ॥ कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥ १५ ॥ यस्तु दोषमनाख्याय कन्यकां संप्रयच्छति ॥ स राज्ञा द्विशतं दत्त्वा बिभृयात्तां च कन्यकाम् ॥१६ ॥  अदुष्टामथ यो दुष्टां ब्रूयाद्दोषेण मानवः ॥ प्रथमं साहसं तस्य राजा दण्डं प्रकल्पयेत् ॥ १७ ॥ यस्तु दोषवतीं पत्नीं सम्यक्त्वेनानुवर्त्तते ॥ दण्डयित्वा स्वशक्त्या तं समे पथि निवेशयेत्॥१८॥भर्तारं लङ्घयेद्या तु स्त्री ज्ञातिबलदर्पिता॥तां श्वभिः खादयेद्राजा संस्थाने वध्यघातिनाम्॥१९॥ भार्याया व्यभिचारिण्या परित्यागो विधीयते ॥ २० ॥ हीनवर्णगमे चास्या वधमुक्तं मनीषिभिः ॥ भर्त्रनुज्ञां विना राजा स्त्रीणां च प्रभवेत्

क्वचित् ॥ २१ ॥ अशक्तभर्तृकां नारीं शासयेत्तदनुज्ञया ॥ योन्यस्मै कन्यकां दत्त्वा भूयोन्यस्मै प्रयच्छति ॥ २२ ॥ वित्तस्यांशं तुरीयं तु तं राजा दण्डयेन्नरम् ॥ भर्तृदोषे समुत्पन्ने न सा दण्डमवाप्नुयात् ॥ २३ ॥ यस्तु न व्रजते भार्यामृतुकाले नराधमः ॥ ऋतावृतौ भवेद्दंडयः स सुवर्णस्य माषकम् ॥ २४ ॥ आहूयमाना या भार्या भर्तारं न व्रजेदृतौ ॥ विवास्या सा भवेद्भर्त्रा दोषं व्याख्याप्य मातरम् ॥२५॥ यस्त्यजेच्च तथा भार्यामदुष्टां पुरुषाधमः ॥ स सुवर्णं भवेद्दंड्यो बिभृयात्तां तथा पुनः ॥ २६ ॥ विषमं परिणीतासु वर्तते यस्तु मानवः ॥ सवर्णासु भवेद्दण्ड्यः सुवर्णं स महीक्षिता ॥ २७ ॥ त्रीणि वर्षाण्युपासीत कुमार्यृतुमती सती ॥ उक्तकालात्परं कन्या विन्देत सदृशं पतिम् ॥ २८ ॥ अलङ्कारं नाददीत पित्र्यं कन्या स्वयं वरात् ॥ मातृकं भ्रातृदत्तं वा स्तेयं वा स्याद्धि तं हरेत् ॥ २९ ॥ कन्यान्तु चेदृतुमतीं पुरुषो न दद्याच्छ क्तोपि न द्विजवरश्च स दण्डनीयः॥स्वाम्यं न तां प्रति च तस्य भवेत्कदाचित्पुत्रीमृतौ न ददतो न पुनर्द्विजत्वम्॥३०॥इति श्रीविष्णुधर्मोत्तरे तृतीय खण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु विवाहधर्मनिरूपणो नामैकोनत्रिंशदुत्तरत्रिशततमोऽध्यायः ॥ ३२९ ॥ ॥ हंस उवाच ॥ ॥ औरसः पुत्रिकापुत्रः क्षेत्रजश्च तथा परः ॥ पौनर्भवश्च कानीनः सहोढश्च तथा सुतः ॥ १ ॥ गूढोत्पन्नो दत्तकश्च क्रीतश्चैव तथा परः ॥ अप विद्धस्तूपगतः शूद्रापुत्रस्तथैव च ॥ २ ॥ एते द्वादश वै पुत्रास्तेषां वक्ष्यामि लक्षणम् ॥ संस्कृतायां स्वयं जातः पुत्र औरस उच्यते ॥ ३ ॥ अस्यामुत्पद्यते पुत्रो यः स मे भविता सुतः ॥ एषा दत्तापि या पित्रा पुत्रिका सा निगद्यते ॥ ४ ॥ विना वचनदत्तापि भ्रातृहीना तु पुत्रिका ॥ तत्पुत्रः पुत्रिकापुत्रो द्वितीयः परिकीर्तितः ॥ ५ ॥ देवराद्वा सगोत्राद्वा ब्राह्मणाद्वा विचक्षणात् ॥ नियोगोत्पादितः पुत्रः क्षेत्रजः परिकीर्तितः ॥६॥ स्वैरिणी या पतिं हित्वा कामतोन्यं समाश्रयेत ॥ पौनर्भवस्तु तत्पुत्रः चतुर्थः परिकीर्तितः ॥ ७ ॥ असंस्कृतायामुत्पन्नः कानीनो भर्तुरेव सः ॥ गर्भिणी या संस्क्रियते सहोढस्तत्सुतो मतः ॥ ८ ॥ गृहे च गूढमुत्पन्नो गृहोत्पन्नः प्रकीर्तितः ॥ तस्यां सकाशात्क्रीतश्च क्रीतपुत्रो निगद्यते ॥ ताभ्यां चैवापविद्धस्तु त्वपविद्धस्तु स स्मृतः ॥९॥ विधृतो येन यस्यासौ पुत्रत्वेन निगद्यते ॥ स्वयं यश्चाभ्युपगतः पुत्रत्वे द्विजसत्तमाः॥१०॥ आदौ तु पुत्रिकापुत्रः पश्चाज्जातस्त्वथौरसः ॥ औरसेन समांशस्तु तत्र स्यात्पुत्रिकासुतः॥११॥जाते तु पुत्रिकापुत्रे क्षेत्रजोत्पादनं वृथा ॥ समाः समांशिनो ज्ञेया यादृशास्तादृशाः सुताः ॥१२॥ प्रतिलोमभवाः पुत्रा न तु रिक्थस्य भागिनः ॥ धनभागभरणं तेषां कर्मणा कर्तुमर्हति ॥ १३ ॥ तदपत्याः पितृवधे भागिनः परिकीर्तिताः ॥ पैतामहेन ते वित्ते स्वाम्यमर्हति केनचित् ॥ १४ ॥ जडान्धबधिरोन्मत्ता भर्तव्यास्तु निरंशकाः ॥

तेषाञ्चिरिक्थहराः पुत्रा धने पैतामहे सुताः॥१५॥पतितानां न भागोस्ति तत्सुतानां च धर्मतः ॥ कर्मणः प्राक्समुत्पन्नाः पतनीयस्य ये सुताः॥१६॥
तेषाञ्चिक्थं प्रदातव्यं न तु ते पतिताः स्मृताः॥ प्रायश्चित्ते तथा चीर्णे पतितो भागमर्हति॥१७॥तत्पुत्रोऽपि तथा विप्रा नात्र कार्या विचारणा ॥
पिता चेद्विभजेत्पुत्रान्स्वेच्छा तस्य स्वके धने ॥ १८ ॥ पैतामहे त्वस्वतन्त्रः पिता भवति धर्मतः ॥ पितामहार्जिते वित्ते पितुः पुत्रस्य
चोभयोः ॥ १९ ॥ स्वाम्यन्तु सदृशं ज्ञेयं पुत्रश्चेद्गुणवान्भवेत् ॥ पितुरूर्ध्वं विभजतां माताप्यंशं सुसंहरेत् ॥ २० ॥ सवर्णास्तु सुताः सर्वे तथा
ज्ञेयाः समांशिनः ॥ ज्येष्ठस्य किञ्चिदधिकं दातव्यं नात्र संशयः ॥ २१ ॥ ब्रह्मदेवासुतस्यापि तौहि मान्यतमौ समौ ॥पैशाचाऽऽसुरयोर्जातौ
यथा पौनर्भवस्तथा ॥ २२ ॥चतस्रस्तु यदा भार्या भवन्ति ब्राह्मणस्य तु ॥ तासां पुत्रेषु दायं यत्तद्वित्तं विभजेन्नृपः ॥ २३ ॥ चतुरों
शान्हरेद्विप्रस्त्रीनंशान्क्षत्रियासुतः ॥ वैश्यापुत्रो हरेद्द्व्यंशमंशं शूद्रासुतो हरेत् ॥ २४ ॥ ब्राह्मणौ यदि पुत्रौ द्वौ चैकः शूद्रासुतो भवेत् ॥
नवधा ब्राह्मणधनं विभज्यमिति निश्चयः ॥ २५ ॥ अष्टौ ब्राह्मणयोर्भागाः शूद्रस्य नवमो भवेत् ॥ द्वौ विज्ञेयौ सुतौ स्यातामेकश्च ब्राह्मणीसुतः
॥ २६ ॥ ब्राह्मणस्वं तथा षोढा विभज्यमिति निश्चयः ॥ द्वावंशौ शूद्रयोर्देयौ चतुरोंशा हि वै द्विजाः ॥ २७ ॥ अनेनैवानुसारेण सर्वं
त्रैवांशकल्पना ॥ असवर्णासु जातानां कर्तव्या पृथिवीक्षिता ॥ २८ ॥ षोढा तत्क्षत्रियधनं कर्तव्यमिति निश्चयः ॥ क्षत्रियायां ततः पुत्रा
वित्ततोंशत्रयं हरेत् ॥ २९ ॥ वैश्यापुत्रो हरेद्द्व्यंशमंशं शूद्रासुतो हरेत् ॥ वैश्यास्वं तु त्रिधा कार्यं शृणु तत्रापि कल्पना ॥ ३० ॥ वैश्यापुत्रो
हरेद्द्व्यंशमंशं शूद्रासुतो हरेत ॥ अपुत्रस्य तु दौहित्रो रिक्थमर्हति धर्मतः॥३१॥ दौहित्रस्याप्यभावे तु दुहितापि धनं हरेत्॥ तदभावे तदा भार्या
तदभावे सहोदरः ॥ तस्याप्यभावे जननी तदभावे पिता हरेत् ॥ भ्रातरस्तदभावे तु भ्रातृपुत्रस्ततो हरेत् ॥ ३२ ॥ सहोदरभ्रातृसुतो विद्यमाने
कथंचन ॥ नान्यभ्रातृभवो भ्राता प्राप्नुयादिति निश्चयः ॥ ३३ ॥ अन्यभ्रातृभवभ्रातुः पुत्रो यत्र व्यवस्थितः ॥ पितृव्यभ्रातृपुत्रस्तु नैव
तत्र धनं हरेत् ॥ ३४ ॥ अनन्तरं सपिण्डाद्यस्तस्यतस्य धनं हरेत् ॥ तदभावे सकुल्यस्य तदभावे गुरोर्भवेत् ॥ ३५ ॥ शिष्यस्य तदभावे
तु द्विजानां तदभावतः ॥ त्रैविद्याः समया दान्तास्तस्य वित्तस्य भागिनः ॥ ३६ ॥ ब्राह्मणस्वमनाहार्यं पार्थिवानां सदा भवेत् ॥
इतरेषान्तु वर्णानां सर्वाभावे हरेन्नृपः ॥३७॥ पुत्रौ तु विवदेयातां द्वाभ्यां जातौ स्त्रिया धने ॥ तयोर्यद्यस्य पित्र्यं स्यात्तत्संगृह्णीत नेतरः ॥३८॥
मातृकं यद्भवेद्वित्तं कुमारीणां तु तद्भवेत् ॥ तदभावे तु सोढानां सुतानां तदभावतः ॥ ३९ ॥ अध्यग्न्यध्यावनिकं दत्तं च प्रीति

कर्मणा ॥ भ्रातृमातृपितृप्राप्ते षड्विधं स्त्रीधनं स्मृतम् ॥ ४० ॥ ब्राह्मदैवार्षगान्धर्वप्राजापत्येषु यद्वयम् ॥ अप्रजायामतीतायां भर्तुरेव तदिष्य
ते ॥४१॥ यथान्येषु पितृगामि...धनानि...भवेत् ॥ पत्यौ जीवति यः स्त्रीभिरलङ्कारो धृतो भवेत्॥४२॥न तं भजेरन्दायादा भजमानाः पतन्ति
ते ॥ भ्रातॄणामेकजातानां यद्येकः पुत्रवान्भवेत् ॥ ४३ ॥ सर्वे ते तेन पुत्रेण पुत्रवन्त इति श्रुतिः ॥ सर्वासामेकपत्नीनामेका चेत्पुत्रिणी
भवेत् ॥ ४४ ॥ पुत्रवत्यस्तु तास्सर्वास्तेन पुत्रेण कीर्तिताः ॥ अनुपघ्नं पितृद्रव्यं श्रमेण यदुपार्जितम् ॥ ४५ ॥ स्वयमीहितलब्धं तं नाकामो
दातुमर्हति ॥ येषां ज्येष्ठः कनिष्ठो वा हीयेतांशप्रदानतः ॥ ४६ ॥ म्रियेतान्यतरो वाऽपि तस्य भागो न लुप्यते ॥ सोदर्या
विभजेरंस्तं समेत्य सहिताः समम् ॥ ४७ ॥ भ्रातरो ये च संसृष्टा भगिन्यश्च सजातयः ॥ विभक्ते तु धने जाताः पित्र्यमेव
धनं हरेत् ॥ ४८ ॥ विभक्तैर्वास्य दातव्यमंशमंशानुरूपतः ॥ स्वभागस्यानुसारेण दत्त्वा भागं यथाक्रमम् ॥ ४९ ॥ असंस्कृतास्तु
संस्कार्या विभक्तैः कन्यकास्तथा ॥ प्रविभागे कृते यत्र पश्चाच्छिष्येत वै धनम् ॥ ५० ॥ पूर्वोक्तेनानुसारेण विभागं तत्र कार
येत् ॥ वस्त्रं पत्रमलङ्कारं कृतान्नमुदकं स्त्रियः ॥ ५१ ॥ योगक्षेमप्रचारे च न विभज्यं च पुस्तकम् ॥ रिक्थग्राही ऋणं दद्यात्पिण्डं दद्यात्स एव
तु ॥ ५२ ॥ भर्तव्यान्बिभृयात्तस्य सर्वानिति मतिर्मम ॥ रिक्थग्राही न यः कुर्यात्प्रेतकर्म यथाविधि ॥५३ ॥ तस्करं तं स्वकाद्राष्ट्रात्क्षिप्रं राजा
विवासयेत् ॥ राजगामी भवेद्विप्रा यस्य वित्तं तु कर्हिचित् ॥ ५४ ॥ राजापि दापयेत्पिण्डं तस्य भृत्यैर्यथाविधि ॥ यस्यां नराणामिह वित्त
भागी ऋणस्य भागी स तथा निरुक्तः ॥ ऋणावशिष्टं पुरुषस्तु नित्यं मुक्त्वा द्विजेन्द्राः सुकृती सदा स्यात् ॥ ५५ ॥ इति श्रीविष्णुधर्मोत्तरे
तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु दायविभागवर्णनो नाम त्रिंशदुत्तरत्रिशततमोऽध्यायः ॥ ३३० ॥ ॥ हंस उवाच ॥
उत्तमर्णाय दातव्यमधमर्णेन याचितम् ॥ ब्राह्मणेन्द्रा धनं सर्वं निह्नवे तच्च भावितम् ॥ १ ॥ सर्वोपायैर्धनी वित्तमृणिकादाप्नुयात्स्वकम् ॥
न स राज्ञाभियोक्तव्यः स्वकं संसाधयन्धनम् ॥ २ ॥ अर्थनिह्नवमानं तु भावनाभिर्विभावितम् ॥ दापयेद्धनिकस्यार्थं राज्ञो दण्डं च तत्समम्
॥ ३॥ मिथ्याभियोगे द्विगुणमिति योगाद्धनं हरेत् ॥ भागं विंशतिमन्दद्यात्प्राप्तार्थो धनिको नृपे ॥ ४ ॥ यदि राजबलेनासौ तद्धि तस्मादवाप्नु
यात् ॥ द्विकं त्रिकं चतुष्कं च पञ्चकं च तथा शतम् ॥ ५ ॥ वर्णानुक्रमतो वृद्धिः प्रतिमासं प्रकीर्तिता ॥ स्वयं कृतां तथा वृद्धिं सर्वे सर्वासु
योनिषु ॥ ६॥ दातुमर्हति विप्रेन्द्रा इति मे निश्चिता मतिः ॥ न क्वचित्प्रीतिदत्तानां वृद्धिः संवत्सरं भवेत् ॥ ७ ॥ तेषामपि भवेद्वृद्धिर्गते संवत्सरे

तथा ॥ सा च वृद्धिर्यथोक्ता वै वर्णानामनुपूर्वशः ॥ ८॥ तथाविधा ग्रहीतव्या नान्यथेति हि निश्चयः ॥ आधिभुग्दीयते वृद्धिं नष्टमाधिं च दापयेत् ॥ ९ ॥ दैवराजकृतं दोषं विना ब्राह्मणसत्तमाः ॥ अन्त्यवृद्धौ प्रविष्टायां चार्तौ त्यागो विधीयते ॥ १० ॥ भोज्यस्याधेः परित्यागः प्रविष्टे तु धने भवेत् ॥ भोगस्य गणना कार्या न तत्र वचनादृते ॥ ११ ॥ धनिनोर्थं न हीयेत आधौ प्राणयुते मृते ॥ हेतुभूतस्तु मरणे न चेत्स्यादुत्तमर्णिकः ॥ १२ ॥ आधौ विवदमानानां भुक्ता जीवन्ति चापराः ॥ अन्यस्याधीकृतां भूमिं यश्चान्यस्य प्रयच्छति ॥ १३ ॥ स्वयमेव नरेन्द्रस्तं घातयेदविचारयन् ॥ द्रव्येष्वेवमथान्येषु दण्डः स्याद्द्विगुणं भवेत् ॥ १४ ॥ आधौ समुद्रे नष्टे तु मुद्रा यत्र न दृश्यते ॥ न तत्र हीयते वित्तं धनिकस्य कथञ्चन ॥ १५ ॥ अन्यथा तु तथा नष्टे धनिकस्यैव हीयते ॥ अन्त्या वृद्धिर्हिरण्यस्य द्विगुणा परिकीर्तिता ॥ १६ ॥ वस्त्रस्य त्रिगुणा प्रोक्ता धान्यस्य तु चतुर्गुणा ॥ रसस्याष्टगुणा वृद्धिः स्त्रीपशूनां च सन्ततिः ॥ १७ ॥ स्त्रीपशूनामृते वृद्धिः पशूनां चैव विद्यते ॥ उरभ्राणां भवेद्वृद्धिः सति पुंस्त्वे हि वै द्विजाः ॥ १८ ॥ ऊर्णावृद्धिर्भवेत्तेषां वर्षाणि द्वादशैव तु ॥ द्रव्याणामप्यनुक्तानां वृद्धिर्ज्ञेया चतुर्गुणा ॥ १९ ॥ दीयमानप्रयुक्तं तु पुरुषस्याप्रगृह्णतः ॥ ततः परं न वृद्धिः स्यात्कथंचिद्द्विजसत्तमाः ॥ २० ॥ स्वमर्थं यो न गृह्णाति दीयमानं पुनःपुनः ॥ तस्मात्स हीयते विप्रा दाता तत्रानृणो भवेत् ॥ २१ ॥ पिता प्रवसितो यस्य ब्राह्मणा द्विदशाः समाः ॥ऋणं तस्य सुतैर्देयं मृतस्य यदि वा पुनः ॥२२॥ पैतृकं तु ऋणं पुत्रः पौत्रो वा दातुमर्हति॥ न कामस्तच्चतुर्थं तु दातुमर्हति कर्हिचित्॥ ॥ २३ ॥ रिक्थग्राही तथा पुत्रः स्त्रीग्राही धनदासिकः ॥ पुत्रे स्थितेपि दातव्यमृणं वै धनहारिणाम् ॥ २४ ॥ रिक्थग्राही सुताभावे स्त्रीग्राही दातुमर्हति ॥ स्वयं दातुमशक्तो यः कर्तुमिच्छेत्पुनः क्रियाम् ॥ २५ ॥ स दत्त्वा निर्जितां वृद्धिं कारयेत्परिवर्त्तयेत् ॥ अदर्शयित्वा तत्रैव हिरण्यं परिवर्तयन् ॥ २६ ॥ यावती संभवेद्वृद्धिस्तावतीं दातुमर्हति॥ प्रातिभाव्ये वृथा दानं द्यूतमध्ययनं च यत् ॥ २७॥ दण्डशुल्कावशेषं तु न पुत्रो दातुमर्हति ॥ दर्शने प्रत्यये दाने प्रातिभाव्यं त्रिधा स्मृतम् ॥२८॥ आदौ तु वितथे दद्यादितरस्य सुतावपि ॥ दर्शने प्रतिभूर्यत्र मृतः प्रात्ययिकोऽपि वा ॥ २९ ॥ न तत्पुत्रा ऋणं दद्युर्दद्युर्दानाय ये स्थिताः ॥ प्रकाशं प्रतिभूर्यत्र दापितो धनिनां धनम् ॥ सोयं तस्य तु तद्द्रव्यमृणिको दातुमर्हति ॥ ३०॥वर्णत्रयं विप्रवरा ऋणार्थं क्षीणे विशुद्धाविह कर्म कार्यम् ॥ क्षीणोग्रजं सा तु यथोदयं तद्वाप्यौ न कर्माहरणे तदर्थम् ॥ ॥ ३१ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु ऋणदानवर्णनो नामैकत्रिंशदधिकत्रि

शततमोऽध्यायः ॥ ३३१ ॥ ॥ छ ॥ ॥ छ ॥ ॥ हंस उवाच ॥ ॥ शीलाढ्ये कुलजे शक्तः निक्षेपे निक्षिपेद्बुधः ॥ याच्य
मानं तथैवासौ तस्य तद्दातुमर्हति ॥ १ ॥ याचते यश्च निक्षिप्य निक्षिप्तं न प्रयच्छति ॥ तावुभौ चौरवच्छास्यौ धर्मज्ञेन
महीक्षिता ॥ २ ॥ निक्षेपोपनिधी चैव न देयौ प्रत्यन्तरे ॥ नश्येते वनिपातेतावनिपाते त्वनाशिना ॥ ३ ॥ यस्य हस्ते विनिक्षिप्तं तस्य हस्ते
तथा विना ॥ नष्टं तु यदि निक्षिप्तं नासौ दद्यात्कथञ्चन ॥४॥ निक्षेपभोगी दण्ड्यः स्याद्भोगमूल्यन्तु षड्गुणम् ॥ एष एव विधिर्दृष्टो याचिता
न्वाहितेषु च ॥ शिल्पिषूपनिधौ न्यासे प्रतिन्यासे तथैव च ॥ ५ ॥ प्रतिगृह्णाति यो गण्डं यश्च स प्रवनेनरः ॥ तस्याप्येष भवेद्धर्म्मः षडेते
निधनाः स्मृताः ॥ ६ ॥ निक्षेपरक्षा पुरुषेण कार्या यत्नेन विप्रप्रवरास्सदैव ॥ निक्षेपहर्त्ता नरकं प्रयाति कल्पावशेषं निहितस्तु सर्वैः ॥
॥ ७ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु निक्षेपरक्षावर्णनो नाम द्वात्रिंशदधिकत्रिशत
तमोऽध्यायः ॥ ३३२ ॥ हंस उवाच ॥ वणिक्प्रभृतयो यत्र कर्म संभूय कुर्वते ॥ तत्संभूय समुत्थानं शृणुध्वं गदतो मम ॥ १ ॥ फलहेतो
रुपायेन कर्म संभूय कुर्वताम् ॥ आधारभूतः प्रक्षेपः ततस्तिष्ठेयुरंशकाः ॥ २ ॥ समोऽतिरिक्तो हीनो वा यत्रांशो यस्य यादृशः ॥ क्षयव्ययौ
तथा वृद्धिस्तत्र तस्य तथाविधा ॥ ३ ॥ सर्वेषां च मतं कार्यं भाण्डपिण्डव्ययादिकम् ॥ समं सर्वस्य विभजँल्लोके तस्मान्महीयते ॥ ४ ॥
दैविके राजके वापि व्यसने समुपस्थिते ॥ तत्र तत्र स्वशक्त्या तु तस्यांशो दशमः स्मृतः ॥ ५ ॥ एकस्य चेत्स्याद्व्यसनं दायादस्तदवाप्नुयात् ॥
तस्याभावे च सर्वेषां तेषामेव हि तद्धनम् ॥६॥ ऋत्विजो व्यसनेष्वेवं मान्यस्त्वं कर्मनिस्तरः ॥ लभते दक्षिणाभागं स तस्मात्संप्रकल्पितम् ॥
॥ ७ ॥ ऋत्विग्याज्यौ च दुष्टौ तौ सन्त्यजेतां परस्परम् ॥ प्रथमं साहसं दंड्यौ न च तौ त्यागमर्हतः ॥ ८ ॥ अन्वाहितं याचितकं साधिः
साधारणं च यत् ॥ निक्षेपः पुत्रदारं च सर्वस्वं चान्वये सति ॥ ९ ॥ अदेयानि द्विजश्रेष्ठा यश्चान्यस्मै प्रतिश्रुतम् ॥ अदत्तं तु भवेत्क्रोधभयशो
कान्वितैर्नरैः ॥ १० ॥ बालवृद्धास्वतन्त्रैश्च मत्तोन्मत्तस्तथैव च ॥ अज्ञानाच्च तथा पात्रं स्पर्धया द्विजसत्तमाः ॥ ११ ॥ गृह्णात्ययश्च यो मो
हाद्यश्चादेयं प्रयच्छति ॥ तावुभौ चौरवच्छास्यौ धर्मज्ञेन महीक्षिता ॥ १२ ॥ दत्तं स्वयं नाथ परेण दत्तं दत्तं नरो यस्तु हरेत्परस्य ॥ ध्रुवं
स विप्रा नरकं प्रयाति दत्तं स्वयं वा न च यश्च दद्यात् ॥ १३ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति
हंसगीतासु संभूयसमुत्थानदेयादेयवर्णनो नाम त्रयस्त्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३३ ॥ हंस उवाच ॥ कृतकस्त्रिविधः प्रोक्तस्तस्य

वक्ष्यामि लक्षणम् ॥ एकत्र कालावधिको देशावधिरथापरः ॥ १ ॥ कर्मावधिस्तृतीयस्तु सर्वे कर्मकराः स्मृताः ॥ अदेशकाले कर्मादौ भृतकश्चेत्त्यजेद्भृतिम् ॥ २ ॥ भृतिश्चादीयते सर्वा स्वामिदोषो न चेद्भवेत् ॥ हारिते स्वामिदोषेण दाप्यश्च भृतिको भवेत् ॥ ३ ॥ राजा च दण्डनीयः स्यात्तथा पणशतं भवेत् ॥ गृहीतमूल्यं यः शिल्पी काले द्रव्यं न यच्छति ॥ ४ ॥ द्विगुणं दीयते मूलं द्रव्यं दाप्यं तथैव च ॥ तद्द्रव्यं च विना हानिं सकलां दातुमर्हति ॥ ५ ॥ भृत्यदोषं विना स्वामी भृत्यमर्धपथे त्यजेत् ॥ तुल्यं तु सकलं दद्याद्राज्ञः कनकमाषकम् ॥ ६ ॥ आर्तस्य भक्तं दातव्यं स्वस्थस्तत्कर्म पूरयेत् ॥ स्वस्थोऽपि चेन्न तत्कुर्याद्द्विगुणं भक्तमुत्सृजेत् ॥ ७ ॥ प्रमादान्नाशितं दाप्यं समं छिद्राहता शतम् ॥ प्रसह्य यद्धृतं चौरैर्न तद्दाप्यो भवेत्क्वचित् ॥ ८ ॥ तोयाग्निनाशे शक्त्या चेत्प्रवर्तेनव दापयेत् ॥ राज्ञा हृतं तथा द्रव्यं न स दाप्यः कथंचन ॥ ९ ॥ यत्र गुप्त्या भवेन्नित्यं तत्र चेद्व्यापको भवेत् ॥ तत्सर्वं दापयेद्द्रव्यं यत्किंचित्तत्र नश्यति ॥ १० ॥ शकटाद्यं तु गृह्णीयाद्भाटकेन तु यो नरः ॥ अददद्भाटकं दाप्यो व्यूढस्यापि च भाटकम् ॥ ११ ॥ भृतिं यः प्रतिपद्येत विनैव समयक्रियाम् ॥ देशकालौ च शक्तिं च भक्तिं चावेक्ष्य शक्तितः ॥ १२॥ भृतिस्तस्य प्रदातव्या दाप्यो राज्ञा बलादथ ॥ प्रव्रज्यावसितो राज्ञो दास आमरणान्तिकः ॥ १३ ॥ दुर्भिक्षविधृतो यस्तु मोक्षतः प्राणसंशयात् ॥ प्रतिशीर्षं प्रदानेन मुच्यते च ध्वजाहृतः ॥ १४ ॥ ग्रासमाच्छादनं देयं सर्वेषामेव सर्वदा ॥ तथैव राजा भृत्यानां भृतिं वर्षशतादपि ॥ १५ ॥ पुत्रपौत्रानुगश्चेत्स्याद्यद्यसौ तत्र कर्मकृत् ॥ अध्यापने यो भृतकस्तस्याप्येष विनिश्चयः ॥ १६ ॥ काले भृत्यैर्जयेत्किंचिद्यदि चित्तं स्वकर्मणा ॥ भक्तदस्यैव तत्सर्वमिति धर्मविदो विदुः ॥ १७ ॥ भार्या पुत्रश्च दासश्च त्रय एवाधना मताः ॥ यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम् ॥ १८ ॥ वर्णानामानुलोम्येन न दास्यं प्रतिलोमतः ॥ प्रातिलोम्येन चेद्दास्यं कारयेत्तं विनाशयेत् ॥ १९ ॥ शुल्कं गृहीत्वा पण्यस्त्री नेच्छती द्विगुणं वहेत् ॥ अप्रयच्छन्पुमाञ्शुल्कं दाप्यं त्वष्टगुणं भवेत् ॥ २० ॥ पशून्नयेदरण्यं तु पालको रजनीक्षये ॥ तृप्तान्पीतजलान्सर्वान्सायाह्ने तु समर्पयेत् ॥ २१ ॥ दिवा वक्तव्यता पाले रात्रौ स्वामिनि तद्गृहे ॥ पशूनां व्यसनं गोपो व्यायच्छेत्तत्र शक्तितः ॥ २२ ॥ अशक्तानपि पत्तौ तु स्वामिने तन्निवेदयेत् ॥ अध्यायच्छन्नविक्रोशं स्वामिने विनिवेदयेत् ॥ २३ ॥ वोढुमर्हति गोपस्तु विनयं चापि राजनि ॥ नष्टं विनष्टं कृमिभिः श्वहतं व्यसने मृतम् ॥ ॥ २४ ॥ हीनं पुरुषकारेण पालको विनिवेदयेत् ॥ अजाविके तु संरुद्धे वृकैः पाले त्वनायति ॥ २५ ॥ यां प्रसह्य वृको हन्यात्पाले तत्...

लिबषं भवेत् ॥ तासां चेद्दैवरुद्धानां चरन्तीनां मिथो वने॥२६॥यासुत्पत्य वृको हन्यान्न पालस्तत्र किल्बिषी॥ विद्विष्य तु हतं चौरैर्नपालो दातु
मर्हति ॥ २७ ॥ यदि देशे च काले च स्वामिनस्तस्य शंसति ॥ एतेन सर्वपालानां विवादः समुदाहृतः ॥ २८ ॥ साकं सशृङ्गं सखुरं च
चर्म प्रदर्शयित्वाथ पशोर्मृतस्य ॥ पालस्य शुद्धिः कथिता द्विजेन्द्रा अतोन्यथा तस्य न शुद्धिरुक्ता ॥ २९ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीय
खण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु स्वामिभृत्यनियमवर्णनो नाम चतुस्त्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३४ ॥ ॥ छ ॥
॥ हंस उवाच ॥ द्रव्यमस्वामिविक्रीतं प्राप्य स्वामी तदाप्नुयात् ॥ प्रकाशक्रयतः शुद्धिः क्रीतः स्तेयो रहः क्रमात् ॥ १ ॥
हीनमूल्यं बलात्क्रीतं ततस्तद्दोषभाग्भवेत् ॥ न गृहेतागमं क्रीताच्छुद्धिस्तस्य तदागमात् ॥ २ ॥ स्वामी तु प्राप्नुयाद्वित्तं
प्रकाशं रह एव वा ॥ विक्रीय पण्यं मूल्येन यः क्रीतं न नियच्छति ॥ ३ ॥ स्थावरस्य फलं दाप्यो जङ्गमस्य क्रियाफलम् ॥
अर्घं चेन्न प्रहीयेत सोदयं पण्यमावहेत् ॥ ४ ॥ स्थानिनामेष नियमो दिग्लाभश्च दिशागते ॥ उपहन्येत वा पण्यं दह्येतापह्रियेत
वा ॥ ५ ॥ विक्रेतुरेव सोऽनर्थो विक्रेता सम्प्रयच्छति ॥ दीयमानं न गृह्णाति क्रीतं पण्यं तु यः क्रयी ॥ ६ ॥ विक्रीणानं तदन्यत्र विक्रेता नाप
राध्नुयात् ॥ निर्दोषं दर्शयित्वा तु सदोषं यः प्रयच्छति ॥ ७ ॥ मूल्यं तद्द्विगुणं दाप्या विनेयश्च तथा भवेत् ॥ दत्तमूल्यस्य पण्यस्य विधि
रेष प्रकीर्तितः ॥ ८ ॥ अदत्तेन्यत्र समयान्न विक्रेतुरतिक्रमः ॥ क्रीत्वा मूल्येन यत्पण्यं दुष्क्रीतं मन्यते क्रयी ॥ ९ ॥ विक्रीतं प्रतिदेयं तु यथा
विप्रास्तथा शृणु ॥ त्र्यहादेव भवेद्देयं पञ्चाहाद्वाहमेव तु ॥ १० ॥ सप्ताहेन तथा रत्नं लोहस्तस्मिंस्तथाहनि ॥ द्विपदं चार्द्धमासेन बीजानि
दशभिर्दिनैः ॥ तृतीयेहनि वस्त्रं च शरं चैवापरेहनि ॥ ११ ॥ परिभुक्तं तु यद्वासः क्लिष्टरूपं महीसमम् ॥ सदोषमपि तत्क्रीतं विक्रेतुर्न भवेत्पुनः
॥ १२ ॥ द्रव्यं तु विक्रीतमपि स्वकं हि विनायको वा तदवाप्नुयाद्धै ॥ क्रेता न कुर्याद्यदि वञ्चनां वा विक्रेतुरेवेह पुनस्तदिष्टम् ॥ १३ ॥
इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु क्रयविक्रयनिर्णयो नाम पञ्चत्रिंशदधिकत्रिशततमोऽध्यायः ॥३३५॥
॥ हंस उवाच ॥ ॥पाषण्डनैगमश्रेणी पूर्वाव्रतगणादिषु ॥ संरक्षेत्समये राजा दुर्गे जनपदे तथा ॥ १ ॥ यो धर्मः कारयेच्चैषां चोपस्थान
विधिश्च यः ॥ यश्चैषां वृत्त्युपादानं चानुमन्येत तत्तथा ॥ २ ॥ प्रतिकूलं तु यद्राज्ञः प्रकृत्यवसतं च यत् ॥ बाधकं च यदर्थानां तत्तेभ्यो विनिव
र्तयेत् ॥ ३ ॥ मिथः संघातकरणं त्विह ते शस्त्रधारणम् ॥ परस्परोपघातं च तेषां राजा न मर्षयेत् ॥ ४॥ पृथग्गणांश्च यो भिन्द्यात्ते विनेया विशे

षतः ॥ आवहेयुर्भयं घोरं व्याधिं वा ते ह्युपेक्षिताः ॥ ५ ॥ दोषवत्करणं यत्स्यादनाम्नायं प्रकल्पितम् ॥ प्रवृत्तमपि तद्राजा श्रेयःकामो निवर्त येत् ॥ ६ ॥ गणमुद्दिश्य यत्किञ्चिन्मध्यश्चैव समुद्धरेत् ॥ आत्मार्थे वा नियुक्तं वा देयं तैरेव तद्भवेत् ॥ ७ ॥ यस्यापृथग्भूतकृतं द्विजेन्द्राः क्षितीशकृत्येन कृतं च यद्वा ॥ भृत्ये कृतं ज्ञेयमृणं भवेद्धि सभोक्तिभिस्तत्त्वविदो वदन्ति ॥ ८ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख० मार्कण्डेयवज्र संवादे मुनीन्प्रति हंसगीतासु श्रेणिविभागवर्णनो नाम षट्त्रिंशदधिकत्रिशततमोऽध्यायः ॥३३६॥ हंस उवाच ॥ सीमाविवादे सम्प्राप्ते सामन्ताः स्थविरा गणाः ॥ गोपा सीमाकृषाणाये यद्ब्रूयुस्तत्तथा भवेत् ॥१॥ रक्तस्रग्वसनाः सर्वे शिरसा क्षितिधारिणः ॥ सीमां नयेयुस्ते ज्येष्ठे प्रकाशेषु समेषु च ॥२॥ सीमावृक्षांश्च कुर्वीत शाल्मलाश्वत्थकिंशुकान् ॥ तुषांगारकपालास्थिशर्कराणि च यानि च ॥३॥ शीममध्ये तु जातानां वृक्षाणां क्षेत्रयोर्द्वयोः ॥ फलं पुष्पं च सामान्यं क्षेत्रस्वामिषु निर्दिशेत्॥४॥ अन्यक्षेत्रेषु जातानां शाखा यान्यत्र संस्थिता ॥ स्वामिनं तं विजानीयाद्यस्य क्षेत्रमुपस्थिता॥५॥गन्धरूपरसाभ्यान्तु प्रसृताप्रौढगाढका ॥ वाकारक्षप्रवाहस्था चिरस्थातिविशुद्धये॥६॥संचारापहता भूमिर्नदीवेगेन चिह्निता ॥ सम्रुक्ता स्वामिने देया पूर्वभुक्तिर्व्यवस्थिता ॥७॥ गृहीत्वा कर्षको भूमिं यदि कश्चन वापयेत् ॥ फलं क्षेत्रस्य दाप्योसौ क्षेत्रं चान्येन कारयेत् ॥ ॥ ८ ॥ विण्मूत्रोदकमाक्रम्य वह्निं चित्रे निवेशयेत ॥ अ...समुत्सृज्य परकुड्ये निवेशयेत् ॥९॥ भ्रमद्वारगवाक्षाढ्यं परपीडाकरं तु यत् ॥ निवे शसमयादूर्ध्वं न तत्कार्यं कदाचन ॥ १० ॥ परस्थाने तु निर्वासं गृहाद्यं यदि कारयेत् ॥ तद्व्ययं प्राप्नुयात्काले स्वामिना चेन्निवारितः ॥ ११ ॥ अजातेषु तु सस्येषु कार्या खलु धृतिर्भवेत् ॥ मासं दद्यात् महिषी तदावांगस्तथा भवेत् ॥ १२ ॥ अजाविकं तदर्धन्तु खरोष्ट्रं महिषीसमम् ॥ अश्वं च विप्रप्रवराः सस्यनाशं प्रदापयेत् ॥ १३ ॥ भक्षयित्वोपविष्टेषु द्विगुणं प्रोच्यते दमः ॥ पालश्च दण्डं दाप्यः स्यात्तदभावे पतिस्तथा ॥ सूतिकोत्सृष्टपशवः त्वदंड्या गर्भिणी च या ॥ १४ ॥ पथस्तथा ग्रामविनीतकान्ते न दोषमल्पे प्रवदन्ति कालेः यः कामकारेण करोति राज्ञे विवासनीयः स भवेद्द्विजेन्द्राः ॥ १५॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु सस्यहानिदण्डवर्णनो नाम सप्तत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३७ ॥ ॥ हंस उवाच ॥ धनं धर्मार्थकामानां मूलमाहुर्मनीषिणः ॥ नृणां बहिश्चरा प्राणा द्रविणं च प्रकीर्तितम् ॥१॥ तस्माद्धर्मविदा राज्ञा घातनीयास्तु तस्कराः ॥ ते हि घातनमर्हन्ति सर्वा बाधा विशेषतः ॥ २ ॥ राज्ञो धर्मं न पश्यामि तस्करस्य वधादृते ॥ स्नेहाद्वा धनलोभाद्वा राजा चेत्तस्करं त्यजेत् ॥ ३ ॥ ब्रह्मवध्याशतं तस्य प्राहुर्धर्मविदो जनाः ॥ न हन्याद्ब्राह्मणं राजा

सर्वपापेष्वशस्थितम् ॥ ४ ॥ स्तेनं विवासयेद्राष्ट्रात्समग्रधनमक्षतम् ॥ महापातकिनं विप्रं कृतचिह्नं विवासयेत् ॥ ५ ॥ ग्रामसीम्नि हृतं द्रव्यं
ग्राम्यो दाप्यस्तथा भवेत् ॥ यस्मिन्ग्रामे पदं गच्छेत्स च दाप्यस्तथा भवेत् ॥ ८ ॥ ग्रामे द्वौ दण्डनीयौ तु सीमामध्ये हृतं यदि ॥ अटव्यां तं
नियुक्तं तु नगरे नगराधिपः ॥ ७ ॥ महापातकिनः सर्वे घातनीया महीक्षिता ॥ कबन्धेनाङ्कयेद्विप्रं ललाटे ब्रह्मघातकम् ॥८ ॥ सुरापं तद्ध्वजेनाथ
कृतं चाश्वपदेन तु ॥ अगम्यगामिनं विप्रं भगाङ्केनाङ्कयेन्नृपः ॥९॥घातनीयास्तथा राज्ञा नरस्त्रीबालघातिनः ॥ अग्निदागरदाश्चैव भूम्यर्थे कूटसा
क्षिणः॥१०॥सेतुभेदकरा ये च राज्ञो व्यङ्कचराश्च ये॥ ते चाङ्गहीनाः कर्तव्या राज्ञा कूटाक्षदेवकाः॥११॥ करहीनस्तथा कार्यो यश्चेहोपधिदेविता॥
उत्क्रोशतां जनानां च ह्रियमाणे धने वधे ॥ १२ ॥ श्रोता यस्तु न वावर्तेद्राजा तानपि घातयेत् ॥ गजाश्वघातिनो वध्यास्तथा गोघातिनश्च ये
॥१३॥ परिशेषपशूनां तु घातिनां छेदयेत्करम् ॥ कार्षापणशतं दण्ड आरण्यपशुघातने ॥१४॥ पक्षिघाती तदर्धं तु इति धर्मविदो विदुः ॥ फलो
पगद्रुमच्छेदे दण्ड उत्तमसाहसम् ॥ १५ ॥ पुष्पप्रदस्य यश्छेदी मध्यमं दण्डमर्हति ॥ कार्षापणशतं दंड्या लतागुल्मादिभेदकाः ॥ १६ ॥
सवर्णगः पारजायी दंड्या उत्तमसाहसम् ॥ हीनवर्णागमे दण्ड्यास्तथा प्रथमसाहसम् ॥ १७ ॥ तथैवोत्तमवर्णाया गमने घातमर्हति ॥
हीनवर्णगमे नारी वधमर्हत्यसंशयम् ॥ १८ ॥ समवर्णागमे त्याज्या उत्कृष्टामथ गच्छति ॥ हृताधिकारां मलिनां तां तु संवासयेद्गृहे ॥ १९ ॥
येनयेन तथांगेन हीनवर्णो नरोधमः ॥ उत्कृष्टस्यापकुरुते तत्तदेवास्य घातयेत्॥२०॥श्वपाकपंडुचण्डालेष्वन्येषु वधवृत्तिषु ॥ हस्तिप्रव्राज्यदासेषु
गुरुदाराभिगेषु च॥२१॥ मर्यादातिक्रमे सद्यो घात एवानुशासनम् ॥ मला ह्येते मनुष्येषु धनमेषां सदात्मकम्॥२२॥तस्मात्तान्घातयेद्राजा नार्थद
ण्डेन दण्डयेत् ॥ शतं ब्राह्मणमाक्रम्य क्षत्रियो दण्डमर्हति ॥२३॥ विप्रः पंचशतं दण्ड्यः क्षत्रियस्याभिशंसने॥ वैश्यःस्यादर्धपञ्चाशच्छूद्रे द्वादशके
दमः ॥२४॥क्षत्रियस्य तु पंचाशद्दंडो वैश्येऽभिशंसने॥शूद्रः स्यादर्धपंचाशद्वैश्यः शूद्राभिशंसने॥२५॥कार्षापणं भवेद्दंड्यस्तथा वै पञ्चविंशतिः ॥
आक्रोशे स सवर्णानां द्वादशैव व्यतिक्रमः॥२६॥ वादेषु वचनीयेषु तदेव द्विगुणं भवेत् ॥ काणं वाप्यथ वा खंजं त्वन्यद्वापि तथाविधम् ॥२७ ॥
तथ्येनापि ब्रुवन्दाप्यो दण्डः कार्षापणं नरम् ॥ न किल्बिषेणापवदेच्छास्त्रतः कृतवासनम्॥२८॥ न राज्ञा धृतदण्डं तु दण्डता तद्व्यतिक्रमात् ॥
राजा च ब्राह्मणश्चैव लोके पूज्यतमौ मतौ ॥ २९ ॥ नामजातिग्रहं तेषां त्वभिद्रोहेण कुर्वतः ॥ निधेयोयोमयः शंकुर्ज्वलन्नास्ये दशाङ्गुलः ॥
॥ ३० ॥ धर्मोपदेशे धर्मेण द्विजानामस्य कुर्वति ॥ तप्तमासेचयेत्तैलं वक्त्रे श्रोत्रे च पार्थिवः ॥ ३१ ॥ सहासनमभिप्रेप्सुरुत्कृष्टस्यावकृष्टजः ॥

कट्यां कृतांको निर्वाप्यः कृतं चैवास्य कीर्तयेत ॥ ३२ ॥ अवनिष्ठीवतो दर्पाद्वावोष्ठौ च्छेदयेन्नृपः ॥ अवमूत्रयतः शिश्नमवशर्द्धयतो गुदम् ॥ ॥ ३३ ॥ तमुपाक्रम्य राजानं जिह्वाच्छेदनमर्हति ॥ राजा न प्रहरेद्यस्तु कृतागस्यपि दुर्मतिः ॥३४॥ तमग्नौ विपचेच्छूले ब्रह्महत्याशतातिगम् ॥ गुरुं वा बालवृद्धं वा ब्राह्मणं वा बहुश्रुतम् ॥ आततायिनमायांतं हन्यादेवाविचारयन् ॥ ३५ ॥ संक्षेपतो धर्मभृतां वरिष्ठा राज्ञो मयैते कथिता स्तु धर्माः ॥ अतः परं यत्र च संशयोस्ति तं मे वदध्वं तपसि प्रधानाः ॥ ३६ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु दण्डानुशासनवर्णनो नामाष्टात्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३८ ॥ ऋषय ऊचुः ॥ अतः परं द्विजश्रेष्ठ वदास्माक मतंद्रितः ॥ वने निवसतां धर्मं धर्ममाश्रमिणामपि ॥ १ ॥ हंस उवाच ॥ गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः ॥ अपत्यस्यैव चापत्यं तदा रण्यं समाश्रयेत् ॥ २ ॥ पुत्रेषु भार्यां निक्षिप्य तया वानुगतो वने ॥ अग्नीनुपचरन्नित्यं वन्यमाहारमाहरेत् ॥ ३ ॥ यथाहारो भवेत्तेन पूजयेत्पि तृदेवताः ॥ तेनैव पूजयेद्विद्वानतिथिं समुपागतम् ॥ ४ ॥ ग्रामादाहृत्य वाश्नीयाद्ग्रासानष्टौ समाहितः ॥ स्वाध्यायं च तथा कुर्याज्जटाश्च बिभृयात्तथा ॥ ५ ॥ तपसा शोषयेन्नित्यं तथा चैव कलेवरम् ॥ आर्द्रवासास्तु हेमंते ग्रीष्मे पञ्चतपास्तथा ॥ ६ ॥ प्रावृष्याकाशशायी च नक्ताशी च तथा भवेत् ॥ चतुर्थकालिको वास्यात्षष्ठकालिक एव वा ॥ ७ ॥ कृच्छ्रैर्वापि नयेत्कालं ब्रह्मचर्यं च पालयेत् ॥ एवं नीत्वा वने कालं द्विजो ब्रह्माश्रमी भवेत्॥८॥ वने विमुच्याथ शरीरधातून्प्राप्नोति लोकान्प्रपितामहस्य ॥ पुनात्यतीतान्पुरुषांश्च सप्त भविष्यतो यानथ सप्त विप्राः॥९ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मा०वज्रसंवादे मुनीन्प्रति हंसगीतासु वानप्रस्थधर्मवर्णनो नामैकोनचत्वारिंशदधिकत्रिशततमोऽध्यायः॥ ३३९॥ ॥ हंस उवाच ॥ चतुर्थमायुषो भागमन्त्यं यत्याश्रमे वसेत् ॥ कृत्वेष्टिं विधिवत्पश्चात्सर्ववेदी सदक्षिणाम् ॥ १ ॥ आत्मन्यग्नीन्समारोप्य द्विजो ब्रह्माश्रमी भवेत् ॥ ग्रामैकरात्रिकः स स्यान्नगरे पाञ्चरात्रिकः ॥ २ ॥ विधूमे न्यस्तमुसले व्यङ्गारे भुक्तवज्जने ॥ अतीते पात्रसञ्चारे भिक्षां नित्यं यतिश्चरेत ॥ ३ ॥ सप्तागारं चरेद्भैक्ष्यं भिक्षुकान्नानुभिक्षयेत् ॥ न व्यथेत तथाऽलाभे यथालाभेन वर्तयन् ॥ ४ ॥ नास्वादेत रसान्भिक्षुर्ना श्रीयात्कस्यचिद्गृहे ॥ मृन्मयालाबुपात्राणि दारुवैदलकानि च ॥ तेषां सम्मार्जनाच्छुद्धिरद्भिश्चैव प्रकीर्तयेत् ॥ ५ ॥ कौपीनाच्छादनं वासो रथ्याविद्धमपाहरेत् ॥ ६ ॥ शून्यागारनिकेतः स्याद्यत्र सायं गृही मुनिः ॥ कर्मदण्डं मनोदण्डं वाग्दण्डं च तथा न्यसेत् ॥७ ॥ दृष्टिपूतं न्यसे त्पादं वस्त्रपूतं पिबेज्जलम् ॥ सत्यपूतां वदेद्वाचं मनःपूतं समाचरेत ॥ ८ ॥ चन्दनेनोक्षितो बाहुं वास्यैकमपि तक्षतः ॥ कल्याणं चाप्यकल्याणं

तयोरपि न चिन्तयेत्॥९॥प्राणायामैर्दहेद्दोषान्धारणाभिस्तु किल्बिषम् ॥ प्रत्याहारेण संसर्गान्ध्यानेनानीश्वरान्गुणान्॥१०॥ निराशीर्निर्नमस्कारः समलोष्टाश्मकाञ्चनः ॥ सर्वभूतसमो मैत्रः परमं पदमश्नुते ॥ ११ ॥ जन्मना यस्तु निर्विण्णः मरणेन तथैव च ॥ आधिभिर्व्याधिभिश्चैव तं देवा ब्राह्मणं विदुः ॥ अशुचित्वं शरीरस्य प्रियाप्रियविपर्ययः ॥ १२ ॥ गर्भवासे च वसतिं पश्यन्मुच्यति नान्यथा ॥ जन्ममृत्योश्च नानन्दं नत्व सारमनर्थकम् ॥ १३ ॥ भोक्तव्यमिति निर्विण्णः प्रत्यहमुच्यते वचः ॥ एवं वैराग्यमास्थाय नित्यं ध्यानपरायणः ॥१४॥ चतुर्विंशतिकं लंघ्य प्रपश्येत्पञ्चविंशकम् ॥ पृथिव्यापस्तथा तेजो वायुराकाशमेव च ॥१५ ॥ पञ्चेमानि विजानीयान्महाभूतानि सर्वतः ॥ श्रोत्रं चक्षु स्पर्शनं च रसनं घ्राणमेव च ॥ १६ ॥ बुद्धीन्द्रियाणि जानीयात्पञ्चैवास्मिञ्छरीरके ॥ शब्दो रूपं तथा स्पर्शो रसो गन्धस्तथैव च ॥ १७ ॥ कर्मेन्द्रियाणि पञ्चैव नित्यमस्मिञ्छशरीरके ॥ मनोबुद्धी तथैवात्मा ह्यव्यक्तं च तथा द्विजाः ॥ १८ ॥ इन्द्रियेभ्यः पराणीह चत्वारि कथितानि तु ॥ चतुर्विंशत्यथैतानि पुरुषः पञ्चविंशकः ॥ १९ ॥ यं ज्ञात्वा प्रतिमुच्यंते ये नराः शान्तबुद्धयः ॥ गन्धो रसस्तथा वायुः स्पर्शः शब्दस्तथा द्विजाः ॥ २० ॥ एते पञ्चगुणा भूमेः स्थूला भूमेषु लक्ष्यते ॥ रसो रूपस्तथा स्पर्शः शब्दाश्चाम्बुगुणा मताः ॥ २१ ॥ रूपं स्पर्श स्तथा शब्दः तेजसस्तु गुणाः स्मृताः ॥ स्पर्शः शब्दस्तथा वायोः शब्दश्च नभसस्तथा ॥२२॥ आकाशाज्जायते शब्दो वायोः स्पर्शगुणस्तथा ॥ रूपं तु तेजसः प्रोक्तो रसश्चाम्बुगुणो मतः॥२३॥पार्थिवं गन्धमित्याहुरिन्द्रियार्थाः प्रकीर्तिताः ॥ इन्द्रियेभ्यः परा अर्था अर्थेभ्यस्तु परं मनः ॥२४॥ मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥ महतः परमव्यक्तं त्वव्यक्तात्पुरुषः परः॥२५॥पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः ॥ एतत्परतरं गुह्यमेतदक्षरमुत्तमम्॥२६॥ ॐकारवाचकं ह्येतद्गुणातीतं सनातनम् ॥ अशब्दमरसस्पर्शमरूपं गन्धवर्जितम् ॥२७॥निर्दुःखमसुखं दुःखं तद्विष्णोः परमं पदम् ॥ वालाग्रशतशो भागः कल्पितस्तु सहस्रधा॥२८॥तस्यापि शतशो भागो जीव इत्यभिधीयते ॥ हृद्यर्कचन्द्रमाः सूर्यः सोममध्ये हुताशनः॥२९॥ तस्य मध्ये स्थितं सत्त्वं सत्त्वमध्ये स्थितोच्युतः ॥ स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम् ॥ ३० ॥ ध्याननिर्मथनाभ्यासाद्विष्णुं पश्येद्धृदि स्थितम् ॥ एष देवस्तु मर्त्यानां वर्णैरेव विधीयते ॥ ३१ ॥ अज्ञानपटसंवीतैरिन्द्रियैर्विषयेप्सुभिः ॥ एष वै पुरुषो विष्णुर्व्यक्ताव्यक्तः सनातनः ॥ ॥ ३२ ॥ एष धाता विधाता च प्रमाणो निष्कलः शिवः ॥ द्वे ब्रह्मणी वेदितव्ये शाब्दब्रह्म परं च यत् ॥३३॥ शाब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥ सूक्ष्मं नित्यमुपासीत शुभं च सततं द्विजाः ॥ ३४ ॥ सूक्ष्मस्योपासनाच्छ्रेष्ठां याति तेजोमयीं गतिम् ॥ तत्त्वं वहति वै बुद्धिं बुद्धिस्तु

परमाङ्गतिम् ॥ ३५ ॥ गतिर्वहति चंद्रार्कौ तपसा परमेष्ठिनः ॥ तयोर्वहति वै सत्त्वं सत्त्वं च वहति प्रभुम् ॥ ३६ ॥ प्रभुर्वहति सौक्ष्म्यं तु परमात्मानमात्मनः ॥ तयोर्वृत्तिरजः सत्त्वं सत्त्वस्य परमा गतिः ॥ ३७ ॥ सत्त्वं वहति सूक्ष्मत्वात्परं नारायणं प्रभुम् ॥ परमात्मानमासाद्य हरिं वैकुण्ठमीश्वरम् ॥ ३८ ॥ अमृतत्वाय कल्पेत ततो नैव निवर्त्तते ॥ दशार्धयुक्तेन रथेन युक्तो मनोनुगेनार्यपथानुवर्तिना ॥ तच्चेद्रथं नापवहंति वाजिनस्तथागतं नावजयेति शक्रः ॥ ३९ ॥ अणोरणीयान् महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः ॥ तेजोमयं पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः ॥ ४० ॥ वेदाहमेतं पुरुषं महान्तं चादित्यवर्णं तमसः परस्तात् ॥ यं वै विदित्वा न बिभेति मृत्योर्नान्यः पन्था विद्यतेऽयनाय ॥ ४१ ॥ एको ह्यात्मा महिमा ब्राह्मणस्य स्वकर्मणा वै जायतेऽसौ कनीयान् ॥ यस्मात्परं नापरमस्ति किञ्चित्सौक्ष्म्यान्महत्त्वाच्च ततश्च नान्यः ॥ ४२ ॥ वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥ सुस्वादुपर्णः सुच्छायो दृश्यते स वृक्षः परिषस्वजाते॥ तयोरन्यत्पिप्पलं नाम स्वाद्वन्यदश्नन्यो अभिचाकशीति ॥ ४३ ॥ अकामधीरमृतः स्वयंभू रसेन तृप्तो न च कश्चिद्दुमाणाम् ॥ परेण नाकं नापतिर्न गृहाय विभ्राजते तं नियता विशन्ति ॥ ४४ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनीन्प्रति हंसगीतासु यतिधर्मवर्णनो नाम चत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४० ॥ ॥ ऋषय ऊचः ॥ ॥ वर्णानामाश्रमाणां च प्रोक्ता धर्मास्त्वयानघ ॥ रहस्यभूता ये धर्मा ये च स्वल्पा महाफलाः ॥ १ ॥ येभ्यश्चाभ्यधिकं नास्ति सर्वेषां तु समाश्रये ॥ तान्धर्मान्कथयस्वाद्य सर्वेषां विनतिर्द्विज ॥ २ ॥ ॥ ॥ हंस उवाच ॥ ॥ आश्रित्य देवदेवेशं जगद्योनिं जगद्गुरुम् ॥ विष्णुं जिष्णुं हरिं कृष्णं कृता धर्मा महाफलाः ॥ ३ ॥ पतनात्त्रायते यस्मात्तस्मात्पात्रेति कीर्त्यते ॥ पततां त्राणदस्त्वेकः स देवो मधुसूदनः ॥ ४ ॥ स्मरणात्कीर्तनाद् ध्यानान्नमस्कारात्प्रदक्षिणात् ॥ तथाभिस्तुवनाद्यस्य मुच्यते सर्वकिल्बिषैः ॥ ५ ॥ कृत्वा देवगृहं तस्य देवस्य परमेष्ठिनः ॥ राजसूयाश्वमेधानां फलेन स तु युज्यते ॥ ६ ॥ सुरवेश्मानि यावन्ति द्विजेन्द्राः परमाणवः ॥ तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥७॥ प्रासादे मृन्मये पुण्यं मयैतत्कथितं द्विजाः ॥ तस्माद्दशगुणं पुण्यं कृतं दण्डमये भवेत् ॥ ८ ॥ ततो दशगुणं पुण्यं तथा शैलकृते भवेत् ॥ ततो दशगुणं लोहे ताम्रे शतगुणं ततः ॥ ९॥ सहस्रगुणितं रौप्ये तस्मात्फलमुपाश्नुते ॥ ततः शतसहस्रं च सौवर्णे द्विजसत्तमाः ॥ १० ॥ अनन्तफलमाप्नोति रत्नचित्रे मनोहरे ॥ प्रतिमां कारयित्वा तु देवदेवस्य चक्रिणः ॥ न दुर्गतिमवाप्नोति विष्णुलोकं च गच्छति ॥ ११ ॥ देवस्य प्रतिमायां तु यावंतः परमाणवः ॥

॥४९६॥

तावद्वर्षसहस्राणि विष्णुलोके महीयते ॥ १२ ॥ प्रासादवत्तथा तस्य फलसंपदुदाहृता ॥ १३ ॥ उत्तरोत्तरतो दिव्यैर्विना
पक्वेष्टिकी द्विजाः ॥ यथोक्तविधिना देवं प्रतिष्ठाप्य जनार्दनम् ॥ १४ ॥ अक्षयं लोकमाप्नोति विष्णोरमिततेजसः ॥ इज्याविधिपुर
स्कारकृते तत्र तथा भुवम् ॥ १५ ॥ तस्यैवानुचरेल्लोकस्तस्यैवाप्नोति चाक्षयम् ॥ करोति देवप्रासादं यावद्वारं सुधासितम् ॥ १६ ॥ जन्मा
न्तराणि तावन्ति यशस्वी भुवि जायते ॥ चित्रं लक्षणसंयुक्तं कारयित्वा हरेर्गृहम् ॥ १७ ॥ गन्धर्वलोकमाप्नोति बहून्यब्दगणानि तु ॥
दत्त्वा च गीतं धर्मज्ञा गन्धर्वैः सह मोदते ॥ १८ ॥ स्वयं गीतेन संपूज्य तस्य चानुचरो भवेत् ॥ वाद्यं दत्त्वा तथा विप्रा शक्रलोकमवाप्नुवात् ॥
॥ १९ ॥ स्वयं वाद्येन संपूज्य तस्यैवानुचरो भवेत् ॥ वाद्यानामपि देवस्य तन्त्रीवाद्यं सदा प्रियम् ॥ २० ॥ तेन संपूज्य वरदं गाणपत्यमवा
प्नुयात् ॥ नृत्यं दत्त्वा तथाप्नोति रुद्रलोकमसंशयम् ॥ २१ ॥ स्वयं नृत्येन संपूज्य तस्यैवानुचरो भवेत् ॥ प्रेक्षणीयप्रदानेन शक्रलोकमवाप्नुयात्
॥ २२ ॥ अभ्यर्चनां कारयित्वा ब्रह्मलोकं प्रपद्यते ॥ तोयेनाभ्युक्षणं कृत्वा देवदेवाजिरे नरः ॥ २३ ॥ सर्वपापविनिर्मुक्तो वारुणं लोक
मश्नुते ॥ यस्तु सम्मार्जनं कुर्याद्देवदेवाजिरे नरः ॥ २४ ॥ सपापजं मलं देहादपामार्जति सत्वरः ॥ करोति परमाणूनां यावतामपमार्जनम् ॥
॥ २५ ॥ तावद्वर्षाणि नाकस्थस्त्रिदशैः सह मोदते ॥ कृत्वोपलेपनं विष्णोर्गोमयेनालये नरः ॥ २६ ॥ गवां लोकमवाप्नोति यत्रयत्राभिजा
यते ॥ कृत्वा च विविधैर्गन्धैर्गन्धर्वैः सह मोदते ॥ २७ ॥ बहून्यब्दसहस्राणि भूमिशोभां हरेर्गृहे ॥ गन्धोदकेन यः कुर्याद्विष्णोरभ्युक्षणं
गृहे ॥ २८ ॥ दशवर्षसहस्राणि गन्धर्वैः सह मोदते ॥ दत्त्वोपकारं कुसुमैर्गन्धर्वत्वमवाप्नुयात् ॥ २९ ॥ पुष्पतुल्यानि वर्षाणि दिव्याभरणरूप
वान् ॥ कृत्वा शीर्णस्य संस्कारं तथा देवेशवेश्मनि॥३०॥ द्विगुणं फलमाप्नोति नात्र कार्या विचारणा ॥ सायं प्रातस्तथा कृत्वा वासुदेवस्य कीर्त
नम्॥३१॥सर्वपापविनिर्मुक्तः स्वर्गलोके महीयते ॥ शयनादुत्थितो यस्तु कीर्त्तयेन्मधुसूदनम्॥३२॥कीर्तनात्तस्य पापानि नाशमायान्त्यशेषतः ॥
अहोरात्रस्य शान्तिश्च तथा तेन कृता भवेत् ॥ ३३ ॥ प्रभवश्चाप्यनर्थानां नास्य स्यात्तदहर्निशम् ॥ कीर्तनाद्देवदेवस्य विष्णोरमिततेजसः ॥
॥ ३४ ॥ यक्षराक्षसवेतालभूतप्रेतविनायकाः ॥ डाकिन्यो विद्रवन्ति स्म ये तथा ये च हिंसकाः ॥ ३५ ॥ सर्वानर्थहरं तस्य नामसङ्कीर्त्तनं
स्मृतम् ॥ देवदेवस्य नामानि बहूनीह विदुर्बुधाः ॥ ३६ ॥ तेषामनर्थशमनं यदेवेष्टं महात्मनः ॥ एकं नाम जपेद्यस्तु देवदेवस्य चक्रिणः ॥ ३७ ॥
स च पापविनिर्मुक्तः स्वर्गलोके महीयते ॥ हृदि कृत्वा तथा काममभीष्टं द्विजपुङ्गवाः ॥ ३८ ॥ एकं नाम जपेद्यस्तु स तान्कामानवाप्नुयात् ॥

नामसंकीर्त्तनं कृत्वा क्षुतप्रस्खलनादिषु ॥ ३९ ॥ वियोगं शीघ्रमाप्नोति सर्वानर्थैरसंशयम् ॥ कृत्वा नामसहस्रेण स्तुतिं तस्य महात्मनः ॥ ४० ॥ वियोगमाप्नोति नरः सर्वानर्थैरसंशयम् ॥ साम्ना ऋग्भिर्यजुर्भिश्च तथैवाथर्वणेन तु ॥ ४१ ॥ कृत्वाभिष्टवनं तस्य दिव्यैरार्षैस्तथा स्तवैः ॥ सर्वानर्थविनिर्मुक्तः कामानाप्नोति शाश्वतान् ॥ ४२ ॥ अभ्रष्टलक्षणैः कृत्वा स्वयं स्वरचिताक्षरैः ॥ स्तवं ब्राह्मणशार्दूलास्तस्मात्कामानवाप्नुयात् ॥ ४३ ॥ न वित्तदाननिचयैर्बहुभिर्मधुसूदनः ॥ तथा तोषमुपायाति यथा स्तोत्रैर्द्विजोत्तमाः ॥ ४४ ॥ स्तुतिः पवित्रा मङ्गल्या सर्वपापप्रणाशिनी ॥ सर्वानर्थप्रशमनी देवदेवस्य कीर्तिता ॥ ४५ ॥ तत्कथाश्रवणं कृत्वा सर्वानर्थैर्विमुच्यते ॥ तत्स्तोत्रश्रवणात्पापं जहाति सकलं तथा ॥ ४६ ॥ यत्र विष्णुकथा दिव्याः श्रुतयश्च सुसंहिताः ॥ तच्छ्रोतव्यं मनुष्येण परमं पदमिच्छता ॥ ४७ ॥ विष्णोरायतने दत्त्वा तत्कथापुस्तकं नरः ॥ ब्रह्मलोकमवाप्नोति बहवो वत्सरान्द्विजाः ॥ ४८ ॥ पुस्तकाँश्च तथैवान्यान्यः प्रदद्यान्नरस्त्विह ॥ सारस्वतमवाप्नोति लोकं कालं तथा बहु ॥ ४९ ॥ तत्कथां श्रावयेद्यस्तु तद्भक्तान्मानवोत्तमः ॥ गोदानफलमाप्नोति स नरस्तेन कर्मणा॥५०॥ श्रावके तु कृतं पुण्यं स फलांशेन युज्यते॥ सुकृतं वाचकं कृत्वा देवागारे तथा नरः ॥ ५१ ॥ विद्यादानफलं प्राप्य ब्रह्मलोकं प्रपद्यते ॥ विष्णुं शङ्खप्रदानेन निर्वाणं लोकमश्नुते ॥ ५२ ॥ मानुष्यमासाद्य तथा ख्यातशब्दश्च जायते ॥ घण्टाप्रदानेन तथा महद्यश उपाश्नुते॥ ५३ ॥ सौभाग्यमथ वाप्नोति किङ्किणीः प्रददन्हरेः ॥ कूटागारं तथा दत्त्वा नगराधिपतिर्भवेत् ॥ ५४॥ कीर्त्या युक्तस्तथा लोके धार्मिकश्चापि जायते ॥ बहून्यब्दसहस्राणि नाकलोके स मोदते ॥ ५५ ॥ पताकां ये प्रयच्छन्ति कूटागारे मनोहराम् ॥ सन्त्यज्य सकलं पापं वायुलोके व्रजन्ति ते ॥ ५६ ॥ पताकां च शुभां दत्त्वा तथा केशववेश्मनि ॥ वायुलोकमवाप्नोति बहून्यब्दगणानि तु ॥ ५७ ॥ दोधूयते यथा सा च वायुना केशवालये ॥ तथातथा हि सकलं देहात्पापं विधूयते ॥ ५८ ॥ यथायथा च सा शोभां करोति त्रिदशालये ॥ तथातथा स यशसा महता भुवि राजते ॥ ५९ ॥ वितानकप्रदानेन सर्वपापैः प्रमुच्यते ॥ परां निर्वृतिमाप्नोति यत्रयत्राभिजायते ॥ ६० ॥ दत्त्वा तु देवकर्मार्थं नवां वेदीं दृढां शुभाम् ॥ पार्थिवत्वमवाप्नोति वेदिर्हि पृथिवी यतः॥६१॥ यः कुम्भं देवकर्मार्थं नरो दद्यान्नवं शुभम् ॥ स लोकमाप्नोति नरो वारुणं गतकल्मषः ॥ ६२ ॥ चतुरः कलशान्दद्याद्यस्तु देवगृहे नरः ॥ चतुस्समुद्रवलयां स च भुङ्क्ते वसुन्धराम् ॥ ६३ ॥ दत्त्वैकमपि विप्रेन्द्राः कलशं सुसमाहितः ॥ राजा भवति धर्मात्मा भूतले नात्र संशयः ॥ ६४ ॥ वारिधानीं तथा दत्त्वा वारुणं लोकमश्नुते ॥ कमण्डलुप्रदानेन गोदानफलमाप्नुयात् ॥६५॥ उशीरकूर्चकं दत्त्वा सर्वपापैः प्रमुच्यते ॥ दत्त्वा गोपा

लकान्विप्राः सर्वपापानपोहति ॥ ६६ ॥ दत्त्वा चामरजं कूर्चं श्रियमाप्नोत्यनुत्तमाम् ॥ आसनानां प्रदानेन स्थानं सर्वत्र विन्दति ॥ ६७ ॥ पाद
पीठप्रदानेन गतिमाप्नोत्यनुत्तमाम् ॥ गोदानफलमाप्नोति तथा पाद्यप्रदो नरः ॥ ६८ ॥ लोकेषु ध्वजभूतः स्याद्विष्णोर्दत्त्वा तथा ध्वजम् ॥
शक्रलोकानवाप्नोति बहूनब्दगणान्नरः ॥ ६९ ॥ नरस्त्वाचमनीयस्य दानाद्भवति निर्मलः ॥ मुखलेपप्रदानेन परं रूपमिहाप्नुयात् ॥ ७० ॥
दर्पणस्य प्रदानेन दर्पवान्रूपवान्भवेत् ॥ दर्शयित्वा तथा तं च सुभगस्त्वभिजायते ॥ ७१ ॥ मात्रां तु परिचर्यार्थे निवेद्य विधिवत्तथा ॥
सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥ ७२ ॥ धान्यानामथ सस्यानां बीजानामथ धार्मिकः ॥ सुवर्णरौप्यलोहानां रूपकाणां तथैव च ॥७३ ॥
सहस्रगुणमाप्नोति फलमन्यत्र कीर्त्तनात् ॥ रूप्यदो रूपमाप्नोति विशेषाद्भुवि दुर्लभम् ॥ ७४ ॥ नरः सुवर्णदानेन सर्वान्कामानुपाश्नुते ॥ नड
दानेन लोकेषु ग्रामण्यमुपगच्छति ॥ ७५ ॥ गवां लोकमवाप्नोति धेनुं दत्त्वा पयस्विनीम् ॥ अनडुहः प्रदानेन दशधेनुफलं लभेत् ॥७६ ॥ अजा
विमहिषोष्ट्राणां दानमश्वतरस्य च ॥ सहस्रगुणितं दानं पूर्वं प्रोक्तं प्रकीर्तितम् ॥ ७७ ॥ आरण्यमृगजातीनां तथा दानाच्च पक्षिणाम् ॥ अग्निष्टो
ममवाप्नोति सुभगश्च तथा भवेत् ॥ ७८॥ मृद्भोगदानाद्देवस्य भूमिमाप्नोत्यनुत्तमाम् ॥ दन्तकाष्ठप्रदानेन तथा सौभाग्यमर्हति ॥ ७९ ॥ जिह्वा
निर्लेखनं दत्त्वा विरोगस्त्वभिजायते ॥ युक्तः पीतपताकाभिर्निवेद्य गरुडध्वजम् ॥ ८० ॥ केशवं यो द्विजश्रेष्ठाः शक्रलोके महीयते ॥ युक्तं
नीलपताकाभिस्तालं दत्त्वा द्विजोत्तमाः॥८१॥ यस्माल्लोकात्परिभ्रष्टो विरागस्त्वभिजायते ॥ युक्तं श्वेतपताकाभिरगारं यः प्रयच्छति॥८२॥ राजा
भवति लोकेस्मिन्भुक्त्वा लोकान्प्रचेतसः ॥ युक्तं रक्तपताकाभिर्दत्त्वा ऋष्यमनुत्तमम् ॥ ८३ ॥ अलकां समवाप्नोति तथा पापक्षयं नरः ॥ तोरणं
कारयेद्यस्तु देवदेवालये नरः ॥ ८४ ॥ लोकेषु तस्य द्वाराणि भवन्ति विवृतानि तु ॥ शयनासनदानेन स्थितिं विन्दति शाश्वतीम् ॥८५॥ उत्तर
च्छददानेन सर्वान्कामानवाप्नुयात् ॥ देववेश्मोपभोगानि शिल्पभाण्डानि यो नरः ॥ ८६ ॥ दद्याद्वा वाद्यभाण्डानि गणेशत्वमवाप्नुयात् ॥ देव
श्रितेषु यत्किञ्चिद्दद्याद्भक्तिसमन्वितः ॥ ८७ ॥ तदेवाक्षयमाप्नोति देवदेवप्रसादतः ॥ दत्त्वा धान्यानि बीजानि सस्यानि विविधानि च ॥८८॥
रूपकाणि च तान्येव प्राप्नोत्ययुतशः पुनः ॥ दत्त्वा शाकानि रस्याणि विशोकस्त्वभिजायते ॥ ८९ ॥ दत्त्वा च व्यंजनार्थाय तथोपकरणानि
च ॥ पुष्पवृक्षं[1] ततो दत्त्वा ग्रामस्याधिपतिर्भवेत्॥९०॥फलवृक्षं तथा दत्त्वा नगराधिपतिर्भवेत्॥आरामं कारयित्वा तु राजा वै पार्थिवो भवेत् ॥९१॥

१ 'पुष्पवृन्तम्' इति ख० ।

जलाशयं तथा कृत्वा सर्वपापैः प्रमुच्यते ॥ सपुष्पैस्सफलैर्वृक्षैर्युक्तं कृत्वा जलाशयैः ॥ ९२ ॥ उद्यानैः पद्मिनीखण्डैरैश्वर्यैश्च मनोहरैः ॥
श्वेतद्वीपमवाप्नोति बहून्यब्दगणानि तु ॥ ९३ ॥ प्रीणयेद्देवदेवेशं गवां ग्रामेण यो नरः ॥ तस्य प्रीतः स भगवानभीष्टफलदो भवेत् ॥ ९४ ॥
अतीव दयितास्तस्य ब्राह्मणा द्विजसत्तमाः ॥ ब्राह्मणैः पूजितैर्विष्णुः स्वयं भवति पूजितः ॥ ९५ ॥ दीनांधकृपणानाथबहूनामपि दानतः ॥
यः प्रीणाति जगन्नाथं तस्य देवः प्रसीदति ॥ ९६॥ उपवासव्रतैः स्नानैस्तीर्थानुसरणेन च॥आयतस्थानसंस्थानां पशूनां च विवर्जनात् ॥ ९७॥
गुरुशुश्रूषया क्षान्त्या तथा वै श्राद्धकर्मणा ॥ आहारनियमैस्तैस्तैः परापीडैर्विशेषतः ॥ ९८ ॥ पूजयित्वा जगन्नाथं श्वेतद्वीपमवाप्नुयात् ॥ परं
पदमवाप्नोति प्रसन्ने मधुसूदने ॥ ९९ ॥ अभिवाद्य जगन्नाथं कृतार्थश्च तथा भवेत् ॥ नमस्कारक्रिया तस्य सर्वपापप्रणाशिनी ॥ १०० ॥
प्रणामं पापशमनं तथैव परिकीर्तितम् ॥ जानुभ्यां चैव पाणिभ्यां शिरसा च विचक्षणः ॥१०१॥ कृत्वा प्रणामं देवेभ्यः सर्वान्कामानवाप्नुयात् ॥
परमाणूनि वर्तन्ते ललाटे पुरुषस्य च ॥ १०२ ॥ पार्थिवानि भवंतीह नमतो मधुसूदनम् ॥ तावन्त्यब्दानि विप्रेन्द्राः स्वर्गलोके महीयते॥१०३॥
देवार्चादर्शनादेव प्रणमेन्मधुसूदनम् ॥ स्थानापेक्षा न कर्तव्या दृष्ट्वार्चां द्विजसत्तमाः ॥ १०४ ॥ देवार्चादृष्टिपूतं हि शुचिः सर्वं प्रकीर्तितम् ॥
देवार्चादृष्टिपूतेन स्नानं कृत्वा जलाशये ॥ १०५॥ सर्वपापविनिर्मुक्तः क्षणाद्भवति निर्मलः ॥ तीर्थानां तत्र सर्वेषां सन्निधानं प्रकीर्तितम् ॥१०६॥
पादोदकेन चाभ्युक्ष्य तथा मूर्द्धानमात्मनः ॥ स्नातो भवति धर्मात्मा नात्र कार्या विचारणा ॥१०७॥ पादोदकं शान्तिकरममङ्गल्यविनाशनम् ॥
दुष्टदुःस्वप्नशमनं सर्वपापविनाशनम् ॥१०८॥ धन्यं पवित्रं मङ्गल्यं सर्वपापहरं शिवम् ॥ शिरसा मानवश्रेष्ठाः काल्यपुण्याय धारयेत्॥१०९॥सर्वा
ङ्गप्रणिपातेन सर्वकामयुतो नरः ॥ सर्वानर्थविनिर्मुक्तो गोदानफलमाप्नुयात् ॥ ११० ॥ रुक्ममाषकदानस्य फलं विप्राः पदेपदे ॥ पुरुषस्तु
समाप्नोति यः करोति प्रदक्षिणाम् ॥ १११ ॥ ध्यानं तु देवदेवस्य सर्वबाधाविनाशनम् ॥ यावत्कालं करोतीह ध्यानं वै निश्चलं नरः ॥ ११२ ॥
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ निराशीर्निर्ममो यस्तु विष्णोर्ध्यानरतो भवेत् ॥ ११३ ॥ तत्पदं समवाप्नोति यत्र गत्वा न शोचति ॥
यज्ञानां तपसां चैव ध्यानमेव परं स्मृतम् ॥११४॥ देवाग्रे कारयेद्यस्तु रम्यामापणवीथिकाम्॥ राजा भवति लोकेषु विजितारिर्महायशाः॥११५॥
नगरं च तथा कृत्वा साम्राज्यमधिगच्छति ॥ यानवाहनदानेन सर्वकालं सुखी भवेत् ॥११६॥ शिबिकां ये प्रयच्छंति ते प्रयान्त्यमरावतीम् ॥

१ 'कल्यपुण्याय धारयेत्' इति ख० पा।

अश्वस्थाः सूर्यलोकस्था राजन्ते दिवि सूर्यवत् ॥११७॥ करीन्द्रदानाच्छक्रस्य चिराल्लोकाच्च्युतो नरः ॥ राजा भवति धर्मात्मा पृथिव्यां पृथिवी
पतिः ॥ ११८ ॥ दासं दत्त्वा सुखी लोके स्वर्गभ्रष्टोभिजायते ॥ दासीं दत्त्वा तथा विप्रा नात्र कार्या विचारणा ॥ ११९ ॥ गणिकां ये प्रयच्छंति
नृत्यगीतविशारदाम् ॥ सर्वदुःखविनिर्मुक्तास्ते प्रयान्त्यमरावतीम् ॥ १२० ॥ दुन्दुभिं ये प्रयच्छन्ति कीर्तिमन्तो भवन्ति ते ॥ राजा भवति लोके
स्मिञ्छत्रं दत्त्वा द्विजोत्तमाः ॥ १२१ ॥ नाप्नोति रिपुजं दुःखं संग्रामे रिपुजिद्भवेत् ॥ तालवृन्तप्रदानेन निर्वृतिं प्राप्नुयात्पराम् ॥ १२२ ॥
तथाचमनदानेन श्रीमान्भवति भूतले ॥ मुच्यते च तथा पापैः स्वर्गलोकं च गच्छति ॥ १२३ ॥ उपानत्संप्रदानेन विमानमधिगच्छति ॥
यथेष्टं तेन लोकेषु विचरत्यमरप्रभः ॥ १२४ ॥ यथादेशं यथाकालं राजलिङ्गं सुरालये ॥ दत्त्वा भवति राजैव नात्र कार्या विचारणा ॥
॥ १२५ ॥ धारणीयोपयोग्यानि दत्त्वात्यन्तं सुखी भवेत् ॥ माल्याधारं तथा दत्त्वा धूपाधारं तथैव च ॥ १२६ ॥ गन्धाधारं तथा पात्रं कामा
नां पात्रतां व्रजेत् ॥ समुद्रजानि पात्राणि दत्त्वा वै तैजसानि वा ॥ १२७ ॥ पात्रं भवति कामानां विद्यानां च धनस्य च ॥ यत्किञ्चिद्देवदेवाय
दद्याद्भक्तिसमन्वितः ॥ १२८ ॥ तदेवाक्षय्यमाप्नोति स्वर्गलोकं च गच्छति ॥ विस्मापनीयं यत्किञ्चित्कृत्वात्यन्तं सुखी भवेत् ॥ १२९ ॥
स्नानशाटकदानेन वह्निष्टोमफलं लभेत् ॥ तैलेन स्नपनं कृत्वा सौभाग्यमधिगच्छति ॥ १३० ॥ गन्धतैलानि दिव्यानि सुगन्धीनि
शुचीनि च ॥ केशवाय नरो दत्त्वा गन्धर्वैः सह मोदते ॥ १३१ ॥ घृतेन स्नपनं कृत्वा सर्वपापान्व्यपोहति ॥ घृतप्रस्थेन देवेशं पौषपुष्यभिते
नरः ॥ १३२ ॥ स्नापयित्वाश्वमेधस्य फलं प्राप्नोत्यसंशयम् ॥ एतदेव फलं प्रोक्तमुत्तरायणवासरे ॥ १३३ ॥ घृतं पवित्रमतुलं
घृतमन्नमनुत्तमम् ॥ तेन गव्येन संस्नाप्य प्रतिमां वैष्णवीं नरः ॥ १३४ ॥ सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥ गवां लोकम
वाप्नोति क्षीरोदमथ वा पुनः ॥ १३५ ॥ रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ॥ भयान्मुच्येत भीतश्च घृतेन स्नपयेद्धरिम् ॥ १३६ ॥
सर्वान्कामानवाप्नोति सर्वानर्थविवर्जितः ॥ मधुना स्नापनं कृत्वा सौभाग्यमधिगच्छति ॥ १३७ ॥ लोके मित्राण्यवाप्नोति नरश्चेक्षुरसेन च ॥
दुग्धेन स्नपनं ज्ञेयममंगल्यविनाशनम् ॥ १३८ ॥ क्षीरेण स्नपनं विप्राः क्षीराम्भोधिप्रदं तथा ॥ देयानि देवेवाद्यानि दधिक्षीरघृतान्यथ ॥१३९॥
गोधूमयवचूर्णैस्तु ततोत्सार्य जनार्दनम् ॥ रोध्रवर्णकसंकीर्णैर्वरं रूपं तथाप्नुयात् ॥ १४० ॥ स्नपनं माषचूर्णेन वह्निष्टोमफलप्रदम् ॥ मसूरचूर्ण
दानं च तथा सौभाग्यवर्धनम् ॥ १४१ ॥ मसूरमाषचूर्णं तु कुंकुमक्षोदसंयुतम् ॥ निवेद्य देवदेवाय गन्धर्वैः सह मोदते ॥ १४२ ॥ तदा कलश

जलाशयं तथा कृत्वा सर्वपापैः प्रमुच्यते ॥ सपुष्पैस्सफलैर्वृक्षैर्युक्तं कृत्वा जलाशयैः ॥ ९२ ॥ उद्यानैः पद्मिनीखण्डैरैश्वर्यैश्च मनोहरैः ॥
श्वेतद्वीपमवाप्नोति बहून्यब्दगणानि तु ॥ ९३ ॥ प्रीणयेद्देवदेवेशं गवां ग्रामेण यो नरः ॥ तस्य प्रीतः स भगवानभीष्टफलदो भवेत् ॥ ९४ ॥
अतीव दयितास्तस्य ब्राह्मणा द्विजसत्तमाः ॥ ब्राह्मणैः पूजितैर्विष्णुः स्वयं भवति पूजितः ॥ ९५ ॥ दीनांधकृपणानाथबहूनामपि दानतः ॥
यः प्रीणाति जगन्नाथं तस्य देवः प्रसीदति ॥ ९६॥ उपवासव्रतैः स्नानैस्तीर्थानुसरणेन च॥आयतस्थानसंस्थानां पशूनां च विवर्जनात् ॥ ९७॥
गुरुशुश्रूषया क्षान्त्या तथा वै श्राद्धकर्मणा ॥ आहारनियमैस्तैस्तैः परापीडैर्विशेषतः ॥ ९८ ॥ पूजयित्वा जगन्नाथं श्वेतद्वीपमवाप्नुयात् ॥ परं
पदमवाप्नोति प्रसन्ने मधुसूदने ॥ ९९ ॥ अभिवाद्य जगन्नाथं कृतार्थश्च तथा भवेत् ॥ नमस्कारक्रिया तस्य सर्वपापप्रणाशिनी ॥ १०० ॥
प्रणामं पापशमनं तथैव परिकीर्तितम् ॥ जानुभ्यां चैव पाणिभ्यां शिरसा च विचक्षणः ॥१०१॥ कृत्वा प्रणामं देवेभ्यः सर्वान्कामानवाप्नुयात् ॥
परमाणूनि वर्तन्ते ललाटे पुरुषस्य च ॥ १०२ ॥ पार्थिवानि भवंतीह नमतो मधुसूदनम् ॥ तावन्त्यब्दानि विप्रेन्द्राः स्वर्गलोके महीयते॥१०३॥
देवार्चादर्शनादेव प्रणमेन्मधुसूदनम् ॥ स्थानापेक्षा न कर्तव्या दृष्ट्वार्चां द्विजसत्तमाः ॥ १०४ ॥ देवार्चादृष्टिपूतं हि शुचिः सर्वं प्रकीर्तितम् ॥
देवार्चादृष्टिपूतेन स्नानं कृत्वा जलाशये ॥ १०५॥ सर्वपापविनिर्मुक्तः क्षणाद्भवति निर्मलः ॥ तीर्थानां तत्र सर्वेषां सन्निधानं प्रकीर्तितम् ॥१०६॥
पादोदकेन वाभ्युक्ष्य तथा मूर्द्धानमात्मनः ॥ स्नातो भवति धर्मात्मा नात्र कार्या विचारणा ॥१०७॥ पादोदकं शान्तिकरममङ्गल्यविनाशनम् ॥
दुष्टदुःस्वप्नशमनं सर्वपापविनाशनम् ॥१०८॥ धन्यं पवित्रं मङ्गल्यं सर्वपापहरं शिवम् ॥ शिरसा मानवश्रेष्ठाः कोल्यपुण्याय[1] धारयेत्॥१०९॥सर्वा
ङ्गप्रणिपातेन सर्वकामयुतो नरः ॥ सर्वानर्थविनिर्मुक्तो गोदानफलमाप्नुयात् ॥ ११० ॥ रुक्ममाषकदानस्य फलं विप्राः पदेपदे ॥ पुरुषस्तु
समाप्नोति यः करोति प्रदक्षिणाम् ॥ १११ ॥ ध्यानं तु देवदेवस्य सर्वबाधाविनाशनम् ॥ यावत्कालं करोतीह ध्यानं वै निश्चलं नरः ॥ ११२ ॥
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ निराशीर्निर्ममो यस्तु विष्णोर्ध्यानरतो भवेत् ॥ ११३ ॥ तत्पदं समवाप्नोति यत्र गत्वा न शोचति ॥
यज्ञानां तपसां चैव ध्यानमेव परं स्मृतम् ॥११४॥ देवाग्रे कारयेद्यस्तु रम्यामापणवीथिकाम्॥ राजा भवति लोकेषु विजितारिर्महायशाः॥११५॥
नगरं च तथा कृत्वा साम्राज्यमधिगच्छति ॥ यानवाहनदानेन सर्वकालं सुखी भवेत् ॥११६॥ शिबिकां ये प्रयच्छंति ते प्रयान्त्यमरावतीम् ॥

[1] 'कल्यपुण्याय धारयेत्' इति ख० पा।

अश्वस्थाः सूर्यलोकस्था राजन्ते दिवि सूर्यवत् ॥११७॥ करीन्द्रदानाच्छक्रस्य चिराल्लोकाच्च्युतो नरः ॥ राजा भवति धर्मात्मा पृथिव्यां पृथिवी
पतिः ॥ ११८ ॥ दासं दत्त्वा सुखी लोके स्वर्गभ्रष्टोभिजायते ॥ दासीं दत्त्वा तथा विप्रा नात्र कार्या विचारणा ॥ ११९ ॥ गणिकां ये प्रयच्छंति
नृत्यगीतविशारदाम् ॥ सर्वदुःखविनिर्मुक्तास्ते प्रयान्त्यमरावतीम् ॥ १२० ॥ दुन्दुभिं ये प्रयच्छन्ति कीर्तिमन्तो भवन्ति ते ॥ राजा भवति लोके
स्मिञ्छत्रं दत्त्वा द्विजोत्तमाः ॥ १२१ ॥ नाप्नोति रिपुजं दुःखं संग्रामे रिपुजिद्भवेत् ॥ तालवृन्तप्रदानेन निर्वृतिं प्राप्नुयात्पराम् ॥ १२२ ॥
तथाचमनदानेन श्रीमान्भवति भूतले ॥ मुच्यते च तथा पापैः स्वर्गलोकं च गच्छति ॥ १२३ ॥ उपानत्संप्रदानेन विमानमधिगच्छति ॥
यथेष्टं तेन लोकेषु विचरत्यमरप्रभः ॥ १२४ ॥ यथादेशं यथाकालं राजलिङ्गं सुरालये ॥ दत्त्वा भवति राजैव नात्र कार्या विचारणा ॥
॥ १२५ ॥ धारणीयोपयोग्यानि दत्त्वात्यन्तं सुखी भवेत् ॥ माल्याधारं तथा दत्त्वा धूपाधारं तथैव च ॥ १२६ ॥ गन्धाधारं तथा पात्रं कामा
नां पात्रतां व्रजेत् ॥ समुद्रजानि पात्राणि दत्त्वा वै तैजसानि वा ॥ १२७ ॥ पात्रं भवति कामानां विद्यानां च धनस्य च ॥ यत्किञ्चिद्देवदेवाय
दद्याद्भक्तिसमन्वितः ॥ १२८ ॥ तदेवाक्षय्यमाप्नोति स्वर्गलोकं च गच्छति ॥ विस्मापनीयं यत्किञ्चित्कृत्वात्यन्तं सुखी भवेत् ॥ १२९ ॥
स्नानशाटकदानेन वह्निष्टोमफलं लभेत् ॥ तैलेन स्नपनं कृत्वा सौभाग्यमधिगच्छति ॥ १३० ॥ गन्धतैलानि दिव्यानि सुगन्धीनि
शुचीनि च ॥ केशवाय नरो दत्त्वा गन्धर्वैः सह मोदते ॥ १३१ ॥ घृतेन स्नपनं कृत्वा सर्वपापान्व्यपोहति ॥ घृतप्रस्थेन देवेशं पौषपुष्यभिते
नरः ॥ १३२ ॥ स्नापयित्वाश्वमेधस्य फलं प्राप्नोत्यसंशयम् ॥ एतदेव फलं प्रोक्तमुत्तरायणवासरे ॥ १३३ ॥ घृतं पवित्रमतुलं
घृतमन्नमनुत्तमम् ॥ तेन गव्येन संस्नाप्य प्रतिमां वैष्णवीं नरः ॥ १३४ ॥ सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥ गवां लोकम
वाप्नोति क्षीरोदमथ वा पुनः ॥ १३५ ॥ रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ॥ भयान्मुच्येत भीतश्च घृतेन स्नपयेद्धरिम् ॥ १३६ ॥
सर्वान्कामानवाप्नोति सर्वानर्थविवर्जितः ॥ मधुना स्नापनं कृत्वा सौभाग्यमधिगच्छति ॥ १३७ ॥ लोके मित्राण्यवाप्नोति नरश्चेक्षुरसेन च ॥
दुग्धेन स्नपनं ज्ञेयममंगल्यविनाशनम् ॥ १३८ ॥ क्षीरेण स्नपनं विप्राः क्षीराम्भोधिप्रदं तथा ॥ देयानि देवेवाद्यानि दधिक्षीरघृतान्यथ ॥१३९॥
गोधूमयवचूर्णैस्तु ततोत्सार्य जनार्दनम् ॥ रोध्रवर्णकसंकीर्णैर्वरं रूपं तथाप्नुयात् ॥ १४० ॥ स्नपनं माषचूर्णेन वह्निष्टोमफलप्रदम् ॥ मसूरचूर्ण
दानं च तथा सौभाग्यवर्धनम् ॥ १४१ ॥ मसूरमाषचूर्णं तु कुंकुमक्षोदसंयुतम् ॥ निवेद्य देवदेवाय गन्धर्वैः सह मोदते ॥ १४२ ॥ तदा कलश

दानेन प्रियामाप्नोत्यनुत्तमाम् ॥ रोध्रस्नानप्रदानेन वर्णं शुभमवाप्नुयात् ॥ १४३ ॥ कालीयकप्रदानेन परां निर्वृतिमाप्नुयात् ॥ दोपूरकप्रदानेन सर्वान्रोगान्व्यपोहति ॥ १४४ ॥ तथा वर्णकदानेन सर्वमेव शुभं वदेत् ॥ तगरस्नानदानेन सौभाग्यमधिगच्छति ॥ १४५ ॥ प्रियत्वमाप्नुयाल्लोके प्रियङ्गुस्नानदो नरः ॥ सदा भवति सिद्धार्थः सिद्धार्थस्नानदस्तथा ॥ १४६ ॥ सर्वौषधिप्रदानेन वाजिमेधफलं लभेत् ॥ स्नानार्थं देवदेवस्य यस्तु गन्धान्प्रयच्छति ॥ १४७ ॥ भवन्ति वशगास्तस्य नार्यः सर्वत्र सर्वदा ॥ दत्त्वा जातीफलं मुख्यं सफलं विन्दते श्रियम् ॥ १४८ ॥ शमीपत्रप्रदानेन सौभाग्यमधिगच्छति ॥ त्वक्प्रदानात्तथा लोके भवतीह बलान्वितः ॥ १४९ ॥ दत्त्वा मृगमदस्नानं सर्वान्कामानवाप्नुयात् ॥ रत्नोदकप्रदानेन श्रियमाप्नोत्यनुत्तमाम् ॥ १५० ॥ बीजोदकप्रदानेन क्रियासाफल्यमाप्नुयात् ॥ पुष्पतोयप्रदानेन श्रीमान्भवति मानवः ॥ ॥ १५१ ॥ फलतोयप्रदानेन सफलां विन्दते क्रियाम् ॥ पुन्नामवारिभिर्युक्तं कलशं पूजितं नरैः ॥ १५२ ॥ सोपवासो हरेर्दत्त्वा पुत्रमाप्नोत्यसंशयम् ॥ क्षीरपल्लवसंयुक्तान्कलशान्सुविभूषितान् ॥ १५३ ॥ दत्त्वैव देवदेवाय वाजपेयमवाप्नुयात् ॥ जयकारं नरो यस्तु करोति द्विजपुङ्गवाः ॥ १५४ ॥ बन्दिनां स भवत्येव सदा स्तव्यो नरोत्तमाः ॥ तीर्थोदकानि पुण्यानि स्वयमानीय मानवः ॥ १५५ ॥ देवस्य स्नपनं दत्त्वा सर्वपापैः प्रमुच्यते ॥ अर्चितान्कलशान्कृत्वा परिभ्राम्य तथैव च ॥ १५६ ॥ यस्त्यजेत्सलिलं तत्र तस्य पुष्टिः सदा भवेत् ॥ तीर्थतोयं तथा दत्त्वा देवस्याचमनं पुनः ॥ १५७ ॥ स्वर्गलोकमवाप्नोति सर्वपापविवर्जितः ॥ उत्सादनमथाभ्यङ्गं स्नानं कृत्वा स्वयं हरेः ॥ १५८ ॥ गाणपत्यमवाप्नोति तथा लोके सुखी भवेत् ॥ निष्पुंसनार्थे देवस्य यस्तु वस्त्रं प्रयच्छति ॥ १५९ ॥ चन्द्रलोकमवाप्नोति सुखं प्राप्नोति चोत्तमम् ॥ चन्दनेनानुलिप्यैनं चन्द्रलोकमवाप्नुयात् ॥ १६० ॥ शारीरमानसैर्दुःखैस्तथा चैव विमुच्यते ॥ कुंकुमेनानुलिप्यैनं सूर्यलोके महीयते ॥ १६१ ॥ सौभाग्यमुत्तमं लोके तथा प्राप्नोति मानवः ॥ कर्पूरेणानुलिप्यैनं वारुणं लोकमाप्नुयात् ॥ ॥ १६२ ॥ शारीरैर्मानसैर्दुःखैस्तथैव च विमुच्यते ॥ भवन्ति वशगास्तस्य तथैव सततं स्त्रियः ॥ १६३ ॥ दत्त्वा मृगमदं मुख्यं यशसा भुवि राजते ॥ दत्त्वा जातीफलक्षोदं क्रियासाफल्यमश्नुते ॥ १६४ ॥ रम्येणागुरुसारेण त्वनुलिप्य जनार्दनम् ॥ सौभाग्यमुत्तमं लोके बलं प्राप्नोति चोत्तमम् ॥ १६५ ॥ तथा बकुलनिर्यासैर्वह्निष्टोमफलं लभेत् ॥ बकुलागुरुमिश्रेण[१] चन्दनने सुगन्धिना ॥ १६६ ॥ समालभ्य

१ 'कमलान्' इति ख० ।

जगन्नाथं पौण्डरीकफलं लभेत् ॥ एकीकृत्य तु सर्वाणि समालभ्य जनार्दनम् ॥ १६७ ॥ अश्वमेधस्य मुख्यस्य फलं प्राप्नोत्यसंशयम् ॥
कामगः सर्वलोकेषु विचरत्यमरप्रभः ॥ १६८ ॥ योऽनुलिम्पेत देवेशं कीर्तितैरनुलेपनैः ॥ पार्थिवानि च यानि स्युः परमाणूनि तत्र वै
॥ १६९ ॥ तावंत्यब्दानि लोकेषु कामचारी भवत्यसौ ॥ न दातव्यं द्विजश्रेष्ठाः अतोन्यदुपलेपनम् ॥ १७० ॥ अनुलेपनमुख्यं च चन्दनं
परिकीर्तितम् ॥ अनुलिप्य जगन्नाथं तालवृन्तेन वीजयेत् ॥ १७१ ॥ वायुलोकमवाप्नोति पुरुषस्तेन कर्मणा ॥ केशसौगन्ध्यजननं दत्त्वा मृग
मदं नरः ॥ १७२ ॥ सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥ यच्छते यस्तु गन्धानि गन्धयुक्तिकृतानि तु ॥ १७३ ॥ गन्धर्वत्वं स्मृतं तस्य
सौभाग्यं च तथोत्तमम् ॥ चामरैर्वीजयेद्यस्तु देवदेवं जनार्दनम् ॥ १७४ ॥ तिलप्रस्थप्रदानस्य फलं प्राप्नोत्यसंशयम् ॥ एकवस्त्रप्रदानेन
सर्वान्कामानवाप्नुयात्॥१७५॥कार्पासिकं वस्त्रयुग्मं यः प्रदद्याज्जनार्दने ॥ यावन्ति तस्य तन्तूनि हस्तमात्रमितानि तु ॥१७६॥ तावद्वर्षसहस्राणि
स्वर्गलोके महीयते ॥ महार्घता तथा तस्य साधुवेशोद्भवो यथा ॥१७७॥ सूक्ष्मता च तथा विप्रास्तथा प्रोक्तं फलं महत् ॥ स्वर्गभ्रष्टस्य वक्ष्यामि
वस्त्रदस्य फलान्यतः ॥ १७८ ॥ शुक्लवस्त्रप्रदानेन श्रियमाप्नोत्यनुत्तमाम् ॥ महारजतदत्तेन सौभाग्यं महदश्नुते ॥ १७९ ॥ नीलरक्तं
विना रक्तं शेषै रक्तैर्द्विजोत्तमाः ॥ दत्त्वा भवति धर्मात्मा सर्वव्याधिविवर्जितः ॥ १८० ॥ नीलरक्तं तथा जीर्णं वस्त्रमन्यधृतं तथा ॥ देवदेवाय
यो दद्यात्सर्वपापैर्विमुच्यते ॥१८१॥ दुकूलकप्रदानेन वह्निष्टोमफलं लभेत् ॥ कौशेयानि च वस्त्राणि सुमृदूनि लघूनि च ॥१८२ ॥ यः प्रयच्छति
देवाय सोऽश्वमेधफलं लभेत् ॥ सलोमानि च वस्त्राणि यः प्रयच्छति धर्मवित् ॥ १८३ ॥ कृतानि वारवाणानि सोऽश्वमेधफलं लभेत् ॥ राङ्क
वा मृगलोमाश्च कदल्यश्च तथा शुभाः ॥ १८४ ॥ यो दद्याद्देवदेवाय सोश्वमेधफलं लभेत् ॥ नानाभक्तिविचित्राणि चीनजानि नवानि च ॥
॥ १८५ ॥ दत्त्वा वासांसि शुभ्राणि राजसूयफलं लभेत् ॥ दत्त्वा निस्त्रिंशकं मुख्यं शत्रुभिर्नाभिभूयते ॥ १८६ ॥ दत्त्वा तद्वद्धनुर्मुख्यमश्व
मेधफलं लभेत् ॥ यज्ञोपवीतदानेन ब्रह्मदानफलं लभेत् ॥ १८७ ॥ कर्णपूरप्रदानेन श्रुतिं विन्दति सर्वतः ॥ दत्त्वा प्रतिसरं मुख्यं न भूतै
रभिभूयते ॥ १८८ ॥ कूर्चप्रसाधनं दत्त्वा सुखमत्यंतमश्नुते ॥ कङ्कतस्य प्रदानेन विरोगस्त्वभिजायते ॥ १८९ ॥ रूपवांश्च सुवेशश्च सुभगस्स
र्वभागपि ॥ वस्त्रप्रदानाद्भवति सर्वकामसमन्वितः ॥ १९० ॥ विभूषणप्रदानेन राजा भवति भूतले ॥ रम्याणि रत्नचित्राणि सौवर्णानि
द्विजोत्तमाः ॥ १९१ ॥ दत्त्वाभरणजातानि राजसूयमवाप्नुयात ॥ प्रतिरूपकरत्नानि न देयानि कदाचन ॥ १९२ ॥

पादाङ्गुलीयदानेन गुह्यकाधिपतिर्भवेत् ॥ पादाभरणदानेन स्थानं सर्वत्र विन्दति ॥ १९३ ॥ श्रोणीसूत्रप्रदानेन महीं सागरमे खलाम् ॥ प्रशास्ति निहतामित्रो नात्र कार्या विचारणा ॥ १९४ ॥ हस्ताङ्गुलीयदानेन परं सौभाग्यमाप्नुयात् ॥ तथैवाङ्गद दानेन राजा भवति भूतले ॥ १९५ ॥ केयूरदानाद्भवति शत्रुपक्षक्षयङ्करः ॥ ग्रैवेयकानि दत्त्वा च सर्वशास्त्रार्थविद्भवेत् ॥ १९६ ॥ नार्यः सुवशगास्तस्य भवन्ति द्विजपुङ्गवाः ॥ श्रियमाप्नोति परमां राजसूयं च विन्दति ॥ १९७ ॥ कर्णाभरणदानेन भवेच्छ्रुतिधरो नरः ॥ अश्वमेधमवाप्नोति सौभाग्यं चैव विन्दति ॥ १९८ ॥ मूर्धाभरणदानेन राजसूयफलं लभेत् ॥ मुकुटस्य प्रदानेन मूर्धन्यो भूतले भवेत् ॥१९९॥ चतुःसमुद्रवलयां प्रशास्ति च वसुन्धराम् ॥ अनुक्तान्यपि विप्रेन्द्रा वासांस्याभरणानि च ॥ २०० ॥ दत्त्वैव देवदेवाय वह्निष्टोमफलं लभेत् ॥ दानं सुमनसां श्रेष्ठं तथैव परिकीर्तितम् ॥ २०१ ॥ अलक्ष्म्याः शमनं मुख्यं परं लक्ष्मीविवर्द्धनम् ॥ धन्यं यशस्यमायुष्यं मङ्गल्यं बुद्धिवर्द्धनम् ॥ २०२ ॥ स्वर्गदं च तथा प्रोक्तं वह्निष्टोमफलप्रदम् ॥ पुष्पालाभेपि यो दद्यादपि दूर्वांकुराणि च ॥ २०३ ॥ सोपि पुण्यमवाप्नोति हेम दानस्य वै द्विजाः ॥ पुष्पालाभेऽपि देयानि पत्राण्यपि जनार्दने ॥२०४॥ पत्रालाभे जलं दद्यात्तेन पुण्यमुपाश्नुते ॥ पत्रं पुष्पं फलं तोयं भक्त्या देयं जनार्दने ॥ २०५ ॥ तेन लोकानवाप्नोति भक्तिरेवात्र कारणम् ॥ भृङ्गराजस्य बिल्वस्य चक्रपुष्पस्य च द्विजाः ॥ २०६ ॥ तथैव बीज पूराणि पत्राणि तु निवेदयेत् ॥ एतेषामपि चैकस्य पत्रदानं महाफलम् ॥२०७॥ पत्राणि तु सुगन्धीनि पल्लवानि मृदूनि च ॥ तेन पुण्यमवा प्नोति पुष्पदानसमुद्भवम् ॥ २०८ ॥ उग्रगन्धीन्यगन्धीनि कुसुमानि न दापयेत् ॥ अन्यायतनजातानि कण्टकीनि तथैव च ॥ २०९ ॥ उक्तानि यानि धर्मज्ञाश्चैत्यवृक्षोद्भवानि च ॥ तथा श्मशानजातानि यानि चाकालजानि च ॥२१० ॥ दानं विवर्जयेद्यत्नात्पुष्पाणामसुगन्धि नाम् ॥ सुगन्धीनि मनोज्ञानि कुसुमानि द्विजोत्तमाः ॥ २११ ॥ कृत्रिमेनोपपाद्यानि गन्धितानि सुगन्धिना ॥ धूपेन एव वासेन चंदनाद्यैश्च लेपनैः ॥ २१२ ॥ कण्टकीन्यपि देयानि शुक्लानि सुरभीणि च ॥ तथा रक्तानि देयानि जलजानि विशेषतः ॥ २१३ ॥ कुङ्कुमस्य च पुष्पाणि बन्धुजीवस्य चाप्यथ ॥ चम्पकस्य च देयानि तथा भूचम्पकस्य च ॥ २१४ ॥ पीतयूथिकजान्येव माषवन्माल्यजान्यपि ॥ मञ्जर्यः सहकारस्य तथा देया जनार्दने ॥ २१५ ॥ मल्लिकाकुन्दकुसुममतिमुक्तकमेव च ॥ सर्वाश्च यूथिकाजात्यो मल्लिकाजात्य एव च ॥ २१६ ॥ याश्च कुप्यकजा ताश्च कदम्बकुसुमानि च ॥ केतकीपाटलं पुष्पं बाणपुष्पं तथैव च ॥ २१७ ॥ एवमादीनि देयानि गन्धवन्ति शुभानि च॥ करवीरस्य पुष्पाणि

तथा धत्तूरकस्य च ॥ २१८ ॥ कृष्णकुब्जटकं नार्कं नैव देयं जनार्दने ॥ सर्वासां पुष्पजातीनां जातिः श्रेष्ठा तथा स्मृता ॥ २१९ ॥ जातीनामपि
तथा धत्तूरकस्य च ॥ २१८ ॥
सर्वासां शुक्लाजातिः प्रशस्यते ॥ केचिद्वर्णगुणा देयाः केचिद्गन्धगुणास्तथा ॥ २२० ॥ अनुक्तान्यपि नामानि तथा देयानि कानिचित् ॥ देशे
देशे यथा काले यानि पुष्पाण्यनेकशः ॥२२१॥ गन्धवर्णोपपन्नानि तथा देयानि नित्यशः ॥ सुगन्धिपुष्पैर्यः कुर्यात्पूजां मधुरिपोर्नरः ॥२२२॥
तस्य प्रसादमायाति देवश्चक्रगदाधरः ॥ धन्याश्चोरन्ध्रिमंजर्यो दयितास्तस्य नित्यशः ॥ २२३ ॥ पुरन्ध्रिपुष्पं यो दद्यादेकमप्यथ पण्डितः ॥
तिलप्रस्थप्रदानस्य फलं प्राप्नोत्यसंशयम् ॥ २२४ ॥ पुरन्ध्रिमञ्जरीपुष्पसहस्रेणार्चयेद्धरिम् ॥ अग्निष्टोममवाप्नोति कुलमुद्धरते तथा ॥ २२५ ॥
कर्पूरपटवासेन पुरन्ध्रिमथ वासिताम् ॥ महारजतरक्तेन तथा सूत्रे निवेशिता॥२२६॥ मालापुष्पसहस्रेण यः प्रयच्छति भक्तितः ॥ अश्वमेधफलं
तस्य नात्र कार्या विचारणा ॥ १२७ ॥ शतेन वाजपेयस्य फलमाप्नोत्यसंशयम् ॥ लक्षपूजां तथा कृत्वा सर्वान्यज्ञानवाप्नुयात् ॥ २२८ ॥
नन्दनाद्येषु मुख्येषु देवोद्यानेषु चाप्यथ ॥ क्रीडते देवरामाभिर्देवदुन्दुभितश्चिरम् ॥ २२९ ॥ दत्त्वा नीलोत्पलयुतं कुसुमं कुङ्कुमस्य च ॥ तुल्यं
फलमवाप्नोति बंधुजीवस्य च द्विजाः ॥ २३० ॥ सुवर्णयवदानस्य फलं प्राप्नोति मानवः ॥ दत्त्वा नीलोत्पलं विष्णोर्नात्र कार्या विचारणा ॥
॥ २३१ ॥ नीलोत्पलशतं दत्त्वा वह्निष्टोमफलं लभेत् ॥ नीलोत्पलसहस्रेण पुण्डरीकमवाप्नुयात् ॥ २३२ ॥ लक्षपूजां तथा कृत्वा राजसूयफलं
लभेत् ॥ रूप्यमाषप्रदानेन फलं कुंकुमदो लभेत् ॥२३३॥ कुमुदानां शतं दत्त्वा चंद्रलोके महीयते ॥ सहस्रं च तथा दत्त्वा यथेष्टां गतिमाप्नुयात्
॥ २३४ ॥ अश्वमेधमवाप्नोति लक्षपूजाविधायकः ॥ स्वयं चैनं तथा लक्ष्मीर्भजते नात्र संशयः ॥२३५ ॥ रक्तपद्मप्रदानेन रुक्ममाषप्रदो भवेत् ॥
लतां दत्त्वा च धर्मात्मा वह्निष्टोमफलं लभेत् ॥ २३६ ॥ सहस्रं च तथा दत्त्वा सूर्यलोके महीयते ॥ विष्णुलोकमवाप्नोति लक्षपूजाविधायकः ॥
॥ २३७ ॥ स्वयमेनं तथा लक्ष्मीर्भजते नात्र संशयः ॥ रक्तपद्मप्रदो विष्णोस्तस्य स्याद्विगुणं फलम् ॥ २३८ ॥ नीलोत्पलसमं दानं चम्प
कस्य प्रकीर्तितम् ॥ मल्लिकापुष्पजातीनां यूथिकायास्तथैव च ॥ २३९ ॥ तथा कुब्जकजातीनां फलस्यार्धं प्रकीर्तितम् ॥ जातीपुष्पप्रदानेन
गन्धर्वैः सह मोदते ॥२४०॥ जातीपुष्पाष्टकं दत्त्वा वह्निष्टोमफलं लभेत्॥ जातीपुष्पसहस्रेण यथेष्टाङ्गतिमाप्नुयात् ॥ १४१ ॥ श्वेतद्वीपमवाप्नोति
लक्षपूजाविधायकः ॥ जातीपुष्पयुतां मालां कर्पूरपटवासिताम् ॥२४२॥ निवेद्य देवदेवाय यत्फलं प्राप्नुयान्नरः ॥ श्वेतैः पुष्पैः समभ्यर्च्य सर्वा
न्कामानवाप्नुयात् ॥ २४३ ॥ आश्चर्यमाप्नुयाल्लोके पीतैर्देवं समर्चयन् ॥ शत्रूणामभिचारेषु तथा कृष्ण समर्चयेत् ॥ २४४ ॥ सुवर्णपुष्पैरभ्य

र्च्य राजसूयफलं लभेत् ॥ रत्नैर्देवमथाभ्यर्च्य राजा भवति भूतले ॥ २४५ ॥ कृत्वा पुष्पगृहं विष्णोः पुष्पैर्वाथ वितानकम् ॥ फलेन योगमा
प्नोति राजसूयाश्वमेधयोः ॥ २४६ ॥ किङ्किणीजालसंयुक्तं देवरामागणोज्ज्वलम् ॥ वीणामुरजगीताढ्यं विमानमधिरोहति ॥ २४७ ॥ पुष्पप्रदानं
मङ्गल्यमलक्ष्मीविप्रणाशनम् ॥ लक्ष्मीवृद्धिकरं ज्ञेयं सौमनस्यविवर्द्धनम् ॥ २४८ ॥ सौभाग्यजननं चैव तेजोबलविवृद्धिदम् ॥ न रत्नैर्न
सुवर्णेन न च वित्तेन भूरिणा ॥ २४९ ॥ तथा प्रसादमायाति यथा पुष्पैर्जनार्दनः ॥ वासन्तीमल्लिकापुष्पं तथा च वार्षिके च वा ॥ २५० ॥
कुप्यकं यूथिका चैव तथा चैवातिमुक्तकम् ॥ केतकीं चम्पकं चैव माषवृणकमेव च ॥ २५१ ॥ पुरन्ध्रमञ्जरीपुष्पं चूतपुष्पं तथैव च ॥
बन्धुजीवकपुष्पं च कुसुमं कुङ्कुमस्य च ॥ २५२ ॥ जातीपुष्पाणि सर्वाणि कुन्दपुष्पं तथैव च ॥ पाटली च तथा वृत्तान्नीलमिन्दीवरं तथा
॥ २५३ ॥ कुमुदं श्वेतरक्तं च श्वेतरक्तौ तथा शुभौ ॥ एवमादीनि पुष्पाणि दातव्यानि सदा हरेः ॥ २५४ ॥ स्वयमाहृत्य यो दद्यादारण्यकुसु
मानि च ॥ स राज्यं स्फीतमाप्नोति लोके निहतकण्टकम् ॥ २५५॥ पत्रं रम्यं फलं रम्यं पल्लवं वा द्विजोत्तमाः ॥ भक्त्या निवेद्य देवाय फलस्या
नन्त्यमश्नुते ॥ ३५६ ॥ कर्पूरबोधितानीव पट्टवासांसि यो नरः ॥ ददाति देवदेवाय सोऽश्वमेधफलं लभेत् ॥ २५७ ॥ पट्टवासांसि मुख्यानि
दत्त्वा स्वर्गमुपाश्नुते ॥ यशश्चाप्नोति विपुलं नाकपृष्ठे महीयते ॥ २५८ ॥ तथा सौभाग्यमाप्नोति पट्टवासप्रदो नरः ॥ धूपेनाभ्यर्च्य देवेशं स्वर्ग
लोके महीयते॥२५९॥धूपानामुत्तमं धूपं गुग्गुलं क्षौद्रसर्पिमत्॥ दत्त्वा गुग्गुलुजं धूपं नाकपृष्ठे महीयते ॥२६०॥ मधुसर्पिःसमायुक्तं द्वादशाहात्फलं
लभेत् ॥ दत्त्वा चन्दनसारेण सौभाग्यं परमाप्नुयात् ॥२६१॥ तथैवागुरुसारेण परां सिद्धिमवाप्नुयात् ॥ धूपानामुत्तमं तद्वत्सर्वकामफलप्रदम् ॥
॥२६२॥ धूपं तुरुष्ककं दत्त्वा वह्निष्टोमफलं लभेत् ॥ दत्त्वा च कृत्रिमं मुख्यं सर्वान्कामानवाप्नुयात् ॥२६३॥ गन्धयुक्तिकृतं दत्त्वा यज्ञं गोसवमा
प्नुयात् ॥ दत्त्वा कर्पूरनिर्यासं वाजिमेधफलं लभेत् ॥ २६४ ॥ वसन्ते गुग्गुलुं दत्त्वा वह्निष्टोममवाप्नुयात् ॥ ग्रीष्मे चन्दनसारेण द्वादशाह
त्फलं लभेत् ॥२६५॥ तुरुष्कदानेन तथा प्रावृष्यमरतां व्रजेत् ॥ कर्पूरदानाच्छरदि राजसूयमवाप्नुयात् ॥ २६६ ॥ हेमन्ते मृगदर्पेण वाजिमेधफलं
लभेत् ॥ शिशिरेऽगुरुसारेण सर्वमेधमवाप्नुयात् ॥ २६७ ॥ विना मृगमदाद्धूपं जीवजातं विवर्जयेत् ॥ धूपदः स्वर्गमाप्नोति धूपदः पुष्टिमश्नुते
॥२६८॥ धूपलेखा यथैवोर्ध्वं नित्यमेव प्रसर्पति ॥ तथैवोर्ध्वगतिं नित्यं धूपदाता भवेन्नरः ॥२६९॥ धूपराजिर्यदोर्ध्वं स्यादेकादीनां द्विजोत्तमाः ॥
सन्निधानं तथा विद्याद्देवदेवस्य चक्रिणः॥२७०॥ दीपं चक्षुःप्रदं दद्यात्तथैवोर्ध्वगतिप्रदम् ॥ ऊर्ध्वं यथा धूपशिखा दाता चोर्ध्वगतिस्तथा ॥२७१॥

ख्यातो भवति लोकेषु स्वर्गलोकं च गच्छति ॥ यावदक्षिनिमेषाणि दीपो देवालये ज्वलेत् ॥ २७२ ॥ तावद्वर्षसहस्राणि धर्मात्मा लोकमश्नुते ॥ महावर्तिप्रदानेन कुले देशे तथैव च ॥ २७३ ॥ श्रैष्ठ्यमाप्नोति सर्वत्र यथा सर्वं विराजते ॥ मधुपर्कप्रदानेन परं पदमिहाश्नुते ॥२७४॥ घृतं दधि तथा क्षौद्रं मधुपर्कं विजानता ॥ ततस्त्वर्हणदानेन सर्वपापैः प्रमुच्यते ॥ २७५ ॥ तथैवाचमनीयस्य दानाद्ब्राह्मणसत्तमाः ॥ अनन्ततृप्तिमा प्नोति स्वर्गलोकं च गच्छति ॥ २७६ ॥ दत्त्वा चासंविभागाय तथैवान्नमतन्द्रितः ॥ त्रैलोक्यतर्पिते पुण्यं तत्क्षणात्समवाप्नुयात् ॥ २७७ ॥ अक्षय्यमन्नदानं च पितॄंस्तस्योपतिष्ठते ॥ ओदनं व्यञ्जनोपेतं दत्त्वा स्वर्गमवाप्नुयात् ॥ २७८ ॥ परमान्नप्रदानेन तृप्तिं विन्दति शाश्वतीम् ॥ विष्णुलोकमवाप्नोति कुलमुद्धरति स्वकम् ॥ २७९ ॥ घृतौदनप्रदानेन दीर्घमायुरवाप्नुयात् ॥ दध्योदनप्रदानेन श्रियमाप्नोत्यनुत्तमाम् ॥ २८०॥ क्षीरौदनप्रदानेन दीर्घं जीवितमाप्नुयात् ॥ इक्षूणां चैव दानेन परं सौभाग्यमाप्नुयात् ॥२८१॥ रसानां चैव भागी स्यात्स्वर्गलोकं च गच्छति ॥ सर्वान्कामानवाप्नोति क्षौद्रं यस्तु प्रयच्छति ॥ २८२ ॥ तदेव तुहिनोपेतं राजसूयमवाप्नुयात ॥ फाणितस्य प्रदानेन वह्न्यादेयं फलं लभेत ॥ २८३ ॥ तथा गुडप्रदानेन दशगोदो भवेन्नरः ॥ मुख्यं दण्डं तथा दत्त्वा मैत्रीं सर्वेण विन्दति ॥ २८४ ॥ स्त्रीषु वल्लभतामेति दत्त्वा च गुडिकां तथा ॥ सितायाश्च प्रदानेन सर्वान्कामानवाप्नुयात ॥ २८५ ॥ निवेद्येक्षुरसं भक्त्या परं सौभाग्यमाप्नुयात् ॥ वह्निष्टोममवाप्नोति यावक स्य निवेदकः ॥ २८६ ॥ अतिरात्रमवाप्नोति तथा धूपनिवेदकः ॥ वैदलानां च भक्ष्याणां दानात्कामसमवाप्नुयात ॥ २८७ ॥ दीर्घजीवितमा प्नोति घृतपूरनिवेदकः ॥ मोदकानां प्रदानेन कामानाप्नोत्यभीप्सितान् ॥ २८८॥ नानाविधानां भक्ष्याणां दानात्स्वर्गमवाप्नुयात् ॥ रागषांड वदानेन पौण्डरीकमवाप्नुयात् ॥ २८९ ॥ भोजनीयप्रदानेन तृप्तिमाप्नोत्यनुत्तमाम् ॥ तथा लेह्यप्रदानेन सौभाग्यमधिगच्छति ॥ २९० ॥ वलवर्णमवाप्नोति चोष्याणां विनिवेदकः ॥ पेयानां च प्रदानेन तृप्तिमाप्नोत्यनुत्तमाम् ॥२९१॥ पानकानि सुगन्धीनि शीतलानि विशेषतः ॥ निवेद्य देवदेवाय वाजिमेधमवाप्नुयात् ॥ २९२ ॥ त्वगेलानागकुसुमकर्पूरसितसंयुतैः ॥ सिताक्षौद्रगुडोपेतैर्गन्धवर्णसमन्वितैः ॥ २९३ ॥ राज सूयमवाप्नोति पानकैर्विनिवेदितैः ॥ निवेद्य नालिकेराम्बु वह्निष्टोमफलं लभेत् ॥ २९४ ॥ धान्यानां क्षौद्रयुक्तानां लाजानां च निवेदकः ॥ मुख्यानां चैव सक्तूनां वह्निष्टोममवाप्नुयात ॥ २९५ ॥ वानप्रस्थाश्रितं पुण्यं लभेच्छाकनिवेदकः ॥ दत्त्वा हारितकं चैव तदेव फलमाप्नुयात ॥ २९६ ॥ सुकुले प्राप्नुयाज्जन्म कन्दमूलनिवेदकः ॥ नीलोत्पलविदारीणां तरूटस्य तथा द्विजाः ॥ २९७ ॥ कंददानादवाप्नोति वानप्रस्थ

फलं लभेत् ॥ त्रपुश्च चारुकं दत्त्वा पुण्डरीकफलं लभेत् ॥ २९८ ॥ कर्कन्धुबदरौ दत्त्वा तथा पालेवतं ध्रुवम् ॥ पारूषकं तथा प्रोक्तं पनसं नारिकेलकम् ॥ २९९ ॥ भव्यं मोचं तथा चौचं खर्जूरमथ दाडिमम् ॥ आम्रकादिषु चाक्षोटमारनालप्रियालुजम् ॥ ३०० ॥ जाम्बू बिल्वामले चैव जात्यश्रीनारुकस्तथा ॥ नारङ्गबीजपूरौ च राजफल्गुफलान्यपि ॥ ३०१ ॥ तथा फल्गूनि मुख्यानि देवदेवाय भक्तितः ॥ एवमादीनि चान्यानि यः फलानि प्रयच्छति ॥३०२॥ क्रियासाफल्यमाप्नोति स्वर्गलोकं तथैव च ॥ उदुम्बरं कपित्थं च तथा दन्तशठं च यत् ॥ ३०३ ॥ एवमादीनि देवाय न देयानि कदाचन ॥ प्राप्नोति बलमारोग्यं मृद्वीकाविनिवेदकः ॥३०४ ॥ रसान्मुख्यानवाप्नोति सौभाग्यमपि चोत्तमम् ॥ आम्रैरभ्यर्च्य देवेशमश्वमेधफलं लभेत्॥ ३०५ ॥ पूगजातीफले दत्त्वा जातीपत्रं तथैव च ॥ लवङ्गमथ कङ्कोलमेलां कटुफलं तथा ॥ ३०६ ॥ ताम्बूलीनां किसलयं स्वर्गलोकमवाप्नुयात् ॥ सौभाग्यमुत्तमं लोके तथा रूपमनुत्तमम् ॥ ३०७ ॥ मुखवासप्रदानेन स्त्रीणां वल्लभतां व्रजेत् ॥ मात्राणां च प्रदानेन नरकं नैव गच्छति ॥ ३०८ ॥ मात्राभिः पूरयेद्भोज्यांस्तथा भक्ष्यानसम्भवे ॥ यत्किञ्चिद्भक्तिसंयुक्तो देवदेवे प्रयच्छति ॥ ३०९ ॥ तदेवाक्षय्यमाप्नोति स्वर्गलोकं च गच्छति ॥ न देवस्तोषमायाति प्रभूतैर्धनसञ्चयैः ॥ ३१० ॥ यथा तोषमवाप्नोति भक्त्या भक्तजनप्रियः ॥ भक्त्या कामानवाप्नोति भक्त्या स्वर्गं च गच्छति ॥ ३११ ॥ भक्त्या तत्पदमाप्नोति यत्र गत्वा न शोचति ॥ सामान्यभक्त्या यद्दत्तं तद्धि पद्भ्यां प्रयच्छति ॥ ३१२ ॥ एकान्तभावोपगमैर्मूर्ध्ना द्विजवरोत्तमाः ॥ श्वेतेन वस्त्रयुग्मेन तथा मुक्ताफलैः शुभैः ॥ ॥ ३१३ ॥ मुख्यकर्पूरधूपेन पयसा पायसेन च ॥ पद्मसूत्रस्य वर्त्या च घृतधूपेन चाप्यथ ॥ ३१४ ॥ पूजयन्सर्वशुक्ला स्यात्सर्वकामप्रदा शिवा ॥ कृत्वेमां मुच्यते रोगी रोगाच्छीघ्रमसंशयम् ॥३१५॥ दुःखार्तो मुच्यते दुःखाद्बद्धो मुच्येत बन्धनात् ॥ राजग्रस्तश्च मुच्येत तथा राजभयान्नरः ॥ ॥३१६॥ क्षेमेण गच्छेदध्वानं तथानर्थविवर्जितः ॥ तैलेन स्नापितं देवं कुङ्कुमेनानुलेपयेत् ॥ ३१७ ॥ रक्तैर्वस्त्रैः समभ्यर्च्य विद्रुमैश्च तथा नरः ॥ बन्धुजीवकपुष्पैश्च धूपेनागुरुजेन च ॥ ३१८ ॥ तैलदीपेन वर्त्या च महारजतरक्तया ॥ द्राक्षापानकयुक्तेन वटकैः कृसरेण च ॥ ३१९ ॥ पूजयेत्सर्वरक्ता स्याच्छत्रुपक्षक्षयङ्करी ॥ सौभाग्यजननी लोके धनधान्यविवर्द्धनी ॥ ३२० ॥ स्वर्गदा फलदा चैव नरनारीवशङ्करी ॥ एवं दानफलं प्रोक्तं राजसानां मया द्विजाः॥३२१॥ अकामः सात्त्विके लोके यत्किञ्चिद्विनिवेदयेत् ॥ तेनैव स्थानमाप्नोति यत्र गत्वा न शोचति ॥३२२॥ धर्मवाचनिका मूढाः फलकामा नराधमाः ॥ येऽर्चयन्ति जगन्नाथं ते कामान्प्राप्नुवन्त्यथ ॥ ३२३ ॥ अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ॥ अका

मानां मनुष्याणां सात्त्विकानां द्विजोत्तमाः ॥ ३२४ ॥ सर्वदुःखविमोक्षाय भवन्तीयमपि ध्रुवम् ॥ अनन्तो भगवान्विष्णुस्तस्य कामविवर्जितैः ॥
॥३२५॥ यदेव दीयते किञ्चित्तदेवाक्षय्यमुच्यते ॥पद्भ्यां प्रतीच्छते देवः सकामेन निवेदितम् ॥ ३२६ ॥ मूर्ध्ना प्रपद्यते दत्तमकामेन द्विजोत्तमाः॥
नैवेद्येनाथ पुष्पैर्वा विविधैर्धनसंचयैः ॥ ३२७ ॥ नास्ति प्रयोजनं तस्य सर्वगस्यामितात्मनः ॥ भक्त्या प्रतीच्छते दत्तं भक्तानुग्रहकारणात ॥
॥ ३२८ ॥ तस्मात्सर्वास्ववस्थासु भक्तिरेवात्र कारणम् ॥ एकान्तभावोपगताः सर्वकामविवर्जिताः ॥३२९॥ वैष्णवं पदमासाद्य न निवर्तेत कर्हि
चित॥ न भयं नारकं तेषां न च व्याधिकृतं भयम्॥३३०॥न वृत्तिशत्रुजं वापि ये प्रपन्ना जनार्दनम्॥३३१॥निवेद्य भक्त्या मधुसूदनाय द्रुमच्छदं
वाप्यथ तत्प्रसूनम् ॥ दूर्वाङ्कुरं वा सलिलं द्विजेन्द्राः प्राप्नोति लोकान्मनसा यथेष्टान् ॥ ३३२ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेय
वज्रसंवादे मुनीन्प्रति हंसगीतासु दानधर्मनिरूपणो नामैकचत्वारिंशदुत्तरत्रिशततमोऽध्यायः ॥ ३४१ ॥ ऋषय ऊचुः ॥ नमस्ते देवदेवेश वासु
देव जनार्दन ॥ भक्तानुकंप वरद पुण्डरीकाक्ष सुव्रत ॥ १ ॥ ब्रह्मण्य पुरुषाचिन्त्य सृष्टिसंहारकारक ॥ त्रैलोक्यनाथ गोविन्द शरणागतवत्सल ॥
॥ २ ॥ सर्वेश सर्वगेशान सर्वव्यापिन्नमोस्तु ते ॥ नमोस्तु ते जगन्नाथ जगतामीश्वरेश्वर ॥ ३ ॥ सुरार्तिहर देवेश पितामहहरस्तुत ॥ विष्णो
जिष्णो हरे कृष्ण विभो सूर्येन्दुलोचन ॥ ४ ॥ सहस्रसूर्यप्रतिम जगत्पालनतत्पर ॥ वराहनरसिंहाद्य वामनानंतविक्रम ॥ ५ ॥ त्रिविक्रम
क्रमाक्रांतब्रह्माण्डतटमण्डल ॥ चक्रधाराहताशेषदेवशत्रुगणेश्वर ॥ ६ ॥ स्मृतिमात्रसमस्ताद्यविघ्ननाशनकारक ॥ शास्त्रोपदेशादस्माकं हृदि
स्थिततमोन्तक ॥ ७ ॥ वैकुण्ठ कुण्ठिताशेषदानवास्त्रबलानघ ॥ जठरान्तरसंलीनसमस्तभुवनत्रय ॥८॥ शशाङ्कलेखासंकाशदंष्ट्रोद्धृतवसुंधर ॥
महावराह विध्वस्तहिरण्याक्षमहासुर ॥ ९ ॥ दैत्येन्द्रवक्षोरुधिररक्तीकृतनखाङ्कुर ॥ ज्वालामालापरिक्षिप्तनरसिंहवपुर्धर ॥ १० ॥ लक्ष्मीकटाक्षविक्षे
पशबलीकृतविग्रह ॥कौस्तुभोद्भासितोरस्क तथा चामीकरांबर ॥ ११ ॥ भोगिभोगासनासीन तार्क्ष्यप्रवरकेतन ॥ शशाङ्कशतसङ्काश सप्तकन्धर
वेदप॥१२॥ मधुकैटभविध्वंसमेदोवर्धितभूतल ॥ नाभीसरोजसंभूतचतुर्मुख नमोस्तु ते ॥१३॥सर्वतः पाणिपादान्त सर्वतोक्षिशिरोमुख ॥ सर्वेन्द्रि
यगुणोपेत सर्वत्र पुरुषोत्तम ॥१४॥ योगिनां त्वं परं चक्षुर्योगिनां त्वं गतिः परा ॥ योगिनस्त्वां च संप्राप्य निवर्तन्ते न कर्हिचित् ॥१५॥ नमस्ते
पुरतो देव पृष्ठतश्च नमोस्तु ते ॥ तिर्यङ्नमोस्तु ते देव सर्वत्र च नमोस्तु ते॥१६॥मार्कण्डेय उवाच ॥ एवं स्तुतः स भगवानृषिभिस्तैस्तदानघः॥
दिव्यं चक्षुर्ददौ तेषामृषीणां भावितात्मनाम् ॥ १७ ॥ तेपश्यन्सकलं देहे तस्य त्रिभुवनं ततः ॥ हंसरूपधरस्याथ विष्णोरमिततेजसः ॥ १८ ॥

विश्वरूपधरं हंसं दृष्ट्वा रूपं तपोधनाः ॥ मूर्धभिः प्रणता जग्मुस्ततः सर्ववसुंधराम् ॥ १९ ॥ ततस्तानब्रवीत्सर्वान्देवो मधुरया गिरा ॥ मेघदु
न्दुभिनिर्घोषः प्रणतार्तिविनाशनः॥२०॥ उत्तिष्ठत द्विजश्रेष्ठा वरं वरयतानघाः ॥ अमोघदर्शनं दृष्ट्वा समेता मनसेप्सितम् ॥२१॥ ऋषय ऊचुः ॥
नष्टो मोहः स्मृतिर्लब्धा ज्ञानं प्राप्तं जनार्दन ॥ विश्वरूपो भवान्दृष्टः किमन्येन वरेण नः ॥ २२ ॥ तथापि यदि देवेश देयोऽस्माकं वरस्त्वया ॥
भक्तिर्भवतु निर्विघ्ना त्वयि नित्यं जनार्दन॥२३॥त्वया सह च योस्माकं संवादमिममुत्तमम् ॥ पठेत्समस्तपापेभ्यो मोक्षस्तस्य तथा भवेत् ॥ २४ ॥
रोगाद्रोगी भयाद्भीतो बद्धो मुक्तस्तु बन्धनात् ॥ धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात् ॥२५॥ कामानवाप्नुयात्कामी मोक्षार्थी मोक्षमाप्नुयात् ॥
यश्चेदं धारयेद्विद्वान्स याति परमां गतिम् ॥ २६ ॥ श्रवणादस्य शास्त्रस्य स्वर्गलोकं च गच्छति ॥ धन्यं यशस्यमायुष्यं पुत्रीयं सर्वकामदम् ॥
॥२७॥ पुण्यमस्तु तथैवैतच्छास्त्रं मधुनिषूदन ॥ विष्णोः प्रसादात्संवृत्ताच्छ्रुत्वैतच्छास्त्रमुत्तमम् ॥२८॥ शास्त्रात्समग्रादपि सारभूतं संवादमेतत्पुरु
षोत्तमस्य ॥ द्विजोत्तमानां पुरुषस्त्वधीत्य कामानभीष्टान्मनसा लभेत ॥ २९ ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे मुनी
न्प्रति हंसगीतासु मुनिदृष्टहंसविश्वरूपदर्शनो नाम द्विचत्वारिंशदुत्तरत्रिशततमोऽध्यायः ॥ ३४२ ॥ हंसगीता समाप्ता ॥ वज्र उवाच ॥
अतीव सुमुखाराध्यो देवो विष्णुरुरुक्रमः ॥ स्तुतेन दर्शयामास विश्वरूपं द्विजन्मनाम् ॥ १ ॥ प्रसादं परमं तस्य ब्रूहि भक्तजने मम ॥तृप्तिं ब्रह्मन्न
गच्छामि शृण्वन्नेतत्कथामृतम् ॥ २ ॥ मार्कण्डेय उवाच ॥ स विधिज्ञो महाराज मातलिः शक्रसारथिः ॥ तस्यास्ति सदृशी कन्या
गुणकाशीति विश्रुता ॥ ३ ॥ मातलिर्नारदश्चैव अन्वेष्टुं तद्वनं पुरा ॥ चंक्रम्यमाणौ सकलमार्यकस्यात्मजात्मजम् ॥ ४ ॥ सुमुखाख्यं
ददृशतुस्तौ गृहीत्वा गतावुभौ ॥ नागे शक्रं ततः शक्रादयाचेतां तु तावुभौ ॥ ५ ॥ सुमुखस्याभयं तार्क्ष्यात्तयोः शक्रो ददौ वरम् ॥
वीर्यज्ञस्तार्क्ष्यवीर्यस्य स ययौ केशवान्तिकम् ॥ ६ ॥ सुमुखस्याभयं प्रादात्तार्क्ष्यं मधुनिषूदनः ॥ आजगाम ततस्तार्क्ष्यः
सरोषः केशवान्तिकम् ॥ ७ ॥ ॥ गरुड उवाच ॥ ॥ किमवज्ञाय मां कृष्ण सुमुखे दीयते वरः ॥ मम पृष्ठगतः शत्रूंस्त्वं
निहंसि च बुद्ध्यसे ॥ कुटुम्बाभरणं शत्रुं पन्नगं मम रक्षसि ॥ ८ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ एवमुक्तस्तदा तेन विष्णुर्गरुडमब्रवीत् ॥
॥ ९ ॥ न मे शक्तो जगद्वोढुं सकलं विहगेश्वर ॥ अहमेवात्मनात्मानं धारयामि रणेरणे ॥ १० ॥ शक्तिश्चेदस्ति वोढुं ते भुजमेकं वहस्व मे ॥
एवमुक्त्वा ददौ पृष्ठे तस्य सव्यं भुजं हरिः ॥११ ॥ ततो विषण्णवदनः पक्षत्यागात्खगोत्तमः ॥ क्लान्तो दीनश्च तुष्टाव देवेशं मधुसूदनम् ॥ १२ ॥

॥ ॥ गरुड उवाच ॥ ॥ नमस्ते देवदेवेश सुरासुरनमस्कृत ॥ अजेय पुण्डरीकाक्ष शरणागतवत्सल ॥ १३ ॥ न मया त्वद्बलं ज्ञातमात्म
सम्भावितात्मना ॥ त्वमेव देव त्रैलोक्यं सदा धारयसेऽनघ ॥१४॥ आत्मानमात्मना देव त्वमेव वहसे सदा ॥ यस्य ते देव सकलं देहे त्रिभुवनं
स्थितम् ॥ १५ ॥ तस्य वोढुं कथं शक्ता मद्विधा हि सहस्रशः ॥ तस्मात्प्रसीद भगवन्मम ध्वजनिवासिनः ॥ १६ ॥ नास्त्यन्तस्तव देवेश
कर्मणां भुवनत्रये ॥ कस्ते कीर्तयितुं शक्तः कर्माण्यनवशेषतः ॥ १७ ॥ कर्मणां कीर्तनं वा ते का स्तुतिः परमेश्वर ॥ सर्वत्र सर्वशक्तिस्त्वं प्रसीद
मम शत्रुहन् ॥ १८ ॥ सर्वभूतकृतावास वासुदेव जगत्पते ॥ कल्पान्ताम्भोधिशयन नारायण महाद्युते ॥ १९ ॥ नाभीकमलकिंजल्कपिञ्जरी
कृतविग्रह ॥ प्रसीद मे नमस्तेऽस्तु पक्षिणो ध्वजवासिनः ॥ २० ॥ ॥ श्रीभगवानुवाच ॥ ॥ आत्मसम्भावना तार्क्ष्य न कार्या ते
कदाचन ॥ अहमेवात्मनात्मानं वहामि त्वां च धारये ॥ २१ ॥ प्रीता न च त्वया भार्या यदपक्षः कृतो ह्यसि ॥ मया त्रिभुवनं न्यस्तं त्वदर्थ
मखिलं भुजे ॥ २२ ॥ त्वया तुल्यो हि बलवाँल्लोकेऽन्यो नास्ति कश्चन ॥ यस्य दोर्दण्डसंस्पर्शाज्जीवितं न च निर्गतम् ॥ २३ ॥ यद्वश्शरीर
जो भूत्वा बलवान्खगसत्तम ॥ विशेषवन्तः पक्षांते भविष्यन्ति न संशयः ॥ २४ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ एवमुक्तः सुपर्णस्तु सुपर्णान्प्रा
तवाप्नुनः ॥ तेजोबलाधिकत्वं वा लेभे देवप्रसादतः ॥ २५ ॥ एवं पुरुषवत्तार्क्ष्यः स्तूयमानश्च शार्ङ्गिणम् ॥ भूय एव सुपर्णत्वं गमितोऽतिबलः
कृतः ॥ २६ ॥ शक्रयाचितमात्रेण सुमुखोऽप्यमरः कृतः ॥ तस्माद्राजन्विजानीहि तस्य दानवविद्विषः ॥२७॥ नास्त्यदेयं हि भक्तेषु देवराज्यमपि
ध्रुवम् ॥ मृत्युपाशगृहीतानां पतनान्नरके तथा ॥ स्मृतमात्रः स देवेशस्तद्भयाद्विनिवर्तकः ॥२८ ॥ निहतसकलदुःखो भक्तिभाजां नराणां द्विज
विबुधवराणां पूजनीयोऽरिहन्ता ॥ खगपनृपतियायी नीरसंजातवर्णो भवतु मधुरिपुस्ते भक्तिनम्रस्य तुष्टः ॥ २९ ॥ इति श्रीविष्णुधर्मोत्तरे
तृतीयखण्डे मार्कण्डेयवज्रसंवादे सुमुखोपाख्यानवर्णनो नाम त्रिचत्वारिंशदुत्तरत्रिशततमोऽध्यायः ॥ ३४३ ॥ ॥ छ ॥ ॥ ॥
वज्र उवाच ॥ श्रोतुमिच्छाम्यहं त्वत्तः प्रसादं परमं हि यत् ॥ कृतं भक्तजने तेन विष्णुना प्रभविष्णुना ॥१॥ मार्कण्डेय उवाच ॥ हते त्रिभुवने
राजञ्शक्रस्य बलिना पुरा ॥ जगाम शक्रः शरणं कश्यपं पितरं ततः ॥ २ ॥ कश्यपः शक्रमादाय जगामाथ पितामहम् ॥ तमाह वरदो
ब्रह्मा गच्छ कश्यप केशवम् ॥३॥ क्षीरोदशायिनं देवं शरणं मधुसूदनम् ॥ तं च प्रार्थय पुत्रत्वे स ते पुत्रो भविष्यति ॥४॥ ततः स सर्वं त्रैलोक्यं
देवराजस्य दास्यति ॥ एवं चोक्तः कश्यपस्तु सार्धं त्रिदशपुङ्गवैः ॥ ५ ॥ क्षीराब्धिं स ततो गत्वा ददर्श तपसा हरिम् ॥ दृष्ट्वा स्तवेन

तुष्टाव ततस्तस्य तदा हरिः ॥ ६ ॥ प्रसन्नः पुत्रतामेत्य देवो वामनरूपधृक् ॥ त्रिभिर्न्नैतैस्त्रिभुवनं सर्वमाक्रम्य विश्वधृक् ॥ ७ ॥ प्रादाच्छक्राय राजेन्द्र बद्ध्वा दैत्येश्वरं बलिम् ॥ कश्यपेन स्तुतस्त्वेवं तस्य पुत्रत्वमागतः ॥८॥ वज्र उवाच ॥ स्तवेन येन तुष्टाव कश्यपो मधुसूदनम् ॥ तं स्तवं त्वं समाचक्ष्व सर्वपापहरं शिवम् ॥ ९ ॥ मार्कण्डेय उवाच ॥ शृणु राजन्स्तवं पुण्यं कश्यपेन प्रकीर्तितम् ॥ क्षीरोदशयनाद्दृष्ट्वा देवदेवं समुत्थितम् ॥ १० ॥ कश्यप उवाच ॥ ॐ नमोऽस्तु ते देवदेव एकशृङ्ग वृषार्चित सिन्धुवृक्ष वृषाकपे सुरप अनिन्दित भद्र कपिल विष्वक्सेन ध्रुव धर्म धर्मध्वज वैकुण्ठ वृषावर्त अनादिमध्यनिधन जनप्रिय वृष्णिज अमृतेशय सनातन त्रिधामन् त्रिधाम तुषित दुन्दुभे महतांलोक लोकनाभे पद्मनाभ विरिञ्च बहुरूप अक्षणादक्षय हव्यभुक् खण्डपरशो चक्र मुण्डकेश हंस महादक्षिण हृषीकेश सूक्ष्म महामुनिस्तोम विरजस्तम सर्वलोकप्रतिष्ठ शिपिविष्ट अतपा अग्रज धर्मज धर्मनाभ गभस्तिनाभ चन्द्ररथ अपाप्मन् त्वमेव समुद्रवास अज एकपात् सहस्रंभित महाशीर्ष सहस्रदृक् सहस्रपाद अयोमुख महापुरुष सहस्रबाहो सहस्रमूर्ते सहस्राक्ष सहस्रप्रभव सहस्रशस्त्वामाहुर्वेदविदो वेदविदम् ॥ सर्वेषामेव विश्वत्वमाहुः पुष्पहास परमचरत्वमेव वौषट् वषट्कार स्वाहा मखेषु भागप्राशिनं शतधारं सहस्रधारं च भूर्वा भुवर्वा त्वमेव ब्रह्ममय ब्राह्मणेय ब्रह्मा दिशस्त्वमेव द्यौरसि पृथिव्यसि मातरिश्वासि होता पोता मन्ता नेता होम्यहेतुस्त्वमेवाग्र्य विश्वधाम्ना त्वमेव दिग्भिः स्रग्भाण्ड ईज्योऽसि समाधासि सेमिधिस्त्वमेव गतिर्मतिमतामसि योगोऽसि मोक्षोऽसि परमसि सुगसि धातासि यज्ञोऽसि सोमोऽसि धूमोऽसि दीक्षासि दक्षिणासि विश्वमसि स्थविर तुराषाड् हिरण्यगर्भ नारायण अनंत वृणसमे आदित्यवर्ण आदित्यतेजाः महापुरुष पुरुषोत्तम आदिदेव पद्मनाभ पद्महास पद्मशय पद्माक्ष हिरण्याग्रकेश शुक्ल विश्वात्मन्विश्वदेव विश्वतोमुख विश्वाख्य विश्वसम्भव विश्वभुक्त्वमेव सुविक्रम अतिभूः प्रभाकर शम्भुः भवःस्वयम्भू भूतादिः महाभूत विश्वग विश्वं त्वमेव विश्वगोप्तासि पवित्रमसि हविः विश्वधात ऊर्ध्वकर्म अमृतत्त्वाग्र भुवःपात घृताक्त अग्ने द्रुहिण अनन्तकर्मन्वशं प्राग्र्यं विश्वपार्श्व पार्श्व त्वमेव विश्व वरार्थिनस्त्राहीति ॥ स्तोत्रेण यः काश्यपनिर्मितेन स्तोत्रं सदा देववरस्य कर्ता ॥ काल्यं शुचिस्तद्गतमानसेन गन्ता स लोकान्पुरुषोत्तमस्य ॥ ११ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख० मार्कण्डेयवज्रसंवादे कश्यपस्तोत्रवर्णनो नाम चतुश्चत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४४ ॥ छ ॥

॥ वज्र उवाच ॥ ॥ प्रसादं परमं तस्य केशवस्य महात्मनः ॥ ब्रूहि भक्तजने मह्यं देवदेवस्य चक्रिणः ॥ १ ॥ न हि तृप्याम्यहं तस्य शृण्वानः

श्रवणामृतम् ॥ हस्तत्राणप्रदो लोके य एकः पततां नृणाम् ॥ २ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ देवाश्च ऋषयश्चैव विवदन्तः पुरानघ ॥ बीजै र्यष्टव्यमित्येतत्त्रिवर्षपरमोषितैः ॥ ३ ॥ अजसंज्ञानि बीजानि छागं घ्नन्तुमथार्हसि ॥ पक्षोऽयमासीद्धर्मज्ञ ऋषीणां भावितात्मनाम् ॥ ४ ॥ देवानां तु पशुः पक्षस्ततो मार्गागतोभवत् ॥ राजोपरिचरो नाम वसुर्वसुमतां वरः ॥ ५ ॥ देवाश्च ऋषयश्चैव पपृच्छन्तस्तदा वसुम् ॥ यथोपनीतैर्यष्टव्य मित्युक्तं वसुना पुरा ॥ ६ ॥ गतेनानृतवाक्येन राजा हिंसाप्रवर्तिना ॥ नित्यमाकाशगो भूत्वा भूमेर्विवरगोभवत् ॥ ७ ॥ भूमेर्विवरगस्याथ देवपक्षार्थवादिनः ॥ निधनार्थं मतिं चक्रुर्देवभक्तस्य दानवाः ॥ ८ ॥ तेषां चिकीर्षितं श्रुत्वा देवाः शीघ्रपराक्रमाः ॥ न्यवेदयँस्तथा चक्रं देवाचार्ये बृहस्पतौ ॥ ९ ॥ बृहस्पतिस्ततो गत्वा भूमेर्विवरगं नृपम् ॥ रक्षामध्यापयामास वैष्णवीमपराजिताम् ॥ १० ॥ भूतभव्यभविष्याणां कर्मणामनु कीर्तनैः ॥ निर्मिता ब्रह्मणा विद्या सर्वबाधाक्षयङ्करी ॥ अध्याप्य तं च राजानमिदमाह बृहस्पतिः ॥ ११ ॥ बृहस्पतिरुवाच ॥ इहस्थो भोक्ष्यसे राजन्वसोर्धारां हुतां द्विजैः ॥ देवतानां प्रसादेन तया चाप्यायितः सदा ॥ १२ ॥ विद्यया चानया राजन्नवध्यस्त्वं भविष्यसि ॥ भूमेर्विवरसं स्थोऽपि दैत्यदानवराक्षसान् ॥ एवमुक्त्वा स राजानं तत्रैवान्तरधीयत ॥ १३ ॥ वज्र उवाच ॥ रक्षां तु तां मे कथय द्विजेन्द्र कृता तु या देव पुरोहितेन ॥ राज्ञो वसोर्भूमिबिलस्थितस्य रक्षा हि साग्र्या परमा मता मे ॥ १४ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० खं० मार्कण्डेयवज्रसंवादे भूविवरस्थितराज्ञो रक्षावर्णनो नाम पञ्चचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४५ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ ॐनमो भगवते वासुदेवाय नमोऽनन्ताय सहस्रशीर्षाय क्षीरोदार्णवशायिने शेषभोगपर्यङ्काय गरुडवाहनाय अजाय अजिताय पीतवाससे वासुदेव सङ्कर्षण प्रद्युम्न अनिरुद्ध हयशिरो वराह नरसिंह वामन त्रिविक्रम राम राम राम नमोऽस्तु ते नमोऽस्तु ते नमोऽस्तु ते ॥ असुरवरदैत्यदानवयक्ष राक्षसभूतप्रेतपिशाचकुम्भाण्डसिद्धयोगिनीडाकिनीस्कन्दपुरोगान्ग्रहान्नक्षत्रग्रहाँश्चान्यान्हन हन पच पच मथ मथ विध्वंसय विध्वंसय विद्रा वय विद्रावय शंखेन चक्रेण वज्रेण गदया मुसलेन हलेन भस्मीकुरु सहस्रबाहो सहस्रप्रहरणायुध जय जय विजय विजय अपराजित अप्रतिहतनेत्र ज्वल ज्वल प्रज्वल प्रज्वल विश्वरूप बहुरूप मधुसूदन महावराह महापुरुष वैकुण्ठ नारायण पद्मनाभ गोविन्द दामोदर हृषीकेश केशव सर्वासु रोत्सादन सर्वभूवशंकर सर्वदुःस्वप्नप्रभेदन सर्वयन्त्रप्रभञ्जन सर्वनागमर्दन सर्वदेवमहेश्वर सर्वबन्धविमोक्षण सर्वाहितमर्दन सर्वज्वरप्रणाशन सर्वग्रहनिवारण सर्वपापप्रशमन जनार्दन नमोऽस्तु ते स्वाहा ॥ य इमामपराजितां परमवैष्णवीं सिद्धां महाविद्यां जपति

पठति शृणोति स्मरति धारयति कीर्तयति वा न तस्याग्निवायुवज्रोपलाशनिवर्षभयम् । न समुद्रभयं न ग्रहभयम् । न चौरभयम् । श्वापद
भयं वा न भवेत् । क्वचिद्रात्र्यन्धकारस्त्रीराजकुलविद्वेषविषोपविषगरगदवशीकरणं विद्वेषणं विद्वेषणोच्चाटनवधबंधनभयं वा न भवेत् ।
एतैर्मंत्रैरुदाहृतैः सिद्धैः संसिद्धपूजितैः । तद्यथा ॐनमोऽस्तु ते अनघे अजिते अमिते अघृते अपराजिते पठितसिद्धे स्मरातिसिद्धे एकानंशे
उमे ध्रुवे अरुन्धति सावित्रि गायत्रि जातवेदसि मानस्तोके सरस्वति धरणि धारणि सौदामनि अदिति दिति विनते गौरि गान्धारि मातंगि
कृष्णयशोदे सत्यवादिनि ब्रह्मवादिनि कालि कापालि निद्रे सत्योपयानकारि स्थलगतं जलगतमन्तारिक्षगतं वा रक्ष रक्ष सर्वभूतेभ्यः । सर्वोप
द्रवेभ्यः स्वाहा । यस्याः प्रणश्यते पुष्पं गर्भो वा पतते यदि ॥ म्रियन्ते बालका यस्याः काकवन्ध्या च या भवेत् ॥ १ ॥ शस्त्रं धारयते
ह्येषां समरे काण्ड दारुणि ॥ गुल्मशूलाक्षिरोगाणां क्षिप्रं नाशयति व्यथाम् ॥ शिरोरोगज्वराणां च नाशनी सर्वदेहिनाम् ॥ २ ॥ तद्यथा हनहन
कालं सर सर गौरि गौरि धम धम विद्ये अलिताले माले गन्धे बन्धे पच पच विद्ये नाशय वा संहर दुःस्वप्नं विनाशय नाशनि रजनि
सन्ध्ये दुन्दुभिनादे मानसवेगे शंखिनि वज्रिणि चक्रिणि शूलिनि अपमृत्युविनाशिनि विश्वेश्वरि द्राविडि द्राविडि केशवदयिते पशुपतिसहिते
दुन्दुभिदमनि शबरि किराति । मातंगि ॐ द्रौंद्रौं भ्रों भ्रों क्रों क्रों तुरु तुरु येषां द्विषन्ति प्रत्यक्षं परोक्षं वा सर्वान्दम दम मर्द मर्द तापय तापय
गोपय गोपय उत्सादय उत्सादय ब्रह्माणि महेश्वरि वराहि वैनायिकि उपेन्द्रि आग्नेयि चामुण्डे वारुणि वायव्ये रक्ष रक्ष प्रचण्डविद्ये ॐइन्द्रो
पेन्द्रभगिनि विजये शान्तिस्वस्तिपुष्टिविवर्द्धनि कामांकुशे कामदुघे सर्वकामवरप्रदे सर्वभूतेषु मां प्रियं कुरु कुरु । आकर्षणि आवेशनि ज्वा
लामालिनि शोषणि सम्मोहनि नीलपताके । महानीले महागौरि महाश्री महाचान्द्रि महासौरि महामायूरि आदित्यरश्मि जाह्नवि यम
घण्टे किणिकिणि चिन्तामणि सुरभि सर्वासुरोत्पन्ने सर्वकामदुघे यथामनीषितं कार्यं तन्मम सिद्ध्यतु स्वाहा ॐ स्वाहा ॐ भूःस्वाहा ॐ भुवः
स्वाहा ॐस्वः स्वाहा ॐभूर्भुवःस्वःस्वाहा । यत्रैवागतं पापं तत्रैव प्रतिगच्छतु स्वाहा । ॐबले महाबले असिद्धसाधनि स्वाहेत्योम् । अमो
घां पठितसिद्धां वैष्णवीमपराजितां ध्यायेत् ॥ मार्कण्डेय उवाच ॥ एवं हि कृतरक्षस्य वसुधारामुपाश्नतः ॥ वसोर्वसुमतीगर्तें तिष्ठतो दनु ॥४६९॥
नन्दनाः ॥ १ ॥ अजग्मुर्विविधाकाराश्चतुरङ्गबलान्विताः ॥ नानाप्रहरणा दग्धा भीमवाचः सदारुणाः ॥ २ ॥ आगम्य वाग्भिरुग्राभि
स्तर्जयन्तश्च ते वसुम् ॥ निर्जघ्नुरायुधैर्भीमैर्देवपक्षपरं सदा ॥ ३ ॥ न च तेऽस्य रुजं चक्रुर्न च तानप्युदीक्षिता ॥ चिन्तयामास देवेशं मनसा

मधुसूदनम् ॥ ४ ॥ततो निष्फलयत्नास्ते दृष्ट्वा तन्महदद्भुतम् ॥ जग्मुः सर्वे गृहानेव विलक्षा दैत्यदानवाः ॥ ५ ॥ तेषु निष्फलयत्नेषु देवो गरुड मब्रवीत् ॥ गत्वा गरुडराजानं वसुं शीघ्रमिहानय ॥ ६ ॥ एवमुक्तः स गरुडो देवदेवेन चक्रिणा ॥ पक्षवातार्णवक्षोभक्षुब्धयादोगणो ययौ ॥ ॥ ७ ॥ ददर्श च भुवो गर्ते ध्यानसंमीलितेक्षणम् ॥ वसुराजोऽपि गरुडं ददर्श हरिवाहनम् ॥ ८ ॥ स दृष्ट्वा गरुडं प्राप्तं कृष्णभक्तिसमन्वितम् ॥ तुष्टाव गरुडं वाग्भिरर्थ्याभिरमितक्रियः ॥ ९ ॥ ॥ वसुरुवाच ॥ ॥ नमस्यामि महाबाहुं खगेन्द्रं हरिवाहनम् ॥ विष्णोर्ध्वजाग्रसंस्थान वित्रासितमहासुर ॥ १० ॥ नमस्ते नागदर्पघ्न विनतानन्दवर्धन॥ स्वपक्षवातनिर्धूतदीनदैत्यनिरीक्षित ॥ ११ ॥ परस्परस्य शापेन सुप्रतीक विभावसो ॥ गजकच्छपतां प्राप्तौ तावुभौ वैरसंयुतौ ॥१२॥ षडुच्छ्रितो योजनानि गजस्तद्द्विगुणायतः ॥ कूर्मस्त्रियोजनोत्सेधो दशयोजनमण्डलः॥१३॥ नखस्थौ तौ त्वया नीतौ हतौ भुक्तौ च पक्षिप ॥ परस्परकृतोच्छ्रायौ द्वारौ च परिमोक्षितौ ॥१४॥ निषादविषयं भुक्तं तत्र क्रूरमनिन्दितम् ॥ निषादीशस्ततो मुक्तस्तत्रापि ब्राह्मणस्त्वया ॥१५॥ त्वया रोहिणिवृक्षस्य योजनानां शतायता॥ शाखाभिन्नाः स्थिता यत्र वालखिल्याः सहस्रशः॥१६॥ तांस्तु वक्रगतान्कृत्वा नखस्थैर्गजकच्छपैः ॥ नभस्येव निरालम्बे सर्वतः परिवारितः॥१७॥त्वया जित्वा रणे सर्वान्देवाञ्शक्रपुरोगमान् ॥ आहृतं तु परं सोमं वह्नेर्वाप्यथ काश्यप ॥१८॥ नागौ दृष्टिविषौ कृत्वा रजसा भुवि चक्षुषोः॥ जिह्वाग्रनित्यगं भुजञ्चक्रे तौ देवनिर्मितौ ॥१९॥ आहृत्यापि त्वया सोमं नीतमेव न भक्षितम् ॥ तेन विष्णोर्ध्वजस्थाने वाहनत्वं गतोह्यसि ॥२०॥त्वया निक्षिप्य दर्भेषु सोमं नागाश्च वञ्चिताः ॥ जहार सहसा यत्र तच्छीघ्रं बलसूदनः ॥ २१ ॥ यत्र जिह्वा द्विधा भूता पन्नगानां द्विजोत्तमाः ॥ विनता मोचिता दास्यात्कद्वा पूर्वं जिता पणे ॥ २२ ॥ उच्चैःश्रवास्तु किंवर्णः शुक्ल इत्येव भाषती ॥ कृष्णवालमहं मन्ये पुच्छं दृष्ट्वैव वाक्छलात् ॥ २३ ॥ त्वया वज्रप्रहारेण पक्षयुक्तं पुरा स्वयम् ॥ दधीचिवज्रशक्राणां माननार्थाय नान्यथा ॥२४॥ तस्य पक्षस्य देवेन्द्रो यदा नान्तं हि दृष्टवान् ॥ तदा तव सुपर्णेति नाम ख्यातं जगत्त्रये ॥ २५ ॥ तेजसा भास्करं देवं जवेन च समीरणम् ॥ न ते तुल्यो महाभाग नागपक्षक्षयङ्कर ॥ २६ ॥ ध्यानमात्रे त्वयि विभो विश्वं स्थावरजङ्गमम् ॥ क्षिप्रं प्रणाशमायाति तथा सर्वभयानि च ॥ २७ ॥ स्वकया पक्षनाड्या त्वं ब्रह्माण्डं सकलं वहन् ॥ नोपयासि प्रभो खेदं यथा देवो जनार्दनः ॥ २८ ॥ त्वमृषिस्त्वं महाभागस्त्वं देवः पतगेश्वरः ॥ त्वं प्रभुस्तपनप्रख्यस्त्वं नस्त्राणमनुत्तमम् ॥ २९ ॥ बलोर्मिमान्साध्वरदीनसत्त्वः समृद्धिमान्दुष्प्रसहस्त्वमेव ॥ तपः श्रुतं सर्वमहीनकीर्तिरनागतादीन्विषयांश्च वेत्सि ॥ ३० ॥ त्वमु

त्तमः सर्वमिदं चराचरं गभस्तिभिर्भानुरिवावभासे ॥ समाक्षिपन्भानुसुतप्रभां मुहुस्त्वमन्तकः सर्वमिदं ध्रुवाध्रुव ॥ ३१ ॥ दिवाकरः परिक्रमति
यथा दहन्प्रजास्तथा दहसि हुताशनप्रभ ॥ भयङ्करः प्रलय इवाग्निरुत्थितो विनाशयत्युरगपरिवर्तपान्तकृत् ॥ ३२ ॥ खगेश्वरं शरणमुपागतो
स्म्यहं महौजसं वितिमिरश्रगोचरम् ॥ महाबलं गरुडमुपेत्य खेचरं महौजसं वरदमजेयमक्लमम् ॥ ३३ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख०
मार्कण्डेयवज्रसंवादे गरुडस्तोत्रं नाम षट्चत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४६ ॥ मार्कण्डेय उवाच ॥ स्तुतस्तु गरुडो राज्ञा पृष्ठमारोप्य
पार्थिवम् ॥ दर्शयामास देवस्य विष्णोरमिततेजसः ॥ १ ॥ स दृष्ट्वा देवदेवेशं प्रणतार्तिविनाशनम् ॥ तुष्टाव भक्त्या राजेन्द्र देवेशमपरा
जितम् ॥ २ ॥ ॥ वसुरुवाच ॥ ॥ नमस्ते पुण्डरीकाक्ष शरणागतवत्सल ॥ दैत्यदानवदर्पघ्न प्रणतार्तिविनाशन ॥ ३ ॥ कामका
मद कामघ्न विश्वयोने जगत्पते ॥ महामूर्तिनिशोत्थस्य तमसः प्रविनाशन ॥ ४ ॥ न ते विदुः सुरगणाः प्रभवं न महर्षयः ॥
आदिस्त्वं सर्वधर्माणामृषीणां च जगद्गुरो ॥ ५ ॥ सूक्ष्मस्त्वं सर्वभूतेभ्यो महद्भ्यश्च महत्तरः ॥ दूरगस्त्वं महाभाग सर्वेषामपि चागतः ॥ ६ ॥
सर्वभूतान्तरस्थोऽपि कर्मभिर्न च लिप्यसे ॥ अशरीरः शरीरस्थः सर्वभूतेष्ववस्थितः ॥ ७ ॥ पुरुषस्त्वं त्वमव्यक्तस्त्वमात्मा बुद्धिरेव च ॥ महा
भूतानि भगवस्त्वं तथैवेन्द्रियाणि च ॥ ८ ॥ योगिभिर्मृष्यसे योगज्ञानज्ञेयपुरातन ॥ ये त्वां भजन्ति ते यान्ति भगवन्परमां गतिम् ॥ ९ ॥
जयमनघमजेयं विश्वगं देवदेवं त्रिदशरिपुविनाशे नित्यमुद्युक्तशक्तिम् ॥ द्विजसुरवरवन्द्यं नाशनं कल्मषाणां शरणमुपगतोऽहं वासुदेवं शरण्यम्
॥ १० ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कंडेयवज्रसंवादे वासुदेवस्तोत्रं नाम सप्तचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४७ ॥
॥ मार्कण्डेय उवाच ॥ वसुना वसुवेशेन वाग्मिना विष्णुरीडितः ॥ उवाच प्राञ्जलिं प्रह्वं पार्थिवं पुरतः स्थितम्॥१॥ वासुदेव उवाच ॥नानृतं नृप
वक्तव्यं प्राणैः कण्ठगतैरपि ॥ धर्मप्रश्नो न वक्तव्यस्तथैकेन विशेषतः ॥ २ ॥ बहुज्ञेनापि धर्मज्ञ धर्मकामेन कर्हिचित् ॥ दुर्विज्ञेयास्तथा धर्माः
सूक्ष्मा राजन्दुरन्वयाः ॥ ३ ॥ तस्मान्नैकेन वक्तव्याः कदाचिदपि जानता ॥ उक्तानृतं महत्प्राप्तं त्वया कृच्छ्रं नराधिप ॥ ४ ॥ गतिभ्रंशस्तथै
वाप्ता देवयज्ञार्थवादिना ॥मम भक्तोऽसि सततं तेन ते निष्कृतिः कृता॥५॥ कालेनाल्पेन कल्पेन या न शक्या सुरासुरैः ॥ गच्छ पालय राज्यं
त्वं तथैवाविचलो भव ॥ ६ ॥ नावमानं त्वया कार्यं ब्राह्मणानां कथञ्चन ॥ ब्राह्मणो हि महद्भूतं विज्ञेयं दैवतं परम् ॥ ७ ॥ मार्कण्डेय उवाच ॥
एवमुक्त्वा वसुं विष्णुस्तत्रैवादर्शनं गतः ॥ तार्क्ष्येण सहितो राजन्विस्मितश्चाभवद्वसुः॥८॥राज्यं चावाप भूयोऽपि खेचरत्वं तथैव च॥ततः सभाजित

श्चापि देवैः सर्वैः समागतैः ॥ ९ ॥ एवं स देवेन हि भक्तियुक्तो रसातलस्थो वसुधाधिपेशः ॥ भयात्सुघोरात्प्रविमुच्य युक्तो राज्येन गत्वा नभसस्तथैव ॥ १० ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे वसूपाख्यानं नामाष्टचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥३४८॥ ॥ ॥ वज्र उवाच ॥ ॥ विश्वरूपं समाचक्ष्व देवदेवस्य चक्रिणः ॥ कस्य तूद्दर्शितं तेन भृगुवंशविवर्धन ॥ १ ॥ मार्कण्डेय उवाच ॥ ॥ एकान्तभावनाभक्तैर्दृष्टानि बहुशः पुरा ॥ विश्वरूपाणि देवस्य यान्यशक्यानि भाषितुम् ॥ २ ॥ वासुदेवप्रसादेन न भवेद्दिव्यदर्शनः ॥ विश्वरूपधरं द्रष्टुं तावच्छक्तिर्न विद्यते ॥ ३॥ तत्र यद्दर्शितं चैव नारदस्य पुरानघ ॥ तत्तेऽहं संप्रवक्ष्यामि विश्वदेवेन विष्णुना ॥ ४ ॥ नारदः सुमहद्भूतं नरनारायणाश्रयम् ॥ बदर्याश्रममित्युक्तं जगामातिमनोहरम् ॥ ५ ॥ चतुरात्मा हरिर्यत्र धर्मपुत्रत्वमागतः॥ हरिः कृष्णो नरश्चैव तथा नारायणः प्रभुः ॥ ६ ॥ हरिः कृष्णः स्थितो वृत्ते तदा लोकान्तरे किल ॥ नरनारायणौ देवौ तपस्युग्रे तथा रतौ ॥ ७ ॥ अष्टचक्रे स्थितौ याने भूतियुक्ते मनोहरे ॥ एकपादौ निरालम्बौ तथैवोर्ध्वभुजावुभौ ॥ ८ ॥ ददर्श नारदस्तत्र तावुभौ दीप्ततेजसौ ॥ अभिवाद्य गतौ देवौ तयोस्तु पुरतः स्थितः ॥ ९ ॥ पाद्यार्घाचमनीयाद्यैः पूजितः संस्तदा द्विजः ॥ नरनारायणाभ्यान्तु तत्रोवास तदाश्रमे ॥ १० ॥ आश्रमस्थः स विप्रेन्द्रः कदाचिद्देवसत्तमौ ॥ ददर्श विघ्नं कुर्वाणौ देवकर्म तथानघौ ॥११॥ ततः कृताह्निको प्राह नारदस्तौ जगद्गुरू ॥ भवन्तौ जगतां नाथौ भवन्तौ परमेश्वरौ ॥१२॥ आराधनार्थं कस्येह तपस्यभिरतावुभौ ॥ भवद्भ्यामर्च्यते कश्च दैवे पित्र्ये च कल्प्यते ॥१३॥(प्रकृतिर्या परास्माकं यतः सर्वस्य संभवः ॥ मर्यादादर्शनार्थाय नवं तमपराजितम् ॥ १४ ॥ पूजयामः सदा ब्रह्मन्दैवे पित्र्ये च कल्पिते ॥ ) विप्रान्देव गुरून्गाश्च पितॄंश्चैव जगत्त्रये ॥ १५॥ येऽर्चयन्त्यर्चयन्त्येव तं देवं परमेश्वरम् ॥ योऽयमप्यर्चयेद्देवं तेन स्यात्पूजितो हरिः ॥१६॥ विधिहीनं महाभाग स हि सर्वगतो यतः ॥ देवस्यान्यस्य यच्चार्चां कर्तुकामोऽर्चयेद्धरिम् ॥ १७ ॥ तेन तस्य कृतार्चा स्याद्द्विजश्रेष्ठ विधानतः ॥ देवे यस्मात्सुराः सर्वं त्रैलोक्यमपि यद्गतम् ॥१८॥ कृता त्रैलोक्यपूजा स्याद्विष्णुपूजाविधायिना ॥ नास्ति लोकेषु तद्ब्रह्म यत्र नास्ति जनार्दनः ॥१९॥ न तदप्यस्ति लोकेषु यन्न विष्णौ प्रतिष्ठितम् ॥ यस्मिन्सर्वं यतः सर्वं यः सर्वं सर्वतश्च यः॥२०॥यश्च सर्वमयो नित्यं तस्मै सर्वात्मने नमः ॥ क्षीरोदमध्ये द्वीपोऽस्ति बहुयोजनविस्तृतः ॥२१॥ तत्र ते पुरुषाः श्वेताः शशाङ्कसमतेजसः ॥ उपेताश्च तथा सर्वे चक्रवत्युपलक्षणैः ॥ २२॥पञ्चरात्रविधानज्ञाः पूजयन्ति सदा हरिम् ॥ मायादेहमथास्थाय देवोऽपि मधुसूदनः ॥२३॥तत्पूजां प्रतिगृह्णाति शिरसा सततं हरिः ॥ तैस्सार्धं रमते नित्यं

 तैश्च संपूज्यते सदा ॥२४॥ एकान्तभावोपगता ये भवन्तीह मानवाः ॥ अकामाश्च जगन्नाथमर्चयन्ति सदा च ये ॥ २५ ॥ ते यान्ति देहमुत्सृज्य 
 तद्द्वीपं श्वेतसंज्ञितम् ॥ अनिष्यन्दा निराहाराः सर्वज्ञाः सर्वदर्शिनः॥२६॥ सर्वेश्वरा नित्यतृप्ताः परं सुखमुपागताः ॥ पूजयन्ति हरिं तत्र दिव्यं 
वर्षशतं पुनः ॥२७॥ ततोऽर्कमण्डलं भित्त्वा अनिरुद्धं विशन्ति ते ॥ ब्रह्मँस्तपोभिः प्रद्युम्नं ततः संकर्षणं प्रभुम्॥२८॥ वासुदेवं ततः प्राप्य तेनैव
सदृशास्ततः ॥ भवन्ति सर्वे सर्वत्र सर्वदा सर्वशक्तयः ॥ २९ ॥ मुक्ताश्च सर्वदुःखेभ्यः परं सुखमुपागताः ॥ स त्वं शीघ्रमितो गत्वा श्वेतद्वीपनिवा
सिनः ॥३०॥ पश्य त्वं पुरुषान्ब्रह्मन्प्रसन्नः स विभुस्तव ॥ दर्शयिष्यति रूपं तु त्रैलोक्याद्भुतमद्भुतम् ॥३१॥ विश्वं ब्राह्मणशार्दूल प्रीतं मधुनि
षूदनम् ॥ एकतश्च द्वितश्चैव त्रितश्चैव महातपाः ॥ ३२ ॥ तं तु देशं गता ब्रह्मन्न तैर्दृष्टो जनार्दनः ॥ एकान्तभावोपगतास्तेन यस्माज्जगद्गुरोः ॥
॥ ३३ ॥ केवलं तैः श्रितः श्लोकः श्वेतद्वीपनिवासिभिः ॥ उदीरितो महाभागैः सर्वकल्मषवर्जितैः ॥ ३४ ॥ जितं ते पुण्डरीकाक्ष नमस्ते
विश्वभावन ॥ नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज ॥ ३५ ॥ श्लोकमेतं तु ते श्रुत्वा श्रुतवन्तस्तथा गिरम् ॥ अशरीरां महाभाग सर्वभूता
वहां हरेः ॥ ३६ ॥ श्वेतद्वीपमथासाद्य मृत्युमाप्नोति कर्हिचित् ॥ श्वेतद्वीपे गतिर्नास्ति विना चैकान्तिभिर्द्विजाः ॥ ३७ ॥ सामान्यभा
वना भक्ता भवन्तश्च तपोधनाः ॥ तपसोग्रेण संयुक्तास्तेन मे देशमागताः ॥ ३८ ॥ सामान्यभक्तिसत्त्वाश्च पुनर्व्रजत मा चिरम् ॥ भवद्भिः
पुरुषा दृष्टाः श्वेतद्वीपनिवासिनः ॥ ३९ ॥ एभिः श्लोकैस्तथा दृष्टो भवतीति जनार्दनः ॥ एकान्तभावनासक्तैः श्लोकैस्तु पुरुषैरिमम् ॥ ४० ॥
जप्तव्यं सततं विप्रास्ततः पुनरिहेष्यथ ॥ श्लोकोऽयं पावनः पुण्यः सर्वाघविनिषूदनः ॥ ४१ ॥ श्लोकैर्भावेन कर्तव्यौ जपहोमौ विजानता ॥
धूपदीपान्नपुष्पाणां तथैव च निवेदनम् ॥ ४२ ॥ श्लोकमेतं पठेद्विप्रा नमस्कारे प्रदक्षिणे ॥ स्नानमेतेन कर्तव्यं तथा चान्ते जलं द्विजाः ॥
॥ ४३ ॥ सर्वपापहरं पुण्यं मोक्षदं सर्वकामदम् ॥ श्लोक एष विनिर्दिष्टः सर्वकामप्रदः शिवः ॥ ४४ ॥ आपत्प्राप्तेन जप्तव्यं तन्मोक्षार्थं
तथैव च ॥ एतस्य जापः कर्तव्यो नित्यमेव विजानता ॥ ४५ ॥ एतस्य जापात्पुरुषः सर्वान्कामानुपाश्नुते ॥ एतां श्रुत्वा तु ते वाणीं
चागता मगधाः पुनः ॥ ४६ ॥ दृष्टवन्तो वसुं तत्र यजमानं महीपतिम् ॥ याजको यस्य धर्मात्मा देवाचार्यो बृहस्पतिः ॥ ४७ ॥ अदृश्येन 
हृतो भागस्तत्र देवेन विष्णुना ॥ जगृहुर्देवताः सर्वा दृश्यभागात्पुरोधसः ॥ ४८ ॥ विष्णुं प्रति गतक्रोधं देवाचार्यं बृहस्पतिम् ॥ एकतश्च
द्वितश्चैव त्रितश्चैवमवोचतम् ॥ ४९ ॥ अदृश्यः सर्वदेवानां तं कथं द्रष्टुमिच्छसि ॥ इत्येवमनुनीतस्तु देवाचार्यो बृहस्पतिः ॥ ५० ॥ समा

पयामास तदा तं यज्ञं पार्थिवस्य च ॥ एकान्तभावोपगता ऋषयोऽपि जनार्दनम् ॥ ५१ ॥ आगता देवकार्यार्थं श्वेतद्वीपात्पुरा द्विज ॥ श्वेत
द्वीपं पुनः प्राप्तं पुनरावृत्तिदुर्लभम् ॥ ५२ ॥ तस्मात्तं देवदेवेशं तत्रस्थं पश्य नारद ॥ त्वयापि देवकार्याणि कर्तव्यानि बहून्यथ ॥ ५३ ॥
श्वेतद्वीपगतस्यापि तेन ते द्विज साम्प्रतम् ॥ न भविष्यति लोकेषु गतिर्निर्वाणकारिणी ॥ कल्पावसाने तु गतिं तां त्वं विप्र गमिष्यसि ॥ ५४ ॥
मार्कण्डेय उवाच ॥ एवमुक्तस्ततः शीघ्रं मनोमारुतरंहसा ॥ अभिवाद्याथ तौ देवौ तं द्वीपं नारदो गतः ॥ ५५ ॥ स तत्र गत्वा ददृशे श्वेतद्वीप
निवासिनः ॥ पूजयामास शिरसा तांश्च भक्त्या स नारदः ॥ ५६ ॥ प्राप्य श्वेतं महाद्वीपं नारदो हृष्टमानसः ॥ ददर्श तानेव नराञ्श्वेता
श्चन्द्रप्रभाञ्छुभान् ॥ ५७ ॥ पूजयामास शिरसा मनसा तैस्तु पूजितः ॥ दिदृक्षुर्जाप्यपरमः सर्वकृच्छ्रधरः स्मृतः ॥ ५८ ॥ भूत्वैकाग्रमना
विप्रश्चोर्ध्वबाहुर्महाभुजः ॥ स्तोत्रं जगौ स विश्वाय निर्गुणाय गुणात्मने ॥ ५९ ॥ वासुदेवाय शान्ताय तथा विश्वसृजे द्विज ॥ अनन्ताया
प्रमेयाय सर्वगायातिरंहसे ॥ ६० ॥ अमितबलपराक्रमाय तस्मै त्रिदशमुनिप्रतिपूजिताय नित्यम् ॥ भवभवभग्नाशनाय विष्णोः प्रणतजन
प्रतिपापनाशनाय ॥ ६१ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख० मार्कण्डेयवज्रसंवादे श्रीनारदस्य श्वेतद्वीपगमनवर्णनो नामैकोनपञ्चाशदधिक
त्रिशततमोऽध्यायः ॥ ३४९ ॥ नारद उवाच ॥ नमोऽस्तु ते देवदेव निष्क्रिय निर्गुण लोकसाक्षिन् ॥ क्षेत्रज्ञ, अनन्तपुरुष, महापुरुष, त्रिगुण
प्रधान, अमृत, व्योम, सनातन, सदसद्व्यक्ताव्यक्त, ऋतधाम, पूर्व, आदिदेव, सुप्रजापते, महाप्रजापते, ऊर्जस्पते, वाचस्पते, वानस्पते,
मनःपते, मरुत्पते, जगत्पते, पृथिवीपते, दिक्पते, सलिलपते, पूर्वनिवास, ब्रह्मपुरोहित, ब्रह्मकायिक, राजिक, महाराजिक, चातुर्महाराजिक,
आभास्वर, महाभास्वर, सप्तमहाभास्वर, याम्य, महायाम्य, संज्ञासंज्ञ, तुषित, महातुषित, प्रतर्दन, परिनिर्मितवशवर्तिन्, अपरिनिर्मित
वशवर्तिन्, यज्ञ, महायज्ञ, यज्ञसम्भव, यज्ञयोने, यज्ञवाह, यज्ञमुख, यज्ञहृदय, यज्ञभागहर, यज्ञस्तुत, पञ्चयज्ञ, चर, पञ्चकाल, त्रिगते,
पाञ्चरात्रिक, वैकुण्ठ, अपराजित, नावमिक, परमस्वामिन्, सुस्नात, हंस, महाहंस, परमयाज्ञिक, सांख्ययौगिक, अमृतेशय, हिरण्येशय, वेदशय,
कुशेशय, ब्रह्मशय, पद्मेशय, विश्वेश्वर, त्वं जगन्मयः, त्वं जगत्प्रकृतिः, त्वं चाग्नेरास्यं, त्वं बडवामुखोऽग्निः, त्वमाहुतिः, त्वं सारथिः,
त्वं वषट्कारः, त्वमोङ्कारः, त्वमन्नः, त्वमन्नादः, त्वं चन्द्रमाः, त्वं सूर्यश्चक्षुराद्यः, त्वं दिग्गजः, दिग्भानो, विदिग्भानो, हयशिराः, प्रथमन्, त्रिसौ
वर्णधर, पञ्चाग्ने, त्रिणाचिकेत, षडङ्गविधान, प्राग्ज्योतिष्क, ज्येष्ठसामग, व्रतधर, अथर्वशिराः, पञ्चमहाकल्प, अर्हन्आचार्य, बालखिल्य, वैखा

नस, अग्नियोग, अभग्नपरिसंख्यान, युगादि, युगमध्य, युगनिधन, अखण्डल, प्राचीनगर्भ, कौशिक, पुरुष्टुत, पुरुहूत, विश्वहूत, विश्वहुत, विश्वरूप, अनन्तगते, अनन्तभोग, अनन्त, अनादिमध्य, अव्यक्तनिधन, व्रतवास, समुद्राधिवास, समवास, यशोवास, लक्ष्म्यावास, कीर्त्यावास, कव्यावास, श्रीवास, श्रीनिवास, सर्ववास, वासुदेव, सर्वच्छन्दोग, हरिहय, हयमेध, यज्ञभागहर, वरप्रद, यम, नियम, महानियम, कृच्छ्रातिकृच्छ्र, महाकृच्छ, सर्वकृच्छ्र, नियमधर, निर्वृतिधर्म, प्रवचनगते, प्रवृत्तवेदक्रिय, अज, सर्वगत, सर्वदर्शिन्, अग्राह्य, अचर, महाविभूते, माहात्म्यशरीर, पवित्र, महापवित्र, हिरण्मय, बृहत, अप्रतर्क्य, अविज्ञेय, ब्रह्माग्नि, प्रजासर्गकर, अजानिधनकर, महामायाधर, चित्रशिखण्ड, वरप्रद, पुरोडाशभागहर, गताध्वग, छिन्नतृष्ण, सर्वतो निर्वृत, ब्रह्मरूप, ब्रह्मधर, ब्राह्मणप्रिय, विश्वमूर्ते, महामूर्ते, बान्धव, भक्तवत्सल, ब्रह्मण्यदेव, भक्तोऽहं त्वां दिदृक्षुरेकान्तदर्शनायेत्यों नमः ॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे श्वेतद्वीपे श्रीनारदस्तोत्रवर्णनो नाम पञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५० ॥ मार्कण्डेय उवाच ॥ स ददर्श तदा विष्णुं विश्वरूपधरं हरिम् ॥ युक्तं वर्णैः शुकप्रख्यैः पीतरक्तसितासितैः ॥ १ ॥ क्वचिन्मेचकसंयुक्तैः क्वचिन्मेचकरञ्जितैः ॥ क्वचिच्छशांकसंकाशं क्वचिद्विद्रुलसन्निभम् ॥ ॥ २ ॥ क्वचिन्मरकतप्रख्यं पद्मरागनिभं क्वचित् ॥ क्वचित्कनकसंकाशं क्वचिन्नीलोत्पलप्रभम् ॥ ३ ॥ क्वचित्पाटलपुष्पाभं क्वचिद्गगनसन्निभम् ॥ कुंकुमक्षोदसंकाशं हारिद्रक्षोदसन्निभम् ॥ ४ ॥ क्वचिद्व्रजोपलप्रख्यमिन्द्रनीलनिभं क्वचित् ॥ अनिर्देश्यानि वर्णानि तथा बिभ्रत्क्वचित्क्वचित ॥ ५ ॥ नानाविधानां सत्त्वानां वदनानि बहूनि च ॥ ब्रह्मशंकरशक्राणां यमस्य वरुणस्य च ॥ ६ ॥ धनदस्य हुताशस्य वायोर्निर्ऋतिनस्तथा ॥ ग्रहाणामथ ऋक्षाणां रुद्राणां वसुभिः सह ॥ ७ ॥ आदित्यानां समरुतां भृगूणां च तथा द्विज ॥ तथैवाङ्गिरसो राजन्साध्यानामश्विभिः सह ॥ ८ ॥ दैत्यानामथ नागानां गन्धर्वोरगरक्षसाम् ॥ पितृपन्नगयक्षाणां तथा च पिशिताशिनाम् ॥ ९ ॥ मनुष्यहयनागानां गजाश्वमृगपक्षिणाम् ॥ द्वीपिशार्दूलसिंहानां सर्वेषां प्राणिनामथ ॥ १० ॥ कानिचित्तस्य सौम्यानि कानिचिद्भीषणानि च ॥ ददर्श तस्य वक्त्राणि शतशोऽथ सहस्रशः ॥ ११ ॥ वक्त्रेषु तस्य रौद्रस्य प्राणिसंघान्यनेकशः ॥ ददर्श सर्वतश्चाग्नीन्ग्रस्यमानाँश्च विष्णुना ॥१२॥ सौम्येभ्यस्तस्य वक्त्रेभ्यो निर्गच्छंत्यस्तथा प्रजाः ॥ वाहाँश्च विविधाँस्तस्य स ददर्शाथ नारदः ॥ १३॥ हस्ताँश्च विविधाकारान्नानामुद्रासमन्वितान् ॥ युक्तान्नानाविधैर्भाण्डैरायुधैश्च सहस्रशः॥१४॥स्रुक्स्रुवावेदिचमसकुशकृष्णाजिनाग्निभिः ॥ केचिच्च कलशं घण्टां शङ्खपद्मोत्पलादिभिः॥१५॥

केचित्खड्गगदाचक्रचर्मशूलपरश्वधैः ॥ केचित्पाशमहादण्डकृपाणशरकार्मुकैः ॥ १६ ॥ केचिद्भुशुण्डीलगुडशक्तिवज्राश्मपट्टिशैः ॥ बीज
पूर्णाक्षमालाश्च पूर्णपात्रैस्तथा परैः ॥ १७ ॥ एवं नानाविधैर्भाण्डैः करांस्तस्य समन्वितान् ॥ असंख्येयान्महातेजा ददर्श मुनिसत्तमः ॥ १८ ॥
नृत्तशास्त्रविनिर्दिष्टो नृत्तकर्मणि चाप्यथ ॥ शिरांसि दृष्टयो हस्तांस्तस्य देवस्य दृष्टवान् ॥ १९ ॥ त्रैलोक्यं च तथा काये सकलं मुनिसत्तमः ॥
देवदानवगन्धर्वसयक्षोरगरक्षसाम् ॥ २० ॥ द्वीपाम्भोनिधिलोकैश्च पातालैश्चैव संयुतम् ॥ जगत्समग्रं देवस्य देहस्थं दृष्टवान्मुनिः ॥ २१ ॥
स दृष्ट्वा परमं रूपं भीतो हृष्टश्च विस्मितः ॥ पपात पादयोस्तस्य शिरसा साश्रुलोचनः ॥ २२ ॥ स्तोत्रेण चैव तुष्टाव पूर्वोक्तेन जनार्दनम् ॥
तमुवाच ततो देवः प्रहसन्नृषिसत्तमम् ॥ २३ ॥ ॥ श्रीभगवानुवाच ॥ ॥ उत्तिष्ठ माभैर्धर्मज्ञ वरं वृणु यथेप्सितम् ॥ ॥ श्रीनारद उवाच ॥
॥ नित्यमेकान्तिके देव भक्तिर्भवतु सा त्वयि ॥ नान्यं वरं कामयामि नराणामिदमुत्तमम् ॥ २४ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ तमुवाच ततो
देवः प्रणतार्तिहरो हरिः ॥ एतन्निसर्गसिद्धं ते येन त्वं दृष्टवान्मम ॥ २५ ॥ विश्वरूपमिदं ब्रह्मन्नवज्ञेयं तथा त्वया ॥ तपस्तप्तं यतो विप्र ममापि
च ततस्तव ॥ २६ ॥ रूपमेतत्समास्थाय रूपं स्वं द्विज दर्शितम् ॥ इच्छारूपाण्यहं कुर्यां शतशोऽथ सहस्रशः ॥ २७ ॥ त्रैलोक्ये यानि
रूपाणि देवादीनां द्विजोत्तम ॥ ममैव तानि जानीहि मत्तोऽन्यन्नास्ति किञ्चन ॥ २८ ॥ अहं भूतं च भव्यं च वर्तमानमहं तथा ॥ स्थावरं
जङ्गमं चैव सर्वमेवास्मि नारद ॥ २९ ॥ सच्चाऽसच्चाहमेवात्र तत्त्वमेतद्ब्रवीमि ते ॥ अशब्दमरसं स्पर्शगन्धरूपविवर्जितम् ॥ ३० ॥ सर्वगं मां
विजानीहि परमार्थेन नारद ॥ यः करिष्यति मे स्तोत्रं स्तोत्रेण त्वत्कृतेन तु ॥ ३१ ॥ तस्य कामान्विधास्यामि ये दिव्या ये च मानुषाः ॥
श्वेतद्वीपे गतिस्तस्य मृतस्य च भविष्यति ॥ ३२ ॥ श्वेतद्वीपमवाप्यापि नरः स्वस्थो भविष्यसि ॥ वराहस्यास्य कल्पस्य यावत्कालोऽवशि
ष्यते ॥ ३३ ॥ वाराहे तु गते कल्पे ततो मात्स्यो भविष्यति ॥ देवकार्याणि कार्याणि सुबहूनि यतस्त्वया ॥ ३४ ॥ प्रादुर्भावगतश्चाहमनुशास्य
स्तथा त्वया ॥ प्रादुर्भावाणि मे ब्रह्मन्व्यतीतानि सहस्रशः ॥ ३५ ॥ भविष्यन्ति तथान्यानि तत्र मे शृणु कानि चित् ॥ अहमेकार्णवे लोके
शेषपर्यंकशायिकः ॥ ३६ ॥ लक्ष्मीसहायस्तिष्ठामि यदा सुप्तः पितामहः ॥ अहं मत्स्यस्तथा कूर्मो हंसोहमपि नारद ॥ ३७ ॥ स्त्रीरूपेण मया
विप्र वञ्चिता दैत्यदानवाः ॥ मयाश्वशिरसा वेदा दानवेभ्यस्तथा हृताः ॥ ३८ ॥ वाराहेण मया भूत्वा वसुधेयं समुद्धृता ॥ वाराहेण मया दैत्याः
पातालतलगा हताः ॥ ३९ ॥ नृवराहेण निहतो हिरण्याक्षो बलोत्कटः ॥ दानवाश्च हता युद्धे नरनारायणात्मना ॥ ४० ॥ लोकोत्तरे तथा मार्गे
हरिः कृष्णस्तथाप्यहम् ॥ नारसिंहेन रूपेण हिरण्यकशिपुर्हतः ॥ ४१ ॥ वामनेन मया भूत्वा बलेस्त्रिभुवनं हृतम् ॥ त्रिभिः क्रमैः पुरा ब्रह्मन्दे

 

वानां हितकाम्यया ॥ ४२ ॥ वाडवोऽहं समुद्रस्थः पिबामि सलिलं सदा ॥ पृथ्वी वसुमती ब्रह्मन्पृथुना च मया कृता ॥ ४३ ॥ कापिलेन मया दुष्टा दग्धव्याः सगरात्मजाः ॥ दत्तात्रेयेण वसुधा देवा द्विजगणाः पुनः ॥ ४४ ॥ जामदग्न्येन रामेण लघ्वी वसुमती कृता ॥ त्रिःसप्त कृत्वः कर्तव्या क्षत्रभारप्रपीडिता ॥ ४५ ॥ दत्त्वा चतुर्धा पुत्राँश्च मया दशरथस्य च ॥ रामेण रावणवधः कर्तव्यो जनतासुखम् ॥ ४६ ॥ कार्यं गन्धर्वनिधनं तथैव भरतात्मना ॥ मेघनादवधः कार्यो लक्ष्मणेन तथा मया ॥४७॥ शत्रुघ्नेन च कर्त्तव्यो लवणस्य वधस्तथा॥ मया वाल्मीकिना कार्यं काव्यं रामायणं तथा ॥४८॥ व्यासेन वेदा वक्तव्या आख्यानं भारतं महत् ॥ मया ब्राह्मणशार्दूल तथा द्वैपायनात्मना॥४९॥पाण्डोः पुत्रत्वमासाद्य पञ्चधा च तथा मया ॥ द्विधा च वसुदेवस्य लघ्वी कार्या वसुन्धरा ॥५०॥ नरलोके निहन्तव्या दैत्या मानुषरूपिणः ॥ बलभद्रेण च मया हन्तव्या मौष्टिकादयः ॥ ५१ ॥ मया कृष्णेन हन्तव्याः कंसपूर्वा महाबलाः ॥ प्रद्युम्नेन निहन्तव्यः शम्बरश्च महाबलः ॥ ५२ ॥ हन्तव्याश्चानिरुद्धेन दैत्याः शतसहस्रशः ॥ सांबेन युयुधानेन मया भूत्वा तथैव च ॥५३॥ मया बुद्धेन वक्तव्या धर्माः कलियुगे पुनः ॥ हन्तव्या म्लेच्छराजानस्तथा विष्णुयशात्मना ॥५४॥ ममांशेन विजानीहि पृथिव्यां चक्रवर्तिनः ॥ ऋषयश्च तथा ज्ञेया ममैवांशसमुद्भवाः ॥५५॥ यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव च ॥ तत्तदेवावगच्छेस्त्वं मम तेजोंशसम्भवम् ॥ ५६ ॥ अथ वा बहुनैतेन किं ज्ञानेन तवानघ ॥ विष्टभ्याहमिदं कृत्स्नमेकांशेनास्थितो जगत् ॥ ५७॥ तद्गच्छ मानसी सिद्धिः सदा तेऽस्तु द्विजोत्तम ॥ कल्पावसानमासाद्य मच्छरीरं प्रवेक्ष्यसि ॥ ५८ ॥ एतावदुक्त्वा वचनं तत्रैवान्तरधीयत ॥ भगवान्नारदश्चक्रे पूजां तद्देशवासिनाम् ॥५९॥ तैश्च संपूजितो विप्रस्तान्प्रणम्य यतव्रतः ॥ आजगम ततः शीघ्रं नरनारायणाश्रमम् ॥ ६० ॥ पादयोर्न्यपतत्तत्र स तयोर्मुनिपूज्ययोः ॥ ताभ्यां संपूजितो विप्रस्तत्रोवास तदाश्रमे ॥ ६१ ॥ ततः कदाचित्तं विप्रमूचतुस्तौ तपोधनौ ॥ आवाभ्यां त्वं तथा दृष्टः श्वेतद्वीपगतेऽच्युतः ॥ ६२ ॥ समीपं देवदेवस्य तद्देहस्थैर्यथासुखम् ॥ लोकेऽस्मिन्मुनिशार्दूल नास्ति धन्यतरस्त्वया ॥ ६३ ॥ दृष्टवानसि यद्ब्रह्मन्विश्वरूपधरं हरिम् ॥ त्रैलोक्यसारं विश्वेशं प्रणतार्तिविनाशनम् ॥ ६४ ॥ यतस्तेऽनुग्रहस्तेन कृतो देवेन विष्णुना ॥ ततो गुह्यं निबोधेमं तत्पूजाविधिमुत्तमम् ॥ ६५ ॥ सर्वकर्मकरं दिव्यं सकलार्थप्रदं शिवम् ॥ नाभक्ताय च तद्देयं त्वया ब्राह्मणसत्तम ॥६६॥ एकान्तभावोपगतं जनार्दनं नरस्तु सम्पूज्य तथा विधानतः ॥ प्रयाति तद्वीपमनुत्तमं शिवं न यत्र गत्वा विनिवर्तते पुनः ॥ ६७॥ इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेय वज्रसंवादे विश्वरूपाख्यानं नामैकपञ्चाशदुत्तरत्रिशततमोऽध्यायः॥३५१॥नरनारायणावूचतुः ॥ आदावेव सरःसरित्प्रस्रवणसमीपगृहोपवनपर्वतमस्तकानामन्यतमे हृद्ये देशे सुसमं मनोहरं हस्तमात्रं मण्डलकमुपकल्पयेत् ॥

तत्र मध्येऽष्टपत्रं पद्ममालिखेत् ततस्तूदाहृतचतुरस्रया चतुर्द्वारलेखया विभजेत् । ततः पद्मकर्णिकामध्ये श्वेतं शतपत्रं पद्मं ध्यायेत । तत्कर्णिकोपर्यर्कमण्डलम् तदुपरि चन्द्रमण्डलम् तदुपरि अग्निमण्डलम् तन्मध्ये परमं पुरुषम् अशरीरम् अगन्धम् अरसम् अरूपम् अस्पर्शम् अशब्दम् सर्वगं प्लुतान्तम् ॐकारं विन्यसेत् । कमलपूर्वदले अकारं वासुदेवं न्यसेत् श्वेतवर्णं ध्यायेत् दक्षिणे आकारं संकर्षणं विन्यसेत् पद्मपत्राभं तं च ध्यायेत पश्चिमे दले ओङ्कारे प्रद्युम्नं विन्यसेत पीतवर्णं च ध्यायेत् ॥ उत्तरे दले अःकारमनिरुद्धं विन्यसेत् कृष्णवर्णञ्च ध्यायेत् ॥ ऐशाने दले तदिति ब्रह्माणं विन्यसेत् पद्मपत्राभं ध्यायेत् ॥ सूर्यकोटिसमं ध्यायेत् ॥ वायव्यदले वराहं विन्यसेत् । भिन्नाञ्जनसमं ध्यायेत् ॥ प्रपूर्वद्वारे ॐ कें टें यें एतान्यक्षराणि वैनतेयं विन्यसेत्॥हेमवर्णं च ध्यायेत्॥दक्षिणे द्वारे तेजोरथरतृचक्रं सुदर्शनं विन्यसेत । वज्रनाभं सहस्रारं सूर्यकोटिसमप्रभं ध्यायेत ॥ पश्चिमद्वारे शार्ङ्गं विन्यसेत् । इन्द्रचापनिभं ध्यायेत् ॥ स्वें ठें हें थें उत्तरे द्वारे अनिरुद्धं न्यस्येत् । सर्ववर्णं ध्यायेत । वें णें क्षें क्षें विदिक्षु पाञ्चजन्यं शंखं न्यसेत् । शशाङ्कवर्णं ध्यायेत ॥ घें हें भें हें श्रियं पद्मं दक्षिणतो न्यसेत् । शुक्लां ध्यायेत ॥ गें डें वें शें पद्मान्तरतः पुष्टिं न्यसेत् । श्वेतां ध्यायेत् । हें सें पुरतो वनमालां न्यसेत् । हें सें बहुवर्णां ध्यायेत ॥ ॐ चित्यैशान्यां नन्दकं न्यसेत । आकाशवर्णं ध्यायेत ॥ ॐमित्याग्नेय्यां वर्म न्यसेत् । बहुवर्णं ध्यायेत् ॥ ॐ झें लें श्रीवत्सं न्यसेत् । शुक्लां ध्यायेत्॥ॐ छें ठें वायव्ये कौस्तुभं न्यसेत् आदित्यं दीप्तं ध्यायेत्॥ ततो मंडले बाह्यस्थौ यथास्वदिशमोकारौकारौ दिक्पती शक्राग्नी यमनैर्ऋतवारुणपवनकुबेरानैशान्यां न्यसेत् । यथोक्तरूपं ध्यायेत ॥ ॐ नमो भगवते वासुदेवायेत्यन्तेन द्वादशाक्षरेण कर्णिकामध्ये पुरुषायार्घ्यपाद्याचमनीयानुलेपनपुष्पदीपधूपमधुपर्कनैवेद्यफलभक्ष्याणि निवेदयेत् । ॐनमो नारायणायेत्यथ वाष्टाक्षरेण मन्त्रेण । "ॐ जितन्ते पुण्डरीकाक्ष नमस्ते विश्वभावन ॥ नमस्तेस्तु हृषीकेश महापुरुष पूर्वज ॥" इत्यनेन मंत्रेण पुरुषसूक्तेन वा । अथान्यान्दलनिविष्टान्देवान्यथाभिहितैर्मन्त्रैः पृथक्पृथगर्चयेद् ॥ अनेन विधिना यस्तु विष्णुमभ्यर्चयेन्नरः । सर्वान्संसाधयेदर्थान्कृतकृत्यो हि जायते ॥ १ ॥ कृत्वा व्याधिं व्याधितं भक्षयति न करोति न तदाप्नोति इदं त्वन्यत् । धन्यं यशस्यं पुण्यं च पवित्रं पापनाशनम् ॥ आरोग्यं धनधान्यवर्द्धनं शत्रुघ्नं वशीकरणं यः पुरुषोऽनेन विधिना सततं देवमभ्यर्चयति सम्पत्तिं जनयति अथ वा तस्य न रोचते तदा श्वेतद्वीपमवाप्य अर्कमण्डलं भित्त्वा निरुणद्धि प्रद्युम्नसंकर्षणान्प्राप्नोति सुदेवत्वमवाप्य निष्कलत्वमाप्नोति ॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख० मा० व० सं० नारायणपूजनप्रकारवर्णनो नाम द्विपञ्चाशदुत्तरत्रिशततमोऽध्यायः ॥ ३५२ ॥ ॥ छ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ एतद्धि नारदः श्रुत्वा नरनारायणेरितम् ॥ अनेनैव विधा

नेन सततं मधुसूदनम् ॥ १ ॥ पूजयामास धर्मात्मा तद्गतेनान्तरात्मना ॥ ततः पुंसवनो भगवान् नारदस्य महात्मनः ॥ २ ॥ प्रत्यक्षतः पुनर्भूतं नारदं वाक्यमब्रवीत् ॥ गच्छ नारद भद्र त्वं लोकांश्चर यथेप्सितान्॥३॥दर्शनं तव दास्यामि कालेकाले यथेप्सिते॥ अनुग्रहमिदं प्राप्य देवेशात्पु रुषोत्तमात् ॥४॥ चचार नारदो लोकान्नित्यं संपूजयन्हरिम् ॥ विश्वरूपमिदं दृष्टं नारदेन महात्मना ॥ ५ ॥ प्रह्लादेन पुनस्तेन नरकेसरिरूपिणः ॥ तथा चामृतकादेहे तेनैव च महात्मना ॥ ६ ॥ ब्रह्मणा च पुरा दृष्टं त्रैलोक्याक्रमणे पुनः ॥ पश्चिमे सागरे दृष्टं दशग्रीवेण रक्षसा ॥ ७ ॥ कृष्णा वतारे दूत्येन गतस्य मधुविद्विषः ॥ धार्तराष्ट्रसभामध्ये ऋषिभिश्च परीक्षितः ॥ ८ ॥ महाभारतसंग्रामे दृष्टवानर्जुनस्तथा ॥ बन्धुनाशभयोद्विग्नो यत्र तेन प्रबोधितः ॥९॥ निवृत्ते भारते युद्धे गच्छन्तो द्वारकां पुनः ॥ मार्गागतेन तद्दृष्टमुत्तंकेन महात्मना ॥१०॥ त्रैलोक्यनाथो गोविन्दः सततं भक्तवत्सलः ॥ तस्य कर्माणि यो नित्यं पुरुषः परिकीर्तयेत् ॥ ११ ॥ शृणुयाद्वा महीपाल शुचिस्तद्गतमानसः ॥ सर्वपापविनिर्मुक्तः स याति परमां गतिम् ॥ १२ ॥ एवं स राजन्द्विजवर्यमुख्यः संप्राप्तवान्देववरात्प्रसादम् ॥ भक्तिक्रमक्यैनृपप्रसादात्तस्माद्धिकामान्पुरु षा लभंते ॥ १३ ॥ इति श्रीविष्णुधर्मोत्तरे तृ० ख० मार्कण्डेयवज्रसंवादे नारदप्रसादो नाम त्रिपञ्चाशदुत्तरत्रिशततमोऽध्यायः ॥ ३५३ ॥

॥ वज्र उवाच ॥ ॥ माहात्म्यं देवदेवस्य विष्णोरमिततेजसः ॥ तृप्तिर्न विद्यते तस्मान्माहात्म्यमपरं वद ॥ १ ॥ तस्यैव देवदेवस्य विष्णोरमिततेजसः ॥ रक्षायुक्तं पवित्रं च लोकेष्वाश्चर्यमुत्तमम् ॥ २ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ एकान्तभावोपगतः कश्चिदासी द्विजोत्तमः ॥ ३ ॥ सात्त्वतो गौतमश्रेष्ठो विष्वक्सेन इति श्रुतः ॥ पञ्चकालविधानज्ञः पाञ्चरात्रविधानवित् ॥ ४ ॥ सततं पूजयामास देवदेवं जनार्दनम् ॥ कृष्णायतनपूजार्थं स बभ्राम वसुन्धराम् ॥ ५ ॥ आससाद कदाचित्तु पर्वतं गह्वरं महत् ॥ यत्र माहे श्वरः सर्वो जनो यद्बलजो बहु ॥ ६ ॥ स तत्र निर्झरे स्नात्वा पूजयामास केशवम् ॥ वेद्यां प्रकल्पितायां तु भोगैः सन्निहितैः प्रभुम् ॥ ७ ॥ तस्मात्तु गह्वरात्कश्चिद्विनिष्क्रम्य यदृच्छया ॥ निबद्धखड्गैर्बहुभिः पुरुषैश्चापपाणिभिः ॥ ८ ॥ सहितस्तं ददर्शाथ पूजयन्वै जनार्दनम् ॥ तस्य गत्वा समीपे तु ग्रामस्वामिकुमारकः ॥ ९ ॥ तमुवाच त्वमभ्येहि देवकर्म कुरुष्व मे ॥ शिरोरुगर्दितस्तात स्नातुं शक्नोमि नाद्य वै ॥ १० ॥ देवकर्मण्यशक्तिर्मे तात पूजय शङ्करम् ॥ देवतायतनं गत्वा यत्र तात प्रतिष्ठितम् ॥ ११ ॥ लिङ्गमस्ति सुरेशस्य महादेवस्य निर्मितम् ॥ एतदुक्तं प्रत्युवाच वयमेकार्चिनः श्रुताः ॥ १२ ॥ चतुरात्मा हरिः पूज्यः प्रादुर्भावगतोऽथ वा ॥ पूजयाम्यद्य नैवान्यं तस्मात्त्वं गच्छ मा चिरम् ॥ १३ ॥ एवमुक्तः कुमारस्तु खड्गमाकृष्य सत्त्वरम् ॥ तमुवाच तदा विप्रं त्वां वधिष्ये न संशयः ॥ १४ ॥ यदि लिङ्गार्चनं गत्वा न

करोषि हि दुर्मते ॥ शङ्करादधिको देवो न ह्यकोऽस्ति नराधम ॥१५॥ खड्गेन पातयिष्यामि भवच्छीर्षमसंशयम् ॥ एवमुक्तः स तेनाथ प्राणरक्षा
परायणः ॥ १६ ॥ बहिर्गच्छामि तत्रेति तेन सार्धं तदा ययौ ॥ दृष्ट्वा च लिङ्गं देवस्य चिन्तयामास धर्मवित् ॥ १७ ॥ विष्णुः सर्वगतो देवः
सर्वात्मा मधुसूदनः ॥ तस्य रौद्रेण भावेन महादेवः प्रतिष्ठितः ॥ १८ ॥ तस्य वै रौद्रभावेन नरसिंहस्तथा प्रभुः ॥
लिङ्गेऽस्मिन्पूजयिष्यामि नरसिंहवपुर्धरम् ॥ देवदेवं महात्मानं तेन नित्यं सुरार्चनात् ॥ १९ ॥ प्रत्यपायो न भविता प्राणत्राण
मभीप्सितः ॥ ततः स देवदेवेशं नरसिंहवपुर्धरम् ॥ २० ॥ मनसा तु तदा ध्यात्वा पूजयामास लिङ्गगम् ॥ नमोऽस्तु ते नृसिंहाय वदन्नेव
कृताञ्जलिः ॥ २१ ॥ नमोऽस्तु नरसिंहाय श्रुत्वा तस्मात्सुभाषितम् ॥ ग्रामेशनन्दनः क्रुद्धः खड्गमाकृष्य सत्वरम् ॥ २२ ॥ प्रहारमुद्यतो
दातुं तस्य विप्रस्य धीमतः ॥ लिङ्गं भित्त्वा ततो देवो नरसिंहवपुर्धरः ॥ २३ ॥ समुत्थाय ततः क्रोधाद् ग्रामस्वामिकुमारकम् ॥ ददाह भगवा
न्छीघ्रं सानुगं नेत्रवह्निना ॥ २४ ॥ तस्य सात्त्वतमुख्यस्य दिव्यं चक्षुर्ददौ ततः ॥ ददर्श येन वेशेन नरसिंहवपुर्धरम् ॥ २५ ॥ दृष्ट्वा स्तोत्रेण
तुष्टाव तदा तस्य जनार्दनः ॥ स्तोत्रस्य तु वरं प्रादात्तन्मे निगदतः शृणु ॥ २६ ॥ रक्षोघ्नं पापशमनं भूतवेतालनाशनम् ॥ यो जपेत्तत्सदैवास्तु
मङ्गल्यं श्रीविवर्धनम् ॥ २७ ॥ नारसिंहेषु लोकेषु मोदते सहितो मया ॥ यावत्कल्पावशेषं तु ततो मान्त्वमुपेष्यसि ॥ २८ ॥ एतावदुक्त्वा
सहसा तु तेन तत्रैव देवप्रवरो महात्मा ॥ अपश्यतां यादववंशमुख्य जगाम शीघ्रं नरसिंहमूर्तिः ॥ २९ ॥ इति श्रीविष्णुधर्मोत्तरे
तृतीयखण्डे मार्कण्डेयवज्रसंवादे लिङ्गस्फोटननरसिंहदर्शनवर्णनो नाम चतुष्पञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५४ ॥ ॥ छ ॥
वज्र उवाच ॥ सात्त्वतेन स्तुतो येन स्तोत्रेण मधुसूदनः ॥ तन्मे स्तोत्रं समाचक्ष्व सर्वकल्मषनाशनम् ॥ १ ॥ मार्कण्डेय उवाच ॥ शृणु स्तोत्र
मिदं वज्र लिङ्गास्फोटमिति श्रुतम् ॥ सर्वपापप्रशमनं माङ्गल्यं श्रीविवर्धनम् ॥ २ ॥ ॐ नमो भगवते वासुदेवाय नमो नरसिंहायादिदेवाय
सर्वलोकपरमाय नारायणाय नित्यसन्निहितसंप्राप्यशक्तिबलवीर्यतेजोविभवाय महारजतपर्वतप्रकाशवपुषे बृहत्केसरसटाय शिवप्रदेशाभ्यु
न्नतताम्ररुचितविस्फूर्जितप्रभाहेमवर्णाय प्रपन्नजनबाधापनयननिमित्तोत्पन्नभ्रुकुटिकुटिलललाटाय शतह्रदावर्तदीप्तविक्षिप्यमाणेषुगलाय
ज्वलदनललोलपिङ्गवृत्तदीप्ताक्षाय स्फुटचिपिटधमनीसहपुरविभीषणप्राणवंशाय स्फुरत्पूर्णाभयकपोलदेशपार्श्वाय बालचन्द्राकारोष्ठपुट
विनिर्गतभ्राजमानातितीक्ष्णसितमहोग्रदंष्ट्रसर्वास्यावसमागमक्षोभाशनिसहस्रावपातांबुदव्रातगर्जितातिभीमनिनादाय मुहुर्मुहुर्व्यात्तभीमार्धवद
नदेशदृश्यमानशुद्धिशिखरदशनपंक्तिताराविभास्वरसन्ध्यानुरञ्जितनभस्थलप्रकाशवपुषे तालुलोलजिह्वालताग्रस्थिरसमायुक्तचित्तभवांसकू

टस्कन्दमध्यदेशसुप्रतिष्ठितपीनवृत्तचारुकम्बुग्रीवाय श्रीवत्सांकितालङ्कृतमहावक्षस्थलाय विविधरुचिरपरमसुगन्धिमुक्तकपुष्पग्रथितप्रलम्बमालाधराय मरुतादित्यप्रचारबलानुविजयोन्नताभ्युन्नतबाहुप्रकोष्ठकरतलकरजोग्रघोरप्रहरणाय हिरण्यकशिपुरुधिरपानसुतीक्ष्णवज्रायुधाय परमपीतकौशेयवस्त्रबद्धकक्ष्यापरिकराय वज्रसंहतोन्नतसुचिरसुश्लिष्टसन्धिकटचूरुजानुमहापुरुषनरसिंहादिदेवाय स्थिरसायुक्तेभक्तोचितप्रसृततन्वाकारगूढगुल्फसन्धिमहाबाहुवेगमहाजवाय चरणविक्रमप्रभावप्रकंप्यमानपृथिवीतलाय श्रीवृक्षशंखचक्रगदासनंद्यावर्तध्वजांकुशध्वरातपत्रादर्शकमत्स्यकूर्मवीचीयूपचन्द्रार्कवृषभाश्वगजरथपरमपुरुषपरममङ्गल्यरोमकूटच्छायाय तनुमहेन्द्रवसुरुद्रादित्यसाध्याश्विमरुद्गणसंस्तुताचिन्त्यार्चिताभिमुखप्रसन्नचरणाय भगवन्नमस्ते त्वमागच्छागच्छ भगवन्नात्मबलवीर्यतेजोगुणात्मविक्रमसांख्ययोगाध्यात्मपवित्रशौचधर्ममाहात्म्यान्विताविर्भावितोत्तिष्ठ परमदेव सर्वगात्राण्यभिधुन्वन्सर्वपापान्यपमृज्य विघ्ननाशाविघ्नानां विघ्ननाशाय विघ्नानां परमपुरुष परममाङ्गल्य भक्तवत्सल भक्तानुग्रहायाभयंप्रदाय तद्ब्रह्मसत्यमनाद्यमनुत्तमं निःश्रेयसं तद्भगवानाचष्टां तद्भगवान्विदतां निरस्य पाप्मानं निरस्य कल्मषं शश्वच्छान्तिमुपनय श्रेय उपनय स्वस्तिमुपनय आशिषमुपनय ब्रह्म प्रपद्ये त्वां विष्णो भगवन्पुण्डरीकाक्ष ज्ञानैश्वर्यशक्तिबलतेजोगुणात्मक परमपुरुष परममङ्गल्य पद्मनाभ हयशिरः आदिवराह नरसिंह वामन त्रिविक्रम राम राम वासुदेव सङ्कर्षण प्रद्युम्नानिरुद्ध पुरुष सत्याश्रुत वासुदेव आदिमध्यनिधनकचेष्टित चेष्टात्ममायाहोरात्रयतिमाङ्शिष्टशुक्लवासः सुपर्ण तालमकरध्वजपरमविद्याकर्मकालनाभ स्वस्त्यस्मभ्यं स्वस्ति प्रजाभ्यः ॥ त्वमेव मंत्रं त्वं रक्षा त्वमौषधमनुत्तमम् ॥ त्रिविधादपि दुःखान्मां प्रचोदय जगत्पते ॥ १ ॥ ब्रह्मन्प्रपद्ये त्वां विष्णो शरणागतवत्सल ॥ तदा शुद्धो महामतिर्भवदुःखविनिर्गतः ॥ २ ॥ इत्युक्तः स च राजेन्द्र ऋषिणा दिव्यचक्षुषा ॥ नमस्कृत्य ऋषेः पादौ सगणः सह राजभिः ॥ प्रदक्षिणमुपाकृत्य प्रविवेश पुरं स्वकम् ॥ ३ ॥ ऋषयस्तेऽप्यनुज्ञाता मार्कण्डेयेन धीमता ॥ नमस्कृत्य हरिं देवं स्वाश्रमं जग्मिरे तदा ॥ ४ ॥ राजापि वज्रो धर्मात्मा मार्कण्डेयेन भाषितम् ॥ पुराणं चिन्तयन्नित्यं नारायणपरायणः ॥ राज्यं च प्राशिषन्नित्यं प्रजा धर्मेण पालयन् ॥ ५ ॥ इति श्रीविष्णुमहापुराणे द्वितीयभागे श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मार्कण्डेयवज्रसंवादे श्रीनरसिंहस्तोत्रवर्णनं नाम पञ्चपञ्चाशदुत्तरत्रिशततमोऽध्यायः ॥ ३५५ ॥

इति श्रीविष्णुधर्मोत्तरं समाप्तम् ॥ ॥ समाप्तं चेदं विष्णुमहापुराणम् ॥

इदं पुस्तकं क्षेमराज-श्रीकृष्णदासश्रेष्ठिना मुंबय्यां ( खेतवाडी ७ वीं गली खम्बाटा लैन) स्वकीये "श्रीवेङ्कटेश्वर" ( स्टीम् ) मुद्रणयन्त्रालये मुद्रयित्वा प्रकाशितम् ॥ संवत् १९६९, शके १८३४ ।

पुस्तक मिलनेका ठिकाना--खेमराज श्रीकृष्णदास, "श्रीवेङ्कटेश्वर" स्टीम् प्रेस--बम्बई.

## अत्रेयमभ्यर्थना ।

अस्माकं मुद्रणालये वेद-वेदान्त-धर्मशास्त्र-प्रयोग-योग-सांख्य-ज्यौतिष-पुराणेतिहास-वैद्यक मंत्र-स्तोत्र-कोश-काव्य-चम्पू-नाटका-ऽलंकार-संगीत-नीति-कथाग्रंथाः, बहवः स्त्रीणां चोपयुक्ता ग्रंथाः, बृहज्ज्योतिषार्णवनामा बहुविचित्रचित्रितोऽयमपूर्वग्रन्थः संस्कृतभाषया, हिन्दीमार्वाड्यादिभाषाग्रन्थास्तत्तच्छास्त्राद्यर्थानुवादकाः, चित्राणि, पुस्तकमुद्रणोपयोगिन्यो यावत्यस्सामग्र्यः, स्वस्वलौकिकव्यवहारोपयोगिचित्रचित्रितालिखितपत्रवत्पुस्तकानि च; मुद्रयित्वा प्रकाश्यन्ते सुलभेन मूल्येन विक्रयाय । येषां यत्राभिरुचिस्तत्तत्पुस्तकाद्युपलब्धये एवं नव्यतया स्वस्वपुस्तकानि सुमुद्रापयिषुभिः सुलभयोग्यमौल्येन सीसकाक्षरैः स्वच्छोत्तमोत्तमपत्रेषु मुद्रिततत्पुस्तकानां स्वस्वसमयानुसारेणोपलब्धये च पत्रिकाद्वारा बोधनीयोऽस्मि ।

थितप्रलम्बमा || तृ० खं०

पृ० ३८

॥ * ॥ इति विष्णुधर्मोत्तरमहापुराणसमाप्तिः ॥ * ॥